## ॥ अथात्मपुराणाध्यायानुक्रमणिका. ॥

श्रीः

# ॥ प्रस्तावना ॥

पुरा किल बौद्धलौकायतिकादिपाखण्डप्रवर्तितत्रयीप्रतीपगामिविचारेण कलुषिताशयतया सहसोत्सृज्य वैदिकं पन्थानमश्रौतेन कदध्वना प्रवृत्तैर्जनैः सङ्कुलतया कथाव-
शेषश्रुतिस्मृत्युदिताचारमखिलभूवलयमत एवैहिकामुष्मिकश्रेयोविमुखान्केवलं निरयातिथींश्च मानवान्पर्यालोच्योद्विग्नचेता महर्षिर्जैमिनिस्तानुद्धर्तुकामः क्षमोऽप्यनादिसत्तत्वप्रतिपादने
तादात्विकाननधिकारिणो मन्दान्प्रेक्ष्य सुदूरमतिक्रान्ताम्नायपथानां महायासेनापि स्वावलम्बितसरणिमपहातुमलब्धावसराणामनाघ्राततत्त्वगंधानामत एव तद्विप्लुताभाजामादौ
श्रुत्यभिमुखीकरणमेव परं श्रेयो मन्यमान इव गुडजिह्विकान्यायेन तदुपायभूतवेदविहितयागादिकर्मानुष्ठानमहत्त्वख्यापनसमर्थं 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्'
'मा ते संगोऽस्त्वकर्मणि' इति च गीतोक्तश्रीमद्भगवद्वाणीं साधयितुमिव रचयतिस्म। अथाप्यखिलश्रुत्यब्धिपारं गन्तुमक्षमान् शाश्वतसत्तत्त्वानवबोधेन च फलसाकल्याभाजो नरानवे-
क्ष्याकारणपरमकरुणार्द्रहृदयो भगवान्नारायणो व्यासत्वेनावनाववतीर्य प्रचुरशाखाभेदेनैकविंशतिधा शतधा सहस्रधेत्यादिक्रमेण श्रुतिं विभज्य तत्र सौलभ्यं विधायाखिलोपनि-
षत्तात्पर्यबोधिनीं श्रीमद्भगवद्गीतामीषद्विस्तृतामतिसंक्षिप्तं चतुरध्यायीमितमखिलपरमतनिरासकम् 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ॥ अस्तोभमनवद्यं च सूत्रं
सूत्रविदो विदुः' इति लक्षणलक्षितसूत्रात्मकं ब्रह्ममीमांसाशास्त्रं च प्रणीतवान्। अथापि तत्सूत्राणामतिसंक्षिप्तार्थतयाऽर्थगाम्भीर्यं सम्यगनवगच्छतां सन्देहसन्दोहाब्धिनिमग्ना-
नामुज्जिहीर्षाबद्धपरिकरो विद्याधीशो महेश्वरस्तदाशयव्यक्तयेऽनल्पाक्षरं भाष्यमरचयत्। एवं पूर्वाचार्यपरम्परया भृशमुपकृतानपि दुष्कलिकाललब्धमलिनधिषणतयोपनिषत्सा-
रांबुधिमवगाढुमप्राप्तप्रवेशाननुत्सुकानेव प्रायशोऽधुनातनांस्तथा स्त्रीशूद्रैश्चानधिगतामधिकृतिमस्मिन्शास्त्रे सम्यग्विविच्य साकल्येन सर्वानुद्धर्तुं श्रुतिस्मृतिपुराणेषु यथोत्तरं सुगमं
सांप्रतिकजनानुरूपतया च पुराणमेव तत्समीहितसाधनायालमिति निश्चिन्वानाः निगमागमपारावारपारीणा द्रविडान्वयप्रदीपा दक्षिणदिग्ललामायमानाः श्रीमच्छङ्करानन्दपूज्यभगवत्पादाः
पुराणविधया तत्तत्कथोपबृंहणपूर्वकमुपनिषत्प्रतिपाद्यमानतत्त्वावेदकं मुक्तमुमुक्षुविपर्यीत्यधिकारिमनस्तोषकृदष्टादशाध्यायीपरिमितमात्मपुराणाख्यं पुराणं गुरुशिष्यसंवादद्वारा प्राणैषुः।
एत एव श्रीविद्यारण्यैः स्वनिर्मितपञ्चदशीग्रंथादौ 'नमः श्रीशंकरानन्दगुरुपादांबुजन्मने । सविलासमहामोहग्राहग्रासैककर्मणे' इति गुरुत्वेन वंदिताः।
एभिरेव तात्पर्यबोधिन्यभिधा श्रीमद्भगवद्गीतायाः व्याख्या, दीपिकाख्या व्याख्या कौषीतकीतलवकारमाण्डूक्योपनिषदां, सूत्रदीपिकानाम्नी ब्रह्मसूत्रवृत्तिश्चेति व्याख्याग्रन्था प्रणीताः।
अत एव प्रकृतग्रंथविषये विषयप्रतिपादनादिशैली तत्त्वज्ञानयोग्यतावर्णने च पृथक्प्रयोजनावसरमेव न पश्यामः। एतेषां जन्मकालादिकं न तत्त्वतः सम्यग्ज्ञायते तथापि वि-
द्यारण्ययतिपूर्ववर्तिन इति तत्कृतमंगलाचरणेनैव सिद्ध्यत्यतो विद्यारण्यकालनिर्णयेनैवैषां कालादिकं सामान्येनानुमीयते। केचन शारीरकभाष्यकर्तृश्रीशङ्कराचार्या एव इमे
इति प्रवदन्ति परन्तु न तत्र प्रमाणमुपलभामहे अपि चैतत्प्रणीतग्रन्थेषु विद्यारण्यरचितपञ्चदश्यारंभे च शङ्करानन्दशब्देनैव व्यवहृतमत उभयोर्भेदः प्रामा-
णिकः। अयं ग्रंथः कावेरीतीरेऽवसितः इति 'इदं गुरुः स्वशिष्याय कावेरीतीरवासिने ॥ उक्तवान् श्रद्धधानाय स्नेहादेव च केवलम्' इत्यष्टादशा-
ध्यायस्थश्लोकतोवसीयते। एतदुपरि वाराणसीप्रत्यग्दिग्विराजमानाखिलक्षितिमण्डलमण्डनायमानातिरम्यकाश्मीरजनपदललामतापन्नजंब्वभिधेयराजधानीदक्षिणकुक्षिविलस-
द्व्यासगंगासरिदासन्नवब्बराभिधानपुरनिवास्यनेकविधसारस्वतद्विजान्ववायान्तर्गतसप्तशाखमुणीहाराख्यजात्यन्तर्गतदत्तवंशे नेत्रश्रुतिवसुक्षितिमितवैक्रमाब्दे १८४२ पौषशुक्ल

द्वादश्यामासजन्मानो रामकृष्णाख्यसूरयः काकारामाख्यनामानः दिल्लारामाख्यनिजपितृतोऽधीत्य किञ्चित्काशीक्षेत्रनिवासाध्ययनकृतकृत्यस्तत्र गत्वाऽद्वैतवादसूरिविश्वेश्वराश्रमयतिवर्या दिभ्योऽधीतपूर्वोत्तरमीमांसाव्याकरणतर्कादिसमयाः काशीस्थविद्वत्परिषत्प्राप्तपदवाक्यप्रमाणपारावारदर्शित्वपदभाजः निजगुरूणां श्रीमद्विश्वेश्वराश्रमयतिवर्याणामात्मपुराणव्याख्याविषयादे शमनुरुन्धानास्तत्परिशीलनफलभूताखंडब्रह्मानंदसुखसाक्षात्कारोपलंभिकां सत्प्रसवाख्यां व्याख्यां निरमासिषुः। टीकानिर्माणकालस्तु तैरेव 'बाणनागाहिविधुभि १८८५ मिते वर्षेऽकेवि- क्रमात्' इत्यादिना टीकासमाप्तौ प्रदर्शितोऽवगंतव्यः। एवमेतत्परिनिर्दिष्टानन्यसाधारणैद्दशब्रह्मप्रापकग्रन्थमुद्रणेन सर्वविद्वत्सुगमतासंपादनेन कृतकृत्यतामंशतोऽपि लब्धुमिव यतमानै- र्गोपालनारायणाख्यसंस्थाधिकृतैर्मूळगांवकरोपाह्वनारायणतनुजविनायकरायाभिख्यैर्विरलप्रचारतया दुर्लभस्यानल्पायासेन कानिचिल्लिखितमुद्रितपुस्तकान्यासाद्य व्याकरणादिस्खलनादिसं- शोधनपुरस्सरपाठभेदादिभिश्च पंडितसाहाय्येन परिष्कृत्यायं ग्रंथो मुद्रितः। लिखितपुस्तकप्रेषणेन भृशमुपकृतं नासिकपंचवटीक्षेत्रनिवासिसिन्नरकरोपाह्ववामनात्मजश्रीधरशास्त्रिभिरन्यैश्च शा स्त्रिभिरिति प्रमोदभरमावहता मुद्रालयाधिपतिनाऽभिनंद्यंते। तदत्र प्राक्तनागण्यपुण्यप्रचयात्तनरदेहैस्तत्राप्यभिज्ञैर्विशेषतो मुमुक्षुभिश्च निर्वाणपदवीसोपानपरम्परायमाणप्रस्तुतग्रंथोऽवश्यं संग्रहणेन पठनपाठनादिदिशा श्रवणमननादिद्वाराऽखंडचिदसानंदब्रह्माधिगमप्राप्तकृतकृत्यताभाजनीभूयास्य यंत्रालयाधिपतेः श्रमसार्थकतां सकृदपि सादरं संभावयंतु मुद्रणावसरे मुद्रणनियुक्तजनप्रमादाद्दृष्टिस्खलनाच्च यदशुद्धं तत्क्षाम्यंत्विति च सविनयं प्रार्थयते विदुषः इति शम्॥ शके १८२७ विश्वावसुनामसंवत्सरे चैत्र शुद्ध १५ बुधवासरे॥

'आयुर्वेदमहोपाध्याय' उपपदधारी

पुणे इत्युपाह्वबाळाचार्यतनुजो वासुदेवाचार्यः

॥ श्रीगणेशायनमः ॥

# अथ सटीकम् आत्मपुराणम् ।

॥ अथ टीकामंगलपद्यव्याख्या ॥ ॥ दानधर्मेपुरहस्यप्रकरणेहरिहरयोरभेदइत्युपाख्यायते नारदादयोमुनयोनारायणस्यभगवतोदर्शनायसमागताःसभाजिताःस्थितास्तदानारायणस्य मुखादकस्मान्निर्गततेजसाहिमालयोदग्धः तदाचकितान्मुनीन्दृष्ट्वाभगवताहृष्टोहिमालयस्तथाभूतोऽभवत् अथभगवतामुनयःपृष्टाःकिंचिच्चित्रंयद्भवद्भिर्दृष्टंतच्छ्राव्यतामिति ततस्तैर्नारदो नियुक्तःश्रावयामास कदाचिद्धिमालयेभगवान्शिवःस्थितोऽभूत्तदापार्वतीपृष्ठतआगत्यनेत्रद्वयंपिदधे अथांधीभूतेलोकेहरस्यविकासिततृतीयनेत्रेणहिमालयोदग्धः पुनःपार्वत्यांचकिता यांहरेणदृष्टस्तथाभूतोभवदिति ॥ तथाचयदीयादृक्शैलेशस्यहिमालयस्यांतोद्भवयोर्निर्माणेएकाऽसहायाशक्ताइत्यर्थकःप्रथमपादोहरौहरेपिसमन्वितः । द्वितीयपादस्तुहरिपक्षेआकाशीया याआकाशसंबंधिन्याआभायाःश्यामायाभरणेनललितोमनोहरोविग्रहोयस्येति । हरपक्षेतुकाशस्येयंकाशीया यद्वा काशींयांतीतिकाशीयाः विच् तेषांभाभरणंज्ञानप्रकाशपूरणंललितंईप्सितं प्रयोजनंयस्य ललईप्सायां एतादृशोलीलाविग्रहोयस्येति उत्तरार्धेतुहरिपक्षेरामइतिविशेष्यपदं मालंकरणेनलक्ष्मीरूपभूषणेनपरमउत्कृष्टशोभः ॥ हरपक्षेरामाचासौउमाचेतिविग्रहः यद्वा रामचंद्रेणउमयाचकृतंयदलंकरणंतेनपरमइति अथवारामचंद्रोमयोःप्रेम्णाअलंकरणेतत्परइत्यर्थः ॥ वैशेषिकादिमतेनतटस्थतयाप्रतिपादनात्प्रवासमिवनीतस्तत्सखीभिःपार्वतीलक्ष्मीसंज्ञक ब्रह्मविद्यासखीभिःश्रुतिभिःस्वांतागारेधीगुहायांनिरुद्धःप्रसाद्यैवानीतःस्वात्मतयाबोधितः शेषंस्पष्टम् ॥ १ ॥ द्वितीयपद्ये आवरणरूपांतरायभंजिकावृत्तिर्गणपतिस्मृतेरुपमानं फलाचि तदनुमतस्फूर्तेः कार्यस्यघटादेःसाधकत्वात् शेषंस्पष्टम् ॥ २ ॥ तृतीयपद्ये अदितिरुपमानंगुरुदयोपमेयातयोःसाधारणधर्मस्तुदेवप्रसवकारणत्वमुपमानेप्रसिद्धं उपमेयपक्षेदेवाःशमादिशा स्त्रविहितवृत्तिरूपास्तद्धेतुत्वम् द्वितीयःसाधारणधर्मोभगवत्कर्तृकश्रुतिभूषणकरणकव्यापारजन्यप्रीतिशालित्वं तच्चोपमानेप्रसिद्धम् श्रुत्योःकर्णयोर्भूषणेताभ्यामितिषष्ठीसमासाश्रयणात् श्रीकृ ष्णेनभौमासुरंनिहत्यकुंडलप्रत्यर्पणात् ॥ उपमेयेतुमयानुकूलेननभस्वतेरितमितिवदताभगवतासर्वफलप्रदात्रामप्रवृत्तिनिवृत्तिशास्त्ररूपसामग्रीसंघटनेनसंप्रीणितासहायतांनीताइत्यर्थः श्रुती पूर्वोत्तरकाण्डेएवभूषणेइतिकर्मधारयाश्रयणात् ॥ क्षेमहेतुत्वंतुमातुर्दयायाश्चप्रसिद्धमेव ॥ ३ ॥ तुर्येपद्येकूटपदेनयंत्रंग्राह्यं 'कूटंपूर्द्वारयंत्रयोः' इतिहेमः ॥ तत्तुशोलाइतिप्रसिद्धम् ॥ विविक्षतःप्रवेशमिच्छतः शेषंस्पष्टम् ॥

---

१ कुलुप इति महाराष्ट्रभाषायाम् ।

॥ श्रीरामचंद्रायनमः ॥ श्रीकाशीविश्वेश्वराभ्यांनमः ॥ श्रीगणेशायनमः ॥ श्रीहनुमतेनमः ॥ श्रीगुरुभ्योनमः ॥ ॐनमः ॥ शैलेशान्तोद्भवविरचनेदृग्यदीयालमेकाकाशीयाभाभरणललितोविग्रहोभातियस्य ॥ रामोमालंकरणपरमस्तत्सखीभिर्निरुद्धस्वान्तागारेश्रुतिभिरवताच्छंकरोदेवदेवः ॥ १ ॥ चिन्तांनिहन्तिखलुयस्यमहान्तरायंस्फूर्तिर्विकासयतियस्यसमस्तकार्यम् ॥ वृत्तिर्यथाथफलचिचयथानुमस्तंद्वैमातुरंचकुलदेवतमाञ्जनेयम् ॥ २ ॥ येषांकृपासकलदेवगणंप्रसूतेसंप्रीणिताभगवताश्रुतिभूषणाभ्याम् ॥ क्षेमंतनोत्यदितिवत्प्रणतोस्म्यहंतान्विश्वेश्वराश्रमगुरूनपितातपादान् ॥ ३ ॥ रत्नानियत्रोपनिपन्मयानिकोशेसमस्तान्यपिशेरतेस्मिन् ॥ विविक्षतःकूटविघाटनायकृपागुरूणांममकुञ्चिकास्ति ॥ ४ ॥ अथात्रभगवान्शङ्करानन्दमुनिर्गुणोपसंहारन्यायेनाधिकारिणांयावद्यत्रयद्यमननोपयोगितद्दर्शनपूर्वकंसमस्तोपनिपदोव्यचिख्यासुरधिकारिणंसूचयन्ऋग्वेदप्राथम्येनऐतरेयोपबृंहणमादावारंभते तत्रप्रथममधिकारिलक्षणंबोधयन्नौत्सर्गिकंगुरुशिष्यसंवादमवतारयति ईशेत्यादिना ॥ जीवेश्वरभेदः जीवजगद्भेदः ईशजगद्भेदः जीवानांपरस्परंभेदः जगतःपरस्परभेदः इतिपंचविधभेदज्ञानात्मिकयाकार्याविद्ययासकलंजगत्कर्तृभोक्तृरूपंजीवजातंव्याकुलंकारणोपाधीश्वरात्प्रशासितुर्भयेनाभिनिवेशाख्यक्लेशेनव्याप्तं 'यउदरमन्तरंकुरुतेअथतस्यभयंभवति'इतिश्रुतेः निरीक्ष्यआलोच्य एतेननित्यानित्यवस्तुविवेकःसूचितः । कश्चित्श्रोत्रियः विधिवदधीतवेदवेदांगः श्रुतार्थग्रहणक्षमःमेधावान्श्रद्धावांश्च एतेननित्यानित्यवस्तुविवेकश्रद्धाभ्यांमध्यवर्तीनिअंगानिसंदंशन्यायेनसंगृहीतानि प्रमेयंतुनाम्नैवस्फुटीकृतम् यथा आत्मापुराणःपुरुषःपुराणःपुरुषस्त्वयम् ॥ आत्मेत्यात्मपुराणस्यनाम्नामेयंप्रदर्शितम् ॥ संबन्धःप्रसिद्धइति ननुमंगलानाचरणान्मूलकृतेःसदाचारविरोधइतिचेदत्रोच्यते त्रीण्यत्रमंगलानि वहिःकृतमेकं भगणप्रयोगात्मकं

ईशानीशादिभेदेनव्याकुलंसकलंजगत् ॥ निरीक्ष्यश्रोत्रियःकश्चिच्छ्रुतार्थग्रहणक्षमः १ एकदाकरुणाक्रांतचित्तएतव्द्यचिंतयत् ॥ अहोसंसारशूलेनक्लेशिताःसर्वदेहिनः २ कामादिकाकत्रासेननारीवृकविनोदिना ॥ कथमस्माद्भवेन्नैवभीतिःसर्वनृणामिह ३ इतिसंचिन्त्यमतिमान्स्वगुरुंपरिपृच्छति ॥ कथमज्ञानलोहाङ्गंतीक्ष्णसंसारशूलकम् ४ गुणत्रयत्रिशाखाढ्यमतिक्रम्यव्रजेत्पुमान् ॥ एवमुक्तोगुरुःप्राहस्वशिष्यंकरुणानिधिः ५

द्वितीयं भगवत्पादैरिवभाष्यारंभेऽयमध्यासोमिथ्येतिभवितुमर्हतीतिशुद्धतत्त्वंमंगलायस्मृतंतथैतैरपिभेदस्यहेयतयाप्रतिपादनादहेयतत्त्वानुस्मरणरूपंतृतीयंमंगलंकृतमितिसर्वंसमंजसम् १ एकदेति । करुणाक्रांतचित्तःकरुणयाव्याप्तमनाः एतेनशुद्धांतःकरणत्वयामुमुक्षासूचिता विचारस्वरूपमाह । अहोइति । महागरलावघसाधनेनशूलेनदेहत्रयाभिमानलक्षणसंसारतादात्म्यंप्रापितेनसर्वदेहिनःक्लेशिताः २ साधर्म्यमाह । कामादीति । शवव्याप्तत्वेनदिवाकाकसेवितत्वंनक्तंवृकरंजकत्वंचउपमानेसिद्धं । उपमेयेतुउड्डीयोड्डीयपतद्भिःकाकैःप्रसुप्ताद्यवस्थावतांकामादीनांसाम्यंप्रच्छन्नभोक्तृभिर्वृकैर्नारीणांचअत्यंताभिनिविष्टत्वरत् श्रांतपादप्रहारन्यायेनद्विनोदहेतुत्वंचबोध्यम् संसारशूलेनेतिपरिणामालंकारः उपमानशूलस्यउपमेयतादात्म्यापत्तिंविनाप्राणित्वावच्छिन्नकर्मकक्लेशनक्रियान्वयासंभवात् मयूरव्यंसकादित्वात्समासः ३ सगुरुमेवाभिगच्छेदितिश्रुतिमनुरुध्याह । इतिसंचिन्त्येति । प्रश्नस्वरूपमाह । कथमिति अज्ञानमेवलोहमयस्तदंगंशरीरंयस्यतत् मृद्घटइतिवत्सामानाधिकरण्यम् ४ गुणत्रयेति । गुणत्रयात्मकशिखात्रययुक्तं । तस्माउपसन्नायेत्यादिश्रुतिमनुरुध्याह । एवमुक्तइति । एवमुक्तोगुरुःएषपन्थाइत्यादिवाक्येनऐतरेयशाखायांपठितेनोत्तरमाह वाक्यस्वरूपंयथा । 'एषपंथाएतत्कर्मएतद्ब्रह्मएतत्सत्यंतस्मात्प्रमाधित्तन्नातीयाच्छ्यायन्पूर्वेयेत्यायंस्तेपराबभूवुः' । तदुक्तमृषिणा 'प्रजाहतिस्रोअत्यायमीयुरितियावेताइमाःप्रजास्तिस्रोअत्यायमायंस्तानिइमानिवयांसिवंगावगधाश्चेरपादाः'इति एतदुपबृंहणंअष्टचत्वारिंशत्तमश्लोकंयावद्बोध्यम् ५

तत्रादौएषपन्थाइतिभागस्यार्थमुपबृंहयंति सार्द्धैस्त्रिभिः ॥ पथिगताविति धातोरिनिप्रत्यये ओणादिके सति पथिन् शब्दो निष्पन्नः तथाचपथ्यते गम्यतेइष्टदेशादिअनेनेतिपन्थाः तादृशंतुज्ञानमेवदुःख
नाशकत्वेनसर्वाभीप्सितज्ञाननाशहेतुत्वादित्याह । ज्ञानमिति । तुशब्दः कारकव्यापारैरपेक्ष्यरूपत्वेलक्षण्यार्थकः इतिशब्दोहेतौ तथाचयतोज्ञानमज्ञाननाशायनियतमितरविलक्षणंचसाधनं
तस्मात्तदेवपथिन्शब्दार्थइत्यर्थः । ननुसंसारशूलनिवृत्तिसाधनंपृच्छतेकिमज्ञाननिवृत्तिसाधनोपदेशेनेत्यतआह । संसारेति । उक्तविशेषणविशिष्टंसंसारशूलंमायिनईश्वरस्यमाययाभातं 'मायांतुप्र
कृतिंविद्यान्मायिनंतुमहेश्वरम्' इतिश्रुतेः नतुमायाऽज्ञानभिन्ना लोकेपिऐंद्रजालिकमंत्रौषधादिभिर्द्रष्टृणामज्ञानक्षोभेनैवतत्तदाकारेणऐंद्रजालिकस्यदर्शनान्मायाज्ञानमेवेतीरितंमायाचतमोरूपेति
नृसिंहतापनीयश्रुतौ आकरेपुच ननुलौकिकज्ञानेसत्यपिसंसारशूलनिवृत्त्यदर्शनात्कथमुक्तंसंगच्छतेइत्यतआह । ज्ञानमिति । ज्ञावबोधनइतिस्मृतेरवस्थितस्याधिष्ठानस्यबोधनंयथावत्स्फूर्ति
र्ज्ञानंतादृशंतुवेदांतप्रमाणजन्यमेव तत्रयथावत्प्रमेयस्यभानात् इदमेवप्रमाणस्यप्रमेयतंत्रत्वं इतरद्यथावत्प्रमेयभानरहितमज्ञानंबोध्यम् ७ एतदेवव्यतिरेकमुखेनाह । नहीति । नहिसन्निपातवता
भिलपितंदोषप्रयुक्तंभेरीशब्दज्ञानंप्रमाणमितिव्यवहरंतीत्यर्थः ८ फलितंदर्शयन्मार्गत्वोपपादकदर्शनायआह । संसारशूलमिति । मुक्तिमंडपस्यसर्वोधारत्वयासन्निहितत्वद्योतनायगमधातोर्ज्ञाना
र्थेपर्यवसानसूचनायचसप्तमीप्रयुक्ता एतत्कर्मेतिभागंव्याचष्टे ॥ कर्तव्यमिति ॥ एतद्विज्ञानंश्रवणाद्यनुष्ठानद्वाराकर्तव्यंसंपादनीयमतएतत्कर्मेत्यर्थः ९ सर्वंवाक्यंसावधारणमितिन्यायेनैतद्वा

ज्ञानमज्ञाननाशायनियतंसाधनंत्विति ॥ संसारशूलमखिलंवृकककादिसेवितम् ६ मायिनोमाययाभातंमायाऽज्ञानमितीरितम् ॥ ज्ञानंवेदांतविज्ञानमज्ञान
मितरत्पुनः ७ नहिभ्रांतस्यविज्ञानंलोकेपिज्ञानमिष्यते ॥ अतोब्रह्माहमस्मीतिबोधोमार्गोत्रसंमतः ८ संसारशूलंसंत्यज्यगच्छतांमुक्तिमंडपे ॥ कर्तव्यमेतद्वि
ज्ञानमात्माज्ञानापनुत्तये ९ नचान्यदग्निष्टोमादिदेहकारागृहप्रदम् ॥ आत्मबोधोबृहत्तस्मादुक्ताज्ञानविनाशनात् १० प्रापणाच्चात्मरूपस्यब्रह्मणोभेदशून्यतः॥
घटस्तिष्ठतिनान्यत्रवर्तमानःस्थितोभुवि ११ नासीत्पुरानपश्चाच्चभविष्यतिकथंचन ॥ अयंघटोनचान्यत्स्याद्घटाघटमिदंजगत् १२ इतित्रिधापरिच्छेदोब्रह्म
ण्यात्मस्वरूपके ॥ नविद्यतेयतस्तस्माद्ब्रह्मात्माहमितीरितः १३ तस्यमेगमकंज्ञानंब्रह्मेत्याहश्रुतिःस्वयम् ॥ यथाब्रह्मतथासत्यमिदंज्ञानमिहोदितम् १४ आदा
वंतेचमध्येचयत्स्वरूपंनसंत्यजेत् ॥ सत्यंतत्तादृशंप्रोक्तंमत्तोन्यत्तादृशंनहि १५

वत्यर्थमाह । नचान्यदिति ॥ कर्मस्यंकर्मसुमुक्षोर्नकर्तव्यंभोग्यान्यथानुपपत्त्यतदुपयोगिदेहबंधहेतुत्वादित्यर्थः एतद्ब्रह्मेत्यंशंव्याचष्टे । आत्मबोधइति । सर्वोत्कृष्टंहिबृहद्ब्रह्म बृहिधातोरर्थानुग
मात् साधनस्यबृहत्वंतुसमूलदुःखनाशकत्वंनिरतिशयानंदब्रह्मानंदप्रापकत्वंच तयोराद्यमाह । उक्ताज्ञानविनाशनादिति । १० द्वितीयमाह । प्रापणादिति । भेदशून्यस्यभूम्नोब्रह्मणआ
त्मरूपस्यप्रापणादित्यर्थः सार्वविभक्तिकस्तसिः योवैभूमातत्सुखंनाल्पेसुखमस्तीतिश्रुत्यनुरोधेनत्रिविधपरिच्छेदराहित्यात्मकभूमस्वरूपत्वप्रतिपादनायाल्पत्वात्मकत्रिविधपरिच्छेदमुदाहरणेनस्प
ष्टयति । घटइति । अत्यंताभावप्रतियोगित्वंदेशपरिच्छेदः यथाभुविवर्तमानोघटोन्यत्रदेशेनतिष्ठतिअत्यंताभाववानित्यर्थः ११ । नासीदिति । प्रागभावध्वंसप्रतियोगित्वंकालपरिच्छे
दः यथावर्तमानोघटःपुरानासीत् पश्चाच्चनभविष्यतीति । अन्योन्याभावप्रतियोगित्वंवस्तुपरिच्छेदः यथाघटोन्यत्पटादिन ततोभिन्नइतियावत् इदंजगत् घटघटभिन्नात्मकमित्यनुभवाद्भेदः
स्फुटइत्यर्थः १२ अद्वितीयेसर्वात्मनिब्रह्मणितद्व्यतिरेकमाह । इतित्रिधेति । तत्रायमात्माब्रह्मेतिवाक्यंसंवादयति ब्रह्मात्माहमिति १३ तस्मादेतादृशब्रह्मप्रापकत्वात्ज्ञानेब्रह्मपदप्रयोग
उपपन्नइत्याह । तस्यमेइति । एतत्सत्यमित्यंशंव्याचष्टेसप्तभिः । यथाब्रह्मेति १४ सत्यशब्दस्यारोपेणज्ञानेवृत्तिरितिबोधनायसत्यशब्दस्यमुख्यार्थमाह । आदाविति । कालत्रये
पिनिर्विकारंकूटस्थनित्यंयत्तादृशंसत्यशब्देनसत्यंज्ञानमित्यादिवाक्यगतेनप्रोक्तंतत्तुमत्तःशोधितादहमर्थात्सर्वांतरादन्यज्जडंविकारिनसंभवतीत्यर्थः १५

एवंश्रुतिप्रसिद्धंसत्यशब्दार्थमुक्त्वालोकप्रसिद्धचापितदेवाभिनयति । अपिचेति । यत्रास्तीति प्रतीतिविषयत्वमस्तिशब्दवाच्यत्वंवासःसदर्थःसतांप्रमाणानामर्थः सत्प्रमागमर्हतीतिविग्रहवतोयत्प्र त्ययांतस्यसत्यशब्दस्यापिसएवार्थोमतः लौकिकपरीक्षकैरसतोज्ञानविषयत्वासंभवात् सचापातदर्शिनांदृष्टौनानारूपः । वस्तुतस्तु'प्रकाशावहवोदीपाःसंतुरात्रौगृहेगृहे । दिनेऽप्रकाशतांयांतिभानावे कत्रभास्वति'इतिन्यायेनअस्तीत्येवोपलब्धव्यइत्यादिप्रमाणोदयेसत्यतामेवसर्वांतरस्य कीदृशस्य धीशब्दरूपिणः धीशब्दौरूपयितुंविषयिणोविषयनिरूप्यत्वाद्रूपवंतौकर्तुंशीलंयस्यसतथातस्य तथाचोक्तं 'अस्तिभातिप्रियंरूपंनामचेत्यंशपंचकं । आद्यंत्रयंब्रह्मरूपंमायारूपंततोद्वयम्' इति १६ एवंसत्यशब्दस्यमुख्यार्थमुक्त्वाऽऽरोपेणज्ञानेवृत्तिंदृष्टांतपूर्वकमाह । यथावाक्यमिति । यथालो केआप्तवाक्यंसत्यमितिव्यवह्रियतेसत्यार्थबोधकत्वात् एवमेतत्सत्यमितिवाक्येसत्यप्रदंज्ञानेप्रयुक्तं ब्रह्मज्ञानस्यपरमार्थसत्यप्रापकत्वादित्यर्थः १७ एवंपरब्रह्ममुख्यार्थकस्यसत्यशब्दस्यारोपेणप्रवृ त्तिरुपपादिताऽधुनाकार्यब्रह्मपरस्यसत्यशब्दस्यासन्नेवास्यशब्रर्भवतीत्यर्थकश्रुत्याशब्वसत्तासंपादकध्यानकस्यारोपेणज्ञानेप्रवृत्तिमाह असत्यस्येति । यथाकार्यब्रह्महिरण्यगर्भःसत्यशब्दवाच्योविन ष्टशत्रुरेवंज्ञानमपिविनष्टसविलासाज्ञानशत्रुकमतोयुक्ताऽत्रज्ञानेसत्यशब्दस्यसादृश्येनवृत्तिरितिभावः १८ ननुहिरण्यगर्भस्यअनागतवर्तमानातीतकल्पेष्वेकत्वादेकविधैश्वर्यवत्वाचशत्रुपुअसच्छ ब्दप्रयोगःसंभवति ज्ञानशत्रोरज्ञानस्यानादेरतीतवर्तमानकालसंबंधित्वात्तत्कार्याणांचवर्तमानकालसंबंधित्वात्कथमसत्त्वमतआह आदाविति । यत्कालत्रयाव्यापितत्तदसत् यथावंध्यासुत इति व्याप्तिशरीरं लाघवात् नतुकालत्रयाव्यापित्वंकालद्वयाव्यापित्वंवानिवेश्यं गौरवात् एवंचाज्ञानस्यभविष्यत्कालाव्यापित्वात्तत्कार्याणांचातीतानागतकालाव्यापित्वादसत्वंसत्ताराहित्यं

**अपिचास्तीतिविज्ञानशब्दयोर्विषयोमतः ॥ सदर्थःसत्यतातेनममधीशब्दरूपिणः १६ यथावाक्यंजनस्यात्रसत्यार्थगमकंहितत् ॥ एवंसत्यमिदंज्ञानंमम सत्यस्यबोधकम् १७ असत्यस्यविनाशाद्वासत्यमेतदिहोच्यते ॥ नहिज्ञानस्यसत्तायामात्माज्ञानंननश्यति १८ आदौपश्चादसत्त्वाद्धिमध्येप्येतदसत्स्मृतम् ॥ नचकालद्वयाव्याप्तोमध्येवंध्यासुतोस्तिहि १९ नचापरोक्षंभानंस्यात्तस्ययद्वत्तथास्यहि ॥ नस्वप्रसिद्धेःसिद्धिःस्यादनयोर्विषमाक्वचित् २० आनंदात्म निचाध्यासेभेदबुद्धिस्ततोमृषा ॥ अहंब्रह्मास्मिबोधश्चेत्पुण्यपुंजविपाकतः २१**

सिद्धमितिभावः १९ किंचाज्ञानंसविलासमसदपरोक्षभानराहित्यादित्यनुमानांतरमतोन्यदार्त्तमितिश्रुत्यनुगृहीतंसूचयति नचापरोक्षमिति । यद्वत्तस्यवंध्यासुतस्यापरोक्षंभानंनस्यात्रसं भवेत्तथास्यसविलासाज्ञानस्येत्यर्थः ननुआत्मभानमादायस्फुरणंसविलासाज्ञानेविशेषइतिचेदऽस्त्वयंविशेषोमध्यमंप्रति श्रुतितात्पर्यविदमुत्तमंप्रतितुनविशेषइत्याह नस्वप्रसिद्धेरिति । स्वेनात्मनाप्रसिद्धिर्यस्यसस्वप्रसिद्धिरात्मा ल्यब्लोपेपंचमी तथाचस्वप्रसिद्धिंस्वप्रकाशमात्मानमाश्रित्यसिद्धिरनयोरज्ञानवंध्यासुतयोर्विषमानकिंतुसमैव यथात्मनःसत्ताप्रकाशाभ्यामज्ञानंसदि तिव्यवह्रियतेतर्हिवंध्यासुतोपितथाव्यवह्रियतां नहिपरधनेनकश्चिद्धनीतिव्यवह्रियते नचासतस्तदाश्रितत्वमपि सदसतोःसंबंधासंभवात् तदुक्तं 'तुच्छानिर्वचनीयाचवास्तवीचेत्यसौत्रिधा । ज्ञेयामायात्रिभिर्बोधैःश्रौतयौक्तिकलौकिकैः' यद्वा ननुस्फुटोवंध्यासुतसविलासाज्ञानयोर्भेदः वंध्यासुतोह्यसन्नितिप्रतीयतेऽज्ञानंतुसदितियदिकश्चिद्ब्रूयात्तत्राह नस्वप्रसिद्धेरिति । अनयोर्वंध्यासुता ज्ञानयोरसत्सदाकारेणयाविषमासिद्धिःस्फूर्तिःसापिस्वप्रसिद्धेस्तयोःस्वरूपभूतप्रकाशाद्धेतोर्नचिद्भिन्नत्वेनजडत्वात्किंत्वात्मसत्ताप्रकाशबलादेव तथात्मैवैकःसन्नेतौतुअसत्तयासमावेवेतिभावः २० मध्यमंप्रत्यप्याह आनंदात्मनीति । यद्यध्यासंमन्यसेतदापिअध्यस्तस्याधिष्ठानाभेदासंभवादद्वैतनिष्ठारूपामपवाददृष्टिमालंबस्वेतिभावः तस्मात्त्वममबाधेदित्यंशंव्याचष्टे अहमिति । ब्रह्मात्मबोधः पूर्वपुण्यस्यपरिपाकात्प्रतिबंधनिरासपूर्वकंसामग्रीसंपादनात्मकात्जातश्चेदित्यन्वयः २१

जातइति । अन्यज्ञेदक्यामिनज्ञातुंयोग्यंप्रमादापातात् । 'मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति'इतिश्रुतेः ननुसतिफलेकुतोनज्ञेयं दृश्यतेहिराज्यादिलोभेनसंग्रामादौमृत्युभयेपिप्रवृत्तिरतआह तदैक्यमिति । विषयेणविषयिणोलक्षणात्तदैक्यंब्रह्मात्मैक्यज्ञानंप्रमोदमेतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतिबोधितंनिरतिशयानंदंकरोतिव्यंजयतीत्यर्थः अतःसम्राजावरा टिकार्जनवत्प्रमादोनकार्यइतिभावः तज्जातीयादिन्यंशंव्याचष्टे उक्तमिति । तद्वेदांतजन्यज्ञानमतिअतिक्रम्यनइयान्नगच्छेदितिश्रुतिपदार्थः २२ गमनकर्मदर्शयति अन्यदिति । साधनजातं जन्यफलहेतुभूतंलौकिकवैदिककर्मजातंहियतःअयंमोक्षार्थी तच्चबंधकारणमिति नात्यायन्पूर्वेइत्यंशोपबृंहणःयापराश्चप्रजाइत्यारभ्यकरिष्यमाणत्वाद्येऽत्यायंस्तेपराबभूवुरित्यंशंव्याचष्टे । सच्चिदानं दमिति । सच्चिदानंदस्वरूपंआत्मानंसर्वांतरंत्रिविधपरिच्छेदराहित्याद्द्वितीयंइमंसाक्षादपरोक्षमज्ञानेसतिईशानंसर्वनियंतारमाज्ञोल्लंघिनांभयप्रदंसर्ववेदप्रतिपाद्यम् २३ अतिक्रम्येति । एतादृ शमतिक्रम्ययेगतास्तेपरिभूताइत्यन्वयः ईश्वरातिक्रमोनामतन्निःश्वसितत्वेनतदाज्ञारूपवेदार्थाननुष्ठानम् लोकेपियोयदाज्ञामुल्लंघतेसतमतिक्रामतीतिव्यवह्रियते वेदार्थाननुष्ठानमेवचज्ञानाति क्रमः तत्साधनतन्निष्ठान्यतरानाचरणात् यथाधर्मंतत्साधनंचाननुतिष्ठन्धर्ममतिक्रामतीतिव्यवह्रियते इत्याशयेनईश्वरातिक्रमएवपरिभवकारणत्वेनमूलउक्तः परिभवस्तुतामसयोनिप्राप्तिः तदुक्तंभगवद्गीतासु 'तानहंद्विषतःक्रूरान्संसारेषुनराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु'इति देहिनोदेहाभिमानवंतः । अत्रेतिहासमवतारयति अत्रेति २४ ऋषीणामिति । निःश्रेयस

जातस्ततोन्यन्नज्ञेयंतदैक्यंहिप्रमोदकृत ॥ उक्तंवेदांतविज्ञानमतिक्रम्यनचव्रजेत् २२ अन्यत्साधनजातंहिमोक्षार्थीबंधकारणम् ॥ सच्चिदानंदमात्मान मीशानमिममद्वयम् २३ अतिक्रम्यगतायेतेपरिभूतास्तुदेहिनः ॥ अत्रचोदाहरन्तीममितिहासंपुरातनम् २४ ऋषीणांचप्रजानांचसंवादंसाधनंप्रति ॥ अ तींद्रियार्थद्रष्टारोजितबाह्यांतरेंद्रियाः २५ यथोपपन्नलाभेनसंतुष्टाश्चसहिष्णवः ॥ आत्मविज्ञानसंपन्नालोकानुग्रहकारिणः २६ सनकाद्याःपुरासृष्टाब्रह्मणासृष्टि कारिणा ॥ सुखार्थिनीःप्रजादृष्ट्वासाधनज्ञानवर्जिताः २७ इदमूचुःकृपाविष्टाज्ञानंवःसुखसाधनम् ॥ तेषांतद्वचनंश्रुत्वाप्रजास्तादैवमोहिताः २८ अनादृत्य गताःसर्वाःसुखार्थंसाधनांतरम् ॥ तत्रतिस्रःप्रजामूढानवेदोक्तंचमेनिरे २९ साधनंप्रज्ञयैवैताःशब्दाद्येवाभिमेनिरे ॥ शब्दादिसेवनात्तासांमनोवाक्कायदोषतः ॥ ३० नभोभूभूविलावासस्त्रिधाकायोव्यजायत ॥ मानुषैरुपभोग्योयंवध्यश्छेद्यश्चनित्यशः ३१

साधनस्यलक्षणभूतंऋषिप्रजासंबंधिसंवादरूपमितीतिहासविशेषणम् अतींद्रियंतर्कागोचरमागमार्थंद्रष्टुंशीलंयेषान्तेतथा सुप्तप्रबुद्धन्यायेनाधिगतवेदार्थाइत्यर्थः जितानिबाह्यानिआंतराणिचइं द्रियाणियैस्तेतथा एतेनशमदमानुष्ठानंबोध्यते २५ यथोपपन्नेति । उपरताःसहिष्णवइतितितिक्षावंतः आत्मविज्ञानसंपन्नाःसाक्षात्कृतात्मतत्त्वाः तेषांतनुस्थितौप्रयोजनंदर्शयति लोकानुग्रह कारिणइति २६ आत्मेति । एतादृशाआचार्यलक्षणोपेताःशुद्धसात्त्विकाःसनकाद्याः सृष्टिकारिणाब्रह्मणापुराप्रथमंसृष्टाः तेचपश्चात्सृष्टास्त्रिविधाःप्रजानिःश्रेयससाधनज्ञानवर्जितादृष्ट्वोचुरित्यन्वयः २७ इदमिति । दैवमोहितादैवेनपूर्वसंस्कारेणश्रुतिस्मृतिषुमृत्युप्रकृतिस्वभावपदैर्व्यवहृतेनमोहिताविवेकहीनाः २८ अनादृत्येति । अन्यत्साधनंकर्मरूपं तत्रतासुप्रजासुतिस्रस्तामस्योऽधमम ध्यमोत्तमाः 'पापःपापेनभवति'इतिश्रुतेः पापवासितावेदोक्तंनमेनिरे २९ साधनमिति । एताःप्रजाः प्रज्ञयापूर्वजन्माभ्यस्तानुभवोत्थसंस्कारजातयाबुद्ध्या शब्दादिविषयजातमेवसुखसाधनंमे निरसंकल्पविषयंचक्रुः 'यत्क्रतुर्भवतितत्कर्मकुरुते' इतिश्रुत्युक्तन्यायेनशब्दादिसेवनेकृतेसतिमनोवाक्कायेषुदोषउत्पन्नः मनोदोषाःपरद्रव्याभिलाषादयः वाग्दोषानिष्ठुरत्वादयः कायदोषाःस्तेयाद यस्तेभ्यः ३० नभइति । नभोवासःपक्ष्यादिः भूवासःवृक्षादिः भूविलावासःसर्पादिरित्येवंत्रिविधःकायस्तेषांव्यजायत कीदृशस्त्रिविधोपिकायोमानुषैरुपभोग्योवध्यश्छेद्यश्चप्रसिद्धमेतत् ३१

अहस्तेति । तथाअहस्तपादवागादिःव्यवस्थयासुखहीनोऽतिदुःखितश्च । व्यवस्थांस्फुटयतिसार्द्धेन । पक्षिणोहस्तहीनाः पादपास्तुअघोंद्रियाः अल्पार्थेनञ् अल्पानिअस्फुटानिघोंद्रियाणियेषा मित्यर्थः अतोनपुराणांतरविरोधः अपिशब्देनकर्मेंद्रियहीनाः ३२ वाचेति । उभयेपिग्राम्याआरण्याश्चपशवोविशदयावाचाहीनाअवाचएव नञोल्पार्थतायाउक्तत्वात् सर्पाद्याःपादादिहीनाः प्रसिद्धाः अत्रतामसाःएतायोनीःप्राप्नुवन्तीत्येतावद्विवक्षितं नतुमनोवाक्कर्मणांयोनीनांचक्रमोविवक्षितइतिमन्वादिस्मृतिविरोधः ३३ नात्यायन्पूर्वेइत्यंशेनसात्विकानांगतिमाख्यातुंराजसा नांसात्विकानांचप्रकृतिंदर्शयति अपराश्चेति । अपराःप्रजाःवेदोक्तकर्मरूपंसाधनंनिजमात्मनाकर्त्तव्यमभिमेनिरेअंगीचक्रुः कीदृश्यः अतिक्रांतात्मसाधनाः आत्मानंसाधयतिस्वराजंसम्राजमिहैव निष्पादयतीतिआत्मसाधनंवेदांतप्रमाणजंज्ञानं । सिद्धचेतरपारलौकिकइत्यात्वम् नंद्यादित्वाल्ल्युः । अतिक्रांतमात्मसाधनंयाभिस्तास्तथा ३४ उपासनमिति । उपासनंचवेदोक्तंनिजंस्वकर्त्तव्यं मेनिरे केषां उक्थादिशब्दबोध्यानां आदिपदेनसंवर्गादिपदग्रहः उक्थादिशब्दार्थानामित्यर्थः कीदृशानामुक्थादिशब्दबोध्यानां वन्ध्यर्कवाय्वाद्यात्मस्वरूपिणाम् वन्ध्यर्कवायवआद्याआत्मानो यस्यसवन्ह्यर्कवाय्वाद्यात्माप्राणः सत्रेधात्मानंव्यकुरुतेलिश्रुतेः तदंशभूतानांसवंशःदेवतानांच उत्तिष्ठतिअनेनसर्वमित्युक्थःप्राणः संवृणक्तिस्वस्मिन्विलापयतीतिसंवर्गः सएव । यद्वा वन्ह्यर्के वायवश्चआद्यात्माचेतिद्वंद्वः वन्ह्यर्केतिविराजोवायुपदेनसूत्रस्यमनआद्यात्मेतिदहरविद्यादिविषयस्यकारणोपाधेरीश्वरस्यग्रहः शेषंसमानम् ३५ अत्रापीति । अत्रापिकर्मोपासनानुष्ठानेपिप्रजानां

अहस्तपादवागादिःसुखहीनोतिदुःखितः ॥ पक्षिणोहस्तहीनास्तेऽघोंद्रियाअपिपादपाः ३२ वाचाविशदयाहीनाःपशवस्तूभयेपिहि ॥ पादादिहीनाःसर्पाद्याःप्रसिद्धाःसर्वदेहिनाम् ३३ अपराश्चप्रजाःकाश्चिदतिक्रांतात्मसाधनाः ॥ वेदोक्तंसाधनंसर्वंनिजंकर्माभिमेनिरे ३४ उपासनंचवह्न्यर्कवाय्वाद्यात्मस्वरूपिणाम् ॥ उक्थादिशब्दबोध्यानांदेवतानांचसर्वशः ३५ अत्रापिद्वैधमापन्नंप्रजानांफलभेदतः ॥ स्वर्गादिसुखसिद्ध्यर्थंवैदिकेज्ञानकर्मणी ३६ चक्रुःकाश्चित्पराजग्मुर्विचार्यैवंपरस्परम् ॥ सनकाद्यैर्वेदविद्भिरुक्तंनःसाधनंपरम् ३७ ज्ञानंतत्राधिकारोस्तिनकथंचननोधुना ॥ सयश्चात्मापरंब्रह्मयज्ज्ञानंसुखसाधनम् ३८ अतोदेहादिसंघातादस्माभिर्नपृथक्कृतः ॥ वेदविद्योपिपूर्वेभ्यःपित्रादिभ्यःकथंचन ३९ बुद्धिमद्भिर्नचास्माभिःस्वयंबुद्ध्यावधारितः ॥ मनसाकल्पितोनापिमनश्चारविशारदैः ४० घ्राणादिभिर्नवाघ्रातःकुतश्चिदेहमंदिरे ॥ चक्षुरादिभिरप्येषदृष्टःस्वप्नेपिनैवहि ४१

द्वैधंद्विधाद्वयमापन्नम् । फलभेदतः भिन्नफलबोधकवाक्यद्वैधमालोच्येत्यर्थः ल्यब्लोपेपंचमी । द्वैधंस्फुटयति काश्चिद्राजस्यःप्रजाः दर्शपूर्णमासाभ्यांयजेतस्वर्गकामइत्यादिवाक्यान्येवालोच्यरजसा गुडजिह्विकान्यायमनवधार्यस्वर्गाद्यर्थंकर्मोपासनेचक्रुरित्यर्थः याभगवद्गीतासुयामिमांपुष्पितामित्यत्रोक्ताः ३६ चक्रुरिति । पराःसात्विक्यःप्रजाएवंवक्ष्यमाणप्रकारेणविविदिषासंबंधबोधकं तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसानाशकेनेतिवाक्यंविचार्यकर्मोपासनेजग्मुःप्रापुःचक्रुरितियावत् । तेषांविचारस्वरूपमाह सार्द्धैकादशभिः । सनकाद्यैर्नोस्मभ्यंपरंनिःश्रेयसकरंसाधनंज्ञानमुक्तं । तत्रनोधिकारोनास्तीत्युत्तरेणान्वयः ३७ ज्ञानमिति । वाक्यार्थज्ञानाधिकाराभावेपदार्थज्ञानाभावंहेतुमाह । सशास्त्रप्रसिद्धः यआत्मात्वंपदलक्ष्यः परंब्रह्मतत्पदलक्ष्यः यज्ज्ञानंसुखसाधनंससंघातान्नपृथक्कृतइत्युत्तरेणान्वयः ३८ अतइति । पृथक्करणंलक्षणज्ञानाधीनंलक्षणज्ञानंचतस्यलौकिकप्रमाणागोचरत्वान्नजातमित्याहुः वेदविद्योपिपित्रादिभ्यः पूर्वेभ्योहेतुभ्यस्तद्वाक्येननावधारितः ३९ बुद्धिमद्भिरिति । बुद्ध्यानावधारितः मनश्चारविशारदैःमनःप्रवृत्तिकुशलैर्मनसापिनकल्पितः ४० घ्राणादिभिरिति । घ्राणमादिःकारणंयासांवृत्तीनां ताघ्राणादयस्ताभिः एवंचक्षुरादिभिरिति । शेषंस्पष्टम् ४१

ननुप्रमाणांतरागोचरत्वेपि प्रज्ञाप्रतिष्ठाप्रज्ञानंब्रह्मेत्यादिवाक्यान्निर्धार्यतामतआहुः। प्रज्ञेत्यादीति । किमिदंसगुणपरंनिर्गुणपरंवेतिसंशयप्रतिबंधात्तदपिकर्तुंनशक्नुमइतिभावः यदिकश्चिद्ब्रूयाद्भवंतो ज्ञात्वागोपायंतीतितंप्रत्याहुः । अस्माभिरिति । 'ब्रूयुः स्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत'इतिप्रसिद्धेर्नैवंशंक्यमितिभावः ४२ कियत्तर्हिभवद्भिर्ज्ञातमित्यतआहुः । किंत्विति । स्थूलदेहात्पृथग्भूतःकर्तापुण्यपापफलभुगात्मास्तीत्येतावन्मात्रंजानीमः अत्र'श्रोतामंताविज्ञाताद्रष्टादेष्टाघोष्टासर्वेषांभूतानामान्तरःपुरुषः'इतिश्रुतिरप्यनुकूलाभातीत्याहुः । श्रोतेत्यादि ४३ तर्हिगुरूपसत्तिर्निर्णयायक्रियतामितिशंकितेवैराग्याभावात्तत्रापिनास्माकमधिकारइत्याहुः । नविरागमिति । कवषस्यापत्यानि शुभ्रादिभ्यश्चेतिढक् कावषेयामुनयआंतराग्निहोत्रविदः अन्यदग्निहोत्रमग्निहोत्रांतरंवाह्याग्निहोत्रंतस्माद्यथाविरागंप्राप्ताएवंवयंयागाध्ययनकर्मसुनविरागंप्राप्ताः वैय्यधिकरण्येनदृष्टांतः अंतराग्निहोत्रंचवाक्प्राणयोर्न्योन्यपरिपरस्परविलयनचिंतनात्मकंकौषीतकिशाखायांप्रसिद्धं ४४ यद्येवंकर्मैवस्वर्गाद्यर्थंकर्तव्यमितिचेत्तर्हिजन्मवैफल्यापातः 'नचेदवेदीन्महतीविनष्टिः'इतिश्रुतेरित्याहुः शरीरमितिसार्धद्वयेन । सर्वेषांदेहिनांशरीरंब्रह्मबोधार्थंनिर्मितमित्यन्वयः तत्रहेतुर्यतइत्यादि । पादस्याग्रमंगुलीपंचकात्मकंप्रपदंतस्याग्रंनखाग्ररूपंप्रपदाग्रंतदारभ्य ल्यब्लोपेपंचमी ४५ ऊरूदरोरःस्थानेष्विति । गुहांतःप्रविष्टदीपस्योत्तरोत्तरंप्रकाशाधिक्यंद्वारतःप्रकाशाल्पत्वंप्रसिद्धंतथात्मनोहृदयादावुपलब्ध्याधिक्याभिप्रायेणसर्वगतस्याप्यात्मनःउत्क्रांतिप्रवेशयोःप्राणोपाधिकत्वंप्राणस्यचपादाग्रमारभ्यप्रवेशःस्फुटीकरिष्यतेतदभिप्रायेणवापादाग्रमारभ्यप्रवेशोक्तिः श्रुतिः 'सएषइहप्रविष्टआनखाग्रेभ्यः'इत्याकारा ब्रह्मरंध्रद्वाराप्रवेशाभिप्रायस्तुवक्ष्यते तत्रापीति । तत्रदेहेपुपौरुषोदेहःविशदात्मावबोधायस्पष्टात्मज्ञानायइत्युत्तरेणान्वयः यतःसंपन्नान्यखिलानिआचार्यशास्त्रादिरूपाणिसाधनानियत्रसतथा ४६ विशदेति । अत्राविरपरोक्षः स्यात् इतिइत्यर्थकाहियतःश्रुतिः'पुरुषत्वेचाविस्तरामात्मा'इत्याकारा तर्हियदत्रशरीरेसंपाद्यंतदन्विष्यतामतआहुः कर्तव्यमिति । श्रुतेःसंमतंहितंचयत्कर्तव्यंतदस्मभ्यंतेःसनकाद्यैरुक्तम् ४७ तदतिक्रमःकिंकृतोतआहुः अशक्यमिति । नास्माभिरतिक्रमःकिंतुकथमस्माकमत्राधिकारःस्यादितिचिंतयाइहागताःतूष्णींचिंतयास्तब्धवाचः ततश्चिंतयास्मृतात्तमेतमित्यादिवाक्यात् अधिकारसंपत्त्यैअधिक्रियतेफलेनसंबध्यतेऽनेनेत्यधिकारःसाधनचतुष्टयंतस्यसंपत्तिःकल्मषात्मकप्रतिबंधराहित्यंतदर्थंज्ञानकर्मणीउपासनकर्मणीकुर्महे पापानिहिशुभप्रवृत्तिप्रतिबंधकानिसत्कर्माणिचतन्निवर्तकानि तथाचश्रुतिस्मृती 'पापःपापेनभवतीति' 'कषायपक्तिःकर्माणिज्ञानंचपरमागतिः। कषायेकर्मभिःपक्वेततोज्ञानंप्रवर्तते'इति एतावतानात्यायन्नित्यंशोल्याख्यातः पूर्वंसनकादयोनात्यायन् तन्निष्ठाएवबभूवुरित्यप्यर्थोऽनुसंधेयः ४८ अथाधिकारिसिद्धिपूर्वकमुपनिषद्व्याख्यामवतारयति इतिसंचिन्त्येत्यादिपंचभिः स्पष्टम् ४९ मुमुक्षवइति । तत्समानाःशमदमादयोहिजीवन्मुक्तानांलक्षणानिमुमुक्षूणांचसाधनरूपाणि तदुक्तं 'बुद्धाद्वैतसतत्त्वस्ययद्वेष्टृत्वादयोगुणाः। अयत्नतोभवंत्यस्यनतुसाधनरूपिणः'इति विशेषमाह आत्मज्ञानेति । स्वाशयंसोहंभगवःशोचामितंमांभगवान्शोकस्यपारंतारयत्वितिसिद्धम् शेषंस्पष्टम् ५०

प्रज्ञेत्यादिश्रुतेर्वाक्यैर्विज्ञातोनिर्गुणोनच ॥ अस्माभिश्चस्वशिष्येभ्योनोपदिष्टोस्तिनिर्गुणः ४२ किंतुदेहात्पृथग्भूतःपुण्यापुण्यफलोपभुक् ॥ अस्त्यात्मेतितथाश्रोतामंतेत्यादिश्रुतिर्जगौ ४३ नविरागंवयंप्राप्तायागाध्ययनकर्मसु ॥ मुनयःकावषेयावाअग्निहोत्रांतराद्यथा ४४ शरीरंब्रह्मबोधार्थंसर्वेषामिहदेहिनाम् ॥ निर्मितंयतएतस्मिन्प्रपदाग्राच्छिरोवधि ४५ ऊरूदरोरःस्थानेषुप्रविष्टंतदितिश्रुतिः ॥ तत्रापिपौरुषोदेहःसंपन्नाखिलसाधनः ४६ विशदात्मावबोधायस्यादाविरितिहिश्रुतिः ॥ कर्तव्यंहितमस्मभ्यंतैश्चोक्तंश्रुतिसंमतम् ४७ अशक्यंचेतिविज्ञायतूष्णीमिहसमागताः ॥ ततोधिकारसंपत्त्यैकुर्महेज्ञानकर्मणी ४८ इतिसंचिंत्यसंचक्रुस्ताःप्रजाज्ञानकर्मणी ॥ ततोविशुद्धहृदयाःप्राप्यैतान्नृपिसत्तमान् ४९ मुमुक्षवस्तत्समानाआत्मज्ञानविवर्जिताः ॥ स्वाशयंत्वखिलंतेभ्यऊचिरेब्रह्मबुद्धये५०

तेपीति । तेषामुपदेशेप्रवृत्तौहेतुमाह- कृपयेति स्पष्टम् ५१ वयमिति । 'कोअद्धावेदकइहप्रावोचत्'इतिश्रुतेः जातिगुणक्रियानामांतत्रासंभवात्मनोवचसोःसाक्षात्तत्रप्रवृत्तिर्नसंभवतीति भावः ५२ कातर्हिस्माकंगतिरतआहुः तथापीति । शास्त्रसिद्धेनअध्यारोपापवादाभ्यांनिष्प्रपंचंप्रपंच्यतेइतिन्यायसिद्धेनव्यवहारेणलक्षणयाबोधनात्मकेन दृष्टांतःराजानमिति । यथासु तैराजानंवंदिनोबोधयंतितथाज्ञाननिद्रासुप्तंवस्तुतः शुद्धमात्मानंवेदांतास्तात्पर्यरीत्याबोधयंतीत्यर्थः ५३ ननुकथंशुद्धमात्मानंबोधयंतितस्यसविशेषत्वेनप्रत्यक्षादिसिद्धत्वादितिचेन्न सविशेषत्वस्य मायिकत्वादितिबोधयितुंप्रवृत्तमात्मेत्यादिवाक्यंव्याख्यातुमारभमाणस्तत्रात्मनःसर्वदासत्त्वात्सृष्टेःपूर्वंसत्त्वकथनमनुपपन्नमित्याशंक्यतदभिप्रायंस्फुटयन् व्यवहारकालिकविलक्षणमारोपाधि ष्ठानत्वयोग्यंयदात्मस्वरूपंतत्परत्वमात्मशब्दस्यदर्शयति शब्दबोधाविति पद्भिः । हेप्राज्ञाःअहमित्याकारकोतथानाहमित्याकारकोशब्दबोधौलौकिकैस्तथावादिभिर्द्विधादृष्टौतथानयोःशब्दबो धयोरर्थंद्वैधंदृष्टमित्यन्वयः आंतरमर्थमहमितिशब्दबोधाभ्यामर्थादविवेचितःभ्यांव्यवहरंतिभ्रांतास्तथाबाह्यंसर्वेनाहमितिशब्दबोधाभ्यांयथोक्ताभ्यांव्यवहरंतीत्यर्थः ५४ नकेवलमहंनाहंविषयाइयं गतिःकिंतुसर्वोलौकिकोव्यवहारोभ्रांतिरूपइतिदर्शयति घटइतिद्वाभ्याम् । लौकिकोलोकप्रसिद्धोयोयंघटइत्यादिकोव्यवहारःसोपिशब्दप्रत्ययबोध्यात्मास्यादित्यन्वयः शब्दश्चप्रत्ययश्चबोध्यश्चशब्द प्रत्ययबोध्याःशब्दज्ञानार्थास्तेआत्माशरीरंघनीभूतंरूपंयस्यसतथा ' आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच'इत्यमरः वर्ष्मशरीरं तथाहि कोयमर्थइतिपृष्टेघटइत्युत्तरंलौकिकाददतितथाकिंज्ञानं

तेपितद्वचनंश्रुत्वाकृपयापरयावृताः ॥ सर्वज्ञाआत्मबुद्ध्यर्थमिदंवचनमब्रुवन् ५१ वयंवक्तुंकथंशक्ताअवाङ्मनसगोचरम् ॥ सच्चिदानंदमात्मानंज्ञातुंवायूयमी दृशाः ५२ तथापिशास्त्रसिद्धेनव्यवहारेणबोधुना ॥ वक्ष्यामःपरमात्मानंराजानमिवबंदिनः ५३ शब्दबोधौद्विधादृष्टौलौकिकैर्वादिभिस्तथा ॥ अ हंनाहमितिप्राज्ञाअर्थद्वैधंतथानयोः ५४ घटइत्यादिकोयोयंव्यवहारोत्रलौकिकः ॥ शब्दप्रत्ययबोध्यात्मास्यात्सोप्येतद्विवर्जिते ५५ वाचिशब्दोहृदि ज्ञानमर्थोभूम्यादिसंस्थितः ॥ कथंसशब्दबोधात्माभवेद्भ्रांतिविनान्नृणाम् ५६ शब्दबोधावपियदास्यातामर्थैतिदातयोः ॥ पृथगेवभवेतांतौयथाभिन्नौपितुःसुतौ ५७ अहंशब्दप्रत्यययोरात्माविषयईरितः ॥ व्यवहारेतथानात्मात्वनहंशब्दबोधयोः ५८

घटइतिकःशब्दोघटइत्येकरूपमुत्तरम् एतमविविक्तंव्यवहारंयोगसूत्रमप्यनुवदति 'शब्दार्थप्रत्ययानामितरेतराविवेकात्संकरः'इति एतद्विवर्जिते एतेनसंकरेणभ्रांतिसिद्धेनविवर्जितेवस्तुनियोयंलौ किकोव्यहारइत्यन्वयः ५५ ननुव्यवहारस्यकुतोभ्रांतित्वमितिचेत् विचारासहत्वादित्याह वाचीति । वाचिशब्दस्तिष्ठति हृद्यंतःकरणेज्ञानंतिष्ठति अर्थोभूम्यादौस्थितः सोर्थःशब्दबोधात्माभ्रांतिंवि नाकथंस्यादित्यर्थः एवंसतिभिन्नाधिकरणानांतादात्म्यंभ्रांतिंविनाकथंनिर्वहतीतिभावः ५६ शब्दार्थप्रत्ययानांतादात्म्यस्वीकारेव्याघातोप्यायातीत्याह शब्दबोधावपीति । यदायदिशब्दबोधाव पिअर्थस्यप्रकाशकौसंतौतयोःशब्दबोधयोरर्थौप्रकाश्यौस्यातांतदातौस्वस्मात्पृथक्स्यातां प्रकाश्यप्रकाशकयोर्हिभेदोदृष्टः यथाएकसंबंधिज्ञानमपरसंबंधिस्मारकमितिन्यायेनपितृस्मारकौसुतौपि तुर्भिन्नौ तथाचप्रकाशकयोःशब्दबोधयोः प्रकाश्यार्थरूपत्वेऽर्थस्यवातद्रूपत्वेस्वस्माद्भेदापत्तिः साचनोपपद्यतइतिभावः यद्वाशब्दबोधयोरर्थाद्भेदंप्रकारान्तरेणोदाहरति शब्दबोधाविति यदायस्मिन् कालेशब्दःशब्दस्यार्थोभवतियथानुकरणशब्दस्यानुकार्यःशब्दः बोधस्यचबोधोयदार्थः यथान्यायमतेऽनुव्यवसायस्यव्यवसायः तदापितयोर्भेदएवस्फुटः तथाचार्थात्तयोर्भेदोविवेकिनासुज्ञातइति भावः ५७ एवमुपपादितमर्थंप्रकृतेनिवेशयति अहंशब्दप्रत्यययोरिति । अहमित्याकारकस्यशब्दस्यज्ञानस्यचताभ्यामविविक्तआत्माऽऽत्रभावोव्यवहारेविषयोमतः विशेषेणसिनोतितादात्म्येनब-

भ्रातीतिविषयःपित्रबंधनेपचाद्यच् तथाऽनात्माशब्दबोधाविविक्तःअनहंशब्दबोधयोर्विषयोभवतीति ५८ एतादृशसंकीर्णरूपवैलक्षण्यद्योतकासीदग्रशब्दसाहचर्यात्शुद्धाद्वितीयतत्त्वपरआत्मश ब्दइत्याहशब्दबोधाविति । औपाधिकोह्यात्मनिभेदः एवंचअहंशब्दबोधयोर्योऽर्थःशब्दबोधौविहायएकोभेदवर्जितोवशिष्यतेइतिशेषः सएवात्रवाक्येप्रतिपाद्यइत्याह सएवेतिसार्धेन महेश्वरः भेदस द्वित्यान्महत्त्वंसर्वशक्तत्वादीश्वरत्वंबोध्यम् ५९ एवशब्दार्थावधारणव्यावर्त्यमाह नशब्दबोधाविति । लोकप्रसिद्धोशब्दबोधौअनात्माचनासन्नित्यर्थः दृष्टांतः भास्करोयथोपचयापचयधर्मि भावरूपंतमोविरोधात्संभक्ष्यतमसातत्प्रयुक्तपिशाचादिभिश्चवियुक्तोदिनेविराजते एवमात्मानृसिंहःकारणत्वात्स्वकार्यंसर्वंस्वस्मिन्विलाप्याद्वितीयोवतिष्ठतेइतिभावः दृष्टांतंविवृणोति दिवसेइति त्रिभिः सदानंदात्मनीति । अयमेवकारणात्माछांदोग्येसत्पदेनव्यवहृतः तैत्तिरीयेआनंदपदेन अत्रत्वात्मपदेन वेदांतानामैकमत्यादितिभावः ६० निशास्विति । अस्यशास्त्रस्यसंयमि मुख्याधिकारिकत्वाद्दिनंप्रलयोपमानत्वेनरात्रिःसर्गोपमानत्वेनचवर्णिता यथोक्तंगीतासु । 'यानिशासर्वभूतानांतस्यांजागर्तिसंयमी । यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः'इति । दिवाकरम भिभूयेतिव्याप्यव्यापकभावद्योतीक्त्वाप्रत्ययः मुखंव्यादायस्वपितीतिवत् यथायदाशयनंतदास्यमुखव्यादानंतथायदातमउत्पत्तिस्तदाविरोधाद्भास्करादर्शनमिति उत्पद्यंतइत्यत्रमूलकारणादविद्या स्यादितिशेषः । तमसोप्याकाशादिवन्मूलकारणजन्यत्वस्यविद्युदादिवज्झटितिप्रादुर्भावस्यविवरणकारैरुपपादितत्वादिति ६१ तमःसाम्यंदार्ष्टांतिकेस्फुटयति सच्चिदानंदमिति । अस्तिभाति

शब्दबोधौविधूयैकोयोर्थोहंशब्दबोधयोः ॥ सएवजगदुत्पत्तेःपूर्वमासीन्महेश्वरः ५९ नशब्दबोधौनाऽनात्मानिस्तमाभास्करोयथा ॥ दिवसेदिवसेभानौतमोयद्व ल्लयंव्रजेत् ॥ सदानंदात्मनितथाजगदेतद्विलीयते ६० निशासुयद्वत्सर्वासुह्यभिभूयदिवाकरम् ॥ तमउत्पद्यतेतद्वज्जगदेतद्विजायते ६१ सच्चिदानंदमात्मा नमभिभूयविलक्षणम् ॥ असज्जडंदुःखरूपमनात्मवपुरेवहि ६२ रज्जुरेवयथासर्पःसर्पोत्पत्तेःपुरास्थिता ॥ आनंदात्मातथाऽनात्मानात्मोत्पत्तेःपुरास्थितः ॥ ६३ यथासुपुप्तःपुरुषोवासनाकोटिगर्भिणीम् ॥ पश्यन्नविद्यामप्येतांनजानात्यात्मनःपृथक् ६४ आनंदात्मापिचतथामायांविश्वैकगर्भिणीम् ॥ आत्मनोनपृ थग्वेत्तिमायावीसमहेश्वरः ६५

नियमितिसूर्यवत्स्पष्टमप्यात्मानंतमोवदभिभूयाच्छाद्यैवजगद्विजायतइत्यनुषंगः यतोविलक्षणंसच्चिदानंदात्मपदार्थवैलक्षण्यंचतुर्भिःपदैर्दर्शयति असदित्यादि ६२ सूर्योलयमात्रेदृष्टांतउक्तोन हिसतमसोविवर्तोपादानमतोविवर्तोपादानंदृष्टांतमाह रज्जुरेवेति । पूर्वार्धंस्पष्टं तथानंदात्मैवपुरासीत् अनात्मातुआत्मोत्पत्तेर्निजोत्पत्तेःपुरानस्थितोभूदित्यन्वयः ६३ ननुकार्यप्रयुक्तद्वैतरा हित्येपिमायाऽव्याकृतादिसंज्ञककारणप्रयुक्तंद्वैतंस्थितमेवेत्याशंक्यासद्भामभावोनिरूप्यतेइतिन्यायेनसताद्वैतंवाच्यं कीदृशंचमायायाःसत्त्वमिष्यते पृथक्स्फूर्तिर्वाप्रमाणसिद्धत्वंवानाद्यइत्या ह यथासुपुप्तइतिद्वाभ्यां । यथासुप्तःपुरुषोवासनाकोटिगर्भिणीमविद्यांपश्यन्नप्येतामात्मनःपृथङ्नजानातीत्यन्वयः वासनानांकोटयोऽसंख्यातावासनाइतियावत् ताभिर्गर्भिणींतद्रूपगर्भवती मित्यर्थः प्रकृत्यादित्वात्तृतीयांतत्वेनसमासः । वर्षापायेमंडूकानांसूक्ष्मावस्थारूपसंस्कारवतीयथामृत् तथाजाग्रत्स्वप्नपदार्थसंस्कारवत्सोपुप्तमज्ञानमितिभावः ६४ एवंव्यष्ट्युपाधिकजीवेसाधि तमर्थंसमष्ट्युपाधकेदार्ष्टांतिकेदर्शयति आनंदात्मेति । भूमरूपत्वेनानंदरूपः विश्वैकगर्भिणींएकएकतामापन्नः अव्याकृतइतियावत् तादृशोगर्भोऽस्याअस्तीतिएकगर्भिणोविश्वेनसर्वजगताएकग र्भिणीविश्वैकगर्भिणीतांतथा शेषंस्पष्टम् ६५

नद्वितियःतस्यांप्रमाणाभावादित्याह अपिमायेतिसार्धैस्त्रिभिः । मायेत्याकारामायायाःसिद्धिरपिस्फूर्तिरपिस्वतःमायातएवप्रमाणनैरपेक्ष्येणेष्यतेविवेककुशलैरितिशेषः तदुक्तंवार्त्तिककारैः 'अविद्यास्तीत्यविद्यायामेवास्तित्वंप्रकल्प्यते । ब्रह्मदृष्ट्यात्वविद्येयंनासीदस्तिभविष्यति' इति ६६ प्रमाणाभ्युपगमेपिकिंप्रमाणंसुषुप्तिरूपायामविद्यायांमतंभवता प्रत्यक्षंवानुमानंवाऽऽगमोवाऽन्यद्वा तत्राद्येसुप्तपुरुषस्यप्रत्यक्षंतत्रकमतेअन्यपुरुषस्यवा उभयमपिनसंभवतीत्याह सुषुप्तइति । सुषुप्तःस्वयंतांनजानातीत्यन्वयः । इंद्रियजन्यंहिज्ञानंप्रत्यक्षमितिव्यवहरंतिवादिनः सुषुप्तस्येंद्रियाणितुलीनानीतिकथंतांजानीयादिति जागरूकोन्योपितांनवेत्तिअयोग्यत्वादित्यर्थः साक्षिप्रत्यक्षापादनंतुसाक्षिणःसत्यग्रहणनियमाभावेनाविश्वासात्साक्षित्वस्यज्ञानघटितत्वेनपूर्वश्लोकोक्तस्वतःसिद्धिरूपेष्टापत्त्यावासमाधेयम् ६७ नद्वितीयइत्याह करणानामिति । अयंसुषुप्तिमानिंद्रियचेष्टाहीनत्वात्संमतवदित्यनुमानंभवताविधेयं तत्तुनसंभवति यस्मात् याकरणानामचेष्टाहेतुत्वेनोदीरितासानलिंगंनहेतुः कुतः व्यभिचरित्वात् अव्यभिचारितःसंबंधोहिव्याप्तिः तांविनाकथंहेतुतेतिभावः व्यभिचारःकुतःसिद्धइत्यतआह स्वप्नादावपीति आदिपदेनसमाधिग्रहःस्वप्नादौसुषुप्तिभिन्नेअचेष्टायादर्शनात्साध्याभाववद्वृत्तित्वरूपोव्यभिचारःस्फुटइतिभावः ६८ नतृतीयइत्याह नचतस्यामिति । तुशब्दोवैलक्षण्यार्थः विलक्षणमपौरुषेयंशास्त्रंतस्यांनप्रमाणंपुरुषेणार्थ्यतेइष्यतेइतिपुरुषार्थःफलंतदभावादित्यर्थः आगमोपिपौरुषेयोऽपौरुषेयोवा नाद्यः तस्यप्रत्यक्षादिदर्शितेवस्तुनिप्रवृत्तेस्तन्निरासेननिरस्तत्वात् नद्वितीयः यत्परःशब्दःसशब्दार्थइतिन्यायेनयत्रतात्पर्यंसवेदार्थोवाच्यः

**अपिमायेतिमायायाःस्वतःसिद्धिरिहेष्यते ॥ सुषुप्तस्ययथासुप्तिःसुष्ट्यैवेहप्रसिद्ध्यति ६६ सुषुप्तोनचतांवेत्तिस्वयंकरणसंक्षयात् ॥ नचान्योजागरूकोपितस्यसाविषयोनहि ६७ करणानामचेष्टायानसालिंगमुदीरिता ॥ व्यभिचारित्वतोयस्मात्स्वप्नादावपिदर्शनात् ६८ नचतस्यांप्रमाणंहिशास्त्रंत्वपुरुषार्थतः ॥ तस्मादनुवदत्येतांस्वतःसिद्धांसुदुर्लभाम् ॥ मायेत्यादिवचःसंघैरानंदात्मावबुद्धये ६९ अतःसमायोप्यात्मायंनिर्मायइवसंलये ॥ सतमस्कोयथाभानुर्दिवसेनिस्तमाइव ७० एवंस्थितस्तदादेवःपूर्वसंस्कारसंस्कृतः ॥ वासनानांसमुद्बोधात्पर्यालोचयदीश्वरः ७१**

दार्थोवाच्यः तत्तुपड्विधलिंगावसेयं तत्रउपक्रमोपसंहाराभ्यासार्थवादास्त्रयःप्रमेयशेषशब्दप्रमाणनिष्ठाःअपूर्वत्वाबाधितत्त्वफलवत्त्वानिप्रमेयनिष्ठानिप्रधानानि । तत्रापिप्रवृत्तौप्रेक्षावद्भिर्जिज्ञासितत्वात्फलवत्त्वंप्रधानं तदज्ञानप्रतिपादनेनास्तीतिभावः किंपरंतर्हिमायाचाविद्याचस्वयमेवभवतीत्यादिशास्त्रमतआह तस्मादिति । तस्मादेतत्प्रतिपादनेफलाभावादेतांशास्त्रंमायेत्यादिवचःसंघैरनुवदतीत्यन्वयः कीदृशींःस्वतःसिद्धां अनन्यलभ्यःशब्दार्थइतिन्यायात्प्रतिपादनानर्हां सुदुर्लभांदीपेनांधकारवत्प्रमाणेनदुर्दर्शां । अनुवादप्रयोजनंफलवत्संनिधावफलंतदंगमितिन्यायेनाह आनंदात्मावबुद्धये सृष्ट्यादिवाक्यानिहिअद्वैतबुद्ध्यवतारणद्वाराऐक्यबोधकवाक्यशेषाणीतिभावः नचतुर्थः अचिन्त्यशक्तेरविद्यायाःकेनचित्सादृश्याभावेनोपमानासंभवात् भ्रमसिद्धेःकार्यैःस्वसजातीयस्यैवार्थापत्त्यासाधनात् अनुपलब्धिस्तुतस्यभावरूपत्वाद्दूरापास्तेत्यवधेयम् ६९ फलितमाह अतःसमायइति । संलयेप्रलयेदृष्टांतः सतमस्कोयथाभानुरिति मूलाविद्यायास्तमःकारणत्वाद्भानोस्तत्कार्यतमोमात्रविरोधित्वात्कारणाकारतमोविशिष्टोपिभानुःस्वतंत्रतमोराहित्यान्निस्तमाव्यवह्रियतेतथाव्यापारात्मकस्वातंत्र्यरहितमायाविशिष्टोप्यात्मानिर्मायइतिचोक्तइत्यर्थः एतेनमिपत्व्यापारवदन्यतनाभूदित्यर्थकंविजातीयभेदाभावपरंद्वितीयंवाक्यंव्याख्यातमिति ७० सऐक्षतेत्यादिवाक्यंव्याचष्टे एवंस्थितइतिद्वाभ्यां । पूर्वसंस्कारसंस्कृतःपूर्वकल्पेषुयत्स्रष्टव्यविषयालोचनंमायापरिणामरूपमीक्षणसंज्ञंकृतंतत्संस्काराख्यास्तः वासनानांतेषामेवसंस्काराणांसमुद्बोधात्सृष्टिकालोद्बुद्धप्राण्यदृष्टकृतात्कार्योन्मुखत्वात् पर्यालोचयत्आलोचनंस्रष्टव्यतत्प्रकारविषयंमायावृत्तिरूपमीक्षणंकृतवानित्यर्थः ७१

आलोचनप्रकारमाह इत्थंमयीति । भूतान्याकाशादीनिभौतिकंसांतविशेषंब्रह्मांडंतद्रूपेणधृष्णोतिप्रगल्भंभवति ज्ञानविषयीभवतीतियावत् तद्भूतभौतिकरूपधृक् । एतादृशंसर्वमपिअव्यक्तमस्पष्ट नामरूपमव्याकृतसंज्ञकंमयिकारणोपाधौस्थितं इत्थंस्पष्टवत्कृत्वेमांलोकत्रयींस्वर्गाकाशभूलोकात्मिकांसक्ष्येइत्यर्थः अत्रजलप्रधानेमहरादिलोकैस्तदाधारस्वर्गस्यैकतांविवक्षित्वाश्रुतावाऽपदार्थ पातालैर्मरपदार्थभूलोकस्यचैकतांविवक्षित्वाआदित्यकिरणप्रधानत्वेनमरीचिपदार्थमाकाशमादायलोकत्रयीमित्युक्तमितिश्रुत्यविरोधः ७२ सइमानितिव्याकुरुते इतिसंकल्प्येतिसार्धेन । अप्स्वंडमि तिअग्निहोत्राहुतिपरिणामजलप्रधानेपुसूक्ष्मपंचभूतेपुहिरण्यगर्भशरीरभूतेपुकार्यंतयास्थितमंडंब्रह्मांडंविराजशरीरमुदपादयज्जनितवानित्यर्थः आत्मनःस्वस्मात्सदात्मकादव्यतिरिक्तंस्वकीयसत्ताहीन मित्यर्थः तस्यसमष्टितांस्पुटयति नामेति । नामशब्दप्रपंचः रूपमर्थप्रपंचः क्रियाएतयोःकारणंकर्मप्रपंचः कर्मफलत्वान्नामरूपयोः नामरूपक्रियाआत्माशरीरंयस्यतत्तथा ७३ तत्रलोकपालसृष्टि परंतस्यमुखमित्यादिआपइत्यंतंवाक्यंसार्धैकादशभिःश्लोकैर्व्याकरिष्यंस्तदनुकूलेक्षणपरंव्याकुरुते सृष्ट्वेत्यादित्रिभिः सर्वज्ञःसर्वशक्तिर्देवइदंवक्ष्यमाणश्लोकद्वयोक्तमालोचनंचक्रेइत्यन्वयः दृष्टांतः मायावीबालकइति 'जन्मौषधमंत्रतपःसमाधिजा सिद्धयः' इतियोगसूत्राज्जन्मतएवमाययानेकभावनिर्माणशक्तिमानसुरादिर्यथाबालकतयारागद्वेषौविनास्वभावान्निर्माणेप्रवर्ततेतद्वदीशोपीत्यर्थः तदुक्तंभगवताव्यासेन ' लोकवत्तुलीलाकैवल्यम्' इति कैवलमेवकैवल्यंलोकवद्राजवत्कैवललीलैवेशस्यसृष्टिरितिसूत्रार्थः गौडपादैरप्युक्तं'ईशस्यैवस्वभावोयमाप्तकामस्यकास्पृहा'इति ७४ इमानीति

इत्थंमयिस्थितंसर्वंभूतभौतिकरूपधृक् ॥ अस्पष्टंस्पष्टवत्कृत्वासक्ष्येलोकत्रयीमिमाम् ७२ इतिसंकल्प्यविश्वात्मासत्यसंकल्पईश्वरः ॥ भूरादिलोकसहितम प्स्वंडमुदपादयत् ॥ आत्मनोव्यतिरिक्तंतन्नामरूपक्रियात्मकम् ७३ सृष्ट्वासर्वंजगद्देवोमायावीबालकोयथा ॥ इदमालोचनंचक्रेसर्वज्ञःसर्वशक्तिभृत् ७४ इ मानिपंचभूतानित्विदमंडंचनीरगम् ॥ अत्रस्थिताइमेलोकाभूर्भुवःस्वरितीरिताः ७५ अचेतनमिदंसर्वंविनश्येत्क्षणमात्रतः ॥ स्वामिहीनंगृहंयद्वन्मृतस्येवकले वरम् ७६ इतिसंचिंत्यतत्रैवच्छिद्राणिविविधानितु ॥ चकारलोकपालानांसृष्ट्यर्थंसजगत्पिता ७७ मुखच्छिद्रादियंजातावाक्शब्दव्यवहारिणी ॥ तत्रैवतस्याः संजातोवन्हिर्वैदिककर्मकृत् ७८ नासिकाच्छिद्रतोघ्राणंघ्राणादेवप्रभंजनः ॥ अक्षिच्छिद्रादिदंचक्षुश्चक्षुषोभगवान्रविः ७९ कर्णच्छिद्रादिदंश्रोत्रंश्रोत्राज्जाता इमादिशः ॥ अतिसूक्ष्माण्यनंतानिदेहेसर्वत्रयानिहि ८०

नीरगंजलप्रधानपंचभूतगतम शेषंस्पष्टम् ७५ अचेतनमिति । स्फुटम् ७६ इतिसंचिंत्येति । प्रथमंछिद्रोत्पत्तावुपपत्तिमाह लोकपालानांसृष्ट्यर्थमिति । लोकपतएभिरितिकरणव्युत्पत्त्यालोकप दार्थंवागादिकरणनिरूप्यंहिलोकपालत्वं करणत्वंचकार्यैनरूप्यं कार्यारंभस्तुगोलकमंतराकरणेर्दुःसम्पादः इत्थंयावताविनानुपपत्तिस्तत्सर्वंकल्प्यतइतिन्यायाच्छिद्राणिससर्जेत्यर्थः जगत्पिताजगतःपितृवद्योगक्षेमनिर्वाहकः ७७ मुखच्छिद्रादिति । मुखच्छिद्रंगोलकंप्राप्यशब्दव्यवहारिणीवाग्जाताप्रादुर्भूतेत्यर्थः पूर्वंस्वकारणादुत्पन्नापीतिशेषः एवमग्रेपि कर्मेंद्रिया णिहिअपंचीकृतभूतराजसांशेभ्योज्ञानेंद्रियाणितुसात्विकांशेभ्यःपूर्वमुत्पन्नानीतितत्रगोलकएवसन्निहितोवह्निर्देवोभूतसात्विकांशोत्पन्नःसंजातःप्रादुर्भूतः कीदृशः वैदिकानिकर्माणिकरोतिनिर्वाह यतीतितथा यद्वावैदिकंकर्मअग्न्युपासनंतद्भावप्रापकंपूर्वकल्पेकृतवान्सतथा वाङ्भावित्वाद्वन्हिर्यजमानः संजातःदेवभावरूपंफलंप्राप्तइत्यर्थः तथाचश्रुतिः ' अग्निर्वाअकामयतदेवानामहमन्नादो भूयासंसएतमग्नयेकृत्तिकाभ्यःपुरोडाशमष्टाकपालंनिर्वपत्'इति एवमग्रेपिकरणदेवोपासकास्तद्भावंप्राप्ताइतिबोध्यम् ७८ नासिकाच्छिद्रतइति । प्रभंजनोवायुरुक्तोर्थः ७९ कर्णच्छिद्रादिति । पूर्वार्धंस्पष्टम् यानिदेहसूक्ष्माणिच्छिद्राणितेभ्योदेहव्याप्यस्थितात्वक्स्पर्शनेंद्रियगोलकचर्मरूपासंजाताइत्युत्तरेणान्वयः ८०

छिद्राणीति । लोमानिकेशाश्चजज्ञिरे लोमकेशसहकृतंस्पर्शनेंद्रियमुत्पन्नमित्यर्थः ८१ लोमभ्यश्चेति । तेभ्यःस्पर्शनेंद्रियसहकृतेभ्यःसर्वेऔपध्यादिभेदभिन्नाःस्थावराजातास्तत्सहकृतोवायु देवतोत्पन्नइत्यर्थः गंधोपाधिर्वायुर्घ्राणदेवता स्थावरोपाधिस्तुस्पर्शनेंद्रियदेवतेतिविभागः ८२ पंचच्छिद्रमिति । पंचपूर्वादिक्रमेणमध्येचप्राणाद्युपासनस्थानानिच्छिद्राणियस्मिंस्तत्तथा अंतरिति अंतराकाशेनदहराख्येनावच्छेदकतयाश्रितम् हृदयंहृदयपदेनश्रुतौविवक्षितंगोलकंजातंतस्मान्मनइंद्रियंजातमिति ८३ मनसइति । नाभिच्छिद्रादिति नाभिछिद्रंगोलकंतस्मात्प्राणभेदोबाह्यवायोराच मनहेतुरपानः पूर्वंभूतानांमिलितराजसांशोत्पन्नोजातःप्रादुर्भूतोऽतिदुःसहोदुःखेनसोढुंशक्यः अतएवप्राणायामस्यदुष्करत्वम् ८४ तस्यापानत्वंनिर्वक्ति । मुखागतमिति । अन्नंपानंअपनयतिअधो नयतीत्यपानइतिविग्रहः तद्देवतामाह । अपानतइति । ८५ अपानस्यमृत्युजनकत्वंलोकप्रसिद्धयुक्त्यासंभावयति । अन्नदोषामिति स्पष्टम् ८६ शिश्नच्छिद्रादिति । उपस्थच्छिद्रंगोलकंततो रेतः तत्सहचरितमुपस्थेंद्रियंजातमित्यर्थः पंचमाहुतिसाधनंद्युपर्जन्यभूमिपुरुषयोषिद्रूपाःपंचाग्नयः श्रद्धासोमवर्षान्नरेतांसिजीवसंपृक्तान्याहुतयः पंचाग्निविद्यायांप्रसिद्धाः तत्रपंचमाहुतेःसाधनंघट वं.रेतःप्रसिद्धंश्रुतावित्यर्थः पुनःकीदृशं जरायुजांडजान्देहांस्तन्वद्विस्तारयल्लोकेपिप्रसिद्धमिति । ननुरेतसासाहचर्यसंबंधेनोपस्थेंद्रियोपलक्षणंनसंभवतिरुयुपस्थेसाहचर्यभंगादतआह शरीरस्येतिपादौ

छिद्राणितेभ्यःसंजातात्वक्देहंव्याप्यसंस्थिता ॥ तस्याःशरीरेलोमानिकेशाश्चापिद्विजज्ञिरे ८१ लोमभ्यश्चसकेशेभ्यःस्थावराःसर्वएवहि ॥ जाताःसर्वोपकाराय क्लेशभाजस्त्वहर्निशम् ८२ पंचच्छिद्रंमांसपद्मंमंतराकाशसंश्रितम् ॥ हृदयंनामतज्जातंतस्माज्जातमिदंमनः ८३ मनसश्चंद्रमाजातोजगदानंदकारकः ॥ नाभिच्छिद्रादयंजातःप्राणभेदोतिदुःसहः ८४ मुखागतमिदंयस्मादन्नपानंचसर्वशः ॥ अंतर्देहेऽपनयतिततोपानोयमीरितः ॥ अपानतोमहानेषमृत्युर्जनभयंकरः ८५ अन्नदोषंविनानैवम्रियंतेप्राणिनःक्वचित् ॥ अन्नंचैषग्रसत्यस्मादपानान्मृत्युरीरितः ८६ शिश्नच्छिद्रादिदंरेतःपंचमाहुतिसाधनम् ॥ जरायुजांडजांस्तन्वच्छरीरस्यचकारणम् ॥ रेतसोपिचनीराणिब्रह्मांडांतःस्थितानिहि ८७ नाभिच्छिद्रादपानोयोमृत्योर्जनकईरितः ॥ सगुदच्छिद्रतोज्ञेयःसपायुर्मित्रपूर्वकः ८८ घ्राणाद्वायुःसगंधःस्याद्भूमिस्तेनहिसास्मृता ॥ त्वचोलोमानितानिस्युःसकंपानिततोमरुत् ८९

शिकशरीरस्यकारणमत्ररेतःपदेनविवक्षितमतोनदोषइति तत्रत्वगसृङ्मांसानिमात्रंशात् स्नाय्वस्थिमज्जानःपित्रंशादितिषट्कोशाःरेतसइति नीराणिनीरप्रधानपंचभूतशरीरःप्रजापतिर्देवउत्पन्नइ त्यर्थः ८७ एवमापइत्यंतंवाक्यंव्याख्यायतस्यस्ववर्तिपदैरुपलक्षणेनगुणोपसंहारन्यायेनचशेषकरणदेवसृष्टिपरत्वंदर्शयति नाभिच्छिद्रादितिसार्धैःसप्तभिः । योऽपानउक्तःसगुदच्छिद्रतोज्ञेयः स्पष्टोभवति अतोहेतोः सोऽपानोवायुः पायुरिंद्रियंभवति मित्रपूर्वकःमित्रसंज्ञःपूर्वःप्रथमंचिंत्योदेवोयस्यसतथा उपासनासुहिप्रथममधिदैवचिंतनंपश्चादध्यात्मचिंतनमितिक्रमःप्रसिद्धः तथाचापानपदेनसदेवंपायुरिंद्रियमुपलक्षितमितिभावः ८८ घ्राणादिति । घ्राणंप्राप्यस्वयंनिर्गंधोपिवायुःसगंधोभवेत् यद्वा घ्राणाद्धेतोःसगंधोवायुःस्यादनुभूयेतेत्यर्थः विषयेणविषयिणोलक्षणात् तेनहेतुनासाभूमिःस्मृता घ्राणंपृथिवी तत्त्वेनगर्भोपनिपदादिपुस्मृतिषुचप्रसिद्धमितियावत् सेतिस्त्रीत्वंविधेयापेक्षया तदुक्तंकैयटेन उद्देश्यविधेययोरेकतामापादयंतिसर्वनामानिकामचारेणतत्तल्लिं गमुपाददतेइति सगंधेनवायुनापृथिवीदेवतोपलक्षितेतिभावः। त्वचइति त्वचोलोमानियान्युक्तानिसकंपानिप्रसिद्धानि ततोवायुजन्यकंपशालिलोमाभिधानात् । इत्थंनिर्णयोभवति कथंलोमभिः स्पर्शनेंद्रियसहकृतैः सहत्वचोगोलकान्मरुद्वायुर्देवोजातइत्युत्तरार्धेनान्वयः ८९

लोमभिरिति । दिशइतिलक्षणैक्यंहिपदार्थाभेदप्रयोजकं आवरणविरोध्यवकाशरूपंलक्षणंचदिगाकाशयोरभिन्नमित्याशयेनताआकाशइतीरिताः श्रुतिषुस्मृतिषुचेतिशेषः ९० अंतःकरणमिति । चेतनस्यउपाधीद्वौ तत्रविज्ञानशक्तिरूपंमनोऽहंकारबुद्धिचित्तात्मकंसमष्टितयाहिरण्यगर्भत्वोपाधिभूतमंतःकरणमाद्यं द्वितीयस्तुप्राण क्रियाशक्तिः तथाचायमर्थः अतःकरणंचतुर्विधंमनोत्रश्रुतौमनः पदेनग्राह्यमित्यर्थः तत्रहेतुंश्रौतींप्रसिद्धिंदर्शयति तेनहिमनसाऽखिलंजगदुत्पन्नमुक्तम् तथाचश्रुतिः 'असतोऽधिमनोऽसृजत मनःप्रजापतिमसृजत्प्रजापतिःप्रजाअसृजत्तदिदंसर्वंमनस्येवप्रतिष्ठितम्' इति असतोऽव्याकृतात् मनोहिरण्यगर्भः प्रजापतिर्विराडितिश्रुतिपदार्थः । नन्वेवंकारणतयाप्रधानंमनः कथंकार्यभूतेविराट्शरीरेशेषतात्मकांतःकरणतामश्नुतेइतिचेत्तथादर्शनादित्यवेहिउपादानं हिजातेकार्येप्रायउपसर्जनतयाभासते यथासदाकाशमित्यनुभवेकारणंसद्वस्तुसत्तारूपेण यथावाइदंरजतमित्यत्रइदंतयापुरोवर्तिवस्तुरजतेइति । फलितमाह बुद्धीत्यादि । तत्रमनःप्रादुर्भावेउक्ते सतिबुद्ध्यहंकारचित्ताख्यमितरांशत्रयमपिजातंनिगद्यते उक्तप्रायमित्यर्थः मनसाबुद्ध्यहंकारचित्तान्युपलक्षितानीतिभावः ९१ एवंमनोदेवतयाबुद्ध्यहंकारचित्तदेवताउपलक्षिताइत्याहब्रह्मेति । अपानपदेनचक्रियाशक्तिर्नानाविधःप्राणोलक्षितइत्याह अपानेति ९२ एवमेकगोलकतासंबंधेनवागिंद्रियेणरसनेंद्रियमुपलक्षितंतद्देवतयाचरसनदेवतेत्याह वाचेति । कौषीतक्याद्युक्तहस्तपादेंद्रियसृष्टिमुपसंहारेणाह छिद्राणीति । हस्तपादाधिपत्यसूचकनामानौइंद्रोपेंद्रदेवावपिजनितावित्याह हस्ताभ्यामिति । त्रयाणांजगतांलोकानांनाथःबलेनासुरान्निहत्यईश्वरइतिसतथाबलवत्कर्मचहस्त

लोमभिःसहितोजातस्त्वचइत्थंविनिर्णयः ॥ दिशोवकाशरूपत्वात्ताआकाशइतीरिताः ९० अंतःकारणमुक्तंहिमनस्तेनाखिलंजगत् ॥ बुद्ध्यहंकारचित्ताख्यंतत्रजातंनिगद्यते ९१ ब्रह्मारुद्रोमहेशश्चचंद्रशब्देनलक्षिताः ॥ अपानशब्दतःप्राणोनानावृत्तिश्चलक्षितः ९२ वाचापिरसनंतद्वदग्निनापिजलाधिपः ॥ छिद्राण्येवंविनिर्मायहस्तौपादौचसृष्टवान् ॥ हस्ताभ्यांत्रिजगन्नाथंपद्भ्यांचैवत्रिविक्रमम् ९३ एवंदेहेहिवैराजेमुखादिषुयथोदितम् ॥ सृष्टवान्देवताःसर्वावागाद्याःसमहेश्वरः ९४ अनंतकोटीःकोटीनांयोजनानिसविस्तृतः ॥ विराड्देहार्णवोलोकात्प्राणिनांहिभयंकरः ९५

निष्ठं आहुश्चलौकिकायद्बलवत्कर्मतदिंद्रस्येतित्रयोविक्रमाः पादस्यातान्लोकाक्रमणसमर्थोयस्यसतथा ९३ एवमन्याअपिदेवताउपलक्षणीयाइतिबोधयन्प्रकृतवाक्यव्याख्यानमुपसंहरति एवमिति । यथोदितंउदितंवेदशब्दमनतिक्रम्य तदनुसारेणेत्यर्थः तथाचश्रुतिः 'एतद्वैनैवप्रजापतिर्देवानसृजत'इत्याद्या सन्निहितवाचकंवेदस्थंएतइतिपदमालोच्यतदर्थंतयाकारणसन्निहितादेवताःस्मृत्वाताःससर्जेतिश्रुत्यर्थः शेषंस्पष्टम् ९४ अथताएताइत्यादिर्कोदकान्देवानामध्यात्मभावेनव्यष्टिशरीरेप्रवेशप्रतिपादकांद्वाविंशतिभिरुपबृंहयन्नादौतदुपयोगितयाकर्मोपार्जितफलंदेवभावोपिदुःखानुविद्धइत्यभिप्रायेणचक्षुस्पिपासेत्यस्मिन्प्रतिपादकंभागंचबुद्धिस्थीकृत्यविराड्देहमर्णवत्वेननिरूपयति अनंतेतित्रिभिः । विराड्देहाभिन्नोर्णवोविराड्देहार्णवः रूपकोपयोगिसमानधर्मानाह । कोटीनांस्वांशभूतानांदेवानांव्याप्यतयासंबंधीनिअनंतकोटीयोजनानिअगणितकोटिसंख्याकानियोजनानिविस्तृतः अपरिच्छिन्नइतियावत् देवानांविभुत्वंच'एतेसर्वएवसमाःसर्वेअनंताः'इतिश्रुतिमानं तेषांविभूनामपिप्राण्यदृष्टवशेनप्रादुर्भूतव्यष्टिशरीरेणोपचितमयानस्यप्रादुर्भावात्प्राग्भावाविरप्यग्रेनिर्णयोभविष्यति कोटिशब्दस्यांशपरत्वेमानंतु 'कोटिरस्त्रीचचापाग्रेसंख्याभेदप्रकर्षयोः' इतिविश्वः कोणरूपाश्रियाचककोटिशब्दस्यावयवपरत्वंसंभवत्येवेति समुद्रपक्षेकोटीनामाधिक्याथार्थअनंतकोटयस्तास्तत्परिमितानिप्रलयकालेगगनाभावाद्धीश्वरस्यतद्गणनेप्रयोजनाभावाद्वासंख्यातानियोजनानिविस्तृतइत्यर्थः । अनन्तकोटिकोटीनामितिपाठेअनन्तकोटिगुणितानामनेककोटीनांसंख्यानांसंख्येयतयासंबंधीनियोजनानिविस्तृतइत्यर्थोबोध्यः पुनःकीदृशः लोकात्लोकानसिस्वस्मिन्नंतर्भावयतीतितथासर्वलोकशरीरइतियावत् समुद्रपक्षेसर्वलोकाऽऽश्रयकइत्यर्थः यद्वादर्शनादित्यर्थः तथाविराट्पक्षेऽदेवदेवांप्रमाविराडस्मीत्याकारकाज्ञानअपरूपमुत्तरविशेषणस्यभवेऽपभिव्येन,व्येति समुद्रपक्षेत्वेवलोकनरूपहेतुगर्भेतिबोध्यम् पुनःकीदृशः

प्राणिनामिति निंदायामिनिः भूमनिंदाप्रशंसास्वितिवाक्यात् तथाचनिंदितःपरिच्छिन्नदृष्टयाभासमानःप्राणोयेषांतेप्राणिनःपरिच्छिन्नदृष्टयस्तेषांभयंकरः तेहिबालाइवापरिच्छिन्नभावाद्बिभ्यति हिशब्दःप्रसिद्धिद्योती तथाचसूचितंगौडपादाचार्यैः'अस्पर्शयोगोनामैषदुर्दर्शःसर्वयोगिभिः । योगिनोबिभ्यतिह्यस्मादभयेभयदर्शिनः' इति समुद्रपक्षेतुस्फुटम् ९५ महाभूतेति । महाभूतान्येवजलानियस्मिन्सतथा सप्तयुक्ताःसप्त सप्तसप्त चतुर्दशइतियावत् तेचतेलोकाएवोर्मिमालायस्मिन्सतथा जरायुजांडजस्वेदजोद्भिज्जतयाचतुर्विधायेशरीरौघास्तएवशुक्तिशंखास्तैर्विभूषितः अत्र सादृश्यातिशयेनमहाभूतानांजलानांचाभेदविवक्षायांयथामहाभूताभिन्नजलवत्त्वंविराट्शरीरस्यतथासमुद्रस्यापि एवमुत्तरत्रापिबोध्यम् ९६ कामक्रोधेति । कामक्रोधादयएवस्ववासनामयैस्तंतुभिर्बध्वासंसारसिंधौमज्जकत्वान्नक्रास्तेषामाश्रयः कर्मबंधनःसमुद्रेहिबंधनानिनानाविधानि कानिचित्पारगमनप्रतिबंधकानि यथाहनुमतश्छायाग्राह्यसुरादीनि कानिचित्तरणप्रतिबंधकानि यथाजलभ्रमादीनि कानिचिद्बहिर्निःसरणप्रतिबंधकानि यथाग्राहमुखादीनि तथाविधानिसंचितागामिप्रारब्धलक्षणानिकर्माण्येवबंधनानियत्रसतथा शेषंस्पष्टम् अन्नदोषाणांविराट्समष्टिशरीरेसंबंधोव्यष्टिद्वाराबोध्योनतुसाक्षात् अन्यथा'नहवैदेवान्पापंगच्छति' इतिश्रुतिविरोधापत्तेः पापंपापफलमशुभमित्यर्थः ९७ एतस्मिन्निति क्षुत्पिपासापरिश्रांताईश्वरेणविराट्शरीरे

महाभूतजलःसप्तसप्तलोकोर्मिमालकः ॥ चतुर्विधशरीरौघशुक्तिशंखविभूषितः ९६ कामक्रोधादिनक्राणामाकरःकर्मबंधनः ॥ त्वगादिधातुदुर्गंधोविण्मूत्रमलसंश्रयः ९७ एतस्मिन्पतितावताएतावागायाःसर्वेदेवताः ॥ क्षुत्पिपासापरिश्रांताजनकंस्वमथाब्रुवन् ९८ अयंसर्वात्मकोदेहोविराजोभवताकृतः ॥ नैतस्माद्व्यतिरिक्तं भोअन्नंपानंचदृश्यते ९९ नभोक्तव्यंनपातव्यमस्माकमिहदृश्यते ॥ ततोन्यंभगवन्देहंसृजास्मभ्यंहितायवै ॥ यत्रस्थितावयंस्यामह्यन्नपानस्यभागिनः १०० इत्युक्तेसहिगोदेहंचकारजनकोविभुः ॥ नतस्मिन्प्रीतिरेतेषामभूदन्नाद्यदर्शनात् १०१ पुनःसुतानांप्रीत्यर्थंदेवोऽश्वमुदपादयत् ॥ तत्रापिनाभवत्प्रीतिर्हस्तादीनामभावतः १०२ एवंनानाविधान्देहांस्तदर्थंससृजेप्रभुः ॥ नचतेषामभूत्प्रीतिर्मानुषंसोऽसृजत्ततः १०३ तंदृष्ट्वातेभवन्प्रीतास्ततस्तेतत्सुकृतंबत ॥ भवताकृतमित्येवंहृष्टाजनकमब्रुवन् १०४

सृष्टाभ्यामशनायापिपासाभ्यांतदंशत्वेनग्लानाः यथामानुषशरीरेक्षुत्पिपासोदयेसर्वेंद्रियाण्यव्याकुलानिभवंतितद्वदित्यर्थः एतादृशास्तेदेवाविराट्शरीरतर्पणाक्षममन्नपानमपश्यंतः स्वंजनकमीश्वरमब्रुवन्निति ९८ तद्वाक्यरूपंश्लोकत्र्यंशंव्याचष्टे अयमितिद्वाभ्यां । स्पष्टम् ९९ नभोक्तव्यमिति अन्यंदेहंस्वल्पेनतृप्यंतंतर्पयंतंचसृजउत्पादय तदेवाहुः यत्रस्थिताइति १०० ताभ्योगामनयदित्यादिव्याचष्टे इत्युक्तेइत्यादिपादोनत्रिभिः । गोदेहंदृष्ट्वाप्रीत्यभावेहेतुरन्नाद्यदर्शनादिति अन्नमादिःकारणंबुद्धिःकर्मचसप्तान्नब्राह्मणेप्रोक्तंतददर्शनात् गवादिशरीरेहिपूर्वकृतमेवभुज्यते नतुनूतनबुद्धिकर्मणीसंपादयितुंशक्येइतिप्रसिद्धम् १०१ पुनरिति । हस्तादीनामित्यादिपदेनआंतरवात्मज्ञानकर्मसाधनानांग्रहः १०२ श्रुतौगवाश्वानयनमुत्पादनरूपमेकोनचतुरशीतिलक्षयोन्युत्पादनोपलक्षणमित्याशयेनाह एवमिति । तदर्थंदेवप्रीत्यर्थं ताभ्यःपुरुषमित्यंशंचतुर्थपादेनव्याचष्टे मानुषमिति १०३ ताअब्रुवन्निितिव्याकुरुते तंदृष्ट्वेति । तंमानुषंसृष्टंदृष्ट्वातेदेवाःप्रीताअभवन् तथाहृष्टाःसंतइत्येवंजनकमब्रुवन् इतिकिं हेतात बतेतिहर्षे एतत्सुकृतं तस्यव्याख्यानंभवताकृतमिति भवतास्वयंकृतंनतुभृत्यद्वाराकारितम् कुशलस्तक्षादिर्हियत्स्वयंकरोतितद्भृतिरमपीयंभृत्यविधयत्स्वेनकारयतितदपकृष्टमितिप्रसिद्धम् तथाचस्वकृतशब्देपृषोदरादित्वेनस्वयंशब्दस्यसुइत्यादेशेसुकृतमितिसिद्धमितिभावः १०४

तद्वेदवाक्यंप्रमाणांतरसंवाददर्शनायश्रुत्यापुनरनूदितंव्याचष्टेउचितमितित्रिभिः । एतदीश्वरेणस्वयंकृतत्वंपुरुषेउचितंसंबद्धं नत्विदमसंबद्धमुक्तमित्यर्थः तत्रहेतुतयाससाधनज्ञानक्रियासंपत्तिमाह यतःपुमान्ज्ञात्वावक्तीति । ज्ञात्वेतिज्ञानेंद्रियसंपत्तिरुक्ता वक्तिइतिकर्मेन्द्रियसंपत्तिर्बोधिता ननुवानरादिशरीरेष्विसर्वेन्द्रियजंज्ञानमस्तीत्यतोविशेषमाह चक्षुरादीति । क्रियासुव्यापारेषु मनुष्यभिन्नानांहींद्रियसंयोगेप्यज्ञानंनिःशेषतोननिवर्ततइतिभावः प्रमत्तादावव्याप्तिवारणायप्रायइतिपदम् १०५ एवंप्रत्यक्षज्ञानसंपत्तिंदर्शयित्वापरोक्षज्ञानमप्यस्मिन्स्फुटयति इहामुत्रेति । इहामुत्रसुखंचायंवेत्तिऐहिकमामुष्मिकंसुखंचकारात्तत्साधनंचायंवेत्ति ह्योतीतंश्वस्त्यमनागतेच्छिभत्रंचवेत्तिसाधनज्ञानानाप्तसाधनंविद्भिःसंगतंसंबंधप्रकारंचवेत्ति विद्वद्भिःसहसंगतेकृतेकर्तव्यमकर्तव्यंविहितंप्रतिषिद्धंचसर्वंप्रमाणतोवेत्तीत्यर्थः १०६ एवमंगयोग्यतांस्फुटीकृत्यसर्वेतःप्रधानब्रह्मविद्यायोग्यत्वमाह अत्रचेति॥ चिद्रूपेणाभासमानोपिसत्यत्वानंदत्वाद्वयत्वादिरूपेणभासतइत्यर्थः एतेन पुरुषत्वेचाविस्तरमात्मारामहिप्रज्ञानेनसंपन्नतमोविज्ञातंवदतिविज्ञातंपश्यतिवेदश्वस्तनंवेदलोकालोकौमर्त्येनामृतमीप्सत्येवंसंपन्नतमोपीतरेषांपशूनामशनायापिपासेएवाभिज्ञानम्'इतिश्रुतिरर्थतःसकलासंगृहीता।अत्रेहामुत्रपदेलोकालोकपदाभ्यांसमानार्थे श्वोऽनागतेन्हिभवमित्यर्थकंश्वस्त्यपदंश्वस्तनपदेन शेषपदानितुश्रुत्यासाक्षादुपलक्षणतयाचबोधितमर्थंप्रतिपादयंतीतिबोध्यम्। सर्वदेवानांयुगपद्धर्षजननमेवतस्येश्वरेणस्वयंकृतत्वंसाधयतीत्याशयेनाह अत्रताइति। अत्रमेनिरेअनुभूतवंतइत्यर्थः यद्वाऽनेकशरीराणिअभीष्टसाधनाक्षमाण्यवलोक्ययोग्योगपरित्यागलक्षणंसंतोषमंगीकृत्यस्थिताःसंतोदेवाःपुरुषउत्पन्नेतंसंतोषमत्रमेनिरेअनादृतवंतःहर्षेणेष्टसिद्धौसोद्योगाजाताइत्यर्थः १०७ कंठिकाशेषंव्याकुरुते एवंतुष्टेष्वित्यादिना । तुष्टेषुहर्षेणाज्ञामनुष्ठानायप्रतीक्षमाणेषुपुत्रेषुसत्सुएतान्पिताउवाच

उचितंपुरुषेह्येतज्ज्ञात्वावक्तियतःपुमान् ॥ चक्षुरादिक्रियास्वेवप्रायोज्ञानविवर्जितः १०५ इहामुत्रसुखंचायंह्यःश्वस्त्यमपिसंगतम् ॥ कर्तव्यंचाप्यकर्तव्यंवेत्तिसर्वंप्रमाणतः १०६ अत्रचाविस्तरात्मावेदवाक्यात्प्रकाशते ॥ अत्रतादेवताःसर्वाःसंतोषमत्रमेनिरे १०७ एवंतुष्टेषुपुत्रेषुपितापृथ्वेतानुवाचह ॥ स्वंस्वंस्थानंप्रविशतस्वस्मिन्भेदंविहायवै १०८ इत्युक्तेतेतथाचक्रुर्देवाःसर्वेस्वयंभुवा ॥ अग्निर्वागात्मतांप्राप्यमुखच्छिद्रेव्यवस्थितः १०९

आज्ञापयत् आज्ञामभिनयति स्वंस्वमिति । स्वनियम्यकरणद्वारेणस्वकीयंस्वकीयंस्थानंगोलकंप्रविशतव्यष्टिशरीरेप्रवेशंकुरुतेत्यर्थः ननुइंद्रियाहंस्थानेकथमस्माकंव्यापकानांप्रवेशइंद्रियैरेवार्थसिद्धौव्यर्थश्चातआह स्वस्मिन्नित्यादि । आत्मीयवाचीस्वशब्दः आत्मीयेइंद्रियेभेदंपृथग्भावंनैरपेक्ष्यमितियावत् तंविहायमूषायांधातवइवएककलोलीभावलक्षणमभिमानंकृत्वाप्रविशतेत्यर्थः अयंभावः परस्परनिरपेक्षकारकत्वंसमुच्चयविरोधितत्त्वत्रनास्ति तथाहि चक्षुर्विनाप्रकाशरूपःसूर्योनसिध्यतितंविनाचक्षूरूपग्रहणासमर्थत्वान्नसिध्यति तथास्वकीयनिरूप्यंस्वामित्वंतन्निरूप्यंचस्वत्वं एवंशरीरेऊष्महेतुमग्निंविनावाग्वक्तुमक्षमावाचंविनातदस्थेनाग्निःशरीरेदुर्ज्ञेयः यद्वा वाचोऽग्नेरुत्पन्नत्वाद्वाचंविनाग्निरुपलब्धुंनशक्यः अग्नेश्चवागुत्पत्तेस्तंविनावाग्दुर्लभेति एतदग्रेस्फुटीभविष्यति एवमन्यदप्यूह्यं तथाचमिलित्वाप्रवेशोयुक्तएवेतिभावः १०८ इत्युक्तेइति । स्वयंभुवाईश्वरेणअग्निर्वागधिष्ठातृदेवतावागात्मतांपूर्वोत्पन्नयावाचातादात्म्यरूपमेककलोलीभावंप्राप्यमुखगोलकेस्थितः स्थितिलब्धवानित्यर्थः एवंसतिव्यष्टिशरीरेअधिदैवाध्यात्माधिभूतभेदेनत्रैविध्यंसंपन्नं तत्रदेवंविराजमधिकृत्याधारंकृत्वास्थितंवाभादींद्रियविशेषंस्वशरीरवदभिमन्यमानमग्न्यादिदेवरूपमधिदैवम् तथाविग्रहेणात्मनिअहमितिभासमानेशरीरेवर्तमानंकरणरूपंतत्परिच्छिन्नमध्यात्मं तथाभूतेषुवर्तमानंविषयरूपमधिभूतमिति एवमर्थोविभागश्चेतरेंद्रियवाक्येष्वपिबोध्यः एतत्परस्परसापेक्षंत्रैविध्यमप्रोध्यस्वतःसिद्धमारमतत्त्वमुत्तरत्रनिर्णेष्यतेइति १०९

अपांनाथइति । वरुणः रसनयातादात्म्यंतत्राभिमानंप्राप्य जिह्वाग्रतोजिह्वाग्रगोलकेअभवत्स्थितोभूदिति सार्वविभक्तिकस्तसिः गंधंप्राप्यतंघ्राणदेशंप्रतिनेतागंधविशिष्टइतियावत् एतादृशोवायुर्घ्राणंभूत्वाविशत्नासिकाविवरमित्युत्तरेणान्वयः ११० नासिकाविवरमिति । दिवाकरःचक्षुरिंद्रियतांप्राप्याक्ष्णोरविशत् दिक्श्रोत्रंभूत्वाकर्णयोरविशदित्यन्वयः १११ स्थावराइति । व्याख्यातं ११२ नाभिच्छिद्रमिति । स्फुटम् । तथैवशिश्नच्छिद्रेताःपूर्वोक्ताआपःप्रजापतिरूपाःप्रविष्टाइत्युत्तरेणान्वयः ११३ आपइति । इतिहिश्रुतिःएतावतादेवानांप्रवेशःसाक्षादत्रकंडिकायामुक्तःअन्येपांतूपलक्षितइत्यर्थः उपलक्षणत्वंस्फुटयति । एवमन्याइति । अध्यात्ममधिदेवमितिसप्तम्याअभावः तथाचाध्यात्मेइंद्रियेअधिदेवेदेवतायांचवर्त्तमानोयोभेदःपृथग्भावस्तेनवर्जिताइंद्रियेणतादात्म्यवत्यःस्वंस्वंस्थानंन्यविशतप्रविष्टाइत्यर्थः ११४ एवंस्थानेष्विति । अशनायापिपासेदेवतेस्वाग्रजानांस्थानलाभंदृष्ट्वास्थानमयाचेतांयाचितवत्यौ तयोरितिपदमुत्तरान्वयि ११५ स्थानांतरमिति । तयोरशनायापिपासयोःपूर्वंदेवताक्रांतस्थानादन्यत्स्थानमदृष्ट्वातास्वेवाध्यात्माधिदैवभेदभिन्नासुदेवतासुस्थानंदत्तवान् देवतात्वस्यैवयुवांतप्तेभवतमित्युक्तवानितिभावः तेनेश्वरेणैवंतयोःस्थानकरणेनेदानीमप्येवंदृश्यते यताभ्योदेवताभ्योदत्तंहविःअधिदैवरूपाभ्यःपुरोडाशादिरूपंअध्यात्मरूपाभ्योविषयरूपंतद्धविःतयोरशनायापिपासयोःकामनारूपयोरुभयविधदेवनिष्ठयोरुपशमरूपतृप्तिरंभवेदित्यर्थः देवताभ्योहविर्विदित्तेतासांतृष्णापिपासेशाम्यतः अध्यात्मंविषयरूपेहविर्विदित्तेतत्कालमशनायापिपासेशाम्यतइवेतीयमेवतयोस्तृप्तिरितिभावः ११६ अत्रेदंबोध्यम् वागादींद्रियेभ्योदेवसृष्टिप्रतिपादनेऽयंश्रुतेरभिप्रायः येपूर्वंविराडुपासनयाविराड्भावंप्राप्तास्तेकरणैःसहप्रलयेलीनाःपुनःसृष्ट्यादावीश्वरेणविराट्शरीरेसृष्टेस्वस्वगोलकेषुतेषांकरणानिप्रादुर्भूतानितानिचव्यष्टिशरीरकृतस्यावच्छेदस्यपूर्वमेवोपासनात्मकज्ञानेनभंगादव्यापकदेवभावेनपरिणतानीति 'अग्निर्वाग्भूत्वामुखंप्राविशत्'इत्यादिश्रुतेस्तुदेवेभ्यइंद्रियोत्पत्तिप्रतिपादिकायाएषोभिप्रायः व्यष्टिशरीरेप्रोद्भूतानामवच्छिन्नानामिंद्रियाणांकार्याक्षमाणामभिमानलक्षणतादात्म्येनदेवैस्तेषांसमर्थत्वापादनंयत्सैवदेवेभ्यस्तेषामुत्पत्तिरितिपातंजलमताच्चोपनिषदमतेऽयंविशेषः यद्योगमतेइंद्रियाण्यपिविभूनिप्राण्यदृष्टवशेनतेषांशरीरेवृत्त्युद्भवाभिभवौ एतेषामुत्पत्तिमतेतुदेवाएवविभवःइंद्रियाणितुपरिच्छिन्नानिउत्क्रांतिप्रतिपादकश्रुत्यादिभ्यइत्यवधेयम् एवंदेवानामिंद्रियाणांचोत्पत्तिमभिधायतेषांप्रवृत्तिहेतुभूतयोरशनायापिपासयोश्चसृष्टिंप्रतिपाद्यअथान्नसृष्टिप्रतिपादिकांसइक्षतेमेन्वित्यादिकांतृतीयकंडिकांसंक्षेपेणव्याकरोति एवंस्थानानिदत्वेत्यादिचतुर्भिः । प्रभुःपरमेश्वरःएवंतेभ्यःस्थानानिदत्वातेषामन्नार्थिनामुपकारायतैरनुक्तोपीदमग्रिमश्लोकोक्तंव्यचिंतयद्विचारंकृतवान् । अनुक्तस्यहितचिंतनेप्रवृत्तौहेतुर्जनकइति जनकोहिस्वभावादेवसुतयोगक्षेमयोश्चिंतनेप्रवर्त्ततइतिप्रसिद्धमितिभावः ११७ इमेलोकाइति । इतिसंचिंत्यविविधैरुपायैरन्नमसृजदित्युत्तरेणान्वयः इतरत्स्पष्टम् ११८

अपांनाथोरसनतांप्राप्यजिह्वाग्रतोभवत् ॥ वायुर्गंधंप्राप्यनेताघ्राणंभूत्वाप्यथाविशत् ११० नासिकाविवरंतद्वदक्ष्णोरपिदिवाकरः ॥ चक्षुरिंद्रियतांप्राप्यदिक्श्रोत्रंकर्णयोस्तथा १११ स्थावराअपिलोमानिभूत्वोक्तास्त्वचमाविशन् ॥ चंद्रमाश्चमनोभूत्वाहृदयंप्राविशत्तथा ११२ नाभिच्छिद्रंपुरोक्तंयन्मृत्युस्तत्रसमाविशत् ॥ उक्तापानस्वरूपःसन्शिश्नच्छिद्रेतथैवहि ११३ आपोरेतःस्वरूपास्ताःप्रविष्टाइतिहिश्रुतिः ॥ एवमन्याअपितथादेवताभेदवर्जिताः ॥ अध्यात्ममधिदेवंचस्वंस्वंस्थानंन्यविशत ११४ एवंस्थानेषुदत्तेषुपित्रातासांयथार्हतः ॥ अशनायापिपासेचायाचेतांस्थानकंतयोः ११५ स्थानांतरमदृष्ट्वासदेवतास्वेवदत्तवान् ॥ तयोःस्थानंहविस्तेनदत्तंताभ्यस्तयोर्भवेत् ११६ एवंस्थानानिदत्वासतेषामन्नार्थिनांप्रभुः ॥ तैरनुक्तोपिजनकइदमत्रव्यचिंतयत् ११७ इमेलोकालोकपालाःक्षुधितास्तनयाममम ॥ एषामर्थेसृजाम्यन्नमितिसंचिंत्यसोसृजत् ११८

अन्नइति । घटरूपन्तृद्दन्नस्योपादानंदर्शयति । अन्नइति । आपोजलप्रधानानिपंचभूतानितेभ्यइत्यर्थउक्तः अन्नविशेषणंबहुविधमिति नानायोनिवर्तिनांप्राणिनांयस्ययस्ययद्यदुचितंयथा मानुपादीनांव्रीहिमृगादिस्थावरात्मकमन्नं सिंहादीनांमृगादिरूपंजंगमं सर्पादीनांवायुभूपकादिरूपमितिनानाविधमिति ईश्वरस्याभिन्ननिमित्तोपादानतांसूचयति विभुरिति । तत्रेति तत्रान्नेउ त्पन्नेसतिइदंगृहीतइतीश्वरेणाज्ञताअपिवागादयस्तदन्नंप्राणभेदंप्राणवृत्तिरूपमपानंबहिर्दशान्मुखबिलेनांतरागच्छंतंवायुविशेषमपानसंज्ञंविनानाग्रवन्नग्रहीतुंशक्तावभूवुरित्युत्तरान्वयेनार्थः ११९ विनापानमिति । तेनेश्वराज्ञयास्वयमादायकरणरूपदेवताभ्योऽन्नस्यविभज्यदानेनहेतुनाऽऽसांदेवतानामीश्वरः 'प्राणोज्येष्ठश्चश्रेष्ठश्च' इत्यादिश्रुतौअयंप्राणःकथ्यते तथान्नजीवनइत्य र्थकान्नायुःपदेनप्रकृतश्रुतौशाखांतरेचसाक्षादन्नादपदेनकथ्यते अन्नमासमन्ताद्ददातिअन्नमादत्तइतिद्विधाविग्रहसंभवादितिभावः १२० एवंकर्तृत्वभोक्तृत्वोपाधेर्वागादिप्राणांतस्याध्यारोपितस्य तदभिमानलक्षणसंसाराश्रयत्वंनसंभवतिजडत्वात् बंधमोक्षयोश्चसामानाधिकरण्याच्चेत्याशयेनसंसारयोग्यात्मस्वरूपनिर्धारणपरंकथमिदंमद्दतेइत्यादिवाक्यमुपबृंहयति तथापीत्यादिचतुर्दशाभिः । यद्यपिसअन्नादत्वेनसकलेंद्रियैराश्रितोऽन्नादानव्यापारेकरणांतरनिरपेक्षः कारणंचतथापिसन्निधिमात्रेणप्रयोजकमात्मानंसर्वांतरंविनाकुठारादिवच्चेष्टेनसमर्थोभवतीत्यर्थः । अशनायापिपासयोर पिजडत्वादितिभावः । प्राणोविनाकुणपवदात्मानंविनाप्राणोपिकुत्सितइतिद्योतनायकप्रत्ययः । इतिविज्ञायेतिस्पष्टम् १२१ विचाराकारमाह मामृतेइति । एतत्सवायुकंसूत्रवद्धा

अन्नोह्यन्नंबहुविधमुपायैर्विविधैर्विभुः ॥ तत्रवागादयःसर्वेदेवतानाग्रवन्नहितत् ११९ विनाऽपानंप्राणभेदंतेनासामयमीश्वरः ॥ प्राणोऽन्नादस्ततोवायुभेदोयंक थ्यतेश्रुतौ १२० तथापिनविनात्मानमीष्टेऽन्नंसोप्यपानकः ॥ इतिविज्ञायजनकस्तैरनुक्तोप्यचिंतयत् १२१ मामृतेकथमेतत्स्याज्जगज्जातंसवायुकम् ॥ नप्रकाशंविनाकिंचिद्विद्यमानंप्रसिद्ध्यति १२२ नह्यन्नाद्यमितिज्ञानंविनाऽत्ताद्यंप्रसिध्यति ॥ नह्यंधकारेलोकोयंवेत्तिकिंचित्कदाचन ॥ अंधकारंचजानातिन विनाचक्षुषीजनः १२३ यथाघटादिग्रहणेप्रकाशोन्योहिसाधनम् ॥ चक्षुषोपिप्रकाशःस्यात्तमसोन्यस्तथाग्रहे १२४

12

रकंक्रियाशक्तिमत्प्राणयुक्तमपिजातंप्रादुर्भूतमेतंदधिदैवादिभेदशालिजगन्मांप्रकाशरूपंविनाकथंस्यात् प्रकाशनिरपेक्षंचप्रादुर्भावात्मकप्रकाशविशिष्टंचेतिवचोव्याहतं पितामेबालब्रह्मचारीतिवा क्यवदितिभावः । एतदेवस्फुटयति नप्रकाशंविनेति १२२ एवंचयद्यज्जडंतत्प्रकाशसापेक्षमितिव्याप्तिःफलिता तामुदाहरणेनस्पष्टयति । नह्यन्नाद्यमिति । अन्नमपानाख्यप्राणकरणकव्यापा रविषयःआद्यंप्रथमभाविषयस्यवागादिकरणकव्यापारविषयवक्तव्यादिविषयजातस्यतदन्नाद्यं अत्ताप्राणविशिष्टत्वेनभोक्ताप्रकाशरूपआत्मासआद्यःप्रथमोयस्यवक्तृदृष्टृश्रोतृप्रभृतेरात्मभेदजातस्य सोत्ताद्यः एकस्यैवात्मनो 'वदन्वाक्पश्यन्चक्षुःशृण्वन्श्रोत्रम्' इत्यादिश्रुत्याकरणोपाधिभिर्भेदप्रतिपादनात् तथाचइदमन्नमदनीयमिदंवक्तव्यमिदंद्रष्टव्यमित्याद्याकारंज्ञानमत्तृप्रभृतिप्रका शकंविनानप्रसिद्ध्यतीत्यर्थः । तत्रलोकिकंदृष्टांतमाह नह्यंधकारइति । किंचिद्रूपादिमद्घटादि । नन्वंधकारेएवभवदुक्तव्याप्तेर्भंगइत्याशंक्यतस्यापिचक्षुःप्रकाशसापेक्षत्वान्मैवमित्याहांध कारमिति १२३ ननुअंधकारस्यप्रकाशापेक्षत्वेकिंमानमित्याशंक्यानुमानमित्याह यथाघटादीति । यथाघटादिग्रहणेघटादिभ्योन्यःसूर्यादिप्रकाशःसाधनंतथातमसोन्यश्चक्षुःसंबंधिप्रकाशस्त मसोग्रहेसाधनंस्यादित्यन्वयः तथाचांधकारःप्रकाशसापेक्षोजडत्वाद्घटादिवदित्यनुमानंफलितमितिबोध्यम् १२५

एवंव्याप्तिंप्रसाध्यचक्षुरादिजन्यांतःकरणवृत्तीनांप्रकाशत्वेपिजडत्वोदात्मप्रकाशसापेक्षत्वमात्मनःसाधनायदर्शयति चक्षुरादीति । क्रियतेइतिपूर्वोर्धान्वयि । ननुसूर्यादिप्रकाशेनान्यथासिद्धि रतआह नघटेनेत्यादि । तथाचयथाघटेनाविषयत्वात्सूर्योभासयितुंनशक्यस्तथाविषयभूतेनसूर्यादिनापिचक्षुरादीतिभावः विषयग्रहणेसहायतारूपमनुग्रहंसूर्यादिदेवःकरोतीत्यन्यत् एवंचचक्षुरादिप्रकाशःप्रकाशांतरसापेक्षःजडत्वात् व्यतिरेकआत्मवदित्यनुमानंफलितं तादृशप्रकाशस्यचान्यस्यासंभवात्परिशेषेणात्मसिद्धिरितिध्येयम् १२५ ननुचक्षुरादिप्रकाशःप्रकाशांतरानपेक्षःप्रकाशत्वात्प्रदीपवदितिसत्प्रतिपक्षइति आशंक्यमण्यादिपुव्यभिचारित्वेनदुष्टत्वात्प्रतिपक्षत्वंनसंभवतीत्याह नचप्रदीपवदिति । नापेक्षतेइतिअनपेक्षणः नंद्यादित्वाल्ल्युः । सजातीयस्यानपेक्षणः सजातीयानपेक्षणः सर्वःप्रकाशःसजातीयानपेक्षइतिनियमोनच कुतः मण्यादिपुप्रकाशेपुतथासाहचर्येणहेतुसाध्ययोःसर्ववादिभिरदृष्टेरदर्शनादित्यर्थः १३६ ननुप्रकाशत्वाविशेषेपिकेनविशेषेणप्रकाशस्यप्रकाशापेक्षेतिसुहृद्भावेनपृच्छंतंप्रत्याह ततइति । ग्राह्यग्रहणेतिभावप्रधानोनिर्देशः तथाचप्रकाशत्वाविशेषेपिस्वल्पत्वबाहुल्येपरिच्छिन्नत्वव्यापकत्वेग्राह्यग्रहणत्वयोःकारणेप्रयोजकेव्याप्यइतियावत् यद्यत्परिच्छिन्नंतत्तत्प्रकाश्यंयथादीपप्रकाशापेक्षयापरिच्छिन्नंमण्यादि यद्यद्व्यापकप्रकाशरूपंतत्तत्प्रकाशकंयथादीपादीतिव्याप्तिःसिद्धेतिभावः प्रकाशप्रकाशकत्वव्याप्यं

चक्षुरादिप्रकाशानांप्रकाशेनप्रकाशनम् ॥ क्रियतेनघटेनात्ररविरेषप्रकाशते १२५ नचप्रदीपवत्सर्वःसजातीयानपेक्षणः ॥ मण्यादिपुतथाऽदृष्टिर्विद्यतेसर्ववादिनाम् १२६ ततःस्वल्पत्वबाहुल्येग्राह्यग्रहणकारणे ॥ प्रकाशेनसजातित्वंबहुत्वंचमयिस्थितम् १२७ स्वल्पत्वादेवदृश्यास्याद्बुद्धिःसर्वप्रकाशिनी ॥ मयायद्वत्तयादृश्यंभानाभानात्मकंजगत् १२८ अहंनकुत्रचिद्देशेस्थितोस्मिगविगोत्ववत् ॥ नाहंकालेपिकस्मिंश्चिद्भाव्यस्तिचमृतोयथा १२९ मत्तोस्तिनपृथक्किंचित्सदसच्छब्दधीगतम् ॥ यथाघटात्पृथग्भूमिर्वंध्यापुत्रश्चलभ्यते १३०

यत्प्रकाशत्वेसतिव्यापकत्वंतद्वानात्मेत्युपनयंसूचयति प्रकाशेनेति । प्रकाशेनसजातित्वंसमानंजातिमत्त्वंप्रकाशत्त्वमित्यर्थः बहुत्वंभूमपदार्थः व्यापकत्वं उभयंमयिशोधिताहंपदार्थेआत्मनिस्थितं ज्योतिर्ब्राह्मणभूमब्राह्मणादिश्रुतिभिर्विद्वदनुभवेनचप्रसिद्धमित्यर्थः १२७ एवंव्याप्तिपक्षधर्मतयोःसिद्धोसत्यामनुमानंदर्शयति स्वल्पत्वादिति । स्वातिरिक्तसर्वप्रकाशिन्यपिबुद्धिर्मयादृश्याप्रकाश्यास्यादितिप्रतिज्ञा स्वल्पत्वात्परिच्छिन्नत्वादितिहेतुः उदाहरणंदर्शयति यद्वदिति । तयाबुद्ध्याहिरण्यगर्भोपाधित्वेनव्यापकयासत्वप्राधान्येनप्रकाशरूपयाभानाभानात्मकंसूर्यादिरूपंघटादिरूपंचजगत्यथादृश्यंतद्वदित्यर्थः १२८ ननुश्रुत्योक्तमपिभूमरूपंचेतसिनावतरतिअसंभावनाप्रतिबंधादित्यतस्तद्वारणायत्रिविधपरिच्छेदासंभवरूपंतर्कंस्फुटयति अहमित्यादिचतुर्भिः । यथागोव्यक्तिरूपदेशपरिच्छिन्नागोत्वजातिरतथाहंकेनापिदेशेनावच्छिन्नोनभवामिमांविनेतरदेशीयानांसत्ताप्रकाशानिर्वाहादितिभावः । कालपरिच्छेदाभावमाह नाहंकालेपीति । व्यतिरेकेदृष्टांतः यथाभावीअनागतःअस्तिवर्त्तमानःमृतोऽतीतः एतेयथाकालावच्छिन्नास्तथानाहमित्यर्थः १२९ भेदरूपवस्तुपरिच्छेदाभावमाह मत्तइति । सदसदित्युभयाकारकंशब्दंधियंचगतंविषयत्वेनतयोर्भासमानंकिंचिदपिमत्तःपृथङ्नास्ति । व्यतिरेकेदृष्टांतः यथाघटादिति । भूमिःसदाकारशब्दधीगतावंध्यापुत्रश्चासदाकारशब्दधीगतोयथाघटात्पृथगेवंनमत्तःकिंचिदित्यर्थः १३०

ननु चिज्जडभेदो लौकिकप्रमाणसिद्ध इत्याशंक्य तेषां स्वप्रगतप्रमाणवन्नातोन्यदार्त्तमिति श्रुतिबाधितभेदसाधने शक्तिरित्याशयेन प्रपंचनिरूपितद्वैताभावे तस्याध्यस्तत्वं हेतुमाह मय्येवेति । स्पष्टम् । फलितमाह तथाभूमेति । भूमा व्यापकः बहोर्भूरादेशः इमनिच्प्रत्ययः भवितृप्रधानो निर्देशः उपसर्जनीभूतं यद्विशेषणं तद्विशिष्टाभिधायकं पदं यदा विशेषणं प्राधान्येनाभिधत्ते तदा भावप्रधानो निर्देश इति व्यवहारः यथा गोत्वविशिष्टवाचकगोशब्दस्य नित्यो गौरिति वाक्ये गोत्वमात्राभिधाने यदा तु भावप्रत्ययांतः प्राधान्येन विशेषणाभिधानशीलः शब्दो भावप्रत्ययार्थमुपसर्जनीकृत्य विशिष्टं पुनरभिधत्ते तदा भवितृप्रधानो निर्देश इति व्यवहारः यथा प्रकृतो भूमशब्दोऽयं हि इमनिजंतत्वेन व्यापकत्वबहुत्ववाचकोपि प्रकृते व्यापकस्वरूपवाचक इति बोध्यम् १३१ ननु भेदांतराभावेपि घटस्य स्वधर्मेभ्यो रूपादिभ्य इव सुखसत्वप्रकाशेभ्यो भेद आत्मनः स्यादेव तथा चागतो वस्तुपरिच्छेद इत्यत आह सुखसत्वप्रकाशा इति । सुखमानंदः सत्त्वं सत्ता प्रकाशश्चित् एते चेद्यदि मत्तः सर्वांतराद्भिन्नाः स्युस्तदा ते सुखसत्त्वप्रकाशास्तेन स्युः सुखत्वादिभ्य एव च्युताः स्युरित्यर्थः तथा हि सुखं यदि भूम्न आत्मनो भिन्नं स्यात्तदा वस्तुपरिच्छेदेन भूमरूपहानात्सुखत्वादेव च्युतं स्यात् ' यो वै भूमा ' इत्यादिश्रुतेः एवं सत्वमप्यात्मनः प्रकाशात्मकाद्भिद्यमानमसत्स्यात्साधकाभावात्प्रकाशोपि सद्रूपादात्मनो भिद्यमानोऽसत्स्यात्त्रयाणामेकात्मकत्वे तु न कोपि दोष इति भावः । नन्वेवं सति कथं धर्मधर्मिभेदव्यवहार इत्याशंक्य धर्मधर्मिभावो न गवाश्ववदत्यन्तभिन्नयोर्नापि घटकलशवदत्यन्ताभिन्नयोस्तस्माद्भेदाभेदोभयसापेक्षेणापि व्यवहारेण भेदे पारमार्थिके लब्धेपि तादृशभेदस्यालाभात्सबद्धमुक्तमहीपाल

मय्येवं सकलं विश्वं देशकालादिरूपकम् ॥ नामरूपक्रियाव्याप्तमध्यस्तं स्रजि सर्पवत् ॥ तथा भूमाहमेकोत्र मत्तो नान्योस्ति कश्चन १३१ सुखसत्त्वप्रकाशाश्चेद्भिन्ना मत्तो न ते पि ते ॥ अध्यस्तत्वेन सर्पादिसमास्तस्मादहं हि ते १३२ तस्मात्प्रकाशनं युक्तं मया सर्वस्य वस्तुनः ॥ तेजसोऽतेजसो वापि मम नान्येन वस्तुना १३३ अतोहमस्य देहादेर्जडदुःखासदात्मनः ॥ सच्चिदानंदतां कुर्वन्प्रवेक्ष्यामि कलेवरम् १३४

न्यायेन कल्पितभेदेनापि तुष्यतीति गृहाण न च कल्पितेन सद्वितीयत्वं न हि गृहे स्वपन् स्वप्ने दृष्टराजमंडलः सद्वितीय इति व्यवह्रियते प्रामाणिकैरित्याशयेनाह अध्यस्तत्वेनेति । यदि तेऽध्यस्ता मत्तो भिन्ना व्यवहृतास्तदा रज्जुसर्पादिसमाः संतो न भेदप्रयोजकाः अध्यस्तत्वात परमार्थतस्तु सुखसत्त्वप्रकाशा अहमेव मत्स्वरूपभूता एवेत्यर्थः तथा चोक्तं विवरणकारैः 'आनंदो विषयानुभवो नित्यत्वं चेति संति धर्मा अभिन्नत्वेपि पृथगिवावभासंते' इति १३२ ज्योतिर्ब्राह्मणार्थोपसंहारेण निगमयति तस्मादिति । तस्मात् व्यापकत्वे सति प्रकाशत्वान्मयैव सर्वस्य वस्तुनस्तेजोऽतेजोरूपस्य जडस्य प्रकाशनं युक्तं मम तु सर्वप्रकाशकस्य घटेन सूर्यस्येवान्येन प्रकाशनं न युक्तं विषयस्य विषयिप्रकाशनाशक्तेरित्यर्थः १३३ एतादृशविचारस्य प्रकृतोपयोगं दर्शयति अतोहमिति । अतः पूर्वोक्तयुक्तया सर्वस्य जडसंघातस्य मदधीनसिद्धिकत्वेन मच्छेषत्वादहं कलेवरं प्रवेक्ष्यामि किमर्थं जडदुःखासदात्मनो देहादेः स्वतादात्म्याध्यासात्सच्चिदानंदतां कुर्वन् कर्तुमित्यर्थः कुर्वन्निति शतृप्रत्ययो लक्षणहेत्वोः क्रियाया इति सूत्रेण हेतौ बोध्यः फलस्यापि हेतुत्वादर्जयन्वसतीतिवत् । अत्रेदं विवेचनीयं अयं चतुर्दशश्लोकोक्तो विचारस्तथाग्रिमवाक्यव्याख्याने वक्ष्यमाणश्च एतद्द्वयं जीवेन संभवति जीवस्यैवं विचारे कृतकृत्यत्वेन प्रवेशानुपपत्तेः किंच सृष्टिस्थितिप्रलयप्रवेशानुग्रहास्तत्पदार्थेश्वरलक्षणानीति सिद्धांतः तस्मादनादेरपि जीवस्येशप्रतिबिंबरूपस्योपाधिप्रवेशात्पूर्वमस्फुटतया कारणोपाधीश्वरतादात्म्येनेश्वरनिष्ठोयं विचारस्तत्र जीवेऽभेदमादाय गुर्वादेस्तत्त्वावतारणाय श्रुत्या व्यवहृत इति न विरोधः जीवत्वबाधहेतुस्तु विचारः अवस्थात्रयदर्शनानंतरं वक्ष्यमाणो बोध्य इति १३४

प्रवेशस्य द्वे प्रयोजने भोगोऽपवर्गश्च । अपवर्गश्च स्वरूपज्ञानमपवृज्यते नेनेति व्युत्पत्तेः । तत्र भोक्तृत्वोपयोगि चित्स्वरूपविचारः पूर्वमुक्तः अथ यत्स्वं कल्पयति तत्करोतीति न्यायेन द्वितीयप्रयोजनोपयोगि विचारं चक्रं वक्तरेण प्रपद्य इत्यादिको हमित्यंतं वाक्यमुपबृंहयति इतिसंचिंत्येत्यादि सप्तत्रिंशच्छ्लोकैः । पूर्वार्द्धं स्पष्टं । चिंताकारमाह द्वारमित्यादि । चेतनस्य हि ज्ञानशक्तिः क्रियाशक्तिश्चेति द्वावुपाधी तत्र सत्त्वप्रधानो मायापरिणामो वा बुद्धिर्वा चित्प्रतिबिंबग्राहितया ज्ञानशक्तिरिति व्यवह्रियते तत्र ज्ञानेंद्रियाणि ज्ञानशक्तिप्रपंचः कर्मेंद्रियाणि तु क्रियाशक्तेरित्यन्यत्र विस्तरः तथा च मे ज्ञानशक्ते रालोचनप्रधानं ज्ञानशक्त्युपाधिकस्य योग्यं किं द्वारं भवेदित्यर्थः व्यापकस्योपाधिमंतरा प्रवेशानुपपत्तेरिति भावः पूर्वं सदेव तद्बुद्धेः प्रतिबिंबरहितायाः प्रवेश उक्तः इदानीं तु प्रतिबिंबविशिष्टबुद्धेश्चेत नोपाधितयेति विशेषः १३५ ननु येन केनापि मार्गेण प्रवेशो विधेय इति चेज्जडत्वेन मार्गदोषमपश्यतः क्रियाशक्तेः प्राणस्यैव स योग्यो न तु मम सर्वोत्कृष्टस्येत्याह प्रपदाग्रेणेति द्वाभ्यां । पादस्याग्रं प्रपदं तस्याग्रं तेन मार्गेण सर्वतोऽधस्तनेन प्राण आविष्टवान् तत्र हेतुगर्भं विशेषणं क्रियाशक्तिरिति दृश्यते च मूर्छया जडानां चेतनारंभः पादाग्रे प्रथमं क्रियेति इदमन्यद्वाराणामपि भृत्यप्रवेशार्हाणां स्वप्रवेशायोग्यत्वे उपलक्षणं स्वस्य ज्ञानशक्तेः सर्वोत्कृष्टत्वेनेश्वरस्य तन्मार्गप्रवेशानर्हत्वसूचनाय स्वस्मिन्विशेषं सूचयति नहि चेष्टेति स्पष्टम् १३६ ज्ञानशक्तित्वादेव विचारांतरमपि विधेयमित्याह ज्ञानशक्तिरिति । यतोऽहं ज्ञानशक्तिस्ततो योग्यमार्गमिवेश्वरमात्मानमविचार्य कथं प्रवेक्ष्यामि किंतु स्वरूपमपि विचार्य प्रवेशो युक्त इत्थं पुनरचिंतयद्विचारांतरं कृतवानित्यर्थः १३७ आत्मविचारस्वरूप

इतिसंचिंत्य देवोसौ पुनश्चिंतामवाप ह ॥ द्वारमत्र प्रवेशे मे ज्ञानशक्तेर्भवेद्धि किम् १३५ प्रपदाग्रेण पूर्वं हि क्रियाशक्तिः प्रविष्टवान् ॥ नहि चेष्टापि मां हित्वा जडानां रथ वन्नेत् १३६ ज्ञानशक्तिस्ततोऽप्यहं कथमात्मानमीश्वरम् ॥ अविचार्य प्रवेक्ष्यामीत्येवं पुनरचिंतयत् १३७ इदं विचारयामास स्वात्मनोत्र बुभुत्सया ॥ देहो नात्मा वैदिकानां सुप्रसिद्धोपि हेतुभिः १३८ दृश्यत्वादिभिरात्मज्ञैः शक्यो दर्शयितुं नृणाम् ॥ अपि देहोत्र को नाम संघातेऽवगते सति १३९ ज्ञानकर्मेंद्रियप्राणभूतानां पंचता पुनः ॥ सप्तता च त्वगादीनां धातूनां च त्रिता पुनः १४० दोषाणामपि वातारव्यकफपित्तात्मनामिह ॥ विण्मूत्रयोस्तथा द्वित्वं तद्वत्स्वेदाख्यपूययोः १४१

प्रवक्तार्थं प्रपंचयति इदमित्यादिना । ननु किमर्थं विचारः देहस्यानात्मत्वेन प्रसिद्धत्वादिति चेत्सत्यं वेदतात्पर्यवतां कुशलानां विचारापेक्षाभावेपि मंदधियां नृणामुपकाराय विचार आरभ्यत एवेत्याह देहोनात्मेति । यद्यपि वैदिकानां दृष्टो देहो नात्मा प्रसिद्धस्तथापि नृणां कृते दृश्यत्वादिभिर्हेतुभिरात्मज्ञैर्दर्शयितुं शक्य इत्युत्तरार्द्धेनान्वयः देहो नात्मा दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्च व्यतिरेकेणात्मवदित्यनुमानं बोध्यम् १३८ दृश्यत्वादिभिरिति । पूर्वार्द्धं व्याख्यातं आदिपदसूचितमनिर्वचनीयत्वं स्फुटयितुमाह अपि देह इत्यादि । अपिनाहेत्वंतरमप्युच्यत इत्यर्थः अत्रानुभवगोचरे को नाम देहः ननु प्रसिद्ध एव संघात इति चेदापातप्रसिद्धेरकिंचित्करत्वान्न्यायाऽविरुद्धा प्रसिद्धिर्वाच्या तथा च संहननं परस्परमिलनं परस्परसंबंध इत्यागतं सच संबंधः समानानामेव वाच्यः योग्यं योग्ये न संबध्यत इति न्यायादित्याशयेनेंद्रियत्वादिधर्मैः सजातीयानां संघातान् त्रिभिर्दर्शयिष्यन् संघातविभागे विवेकविशिष्टानुभवं हेतुतयाह संघातेऽवगते इति । अवगते विविच्य दृष्टे सतीत्युत्तरश्लोकत्रयार्थेनान्वयेति १३९ ज्ञानेति । वर्तत इति पंचनादीयोज्यं ज्ञानेंद्रियाणां पंचता श्रोत्रत्वक्चक्षुर्घ्राणरसनभेदात् कर्मेंद्रियाणां वाक्पाणिपादपायूपस्थभेदात् प्राणानां प्राणापानव्यानोदानसमानभेदात् त्वगादीनां सप्तता त्वगसृङ्मांसमेदोस्थिमज्जरेतोभेदात् त्रिता पुनरित्युत्तरान्वयि १४० दोषाणामिति । कफवातपित्तात्मनां दोषाणां त्रिता त्रित्वं वर्तते विण्मूत्रयोर्द्वित्वं वर्तते स्वेदपूययोरागंतुकद्रवयोर्द्वित्वं वर्तते १४१

आनंत्यमिति । समुदायिनामपरिमेयत्वादपरिमेयः केशलोमादेः संघातइत्यर्थः अस्मिन्संघातसमुदायेकोनामसंघातोदेहः एतेषांसंघातानांसंघातोवाप्रत्येकंवाएतेसंघाताः नोभयमपीत्याह स मुदायइति । वस्तुसन्वास्तवःनिर्वक्तुंशक्यइतियावत् तादृशोनभवतीत्यर्थः १४२ समुदायस्यद्विविधस्यानिर्वचनीयत्वंस्फुटयति सकिमिति सार्धेन । ससमुदायस्तेभ्यःसमुदायिभ्योमहासमु दायावांतरसमुदायान्यतरघटकेभ्योभिन्नोवाथवासमुदायिनःसमुदायघटकस्वरूपाभिन्नएववेत्यर्थः भिन्नत्वपक्षेदोषमाह आद्येत्विति । समुदायिभ्यःसमुदायोभिन्नइत्यत्रपूर्वमुक्तंनवांशदावि कशततमेश्लोकेयदूषणंन्यायाविरुद्धाप्रसिद्धिर्वाच्येत्याकारंतदेवदूषणंप्रसंजनीयमित्यर्थः यथान्ययानुसारिण्यसजातीयसंघातादन्योविजातीयसंघातोनसंभवतिएवंसमुदायिनामपेक्षाबुद्धिविशे षविषयस्वरूपभिन्नःसमुदायोनसंभवतीतिभावः समुदाय्यभिन्नत्वपक्षेदोषमाह एकैकस्मिन्निति । एकैकस्मिन्नवांतरसमुदायेवातद्घटकन्यत्येकेंद्रियादिस्वरूपेवासमुदायव्यवहारस्यदे ष्टव्यवहारस्यचादर्शनान्नद्वितीयपक्षःसमुदायिभ्यःसमुदायोऽभिन्नइत्याकारेपिनसंभवतीत्यर्थः १४३ ननुनप्रत्येकस्वरूपंनचतदतिरिक्तःसमुदायोभ्युपगम्यतेकिंतुमिलितास्तएवेत्यतआह सर्वेते इति । सर्वेतेसमुदायिनोमिलिताःसंतःससमुदायःस्यादितिचेत्तथाचपुनरुक्त्यापत्तिरित्यर्थः पुनरुक्तिस्पष्टयति सर्वेषामिति । सर्वेषांसमुदायिनांयन्मेलनमेकबुद्ध्याविषयीकरणरूपंसमु दायइतिस्थितिर्मर्यादासर्वतंत्रसिद्धांतः तथाचमिलितामेलनरूपसमुदायविशिष्टाःसमुदायइत्यागतं तर्हिदेवदत्तोधनीजातइत्यत्रयथाविशेष्येबाधाज्ज्ञातत्वस्यधनेन्वयस्तथान्वयेसमुदायःसमुदायइ

आनंत्यंकेशलोमादेर्वर्ततेऽत्रपृथक्कृते ॥ अस्मिन्कोनामदेहःस्यात्समुदायोनवस्तुसन् १४२ सकिंतेभ्योविभिन्नःस्यादथवासमुदायिनः ॥ आद्येत्वदर्शनंपूर्वमुक्त मेवहिदूषणम् ॥ एकैकस्मिन्नदृष्टत्वाद्द्वितीयोनोपपद्यते १४३ सर्वेतेमिलिताःसस्यात्तथाचपुनरुक्तता ॥ सर्वेषांमेलनंनामसमुदायइतिस्थितिः १४४ मेलनं नामसंबंधस्तादात्म्यमथवापरम् ॥ तादात्म्येसतिचैक्येनमेलनंदुर्घटंभवेत् १४५ अपरंनहिसंबंधशब्दार्थंलभतेक्वचित् ॥ समोबंधेस्तथाकोर्थःकथनीयंत्वयाऽधु ना १४६ सम्यक्त्वंसंध्वनेरर्थोबंधेश्चैवापिबंधनम् ॥ नचैतमपिपश्यामोविनातेवचनंक्वचित् १४७

तिलक्ष्यैतदापुनरुक्तिःस्पष्टेतिभावः १४४ तर्हिमेलनमेवसमुदायोस्त्वित्याशंक्याह । मेलनमिति । मेलनंसंबंधरूपमित्युक्तं तन्मेलनंसमवायस्थानेमीमांसकैरभिषिक्तंयत्तादात्म्यंभेदसहिष्णुर भेदस्तादात्म्यमितिलक्षितंतदभिमतंपरंवा नाद्यइत्याह तादात्म्येइति । तादात्म्यस्थलेभेदाभेदयोर्वास्तवयोःसमुच्चयासंभवान्निरपेक्षत्वेनाभेदोवास्तवोभेदःकल्पितइतिसिद्धांतः तथाचवास्तवै क्येनमेलनंदुर्घटंभवेत्तथाचव्याघातापत्तिरितिभावः १४५ अपरपक्षंनिराचष्टे अपरमिति । बुधइतिशेषः स्पष्टार्थं । संयोगस्यसंयुक्तस्वरूपातिरिक्तस्याननुभवेनप्राभाकरैरेवविकल्पमात्र त्वोक्तेःसमवायस्यचसंबंध्यतिरिक्तस्यांगीकारेतस्यचसंबंधमंतरास्थित्यसंभवात्तदर्थंसंबंधांतरांगीकारेऽनवस्थापातात्सनिरस्तः किंचवृक्षसमुदायोवनमित्यादौसंयोगसमवाययोरनुपलंभश्चेतिभावः किंचसंबंधशब्दावयवार्थासंभवेनसंबंधनिरूपणासंभवात्संबंधरूपःसमुदायोनवक्तुंशक्यइत्याशयेनाह समोबंधेरिति । संबन्धशब्देसमःसमित्युपसर्गस्यबंधेबंधधातोश्चकोर्थइतिपृष्टेन्वयावक्तव्य मित्यर्थः १४६ सम्यक्त्वमिति । संध्वनेःसंशब्दस्यसम्यक्त्वमर्थःबन्धेश्चापिबंधनमित्येवत्वयावक्तव्यमर्थांतरासंभवादित्यर्थः एतमपितेवचनंविनाकंचित्सांसारिकेवस्तुनिनपश्यामःकिंतु त्वद्वचनएव तथाचसंबंधशब्दार्थंनोभौलौकिकोविकल्पमात्रंसंबंधरूपःसमुदायस्तुसुतरामितिभावः १४७

एतदेवस्फुटयति कालत्रयइतिचतुर्भिः । नपर्येतिनपरिणमतेनान्यथाभवतीत्यर्थः पर्येतिचेदमिति । प्रतिक्षणपरिणामिनोहिसर्वेभावाऋतेचितिशक्तेरितिसांख्यसिद्धांतादतोन्यदार्तमितिश्रुतेश्चे तिभावः १४८ बंधनंचेति । उभयोर्बध्यमानयोर्यद्बंधनंतत्ताभ्यांपृथग्भूतंदृष्टंयथारज्जोर्भिन्नत्वेनदृष्टयोरुभयोर्गवोस्ताभ्यांपृथग्भूतारज्जुरित्यन्वयः १४९ अपिमूर्तमिति । मूर्तंघनावयवंतद्बं धनंक्वो[illegible] व्यतिरेकेदृष्टांतः आकाशेनेति स्पष्टम् १५० नचदेहेइति । तथारज्ज्वादिवन्मूर्ते शेषंस्पष्टम् १५१ एवंसंघातोदेहइतिपक्षंनिराकृत्यसंघातघटकानामिंद्रियादीनामनात्मत्वंबो धयति तस्मादित्यादिना । आत्मबोधनेजिज्ञासुंप्रतिआत्मबोधनेकर्तव्येइंद्रियादीनामनात्मत्वेविद्वदनुभवंतावदाह इंद्रियादेरिति । आत्मताहिसर्वांतरतासाचसाक्षिभास्यतयाततोघटादिव द्बाह्यत्वेनेंद्रियादेर्नसंभवतीतिभावः यद्यपींद्रियत्वेनरूपेणनेंद्रियाणांसाक्षिप्रत्यक्षंतथापिपश्यामिजिघ्रामीत्याद्याकारेणप्रसिद्धमेवेति १५२ अनुमानमपिदर्शयति देहस्येवेति । इंद्रियादिर नात्मादृश्यत्वादिभ्योदेहवदित्यनुमानस्वरूपं ननुकर्तृत्वमात्मलक्षणंशैवशास्त्रेप्रसिद्धं कर्तृत्वंचस्वातंत्र्यंतच्चेंद्रियादीनांव्यापारेस्फुटमित्याशंक्यस्वातंत्र्यव्यापकचैतन्याभावंव्याप्याभावदर्शनायाह अचैतन्यमिति । सर्वतःसर्वेषु सार्वविभक्तिकस्तसिः तथाचमामात्मानंविनामत्तादात्म्याध्यासंविना।तेषुप्रमाणादिषुइंद्रियांतेषुसर्वेष्वचैतन्यंप्राप्तंकथंचिदंमदृतेइतिव्याख्यानेतथापिनविनात्मा

कालत्रयेनपर्येतितत्सम्यगितिगीयते ॥ पर्येतिचेदंसकलंजडत्वाद्रज्जुसर्पवत् १४८ बंधनंचतथादृष्टमुभयोर्बध्यमानयोः ॥ पृथग्भूतंयथारज्जुर्दृष्टयोरुभयोर्गवोः १४९ अपिमूर्तंचतद्दृष्टंनामूर्तंक्वापिबंधनम् ॥ आकाशेननबध्यंतेघटस्तंभपटादयः १५० नचदेहेतथाकिंचित्तत्त्वानामिहबंधनम् ॥ दृश्यतेतेनसंबंधशब्दार्थो नास्तिकश्चन १५१ तस्मादेकैकशस्त्वेतद्विचार्यंस्वात्मबोधने ॥ इंद्रियादेर्नचाप्यत्रदृश्यतेत्वात्मताक्वचित् १५२ देहस्येवाप्यनात्मत्वमिंद्रियादेःसुनिश्चितम् ॥ अचैतन्यमपिप्राप्तंमामृतेतेषुसर्वतः १५३ अचेतनानांव्यापारेस्वातंत्र्यंनास्तिकुत्रचित् ॥ रथादयोनगच्छंतिगवादीन्परिहायहि १५४ व्यापारास्तेनवागादेर्मत्कृताएवसर्वतः ॥ क्रियाज्ञानात्मकायेस्युरिंद्रियानिंद्रियस्यहि १५५ यद्यपिस्यादमीषांहिस्वातंत्र्यंव्यापृतौक्वचित् ॥ वागादीनांतथाप्येतेनान्यव्यापृतिषुक्षमाः १५६ वदनादानगतयोविसर्गानंदकावपि ॥ कर्मेंद्रियाणांव्यापाराःप्रत्येकंनियतायतः १५७ दर्शनश्रवणघ्राणरसनस्पर्शनानिच ॥ ज्ञानेंद्रियाणांव्यापारा नियतास्तेपिपूर्ववत् १५८

नमित्यादिग्रंथेननिर्णीतमित्यर्थः १५३ चैतन्यनिवृत्तौतद्व्याप्यस्वातंत्र्यस्यापिनिवृत्तिरितिदर्शयति अचेतनानामिति । तत्रप्रसिद्धोदृष्टांतः रथादयइति । स्फुटम् १५४ अतस्तल्लक्षणमपिआ त्मन्येवपर्यवस्यतीत्याह व्यापाराइति । तेनमांविनासर्वेषांचैतन्यप्रयुक्तस्वातंत्र्याभावेनइंद्रियानिंद्रियस्यइंद्रियत्वेनानिंद्रियत्वेनप्राणत्वादिनाप्रसिद्धस्यवागादेःकरणस्ययेक्रियात्मकाव्यापाराः प्राणकर्मेंद्रियसंबंधिनो।येचज्ञानात्मकाव्यापाराअंतःकरणज्ञानेंद्रियसंबंधिनस्तेसर्वेमत्कृतामय्येवसन्निधिमात्रेणप्रयुक्ताइतिपर्यवस्यतीत्यर्थः १५५ ‘स्वव्यापारेस्वतंत्रत्वंसर्वत्राप्यस्तिकारके’ इतिश्री हर्षोक्तरीत्यावागादीनांस्वस्वव्यापारेस्वतंत्रत्वाभ्युपगमेपितेषामात्मत्वंनसंभवति आत्माहिसर्वत्रसन्निहितउच्यते अततिसातत्येनगच्छतिसर्वत्रसन्निधत्तइतिव्युत्पत्तेस्तच्चस्वव्यापारपरेषुनसंभव तीत्याह यद्यपीति । क्वचिद्वदनादिरूपायांव्यापृतौव्यापारेअमीषांवागादीनांस्वातंत्र्यंयद्यप्यभ्युपगम्येततथापिइतरव्यापारेनक्षमाअभ्युपगंतुमपिनक्षमाइत्यर्थः तथाचदुर्लभमेषामात्मत्वमितिभावः १५६ एतदेवप्रपंचयति वदनेत्याद्यष्टभिः । शब्दोच्चारणग्रहणगमनमलोत्सर्गानंदाःक्रमेणवाक्पाणिपादपायूपस्थानांव्यापाराः नन्वन्येपिकुतोनस्युरतआह यतःप्रत्येकंनियताः आधिकारिकेपुरा णेवमयासर्वाधिपतिनाव्यवस्थापिताः ‘ससेतुर्विधरण’ इत्यादिश्रुतिभ्यः तथाचतेषांव्यापारनियमएवमांसर्वात्मानंशेषिणंबोधयतीतिभावः एवमग्रेपि १५७ दर्शनेति । ज्ञानेंद्रियाणांचक्षुःश्रोत्रघ्राण रसनत्वगाख्यानां । शेषंस्पष्टम् १५८

प्राणस्यासाधारणंकार्यमाह प्राणस्येति । पूर्ववदित्यनुषज्यते प्राणस्यापिपूर्ववद्व्यापारोनियतः कथं यतःप्राणनापाननादिभेदेननानाविधाश्चित्रान्नपानयोःसूक्ष्मनाडीच्छिद्रेपुप्रवयस्थापक तयाऽद्भुतागतिःक्रियाएकंकार्यंभवेत् तस्यसचिवस्थानीयतां सूचयितुंद्वितीयंकार्यमपिदर्शयति जीवनमिति । चकारोभिन्नक्रमः जीवनंचतत्कृतमित्यन्वयः जीवनंप्राणधारणंतच्चप्राणोत्क्रमणे स्थातुमशक्तानांप्राणशरणीकरणेनलब्धप्राणसंज्ञानांवागादीनांस्थितिहेतुत्वमितिप्राणेंद्रियसंवादब्राह्मणेस्पष्टम् इतिव्यापारद्वयंविहायान्यस्यव्यापारस्यासौप्राणःकारणंनभवतीत्यर्थः १५९ संकल्पे ति । संकल्पःइंद्रियविषयस्यप्रकारान्वेषणं ज्ञानंनिश्चयः अहंकारोऽभिमानः चेतनमनुसंधानं एतानिमनोबुद्ध्यहंकारचित्तानांनियताव्यापाराइत्यर्थः १६० एवंकरणव्यापारमभिधायप्रसंगेनभूता नांविषयाणांचव्यापारान्दर्शयति धारणमितिद्वाभ्यां । धारणंपात्रवद्धृतादेःस्थितिहेतुत्वं पाकआमत्वनिवर्तनं व्यूहनंसंकोचविकासादिभेदेनविविधघटनांक्रिया अवकाशतास्थितौप्रसरणेचानुकूलत्वं यतएवोक्तंवाचस्पतिमिश्रैर्यद्याकाशंनाभविष्यत्तदान्योन्यसंपीडितानिभूतानिनसूचीभिरप्यभेत्स्यंतेति एतेपृथिव्यप्तेजोवाय्वाकाशानांनियतव्यापाराः नन्वन्येपिमोक्षधर्मादौपृथिव्यादिव्यापारा उक्ताअतआह नचेतरदिति । तेचैतेषामेवावांतरविशेषाइतिभावः १६१ शब्दस्पर्शेति । शब्दादिविषयाणामियमेवव्याप्तिर्व्यापारः यत्श्रोत्रादींद्रियाणामात्मनःस्वभावस्यदर्शनंस्फुटीकरणमि त्यर्थः 'आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच' इतिकोशउक्तः । इंद्रियाणांहिस्वभावोबंधकत्वरूपंग्रहत्वंतच्चविषयसंबंधमंतरानस्फुटीभवति अतएवविषयाणामतिग्रहत्वमुक्तमार्तभागब्रा

प्राणस्यापिगतिश्चित्रानानाभेदायतोभवेत् ॥ जीवनंतत्कृतंचेतिनासावन्यस्यकारणम् १५९ संकल्पज्ञानाहंकारचेतनान्येवसर्वतः ॥ अंतःकरणरूपाद्धिमन आदेश्चतुष्टयात् १६० धारणंक्लेदनंपाकोव्यूहनंचावकाशता ॥ पृथिव्यादिमहाभूतकार्यमेतन्नचेतरत् १६१ शब्दस्पर्शरूपरसगंधानांव्याप्तिस्त्वियम् ॥ श्रोत्रत्वङ्नेत्ररसनघ्राणानामात्मदर्शनम् १६२ बुद्धेर्यद्यपिसार्वज्ञ्यमन्याधीनंतथापिहि ॥ अज्ञतापिचतस्यायद्दृष्टास्माभिर्हिसर्वदा १६३ जीवनस्यचहेतुः स्यादात्मायद्यप्यसुःस्वयम् ॥ तथापिमद्बलादेवजीवनेहेतुरत्रहि १६४

ह्मणेइतिभावः १६२ ननुअन्यस्यस्वातंत्र्यासंभवेपिविज्ञानशक्तितयासर्वज्ञोपाधेर्बुद्धेरात्मत्वमुक्तलक्षणमस्त्वित्याशंक्याह बुद्धेरिति । सार्वज्ञ्यंसर्वज्ञस्यभावंसर्वज्ञोपाधित्वमितियावत् तद्यद्यपि बुद्धेःप्रसिद्धंतथापिसात्मत्वंनार्हतियतः तत्सर्वविषयकत्वरूपंसार्वज्ञ्यमन्याधीनमित्यर्थः । अयंभावः एकश्चिद्धातुर्विश्वप्रकाशकोज्ञानपदस्यमुख्योर्थः बुद्धिस्तुस्वलेपेनघटकुड्यादीन्जलंयथा प्रतिबिंबयोग्यान्करोतिएवंपदार्थान्स्वसंबंधेनचित्प्रतिबिंबग्रहणयोग्यानूकुर्वती आवरणंचाऽभिभवंतीस्वयंचतत्प्रतिबिंबंगृण्हतीज्ञानपदस्यगौणोर्थः तथाचसूर्यादिप्रतिबिंबविशिष्टतयाकुड्यादिभा सकस्यापिदर्पणस्ययथानप्रकाशरूपत्वंतथाबुद्धेरपीति अन्यथातस्याजडायाःप्रकाशरूपत्वेपिशिलांतरगतदीपसहस्रवत्साक्षिणंविनासिद्धेर्दुर्लभत्वादिति एवंचबुद्धेर्मत्संनिधौसर्वज्ञत्वेपिश्री कृष्णवियुक्तार्जुनवन्मांविनाऽशक्तत्वान्नात्मत्वमितिभावः । एतदेवदर्शयति अज्ञतापीति । अज्ञतापिजडतापितस्याअस्माभिर्मयासर्वांतरेणविषयाकारेणपरिणतायाभासनाद्दृष्टानिर्णीतेत्यर्थः अस्मा भिरिति 'अस्मदोद्वयोश्च' इतिसूत्रेणबहुवचनंसर्वोत्कृष्टज्ञानशक्तिभासकतयात्मनोनिरतिशयोत्कर्षंव्यंजयति १६३ एवंज्ञानशक्तेरनात्मत्वंदर्शयित्वाक्रियाशक्तेःप्राणस्यनत्पूर्वंसाधितमपितत्रश्रु तिंदर्शयितुमनुवदति जीवनस्येति । यद्यपिअसुःप्राणःस्वयंजीवनस्यहेतुः तथाआत्मापिइंद्रियापेक्षयान्तरोपितथापिमद्बलान्मत्कर्तृकाचस्यसंवरणात्सन्निधिमात्रेणाधिकारादेवतस्यजीवनहेतुत्वमा त्मत्वंचातोनासावपिमुख्यमात्मत्वमर्हतीतिभावः बलशब्दोबलसंवरणेइतिधातोर्निवृत्तमेपणात्प्यंतादेरचिसाधुः यद्वामद्बलान्मत्सामर्थ्यादित्यर्थः द्वियतःअत्रार्थेतैत्तिरीयश्रुतिरितिशेषः १६४

तांश्रुतिंपठति नप्राणेनेति । प्राणापानौनजीवनप्रयोजकौकिंतुसन्निधिमात्रेणतयोःप्रवर्तकोनेपामकश्चय आत्मासएवेतिश्रुत्यर्थः १६५ फलितमाह ततएकैकशइति । तेषांपूर्वोक्तानांवागादीनां मध्येदमात्मत्वासंभवेउपस्तत्राप्यणोक्तलक्षणासंभवमपिहेतुतयाह आत्मेति । सर्वेषामर्थानांप्राणादीनांहेतुःप्रयोजकः यएतान्सन्निधिमात्रेणप्रवर्तयतियदर्थंमेतेप्रवर्ततेचसआत्मास्यात् यःप्राणेन प्राणितीत्यादिलक्षणसंभवात् अन्यत्रतुतदसंभवमाह नेतेइति १६६ अथवागादयःपरार्थाःसंहतत्वाद्गृहादिवदित्यनुमानंशेषित्वेनात्मबोधकंदतरेषामनात्मत्वसूचकंचकेनश्रुत्यनुगृहीतमाह पदा र्थानामिति । संहतत्वेनसंहत्येतरैर्मिलित्वाकार्यकारित्वेनेत्यर्थः यद्वासंघातरूपत्वेनेत्यर्थः तत्राद्यार्थेवागादय प्रत्येकंपक्षः गृहास्यादयःकारणानितेषामित्यर्थेनस्तंभकुड्यादीनांदृष्टांतत्वं द्वितीयार्थेवागादिसंघातस्यपक्षता संघातरूपगृहादीनांचदृष्टांततेतिविवेकः एपुपरार्थेपुममानन्यशेषस्यात्मतास्वरूपताकथंनकथमप्येतेमत्स्वरूपीभवितुमर्हाइतिभावः १६७ एवंसंहतत्वस्य हेतोर्गृहादिसपक्षेसत्त्वंवागादिपक्षेसत्त्वमात्मनोविपक्षाद्व्यावृत्तिश्चदर्शिताअबाधित्वमसत्प्रतिपक्षत्वंचदर्शयति वागादयइति । वागादयःप्रत्येकंस्तंभकुड्यादिवत्स्वार्थानभवंतिमिलिताअपिगृहा दिवन्नस्वार्थाअन्यथाकरणत्वलक्षणात्स्वरूपादेवतेच्यवेयुः हिशब्दःप्रसिद्धिद्योतकः अतोबाधंप्रत्यनुमानंवक्तुंनकोपिशक्तइतिभावः फलितमाह अतोनाहमिमेइति । यदासर्वेमिलिताअपिम त्स्वरूपतांनार्हंतितदाकिमुतप्रत्येकमित्यर्थः १६८ ननुएवंसतिएतेसर्वेतवेश्वरस्यभृत्यत्वादेवशब्दोच्चारणादिकार्यमनियुक्ताअपिभवद्धयेनकरिष्यंत्येवाकिंतवप्रवेशेनेत्याशंक्य सत्यं अन्यकार्यसं

नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ अपरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ १६५ ततएकैकशस्तेषांनात्मतास्यात्कथंचन ॥ आत्मासर्वार्थहेतुःस्यान्नै तेसर्वार्थकारणम् १६६ पदार्थानांगृहादीनांसंहतत्वेनहेतुना ॥ अनात्मतामथाहष्टाकथमेष्वात्मतामम १६७ वागादयोनहिस्वार्थाःप्रत्येकंमिलिताअपि ॥ अतोनाहमिमेसर्वेकथमेकैकशोस्म्यमी १६८ एतेचनविजानंतिमांसर्वस्यापिकारणम् ॥ एतैरभिन्नतांप्राप्यकोहमस्मीतिचिंतये १६९ अस्तुवायादृशस्ता दृक्किंकृत्वाचिंतयानया ॥ प्रविश्यैपांसुखंदत्वाप्रतिपत्स्येनिजंवपुः १७०

पादनेपियन्ममशेषित्वेनमहावाक्यप्रतिपाद्याखंडैकरसत्वेनचज्ञानंतदन्यैर्दुःसंपादत्वेनमयैवप्रविश्यविधेयमितियदिवाचेत्यादिभागतात्पर्यंदर्शयन्नाह एतेचेति । एतेस्वकार्यारंभकाअपिमामांतरत्वं पदार्थान्वेनननविजानंतिसर्वस्यकारणंतत्पदार्थमपिमांनजानंतिकिमुतवाक्यार्थत्वेन अतोहमेवप्रविश्यकोहमितिचिंतये प्रवेशस्यस्वरूपंस्पष्टयति एतैरभिन्नतामिति । अहंवच्मिजिघ्रामीत्याद्यभि मानएवप्रवेशःप्रतिबिंबावच्छेदपदव्यवहार्यइतिभावः १६९ ननुविचारितप्रायमात्मतत्त्वमधुनैवनिर्धार्यतांकिंविपमसंसारेप्रवेशेनान्योपकारायप्रवेशस्तूपकार्याणांजडत्वाद्विफलइतिचेत् 'कार्याणि प्रतिबध्नंतीचिकीर्षान्यत्रजायते' इतिन्यायेनप्रवेशेच्छाकालेविचारांतरंविफलत्वेननविधेयमित्याह अस्तुवेति । यादृशोममात्मातादृशोस्तु अनयाएतत्कालिकयात्मचिंतयाकृत्वाचिंतयाविफलत्वे नकृत्वाचिन्तासमानयाकिंनकिमपिप्रयोजनमित्यर्थः कृत्वाचिंताभ्युपगम्यवादः 'यथायदिवेतरथाब्रह्मचर्यादेवप्रव्रजेत्' इत्यादिजाबालश्रुतिःसंन्यासविधायिकानस्यादित्यभ्युपगम्यपरा मर्शजैमिनिरित्याद्यधिकरणंप्रवर्तितम् यथावेदेदपट्पंचाशदधिकशततमेश्लोकेचेतनमन्तराशक्तानांकरणानांस्वव्यापारेस्वातंत्र्यमभ्युपगम्यान्यव्यापाराक्षमत्वाभिधानं साकृत्वाचिंताविफलत्वेनप्र सिद्धा 'आक्षेपेचापवादेचप्राप्त्यांलक्षणकर्मणि । प्रयोजनंनवक्तव्यंयचकृत्वाप्रवर्त्तते' इतिवचनात् तद्वदियमपीतिभावः अतःप्रवेशस्यप्रयोजनद्वयमेवालोचनीयमालोचितमित्याह प्रविश्येति । प्रति पत्स्येनिर्णेष्यामि शेषंस्पष्टम् १७०

कतरेणप्रपद्येइत्यंशस्यकोहमित्यंत वाक्याद्येनिर्देशेनद्वारचिंतायाःप्राधान्यंसूचितंस्पष्टयंतिइतिसंचिंत्येति स्पष्टर् १७१ सएतमेवसीमानमित्यादिनांदनमित्यंतंवाक्यंव्याचष्टे सदेवइत्यादि सार्धैःपंचभिः । ससर्वदेवानांजनकःपितादेवःपरमेश्वरोभृत्यप्रवेशमार्गस्वानुचितमालोच्यतांमूर्धसीमानमात्मसन्निधिमात्रेणविदार्यात्रशरीरेसमाविशदित्यन्वयः सीम्नःप्रसिद्ध्यर्थंविशेषण द्वयम् कपालत्रयमध्यगांकपालानांत्रयाणिनवेतियावत् तेषांमध्यगां'नवकपालंवैशिरः'इतिमुखविशिष्टस्यशिरस्त्वप्रतिपादकश्रुतेः यद्वा कपालानांवामदक्षिणपुरतोभवानांमध्यंमूर्धकपालंतद्गत मित्यर्थः 'द्वौगंडौचकपालानिचत्वारि'इतियाज्ञवल्क्यस्मृतेः वस्तुतस्तुएतमितिश्रुतिगतपदेलोकप्रसिद्धिरेवविवक्षिता तथाचकृशस्यमुंडितेशिरसिअनुभूयमानंयत्कपालत्रयंवामदक्षिणमध्य रूपंतस्यमध्येगच्छतितिष्ठतीतिसातथातामित्यर्थः । उपलक्षणांतरमाह सीमंतिनीनांनारीणांसीमंतेकेशविभागेनृणांविदितां पुरतस्त्यकेशविभागरेखायत्रसमाप्तेतियावत् १७२ ततइति । तनःपरमात्मनोर्ध्वमार्गेणप्रविष्टत्वान्मनुष्यमात्रस्यसर्वमनुष्याणांपुरीशरीरंद्वारवतीप्रशस्तद्वारवत्त्वात्स्मृतामता प्रसिद्धद्वारवत्यासाधर्म्यमाह अस्यामिति । यस्मादयंसाक्षादपरोक्षःकृष्णः 'कृषिर्भूवाचकःशब्दोनश्चनिर्वृतिवाचकः । तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयते'इतिलक्षितः सदानंदात्मापुराणःपुरुषोविशत् प्रसिद्धायांद्वारवत्यामपिप्रवर्षणाद्रिरेरुत्प्लुत्याऽऽकाशरूपोर्ध्वमार्गेणश्रीकृष्णःप्रथमंप्रविष्टइति सूचितंचैतद्भागवतेजरासंधात्पलायनप्रस्तावे । 'मात्रंकात्स्न्येंवधारणे,इत्यमरः 'पुरंपुरेशरीरेच'इतिविश्वः । अत्रमनुष्यमात्रस्येतिपुरुषत्वेचाविस्तरामात्मे

इतिसंचिंत्यविश्वात्माप्रवेशायकलेवरं ॥ आत्मचिंतांविहायैवद्वारमेवव्यलोकयत् १७१ सदेवोदेवजनकःकपालत्रयमध्यगाम् ॥ सीमंतिनीनांसीमंतेसीमांतांवि दितांनृणाम् ॥ आत्मसन्निधिमात्रेणविदार्यात्रसमाविशत् १७२ ततोमनुष्यमात्रस्यपुरीद्वारवतीस्मृता ॥ अस्यांयस्मादयंकृष्णःपुराणःपुरुषोविशत् १७३ ऊर्ध्वभागेततोद्वारंविद्वद्भिःकीर्त्यतेबुधैः ॥ विदार्यमस्तकंयस्मात्पुरीमेषसमाविशत् १७४ द्वारेणानेननिर्गत्ययोगिनोर्चिषमेवहि ॥ संभवंतियतस्तेननांदनं स्यादिदंध्रुवम् १७५ यथैवस्वर्गिणांस्वर्गेगच्छतांनंदनंवनम् ॥ सुखहेतुस्तथामुक्तौगच्छतामिदमेवहि १७६ पुरमेकादशद्वारंप्राप्येंद्रोदेवराडयम् ॥ प्रा सादानात्मवासार्थंतत्रत्रीन्सचकारह ॥ चक्षुष्येकंपरंचित्तेतृतीयंहृदयाब्जके १७७

तिश्रुतिमनुसृत्योक्तमन्येषामुपलक्षणंबोध्यम् १७३ ननु 'नववैपुरुषेप्राणानाभिर्दशमी' इत्यादिश्रुतौनवद्वारेपुरइत्यादिस्मृतौचेदंद्वारंनप्रसिद्धंकथमनेनद्वारवतीत्युच्यतेअतआह ऊर्ध्वभागइ ति । यतःपरमेश्वरेणमूर्धानंविदार्यनिष्पादितंततः शिरसऊर्ध्वभागेद्वारंविद्वद्भिरुपासकैर्विदृतिइतिसंज्ञकंकीर्त्यते 'तयोर्ध्वमायन्नमृतत्वमेति' इतिश्रुतेः लोकेपिबुधैःकुशलैःकीर्त्यते शिरसिकृ तैलादिधारणेतदीयरसानुभवात्अतोबुधैर्विद्वद्भिरितिनपौनरुक्त्यं पृष्ठेस्तुश्रीकृष्णस्तद्द्वारंचदुर्ज्ञेयमितिभावः श्रुतौस्मृतौचभृत्यद्वारैःसहेश्वरप्रवेशद्वारमसमत्वान्नगणितमितिबोध्यम् १७४ द्वारेणेति । योगिनोनेनद्वारेणनिर्गत्ययतोर्चिषमेवअर्चिराद्यभिमानिदेवतोपलक्षितंदेवयानमार्गमेवक्रममुक्तिदंसंभवंतिप्राप्नुवंति । भूप्राप्तावितिधातोर्णिच् सन्नियोगेनैवात्मनेपदित्वात्साधु ते नहेतुनेदंद्वारंनांदनंनंद्यतेआनंद्यतेऽनेनेतिनंदनंनंदनमेवनांदनं प्रज्ञादित्वादण्स्वार्थिकः ध्रुवंनिश्चितं 'तयोर्ध्वमायन्'इतिश्रुतेः इंद्रोपवनंतुदुःखमिश्रत्वात्संदिग्धनंदनत्वकमितिभावः १७५ इंद्रोपवनेनसाधर्म्यंस्पष्टयति यथैवेति । यथास्वर्गिणांनंदनंवनंसुखहेतुस्तथाइदंद्वारंमोक्षंगच्छतामितिहिप्रसिद्धंश्रुतौ 'मूर्ध्न्याधायात्मनःप्राणान्' इत्यादिगीतासुच १७६ एवंजीवरूपेणप रमात्मनःशरीरप्रवेशमभिधायतस्योपास्यभिमानप्रयुक्तसंसारप्रदर्शकंतस्यत्रयइत्यादिस्वप्राहन्यंतंवाक्यंव्याचष्टे पुरमित्यादिपंचभिश्शब्दैः । प्रसिद्धेर्नवभिर्नाभ्याभूर्ध्नद्वारेणचएकादशद्वारंपुरंप्रा-

प्यायमात्मेंद्रोयतोदेवरात्करणदेवप्रभुःआत्मवासार्थंत्रीन्प्रासादांश्चकार । त्रीन्गणयति चक्षुष्येकमिति । चक्षुरिंद्रियगोलकेप्रथमं द्वितीयंचित्तेचित्तस्था नेत्तद्दयकमलदलेष्विति यावत् तृतीयंत्तद्दयाब्जकेतदंतरित्यर्थः १७७ त्रिष्वप्येतेष्विति । एतेषुत्रिषुप्रासादेषुशयनमहंकारलक्षणांशय्यां 'शय्यामहंद्वादशमेकआहुः' इतिभागवतात् । तांप्राप्येंद्रआत्माजायया स्वप्रतिबिंबरूपगर्भधारिण्याविज्ञानशक्तिरूपयाभोग्ययासहितोजाग्रत्स्वप्नसुषुप्तिभेदेनत्रिविधान्स्वप्नान्पश्यति । ननुकथमेतेत्रयोपिस्वप्नाअतआह आत्मज्ञानविवर्जितइति । योहियथा वत्पश्यतिसजाग्रदित्युच्यते॒ऽयंत्वात्मानमेवविस्मरन्कथंजाग्रदुच्येतअतोयदनेनाज्ञाननिद्रागतेनदृश्यतेसस्वप्नएवेतिभावः १७८ तत्रजाग्रत्संज्ञंस्वप्नंप्रपंचयति यदेत्यादिना । बाह्यार्थाःस्थूलभोग्या स्तेषांभोगार्थंभोगनिमित्तभूतंकर्मधर्माधर्मरूपंवस्तुतोनिरंजनःशुद्धोपिअनादिमाययाऽज्ञानेनादत्तेऽध्यासादंगीकरोतितस्मिन्कालेजाग्रदवस्थासंज्ञेद्वेधाप्रजायतेश्लोकोक्तप्रकारेण १७९ स्त्रीपुंसरूपइति । भगवान्षड्गुणसंपन्नः 'ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः । ज्ञानवैराग्ययोश्चैवषण्णांभगइतींगना' इत्युक्तगुणसंपन्नः समष्टिरूपेणवैश्वानरउपास्योवामदक्षिणनेत्रयोःस्त्रीपुंसरूपोभोग्याका रस्तत्रदक्षिणनेत्रस्थंरूपमधिकप्रकाशबलवत्वाद्भोक्तापुमानितिविवक्षितः वामनेत्रस्थंतुतद्विपरीतत्वाद्भोग्यास्त्रीतिउपास्याइतिकूर्चब्राह्मणेस्पष्टम् पुरुषस्यसाक्षात्प्रकाश्यात्रुद्धिरेवेतिसाजाया

त्रिष्वप्येतेषुशयनंप्राप्येंद्रोजाययासह ॥ पश्यत्येषत्रिधास्वप्नानात्मज्ञानविवर्जितः १७८ यदाबाह्यार्थभोगार्थंकर्मादत्तेनिरंजनः ॥ अनादिमाययातस्मि न्कालेद्वेधाप्रजायते १७९ स्त्रीपुंसरूपोभगवान्वामदक्षिणनेत्रयोः ॥ अधिष्ठायेंद्रियगणमेवंभोगान्प्रपद्यते १८० जातोहंजनकोयंमेजननीभ्रातरस्तथा ॥ भगिन्योबांधवाभृत्यादाराःपुत्राश्चपुत्रिकाः १८१ मित्राणिशत्रवस्तद्वदुदासीनानियामकाः ॥ ऋत्विजोगुरवस्तद्वत्स्त्रीपुंसौचनपुंसकम् १८२ गृहाणिभूमयो धान्यंहिरण्यंपशवस्तथा ॥ वस्त्राण्याभरणंतद्वच्छय्याह्येतत्सुशोभनम् ॥ अशोभनंचबहुलमल्पमाराच्चदूरगम् १८३ इमेशब्दाइमेस्पर्शाइमेगंधाइमे रसाः ॥ रूपाणिचतथेमानिवक्तव्यानितथैवहि ॥ आदेयानिचगम्यानित्यानंदाःसविसर्गकाः १८४ सुखायैतेपरेचैवदुःखायेतिचमन्यते ॥ सुखंदुःखंतथैवै तदासीदस्तिभविष्यति १८५ पुमानहंतथास्त्रीवानपुंसकमथापिवा ॥ मनुष्योहंपशुर्वाहमहमस्मिजरायुजः ॥ स्वेदजोहंतथोद्भिज्जोह्यंडजोस्म्यथवापुनः १८६

पदार्थंतयाव्याख्यातेतिबोध्यम् एतादृशोभगवान्व्यष्टिरूपेणपरिच्छिन्नमात्मानंमन्यमानइंद्रियगणमधिष्ठायएवंवक्ष्यमाणप्रकारेणभोगान्कर्मबलस्वीकारान्प्रपद्यते प्राप्नोतीत्यर्थः 'भोगः सुखेस्त्र्यादिभृतौ' इत्यमरः भृतिःस्वीकारः १८० तत्रनानाविधंबाह्यभोगंतावदाह जातोहमितिषड्भिः । अहंयतोजातोऽयंमेजनकःपिताइयंमेजननीइमेभ्रातरइतिइदंपदान्वयोविप रिणामेनसर्वत्रबोध्यः शेषंस्पष्टम् १८१ मित्राणीति । मित्राणिउपकारिणः शत्रवोऽपकारिणः उभयविलक्षणाउदासीनाः नियामकामर्यादायांस्थापकाः पित्रुपाध्यायराजाद यः ऋत्विजोयाज्ञिवरणीयाः शेषंस्फुटम् १८२ एवंचेतनशरीरेषुभोगान्दर्शयित्वाजडेष्वाह गृहाणीति । विशेषणबंधहेतुंभोगमाह एतत्सुशोभनंरमणीयमेवमशोभनमिति अल्पंब हुलं आरात्समीपं शेषंस्पष्टम् १८३ ज्ञानकर्मेंद्रियविषयभोगमाह इमेशब्दाइति । आदेयानिपाणिग्राह्याणि स्फुटम् १८४ यद्वाराविषयाबंधकास्तंभोगमाह सुखायैते इति ॥ एतेसुखायसुखार्थाएवंदुःखायेति विषयफलभोगमाह सुखंदुःखमिति कालभोगमाह आसीदित्यादि १८५ एवंस्वामित्वाध्यासरूपंबाह्यभोगंसफलमभिधायधर्माध्या सविशिष्टतादात्म्याध्यासरूपंशरीरभोगमाह पुमानहमिति । स्फुटम् १८६

अन्नजातानिति । तद्वत्शरीरगान्नन्नजातांस्तत्तदाहारपरिणामभूतान्सर्वान्विशेषानात्मतयावेत्तिमन्यतेस्वयास्वाश्रितयामाययैवनवस्तुतः यतोऽनंतःत्रिविधपरिच्छेदशून्यः १८७ शरीरध र्माध्यासंमपंचयति एवमित्यादिना । बालोहंवृद्धोहमित्यहंशब्दस्यसर्वत्रसंबंधः बालत्ववृद्धत्वाभ्यांयुवत्वमपिउपलक्षितं पीडितोरुग्णः पुण्यात्माशास्त्रविहिताचरणवान् पापा त्मानिषिद्धाचारः आचारःक्रियासाचशरीरधर्मः १८८ वर्णाश्रमाध्यासमाह एवंविप्रइति । स्फुटम् १८९ अत्रापीति । अत्रवर्णाश्रमाध्यासेसतितत्प्रयुक्तानवांतरजातितद्धर्मत त्तद्देशाचारान्बहुधादेहधर्मानात्मनिमन्यते इंद्रियधर्माध्यासंधर्म्यध्यासव्याप्त्यंदर्शयति एवमिति । अहंसम्यग्दर्शीअहंमंददर्शीत्याद्याकारेणपरकीयचित्तवर्तींद्रियाध्यासेहेतुंस्फुटयति काणो स्मीति । "यन्मनसाध्यायतितद्वाचावदति" इतिश्रुतेर्वचनादध्यासोनुमेयइतिभावः १९० नममदेहेंद्रियादितादात्म्याभिमानइतिपदिकश्चिद्वदेत्तंप्रतिअपरिच्छिन्नमात्मानंपरिच्छिन्नतयाम न्वानःकथमेवंब्रवीषीत्युत्तरंसूचयन्नाह एकमिति । एकंकंचिद्देहंसमाश्रित्याभिमन्यतत्परंतस्माद्देहाद्भिन्नंनाभिमन्यतेऽभिमानविषयंनकरोति अनेनहिसर्वात्मास्मीतिसर्वत्राभिमानोविधेयः'त दात्मानमेवावेत् अहंब्रह्मास्मि' इत्यादिश्रुतेः तन्नकरोतिकिन्तुभेददृष्टिमेवकरोतीतिभावः भेददृष्टेराकारमभिनयति अहमेतादृशइति । एतादृशईदृग्जात्यादिविशिष्टोहंनान्यएतद्भिन्नजात्यादिवि शिष्टोनभवामिकिंतुतद्भिन्नएवेत्यर्थः एतादृशास्तत्तज्जात्यादिविशिष्टायेन्येतेऽहंनकिंतुतेमद्भिन्नाएवेतियावत् १९१ शुद्धात्मप्रतिपादकाहंशब्दएवदेहादौप्रयुज्यमानोऽहंगौरइत्यादिज्ञानानां

अन्नजातानंनतोऽन्यान्भेदांस्तद्वत्शरीरगान् ॥ सर्वानात्मतयावेत्तिशयानोमाययास्वया १८७ एवंबालस्तथावृद्धःपीडितोनीरुजोपिवा ॥ रूपीकुरूपीपु ण्यात्मापापइत्यादिमन्यते १८८ एवंविप्रस्तथाराजावैश्यःशूद्रोथवापिहि ॥ एवंब्रह्मगृहीतद्वद्वनीभिक्षुरथापिवा १८९ अत्रापिबहुधादेहधर्मानात्मनिभ न्यते ॥ एवमिंद्रियसाकल्यंवैकल्यंचापिमन्यते ॥ काणोस्मीत्यादिवचनैःप्रकटीकुरुतेभृशम् १९० एकंदेहंसमाश्रित्यतत्परंनाभिमन्यते ॥ अहमेतादृशो नान्योनान्येप्येतादृशाअहम् १९१ अन्योहशब्दबोधाभ्यामेकार्थाभ्यांचतत्त्वतः ॥ भिन्नार्थमात्मबोधेनरहितःप्रतिपद्यते १९२ पित्रादिकमिदंमेस्यादिदंमे पिनचेतरत् ॥ इदंसर्वस्यलोकस्यशयानइतिपश्यति १९३ अकारणंक्वचिच्छोकंहर्षंवाप्रतिपद्यते ॥ क्षुत्पिपासेप्राणधर्मावात्मन्येवाभिमन्यते १९४ का मादिकान्मनोधर्मान्सत्वात्मन्येषतप्यते ॥ असंगोनिर्गुणोऽनंतआनंदात्माचिदात्मकः १९५

भ्रमत्वमावेदयति परत्रपरशब्दप्रयोगस्यारोपव्याप्यत्वादित्याह अन्येहेति । तत्त्वतोवस्तुतः एकार्थाभ्यां एकःकेवलःसर्वांतरात्माअर्थोऽभिधेयःफलरूपंप्रयोजनंचययोरहंशब्दबोधयोस्ता वेकार्थौताभ्यां अहमितिशब्दस्यशुद्धात्मैवाभिधेयःअहमित्याकारकबोधस्यचवृत्तिरूपस्यसएवफलमिवफलमितिएतादृशाभ्यामहंशब्दबोधाभ्यामयमात्मार्थत्वेनअन्यः ईदृशोपिअहंशब्दबोध योर्भिन्नार्थेनानाविधंदेहादिरूपमर्थंमन्यतेतत्राहंशब्दंप्रयुंक्तेअहमितिअभिमन्यतेच यतआत्मबोधेनरहितः तथाचस्फुटमस्यभ्रांतत्वमितिभावः १९२ एवमात्मन्युपाधितादात्म्याध्यासप्रयुक्तं भेददर्शनमभिधायतत्प्रयुक्तंबाह्यगोचरंभेददर्शनमाह पित्रादिकमिति । इदंदेवदत्तमित्रादिसंज्ञंमेपितृमात्रादिकंनचेतरत्तद्भिन्नंतुमेपित्रादिकंनभवतीत्यर्थः तथेदंगृहादिकंमेमदीयंइतरत्तुन इदंदे वालयनदीतीरादिसर्वलोकस्यसाधारणमित्यादिभेदात्अज्ञाननिद्रासुप्तःस्वप्नवत्पश्यतीत्यर्थः १९३ अकारणमिति । अप्रशस्तमनिर्वचनीयंकारणंयस्यतत्तथा तदुक्तंमहाभारते 'हर्षस्था नसहस्राणिशोकस्थानशतानिच । दिवसेदिवसेमूढमाविशंतिनपंडितम्' इति । प्राणतादात्म्याध्याससूचकंतद्धर्माध्यासमाह क्षुत्पिपासेइति १९४ मनसोपितमाह कामादिकानिति । कामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएव' इतिश्रुत्युक्तान्धर्मान्आत्मनिमत्त्वातप्यते वस्तुतएवएतादृशइत्याह । असंगइत्यादि १९५

भूतभौतिकजातमिति । भूतानिआकाशादीनिभौतिकानिस्थावरादीनितेषांजातंसमूहस्तत्रनानाविधांइदंसमीचीनमिदमसमीचीनमित्याद्याकाराधियंकुर्वाणोविविधंसुखंदुःखंवाप्रतिआभिमुख्ये नइहैवपद्यतेप्राप्नोति । भेददर्शनमुख्यफलंतुजन्ममृतिप्रवाहः ' मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ' इतिश्रुतेरितिभावः १९६ व्यापारानिति । द्व्यात्मनांज्ञानकर्मसाधनत्वेनद्विविधानां शेषंस्पष्टम् १९७ एवंजाग्रद्ज्ञानानामध्यासत्वेव्याख्येयश्रुतौतत्रस्वप्नपदप्रयोगउपपन्नइत्याह ततइत्यादित्रिभिः । ततोजाग्रद्ज्ञानानामध्यासव्याप्तत्वात् नित्यंसदासच्चिदानंदरूपिणोनतस्य चात्मनोयदिदंजागरणंतत्स्वप्नएव कुतः स्वप्नलक्षणयोगतः प्रबोधाभावेसतिमिथ्यावस्तुदर्शनंहिस्वप्नलक्षणंतदत्रापिवर्त्ततेआत्मबोधाभावाद्दृश्यमानस्यमिथ्यात्वाच्चेत्यर्थः १९८ एतदेवस्फुट यति योयथेति । यःकश्चित्यथावर्त्ततेसकलेंद्रियादिसामग्रीसंपन्नोपिवर्त्तमानश्चेत्यदिसएवतत्त्वंवस्तुयाथात्म्यंनपश्यतिकिंतुविपरीतधियाऽऽविष्टोभवतितदाशयानइत्येवव्यवहियतेलोकेतद ज्ञानंचस्वप्नइति तथाचविपरीतदर्शनंस्वप्नलक्षणंलब्धंतच्चप्रकृतेपीतिभावः १९९ तदेवाह आनंदात्मापीति । तादृक्त्वात्विपरीतधियाविष्टत्वात् अतोजागरणंयत्स्वप्नइत्युच्यतेतादिंद्रियाणामुपर मात्इंद्रियोपरमसाधर्म्येणनकिंतुविपरीतदर्शनलक्षणंसाधर्म्यमादायैवेतिभावः २०० एवंजाग्रदवस्थांमिथ्यारूपांप्रपंच्यस्वप्नावस्थांप्रपंचयति एवंजागरणइत्यादिनवभिः । मनःप्रासादमुक्तल क्षणंद्वितीयं व्याख्यातमन्यत् २०१ तत्रोक्तलक्षणेंद्रेंद्राण्योःपुरतोमनोनटवन्नानारूपाणिदर्शयतीत्याह अनंतेति । मनःस्वात्मानंस्वकीयंनानाविधंरूपंतत्तत्कर्मानुसारेणदर्शयद्वर्ततेइतिशेषः

भूतभौतिकजातंयत्तत्रनानाविधांधियम् ॥ कुर्वाणोविविधंदुःखंसुखंवाप्रतिपद्यते १९६ व्यापारान्विविधांस्तेषामिंद्रियाणांद्व्यात्मनाम् ॥ भूतानांभौतिकानांचस्वात्मन्येवाभिमन्यते १९७ ततोजागरणंस्वप्नःसच्चिदानंदरूपिणः ॥ अनंतस्यात्मनोनित्यंस्वप्नलक्षणयोगतः १९८ योयथावर्ततेलोकेप्रचेतस्त्वं पश्यति ॥ विपरीतधियाविष्टःसशयानइतीरितः १९९ आनंदात्मापितादृक्त्वाच्छयानइतिकथ्यते ॥ करणानांनोपरमात्स्वप्नोजागरणंभवेत् २०० एवंजागरणे स्वप्नान्दृष्ट्वाबहुविधान्विभुः ॥ इंद्राणीसहितःश्रीमान्मनःप्रासादमाविशत् २०१ अनंतभवसंभूतवासनावासितंमनः ॥ तत्तत्कर्मानुसारेणस्वात्मानंदर्शय त्यसदा २०२ ज्ञानकर्मेंद्रियैःशून्यस्तत्रदेवःसवासनः ॥ मानसंवासनाचित्रंविलोकयतिकर्मगः २०३ तत्रात्मनितथादृश्येनियतंनैवपश्यति ॥ तत्रदृश्योगजः क्वापितरुर्भवतितत्क्षणात् २०४

ज्ञानाकारेणविषयाकारेणचपरिणमतइतियावत् तस्यएतादृशनिर्माणसामर्थ्यसूचकंविशेषणमनंतेति । अनंतभवेषुजन्मसुसंभूताज्ञानकर्मवासनास्ताभिर्वासितंसंस्कृतं नकेवलंस्वप्नावस्थायामेवमनः स्वात्मदर्शकंकिंतुजाग्रत्यपीत्याह सदेति । उक्तमेतत । यदात्मनःसाक्षाद्भोग्यंमनएवान्यन्तुतद्वारेति २०२ प्रसिद्धजाग्रतःस्वप्नावस्थायाविशेषमाह ज्ञानेति । ज्ञानेंद्रियकर्मेंद्रियरहितः सवासनः जाग्रद्वासनाविशिष्टः मानसंमनःप्रयुक्तंवासनाचित्रंवासनाकार्यंचित्रमद्भुतंकूर्चब्राह्मणेप्रविविक्ततरपदेनोक्तंनाट्यंपश्यति । कर्मगःस्वप्नभोगप्रदकर्मविशिष्टइत्यर्थः अत्रमतद्वयंबोध्यं मनएव स्वप्नेविषयतज्ज्ञानाकारेणपरिणमतइत्येकं द्वितीयंत्वज्ञानंतत्तदाकारेणपरिणमतेमनोनिश्चवासनाअनुसृन्यइत्येतावान्मनसउपयोगः आत्मातुभासकएवेति किंचकर्तृत्वभोक्तृत्वोपाधिर्बुद्धिरिंद्राणीत्वे नकरणंमनस्तुनटत्वेनेहाविवक्ष्यतेइत्यपिध्येयम् देवपदेनचसएवसमष्टिरूपेणहिरण्यगर्भोव्यष्टिरूपेणतुतैजसइतिसूचितम् २०३ उपरतेंद्रियत्वंजाग्रतोविशेषमभिधायविशेषांतरमपिदर्शयति तत्रात्म नीतितत्रस्वाप्नावस्थायांनियतंघटोघटएवनपटइत्येवंस्वरूपनियमः सिंहोवनएवेत्यादिदेशनियमः सूर्यदर्शनंदिनएवेत्यादिःकालनियमो मृदएवघटइत्यादिनिमित्तनियम एतादृशनियमाविशिष्टं यथाभवतितथास्वात्मनिदृश्येपुरोवर्तिनिचभावान्नपश्यतिकिंत्वनियतमेवेत्यर्थः तत्रतावद्दृश्येनियमाभावंप्रपंचयति । तत्रदृश्यइति । स्फुटम् २०४

तरुरिति । आत्मस्वरूपेनियमाभावंदर्शयति एवमिति २०५ क्वचित्पशुरिति । नियमांतराभावंदर्शयितुंप्रतिजानीते । देशेति २०६ देशनियमाभावंस्फुटयति । नाडीनामिति । स्वप्नवहानांनाडीनांसूक्ष्माणामंतस्तिष्ठंस्तत्रैवमहोदध्यादींस्त्रीन्विकल्पेनपश्यति तथाचदेशनियमइति २०७ कालनियमाभावंदर्शयति रात्रौचेति । शयनेशय्यायांस्थितइतिशेषः निमित्तनियमाभावमाह क्वचिच्चेति । भारतेवर्षेखंडेस्थितःसन्ननेनैवशरीरेणचंद्रार्कौनापिपुरुषोपिभक्षयेत् भक्षणनिमित्तंहिभक्ष्यस्यसंनिहितत्वंमुखापेक्षयास्वल्पत्वंचभोक्तुःसामर्थ्यंचतत्सर्वमत्रनास्तीतिस्फुटम् अन्यदुदाहरणमाह संकल्पादिति । रथस्यसाधनंतक्षकाष्ठंवास्यादितदनपेक्ष्यसंकल्पमात्राद्रथंकुरुते अथरथानित्यादिश्रुतेः । तथाचक्कनियमइतिभावः २०८ अस्यश्रुतिगतस्वप्नपदविवक्षितंमिथ्यात्वंदर्शयति अतोनास्येति । वेदवादिभिःस्वप्नावस्थाप्रतिपादकश्रुतितात्पर्यविद्भिः सूत्रकारादिभिः तथाचसूत्रं 'मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति मायामात्रंनत्वत्रपरमार्थगंधोपि देशकालादिनियमःकार्त्स्न्यंतेनकार्त्स्न्येनेति भाष्योक्तसूत्रपदार्थः २०९ अथतृतीयस्वप्नंसुषुप्तावस्थारूपमाहत्रिभिः । इंद्रइति । एनंस्वप्नं अविलोक्यवेति जाग्रदनंतरंस्वप्नंविलोक्यैवसुषुप्तिरितिनियमादर्शनादितिभावः हार्दंहृदवच्छिन्नाकाशरूपंतृतीयंप्रासादमिति २१० तत्रेति । तत्रहृदयाकाशेएनामिंद्राणींभोग्यरूपांसंपरिष्वज्यानयासहगताभेदःप्राप्ताभेदोभवतीतिशेषः । तत्रभोक्तृभो

तरुश्चपर्वतःक्वापिपर्वतश्चक्वचित्तृणम् ॥ एवंद्रष्टाक्वचिद्विप्रःशूद्रोभवतितत्क्षणात् २०५ क्वचित्पशुःक्वचिद्देवोमहाराजःक्वचित्क्षणात् ॥ देशकालादिनियमो नात्रकश्चिद्विविद्यते २०६ नाडीनांविवरेस्वल्पेपश्यत्येषमहोदधिम् ॥ मेरुंचाप्यथवासप्तद्वीपामेतांवसुंधराम् २०७ रात्रौचशयनेपश्येद्भासंतंसदिवाकरम् ॥ क्वचिच्चभारतेवर्षेचंद्रार्कौनापिभक्षयेत् ॥ अनेनैवशरीरेणसंकल्पात्कुरुतेरथम् २०८ अतोनास्यविनामायांकारणंलभ्यतेक्वचित् ॥ स्वप्नोमायामयस्तेनकथ्यतेवेदवादिभिः २०९ इंद्रएनंविलोक्यैवक्वचित्तमविलोक्यवा ॥ इंद्राण्यासहितःशीघ्रंहार्दंप्रासादमाव्रजत् २१० तत्रैनांसंपरिष्वज्यगताभेदोऽनयासह ॥ मायाजवनिकांपश्यंस्तामप्येपनपश्यति ॥ नैवात्मानंचिदानंदंविशेषज्ञानशून्यतः ॥ २११ आत्मनोनवलोकेनस्वरूपाज्ञानसत्वतः ॥ अविद्यायाश्चसत्त्वेनस्वप्नएषोपिकीर्तितः ११२ त्रिस्वप्नास्त्रिगृहोदेवएवंद्वारवतीस्थितः ॥ अहंममाभिमानीसएक्षतेदंजनिंगतः २१३

ग्यभावोनभासतेइतिभावः नन्वज्ञानरूपंभोग्यंतत्रास्त्येवेत्यतआह मायेति । जवनिकावत्स्वकार्यवर्गाच्छादिकांमायांसमष्टिव्यष्टिरूपांपश्यन्नपिसाक्षिणमंतराज्ञानसिद्ध्यनुपपत्तेर्नकिंचिद्वेदेतिपरामर्शानुपपत्तेश्चसंभाव्यदर्शनोपिस्फुटंनपश्यति अतोभोक्तृभोग्ययोरैकीभावस्तत्रोक्तइतिभावः समष्टिरूपेणेश्वरोव्यष्टिरूपेणप्राज्ञइत्यपिबोध्यम् ननुमायाजवनिकायाःस्फुटत्वाभावेप्रतिबंधकाभावात्स्वरूपंज्ञानीयात्तथाचसुषुप्तिमात्रेणमोक्षापत्तिरितआह नैवात्मानमिति । तत्रहेतुः विशेषेति । तथाचप्रतिबंधकाभावेपिशास्त्राचार्यादिसामग्र्यभावान्नस्वरूपप्रमेतिभावः २११ श्रुत्युक्तस्वप्नपदमत्रापिसंगमयति आत्मनइति । स्वरूपाज्ञानसत्वेहेतोःआत्मनोनवलोकेनाप्रबोधेनास्फुटायाअविद्यायाश्चमिथ्याभूतायाःसाक्षिभास्यायाःसत्त्वेनएषोपिस्वप्नःसुषुप्तिरपिस्वप्नः श्रुतौकीर्तितः प्रबोधाभावसाम्यान्मिथ्यावस्तुदर्शनेस्वप्नइतिलक्षणयोगादितिभावः ११२ एवमध्यारोपपरंश्रुतिग्रंथंव्याख्यायापवादपरंसजातइत्यादिवाक्यदिपदित्यंतंव्याचष्टे त्रिस्वप्नइत्यादिसमतिश्लोकैः । तत्रतावच्छ्रुतिगतसइतिपदार्थंतत्पूर्वोक्तमनूद्यविचारमवतारयति त्रयोजाग्रत्स्वप्नसुषुप्तिरूपाउक्तलक्षणाःस्वप्नाःयस्यसतथा । त्रयोगृहाश्चक्षुर्हृदयकमलतदंतराकाशरूपावक्ष्यमाणाःपितृशरीरंमातृशरीरंपुनःपितृशरीरंमिथ्याकाराणिवायस्यसतथा । एवमहंममाभिमानप्रयुक्तनानादुःखमहरहरपिप्रबोधमलभमानः देवोद्योतनात्मकः । जातपदार्थमाह जनिंगतइति । ननुपूर्वस्थ—

नित्यस्यकीदृशंजन्मेत्यतआह अहंममाभिमानीति । निर्विशेषप्रकाशरूपस्याहमित्याद्यभिमानएवोत्पत्तिरितिभावः तथाचमैत्रेयीब्राह्मणेप्युक्तं 'सएषभूतेभ्यःसमुत्थाय' इति ननुदेवस्य कथमभिमानलक्षणाप्युत्पत्तिरतउक्तंद्वारेत्यादि । तथाचययामायया्व्यापकस्यप्रवेशःप्रयुक्तस्तयैवाभिमानोपीतिकिमनुपपन्नमितिभावः । सएवंचिरंप्रसुप्तःकृपावशेनगुरुणाकर्णेवेदांतमहाभेर्यां प्रबोधायताड्यमानायांप्रबुद्ध्यमानःसन्इदंवक्ष्यमाणंऐक्षतआलोचनंकृतवानित्यर्थः २१३ आलोचनस्वरूपमाह अहंजातइत्यादिना । येभ्यस्तानीतिचअध्याहार्यं तथाचयेभ्योहंजातोविशेषरूपे णप्रादुर्भूतस्तानीमानिभूतानिपंचाकाशादीनिममषष्ठस्योपाधिभूतानिचजातानिसंति कीदृशानि विविधानिशरीराद्यवांतरभेदेनविविधानि संक्षेपतस्तुद्विविधानीत्यतआह जडानीति । भोक्तृभोग्य स्वरूपतः तृतीयार्थेतसिः भोग्येनरूपेणजडानिभोक्तृरूपेणचाजडानीत्यर्थः । आत्मनिवस्तुतोभोक्तृत्वस्यासंभवात्तदुपाधौप्रक्षिप्यैवमुक्तं तच्चभोक्तृत्वंभूतेभ्योजीर्णेन्यासवत्तेषांसत्तयासहोपादीयमा नमात्मनोद्वितीयत्वंसाधयिष्यतीत्याशयः २१४ भूतानांभोग्यभोक्तृरूपतांस्फुटयतिद्वाभ्यां आकाशादीनीति । तत्राकाशादीनिबाह्यरूपाणिस्थावरजंगमकर्तृकभोगकर्मतयैवप्रसिद्धानि स्थावरजंग मानांपरस्परंयोभोक्तृभोग्यभावःसनियतोन किंतुकदाचित्स्थावराभोक्तारःजंगमाभोग्याःकदाचित्जंगमाभोक्तारः स्थावराभोग्याइत्यर्थःउपकार्यत्वंभोक्तृत्वमुपकारकत्वंचभोग्यत्वमिहविवक्षितम् एतदेवाह जलदानादिभिरिति । जलदानादिभिर्जलप्रसेकरक्षणादिभिरुपकुर्वंतोजंगमाःस्थावरैर्वृक्षादिभिर्भोग्याःछायाकाष्ठादिभिरुपकुर्वंतःस्थावराश्चजंगमैर्मनुष्यादिभिरितिप्रसिद्धमित्यर्थः २१६

अहंजातइमानीहभूतानिविविधानिच ॥ जडान्यजडरूपाणिभोक्तृभोग्यस्वरूपतः २१४ आकाशादीनिभोग्यानिस्थावरैर्जंगमैरपि ॥ स्थावराणांजंगमा नांभोक्तृतानियतानहि २१५ जलदानादिभिर्भोग्याःस्थावरैर्जंगमायतः ॥ स्थावराणांहिभोग्यत्वंप्रसिद्धंजंगमैर्नृणाम् १६ भोक्तृताजडरूपस्यसर्वथानोपपद्यते ॥ भुजेःक्रियायाःकर्तृत्वंनजडस्योपपद्यते २१७ उक्तमेतन्मयैवादौकुतस्तस्याःफलस्यहि ॥ भुजेःफलंप्रकाशःस्यात्प्रकाशोहंनचेतरः ॥ इतरस्यप्रकाशत्वंम द्योगादितिचोदितम् २१८

एवंभोक्तृतयाभोग्यतयाचप्रपंचस्यवर्गद्वैविध्यमुपपाद्यतद्रूपद्वयमपिविचार्यमाणंमत्स्वरूपेपर्यवस्यत्पृथक्सत्तालक्षणं प्रपंचस्यस्वातंत्र्यमादायममाद्वितीयत्वंबोधयतीत्याह भोक्तृतेत्यादित्रिभिः । भोक्तृताहिभुजिधात्वर्थभोगाश्रयताभोगश्चोपकारसाधनत्वेनज्ञानं यथाराजोपकरणानिभुंक्ते तान्युपकारसाधनत्वेनसाक्षात्कुरुतेइत्यर्थः बुद्धिवृत्तिपर्यंतंसर्वंचेतनस्योपकरणमेवाभिव्यक्तिलक्षणो पकारसाधनत्वात् अभिव्यक्तचेतनस्वरूपंतुभोक्तृभोग्यभावाभ्यांवर्जितमेव सुखदुःखसाक्षात्कारोभोगइतिलौकिकवाक्यस्याप्यत्रैवार्थेपर्यवसानं सुखदुःखतत्क्रियायामितिधातोरन्प्रत्ययेनसुखा दिसाधनत्वेनसाक्षात्कारइत्यर्थलाभात् भोग्यतातुतादृशज्ञानविषयत्वं विषयताचचित्तादात्म्यरूपा यथाघटोज्ञातइत्यस्यघटाकारवृत्त्यभिव्यक्तचैतन्याभिन्नसत्ताकइत्यर्थः एवंचविषयतापिक ल्पितत्वमंतरानोपपद्यतेइत्याशयेनायंग्रंथः पदार्थस्तुभोक्तृताउक्तलक्षणाजडस्यावरणरूपस्यविरोधान्नोपपद्यते भुजेर्भुजिधात्वर्थरूपायाःक्रियायाःकर्तृत्वंस्वातंत्र्यलक्षणंयतोनोपपद्यतेनसंभवतीति  २१७ उक्तमिति । 'अचेतनानांव्यापारेस्वातंत्र्यंनास्तिकुत्रचित्' इत्यादिग्रंथेनेतिशेषः तर्हिभोग्यत्वमेवास्तुइत्यतआह कुतइत्यादि । तस्याभुजेर्वृत्तिरूपायाःफलस्याभिव्यक्तचैतन्यरूपस्यतादा त्म्यरूपमाश्रयत्वमितिशेषः कुतःकथंसंभवेन्नकथमपीत्यर्थः अघटितघटनापटीयसीविचारासहाचमायापूर्वंसंबंधोपपादिकाआसीत्साचविचारकालेपलायितेतिभावः एतदेवस्फुटयति भुजेरिति । भुजेरंतःकरणवृत्तिरूपायाःफलमिवफलंप्रकाशश्चैतन्यरूपःसचाहमेव 'तमेवभांतम्' इत्यादिश्रुतेः यथाप्रकाशयत्येकइत्यादिस्मृतेश्च । नन्वंतःकरणस्यवृत्तिरपिप्रकाशइतिचेद्तत्रोत्तरमेतदित्याह—

द्वितीयमनूद्यातिव्याप्त्यादूषयति नचेंद्रियस्येति । वर्णात्मकस्त्वेसतींद्रियसंबंधाद्ज्ञानहेतुःशब्दःइतित्वयालक्षणेईरितेसत्यपितस्मैशब्दायस्वस्तिखंडनभयात्संरक्षणंनचभवेदित्यन्वयः कुतोय तोधूमोप्येवंस्ववाचकेशब्दतादात्म्यवत्त्वेसत्येवसतींद्रियसंबंधान्नृणांवन्ह्यादिज्ञानहेतुः तथाचतत्रातिव्याप्तिरितिभावः २३० नन्विंद्रियपदेनश्रोत्रमेवविवक्षितमतोनधूमेऽतिव्याप्तिरित्याशंक्य तथापिशब्दत्वजातावतिव्याप्तिरित्याह नचश्रोत्रस्येति । श्रोत्रस्यसंबंधोग्राह्यत्वरूपोविशेषःधूमादिनिष्ठेंद्रियसंबंधाद्विलक्षणः तस्यशब्दसंरक्षणस्यकारणंप्रयोजकंनचसंभवति तत्रहेतुः त स्मिन्नित्यादि । हियस्मात्तस्मिन्शब्देनुगतेसर्वत्रतादात्म्यसंबंधेनवर्त्तमानेधर्मेजातिरूपेपिअसौविशेषोस्तिकीदृशः अवारितःकेनापिरोद्धुमशक्यः तथाचस्फुटाऽतिव्याप्तिरितिभावः अ त्रयद्यपिगुणपदनिवेशेजातावतिव्याप्तिर्नसंभवतितथापिगुणत्वानिर्वचनीयत्वस्याकाशनिर्वचनप्रसंगेवक्ष्यमाणत्वात्श्रोत्रग्राह्यत्वांशोदूषितइतिध्येयम् २३१ ननुजातिव्यक्तयोस्तादात्म्या ज्जातेरपिनामत्वमस्त्वितीष्टापत्तिमाशंक्याह अस्यतत्त्वेइति । अस्यानुगतधर्मस्यजातिरूपस्यतत्त्वेशब्दात्मकनामत्वेस्वीकृतेसतितस्यशब्दस्यरूपंस्वरूपंरूपत्वंरूपभावमाप्नुयात् इंद्रिय ग्राह्यत्वेनहिजात्यादिकंरूपत्वेनश्रुतौविवक्षितम् अनुनाशब्दनिष्ठजातेरपिनामत्वाभ्युपगमेनामरूपयोर्भेदव्यवहारलोपापत्तिरितिभावः ननुजातिरनुगताशब्दस्त्वननुगतइतिस्पष्टोभेदइत्याशं कावारणायशब्दस्याप्यनुगमंसर्वत्रदर्शयति यथाककारेइति । शब्दसंगतिःशब्दसंबंधः तथाचरूपात्पृथक्नामनिर्वक्तुमशक्यमितिभावः २३२ एवंनाम्नोऽनिर्वचनीयत्वंप्रसाध्यरूपक्रिय

**नचेंद्रियस्यसंबंधाज्ज्ञानहेतुरितीरिते ॥ स्वस्तितस्मैभवेद्यस्माद्धूमोप्येवंनृणामिह २३० नचश्रोत्रस्यसंबंधोविशेषस्तस्यकारणम् ॥ तस्मिन्ननुगतेधर्मे ह्यस्त्यसावप्यवारितः २३१ अस्यतत्त्वेध्रुवंतस्यरूपंरूपत्वमाप्नुयात् ॥ यथाककारेकत्वंस्यात्शब्देवाशब्दतायथा ॥ तथाघटादिषुप्रायोदृश्यतेनामसंगतिः २३२ यथानामतथारूपक्रियेअपिसुदुर्भणे ॥ अपिक्रियानरूपेणविहीनागृह्यतेक्वचित् २३३ यथाघटेनहीनानगृह्यतेपृथुबुध्नता ॥ ततोनेयंपृथग्रूपारूप रूपवदीरिता २३४ रूपंहिसकलंयस्माज्जनयेन्नामतोधियम् ॥ तस्मान्नवस्तुतस्तत्स्यान्नरेतीक्ष्णाग्रशृंगवत् २३५ नचास्तिप्रत्ययस्तत्रजायमानोनि वार्यते ॥ अस्तिवंध्यासुतोनैवंप्रत्ययोनरिनास्त्यसौ २३६**

योरपितदतिदिशति यथानामेति । सुदुर्भणेदुःखेनभणितुंनिर्वक्तुंशक्ये तत्रक्रियायाउक्तलक्षणरूपाद्यदिभेदंकश्चिद्विवेकेनानुभवगोचरंकुर्वीततदालक्षणमपिप्रणयेत्तद्देवतुनसंभवतीत्याह अपिक्रिये ति २३३ दृष्टांतमाह यथाघटेनेति । पृथुबुध्नतापृथुर्विशालोबुध्नोमूलभागोयस्यसपृथुबुध्नः बुध्नपदमुदरोपलक्षणं परिशेषात्स्वल्पमुखः तस्यभावस्तत्ता तथाचयथाघटस्वरूपंपृथुबुध्न ताघटात्पृथक्नानुभूयतेतथापूर्वापरीभूतदंडादिस्वरूपाक्रियेतिभावः 'मूलंबुध्नोंघ्रिनामकः' इत्यमरः । फलितमाह ततइति । रूपरूपवत्रूपस्यस्वरूपवत् यथारूपंरूपान्नपृथक्तद्व दित्यर्थः २३४ अथनामतःपृथगनिर्वचनीयतांरूपस्यस्फुटयति रूपंहीति । यस्मात्सकलंरूपमिंद्रियगोचरात्मकंनामतोनामपक्षपातिनींधियंजनयेत्तस्मात्तद्रूपंवस्तुतोवास्तवंनस्यात्किंतुविक ल्पमात्रंतदित्यर्थः वाचारंभणमित्यादिश्रुतिरप्यनुकूला ज्ञानस्यनामपक्षपातित्वंहरिणाप्युक्तं 'नसोस्तिप्रत्ययोलोकेयःशब्दानुगमादृते । अनुविद्धमिवज्ञानंसर्वंशब्देनभासते' इति । ना मतइतिनसिद्धअर्जुनतोभवन्नितिवद्बोध्यः तत्रदृष्टांतःनरइत्यादि पर्वतशृंगवत्स्थूलंशृंगंशिरएवातउक्तंतीक्ष्णाग्रेति २३५ ननुअलीकेनृशृंगवंध्यासुतादौअस्तीत्याकारकंज्ञानंनास्तिअस्तितु रूपेऽतःकथंसाम्यमुच्यतेइत्यतआह नचास्तीति । तत्रनृशृंगादौ उदाहरणमाह अस्तीति । वंध्यासुतोस्तिएवंइत्याकारकोऽसौप्रत्ययःनरिपुरुषेनास्तिइतिनकिंतुअस्त्येव सांख्यैर्विकल्पस्य नैयायिकादिभिराहार्यज्ञानरूपस्यस्वीकारादितिभावः २३६

ननुरूपज्ञानवंध्यासुतज्ञानयोर्नसाम्यमिंद्रियजन्यत्वतदजन्यत्वाभ्यांविशेषादित्याशंक्यकिंसर्वेंद्रियजन्यत्वविशेषःकिंवाएकैकेंद्रियजन्यत्वमितिविकल्प्यतत्रनाद्यइत्याह नचासाविति । असौ रूपप्रत्ययः इत्येतत्सर्वेंद्रियजन्यज्ञानविषयत्वंभावकारणंसत्ताप्रयोजकोविशेषइतिनचवक्तव्यम् हियतोगंधधियश्चक्षुरादिःकारणंनकिंतुघ्राणमेव तथाचविशेषकल्पनेनरूपसत्तांसाधयितुमिच्छतस्तवगंधादिसत्तापिगता एवंचवृद्धिमिच्छतोमूलहानिरितिभावः २३७ द्वितीयंविशेषमनूद्यवंध्यासुतेपितस्यसत्त्वमाह अथैकेंद्रियेति । गंधादेरस्तीतिशेषः तर्हिएतस्मिन्विशेषेऽभ्युपगतेसति तवैवमतेमनसेंद्रियेणनृशृंगस्यबोधनमस्तुकःप्रतिबध्नातित्वंचकिमपलपसि एवंचायमपिविशेषोनास्तीतिभावः २३८ ननुमनसइंद्रियपारतंत्र्यंवंध्यासुतज्ञानेप्रतिबंधकमित्याशंक्यतत्पारतंत्र्यस्यकादाचित्कत्वेनसुखादिज्ञानान्यनेकानिसाधयतोमनसोवंध्यासुतज्ञानेकोभारइत्याशयेनाह नहीति । नेत्राद्यगम्यत्वेसतिसुखदुःखयोर्ग्रहोनइतिनहिकिंतुमनसातेगृह्येतेएवेत्यर्थः तथाचवंध्यासुतोनरेशृंगमपिज्ञायतामितिशेषः ननुकथमसतज्ज्ञायेतेत्यत्राह दुःखमित्यादि । वाशब्दइवार्थे यथावैरिणिवर्तमानंदुःखंसुखरूपेणासदपिसुखमितिज्ञायतेतद्वदिदमपिज्ञायतां प्रसिद्धंहिलोकेवैरीदुःखितोपिसुखीतिमन्यतेइति २३९ एवंसतिरूपंनाममात्रमितिलोकप्रसिद्धमन्यतिरेकंद्रष्टापिनिश्चीयतेइत्याह प्रवृत्त्याद्याविति । प्रवृत्त्यादौप्रवृत्तिपूर्वकालेइच्छाद्वाराप्रवृत्तिकारणीभूतायो

नचासाविंद्रियैर्जन्यइत्येतद्भावकारणम् ॥ नहिगंधधियःक्वापिचक्षुरादिस्तुकारणम् २३७ अथैकेंद्रियबोध्यत्वंगंधादेर्नासतस्तथा ॥ तर्ह्यस्तुनरिशृंगस्यमनसाबोधनंतव २३८ नहिनेत्राद्यगम्यत्वेनग्रहःसुखदुःखयोः ॥ वंध्यासुतोनरेशृंगंदुःखंवैरिणिवासुखम् २३९ प्रवृत्त्यादावृतेशब्दंनबोधोस्तिविचारिणाम् ॥ एवंशब्दादयःसर्वेसंतिनैवनिरूपिताः २४० नचतद्व्यतिरिक्तानिसंतिभूतानिवैक्वचित् ॥ तथाहिनभइत्येतत्किंनामभवतोमतम् २४१ अवकाशस्त्वसौकस्माद्भवेद्वंध्यासुतोनते ॥ नचशब्दगुणत्वेनतस्यवंध्यासुताद्भिदा २४२ गुणोहिगुणिनोभिन्नोनासौतस्यगुणोमतः ॥ यथाघटात्पटोभिन्नोघटस्यनघटोभवेत् ॥ अभिन्नोपिगुणोनस्याद्गुणोयद्वद्गुणोनहि २४३

बोधोविचारवतांसशब्दंविनानास्तिकिंतुशब्दावगाह्येवदृष्टोऽतःसहोपलंभान्नामरूपयोरभेदःसिद्धइतिभावः प्रपंचस्यापिकानांनामरूपक्रियाणामनिर्वचनीयत्वविचारमुपसंहरति एवमिति । स्पष्टम् २४० अथतद्व्याप्यपंचभूतानामनिर्वचनीयत्वंस्फुटयितुमुपक्रमते नचतद्व्यतिरिक्तानीति । ताभ्योनामरूपक्रियाभ्यःपृथग्भूतानीत्यर्थः तत्रज्येष्ठमाकाशंविचारयति तथाहीति । किंकिंस्वरूपमित्यर्थः २४१ नन्ववकाशरूपआकाशःप्रसिद्धएवेत्याशंक्यएवंसत्यावरणाभावाधिकरणंयत्किंचिदस्तितदाकाशमितिलक्षणमागतंतच्चवंध्यासुतेपिगच्छति अलीकेपिअभावसंबंधस्यतांत्रिकैःस्वीकृतत्वादित्याशयेनाह अवकाशइति । तेतवकल्पनाविषयआकाशोऽवकाशरूपश्चेत्तर्हिवंध्यासुतएवकस्मान्नावकाशोभवेत् तस्याप्यवकाशत्वसंभवादितिभावः शब्दगुणकत्वेनविशेषमाशंक्यतद्विघटनंप्रतिजानीते नचेति २४२ तत्रहेतुतयाभिन्नस्याभिन्नस्यवागुणत्वासंभवमाह गुणोहीति । गुणिनोभिन्नश्चेद्गुणस्तर्हितस्यगुणिनोगुणोनमतःनसंमतः भिन्नत्वेनप्रसिद्धयोर्गुणगुणिभावादर्शनात् उदाहरणं यथेति । घटाद्भिन्नःपटः घटस्यघटः घटच्चेतेउपसर्जनीभूयोपकुरुतेइतिघटोगुणस्तथाभूतोनस्यात् तथाऽभिन्नोपिनगुणःस्यात् यद्वत्यथा गंधस्यगुणस्यतस्मादभिन्नोगंधोगुणइतिनव्यवह्रियतेइत्यर्थः कल्पितभेदेनगुणगुणिभावस्तुयादृशोयक्षस्तादृशोबलिरितिन्यायेनकल्पितभेवाकाशंसाधयेन्नपरमार्थमितिभावः २४३

इतरस्येति । बुद्धेर्यद्यपिसार्वज्ञ्यमित्यत्रोक्तंस्पष्टीकृतमित्यर्थः २१८ फलितंदर्शयन्वावदिषदित्यंतंवाक्यमर्थतोव्याचष्टे तस्मादिति । सर्वेषांदेहिनांसमष्टिव्यष्टिरूपाणामहमेकःप्रकाशः सर्वंचदृश्यमुत्पन्नंमदर्थिनं तथाचेहप्रपंचेकिंमद्भिन्नंवावदिषत् लेट् वदेत् महाराजसभायांसभास्थवत्स्वतंत्रंवाक्यमभ्युच्चारयेदित्यर्थकंवाक्यंव्याख्यातमितिभावः २१९ अस्यवाक्यस्यमद्भिन्नं किंचिदपिकश्चिदपिकिंवदेतनिरूपयितुंशक्नुयादपितुनतस्यानिर्वचनीयत्वादित्यर्थोपिसंभवतितंविस्तरेणवक्तुमुपक्रमते अप्यनंतेइत्यादिना । अपिनाअर्थांतरमप्युच्यतेइत्यर्थः मयिशोधिताह मर्थेनंतेत्रिविधपरिच्छेदहीनेसर्वःप्रपंचःभोक्तृभोग्यरूपोमदज्ञानप्रयुक्तत्वाद्रज्जुसर्पवत्कल्पितइतिशेषः तथाचतस्याभिन्नत्वेनप्रतिपादनंदुःशकमितिभावः २२० संग्रहेणोक्तमनिर्वचनीयत्वंविस्तरे णापिस्फुटयति अध्यस्तेइत्यादिना । अध्यस्तेप्रपंचेश्रुतिवचनादभ्युपगतेपितस्यस्वरूपादिकमपिविचार्यं असंभावनावारणाययथाश्रुत्याचार्याभ्यांबलेनाहंस्वीकारितइत्यनुतापोमाभूदितिभावः किंप्रपंचोनामरूपक्रियाणांसमुदायरूपोवात्रयंवा 'इदंनामरूपंकर्मच' इतिश्रुतेः किंवाप्रत्येकरूपः तत्रनाद्यइत्याह नामेत्यादि २२१ तत्रसांकितेभ्योविभिन्नःस्यादित्यादिनापूर्वमुक्तंदूषण गणंहेतुतयास्मारयति समुदायइति । समुदायिभ्योभिन्नत्वपक्षेऽदर्शनं अभिन्नत्वपक्षेप्रत्येकंसमुदायव्यवहारापत्तिरित्यादिदूषणमुक्तं अत्रनामादिसमुदायपक्षएवपुनर्विचिंत्यतांवक्ष्यमाणवि धयाविकल्पांतरंक्रियतामित्यर्थः २२२ विकल्पाकारमभिनयति नामरूपक्रियाइति । नामवाक्कार्यंरूपमिंद्रियगोचरः क्रियापूर्वापरीभूतात्मिकाताः नामरूपक्रियाःसमुदायोयासांप्रपंचउच्यते

तस्मादहंप्रकाशःस्यांसर्वेषामिहदेहिनाम् ॥ मयानरहितंकिंचित्स्वतंत्रंवचनंवदेत् २१९ अप्यनंतेमयिसदाभोक्तृभोग्यस्वरूपधृक् ॥ मदज्ञानसमुत्थत्वात् प्रपंचोरज्जुसर्पवत् २२० अध्यस्तेपिचकोनामप्रपंचइतिचिंत्यताम् ॥ नामरूपक्रियाणांहिसमुदायात्मकोनच २२१ समुदायोनभिन्नःस्यान्नाप्यभिन्नइतीरितम् ॥ समुदायिभ्यएतद्धिपुनरत्रविचिंत्यताम् २२२ नामरूपक्रियाःकिंस्युर्नामरूपक्रियात्मिकाः ॥ अतद्रूपेऽप्रपंचत्वंतासामेवप्रसज्ज्यते २२३ तद्रूपत्वेपिकिंस्वित्स्यात्तासांप्रत्येकमेवहि ॥ त्र्यात्मकत्वमथापिस्यादेकैकंचैकरूपकम् २२४ आद्येऽदर्शनमेकैकमनवस्थादिचापरम् ॥ दूषणंमूलहीनंचकल्पनंमानहानतः २२५

क्रिमेताअपिनामरूपक्रियात्मिकाउतनेति किंशब्दस्यविकल्पेकिंकिमुतचेतिकोशाद्विकल्पार्थकत्वेननिषेधपक्षोऽध्याहृतः अल्पदूषणकत्वादन्त्यपक्षंतावन्निराचष्टे अतद्रूपइति भावप्रधानोनिर्देशः तथाचनामरूपक्रियाणामतद्रूपत्वेनामरूपक्रियात्मकत्वाभावेतासामप्रपंचत्वंप्रपंचबाह्यत्वंप्रसज्ज्यते तथाचप्रपंचरूपाणांप्रपंचबाह्यत्वेव्याघातःश्रुतिविरोधश्चेतिभावः २२३ अथाद्यपक्षंदूषयितुं विकल्पयति तद्रूपत्वेपीति । नामरूपक्रियाणांतद्रूपत्वेनामादिरूपत्वेस्वीकृतेपीदंवक्तव्यंकिंतासांनामरूपक्रियाणांप्रत्येकंत्रयात्मकत्वंनामरूपक्रियासमुदायरूपत्वंकिंवाएकैकमेकरूपंकिंना मनामात्मकमेवरूपंरूपात्मकमेवक्रियाक्रियात्मिकैवेत्यर्थः २२४ प्रत्येकंत्रयात्मकत्वपक्षेदोषानाह आद्येइति । आद्यपक्षेऽदर्शनंप्रत्येकंत्रिस्वरूपताऽनुभवाभावःएकंप्रथमंदूषणंगृहाणेतिशेषः नहिनामनामात्मकंरूपात्मकंक्रियात्मकंचदृश्यतेइत्यर्थः । द्वितीयमाह अनवस्थादिचापरंदूषणमिति । अनवस्थाआदिःकारणंप्रयोजकंयस्यदूषणवृंदस्यतद्दूषणवृंदमपरंद्वितीयंदूषणमित्यर्थः । अयंभावः तादात्म्यंहिविधंसमवायस्थानेऽभिषिक्तमितरच्च तत्राद्येभेदःकल्पितोऽभेदोवास्तवइत्युक्तंद्वितीयेतुदूरस्थवृक्षादौप्रसिद्धेभेदोवास्तवोऽभेदस्तुकल्पितइतिविशेषः तथाचवाचिस्थितस्य नाम्नोयथाघटेनतादात्म्येभेदोवास्तवस्तद्वदत्रनाम्निनामतादात्म्याभ्युपगमेउद्देश्यनाम्नःसकाशाद्विधेयनाम्नोभेदांगीकारेतेनापिनाम्नानामतादात्म्यवताभवितव्यमितितत्रान्यन्नामतत्रान्यदित्यनवस्था एवंरूपक्रिययोःपरैर्भिन्नत्वेनस्वीकृतयोस्तादात्म्येपि नन्वनवस्थायामिष्टापत्तिरितिचेत्तर्हिउत्तरोत्तरागंतुकनाम्नैवनामप्रयुक्तव्यवहारेसिद्धेपूर्वपूर्वनाम्नोवैयर्थ्यरूपोलोपएकंदूषणमनेकनामविशिष्टे–

घटेकेननाम्नाऽयंव्यवहारोजनितइतिविनिगमनाभावोद्वितीयं । एकत्रानंतनामावगाहिप्रमाणाभावस्तृतीयमप्यापद्येतेति । तथाचोक्तंखंडनकृद्भिः ‘ प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् । अनवस्थितिमास्थातुरचिकित्स्यात्रिदोषता ’ इति । तृतीयंदूषणमाह मूलहीनंकल्पनमिति । प्रत्येकंनामादित्रितयात्मकमितितेकल्पनंमूलहीनं कुतोमानहानतः मानैरस्यार्थस्यत्यागादुपेक्षणादितियावत् नह्यत्रप्रत्यक्षादिनवाश्रुतिः साहीदंविश्वंत्रयात्मकमित्येतावदाह नतुप्रत्येकंत्रयात्मकमितिवक्तुंशक्यंयावद्घनंवाधानिकामितिन्यायादितिभावः २२५ एकैकात्मकमिति । द्वितयेप्युक्तविधमनवस्थादिदूषणमतिदिशतिएकैकात्मतायामिति । व्याख्यातप्रायम् । किंचनामनामात्मकमेवेतिनियमोवक्तुमशक्यः तस्यश्रोत्रविषयत्वेनरूपत्वस्यापिसंभवात्पूर्वापरीभूततयाक्रियात्मकत्वस्याप्युपपत्तेः अनियमोपिवक्तुमनुचितः नानात्वेनैवव्यवह्रियमाणत्वादित्याह नियमइति । एतेनैवप्रपंचोनामादित्रयसमुदायात्मकोनवेतिविकल्पेऽत्याकोटिरपिसमाहिताद्रष्टव्या २२६ अथनामादीनाभेवदुर्निरूपत्वात्तत्समुदायादिरूपत्वंप्रपंचस्यदुर्निरूपमित्याह अपिकिंनामेति । स्पष्टम् । तत्रनामविचारयति शब्दइति । शब्दोनामस्यादितिचेत्सोयंशब्दएवकइतिरूप्यतामित्यन्वयः रूप्यतांरूपवान्लक्षणवान्क्रियतां तस्यलक्षणंवक्तव्यमित्यर्थः २२७ एवंपूर्वप्रतिवाद्युक्तलक्षणनिरसनपूर्वकंशब्दात्मकनामानिर्वचनीयत्वंसाधयति स्वस्मिन्नित्यादिसार्धैःपंचभिः । स्वस्मिन्विषयेस्वबुद्धिजनकः स्वपदाभ्यांशब्दोग्राह्यः बुद्धिपदेनचज्ञानं तयोर्विषयतासंबंधेनयोजनकःकारणंसशब्दः दृश्यतेहिउत्पन्नःशब्दः अयंशब्दइत्याकारकशब्दबु

एकैकात्मकतायांस्यादिदमेवहिदूषणम् ॥ नियमोऽनियमोवापिनशक्योवक्तुमंजसा २२६
आपेकिंनामकिंरूपंकाक्रियेयमिहोच्यते ॥ शब्दोनामेतिचेत्स्यात्सकोयमित्येवरूप्यताम् २२७
स्वस्मिन्स्वबुद्धिजनकःसचेद्वंध्यासुतोपिसः ॥ अर्थविज्ञानजनकश्चेदसौनध्वनिस्तथा २२८
वर्णात्मकोपिनियतःसर्वेषांज्ञानकारणम् ॥ नासौयतोनजनयेद्बधिरादौधियंक्वचित् २२९

द्धींजनयन् यथाघटःस्वविषयकेघटइत्याकारकेशब्दबुद्धींजनयतितद्वत् शब्दस्यसविषयकत्वंयाचितमंडनन्यायेनज्ञानद्वारेत्यन्यत् तथाचस्वविषयकशब्दबुद्धिजनकत्वंशब्दलक्षणमितिचेत्तर्हिवंध्यासुतादावलीकेऽतिव्याप्तिरित्याह वंध्यासुतोपिसइति । असतोवंध्यासुतादेर्द्धर्मांतरानभ्युपगमेपिअननुभावकानुपाख्यादिशब्दवृत्तिविषयत्वंविकल्पज्ञानविषयत्वमत्यंताभावप्रतियोगित्वंचेत्येतेधर्मास्तांत्रिकैरभ्युपगम्यंतएवेत्युक्तमद्वैतसिद्धिव्याख्यानेमिथ्यात्वनिरुक्तौब्रह्मानंदैः मूलकारैरपीदंवक्ष्यते शब्दबुद्धीअसत्वेपीति श्लोकेन । तथाचविषयतासंबंधेनवंध्यासुतइत्याकारकशब्दबुद्धींस्वास्मिन्जनयति वंध्यासुतेऽतिव्याप्तिरितिलक्षणांतरंशंकते अर्थेति । सदर्थविषयकज्ञानहेतुत्वंशब्दत्वं नाऽलीकेऽतिव्याप्तिः तस्यासत्वादिति । अस्यलक्षणस्यध्वनिरूपेशब्देऽर्थविषयकबोधाजनकेअव्याप्तिमाह नध्वनिस्तथेति । अत्रलक्षणेदोषांतरसंभवेपिपुरःस्फूर्तिकत्वेनप्राधान्यादव्याप्तिरेवोक्तेतिध्येयम् २२८ ननुवर्णतादात्म्येनार्थबोधजनकत्वंशब्दलक्षणमस्तुअस्यनध्वनावव्याप्तिः ध्वनेरपिवर्णव्यंजकस्यमीमांसकमतेवर्णतादात्म्यात्यथाजातिव्यंजकव्यक्तेर्जात्यातादात्म्यंतद्वदित्याशंक्यकिमुक्तविधयासर्वेषांबोधजनकत्वंलक्षणंकिंवायदीयेंद्रियेणसंबंधस्तंप्रत्येवेतिविकल्प्यतत्रनाद्यइत्याह वर्णात्मकइति । असौशब्दोवर्णात्मकोपिनियतःनियमविशिष्टःसन्सर्वेषांज्ञानकारणंनभवति यतःक्वचिद्बधिरादौधियंनजनयेदित्यन्वयः आदिपदेनसुप्तमूर्च्छितप्रमत्तरुग्णपरिग्रहः २२९

ननुपरमार्थयोर्भेदाभेदयोःसमुच्चयःसांख्यादिसंमतोऽस्त्वित्याशंक्याह भेदाभेदाविति । न्यायचक्षुषाविरुद्धयोर्नसमावेशइतिन्यायानुगृहीतबुद्धिनेत्रेण दुराग्रहेणसत्वेसमावेशेस्वीकृतेतुतयोर्भेदाभेदयोःप्रत्येकंयोदोषोवर्णितःसतवबलाद्भवेदापद्येतेत्यर्थः यथाप्रत्येकंमृगयादिव्यसनदोषोव्यसनद्वयांगीकारेइतिभावः २४४ किंचप्रदाभेदाभेदयोरेवानिर्वचनीयत्वंतदाकिमुततन्निर्वाह्यानामित्याशयेनभेदाभेदौकिंवस्तुनःस्वरूपमेवकिंवाततःपृथगितिविकल्प्यतत्रनाद्यइत्याह अपिभेदइति । वस्तुनीवस्तुस्वरूपाभिन्नेइतिचेत्तर्हिइदंतेवचोवृथाव्यर्थंसमाधानासमर्थमितियावत् तत्रपुनरुक्तिप्रसंगंहेतुमाह इदंभिन्नमित्यादि । तथासतीत्यादिःतथासतीदंफलंवृक्षाद्भिन्नं इदंद्रव्यंसतोऽभिन्नंतेइमेवस्तुनीइतिवाक्यंनोचितंस्यात् भिन्नाभिन्नवस्तुपदानांप्रवृत्तिनिमित्तभेदाभावाद्घटःकलशइतिवाक्यवदितिभावः २४५ पुनरुक्तिंदृष्टांतेनस्पष्टयति नघटइति । स्पष्टम् २४६ भेदाभेदयोःपृथक्त्वरूपेद्वितीयपक्षेपिभेदाभेदधारास्वीकारेऽनवस्थादोषभयेनप्रथमभेदाभेदनिर्वाहार्थंस्वीकृतयोर्भेदाभेदयोर्वस्तुमात्रत्वमेववक्तव्यंतथाचप्रथमभेदातिक्रमेणभेदांतरप्रतिपादनेव्यर्थःप्रयासइत्याह भेदाभेदप्रसिद्ध्यर्थमिति । परोप्रथमभिन्नौयदाब्रूपेतदायत्किंचित्तेवचनंतद्बकवंधनंस्यादित्यन्वयः यथाकश्चिद्बकंग्रहीतुमिच्छन्नेवमुपायंकल्पयेत् अस्यआतपेस्थितस्यमत्स्यैकाग्रचेतसःशिरसिनवनीतंप्रक्षिपामितस्मिन्द्रवीभूतेनेत्रयोःपतितेंधीभूतमेनंबध्नामीतितथैवचतंबध्नी-

भेदाभेदौनकुत्रापिदृश्येतेन्यायचक्षुषा ॥ सत्वेतयोर्द्वयोर्दोषउक्तस्तवबलाद्भवेत् २४४ अपिभेदस्तथाभेदोवस्तुनीचेद्वृथावचः ॥ इदंभिन्नमभिन्नंवावस्तुनीइति नोचितम् २४५ नघटोघटइत्येवंपटोवापटइत्यपि ॥ उच्यतेपुनरुक्तेनदोषेणाकुलितंक्वचित् २४६ भेदाभेदप्रसिद्ध्यर्थंभेदाभेदौपरौयदा ॥ ब्रूषेकिंचित्तदात त्स्याद्बचनंबकबंधनम् २४७ वाय्वग्निवारिभूमीनामेवमेवगुणानहि ॥ तदभावेचतासांस्याद्वंध्यापुत्रसमानता २४८ अपिदोषादिमूढानांनभोनैवावकाशकृत् ॥ नवायुःस्पर्शकृन्नापिवन्हिःपाकादिकारणम् २४९ नतृषांशमयेन्नीरंपृथिवीनैवधारयेत् ॥ एवमन्येषुधर्मेषुव्यभिचारोमहानिह २५० दृश्यंतेतेनभूतानिस्वप्नभूतसमानिह ॥ नभआदीनिभूतानियदाऽसंतितदाकथम् ॥ तज्जःप्रपंचःसत्यःस्याद्वंध्यासुतसुतोयथा २५१ प्रपंचस्यततोजन्ममाययापिनसंभवेत् ॥ नहि वंध्यातनूजस्यमायापिजनिर्भवेत् ॥ सतांमायाविमुख्यानांजन्मदृष्टंहिमायया २५२

यात्तस्यप्रयासोयथाव्यर्थस्तस्यशिरसिनवनीतप्रक्षेपायसमीपगमनकालएवबंधसंभवात् तथातवभेदाभेदान्तरंकल्पयित्वापुनर्वस्तुस्वरूपतामभ्युपगच्छतइतिभावः २४७ एवंगुणत्वानिर्वचनीयत्वेनाकाशमिथ्यात्वंसिद्धंवन्यत्रापितदतिदेशेनाह वाय्वग्नीति । गुणंविनागुणिमिथ्यात्वंचवायुनाहृतगंधाभूःसलिलत्वायकल्पतेइत्यादिनापुराणेस्पष्टम् २४८ किंचाकाशादीनामवकाशदानादिकंयल्लोकप्रसिद्धंलक्षणंतत्किंसर्वान्प्रतिकिंवायंकंचित्प्रतितत्राद्येसंभवंस्पष्टयति अपिदोषादीतिद्वाभ्यां । दोषोधातुवैषम्यं आदिपदेनयोनिस्वभावादिपरिग्रहः तैर्मूढानांजडीकृतानामित्यर्थः २४९ नतृषामिति । व्यभिचारःसर्वत्राननुगमरूपः शेषंस्पष्टम् २५० द्वितीयेदृष्टिसमसत्ताकत्वेनस्वप्नपदार्थवन्मिथ्यात्वंप्रबोधेअसत्वंचस्पष्टमित्याह दृश्यंतइति । पंचभूतमिथ्यात्वेसिद्धेतत्कार्यप्रपंचस्यमिथ्यात्वंसुतरांसिद्धमित्याह नभआदीनीति । असंतिसत्ताहीनानि वंध्यासुतस्यालीकत्वात्तत्कार्यंतत्पुत्रोयथाऽसंभाव्यसत्ताकस्तद्वदित्यर्थः शेषंस्पष्टम् २५१ एवंपंचभूतानांसकार्याणामात्मातिरेकेणासत्त्वंप्रतिपाद्यतत्कारणतयाप्रसिद्धायामायायाअज्ञानप्रकृत्यादिपदैःप्रसिद्धायाअपितथात्वंवक्तुंकिंमायायाःकार्यान्यथानुपपत्त्यासिद्धिःकिंवाश्रुत्याकिमथवाऽनुभवादिनितत्रनप्रथमइत्याह प्रपंचस्येति । ततउक्तविधयाऽसत्त्वात्दृष्टांतोनहीति । ननुलोकेभूमिस्थोनटःकथमसद्रूपांतरमाकाशारूढंदर्शयति कथंवाघटोत्कचादयोऽसतीःसेनानिर्मि-

माणाः श्रूयंतइतिहासेऽतआह सतामिति । मायाविपुमुख्यानांसतामेवजन्मनानारूपेणप्रादुर्भावोमाययानिमित्तभूतयादृष्टंनतुमायातत्रपरिणाम्युपादानंकिंतुमायाविषयीभूतोमायाव्यात्मेवतत्तद्रूपेणभासतेइत्युक्तमेव तथाचनासजननेतस्याःसामर्थ्यंदृष्टंयेनसास्वतंत्राकल्प्येतेतिभावः २५२ द्वितीयंनिराचष्टे मायायाइति । अस्तीतिभावप्रधानोनिर्देशः अस्तित्वंस्थितिः श्रूयते 'मायांतुप्रकृतिंविद्यात्' इत्यादिवाक्यैरितिशेषः । साजनिनाशास्तिहेतुतापिनास्त्येवतदाश्रयभूतायामायायाअप्यसत्वादित्यर्थः श्रुत्यातुसाऽद्वैतेबुध्यवतारणायानूदितेवेतिभावः २५३ नतृतीयः विचारविमुक्तप्रमत्ताद्यनुभवस्याकिंचित्करत्वाद्विचारसहकृतप्रमारूपानुभवागमनेतुतस्याःपलायनादित्याह सच्चिदानंदरूपमिति । स्वमात्मानंअसावविवेक्यात्मानावगच्छतिनानुसंधत्तेतदेमांएपनित्यापरोक्षःकल्पयतिअहमज्ञइत्यादिमन्यते विचारकालेऽविवेकिदशायाःपरोक्षत्वादसावितिप्रयोगः दृष्टांतः शिशुरिति २५४ दृष्टांतंस्फुटयति शयानइति । स्पष्टम् २५५ दार्ष्टांतिकेउपसंहरति आनंदात्मेति । एवमहमानंदात्माभूमासच्चिद्रूपंनिजंवपुःस्वरूपंविस्मृत्यैनांमायांकल्पितवानस्मीतिशेषः आत्मनैवविवर्तोपादानभूततयाश्रयेणात्मनिस्वविषयिकां स्वयमितिपदेनेतरनिरपेक्षतासूचिता विस्मृत्येतिपदेनविस्मरणस्यापितत्प्रयुक्ततयातस्याअनादितासूचिता २५६ फलितमाह ततइति । एपामयिनास्त्येव तत्रहेतुगर्भंविशेषणं निर्द्वयेत्यादि । अद्वयेद्वितीयावकाशोवाधितइतिभावः तर्हिकथमस्याभानमतआह नैपेत्यादि । तथाचाज्ञातेमय्येवमायादिपदैर्व्यवहारइतिभावः २५७ ननुशब्दज्ञानयोर्बलेनस्वतंत्रैवमायाकुतोनस्यादित्या



मायायाअपिविश्वस्यजनिनाशास्तिहेतुता ॥ श्रूयतेसापिनास्त्येवमायायाअप्यसत्वतः २५३ सच्चिदानंदरूपंस्वंयदासौनावगच्छति ॥ तदेमांकल्पयत्येषशिशुःस्वंराक्षसंयथा २५४ शयानोबालकःक्वापिस्वदेहज्ञानवर्जितः ॥ स्वदेहंराक्षसंमत्वाबिभेत्याकुलितेन्द्रियः २५५ आनंदात्माहमप्येवंसच्चिद्रूपंनिजंवपुः ॥ विस्मृत्यैनांकल्पितवानात्मनैवात्मनिस्वयम् २५६ ततएषापिनास्त्येवमयिनिर्द्वयरूपिणि ॥ नैषामत्तोविभिन्नास्तिबालकादिवराक्षसः २५७ शब्दबुद्धीअसत्त्वेपिभवेतांवस्तुनोयतः ॥ वंध्यासुतेहिदृष्टत्वान्नैतयोर्मानताततः २५८ अपिशब्दोत्रनास्त्येतदुदितंहिमयापुरा ॥ बुद्धिश्चनामकेयंस्यादिदंतावद्विचार्यताम् २५९ यदिवोधोघटादेःस्यात्घटादिस्तर्हिचेतनः ॥ तथात्वेचपरापेक्षास्फुरणेनास्यसंभवेत् १६०

शंक्यस्यादेवंयदिशब्दोज्ञानंचप्रमाणरूपेस्यातामिमेतुनतथेत्याह शब्दबुद्धीइति । वस्तुनोऽसत्त्वेपीत्यन्वयः मानताप्रमाणवत्स्वविषयसाधनक्षमता अत्रयदुक्तव्यंतच्छब्दनिरूपणेउक्तमिति २५८ नन्वेवंप्रबुद्धेनभवतासम्राजाशेषकार्याधिकृतेपुसत्तापहरणेनदंडितेष्वपिलोकविप्लवहेतुःशब्दोमंत्रिस्थानीयाबुद्धिश्चदंडनीयावित्याशंक्यतर्हिशब्दस्योपमर्दितत्वाद्बुद्धिमेवविचारदंडेनप्रहरामीत्याह अपिशब्दइति । श्लोकादावपिशब्दोवाक्यान्तरारम्भसूचकःप्रायोबोध्यः उदितंनामविचारे केयंकिंस्वरूपाकिंबोधरूपावांऽत्येघटादिसमायास्तस्यानस्वातंत्र्यशंका आद्येपिसबोधोधर्मरूपोवासर्वाधिष्ठानधर्मिरूपोवा यदिधर्मरूपस्तदातस्यबुद्धिरूपतापिसंभाव्येत द्वितीयेतुबोधस्यंमत्स्वरूपत्वात्स्वातंत्र्यक्षमंबुद्धेःस्वरूपमेवदुर्वचमितिनिर्णयायेदंवक्ष्यमाणंबोधस्वरूपमेवतावत्प्रथमंविचार्यतां बोधस्वरूपनिर्णयेनैवबुद्धेरपिगतिः स्फुटीभविष्यतीतिभावः २५९ तत्रतावद्बोधस्यधर्मरूपतापक्षेइदंविचार्यं किंबोधोविषयधर्मःकिंवाज्ञानकरणेंद्रियधर्मःकिंवाऽऽत्मधर्मःकिंवाबुद्धेरेवेतिविकल्प्यतत्रनाद्यइत्याह यदिबोधइतिद्वाभ्यां । यदिबोधोघटादेर्विषयस्यधर्मःस्यात्तर्हिघटादिश्चेतनःस्याद्बोधस्यैवचेतनत्वप्रयोजकत्वात् इष्टापत्तौदोषमाह तथात्वेचेतनत्वेऽस्यघटादेःस्फुरणेभानेपरापेक्षानस्यात्दृश्यतेचपरापेक्षाऽतोनघटादिधर्मोबोधइत्यर्थः २६०

दोषांतरमाह विपर्ययइति । भोग्यस्यघटादेर्भोक्तृत्वेनप्रसिद्धिःस्यात्परिशेषादन्यस्यभोग्यतयेत्यर्थः तदुपपादयति । बुद्धिमानिति । बुद्धिमान्बोधवान्हिभोक्तोक्तलक्षणभोगाश्रयोभवेत्संभवेत् घटादिरपितथैवबोधवानेवेत्यर्थः २६१ द्वितीयंनिराचष्टे नचेंद्रियाणामित्यादिषड्भिः । इंद्रियाणिहिबोधस्यावरणाभिभावकांतःकरणवृत्त्युत्पादकतयोपकरणानि उपकरणानांतुसामर्थ्यंनियमोदृष्टः यथासुखोपकरणानांवैदिकानांलौकिकानांचयेनयेनयावद्यावदावरणाभिभावकमुत्पाद्यतेतावत्तावत्फलमाविर्भवतीतिनत्वभिव्यंग्यंलब्धवतस्तथानियमोदृष्टोब्रह्मविदायुगपत्सर्वानन्दानुभवात् तथाचायमर्थः अयंबोधइंद्रियाणांचधर्मोनयतःक्वचिन्नियतोदृश्यते यदीमानिस्वयंबोधधर्मकाणिस्युस्तदासर्वंप्रकाशयेयुः नचावरणेनव्यवस्था जडेष्वावरणाभावादावरणस्यप्रकाशरूपबोधसामानाधिकरण्याभावाच्च आत्मनितुबोधरूपआवरणमित्यन्यत् । नियमंस्पष्टयति नहीत्यादि । चक्षुःशब्दंनजानातिकिंतुरूपमेव इतरत् श्रोत्रंरूपंनजानातिकिंतुशब्दमेवेति अतोज्ञायतेनैषांधर्मोबोधःकिंतुएतानितदभिव्यक्त्युपकरणानिव्यवस्थाशालित्वादितिभावः यद्वा नियतःयत्रेंद्रियंतत्रबोधइत्येतादृशव्याप्तिनिरूपणशालीसन्बोधइंद्रियसंबंधीक्वचिन्नदृश्यतेअतोनतेषांधर्मः योयस्यधर्मोभवतिससदातत्रदृश्यतेयथावन्हावुष्णस्पर्शः शब्दस्तुमीमांसकमतेनित्योभिव्यंजकासांनिध्यान्नदृश्यतइत्यन्यत् नियमाभावंस्फुटयति नहीत्यादि । शब्दसान्निध्येबधिराणांचक्षुःसत्वेपिनबोधोदृष्टएवमन्धानांरूपसान्निध्येपि तथाचएतान्युपकरणान्येवनबोधधर्मकाणीतिभावः २६२ अपिक्वापीति । क्वापिकस्मिंश्चिद्देशेमनोनवधानकालेवाचक्षुःपुरःस्थितंपश्चाद्वागतंरूपंनबोधयेत् तथा

विपर्ययःप्रसज्येतप्रसिद्धौभोक्तृभोग्ययोः ॥ बुद्धिमान्हिभवेद्भोक्ताघटादिश्चतथैवसः २६१ नचेंद्रियाणांबोधोयंदृश्यतेनियतःक्वचित् ॥ नहिचक्षुर्विजानाति शब्दंरूपंतथेतरत् २६२ अपिक्वापिपुरःपश्चाच्चक्षूरूपंनबोधयेत् ॥ तथाश्रोत्रादिकंक्वापिशब्दाद्यपिनबोधयेत् २६३ अपिबोधःकथंनामभवेदिंद्रियगोधुना ॥ नहींद्रियेषुकुत्रापिबोधःकिंत्वर्थगोहिसः २६४ यद्यन्यत्रस्थितोबोधोवस्त्वन्यद्धिप्रकाशयेत् ॥ बोधोघटस्थितःकस्मात्पटंनैवप्रकाशयेत् ॥ यथाकथंचिदत्रापिसंबंधंकोनिवारयेत् २६५ अपिसंबंधसाम्येहिचक्षुषस्तुघटादिना ॥ कस्माद्रसादिकंतस्यबोधेनप्रतिभातिनः २६६

श्रोत्रादिकंस्वविषयं एषाव्यवस्थाबोधधर्मकत्वबोधपक्षेनोपपद्यते उपपद्यतेतुउपकरणत्वपक्षे उपकरणस्यप्रयोजकाधीनत्वादितिभावः २६३ इंद्रियधर्मत्वपक्षएवदोषांतरमाह अपिबोधइतिद्वाभ्यां । बोधोहिस्फुरणात्मासचघटःस्फुरतीत्याद्यनुभवेनविषयसंबंधोभाति इंद्रियेषुपरोक्षेषुतुस्थितोकिंमानमितिभावः २६४ ननुनैयायिकादिनयेयथात्मस्थितोबोधोघटादीन्विषयीकरोतितथेंद्रियगोपिक्रिष्यतिसंबंधिद्वयस्वरूपात्मिकायाविषयताया संबंधत्वसंभवादितिचेन्मैवंबोधस्तेषांभावानवबोधादित्याह यद्यन्यत्रेति । यद्यन्यत्रस्थितोबोधोन्यद्वस्तुप्रकाशयेत्तर्हिघटस्थितोघटाकारवृत्त्याऽभिव्यक्तस्तादात्म्यसंबंधेनघटेस्थितोबोधःकस्मात्पटंनप्रकाशयेत् नचसंबंधाभाव इत्याहयथेति । यथाकथंचित्संबंधंत्वदभिमतविषयतारूपंकोवारयेत् तस्मान्नैयायिकादिभिर्बौद्धादीनामनधिकारिणांपुरतोगौणीविषयताऽऽविष्कृतातेषामंतरभिमतातुअभिव्यक्तचित्तादात्म्यरूपाऽतिप्रसंगहीनाद्वैतंबोधोपयोगिनीहप्रपंच्यतेइतिभावः यदाहुरुदयनाचार्याः 'नग्राह्यभेदमवधूयधियोऽस्तिवृत्तिस्तद्बाधकेबलिनिवेदनयेजयश्रीः । नोचेदचिन्त्यमिदमीदृशमेवविश्वंतथ्यंतथागतमतस्यतुकोवकाशः'इति । दीधितिकारोप्याह 'न्यायमधीतेसर्वस्तनुतेकुतुकान्निबंधमप्यत्र । अस्यतुकिमपिरहस्यंकेचनवैजानतेसुधियः'इति २६५ अत्रैवदोषांतरमाह अपिसंबंधसाम्येहीति । चक्षुर्निष्ठबोधेनघटादिभानस्वीकारेभवन्मतेचक्षुषोयथाघटादिनासंयोगरूपःसंबंधस्तथाघटनिष्ठरूपवद्रसादिनापिसंयुक्तसमवायलक्षणसंबंधसंभवात्तस्यघटस्यरसादिकंकस्मान्नोस्मान्प्रतिनभातीतिवक्तव्यम् अस्मन्मतेतुयदाकारवृत्त्यभिव्यक्तचित्तादात्म्यरूपाविषयतायत्रतस्यैवभानमितिव्यवस्थावक्तुंशक्यतइतिभावः २६६

इंद्रियेषुज्ञानाभावमुपपत्तिंदर्शयन्नुपसंहरति ततइति । ततोन्यनिष्ठस्यान्योपकारकत्वासंभवात्संभवेवातिप्रसंगापाताच्चेयदिघटादिसंस्थोघटादिसंबद्धोबोधःस्यात्तदातेनबोधेनतेषांघटादीनांप्रकाशनं भवतिउपपद्यते परंतुतस्यघटादिभिरधिष्ठानत्वेनतादात्म्यलक्षणएवसंबंधोवाच्यः असौबोधोऽत्रघटादिषुधर्मत्वेननतिष्ठतितेषांभोक्तृत्वप्रसंगादित्येतत्प्रागुदीरितं यदिबोधोघटादेरित्यादिनोक्तमित्यर्थः २६५ आत्मधर्मोबोधइतितृतीयंपक्षंनिराचष्टे अतएवेति । अतोन्योपकारकत्वाभावापातादेवमपिआत्मन्यपिधर्मरूपतयाबोधोवर्ततेइत्यर्थः ननुमास्त्वन्योपकारआत्मनस्तुव्यवहारायात्मधर्मोबोधोस्त्वित्यतआह ममतेनाप्रतीतितिइति । यदिममधर्मोबोधस्तदाममततोभिन्नस्यजडत्वमापद्येत नचघटादिवन्मयिबोधेनोपकारःशक्यः घटादीनांबोधेकल्पितानामधिष्ठानत्वेनप्रकाशनेपि ममनिरधिष्ठानत्वाद्बोधस्यममाधिष्ठानत्वेचतस्यैवात्मत्वापातात् मद्भिन्नस्यधर्मरूपबोधस्यप्रकाशरूपत्वेपिपुत्रपांडित्येनपितृपांडित्यवन्ममतेनप्रतीतिर्नस्यादितिभावः बुद्धिधर्मोबोधइतिचतुर्थंनिराचष्टे नबुद्धेरिति । बुद्धेरपिधर्मोबोधोनसंभवतियस्मात्साबुद्धिर्बोधादन्यतिरेकिणीपृथग्भावोव्यतिरेकस्तद्रहिता बोधतादात्म्येनहिसाबुद्धिर्ज्ञानपदव्यवहारपदवीमारूढा बोधस्यधर्मत्वापाततःपृथग्भावस्वीकारेतुसाज्ञानत्वाद्भ्रश्येदितिभावः २६८ एवंसतितस्याघटादिसमत्वापत्तिरित्याह अपिबुद्धेरिति । बुद्धेर्धर्मोयदाबोधस्तदेयंबुद्धिस्ततोबोधात्पृथग्भिन्नासतीकार्किंस्वरूपा अगुनाबोधभिन्नवादेवबोधरूपावक्तुंनशक्या परिशेषादबोधरूपत्वांगीकारेतस्याघटादिसमत्वेनमयिकल्पितायामदधीनसिद्धिकत्वेनस्वातंत्र्यशंकेतिसिद्धमदिष्टमित्याशयेनाह अबोधरूपत

तबोघटादिसंस्थश्चेद्बोधस्तेनप्रकाशनम् ॥ तेषांभवतिनात्रासावित्येतत्प्रागुदीरितम् २६७ अतएवनमय्येषममतेनाप्रतीतितः ॥ नबुद्धेरपिसायस्माद्बोधाद्व्यतिरेकिणी २६८ अपिबुद्धेर्यदाबोधस्तदाकेयंततःपृथक् ॥ अबोधरूपतःसापिघटादेर्नविशिष्यते २६९ अपिबोधोजगत्येकोप्यथवानेकएवसः ॥ एकत्वेवासनामानस्मृत्यादीनांभिदाकुतः २७० अनेकत्वेपितस्यस्याद्भेदःकइतिरूप्यताम् ॥ बोधाद्बोधांतरेभेदोनभवेद्बोधरूपतः २७१ अबोधरूपतोभेदेनभवेद्बोधगोहिसः ॥ घटादेर्नहिभेदेननभोनानाविधंभवेत् २७२ अपिबोधस्त्वबोधोसौबोधांतरमपेक्षते ॥ यदिनायंभवेद्बोधोघटवद्बोधशून्यतः २७३ अपिबोधोनचाज्ञातोव्यवहारस्यकारणम् ॥ यथाघटस्तथाचायमबोधोघटवद्भवेत् २७४

इति । भावप्रधानोनिर्देशः स्पष्टम् २६९ ननुबुद्धिरपिबोधात्मिकास्तुबोधानामनेकत्वादित्याशंकावारणायबोधस्यात्मैकस्वरूपतावधारणायचबोधस्वरूपेविचारांतरमारभते अपिबोधइति । एकत्वपक्षेज्ञानभेदव्यवहारानुपपत्तिंसमाधास्यमानांदोषतयाप्रसंजयति एकत्वेइति । वासनाःसंस्काराः तेचविनश्यदवस्थज्ञानजाताःप्रतियोगिभेदाधीनभेदाः मानपदेनभावव्युत्पत्त्याकरणव्युत्पत्त्याचप्रमाणांफलानांतद्भेदाधीनभेदकानांप्रमाणानांचग्रहः स्मृतिःप्रसिद्धा आदिपदेनाप्रमाणग्रहणम् २७० अनेकत्वेपीति । अनेकत्वपक्षेपिइतिरूप्यतांविचार्यतां इतिकिंतस्यबोधस्यभेदःकःकीदृशः किंस्वरूपप्रयुक्तःकिंवोपाधिप्रयुक्तः तत्रनाद्यइत्याह बोधादिति । बोधांतरेबोधरूपेऽवकाशेभेदोनस्यान्नतिष्ठेत् कुतोबोधरूपतः बोधस्वरूपाविशेषादित्यर्थः २७१ द्वितीयइष्टापत्तिमाह अबोधरूपतेति । अबोधरूपादुपाधेर्हेतोश्चेद्भेदस्तर्हिउपधेयबोधगतोनभवेत् उपाधिनिष्ठभेदस्यतत्रारोपेणभानोपपत्तेर्बोधोपाधिबुद्धेश्चज्ञानत्वपदत्वादानेनसंस्कारादिभेदनिर्वाहाच्च नचारोपितंस्वरूपंस्पृशतीतिवाच्यं मृगतृष्णयामरुभूमेरार्द्रीकरणादर्शनादितिभावः उपाधिभेदेनोपधेयस्वरूपभेदाभावेदृष्टांतमाह घटादेरिति । स्पष्टम् २७२ किंचबोधभेदांगीकारेतेचबोधाःपरस्परसापेक्षानिरपेक्षावा अंत्येएकेनैवसर्वनिर्वाहात्किंभेदेन आद्येतुप्रकाशस्यस्वबोधत्वापत्तिंस्फुटयति अपिबोधइति । बोधोयदिस्वभानायबोधांतरमपेक्षतेतर्हिअसौअबोधएव तत्रानुमानंदर्शयति नायमिति । अयमितरसापेक्षोबोधोनबोधःबोधत्वाभाववान् तत्रहेतुः बोधशून्यतःभानशून्यत्वात्घटवदिति २७३ एवंबोधस्यैकतांप्रसाध्यतस्यस्वयंप्रकाशतांसाधयितुमिदंविचार्यं किमज्ञातःससर्वव्यवहारकारणंज्ञातोवातत्रनाद्यइत्याह अपिबोधइति । अज्ञातत्वमपिज्ञानविषयत्वाभावरूपंद्विविधं स्वयंप्रकाशतारूपंवाजडत्वेसतिचित्संबंधहीनत्वंवा तत्रप्रथमस्यप्रसिद्धांतता—

तृतीयश्लोके वक्ष्यते द्वितीयमिहश्लोकेनिरस्यति तथाचायमर्थः अयमेकतयासाधितोबोधोऽज्ञातःसन्व्यवहारस्यकार्यस्यकारणंयथाघटोऽज्ञातोपिजलाद्याधारहेतुस्तद्वत् तथाचायमबोधोजडत्वे नबोधशून्यःसन्घटसमोभवेदिति २७४ ज्ञातत्वपक्षेपूर्वदोषसमुच्चितंदोषमाह बोधेबोधइति । बोधस्यबोधेज्ञातत्वपक्षेऽबोधरूपत्वापत्तिदोषापेक्षयापरंद्वितीयमनवस्थादिकंचबोध्यमित्यर्थः एतत्साधकस्यापिज्ञातस्यैवसाधनक्षमत्वादेवतत्साधकस्यापीतिभावः ननुबोधबोधोनैवास्त्वित्यतआह अबोधइति । तस्मादान्ध्यापत्तिभयादसौअबोधोनाभ्युपेयइतिशेषः विचारितइतिपद मुत्तरान्वयि २७५ ननुप्रकारांतरासंभवात्तस्यस्वयंप्रकाशतामभ्युपगच्छामीतिचेदोमित्याह सचेदिति । विचारितेनेसतिसोऽद्वितीयोबोधःस्वयंप्रकाशएवमुक्तिपथमवतरतीतिचेत्तर्हिस्यादेवमस्तु इत्यर्थः ननुत्वतादृशस्यतस्यांगीकारेकोलाभइतिचेत्तस्यमद्भिन्नत्वेमहृश्यतयास्वप्रकाशताहानिभयेनमत्स्वरूपांतःप्रवेशेभूमानंदलाभइत्याह अहमेवेति । ननुभूमानंदलाभेपितस्यक्षेमर्चिताऽव शिष्यतइतिचेन्नेत्याह । तथाचेति । स्पष्टम् २७६ भूमानंदेनित्यताभावमेवस्फुटयति आदाविति । अनित्यलक्षणंपूर्वार्धे अहंसर्वदास्मितस्मान्नानित्यइतिशेषः सर्वदासत्त्वमेवकुतइत्यत आह अहमेवेति । यद्यहंनस्यांतर्हिकःस्यादितराभावादितिभावः २७७ एवमनित्यत्वाभावेवस्तुपरिच्छेदाभावंहेतुतयाऽभिधायतत्रदेशकालपरिच्छेदाभावौतथात्वेनाह यदेकत्रेति । यद्वस्तुए कत्रकारणरूपेऽन्यत्रवादेशेकालेवास्याद्भवेत्ततद्वस्तुतस्मादाधारात्तथाजगतश्चभिन्नंस्यात्व्यवह्रियेत तेनभेदेनचविकारत्वसाधकद्वाराघटवदनित्यत्वंस्यादनुमीयेतबलात्व्याप्तिपक्षधर्मतारूपात् 'याव द्विकारंतुविभागोलोकवत्' इतिसूत्रात् विभागोभेदोविकारत्वस्यव्याप्यइतिसूत्रार्थः । मयितुकुत्रचिद्वृत्तित्वाभावादनित्यत्वसंभावनानास्तीत्याह अहमिति २७८ किंचदेशकालावेवस्वसंब

बाधेबोधेभवेन्नूनमनवस्थादिकंपरम् ॥ अबोधेजगदांध्यंचतस्मान्नासौविचारिते २७५ सचेत्स्वयंप्रकाशःस्यादहमेवनचापरः ॥ तथाचानित्यतानैवममसत्तैकरू पिणः २७६ आदावंतेचयन्नास्तितदनित्यमितीरितम् ॥ अस्म्यहंसर्वदायस्मादहमेवनचापरः २७७ यदेकत्रभवेत्तत्स्यादाधाराज्जगतोपिच ॥ भिन्नंतेनाप्यनि त्यत्वंतस्यस्याद्घटवद्बलात ॥ अहंनकुत्रचित्तेनममकस्मादनित्यता २७८ अपिदेशस्तथाकालस्ताभ्यामुत्पादितंचयत ॥ तयोःस्थितंजडंसर्वंसदसत्त्वादिधर्म भृत ॥ मय्येवतदहंनात्रकुत्राप्यस्मिन्व्यवस्थितः २७९ यथामणिगणाःसूत्रेपृथिव्यांपांसवोयथा ॥ अब्धौयद्वद्धिनीराणिवह्नौवातमउद्धृतम् २८० वायौयद्वद्घ घटृणयथानभसिवाघनः ॥ यथासुहृदिदुष्टत्वंदुर्जनेसाधुतायथा ॥ यथास्वात्मनिरक्षस्त्वंमय्येवंसकलंजगत २८१

न्धप्रदार्थैःसहमायाधारंकुरुतःश्रुतिश्च 'सभूमाकुत्रस्थितःस्वेमहिम्नि' इत्याकाराममाधारनिषेधनपरा तथापिमेममाधारंकल्पयंतितेकिंमिथ्याभियोगदोषान्नबिभ्यतिइत्याह अपिदेशइति । ताभ्यां देशकालाभ्यां तयोर्देशकालयोः सत्त्वंकार्यात्मनास्फुटत्वमसत्त्वंकारणात्मनाऽस्फुटत्वं ततस्मात्सर्वस्यमदाधारकत्वात् अत्रदेशादौ शेषंस्पष्टम् २७९ नानाविधप्रपंचस्याद्वितीयात्मनिआ धारेस्थितौनानादृष्टांतानाह यथामणिगणाइतिद्वाभ्यां । तत्रस्थूलप्रपंचस्यसूत्रात्मनिवृत्तोदृष्टांतःप्रथमः । द्वितीयस्तुसूक्ष्मप्रपंचस्यकारणेईश्वरोपाधौवृत्तौ यथापांसवोरेणवःपृथिवीसामान्य स्यविशेषाःपृथिवीसामान्येस्थितास्तद्वन्मयिसतिकारणेसूक्ष्मशरीराणीत्यर्थः । तृतीयस्तुशक्तिरूपतयाव्याकृतानांब्रह्मणिनामरूपेविहायस्थितौ 'यथानद्यःस्यन्दमानाःसमुद्रे' इत्यादिश्रुत्य नुरोधात । चतुर्थस्तुभावाद्वैतमतेपंचमप्रकाराविद्यानिवृत्तिपक्षेवाप्रपंचाभावोऽविद्यानिवृत्तिश्चपृथग्भूताब्रह्मणितिष्ठतीतिस्वीकारात् तयोःस्थितौदृष्टांतः उद्धृतंऊर्ध्वंधृतं दीपादिशिखाग्रेभासमा नंतमःश्यामतारूपंयथावह्नौस्थितंतद्वदित्यर्थः यद्वा तमसउद्धृतंउत्कर्षेणहृतंहरणं भावेक्तः ध्वंसइतियावत् सयथावह्नौभावरूपेसामानाधिकरण्येनपृथक्स्थितइत्यर्थः अथवाजडत्वेनविलक्षणस्या पिसृज्यस्यसर्गकालेधारणेऊर्ध्वंतमोदधानोऽग्निर्दृष्टांतइति २८० वायाविति । स्थितिकालेधारणेदृष्टांतोयं गंधश्चतृणानिचतेपांसमाहारोगंधतृणं प्रलयेधारणेदृष्टांतस्तुआकाशः प्रावृषिप्रादुर्भूय कालांतरेप्रलीयस्थितस्यमेघस्यधारणात् एवमात्मनस्तत्पदार्थतयाप्रपंचधारकत्वंस्फुटीकृत्यत्वंपदार्थतयाजीवत्वकर्तृत्वादिधारणेदृष्टांतत्रयमाह यथासुहृदीत्यादिना । स्वात्मनिबालकशरीरेरक्ष स्त्वंराक्षसत्वमधस्तादुक्तं अथवाविवेकवतांदृष्ट्यात्मनःसकलप्रपंचधारणेदृष्टांतत्रयमिदमितिबोध्यम् २८१

एवमात्मनःसच्चिदद्वितीयत्वायामनावृतायांसत्यांनिरतिशयानंदोमयालब्धःस्वयंचोपनंतोदुःखाभावश्चेत्याह स्वप्रकाशेति । ननुतवसर्वात्मकस्यजगतिवर्त्तमानेनदुःखेनकथंनसंबंधइत्याशं कयममसच्चिदानंदघनस्यस्वरूपविचारेजगतएवजडस्यबाधादित्याशयेनाह । नहीत्यादि । जातुकदाचिदपिकचिद्देशेजगत्यपिदुःखंनास्ति तत्रहेतुः नहिदुःखमिति । हियस्माद्दुःखपदा र्थएवत्रैकालिकात्यंताभावप्रतियोगी एतदेवकथमतआह जायमानमिति । दुःखंहिजायमानंजन्यंप्रसिद्धं जन्यत्वंचजडत्वव्याप्यंजडस्यचमयिचिद्घनेनावकाशइतिकथंकश्चिदपिदुःखसत्त्वंप्र तिपादयेदितिभावः २८२ नन्वेवंसतिसुखेपिदुःखन्यायःप्रसक्तइत्यतोवैलक्षण्यंसुखेस्फुटयति सुखंनैवमिति । एवंदुःखवत्सुखंजायमानमुत्पत्तिमत्केनापितत्त्वतोनदृष्टमितिमूढास्तुसुकृतवि पाकसमयेअंतःकरणवृत्तिमानंदात्मप्रतिबिंबग्राहिणींसुखमितिमत्वाजायमानतामनुभवंतुनामेतिभावः ननुसावृत्तिरेवास्तुसुखंसुखमितिचेन्न मानविरोधादित्याह जातमिति । जन्यंदुः खात्मकंजनिमत्त्वाद्दुःखवदित्यनुमानं नाल्पेसुखमस्तीतिश्रुतिश्चात्रबाधिकेतिभावः २८२ एवंवावदिपदित्यंतवाक्यतात्पर्यार्थंप्रपंचबाधपूर्वकंसच्चिदद्वितीयानंदात्मज्ञानंप्रपंच्यतदुत्तरवाक्यं फलपर्यवसायिस्वरूपसाक्षात्काराभिनयपरंव्याख्यातुंतन्निष्ठोपयोगिवैराग्यायविषयसुखदुःखरूपतांस्फुटयति ऊनत्रिंशच्छ्लोकैः किंविषयफलंसुखंतत्साधनत्वेनविषयाएववासुखपदार्थइतिवि कल्प्यतत्रनाद्यइत्याह नहिवैषयिकमिति । वैषयिकंविषयेभ्यआगतंतत्फलं कथंतर्हितथाव्यवहारोऽतआहकिंत्विति । दुःखेत्रिगुणांतःकरणपरिणामरूपेसुखमित्याकारानृणांधीर्जायतेत

स्वप्रकाशसुखंचाहंनदुःखंमयिकिंचन ॥ नहिदुःखंजगत्यस्मिन्नजातुविद्यतेक्वचित् ॥ जायमानंजडंदृष्टंजडंनमयिवस्तुतः २८२ सुखंनैवंजायमानंदृश्यतेक्वापित त्त्वतः ॥ जातंचेदसुखंतत्स्याद्दुःखवज्जन्मयोगतः २८३ नहिवैषयिकंनामसुखंकिंचनविद्यते ॥ किंतुदुःखेहिविभ्रांत्यासुखधीर्जायतेनृणाम् २८४ नहिचर्म णिदुर्गंधेमांसलेरुधिरोक्षिते ॥ विण्मूत्रगंधसंघातेमृदुस्पर्शेपिपिच्छिले ॥ नारीयोनौचभेदोस्तिविनाभ्रांतिंनृणामिह २८५ स्तनयोश्चस्फिजोर्नृणांनिर्लोम्नो र्नास्तिवैभिदा ॥ अनिर्गतश्मश्रुमुखंपुंसांस्त्रीणांचवैसमम् २८६ नपुंसकानांस्त्रीणांचनास्तिभेदोविनाधियम् ॥ पुरुषाणांवधूनांचशरीरेकापिनोभिदा २८७ चतुर्विंशतितत्त्वानांसमुदायःशरीरकम् ॥ जंतुमात्रस्यतत्त्वेतत्पुरैवास्माभिरीरितम् २८८

स्याद्धेतुस्तुपूर्वभ्रमःसंस्कारद्वारेतिसापिभ्रमइतिसूचयति विभ्रांत्येति २८४ नद्वितीयः अयोग्यत्वेनभ्रमनिर्वाह्यत्वादितिवक्तुंप्रधानमल्लनिबर्हणन्यायमभिप्रेत्यकामसुखस्यभ्रमनिर्वाह्यतांता वत्स्पष्टयति नहिचर्मणीत्यादिना । मांसलेप्रचुरमांसवति पिच्छिलेस्निग्धे विण्मूत्रगंधानांसंघातोयत्रतथाभूते एतादृशेमंडूकादिचर्मणिउपमानेनारीयोनौचविशेषोनास्ति भ्रांतेर्गति स्त्वनिर्वाच्येत्याह विनाभ्रांतिमिति अश्लीलपदप्रयोगोत्रप्रस्तावेवैराग्यद्वाराशांतरसपोषकत्वान्नदोषः तथाचोक्तंमम्मटेन 'वक्त्राद्यौचित्यवशाद्दोषोपिगुणः' इति । उदाहृतंचप्रकाशकृताय थाशमकथासु 'उत्तानोच्छूनमंडूकपाटितोदरसंनिभे । क्लेदिनिस्त्रीव्रणेसक्तिरकृमेःकस्यजायते' इति २८५ स्तनयोरिति । स्त्रीणांस्तनयोः तथानृणांपुरुषाणांस्फिजोःकटिगतमांसपिं डयोर्भिदानास्ति विनाभ्रांतिमित्यनुषज्यते शेषंस्पष्टम् २८६ नपुंसकानामिति । धियंकल्पनाम् वधूनांनारीणाम् स्फुटम् २८७ भेदाभ्युपगमेपिकिंतत्त्वानांभेदःकिंवाऽऽत्मनइति विकल्प्यतत्रनाद्यइत्याह चतुर्विंशतीति । 'दशेंद्रियाणिभूतानिपंचप्राणास्तथैवच । अंतःकरणचतुष्कंच' एवंचतुर्विंशतितत्त्वानिएतेषांसमुदायःतत्प्रसिद्धंजंतुमात्रस्यशरीरमित्येतत्पुरैवापिदेह इत्यादिनाऽस्माभिरीरितमिति २८८

नद्वितीयइत्याह सर्वेषामिति । सर्वेषांहृदयेचाहंव्यवस्थितःअभिव्यक्तः कीदृशःअहंप्रत्ययशब्दयोर्विषयतावाच्यतात्मकसंबंधाभ्यांसंबंधीतिशेषः अनाधारइत्यादिस्पष्टम् २८९ एवमिति । एवमुक्तविधयात्त्वेआत्मानात्मनोःस्वरूपेव्यवस्थितेतत्त्वाधिष्यभयादिवविशेषमनंगीकृत्यस्थितेसत्यपिकामरूपग्रहस्यग्रहवदुन्मादादिहेतोर्वशंगताः पुरुषाःस्त्रियश्च इयंस्त्रीअयंपुरुषइत्येवंकल्पयित्वापरस्परंमुखजांलालांपिबंतिमलांश्चगृह्णंतीत्यर्थः 'वसाशुक्रमसृङ्मज्जाकर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः' २९० आस्फालयंतीति । आस्फालयंति गात्राणिअभिघाताख्यसंयोगवंतिकुर्वंतीत्यर्थः । कर्तृविशेषणं उन्मादेति । दृष्टांतद्वयमाह मेषाइत्यादिना । कीदृशाःपिशाचाः हरस्यशंभोर्विनोदकाहासजननोद्यताः २९१ एवंहीति । एवंकुर्वतांतेषांगात्रेभ्योंगेभ्यःकामोनिर्गतोभवतिकर्हिचिन्नैवनिर्गच्छतीत्यन्वयः 'कामःस्मरेच्छयोरेतसि'चेतिकोशात् । कामस्यरेतोरूपेणनिर्गमनेहेतुमुत्प्रेक्षते हृदिहसन्निवेति शरीरांतःस्थितदेव सभायामागतःकामःशंभुर्प्रत्यर्थीमवारब्धनाट्यप्रयुक्तंजनानांवैकृतमीक्षित्वाहास्यवेगादिवनिर्गच्छतीति दृश्यंतेहिसभायामागतहास्यवेगासहनेबहिर्गच्छंतोन्यथाचतत्रैवतिष्ठंतइति एतेनकामशास्त्रस्यलालाप्रभृतीन्भावानधरामृतादिपदैरभिदधतोलोकभ्रांत्यनुवादरूपत्वप्रहासेनलोकानांवैराग्यजननेपरमतात्पर्यमितिसूचितं प्रसिद्धमेतत् 'भ्रांत्यनुवादंश्रुत्वाविवेकिनस्ततोविरज्यंते' इति

सर्वेषांहृदयेचाहमहंप्रत्ययशब्दयोः ॥ अनाधारःसर्वगश्चिदानंदात्माव्यवस्थितः २८९ एवंव्यवस्थितेतत्त्वेकामग्रहवशंगताः ॥ पुरुषाश्चस्त्रियश्चेतिकल्पयित्वापरस्परम् ॥ पिबंतिलालांमुखजांमलांश्चाददतेपिच २९० आस्फालयंतिचान्योन्यंगात्राण्युन्माददूषिताः ॥ मेषाइवपिशाचावायद्वद्धरविनोदकाः २९१ एवंहिकुर्वतामेषांहृदिकामोहसन्निव ॥ गात्रेभ्योनिर्गतोनैवविनिर्गच्छतिकर्हिचित् २९२ ग्रहाविष्टायथाकापिग्रहोद्रेकात्परस्परम् ॥ ताडयंतिस्फिजोमत्ताःसंमुखाविमुखाअपि २९३ संप्राप्यतुश्रमंपश्चादासतेसुखिताइव ॥ अनिर्मुक्तग्रहास्तद्वत्कामिनःसर्वजंतवः २९४ नाहिमैथुनधर्मेणकामनाशःक्वचिद्भवेत् ॥ नहिकामेपिनिर्वेदेपिप्रवृत्तिस्तत्रदृश्यते २९५ किंतुयावत्श्रमंतत्रप्रवर्ततेपरस्परम् ॥ श्रांताअपिनिवर्ततेसुखंनैवात्रकिंचन २९६ मल्लयोर्युध्यतोर्यद्वच्छ्रमोत्पत्तौनिवर्तनम् ॥ स्त्रीपुंसयोर्ग्राम्यधर्मेतद्वन्नात्रास्तिवैसुखम् २९७

२९२ ननुयाद्दृश्यसुखरूपःपुरुषार्थःकामोपशांतिरूपोदुःखध्वंसस्तुस्फुटइत्याशंक्यनाग्यसाधनमन्यत्रक्षमतइतिन्यायात्कृमिमात्रसाधनस्य कुतोदुःखध्वंसहेतुत्वमित्याह ग्रहाविष्टाइत्यादिपंचभिः । यथाग्रहाविष्टाग्रहोद्रेकात्ग्रहसंबंधविचलान्मनाविकृताःपिशाचाःसंतःपरस्परंसंमुखाअभिमुखाविमुखाःपराङ्मुखाश्चस्फिजःकटिप्रोथान्ताडयंति २९३ संप्राप्येति । तेएवश्रमंप्राप्यअनिर्मुक्तग्रहाअपिसुखितादवासतेसुखमासतइवकिन्त्वेवंपारास्त्यींनिहत्कामिनोपिअनिर्मुक्तकामग्रहाःसंतःश्रमेणसुखितवदवभासंतइत्यर्थः २९४ तत्रययातिवाक्यंस्मारयति नहीति । तथाचोक्तंययातिना 'नजातुकामःकामानामुपभोगेनशाम्यति । हविषाकृष्णवर्त्मेवभूयएवाभिवर्धते' इति । किंच प्रवृत्तिरेवेच्छाकार्यस्यकारणस्यानिवृत्तिंदर्शयतीतिव्यतिरेकमुखेनाह नहिकामइति । येषांकार्योत्पत्तिःतेषांनुपुनःप्रवृत्तिर्नदृष्टाऽतःप्रवृत्तिरेवकामलिंगमितिभावः २९५ ननुसंसारिणोपिकामनाशंतोनिवृत्तिमत्त्वादितिसत्प्रतिपक्षइतिचेन्न निवृत्तेःकामनाशाभावत्वेनसिद्धत्वेपुरुषार्थत्वाभिमानस्यचानन्यथासिद्धत्वादित्याह किंत्विति द्वाभ्यां । नचफलत्वाभेनानिवृत्तिरितिशंक्यं लब्धफलानांसाधनोपेक्षादर्शनात्तत्रसुखव्यतिरेकादितिसूचयितुमुक्तं सुखंनैवात्रकिंचनेति २९६ दृष्टांतेनव्यभिचारंस्फुटयति मल्लयोरिति । ग्राम्यधर्मेमैथुने २९७

एवंग्राम्यधर्मादौवस्तुतःसुखाभावेपि विपर्ययेणदुःखमेवसुखमितिमन्यमानंप्रत्येवंवाच्यंयद्यन्यथापित्वदभिमतसुखलाभेकिमर्थोयमनर्थसार्थकरआरंभाडंबरः 'अर्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत्' इतिन्यायादित्याशयेनाह रेतसइति । तावद्विण्मूत्रयोर्विसर्गेपिविद्यतेइत्यन्वयः कीदृशंतत् नात्यधिकंकिंचिदधिकम् अनुतापाभावादितिभावः ननुरतजन्यंसुखंकथंविसर्गमात्रंजनयेदतआह रत शब्दइति । अत्रविण्मूत्रप्रतियोगिकेविसर्गेकिंनप्रयुज्यते अत्रापिप्रयोगेकिंबाधकमित्यर्थः सुखानुकूलव्यापारत्वंप्रवृत्तिनिमित्तमादायैवहिकोशकारैर्निधुवनंरतमित्यादौरतशब्दःप्रयुक्तस्त्वयापि तदनतिक्रमादितिभावः २९८ किंचैतादृशसुखस्यातिसौलभ्यात्तत्कामनयाचरणेननकर्माणिनिर्वचनीयानितेषामंतःकरणशुद्धौविनियोगार्हत्वादभिनिवेशेनतत्कामनयैवाचरणेतुप्रतिबंदीसमाधेया स्ययेत्याह अपिवायोरिति । वायोरपानाख्यस्य मात्रशब्दः कात्स्न्यार्थकः संपर्कःसंयोगः यागादियागदानप्रभृति शेषंस्पष्टम् २९९ किंचसुखस्यविषयजन्यत्वाभ्युपगमेकिंस्त्रीपुंसयोःशरीरंका रणंकिंवातयोर्योगःकिंवाप्रजोत्पत्तिःकिमथवासजातीयप्रजोत्पत्तिरितिविकल्प्यतत्रनाद्यइत्याह अपिनामेति । देहेसुखंनामप्रसिद्धंस्याद्युत्पद्येतचेत्तर्हिनारीननरंव्रजेत् एवंनरोपिननारींव्रजेत् फलितमाह नतइत्यादि ३०० नद्वितीयइत्याह स्त्रीपुंसयोरिति । रत्यंतेग्राम्यधर्मांते तयोःस्त्रीपुंसयोः संतापायअनुतापाय अतएवोक्तंशिष्टैः 'भोजनांतेश्मशानांतेमैथुनांतेचयामतिः । सामतिः सर्वदाचेत्स्यात्नरोनारायणोभवेत्' इति ३०१ नतृतीयइत्याह नचप्रजायाइति । मत्कुणकीटःप्रसिद्धः आदिपदेनयूकादिपरिग्रहः तेषामपिप्रकर्षेणजनिशालित्वेनप्रजापदार्थत्वाविशेषादिति

रेतसोनिर्गमेयावत्सुखंतावद्धिविद्यते ॥ विण्मूत्रयोर्विसर्गेपिततोनात्यधिकंपुनः ॥ रतशब्दोविसर्गेत्रत्वयाकिंनप्रजुज्यते २९८ अपिवायोःसशब्दस्यविसर्गे स्तिहियत्सुखम् ॥ नतदेववधूमात्रसंपर्केपिहिविद्यते ॥ कस्मात्तदर्थंयागादिभ्रांतैर्नक्रियतेधुना २९९ अपिनामसुखंचेत्स्यान्नारीननरमाव्रजेत् ॥ नरोप्येवंततो नात्रसुखंदेहेस्तिकस्यचित् ३०० स्त्रीपुंसयोर्नयोगोपिसुखकारणमिष्यते ॥ रत्यंतेसतयोरेवसंतापाययतोभवेत् ३०१ नचप्रजायाउत्पत्तौसुखंभवतिकर्हिचित् ॥ कस्मान्मत्कुणकीटादेरुत्पादान्नसुखंहिनः ३०२ नवासमानजातीयसमुत्पादात्सुखंभवेत् ॥ प्रजावंतोहिदृश्यंतेप्रजयापीडिताःस्वया ३०३ एवमन्नोदकेनैव सुखकारणमीरितम् ॥ भुक्तपीतांतएतेहियतोदुःखस्यकारणम् ३०४ यथाहिज्वलतोवन्हेर्भवेत्काष्ठस्यसंचयः ॥ क्षिप्तस्तत्रक्षणंप्रौढज्वालानांविनिवारणम् ३०५ यथावासरसंदेशंवायोरुक्षंहिकुर्वतः ॥ क्षणंतद्वारणोपायस्तत्रनीरावसेचनम् ३०६

भावः यद्येवंस्यात्तर्ह्युत्तमाश्रमस्थैरप्यनुभूयेतप्रजासुखमितिसूचनायनइतिपदंप्रयुक्तमिति ३०२ नचतुर्थइत्याह नवेति । समानजातीयत्वंमनुष्यत्वादिना प्रतिकूलायाःप्रजायाःपीडाहेतुत्वंप्र सिद्धं अनुकूलायाअपियोगक्षेमचिंताद्वारेत्यवधेयम् ३०३ एवंकामसुखहेतुतयाऽऽभिमतानांकारणतामयोग्यत्वव्यभिचारादिभिर्निरस्याथरसनाविषयस्यापिकारणत्वायोग्यतांस्फुटयति एव मन्नोदकेइति । अन्नंचोदकंचान्नोदके पूर्वार्द्धेप्रतिज्ञाउत्तरार्द्धेव्यभिचाररूपोहेतुःकारणत्वाभावेदर्शितः भुक्तंचपीतंचतेतयोरंते भावेक्तः भोजनपानांतेहिपरिवेषणासिंहनादेननिवारयंतस्तत्रदुः खसाधनताज्ञानाधीनंद्वेषंसूचयंतीतिप्रसिद्धमेवमन्यदप्युदाहरणमूह्यम् ३०४ कथंतर्हिलौकिकाःसुखहेतुतामन्नोदकयोर्व्यवहरंतीत्याशंक्यक्षुत्तृषयोःसहनक्षमतांभ्रांत्यासुखमित्यभिमन्यतज्जनक तयेतिगृह्णाणेत्याह यथाहीत्यादिपंचभिः । यथाकाष्ठसंचयःवन्हिपुंजेक्षिप्तःसन् ज्वलतोवन्हेःप्रौढज्वालानांविनिवारणमुपशमसाधनंभवेदित्येकोदृष्टांतः ३०५ द्वितीयंदृष्टांतमाह यथावेति । सरसं रसेनसहितमार्द्रमितियावत् ईदृशंदेशंस्थलविशेषमंगनप्रभृतिरुक्षंकुर्वतोवायोः षष्ठीचानादरइतिषष्ठी रुक्षंकुर्वंतंवायुमनादृत्यपत्नीरावसेचनंतत्तद्वारणोपायःरुक्षीकरणवारणोपायः क्षणंयथाभवतीत्यर्थः ३०६

दार्ष्टांतिकमाह एवमिति त्रिभिः । जठरगौ शरीरांतःस्थितावेतौ अग्निप्राणौ जंतूनां क्षुत्पिपासे जनयत इत्यन्वयः अत्र 'प्राणस्यापोमयःप्राणः' इतिश्रुत्युक्तजलतादात्म्यात् 'आपएवतदशितंनयंत' इतिश्रुतेःक्षुद्धेतुत्वं । 'तेजएवतत्पीतंनयते' इतिश्रुतेर्वह्नेस्तृषाहेतुत्वमितिबोध्यम् ३०७ अन्नोदकाभ्यामिति । नृभिर्देहस्यांतःक्षिप्ताभ्यामन्नोदकाभ्यांकारणाभ्यांक्षुत्पिपासयोःक्षांतिःसहनंयथा कथंचित्सुकरासुखेनकर्तुंशक्यास्यादित्यन्वयः ३०८ क्षुत्तृषोरितिस्पष्टम् ३०९ एतन्न्यायमन्यत्राप्यतिदिशति एवंशब्दादीति । सुखस्यवस्तुगतिंस्फुटयति किंत्विति । औत्सुक्यस्याभिलाषप्रयुक्तचित्तचांचल्यस्यक्षणंनिवृत्तिर्जायतेतामेवचित्तदशांमूढाःसुखमितिमन्यंते बुधास्तुएवंजानंति चित्तस्यनिर्मलस्यापिकामनाभिश्चलत्वदशायामात्मप्रतिबिंबग्रहणायोग्यस्याभिलाषाशांतौसत्यांयस्यपरमानंदात्मनःप्रतिबिंबेनसुखवद्भानंसएवमुख्यंसुखमिति इत्थंचमूढाःक्षणिकसुखाविद्वांसस्तुनित्यानंदाइतिसिद्धम् ३१० फलितमाह ततोनेति । दुःखेषुहेयतयादुःखरूपांतःकरणपरिणामेषु स्फुटमन्यत् ३११ तस्यसुखत्वासंभवंप्रकारांतरेणाप्याह जनिनाशाल्पताद्याइति । तस्मिन्फलेधीपरिणामरूपेफलेजनिनाशाल्पताद्याउत्पत्तिध्वंसपरिच्छिन्नत्वाद्याः आद्यपदेनपरिणामादिग्रहः एतेदोषाःसंति कीदृशादोषाविषयजाविषयेभ्योजाताःप्रादुर्भूताः स्रक्चंदनादिविषयसंबंधजन्मादिभिस्तत्प्रयुक्तसुखजन्मादेःसुज्ञानत्वात् विषयजेइतिपाठेनृफलविशेषणंस्फुटम् एवंचधीमतांविवेकिनांनृणांतस्मिन्सुखधीःकथंस्यात्सानसंभवतीत्यर्थः सुखपदेहिव्युत्पाद्यमानेशोभनानिप्रसन्नानिखानिइंद्रियगोलकानियेनेत्यर्थोलभ्यते विषयसुखे

एवंजठरगावेतावग्निप्राणावहर्निशम् ॥ क्षुत्पिपासेजनयतोजंतूनामनिवारितौ ३०७ अन्नोदकाभ्यांक्षिप्ताभ्यांदेहस्यांतःक्षणंनृभिः ॥ यथाकथंचित्सुकराक्षांतिःस्यात्क्षुत्पिपासयोः ३०८ क्षुत्तृषोःक्षणमात्रंयाशांतिःप्राणाग्निरोधनात् ॥ तस्यांसुखमितिभ्रांतावदंत्यल्पधियोनराः ३०९ एवंशब्दादिलाभेपिसुखंनैवप्रजायते ॥ किंनुस्वात्मनऔत्सुक्यनिवृत्तिःस्यात्क्षणंनृणाम् ३१० ततोनजायतेकिंचित्सुखंविषयतोनृणाम् ॥ किंतुदुःखेषुसुखधीःक्रियतेभ्रांतबुद्धिभिः ॥ ३११ जनिनाशाल्पताद्याश्चदोषाविषयजान्नृणाम् ॥ फलेतस्मिन्कथंनामसुखधीर्धीमतांभवेत् ३१२ ततोनजायतेकिंचित्सुखंक्वापिकथंचन ॥ आनंदात्मातोदेहस्यांसत्प्रकाशैकरूपवान् ३१३ नहिप्रकाशसुखयोःसत्तायाअपिभेदधीः ॥ जायतेधीमतांक्वापिनामांतरसमीरणात् ३१४

विचार्यमाणेनृमनोगोलकंहृदयमेवदोषचिंतयातत्संभवतीतिकथंतत्सुखंस्यादितिभावः । तथाचात्रभगवतःपतंजलेःसूत्रं 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्चदुःखमेवसर्वंविवेकिनः' इति ३१२ एवंसांसारिकसुखस्यदुःखरूपतांप्रतिपाद्यप्रकृतविचारस्यआत्मस्वरूपानंदस्यपरिपूर्णताबोधकतयाप्रकृतोपयोगंदर्शयन्सएतमेवेत्याद्यपश्यदित्यंतंवाक्यमात्मानंततततमंपूर्णतमंमहावाक्यार्थभूतंसाक्षात्कृतवानित्यर्थकंव्याचष्टे ततोनेत्यादिषोडशभिः । ततउक्तयुक्तेः यत्सुखंतन्नजायतेयज्जायतेतद्दुःखमेवेतिपूर्वार्धार्थः ततःसुखस्यजन्मादिविकाररहित्यात्आनंदात्माऽऽनंदरूपोदेहस्यांकीदृशः सत्प्रकाशैकरूपवान्भावप्रधानोनिर्देशः सत्प्रकाशैकत्वैःरूपवान् सत्प्रकाशैकत्वानिममस्वरूपलक्षणानितद्बोधकैःसर्वमहावाक्यगतपदैरहमेवप्रतिपाद्यःस्यामितिसंभावनायांलिङ् लक्षणैकयात्वंपदार्थयोरैक्यं मयाबाधकादर्शनात्संभाव्यतेयद्यत्रानुपपत्तिःकश्चिन्मन्यतेसस्वाशयंप्रकाशयत्वितिभावः ३१३ नन्वनुपपत्त्यंतराभावेपित्वत्प्रतिपादकसदादिशब्दप्रवृत्तिनिमित्तभेदएवतवस्वगतभेदमापादयिष्यतितथाचकथंतवततमत्वमितिचेन्न लोकेप्यनेकपदप्रतिपाद्यवस्तुनोभेदादर्शनेनतादृशनियमादर्शनादित्याह नहीतिद्वाभ्यां । नामांतरैर्भिन्नपदैःसमीरणात्प्रतिपादनात् सत्तादीनांभेदधीर्विवेकिनांनजायतेइत्यर्थः ३१४

अन्वदृष्टांतमाह पितेति । दार्ष्टांतिकमाह तद्वदिति ३१५ यदालौकिकधर्मिसमानसत्ताकेतरनिरूपितधर्मभेदोनधर्मिभेदमापादयतितदाकिमुतकल्पितेतरव्यावृत्तिरूपप्रवृत्तिनिमित्तभेदइत्याशयेन सदादिशब्दानामसदादिव्यावृत्तिपरत्वंस्फुटयति असन्नाहमित्यादिना । अहमसन्नभवामिकिंत्वसद्विलक्षणः अस्मात् ल्यब्लोपेपंचमी इममर्थमादायसच्छब्दोमयिवर्त्ततेप्रवर्त्तते असद्विलक्षण्यंस्पष्टयति नहीति । एवमुत्तरत्रापि ३१६ जडंनाहमिति । अन्यबोध्यंपरप्रकाश्यं । स्फुटमन्यत् ३१७ दुःखंनाहमिति । योभावःप्रतिकूलोभवतियथाहिःसर्पःयोवाऽन्यशेषोऽन्यार्थोयथास्त्र्यादिःसमुखपदेननकथ्यतेकिंतुसदुःखपदार्थएव तद्विलक्षण्यबोधनायमयिमुखशब्दःप्रवृत्तइत्यर्थः ३१८ एतंन्यायमन्यत्राप्यतिदिशति एवमिति । अहमनात्माकस्यापिस्वरूपभिन्नोनभवामीतिबोधनायात्मशब्दोमयिवर्ततइतिदिशाबोध्यमित्यर्थः आदिपदेनैकाद्वितीयास्थूलानण्वन्हस्वादिशब्दग्रहः एतावांस्तुविशेषः सदादिशब्दाविधिमुखेनप्रथमंबोधयित्वापश्चाद्व्यावृत्तिंबोधयंति अद्वितीयादिशब्दास्तुसाक्षाद्व्यावृत्तिंप्रतिपाद्यार्थात्स्वरूपमिति ननुकियंतिपदानिविचारकालउपसंहार्याणीतिजिज्ञासापूरणायात्मानंविशिनष्टि सच्चिदानंदेत्यादि । तथाचेदृशंप्रमेयंयावद्भिःपदे

पितापुत्रःपतिर्भ्रातायथैकस्मिन्नरेपृथक् ॥ शब्दास्तद्वदिमेशब्दाःसदाद्यामयिकीर्तिताः ३१५ असन्नाहंभवाम्यस्मात्सच्छब्दोमयिवर्तते ॥ नहिवंध्यासुतस्येवरूपंममकथंचन ३१६ जडंनाहंभवाम्यस्मात्प्रकाशाख्यामयिस्थिता ॥ घटादेरिवमेरूपंनान्यबोध्यंकथंचन ३१७ दुःखंनाहंभवाम्यस्मात्सुखशब्दोपिविद्यते ॥ प्रतिकूलोऽन्यशेषोवानाहिःस्त्र्यादिःसकथ्यते ३१८ एवमात्मादिशब्दाश्चवर्त्ततेमयिसर्वदा ॥ सच्चिदानंदरूपेस्मिन्सर्वभेदविवर्जिते ॥ ३१९ नप्रकाशःसुखादन्यःप्रतिकूलस्तथाभवेत् ॥ अन्यशेषोथवायद्वत्सर्पोवाललनादिकम् ॥ अनुकूलतमत्वेनस्वात्मनोनोभयंहिसः ३२० नात्माप्रकाशरूपात्स्यादन्योसौसर्वबोधवित् ॥ तथात्वेघटवत्सस्यादनात्मात्मानतादृशः ३२१ सुखंचनप्रकाशेनव्यतिरिक्तंकथंचन ॥ नह्यप्रकाशमानस्यसुखस्यसुखतेष्यते ३२२

निश्चीयतेतावंतिउपसंहार्याणीतिभावः ३१९ एवंसदादिपदानांव्यावृत्तिपरत्वेनाविरोधंप्रतिपाद्याथयुक्तितोपिसदादिशब्दार्थानांभेदोनसंभवतीत्याह नप्रकाशइत्यादिना । प्रकाशस्यसुखाद्भेदोनसंभवतिसुखाद्भेदेहिप्रतिकूलत्वंदुःखतत्साधनसर्पादिवत्स्यात् अथवापरैःसुखसाधनत्वाभिमतललनादिवदन्यशेषःस्यादित्यर्थः सप्रकाशस्तूभयंप्रतिकूलोऽन्यशेषोवान तत्रहेतुरनुकूलतमत्वेन तत्रानुकूलत्वंस्रक्चंदनादेःप्रसिद्धं अनुकूलतरत्वंसुखत्वाभिमतांतःकरणवृत्तेः अनुकूलतमत्वंतुतत्प्रकाशस्यात्मस्वरूपभूतस्यभासमानानन्दस्यपुरुषार्थतयातदुपपादकत्वादतोनोभयंप्रकाशेसंभवतीतिभावः ३२० ननुमास्तुसुखप्रकाशयोर्भेदस्तयोर्धर्म्यात्मातुततःपृथगस्त्वित्याशंक्यतयोरात्माभेदेऽनुमानंदर्शयित्वाविपक्षेपूर्वंप्रपंचितंदोषंप्रसंजयति नात्मेति । आत्माप्रकाशरूपात्प्रकाशस्वरूपाद्भिन्नोनेतिप्रतिज्ञा तत्रकेवलव्यतिरेकिहेतुगर्भंविशेषणंसर्वेत्यादि । सर्वेषांबोधानांधीवृत्तीनांप्रकाशकइतितदर्थः यत्रप्रकाशभेदाभावाभावस्तत्रनसर्वबोधवित्त्वंयथाबुद्ध्यादीत्युदाहरणं तदनुकूलंतर्कमाह तथात्वइत्यादिना । तथात्वेप्रकाशभिन्नत्वेसआत्माप्रकाश्यत्वेनानात्मास्यात्यथाघटः आत्मातुतादृशोनभवतीत्यर्थः ३२१ पूर्वमुक्तेप्रकाशस्यसुखादभेदेयुक्तिंसुखस्यतदभेदसाधनमुखेनस्फुटयति सुखंचेति । स्पष्टम् ३२२

ननुप्रकाशमानतादोषेणघटस्येवभिन्नेनप्रकाशेनापिसंभवतीत्याशंक्यतथास्वीकारेदोषमाह स्वातिरेकीति ॥ स्वस्मादतिरेकोभेदोयस्यतथाभूतेनप्रकाशेनसुखंप्रकाश्यंनभवेन्नसंभवेत् तत्रव्यतिरेके दृष्टांतः अहिरज्ज्वादिवदिति । अहिःप्रातिभासिकत्वेनप्रसिद्धः रज्जुस्तुव्यावहारिकत्वेन तौआदीयेषांप्रातिभासिकानांव्यावहारिकाणांचतेतथातद्वत् तेषांदृश्यानांकल्पितचित्तादात्म्येनविप्यतयाभानसंभवेपियेवैभूमातत्सुखमितिश्रुतेर्भूमरूपसुखस्यसर्वात्मकस्यकल्पितत्वंनसंभवतिशून्यवादापत्तेर्निरधिष्ठानभ्रमायोगाच्चेतिभावः तस्मात्सुखमेवावबोधनम् सुखप्रकाशयोरभेदएवेत्यर्थः ३२३ एवंप्रकाशानंदयोरभेदेसिद्धेसाधितप्रकाशाभेदस्यात्मनःसुखादभेदःसिद्धस्तदभिन्नाभिन्नस्यतदभिन्नत्वमितिन्यायादित्याह आत्मासुखप्रकाशाभ्यामिति । प्रकाशपदंदृष्टांतार्थं प्रकाशाभिन्नसुखाद्भेदेतुजडत्वात्घटवदनात्मत्वंस्यादित्याह सुखेत्यादि । स्पष्टम् ३२४ सिद्धाभेदानामात्मानंदप्रकाशानांसत्पदार्थादभेदंसाधयति आत्मानंदेति । यदेवसर्वाधिष्ठानंस्वस्मिन् कल्पितेपुसंसर्गाध्यासेनप्रकारतयाभासमानंसत्परेस्तत्त्वानवबोधात्सत्ताजातिरित्यभिमतंसएवसत्पदार्थइतिसूचनायसत्तापदंप्रयुक्तं विपक्षेदंडमाह व्यतिरेकइति । सतोभिन्नमसदितिप्रसिद्धेरितिभावः ३२५ एवंसत्तायास्तेभ्योभेदेदुःखत्वानात्मत्वजडत्वानामापत्त्याघटादिसमत्वापत्तिरित्याह आनंदात्मेति स्पष्टम् ३२६ अनात्मत्वेकोदोषइत्यतआह अनात्मत्वइति । आत्माहिस्वरूपं

स्वातिरेकिप्रकाशेनप्रकाश्यंनसुखंभवेत् ॥ अहिरज्ज्वादिवत्तस्मात्सुखमेवावबोधनम् ३२३ आत्मासुखप्रकाशाभ्यांभिन्नोनैवकथंचन ॥ सुखप्रकाशयोर्भेदेऽनात्मताघटवद्भवेत् ३२४ आत्मानंदप्रकाशाश्चनसत्ताव्यतिरेकिणः ॥ व्यतिरेकेभवेत्तेषांवंध्यासुतसमानता ३२५ आनंदात्मप्रकाशेभ्यःसत्तानव्यतिरेकिणी ॥ व्यतिरेकेभवेदेषाघटवन्नात्मरूपिणी ३२६ अनात्मत्वेचसापिस्याद्वंध्यापुत्रसमाखलु ॥ तस्मात्सच्चित्स्वरूपोहमानंदात्मापरःपुमान् ३२७ अनंतोदेशकालादिभेदगंधविवर्जितः ॥ उक्तेमायियतोविश्वमध्यस्तंस्रजिसर्पवत् ॥ सदसद्देशकालादिशब्दप्रत्ययगोचरः ३२८ ततएवाहमात्मानंदृष्टवानस्मिबोधतः ॥ अत्यंतंविस्तृतंततसंयदर्थंदेहमागतः ३२९

तद्भिन्नत्वेस्वरूपबहिष्कारादसत्त्वापत्तिरितिभावः फलितमाह तस्मादिति । परःपुमान्तत्पदार्थः समानाधिकरण्येनवाक्यार्थोनुभवःसूचितः ३२७ एवंचत्रिविधपरिच्छेदराहित्यादनंतपदार्थो भेदोपिसिद्धइत्याह अनंतइति । अतएवसर्वाधिष्ठानत्वंममैवासीदित्याह उक्तइति । उक्तेउक्तरूपे तथाचसर्वेशब्दानांसर्वज्ञानानांविषयप्रदातृत्वेनाहमेवोपजीव्यइत्याह सदसदिति । सदसच्छब्दोकार्यकारणवाचकौ शेषंस्पष्टम् ३२८ पूर्ववाक्यार्थमनुवदन्निदमदर्शमित्यंशंकथमविषयस्यात्मनोदर्शनकर्मत्वमितिशंकांनिराकुर्वन्व्याचष्टे ततएवेति । यतःसर्वेशब्दाः सर्वाणिचज्ञानानि मद्गोचरावरणनिवृत्त्यामदभिव्यक्तिसंपादनेनवामद्गोचराणि जडेष्वावरणकृत्यभावान्मदतिरेकेणतेषांदुर्निरूप्यत्वाच्च ततएवउपपादितसंबंधाद्वेदांतवाक्याज्जन्यबोधवृत्तिरूपादविषयमपिआत्मानमहंदृष्टवानस्मिकृतकृत्योहमहोइत्यर्थः अत्रास्मीतिपदमहंपदेनाक्षेपादपिप्रतीयमानेनिरर्थकंसत्कृतकृत्यत्वेलाक्षणिकंसदाश्चर्यंव्यंजयति आश्चर्यत्वोपपादकमात्मविशेषणंविस्तृततममिति । तततमंपरिपूर्णमित्यर्थः । अनादिकालादारभ्यपरिच्छिन्नमात्मानंमन्यमानस्यपरिपूर्णात्मज्ञानात्किमन्यच्चित्रमितिभावः । कृतकृत्यत्वोपपादकंविशेषणं यदर्थमित्यादि । यदर्थमविसंकटप्रवेशःकृतस्तदद्यसिद्धमितःकिमन्यत्कृतकृत्यत्वमित्याशयः ३२९

तस्मादिदंद्रइत्यादिदेवाइत्यंतंवाक्यंव्याचष्टे इदंयस्मादितिचतुर्भिः । इदमस्तुसन्निकृष्टमित्युक्तेरिदंशब्दोऽपरोक्षवाचकोदर्शनक्रियाविशेषणम् तथाचायंदेवआत्मायस्मादात्मबोधतःआत्मसंबं
धिनोगुरुवेदांतवाक्यजन्यज्ञानादिदमपरोक्षंयथाभवतितथास्वरूपंदृष्टवान् तेनहेतुनाइदंद्रसंज्ञकःसन्आनंदात्मापरःपुमानभूत् 'ब्रह्मविद्ब्रह्मैवभवति' इतिश्रुतेः इदंपदपूर्वकदृशधातोर्ड्रन्प्रत्यये
सतीदंद्रनामनिष्पत्तिर्बोध्या ३३० तस्यव्यवहारस्तुइंद्रपदेनैवकार्यइत्याह इदंद्रमिति । तमेतमिदंद्रंसंतंसुराःदेवावन्ह्याद्यादेवभाविनोमनुष्यावाइंद्रमितिपरोक्षंनामकृत्वोचिरेकथितवंतः नाम्नः
परोक्षत्वंरूपांतरकरणेनस्वरूपाच्छादनंहियस्मादेतेदेवाःप्रत्यक्षमुक्तपरोक्षविपरीतंनामग्रहंद्विषंति दृश्यतेहिमहतामाचार्यादिपदैरभिधानेप्रसादःसाक्षाद्देवदत्तादिपदाभिधानेतुद्वेषइति एतेनयदादेवाः
प्रत्यक्षंद्विषन्तिकिमुततदापरमेश्वरइतिसूचितम् नारायणादिनामग्रहेतुअनेकप्रत्यक्षश्रुतिविहितेनायंन्यायः अर्थवादगतलिंगस्यश्रुतितोदुर्बलत्वादित्यवधेयम् ३३१ परोक्षप्रियाइति । ततोदेवैः
परमेश्वरस्येंद्रपदेनव्यवहारात्तेनस्वयमपिप्रत्यक्षाभिधानद्वेषेणचवन्ह्याद्यादेवाःपूज्याःपरोक्षप्रियाःकथितानृभिर्विवेकिभिः व्याख्येयश्रुतिगतमिवपदंप्रसिद्धिद्योतकंहिपदंचव्याकुर्वन्नैहलौकिकेषु
सन्मार्गवर्तिलोकरूपेषुदेवेषुनियमत्वेनपरोक्षप्रियत्वस्यानुगममाह देवव्रतमिति । नियमोव्रतमित्यमरः आर्येषुनृषुदेवव्रतमधुनापिदृश्यतेइत्यन्वयः ३३२ उदाहरति पित्राचार्येति । स्पष्टम् ३३३
एवमैतरेयचतुर्थाध्यायंसनकाद्युपदेशविषयाव्याख्यायपूर्वोक्ततात्पर्यप्रदर्शनपूर्वकमुत्तराध्यायमवतारयति इतिहासघटकैरेवमात्मेत्यादिभिर्विंशतिश्लोकैः । सनकादयोऽधिकारिणःप्रत्यूचुःभोऽ

**इदंयस्मादयंदेवोदृष्टवानात्मबोधतः ॥ इदंद्रनामातेनाभूदानंदात्मापरःपुमान् ३३० इदंद्रंसंतमेतंतमिंद्रमित्यूचिरेसुराः ॥ प्रत्यक्षंहिद्विषंत्येतेपूज्यनामग्रहं यतः ३३१ परोक्षप्रियास्ततस्तेनवन्ह्याद्याःकथितानृभिः ॥ देवव्रतंसदार्येषुदृश्यतेत्वधुनानृषु ३३२ पित्राचार्यादिनामानिनवदंतिनराःक्वचित् ॥ एवंनार्योपिपत्यादेर्भाषंतेनामनैवहि ॥ किंतुनामांतरेणैवव्यवहारंप्रकुर्वते ३३३ एवमात्माभवभ्द्योत्रकथितोह्यधिकारिणः ॥ शब्दप्रत्ययबोध्योयंनैवंरूपःस्वरूपतः ३३४ कोनामैनंमहात्मानमवाङ्मनसगोचरम् ॥ अविज्ञातंविजानतांविज्ञातमविजानताम् ॥ वदेद्वाशृणुयाद्वापिविनामायामुदीरिताम् ३३५ आश्चर्योस्यभवेद्वक्तावक्तिवाचामगोचरम् ॥ श्रोतापिचतथाश्चर्यःशृणोतींद्रियदूरगम् ३३६**

आत्मज्ञानेऽधिकारिणःएवंतथापिशास्त्रसिद्धेनेत्यादित्रिपंचाशत्तमश्लोकमतिज्ञातेनाध्यारोपापवादन्यायेनैतावताग्रंथेनभवद्भ्यआत्माकथितः कीदृशः शब्दप्रत्ययाभ्यांवेदांतवाक्यतज्जन्यवृत्त्या
त्मकज्ञानाभ्यांविषयीकृतः अन्यथाशब्दार्थज्ञानतादात्म्याध्यासव्याप्यशब्दप्रवृत्त्यनुपपत्तेर्भवद्भिस्तुसआत्मास्वरूपतएवंरूपोविषयरूपोनबोध्यःकिंतुवेदांततात्पर्यज्ञानद्वारेणाऽविषयतयैवावसेयः
शृंगग्राहिकान्यायेनतुतंकोपिनिर्देष्टुंनार्हतीतिभावः ३३४ ननुभवंतःशक्ताःसाक्षादेवतंबोधयंत्वितिशंकामालक्ष्याहुः कोनामैनमिति । एनंपूर्वंप्रतिपादितंमहात्मानमद्वितीयमात्मानंउदीरिताम
ध्यारोपापवादात्मिकांमायांविनाकोवावदेत्कोत्वाशृणुयादित्यन्वयः तस्याविषयस्यविषयतयाऽभिधानेऽप्रमाणत्वापत्तिरित्याशयेनयतोवाचोनिवर्तंतइतितैत्तिरीयश्रुतिंस्मारयति अवाङ्मनसगो
चरमिति । केनवाक्यमत्रार्थेपठति अविज्ञातमित्यादि । विजानतांतत्त्वविदामविज्ञातमितिमतं तस्याविषयत्वात् अविजानतांबुद्ध्याद्यात्मदर्शिनांभ्रांतानांमतेतुतद्ब्रह्मविज्ञातमितिप्रसिद्धम् ।
बुद्ध्यादेर्ज्ञानविषयत्वादितितदर्थः शक्त्याऽभिधानंतुशक्तेःशक्यनिरूप्यत्वेनदत्तोत्तरमितिभावः ३३५ विषयबोधनसामग्र्याऽविषयतत्त्वस्यतात्पर्येणबोधनमेवदुष्करंतयापरमाश्चर्यमितिबुद्ध्व
ध्वमितिसूचयितुं 'आश्चर्योस्यवक्ताकुशलोऽस्यलब्धाश्चर्योज्ञाताकुशलानुशिष्टः' इतिकठवाक्यमर्थतःपठति आश्चर्योस्येतिद्वाभ्यां । वागविषयस्यवाचाबोधनादस्याद्वितीयात्मनोक्ताऽऽश्चर्यः
अतींद्रियस्यश्रवणेनश्रुताम्नायतात्पर्यावधारणरूपेणविषयीकरणाच्छ्रोताश्रुतौलब्धृपदेनोक्तः आश्चर्यइत्यर्थः ३३६

लब्धेति । आत्मनोज्ञानमेवप्राप्तिरितिसूचनायज्ञातेतिवक्तव्येलब्धेत्युक्तं कुशलेनाचार्येणानुशासनादयमात्मनोलब्धासाक्षात्कर्त्तासआश्चर्यतमोऽस्याश्चर्यः वदनश्रवणयोराश्चर्यतायाःसाक्षात्कारे यफलेनैवजायमानेनस्फुटीकरणात् अन्यथानिरर्थकवक्तृश्रोतृणांप्रायशोदृष्टेःकाश्चर्यतेतिभावः । लब्धुराश्चर्यतांस्पष्टयति मनसइत्यादि । मनसोऽगम्यस्यसंस्कृतमनसागोचरीकरणंचित्रमि त्यर्थः ३३७ ततइति । ततइतोग्रेऽस्माभिर्वक्तुमशक्यत्वादनयादिशाविषयाऽऽत्मतत्त्वंसंगच्छतसंप्राप्नुत अस्माभिस्तुदिक्प्रदर्शनमात्रंकृतं यथारामेश्वरंप्रतियियासवेदक्षिणादिक्प्रदर्श्यतेतद्वदित्य र्थः । ननुकथंतर्हितद्वयंप्राप्नुमइत्यतोयुक्तिज्ञाइति । यतोभवंतोयुक्तिज्ञाःसंतिततोमननेनासंभावनांनिराकृत्यजानीतेतिभावः । अपूर्वंकथंयुक्तिप्रसरइत्यतउक्तंवेदवादरताइति । यथाधर्मोऽपूर्वोपि मीमांसान्यायैरवधारितस्तथायमपिनिर्धार्यतामितिभावः तथाचोक्तंवाशिष्ठे 'उपदेशक्रमोरामव्यवस्थामात्रपालनम् । ज्ञप्तेस्तुकारणंशुद्धाशिष्यप्रज्ञैवकेवला' इति ३३८ मननादपिपुरस्ता द्वैराग्यदृढीकारेयत्नोविधेयइत्याहुः नचाविरक्तैरिति । योग्यंयोग्येनसंबध्यतइतिन्यायादविरक्तैःसविषयैरविषयोमहेश्वरःकथंज्ञेयःस्यादितिभावः अर्थस्तुस्फुटः ३३९ वैराग्यमेवकथंद्रढयि तव्यमतआहुः विरक्तेरपीति । प्रीतिकारिणःसुखसाधनतयामतस्यवस्तुजातस्यसर्वस्यवस्तुनोयन्नितरांदोषावलोकनंसएवविरक्तेरुपायः सचनहिवैषयिकंनामेत्यादिनोक्तः ३४० इत्यादिश्ये

लब्धाश्चर्यतमोभूयःकुशलेनानुशासनात् ॥ आत्मनोमनसोगम्यंसाक्षात्तंकुरुतेकथम् ३३७ ततोभवंतोयुक्तिज्ञावेदवादरतास्तथा ॥ बुद्ध्यास्वयाविमृश्यैनंसंग च्छतदिशानया ३३८ नचाऽविरक्तैर्विज्ञातुंसुशक्योसौमहेश्वरः ॥ तस्माद्विरक्तिंभोधीराःसंपादयतमाचिरम् ३३९ विरक्तेरपिचोपायउक्तोदोषावलोकनम् ॥ सर्वस्यवस्तुजातस्यनितरांप्रीतिकारिणः ३४० इत्यादिश्यमहात्मानोलोकशोकापहारिणः ॥ तत्रांतर्दधिरेसर्वेपश्यतामधिकारिणाम् ३४१ गतेषुतेषुसर्वेषुसन कादिषुतेद्विजाः ॥ संहृष्टमनसःसर्वेइदमूचुःपरस्परम् ३४२ अहोभाग्यमहोभाग्यमस्माकमधिकारिणाम् ॥ अभवन्गुरवोयेषांसनकाद्यामुनीश्वराः ३४३ सर्व भूतसमाएतेकामक्रोधविवर्जिताः ॥ अंतर्बहिश्चरान्नृणांयद्वद्देषप्रभंजनः ३४४ परोपकारनिरताःस्वयंक्लेशसहिष्णवः ॥ मौनिनःपरदोषेषुदोषलेशविवर्जिताः ॥ ३४५ आत्मविज्ञानसंपन्नाःशरत्सागरसन्निभाः ॥ निश्चलाविमलात्मानःपूर्णेंदुसमवर्चसः ३४६ एतैरस्माकमादिष्टमात्मज्ञानंमहात्मभिः ॥ तत्सर्वंव्यर्थतांप्राप्तं वधिरेष्विवगीतकम् ३४७ आत्मबोधोनकोप्यत्रसंजातोवचनात्परम् ॥ ज्ञानमात्रंसमुत्पन्नंवाक्यार्थेध्ययनेयथा ३४८

ति । महात्मानःसनकाद्याः लोकानांशोकमपहर्तुंशीलंयेषांतेतथा पश्यतामधिकारिणां अनादरेषष्ठी तान्पश्यतःपुनःप्रष्टुमिच्छतोऽनादृत्येत्यर्थः ३४१ गतेष्विति । तेद्विजाअधिकारिणः संहृष्टमनसः दुर्लभगुरुलाभात् ३४२ एतादृशागुरवोदुर्लभाअपिमिलितायद्वैराग्यंविनाऽस्माकंज्ञानोत्पादेनक्षमाबभूवुस्तद्वैराग्यमेवतावत्संपादनीयमित्याशयेनगुरुमहिमानंवर्णयंति अहोभाग्य मिति । स्पष्टम् ३४३ सर्वभूतसमाइति । विषमेष्वपिसर्वेषुभूतेषुसमाः प्रभंजनोवायुः ३४४ परोपकारेति । परदोषेषुमौनिनइत्यन्वयः स्वयंचसर्वदोषविवर्जिताः ३४५ अप्रतिपत्ति विप्रतिपत्तिविप्रलिप्सादिपुरुषदोषविवर्जिताइमेइत्याहुः आत्मविज्ञानेति । शरद्दुकालिकसागरवदक्षुब्धाः मोक्षधर्मेषुवृत्रेंद्रसंवादेशुद्धसात्त्विकतयाशुक्लवर्णत्वेननिरूपिताइतिसूचनायविशेषणं पूर्णेन्दुसमवर्चसइति । वर्चःपदंकांतिवाचकम् ३४६ एतैरिति । एतैरेतादृशैरस्माकंहितायआदिष्टंउपदिष्टंत्वविरागप्रतिश्रावितंगीतमिवव्यर्थतांप्राप्तमस्मद्दोषादितिशेषः ३४७ व्यर्थतायां हेतुंफलपर्यंतबोधाजननंदर्शयंति । आत्मसाक्षात्कारःकोपिनजातः परंतुएतेषांवचनाद्वाक्यार्थगोचरंपरोक्षज्ञानमात्रंसमुत्पन्नं तत्रदृष्टांतः अध्ययनेयथाव्युत्पन्नानामापाततःअर्थगोचरंज्ञानंयथा जायतेतद्वदित्यर्थः ३४८

मधुररसानुभवहेतुरपिगुडोयथापित्तोद्रेकिणांतिक्तानुभवंजनयतितद्वत्प्रमोजनकेनाप्येतेषांवाक्येनास्मद्दोषात्संशयोजनितइत्याहुः यष्टारइति । यष्टारोयागकर्तारःभोक्तारस्तत्फलस्यतिशेषः एतादृशावयंके उक्ताद्वितीयात्मरूपतातुनसंभाव्यतइत्याहुः अनात्मरूपिणइति । इतिइत्याकारकः आपतितःप्राप्तः ३४९ भ्रमतीहेति । इहतदुक्तेभ्रमतिनावतिष्ठते असंभावनाम भिनयंति मुक्तात्मानःकथंवयमिति वयंकर्तृभोक्तृरूपाः नन्वहंशब्दस्यलक्षणयाशुद्धंप्रतिपद्यध्वमित्यतआहुः नहीत्यादि । मुख्यार्थेऽनुपपत्तिरेवबाह्यप्रवणेचेतसिनावतरतीतिभावः । फलितमाह अतइति । अत्रप्रमेयेअप्रतिपत्तिरसंभावना ३५० अतएवतैःसर्वज्ञैर्वैराग्यरूपउपायउपदिष्टइत्याहुः विज्ञायैवमिति । महात्मानःसनकाद्याःएवंउक्तविधामसंभावनां विज्ञायानुक्ताअपिअपृष्टाअपिज्ञानसिद्धयेउपायंविरक्तिमूचिरेइत्यन्वयः ३५१ विरक्तावपीति । पूर्वार्द्धेऊचिरइत्यनुषंगः उत्तरार्धेतस्मादित्यादिः शेषंस्पष्टम् ३५२ इतिसंचिंत्येति । एतान्वक्ष्यमाणान्पंचमाध्यायेनश्रुत्यर्थाभ्यांप्रतिपादितान् तेषांविचारेयोग्यतासूचनायविशेषणानिमहात्मानइत्यादीनि कृतात्मानःपरिष्कृतांतःकरणाः अग्निहोत्रिणइतिवक्ष्यमाणोपयोग्यपि ३५३ एवमेभिर्विंशतिश्लोकैःपंचमाध्यायसंगतिंप्रदर्श्याथाविद्ययासंसरतोजीवस्योपाधितादात्म्येननानादुर्दशाप्रदर्शकंपंचमाध्यायंव्याकुर्वन् ' पुरुषेहवाअयमादितोगर्भः ' इत्यादिवाक्यंतावत् व्याचष्टे सायमित्यादिचतुर्भिस्तत्श्लोकैः । अत्रायमितिपदेनसंसारेउपाधितःपृथगात्मानमबुध्यमानःआहुतीनांसूक्ष्मावस्थारूपादृष्टसंपृक्तसूक्ष्मशरीरेणपरलोकगमनागमनशालिनाता

यष्टारश्चापिभोक्तारोवयंकेऽनात्मरूपिणः ॥ इतिसंशयएवायमस्मानापतितोमहान् ३४९ भ्रमतीहमनोस्माकंमुक्तात्मानःकथंवयम् ॥ नह्यहंशब्दबोधाभ्यां लक्षिताःस्मःकथंचन ॥ अतोत्राप्रतिपत्तिर्नोजायतेसुदृढाद्विजाः ३५० विज्ञायैवंमहात्मानोमतिमंतःप्रमूचिरे ॥ अनुक्ताअपिचोपायंविरक्तिंज्ञानसिद्धये ३५१ विरक्तावपिचोपायंदोषालोकंहिवस्तुनः ॥ विचारयतभोस्तस्मात्कोदोषोत्रशरीरके ३५२ इतिसंचिंत्यतेसर्वेएतान्दोषान्प्रपेदिरे ॥ मिलिताहिम हात्मानःकृतात्मानोऽग्निहोत्रिणः ३५३ सायंप्रातर्हुतेह्येतेअग्निहोत्राहुतीउभे ॥ अप्प्रायेसूक्ष्मतांप्राप्तेअग्नेराकाशमागते ३५४ आत्मनाव्यापिनास्माकंस दासर्वत्रसंयुते ॥ असौस्वर्गायलोकायस्वाहेत्यंत्याहुतिस्तथा ॥ अस्मान्गृहीत्वानियांतिद्युपर्जन्यधरानरान् ३५५

दात्म्याध्यासवान्जीवोविवक्षितइतिबोधयितुंपंचाग्निविद्यावाक्यप्रसिद्धां ' तथानेइमेआहुतीउत्क्रामतस्तेअंतरिक्षमाविशतः ' इत्याद्यग्निहोत्रप्रकरणगतवाक्यप्रसिद्धांचाहुतिंसंपृक्तस्यगतागतिंप्रकट यतिचतुर्भिः सायंप्रातर्हुतेतेअग्निहोत्राहुतीउभे कीदृश्यौतेआहुती अप्प्रायेजलप्रधानदुग्धादिपरिणामतयाजलप्रधाने होमानंतरंसूक्ष्मरूपेणाग्नेःसकाशादाकाशमागतेप्राप्ते ' तेअंतरिक्षामावि शतः इतिश्रुतेरित्यर्थः ३५४ आत्मनेति पुनःकीदृश्यौतेउभेआहुती अस्माकंकर्मिणांप्रमातॄणामात्मनाजीवेनव्यापकेनसंबद्धे एकजीववादाभिप्रायेणआत्मनेत्येकवचनं अत्राहुत्योःसू क्ष्मतयाकारणाज्ञानतादात्म्येनजीवोपाधित्वंकार्याकारपरिणतयोस्तुप्रमात्रुपाधित्वमितिबोध्यम् एवमंतरिक्षगतेसायंप्रातराहुतीतथाअसौ ' स्वर्गायलोकायस्वाहा ' इतिमंत्रेणहुताअंत्याअंतेप्रेतश रीरदाहकालेभवातृतीयाचाहुतिः एतास्तिस्रआहुतयःअस्मान्कर्मिणोगृहीत्वाक्रमेणपंचाग्नीनांमध्येप्रथमंद्युलोकंसोमरूपंस्वर्लोकमग्निं ततःसुकृतोपभोगानंतरंपर्जन्यंमेघंद्वितीयमग्निं ततोवृष्टिद्वाराध रांपृथिवींतृतीयमग्निं ततोन्नद्वारानरंपुरुषंचतुर्थमग्निमाप्नुवंतीत्यर्थः अत्राहुतीनांस्वातंत्र्याभिधानंकर्मप्राधान्यवादिकर्मिदृष्ट्यानुवादितेइमेआहुतीइत्यादिश्रुत्यनुसारेण वस्तुतस्तुकरणाभिमानि देवानांतत्रतत्रनयनेस्वातंत्र्यंबोध्यं पंचाग्निविद्यावाक्यादिति ३५५

तत्रस्वर्लोकाद्भूमिलोकंप्रतिपर्जन्यद्वारागमनेऽयमवांतरोविशेषोबोध्यइत्याह जीवइतिद्वाभ्याम् । कश्चिज्जीवःक्रमेणप्रोद्भूतसुकृतदुष्कृतकःसचप्रथमंसुकृतीप्रोद्भूतसुकृतोभोगेनसुकृतक्षयेस्वर्गात्परिभ्रष्टो भवति पुनर्दुष्कृतीप्रोद्भूतदुष्कृतोयमयातनाभोगानंतरंनरकाच्चपरिभ्रष्टःसन्ततस्तदनंतरं'रमणीयचरणारमणीयांयोनिमापद्यंते कपूयचरणाःकपूयांयोनिमापद्यंते' इतिश्रुत्युक्तप्रकारेणानजकर्मानुसारतस्तत्कालेप्रादुर्भूतकर्मानुसारात्नानाविधानांजंतूनांयोनीःप्राप्नोति अनिच्छयास्वातंत्र्यराहित्येनेत्यर्थः ३५६ केवलसुकृतभोगवतस्तुस्वर्गान्नरकव्यवधानंविनैवभूलोकप्राप्तिरित्याह सुकृतीति । सएवंलोकमायातिइत्यन्वयः कीदृशंलोकमन्नाद्यपूरितं अन्नंचतदाद्यंचतेनपूरितं ओषधिद्वारान्नंभूत्वाआद्यरूपेणभक्ष्यरूपेणभक्षकंयातीतिभावः यद्वा अन्नस्याद्याःकारणीभूताओषधयस्ताभिःपूरितं अत्ताद्येतिपाठेअत्तारश्चआद्यमन्नंचतैःपूरितमित्यर्थः ३५७ एतावताश्रुतिगतायमितिपदार्थंव्याख्यायपुरुषगर्भताप्रतिपादनोपयोगिनंपुरुषशरीरेतस्यप्रवेशमाह उभाभ्यामिति । उभाभ्यांपुण्यपापाभ्यांमानुषशरीरप्राप्तिनिमित्ताभ्यांप्रयुक्तः तथाअन्नेनसहमूर्छितः । मूर्छामोहसमुच्छ्राययोरितिधातोःकर्तरिक्तः । अन्नेनसहौषधिभ्योवृद्धिंप्राप्तःएकलोलीभावंगतइतियावत् यद्वामूर्छितःमूढःसन्अन्नेनसहरेतःसिचोरेतसःसेचकस्यपुरुषस्यदेहंतंसविशति अवशःपरतंत्रः ३५८ तत्रदृष्टांतमाह रज्जुबद्धइति । स्पष्टम् ३५९ दृष्टांतांतरमाह राजभृत्यैरिति । दोषीकृ

जीवःस्वर्गात्परिभ्रष्टःसुकृतीदुष्कृतीपुनः ॥ नरकाच्चततोभूयोनिजकर्मानुसारतः ॥ नानाविधानांजंतूनांयोनीःप्राप्नोत्यनिच्छया ३५६ सुकृतसुकृतंसर्वंस्वर्गे लोकेऽनुभूयसः ॥ वृष्टयासहैतमायातिलोकमन्नाद्यपूरितम् ३५७ उभाभ्यांपुण्यपापाभ्यामन्नेनसहमूर्छितः ॥ देहेरेतःसिचोतंसप्रविशत्यवशःपुनः ३५८ रज्जुबद्धोघटोयद्वत्कूपेप्रविशतिक्षणात् ॥ कर्मबद्धस्तथाजंतुःपितुर्देहंसमाविशेत् ३५९ राजभृत्यैर्यथादोषीशृंखलाबद्धगात्रकः ॥ कारागृहंप्रवेश्येतहृतसर्वस्वबांधवः ३६० एवंजंतुःस्वकर्माख्यशृंखलाभिःसुयंत्रितः ॥ नीयतेपितृगात्रंतदेकाकीत्यक्तबांधवः ३६१ अंधकूपइवाभातिपितुर्देहःशरीरिणः ॥ सर्पोपमैःकृमिगणैर्निवीतोऽतिभयंकरैः १६२ जाठरोजातवेदाश्चपितुस्तंजठरंगतम् ॥ संतापयतिकारारूयंधनार्थेकिंकरायथा ३६३ संशोषयतितंप्राणःपितुर्जठरगंभृशम् ॥ व्याधितंदुर्बलंयद्वन्महावातोमहागिरौ ३६४ क्षुत्पिपासार्तिसंपन्नंपितरंस्त्रीसमंस्वकम् ॥ अन्नगर्भार्थिनंत्वास्ययोनिच्छिद्रेणगच्छति ३६५ कालःपुमान्पिताचास्य पितामातातथाभवेत् ॥ संयोगस्त्वनयोर्ग्राम्यधर्मोगर्भस्यकारणम् ३६६

तापराधः ३६० दार्ष्टांतिकमाह एवंजंतुरिति । नीयतेईश्वरप्रयुक्तैःकरणाभिमानिदेवैरितिशेषः ३६१ प्रवेष्टव्यपितृशरीरमेवालोचनेभयहेतुतयादुःखदमित्याह अंधकूपसाम्येपिवह्निवायुकृतोपद्रवात्ततोविशेषोपीत्याह जाठरइतिद्वाभ्यां । तंजंतुं कारास्थंबंधनागारगतं किंकराःराजपुरुषाः ३६३ संशोषयतीति । महागिरौहिमालये अत्रतस्यजंतोर्मूर्छितत्वेपिवैराग्यायतथावर्णनमुचितमेव 'अतोवैखलुदुर्निष्प्रपतरम्' इतिश्रुत्यनुसारात् अतःअन्नभावदुःखेननिष्प्रपतितुंनिःक्रमितुंशक्यमितिलुप्ततकारकश्रुत्यर्थः ३६४ अथगर्भतांसाधर्म्येणोपपादयतिक्षुत्पिपासेति । स्त्रीसमंस्वकंस्वीयंपितरंआस्ययोनिच्छिद्रेणअलोमकत्वेनयोनिसमानमुखच्छिद्रेणगच्छतिप्रविशति 'स मुखाच्चयोनेर्हस्ताभ्यांचाग्निमसृजत्तस्मादेतदुभयमलोमकमंतरतोऽलोमकाहियोनिः' इतिश्रुतिरलोमकत्वेनसाम्येमूलं । कामजार्तिमत्यागर्भार्थिन्याचस्त्रियासाम्योपपादकंपितुर्विशेषणद्वयं क्षुत्तृष्णे इत्यन्नपानकामनारूपत्वात् जीवप्रविष्टान्नस्यचगर्भवदिष्यमाणत्वादिति ३६५ ननुपितुःस्त्रीसमत्वेगर्भाधायकः पुमान्तद्व्यापारश्चवक्तव्यइत्यतआह कालइति । 'कालःकलयतामहम्' इतिस्मृतेःकालईश्वरोमायोपाधिःसर्वस्रष्टापुमान्पिताचास्यजीवस्यभवेत् तथाएवंसतिपितालौकिकोमाताभवेत् अनयोःकालपित्रोःसंयोगःसंबंधःगर्भकारणत्वेनग्राम्यधर्मसमोबोध्यइति ३६६

एवंसाधर्म्योन्नेरेर्गर्भतामुपपाद्यदुःखलाभेनापिसाम्यंदर्शयितुंप्रतिजानीते जननीजठरइति । तावदेवन्नन्यूनमित्यर्थः तत्राष्टममासादौचेतनालाभेजन्मांतरस्मृत्यादिनादुःखभूयस्त्वमत्रतुदंतचर्वणादि नाधस्तुप्रवेशेनचतद्भूयस्त्वमितिसाम्यमेवेतिभावः ३६७ एतदेवस्पष्टीकरोति मुखमेषइत्यादिना । एषोन्नतादात्म्यशालीजंतुःपुरःप्रथमंमुखंप्राप्यदंतैर्भिन्नानिआत्मसंबंधीनिगात्राणियस्यसतथा भूतः मुखसंबंधिदुर्गंधेनावृतमाक्रांतंघ्राणंयस्यएवंभूतश्चसन्कथंचित्खेदेनगलविवरंगच्छेदित्यर्थः ३६८ कंठविवरेक्लेशंस्फुटयति कंठइति । स्वल्पमार्गेकंठेजंतुरतिदुःखितकृमिवच्चेष्टतेइत्यन्वयः तत्रहेतुतयाविशेषणानियोज्यानि श्लेष्माविलःकफव्याप्तः ३६९ दृष्टांतमाह गरुडस्येति । स्पष्टम् ३७० एवंकंठप्रांतगतकफस्थानरूपकफाश्रयप्राप्तिदुःखमभिधायततोधस्तनपित्ताशयप्रा प्तिदुःखंदर्शयति कंठात्कथंचिदिति । योनियंत्रोपमात्योनियंत्रसमानादित्यर्थः एतेनयत्स्त्रीगर्भेप्रसवकालेदुःखमनुभूयतेतदत्रप्रवेशकालइतिसूचितम् ततोनिर्मुक्तःपित्तेहृदिदेशेस्थितेपतति की दृशेपित्तेविष्ठारसाकारेविष्ठाद्रवसमानाकारे ३७१ तद्दुःखेदृष्टांतमाह यथातैलइति । त्वचमुत्पाट्यउत्कृत्यदूरीकृत्येवियावत् पततियोगंप्राप्नोति ३७२ पित्तादिति । प्राणेनउदरा

जननीजठरेयावद्दुःखंसोनुभविष्यति ॥ तावदेवसमाप्नोतिजंतुर्जठरगःपितुः ३६७ मुखमेषपुरःप्राप्यदंतैर्भिन्नात्मगात्रकः ॥ मुखगंधावृतघ्राणःकथंचित्कं ठमाव्रजेत् ३६८ कंठेश्लेष्माविलःस्वल्पमार्गेव्याकुलितेंद्रियः ॥ कृमिवच्चेष्टतेजंतुःशक्तिहीनोतिदुःखितः ३६९ गरुडस्यमुखेमत्स्योयद्वच्चलतिसर्वतः ॥ आत्मनोमुक्तिमिच्छन्सन्नेवंकंठेजनःसदा ३७० कंठात्कथंचिन्निर्मुक्तोयोनियंत्रोपमात्पुमान् ॥ पित्तेविष्ठारसाकारेहृदिदेशेपतत्यसौ ३७१ यथातैलेसुसंतप्ते त्वचमुत्पाद्यनिःक्षिपेत् ॥ श्लेष्माशयादयंपित्तमेवंपततिदुःखितः ३७२ पित्तात्प्राणाग्निसंतप्तादितश्चेतश्चधावतः ॥ मर्कटादिवदुःखानिप्राप्नोत्येषजनोहृदि ३७३ अधःक्वचित्क्वचिच्चोर्ध्वंक्वचित्तिर्यक्क्वचित्पुनः ॥ पित्तएवेतिगतिमांस्तप्ततैलेयथाजलम् ३७४ एवंपित्ताशयेस्थित्वापुनरायातिमारुतम् ॥ पुरीत द्दुर्गमध्यस्थंनाभिपर्वतनिर्गतम् ३७५ वास्याभिरिवसर्वांगैश्छिन्नैर्विह्वलितेंद्रियः ॥ वाताशयेनिपततितृणंयद्वत्प्रभंजने ३७६ तस्मिन्नग्निसमस्पर्शेवायौरूक्षे तिदुःसहे ॥ स्थित्वाकालात्प्रयात्येषजाठरंजातवेदसम् ३७७ तत्रपाकोस्यभवतिम्रियतेचततेनसः ॥ त्रिधाभूतेततस्तस्मिन्नन्नेमध्यमभागतः ३७८

ग्निनाचसंतप्तात्प्राणाग्न्यभिघातेनमर्कटवद्धावतश्चपित्ताद्धेतोः तंप्राप्येतिवा हृदिदेशेएषजनोदुःखानिप्राप्नोतीति ३७३ अधइति । एतिभ्रमति ३७४ एवमिति । मारुतंवाता श्रयं पुरीतदंत्रंतदात्मकदुर्गमध्यगतं नाभीति नाभिरूपात्पर्वतान्निर्गतं पर्वतेभ्योहिगुहामुखेवायुर्निर्गच्छतीतिप्रसिद्धम् ३७५ वास्याभिरिति । तत्रान्नस्यपाकायवायुनाशोषणपूर्वकंविकी र्णभावःक्रियते सोत्रकाष्ठतक्षणसाधनवास्याकरणकच्छेदनत्वेनोत्प्रेक्षितः यद्यप्याशयाअष्टावायुर्वेदउक्तास्तथाप्यत्रत्रयएवदर्शिताउपयोगादिति ३७६ वायुनान्नविकिरणफलंजठराग्निप्राप्तिं दर्शयति तस्मिन्निति । अग्निसमस्पर्शजाठराग्निसन्निधानादितिशेषः कालात्कंचित्कालमनुभूय ३७७ तत्रेति पाकोरूपांतरापत्तिः तेनपाकेन ततःपाकात् तस्मिन्नन्नेत्रिधाभूतेउत्तममध्य माधमभावंगतेसतितत्रोत्तमभागेमनोरूपेणपरिणतेऽधमभागेपुरीषतांचगतेसतिमध्यमभागात्मध्यमभागरूपेणअसौजीवस्त्वगादिरूपतांगच्छतीत्युत्तरेणान्वयः अत्रान्नमशितंत्रेधाविभज्यते इत्याद्याछांदोग्यषष्ठगताश्रुतिरनुसंधेया ३७८

त्वगसृगिति । तत्रायंक्रमोबोध्यइत्याह पूर्वंपूर्वमिति । पूर्वंप्रथममन्नरसोभूत्वाततोधातूनांमध्येपूर्वंपूर्वंप्राप्यसमानानुग्रहात्समानाख्यवायुबलात्परंपरंव्रजेदित्यन्वयः ३७९ ननुतथाभावेप्रकृते किमागतमतआह एकैकस्मिन्निति ॥ अस्यजंतोरेकैकस्मिन्अत्रधातुप्रवेशेयदादुःसहदुःखंसंभाव्यंततदाकिमुतसर्वेसमुच्चयेइत्यर्थः दुःखवर्णनंतुप्रकृतमेवेतिभावः . ३८० एतदेवप्रपंचयंस्त्वक्प्रवेशदुःखंस्फुटयति केशाग्रेतिद्वाभ्याम् ॥ सहस्रशःद्वासप्ततिसहस्राणिहृदयादभिनिःसृताडचइत्यादिस्मृतौप्रसिद्धाःताभिस्त्वचंयावति प्रथमंमितिशेषः कीदृशींत्वचम् शरीरव्यापिनींतयावहिःकेशलोमावृतामिति ३८१ आसामिति । आसांनाडीनांप्रवेशेतन्मार्गेणगमनेताभ्योनिर्गमेचतथात्वचःप्राप्तौयद्दुःखंभवतितत्स्मृतौसत्यांवोऽस्मान्प्रतिमोहोवैचित्यमेतिप्राप्नोतीत्यर्थः ३८२ त्वचोरुधिरप्राप्तिदुःखमाह त्वचइति । अयंस्पष्टः भीरूणांभयशीलानाम् ३८३ मांसप्रवेशदुःखंस्फुटयति ततोमांसमिति । सुनिबिडमतिघनंशाल्मलीवृक्षपुष्पसमवर्णएतीत्यनुषंगः तत्रसंभावितांप्रवेष्टुर्दशांविशेषणैर्दर्शयति मूर्छितइत्यादिना ३८४ चतुर्थधातुप्रवेशमाह ततोमेदइति । ततोमांसान्निपतितःसन्मेदोव्रजेदित्यन्वयः कीदृशंमेदःचूर्णेत्यादि वर्णेनगोधूमादिचूर्णसमम् निपवनेहेतुर्वह्नि

त्वगसृङ्मांसमेदोस्थिमज्जारूपाणिगच्छति ॥ पूर्वंपूर्वंततःप्राप्यपरंपरमतोव्रजेत् ॥ पूर्वमन्नरसोभूत्वासमानानुग्रहात्पुमान् ३७९ एकैकस्मिन्यदत्रास्यदुःखंतद्दुःसहंभृशम् ॥ किमुपड्धातुदुःखानिदुःसहानिनृणामिह ३८० केशाग्रशतभागेभ्यःसूक्ष्मानाड्यःसहस्रशः ॥ अयमन्नरसोभूत्वाताभिर्यातित्वचम् ॥ शरीरव्यापिनींसर्वकेशलोमावृतांवहिः ३८१ आसांप्रवेशेगमनेनिर्गमेचत्वचस्तथा ॥ प्राप्तौभवतियद्दुःखंतत्स्मृतौमोहएतिनः ३८२ त्वचोरुधिरमायातिलाक्षारससमंहिसः ॥ दर्शनेयस्यमोहोयंभीरूणामिहदृश्यते ३८३ ततोमांसंसुनिबिडंशाल्मलीसुमनःसमम् ॥ मूर्छितश्चक्वचिद्भीतःक्वाचिद्विह्वलितेक्षणः ३८४ ततोमेदोतिधवलंचूर्णकूटसमंपुनः ॥ मांसान्निपतितोवह्निप्राणाभ्यांघृतवद्व्रजेत् ३८५ ततःशरीरशालायाःस्थूणाभूतान्यनेकधा ॥ अस्थीनियातिगर्भस्थोमृद्यथा दारुसंचयम् ४८६ अस्थ्नामंतस्ततस्तेषांमज्जानंसाररूपिणीम् ॥ प्रयातिकाष्ठगंयद्वन्नीरमंतःशनैःशनैः ३८७ एवंस्थितेथकालेनकामवह्निःपितुर्यदा ॥ हृदियातितदामज्जासारंमुंचतिसर्वतः ३८८ आमस्तकंतथापादमंगादंगाद्धिसर्वतः ॥ मज्जारसोविनिर्यातिदुःसहोजनकेनसः ३८९ दशमेमासियद्वत्स्याद्गर्भिण्यादुःसहस्तथा ॥ गर्भएषप्रथमतोजनकेनापिदुःसहः ३९० आर्द्रोवनस्पतिर्यद्वत्सहतेनहिकोटरे ॥ वह्निंतथास्यजनकःसहतेनकथंचन ३९१

प्राणोआयुर्वेदेरुधिरादिमध्येप्यग्निस्थितिप्रतिपादनेनवह्नेश्चलनहेतुत्वमविरुद्धम् तप्यमानजलादौदर्शनात् घृतवत्घृतंयथाचूर्णंप्रविशतितद्वत् ३८५ पंचमधातुप्रवेशंदर्शयति ततःशरीरेति । तदनंतरंशरीरात्मकगृहस्यस्थूणानिभान्यनेकधापष्टयधिकशतत्रयसंख्ययास्मृतौगणितान्यस्थीनिपुंगर्भस्थोजंतुर्याति कथं यथामृत्काष्ठसमूहमिति ३८६ षष्ठधातुप्राप्तिमाह अस्थ्नामिति । तेषामस्थ्नामंतःस्थितांसाररूपिणींसाररेतोरूपचरमधातुरूपवंतंकर्तुंशीलंयस्यमस्तांतथामज्जानंशनैःशनैर्याति किमिव काष्ठलग्नजलवत् ३८७ एवंजीवस्यपुंशरीरेगर्भंतोयपादकंप्रवेशमभिधायतत्रतस्यरेतोरूपेणगर्भंवतस्थितिप्रतिपादकंयदेतद्वेतइत्यादिकिमर्तीत्यंतंव्याचष्टे एवंस्थितेइत्यादिसप्ताऽधिकपंचाशद्भिः । एवमुक्तविधयामज्जासाररूपेणजीवेस्थितेसतिकालेननिमित्तेनकामवह्निःतापकत्वेनद्रावकत्वेनचवह्निसमःकामःहृदिमनसियातिप्रादुर्भवति । मज्जाकर्त्री ३८८ सर्वतइतिविवृणोति आमस्तकमिति । अभिविधावाङ् आपादमितिच्छेदः तस्यसन्निहितप्रसवकगर्भवन्नानोपद्रवकारितांप्रपंचयितुंप्रतिजानीते दुःसहइति ३८९ तत्रदृष्टांतमाह दशमेइति ३९० दृष्टांतांतरमाह आर्द्रइति । आर्द्रोद्रावणहरसः कोटरोवृक्षांतश्छिद्रं वह्निमितिपूर्वार्धान्वयि ३९१

तृतीयंनिदर्शनंदर्शयति यथाभिचारेति । अभिचारोनामशत्रूणाकृतमदद्वारातत्शत्रुबाधकंकर्म तेनदुष्टस्यप्रकृतिविपरिणामंगतस्य दार्ष्टांतिकेमनःपदेननदायतनंचरमधातुर्ग्राह्यः ३०.२ नारीगर्भस्यचालकःप्रसूतिहेतुर्वायुः अत्रतुकामोवायुसखइत्यवांतरविशेषेपिमातुरंतरस्थिरत्वंव्यामोहकत्वंचसमानमित्याह मज्जारसइति । मज्जाशब्दष्टाबंतोपि । मज्जोक्तामज्जयासहेतिद्विरूपकोशात् निर्गतोद्रतः पाररसःपारदः ३९३ तस्यव्यामोहकत्वंव्यामोहकार्यविपर्ययप्रदर्शनेनस्पष्टयति श्लेष्मणइति । दृष्टांतेमधुरताकारेणपरिणाम्यज्ञानस्यकफोद्रेकःक्षोभकःप्रकृतेतुकामकृतोरेतउद्रेकइति । सुखमितिपदमभेदाध्यवसानेनतत्साधनेप्रयुक्तम् ३९४ विपर्ययमेवप्रपंचेनदर्शयति मुखमित्यादिसप्तभिः । दुर्गंधेननीरेणाढ्यंहर्षविरोधिग्लानिजननार्हं आल्हादकत्वलक्षणचंद्रसाधर्म्यानर्हमिति यावत् एवमुत्तरत्रापिविशेषणभावोबोध्यः ३९५ कटाक्षाइति । नरकग्रामस्यनरकसमूहस्यजनकतयासंबंधिनोमार्गणाविषलिप्तबाणाः स्मृतौदुर्गतिहेतुतयाप्रसिद्धाः एतेपितत्समाः हर्षहेतुपुष्पसमत्वंनार्हंतीतिभावः ३९६ नासिकेति । पयोवत्दुग्धवत् ३९७ केशाइति । तमोंधकारस्तद्वत्श्यामतयानेत्रशक्तिप्रमोषार्हाः आप्यायनंतृप्तिः । मांसग्रंथीइति अमृतेनसुपूरितौइत्यन्वयः निर्भातः भासेतेइत्यर्थः ३९८ उदरमिति । मांसलंप्रचुरमांसं तद्विपरीतंनिर्मांसं श्वनांसूकराणांचोदरसमानं सदायदायदादोषोदयस्तदातदेत्यर्थः ३९९ स्फिजाविति । कटिमांसपिंडात्मकौस्फिजौपा

यथाभिचारदुष्टस्यममनोनिश्चलंभवेत् ॥ एवंकामाग्नितापेननभवेन्निश्चलंमनः ३९२ मज्जारसोरेतइतिकामाग्निर्निर्गतःसदा ॥ स्थितिंनकुरुतेकापिदेहेपाररसो यथा ३९३ श्लेष्मणस्तुसमुद्रेकाद्यथामधुरतांव्रजेत् ॥ निंबादिःकामजोद्रेकान्नारीदेहस्तथासुखम् ३९४ मुखंदुर्गंधनीराढ्यंचंद्रवद्भातिकामिनः ॥ अक्षिणिमलसंपूर्णेपद्मपत्रोपमेयथा ३९५ कटाक्षावामनेत्राणांनरकग्राममार्गणाः ॥ पुष्पाणीवप्रमत्तस्यकामिनोभातिसर्वदा ३९६ नासिकाश्लेष्मणोमार्गःपयोवद्भातिकामिनः ॥ अधरःपायुसदृशोमधुरोभातिकामिनः ३९७ केशास्तमःसमाअस्यानेत्राप्यायनकारिणः ॥ मांसग्रंथीस्तनौतद्वद्धेमकुंभौसुपूरितौ ॥ अमृतेनेवनिर्भातःकामिनोनिजदोषतः ३९८ उदरंमांसलंचास्यानिर्मांसमथवापुनः ॥ श्वसूकरोदराकारंविण्मूत्राद्यालयःपरम् ॥ भातिकामग्रहार्तस्यसदानंदस्यकारणम् ३९९ स्फिजौपायुनदीतीरभूतेविष्ठानुलेपिते ॥ पीवरेजघनंरम्यंनिर्भातइतिकामिनः ४०० भगंदरसमायोनिर्मूत्रगंधविदूषिता ॥ कामिनःस्वर्गसदृशीप्रतिभातिविमोहतः ४०१ एवमूर्वादिकौपादावस्थिस्थूणौचमांसलौ ॥ स्वर्णरंभासमौभातःकामिनोनिजदोषतः ४०२ पुरुषस्ययथाकामान्नारीभात्यमृतोपमा ॥ नार्याअपितथाकामात्पुमानमृततांव्रजेत् ४०३ एवंकामाग्निजेपित्तेकामिनःकुपितेसति ॥ वेत्तिधर्मंनचाधर्मंरात्रिंवावासरंतथा ४०४

युरूपनद्यास्तीरसमानेपीवरेचइदंरम्यंजघनमित्याकारेणभासेतेइत्यर्थः स्फिक्शब्दःस्त्रीलिंगः ४०० भगंदरेतिस्फुटम् ४०१ एवमूर्वादिकाविति । ऊरूआदीऊर्ध्वदेशतयाघटकौययोस्तौतथा पादशब्देनात्रऊरुप्रभृतिर्नखाग्रपर्यंतोऽपरकायोविवक्षितः ४०२ नकेवलंकामोवायुसखतयापुंगर्भचालकत्वेनपुंमात्रेविविधविकारहेतुःकिंतुपुंगर्भगाधारीकरिष्यमाणायाःस्त्रियोपीत्याह पुरुषस्येति । अमृततांअमृतवत्प्रियताम् ४०३ कामोदोषःऔत्सर्गिककार्यप्रतिबंधकत्वात्विपरीतकार्यारंभकत्वाच्च यत्रयत्रैतद्द्वेत्वन्यतरत्तत्रदोषत्वं यथापित्तेशंखश्वेतिमभानप्रतिबंधके यथावादग्धवेत्रबीजे कदलीजनकेइत्यनुमानमभिप्रेत्यपूर्वंमुखादौचंद्रादिभ्रमजनकत्वप्रदर्शनेनांत्यहेतोरुपपादितत्वादाद्यहेतुंस्पष्टीकुर्वन्सर्वप्रमाकरणशक्तिप्रतिबंधंप्रदर्शयन्नाह एवंकामाग्निजइति । एवमुक्तविधयाविपरीतज्ञानजननेनकामाग्निजेततःप्रादुर्भूतेपित्तेपित्तवदुन्मादादिहेतौपुंगर्भेकुपितेविरुद्धकार्यमारभमाणेसतियोग्यकार्यप्रतिबंधोपिदृश्यतइतिशेषः यतःप्रमाणैर्धर्मादिज्ञानेजननीयेपितदानजन्यतइत्याह वेत्तीत्यादि ४०४

आत्मानमिति पूर्वार्द्धं पूर्वान्वयि । सुहृत्प्रत्युपकारानपेक्षः मित्रं स्नेहवान् स्पष्टदोषेष्वपिनार्थवयवेषु दोषादर्शनाच्चक्षुरादिज्ञानेंद्रियशक्तिप्रतिबंधंदर्शयति पश्यन्नपीत्यादिना ४०५ जिघ्रन्निवेति । दुर्गंधंजिघ्रन्नपि घ्राणरोगिवन्नजिघ्रतीत्यर्थः ; रसयन्नपिरसनयाऽप्रियमाणोपिरसनंविनायथाकश्चिद्भवतितद्वद्दृश्यतेइतिशेषः स्पृशन्नपित्वग्दोषीवभवति कर्मेंद्रियवैकल्यंस्पष्टयति वक्तीत्यादिना पंडितोपिजडोयथावक्तितथावक्तीति ४०६ आदत्तेइति । कुणिर्हस्तरोगीतद्वत्संकुचितहस्तइतियावत् शेषंस्पष्टम् ४०७ उदरस्येति । पायुव्यापारप्रतिबंधोत्रद्विधा उदरस्याध्मानेमलविसर्गाकांक्षाजनकेसत्यपिनीरोगोप्ययंकामीनविसर्जयेदित्येकः । द्वितीयस्तु अथवेत्यादिनोक्तः मुंचन्नपिमलोत्सर्गंकुर्वन्नपितत्फलशरीरमलदर्शनोत्थवैराग्याभावान्नमुंचतीवेति ४०८ बलैश्वर्यप्रभुत्वानांप्रतिबंधंदर्शयति सप्राणइति । सप्राणोबलवानपिनष्टबलोभवति भूतिरैश्वर्यंसंपदितियावत् तद्वानपिदरिद्रइवेति । प्रभुश्चेत्यादिस्पष्टम् । उदाहरणमपिप्रसिद्धं ४०९ अंतःकरणचतुष्टयव्यापारप्रतिबंधंस्फुटयति बुद्धिमानपीति ४१० फलितमाह एवमिति । शोच्यतमांशोचितुंपश्चात्तापगोचरीकर्तुंयोग्यां अतएवसद्भिःसुधीभिर्विगर्हिताम् ४११ नन्वेवं

आत्मानंचपरंचैवसुहृन्मित्रादिकंतथा ॥ पश्यन्नप्यंधवत्सस्यात्शृण्वन्सबधिरोपमः ४०५ जिघ्रन्निवघ्राणदोषीरसयन्रसनांविना ॥ त्वग्दोषीवस्पृशन्वक्तिपंडितोपिजडोयथा ४०६ आदत्तेकुणिवत्सर्वंपाणिमानपिकामभृत् ॥ पादयोरप्यवैकल्येपंगुवद्यातिसर्वतः ४०७ उदरस्याप्यथाध्मानेपायुनानविसर्जयेत् ॥ नीरोगोप्यथवाक्वापिमुंचन्नपिनमुंचति ४०८ सप्राणोपिमृतप्राणोदरिद्रइवभूतिमान् ॥ प्रभुश्चभृत्यवद्यातिकामग्रहसमावृतः ४०९ बुद्धिमानपिदुर्बुद्धिःसमनानिर्मनाइव ॥ निरहंकारवद्यातिसाहंकारस्वरूपवान् ॥ अचित्तइवचित्तेस्मिन्स्थितेकामीप्रजायते ४१० एवंशोच्यतमामेतामवस्थांसद्भिर्गर्हिताम् ॥ प्रयातिगर्भधृक्कामीकामज्वरवशोनरः ४११ सतदाललनांनेत्रैःपिबत्यविरलंसदा ॥ कर्णाभ्यामपितामेवशृणोत्येकाग्रमानसः ४१२ जिघ्रत्येतामयंकामीघ्राणेनाकुलितेंद्रियः ॥ आस्वादयत्यमुष्याःसरसंरसनयामुहुः ४१३ स्पृशत्येनांसर्वगात्रैःस्पर्शेनेनादृतोहिसः ॥ वक्तिचैतांसुखकरींवचनेनसकामभृत् ४१४ आदत्तेचतथैवैनांहस्ताभ्यामादृतोमुहुः ॥ गच्छत्येनामयंकामीपद्भ्यांचदेवगुरूपमाम् ४१५ प्रवर्ततेत्वयंकामीविसर्जयितुमप्यमूम् ॥ पायुनाकिंत्वशक्यत्वात्कर्मणोस्मान्निवर्तते ४१६ मनसापिस्मरत्येषललनांनिजदेववत् ॥ धियापिप्रमिणोत्येनामात्मानमिवयोगभृत् ४१७ चिंतयत्येषललनांकामीविष्णुमहर्निशम् ॥ योगारुरुक्षुर्यद्वत्सविशुद्धधिषणोनरः ४१८ आत्मानमपितामेवमनुतेकामदीपनात् ॥ यतोनयाभर्त्सितोपितामेवबहुमन्यते ४१९

कामेनइतरत्रसर्वेंद्रियव्यापारप्रतिबंधःकिमर्थंक्रियतेइतिचेच्छृणु महामोहोहिप्रत्यगात्मानंमोहनिगडैर्बध्वास्वयंराज्यंचिकीर्षतितेनचविवेकाद्बिभ्यताकामःप्रधानमंत्रित्वेऽभिषिक्तःसचप्रभुंमहामोहमाश्वासयन्निवेदंनिवेदयति श्रीमद्भिःकुतस्त्रस्यतेयत्रविवेकाशासपुरुषोमयाबीभत्सेपिनारीदेहेसहेंद्रियैःसकलैःप्रवणःक्रियतेइतियत्प्रतिज्ञातंतत्परिपूरणायेति एतदभिप्रायेणकामिनःसर्वेंद्रियव्यापारंकामिनीसंज्ञकेसंघातेदर्शयति सतदेत्याद्यष्टभिः । पिबतिपेयदुग्धादिवच्चक्षुर्द्वारांतःप्रवेशयतीवेत्यर्थः तांशृणोति तच्छब्दस्यापिसंघातांतर्भावविवक्षणादितिभावः । एवमुत्तरत्रापिबोध्यम् ४१२ जिघ्रतीति । स्फुटम् ४१३ स्पृशत्येनामिति । आदृतः आदिकर्मणिकर्त्तरिक्तः आदरंकुर्वन्नित्यर्थः । एवंज्ञानेंद्रियतत्परत्वंप्रदर्श्यकर्मेंद्रियाणांदर्शयति वक्तीत्यादिना ४१४ आदत्तइति । स्फुटम् ४१५ पायुव्यापारनिवृत्तितस्याशक्यत्वाद्दर्शयति उपहासायप्रवर्त्ततइति । वायुनेतिपूर्वार्धान्वयि अस्मात्पायुसंबंधिनः ४१६ अंतःकरणचतुष्टयव्यापारंदर्शयति मनसेति । प्रमिणोतिनिश्चिनोति ४१७ चिंतयतीति । योगारुरुक्षुर्विशुद्धधिषणश्चनरोयद्वद्विष्णुंचिंतयतितथाएषकामीललनांचिंतयतीत्यन्वयः ४१८ आत्मानमिति मनुतेऽभिमन्यते तत्रहेतुः यतइत्यादि ४१९

नन्वेवंभावेकोदोषइतिचेत्तिष्ठंतुश्रुतिस्मृत्यभियुक्तप्रसिद्धादोषालौकिकानेवतावदवधारयेत्याशयेननरस्यसतःक्रीडामृगत्वलाभइत्यादीन्नारीपारतंत्र्यप्रयुक्तान्दोषान्दर्शयितुंतदुपयुक्तान्नारीदोषान्स्पष्ट यति साप्येनमित्यादिषोडशभिः । सानारीनर्तयतिस्वाभिप्रायानुसारेणचालयति एतेननार्यानस्त्रीस्वातंत्र्यमर्हतीत्यादिनिषेधोल्लंघित्वरूपोदोषःसूचितः ४२० तमेवदोषंस्फुटयन्ननवस्थित स्वभावतांदर्शयति क्वचिदितित्रिभिः । उपचारकैः स्वार्थैकः सेवाप्रकारैरित्यर्थः कर्णबाणैःकर्णवत्प्रत्यङ्मुखशूकयुक्तबाणसमैःसुदुःसहैरत्यंतंसोढुमशक्यैरितिशेषः ४२१ देहेति । पादत्र येणैकंवाक्यं कापिएनंकामुकंकस्त्वंत्वंकोभवसिनजानेत्वरमितीरयेदितिचतुर्थपादार्थः ४२२ कुरुतेइति । स्फुटम् ४२३ पुरुषांतरेतिचतुर्भिःसाहसरूपंदोषंप्रपंचयति । कापिसुप्तंस्वकीयंप तिंनिपातयेत्घातयेदिति ४२४ एवमिति । पत्यादिभिः पतिप्रभृतिप्रयोज्यकर्तृभिः स्वानिष्टान्स्वस्यद्वेषविषयान् साध्वीतथात्वेनप्रसिद्धापि तथाचासतीनांकिमुवाच्यमितिभावः ४२५ तान्वेति । तान्स्वानिष्टान् अन्यैःपरपुरुषैः वाशब्देनासतीत्वंद्योत्यते स्नेहंआयताईषद्गता स्नेहस्येषद्भावंस्फुटयति क्वचिदित्यादिना ४२६ साधूनपीति । विडंबयतिमिथ्याभिशापेनोप

साप्येनंकामुकंस्वस्यक्रीडामृगसमंनरम् ॥ नर्तयत्यनिशंदीनंनरोयद्वद्विमर्कटम् ४२० क्वचिदेनंमानयतिविविधैरुपचारकैः ॥ भर्त्सयत्यपिकुत्रापिकर्णबाणैःसुदुःसहैः ४२१ देहप्राणेभ्यएतेभ्योनाथत्वमधिकोमम ॥ इतिकापिवदत्येनंकाप्येनंकस्त्वमीरयेत् २२ कुरुतेवचनंकापिकापिनैवकरोतिसा ॥ याचतेद्रविणंकापि स्वयंकापिप्रयच्छति ४२३ पुरुषांतरसंसक्ताकापिसुप्तंनिपातयेत् ॥ पतिंस्वकीयंकुत्रापिवंचयेद्वचनादिना ४२४ एवंपत्यादिभिश्चान्यान्स्वानिष्टान्पुरुषानपि ॥ घातयत्यात्मनोनारीसाध्वीत्वायतनेष्विह ४२५ तान्वान्यैर्हिबलोपेतैर्घातयेत्स्नेहमागता ॥ क्वचित्परस्यसंकेतंकृत्वान्यस्मैप्रदर्शयेत् ४२६ साधूनपिक्वचिन्नारी विडंबयतिसंसदि ॥ पितरंभ्रातरंपुत्रंब्राह्मणंवाबहुश्रुतम् ॥ अप्यल्पेहिस्वकार्येसावधूर्हंतिनसंशयः ४२७ संगेवध्याभवेद्दुःखमिहजन्मनिनिश्चितम् ॥ मृतस्यन रकस्तद्वत्कोस्याःसंगंसमाचरेत् ४२८ आसक्तावाविरक्तावावधूर्हंतिनसंशयः ॥ आसक्तायदिसास्वस्यतदान्यस्त्रीगमादिना ॥ कुपिताविषदानादिप्रयोगेननिपात येत् ४२९ यदान्यस्यतदास्वस्यगात्रादिद्वारतोनरम् ॥ निपातयतिसानारीलोकद्वयभयंकरी ४३० विरक्ताहियदास्वस्यसैनंकामज्वरातुरम् ॥ एकांतेविविधै र्वाक्यैर्भर्त्सयित्वानचाव्रजेत् ४३१ कार्यांतरंसमुत्पाद्यव्रजेद्वापुरुषांतरम् ॥ एनंकामातुरंत्यक्त्वाशयनेस्वैरचारिणी ४३२ जानीयाद्यदिचेद्भर्ताबलवान्निशिसाहि तम् ॥ हंतिस्वयमशक्ताचेदन्यैर्वाघातयत्यपि ४३३

हास्ययोग्यान्करोतीत्यर्थः पितरमित्यादिस्फुटम् ४२७ तस्याःसंगद्वारालोकद्वयदुःखहेतुत्वेवमहान्दोषइत्याह संगतिसंगेआसक्ततारूपेसति निश्चितंप्रसिद्धं नरकःप्रसिद्धःस्त्रीभावनाप्राप्तिरूपश्च ४२८ राजप्रभृतयोविरक्ताएवघ्नंति डाकिनीतुअनुरक्तेव नारीतूभयथेतिमहान्दोषइत्याह आसक्तेति । तत्राद्यंस्फुटयति आसक्तायदीति । यदिसानारीआसक्तास्वस्यस्वकीयाभवतितदान्यस्त्रीगम नादिनाकुपितासतीविषादिनामारयेदिति ४२९ यदान्यस्येति । यदान्यस्यपरकीयाआसक्तास्यादित्यनुषंगः तदासास्वकीयसंबंधिद्वारेणहंतीति प्रसिद्धमेतत् व्यभिचारिणीमातृप्रभृतयो यतंतेपरपुरुषंहंतुमिति ४३० अथस्वकीयापरकीयाभेदेनविरक्तायाविविधदुःखहेतुतांस्फुटयंस्तत्राद्यायाश्चरितमाह विरक्ताहीतित्रिभिः । सास्वकत्वेसतिविरक्ता ४३१ कार्यांतरमिति । स मुत्पाद्यदर्शयित्वा ४३२ जानीयादिति । जानीयात्परपुरुषगमनमितिशेषः सातंस्वयंहंति अशक्ताचेदन्यैर्घातयतीत्यन्वयः ४३३

तीन्स्त्रियाइत्यादिभवतीत्यंतंव्याचष्टे योनावित्यादिसप्तभिः । योनीगतएषजन्तुर्नानाविधाःसहस्रशोवस्थाःप्राप्नोतीत्यन्वयः कीदृशीरवस्थाःदुःखशोकानासहस्रैःप्रत्येकंव्याप्ताइतिशेषः वीप्सायां द्विरुक्तम् पुनःकीदृशीःगर्भोपनिषदिप्रोक्ताःगर्भोपनिषदुक्तासुअवस्थासुकाश्चित्पुंगर्भभावेवर्णिताः स्त्रीगर्भांतर्भोग्यास्तुइतोग्रेनवमश्लोकमारभ्यवक्ष्यंते शुक्रशोणितसंयोगानंतरंअग्निपित्तवाय्वाशयक्रमे णहृदयदेशप्राप्तिपर्यंतभवास्तुइहैवानुसंधेयाः एतेनमातृशरीरतादात्म्यापत्त्यास्तनादिवत्तांगर्भोनहिनस्तीतिसूचितम् ४५९ " पतिर्जायांप्रविशतिगर्भोभूत्वासमातरम् । तस्यांपुनर्नवोभूत्वादशमेमा सिजायते" इतिमंत्रमर्थतःपठन्जायायाःपतिपाल्यत्वंभावयितव्यापदार्थमाह यस्मादिति । यस्मादेषगर्भभृत्गर्भाधायकःपुमान्वधूगर्भरूपेणवधूगर्भंप्रविशतिअतएवहेतोरियंजायारक्षणीयायतआत्मन आत्माभिमानविषयशरीरसारस्यपुमंशस्यरक्षिकेति ४६० केःसाधनैरक्षणीयाऽतस्तानिदर्शयति वस्त्रैरितिद्वाभ्यां । वसुभिर्धनैर्दोहदाकांक्षितैः " दोहदोगर्भलक्षणेऽभिलाषे " इतिहैमः । तथाचदो हृदेनचतुर्थमासादौहृदयदेशगतगर्भप्रयुक्तगर्भिणीसंबंध्यभिलाषेणविषयीकृतैःपदार्थैरित्यर्थः तददानेहिदोषउक्तःसुश्रुते " येषुयेष्विन्द्रियार्थेषुदौहृदेचावमानना । प्रजायेतसुतस्यार्तिस्तस्मिंस्तस्मिं स्तथेन्द्रिये" इति । दोहृदेउक्तविधयाद्विहृदयगर्भिणीच्छायां द्विहृदयशब्दस्यदुहृद्भावःपृषोदरादित्वादिति शेषंस्फुटम् ४६१ स्नानेति । उपरमोनिवृत्तिर्दुष्टस्यापथ्यस्य ४६२ तस्याःपालनंन्याय्य

योनौनानाविधावस्थादुःखशोकसहस्रशः ॥ गर्भोपनिषदिप्रोक्ताःप्राप्नोत्येषसहस्रशः ४५९ यस्मादेषवधूगर्भेगर्भरूपेणगर्भभृत् ॥ प्रविशत्यतएवेयंरक्षणीयात्मर क्षिका ४६० वस्त्रैर्धान्यैश्चवसुभिर्दोहदाकांक्षितैरपि ॥ प्रदानेनतथान्यैश्चयानैर्नानाविधैस्तथा ४६१ स्नानशय्यासनाद्यैश्चव्यापारोपरमैरपि ॥ औषधाद्यैश्चसे वातोदुष्टस्यचविवर्जनैः ४६२ अपिलोकेनयोदृष्टउपकारकरेजने ॥ उपकारकरोदृष्टोदुर्जनोपिचवैजनः ४६३ इयंचोपकरोत्यस्यगर्भिणोगर्भधारणात् ॥ यतो स्यदुःखदंरंतःस्वात्मन्येवानयाधृतम् ४६४ अप्यस्यजननीजायागर्भिणस्तत्प्रवेशतः ॥ यस्मात्पुनर्नवोभूत्वातस्यामेषप्रजायते ४६५ निषेककालमारभ्य स्यानैनैकतांगतम् ॥ स्वदेहवद्धात्येषायावद्योनिविनिर्गमम् ४६६ योनिप्रवेशेजठरेकृमिविष्ठादिदूषिते ॥ अनुभूयातिदुःखानियोनिद्वाराद्बहिर्व्रजेत् ४६७ एतद्दुःखभयात्सर्वोब्रह्मज्ञानंसमिच्छति ॥ करोतिधर्ममव्यग्रःशास्त्रोक्तंसर्वदापुमान् ४६८ दुःखंहिमरणेनृणांनरकानुभवेतथा ॥ प्रसिद्धंतत्कोटिकोटिगुणितंयो निर्यंत्रके ४६९ निर्गमश्चप्रवेशश्चमरणार्तिशतैःसमः ॥ योनौमातुदरेवासोनरकावासतोधिकः ४७० तत्रदुःखान्यनंतानिप्राप्यंतेदेहधारिभिः ॥ उक्तान्यपि हियान्यत्रसंमोहंजनयंतिनः ४७१

मर्पान्याह अपिलोकइति । लोकेऽयंनयोन्यायःमर्यादेतियावत् दृष्टः कोसौनयः यद्दुर्जनोपिजनःउपकारकरेजनेउपकारकरोदृष्टइति ४६३ तंनयंप्रकृतेयोजयति इयमिति । इयंजाया अस्यगर्भिणः रंतोगर्भवतः ४६४ तमेवमंत्रार्थंहेतुतयास्मारयति अप्यस्येति । अस्यगर्भिणीजायाजननीभवतीत्यन्वयः तत्रहेतुस्तत्प्रवेशतइत्यादि ४६५ तंस्त्रीत्यादिविभर्तीत्यंतंव्याचष्टे निषेकेति । निषेकोगर्भा धानं आर्तवंरजःतेनैकतांतादात्म्यंगतंपुमंशमितिशेषः दधातिधारयतिपोषयतिचेत्यर्थः ४६६ श्रुतोस्त्रीकर्तृकगर्भधारणोक्त्यासूचितानिदुःखानिवक्तुमुपक्रमते योनिप्रवेशइति । योनिःप्रवेशस्था नद्वारंयस्यतत्तथातस्मिन्जठरेतानिदुःखानिपापपर्यंत्याजनन्याअन्येनवादुर्निवार्याणीतिभावः ४६७ तद्दुःखनिवृत्तौकउपायइतिचेत्ब्रह्मज्ञानमेवेत्याह एतदिति । एतद्दुःखंगर्भदुःखं सर्वोमुमुक्षुः ब्रह्मज्ञानाधिकारलब्ध्यैचधर्मंकरोतीत्याह करोतीति । अव्यग्रोऽनलसः ४६८ किंविधंगर्भदुःखमतआह दुःखमिति । प्रसिद्धिमितिपूर्वान्वयि ४६९ निर्गमश्चेति । तत्रेतिशेषः आर्तिःपीडा ४७० तत्रेति । तत्रमातुरुदरे अत्रआधानकालेऽपिसंमोहंविकलताम् ४७१

गर्भदुःखोत्कर्षं संभावयति विष्ठेति । विष्ठामूत्रगृहेजनन्युदरेवासात्यद्दुःखंतदिदंदुःसहमितितृतीयेनान्वयः तस्यदृष्टगृहसाम्योपपादकानिविशेषणानिदश पूयासृग्भ्यांचर्चितंलिप्तंअंतरंमध्यंयस्यत स्मिन् नानावर्णैःकफादिधातुमयैश्चित्रैराढ्ये मांसमयीभित्तिःकुड्यंयस्यतस्मिन् अतएवसुदुःसहे ४७२ कृमीति । उदरकृमयएवसर्पास्तेषांशतैराकीर्णे व्याधयएववृश्चिकास्तैःपूरिते मातृप्राण महावायुनाविनिःसारितानिचालितानिबंधनानिनाडीरज्जवोयस्यतस्मिन् तृणागारतुल्येइतियावत् ४७३ अंतरिति । अंतर्वह्निर्जाठरोयस्यातएवार्धदग्धेक्षुत्कालेउदरदाहात् संकीर्णःसंकुचितः स्वस्यगर्भस्यावकाशोयत्रतस्मिन् कीदृशंदुःखं विवेकिनांश्रवणमननशालिनांप्रसिद्धंनिश्चयगोचरः विशेषतस्तुयोग्यनुभवगम्यंतदित्याह स्मर्यतेइति । जातीःपूर्वजन्मानिस्मरंतीतिजातिस्म रायोगिनस्तैरिति ४७४ अस्माभिस्तुवर्णयितुमशक्यानिगर्भदुःखानीत्याह गर्भेति । दिङ्मात्रमुपलक्षणमात्रम् ४७५ गर्भोपनिषदेति । स्फुटम् ४७६ तत्रप्राधान्येनकानिचिद्दुःखसाधनान्य नुवदति अत्रेति । अत्रगर्भे अज्ञानंमूर्छा पूर्वंप्रथमं अष्टौमासानितियावत् कीदृगज्ञानं सर्वाणिदुःखानिकरेयस्यहस्तामलकवत्स्पष्टदुःखं मूर्छादिदुःखावधिः । क्षुदिति । स्वस्यमातुश्चक्षुत्पिपासा भ्यांजातःसंतापः अनीश्वरत्वमसामर्थ्यम् ४७७ अनेकेति । भवोजन्म नवममासेस्मृत्वाहिएवंवदति ' आहाराविविधाभुक्ताःपीताश्चविविधाःस्तनाः । मातरोविविधादृष्टाःपितरःसुहृदस्तथा ।

विष्ठामूत्रगृहेवासात्पूयाऽसृक्चर्चितांतरे ॥ कफपित्तादिचित्राढ्येमांसभित्तौसुदुःसहे ४७२ कृमिसर्पशताकीर्णेव्याधिवृश्चिकपूरिते ॥ मातृप्राणमहावातविनिः सारितबंधने ४७३ अंतर्वन्ह्यावर्धदग्धेसंकीर्णस्वावकाशके ॥ सुदुःसहमिदंदुःखंप्रसिद्धंहिविवेकिनाम् ॥ स्मर्यतेपिचकैश्चिद्धिनरैर्जातिस्मरैरिह ४७४ गर्भदुः खान्यनंतानिनशक्यानिकथंचन ॥ वक्तुंजन्मशतेनापिदिङ्मात्रमुदितंतव ४७५ गर्भोपनिषदाप्येवंदिङ्मात्रंतस्यकथ्यते ॥ साकल्येनचकोनामवक्तुमीष्टेकथं चन ४७६ अत्राज्ञानंभवेत्पूर्वंसर्वदुःखकरंनृणाम् ॥ क्षुत्पिपासोत्थसंतापोनीश्वरत्वंचदेहके ४७७ अनेकभवदुःखानांस्मृतिश्चातीवदुःसहा ॥ जनन्याअपिसं बाधःसर्वपापकरोहिसः ४७८ एवंनानाविधैर्दुःखैःपरिभूतंप्रभंजनः ॥ कलिलादिक्रमेणैवसंपन्नावयवंनरम् ४७९ त्यक्तगर्भासनंकालेजरायुपटवर्जितम् ॥ इत श्चेतश्चधावंतंमंडूकसदृशंशिशुम् ४८० पाणिभ्यामपिपादाभ्यांगात्रस्यचलनेनच ॥ जननीजठरस्यांतर्भेदायेवसमुत्थितम् ४८१ कुक्षौकदाचिद्धावंतंकदाचि द्धृदयेपिच ॥ जनन्यायोनियंत्रेपिमर्कटोपममर्भकम् ४८२

यदियोन्याःप्रमुच्येयंतत्प्रपद्येमहेश्वरम् ' इति । जनन्याइति संबाधःपीडावक्ष्यमाणा ४७८ अथजननीदुःखंजननकालेजायमानजंतुदुःखं चस्पुटयितुंसोग्रएवेत्यादिवाक्यगतजन्मपदार्थमाह एवमित्यादिसप्तभिः । एवंनानाविधैर्दुःखैःपरिभूतमेनंप्रभंजनोवहिर्द्वारेनयतीतिपष्ठेनान्वयः । कलिलादीति । ' एकरात्रेणकलिलंसप्तरात्रेणबुद्बुदमर्धमासेनपिंडमासेनकाठिन्यंमासद्वयेनशिरस्तृती यमासेनपादप्रदेशश्चतुर्थेनांगुलीजठरकटिप्रदेशाःपंचमेनपृष्ठवंशः षष्ठेनमुखनासिकाक्षिश्रोत्राणि सप्तमेनजीवसंयोगोअष्टमेनसर्वांगपरिपूर्तिर्नवमेनज्ञानपूर्णतयापूर्वजातिस्मृतिः'इतिगर्भोपनिषदुक्तक्रम कोरेणसंपन्नाःपरिपूर्णाअवयवायस्यतमिति ४७९ त्यक्तेति । त्यक्तंगर्भासनंकुंडलीकृतपृष्ठग्रीवत्वेसतिसंकुचितपाणिपादत्वेचसतिकुक्षिन्यस्तशिरस्कत्वरूपंयेनसतथातम् कालेप्रसूतिसन्निधि कालेजरायुरूपेणपटेनवर्जितंत्यक्तमिति ४८० पाणिभ्यामिति । भेदायेतिभाववचनाश्चेतितुमर्थेघञ् तथाचपाण्यादिभिर्जननीजठरभेदायजननीजठरंभेत्तुमिवांतःसमुत्थितमुद्यतमित्यर्थः ४८१ कुक्षाविति । पुनःकीदृशं जननीकुक्षिहृदययोनियंत्रेपुअनियतभ्रमणंकपिसममर्भकंस्वल्पशरीरम् ४८२

विरक्तपरकीयाचरितमाह परस्यत्विति । स्फुटम् ४३४ दृष्टदोषानुपसंहरति एवमिति । स्फुटम् ४३५ अनवस्थितस्वभावत्वादिभिर्दोषैःकामुकंप्रतिदुःखहेतुताननार्याएवकिंतुकामुकींप्रतिनरस्या पीत्याह यद्वदिति । एतादृशदोषशालिन्यानार्याअपिदुःखहेतुत्वेननारीत्वमेतावद्दोषशालित्वंवाप्रयोजकमकामितायास्तथादुःखहेतुताऽदर्शनात् तादृशनारीत्वरहितपुरुषस्यापिसकामनारींप्रतिदुःख दत्वदर्शनाच्च तस्मादनन्यथासिद्धान्वयव्यतिरेकशालित्वात्तद्धेतोरितिन्यायाच्चकामएवदुःखहेतुरितिभावः ४३६ उक्तव्याप्तिदर्शनेनसंभाविताार्थानिश्रुतियुक्त्यभियुक्तवाक्यानिस्मारयति ततइति । तथाचश्रुतिः 'काममयएवायंपुरुषः' इत्याद्या स्मृतिरपि 'कामएषक्रोधएषः' इत्याद्या 'कामंकिंकरतांप्राप्यजनोनोकस्यकिंकरः । एकंकामंपरित्यज्यजनोसौकस्यकिंकरः' इत्यभियुक्तवच नंच । फलितमाह एवमिति ४३७ ननुकथंकामोहेयइत्याशंक्यतन्मूलनिकृंतनेनेतिवक्तुंतन्मूलपरंपरांतन्निवृत्त्युपायंचाह संकल्पादिति । संकल्पोरमणीयत्वाध्यासः गुणबोधोरमणीयत्वप्रयोजकगुणा ध्यासः दोषाणामुक्तलक्षणानाम् ४३८ दोषावलोकस्यगुणबोधविरोधित्वंहेयत्यागपूर्वकंवस्तुयाथात्म्यदर्शनेनगुणबोधमूलमोहविघटकतयादर्शयति दोषाणामिति । दोषाणामवलोकेनमोहोविनश्य तीत्यन्वयः मोहस्यावरणशक्तिमाह जगदांध्यकृदिति विक्षेपशक्तिंदर्शयति अतत्त्वइत्यादि । अतस्मिंस्तद्धर्महीनेचतत्तद्धर्माध्यासहेतुरित्यर्थः पुनःकीदृशोमोहः तृष्णायाःविस्तृतकामस्यविटपिनो

**परस्यतुविरक्ताचेत्सद्योमरणकारणम् ॥ एकांतेमांयाचितवानियुक्तामारयेन्नरम् ४३४ एवंनारीपुदोषाहिसंतिस्वासुपरासुच ॥ अनंताह्यनुभूयंतेकामिभिस्तेह्य हर्निशम् ४३५ यद्वन्नारीदुःखकरीकामिनःपुरुषस्यहि ॥ नार्याअपिचकामिन्याःपुमान्दुःखकरस्तथा ४३६ ततोदुःखकरःकामोननारीननरोपिच ॥ एवंवि ज्ञायमतिमान्कामंशत्रुमिमंत्यजेत् ४३७ संकल्पाज्जायतेकामःसंकल्पोगुणबोधनात् ॥ गुणबोधस्यनाशःस्याद्दोषाणामवलोकनात् ४३८ दोषाणामवलोकेन मोहोयंजगदांध्यकृत् ॥ अतत्त्वेतत्त्वधीहेतुस्तृष्णाबीजंविनश्यति ४३९ तस्मिन्नष्टेस्वयंकामोनिर्मूलइवपादपः ॥ विनश्यतिक्षणादस्मिन्नष्टेक्रोधोपिनश्यति ॥ ४४० इच्छाविघातेसत्येषक्रोधोद्वेषाभिधोनृणाम् ॥ जायतेनिच्छतःकेनक्रोधउत्पद्यतेपुनः ४४१ विवेकवह्निनादग्धेकामक्रोधेसमूलके ॥ संसारेभगवानेषआनं दात्माप्रसीदति ४४२ कामजानामितेमूलंसंकल्पात्किलजायसे ॥ संकल्पेतुमयात्यक्तेकथंत्वंमयिजायसे ४४३ इतिविज्ञानशून्योयंगर्भोकामग्रहाकुलः ॥ प्राचाग्राव्णाहिनेवात्रदष्टोवेत्तिनकिंचन ४४४**

बीजसमानः एतेनकामतरोर्गुणबोधोंकुरःसंकल्पोमूलमज्ञातआत्माचविवर्तोपादानंक्षेत्रमितिसूचितम् ४३९ ततःकिमतआह । तस्मिन्नमोहेनष्टेकामःस्वयंपृथङ्निवृत्तिसाधनयत्नानपेक्षोनश्यतिअंकुर द्वारामूलप्रयोजकबीजाभावेपादपइवेतिरागात्मककामनिवृत्तौद्वेषनिवृत्तिःसहैवभवतिनांतरीयकत्वादित्याह अस्मिन्नित्यादि ४४० क्रोधनाशस्यकामनाशनियतत्वेउपपत्तिंदर्शयति इच्छाविघातइ ति । इच्छाकामएवकेनचिद्विघातेप्रतिरोधेकृतेसतिक्रोधोजायतेक्रोधरूपेणपरिणमतइत्यर्थः अनिच्छतइच्छामकुर्वतः ४४१ नन्वेवंकामेजितेकिंभवतीत्यतआह विवेकेति । कामेतिसमाहारद्वंद्वः सं सारेइहैवशरीरेएषभगवानात्मामहावाक्यार्थः प्रसीदतिप्रादुर्भवतिइति एतमर्थंश्रुतिरपिदर्शयति 'यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः । अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते' इति ४४२ अय मेवकामहानोपायइत्यत्रस्मृतिवाक्यंपठति कामेति । उक्तोर्थः ४४३ इतिविज्ञानेति । इतिशब्देनपूर्वोक्ताकामस्यानर्थमूलतातन्निवृत्त्युपायश्चपरामृश्यते अयंपूर्वोक्तोगर्भोरेतोमयगर्भयुतः विज्ञान शून्यत्वेहेतुःकामग्रहेति । विज्ञानाभावेहेत्वंतरेणाप्याह प्राचेति । बृहदारण्यकेऽष्टमाध्यायेचतुर्थब्राह्मणेवाजपेयदृष्टिर्ग्राम्यधर्मेविहिता तत्रचनारीरहस्यांगेसोमाभिषवणफलकभावनापुरुषरहस्यांगेचोप लभावनोक्तातदभिप्रायेणप्राचेतिविशेषणं तथाचप्राचाग्राव्णासोमाभिषवोपलदृष्टिविपर्ययेणमेहनेनअहिनेवसर्पसमानेन दष्टोदंशफलंव्यामोहंनीतःसन्किंचननवेत्तिनजानातीत्यर्थः ४४४

तद्यदेत्यादिप्रथमार्धमित्यंतंव्याचष्टे कामग्रहेतिचतुर्दशभिः । उपस्थाहेरितिकर्तरिषष्ठी उपस्थाहिनाभक्षणात्तद्दंशनादित्यर्थः मोक्तुंत्यक्तुं ४४५ आत्मनइति । आत्मनःशरीरस्यसारमतएवा त्मानंरेतोरूपंसर्वांगेभ्यःपृथक्कृतंयदावोढुंनशक्तोभवतितदानारीयोनौक्षिपेदिति ४४६ प्राचोग्राव्णोविनिर्गत्येति । अस्यनिषेक्तुःआत्मस्वरूपकं स्वल्पार्थेकः स्वल्पंस्वरूपंतेजोरेतोवध्वाःस्त्रि याःयोनिमायातीत्यन्वयः ४४७ तस्यनिर्गमंस्त्रीगर्भनिर्गमवन्मातुःसुखत्वाभिमतहेतुतयादृष्टांताभ्यामाह यथेतिद्वाभ्यां । स्पष्टम् ४४८ ग्रहाविष्टइति । ग्रहःपिशाचादिः ४४९ वस्तुत स्तुरेतोनिर्गमेमहतीहानिरितिदर्शयति । अजीर्णमपरिपक्वमशनंभुक्तान्नंप्राणांतंयथाभवतितथाऽऽपदंकृत्वानिर्गच्छतितथारेतोनिर्गच्छति अजीर्णान्नरेतसोर्निर्गच्छतोःसाधर्म्यमाह बलेत्यादि ४५० दृष्टांतांतरमाह अतीसारइति । स्फुटम् ४५१ रेतोनिर्गमेहानिंस्फुटयंस्तद्व्यतिरेकरूपब्रह्मचर्यफलंदर्शयति अस्येति । पुंसामितिकर्तरिषष्ठी अस्यरेतसःअवस्थानतोनिरोधात् सप्त मधातुरूपरेतसओजःसंज्ञाष्टमीदशाभवति ओजोनामपीतवर्णंहृद्गतंजीवनिवासभूतंवासिष्ठादौप्रसिद्धम् । तत्फलमाह ययेत्यादि ४५२ फलांतराण्याह अस्येति । अस्यरेतसःसम्यक्स्था

कामग्रहप्रमावेशादुपस्थाहेश्चभक्षणात् ॥ रेतोगर्भेणखिन्नःसन्गर्भंतंमोक्तुमिच्छति ४४५ आत्मनःसारमात्मानंसर्वांगेभ्यःपृथक्कृतम् ॥ वोढुंशक्तोयदा नायंनारीयोनौतदाक्षिपेत् ४४६ प्राचोग्राव्णोविनिर्गत्यतेजोस्यात्मस्वरूपकम् ॥ निषेक्तुर्योनिमायातिवध्वास्तद्ग्राम्यधर्मतः ४४७ यथाभारातुरो जंतुस्त्यक्तेभारेसुखीभवेत् ॥ गर्भसंत्यागतोगर्भीतद्वत्सुखमवाप्नुयात् ४४८ ग्रहाविष्टोयथाजंतुर्ग्रहनिर्गमतःसुखम् ॥ अवाप्नोतितथागर्भीरेतसोनिर्गमा त्सुखम् ४४९ अजीर्णमशनंयद्वत्कृत्वाप्राणांतमापदम् ॥ निर्गच्छतितथारेतोबलक्षयकरंनृणाम् ४५० अतीसारोयथानृणांसर्वतेजोपहारकः ॥ रेतसोनिर्गम स्तद्वद्बलवीर्यापहारकः ४५१ अस्यावस्थानतःपुंसामोजोनामाष्टमीदशा ॥ भवत्ययंययाजंतुस्तेजस्वीसन्नाहिजिवति ४५२ अस्यसंस्थापनेनृणां जरावैरूप्यकारिणी ॥ मृत्युश्चनभवेत्शीघ्रंबलंचेहननश्यति ४५३ परलोकेब्रह्मलोकअधस्ताद्ब्रह्मचारिणाम् ॥ कीर्तिश्चविपुलालोकद्वयंतेषांभवेत्सदा ४५४ अस्यबंधनतोयोगाःखेचरत्वंवदंतिहि ॥ ऐश्वर्यंचाष्टधानृणामणिमादिकमेवहि ४५५ यथेक्षुदंडोनिःसारःपीडितस्तद्वदेवहि ॥ पुमान्भवति निःसारोवधूबाहुनिपीडनात् ४५६ आत्मनश्चोद्धृतंतेजस्तस्यामेषनिषिंचति ॥ आयुर्बलकरंमूढोमोहितोमाययास्वया ४५७ एवमस्यनिषिक्तस्यरे तसोयोनिमंडले ॥ नृगर्भनिर्गमाख्यंतत्प्रथमंजन्मगद्यते ४५८

पनेजराभावोमृत्युपरिभवोबलोत्कर्षश्चफलानिबोध्यानि ४५३ ' यएतंब्रह्मचर्येणानुविंदतितेषामेवैषब्रह्मलोकः ' इतिश्रुतिमनुरुध्याह परलोकइति । परलोकेब्रह्मचारिणांब्रह्मलोकेभवतिअधस्ता न्मानुषेलोकेविपुलाकीर्तिश्चभवतितेनतेषांब्रह्मचारिणांलोकद्वयंसिद्धंभवेदिति ४५४ अस्येति । अस्यरेतसोबंधनतोनिरोधविशेषात्नृणांमध्येयोगाः अर्शआद्यच् योगविदःखेचरत्वमाकाशग मनक्षमत्त्वंप्राप्नुवंतितथाऽऽणिमाद्यैश्वर्यंव्रजन्तीति ४५५ एवंव्यतिरेकद्वारासूचितांरेतोविसर्गेहानिंसाक्षादप्याह यथेक्षुदण्डइति । यथापीडितइक्षुदंडोनिस्सारोभवतितद्वत्पुमान्वधूबाहुनिपीड नान्निःसारोभवतीत्यन्वयः ४५६ कथमित्यतआह आत्मनइति आत्मनःउद्धृतंप्रगल्भं उद्धृतमितिपाठेअंगादंगान्निःसृतं आयुर्बलकरमपितेजएषमूढोविपरीतदर्शीवस्यांवध्वांनिषिंचतित्य जति यतःस्वाश्रितमाययामोहितआवृतइति ४५७ एवमिति । रेतसःतत्सांपिंडितजीवस्य वक्ष्यमाणजन्मद्वयापेक्षयाप्रथमंजन्मबोध्यमिति ४५८

स्वशरीरइति । पुनःकीदृशंस्वशरीरेस्वशरीरमध्येविनिःक्षिप्यकृतमधोदेशेमस्तकंयेनसतथातं विनिःक्षेपकर्मतापिमस्तकस्यैव जननीमित्यादिस्फुटम् ४८३ विक्रोशंतमिति । सर्पेणग्रस्तमंडूकव त्कृशंविक्रोशंतम् द्वाराद्बहिर्बहिर्द्वारं नयतेर्द्विकर्मकत्वम् ४८४ क्रकचेति । क्रकचःकाष्ठविदारणसाधनम् स्फुटम् ४८५ जननीसंबाधंस्पष्टयति व्रणइत्यादिदशभिः । प्रकुपितेपरिपाकाति शयंगतेव्रणेसकीटेकीटव्याप्तेसतियादृशीव्यथाभवति ततइत्यादिस्फुटम् ४८६ गर्भधारणदुःखेदृष्टांतमाह यद्वदिति । जठरस्यांतर्व्रणे सर्पेस्थितेसतियद्वद्दुःखमित्यन्वयः ४८७ व्यतिरेकेणापित दाह पूतीति । पूयपूरिततयादुर्गंधिव्रणस्यविभेदेनविदारणेनततःसर्पादेःकीटस्यनिर्गमेयत्सुखंदुःखाभावोभवतितन्नारीणांगर्भमोक्षेपीति ४८८ दृष्टांतांतरमाह मलेति ४८९ तदेवव्यतिरेकेणाह सुखमिति । तयोर्मलमूत्रयोः ४९० अभूतोपमयागर्भप्रतिबंधदुःखंसंभावयति विंशतीतिद्वाभ्याम् । श्वसन्श्वासयुतः परिणाहोविशालता ४९१ धारणंप्रतिबंधः वस्यतादृशक्रमः ४९२ जनन्याःप्रस

स्वशरीरेविनिःक्षिप्यकृताधोदेशमस्तकम् ॥ जननींबहुधाक्लेशैःक्लेशयंतंजुगुप्सितम् ४८३ विक्रोशंतंचसर्पेणग्रस्तमंडूकवत्कृशम् ॥ बहिर्द्वारंनयत्येनंभुजगोमूष कंयथा ४८४ क्रकचाग्रपहस्रेभ्यःकर्कशाद्योनियंत्रकात् ॥ स्वल्पच्छिद्राद्विनिष्क्रम्यभूमौपततिकीटवत् ४८५ व्रणेभृशंप्रकुपितेसकीटेयादृशीव्यथा ॥ ततोधि कतमास्त्रीणांयोनियंत्रेगतेर्भके ४८६ यद्वदंतःस्थितेसर्पेजठरस्यव्रणेभवेत् ॥ दुःखंतद्वद्गर्भिणीनांगर्भधारणतोभवेत् ४८७ पूतिव्रणविभेदेनसर्पादेर्निर्गमेहियत् ॥ सुखंभवतिनारीणांगर्भमोक्षेपितत्सुखम् ४८८ मलमूत्रनिरोधेनदुःखंयावत्तृणांभवेत् ॥ ततोधिकतमंदुःखंस्त्रीणांगर्भस्यधारणे ४८९ सुखंयथाविसर्गेस्यात्तयोश्चि रनिरुद्धयोः ॥ गर्भिण्यागर्भमोक्षेपितथातज्जायतेसुखम् ४९० विंशत्यंगुलमात्रश्चेद्दीर्घःसास्थिःक्रमिःश्वसन् ॥ वितस्तिमात्रोविस्तारात्तावांश्चपरिणाहतः ९१ अस्माकंजठरेयावत्तस्यावस्थानतोभवेत् ॥ दुःखंतावद्भवेत्स्त्रीणांगर्भधारणतःसदा ४९२ विनिर्गमेपायुमार्गाद्यावदस्माकमापतेत् ॥ दुःखंतस्यभवेत्तावद्गर्भिण्या गर्भमोक्षणात् ४९३ षोडशांगुलकच्छिद्राद्वर्तुलात्क्रकचाद्यथा ॥ निर्गमेनोभवेद्दुःखंतथाजंतोश्चगर्भतः ४९४ एवमेतदनौपम्यंदुःखंजंतोःप्रजायते ॥ समात्रक स्यगर्भांतस्तद्वन्निःसरणेपिच ४९५ एवमेषविनिष्क्रांतोलोकसंततिहेतुतः ॥ गर्भात्स्वदर्शनेनैवपितुरानंददोभवेत् ४९६ तंकुमारंपिताजातमंकेवास्वस्यवाभु वि ॥ संस्थाप्यजातकर्मादिकुरुतेहृष्टमानसः ४९७ यदिदंसत्क्रियाजातंकुरुतेस्वकुमारके ॥ तत्सर्वंस्वस्यजनकःकुरुतेनात्रसंशयः ४९८

वद्दुःखमभिनयति विनिर्गमेइति । तस्यताद्दक्क्रमेरस्माकंपुरुषाणांपायुमार्गाद्विनिर्गमेयावद्दुःखमापतेत्प्रसज्येतेतावद्गर्भिण्याःप्रसवेइत्यर्थः ४९३ जायमानजंतोर्दुःखंस्फुटयति षोडशांगुलकेति । षोडशांगुलकंछिद्रंमध्यावकाशोयस्यतादृशंवर्तुलंक्रकचंयदिभवेत्तन्मध्येनचास्माकंनिर्गमोभवेत्तत्कालीनदुःखसमंजायमानस्यदुःखमिति ४९४ गर्भदुःखवर्णनमुपसंहरति एवमिति । समात्र कस्यमात्रासहितस्य गर्भांतर्गर्भमध्ये निःसरणेगर्भान्निर्गमे ४९५ सोग्रएवेत्यादिप्रतिनिर्धीयतेइत्थंतंव्याचष्टे एवमेषइति । एषगर्भस्थःपितुरात्मागर्भाद्विनिष्क्रांतःप्रादुर्भूतः किमर्थं लोक संततिहेतुतःलोकानांसंतत्यैप्रवाहाविच्छेदाय अतएवसःस्वदर्शनेनपितुरानंददोभवेदिति ४९६ तंकुमारमिति । पितातंजातंकुमारंस्वस्यांकेभुविवासंस्थाप्यसंस्कुरुतेइति ४९७ यदिदमिति । यदिदंसत्क्रियाणांसंस्काराणांजातंवृंदं श्रुतिगताग्रपदद्वयमध्येप्रथमाग्रपदसूचितंगर्भसंबंधिपंचजन्मकालवाचिद्वितीयाग्रपदोत्तराधिपदसूचितंजन्मोत्तरभावितत्सर्वंसंस्कारजातंस्वस्यैवजनकःकुरुते सं घातादात्मनःपृथग्भावाज्ज्ञानादित्युक्तम् ४९८

पुत्रेस्वपदप्रयोगेहेतुतयापतिर्जायामित्याद्युक्तमंत्रार्थंस्मारयति यस्मादिति । सएषपिताविनियोक्ष्यमाणस्यसंस्कारान्संस्कारफलंविनियोगंदर्शयन्पितृकार्यैकरत्वरूपंपितृप्रतिनिधित्वंस्पष्टयति पौत्रादिनेति । पित्राकार्याप्रजासंततिमेवसुतःपौत्रादिरूपेणतनुतेइत्यर्थः ४९९ स्वर्गस्यापीति । पुत्रःसन्मार्गवर्ती 'अयंलोकःपुत्रेणजय्यः' इतिश्रुतिमनुरुध्याह किंचेति । विद्याकर्मपुत्रैर्जय्यानांदेवपितृमनुष्यलोकानांमध्येऽस्यमनुष्यलोकस्यकारणंसाधकःपुत्रः तत्रहेतुः तस्येत्यादि । विजयोवशीकारः एतेनएतल्लोकजयायपुत्रोनमोक्षाय 'नप्रजयानधनेन' इत्यादिश्रुतिविरोधादितिसूचितम् । एतदिति । एतन्मातृतोजन्मपितृजन्मापेक्षयाद्वितीयंजन्म तृतीयंतूत्तरत्रवक्ष्यते ५०० एतादृशंजन्मलब्ध्वापरमपुरुषार्थःसाधनीयोनवृथाक्षुद्रकामायवंचनीयमितिप्रसंगसंगत्यादर्शयति अनेनेति । अनेनमानुषेणजन्मनाइतरस्यपामरस्यापिस्वर्गोगम्यतेबुद्ध्यतेसत्संगादिभिरित्यर्थः 'इतरःपामरोभिन्नः' इतिविश्वः । यद्वा स्वर्गःपरलोकःअनास्थाद्योतिअपिशब्दात्स्वस्यगम्यतेअनुमीयते इतरश्चेतिपाठेस्वर्गोलोकइतरश्चलोकोलभ्यतेइत्यर्थः । सर्वलोकसाधनमिदंजन्मेतिभावः दुर्लभमित्यादिस्फुटं । अपिदेवाइति । देवाअपीदंसमिच्छंतीत्यन्वयः वस्तुतस्तुपुण्येभ्यःपुण्यानिसंतिकर्माणिकर्तुंमेवपित्रापुत्रःप्रतिनिधिःक्रियतेइतिश्रुत्यंशार्थंस्फुटयितुमाह अनेनेति । अनेनपितुरात्मभूतस्यपुत्रस्यजन्मनासत्कर्महेतुनाइतरस्यपितुरपिस्वर्गोलक्ष्यतेकिमुतस्वस्य अत्रचपुण्या

यस्मात्पुनर्नवोभूत्वाजायायांजायतेहिसः ॥ पौत्रादिनाप्रजातंतुरनेनचवितन्यते ४९९ स्वर्गस्यापिभवेद्धेतुःपुत्रःकिंचास्यकारणम् ॥ लोकस्यतस्यविजयः प्रजासंततितोयतः ॥ एतदस्यभवेज्जन्मद्वितीयंपितृजन्मतः ५०० अनेनजन्मनास्वर्गइतरस्यापिगम्यते ॥ दुर्लभंबतमानुष्यंजन्मकोटिशतैरपि ॥ अपिदेवाइदंजन्मसमिच्छंतिहिसर्वदा ५०१ तत्रापिभारतेवर्षेभवेच्चेदधिकारकृत् ॥ अचिकित्स्यस्यभैषज्यंभवेद्दोषाष्टकस्यहि ५०२ इच्छाद्वेषोभयंमोहःक्षुत्तृण्निद्रातथैवच ॥ विण्मूत्रबाधाचेत्येतदचिकित्स्यंहिदेहिनाम् ५०३ सात्विकामोक्षमिच्छंतिराजसाविषयानपि ॥ तामसाविषयानेवनेच्छाशून्योस्तिकश्चन ५०४ विषयान्सात्विकोद्वेष्टिराजसोवैरिणोपिच ॥ तामसोवैरिणःशुद्धानितिद्वेषात्मकंजगत् ५०५ सात्विकस्यभयंमोहाद्राजसस्ययमादपि ॥ तामसस्यचराजादेःकेवलादितिभीर्नृषु ५०६ सात्विकस्यात्मनोऽज्ञानंविद्यादेराजसस्यच ॥ तामसस्यचसर्वत्रमोहएवंव्यवस्थितः ५०७ क्षुत्तृण्निद्राश्चसर्वेषांभूतानामेकरूपतः ॥ स्थावरव्यतिरिक्तानांबाधाविण्मूत्रयोरपि ५०८ अथवासर्वजंतूनांबाधाविण्मूत्रयोर्ध्रुवा ॥ स्थावराअपिदृश्यंतेयतोनिर्यासमोक्षिणः ५०९

न्येवविधेयानीत्याहुः दुर्लभमित्यादिना ५०१ तत्रापिअंतर्भूतसर्वकर्मफलंसर्वानर्थनिवृत्तिसाधनंब्रह्मात्मविज्ञानमेवसंपाद्यं 'नचेदवेदीन्महतीविनष्टिः'इतिश्रुतेरित्याह तत्रापीति । अधिकारंसाधनचतुष्टयंकरोतिसंपादयतितथाईदृशंजन्मचेत्स्यात्तदाअचिकित्स्यदुष्करापनयनसाधनस्यदोषाष्टकस्यसंसारज्वरोपद्रवाष्टकसमस्यवक्ष्यमाणस्यभैषज्यंब्रह्मविद्याद्वारानिवृत्तिसाधनंभवेदिति ५०२ दोषाष्टकंदर्शयति इच्छेति । मोहोऽविद्या देहिनांत्रैगुण्याभिमानिनाम् ५०३ तत्रेच्छानुगमंदर्शयति सात्विकाइति ५०४ द्वेषानुगममाह विषयानिति । शुद्धान्सज्जनान् ५०५ भयानुगमंस्फुटयति सात्विकस्येति । मोहात्प्रमादात् ५०६ सात्विकस्यात्मनइति । सात्विकस्यात्मनोऽज्ञानंवर्ततेतज्जिज्ञासादर्शनादितिशेषः ५०७ क्षुत्तृण्निद्रानुगममाह क्षुदिति । एकरूपतःसमानरूपेणसात्विकत्वादिप्रयुक्तविशेषनैरपेक्ष्येणेतियावत् विण्मूत्रबाधांस्थावरपर्युदासेनाह स्थावरेति ५०८ वस्तुतःस्थावरेष्वपिविण्मूत्रबाधानुगमइत्याह अथवेति । ध्रुवानिश्चिता निर्यासश्चिक्कणवृक्षरसोगुग्गुलुप्रभृतिः ५०९

पूर्वोक्तमनुवदन्दोषाष्टकजयसाधनंदर्शयति इतीति । ब्रह्मात्मताज्ञानंविनाअचिकित्स्यामित्यन्वयः ब्रह्मात्मताज्ञानस्यतन्निवर्त्तकत्वेहेतुगर्भंविशेषणम् देहित्वेति । देहित्वस्यत्रैगुण्यांभिमान स्याभावकारणमशक्यानाधूमवान्निवृत्तिसाधनमिति ५१० दोषाष्टकानुगमनंपुनर्द्रढयति स्वेदजश्चेति ५११ दोषाष्टकवर्णनंप्रकृतेयोजयति एवमिति । एवमुक्तविषयाब्रह्मविद्याधिकारसंपा दनद्वाराएतन्मानुष्यंदोषाष्टकजयायभवति हिप्रसिद्धमेतत् एवंस्थितेनिर्णीतेपिमंदानरास्तेनैवदोषाष्टकेनविजितावशीकृताः ५१२ नृणांदोषाष्टकविजयप्रदर्शनमुखेनबाल्ययौवनवार्द्धक्यानिनि रूपयिष्यन्बाल्येतदनुगममाह तथाहीति । तथाहिदोषानुगमःप्रदश्यर्तेइत्यर्थः स्तन्येच्छया इच्छाक्षुत्तृड्रूपास्पष्टेतिभावः ५१३ इतइति । इतःस्तनपानेच्छादुःखमारभ्ययानिदुःखानि प्राप्नोतितानिसर्वाणिएतदंतानिएतस्मिन्दोषाष्टकेकारणत्वपर्यवसानंयेषांतानितथाभूतान्येवेति उत्तरोत्तरदोषाष्टकंप्रतिपूर्वपूर्वसंस्काराणांहेतुतामाह दोषाष्टकेति । विदूषितःसंस्कृतः ५१४ इच्छाद्वेषदुःखप्रयोजकमशक्तत्वंदर्शयति यथेति । नांगानांप्रभुर्यथेच्छंप्रवर्त्तनशक्तोनभवेदिति ५१५ कंडूतावितिः । कंडूतौकंडूयने ५१६ अवैशद्येनेति । कंठस्यअवैशद्येनवाग्वाहिनिना

इतिदोषाष्टकंसर्वैरचिकित्स्यंहिदेहिभिः ॥ विनाब्रह्मात्मताज्ञानंदेहित्वाभावकारणम् ५१० स्वेदजश्चांडजोवापिजंतुर्वास्याज्जरायुजः ॥ उद्भिज्जोपिनसंत्यज्य दोषाष्टकमिदंस्थितः ५११ एवमेतद्धिमानुष्यंदोषाष्टकजयायहि ॥ भवत्येवंस्थितेमंदास्तेनैवविजितानराः ५१२ तथाहिजातमात्रोयंस्तन्यमिच्छति मानवः ॥ कुर्वन्नानाविधान्शब्दांश्छयानोधरणीतले ५१३ इतआरभ्यदुःखानिह्येतदंतानिनित्यशः ॥ प्राप्नोत्येषजनोमंदोदोषाष्टकविदूषितः ५१४ यथागर्भेतथाबालोनांगानांहिप्रभुर्भवेत् ॥ शक्तोभवतिनैवायंमत्कुणादेर्निवारणे ५१५ कंडूतावप्यशक्तोयमंगानामातुरोभृशम् ॥ नेच्छयाह्यन्नपानादिप्राप्नो त्येषोतिदुःखितः ५१६ अवैशद्येनकंठस्यवदन्नपिवदेन्नसः ॥ उच्चैःस्वरेणजननीमाह्वयत्येवदुःखितः ॥ श्रुत्वावाक्यंतथैवापितत्रायात्यथवानवा ५१७ एवंविण्मूत्रलेपेनमुखलालादिनापिच ॥ दिग्धमंगंसुतस्यैषाप्रक्षालयतिवानवा १८ वृथाहसत्ययंबालोबिभेतिचतथावृथा ॥ रोदित्येषवृथातद्वद्द्विष्टाद्यप्य तिमोहितः १९ वक्तुंगंतुंतथादातुमिच्छत्येषपुनःपुनः ॥ नशक्नोतिततःक्लेशंमहांतंप्रतिपद्यते ५२० जननींजनकंवापिभ्रातरंवापिराक्षसम् ॥ पिशाचींवाप्य भेदेनबालोजानातिमोहितः २१ एवंबाल्येसदुःखानिकोटिशोप्यनुभूयच ॥ तत्रैवावांतरावस्थांकौमारींप्रतिपद्यते २२ जानुभ्यामपिहस्ताभ्यांगच्छत्येषश नैःशनैः ॥ अपिचार्थांतरप्राप्तंवर्णजातंवदत्यसौ ५२३

ड्याःकफव्याप्तत्वकृतेनवदन्नपिनवदेत् विफलत्वादिति । किंचिद्वैशद्येजातेप्याह उच्चैरिति । आह्वयतिआकारयति श्रुत्वेत्यादेःसात्वित्यादिः ५१७ द्वेषप्रयोजकंमालिन्यंदर्शयति एवमिति । दिग्धंक्लिन्नं एषाजननी ५१८ भयमोहयोःप्रयोजकमव्यवस्थितस्वभावत्वंदर्शयति । वृथेति । अत्तिभक्षयति ५१९ इच्छादुःखमभिनयति वक्तुमिति ५२० मोहंस्फुटयति जननीमि ति । स्फुटम् ५२१ एवमिति । यद्यपिबाल्यमापंचमाब्दादितिश्रीधरैरेकादशेव्याख्यातंतथाप्यत्रोत्तरश्लोकानुगुण्यादाषोडशाब्दाद्बाल्यावस्थांव्यापिकांविवक्षित्वादंतजननप्रभृत्यवस्थातद्व्याप्या कौमारीविवक्ष्यतेअवस्थात्रितयस्यविवक्षणादितिग्रंथकर्त्तुराशयोलक्ष्यते तत्रैवबाल्यएव अवांतरांव्याप्याम् ५२२ जानुभ्यामिति । शनैःशनैरित्यनेनत्वरयाजिगमिषायामपितदपूर्त्याइच्छादुःखंसू चितं एवमुत्तरत्रापिदुःखहेतुदोषानुगमऊह्यः । अपिचेति । अशतयोच्चार्यमाणत्वादर्थांतरंविवक्षितार्थाद्भिन्नमर्थंप्राप्तंबोधयदितियावत् एतादृशंवर्णसमूहंवदति ५२३

११

श्ववदिति । श्वाकुक्कुरः शंकितःशंकाव्याप्तः ९२४ इंगिते इंगितमभिप्रायसूचिकाअंगचेष्टा । अथेति । विशदयास्पष्टया तथापिस्वहितंनवेत्ति ९२५ पितृभ्यामिति भर्त्स्यंतेदुर्वाचाधर्ष्यंते ९२६ श्ववदिति ९२७ धूलीति २९८ गृहइति । अविद्यमानमितिच्छेदः ९२९ यौवनावस्थांदोषाष्टकशालितयावर्णयितुमुपक्रमते एत्रमिति । आकरमुद्भवस्थानम् ९३० अत्रेति । अत्रयौवनेसजंतुःस्त्रीपुंभेदेनस्त्रीभावेनपुंभावेनचावच्छिन्नानिदुःखानिप्राप्नोतीत्यन्वयः यतोऽनीश्वरः 'अनीशयाशोचतिमुह्यमानः' इतिश्रुतेः अनीशयाअसामर्थ्यंन ९३१ तत्रनारीभावदुःखंस्पष्टयति जंतुरितिचतुर्भिः । पत्यादितःपतिप्रभृतिबांधवेभ्यः ९३२ पुरुषाणामिति । वधूंनारीम् ९३३ पत्यादिभिरिति । एषप्रायोदृश्यमानोवधूजनःपत्यादिभिःकुलेनवानिरुद्धःअपरःकश्चिदेवधर्मलोपेनालोचितेननिरुद्धःसन्शृंखलाबंधनबद्धवत्कालंनयेदिति ९३४ नार्याश्चतुरःप्रधानदुःखहेतून्दर्शयति पुरुषाणामिति । अनिच्छयाअरोचनेन ९३५ पुंसोयौवनस्थस्यदुःखंस्फुट

श्ववत्शंकितएवायंस्वगृहादिप्रवेशने ॥ सर्वेभ्यश्चबिभेत्येषमात्रादिभ्योविमोहितः ९२४ इंगितादिनवेत्त्येषपशोरप्यधमस्तथा ॥ अथकालेनपद्भ्यांसव्रजत्यत्यंतचंचलः ॥ वक्तिवाचाविशदयाहितंस्वस्मैनवेत्त्यसौ ९२५ पितृभ्यामपिचान्येनबंधुनाहितकारिणा ॥ बालेनबलिनावापिताड्यतेभर्त्स्यतेहिसः ९२६ श्ववदेषवृथायातिस्थानात्स्थानांतरंप्रति ॥ उन्मत्तवत्समादत्तेवक्तिचायंवृथैवहि ९२७ धूलिधूसरसर्वांगःश्रमेणमहतावृतः ॥ स्नेहद्वेषौवृथैवायंबालैरन्यैःकरोतिहि ९२८ गृहेस्वेऽविद्यमानंचयाचतेराजवच्छिशुः ॥ तदलाभेनशुंकेसौकदाचिच्चप्ररोदिति ९२९ एवंनानाविधंदुःखंकौमारेत्वनुभूयसः ॥ यौवनंदुःखकोटीनामाकरंप्रतिपद्यते ९३० अत्रस्त्रीपुंस्भेदेनदुःखानिविविधानिसः ॥ प्राप्नोत्यनीश्वरोजंतुःकर्मपाशवशंगतः ९३१ जंतुर्भवतिचेन्नारीतदापत्यादितोभयम् ॥ अस्वातंत्र्यंतथानित्यंव्यापारश्चमहान्गृहे ९३२ पुरुषाणांयथेच्छाकामिनांहिवधूंप्रति ॥ एवंवधूजनस्यापिकामिनंपुरुषंप्रति ९३३ पत्यादिभिःकुलेनैषधर्मलोपेनचापरः ॥ निरुद्धःस्त्रीजनःकालंशृंखलाबद्धवन्नयेत् ९३४ पुरुषाणामसंप्राप्याप्राप्तानामप्यनिच्छया ॥ पुत्रेच्छयापिगर्भेणनारीदुःखार्णवेपतेत् ९३५ पुरुषस्यसदाभीतिःशास्त्रज्ञस्ययमादितः ॥ पित्रादिभ्यश्चमूढस्यराजादिभ्यश्चधीमतः ९३६ अस्वातंत्र्यंचपुंसःस्याद्धनादिरहितस्यहि ॥ वध्वायथायौवनेस्यात्प्राप्त्यप्राप्त्योर्नरस्यहि ९३७ यौवनंप्रथमोदोषोनराणांकर्मवर्तिनाम् ॥ तत्रापिचकुलंविद्याधनंचेतित्रिदोषता ९३८ कुलविद्याधनोत्थेहित्रिदोषेयौवनज्वरे ॥ नपश्यामःप्रतीकारंमरणादपरंनृणाम् ९३९ यौवनज्वरसंमूढोजंतुर्गायतिवल्गति ॥ हसत्यपिक्षिपत्यन्यान्वृद्धान्पितृसमानपि ९४०

यति पुरुषस्येति । यमादितःयमःप्रसिद्धःआदिपदेनेश्वरः 'यमोवैवस्वतोराजायस्तवैषस्थितोहृदि' इत्यत्रोक्तस्तद्विदश्चगृह्यंते धीमतोव्यापारकुशलस्य ९३६ अस्वातंत्र्यमिति । अस्वातंत्र्यंपराधीनता । वध्वायथेति । इच्छानिच्छाप्रयुक्तंदुःखमितिशेषः ९३७ यौवनमिति । प्रथमोदोषोज्वरसमःप्रधानदोषः त्रिदोषताकुपितधातुत्रयसमाइत्यर्थः ९३८ कुलेति कुलविद्याधनैर्मदजनकैरुत्तिष्ठतिअनर्थोयोयतंभवतीतितत्तथातस्मिन्यौवनज्वरेसतिप्रतीकारंतच्छमोषधंनपश्यामः ५६३२ सन्निपातज्वरसाम्यंयौवनस्यप्रपंचयति यौवनेति । संमूढोऽनवस्थितचित्तः वल्गतिविविधागतीर्दर्शयतिक्षिपतिमत्तगजवत्पातयतीति ९४०

युद्ध्यतीति । अनुदात्तेत्वलक्षणात्मनेपदस्यानित्यत्वात्साधु आस्फोटयतियुद्ध्यमानंविशीर्णंकरोति स्फुटिरविशरणे । दुर्दांतोनिरंकुशः दुश्चेष्टइति ५४१ एवमिति । कार्याकार्यंविहितप्रतिषिद्धं समाहारद्वंद्वः ५४२ वधूजनेति । मानस्यांतरंतर्मानसंवधूजनेनगृहीतमंतर्मानसंयस्यसतथातस्य । स्वंधनं । शास्त्रमुत्क्रम्यवर्त्तमानस्यएतादृशस्यजंतोरयंजरावधिर्महान्कालोयातीतिद्वयोरन्वयः ५४३ गृहेति । यौवनस्थमंडूकसमं अभ्येतिउपसर्पति ५४४ अहर्निशमिति । चिंतयादूतीसमयावृतंआर्तंकामार्त्तसमं श्वित्रंश्वेतकुष्ठंतद्वती ५४५ तस्याइति । तस्याःजरायाः ५४६ अपीति । परिभवस्यानादरस्यपात्रंभवति ५४७ तदेति । यौवनेकृतानीत्यन्वयः ५४८ पुत्रादयइति । मन्यंतेआद्रियंते ५४९ यामिति । यामवस्थांपारतंत्र्यलक्षणांबाल्येप्राप्तवान्तामेवावस्थांवृद्धतांप्राप्य पुनःप्राप्नोति निंदामात्रंतुविशेषइति ५५० निंदासाहित्यंस्फुटयति बालमिति । तामसंमालिन्यादितमोगुणलक्षणवंतं प्राकृताःपामराः ५५१ एवमिति ५५२ इच्छाहीति । अशक्तितःइंद्रियसं

युद्ध्यत्यास्फोटयत्युच्चैर्नृत्यत्यपिचधावति ॥ अहंकरोतिदुर्दांतश्चसित्येषमुहुर्मुहुः ॥ दुश्चेष्टाविविधाएवंयौवनेकुरुतेपुमान् ५४१ एवंहिकुर्वतस्तस्यजंतोर्यौवनवर्तिनः ॥ यौवनेतृप्तिहीनस्यकार्याकार्यमजानतः ५४२ वधूजनगृहीतांतर्मानसस्यदुरात्मनः ॥ परस्वस्यापहारार्थंनित्यमुत्कंठितस्यच ॥ उच्छास्त्रवर्तिनः शीघ्रंकालोयातिमहानयम् ५४३ गृहक्षेत्रकलत्रादावासक्तंदुर्धियंनरम् ॥ युवमंडूकमभ्येतिकालसर्पोतिदारुणः ५४४ अहर्निशंहिदुःखानामाकरंचिंतयावृतम् ॥ युवानमार्त्तमभ्येतिपिशाचीश्वित्रिणीजरा ५४५ तस्याःसंगमदुष्टोयंश्वेतोभवतिसर्वतः ॥ कुरूपःशक्तिहीनश्चदुःखशोकसमावृतः ५४६ अपिविस्मृतशीलःसन्पात्रंपरिभवस्यच ॥ भवत्यहर्निशंमंदःकासश्वासाकुलाननः ५४७ तदाकृतान्यनेकानिदुष्कृतानिसयौवने ॥ स्मरन्निंदतिचात्मानंकष्टंबतमयाकृतम् ५४८ पुत्रादयोपितन्नैवमन्यंतेजरठंजनाः ॥ अपिविद्याधनैर्युक्तंकिमुमूर्खंचनिर्धनम् ५४९ यामवस्थांपुराबाल्येप्राप्तवांस्तांपुनर्जनः ॥ प्राप्नोतिवृद्धतांप्राप्यनिंदयासहितामिह ५५० बालंनैवविनिंदंतिशक्तिहीनंमलावृतम् ॥ वृद्धंतुतामसंदृष्ट्वानिंदंतिप्राकृताजनाः ५५१ एवंनानाविधंदुःखंजंतुःसर्वोपिसर्वदा ॥ वृद्धत्वेसमवाप्नोतिकालपाशवशंगतः ५२ इच्छाहिमहतीवृद्धेविषयाप्तावशक्तितः ॥ नकिंचिद्विषयंवृद्धःप्राप्नोतींद्रियसंक्षयात् ५५३ स्नेहश्चवृद्धस्यतथावर्द्धतेस्वजनंप्रति ॥ दुर्जनंप्रतिद्वेषश्चनचकार्यक्षमावुभौ ५५४ यौवनेजनितंपुत्रंद्वितीयंदेहमात्मनः ॥ नानाविधेभ्यःपुण्येभ्यःप्राप्तंसंसारसागरे ५५५ वेदाध्ययनयज्ञानांभूतानांहिसुखस्यच ॥ स्वयंसामिकृतस्यापिस्वेनवाप्यकृतस्यच ५५६

क्षयान्नकिंचिद्विषयंप्राप्नोतीत्यन्वयः ५५३ स्नेहश्चेति । उभौस्नेहद्वेषौकार्येउपकारापकारात्मकेक्षमौनेति ५५४ एतावताग्रंथेनसोस्यायमित्यादिप्रतिनिधीयतेइत्यंतमंशंपुण्यानिकर्तुंपुत्रःपित्रेहलोकेप्रतिनिधिरवस्थाप्यतेइत्यर्थपरतयाव्याकुर्वताग्रंथकृताप्रसंगानुप्रसंगेनबाल्ययौवनवार्द्धकानिप्रदर्शितानि अथतमेवश्रुत्यंशंपुण्यंभ्यइतिहेतुपंचम्यंतंमत्वाव्याकरोति यौवनेइतित्रिभिः । ततःपुत्रमस्मिन्लोकेसंस्थाप्यजनकोमुमूर्षतिमर्तुमिच्छतीतितृतीयेनान्वयः । कीदृशंपुत्रमात्मनोजनकस्यद्वितीयंदेहम् पुनःकीदृशं नानाविधेभ्योदेवाराधनादिभेदभिन्नेभ्य पुण्येभ्योहेतुभ्यःप्राप्तम् ५५५ पित्रास्वयंकर्त्तव्येषुअध्ययनादिकर्मसुपुत्रोनियोज्यतेइत्याकारंप्रतिनिधीयतेइतिपदार्थंस्पष्टयति वेदेति । षष्ठ्यंतानांकर्त्तारमित्युत्तराग्रपदेनान्वयः तथाचवेदाध्ययनयज्ञानांपित्राकर्तव्यानां कर्त्तारं तथाभूतानांपंचयज्ञैस्तर्पणीयानांसुखस्यकर्त्तारं अपिचस्वयंपित्रासामिअर्द्धंयत्कृतंकूपतटाकादितस्यकर्त्तारंस्वेनवानयत्कृतंतस्यापिकर्त्तारमित्यर्थः ५५६

कर्त्तारमिति । प्रतिभवतितत्कार्येतद्भवतीतिप्रतिभूः यथाव्यवहारेप्रतिभूःस्वासन्निधौस्वकार्यंकरःस्थाप्यतेतत्समम् द्विजमितिवेदाध्ययनाद्युपक्रमानुरोधेनोक्तं ततोऽवस्थात्रयभोगानंतरंमुमूर्षति मर्तुमिच्छति यतोजरयावृतः ५५७ अथास्यायमित्यादिभेतीत्यंतमष्टाचत्वारिंशद्भिर्व्याकरिष्यंस्तदर्थंयथाऽनःसुसमाहितमुत्सर्जद्यायादितिबृहदारण्यकषष्ठगतवाक्यार्थमुपसंहरति परलोकेतिद्वाभ्याम् । वृद्धस्यपरलोकयियासायांगमनेच्छायांसत्यांअयंसूक्ष्मदेहरूपोमहान्रथःकालरूपेणसारथिनासज्जीक्रियतेसामग्रीसंपन्नःक्रियतइत्यर्थः ५५८ रथत्वमुपपादयति पुण्येति । पुण्यपापेएवरथांगेचक्रेताभ्यामाढ्यः दुःखमेवपाथेयंपथिभोग्यंशंबलापरपर्यायंतेनपूरितः प्राणाःप्राणप्रधानेंद्रियाण्येवदुष्टाश्वास्तैर्युतः बुद्धिरूपेणकाष्ठेनरचितः कासश्वासयोरोघःप्रवाहःसएवघोषोदूरेश्रूयमाणध्वनिस्तेनसंपन्नः हिक्काप्रसिद्धातयादुष्टंयथाभवतितथामार्गेशब्दनःशब्दकरः नंद्यादित्वाह्युः ५५९ वृद्धत्वेनेति । सजंतुःयस्यरथःसज्जीकृतः हातुंत्यक्तुं यतोमोहितःअध्यासग्रस्तः ५६० तदेति । तदामरणसन्निधौ उद्वेगःक्षोभः वेपथुःकंपः ५६१ तदातंरक्षितुंकोपिनशक्नोतीत्याह बांधवाइति । परिवृत्त्यवेष्टयित्वा । दृष्टांतमाह हिंसेति । सामिहिंसितमर्द्धहिंसितं हन्यमानमितियावत् तेयथारक्षितुमशक्तास्तद्वदिति ५६२ तत्कालभवदुःखमुपमयास्पष्टयति द्वासप्ततीति । द्व्यधिकसप्ततिसहस्रपरिमितावृश्चिकाश्चेदेकहेलयाएकव्यापारेणएकदैवेतियावत्पुच्छैर्दशेयुस्तज्जन्यदुःखसमंतावन्नाडीकदेहान्निष्क्रमणेदुःखमित्यर्थः ५६३ हस्ताविति । क्षिपंतंविशस्तपशुवत्त्वरयाचालयंतं आतुरंबंधनादिनादुःखितं एतावदेवतेषांशक्यमितिभावः ५६४ मृत्युरूपोलुब्धकोव्याधस्तंदूरेनयति कीदृशंतं नीयमानग्रामसूकरवत् शब्दान्मुंचंतंक्रोशंतमितियावत् बांधवानामदर्शनंयथाभवतितथेतिनयनक्रियाविशेषणम् ५६५ कालेति । जंतुर्दीनधीःकपोतइवभवतीतिशेषः यतोगमनेयथेच्छयाव्यापारेनक्षमः तत्रहेतुःकालेत्यादि ५६६ रूपकांतरमाह पुत्रेति । पुत्रक्षेत्राद्यैहलौकिकभोग्यजातमेवबडिशंप्रच्छन्नंस्वभक्षकवधसाधनंतद्भक्षणायमर्त्यलोकात्मकह्रदमुपागतंजंतुरूपमत्स्यंमृत्युरूपोधीवरोहंतीति भक्षयातोभोगार्थेपिप्रयोगस्तंदेवाभक्षयंतीत्यादिश्रुतिप्रसिद्धःश्लेषस्यरूपकांगस्यानुकूलः तंस्वर्गगतंदेवाभक्षयंतिभोगसाधनंकुर्वंतीतिश्रुत्यर्थः एतेनाहंताममताहीनानांविदुषांनमृत्युरितिसूचितम् ५६७

कर्तारंमानुषेलोकेप्रतिभूसदृशंद्विजम् ॥ ततःसंस्थाप्यजनकोमुमूर्षतिजरावृतः ५५७ परलोकयियासायांवृद्धस्यायंमहान्रथः ॥ कालसारथिनासज्जीक्रियतेसूक्ष्मदेहकः ५५८ पुण्यपापरथांगाढ्योदुःखपाथेयपूरितः ॥ प्राणदुष्टहयैर्युक्तोबुद्धिकाष्ठविनिर्मितः ॥ कासश्वासौघघोषाढ्योहिक्कादुर्मार्गशब्दनः ५५९ वृद्धत्वेनातिदुःखानिसएवमनुभूयाहि ॥ शरीरंदुःखनिकरंहातुंनेच्छतिमोहितः ५६० तदापुत्रकलत्रादीन्स्मरत्येषोतिदुःखितः ॥ त्रासश्चमरणोद्वेगान्महान्वेपथुरुद्भवेत् ५६१ बांधवाअपितेसर्वेतिष्ठंतिपरिवृत्त्याहि ॥ हिंसास्थानगतायद्वत्पशवःसामिहिंसितम् ५६२ द्वासप्ततिसहस्राणिवृश्चिकाएकहेलया ॥ यथादशंतिगात्रेषुपुच्छैःसूच्यग्रसन्निभैः ॥ तथातज्जायतेदुःखंमुमूर्षोर्देहमोचने ५६३ हस्तौपादौक्षिपंतंचभूमिष्ठगतचेतनम् ॥ स्वजनास्तंहिशोचंतिकाकाःकाकंयथातुरम् ५६४ ग्रामसूकरवच्छब्दान्मुंचंतंमृत्युलुब्धकः ॥ बध्वानयतितंदूरेबांधवानामदर्शनम् ५६५ कालपाशवशंप्राप्तोजंतुर्नगमनेक्षमः ॥ वागुराभिरिवाबद्धःकपोतइवदीनधीः ५६६ पुत्रक्षेत्रादिबडिशंभक्षणार्थमुपागतम् ॥ जंतुमत्स्यंनयत्येषमृत्युधीवरउग्रधीः ५६७

गुमूर्षुमिति । मृगपोतोमृगबालकस्तत्समं ज्वरादिव्याधिरूपेणबाणेन मृगयुर्व्याधः ५६८ प्रस्विन्नेति । प्रस्विन्नंग्लानंमुखंयस्यतं हिक्कानांशतेनअसंख्यातहिक्काभिरितियावत् समावृतमाक्रांतं ईदृशंदृष्ट्वापिमृत्युर्दयांनप्राप्नोति यतोनिष्ठुराशयः लोकेपिक्रूराशयादीनेंपुनानुगृह्णंतीतिप्रसिद्धम् । मृत्युपक्षेनिष्ठुरायांप्रजाहननरूपायांवृत्तौप्रजापतेराग्रहात्शेनेधिकृतोभवतीतिनिष्ठुराशयइत्यर्थः प्रसिद्धमेतन्मोक्षधर्मेषु एतदधिकारनिवृत्तयेअनेकार्बुदसमास्तपस्यतेऽपिमृत्यवेएतमधिकारंप्रजापतिर्ददाविति ५६९ हापुत्रेति । इतिइत्थंशब्दगणंमुंचंतंजंतुरूपंपांथंकालश्चोरइवहंतीति ५७० श्लेष्मेति । श्लेष्माकफः कालस्यस्वकार्यंजननमरणसामानाधिकरण्यसंरक्षणं सूनापशुवधस्थानंतस्यप्रभुरध्यक्षः मेपमेडकमिवेति ५७१ बांधवेष्विति । क्रोशतोबांधवाननादृत्यएनंजंतुंनयंतियमकिंकराः दृष्टांतोयथेत्यादि ५७२ द्वासप्ततीति । नाड्योहिस्वांतर्गतंप्राणंधारयंत्यस्तंबध्नंतीवतद्बंधनंमृत्युनाच्छिद्यते ५७३ मृत्युरिति मृत्युर्देवःकालेनायुरंत्यक्षणेनकुठारेणअस्यजं

मुमूर्षुंमृगपोताभंसंसारवनमध्यगम् ॥ हंतिव्याधिशरेणैवमृगयुःकालसंज्ञकः ५६८ प्रस्विन्नवदनंदीनंहिक्काशतसमावृतम् ॥ निरीक्ष्यकरुणामेतिनमृत्युर्निष्ठुराशयः ६९ हापुत्रहाकलत्रेतिभृशंशब्दसहस्रकम् ॥ मुंचंतंचोरवत्कालोजंतुंपांथंनिहंत्यसौ ५७० श्लेष्मावरुद्धकंठंतंभूरिघुर्घुरशब्दकम् ॥ हंतिकालःस्वकार्यार्थीमेषंसूनाप्रभुर्यथा ७१ बांधवेषुभृशंशब्दान्मुंचत्सुयमकिंकराः ॥ नयंत्येनंयथाराजभृत्याजातापराधकम् ७२ द्वासप्ततिसहस्राणांनाडीनामिहबंधनम् ॥ शरीरेच्छिद्यतेतस्यमृत्युनाजनघातिना ७३ मृत्युःकालकुठारेणच्छिनत्यस्यांगबंधनम् ॥ यथाप्रकुपितःकश्चिद्धालिकःकदलीवनम् ७४ पादाग्रात्केशपर्यंतंसर्वतोरोमकूपके ॥ कार्यंतेवेदनास्तत्रमृत्युनादुःसहान्नृणाम् ७५ कोटचर्धसहितास्तिस्रःकोटचःसूच्यःसुतीक्ष्णकाः ॥ यादृक्शरीरिणःकुर्युस्तादृग्दुःखंमृतौनृणाम् ७६ क्रकचैर्बहुधाच्छेदादंगानांजीवतोयथा ॥ तथाभवतितद्दुःखंमरणेसर्वदेहिनः ७७ पादाग्रात्केशपर्यंतंत्वचउत्पाटनेयथा ॥ जीवतोहिभवेद्दुःखंतथादुःखंमृतौनृणाम् ७८ तप्ततैलप्रवेशेनदुःखंयादृङ्नृणांभवेत् ॥ जीवतांतादृगेवात्रदुःखंस्यान्मरणेनृणाम् ७९ नवानामपिच्छिद्राणांरोधाद्यादृङ्नृणांभवेत् ॥ दुःखंतादृङ्मृतौतस्माद्ध्रुवेद्वाप्यधिकंपुनः ५८० एवमेतदनौपम्यंदुःखंदुर्मार्गवर्तिनाम् ॥ यथानरकजंदुःखंतादृग्वापिततोधिकम् ८१ मुमूर्षुर्मूर्छामभ्येतिक्वचित्क्वापिप्रबुद्ध्यते ॥ बिभेतिचभृशंदृष्ट्वादारुणान्यमकिंकरान् ५८२ विण्मूत्रेचक्वचिन्मुंचेदश्रूण्यपिचवाक्वचित् ॥ क्वचिच्छब्दंमहानादंदृष्ट्वासौयमकिंकरान् ५८३

तोरंगबंधनंअंगैःप्राणसंबंधमनायासेनच्छिनत्ति अनायासेनच्छेदनेदृष्टांतः यथेति । हालिकः हलवहनकर्त्ताक्षेत्ररक्षायैसकंटकवृक्षच्छेत्तृत्वेनप्रसिद्धः ५७४ पादाग्रादिति । पादाग्रमारभ्यमृत्युनाप्रयोजककर्त्राकालेनबंधच्छेदकर्त्राप्रयोज्येनवेदनाःपीडाःकार्यंतेइति ५७५ मरणकालिकदुःखमुपमानैरभिनयति कोटचर्धेत्यादिपंचभिः । एतावत्यःसूच्यःशरीरेयुगपल्लग्नायादृशंदुःखंकुर्युस्तावदत्रबोद्धव्यमित्यर्थः ५७६ क्रकचैरिति । जीवतोंगानांच्छेदादित्यन्वयः ५७७ पादाग्रादिति । जीवतस्त्वचउत्पाटनेइतिसंबंधः ५७८ तप्तेति । जीवतामिति पूर्वान्वयि ५७९ नवानामिति । छिद्राणांप्राणद्वाराणांरोधात्प्रतिबंधात्यादृग्दुःखंतादृग्दुःखंमृतौसंभाव्यतेतस्मादधिकंचेति ५८० एवमिति । दुर्मार्गवर्तिनांपापिनांयथानरकदुःखंतादृगत्रभवतिततोधिकंचेति ५८१ मुमूर्षुरिति । क्वचित्क्षणंइतिशेषः ५८२ विण्मूत्रेइति । नादोध्वनिः ५८३

अतिदीर्घानिति 'वर्बरःकेशविन्यासे' इतिविश्वः भयप्रदविन्यासशालिकेशयुतान् कशाअश्वादिताडनसाधनतयाप्रसिद्धा तान्यमकिंकरान् वेपथुःकंपः ५८४ मुखेनेति स्पष्टम् ५८५ तएनमिति । तेयमस्यभटाःपुरतःसंमुखआगत्यएनंपूर्वोक्तंपापिनंआदौप्रथमंभर्त्सयंति वक्ष्यमाणविषयादुर्वाक्यैर्विद्धचंतीत्यर्थः पश्चान्नयंतीत्यादिपदेनव्यज्यते भर्त्सनवाक्यान्याह धिक् त्वामित्यादिना । स्वात्मानंविपरीतदर्शनेनहंतिअसंतमिवकुरुतेइतिसतथातं तथाचोक्तंभागवते 'नृदेहमाद्यंसुलभं' इत्यादि । एतदेवस्फुटयति येनेति । अस्मिन्मानुषे स्वहितंनिःश्रेयसात्मकंमुख्यं अभ्युदयात्मकंगौणमिति ५८६ आत्महननप्रयोजकंदर्शयंति अयंशत्रुरिति । इत्यादिबुद्धिरूपेणमोहेनविपर्ययेणभवतापूर्वसंस्कारैर्जायमानेनभवान्वंचितःप्रतारितः त्वया शास्त्ररूपसुहृदुक्तयाप्रमादोनजितइतिभावः ५८७ एवंचप्रमादशत्रोर्विनाशसामग्रीसन्निधानंलब्ध्वापितमविनाशितवतस्तवैवस्वशत्रुतेत्याहुः शत्रुरिति । भवतस्तव गीतास्वप्युक्तं 'अनात्मनस्तुशत्रुत्वेवर्तेतात्मैवशत्रुवत्' इति ५८८ एतदेवस्पष्टयति आत्मनइति । यदात्मनःप्रतिकूलमपमानादिभासतेतदेवपरस्यपरत्वेनाभिमतस्ययःकुरुतेसमूढःस्वस्यशत्रुरित्युक्तः अत्रविवेकिव्यवहारे ५८९ अतोभेदबुद्धिरनर्थकारित्वान्नकार्या 'सर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेद'इतिश्रुतेरित्याहुः जंतोरिति । परपीडाकरस्यजंतोर्जीवतस्तुबलिनःसकाशाद्भीतिर्मृतस्यतुअस्मत्तोयमकिं

अतिदीर्घान्करालास्यान्कालान्बर्बरकेशकान् ॥ कशापाशादिहस्तांस्तान्दृष्ट्वावेपथुमान्भवेत् ९८४ मुखेनफेनंवमतिमलान्मुंचतिसर्वतः ॥ भयप्राप्तमनाजंतुर्दृष्ट्वातान्यमकिंकरान् ९८५ तएनंभर्त्सयंत्यादावागत्यपुरतोभटाः ॥ धिक्त्वांमनुष्यदेहस्थंपापिनंस्वात्मघातकम् ॥ येनत्वयाशरीरेस्मिन्नकृतंस्वहितंक्वचित् ९८६ अयंशत्रुरिदंमित्रमुदासीनस्त्वयंमम ॥ इत्यादिबुद्धिमोहेनभवतावंचितोभवान् ९८७ शत्रुस्त्वमेवभवतोनान्यःकोपिहिविद्यते ॥ येनत्वयानैवकृतमात्मनोबंधमोचनम् ९८८ आत्मनःप्रतिकूलंयःकर्मणामनसागिरा ॥ परस्यकुरुतेस्वस्यसोत्रशत्रुरितीरितः ९८९ जीवतोबलिनोभीतिःपरपीडाकरस्यहि ॥ जंतोर्मृतस्यचास्मत्तःकस्तांकुर्वीतबुद्धिमान् ९९० पित्रोरुच्चारएषस्याद्देहःसर्वशरीरिणाम् ॥ प्रत्यक्षोमूत्रविष्ठादिपूरितोतिजुगुप्सितः ९९१ विनाशीचकृतघ्नश्चपरिणामसहस्रवान् ॥ अस्वाधीनःसदादुःखकारीस्वार्थविनाशकः ९२ इमंदेहंसमाश्रित्यभवतादुष्कृतंकृतम् ॥ एतदुःखान्यनंतानिप्राप्स्यंतित्वामहर्निशम् ९३ देहोपभोगसिध्यर्थंपुत्रदारधनादिकम् ॥ आश्रित्यभवताकिंचिन्नकृतंसुकृतंबत ९९४

करेभ्योभीतिरतस्तांभेदबुद्ध्यापरपीडांकःकुर्वीतेति ५९० राजपुरुषाहिअपराधंस्मारयित्वाकृतागसंबध्वानयंतीतिप्रसिद्धंतथैतेपिभेदबुद्धिरूपमपराधंस्मारयित्वामहानर्थहेतुंदेहात्माभिमानंशुद्धात्मविस्मृत्याकृतंस्मारयंतस्तदनौचित्यार्थंदेहदोषांस्तत्रात्माभिमानस्याऽनर्थकरत्वंतज्जन्यानर्थंचदर्शयंति पित्रोरितित्रिभिः । पित्रोर्मातापित्रोःउच्चारोमलम् एषमानुषादिः तदुक्तं 'यदंतरस्यदेहस्यवहिःस्याद्यतदेवचेत् । दंडग्रहावारयेयुःशुनःकाकांश्चमानवाः' इति ५९१ विनाशीचेति । षट्देहविशेषणानि कृतघ्नःशतंवर्षाणिसेवितोपिजहातीति परिणामोऽन्यथाभावस्तद्वांतरभेदसहस्रवान् स्वार्थस्यपुमर्थस्याभिमानद्वाराविनाशकः ५९२ इममिति । समाश्रित्यआत्माभिमानगोचरीकृत्य दुष्कृतमितिजातिपरोनिर्देशः तदुक्तंभगवतान्यासेन 'सर्वाशुचिनिधानस्यकृतघ्नस्यविनाशिनः । शरीरकस्यापिकृतेमूढाःपापानिकुर्वते' इति । एतदुःखानिएतस्यदुष्कृतस्यकार्यभूतानिदुःखानि ५९३ अहंत्वाभिमानकृतममत्वाभिमानरूपमपराधंविहिताकरणप्रतिषिद्धाचरणहेतुंस्मारयंति देहोपभोगेति । आश्रित्यममत्वाभिमानगोचरीकृत्य वतेतिखेदे सुकृतंनकृतंदुष्कृतंचकृतमितिशेषः ५९४

'स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचित् । सर्वेविधिनिषेधाःस्युरेतयोरेवकिंकराः' इतिविष्णुपुराणोक्तरीत्यापरमात्मनऐक्यज्ञानरूपंमुख्यस्मरणंतस्यस्वरूपभूतत्वेनातिसुकरंकुतोनकृतमि
तिमहत्तवागइत्याहुः अपिक्लेशइति । सुकृतार्जनेस्वल्पःक्लेशःशरीराद्यायासोपिभवति आत्मबोधेतुसोपिनेतितस्यसाक्षादपरोक्षत्वादिति । वदंतिहिशिष्टाःकुसुममर्दनादप्यात्मबोधसुकरतामिति
५९५ मुख्याशक्तौगौणमपित्वयानानुष्ठितमित्याहुः अपिचेदिति ५९६ उपासनाशक्तावपिद्रव्यव्ययायासादिसाध्यादधर्मादतिसुकरंधर्मार्जनमेवकुतोनकृतमित्याहुः अपिपापकृतइति ।
स्वर्गदेसुकृतेनामकीर्तनादिरूपे ५९७ तिष्ठतुबाह्योपकरणसापेक्षःप्रयासः मनोमात्राधीनःक्षणमात्रानुष्ठानेपिमहाफलःस्वात्मचिंतनात्मकोपिकुतोनकृतइत्याहुः परदोषाइति । यद्वत्त्वयासाव
धानेनपरदोषाःसर्वदैवनिश्चितानिर्णीतास्तथात्माक्षणमात्रंकुतोननिश्चितइत्यन्वयः । क्षणमात्रात्मचिंतनफलमप्युक्तं 'स्नातंतेनसमस्ततीर्थेसलिलेदत्ताचसर्वावनिर्यज्ञानांचकृतंसहस्रमखिलादेवा
श्चसंपूजिताः । संसाराच्चसमुद्धृताःस्वपितरस्त्रैलोक्यपूज्योप्यसौयस्यब्रह्मविचारणेक्षणमपिस्थैर्यंमनःप्राप्नुयात्' इति । 'क्षणमेकंक्रतुशतस्य' इतिश्रुतिरपि ५९८ यदित्वंस्थावरवन्निरुद्यमो
ऽभूस्तर्हित्वांनेत्थमुपालभेमहित्वंतुशक्तःसन्निषिद्धमनुपदिष्टमपिकृतवान्विहितंतुस्वल्पमपिनानुष्ठितवानितिदंडचोसीत्याहुः यथेति । परस्यशत्रोर्विनाशार्थं स्वर्गमोक्षयोःकृतेसिद्धये कृज्जो

अपिक्लेशोहिभवतिसुकृतस्यसमर्जने ॥ स्वल्पःसोपिनचात्रास्तिपरमात्मविचिंतने ५९५ अपिचेन्निर्गुणंब्रह्मज्ञातुंनैवभवान्क्षमः ॥ कस्मादुपासनंतस्यनकृतं
सुखदंत्वया ९६ अपिपापकृतोयावत्क्लेशस्तेसमभूदिह ॥ तस्यलेशोपिसुकृतेनभवेत्स्वर्गदेनृणाम् ९७ परदोषास्त्वयायद्वत्सावधानेननिश्चिताः ॥ सर्वदैव
तथात्माकिंक्षणमात्रंननिश्चितः ९८ यथापरविनाशार्थमुद्यमोभवताकृतः ॥ तथास्वल्पोपिकस्मान्नस्वर्गमोक्षकृतेकृतः ९९ इदंत्वयाकृतंपापमेकांतेबलत
स्त्विदम् ॥ इतितेमर्मसदृशंपापंसर्वेवदंतिहि ॥ अपिचैवंवदंत्येनंपापिनंस्ववशंगतम् ६०० मत्तोनबलवान्कश्चिल्लोकेस्मिन्विद्यतेपुमान् ॥ एवंप्रवृत्तंकोवामां
शिक्षयेदितिदुर्धिया ६०१ विचार्यबहुशोदर्पात्प्रवृत्तःपापकर्मणि ॥ भवानुज्झितमर्यादोलोकशोककरःसदा ६०२ तस्यतेदुर्धियोनित्यंलोकोपद्रवकारिणः ॥
शासितारोवयंप्राप्तास्त्वत्तोपिबलवत्तमाः ६०३ त्वत्कृतंसकलंविद्मोदुष्कृतंयमकिंकराः ॥ वासरादिभिरत्यर्थंश्रावितंयमसंसदि ६०४

भावेक्विप् कस्मान्नकृतइति ५९९ लौकिकशास्तृभ्योराजादिभ्योगोपितंवाप्रकाशंवासर्वंतेकृतंसाक्षिभ्योविद्मइत्याहुः इदमिति । इदंपापंत्वयैकांतेकृतंइदंतुबलतःप्रकाशंकृतमितितेपापंसर्वे
आदित्यादयःसाक्षिणोवदंति हिप्रसिद्धमेतत् यथाहुः 'आदित्यचंद्रावनिलोनलश्चद्यौर्भूमिरापोहृदयंयमश्च । अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तम्' इति । कीदृशंपापंमर्मस
दृशं मर्माण्यपिभिद्यमानानिदुःखयंतिपापमपिभिद्यमानंप्रकाश्यमानंदुःखयतीतिसाम्यं । अपिचैवमिति । किंचतेयमकिंकराःस्ववशंप्राप्तंपापिनमेवंवक्ष्यमाणविधयापिवदंतीति ६०० पुनर्य
द्वदंतितदाह मत्तइतिपङ्क्तिः । अहंबलीकोवाममशिक्षकइत्याकारयादुर्धियादुर्बुद्ध्याबहुशोविचार्येत्युत्तरेणान्वयः ६०१ विचार्येति । दुर्विचारंकृत्वादर्पाद्भवान्पापकर्मणिप्रवृत्तः उज्झित
मर्यादःउज्झितात्यक्तामर्यादायेनसतथा । लोकेति । शोकःशोच्यइतियावत् जीवन्मृतत्वादितिभावः भागवतेप्युक्तं 'सएषजीवन्खलुसंपरेतोवर्ततयोत्यंतनृशंसितेन' इति ६०२ तस्येति ।
१२
तस्योक्तविशेषणवतःदुर्धियोलोकोपद्रवकारिणश्चतेशासितारोदंडपितारोवयमिति ६०३ त्वत्कृतमिति । वयंयमकिंकराःत्वत्कृतंसकलंदुष्कृतंविद्मः कीदृशंदुष्कृतं वासरादिभिःकर्मणांसाक्षि
भिर्यमसभायांश्रावितंनिवेदितम् ६०४

वासरादिश्राविततत्वमेवप्रपंचयंति वासरेणेति । ससूर्येणदिनेनदिवसेभवत्कृतंकथितं निश्यनुष्ठितंतुचंद्रादिनाराव्याचकथितं आदिपदेनआदित्यचंद्रादिमनुश्लोकोक्ताअत्रानुक्तागृह्यंते संध्ययोरि ति । संध्ययोःसायंप्रातरात्मकयोःकृतंसंध्याभ्यांकथितं सर्वदासर्वत्रकालेयद्यत्त्वयाकृतंतद्भूतपंचकेरुक्तं भूतानांप्रत्येकंपंचकानिस्वसंबंधेनपंचीकृतत्वात्तैरिति । यद्वापंचयंतिस्वसंबंधेनाविस्तार यंतीतिपंचकाःभूताभिमानिदेवास्तैरित्यर्थः ६०५ ननुमयारहसिकृतंकथंवासराद्यैर्ज्ञातमतआहुः वासराद्याइति । यमचराःयमस्यराज्ञश्चरागूढपुरुषाः सर्वैःप्राणिभिःसहचराविचरंतः ६०६ इत्यादीति । स्पष्टम् ६७ अथास्माल्लोकादुत्क्रम्यपुनर्जायमानस्तृतीयंजन्मानुभवतीत्यर्थकंसइतरइत्यादिजन्मेत्यंतंवाक्यंव्याकरिष्यन्नुत्यक्तशरीरदशांतद्बंधुदशाउत्क्रांतस्यपारलौकिकीदशाश्च वर्णयति तस्मिन्नित्यादिऊनत्रिंशत्श्लोकैः । तस्मिन्द्वारवतीनाथेप्रवेशग्रंथोक्तरीत्यादेहरूपद्वारवतीपतौपुरुषेतस्यादेहद्वारवत्याःपुर्याःसकाशात्क्षणमात्राद्गतेसति केन कालसारथियुक्तेनरथे नसूक्ष्मदेहात्मना अनंतरमग्निसागरःतांपुरींअदर्शनंनयतीत्युत्तरेणान्वयः ६०८ पुरीमिति । स्वदत्तांस्वेनाग्निनाद्युपर्जन्यभूमिपुरुषयोषारूपेणदत्तां विस्तृतत्वेनाग्निसागरयोःसाम्यम् ६०९

वासरेणससूर्येणकथितंदिवसेकृतम् ॥ चंद्रादिनातथाराव्याकथितंनिश्यनुष्ठितम् ॥ संध्ययोरपिसंध्याभ्यांसर्वदाभूतपंचकैः ६०५ वासराद्यायमचराःसर्वैःसह चराःसदा ॥ त्वादृशायान्नजानंतिमोहितादेवमायया ६०६ इत्यादिवचनान्युक्त्वाबद्धापाशैःसुदारुणैः ॥ कशादिभिश्चसंताडचनयंतियमकिंकराः ६०७ तस्मि न्द्वारवतीनाथेपुर्यास्तस्यागतेसति ॥ रथेनकालयुक्तेनक्षणमात्रादनंतरम् ६०८ पुरींद्वारवतींसर्वांस्वदत्तामग्निसागरः ॥ अदर्शनंनयत्येषसर्वेषामिहदेहिनाम् ॥ ६०९ यदाद्वारवतीनाथोजहात्येनांयदृच्छया ॥ तदातिशोभनाप्येषाविधवेवनशोभते ६१० क्लेशेनापिनशक्नोतिसार्जुनाबंधुतापुरः ॥ वध्वादिदुर्जनाभीरैर्हृतं रोद्धुंकथंचन ६११ येनद्वारेणसंप्राप्तःपुरींद्वारवतींप्रभुः ॥ तेनैवचेद्व्रजेद्ब्रह्मलोकंपातिनसंशयः ६१२ चक्षुरादिभिरुत्क्रम्यसुकृतीस्वर्गमेत्यसौ ॥ अपरोदुष्कृतंकृ त्वाप्रयातियमसादनम् ६१३ यंविनानैवदाराद्याभुंजतेकवलंपुरा ॥ अदंत्यस्मिन्गतेसर्वआकंठंस्वादुबांधवाः ६१४ यंपुराशयनेशुभ्रेमृदौकेशादिवर्जिते ॥ शाय यंतिक्षिपंत्येनंज्वलितेजातवेदसि ६१५

यदेति एनांपुरीम् ६१० क्लेशेनेति । यथाप्रसिद्धद्वारवतीनाथेगतेसतिअवशिष्टासार्जुनाअर्जुनेनपार्थेनसहिताबंधुताबंधुसमूहःदुर्जनाभीरैर्हृतंवध्वादिपरिग्रहंरोद्धुंरक्षितुंनशशाकतथात्रक्लेशबलेन साम्यं । तथाहि उत्क्रांतस्यद्वारवतीपतेःसंबंधिवध्वादिदुर्जनरूपैराभीरैर्हृतंपुरःसंमुखेपिरोद्धुंक्लेशेनाग्निप्रार्थिताबंधुतानशक्नोति । कीदृशीबंधुता सार्जुना 'तृणमर्जुनम्' इत्यमरः गृहीततृणा तृणच्छेदनेनसंबंधपरित्यागशीलेतियावत् । यद्वा सार्जुनाअर्जुनेननेत्ररोगेणसहिता यतःपश्यंत्यपिनपश्यतीति 'अर्जुनंतुतृणेनेत्रगदेच' इतिविश्वः ६११ प्रसंगात्तद्द्वारनिर्गमनफलंदर्शयति येनेति । येनद्वारेणैकादशेनअधस्तादुक्तेनसंप्राप्तःप्रविष्टः नसंशयः 'शतंचैका' इत्यादिश्रुतेः 'मूर्ध्न्याधायात्मनःप्राणम्' इत्यादिस्मृतेश्चेति ६१ चक्षुरादिभिरिति । सुकृतीचेदितिशेषः अपरःसुकृतिभिन्नः दुष्कृतंपुरतःकृत्वाचक्षुरादिभिरप्युत्क्रम्यन्यमसादनंयातीति तथाचैकादशद्वारभिन्नद्वारोत्क्रमणेसुकृतदुष्कृतयोर्यत्प्रबलंतदधीनागतिरिति ६१३ तद्बंधूनांदशाःस्फुटयति यंवि नेत्यादिना । दाराद्याःबांधवाः पुराजीवनकालेयंविनाकवलमपिग्रासमपिनभुंजते अस्मिन्परलोकंगतेसतिआकंठंस्वादुअदंतीत्यन्वयः ६१४ यमिति । शाययंतिस्वापयंति जातवेदसिवह्नौ ६१५

यंपुराम्दुलेति । कोमलहस्तस्पर्शकाः तंचितागतम् ६१६ वाजिनेति वाजिनाश्वेन शिबिकानृयानम् ६१७ मंगलैरिति । वादित्रैःपटहादिवाद्यैः ६१८ यस्याग्रतइति । एतेबंधु जनाः ६१९ पुत्रेति । एषसर्वंत्यक्त्वाप्रयातिविरक्तस्तुपुनर्नव्रजेत्एकवारमेवगच्छेदिति 'नसपुनरावर्तते'इतिश्रुतेः । अयंतुविनावैराग्यंपुनःपुनरेवंगच्छतिम्रियतेइतिभावः ६२० यंविनाक्षण मात्रमिति । निर्वृताःसुखिताआशयायेषांतेतथा ६२१ यःपुरेति जनानांवक्त्राण्येवाब्जानितद्विकासनेभास्करः सुरोपमोदेवसमः तस्यसंदर्शनेचस्नानंप्रकुर्वते ६२२ पादाग्रादिति । यस्य पादाग्रभ्रिःसृतंनीरंमूर्द्धनिबिभ्रतिधारयंतिजनास्तस्यसंस्पर्शतःस्नानंप्रकुर्वते वशतस्तुस्पर्शनैवप्रकुर्वतेइति ६२३ फलितमाह एवमिति । नोवेत्तिनगणयति ६२४ पारलौकिकीर्दशाःस्फुटयति

यंपुराम्दुलस्पर्शागंधपुष्पकराअपि ॥ स्पृशंतोभयमायांतिकाष्ठैस्तीक्ष्णैःस्पृशंतितम् ६१६ वाजिनावाशिबिकयायंगजेनरथेनवा ॥ नयंतितंनयंत्येतेबद्ध्वाका ष्ठेनकाष्ठवत् ६१७ मंगलैरपिवाद्यैर्दित्रैःप्रयाणंकुरुतेहियः ॥ सप्रयात्यधुनास्त्रीणांसशोकैरोदनैःसह ६१८ यस्याग्रतोनयंत्येतेदधिलाजादिमंगलम् ॥ तएवतस्यपु रतोनयंत्यग्निंसधूमकम् ६१९ पुत्रभार्यादिकंपूर्वंयःक्षणंनविमुंचति ॥ त्यक्त्वासर्वंप्रयात्येषविरक्तोनपुनर्व्रजेत् ६२० यंविनाक्षणमात्रंहिनपुरस्थातुमीशते ॥ तंविनाबांधवाःसर्वआसतेनिर्वृताशयाः ६२१ यःपुराजनवक्त्राब्जभास्करोऽभूत्सुरोपमः ॥ तस्यसंदर्शनेस्नानंस्पर्शनेचप्रकुर्वते ६२२ पादाग्रान्निर्गतंयस्यनीरं मूर्द्धनिबिभ्रति ॥ तस्यसंस्पर्शतःस्नानंस्पर्शनैवप्रकुर्वते ६२३ एवंप्रत्यक्षदोषेपिजनःसंसारशूलके ॥ पतितोवेत्तिनोदुःखंमोहितोदेवमायया ६२४ एवंशरी रंसंत्यज्ययम्च्छत्येषोऽतिदुःखितः ॥ क्षुत्पिपासापरिश्रांतोभर्त्सितोयमकिंकरैः ६२५ अनेकशतकोटीनांयोजनानियमालयम् ॥ स्वल्पेनैवहिकालेननीयतेयम किंकरैः ६२६ पाशबद्धोयथाच्छागस्ताडितश्चकशादिभिः ॥ नीयतेराजभृत्याद्यैर्बलादेवमसावपि ६२७ अत्रदुःखान्यनेकानिम्रुतानांयमशासनात् ॥ भवंति तानिकोनामवक्तुंश्रोतुंचवाक्षमः ६२८ दंष्ट्रिणांसूकरादीनांकाकगृध्रादिपक्षिणाम् ॥ उपद्रवोमहान्मार्गेयमराजपुरस्यहि ६२९ चोराश्चशतशस्तत्रघ्नंतितंराक्ष सोपमाः ॥ शस्त्रैर्नानाविधैर्नैवाम्रियतेसोपिदुष्कृतात् ६३० पूयविष्ठादिपूर्णानांनदीनामपिलंघनम् ॥ निमज्जनंचतत्रैवक्वचिन्नक्रादितोभयम् ६३१ वन्हिशस्त्र जलेलानांवायोश्चापिविकारतः ॥ यमालयेहिनरकादुःखदाःपापकारिणाम् ६३२ अनेककल्पपर्यंतमसिपत्रवनादिषु ॥ क्रूरेषुनरकेष्वेवदुःखान्याप्नोतिदुष्कृती ६३३ प्रसिद्धानरकास्तेहिपुराणेषुविपश्चितः ॥ भृशंदुःखकरानृणांपापिनांपरजन्मनि ६३४ एवंसनारकंदुःखमनुभूयाथकालतः ॥ दुष्कृतीबीजतांप्राप्यलो कमेतंपुनर्व्रजेत् ६३५

एवंशरीरमिति ६२५ अनेकेति । योजनानिविस्तृतंयमालयंयमकिंकरैरेपस्वल्पेनकालेननीयतेइत्यन्वयः ६२६ दृष्टांतमाह पाशबद्धइति । छागोऽजः एवमसौजंतुः ६२७ अत्रेति । अत्रयमालये ६२८ दंष्ट्रिणामिति । स्पष्टम् ६२९ चोराश्चेति । दुष्कृतात्भोग्याद्धेतोः ६३० पूयेति ६३१ वह्नीति । इलापृथ्वी एतेषांतथावायोश्चविकारादाकाशतमसोश्चविकारतो नरकरूपेणपरिणामात् ६३२ अनेकेति ६३३ ननुतेनरकाअपिवर्णनीयाअतआह प्रसिद्धाइति । परजन्मनियमानुपजन्मतोभिन्नजन्मनि ६३४ दुष्कृतगतिमुपसंहरति एवंसनारकमिति । कालतःकालानुसारतः बीजतामनुभावं एतंमानुषम् ६३५

सुकृतिनोगतिमाह । सुकृतांतेसुकृतभोगांते पर्जन्यधारयापूर्वोक्तनीत्या ६३६ सइतइत्यादिवाक्यंव्याचष्टेअमुमिति । अमुंमानुषं पूर्ववत्अन्नभावेन पुण्यपापानुसारेणपुनःपितृमातृद्वाराजायतइति ६३७ जातस्येति । पुत्रमपेक्ष्यतद्रूपेणोक्तजन्मद्वयमपेक्ष्येदंपितुर्जन्मतृतीयंवक्तव्यंकिमितिपितृरूपेणतृतीयमुक्तमितिशंकामभिप्रायाविष्करणेनवारयति उक्तमिति । उक्तंजन्मद्वयंचकारात्तृतीयंजन्म चएतत्त्रयंघटीयंत्रमिवोतिसूचनायतथोक्तिः । एवंहिपुत्रस्यापितृतीयंजन्मबोधितमेवेतिश्रुत्याशयः ६३८ एतमाशयंस्फुटीकुरुते मृतइत्यादिना । तत्त्वज्ञानंविनाजन्मधारानविच्छिद्यतइतिभावः ६३९ वाराइति । यथारवींद्वारज्ञगुरुसितशनिवारधारानविच्छिद्यतेतथाऽज्ञस्यजन्मादयोपि ६४० नैरंतर्येदृष्टांतांतरमाह यथेति । भावंपरिणामम् जंतुरविवेकी ६४१ प्रतिक्षणपरिणामिनोहिसर्वे भावाऋतेचितिशक्तेरितिसिद्धांतात्परिणममानोपाधितादात्म्याभिमानवतांनिरंतरेजनिमृतीइतिसूचकंलक्षणार्थेशतृप्रत्ययांतंप्रयन्निति पदंदृष्टांतेनव्याकरोति तमइतिद्वाभ्याम् । यथातमोंधकारस्ते जोदीपादिलक्षणंसंप्राप्यास्तंव्यवहाराभावरूपंलयंप्रयातितथामृतिर्मरणावस्थाजनिमुत्तरदेहाभिमानात्मिकांप्राप्यैवसमाप्ताभवतीति यद्यपिदेवयानपितृयानप्रतिपादकश्रुत्यादिभ्योलोकांतरेगत्वाज न्मलाभोनिर्धारितस्तथापिसविज्ञानोभवतीत्यादिश्रुतेर्मरणकालेभाविशरीराकारंविज्ञानंजायतेतदेवशरीरांतरग्रहणमित्यभिप्रायेणनैरंतर्यव्यपदेशः ६४२ ननुतयोरस्तुनैरंतर्यंचेतनस्यकिमतआह तेजः

सुकृतीचतथास्वर्गेह्यनुभूयसुखंमहत् ॥ सुकृतांतेपतत्यस्मिन्लोकेपर्जन्यधारया ६३६ अमुंलोकंहिसंप्राप्यपूर्ववत्पुण्यपापतः ॥ जायतेविविधोजंतुःपितृमा त्रादितःसदा ६३७ जातस्यास्यतृतीयंस्याज्जन्मपुत्रमपेक्ष्यहि ॥ उक्तंजन्मद्वयंचैवंघटीयंत्रमिवाव्रजेत् ६३८ मृतोजातःशिशुस्तद्वद्युवावृद्धःपुनर्मृतः ॥ जंतु र्भ्रमतिसंसारेयावदात्मावबोधनम् ६३९ वारायथाभास्करादेर्वर्ततेच्छेदवर्जिताः ॥ एवंजन्मादयोभावाजंतूनांछेदवर्जिताः ६४० यथाप्राप्यनवंवासःपूर्ववा सःपरित्यजेत् ॥ एवंजंतुःपरंभावंप्राप्यपूर्वंपरित्यजेत् ६४१ तमोयथाप्रयात्यंततेजःसंप्राप्यवैतथा ॥ मृतिर्जनिंहिसंप्राप्यस्वयमस्तंप्रयातिहि ६४२ तेजसस्तम सोवापियद्वदेकंनसंत्यजेत् ॥ जगदेवंनरंमंदंमृतिर्वाजनिरेववा ६४३ तस्मादेतत्समग्रंहिदुःखंदेहादिकंनृणाम् ॥ विनानंदात्मविज्ञानंदुःखकारणनाशनम् ६४४ एवंतेषांप्रवृत्तेस्मिन्विचारेह्यधिकारिणाम् ॥ विरक्तावपिजातायांस्वात्मन्यप्यविचारिते ६४५ उपदेशेस्मृतिपथमानीतेमुनिजेसति ॥ तेषामन्यतमः कश्चिद्वामदेवोममारह ६४६

सइति । तेजस्तमसश्चानयोरेकमन्यतरद्यथाजगन्मानुषादिलोकंनत्यजेदेवंमंदमज्ञंकार्यकारणाज्ञानशालिनंनरंपुरुषंवस्तुतःपरिपूर्णमपिमृतिजन्मनोरन्यतरन्नजहातीत्यज्ञस्यतत्प्रसंगोदुर्वारइत्यर्थः ६४३ योयंनानानर्थसंकुलःसंसारोदर्शितःसपूर्वंप्रपंचिताद्वितीयानंदात्मप्रबोधेस्वप्रवद्विलीयतेइत्यभिनीयमंत्रेणदर्शितमित्यर्थकंतदुक्तमित्यादिवाक्यंव्याचष्टे तस्मादिति । तस्मान्मंदत्वस्यसंसारव्याप्य त्वादेतत्समग्रंदुःखमानंदात्मविज्ञानंविनैवतदुदयात्प्रागेवमतिभातीतिशेषः कीदृशंदुःखं देहादिकंदेहाःकारणादिशरीराणितत्प्रभृति आदिपदेनतदवस्थाजाग्रदादयोगर्भप्रवेशाद्याजन्मत्रयलक्षणा श्चग्राह्याः कीदृशमात्मज्ञानं दुःखानांकारणस्यप्रयोजकस्याज्ञानस्यविरोधिइति ६४४ अथगर्भेनुइत्यादिमंत्रंश्रौतार्थतात्पर्यार्थौप्रदर्शयन्व्याकरोति एवंतेषामित्यादिनाएवमादिवचइत्यतः पूर्वग्रंथेन । एवंपुंगर्भप्रवेशग्रंथमारभ्यप्रदर्शितप्रकारेणतेषांसनकादिशिष्याणामधिकारिणांदोषविचारेप्रवृत्तेसतितत्फलभूतायांविरक्तौचजातायांसत्यांस्वात्मनिविरक्तिफलभूतविचारंगोचरीकर्तुमिष्टे प्यविचारितेसतिपरंतुविचारारंभायसनकादिमुनिजेउपदेशेस्मृतिपथमानीतेचसतितेषामधिकारिणामन्यतमोवामदेवोममारहेतिद्वयोरन्वयः ६४५ उपदेशइति । व्याख्यातम् ६४६

सहीति । सवामदेवः श्रवणेजातेपिजन्मांतरारंभककर्मरूपभाविप्रतिबंधेनमननादिविरोधिनानसाक्षात्कृतआत्मायेनसतथातस्यभावस्तस्मान्मातुर्गर्भेपुंगर्भभावद्वाराप्रविष्टवान् प्रविष्टश्चगर्भेनवमासान्शयनमवस्थितिंप्राप्तः तथाभावेहेतुंदर्शयति पूर्वेति । तत्त्वसाक्षात्कारेहिज्ञानकर्मसंस्कारादग्धबीजभावतांयांतिसचास्यप्रतिबंधान्नजातइतिभावः ६४७ नवमेमासीति । बोधेसंपन्नेनियतिवशादुत्पन्नेसतिअयंसर्वोपिजंतुःपूर्वाजातीर्जन्मानिस्मरतीतिगर्भोपनिषदादौप्रसिद्धं । वामदेवेविशेषमाह तस्मिन्निति । एषवामदेवःप्रबुद्धवान्पूर्वंजातिस्मृतिकालेप्रतिबंधकदुरितशांतौसनकाद्युक्तस्मृत्यामनननिदिध्यासनसंपत्त्यानंदात्मानंसाक्षात्कृतवानित्यर्थः ६४८ प्रबुद्धश्चेति । प्रबुद्ध्वाऽऽनंदात्मानंसाक्षात्कृत्यतत्रगर्भएवस्थितःसन्निदंवक्ष्यमाणंवाक्यंस्वसखीन्येःसहश्रवणंसंसारदुःखालोचनंचकृतवांस्तानेवमुनीनधिकारिणःप्रतिउक्तवान् यतआत्मवित्तमःअतिशयेनात्मविदिति ६४९ अहमिति । भवतांयुष्माकमग्यतमोहमितःपूर्वजन्मनिपरिच्छिन्नदेहात्माभिमानेनाल्पतमःअत्यंतंपरिच्छिन्नःस्थितोऽभूवमितिशेषः इदानींविद्यावस्थायामेकोऽद्वितीयोहमेवास्मीत्येवकारव्यावर्त्यमाह नान्यमिति । अन्यंपृथग्भूतं तथाचश्रुतिः 'यत्रत्वस्यसर्वमात्मैवाभूत्' इत्यादि ६५० स्वस्यसर्वात्मतांदर्शयति मयेत्यादिना । प्रदिशोऽग्न्यादिकोणाः मनुःस्वायंभुवादिरहमेवासमिति तथाऽऽदित्यः । कीदृशोमहेश्वरःबुद्धिप्रेरकत्वादिति । लोकपालाइति । प्रभवःशक्तिसंपन्नाः

सह्यसाक्षात्कृतात्मत्वाद्गर्भेमातुःप्रविष्टवान् ॥ गर्भेसशयनंप्राप्तःपूर्वसंस्कारसंस्कृतः ६४७ नवमेमासिसंपन्नेबोधेजातीःस्मरत्ययम् ॥ जंतुःसर्वोपितस्मिन्हि कालएषप्रबुद्धवान् ६४८ प्रबुद्धश्चमुनीन्सर्वान्स्वसखीनधिकारिणः ॥ इदंतत्रस्थितोवाक्यमुक्तवानात्मवित्तमः ६४९ अहंहिभवतांपूर्वजन्मन्यल्पतमःस्थितः ॥ इदानीमहमेवात्रनान्यंपश्यामिकंचन ६५० मयासर्वादिशःपूर्णाःप्रदिशश्चनभस्तथा ॥ मनुःपूर्वमहंतद्वत्सूर्योऽप्याऽऽसंमहेश्वरः ॥ लोकपालास्तथासर्वेमद्रूपाःप्रभवोपिहि ६५१ स्वेदजानितथायानिह्युद्भिज्जान्यंडजानिच ॥ जरायुजानिभूतानिमत्तोनान्यानिकानिचित् ६५२ ब्रह्माद्याःस्थावरांतायेजंतवोनेककर्मिणः ॥ तेसर्वेममदेहाःस्युरानंदात्मस्वरूपिणः ६५३ जायतेऽस्तिविवृद्धश्चपरिणाम्यथनाशवान् ॥ विनष्टश्चापिदेहोयंसेंद्रियोनाहमत्रहि ६५४ अहंजानामिदेवानांवागादीनामनेकशः ॥ जन्मानिनममैकंचसुखंदुःखंचगच्छति ६५५ इदानीमात्मविज्ञानसंपन्नंसर्वसाक्षिणम् ॥ नस्पृशंति ह्यवागाद्याःसशरीराइमेसुराः ६५६

सर्वेलोकपालाइंद्राद्याअहमेव ६५१ नकेवलमुत्कृष्टाएवमदात्मानःकिंतु 'ब्रह्मदाशाब्रह्मेमेकितवा' इत्यादिश्रुतिभ्योपकृष्टाअपीत्याह स्वेदजानीतिद्वाभ्यां स्पष्टम् ६५२ ब्रह्माद्याइति । ब्रह्मपदेनादिजीवस्यहिरण्यगर्भस्यग्रहः । अनेकेति । नानाविधकर्मशालिनःकर्मधारयान्नमत्वर्थीयइतिनियमस्तुप्रायिकः अस्तुवत्रतइतिभाष्योक्तेः तन्नियमाभ्युपगमेतुअविद्यमानमज्ञानेनावृतमेकंतत्त्वेयेषांतेऽनेकास्तेचतेकर्मिणश्चेतिविग्रहः तेजंतवोममानंदात्मस्वरूपिणआनंदाभिन्नात्मनास्वरूपिण प्रकृत्यादित्वात्तृतीयान्तंपूर्वपदं देहाःरूपाणीति ६५३ तथात्वेषड्भावविकारप्रसक्तिनिषेधति जायतेइति । नाशवानपक्षयवान्इतिभावविकारवान्सेंद्रियोदेहएवनाहं कुतइत्यतआह अत्रहीति । यतोत्रसाक्षादपरोक्षेमयितेकल्पिताः नहिकल्पितधर्माअधिष्ठानंस्पृशंतीतिभावः ६५४ अहमिति । वागादीनांदेवानामनेकशःविश्वानिसर्वाणिजन्मानिजानामिनेषांमध्येएकमपिममतेभ्यःपृथग्भूतस्यसुखंदुःखंचनयच्छतिददातिकरोतीतियावत् ६५५ तत्राध्यासाभावंहेतुतयाह इदानीमिति । इदानींवागाद्याःसुराःअध्यात्माधिदेवभेदभिन्नामांसर्वसाक्षिणंपूर्ववन्नस्पृशंति तत्रहेतुगर्भविशेषणं आत्मेति । तथाचकथंतदीयाजन्मादयोविकृतंकुर्युरितिभावः ६५६

शर्वमेत्याद्यंशंव्याकरोति कारागृहेति । कारागृहसमावहवःपुर्यश्चतुरशीतिलक्षशरीराणिआसन्निति शेषः कीदृश्यः क्लेशकारिणाऽयसालोहवदृभेद्येनकृष्णेनचाज्ञानेननिर्मिताःमद्वंधनंप्रयोजनकाः ६५७ अज्ञानलोहमयपुरीणांबंधकत्वेस्फुट्यन्बंधःश्येनइत्याद्यंशंव्याकरोति यथेत्यादित्रिभिः । यथालोकेमहाकायंश्येनंक्रौंचादिघातकत्वेनप्रसिद्धंबलिष्ठत्वेनपाशकैःकुत्सितैःपाशैर्दुःखेनग्रहीतुंशक्यमायसैःपुरैःपंजररूपैरुंधंतितथाऽज्ञानलोहमय्यस्ताःसर्वाःपुरोमामद्वितीयत्वेसतिसर्वातरत्वेनदुर्ग्रहंअरक्षन्परिच्छेदाभिमानरूपपाशैर्निरोधेनीतवत्यइत्यर्थः ६५८ अहमिति । अहंतान्नेतानज्ञानपाशान्विपर्ययरूपपाशान्सपुरान्पूर्भिःसंहितान् ब्रह्मविज्ञानरूपेणतुंडेनचंचुनाव्यनाशयंखंडितवानस्मि कीदृशानज्ञानपाशान् कामक्रोधादिरूपाणिकीलकानिदृढत्वहेतुशंकवोयेषांतेतथातानिति ६५९ यथागृहइति । यथागृहेनिरुद्धःश्येनोदुर्भेदभेदकत्वेनवज्रसमंहीरकसममाननंमुखंयस्यसतथा अधःपंजराधोदेशंभित्त्वाविनिर्गच्छेत्तथाहमेताःपुरोऽधोभित्त्वाजवसावेगेनिर्गतोस्मीति अत्रसर्वशरीररूपपुराणामधोदेशःसत्सामान्यंइदंरजतमितिभ्रमेपिभासमानेदंपदार्थवदाधारसंज्ञकं तस्यभेदनंनामप्रमावृत्याऽऽवरणांशविमोकः एतदभिप्रायेणोक्तंवार्त्तिककारैः 'अपामार्गलतेवासौविषमोहिभवभ्रमः । प्रत्यग्दृशांविमोक्षायनिर्बंधायबहिर्दृशाम्' इति ६६० एवंमंत्रस्यश्रौतार्थप्रपंच्यतात्पर्यार्थंप्रपंचयति । भवतामित्यादिना । यद्देहपुत्रादौविरक्तिरूपंभवतामात्मविज्ञानकारणमुक्तं सनकाद्यैरितिशेषः एतद्विरक्तेःकारणत्वंविनिश्चितंमयाफलदर्शनेननिर्धारितम् ६६१ फलजनकतामेवाह ममेति । यस्मान्ममेदंवक्ष्यमाणस्वरूपंज्ञानं

कारागृहसमाःपूर्वमयसाक्लेशकारिणा ॥ निर्मिताबहवःपुर्योममबंधनहेतवः ६५७ यथाश्येनंमहाकायंदुर्ग्रहंपाशकैरपि ॥ एवंमांदुर्ग्रहंसर्वास्ताअरक्षन्समंततः ६५८ अहमज्ञानपाशांस्तान्कामक्रोधादिकीलकान् ॥ सपुरान्ब्रह्मविज्ञानतुंडेनैनान्व्यनाशयम् ६५९ यथाग्रहेनिरुद्धःसन्श्येनोवज्रसमाननः ॥ अधोभित्त्वाविनिर्गच्छेत्तद्वदेताअहंपुरः ६६० भवतामात्मविज्ञानकारणंकथितंपुरा ॥ विरक्तिर्देहपुत्रादौयदेतद्विविनिश्चितम् ६६१ ममयस्मादिदंज्ञानंसनकादेःप्रसादतः ॥ जातंविचारेयुष्माकंप्रमानेमरणेसति ६६२ नाहंबिभेमिसंसारान्नकालान्नापिमृत्युतः ॥ सर्वमेतन्मयियतःस्थितंस्रजियथाफणी ६६३ किंकरिष्यतिमेमृत्युर्मृत्योरात्मस्वरूपिणः ॥ नह्यसावात्मनात्मानंहंतुमीष्टेकथंचन ६६४ अपिमृत्युस्तथाजन्मबाल्यंयौवनमेववा ॥ जरावापिनमेकिंचिद्देहेयस्माद्विदृश्यते ६६५ अन्यस्यसुखदुःखाभ्यांनान्योभवतितादृशः ॥ अन्योहंदेहतस्तस्मात्कस्मादेतद्भवेन्मम ६६६

जातंतत्रमुख्यःप्रयोजकस्तुगुरोरनुग्रहइत्याह सनकादेःप्रसादतइति । प्रतिबंधापगमस्तुद्वारमित्याह मरणेसतीति । मरणकालमुपक्षयति विचारेइति । विचारोपलक्षितकालइत्यर्थः कीदृशेविचारे युष्माकंसमानेयुष्माभिःसहानुष्ठितेइतियावत् भवतांप्रतिबंधवशादनुत्पत्तावपिनकारणत्वापकर्षइतिभावः ६६२ ज्ञानस्वरूपंप्रपंचयति नाहमित्यादिना । द्वितीयाद्धिभयंद्वितीयत्वंतुस्रजिकल्पितफणिनःस्रजइवमत्तःसर्वस्यनसंभवतिअतोऽद्वितीयोस्मीतिभावः ६६३ अमृतोस्मीत्युपपादयति । किंकरिष्यतीति । मृत्युर्मेममाधेयतयासंबंधिमन्निष्ठमितियावत् किंस्वव्यापारजन्यफलंकरिष्यतिनकिमपीति कीदृशस्यमे मृत्योरात्मस्वरूपिणः आत्मभूतस्यकर्मत्वेकर्मकर्तृत्वविरोधंदर्शयति नहीति । असौमृत्युःईष्टेशक्तोभवति 'तस्यहदेवानाऽभूत्याईशतआत्माह्येषांसभवति' इतिश्रुतेरिति ६६४ किंच मृत्युर्जन्मादिव्याप्यःजन्मादिकंचदेहत्वव्याप्यं मयितु 'अकायमव्रण' इत्यादिश्रुतिभ्योदेहविविक्तेदेहत्वलक्षणव्यापकनिवृत्तौतद्व्याप्यनिवृत्तिर्न्यायसिद्धाइतिवदन्विजरोस्मीत्यपिदर्शयति अपिमृत्युरिति । मृत्युप्रभृतिनमेकिंचिद्यस्मादेतत्सर्वंदेहेदृश्यतइत्यन्वयः ६६५ विशोकोस्मीतिप्रपंचयति अन्यस्येति । तादृशःसुखदुःखोपलक्षितशोकमोहवान् एतत्सुखादिकम् ६६६

ननुदोपाष्टकेसतिकथंविशोकतेत्याशंक्यतस्यसाक्षिभास्यमनःप्रभृतिधर्मत्वान्नतद्भासकेसाक्षिणिप्रसंगः नहिपंकमालिन्यंरविंस्पृशतीत्याह दोषाष्टकमिति । इदंइच्छाद्वेषभयमोहक्षुत्तृण्निद्राविण्मूत्र बाधाचेत्युक्तंदोपाष्टकंमांसुखरूपकमात्मानंकथंचननस्पृशेत् तत्रहेतुगर्भमात्मविशेषणं मनआदिभ्योऽन्यमिति । तत्रेच्छाद्वेषभयमोहामनोधर्माः क्षुत्तृषौप्राणस्य निद्राइंद्रियाणां विण्मूत्रबा धाशरीरस्येतिमनआदिभिन्नंकथंदोपाष्टकंस्पृशेदितिभावः ६६७ एतदेवनवभिःप्रपंचयन्निच्छायास्तावन्मनोधर्मतामाह मोक्षइति । मोक्षःस्वर्गः तथाइहस्थितंवैषयिकंसुखं एतत्रयंयथाक्रमंसात्वि कंराजसंतामसंचमनएवेच्छतिअहंतुनिस्त्रैगुण्योनतदिच्छामि आप्तकाममात्मकाममकाममित्यादिश्रुतयोपिइच्छानिषेधंतीत्याशयेनात्मविशेषणमाह आनंदरूपभृदिति ६६८ द्वेषस्यापित्रिवि धविपयस्यत्रिगुणमनोधर्मतामाह अज्ञानमिति । अन्यदेहलौकिकंप्रतिकूलवेदनीयं सज्जनाअपितामसस्यतथेतिनपूर्वविरोधः ६६९ आनंदरूपतापिद्वेषाभावहेतुरित्याह अनाप्तकामइति । भिन्नोभे ददर्शी परःअभेददर्शी ६७० भयमोहयोर्मनोधर्मत्वमात्मधर्मत्वासंभवहेतुप्रदर्शनेनस्फुटयतिभयेति । मनसोधर्माविितिशेषः नमेधर्मौ तथाचाहंनतयोर्धर्मीत्यर्थादागतं तत्रचहेतुभूतेआत्मविशेषणे इतिनहेतुसाध्ययोर्वैय्यधिकरण्यंभयाभावेऽद्वितीयत्वंहेतुःमोहाभावेषचिन्मात्रत्वं सर्वात्माचासौबोधःसर्वात्मबोधः एकंघतद्वपुःस्वरूपंतदेकवपुः सर्वात्मबोधएकवपुर्यस्यसतथासचासावात्माच

दोषाष्टकमिदंनित्यंनस्पृशेद्धिकथंचन ॥ आत्मानंमनआदिभ्योमामन्यंसुखरूपकम् ६६७ मोक्षःस्वर्गस्तथाचान्यत्सुखजातमिहस्थितम् ॥ मनइच्छति नाहंतदिच्छाम्यानंदरूपभृत् ६६८ अज्ञानंनरकंत्रापिदुःखंचान्यतससाधनम् ॥ मनएवहितद्वेष्टिनाहंद्वेष्मिकथंचन ६६९ अनाप्तकामोभिन्नोयःसद्वेष्टिनपुनः परः ॥ अहंसर्वस्वरूपःसन्कस्माद्द्वेष्मीहाकिंचन ६७० भयमोहौचमनसोनमेस्यातांकथंचन ॥ अद्वितीयस्यसर्वात्मबोधैकवपुरात्मनः ६७१ योद्वितीयंविजा नातिप्रतिकूलकरंतथा ॥ सएवहिजनोलोकेविमुह्यातिबिभेतिच ६७२ नाहंद्वितीयंजानामिशत्रुंमित्रंतथापरम् ॥ तस्यमेकेनवास्यातांभयमोहावकारणौ ७३ क्षुधातृषाचतद्वन्मेप्राणशून्यस्यकर्हिचित् ॥ मास्यातांयतएतेद्वेदृश्येतेप्राणसंगते ७४ निद्राचमनसःक्वापिवागादेर्नित्यमेवाहि ॥ इंद्रियादिविहीनस्यममकेन भवेद्धिसा ७५ विण्मूत्रबाधादेहस्यनाशरीरस्यकर्हिचित् ॥ अकायोह्यव्रणश्चाहंममकेनभवेद्धिसा ७६ वचसांव्यवहारेणभवतामेतदीरितम् ॥ मयास्वात्मस्व रूपंतन्नेदृशंवस्तुतःक्वचित् ६७७

तस्येतिविग्रहः अत्रमहावाक्यार्थसूचनान्निरावरणत्वंबोधितंतद्यमोहप्रयोजकतमोविरोधिइति ६७१ किंचविषादात्मकमोहस्यभयस्यचभिन्नत्वेनज्ञानेप्रतिकूलकारणत्वज्ञानंहेतुस्तच्चमयिनास्तीत्याह योद्वितीयमितिद्वाभ्यां । यःकश्चिद्द्वितीयंजानातितथातमेवद्वितीयंप्रतिकूलकरंजानातीतियोजना । सएवेत्यादिस्पष्टम् ६७२ नाहमिति । अहंतुद्वितीयमेवनजानामि तस्यप्रतिकूलत्वादिज्ञाना भावोव्यापकभेदज्ञानाभावादेवसिद्धइत्याशयेनाह शत्रुमित्यादि । परमुदासीनम् अकारणौउक्तकारणहीनौ ६७३ क्षुत्पिपासयोःप्राणधर्मत्वादात्मन्यसंभवमाह क्षुधेति । एतेक्षुधातृषेसंगतेसं बद्धेमेप्राणशून्यस्यमास्यातांनसंभवतइत्यर्थः ६७४ निद्रायाधर्मिप्रदर्शनपूर्वकमात्मनिव्यतिरेकमाह निद्राचेति । निद्राहिकारणेलयरूपासाचमनसःक्वापियदास्वप्नंनपश्यतितदैवप्रसिद्धा इंद्रि याणांतुनित्यमेवस्वप्नदर्शनेऽदर्शनेच ममत्वजस्यमनसइंद्रियेभ्यश्चभिन्नस्यनसासंभवतीत्याह इंद्रियादीति ६७५ अष्टमंदोषंश्रुतिसिद्धंशरीरमेदवत्वान्निरस्यति विण्मूत्रेति ६७६ नन्वद्वितीयामृताजाज रविशोकत्वंनिषेधमुखेनैवात्मानंकिमभिदधासिसखिभ्योऽस्मभ्यंविधिमुखेनशृंगग्राहिकान्यायेनप्रदर्शयेत्याशंकांवारयन्नविषयतामाह वचसामिति । यदेतद्भवतांहितायवचसांव्यवहारेणस्वात्म स्वरूपमीरितंतद्वस्तुतईदृशंइदंप्रत्ययगोचरनिर्भविषयरूपंवस्तुतोनभवतीत्यन्वयः निषेधवाक्यान्यपितात्पर्यवृत्त्यैवबोधयंतीतिभावः ६७७

अविषयतामेवस्फुटयति इंद्रियैरिति । एतदात्मतत्त्वमखिलैर्बाह्यैरिंद्रियैश्चक्षुरादिभिर्गम्यंन तथाआंतरैर्मनोबुद्धिचित्ताहंकारैर्गम्यंनेति । ननुवेदांतवाक्यजन्यबुद्धिवृत्तेर्विषयोभविष्यत्येवतथाजडगोचरायाअविद्यायाश्चेत्याशंक्याह धीवृत्तेरित्यादि । ब्रह्माकारवृत्तेश्चिद्भास्यत्वमेवविषयत्वं तदुक्तंयोगभाष्ये नचपुरुषप्रत्ययेनबुद्धिसत्वात्मनापुरुषोदृश्यतेपुरुषएवतंप्रत्ययंस्वात्मावलंबनंपश्यतीतिविज्ञातारमरेकेनविजानीयादितिपरंतुबुद्धिवृत्तिस्तस्यविषयत्वस्यानुपयोगिन्यपिप्रतियोगित्वेनोपचाराद्व्यवह्रियतेएवमविद्यायामपिबोध्यम् ६७८ विधिरूपोपदेशानामप्यार्थिकेतरव्यावृत्तिबोधेनैवप्रसरलाभइत्याशयेनविधिरूपेणविशेषणद्वयमाह आनंदात्मेति । दुःखाऽनात्मासज्जडानेकविलक्षणमित्यर्थः ताहशस्वभावत्वेत्रिविधपरिच्छेदराहित्यलक्षणमद्वितीयत्वमुपक्रमोक्तंहेतुतयोपसंहरति देशेति । स्वरूपंवस्तु गंधोलेशः ६७९ अतइति । अतोममैताहशज्ञानजनकत्वेनगुरूपदेशस्यज्ञानंप्रतिपरिपुष्कलकारणतायानिर्धारणादुदाहृतमुपदिष्टंअवगच्छंतुजानंतु एनमानंदात्मानंनचास्माकमपिभाविप्रतिबंधभयाद्विचारेप्रवृत्तिर्दुःशकाइतिवाच्यम् भाविप्रतिबंधस्याहष्टरूपस्यदृष्टद्वारेणैवप्रतिरोधकत्वान्नाहष्टंदृष्टमंतराकरोतीतिन्यायात् तदभावस्तुवर्तमानप्रतिबंधाभावेनसुज्ञानः तदुक्तं 'नदेवादंडमादायरक्षंतिपशुपालवत् । यंहिरक्षितुमिच्छंतिबुद्ध्यासंयोजयंतितम्' इति । तस्मात्प्रतिबंधोवर्तमानोविषयासक्तिलक्षणः प्रज्ञामांद्यंकुतर्कश्चविपर्ययदुराग्रहइतिवर्तमानप्रतिबंध

इंद्रियैरखिलैर्गम्यंनैतद्वाह्यैस्तथांतरैः ॥ धीवृत्तेरप्यविद्यायाःसाक्षिभूतमवस्थितम् ७८ आनंदात्मस्वरूपंसत्प्रकाशैकस्वभावकम् ॥ देशकालस्वरूपोत्थभेदगंधविवर्जितम् ७९ अतोभवंतोमुनयःसनकाद्यैरुदाहृतम् ॥ विचार्यस्वयमेवैनमवगच्छंतुमाचिरम् ८० अतोत्रभवतांपद्वन्माभूज्जन्मांतरंक्वचित् ॥ अहंहिमम दृष्टयास्मिदेहादिपरिवर्जितः ॥ अधुनाभवतांदृष्ट्यागर्भेतिष्ठामिसंकटे ८१ यादृगेवपुरास्माभिर्गर्भेदुःखंविचारितम् ॥ अधुनानुभवाम्येतत्तावद्वापिततोधिकम् ८२ तथापिममसर्वात्मबोधपूर्णेन्दुसेवया ॥ दुःसहोगर्भचंडांशुःसंतापंनकरोतिहि ८३ एवमादिवचस्तूक्त्वामुनीनांप्रत्ययायहि ॥ वामदेवोविनिर्गम्यगर्भाल्लोकमिमंययौ ८४ सनकादिसमःसोपिलोकद्वयगतस्पृहः ॥ आरब्धकर्मनिर्वाणंकुर्वन्दुःखमवर्जितः ८५ इहामुत्रचसंप्राप्तान्भोगान्भुक्त्वातिनिर्मलः ॥ आरब्धकर्मणोनाशेत्वमृतंब्रह्मसोऽभवत् ६८६

परिहारेणविचारयतेतिभावः ६८० विचाराप्रवृत्तिस्वप्रतिबंधलक्षणंतांपरिहरतअन्यथापुनर्जन्मप्रसंगादित्याह अतोत्रेति । अत्रसंसारे । ननुविचारेप्रवर्त्तामहेपरंतुतवतत्त्वविदोपिगर्भवासदुःखमालोच्यफलेसंशयःप्रवृत्तिंप्रतिबध्नातीत्याशंक्यस्वदृष्ट्यादुःखाभावमाह अहमिति । आदिनाइंद्रियादीनांतद्धर्मदुःखादीनांचग्रहः ६८१ प्रारब्धनाशात्प्रतिभासनाशइत्यादिश्रुतेःप्रारब्धेनभासमानत्वेपिबाधितत्वेनस्वप्नदुःखवन्नव्यामोहकत्वमित्याह यादृगेवेतिद्वाभ्यां । अस्माभिःसनकादिशिष्यैर्मिलितैः ६८२ तथापीति । सर्वात्मबोधएवपूर्णेदुस्तस्यसेवयागर्भएवचंडांशुर्ग्रीष्ममध्यान्हार्कः ६८३ सएवमित्यादिसमभवदित्यंतंवाक्यंज्ञानस्याव्यभिचारिफलत्वसद्वामदेवेनतत्फलंलब्धमित्यर्थकंव्याचष्टे एवमादीतित्रिभिः । प्रत्ययोविश्वासःश्रद्धातिशयरूपः गर्भान्निष्क्रम्येतिसंबंधः इदंप्रत्यक्षागमासिद्धंभूप्रभृतिसत्यलोकांतंययौतत्रविचचार ६८४ सनकादीति । जीवन्मुक्तः लोकद्वयाद्गतानिवृत्तास्पृहेच्छायस्यसतथा निर्वाणमंतम् ६८५ इहेति । इहमानुषे अमुत्रस्वर्गे अतिनिर्मलः पुण्यानामप्युपभोगेनक्षपितत्वात् अत्रयद्यपिभाष्यकारैरिदंवाक्यंमूर्द्धस्वर्गशब्दयोःकदाचिदप्यधोभावशून्यपरमार्थवस्तुपरत्वमादायविदेहमोक्षपरतयाव्याख्यातंतथाप्येतेब्रह्मविदोलोकेपिनिरतिशयोत्कर्षइतिसूचनेप्रवृत्तिविशेषकरत्वलोभेनजीवन्मुक्तिपरतयाप्रियव्याख्यातमित्यविरोधः ६८६

एवमैतरेयपंचमंव्याख्यायषष्ठंव्याख्यातुंशिष्टाधिकारिणांविचारेप्रवृत्तेकेवामदेवेफलदर्शनेनाधिकारिणामुत्कंठातिशयवैराग्यदार्ढ्यंचवर्णयति वामदेवस्येत्यादिसप्तदशभिः । विस्मयाविष्टाआश्च र्यदर्शनेनद्रुतचित्ताअब्रुवन् परस्परमितिशेषः ६८७ तेषांवाक्यान्युत्कंठासूचकानिनिबध्नाति अहोइत्यादिना । तत्रदृष्टांतः पंकमग्नगोसमूहात्पुण्यविशेषेणैकोनिर्गच्छन्यथेरित्याह गोभ्यइति ६८८ दृष्टांतांतराणिदर्शयति पाशैरित्यादिपंचभिः । तथानोस्मान्हित्वावामदेवोगतइति ६८९ यथेति । राष्ट्रादीनांभंगेषुउपद्रवेषुप्रसक्तेषु आदिपदेननगरादिग्रहः स्वबंधून्मोहेनराष्ट्रादीनत्य जत् परिहायनिःस्नेहोगच्छतिप्रयातथावामदेवोगतइति ६९० यद्वादिति । पांथेषुगच्छत्सुकश्चि दन्यतमः निधिंभूमिगतंधनम् ६९१ गुरुशुश्रूषयइति । गुरुशुश्रूषणेप्रवृत्तानांबहूनांमध्येक श्चिद्देवविद्यांप्राप्नोतितथास्माकमयंवामदेवः अतःसएवपुमान्पुरुषोवयंतुफलालाभात्क्लीबनिभाइतिभावः ६९२ मंत्रादीनामिति । बहुषुजपादौप्रवृत्तेषु एकस्यान्यतमस्यमहात्मनोवामदेव स्य ६९३ मृगाणामिति मृगयुव्रातेनव्याधसमूहेनवृतानांसर्वतोनिरुद्धानांमध्यात्कश्चिदेवयातिक्षेमेणेतिशेषः ६९४ अहोइति । अत्रसर्वसामग्रीसंपन्नेपिलोकेस्थितानामितिशेषः ६९५ त स्यचगर्भसंकटेस्थितस्याप्यस्मद्बोधनप्रवृत्तौकरुणैवप्रयोजिकानस्नेहइत्याहुः अस्मानिति । स्नेहेनचेदुपदेशेप्रवृत्तिःस्याचर्हिबहिर्गत्वाबंधूनप्युपदिशेदितितत्कालेस्मदुपदेशेप्रयोजनंतुविचारितगर्भे

वामदेवस्यवचनंगर्भस्थस्यमहात्मनः ॥ श्रुत्वातेविस्मयाविष्टाअब्रुवन्नधिकारिणः ६८७ अहोअयंवामदेवोनिर्गतोस्मत्समूहतः ॥ गोभ्यःपंकेनिमग्नेभ्योयथा गौःपुण्यकर्मतः ६८८ पाशैर्वापिनिबद्धेभ्यःपक्षिभ्यःकश्चिदंडजः ॥ यथाप्रयातितान्हित्वावामदेवस्तथाहिनः ॥ कामक्रोधादिभिर्बद्धान्हित्वासर्वान्गतोधुना ६८९ यथाराष्ट्रादिभंगेषुस्वबंधून्परिहायहि ॥ निःस्नेहोयातिमनुजस्तद्वद्देवगतोधुना ६९० यद्वत्पांथेषुगच्छत्सुनिधिंकश्चिदवाप्नुयात् ॥ वामदेवस्तथास्मा सुलब्धवान्स्वात्मबोधनम् ६९१ गुरुशुश्रूषणेयद्वद्बहूनांकश्चिदेवहि ॥ प्राप्नोतिमहतींविद्यांतथास्माकमयंपुमान् ६९२ मंत्रादीनांयथासिद्धिर्बहुष्वेकस्यजाय ते ॥ अस्मद्विचारजासिद्धिस्तथाजातामहात्मनः ९३ मृगाणांमृगयुव्रातवृतानांकश्चिदेवहि ॥ यातितद्वद्वामदेवोगतोस्माकंचदुःखिनाम् ९४ अहोअस्यमह त्पुण्यंवामदेवस्यधीमतः ॥ गर्भेस्थितस्ययज्ज्ञानंजातंनास्माकमत्रहि ९५ अस्मान्नगर्भस्थितोवाक्यमुक्तवान्नबहिर्गतः ॥ तेनमन्यामहेनास्यस्नेहःकिंतुकृपैव हि ६९६ बंधून्सर्वानुपेक्ष्यासौपितरंमातरंतथा ॥ जातमात्रोगतःक्कापिजडोन्मत्तपिशाचवत् ६९७ अहोवयंव्यतिक्रांतकालाःकिंचिदबोधनाः ॥ हितंस्वेभ्यो यतोनात्मविज्ञानमिहसाधितम् ६९८ दुःखानिविविधान्यत्रभुक्तानिशतशोपिहि ॥ अस्माभिःस्वर्गलोकेपिसुखंनैवाऽप्तमण्वपि ६९९

दुःखसंवादोज्ञानबलेनदुःखस्यसुसहत्वाबोधनंचेतिकरुणयैवतस्यप्रवृत्तिरितिभावः ६९६ स्नेहाभावंस्फुटयति बंधूनिति । यतोसौवामदेवोजातमात्रएवक्कापिवंश्चलक्षितदेशेगतःतेननास्यस्नेहइ त्यनुषंगः । किंकृत्वा बंधूनित्यादि । बध्नंतिस्नेहेनेतिबंधवः ब्राह्मणपरिव्राजकन्यायेनपित्रोःपृथङ्निर्देशः । अलक्षितगमनेदृष्टांतोजडेत्यादि । द्वंद्वःकर्मधारयोवा ६९७ अत्रतत्त्वज्ञानाऽऽपदी प्यादेर्निर्वेदःस्वावमाननमित्युक्तलक्षणोनिर्वेदउत्कंठापरिपोषितः प्रतिपिपादयिषितस्तद्धेतुरीर्ष्यापूर्वदर्शितातत्स्वरूपंस्वावमाननंदर्शयति अहोइत्यादिना । अहोवयंकिंचित्स्मक्लीबवदवमानपा त्रंस्मयतोव्यतिक्रांतकालाःव्यर्थगतसमयाः एतत्कुतआहुरबोधनादिति । नंद्यादित्वाल्लयुः अज्ञाइत्यर्थः ननुस्वर्गादिसाधनविदांकथमज्ञत्वंमुख्यस्वहिताज्ञानादित्याहुः हितमित्यादि । य तःस्वेभ्योहितमात्मज्ञानरूपंनसाधितमित्यन्वयः स्वेभ्यइतिपदमात्मवाचकंहितपदयोगेनषष्ठ्यर्थेचतुर्थ्येतम् ६९८ ननुतत्त्वज्ञानंहिततममितिवक्तव्यमितिचेत्स्यादेवंयदिविवेकिदृष्ट्याहितपदप्र योगार्हस्वर्गादिकंस्यात्तस्यतुदुःखत्वेनदुःखमेवसर्वंविवेकिनइतिभगवत्पतंजल्युक्तेरित्याशयेनाहुः दुःखानीति । अत्रसंसारेस्वर्गलोकेपिअण्वपिसुखंनलब्धमिति ६९९

स्वर्गस्यसन्निपातज्वरसाम्यंदोषत्रयवत्तयाआहुः तत्रेति । सातिशयत्वपारतंत्र्यपतनानिर्ईर्ष्याभयशोकहेतुतयात्रयोदोषाः ७०० स्वात्मावमाननरूपोनिर्वेदोलोकेद्विधादृष्टः मयाहितंकिंनाच रितमित्येकः असाधुव्यर्थानिष्टजनकान्यतरत्किमाचरितमित्याकारोऽपरस्तत्राद्यउक्तोद्वितीयमाह भूमेरित्यादित्रिभिः । भूमेःभूमिलोकंविहायस्वर्गंसंचरामोगच्छामस्ततःस्वर्गाद्भूमिंततःपुन स्तंस्वर्गंक्वचिद्दुष्कृतोदयेनरकमित्युपर्यधःसंचरामः । पारावतसमाःकपोतसमाः अत्रकपोतोभ्रमणांशेदृष्टांतः कपोतभ्रमणस्यद्रष्टृहर्षजनकत्वेप्यस्मद्भ्रमणस्यमहात्मनांशोकहेतुत्वेनव्यतिरेकस्या पिविवक्षितत्वादिति ७०१ दार्ष्टांतिकेयोजयति यथेति । नभस्थःआकाशगतः सपारावतः पतेत्गच्छेत् ७०२ दार्ष्टांतिकेयोजयति एवमिति । अत्रपारावतीसमाःविषयाःदेवादिस्थाव रांतशरीराणिपतनकर्मदेशसमानि साम्योपपादकोधर्मोदुःखेत्यादिनोक्तः कपोतंप्रत्यपिभूम्यादेस्तथात्वात् ७०३ एवमात्मविचारश्रद्धातिशयप्रयोजकंवैराग्यमुपवर्ण्यविचारारंभप्रतिपादकंकोय मित्यादिरुपास्महइत्यंतंव्याचष्टे एवमितिद्वाभ्यां । विचार्यवैराग्योपयोगिनंविचारंकृत्वाउत्पन्नवैराग्याःगुरूत्तरेगुरुभिःसनकाद्यैर्दत्तउत्तरेउपदेशेजातश्रद्धाश्चसंतःआत्मबोधिनींमीमांसांविचारंच क्रुरिति ७०४ श्रद्धाप्रयुक्तगुरुवाक्यस्मरणानुकूलचिंतामभिनयति कोयमिति । एवंचिंतायांकृतायांतेषांवाक्यस्मृतिर्जातेतिध्वन्यते ७० उपदेशेस्मृतेचतत्प्रदर्शितौद्वौभावौस्मृतौ उपलभ्य

तत्रैश्वर्यंसातिशयंदेवानांवशवर्त्तिता ॥ पतनंचतथास्वर्गेह्यचिकित्स्यात्रिदोषता ७०० भूमेःस्वर्गंततोभूमिंपुनस्तंनरकंक्वचित् ॥ उपर्यधःसंचरामःपारावतस मावयम् ७०१ यथापारावतींदृष्ट्वानभःस्थःसध्रुवंपतेत् ॥ भूमिष्ठश्चनभःक्वापिदिशोपिचदिगंतरम् ७०२ एवंविषयतृष्णार्तावयमुच्चावचानिच ॥ शरीराणिहिसं प्राप्तादुःखशोककराणिहि ७०३ एवंविचार्यतेसर्वेमीमांसामात्मबोधिनीम् ॥ चक्रुरुत्पन्नवैराग्याजातश्रद्धागुरूत्तरे ७०४ कोयमात्माद्विजश्रेष्ठायंवयंज्ञातुमुद्यताः ॥ गुरुभिश्चोपदिष्टाःस्मोवामदेवेनचाधुना ७०५ देहोयंसेंद्रियग्रामएकस्तावत्प्रतीयते ॥ शास्त्रतश्चापरःकश्चित्कोनयोरात्मशब्दभाक् ७०६ देहस्यनात्मतायुक्ता जनिमृत्यादियोगतः ॥ घटवत्स्वात्मनस्तत्त्वेकःकुर्यादुद्यमंनरः ७ जातस्यहिध्रुवोनाशोनष्टस्यास्तिनकिंचन ॥ पुण्यंवापातकंवापिव्यर्थंवेदोदितंततः ८ अपिदे हस्यनैक्यंहिदृश्यतेबालवृद्धयोः ॥ ततोलोकेपिकर्मस्याद्व्यर्थंयत्क्रियतेऽधुना ९ नह्यन्यःकुरुतेकर्मफलमन्यश्चविंदति ॥ विनास्वाम्यादिसंबंधंनचासौबालवृद्धयोः ७१०

तोपलंभकरणताभ्यांप्रसिद्धोजडोभावःकार्यकरणात्मैकः उपलब्धाचद्वितीयोयस्यमूर्द्धद्वारेणप्रवेशउक्तः तयोःकआत्मेत्यर्थंकंकतरइत्यादिषडक्षरंवाक्यंव्याचष्टे देहइति । इंद्रियाणामांतरबाह्य करणानांग्रामेणसमूहेनसहितोयंदेहःसंघातएकःप्रतीयतेकिमयमात्माकिंवाशास्त्रतोयःसम्यक्प्रतीयतेउपलब्धासच्चिदानंदाद्वयरूपोऽपरोभावःसआत्मेत्यर्थः ७०६ तत्रप्रथमकोटिघटकदेहस्यानात्म तांस्फुटयति देहस्येत्याद्यष्टभिः । देहोनात्माजन्मादिमत्त्वात्घटवदितिपादत्रयार्थः । विपक्षेकृतनाशाकृताभ्यागमप्रसंगलक्षणंतर्कमाह स्वात्मनइति । स्वात्मनस्तत्त्वेदेहरूपत्वेउद्यमंवेदार्था नुष्ठानगोचरंकोनरःकुर्यात् आमुष्मिकफलभोक्तुरभावादितिभावः ७०७ चतुर्थपादार्थंस्फुटयति जातस्येतित्रिभिः स्पष्टम् ७०८ नकेवलंशास्त्रोक्तकर्मणामेववैयर्थ्यरूपोदोषःकिंतुलौकिकक र्मणामपि तत्रापिबालादिकृताध्ययनादिफलस्ययुववृद्धाभ्यांभोगायोग्यत्वादवस्थाभेदेनशरीरात्मनोभिन्नत्वादित्याह अपिदेहस्येति । स्पष्टम् ७०९ व्यर्थत्वंस्पष्टयति नहीति । अन्यकृ तफलमप्यन्योभुंक्तेयथासेवककृतयुद्धफलंराजा यथावापितृकृतवैश्वानरेष्टिफलंपुत्रः पुत्रकृतगयाश्राद्धफलंचपिता परंतुतत्रस्वामित्वपुत्रत्वपितृत्वाद्यन्यतरःसंबंधःप्रयोजकइहतुसोपिनास्ती त्याह विनेति ७१०

किंच देहस्यात्मत्वेबालवृद्धात्मैक्यानुसंधानंनस्यात् भिन्नयोस्तथाननुभवादित्याह अपिदेहात्मतायामितिद्वाभ्यां । अयमुत्तरार्द्धोक्तः ७११ भेदइति स्नेहस्यापितथानुभवानुपपादकत्वसूचनायपितृपुत्रदृष्टांतः एतेनबालदृष्टंवृद्धोनस्मरेत् अन्यदृष्टस्यान्येनस्मरणायोगादतिप्रसंगोपिसूचितः ७१२ देहस्यानात्मतायामनुमानांतरमाह अपिदेहोजडइति । देहोनात्माजडत्वात् घटवत् विपक्षेदोषमाह साम्येपीति । जडत्वेनघटसाम्येपियदिदेहस्यचैतन्यमिष्यतेतर्हिघटस्यापितत्स्यादित्यर्थः ७१३ नन्विंद्रियाधारतादेहस्यघटाद्विशेषस्ततोदेहएवचेतनोनघटइतिचेन्न घटस्यापिविषयत्वेनेंद्रियाधाररूपाद्याधारत्वेनेंद्रियाधारत्वात् परंपरयाधारोप्याधारएव अन्यथापर्यंकेशयानःप्रासादेशेतेइतिनव्यवह्रियेतेत्याशयेनपरमतानुवादपूर्वकंनिराचष्टे इंद्रियेति । आसनानांचैलाजिनकुशानांसमाधारःस्थंडिलरूपःआसनादिःआसनेप्वादिःप्रथमगण्यःकिंनकिंतुआसनमेव समेशुचौशर्करावह्निवालुकाविवर्जितेइत्यादिश्रुतौदेशस्यापितथात्वबोधनात् तथेंद्रियाणांविषयतयाधारभूतरूपाद्याधारोघटोपिकथंनेंद्रियाधारस्तथाचतस्यापिचैतन्यापत्तिरितिभावः ७१४ किंचेंद्रियाधारतयादेहस्यचैतन्यंप्रत्याशातदाभवेद्यदिइंद्रियाणांचैतन्यंविकल्पंसहेततदेवतुनास्ति तथाहि किमेकैकमिंद्रियंचक्षुराद्यन्यतरच्चेतनंकिंवातेषांसमुदायः तत्रनाद्यइत्याह अपींद्रियाणामिति । यदिचक्षुरेवप्रत्येकपदेनगृह्यतेतदांधस्यकिमपिज्ञानंनस्यात्नचतथादृश्यते एवंबधिरादावपिबोध्यमितिव्यभिचारमाह अंधादीनामिति ७१५ नचरूपज्ञानमंधस्यनास्तीतिवाच्यम् शब्दस्वरूपस्यैवरूपत्वात् अन्यथाप्रपंचबहिर्भावापातइत्यर्थंस्यनामरूपक्रियाःकिंस्युरित्यादिनाप्रपंचितत्वादित्याह रूपाज्ञानमिति । एवंश्रोत्रादिकंविनापिज्ञानंदृश्यतइतिसोदाहरणमाह एवमिति । आदिपदेनपृष्ठसंयुक्ताक्षरस्याक्षरलेखकस्यग्रहः ७१६ किंचचक्षुरादेरन्यतरस्यचेतनत्वेतस्यैवप्रधानत्वंवाच्यंस्यात्ततुनवक्तुंशक्यंविनिगमनाविरहादित्याह अपींद्रियाणामिति ७१७ समुदायइंद्रियाणामात्मेतिपक्षमनूद्यनिरस्यति सर्वेषामिति । यथासहस्रतंतुकपटादेकतंत्वपायेसहस्रतंतुकपटोनश्यतीतिनैयायिकामन्यंते तथैकेंद्रियापायेतत्समुदायरूपआत्मानष्टइतिदेहस्यनिरात्मकत्वापत्तिरित्यर्थः देहशब्दःक्लीबोपि 'देहःक्लीबपुंसोः' इत्यमरोक्तेः ७१८ ननुयथाग्रामेप्रधानपुरुषायेसंतितेषुमृतेषुप्रधानपुरुषतावशिष्टेषुतिष्ठतितद्वदत्राप्येकेंद्रियनाशेऽवशिष्टेष्विंद्रियेष्वात्मतास्यादित्याशंक्यदृष्टांतेपूर्ववद्व्यवहारोदृश्यतेइहतुपूर्ववद्विषयदर्शनरूपव्यवहाराभावान्नैवमित्याह नचेति । यद्वद्ग्रामेमृतेभ्योऽवशिष्टामहाजनाःप्रधानपुरुषाव्यवह्रियंतेतद्वदवशिष्टानींद्रियाण्यात्मानइतिनचवाच्यं तथासतिपूर्ववद्विषयावाप्तिःस्यादसौतुनदृश्यतेइत्यन्वयः ७१९

अपिदेहात्मतायांस्यान्नायंबोधःकथंचन ॥ योहंबालःपुरावृद्धःसएवास्म्यधुनास्थितः ७११ भेदःप्रत्यक्षतोयस्माद्दृश्यतेबालवृद्धयोः ॥ भिन्नयोरेकताज्ञानंनयथापितृपुत्रयोः ७१२ अपिदेहोजडोनस्याच्चेतनोघटवत्सदा ॥ साम्येपियदिचैतन्यंदेहस्यनघटस्यकिम् ७१३ इंद्रियाधारतानास्तिघटस्येतिमतंयदि ॥ आसनानांसमाधारआसनादिस्तथानकिम् ७१४ अपींद्रियाणांचैतन्यंप्रत्येकंनहिदृश्यते ॥ अंधादीनांयतोज्ञानंशब्दादौविद्यतेस्फुटम् ७१५ रूपाज्ञानंचनास्त्यत्रशब्दादेरूपबोधनात् ॥ एवमोष्ठादिचलनाच्छब्दज्ञानंचजायते ७१६ अपींद्रियाणामात्मत्वेप्रत्येकंनात्मताभवेत् ॥ प्रधानगुणभावोयंसमानानांनोपपद्यते ७१७ सर्वेषामात्मताचेत्स्यादेकस्मिन्हिगतेसति ॥ निरात्मकमिदंदेहंभवेन्नैवंचदृश्यते ७१८ नचावशिष्टान्यात्मानोग्रामेयद्वन्महाजनाः ॥ पूर्ववद्विषयावाप्तिर्भवेन्नासौहिदृश्यते ७१९

दृष्टांतेतुपूर्ववद्व्यवहारोदृश्यतइत्याह नहीति । विषयोविवादविषयस्तस्यावाप्तिर्निर्णयायोपस्थितिस्तस्यहानिर्नहिदृश्यतेप्रत्युतविपरीतंक्वचित्प्रधानपुरुषाणांशिष्टताधिक्येआधिक्यंग्रामांतरवि षयेष्वपिनिर्णयरूपमिहदृष्टांतेदृश्यते ७२० ननुदृष्टांतेकुत्रचिद्धानिरपिदृश्यतइतिचेत्तर्ह्यत्रापितत्साम्याभ्युपगमेकेषांचिदंधानांदर्शनापत्तिरित्याह एवमिति । कुत्रचिद्धानिर्दृष्टाचेत्तथाप्यसौव्य वहारहानिर्नियतायतोनदृष्टाततएवतवनेष्टव्यवस्थासाधिकाक्वचिदंधेरूपज्ञानापत्तेरित्यर्थः ७२१ इंद्रियेभ्यःपृथगात्मस्वीकारेतुव्यवस्थोपपद्यतेइत्याह इंद्रियेभ्यइति । स्वानिस्वकीयानिइंद्रिया णिसाधनानिविषयदर्शनोपकरणानियस्यात्मनःसतथातस्मिन्आत्मनिअदर्शनंविषयाणामितिशेषः ७२२ उपकरणनाशेउपकरणवतस्तदुपकरणभिन्नत्वेनतदुपकरणनाशेनाविनष्टस्यतदुपकरण साध्यक्रियाभावोदृष्टइत्युदाहरति नहीति । प्रदीपेविलोकनोपकरणेनष्टेचक्षुष्मानपरःपुमान्मण्यादिकंनविलोकयतिनसम्यक्पश्यतिनचपुंसोपिनाशःप्रदीपभिन्नत्वादित्याह विनाशेनविवर्जित इति ७२३ नन्वस्तुतर्हिप्रदीपसाम्यमिंद्रियाणांतदुपकार्योदेहएवचात्मेत्याशंक्यतवमतेप्रदीपविनाशेप्रदीपांतरवच्चक्षुर्नाशेचक्षुरंतरंसंपाद्येत नचादृष्टरूपकारणवैकल्यात्तथानशक्यतेइतिवाच्यं भवन्मते ऽदृष्टकारणजन्मांतराभावादित्युत्तरश्लोकेनवक्तुमास्तिकमतेप्रदीपवदुपादानंनसंभवतिअदृष्टपारतंत्र्याभ्युपगमादित्याह नचेति । परंविद्यमानेभ्योभिन्नंपूर्वपरदेहत्यागोपादानयोर्मध्येमूर्छाभ्युपगमा

नह्येकस्मिन्मृतेग्रामेविषयावाप्तिसंक्षयः ॥ प्रत्युतक्वचिदाधिक्यंविषयेष्विहदृश्यते ७२० हानिश्चेत्कुत्रचिद्दृष्टानैवासौनियतायतः ॥ एवमंधेपिकस्मान्नरूपसा क्षात्क्रियाक्वचित ७२१ इंद्रियेभ्यःपरश्चेत्स्यादात्मास्वेंद्रियसाधनः ॥ करणानामभावाद्धियुक्तंतस्मिन्नदर्शनम् ७२२ नहिप्रदीपेनष्टेस्मिंश्चक्षुष्मानपरःपुमान् ॥ विलोकयतिमण्यादिविनाशेनविवर्जितः ७२३ नचप्रदीपवच्छक्यमिंद्रियंहिपरंत्वभिः ॥ आदातुंकर्मवशगैःशरीरांतरचारिभिः ७२४ येषांतुनभवेदात्माशरीरा दपरोनृणाम् ॥ इंद्रियांतरमादातुंशक्यंतैर्हिप्रदीपवत् ७२५ ग्रामेयद्वन्मृतेतस्मिन्समर्थेहिमहाजनाः ॥ समर्थमपरंतस्यकार्यआददतेक्षणात् ७२६ यथाप्रजा श्वराजानंपूर्वस्मिन्हिमृतेसति ॥ स्वीकुर्युरपरंतद्वदिंद्रियाणींद्रियांतरम् ७२७ ऐकमत्यंनचेत्तेषांक्रियाकाचिन्नसिद्ध्यति ॥ ग्रामादौनभवेत्कार्यमैकमत्यंविनाक्वचित ७२८ इंद्रियाणांनचैतन्यंतेनसंभाव्यतेक्वचित ॥ किंतुव्यापारमात्रंहिरूपादीन्प्रतिदृश्यते ७२९ चेतनाधारतातेनदेहस्यास्तिनकाचन ॥ ततोघटस्यदेहस्य वैषम्यंकेनतेभवेत ७३० नजायतेत्रचैतन्यंभूतपंचकमेलनात ॥ घटेपिमिलितंह्येतत्कस्मात्तत्रनजायते ७३१

दपिनेयमापत्तिरास्तिकमतेइतिसूचयति शरीरेति ७२४ येषामिति । येषांचार्वाकाणांमतेइतिशेषः ७२५ नकेवलमयंदेहात्मवादेएवप्रसंगःकिंतुइंद्रियात्मवादेपिजन्माभावेनादृष्टकारणनैरपे क्ष्याद्विनष्टेंद्रियैस्तादृशस्यसंपादनापत्तेरितिसदृष्टांतमाह ग्रामइतिद्वाभ्याम् ७२६ यथेति । स्पष्टम् ७२७ नन्विंद्रियाणिकुर्युरेवैवंयद्येकमत्यंस्यादितिचेत्तर्हिभिन्नात्मनामिंद्रियाणामैकम त्याभावेदर्शनादिक्रियापिनस्यादितिसदृष्टांतमाह ऐकमत्यमिति । ऐकमत्यंसमानानिश्चयः ७२८ फलितमाह इंद्रियाणामिति । तेनेष्टानुपपत्त्यनिष्टप्रसंगरूपतर्केणसंभाव्यतेबुद्ध्यावारोहयि तुंनशक्यतेकिंतुरूपादीन्प्रतींद्रियाणांव्यापारएवदृश्यतेप्रकाशकत्वंतुकस्यचिदन्यस्यैवतेनैतानिकरणान्येवनत्वात्मानइति ७२९ तथाचचेतनाधारत्वेनदेहस्यघटाद्विशेषउक्तोनिरस्तइत्याह चेतने ति । तेनशरीराधिकरणकानामिंद्रियाणांचेतनत्वाभावोपपादनेन ७३० ननुयथागुडदधिसंयोगेपीनसस्यनाशशक्तिरभिव्यज्यतेयथाचतांबूलेखादिरादियुतेरागशक्तिरेवंभूतसमुदायेशरीरेज्ञान शक्तिःसैवचघटाद्विशेषइत्याशंक्यघटेपितथाभावान्नैवंवक्तुंशक्यमित्याह नजायतइति । एतत्भूतपंचकं नजायतेचैतन्यमितिशेषः ७३१

घटेवाय्वाभावमाशंक्य निराचष्टे नचेति । घटेवायोरभावोस्तीतिनवाच्यं यतःसर्वत्रनभसिवायवःस्तिमिताःसंतितच्चनभोघटेप्यस्तीत्यन्वयः स्तिमिताआर्द्रचूर्णवत्परस्परमिलितावयवाः अत एवशब्दनित्यत्ववादिनोमीमांसकाआहुः वक्तृमुखोद्गताहिवायवीयाःसंयोगविभागाःप्रसरंतःस्तिमितवाय्वपसारणेनशब्दंव्यंजयंतितदभावात्सतोपिशब्दस्याग्रहणमिति नभस्वानितिनामापिवायो राकाशेननित्ययोगमाख्यातिअनुभूयतेचव्यजनचालनेनघनीभावापचयइति ७३२ प्रत्यक्षमात्रप्रमाणवादिनंप्रतिप्रत्यक्षविरोधमप्युदाहरति अपिसंयोगतइति । घटेतथामृतेदेहेवायोःसंयोगतो पिव्यजनादिनाविहिताच्चेतनाज्ञानंनदृश्यतेतस्मादेतद्भूतमिलनेनचैतन्यलाभपरमीरितंत्वद्वचनंयत्किंचित्तुच्छमित्यर्थः तस्माच्छरीरस्यनमुख्यात्मतेतिसिद्धम् ७३३ इंद्रियाणांचैतन्याभावप्रतिपा दनफलंचशरीरस्यतदाधारतयागौणात्मतानिरासः इंद्रियाणांचमुख्यात्मतानिरासइत्याह चेतनानामिति । समाधारात्धारणात्तस्यदेहस्यगौणीआत्मतामताचेत्सापिदुर्लभायतइंद्रियाणांनचै तन्यंमतंतेषुइंद्रियेष्वपिसात्मतानभवेदिति ७३४ चार्वाकाश्चतुर्विधाःदेहेंद्रियमनःप्राणात्मवादभेदात्तत्राद्यौनिरस्तौ तृतीयमतेचमनःपदेनमनोनिवासोहृदयदेशोविवक्षितःप्रत्यक्षमात्रप्रमाणक त्वादितितंनिरस्यति हृदयइति । हृदयदेशोऽनात्मामांसरूपत्वात्मृतशरीरवदितिप्रयोगः ७३५ प्राणात्मवादिनंप्रत्याह प्राणोपीति । नन्वदर्शनेनमृत्युप्रयोजकत्वमात्मलक्षणमितिचेन्न अ दर्शनंहिप्रत्यक्षमात्रप्रमाणकेनप्रत्यक्षाविषयत्वमेववाच्यं तथाचस्थावरप्राणेव्याप्तिरित्याह प्राणस्येति । प्राणस्यादर्शनान्नृणांमृत्युर्नियतोभवेदितिप्राणात्मत्वोपपादनायवाच्यं यतःस्थावरा

नचवायोरभावोस्तिस्तिमितावायवोयतः ॥ संतिसर्वत्रनभसितन्नभोस्तिघटेपिहि ७३२ अपिसंयोगतोवायोर्दृश्यतेनचचेतना ॥ घटेमृतेतथादेहेतस्माद्यत्किंचि दीरितम् ७३३ चेतनानांसमाधाराद्गौणीतस्यात्मतामता ॥ इंद्रियाणांनचैतन्यंनातस्तेष्वपिसाभवेत् ७३४ हृदयेयद्यपिज्ञानंदृश्यतेसर्वदेहिनाम् ॥ तथापिदे हवत्तस्यनात्मतामांसरूपतः ७३५ प्राणोपिनभवेदात्मावायुत्वाद्बाह्यवायुवत् ॥ प्राणस्यादर्शनान्नैवमृत्युःस्यान्नियतोनृणाम् ७३६ स्थावराणांभवेन्मृत्युर्नतस्या दर्शनेक्वचित् ॥ जंगमेष्वपिमूर्छादौप्राणःक्वापिनलभ्यते ॥ म्रियंतेनैवतेतत्रप्राणोनात्माभवेत्ततः ७३७ निर्गमाद्यस्यमृत्युःस्यात्सआत्मेतिवृथावचः ॥ अपिनिर्ग मतोवन्हेर्मृत्युर्दृष्टोहिदेहिनाम् ॥ भवतांनात्मतातस्यप्राणआत्मेतिवादिनाम् ७३८ निर्गमोहियथास्पर्शात्प्राणस्येहानुमीयते ॥ तथाग्नेरपिसंस्पर्शाच्छीतलादनु मीयते ७३९ अग्निप्राणौनचस्यातामात्मानेकात्मताभवेत् ॥ तथात्वेसाचनोयुक्ताप्रत्यभिज्ञाद्यभावतः ७४०

णांतस्यप्राणस्यादर्शनेपिकचिन्मृत्युर्नदृष्टइति ७३६ जंगमप्राणेपिएतल्लक्षणस्यनानुगमइत्याह जंगमेष्वपीति । तेजंगमाः तत्रमूर्च्छादौ ततःउक्तलक्षणस्याप्यनुपपत्तेः ७३७ अथनिर्गमेण मृत्युप्रयोजकत्वमित्यस्तुलक्षणमितिचेन्न तथापिजठराग्नौव्यभिचारादित्याह निर्गमादिति । वन्हेरपिनिर्गमइत्यन्वयः नचेष्टापत्तिः प्रतिज्ञाहान्यापत्तेरित्याह भवतामित्यादिना । तस्यवह्नेः ७३८ नचप्राणनिर्गमःप्रत्यक्षत्वेनविशेषयितुंशक्यः अनुमेयतयावह्निनिर्गमेनसमत्वादित्याह निर्गमोहीति । यथाप्राणस्यनिर्गमोऽस्पर्शान्नासिकाद्यग्रधृतहस्तादिनास्पर्शाभावज्ञानादनुमीयते तथाग्नेरपिनिर्गमःशीतलात्स्पर्शादनुमीयतेइति । प्रयोगस्त्वेवं एतच्छरीरात्प्राणोनिष्क्रांतः योग्यत्वेसत्यनुपलभ्यमानस्पर्शकत्वात् व्यतिरेकेजीवत्प्राणवत् इदंशरीरंनिष्क्रांताग्निकं शीतलस्प र्शकत्वात् व्यतिरेकेजीवच्छरीरवत् ७३९ अग्निप्राणसमुदायोऽस्त्वात्मेत्याशंक्यनिराचष्टे अग्निप्राणौद्वौसमुदायभावेनैकआत्मानचस्यात् समुदायदुर्निरूपतायाःप्रपंचितत्वात् किंतुतथात्वेतथाभा वांगीकारेऽनेकात्मताआत्मनोद्वित्वंस्यात् नचेष्टापत्तिरित्याह साचेत्यादिना । साऽनेकात्मतानयोग्या प्रत्यभिज्ञाद्यभावापातात् 'नान्यदृष्टंस्मरत्यन्यः'इतिन्यायात् आदिपदेनयएवाहमद्रा क्षंसएवस्पृशामीत्याद्यनुसंधानंगृह्यते ७४०

किंच निर्गमेनमृत्युप्रयोजकत्वंलक्षणंरुधिरेऽतिव्याप्तमित्याह अपिमृत्युरितिद्वाभ्यां । तवप्राणवन्छोरात्मत्ववादिनस्तस्यरुधिरस्यात्मतानेष्टेति ७४१ रुधिरस्येति । एवंसतिउक्तलक्षणांगी कारेसतितवमतेरुधिरस्यात्मत्वंसमापतेत्प्रसज्येत नचतस्यात्मत्वेनसंग्रहःकर्तुंशक्यस्तद्विनापिक्वचिज्जीवनदर्शनादित्याह प्राणिनइति । दोषेणरुधिरशोषहेतुनादुष्टाविकृतिंनीताअरुधिराअपिजीवंतिक्व चिद्देशेकालेवा यथामूर्छितायाःयथावाहिरण्यकशिपुस्तपस्यन्नस्थिशेषः ७४२ किंच प्राणाग्निरुधिराणांत्रयाणामनात्मत्वंजडत्वेनप्रसाध्यं नचजडत्वंस्वरूपासिद्धंशरीराद्बहिःस्थितानांप्राणा दीनांजाड्यस्यस्पष्टत्वादित्याह प्राणेति ७४३ अथांतःकरणमात्मानात्मत्वाभ्यांविचारयति मनइति । चत्वारोऽन्तःकरणभेदानात्माऽऽत्मबहुत्वापातात् बहुत्वांगीकारेचपूर्वोक्तप्रत्यभि ज्ञाद्यनुपत्त्यापत्तिरिति ७४४ ननुमनआद्यन्यतमस्यात्मत्वमस्त्वित्याशंकांनिराकुर्वन्नुपेनवाप्रश्यतीत्यादिवाक्यस्यभाष्योक्तार्थंहेतुतयाह एकैकशइति । एतेषांमनआदीनामेकैकस्यान्यतमस्या पिशब्दात्समुदायस्यात्मतान कुतः करणत्वतः अंतःकरणंहिचतुर्थापिचक्षुरादिद्वारानिर्गतवृत्तिभिरावरणाभिभावकत्वेनोपरागसंपादनेनवाचिद्धातोर्विषयप्रकाशउपकरणंतत्कथमात्माभवेत् उप करणस्यात्मत्वेचइंद्रियाणांप्रदीपादेश्चात्मत्वापत्तिरित्याह नहीति ७४५ ननुकिमर्थंमनआदीनामुपलंभकरणत्वमभ्युपगम्यते उपलंभकर्तृत्वमेवास्त्वित्याशंकांनिरस्यति कर्तृत्वेपीति । उ

अपिमृत्युःसदाद्दृष्टोनिर्गमेरुधिरस्यहि ॥ तवतस्यात्मतानेष्टप्राणवन्ह्यात्मवादिनः ७४१ रुधिरस्यतवात्मत्वमेवंसतिसमापतेत् ॥ प्राणिनोदोषदुष्टाहिजीवंत्यरु धिराःक्वचित् ७४२ प्राणाग्निरुधिराणांस्याज्जडानांनात्मताक्वचित् ॥ दृश्यतेतत्रत्रयाणांहिबहिर्जाड्यंस्फुटंत्विभिः ७४३ मनोबुद्धिस्तथाचित्तमहंकारश्चनक्वचित् ॥ आत्माबहुत्वतस्तत्रप्रत्यभिज्ञाद्यभावतः ७४४ एकैकशोपिनैतेषामात्मताकरणत्वतः ॥ नहींद्रियाणामात्मत्वंप्रदीपादेरथापिवा ७४५ कर्तृत्वेपिचनास्येतिनि यतिःकेनचित्क्वचित् ॥ वक्तुंशक्यायतःसाम्यंचतुर्णामिहविद्यते ७४६ अपिशब्दास्तथाबोधाःसार्थाअपिचतुर्विधाः ॥ मनआदेस्तुशब्दानांबोधानामात्मता नहि ७४७ तथापीष्टत्वतोह्यर्थाःशिष्यंतेतान्विचारय ॥ किंतेजडाउतान्येस्युर्जडत्वेनात्मताभवेत् ७४८

पलंभकर्तृत्वेस्वीक्रियमाणेअस्येवमनसोवाहंकारादेर्वाइतिनि यतिर्नियमहेतुयुक्तिःकेनचित्क्वचिद्वक्तुंनशक्याविनिगमनाविरहात् सएवकुतइत्यतआह यतइत्यादि । यतश्चतुर्णांमनोबुद्ध्यहंकारा णांपरस्परंमिंद्रियैश्चजडत्वेनसाम्यंदृश्यतेतथाचानेकात्मतापत्तिर्जडानामात्मत्वेव्याघातश्चेतिभावः ७४६ किंचमनआदीनामात्मत्ववादीप्रष्टव्यः किंमनोबुद्ध्यहंकारचित्तशब्दाश्चत्वारआत्मानः किंवामनःप्रभृतिशब्दजन्याअर्थाकाराश्चतस्रोवृत्तयःकिमथवामनआदिशब्दानांचत्वारोर्थाआत्मानःतत्रनाद्यद्वितीयौ शब्दतज्जन्यवृत्तीनसमर्थंप्रकाशार्थतयाशेषत्वेनशेषिरूपात्मत्वायोगादित्याह अपिशब्दाइति । मनआदेरंतःकरणचतुष्टयस्यवाचकशब्दास्तथासार्थाअर्थैःसहिताबोधाश्चतुर्विधाःसंति शब्दबोधार्थानांप्रत्येकंचतुर्विधत्वमित्यर्थः तत्रशब्दानांबोधानांचात्मतानहिवक्तुंशक्या शेषत्वादितिशेषः ७४७ परिशेषादर्थेषुविचारमवतारयति तथापीति तथापिशब्दतज्जन्यवृत्त्योरनात्मत्वेपिअर्थाअवशिष्टाः कुतः इष्टत्वतःईप्सिततमत्वात् अर्थोहिबोध्यःसचबोद्धुर्बोधकरणे बोधक्रियायाःफलाश्रयत्वेनेप्सितोभवतीत्यतःप्रधानत्वादर्थाविचार्याः । विचारस्वरूपमाह किंतेइति । किंतेअर्थाजडाःकिमुतान्येचेतनाः तत्रजडत्वेजडभावस्यपदार्थत्वेजडत्वस्यपरिच्छेद व्याप्यत्वात्परिच्छेदस्यचानित्यत्वव्याप्यत्वादनात्मतैवभवेन्नान्यथाघटेइति ७४८

अनेकजडानामात्मत्वेप्रत्यभिज्ञाद्यनुपपत्तिव्याघातश्चेत्याह उक्तदोषतइति । ननुनजडत्वंपरिच्छिन्नत्वव्याप्यं अतएवाकाशादयोनित्याइत्याशंकांनिराचष्टे कालेति । तेषामपिस्वोपादानैकदेशवृत्तित्वेनपरिच्छिन्नत्वादनित्यत्वाच्च ७४९ विभुत्वाभ्युपगमेप्याह अपीति । परैरपिभेदप्रतियोगित्वरूपोवस्तुपरिच्छेदोभ्युपेयतेतथाचयावद्विकारमितिन्यायात्कार्यत्वेनानित्यत्वमिति ७५० परिच्छिन्नत्वस्यानित्यत्वनिरूपितव्याप्तिग्रहोपयोगिसाहचर्यग्रहमभिनयति वस्तुनेति । वस्तुपरिच्छेदइत्यस्यायमर्थःवस्तुनापटादिनाइतोघटाद्भिन्नतयाकल्पितेनास्यघटस्यपरमार्थतःपूर्णस्यच्छेदनं भेदप्रतियोगितयाकल्पनारूपंविद्यते एवंदेशकालपरिच्छेदइत्यस्यदेशकालाभ्यांकल्पिताभ्यामत्यंताभावप्रतियोगितायाःप्रागभावध्वंसप्रतियोगितायावाकल्पनारूपंछेदनंविद्यते वस्तुतोऽत्रवस्तुनिमानसंभ्रमंकल्पनारूपंविनाभेदोऽणुरपिनविद्यतेइति तथाचविवेकिनांपरिच्छेदेनसहकल्पितत्वमनित्यतारूपमुपलभ्यते अज्ञानांधस्तुवृत्तमन्यादितिभावः ७५१ तृतीयेद्वितीयपक्षइष्टापत्तिंदर्शयति अथान्यइति । अथतेमनआदिपदार्थाअन्येजडभिन्नास्तर्हिप्रकाशरूपावक्तव्यास्तथाचानंदात्मसदात्मकाःआनंदात्मसद्रूपाःस्युः प्रकाशस्यदुर्ग्राह्यभेदतयापरिपूर्णत्वेनानंदरूपत्वात् तादृशानंदस्यचसर्वांतरत्वेनतद्भावस्यसप्रक्षिणमंतराऽसिद्धेश्चेति तथात्वेपिभेदःकुतोनस्यादितिमूढशंकामालक्ष्यभेदाभावंप्रतिजानीते भेदोत्रेति । अत्रमनआदिपदार्थेषुवासदानंदात्माभिन्नप्रकाशरूपत्वेसतितेषांसदादिस्वरूपाणांभेदोनभवेत् भेदहेतोरभावाद्वृवचत्वादितियावत् ७५२ किमेषांस्वरूपाणांसतःसतोभेदआनंदस्यानंदाद्भेदइत्येवंभेदआपाद्यतेकिंवापरस्परमितिविकल्प्यतत्रवाद्यइत्याह सदा

परिच्छेदादनित्यत्वाद्धटवच्चोक्तदोषतः ॥ कालाकाशादयोप्येतेजडानित्यानतुक्वचित् ७४९ अपिवस्तुपरिच्छेदस्तेषुतिष्ठतिवादिनाम् ॥ अनित्यत्वंतथात्वेस्यात्परिच्छिन्नत्वहेतुतः ७५० वस्तुनावापिदेशेनकालेनाप्यथच्छेदनम् ॥ विद्यतेनहिभेदोत्रविनास्वंमानसंभ्रमम् ७५१ अथान्येतेप्रकाशाःस्युरानंदात्मसदात्मकाः ॥ भेदोत्रनभवेत्तेषांभेदहेतोरभावतः ७५२ सदानंदप्रकाशानामात्मनश्चात्मनोभिदा ॥ नदृश्यतेयथालोकेस्वस्यस्वस्माद्भिवस्तुनः ७५३ नप्रकाशःसुखादन्यःप्रतिकूलोजडोभवेत् ॥ नसुखंबोधतोभिन्नमज्ञानमसुखंयतः ७५४ नसत्तासुखबोधाभ्यांभिन्नास्यादसतःपृथक् ॥ असुखज्ञानरूपत्वेकोभेदःसदसत्वयोः ७५५ सुखबोधौनचस्यातांभिन्नौसत्तास्वरूपतः ॥ असत्त्वेचतयोर्वंध्यापुत्रादस्तिकुतोभिदा ७५६ सदानंदप्रकाशेभ्योनात्माभिन्नःकथंचन ॥ तथात्वेऽसदनानंदाज्ञानानिस्युस्तवात्मनः ७५७ नास्तिनप्रतिकूलोननजडःसर्वदेहिनाम् ॥ आत्मायतोहमस्मीतिस्वानुकूलोविदन्सदा ७५८

नंदेति । सदानंदप्रकाशानामात्मनश्चएषांचतुर्णामात्मनःस्वरूपाद्भिदानदृश्यते यथालोकेपटादिवस्तुनःस्वस्यस्वरूपस्यस्वस्मात्स्वरूपादिति ७५३ द्वितीयंनिरस्यति नप्रकाशइत्यादिना । अन्यत्वेप्रतिकूलत्वेनजडत्वापत्तिरित्यर्थः सुखस्यबोधभिन्नत्वेऽभासमानत्वेनासुखत्वापत्तिर्भासमानसुखस्यैवपुरुषार्थत्वादिति ७५४ नसत्तेति । सत्तासुखबोधाभ्यांभिन्नाचेत्तर्हिअसतःपृथक्नस्यात्किंत्वसद्रूपैवस्यात् एवंचसत्तायाअसुखज्ञानरूपत्वेसुखज्ञानभिन्नरूपत्वेवास्याएवासत्त्वात्सदसत्त्वयोर्जगतिभेदोनस्यादिति ७५५ सुखबोधाविति । स्पष्टम् ७५६ सदानंदेति । आत्मासदानंदप्रकाशेभ्योनभिन्नः तथात्वेआत्मनःसदानंदप्रकाशेभ्योभिन्नत्वांगीकारेतवमतेआत्मनःअसदनानंदाज्ञानानिस्युः भावप्रधानोनिर्देशः तथाचाऽसत्त्वाननानंदत्वाज्ञानत्वानिस्युरित्यर्थः अज्ञानत्वंप्रकाशत्वविरोध्यावरणत्वम् ७५७ तर्कस्यविपर्ययपर्यवसायितांदर्शयन्नात्मनोऽसत्त्वानानंदत्वाज्ञानत्वानिनसंतीत्याह नास्तिनेति । सर्वदेहिनामात्मानास्तिनकिंत्वस्त्येवप्रतिकूलोनकिंत्वनुकूलः नजडःकिंतुप्रकाशः अत्राशंक्यमानंप्रतिव्याघातंसूचयन्नात्मसत्त्वादावनुभवंदर्शयति यतइत्यादिना । यतआत्माहमस्मीत्याकारेणतथास्वानुकूलःप्रतिकूलविलक्षणःकदाप्यप्रियोनभवामीत्याकारेणविदन्जानन्स्फुरन्भामीत्याकारेणसदाभासतेइतिविशेषः ७५८

एवंविचारयतांतेषामधिकारिणामात्मनोऽनंतत्वस्मृतिमपिजातामभिनयति आत्मेति । भोसखायःआत्मेतितथाहमिति अनंतस्यात्मनोज्ञानंयतःसर्वस्यप्राणिजातस्यदृश्यतइति आत्मपदार्थोहि 'यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह । यच्चास्यसंततोभावस्तस्मादात्मेतिकथ्यते'इतिनिरुक्तः । कीदृशंज्ञानं संदेहादिविवर्जितमिति । अतएवाहमस्मिनवेतिनाहमस्मीतिवानकश्चिद्वदतीति ७५९ अतएवेति । अतःआत्मनःसदानंदप्रकाशरूपत्वेसत्यनंतत्वादेवसदानंदप्रकाशाःआत्मनोनभिन्नाः तत्रहेतुमात्मभिन्नेसदादिबुद्ध्यभावमाह नरेति । यदिसदादिपदार्थाआत्मभिन्नाःस्युस्तर्हिआत्मभिन्नतयामतेपुनृश्रृंगसर्पकुडचेपुयथाक्रमंसदानंदप्रकाशबुद्धयःस्युरित्यर्थः ७६० ननुकथमात्मनोऽनंतत्वंजडवस्तुकृतपरिच्छेदादित्याशंक्यजडस्यात्ममात्रकारणत्वादात्मनःपृथक्स्फूर्तिराहित्याद्यभिन्नत्वंदुर्वचमित्याहनचास्तीति । कारणंआत्मनःपृथक्किंचिन्नास्ति तथात्वेकारणस्यनिःस्वरूपतापत्तेः 'आत्मनएवेदंसर्वम्' इत्यादिश्रुतेश्च । नचात्मनःपृथक्किंचिदृश्यते कथमित्यतआह नहीति । लोक्यतेइतिलोकोविषयोघटादिर्जडोनामजडत्वेनप्रसिद्धःस्वधियंस्वस्यआत्मनोधियंभानंविनानविद्यतेकिंतुप्रकाशरूपात्मभानपूर्विकैवविषयस्फूर्तिरित्यर्थः तथाचयथाघटोमृत्कारणकोमृदुपलंभशालीचनमृदःपृथक्तथात्मनःप्रपंचइतिभावः ७६१ ननुयद्यात्मनोभिन्नंनकिंचित्तर्हिसृष्टिश्रुतयःकथंकारणतामाहुरित्याशंक्याद्वैतेबुद्ध्यवतारणायतथाहुः नचतासांतत्रतात्पर्यमितिबोधयन्जडंस्वयमुत्पद्येतेतिशंकामपिवारयति स्वयमिति । कार्यपूर्वक्षणवृत्तित्वरूपकारणत्वस्यतदुत्तरक्षणवृत्तित्वरूपकार्यत्वस्यसहभावविरोधादिति नन्वज्ञानात्स्वस्यस्वंप्रतिहेतुतास्त्वित्यतआह

आत्माहमित्यनंतस्यदृश्यतेज्ञानमात्मनः ॥ सर्वस्यप्राणिमात्रस्यसंदेहादिविवर्जितम् ७५९ अतएवनभिन्नाःस्युःसदानंदप्रकाशकाः ॥ नरश्रृंगाहिकुडचादौनैवंधीर्दृश्यतेयतः ७६० नचास्तिकारणंकिंचिद्दृश्यतेस्वात्मनःपृथक् ॥ नहिलोकोजडोनामविद्यतेस्वधियंविना ७६१ स्वयंस्वस्यनहेतुःस्यात्पदार्थःकोपिकुत्रचित् ॥ अज्ञानादपिरज्ज्वादेःसर्पादेरेवहेतुता ७६२ नचात्माकुत्रचिद्देशेस्थितोस्तिगविगोत्ववत् ॥ आधारोहिप्रकाशेनविनानैवप्रसिद्ध्यति ७६३ ततोदेशश्चकालश्चवस्तुयत्सदसद्वपुः ॥ अध्यस्तंसर्वमेवैतत्प्रकाशेशर्वरीसमम् ७६४ दृश्यतेमोहतोस्माकमानंदात्मप्रकाशतः ॥ शयानानांयथामोहात्स्वप्नेसदसदात्मकम् ६५ ततोऽनंतत्वमायातंसदानंदात्मरूपिणः ॥ प्रकाशस्ययतश्छेदस्त्रिधास्मिन्नैवविद्यते ६६ एषदेवःपुरासर्गेउपदिष्टोमहात्मभिः ॥ गुरुभिश्चाधुनास्मभ्यंवामदेवेनचेरितः ७६७ अस्यजिज्ञासयास्माकंसमाजोयंमहानिह ॥ अंतःकरणभेदानांविकल्पेनात्रनिश्चितः ७६८

अज्ञानादिति । अज्ञानादपियारज्ज्वादेर्हेतुतासापिसर्पादिकंप्रत्येवनरज्जोरज्जुंप्रतीतिअतोवस्तुतोऽजमेवतत्त्वमिति तदुक्तंगौडपादैः 'एतत्तदुत्तमंसत्यंयत्रकिंचिन्नजायते' इति । एवंवस्तुपरिच्छेदंनिरस्यदेशकालपरिच्छेदाभावमप्याह नचात्मेति । गोव्यक्तिरूपेदेशेगोत्वंयथातिष्ठतितद्वत्कुत्रचिद्देशेनस्थितइत्यर्थः । तत्रोक्तलक्षणात्मभिन्नाधारस्यसिद्ध्ययोगंहेतुमाह आधारोहीति । एतेनकालपरिच्छेदाभावोप्युपलक्षितः ७६३ ननुयदीदृशमात्मतत्त्वंतर्हिकथंप्रपंचभानमतआह ततइति । सदसद्वपुःअनिर्वचनीयंयद्वस्तुआकाशादिअध्यस्तंकल्पितं कीदृशं प्रकाशेमध्यान्हार्केशर्वरीसमंघूककल्पितरात्रिनिभम् ७६४ दृश्यतेइति । एतादृशंसर्वमस्माकंमोहतोदृश्यते मोहेनाप्यात्मप्रकाशांशोनाच्छादयितुंशक्यइतिदर्शयति आनंदात्मेति । दृष्टांतमाह शयानानामिति ७६५ फलितमाह ततइति । ततःउक्तयुक्तिकदंबात् सदानंदात्मरूपिणःप्रकाशस्यानंदत्वमायातंसिद्धमितियावत् यतोस्मिन्प्रकाशेत्रिधापरिच्छेदोनवर्ततेइत्यन्वयः ७६६ एतावदेवसर्वशास्त्रमेयमित्याह एषइति । एषसर्वांतरोऽद्वितीयोदेवःगुरुभिःसनकाद्यैःपुरासर्गेपूर्वसृष्टावस्मभ्यमुपदिष्टः तथावामदेवेनेरितोबोधितः ७६७ अस्येति । पूर्वार्धंस्पष्टम् । अंतःकरणेति । विकल्पेनविचारेणद्वारभूतेनविनिश्चितोऽयमात्मेत्युत्तरेणान्वयः ७६८

अयमात्मेति । ईरितमस्माभिर्विचारारंभेऽक्तं स्पष्टमन्यत् ७६९ अत्रेदंप्रघट्टकतात्पर्यमनुसंधेयं येनवापश्यतीत्यादेर्यदेतदित्यंतस्यवाक्यस्ययेनचक्षुरादिरूपपरिणतेनदर्शनादिव्यापारंकरोति तदुपलब्धिकरणमनात्मेतिश्रोतोर्थस्तमनुसंदधतामधिकारिणांचिद्याप्तांतःकरणस्वरूपस्यजडांशविमोकेनानुसंधानात्तस्यैववाक्यस्यतात्पर्यार्थोप्यवगतः तत्स्वरूपंचतदुपलब्धिकरणंयदर्थसप्रकाशो विचार्यमाणःसदानंदात्मासर्वांतरोद्वितीयश्चसाक्षादपरोक्षआत्मेतिसएषद्विविधोऽर्थःपूर्वग्रंथेनदर्शितः । अथहृदयमित्यादिनामधेयानीत्यन्तंवाक्यंषड्विंशतिश्लोकैर्व्याचिख्यासुर्भूमिकामारचयति यतोंतरित्यादित्रिभिः । आनंदात्माअपरिच्छेदोनंतश्चसत्प्रकाशःपुमान्यतोंतःकरणोपाधिर्हृदयेऽवलोकितस्तस्मादित्युत्तरेणान्वयः यतोस्माकमुक्तात्मदर्शनेंतःकरणंसवृत्तिकमुपाधित्वेनस्वोपहित चित्स्मारकतयाहृदयंचदेशतयोपकृतवदित्यर्थः ७७० तस्मादिति । अत्रेतिपदस्यदेहलीदीपन्यायेनोभयत्रसंबंधः तस्माद्धृदयांतःकरणयोरात्मोपलब्धिसाधनत्वस्यनिर्णीतत्वात् अत्रहृदयांतः करणयोर्वर्तमानानिहृदयादीनिअनेकानिनामानि अत्रहृदयांतःकरणयोःस्वोपलब्ध्याधारतासंबंधेनस्वोपाधितासंबंधेनवर्तमानस्यास्यावाङ्मनसगम्यस्याप्यात्मनःअस्मैइतियावत् दास्यामःस मर्पयामइत्यर्थः । संबंधत्वेनसंप्रदानत्वस्यविवक्षयाषष्ठी । एवंनामार्पणेकृतेचहृदयादीनांवाचारंभणश्रुत्यानाममात्रात्मकानांनाम्नांब्रह्मार्पणेनकृतज्ञतासिद्धिः तात्स्थ्यात्ताच्छब्द्यमितिन्यायानु सरणंफलतीति यद्वायतोंतरित्यादिश्लोकयोरेवमर्थः यतोस्माभिःसच्चिदानंदलक्षणःपुमान्हृदयेऽहंकारादिरूपेसवृत्तिकेंतःकरणेविचार्यमाणेऽवलोकितःसाक्षात्कृतः । ननुकथंशबलवाचकाहंकारा

अयमात्मायदर्थंहिकोयमात्मेतिचेरितम् ॥ अस्माभिःकृतकृत्याःस्मोवयंसर्वेत्रसंगताः ७६९ यतोंतःकरणोपाधिर्ह्यस्मा
भिर्हृदयेपुमान् ॥ आनंदात्मापरिच्छेदःसत्प्रकाशोवलोकितः ७७० तस्मादस्यात्रनामानिदास्यामःसंगतावयम् ॥
अवाङ्मनसगम्यस्यहृदयादीन्यनेकशः ७७१ एतैर्नामभिरात्मायमस्मद्वद्गम्यतेयथा ॥ सर्वैःसंसारशूलार्तैःसर्वदुः
खविवर्जितः ७७२ उपासनाद्विचाराच्चहृद्ययंलभ्यतेयतः ॥ ततोहृदयमित्यस्तुसंज्ञानंदात्मरूपिणः ७७३

दिपदार्थालोचनेशुद्धोपलब्धिरतोहेतुगर्भंविशेषणं अंतःकरणोपाधिरिति । अंतःकरणंहिप्रकाशात्मकार्थवाचकाहंकारादिपदानांशक्तिविषयतायामयोग्यंसत्श्रोत्रपदप्रवृत्तौकर्णशष्कुलीवदुपाधि भावमवलंबते उपाधित्वंचकार्यानन्वयित्वेसतिवर्तमानत्वेचसतिव्यावर्तकत्वं तथाचांतःकरणस्योपाधितानुसंधानद्वारास्माकंशुद्धोपलब्धिरितिभावः । तस्मादिति । तस्मादुक्तविधयाहंकारा दिवाचकहृदयादिपदानामस्मद्दृष्ट्याशुद्धेपर्यवसानात् अत्रांतःकरणेप्रसिद्धानिहृदयादीन्यनेकशोनामान्यवाङ्मनसगम्यस्याप्यस्यशुद्धात्मनः दास्यामस्तत्रप्रयुक्तान्कुर्मइतियावत् ७७१ ननु शुद्धात्मन्यवाङ्मनसगम्येशब्दप्रसिद्धनाम्नांप्रयोगरूपःप्रयासःकिमर्थइत्याशंक्यावशिष्टाधिकारिणःप्रत्यस्माभिरुपाधिविमोकेनात्मासाक्षात्कृतोभवद्भिरप्येवंबुध्यतामित्युपदेशार्थइत्याहुः एतैरि ति । एतैर्हृदयादिनामभिःसर्वैरधिकारिभिर्यथाऽस्मद्वदुपाधिनिर्मोकेनगम्येतएतदर्थंनामानिदास्यामइतिपूर्वेणसंबंधः नचायमुपायोपदेशोऽनपेक्षिताभिधानरूपः संसाररूपशूलरोगार्तैस्तन्निवृ त्त्युपायस्यापेक्षितत्वात् एतद्रूपंपात्मलाभस्यसर्वदुःखाभावरूपत्वादित्यभिप्रायेणाधिकारिणामात्मनश्चविशेषणेइति ७७२ तत्रहृदयपदस्याहंकारेप्रसिद्धस्यापिशुद्धात्मनिपर्यवसानेएवमेवार्थःफ लितइत्याह उपासनादिति । उपासनाद्दहरविद्यादिरूपात्विचारात्पंचकोशलोचनादिरूपात्हृदिहृत्कमलेबुद्धिगुहायांवाऽयमपरोक्षःसन्यतोलभ्यतेपरमात्माततएवंरूपार्थपर्यवसानात्हृदयमित्याका रिकाअयूनानंदात्मरूपिणउपाधिविविक्तात्मनःसंज्ञास्त्विति ७७३

उक्तविधमनःपदार्थमाह मनुतेइति । यस्मादेषआत्मासकलंविश्वंप्रपंचंमनुतेऽवबोधयतिअधिष्ठानतयाप्रकाशयतियस्माच्चततोधिष्ठानतयाप्रकाशनादेवसकलंस्वप्रकाशाद्वयमात्मानंमन्यतेजानाति 'तदात्मानमेवावेदहंब्रह्मास्मीति' इतिश्रुतेः यतश्चसर्वैर्मुमुक्षुभिर्मन्यतेमननेनावधार्यतेतस्मान्मनइत्येषस्मृतइति ७७४ अथसंज्ञानपदंचेतनारूपसप्रतिबिंबांतःकरणवृत्तिवाचिप्रसिद्धमप्युपाधिविविक्तस्वरूपपरंसदेवमर्थकंभवतीत्याह स्वात्मनीति । यतःस्वात्मन्यध्यस्तंसकलंसदसदनिर्वचनीयंएषआत्माअखिलःपरिपूर्णःसम्यग्विजानातितस्मात्संज्ञानमितिनामवानस्यादिति ७७५ प्रभुरस्मीत्याकारकचिच्छवलवृत्तिवाचकमाज्ञानपदमात्मपरतयाव्याकरोति आज्ञयेति । यस्मादस्यात्मनआज्ञयासन्निधिरूपयाऽऽधिदैवादिभेदभिन्नावागग्न्याद्यादेवताःप्रवर्तंतेतस्मादाज्ञाननामाभविष्यति विमतंप्रत्यपिस्फुटोभविष्यतीतिलृट्प्रयोगाशयः ७७६ व्यवहरोपयोगिचतुःषष्टिकलादिज्ञानेप्रसिद्धंविज्ञानपदमात्मपरतयाव्याचष्टे आत्मानमिति । यतोजडाजडविभागतःजडाजडयोर्भेदमालोच्यतत्पूर्वकमात्मानंचविशेषेणातिशयेनजानातितद्विज्ञानमितिनाम्नोच्यतेइति ७७७ नवनवोन्मेषशालिशवलवृत्तिवृत्तिविशेषवाचिप्रज्ञानपदंशुद्धपरतयाव्याचष्टे प्रकृष्टमिति । प्रकृष्टंसर्वभासकत्वेनेतिशेषः ईदृशमात्मस्वरूपमहमस्मीत्याकारेणयतआनंदात्माजानातितस्मात्प्रज्ञानमित्युच्यतेइति ७७८ ज्ञातस्याविस्मरणशालिबुद्धिवृत्तिविशेषस्यचित्शवलस्यवाचकंमेधपदमात्मपरतयाव्याचष्टे आत्मानमिति । इतरदनात्मरूपं बुद्धंज्ञातंयतोनविस्मरति तेनेत्यादिस्फुटम् ७७९ इंद्रियद्वारानिष्क्रांतवृत्तवाचकंदृष्टिपदंशुद्धपरतया

मनुतेसकलंविश्वंस्वप्रकाशाद्वयंततः ॥ मन्यतेपिचसर्वैर्हितस्मादेषमनःस्मृतः ७७४ स्वात्मन्यध्यस्तमखिलःसकलंसदसद्यतः ॥ सम्यग्जानातितस्मात्स्यात्संज्ञानमितिनामवान् ७७५ आज्ञयैवास्यवर्ततेवागग्न्याद्याश्चदेवताः ॥ तस्मादाज्ञाननामाऽयमानंदात्माभविष्यति ७७६ आत्मानंचपरंचापिजडाजडविभागतः ॥ विशेषेणैवजानातिविज्ञानंतेनकथ्यते ७७७ प्रकृष्टमात्मनोरूपमहमस्मीतिसर्वदा ॥ आनंदात्मात्रजानातिप्रज्ञानमितितेनसः ७७८ आत्मानमितरद्वापिबुद्धंविस्मरतीहन ॥ तेनमेधेतिनाम्नायमानंदात्मानिगद्यते ७७९ अनेनचक्षुषासर्वोजंतुःपश्यतिसर्वतः ॥ तेनदृष्टिसमाख्यानमानंदात्मासमाप्तवान् ७८० दधातिसर्वदेहान्सप्रविश्यांतर्गृहंयथा ॥ स्तंभस्तेनधृतिर्नामास्वानंदात्मनिदृश्यते ७८१ सेतुवद्विदधात्येषमर्यादांल्लोकधारिणीम् ॥ वर्णाश्रमादिजातानांतेनचासौधृतिःस्मृतः ७८२ मिनोतिसकलंविश्वंप्रस्थंयद्वद्यवानिह ॥ स्रग्यथावापिसर्पादीन्मतिस्तेनायमीरितः ७८३

व्याचष्टे अनेनेति । अनेनात्मरूपेणाविलुप्तेनचक्षुषासर्वोजंतुःसर्वतःसर्वैयतःपश्यतितेनदृष्टिरित्याकारकंसमाख्यानंनामानंदात्मासमाप्तवान्लब्धवानित्यर्थः ७८० धैर्यरूपचित्शवलवृत्तिपरंधृतिपदमात्मपरतयाव्याकरोति दधातीति । गृहस्यांतरंतर्गृहंतत्प्रविश्ययथास्तंभोधारयतितथासर्वदेहान्प्रविश्यसआत्मादधातितेनधृतिसंज्ञइति ७८१ प्रकारांतरेणधृतिशब्दमात्मनिसंगमयति सेतुवदिति । यथामृद्दार्वादिनिर्मितःसेतुःक्षेत्रमार्यादांविदधातितथैषआत्मावर्णाश्रमादिजातानां आदिपदेनतत्कर्मणांग्रहः मर्यादांविदधाति कीदृशींमर्यादां लोकनांकर्मफलानामसंकरलक्षणधारणशीलां तेनवानिमित्तेनधृतिरिति 'सएषसेतुर्विधरणः' इत्यादिश्रुतेरिति ७८२ तर्कात्मकमननवाचिमतिपदमात्मनिसंगमयति मिनोतीति । यद्वत्प्रस्थंमानपात्रविशेषोयवान्मिनोतिस्वस्मिन्प्रक्षिपतिपरिच्छिनत्तीतियावत् यथावास्रक्मालावच्छिन्नंचैतन्यंस्वस्मिन्कल्पितान्सर्पादीन्तथायमात्माविश्वंमिनोतिपरिच्छिनत्तितेनमतिरितिसंज्ञकइत्यर्थः कल्पितस्याधिष्ठानरूपदेशपरिच्छिन्नत्वान्मानक्रियाकर्मत्वंप्रसिद्धमेव डुमिञ्प्रक्षेपणार्थस्यमिनोतेःपरिमाणार्थेप्रयोगोपिनीचैःसदोमिनुयादित्यादौप्रसिद्धः अस्मिन्कल्पेमतिशब्दोमिनोतेर्डतिप्रत्ययेउणादौव्युत्पाद्यःसंज्ञात्वात् एवंकर्तृसाधनाधृतिप्रभृतयइति ७८३

प्रकारांतरेणमतिशब्दार्थमाह सर्वेति । प्रमिणोतिसम्यक्निश्चिनोति ७८४ मनसईपाहिंसाआदानंवा ईषगतिहिंसाऽऽदानेष्वितिस्मरणात् मनोनियमनशक्तिशालिचित्शबलवृत्तिविशेषवाचि मनीषापदमात्मनिसंगमयति इदंमेइति । यतोयमात्माइदंमेमाभूदिदंभूयादितिशेषः इत्याकारस्यमनसोनियंतुंनियमनेईष्टेशक्तोभवतिअस्मान्मनीषेत्युक्तइति ७८५ विषादाख्यचिच्छबलवृत्तिवाचकं जूतिपदमात्मपरत्वेसतियाहशार्थकंभवतितद्दर्शयति देहेंद्रियेति । तमोऽज्ञानमेतेषांप्रकाशनाज्ज्योतीरूपआत्माज्योतिरितिवक्तव्येजूतिरितिप्रोक्तःपरोक्षणेतिशेषः ७८६ प्रकारांतरेणास्यार्थमाह जूर्तिरिति । यद्वाजूर्तिर्जूतिर्भवेत् इदंद्रपदस्थानेइंद्रपदवज्जूर्तिरितिवक्तव्येजूतिरितिवदंतीत्यर्थः साचजूर्तिश्चत्रिदुःखधीःअध्यात्मादिदुःखानुभवउच्यतेइतिशेषः दुःखस्याप्यात्मनैवप्रकाशनादिदमपिपरमात्मनएवोपपद्यतेसर्वभासकत्वादित्याह सापीति । सापिज्वरधातोःक्तिनिज्वरत्वरेत्यादिनोठ्चित्युत्पन्नजूर्तिपदस्ययत्परोक्षंरूपंजूतिरप्यात्मनएवनामयस्मात्सएवप्रकाशकादिति ७८७ अथवाद्युतिपदंजूतिरितिपरोक्षाकारेणनामास्तुइत्याह · द्युतिरिति । संभवतिचेदमित्याह यस्मादिति ७८८ स्मरणरूपचित्शबलवृत्तिवाचकस्मृतिपदमात्मनिसंगमयति आत्मेति । यथा

सर्वप्राणिस्थितश्चायंप्रमिणोतिहिताहितम् ॥ तेनवामतिनामायमानंदात्मानिगद्यते ७८४ इदंमेभूदिदंमाचेत्येतस्यमनसोयतः ॥ इष्टेनियंतुमित्यस्मान्मनीषेत्ययमीरितः ८५ देहेंद्रियांतःकरणतमसांहिप्रकाशनात् ॥ ज्योतिर्जूतिरितिप्रोक्तआनंदात्मामहात्मभिः ८६ जूर्तिर्जूतिर्भवेद्वापिसाचलोकेत्रिदुःखधीः ॥ सापिचात्मनएवस्यान्नामयस्मात्प्रकाशकृत् ८७ द्युतिरेषात्रजूतिर्वापरोक्षेणास्यसाभिधा ॥ यस्मादात्मप्रकाशेनयुज्यतेसकलंजगत् ८८ आत्मायस्मात्स्मरत्येतन्माभूतेस्यात्कथंत्विति ॥ अपत्यानीवजननीस्मृतिस्तेनसईरितः ८९ आत्माजागरणंस्वप्नंसुषुप्तंचेतिसत्रिधा ॥ संकल्पयतितेनायंसंकल्पइतिगद्यते ७९० क्रतुरिच्छाविशेषोयमात्माभवतुसर्वदा ॥ इच्छयैवास्यजातंयज्जगदेतच्चराचरम् ९१ ज्ञानवान्क्रतुरस्त्वत्रयतआत्मेक्षणादिदम् ॥ जातंतेनक्रतुःप्रोक्तआनंदात्मामनीषिभिः ९२ असुःप्राणःसमुद्दिष्टस्तदुपाधिःक्रियाकरः ॥ भवत्यात्मायतस्तस्मादसुरेषनिगद्यते ९३ कामोनामभवेल्लोकइच्छामात्रंसुखार्थिनाम् ॥ कामनामाभवत्येषआनंदात्माप्रकाशवान् ९४ स्त्रीसंगमाभिलाषोयंवशोयस्मादयंपुमान् ॥ प्रजायतेततोभूयाद्वशनामाप्यसौपरः ७९५

जननीअपत्यानिस्मरतीतितेननिमित्तेनसआत्मास्मृतिरित्युक्तइति ७८९ सविकल्पकज्ञानेरूढंसंकल्पपदंसम्यक्कल्पयत्यवस्थात्रयमितिव्युत्पत्त्यात्मनिसंगमयति आत्माजागरणमिति ७९० उत्कटेच्छायांप्रवृत्तिजनिकायांप्रसिद्धंक्रतुपदमप्यात्मनियोजयति क्रतुरिति ७९१ प्रकारांतरेणसंगमयति ज्ञानवानिति । करोतीतिक्रतुरितिव्युत्पत्त्याउपादानगोचरज्ञानवान्क्रतुपदार्थोत्रप्रकृतेऽस्तु तथात्वमपीक्षणश्रुतेरात्मनिसंभवतीत्याह यतइत्यादिना ७९२ अथक्रियाशक्त्युपाधिकेप्राणापानभेदकेवात्मनिप्राणेप्रसिद्धोऽसुशब्दोप्युपपन्नइत्याह । असुरिति । असुरितिप्राणःसमुद्दिष्टोलोके आत्मापियतस्तदुपाधिः क्रियाकरःसंनिधिनाक्रियाप्रयोजकस्तस्मादसुनामाऽस्त्विति ७९३ चिच्छबलेच्छावृत्तिवाचकंकामपदमात्मनिसंगमयति कामोनामेति । प्रकाशवान्मतइतिशेषः ७९४ वशकांताविति धातुप्रकृतिकवशपदंजननशक्तकामवाचकमात्मनिसंगमयाति स्त्रीसंगमेति । स्त्रीसंगमाभिलाषोयंवशइत्युक्तस्तत्र । ' प्रजनश्चास्मिकंदर्पः ' इतिगीतावाक्यंस्मारयति यस्मादयंपुमान्जायतेइति । ततइत्यादिस्फुटम् ७९५

एवंलक्षणयाहृदयादिपदानांशुद्धात्मपरत्वेयादृगर्थोभवतिसप्रदर्शितः अथलक्षणामूलंमुख्यार्थसंबंधंस्फुटयन्नामधेयपदंवागौणमित्यपिसूचयति एवमेतानीतिद्वाभ्यां । एतानिहृदयादीनिनामानिहृदिवर्तमानस्यांतःकरणस्यप्रसिद्धानीतिशेषः तत्रांतःकरणेअस्माभिरधिकारिभिरानंदात्माद्दष्टइति ७९६ ततइति । ततोंतःकरणस्यसवृत्तिकस्यविचार्यमाणस्यतदुपलब्धिसाधनत्वाद्यान्यंतःकरणेनामानितान्यस्यात्मनोबोधायहितानिसमर्पितानि दधातेरूपं यद्वायान्यंतःकरणेरूपाणीतिशेषः तान्यस्यात्मनोनामधेयानिहितानिसमर्पितानीत्यर्थः लोकेनामधेयमपिस्वार्थस्मारकं अंतःकरणरूपाण्यपितत्स्मारकाणीतिसादृश्यान्नामधेयपदेनतान्युक्तानीतिभावः । एतदेवाह बुद्धिमद्भिरिति । यतोत्रांतःकरणेसुविचारितेसत्ययमात्माद्दश्यतेततोन्तःकरणरूपाणांनामधेयतयोक्तिरुचितेतिभावः ७९७ एवंसवृत्तिकांतःकरणसाक्षितयात्वंपदार्थत्वेनात्मादर्शितः अथतत्पदार्थतयास्तत्प्रतिपादनपरमेषब्रह्मेत्यादिग्रंथकंसंगतिंसूचयति अंतःकरणेति । अंतःकरणनाम्नांलक्षणावाचोयुक्तिरपिआत्मस्वरूपापरिचयेनैवदत्तावकाशा तत्परिचयेतुसर्वाणिनामानिसर्वेशब्दाश्चविषयांतरालाभाच्चत्रैवपर्यवस्यंति तथाचांतःकरणनाम्नामवयुत्यानुवादन्यायेनतत्रप्रयोगइतिभावः एतेनपूर्वग्रंथोक्तसर्वांतरत्वेनाद्वितीयतांविनानुपपद्यमानेनसूचितामद्वितीयतांस्फुटयितुमुत्तरोग्रंथइतिसंगतिरपिसूचिता सर्वमानवेद्यताचवार्तिककृद्भिरुक्ता ' अतोनुभवएवैकोविषयोऽज्ञातलक्षणः । अक्षादीनांस्वतःसिद्धोयत्रतेषांप्रमाणता ' इति । सर्वनामाभिधेयतावच ' ससर्वनामाचसविश्वरूपः ' इतिविष्णुपुराणादिप्रसिद्धा श्रुतयस्तुपदार्थशोधनपराअत्रानुकूलाइतिसर्वंसुस्थम् ७९८ तत्रतावदैक्यसामानाधिकरण्येनसजातीयभेदवारकमेषब्रह्मेत्यादिएषसर्वदेवाइत्यंतंव्याकुर्वन् शुद्धमायाशबलहिरण्यगर्भविराड्भेदेनचतुर्विधब्रह्मपदार्थेनोक्तात्मनऐक्यमाह आनंदात्मेतिद्वाभ्यां । आनंदात्मैवोक्तःपरंब्रह्मेत्यर्थः एवमुत्तरत्रअव्याकृतंमायाशबलईश्वरत्वेनप्रसिद्धंप्रागवस्थाकारणत्वम् ७९९ हिरण्यगर्भइति । हिरण्यगर्भःसूक्ष्मसमष्ट्युपाधिः विराजःस्थूलसमष्ट्युपाधेर्जनकःकारणम् ८०० इंद्रशब्दस्यइंद्रोमायाभिरित्यादिश्रुतिप्रसिद्धमर्थंतथालोकपालान्यतमरूपंचदर्शयित्वातेनैक्यमाह विराजइति । समष्टिव्यष्टिशरीरेएकोभोक्ताश्रौतइंद्रोप्येषः तथाजगन्नाथःप्रसिद्धंइंद्रोप्येषइत्यर्थः ८०१ मरीच्यादिरिति । मरीचिःकश्यपपितातत्प्रभृतिःप्रजापतिरेषएवेति आदिपदेनाऽत्र्यादीनांदक्षादीनांचग्रहः ८०२ वागग्न्याद्याइति । तेदेवाआनंदात्मैवेति तत्रदृष्टांतः स्वप्नेति । यथास्वप्नदृष्टाःस्वप्नेऽस्माभिर्भिन्नतयाकल्पिताः प्रमातारोवयमेवतथाएतेपीत्यर्थः ८०३ अथविजातीयभेदवाधसामानाधिकरण्येननिर्देशपदिमानीत्यादिस्थावरमित्यंतंवाक्यंव्याचष्टे पृथिव्यापइतित्रिभिः । इमानिसर्वशरीरोपादानतयाप्रसिद्धानि ८०४

एवमेतानिनामानिहृद्यंतःकरणस्यहि ॥ तत्रास्माभिरयंदृष्टआनंदात्मापरःपुमान् ७९६ ततोंतःकरणेयानिनामान्यस्यहितानिवै ॥ बुद्धिमद्भिर्यतोत्रायंदृश्यतेसुविचारिते ९७ अंतःकरणनामानिसर्वात्मनिमहेश्वरे ॥ उपपन्नानिनैवास्मात्पदार्थोन्योस्तिकश्चन ९८ आनंदात्मापरंब्रह्मनामरूपविवर्जितम् ॥ अव्याकृतंचजगतःप्रागवस्थास्वरूपभृत् ७९९ हिरण्यगर्भोप्येषस्याद्विराजोजनकःप्रभुः ॥ विराडप्येषएवस्यात्सर्वलोकशरीरभृत् ८०० विराजस्तद्वदस्माकंशरीरेसर्वदेहिनाम् ॥ त्रिलोक्याःसमधिष्ठाताभोक्तासर्वप्रकाशवान् ॥ इंद्रोप्येषजगन्नाथोनास्मादन्योस्तिसकचित् ८०१ मरीच्यादिःप्रजानांस्यात्पतिर्येःकश्चिदत्रहि ॥ आनंदात्मैवसर्वःस्यान्नास्मादन्योस्तिकश्चन ८०२ वागग्न्याद्याश्चयेकेचिद्देवादेहादिसंश्रिताः ॥ आनंदात्मैवतेसर्वेस्वप्नदृष्टायथावयम् ८०३ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ इमानिपंचभूतानिनास्मादन्यानिसंतिहि ८०४

उद्भिज्जानीति ॥ स्वेदाज्जातानिस्वेदजानिदंशादीनि भूतानिप्राणिशरीराणिचतुर्विधान्यपिस्थावरजंगमत्वाभ्यांद्विविधानि चकाराद्बीजेतरपदोक्तस्यकारणत्वेनकार्यत्वेनचोक्तद्वैविध्यस्यपरिग्रहः सर्पादिशरीराणिहिपूर्वस्यकार्याणिउत्तरस्यचकारणानीतिप्रसिद्धं इमेद्वैविध्येसुद्वपर्यैतानामितिश्रुतौक्षुद्रभिश्राणीवेत्युक्तं इवशब्दस्त्वनर्थकइति ८०५ नास्मादिति । एतानिआनंदात्मस्वरूपिणोऽन्यानिनविद्यंतेइत्यन्वयः । सर्वपदार्थमाह सदसद्वस्त्विति । स्थूलंसूक्ष्मंचयद्यत्तत्सर्वमित्यर्थः ८०६ इममर्थंमंदानांबुद्ध्यारूढंकर्तुंदृष्टांतैरुपपादयति उष्णतेत्यादिनाअस्माभिर्यानीत्यतःपूर्वग्रंथेन । सदसन्नामरूपात्मकःप्रपंचः आनंदात्मस्वरूपंसत्ताप्रकाशःआनंदश्चअस्तिभातिप्रियमितिचप्रसिद्धम् ८०७ स्निग्धतेति ८०८ काठिन्यमिति । वसुधात्मनःपृथ्वीस्वरूपात्

उद्भिज्जानितथास्वेदाज्जातान्यंडोद्भवानिच ॥ जरायुजानिभूतानिस्थावराणिचराणिच ८०५ नास्मादन्यानिविद्यंतेआनंदात्मस्वरूपिणः ॥ सदसद्वस्तुनान्यत्स्यादानंदात्मस्वरूपतः ८०६ उष्णताचप्रकाशश्चनभिन्नमग्नितोयथा ॥ तथानभिन्नंसदसदानंदात्मस्वरूपतः ८०७ स्निग्धताचद्रवत्वंचनान्येनीरात्यथातथा ॥ इमेसदसतीनान्येआनंदात्मस्वरूपतः ८०८ काठिन्यंचैवगंधश्चनभिन्नौवसुधात्मनः ॥ यथातथासदसतीआनंदात्मस्वरूपतः ८०९ यथास्पर्शेक्रियेवायोर्भिन्नेस्तोनैवकर्हिचित् ॥ तद्वदेतेसदसतीआनंदात्मस्वरूपतः ८१० यथासुषिरताशब्दावाकाशादपरौनहि ॥ तद्वदेतेसदसतीआनंदात्मस्वरूपतः ८११ यथासर्वगतेभानोःप्रकाशेदोषवर्जिते ॥ तमस्तद्वदिदंविश्वमानंदात्मन्यलौकिके ८१२ अमूर्तेयद्वदाकाशेमूर्तंमेघादितिष्ठति ॥ आनंदात्मप्रकाशेस्तितद्वज्जडमिदंजगत् ८१३ कदाचिद्वापिकिंचिद्वाकेनचिद्दृश्यतेयथा ॥ मेघादिकंनभस्येवमानंदात्मन्यदोजगत् ८१४ मायावीदारकोयद्वच्चेष्टतेऽन्यथैवहि ॥ आनंदात्मापितद्वद्धिचेष्टतेऽन्यथैवहि ८१५ मदिरामदमंदाक्षःपुरःपश्यतिभित्तिकाम् ॥ असतींतद्वदेवेदमानंदात्मापिपश्यति ८१६ यथास्वाशयदोषेणपित्रादौदोषवर्जिते ॥ दोषंविलोकयेत्कश्चित्तद्वदात्मात्मनात्मनि ८१७ यथाशयानःपुरुषोनवेत्त्येकत्वमात्मनः ॥ एवंस्वप्नत्रयंपश्यन्नानंदात्मापिवेत्तितत् ८१८ नलिकाभ्रमणेयद्वन्नलिकादत्तपादकः ॥ शुकोभ्रमत्यबद्धोपिबंधवानितिबोधतः ८१९ एकोनंतःसत्प्रकाशआनंदोस्मीत्यबोधतः ॥ संसारशूलेभ्रमतितद्वदेवपरःपुमान् ८२० कमलस्ययथागर्भेभ्रमरोगंधलोभतः ॥ दुःखंप्राणांतमाप्नोतिस्वात्माविषयतस्तथा ८२१ यथाविभ्रांतधीःश्रीमान्विस्मृत्यस्वंहिताद्दृशम् ॥ लोकेदारिद्र्यमाप्नोतिव्यर्थमेवातिदुःखदम् ८२२

८०९ यथेति ८१० यथासुषिरतेति । सुषिरताऽवकाशः ८११ यथासर्वेति । तमस्तेघूककल्पितम् ८१२ अमूर्तेइति । मूर्तत्वंघनीभावस्तद्रहिते ८१३ कदाचिदिति । यथायद्विविधंमेघादिदृश्यतेतन्नभस्येवनभोभिन्नाधिकरणकंन तत्रचनिषिद्ध्यमानंमिथ्येतिविनिश्चितमेवमात्मनिजगदिति ८१४ मायावीति । दारकोबालः उक्तार्थमेतत् ८१५ मदिरेति । असतींभित्तिकांकुड्यनिभमावरणम् ८१६ यथास्वाशयेति । स्वाशयदोषःस्वचित्तदोषः पित्रादौपितृप्रभृत्याप्ते ८१७ यथाशयानइति । शयानःस्वप्नंपश्यन्स्वात्मनएकत्वंनपश्यतितद्वदानंदात्मापिनपश्यतीति ८१८ नलिकेति । नलिकारज्जुनामध्येप्रोताशुकबंधनसाधनमितिप्रसिद्धा बोधतःभ्रमात् ८१९ एतदार्ष्टांतिकमाह एकइति ८२० दृष्टांतांतरमाह कमलस्येति । गर्भेबद्धइतिशेषः दुःखं'रात्रिर्गमिष्यतिभविष्यतिच" इत्यादिप्रपद्यमसिद्धम् ८२१ यथाविभ्रांतधीरिति । यथाकश्चित्श्रीमान्विभ्रांतधीःसन्स्वमात्मानंतादृशंश्रियंतंविस्मृत्यदरिद्रोहमीतिमन्यतेइति ८२२

तद्वदिति । तद्वत्भ्रांतधनिकवत्आत्माप्रभुरपिनिजंरूपंत्यक्त्वाविस्मृत्यसुखार्थंदीनदशांकर्तृत्वादिसंसाररूपांप्राप्नोतीति ८२३ यद्वदिति । यद्वत्सर्वगुणोपेतोपिपुमान्कयाचित्स्वैरिण्यापुंश्चल्या मोहितःकार्मणेनवशीकृतोदैन्यंगच्छेत्तथात्मामाययेति ८२४ यथेति । यथालोकत्रयीनाथोपिइंद्रःकामेनकामिनीपरतंत्रोभूत्वाकामस्यदेवत्वेनस्वस्यचदेवाधिपतित्वेनस्वस्मिन्विद्यमानयापि तन्नियमनशक्त्यातांकामिनींनियंतुंशक्तोभवतितथात्मास्वाश्रितत्वेनस्वनियम्यांमायामिति ८२५ प्रियेति । प्रियेणपुत्रादिनाकृतेऽधिक्षेपेअनादरेदोषेपियथासौपुत्रादिप्रियदर्शीदोषंतस्यदोषत्वंनवे त्तितथात्मामायादोषमिति ८२६ भारेति । भारशृंगोनाममृगविशेषः सउच्चप्रदेशात्पतन्शृंगैःप्रथमंभुवंस्पृशतीतिप्रसिद्धःसयथामूढःशृंगभारंहर्षेणैववहतितथात्मामायाभारमिति ८२७ यथादुर्जनेति । स्पष्टम् ८२८ यथादुर्जनदृष्टयेति । दोषितादोषवत्ता मायादृशाअज्ञदृष्ट्या पुंसिआत्मनि ८२९ यथाजनेति । यथाराजाजनस्थितंप्रजागतंदुःखंस्वस्मिन्मन्यतेआत्मीयत्वा

तद्वदात्मानिजंरूपंसुखोदधिसमंमहत् ॥ त्यक्त्वासुखार्थमभ्येतिदशांदीनतमांप्रभुः ८२३ यद्वत्सर्वगुणोपेतःकयाचिन्मोहितःपुमान् ॥ स्वैरिण्यादीनतामेतिमा यात्मातथाकृतः ८२४ यथालोकत्रयीनाथःकामिनींननियच्छति ॥ तद्वत्सर्वनियंतापिमायांनैवनियच्छति ८२५ प्रियपुत्राद्यधिक्षेपेदोषंयद्वन्नवेत्त्यसौ ॥ दो षंतथापुमानेषमायादोषंनपश्यति ८२६ भारशृंगोमृगोयद्वद्भारंशृंगोत्थितंयथा ॥ हृष्टोवहतिमायायाभारंतद्वदयंपुमान् ८२७ यथादुर्जनसंपर्कात्साधुर्भवतिदू षितः ॥ एवंमायासमाश्लेषादात्माभवतिदूषितः ८२८ यथादुर्जनदृष्ट्यास्यान्निर्दोषेपीहदोषता ॥ एवंमायादृशापुंसिसंसारोऽनेकदोषभाक् ८२९ यथाजनस्थि तंराजादुःखमात्मनिमन्यते ॥ एवंजडेस्थितंदुःखमात्मन्येवाभिमन्यते ८३० यथाशयानेपुरुषेएकस्मिन्हेतुवर्जिते ॥ अकस्मादेवनिखिलंजायतेभूतभौतिकम् ८३१ एवंपुराणेपुरुषेमाययापिविवर्जिते ॥ जायतेसकलंह्येतद्विश्वंसदसदात्मकम् ८३२ यथास्वप्नेवृथादुःखंस्वयंस्वस्यप्रयच्छति ॥ एवंजागरणेप्यात्माव्यर्थ मेवप्रयच्छति ८३३ यथास्वप्नाद्विबुद्धस्यस्वप्नदुःखक्षयोभवेत् ॥ वेत्तिचैतन्नमेदुःखमासीन्नास्तिनभाव्यपि ८३४ एवंत्रिस्वप्नसंसारात्प्रबोधेक्षीयतेऽसुखम् ॥ वेत्तिचात्मानंमेदुःखमासीन्नास्तिनभाव्यपि ८३५ अस्मात्त्रिस्वप्नसंसाराद्बोधनंब्रह्मवेदनम् ॥ जातमस्माकमेतस्माददहोपुण्यतमावयम् ८३६ अस्माभिर्यानिद त्तानिब्रह्मणेविविधानिहि ॥ बुद्धिनामानितेष्वत्रप्रज्ञानामातिशोभनम् ८३७

भिमानात्तथात्माजडेंतःकरणेस्थितंदुःखंस्वस्मिन्निति ८३० यथाशयानेइति । हेतुवर्जितेरथादिनिर्मितिसामग्रीहीने ८३१ एवमिति ८३२ यथास्वप्नेइति ८३३ यथास्वप्नादिति । विबुद्धस्यलब्धजागरस्यवेदनमभिनयति नमेत्यादिना ८३४ एवमिति । एवंस्वप्नात्प्रबोधइवजाग्रदाद्यवस्थारूपत्रिस्वप्नलक्षणसंसारात्प्रबोधेऽसुखंदुःखंनश्यतीति ८३५ अस्मादिति । ब्र ह्मवेदनरूपंबोधनंजागरणंजातमिति ८३६ एवमात्मनःप्रतिपादितायांतत्पदार्थावच्छेदकभूतायामद्वितीयतायामुपपत्तिप्रदर्शनपरंतत्प्रज्ञेत्यादिप्रातिष्ठेरयंतंवाक्यंव्याचष्टे अस्माभिरित्याद्येकात्रिंश च्छ्लोकैः । यान्यस्माभिर्बुद्धिनामान्यंतःकरणनामानिब्रह्मणोदत्तानिसमर्पितानितेषुमध्येप्रज्ञेतिनामातिशोभनमिति यद्यपिप्रज्ञेतिनामहृदयादिनामसुनोद्दिष्टंतथापिप्रज्ञाननाम्नउद्दिष्टत्वेआतश्चो पसर्गइतिभावार्थकाङ्प्रत्ययांतत्वेनतत्समानार्थंप्रज्ञानमप्युद्दिष्टमेवेतिभावः ८३७

ननुकथमस्यनाम्नोऽतिशोभनत्वमित्याशंक्यआत्मयाथात्म्यबोधनादित्याह यतइति । यतोधातुनाप्रकाशउच्यतेप्रशब्देनचात्रिविधभेदशून्यतारूपःप्रकर्षोद्योत्यतेयथाब्रह्मशब्देनिरतिशयमहत्त्वपर स्तद्वदिति एतादृशावयवार्थकंचप्रज्ञापदं महावाक्यात्तांसंविदमाह यस्यांसंविदिस्वसजातिविजात्यात्माभेदोनततोऽतिशोभनमेतन्नामेतिसंबंधः स्वंस्वरूपंचसजातिःसजातीयश्च विजातिःविजाती यश्चतेआत्मानिरूपकतयाशरीरंयस्यभेदस्यसतथेति ८३८ एतदभिप्रायमेवप्रज्ञानमितिनामपूर्वमुक्तमुत्तरत्रचवाक्येइत्याह तस्मादिति । तस्यविश्वनिर्वाहकतांनेत्रपदेनवक्तुंसर्वत्रास्थितिमाह ब्रह्मा दीति ८३९ स्थावरमिति । भूतंपृथिव्यादिभौतिकंतत्कार्यंचस्थावरादियत्किंचित्सर्वंप्रज्ञानेत्रंप्रज्ञोक्तलक्षणानेत्रंनिर्वाहकंयस्यतत्तथा नीयतेसत्तांप्राप्यतेऽनेनेतिनेत्रमितिभाष्यमिति तत्रदृष्टांतः यथाऽस्मदादिशरीराणिमांसनेत्राणिमांसमयनेत्रैर्विनाऽसंतिअप्रशस्तानितद्वदिति उक्तप्रज्ञायानिर्वाहकत्वेननेत्रसाम्येपिउपादानतयानिर्वाहकत्वंव्यतिरेकोपिबोध्यइत्याह प्रतिष्ठितमिति । ईरितं 'ब्रह्मपुच्छंप्रतिष्ठा' इत्यादिश्रुतिषु ८४० 'तस्यभासासर्वमिदंविभाति' इतिश्रुतिमनुरुध्योक्तमर्थंस्फुटयति अपीति । यस्त्रिलोक्याजठरेंतःस्थितःसूर्येंदुवन्हिमुख्यानांप्रकाशः कीदृशःलोकेलो कावभासकइत्येवमीरितः सोपिप्रज्ञानेत्रइत्यन्वयः ८४१ तत्रोक्तप्रज्ञाभानमंतराभानाभावेहेतुमाह नहीति । उक्तप्रज्ञारूपांदृशंविनाप्रकाशस्यापिसौरादेःकिंभानंस्यादपितुनैवेत्यर्थः नह्यसाक्षिकं

यतोज्ञप्तिःप्रकाशःस्यात्प्रकर्षोभेदशून्यता ॥ स्वसजातिविजात्यात्माभेदोयस्यांनसंविदि ८३८ तस्मात्प्रज्ञातशब्देनप्रकाशात्मायमीरितः ॥ ब्रह्मादिस्थावरांतानां देहेकाष्टेग्निवत्स्थितः ८३९ स्थावरंजंगमंचापियत्किंचिद्भूतभौतिकम् ॥ प्रज्ञानेत्रंहितत्सर्वंमांसनेत्रायथावयम् ॥ प्रतिष्ठितंजगत्सर्वंप्रकाशेब्रह्मणीरितम् ८४० अपिप्रकाशोयःकश्चित्त्रिलोक्याजठरेस्थितः ॥ सूर्येन्दुवन्हिमुख्यानांलोकइत्येवमीरितः ॥ लोकावभासकःसोपिप्रज्ञानेत्रउदाहृतः ८४१ नहिप्रज्ञादृशंहित्वाप्र काशस्यप्रकाशनम् ॥ नोक्तंपरोक्षमेतत्स्यात्सर्वानुभवसंश्रितम् ॥ कदाचित्कुत्रचित्किंचिद्वस्तुसर्वोपिवेत्तियत् ८४२ स्थावराणांहिविज्ञानंदृश्यतेसुखदुःखयोः ॥ अस्मद्वद्वृद्धियतेतेषांवृद्धिहान्यादिकंयतः ८४३ स्थावराहिजलान्याप्ययथाकालंसुशोभनान् ॥ स्वदेहान्बिभ्रतोदृष्टास्तेनतेसुखिनःस्थिताः ८४४ मूलघातादिनात द्वद्गतस्नेहाहिदुर्भगाः ॥ पतनादिकृतोदृष्टास्तेनैतेदुःखिनःस्थिताः ८४५ अन्नपानादिसंप्राप्ययथाकालंसुखंयथा ॥ संप्राप्यवृद्धिर्भवतिह्यस्मदादेर्मनोरमा ८४६

किंचित्सित्ध्यति साक्षिप्रतिपादकताप्रज्ञापदस्योक्तेतिभावः अयमर्थःसर्वानुभवसिद्धइत्याह नोक्तमिति । एतत्सर्वस्यजडस्यप्रज्ञानेत्रत्वंयदुक्तंतत्परोक्षंधर्मादिवत्परोक्षमानवेद्यमेवनकिंतुसर्वानु भवसंश्रितंएतदेवकथमतआह कदाचिदिति । यद्यस्मात्सर्वोपिप्रमाताकदाचित्किंचिद्वस्तुवेत्त्येवतथाचयद्यस्यसिद्धंतदुक्तप्रज्ञाव्याप्तमेवसिद्धं उक्तप्रज्ञयाऽसंबद्धंसिद्धमितिवदतोव्याघातइतिभावः अतएवोक्तंविवरणकारैः सर्वंहिवस्तुज्ञाततयाऽज्ञाततयावासाक्षिचैतन्यस्यविषयइति सर्वत्रचिदन्वयेमृदनुगतघटस्यमृन्मात्रत्ववद्विश्वस्यचिन्मात्रत्वमितिभावः ८४२ सर्वोपिवेत्तीत्युक्तंचित्प्र काशस्यसर्वत्रानुगमंद्रढयितुंस्थावरेपुतावत्साधयति स्थावराणामिति । तत्रानुमानंदर्शयति अस्मद्वदिति । स्थावराःसुखादिज्ञानवंतःवृद्ध्यादिमत्त्वादस्मदादिवदिति ८४३ एतदेवस्फुटयति स्थावराहीति । सुशोभनान्स्वदेहान्बिभ्रतोधारयंतः तेनसुखज्ञानकार्यवृद्धिमत्त्वेनसुखिनःसुखज्ञानवंतः ८४४ मूलेति । मूलघातोजटाच्छेदः आदिनाऽतिशीतसंसर्गादिग्रहः तेनगतस्नेहाःशुष्काइति यावत् तथादुर्भगानिःश्रीकाश्चसंतः पतनादिकृतःपतनादिशालिनोदृष्टाइति८४५अस्मद्वदितिदृष्टांतंस्फुटयति अन्नेति । यथास्मदादेर्यथाकालमन्नपानादिसंप्राप्यासुखंसंप्राप्यमनोरमावृद्धिर्भवति८४६

तथेति । तथास्मदादेरेवशस्त्रप्रहारादेर्हेतोर्दुःसहांवेदनांसंप्राप्यक्षयोहानिःस्यात्तथैवस्थावराणांक्षयवृद्धीइति .एतेनपर्वतानांपृथिव्यादीनांचाभिमानिचेतनानुमानंसूचितम् ८४७ पशुप्वपि तंदर्शयति पशूनामिति । उभयेषांग्राम्याणामारण्यानांचानुकूलेहरिततृणपूर्णपाण्युपलंभादौसतिप्रवृत्तिर्दृष्टा विपर्ययेदंडहस्तप्रतिकूलदर्शनेनिवृत्तिश्चदृश्यतेइतितेनैतेपशवोमनुजैःसमाइति ८४८ पिपीलिकादावप्यातिदिशति जंगमानामिति । अस्मादनुकूलप्रतिकूललाभात्प्रवृत्त्यादेः ८४९ मुनीनामिति । मुनीनांवशिष्ठादीनांतथाब्रह्मादीनांदेवानांशास्त्रतस्तथानुमानाच्चचेतनत्वलिंगका त्सुखदुःखान्यतमभोगोज्ञेयः ८५० तथासतिप्रकृतेकिमागतमतआहसुखेति । साप्रज्ञाप्रकाशरूपैव नात्रक्रियागंधोपीत्याह नचेति ८५१ प्रत्युतक्रियोपरमोदृश्यतइतिव्यतिरेकमुखेनाह यावदिति । यावत्सुखंदुःखंफलंनोत्पद्यतेतावदेवकारणानिक्रियाःकुर्वतेइत्यन्वयः ८५२ फलोत्पत्तौतुक्रियोपरमइत्यत्रदृष्टांतमाह यथेति । यथातृप्तौजातायांविद्यमानैरपिकारकैःकर्त्रादिभिर्भुजिक्रियानक्रियते तत्रहेतुः तस्याःसत्तयातस्यास्तृप्तेःसत्तयानिष्पत्त्येतियावत् ८५३ दार्ष्टान्तिकमाह एवंसुखइति । स्पष्टम् ८५४ एवंप्रज्ञायाःस्वरूपंदर्शयित्वातस्याःप्रज्ञेयंप्रतिउपादानतयानेत्रतांस्फुटयति सुखेति । नोऽस्माकंभोक्तृणांसुखदुःखेप्रज्ञयाविरहितेनजायेतेनवाकदाचित्काचित्विद्येतेयतस्तेप्रज्ञातोविविक्तेसतिशशशृंगाभेइति ८५५ एवंस्वकीयसुखदुःखयोःप्रज्ञामात्रतांनिश्चित्यतदृष्टांतेनपरकीयसुखदुः

**तथाशस्त्रप्रहारादेर्दुःसहांप्राप्यवेदनाम् ॥ क्षयःस्यात्स्थावराणांचक्षयवृद्धीतथैवच ८४७ पशूनामुभयेषांस्यादनुकूलेविपर्यये ॥ प्रवृत्तिश्चनिवृत्तिश्चतेनैतेमनुजैः समाः ८४८ जंगमानांहिसर्वेषांव्यवहारःसमोयतः ॥ पिपीलिकादयोप्यस्मात्सुखदुःखोपभोगिनः ८४९ मुनीनामपिदेवानांब्रह्मादीनांहिशास्त्रतः ॥ अनुमानाच्चगम्येतसुखदुःखोपभोगिता ८५० सुखदुःखोपभोगोयःसाप्रज्ञेतिप्रकीर्तिता ॥ नचक्रियात्रकाचिद्धिसुखेदुःखेचदृश्यते ८५१ यावदुत्पद्यतेनैवसुखंवादुःखमेववा ॥ तावदेवक्रियाःसर्वाःकुर्वतेकारणान्यपि ८५२ यथातृप्तौचजातायांकारकैर्नभुजिक्रिया ॥ क्रियतेसत्तयातस्याविद्यमानैरपिस्वयम् ८५३ एवंसुखेचदुःखेचजातेतत्कारणैर्नच ॥ क्रियतेहिक्रियानामविद्यमानैस्तुसर्वतः ८५४ सुखदुःखेचजायेतेप्रज्ञाविरहितेनहि ॥ विद्येतेशशशृंगाभेकदाचित्कापिवात्रनः ८५५ यथास्माकंतथान्येषांसर्वेषामिहदेहिनाम् ॥ प्रज्ञैवसुखदुःखेतेसुखदुःखत्वहेतुतः ८५६ प्रज्ञामात्रेयथोक्तेतेसुखदुःखेतथैवहि ॥ प्रज्ञामात्रेसदसतीतस्यांसत्यांप्रकाशनात् ८५७ रज्ज्वांसत्यांयथासर्पोभासमानःपृथक्कृतः ॥ नस्यात्सुखादिकंतद्वत्प्रज्ञातोनपृथग्भवेत् ८५८ प्रज्ञाबुद्धिःप्रकाशाख्याजडासापिजडेतरम् ॥ सुखादिवदपेक्षेतप्रकाशंस्वकाशकम् ७५९ तस्मादालोकमात्रायांप्रज्ञावागुपचारतः ॥ यथाप्रकाशेभान्वादेरुपचारात्प्रकाशगीः ८६०**

खयोरपितथात्वंनिर्धार्यैसुखत्वदुःखत्वरूपहेतुभ्यामित्याह यथास्माकमिति ८५६ तद्दृष्टांतेनचान्यत्रप्रज्ञामात्रतावधार्यैत्याह प्रज्ञामात्रेइति । तेउक्तेसर्वभोक्तृसंबंधिनीसुखदुःखेयथाप्रज्ञामात्रेप्रज्ञातिरिक्तस्वरूपहीनेतथासदसतीयावत्कार्यकारणेप्रज्ञामात्रे कुतः तस्यांप्रज्ञायांसत्यामेवभासमानायामेवप्रकाशनात्स्फुरणात् ८५७ इत्थंप्रज्ञापरिणामइतिभ्रमममपाकर्तुंविवर्त्तोपादानंदृष्टांतमाह रज्ज्वामिति । यथारज्ज्वांसत्यांभासमानसर्पोरज्जोःपृथक्कृतश्चेत्तर्हिनस्यात्शशशृंगसमोभवेत् तद्वत्प्रज्ञातःपृथक्सुखादिकंप्रपंचोनभवेत् असन्नेवभवेदितियावत् ८५८ ननुर्किंबुद्धिरियंप्रज्ञेतिकस्य चिद्धर्मंप्रोपसर्गार्थंप्रकर्षानुपपत्त्यानिरस्यति प्रज्ञेति । याबुद्धिःप्रकाशाख्याप्रकाशत्वेनलोकेप्रसिद्धासापिजडेतरंस्वप्रकाशप्रकाशमपेक्षेताऽतोप्रकृष्टत्वात्सानमुख्याप्रज्ञा शिलामध्यगतसहस्रदीपवत्स।क्षिणमंतरासिद्धेर्दुर्वचत्वादितिभावः ८५९ बुद्धौतुप्रज्ञापदंगौणमित्याह तस्मादिति । आलोकमात्रायांआलोकस्यभूतानांसात्विकांशगणस्यप्रकाशस्यमात्रायांकार्यतयालेशभूतायां यद्वाऽऽलोकस्यात्मप्रकाशस्यप्रतिबिंबतयालेशोचिदाभासेबुद्धिविशिष्टेप्रज्ञापदमुपचारादिति । दृष्टांतमाह यथेति । 'स्त्रियांमात्रात्रुटिःपुंसिलवलेशकणाणवे' इत्यमरः ८६०

फलितमाह तथेति । तथातथासतिअन्यत्रसमन्वयाभावेसतिआनंदात्मनिप्रज्ञाशब्दोमुख्यइति तत्रहेतुगर्भविशेषणेबोध्येइति । अत्रप्रज्ञापदमानंदात्मनिमुख्यमितिवदतांग्रंथकृतामयमाशयः व्यवहारेद्विभाङ्नयइत्यभ्युपगमः भट्टमतेचजातौशक्तिः जातिश्चप्रतिबिंबविशिष्टवृत्तीनांबिंबमेव अतएवविवरणकारैरपिज्ञानादिपदानांमुख्यावृत्तिःशुद्धेदर्शिता नचावाङ्मनसगम्यत्वप्रतिपादकश्रुतिविरोधः तस्याःश्रुतेर्मनोविषयविषयकवाग्विषयत्वनिषेधपरत्वात् अथविशिष्टवाचकपदानांशुद्धेलक्षणयैववृत्तिरितिवादिनांसंक्षेपशारीरककृतांमतेतुमुख्येत्यस्यप्रशस्ततत्वज्ञानोपयोगित्वादित्यर्थइति। यतएवमिति यतउक्तयुक्तेः एवंप्रज्ञाशब्दस्यानंदात्मनिमुख्यत्वंततएवाशयात्श्रुत्याएवंकथ्यतेएवंकथं लोकोदृश्यवर्गः प्रज्ञानेत्रइति नहिसद्बुद्धिनिर्वाह्यः बुद्धेःस्वसिद्धयेपरापेक्षायाउक्तत्वादानंदात्मनात्वभिन्ननिमित्तोपादानेननिर्वाह्यइतिभावः ८६१ प्रज्ञानेत्रइतिवाक्यार्थंसहेतुकमनुवदन्प्राज्ञानस्यप्रतिष्ठात्वंस्फुटयति भूतेतिचतुर्भिः। यतोमायासहितभूतभौतिकजातरूपस्यसर्वस्यप्रपंचस्य कीदृशस्य सदसदात्मनःस्थूलसूक्ष्मकस्य स्वप्रकाशप्रकाशेनस्वरूपेणप्रकाशनात्प्रज्ञोक्तलक्षणानेत्रंनिर्वाहिकाभवतिततःसैवलोकस्यप्रतिष्ठाऽऽधारः उपादानस्यमृदादेरुपादेयघटाद्याधारत्वंलोकेपिसिद्धमित्याह हेतौकार्यंस्थितंयतइति । हेतौउपादानेइतिद्वयोरर्थः ८६२ । ८६३ हेतौकार्य्यस्यस्थितत्वमभिनयति अव्यक्तेति । अदोसृष्टेःपूर्वंअंतेविनाशानंतरंचसकलंजगत्

तथासर्वप्रकाशानांप्रकाशेभेदवर्जिते ॥ आनंदात्मनिशब्दोयंमुख्यःप्रज्ञेतिसंभवेत् ॥ यतएवंततःप्रज्ञानेत्रोलोकोपिकथ्यते ८६१ भूतभौतिकजातस्यमायासहितस्यच ॥ प्रपंचस्यास्यसर्वस्यसदासदसदात्मनः ६२ प्रज्ञानेत्रंस्वप्रकाशप्रकाशेनप्रकाशनात् ॥ यतस्ततःप्रतिष्ठासाहेतौकार्यंस्थितंयतः ६३ अव्यक्तनामरूपाभ्यामादावंतेचसंस्थितम् ॥ मध्येचताभ्यांव्यक्ताभ्यांप्रज्ञायांसकलंजगत् ६४ यथाविशुद्धेनभसिगंधर्वनगरादिकम् ॥ यथावात्मनिबालस्यदुःस्वप्नेराक्षसादिकम् ६५ प्रज्ञानमतएवैतद्ब्रह्मेत्याहुर्मनीषिणः ॥ नह्यस्मादधिकंकिंचित्सदसद्वापिविद्यते ६६ देशःकालस्तथावस्तुभावाभावस्वरूपकम् ॥ तत्सर्वंप्रज्ञयाव्याप्तंपर्णानीवचशंकुना ६७ पातालंभूतलंवापिदिवंवाबाह्यमेवच ॥ तिष्ठत्येकंनभोव्याप्यप्रज्ञैवसकलंजगत् ८६८

अव्यक्ताभ्यामस्पष्टाभ्यांनामरूपाभ्यांप्रज्ञायांस्थितंमध्येचसृष्टिकालेव्यक्ताभ्यांताभ्यांनामरूपाभ्यांस्थितमिति घटादीनामपिमृदाद्युपहितमात्मचैतन्यमेवोपादानमित्याकरेस्पष्टमिति ८६४ तत्रापिविवर्तोपादानत्वेवेतिदृष्टांताभ्यांस्पष्टयति यथेति । आत्मनिमनसि ८६५ महावाक्यंव्याचष्टे प्रज्ञानमिति । अतःप्रज्ञानपदपर्यायप्रज्ञापदस्योक्तार्थपरत्वादेवएतत्साक्षादपरोक्षंप्रज्ञानंब्रह्मेत्याहुर्मनीषिणोवेदांतविदइति । ब्रह्मपदार्थमाह नहीति । यत्किंचित्सदसत्तत्सर्वंअस्मात्प्रज्ञापदार्थात्प्रज्ञानात्अधिकंपृथग्नविद्यतेतस्माद्ब्रह्मपदप्रयोगमर्हतीति ८६६ नन्वेकमेवपदंशुद्धतांबोधयिष्यतिकिंपदद्वयात्मकेनवाक्येनेतिचेन्न पदमात्रस्यस्मारकत्वेनैकंपदंविशिष्टमर्थमपिस्मारयेत् वाक्यभावेतुसामानाधिकरण्येनपदांतरार्थैकतांलब्धुंतदनुकूलमेवस्मारयेदितिविशेषादित्याशयेनब्रह्मपदसमानाधिकृतेनप्रज्ञानपदेनयादृशोर्थोबोधितस्तमाह देशइतिद्वाभ्यां । योयंदेशः कालश्च यच्चतदवच्छिन्नंभावाभावरूपंवस्तुजातंतत्सर्वंप्रज्ञयासर्वांतरचैतन्येनव्याप्तमिति । अत्रदृष्टांतः यथापर्णानिपत्राणिशंकुनावृंतेनव्याप्तानितद्वदिति ८६७ दृष्टांतांतरमाह पातालमिति । पातालंभूतलंदिवमंतरिक्षंस्वर्गंवाततस्त्रिलोक्याबाह्यदेशंचव्याप्यप्रधानभस्तिष्ठतितथाप्रज्ञैवसकलंव्याप्यतिष्ठतीति सर्वांतरंवस्तुप्रज्ञानपदार्थइतिभावः ८६८

तत्समानाधिकृतेनब्रह्मपदेनचतस्याद्वितीयतानिर्विशेषतारूपाबोध्यतेइत्याह गंधर्वेति । यथाकाशेकल्पितंगंधर्वनगरादिकमाकाशमेवतत्रकल्पितंतुनेवास्तितथाप्रज्ञायांकल्पितंविश्वंप्रज्ञैवास्तिक
ल्पितंजडाजडंविशेषरूपमशेषंप्रज्ञामात्रमित्यर्थोब्रह्मपदप्रसादलभ्यइति ८६९ सएतेनेत्यादिसंभवदित्यंतंव्याकरोति एवमित्यादित्रिभिः । सवामदेववाक्यतोविचारेप्रवृत्तेऽधिकारिजनःप्रभुः
साधनसंपत्त्यासमर्थःएतच्छरीरादिधियाविवेकेनजहौत्यक्तवान् ८७० अभिमानमिति । परिष्करउपकरणंगृहादितत्सहितेशरीरेऽभिमानमहंकारममकारात्मकंपरित्यज्यारब्धकर्मणांनिर्वाणमं
तंकुर्वन् हेतौशता तदर्थमितियावत भोगानवापजीवन्मुक्तोविजहारेतियावत् ८७१ आनंदेति । आनंदात्माहमस्मीत्याकारेणाविर्भवद्यत्प्रज्ञामात्रैकरूपंप्रज्ञामात्रंचतदेकरूपमद्वयवस्तुतद्बिभ
र्तिनिरंतरमनुसंदधातीतिसतथाइत्यधिकारिजनविशेषणं । विदेहमोक्षमाह । स्वात्मनीति ८७२ ऐतरेयव्याख्यामुपसंहरन्नैतरेयपदव्युत्पत्तिंसूचयन्नयमर्थोऽधिकारिभिस्तत्परैरवधार्यइतिदर्शयति
अपौरुषेयैरित्यादिना । अपौरुषेयैःपुरुषेणार्थंदृष्ट्वानिर्मितानिपूर्वानुपूर्वीनिनिरपेक्षेवारणकानिभारतादीनिपौरुषेयाणितद्विलक्षणैर्वचनैरात्मावेत्याद्यैरयमितिहासइतरासंज्ञकायाअपत्येनऋषिणादौ
ईरितस्तपसाअनुस्मृत्यप्रकाशितः कीदृशेनइतरायाःसुतेन एषपंथाइत्यादिवाक्यंप्रथमंप्रकाशयता तद्वाक्यस्वरूपंचतुर्थश्लोकव्याख्यायांदर्शितम् ८७३ तद्वाक्यंपूर्वंविस्तरेणव्याख्यातमपि
सुखबोधायसंक्षिप्तार्थमर्थतःपठति अयंमार्गइति । यद्ब्रह्मणोवेदनंअयमेवमार्गस्तथेदमेवकर्मावश्यंसंपाद्यंतथेदमेवब्रह्मसत्यंचतत्प्रापकत्वादितिअस्मात्प्रमादोनकार्यइति ८७४ नचेति । ब्रह्म

गंधर्वनगरंमेघोनीलिमादिकमेववा ॥ नभएवयथातद्वत्प्रज्ञैवैतज्जडाजडम् ८६९ एवंविचारतःसोयमधिकारिजनःप्रभुः ॥ वामदेववदेताद्दिक्शरीरादिजहौधिया ८७०
अभिमानंपरित्यज्यशरीरेसपरिष्करे ॥ आरब्धकर्मनिर्वाणंकुर्वन्भोगानवापसः ८७१ आनंदात्माहमस्मीतिप्रज्ञामात्रैकरूपभृत् ॥ स्वात्मनिस्वर्गरूपेऽभूदमृतो
वामदेववत् ८७२ अपौरुषेयैर्वचनैरितिहासोयमीरितः ॥ इतरायाःसुतेनादावेषइत्यादिवादिना ८७३ अयंमार्गस्तथाकर्मब्रह्मसत्यंचवेदनम् ॥ ब्रह्मणोनप्रमा
दोस्मात्करणीयःकथंचन ८७४ नचातिक्रम्यगंतव्यंवेदसंसाधनांतरम् ॥ अस्ययेऽतिक्रमंचक्रुःपराभूताहिदुर्धियः ॥ संसारसुभटैनैवतेसर्वेविजिताःक्षणात् ८७५
इत्यस्मिन्वचनेनृणांविश्वासायमहामुनिः ॥ उदाजहारमतिमानितिहासमिमंशुभम् ८७६ अस्यार्थंयेनजानंतिमनुजास्ताननेकशः ॥ संसारसुभटोहन्याद्यथात्र
मृगयुर्मृगान् ८७७ पितृमातृदरेसप्तधातुगर्तनिपातनैः ॥ विण्मूत्रादिकृतैर्लेपैर्जराव्यस्थ्यादिबंधनैः ८७८

णोवेदनमतिक्रम्यसाधनांतरंप्रतिनगंतव्यमिति अस्येति । अस्यब्रह्मवेदनस्यातिक्रममुपेक्षारूपंयेचक्रुस्तेदुर्धियःपराभूताःपराभवंगताइति । ननुपराभवःप्रतिद्वंद्विनःसकाशाद्भवतिअत्रकःप्रतिद्वंद्वी
त्याशंक्ययउदरमंतरंकुरुतेथतस्यभयंभवतीत्यादिश्रुतेर्मायोपाधिरीश्वरोयमराजवदज्ञानांभयहेतुर्मायाकार्यसंसारश्चाभिमानलक्षणोयमकिंकरवत्पराभवकरइत्याह संसारेति । संसारएवसुभटोमहा
बलोयोधस्तेनतेऽतिक्रमणशीलाःक्षणेनविजिताइति ८७५ तद्वाक्यानुवादप्रयोजनंदर्शयति इत्यस्मिन्निति । इत्यस्मिन्वाक्येप्रथमंप्रकाशितेकेचिदित्थंशंकितवंतः ननुभवदुक्तमपिब्रह्मवेदनस्य
मार्गत्वादिकंनास्मद्बुद्धावतरतीति तेषांनृणामेतद्वाक्यार्थेविश्वासायविश्वासंश्रद्धांजनयितुमितिहासंउदाजहारउदाहरणवत्प्रकटीकृतवानिति उदाहृतेचशंकानिवर्ततेवामदेवादीन्प्रतिज्ञानस्यसत्य
ब्रह्मप्राप्तिसाधनताभिधानेनमार्गत्वादीनांनिर्णयात् ८७६ जन्मत्रयनैरंतर्यप्रतिपादनेनचातिक्रमशालिनांपराभवोप्यत्रदर्शितइत्याह अस्यार्थमिति । अस्येतिहासस्यार्थंप्रमेयंयेमनुजामानुपं
पुर्लब्ध्वापिनजानंतितान्संसारसुभटोयमभटवत्हन्यात्व्यथयेत् लौकिकोदृष्टांतःमृगयुर्व्याधः ८७७ कथंहन्यादितिप्रकारजिज्ञासायामेतैःकृत्वेत्यन्वययोग्यांस्तृतीययानिर्दिशतियमयातनासाम्यं
चबोधयति पितृमात्रुदरेइत्यादिपङ्क्तिः । सप्तधातवएवगर्तास्तत्रनिपातनैः गर्भस्थस्यविण्मूत्रसंसर्गएवलेपस्तैःजराव्यस्थ्यादिभिरंतर्गतस्यवेष्टनरूपैर्बंधनैः निरयेप्येतेपदार्थाःप्रसिद्धाः ८७८ .

कृमीति । उदरकृमयएवनागास्तन्मयैःपाशैः तथादुःसहैर्जठरभवैर्वाताग्निभ्यांजनितैस्तापैः सूचीमुखनिरयसाम्यंबोधयति उपस्थेति ८७९ अनेकेति । अनेकजन्मनांस्मृतिर्दुःखातिशयाय मूर्छयात्मविस्मृतिश्चनिरयेपिगर्भगतस्यचेतिसाम्यं बाल्यदुःखानांनिरयसमतांदर्शयति अशक्तीति ८८० क्रीडेवे बाल्यपक्षेक्रीडानामप्राप्तिरध्यापकादिभ्योभीतिश्चप्रसिद्धा निरयेपिस्वर्गवासिनांयाःक्रीडादुःखातिशयायस्मृतिपथमवतरंत्यस्तासामप्राप्त्यादुःखं । तथागुर्वीयामात्रादिभीतिस्तयाचेति अत्रपक्षेमातृशब्दोमीञ्हिंसायामितिधातोस्तृचिमीनातिमिनोतेत्यात्वेचव्युत्पन्नोहिंसकवचनः । आदिपदेनतद्रूपकरणग्रहः । यौवनदुःखानांतत्साम्यमाह पंचेति । पंचबाणेनकामेनकृतैश्चित्रैर्नारीमूर्तैश्चित्तभूमौलिखनैःतथाविचित्रैर्नानाविधैर्भ्रमैर्भ्रमणैःकृतंदुःखंप्रसिद्धं निरयपक्षेतुप्रत्यालीढादिस्थानभेदात्पंचविधानिचबाणकृतानितत्तथा मयूरव्यंसकादित्वात्समासः । यद्वा नाराचादिभेदात्पंचविधैर्बाणैःकृतानीतिविग्रहः । एतादृशानिचित्राणिआश्चर्याणितैःयमदूताहिदुष्कृतिशरीराणिलक्षीकृत्यबाणप्रहणाभ्यासंकुर्वंतीतिपुराणेप्रसिद्धम् । विविधंभ्रामयंतीतिचेति 'आलेख्याश्चर्ययोश्चित्रं' इति । तथा 'स्यात्प्रत्यालीढमालीढमित्यादिस्थानपंचकं' इत्यमरः । आदिपदेनसमपदविशाखमंडलानांधनुर्वित्पादन्यासभेदानांग्रहः ८८१ वार्द्धकादिदुःखानांनिरयसाम्यमाह श्वित्रिणीति । श्वित्रिणीजरातत्संगमकृतैर्दोषैरोगाद्यैः निरयपक्षेकु

कृम्याख्यनागपाशैश्चदुःसहैर्जठरोद्भवैः ॥ वाताग्निजनितैस्तापैरुपस्थच्छिद्रनिर्गमैः ८७९ अनेकजन्मसंस्मृत्याविस्मृत्याचात्मनस्तथा ॥ अशक्तिपारतंत्र्याभ्यां विण्मूत्रादेश्चभक्षणैः ८८० क्रीडानामनवाप्त्याचगुरुमात्रादिभीतितः ॥ पंचबाणकृतैश्चित्रैर्विचित्रैश्चभ्रमैरपि ८८१ श्वित्रिणीसंगमोत्थैस्तैर्दोषैर्नानाविधैस्तथा ॥ कालसर्पग्रसनतस्तथैवयमकिंकरैः ८८२ नानाशस्त्रादिसंपातैर्वैषम्यैश्चघनादिजैः ॥ स्वर्गादिपतनैस्तद्वदत्रदेहाद्यवाप्तितः ॥ पुनःपित्रादिदेहेषुसमावेशैःसुदारुणैः ८८३ एवंसंसारसुभटोजंतून्जंतुकसन्निभान् ॥ अधऊर्ध्वंतथादिक्षुविदिक्ष्वपिचसंक्षिपन् ८८४ पितृमातृप्रवेशाद्यैस्तुदंस्तैर्विविधायुधैः ॥ निपातयत्यमून्दीनानात्मज्ञानविवर्जितान् ८८५

ष्ठिसंसर्गोत्तद्रुजालाभःप्रसिद्धएव । कालेति । कालएवसर्पस्तेनग्रसनं निरयपक्षेतुकालाःश्यामाश्चतेसर्पास्तैर्ग्रसनानितैरिति यथायमकिंकरैरुक्तवाक्यैरिति ८८२ नरकदुःखान्याह नानेति । घनादिजैःघनःपृथ्वी आदिपदेनजलादिग्रहः पृथिव्यादिमयनरकदुःखैरित्यर्थः तदुक्तंयोगभाष्ये 'घनसलिलानलानिलाकाशतमःप्रतिष्ठाःमहाकालांऽवरीषरौरवकालसूत्रतामिस्रांधतामिस्रामहानरकभूमयः'इति । घनादिजैरितिपाठेसिंहावलोकनन्यायेनयौवनदुःखानांवर्णनं कामनाद्वाराधनादिभ्योजातैर्युद्धादौनानाशस्त्रादिसंपातरूपैर्वैषम्यैरित्यन्वयः। निरयेपिवैषम्यानिधनादिकामनाफलभूतान्येवेत्यवधेयं । स्वर्गादिपतनैरवीचिनिरयसमैः अत्रमानुषेलोकेदेहाद्यवाप्तितः तदर्थंपुनःपित्रादिदेहसमावेशैश्चेति संसारभटोहन्यादितिसंबंधः ८८३ संसारस्यसुभटत्वमप्येतदुपनिपदर्थोज्ञानप्रयुक्तमेवेत्याह एवमितिद्वाभ्यां । एवमुक्तविधयासंसारसुभटोऽमून्जंतून्निपातयतिप्रतिमल्लवत्पराभवति किंकुर्वन् अधऊर्ध्वंतथादिक्षुविदिक्षुचसम्यक्क्षिपन् नानायोनिनिनयनमेवचसंसारमल्लस्यनियुद्धविशेषइतिभावः । पुनःकिंकुर्वन् तैःपूर्वोक्तैःपितृमातृशरीरप्रवेशादिरूपैर्विविधायुधैस्तुदन्व्यथयन् । जंतूनांनिपातनेचसंसारमल्लस्यनक्लेशलेशोपीतिसूचनायजंतूनांविशेषणानि जंतुकाःक्षुद्रजंतवोयूकादयस्तत्सन्निभान् । तत्रहेतुर्दीनानिति । तत्रापिहेतुरात्मज्ञानेति । अज्ञानमेवजीवानांबाधयोग्यत्वेसंसारस्यबाधकत्वेचप्रयोजकमितिभावः ८८४ । ८८५

नन्वेतदर्थावधारणेकोहेतुरितिचेद्वैराग्यमेव 'वैराग्यंपरमेतस्यमोक्षस्यपरमोऽवधिः' इतिसिद्धांतादित्यभिप्रायेणाह संसारेति । संसारसुभटप्रोत्थान्दुःसहान्स्वपराभवान्येविजानंतितद्विज्ञान फलंपरंवैराग्यमासादयंतितएवास्यवेदांतस्यसुनिश्चितमर्थंविजानंति अर्थंज्ञातेचतएवसुभटाःसंसारस्तुक्षुद्रजंतुवदनायासेनप्रतिक्षेपपात्रतांगतइतिभावः ८८६ नन्वयमर्थोब्रह्मात्मैकत्वलक्षणःकथं निश्चयगोचरोभवेदन्यवेदांतानामर्थांतरपरत्वसंभावनयाप्रतिबंधादितिचेन्न सर्ववेदांतावगतिसामान्यात् तदेवकथमितिचेच्छृणुक्रमेणेत्याशयेनऋग्वेदब्राह्मणोपनिषत्तयाउपस्थितायाःकौषीतक्युप निषदोव्याख्यामुपन्यस्यति इतितेइति । स्पष्टम् । अपिसंबंधोवेदस्यप्रवचननिमित्तः 'संज्ञाचप्रवचनात्' इतिजैमिनिसूत्रात् प्रवचनंप्रथमंप्रकाशनमित्यन्यत्रविस्तरः ८८७ समाप्तिवा

संसारसुभटप्रोत्थान्दुःसहान्स्वपराभवान् ॥ सुभटायेविजानंतिअर्थमस्यसुनिश्चितम् ८८६ इतितेज्ञानमाख्यातमैतरेयसमीरितम् ॥ कौषीतक्युक्तमखिल मिदानींश्रोतुमर्हति ८८७ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणश्रीशंकरानंदभगवताविरचितेउपनिषद्रत्नेआत्मपुराणेऐतरे यार्थप्रकाशोनामप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

क्येउपनिषद्रत्नेइतिपदस्यउपनिषदोरत्नानियत्रकोशसमेतत्तथेतिविग्रहः । टीकानामतुसत्प्रसवाइति सतांगुरूणांप्रसवोभ्यनुज्ञानंप्रारंभेयस्याइत्यर्थसमन्वयात् । श्रीशंकरानंदमुनेःप्रबंधः श्री शंकराचार्यमतानुगामी ॥ श्रीशंकरेष्टेविवृतिंगतःपुरेश्रीशंकरोनुग्रहमातनोतु ॥ इतिश्रीक्षत्तकुलतिलककृष्णचंद्रात्मजद्विलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आ त्मपुराणटीकायां सत्प्रसवाख्यायां प्रथमोऽध्यायः ॥ १ ॥ ॥ ग्रंथसंख्या ॥ ४२०० ॥

श्रीगणेशायनमः ॥ ॥ नमस्तस्मैभगवतेपरमानन्दरूपिणे ॥ उपाधिपरिहाणेमयःसर्वत्रप्रकाशते ॥ १ ॥ अथकौषीतक्युपनिषदंव्याचिख्यासुस्तत्रप्रथमद्वितीयाध्याययोःसगुणविद्यापरयोस्तात्पर्यस्योपासनंचवन्ह्यर्कैत्यादिनोपासनानांनिर्गुणविद्याधिकारसंपादकतानिरूपेणनदर्शितप्रायत्वाज्ज्ञेयस्वरूपप्रदर्शनपरप्रतर्दनोहवैइत्यादितृतीयाध्यायव्याख्यांतावदारभते इदमित्यादिना । इदंवक्ष्यमाणंप्रतर्दनाख्यायिकाप्रकाशितंज्ञानंजन्मकोटिशतायुतैर्दुर्लभमपिपुरुषव्याघ्रैःपुरुषश्रेष्ठैर्गुरुशुश्रूषणादिनाप्राप्यतइत्यन्वयः । आदिपदेनश्रद्धादिग्रहः १ नातइति । अतोज्ञानान्मनुष्यस्यहितंतमंनास्तियतइदंज्ञानंसुखावाप्त्यैसमूलस्यदुःखस्यविनाशनेचसाधनमिति २ अत्रेति ३ आसीदिति । दिवोदाससंज्ञस्यकाशिराजस्यसुतः जिताअमित्राःशत्रवआंतराबाह्याश्चयेनसतथा ४ जिगायेति । जिगायजितवान् धर्मतःधर्मयुद्धेन अथमानुपलोकजयानंतरंदेवान्जेतुंस्वर्गंजगामेति ५ एकाकीति । इंद्रायइंद्रंबोधयितुंदूतंप्रेषयामाससंदेशवाक्यंश्रावयेत्यप्रकारप्रेषणाविषयंचकार ६ संदेशवाक्यमभिनयति भवानितिचतुर्भिः । हेदेववरभवान्देवेंद्रइतिलोकैर्यद्यप्युक्तस्तथाहंमनुजेंद्रइतितथापिउभयोर्देवेंद्रमनुजेंद्रपदार्थयोर्घटिकाइंद्रतानयुक्तानमुख्या कुतोर्थशून्यत्वात् इदिपरमैश्वर्ये

श्रीः ॥ इदंसुदुर्लभंज्ञानंजन्मकोटिशतायुतैः ॥ प्राप्यतेपुरुषव्याघ्रैर्गुरुशुश्रूषणादिना १ नातोहिततमंकिंचिन्मनुष्यायास्तिसाधनम् ॥ सुखावाप्त्यैसमूलस्य दुःखस्यचविनाशने २ अत्रचोदाहरंतीममितिहासंपुरातनम् ॥ प्रतर्दनस्यसंवादंदेवराजेनवैपुरा ३ आसीत्प्रतर्दनोनामदिवोदाससुतोमहान् ॥ काशीश्वरोजितामित्रःक्षत्रधर्मरतःसदा ४ जिगायशत्रूनखिलान्धर्मतःस्वराधिपः ॥ देवान्जेतुंजगामाथस्वर्गंदेवेंद्रपालितम् ५ एकाकीधनुरादायस्वर्गद्वारिस्थितोहिसः ॥ इंद्रायप्रेषयामासदूतंवाक्यार्थकोविदम् ६ भवान्देवेन्द्रइत्युक्तोमनुजेंद्रस्त्वहंतथा ॥ इंद्रतानोभयोर्युक्ताह्यर्थशून्यत्वहेतुतः ७ जिताःसर्वेमयाभूमौराजानोदीप्ततेजसः ॥ भवंतमेकंहित्वातस्त्वामिहास्मिसमागतः ८ युद्धार्थंसबलःशीघ्रमेकाकीवासमाव्रज ॥ पराजितोहमित्येवंवाक्यंवावदमांप्रति ९ धनुर्द्वितीयोभवतःप्रियंधामसमागतः ॥ प्रतर्दनोहमेनंत्वंविचार्योचितमाचर १० एवमुक्तस्ततोदूतोदेवेंद्रंसूर्यवर्चसम् ॥ सुधर्मायांस्थितंदेवैर्दृष्ट्वातंनत्वोक्तवानिदम् ११ लोकानांलोकपालानांसर्वेषामेकएवहि ॥ नाथस्त्वंभगवान्नकिंचित्त्वांहिविज्ञापयाम्यहम् १२ अस्तिभूमौमहान्देशःकाशीनामांकितःशुभः ॥ उत्कंठितेवयंयातिस्वर्धुनीभवतांनदी १३ तस्यास्तीरेपुरीरम्यात्रिशूलस्योपरिस्थिता ॥ पिनाकपाणेःसततंस्वर्गस्यापितिरस्करी १४

इतिधातोरर्थाननुगमात् ऐश्वर्यस्यपरमत्वंहिसाम्यातिशयराहित्यंतत्त्वेकत्रैवसंभवतितथाचदेवमनुजावच्छिन्नैश्वर्यंवाचित्वेइंद्रतायागौणत्वंस्पष्टमितिभावः ७ तस्मादहमिंद्रतायागौणतायाःपरिहारार्थंभूमिस्थान्राज्ञोभवद्भिन्नान्जित्वात्वांजेतुमागतोस्मीत्याह जिताइति ८ युद्धार्थमिति । सबलोवाएकाकीवायुद्धार्थंसमाव्रज अथवामांप्रतिममपुरतःपराजितोहमित्याकारंवाक्यंवदेति ९ धनुरिति । धनुरेवद्वितीयंसहायभूतंयस्यसतथानाम्नाप्रतर्दनोहंभवामि एनंमांविचार्योचितंयोग्यंसमाचरइति १० एवमुक्तइति । वर्चस्तेजः सुधर्मादेवसभा इदमिदंचोवाच्यवचनमिति यावद्वक्ष्यमाणमुक्तवान् ११ दूतउवाच लोकानामित्यादिना स्पष्टम् १२ अस्तीति । अस्तिकाशीतिनाम्नाप्रसिद्धोदेशः शुभःस्वर्गादपिरमणीयः तद्देशस्यरमणीयत्तांचस्वर्धुन्याःस्वर्गमुपेक्ष्यतत्रसोत्कंठंगमनमेवसूचयतीत्याह उत्कंठितेवेति । भवतांदेवानाम् १३ तस्याइति । तस्याःस्वर्धुन्यास्तीरेरम्यापुरीवर्तते कीदृशी पिनाकपाणेर्भगवतस्त्रिशूलस्योपरिस्थिता पुनःकीदृशी स्वर्गस्यापितिरस्करीतिरस्करणशीला कृत्स्नोहेत्विति टः १४

53

कृमिरिति । यस्यामित्युत्तरश्लोकादनुपज्ज्यते तथाचयस्यांमृतोजरायुजत्वादिनाचतुर्विधोपिजंतुस्त्रिनेत्रत्वमुपैतीत्यन्वयः सचजन्तुःकृम्यादिक्षुद्रजन्तुरूपस्तामसोवाभवतु बहुश्रुतःब्राह्मणरूपः सात्त्विकोवाभवतुतदपेक्षयाफलेविशेषोनास्तीतिपूर्वार्द्धाशयः । कृमिर्निरस्थिः कीटःसास्थिः पतंगोदीपविरोधीप्रसिद्धः । त्रिनेत्रत्वंशिवत्वं सविशेषरूपेत्रिनेत्रत्वंप्रसिद्धं निर्विशेषरूपेचत्रीणिस्थूल सूक्ष्मकारणानिसमष्टिव्यष्टिरूपाणिनेत्राणिप्रापकाणिविचारद्वारायस्यतत्तुरीयंतत्त्वमितिविग्रहेणबोध्यम् । तथाचश्रुतिःप्राणाग्निहोत्रोपनिषदि 'वाराणस्यांमृतोवापिइदंवाब्रह्मयःपठेत् । एकेनजन्मनाचैवध्रुवंमोक्षमवाप्नुयात्' इति । तथाजाबालतापनीयमोक्षधर्माश्वमेधपर्वसुमत्स्यादिपुराणपाराशराद्युपपुराणसनत्कुमारसंहितादिषुदेदीप्यमानेकाशीमहिमसूर्येसंदिहानएवस्वदृष्टिदोषमावेदयतीत्यलम् । १५ यस्यामिति । यस्यांपुर्यांभगवान्सर्वज्ञःपरमेश्वरोलीलाविग्रहेणतारकोपदेष्टावसति कीदृशः सर्वात्मासर्वांतरः भूतभावनःभूतस्यकार्यमात्रस्यजनकःअद्वितीयइतियावत् । पुनः कीदृशः भवानीहृदयाब्जस्यइंदुमध्यमःसूर्यः इंदुमध्येमाकांतिःप्रतिबिंबितायस्येतिविग्रहः सूर्यप्रतिबिंबेनैवचंद्रकलावर्द्धतइतिज्योतिःशास्त्रप्रसिद्धम् । धवलप्रभःकर्पूरगौरः । धवलप्रभुरितिपाठेधवलस्यमहोक्षस्यपातिरित्यर्थः । 'धवलःसुंदरेसितेमहोक्षेच' इतिविश्वः १६ भवद्भिरिति । पुनःकीदृशोभगवान् भवद्भिरखिलैर्देवैर्नमद्भिःकर्तृभिर्मौलिस्थितानियानिरत्नपदानिरत्नस्थानभूतानिभूषणानितेषामंशुभिःकिरणैरारार्त्तिक्यदीपनिभैर्नीराजितेपदांबुजेयस्यसतथा १७ मुनयइति । येचमुनयःस्मृत्यादिप्रणेतारोयेचवेदाश्चत्वारःप्रसिद्धास्तेसर्वेयंभगवंतंबहुधावर्णयंति । कंकेइव राजानंवंदि

क्रमिःकीटःपतंगोवाब्राह्मणोवाबहुश्रुतः ॥ मृतश्चतुर्विधोजंतुस्त्रिनेत्रत्वमुपैतिहि १५ यस्यांवसतिसर्वात्माभगवान्भूतभावनः ॥ भवानीहृदयाब्जेंदुमध्यमोधवलप्रभः १६ भवद्भिरखिलैर्देवैर्मौलिरत्नपदांशुभिः ॥ नमद्भिःसर्वदाहर्षान्नीराजितपदांबुजः १७ मुनयोयेचवेदाश्चबहुधावर्णयंतियम् ॥ कृतोपकाराराजानंबंदिनश्चारणाइव १८ यस्यभ्रूभंगमात्रेणब्रह्माद्याःसकलाःसुराः ॥ शतवारंजगत्यस्मिन्भवंतिनभवंतिच १९ तपउग्रंचचारादौयमुद्दिश्यमहेश्वरम् ॥ हिमवत्तनयादेवी नारीणांप्रथमावधूः २० सेनानिश्चगणेशश्चयस्यपुत्रौमहाबलौ ॥ प्रमथायस्यसैन्यानिजयकाशीनिसर्वतः २१ यन्नामग्रहणाज्जंतुःप्राप्नुयान्नभवापदम् ॥ यस्यपादार्चनात्सिद्धिःस्वेप्सिताजायतेनृणाम् २२ निस्पृहोयःसदादेवोब्रह्मांडविषयभ्रमे ॥ आत्मबोधोदधिःस्वच्छोयोगिनांप्रथमोगुरुः २३ यस्मादेतज्जगत्सर्वंजायतेयत्रलीयते ॥ तिष्ठत्यपिचकोनामवर्णयेत्तद्गुणान्पुमान् २४

नश्चारणाइव । यथाकालंस्तावकावंदिनःकीर्तिगायकाश्चारणाइतिभेदः । कृतोपकारत्वंदृष्टांतेधनदानादिनाप्रसिद्धं दार्ष्टांतिकेतुमुनीनांतपःफललाभोज्ञानलाभश्च । वेदानांकृतोपकारत्वंप्रामाण्यलाभः यदिकर्मफलप्रदःपरमार्थरूपोभगवान्नस्यात्तर्हिकंप्रतिपाद्यवेदाःप्रमाणतांलभेरन्निति १८ यस्येति । शतवारमनंतवारमस्मिन्जगतिसंसारेभवंतिप्रादुर्भवंतिनभवंतितिरोभवंतीत्यर्थः १९ तपइति । यंपरमेश्वरमुद्दिश्यहिमवत्तनयादेवीउग्रंतपश्चकार कीदृशी नारीणांप्रथमा पुनःकीदृशी प्रथमावधूःपूर्वजन्मन्यपिसतीरूपेणभगवतोजायेतिप्रथमापदस्योभयत्रसंबंधेनार्थः 'आदौप्रधानेप्रथमस्त्रिषु' इत्यमरः २० सेनानीश्चेति । सेनानीःस्कंदः । प्रमथागणायस्यसैन्यानि कीदृशानि जयकाशीनिजयेनकाशंतेशोभंतेइतितानितथा २१ यन्नामेति । भवरूपामापदंभवापदं । तदुक्तंशिवपुराणे 'महादेवमहादेवमहादेवेतियोवदेत् । एकेनैवभवेन्मुक्तिर्द्वाभ्यांशंभुर्ऋणीभवेत्' इति । स्वेप्सितास्वेनपूजकेनईप्सिताप्राप्तुमिष्टा २२ निस्पृहइति । योदेवोब्रह्मांडवृत्तिविषयाणांभ्रमेमिथ्याज्ञानात्मकेभोगेनिस्पृहः । आत्मेति । आत्मज्ञानसिंधुः योगिनांचित्तनिरोधमभ्यस्यतामाद्योगुरुः सपूर्वेषामपिगुरुः 'कालेनानवच्छेदात्' इतियोगसूत्रात् २३ यस्मादिति । अपिचयत्रतिष्ठतिइति तस्यगुणान्कोवर्णयेत्वर्णयितुंशक्नुयात् २४

एवंनवभिरेतादृशोभगवान्यस्यांवसतीत्युत्कर्षमभिधायसाक्षात्तामाह यस्याइति । सप्तानांमुक्तिदात्रीणांपुरीणांमध्येयस्याःपुर्याःअधिकंसौभाग्यंसर्वैरपिजंतुभिर्भोगमोक्षयोःसुलभत्वाद्दृश्यते इतरासांतुकैश्चिद्देवैरितिविशेषः २५ नैतयेति । हेदेवाएतयाशंभुपुर्यासमाभवताममरावतीनामपुर्यपिनभवति पातभयशालित्वेननाम्नोगौणत्वात् तथाभोगैरेवप्रसिद्धानागानांभोगवतीनामपुर्यपि किमुतान्येति २६ तस्यानामनिर्वक्ति गंगायाइति । काशतेदेदीप्यतेइतिकाशी तत्रहेतुत्रयं गंगाकर्तृकंसेवनंमहादेववासःसौभाग्यप्रकटताचेति २७ तस्याइति । तस्याःपुर्याः सत्यसंधःसत्यप्रतिज्ञः २८ चतुरंगेति । 'हस्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयम्' इत्यमरः । सोयंदिवोदासोभवतांदेवानांविदितः यतोयज्वायागपरः अत्रकाश्याम् २९ तस्येति तस्यदिवोदासस्यपूर्वजैःपितृपितामहैः ३० अस्येति । अस्यप्रतर्दनस्यमाहानागामहागजाःपर्वतनिभाःसंति तथा रविवाजिनिभाःसुलक्षणावाजिनोपिसंति ३१ रथाइति । युद्ध्यतःपुरारेःरथसदृ

यस्याःसौभाग्यमधिकंपुरीणामिहदृश्यते ॥ सप्तानांमुक्तिदात्रीणांसर्वैरपिचजंतुभिः २५ नैतयाहिसमादेवाभवताममरावती ॥ भोगवत्यपिनागानांकानामान्याभवेत्समा २६ गंगायाःसेवनान्नित्यंमहादेवस्यवासतः ॥ सौभाग्यस्यचकाशेनकाशीत्येषाभवत्पुरी २७ तस्याःप्रभुर्जितामित्रोदिवोदासइतिस्मृतः ॥ ब्रह्मण्यःसत्यसंधश्चक्षत्रधर्मरतःसदा २८ चतुरंगबलोपेतःस्वयंचातिबलोनृपः ॥ भवतांविदितःसोयंयज्वात्रैवतिष्ठति २९ तस्यपुत्रोपिमतिमान्प्रतर्दनइतिश्रुतः ॥ पूर्वजैःसदृशःसर्वैर्गुणैर्भूतदयापरः ३० अस्यसंतिमहानागाःपर्वताइवकोटिशः ॥ अनेकलक्षणोपेतावाजिनोपिरवेरिव ३१ रथाअपिमाहाघोषाःपुरारेरिवयुद्ध्यतः ॥ पादाताःस्वसमाःसंतिपरार्द्धाधिकसंख्यया ३२ अप्रमादीसदाशास्त्रेमाययाचविवर्जितः ॥ अस्त्राण्यसौविजानातिप्रयुंक्तेनैवकुत्रचित् ३३ संधानंचविसर्गंचस्थितिंतद्वच्चसंहृतिम् ॥ अस्त्राणांवेत्तिसर्वेषांमहादेवप्रसादतः ३४ अस्त्रेणनिहतोजंतुर्नमयानिहतोभवेत् ॥ अभिचारवधात्कस्माद्विशेषोस्त्रेणघातने ३५ इतिसंचिन्त्यसततंरिपुमस्त्रैर्नहंत्यसौ ॥ रिपूणामिच्छयायुद्धंददात्येवहिसर्वदा ३६ नायंप्रथमतोहंतिरिपुंतेनह्यताडितः ॥ ताडितोपिनपंचाशद्वर्षादत्यधिकंक्वचित् ३७ ऊनषोडशवर्षंचवीरव्रतमुपाश्रितः ॥ कुतोभीतातुरादीनिनिहन्याद्धर्मविद्विसः ३८ विजित्यवसुधांकृत्स्नामेकदासपुरेनिजे ॥ भवंतंक्षत्रधर्मेणवर्तमानमिहाशृणोत् ३९ ब्राह्मणाअपिदेवाश्चगावःसद्वृषभाअपि ॥ नावमान्याःसदातेनव्रतमेतन्महात्मनः ४० अन्यच्चास्यव्रतंराज्ञःक्षत्रधर्मरतान्सदा ॥ देवान्विप्रान्पितॄन्वापिजेष्याम्यात्मबलोद्धतान् ४१ एवंहिव्रतिनस्तस्यमुनयोनारदादयः ॥ समागताःप्रसंगेनकदाचिदिदमूचिरे ४२

शामहाघोषारथाश्चसंति पदातयस्त्वसंख्याताःस्वेनप्रतर्दनेनसमाः ३२ अप्रमादीति । शस्त्रेशस्त्रविद्यायां माययाच्छलेन असौप्रतर्दनः यद्यपिअस्त्राणिविजानातितथापिनप्रयुंक्ते ३३ तृतीयपादार्थंप्रपंचयति संधानमिति । अस्त्राणांसंधानंप्रयोगं विसर्गंनिर्मोक्षं स्थितिंमर्यादां 'अस्त्राणिनप्रयोज्यानिहीनकार्यैकथंचन' इत्यादिनोक्तां संहृतिमुपसंहारंचवेत्तीति ३४ प्रयुंक्ते नैवकुत्रचिदितिस्फुटयति अस्त्रेणेतिद्वाभ्यम् । अभिचारेणशत्रुमरणकामनयाकृतेनश्येनादिनायोवधस्तस्मात् ३५ इतीति ३६ नायमिति । तेनरिपुणाप्रथमतोऽताडितोनहंतीति ताडितोपिपंचाशद्वर्षादधिकायुषंषोडशवर्षान्न्यूनायुषंचनहंति यतोवीराणांव्रतंनियमंश्रितः 'मूर्च्छितंनैवविकलंनाशस्त्रंनान्ययोधिनम् । पलायमानंशरणंगतंनैवचहिंसयेत्' इत्यादिनाधनुर्वेदोक्तंश्रितः ३७। ३८ विजित्येति भवंतंदेवराजम् ३९ ब्राह्मणाइति । एतदपीतिशेषः ४० अन्यदिति आत्मबलेनउद्धतान्सगर्वान् ४१ एवमिति ४२

राजभ्यइति ४३ एकमिति । एकमसहायम् सबलंससैन्यम् ४४ श्रुत्वेति । पौरुषेणउत्साहेन ४५ आगत्येति । समभूमौसमेदेशे प्राहिणोत्प्रेषितवान् ४६ इदमिति । तदुदीरितंप्रतर्दनोक्तम् ४७ श्रुत्वेति । साहसमपरंनामयस्यएतादृशेनाभयस्वरूपेणास्यप्रतर्दनस्यपौरुषेणचविस्मितः ' साहसंतुदमेदुष्करकर्मणि ' इतिहैमः ४८ देवैरिति । सहसाअविमृश्यैव ४९ तंदेवैरिति ५० दृष्ट्वेति । निघ्नंतुताडयंतु हेशक्रत्वंचप्रहरेतिशेषः ततोयुष्मत्कर्तृकप्रहरणानन्तरम् ५१ इत्युक्तेइति । कुंडलाकारेणव्यूहेनसैन्यन्यासेन क्रोधोमूर्च्छितोयेषांतेतथापरिवव्रुर्वेष्टयामासुः ५२ वादित्राणामिति । शंखरवांताःशंखनादपर्यंताः ५३ शस्त्रवर्षमिति ५४ प्रतर्दनोपीति । सर्वेषांदेवानांशस्त्रैर्भिन्नात्मविद्धस्वरूपंगात्रंवपुर्यस्यसतथा पंचबाणान्यूनानतुततोन्यूनाःसमूहिनोये

राजभ्यःक्षत्रधर्मेणबलिनःसकलाःसुराः ॥ नाहितैःसमरेयोद्धुमसुराअपिदानवाः ॥ दैत्याअपितुशक्ताःस्युःकिंपुनर्मनुजाइमे ४३ एकमप्यत्रकोनामजयेदिंद्रंशचीपतिम् ॥ किंपुनःसबलंलोकपालैरपिसमावृतम् ४४ श्रुत्वेत्यादिवचांस्येषस्मृत्वाचव्रतमात्मनः ॥ पौरुषेणैववायोद्धुमेकाकीससमागतः ४५ आगत्यास्याःपुरोद्वारिसमभूमौसवर्तते ॥ प्राहिणोच्चात्रमांदूतंदेवराजंप्रतीश्वरः ४६ इदंचोवाचवचनमित्युक्त्वातदुदीरितम् ॥ देवराजायसकलंदूतस्तत्रन्यवेदयत् ४७ श्रुत्वादूतस्यवचनंदेवराजोतिविस्मितः ॥ साहसापरनाम्नास्यपौरुषेणाभयात्मना ४८ देवैश्चसहितःसोपिक्षत्रधर्मरतःप्रभुः ॥ संक्रुद्धःसहसापुर्यानिर्जगामबलान्वितः ४९ तंदेवैःसहितंदृष्ट्वास्वयुद्धार्थमुपागतम् ॥ नचचालततःस्थानात्स्मयमानःप्रतर्दनः ५० दृष्ट्वातंवचनंचेदमुवाचचशचीपतिम् ॥ मांशस्त्रैर्विविधैस्तीक्ष्णैर्निघ्नंतुसकलाःसुराः ॥ शक्रत्वंचततोहंवोहनिष्यामिशितैःशरैः ५१ इत्युक्तेसकलादेवाःसशक्राःक्रोधमूर्च्छिताः ॥ कुंडलव्यूहतस्तंहिपरिवव्रुःसमंततः ॥ प्रतवध्नीतचैवेनमित्यूचुश्चपरस्परम् ५२ वादित्राणांहिचित्राणांसिंहनादविमिश्रिताः ॥ शब्दाःशंखरवांतास्तेप्रादुरासन्सहस्रशः ५३ शस्त्रवर्षंचतेसर्वेसशक्रामुमुचुस्तदा ॥ तोयदाइवसंक्रुद्धाःपर्वताभेप्रतर्दने ५४ प्रतर्दनोपिसर्वेषांशस्त्रैर्भिन्नात्मगात्रकः ॥ सर्वान्जघानसहसापंचन्यूनैःशरोत्करैः ५५ भुजयोःस्तनयोश्चैवललाटफलकेतथा ॥ सुरःकश्चिदविद्धोत्रदेवसैन्येनदृश्यते ५६ आयुधानिचसर्वेषांन्यपतन्भूमिमंडले ॥ भुजबाणव्यथार्तानांसेंद्राणामसुरद्रुहाम् ५७ बाणानांहिशतैर्विद्धःकश्चित्पंचाशतावरः ॥ सहस्राक्षःसहस्रेणविद्धोतिबलिनातदा ५८ सर्वांस्तानमरान्दृष्ट्वाभूमौनिपतितायुधान् ॥ प्रतर्दनोधनुःस्वीयंविज्यमत्रचकारह ५९ युद्धमेतन्महद्दृष्ट्वासाहसाख्यंचपौरुषम् ॥ विस्मयाविष्टहृदयइंद्रऊचेप्रतर्दनम् ६० प्रतर्दनवरंभीष्टंवरमद्यददाम्यहम् ॥ तुष्टोस्मिभवतोयुद्धपौरुषाभ्यांमहीपते ६१ एकाकीकइहस्वर्गेमांजेतुंसामरंप्रभुः ॥ कोवादेवान्मयासार्धंसशल्यान्कुरुतेक्षणात् ६२ इत्युक्तेदेवराजेनतदातत्रप्रतर्दनः ॥ निपत्यदंडवद्भूमाविदंवचनमूचिवान् ६३

पुत इशैःशरोत्करैःशरसमूहैर्जघानेति ५५ भुजयोरिति । भुजादावविद्धोनदृश्यतेकिंतुसर्वेविद्धाः ५६ आयुधानीति । भुजेषुबाणप्रयुक्तायाव्यथातयार्त्तानाम् ५७ बाणानामिति । सहस्राक्षस्तुबाणानांसहस्रेणविद्धः अतिबलिनाप्रतर्दनेन ५८ सर्वानिति । विज्यंविगताऽवतारिताज्यागुणोयस्यतादृशम् ५९ युद्धमिति । पौरुषमुत्साहं प्रतर्दनस्येतिशेषः ६० इंद्रोक्तिमाह प्रतर्दनेतिद्वाभ्याम् ६१ युद्धपौरुषयोरितरवैलक्षण्यंतोपहेतुतोपपत्तयेपूर्वोत्तरार्द्धाभ्यांदर्शयति एकाकीति ६२ इत्युक्तइति ६३

उक्तमिति । व्रतंबलोद्धतान्जेष्यामीतिप्रतिज्ञारूपं तेनत्वयाप्रतर्दनेनसामरोऽहंजितइतिवाक्याभिधानेन ६४ अपराधमिति । तथापीत्यादिः अपराधमभिनयति पुष्पैरिति । पुष्पाण्य पियत्रअत्यादरेणसमर्पणीयानीत्यर्थः ६५ भवंतइति । पूज्यैर्मत्पितृप्रभृतिभिःपूज्याः तथाचममनितरांपूज्याइत्यर्थः उत्तरार्द्धार्थंप्रपंचयति भवंतःसात्विकाइत्यादिना ६६ ततइति । सात्विकत्वेनेति उद्यतं भावेक्तः तथाचभवतेंद्रेणसात्विकतयावरंदातुंउद्यमःकृतइत्यर्थः ६७ वैषम्याभावमभिनयति साधूनामिति । समेब्रह्मणिचित्तमनुसंधानरूपंयेषामीदृशानांसाधूनां धीर्विषमाअयंस्वःपरश्चेत्याकारानभवति इयंव्याप्तिश्चभवतोवरदानोद्यमंदृष्ट्वामयानिर्णीतेत्याह वरमिति ६८ प्रायइति । हेइंद्रभवादृशाःप्रायोबाहुल्येनपुरुषोत्तमाएवभवंति किंतेषांलक्षणम तआहोपकारमित्यादि केचिदपकारिणिशापाद्यपिददतेइत्यभिप्रायेणप्रायःपदम् ६९ अपकारिष्विति । अपकारिष्वपिभूतेषुयेउपकारिणोभवंतितैःपुरुषैःस्तंभनिभैस्त्रिलोकीविधृता तत्प्रभावा देवत्रिलोकीस्थितेतियावत् तत्रहेतुरूपंत्रिलोक्याविशेषणंयज्ञमंडलीति । यज्ञसमूहात्मिका कार्यकारणयोरभेदात् 'उपकारोहिसर्वयज्ञात्मकोपकारात्परोधर्मः' इत्यादिश्रुतेः ! सचयज्ञपरिणा

उक्तंयद्भवतावाक्यंसामरोहंजितस्त्वया ॥ व्रतंमेपूरितंतेनभवताशक्रसर्वथा ६४ अपराधंक्षमस्वत्वंममबालस्यदुर्धियः ॥ पुष्पैरपिनताड्यायेतेशरैस्ताडितायतः ६५ भवंतःपूज्यपूज्यामेसर्वेसाधुविचेष्टिताः ॥ भवंतःसात्विकादेवामानुषोराजसोस्म्यहम् ६६ ततोरजःसमुद्रेकात्पापमेतन्मयाकृतम् ॥ सात्विकत्वेनभवतावरंदातुमिहोद्यतम् ६७ साधूनांसमचित्तानांविषमानास्तिधीःक्वचित् ॥ वरंददासियस्त्वंहिमय्येवमपकारिणि ६८ प्रायोभवादृशाःसर्वेलोकेस्मिन्पुरुषोत्तमाः ॥ उपकारंहिकुर्वंतिमादृशेयेऽपकारिणि ६९ अपकारिषुभूतेषुयेभवंत्युपकारिणः ॥ तैःस्तंभैर्विधृतासर्वात्रिलोकीयज्ञमंडली ७० उपकारेषूपकारान्प्रायःसर्वेपिकुर्वते ॥ अपकारेषूपकारंत्वादृशाःकेपिकुर्वते ७१ अहंहिरजसाविष्टोवेद्मिस्वस्मैहिताहितम् ॥ नैवयस्माद्भवंतंहियोद्धुमत्रागतोधुना ७२ महतागजयूथेनमशकोयद्वदाव्रजेत् ॥ योद्धुंतद्वदहंशक्रभवद्भिर्योद्धुमागतः ७३ अतएतादृशोहंहिकिंवृणेहितमात्मने ॥ त्वमेवत्रिजगन्नाथयत्स्याद्धिततमंसदा ॥ मह्यंमानुषरूपायतत्प्रयच्छार्तिनाशनम् ७४ एवमुक्तोह्ययंशक्रःप्रतर्दनमथाब्रवीत् ॥ अयाचितंवरंकश्चित्स्वधियानैवयच्छति ॥ परस्मैततएवत्वंवृणीष्वैवप्रतर्दन ७५ एवमुक्तःपुनःशक्रंबुद्धिमान्सप्रतर्दनः ॥ उवाचन्यायसहितंवचनंसत्यवादिनम् ७६ सत्यमेतत्त्वयाशक्रयदुक्तमधुनावचः ॥ किंतुतद्विषमेष्वेववर्ततेनभवादृशे ७७

मात्मिकांत्रिलोकींधारयितुमर्हतीतिभावः ७०० उपकारेष्विति । उपकारापकारशब्दौमत्वर्थीयाच्प्रत्ययांतौ केपिविरलाः ७१ अहमिति । अहंयतोरजसाविष्टोऽपातस्तस्मात्स्वस्यहिताहितंनैववेद्मि भवंतंप्रतियुद्धार्थमागमनमेवममावोधंदर्शयतीत्याह भवंतमिति ७२ स्वस्यहिताहितज्ञानाभावंदृष्टांतेनस्फुटयति महतेति । महतागजयूथेनयोद्धुंयद्वन्मशकआव्रजेदागच्छेत्त थाहमिति ७३ अतइति । अतोहेतोरेतादृशोहितज्ञानहीनोहमात्मनेहितंकिंवृणेप्रार्थयामि तस्मात्हेत्रिजगन्नाथमह्यंमानुषरूपाययद्धिततममार्तिनाशकरूपंस्यात्तत्स्वयमेवालोच्यप्रयच्छेति ७४ एवमिति । नवैवरोवरस्मेइतिव्याख्येयश्रुतिवाक्येवरशब्दःपरशब्दसमानार्थइतिदर्शयंस्तद्व्याचष्टे अयाचितमिति । कश्चित्परःपरस्मैअन्यस्मैअयाचितंवरंस्वधियैवनप्रयच्छतितथासतितस्यदत्तस्यवरत्वमेवहीयेत व्रियतेयाच्यतेइतिवरपदव्युत्पत्तेः ततोहेप्रतर्दनत्वमेववृणीष्वेति ७५ एवमुक्तःपुनरिति । न्यायसहितंयुक्तिसहितंवचनंसत्यवादिनमिन्द्रंप्रत्युवाचेति ७६ सत्यमिति । हेशक्रयत्त्वयैतल्लौकिकन्यायानुवादकंवचउक्तंतत्सत्यमबाधितमेवलोके परंतुतद्विषमेषुभेददर्शिष्वेववर्त्ततेसमन्वितंभवति भवादृशेसमचित्तेतुनयुज्यतेइति ७७

भवतस्तुसमदर्शितामयावरदानोद्यमादेवानिर्णीतेत्याह त्वांविनेति ७८ फलितमाह ततइति । यदित्वयामेदेयोवरःप्रतिज्ञातस्तर्हिस्वयाधिषणयैवहिततमंबुद्ध्वानिर्णीयमह्यंदेहीति ७९ ‘रूढिर्योगाद्बलीयसी’ इतिन्यायमाश्रित्याह वरइति । श्रेष्ठःपदार्थोहिवरइतिरूढ्याप्रोक्तःश्रेष्ठोनामहिततमः अहंतुतंहिततमंनवेद्मितताेऽज्ञानाद्यदियाचितस्तर्हिअवरोऽश्रेष्ठःस्यात्तथाचभवतोवरदानप्रतिज्ञाहानिःस्यात्तस्माद्भवतैवात्मनःप्रतिज्ञापरिपालनायवरोदेयइतिभावः ८० इत्युक्तेइति । प्रतर्दनस्यबुद्धिजांचातुरींवीक्ष्येंद्रस्तुष्टइति ८१ ननुयदींद्रस्तुष्टस्तर्हितस्यतोपोविद्यादानप्रयोजकस्तथाचेंद्रःसत्यान्नचचालेत्यर्थकमथोखल्विंद्रःसत्यादित्यादिवाक्यंकथमुपपद्येततद्धिप्रतिबंधकेप्रसक्तेपिसत्यसंरक्षणायेंद्रोविद्यांददाविति तात्पर्यकमित्याशंक्यविद्यावाक्यस्मृतिःप्रतिबंधिकासीदितिवक्ष्यमाणःषोडशभिर्विद्यावाक्यमनुवदंस्तत्र ‘विद्याहवैब्राह्मणमाजगाम गोपायमाशेवधिष्टेहमस्मि । असूयकायानृजवशेठाय नमाब्रूयावीर्यवतीयथास्याम्’ इतिश्रुतिमर्थतःपठति ब्रह्मविद्येतिसप्तभिः । ब्रह्मविद्यातदभिमानिनीदेवताऽतिसंखिन्नाऽनधिकारिप्राप्तिभयेनोद्विग्नासतीब्राह्मणंययौगत्वाचेदमाहेतिशेषः ब्राह्मणपदस्यार्थोब्रह्मिष्ठमिति अतिशयेनब्रह्मवांस्तद्बोधवानितिब्रह्मिष्ठस्तंविन्मतोर्लुक् । हेब्राह्मणत्वंमांसर्वजनसेवितत्वेनवारांगनयापण्ययोषितासमानांमाकुर्विति ८२ गोपायेति । किंतुकुलांगनामिवमांगोपायरक्षरहस्यांकुर्वितियावत् यतोहंतवलोकद्वयोपकारि

त्वांविनात्रहिकोनामरिपवेदुष्टचेतसे ॥ वरंदद्यादतोनूनंभवान्नविषमःक्वचित् ७८ ततस्त्वयावरोदेयःप्रतिज्ञातोस्तिमेयदि ॥ देहिमह्यंहिततमंबुद्ध्वाधिषणयास्वया ७९ वरःश्रेष्ठइतिप्रोक्तःश्रेष्ठोहिततमोभवेत् ॥ तन्नवेद्मितताेऽज्ञानाद्याचितोनवरोभवेत् ८० इत्युक्तेभगवानिन्द्रःपुनस्तोषमुपागतः ॥ प्रतर्दनस्यसंवीक्ष्यचातुरींबुद्धिजामिमाम् ८१ ब्रह्मविद्यातिसंखिन्नाब्रह्मिष्ठंब्राह्मणंययौ ॥ वारांगनासमानांहिमाकृथाःसर्वसेविताम् ८२ गोपायमांसदैवत्वंकुलजामिवयोषितम् ॥ शेवधिस्त्वक्षयस्तेऽहमिहलोकेपरत्रच ८३ अथैवंचेदशक्तोसिकर्तुंमद्वचनंद्विज ॥ जनोपकारनिरतोवदान्योतिकृपावृतः ८४ तथापिगुणहीनायनमांदद्याःकथंचन ॥ स्वसुतामिवरूपाढ्यांपुरुषेविगतस्पृहे ८५ एतेगुणाममसदाब्रह्मन्नत्यंतदुःखदाः ॥ निंदागुणवतांतद्वत्सर्वदाऽऽर्जवशून्यता ८६ इंद्रियाधीनतानित्यंस्त्रीसंगोप्यविनीतता ॥ कर्मणामनसावाचागुरौभक्तिविवर्जनम् ८७ एवमाद्याहियेषांस्युस्तेभ्योवर्जयमांसदा ॥ एवंहिकुर्वतोनित्यंकामधेनुरिवास्मिते ॥ वंध्यान्यथाभविष्यामिलतेवफलवर्जिता ८८ अपिन्यायंवदाम्यत्रनोपकारायतेद्विज ॥ योनाशयेद्धिदुर्भेद्यमादित्याद्यैरपीश्वरैः ८९

काऽक्षयनिधिसमास्मीति ८३ अथैवमिति । अथेतिपक्षांतरे चेद्यदिएवमुक्तंमद्वचोऽनुष्ठातुमशक्तोसि तत्रहेतुगर्भंविशेषणत्रयं वदान्यत्वंबहुप्रदत्वम् ८४ तथापि ममविद्यायादानेतवप्रवृत्तावपिशमादिरहितायमांनदेहि यथागुणाढ्यांस्वसुतांक्लीबेनकश्चिद्ददातितद्वदिति ८५ एतइति । एतेवक्ष्यमाणाअगुणादोषाहेब्रह्मन्ममातिप्रतिकूलाः । दोषानाह निंदेति । गुणवतांनिंदादोषारोपात्मिकाऽसूया आर्जवंकौटिल्यराहित्यंतच्छून्यताकौटिल्यम् ८६ चतुर्विधंधूर्त्ततारूपंशठतादोषमाह इंद्रियेति । अविनीतताऽनम्रत्वं विवर्जनंराहित्यम् ८७ एवमाद्याइति । दोषाइतिशेषः । येषांस्युस्तेभ्योदातुंमांवर्जयनिवृत्तोभव एवंकुर्वतोविद्यायारहस्यतांपात्रेदानंवाऽऽचरतस्तेसर्वेष्टद्रावीर्यवत्यस्मीतिअन्यथातुवंध्येति ८८ अथपंचभिःश्लोकैः ‘यःसंतृणत्त्यवितथेनकर्णौतमोहरन्नमृतंसंप्रयच्छन् । तंविद्यात्पितरंमातरंचतस्मैनद्रुह्येत्कृतमस्यजानन्’ इतिवाक्यंविद्यामुखेनार्थतःपठति अपिन्यायमिति । हेद्विज अत्रदोषवतेविद्यानदेयेतिविषयेन्यायंउपजीव्यंनविहन्यादितियुक्तियुक्तंवदामिकेवलंतवोपकारायैवनवदामीति । यइति । योगुरुरीश्वरैःसमर्थैरप्यादित्याद्यैर्दुर्भेद्यंस्वस्यशिष्यस्यहृदिवर्तमानमज्ञानतमःस्तोमंनाशयेत् कस्मात्सत्यादवितथादात्मबोधाद्धेतोस्तथात्वंब्रह्मभवसीत्यादिमहावाक्यरूपंवचोमृतंपाययेत् ८९

९० कर्णाविति । किंकुर्वन्वचोमृतंपाययेत् कर्णौअदुःखभाजौकुर्वन्अदुःखंदुःखध्वंसंभजतःप्राप्नुतइतितौतथा तयाआसमंताद्युक्तिभिरपिबोधनंकुर्वन् सएवगुरुरस्याधिकारिणःपितामाताच नित्यश
रीरस्यब्रह्मा मरूपस्यव्यंजकत्वात् नचापरौलौकिकशरीरकर्तारौ तत्रहेतुमाह यतइति । यतोऽस्यगुरोःसंततौविद्यासंप्रदायेपातात्प्रवेशात्सर्वंदुःखंविनश्यतीति पारक्षणेमानपूजायामितिधातुभ्यांतृच्
प्रत्ययेनलोपेचनिष्पन्नौपितृमातृशब्दौसंसारभयाद्रक्षकेस्वाराज्यपदप्रदानेनपूजकेचब्रह्मविद्याप्रदेगुरावेवसम्यक्संगच्छेतेइतिभावः ९१ अन्ययोरिति । अन्ययोर्लौकिकयोःपित्रोःसंततौपातात्पु
त्रस्यतादृशंसंसारलक्षणंदुःखंजायते यस्यदुःखस्यप्रतीकारोनिवृत्त्युपायउक्तायागुरुसंबंधिसंततेर्विद्यासंप्रदायरूपायाःसकाशात्परोभिन्नोनास्तिकिंतुसएवेति ९२ ततइति । ततउपजीव्यत्वाद्ब्रह्मात्मबो
धस्यदात्रेऽतएवपित्रेमात्रेचगुरवेशरीरवाङ्मनोभिर्नद्रुह्येत् द्रोहमनिष्टचिंतनंनकुर्यादिति असूयकादयस्तुद्रुह्यंतितस्मात्तेभ्योविद्यानदेयेतिभावः ९३ एतदिति । एतत्पूर्वंयदुक्तंतद्ब्रह्मविद्याप्रदंगुरुंप्रति
मुख्यवृत्त्योक्तं वेदस्त्वाचार्यदेवोभवेत्यादिरूपःसर्वार्थानांलौकिकानामपिशिक्षासुयोगुरुस्तत्परमप्येतद्वाक्यंमन्यतेअभिप्रैतीति ९४ अतएवलौकिकविद्यागुरुष्वपितथाशिष्टाचारस्तथाचरतामना
चरतांचफलान्वयव्यतिरेकौचदर्शयेतेइत्याह अध्यापिताइति । लोकेपियेयेनाध्यापितास्तेतंस्वगुरुंमन्यंतेइति तथायथैतेशिष्यागुरौवर्ततेविद्यापितेपुशिष्येपुतथावर्ततेफलंददातीतिप्रसिद्धम् ९५ फलि

तमःस्तोमंहृदिस्त्वस्यसत्यादेवात्मबोधनात् ॥ ब्रह्मत्वंभवसीत्यादिपाययेच्चवचोमृतम् ९० कर्णावदुःखभाजौचकुर्वन्नाबोधनंसदा ॥ सएवास्यपितातद्वन्माताचात्र
नचापरौ ॥ यतोस्यसंततौपातात्सर्वंदुःखंविनश्यति ९१ अन्ययोःसंततौपित्रोर्दुःखंपुत्रस्यजायते ॥ यस्यनैवप्रतीकारउक्तायाःसंततेःपरः ९२ ततोब्रह्मात्म
बोधस्यदात्रेपित्रेसदैवहि ॥ नद्रुह्येद्गुरवेतस्मैकर्मणामनसागिरा ९३ एतन्मयात्रकथितंब्रह्मविद्याप्रदेगुरौ ॥ वेदःसर्वार्थशिक्षासुगुरवेतद्धिमन्यते ९४ अध्यापि
ताहियेशिष्यामन्यंतेतेगुरुंस्वकम् ॥ गुरौयथैतेवर्ततेतथाविद्यापितेष्विह ९५ गुरुभक्तस्ततोयःस्याद्विद्यायाःश्रवणेतथा ॥ आदृतस्त्वप्रमादीचमेधावीस्त्रीविवर्जितः
९६ ब्रूयास्त्वंयदितेवक्तुमिच्छास्याद्द्विजसत्तम ॥ ब्रह्मविद्यामिमांतस्मैरक्षकोयदिमेभवेत् ९७ इतिविद्यावचःस्मृत्वासंशयंपरमंगतः ॥ सत्यपाशाभिबद्धःसन्निन्द्रः
सत्यात्मरूपधृक् ९८ नायंसर्वैर्गुणैर्युक्तोविद्योक्तैर्हिप्रतर्दनः ॥ यद्यप्यस्मिन्गुणाःसंतितथाप्येषरिपुर्हिनः ९९

तमाह विद्यागुरुभक्तइतिद्वाभ्यां । ततउक्तनियमात् यःशिष्योगुरुभक्तस्तथाविद्यायाःश्रवणेआदृतःश्रद्धावान्अप्रमादीसावधानश्चमेधावीधारणाशालिमतिकःस्त्रीविवर्जितोब्रह्मचर्यवांश्चस्यात् । यदि
चमेविद्यायारक्षकोरक्षाकरोभवेत्तर्हिहेद्विजसत्तमतस्मैशिष्यायेमांब्रह्मविद्यांब्रूयाः यदितेवक्तुमुपदेष्टुमिच्छाभवेदितिद्वयोःसंबन्धः ९६ । ९७ एवंविद्यावाक्यंषोडशभिःप्रपंच्यतत्स्मरणस्यप्रतिज्ञयापाश
वद्वशीकृतेन्द्रनिष्ठसंशयजनकतयाक्षणमात्रंप्रतिबंधकतामाह इतिविद्येति । सत्यपाशाभिबद्धःसन्नपींद्रइतिविद्यावचःस्मृत्वासंशयंगतोभूदित्यन्वयः संशयाकारस्तुकिमस्मैविद्यानदेयादेयावेति ।
तथापींद्रःसत्यान्नचचालसत्यरूपत्वादित्यर्थंकहींद्रइत्यंतंवाक्यंव्याकुर्वन्निंद्रंविशिनष्टि सत्यात्मेति । सत्यंशास्त्रप्रतिपाद्यात्मकंरूपंधर्मस्वरूपंतेनधृष्णोतिप्रगल्भोभवतीतिसतथेतिबृहदारण्यकभाष्या
नुसारेणार्थः तथाचधर्ममर्यादास्थापकस्यपरमधर्मसत्याच्चलनंनयुक्तमितिभावः । यद्वा सत्येनपरमार्थेनात्मनारूपेणप्रजापत्युपदेशाल्लब्धेनतत्त्वज्ञानविषयेणप्रगल्भइति तथाचानृताविप्रयोज
काऽविद्यायास्तत्त्वज्ञानेननष्टत्वादिंद्रस्यसत्याच्चलनंनसंभवतीतिभावः ९८ अथसंशयप्रयुक्तविचारमभिनयन्नदेयेतिपूर्वपक्षकोटिंदर्शयति नायमिति । अयंप्रतर्दनोविद्योक्तैःसर्वैर्गुणैर्युक्तोनभव
तितस्मान्नदेयेतिप्राप्तं ननुमाणाग्निहोत्रनिष्ठयाशुद्धांतःकरणत्वादयंगुणवानेवेत्याशंक्याह यद्यपीति । रिपुर्वैरी ९९

देयाविद्येतिसिद्धांतकोटिमादत्तेअथवेतित्रिभिः । मद्वरान्ममवरमालोच्येतिल्यब्लोपेपंचमी भाजनंपात्रम् १०० बहुनेति । स्पष्टं १०१ तत्रहेतुतयाप्रतिज्ञायाःपूरणीयत्वमाह वरमिति । यस्माद्व रंतेददामीतिमयाईरितंप्रतिज्ञातंतस्मात्तदुक्तमात्मविद्यादानेनसत्यंकुर्वेइति । इतिइत्थंसत्यात्मकधर्मस्यप्राबल्यंसंचिंत्येंद्रःप्रतर्दनमुवाचेति । अयमत्रसिद्धांतकोटेराशयः यद्यपिविद्यावाक्यंश्रुति रूपंप्रबलमपिगृहस्थतयामध्यमाधिकारिलाभेनसावकाशं ददानीतिप्रतिज्ञायास्तुस्मृतिवाक्यैरपिनानृतंवदेदित्यादिभिर्निर्णीतावश्यकर्त्तव्यतायांनिरवकाशत्वादानर्थक्यप्रतिहतानांविपरीतंबलाबल मितिन्यायेनप्राबल्यमिति १०२ अथतंहेंद्रउवाचेत्यादिविजानीयादित्यंतंवाक्यंव्याकरोति मामेवेत्यादिपंचविंशतिश्लोकैः । मामेवहेप्रतर्दनविजानीहीतिचतुर्थेनान्वयः । शास्त्रदृष्ट्यातूपदेशोवा मदेववदितिन्यायेन एकशतवर्षंब्रह्मचर्यंतोषितप्रजापत्युपदेशजन्याद्वितीयात्मज्ञानेस्थित्वेंद्रउपदिदेशयथावामदेवोगर्भेस्मृतसनकाद्युपदेशजन्यज्ञानेस्थित्वासर्वात्मभावप्रतिपादकान्मंत्रानुवाचतद्वदि त्यर्थेकेनमामितिपदमद्वितीयात्मार्थकमित्याशयेनमामितिपदार्थंविशिनष्टि सर्वजगतामात्मानमित्यादिना । अद्वयमित्यर्थः बुद्धिसाक्षिणंसर्वांतरमितियावत् एतत्स्फुटयति १०३ स्वप्नेति । सर्वैः

अथवारिपुतानेनपरित्यक्तात्रमद्वरात् ॥ ततःसर्वगुणोपेतोविद्यायाभाजनंभवेत् १०० बहुनाकिंविचारेणगुणीवाप्यगुणस्त्वयम् ॥ विद्यांहिततमामस्मैकथयि ष्यामिसर्वथा १०१ वरंददामितेयस्मादितिपूर्वंमयेरितम् ॥ सत्यंतत्सर्वथाकुर्वेआत्मविद्याप्रदानतः ॥ इतिसंचिंत्यभगवानूचेशक्रःप्रतर्दनम् १०२ मामेवसर्व जगतामात्मानंबुद्धिसाक्षिणम् ॥ नमोवद्बहिरंतश्चव्याप्यसर्वमवस्थितम् १०३ स्वप्नदृष्टसमैःसर्वप्रपंचैरहितंशिवम् ॥ देशकालस्वरूपाख्यभेदत्रयविवर्जितम् १०४ स्वसजातिविजात्याख्यभेदबीजविभावसुम् ॥ अधिष्ठानंसमस्तस्यसदासदसदात्मनः १०५ प्रपंचस्ययथारज्जुःसर्पादेरेकमीश्वरम् ॥ प्रतर्दनविजानीहि तुभ्यंहिततमंत्विदम् १०६ नसुखंस्वर्गगंबद्ब्रह्मलोकस्थितंपरम् ॥ ससाधनंमनुष्येभ्यःकदाचिद्विद्यतेहितम् १०७ कुतोमनुष्यलोकादौस्थितंनश्वरमल्पकम् ॥ हितंभवेन्मनुष्येभ्योवनितादिसमुद्भवम् १०८ कदलीस्तंभवत्सर्वोदेहःसारविवर्जितः ॥ जलबुद्बुदवच्चापिविनश्यत्येपतत्क्षणात् १०९ अस्मिन्यत्साधनैःसाध्यं सुखंतद्दुःखमेवहि । आनंदात्मानमेवैकमिन्द्रंमांपरिहायच ११० ततोहितंजगत्यस्मिन्नास्तिकिंचित्कदाचन ॥ कुतोहिततरंवास्यादाशाहिततमंप्रति १११

स्थूलसूक्ष्मकारणरूपैःप्रपंचैर्वस्तुतोरहितंयतस्तेप्रपंचाःस्वप्नदृष्टसमाइति । अतएवशिवंतुरीयं । देशेनकालेनस्वरूपेणवस्तुनाचाख्यानिरूपणंयस्यतादृशेनभेदत्रयेणवर्जितमिति १०४ स्वसजातीति । स्वेनस्वरूपेणसजातिनाविजातिनाविजातीयेनचआख्यायेषांस्वगतादिभेदानांतेस्वसजातिविजात्याख्यभेदास्तद्रूपबीजानांप्रादुर्भावेनाग्निवद्दाहकंतदेवकुतइत्यतआह अधिष्ठानमिति । समस्त स्यसदसदात्मनःप्रपंचस्याधिष्ठानं कथं यथारज्जु सर्पादेरिति । अधिष्ठानस्यचज्ञानेनकल्पितदाहकत्वंप्रसिद्धं अतएकं अज्ञानेचेश्वरमिति । तुभ्यंमनुष्यायइदमेवज्ञानंहिततममतिशयेनहितमिति१०५ १०६ श्रुतिगतैवकारार्थमाह नसुखमिति । स्वर्गगतंकर्मफलंतथोपासनफलंब्रह्मलोकगतंचसुखंसाधनैःसहितंमनुष्येभ्योहितंनविद्यतेबंधहेतुत्वादितिभावः १०७ यदानुश्रविकसुखस्यहितत्वंदुर्लभंतदैहिक स्यकिमुवक्तव्यमित्याह कुतइति । १०८ लोकद्वयोक्तेर्थेहेतुमाह कदलीतिद्वाभ्यां । देहएवनिःसारोविनश्वरश्चतदाश्रितसुखस्यभंगुरतरस्यशोकहेतुतयादुःखतास्पष्टा तस्मादानंदात्मैवेंद्रपदार्थएको हिततमइतिश्लोकद्वयभावः । अस्मिन्शरीरे । परिहायत्यक्त्वा १०९ । ११० फलितमाह ततइति । हितमेवयदाजगतिनास्तितदाहिततरहिततमयोःकासद्भावंप्रत्याशेत्यर्थः १११

ननुयं दिजगतिहितंनास्तितर्हिकथंज्ञानेहिततमत्वमितितमप्रत्ययप्रयोगइत्याशंक्ययथाकल्पितशरीरत्रयापेक्षयाशुद्धंतुरीयमित्युच्यतेतथाश्रमसिद्धहिताद्यपेक्षयेत्याह तथापीति । लौकिकराजादिसुखंहितमितिमतंततोविरागस्तुहिततरस्ततोहिततमत्वंज्ञानस्योपपादयिष्यतेइति ११२ ननुतथाप्यैहलौकिकंसुखंहितमस्तुआमुष्मिकंतूत्कृष्टत्वाद्धिततरमित्याशंक्यार्किंस्वरूपतःसुखस्यविशेषःकिंवासाधनतइतिविकल्प्यतत्रनाद्यइत्याह ब्रह्मलोकइति । ब्रह्मलोकादौविषयजन्यसुखेविशेषोनास्ति अनुकूलत्वादिरूपाविशेषादितिशेषः ११३ नद्वितीयइत्याह आहारइति । सर्वत्रब्रह्मलोकादावाहारेदेहेंद्रियाणांललनादीनांचसत्वंमनोरमत्वंचाविशिष्टं नहिरंकःस्वाहारादौनतुष्यतीतिभावः । नचामुष्मिकसुखेपारतंत्र्यंनास्तीतिवाच्यं राजादिसेवाफलवद्देवाराधनफलस्यपारतंत्र्यनियमादित्याह पारतंत्र्यमिति ११४ कैमुत्यन्यायंसूचयन्पारतंत्र्यमुदाहरति ब्रह्मेति । ब्रह्माहिरण्यगर्भः परमेश्वरोंतर्यामी अहामिंद्रः सातिशयत्वेनापिसर्वलोकसुखस्यसाम्यमित्याह सुखस्येति ११५ सातिशयतामुदाहरति परेति । यश्चतुर्मुखस्यहिरण्यगर्भस्यानंदःप्रसिद्धःसपरब्रह्मणआनंदाच्छतांशेनन्यूनइति ११६ चतुर्मुखस्येति । ममेंद्रस्यानंदःहिरण्यगर्भानंदाच्छतांशन्यूनंप्रजापत्यानंदात्शतांशन्यूनत्वादयुतांशत्वेनन्यूनः तथाचान्येषांकिमुवाच्यमिति ११७ भवतामिति । भवतांमनुष्याणांयद्यथाविधंललनालिंगनजन्यंसुखंजायतेप्रादुर्भवतितद्वन्ममेंद्रस्यतथा

तथापिनरदेवादेःसुखंहितमितीरितम् ॥ विरागस्तस्यलोकेस्मिन्ज्ञेयोहिततरस्ततः ११२ ब्रह्मलोकेतथास्वर्गेमानुषेज्ञानविद्यते ॥ विशेषःकोहिराजेंद्रसुखेविषयजेसदा ११३ आहारोस्तिहिसर्वत्रविविधःसर्वदेहिनाम् ॥ देहाश्चसेंद्रियास्तद्वल्ललनाश्चमनोरमाः ॥ पारतंत्र्यंचसर्वत्रविद्यतेसर्वदेहिनाम् ११४ ब्रह्मामहेश्वराधीनस्तथाहंब्रह्मणोपिच ॥ सुखस्यातिशयोदृष्टःसर्वलोकस्थितस्यहि ११५ परब्रह्मणआनंदान्न्यूनोसौशतभागतः ॥ चतुर्मुखस्ययोनामस्वानंदोस्त्यधिकोधुना ११६ चतुर्मुखस्यचानंदान्ममन्यूनतमस्तथा ॥ अयुतांशेनचानंदःकोन्योन्यूनोभवेन्नच ११७ भवतांजायतेयद्वल्ललनालिंगनात्सुखम् ॥ सुखंतद्वन्ममाप्येतब्रह्मणोपीश्वरस्यहि ११८ मामूदिदंकदाचिद्धिसुखंदुःखकरंमम ॥ एवंभूतोविरागोयंतस्माद्धिततरोमतः ११९ विनश्यतियतःसर्वंसुखजातंयथाघटः ॥ नाशंनैतिविरागोयंजातःसत्पुरुषस्यहि १२० छर्दितेवाथविष्ठायांदोषधीरेवकारणम् ॥ विरागेतद्वदत्रापिदोषधीरेवकारणम् १२१

हिरण्यगर्भेश्वरयोरिति । तथाचवैषयिकसुखेविशेषाभावात्तत्रतरप्प्रत्ययोनप्रयोगमर्हतीतिभावः ११८ अथविरागस्वरूपंदर्शयित्वातस्यहिततरत्वंप्रतिजानीते मामूदिति । इदंविषयजन्यं अतएवभंगुरत्वेनदुःखदंचयत्सुखंतन्माभूदित्येवंभूतएवमाकारोविरागस्तस्माद्वैषयिकसुखाद्धिततरइति ११९ विरागस्योत्कर्षंविषयसुखादुपपादयति विनश्यतीति । वैषयिकसुखमौत्सुक्यनिवृत्तिमात्ररूपमितिप्रथमेऽध्यायेप्रपंचितं तथाचतृष्णारूपदुःखाभावत्वेनवैषयिकसुखविरागयोर्हितत्वसाम्येपिवैषयिकसुखंजन्मानंतरमपचीयतएव विरागसुखंतूपचीयतएव उपचीयमानधनादेरपचीयमानादुत्कर्षःप्रसिद्धएवेतिभावः । सर्वंविषयेभ्योजातंसन्सुखंघटवद्विनश्यत्यपचीयते विरागस्तुसत्पुरुषस्यमंदभिन्नस्यजातःसन्नाशंनैतिनप्राप्नोतिकिंतुवर्द्धतएवेत्यर्थः १२० विशेषांतरमाह छर्दितइतिद्वाभ्यां । यथावांतान्नादिविषयकविरागेदोषधीमात्रंकारणंतद्वदत्रविषयेभ्योविरागे तस्मादांतरसाधनमात्रापेक्षत्वाद्विरागोंतरंगोलघुश्च विषयसुखंतुबाह्यबहुवित्तव्ययाऽऽयाससाध्यत्वाद्बहिरंगंगुरुचेतिस्पष्टोविरागस्योत्कर्षइतिभावः १२१

साधनांतरेति । यद्वद्वैषयिकसुखेसाधनांतरंवित्तव्ययादिविद्यतेतथात्रविरागेऽन्नोदोषधियःसकाशात्साधनांतरंनविद्यतेततोंतरंगत्वाल्लघुत्वाच्चअपिशब्दात्पूर्वश्लोकोक्तोपचीयमानत्वाच्चएषविरागोनॄणांहिततरइति १२२ किंच विषयसुखसहस्रैरनाश्यस्यदैन्यस्यनाशकत्वात्स्पष्टोविरागस्योत्कर्षइत्याह अयमिति द्वाभ्यां । अयंमत्सजातीयादिर्मत्तोमदपेक्षयासुखीअहंतुनभवामिएतद्धनपशुप्रभृतिसुखसाधनंवोयुष्माकमेववर्त्ततेनममेतीत्याकारंवैषम्यरूपविज्ञानमेववह्निःसर्वान्जंतून्दहतीत्युत्तरेणान्वयः १२३ जंतूनिति । कीदृशान्जंतून् वैषयिकसुखेजातस्पृहान् अयंदैन्यवह्नेरुपद्रवोलोकानांकुतोहेतोर्यस्माज्ज्ञात्वाविषयदोषांस्तेभ्योविरागोनास्तितस्मादसंनिधानसंनिधानयोरनर्थतदभावप्रयोजकत्वात्सविरागोहिततरइतिसिद्धम् १२४ अथततोप्युत्कृष्टत्वादात्मज्ञानस्यहिततमत्वमाह अस्मादितित्रिभिः । अस्माद्विरागात् सविशेषणंविशेषणैरद्वितीयत्वादिभिःसहितंतदवगाहीतियावत् विरागस्यमूलाज्ञानानुच्छेदकत्वाद्भ्रमसंस्कारेभ्योभयंननिवर्तते तत्त्वज्ञानेतुसंस्कारेजेनितोपिभ्रमोऽकिंचित्करइतिस्पष्टोविशेषइत्याह उत्पन्नमिति । यन्मज्ञानमुत्पन्नंसदनेकवासनाभिःकार्यद्वारापिननाशयितुंशक्यमित्यर्थः । आकारतोनर्थमूलोच्छेदकत्वाच्चज्ञानस्योत्कर्षमाह आनंदात्मेति १२५ अंतरंगतयाप्युत्कर्षंविरागाज्ज्ञानस्यदर्शयति विरागइति । स्वरूपानंदभानप्रतिबंधकदुःखनिवर्तनेविरागोहेतुर्भवतिनैवसाक्षात्सुखभाने इदंज्ञानंतुअत्रसुखसाक्षात्कारे तस्मा

साधनांतरमत्रातोयद्वद्वैषयिकेसुखे ॥ नविद्यतेततोप्येषनृभ्योहिततरोमतः १२२ अयंमत्तःसुखीनाहमेतद्धःसुखसाधनम् ॥ इतिवैषम्यविज्ञानवह्निर्दहतिसर्वदा १२३ जंतून्जातस्पृहान्सर्वान्ज्ञात्वावैषयिकेसुखे ॥ विरागोनास्त्यसौयस्मात्तस्माद्धिततरोहिसः १२४ अस्माद्धिततमंज्ञेयंज्ञानंमेसविशेषणम् ॥ उत्पन्नंनविनश्येद्वासनाशतकोटिभिः ॥ आनंदात्माहमस्मीतिस्वात्मन्यज्ञाननाशनम् १२५ विरागोदुःखसंत्यागेहेतुर्भवतिनैवहि ॥ सुखबोधइदंत्वत्रतस्माद्धिततमंस्मृतम् ॥ मज्ज्ञानादपरंतस्मान्मन्येहिततमंनहि १२६ मज्ज्ञानतोनपापानिस्पृशंतीहकदाचन ॥ स्पृशंयानिप्रसिद्धानिब्रह्महत्यादिकानिच ॥ अनेकदुःखकर्तृणिदेहिनांकल्पकोटिषु १२७ स्तुतिमात्रंनचैतत्त्वंमन्येथाबोधनस्यहि ॥ बोधप्रसादात्पापानिमयकान्यपिनाभवन् १२८ शृणुलोकत्रयीराज्येस्थितोहंरक्षणायहि ॥ स्वस्यतद्वत्रिलोक्याश्चपापान्यकरवंतथा १२९ अभूत्पुरोहितोस्माकंकदाचिद्देववित्तमः ॥ विश्वरूपइतिख्यातस्त्वष्टुःसतनयोमहान् १३० दैत्यानांभगिनिगर्भादुत्पन्नोभुविकुत्रचित ॥ त्रीणिशीर्षाणितस्यासन्गुणत्रयविभाजिच १३१ सात्त्विकेनपिबत्येषसोमंदेवाननुव्रतः ॥ तामसेनतथैवायंसुरांदैत्यानुगोपिबत् ॥ राजसेनतथैवात्तित्वन्नंयद्वद्धिभूगतः १३२

त्साक्षादुपकारकत्वाज्ज्ञानंहिततममितिफलितमाह मज्ज्ञानादिति १२६ त्रिशीर्षाणमित्यादिव्याचष्टे मज्ज्ञानतइत्यादिना १२७ स्तुतिमात्रमिति । एतत्सर्वपापनिवारकत्वाभिधानंस्तुतिमात्रमर्थवादमात्रं बाधितार्थमितियावत् नमन्येथानजानीहिकिंतुतथ्यमेवजानीहि । तत्रहेतुंमयाज्ञानानंतरंपापनिवृत्तिफलस्यानुभूतत्वादित्याह बोधेति । बोधस्यप्रसादादनुग्रहात्प्रभावादितियावत् १२८ शृण्विति । शृणुएतद्विस्तरेणेतिशेषः । अहंत्रिलोकीराज्येस्थितःसन्स्वस्यात्मनोरक्षणायतथात्रिलोकीरक्षणायबहूनिपापान्यकरवंकृतवानस्मीत्यर्थः । तथापिमेरोमापिनच्छिन्नमितिवक्ष्यमाणेनसंबंधः १२९ तत्रत्वाष्ट्रवधंप्रपंचयति अभूदित्यादिना । त्वष्टुर्देवविशेषस्य १३० दैत्यानामिति । पुनःकीदृशः कुत्रचिद्भुविक्वस्मिश्चित्स्थानेदैत्यभगिनीगर्भादुत्पन्नः 'भूःपृथिव्यांस्थानमात्रे' इतिविश्वः । तस्यविश्वरूपस्यगुणत्रयंगुणत्रयस्वभावंविशेषेणपृथक्पृथक्भजंतीतितानितथा १३१ तुर्यपादार्थंस्फुटयति सात्त्विकेनेति सात्त्विकेनशीर्ष्णा एषविश्वरूपःसोमंपिबति कीदृशः देवाननुव्रतोऽनुगतः नित्यसापेक्षत्वादेकदेशान्वयाद्वितीया । भूगतःमनुष्यः १३२

ऋत्विगिति । सविश्वरूपःऋत्विग्याजकोभूत्वाकस्मिंश्चिद्यज्ञेविततेसतिदेवेभ्यःस्पष्टमुच्चस्वरेण असुरेभ्यस्तुशनैर्मंदस्वरेणभागान्प्रयच्छतिंददातितेषांमातृपक्षत्वादिति १३३ नन्वसुरेभ्योपिप्रत्यक्ष मेवकुतोनददातीत्याशंक्यभागानर्हेभ्योदानमेवमेवदृष्टंलोकेपीत्याह प्रत्यक्षएवेति । प्रशस्तः वामित्वादिनान्यायप्योभागोयेषांतेभागिनोराजभूस्वामिप्रभृतयस्तद्भिन्नाःस्वाम्यित्वादवरोपिताल्लुंठना द्युपजीविनोऽभागिनोग्रामादौ आदिपदेनदेशादिग्रहः तथाचग्रामादौयोभागिनांभागःससर्वेषांप्रत्यक्षएवापतेत्आगच्छेत् । अभागिनःप्रतितुयदिभागोयातितर्हिबाधकस्यदंडयितृराजादेःपरोक्षमे वअज्ञातमेवयथाभवतितथायातीत्यन्वयः ३४ तादृशंदानंचस्वामिनोऽनर्थकरमित्याह परोक्षमिति । एवंपरोक्षंप्रच्छन्नंयथाभवतितथाभागेदीयमानेसतिअभागभाक्भागायोग्यःशत्रुः शनैः क्रमेणवलंसामर्थ्यंप्राप्तःसन्पतीन्ग्रामादिस्वामिनोहन्याद्ग्रामादिकंचहरेदित्येतादृशोऽनर्थोभवतीतिभावः १३५ इतिसंचिन्त्येति । इतिश्लोकद्वयेनोक्तमर्थंसंचिंत्यतस्यविश्वरूपस्यकर्तुःदेवानांतद्द्रु हामसुराणांचप्रत्यक्षपरोक्षरूपेणसंबंधिनींदानक्रियांदृष्ट्वाचविश्वरूपेपुरोहितेइमांश्लोकचतुष्टयेनवक्ष्यमाणाधियंमतिमनुप्राप्तोऽभूवमितिशेषः । अत्रदर्शनचिंतनयोरर्थवशात्पौर्वापर्यंबोध्यम् १३६ तांबुद्धिमभिनयति राज्ञामिति । एतादृशःपरहितैषीपुरोहितोराज्ञांराष्ट्रस्यचघातंकुर्यात् तस्मादयंदुरात्मावधमेवसमर्हतीति १३७ दुरात्मतांस्फुटयति अहमिति । निहतोघातमिवनीतःत

ऋत्विग्भूत्वाकदाचित्सकस्मिंश्चिद्वितते सति ॥ यज्ञेभागानहिदेवेभ्यःस्पष्टमेवप्रयच्छति ॥ असुरेभ्यःशनैःस्वस्यमातृपक्षेभ्यएवच १३३ प्रत्यक्षएवसर्वेषांभा गिनांभागआपतेत् ॥ ग्रामादौबाधकस्यात्रपरोक्षंयात्यभागिनः १३४ परोक्षंदीयमानेहिशनैर्बलमुपागतः ॥ ग्रामाद्यपहरेच्चैतान्पतीन्हन्यादभागभाक् १३५ इतिसंचिंत्यदृष्ट्वाहंतस्यदानक्रियामिमाम् ॥ प्रत्यक्षंचपरोक्षंचदेवानांतद्द्रुहामपि ॥ इमांधियमनुप्राप्तोविश्वरूपेपुरोहिते १३६ राज्ञामेतादृशोनूनंघातंकुर्यात्पुरो हितः ॥ राष्ट्रस्यचदुरात्मायंवधमेवसमर्हति १३७ अहंविश्वासमापन्नोनिहतोस्म्यधुनामुना ॥ रिपुभ्योमेददात्येषयज्ञभागान्यतःशनैः १३८ योयस्यान्नंसम श्नातिसतस्यात्माप्रकीर्तितः ॥ आत्मनेद्रुह्यतिह्येषपापोस्मात्कतमःस्मृतः १३९ तस्मादेनंदुराचारंमद्घातायसमुद्यतम् ॥ अपिवेदविदंविप्रंनिहन्मिस्वपुरोहि तम् १४० इतिबुद्धिमिमांप्राप्तोवज्रेणशतपर्वणा ॥ शिरांस्यच्छिनदंतस्यसर्वाणिसुरसंसदि १४१ वर्णाश्रमाचाररतानुत्तमाश्रमिणस्तथा ॥ आत्मास्माकमयं शक्रइतिज्ञानविवर्जितान् १४२ कदाचिदहमापृच्छंमिलितान्कोटिशःक्वचित् ॥ केभवंतइमेसर्वइत्युक्तेमामथावदन् १४३

त्रहेतुः रिपुभ्यइति १३८ इतश्चदुरात्मायमित्याह योयस्येति । सोन्नदातास्यान्नभोक्तुःआत्माशरीरमिवमतः एषविश्वरूपोमह्यंयजमानायद्रुह्यन्नात्मानिद्रुह्यतिअस्मादात्मद्रोहिणोऽपरःकःपापवान्मतः १३९ फलितमाह तस्मादिति । अपिपदस्यवेदविदमित्यादिभिस्त्रिभिर्द्वितीयांतैःसंबंधः १४० इतिबुद्धिमिति । इतिचतुर्भिरुक्तां शतंपर्वाणिधारारूपाणियस्यतत्तथातेनअच्छिनदंछिन्नवान स्मि । तस्यविश्वरूपस्य । सुरसंसदिदेवसभायाम् १४१ अथरुत्वेदांतवाक्यंनास्तिमुखेयेषांतादृशान्यतीन्वनश्वभ्योदत्तवानस्मीत्यर्थंकमरुन्मुखानित्यादिवाक्यमुपबृंहयति वर्णेत्यादिना अन्येपिवेदविद्वांसइत्यतःप्राक्तनेनग्रंथेन । वर्णाश्रमयोराचारेरतांस्तत्परान् एतेनपारमहंस्यालाभःसूचितः । उत्तमोंत्यआश्रमोयेषांतेतथातान् यद्वाउत्तमाश्चतेआश्रमिणइति विशिष्टविशेषण स्योत्तमत्वस्यसविशेषणेहीतिन्यायेनाश्रमेपर्यवसानम् अयंशक्रइंद्रः कूर्चब्राह्मणाद्युक्तरीत्यास्माकंयतीनामात्मैवेत्याकारज्ञानहीनान् १४२ कदाचिदिति । कदाचित्काचिद्देशेकोटिशोमिलितां स्तादृशान्यतीनहमिंद्रोऽपृच्छंपृष्टवानस्मि तदाइमेसर्वेभवंतःकेभवंतीतिमयोक्तेसतिअथतेयतयोमांप्रतिवक्ष्यमाणंवचोऽवदन् १४३

१९

तद्वाक्यमाह वर्णाश्रमेति । ऊचुःवक्ष्यमाणवाक्येनपृष्टवंतः देवंफलाभिमुखंकर्म १४४ कस्त्वमिति । अधिक्षेपोऽनादरोक्तिः । कृपयाकथंचिद्बोधिताभवंत्वित्याकारयाआविष्टोव्याप्तोऽहं इदंवक्ष्यमाणं वचः ५ अहंहीति । अहंहिभवतांयतीनांविश्रुतःश्रुतोप्रसिद्धइत्युक्तंमयेतिशेषः । मूर्खाःकर्ममीमांसयाअपितात्पर्यानभिज्ञत्वात् कर्मानुष्ठानकालेकर्मैवसद्गुणंसत्फलंदास्यतिनतुदेवतासंभावनयाकर्मवैगुण्यंविधेयमित्यभिप्रायेणहिदेवताविग्रहादिकंफलदेवतयोश्चेत्यधिकरणेनिराकृतं । वस्तुतस्तु वार्तिककारादिभिर्विशुद्धज्ञानदेहायेत्यादिमंगलाचरणात् 'इत्याहनास्तिक्यनिराकरिष्णुरात्मास्तितांभाष्यकृदत्रयुक्तया । दृढत्वमेतद्विषयःप्रबोधःप्रयातिवेदांतनिषेवणेन ' इत्याद्यभिधानाच्चदेवताविग्रहादिकंवेदांतप्रामाण्यंचतेषामभिप्रेतमेवेत्यलम् १४६ साधिक्षेपमिति । साधिक्षेपंयथाभवतितथामांप्रतितेसर्वेयतयऊचुर्देवतादिनिराकरणवाक्यंवेदांतविरुद्धमुक्तवंतः । तद्वाक्यमभिनयति त्वंहीत्यादिना । विग्रहवत्त्वात्कथंतवैंद्रत्वमित्यर्थः १४७ ननुकाममैंद्रत्वेऽनुपपत्तिरित्यतआह इंद्रोनामेति । इंद्रेत्याकारकंशब्दंतदर्थंचहित्वान्यःकश्चनेंद्रोनास्ति । तत्राद्येकथंत्वार्थरूपस्येंद्रत्वंद्वितीयेपिकिमिंद्रपदार्थोविग्रहादिमान्देवताविशेषःकिंवात्वयोक्तोऽस्मदादीनांसर्वेषामात्मेत्येवंरूपः तत्र नाद्यइत्याहुः इंद्रोऽतिथिसमइत्यादिना । 'विग्रहोहविषांभोगऐश्वर्यंचप्रसन्नता । फलप्रदानमित्येतत्पंचकंविग्रहादिकम्' इत्युक्तविग्रहादिषुप्रथमेनविग्रहेणयुतायदिदेवतास्यात्तर्हिइंद्रोदेवताऽतिथिवद्यागेसमागतादृश्येतनैवतुदृश्यतेतस्माददनुपलब्धिबाधितंदेवताविशेषणंविग्रहइति ४८ हविषांभोगंनिराचक्षते देवतायैइति । देवतायेत्यक्तंहविःसादेवताऽतिथिवन्नात्तिनभुंक्ते । ननुभोजनाभावेपिसारमादत्तइत्याशंक्यात्राप्यनुपलब्धिविरोधंदृष्टांतेनाहुः नैषेति । एषादेवताभ्रमरीवान्नस्यनिवेदितस्यसारंनादत्ते यतोगणेशायदत्तामोदकाःसारतांनजहुर्नत्यक्तवंतः तथाचव्यभिचारःस्पष्टइतिभावः १४९ ऐश्वर्यंनिराकुर्वन्ति ऐश्वर्यमिति । ऐश्वर्यंहिस्वामित्वंममत्वरूपंवानानायज्ञेषुगमनायनानारूपधारणशक्तत्वंवाउभयथापितस्यारागित्वंप्रसक्तंतथाचनानारूपधारिण्यारागिण्याचवारांगनयासमत्वात्तांदेवतांकःपूजयेत् १९० प्रसन्नतारूपंविशेषणंनिराकुर्वन्ति एषेति । एषादेवताकिंकर्मणिकृतेसतिप्रसादमेतिअकृतेवा कृतेचेत्तर्हिदेवतायाःसकाशान्नोस्माकंमनुष्याणांकोविशेषोभेदःस्यात् वयमपिहिसेवारूपेकर्मणिकृतेसतिप्रसादंप्राप्नुमइतिभावः । अकृतेकर्मण्यप्रसादस्तुनकुत्रापिदृष्टइतिप्रसादनिरासेनैवतत्प्रयुक्तंफलप्रदानंनिरस्तंवेदितव्यम् १९१ एवंविग्रहादिमतीदेवतेंद्रपदार्थइतिपक्षंनिरस्यसर्वात्मेंद्रइतिपक्षंनिराकरोति अपिचेति । सर्वेषांप्राणिनामात्मप्रतिशरीरंभिन्नोन्यायादिनयेमतः कीदृशः कर्ताभोक्ताऽमूर्तोविभुर्दुःखादिपात्रंप्रत्यक्षोहमितिप्रत्यक्षगोचरश्चत्वंतुस्वस्मादस्मदात्मनएकोभिन्नःसन्ननेकरूपधृक्सर्वाभिन्नरूपःकथमिति । एकोन्यार्थेइत्यमरः । यद्वात्वंएकोऽद्वितीयःसन्स्वस्मादात्मीयप्रभावात्कथमनेकरूपधृगिति । तथाचार्थस्यैंद्रत्वासंभवात्शब्दमयीदेवतैवेंद्रइतिस्वंकथमिंद्रइतिभावः १९२

वर्णाश्रमाचाररताःसर्वेहियतयोवयम् ॥ इत्युक्त्वामुनयोप्येतेमामूचुर्दैवमोहिताः १४४ कस्त्वमत्रयतीनस्मान्प्रष्टुंसर्वान्समागतः ॥ इत्यधिक्षेपसदृशंवाक्यंतेषामहंतदा ॥ श्रुत्वापिकृपयाविष्टइदंतानब्रुवंयतीन् १४५ अहंहिभवतामात्मात्विंद्रइत्येवविश्रुतः ॥ इत्युक्तेजहसुःसर्वेमूर्खाःपंडितमानिनः १४६ साधिक्षेपंचमांसर्वेऊचुस्तेदैवमोहिताः ॥ त्वंहिविग्रहवानत्रकथमिंद्रोभविष्यसि १४७ इंद्रोनामेंद्रशब्दार्थौहित्वानान्योस्तिकश्चन ॥ इंद्रोऽतिथिसमोनैवयागेनोदृष्टिमागतः १४८ देवतायैहविस्त्यक्तंनात्तिसातिथिवत्क्वचित् ॥ नैषामधुकरीवात्तिसारमन्नस्यकर्हिचित् ॥ मोदकाहिगणेशस्यजहुर्दत्तानसारताम् १४९ ऐश्वर्यंयदितस्याःस्याद्रागिणीसाभवेत्ततः ॥ वारांगनेवकोनामपूजयेत्तामनिंदितः १५० एषाप्रसादमभ्येतिकिंकर्मण्यकृतेपिहि ॥ कृतेचेद्देवतायाःस्याद्विशेषःकश्चनोधुना १५१ अपिचात्मात्रकर्तास्याद्भोक्तातद्वदमूर्तकः ॥ सर्वेषांप्राणिनामेषांभिन्नोदुःखादिभाजनम् ॥ प्रत्यक्षस्त्वंकथंस्वस्मादेकोनेकस्वरूपधृक् १५२

इत्यादीति । तेकुत्सिताइत्यादिकुतर्कबहुलंसाधिक्षेपंचसंप्रोच्यमयिकोपंचक्रुः १५३ तेषामिति । तेषांयतीनांबहिर्मुखत्वंचवचसोनैष्ठुर्यंक्रूरत्वंविनाकारणंकोपंचदृष्ट्वापुनरवदमुक्तवानिति १५४ देवतेति । हेयतीश्वरादेवताविग्रहादीनामभावेतथात्मनोवस्तुभेदेप्रतिशरीरंस्वरूपभेदेतथामर्मेद्रस्यानात्मत्वेआत्मभिन्नत्वेचयदिवेदवाक्यानिमानंसंतितर्हिभवंतोब्रुवंत्विति १५५ एवमुक्तइति । मयैवमुक्तेस तिएतेमूढाअत्रदेवताविग्रहाभावादावेकामपिऋचंनोचिरेकीदृशीमपिऋचमन्यार्थामन्यशेषभूतामन्यार्थवादरूपामपि यथायज्ञशालाद्वारविधानार्थवादेवाक्यंकोहितद्वेदयद्यमुष्मिंल्लोकेस्याद्वानवेति वाक्यंनस्वर्गनिराकरणपरंकिंत्वतीकरशसंज्ञद्वारविधिपरंतत्समामपिऋक्नतेषांमुखान्निर्गतेत्यर्थः १५६ पृष्टाइति । तेयतयःपुनर्मयाकृपयापृष्टाःसंतःमांनिंदित्वागच्छगच्छेतिमत्यमवदन् तदभिधान मपिनमुखेनकिंतुहस्तसंज्ञयाहस्तचेष्टयाछोटिकामुद्रयेतियावत् १५७ ततइति । त्रिलोक्यारक्षणमधर्माङ्गयाद्यपालनंतदर्थमुद्यतःसुरेश्वरःबाह्यांतरासुरविरोधीईदृशोहंमनसान्यचिंतयम् । चिंतास्वरू पमाह किमिति । एषुएतादृशेषुयतिषुअत्रकर्तव्यसंशयेकिमुचितंकिमुपेक्षादंडोवा नाद्यस्त्रिलोकीरक्षकत्वादिविशेषणविरोधात् अंत्यस्तुअपराधनिर्णयाधीनइतिभावः १५८ तत्रापराधंनिर्णेतुंकिमे

इत्यादिकुत्सितावाक्यंकुतर्कबहुलंतथा ॥ साधिक्षेपंचसंप्रोच्यचक्रुःकोपंचतेमयि १५३ तेषांबहिर्मुखत्वंचनैष्ठुर्यंवचसोपिच ॥ कारणेनविनाकोपंमयितद्वत्सुदा रुणम् ॥ विलोक्यपुनरेवाहंकृपाविष्टोऽब्रवंयतीन् १५४ देवताविग्रहादीनामभावेचात्मनस्तथा ॥ वस्तुभेदेमप्येवमनात्मत्वेयतीश्वराः ॥ वेदवाक्यानिमानं चेत्संतितानिवदंत्विह १५५ एवमुक्तेपुनर्मूढाःकोपाकुलितमानसाः ॥ एकामप्यृचमत्रैतेह्यन्यार्थामपिनोचिरे १५६ पृष्टानिंदित्वामह्यंतेभृकुटीकुटिलाननाः ॥ अवदन्गच्छगच्छेतिसर्वेतेहस्तसंज्ञया १५७ ततस्त्रिलोकीरक्षार्थमुद्यतोहंसुरेश्वरः ॥ व्यचिन्तयंस्वमनसाकिमेषूचितमत्रहि १५८ आत्मावलोकनार्थायशांति दांत्यादिसंयुतः ॥ संन्यसेत्सर्वकर्माणिश्रुतिस्त्वेवमुवाचह १५९ संन्यस्यसर्वकर्माणिवेदांतार्थविचारणा ॥ गुरूपदेशतःकार्यातर्केणध्यानतोपिच १६० एवंम माद्वितीयस्यचिदानंदात्मरूपिणः ॥ साक्षात्कृतिर्भवेद्यस्यदुःखंनैतत्समाप्नुयात् १६१ क्रमप्राप्तश्चसंन्यासःसमत्याःस्यादनंतरम् ॥ युवानःसर्वएवैतेआत्मज्ञान विवर्जिताः १६२ अविनीताःक्रोधशत्रोर्वशंप्राप्ताहिदुर्धियः ॥ शृण्वंतिनाहितंमूढाआपिमह्यंद्विषंतिच १६३

यांसंन्यासोयोग्योनवेतिविचारयन्संन्यासतत्कर्तव्यतत्फलप्रतिपादिकाःश्रुतीरर्थतःपठति आत्मेतित्रिभिः । आत्मावलोकनमात्मसाक्षात्कारः । श्रुतिः ' आत्मानमेवलोकमिच्छंतःप्रव्रजंति ' इत्या द्या शांतोदांतइत्याद्याच १५९ ' आत्मावारेद्रष्टव्यःश्रोतव्यः ' इति श्रुत्यर्थमाह संन्यस्येति । सर्वकर्माणिसंन्यस्यवेदांतार्थविचारणैवकार्या केगुरूपदेशतर्कध्यानैःश्रवणमनननिदिध्यासनपदानां क्रमेणव्याख्येयरित्यर्थः १६० फलबोधिका ' ब्रह्मसंस्थोमृतत्वमेति ' इत्याद्याःश्रुतीरनुसंदधाति एवमिति । एवंसंन्यासवेदांतविचारयोःकृतयोर्यस्यविवेकिनोऽद्वितीयादिलक्षणमद्विपयिकासाक्षा त्कृतिर्भवेत्सएतत्संसारलक्षणंदुःखंनाप्नुयात् । एतेषांतूक्तश्रुतिप्राप्तःसंन्यासोनदृश्यतइतिभावः १६१ ' ब्रह्मचर्यंसमाप्यगृहीभवेत् गृहीभूत्वावनीभवेत् वनीभूत्वाप्रव्रजेत् ' इतिश्रुत्यनुसारित्वमाशंक्य निराकरोति क्रमप्राप्तश्चेति । यःक्रमप्राप्तःआश्रमक्रमविधायकश्रुत्यनुसारीसआयुषोवर्षाणांसमत्याअनंतरंयोग्यइतिसोप्येषुनास्तीत्याह युवानइति । पूर्वोक्तश्रुत्यनुसारित्वाभावेहेतूनाह आत्मेत्या दिना १६२ अविनीताइति । विनयेनजितेंद्रियत्वेननीत्यावाहीनाः । यतःक्रोधशत्रुवशाअतएवदुर्धियः । तत्रहेतुः शृण्वन्तीति । मह्यंद्विषंतोपदेष्ट्रे १६३

हितोपदेशकंप्रतिद्वेषेदृष्टांतः प्रज्ञावतइति । यथासंनिहितमरणकाःसद्वैद्यायद्विषंतितद्वदित्यर्थः । ननुतथापित्वयाक्षंतव्यंतेषांश्रेयस्तूपदेशकांतराद्भविष्यतीत्याशंक्याह मदुक्तमिति । यदी मेमदुक्तंनकुर्वंतितर्हिकेनोपदिष्टंकुर्युरिति १६४ स्वस्योपदेष्टृंरेभ्योविशेषंदयातिशयरूपंसूचयंस्तेषांश्रुत्यतिक्रमरूपापराधादन्यमपराधंचदर्शयति सुदुःसहानिति । दुःखेनसोढुंशक्यान्सोढ्वामर्द यित्वामयायत्प्रमाणंपृष्टंनदप्येतैर्नोक्तमिति १६५ त्वयापीदृशाःकिमर्थंपृष्टाइत्याशंक्याह ममैवमिति । पूर्वमित्यनंतरमासीदितिशेषः । तेनैवएतदुक्तवाक्येनैव एतान्यतीन् १६६ तेषां विरुद्धाचरणांतराण्यपराधरूपाणिदर्शयति एतेचेति । कारणशून्यतइतिसार्वविभक्तिकस्तसिः । तथाचक्रोधकारणशून्येमयिक्रोधःप्रमाणज्ञानाभावःकुतर्काभिधानंचैषामपराधः १६७ पृष्टे नसाधुनासर्वैभ्यउत्तरंदेयमितिन्यायातिक्रमश्चैषामपराधइत्याह वक्तव्यमिति । तात्पर्येणतत्परतयापृच्छतिप्रश्नंकुर्वतिअंत्यजादिचतुष्टयान्यतरस्मिन्नपियुक्तंयोग्यमुत्तरंवक्तव्यमितिनयः । एते तुमयासुरेश्वरेणापिपृष्टामौनिनइति १६८ जन्मवैफल्यसंपादनंचापराधइत्याह इमेनेति । एतेनकर्मयोग्याःसंन्यस्तत्वात् । नात्मज्ञानार्हाःविरागाभावात् । विरागाभावस्तुकोपाज्ज्ञातइति साविरक्तिः १६९ अथकोपस्यविरागाभावहेतुतांस्फुटयितुंदुःखनिवर्त्तकतयाहिततरत्वेनोक्ताद्विरागाद्विपरीतस्वभावतांतस्याह जन्मेति । ततःजन्मनःवीतरागजन्मादर्शनाज्जन्महेतुःकामःकष्ट

प्रज्ञावतेपिभिषजेयथालोकेमुमूर्षवः ॥ मदुक्तंतेनकुर्वंतिकस्यकुर्युरिमेऽधमाः १६४ सुदुःसहानधिक्षेपान्सोढ्वातेषांदुरात्मनाम् ॥ बोधाययन्मयापृष्टंप्रमाणंतच्चनोरि तम् १६५ ममैवमाशयःपूर्वमिमेकिंचिद्विवेदिकम् ॥ वाक्यंहिकथयिष्यंतितेनैवैतान्निबोधये १६६ एतेचमयिसंजातकोपाःकारणशून्यतः ॥ नजानंतिचमा नानिकुतर्कांश्चवदंतिहि १६७ वक्तव्यंसाधुनायुक्तमंत्यजेवाथवैरिणि ॥ पतितेपिदुराचारेतात्पर्येणेहपृच्छति ॥ मयापृष्टाइमेसर्वएवंमौनंसमाश्रिताः १६८ इमे नकर्मयोग्याःस्युःसंन्यस्तत्वाद्विदुर्धियः ॥ विरक्तिर्नैवचापन्नाःकोपेसतिकुतोहिसा १६९ जन्मकष्टंनृणामेतत्कामःकष्टतरस्ततः ॥ क्रोधःकष्टतमस्तस्मात्सएते पुसमाश्रितः १७० विपाकेदुःखंकामस्यनाधुनासर्वदेहिनाम् ॥ विपाकेप्यधुनाक्रोधःसर्वदादुःखदःस्मृतः १७१ जायतेयत्रसक्रोधस्तंदहेदेषसर्वतः ॥ विषयंच क्वचित्क्रोधःसफलोनिर्दहेदयम् १७२ चतुर्विधानांभूतानांक्रोधाद्भवतिहिंसनम् ॥ कर्मणामनसावाचाकस्तंक्रोधंसमाश्रयेत् ॥ नाशयत्येषवैकीर्तिंस्फीतांरोगइव त्वचम् १७३ स्वर्गान्निःसारयत्येषसंजातःसफलोनृणाम् ॥ सफलोदुर्जनोयद्वत्फलदंराजमंदिरात् १७४

तरइति सक्रोधः एतेपुयतिषु १७० क्रोधस्यकामात्कष्टतमतांस्फुटयति विपाकइति । कामस्यकार्यंदुःखंविपाकेपरिणामएवनाधुनाकामवर्त्तमानतादशायां क्रोधस्तुविपाकेवर्त्तमानकालेचस र्वदेहिनांदुःखदइति १७१ कामआश्रयस्यैवदुःखदःक्रोधस्तुविषयस्यापीतिविशेषांतरमाह जायतेइति । यत्राश्रये तमाश्रयंसर्वतःसमंतात्देहेत्तापयेत् विषयमाश्रयभिन्नं सफलःफलेनपरताड नादिनासहितः १७२ कामोराजसःसृष्टिहेतुत्वात् क्रोधस्तुतामसोंतकरत्वादितिस्पष्टमस्यकष्टतमत्वमित्याह चतुरिति । शरीरवाङ्मनोव्यापारैर्यच्चतुर्विधप्राणिहिंसनंतदतःक्रोधाद्भवतितंहिंसा हेतुंक्रोधंकआश्रयेदितिविशेषांतरमाह नाशयतीति । दानादिजन्यांस्फीतांविश्रुतामपिकीर्तिमेकदेशेवर्त्तमानःक्रोधःश्वित्ररोगस्त्वचमिवनाशयतीति १७३ स्वर्गनरकौप्रतिविरोधितांहेतुतां चक्रमेणाह स्वर्गादितिद्वाभ्यां । स्वर्गहेतुस्तपोदानादिरुपचारात्स्वर्गस्तस्मादेषक्रोधोनिःसारयतितेनसंबंधंनाशयतीतियावत् निरुद्धवेगस्तुशक्नोतिहिवोतिगीतावाक्यादतादृशोपीत्यतोविशिनष्टि सफलइति । सफलस्यानर्थकरत्वेदृष्टांतः सफलइति । यथादुर्जनःसफलःराजगृहप्रवेशरूपफलंप्राप्तःसन्फलदंप्रवेशस्यकारयितारंराजमंदिरान्निःसारयतितद्वदिति दार्ष्टांतिकेपिताडनादिनाक्रोधं सफलंकुर्वाणःफलदोबोध्यइति १७४

अश्ववारमिति । अश्वंवृणुतेइतिअश्ववारःअश्वारोहः कर्मण्यण् १७५ फलितमाह सुखार्थिनइति । नियंतव्योनिरोद्धव्यः १७६ दृष्टांतांतरमाह यथेति । विश्वंसर्वमभ्युदयनिःश्रेयसहेतुं विनिर्दहेत्फलजननशक्तिहीनंकुर्यात् १७७ कोपस्यविरागविरुद्धरागात्मककामव्याप्यतयापिविरागाभावानुमितिहेतुतामभिव्यनक्ति यथाशाद्वलेतिद्वाभ्यां । यथावृक्षानिष्ठःशाद्वलतायाःसर सतायाअभावोवह्नेर्हेतोर्ज्ञानाद्दूरस्थपुरुषनिश्चयविषयोभवेत्तथाकोपालोकेसतिविरक्तिलेशोपिननिश्चितःकिंतुविरक्तेरभावएवनिश्चितोभवति १७८ तत्रोपपत्तिमाह इच्छेति । विहन्यमानाइच्छै वहिकोधात्मनापरिणमते । विघातोनामफलप्रतिबंधः सचाजातस्याप्रसिद्धः नहिवंध्यासुतराज्यंकश्चित्प्रतिबध्नातीत्युच्यते प्रसक्तंहिप्रतिषिध्यतेइतिन्यायादिति । तथाचकोपेसतिइच्छास त्वाद्विरागाभावःस्पष्टइतिभावः १७९ कामपदार्थंप्रकृतोपयोगिनमाह नस्त्रीति । व्यतिकरःसंबंधः अपेक्षाइच्छा । इच्छामात्रंसर्वापीच्छा १८० कामक्रोधयोरुभयोर्विरक्त्याविरोधमाह तावुभाविति १८१ ननुकथमचिकित्स्यावित्युक्तंमुमुक्षुभिःकृतायाश्चिकित्सायादर्शनादित्याशंक्यएपुतदुपायासंभवादित्याह अप्युपायइति । अनयोःकामक्रोधयोर्निवर्तकउपायोपिदृष्टःससतांसुधि यांसेवापरिप्रश्नाद्यात्मकसंसर्गरूपः एतेतुमयंद्रेणसतामात्मविद्रांमुखयेनवदनमपिनकुर्वंतीति १८२ विरागाभावेचैषांसंन्यासोऽयोग्यइत्याह अविरक्तेष्विति । अविरक्तेष्वेषुसंन्यासात्किंफलंनकि

अश्ववारंयथादुष्टोवाजीगर्तेनिपातयेत् ॥ एवंक्रोधोपिनरकेनरमाशुनिपातयेत् १७५ सुखार्थिनस्ततःपुंसोनास्तिकोपसमोरिपुः ॥ ततःकोपोनियंतव्यःकामाद प्यतिकष्टदः १७६ यथावह्निर्महान्दीप्तःशुष्कमार्द्रंचनिर्दहेत् ॥ एवंकोपोत्रसंजातोविश्वमेतद्विनिर्दहेत् १७७ यथाशाद्वलताभावोदृक्षेवह्नेर्विलोकनात् ॥ दूरेस्थि तस्यसहसापुंसोनिश्चितमाव्रजेत् ॥ किंचिद्विरक्तिलेशोपिकोपालोकेननिश्चितः १७८ इच्छाविघातंनविनाकोपोदेहिषुजायते ॥ अनुत्पादेनचेच्छायाविघातः क्वापिदृश्यते १७९ नस्त्रीव्यतिकरापेक्षामात्रंकामउदीरितः ॥ किंतुकामोभवेदिच्छामात्रमत्रशरीरिणाम् १८० तावुभौयदिविद्येतेकामक्रोधौदुरासदौ ॥ अचि कित्स्यौकथंह्येपाविरक्तिःसंभवेदिह १८१ अप्युपायोनयोर्दृष्टोयत्संसर्गःसतामिह ॥ सतामग्रेसरणैतेमयानैववदंत्यपि १८२ अविरक्तेषुकिंनामन्यासात्स्यात्फल मेषुहि ॥ प्रत्युतानेनपतनंभवेद्विंतनुमानिनाम् १८३ गुरूनेतेनगच्छंतिमूर्खाःपंडितमानिनः ॥ स्वयंचनविजानंतिममसंन्याससंभवम् १८४ कामक्रोधाद्यरि गणंसम्यक्संछिद्यसर्वदा ॥ सकारणमहंब्रह्मेतीत्थंविज्ञानहेतिना १८५ नितरामासनंस्वस्यपुनरावृत्तिवर्जितम् ॥ यदेतत्सहिसंन्यासस्तद्धिनैतेषुविद्यते १८६

मपिप्रत्युतविपरीतं अनेनसंन्यासेनतनुमानिनांदेहाभिमानिनांपतनंभवेदिति १८३ अविरक्तानांसंन्यासफलाभावंस्फुटयति गुरूनिति । विविदिषासंन्यासस्यफलंगुरुमुखात्तत्त्वनिश्चयः एषांतुतन्ना स्तिविविदिषाभावात् विद्वत्संन्यासफलाशातुविद्याभावेनतत्संन्यासाभावादेवदूरापास्तेत्याह स्वयमिति । ममशब्दोत्रविभक्तिप्रतिरूपकमव्ययं तथाचममसंन्यासस्यात्मीयसंन्यासस्यसंभवमुपपत्तिं किमस्मासुसंन्यासपदार्थउपपन्नोनवेत्याकारेणनजानंतिकिमधिकंज्ञास्यंतीतिभावः १८४ तत्रविद्वत्संन्यासमन्वितंसंन्यासपदार्थमुक्त्वाऽविरक्तेषुतदभावमाह कामेतिद्वाभ्यां । यथाप्रादेशंविपरिलि खतीत्यत्रविद्युपसर्गौमानक्रियाक्षेपतिथात्रसंन्यासपदेसंशब्दश्छिददिक्रियामाक्षिपति तथाचाहंब्रह्मेत्याकारविज्ञानरूपशस्त्रेणसकारणंसमूलंकामादिरिपुगणंसंछिद्यइतिसंपदार्थः । न्यासःनितरा मासआसनंस्थितिः निपदार्थोतिशयमभिनयति पुनरावृत्तिवर्जितमिति । तथाचकर्मफलविलक्षणज्ञानफलब्रह्मभावेनावस्थानमित्यागतं यद्यदिएतदुक्तविधमासनंसंन्यासस्तर्हिएतेष्वविद्वत्स्व विरक्तेषुचसनविद्यतेइति १८५ । १८६

विविदिषासंन्याससंग्रहायप्रकारांतरेणसंन्यासपदार्थमाह अथवेति । अत्रपक्षेसमुपसर्गेणत्यागक्रियाक्षेपः तथाचसमित्यस्यकोर्थः गम्यंक्रियालभ्यंससाधनंफलजातमिहामुत्रचवर्तमानंधियासं त्यज्यततोविरज्यन्यासःनितरामासनं कुत्रगुरुसमीपे किमर्थमात्मविज्ञानस्यसंतत्यै तदुक्तविधमासनमप्येषुनास्तीति १८७ उक्तविधावन्वर्थसंन्यासावेवमोक्षहेतूनिष्कामतालक्षणव्यापार लाभात् यदासर्वेप्रमुच्यंतइतिश्रुत्यनुसारात् आश्रममात्रंत्वतिप्रसंगान्नमुक्तिहेतुरित्याह नहीति ननुयःकामक्रोधौवशीकर्तुंनशक्नुयात्साकिंकुर्यादित्याशंक्याह सर्वात्मनेति । सर्वात्मनाकाम क्रोधविवर्जनस्याशक्यत्वेपिहेत्वंतरादपिमोक्षोभवति किंतद्धेत्वंतरं साधुशास्त्रसमाश्रयः साधुःसज्जनःशास्त्रंचतयोःसम्यगाश्रयणात् १८८ सत्संगशास्त्रयोरपिपरंपरयामोक्षजननेनिष्कामतासं पादनमेवव्यापारइत्याह कालुष्यमितित्रिभिः । यथाशरद्दुर्नीराणांकालुष्यंमालिन्यंहन्यात्तथासत्संगशास्त्रेकामादिचित्तमलंहतःनिवर्तयतः १८९ तत्रदृष्टांतमाह दुर्दांतइति । दुर्गतंदांनंदां तंदमनंयस्यसतथादुष्टइतियावत् तादृशोवाजीअश्वःतज्ज्ञैःशिक्षाविधिज्ञैर्नरैःशिक्षाविशेषैःशिक्ष्यमाणोयथादमंदोषराहित्यंमाप्नुयात् १९० दार्ष्टांतिकमाह दुर्दांतमिति १९१ आशेति । एते ष्वतिषुसापिसाधुशास्त्रसमाश्रयेणमोक्षसंपादनविषयापिआशासंभावनानास्ति तत्रहेतुभूतानिविशेषणानि अनादृतंगुरुवेदांतवचोयैस्तेतथातेषु १९२ कर्मिणामिति । कर्मिणांसम्यतेःपूर्वसं

अथवासंधियागम्यंफलजातंससाधनम् ॥ इहामुत्रचसंत्यज्यनितरामासनंगुरौ ॥ आत्मविज्ञानसंतत्यैतदप्येषुनविद्यते १८७ नहिसंन्यासतोमुक्तिर्नटानांसाकु तोनहि ॥ किंतुसर्वाभिलाषस्यकोपस्यचविवर्जनात् ॥ सर्वात्मनाप्यशक्यत्वेसाधुशास्त्रसमाश्रयात् १८८ कालुष्यंहियथाहन्यान्नीराणांहिशरच्छनैः ॥ कामक्रो धौतथादीप्तौसाधुशास्त्रेहतःशनैः १८९ दुर्दांतोहियथावाजीकालेनदममाव्रजेत् ॥ शिक्ष्यमाणोनरैस्तज्ज्ञैःशिक्षाभेदैरनेकशः १९० दुर्दांतंमनएवंहिकामक्रोधवशं गतम् ॥ गुरुशास्त्रैःशिक्ष्यमाणंदांतंभवतिकालतः १९१ आशानैतेषुसाप्यस्तिनित्यंपंडितमानिषु ॥ अनादृतवचःस्वात्मबोधशून्येषुकर्मिषु १९२ कर्मिणांन हिसंन्यासोविहितःसप्ततिंविना ॥ किंतुस्वात्मावबोधार्थंयदित्यादिवचोभवेत् १९३ आत्मानात्मविवेकार्थंसंन्यासोविहितःश्रुतौ ॥ नैतेकुर्वंतितंमंदाःपतितास्ते नहेतुना १९४ क्रमप्राप्तेतुसंन्यासेसंन्यासाद्ब्रह्मलोकगाः ॥ अन्येषामुभयभ्रंशःस्वात्मबोधविवर्जनात् १९५ यद्यप्येतेसदाचाराश्चतुर्थाश्रमसंश्रयाः ॥ विप्रास्त थापिदुर्दांताःशासकाभावतोधुना १९६ नैतेषांगुरुरस्तीहनियच्छेद्यइमान्बलात् ॥ नैतेहिस्वात्मनात्मानंप्रभविष्यंतिकर्हिचित् १९७

न्यासोनविहितःकिंतुपूर्वमपिस्वात्मावबोधार्थमेवविहितः यतोयदित्यादिश्रुतिवचोज्ञानकारणस्यवैराग्यस्यसंन्यासनिमित्ततावोधकंभवति 'यदहरेवविरजेत्तदहरेवप्रव्रजेत्' इतिश्रुतिः यदीत्या दिपाठेयदिवेतरथाब्रह्मचर्यादेवप्रव्रजेदित्याद्याश्रुतिर्बोध्या । इतरथापरवैराग्यसत्वेइत्यर्थः १९३ आत्मेति । श्रुतौआत्मानमेवलोकमित्याद्यायामुक्तायां तंआत्मानात्मविवेकं वार्तिककृद्भिर प्युक्तं 'प्रत्यक्तत्वविवेकायसंन्यासःसर्वकर्मणाम् । श्रुत्याविधीयतेयस्मात्तत्त्यागीपतितोभवेत्' इति १९४ क्रमप्राप्तेत्विति । ब्रह्मलोककामस्यसप्तत्यूर्ध्वंक्रमसंन्यासेधिकारइत्यर्थः अन्ये षामात्मबोधार्थेनक्रमप्राप्तेनचसंन्यासेनहीनानांसंन्यासिनां उभयमभ्युदयनिःश्रेयसरूपम् १९५ ननुकिमप्येषामुभयभ्रंशउच्यतेअहिंसादिप्रधानयतिधर्मस्यमहाफलत्वेनप्रसिद्धत्वादंततोयोगभ्र ष्टगतिर्नकेनाप्यपहृताइत्याशंक्यतथाप्येषांवेदांतविरुद्धमतेभिनिवेशेनधर्मातिक्रमाद्दंडचतैवेत्याह यद्यपीति । यद्यप्येतेसदाचारादिभिरुत्कृष्टास्तथाप्यधुनामयासंव्यवहारकालेदुर्दांतादुर्दांताऽभव न्मार्गातिक्रमशीलाःसंति शासकस्यशिक्षयितुरभावात् तथाचममैवशासनीयाइतिभावः १९६ शासकांतराभावंस्पष्टयति नैतेषामिति । यएतान्नियच्छेत्नियंतुंमार्गेस्थापयितुंशक्नुयात्तादृशोगुरु र्नास्ति तथैतेस्वात्मनास्वयमेवात्मानंनियंतुंमार्गेस्थापयितुंनप्रभविष्यंतिनसमर्थाभविष्यंति यद्यतोमयासुरेश्वरेणाप्युक्ताःसंतोवेदार्थेधियंनदधुरेकाग्रांनकृतवंतस्ततोज्ञातमेषांनमनोनियमनेसा–

मर्ध्यमिति । एतादृशाश्चराज्ञाशास्याः राजत्वंतुत्रिलोकीनिरूपितंमय्येवतस्मान्मयैवशास्याइतिभावः १९७। १९८ एवंदंडयत्वेनिर्णीतेसतिएभ्यःकिमाकारोदेयोदंडइतिविचारयति नचैषा मिति । वित्तादानरूपोवधोनैषांदंडोवित्ताभावात् नापिमुंडनरूपःसिद्धत्वादित्यर्थः १९९ देशान्निःसारणरूपस्त्वसंभवीत्याह देशादिति स्पष्टः २०० अमीषामिति । यद्येतेसशरीरा स्त्रिलोक्याबहिर्गंतुंशक्ताःस्युस्तर्हिदेशनिःसारणरूपमेषांदंडंकुर्यां एषांतुबहिर्गतिरेवनास्तीतिततस्तस्मात्शरीरदंडादेषामपरोदंडोनास्तीति २०१ इतिसंचिंत्येति । आत्मावलोकनार्थाधेत्यार भ्योक्तप्रकारेणसंचिंत्यशब्देनवेदांतशब्देनशून्यमाननंमुखंयेषांतेतथातान्यतीन्विपिनेहत्वाशालावृकेभ्यःश्वभ्योऽदांदत्तवानस्मियतोलोकेरक्षकः ‘ शालावृकाःकपिक्रोष्टुश्वान ’ इत्यमरः २०२ तै त्तिरीयशाखायांयतीनामद्यमानानांशीर्षाणिपरापतन्तानिखर्जूराअभवन्नित्यादिकारीरीष्टिविध्यर्थवादोक्तकथाशेषमुपन्यस्यति यतीनामिति । शालावृकैरद्यमानानांभक्ष्यमाणानांयानिमस्त कान्यासंस्तानिवनभूमावेवापतन्पतितान्यासन् यतोऽस्थिरूपत्वादनाद्यानिअतुमयोग्यानीति २०३ शालावृकाइति । तेषांमांसानितुउत्तरवेद्यांयागभूमेर्दक्षिणभागेआनीयअंतर्यामितयामत्प्र युक्ताःशालावृकाआदन्भक्षितवंतः कस्मै कर्मिणःप्रतिदर्शनाय २०४ दर्शनेनचकर्मिणःप्रतियद्बोधितंतदभिनयति कर्मेति । विरागेणविनाकर्मनत्याज्यंत्यज्यतेचेत्तर्हिदुष्टचेतसामेषाएतादृ

नियंतुंयन्मयाप्युक्तावेदार्थेनाधियंदधुः ॥ शास्याराज्ञादुरात्मानोराजाहंजगतोपिच १९८ नचैषांवित्तमस्त्यत्रयदाऽऽदानाद्वधोभवेत् ॥ मुंडिताहिस्वयंतस्मादमी षांनवधोपितत् १९९ देशान्निःसारणंप्राप्तंदेशोयंसकलोमम ॥ कथंनिःसारयिष्यामिविनादेहविमोचनम् २०० अमीषांविद्यतेनैवत्रिलोक्याश्चबहिर्गतिः ॥ त्रि लोकीचसमग्रामेवधान्नास्त्यपरस्ततः २०१ इतिसंचिंत्यतान्सर्वान्शब्दशून्याननान्यतीन् ॥ शालावृकेभ्योविपिनेहत्वाऽदांलोकरक्षकः २०२ यतीनामद्यमा नानांशालावृकशतैस्ततः ॥ मस्तकान्यऽपतन्भूमावनाद्यान्यस्थिरूपतः २०३ शालावृकास्तुमांसानितेषांदक्षिणभागतः ॥ आदन्नुत्तरवेद्यास्तेकर्मिणांदर्शना यहि २०४ कर्मनैवपरित्याज्यंविरागेणविनाक्वचित् ॥ त्यागेचैषाभवेन्नूनमवस्थादुष्टचेतसाम् २०५ तेषांशीर्षाणिखर्जूरायतीनामभवंस्ततः ॥ खर्जूराणांहियः सारोरसऊर्ध्वमुपागतः २०६ करीराण्यभवंस्तानिसौम्यान्याहुतिसाधनम् ॥ यतःसंन्यासिनःसौम्याःस्वभावात्क्रोधवर्जिताः २०७ देहत्यागाद्धतक्रोधाऊर्ध्वरेत स्त्वहेतुतः ॥ ऊर्ध्वभागात्शिरोरूपाद्दशमद्वाररूपकाः २०८

शीअवस्थादशाप्रभोःकोपात्स्यादिति २०५ तेषामिति । तेषांयतीनांयानिवनेपतितानिशीर्षाण्यासंस्तानिखर्जूराकारेणपरिणतान्यभवन् ततस्तदनंतरंखर्जूराणांयःसारभूतोरसःसऊर्ध्वमूर्ध्वभागं गतोभूदिति २०६ करीराणीति । सरसोभूमौपतितःसन्प्रसिद्धवंशांकुररूपेणपरिणतः ‘ वंशांकुरेकरीरोऽस्त्री ’ इतिमेदिनी । कीदृशानिकरीराणि सौम्यानिअनुग्राणिशांतानीतियावत् ‘ सौम्यंतुधेमनोज्ञेच ’ इतिविश्वः सौम्यत्वादेवदेवताप्रसादातिशयहेतुत्वादाहुतिसाधनम् कथंकरीराणांसौम्यत्वमित्याशंक्यतदुपपादयति यतइत्यादिना । यतःपरंपरयाकरीराणांकारणभूताय तयःस्वभावात्क्रोधवर्जिताआसन्नितिशेषः २०७ ननुतेषांयतीनांसक्रोधवर्जितत्वमित्याशंक्याह देहेति । देहत्यागाद्देहत्यागरूपदंडाद्धतःक्रोधःपापमयोयेषांतेतथेति तथाचदोषेत्रिलोकीरा जेनदंडाकृतेसतितेस्वभावभूतसौम्यतायामेवस्थिताइतिभावः । करीरेषुतदीयासौम्यताकथमागतेत्यतआह ऊर्ध्वेत्यादि । तेषांरेतसऊर्ध्ववहनलक्षणस्वभावस्यशिरसिस्थितस्यापिस्वभावानपा यात्तत्प्रयुक्तशिरोरूपशरीरोर्ध्वभागात्खर्जूराजाताः कीदृशाःखर्जूराःदशमद्वाररूपाः तन्मयाइतियावत् । तेषुदशमद्वारेषुपक्षिरंध्रतंतुसौम्यंकामाग्निकृतक्षोभराहित्यादत्यंतंशांतंचरेतस्तदेवखर्जूरर सभावक्रमेणकरीरतांगतमितिकीर्तितंतैत्तिरीयशाखायांकारीरीष्टिप्रकरणइतिशेषः २०८

२०

२०९ आहुत्येति । अनयाऽतिसौम्ययाकरीराहुत्याहमिंद्रः सर्वात्मकः प्रीतः सन्वृष्टिंकरोमीत्युत्तरश्लोकादनुषंगः । कीदृशींवृष्टिंसौम्यतमांयतयोहिसौम्यास्तद्धेतः परिणामकरीराणिसौम्यतराणितत्परिणामत्वाद्वृष्टिः सौम्यतमेति २१० करोमीति । ननुतेषांयतीनांकागतिरित्यतउक्तम् तेचेत्यादि । तेयतयोदंडेन शुद्धाः संतः शरीरांतरेज्ञानंलब्ध्वामांप्राप्ताइति २११ व्यासेति । पूर्वंतेषांगुरुदृष्टात्सत्संप्रदायोनलब्धआसीदिंडेनमतिबंधकापगमेतुव्यासनारायणादिसंबंधिनीयाविद्यासंततिर्विद्यावंशस्तंपतितुंप्राप्तंशीलंयेषांताादृशाः संतः अहंब्रह्मेतिविज्ञानेनविध्वस्तमखिलंतामसंतमः प्रयुक्तंयेषांतेतादृशाः । व्यासोब्रह्मसूत्रकृत् । नारायणोबदरिकाश्रमस्थेभ्योनारदादिभ्योविद्यासंप्रदायप्रवर्तकोविष्णोर्लीलाविग्रहः । आदिपदेननारदादयइति २१२ उक्तमर्थंप्रकृतेयोजयति नकेवलमिति । केवलंविश्वरूपएवनहतः किंतुब्राह्मणत्वादिविशिष्टायतयश्चवेदांतहीनत्वापराधाद्धताः । वेदः कर्मकांडः । शापानुग्रहकारिणोयोगबलात् २१३ बन्हीरित्यादिकालखंजानित्यंतंव्याचष्टे अन्येपीति त्रिभिः । अन्येपिकोटिशोदैत्यानिहताः कीदृशाः वेदविद्यादिशालिनः प्रल्हादपुत्रादयः मयेन्द्रेणसमाः मत्तइंद्रात् २१४ तत्कृताइति । तैर्दैत्यैः कृताः प्रयुक्तामहामायास्तथातेषामलौकिकंचित्रंवीर्यंचात्मविज्ञानबलादतिक्रम्यागणयित्वातान्यहंनंहतवानस्मीति । कीदृशीर्मायाः मायिनांमयादीनामपिमोहिनीर्विस्मयजनिकाः २१५ दिवीति । दिविस्वर्गलोकेप्रल्हादनामाअंक

खर्जूरास्तत्रसंजातास्तेषुरेताश्चिरंधृतम् ॥ साररूपंतुसौम्यंतत्करीराणीतिकीर्तितम् २०९ आहुत्यात्वनयाहंहिप्रीतःसर्वात्मकःपुमान् ॥ वृष्टिंसौम्यतमांसर्वजंतूनामुपकारिणीम् २१० करोमितेचयतयोगतदेहामहाधियः ॥ देहांतरेणमामेवप्राप्ताःक्रोधादिवर्जिताः २११ व्यासनारायणादीनांविद्यासंततिपातिनः ॥ अहंब्रह्मेतिविज्ञानविध्वस्ताखिलतामसाः २१२ नकेवलंविश्वरूपोब्राह्मणायतयस्तथा ॥ निहतावेदविद्वांसःशापानुग्रहकारिणः २१३ अन्येपिवेदविद्वांसोबलिनोमायिनस्तथा ॥ निहताःकोटिशोदैत्याःप्रल्हादतनयादयः ॥ बलेनमत्समास्तेहिमत्तोवाप्यधिकाइमे २१४ तत्कृताश्चमहामायामायिनामपिमोहिनीः ॥ अलौकिकंतथावीर्यंतेषामादित्यवर्चसाम् ॥ अतिक्रम्यात्मविज्ञानाद्यहंदैत्ययूथपान् २१५ दिविप्रल्हादनामांकान्पौलोमांश्चविहायसि ॥ कालकाख्यांस्तथाभूमौहतवानहमासुरान् २१६ ब्रह्मघ्नस्ययतिघ्नस्यदैत्यानांघातकस्यच ॥ लोमापिनविनष्टंमेशापेनापिशिरेणवा २१७ अपकीर्तिर्नमेकापिलोकेभूत्क्रूरकर्मणः ॥ प्रत्युतात्राभवत्कीर्तिःकीर्तनीयामहात्मभिः २१८ आत्मविज्ञानसंपन्नःकृतवान्हिसहस्रशः ॥ लोकवेदनिषिद्धानिकर्माण्येवंप्रतर्दन २१९ शापाद्विजोत्तमानांयेप्रतीकारविवर्जिताः ॥ ब्रह्मास्त्रादीनिचास्त्राणितादृशानिसहस्रशः २२०

चिन्हमुपलक्षणंयेषांतेतथाप्रल्हादसंबंधिनइतियावत् एताद्दृशान्आसुरान्असुरान् प्रज्ञादित्वात्स्वार्थेऽण् हतवानस्मि । तथा विहायसिअंतरिक्षलोकेपौलोमान्पुलोमापावैश्वानराख्यदानवसुतायाअपत्यभूतान्हतवानस्मि । कालकयापुलोमाभिगिन्यायाऽत्राख्यानिरूपणंयेषांकालखंजानांतेतथातान् । कालखंज्यानितिपाठः साधुः । भुविलोकेहतवानित्यत्तृणमितिश्रुतिपदस्यार्थः २१६ ब्रह्मघ्नस्येति श्रुतिगततस्येतिपदस्वार्थः पूर्वार्धेनोक्तः । शापेनेत्यतः पूर्वंतेषामितिशेषः । श्रुतिमतामीयतेतिपदस्यार्थोविनष्टमिति २१७ अपेति । अपकीर्तिर्नजाताप्रत्युतविपरीतंकीर्तिःप्रशंसैवजाताइति २१८ कीर्तिमभिनयति आत्मेति । आत्मविज्ञानसंपन्नःसन्निन्द्रोलोकवेदनिषिद्धानिकृतवानित्येवमित्याकाराकीर्तिरभूदितिपूर्वेणसंबंधः २१९ लोमापिनविनष्टमित्युक्तमेवस्फुटयति शापाइतिचतुर्भिः । द्विजोत्तमानांशापादैत्यानांमयस्याप्यमायाः शस्त्राणिचममलोम्नोपिहिंसांनचक्रुः ततश्चमेज्ञानेनब्रह्मभूतस्यव्यथाकुतःस्यादितिचतुर्णामन्वयः । कीदृशाःशापाः प्रतीकारविवर्जिताअमोघाइतियावत् । कीदृशान्यस्त्राणि तादृशानिप्रतीकारविवर्जितानि । कीदृश्योमायाः मयस्यमायाचार्यस्यापिविमोहिकाविस्मयजनिकाः । कीदृशानिशस्त्राणि शूरत्वादिविशिष्टैरपिदैत्यैःप्रेषितानिनिर्मुक्तानि मृत्योरास्येनसमानितथामेरुमंदरादिपर्वतानामपिभेदनसमर्थानीति २२१

२२१ । २२२ । २२३ । नचैतन्ममैवसामर्थ्यंकिंतुएतादृशज्ञानवतोयस्यकस्यापीत्यर्थकंयोमामित्यादिपितृवधेनेत्यंतंवाक्यंव्याचष्टे ' यथेत्यादिपद्भिः । यथाममेंद्रस्यस्वविज्ञानादात्मतत्त्वस्यसम्यग्ज्ञानाल्लोकद्वयेऐहिकामुष्मिकरूपेहिंसाहानिरूपानाभूत्तथान्यस्यापिमज्ज्ञानान्ममस्वरूपस्यज्ञानाद्धिंसानजायतेइति २२४ अथयानिहानिजनकतयाप्रसिद्धानिकर्माणितानितृतीययापंचम्याच निर्दिशति लोकेति । लोकवेदनिषिद्धेनातएवदुष्करेणहानिकरत्वादुःखेनकर्तुंशक्येनकर्मणापिहिंसानजायतइतिपूर्वेणसंबंधः । एवमुत्तरत्रापि । सुवर्णस्यकर्षप्रभृतिपरिणामपरिमितकांचनस्यस्तेयेनचौर्येण २२५ भ्रूणवधेनेतिव्याचष्टे श्रोत्रियस्येति । सूत्रप्रवचनाध्यायीभ्रूणइतिबोधायनसूत्रस्यवेदाध्ययनानंतरंसूत्रभाष्याध्यायीभ्रूणसंज्ञइत्यर्थकस्यानुसारेणभ्रूण पदार्थःपूर्वार्द्धेनोक्तः । श्रोत्रियस्याद्विजेंद्रस्यवधेनेत्यन्वयः । द्विजेंद्रत्वेहेतुगर्भंविशेषणं गुणोदधिसमस्येति । गुणाःप्रवचनांताविद्याः वाशब्दोभिन्नक्रमोगर्भस्येत्यस्याऽऽग्रेबोध्यः । अविज्ञातस्येत्यपिगर्भविशेषणमध्याहार्यं । ' हत्वागर्भमविज्ञातमेतदेवव्रतंचरेत् ' इतिमनूक्त्यनुसारि । तथाचसप्तममासादौपूर्णदेहोपियोगर्भोऽविज्ञातोलक्षणैःपुंस्त्वादिनानिर्णेतुमशक्यस्तस्यवधेनचेत्यर्थः । 'गर्भोभ्रूणः'इत्यमरः । 'भ्रूणोगर्भिण्यांश्रोत्रियद्विजे गर्भेऽर्भकेच' इतिहेमः । अथ ' आततायिनमायांतमपिवेदांतपारगं । जिघांसंतंजिघांसीतननतेनभ्रूणहाभवेत् इतिव्यासेनब्राह्मणेवेदांतपारगेभ्रूणपदप्रयोगमालक्ष्याह राज्याद्यर्हस्यधीमतोवावधेनेति । सर्वस्वंब्राह्मणोर्हतीतिवचनाद्ब्रह्मविदोराज्याद्यर्पणार्हत्वम् स्वकीयस्यसुहृदइत्यर्थः कृत्वाचैवसुहृद्वधमितिमनुनासुहृद्वधस्यब्रह्महत्यासाम्याभिधानात् तस्माल्लोकवेदविरोधादुःशकेनवधेनवेति तथाचसुहृदपिभ्रूणपदस्यगौणोर्थइतिभावः २२६ श्रुत्युक्तपापानामुपलक्षणतामभिप्रेत्याह विप्रस्येति । विप्रस्यसुरापानोत्थितेनपापेन 'यस्यकायगतंब्रह्ममद्येनाप्लाव्यतेसकृत् । तस्यव्यपैतिब्राह्मण्यंशूद्रत्वंचसगच्छति ' इतिमनूक्तेः । त्रिवर्णस्यवातेनपापेन ' सुरावैमलमन्नानांपाप्माचमलमुच्यते । तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपिबेत् ' इतिमनूक्तेः । गुरुतल्पगतामाह निजामिति । निजांजननींप्रतिकामाद्धेतोर्ग्राम्यधर्मरूपसमागमात्पापेनवेतिपूर्ववत्संबंधः २२७ पंचमंतत्संसर्गरूपंमहापापमाह संवत्सरमिति । ब्रह्महत्यादिकारिभिश्चतुर्भिर्ब्रह्महसुरापस्तेनगुरुतल्पगरूपैःकर्मणाचंडालैरतएवपतितैःस्वसंसर्गिणांचपापहेतुभिरेतैःसहसंवत्सरंसंवत्सरपर्यंतंसंसर्गात्एकशय्यासनादिरूपात् २२८ एवमन्यैरिति । एवमन्यैरपिपातकैर्महापापसमतयोक्तैःशरणागतघातादिभिः । उपपातकैर्गोवधादिभिः संकरीकरणैः ' खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । संकरीकरणंज्ञेयंमीनाहिमहिषस्यच ' इत्युक्तेः । आदिनाजातिभ्रंशकरादिग्रहः । यथा ' ब्राह्मणस्यरुजःकृत्याघ्रातिरघ्रेयमद्ययोः । जैह्म्यंपुंसिचमैथुन्यंजातिभ्रंशकरंस्मृतम् । निंदितेभ्योधनादानंवाणिज्यंशूद्रसेवनम् । अपात्रीकरणंज्ञेयमसत्यस्यचभाषणम्' इति ' कृमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यंचमलावहम् ' इति मद्येयंलशुनादि जैह्म्यंकौटिल्यं मद्यानुगतंमद्येनसहैकपिटकादावानीतमिति २२९

मायाश्चदैत्यभेदानांमयस्यापिविमोहिकाः ॥ शस्त्राणिदितिजैःशूरैर्मत्तोधिकबलैरपि २२१ प्रेषितानिभृशंक्रुद्धैर्मृत्युवक्रसमान्यपि ॥ मेरुमंदरभेदीनिनानाभेदान्यनेकशः २२२ हिंसांलेभेनोपिनोचक्रुःकुतःस्यान्मेन्यथाततः २२३ यथाममस्वविज्ञानान्नाभूल्लोकद्वयेपिहि ॥ हिंसातथैवचान्यस्यमज्ज्ञानान्नैवजायते २२४ लोकवेदनिषिद्धेनदुष्करेणापिकर्मणा ॥ पितृमातृवधेनापिसुवर्णस्तेयतोपिवा २२५ श्रोत्रियस्याद्विजेंद्रस्यगुणोदधिसमस्यवा ॥ पूर्णदेहस्यगर्भस्यराज्याद्यर्हस्यधीमतः ॥ स्वकीयस्यचवातस्माद्दुष्करेणवधेनवा २२६ विप्रस्यवात्रिवर्णस्यसुरापानोत्थितेनवा ॥ निजांवाजननींकामाद्ग्राम्यधर्मसमागमात् २२७ संवत्सरंवासंसर्गाद्ब्रह्महत्यादिकारिभिः ॥ चतुर्भिःकर्मचंडालैःपतितैःपापहेतुभिः २२८ एवमन्यैर्महाक्रूरैःपातकैश्चोपपातकैः ॥ संकरीकरणाद्यैश्चलोकद्वयविनिंदितैः २२९

कंडिकाशेषंव्याकरोति अपिवेति । ममेंद्रस्ययआत्मास्वरूपमद्वितीयात्मरूपंतस्यमदात्मतयासएवाहमस्मीत्याकारेणविज्ञानमनुभवस्तेनसंपन्नस्यब्रह्मविदः पापेच्छोरपिपापंचिकीर्षोरपिमुखात् कांतिःश्रुतिगतनीलपदेनोक्तानापैतिनदूरीभवति इतरेषांतुपापाचरणेमुखकान्तिर्दूरीभवतीतिप्रत्यक्षइवब्रह्मविद्योत्कर्षइतिभावः २३० उक्तमुचितंसर्वमान्यतालक्षणंप्रभावांतरमप्याह राजेतिद्वाभ्यां । राजादयोबंध्वादयश्चास्यविदुषःएतांसाम्येस्थितांधियंदृष्ट्वातांविद्वांसंपापेच्छानिरतंतथामहापापकारिणमपिनत्यजंतिनबहिष्कुर्वंतिनभिंदंतिभेदंशारीरंदंडनमापयंतिनैवशिक्षांमकुर्वंते वाचापीतिशेषः । प्रत्युतेत्यादिस्फुटम् २३१ । २३२ 'तस्यहदेवाश्चनाभूत्याईशतेआत्माह्येषांभवति' इतिश्रुतिमनुरुध्योक्तार्थोपपत्तिमाह नहीति । सर्वात्मविदपेक्षयाभेदःकुत्रापिवस्तुनिनास्ति तस्यसर्वात्मत्वात् तथाकस्यापिदेहिनःस्वात्मास्वस्यात्मनोनिग्रहंनकुरुतेइतिप्रसिद्धं तथाचायंविद्वान्राजादीनांसर्वेषामात्मासंपन्नस्तेनात्मत्वेनास्मिन्विदुषिइदंअपकाराकरणंआदरातिशयकरणंचसर्वेषामुचितमिति २३३ अथद्वितीयांकंडिकांव्याख्यातुंभूमिकामाह एवंहिततममित्यादिनाप्राणोभवाम्यहंराजन्नित्यतःपूर्वतनेनग्रंथेन । शक्रस्यमुखादितिशेषः । इंगितानिअभिप्रायसूचकचेष्टारूपाणितैः २३४ इंगितमभिनयति विस्मयेति । विस्मयेनविस्मयकार्येणविकासादिनाआविष्टंव्याप्तंवदनंयस्यसतथासप्रतर्दनःसाधुकृतार्थोस्मीत्याकारकंअसाधुविरोधसंशयाद्यावेदकंवावाक्यंतमिंद्रंप्रतिनोक्तवानिति । एतेनइष्टानिष्टयोर्दर्शनेनजन्याकर्तव्यानवधारणात्मिकाजडतासूचिता । तदुक्तं 'अप्रतिपत्तिर्जडतास्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूर्ष्णींभावादयस्तत्र' इति । प्रकृतेइष्टदर्शनंश्रुतप्रभावतत्त्वज्ञानदानेइंद्रस्यवरेणवशीकृतत्वालोचनं अनिष्टदर्शनंचमामेवेतिवाक्यगतास्मच्छब्दस्यानेकार्थतालोचनजन्यसंशयस्याभिलापेबुद्धिमांद्यप्रादुर्भावात्मकदोषालोचनरूपं । तथाचजडतायाइंगितैःप्रकटनेनसंशयोपींद्रायप्रतर्दनेनप्रकाशितः अयमाशयउत्तरश्लोकेःस्फुटीभविष्यतीति १३५ तंस्तब्धमिति । स्तब्धेनजडेनसदृशं जडतालिंगानांकृत्रिमत्वादितिभावः । इदंवक्ष्यमाणम् १३६ इंद्रविचारमभिनयतिप्रतर्दनइत्यादिना । अयंप्रतर्दनःएवंवक्ष्यमाणप्रकारेणस्वमनसाचिंतयति अथप्रतर्दनचिंतामिंद्रोभिनयति इंद्रेणेत्यादिना २३७ तत्स्तुतिमिति । तस्यात्मविज्ञानस्यस्तुतिंकुर्वताऽनेनेंद्रेणस्वस्यात्मनःइंद्रस्यपापासंबंधोदर्शितः । कस्मै दृष्टांताय तत्रदृष्टांतंवक्तुं यथायेनसदृष्टांततयाभिधानरूपेणप्रकारेणमेप्रतर्दनस्यास्मिस्तत्त्वज्ञानफलेऽलौकिकेलोकाप्रसिद्धेविश्वासोभवेदिति २३८ तथापीति । तथापिज्ञानस्यहिततमत्वादौनिर्णीतेपिअस्येंद्रप्रोक्तज्ञानस्यविषयेमेसंशयोस्तिकिंविषयकमिदंज्ञानमेतादृशफलकमिति । एतदेवस्फुटयति मामिति । बोधनंज्ञानजनकंमांजानीहीत्याकारकंवाक्यंयदिंद्रेणमह्यंप्रतर्दनायप्रोक्तंतत्रवाक्येमामितिशब्देनतज्जन्यबोधेनचकोवार्थोविषयीकृतोभवेत् किंदेवताविग्रहोवातदभिमानीजीवोवातत्साक्षीवेति २३९

अपिवाप्यात्मविज्ञानसंपन्नस्यममात्मनः ॥ पापेच्छोरपिनापैतिमुखकांतिःकदाचन २३० राजबंध्वादयस्तद्वज्ज्ञात्वास्यैतांधियंसदा ॥ पापेच्छांनिरतंतद्वन्महापापौघकारिणम् २३१ नत्यजंतिनभिंदंतिनैवशिक्षांचकुर्वते ॥ प्रत्युताधिकमेवैनमाद्रियंतेतिविस्मिताः २३२ नहिसर्वात्मविज्ञातुरन्यःकश्चनविद्यते ॥ नानिग्रहंकुरुतेस्वस्वस्यात्माकस्यापिदेहिनः ॥ राजादीनामयंस्वात्मातेनास्मिन्नुचितंत्विदम् २३३ एवंहिततमंज्ञानंश्रुत्वाशक्रस्यधीमतः ॥ इंगितैरेवपप्रच्छशक्रंसोपिप्रतर्दनः २३४ विस्मयाविष्टवदनःसम्यगुत्फुल्ललोचनः ॥ नोक्तवान्प्रतिवाक्यंतंसशक्रंसाध्वसाधुवा २३५ तंस्तब्धसदृशंदृष्ट्वासर्वज्ञःसशचीपतिः ॥ इतितज्ज्ञःस्वमनसाव्यचिंतयदिदंप्रभुः २३६ प्रतर्दनःस्वमनसाचिंतयत्येवमत्रहि ॥ इंद्रेणस्वात्मविज्ञानमुक्तंहिततमंस्फुटम् २३७ तत्स्तुतिंकुर्वतास्वस्यपापास्पर्शश्चदर्शितः ॥ दृष्टांताययथामेस्याद्विश्वासोस्मिन्नलौकिके २३८ तथापिविषयेमेऽस्यसंदेहोवर्ततेधुना ॥ मांजानीहीतियत्प्रोक्तंमह्यमिंद्रेणबोधनम् ॥ तत्रास्मच्छब्दबोधाभ्यामर्थःकोविषयीकृतः २३९

एतंसंशयमभिनंयति इंद्रोयमितिद्वाभ्याम् । ममपुरःस्थितइतिशेषः २४० किमयमिति । अयंदेवताविग्रहोवास्मत्पदार्थःकिंवान्यः बाह्यव्यावर्तनायान्यपदार्थविशेषणंदेहांतरात्मेति । देहांतरआत्मास्वरूपंयस्यसतथा । अन्यत्वपक्षेपिकोटिद्वयंदर्शयति सोपीति । सःदेहांतरोऽन्योपि कीदृशः किंवागादिकरणविशिष्टःकिंवाकेवलइति तत्राद्याकोटिरस्मच्छब्दस्यवक्तावेत्यनेनोक्ता । द्वितीयातुततोन्योवेति ततोविशिष्टात् । अन्यस्यसंभावनायैविशेषणंबोधनइति । नंद्यादित्वात्कर्तरिल्युः । प्रकाशकइत्यर्थः । जडोपाधिविशिष्टेनस्वप्रकाशनासंभवात्ततोन्योपिकश्चित्प्रकाशकःसंभाव्यतइतिभावः । एवंचोक्तत्रिकोटिकःसंशयःफलितः २४१ इत्यादिभिश्चिंताभिर्व्याकुलितंव्याकुलतांनीतंमानसंयस्यसतथा आदिपदेनसंशयकोटिष्वाद्ययोःपरिच्छिन्नज्ञानादपरिच्छिन्नफलानुपपत्तिरंत्यायांकोटौज्ञानविषयत्वानुपपत्तिरित्यादिदोषचिंताग्रहः संशयप्रकाशनाप्रकाशनयोर्गुणदोषचिंतायाश्चग्रहः एतादृशोप्ययंप्रतर्दनोमांप्रतिनकिंचिद्वक्ति तत्रहेतुर्धीधनत्वेनेति धीरेवधनंधनवत्परिपाल्याइष्टसाधनंवायस्यसतथातस्यभावस्तत्त्वंतेनतथाचबुद्धिमतांबुद्ध्यपकर्षसूचिकाक्रियानरोचतेइतिभावः २४२ ययाबुद्ध्याप्रतर्दनेनमौनंकृतंतामिंद्रोनुसंदधाति इंद्रइति । मयाउक्तस्त्वमेववृणीष्वेतिप्रयुक्तःसन्निंद्रःस्वयमेवमदर्थंहिततमंवरंवृतवान्प्रतिश्रुत्यप्रकाशितवान्इतियावत् । तेनइंद्रस्यवरप्रदानवशीकृतत्वेनअत्रसंदिग्धेपिविषयेमेममवक्तव्यंप्रष्टव्यंनास्ति । स्वयमेवसत्यसंरक्षणायसंशयमप्यपाकरिष्यतीतिभावः २४३ इतिसंचिंत्येति । इतिसंचिंत्यायंप्रतर्दनोराजात्रनपृच्छति नवाकृतार्थोस्मीतिभाषते । एवमभाषणेहेतुः असंपन्न

इंद्रोयंदेवतारूपःसहस्राक्षःपुरोमम ॥ वज्रपाणिःशचीनाथःसुरार्चितपदांबुजः २४० किमयंवास्यदेहांतरात्मान्यःसोपिकीदृशः ॥ अस्मच्छब्दस्यवक्तावाततोन्योवापिबोधनः ४१ इत्यादिचिंताकुलितमानसोयंप्रतर्दनः ॥ धीधनत्वेनमांनैववक्तिकिंचिन्नराधिपः ४२ इंद्रोमदर्थंवृतवान्वरंहिततमंस्वयम् ॥ मयोक्तस्तेनमेनात्रवक्तव्यंविद्यतेक्वचित् ४३ इतिसंचिंत्यराजायंनपृच्छतिनभाषते ॥ कृतार्थइत्यसंपन्नविज्ञानत्वात्प्रतर्दनः ४४ ततोमयैववक्तव्यमपृष्टेनापिभूभुजे ॥ यावदस्यनसंदेहोबोधेहिततमेभवेत् ४५ आनंदात्मामयानायमवाङ्मनसगोचरः ॥ वक्तुंशक्योनचानेनज्ञातुमप्यत्यलौकिकः ४६ ततोज्ञानक्रियाशक्तीप्राणप्रज्ञेहिलौकिके ॥ आश्रित्याहंस्वमात्मानंकथयिष्याम्यलौकिकम् २४७ प्राणप्रज्ञेविहायैतेनदेहादीहतिष्ठंति ॥ क्रियाशक्तिस्तथाप्राणोनतिष्ठतिधियंविना २४८

विज्ञानत्वादिति । असंपन्नमवधारणरूपतालक्षणसंपत्तिमप्राप्तंज्ञानंयस्यसतथातत्त्वात् तथाचधीधनःसन्नसंपन्नेज्ञानेकथंकृतार्थोस्मीतिब्रूयादितिभावः २४४ एवंप्रतर्दनाभिप्रायमिंद्रोवधार्यस्वकर्तव्यमालोचयति ततइति । ततएतन्मौनाभिप्रायस्यज्ञातत्वात्अपृष्टेनापिमयैवास्मैभूभुजेराज्ञेवक्तव्यं । निरूपणावधिमाह यावदिति । अस्यराज्ञोबोधेअसंदेहःसंदेहाभावोयावद्भवेत्तावद्वक्तव्यमेवेति २४५ वक्तव्यत्वेपिकिंसाक्षादयमात्मावक्तव्यःकिंवाउपाधिद्वारातत्रनाद्योऽसंभवादित्याह आनंदात्मेति । अयमात्माऽलौकिकत्वेनावाङ्मनसगोचरत्वान्मयानसाक्षाद्वक्तुंशक्योनचाऽनेनज्ञातुंशक्यइति २४६ द्वितीयेपक्षेप्राप्तेविप्रकृष्टमुपाध्यंतरमुपेक्ष्यतत्प्रत्यासन्नौप्राणप्रज्ञारूपोपाधीएवालंब्यैनंबोधयामीत्याह ततोज्ञानेति । ज्ञानशक्तिक्रियाशक्तिरूपेलौकिकेलोकप्रसिद्धेचप्राणप्रज्ञेउपाधीआश्रित्यालौकिकंस्वात्मानमस्मैबोधयामीत्यन्वयः २४७ प्राणप्रज्ञयोरेवोपन्यासेहेतुमुपाध्यंतराद्विशेषंदर्शयति प्राणप्रज्ञेइति । एतेप्राणप्रज्ञेद्वेविहायदेहादिकंनतिष्ठतिप्राणप्रज्ञयोःसत्वेचतिष्ठतीतिस्पष्टमन्वयव्यतिरेकाभ्यामितरसत्वासत्वप्रयोजकत्वंप्राणप्रज्ञयोरित्यर्थः । अयंभावः । आत्मबुबोधयिषयासउपाधिरुपन्यासमर्हतियत्रोपन्यस्यमानेबोधसौकर्यंलाघवंचभवेत् । भवतिचान्वयव्यतिरेकाभ्यामितरसत्वासत्वप्रयोजकत्वरूपात्मलक्षणेनप्राणप्रज्ञयोरात्मबुद्धावक्तारितायांतयोःप्रवर्तकेमुख्यात्मनिपरिचयःप्राणप्रज्ञापदयोःसाक्षात्प्रवर्तकतयासन्निहितेलक्षणायांचलाघवं इतरोपाध्युपन्यासेतुतदंतर्गतप्राणादिद्वारात्मपरिचयःपरंपरासंबंधरूपलक्षणागौरवंचस्यादिति । ननुप्राणप्रज्ञयोःपरस्परव्यतिरेकेपिसत्वात्कथमुक्तमात्मलक्षणमनयोरवतार्यतइत्याशंक्यतयोरव्यतिरेकंदर्शयति क्रियेत्यादिना । धियंप्रज्ञाम् २४८

यत्रप्रज्ञाभावस्तत्रप्राणाभावइत्यत्रदृष्टांतमाह स्थावरेष्विति । नदृश्यतेप्रत्यक्षेणनभवति प्ररोहादिनातत्रप्राणानुमानेतुलतानांमुखदेशान्वेषणादिलिंगेनप्रज्ञानुमानमप्यविशिष्टं सुप्तौतुप्रज्ञायाःसूक्ष्मरूपेणावस्थानमेवेतिभावः । यत्रप्राणाभावस्तत्रप्रज्ञाभावइतिसदृष्टांतमाह प्राणमिति २४९ प्राणप्रज्ञयोःस्वप्रवर्तकमुख्यात्मपरिचयेहेतुतांदर्शयति बुद्धिश्चेति । बुद्धिःस्वात्मनःस्वस्वरूपात्परंभिन्नमपेक्षतेजडरूपत्वात् यथास्तंभःस्वभानस्थितिप्रवृत्तीनांसिद्ध्येपरंदीपादिकमपेक्षतेतद्वदित्यनुमानंपादत्रयार्थः । प्रकाशमितिविशेषणंतुप्रकृताभिप्रायं । ततःपरापेक्षत्वात्प्राणेनसदृशीति । तथाचप्राणप्रज्ञयोरुक्ततर्केणात्मनिपरिचयहेतुताप्रसिद्धैवेतिभावः २५० अथलक्षणालाघवंस्फुटयितुंप्राणप्रज्ञाशब्दयोर्मुख्यार्थंप्रकृतेमुख्यार्थबाधंचदर्शयति अंतर्वायुरितिचतुर्भिः । शरीरांतर्गतोवायुःप्रकर्षेणचलतितस्मात्प्राणइत्येतस्यांतर्वायोर्नाम प्रकर्षेणअनितिचलतीत्यर्थसमन्वयात् यस्माच्चधीःप्रकर्षेणजानातितस्मात्प्रज्ञेत्येतस्यानामेति । कीदृशंनाम देहिनामात्मज्ञानहीनानामपिप्रसिद्धमितिशेषः २५१ वस्तुतस्तुमुख्यार्थोऽनयोर्बाधितइत्यभिप्रेत्यप्राणशब्दार्थस्यबाधंतावदाह वस्तुतइति । वस्तुतोजडानांस्वयमेवचलनंनदृश्यतेयथारथादयोजडाअश्वादींश्चेतनान्हित्वास्वयमेवचलंतःसंतःकर्हिचित्कचिन्नदृश्यंते । एवंसतिप्राणशब्दांतर्गतान्धात्वर्थश्चलनमेवजडेंतर्वायौनोपपद्यतेतर्हितत्रचलनेप्रकर्षःप्रशब्दार्थःकेनहेतुनास्यादुपपद्येतअपितुनस्यादेव कस्मान्मू

स्थावरेषुयतोनैषदृश्यतेबुद्धिवर्जनात् ॥ प्राणंविनातथाबुद्धिर्नदृष्टाहिघटादिषु २४९ बुद्धिश्चजडरूपाहिप्रकाशंस्वात्मनःपरम् ॥ अपेक्षतेयथास्तम्भःप्राणेनसदृशीततः २५० अंतर्वायुःप्रचलतिप्रजानातितिथैवधीः ॥ प्राणःप्रज्ञेतिवैतस्मादेतयोर्नामदेहिनाम् २५१ वस्तुतश्चलनंनैवजडानांदृश्यतेक्वचित् ॥ रथादयोथानैवदृश्यंतेस्वयमेवहि २५२ अश्वादींश्चेतनान्हित्वाचलंतःकर्हिचित्क्वचित् ॥ प्रकर्षस्तत्रकेनस्यान्मूलाभावाच्चहेतुतः २५३ ज्ञप्तिश्चनजडेक्वापिदृश्यतेहिघटादिके ॥ प्रकर्षश्चजडेज्ञप्तेर्दूरापास्तःसदैवहि २५४ तस्माद्यत्संनिधावस्यजडस्येदंविजायते ॥ प्रकर्षेणतथावायोःसप्राणश्चेतनोभवेत् २५५ प्रकाशयतियःसर्वंसज्ञप्तिश्चेतनःस्मृतः ॥ आत्मानंचप्रकर्षेणजडजातप्रकाशनात् २५६ स्वसजातिविजात्युत्थभेदाभावेनहेतुना ॥ स्वप्रकाशेनचात्मानमात्माजानातिनापरः २५७

लाभावरूपाद्धेतोःयथामूलधनेसतितस्यवृद्धिरूपःप्रकर्षोपिसंभाव्येत नेतरथातथा चलनसामान्यरूपमूलस्याभावात्प्रकर्षोवृद्धिसमोदुर्वचइतिभावः । मूलाभावत्वहेतुतइतिपाठेप्रकर्षोवृद्धिसमःमूलेनसंबध्येतअंतर्वायौतुमूलाभावत्वंमूलसमस्यचलनस्यसोपपत्तिकस्याभावत्वंवर्ततेऽभावस्याधिकरणात्मकत्वाभ्युपगमात् तस्माद्धेतोरित्यर्थः २५२ । २५३ प्रज्ञापदार्थबाधंबुद्धोदर्शयति ज्ञप्तिश्चेति । प्रज्ञापदार्थांतर्गतज्ञाधात्वर्थोज्ञप्तिःप्रकाशोघटादिकेबुद्धिपर्यंतेजडेबाधितःप्रकर्षस्तुनितरामित्यर्थः २५३ तस्माल्लक्षणयाप्राणशब्दआत्मनिपर्यवस्यतीत्याह तस्मादिति । तस्माद्यस्यचेतनस्यसन्निधौसतिअस्यप्रत्यक्षाद्युपस्थापितस्यजडस्यदेहेंद्रियादिरूपस्यतथावायोश्चइदंचलनंप्रकर्षेणजायतेसचेतनएवप्राणपदार्थइत्यन्वयः । प्रकर्षेणानयतिचेष्टयतेइतिव्युत्पत्तेः प्रकर्षश्चचालनस्यानायाससाध्यत्वं । यद्वाप्रकृष्टचलनशालिषुशक्तःप्राणशब्दःप्रयोजकेगौणइति २५५ प्रज्ञापदस्यापितथात्वमाह प्रकाशयतीति । यःसर्वंप्रकाशयतिसचेतनःज्ञप्तिःप्रज्ञापदघटकज्ञाधात्वर्थोभवेत् आत्मानंयतःप्रकाशयतितस्मात्प्रकर्षेणज्ञप्तिःप्रज्ञापदार्थोभवेत् चकारएवकारार्थः सर्वंप्रकाशयतीत्यत्रहेतुः जडजातप्रकाशनादिति । जडजातस्यजडसामान्यस्य गौणप्रकाशोबुद्धिस्तुस्वात्मकजडमपिनप्रकाशयतीतिप्रसिद्धम् २५६ आत्मानंचेत्येतदुपपादयति स्वसजातीति । आत्मनःसजातीयादिभेदराहित्येनपरस्यप्रकाश्यस्यदुर्वचत्वात्स्वप्रकाशेनयदात्माप्रकाशयतितदात्मानमेवप्रकाशयति एतादृशश्चान्योनास्तीत्यर्थः २५७

फलितमाह प्राणेति । अभिधेयःप्रतिपाद्यः ततउक्तानुपपत्तेः । इतिसंचिंत्यमनसिनिधायद्वितीयकंडिकाव्याख्यामारभते शक्रइत्यादिना । शक्रइंद्रः राजानंप्रतर्दनम् २५८ प्राणोभवामीति । परंप्रकृष्टंक्रियायाःयतःकारणमस्मिततःप्राणोस्मि प्रज्ञावपुःप्रज्ञारूपोप्यस्मि यतःस्वप्रकाशोभेदवर्जितश्चेति २५९ तंमामिति । तंमां तत्पदार्थमभिनयति ज्ञानक्रियाहेतुंज्ञानानांक्रियाणांचसन्निधिमात्रेणसाधकंभेदशून्यंस्वयंप्रभंचेति आयुरितिविशेषणस्योक्तात्मपरत्वाद्योर्थस्तमाह आयुष्करमिति । जीवनप्रयोजकममृतपदार्थमाह । स्वयंमृत्युशून्यमिति । मामितिपदार्थमाह त्वदुपदेशकं त्वदुपदेशकेनानेनदेवतारूपेणोपलक्षितम् २६० एतादृशंमामितिअनेनप्रकारेणउपास्वउपासनावद्विजातीयप्रत्ययतिरस्कारेणसजातीयप्रत्ययधारागोचरंकुर्वितिव्याकुर्वन्नाह प्रत्ययानिति । मयोक्तंप्रज्ञाप्राणाऽऽयुरमृतपदैःप्रतिपादितंमद्रूपंमुहुर्विचार्यअपरान्विजातीयगोचरान्प्रत्ययान्बोधान्हित्वामदेकविषयैर्मानसेवर्त्तमानैर्बोधैर्विद्धिअपरोक्षंकुरु कथं घटवत् यथाघटोधारावाहिकज्ञानविषयःक्रियतेतद्वदिति तत्परोभवेतियावत् । एवंश्लोकत्रयेणोपास्स्वेत्यन्तवाक्यस्यप्रागादिपदलक्षणयालभ्यइन्द्रविवक्षितोर्थउक्तः । शक्तिलभ्यस्तुप्राणप्रज्ञात्माऽऽयुरमृतमस्मीत्याकारेणोपास्स्वेत्याकारएव उपाध्युपन्यासस्यापिलक्ष्यप्राप्तिसाधनतायाउक्तेरित्यवधेयम् २६१ पूर्ववाक्यंदृष्ट्वाइत्थंसंदिह्यते किंप्राणप्रज्ञायुरमृतानिसमप्रधानान्यहंपदार्थेनान्वितानिभवंतिकिंवाप्राण

प्राणप्रज्ञाभिधेयोहमानंदात्मानचापरः ॥ ततएवेतिसंचिंत्यशक्रोराजानमुक्तवान् २५८ प्राणोभवाम्यहंराजन्क्रियायाःकारणंपरम् ॥ प्रज्ञावपुःस्वप्रकाशःसर्वभेदविवर्जितः २५९ तंमांज्ञानक्रियाहेतुंभेदशून्यंस्वयंप्रभुम् ॥ आयुष्करंस्वयंमृत्युशून्यंत्वदुपदेशकम् २६० प्रत्ययानपरान्हित्वाविचार्योक्तंमयामुहुः ॥ मदेकविषयैर्बोधैर्घटवद्विद्धिमानसे २६१ आयुस्तथामृतंयत्तेद्वयमुक्तंविशेषणम् ॥ नतत्प्राणाद्विभिन्नंत्वंजानीथादंडवन्नरात् २६२ यथाकाशोनभःप्रोक्तंनभोप्याकाशमेवहि ॥ तथायुरमृतंप्राणःप्राणआयुरनश्वरम् २६३ नचात्रव्यर्थताशंक्यापुनरुक्तत्वहेतुतः ॥ यतोजीवतिलोकेस्मिन्प्राणेनप्राणभृज्जनः २६४ तथाशरीरसंपातेस्वर्गमोक्षामृतंव्रजेत् ॥ ततोऽमृतायुःशब्दाभ्यांप्राणआत्मामयेरितः २६५

पदार्थेविशेषणीभूयइतराणितत्रान्वयंतीति प्राणपदार्थेविशेषणीभावेपिकीदृशीविशेषणताकिंभेदघटितामनोब्रह्मेत्युपासीतेत्यत्रमनसितद्भिन्नस्यब्रह्मणइवाकिंवाभेदेनब्रह्मणिसत्यत्वादेरिवेत्येतत्संशयवारकंप्राणोवाआयुरित्यादिस्वर्गेलोकेइत्यंतंवाक्यंव्याचष्टे आयुरित्याद्यष्टभिः । आयुरमृतमित्याकारकंयद्विशेषणद्वयमुक्तंतद्विशेषणद्वयंपुरुषाद्दंडोयथाभिन्नस्तथाऽऽयुःप्राणाद्भिन्नंनभवतिकिंत्वभिन्नमेवेति तथाचप्राणआयुरमृतापेक्षयाप्रधानंअभेदेनचविशेषणतेतिसिद्धम् २६२ अभेदंपर्यायशब्दार्थदृष्टांतेनस्फुटयति यथेति । यथाकाशनभःपदार्थयोरभेदस्तथायुरमृतपदार्थयोःप्राणशब्दार्थेनाभेदइति अनश्वरममृतम् २६३ पर्यायद्वयवदन्यतमवैयर्थ्यमाशंक्यसत्यज्ञानादिशब्दवत्प्रवृत्तिनिमित्तभेदान्मैवमित्याह नचात्रेति । अत्रआयुरमृतपदयोःप्राणपदेनसहप्रयोगेपुनरुक्तत्वरूपाद्धेतोर्व्यर्थतानशंक्या ताभ्यामर्थविशेषावगतेरितिशेषः । कथमितिचेच्छृणु यतःप्राणभृज्जनःप्राणेनैवशरीरेस्थितेनजीवतीत्युच्यतेजीवनप्रयोजकश्चभावआयुःपदार्थोलोकेपितथाशरीरपातानंतरंस्वर्गरूपंमोक्षरूपंवामुष्मिकफलममृतंप्राणेनैवजनोव्रजेत् 'विद्ययामृतमश्नुते अपामसोममृताअभूम' इत्युक्तंकर्मविद्ययोःफलंदेवभावोह्यमृतंसचप्राणान्नातिरिच्यतेइति । ततएतादृशविशेषवोधकत्वादमृतायुःशब्दाभ्यांप्राणउक्तइति २६४ । २६५

६७

२१

प्रज्ञारूपविशेषणेतुप्राणेनसमप्रधानभावरूपंविशेषमाह प्रज्ञेति । प्रज्ञारूपंविशेषणंतुप्राणभेदविवर्जितेमय्येवसाक्षादन्वितमितिशेषः । प्राणभेदोविवर्जितोयेनसतथातस्मिन् यथाप्राणःक्रियाशक्तिरुपाधिरभेदेनमयांगीकृतस्तथाप्रज्ञापीत्यर्थः । प्रज्ञायाविज्ञानशक्तित्वयास्वरूपलाभप्रयोजकता तत्रहेतुतयाह यतइति । यतोहंप्रज्ञयापिप्राप्योभवामि कथमितिचेच्छृणु अहंप्रज्ञयैवएतादृशं सद्वपुःसत्यंव्यावहारिकंअसद्वपुःसंकल्पमात्रशरीरंप्रातिभासिकंवावेद्मि तथाचसापिकरणतयामामुपलक्षयतीतिभावः २६६ प्राणोपाधेरायूरूपेणामृतरूपेणचोपासनस्यफलमाह उपास्तेपीति । योमांप्राणमायुरितिरूपेणोपास्तेसशतसंवत्सरंजीवति तथामृतमितिरूपेणयःप्राणमुपास्तेसोऽविच्युतमक्षयंश्रुतावक्षितिशब्देनोक्तंस्वर्गलोकंगच्छेदिति । उभयेनविशेषणद्वयेनविशिष्टात्प्राणोपासनादद्वउक्तंशतसंवत्सरजीवनस्वर्गलोकरूपंफलद्वयंभवेदिति २६७ । २६८ यदाप्राणविशिष्टस्यममोक्तोपासनादीदृशफलंतदायदर्थंमुपाधिरुपन्यस्तस्तद्विज्ञानफलंकिमुवाच्यमित्याह किंपुनरिति । अत्रशुद्धविज्ञाने २६९ अथतद्धैकइत्याद्यनुप्राणंतीत्यंतंवाक्यंव्याकरोति एवमित्याद्यष्टादशभिः । एवंप्राणोस्मीत्येकवचनप्रयोगादिभिःनिजेरूपेमुख्यप्राणात्मकतयावर्णितेसतितस्मिन्प्राणस्यैवनिजरूपतयाकथनेकारणंप्रयोजकंप्रतर्दनःपप्रच्छ । यतइंगितानिअभिप्रायसूचिकाःक्रियाःप्रयोक्तुंजानातीति २७० प्रतर्दनप्रश्नमभिनयति भगवन्नित्यादिना । एकस्यप्राणस्यप्रा

प्रज्ञाविशेषणंचैवप्राणभेदविवर्जिते ॥ यतोहंप्रज्ञयाप्राप्योवेद्म्येतत्सदसद्वपुः २६६ उपास्तेपिचमांयोहिप्राणमायुःसजीवति ॥ शतसंवत्सरंराजन्नमृतंचतथैवहि २६७ यउपास्तेसगच्छेद्धिस्वर्गलोकमविच्युतम् ॥ उभयोपासनात्तद्वत्फलद्वयमदोभवेत् २६८ किंपुनर्निर्विशेषंयत्सर्वाध्यासविवर्जितम् ॥ विजानातिप्रयात्यत्रसआयुरमृतंपुमान् २६९ एवंशक्रेणकथितेप्राणरूपेनिजेसति ॥ पप्रच्छकारणंतस्मिन्निंगितज्ञःप्रतर्दनः २७० भगवन्संशयःकश्चिन्ममचेतसिवर्तते ॥ मुनीनांवचनंस्मृत्वावाक्यंश्रुत्वातवापिहि २७१ केचिद्धिमुनयःशक्रसभायामागताःमम ॥ कदाचिद्बुचिरेवाक्यंप्रसंगाद्वेदवित्तमाः २७२ प्राणशब्दोहिसर्वेषामिंद्रियाणांस्मृतःसमः ॥ सप्राणानांनचैतेषांनियतास्तिप्रधानता २७३ एकतांप्रतिपद्यंतेभिन्नानामादिकार्यतः ॥ ग्रामेमहाजनायद्वत्कार्यार्थेत्वेकतामियुः २७४ वदंत्यांनामवाच्येतेचक्षुराद्यानकुर्वते ॥ व्यापारंहितथानेत्रेपश्यत्यन्येनिजंचन १७५ एवंप्राणेषुसर्वेषुवरस्यैवास्तिनैवहि ॥ गुणप्रधानभावोयंनियतोतःसमाइमे २७६ सर्वेसमाअनंताश्चश्रुत्यापिकथितायतः ॥ तर्कतोपिनचैतेषांवैषम्यंविद्यतेकचित् २७७

धान्यपरंभवद्वाक्यंश्रुत्वाप्राणानामनियतप्राधान्यपरंमुनिवाक्यंस्मृत्वाचविप्रतिपत्तेःसंशयोभवत्तिकुत्रात्मबुद्धिःकर्तव्येति २७१ मुनिवाक्यमवतारयति केचिदिति २७२ तद्वाक्यमभिनयति प्राणेत्यादिचतुर्भिः । सप्राणानांप्राणैरंतर्वायुभिःसहितानांसर्वेषामिंद्रियाणांसमःसाधारणोयंप्राणशब्दः नत्वन्यतमस्यैववाचकइत्यर्थः प्रकर्षेणप्रधानीभावेनानितिस्वव्यापारंकुरुतेइतियोगार्थस्यसर्वत्राविशेषणादितिभावः । अविशेषमेवदर्शयति नचैतेषामिति २७३ एकस्यैवप्रधानतेतिनियमाभावेउपपत्तिमाह एकतामिति । वाचोनामकार्यंचक्षुषोदर्शनंकार्यमित्येवंनामादिकार्यरूपेणभिन्नाअपिवागाद्याःस्वस्वकार्येएकतामेकभावंश्रुतावेकभूयपदेनोक्तांप्राप्नुवंति । दृष्टांतयतिग्रामइति । कार्यार्थेएकस्यविवाहादिकार्यार्थेइयुःप्राप्नुयुः २७४ अत्रैकतान्यव्यापारेस्वव्यापाराकरणरूपैवेतिदर्शयति वदंत्यामिति । वाचिनामवदंत्यांसत्यांचक्षुराद्याएतेप्राणाःस्वव्यापारंनकुर्वंते तथानेत्रेपश्यतिसतिअन्येनिजंव्यापारंनकुर्वंतइति २७५ एवमिति । वरस्ययथास्वविवाहेप्राधान्यंपरविवाहेतुतस्यैववरस्यगुणत्वंतद्वदेषांगुणप्रधानभावोनियतोनभवति । फलितमाह अतइति २७६ ' साम्येएतेसर्वएवसमाःसर्वेऽनंताः ' इतिबृहदारण्यकश्रुतिंसंवादयति सर्वइति । नकेवलंश्रुत्यैवसाम्यमुक्तंकिंतुतर्कसहकृतानुभवादपितथेत्याह तर्कतइति २७७

तर्कंसहकृतानुभवंस्फुटयति वाचेति १ क्रमेणप्राधान्यंसर्वेषामनुभूयतेइतिभावः १ यदिवैषम्यंस्यात्तर्हिवाग्व्यापारेगुणभूतस्यचक्षुषःस्वभावत्यागायोगात्कदाचिदपिप्राधान्यंनस्यादितितर्कः २७८ एवमिति । एवंवाक्चक्षुषोरिव एकस्मिन्वागादौउपरतेसमानव्यापारेसतिपरस्तद्भिन्नश्चक्षुरादिः २७९ ननुसर्वकरणव्यापारायुगपदनुभूयंतइतिशंकते वदन्नितिसार्धचतुर्भिः । वदन्सन्नहं नेत्रादिव्यापारंकरोमीतिचतुर्णांसंबंधः २८० । २८१ विसृजेइति । विसृजेविसर्गंकरोमि प्राणिमिथ्यसादिक्रियांकरोमि मनसेत्युत्तरान्वयि २८२ मनसासंकल्पयामि नामजात्यादिविशिष्टतयाजानामि । चित्तेनतुसामान्यरूपेणवेद्मि । धियासुखदुःखेदेहकेवर्तमानेविशेषरूपेणसमान्यरूपेणचवेद्मीति २८३ एकेति । अनुभूयंतेइतिशेषः । तथाचकथंतेषांक्रमिकप्राधान्यरूपहेतुनासाम्यमुच्यतेइतिभावः । उत्तरयति एककालाभिमानोयमिति । शीघ्रत्वप्रयुक्तकालप्रतीतिमतोजायमानत्वादेककालतानिश्चयोभ्रमइत्यर्थः २८४ कालप्रतीतिंदृष्टांतेनस्पष्टयति यथेतिद्वाभ्यां । यथानंतानांपद्मपत्राणामूर्ध्वाधोभावेनावस्थितानांसूक्ष्मसूच्यभिवेधनेक्रियमाणेप्रतिदलंभिन्नोपिकालोनलक्ष्यतेतथैवप्राणानांव्यापृतावपिकालोनलक्ष्यते । तस्मात्करणव्यापाराणामेककालतानास्तीति २८५

वाचावदन्यतःकश्चिच्चक्षुषानैवपश्यति ॥ तथानेत्रेणसंपश्यन्नैववक्तिकथंचन २७८ एवंप्राणेषुसर्वेषुयुगपन्नास्तिहिक्रिया ॥ किंत्वेकस्मिन्नुपरतेव्यापारंकुरुतेपरः २७९ वदन्नेत्रेणपश्यामिश्रोत्रेणचशृणोम्यहम् ॥ जिघ्रामिघ्राणतस्तद्वत्स्पर्शनेनस्पृशामिच २८० रसनाद्रसयाम्येवपाणिभ्यामाददेतथा ॥ पद्भ्यांगच्छामिशिश्नेनतद्वदानंदयाम्यहम् २८१ विसृजेपायुनातद्वत्प्राणेनप्राणिमीहच ॥ अहंकारेणचैवाहंकरोमिमनसातथा २८२ संकल्पयामिचित्तेनसामान्येनैववेद्म्यहम् ॥ सुखदुःखेधियातद्वद्विशेषेणापिदेहके २८३ एककालमिमेसर्वेव्यापाराःकरणेषुहि ॥ एककालाभिमानोयंतेषुकालाप्रतीतितः २८४ यथापद्मपलाशानामाधाराधेयभावतः ॥ स्थितानामप्यनंतानांसूक्ष्मसूच्याभिवेधने २८५ दलेदलेप्रभिन्नोयंकालोनैवप्रतीयते ॥ तथैवव्यापृतौकालःप्राणानांनैककालता २८६ एवंप्राणेषुसर्वेषुसमेष्वसमताकुतः ॥ एकस्मिन्नेवयत्तस्मिन्नात्मबुद्धिस्त्वयेरिता २८७ आत्मबुद्धावथैकस्मिन्वकुकामःसकारणम् ॥ अंगीचकारतद्वाक्यमेवमेवेतिदेवराट् २८८ अस्त्येवकारणंराजन्निहामुत्रचजीवनम् ॥ निःश्रेयसाख्यंप्राणेस्मिन्वागादिष्वस्तिनैववत् ॥ एतदेवहिवैषम्यंवागादेर्नापरंक्वचित् २८९ गुणप्रधानभावोयंनियतोनैवविद्यते ॥ यदुक्तंतदपिप्राणव्यापारादपरेषुहि २९० व्यापारोपरमेनैवप्राणस्यास्तिक्रियाक्वचित ॥ काचित्कदाचिद्वाप्यत्रकथंचिच्चप्रतर्दन २९१

२८६ प्रतर्दनःपूर्वपक्षंनिगमयति एवमिति । एवमुक्तरीत्याप्राणेषुसर्वेषुसमेषुसत्सुअसमतावैषम्यंप्राधान्यरूपंकुतःकारणात् यद्यस्मादेकस्मिन्नेवात्मबुद्धिविधानमिति २८७ एवमुक्तेतदित्यादि द्वितीयार्धंद्विकादर्शयन्नाह आत्मेतिचतुर्भिः । एकस्मिन्प्राणेआत्मबुद्धावुक्तायांकारणंपर्यनुयोक्तुकामंदेवराडिंद्रस्तस्यप्रतर्दनस्यवाक्यमेवमेवेतिवाक्येनांगीचकारअंगीकारपूर्वकमुत्तरंददाविव्यर्थः २८८ तत्कारणंदर्शयति अस्त्येवेति । इहामुत्रचजीवनंसंकल्पस्थितिहेतुत्वंप्राणेदेवानःश्रेयसमित्युच्यते । एतन्निःश्रेयसंप्राणेनिःश्रेयसात्मनीमुमोपाधावस्त्येवनत्वासीद्वागादिष्वित्याह एतदेवात्रआत्मबुद्धौकारणंपर्यनुयोक्तमिति एतन्निःश्रेयसाभावरूपमेववागादेवैषम्यमिति २८९ तर्हिअपिचावयविरोधइतिचेन्न गुणप्रधानभावेतिरिक्तेपुरस्तवकाशत्वादित्याह गुणेति । गुणप्रधानभावोनियतोनास्तीत्यत्रोक्तंतच्चप्राणव्यापारादपरेषुव्यापारेषुबोध्यम् २९० तत्रहेतुतयाप्राणसंवादायुक्तमर्थमाह व्यापारोपरमेहीति । प्राणस्यव्यापारोपरमेसति क्वापिक्रियानदृश्यतेइतिनिश्चितम् । व्याख्येयमश्रुतोपाप्राणानांमतिबहुवचनेनप्राणनापाननादिवृत्तिभेदाभिप्रायेणोति २९१

जीवतीत्यादितृतीयकंडिकायाएवंपश्यामइत्यंतंवाक्यंवागादिकंविनापिजीवनंदृश्यतेयथामूकादिष्वित्यर्थकंव्याकरोति वाक्पाणीतिचतुर्भिः । वागादीनामेकैकस्यव्यापाराभ्दिनापिजीवनंदृश्यते वाअथवातेषांसमुदितानांव्यापाराभ्दिनापिजीवनंदृश्यतेइत्यन्वयः २९२ तत्रोदाहरणम् मूकाइति । पूर्वश्लोकोक्तेंद्रियाणांक्रमेणव्यापारहीनामूकादयोघ्राणदोषिपर्यंताबोध्याः । रुद्धोवायुरपानोयेषां तेतथा । जडोन्मत्तादयस्त्वंतःकरणहीनाःप्रसिद्धाः २९३ । २९४ जीवंतीति । प्राणव्यापारंविनाकेपिजंतवःकदाचिदपिनजीवंतीत्युच्यंते तेनेतरेभ्योविशेषेणप्राणमेवोपाधितयास्वीकृत्यप्राणोहमस्मीतितुभ्यंमयोपदिष्टमिति २९५ अतएवश्रुत्यंतरेप्राणस्योक्थत्वेनोपासनंविहितमित्यर्थकमथखल्वित्यादिसर्वाप्तिरित्यंतंवाक्यंव्याकरोति मृतप्रायमिति । इंद्रियैश्छिद्रैस्तद्गोलकैश्चसहितमपिमृतप्रायंदेहंमूर्छितादिशरीरंउत्थापयतितेनउत्थापनेनैवनिमित्तेनउक्थनामायंप्राणउपास्यउक्तइति । उक्थमितिरूपंउत्पूर्वकात्स्थाधातोरंतर्भावितण्यर्थात्कप्रत्ययेछांदसम् २९६ अतएवप्राणस्यसर्वात्मभावेनानंदतारूपासर्वाप्तिरित्याह उक्थमिति । उक्थमितिप्राणस्यनामपूर्वंमुत्थानतोभवति ण्यर्थानंतर्भावेउत्तिष्ठतिकारणत्वात्सर्वेभ्यःपूर्वंप्रकाशतेइतिव्युत्पत्तेः । यच्चपूर्वोत्थितंतल्लोकेपिश्रेष्ठंप्रसिद्धं यथाहिरण्यगर्भादि साचश्रेष्ठताप्राणेप्राणोपलक्षितेऽद्वितीयात्मनिपर्यवस्यति हिततमत्वात् अतएवप्राणोस्मीतिमयातुभ्यमुपादिष्टमित्याह सोहमिति । सोहंप्राणःहि

वाक्पाणिपादपायूनामुपस्थस्यतथैवच ॥ त्वक्चक्षुःश्रोत्ररसनाघ्राणानामपिवाविना ॥ व्यापाराभ्मिलितानांवाप्यन्यथावास्तिजीवनम् २९२ मूकाश्चकुणयस्तद्वत्पंगवोरुद्धवायुकाः ॥ ब्रह्मचर्यरतास्तद्वत्कुष्ठिनोनेत्रवर्जिताः २९३ बधिरारसनाघ्राणदोषिणोपीहजंतवः ॥ अंतःकरणशून्याश्चजडोन्मत्तादयोपिहि २९४ जीवंतिनविनाप्राणव्यापारंकेपिकर्हिचित ॥ प्राणस्तेनाहमस्मीतिप्रतर्दनमयेरितम् २९५ मृतप्रायमिमंदेहंसेंद्रियच्छिद्रदैवतम् ॥ आसनाच्छयनात्स्थानादुत्थापयतिवैयतः ॥ प्राणस्तेनोक्थनामायंज्ञातव्योवेदवादिभिः २९६ उक्थमुत्थानतःपूर्वंश्रेष्ठंपूर्वोत्थितंभवेत ॥ श्रेष्ठोहिततमःप्राणःसोहंहिततमात्मधीः २९७ प्रज्ञात्मत्वंनचाप्यस्यकदाचिद्योगतोभवेत ॥ प्रज्ञयानेत्रवागादेर्यथास्यादुपचारतः २९८ भेदोऽमृतायुषोर्यद्वत्प्राणस्यचनविद्यते ॥ प्राणप्रज्ञानयोरेवंभेदःक्वापिनविद्यते २९९ प्राणप्रज्ञेप्रसिद्धेयेलौकिकेसर्वदेहिनाम् ॥ खट्वांगवन्नलभ्येतेअपितेक्वापिवैपृथक् ३०० अस्मिन्जंगममात्रस्यशरीरेसहितेस्थिते ॥ जीवनेमरणेतद्वत्सहोत्क्रामतएवते ३०१ यतोलौकिकयोःप्राणप्रज्ञयोर्नास्तिवैभिदा ॥ ततोऽलौकिकएकस्मिन्मयिकेनभवेदिह ३०२

ततमआत्मत्वेनधीर्ज्ञानंयस्यसतथा २९७ पूर्वंप्राणप्रज्ञयोरद्वितीयत्वेनसर्वांतरत्वेनचपरमार्थवस्तुनोबोधकत्वात्तत्वंपदार्थोपाधिभूतयोःसमप्राधान्यमुक्तमथतयोर्लक्ष्यैक्यप्रतिपादकंयोवैप्राणइत्यादिवाक्यंव्याकरोति प्रज्ञात्मत्वमितिपंचभिः । यथानेत्रादेर्ज्ञानेंद्रियस्यवागादेःकर्मेंद्रियस्यचकदाचिद्वृत्तिरूपेणप्रज्ञयायोगादौपचारिकंप्रज्ञात्मत्वंतद्वदस्यप्राणस्यनगौणंप्रज्ञात्मत्वम् २९८ किंतुमुख्यमेवप्राणस्यप्रज्ञात्मत्वमित्याह भेदइति । यथायुरमृतयोःप्राणेनभेदाभावउक्तएवंप्रज्ञायाअपीत्यर्थः लक्ष्यैक्यादितिभावः २९९ लक्ष्यैक्यंकैमुत्यन्यायेनापिद्रढयितुंप्राणप्रज्ञापदवाच्ययोरुपाध्योरपिभेदःपृथग्भावरूपोनदृश्यतइत्याह प्राणेतिद्वाभ्याम् । येलौकिकेतेवायुबुद्धिरूपेप्राणप्रज्ञेतेअपिखट्वांगपादचतुष्टयवत्पृथक्परस्परपरिहारेणनलभ्येतेनदृश्येतेइति ३०० किंतुसहभूतेएवदृश्येतेइत्याह अस्मिन्निति । अस्मिन्सर्वजंगमशरीरेजीवनकालेसहितेस्थितेसतीप्राणप्रज्ञेमरणकालेसहैवोत्क्रामतऊर्ध्वंगच्छतइतिप्रसिद्धमितिशेषः ३०१ कैमुत्यन्यायमभिनयति यतइति । यतोलौकिकयोःप्राणप्रज्ञयोरपिभिदानास्तितर्हिमयिकुतोभिदास्यात् सिध्येत् तत्रप्रमाणाभावासंभवयोःसूचकेविशेषणेअलौकिकेएकस्मिन्निति ३०२

तस्यैवेत्यादिवाक्यं व्याकरोति अन्वयेति । अन्वयः सुषुप्त्यादावनुगमः व्यतिरेक इतरेषां तत्र लयरूपः ताभ्यां प्राणस्यैवात्मता भवेत् निश्चिते तिशेषः । अन्वयव्यतिरेकयोर्विषयद्वयमाह सुप्ताविति ३०३ श्रुतोदृष्टिपदं दृष्टिसाधने ऽन्वयव्यतिरेकानुसंधाने लाक्षणिकमिति दर्शयति इदमिति । इदमन्वयादि चिंतनरूपं स्मृतिसुप्तिभ्यां विषयतासंबंधेन समुत्थितं सत् प्राणात्मभावरूपस्य वस्तुनो वेदांतप्रमेयस्य दर्शनाय साक्षात्काराय भवेदिति ३०४ सुषुप्तौ तावदन्वयव्यतिरेकस्फुटीकरणाय यत्रैतदित्यादिश्लोकार्धं इत्यंतं वाक्यं व्याकरोति यत्रायमिति नवभिः । यत्र यस्यामवस्थायामयं प्रसिद्धः पुरुषः स्थूलसूक्ष्माभिमानी जीवः सुप्तः शयनं गतः सन् कंचन कमपि स्वप्नं जाग्रद्वासनाकार्यं पदार्थजातं न वेत्ति तदा प्राणात्मनि प्राणरूपे प्राणोपाधिके इति यावत् । एतादृशे देवे परमात्मनि एकधा एकेन प्रकारेणाभेदरूपेणैवावतिष्ठते । स्वप्नजाग्रतोरुपाधिप्रयुक्तभेदवास्तवाभेदरूपं प्रकारद्वयमासीदत्र त्वभेद एव शिष्यत इत्यर्थः ३०५ एवकारार्थं स्फुटयन्भेदाभावं हेतुतयाह कर्मेति । कर्मेंद्रियैर्ज्ञानेंद्रियैरंतःकरणेन च तत्स्थैर्ते षां कर्मेंद्रियादीनां विषयैश्चोपाधितया प्रयुक्तो यो भेदः स यस्मान्न प्रतीयते तस्मादेकधैवेत्युक्तमुपपन्नमिति पूर्वेण संबंधः ३०६ उपाधिप्रयुक्तभेदाभावे उपाधिलयं हेतुत्वेन दर्शयति अयंहीति । अयं वागादिः करणग्रामः आत्मीयैर्नामादिविषयैः सह सुप्तिकाले प्राणोपाधौ मयीश्वरे लीयत इत्यन्वयः ३०७ आत्मनि सर्वलयप्रतिपादनफलमद्वितीयत्वमभिनीय दर्शयति तत इति । यतो वास्तवो भेदः स्वरूपमहिम्ने

अन्वयव्यतिरेकाभ्यां प्राणस्यैवात्मता भवेत् ॥ सुप्तौ स्मृतौ च तावेतौ कर्तुं शक्यौ महात्मभिः ३०३ इदमेव हि विज्ञानं स्मृतिसुप्तिसमुत्थितम् ॥ दर्शनाय भवेन्नृणां प्राणात्मत्वस्य वस्तुनः ३०४ यत्रायं पुरुषः सुप्तः स्वप्नं वेत्ति न कंचन ॥ प्राणात्मनि तदा देव एकधैवावतिष्ठते ३०५ कर्मज्ञानेंद्रियैस्तद्वदंतःकरणकेन च ॥ एतेषां विषयैर्नापि भेदो यस्मात्प्रतीयते ३०६ अयं हि करणग्रामः प्राणोपाधौ मयीश्वरे ॥ प्रत्येकमात्मविषयैः सह सुप्तौ प्रलीयते ३०७ तत एकत्वमेवात्र मम प्राणस्वरूपिणः ॥ सर्वप्रकारो भेदोयं विलीनो मयि सर्वथा ३०८ प्रबोधकाले नैवैते जायंते न्यत एव हि ॥ मत्तः प्राणात्मनस्तस्मात्प्राणात्माहं प्रतर्दन ३०९ जायमानास्तथा प्राणा ज्ञानकर्मेंद्रियात्मकाः ॥ मत्तः प्राणात्मनो भिन्ना न स्युरेते कथंचन ३१० किंत्विमे मम रूपाणि जायंते मत्त एव हि ॥ अभेदेपि जनिर्दृष्टा यथाग्नेर्ज्वलतः कणाः ३११ ज्वलतो महतो वन्हेः प्रजायंते कणा यथा ॥ प्रबुद्धात्प्राणतो मत्तः प्राणा अपि तथैव हि ३१२ इंद्रियेभ्यस्ततो देवा अग्न्याद्या अपि जज्ञिरे ॥ अग्न्यादिभ्यश्च संजाता विषया लोकशब्दिताः ३१३

वनिरस्तऔपाधिकोप्युपाधिलयादित्येवं सर्वप्रकारोपि भेदो मयि विलीनस्ततो ममैकत्वमेव सिद्धमिति कीदृशस्य मम प्राणस्वरूपिणः प्राणोपलक्षितस्वरूपस्येति ३०८ लयाधारत्वप्रदर्शनेनोपादानत्वे बोधिते पि कर्त्ता कश्चिदन्यः स्यादिति शंकावारणेनाभिन्ननिमित्तोपादानतां बोधयितुमुत्पत्तिकारणतामपि दर्शयति प्रबोधेति । प्रबोधकाले जाग्रति एते वागादयो न्यतो न जायंते किंतु मत्तः प्राणात्मन एव जायंते तस्माद्ब्रह्मलक्षणयोगात्प्राणपदार्थोहं वेदांतवेद्यरूपोस्मीत्यर्थः ३०९ लयोक्तिवत्सृष्टुक्तेरप्यद्वितीयतायां पर्यवसानं दर्शयति जायमाना इति । मत्तः प्राणात्मनो जायमानाः प्राणा मत्सकाशान्मृदो घटवत् कथंचिदपि भिन्ना न स्युरिति ३१० ननु यदि न भिन्नास्तर्हि कथं भिन्ना इव दृश्यंत इत्यत आह किंत्विति । रूपाणि विभूतयः महिमान एवैते इत्यादिश्रुतेः एते देवभेदा इति श्रुतिपदार्थः । ननु विभूतीनां विभूतिमतो भेदाभावात्कथं ततो जन्मेत्यत आह अभेदेपीति ३११ दृष्टांतं स्फुटयति ज्वलत इति । प्रबुद्धात्प्रबोधं जागरणं प्राप्तात् । प्राणा इंद्रियाणि ३१२ इंद्रियेभ्य इति । तत इंद्रियोत्पत्तेरनंतरं इंद्रियेभ्यो ऽधिष्ठेयेभ्यो देवास्तदधिष्ठातारो ऽग्न्यादयो जाता अग्न्यादिदेवेभ्यो विषया नामाद्या जाताः कीदृशा विषयाः श्रुतिगतेन लोकशब्देनोक्ताः लोक्यंते प्रकाश्यंत इति व्युत्पत्तेः ३१३

एवंयत्रेत्यादिवाक्यार्थंप्रदर्श्यएतद्वाक्यमूलकंदृष्टिसृष्टिवादंस्फुटयन्नुक्तमर्थंतर्केणापिसंभावयति सुषुप्तेइत्यादिना । सुषुप्तेसुषुप्त्यवस्थायांनामादिविषयसहितंवागादिकरणजातंतेनसुप्तपुरुषेणवाअन्ये नसुप्तभिन्नेनकेनचिद्वानदृश्यतेप्राणस्त्वन्येनसुप्तभिन्नेनदृश्यतेइत्याविवादमितिशेषः ३१४ तथाचप्राणकार्यंतावागादीनामायातीतिदर्शयितुंयद्यदन्वयप्रयुक्तभानयोगितत्तस्यकार्यमितिकार्यलक्षणं सोदाहरणमाह यद्यस्मिन्नितिद्वाभ्यां । यथामृद्वस्तुनिसतिलभ्यंदृश्यंघटादिकंतत्रमृद्वस्तुनिसत्येवनलभ्यतेतद्घटादिकंतस्यमृद्वस्तुनोव्यापकस्यकार्यमिति ३१५ भानमात्रनिवेशेआलोकादिकार्यताया रूपादौप्रसंगात्सत्तापिलक्षणेनिवेश्याइत्याशयेनाह नसत्तेति । यस्येतिशेषःपूर्वार्द्धे ३१६ तल्लक्षणंतुप्रकृतेपीत्याह करणानामिति । करणग्रामोपिसुषुप्तौप्राणेसत्येवनदृश्यतेप्रबोधेचप्राणेसत्येवं अन्यस्मात्प्राणभिन्नान्नजायतेकिंतुप्राणादेवजायतेसत्तांलभतेतस्मात्सकरणग्रामोऽस्यप्राणस्यकार्यमितिसिद्धम् ३१७ तथाचप्राणेकार्यलयाभिधानमुपपन्नमित्याह सुषुप्ताविति । यस्मात्सुषुप्तौ करणग्रामोविषयैःसहनैवलभ्यतेदृश्यतेतस्माददर्शनादेवज्ञायतेकरणग्रामःकारणेलीनोध्वस्तघटवत् प्रध्वस्तोघटोयथाकारणेलीनोभवतितद्वदिति ३१८ नन्वस्त्विन्द्रियलयस्तथापींद्रियलयेतद्विन्नानांविषयाणांलयःकथंसंभाव्यतेत्याशंक्यतत्रोपपत्तिमाह तदभावइति । तेषामिंद्रियाणामभावेतदीयइंद्रियसंबंधीयोविषयोनामादिःसकथंस्यात्कथंसत्तायोगीभवेत् नकथंचिदपितस्यसत्तासंभा

सुषुप्तेनहिवागादिनामादिसहितंक्वचित् ॥ दृश्यतेतेनचान्येनप्राणस्त्वन्येनदृश्यते ३१४ यद्यस्मिन्सतिलभ्यंतत्तत्रैवचनलभ्यते ॥ तत्तस्यकार्यंविज्ञेयंमृदोयद्वद्घटादिकम् ३१५ नसत्तालभ्यतेऽन्यस्माद्यस्मिन्सत्येवलभ्यते ॥ तत्तस्यकार्यंविज्ञेयंतंतूनांहियथापटः ३१६ करणानांसमूहोपिप्राणेसतिनदृश्यते ॥ प्राणेसत्येवनान्यस्माज्जायतेकार्यमस्यसः ३१७ सुषुप्तौकरणग्रामोलभ्यतेविषयैःसह ॥ नैवतस्मादयंलीनःप्रध्वस्तघटवत्तदा ३१८ तदभावेकथंसस्यात्तदीयोविषयोहियः ॥ नप्रदीपंविनातस्यप्रभालोकेनदृश्यते ३१९ योहियत्रविलीयेतनिर्गच्छतितितोहिसः ॥ अग्नौयथाकणोलीनोप्यग्नेरेवविनिःसरेत् ३२० नचान्यःकणवत्प्राणान्निःसरन्नुपलभ्यते ॥ इंद्रियग्रामएतस्मात्सएवातोविनिःसरेत् ३२१ नचानुमानतस्तस्यविलीनादन्यताभवेत् ॥ धूलिपुंजेविलीनस्यघटादेरन्यतानच ३२२

व्यतइत्यर्थः । तत्रनिदर्शनमाह नप्रदीपमिति । प्रदीपंविनाप्रदीपकार्यभूताप्रभालोकेनजनेननदृश्यतेयथातथाध्यात्माधिदैवकरणकार्यभूताविषयाःकरणाभावेकथमुपलभ्येरन्निति ३१९ तथाल याधारादुत्पत्तिरपिसंभाव्यतइत्याह योहीति । स्पष्टम् ३२० ननुकणोजायमानोविलीनात्कणाद्यथाभिन्नस्तथाकरणग्रामोपिविलीनाद्भिन्नोस्त्वित्याशंक्यमानाभावान्मैवमित्याह नचा न्यइतिद्वाभ्याम् । यथाग्नेःकणोनिस्सरन्विलीनकणादन्यउपलभ्यतेतद्वत्प्राणान्निस्सरन्करणग्रामोविलीनादन्योभेदशालीनोपलभ्यते । एतस्माद्भेदावगाहिप्रत्यक्षाभावाद्धेतोःसएवयोविलीनःसएवकरणग्रामोऽतःप्राणाद्विनिःसरेत् तथाचभेदेप्रत्यक्षप्रमाणंनेतिभावः ३२१ नाप्यनुमानमित्याह नचेति । तस्यजायमानेंद्रियग्रामस्यविलीनापेक्षयाऽन्यताभेदोऽनुमानादपिन भवेन्नसिद्ध्येत् भेदव्याप्यलिंगानुपलब्धेरितिभावः । ननुविलीनत्वलिंगेनातीतस्यवर्तमानाद्भेदमनुमायतद्विरुद्धधर्मरूपलिंगेनवर्तमानेभेदोनुमास्यतइत्याशंक्यविलीनत्वस्यधूलिप्रच्छादितेघटेभेदाभाववतिव्यभिचारित्वान्मैवमित्याह धूलीति ३२२

ननुधूलिप्रच्छादितघटादेःकथंविलीनत्वमित्याशंक्यादर्शनादन्यस्यविलयपदार्थस्यदुर्वचत्वादित्याह नचादर्शनेति । प्रबोधकालेऽदृष्टानांस्वप्नपदार्थानांविलीनत्वस्यव्यवहारादितिभावः । ननुप्रातिभासिकेऽदर्शनेविलीनत्वव्यवहारात्तथात्वाभ्युपगमेपिव्यावहारिकेतथानाङ्गीकर्तुंशक्यमितिशंकते नहीति । अदृष्टाःस्वस्यपुत्राद्याःविलीयंतेविलीनव्यवहारगोचराभवंतीतिनहिदृष्टमितिशेषः । तथाचकथंभवदुक्तंसंभाव्येतेतिभावः ३२३ प्रातिभासिकत्वेपिविलीनत्वव्यवहाराभावप्रयोजकऐक्यभ्रमोवक्ष्यतइतिमनसिनिधायासंभावनाप्रयोजकमनिष्टप्रसंगंसिद्धांतीपृच्छति तदेति । तदाऽदर्शनकालेतेषांबंध्वादीनांलयोऽस्तुपुनर्दर्शनकालेजनिरुत्पत्तिरस्तुकमनिष्टप्रसंगंपश्यसीति । ननुमृतानांपुनरुत्पत्त्यापत्तिस्तवमतेइत्याशंक्यानिषेधंप्रतिजानीते नैवमिति । नमरणंपुनर्दर्शनप्रयोजकंनवाजीवनंकिंत्वन्यदेवदृष्टादृष्टसामग्रीसंनिधानमितिमनसिनिधायजीवतोपिपुनर्दर्शननियमभंगमाह जीवतइति । क्वापिदूरेदेशगमादौ ३२४ ननुदूरदेशस्थानांदूरदेशंगत्वादर्शनंसंभवतीतिजीवनंदर्शनप्रयोजकमेवेतिशंकित्वातर्हिमरणमपिप्रयोजकमस्तुकादाचित्कस्वप्नेमृतानामपिदर्शनादित्याह देशांतरेति । तस्माददृष्टादिसामग्र्येवपुनर्दर्शनादिनियामिकेतिनकाचिदनुपपत्तिरितिभावः ३२५ शंकते ततइति । येलोकेजायमानाःपुत्रादयस्तेषामित्येषाइत्याकाराबुद्धिर्विद्यतेनियमेनदृष्टा इतिकिम् ततःदेवदत्तादेःपितुःसकाशादहंयज्ञदत्तादिसंज्ञोजातइतितथाचततोऽहंजातइत्याकारि

नचादर्शनमात्रात्स्यादन्योहिविलयःक्वचित् ॥ नह्यदृष्टाविलीयंतेपुत्राद्याःस्वस्यकस्यचित् ३२३ तदातेषांलयोभूयाद्दर्शनेस्तुपुनर्जनिः ॥ नैवंमृतानामुत्पत्तिःप्रसज्येतकथंचन ॥ जीवतोपियतःक्वापिपुनर्नैवास्तिदर्शनम् ३२४ देशांतरगतौदृश्याःपुत्राद्यानमृतास्तथा ॥ अत्राप्येवहिदृश्यंतेक्वापिस्वप्नेमृताअपि ३२५ ततोहंजातइत्येषापुत्रादीनांहिविद्यते ॥ बुद्धिरस्मान्नजायंतेपुत्राद्याःसतिदर्शने ३२६ यतोघटेपिनैवास्तिजातोहमितिधीःक्वचित् ॥ किंतुतद्द्रष्टुरेवैषातस्मान्व्यर्थमिदंवचः ३२७ चेतनाअपिनैवात्रजानंत्युत्पत्तिमात्रतः ॥ वयंजातास्ततोव्यर्थाजडाजडविभागधीः ३२८ अपिकुत्रापिचैतन्यंजगत्यस्मिन्नजायते ॥ देहेजातेपुमान्जातइत्येषाभ्रांतिधीर्नृणाम् ३२९

काबुद्धिर्जन्मव्यापिकाऽस्मादुक्तबुद्धेर्जन्मव्यापकत्वात् दृष्टिसृष्टिवादिन्भवदुक्तरीत्यादर्शनेपुत्राद्यानजायंते व्यापकाभावेव्याप्याभावस्यन्याय्यत्वात् यदिजायेरंस्तर्हिवयमस्माज्जाताइतिमन्येरन्तथामतेरभावान्नजायंतइत्यर्थः ३२६ दृष्टिसृष्टिवादीउत्तरयति यतइति । जातोहमितिबुद्धेर्जन्मव्यापकत्वंसाहचर्यदर्शनादवधार्यं साहचर्यंतुघटेजन्मसत्वेपितादृशबुद्धेरदर्शनाद्दुर्वचमितिपूर्वार्द्धाशयः ननुघटद्रष्टुःपुरुषस्यजातोऽयमितिबुद्धिरस्त्येवेतिचेदस्तुनामतथापिघटनिष्ठजन्मनोद्रष्टृनिष्ठबुद्धेश्चवैयधिकरण्यग्रहस्यव्याप्तिज्ञानप्रतिबंधकस्यार्किंतिरोधायकमुक्तमित्याह किंतुतद्द्रष्टुरेवेति । तस्मादुक्तबुद्धेर्व्यापकत्वस्यदुर्वचत्वादिदमुक्तंबुद्धेर्व्यापकत्वालंबनेनदृष्टिसृष्टेराक्षेपपरंभवद्वचोव्यर्थमिति ३२७ ननुजडेषुतथाबुद्ध्यभावेपिचेतनाजायमानाजातोहमितिमन्यंतएवेतिचेतनोत्पत्तेरियंबुद्धिर्व्यापिकैवेत्याशंक्याह चेतनाअपीति । उत्पत्तिमात्रानंतरंचेतनेष्वपिवयंजाताइत्याकारिकाबुद्धिर्नदृष्टाकिंतुमातृपितृप्रभृतिवचनादिनिमित्तवशात्तथाबुद्धिर्दृश्यतेइत्यव्यापिकैवततोजडाजडविभागस्यधीःकुशकाशवत्त्वयास्मत्पक्षाक्षेपायालंब्यमानाव्यर्थाइति ३२८ चेतनाःप्रजायंतइतिवाक्यमेवव्याहतमित्याह अपीति । इत्येषाइत्याकाराभ्रांतिस्तुदोषरूपोपाधिपरतंत्रानव्यापकतांसाधयितुमलमितिभावः । दृष्टिसृष्टिवादिनोपाधीनामेवसृष्टेरभ्युपगमाचेतनोत्पत्तेराक्षेपोऽनुक्तोपालंभइत्यपिबोध्यम् ३२९

किंचजनिधात्वर्थालोचनादपिदृष्टिसृष्टिपक्षःसिद्धचतीत्याह प्रादुर्भावइति । सप्रादुर्भावोदर्शनरूपएवेतिदृष्टिरेवसृष्टिरित्यस्मन्मतसिद्धिरितिभावः प्रादुर्भावपदस्यदर्शनरूपार्थेप्रयोगंदर्शयति प्रादुरिति ३२० ननुदृष्टिसृष्टिमतेप्रतिदर्शनंपुत्राद्युत्पत्तौजातकर्माद्यापत्तिरित्याशंक्ययथायुवशरीरस्यबालशरीरात्परिमाणादिनास्फुटभेदस्योत्पत्तावपिभवन्मतेनसंस्कारापत्तिस्तथामन्मतेपीत्याह नचेवमिति । आपतेत्प्रसज्ज्येत ३३१ परमतेसमदोषप्रसंगंस्फुटयति भवतोपीति । देहभेदेसतिचतज्जातकर्मादिदृष्टंयथापुत्रांतरेजातेइति । तथाचयत्रोभयोःसमोदोषइतिन्यायेनतुल्यतुभवानितिभावः ३३२ अभेदाभावंस्फुटयति अभेदइति । पटयोः ह्रस्वदीर्घयोरितिशेषः ३३३ एवंदोषसाम्यंप्रदर्श्यपरिहारसाम्यमपिदर्शयति प्रत्यभिज्ञेति । संस्कारसहकृतप्रत्यक्षसामग्रीजन्यंज्ञानंतदेवेदमित्याद्याकारंप्रत्यभिज्ञा सायदास्वस्यदेहवतोजायतेतदात्मनोधर्मादैक्यादभेदाध्यासेनदेहआरोपितात्वाच्या यदातुअपरस्यदेवदत्तादिसंज्ञदेहवतःसकाशाद्भिन्नस्ययज्ञदत्तादेःप्रत्यभिज्ञाजायतेतदातद्दीयाद्यज्ञदत्तादिसंबंधिनोविश्वासादयंपूर्वदेहाद्भिन्नोनभवतीत्याद्यभिमानरूपादेववाच्याइत्युभयोःसमःपरिहारः ३३४ ननुतवैवायंपरिहारःमममतेतुआरंभकस्यावयवसंयोगस्यैकत्वात्प्रत्यभिज्ञेतिनित्यसंयोगांगीकर्तृनैयायिकैकदेशिमतेनाशंक्यआरंभकपदेनकारणमात्रविवक्षणेशुक्रशोणितादिकारणैक्यात्प्रत्यभिज्ञास्त्विवतिवाशंक्यपरिहरति आरंभकस्येति । पूर्वार्धंस्पष्टम् । तत्रव्यभिचारंदर्शयति स्तंभयोरिति । एकइष्टकासंयोगरूपोहेतुर्ययोरितिप्रथमशंकासमाधानपक्षेऽर्थः । द्वितीयशंकासमाधानपक्षेतु एकःएककाष्ठरूपएकपाषाणरूपोवाहेतुर्ययोरित्यर्थः ३३५ ननुदृष्टिसृष्टिपक्षे

प्रादुर्भावोजनेश्चार्थःसस्यादर्शनमेवहि ॥ प्रादुर्बभूवसवितेत्यादौदर्शनमीरितम् ३३० नचैवंजातकर्मादिप्रसज्ज्येतक्षणेक्षणे ॥ बालस्ययौवनेकस्माद्भवतोपिनचापतेत् ३३१ भवतोपिनचैकत्वंबालयौवनदेहयोः ॥ देहभेदेहितद्दृष्टंयथातेतनयांतरे ३३२ अभेदोनैवयुक्तोयंबालयौवनदेहयोः ॥ विभिन्नपरिमाणादेर्दर्शनात्पटयोरिव ३३३ प्रत्यभिज्ञाचदेहेस्मिन्स्वस्यस्वात्मनऐक्यतः ॥ अपरस्यतुविश्वासात्तदीयादेवजायते ३३४ आरंभकस्यचाभेदात्प्रत्यभिज्ञानसंभवेत् ॥ स्तंभयोरेकहेत्वोर्नप्रत्यभिज्ञास्तिकर्हिचित् ३३५ नचस्तंभादिविषयेनैषास्यादुक्तहेतुतः ॥ विश्वासादात्मनस्तत्रसंभवेद्देहवत्सदा ३३६ कारणानुगमोप्येषबालयौवनदेहयोः ॥ कोयतोनैवविद्येतेतेभेशुक्रशोणिते ३३७ नैवावयवसंस्थानंकारणंदुर्भणत्वतः ॥ नप्रत्यक्षाअवयवाःसूक्ष्मत्वाद्दृग्गताणुवत् ३३८

सएवायंस्तंभइत्यादिप्रत्यभिज्ञानिर्वाहःकथं तत्रात्मनोभेदनिश्चयेनात्मनिष्ठैक्यारोपेणनिर्वाहस्यदुर्वचत्वादित्याशंक्यमास्तुप्रथमोहेतुर्द्वितीयस्तुविश्वासलक्षणोजागर्तीत्याह नचेति । स्तंभादिषूक्तहेतोरात्मैक्याध्यासरूपात्प्रत्यभिज्ञानस्यात्रोपपद्येतेतिनचशंक्यम् यतोद्रष्टुरात्मनोविश्वासरूपाद्धेतोःसासंभवेदेव यथादेवदत्तदेहेयज्ञदत्तादेःप्रत्यभिज्ञोक्तातद्वदित्यर्थः ३३६ बाल्युवशरीरयोःकारणानुगमोपिभवतादुर्निरूपइत्याह कारणेति । बाल्ययौवनावस्थाश्रययोर्देहयोःकारणस्यभवन्मतस्यानुगमःकः नकोप्युपपद्यतइत्यर्थः । यतस्तेभवदभिमतेशरीरकारणेशुक्रशोणितेअंकुरोत्पत्तौसत्यांबीजवन्नविद्येतेविनष्टेइवियावत् अस्मन्मतानुसारेणबीजाद्यवच्छिन्नचैतन्यंमायाशबलंसत्पदवाच्यंकारणमभ्युपेपिचेत्तर्हितत्रकल्पितस्वप्नपदार्थवद्दृष्टिसृष्टिरेवपर्यवस्यतीति तस्यसतःप्रत्यभिज्ञानिर्वाहकत्वंतुनवाच्यंसर्वत्रैक्यधीप्रसंगादितिभावः ३३७ ननुअवयवसंस्थानरूपकारणैक्यालंबनाप्रत्यभिज्ञाभविष्यतीत्याशंकांनिराचष्टे नैवेति । अवयवानांसंस्थानंरचनाविशेषःकारणमेवनसंभवति दुर्भणत्वाद्दुर्निरूपत्वात् । कथमितिचेच्छृणु परमाणवएवत्वयावयवत्वेनवाच्याः द्व्यणुकादीनांतत्समुदायरूपाणांतत्समवेतरूपाणांवासमुदायसमवाययोःप्रथमाध्यायोक्तविधयानिरासेननिरस्तत्वात् परमाणूनांचकारणत्वेनप्रत्यक्षंप्रमाणंनवातन्मूलकमनुमानादीत्याशयेनाह नप्रत्यक्षाइति । दृग्गताश्चक्षुर्गोचरेगताअणवोयथानप्रत्यक्षास्तथादेहाद्यारंभकाअपीत्यर्थः । श्रुतिस्तुअण्व्योधानाइत्याद्यादुर्लक्ष्यंचैतन्यमेवाणुपदेनप्रतिपादयतीतिभावः ३३८

परमाणूनांकारणत्वेबाधकंचवर्त्ततइत्याह नचैतैरिति । एतैःपरमाणुभिःसंस्थानंसंस्थानवत्कार्यं तत्रहेतुमाह तेषामिति । जडैरालोचनाभावाद्रचनादुष्करा परमाणूनांचेतनत्वाभ्युपगमेतुब
हूनांचेतनानांभिन्नाभिप्रायत्वादेककार्यरचनानुपपत्तिः. अल्पाःकारणतात्वस्मदुक्तरीत्यैवेतिभावः ३३९ स्थूलावयवाभ्युपगमेपिप्रकृतेसंस्थानैक्यंनास्तीत्याह संस्थानमपीति । संस्थानमपि
एकंनविद्यतेतस्यसंस्थानस्यैकत्वेसतिमानादीनांपरिमाणपराक्रमादीनांभेदधीर्नस्यादिति ३४० अवयवोपचयापचययोःसंस्थानैक्यंनास्तीत्यत्रोदाहरणमाह मापेति । मापराशेःसकाशान्मा
पाणांनिर्गमेसतितत्रतेषांसमागमेवाराशिसंस्थानस्यैकतांनमन्यंतेस्थलस्यमापराशिस्थानस्यरक्षकाइतिप्रसिद्धम् ३४१ फलितमाह युवेति । युवदेहस्ययौवनशालिदेहस्यजनौसत्यांतेमतेयथासं
स्कृतिर्जातकर्माद्यानएवंममापीति ३४२ यदितत्रजातोयमितिबुद्धेरभावान्नसंस्कारापत्तिस्तर्हिमत्पक्षेपिसमंसमाधानमित्याह जातोयमिति । साजातोयमितिबुद्धिः ३४३ यथाजन्मप्रयुक्त
संस्कारापत्तेःसमंसमाधानंतथाऽदर्शनात्मकमरणप्रयुक्तदाहादिप्रसंगस्यसमंसमाधानमित्याह अदर्शनेइति ३४४ साम्यंस्फुटयति नदृश्यतेइतिद्वाभ्यां । यथायौवनेसतिबालशरीरंनदृश्यतेत
थावहिष्ठत्वेसतिबहिर्गतत्वेसतिबंधुतानदृश्यते अदर्शनमेवचनाशो पाशअदर्शनेइतिधात्वर्थानुगमात् ३४५ अथैकेति । अथेतिपक्षांतरे अत्रबहिर्गतेपुत्रादौएकबुद्धिरेकत्वावगाहिनीबुद्धिरस्तीति

नचैतैरचितंकिंचित्संस्थानमिहविद्यते ॥ तेषांजडबहुत्वाभ्यांरचनानुपपत्तितः ३३९ संस्थानमपिनैवैकंबालयौवनदेहयोः ॥ विद्यतेतस्यचैकत्वेनस्या
न्मानादिभेदधीः ३४० मापराशेर्हिमापाणांनिर्गमेपिसमागमे ॥ संस्थानस्यैकतांनैवमन्यंतेस्थलरक्षकाः ३४१ युवदेहजनौयद्वत्संस्कृतिर्नैवतेभवेत् ॥
एवंमेदर्शनाज्जातेपुत्रादौनैवसंस्क्रिया ३४२ जातोयमितिधीस्तत्रयौवनेचेन्नविद्यते ॥ सममत्रापिदृष्टेपुपुत्रादिपुनसास्तियत् ३४३ अदर्शनेपिमरणेवान्हि
दाहादिनापतेत् ॥ यथाबालशरीरस्यभवतोयौवनेनहि ३४४ नदृश्यतेयथाबालशरीरंयौवनेसति ॥ तथैवचबहिष्ठत्वेपुत्रादिर्नैवदृश्यते ३४५ अथैकबु
द्धिरत्रास्तिपुत्रादौसासमातव ॥ बालयौवनदेहेपिविनामानसमाग्रहम् ३४६ बालदेहेगतेयद्वत्शोकःस्वस्यपरस्यन ॥ अदर्शनेनमरणेपुत्रादेरपिवैतथा ३४७
नमृतावयमित्येवंयदितेदर्शनेपुनः ॥ वदंतितर्हिदेहोपियूनएवंवदत्ययम् ३४८ अन्यथापरिमाणादिभेदाद्देहेस्फुटायदि ॥ कालभेदेहिपुत्रादौकेनासौविनि
वार्यते ३४९

बाल्ययौवनदेहाद्विशेषंचेद्ब्रूपेतर्हिसाबाल्ययौवनदेहेष्वपिसएवायमितिबुद्धिर्दाहादिप्रसंगप्रतिबंधिकासमेवमानसंमनोनिष्ठंदुराग्रहंविना तथाचसममेवसमाधानमिति ३४६ एवमदर्शनेनमरणेसति
शोकप्रसंगस्यापिसमाधानंसममित्याह बालेति । बालदेहेमृतेसतियथास्वस्यतद्देहवतःपरस्यचतत्पितृप्रभृतेःशोकोनभवतिसएवायमित्यभिमानात्तथाप्रकृतेपीति ३४७ नन्वदर्शनस्यमरणत्वे
नमृतावयमितिपुनर्दृष्टानांवाक्येनविरोधइत्याशंक्यसाम्येनसमाधत्ते नमृताइति । यदितेपुत्रादयःपुनर्दर्शनेसतिनमृतावयमित्येवंवदंतिइतितद्वाक्यविरोधंशंकसेतर्हियूनोदेहेप्राप्तेसतिबाल्देहेगतेचस
तिअयंपुरुपएवंनमृतोहमितिवदतितत्रापितद्वाक्यविरोधेनबाल्यनिवृत्तेरभावमंगीकुरु । यदिचबाल्युवशरीरभेदाज्ञानरूपदोषशालिवक्तृकत्वात्तद्वाक्यमप्रमाणमितिमन्यसेतर्हिप्रकृतेपितथामन्यस्वेति
भावः ३४८ पूर्वापरभेदज्ञानप्रतिबंधकोदोषोऽवश्यमभ्युपेयस्त्वयापीत्याह अन्यथेति । अन्यथाताद्दशदोषानभ्युपगमेस्फुटाआपदोरोगादिलक्षणायस्मिन्नेताद्दशे देहेकालभेदनिमित्तकानांपरि
माणादीनांभेदात्पुत्रादावसौशोकोमृतधीर्वाकेननिवार्येतेति ३४९.

भेदोविद्यतेभेदधीस्तुदोषेणप्रतिबद्धेतिदृष्टांतदार्ष्टांतिकयोःस्फुटयति कालेतिद्वाभ्यां । यथातवमतेपिकालभेदेसतियुववालशरीरयोरभेदोनविद्यतेतद्वन्ममतेपूर्वोत्तरयोर्बोधयोर्विषयभूतपुत्रादीनाम भेदोनेति ३५० बालदेहइति । यद्वत्उक्तदोषवलात् ३५१ तिष्ठतुदृष्टिसृष्टावन्यदुदाहरणंजन्ममरणेएवात्रोदाहरणमित्याह अपीति । येलोकेसर्वदेहिनांप्रसिद्धेजनिमृतीतेअपिविज्ञानमात्रेणे वप्रसिद्धेकार्यकरत्वरूपंलौकिकसत्त्वंप्राप्ते अन्यस्मात्ज्ञानभिन्नात्कारणात्तुनसत्वंप्राप्तेइति ३५२ जन्ममरणयोर्ज्ञातसत्त्वंस्फुटयति जातमितिद्वाभ्याम् ३५३ स्वयमिति । अयंजनःस्वयमपि यज्जन्ममरणप्रयुक्तेसुखदुःखेसमाप्नुयात्तदप्येवमेव अन्यवचनादिनातज्ज्ञानादेवेत्यर्थः। जनिमृत्योरज्ञानेतुतेसुखदुःखेकस्यचिदपिनैवस्यातामितिप्रसिद्धमितिशेषः ३५४ किंचलौकिकंजन्ममरणंचमूर्छा वशेनस्वयंद्रष्टुमशक्यत्वात्परवचनादिनैवत्वयामंतव्यंतथाचपरमात्मवेदवाक्याद्दर्शनादर्शनयोर्जनिमृतीकुतोनाभ्युपैषीत्याह अप्येतइतिचतुर्भिः । एतेजनिमृतीकस्यापिप्राणिनःप्रत्यक्षसिद्धेनभवतः किंतुमातृप्रभृतीनांवाक्यादनुमानाद्वातयोर्जनिमृत्योर्धीर्भवति ३५५ तत्रजन्मनःप्रत्यक्षत्वासंभवंदर्शयति कोहीति । विनिर्याणेनिर्गमनकाले ३५६ मरणस्यापिप्रत्यक्षत्वासंभवमाह एवमि ति । प्राणनिर्गमेतत्कालेविशेषाकारविज्ञानानांलोपेसतिमरणंकःसाक्षात्कर्तुंशक्नुयादिति ३५७ अतइति । अतःस्वप्रत्यक्षासंभवात्शब्दादिविज्ञानादिरूपप्रमाणादेवजनिमृतीयथात्वयाबुद्धेज्ञा

कालभेदेनचाभेदोयुववालशरीरयोः ॥ भवेत्तद्वद्धिपुत्रादौपूर्वोत्तरविबोधयोः ३५० बालदेहेगतेयद्वन्मृतधीर्नैवजायते ॥ अदर्शनेपिपुत्रादेर्मृतधीस्तद्वदेवन ३५१ अपिलोकेजनिमृतीप्रसिद्धेयेहिदेहिनाम् ॥ तेपिविज्ञानमात्रेणप्रसिद्धेनान्यकारणात् ३५२ जातंवापिमृतंवापियावज्जानातिनैवहि ॥ तावद्वर्षशतैर्वापिहर्ष शोकौनगच्छति ३५३ स्वयमप्येवमेवायंसुखदुःखेसमाप्नुयात् ॥ अविज्ञानेतयोर्नैवस्यातांतेकस्यचित्क्वचित् ३५४ अप्येतेस्वस्यनस्यातांप्रत्यक्षेप्राणिनःक्व चित् ॥ किंतुमात्रादिवचनादनुमानात्तयोर्हिधीः ३५५ कोहियोनेर्विनिर्याणेमूर्छांप्राप्तःशरीरभाक् ॥ योनिनिर्गमनंस्वस्यप्रत्यक्षीकर्तुमर्हति ३५६ एवंविशेषवि ज्ञानविलोपेप्राणनिर्गमे ॥ कोनाममरणंस्वस्यप्रत्यक्षेणावगच्छति ३५७ अतःशब्दादिविज्ञानाद्बुद्धेजनिमृतीयथा ॥ तद्वच्छास्त्रस्यविज्ञानाद्दर्शनादर्शनेस्थिते ३५८ प्रत्यभिज्ञाचनैवास्तिकरणग्रामसंश्रया ॥ तदेवचक्षुरेतर्हियथासीन्मामकेंद्रियम् ॥ एवंनकस्यचिद्बुद्धिरिंद्रियेषूपलभ्यते ३५९ अपिप्रत्यक्षतानास्ति सदैवेंद्रियसंश्रया ॥ प्रत्यभिज्ञाकुतस्तत्रयतःप्रत्यक्षगाहिसा ६० इंद्रियाणामधिष्ठात्र्योवन्ह्याद्याअपिदेवताः ॥ प्रत्यक्षानयतस्तेनतासामिंद्रियतुल्यता ३६१

तेतथाशास्त्रस्यव्याख्येयश्रुतिरूपस्यविज्ञानाद्दर्शनादर्शनरूपेजनिमृतीस्थितेसिद्धेइत्यर्थः ३५८ ननुभवताद्दृष्टिसृष्ट्युपपत्तयोबाह्येपुपुत्रादिविषयेष्वेवकुत्त प्रपंचिताइंद्रियेषुदेवेषुचकुतोनदर्शिताइत्या शंक्यइंद्रियाणांदेवानांचपरोक्षतयातत्रविरोधिप्रत्यभिज्ञाऽनवताराद्वाक्यश्रवणमात्राद्दृष्टिसृष्टिःसंभाव्यतेबाह्यविषयेषुतुप्रत्यभिज्ञागतिर्दर्शनीयेतिविषयेषुतत्प्रपंचःकृतइत्यभिप्रायंस्फुटयति प्रत्यभिज्ञे त्यादिचतुर्भिः । करणग्रामःसंश्रयोविषयतयाश्रयोयस्यास्तादृशीप्रत्यभिज्ञाचनास्ति । कुतोऽनुपलब्धेरित्याह तदेवेति । मामकेंद्रियंचक्षुर्यथापूर्वमासीत्तदेवतथाविधमेवैतर्हिवर्ततइत्येवमाका राबुद्धिरिंद्रियगोचराकस्यचिदपिजनस्यनोपलभ्यतेइति ३५९ इंद्रियाणामतींद्रियत्वाच्चसंस्कारसहकृतेंद्रियजन्यज्ञानरूपाप्रत्यभिज्ञानसंभवतीत्याह अपीति । इंद्रियसंश्रयाइंद्रियनिष्ठा तत्र इंद्रियेषु प्रत्यक्षगाप्रत्यक्षवस्तुगतासाप्रत्यभिज्ञा ३३० एवंतद्देवेष्वपिनप्रत्यभिज्ञेत्याह इंद्रियाणामिति । इंद्रियाणामधिष्ठात्र्योवन्ह्याद्यादेवताअपियतोनप्रत्यक्षास्तेनप्रत्यक्षत्वाभावेनहेतुनातासां देवतानांप्रत्यभिज्ञाविषयत्वाभावेनसाधर्म्येणेंद्रियतुल्यतेति ३३१

विषयाइति । विषयास्तुश्रुतिगतेनलोकशब्देनोक्तालोक्यंतेप्रत्यक्षज्ञानेनविषयीक्रियंतइतियोगार्थसमन्वयात् तेतुसुतादिरूपाःप्रदर्शितास्तेषांदर्शनमेवजन्माऽदर्शनमेवचनाशइतिसम्यगुपपत्तिपूर्वकं मीरितंप्रत्यभिज्ञादिविरोधपरिहारायेतिभावः ३६२ श्रुतौलोकशब्दप्रयोगेणचयोहियत्पश्यतिसतत्करोतीतिसूचनाज्जडमात्रस्यदृष्टिसृष्टिरभिमता उपपद्यतेचेदंपरोक्षभावानामपींद्रियादीनांस्वा भिमानिदेवादिप्रत्यक्षत्वात्तथाचतुल्यन्यायाद्भौतिकवद्भूतानामपिदृष्टिसृष्टिरभ्युपेयेत्याह भौतिकमिति । तथाचायंप्रयोगः भूतपंचकंदर्शनादर्शनयोर्जन्मविनाशप्रतियोगिजडत्वादनात्मत्वाद्वा भौतिकवदिति नचानादिषु 'जीवईशोविशुद्धाचिद्विभागश्चतयोर्द्वयोः । अविद्यातच्चितोर्योगःषडस्माकमनादयः' इत्युक्तेषुव्यभिचारः तत्रापिजडांशस्यकल्पितत्वेनयावत्प्रतिभासमवस्थितेःप्रतिभा सानादितयैवानादित्वाभ्युपगमादिति । चेतन्यस्यसर्वोपाधिष्वेकत्वात्तत्सत्तैवकल्पितानांसत्तेत्यत्रपर्यवसानान्नकश्चिद्विरोधइतिसर्वंसमंजसम् ३६३ भौतिकवदेवचप्रत्यभिज्ञादिविरोधपरिहारो पिबोध्यइत्याह प्रत्यभिज्ञेति । प्रागुदाहृताउपपादिता अस्याःप्रत्यभिज्ञायाःसंस्थानमवयवाश्चकारणंनसंभवंतीत्यपिप्रागुदाहृतमित्यन्वयः ३६४ कर्मणांधर्माधर्मरूपाणांमायायादुर्घटकारि ण्याःसर्वव्यवस्थोपपादकत्वाच्चनकाचिद्दृष्टिसृष्टिमतेनुपपत्तिरितिदर्शयितुंकर्मणांकारणत्वंतावच्छंकापूर्वकमवतारयति नचेति । दृष्टिसृष्टिमतेऽदर्शनस्यैवनाशत्वाददृष्टस्यतडागादिस्थजलस्यनाशे सतितत्रनष्टजलदेशेतेजसोजलविरुद्धस्यजनिःस्यादितिनचशंक्यमितिपूर्वार्द्धार्थः । इमांचशंकांपूर्वपक्षीहृदयेव्याप्तिमनालोच्यैवकृतवान् । नहियत्रजलाभावस्तत्रतेजोजन्मनिनियमआकाशदेशा

विषयालोकशब्देनकथितास्तेसुतादयः ॥ दर्शनादर्शनेतेषांजन्मनाशौसमीरिते ३६२ भौतिकंयद्वदेवेदंजायतेचविनश्यति ॥ भूतपंचकमप्येवंजडत्वादात्मभे दतः ३६३ प्रत्यभिज्ञापिसर्वत्रदेहवत्प्रागुदाहृता ॥ नसंस्थानंनावयवाअस्याःकारणमित्यपि ३६४ नचनीरविनाशेस्यात्तेजसस्तत्रवैजनिः ॥ पुंसोबाल्यविना शेकिंयुवावानभवेद्भवान् ॥ कर्मतत्रनिमित्तंचेत्तदत्रापिसमंमम ३६५ महाभूतजनौनैवकर्मकारणमिष्यते ॥ भवतोप्येतदप्यात्माज्ञानमाविष्कृतंत्वया ३६६ यतोहिजगतोयोनिःप्राणात्माकर्मवासितः ॥ भूतभौतिकजातंहिसृजत्यत्तिचसर्वदा ३६७ संसारस्यनकस्यापिप्राथम्यमिहविद्यते ॥ अनादित्वान्नचाप्यंतो विनामोक्षेणविद्यते ३६८

दौव्यभिचारात् । तथाचाहृदयवचसामहृदयमेवोत्तरमितिन्यायेनतथाविधमेवोत्तरंददातिसिद्धांती पुंसइति । कस्यचित्पुंसोबाल्यावस्थानाशेतद्विरुद्धंयौवनंत्वयिकुतोनजायतेइत्यर्थः । एवं प्रतिरुद्धोवादीकर्मंगोपिसृष्टिंप्रतिकारणतेत्यनुस्मृत्याह कर्मेति । तत्रयौवनसृष्टौ । तथाचमयापिकर्मणांनिमित्तत्वंस्वीकृतमेवेत्याहसिद्धांती तदत्रापिसमंममेति । अत्रदृष्टिसृष्टौ तत्कर्माश्रयणे नव्यवस्थोपपादनंममापिसमं मयापिसुकरमित्यर्थः ३६५ शंकते महाभूतेति । भवतोदृष्टिसृष्टिवादिनोमतेमहाभूतानांजनौकर्मकारणंनभवतिकिंतुभौतिकानामेवभोगोपकरणानांसृष्टाविति सि द्धांत्याह एतदिति । एतच्छंकारूपेणपरिणतमात्मीयाज्ञानमेवत्वयाशंकमानेनप्रकटीकृतंनशंकितमित्यर्थः ३६६ यदज्ञात्वापूर्वपक्षिणाशंकितंतंश्रुतिस्मृतिन्यायसिद्धमर्थंकर्मापेक्ष्यात्मनःस्रष्टृत्वा दिकारणत्वरूपंदर्शयति यतइति । यतइतिश्रुत्यादिसिद्धमितिशेषः । इतिकिम् जगतोयोनिरभिन्ननिमित्तोपादानंप्राणात्माकारणोपाधिकःकर्मवासितःकर्मणांसूक्ष्मावस्थारूपादृष्टसापेक्षएवसृष्ट्यादि करोतीति तथाचसप्तान्नब्राह्मणं 'सप्तान्नानिमेधयातपसाऽजनयत्पिता' इति सप्तान्नपदेनकार्यमात्रसंग्रहइतितत्रैवस्पष्टम् । तपसाकर्मणावैषम्यनैर्घृण्येनसापेक्षत्वादितिन्यायः स्मृतयश्चपुराण रूपाः ३६७ ननुकर्मणोजन्यमात्रकारणत्वंनसंभवतिप्रथमसृष्टौकर्मणोनिमित्तत्वासंभवादित्याशंक्याह संसारस्येति । तथाचपूर्वपूर्वकर्मनिमित्तिकोत्तरोत्तरासृष्टिरितिभावः ३६८

ननुकर्मणैवसर्वनिर्वाहेसतिमायास्वीकारोव्यर्थइत्याशंक्याह कर्मेति । मायाव्यर्थतानवक्तुंशक्याईश्यमात्रनिर्वाहकत्वात् कथमेतदितिचेत्कर्मण्येवतावन्निर्वाहकत्वंमायायाःपश्यतुभवानित्याह कर्मणोपीति । नियतिर्व्यवस्था ३६९ अनुपपत्तिंस्फुटयन्मायायाःसर्वनिर्वाहकत्वंसर्वानुभवारूढंकरोति इदमिति । यथा 'कार्त्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनं । सप्तजन्मभवेद्विप्रःस्याद्धनाढ्योवेदपारगः' इत्याद्युक्तमिदंकर्मास्यैवब्राह्मणदेहस्यधनाढ्यत्वप्रयुक्तसुखस्यैवचकारणमपरस्यब्राह्मणदेहभिन्नस्यशरीरस्यदुःखस्यचकारणंनभवतीत्येतत्कुतःकिमत्रनियामकमिति चोद्यस्यप्रतिक्रियापरिहारः नजानामीतिमायायाःवाचकंशब्दरूपंबोधकंहित्वानास्तिकिंतुनजानामीतिशब्दप्रयोगएवोत्तरं तथाचसर्वानुभवसिद्धायामायायाअशक्योऽपन्हवइतिभावः । फलितमाह तस्मादिति । तस्मात्सर्वनिर्वाहकत्वादियंदुर्घटकारिणीमायासार्थानव्यर्थाइत्यर्थः । ननुनजानामीतिशब्दःकथंभावरूपाज्ञानवाचकःज्ञानाभावबोधकत्वादितिचेत्किंकयत्किंचिद्ज्ञानाभावंप्रतिपादयतिकिंवाज्ञानसामान्याभावं । नाद्यः पटज्ञानकालेपिघटज्ञानाभावमादायनजानामीतिप्रतीतिप्रसंगात् । नद्वितीयः अभावज्ञानेप्रतियोग्यनुयोगिभानियमेनज्ञानसामान्याभावस्यदुर्वचत्वात्सामान्याभावस्ययावद्विशेपविरोधित्वात् । तस्मान्नजानामीत्यत्रनञःप्रकृत्यर्थान्वियेनज्ञाधातोर्ज्ञानविरोधिभावपरत्वमेवेत्यन्यत्रविस्तरः ३७० । ३७१ मायायादुर्घटकारित्वंस्फुटीकुर्वंस्तस्यादुर्घटकार्यांतरोपलक्षणमेकंदुर्घटंकार्यमादर्शयति स्वभावाद्याइति । स्वभावाद्याःस्वभावकालप्रभृतयोयेचार्वाकादिपक्षास्तान्सर्वान्यंखण्डनतर्करूपोराक्षसराजइमांमायारूपांजननींविनाकुतःसहायादत्तिभक्षयतिकिंतुमायाजननीप्रसादादेवात्ति । विज्ञमतस्यखंडयितुमशक्यत्वात्तमःप्रभवचार्वाकादिमतखंडनकालेखंडनतर्कराक्षसस्यखंडनीयमतानांचजननीमायानजा

> कर्मकारणपक्षेहिमायायाव्यर्थतानहि ॥ कर्मणोपिविनामायांनियतिर्नोपपद्यते ३६९ इदंकर्मकुतोस्यैवशरीरस्यसुखस्यच ॥ कारणंनपरस्येतिनास्तिचोद्यप्रतिक्रिया ३७० नजानामीतिमायायावाचकंशब्दबोधकम् ॥ हित्वातस्मादियंमायासार्थादुर्घटकारिणी ३७१ स्वभावाद्याहियेपक्षास्तान्सर्वानत्तिसर्वदा ॥ कुतोराक्षसराजोयंविनास्वांजननीमिमाम् ३७२ दुर्घटत्वमपिस्वस्यधर्मभूतंनलक्षयेत् ॥ कुतोराक्षसराजस्यस्पर्धानास्यैहिविद्यते ३७३ नजानामीतिवचनंकुतःस्याद्धिनिरर्थकम् ॥ नह्यज्ञेपुकुतःकश्चिद्ब्रूतेमानंसमाश्रितः ३७४

नामीतिरूपेणचार्वाकादिचित्तप्रादुर्भावरूपकरेणचार्वाकादिमतान्यादायैवकनिष्ठपुत्रायखंडनतर्कराक्षसराजायअशनमिवददातीतिमायायाःखंडनजयसंपादनरूपंदुर्घटंकर्मपश्यतेतिभावः । चार्वाकादिमतानामज्ञानमूलत्वेमानंच 'यावेदबाह्याःस्मृतयोयाश्चतासांप्रवृत्तयः । सर्वास्तानिष्फलाःप्रेत्यतमोमूलाहिताःस्मृताः' इतिस्मृतिः ३७२ परमतखंडनकालेस्वरक्षणरूपंचदुर्घटंमायायाःकर्मेत्याह दुर्घटत्वमिति । मायाजननीस्वस्यात्मनोधर्मभूतंदुर्घटत्वमपिनलक्षयेत् खंडनतर्कराक्षसराजान्नोपयेदितियावत् । यदितुलक्षयेत्तर्हितदपिराक्षसराजोभक्षयेदेवराक्षसानांस्वकुलभक्षकत्वप्रसिद्धेरित्याह कुतइति । राक्षसराजस्यअस्यैजनन्यैजननींप्रत्यपिस्पर्द्धाकुतोनजायतेकिंतुजायतएवराक्षसत्वादेवेति । तथाचपरमतपृष्ठभावेनप्रच्छन्नेवराक्षसराजमुपसर्पतिप्रायोमाया यदातद्दृष्टिगोचरीभवतितदातामपिराक्षसराजोभक्षयत्येवेतिभावः । तदुक्तंखंडनकृद्भिः'अभीष्टसिद्धावपिखंडनानामखंडिराज्ञामिवनैवमाज्ञा । तत्तानिकस्मान्नयथावदेवसेद्धांतिकेप्यध्वनियोजयध्वम्'इति अस्यार्थः अभीष्टस्यपरमतनिरासस्यसिद्धावपिखंडनतर्काणांराजनिभानामाज्ञाप्रभुशक्तिर्नकेनचिदखंडिखंडिता तत्तस्मात्तानिखंडनानियदिसिद्धांतस्वीकृतमायादिपदार्थंखंडयितुमुद्यतानिस्युस्तर्हिनवारणीयानीति ३७३ ननुनजानामीतिवचनस्यचोद्यप्रतिक्रियात्वंयदुक्तंतदनुपपन्नंनिरर्थकत्वेनानुत्तरत्वादितिचेन्न सर्वत्रोत्तराणांदृष्टस्यफलस्यपूर्वपक्षिमूकतासंपादनरूपस्यात्रापिसद्भावादित्याह नजानामीति । नजानामीतिवचनंकुतोहेतोर्निरर्थकंस्यान्नकुतोपीत्यर्थः । तत्रहेतुतयावादिमूकतासंपादनरूपंफलंदर्शयति नह्यीति । कुतइत्यग्रेऽन्वीतिशेषः । मानंसमाश्रितएवाहिप्रायोवादोयतोभवतिसचाज्ञेपुवयमत्राज्ञाइतिवदत्सुकुतइतिनब्रूतेकुतस्तवाज्ञानमितिनपृच्छति अज्ञानस्यपर्यनुयोगायोग्यत्वप्रसिद्धेः । किंतुमौनमेवकरोतीतिभावः ३७४

ननुघटादन्यस्तस्याआश्रयोभविष्यतितेनचसहागमिष्यतीत्याशंक्यानुपलब्धिविरोधान्नैवमित्याह घटादिति । तस्याजातेर्घटादन्यआश्रयस्तुनस्यादेवानुपलब्धेः अतोहेतोरघटागमेआश्रयस्यघटाभिन्नस्यजायमानव्यक्तावागमनस्यागमनस्याभावेप्येषाजातिःकथमागच्छेदित्याकारचिंतारूपंव्यसनंविपदपरपर्यायमापतेत् तस्यानिरंशत्वादवयवद्वाराप्यागमनंनसंभवतिपूर्वाश्रयपरित्यागानुपलब्धेश्चागमनानुपपत्तिरितिभावः तदुक्तं 'नायातिनचतत्रासीन्नास्तिपश्चान्नचांशवत् । जहातिपूर्वंनाधारमहोव्यसनसंततिः' इति ३९४ उदाहृतश्लोकेनचतत्रासीदित्यंशंस्फुटयति घटइति । घटउत्पद्यमानेपि सत्येषाजातिःप्रादुर्भावायतत्रैवस्थिताऽऽसीदितिनसंभवेन्नोपपद्येतकुतःकारणस्यआश्रयस्थितिरूपस्यप्रयोजकस्यघटोत्पत्तेःपूर्वमभावादित्यर्थः । सचकारणाभावोजातेपिघटेकस्मान्नकिंत्वस्त्येव अन्यत्रस्थितायाजायमानव्यक्तावागमनप्रयोजकाश्रयागमनाभावस्योक्तत्वादितिभावः ३९५ ननुघटेनसहोत्पद्यतांजातिरित्याशंक्यतथासतिजातित्वाभावापत्तिः यत्रयत्रोत्पद्यमानत्वंतत्रतत्रजातित्वाभावोयथाश्यामरूपादावितिनियमदृष्टेरित्याह घटेनसहेति ३९६ जातिंदूषयितुंप्रकारांतरेणविकल्पयति अपिसेति । साजातिरभावरूपाभावरूपावा अभावरूपत्वपक्षेपिकोऽभावस्तद्रूपंतस्याजातेःस्वरूपमितिवक्तव्यम् ३९७ कोभावइतिसूचितमभावभेदंदर्शयति अभावइति । वादिभिरभावोद्विविधःप्रोक्तः अनित्योनित्यश्च प्रागभावध्वंसान्यतररूपोऽनित्यः भेदात्यंता

घटादन्योनतस्याःस्यादाश्रयोतोऽघटागमे ॥ कथमेषासमागच्छेदहोव्यसनमागतम् ३९४ घटउत्पद्यमानेपिनैषातत्रैवसंभवेत् ॥ कारणाभावतःकस्मात्तत्रजाते घटेपिन ३९५ घटेनसहनैषापिजायतेश्यामतादिवत् ॥ तथात्वेसानजातिःस्यात्श्यामतादिर्यथागुणः ३९६ अपिसाऽभावरूपास्यादथवाभावरूपिणी ॥ अभावत्वेचकोऽभावस्तद्रूपमितिकथ्यताम् ३९७ अभावोद्विविधःप्रोक्तोऽनित्योनित्यश्चवादिभिः ॥ अनित्यःप्रागभावःस्यात्सकस्येतिनानिश्चयः ३९८ अर्थस्येतितदुत्पत्तौजातेर्नाशःसुनिश्चितः ॥ नित्योपिजायमानश्चेन्नित्योसौघटवन्नहि ३९९ अपरस्यापिनित्यस्यकुतोयोगोघटेनकिम् ॥ कस्माच्चनपटेनेहत्वैषम्ये नास्तिकारणम् ४०० भावेप्यभाववन्नस्यादनित्यत्वंकथंचन ॥ नित्यतायांचसानित्याकस्मादितिहिकथ्यताम् ४०१

भावान्यतररूपश्चानित्यः तत्रप्रागभावस्यजातिस्वरूपत्वेव्यक्तिविशेषसंबंधनियमोनस्यात् यतःप्रागभावेइतिननिश्चयः इतिकिम् सप्रागभावःकस्यअर्थस्यपदार्थस्यसंबंधीति नहिप्रागभावस्यप्रतियोगिविशेषेणसंबंधेकिंचिन्नियामकंवक्तुंशक्यंतथाप्रतियोग्युत्पत्तिनाश्यस्यप्रागभावस्यजातिस्वरूपत्वेसतिजातेर्नाशःसुनिश्चितोभवेदिति । एतौदोषौध्वंसरूपत्वपक्षेपिसमानावितिसूचयन्नित्याभावरूपाजातिरितिपक्षेनित्यपदेनध्वंसव्यावृत्तिशंकापूर्वकमाह नित्योपीति नित्योपिअभावोजातिस्वरूपत्वेनविवक्षितोजायमानोऽजायमानोवाऽऽद्येतस्यनित्यत्वंघटवन्नहिसंभवतीत्यजायमानोऽत्यंताभावादिरेवजातिस्वरूपतयावाच्यस्तत्रदोषमाह अपरस्येति । अपरस्याजायमानस्यापिनित्यस्यात्यंताभावादेर्घटेनैवजातिरूपतयाकिंयोगःपटेनापियोगःकस्मान्नभवतीतिपर्यनुयोगेसतिसमाधातुमशक्येवैषम्येकुत्रचिदवस्थितिरूपेकारणंनिमित्तंनास्तीतिननित्याभावस्यापिजातिस्वरूपत्वमितित्रयाणामर्थः ३९८ । ३९९ । ४०० एवमभावरूपाजातिरितिपक्षंनिरस्यभावरूपेतिपक्षंप्रत्याह भावइति । भावत्वपक्षेपिसाजातिर्नित्याऽनित्यावातत्रानित्यत्वंकथंचननस्यान्नोपपद्येतयतोऽभाववत्अभावव्याप्तं । अनित्यत्वेस्वीकृतेएकघटाभावेतस्याअभावोपिस्वीकार्यःस्यात्तथाचसर्वदेशेषुघटाभावबुद्धिप्रसंगइतिभावः । नित्यत्वंचेज्जातेर्ब्रूषेतर्हितस्याःकस्माद्धेतोर्नित्यतेतिपृष्टेसतिनित्यताप्रयोजकंत्वयावाच्यमिति ४०१

ननुविनाशकारणाभावोनित्यताप्रयोजकइतिचेत्सत्यं सतुअद्वितीयात्मन्येववर्त्ततेऽत्रजातौतुभ्रमादेवतवभासतइत्याह विनाशेति । यदिवस्तुतोजातिर्नित्यास्यात्तर्हिआश्रितनित्यतायाआश्रय नित्यताधीनत्वाद्घटेपिविनाशकारणाभावःस्यात्सतुनास्तीत्याह कस्मादिति । एपविनाशकारणाभावः ४०२ त्वत्सम्मतेव्यास्यैवानित्याश्रितानामनित्यत्वंसिद्धमित्याह आश्रितानामिति । भाव कार्यतयाघटेदृष्टाऽनित्यताइतिशेषः तस्याजातेस्तन्निष्ठायाःकेननिवार्यते ४०३ घटत्वजातेरभ्युपगमेपितदभ्युगमफलंलक्षणत्वेनेतरव्यावृत्तिसिद्धिरूपंनसंभवतीत्याह यादृशमितिद्वाभ्यां । यादृशंता दृशंवाघटत्वमस्तुतथाप्यनेनाभ्युपगतेनघटत्वेननोस्माकंकिंफलमिति नन्वितरभेदानुमितिरेवफलमितिचेत्स्यादेवैतत्फलंयदिघटस्यविपक्षव्यावृत्त्यात्मकंहेतुरूपंस्यात् विपक्षव्यावृत्तिश्वविपक्षधर्मपट त्वादिभेदरूपेति । घटत्वस्यपटत्वाद्भेदेहेतुर्वाच्यइत्याह आहोइति । आहोइत्यव्ययंवितर्के इत्यत्रप्रश्नेतदुत्तरंवदेति ४०४ घटेति । घटत्वंपटत्वाद्भिन्नंघटाश्रयत्वात्घटरूपवदितिचेद्ब्रूयेतर्हिअहोविवेकसा मर्ग्रीसन्निधानेपिस्थितत्वादाश्चर्यरूपस्तवमहानयंमोहःप्रमादः । तमभिनयति यदिति । यद्यस्मादसिद्धेनसंदिग्धत्वात्स्वरूपासिद्धेनहेतुनापटाश्रयत्वेनासिद्धंसाध्यंभेदरूपंसाध्यते निश्चितेनहेतुनाहि साध्यंसाधनीयंघटएवघटत्वमिति घटाश्रयत्वनिश्चयोहिनाद्ययावज्जातः घटस्वरूपस्यानिर्णयेतन्निरूपिताश्रयतायानिर्णेतुमशक्यत्वादितिभावः ४०५ एवंघटशब्दवाच्यत्वंघटइतिबुद्धिविपय त्वंवाघटस्यलक्षणंनसंभवतीत्याह एवमिति । यथाघटत्वंनलक्षणमेवंघटशब्दधियोविपयतापिघटस्यलक्षणंनस्यादित्यन्वयः । तत्रविषयतासामान्यंवालक्षणंविषयताविशेषोवानाद्यइत्याह विपय

विनाशकारणाभावोभवतैवात्रकल्पितः ॥ कस्मादेषघटेनस्यात्तस्याआश्रयरूपके ४०२ आश्रितानामनित्यत्वंत्वयैवांगीकृतंयतः ॥ कार्येभावेघटेदृष्टातस्याःकेन निवार्यते ४०३ यादृशंतादृशंवास्तुघटत्वंकिमनेननः ॥ अहोभिन्नंपटत्वाद्धिकुतइत्यत्रतद्वद ४०४ घटाश्रयत्वादितिचेदहोमोहोमहानयम् ॥ यदसिद्धमसिद्धेन साध्यतेभवताधुना ४०५ एवंविषयतानस्याद्घटशब्दधियोरपि ॥ घटस्यविषयोयस्मात्पटादिश्चघटोयथा ४०६ विषयःकोयमित्यत्रपृष्टेसतिघटोयथा ॥ नज्ञा तोविषयोप्येवंभवतानावधार्यते ४०७ विषयेनियतानैवकाचिदर्थक्रियास्तिहि ॥ नजातिर्नचधीशब्दौतस्यैवाऽसिद्धितोऽधुना ४०८ उदकाहरणादीनामपि सत्वेघटेनच ॥ अयंघटस्त्वयामह्यंकथितोस्तिकथंचन ४०९

इति । यथाघटोविपयस्तथापटादिरपियतोविपयस्तथाचातिप्रसंगःस्पष्टः नद्वितीयोपि घटशब्दधीनिरूपिताघटनिष्ठाविपयताहिलक्षणत्वेनवाच्यासाचपरैःसंबंधिद्वयस्वरूपात्मिकाज्ञानजन्यफ लाश्रयत्वरूपांवाविपयताभ्युपगच्छद्भिर्घटस्वंरूपनिर्धारणंविनादुर्वचेति सिद्धांतसिद्धाचित्तादात्म्यरूपाविपयतातुअज्ञानजन्यत्वव्याप्यकल्पितत्वसिद्ध्यधीनेतिभावः ४०६ असिद्धेनासिद्ध स्यसाधनरूपोदोपोप्यत्रस्थितएवेत्याह विपयइति । कोयंविपयपदार्थइत्यत्रार्थेमयापृष्टेसतिभवतायथाघटस्वरूपंननिर्धारितंएवंविपयपदार्थस्वरूपमतिप्रसंगपरिहारेणननिर्धारयितुंशक्यं घटीया विपयतापटीयाकुतोनभवतीत्याक्षेपस्यापरिहारात् तथाचतादृशविपयतयाघटसाधनमसिद्धेनासिद्धसाधनमेवेतिभावः ४०७ अवधारणाभावेतद्व्याप्यलिंगालाभंहेतुतयाह विपयइति । विपयेनि यताविपयत्वव्याप्याकाचिदपिअर्थक्रियाअर्थस्यफलस्यनिष्पत्तिर्यथावन्हेर्दाहक्रियातद्वन्नास्ति नचज्ञानमेवविपयताफलं विपयतायाज्ञानात्पूर्वमसिद्धेः तस्यविपयस्यैवनियताजातिरपिनवाच्या नचतन्नियतौधीशब्दौनिरूपयितुंशक्यौ कुतः अधुनापिपर्यनुयोगकालेअसिद्धितःअसिद्धत्वात् अतिप्रसंगशंकाविशेषणमूर्छितत्वादितियावत् अभिमानमात्रेणान्यदासत्वंतुयुद्धकालेप्रच्छन्नीभवद्यो धवदकिंचित्करमितिभावः ४०८ किंचयत्रोदकाहरणादयोलोकप्रसिद्धाहेतवोलब्धास्तस्यघटस्यापिनिर्धारणंयस्यभवतोदुष्करमासीत्तस्यतेविपयनिर्धारणदुष्करताकिमुवाच्येत्याह उदकेति । उद काहरणादीनांसत्वेप्ययंघटोमह्यंत्वयानचकथितइतिसंबंधः ४०९

ननुअज्ञानरूपदोषालंबनेनवादिविजयोपिपराजयनिभइतिचेत्सत्यं । आत्माज्ञानस्यदोषत्वमेव 'नचेदिहावेदीन्महतीविनष्टिः' इत्यादिश्रुतेः प्रपंचस्यतुमुमुक्षोर्विस्मरणीयत्वात्तदज्ञानंगुणएवे
त्याशयेनाह जन्मादीति । नृणामात्माज्ञानांधानां । अयंभावः आत्मज्ञानेसर्वस्यज्ञातत्वात्प्रपंचस्योपेक्षणीयत्वाच्चविशेषाज्ञानमदोषआत्माज्ञानेतुकर्दमलिप्तस्यधूलिलेपवज्जन्माद्यज्ञानमदोषइ
ति ३७५ प्रपंचस्यानिर्वचनीयत्वेनविशेषतोज्ञातुमशक्यत्वाच्चतदज्ञानमदोषइतिसूचयितुंप्रपंचोत्पत्तेस्तर्कायोग्यत्वमाह आनंदात्मेतित्रिभिः । आनंदात्मैकरसोऽद्वितीयआत्माविचित्रत्वादिवि
शेषणकंविश्वंकथमनेकधाजनयदितिपृष्टेवक्तुंसमाधातुंतदसंभवेविज्ञातुमपिवाकःप्रभुःसमर्थोभवेदितित्रयाणांसंबंधः ३७६ । ३७७ । ३७८ जगतोऽचिंत्यशक्तितांस्फुटयति यस्मिन्निति । यस्मि
न्विश्वस्वरूपेएकैकमपिवस्तुअनेकप्रमाणैरपिकिमस्यस्वरूपंकियंतोस्यधर्माःकियंतोवयवाइत्येवंज्ञायतेतद्विश्वंसमग्रंवक्तुंकःशक्नुयादिति ३७९ जानीमइति । वयंविश्वंजानीमइतियेषामभिमानस्ते
स्माकंपुरतःपृष्टाःसंतएकंपुरोवर्त्तिनंघटंनिरूपयंत्विति ३८० एतद्घटस्यनिरूपणंनामतरस्वरूपस्यतदितरव्यावृत्तेर्व्यावृत्तिप्रयोजकधर्मस्यचनिरूपणमितिमत्वास्वरूपादिकंपृच्छति घटइति । घटः
कोयमितिपुरोवृत्तिघटस्यस्वरूपप्रश्नः । अयंघटोऽघटःघटभिन्नएवकुतोनभवति तथाचास्यकथमितरव्यावृत्तिरितिव्यावृत्तिप्रश्नः । एतद्घटस्येतरव्यावृत्तिप्रयोजकधर्मोपिचक्षुरादिसंबंधएववक्तव्यः
जात्यादेस्तथात्वस्यनिरसिष्यमाणत्वात् सचनेत्रादिसंबंधोऽस्यैवघटस्यास्तिपरस्यएतद्भिन्नस्यनेत्यत्रैवकिंनियामकं । इदंपदार्थपुरोवर्तित्वस्यघटत्वस्यचविवादारूढत्वेतन्नियम्येंद्रियसंबंधस्यव्या

जन्मादिविपयेनृणामज्ञतानैवदूषणम् ॥ अंधस्यहिनदोषोस्तिरूपाज्ञानेकथंचन ३७५ आनंदात्माप्रकाशैकस्वभावोद्वयवर्जितः ॥ असंगोनिर्गुणोऽनंतोवि
क्रियादेरनाश्रयः ३७६ आवाङ्मनसगम्योपिविश्वमेतदजीजनत् ॥ विचित्रंविविधाकारमचिंत्यानंतशक्तिकम् ३७७ विलक्षणंप्रमाणादिभेदभिन्नमनेकधा ॥
इतिकोनामवक्तुंविज्ञातुंचप्रभुर्भवेत् ३७८ यस्मिन्नेकैकमप्यत्रप्रमाणशतकोटिभिः ॥ नज्ञायतेस्वरूपेणतथाधर्मादिनापिच ३७९ जानीमोवयमित्येवंबुद्धिर्ये
षांमहात्मनाम् ॥ तेपृष्टाःप्रवदंत्वत्रघटमेकंमहाधियः ३८० घटःकोयंकुतोवास्याद्घटोऽयमघटोनहि ॥ कस्मादस्यहिसंबंधोनेत्राद्यैरपरस्यन ३८१ अयमित्येष
निर्देशःसर्वस्यास्तिहिवस्तुनः ॥ घटइत्यपिनिर्देशोविद्यतेहिघटांतरे ३८२ यथाघटेघटाभावःपटेप्येवंसविद्यते ॥ कुतोघटःपटोनस्यात्पटोवापिघटोनकिम्
३८३ नेत्राद्यैर्विद्यतेयावत्संबंधोत्रघटस्यहि ॥ यादृगेवहिसंबंधःपरस्यापिसतैःसमः ३८४

वर्तकतयाऽऽश्रयितुमशक्यत्वादित्याशयेनधर्मप्रश्नःनेत्राद्यैरिति ३८१ अथघटस्वरूपसाधनायवादिनावक्तव्यत्वेनसंभावितानिलक्षणानिव्यभिचारेणदूषयति अयमित्यादिना । अयमितिनिर्देश
योग्यत्वंलक्षणंचेत्तद्दृश्यमात्रेऽतिप्रसंगि इदंपदस्यपराग्भाववाचकत्वात् घटपदप्रयोगयोग्यत्वंलक्षणंतर्हिघटांतरेऽतिप्रसंगः ३८२ अघटव्यावृत्तिरूपघटत्वशालीघटइतिनास्तिकमतेनलक्षणमाशंक्य
तदसंभवमाह यथेति । तादृशलक्षणार्थमघटस्तावन्निरूपणीयः घटभेदएवचतल्लक्षणंवाच्यं घटभेदनिर्णयश्चघटस्वरूपनिर्णयाधीनस्तदनिर्णयेचघटाभावोघटभेदरूपोयथाभवदभिमतेघटेसंदिग्धरूपे
णवर्ततेएवमेवपटेपिविद्यतेपटएवघटःकिंनस्यादितिशंकायाअनिवर्तितत्वात् एतादृशाघटव्यावृत्तस्यघटत्वेतुघटःपटःकुतोनस्यात्पटोवाघटःकुतोनस्यादितिघटनिरूपणाधीनाऽघटव्यावृत्तिरूपंघटलक्षण
मात्माश्रयग्रस्तमितिभावः ३८३ एवमिंद्रियाभिन्नत्वेसतिएतद्घटेंद्रियसंबंधनिरूपकत्वमप्यलक्षणमित्याह नेत्राद्यैरिति । अत्रदेशेवर्तमानस्यघटस्यनेत्राद्यैःसहसंबंधोयावद्यत्क्षणावच्छिन्नोयादृगे
वचसंयोगादिरूपोविद्यतेपरस्यापिएतद्घटभिन्नस्यापितत्समीपस्थस्यससमः । तत्रसंबंधेएतत्स्वरूपस्यनिवेशस्तुस्वरूपनिर्णयाधीनइत्युक्तमितिभावः ३८४

२३

उदकेति । उदकानयनेशक्तत्वंघटत्वंत्वयाभिमतंचेत्तर्हिघटांतरस्यएवद्घटभिन्नस्यपटस्यपात्रांतरस्यवाजलानयनसमर्थस्यएतल्लक्षणंविद्यतेतथाचायंघटःसघटांतरादिरूपःकुतोनस्यादितिउद्देश्यापेक्षयापुंस्त्वम् ३८५ उदकाहरणंचायमिति । उदकाहरणमपिक्रियात्वेनकारकमात्रंपूर्वंकारणसजातीयमपेक्षते यथापचिक्रियाग्नित्वेनपूर्वाग्निसजातीयमग्निमेवंचपार्थिवत्वेनपृथिवीविकारत्वेन पूर्वंघटसजातीयोऽयंपुरोवर्तीउदकाहरणकरःपटएवकुतोनभवतीत्यर्थः ३८६ नन्वस्यपटत्वेघटत्वाभावापत्तिःस्यादित्याशंक्यकिंघटत्वभावेपटत्वाभावोनास्तितथाचैकस्याभावेऽवश्यमंगीकर्तव्ये विनाप्रमाणंघटत्वमभ्युपगम्यपटत्वाभावांगीकरणमयुक्तमित्याह घटस्येति । घटस्यपटत्वंनस्यादितिचेद्ब्रूषेतर्हिपटस्यघटत्वमपिनस्यादेव एवंघटत्वपटत्वयोरन्यतरांगीकारेऽन्यतरस्याभावेस्वीकार्यत्वेनसमानेअयंघटएवेत्यभिमानेकस्तेपक्षपातोदुराग्रहइत्यर्थः ३८७ उदकाहरणेशक्तइति । उदकाहरणेशक्तिमान्योघटःसएवघटःघटतेशक्तोभवतीतियोगस्यैवलक्षणत्वादितिचेद्ब्रवीषितर्हिसच्छिद्रघटादौघटधीर्नस्यात्सातुभवतीत्यव्याप्तिः ३८८ किंच शक्तेःकार्यानुमेयत्वात्कार्यारंभात्पूर्वमसिद्ध्यातयालक्षणभूतयाघटधीर्नस्यात्सापिदृश्यतइत्यलक्षणमेतदित्याहोदकाहरणाभावइति । आपाकोघटपाकस्थानम् ३८९ अत्रलक्षणेपात्रांतरेष्वतिव्याप्तिश्चेत्याह उदकाहरणेशक्तमपीति । तद्भांडादिकं तदाएतादृशलक्षणकरणे ३९० घटत्वजातिमान्घटइतिलक्षणमाशंक्यतत्रघटत्वजा

उदकाहरणेशक्तोघटोयमितिचेन्मतम् ॥ घटांतरादेरेतत्स्यात्कुतःसोयंघटोनहि ३८५ उदकाहरणंचायंकुरुतेनपटःकुतः ॥ पार्थिवत्वंहिसामान्यंविद्यतेतूभयोर्यतः ३८६ घटस्यनपटत्वंचेद्घटत्वंचपटस्यन ॥ द्वयोरन्यतरासत्वेपक्षपातःकुतोघटे ३८७ उदकाहरणेशक्तोघटश्चेद्धिघटोभवेत् ॥ सच्छिद्रादौघटेनस्याद्घटोयमितिधीःक्वचित् ३८८ उदकाहरणाभावेतच्छक्तिर्नैवगम्यते ॥ आपाकादिस्थितेकुंभेघटधीस्तेकथंभवेत् ३८९ उदकाहरणेशक्तमपिभांडादिकंबहु ॥ विद्यतेतत्कुतोनस्याद्घटधीशब्दभाक्तदा ३९० घटत्वजातियोगोपिनियंतुंनैवशक्यते ॥ जातेःसर्वगतत्वेस्यात्पटेनापिबलाद्विसः ३९१ आकाशोघटसंबद्धःपटेनासौनयोगभाक् ॥ नकदाचिदतस्तस्याएकदेशास्थितिर्भवेत् ३९२ असर्वगाजडाकेनघटमेवव्रजेद्धिसा ॥ अपिमूर्ततथाद्रव्यंवादिनांगतिमद्भवेत् ॥ अमूर्ताद्रव्यरूपेयंकुतोयात्याश्रयंविना ३९३

तिःसर्वगतापरिच्छिन्नावेतिविकल्प्याद्येऽतिप्रसंगंदर्शयति घटत्वेति । जातेःसर्वगतत्वेसतिघटत्वजातेर्योगएतादृशव्यक्तिष्वेवनान्यास्वितिनियमोवक्तुमशक्यः तथासतिसघटत्वजातियोगःपटेनापिस्यात् बलाद्विभुत्वसामर्थ्यादन्यथाविभुत्वंव्याहतंस्यादित्यर्थः ३९१ विभोःसर्वगतत्वेदृष्टांतमाह आकाशइति । आकाशोघटसंबद्धःसन्कदाचिदपिपटेनसहनयोगभाक्असंबद्धोनभवतीतिकिंतुसंबद्धएव अतोविभुत्वपक्षेकुत्रचित्संबंधःकुत्रचिन्नेतिव्यवस्थानुपपत्तेः तस्याजातेःस्थितिरेकदेशाएकोदेशोयस्यास्तादृश्येवत्वयावाच्याभवेत् तथाचपरिच्छिन्नत्वकल्पःसमागतइत्यर्थः ३९२ अपरिच्छिन्नपक्षंदूषयति असर्वगेतिचतुर्भिः । साजातिरसर्वगासतीघटमेवव्रजेदितिकुतोनियमः नचसास्वकीयाव्यक्तीरालोच्यतत्रैवगच्छेदितिवक्तुंशक्यं आलोचनस्यजडेबाधात् । किंच परिच्छिन्नपरिमाणरूपमूर्तत्वशालिद्रव्यत्वस्यक्रियाव्यापकस्याभावाज्जातौगमनंदुर्वचमित्याह अपिमूर्तमिति । वादिनांवैशेषिकादीनांमतेयन्मूर्तंद्रव्यंतदेवगतिमद्भवेत् इयंतुअमूर्ताभावरूपाआश्रयंविनाकथंघटंयाति अमूर्तगुणादीनांगमनव्यवहारस्याश्रयगमनोपाधिकत्वप्रसिद्धेः तदाश्रयस्यव्यक्तयंतरस्यव्यक्तयंतरगमनंतुबाधितमितिभावः ३९३

ननुपृथुबुध्नोदरादिरूपाकृतिर्घटस्यलक्षणमस्त्वितिचेन्नाऽतिव्याप्तेरित्याह पृथ्विति । बुध्नोमूलंउदरंमध्यंच बुध्नोदरे पृथुनीबुध्नोदरेपरिशेषान्मुखंस्वल्पंयत्रतादृशआकारोप्यस्यपुरोवर्तिनोघटस्यनियामकइतरव्यवच्छेदेननिर्धारकोनसंभवति । यतःसर्वेपिभवदभिमतघटास्तादृशाकारवंतोदृश्यंतइतीदमपि पुरोवर्तिमात्रलक्षणंनसंभवतीतिभावः ४१० एतद्देशवृत्तित्वमेतत्कालवृत्तित्वंवाघटस्यनलक्षणमेतद्देशकालवृत्तीनामन्येषामपिभावेनातिव्याप्तेरित्याह देशेति । एवंपूर्वोक्तलक्षणवत् अस्यघटस्य एतादृशाएतद्देशकालसंबद्धाः परमतेदिक्कालयोःसर्वाधारताभ्युपगमात् घटदेशेप्यन्यपदार्थानांसद्भावादितिभावः ४११ तस्मादनिर्वचनीयत्वेनाज्ञानोपादानकोघटः नचघटोपादानमज्ञानंनानुभूयतइतिवाच्यम् तदननुभवेनजानामीत्युत्तरस्यवक्तुमशक्यत्वादित्याह किंचेत्यादिना ।
योयोघटःकेनचित्कथ्यतेत्वयाभिमानमात्रेणज्ञायतेवातत्रघटइतिकथनेज्ञानेचकुतइत्याकारेणनियामकेमयोदितेपृष्टेसतिनजानामीतिवचनंवावदिष्यसिकोपंवाकरिष्यसिइतोन्यदुत्तरमभिमानिनोपि भवतोनेक्ष्यतेनचद्रष्टुंसंभाव्यते तत्रकोपंविनायदुत्तरदानायतवचित्तेभासनेतदेवाज्ञानंघटोपादानमितिद्वयोरर्थः ४१२ ।४१३ घटोदाहरणस्योपलक्षणत्वात्एवंनीत्यासर्वप्रपंचकारणमज्ञानमवधार्यमित्याह एकमिति । स्पष्टः ४१४ ननुमायांतुप्रकृतिंविद्यादित्यादिश्रुतिभ्योपिजगतोमायोपादानकत्वनिश्चयसंभवात्किंतवानयाघटखंडनवाचोयुक्त्याइतिचेत्सत्यं तथापियेषांबुद्धिदोषेणश्रुत्यर्थेऽ

पृथुबुध्नोदरादिःस्यादाकारोपिनियामकः ॥ नघटस्यास्यदृश्यंतेयतःसर्वेपितादृशाः ४१० देशकालादिकंचैवंनस्यादस्यनियामकम् ॥ यतएतादृशाभावाःसंतिलोकेसहस्रशः ४११ किंचयोयोघटोनामकथ्यतेकेनचित्त्वया ॥ ज्ञायतेचमयातत्रकुतइत्युदितेसति ४१२ नजानामीतिवचनात्कोपाद्वादुष्टचेतनात् ॥ उत्तरंनान्यदीक्षेतभवतोप्यभिमानिनः ४१३ एकंघटंयतोनैवंशक्तावक्तुंकथंचन ॥ कुतोविश्वमिदंकृत्स्नंभवंतोवक्तुमीशते ४१४ भवतामपिसर्वेषामज्ञानमभिमानिनाम् ॥ मदुक्तेःसहकारित्वात्पुरतोभातिसर्वतः ४१५ सुदुर्घटमिदंयस्मान्निरूपयितुमंजसा ॥ विश्वंसमग्रंतस्मात्तदज्ञानादुत्थितंभवेत् ४१६ नहिमायाविनांमायांसकार्यांवेत्तिकश्चन ॥ पश्यन्नपितथाविश्वंजानातिहिनकश्चन ४१७ स्वप्नेपश्येद्यथारात्रौसागरंहृदयेनिजे ॥ सूर्यग्रहणसंयुक्तंमथुरोपवनेस्थितः ॥ असंभावितदेशादिमेवमेतच्चराचरम् ४१८ मायैषातस्यदेवस्ययोऽवाङ्मनसगोचरः ॥ यादृशंतादृशंह्यस्याःकार्यमेतच्चराचरम् ४१९

संभावनातान्प्रत्यपिमदुक्तिःसहकारीभूयगुरुखंदर्पणमिवाज्ञानमनुभावयतीत्याह भवतामिति । सर्वेषांभवतामभिमानिनामपिअज्ञानंपुरतइवभातिकस्मान्मदुक्तेःसहकारित्वादित्यन्वयः ४१५ अनिर्वाच्यत्वमेवास्यप्रपंचस्यमायिकत्वमावेदयति सुदुर्घटमिति । यस्मात्समग्रंविश्वंनिरूपयितुंसुदुर्घटमशक्यंतस्मादज्ञानादुत्थितंभवेदिति तदुक्तं ' यथासतोजनिर्नैवमसतोपिजनिर्नच । जन्यत्वमेवजन्यस्यमायिकत्वसमर्पकम् ' इति ४१६ दृष्टंचमायिकानांनिरूपणसमर्थज्ञानाविषयत्वमित्याह नहीति । लोकेपिमायाविनामैंद्रजालिकादीनांसकार्यांमायांकश्चनापिपश्यन्नपिनवेत्तिननिरूपणसमर्थज्ञानविषयीकरोतितथाविश्वंकश्चननजानातीति ४१७ स्वप्नवदसंभावितदेशादिसंबंधभानाच्चविश्वस्यमायामयत्वमितिदर्शयति स्वप्नेइति । यथारात्रौस्वप्नेमथुरोपवनेमथुरायाउपवनेस्थितःसन्सूर्यग्रहणसंयुक्तंसागरंनिजेहृदयेपश्येत् कीदृशंसागरमसंभावितदेशकालादिसंबद्धम् एवमयंमूढएतच्चराचरंपश्यतीति ४१८ एतच्चाज्ञानंनस्वतंत्रंकारणं किंत्वीश्वरस्यशक्तिभूतत्वात्त्परतंत्रमित्याह मायैषेति । एषाऽज्ञानत्वेनोक्तादेवस्यएकोदेवइत्यादिश्रुतिप्रसिद्धस्याविषयत्वेनज्ञेयस्यहियतोयादृशंतादृशमनिर्वचनीयमतोस्यामायायाएतज्जगत्कार्यमिति ४१९

॥ २० ॥

तस्यदेवस्यज्ञानवतांप्रपंचस्यतुच्छतयाभानात्तदज्ञानवतामेवचप्रपंचभानादज्ञानमूलत्वंस्पष्टमित्यभिप्रायेणालीकभानेप्रपंचभानेदृष्टांतीकरोति सर्पस्येति । सर्पस्यनभसिगच्छतःपादविन्यासचि न्हानियथांधोऽवलोकयेत्यथावाऽनेडमूकवचनंवधिरःशृणुयात्तादृशंविज्ञदृष्ट्याप्रपंचविज्ञानमिति ४२० प्रपंचदर्शनमेवाज्ञानलिंगमित्याह अतइति । अतोवस्तुतोऽसत्वेपिप्रपंचस्यभासमानत्वा द्योमन्यतेऽहंमायाविचेष्टितंजानामीतितस्याभिमानमात्रमित्याह विनेति ४२१ अतएवसृष्ट्यादिविषयेऽज्ञतानैवदूषणमित्युक्तमित्याह एवंभूतइति । अस्मिन्मायाविचेष्टितेएवंभूतेऽतिदुर्बोधे सतिसर्वेषांजगत्तत्त्वगोचरमज्ञानमुचितमेवेति ४२२ ममकुत्रापिनाज्ञानमितेवादिनोदुराग्रहंकैमुत्यन्यायेनखंडयति अपियत्रेति । यत्रसांनिध्यादात्मबुद्धिरपिकृतातस्यशरीरस्यापितत्त्वमविदु षोबाह्यगोचरमज्ञानंकिमुवाच्यमित्यर्थः ४२३ देहादप्यांतराणामिंद्रियाणामज्ञानमनुसंधायाज्ञतांस्वस्यप्रत्येतुमर्वानित्याह यैरितिद्वाभ्याम् । यैरिंद्रियैरयंजनोविविधानेकशोव्यापारान्कुरु ते कुतः स्वात्मधीबोधात्तेपुस्वात्मधीरूपंबोधमासाद्य कीदृशान्व्यापारान् नरकादेर्हेतुभूतान् तत्रमोक्षहेतुत्वंचित्तशुद्धिद्वाराबोध्यं तानींद्रियाण्यपियोनपश्यतिसइदंरूपेणवेद्यत्वादन्यरूपमव स्थितंविश्वंकुतोवलोकयेदितिद्वयोःसंबंधः ४२४ । ४२५ इंद्रियेभ्योप्यांतरार्थबोधकस्याभ्यस्यमानस्यचास्मच्छब्दस्याप्यर्थयोनजानातितस्यविज्ञानाभिमानोवृथेत्याह सुखेति । ममसुखंभूयान्म मदुःखंमाभूदित्येवमाकारयाधियाप्रवर्त्तनंकुर्वन्नेपजनोममशब्दार्थमपिनजानातिसोऽपरंकुतोजानीयादिति ४२६ अस्मच्छब्दार्थवत्तत्संबंध्यज्ञानमपिदर्शयति पूर्वेति । मेमत्संबंधिइतिपूर्वार्द्धोक्तप्र

सर्पस्ययदिपादानांविन्यासान्नभसिस्थितान् ॥ अंधोऽवलोकयेत्तद्वत्शृणुयाद्बधिरोपिहि ॥ अनेडमूकवचनंतादृग्विश्वस्यबोधनम् ४२० अतोमायाविनस्तस्य महेशस्यविचेष्टितम् ॥ नकोपिकिंचिज्जानातिविनाहंकारमात्मनः ४२१ एवंभूतेऽतिदुर्बोधेह्यस्मिन्मायाविचेष्टिते ॥ जगत्यज्ञानमुचितंसर्वेषामिहदेहिनाम् ॥ अपियत्रात्मधीर्जाताशरीरेऽस्यशरीरिणः ॥ नपश्यतितदप्येषकुतोन्यमवलोकयेत् ४२३ यैरिंद्रियैरयंशश्वद्व्यापारान्विविधानपि ॥ नरकस्वर्गमोक्षादेर्हेतुभूता ननेकशः ४२४ कुरुतेस्वात्मधीबोधात्तानप्येषनपश्यति ॥ कुतोवलोकयेद्विश्वंस्वान्यरूपमवस्थितम् ४२५ सुखदुःखेममेत्येवंधियाकुर्वन्प्रवर्तनम् ॥ ममश ब्दार्थमप्येषनजानातिकुतोपरम् ४२६ पूर्वंजन्मनिकिंमेभूदागामिन्यपिभाविकिम् ॥ इतियोवेत्तिनस्वस्यजानीयात्सकथंपरम् ४२७ अनुभूतान्यपिस्वेनकृ त्स्नशोनस्मरेद्धियः ॥ आगामिचनजानीयाज्जानीयात्सकथंपरम् ४२८ अर्थेष्वतींद्रियेष्वस्मात्प्रत्यक्षंनैवकारणम् ॥ किंतुपित्रादिवचनंप्रमाणंलोकईरितम् ४२९ पुरुषास्तेपिवेदेनज्ञातवंतोस्मदादिवत् ॥ वेदस्यवेदेनैवस्याद्रूपंयस्मादपौरुषम् ४३० कारणस्वस्यात्मनःसंबंध्यपियोनवेत्तिसपरमन्यत्कथंजानीयादित्यन्वयः ४२७ किंच योज्ञातान्यपिविस्मरतितस्याज्ञानेकःसंशयइत्याह अनुभूतानीति । कृत्स्नशःकृत्स्नानीत्यर्थः बह्वल्पार्थोदितिशस् ४२८ एवंजीवानामज्ञानप्रचुरत्वेसतिप्रत्यक्षस्यदुष्टकरणजन्यत्वेनाभा सत्वात्प्रत्यक्षविरोधेनवेदार्थेऽसंभावनानकार्यैतिवक्तुंलोकेशब्दस्यप्राधान्यंदर्शयति अर्थेष्विति । अस्मादज्ञानप्राचुर्यादेवहेतोरितिलोकईरितं इतिकिं अतींद्रियेष्वर्थेपुअतीतव्यवहारकुलाचारा दिपुप्रत्यक्षंकारणंसाधकंनभवतिकिंतुपितृप्रभृत्याप्तवचनमेवप्रमाणमिति तथाचोक्तविषयाघठादिस्वरूपस्यापींद्रियैर्निर्णेतुमशक्यत्वेनातींद्रियत्वात्तत्रापिशब्दएवहृष्टिसृष्ट्यादिवादीप्रमाणमि तिभावः ४२९ यदिकश्चिल्लौकिकोब्रूयान्नास्मत्पित्रादयोदृष्टिसृष्ट्यादिवदंतीतितंप्रत्येवंवदेन्मावदंतुतेपांपरमगुरुर्वेदस्तुवदतीत्याशयेनाह पुरुषाइति । येषांवचनंलोकेप्रमाणंतेपिमन्वाद्याःपुरुषावे दवाक्येनज्ञानंलब्धवंतः यथास्माभिर्वेदवाक्यादात्मज्ञानंलब्धंतथामन्वादिभिरितींद्रस्यवक्तुरुक्तिः । ननुवेदेनकुतोज्ञातमतआह वेदस्येति । वेदपुरुषस्यज्ञानंतुवेदेनवनत्वन्येनकेनचिदित्यर्थः । यतोवे दपुरुषस्यरूपंशरीरंवेदात्मकमपौरुषंभवतिपुरुषेणबुद्धिपूर्वकंनिर्मितंनभवतिकिंतुनिःश्वसितवत्पूर्वसमानरूपेणप्रादुर्भूतमित्यर्थः 'अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः'ब्रह्मस्वयंभ्व भ्यानर्षत्' इतिचश्रुतिः अभ्यानर्षत्ऋषिसंप्रदायेनप्रादुरभवदित्यर्थः । वेदाभिमानिपुरुषस्त्वेमानंचवार्तिकंयथा 'शब्दब्रह्मेतियंवेदंशास्त्रंवेदाख्यमुच्यते।तदप्यधिष्ठितंसर्वमेकेनपरमात्मना'इति ४३०

॥ २० ॥

तस्मादिति । यस्मादपौरुषमस्यरूपंतस्मादेवास्यवेदस्यज्ञानायस्ववाक्यप्रामाण्यायवापरापेक्षाइतरपुरुषाणांयथाभवतितथानास्तितस्मात्परमेश्वरोयमितिभावः । तस्मादेवहेतोर्वेदरूपईश्वरोय दस्माकमधिकारिणांकर्त्तव्यत्वेनकथयेदुपदिशेत्तदस्माभिरादृतैरादरंश्रद्धातिशयरूपंकुर्वाणैराजाज्ञावद्ग्राह्यमंगीकर्त्तव्यमित्यर्थः ४३१ एवंचप्रकृतव्याख्येयश्रुतिरूपेणवेदपुरुषेणोक्तमर्थमसंभावनांप रिहृत्यग्रहीतुंशृणुतेत्याह असाविति । असौवेदःसुप्तेसुषुप्तिकालेमरणकालेचमनआदेःकरणजातस्यप्राणएवोपसंहृतिंप्राह कीदृशस्यमनआदेः जीवोपाधितयाजीवात्मसंज्ञस्य तथाप्रबोधेजागर णकालेजन्मकालेचतस्मादेवप्राणाद्विलीनस्यैवमनआदेःपुनर्जनिंचनोऽस्मान्प्रतिप्राहउपदिशति । तदपिअनुग्रहमात्रेणेत्याह पित्रादिभ्यइति । यतोवेदःप्रत्युपकारानपेक्षत्वेनपित्रादिभ्योपिपर मोनृणांसुहृदितिद्वयोरर्थः ४३२ । ४३३ अस्माकमस्माद्वेदात्परोहितकृन्नास्तीत्याह अस्मिन्निति । मायामयेमायाप्रचुरेऽतएववाग्बुद्ध्योरगोचरेवक्तुंचिंतयितुमशक्येचास्मिन्प्रपंचेस्थितानामस्माकमुपकारायवेदोयद्वदतितत्सर्वथैवास्माकंपथ्यम् निःश्रेयसमाप्तिसाधनमितियावत् ४३४ तत्रदोषशंकांवारयति अस्येति । अस्यवेदपुरुषस्याव्याहतविज्ञानत्वात्सूर्यदर्शनायप्रवृत्तंचक्षुर्यथाप्रतिघातंगच्छतितथाअव्याहतंप्रतिघातशून्यंविज्ञानंयस्यएतादृशत्वादज्ञताकुत्रचिदपिविषयेऽज्ञानंनास्तिअज्ञनाभावेचाज्ञताप्रयुक्तादोषाभ्रमःप्रमादोविप्रलिप्साचवंचनेच्छारूपाइत्याद्याःकुतः स्युः । अस्यनिरावरणज्ञानतांवेदइतिनामैवाख्यातीत्याह यस्मादिति । यस्माद्वेदनमेवशुद्धंज्ञानमेववेदपदार्थइत्यर्थः । चित्प्राधान्येनवेदसृष्टेराकरेषुप्रपंचितत्वात्तदभिमानिनोपिपरमेश्वररू

तस्मादस्यनचापेक्षाभवेत्पुरुषवत्सदा ॥ तस्मादेवयदस्माकंकथयेद्वेदईश्वरः ॥ राजशासनवत्तद्धिग्राह्यमस्माभिरादृतैः ४३१ असौचसुप्तेमरणेप्राणएवोपसंहृतिम् ॥ मनआदेस्तुजीवात्मनामधेयस्यसर्वदा ४३२ प्रबोधेचजनौतद्वत्तस्मादेवपुनर्जनिम् ॥ विलीनस्यैवनःप्राहपित्रादिभ्यःसुहृन्नृणाम् ४३३ अस्मिन्मायामयेकार्येवाग्बुध्योरप्यगोचरे ॥ यद्वदत्ययमस्माकंपथ्यंतत्सर्वथैवहि ४३४ अस्याव्याहतविज्ञानरूपत्वादज्ञतानहि ॥ नदोषःकोपियस्मात्सवेदोवेदनमेवहि ४३५ वेदनंनजडंप्रोक्तंपरिच्छिन्नंचकर्हिचित ॥ आनंदात्माततःप्राणोवेदएषप्रकीर्तितः ४३६ कस्तंपर्यनुयोक्तुंस्यात्प्रभुरन्यःपुमानिह ॥ चक्षुष्मंतंस्वजनकंयथांधोरूपभेदने ४३७ तस्मात्तदुक्तविज्ञानेयावद्बुद्धिःप्रधावति ॥ तावत्तस्यप्रसिध्यर्थंयतितव्यंप्रयत्नतः ४३८ धर्मात्मनोयथाराज्ञःपितुर्वाऽतिहितस्यच ॥ वचनंनपरित्याज्यंतथावेदस्यशासनम् ४३९

पत्वोक्तेरितिभावः ४३५ वेदनरूपत्वेब्रह्मरूपतांस्फुटयति वेदनमिति । वेदनस्यजडत्वंपरिच्छिन्नत्वंचमानाभावान्नसंभवतीतिप्रथमाध्यायेप्रपंचितं तथाचपूर्णत्वेनचिद्रूपत्वेनचानंदात्मायःप्राणोपाधिरीश्वरउक्तःसएववेदः अतएवशब्दब्रह्मेतिप्रसिद्धिश्चेतिभावः ४३६ यदाएवंवेदःपरमेश्वरस्तदातंप्रतिदूरेविरोधोद्भावनमत्रभवतेवकथंनोक्तमित्याकारकप्रश्नरूपःपर्यनुयोगोपिदुष्करइत्याह कस्तमिति । तंसर्वज्ञंपर्यनुयोक्तुमप्यन्यःकःपुमान्प्रभुःशक्तोभवेत्नकोपीति । तत्रहेतुमज्ञानांधत्वंसूचयन्दृष्टांतमाह चक्षुष्मंतमिति । रूपस्यभेदनेभेदाख्यानप्रसंगेयथांधश्चक्षुःशालित्वेनविशेषज्ञंपितृत्वेनमान्यंचपर्यनुयोक्तुंनशक्तस्तद्वदित्यर्थः । नचबहवोमिलित्वापर्यनुयोक्ष्यंतीतिशंक्यं शतमप्यंधानामेकेनसुचक्षुषानसममितिन्यायात् पर्यनुयोगकर्तृतायाश्चसमेष्वेवदृष्टेरितिभावः ३७ तस्मादस्माभिरेतावदेवकर्तव्यमित्याह तस्मादिति । तस्माज्जीवानांतत्पर्यनुयोगाद्ययोग्यत्वात्तदुक्तविज्ञानेतेनवेदेनोक्तस्यार्थस्यविशेषेणावधारणेयावद्बुद्धिःप्रधावतिप्रसर्पतितत्पराभवतीतियावत् तस्यबुद्धिप्रधावनस्यसित्यर्थमस्माभिःप्रयत्नतोयतितव्यंसावधानैर्भवितव्यमित्यर्थः ४३८ ज्ञात्वाचतन्निष्ठैर्भवितव्यमित्याह धर्मात्मनइति । श्रोत्रेत्युत्तरश्लोकादपकृष्यते तथाचधार्मिकराजवाक्यवदतिहितपितृवाक्यवच्चवेदस्यशासनंश्रोत्रानपरित्याज्यमित्यन्वयः ४३९

२४

फलितमाह श्रोत्रेति । वेदसंबंधिविज्ञानाच्चायमर्थःसिद्धः तमर्थमभिनयति सुषुप्तावित्यादिना । आदिपदेनविषयाणांव्यापाराणांचग्रहः उत्थानेजागरणे ४४० प्रसिद्धसुप्तिवन्महासु
पुप्तितयाप्रसिद्धेमरणेपिलयोदयौबोध्यावित्याह प्रलीयतेइतिद्वाभ्यां । तथात्वंस्पष्टयति प्राणइति । प्राणेएतदिंद्रियादिकंएवंसुप्तावुक्तक्रमेणप्रलीयतइतिचतुर्थपादार्थः ४४१ उत्थानइति ।
जन्मनिपुनर्जन्मकाले ४४२ एवंयत्रेत्यादिवाक्यार्थंसविस्तरमुपवर्ण्याथतस्यैषासिद्धिरित्यादिसहोत्क्रामतइत्यंतंवाक्यंव्याकरोति तस्यप्राणस्येत्यादिषोडशभिः । तस्यपूर्वमद्वितीयतयावगत
स्यप्राणस्यप्राणोपाधेर्देवस्यएषावक्ष्यमाणासिद्धिःसिद्धेर्निश्चयस्यसाधनंमरणेअन्वयव्यतिरेकानुसंधानरूपमुक्तमित्यर्थः । सिद्धिशब्दस्यसिद्धिसाधनेलक्षणयावृत्तिंसदृष्टांतमाह यथेत्यादि ।
यथाभूमिष्ठस्यनिधानस्यनिधेरंजनेनसिद्धोस्त्यामंजनंसिद्धिरित्युच्यतेतथामरणकालेऽन्वयव्यतिरेकाभ्यामनुसंधीयमानाभ्यांप्राणएवसर्वात्माऽस्तीत्येषोर्थःसिद्ध्यतिनिश्चितोभवतिअस्माद्धेतोर्व
क्ष्यमाणमन्वयव्यतिरेकज्ञानंसिद्धिरित्युक्तमितिद्वयोरर्थः ४४३ । ४४४ व्याध्यादिनेति । यदायत्रावस्थायांपुमान्मनुष्यत्वादिनाप्रसिद्धोव्याध्यादिनाऽसह्यंदुःखंप्राप्नुयात् आतुरोभवेदिति

श्रोत्रावेदस्यविज्ञानात्सुषुप्ताविंद्रियादिकम् ॥ प्राणेविलीयतेतद्वदुत्थानेजायतेततः ४४० प्रलीयतेयथासुप्तौप्राणेस्मिन्निंद्रियादिकम् ॥ मरणेपितथाप्राणए
तदेवंप्रलीयते ४४१ उत्थानेप्राणतोयद्वत्सर्वमेतत्प्रजायते ॥ जन्मन्यपितथाप्राणादिदंसर्वंप्रजायते ४४२ तस्यप्राणस्यदेवस्यह्येषासिद्धिरुदीरिता ॥ यथा
सिद्धिर्निधानस्यभूमिष्ठस्यांजनेनच ४४३ अन्वयव्यतिरेकाभ्यांमरणेप्राणएवहि ॥ सिद्ध्यत्यस्माद्वक्ष्यमाणंज्ञानंसिद्धिरितीरितम् ४४४ व्याध्यादिनाय
दादुःखमसह्यंप्राप्नुयात्पुमान् ॥ मुमूर्षुर्वलशून्यत्वाच्छक्तोवक्तुंनचैवहि ४४५ एवंभूतंतदावीक्ष्यदर्शादीनतमामिमाम् ॥ बांधवाःपरिवृत्त्यैनंपृच्छंत्यातुरचे
तसः ४४६ जानासिमांप्रियंपुत्रंमांजानास्यपितेप्रियम् ॥ एवमादिसउक्तोपियदाकाष्ठसमःपुमान् ॥ नजानातितदाहुस्तमुत्क्रांतज्ञानएवहि ४४७ यद्य
नुत्क्रांतविज्ञानःशृणुयाच्चावलोकयेत ॥ वदेद्वापूर्ववन्नायंतादृक्तस्मादचित्तकः ४४८ अस्मिन्नवसरेसर्वेवागाद्याःकरणाभिधाः ॥ स्वैःस्वैस्तैर्विषयैःसार्धंलीयंते
प्राणएवते ४४९ यदायंजनिमान्भूयात्पुमान्सुप्तप्रबुद्धवत् ॥ ततःप्राणादिमेप्राणाजायंतेससुतादयः ४५०

यावत् । अथमुमूर्षुर्भवतिततोवलशून्यत्वात्श्रुतावावल्यपदेनोक्तंवलशून्यत्वंप्राप्यवक्तुमपिनशक्तोभवतिसंमूढोभवतीतियावत् ४४५ एवमिति । परिवृत्त्यवेष्टयित्वास्थिताइतिशेषः वक्ष्यमा
णप्रकारेणपृच्छंति ४४६ जानासीति । मांप्रियंपुत्रंजानासिमांतेप्रियंसुहृदंजानासीत्येवमादिकंप्रश्नवाक्यंउक्तःश्रावितोपिमुमूर्षुर्यदानजानातितदातेसमीपस्थाःपुत्रादयएवमाहुः । एवंकथं
यदयमुत्क्रांतज्ञानोजातः उत्क्रांतंगतंज्ञानंश्रुतौचित्तपदेनोक्तंमस्यसतथा ४४७ यदीति । यद्ययमनुत्क्रान्तज्ञानोभवेत्तर्हिपूर्ववत्श्रवणादिकंकुर्यात् अयंतुतादृक्पूर्ववत्श्रवणादिकर्त्तानभवतितस्मादचि
त्तकउत्क्रांतज्ञानएवेति ४४८ अस्मिन्निति । अस्मिन्नवसरेज्ञानोत्क्रमणव्यवहारकालेसर्वेवागाद्याःस्वविषयैःसहप्राणएवलीयंतेइति ४४९ तैर्वागाद्यैर्लीनैःसहैवशरीरांतरंगच्छतितत्रचप्राणात्स
र्वेवागाद्याजायंतेइत्याह यदायमिति । यथासुप्तःप्रबुद्धोभवतिएवंयदामृतःपुमान्पुनर्जनिमान्भूयात्तदाप्राणादिवक्ष्यमाणावागाद्याःससुतादयःसुतादिभिर्बाह्यैर्विषयैःसहजायंतेइत्यर्थः ४५०

ननुमरणकालेपिवागादयोभोगंकुतोनप्रयच्छंतीतिशंकांवारयति मरणेति ॥ स्वामिनःपुंसःकार्यैककरणाभिमानिनोजीवस्ययेपूर्वंभृत्यवत्स्थितावागादयआसंस्तेएवंपुमांसंमरणावसरेऽसमर्थंसंतंत्य
जंतितदर्थविषयव्यापारादुपरम्यभोगंनप्रयच्छंतीतियावत् यथाऽसमर्थंराजानंप्रजास्त्यजंतितद्वदिति ४९१ दृष्टांतांतरमाह अलब्धेति ॥ नलब्धंवित्तंयैस्तेतादृशाभृत्याःसंग्राममूर्द्धनिसंग्रामस्य
मस्तकसमेप्रधानकालेयथात्यजंतितथावागाद्याआत्मत्वाभिमानलक्षणंवित्तमप्राप्तामरणकालेत्यजंतीति ४९२ ननुवाचंविनापिनामव्यवहारोघ्राणंविनापिगंधव्यवहारइत्येवंकरणव्यवहाराअन्यतो
पिकुतश्चित्स्युरितिचेन्नान्यसाध्यव्यवहारस्यान्येनादर्शनादितिसोदाहरणमाह यथावैश्यस्येति । यथावैश्यजात्यानगरस्यसम्यक्त्यागेकृतेसतितत्तनेतत्रनगरेआपणादिकंवैश्यजातिसाध्यंवाणि
ज्यादिकंनदृश्यतेएवंवागादिभिःसंत्यागाद्धेतोर्नरिपुरुषेवचनादिकंनोदृश्यतइति ॥ एतेनवागादिकंस्वस्वविषयमभिविसृज्यतेत्यजतितद्विनाचतत्कार्यंदुर्लभमित्यर्थंकंवरगेवेत्यादिपर्यायचतुष्टयंव्याख्या
तम् ४९३ तत्रदेहेऽनुपलभ्यमानावागाद्याःकुत्रयांतीतिचेत्प्राणएवेत्याह रिपुणेति ॥ स्वल्पदेशाधिपतेःसामंतस्यसम्राट्कार्यायुद्ध्यमानस्यभृत्याःस्वामिनिसामंतेबलिष्ठेनरिपुणानिहतेसतिअ
न्यपार्श्वंजिगमिषंतोपिस्वामिभक्तत्वात्प्रभोःसामंतस्यप्रभुमेवश्रयंति ४९४ एवमिति ॥ एवमेतेवागाद्याःपश्चसम्राट्स्थानीयप्राणंसामंतस्तिभोमनुष्योहमित्यादिरूपेणकार्यैककरणाभिमानिजीवस्त

मरणावसरेपुंसःस्वामिनोभृत्यवत्स्थिताः ॥ त्यजंत्येनंयथानाथमसमर्थंप्रजाइमे ४९१ अलब्धवित्तकायद्वद्भटाःसंग्राममूर्धनि ॥ त्यजंतिस्वामिनंतद्वद्वागाद्या
मरणेध्रुवम् ४९२ यथावैश्यस्यसंत्यागेपत्तनेनापणादिकम् ॥ एवंवागादिसंत्यागान्नरिनोवचनादिकम् ४९३ रिपुणातिबलिष्ठेनप्रभौविनिहतेयथा ॥ संश्र
यंतिभटाःस्वामिभक्ताअन्यंप्रभोःप्रभुम् ४९४ एवमेतेसविषयाश्चेमाःकरणसंयुताः ॥ शरीरेपतितेदेहनाथंप्राणंसमाययुः ४९५ अन्वयव्यतिरेकाभ्यामेवं
सर्वाभिरिष्यते ॥ प्राणतोनैवतस्मात्स्याद्भिन्नंकिंचिदत्रहि ४९६ प्राणप्रज्ञानयोरैक्यमेकदोत्क्रांतिवासतः ॥ यदुक्तंतत्स्थितंयस्माद्प्राणेनास्तिवेदनम्
४९७ यथाप्राणोत्रनश्वासमात्रंकिंतुपरःपुमान् ॥ तथाप्रज्ञापिनोबुद्धिःकिंतुसंवित्स्वयंप्रभा ४९८ संविदेकायथाभूयाद्बहुधाप्येकधातथा ॥ शृणुराजन्हि
वक्ष्यामितंत्वमेकाग्रमानसः ४९९

स्यभृत्यायमानाःवागाद्याःस्वामिनिशरीरतादात्म्यापन्नेपतितेमूर्छितेसतिदेहस्यसर्वसंघातस्यपरमनाथंप्राणमेवसमाययुःप्राप्ताइति ४९५ फलितंदर्शयति अन्वयेति ॥ प्राणसत्वेसर्वस्यसत्वंतदु
त्क्रमणेतदभावइत्येवमाकाराभ्यामन्वयव्यतिरेकाभ्यांप्राणस्यसर्वाभिःसर्वस्यस्वस्मिन्विलापनरूपाभिरत्रवाक्यैरिष्य तस्मात्प्राणतोभिन्नंकिंचिदपिनास्तीतिसिद्धम् ४९६ अस्मान्मरणोदाहरणा
त्प्राणप्रज्ञयोरभेदोपिसिद्धइत्याह प्राणेति ॥ एकदासहैवोत्क्रांतेर्वासाच्चयत्प्राणप्रज्ञयोरैक्यमुक्तंतदपिस्थितमिति कुतः प्राणोत्क्रमणेज्ञानमस्योत्क्रांतमितिपार्श्वस्थानांव्यवहारप्रदर्शनादितिभावः
४९७ उपाध्योःप्राणप्रज्ञयोरद्वितीयत्वेचतदुपलक्षितस्याद्वितीयत्वंसुबोधमितिदर्शयितुंप्राणप्रज्ञयोर्लक्ष्यमभिनयति यथाप्राणोत्रेति । स्पष्टम् ४९८ तत्रप्राणस्याद्वितीयतास्फुटीकृताऽथप्रज्ञा
याअद्वितीयतास्फुटीकरणपरमथयथाऽस्यैइत्यादिश्रुतिग्रंथंव्याकुर्वन्प्रज्ञावाक्यार्थमाह संविदेकेति ॥ संवित्प्रज्ञापदलक्ष्यार्थरूपावस्तुतएकापियथायेनप्रकारेणोपाधिभिर्बहुधाभवनरूपेणबहुधाबहु
विधेवभवेत्तथाबहुधाभासमानापुनरेकधायथाभवेत्तंप्रकारंवक्ष्यामित्वमेकाग्रमानसःसन्शृणुइति ४९९

अथप्रज्ञावहुधाभवनविधाप्रदर्शकस्यवागेवेत्यादेःकामाःपरस्तात्प्रतिविहिताभूतमात्रेत्यंतस्यवाक्यार्थमाह पंचेत्यादिसप्तभिः । अत्रश्रुतौज्ञानेंद्रियाणिकर्मेंद्रियाणिदेहः अंतःकरणंचएतानिप्रज्ञायाविभेदकानिविवक्षितानि केभेंदकानि विषयैः कीदृशैर्विषयैः स्वैःस्वैर्व्यापारैर्विषयीकृतैर्व्याप्तैरित्यर्थः । तत्रत्वचोदेहेपायोश्चोपस्थेऽतर्भावंविवक्षित्वादशैवोक्तानीत्यववेयम् ४६० एतेषांविषयान्दर्शयति नामेतितिभिः । नामचादानंग्रहणंचश्रुतौकर्मपदोक्तंगतिश्चश्रुतोइत्यापदेनोक्तात्यागश्चांतर्भावाभिप्रायेणानुक्तःसुखंचश्रुतौआनंदरतिप्रजातिपदैरुक्तं । इमेक्रमेणकर्मेंद्रियविषयाःकीदृशाःप्रज्ञाभेदेनइंद्रियावच्छिन्नप्रज्ञाभागेनकृताःकल्पिताः दृष्टिसृष्टेरुक्तत्वादिति ४६१ शब्देति । शब्दादयोज्ञानेंद्रियैराहृताःआदरेणगृहीताविषयाः तत्रस्पर्शस्यसुखदुःखयोरंतर्भावोविवक्षितइतिबोध्यम् ४६२ देहस्येति । देहरूपकरणस्यसुखदुःखेविषयौ देहाद्बहिस्तयोरनुपलब्धेरितिभावः । अंतःकरणस्यकामाइच्छाविशेषाआदिपदेनसंकल्पादयोविषयाःश्रुताःश्रुतौभूतमात्रापदेनोक्ताः भूतानांपृथिव्यादीनांमात्रालेशाइतितदर्थः ४६३ एतैःप्रज्ञायाविभागेदृष्टांतमाह यथेति । यथाद्वादशगोपालाःसुपयस्विनींप्रचुरदुग्धांशीलेनकामधेनुसमांचएकांगांदुहंतितद्विकारंपयस्ततःपृथक्कुर्वंति किमर्थंस्वार्थंस्यस्वप्रयोजनस्यसिद्धयर्थं । एवंतेवागाद्याःप्रज्ञामेकामदूदुहन् चिदाभासत्वेनप्रसिद्धान्प्रज्ञाभागान्पृथक्कृतवंतइत्यर्थः अदूदुहदित्यस्यादूदूहमितिवि

पंचज्ञानेंद्रियाण्येवपंचकर्मेंद्रियाणिच ॥ देहोंतःकरणंचेतिद्वादशात्रविभेदकाः ॥ प्रज्ञायाविषयैःस्वैःस्वैर्व्यापारैर्विषयीकृतैः ४६० नामादानगतित्यागसुखाख्याविषयाइह ॥ कर्मेंद्रियाणांकथिताःप्रज्ञाभेदकृताइमे ४६१ शब्दस्पर्शरूपरसगंधाज्ञानेंद्रियाहृताः ॥ विषयानियतास्तेहिप्रसिद्धालोकवेदयोः ॥ देहस्याविषायवेतेसुखदुःखेइहेरिते ॥ तथांतःकरणस्यापिकामाद्याविषयाःश्रुताः ४६३ यथाद्वादशगोपालागामेकांसुपयस्विनीम् ॥ कामधेनुसमांसर्वेदुहंतिमिलिताअपि ॥ स्वार्थसिद्ध्यर्थमेवंतेवागाद्याअप्यदूदुहन् ४६४ शिखांवन्हेर्यथाभिन्नांकाष्ठैर्द्वादशभिस्त्विह ॥ भिन्नांवदंतिमनुजास्तद्वदेतैरिमांवयम् ४६५ यथाद्वादशभिर्दीपैःप्रकाशाविषयेष्विह ॥ प्रजायंतेद्वादशधातथाभूतेषुबोधनम् ४६६ इदंद्वादशधासर्वंज्ञानकर्मेंद्रियात्मकम् ॥ शरीरंबुद्धिसहितंप्रज्ञातादात्म्यमागतम् ॥ स्वंस्वंविषयमाप्नोतिप्रज्ञाविरहितंनहि ३६७

परिणामःश्रुतौ ४६४ एकस्याःप्रज्ञायाःउपाधिवशादनेकधाभावेदृष्टांतमाह शिखामिति । यथावन्हिशिखामेकांद्वादशभिःकाष्ठैरुपाधिभिर्भिन्नांमनुजावदंतितद्वदिमांप्रज्ञामेतैर्वागाद्यैर्भिन्नीकृतांवयमौपनिषदावदामइत्यर्थः ४६५ येनयेनेंद्रियेणयोयःप्रज्ञाभागःपृथक्कृतस्तत्तदिंद्रियविषयस्तेनतेनप्रकाश्यतइतिश्रुतिगतप्रतिविहितपदार्थंदर्शयति यथाद्वादशभिरिति । यथाद्वादशभिर्दीपैर्द्वादशधाद्वादशप्रकाराःप्रकाशाविषयेषुगृहादिदेशेषुजायंतेतथाद्वादशभिर्वागाद्यैर्भूतेषुभूतमात्रारूपेषुविषयेषुएकंबोधनंप्रज्ञास्वरूपंद्वादशधाजायते द्वादशरूपैर्विषयान्प्रकाशयतीत्यर्थः ४६६ अथप्रज्ञायाअविभागप्रदर्शनपरंप्रज्ञयावाचमित्यादिध्यानान्याप्नोतीत्यंतंवाक्यंव्याकरोति इदमिति ! इदंसर्वंज्ञानकर्मेंद्रियात्मकंकरणवृंदंशरीरेणबुद्ध्याचसहितंतद्वादशविधंयदुक्तंतत्प्रज्ञयातादात्म्यंवक्तास्मिद्रष्टास्मिश्रोतास्मीत्याद्यभिमानरूपंश्रुतौसमारोहणत्वेनोक्तंसमागतंप्राप्तंसदेवस्वंस्वंस्वकीयंस्वकीयंनामादिकंविषयंप्राप्नोतिप्रज्ञांविनातुनप्राप्नोतीति । तथाचप्रज्ञांविनाइंद्रियाभावादिंद्रियाभावेचविषयाभावात्विषयाणामिंद्रियमात्रत्वादिंद्रियाणांचप्रज्ञामात्ररूपत्वात्सिद्धःप्रज्ञायाअविभागः यथाघटानांमृन्मात्रत्वेमृदइतिभावः ४६७

ननुवागादयःप्रज्ञानिरपेक्षाएवकुतोनविषयंप्रकाशयेयुरितिचेन्न सत्यपिविषयसंबंधेप्रज्ञांविनाप्रकाशव्यतिरेकस्यसर्वानुभवसिद्धत्वादितिनहिप्रज्ञापेतेत्यादिपर्यायदशकेनोक्तमर्थमाह ज्ञानेतिद्वाभ्यां । ज्ञानेंद्रियकर्मेंद्रियशरीरधिषणापदवाच्यांतःकरणरूपाणिद्वादशकरणानिप्रज्ञायाबलेनैवजानंतिस्वबलेनस्वसामर्थ्येननतुनकिंचिज्जानंतिप्रज्ञायाअपायेविषयप्रकाशादर्शनादिति ४६८ अत्रार्थेलोकानुभवमभिनयति यतइति । यतएवंवक्तारोभवंतिदृश्यंते एवंकथमुक्तमपिनाममनाज्ञासिष्मनवयंज्ञातवंतः यतोनोस्माकंमनश्चित्तादात्म्यापन्नप्रज्ञारूपमत्रउक्तेनाममनिनासीदिति एवंचक्षुषादृष्टमासीत्शरीरेणसुखंबुद्धमासीत्तथापिमनसोन्यत्रभावान्नाज्ञासिष्मेति उपलक्षणंचैतदन्येषांतथाचश्रुत्यंतरं अन्यत्रमनाअभूवंनाश्रौषमित्यादि तथाचेंद्रियव्यापारेपिप्रज्ञायाश्चित्प्रतिबिंबग्राहिण्याव्यतिरेकेप्रकाशव्यतिरेकःसर्वानुभवसिद्धः । अन्यथातथाभिलापानुपपत्तेरितिभावः ४६९ उक्तार्थेफलंप्रज्ञायाअविभागमद्वितीयतारूपमभिनीयदर्शयति विषयाइतिद्वाभ्यां । एतेनामाद्याद्वादशविषयाःकरणैःसंगताःसंबद्धाअपिप्रज्ञाविरहिताःप्रज्ञांविनानप्रतीयंतेयथामृदंविनाघटादयोविकाराइति ४७० ततइति । ततोयद्यद्भानव्याप्यभानकंतत्ततोनभिन्नंयथाघटादयोमृदइतिनियमात्करणानांविषयाणांचप्रज्ञामात्रत्वात्प्रज्ञाएकरूपैवेतिसिद्धम् । नचप्राणभेदशंकापि सहोत्क्रमणादिनातदभेदस्योक्तत्वादित्याह प्राणतादात्म्यमागतेति । ननुकेयंप्रज्ञायस्याऐकरूप्यमुच्यतइत्यतआह अन्वयेति । यास्वीयान्वयव्यतिरेकाभ्यांकरणानांविबोधिनीसामर्थ्याधानकरीप्रसिद्धेति ४७१ ननुउक्तरीत्याप्रज्ञायाःसर्वात्मत्वेवागादयोपिसविषयास्तस्याएवरूपाणीतितेष्वात्मत्वबुद्धौकोदोषइ

ज्ञानकर्मेंद्रियाणीहशरीरंधिषणातथा ॥ प्रज्ञाबलेनजानंतिस्वबलेननकिंचन ४६८ यतोभवंतिवक्तारोनाज्ञासिष्मवयंत्विदम् ॥ उक्तंदृष्टंसुखंबुद्धमासीदत्रमनोननः ४६९ विषयाद्वादशैवैतेकरणैःसंगताअपि ॥ प्रज्ञाविरहितायस्मात्प्रतीयंतेनकर्हिचित् ४७० ततःप्रज्ञैवैकरूपाप्राणतादात्म्यमागता ॥ अन्वयव्यतिरेकाभ्यांकरणानांविबोधिनी ४७१ प्राणप्रज्ञास्वरूपंमांततोविद्धिप्रतर्दन ॥ मातेभवतुसंदेहोवक्तारंवाग्विवर्जितम् ४७२ एवंद्वादशधायोयंकरणग्रामईरितः ॥ तत्रसर्वत्रकर्तारंकरणग्रामवर्जितम् ४७३ करणंद्वादशविधंव्यापारेणात्मनस्तथा ॥ सहितंवेत्तियःप्राणस्तंमांजानीहिनापरम् ४७४

तिचेन्नतेषांप्रज्ञास्वरूपत्वेपिअकृत्स्नरूपत्वात् यत्कृत्स्नंप्रज्ञास्वरूपमिंद्रियाद्यनवच्छिन्नंतत्रैवप्राणोस्मिप्रज्ञात्मेत्युक्तविषयाऽहंबुद्धिःकर्त्तव्याइत्यर्थकस्यनवाचमित्यादेर्मंतारंविद्यादित्यंतस्यवाक्यस्यार्थमाह प्राणेति । ततःप्रज्ञायाःसर्वात्मकत्वाभिधानाद्वागादयोप्यात्मत्वेनवेद्याइत्याकारकस्तेसंदेहोमाभवतुकिंतुप्राणप्रज्ञास्वरूपंपूर्णमेवमांविद्धि पूर्णरूपाभिव्यक्तिहेतुश्चोपाधिविमोकइत्यभिप्रायेणविशिनष्टि वक्तारमिति । वक्ताहिवागुपकरणविशिष्टएवाख्यायतेयथाच्छिदाकरणवास्यादिविशिष्टएवतक्षाच्छेत्तेतिवाचोऽवच्छेदिकायाविवर्जनेतुवक्ताव्यापकप्राणप्रज्ञारूपएवावशिष्यतेइतिप्राणप्रज्ञारूपएवाहंवेद्यइत्युक्तमितिभावः ४७२ एवंविषयेभ्यःकरणांतरेभ्यश्चविविच्यावशिष्टंरूपमात्मत्वेनजानीयादित्याह एवमिति । एवंरीत्याद्वादशधायःकरणग्रामउक्तस्तेनविशिष्टंकर्त्तारंसंतंकरणग्रामवर्जितंकृत्वावशिष्टंजानीयादिति ४७३ एवंप्राणपदमद्वितीयार्थपरंप्रज्ञापदंचसर्वांतरार्थपरंदर्शितंतयोःपदयोस्त्रिविधपरिच्छेदशून्यात्मकाखंडार्थपरत्वंसामानाधिकरण्यलभ्यंस्फुटीकर्तुंप्रपंचमिथ्यात्वदर्शकस्यतावाइत्यादेर्नानेत्यंतस्यवाक्यस्यार्थंचतुर्दशभिर्निरूपयंस्तत्रैकेनश्लोकेनोपाध्युपलक्ष्यस्यस्वरूपंशृंगग्राहिकान्यायेनदर्शयति करणमिति । आत्मनःकरणस्यव्यापारेणविषयगोचरेणवदनदर्शनादिरूपेणसहितंसविषयंचकरणवृंदंद्वादशविधंसर्वंप्रपंचरूपंयोवेत्तिप्रकाशयतिप्राणःप्राणोपलक्षितकारणत्वोपलक्षितस्तंमांजानीहीति ४७४

नतुतस्याद्वितीयताकथं प्रकाश्यात्प्रकाशकस्यभेदादितिचेन्न प्रकाश्यस्यभिन्नत्वेनदुर्निरूपत्वादित्याह करणमिति । द्वादशविधंकरणंप्रज्ञामात्राशब्दितंतथातस्यद्वादशविधकरणस्यविषयोपितावान् द्वादशविधःएतद्द्वयंकरणविषयरूपंअन्योन्यंपरस्परमपिभिन्नंनसंभवति एतादृशस्यास्यद्वयस्यप्रज्ञाभेदस्तुकुतःस्यात् अधिष्ठानभूतप्रज्ञयाभेदोत्यंतंदुर्निरूपःसापेक्षत्वेनमिथ्यात्वादित्यर्थः ४७५ विषयकरणयोःसापेक्षतांस्फुटयति विषयइतिपंचभिः । योभूतमात्रात्मकोद्वादशविधोविषयःअसौनिर्विषयोविषयपदंभावप्रधानंविषयत्वेनहीनोनसिद्धचेत्किंतुविषयत्वरूपेणैवसिद्धचेत् विषयत्वंतुनिरूपकत्वेनकरणसापेक्षमिति भूतमात्रविषयरूपाःप्रज्ञामात्राधीनाइत्यसंगतं तथातादृशंनिर्विषयंविषयानपेक्षंकरणंनास्ति करणमित्युक्तेकस्येतिविषयापेक्षणादिति प्रज्ञामात्राभूतमात्राश्रिताइत्यर्थः ४७६ करणंविषयइति । करणंविषयइत्यनयोर्मध्येयद्येकएवकरणंवाविषयोवाभवेत् अपरोद्वितीयस्तुनभवेत्तर्हितस्यकेवलस्यकरणस्यविषयस्यतत्त्वंकरणत्वंविषयत्वंवाविहन्येतविघातंप्राप्नुयात् निरूपकाभावेनिरूप्याभावात् अतइदंद्वयंकरणविषयरूपंपरस्परसापेक्षमिति ४७७ तत्रदृष्टांतमाह पुत्रइति । पितृपुत्रयोरन्यतरस्याप्यभावेपितापुत्रइतिसंज्ञाद्वयंयथानश्यतेतथाकरणंविषयइतिसंज्ञेइत्यर्थः ४७८ विषयःकरणेति । विषयःकरणसापेक्षःकरणंतुविषयापेक्षमित्यन्यतरस्याभावेपरंद्वितीयमपिनभवेदिति ४७९ ननुश्रुतौभूतमात्रारूपेषुविषयेषुदशसंख्यो

करणंद्वादशविधंतावांश्चविषयोपिहि ॥ भिन्नंनान्योन्यमप्येतत्प्रज्ञयास्यकुतोभिदा ४७५ विषयोद्वादशविधोभूतमात्रात्मकोह्ययं ॥ करणग्राममाश्रित्यसिद्धोनान्यथाक्वचित ॥ एवंहिकरणग्रामःप्रज्ञामात्रात्मकोह्ययं । नासौनिर्विषयःसिध्येत्करणंनास्तितादृशम् ४७६ करणंविषयोवापियद्येकोनापरोभवेत ॥ तस्यतत्त्वंविहन्येतह्यन्यापेक्षमिदंद्वयम् ४७७ पुत्रःपितेतिसंज्ञेयेनाभावेपितृपुत्रयोः ॥ यथातथैवसंज्ञेयंविषयःकरणंत्विदम् ४७८ विषयःकरणापेक्षःकरणंविषयंतथा ॥ अपेक्षतेयतस्तेननान्याभावात्परंभवेत ४७९ शरीरमंतःकरणंविहायकरणद्वयम् ॥ सुखदुःखेतथाबुद्धिकामाद्यांश्चविहायहि ॥ दशेतिवचनंज्ञेयंश्रुतेर्बाह्येंद्रियार्थयोः ४८० सापेक्षाणिनसिद्ध्यंतिह्यन्योन्यापेक्षयैवहि ॥ किंत्वन्यंनिरपेक्षंतमाश्रित्यैनामवाप्नुयुः ४८१ रज्जुसर्पधियौयद्वत्सापेक्षेनैवसिद्धचतः ॥ अन्योन्यरज्जुमेवैकामनपेक्षांविहायहि ४८२

क्ता तथाकरणेपुग्रंथकृताचद्वादशेतिकथमुक्तमित्याशंक्यअंतर्भावाभिप्रायेणदशेत्युक्तमितिसमाधानसंभवेपिवक्ष्यमाणनेम्यराद्दृष्टांतानुगुण्यायबहिरिंद्रियाणिबाह्यविषयानेवचविवक्षित्वादशत्वाभिधानमितिसमाधानमाह शरीरमिति । शरीरंतथांतःकरणमित्येतदांतरार्थबोधकत्वादांतरंकरणद्वयंविहायतथासुखदुःखरूपंशरीरविषयंधीपदार्थज्ञातव्यसहितकामसंकल्पादिरूपमंतःकरणविषयंचविहायबाह्येंद्रियपरंबाह्यार्थपरंचश्रुतिसंबंधिदशेतिसंख्यावचनंबोध्यमित्यर्थः तथासतिबाह्यविषयाणांनेमिनिभानामरावन्मध्येभासमानेपुबहिरिंद्रियेष्वाश्रितत्वाभिधानंसुबोधंभविष्यतीतिभावः । ग्रंथकृतातुआंतरोपिविषयःकरणापेक्षयाबहिष्ठेनैवभासतेइतिमत्वाद्वादशेत्युक्तमित्यवधेयम् ४८० नन्वस्तुकरणानांविषयाणांचपरस्परापेक्षत्वंतथापिपरस्परापेक्षयैवस्वरूपलाभःसिद्धौसत्ताभानयोःकृतेतृतीयानपेक्षणात्तेषांसत्ताभाननिर्वाहकत्वेनात्मानसिद्धचेदित्याशंक्यपरस्परापेक्षाणांस्वानपेक्षतृतीयापेक्षांनियमंदर्शयति सापेक्षाणीतिद्वाभ्यां । यानियानिसापेक्षाणिवस्तूनितानितान्यन्योन्यापेक्षयैवनसिद्धचंतिसिद्धिंसत्ताभानरूपांनलभंतेकिंत्वितरानपेक्षंतंस्वातिरिक्तंकंचिद्भावमपेक्ष्यैवैनांस्वरूपसिद्धिमवाप्नुयुःप्राप्नुयुरित्यर्थः ४८१ तत्रोदाहरणमाह रज्जुसर्पेति । यथाअयंसर्पइतिभ्रमेइदंपदार्थोरज्जुर्विशेष्यतयाभासतेसर्पस्तुप्रकारतया सर्पोयमितिभानेतुविपर्ययेण तथाचरज्जुसर्पयोःप्रकारताविशेष्यताशालिनीधियौविशेषणविशेष्यतया-

सापक्षविषयत्वेनसापेक्षतयाप्रसिद्धे तेधियोरज्जुस्वरूपंनिरपेक्षंविहायानपेक्ष्यअन्योन्यंअन्योन्येनैवनसिध्यतः किंतुरज्जुस्वरूपंशुद्धमपेक्ष्यैवसिद्ध्यतइत्यर्थः । एवंप्रकृतेपिसापेक्षैःकरणैर्विषयैश्चस्व
सिद्धयेऽपेक्ष्यमाणआत्मासिद्धस्तेषांसापेक्षत्वंनमिथ्यात्वंचेतिभावः ४८२ एतत्सापेक्षंनानाभिन्नंनभवतिइत्यर्थकंन्यायरूपश्रुतिवाक्यशेषमनुमानविधयाव्याकरोति विषयाइतिपंचभिः । करणैः
सहविषयायेउक्तास्तेपरस्परमाश्रयाच्चनभिन्नाइतिप्रतिज्ञासदैवसापेक्षत्वादितिहेतुः ४८३ सापेक्षमिति । यद्यत्सापेक्षंतत्तन्मिथःपरस्परंआश्रयाच्चकथंचनभिन्नंनभवतियथोक्तरज्जुसर्पज्ञानादिकंस्वयं
परस्परंरज्जुतोरज्जुस्वरूपाच्चाश्रयान्नभिन्नंभिन्नमित्युदाहरणम् ४८४ यदिविषयाःकरणेभ्योभिन्नाःस्युस्तर्हिनिःस्वरूपाःस्युः मिथ्याभूतानांज्ञातसतांज्ञानात्पृथक्सत्तासंभवादितितर्कंसूचयन् करणप
दंकरणावच्छिन्नप्रज्ञाभागपरमितिदर्शयति विषयाःसर्वेइति । सर्वेएतेविषयाःस्वज्ञानात्पृथक्भिन्नानभवंत्येव यथारज्जुसर्पविज्ञानात्फणीरज्जुसर्पोनान्यइति सर्वेएवेत्युक्त्याकरणेष्वपियोविष
यांशःसोप्येवमितिसूचितम् ४८५ एवंप्रज्ञापदार्थंचितशबलवृत्तिरूपंविषयाश्रिताइत्युक्तमथप्रज्ञापदार्थंचिज्जडग्रंथिरूपंविवेकसूच्याविमुच्यतत्रजडांशवृत्तिरूपंज्ञानंविषयाणामाश्रयभूतंस्वभासक
चितोऽनवच्छिन्नायानिरपेक्षाश्रयत्वेनोक्तायाःसकाशान्नान्यमित्याह करणादितिद्वाभ्याम् । यतःकरणादुत्थितानिअतएवनित्यचिद्रूपज्ञानविलक्षणत्वेनजडानिवृत्तिरूपाणिदेहिनांविज्ञानानिं कीदृशा
नि करणैःसहवर्तमानानि तदवच्छिन्नत्वात् । पुनःकीदृशानि विषयाणामाश्रयभूतानि शुद्धचितोऽसंगत्वेनशबलप्रज्ञापदार्थनिष्ठायाविषयनिरूपिताश्रयतायाःसविशेषणेहीतिन्यायेनविशे

विषयाःकरणैःसार्धंनभिन्नास्तेपरस्परम् ॥ आश्रयाच्चसहैवैतेसापेक्षत्वेनहेतुना ४८३ सापेक्षंनमिथोभिन्नंनाश्रयाच्चकथंचन ॥ सर्पज्ञानादिकंयद्वत्स्वयं
वारज्जुतोपिवा ४८४ विषयाःसर्वएवैतेस्वज्ञानान्नपृथक्क्वचित् ॥ रज्जुसर्पस्यविज्ञानाद्यथानान्योस्त्यसौफणी ४८५ करणादुत्थितानीहजडानिकरणैःसह ॥
विषयाश्रयभूतानिविज्ञानानितुदेहिनाम् ४८६ विज्ञानद्रष्टृतःप्राणान्नभिन्नानीतिकर्हिचित् ॥ स्वप्नविज्ञानवद्द्रष्टाप्राज्ञःप्राणस्ततोस्तिहि ४८७ चक्रस्यारेपुलो
केस्मिन्नेमिर्यद्वत्प्रतिष्ठितः ॥ नाभावराःस्थितानैवनाभिःकुत्रापिसंस्थितः ४८८ विषयाःकरणेष्वेवंकरणानिमयीश्वरे ॥ प्राणेप्रज्ञास्वरूपेस्मिन्नहंक्वापिनसंश्रितः
४८९ विषयेंद्रियरूपस्यविश्वचक्रस्यसर्वदा ॥ अहंनाभिरितिप्रोक्तोह्यनन्याश्रयहेतुतः ४९० विषयोविषयीचेतिद्वयंसंसारईरितः ॥ अस्यसर्वस्यविज्ञाताप्र
ज्ञाप्राणोहमीरितः ४९१ मत्तःप्राणात्मनःप्राज्ञादिदंसर्वंविनिर्गतम् ॥ सदसद्रूपकंविश्वंयत्रमुह्यंतिसूरयः ॥ मय्यस्तिचतथांतेपिलयमेष्यतिमय्यदः ४९२

षणेपर्यवसानादितिभावः ४८६ विज्ञानेति । तानिजडविज्ञानानिसर्वेविज्ञानानांद्रष्टुःप्रकाशकात्प्राणपदलक्ष्यार्थान्नभिन्नानि यथास्वप्नविज्ञानानिसविषयाणिद्रष्टुःसाक्षिणोनभिन्नानितद्वत् ।
फलितमाह द्रष्टेति । तस्माद्यःसर्वद्रष्टाप्राज्ञःप्रज्ञोपलक्षितःप्राणःप्राणोपलक्षितश्चसएवास्तिनततोद्वितीयमस्तीतिसिद्धम् ४८७ उक्तार्थस्यदृष्टांतेनस्फुटीकरणपरंतद्ग्रंथैत्यादिव्याकरोति चक्रस्ये
ति । यथालोकेरथचक्रस्यारेषुतिर्यक्काष्ठेषुनेमिर्भूमिस्पृक्वलयाकारकाष्ठरूपःप्रतिष्ठितस्तानाश्रितः तेऽरास्तुनाभौचक्रमध्यकाष्ठेऽक्षाधारच्छिद्रवतिप्रतिष्ठिताः सनाभिस्तुकुत्रापिनप्रतिष्ठितःकिंतुसर्वा
धारः ४८८ दार्ष्टांतिकमाह विषयाइति । विषयानेमिनिभाः करणेष्वरनिभेषु मयिनाभिनिभे ४८९ नाभिसाम्यमेवस्फुटयति विषयेंद्रियेति । विषयाःकार्यरूपाः इंद्रियाणिकरणरूपा
णि तथात्रकार्यकरणरूपस्यसर्वस्यसंसारचक्रस्यनाभिरहंनान्यआश्रयोयस्यसतथा भावप्रधानोनिर्देशः तथाचानन्याश्रयत्वाद्धेतुतःसाधर्म्यादित्यर्थः ४९० दृष्टांतेतटस्थस्यनाभेःसंयोगमात्रेणा
धारत्वंममतुविवर्तरूपप्रपंचस्यसत्ताभानप्रयोजकत्वलक्षणाभिन्ननिमित्तोपादानतयाधारत्वमितिविशेषोपिबोध्यइत्याह विषयोविषयीतिद्वाभ्याम् । विषयोनामादिर्विषयीचकरणतयोक्तःसमष्टि
व्यष्टिरूपःएतावानेवसंसारस्तस्यविज्ञाताभासकोहमिति ४९१ मत्तइति । प्राज्ञात्प्रज्ञाकार्यरूपाउपाधिभूतानित्यातुस्वरूपभूतास्यास्तीतिप्राज्ञस्तस्मात् सूरयोपीतिशेषः अद·विश्वम् ४९२

विवर्त्तोपादानतायाद्दष्टांतमाह यथेति । राक्षसस्यस्वशरीरेकल्पितस्य ४९३ जडप्रपंचेअखंडचितोभेदेनभानेदृष्टांतमाह एकस्मिन्निति । इमेनानाप्रमातृरूपाः ४९४ अयंभेदोपिपराग्दशामुपाधिदर्शिनामेवभासतेप्रत्यग्दशामुपाधिमुपेक्षमाणानांतुनभासतइतिसूचयन्दृष्टांतांतरमाह पटइति । यथाचित्राधारेपटेसमेउन्नतत्वावनतत्वादिहीनेपिरंगनिर्मितप्रासादादिरूपचित्रस्यदृष्टौसत्यांविषम।उन्नतत्वावगाहिनीधीर्नृणांभवतिपटस्वरूपमेवानुसंदधतांतुनसा एवंमयिसमेपिविश्वस्योपाधेर्दृष्टौसत्यामेवभेदधीरितरथातुनेति तदुक्तंवार्तिककृद्भिः 'अपामार्गलतेवासौविषमोहिभवभ्रमः । प्रत्यग्दशांविमोक्षायनिबंधायबहिर्दशाम् ' इति ४९५ नाभिस्थानीयस्यात्मनःप्राणादिविशेषणानिश्रुतौदत्तानितेषामर्थमाह चतुर्विधानामित्यादिना । यतःसर्वेषांजीवननिमित्तमहमस्मीतितेननिमित्तेनप्राणेतिशब्दस्यतज्जन्यबुद्धेश्चसमाश्रयोविषयोहंभवामि प्राणयतिजीवयतीतिव्युत्पत्तेः नतुवायुविशेषेरूढस्यप्राणशब्दस्ययत्प्रवृत्तिनिमित्तंजातिविशेषस्तदाश्रयत्वेन यतोहमप्राणोवायुविशेषात्मकजडप्राणाद्भिन्नश्चिद्रूपइत्यर्थः ४९६ ननुचिद्रूपस्यकथंजीवनहेतुत्वमपीतिशंकांतैत्तिरीयवाक्येननिरस्यति नप्राणेनेति । प्रज्ञयाऽविलुप्तचिताश्रुतिगताऽपरपदोक्तयाउपाश्रितौसन्निधिमात्रेणप्रवर्त्तितौ ४९७ प्रज्ञाविशेषणार्थमाह ज्ञानेति । प्रकृष्टंज्ञानंहिप्रज्ञा प्रकर्षश्चसर्वभासकत्वरूपः सचमय्यात्मरूपेणसाक्षिरूपेणसर्वभासकेवर्त्ततेतेननिमित्तेनप्रज्ञेत्युक्तोस्मीत्यर्थः ४९८ सर्वो

यथैकस्माच्छिशोरेवसृष्टिस्थितिलयाःसदा ॥ राक्षसस्यभवंत्येवंमत्तोविश्वस्यसर्वदा ४९३ एकस्मिन्नेत्रनभसिसर्वभेदविवर्जिते ॥ यथाभेदाःप्रतीयंतेमयिभेदास्तथाइमे ४९४ पटेसमेयथाचित्रदृष्टौविषमधीर्भवेत् ॥ एवंमयिसमेप्राणेविश्वदृष्टौविभेदधीः ४९५ चतुर्विधानांभूतानांजीवनंमत्तएवहि ॥ तेनाऽप्राणोप्यहंप्राणशब्दबुद्धिसमाश्रयः ४९६ नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ प्रज्ञयैवतुजीवंतियस्यामेताउपाश्रितौ ४९७ ज्ञानकर्मेन्द्रियगणंसांतःकरणदेहकम् ॥ प्रजानाम्यात्मरूपःसन्प्रज्ञातेनाहमीरितः ४९८ मज्ज्ञप्तौसकलंविश्वंभातिनान्येनहेतुना ॥ तेनप्रज्ञेतिनामाहमुदितोवेदवादिभिः ४९९ देशकालस्वरूपाख्यभेदत्रयविवर्जनात् ॥ स्वप्रकाशस्वभावाच्चप्रज्ञाहंवाप्रतर्दन ५०० अथवाज्ञानतोभिन्नाअध्यासानांसमाश्रयाः ॥ रज्ज्वादयस्तथानाहंतेनप्रज्ञेतिकीर्तितः ५०१ स्वसजातिविजातियविर्जितात्मस्वरूपया ॥ प्रज्ञयानित्ययुक्तत्वात्प्राणःप्राज्ञोहमीरितः ५०२

पजीव्यत्वलक्षणंप्रकर्षंप्रशब्दार्थमभिप्रेत्यार्थान्तरमाह मज्ज्ञप्ताविति । मज्ज्ञप्तौसत्यामेवसर्वंविश्वंभातिनस्वीयप्रकाशेन 'तस्यभासासर्वमिदंविभाति ' इतिश्रुतेः तेनवाप्रज्ञानामाहमिति ४९९ अपरिच्छिन्नत्वलक्षणंस्वप्रकाशत्वलक्षणंवाप्रकर्षंप्रशब्दार्थमभिप्रेत्यार्थान्तरमाह देशेति । देशकालस्वरूपैराख्यानिरूपणंयस्यतादृशस्यभेदत्रयस्याविवर्जनात्स्वप्रकाशत्वाद्वाप्रज्ञास्मीति ५०० लोकेऽधिष्ठानत्वंपराग्रूपाणांशुक्तिकारज्जुप्रभृतीनामेवप्रसिद्धंनतुप्रत्यग्वस्तुनः ममतुज्ञानरूपस्यप्रत्यग्वस्तुनोपिसर्वाधिष्ठानत्वमितिलौकिकाधिष्ठानेभ्योजडेभ्योवैलक्षण्यरूपंप्रकर्षंप्रशब्दार्थमभिप्रेत्यार्थान्तरंदर्शयति अथवेति । लोकेरज्ज्वादिरूपाध्यासानांसमाश्रयाअधिष्ठानानीतियावत् तेप्रत्यग्रूपाज्ज्ञानाद्भिन्नाःपराञ्चःअहन्तुतथाज्ञानाद्भिन्नोनास्मिकिन्तुज्ञानरूपएवसर्वाधिष्ठानमस्मितेनविशेषेणवाप्रज्ञेत्युक्तइत्यर्थः । रजतादीनामपिशक्त्यवच्छिन्नचैतन्यमेवाधिष्ठानमितितुलोकानजानंतीतिभावः ५०१ प्राज्ञेतिपाठान्तरमभिप्रेत्याह स्वसजातीति । सजातीयादेहीनस्यात्मनःस्वरूपभूतयाप्रज्ञयानित्ययुक्तत्वादहंप्राणः प्राज्ञइतीरितः प्रज्ञाशब्दार्चाभ्योणइतिमत्वर्थीयस्यणस्यनित्ययोगेपिसम्भवादिति ५०२

आत्मपदार्थमाह योयमित्यादिपंचभिः । योयमविलुप्तप्रज्ञायोगीप्राज्ञःपरःपुमांस्तुभ्यंमयाप्राणःप्राणोपाधिकःप्राज्ञःप्रज्ञोपाधिकश्चासकृत्कथितोबोधितःसतेआत्मावास्तवंस्वरूपंनकेवलंतवैव
किन्तुसर्वस्यस्थावरस्यचरस्यचेति ५०३ सर्वान्तरत्वमादायात्मशब्दोत्रवर्त्ततेइतिदर्शयन्नेकवचनार्थमप्याह अस्मदिति । अहमित्याकारयाधियाहमितिशब्देनचान्तरभावाभिमुखत्वेनायंगम्यतेउ
पलक्ष्यतेनतुसाक्षाद्विषयीक्रियते अहमितिधियस्तद्भास्यत्वादहमितिशब्दस्यचाविशिष्टशक्तत्वादितिभावः । उपलक्षणभूताभ्यामहंधीशब्दाभ्यांवर्जितोऽसंसृष्टः । उत्तरार्द्धंस्पष्टम् ५०४ यथाहमिति ।
हिरण्यगर्भस्यनामैकरूप्येणसर्वशरीरेष्वभिव्यज्यमानंहिरण्यगर्भस्यैकतांसूचयतीतिबृहदारण्यकेप्रोक्तंतथात्मेतिनाममममैकत्वमितिनभोदृष्टान्तेनैवाह नभसइति । यःसर्वाधिकरणेषुघटमठादिपूपा
धिषुनभइत्याकारमेकमेवनामतद्वन्ममात्मनःस्वरूपस्यात्मेत्येवनामेति ५०५ ननुयद्येकमात्मतत्त्वंतर्हिकथंबहुधाभावोभासतेइत्याशंक्याविद्यारूपदोषादेवेतिस्वप्नदृष्टांतेनाह स्वप्नेइति । यथास्वप्ने
सुखदुःखादिभागिनआत्मानःप्रमातारएकेनदोषबलात्कल्पितास्तद्वदिमेजाग्रतिभासमानाःकल्पितावस्तुतस्तुनभिन्नाइति ५०६ एतदेवस्पष्टयति एकएवेति । स्वप्नेपिदेहाएवकल्पितास्तेषामात्मा
तुपूर्वसिद्धएवभवतितद्वदत्रापीतिभावः ५०७ आनंदपदार्थंनिरूपयति अनुकूलेतिचतुर्दशभिः अनुकूलस्वभावःअनुकूलैकस्वरूपः सर्वेषामतिशयेनप्रियत्वात् लोकेभोग्याभावाःप्रियास्तज्जन्यं
सुखंतुप्रियतरं आत्मातुसर्वशेषित्वात्प्रियतमइतिहेतोरानंदइत्युक्तइति । आत्मनःसर्वशेषितांस्फुटयति आत्मार्थमिति । सर्वोजंतुःसुखादिकंयदिच्छतितदात्मार्थमेवेच्छति वैरिसंबंधित्वेनाभिम

योयंप्राज्ञोमयातुभ्यंकथिताह्यसकृत्पुमान् ॥ प्राणःप्राज्ञःसआत्मातेस्थावरस्यचरस्यच ५०३ अस्मद्धीशब्दगम्योयमस्मद्धीशब्दवर्जितः ॥ एकएवजगत्यस्मिन्न भोवद्भेदवर्जितः ५०४ नभसोनभइत्येवनानाधिकरणेष्वपि ॥ एकंनामयथातद्वदात्मेत्येकंममात्मनः ५०५ स्वप्नेयथाहिबहवःसुखदुःखादिभागिनः ॥ आत्मा नस्तद्वदेवेमेनभिन्नावस्तुतःक्वचित् ५०६ एकएवयथास्वप्नेनानादेहात्मतांव्रजेत् ॥ प्रतर्दनतथैकोहंत्वमन्येपिचजंतवः ५०७ अनुकूलस्वभावोहंसर्वप्रियतम त्वतः ॥ आत्मार्थंसर्वएवायंजंतुरिच्छतिसर्वदा ॥ सुखादिकंतदर्थंनस्वात्मानंकर्हिचित्क्वचित् ५०८ नंदःसुखंसमाख्यातंमदुक्तोक्तिसमाप्तिकृत् ॥ आनंदात्मा ततोहंहिनिःसीमसुखरूपभृत् ५०९ प्रजापतेःशतंयेस्युरानंदाःशतवत्सरम् ॥ आनंदवारिधेस्तेपिममस्युर्हिकणोपमाः ५१० सुखानियेप्रयच्छंतिशब्दस्पर्शर सादयः ॥ तेपिमामेवमत्प्राप्तिप्रकटीकृतमीश्वरम् ५११

तमुखेक्कामनाऽदर्शनादिति तदर्थंसुखाद्यर्थंतुकर्हिचिदप्यात्मानंनेच्छति अतःसुखादीनामप्यात्मार्थत्वेनकाम्यमानत्वात्सर्वशेषितात्मनःसिद्धेतिभावः ५०८ आसमंतात्स्थितोयोनंदःसुखंमानु
षानंदत्वादितारतम्यपर्यवसानभूमिःसआनंदइत्यभिप्रेत्याह नंदइति । मयेश्वरेणानिःश्वसितवदुक्तोवेदस्तस्ययाउक्तयोमानुषानंदादिप्रतिपादिकास्तासांसमाप्तिकृत् यत्रताःसमाप्ताइत्यर्थः एतादृशो
हमानंदात्मेति ५०९ मानुषपितृगंधर्वकर्मदेवाऽऽजानजदेवप्रजापतिहिरण्यगर्भानंदाःशतगुणोत्तराउक्तास्तत्रप्रजापत्यानंदाःशतगुणीकृताहिरण्यगर्भानंदरूपाअपिमेलेशःकिमुतान्यइत्याह प्रजा
पतेरिति ५१० तत्रहेतुतयाएषह्येवानंदयातीतिवाक्यार्थंसूचयति सुखानामिति । येशब्दस्पर्शरसादयोविषयाःसुखानिप्रयच्छंतीतिसुखप्रद वेनव्यवह्रियंतेतेपिमामेवईश्वरंभूमानंप्रयच्छंतीतिव्यव
हार्यामेमेवसुखरूपत्वादितिभावः । ननुकथंभवतोनानासुखात्मत्वंतेषुभवल्लक्षणानुपलब्धेरित्याशंक्यविशिनष्टि मत्प्राप्तीति । ममयावेदांतवाक्यात्प्राप्तिस्तयाप्रकटीकृतंस्फुटतांनीतमित्यर्थः ।
तथा चयेषांममस्वरूपेपरिचयस्तेसर्वंसुखेषूउपाधिपरिहारेणममसत्यज्ञानादिलक्षणानिपश्यंत्येवमूढानांत्वज्ञानमेवोत्तरमितिभावः । एषपरमात्मैवह्रियतोलोकानानंदयतिस्वरूपेणानंदवतःकरो
तितस्मादानंदरूपोयथागुडःस्वसंसृष्टान्मधुरान्कुर्वन्मधुरइतिभूमिकोक्तश्रुत्यर्थः ५११

एतमर्थंदृष्टांतेनस्पष्टयति यथेति । अनुष्णाशीतोपिवायुर्यथासमुद्रसंसर्गीसन्नृणांश्रांतानांशीतदःस्मृतः वस्तुतःसमुद्रस्यैवकणरूपेणशीतकरत्वात् । एवमस्तिभातिप्रियमित्युक्तरूपस्यममता दात्म्यलक्षणस्पर्शवंतोविषयाःसुखदाइतिमूढैरेवस्मृताः सुखांशस्यमद्रूपत्वादितिभावः ९१२ ननुतवैवसुखरूपत्वेसर्वदाकुतोनसुखभानंविषयाःसुखप्रदाइतिलोकभ्रमेचाकिंबीजमितिशंकाद्वयंनिरस्य ति सुखैकेतिपञ्चभिः । एतस्यसुखैकरूपत्वादिनोक्तस्यमद्रूपस्याज्ञानंयदाभवेत्तदेत्युत्तरेणान्वयः ९१३ तदेति । तदात्माऽज्ञानकालेआवृतंअज्ञानगंततमसाछादितमात्मरूपंयेषांतेतथा एते नसर्वदासुखरूपत्वेनाभानेहेतुरुक्तः तादृशाजंतवोरजसाविषयार्थिनःसंतोमहद्दुःखंप्राप्नुवंति तदात्मतत्त्वंवेत्सि अधुनामदुपदेशात्साक्षात्करोषि यद्वातदज्ञानजंदुःखंत्वंवेत्सिस्मरसीत्यर्थः ९१४ विषयेति । पुण्यकर्मविपाकेनकाम्यमानस्यविषयस्यप्राप्तेर्हेतोस्तेषांजनानांएतदिच्छारूपेणपरिणतंरजोमयंदुःखंविनश्यतितदातेषांधिषणाबुद्धिर्विनष्टदुःखाशांतरजस्कासतीक्षणमात्रंसत्वगुणोद यान्निश्चलाभवतीति ९१५ यावदिति । यावत्पराअन्येच्छानजायतेतावद्बुद्धिःसुखैकरूपेवभाति । कीदृशीबुद्धिः मयानंदरूपेणसर्वात्मस्वरूपिणाव्याप्तासूर्येणदर्पणवदनुप्रविष्टा अतएवबा ह्यार्थेनिःस्पृहा । कीदृशीइच्छा दुःखकरीदुःखवर्द्धनशीलेति ९१६ सुखव्याप्तत्वेनसुखरूपलाभेदृष्टांतमाह अयःपिंडइति । अयोलोहं । सुखंभवेत् सुखरूपाभवेदित्यर्थः । एतेनतांबुद्धेरवस्थामेवसुख

यथासमुद्रजोवायुःशीतदोत्रनृणांस्मृतः ॥ एवंमत्स्पर्शिनस्तेपिविषयाःसुखदाःस्मृताः ९१२ सुखैकरूपःसर्वेषांबुद्धिसाक्षीमहेश्वरः ॥ मज्ञाप्राणोहमेत स्ययदाऽज्ञानंनृणांभवेत् ९१३ तदावृतात्मरूपास्तेजंतवोविषयार्थिनः ॥ आप्नुवंतिमहद्दुःखंतत्त्वंवेत्सिप्रतर्दन ९१४ विषयप्राप्तितस्तेषांदुःखमेतद्विन श्यति ॥ विनष्टदुःखाधिषणाक्षणंभवतिनिश्चला ९१५ यावन्नजायतेजंतोरिच्छादुःखकरीपरा ॥ तावद्बुद्धिर्मयानंदरूपेणात्मस्वरूपिणा ॥ व्याप्तासुखैकरूपे वभातिबाह्यार्थनिःस्पृहा ९१६ अयःपिण्डोयथावन्हिव्याप्तोभातिहितादृशः ॥ प्रतर्दनतथाबुद्धिर्मयाव्याप्तासुखंभवेत् ९१७ समुद्रांतःस्थितोराजन्सछिद्रःसर्षपो यथा ॥ स्वप्रमाणेनगृह्णातिनीरंनैवाधिकंक्वचित् ९१८ एवंविषयजाबुद्धिर्मय्यनंतसुखोदधौ ॥ पतितामांहिगृह्णातिस्वसमानंसुखप्रदम् ९१९ सुखंक्षुतादिजेप्ये वमंगजाड्यादिमोचने ॥ तत्रापीच्छानुमातव्यातद्रोधेस्तिस्फुटाहिसा ९२०

मितिमत्वातस्याअवस्थायाविषयप्राप्त्यन्वयव्यतिरेकौचदृष्ट्वाविषयाःसुखप्रदाइत्यज्ञजनैर्व्यवह्रियंतइतिदर्शितम् ९१७ नन्वेतादृशबुद्ध्यवस्थायाएवलौकिकसुखत्वेलौकिकसुखानामविशेषापत्तिरित्या शंक्ययथानैर्मल्यतारतम्याद्दर्पणस्यप्रतिबिंबग्रहणेविशेषस्तथाबुद्धेःसत्वगुणात्मिकायाःसत्वनैर्मल्यानुसारेणात्मनःसुखरूपस्यप्रतिबिंबग्रहणेइतिसदृष्टांतमाह समुद्रांतरितिद्वाभ्यां । यथासर्षप कणश्छिद्रेणबिलेनसहितःसमुद्रेपिस्थितःस्वबिलपरिमितमेवजलंगृह्णाति ९१८ एवमिति । एवंमय्यनंतसुखोदधौपतितापिविषयजाबुद्धिःस्वसमानस्वरूपेणसत्वगुणेनतारतम्यावस्थितेनसमा नमेवमांगृह्णातिस्वस्मिन्प्रतिबिंबितंकरोतीतियावत् कीदृशंमां सुखप्रदमिति ४१९ सर्वेषांलौकिकसुखानामिच्छोपशमाभिव्यंग्यत्वमिच्छोपशमस्यचपुनरिच्छोदयात्क्षणभंगुरत्वेनानित्यत्वंच समानमित्याह सुखइति । क्षुतंछिक्कातत्प्रभृतिजन्यतयाप्रसिद्धेसुखेपिएवंक्षणभंगुरेच्छोपशमाभिव्यंग्यत्वादिकंसमानमित्यर्थः । ननुछिक्कासुखस्थलेइच्छानप्रसिद्धाइत्यतआह अंगेत्यादि । तत्रछिक्काजन्यसुखस्थलेपिअंगजाड्यादिमोचनविषयिकाममपीनसादिजन्यमंगजाड्यंनिवर्ततामित्याकारिकेच्छासुखरूपकार्यलिंगेनैवानुमातव्या । नकेवलमनुमानमेवतत्रेच्छायाःकिंतुसाक्षिप्र त्यक्षसिद्धत्त्वमपीत्याह तद्रोधेइति । तस्याश्छिक्कायारोधेसाइच्छास्फुटाअनुभूयमानैवास्तीत्यर्थः ९२०

फलितमाह एवमिति । एवमिच्छोपशमद्वाराभिव्यक्तिरीत्यासचतवस्वरूपमेवेत्याह आनंदात्मेति ५२१ अजरामृतविशेषणेव्याचष्टे एवंपूतस्येति । एवंभूतस्यपरिपूर्णानंदरूपंजानतोदे होऽवच्छेदकतयानास्ति अध्यासमूलाविद्याया अभावादितिभावः । तदभावेदेहाभावेतन्निष्ठजरामरणेकुतःस्यातामिति ५२२ नसाधुनाकर्मणाभूयानित्यादिव्याकरोति नचतेइतित्रिभिः । 'विज्ञानंयज्ञंतनुते कर्माणितनुतेपिच' इतिश्रुतेर्धर्माधर्मयोस्तत्कारणयत्नस्यचाश्रयभूताबुद्धिरेवतावतवनास्ति । कीदृशस्यतव तस्याबुद्धेःसाक्षिरूपस्य । नहिलोकेपिसाक्ष्यंसाक्षिणंस्पृशतीति त दभावात्तस्याबुद्धेरभावादकर्तुस्तवपुण्यपातकेकथंस्यातामिति ५२३ तयोरिति । तयोःपुण्यपापयोरभावेसतिइहामुत्रवालोकेफलोपभाक्फलभोक्ताकेनहेतुनाभवेदितिनकेनापीति फलोपभोगि नएवचऐश्वर्यस्यकर्मफलस्याधिक्यन्यूनताभ्यांवृद्धिहासौभूयस्त्वकनीयस्त्वरूपौस्यातां तवतुअकर्तृत्वादभोक्तुरेतौवृद्धिहासौकथंस्यातामिति ५२४ । ५२५ एवंज्ञाततत्त्वंप्रतर्दनंस्वाराज्यपदे स्थापयित्वातस्मिन्नंतर्यामिणोधर्मान्व्यपदिशन्एषह्येवसाधुकारयतित्यादिवाक्यंव्याकरोति सर्वेति । यस्त्वंसर्वसाक्षीसर्वांतरोमद्रूपोममेश्वरस्यरूपमद्वयत्वंतदेवरूपंयस्यएतादृशोवर्णितोसिसत्वं कर्मपराधीनोनासिकिंतुबुद्ध्यादीन्पुण्यंपातकंचकारयसिकुर्वतःसन्निधिमात्रेणप्रेरयसीति ५२६ तत्रव्यवस्थामाह पुण्यमिति । एपत्वमीश्वरोयंस्वर्गंनेतुमिच्छसितंपुण्यंसाधुकर्मकारयासियंतुन

एवंसर्वशरीरेषुसुखदोहंनचापरः ॥ आनंदात्मात्वमेवैषप्रतर्दननसंशयः ५२१ एवंभूतस्यनैवास्तितवदेहःकथंचन ॥ तदभावात्कथंतस्यधर्मौस्यातांजरामृती ॥ ५२२ नचतेबुद्धिरप्यस्तितस्याःसाक्षिस्वरूपिणः ॥ तदभावात्कथंस्यातामकर्तुःपुण्यपातके ५२३ तयोरभावेकेनत्वमिहामुत्रफलोपभाक् ॥ आधिक्यन्यूनता भ्यांस्तऐश्वर्यस्यहिसर्वदा ५२४ फलोपभोगिनोनित्यंवृद्धिहासौप्रतर्दन ॥ अभोक्तुस्तवकेनैतौस्यातांराजन्नकारणौ ५२५ सर्वसाक्षीमयायस्त्वंमद्रूपइहकीर्तितः ॥ सत्वंकर्मपराधीनोनासिक्वापिकथंचन ॥ कारयस्येवबुद्ध्यादीन्किंतुत्वंपुण्यपातके ५२६ पुण्यंतंकारयस्येषयंस्वर्गंनेतुमिच्छसि ॥ पातकंचाधिकंतंयंनरकंनेतु मिच्छसि ५२७ पुण्यपापेचतद्वद्धिकारयस्यपिदेहिनम् ॥ तंयंमानुषलोकंत्वंनेतुमिच्छसिसर्वदृक् ॥ अतःकर्मपराधीनःकथंभवसिमद्वपुः ५२८ यएषत्वंमया प्रोक्तःसाक्षीसर्वनियामकः ॥ एषएवजगत्पासिमातृवद्दीनवत्सलः ५२९ अधिष्ठायतथासर्वस्वकीयत्वेनदेवराट् ॥ स्वामीचविविधैर्भोगैःपासिसर्वानहर्निशम् ॥ ५३० एषसर्वान्हिशूरादीन्मर्यादासेतुभेदकान् ॥ राजेवस्वबलेनैवनियच्छसिमहेश्वरः ५३१

रकंनेतुमिच्छसितमधिकंपापंकारयसीति ५२७ आर्थिकमर्थमाह पुण्यपापेचेति । तंदेहिनंपुण्यपापेउभेकारयसियंमानुषलोकंनेतुमिच्छसीति नचवैषम्यनैर्घृण्यप्रसंगः 'पुण्यःपुण्येनभवति' इतिश्रुतेः पूर्वकर्मापेक्षयाप्रवर्तनादित्याह सर्वदृगिति । सर्वज्ञत्वात्पूर्वकर्मणामपिद्रष्टेत्यर्थः । फलितमाह अतइति । मद्वपुर्मद्रूपः ५२८ लोकपालेतिविशेषणस्यार्थमाह यएषइति । जग त्सर्वलोकंपासिपालयसिमातृवदिति ५२९ लोकाधिपतिविशेषणस्यार्थमाह अधिष्ठायेति । सर्वंजगत्स्वकीयत्वेनाधिष्ठायाभिमन्येतियावत् सर्वान्विविधैर्भोगैरहर्निशंपासितर्पयसीति कइव स्वामीव । यथालोकेगृहस्वामीबंधून्विविधैर्भोगैस्तर्पयतितद्वदित्यर्थः । यतस्त्वंदेवराड्देवानामग्न्यादीनांशमादिमतांवाराड्राजेति ५३० लोकेशविशेषणस्यार्थमाह एषसर्वानिति । मर्या दाःपुण्यवंतःस्वर्गंगच्छंतिपापिनोनरकमित्यादिरूपायाःस्वकृतायायेसेतवः मृद्दार्वादिमयःसेतुर्यथाजलानांविधारकस्तद्वद्येविधारकावेदब्राह्मणादयस्तेषांयेभेदकाविरोधिनःशूराआदिपदेनमायावि नश्वतान्स्वबलेनवराजवन्नियच्छसिदमंप्रापयसि ५३१

अध्यायांतिमवाक्यार्थमाह समइति । महाभूतमाकाशम् ९३२ एतन्निरूपणेवरपूर्त्तिंदर्शयति एतदिति ॥ कथाशेषंपूरयति एवमित्यादिना ९३३ प्रतर्दनोपीति ९३४ प्रारब्धेति । प्रारब्ध स्यनिर्वाणंसमाप्तिंकुर्वन्तदर्थमितियावत् । श्रियमुपभुज्यअस्यवर्तमानस्यदेहस्यपातेसतिशक्रंइंद्रस्यपरमार्थिकंस्वरूपंब्रह्मभावंविदेहमोक्षमितियावत् ॥ अवापप्राप्तवानिति ९३५ एतज्ज्ञानस्य दौर्लभ्यमाह एवमिति । कीदृशमेतज्ज्ञानं महद्भिःप्रतर्दनादिभिरधिकारिभिर्महतोवरात्महत्त्वइंद्रादिभ्योगुरुभ्यःप्राप्तं किंतज्ज्ञानं यदिदंतवशिष्यस्यपुरतोमयागुरुणाकथितमिति ९३६ शिष्य स्योत्तराध्यायजिज्ञासामुत्थापयन्नुक्तात्मज्ञानस्यव्यतिरेकेमहाहानिप्रयोजकतामाह अस्येति ॥ अस्याअतत्त्वस्यज्ञानाद्येगुरवस्तेशिष्यतांप्राप्नुवंति एतज्ज्ञानवंतःशिष्यास्तुगुरुतांयांतीति । एतज्ज्ञानेशिष्याणांगुरुत्वसंभवंदर्शयति ॥ गुरुत्वमिति । गुरुज्ञानसमाश्रयादेवहिमुख्यंगुरुत्वमित्यर्थः ९३७ ननुज्ञानस्यैवगुरुत्वंकथमित्याशंक्यतदुपपादयति ज्ञानस्येतिद्वाभ्याम् । य ज्ज्ञानस्यगौरवंमहत्त्वंतदस्यैवास्माज्ज्ञानादपरस्यतुतन्नैवविद्यते ॥ अतएवच्छांदोग्यश्रुत्याज्ञानस्यसमुद्रदक्षिणानास्तीत्युक्तमित्याह गुर्वीयमिति । इयंवसुधागुर्वीप्रसिद्धाज्ञानमपिगुरुततइयंवसु

समःसर्वेषुभूतेषुस्थावरेषुचरेषुच ॥ महाभूतोपमोदेवआत्मातेकथितोमया ॥ एवंस्वामात्मरूपेणविजानीहिप्रतर्दन ९३२ एतद्धिततमंमन्येमनुष्यायनचा परम् ॥ एवंहिततमंप्राहह्यात्मज्ञानंशतक्रतुः ॥ प्रतर्दनायसर्वज्ञःसत्यपाशवशंगतः ९३३ प्रतर्दनोपितंमत्वाशक्रतुल्यपराक्रमः ॥ अनुज्ञातोथशक्रेणजगामस्व पुरंप्रति ९३४ प्रारब्धकर्मनिर्वाणंकुर्वन्नानाविधांश्रियम् ॥ उपभुज्यास्यदेहस्यपातेशक्रमवापसः ९३५ एवंहिततमंज्ञानंमहद्भिर्महतोवरात् ॥ महद्भ्यःप्राप्त मेतत्तद्यदिदंकथितंतव ९३६ अस्याज्ञानाद्धिगुरवःशिष्यतांप्राप्नुवंतिहि ॥ गुरुत्वंहियतोलोकेगुरुज्ञानसमाश्रयात् ९३७ ज्ञानस्यगौरवंनास्मादपरस्यहिविद्य ते ॥ गुर्वीयंवसुधातस्माद्दक्षिणास्यभवेन्नवा ९३८ गुरुशब्दोहिलोकेस्यादधिकार्थस्यवाचकः ॥ सर्वस्मादधिकोह्यात्मातदीयंचततोगुरुः ९३९ इतिश्रीम त्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येण श्रीशंकरानंदभगवता विरचितउपनिषद्रत्नआत्मपुराणे कौषीतकीसारार्थप्रकाशे इंद्रप्रतर्दनाख्यानंनाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

धाज्ञानस्यदक्षिणाभवेदितिसंभावनामात्रंवस्तुतोनैवसंभाभवेदिति तथाचश्रुतिः “यद्यप्यस्मैइमामद्भिःपरिगृहीतांधनस्यपूर्णांदद्यादेतदेवततोभूयः” इति । अस्मैज्ञानदाय इमांवसुधाम् एतत्ज्ञानम् ततः साब्धिवसुधायाः भूयोधिकमितिश्रुतिपदार्थः ९३८ उपप्रत्तिमभिनयंतिगुरुशब्दइति । गुरुशब्दोहिअधिकस्यमहतोवाचकः ॥ तथाचविश्वप्रकाशः गुरुर्महतिचान्यवदिति । महत्त्वंतुपर मात्मन्येवपर्यवसितमतःसएवगुरुस्तदीयंचयत्तदपिततस्तत्संबंधादेवगुरुमहदिति परमात्मसंबंधस्तुयथाऽसाधारणंतत्स्वरूपंनिष्प्रकारकतयावगाहमानेनज्ञानेनसहविद्यतेतथानान्येनकेनचित् अन्य त्रविशिष्टरूपेणैवसंबंधायद्यपिसंप्रदायविद्वांसतेऽज्ञानमपिशुद्धविषयकंतथापितत्पृथुन्येष्ठभ्रातृश्रीपादवदप्रशस्ततोवेदांतजन्यंतज्ज्ञानमेवेतरापेक्षयागुरुतेनतद्दतोपीतिभावः ९३९ ॥ योसौपंचमुखा विर्भूःप्रज्ञयासमुपाश्रितः ॥ विश्वचक्रस्यनाभिश्रसंदेहःप्रीतिमश्नुताम् ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिल्लारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आ त्मपुराणटीकायांसत्प्रसवाख्यायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥ ग्रंथसंख्या ॥ २२०० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीगणेशायनमः ॥ ॥ जीवाःसर्वेपियंप्राप्यसुप्तावानंदसीमगाः ॥ भवंतिपरमात्मानंवेदवेद्यंस्मरामितम् ॥ १ ॥ पूर्वोध्यायेप्राणोपाधिकआत्मोक्तः सचोपाधिविवेकासमर्थैर्दुर्ज्ञेयोऽतस्तस्यात्मनः प्राणाद्विविच्यबोधनपरंकौषीतकिब्राह्मणचतुर्थाध्यायंव्याचिख्यासुरस्याज्ञानाद्विगुरवइत्युपन्यासेनोत्थापितांशिष्यजिज्ञासांप्रश्नमुखेनाभिनयति एवमितिसप्तभिः । संशयेनाविष्टंव्याप्तंहृदयंयस्यसतथा । इदंवक्ष्यमाणम् १ श्रुतपूर्वमनुवदंति भगवन्नितिद्वाभ्यां ॥ ऐतरेयमैतरेयोपनिषत्प्रकाश्यंज्ञानंसेतिहासंसमीरितमितिसंबंधः २ इंद्रेति । तदेवज्ञानमिंद्रप्रतर्दनाख्यानेनदृढीकृतंत्वन्मह्यंकथितं यस्मात्ततोऽन्यद्धितमंनास्ति एतेनहिततमस्यदृढीकृत्याभिधानेनकृतकृत्योस्मीति ३ किंत्विति । कांचिज्जिज्ञासांवक्ष्यंस्तद्विशेषः संशयरूपोभ्रमरोमद्धृदयरूपंकमलंचालयतिक्षुब्धंकरोति कीदृशः भवद्वाक्यरूपाद्वायोरुत्थितः । प्रसिद्धंह्येतद्यद्वायुवेगादुड्डीयमानोभ्रमरःकमलंचालयतीति ४ संशयहेतुंवाक्यंस्मारयति भवतेति । गुरवोप्यस्याज्ञानाच्छिष्याभवंतीतिभवतोक्तं एतच्चममदुर्घटंदुःखेनघटयितुमुपपादयितुंशक्यंप्रतिभाति अतःसंशयोभवतीतिभावः ५ ननुमदुक्तेर्थेकथंतवसच्छिष्यस्यसंशयइत्याशंक्यभवद्वाक्यस्यसंदेहपर्यायनिश्चयादित्याह त्वयेति । किमेषाज्ञानस्यस्तुतिस्त्वयाकृताअथवाएतदधरोत्तरं भावप्रधानोनिर्देशः अधरस्याधोभावार्हस्योत्तरत्वमुत्कृष्टलाभरूपंक्वचित्पूर्वंवृत्तंसिद्धमासीत्तदेवोक्तंमयात्वेतददृष्टमिति । तथाचममातींद्रियार्थेमानस्यभवद्वा

श्रीः ॥ एवंहिततमंज्ञानंश्रुत्वाशिष्योतिविस्मितः ॥ संशयाविष्टहृदयःपप्रच्छेदंगुरुंप्रति १ भगवन्भवताज्ञानमैतरेयंसमीरितम् ॥ सेतिहासंहिसंसारशूलातिक्रमकारणम् २ इंद्रप्रतर्दनाख्यानेतदेवसुदृढीकृतम् ॥ नातोहिततमंयस्मादुक्तरीत्यास्तिकिंचन ॥ मह्यंकथितमेतेनकृतकृत्योस्मिसंप्रति ३ किंतुमद्धृदयांभोजंसंशयभ्रमरोमुहुः ॥ चालयत्युत्थितोयस्माद्भवतोवाक्यमारुतात् ४ भवतागुरवःशिष्याअस्याज्ञानाद्भवंतिते ॥ इत्थमीरितमेतद्धिदुर्घटंप्रतिभातिमे ५ त्वयाहितवमज्ञानस्तुतिरेषाकृताथवा ॥ वृत्तमेतत्क्वचित्पूर्वमदृष्टमधरोत्तरम् ६ पादत्रंहिकथंशीर्ष्णिमौलिधारिणिवर्तते ॥ शिष्याःकेनगुरुत्वंहिगुरावेवाप्नुवंत्यमी ७ अतोऽस्तियदिवेदेषुप्रवृत्तमधरोत्तरम् ॥ तत्त्वंकथयनान्योमांभवतोबोधयेत्पुमान् ८ एवमुक्तोगुरुःशिष्यंप्रत्युवाचातिहृष्टधीः ॥ नैषास्तुतिर्मयोक्तातेकिंतुवृत्तमिदंपुरा ॥ कौषीतकिरुवाचेदंतद्वदेषदिवाकरः ९ कौषीतकिस्तपस्तप्त्वाप्राप्तवान्मंत्रदर्शनम् ॥ लोकानुग्रहकामोयंद्विजातीन्प्रत्युवाचह १० सवितापितथाचार्ययाज्ञवल्क्येनतोषितः ॥ मधुकांडउवाचेदंलोकानुग्रहकारकः ११

क्यस्यकिमिदंस्तुतिमात्रपरंतत्त्वाख्यानपरंवेतितात्पर्यसंशयादनिश्चायकत्वेममसंशयउपपन्नइतिभावः ६ एवंभवद्वाक्यानिश्चायकत्वेयन्मयोक्तंदुर्घटंप्रतिभातिमेइतितदुपपन्नमितिसूचयन्ननुपपत्तिं सदृष्टांतमाह पादत्रमिति । पादौत्रायतेइतिपादत्रमुपानत् । शीर्ष्णिशिरसि । मौलिःकिरीटं " मौलिःकिरीटेधम्मिल्ले " इतिविश्वः । गुरुविषयकंगुरुत्वंशिष्याःकेनाप्नुवंति नकोपिहेतुस्तत्रसंभाव्यतइत्यर्थः ७ भवच्छिष्यस्यममायंसंशयोभवतैववेदोक्तत्वाभिधानेनपरिहार्यइत्याह अतइति । प्रवृत्तंवर्णितमितियावत् वेदार्थनिर्णयप्रसंगाद्वेदेष्वित्युक्तम् ८ गुरुवाक्यमवतारयति एवमिति । तदभिनयति नैषेति । वृत्तंभूतम् । वेदोक्तत्वंस्फुटयति कौषीतकिरिति । एतन्नामाशाखाप्रवर्तकः । तथाएषदिवाकरश्चवाजसनेयोपदेष्टाइदमुक्तवानिति ९ एतत्स्पष्टयतिकौषीतकिस्तपइति । कौषीतकिर्नामऋषिर्मंत्रदर्शनंमंत्रस्यदर्शनसामर्थ्यरूपमृषित्वंप्राप्तःसन्ननुग्रहेणद्विजातीन्प्रतिस्वनामांकितांशाखांप्रोक्तवान् तस्यामिदमुक्तमितिशेषः १० सवितेति । सवितासूर्यःभक्त्यायाज्ञवल्क्येनतोषितःसंस्तस्मैशुक्लानियजूंष्युपदिशंस्तत्रमधुकांडेइदमुक्तवानिति । बृहदारण्यकंहिकांडचतुष्टयात्मकं तत्रप्रथमअध्यायद्वयंप्रवर्ग्यकांडः तृतीयचतुर्थाध्यायौमधुकांडस्ततःपरंयाज्ञवल्क्यकांडःखिलकांडश्चेति तत्रमधुकांडघटकेचतुर्थाध्यायेबालाकिअजातशत्रुसंवादेइदमुक्तमित्यर्थः ११

इदंपदार्थमाह वर्णिनइति । सकलावर्णिनःसर्वेवर्णाइतियावत् । ब्राह्मणाएवगुरवइतिप्रसिद्धंतथाप्यात्मज्ञानार्थंब्राह्मणोराज्ञःशिष्योभूदितिविश्रुतंकौपीतकिबृहदारण्यकचतुर्थाध्याययोःप्रसिद्ध मित्यर्थः १२ अत्रचेति शांतेनउपशमवता १३ अथहगार्ग्यंइत्यादिव्याकरोति गर्गाणामित्यादिना १४ तस्येति । तस्यबलाकस्यपुत्रोबालाकिःतादृशःवेदवेदांगइत्यनूचानपदार्थः । धर्मेसंस्थितिस्तुतस्यमदवशान्नाभूदितिहेतुगर्भैर्विशेषणैर्दर्शयति ललितइत्यादिना । ललितपदेनधनमदःसूचितः एवमेवमाकारासदर्पाधीर्यस्यसतथा १५ सदिशामिति । सबालाकिः इमा न्वक्ष्यमाणान् । उशीनरानिति । हिमस्यहिमालयस्यसेतोःसेतुबंधस्यचमध्यगानपरांश्चदेशान्चचारेत्यनुषंगः १६ स्फीतेति स्फीताप्रख्याताकीर्तिर्यस्यसतथेतिश्रुतिगतसंस्पष्टपदार्थः । सर्वज्ञआत्मव्यतिरिक्तसर्ववित् यतःप्राणमेवात्मानंमन्यमानः । वाग्मीप्रशस्तवाक् १७ निवसन्निति । तेपुउशीनरादिपु जिगायजितवान् १८ काशीति । दृप्तःसदर्पः गार्ग्योबाला

वर्णिनःसकलाःशिष्यागुरवोब्राह्मणाःस्मृताः ॥ ज्ञानार्थंब्राह्मणःशिष्योराज्ञोभूदितिविश्रुतम् १२ अत्रचोदाहरंतीममितिहासंपुरातनम् ॥ ब्राह्मणस्यहिसंवादंरा ज्ञाशांतेनतंशृणु १३ गर्गाणांगोत्रजःकश्चिद्बलाकइतिविश्रुतः ॥ ब्राह्मणोवेदवेदांगपारगोधर्मसंस्थितः १४ तस्यपुत्रोभवत्कश्चित्तादृशोललितोयुवा ॥ अहंविद्या धिकोनान्योमतएवंसदर्पधीः १५ सदिशांविजयंकुर्वंश्चचारविषयानिमान् ॥ उशीनरांस्तथामत्स्यान्कुरून्पंचालकानपि ॥ काशीन्विदेहानपरान्हिमसेत्वोश्च म ध्यगान् १६ स्फीतकीर्तिःसमेधावीस्वात्मबोधविवर्जितः ॥ सर्वज्ञःप्राणमात्मानंमन्यमानश्चवाग्म्यपि १७ निवसंस्तेषुदेशेषुजिगायात्मबलेनसः ॥ त्रैवर्णिकान नेकांश्चग्रामेषुनगरेषुच १८ काशीनामांकितेदेशेकदाचिद्गार्ग्यआगमत् ॥ दृप्तोविद्याधिकोविप्रोजेतुंत्रैवर्णिकान्परान् १९ त्रैवर्णिकाजितास्तत्रतेनतेराजवर्जिताः राजानंजेतुकामःसतमप्येषजगामह २० काशीश्वरोतिधर्मात्मायोग्रणीर्ब्रह्मवादिनाम् ॥ विनीतःसत्यसंधश्चसतांशुश्रूषणेरतः २१ बलाधिक्यान्नतस्यास्तिजातः शत्रुःपुमान्भुवि ॥ तेनसंज्ञामसौप्राप्तोऽजातशत्रुरितीश्वरः २२ शत्रौमित्रेतथोपेक्ष्येस्वदेहेचक्रमावपि ॥ नयस्यविषमाबुद्धिःस्वप्नेप्यस्तिमहीभृतः २३ तमेकदा सभासंस्थंजेतुकामोद्विजोत्तमः ॥ काश्यमागत्यसहसावचनंत्विदमुक्तवान् २४ अजातशत्रवेतुभ्यमज्ञायात्रनिमज्जते ॥ वदामिब्रह्मयत्तत्त्वंसावधानमनाःशृणु २५ इत्थंगार्ग्यवचःश्रुत्वाराजानिर्मत्सरःस्वयम् ॥ उत्पन्नहर्षःसहसावचनंत्विदमुक्तवान् २६ गार्ग्ययद्भवताप्रोक्तंवचनंनिष्प्रसंगकम् ॥ तेनमेकर्णविवरेकृतेवृष्टेवशी तले २७ निर्वृतिंहृदयंमेद्यप्राप्तंपुत्रगिरायथा ॥ नष्टपुत्रस्यवृद्धस्यमुमूर्षोर्धनिनोभुवि २८

किः परानुत्कृष्टान् १९ त्रैवर्णिकाइति । तंराजानंजगामोपगतः २० राजानंविशिनष्टि काशीश्वरइति । अग्रणीर्मुख्यः सत्येसंवास्थितिर्यस्यसतथा 'संवास्थितौप्रतिज्ञायाम्' इति विश्वः २१ तन्नामव्युत्पत्तिमाह बलेति । तेनशत्रोरजातत्वेनासौकाशिराजःअजातशत्रुरितिसंज्ञांप्राप्तः २२ आंतरशत्रुभावादपितादृशंनामोचितमित्याह शत्राविति । व्यापिकायावि षमबुद्धेरभावात्तद्व्याप्यानांरागद्वेषादीनामभावोन्यायसिद्धइतिभावः २३ तमिति । तेराजानं जेतुकामः तुंकाममनसोरपीतिमलोपः सहसाअविचार्य २४ अजातेति । अत्रसंसारे २५ इत्थमिति । मत्सरेणपरोत्कर्षासहनरूपेणहीनः इदंवक्ष्यमाणम् २६ गार्ग्येति । तेनभवद्वाक्येनामृतवृष्टिसमेनममकर्णविवरेद्वेअपिशीतलेगतसंतापेकृतेइति २७ निर्वृतिमिति । त्वद्वाक्येनमेहृदयंनिर्वृतिंसुखा तिशयंनीतम् तत्रदृष्टांतः यथानष्टपुत्रस्यदेशांतरगमनादिनाऽदर्शनगतपुत्रकस्यमुमूर्षोःसन्निहितमरणस्यधनिनोवृद्धस्यतत्कालागतपुत्रगिराहृदयंनिर्वृतिमेतीति २८

ब्रह्मतत्त्वप्रकाशनप्रतिज्ञारूपंभवद्वाक्यंदौर्लभ्यान्ममातिहर्षहेतुरितिवक्तुंतस्यदौर्लभ्यमाह आयांतीतिद्वाभ्यां । धीरैर्वचनवत्परिपाल्यायेपांतेतथा आगत्यचचित्राणिविस्मयजनकानिस्वकर्माणिदर्शयंति कुतः वेदपाठात्तथार्थतः ल्यब्लोपेपंचमी वेदस्यपाठंविधायअर्थंप्रकाश्यचेत्यर्थः २९ वदंतीति । तथास्पष्टाःप्रसिद्धाविविधाविद्याश्चवदंति ब्रह्मात्मविद्यायास्तुप्रशंसनेजातेपिपृष्टाअपिचतांनवदंति नचतेषांब्रह्मवित्त्वेनाप्रसिद्धिः । अनौचित्यमसहायत्वंवाऽनभिधानेकारणमासीदितिबोधयितुंविप्रान्विशिनष्टि प्रसिद्धाइत्यादिविशेषणत्रयेण ३० त्वयातूक्तविशेषणव्यतिरेकेपितथोक्तत्वादहंतुष्टोस्मीत्याह बालइति । इदंब्रह्मेत्यादिवाक्यं तेनतद्विशिष्टकर्मणातुष्टोस्मीति ३१ तिष्ठत्वर्थएतादृशवाक्यमात्रस्येयंदक्षिणामयासङ्गीकृतेत्याह भवानिति । निष्क्रयो दक्षिणा अयंवक्ष्यमाणः ३२ निष्क्रयस्यरूपंदेयत्वेनदर्शयति घटोध्नीनामिति । घटवदूधआपीनंयासांतास्तथातासां नारीप्रजानांवत्सीप्रसवानां सौम्यवर्चसांअनुग्रतेजसां सुशीलानामितियावत् सद्यःप्रसवानंतरमेवद्वितीयंप्रजननंगर्भंप्राप्तानांप्रतिवर्षंप्रसूयमानानामितियावत् एतादृशांगवांसहस्रंशुभलक्षणकंतेतुभ्यंब्रह्मवच्मीतिभाषिणेददामीति ३३ इत्युक्तेति । हृष्टचेतनःप्रसन्नमनाः अभिप्रायेणेति । असौनरेश्वरोऽमुनाऽऽशयेनगोसहस्रंदत्तवान् ३४ राज्ञोभिप्रायमभिनयति अजातेतित्रिभिः । मामजातशत्रुंसर्वगुणमज्ञात्वैवइमेजनाजनकंप्रतिप्रयांतियदिमांजानीयुस्तर्हिनगच्छे

आयांतिशतशोविप्राःसभायांममधीधनाः ॥ दर्शयंत्यपिचित्राणिवेदपाठात्तथार्थतः २९ वदंतिविविधाविद्याःस्पष्टाजातेप्रशंसने ॥ पृष्टाअपिनवदंत्येतेब्रह्मविद्यांकर्हिचित् ॥ प्रसिद्धाःस्थविराःसर्वेमिलिताश्चसहस्रशः ३० बालोभवानेकएवनपृष्टःकेनचितथा ॥ प्रसंगेनविनायस्मादिदंवचनमुक्तवान् ॥ ब्रह्मतुभ्यंवदानीति तेनतुष्टोस्म्यहंतव ३१ भवान्वदतुमेब्रह्ममावाकिंतुत्वयेदृशम् ॥ ईरितंतस्यवाक्यस्यनिष्क्रयोयंमयाकृतः ३२ घटोध्नीनांगवांनारीप्रजानांसौम्यवर्चसाम् ॥ सद्योद्वितीयंप्रजननंप्राप्तानांशुभलक्षणम् ॥ सहस्रंतेददाम्यद्यब्रह्मवच्मीतिभाषिणे ३३ इत्युक्त्वास्माअदाद्राजासहस्रंसगवांततः ॥ यथाशास्त्रंसुवर्णादिसहितंहृष्टचेतनः ॥ अभिप्रायेणामुनासौगार्ग्यायादान्नरेश्वरः ३४ अजातशत्रुंधर्मज्ञंवदान्यंब्रह्मवादिनम् ॥ अज्ञात्वेमेप्रयांत्येनंजनकंमिथिलेश्वरम् ३५ धनस्यब्रह्मविद्यायाअपिदातापितेवसः ॥ श्रोतातस्याश्चजनकएवंव्यर्थंविमोहिताः ३६ यतोहंब्रह्मविद्यायावचनेपिददाम्यदः ॥ गवांसहस्रंजनकस्तूपदेशेददातिसः ३७ इत्यविज्ञायगार्ग्योपिराज्ञोभिप्रायमल्पधीः ॥ आर्तमेनंहिमन्वानोब्रह्मवक्तुंप्रचक्रमे ३८ अध्यात्ममधिदैवंचसमष्टिव्यष्टिरूपधृक् ॥ ब्रह्माव्याकृतपर्यंतमुक्तवान्निर्गुणंनतु ३९

गुरुरेवेतिभावः ३५ धनस्येति । कीदृशाइमेजनाः व्यर्थमेवप्राकारंविमोहंगताः एवंकथं यत्जनकएवधनस्यब्रह्मविद्यायाश्चपितेवदाताश्रोताचेति पितायथाधनंददातिपुत्राधीतंचशृणोतितद्वदित्यर्थः । श्रुतौजनकपदस्याभ्यासोदं जनकपदंपितृपरमुपमानतयाव्याख्यातमितिबोध्यम् ३६ विमोहितत्वंचजनानांमत्तोधिकमज्ञात्वाजनकंप्रतियानादिति सूचयितुंस्वस्याधिक्यंदर्शयति यतइति । वचनेप्रकाशनप्रतिज्ञामात्रेपिजातेसतिगवांसहस्रंददामिसजनकस्तूपदेशेजातेसतिपश्चाद्ददातीतिस्पष्टोविशेषइतिभावः ३७ इत्यविज्ञायेति । इतिश्लोकत्रयेणवर्णितंराज्ञोऽभिप्रायमल्पधीत्वादविज्ञायैवगार्ग्योबालाकिर्ब्रह्मापरंयथाज्ञातंवक्तुमुपदेष्टुमुपचक्रमेप्रारेभे कीदृशोगार्ग्यः एनंराजानंआर्तंजिज्ञासयाव्याकुलंमन्यमानः । अनेनतत्त्वजिज्ञासयाएतद्रूपायनंदत्तमतोस्यजिज्ञासापूरणीयेतिभ्रमंप्राप्तःसन्नित्यर्थः ३८ अथद्वितीयकंडिकामारभ्यसप्तदशकंडिकार्थंसंगृह्याह अध्यात्ममितिषड्भिः । अध्यात्मंव्यष्टिरूपधृक् अधिदैवंसमष्टिरूपधृक् चसविशेषंब्रह्मप्राणरूपंयथाज्ञातंबालाकिरुक्तवांस्तदपिअव्याकृतपर्यंतंअव्याकृतंपर्यंतेपरस्ताद्यस्यतत् अव्याकृतादप्यपरमेवावददित्यर्थः । निर्गुणंतुनतस्यपरतरत्वादितिभावः ३९

यद्यदिति । बालाकिर्यद्यदवदत्राजातत्तन्निराकरोत् किंकुर्वन् एतन्मयाज्ञातत्वान्नोपदेष्टव्यमितिसूचनार्थमामाऽत्रसंवादंकुर्वितिवदन्सन्नृतथाहस्तौवारणमुद्रयाचालयन्सन्निति ४० आदित्ये ति । आदित्यचंद्रविद्युतःप्रसिद्धाः । स्तनयित्नुर्मेघमंडलशब्दः । नभआकाशम् । मरुद्वायुः । अग्निः । आपः इमेऽष्टौअधिदैवतंदेवतेविराट्शरीरेघटकतयास्थिताःब्रह्मपुरुषाःअपरब्रह्मणोवि भूतिरूपाणांपुरुषाणांशरीरभृताः तथाचैतेषुअष्टसुअष्टौउपास्यानिब्रह्मस्वरूपाणिउक्तानीत्यर्थः ४१ अध्यात्ममिति । अध्यात्मंआत्मनिव्यष्टिशरीरेस्थिताःएतेऽष्टौपूर्ववद्ब्रह्मपुरुषाउक्ताः । एतेकें आदर्शःदर्पणाद्युज्ज्वलंप्रतिबिंबग्राहकंवस्तु १ । दिग्रूपंश्रोत्रंश्रुतौप्रतिश्रुत्पदेनोक्तं २ । गच्छंतंवेगेनचलंतंपुरुषमनुतस्यपश्चाद्योऽयंध्वनिरूपःशब्दः ३ । पुरुषाकृतिपुरुषसमानाकारंछायास्वरूपंच ४ स्थूलंशरीरंशरीरपदेनैवोक्तं ५ । तथासूक्ष्मंशरीरंप्राज्ञइतीरितंसुषुप्त्यंतर्गतस्वप्नदर्शनसाधनत्वेननस्वप्नमाचरतीतिवाक्येप्राज्ञपदप्रयोगार्हत्वेनविवक्षितं ६ । दक्षिणनेत्रस्थःसूक्ष्मशरीराकारः ७ । वामने त्रस्थश्च ८ । एवमष्टावष्टौअधिदैवमध्यात्मंचब्रह्मपुरुषाउक्ताइत्येतावदत्रविवक्षितंक्रमस्तुतेषांपुरुषाणांविशेषणरूपागुणास्तेषांगुणानांचिंतनजन्यफलानिचश्रुतेरेवबोध्यानीति ४२ । ४३ गार्ग्येणेति । गार्ग्येणषोडशपुरुषाअस्यराज्ञउपास्यतयोक्ताअहमेतान्पुरुषानादित्यादिस्थितानुपासेत्वमप्युपास्वेत्येवमुपदिष्टाः । राजातुतान्पुरुषानुपास्यत्वेननिराकरोत् नैतेममोपास्यत्वेनोपदेष्टव्यायतोमया ज्ञाताउपासिताश्चात्रतवोपदेशःसिद्धसाधनमित्युत्तररूपंनिराकरणंकृतवान् । कीदृशान्पुरुषान् बालाकेःपुरुषविशेषणज्ञानात्तत्फलज्ञानाच्चयोभिमानस्तन्निराकरणायातिष्ठादिगुणत्वेनोक्तानुक्तान्

यद्यद्वदतिबालाकीराजातत्तन्निराकरोत् ॥ वदन्मामेतिहस्तौचचालयन्सन्नृपोत्तमः ४० आदित्यचंद्रौविद्युच्चस्तनयित्नुर्नभोमरुत् ॥ अग्निरापइमेब्रह्मपुरुषाअ धिदैवतम् ४१ अध्यात्मंचतथादर्शोदिग्रूपंश्रोत्रमेवच ॥ गच्छंतमनुशब्दश्चछायात्मापुरुषाकृतिः ४२ स्थूलंशरीरंतद्वच्चसूक्ष्मंप्राज्ञइतीरितम् ॥ दक्षस व्याक्षिसंस्थौचह्यष्टावष्टावुदीरिताः ४३ गार्ग्येणराज्ञोऽस्योपास्याराजातान्क्रमतोखिलान् ॥ अतिष्ठादिगुणत्वेनह्युक्तानुक्तान्निराकरोत् ४४ आदित्यादिस्थितान्दे वंपुरुषानपिषोडश ॥ ब्रह्मदृष्ट्यास्वयंप्रोक्तान्राज्ञावीक्ष्यनिराकृतान् ४५ अतःपरमजानानोब्रह्मात्मानंसनिर्गुणम् ॥ अपप्रतिज्ञोबालाकिःपरिम्लानमुखांबु जः ॥ चोरवत्तत्सभामध्येतूष्णीमासीदवाङ्मुखः ४६ कुलविद्याधनमदैर्मत्तंब्राह्मणबालकम् ॥ नानात्रैवर्णिकजनतिरस्कारगतश्रियम् ४७ अजातशत्रुस्तंवी क्ष्यशरन्मेघाभगर्जनम् ॥ मदंसांत्वयितुंराजातस्यपापकरंतथा ॥ इदंवचनमाहोच्चैःसभायांनिर्घृणोयथा ४८

वारंवारंराज्ञावर्णितान् । तत्रातीत्यऐश्वर्येणसर्वमतिक्रम्यतिष्ठतीत्यतिष्ठाइत्यादित्यपुरुषस्यविशेषणम् । आदिपदेनबृहत्पांडुरवासाइत्यादिविशेषणानांजलप्रधानचंद्रमयसुषुन्नातादात्म्येनलब्धा नामःत्यैवविशेषणानांतथाऽत्रस्यात्मेत्यादीनांचंद्रादिविशेषणानांचग्रहः ४४ ततउहेत्यादिइतिहोवाचबालाकिरित्यंतंवाक्यंव्याकरोति आदित्यादिस्थितानित्यष्टभिः । आदित्यादिगतान्षोडश पुरुषान्ब्रह्मदृष्ट्याब्रह्मबुद्ध्या चोपास्यत्वेनस्वयंबालाकिनाप्रोक्तान्राज्ञानिराकृतान्वीक्ष्यबालाकिस्तस्यराज्ञःसभामध्येचोरवत्तूष्णीमवाङ्मुखश्चासीत् । कीदृशोबालाकिः अतःपरंब्रह्मात्मानंकारणो पाधिकंवस्तुतोनिर्गुणमजानानःअविद्वान्सन् । पुनःकीदृशः अपप्रतिज्ञोऽपगताहानिंगताप्रतिज्ञायस्यसतथा अतएवपरिम्लानमुखांबुजइतिद्वयोरर्थः ४५ । ४६ कुलेति । कुलमभिजनःवि द्याचधनंचएतैर्मदैर्मदरूपेणपरिणतैर्मत्तंसमदं तदुक्तं ‘ विद्यामदोधनमदस्तथैवाभिजनोमदः । एतेमदामदांधानांतएवहिसतांदमाः ’ इति । मदकृतेननानात्रैवर्णिकजनतिरस्कारेणैवगतानष्टाश्रीः कांतिर्यस्यसतथातम् अतएवशरत्कालिकमेघगर्जनाभंव्यर्थंगर्जनंयस्यसतथातम् एतादृशंब्राह्मणबालकंवीक्ष्यतस्यबालाकेःपापकरंपापस्यपरापमानरूपस्यप्रयोजकंमदंसांत्वयितुंइदंवचनंसभाया मुच्चैराह । कीदृशोराजा निर्घृणोयथा अंतःसदयोपिबहिर्निर्घृणवद्भासमानइतिद्वयोरर्थः ४७ । ४८

राजवाक्यमभिनयति रेवालाकेइतित्रिभिः । किंपदंश्रुतिगतनुपदार्थं वितर्कमाह रेवालाकेविप्रकिंतवएतावदेवज्ञानंकिंवाधिकमप्यस्ति कीदृशस्यतव त्रैवर्णिकानांआक्षेपंतिरस्कारंकर्त्तुंशीलंयस्यए तादृशस्य पुनःकीदृशस्य दुष्टधियः ४९ विप्राइति । त्वदधिकज्ञानाअपिविप्राअत्रसभायांसंतिपरंतुत्वद्वत्त्वमिवत्वदन्यएकोपिमदविमोहितोनास्तीत्यन्वयः ५० ततइति । स्पष्टम् ५१ एतावदेवे ति । हेराजेंद्र एतावदेवब्रह्मस्वरूपंमह्यंगुरुभिरुदितमुपदिष्टमासीत् तेनाधिकानुपदेशेनएतस्मान्निरूपितात्कार्यंब्रह्मणोऽधिकंनजानेइति ५२ बृहदारण्यकचतुर्थाध्यायस्यप्रथमब्राह्मणेनैतावताविदितंभवती त्युक्तंतदर्थमाह एवमिति । एतद्वक्ष्यमाणंउदैरयत उक्तवान् ५३ मृषावेइत्यादिवाक्यार्थंप्रपंचयति पुत्रैरितित्रयोदशभिः । पुत्रादिभिरपिस्ववच स्ववचनंरक्षणीयं यदिपुत्रादयोपित्यज्यमानाःस्ववच नरक्षणेसाधनंस्युस्तदापिस्ववचनंरक्षणीयंसत्यंकर्त्तव्यमितियावत् । यतोऽनृतात्परंपातकंनास्ति तदुक्तंमनुना ' अन्यथासंतमात्मानंयोन्यथासत्सुभाषते । सपापकृत्तमोलोकेस्तेनआत्मापहारकः । वाच्यार्थानियताःसर्वेवाङ्मूलावाग्विनिःसृता । तांतुयस्तेनयेद्वाचंससर्वस्तेयकृन्नरः ' इति । स्तेनयेद्व्यभिचरितार्थांब्रूयादित्यर्थः ५४ मृषेति । कर्मणाचांडालःश्वपचादिस्तुजात्येतिविशेषः ।

रेवालाकेशिशोविप्रज्ञानमेतावदेवकिम् ॥ तवत्रैवर्णिकाक्षेपकारिणोदुष्टचेतसः ४९ विप्रास्त्वदधिकज्ञानाअत्रसंतिसहस्रशः ॥ सभायांममनैकोपित्वद्वदन्योविमो हितः ५० ततोयद्यस्तितेकिंचिज्ज्ञानमभ्यधिकंपुनः ॥ तद्वदेत्येवमुक्तःसवालाकिरिदमुक्तवान् ५१ एतावदेवराजेंद्रमह्यंब्रह्मोदितंपुरा ॥ तेनाहंनाधिकंजानेएत स्माद्ब्रह्मणःक्वचित् ५२ एवमुक्तेतदाराजावाक्यमेतदुदैरयत् ॥ ब्रह्मनैतावतागार्ग्यविदितंकेनचिद्भवेत् ५३ पुत्रैर्दारैर्धनैर्वापिनानाविद्याविभूतिभिः ॥ रक्षणीयं हिवचनंनानृतात्पातकंपरम् ५४ मृषावादीजगत्यस्मिन्कर्मचांडालईरितः ॥ विशेषतोहिगुर्वादिसन्निधौस्ववशोहियः ५५ अकारणंहियोवाक्यंमृषाब्रूयान्नरा धमः ॥ तस्यजिव्हांनिकृन्तंतिसंदंशैर्यमकिंकराः ५६ अपिप्रसिद्धालोकेस्मिन्नधमाःपुरुषाहिये ॥ अधमःप्रथमस्तेषुयोऽनृतंवक्तिमानवः ५७ अग्न्यादीनांगुरू णांचराज्ञांवासन्निधौहियः ॥ अनृतंवक्तितंपापंहन्यादेवाविचारयन् ५८ ब्राह्मणत्वान्नतेपापदेहिकोत्रवधःकृतः ॥ धर्मज्ञेनमयाराज्ञासभायांचविशेषतः ५९ मि थ्याप्रतिज्ञस्त्वंजातोब्रह्मवक्ष्मीतियत्त्वया ॥ प्रतिज्ञातंनतत्सिद्धंजनोपद्रवकारिणः ६० साधूनांसमचित्तानांब्राह्मणानांविशेषतः ॥ कर्मणामनसावाचापीडांयः कुरुतेऽधमः ॥ सूर्यादयःसदातस्यघ्नंतिसर्वान्मनोरथान् ६१

यस्तुस्ववशःस्वतंत्रःसन्गुरूणामादिपदग्राह्यराजादीनांचसन्निधौमृषावादीसविशेषतश्चांडालइति ५५ अकारणमिति । अकारणं ' वर्णिनांहिवधोयत्रतत्रसाक्ष्यनृतंवदेत् 'इत्यादिशास्त्रबोधितंकारणंवि नायोमिथ्यांवदतितस्यजिव्हांयमकिंकराःसंदंशैर्निकृंततिच्छिंदंति । संदंशोदुर्ग्रहस्यग्रहणसाधनंस्वर्णकाराद्युपकरणेषुप्रसिद्धः ५६ अपीति । लोकेयेऽधमाःप्रसिद्धास्तेषुगण्यमानेषुप्रथमगण्योऽधमः सयोमिथ्यावदतीति ५७ अग्न्यादीनामिति । अग्निप्रभृतीनांदेवानांगुरूणांवाराज्ञांवासन्निधौयोऽनृतंवक्तितंराजाहन्यादेवेति ५८ ब्राह्मणत्वादिति । हेपापतवदैहिकोवधःशारीरोदंडोमयानकृतस्तवब्रा ह्मणत्वात् । कीदृशेनमया धर्मज्ञेनसदाधर्मनिष्ठेनसभायांचविशेषतस्तत्रधर्मेसावधानेनेति । तथाचमनुः ' अक्षतोब्राह्मणोव्रजेदिति ' । नारदोपि ' वधादृतेब्राह्मणस्यनवधंब्राह्मणोर्हति ' इति ५९ ननुकेनागसामयिदंडप्रसक्तिरित्याशंक्यत्वत्कृतोजनोपद्रवएव येनादृष्टद्वारातवप्रतिज्ञाहतेत्याह मिथ्याप्रतिज्ञस्त्वंजातः यतोब्रह्मोपदिशामीतित्वयाप्रतिज्ञातंतत्तवप्रतिज्ञातंनसिद्धंजनोपद्रवकारि त्वादिति ६० जनोपद्रववशात्स्वर्ग्योपकरणदेवताएवतस्येष्टंघ्नंतीत्याह कर्मणेति । सूर्यादयश्चक्षुरादिदेवताः ६१

२७

न्याय्याचपरापकारिणोऽनिष्टप्रसक्तिरित्याह भूतानामिति । योहिस्वशिरःपरशिरोबुद्ध्याताडयतिसपीडितएवभवतिएवमात्मनोऽनतिरिक्तानिभूतानिपरबुद्ध्यापीडयन्कथंनदुःखितोभवेदितिभावः ६२ भवानपिताहशइत्याह विद्यादीति । विद्यादिमदजन्यमोहेनकरणेनभवताकर्त्राबहवःसाधवस्तिरस्कृतास्तत्तस्मात्साधुतिरस्काराद्धेतोर्जन्यंफलंत्वामद्यप्राप्तमिति ६३ अद्येति । अतएताहशफलदर्शनादद्यप्रभृतिब्रह्मतेहंब्रवाणीत्याकारंमृषावादंवृथामाकृथाःयथामृषावादंमांप्रत्युक्तवानसीति ६४ गुरुरिति । आत्मवतांपुरुषार्थादनपेतानांवश्येंद्रियाणामितियावत् । ईदृशानांसर्वदेहिनांगुरुरेवशास्ताअनुशासकः । अविप्रःक्षत्रियादिस्तुनशासकः । अविप्रस्यविद्योपदेशेऽनधिकाराद्विद्यातिरिक्तस्यचात्मवद्भिरनपेक्षितत्वादिति । ब्राह्मणानांतुक्षत्रियाद्यशास्तृत्वेब्राह्मणत्वजातिर्विशेषहेतुरित्यर्थः । त्वतुउन्मार्गवर्तित्वेनात्मवत्त्वाभावान्मयाशासनंकृतमितिभावः ६५ तवदंडोप्येवंविचार्यमयाकृतइत्याह दंडधाइति । दुरात्मानउक्तात्मवद्विपरीताधर्माच्चलिताइतियावत् । तेराज्ञादंडधाइत्यर्थकमेकंशास्त्रं यथा 'नादंडचोनामराज्ञोस्तिधर्माद्विचलितःस्वकात्' इत्यादि । ब्राह्मणानैवदंडधाइत्यर्थकमपरं यथा 'अक्षतोब्राह्मणोब्रजेदिति'। तत्शास्त्रद्वयंसमाश्रित्योत्सर्गापवादन्यायेनव्यवस्थाप्यतेतवभर्त्सनमेवकृतमिति तथाहि धिग्दंडस्त्वथवाग्दंडोधनदंडःशरीरदंडश्चेतिचतुर्विधदंडेपुचतुर्थस्यद्वितीयशास्त्रेणबाधातृतीयस्यानौचित्यात्प्रथमयोरनुष्ठानमिति ६६ उत्तमेभ्यइति । सर्वेभ्योराज्ञाहितमुपदेष्टव्यमित्यर्थकंशास्त्रमालंब्यतुभ्यंहितमुपदिशामीत्यर्थः । तथाचमनुः 'प्रजानांपालनंदानम्'इत्यादिक्षत्रधर्मानुपदिशति तत्रपालनंहितोपदेशः । उपदेशातिक्रमेदंड ।

भूतानांकुरुतेयोत्रसुखंवादुःखमेववा ॥ आत्मनःकुरुतेसर्वमिहलोकेपरत्रच ६२ विद्यादिमदमोहेनभवतात्रतिरस्कृतः ॥ बहवःसाधवस्तत्त्वांफलमद्यसमागतम् ६३ अद्यप्रभृतिमातस्त्वंमृषावादंकृथाःक्वचित् ॥ ब्रह्मतेहंब्रवाणीतियथामामुक्तवानिह ६४ गुरुरात्मवतांशास्ताबालाकेसर्वदेहिनाम् ॥ विशेषतोब्राह्मणानामविप्रःशासकोनहि ६५ दंडधाराज्ञादुरात्मानोब्राह्मणानैवचेतिहि ॥ शास्त्रद्वयंसमाश्रित्यभर्त्सनंतेकृतंमया ६६ उत्तमेभ्योऽधमेभ्योवाराज्ञावाच्यंहितंसदा ॥ एतच्छास्त्रंसमाश्रित्यहितंतेवच्मितच्छृणु ६७ षोडशानांत्वदुक्तानांपुरुषाणांमहात्मनाम् ॥ कर्ताविश्वस्यचाप्यस्यज्ञातव्योभवतासदा ६८ गुरूपदेशतस्तस्माद्गुरूनगच्छात्रमाचिरम् ॥ विद्यादिमदएषत्वामन्यथानरकंनयेत् ६९ ब्रह्मशब्दधियोर्गम्यःसएवेहनचापरः ॥ सृष्टिस्थित्यंतहेतुर्योजगतोस्यजगच्चयः ७० इतिराजवचःश्रुत्वागतदर्पोमहामनाः ॥ अभिप्रायेणामुनैनंगुरुत्वेनजगामसः ७१ गुरुर्गरीयसोर्थस्यदर्शकोधर्मतःस्मृतः ॥ यःकश्चिदखिलेलोकेघातकोपिलघीयसः ७२

वृत्तिपरिकल्पनंप्रतिपक्षिभ्यस्त्राणंचेतिनानाविधमतोहितोपदेशोमयाक्रियतइतिभावः ६७ योवैबालाकएतेषामितिवाक्यार्थमाह षोडशानामिति । त्वदुक्तानांषोडशपुरुषाणांयःकर्ताजनकः । तिष्ठंतुपुरुषाःसर्वस्यास्यजगतोपियःकर्तायस्यसर्वेकार्यंश्रुतौकर्मपदेनोक्तंसएवपुरुषेणज्ञातव्यइति ६८ 'नैषातर्केणमतिरापनेया' इत्यादिश्रुतेर्गुरूपदेशादेवसज्ञेयइत्याह गुरूपदेशतइति । अन्यथागुरूपदेशात्तज्ज्ञानासंपादने नरकंजन्ममरणप्रबंधरूपम् ६९ ब्रह्मेति । सएवमदुक्तोजगत्कर्त्तैवअद्वितीयपरस्यब्रह्मशब्दस्यतज्जन्यधियश्चगम्योगोचरइत्यर्थः । तत्रहेतुत्वेनब्रह्मलक्षणंस्मारयति सृष्टीति । तस्यताटस्थ्यंवारयतिजगच्चइति ७० ततउहेत्यादिवाक्यंव्याकरोति इतिराजवचइति । महद्विचारक्षमंमनोयस्यसतथाएताहशःसबालाकिरमुनावक्ष्यमाणेनाभिप्रायेणएनमजातशत्रुमेवगुरुत्वेनगुरुभावेनजगामनिश्चितवान् ७१ बालाक्यभिप्रायमावेदयति गुरुरितिद्वाविंशतिश्लोकैः । लोकेयःकश्चिदप्येताहशःसधर्मतोन्यायतोगुरुःस्मृतः 'धर्मोन्याये'इतिविश्वः । एताहशःकीदृशः गरीयसःस्वज्ञातुर्गुरुत्वाधायकत्वादतिगुरुभूतस्यात्मतत्त्वार्थस्यदर्शकःप्रकाशकः । तथाल्घीयसःस्वाश्रयस्यलघुत्वाधायकत्वेनातिलघोर्मंदादेर्घातकोनिवर्तकश्चेति । तथाचस्वसंसृष्टंमधुरंकुर्वन्स्वरसविपरीतंरसंचाभिभवन्गुडादिर्न्याय्यमधुरताकस्तथास्यराज्ञोगुरुतापिन्याय्येतिभावः ७२

तत्रलघीयसोघातकत्वंस्पष्टयति विद्येतिद्वाभ्यां । विद्याधनंचकुलंचएतैराख्यानिरूपणंयस्यईदृशोमदोलघीयानतिलघुःयस्यमदस्यसंपर्कादहमीदृशःसत्सभायामनादृतरूपोलघुर्लाघवंगतोभूवमिति ७३ असाविति । असौममालघुदुःखकरोमदःअनेनराज्ञानिहतस्तेनलघीयसोहननेनगुरुलक्षणेनासौराजागुरुरभूदिति कीदृशोमदोऽनेनराज्ञाऽनादृतः चित्तभूमौजायमानोविवेकेनप्रतिरुद्ध इत्यर्थः । तथाचपरेषांमदहरःस्वयंनिर्मदश्चायंकथंनगुरुतामर्हतीतिभावः ७४ परित्यज्येति । एनंराजानंगुरुत्वप्रयोजकव्यापारंकृतवंतंपरित्यज्याहंयद्यन्यंयामिअन्यत्रगुरुत्वंभावयामितदाकृतघ्नोभविष्यामिकृतं व्यापारंहंतिविफलयतीतिकृतघ्नःएतादृशःस्यामिति । तथाचतस्मैनद्रुह्येत्कृतमस्यजानन्निति निषेधोल्लंघनप्रयुक्तोदोषःस्यादवज्ञानरूपद्रोहापत्तेरितिभावः ७५ गरीयसोर्थस्यदर्शकत्वमप्यत्रेतिदर्शयति अपिचात्रेति । अत्रलोके दृष्टांतदर्शकोभवतीतिभावः ७६ ननुनतवपूर्वगुरवोपिब्रह्मजानंतीत्याशंक्ययदितेऽज्ञास्यंस्तर्हिमह्यंप्राणप्रियायोपादेक्ष्यंस्तउपदेशाभावाज्ज्ञायतेतेयथावन्नविदंतीत्याह गुरवइति ७७ तर्हिगुरुभ्योऽन्यान्ब्रह्मविज्ञानायोपगच्छेत्याशंक्यतेषांमच्छिष्यतांगतत्वान्नजिज्ञासयागमनार्हतेत्याह त्रैवर्णिकानितिद्वाभ्याम् ७८ एतदन्येइति । एतस्माद्राज्ञइतरेममशिष्यतामगमन्प्राप्ता स्ततःशिष्यतांगतत्वाच्चेभ्यस्त्रैवर्णिकेभ्यःकेनहेतुनाब्रह्मविद्यांलप्स्येप्राप्तोभविष्यामि तेषांमत्तोऽधिकज्ञत्वमेवहितेभ्योविद्यालाभेहेतुःस्यात् मच्छिष्यतांगतत्वेनचाधिकज्ञतायाअभावोनिर्णीतइतिभावः

विद्याधनकुलाख्योयंमदोमेनरकप्रदः ॥ लघीयान्यस्यसंसर्गादभवंलघुरीदृशः ७३ असावनेननिहतोऽलघुदुःखकरोमम ॥ अनादृतोपितेनासावभूद्राजागुरुर्मम ७४ परित्यज्ययदायामिगुरुमन्यमहंतदा ॥ भविष्यामिकृतघ्नोत्रततएनंव्रजाम्यहम् ७५ अपिचात्रयथाराजाऽजातशत्रुर्महामनाः ॥ ब्रह्मवेत्तिस्फुटंतद्वन्न्योजानातिमानवः ७६ गुरवोमेस्वयंयावज्ज्ञातवंतोमहाधियः ॥ प्राणप्रियायतत्सर्वंमह्यमेतेसमादिशन् ७७ त्रैवर्णिकानहंचान्यान्हिमसेत्वोश्रमध्यगान् ॥ स्फीतकीर्तीन्विजित्यात्रराजानंजेतुमागतः ७८ एतदन्येततःसर्वेशिष्यतामगमन्मम ॥ लप्स्येतेभ्यस्ततःकेनब्रह्मविद्यांसुदुर्लभाम् ७९ राजायंदेवसदृशस्तेभ्योवाप्यधिकोयतः ॥ ब्रह्मविद्यांविजानातिपरेभ्यश्चप्रयच्छति ८० देवादेववधूवक्त्रमद्यपानविमोहिताः ॥ जानंतोपिनजानंतिमद्यपाइवभूमिगाः ८१ अयंचैतादृशींलक्ष्मींप्राप्तोपिमुनिवत्स्थितः ॥ हर्षशोकौनचस्तोस्यप्रियाप्रियसमागमे ८२ पुत्राश्चशत्रवस्तद्वत्समाअस्यमहीभृतः ॥ यतोनकुरुतेद्वेषंद्वेषिण्यपिमहायशाः ॥ कामक्रोधविहीनोयमेकएवनचापरः ८३ यतोमेब्रह्मवच्मीतिवादिनेऽदात्सहस्रकम् ॥ गवामेतेननास्त्यस्मिन्कामःकोपिनसंशयः ८४

७९ अस्माद्राज्ञस्तुब्रह्मविद्यालाभःसंभाव्यतेइतिदर्शयति राजायमिति । अयंराजामानुषोपिगुणैर्देवसमः वाऽथवातेभ्योदेवेभ्यःसमधिकोभवति । तत्रहेतुमाह यतइत्यादि । ब्रह्मविद्यांविजानातिअप्रमत्तोधारयतिपरेभ्योऽधिकारिभ्यःप्रयच्छतिचेति ८० देवेभ्यआधिक्यंस्फुटयितुंदेवानांभोगव्यासंगरूपमपकर्षमाह देवाइति । देवाजानंतोपिनजानंतियतोदेववधूनांवक्त्राण्येवदर्शनरूपपानेनमादकत्वान्मद्यंतत्पानेनविमोहिताः तथाचभोगलिप्सामतिवद्धेनज्ञानेनस्वरूपनिष्ठतायाअसंपादनाज्जानंतोपिनजानंतीत्युक्तमितिभावः । विफलज्ञानानजानंतीत्येवव्यवहार्याइत्यत्र दृष्टांतःमद्यपाइवभूमिगाइति भूलोकगताःसुरापायथेत्यर्थः ८१ राज्ञोविशेषंस्फुटयति अयमिति । मुनिवत्परमहंसयतिवत् मुनिवत्स्थितिमाभिनयति हर्षेत्यादिना ८२ हर्षशोकाभावेरागद्वेषाभावं हेतुत्वेनाह पुत्राइति । द्वेषिणिद्वेषशीले । कामेति । अयमेकएवकामक्रोधविहीनोनचापरः एतत्समःकामक्रोधहीनोमयानदृष्टइतियावत् ८३ तत्रकामहीनतांप्रपंचयति यतइतिचतुर्भिः । ब्रह्मतेवच्मीतिवादिनेमह्यंगवांसहस्रंयतोऽदाद्दत्तवान् एतेनहेतुनाज्ञायतेयदस्मिन्राज्ञिकामोनास्तीति ८४

ननुब्रह्मवादिनेदानंकथंकामाभावेहेतुरित्याशंक्ययथाधूमव्यापकवन्हिविरुद्धंजलंन्हृदादौधूमाभावानुमितिहेतुस्तथाकामव्यापकापात्रदानविरुद्धत्वात्पात्रदानंकामाभावेहेतुर्व्यापकविरुद्धस्यव्याप्याभावहेतुतायान्याय्यत्वादित्याशयेनाह कामिनइतिद्वाभ्याम् । कामिनोहिकामिनीभ्यःकामिनीपृष्ठगामिभ्यःकामिनीकिंकरेभ्योवानटेभ्योवाकामिन्यनुकारिभ्योमुद्रिकाणांसहस्राणिशतानिचदद्युरिति अपात्रत्वसूचनायषष्ठीप्रयोगः ८५ ब्रह्मेति । तेकामिनःब्रह्मवादिभ्य पंचवराटकानपिनदद्युः कीदृशेभ्योब्रह्मवादिभ्यःतस्मैकामिनेवदद्भ्यःउपदिशद्भ्योपि वाशब्दोप्यर्थः परेभ्योऽनुपदिशद्भ्यस्तुपुनःकथंदद्युःअनुपदिशद्भ्योदानवार्त्तापिदुर्लभेत्यर्थः ८६ फलितमाह ततइति । ततःपात्रेदानप्रवृत्तेरेवज्ञायतइतिशेषः । किंज्ञायतइत्यतआह कामेत्यादि । एषमहीपतिःकामकृतंदोषंजानाति यश्चपुमान्मदनस्यकामस्यदोषज्ञःसएवनिश्चितंनिष्कामोभवतीति कामकृतोदोषश्च 'मृगयाऽक्षादिवास्वप्नःपरिवादःस्त्रियोमदः । तौर्यत्रिकंवृथाट्याचकामजोदशकोगणः' इतिमनूक्तः । कामएषक्रोधएषइतिभगवद्गीतायुक्तःसंसारसंततिलक्षणोवाबोध्यः ८७ क्रोधविहीनतांस्फुटयति कृतेतिद्वाभ्याम् । क्रोधनोहिपुरुषःकृतोऽपकारोयस्यएतादृशःसन्स्वस्मिन्शरीरेपरस्मिन्वाक्रोधफलंदर्शयति अस्मिन्नृपतौतुकृतापकारेपिसतिक्रोधःक्रोधफलंकापिनदृश्यतइति । एतदेवाभिनयति आगत्येति । यस्मान्मयाऽज्ञेनात्रसभायामागत्यास्यद्युमणेरिवसूर्यसदृशस्य

कामिनःकामिनीनांवाकामिनीपृष्ठगामिनाम् ॥ नटानांचापिदद्युस्तेसहस्राणिशतानिच ८५ ब्रह्मवादरतेभ्यस्तेनापिपंचवराटकान् ॥ दद्युस्तस्मैवदद्भ्योवापरेभ्यस्तुकथंपुनः ८६ ततःकामकृतंदोषंजानात्येषमहीपतिः ॥ दोषज्ञोमदनस्यस्यान्निष्कामोनिश्चितंपुमान् ८७ कृतापकारेन्नृपतौक्रोधःक्वापिनदृश्यते ॥ आगत्यात्रकृतंयस्मात्सभायांहेलनंमया ॥ अज्ञेनब्रह्मविदुषोराज्ञोस्यद्युमणेरिव ८८ अवज्ञातोप्ययंमह्यंहितमिच्छतिभूपतिः ॥ क्रोधस्ततोस्यनैवास्तिलोकद्वयभयंकरः ८९ कामक्रोधौचसर्वस्यहृदिजंतोःप्रतिष्ठितौ ॥ हित्वाब्रह्मविदंत्वित्थंगुरुशास्त्राच्छ्रुतंमया ९० अप्रत्यक्षाअपिसुरास्तपोभिर्बहुभिर्नृणाम् ॥ जन्मन्यस्मिन्नभवंत्येतेदृश्याजन्मांतरेथवा ९१ ब्रह्मनिष्ठेषुकश्चित्स्यादेकःसोपिहिराजसः ॥ वदेन्मह्यंनवाब्रूयान्मोहयेद्वावरांतरात् ९२ सुरेभ्यस्त्वपरेसर्वेजंतवोब्राह्मणादयः ॥ मत्तोन्यूनात्मविज्ञानास्तस्मादेनंव्रजाम्यहम् ९३ इतिसंचिंत्यबालाकिर्गतपापोमहामनाः ॥ श्रोत्रियोब्रह्मविद्यार्थंसमित्पाणिस्तमभ्ययात् ९४

ब्रह्मविदुषोब्रह्मविदोराज्ञोहेलनमवज्ञाकृताइति ८८ अवज्ञातइति । एवमवज्ञातोप्ययंभूपतिर्मत्यंहितमिच्छतिततःकृतापकारस्यापिहितप्रवृत्तेरस्यक्रोधोनैवास्तीति ८९ कामक्रोधाभावादेवास्यब्रह्मवित्त्वंनिश्चितमित्याह कामक्रोधाविति । ब्रह्मविदंहित्वावर्जयित्वासर्वस्यजंतोर्हृदिकामक्रोधौप्रतिष्ठितौइत्थंमयागुरुशास्त्राच्छ्रुतम् गुरुश्चशास्त्रंचतयोःसमाहारोगुरुशास्त्रंतस्मात्गुरुमुखात्तथाशास्त्रात् । योऽकामोनिष्कामआत्मकामइत्यादेरात्मकामतांनिष्कामतायांहेतुतयाब्रुवतइत्यर्थः ९० तस्मादेनंराजानंहित्वाब्रह्मविद्यार्थमन्यत्रगंतव्यमितिदर्शयितुंदेवेभ्योज्ञानलाभःसंदिग्धइत्याह अप्रत्यक्षाइतिद्वाभ्याम् । यतःसुराअतप्ततपसामप्रत्यक्षाःसंतितद्दर्शनायबहुभिस्तपोभिःकृतैरप्यस्मिन्जन्मनिदृश्याःप्रत्यक्षाभवेयुर्जन्मांतरेवेतिसंशयः ९१ ब्रह्मेति । प्रत्यक्षत्वेपिब्रह्मनिष्ठेषुएकःप्रथमंगण्यःकश्चिदेवविरलएवदेवःस्यादितिसोपिमिलितःसन्भोगप्राचुर्येणराजसोमह्यमुपदिशेन्नवोपदिशेद्वरांतरंदत्वामोहयेद्वाइतिविद्यालाभेसंशयइति ९२ देवभिन्नास्तुमत्तोन्यूनविज्ञानकत्वान्नोपगंतव्याइत्याह सुरेभ्यइति । तस्मादितरत्रज्ञानलाभसंशयात् एनंअजातशत्रुम् ९३ एवंश्रुतिगतस्योहेतिपदस्यार्थंवितर्कमभिनीयपरिशिष्टंव्याचष्टे इतिसंचिंत्येति । गतपापःनिर्भर्त्सनदंडेनशुद्धः तंराजानम् अभिअभिमुखमयात् ९४

हस्तेइति । हस्तेसमिधंगृहीत्वेतिसमित्पाणिपदार्थः गर्भाष्टमःगर्भकालादष्टमवर्षावच्छिन्नः अष्टवर्षइतियावत् । एतादृशस्त्रैवर्णिकःपुमान्बालोगुरुमेत्यशिष्योहंमांशाधीतिवदतिएवंराजानमागत्य बालाकिर्वाक्यंजिज्ञासयोपगच्छामितंशाधीत्याकारंश्रुतावुपायानीत्युक्तमब्रवीदित्ति ९५ दर्शयन्निति । किंकुर्वन्बालाकिरेवमब्रवीत्इतिदर्शयन् इतिकिम् अस्मिँल्लोकेयोब्रह्मविद्ययाधिकःसएव गुरुः । अपरस्तुविद्यांतरेषुबृहस्पतिसमोपिशिष्यएवेति ९६ तंहोवाचेत्याक्षेपयिष्यामीत्यंतस्यवाक्यस्यार्थंप्रपंचयति इत्थमित्येकविंशतिश्लोकैः । इत्थंविनीतंत्यक्तगर्वंगार्ग्यंनिरीक्ष्यविन यान्वितःप्रणतोसौराजाप्रांजलिर्बद्धांजलिःसन्नासनतउत्थायेदंवक्ष्यमाणंवचनंप्राहेति ९७ गुरवइति । अत्रसर्गेविधात्राब्रह्मणाब्राह्मणाजात्यैवगुरवोनिर्मिताः अपरेक्षत्रियाद्यावर्णिनःस्वभावेनशिष्या निर्मिताइति । तथाचमनुः 'उत्तमांगोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैवधारणात् । सर्वस्यैवास्यसर्गस्यधर्मतोब्राह्मणःप्रभुः' इति ९८ तर्हीति । तर्हितथासतित्वंब्राह्मणोभूत्वाक्षत्रियेमयिआत्मनः शिष्यतारूपंप्रतिलोमंविपरीतंकर्मकिंवाछसि कुतस्तवविपरीतकर्मणीच्छेत्यर्थः ९९ तत्रहेतुन्वितर्कयतिअपीति । मद्वचनादपिजातकोपःसन्निदंप्रतिलोमंकृतवानसि हितोपदेष्टुर्वचनात्को पोनोचितइत्यपिनासूच्यते । भीतःभयाद्वाबाल्याद्वा । कीदृशाद्बाल्यादज्ञानभावतः अज्ञानंभावःस्वभावोयस्यतत्तथातस्मात् १०० तत्रकोपश्चेदत्रहेतुस्तर्हिक्षमयानिवर्तनीयइतिक्षमायो

हस्तेगृहीत्वासमिधोयथागर्भाष्टमःपुमान् ॥ त्रैवर्णिकोवदत्येत्यशिष्योहंशाधिमामिति ॥ एवंराजानमागत्यबालाकिर्वाक्यमब्रवीत् ९५ दर्शयन्निति लोकेस्मि न्ब्रह्मविद्याधिकोगुरुः ॥ यःकश्चिदपरःशिष्यःस्वयंसाक्षाद्बृहस्पतिः ९६ इत्थंगार्ग्यंनिरीक्ष्यासौविनीतंविनयान्वितः ॥ उत्थायासनतःप्राहप्रांजलिर्वचनंत्वि दम् ९७ गुरवोब्राह्मणाजात्याविधात्रात्रैवनिर्मिताः ॥ स्वभावेनापरेशिष्याःक्षत्रियाद्याश्चवर्णिनः ९८ तर्हिकिंब्राह्मणोभूत्वाकर्मेदंप्रतिलोमकम् ॥ आत्मनःशि ष्यतामत्रक्षत्रियेमयिवांछसि ९९ अपिमद्वचनाद्ब्रह्मन्जातकोपइदंबत ॥ कृतवानसिभीतोवाबाल्यादज्ञानभावतः १०० क्षमस्वत्वंमयायत्तेकटुकंवाक्यमीरि तम् ॥ राजधर्मंसमाश्रित्यबालेनाकृतबुद्धिना १०१ मदत्रयपराधीनोभवान्बहुजनान्मया ॥ श्रुतोदृष्टश्चतेनैतत्शिक्षार्थंभवतःकृतम् १०२ ब्राह्मणाअपि निर्भर्त्स्यादुराचारामहीभुजा ॥ दृढंपरीक्ष्यविज्ञाताइतिशास्त्रंमयाश्रुतम् १०३ प्रसीदाज्ञस्यविप्रेंद्रतेनपंडितमानिनः ॥ ममधिङ्मांतथाराज्यंधर्मंक्रूरतमंत्व मुम् १०४ भीतिश्चतवमाविप्रभूयान्मत्तःकथंचन ॥ महापराधिनंचाहंनहन्मिप्राणिनंक्वचित् १०५ चोरेभ्योपिचवित्तानिदत्त्वाचौर्यान्निवर्तये ॥ तावता पिचयेपापान्निवर्तंतेनमोहिताः ॥ निःसारयामितान्देशात्स्वकीयात्पापकारिणः १०६

ग्यतांदर्शयन्प्रार्थयते क्षमस्वेतिचतुर्भिः । यन्मयाराजधर्मंसमाश्रित्यतेतुभ्यंकटुकंवाक्यमीरितंतत्क्षमस्व ब्राह्मणस्यगुरुत्वंस्फुटयन्शिष्यवदात्मानंविशिनष्टि बालेनाकृतबुद्धिनेति । अकृताआ गमाचार्यसत्संगादिभिरपरिपक्वाबुद्धिर्यस्यसतथातेन १०१ कटुवाक्याभिधानेप्रयोजकंनिवेदयति मदेति । भवान्मदत्रयस्यविद्याधनकुलाख्यस्यपराधीनोमयाबहुजनमुखाच्छ्रुतःस्व यंदृष्टश्चतेनापराधनिर्णयेनएतत्कटुकाभिधानंभवतःशिक्षार्थंकृतमिति १०२ राजधर्मवाक्यार्थमभिनयति ब्राह्मणाइति । शास्त्रस्वरूपंतूक्तं १०३ भवद्भिर्ब्राह्मणैरेवोपदिष्टेदुर्लक्ष्येधर्मेममप्रमादंप इयसिचेत्तथापिक्षमस्वाहंनुभवत्क्षोभंदृष्ट्वास्मादुद्विग्नोस्मीत्याह प्रसीदेति । तेनब्राह्मणैरुपदिष्टस्यैवमयाचरणेनममाज्ञस्योपरिप्रसीदेति अमुंराजसंबंधिनम् १०४ द्वितीयोऽनुचिताचरणहेतुर्भय रूपोयःशंकितस्तंवारयति भीतिश्चेतिपंचभिः । मत्तोभीतिस्तवमाभूयात्यतोमहापराधिनमपिप्राणिनंप्रायोनहन्मीति १०५ प्रायेणादननमभिनयति चोरेभ्यइति । प्रथमेऽपराधेवित्तदा नेनचौर्यान्निवर्तनंकरोमि द्वितीयेदेशान्निःसारणमिति १०६

अथैवमिति । अथएवमपिदेशान्निस्सारणेकृतेपितेषांचौर्यत्यागस्याशक्यत्वेसतितृतीयेऽपराधेइतियावत् तान्तृतीयापराधिनःललाटेशुनःपदेनलोहमयेनतप्तेनांकयामि । अथचतुर्थादिक्रमपराधंचेत्कुर्युस्तर्हिवामदक्षिणहस्तयोर्वामदक्षिणपादयोश्चैकमन्यतरंछेदयामि । एवंसप्तमापराधपर्यंतंव्यवस्थायांसत्यामष्टमंचेत्कुर्युस्तदाहन्मीति १०७ युद्धेपिधर्मेणैवहन्मीत्याह युद्धायेति । युद्धाययुद्धंकर्तुंअभिमुखःसावधानोयुवाचसन्मांशस्त्रेणपूर्वंयोहन्यात्तमेकंयुद्धेहन्मिनापरमुक्तविशेषणहीनमित्यर्थः १०८ भवतस्तुशंकैवनोचितेत्याह कुतइति । स्वस्थःक्षोभहीनः गतज्वरोगतसंतापः १०९ प्रतिलोममिति । कर्मेतिशेषः अज्ञानरूपबाल्यनिवृत्त्यैचेदेवंकरोषितथापिगुरून्गच्छेतेतुभ्यंनमोस्तु ११० एवमिति । एवमुक्तोबालाकिर्नागमत्किंतुचिंतालज्जयोःसूचनायाधोवदनत्वेनश्वासादिवैशिष्ट्यरूपातुरत्वेनविशिष्टःपादाग्रेणभूमिंलिखन्सरेखांकुर्वंस्तस्थावेवेति । इंगितज्ञइति । इंगितैर्भाववेत्ताऽजातशत्रुर्वक्ष्यमाणविधयापुनरुक्तवान् तत्राधोवदनत्वभूलेखनाभ्यांलिंगाभ्यांक्षत्रियपादग्रहणोद्यमरूपशास्त्रविरुद्धाचरणजन्यालज्जाज्ञाता श्वासादेश्चकथमन्यतोज्ञानंलप्स्यइतिचिंताचज्ञाता तथाचोक्तं 'दुराचारादिभिर्व्रीडाधार्ष्ट्याभावोभिधीयते । वस्त्रांगुलीयकस्पर्शभूरेखाधोमुखादिकृत्' इति । 'चिंताध्यानंहितानाप्तेःशून्यताश्वासतापकृत्' इतिच १११ तत्रलज्जादुःखंचिंतानिवृत्त्योपशांतंभविष्यतीतिमत्वाबालाकिंचिंतितंविद्यालाभप्रकारमपवदन्

अथैवमप्यशक्यत्वेललाटेश्वपदेनतान् ॥ अंकयाम्यथचेत्कुर्युश्छेदयाम्यंगमेवहि ॥ हस्तयोःपादयोरेकमष्टमेहन्मितान्नरान् १०७ युद्धायाभिमुखोयोमांहन्यात्पूर्वंयुवापुमान् ॥ सावधानःसुशस्त्रेणतमेकंहन्मिनापरम् १०८ कुतोद्विजोत्तमंहन्यामवध्यंसर्वदेहिभिः ॥ इतिविज्ञायविप्रेंद्रस्वस्थोभवगतज्वरः १०९ प्रतिलोमंकथमात्वंलोकद्वयविनिंदितम् ॥ यथागतंप्रयाहित्वंगुरून्वाव्रजतेनमः ११० एवमुक्तोथबालाकिरधोवदनआतुरः ॥ नागमन्निःश्वसंस्तस्थौभूमिंपादाग्रतोलिखन् ॥ इंगितज्ञोऽजातशत्रुर्बालाकिंपुनरुक्तवान् १११ प्रतिलोममिदंविप्रब्राह्मणःक्षत्रियंव्रजेत् ॥ ब्रह्ममेवक्ष्यतीत्येवमभिप्रायेणधार्मिकः १२२ याजनाध्यापनंचैवविशुद्धाच्चप्रतिग्रहः ॥ ब्राह्मणस्यैवकर्मैतत्क्षत्रियस्यनकर्हिचित् ११३ अध्यापनेधिकारोस्तियस्यनैवकथंहिसः ॥ उपनेताभवेल्लोकेक्षत्रियोधमवर्णभाक् ११४ व्रतंचममविप्रेंद्रब्राह्मणेभ्यःसदैवहि ॥ ददामियाचितंप्राणान्किमुदारादिकंपरम् ११५ गुरवेपिततस्तुभ्यमहंविज्ञापयामिभोः ॥ याचकायात्मनोविद्यांप्राणेभ्योपिगरीयसीम् ११६

प्रकारांतरंदर्शयति प्रतिलोममितिपङ्क्तिः । इदंविपरीतरूपंकर्ममन्ये इदंकिंयद्ब्राह्मणउत्तमवर्णःक्षत्रियमधमवर्णमयंमह्यंवक्ष्यत्युपदेक्ष्यतीत्यभिप्रायेणव्रजेत्दीक्षायैउपगच्छेत् कीदृशोब्राह्मणः धार्मिकःस्वंधर्मंचरतिआसेवतइतिसतथा अधार्मिकस्तुशूद्रवत् 'नानुतिष्ठतियःपूर्वांनोपास्तेयश्चपश्चिमाम् । सशूद्रवद्बहिष्कार्यःसर्वस्माद्विजकर्मणः' इतिमनूक्तेः द्विजकर्मणःसत्कारादेरितितद्व्याख्यातारः ११२ क्षत्रियस्यचब्राह्मणदीक्षणमनुचितमित्याह याजनेति । याजनाण्यासश्रंथेतियुच् । विशुद्धादपतितात् एतत्त्रयंब्राह्मणस्यैवविहितमितिशेषः । क्षत्रियस्ययजनाध्ययनदानेब्राह्मणसमानकर्मणोपियाजनादिकंनकर्हिचिद्विहितमिति ११३ अध्यापनेइति । यस्यक्षत्रियस्याध्यापनेनाधिकारःसउपनेताउपनयनस्याचार्यत्वफलकस्यविधिवदात्मसमीपनयनरूपस्यकर्तांकथंभवेदिति 'अष्टवर्षंब्राह्मणमुपनयीततमध्यापयीत' इत्यादिश्रुतौउपनयनस्यअध्यापनसमानकर्तृकत्वेनविधानादितिभावः ११४ तथापितुभ्यंदानविधयावक्ष्यामीत्याह व्रतमिति । ममेदंव्रतंनियमः इदंकिम् यद्ब्राह्मणेभ्यःप्राणरूपंयाचितमपिददामिकिंमुतान्यदिति ११५ गुरवेपीति । ततउक्तनियमवशात्ब्राह्मणत्वेनगुरवेपितुभ्यंयाचकायात्मनोविद्यांविज्ञापयाम्येवददाम्येवनतुतांप्राणेभ्योगरीयसीमनुसंधायवंचयिष्यामीत्यर्थः ११६

दातृयाचकेति । आवयोर्दातृयाचकत्वलक्षणःसंबंधोभूयादितिगुरुशिष्यतारूपस्तुमाभूयादिति । अतएतस्मात्तवविद्यालाभोपायाचिंतिताद्धेतोस्त्वंतच्छृणुयत्तुभ्यंविज्ञापयाभिबोधयामीति ११७ तंहप्राणावित्यादिकमुत्तस्थावित्यंतंवाक्यंव्याकरोति इत्युक्त्वेत्यादित्रयोदशभिः । श्रुतेःप्रथमांशेनपाणावाभिमुख्येनात्यादरेणगृहीत्वेत्यर्थकेनसूचितमत्यादरंतावद्दर्शयति तंबालाकिंप्रणम्यात्मनआसनेराजासनेसंस्थाप्यउपवेश्यस्वयंतुराजाभूमौनीचासनेउपविश्यइदमुत्तरश्लोकमयंवाक्यमुक्तवानिति ११८ प्राणादिभ्यइति । प्राणादिभ्योजडेभ्योव्यतिरिक्तस्त्रिविधपरिच्छेदहीनईश्वरःस्वप्रकाशानंदरूपःसर्वात्मायोस्तितमेवब्रह्मपदार्थंविद्धीति ११९ इत्युक्तइति । इतिवाक्यैराज्ञोक्तेसतिजातोविश्वासउत्कटकोटिकसंशयात्मकसंभावनात्वेनप्रसिद्धोयस्यएतादृशंगार्ग्यमन्वयव्यतिरेकाभ्यांबोधयितुंसनिश्चयंकर्तुंस्त्रयमासनादुत्तस्थाविति १२० तस्येति । तस्यबालाकेर्महासनादवतरतोमानाधिक्यायराजसत्तमोऽजातशत्रुःस्वकरंदत्वारहस्यार्थबोधनायसभांत्यक्त्वाबालाकिनासहांतःपुरंविवेशेति १२१ तत्रेति । तत्रांतःपुरेद्वारिद्वारदेशेसुप्तोनिःश्वसन्प्राणमात्रव्यापारवांस्तिष्ठतिस्मेतितदंतिकेबालाकिनासहतस्थाविति १२२ अजातेति । तत्रस्थितत्वात्मत्वेनबालाक्यभिमतप्राणस्यानात्मतास्फुटीकरणायगार्ग्यप्रसिद्धैर्गार्ग्येणसम्यग्ज्ञातैर्नादपूरितैरुच्चैरुच्चारितैश्चप्राणस्यनामभिरेवसुप्तंपुरुषमामंत्रयतसंबोधितवानित्यर्थः १२३ प्राणस्यसर्वदेवतारूपस्यनामान्यभिनयति

दातृयाचकसंबंधोनावयोर्गुरुशिष्यता ॥ भूयादतःशृणुत्वंतत्तुभ्यंविज्ञापयामियत् ११७ इत्युक्त्वाऽजातशत्रुस्तंप्रणम्यात्मनआसने ॥ संस्थाप्याथस्वयंभूमावुपविश्येदमुक्तवान् ११८ प्राणादिभ्यःसमस्तेभ्योव्यतिरिक्तोमहेश्वरः ॥ आनंदात्मास्वप्रकाशोगार्ग्यब्रह्मेतिविद्धितम् ११९ इत्युक्तेजातविश्वासंगार्ग्यंबोधयितुंनृपः ॥ अन्वयव्यतिरेकाभ्यामुत्तस्थौस्वयमासनात् १२० तस्यदत्वाकरंस्वस्यराजवद्राजसत्तमः ॥ परित्यज्यसभामंतःपुरमेषविवेशह १२१ तत्रकश्चित्पुमान्सुप्तोद्वारितिष्ठतिनिःश्वसन् ॥ गार्ग्येणसहितस्तस्थौराजातस्यसमीपतः १२२ अजातशत्रुःपुरुषमामंत्रयदनेकधा ॥ गार्ग्यप्रसिद्धैःप्राणस्यनामभिर्नादपूरितैः १२३ आदित्यचंद्रमोरूपबृहत्पांडुरनीरग ॥ उपर्यधोविभागेनवासोवन्नीरसंवृत ॥ प्रियदर्शनसोमाख्यराजन्दीप्तिसहस्रभाक् १२४ एवमामंत्रितःप्राणोदेवतानामभिस्तदा ॥ अभोक्तृत्वाज्जागरूकोनाबुध्यतकथंचन १२५ घटबुध्नोदराकारपृथोजलविधारण ॥ इत्यादिनामभिर्बोध्यःस्वंनवेत्तियथाघटः ॥ अचेतनत्वात्प्राणोपिनैवमात्मानमण्वपि १२६ दोधूयमानोपिभृशंनावैद्भूपालबोधितः ॥ अनात्मतातस्तस्यघटस्येवविनिश्चिता १२७

आदित्येति । आदित्यचंद्रमसौरूपेयस्यप्राणस्यसतथातत्संबोधनंहेआदित्यचंद्रमोरूप हेबृहन्नभ्यधिक पांडुरंशुक्लवर्णंयन्नीरंतद्गच्छतिआश्रयते ' आपोमयःप्राणः ' तत्संबोधनंहेपांडुरनीरगेति उपर्यधोविभागेनवाससाउत्तरीयांतरीयरूपेणएकेनयथापुरुषःसंवीतोभवतितद्वन्नीरेणसंवृत । हेप्रियदर्शन हेसोमाख्यसोमनामक हेब्राह्मणानांराजन् । हेदीप्तिसहस्रभाक्असंख्यातदेवतारूपकिरणशालिन् १२४ एवमिति । एवंदेवतानामभिःप्राणस्यसमष्टिरूपप्रतिपादकैर्नामभिरामंत्रितःसंबोधितोपिप्राणोनाबुध्यतनप्रबोधंप्राप्तः कुतः अभोक्तृत्वात्अचेतनत्वेनभोगाश्रयतानर्हत्वात् यदिप्राणएवचेतनत्वव्याप्यभोक्तृत्ववान्स्यात्तर्हिस्वकीयंनामबुद्ध्वाप्रबुद्धचेतेतिभावः नचप्राणस्याप्रबोधेसुप्तिःप्रयोजिका । श्वासादिस्वव्यापारारूढत्वेनसुप्तेर्दुर्वचत्वादितिदर्शयितुंप्राणंविशिनष्टि जागरूकइति १२५ अचेतनत्वादबोधंसदृष्टांतमाह घटेति । हेघटबुध्नोदरयोर्मूलमध्ययोराकारःपृथुर्विशालोयस्यसतथातत्संबोधनंहेबुध्नोदराकारपृथो हेजलविधारणजलधारकइत्यादिनामभिर्बोध्यःसंबोधयितुमिष्टोपिघटःस्वमात्मानंयथानवेत्तिअचेतनत्वात् । एवंघटवत्प्राणआत्मानंअण्वपिकिंचिदपिनवेत्तिस्मेति १२६ ततःकिमतआह दोधूयमानइति । यतःप्राणोदोधूयमानःस्वव्यापारंकंपनरूपमतिशयेनकुर्वाणोभूपालेनराज्ञासंबोधितोपिनावैत्नज्ञातवान् ततःअबोधादेवहेतोस्तस्यप्राणस्यानात्मताबालाकिनानिश्चितासीदिति १२७

एवंप्राणस्यानात्मताबोधनेपिशुद्धात्मनःसाक्षाद्बोधयितुमशक्यत्वात्स्थूलारुंधतीन्यायेनशुद्धात्मबोधनायविशिष्टरूपेभोक्तरिआत्मबुद्धिमवतारयितुमुपायांतरंचकारेत्याह बालाकिनेऽथेति । अथबालाकिनेभोक्तारंदर्शयितुमिदमीश्वरोराजाचकार इदंकिम् यत्स्वकीयेनकरेणअस्यसुप्तस्यकरंपेषयामासगाढंन्यपीडयदिति । यद्वापरेणप्रयोज्यकर्त्रापुरुषेणएनंसुप्तंयष्ट्याघातयत्ताडितंकृतवानिति १२८ यष्टीति । यष्टिघातपाणिपेषणरूपहेतुद्वयात्संजातावेदनापीडायस्यएतादृशोभोक्तासुखदुःखयोरनुभवितापुरुषउत्तस्थौपीडानुभवेनप्रबोधंप्राप कीदृशः दीप्तःक्रोधेनज्वलन्निवेतिदीप्तोदृष्टांतः भस्मापायेभस्मनोपनयेऽपहारेकृतेसतियथानलइति १२९ एवमुत्तस्थावित्यंतंव्याख्यायतद्भावमभिनयन्नुत्तरश्रुतिग्रंथमवतारयति करणेतिद्वाविंशतिश्लोकैः । एतावतानिदर्शनेनबालाकिःसोपाधिकमेवभोक्तारंज्ञातवान् । ततोभोक्तुर्भिन्नंशुद्धंनज्ञातवानित्यर्थः १३० ननुशुद्धस्यैवभोक्तृत्वंकुतोनस्यादित्याशंकांवारयितुंभोक्तृपदप्रवृत्तिनिमित्तभूतांभुक्तिंनिरूपयति भुजिक्रियेतिद्वाभ्यां । भुजिधात्वर्थयोःफलव्यापारयोर्मध्येभुजिक्रियाव्यापाररूपानभुक्तिर्नभोक्तृपदप्रवृत्तिनिमित्तताहीं । तत्रहेतुंनियमेनभोक्तरिसत्त्वाभावमाह नैषाभोक्तरिनिश्चितेति । एषाभुजिक्रियाभोक्तरिनिश्चितानियमेनोपलभ्यमानानभवतितत्रासतीतियावत् । नियमाभावेहेतूअव्याप्त्यतिव्याप्तीदर्शयति मध्यपादद्वयेन । कर्तृकर्मेतिन्यायेनक्रियायादुःखरूपत्वात्भोक्तृत्वस्य

बालाकिनेऽथभोक्तारंदर्शयन्नकरोदिदम् ॥ स्वकीयेनकरेणास्यपेषयामासवैकरम् ॥ भृशंतथापरेणैनंयष्ट्याघातयदीश्वरः १२८ यष्टिघातात्पाणिपेषाद्भोक्तासंजातवेदनः ॥ उत्तस्थौसतदादीप्तोभस्मापायेयथानलः १२९ करणग्रामसहितंभोक्तारंज्ञातवानसौ ॥ बालाकिर्नततोभिन्नंबुद्धिसाक्षिणमीश्वरम् १३० भुजिक्रियानभुक्तिःस्यात्क्रियायादुःखरूपतः ॥ हस्तास्यादौचसत्त्वेननैषाभोक्तरिनिश्चिता १३१ यद्यप्येषाभवेत्तृप्तिर्नपुष्ट्याख्येयमीरिता ॥ लेपनेनयतःकुड्यंपुष्टंभवतिनित्यशः ॥ सुखदुःखेततोज्ञेयेतुष्ट्याख्येभुक्तिशब्दिते १३२ दुःखंनभोगशब्दाख्यंमुख्यंलोकेस्तिकुत्रचित ॥ स्रग्विणंभोगिनंप्राहुर्नशूलस्थंयतोनरम् १३३ कस्मैचिदपिनैवात्ररोचतेदुःखमण्वपि ॥ तेनतृप्तिश्चनैवस्यादरुचौतृप्ततांकुतः १३४

सुखेनापिनिरूपितत्वादव्याप्तिः भोक्तृत्वानधिकरणेपुदंतमुखजिव्हादिपुक्रियायावर्तमानत्वेनचातिव्याप्तिरितिभावः १३१ यद्यपीति । यद्यपिभुजिधातोःफलत्वेनार्थभूतातृप्तिरेषाप्रवृत्तिनिमित्तभूताभुक्तिःस्यात्तथापिअयंविशेषोऽवधार्यइतिशेषः । यतःफलेस्तृप्तःपितॄनताप्सीदित्यादिप्रयोगवशात्तृप्तेःपुष्टिस्तुष्टिरितिद्वेरूपेप्रसिद्धे नचपुष्टितुष्टिशब्दयोःपर्यायत्वं यथाश्वतःस्युस्तुष्टिःपुष्टिःक्षुदपायोनुघासमितिभागवतैकादशेसहप्रयोगात् तत्रपुष्ट्याख्यातृप्तिःइयंभुक्तिर्नेरिता । तत्रहेतुंभुजिक्रियावदतिप्रसंगमेवदर्शयति लेपनेनेति । कुड्येभोक्तृत्वाभावेपिपुष्टेर्दर्शनादित्यर्थः । परिशेषात्सुखदुःखात्मिकातुष्टिस्तृप्तेःस्वरूपताभुक्तिरित्याह सुखेति । विद्यारण्यैरप्युक्तं 'सुखदुःखाभिमानाख्योविकारोभोगइष्यते' इति १३२ तत्रदुःखस्यभोगशब्दार्थतभावउपचारादितिवक्तुंमुख्यार्थतायाअसंभवमाह दुःखमितित्रिभिः । दुःखंलोकेकचिदपिमुख्यंभोगशब्देनवाच्यंनभवति । तत्रहेतुंतथान्यवहाराभावमाह स्रग्विणमिति । स्रग्विणंस्रग्जन्यसुखशालिनमेवनरंयतोलोकाभोगिनंप्राहुः शूलस्थंशूलारोहदुःखमनुभवंतंनतथाहुरिति १३३ ननुमास्तुसुखरूपतयादुःखस्यभोगशब्दार्हत्वं सुखजनकतयातुस्यादित्याशंक्यनतथापीत्याह कस्मैचिदिति । अत्रलोकेदुःखंकस्मैचिदपिअण्वपिनरोचतेनकस्यापिप्रीतिंजनयतीतियावत् । दुःखेनप्रीतिजननाभावेतस्यतृप्तिजनकत्वमपिदुर्वचंतृप्तेःप्रीत्यात्मकतुष्टिरूपतायांदर्शितत्वादित्याह तेनेति । तेनदुःखेन अरुचौप्रीत्यनुकूलव्यापाररूपरुच्यभावेदुःखगतेसतितेनदुःखेनतृप्तताकुतःस्यात्कारणाभावेकार्याभावस्यन्याय्यत्वादितिभावः १३४

सामांन्याप्रयोजकस्यविशेषाप्रयोजकत्वमितिन्यायादपिदुःखस्यतृप्त्यप्रयोजकत्वमितिदर्शयितुंतृप्तेःप्रीतिविशेषतामाह अनुकूलइति । अनुकूलेभुज्यमानेसतिभोगस्यावृत्तौपौनःपुन्यरूपायांस त्यांपःसुखोदयः उदितंसुखमितियावत् सातृप्तिरित्युच्यतेसातृप्तिःप्रतिकूलेकथंस्यादिति १३५ फलितमाह ततइति । ततःमुख्यत्वासंभवात् उपचारःसादृश्येनप्रवृत्तिः इहव्यवहारे । उ पचारेबीजमाह सुखेति । पुंसिभोक्तरि अतिशयंचित्तपरिणामविशेषंदर्पादिरूपंसादुःखावाप्तिः अतोऽतिशयाधायकत्वरूपसाधर्म्यात् १३६ एतादृशभुक्त्याश्रयस्यभोक्तुर्ज्ञानमात्रेणनकृतकृ त्यतेतिहेतोर्ज्ञापयिष्याम्येवेतिप्रतिज्ञावतोराज्ञोवक्तव्यमवशिष्यतएवेतिसूचयन्नुक्तभोक्तृत्वस्यशुद्धेऽसंभवमाध्यासिकत्वंकल्पितस्यतस्यकल्पितमेवाश्रयंचदर्शयति पुंसीत्यादिना । योयंभुक्तिसंज्ञः सुखदुःखसमागमकालिकोऽतिशयःपुंसिविशिष्टरूपेदृष्टःअहंसुखीत्यादिरूपेणानुभूयमानःसआनंदात्मनिअद्वितीयेअसंगेचात्मनिस्वरूपतःस्वरूपमालोच्यकथंस्यात्संभवेत् अद्वयादिरूपेआत्मनिपरि च्छिन्नादिरूपस्यभोक्तृत्वस्यनकथंचिदपिसंभवइतियावत् १३७ कथंतर्हिभोक्तृत्वस्यात्मनिभानोपपत्तिरितिचेदध्यासादित्याह स्वयमिति । पूर्वार्द्धोक्तेआनंदात्मनिभोक्तृत्वमध्यासाद्विनाऽध्या समंतरेणनकल्पतेनोपपद्यतइति अध्यासस्त्वतस्मिंस्तद्बुद्धिरित्युक्तलक्षणःकार्याविद्यात्वेनप्रसिद्धः १३८ अध्यासाण्यथानुपपत्त्यैवचमायादिपदवाच्यमज्ञानमभ्युपगतमित्याह स्वसजातीति ।

अनुकूलेभुज्यमानेआवृत्तौचसुखोदयः ॥ तृप्तिरित्युच्यतेलोकेप्रतिकूलेकथंहिसा १३५ ततोदुःखस्यभोग्यत्वमुपचारादिहोच्यते ॥ सुखावाप्तिर्यथापुंसिकुरुतेऽति शयंतदा ॥ दुःखावाप्तिस्तथासाऽतोभुक्तिरित्युच्यतेजनैः १३६ पुंसियोतिशयोदृष्टःसुखदुःखसमागमे ॥ आनंदात्मनिचासंगेकथंसस्यात्स्वरूपतः १३७ स्व यंप्रकाशचैतन्येकार्यकारणवर्जिते ॥ आनंदात्मनिनाध्यासाद्विनाकेनापिकल्पते १३८ स्वसजातिविजात्युत्थभेदत्रयविवर्जिते ॥ आनंदात्मनिमायाऽतःकल्पि तावेदवादिभिः १३९ द्विस्वभावाहिसादृष्टाविक्षेपावृतिकारिणी ॥ आवृतिःसर्वदासिद्धाविनानंदात्मबोधनम् १४० विक्षेपोद्विविधःप्रोक्तःस्वप्नोजागरणंत्विति ॥ सुप्रसिद्धंजागरणंभूतानांबुद्धिजीवनम् १४१ यत्रायंव्यवहारःस्यादिंद्रियैर्बाह्यचारिभिः ॥ स्वप्नःसंस्कारजोज्ञेयोमनोमात्रैकहेतुकः १४२ सुखदुःखकृतोदृष्टःस्व प्नेप्यतिशयोनृणाम् ॥ स्वप्नेयत्रैवदृष्टोयंतत्रजागरणेपिच १४३

स्वश्चसजातिश्चविजातिश्चेतिस्वसजातिविजातयस्तेभ्यउत्तिष्ठतिनिरूपितंभवतीतिस्वसजातिविजात्युत्थंएतादृशंयद्भेदत्रयंतेनविवर्जितेआनंदात्मनिअतोऽध्यासानुपपत्तेरेवमायाकल्पितावेदवादिभिरि त्यनेनबंधमोक्षादिश्रुतार्थापत्तिरप्यज्ञानेमानमितिसूचितम् कल्पितेतिपदेनचमिथ्याभूताध्यासोपपादनायकल्पमानामिथ्याभूतैवकल्पतेयादृशोयक्षस्तादृशोबलिरितिन्यायादितिसूचितम् १३९ भोक्तृत्वाद्यध्यासोपपादकंतस्याःस्वभावद्वयमाह द्विस्वभावेति । सामायायतोविक्षेपावरणयोःकरणशीलाऽतोद्विस्वभावाद्वौविक्षेपावरणशक्तिरूपौस्वभावौयस्याएतादृशीदृष्टादृष्टार्थानुपपत्त्याक ल्पिता तत्रावृतिर्मायास्वभावप्रयुक्तासर्वदासुषुप्त्याद्यवस्थात्रयेपिसिद्धासाक्षिप्रत्यक्षेणेतिशेषः । कीदृशीआवृतिःआनंदात्मबोधनंविनावर्त्तमाना आत्मबोधैकनिवर्त्याइतियावत् १४० द्वितीय स्वभावप्रयुक्तंविक्षेपंविभजते विक्षेपइति । तत्रजागरणंभूतानांप्रसिद्धं कीदृशंजागरणंबुद्धिजीवनंबुद्धिर्जीवनंधारणंयस्यबुद्ध्याश्रितमितियावत् । 'जीवनंवर्त्तनेनीरेप्राणधारणयोरपि' इतिविश्वः १४१ जाग्रल्लक्षणमाह यत्रेति । बाह्याःस्थूलविषयाः । स्वप्नलक्षणमाह स्वप्नइति । मात्रपदेनइंद्रियव्यावृत्तिः १४२ एवमध्याससामग्रींप्रदर्श्यभोगस्यात्मन्यध्यासेनभासमानतयोक्तस्यमुख्यमाश्र यंनिर्धारयति सुखेतित्रिभिः । सुखादिकृतोतिशयःपरिणामविशेषःस्वप्नेपिदृष्टः अयमतिशयःस्वप्नेयत्रयन्निष्ठस्तत्रैवजागरणेपिमंतव्यः १४३

अंतारीति । भोगसंज्ञस्यातिशयस्याश्रयतायोग्यंस्वप्नेमनएव । तत्रहेतुमाह इंद्रियाणामिति । शुद्धात्मनोऽसंगत्वाच्चैतत्यपिबोध्यम् १४४ सुखदुःखातिशयवदिति । तेनान्यस्यभोगाश्रय तायोग्यस्याभावेनमनएवतदाश्रयत्वेनमतंचेत्तर्हिजाग्रत्यपितदेवास्त्विति अन्यथास्वप्नजाग्रतोर्भोगस्यभिन्नाश्रयत्वाभ्युपगमेप्रत्यभिज्ञायएवाहंस्वप्नेसाम्राज्यसुखमन्वभूवंसएवाहमेकांतवाससुखमनु भवामीत्याद्याकाराभोक्त्रैक्यावगाहिनीनोपपद्येतेति १४५ ननुमनसोपिप्राणवज्जडत्वात्कथंभोगाश्रयतायोग्यत्वमित्याशंक्यविशेषंदर्शयति यद्यपीति । तन्मनःयतःप्राणादेःप्राणकारणाद्भूतसू क्ष्मरूपादादिमत्लब्धजन्मकंतथाप्यस्यमनसःप्रकाशत्वमभ्युपगंतव्यं दर्शनबलात् अपरस्यप्राणादेस्तुनप्रकाशत्वमिति १४६ जडत्वेप्यवांतरविशेषेदृष्टांतमाह जडतायामिति । प्रदीपघटयोर्जड तायांसमानायामपिप्रदीपेनैवघटोदृश्यःप्रकाश्यःतेनघटेनदीपस्तुनप्रकाश्यइतिसर्वैर्मतंतद्वदिति १४७ ननुमनसोजडस्यापिप्रकाशकत्वाभ्युपगमेबाह्यमतापत्तिरित्याशंक्यनवयंस्वतंत्रांमनसःप्रका शतांमन्महेकिंतुचित्प्रतिबिंबसापेक्षाम् पूर्वंप्रदर्शिताप्रकाशतातुप्रतिबिंबग्रहणयोग्यतारूपैवेत्याह नचेति । मानसोपिप्रकाशोवृत्तिरूपश्चैतन्यंचिदाभासमनपेक्ष्यनप्रकाशयतिकिंत्वपेक्ष्यैवतेनचिदाभा सापेक्षणेनायंमनसःप्रकाशोजडतांजहातिचेतनायमानोभवति नःऔपनिषदानांमतेइतिशेषः । एतेनसर्वदाज्ञानापत्तिश्चपरास्तेत्याह ततइति । ततश्चैतन्यापेक्षाभ्युपगमादेवांतःकरणंनानाविधज्ञान शालित्युक्तमिति । तथाचयोगसूत्रं तदुपरागापेक्षत्वाच्चित्तस्यवस्तुज्ञाताज्ञातमिति। अयंभावः यद्यंतःकरणंस्वभावतश्चिद्रूपंस्यात्तर्हिएकविधज्ञानमेवस्यात् परापेक्षत्वेतुयदायदाइच्छादिविलक्षणावि

अंतःकरणमात्रंहिस्वप्नेतिष्ठतिनापरम् ॥ इंद्रियाणांविलीनत्वात्प्राणस्याचेतनत्वतः १४४ सुखदुःखातिशयवत्स्वप्नेतेनमनोमतम् ॥ ततोजागरणेपिस्यात्तदे वातिशयास्पदम् ॥ अन्यथाशयनोत्थानेप्रत्यभिज्ञानसंभवेत् १४५ यद्यप्यचेतनंतत्स्यात्प्राणादेरादिमद्भवम् ॥ तथाप्यस्यप्रकाशत्वंविद्यतेनापरस्याहि १४६ जडतायांसमानायांप्रदीपघटयोरिह ॥ प्रदीपेनैवदृश्यःस्याद्घटस्तेननदीपकः १४७ नचानपेक्ष्यचैतन्यंप्रकाशोमानसोपिहि ॥ प्रकाशयतितेनायंजडतांचज हातिनः ॥ ततोनानाविधज्ञानमंतःकरणमीरितम् १४८ तत्रस्थःपरमात्मायंविज्ञानमयशब्दितः ॥ पूरयत्येषदेहादितस्मात्पुरुषइत्यपि १४९ यद्वद्दुःखंसुखं तद्वज्जडत्वाद्यैर्हिकारणैः ॥ नविद्यतेजायमानमानंदात्मनिकिंचन १५० स्वयंप्रकाशमात्मानंबुबोधयिषुरीश्वरः ॥ पुरुषंविज्ञानमयमितिबुद्ध्यासपृष्टवान् १५१

त्प्रतिबिंबग्रहणक्षमावृत्तिर्जायतेतदेवसज्ज्ञानंभवतीतिनानाविधज्ञानतोपपद्यतेइति १४८ तत्रस्थइति । तत्रांतःकरणेतिष्ठतिआविद्यकसंबंधेनसंबद्धोभवतीतिसतथाइदृशःपरमात्माविज्ञानमयश ब्दितोभवति प्रकृतवचनेमयट् विज्ञानमंतःकरणंप्रकृतंसुखदुःखाद्यन्वयेप्रधानंयस्यसतथाईदृगर्थकविज्ञानमयशब्दभाग्भवतीत्यर्थः । तथाएषतत्रस्थःपरमात्मायतोदेहादिकंपूरयतिचिदाभासरूपे णाप्यायवतितस्मात्पुरुषइत्यपिशब्दितोभवति पूरीआप्यायनेइत्यस्मादौणादिकोबाहुलकात्कुषन् १४९ यद्वदिति । वस्तुतस्तुआनंदात्मनिआनंदरूपेआत्मनियद्वद्दुःखंनविद्यतेनसंभवतितद्वज्जाय मानंजन्यमंतःकरणवृत्तिरूपंसुखमपिनविद्यतेजडत्वादिभ्योहेतुभ्यः तथाचप्रयोगः जन्यसुखमात्मनिनविद्यतेजडत्वात्परिच्छिन्नत्वाद्दृश्यत्वाच्चदुःखवदिति निष्कलंनिष्क्रियंशांतमित्यादिश्रुतयो प्यनुसंधेयाः अत्रफलभूतसुखदुःखयोर्निरासेतत्साधनानामर्थान्निरासात्कार्यकरणवर्जितआत्मेतिसूचितम् १५० स्वयमिति । स्वयंप्रकाशमात्मानंविज्ञानमयस्यपारमार्थिकंरूपंबुबोधयिषुर्बो धयितुमिच्छन्नीश्वरोराजाऽजातशत्रुर्विज्ञानमयंपृष्टवान्विज्ञानमयगोचरान्प्रश्नांश्चकार कथा इतिबुद्ध्या इत्येकविंशतिश्लोकैरुक्तेनाभिप्रायेणेत्यर्थः । बालाकिनाज्ञातोपिभोक्ताविज्ञानमयोंऽतः करणात्मनोरन्योन्याध्यासेनसिद्धरूपत्वान्मिथ्यात्मातस्यपारमार्थिकंरूपमस्मैप्रतिज्ञाबद्धेनावश्यंमयाबोधनीयमित्यभिप्रायस्वरूपम् १५१

केयएतद्बालाकेइत्यादिप्रश्नवाक्यंसाभिप्रायंव्याकरोति पुरुषइतिपंचभिः । यएषविज्ञानमयःपुरुषःप्राणादिविलक्षणःसएवभोक्तृत्वेनत्वयासुप्तोत्थापनव्यापारेणावगतोबुद्धः । अथैतत्त्वयावक्तव्यं अयंप्रभुर्भोक्ताकस्मिन्देशेस्थितःसन्शयनमकरोत्कृतवानितिप्रथमःप्रश्नः । तथाशयनंकुत्रकिमाधारकमितिद्वितीयः । अयंपुमान्कुतआगात्जागरणमागतवानितितृतीयः । अत्रविज्ञानमयइति विशेषणंबृहदारण्यकचतुर्थाध्यायप्रथमब्राह्मणादुपसंहृतमितिबोध्यम् १९२ तेषांप्रश्नानांलौकिकदृष्ट्याप्रसक्तांभेदबुद्धिंबाधित्वातत्त्वप्रदर्शनार्थत्वमितिसूचयितुंलौकिकदृष्ट्यनुसारेणप्रश्नविषय स्यसंदिग्धत्वमाह स्वस्मिन्निति । लोकेशयानःशयनंकुर्वन्पुरुषःकदाचित्स्वस्मिन्स्वाश्रितोभवेत् यथातिष्ठन्शयानःकदाचित्परस्मिन्शय्यादिरूपेपराश्रितोभवतीतिशयानाधारगोचरःसंशयःप्र सिद्धः । नचैतत्संशयनिवृत्त्याशयनाधारगोचरःसंशयोनिवर्तते शयनाधारस्यशयानाधारात्पृथक्त्वेनापिलोकेप्रसिद्धेरतएवसद्वितीयःप्रश्नःपृथक्कृतइतिसूचयन्शयनाधारगोचरंसंशयमाह शयानइति । शयनकर्त्तामंचकादिरूपयदाधारकःशयनमपितदाधारमित्यपिलोकेप्रसिद्धं । अपरत्रशयानाधारादपराश्रितमित्यपिप्रसिद्धमित्यर्थः १९३ अपरत्रेवेत्येतत्स्पष्टयति मंचकेहीति । हियतोमंचके शयानस्यपुरुषस्ययदंतरंमंचकांतर्व्यापकंतूलकादितदेवशयनंशयनाधारोनृभिःकथ्यतेव्यवह्रियतेतेनएतादृशलोकव्यवहारदर्शनेनशयनंशयनाधाररूपंपृथगीरितंपृष्टमित्यर्थः १९४ ननुतथापितृतीयः प्रश्नःकिमर्थः शयनाधारनिर्णयेनैवागमनावधेर्निर्णयसंभवादितिचेन्न लोकेइतरथापिप्रसिद्धेरित्याह मंचकेहिशयानइति । मंचकेशयानःसन्पुरुषस्ततोमंचकादागच्छतीतिलोकेनहिव्यवह्रियतेकिं

पुरुषोविज्ञानमयोभोक्तेत्यवगतस्त्वया ॥ प्राणादिविलक्षणःकायमकरोच्छयनंप्रभुः ॥ शयनंचतथाकुत्रकुतश्चागादयंपुमान् १९२ स्वस्मिन्वापिपरस्मिन्वाशयानः पुरुषोभवेत् ॥ शयानोयत्रतत्रैवशयनंचापरत्रवा १९३ मंचकेहिशयानस्यपुरुषस्यांतरंनृभिः ॥ कथ्यतेशयनंतेनशयनंपृथगीरितम् १९४ मंचकेहिशयानः सन्नागच्छतिततोनहि ॥ किंतुतस्मात्समुत्थायगृहेस्थित्वागृहाद्बहिः ॥ आगच्छतिततोयुक्तंकुतइत्यादिभाषणम् १९५ शयानंशयनंतस्यागतेश्चाधारकावधीन् ॥ तंचबोधयितुंराजागार्ग्यमेतद्विपृष्टवान् १९६ गार्ग्योपिगहनार्थंतंप्रश्नंस्वात्ममनस्ययम् ॥ विचार्यबहुधानैवप्रत्यपद्यतकिंचन १९७ ततोराजाऽजातशत्रुरन्यवचनंनिजम् ॥ अदादुत्तरमेतद्धिसर्वसंशयभेदकम् १९८

तुतस्मान्मंचकात्समुत्थायगृहेस्थित्वागृहाद्बहिरागच्छतीतिव्यवह्रियतेतःशयनाधारादागमनावधेःपृथक्त्वेनप्रसिद्धेःकुतइत्यादिकंकुतआगतवानित्याकारंतृतीयप्रश्नरूपंभाषणंयुक्तंयोग्यमेवेत्यर्थः १९५ उक्तविधयाभेददर्शिमूढदृष्ट्याप्राप्तांबुद्धिमपाकृत्यराज्ञाप्रश्नैर्बुबोधयिषितमर्थंसंगृह्याह शयानमिति । शयानंशयनकर्तुःस्वरूपंकेवलांतःकरणविशिष्टरूपंदेहाद्यात्मदर्शिभिरज्ञातंतंगार्ग्यंबाला किंबोधयितुंतथाशयनं ‘ परिच्छिन्नस्यपूर्णेनतादात्म्यंशयनंभवेत् । साहंकारस्यजगतोविलयःसुप्तिरुच्यते’इतिविज्ञानमयजगद्व्यांनिरूपणभेदेनद्विविधंयत्शयनसुप्तिपदाभ्यांविद्यारण्यैर्व्यवहृतंवक्ष्य माणस्वप्नसुषुप्तिभेदेनवाद्विविधंतच्चबोधयितुंतस्यद्विविधशनस्यागतेरागमनस्यचानयोराधारकावधीन्आधारकोचावधिश्चेतेतथातान् अज्ञातेकप्रत्ययः तत्रविज्ञानमयशयनाधारःपरमात्माविज्ञान मयस्यपरमार्थतःस्वरूपभूतःजगन्निरूपितशयनाधारोपिपरमात्मैवाज्ञानविशिष्टःवक्ष्यमाणभेदपक्षेस्वप्नाधारोनाड्यःसुषुप्ताधारःपरमात्मेति शयनाधारएवागमनावधिरित्येतानर्थांश्चबोधयितुंरा जाएतत्प्रश्नत्रयंगार्ग्यंप्रत्युवाचेत्यर्थः १९६ ततउहेत्यादियतएतद्गादित्यंतवाक्यार्थमाह गार्ग्योपीति । अयंगार्ग्यस्तंराज्ञस्त्रिविधंप्रश्नंगहनार्थंदुरवगाह्यार्थकंस्वात्ममनसिस्वीयचित्तेबहुधाविचार्य किंचनाप्युत्तरंनैवप्रत्यपद्यतनविज्ञातवान् १९७ ततइति । ततोबालाकप्रबोधंनिरीक्ष्यापिप्रतिज्ञाबद्धोराजास्वयमेवोत्तरमदात् । किंकृत्वा निजंवचनंप्रश्नत्रयरूपमनूद्यपुनःपठित्वा । कीदृशमु त्तरं सर्वसंशयभेदकमिति १९८

अथशयानस्यस्वरूपंकेवलांतःकरणविशिष्टात्मकंस्वप्नावस्थायांस्पष्टंबोधयितुंस्वप्नसुषुप्तिभेदेनद्वैविध्यंराजाप्रतिजानीते बालाकेइति । द्वैधंप्रकारद्वयं । तत्रस्वप्नःसुषुप्तिद्वारभूतोनिरूप्यतेइतिशेषः । तत्र बृहदारण्यकचतुर्थस्यप्रथमब्राह्मणात् यएषविज्ञानमयःपुरुषस्तदेषांप्राणानांविज्ञानेनविज्ञानमादायेतिवाक्यमुपसंहृत्यव्याचष्टे एषामिति । जाग्रत्कालेहिमानसेनमनस्यभिव्यक्तेनचिदाभासलक्षणेनविज्ञानेनाभिमानाकारेणेंद्रियेभ्योविज्ञानंस्वस्वविषयसामर्थ्यरूपमात्मादत्तातितेनचचक्षुर्मयःश्रोत्रमयइत्यादिसंज्ञोभवति । शयनाभिमुख्येतुतेनमानसेनविज्ञानेनैवएषांबाह्येंद्रियाणांशब्दादिविषयकंविज्ञानसामर्थ्यंस्वीकृत्यसमादायैवशयनंयातिप्राप्नोतीति १५९ विज्ञानेति । तदातस्मिन्निंद्रियसामर्थ्योपसंहारकालेकेवलंविज्ञानमयशब्दवाच्योभवतिचक्षुर्मयादिसंज्ञाःपरित्यजतीतियावत् । तदाचविविक्तंभोक्तुःशयानस्यस्वरूपंभवतीतिभावः । अथहितानामेत्यादितासुतदाभवतीत्यंतंवाक्यंशाखांतरवाक्योपसंहारपूर्वकंव्याकरोति अयमित्यादिना । अयंविज्ञानमयोभोक्ताअत्रस्वप्नसंज्ञप्रथमशयनेनाडीषुहितासंज्ञासुशेतेशयनंकरोतिप्रकृतश्रुत्यनुसारात् हृदयेवा 'यएषोंतर्हृदयआकाशस्तस्मिन्शेते' इतिवाजसनेयकेऽजातशत्रुब्राह्मणगतश्रुत्यंतरात् । तत्राकाशस्यपरमात्मलक्षणस्यद्वितीयशयनाधारतायावक्ष्यमाणत्वेनहृदयंस्वप्नाधारइतिभावः । पुरीततिवा ताभिःप्रत्यवसृप्यपुरीततिशेतेइतितत्रत्यश्रुत्यंतरात् एतेषांप्रासादेशेतेपर्यंकेशेतेइतिन्यायेनसमुच्चयएव । वाशब्दस्तुनानाशाखावाक्या

बालाकेशयनद्वैधंपुरुषस्यास्तिसर्वदा ॥ एषांबाह्येंद्रियाणांहिशब्दादिविषयंसदा ॥ स्वीकृत्ययातिविज्ञानंमानसेनैवतेनसः १५९ विज्ञानमयशब्दोयंभोक्ताभवतिवैतदा ॥ अयंशेतेत्रनाडीषुहृदयेवापुरीतति १६० प्राणिनामिहसर्वेषांसच्छिद्रेउदरोरसी ॥ देहांतरेतयोःसंधावस्तिपद्ममधोमुखम् ॥ हृदयंनामतत्प्रोक्तंहृद्यस्यायतनंपरम् १६१ परितोहृदयस्यास्यकृमिपुंजनिभंमहत् ॥ गोलकाकारमंत्राख्यंपुरीतदितिगीयते १६२ उदरस्यविभेदेहिद्रष्टुंशक्यंस्वयंहितत् ॥ स्वस्यमांसेननेत्रेणहृदयंनात्मनस्तथा ६३ केशःसहस्रधाभिन्नोयावान्भवतिमानतः ॥ मानेनतावतानाड्योहृदयेसंत्यनेकशः ६४ प्रथमग्रंथितोयद्वज्जालेसूत्राण्यनेकशः ॥ निर्गच्छंतितथानाड्योहृदयादिहनिर्गताः १६५ हृदयद्रुमतःपूर्वंशतमेकाधिकंबहिः ॥ निर्गतंकंदसदृशंनाडीनांमूलकारणम् ६६ एकैकस्मिन्हिनाडीनांस्कंधेस्कंधेशतंशतम् ॥ प्रौढशाखात्मकंजातंनाडीनांदिव्यवर्चसाम् १६७

नुसाराभिप्रायकइन्याकरेपुविस्तरः १६० तत्रहृदयपदार्थमाह प्राणिनामिति । उदरंचउरश्चतेसच्छिद्रेभवतः तयोरुदरोरसोःसंधिदेशेयत्पद्मंमांसमयमन्यत्रप्रसिद्धंतद्धृदयंनामतस्यचत्त्हृदयसंज्ञकचित्तस्यमुख्यायतनत्वात् चित्तस्यैवमुख्यत्हृदयपदवाच्यतात्तुन्हृदयमितिछांदोग्येआत्मोपलब्धिसाधनत्वस्यप्रवृत्तिनिमित्ततयाभिधानादितिभावः १६१ पुरीततोलक्षणमाह परितइति । अस्योक्तलक्षणस्यत्हृदयस्यपरितःसमंताद्यद्वेष्टनचर्म कीदृशं कृमिराशिनिभंगोलकाकारमंत्रसंज्ञंचतत्पुरीतदित्युच्यते १६२ उदरस्येति । तत्सवेष्टनंत्हृदयंहियतउदरस्यविभेदेविदारणेसतिस्वयंद्रष्टुंशक्यं अतएवस्वकीयमांसमयनेत्रेणआत्मनोत्हृदयंनद्रष्टुंशक्यंकिंतुपरस्यैवमांसमयनेत्रेणद्रष्टुंशक्यमिति १६३ अथनाडीर्वर्णयति केशइत्याद्यष्टभिः । भिन्नोविभक्तःसमानस्तोमानेनयावान्भवतितावतामानेनपरिच्छिन्नाअनेकशोनाड्यःसंतीति १६४ तत्रदृष्टांतः प्रथमेति । स्पष्टम् १६५ तदेकंशतंनाडीनांतासांशतंशतमेकैकस्याद्वासप्ततिर्द्वासप्ततिःप्रतिशाखानाडीसहस्राणीतिप्रश्नवाक्यानुसारेणनाडीसंख्यामाह त्हृदयेतित्रिभिः । पूर्वंप्रथमंत्हृदयद्रुमादेकाधिकंनाडीशतंनिर्गतमुदितम् । कीदृशंनाडीशतं स्कंधसदृशं यतइतरनाडीनांमूलभूतंकारणमिति १६६ एकैकस्मिन्निति । एकैकस्मिन्नुक्तनाडीशतान्यतमरूपेस्कंधेस्कंधेप्रौढशाखानिभंनाडीनांशतंशतंजातमिति । कीदृशीनांनाडीनां दिव्यवर्चसामलौकिकानाम् १६७

प्रौढेति । तस्मिन्स्कंधजाततयोक्तप्रौढशाखारूपेएकैकस्मिन्द्व्यधिकसप्ततिसहस्राण्येिनाडीरूपाःस्वल्पशाखाजाताः । संकलनेसंख्यास्वरूपंतुद्वासप्ततिकोट्योद्वासप्ततिलक्षाणिदशसहस्रंचशतद्वयंचएका चभवतीतिप्रश्नभाष्यटीकोक्तंबोध्यम् १६८ प्रकृतवाक्यमादत्ते पिंगलेनेति ' पिंगलःकपिलेऽग्निवत्' इतिविश्वः रसेनान्नस्येतिशेषः । पीतेनेति स्फुटमन्यत् १६९ रसानामिति । रसानांसूक्ष्मतामालोच्यमेमनोमुह्यतिव्याकुलीभवति यतएतेरसास्तासांसूक्ष्मतमनाडीनामंतश्चरंतितस्मात्तेपुरसेषुकाकीदृशीसूक्ष्मताभवेदिति १७० हृदयादिति । एतानाड्योहृदयान्निर्गत्यदेहमापादमस्तकंव्याप्यतिष्ठंति । कथं यथापर्णंप्रत्येकंव्याप्यशंकवोवृंतरूपास्तिष्ठंतितथेति १७१ तानियदेत्यादीत्युच्चावचंनिगच्छतीत्यंतवाक्यानिमनोगृहीतमित्यंशस्यव्याख्यास्यमानत्वेनतद्भिन्नानिबृहदारण्यकचतुर्थस्यप्रथमब्राह्मणगतानिअर्थतःसंगृह्णाति इंद्रियाणीतिपंचभिः । इंद्रियाणिघ्राणादीनिगृहीत्वाउपसंहृत्यततः सार्वविभक्तिकस्तसिः तासांनाडीनामंतर्यदामनोयातितदेत्युत्तरेणसंबंधः । मनोविशेषणानिकर्मपाशनिबद्धमित्यादीनि । कर्मदृश्यंरथादिकर्ताद्रष्टाक्रियाचतदाकारवृत्तिरूपा एतत्त्रिपुटीरूपेणस्थितंपुरुषेणसाक्षिणाभासितम् १७२ तदेति । शयानःपुरुषोविज्ञानमयोलोकान्कर्मफलानिमायायाबलेनविलोकयेत्पश्येत् । कीदृशान्लोकान् पूर्वंदृष्टैर्लोकैःसरूपकान्समानरूपान् । एतेनतेह्यस्यलोकाइत्यंशोव्याख्यातः १७३ कथमित्याकांक्षायामाह भिक्षुकइति । श्रुतावुतपदमप्यर्थकंइवपदं

प्रौढशाखात्मकेतस्मिन्नेकैकस्मिन्नलौकिके ॥ द्वासप्ततिसहस्राणिनाडीशाखाःप्रजज्ञिरे १६८ पिंगलेनरसेनैवपूर्णाःकाश्चिद्धिनाडिकाः ॥ शुक्लेनकाश्चिदपराः कृष्णेनैवप्रपूरिताः ॥ पीतेनकाश्चिदन्यास्तुलोहितेनरसेनहि १६९ रसानांसूक्ष्मतादृष्ट्वामुह्यतीवमनोमम ॥ आसामंतश्चरंत्येतेतस्मात्तेषुहिकाभवेत् १७० हृदयान्निर्गताएताव्याप्यतिष्ठंतिसर्वतः ॥ आपादमस्तकंदेहंयथापर्णंहिशंकवः १७१ इंद्रियाणिगृहीत्वांतस्ततोयातियदामनः ॥ कर्मपाशनिबद्धंसद्वासनाकोटिवासितम् ॥ कर्मकर्तृविभेदेनस्थितंपुरुषवीक्षितम् १७२ तदाशयानःपुरुषःपूर्वदृष्टसरूपकान् ॥ मायाबलेननिखिलानिहलोकान्विलोकयेत् १७३ भिक्षुकोपिमहाराजोभवतीहकदाचन ॥ पुल्कसोपिकदाचित्तुमहाविप्रोभवेदयम् १७४ ब्रह्मापिस्थावरःक्वापिविट्चरोवाक्वमिर्भवेत् ॥ स्थावरोवाक्वमिर्वापिकश्चिद्भूयात्पितामहः १७५ एवमुच्चावचंदेहंस्वप्नेप्राप्नोतिदेहभाक् ॥ तत्तत्कर्मानुसारेणमाययापरिमोहितः १७६ यथास्वप्नंतथागार्ग्यविद्धिजागरणंत्विदम् ॥ माययादृश्यतेस्वप्नेतथाजागरणेपिच १७७ अज्ञानंस्वात्मनःस्वप्नेतथाजागरणेपिच ॥ दुर्घटंदृश्यतेस्वप्नेदृष्टंजागरणेतथा १७८ जडानामेकरूपत्वेभेदोदीर्घाऽद्यकारणम् ॥ पार्थिवत्वंयतोदृष्टंघनवस्त्रतृणेष्विह १७९ करोतिविषमंकार्यंकरणंनैवदृश्यते ॥ एकएवशयानःसन्स्वप्नेभेदान्प्रपश्यति ॥ आनंदात्मातथैवैकोभेदान्जागरणेपिच १८०

चमिथ्यात्वसूचकमितिबोध्यम् । ब्राह्मणशब्दात्पूर्वस्यमहाशब्दस्यलोकेगर्हितत्वेपिच्छंदसिबाहुलकान्नतथात्वमितिच १७४ ब्रह्मेति । ब्रह्माहिरण्यगर्भः स्वकृत्येतिशेषः विट्चरोग्रामसूकरः १७५ एवमिति । स्पष्टम् १७६ एतत्प्रकरणस्यात्मनःपरिशुद्धत्वबोधनेतात्पर्यान्मिथ्याभूतस्वप्नसाम्यंजागरणस्यदर्शयति यथेतिचतुर्भिः । मायामयदर्शनंस्वप्नेनसमंजागरणेइत्युत्तरार्द्धार्थः १७७ आत्मतत्त्वाज्ञानंदुर्घटदर्शनंचसममित्याह अज्ञानमिति । स्फुटम् १७८ ननुस्वप्नपदार्थेभ्योजाग्रत्पदार्थानांदीर्घत्वादिलक्षणोभेदोपिदृश्यतेऽतआह जडानामिति । जडानांपृथिवीत्वाद्यवांतरसामान्यरूपेणसत्तारूपमहासामान्यरूपेणचएकरूपत्वेसतिदीर्घादि भावप्रधानोनिर्देशः दीर्घत्वादिलक्षणोभेदःअकारणंवस्तुनोभेदनेऽप्रयोजकः विशेषाणांसामान्येकल्पितत्वेनमृगतृष्णानदीवद्धर्मिसंस्पर्शाभावादितिभावः । वाचारंभणमित्यादिश्रुतिरप्यत्रानुकूलेति । एतेनतदुपाधिकआत्मभेदःप्रत्युक्तः । एकरूपतामभिनयति पार्थिवत्वमिति १७९ विषमकार्यकरणत्वंविचारासहोपकरणत्वंचस्वप्नेनसममित्याह करोतीति । यथाऽमृतमयश्चंद्रोविरहिणस्तापयतीत्याद्युदाहरणंबोध्यं । वस्तुतएकस्यानेकदर्शित्वंसममित्याह एकइति १८०

शयनकर्तुर्विज्ञानमयस्यात्रावस्थायांस्पष्टतामभिनयति प्राणादिति । पुरःस्थूलशरीररूपपुरस्यतस्यप्राणरूपभृत्यस्यांतर्यामीअंतस्थःसन्प्रेरकोभोक्तातत:प्राणादन्योमहाराजवन्महान्भासतेइति शेषः १८१ तत्रदृष्टांतपरंबृहदारण्यकचतुर्थाध्यायप्रथमब्राह्मणवाक्यंसयथामहाराजइत्यादिकंव्याकरोति यथेतिद्वाभ्याम् । यथादेशाधिपतिर्महाराजःकुतश्चित्कुतुकादिनिमित्तादेकंभृत्यंपुररक्षायांसंस्थाप्यस्वदेशेजनपदनिवासिभिःसहभ्रमेत् १८२ इंद्रियाणीति । एवंभोक्तापिइंद्रियाणिगृहीत्वासमनस्कःकलेवरेयदृच्छयायथेच्छंव्रजतिपरिवर्तते । नानाविषयदर्शनलक्षणंभ्रमणंकरोतीत्यर्थः १८३ अथमायोवाजसनेयकगतसुषुप्तिपरवाक्यानामर्थंसंगृह्णन्शयानंशयनमित्यत्रशयनपदेन विवक्षितांसुषुप्तिंस्वप्नापेक्षयाद्वितीयशयनत्वेनाह यदाचेत्यादिना । यदाचतन्मनोविलीयतेकारणाज्ञानोपाधौविलयंक्षयंगच्छतितदादेवःउपाधिपरिच्छिन्नआत्माद्वितीयंशयनंपरिपूर्णतालक्षणंव्रजेत् । कीदृशंमनः विज्ञानमयशब्दप्रवृत्तेःकारणं । पुनःकीदृशंअंतर्यामिणोऽधीनं । अवश्यमितिच्छेदेविज्ञानमयस्यानधीनमित्यर्थः १८४ तदाधारमाहद्वाभ्यां नाडीभिरिति । उक्तरूपाभिर्नाडीभिर्द्वारभूताभिःपुरीतद्वेष्टितंहृदयांबुजमध्यस्थंचआत्मरूपाकाशमसौविज्ञानमयोव्रजति उपाधिकृतपरिच्छेदंविहायपरिपूर्णभावंव्रजति । आत्माकाशस्यहृदयादिवेष्टनप्रयुक्तापरिच्छिन्नतानेतिसूचनायतद्विशिनष्टि महदिति । 'यावान्वाअयमाकाशस्तावानेषोंतर्हृदयआका-

**प्राणादन्योमयाभोक्तास्वप्नेस्मिन्कथितःस्फुटः ॥ यतःप्राणःपुरोरक्षांकुरुतेराजभृत्यवत् ॥ तस्यांतर्यामीभोक्तान्योमहाराजसमोमहान् १८१ यथाजनपदाध्यक्षोमहाराजःकुतश्चन ॥ सर्वैर्जानपदैःसार्धंस्वदेशेसर्वतोव्रजेत् १८२ इंद्रियाणिसमादायसमनस्कःकलेवरे ॥ एवमेवात्रभोक्तापिव्रजत्येषयदृच्छया १८३ यदाचतन्मनोवश्यंविज्ञानमयशब्दकृत् ॥ विलीयतेतदादेवोद्वितीयंशयनंव्रजेत् १८४ नाडीभिरुक्तरूपाभिःपुरीतद्वेष्टितंमहत् ॥ हृदयांबुजमध्यस्थमात्माकाशंव्रजत्यसौ ॥ १८५ सेंद्रियंचमनोह्यत्रलीयतेशयनेसदा ॥ यथाविलीयतेनीरेसामुद्रेलवणंघनम् १८६ चित्रंयथाविलीयेतपटेसंकोचमागते ॥ एवमेवविलीनंतन्मनश्चित्रमिहात्मनि १८७ पांथःकामीपरिष्वक्तःप्रिययाव्युष्टवर्षया ॥ माघेसौधांतरेसुप्तोयथावेत्तिनकिंचन १८८ आनंदपरिपूर्णःसन्सुरतस्यांतकर्मणि ॥ आत्मानंचप्रियांचैवपश्यन्नेवनपश्यति १८९ एवमानंदभुग्देवआत्मन्याकाशशब्दिते ॥ आगत्यचनवेत्त्येषमायामप्यात्मनिस्थिताम् १९० कुतःस्वप्नादिकंतस्याःकार्यंलीनस्वरूपकम् ॥ अन्यत्किंचिद्विजानीयात्परिष्वक्तस्तथापुमान् १९१**

शः' इत्यादिच्छांदोग्यश्रुतेः । तथाचात्मैवविज्ञानमयस्यशयनाधारइतिभावः १८५ मनआदिजडवर्गंलयाधारोप्ययमेवात्माऽज्ञानविज्ञानविशिष्टइत्याह सेंद्रियमिति । अत्रात्माकाशेशयने सुषुप्तिकालेकार्यस्यकारणेलयेदृष्टांतः यथेति । समुद्रजलमेवघनीभूतंलवणमासीत्तद्यथापुनर्नीरंभवेत्तद्वदिति १८६ चित्तलयेनतत्कार्यलयेदृष्टांतः चित्रमिति । मनसानिर्मितंचित्रंसकार्येंद्रियरूपंमनश्चित्रं इहउक्ते १८७ ननुकथंसुषुप्तेऽद्वितीयताऽज्ञानस्यावशेषादितिचेत्सत्यं तथापितस्यस्फुटतयाभानाभावादसत्प्रायत्वमित्यभिप्रायेणतद्यथाप्रिययास्त्रियासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरमित्यादिवाक्यार्थमाह पांथइतिचतुर्भिः । पांथःप्रवासाद्गृहमागतः । परिष्वक्तआलिंगितः । व्युष्टषोडश । माघेमासे । सौधांतरेहर्म्यांतरे १८८ आनंदेति स्पष्टम् १८९ एवमिति । आनंदभुक्चैतन्यदीप्ताभिरज्ञानवृत्तिभिरानंदानुभवितादेवोविज्ञानमयःआकाशशब्दितेआत्मनिआगत्यतादात्म्यंलब्ध्वाआत्मनिस्वस्मिन्स्थितामपिमायांनवेत्तीति १९० मायायाएवस्फुटतयादर्शनाभावेतत्कार्यदर्शनाभावःकैमुत्यन्यायसिद्धइत्याह कुतइति । तस्यामायायाः । तथाउक्तप्रकारेणपरिष्वक्तःश्रुतौप्राज्ञशब्दितेनपरमात्मनातादात्म्यलक्षणमालिंगनंगतः १९१

सुषुप्तिकालविशेषाभिमानलक्षणदुःखपरिहारेणनिरतिशयानंदमाप्तादृष्टांतास्त्रयोवाजसनेयकउक्ताः कुमारोमहाराजोमहाब्राह्मणश्चेति तत्रकुमारदृष्टांतंविशदयति स्तनंधयइतित्रिभिः । येदौवैबी ल्यविशेषज्ञानप्रसक्तिस्तद्वारकाणिविशेषणानि । स्तनंधयःस्तन्यमात्रभुक्बालःमात्राआगलंगलपर्यंतंस्तन्यपानंपायितःस्तन्यपानंनीतःसन्तथायूकादिरहितेमृदौकोमलेशुचौनिर्मलेचासनेपर्यंके कायांशायितश्चसन्यथापरमानंदंप्राप्याकिंचनापिनवेत्ति । हियतःसबालःहसन्हासेनानंदंसूचयन्समीपस्थान्पश्यन्नपिनपश्यतीवेतिद्वयोरन्वयः । अत्रपरमानंदपदमतिघ्नीपदेनातिशयेनदुःखं हंतीत्यर्थकतयानन्दपरमकाष्ठाभिधायकेनसमानार्थमिति १९२ । १९३ दार्ष्टांतिकमाह एवमिति । दृष्टआनंदपरमकाष्ठांगतःअतएवगतार्तिकोगतदुःखोभोक्ताविज्ञानमयइमांमायांपश्यन्नपि नपश्यतीति १९४ महाराजदृष्टांतंस्फुटयति उदयास्तमयावितिषड्भिः । राज्ञोपिविशेषणानियैश्चिचविक्षेपोभवतिताहशलिप्सादिदोषवारकाणि दृढःस्थूलोबलवांश्च १९५ नीरोगइति । ला वण्यमंगेषुज्वलता । कीर्तिमान्धर्मसंपन्नत्वान्नरकभयशून्यः । मूर्खतादुःखहीनतामाह वेदेति १९६ मनोनुकूलेति । मनोनुकूलललनायूथेनकर्त्रातूर्यवादित्रघोषेणमधुरेणगीतेनचकरणेनप

स्तनंधयोयथामात्रापायितस्तनमागलम् ॥ यूकादिरहितेतल्पेशायितश्चमृदौशुचौ १९२ आसनेपरमानंदंप्राप्यवेत्तिनाकिंचन ॥ पश्यन्नपिसमीपस्थान्नपश्य तिहसन्हिसः १९३ एवमस्मिन्हिशयनेभोक्तादृष्टतोगतार्तिकः ॥ मायामिमांहिसंपश्यन्नपश्यतिकदाचन १९४ उदयास्तमयौयावत्तावदासइमांभुवम् ॥ वित्तैर्ब हुविधैःपूर्णामसपत्नांदृढोयुवा १९५ नीरोगोबलसंपन्नोरूपलावण्यसंयुतः ॥ कीर्तिमान्धर्मसंपन्नोवेदवेदांगपारगः १९६ मनोनुकूलललनायूथेनपरिसेवितः ॥ तूर्यवादित्रघोषेणगीतेनमधुरेणच १९७ जयाशीर्भिर्द्विजेंद्राणांतथाचारणबंदिनाम् ॥ स्वसमानगुणैःपुत्रैःपितृभक्तिपरैरपि १९८ एवंसर्वगुणोपेतोमहाराजोय थासुखम् ॥ प्राप्नुयाद्भोगसंप्राप्त्यांसुषुप्तोपितथापुमान् १९९ महाराजोयथादुःखंनजानातीहकिंचन ॥ सुषुप्तोपितथानैतद्वेत्तिविक्षेपशून्यतः २०० इंद्रियाणि यथाजित्वाबाह्यान्याभ्यंतराणिच ॥ इच्छामात्रंपरित्यज्यप्राप्तंप्राप्तंभजन्सदा २०१ कर्मणामनसावाचापरैरपकृतोपिसन् ॥ जानन्नपिचतेभ्योनद्वेष्टितेषूपकार कृत् २०२ आत्मनःप्रतिकूलंयःपरस्यकुरुतेपुमान् ॥ कर्मणामनसावाचाकर्तुरेवभवेद्धितत् २०३ इदानींवापिदेहेस्मिन्पतितेवानसंशयः ॥ अनुकूलम पित्रमितिह्येबुद्धिंसमाश्रितः २०४

रिसेवितः १९७ जयेति । द्विजेंद्राणांतथाचारणबंदिनांजयाशीर्भिःपरिसेवितः । पुत्रैश्चपरिसेवितः । चारणाबंदिविशेषाः 'बंदिनस्त्वमलप्रज्ञाःप्रस्तावसदृशोक्तयः' १९८ एवमि ति । भोगानांसम्यक्प्राप्त्या १९९ दुःखज्ञानाभावेनापिमहाराजसमतामाह महाराजइति । स्पष्टम् २०० महाब्राह्मणदृष्टांतंप्रपंचयति इंद्रियाणीतिचतुर्दशभिः । ब्राह्मणस्यमहत्त्वंयै विशेषणैर्भवतितानिदर्शयति । यथाशब्दस्यतथेतित्रयोदशेनतेनसंबंधः । इंद्रियाणिजित्वानिष्कामःसन्प्राप्तंप्राप्तंप्रारब्धफलंभजन्सेवमानः २०१ कर्मणेति । कर्मणाशरीरव्यापारेण । परैः अपकृतःकृतापराधःसन् तदपकारंजानन्नपिचतेभ्योऽपकारिभ्योनद्वेष्टिकिंतुतेषूपकारकृदेवभवतीति २०२ एतादृशोयथाबुद्ध्याभवतितामभिनयति आत्मनइतिद्वाभ्यां । आत्मनोयत्प्रति कूलंभासतेतद्यःपरस्यकुरुतेकर्मादिभिस्तत्प्रतिकूलंकर्तुरेवभवतिप्राप्नोति २०३ कदाभवतीत्याकांक्षायामाह इदानीमिति । इदानींजीवद्दशायांवादेहेपतितेपरलोकेवेत्यर्थः । एवमनुकूलमपिस्व स्मिन्परीक्षितंसत्परस्यकृतंचेदपिकर्तारंभजतइत्येवमाकारांबुद्धिंसमाश्रितः २०४

९१

वेदार्थस्येति । समग्रस्यवेदार्थस्यवेत्ता । परनिंदकत्वाभाववान् स्वदोषेष्वेवदृष्टिर्यस्यसन्तथा कुसंगहीनश्चेति २०५ जडमिति । जडमात्रंविनाशिअजडमेवचशाश्वतंनित्यंएवंनित्यानित्य विवेकवान् ऊहापोहयोःपूर्वपक्षसिद्धांततर्कयोःकुशलः २०६ अन्नेति । छर्दितंवांतं । तेषुविषयेषु । इहामुत्रभोगविरागवानितियावत् २०७ सुखेति । सशरीरस्यदेहद्वयेनाध्यासलक्षणसंबंधशा लिनोदेहिनःप्राणिमात्रस्यसुखदुःखेनियतेअवश्यंभाविनी नहवैसशरीरस्येत्यादिश्रुतेः इतिविज्ञानेनदेहद्वयात्मकसंसारान्मुमुक्षुर्यतोदेहदोषवित् २०८ मोक्षसाधनंज्ञानमेवहष्ठातत्साधनसंन्यास पूर्वकश्रवणादिकर्त्तेत्याह सशिखमिति । शास्त्रोक्तविधिनासशिखमुंडनंकृत्वाऽन्यंत्रयाणांवानप्रस्थांतानामन्यतममाश्रमंविहायपरिष्करैर्दंडाद्युपकरणैःसहितंतुरीयमाश्रमंमोक्षसाधनमादायगृही त्वा अयब्रह्मनिष्ठंगुरुंविधिवदुपेत्याथतस्यगुरोर्मुखांभुजात्सार्थानिवेदवाक्यानिश्रुत्वातेषांवाक्यानांस्वार्थपरत्वेउपपत्तिंचशारीरकेप्रपंचितांमनसाविचार्यएतादृशंश्रवणंसंपाद्येतियावत् । अथत त्त्वमस्यादिवाक्यार्थबोधेपांडित्यंश्रवणाभ्यासंपरित्यज्यरागद्वेषराहित्येनजडबालपिशाचवद्भावरूपंमननंसंपाद्याथमनसएकाग्रतालक्षणंनिदिध्यासनंश्रुतौमौनशब्देदितंसंपाद्य तथाचश्रुतिः "त स्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेद्बाल्यंपांडित्यंनिर्विद्याथमुनिरिति ' तिष्ठासेत्स्थातुमिच्छेत् । अथोक्तसाधनफलभूतामहंब्रह्मेत्याकारांवाक्यार्थसाक्षात्कृतिमुपेयिवान्प्राप्तइतिचतुर्णा

वेदार्थस्यसमग्रस्यवेत्तानपरनिंदकः ॥ स्वदोषदृष्टिःसततंदुष्टसंगविवर्जितः २०५ जडंविनश्वरंतद्वदजडंशाश्वतंपुनः ॥ एवंविवेकसंपन्नऊहापोहविशारदः २०६ अन्नपानानिचित्राणिललनाश्चमनोरमाः ॥ शब्दादीन्विषयांश्चान्यान्लोकद्वयगतानपि ॥ छर्दितान्ससमान्पश्यंस्तेषुनेच्छापरःसदा २०७ सुखदुःखेसुनियतेस शरीरस्यदेहिनः ॥ इतिविज्ञानसंपन्नोमुमुक्षुर्देहदोषवित् २०८ सशिखंवपनंकृत्वापरित्यज्यान्यमाश्रमम् ॥ सपरिष्करमादायतुरीयंमोक्षसाधनम् २०९ आश्रमं ज्ञानसंपन्नंगुरुमेत्यविधानतः ॥ वेदवाक्यानिश्रुत्वाथगुरुवक्त्रारविंदतः २१० सार्थानिमनसातेषामुपपत्तिंविचार्यच ॥ परित्यज्यचपांडित्यंतत्त्वमस्यादिबोधने २११ एकाग्रंमनआपाद्यजडबालपिशाचवत् ॥ अहंब्रह्मेतिवाक्यार्थसाक्षात्कृतिमुपेयिवान् २१२ आनंदात्मसुखंप्राप्तोब्राह्मणेषुमहानयम् ॥ तथासुषुप्तःपुरुषः सुखमभ्येतिनित्यशः २१३ रागद्वेषादयोदोषाःसर्वानर्थकरायथा ॥ नविद्यंतेमहाविप्रेसुषुप्तेपितथानहि २१४ शयानस्यतथासुप्तेहृदयाकाशएवहि ॥ आश्रयो नपरःकश्चित्शयनंचैतदेवहि २१५ भोक्तायस्तेमयाप्रोक्तोहृदयाकाशएवसः ॥ आसमंतादयंयस्मात्काशतेदेहधारिषु २१६

मर्थः २०९ । २१० । २११ । २१२ आनंदात्मेति । अयमुक्तविधोब्राह्मणेषुमहान्श्रेष्ठतमः । 'मौनंचामौनंचनिर्विद्याथब्राह्मणः' इत्यादिश्रुतिप्रसिद्धत्वात् पुराणेऽप्युक्तं 'मय्यर्पितात्म नःपुंसोमयिसंन्यस्तकर्मणः । नपश्यामिपरंभूतमकर्तुःसमदर्शनात् ' इति । सयथाआनंदसंज्ञंपूर्णात्मसुखंप्राप्तोभवति । तथेत्यादिस्पष्टम् २१३ रागद्वेषाद्यात्मकानर्थरूपसंसाराभावोपिसुषुप्ते महाब्राह्मणेचसमइत्याह रागेति २१४ अथव्याख्यातश्रुतिग्रंथस्यतात्पर्यार्थंस्पष्टयति शयानस्येत्यादिपद्चत्वारिंशश्लोकैः । शयानस्यशयनकर्त्तुस्तथासुप्तेःशयनस्यचाश्रयआधारोयःप्रथम द्वितीयप्रश्नाभ्यांपृष्टःसहृदयाकाशएवहृदयोपलक्षितःपरमात्मरूपाकाशएवनान्यइति । शयनस्वरूपमपिएतदेवयत्विज्ञानमयस्यहृदयाकाशभावउपाधेश्चहृदयाकाशेलयउक्तइति २१५ आधार रूपंबोधनेनचत्वंपदार्थविज्ञानमयस्यतत्पदार्थपरमात्मनैक्यंबुबोधयिषितमितिदर्शयति भोक्तेति । यस्तुभ्यंबालाकयेमयाभोक्ताविज्ञानमयोघटाकाशसमःप्रोक्त समहाकाशसमहृदयाकाशरूपए तत्सर्वसंसारधर्मातीतंरूपंसुषुप्तावुपाधिलयेतुभ्यंदर्शितमितियावत् । हृदयाकाशस्याद्वितीयतारूपांपरमात्मतांस्पष्टयन्नाकाशपदस्यावयवार्थेनतत्रवृत्तिमाह आसमंतादिति । यस्मादयंहृदयो पलक्षितःपरमात्माआसमंतादभिव्याप्यकाशतेदीप्यतेतस्मादाकाशइत्युक्तइतिशेषः २१६

समंतात्काशनमेवाभिनयति मामिति । मामात्मानमन्यंचनजानामीत्याकारेणाज्ञत्वेनाज्ञानाश्रयत्वेनरूपेण अहंसुखमस्वाप्समितिसुषुप्तिसाक्षित्वेनवामहेश्वरःआत्मामदीयोऽन्यदीयोवाभासते अतो स्मात्समंताद्भासनरूपहेतोराकाशवदभिन्नएकरूपइत्यर्थः । तथाचप्रयोगः । आत्माएकरूपउपाधिपरामर्शमंतरेणानुपलभ्यमानभेदत्वादाकाशवदिति । एतेनाकाशपदस्यभूताकाशेरूढत्वाभ्युपगम त्वेपिअत्रगौणवृत्तिसंभवान्नकोपिदोषइतिभावः २१७ अस्यात्मनःसर्वदैकरूपत्वेपिसुषुप्त्याधारतयाप्रदर्शनंतुउपाधिविविक्ततयाप्रदर्शनार्थमेवेत्यभिप्रायमावेदयति विज्ञानमयतेति । स्वप्नजाग्र तोःसविलासान्तःकरणसंबंधरूपाविज्ञानमयताभेदकारणंसुषुप्तेतुतस्यविज्ञानशब्दवाच्यसविलासांतःकरणस्यविनाशेसतिकेनभेदोनिरूपणीयोनकेनापि यथाघटाद्युपाधिनाशेनभसोनभेदइतिद्वयो रर्थः २१८ । २१९ सुप्तावुपाधिनाशमभिनयति सुप्ताविति । हृदयाकाशभेदकामनसासहितावागादयःसर्वेहृदयाकाशेलीयंतइति २२० ननुसुप्तौशिष्यमाणाज्ञानमेवभेदकमस्त्वित्याशं क्यकिमावरणरूपेणज्ञानस्यभेदकत्वंविक्षेपरूपेणवा नाद्यस्तत्रैवभेदाननुभवात् नद्वितीयःकार्यरूपविक्षेपस्यसुप्तौलयादित्याह सुप्तौयद्यपीतिद्वाभ्यां । अज्ञानमावरणं । विक्षेपयोर्विक्षेपरूपयोरुपा

मामन्यंचनजानामीत्यज्ञत्वेनमहेश्वरः ॥ सुखमस्वाप्समितिवाकाशतेसर्वदेहिषु ॥ आकाशवदभिन्नोतोममतेप्यपरस्यच २१७ विज्ञानमयतास्वप्नेतद्वज्जागर णेपिच ॥ हृदयाकाशरूपस्यविद्यतेभेदकारणम् २१८ सुप्तेतस्यविनाशेहिभेदःकेनहिसंभवेत् ॥ घटादीनांविनाशेकिंभेदोनभसितिष्ठति २१९ सुप्तौवागा दयःसर्वेमनसासहिताइमे ॥ हृदयाकाशेलीयंतेहृदयाकाशभेदकाः २२० सुप्तौयद्यपिमायेयमात्माज्ञानस्वरूपिणी ॥ अस्तिनैषातथाप्यत्रभवेद्भेदस्यकारणम् २२१ अज्ञानेनहिभेदोस्तिसर्वेषामिहदेहिनाम् ॥ किंतुविक्षेपयोर्भेदःसुप्तौसचविलीयते २२२ यथातिबहुलेरात्रौतमस्यभ्रोद्भवादिकम् ॥ वर्षासुलीयतेतद्व दात्माज्ञानइदंजगत् २२३ यथातस्मिन्नपगतेभानुनिर्गमनादिना ॥ नष्टप्रायंतदैवैतत्तस्मादेवविनिःसरेत् २२४ हृदयाकाशतोप्येवंजगदेतत्प्रजायते ॥ कर्म ण्युद्भूतएकस्मिन्स्वप्नेजागरणेपिवा २२५ स्वप्नाज्जागरणंयातिसुषुप्तादपिवाप्रभुः ॥ एवंजागरणात्स्वप्नंसुषुप्तंवापिसव्रजेत् ॥ कदाचित्स्वप्नतःसुप्तिंव्रजेज्जागर णंचवा २२६ आत्माज्ञानादयंदेवःक्रीडाकंदुकवत्सदा ॥ अस्मिन्देहेतथान्यत्रह्यवस्थात्रयमाव्रजेत् २२७

ध्योरेवभेदः यथादेवदत्तयज्ञदत्तौभिन्नावित्यत्रदेवदत्तयज्ञदत्तोपाधीएवप्रतियोग्यनुयोगितयाभेदनिरूपकौ सुप्तौतुसचविक्षेपोविलीयतइति २२१ । २२२ सुषुप्तौकार्यवर्गलयेदृष्टांतमाह यथेति । यथावर्षासुरात्रावतिबहुलेतमसिसतिअभ्रोद्भवादिकंउद्भवदभ्रादिकं कृदभिहितोभावोद्रव्यवत्प्रकाशतइतिन्यायात् जायमानंमेघादिकंविलीयते तत्रतमसिलयंगच्छति तथेदंजगत्सुप्तावात्माज्ञाने विलीयतइति २२३ यथातस्मिन्निति । यथादृष्टांतेतस्मिंस्तमसिभानुनिर्गमनादिनापगतेभिभूतेसतितदैवतत्क्षणमेवएतदभ्रादिकंतस्मादभिभूततमसएवविनिःसरेत्प्रादुर्भवेत् एवंहृदयाकाशाद ज्ञानशबलादेतज्जगत्स्वप्नेजागरणेवाप्रजायते कस्मिन्सति स्वप्नजाग्रद्भोगप्रदकर्मणोरेकस्मिन्नन्यतरत्रउद्भूतेसतीत्यन्वयः २२४ । २२५ कर्मनिमित्ताव्यवस्थामेवाभिनयति स्वप्नादिति । कदाचित्स्वप्नानंतरंजागरणंगच्छतिकदाचित्सुषुप्तानंतरं एवमग्रेपि २२६ उक्तरीत्याकर्मणोव्यवस्थामात्रहेतुत्वेपिसंसारंप्रतिमुख्यप्रयोजकत्वमज्ञानस्यैवेत्याह आत्माज्ञानादिति । अस्मिन्न परोक्षे अन्यत्रआमुष्मिके आव्रजेत्प्राप्नुयात् २२७

क्रीडाकंदुकदृष्टांतंस्फुटयंति यष्टीति । गोपबालैर्यष्टिप्रहारेणनभसिक्षिप्तःकंदुकःपतंश्चपुनस्ताडितोयथानेकत्रभ्रमति २२८ एवमिति । चित्रैर्नानाविधफलप्रदैःजीवन्नविद्ययाजीवभावंगच्छन्सन् २२९ कर्मनिमित्तकानवस्थितसृष्टौदृष्टांतांतराणिदर्शयति वायुनेतित्रिभिः । देहेपीत्यनंतरमवस्थात्रयगतिरितिशेषः २३० भ्राम्यतेइति स्पष्टम् २३१ यथेति । जाग्रद्वर्त्तमानदेहआमुष्मिकदेहास्तुस्वप्नवदितिसूचयितुंयोनिष्वित्युक्तम् २३२ योनिष्विरयुक्तंविशदयति देवइति । उत्तरार्द्धस्यइत्येवमित्यादिः २३३ उक्तावस्थानांसर्वत्रानुगमएवेत्याह सर्वत्रेति । बुद्धिर्जीविषुसांतःकरणेषु २३४ ननुदेवानामस्वप्नसंज्ञयामसिद्धत्वात्कथंतेष्ववस्थात्रयानुगमइत्याशंक्यअनुदराकन्येतिवन्नञोऽल्पार्थतायाअपिदृष्टेर्मैवमित्याह अस्वप्नेतिद्वाभ्यां । उपचारतः अस्वप्नपदघटकनञोभावार्थस्यबाधेनाल्पत्वरूपगौणार्थपरत्वादित्यर्थः । मुख्यार्थस्तुवक्तुमशक्यः यस्माद्देवानामाद्योभगवान्विष्णुरप्यवस्थात्रयानुगमसूचनायलीलाविग्रहेणशेषशयनलीलामंगीकरोतीति २३५ अल्पतामभिनयति यथेति २३६ एवमिति । एवमुक्तविधयातस्यविज्ञानमयस्यसदाजागरणंभवेत् कीदृशस्यतस्य सुषुप्तस्य हृदयाकाशरूपिणः सुषुप्तेहृदयाकाशरूपपरमात्म

यष्टिहस्तैर्यथागोपैःक्षिप्तोनभसिकंदुकः ॥ दिक्षुभूमौतथाकाशेधावत्येषनिरंतरम् २२८ एवंपूर्वकृतैश्चित्रैःकर्मभिर्जगदीश्वरः ॥ स्वप्नेजागरणेसुप्तौजीवन्धावतिनित्यशः २२९ वायुनानीयमानस्यतूलस्यनगतिःस्थिरा ॥ यथातथात्रदेहेपिनस्थिराकर्मवायुना २३० भ्राम्यतेवायुनायद्वत्खेसर्वामेघमंडली ॥ तद्वद्देहादिकासृष्टिर्भ्राम्यतेकर्मवायुना २३१ यथाजलप्रवाहेणकाष्ठमुच्चावचस्थले ॥ पात्यतेजंतुरप्येवंयोनिष्वायातिकर्मतः २३२ देवोवामानवोवायंकर्मभिर्वास्थावरोपिवा ॥ भवत्युच्चावचेस्थानेकाष्ठंयद्वद्विनीरगम् २३३ सर्वत्रैवमवस्थास्ताज्ञातव्याबुद्धिजीविषु ॥ अवस्थात्रयनिर्मुक्तंसत्वंकिंचिन्नविद्यते २३४ अस्वप्नतापिदेवानांज्ञेयास्यादुपचारतः ॥ देवानांप्रथमोयस्मात्शेतेशेषगतोहरिः २३५ यथाक्षणेक्षणेस्वप्नंपश्यंतिमनुजादयः ॥ नैवंदेवास्ततस्तेस्युरस्वप्नानान्यथाक्वचित् २३६ एवंतस्यसुषुप्तस्यहृदयाकाशरूपिणः ॥ ऊर्द्ध्वेकर्मणोह्यस्यसदाजागरणंभवेत् २३७ सुप्तौविलीयतेसर्वंकार्यंश्वासात्मकंविना ॥ प्राणंतेनप्राणशब्दोहृदयाकाशईरितः २३८ प्राणेस्मिन्हृदयाकाशेसर्वभेदविवर्जिते ॥ कार्यकारणसंघातएकतांयात्यदर्शनात् २३९ सुषुप्तौनहिलभ्यंतेवागाद्याविषयैःसह ॥ मनोंतास्ततएवैतेप्राणेलीनास्तदाभवन् २४० हृदयाकाशसंप्राप्तोविज्ञानमयएवहि ॥ नाधाराधेयभेदेनतमाप्नोतिकदाचन २४१

भावंगतस्य जागरणनिमित्तंतूक्तोस्यजाग्रद्भोगप्रदकर्मण्यउद्भवोविपाकाभिमुखतारूपइति २३७ ननुवाजसनेयानुसारेणहृदयाकाशेऽद्वितीयात्मनिलयस्यवर्णनेपिव्याख्येयकौषीतकिवाक्येनविरोधः अत्रप्राणएवैकधाभवतीतिप्राणेलयाभिधानादितिचेन्न सुप्तपुरुषाभिप्रायेणनकिंचिदवेदिषमितिपरामर्शरूपेणपरमात्मनिलयाभिधानेपिलौकिकानांप्राणशेषतांमन्यमानानामभिप्रायानुसारेणप्राणेलयाभिधानाविरोधादित्याशयंस्पष्टयति सुप्ताविति त्रिभिः । सुप्तौश्वासात्मकंप्राणंविनासर्वंकार्यंविलीयतेतेनप्राणस्यलौकिकदृशावशेषेणप्राणशब्दोलक्षणयाहृदयाकाशेईरितःप्रकृतश्रुतौप्रयुक्तइत्यर्थः २३८ तथाचप्रकृतवाक्यस्यैवमर्थइत्याह प्राणइति । प्राणपदलक्ष्यार्थेहृदयाकाशेस्थूलसूक्ष्मप्रपंचोलीयते दर्शनाभावाद्दृष्टिसृष्टेःपूर्वाध्यायेप्रदर्शितत्वादिति २३९ अदर्शनमभिनयति सुषुप्ताविति । मनोंतामनःपर्यंतावागाद्याःसुप्तौसहविषयैर्नलभ्यंतेअतएवप्राणेलीनाउच्यंतेइतिशेषः २४० एकधाभवतीत्यंशस्यतात्पर्यमाह हृदयाकाशेतिद्वाभ्यां । हृदयाकाशंप्राप्तोविज्ञानमयएवइंद्रियादिव्यतिरिक्तस्तंहृदयाकाशंआधाराधेयभेदघटितसंबंधेननाप्नोतिकिंत्वेकतामेवगच्छति इंद्रियादिकंतुभेदसहिष्णुमभेदंतादात्म्यंगच्छतीत्यर्थः २४१

एकंतापत्तौदृष्टांतमाह गृहाकाशइति। गृहाकाशेघटाकाशोगत्वाघटस्फुटनानंतरंयादृशमेकतालक्षणंसंबंधंगच्छेत्तादृशंसंबंधंपुरुषोविज्ञानमयोत्रत्दृदयाकाशेसुप्तिकालेउपाधिसंबंधंविहायगच्छतीति २४२ परमात्मनोत्हृदयाकाशव्यवहारेप्रयोजकंसंबंधविशेषंदर्शयन्दृष्टांतंदार्ष्टांतिकेसंगमयति यावदितिद्वाभ्यां । शरीरमरणपर्यंतंपुरुषःपरमात्मात्हृदयेंतर्यामिरूपेणविशेषसंनिहितोस्ति अंतर्यामिब्राह्मणादिश्रुतिभ्यः 'ईश्वरःसर्वभूतानांत्दृद्देशेर्जुनतिष्ठति' इत्यादिस्मृतिभ्यश्च । सपुरुषोगृहाकाशसमस्तस्यनगमनागमनेइति २४३ घटेति । एषउक्तएवात्मामनसिव्यवस्थितःप्रतिबिंबितःसन्घटाकाशवद्गमनागमनेभजतीत्यर्थः । गमनागमनमितिसमाहारद्वंद्वः २४४ अथोक्तार्थमुपपादयन्नंतर्यामितयात्हृदयेस्थितिंवक्ष्यमाणोपयोगायानुवदति यद्यपीति । यद्यप्यात्माकाशवद्देहस्यसमष्टिव्यष्टिरूपस्यांतर्बहिरवस्थितस्तथाप्यत्रात्मनित्हृदयावच्छेदेनांतर्यामितारूपोतिशयोस्त प्रसिद्धइति २४५ उक्तांतर्यामिनियम्यमनसःकरणांतरेभ्योविशेषंप्रतिबिंबग्रहणाद्युपयोगिनंदर्शयति सुखेतिपद्भिः । देहोहिभोगार्थः भोगस्तुप्रकाशरूपउक्तः सचविषयप्रकाशइंद्रियरूपकरणाधीनः सकलकरणानियामकत्वान्मनसःस्पष्टोव्यतिरेकइति २४६ करणनियामकत्वंकुतइत्यतआह अमूनीति । अमूनिचक्षुरादिकरणानिव्यापारवंत्यपिसंतिचित्तसंबंधंविनार्थंविषयंस्वंस्वंनविदंतिनजानंतितदावयमेतज्ज्ञानीमोयश्चित्तेनतानिपराधीनानि चित्तेनेतिप्रकृत्यादित्वात्तृतीया तथाचचित्तरूपंयत्परंतदधीनानीत्यर्थः २४७ मनसःकरणनियामकतांदृष्टांतेनविशदयति यथेतिचतुर्भिः । लोकप्रसिद्धमेषक्रीडनकवत्पदिकाष्ठनिर्मितादशवाजिनोऽश्वानानास्थाननिवासिनोदीर्घकाष्ठेकृतनानाविधापतनाःस्युस्तेपांचपादबद्धानिदीर्घकाष्ठमध्यच्छिद्रद्वाराएकत्रनलिकायामधःस्थायांबद्धानिप्रोतानिस्युस्तथादेहेदीर्घकाष्ठसमेज्ञानेंद्रियकर्मेंद्रियरूपाणांवाजिनामाकर्षणसूत्राणिवायुमयानिनाडीरूपच्छिद्रद्वारात्हृदयेनलिकानिभेप्रोतानिसंति । कीदृशानिसूत्राणि स्वयंभुवापरमेश्वरेणमाययानिर्मितानीतिद्वयोरर्थः २४८ । २४९ बालकइति । दृष्टांतेयथाबालकःपितुरंकस्थःपित्राग्राहितसूत्रःसंस्तान्काष्ठमयान्हयानश्वान्व्यापारयेन्नचालयेत् एवंबालकवद्बालकमज्ञंमनःअंतर्यामिणःपितुरंकस्थंतेनग्राहितसूत्रंसत्तानिज्ञानकर्मेंद्रियाणिअपिशब्दाद्वायुमयसूत्राणिचव्यापारयतीति 'बालकोऽज्ञे'इतिविश्वः २५० अंतर्यामिरूपपितुरंकोपमिवंदेशंदर्शयति आश्रित्येति । त्हृदयांभोजदेशमाश्रित्यतानिव्यापारयतीतिपूर्वेणसंबंधः । दिक्चतुष्टयेमध्येचपंचच्छिद्राणियत्रत्हृदयांभोजेतत्तथा । अनेकानिनाडीरूपाणिविवराणिसूक्ष्मच्छिद्राणियत्रतत् वायुमयसूत्राणामाधारमिति २५१ एवंमनसःकरणांतरेभ्यउत्कर्षप्रदर्शनेनतस्यसत्वातिशयःसूचितस्तस्यसत्वातिशयस्यप्रतिबिंबविशेषेचितोगृहाकाशसमतोपपादवे उपयोगंदृष्टांतेनाह सावित्रमितिचतुर्भिः । यथासावित्रंसूर्यसंबंधितेजःस्वभावादेकरूपतयासर्वत्रस्थितंतथापितस्यसावित्रतेजसःकुसूलाद्युपाधिवशाद्भेदोविशेषोदृष्टइति २५२

गृहाकाशेघटाकाशोगत्वाघटविभेदतः ॥ संबंधंयादृशंगच्छेत्तादृशंपुरुषोत्रहि २४२ यावच्छरीरमरणंपुरुषोहृदयेस्तिहि ॥ गृहाकाशसमस्तस्यगमनागमनेनहि २४३ घटाकाशसमोज्ञेयोमनस्येषव्यवस्थितः॥ गमनागमनंतस्यभवेन्नित्यंमनःकृतम् २४४ यद्यप्याकाशसदृशोबहिरंतरवस्थितः॥ देहस्यात्मातथाप्यत्रहृदयेतिशयोस्तिहि २४५ सुखदुःखोपभोगार्थंजंतोर्देहोत्रजायते ॥ उपभोगःप्रकाशःस्यात्प्रकाशःकरणेर्भवेत् ॥ अंतःकरणमेवैकंकरणानांनियामकम् २४६ अमूनिनविदंत्यर्थंयतोव्यापारवंत्यपि ॥ तदाचितेनजानीमःपराधीनानिसर्वथा २४७ यथाकाष्ठकृतानांस्युर्दशानांवाजिनामपि ॥ सूत्राण्येकत्रबद्धानिनानास्थाननिवासिनाम् २४८ नलिकायांतथादेहेज्ञानकर्मात्मनामपि ॥ सूत्राणिहृदयेसंतिनिर्मितानिस्वयंभुवा २४९ बालकोहियथासूत्रैर्व्यापारयतितान्हयान् ॥ मनोबालकमप्येवंव्यापारयतितान्यपि २५१ आश्रित्यहृदयांभोजंपंचछिद्रमधोमुखम् ॥ अनेकनाडीविवरंवायुसूत्रसमाश्रयम् २५१ सावित्रंहियथातेजःसर्वदेहेष्ववस्थितम् ॥ एकरूपंतथाप्यस्यभेदोदृष्टोमहानिह २५२

उत्तरोत्तरमभिव्यक्तयाधिक्यहेतूनुपाधीन्गणयति कुसूलइति । कुसूलेधातुमयान्नकोष्ठकेस्वल्पासावित्रतेजसोभिव्यक्तिस्ततोधिकादर्पणेततःकृपाणेततोमणौसर्वतःसूर्यकांते यतस्तत्रसूर्यकांतेस्थितंसावित्रंतेजोदाहादिकंकरोतीति २५३ एवमिति । कुसूलदर्पणकृपाणमणिसमेषुदेहप्राणकर्मेंद्रियज्ञानेंद्रियेषुसूर्यकांतसमबुद्धौचात्मापेक्षयावाह्यायांतिष्ठतिप्रतिबिंबितोभवति । कीदृशआत्मा स्वतःसर्वत्रैकरूपइति २५४ तथापीति । तथापिसर्वत्रप्रतिबिंबितत्वेपिमनसिबुद्धिशब्देनोक्तेंतःकरणेस्थितत्वेवभोक्ताभवति एतत्स्फुटयति सूर्येति । सूर्यकांतसंज्ञेमणौस्थितोभास्करोयथा दाहकर्त्ताभवतितथांतःकरणेस्थितआत्मासंसृतिंकर्तृत्वभोक्तृत्वादिरूपामाप्नुयात् । घटाकाशवदिहामुत्रगामीभवतीतियावत् २५५ अथघटाकाशसमविज्ञानमयस्योपाधेर्घटसमायाबुद्धेर्गृहाकाशोपाधिगृहसमहृदयेस्थितिंलयरूपंभंगंचोपपादयति बुद्धिश्चेत्यष्टभिः । बुद्धिरुक्तांतःकरणंसर्वसूत्राधारेहृदयेंभोजरूपेतिष्ठतिगृहइववसतिचक्षुरादिदेशंतुबुद्धिवृत्तिरूपेणप्रवासमिवगच्छतीतियावत् ततोहृदयस्यस्वोपाधिबुद्धेर्निवासस्थानत्वात्पुरुषोविज्ञानमयोदक्षिणनेत्रादिदेशात्तत्रहृदयेसुषुप्तिकालेव्रजेदागच्छेदुपाधिपरतंत्रत्वादित्यर्थः २५६ इतस्ततःपरिवृत्त्यबुद्धेर्हृदयेदेशागमनेदृष्टांतमाह पशवइति । नाशनाशौक्षयोदयौसमौकृत्वा हानिमपिउदयसमांमत्वेतियावत् एवंमत्वापशवोमनुष्यावास्वदेशंप्रतियथायांतितथाबुद्धिर्हृदयाब्जमिति २५७ जंतवइति । यथानिजंदेशंग

कुसूलेदर्पणेतद्वत्कृपाणेचमणावपि ॥ सूर्यकांतेचतत्रस्थंदाहपाकादिकृद्भवेत् २५३ एवंदेहेतथाप्राणेकर्मज्ञानात्मकेषुच ॥ बहिर्बुद्धौचसर्वत्रतिष्ठत्यात्मैकरूपधृक् २५४ तथापिमनसिस्थित्वाभोक्ताभवतिसप्रभुः ॥ सूर्यकांतेमणौयद्वत्स्थित्वादहतिभास्करः ॥ स्थित्वांतःकरणेतद्वदात्मासंसृतिमाप्नुयात् २५५ बुद्धिश्चहृदयेनित्यंसर्वसूत्रविधारिणि ॥ तिष्ठत्येषाततस्तत्रसुषुप्तौपुरुषोव्रजेत् २५६ पशवोवामनुष्यावादेशंयांतियथानिजम् ॥ नाशनाशौसमौकृत्वाबुद्धिस्तद्वद्धृदंबुजे २५७ जंतवोहिनिजेदेशेभवेयुःसुखिनोगताः ॥ कदाचिद्दुःखिनोपिस्युरेवंबुद्धिर्हृदंबुजे २५८ देहःसकरणग्रामःपुरीतच्चशिरस्तथा ॥ बुद्धेर्विदेशइत्युक्तोमुक्त्वैकंहृदयांबुजम् २५९ स्वप्नजागरणोद्भूतेप्रक्षीणेकर्मणीयदा ॥ तदातत्रगताबुद्धिर्मूर्छिताभवतिक्षणात् २६० दृढांमूर्छांयथाप्राप्तःपुरुषोमृतउच्यते ॥ मूर्छिताबुद्धिरप्येवंविलीनेत्यत्रगीयते २६१ यथानभोगतंतूलंसूक्ष्मंलीनमितीरितम् ॥ एवंहृदयगाबुद्धिर्वैदेलीनेतिकीर्तिता २६२ यथापटस्यसंकोचात्पटचित्रंप्रलीयते ॥ एवंहृदयसंकोचाद्बुद्धिर्लीनेतिगीयते २६३

तानांजंतूनांकदाचित्सुखंकदाचिद्दुःखंवाभवतिएवंत्हृदयकमलगताबुद्धिःसुखदुःखेभजति । त्हृदयदेशएवसुखदुःखयोरनुभवादितिभावः २५८ देहइति । नखाग्रपर्यंतोदेहःसेंद्रियगोलकःपुरीतदुक्ता शिरश्चएतानिबुद्धेःपरदेशसमानि । त्हृदयांबुजंतुस्वदेशइतियावत् २५९ अथबुद्धेर्घटविभेदसमंलयमभिनयति स्वप्नेति । स्वप्नजागरणार्थेयेउद्भूतेफलाभिमुखतांगतेकर्मणीतेयदाप्रक्षीणेभवतस्तदातत्रत्हृदयकमलमध्यवर्तिन्याकाशेदहराख्येमायाशबलेगतासतीबुद्धिर्मूर्छाकारणलयरूपांप्राप्ताभवतीति । एतेनत्हृदयकमलदलादिदेशोबुद्धेःस्वप्नादिस्थानमेवेतिसूचितम् २६० तत्त्वज्ञानात्पूर्वंकारणेसूक्ष्मतयास्थितिरेवलयः औपनिषदमतेनिरन्वयनाशानभ्युपगमात् लोकेपितथाव्यवहारदर्शनाच्चेत्याह दृढामिति । लोकेमूर्छितस्यमृतव्यवहारोयथाएवंमूर्छितबुद्धेरत्रवेदांतेविलीनेतिव्यवहारइत्यर्थः २६१ त्हृदयांतराकाशेबुद्धेर्लयेदृष्टांतमाह यथानभइति । अत्यंतसूक्ष्मस्यशाल्मल्यादितूलस्याकाशेलयोव्यवन्हियतेएवंत्हृदयांतराकाशगाबुद्धिर्लीनेत्युक्तावेदेगृहीतंमनइतिवाजसनेयके मनःसर्वैर्ध्यानैःसहाप्येतीतिप्रकृतश्रुतौचेत्यर्थः २६२ उक्तबुद्धिलयंप्रतिपित्तेनद्वारनिरोधात्मकोत्हृदयकमलसंकोचोपिहेतुरितिदृष्टांतेनदर्शयति यथापटस्येति । पटचित्रंपटांतर्गतंचित्रंप्रलीयतेलीनमितिव्यवन्हियते २६३

सयदाप्रतिबुध्यतइत्यादेर्लोकाइत्यंतस्यार्थमाह एवंसइतिषड्भिः । सपुरुषोविज्ञानमयोवस्तुतःपरःपरमात्मरूपएवमुक्तविधयाशयित्वाउपाधिलयद्वारापूर्णभावरूपंशयनमनुभूयजाग्रद्भोगप्रदकर्मणः पश्चात्प्राग्वत्तस्यउद्भूतोप्रादुर्भावेसतिसदाजागरणंयातीति २६४ तंतुनाभइति । तंतुनाभोलूतासंज्ञःकीटोयथापरंसाधनमनपेक्ष्यतंतून्सृजतिएवंशयनादुत्थितःपुमान्प्राणादीन्सृजतीत्यर्थः २६५ यथाज्वलन्निति । यथामहान्वन्हिर्ज्वलन्सन्कणकान्सृजतिएवमात्मेंद्रियादिकंसृजति । कीदृशान्कणकानात्मरूपकान् अल्पार्थेकन्प्रत्ययः ' रूपमाकारश्लेषयोरपि 'इतिविश्वः । क्वचित्स्वार्थिकालिंगवचनान्यतिक्रामंतीतिवचनात्पुंस्त्वं तथाचात्मनःस्वल्पाकारानित्यर्थः २६६ उत्थितइति । अयंविज्ञानमयोहृदयाकाशादुत्थितःसन्प्राणान्सृजति । प्राणपदार्थमाह बुद्धिमित्यादिना । ज्ञानकर्मेंद्रियैःसव्यापारैःसहिताबुद्धिःश्रुतिगतप्राणपदार्थइतिभावः । अत्रवाग्वात्मकप्राणस्यसुप्तपुरुषदृष्ट्यालयस्यसिद्धांतितत्वात्तस्यापिप्राणशब्देनसंग्रहोबोध्यः २६७ इंद्रियेभ्यइति । इंद्रियेभ्योदेवसृष्टेराशयःप्रथमाध्यायेदर्शितः अधिदैवतंदेवतेविराजिकरणतयावर्तमानावन्ह्याद्यादेवाइंद्रियेभ्योजायंतेततोदेवेभ्यएतेविषयैःसंवृताःसहितालोकाःसंजायंतइति २६८ नित्यमिति । एवंसर्वदेहिसंबंधिनामिंद्रियाणांतथामहात्मनामिंद्रियदेवानांलोकानांचनित्यंजनिमृतीबोध्येइत्यन्वयः २६९ अयमर्थोनसंभाव्यतइत्याशंक्यद्वितीयाध्यायेप्रपंचितंसमाधानमधिकयुक्त्यभिधानायानुवदति अविश्वासइति । शास्त्रस्यवेदस्यार्थेऽविश्वासोनकर्त्तव्यः । अविश्वासोहिप्रमाणांतरविरोधात्संभवतिविरोधश्चसमानविषययोःप्रसिद्धः । अत्रतुशास्त्रविषयेप्रमाणांतरस्याप्रवृत्तेःसविरोधोदुर्वचइत्याह

एवंसहृदयाकाशेशयित्वापुरुषःपरः ॥ उद्भूतौकर्मणःपश्चाद्यातिजागरणंतदा २६४ तंतुनाभोयथाजंतुस्तंतून्सृजतिभूरिशः ॥ अनपेक्ष्यपरंकिंचित्तथासावुत्थितः पुमान् २६५ यथाज्वलन्महावन्हिःकणकानात्मरूपकान् ॥ शयनादुत्थितोप्येवंसृजत्यात्मेंद्रियादिकम् २६६ उत्थितोहृदयाकाशात्प्राणान्बुद्धिंसृजत्ययम् ॥ ज्ञानकर्मेंद्रियैःसार्धंव्यापारैर्विविधैरपि २६७ इंद्रियेभ्यस्ततोदेवावन्ह्याद्याअधिदैवतम् ॥ जायंतेततएवैतेलोकाविषयसंवृताः २६८ नित्यंजनिमृतीएवमिंद्रियाणांमहात्मनाम् ॥ देवानांचसलोकानांसर्वेषामिहदेहिनाम् २६९ अविश्वासोनकर्तव्यःशास्त्रार्थेपंडितैःसदा ॥ अर्थेत्वतींद्रियेयस्मान्मानंशास्त्राद्दतेनहि २७० प्रत्यक्षस्यचनाधोत्रदृश्यतेप्रायशोनृभिः ॥ अनुमानंचमानंस्वंसमपेक्ष्यैवजायते ॥ अन्यथानानुमानत्वंभवेत्तस्यकथंचन २७१ अक्षमक्षंप्रतियदाप्रत्यक्षंजायतेनृणाम् ॥ सर्ववस्तुषुतन्नैकंतदामानंहितद्भवेत् २७२

अर्थेत्विति २७० शास्त्रविषयेमानांतरस्याप्रवृत्तिंविशदयति प्रत्यक्षस्येतिषड्भिः । अत्रशास्त्रविषयेस्वर्गापूर्वदेवतादौप्रत्यक्षस्यप्रमाणेपुज्येष्ठस्यबाधोऽभावःप्रायशोनृभिर्दृश्यतेनवयमेतत्प्रत्यक्षेणपश्यामइत्याकारेणानुभूयते योगिन्यावृत्तयेप्रायःपदं योगिप्रत्यक्षविशेषस्यापिशास्त्रानुकूलाचरणेनजायमानस्यनपूर्वसिद्धशास्त्रसमानविषयत्वंशास्त्रस्यानुवादकताप्रयोजकंवक्तुंशक्यमितिभावः । अनुमानस्यतथात्वंनिरस्यति अनुमानमिति । अनुमानंहिस्वंस्वोपयोगिव्याप्त्यादिग्राहकतयास्वसंबंधिप्रत्यक्षादिकमपेक्ष्योपजीव्यैवजायतेअन्यथाप्रमाणांतरस्यप्रथमवृत्तिमनपेक्ष्यप्रवर्तमानत्वेतस्यानुमानस्यानुमानत्वमनुमानशब्दवाच्यत्वंनभवेत् मानमनुगतमनुमानमित्यवयवार्थासमन्वयादित्यर्थः । अत्रानुमानशब्देअत्यादयःक्रांताद्यर्थेद्वितीययेतिसमासोविवक्षितः । अयंभावः अतींद्रियेर्थेप्रमाणांतरसापेक्षस्यानुमानस्यप्रत्यक्षापेक्षावाप्रवृत्तिःशास्त्रापेक्षावा । नाद्यःप्रत्यक्षस्यबाधोक्तयानिरस्तत्वात् । नद्वितीयःपूर्वसिद्धशास्त्रापेक्षयाप्रवृत्तस्यशास्त्रनिष्ठानुवादकताधायकत्वानुपपत्तेरिति २७१ प्रत्यक्षस्यस्वल्पविषयाप्रसिद्धेरपिशास्त्रविषयेतत्प्रसरोवक्तुमशक्यइत्याशयेनप्रत्यक्षस्यविषयेषुसंकुचद्वृत्तितामाह अक्षमितिद्वाभ्यां । अक्षमक्षंप्रतियज्जायतेतत्प्रत्यक्षमितिव्युत्प-

–त्तिवेनप्रतिपरिसमनुभ्योक्ष्णइत्यचप्रत्ययांतेनप्रत्यक्षशब्देनाभिधेयंप्रत्यक्षज्ञानंप्रतींद्रियंपृथक्पृथक्जायतेइतियदानिश्चितंतदासर्ववस्तुपुतत्प्रत्यक्षंमानंएकंनभवेत्किंत्वनेकंचक्षुरादिकरणभेदाद्याक्षपरा सनादिसंज्ञमेवभवेदितितस्यचचक्षुराद्ययोग्येशास्त्रार्थेनावकाशइतिभावः २७२ सन्निकर्षापेक्षतयापिप्रत्यक्षस्यसंकुचद्वृत्तितेत्याह अपिस्वस्येति । स्वस्यकस्यचित्प्रमातुःकस्मिंश्चिद्वस्तुनितद्योगइं द्रिययोगोपियदास्यात्तदापिपरस्यतद्भिन्नस्यतत्प्रत्यक्षंनभवतीतिप्रसिद्धं तथाचेंद्रिययोगेप्यपिनप्रत्यक्षस्यस्वतंत्रावृत्तिः अतींद्रियवस्तुनितुकिंवक्तव्यमितिशेषः । नचवेदेपिश्रवणादिकमपेक्ष्यज्ञान जनकत्वेसमानोयंदोषइतिवाच्यं सूर्यवद्भासकस्यवेदस्यप्रमाजननेऽन्यानपेक्षत्वात् श्रवणमननादीनांतुमंददृष्टेरंजनवत्बुद्धिसंस्कारमात्रत्वात् चक्षुरादीनांतुदीपवत्सामर्थ्यमेवस्वल्पमेवविशेषादिति २७३ दोषवत्त्वेनप्रसिद्धेश्चप्रत्यक्षस्यननिर्दोषवेदसमानविषयतेत्याह अपिदोषेति । केवलमागमनिरपेक्षंयत्प्रत्यक्षंतद्दोषकलाशून्यंदोषलेशहीनंनसंभवेत् । यतइंद्रियदोषाणामंधत्वबधिरत्वादीनाम ध्यक्षेणनिदर्शनंनिश्चयइत्यर्थः २७४ प्रत्यक्षस्याल्पविषयताभिधानफलमाह अनुमानमिति । तत्रातींद्रियेर्थेमूलस्यप्रत्यक्षस्याभावादनुमानंकथंचनापिनस्यादिति नन्वर्थापत्त्यादीनामस्तुप्रवृत्ति रितिचेत्तेकिमनुमानादभिन्नाभिन्नावानाद्यइत्याह अनुमानविभेदाइति । येऽर्थापत्त्यादयोनुमानभेदास्तेत्रशास्त्रविषयेकथंमानंभवेयुः यतस्तेर्थापत्त्यादयःस्वयमनुमानाद्भिन्नाएवनभवंति अनुमा

अपिस्वस्ययदैवस्यात्तद्योगोपिहिवस्तुनि ॥ तदापरस्यतत्रापिकिमतींद्रियवस्तुनि २७३ अपिदोषकलाशून्यंनाध्यक्षंकेवलंभवेत् ॥ यतोक्षगतदोषाणामध्यक्षे णनिदर्शनम् २७४ अनुमानंनतत्रस्यान्मूलाभावात्कथंचन ॥ अनुमानविभेदायेप्यर्थापत्त्यादयःकथम् ॥ मानमत्रभवेयुस्तेभिन्नानस्वयमेवहि ७५ अनुमानाद्भि भिन्नत्वमस्तुतेषामथापिते ॥ निदर्शनमुपाश्रित्यतोषयंतिक्वचिन्नरम् ॥ निदर्शनंचप्रत्यक्षंप्रत्यक्षंचनिराकृतम् २७६ अतोयंभगवान्वेदःसर्वदोषविवर्जितः ॥ यद्व क्तितत्परिग्राह्यंराजशासनवत्सदा २७७ इंद्रियाणामयंप्राहसृष्टिंसंहृतिमेवच ॥ दिनेदिनेततोगार्ग्यविश्वासंव्रजसर्वदा २७८ आकाशेनुपपत्तिंत्वंमाकृथाःस्वात्मदे हगे ॥ हृदयाकाशगेप्येवमानंदात्मस्वरूपिणि २७९

नाभेदेहिअनुमानदोषास्तेपुप्राप्ताएवेतिभावः २७५ नद्वितीयइत्याह अनुमाभादिति । तेषामर्थापत्त्यादीनामनुमानाद्भिन्नत्वमस्तुअथापिएवमपितेस्वतंत्राःप्रमांनजनयंतिकिंतुनिदर्शनंदृष्टांतमा श्रित्यपुरुषस्यबालस्येवक्वचित्परितोषमात्रंजनयंति निदर्शनंतुप्रत्यक्षेऽतर्भूतं प्रत्यक्षंतुनिरस्तमेवेति २७६ फलितमाह अतइति । अतःप्रमाणांतराविषयबोधकत्वादिति २७७ अविश्वासनिराससमुपसं हरति । इंद्रियाणामिति । अयंवेदःप्रकृतश्रुतिरूपःप्रतिदिनंइंद्रियाणांसदेवतानांसविषयाणांचसृष्टिंजागरादौसंहारंचशयनेप्राह ततःप्रभुणावेदेनोक्तत्वादेवात्रार्थेविश्वासंश्रद्धांहेगार्ग्यबालाकेव्रज धेहीत्यर्थः २७८ सएषप्राणइत्यादिद्वितीयानखेभ्यइत्यंतंवाक्यंतात्पर्यतोव्याकरोति आकाशेइतिदशभिः । अनवच्छिन्नेचिदाकाशेआनंदात्मरूपेऽनुपपत्तिंपूर्णेनुपपत्तिमतोपरिच्छिन्नत्वहानिंमाकृथा माकुरुष्व । ननुकोममपरिच्छिन्नत्वहानेःप्रसंगहेतुरतआकाशंविशिनष्टि स्वात्मदेहगेसुप्तोत्थापनादिवाक्यैर्देहवर्तितयोक्ते यएषोंतर्हृदयआकाशइतिवाजसनेयवाक्येनहृदयच्छिद्रगततयाचोक्ते तथाचे तादृशवाक्यानिदृष्ट्वात्कस्यचिन्मंदमतेर्वागाद्यवच्छिन्नमपिमत्वावक्तास्मिश्रोतास्मीत्याद्याकाराभ्रांतिरात्मनिप्रसज्यतेतांव्यावर्तयितुंसएषइत्यादिवाक्यमितिभावः २७९

एतमभिप्रायमेव विशदयति आकाशरूपइति । अयमाकाशरूपआत्मावागादौएकैकत्रप्रत्येकमपिस्थितः यथाशरावेमृन्मयपानपात्रेघटादिपुचतद्वत् । एनंवागाद्यवच्छिन्नमपिमूढाआत्मतयामन्यं ते वंनतथानावगच्छेतिबोधयितुमग्रिमक्षुरदृष्टांतावुच्येतेइतिशेषः २८० ननुदृष्टांतयोरपिपरिच्छिन्नदृष्टिपरत्वंकिंनस्यादितिमंदाशंकांवारयितुंदृष्टांतेनविवक्षितार्थंदर्शयति नचात्रेत्यादिना । यथाक्षुरो नापितस्यक्षुरपात्रेश्रुतिगतक्षुरधानपदेनाधिकरणसाधनेनोक्तेकचिदेकदेशेस्थितस्तथात्रहृदयांभोजएकदेशेव्यवस्थितत्वेनात्मानविवक्षितइतिशेषः २८१ कथंविवक्षितइत्यतआह किंत्विति । यथा सर्वत्रस्थितमप्यग्निंकाष्ठउपलब्धियोग्यताभिप्रायेणकाष्ठेस्थितंजानंतितथासर्वत्रस्थितमात्मानंमनइंद्रियदेहादावुपलब्धियोग्यतयास्थितंविद्धीतिविवक्षितमिति २८२ एतत्स्फुटयन्क्षुरदृष्टांताशय माह अयंहीतिद्वाभ्यां । अयमात्मायद्धृदयांभोजनिष्ठबुद्धिरूपेएकदेशेनिरूपितः तन्निरूपणममुनैवाभिप्रायेणबोध्यं अमुनाकेन यत्क्षुरधानेनापितपात्रेक्षुरस्येवतत्रबुद्धावात्मनःप्रकाशःशीघ्रमुपल ब्धिरूपजायते कस्याद्बुद्धेर्विशुद्धरूपत्वेनाभिव्यक्तिहेतुत्वादिति तत्रबुद्धावेवात्मानान्यत्रेत्यवगमायतुनतथोक्तइतिद्वयोःसंबंधः २८३ । २८४ एवंहृदयेविशेषव्याप्तिप्रदर्शकंक्षुरदृष्टांतंव्याकृत्यशरीरेतद पेक्षयापकृष्टसामान्यव्याप्तिप्रदर्शकंद्वितीयंश्रुतिगतविश्वंभरपदोक्ताग्निदृष्टांतंविशदयति चतुर्विधानीतिचतुर्भिः । अतउक्ताभिव्यक्त्यभिप्रायादेवमहेश्वरइत्युक्तइतिशेषः इतिकिं यच्चतुर्विधानिजरा

आकाशरूपआत्मायंवागादौचव्यवस्थितः ॥ एकैकत्रयथाकाशःसशरावघटादिपु ॥ अकस्मैनमात्मानंमावगच्छकदाचन २८० नचात्रहृदयांभोजेएकदेशे व्यवस्थितः ॥ क्षुरोयथानापितस्यक्षुरपात्रेक्वचित्स्थितः २८१ किंतुसर्वत्रजंतूनांवहिरंतरवस्थितम् ॥ मनइंद्रियदेहादौकाष्ठेग्निमिवविद्धितम् २८२ अयंहिहृ दयांभोजेबुद्धावात्मानिरूपितः ॥ क्षुरधानादिदृष्टांतैरेकदेशेमहेश्वरः २८३ बुद्धेर्विशुद्धरूपत्वात्प्रकाशस्तत्रजायते ॥ अभिप्रायेणामुनैवतत्रनावगमायहि २८४ चतुर्विधान्यसौदेहान्यनुप्राप्यायंमहेश्वरः ॥ चैतन्यव्याप्तिमकरोदानखाग्राद्धिसर्वतः २८५ यथासर्वगतोवन्हिःकाष्ठेष्वस्तिविशेषतः ॥ एवंसर्वेषुदेहेषुसो स्मिन्नेवविशेषतः २८६ यथासर्वगतोवन्हिःकाष्ठेष्वेवोपलभ्यते ॥ ततःकाष्ठेप्रविष्टोयंकथ्यतेलौकिकैरिह २८७ एवमाकाशआत्मायंचैतन्येनोपलभ्यते ॥ आनखाग्राच्छरीरेषुप्रविष्टस्तेनकथ्यते २८८ मनइंद्रियदेहादौसंघातेविक्रियास्तिहि ॥ प्रज्ञाकापिनतस्मिन्हिहित्वाप्राज्ञंमहेश्वरम् २८९

[illegible] । [illegible] २८५ [illegible] यथेति । यथासर्वगतोपिवह्निर्विशेषमाश्रित्य [illegible] एवमा [illegible] २८६ दृष्टांतदार्ष्टांतिकयोर्विशेषपदार्थंमुपलब्धियोग्यताभिप्रायमभिनयति यथासर्वेतिद्वाभ्यां । काष्ठेषु अरणीप्रभृतिषु [illegible] [illegible] २८७ एवमिति । आकाशपरिपूर्णआत्माचैतन्यरूपेण [illegible] २८८ [illegible] मनइत्यादिद्वाभ्यां । मनइंद्रियदेहादिरूपेसंघाते [illegible] [illegible] हित्वेति । प्राज्ञेत्यादि [illegible] २८९

ननुबुद्धिरूपाप्रज्ञातेष्वस्तीत्याशंक्यकिंतयाभवतितस्याबुद्धेरपिजडत्वादित्याह अज्ञेति । अतःचिद्व्यतिरिक्तस्यजडत्वादेवमनइंद्रियदेहादौजडेसर्वेविकाराश्रयेयाकाचित्प्रकृताबुद्धिरूपाप्रज्ञास्ति साप्यज्ञैवजडेव परिणामित्वाविशेषादितिभावः २९० यथात्मव्यतिरिक्तेषुज्ञानंनास्तिएवंसुखमपिनास्तीत्याह एवमिति । एतेषुआत्मव्यतिरिक्तेषु २९१ एवंसुखज्ञानाभ्यांराहित्येमनआदीनांनिश्चितेसतियत्तेषुज्ञानंसुखंवाभासतेतत्सर्वमात्मप्रसादलभ्यमित्याह सुखेति । सुखरूपःप्रकाशरूपश्चायमानंदात्मापूर्णआत्मास्वतःसुखज्ञानाभ्यांवर्जितान्मनःप्रभृतीन्स्वात्मसंपत्त्यास्वीयसुखादिसंपदाकरणभूतयासुखभागिनोज्ञानभागिनश्चकरोति यथाधनिकःस्वाश्रितानित्यर्थः २९२ एवंतात्पर्यार्थंप्रदर्श्यतत्रवाक्यंसमन्वितंकरोति एतमिति । एतंस्वात्मसंपत्त्यापरान्सुखज्ञानभागिनःकुर्वाणमात्मानमानंदात्मकरूपत्वात्सर्वप्रियतमंदेवताअध्यात्माधिदेवभिन्नावागाद्याअनुसृत्यजानंतिव्यवसायंलभंतेनस्वतंत्राः सामर्थ्यहीनत्वादितिभावः २९३ तत्रदृष्टांतभागंविवृणुते स्यगितिद्वाभ्याम् । यथाधनिनंअनेकैरुपजीव्यत्वेनप्रशस्तधनवंतंप्रकृतेर्भावप्रधानत्वेनश्रेष्ठत्ववद्वाचकश्रेष्ठिपदेनश्रुतिगतेनोक्तंप्रभुं । तदीयास्तत्संबंधिनःश्रुतौस्वपदेनोक्तास्तस्यसर्वतःपरिपार्श्वेस्थितामनुजास्तमनुसृत्यजानंतिनिश्चयंकुर्वतेइत्यर्थः २९४ ननुवाह्यकार्येआश्रितानांप्रभुपरतंत्रत्वेपिनिश्चयेकथंपरतंत्रताइत्याशंक्यप्रभुनिश्चयंविनाआश्रितनिश्चयस्याकार्यक्षमत्वेनासत्प्रायत्वा

अज्ञातःप्रकृताप्रज्ञायाकाचिदिहलभ्यते ॥ मनइंद्रियदेहादौजडेसर्वेविकारिणि २९० एवंसुखंचनैतेषुकिंचिदस्तिकदाचन ॥ हित्वाप्राणंमहेशानमानंदात्मस्वरूपिणम् २९१ सुखप्रकाशरूपोयमानंदात्मामहेश्वरः ॥ मनइंद्रियदेहादीन्सुखज्ञानविवर्जितान् ॥ कुरुतेस्वात्मसंपत्त्यासुखज्ञानविभागिनः २९२ एतंसर्वप्रियतमंप्रज्ञानंदात्मरूपिणम् ॥ नित्यबोधेनजानंतमनुजानंतिदेवताः २९३ सम्यग्वाविपरीतंवाजानंतंधनिनंयथा ॥ अनुजानंतिमनुजास्तदीयाःसर्वतःस्थिताः २९४ धनिनंनविहायैतेस्वयंकृत्वापिकुर्वते ॥ निश्चयंकार्यमुत्पन्नमनुजानंत्यतस्त्विमे २९५ तथैवपरमात्मानंजानंतमनुजानते ॥ कार्योकार्यादिकंसर्वंवागाद्यामिलिताअपि २९६ सुखीवैश्योयथाभुंक्तेभृत्याद्यैःस्वजनैःसह ॥ एवमात्मापिविषयान्भुंक्तेवागादिभिःसह २९७

दित्याह धनिनमिति । एतेआश्रितमनुजाःकार्यविशेषानुकूलंनिश्चयंस्वयंकृत्वापिधनिनंविहायोपेक्ष्यउत्पन्नंप्रसक्तमपिकार्यंनकुर्वतेकिंतुधनिकनिश्चयंप्रतीक्षंतेऽतस्तेषांनिश्चयस्याकार्यक्षमत्वादिमेआश्रिताधनिनमनुजानंतीतिव्यवह्रियंतेइतिसंबंधः २९५ दार्ष्टांतिकेयोजयति तथैवेति । तथावागाद्यादेवामिलिताःसमुदिताःसंतः अपिशब्दात्प्रत्येकंवास्थिताःयदिदंकार्यमवश्यकर्तव्यमिदमकार्यमितिआदिपदेनइदंवक्तव्यमिदमवक्तव्यमित्यादिरूपेणजानंतितत्सर्वंपरमात्मानमनुसृत्यैवजानतेइत्यन्वयः । अत्रदृष्टांतेआश्रितानांधनिकज्ञानात्पृथक्ज्ञानानिदार्ष्टांतिकेतुआत्मज्ञानमेववागाद्यवच्छिन्नंनानेव 'तस्यभासासर्वमिदंविभाति' इतिश्रुत्यंतरात् इतिविशेषसत्वेपिअनुजानंतीतिपदेनद्विविधज्ञानसंग्रहात्श्लेषेणसाम्यमितिबोध्यम् २९६ एवंज्ञानेप्राधान्यबोधकंदृष्टांतंविशदीकृत्यभोगेसुखसाक्षात्काररूपेप्राधान्यप्रदर्शकंतद्यथेत्यादिनोक्तंदृष्टांतंविशदयति सुखीति । यथासुखीबहुविधभोगसाधनसंपन्नोवैश्योवणिक्भृत्यप्रभृतिस्वकीयजनैःसहैवभुंक्तेनतुकेवलःचौरादिभयात् एवमात्मापीति । अत्रापिपूर्ववत्श्लेषेणसाम्यंबोध्यम् । एतद्दृष्टांतेनात्मनउपहितस्यैवभोक्तृतानतुकेवलस्येतिसूचितम् २९७

भोक्तृत्वस्यमिथ्यात्वंस्फुटयितुंवागादीनामपिकेवलानांनभोक्तृत्वमितिप्रदर्शकंयथावास्वाइत्यंशंविवृणोति वैश्यस्येति । वैश्यस्यधनिनःपुत्ररूपाःसंबंधिनोयथावैश्यंविनाअन्नंनभुंजते तद्वत्तेवा गाद्याअपिआत्मनासहैवभुंजतेकेवलास्तुनभोक्तारइतियावत् । तथाचभोक्तृत्वस्यवास्तवाश्रयालाभान्मिथ्यात्वंस्फुटमितिभावः । अत्रव्याख्येयश्रुतेरत्रार्थेसमन्वयस्तुस्वकीयायद्भुंजंतितद्धनिन मेवधनद्वाराभोग्यभावमापन्नंभुंजंतितंविनातुतेषांनभोक्तृत्वमित्यर्थेनबोध्यमिति २९८ ननुभोक्तृत्वरूपेणोपसंहारेआत्मनःप्रतिपादनंकिमर्थमितिचेत्तटस्थत्ववारणेनमहावाक्यार्थसूचनायेत्याह एवमितिद्वाभ्यां । एवमुक्तान्वयव्यतिरेकाभ्यामभिधानेनत्हृदयाकाशःशुद्धतयाप्रउक्तःसएवमहेश्वरःसर्वसंघाताधिपतिरितिप्रोक्तोभवति । अन्यथातुअयमात्मासंघातेनएकतांतादात्म्याध्यासंप्राप्तः सन्बुद्धिमद्भिरपिदुर्ज्ञेयइति । अयमर्थः श्रुतावपितमेतमितितत्पदेनत्हृदयाकाशंपरामृश्यप्राधान्यविधानेनसूचितमितिबोध्यः २९९ अस्यदुर्ज्ञेयतांतवमहामतेर्विभ्रमएवस्फुटपतीत्याह ततइति । ततोदुर्ज्ञेयत्वात् । ननुसंघातेदुर्ज्ञेयश्चेदात्मातर्हिसंघाताद्वहिःकुत्रचिन्निरूपणीयस्तत्रैवाहंप्रणिधास्यामीत्याशंकांवारयति मा कृथाइत्यादिना । त्वमन्यत्रविज्ञानायाण्वपियथाभवतितथाखेदंखेदप्रदमु त्साहंमाकृथाः तत्रहेतुंन्यायविरोधंदर्शयति कोग्निमिति । इंधनसंसृष्टमुपलब्धिस्थानभूतेनेंधनेनसंबद्धमग्निंविहायान्यंतदसंस्पृष्टंकःप्रतिपद्यतेप्राप्नोतिनकोपीतियावत् । तथाचाग्नेरिंधनवदात्मनउपल ब्धिस्थानंसंघातंविहायतदन्वेषणंवृथेतिभावः । तदुक्तंभागवतेपि ' त्वामात्मानंपरंमत्वापरमात्मानमेवच । आत्मापुनर्बहिर्मृग्यआहोज्ञजनताज्ञता ' इति ३०० प्रश्नत्रयेणोक्तमर्थजातंसंगृह्णाति ।

वैश्यस्यपुत्रावैश्येनविनायद्वन्नंभुंजते ॥ वागाद्याअपितद्वत्तेआत्मनासहभुंजते २९८ एवंहिहृदयाकाशःप्रोक्तःप्राज्ञोमहेश्वरः ॥ संघातेनैकतांप्राप्तोदुर्ज्ञेयोधीघनैरपि २९९ ततोगार्ग्याऽसिविभ्रांतोमाकृथाःखेदमण्वपि ॥ कोग्निमिंधनसंसृष्टंविहायान्यंप्रपद्यते ३०० हृदयाकाशआत्मायमाधारोवधिरेवच ॥ शयनस्यशयानस्य तद्वदागच्छतोपिच ३०१ शयानःकरणग्रामःशयनंबुद्धिसंश्रयम् ॥ आगंतापिसएवस्यात्सर्वोधिषणयासह ॥ स्वप्नंजागरणंवापिप्रोक्तमागमनंबुधैः ३०२ प्राण प्रज्ञेमयायस्तेहृदयाकाशरूपधृक् ॥ उक्तःप्रतर्दनायेममादाविंद्रोजगादह ३०३ एतद्विज्ञानतःपूर्वंजिगायेंद्रोऽसुरान्महान् ॥ ब्राह्मणांश्चयतींस्तद्वद्धतवा न्यायवर्जितान् ३०४

त्हृदयाकाशइति । हृदयाकाशएवसर्वस्यात्माशयनस्यशयानस्यचाधारतयोक्तः आगच्छतश्चागमनस्यावधितयोक्तइति ३०१ शयानादिस्वरूपमभिनयति शयानइति । शयनशब्दस्यकारणल्युप रत्वात्स्वप्नसंज्ञशयनस्यकर्त्ताकरणग्रामोबुद्धिव्यतिरिक्तः । द्वितीयंसुषुप्तिसंज्ञंशयनंतुबुद्धिसंश्रयंबुद्ध्याश्रितंतत्कर्तृत्वंबुद्धेरेवेतियावत् । यद्यपिपूर्वंविज्ञानमयस्यकर्तृत्वमुक्तंतथापिविज्ञानमयशब्दस्य बुद्धिविशिष्टचिद्वाचकत्वेनविशेष्येकर्तृत्वबाधेविशेषणेपर्यवसानस्यसविशेषणेहीतिन्यायसिद्धत्वादेवमुक्तमितिबोध्यम् एवंसतिआगंताआगमनकर्त्तापिसकरणग्रामएवबुद्धिसहितोबोध्यइति ३०२ अध्यायद्वयोक्तज्ञानस्यफलंपूर्वमिंद्रेणलब्धमितिप्रदर्शकंसयावादित्यादिवाक्यंव्याकर्तुंपूर्वाध्यायेनैकवाक्यतांदर्शयति प्राणेति । प्राणश्चप्रज्ञाचतयोःसमाहारःप्राणप्रज्ञंतस्मिन्प्राणप्रज्ञेउपाधौत्हृदयाका शरूपआत्मायस्तेमयोक्तःसुषुप्तौलोकदृष्ट्याप्राणावशेषात्प्राणोपाधिकस्यविज्ञानमयविशेषणेनबुद्ध्युपाधिकस्यचाऽभिधानात् इममेवात्मानमादौपूर्वमिंद्रउवाचेति ३०३ एतदिति । एतस्यात्मनः प्रजापत्युपदेशाद्यद्विज्ञानंतद्बलेनमहानिंद्रःपूर्वंपुराअसुरान्जिगायजितवान् तथान्यायवर्जितान्ब्राह्मणान्त्वाष्ट्रादीन्यतींश्चहतवान् । न्यायवर्जितइतिप्रथमांतपाठेउत्तरत्रासुरहननकर्त्रासंबंधः छलेनतेषांहननस्यपूर्वाध्यायउक्तेरिति ३०४

११

हत्वेति । भूरादिभेदेनजाग्रदादिभेदेनवात्रिविधोलोकस्त्रिलोकस्तस्यसदोपद्रवकरणशीलानसुरान्हत्वासर्वेषांदेवानामतीवश्रेष्ठतांप्राप्तः । श्रेष्ठतामभिनयति निरपेक्षइति । युद्धादिरूपकार्येइतरनिरपेक्षः बलिनांप्रथमगण्यश्चबभूवेत्युत्तरादपकर्षः ३०५ बभूवेति । यतोबलनाम्नोऽसुरस्यभेदकत्वत्यपिपूर्वंत्रैवहेतुतयासंबध्यते । स्वेनराजतेइतिस्वराट्तस्यभावइतिव्युत्पत्तिकस्वाराज्यपदार्थंसंगृह्णाति राजमानइत्यादिना ३०६ आधिपत्यपदार्थमुपादत्ते अपेक्षेति । इतरानपेक्षःस्वामीअधिष्ठाप्यपालयितेत्यर्थः । तथाइत्यादिपरमवाक्यंव्याकरोति शक्रइति । शक्रोयथाश्रेष्ठत्वादिमानभवत्तथान्योप्युक्तविधात्मज्ञानाद्भवतीति ३०७ सयावदितिप्रथमांशंविवृणुतेइंद्रइति इंद्रस्यप्रजापतेरुक्तात्मज्ञानलाभात्पूर्वमेवासुरास्तंजित्वात्रिलोकीराज्यंकृतवंतः ज्ञानानंतरंतुइंद्रएवाधिपतिरभवदितियावत् ३०८ पदद्वयाभ्यासेनसूचितामुपनिषत्समाप्तिंदर्शयन्नुत्तराध्यायजिज्ञासांशिष्यस्योत्थापयति कौषीतकिरितित्रिभिः । इदंवेदेत्यंतमभ्यस्तंवाक्यमुक्त्वातूष्णींभावंमौनंजगामेति । कस्यकथनप्रसंगेमौनंकृतमतआह सत्यस्येति । ब्रह्मनिरूपणानंतरंतस्यरहस्यंनामाप्रिवक्तव्यमासीत्तत्सत्यस्यसत्यमित्याकारंसत्यस्यस्थूलसूक्ष्मप्रपंचस्यप्राप्तस्वरूपस्यसत्यमधिष्ठानभूतंपारमार्थिकंरूपमित्यर्थंकमे

हत्वासुरांस्त्रिलोकस्यसदोपद्रवकारिणः ॥ देवानामपिसर्वेषांश्रेष्ठश्चातीवदेवराट् ॥ निरपेक्षःसदाकार्येयुद्धादौप्रथमोबली ३०५ बभूवबलभित्पूर्वंराजमानःस्वतेजसा ॥ गुणकीर्त्यादिभिर्युक्तोदेवानांप्रथमोभवत् ३०६ अपेक्षारहितश्चैवस्वामीशक्रोयथातथा ॥ अपरोप्यात्मविज्ञानाद्भवत्येवनसंशयः ३०७ इंद्रोयावदिदंज्ञानंनाप्तवांस्तावदेवहि ॥ असुराःपरिभूयैनंत्रिलोक्याःपतयोऽभवन् ३०८ कौषीतकिरिदंवाक्यमुक्त्वातूष्णींबभूवह ॥ सत्यस्यसत्यमित्येतद्ब्रह्मनामेतिसार्थकम् ॥ नोक्तवान्भगवान्सूर्यःसर्वमेतदुवाचह ३०९ अजातशत्रुणाप्रोक्तमनुकंपान्वितः ॥ मुनयेयाज्ञवल्क्यायस्वशिष्यायात्मबोधनम् ३१० पर्यंकप्राणविद्यायाएतदंताउदीरयन् ॥ कौषीतकिस्ततोभीतइंद्राद्रुपरराम ह ३११ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येण श्रीशंकरानंदभगवता विरचितउपनिषद्रत्नआत्मपुराणे कौषीतकिसारार्थप्रकाशे गार्ग्यजातशत्रुसंवादोनामतृतीयोऽध्यायः समाप्तः ॥ ३ ॥ ॥ ७ ॥ ॥ ॥

तन्नोक्तवान् । तर्हिएतन्नामसहितंब्रह्मनिरूपणंकेनकृतमतआह भगवानिति । वाजसनेयकेइतिशेषः ३०९ सर्वपदार्थंविशदयति अजातेति । पूर्वार्द्धेनकस्मैप्राहातआह मुनयेइति । कीदृशमेतदात्मबोधनंआत्मबोधसाधनमिति ३१० कौषीतकिब्राह्मणोपनिषदोध्यायचतुष्टयप्रतिपाद्यप्रदर्शनपूर्वकंमौनेकारणमाह पर्यंकेति । प्रथमेऽध्यायेसांगोपांगेप्राणरूपपर्यंकेस्थितस्यब्रह्मणउपासनरूपाविद्योक्ताद्वितीयेप्राणविद्याःसांगाःकथितास्तृतीयचतुर्थयोस्तुव्याख्यातविधयानिर्गुणब्रह्मविद्यानिरूपिताइत्येवंपर्यंकप्राणविद्यायाएतदंताएषाअजातशत्रुप्रोक्ताविद्याअंतेयासामेतादृशीर्विद्याःसमुदीरयन्सन्कौषीतकिःशाखाप्रवक्ताइंद्राद्भयेनउपरामंसमाप्तिंकृतवान् एतदुत्तराध्यायेस्फुटीभविष्यतीत्यलम् ३११ ॥ ज्ञानात्सुखाच्चसर्वत्रसान्निध्यंयस्यभासते ॥ सर्वांतरायदेवायतस्मैपूर्णात्मनेनमः ॥ १ ॥ इति श्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आत्मपुराणटीकायांसत्प्रसवाख्यायां तृतीयोऽध्यायःसमाप्तः ॥ ॥ अध्यायः ॥ ३ ॥ ॥ ग्रंथसंख्या ॥ १३०० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

श्रीगणेशायनमः ॥ ॥ नमःपूर्णायदेवायवेदाचार्यादिरूपिणे ॥ यस्यांतरस्यांतरायगणंशमयतिस्मृतिः ॥ १ ॥ एवमृग्वेदोपनिषदोव्याख्यायाथयजुर्वेदोपनिषदामर्थंसप्तभिरध्यायैःप्रपञ्चयिष्यं स्तत्रत्रिभिर्बृहदारण्यकार्थंस्फुटयितुंतत्रशिष्यजिज्ञासांपूर्वंमुत्थापितांदर्शयति एवमितित्रिभिः । उक्तमाख्यानंश्रुत्वाऽतिविस्मितःसन्शिष्यआदित्येनयाज्ञवल्क्यायकथितांविद्यांप्रष्टुकामोपितां साक्षान्नापृच्छत्किंतुइंद्रात्कौषीतकिर्भीतइतिगुरुमुखाच्छ्रुत्वासंशयाविष्टहृदयःसन्निदंभयनिमित्तमेवपप्रच्छ यतोतिबुद्धिमान् भयनिमित्ताभिधानद्वारेवैतेसर्वंवदिष्यंतीतिगुरूणामाशयविदितिद्वयोः संबंधः १ । २ प्रश्नमभिनयति इंद्रइति । हेब्रह्मन्इंद्रःकिंक्रूरंकर्माऽकरोत् यतइंद्रकृतात्क्रूरकर्मणोहेतोरिंद्रसकाशाद्भयंकौषीतकिसंज्ञस्यमुनेरभूदिति । तद्विचित्रमाख्यानंश्रोतुमिच्छामीति ३ उत्तरमवतारयति एवमिति । उक्तेपृष्टेसतिचित्रामद्भुतांमंत्रेणवंशव्याख्यानानंतरंप्रदर्शयिष्यमाणस्वरूपकेणसमीरितांस्फुटमभिहितांदध्यङ्ङर्थेंद्रसंबंधिनींकथांवक्तुकामोगुरुर्वेदोक्तांमधु कांडयाज्ञवल्क्यकांडखिलकांडानामंतेपुकीर्तितांगुरुपद्धतिंविद्यावंशपर्यायांपरंपरांसस्मार । तत्स्मरणस्याध्ययनांगतायाभाष्यकारैरुक्तेः तथाचमधुकांडवंशब्राह्मणेभाष्यं ' मंत्रश्चायंस्वाध्यायार्थो जपार्थश्चेति ' अयंब्राह्मणरूपःवंशस्वाध्यायःस्वाधीनोच्चारणक्षमत्वेसत्यध्यायनंजपश्चप्रत्यहमप्रवृत्तिरितितद्व्याख्यातारः । मधुकाण्डादिस्वरूपंतुपूर्वाध्यायेदर्शितम् ४ तत्रवंशेषुमधुकांडयाज्ञवल्क्य कांडयोरंत्यौपुल्लिंगनामघटितत्वात्पुंवंशावित्याख्यायेते अंत्यस्तुस्त्रीनामघटितत्वात्स्त्रीवंशइतितत्रांत्यस्यसर्वांतिकीर्तनेनसर्वोपकारकतासूचनात्प्राधान्यंसर्वसंमतं वंशत्रयवर्तिनामृषीणामभेदंकेचिद्व

श्रीः ॥ एवंविचित्रमाख्यानंश्रुत्वाशिष्योतिविस्मितः ॥ आदित्यकथितांविद्यांप्रष्टुकामोविहायताम् १ इंद्रात्कौषीतकिर्भीतइतिश्रुत्वातिबुद्धिमान् ॥ संशयावि ष्टहृदयःपप्रच्छेदंगुरुंप्रति २ इंद्रःकिमकरोद्ब्रह्मन्यतःकौषीतकेर्भयम् ॥ इंद्रादभूद्विचित्रंतच्छ्रोतुमिच्छाम्यहंगुरो ३ एवमुक्तेगुरुश्चित्रांकथांमंत्रसमीरिताम् ॥ वक्तुकामोथवेदोक्तांसस्मारगुरुपद्धतिम् ४ पौतिमाषीजगत्यस्मिन्सर्वेषांजननीहिनः ॥ यस्यांपुत्रोपिदुष्प्रापमदाज्ज्ञानंद्विजन्मनाम् ५ एतमारभ्यसर्वांस्तान्गु रून्ब्रह्मावधीन्हिते ॥ कथयामिततःसर्वंज्ञातुंशक्तोभविष्यसि ६ सहिकात्यायनीपुत्राद्विद्यांगौपवनादगात् ॥ भारद्वाज्यास्तुतनयःपौतिमाष्योपरोभवत् ॥ त स्माद्गौपवनःसर्वांविद्यामेतामवाप्तवान् ७

दंतिकेचिच्चभेदं तत्राभेदस्यप्रवियोगिसापेक्षाद्भेदादभ्यर्हितत्वेनैकस्यब्रह्मणएवाचार्यमूर्त्याव स्थानस्यसिद्धांतितत्त्वेनचाभेदपक्षेणतावद्वंशंव्याकुर्वन्स्त्रीवंश्यानामासुरिपर्यंतानामासुरिपर्यंतैरितरवंश्यैर्ब हुभिरभेदोभूयसामनुग्रहोन्याय्यइतिन्यायेनसंप्रदायेनचयथायथासिद्धस्तथादर्शयति पौतिमाषीत्यादिना । पूतिमाषस्यापत्यंस्त्रीपौतिमाषी यञंतान्ङीप् । एषासर्वेषांनोस्माकंविद्याधिकारिज नानांजननीमातृसमागुरुजननीत्वात् । तदेवाह यस्याइति । यस्याःपौतिमाष्याःपुत्रःस्त्रीवंशस्यादौपौतिमाषीपुत्रपदेनोक्तः पुंवंशयोश्चपौतिमाष्यपदेनोक्तः लोकेद्विजेभ्योमधुकांडाद्युक्तज्ञा नंददाविति । पौतिमाष्यपदेदौहित्रेऽपत्यत्वोपचारेणयत्नबोध्यः ५ एतमिति । एतंपौतिमाषीपुत्रंवंशब्राह्मणेपुप्रथमांततयैवोक्तमारभ्यउत्तरोत्तरंयेगुरवःपंचम्यंततयावंशेपूक्तावंशपर्वनिभाब्र ह्माहिरण्यगर्भस्तत्पर्यंतास्तांस्तेशिष्यायकथयामिततस्तेषांश्रवणात्प्रतिबंधकदुरितोपशमेनसर्वमर्थंज्ञातुंशक्तोभविष्यसि । तदनुसंधानस्यस्वाध्यायार्थतायाउक्तेः ' यस्यदेवेपराभक्तिर्यथादेवेतथा गुरौ । तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः ' इतिश्रुतेश्चेतिभावः ६ सहीति सपौतिमाषीपुत्रःस्त्रीवंशेकात्यायनीपुत्रपदोक्तात्पुंवंशयोर्गौपवनपदोक्ताद्गुरोर्विद्यामगात्प्राप्तइत्यर्थः । एवमग्रेपिपुत्रपर्यायांतंनामस्त्रीवंशगतमितरत्तुपुंवंशगतमितिबोध्यम् । भारद्वाज्याइति उक्तोगौपवनःकात्यायनीपुत्रोभारद्वाजीपुत्राभिन्नात्पौतिमाष्यात्पूर्वोक्तपौतिमाष्यभिन्नादेतांविद्यांप्राप्तइ त्यर्थः । अत्रयद्यपिस्त्रीवंशेकात्यायनीपुत्रस्तस्यगुरुर्गौतमीपुत्रस्तस्यगुरुर्भारद्वाजीपुत्रइतिप्रायःपुस्तकेषुपठ्यतेतथापिपुंवंशयोर्गौतमीपुत्रस्यसमसंख्याकनामांतरानुपलंभाद्वियमानन्नाम्नांसरूपाणां–

99

बहूनामभेदस्यएवमेवाभिधानेसुबोधतामपिसंधायगुरोःपरमगुरोश्चाभेदस्यलोकेपिप्रसिद्धत्वात्सर्वेषामेकरूपतायाउपसंहारेवक्ष्यमाणत्वाचकात्यायनीपुत्रानंतरंभारद्वाजीपुत्रएवोक्तइतिबोध्यं । एवमेववक्ष्यमाणकौशिकीपुत्रेतच्छिष्यकात्यायनीपुत्रांतर्भावोमंतव्यः ७ पाराशरीसुतइति । भारद्वाजीसुतःपौतिमाष्यस्तुपाराशरीसुताद्गौपवनात्पूर्वोक्तगौपवनभिन्नादिमांविद्यांसंप्राप्तइति ८ औपस्वस्तीति । उपस्वस्तेर्गोत्रापत्यंस्त्रीऔपस्वस्ती अण्णंतात्ङीप् तस्याःपुत्रःकौशिकइतिपुंवंशयोर्यःप्रसिद्धस्तस्मात्पाराशरीसुतोविद्यांप्राप्तवान् ९ पाराशरीति । उक्तःकौशिकस्तुअपरपाराशरीसुतात्कौंडिन्यनाम्नोविद्यांप्राप्तइति १० कौशिकीतनयइति । पाराशरीसुतःकौंडिन्यस्तुकौशिकीपुत्रात्शांडिल्याद्विद्यांप्राप्तइति । अत्रकौशिकीपुत्रेकात्यायनीपुत्रांतर्भावउक्तः ११ शांडिल्यस्येति । उक्तस्यकौशिकीतनयाभिन्नशांडिल्यस्यकौशिकोगौतमश्चएतौद्वौपुंवंशोक्तौगुरूअभूतां । स्त्रीवंशेतुकौशिकआलंबीपुत्रत्वेनोक्तः । गौतमस्तुवैयाघ्रपदीपुत्रत्वेनोक्तः व्याघ्रपदोगोत्रापत्यंस्त्रीवैयाघ्रपदी । यञंतान्ङीप्ऐंजागमश्च १२ आलंब्याइति । आलंबीपुत्रःकौशिकस्तुतपसाराधितब्रह्मानुग्रहादेवविद्यांप्राप्तइत्यर्थः १३ वैयाघ्रपद्याइति । वैयाघ्रपदीपुत्रोयोगौतमोना

पाराशरीसुतःकश्चित्पुनर्गौपवनोपरः ॥ अभूत्तस्मात्समाप्तोसौभारद्वाजीसुतस्त्विमाम् ८ औपस्वस्तीसुतःकश्चित्कौशिकोनामवैद्विजः ॥ तस्माद्गौपवनोविद्यां प्राप्तवानखिलामिमाम् ९ पाराशरीसुतःकश्चित्कौंडिन्योनामतोभवत् ॥ कौशिकस्तुततोविद्यांप्राप्तवानखिलामिमाम् १० कौशिकीतनयःकश्चित्शांडिल्योनामतोभवत् ॥ कौंडिन्यस्ततएवेमांविद्यामधिजगामह ११ शांडिल्यस्यगुरूस्यातामुभौकौशिकगौतमौ ॥ आलंब्याश्चतथावैयाघ्रपद्यास्तनयौहितौ १२ आलंब्यास्तनयोयोसौकौशिकोनामविश्रुतः ॥ ब्रह्मप्रसादतःसोयंविद्यामेतामवाप्तवान् १३ वैयाघ्रपद्यास्तनयोगौतमोनामनामतः ॥ कापीपुत्रादाग्निवेश्यात्काण्वीपुत्राच्चलब्धवान् १४ काण्वीपुत्रःकौशिकवल्लब्धवान्हिस्वयंभुवः ॥ उग्रेणतपसात्यर्थंपरितोष्यमहेश्वरम् १५ आत्रेयीपुत्रतःप्राप्तआनभिम्लाततस्त्विमाम् ॥ शांडिल्याच्चाग्निवेश्योयंक्लेशेनमहताद्विजः १६ शांडिल्योजन्मतःसिद्धःकाण्वीतनयवन्महान् ॥ अन्यस्मान्नाप्तवान्विद्यांमुक्त्वाब्रह्माणमीश्वरम् १७ आनभिम्लातएवायंगार्ग्योगोत्रतईरितः ॥ गौतमीतनयाद्भिन्नादानभिम्लाततस्त्विमाम् १८ गार्ग्याद्विप्राप्तवान्विद्यामात्रेयीतनयोमहान् ॥ भारद्वाजीसुताद्गार्ग्योगौतमादाप्तवानिमाम् १९ पाराशर्यास्तनयतःसैतवाद्गौतमस्त्विमाम् ॥ प्राचीनयोग्यतश्चापताउभौचसहोदरौ २०

मसनामतआग्निवेश्यात्कापीपुत्राभिन्नात्तथाकाण्वीपुत्राद्विद्यांप्राप्तः । काण्वीपुत्राभेदयोरयःपुंवंशयोर्नास्तीतिनोक्तः । कपेर्गोत्रापत्यंस्त्रीकापी यञन्तान्ङीप् १४ काण्वीति । काण्वीपुत्रस्तुस्वयंभुवोब्रह्मणएवविद्यांप्राप्तः किंकृत्वा तपसापरमेश्वरमाराध्य १५ आत्रेयीति । कापीपुत्रआग्निवेश्यस्तुआत्रेयीपुत्राभिन्नादानभिम्लातात्शांडिल्याचद्वाभ्यांगुरुभ्यामिमांविद्यांप्राप्तइत्यर्थः । शांडिल्याभेदयोरयःस्त्रीवंशेनास्तीतिनोक्तइतिबोध्यम् १६ शांडिल्यइति । आनभिम्लातशांडिल्ययोरन्यतरःशांडिल्यस्तुब्रह्माणमीश्वरंमुक्त्वाऽन्यस्माद्विद्यांनाप्तवानिति १७ आनभिम्लातइति । अयंमहानात्रेयीपुत्रआनभिम्लातएवयाज्ञवल्क्यकांडेगोत्रतोगार्ग्यइतीरितःसन्भिन्नादानभिम्लाताद्गौतमीतनयाभिन्नाद्याज्ञवल्क्यकांडेगार्ग्यपदोक्तादिमांविद्यांप्राप्तः । गार्ग्योगौतमीतनयआनभिम्लातस्तुभारद्वाजीसुताभिन्नाद्गौतमादिमांविद्यांप्राप्तइतीतिद्वयोःसंबंधः । अत्रतृतीयानभिम्लातोद्वितीयेऽन्तर्भावितइतिबोध्यम् १८ । १९ पाराशर्याइति । भारद्वाजीसुतोगौतमस्तुपाराशरीपुत्राभिन्नात्सैतवात्प्राचीनयोग्याच्चआभ्यांमधुकांडोक्ताभ्यामिमांविद्यांप्राप्तः । चतुर्थपादस्योत्तरश्लोकेनसंबंधः २०

वात्सीति । तौसैतवप्राचीनयोग्यौतुतपस्विनौसोदरभ्रातरौवात्सीपुत्रादिमांविद्यांप्राप्तौ । कीदृशाद्वात्सीपुत्रात् मधुकांडेपाराशर्यपदोक्तात्याज्ञवल्क्यकांडेपाराशर्यायणपदेनोक्तादित्यर्थः २१ पाराशरीतनयतइति । पाराशर्यायणाख्यःपाराशर्यस्तुपाराशरीपुत्राद्विद्यांप्राप्तः । कीदृशात्पाराशरीपुत्रात् मधुकांडेभारद्वाजपदोक्ताद्याज्ञवल्क्यकांडेगार्ग्यायणसंज्ञात् २२ वार्कारुणीति । भारद्वाजोगार्ग्यायणस्तुवार्कारुणीपुत्रात्तथागौतमाद्वाभ्यांविद्यांप्राप्तः । कीदृशाद्वार्कारुणीपुत्रात् याज्ञवल्क्यकांडेउद्दालकायनपदोक्तान्मधुकांडेभारद्वाजपदेनोक्तादिति । वृकारुणस्यगोत्रापत्यंस्त्रीवार्कारुणी २३ भारद्वाजस्त्विति । गार्ग्यायणगुरुद्वयमध्येभारद्वाजस्तुसाक्षाद्ब्रह्मणएवविद्यांप्राप्तः । द्वितीयोगुरुर्गौतमस्तुअपरस्यावार्कारुणीपुत्राद्याज्ञवल्क्यकांडेजाबालायनेतिशब्दितान्मधुकांडेभारद्वाजपदोक्ताद्विद्यांप्राप्तः २४ आर्तेति । गौतमगुरुर्भारद्वाजस्तुआर्तभागीपुत्राद्याज्ञवल्क्यकांडेमाध्यंदिनायनशब्देनोक्तान्मधुकांडेपाराशर्यपदोक्तादिमांविद्यांप्राप्तः २५ माध्यंदिनायनइति । उक्तोमाध्यंदिनायनस्तुशौंगीपुत्राद्याज्ञवल्क्यकांडेसौकरायणेतिप्रोक्तात्तेजस्विनोमुनेर्विद्यांप्राप्तः । मधुकांडेतुतत्तुल्यसंख्योनास्तीतिनोक्तः २६ सांकृतीति । अयंशौंगीतनयःसौकरायणस्तुसांकृतीपुत्रात्काषायणाद्याज्ञवल्क्यकांडीयादेवेमांविद्यांप्राप्तः २७ आलंबायनीति ।

वात्सीपुत्रादिमांविद्यांलब्धवंतौतपस्विनौ ॥ पाराशर्यायणाख्याद्धिपाराशर्यान्महात्मनः २१ पाराशरीतनयतःपाराशर्योमहामनाः ॥ भारद्वाजादिमांविद्यांप्राप्तोगार्ग्यायणाख्यतः २२ वार्कारुणीतनयतस्तद्वदुद्दालकायनात् ॥ भारद्वाजाद्गौतमाच्चप्राप्तोगार्ग्यायणस्त्विमाम् २३ भारद्वाजस्त्विमांविद्यांब्रह्मणःप्राप्तवान्मुनिः ॥ वार्कारुण्यास्तनयतोजाबालायनशब्दितात् ॥ भारद्वाजाद्गौतमाख्योविद्यांप्रापमहामुनिः २४ आर्तभागीतनयतःप्राप्तोमाध्यंदिनायनात् ॥ पाराशर्यादिमांविद्यांभारद्वाजोमहामुनिः २५ माध्यंदिनायनःप्राप्तःशौंगीतनयतस्त्विमाम् ॥ सौकरायणसंज्ञाद्धिमुनेःसंदीप्ततेजसः २६ सांकृतीतनयात्प्राप्तोविद्यांकाषायणादिमाम् ॥ सौकरायणसंज्ञोयंमुनिर्धर्मविशारदः २७ आलंबायनीतनयात्सायकायनशब्दितात् ॥ बैजवापायनात्प्राप्तोमुनिःकाषायणोमहान् २८ आलंबीतनयात्प्राप्तोविद्यांतांकौशिकायनेः ॥ बैजवापायनाख्यस्तुमुनिर्धर्मपरायणः २९ जायंतीतनयात्प्राप्तोविद्यांतांघृतकौशिकात् ॥ कौशिकायनिरित्युक्तोमुनिर्धर्मरतःसदा ३० मांडूकायनीतनयात्पाराशर्यायणाभिधात् ॥ घृतकौशिकनामायंविद्यामेतामवाप्तवान् ३१ मांडूकीपुत्रतःप्राप्तःपाराशर्यान्महामुनेः ॥ पाराशर्यायणाख्योयंविद्यामेतामनन्यधीः ३२ शांडिलीतनयात्प्राप्तोजातूकर्ण्यान्महात्मनः ॥ पाराशर्यइमांविद्यांदुर्लभांमनुजैर्भुवि ३३ राथीतरीतनयतआसुरायणसंज्ञितात् ॥ यास्काच्चप्राप्तवान्विद्यांजातूकर्ण्योमहामुनिः ३४

महान्मुनिःकाषायणस्तुआलंबायनीपुत्राद्याज्ञवल्क्यीयेसायकायनशब्दितान्मधुकांडेबैजवापायनसंज्ञिताद्विद्यांप्राप्तः २८ आलंबीति । बैजवापायनाख्यस्तुमुनिःआलंबीतनयाभिधानात्कौशिकायनेःपुंवंशयोरुक्ताद्विद्यांप्राप्तः २९ जायंतीति । कौशिकायनिर्मुनिस्तुपुंवंशयोर्घृतकौशिकपदोक्ताज्जायंतीपुत्राद्विद्यांप्राप्तः । इतःप्रभृतिपुंवंशयोर्नामानिपरस्परंसमानरूपाणिबोध्यानीति ३० मांडूकायनीति । मांडूकायनीपुत्राभिधात्पाराशर्यायणसंज्ञाद्धृतकौशिकोविद्यांप्राप्तः ३१ माण्डूकीति । पाराशर्यायणाख्यस्तुमांडूकीपुत्राभिधात्पाराशर्याख्याद्विद्यांप्राप्तः ३२ शांडिलीति । पाराशर्यस्तुशांडिलीतनयाभिधाज्जातूकर्ण्यात्प्राप्तोविद्यामिति ३३ राथीतरीति । जातूकर्ण्यस्तुगुरुद्वयाद्विद्यांप्राप्तः । गुरुद्वयंतुराथीतरीतनयाभिधआसुरायणएकः यास्कोद्वितीयइति ३४

यास्कइति । तयोर्मध्येयास्कस्तुसाक्षात्स्वयंभुवःसकाशादेवविद्यांप्राप्तः । वर्णितालंबीतनयकौशिकवदिति । द्वितीयआसुरायणस्तुभालुकीतनयाभिन्नात्त्रैवणिसंज्ञात्तांप्राप्तइति ३५ अथस्त्री वंशेअधिकान्पट्परस्परमभेदस्फुटीकरणायासुरायणेनिवेशयति । क्रौंचिकीतिचतुर्भिः । भालुकीतनयस्त्रैवणिःकौंचिकीपुत्राभ्यांविद्यांप्राप्तः । तौक्रौंचिकीपुत्राबुभौवेदभृतीपुत्रात्प्राप्तौ ३६ प्राप्तइति । वेदभृतीपुत्रःकार्षकेयीपुत्रात्प्राप्तः । कार्षकेयीपुत्रःप्राचीनयोगीपुत्राद्विद्यांप्राप्तइति । कृषिकस्यापत्यंस्त्रीकार्षकेयी । शुभ्रादित्वाड्ढक् । प्राचीनयोगीतियञंताङ्ङीप् ३७ प्राची नेति । प्राचीनयोगीतनयःसांजीवीतनयाद्विद्यांप्राप्तः । सांजीवीतनयस्तुएतांविद्यांप्राश्नीपुत्रात्प्राप्तः । कीदृशात्प्राश्नीपुत्रात् स्त्रीवंशेस्त्रीनामघटितपरंपरायामंतेस्थितत्वेनप्रसिद्धात् प्रा श्नीपुत्रपदाभ्यासेनांतेस्थितेःसूचनादितिभावः । पुनःकीदृशात् आसुरिवासिनः आसुरिसंज्ञेदेशविशेषेगुरौवावसनेनासुरिवासीतिनामांतरशालिनः ३८ प्राश्नीपुत्रोथेति । प्राश्नीपुत्रस्तुआसुरा यणाद्विद्यांप्राप्तः । कोसावासुरायणइतिचेत् योराथीतरीतनयोजातूकर्ण्यस्यगुरुस्त्रैवणेश्चशिष्यउक्तःसएवेतिगृहाणेत्यर्थः । ननुत्रैवणिगुरुपरंपरावर्तिनःप्राश्नीपुत्रस्यत्रैवणिशिष्यात्कथंविद्याग्रहणसं भवइतिचेन्न । दृश्यतेहिकृताध्ययनानामपिकुतश्चिन्निमित्ताद्विस्मरणेसंशयोत्पादेवापुनर्विद्याग्रहणं । यथामहाभारतेगदापर्वणिद्वादशाब्दिकदुर्भिक्षाद्विस्मृतविद्यानांसारस्वतात्सरस्वतीप्रसादजीवि

यास्कःकौशिकवद्विद्यांप्राप्तवान्सस्वयंभुवः ॥ भालुकीतनयात्प्राप्तस्त्रैवणेरासुरायणः ॥ क्रौंचिकीतनयाभ्यांहिभालुकीतनयोप्ययम् ॥ प्राप्तवांस्तावुभौविद्यांप्राप्तौ वेदभृतीसुतात् ३६ प्राप्तोवेदभृतीपुत्रःकार्षकेयीसुतादिमाम् ॥ कार्षकेयीसुतोप्येतांप्राप्तवान्बहुदुःखतः ॥ प्राचीनयोगीतनयात्सर्वशास्त्रविशारदात् ३७ प्राची नयोगीतनयःसांजीवीतनयादगात् ॥ सांजीवीतनयोप्येनांप्राश्नीपुत्रादवाप्तवान् ॥ स्त्रीवंशेप्रथितादंतेस्थितादासुरिवासिनः ३८ प्राश्नीपुत्रोथधर्मात्माप्राप्तवाना सुरायणात् ॥ जातूकर्ण्यस्यगुरुतस्त्रैवणेःशिष्यरूपिणः ३९ त्रैवणिःप्राप्तवान्विद्यामौपजंघनितोमुनेः ॥ औपजंघनिरप्याप्तआसुरेर्यतएवहि ॥ भेदोभवतिवंशस्य ह्यसमाधेयरूपभाक् ४० पौतिमाषीतनयतःस्त्रीवंशंपृथगेवहि ॥ वर्णयंतिमहात्मानःकेचिदेकमथापरे ४१ पुंवंशेऽपिविभिन्नत्वमाग्निवेश्याद्वदंतिहि ॥ कौशिका यनिपर्यंतंकेचित्केचिदभिन्नताम् ४२ सर्वथाऽभिन्नतैवस्यादत्रस्त्रीपुंसवंशयोः ॥ अतःपुंवंशमेवेममधुनाकथयामिते ४३

नोभ्यस्तविद्यादिति ३९ त्रैवणिरिति । आसुरायणगुरुस्त्रैवणिरौपजंघनिसंज्ञान्मुनेरपिविद्यांप्राप्तः । औपजंघनिस्तुआसुरेर्वंशत्रयेपिसमानाकारात्प्राप्तः । कीदृशोयमासुरिः यतःयमासुरिमार भ्याधस्तनवंशस्यभेदोनानारूपतालक्षणोभवतिज्ञायते विपर्येणविषयिणोलक्षणात् । कीदृशोभेदः असमाधेयरूपभाक् समाधातुमशक्यस्यरूपमाकारंसादृश्यमितियावत् तद्भजतीतिसतथा 'रूप माकारश्लोकयोरपि'इतिविश्वः । अस्माभिस्तुयथासंप्रदायंसमाहितइतिभावः ४० आसुरिपर्यंतानांवैरूप्यंसंख्यावैषम्यंचदृष्ट्वाकेचिद्भेदंवदंति । सारूप्यभूयस्त्वदर्शिनोऽपरेतुअभेदमेवेत्याह पौतिमाषी ति । पौतिमाषीतनयमारभ्यस्त्रीवंशंकेचिन्महात्मानःपृथग्वर्णयंति । अपरेतुएकमेवेति ४१ पुंवंशेपीति । केचित्पुंवंशयोरपिआग्निवेश्यमारभ्यकौशिकायनिपर्यंतंपरस्परंनाम्नांवैरूप्यंदृष्ट्वाविभिन्नत्वंव दंतिआग्निवेश्यात्पूर्वतनेपुकौशिकायनेःपरतनेपुत्वभेदमाहुरितियावत् । केचित्त्वेकस्यापिनामद्वयसंभवादिकमालोच्यतत्राप्यभेदमेवाहुरित्यर्थः ४२ सर्वथेति । मतभेदप्रयुक्तेःसर्वैःप्रकारैरप्यत्रआसुरौ स्त्रीवंशपुंवंशयोरभेदएव आसुरेरनंतरंतुभेदोदुर्वचइतियावत् । अतआसुरिंप्राप्यवंशत्रयाभेदसिद्धेः पुंवंशमेवतुभ्यमधुनाकथयामिइतोग्रेपुंवंशयोरेकतायामविवादस्फुटीकरणायपुंवंशमित्येकवच नप्रयोगः ४३

मधुकांडयाज्ञवल्क्यकांडांत्ययोःपुंवंशयोरासुरिमारभ्यप्रश्नपर्यंतंवंशंकीर्तयति भारद्वाजादितिदशभिः । उक्तआसुरिर्भारद्वाजाद्विद्यांप्राप्तः । भारद्वाजस्तुआत्रेयात्प्राप्तः । आत्रेयोमांटिसंज्ञात्स चगौतमात् । एवमग्रेपिपंचम्यंतोगुरुःप्रथमांतश्चशिष्योबोध्यः ४४ गौतमोऽपरगौतमात् । सचवात्स्यःशांडिल्यतः । शांडिल्यःकैशोर्याभिधात्काप्यात् । काप्यःकैशोर्योपिकुमारहारितेतिसंज्ञका त । सकुमारहारितोपिगालवात् ४५ प्राप्तइति । विदर्भीकौंडिन्यसंज्ञकाद्गालवःप्राप्तः । वत्सनयाद्बाभ्रवोवत्सनपाद्बाभ्रवस्तस्माद्विदर्भीकौंडिन्योविद्यांसम्यगाप्तवान् ४६ बाभ्रवोपीति । वत्सनपाद्बाभ्रवोपिसौभरीतिनामांतरशालिनःपथःपथिसंज्ञकात्प्राप्तः । सौभरिःपंथाअपिअपास्यसंज्ञकादांगिरसात् । सआंगिरसः अपास्यइत्युत्तरादपकर्षः । त्वाष्ट्रात्त्वष्टुरपत्यादाभूतिसंज्ञकाद्वि द्यांप्राप्तइति ४७ अपास्यइति । अपास्यइतिपूर्वान्वितमुक्तं तुशब्दोभिन्नक्रमः । आभूतिसंज्ञस्त्वाष्ट्रस्तुविश्वरूपसंज्ञात्त्वाष्ट्रात् । विश्वरूपस्त्वाष्ट्रस्तुअश्विभ्यां । ययोरश्विनोरुपदेशेनिमित्तेसतिइंद्रोवक्ष्य माणविधयाक्षोभंजगामेति ४८ आथर्वणादिति । अथर्वणोऽपत्याद्दधीचोदध्यङ्संज्ञकात्शक्रदेशिकादिंद्रगुरोःसकाशादिमावश्विनौविद्यांमाप्तौ । दध्यङ्ङाथर्वणोपिदैवाद्देवापत्यादथर्वणःप्राप्तः ४९

भारद्वाजादासुरिस्तुभारद्वाजोप्यवाप्तवान् ॥ आत्रेयादयमात्रेयोमांटेर्मांटिस्तुगौतमात् ४४ गौतमोगौतमात्सोपिवात्स्याच्छांडिल्यतःसच ॥ शांडिल्योपिचकै शोर्यात्काप्यात्काप्योप्यवाप्तवान् ॥ कुमारहारिताख्यात्सगालवाद्दीप्ततेजसः ४५ प्राप्तोविदर्भीकौंडिन्याद्गालवोवेदवित्तमः ॥ वत्सनपाद्बाभ्रवतःकौंडिन्योपिसमा प्तवान् ४६ बाभ्रवोपिचसंप्राप्तःपथःसौभरिसंज्ञितात् ॥ पंथाअपास्यांगिरसादाभूतेस्त्वाष्ट्रतोपिसः ४७ अपास्यस्तुविश्वरूपात्त्वाष्ट्रादाभूतिसंज्ञकः ॥ विश्वरू पःपुनस्त्वाष्ट्रोह्यश्विभ्यांप्राप्तवानिमाम् ॥ ययोर्निमित्तेभगवानिंद्रःक्षोभंचकारह ४८ आथर्वणादिमौप्राप्तौदधीचःशक्रदेशिकात् ॥ दैवादथर्वणोप्येषदध्यङ्ङाथ र्वणोपिच ४९ दैवोथर्वापुनःप्राप्तोमृत्योःप्राध्वंसनाद्विसः ॥ मृत्युःप्रध्वंसनात्प्राप्तोविद्यांप्रध्वंसनोपिच ॥ एकर्षेस्त्वेकर्षिःप्राप्तोविप्रचित्तेरिमांमहान् ५० प्राप्तो व्यष्टेर्विप्रचित्तिर्व्यष्टिःप्राप्तःसनारुतः ॥ सनातनात्सनारुर्वाख्यःसनकात्तुसनातनः ५१ परमेष्ठिनःससनकोब्रह्मणःपरमेष्ठ्यपि ॥ अतःपरंनवक्तास्तिब्रह्मणोहिस्व यंभुवः ५२ नमोस्तुब्रह्मणेतस्मैसर्वदेवस्वयंभुवे ॥ मूलभूतायजगतस्तथावेदद्रुमस्यच ॥ एषपुंवंशउदितःस्त्रीवंशाभेदतस्तव ५३ स्त्रीवंशेसर्वथाभेदःसम्यगित्ये वभातिनः ॥ ततोभेदेननारीणांवंशमुक्तंनिशामय ५४

दैवइति । दैवोथर्वानुप्राध्वंसनेतिनामांतरशालिनोमृत्युसंज्ञकात् । प्राध्वंसनोमृत्युस्तुप्रध्वंसनसंज्ञात्प्राप्तः । प्रध्वंसनसंज्ञस्तुएकर्षिसंज्ञात् । एकर्षिस्तुविप्रचित्तिसंज्ञात् ५० प्राप्तोव्यष्टेरिति । विप्र चित्तिर्व्यष्टिसंज्ञात् । व्यष्टिसंज्ञःसनारुसंज्ञात् । सनारुर्वाख्यःसनारुसंज्ञःससनातनात् । सनातनस्तुसनकात् ५१ परमेष्ठिनइति । ससनकःपरमेष्ठिनोविराजःसकाशात् । परमेष्ठीतुब्रह्मणोहिरण्यगर्भा त् । हिरण्यगर्भस्यजीवकोटिनिवेशाभिप्रायेणकेचिद्वेदांताःप्रवृत्ताः केचिदीश्वरकोटिनिवेशाभिप्रायेणेतिस्फुटमगुंमुपजामुंपजेतिवाक्यभाष्ये । तत्रेदंवाक्यमीश्वरकोटिनिवेशाभिप्रायेणैवप्रवृत्तमित्याह अतइति । अतोब्रह्मणःस्वयंभूरूपात्परमग्रेवक्तानास्तीति ५२ वंशांत्यवाक्यपंच्याचष्टे नमइति । तस्मैस्वयंभुवेब्रह्मणेसर्वदेवनमोस्तु कीदृशाय सर्वस्यजगतस्तथावेदात्मकद्रुमस्यमूलभूताय । उपसंह रति एषइति । एषउक्तोपंचम्यां श्रीवंशाभेदपक्षमाश्रित्यपुंवंशउक्तइत्यर्थः ५३ एवमभेदपक्षेणवंशत्रयंव्याख्यायभेदपक्षेणस्त्रीवंशव्याख्यानंप्रतिजानीते स्त्रीवंशइति । पुंवंशयोःसारूप्यभूयस्त्वेनाभे दांगीकारेपिस्त्रीवंशेसर्वथाभेदःप्रकरणभेदाद्रूपभेदाच्चभेदएवसम्यग्योग्यइतिनश्चेतसिप्रतिभातिततोभेदस्ययोग्यत्वाद्भेदेनवर्णितंनारीणांवंशंनिशामयशृण्विति ५४

पूर्वपौतिमाष्यमारभ्योत्तरोत्तरंगुरुनिर्देशक्रमेणासुरिपर्यंतांशः स्त्रीवंशस्यव्याख्यातोथपरमगुरुंब्रह्माणमारभ्याथोयः शिष्यपरंपरांसांजीवीपुत्रपर्यंतांदर्शयन्समानमासांजीवीत्यतःपरमंशंक्याकरोति ब्रह्मेतिपंचभिः । यःपुंवंशांतेस्वयंभूर्ब्रह्मासमीरितउक्तस्तस्माद्ब्रह्मणःप्रजापतिर्विराट्एतांविद्यांप्राप्तइति ५५ प्रजापतेरिति । प्रजापतेस्तुसकाशात्कावषेयःकवषायाअपत्यंतुरेतिसंज्ञकोमुनिः प्राप्तस्तस्मात्तुरात्कावषेयात्यज्ञवचःसंज्ञकोराजस्तंबायनः राजस्तंबस्ययुवापत्यरूपःप्राप्तः ५६ ततःकुश्रिरिति । ततोयज्ञवचसःकुश्रिसंज्ञःप्राप्तः एवमग्रेपि तस्मात्शांडिल्याद्वामकक्षायण संज्ञः । तस्मान्माहित्थीतिसंज्ञकः ५७ माहित्थेरिति । माहित्थेःकौत्सः कौत्सान्मांडव्योमांडव्यान्मांडूकायनिसंज्ञस्ततोमांडूकायनेःसांजीवीपुत्रःप्राप्तइत्यर्थः ५८ सांजीवीति । सांजी वीतनयस्यवंशपरंपराथोधःक्रमेणपौतिमाषीपुत्रांतायोक्तासैवविज्ञेया परंतुपुमाख्यांस्त्रीनामाऽघटितांपौतिमाष्यगौपवनादिसंज्ञांपरिहृत्यज्ञेया अयमत्रपक्षेविशेषइतिशेषः अंतर्भावंचपरिहायेत्यपि बोध्यम् ५९ समानमासांजीवीत्यतःपूर्वतनमवशिष्टभागंव्याकुर्वन्नादित्यादपिपरमगुरोःप्रवृत्तांसांजीवीपुत्रपर्यंतांशिष्यपरंपरांपूर्ववन्निर्दिशति स्त्रीवंशेपुनरित्येकादशभिः । स्त्रीवंशस्यमूलंस्वयंभू ब्रह्मरूपमेकमुक्तंततोन्यदपिमूलंमनीषिणःप्राहुः । किंतदित्याकांक्षायामाह यस्येत्यादि । यस्यादित्यदेवस्यस्वरूपभूतंभर्गस्तेजस्तद्वेदांतप्रसिद्धंमहात्मभिःसंसारभीरुभिर्वरणीयं सम्यग्भजनीयं कथंभज

**ब्रह्मास्वयंभूर्योयंतेपुंवंशांतेसमीरितः ॥ तस्मात्प्रजापतिःप्राप्तोविद्यामेतांसुदुर्लभाम् ५५ प्रजापतेस्तुसंप्राप्तःकावषेयस्तुरोमुनिः ॥ तस्माद्यज्ञवचानामराज स्तंबायनोमुनिः ५६ ततःकुश्रिस्ततोवात्स्योवात्स्यात्तशांडिल्यसंज्ञितः ॥ वामकक्षायणस्तस्मात्तस्मान्माहित्थिसंज्ञितः ५७ माहित्थेःकौत्सनामाप्तःकौत्सा न्मांडव्यसंज्ञितः ॥ मांडूकायनिर्मांडव्यात्सांजीवीतनयस्ततः ५८ सांजीवीतनयस्यादावुक्ताशिष्यपरंपरा ॥ स्त्रीनाम्नासैवविज्ञेयापुमाख्यांपरिहायहि ५९ स्त्रीवंशेपुनरन्यच्चमूलमाहुर्मनीषिणः ॥ यस्यदेवस्यभर्गस्तद्वरणीयंमहात्मभिः ॥ ध्यायेमेतिधियोयोनःप्रचोदयातिनित्यशः ६० आपोज्योतिस्तथाब्रह्मभूर्भुवः स्वारसोमृतम् ॥ ओंकारनामाभगवानादित्योमूलमीरितः ६१ आदित्यादंभिणीप्राप्तातस्यावाक्सर्वङ्गगा ॥ कश्यपोनैध्रुविर्वाचोनैध्रुवेःशिल्पकश्यपः ६२ कश्यपोहरितःशिल्पात्प्राप्तोवार्षगणोऽसितः ॥ हरितात्कश्यपाद्विद्यांबाध्योगश्चासितात्तथा ॥ जिह्वावानितिविख्यातस्ततोवाजश्रवामुनिः ६३**

नीयमित्यतआह तंध्यायेमेति । विजातीयवृत्तितिरस्कारेणसजातीयवृत्तिसंतानगोचरंकुर्मइति । तंकं योऽस्माकंधियोवृत्तीरंतर्यामीसन्धर्मादिषुचोदयतिप्रेरयति । तस्यसर्वात्मतामाह आपइति । योब्रह्माव्याकृतोपाधिब्रह्मरूपःअथापःहिरण्यगर्भोपाधिभूतापंचीकृतभूतरूपः ततोज्योतिर्वैश्वानरात्मकः भूरादिपदत्रयवाच्यलोकवेदावस्थादेवत्रयात्मकः रसःसारभूतः यद्वा वासंतरसवन्नानावस्थाविकासहेतुः अमृतंज्ञातोमोक्षहेतुः अध्यात्ममधिदैवंच तद्ध्यानप्रकारोयोगयाज्ञवल्क्येनोक्तः ‘रविमध्येस्थितःसोमःसोममध्येहुताशनः । तेजोमध्येस्थितंसत्यंसत्यमध्ये स्थितोच्युतः’ इति अतएवसार्द्धत्रिमात्रप्रणववाच्यः । एवंसशिरस्कसावित्रीप्रतिपाद्यःसभगवानादित्योपिनाममात्रेणभिन्नोमूलतयोक्तः । स्वारसइतिरेफलोपेनदीर्घः । इतिद्वयोरर्थः ६० ६१ आदित्यादिति । तस्मादादित्यादंभिणीसंज्ञादेवताविद्यांप्राप्ता तस्याअंभिण्याःसकाशात्सर्वेषामास्यगतावागभिमानिनीदेवताप्राप्ता वाचःसकाशात्तुनैध्रुविर्निध्रुवस्यापत्यंयःकश्यपःसमाप्तःनैध्रु वेःकश्यपात्तुशिल्पेतिनामांतरशालीकश्यपःप्राप्तएवमुत्तरत्रापि ६२ कश्यपइति । शिल्पात्कश्यपात्हरितःकश्यपःप्राप्तः । हरितात्कश्यपाद्वार्षगणोवृषगणस्यापत्यंयोऽसितनामासविद्यांप्राप्तः । अ सिताद्वार्षगणाज्जिह्वावानितिविख्यातोवाध्योगनामाप्राप्तः । ततोजिह्वावतोबाध्योगाद्वाजश्रवःसंज्ञोमुनिःप्राप्तइति ६३

वाजश्रवसइति । वाजश्रवसः कुश्रिसंज्ञः कुश्रितः उपवेशिसंज्ञः उपवेशेस्तु विद्यांसंप्राप्तादरुणसंज्ञादुद्दालकोमुनिःसंप्राप्तइति । तथाचोपवेशिशिष्योऽरुणःअरुणशिष्यउद्दालकइत्यर्थः ६४ याज्ञवल्क्यइति । ततउद्दालकाद्याज्ञवल्क्यःसंप्राप्तः । याज्ञवल्क्यादासुरिरासुरेरासुरायणइति ६५ आसुरायणतइति । आसुरायणात्प्राश्नीपुत्रः एतस्मात्प्राश्नीपुत्रात्ससांजीवीपुत्रोऽवाप्तवान् । सकः यःस्वयंभुवःप्रसृतविद्यासंप्रदायेमांडूकायनेःशिष्यउक्तइति ६६ पौतिमाषीति । विपर्ययेणप्राचीनयोगीपुत्राद्याःपौतिमाषीसुतपर्यंतायेउक्ताः कीदृशाः स्त्रीनामांताःसत्स्त्रीणांमातॄणां नामभिरंतामनोहराःप्रशंसांयतइतियावत् 'अंतःप्रांतेंतिकेनाशेस्वरूपेऽतियनोहरे' इतिविश्वः । तेसर्वेपुन्नामवर्जिताश्चकार्याः एषपौतिमाषीसुतांतरूपासांजीवीतनयस्यशिष्यपरंपराज्ञेयेति ६७ द्विधेति । आदित्यस्तस्वयंभुवश्चविनिर्गतप्रवृत्ताविद्याद्विधासतीसांजीवीतनयंप्राप्यैकतांगतेति ६८ लोकेनदीयथेतिदृष्टांतंस्फुटयति शृंगेति ६९ दार्ष्टांतिकेयोजयति ब्रह्मेति । ब्रह्मणःसूर्याद्यव्यवयिकनिर्गमेणअन्यवद्वासमानाइयंविद्यारूपानदीसांजीवीपुत्रंप्राप्यशिष्यद्वैधंशिष्यसंबंधिनींद्विरूपतामितियावत् । जहौत्यक्तवतीति ७० एवंस्त्रीवंशभेदपक्षेणव्याकृत्यात्रपक्षेपुंवंशयोर्यावत्सारूप्यंयावद्वैरूप्यंतदभिनयति पौतिमाष्यमित्येकादशभिः । मधुनःकांडेबृहदारण्यकस्यतृतीयचतुर्थाध्यायात्मकेयाज्ञवल्क्यस्यकांडेचपंचमषष्ठाध्यायरूपेऽयंवंशःपौतिमाष्यमारभ्यस्वयंभूब्रह्मपर्यं

वाजश्रवसश्चकुश्रिरुपवेशिश्चकुश्रितः ॥ उपवेशेस्तुसंप्राप्तान्मुनिरुद्दालकोरुणात् ६४ याज्ञवल्क्यस्ततःप्राप्तोयाज्ञवल्क्यात्तथासुरिः ॥ आसुरायणनामापिप्राप्तवानासुरेस्त्वयम् ६५ आसुरायणतःप्राप्तःप्राश्नीपुत्रोमहामुनिः ॥ मांडूकायनिशिष्योयःसांजीवीपुत्रईरितः ॥ सएवपुनरप्येतांप्राश्नीपुत्रादवाप्तवान् ६६ पौतिमाषीसुतांतायेस्त्रीनामांताउदीरिताः ॥ प्राचीनयोगीपुत्राद्याःसर्वेपुन्नामवर्जिताः ॥ सांजीवीतनयस्यैषाज्ञेयाशिष्यपरंपरा ६७ द्विधाविनिर्गताविद्याह्यादित्याच्चस्वयंभुवः ॥ सांजीवीतनयेत्वैक्यंप्राप्तालोकेनदीयथा ६८ शृंगद्वयाद्विनिर्गम्यपर्वतस्ययथानदी ॥ कियद्दूरंसमागत्यक्वचिदेकेवजायते ६९ ब्रह्मसूर्येविनिर्यातापिह्यन्यविद्यानदीतथा ॥ सांजीवीतनयंप्राप्यशिष्यद्वैधंजहावियम् ७० पौतिमाष्यंसमारभ्ययावद्ब्रह्माणमीश्वरम् ॥ समानोमधुनःकांडेयाज्ञवल्क्यस्यचाप्ययम् ७१ मधुकांडेतुवंशस्यह्याग्निवेश्यादियंभिदा ॥ शांडिल्याख्यानभिम्लातावाग्निवेश्यस्यद्वौगुरू ७२ आनभिम्लातनाम्नोपिह्यानभिम्लाततोगुरुः ॥ तस्यापिगौतमस्तस्यगुरूस्यातामिमौमुनी ७३ सैतवप्राचीनयोग्यौपाराशर्यस्ततोगुरुः ॥ पाराशर्यस्यतुमुनेर्भारद्वाजोमुनिर्गुरुः ७४ भारद्वाजस्यतस्यास्यभारद्वाजाख्यगौतमौ ॥ गुरुर्गौतमनाम्नोपिभारद्वाजोऽपरोभवत् ७५ भारद्वाजस्यतुगुरुःपाराशर्यइतीरितः ॥ बैजवापायनस्तस्यतस्यस्यात्कौशिकायनिः ७६

तःसमानःसमानाकारःप्रायेणेतिशेषः ७१ तत्सारूप्यमाग्निवेश्यकौशिकायन्योरंतरालवर्तिषुनास्तीतिवैरूप्यंतत्रावतिष्ठतइतिवक्तुंतावन्मधुकांडेयोविशेषस्तमाह मधुकांडेत्विति पंचभिः । आग्निवेश्याच्चदनंतरंइयंवक्ष्यमाणाभिदाविशेषइत्यर्थः । मधुकांडेकीर्तितस्यआग्निवेश्यस्यद्वौगुरूएकःशांडिल्योद्वितीयआनभिम्लातइति ७२ आनभिम्लातेति । तयोर्मध्येआनभिम्लातनाम्नोगुरुरपिअपरआनभिम्लातइतिशेषः । सकीदृशः भिन्नादानभिम्लातात्लब्धविद्यइत्यपिशेषः । तथाचानभिम्लातस्यगुरुरपिआनभिम्लातस्यगुरुरपरआनभिम्लातइत्यर्थः । तस्यतृतीयानभिम्लातस्यगौतमोगुरुस्तस्यगौतमस्यमौउत्तरश्लोकोक्तौसैतवप्राचीनयोग्यसंज्ञौमुनीगुरूइत्यर्थः ७३ सैतवेति । ततस्तयोःसैतवप्राचीनयोग्ययोर्गुरुःपाराशर्यःपाराशर्यस्यगुरुर्भारद्वाजइति ७४ भारद्वाजस्येति । तस्यास्यपाराशर्यगुरोर्भारद्वाजस्यापरोभारद्वाजोगौतमश्चेतिद्वौगुरू । तयोर्मध्येगौतमनाम्नोगुरुरपरोभारद्वाजइति ७५ भारद्वाजस्यतुगुरुरिति । गौतमगुरोर्भारद्वाजस्यापरपाराशर्योगुरुः । तस्यपाराशर्यस्यबैजवापायनः । तस्यबैजवापायनस्यकौशिकायनिर्गुरुरिति ७६

याज्ञवल्क्यकांडीयं विशेषमाह याज्ञावल्क्यस्येतिचतुर्भिः । अग्निवेश्यगुरुर्गार्ग्यस्तस्यगार्ग्यस्यापरोगार्ग्योगुरुः । तस्यापरगार्ग्यस्यगुरुर्गौतमस्तस्यसैतवइति ७७ पाराशर्यायणइति । तस्यगौतमगुरोःसैतवस्यपाराशर्यायणोगुरुः । तस्यपाराशर्यायणस्यगार्ग्यायणस्तस्यगार्ग्यायणस्योद्दालकायनः ७८ जाबालायनेति । तस्योद्दालकायनस्यगुरुर्जाबालायनस्तस्यजाबालायनस्यमाध्यंदिनायनस्तस्यमाध्यंदिनायनस्यसौकरायणः ७९ सौकरायणनाम्नइति । पूर्वार्द्धस्पष्टम् । एतस्यकाषायणस्यसायकायनस्तस्यसायकायनस्यकौशिकायनिरिति ८० एषएवेति । कांडयोर्मधुयाज्ञवल्क्यसंबंधिनोरुक्तस्यपूर्ववंशस्यविशेषएषएवएतावानेव एतावद्विशेषादेवचकेचिद्भेदमाहुरितिशेषः । केचित्त्वेकएवायंवंशःकांडत्रयांतेपुकीर्तितःसन्कांडोपाधिकंभेदंगतइत्याहुः । अपरेतुकल्पभेदादस्यभेदइत्याहुरिति ८१ सिद्धांतकोटिमाह अभेदमिति । 'अपरंत्वधुनार्थेस्यात्' इतिविश्वः । तथाचापरमधुनासिद्धांतदशायामितियावत् । केचिद्भाष्यकारादयोवेदार्थस्याद्वैतस्यदर्शनशीलाअभेदमेवप्राहुः तथाचभाष्यं तच्चैतद्ब्रह्मप्रजापतिप्रबंधपरंपरयाऽऽगत्यास्मासुप्रविसृतमिति । नन्वभेदपक्षेएकवारंकीर्तनेनैवसर्वेष्टसिद्धौत्रिधाकीर्त्तनंकिमर्थमतआह नामेति । यथैकएवप्राणोज्येष्ठश्रेष्ठादिगुणभेदेनचिंतनाद्भिन्नफलप्रदस्तथैकःपुरुषःपरमात्मातत्तन्नामधेयभेदेनभिन्नइवनानाफलानिददातीतिप्रसिद्धम् । तथाचमधुकांडांतेविशिष्टानुपूर्वीकःकी-

याज्ञवल्क्यस्यकांडेतुभेदोयस्तंनिशामय ॥ आग्निवेश्याख्यस्यगुरुर्गार्ग्यस्तस्यापरोभवत् ॥ गार्ग्यस्तस्यापिचगुरुर्गौतमस्तस्यसैतवः ७७ पाराशर्यायणस्तस्यसैतवस्यगुरुर्मतः ॥ तस्यगार्ग्यायणस्तस्यगुरुरुद्दालकायनः ७८ जाबालायननामाभूद्गुरुस्तस्यमहात्मनः ॥ माध्यंदिनायनस्तस्यतस्याभूत्सौकरायणः ७९ सौकरायणनाम्नोपिगुरुःकाषायणोभवत् ॥ सायकायनएतस्यतस्याभूत्कौशिकायनिः ८० एषएवविशेषोत्रकांडयोर्नापरोस्तिहि ॥ कांडभेदादयंवंशस्त्रिविधःकैश्चिदीरितः ॥ अपरैःकल्पभेदेनकथितोमुनिसत्तमैः ८१ अभेदमपरंप्राहुःकेचिद्वेदार्थदर्शिनः ॥ नामधेयविभेदोयंपुरुषेनास्तिवैभिदा ८२ त्रिवंशेपिचभेदोयःसोपिनात्यंतभेदकृत् ॥ कौशिकायन्याग्निवेश्यमध्येवंशद्वयंयथा ८३ पुरुषाअधिकाःक्वापिक्वचिन्न्यूनाउदाहृताः ॥ गुरुद्वयंक्वचित्क्वापिसंप्रदायद्वयंतथा ८४ आदित्योपिनभिन्नोहिब्रह्मणोपिस्वयंभुवः ॥ परमेष्ठ्याद्यानततोभेदोज्ञेयोपिसोपिच ८५ सांजीवीपुत्रतःसाम्यंश्रुतिराहस्वयंयतः ॥ आपौतिमापीतनयंभेदोवंशेपुतेनन ८६

र्तितोवंशआगमप्रधानमधुविद्याप्रतिबंधकमदृष्टंशमयति याज्ञवल्क्यकांडांत्यस्तुउपपत्तिप्रधानविद्याप्रतिबंधकमंत्यस्तुसर्वविद्याप्रतिबंधकमित्युक्तम् । अपरेइतिपाठेपिपरेपूर्वपक्षिणस्तेभ्योभिन्नाअपरेसिद्धांतिनइत्यर्थः ८२ नन्वेवंसतित्रिवंशेसर्वथाभेदःसम्यगितिसंप्रदायादिभेदेनभेदःकथमुक्तोतआहत्रिवंशइति । त्रिवंशेपियोभेदोविशेषःसोपिनात्यंतभेदप्रयोजकः । एतदेवस्फुटयति कौशिकेति । यथाकौशिकायनेराग्निवेश्यस्यचमध्येवंशद्वयंवंशभेदव्यवहारप्रयोजकंनामभेदादिनात्यंतभेदकृत्तथान्यूनाधिकपुरुषाभिधानंक्वचिद्गुरुद्वयाभिधानंसंप्रदायद्वयाभिधानंचनात्यंतभेदकृत् । धर्मिणएकत्वेप्रबलप्रमाणेननिश्चितेधर्मभेदःप्रतिहत्यधर्मेष्वेवपर्यवस्यतीतिद्वयोर्भावः ८३ । ८४ वस्तुतःसंप्रदायभेदोपिनास्तीत्याह आदित्यइति । हियतःआदित्योब्रह्मणोनभिन्नः सावित्र्यासर्वात्मतायाउक्तत्वादितिभावः । एवंस्वयंभुवःसकाशात्परमेष्ठ्याद्यानभिन्नाइतिसंबंधः । विराजोज्ञानेनतद्भावंप्राप्तानामृषीणांचानौपाधिकभेदस्यदुर्वचत्वादितिभावः । फलितमाह ततइति । ततोनाममात्रेभेदोधर्मिणितुसोभेदएवज्ञेयइत्यर्थः ८५ ब्रह्मणआरभ्यसांजीवीपुत्रपर्यंतंवंशोवाजसनेयिपंचदशशाखासुसमानाकारइत्यर्थिकासमानमासांजीवीपुत्रादितिश्रुतिरप्यभेदपक्षेऽनुकूलेत्याह सांजीवीति । सांजीवीपुत्रमारभ्यब्रह्मपर्यंतमुक्ताश्रुतिःसाम्यंसमानाकारतांयतआह तेनमायोऽभेदाभिधानेनपौतिमाषीपुत्रांतंभेदोनांकित्वभेदएवेत्यर्थः ८६

अथवातिष्ठतुभेदाभेदविचारःएतावतांगुरूणांस्मरणमवश्यंकर्त्तव्यमित्येतावद्विवक्षितमित्याह भेदइति । स्मर्तव्याइतिशेषः । अपरेयजुर्वेदभिन्नेवेदेतुनस्मर्तव्याइत्यर्थः । नतुअपरइतिगुरुविशेषणं माध्यंदिनादीअधिकानामप्यभिधानात् । यद्वा यजुर्वेदब्रह्मविद्यायाएतेएवसंप्रदायप्रवर्त्तकाःस्मर्तव्याइत्यर्थः । अधिकास्तुकर्मकांडज्ञानेउपयुक्ताइतिभावः ८७ सर्वेषांस्मरणाशक्तौपौतिमाष्योव श्यंस्मरणीयइत्याह सर्वथैवेति । अस्माकंमानवलोकवर्तिनांद्विजानांगुरुःपौतिमाष्योज्ञेयः अत्रलोकेतेनैवविद्याप्रवर्तनादित्युक्तं । कीदृशःपौतिमाष्यःस्त्रीपुंसयोरुभयोरपिवंशयोःश्रुतइतिशेषः ८८ उपसंहरति वंशइति । त्वत्पृष्टंवक्तुमेवात्रप्रकरणेएषवंशःसमाख्यातः हियस्मादस्मिन्वंशेभवंतीचित्राऽद्भुताकथामयाश्रुता । कीदृशेवंशे पौरुषेपुरुषाणांमहाप्रभावाणामयंपौरुषस्तस्मिन् तस्येदमि त्यण् ८९ एवंमंगलार्थमादौवंशब्राह्मणार्थंप्रदर्श्याथबृहदारण्यकतृतीयचतुर्थाध्यायरूपंमधुकांडार्थंबुद्धिसौकर्यायेतिहासविषयादर्शयितुमितिहासमवतारयति ऋषिणेति । भोशिष्यत्वमिमंमध्या यांतंयावत्प्रपंच्यमानमितिहासंशृणु । कीदृशं केनचिदृषिणामंत्रदर्शिनाश्विनौवीक्ष्यकोपतःप्रोक्तं । पुनःकीदृशं इंद्रश्चाश्विनौचतेषांमर्मरूपंरहस्यव्यवहारप्रकाशकमितियावत् ९० एतदितिहास सूचकौतद्वान्नरासनयइत्यादिकौद्वौमंत्रौ चतुर्थाध्यायांतेमधुब्राह्मणानंतरंपठितौतत्रतयोःप्रथमस्यपूर्वार्द्धार्थइदंवैतदित्यादिपूर्ववाक्यार्थसहितमेतद्वृत्तंजानन्कश्चिदृषिराश्विनौप्रत्युक्तवान्हेनरानराकारा

भेदोवायदिवाऽभेदःसर्वथागुरवस्त्विमे ॥ यजुर्वेदेसमाख्याताविद्यायानापरेक्वचित् ८७ सर्वथैवगुरुर्ज्ञेयोह्यस्माकंतुद्विजन्मनाम् ॥ स्त्रीपुंसयोःपौतिमाष्योवंशयो रुभयोरपि ८८ वंशएषसमाख्यातस्त्वत्पृष्टंवक्तुमत्रहि ॥ पौरुषेस्मिन्यतोवंशेकथाचित्राश्रुतामया ८९ ऋषिणाकेनचित्प्रोक्तमितिहासमिमंशृणु ॥ इंद्राश्विनो र्मर्मरूपमश्विनौवीक्ष्यकोपतः ९० ऋषिःकश्चित्पुराप्राप्तोह्यश्विनौकार्यगौरवात् ॥ अवज्ञातस्ततस्ताभ्यामूचेतौकुपितोहिसः ९१ अश्विनौयुवयोर्जानेकर्मपा पतमंकृतम् ॥ घनाघनोमहावृष्टिंप्रकटीकुरुतेयथा ९२ प्रकटंदुष्कृतंकर्मकरिष्यामितथाह्यहम् ॥ करिष्यतोयदानैतत्कार्यंमेमोहितौयुवाम् ९३ एवमुक्तौमहा त्मानावश्विनौदीर्घदर्शिनौ ॥ आवयोःकीर्तिरेवेतिमत्वेत्थंप्रोचतुर्मुनिम् ९४

वश्विनौसनयेविद्यालाभायवांयुवयोर्दंसःकर्मउग्ररूपंआविःकृणोमिप्रकटीकरोमितन्यतुर्मेघोवृष्टिंनवृष्टिमिवेत्याकारंत्रिभिर्दर्शयन्कोपतइत्युक्तंस्फुटयति ऋषिरिति । कस्मैचित्कार्यायाश्विनोः समीपंगतःकश्चिदृषिस्ताभ्यामश्विभ्यांप्रत्याख्यानेनावज्ञातःसंस्ततोऽवज्ञारूपहेतोःकुपितश्चसन्निदमुवाचेति । यद्यप्यत्रभाष्यकारैर्ऋषिर्मंत्रइतिव्याख्यातंतथापिमंत्रमंत्रद्रष्टोरभेदस्तैर्विवक्षितइत्य विरोधः ९१ अश्विनावित्ति । हेअश्विनौअहंयुवयोःपापतमंकर्मयुवाभ्यांयद्दहसिकृतंतज्जाने युवांमोहितौगर्ववशात्कर्तव्यानवधानवंतौसंतौममैतत्कार्यंचेन्नकरिष्यतस्तर्हिघनाघनोमेघोयथावृष्टिंप्रकटी कुरुतेतथाहंयुवयोर्दुष्कृतंकर्मप्रकटीकरिष्यामीतिद्वयोःसंबंधः ९२ । ९३ एवंमंत्रपूर्वार्धार्थेनेतिहासमुत्थाप्यप्रथममंत्रोत्तरार्धेद्वितीयमंत्रश्चव्याख्याक्रमप्राप्तमधुब्राह्मणव्याख्यानानंतरमेवव्याख्या स्यतेइतिमनसिनिधायमूलव्याख्यारंभोपयोगिनींकथांतावत्षडधिकशतश्लोकैःप्रपंचयति एवमुक्तावित्यादिना । एवमृषिणाप्रोक्तौमहात्मानौमहान्अविद्याकृतपरिच्छेदप्रतीतःआत्माययोस्तौत थायतोदीर्घदर्शिनौविद्वांसौएतादृशावश्विनौतंकुपितमृषिंप्रत्यूचतुः किंकृत्वा इतिमत्वा इतिकिं यदनेनावयोरुग्रकर्माविष्करणंतदावयोःकीर्तिरूपमेवेति । अज्ञस्यदुष्कृतकर्माविष्करणेहितस्यभावि दुर्गतिसूचनेननिंदाभवतिमहात्मनांतूग्रंकर्मअहोएषांविद्याप्रभावोयदेतैःकृतेनैतादृशेनकर्मणालोमापिनच्छिन्नंयथैदकृतेनविश्वरूपपतिवधादिनेतिप्रशंसामेवगमयतीतिभावः ९४

अश्विनावूचतुः आवाभ्यामितिद्वाभ्यां । आवाभ्यांक्रूरजनवत्किंदुष्कृतंकृतंकथंवाकृतंकेननिमित्तेनवाकृतंतत्सर्वंनोआवयोःपुरतोवर्णयेति ९५ रहस्यमिति । आवयोःरहस्यंगुह्यंकर्मसम्यक्चेद्वक्ष्यसिवदिष्यसिततोरहस्याभिधानानंतरंत्वदीयंकार्यंकरिष्यावः । नौआवयोरेतद्वाक्यमनृतंनकिंतुसत्यमेवेति ९६ इत्युक्तइति । इतिइत्थंअश्विभ्यामुक्तेसतिआत्मीयकार्यसिद्धिकामोमुनिस्तदीयंतयोरश्विनोःसंबंधिकर्मनिखिलंनिमित्तेनसहितंतयोरश्विनोःपुरतोजगौउक्तवानिति ९७ ऋषिरादितआरभ्यतद्वृत्तमनुकीर्तयति परमेष्ठिनमितिअध्यायान्तंयावद्ग्रंथेन । ब्रह्मणःशिष्यंपरमेष्ठिनमारभ्यपौतिमाष्यपर्यंतःशिष्यैश्चित्रश्चयोयंमधुकांडांतेवर्णितोविद्यावंशोऽनेकधाप्रवृत्तस्तस्मिन्पुंवंशेपुंवंशतयाप्रसिद्धेब्रह्मणोऽधःक्रमेणसंख्ययायोद्वादशोदध्यङ्ङाथर्वणइतिप्रसिद्धोदेवस्याथर्वणःशिष्योयुवयोर्गुरुर्ब्रह्मविद्यासंपन्नोमधुकांडार्थविच्चसमुनिर्युवांप्रतिवेदंपाठतःसमध्याप्ययुवयोरविरक्तयोरयोग्यंवेदांतभागार्थंविहायकर्मकांडार्थमात्रमब्रवीदितित्रयाणांसंबंधः ९८ । ९९ । १०० ऊचथुरिति । युवांतंदधीचआथर्वणात्प्राप्तंवेदंयथाधीतंयथाश्रुतंचत्वाष्ट्रायविश्वरूपायोचथुरुक्तवंतौसोपिविश्वरूपःअन्यस्मैआभूतयेत्वाष्ट्रायसोपिआभूतिस्त्वाष्ट्रोपास्यायाङ्गिरसायोवाचेति । गुरोरक्षरग्रह

आवाभ्यांकिंकृतंकर्मदुष्कृतंक्रूरवत्कथम् ॥ केनवापिनिमित्तेनतन्नोवर्णयभोमुने ९५ रहस्यमावयोश्चेत्त्वंसम्यग्वक्ष्यसिमानद ॥ करिष्यावस्ततःकार्यंत्वदीयंनानृतंहिनौ ९६ इत्युक्तेमुनिरप्यात्मकार्यार्थीसर्ववित्तमः ॥ तदीयंकर्मनिखिलंसनिमित्तंतयोर्जगौ ९७ परमेष्ठिनमारभ्यपौतिमाष्यावधिर्महान् ॥ विद्यावंशःप्रवृत्तोयंचित्रःशिष्यैरनेकधा ९८ ब्रह्मणोद्वादशोयस्तुदध्यङ्ङाथर्वणःस्मृतः ॥ पुंवंशेथर्वणःशिष्योदेवस्ययुवयोर्गुरुः ९९ ब्रह्मविद्याभिसंपन्नोमधुकांडार्थविन्मुनिः ॥ युवांवेदंसमध्याप्यकर्मकांडार्थमब्रवीत् ॥ वेदांतार्थंविहायैवयुवयोरविरक्तयोः १०० ऊचथुश्चयुवांतंहियथाधीतंयथाश्रुतम् ॥ त्वाष्ट्रायविश्वरूपायह्यन्यस्मैसोपिसोपिच १०१ एवंपरंपराप्राप्तापौतिमाष्येत्वियंपरा ॥ विद्यासापौतिमाष्योभूद्गुरुःसर्वद्विजन्मनाम् १०२ दध्यङ्ङाथर्वणःपूर्वंब्रह्मज्ञानान्महायशाः ॥ संप्रदायंप्रवर्त्यवंक्वाप्यवात्सीत्कृताश्रमः १०३ देवानामसुराणांचमनुष्याणामपिद्विजः ॥ समोभूत्वातदातत्रनिवसन्नकरोत्सुखम् १०४ यस्मैयद्रोचतेतस्मैफलंसोपायमादिशत् ॥ उदर्कानपितत्रत्यान्सुखदुःखकरान्बहून् १०५ ब्रह्मविद्यार्थिनःपुंसएवंवक्तिद्विजोत्तमः ॥ अधिकारंसाधयतपश्चाद्वक्ष्यामिवस्त्विमाम् १०६

णमध्ययनंश्रवणंतुतात्पर्यावधारणमितिभेदः १०१ एवमिति । एवंविधयापरंपरयाइयंसाप्रसिद्धापराउत्कृष्टाविद्यापौतिमाष्येप्राप्तासपौतिमाष्योनृलोकवर्तिनांद्विजानांगुरुरभूदिति १०२ दध्यङ्ङिति । एवंसंप्रदायंप्रवर्त्यब्रह्मज्ञानहेतुकंमहद्यशःप्राप्तोदध्यङ्ङाथर्वणःक्वापिदेशेकृताश्रमःसन्नवात्सीद्वासंकृतवानिति १०३ देवानामिति । समःपक्षपातहीनतयाउपकारकोभूत्वातत्राश्रमेनिवसन्देवादीनांसुखमकरोत्सुखप्रदोऽभूदितियावत् १०४ यस्मैइति । यस्मैयाद्दशायाधिकारिणेयद्यत्फलंस्वर्गपशुपुत्रवैरिमरणादिरूपंरोचतेतस्मैतत्तत्फलंसोपायमादिशत्अस्मिन्यागादिरूपउपायेकृतेइदंफलंभवतीत्युपदिष्टवान् तेषांपृच्छतांहितकाम्ययातत्रत्यांस्तेषुफलेषुभाविनःसुखदुःखकरानुदर्कानुत्तराणिफलान्यपिबहून्बहुविधानुपादिशत् । अस्मिन्यागेकृतेस्वर्गोभविष्यतिपरंतुपातादिदुःखंसत्कुलेजन्मादिचभविष्यति । अस्मिन्यागेकृतेशत्रुमरणंभविष्यतितदनंतरंनरकोपिभविष्यति । अस्मिन्कृतेचित्तशुद्धिस्तदनंतरंचज्ञानाधिकारलाभइत्यादिविधयोपदिष्टवानित्यर्थः १०५ ब्रह्मेति । ब्रह्मविद्याकामान्जनान्प्रतितुएवंवक्तिस्मयद्यूयमधिकारंसाधनचतुष्टयसंपत्तिरूपंसंपादयततत्संपत्तेरनंतरमिमांब्रह्मविद्यांवक्ष्यामिउपदेक्ष्यामीति १०६

एवमिति । एवंउक्तविधयातस्मिन्दधीचिव्यवस्थयावर्त्तमानेसतिअस्यमहात्मनःकीर्तिःसर्वत्रप्रसृतवतीत्यर्थः १०७ तत्रापीति । हेअश्विनौतत्रसमत्वेनवर्त्तमानत्वेपितस्यदधीचोमहात्मनःस्नेहो युवयोर्विषयेभूयानधिकोऽभूद्यतोयुवांतस्यवाल्यमारभ्यशिष्याविति १०८ युवयोरिति । एवंस्नेहाधिक्येपिभवद्भ्यांयाचितोपिचयुवयोर्विषयासक्तिंवीक्ष्यासौदध्यङ्ङाथर्वणःपूर्णात्मनोविद्यांनाऽदात् नदत्तवान् युवयोस्तत्राधिकाराभावादिति १०९ अकालेहीति । कीदृशोमुनिःअधिकारिणामधिकारमिच्छतांजनानामधिकारसंपादनेतत्परतांसंपादयितुमेवंनित्यंवदन् एवंकथं अकालेवृष्टिः सूर्यस्यपुरःप्रकाशायनिहितोदीपः । अजीर्णेपूर्वान्नेअन्नंभुक्तं । देयवस्तुनिस्पृहाहीनेदत्तंच एतानियथाविफलानितथाधिकारंविनाब्रह्मवेदनमितिद्वयोःसंबंधः ११० । १११ इत्थंमुनौवर्तमानेसतिभवतोरिंद्रेणद्वेषःकुतश्चिन्निमित्ताज्जातइत्याह रूपेति । कश्चिन्निमित्तेसतियुवांदेवराजस्यावज्ञांकृतवंतौ यतोरूपादिभिर्गर्विताविति ११२ यज्ञभागमिति । अवज्ञांदृष्ट्वाइंद्रोयुवयोर्यज्ञभागंनिवारितवान् । निवारणमभिनयति अपूताविति । एतावश्विनौयतोभिषजौचिकित्सकौपूर्वजन्मनिनराधमौचास्तामतोऽपूतावशुद्धौअशुद्धत्वादेवानयोर्यज्ञेयोभागआश्विनग्रहादिरूपःसोऽद्यारभ्यमाभूदियमेवमा

एवंव्यवस्थितेतस्मिन्नगमत्कीर्तिरस्यहि ॥ लोकत्रयीदिशश्चैवप्रदिशोपिमहात्मनः १०७ तत्रापियुवयोःस्नेहस्तस्यभूयानभून्मुनेः ॥ बाल्यमारभ्यशिष्यौचयुवां तस्यमहात्मनः १०८ युवयोर्विषयासक्तिंवीक्ष्यासौयाचितोपिहि ॥ नादात्पूर्णात्मनोविद्यामधिकारविवर्जनात् १०९ अकालेहियथावृष्टिर्यथादीपोदिवाकरे ॥ अन्नंयथात्वजीर्णेस्याद्दत्तंवापिगतस्पृहे ११० अधिकारंविनातद्वद्विफलंब्रह्मबोधनम् ॥ एवंवदन्मुनिर्नित्यमिच्छतामधिकारिणाम् १११ रूपविद्याभिसंपन्नौ तरुणौयुद्धदुर्मदौ ॥ अवज्ञांदेवराजस्यचक्रातेकचिदेवहि ११२ यज्ञभागंसुरेंद्रोपियुवयोर्विन्यवारयत् ॥ अपूतौभिषजावेतौभूतपूर्वौनराधमौ ॥ यज्ञभागोनयोर्माभून्ममाज्ञेयंजगत्त्रये ११३ सुराणांचमुनीनांचसमक्षंह्येवमीरिते ॥ शक्रेणयज्ञभागोऽगाद्युवयोःसर्वयज्ञतः ११४ युवामेवंसुदुर्दांतौयज्ञभागविवर्जितौ ॥ संततौस्वगुरुंप्राप्यभागार्थंपर्यपृच्छतम् ११५ शक्रेणाद्यसभामध्येयज्ञभागोहृतोगुरो ॥ आवयोःकिंतुयुक्तंनौकथयत्वंमहामुने ११६ आवांयोधयितुंशक्तौशक्रंसामरमाहवे ॥ अनुज्ञातस्तवगुरोसंदेहंमाकृथाःक्वचित् ११७ ब्रह्माणंवामदेवंवाहरिंशक्रमथापिवा ॥ एकएवावयोर्जेतुंशक्तोलोकत्रयीवृतम् ११८ आवयोर्मरणंनैवशस्त्रैरस्त्रैश्चदारुणैः ॥ व्याध्यादिभिर्यतश्चावांजानीवोमृतजीवनीम् ११९ मायाश्चनस्पृशंत्यावांसुरासुरनरैःकृताः ॥ विषाणिचविचित्राणिजंगमानिस्थिराणिच १२०



कारात्रिलोक्यांममाज्ञेति ११३ सुराणामिति । देवादीनांसंमुखेइंद्रेणैवमुक्तेसतियुवयोर्यज्ञभागःसर्वेभ्योयज्ञेभ्योऽगात्निवृत्तइत्यर्थः ११४ युवामिति । एवमनेनप्रकारेणदुर्दांतत्वाद्यज्ञभागहीनौ युवांसंततौसंतौस्वगुरुंदध्यंचमाथर्वणंप्राप्यपुनर्यज्ञभागलाभायोपायंपृष्टवंताविति ११५ गुरोरग्रेऽश्विनोर्वाक्यगणमभिनयति शक्रेणेतिदशभिः । अद्येंद्रेणआवयोर्यज्ञभागोहृतोनिवारितस्तत्रावयोः किंकर्त्तुंयोग्यंतत्कथयेति ११६ आवयोःसामर्थ्यंतावच्छ्रोतव्यमित्याशयेनाहतुः आवामित्यादिना । सामरंशक्रमपियोधयितुंयुद्धेनतर्पयितुमितियावत् आवांशक्तौस्वोयद्याज्ञावेतवाज्ञास्यादिति ११७ आवयोरेकोपिब्रह्मादीन्सपरिकरानजेतुंशक्तःकिमुतसहिताविति त्याह ब्रह्माणमिति ११८ शक्तावेहेतुमाहतुः आवयोरिति । यतआवयोःशस्त्राद्यैर्मरणंनमृतजीविन्याविद्ययासहितत्वादिति ११९ प्रभावांतरमाहतुः मायाश्चेति । देवादिप्रयुक्तामायाश्चावांनस्पृशंतितथाविषाणिजंगमानिसर्पादिसंबंधीनिस्थिराणिस्थावराणिकालकूटादीनिप्रत्येकंविचित्राणिनस्पृशंति १२०

औपधानीति । शत्रुभिःप्रयुक्तानिक्रूरौपधानिमंत्राश्चनस्पृशंति तथाभूतानिपिशाचाश्चनस्पृशंति द्विजोत्तमैःप्रयुक्ताअभिचाराःशत्रुमरणहेतवःश्येनाद्यायागाःशापाश्चनस्पृशंतीति १२१ श्लोकद्वयोक्तेऽर्थेहेतुमाहथुः आवामिति । प्रतीकारंनिवर्तनोपायमावांजानीवः यतस्त्वदनुग्रहात्स्वभावाच्चसिद्धिशालित्वेनसर्वाधिकौ १२२ एवंस्वीयांपरैरजेयतामभिधायपरेषांयुद्धंविनाप्यौषधमंत्रादिप्रयोगमात्रेणमारणादिकंकर्तुंशक्तौस्वइत्याहथुः एकौषधेति । स्वर्गेवहंत्यागंगायाःसलिलस्यमध्येएकस्यौषधस्यप्रक्षेपमात्रेणदेवैःसहितमिंद्रंक्षणादावांमारयावइति १२३ उच्चाटयावइति । उच्चाटयावः उद्विग्नचित्तंकुर्वः । स्वर्गात्क्षितौवापातयावः एतेनस्तंभनंसूचितम् आकाशेउड्डीयमानानांपक्ष्यादीनामुड्डयनशक्तिस्तंभेनभूमौपातप्रसिद्धेरिति । अथवाएतंसामरंदेवराजंदिगंतरगतिंगतंदिशांमध्येभ्रमंतंमोहयावःमोहितंकुर्वः । मोहवशादन्यदिशिप्रस्थितमन्यदिग्गतंकुर्वइतियावत् १२४ वशीकरणक्षमतामाहथुः उत्पादयावइति । अतिमोहतइतिल्यब्लोपेपंचमी । अप्सरस्सुदेवानांमुनीनांचकामःपुराणादौप्रसिद्धः । आवांतुसामरस्यशचीपतेर्वामुनीनांवाऽतिमोहंसंपाद्यअधमानांमर्त्यलोकवधूनामेवसंबंधिनंकाममभिलापमुत्पादयावइति । अत्रद्वितीयोवाशब्दएवार्थेबोध्यः 'वास्याद्विकल्पोपमयोरेवार्थेपिसमुच्चये' इतिविश्वात् । प्रथमतृतीययोस्तुसमुच्चयवाचितेतिविशेषः १२५ एवमादीति । एवमादिवाक्यसमूहैरात्मीयंबलंदधीचोगुरोःपुरतोविश्वासायोक्तमिति १२६ सविचार्येति । सभवतांगुरुर्विचार्ययुवांप्रतिवचनमब्रवीत् हेअश्विनौयुवांशत्रुतापिनौभूत्वाक्रोधसंज्ञस्यांतरशत्रोर्वशंमायातंमाप्राप्तौभवतमिति १२७ क्रोधस्यशत्रुतांस्फुटपति नशक्रइति । शक्रो युवयोःशत्रुर्नभवति किंतुवांयुवयोःशत्रुरेषक्रोधएव हिनिश्चयेन । ननुकःक्रोधस्यापराधइतिचेदनर्थेप्रभोरिंद्रस्यवधेप्रवर्तनमेवतावदवधार्यतामित्याह शक्रमिति । इतःपूर्वमिंद्रंजेतुंयुवयोर्मनोनाभवदिदानींतुजातमत्रकोहेतुरितिक्रोधस्यशत्रुताविकाशकंकुतोनयुवाभ्यांचिंत्यतेइति १२८ येनसामर्थ्येनकामक्रोधयोःशत्रुराजयोरिंद्रियरूपान्किंकरान्जित्वाकामक्रोधौनिरुद्धचयुवांदेवभावमापन्नावधुनातत्सामर्थ्यंकगतमित्याह इंद्रियाणीति १२९ अहंत्वेवंमन्येयज्जितपूर्वाःक्रोधराजस्येंद्रियरूपाःकिंकराःपूर्ववैरंस्मरंतःसंतोयुवांहंतुंस्वर्गेप्यागताइत्याह क्रोधेति १३० इंद्रमिति । आंतरशत्रोःक्रोधस्यजयाभावेइंद्रंजेतुंयुवयोःकाशक्तिरिति । किंच इंद्रेणयुवयोर्वाक्सायकैर्याहतिस्ताडनाकृतासापूर्वकामेनहतयोरेवकृता १३१ चतुर्थपादार्थंस्फुटपति कामेति । निष्कामस्यतुविषयासर्वात्मभूतस्यकोऽपकर्वेतिभावः १३२

औपधानिचमंत्राश्चतथाभूतपिशाचकाः ॥ अभिचाराश्चशापाश्चप्रयुक्ताश्चद्विजोत्तमैः १२१ आवांसर्वप्रतीकारंजानीवोमुनिसत्तम ॥ त्वत्प्रसादात्स्वभावाच्चसिद्धौ सर्वाधिकौयतः १२२ एकौषधप्रयोगेणस्वर्धुनीनीरमध्यतः ॥ सामरंदेवराजंतंमारयावःक्षणान्मुने १२३ उच्चाटयावःस्वर्गाद्वापातयावःक्षितावपि ॥ मोहयावःक्षणाद्वैतंदिगंतरगतिंगतम् १२४ उत्पादयावःकामंवासामरस्यशचीपतेः ॥ मर्त्यलोकवधूनांवामुनीनांवातिमोहतः १२५ एवमादिवचःपूगैर्भवद्ध्यामात्मनोबलम् ॥ उक्तंदधीचःपुरतोगुरोर्विश्वासकारणम् १२६ सविचार्यचिरंपश्चाद्युवांवचनमब्रवीत् ॥ क्रोधशत्रोर्वशंयातंमायुवांशत्रुतापिनौ १२७ नशक्रोयुवयोःशत्रुःशत्रुर्वामेषएवहि ॥ शक्रंजेतुंपुराकस्माद्युवयोर्नाभवन्मनः ॥ इदानींकेनवाजातमितिकस्मान्नचिंत्यते १२८ इंद्रियाणिपुराजित्वाकामक्रोधादिकिंकरान् ॥ युवांदेवत्वमापन्नौदुर्लभंसर्वदेहिभिः ॥ अधुनातौकथंक्रोधशत्रोर्वशमुपागतौ १२९ क्रोधराजंसमाश्रित्यनूनमिंद्रियकिंकराः ॥ पूर्ववैरस्मृतिंप्राप्ताहंतुंवामगमन्दिवि १३० इंद्रंजेतुंकथंस्यातांयुवांशक्ताविहाधुना ॥ क्रोधशत्रुहतौनैक्युवयोर्हतयोर्हतिः १३१ कामशत्रुहतौदृष्टायुवांबलविवर्जितौ ॥ वाक्सायकैःसभामध्येशक्रेणनिहतौभृशम् १३२

कामस्याप्यनर्थहेतुतान्वयव्यतिरेकाभ्यामवसेया युवांतुतद्विवेकहीनावित्याह कस्मादिति । कीदृशौयुवाम् इतिबुद्धिविवर्जितौ इतिकिं कस्मादित्यादि १३३ यदाएकेनकामेनयुवयोरीदृ शंलघुत्वंकृतंतदाधीमतामग्रगण्यत्वेनगुरुतरमिंद्रंजेप्यथइतिकामत्याशेत्याह शक्रमिति । दुर्धंसाध्यंफलंयस्याःसा तथा इदानींतुयुवयोःपूर्वंहंतासकामःक्रोधेनपुत्रेणापिसहितःसन्किंनकरिष्यतिअपितु सर्वमनर्थंकरिष्यतीति १३४ कामक्रोधयोःशत्रुतामेवस्फुटयति कामक्रोधाविति । तौकामक्रोधौविहायोपेक्ष्यपरंतद्भिन्नंयोजयेत्जेतुंप्रवर्तंतेतियावत् समंदः १३५ सामर्थ्यमस्तिचेत्तावेवतावज्जेयावि त्याह युवयोरिति । जयतंयुवामितिशेषः १३६ कामस्यमहाबलतामभिनयति कामेनेति । जगदीश्वराअपिलीलाविग्रहेणकामलीलांदधानाःकामस्यजगत्यनुगमंदर्शयंतीतिभावः अपरेत्विति । अपरेऽमराःकामस्यपुरतःकिंगणनीयायतोनारीक्रीडामृगाइति १३७ फलितमाह पंचेति १३८ कामादपिप्रबलस्यक्रोधस्यजयेविशेषतोयत्नोविधेयोयतस्तेनकामजयिनोपिमुनयःप्रायोजीयंमा नादृश्यंतइत्याह जयंतीति १३९ तस्माद्भवतोःशक्तिश्चेत्तावेवजेयावित्याह पितृपुत्रावितिद्वाभ्याम् । पिताकामःपुत्रःक्रोधएतौदुरासदौदुःखेनासत्तुंउपसर्पितुंशक्यौशूराविितियावत् जयेनका

कस्माच्छक्रःपुरावज्ञांनाकरोद्युवयोःप्रभुः ॥ कस्मादिदानीमकरोदितिबुद्धिविवर्जितौ १३३ शक्रंजेतुंसमर्थौतौकथंधीमत्पुरोगमम् ॥ कामेनैकेनदुःसाध्यायुव योर्लघुताकृता ॥ अधुनाक्रोधसहितःसतुकिंनकरिष्यति १३४ कामक्रोधौमहाशत्रूदेहिनांसहजावुभौ ॥ तौविहायपरंशत्रुंयोजयेत्सतुमंदधीः १३५ युवयो र्यदिसामर्थ्यंजेतुंशत्रून्हिविद्यते ॥ जयतंदुर्जयौशत्रूकामक्रोधौमहाबलौ १३६ कामेनविजितोब्रह्माकामेनविजितोहरः ॥ कामेनविजितोविष्णुःशक्रःकामेनिनि र्जितः ॥ अपरेत्वमराःकिंनुनारीक्रीडामृगाहिये १३७ पंचबाणस्ततोजेयःशत्रुरस्तिहिदेहिनाम् ॥ युवाभ्यांचजितोनायंकिंतुतेनयुवांजितौ १३८ जयंतिमु नयःकेचित्पंचबाणंकथंचन ॥ तदीयंतनयंक्रोधंशक्ताजेतुंनतेपिहि १३९ पितृपुत्रौमहावीर्यौकामक्रोधौदुरासदौ ॥ विजित्यसकलंविश्वंवर्तेतेजयकाशिनौ १४० युवांयदिबलोपेतौमानिनौशत्रुकर्षिणौ ॥ जित्वेमौजयतंशक्रंसामरंबलदर्पितम् १४१ इत्येवमादिवचनैःक्रोधशांतिकरैर्मुनिः ॥ उक्तवान्नैवसंशांतौयुवांक्रोधा ग्निदीपितौ १४२ यदातदामुनिःसामभेदौत्यक्त्वाऽतिबुद्धिमान् ॥ उपप्रदानमारेभेयुवयोःक्रोधदीप्तयोः १४३ सर्वभूतैर्युवांवैरंत्यजथोऽथयदातदा ॥ ब्रह्मवि द्यांचिरंप्रार्थ्यांदास्याम्येवनसंशयः १४४ एवमुक्तौयुवांकोपदीप्तौतंप्रोचथुर्गुरुम् ॥ नैवसाम्नोगुरोकालोनभेदस्यास्तिसंप्रति १४५ दानस्यचयतःपूर्वमसक्त त्कथितंत्वया ॥ अधिकारेहिसंपन्नेदास्याम्येवनसंशयः ॥ आज्ञापयक्षणात्शक्रंजेष्यावोनात्रसंशयः १४६

शितुंशीलंययोस्तौतथा १४० युवामिति । शत्रून्कर्षितुंतापयितुमितियावत्शीलंययोस्तौतथाईदृशौयदियुवांतर्हिइमौकामक्रोधौजित्वाइंद्रंजेतुमुत्साहंकुरुतमिति १४१ इत्येवमिति । इत्या दिकैःक्रोधोपशामकैर्वाक्यैर्मुनिर्युवयोर्गुरुरुक्तवान्वैरनिवृत्तिमुपदिष्टवांस्तथापियुवांक्रोधाग्निदीपितौयदानशांतौतदासमुनिःसाम प्रियवचनैःक्रोधोपशमनरूपम् । भेदःप्रकृतेक्रोधशत्रुपक्षपाताद्विश्लि ष्यात्मीयपक्षेसमतात्मकेस्थापनरूपः ईदृशौसामभेदौविहाययुवयोरुपप्रदानमारब्धवान् । उपप्रदानंनामदानस्यसंनिहितमिष्टद्रव्यदानप्रतिज्ञारूपमितिद्वयोरर्थः १४२ । १४३ मुनेर्देयंतु विद्यारूपमेवेतितद्दानंवैरनिवृत्तयेप्रतिजानीते सर्वेति । एतेनवक्ष्यमाणविद्याया अधिकार्यपिसूचितः १४४ एवमुक्ताविति । एवंगुरुणाप्रोक्तावपियुवांतंगुरुंप्रतीत्थमुक्तवंतौ । इत्थंकथं हेगुरोअयंकालःसामदानभेदानांनास्तिसाधिकारेवियादानंतुप्रतिज्ञातंपूर्वमेवेतिनतल्लोभेनापिवैरंत्यजावस्तस्मादिंद्रंजेतुमाज्ञापयैवेतिद्वयोरर्थः १४५ । १४६

एवमुक्तइति । एवंभवद्भ्यामुक्तेसतियुवयोर्गुरुर्दंडरूपंराजप्रयुक्तदंडेनभयद्वाराधर्मेप्रवर्त्तकेनसमानाकारंवचोऽब्रवीत् युवयोर्हितकामत्वादिति १४७ दंडरूपंवचनमभिनयति पंचानामितिविंशतिश्लोकैः । पंचानांप्राणिनामपिभर्त्तापालकोयःकश्चिदपिजंतुर्भवतिपंचभूतपतौतस्मिन्नाकाशादिपंचभूतशरीरस्येश्वरस्यसंपत्तिसंज्ञाऽभेदभावनाकर्त्तव्या तंपंचानांभर्त्तारंप्राणिनमपियोहन्यात्ससेश्वरसमष्टिभूतपंचकहननप्रत्यवायंप्राप्नुयात् । भर्त्तुर्हननेतदुपकारिणामपिहननात्किमुतेंद्रस्यसर्वलोकभर्तुर्हननेइतिभावः १४८ उपजीव्यस्यप्रभोर्हनने ‘कृतघ्नेनास्तिनिष्कृतिः’ इत्यादिवचनेभ्यःप्रायश्चित्तैरपरिहार्यःकृतघ्नतादोषोप्यापततीत्याह यस्मादिति । यःकश्चिद्यस्मादुपकारंलब्धवान्सउपकृतस्तमुपकारिणंहंतिचेत्तर्हिस्ववंश्यैरनेकैःसहमातृपित्रोर्हननप्रत्यवायंप्राप्नुयादिति १४९ सकांगतिंगच्छतीत्यतआह अंधेति । नरकाधिपःनरकराजः तमःप्रचुरत्वादंधतामिस्रसंज्ञःतत्रतेयांतीति १५० ब्रह्मघ्नादपिचिरंतत्रवसंतीत्याह कल्पेति १५१ अपिभूमेरिति । भूमेरेकदेशमपियःपालयतिसराजत्वादवध्यःप्रसिद्धःकिमुतेंद्रस्त्रिलोकीपतिरिति १५२ किंच येषांलोकपालानामिंद्रादीनामंशसंबंधाद्राज्ञोऽवध्यतातेषांसाक्षादवध्यताकिमुवक्तव्येत्याह लोकेति । लोकपालवपु

एवमुक्तेगुरुर्दंडरूपंवचनमुक्तवान् ॥ युवयोर्हितकामःसन्सर्वसूतसमोमुनिः १४७ पंचानामपियोभर्ताजंतुर्भवतिकश्चन ॥ ईश्वरःसहिविज्ञेयःपंचभूतात्मकःपुमान् ॥ यस्तंहंतीहहन्यात्ससेश्वरंभूतपंचकम् १४८ यस्मादुपकृतःकश्चिद्धंतिचेत्तंनराधमः ॥ सहन्यात्पितरंस्वस्यजननींचकुलैःसह १४९ अंधतामिस्रनामायोनरकोनरकाधिपः ॥ प्राणिनोनिवसंत्यत्रस्वामिद्रोहपरायणाः १५० कल्पकोटिसहस्रांतिब्रह्महानरकार्णवात् ॥ मुच्यतेनैवमुच्येतस्वामिद्रोहपरोजनः १५१ अपिभूमेःखंडमात्रंपालयेद्यस्तुदेहभाक् ॥ सराजानैववध्यःस्याद्वशंप्राप्तोपिवैरिणाम् १५२ लोकपालवपुष्कत्वाद्राजाऽवध्योहिदेहिनाम् ॥ लोकपालाःकथंनामवध्याःस्वर्गनिवासिनः १५३ भूदेवाब्राह्मणानैववधमर्हतिकर्हिचित ॥ देवाइमेकथंनामवध्याःस्युःस्वर्गवासिनः १५४ यावंत्योदेवताःस्वर्गेब्राह्मणस्यवपुष्यमूः ॥ वसंतिदेवविदुषोविप्रोवध्योनतेनसः ॥ देवतानिखिलाःस्वर्गेवधमर्हतिकेनताः १५५ गवांवाब्राह्मणानांवादेवतानांचयोधमः ॥ लोकोपकारिणांतद्वद्राज्ञांधर्मात्मनामपि १५६ कर्मणामनसावाचाकुरुतेहिंसनंहिंसः ॥ नरकान्नविमुच्येतकल्पकोटिशतैरपि १५७ लोकपालांस्तथादेवानहत्वाशक्रमाहवे ॥ हंतुंशक्तोहिकोनामदेवोवादानवोथवा १५८ इंद्रमग्निंयमंरक्षोवरुणंचप्रभंजनम् ॥ धनेशमीश्वरंशेषंब्रह्माणंचजयेद्धिकः १५९ एतेषांसंप्रसादेनयुवयोर्हिबलंस्मृतम् ॥ विमुखत्वेपुनस्तेषांयुवांकाष्ठसमौमतौ १६०

ष्यस्यसतथातस्यभावोलोकपालवपुष्कत्वंतस्मात् १५३ अपिचभूमिनिरूपितंयेषांपूज्यतारूपंदेवत्वंतेपिब्राह्मणाअवध्याःकिमुतसर्वत्रयेदेवाइत्याह भूदेवाइति १५४ ब्राह्मणानामवध्यत्वेराजवद्देवसंबंधोपिप्रयोजकस्तथाचसएवकैमुत्यन्यायइत्याह यावंत्यइति । स्वर्गेयावंत्योदेवताअमूःएताःसर्वाब्राह्मणस्यवपुषिशरीरेवसंतितेनसविप्रोऽवध्यःकिमुतसाक्षात्तादेवताइति । देवविदुषःदेवान्तत्प्रतिपादकमंत्रान्जानतः १५५ गोब्राह्मणदेवतानांधर्मिष्ठनृपाणांचापकारेयत्फलंतद्दर्शयति गवामितिद्वाभ्यां । स्पष्टम् १५६ । १५७ किंचशिरसागिरिभेदनवदशक्यइंद्रजयोलोकपालादिजयपूर्वकत्वादिंद्रजयस्येत्याह लोकपालानिति १५८ दशलोकपालान्दुर्जयान्दर्शयति इंद्रमिति । इंद्रादयोष्टौक्रमेणपूर्वादिदिक्पतयः । ब्रह्माऊर्ध्वदिक्पतिः । शेषोधोदिक्पतिः । अत्रेंद्रस्यविग्रहविशेषः पूर्वदिक्पतिः । विष्णोरिवपादेंद्रियाधिपतिरितिबोध्यम् १५९ युवयोरपिबलमेतेषामिंद्रादीनामनुग्रहेणतेषांकोपेतुकयुवयोःसामर्थ्यमित्याह एतेषामिति १६०

किंचयुवांद्वौआदित्यादयोद्वादशादिसंख्यगणास्तान्कथंजेष्यथेत्याह आदित्याइति १६१ इंद्रेणयुद्धेचसर्वएतेपुरतोभविष्यंतितस्यसर्वाधिपतित्वादित्याह लोकपालाइतिद्वाभ्यां । अनुयातिअ नुसृत्यवर्ततइति १६२ ब्रह्मेति । विष्णुरुपेंद्रसंज्ञः पंचभूतानितदभिमानिदेवाः सोमश्चंद्रः नक्षत्राणितारकाश्चतेषांसमाहारस्तथा १६३ अपिचयुद्धप्रसक्तावपिसमैर्योद्धव्यंनाधिकैरिंद्रस्तु वलेनबुद्ध्याचासहायैश्चभवद्भ्यामधिकइत्याह संग्रामइति १६४ इंद्रस्यसहायैराधिक्यंस्फुटयति भवतोरिति । भवतोरश्विनोर्यावत्सामर्थ्यंतावद्देवानांमध्येएकैकस्यसर्वस्याप्यस्ति 'एतेसर्वेएव समाः सर्वेऽनंताः' इतिश्रुतेः १६५ प्रत्येकदेवसामर्थ्यमभिनयति एकैकइति । इंद्रांतिकवासीएकैकोपिदेवोजगतःसर्गादिकरणेशक्तइति १६६ स्वर्गात्पातस्यलक्षणभूतत्वाद्द्वेषोहेयइत्याह कारणमिति । स्वर्गेस्वर्गवासिदेवेषुयोद्वेषःसराजसत्वेनतापकत्वात्अमृतमयस्वर्गशरीरद्रावकत्वास्स्वर्गपातहेतुर्बुधैरुक्तः पुण्यफलेस्वर्गेद्वेषस्यपापफलस्यासमावेशाद्वा । तस्माद्वृद्धिमिच्छंतोमूलहा निरितिन्यायात्पातास्स्वर्गस्यापिहानिकरोद्वेषोहेयइति १६७ रहस्यविकासकोमुनिराह इत्येवमिति । इत्यादिभिर्लोकद्वयेभयप्रदर्शकैर्वाक्यैःसयुक्तिकैर्युवांगुरुणादंडनीतौ १६८ यज्ञेति । तथा

आदित्यावसवोरुद्रामरुतःसाध्यसंयुताः ॥ विज्ञेयास्तेमहात्मानोयुवाभ्यांकेनहेतुना १६१ लोकपालाइमेदेवामुनयःसिद्धचारणाः ॥ अन्यान्यपिहिभूतानिश क्रमेवानुयांतिहि १६२ ब्रह्माविष्णुस्तथारुद्रःशक्तयोविविधाअपि ॥ भूतानिपंचसोमश्चग्रहानक्षत्रतारकम् ॥ अन्यच्चसकलंविश्वंशक्रमेवसमाश्रितम् १६३ संग्रामःसर्व[illegible]कार्यःसमेनविषमैर्नच ॥ भवद्भ्यामधिकःशक्रोबलबुद्धिसहायकैः १६४ भवतोर्यावदत्रास्तिवीर्यंतावत्सुरेष्वपि ॥ एकैकस्यैवसर्वस्यदेवमात्रस्यवि द्यते १६५ एकैकोपिसमर्थोयंसृष्टिस्थित्यंतकर्मणि ॥ जगतःस्वर्गवासीयोदेवःशक्रसमीपगः १६६ कारणंस्वर्गपातस्यद्वेषःस्वर्गउदीरितः ॥ त्यजथोद्वेषमेतेषु युवांस्वर्गार्थिनौयदि १६७ इत्येवमादिवचनैरिहामुत्रभयंकरैः ॥ नानोपपत्तिसहितैर्गुरुणादंडितौयुवाम् १६८ यज्ञभागापगमनात्सभायांमानसंक्षयात् ॥ दुःखितौनैववाक्यंतद्घ्रातेकर्णरंध्रयोः १६९ ऊचतुश्चयुवांभूयोदुःखितौहिगुरुंप्रति ॥ मरणंनरकोवानोभवेद्युद्धंसमादिश १७० युवयोर्मानसंभावंविज्ञायकरुणा वृतः ॥ यज्ञभागप्रसिद्ध्यर्थंगुरुःपुनरुवाचह १७१ पुष्पैरपिनयोद्धव्यंतीक्ष्णैःशस्त्रैस्तुकिंपुनः ॥ संदेहोविजयेध्रौव्यंप्रधानपुरुषक्षये १७२ अक्षतश्चापरिक्षीण बांधवोनजयंव्रजेत् ॥ पराजयेचतावत्स्यादयशस्त्वधिकंत्विह १७३ मरणेनरकोयत्रजीवनेपियशःक्षयः ॥ वरंक्षत्रियकस्यापितस्माद्युद्धात्पलायनम् १७४ विप्राणांबांधवानांवादेवतानांचसंक्षयः ॥ यत्रयुद्धेभवेत्तत्रधीमान्कुर्यान्नमानसम् १७५

पियज्ञभागापहारात्सभायामिंद्रकृतमानभंगाच्चदुःखितोसंतौयुवांतस्यगुरोर्वाक्यंकर्णयोःपतितमपिनद्घ्रातेनांगीचक्रतुरितियावत् १६९ ऊचुरिति । युवांभूयस्तंगुरुंप्रत्येवमूचतुर्मरणादिकंयद्भव तितद्भवतुयुद्धमेवकरिष्यावहेतत्समादिशाज्ञापयेति १७० युवयोरिति । ततोयुवयोर्मनोनिष्ठमभिप्रायंपुनर्यज्ञभागलाभःकथंस्यादित्येवमाकारंज्ञात्वायज्ञभागस्यप्रकर्षेणअनायासेनसिद्धयेउपा यंविवक्षुर्गुरुःपुनरुवाचह १७१ सुकरमुपायांतरंविवक्षुर्युद्धंतावन्निंदति पुष्पैरितिसप्तभिः । पुष्पकरणकमपियुद्धमप्रशस्तंशस्त्रकरणकस्याप्रशस्तताकिमुवाच्यायतएतेयुद्धदोषाःसंति । एतेके । विजयसंशयः १ । श्रेष्ठपुरुषाणांक्षयस्यावश्यंभाविता २ । युद्धागतोव्रणंबांधवक्षयंचविनाजयंनगच्छतीति ३ । पराजयेपरमनिंदेति ४ चतुर्थंद्वितिद्वयोरर्थः १७२ । १७३ अधर्मयुद्धंलोकद्वये ऽनिष्टकरंक्षत्रियेणापिपरित्याज्यमित्याह मरणेइति १७४ अधर्मयुद्धमभिनीयनिषेधति विप्राणामिति १७५

किंचक्षणभंगुरेसंसारेदुर्लभमधिकारिदेहंप्राप्यहिततमंतत्त्वज्ञानंसाधनीयंनतद्विपरीतंयुद्धादीत्याह असारइतिद्वाभ्यां । दुःखैःपूरितंजीवितंजीवनकालोयत्र अक्षिपक्ष्मणोःप्रचलनेननिमेषेणसमंजीवितंयत्र एतादृशेसंसारेस्वहितमेवकुर्वीतनान्यत् युद्धंतुदेवे दैवसंपदायुक्तेर्हितंनप्रोक्तमितिद्वयोःसंबंधः १७६ । १७७ तर्हियुद्धशास्त्रवैयर्थ्यमनस्तत्कालंदर्शयति अयुद्धइति । यत्रकालेएवंजानीयात् यदयुद्धेयुद्धाभावेमरणंनिश्चितंयुद्धेतुजीवनस्यसंशयःस्यादपिजीवनमित्याकारःतत्रकालेयुद्धंकुर्यात् युवयोस्त्वेषयुद्धकालोनागतः अन्यथापीष्टसिद्धेरितिभावः १७८ तर्हिकिंकर्त्तव्यमितिचेद्बुद्ध्यान्वेष्टव्यउपायइतिवक्तुंबुद्धेःपराक्रमादुत्कर्षंदर्शयति शस्त्रमितिद्वाभ्यां । शस्त्रंमुक्तंप्रयुक्तंसत्एकंशत्रुंनिहंतिजयति कदाचित्तंनैवहंतिइत्यपिसंभाव्यते उपायान्वेषिणीबुद्धिस्तुधीमतामुक्ताप्रयुक्तासतीसकलंविश्वंनिहन्याज्जयेदितियावत् १७९ जंतुरिति । जंतुर्यानर्थाननुपायेभ्योहेतुभ्यःसाधयतितान्पराक्रमात्साधयितुंनशक्नुयात् यथापराक्रमेणयुद्धादिरूपेणाशक्योब्रह्मलोकजयोहिरण्यगर्भोपासनारूपोपायेनशक्यः कर्तुमितिप्रसिद्धम् १८० ननुयुद्धातिरिक्तमुपायंनजानीवइतिचेत्तर्हिशृयतामित्याह उपायमिति । तेनोपायस्यदुष्करकरणेपिशक्तत्वेनयज्ञभागला

असारेस्मिन्हिसंसारेदुःखपूरितजीविते ॥ अक्षिपक्ष्मप्रचलनसमानेजीवितेपुमान् १७६ कुर्वीतसततंस्वस्मैहितंनापरमण्वपि ॥ नहितंयुद्धमुद्दिष्टंदेवैर्लोकद्वयेपिहि १७७ अयुद्धेमरणंयत्रयुद्धेजीवितसंशयः ॥ तत्रयुद्धंनयुवयोःकालएषसमागतः १७८ शस्त्रंमुक्तंनिहंत्येकमथवातंचनैवहि ॥ निहन्यात्सकलंविश्वंबुद्धिर्मुक्तात्रधीमता १७९ जंतुर्नानाविधानर्थान्साधयेद्यानुपायतः ॥ पराक्रमान्नतान्कोपिसाधयेज्जन्मकोटिभिः १८० उपायंतेनवक्ष्यामियज्ञभागप्रसिद्धये ॥ युवयोर्युध्यतोर्नायंप्राप्तुंशक्यःकथंचन १८१ शर्यातिर्नामभूपालोयष्टुमेषसमुद्यतः ॥ होतारंच्यवनंस्वस्यजामातरमथावृणोत् ॥ मनसानेत्रहीनत्वात्संदिग्धश्चास्तिसर्वदा १८२ सुकन्यानामकन्यास्यबाल्यात्क्वापिवनेगता ॥ सूर्यंपश्यंमुनिंसात्रच्यवनंतापसोत्तमम् ॥ वल्मीकावृतदेहंतंचक्षुर्मात्रप्रकाशनम् १८३ दृष्ट्वाकिमिदमित्येवंधियाभूबिलसंस्थिते ॥ तृणेनकेनचिन्नेत्रेच्यवनस्याबिभेदह १८४ निर्गमाद्रुधिरस्यासौराजाज्ञात्वामुनिंतदा ॥ अंधशुश्रूषणार्थंतांतस्यकन्यांहिदत्तवान् ॥ मुनयेनेत्रहीनायसंप्रार्थ्योद्विग्नमानसः १८५ च्यवनोनेत्रहीनश्चवृद्धश्चेन्नेत्रवान्युवा ॥ युवाभ्यांक्रियतेवांसयज्ञभागंप्रदास्यति १८६

भोपायंवक्ष्यामि यतोयंयज्ञभागोयुवयोर्युद्धान्नप्राप्तुंशक्यइति १८१ उपायमभिनयति शर्यातिरितिपंचभिः । शर्यातिर्नामराजायागायोद्यतोवर्त्ततेसचस्वस्यजामातरंच्यवनंनाममुनिंहोतृत्वेनऋग्वेदोक्तकर्मकर्तृत्वेनमनसाऽवृणोद्वृतवान् यागेएनंहोतारंकरिष्येइतिसंकल्पितवान् परंतुजामातुर्नेत्रहीनतामालोच्यकथमार्त्विज्यंकरिष्यतीतिसंदिग्धोस्तीति १८२ ननुकथंशर्यातेर्जामाताच्यवनःकथंवानेत्रहीनइतिशंकाद्वयंवारयति सुकन्येतित्रिभिः । अस्यशर्यातेःसुकन्येतिसंज्ञिकाकन्यापित्रासहकुत्रचिद्वनेगतासतीसूर्यंपश्यंसूर्यमीक्षमाणंचिरस्थित्यावल्मीकावृतदेहंचक्षुर्मात्रप्रकाशनंयस्यएतादृशंतापसोत्तमंच्यवनंमुनिंदृष्ट्वाकिमिदमित्याकारयाधियाभूमिच्छिद्रगतेच्यवनस्यनेत्रेकेनचित्तृणेनबाल्याद्बिभेदहेतिद्वयोःसंबंधः १८३ । १८४ निर्गमादिति । ततोरुधिरस्यनिर्गमान्मुनिंज्ञात्वाउद्विग्नंभीतंमानसंयस्यएतादृशोराजातस्यच्यवनस्यांधत्वोपयोगिशुश्रूषणंकर्तुंतांसुकन्याख्यांकन्यांनेत्रहीनायतस्मैमुनयेसंप्रार्थ्यदत्तवानित्यन्वयः १८५ च्यवनइति । एवंच्यवनोनेत्रहीनोवृद्धश्चवर्ततेसचेद्युवाभ्यांनेत्रवान्युवाचक्रियतेतर्हिसवांयुवाभ्यांयज्ञभागंदास्यतीति १८६

कैमुत्यंस्फुटयति यथानुभूतमिति । यदाविषयजंसुखमपियथानुभूतंतथानैववक्तुंशक्यंतदापूर्णस्यालौकिकस्यवक्तुमशक्यताकिमुवाच्येति २१० फलितमाह अतइति । परिपक्वाशुद्धाबुद्धिर्यस्यस तथा २११ तत्रअध्यारोपंप्रपंचयति अनादाविति । अनादावनिदंप्रथमेऽत्रसंसारेयथारात्रिदिवसयोःप्रवाहःसंततस्तथासृष्टिप्रलययोरित्यर्थः सृष्टिरधिष्ठानावरणप्रयोजकत्वाद्रात्र्योपमितेत्युक्तम् १२ तयोर्मध्यगतत्वात्स्थितिंसंध्ययोपमिनोति रात्रीति २१३ मधुकांडीयाध्यायांतगतत्रयंवाइदंनामरूपंकर्मेत्यादिवाक्यानुसारेणसृष्ट्यादिप्रतियोगिनोजगतःस्वरूपंदर्शयति सर्वमेतदितिचतुर्भिः । हेशक्र एतत्सर्वंचजगन्नामादित्रयात्मकमित्यर्थः । तत्रानुगतंनामादित्रयमुदाहरति अस्यजगतोविश्वशब्दादिकंनाम आदिपदेनलोकोदृश्यमित्यादिग्रहःपंचभूतानिभौतिकानितद्विकाराश्चएतेषांसमाहारात्मकमस्यरूपं सृष्ट्यादिरूपास्तुसर्वस्यजगतःक्रियाइति २१४ असाधारणंनामादित्रयमुदाहरति घटादिकमिति । घटस्यघटःकुंभइत्यादिकंनामप्रसिद्धं वर्तुलंपृथुबुध्नोदरात्मकंरूपं जलानयनादिकाःक्रियाः एवंविधयापटादिष्वपिनामादित्रयात्मकत्वंबोध्यम् २१५ नामादीनांवस्तुनातादात्म्यंस्फुटयति अवस्थायाइतिद्वाभ्यां । यतोनूतनत्वपुराणत्वादिवत्क्रियापिध्रौव्यप्रच्यवात्मिकावस्तुनोऽवस्थाविशेषएव तस्माद्वस्तुनःस्वरूपात्क्रियानामपदार्थोनभिन्नइत्यर्थः २१६ नामेति । पटघटादेरूपंतन्नाममात्रेणनिरूप्यं यतोविचारेक्रियमाणेतद्वस्तुनोरूपंनामातिरिक्तंनास्तिनदृश्यते

यथानुभूतंनैवात्रवक्तुंशक्यंकथंचन ॥ यदासुखंविषयजंकिमुपूर्णमलौकिकम् २१० अतोमयापिकेनापिप्रकारेणोच्यतेधुना ॥ तुभ्यंतंपक्वबुद्धिःसन्स्वयंचावगमिष्यसि २११ अनादाविहसंसारेनियतौरात्रिवासरौ ॥ यथातथैवजगतःसृष्टिनाशौसुनिश्चितौ २१२ रात्रिवासरयोःसंधिर्लोकेसंध्यायथेरिता ॥ तथास्थितिःसमाख्यातासंधिःसृष्टिविनाशयोः २१३ सर्वमेतज्जगच्छक्रनामरूपक्रियात्मकम् ॥ विश्वमित्यादिनामास्यरूपंस्याद्भूतभौतिकम् ॥ सृष्टिस्थितिलयास्तस्यक्रियाःप्रोक्तामनीषिभिः २१४ घटादिकंघटस्योक्तंनामरूपंचवर्तुलम् ॥ जलाहरणमुद्दिष्टंक्रियैवंसर्ववस्तुषु २१५ अवस्थायाविशेषःस्याद्वस्तुनोऽत्रक्रियायतः ॥ तस्मान्नरूपतोभिन्नाक्रियानामात्रविद्यते २१६ नाममात्रेणरूपंस्याद्विचारेनास्तितद्यतः ॥ तस्मान्नामात्मकंकार्यंनाम्नोनान्यद्धिवस्तुसत् ॥ एकमेतत्त्रयंसर्वंनामरूपक्रियात्मकम् २१७ नामादिनैवभिन्नंस्यात्कारणात्स्वात्मनस्तथा ॥ कार्यत्वेनयथासर्पोरज्जोर्भिन्नोनविद्यते २१८ इदंसर्वंजगच्छक्रब्रह्मपूर्णमभूत्पुरा ॥ मेघादिकंयथाकाशंमेघाद्युत्पत्तितःपुरा २१९ नामरूपात्मकंविश्वंब्रह्ममात्रव्यवस्थितम् ॥ अवगम्यात्रविद्वांसोमायांतेकल्पयंतिहि २२० मायाभिधायकैःशब्दैरवाङ्मनसगोचरम् ॥ कारणत्वप्रसिद्ध्यर्थंतत्तेव्यवहरंतिहि २२१

तस्मात्कार्यविकारमात्रंनामात्मकंहियस्मान्नाम्नोऽन्यद्विविक्तंवस्तुघटादिसन्निर्वचनीयंनास्तीत्यर्थः । फलितमाह एकमिति । एतद्वर्णितंनामादिरूपंत्रयंएकंपरस्परमभिन्नमित्यर्थः २१७ अत्राद्वितीयात्मबोधनायाध्यारोप्यद्वयंकार्यंकारणत्वंचेतितत्रकार्यस्वरूपंदर्शितं अथोपादानकारणतांसंभावयितुमुक्तकार्यस्यतत्रात्मन्यभेदंदर्शयति नामादीति । नामादित्रयात्मकंकार्यंयथापरस्परमभिन्नं तथास्वात्मनःस्वस्यकार्यस्यवास्तवस्वरूपात्कारणादभिन्नंकार्यत्वात् यद्यदुपादानकंकार्यंतत्ततोऽभिन्नंयथारज्जोःसर्पइति वाचारंभणमित्यादिश्रुतिरप्यत्रानुकूला २१८ एवंसंभावितांकारणतामुक्तपूर्णपुरुषेयोजयन्कारणपरवाक्यानांतद्धेदंतर्ह्यव्याकृतमासीदित्यादीनांतात्पर्यंदर्शयति इदमितिषड्भिः । इदंनामाद्यात्मकंसर्वंजगत्पुरासृष्टेःपूर्वंपूर्णमद्वितीयंब्रह्मैवाभूदितिश्रुतावुक्तम् । यथाभ्रेघाद्युत्पत्तेः पुरामेघादिकमाकाशेकल्पितमात्रमेवासीदित्युच्यतेतद्वदिति २१९ नामरूपात्मकमिति । सृष्टेःपुराब्रह्ममात्रतयावस्थितंविश्वमवगम्यज्ञात्वाकारणतांविनाब्रह्मणिविश्वावस्थानानुपपत्त्याकारणतानिर्वाहिकांमायामत्रब्रह्मणितेविद्वांसःकल्पयंतीति २२० सामायाप्यज्ञातब्रह्मणोनार्थांतरमितिदर्शयन्नाह मायेति । शुद्धेऽनुपपन्नस्यकारणत्वस्यप्रसिद्धयेउपपत्तयेविशेषणतयामायायाअभिधायकैरव्याकृतादिशब्दैस्तद्ब्रह्मव्यवहरंतीति २२१

मायाशबलाभिधायकान्शब्दान्वेदांतेपुप्रसिद्धान्दर्शयति अव्याकृतमिति । अत्रमायीअधीश्वरईशःकारणमितिशब्दाःश्वेताश्वतरादौप्रसिद्धाः इतरेत्वत्रैवकांडत्रयेइति देवंपरमितिशेषः २२२ तत्रा व्याकृतपदार्थमाह जगतइति । अव्यक्तेअस्फुटे २२३ तस्यसर्वकारणतामभिनयति तस्मिन्निति । निरपेक्षेपितस्मिन्परेपुंसिअव्याकृतोपाधौस्थितंसमग्रंनामाद्यात्मकंजगत्पुनर्जायतेनभसःसकाशान्मे घमंडलवदिति २२४ एवंपरमेश्वरस्यकारणोपाधेःस्वरूपंप्रदर्श्यथकार्यब्रह्मतयाप्रसिद्धस्यहिरण्यगर्भस्यस्वरूपप्रदर्शकानांमृत्युनैवेदमावृतमासीदित्यादिवाक्यानांतात्पर्यमाह भूतानीतिचतुर्द शभिः । भूतेंद्रियप्राणानांप्रत्येकंपंचकानिमनश्चैतत्समुदायरूपंषोडशकलंसूक्ष्मंशरीरमित्युच्यतइति २२५ हिरण्येति । अत्रसमष्टिसूक्ष्मशरीरेमानीअभिमान्युक्तः कारणोपाधिर्महेश्वरएवहिरण्य गर्भसंज्ञोभवति अस्यहिरण्यगर्भस्यसूत्रादयःसंज्ञाःब्राह्मणैर्वेदविद्भिःकृतावेदप्रसिद्धाइतियावत् । तत्रसूत्रसंज्ञाकुसुमानांसूत्रवत्सर्वलोकानांविधारकत्वात् । अशनेच्छोपलक्षितबुद्ध्युपाधिकत्वादश नायासंज्ञा । अतएवमृत्युसंज्ञा । योहियंभक्षितुमिच्छतिसतंहंतीतिलोकप्रसिद्धेः । प्राणोपाधित्वात्प्रभंजनसंज्ञा । स्वयंभवनात्स्वयंभूरिति । महैश्वर्ययोगादीशइतिसंज्ञा । आदिपदेनापरब्रह्मेत्या दिसंज्ञाग्रहः २२६ अस्येति । अस्यहिरण्यगर्भस्यरूपंसुदुर्लक्ष्यंसूक्ष्ममितियावत् । नानावर्णंवक्ष्यमाणहरिद्राकंबलेंद्रगोपाद्युपमितवर्णशालि सूक्ष्मोपाधिकत्वान्नानाविधमितिवार्थः । नानावि

अव्याकृतंतथाकाशमक्षरंमाय्यधीश्वरः ॥ अंतर्यामीतथेशाख्यःकारणंब्रह्मपूर्णकम् ॥ इत्यादिनामभिर्वेदवेदांतिव्यवहारिणः २२२ जगतोस्यसमग्रस्यह्यव्यक्ते नामरूपके ॥ भवतःप्रागवस्थायांतेनाव्याकृतमीरितम् २२३ तस्मिन्नव्याकृतेपुंसिसर्वापेक्षाविवर्जिते ॥ स्थितंजगत्समग्रंतत्पुनरेवप्रजायते ॥ नामरूपात्मकं यद्वन्नभसोमेघमंडलम् २२४ भूतानिपंचचमनइंद्रियाणितथैवच ॥ प्राणाःपंचचसूक्ष्मंतच्छरीरमितिगीयते २२५ हिरण्यगर्भएषस्यादत्रमानीमहेश्वरः ॥ अस्यसूत्रंतथामृत्युरशनायाप्रभंजनः ॥ स्वयंभूरीशइत्यादिसंज्ञास्ताब्राह्मणैःकृताः २२६ अस्यरूपंसुदुर्लक्ष्यंनानावर्णंमहेश्वरः ॥ इंद्रियाणितथाप्राणाविषया श्चतथैवधीः २२७ अयंसमग्रभूतानांभौतिकानांचकारणम् ॥ अस्यस्वप्नःसमग्रंस्याद्विश्वमेतन्महात्मनः २२८ आत्मानमविदन्नेषजीवोभवतिनित्यशः ॥ जा नातितंसदैवायंपरमात्मेतिगीयते २२९ अयंजडाजडंविश्वमधंदेवाःसवासवाः ॥ दिशोयंप्रदिशश्चायमधऊर्ध्वमयंतथा २३० एतस्यैवजगत्सृष्टिर्नापरस्यकदा चन ॥ अयंविश्वमिदंसर्वंसृजत्यत्तिचपातिच ॥ महाभूतैःसमंदेवोमायावीबालकोयथा २३१

धत्वमभिनयति महेश्वरइत्यादिना । उपाधिशुद्ध्यतिशयादस्येश्वरकोटिनिवेशपक्षेमहेश्वरोप्यस्यरूपंइंद्रियादिकंच । विषयाःसूक्ष्माइतिशेषः धीरंतःकरणम् २२७ कारणोपाधिरीश्वरोबीजमिव विश्वकारणमयंहिरण्यगर्भस्त्वंकुरवदित्याह अयमिति । अयंहिरण्यगर्भः । अस्यस्वप्नप्रतिभःसर्वंप्रपंचइति २२८ नन्वस्यजीवत्वंविनाकथंस्वप्नदर्शित्वमित्याशंक्यविवक्षाभेदेनतस्मिन्जीवत्वमी श्वरत्वंचोभयंसंमतमित्याह आत्मानमिति । एपहिरण्यगर्भउपाधिप्राधान्यविवक्षायामात्मस्वरूपमविदन्ननुसंदधानःसन्जीवइतिसदोच्यते चित्प्राधान्यविवक्षायांत्वयंहिरण्यगर्भस्तमात्मानंसदै वजानातीत्यतःपरमात्मेत्युच्यतइत्यर्थः । अयंभावः पूर्वकल्पेहिरण्यगर्भोपासनयाहिरण्यगर्भभावंप्राप्नुवतामनुग्रहायपरमात्मैवतद्रूपेणावतिष्ठतेइतिवस्तुस्थितिः तथाचयथाभारतेद्रौपदीविवाहेपं चेंद्रोपाख्यानेपांडवेषुदेवांशाअदेवांशाश्चसमुच्चिताउक्तास्तथात्रहिरण्यगर्भेभूतपूर्वोपाध्यभिमानशालिजीवांशप्राधान्यविवक्षायांजीवव्यवहारइतरथातुपरमात्मव्यवहारइति २२९ अस्यपरमात्मतां स्फुटीकुर्वन्सर्वात्मतामाह अयमिति । अयंहिरण्यगर्भः । प्रदिशःकोणाः २३० अस्यपरमात्मत्वविवक्षयैवपरमात्मनोधर्मान्जगज्जन्मादिकारणत्वादीनस्मिन्निवेशयति एतस्यैवेत्यष्टभिः । एतस्य एतत्कर्तृकैवजगत्सृष्टिरितिमायाविबालकवन्महाभूतैःसहितंविश्वमयमेवसृजतीत्यादि २३१

रहस्यप्रकाशकोमुनिराह एवमिति । एवंगुरुणोक्तेसतिभवद्भ्यामश्विभ्यांसच्यवनोमुनिस्तथायुवानेत्रवांश्चकृतस्तेनच्यवनेनापियुवयोर्यज्ञभागोबलेनदत्तइतिभागवतेनवमेविस्तरः १८७ एवंस्थि तेइति । एवंयुवयोर्वृत्तेस्थितेसिद्धेसतियुवयोर्गुरोराथर्वणस्यदधीचआश्रमंकदाचिदिंद्रआगतः १८८ तेनापीति । तेनभवतोर्गुरुणासइंद्रःकृतातिथ्यःसन्यथासुखमुपविष्टोनानाविधाःकथाः कृत्वाहृष्टचित्तोजातइति १८९ एवमिति । संतुष्टंदेवराजमेवंभवतोर्गुरुःप्राह । एवंकथं तेऽतिथयेत्रिलोकीपतयेत्वांत्रिलोकीपतिंप्रीणयितुंकिंप्रियंसंपादयामीति १९० एवमुक्तइति एवमुक्तइंद्रस्तंभव द्गुरुमेवंप्राह एवंकथम् यदिमेप्रियंकुरुषेतर्हिसर्वैर्दुर्लभांविद्यांवदेति १९१ एवमुक्तेत्विति । एवमिंद्रेणोक्तेसतिभवद्गुरुःपरंसंशयंप्राप्तोयथाकन्यापितेति १९२ दृष्टांतंस्फुटयति कस्मैचिदिति । यथाकन्यापिताकस्मैचित्तुभ्यंकन्यांददामीत्युक्त्वाथयस्मैकन्यादातुंप्रतिज्ञातातस्यगुणहीनतामालोक्यनदद्यांदद्यांवाइत्याकारेसंशयेपतितोभवेदिति १९३ दार्ष्टांतिकेयोजयति एवमिति । एव मेषदध्यङ्ङाथर्वणोपिइंद्रायेष्टंदातुंप्रतिज्ञातवान् देवराट्तुगुरुभक्त्यादिहीनत्वेनतादृशोविद्यादानयोग्योनभवतीतिसमुनिःसंशयंप्राप्तइति १९४ एकतइति । ततःसमुनिराथर्वणःइतिनदद्यांदद्यांवे

एवमुक्तेभवद्भ्यांचतथैवसत्कृतोमुनिः ॥ दत्तस्तेनापियुवयोर्यज्ञभागोमहात्मना १८७ एवंस्थितेकदाचित्तुशक्रआश्रमआगतः ॥ आथर्वणस्ययुवयोर्गुरोःसर्वंहि तस्यसः १८८ तेनापिसत्कृतातिथ्यउपविष्टोयथासुखम् ॥ कथानानाविधाःकृत्वाहृष्टचित्तःशचीपतिः १८९ एवंभवद्गुरुःप्राहसंतुष्टंदेवताप्रभुम् ॥ करोम्याति थयेकिंतेत्रिलोकीपतयेप्रियम् १९० एवमुक्तस्तमाहेंद्रःकुरुषेयदिमेप्रियम् ॥ मह्यंविद्यांवदैकांत्वंदुर्लभांसर्वजंतुभिः १९१ एवमुक्तेतुशक्रेणदध्यङ्ङाथर्वणोमु निः ॥ संशयंपरमंप्राप्तःकन्यायाजनकोयथा १९२ कस्मैचित्तेददामीतिह्युक्त्वाकन्यांयथापिता ॥ गुणहीनत्वमालोक्यसंशयेपतितोभवेत् १९३ एवमेषोपिशक्रा यप्रोक्तवान्नचतादृशः ॥ गुरुभक्तिविरक्त्यादिवर्जितत्वेनदेवराट् १९४ एकतोवचनंमिथ्याभवेद्विद्यातथैकतः ॥ निष्फलाचेतिसंदेहंपरमंप्राप्तवान्मुनिः १९५ विद्यानिष्फलतायांहिदोषस्तादृङ्नसंभवेत् ॥ मिथ्यावचसियादृक्स्यादितिसंचिंत्यसोवदत् १९६ शक्रदस्रौहिमेशिष्यौविदितौतौसदातव ॥ ताभ्यांसंप्रार्थ्यमानो पिनादामेतांकथंचन ॥ तामेतांकथयिष्यामिविद्यामत्यंतदुर्लभाम् १९७ मुख्योविद्येतिशब्दोऽस्यांनान्यस्यांतुकथंचन ॥ विविधंवासनाजालमूलमज्ञानमुत्कट म् ॥ द्यातिसर्वात्मनायस्मात्तस्माद्विद्येतिगीयते १९८ विशेषेणाहमस्मीतिचानंदात्मानमव्ययम् ॥ दद्याद्वाद्योतयेद्वातोविद्येषापरिगीयते १९९

त्याकारयोरपिपक्षयोर्दोषमालोच्यसंशयंप्राप्तः । इतिकथं एकतःएकस्मिन्पक्षेनिषेधरूपेऽनृतंदोषः एकतोविधिरूपेपक्षेविद्यानिष्फलतेति १९५ तथाप्यनृतदोषप्राबल्यंविचार्यप्रतर्दनायेंद्रव त्सत्यपाशबद्धोवक्तुमुपचक्रमइत्याह विद्येति । सदध्यङ्मुनिः १९६ दध्यङ्ङाथर्वणोमुनिरुवाच । शक्रेति । हेशक्रदस्रावश्विनौमेशिष्यौतौतवत्वयापिविदितौ कस्यचवर्तमानेइतिषष्ठी ताभ्यांप्रिय शिष्याभ्यांसंप्रार्थ्यमानोपियामेतांविद्यांनादांनदत्तवानस्मि तामेतांविद्यामतिदुर्लभांतेकथयामीति १९७ यथासुखशब्दस्यमुख्यार्थत्वाद्भूमानंदोदुर्लभस्तथेयमित्याह मुख्यइति । अस्यांवक्ष्यमाणा यांतदर्थंविद्याशब्दंव्युत्पादयति विविधमिति । विविधंमूलाज्ञानरूपैरनेकविधंवासनाजालानांमूलभूतमुत्कटंभयप्रदमज्ञानंसर्वात्मनानिःशेषेणयस्मात्द्यतिखंडयतितस्माद्विद्येत्युक्ता विपूर्वात्खंडना र्थाद्दोधातोडर्थेप्रत्ययेऔणादिकेसाधुः १९८ ददातेर्द्युतेर्वातस्मिन्प्रत्ययेसाधुरित्याह विशेषेणेति । अव्ययमानंदात्मानंविशेषेणददातिअधिकारिणःकरामलकवदधीनंकरोति अथवाद्योतयति अपरोक्षयतितस्माद्विद्येति इतरविद्यासुअज्ञानस्याभिभवमात्रंकुर्वाणासुगौणोविद्याशब्दइतिभावत् १९९

अथेंद्रायोपदेशविषयामधुकांडस्यनिर्गुणविद्योपयोगिवाक्यानांमधुब्राह्मणपर्यंतानामर्थंदिदर्शयिषुःप्रथमंसमस्तोपनिषदर्थप्रदर्शकस्यमंगलार्थंस्यचखिलकांडादौपठितस्यपूर्णमदःपूर्णमिदमित्यादेर्मं त्रस्यार्थमभिनयति पूरयतीतिपंचभिः । अयंसमस्तोपनिषत्प्रतिपाद्यःसाक्षादपरोक्षोब्रह्मसंज्ञःपुरुषोयस्मादखिलंविश्वंस्वात्मनास्वस्वरूपेणसच्चिदानंदात्मकेनपूरयतिव्याप्नोतीतियावत् तस्मात्सपु मान्पूर्णसंज्ञांमतइत्यर्थः । तथाचपूरयतेःकर्तरिक्तप्रत्ययेश्वीदितोनिष्ठायामितीडभावेणिलोपेचपूर्णशब्दोव्युत्पन्नइति २०० परोक्षमिति । यत्परोक्षमसच्छब्दधीभ्यांगम्यंतत्पदार्थभूतंमंत्रेऽदः शब्देनोक्तंयच्चप्रत्यक्षंसच्छब्दधीभ्यांगम्यंत्वंपदार्थभूतंतदुभयंस्वीयेनवास्तवेनपरमात्मरूपेणपूर्णमेवव्यापकमेवेतिबुद्ध्यस्वेत्यर्थः । एतेनमंत्रस्यप्रथमपादोव्याख्यातः २०१ ननूपाधौपारोक्ष्या पारोक्ष्याभ्यांद्विविधेभेदकेजाग्रतिकथमपरिच्छिन्नत्वलक्षणापूर्णतेत्याशंक्योपाधेरुपादानात्पूर्णादव्यतिरेकमाह पूर्णादिति । उत्पत्तिस्थितिलयेषुपूर्णंपरित्यज्यनवर्त्ततेतस्मादेतद्विश्वमुपाधिरूपंपूर्ण मेवेतिपादत्रयार्थः एतेनमंत्रस्यद्वितीयपादोव्याख्यातः । तत्रहिउदच्यतेइतिपदस्योद्गच्छतीत्यर्थः । मंत्रोत्तरार्धार्थमाह अंतइति । वस्तुतःपरिपूर्णस्योपाधेःकल्पितरूपस्यांतेबाधेऽधिष्ठान विवेकलक्षणेकृतेसतिपूर्णमेवावशिष्यतेइति २०२ अत्रदृष्टांतमाह नभसइति २०३ उपाधिबाधेनपूर्णमात्रावशेषोविद्वदनुभवसिद्धइत्याह आकाशेति । तमुक्तपुरुषं महांतःशुद्धांतःकरणाः

पूरयत्यखिलंविश्वंपुरुषोब्रह्मसंज्ञितः ॥ स्वात्मनैवततःसोयंपूर्णनामाभवत्पुमान् २०० परोक्षंयच्चकिंचित्तत्प्रत्यक्षंवाशचीपते ॥ सदसच्छब्दधीगम्यंपूर्णमेवाव धारय २०१ पूर्णादुत्पद्यतेचैतत्पूर्णेसंप्रतिवर्तते ॥ पूर्णेविलीयतेचांतेपूर्णमेवावशिष्यते २०२ नभसोजायतेतद्वन्मेघोनभसिवर्तते ॥ विलीयेतनभस्यंतेनभएवा वशिष्यते २०३ आकाशसदृशंपूर्णंसर्वदैकस्वभावकम् ॥ ज्ञानानंदात्मरूपंतंमहांतोब्राह्मणाविदुः २०४ असंगेनिर्गुणेपुंसिसृष्टिस्थित्यंतवर्जिते ॥ सृष्ट्यादिकंसमा श्रित्यगुरवोबोधयंतितम् २०५ गम्यतेनैवमात्मायमांतरैःसबहिश्चरैः ॥ करणैर्वान्यतोवापिस्वयंबोधस्वरूपतः २०६ एतादृशेचसृष्ट्यादिकथंस्यादितिबु द्धिभिः ॥ मायानामतदज्ञानरूपात्रपरिकल्प्यते २०७ अयंसर्वधियांसाक्षीस्वप्रकाशैकबोधतः ॥ आनंदात्मासदास्वान्यभेदगंधविवर्जितः २०८ अनुभूतेहि विषयेशब्दादौयदिकश्चन ॥ अन्यस्मैस्वसुखंब्रूयाद्दृष्टान्तीकृत्यकिंचन ॥ तथातथैवपूर्णंचशक्रविप्रैरुदीर्यते २०९

२०४ तर्हियथानुभवंसपुरुषोमह्यंवर्णनीयइतिइंद्राकांक्षामालक्ष्यतस्यवागाद्यविषयत्वेनयथावद्वक्तुमशक्यत्वादध्यारोपापवादन्यायेनैवनिरूपणमित्याह असंगेइतिसप्तभिः । समाश्रित्याध्यारोप्य २०५ तत्रहेतुमविषयतांदर्शयति गम्यतेइति । सोयमात्माबहिश्चरैर्बाह्यैश्चक्षुरादिभिर्नगम्यतेआंतरैर्वामनआदिभिर्नगम्यतेऽन्यतस्तेभ्योभिन्नाद्वानगम्यतेस्वयमेवबोधरूपत्वादिति ६ एतादृशेइति । एता दृशेऽसंगत्वादिनाउक्तेपुंसिसृष्ट्यादिकंतटस्थलक्षणतयाविवक्षितंकथंस्यादुपपद्येतेत्येवमाकाराबुद्धिर्येषामेतादृशैर्विद्वद्भिर्गुरुभिर्मायानामपदार्थःपरिकल्प्यतेसामायानुभूयमानादज्ञानान्नार्थांतरमित्यु क्तंप्रथमेध्याये २०७ सामायापितस्यस्वरूपंसर्वथानावृणोतितद्भास्यत्वादन्यथास्मिभामिकदाप्यप्रियोनभवामीत्यादिरूपेणभानंनस्यादित्याशयेनाह अयमिति । अयमुक्तःपुरुषःस्वप्रकाशे नैकेनाखंडेनबोधेनरूपेणसर्वधियांसाक्षाद्द्रष्टाआनंदरूपःसदास्वातिरिक्तनिरूपितेनभेदेनवर्जितइति २०८ एवंस्वतःसिद्धस्यापिनिरूपणाशक्तौकैमुत्यन्यायमाह अनुभूतइतिद्वाभ्यां । यथाशब्दादौ विषयेऽनुभूतेसतिजायमानंस्वकीयंसुखंयदिकश्चनान्यस्मैब्रूयाच्चदाकिंचनपदार्थांतरंदृष्टांतीकृत्यैवब्रूयान्नतुविशेषतःश्रृंगग्राहिकान्यायेनवदेदितियावत् । दार्ष्टांतिकमाह तथेति २०९

निरतिशयैश्वर्यंदर्शयति एतस्मादिति । सर्वाधिकत्वादेवसमोपिनास्ति सतिसमेसर्वाधिकत्वानुपपत्तेरित्युत्तरार्धार्थः २३२ अंतर्यामितांदर्शयति कारयतीति । यथालोकेइष्टान्प्रियान्भृत्यान्साध्वसाधुनीसम्यगसम्यग्रूपेकर्मणीयथारुचिकुर्वाणान्राजादिःप्रेरयतितथायंसर्वजंतून्विहितनिषिद्धेकुर्वाणान्प्रेरयतीति । इष्टभृत्यदृष्टांतेनतेपुद्वेषाभावःसूच्यते २३३ तत्रव्यवस्थामाह यानितिद्वाभ्याम् २३४ । २३५ कामानुरूपफलप्रदत्वमाह राजेति । वैषम्याभावमाह इच्छेति । तेषांजंतूनांयत्रयत्रेच्छातत्रैवयतःप्रवर्त्तयतितेनतदिच्छानुसारणेननविषमइति २३६ अनिष्टफलानांनरकादीनांतच्छुद्ध्यर्थमेवप्रदानाद्यननिर्घृणइतिसदृष्टांतमाह जननीति । भूतानामित्यनंतरंतेनेतिशेषः २३७ ईक्षणंस्रष्टव्यालोचनरूपंयच्छ्रुतंतदप्यस्यधर्मइत्याह विचार्येति । विचार्यईक्षित्वा । एनंस्वयंभुवंसर्वात्मानंविनापरएतद्भिन्नःस्रष्टानास्तीति २३८ अथब्रह्मांडोत्पत्तिद्वाराविराडुत्पत्तिप्रतिपादकानामाद्योवाअर्कइत्यादिवाक्यानामर्थंसंगृह्णाति उत्पाद्येतिपंचभिः । भूतानिभावयतिवर्द्धयतीतिसतथा नंद्यादित्वाल्ल्युः । यद्वा भूतमतीतकल्पभवंसृष्टिप्रकारंभावयत्यनुस्मृतवेदेनानुसंदधातीतिसतथा एतादृशोभगवान्हिरण्यगर्भोजलप्रधानानिपंचभूतानिसृष्ट्वातत्रजलेषुआत्मीयंवीर्यंशक्तिरूपंउपासकानुष्ठितकर्मोपासनयोःसूक्ष्मपरिणाममयंसमाक्षिपत्प्रक्षिप्तवान् स्वकीयस्थूलशरीरात्मकविराडारंभोन्मुखंकृतवानितियावत् । मनुरप्येवमाह ' अपएवससर्जादौ

एतस्मादधिकोनान्योजगत्यस्मिन्हिविद्यते ॥ कुतःसमोभवेदस्यपुंसःसर्वाधिकस्यहि २३२ कारयत्येषएवैतान्जंतून्नानाशरीरगान् ॥ भृत्यानिष्टानिवसदाकर्मणीसाध्वसाधुनी २३३ यानयंनरकंनेतुंसमिच्छतिमहेश्वरः ॥ एतान्कारयतिस्वामीपापकर्मैवकेवलम् २३४ स्वर्गंनेतुंहियानिच्छेत्कारयेत्पुण्यमेवतान् ॥ मनुष्यजातिंनेष्यन्सकारयेत्पुण्यपातके २३५ राजेवायंफलंदद्यात्कर्मणोःसाध्वसाधुनोः ॥ इच्छानुसारतस्तेषांकारयत्येषकर्मणी ॥ विषमस्तेननैवायंसर्वभूताधिपोमहान् २३६ जननीजनकोवापिसुखदुःखेयथैवहि ॥ ददातितद्वद्भगवान्भूतानांनिर्घृणोनहि २३७ विचार्यैषजगत्सर्वंसृजत्यत्तिचपातिच ॥ नचस्रष्टापरोस्त्येनंविनात्मानंस्वयंभुवम् २३८ उत्पाद्यस्थूलभूतानिभगवान्भूतभावनः ॥ नीरेषुस्वात्मनोवीर्यंसहसैवसमाक्षिपत् २३९ क्षिप्तंतेनहितद्वीर्यंनीराणामुपरिस्थितम् ॥ दधिमंडोपमंकालात्काठिन्यमभवद्घनम् २४० कठिनापृथिवीसेयंदृश्यतेधुना ॥ तस्याःसारःसमुद्भूतोगोलकोभून्महानयम् २४१ कुक्कुटांडसमाकारःसप्तलोकस्यसंस्थितिः ॥ अनुसंवत्सरंकालंनीरेष्वासीत्समंततः २४२ शुष्कालाबुसमोनित्यंवायुनाभ्यहतोभृशम् ॥ सतुसंवत्सरेपूर्णेविभिन्नःकुक्कुटांडवत् ॥ तदंतःपुरुषोजज्ञेसप्तलोकशरीरभृत् २४३

तासुवीर्यमवासृजत् ' इति २३९ क्षिप्तमिति । तेनभगवताक्षिप्तंतद्वीर्यंजलानामुपरिस्थितंकुर्वद्बीजवदुच्छूनतांगतमितियावत् तदादधिमंडोपमंजातम् । साऽवस्थायदपांशरआसीदितिश्रुतौशरपदेनोक्ता । अथघनंगाढंकाठिन्यमभवत्प्राप्तमित्यर्थः । भूप्राप्तौचौरादिकोणिज्विनिर्मुक्तःपरस्मैपदीत्युक्तत्र २४० कठिनेति । सातत्संघातावस्थाइयंप्रत्यक्षापृथिवीसंपन्ना सापृथिवीअधुनारूक्षापरुषादृश्यतेनिर्गतसारत्वात् । कोसौसारोयोऽस्याःसकाशान्निर्गतइत्यतआह तस्याइति । तस्याःपृथिव्याःसारःसम्यगुद्भूतःस्पष्टःसन्ब्रह्मांडगोलकरूपोऽभवदिति २४१ कुक्कुटेति । कीदृशोगोलकः कुक्कुटांडनिभः भूरादिलोकसप्तकस्याधारश्च संस्थितिरित्यधिकरणेक्तिन् । सगोलकःअण्डोत्पत्तेःपुरासंवत्सरव्यवहाराभावात्पश्चाद्यावोयःसंवत्सरस्तावंतंकालंसमंततःसर्वतःस्थितेपुनीरेषुआसीदवसदित्यर्थः । अत्रब्राह्ममानेनसंवत्सरोबोध्यः पुराणेपुसहस्रसंवत्सरोक्तिरितरमानाभिप्रायेत्यविरोधः २४२ शुष्केति । सगोलकःशुष्कतुंबीफलसमोवायुनाभृशंताडितःसन्संवत्सरेपूर्णेसतिकुक्कुटांडवद्द्विभिन्नोविदीर्णस्तस्यमध्येसप्तलोकमयशरीरोविराट्पुरुषोजज्ञेप्रादुर्भूतंइत्यर्थः २४३

यथाध्यात्मंप्राज्ञतैजसविश्वाएकात्मानएवमधिदैवमीश्वरहिरण्यगर्भविराजइतिस्पष्टयितुंषोडशर्चस्यपुरुषसूक्तस्यात्रविराजिसमन्वयंसप्तदशभिर्दर्शयंस्तत्रार्थक्रमेणद्वितीयायाऋचःपुरुषएवेदमित्यादिकायाआरभ्यार्थंदर्शयति इदमित्यादिना । भूतंभाविस्थितंवर्त्तमानंचयदिदंसर्वंतदेषविराडात्मकःपुरुषएव एषपुरुषोभोगस्यस्वर्गादिसुखस्यआपेक्षिकामृतस्यमोक्षस्यमुख्यामृतस्यचसर्वदाईष्टेप्रदानसमर्थःप्रभुरितियावत् । यतोयमेवान्नेनचराचराणिभूतानिवर्द्धयति एतेनश्रुतौरोहतिपदमंतर्भावितण्यर्थमितिदर्शितम् २४४ तृतीयायाऋचोर्थमाह वक्ष्यमाणइतिद्वाभ्यां । एतत्परिमाणोवक्ष्यमाणोस्यमहिमाविभूतिर्बोध्यः । महिमानमभिनयति पादइति । सर्वाणिविश्वानिभूतानितदीयमहिम्नएकःपादोंशइतियावत् परिशिष्टपादत्रयधाम्नमहिमातुतस्यात्मनिदिवीतिपदेनोक्तद्योतनात्मकेस्वरूपएवतिष्ठतीति २४५ अस्याद्वितीयपादार्थमाह महिमेति । यथालोकेसेनापत्यादिरूपमहिम्नःसकाशान्महिमाश्रयोविभूतिमान्राजादिरधिकःप्रसिद्धस्तथास्यपुरुषस्यमहिम्नःसकाशादयंपुमानधिकइति २४६ चतुर्थीमृचंव्याकुर्वंस्तत्रपूर्वार्धंमहिम्नःपादत्रयविशिष्टःपुरुषउपरिष्टात्स्थितस्तस्यैकःपादःसर्वभूतात्मकोत्रव्यवहारभूमौस्थितइत्यर्थकंव्याख्यातप्रायंमत्वाउत्तरार्धार्थमाह मार्गेति । वेदपूर्वोत्तरकांडयोःप्रसिद्धस्यक्रमेणसकामनिष्कामाधिकारिकस्यप्रवृत्तिनिवृत्तिरूपस्यमार्गद्वयस्यायमेवपुरुषःकर्त्ताप्रवर्तकः कीदृशस्यमार्गद्वयस्य अशनेनभोगेनसहितंस्वर्गरूपंपुरंतद्विपरीतंमोक्षरूपंपुरंचप्रतिअभिलक्ष्यक्रमेणप्रसृतस्येतिशेषः । तथाचस्वर्गमोक्षरूपेणप्रत्यक्पराग्भावेनावस्थानात्सर्वत्रव्याप्तिस्तृतीयपादार्थउपलक्षितइति २४७ पंचम्याऋचोर्थ

इदंसर्वंपुमानेवभूतंभाविस्थितंचयत् ॥ एषभोगस्यमोक्षस्यसर्वदेष्टेमहेश्वरः ॥ अन्नेनवर्धयत्येषस्थावराणिचराणिच २४४ वक्ष्यमाणोस्यमहिमाविज्ञेयःसर्वदानृभिः ॥ पादःसर्वाणिभूतानित्रिपादात्मनितिष्ठति २४५ महिमाश्रयभूतोयोमहिम्नःसोधिकोयथा ॥ तथैवास्यमहिम्नोपिपुमानभ्यधिकोमतः २४६ मार्गद्वयस्यकर्तायंवैदिकस्यसदाप्रभुः ॥ प्रवृत्तेश्चनिवृत्तेश्चस्वर्गभोक्षपुरेप्रति २४७ अयमभ्यधिकोयस्मात्सर्वस्माद्भौतिकात्मनः ॥ तस्माद्विराडितिप्रोक्तोविशेषाद्राजतेयतः २४८ अधिष्ठायपुरःसर्वाःस्थिरजंगमदेहिनाम् ॥ पूरयत्यात्मनायस्मादतोयमधिपूरुषः २४९ सर्वस्मादाधिकःसोयंब्रह्मांडांतःस्थितःपुमान् ॥ तस्यकार्यमिदंसर्वंगिरिदेहधरादिकम् २५० अयंयज्ञःपुमान्हेतुर्ऋक्सामयजुषांतथा ॥ छंदांस्यपिचसर्वाणिगायत्र्यादीनिजज्ञिरे ॥ अस्मादजादयश्चापिविराजःपुरुषोत्तमात् २५१ इंद्रश्चाग्निश्चविप्राश्चमुखतोस्यविनिर्गताः ॥ क्षत्रियाबाहुतस्तद्वदूर्वो वैश्याश्चजज्ञिरे २५२

माह अयमितित्रिभिः । यस्मादयंसर्वभौतिकप्रपंचादधिकस्तस्माद्धेतोर्विराट्संज्ञोजातः । तद्व्युत्पत्तिमाह विशेषादिति २४८ अधिदैवविराड्भावानंतरंसर्वाध्यात्मभावेनावस्थानाच्चाधिपूरुषसंज्ञोजातइतिव्युत्पत्तिंदर्शयन्नाह अधिष्ठायेति २४९ पूर्वपश्चिममध्यमेषुदेशेषुकालेषुचसर्वत्रातिरिक्तोधिकोभवदित्याकारमुत्तरार्द्धार्थमाह सर्वस्मादिति । तत्रहेतुंसर्वकारणत्वमाह तस्येति । धरापृथिवी २५० अस्मादेवपुरुषाद्यज्ञरूपाद्दधिमिश्रिताज्यात्मकपृषदाज्यप्रभृतिहविःपशवोवेदाश्छंदांसिचजातानीत्याकारंषष्ठ्यादितिसृणामृचामर्थंसंकल्प्याह अयंयज्ञइति । अयमेवपुमान्यज्ञरूपःऋगादीनांहेतुःकारणं तथाअस्मादेवविराजोगायत्र्यादीनिच्छंदांसि अजाश्छागास्तत्प्रभृतयोग्राम्यारण्यपशवश्चजाताइति २५१ एतेनसर्वोपादानादस्मात्पुरुषादतिरिक्तपशोरलाभेनपूर्वेदेवाऋषयश्चएतमेवपशुंकल्पयित्वाएतमेवपूजितवंतइत्यर्थिकानवमीऋग्व्याख्यातप्रायेतिमत्वादशम्यादीनांचतसृणामृचामर्थमाह इंद्रश्चेति । इंद्रोदेवराजोऽग्निश्चएतौदेवौविप्राश्चमुखाज्जाताः । क्षत्रियादेवेष्विंद्रवरुणादयोमानवाश्चबाहुभ्यां । ऊरुदेशाद्वैश्याःदेवेषुगणशालिनोविश्वेदेवादयोमानवाश्चजाताः । यद्यपींद्रोदेवक्षत्रेष्वेवचतुर्थंब्राह्मणेपठितस्तथापितस्याग्निसमुच्चितस्यब्राह्मणत्वसूचनाय 'मुखादग्निस्तथेन्द्रश्चप्राणाद्वायुरजायत' इतितैत्तिरीयशाखापुरुषसूक्तवाक्यानुसारेणमुखादुत्पत्तिरुक्तेतिबोध्यम् २५२

भूमिरिति । भूमिःपूपसंज्ञोदेवशूद्रोमानवशूद्राश्चपद्भ्यांजाताः । शेषंस्पष्टम् २५३ प्राणादिति । उक्तानामुपलक्षणत्वमभिप्रेत्याह एवमिति । लोकशब्दस्यकर्मकरणव्युत्पत्त्याविषयाणांदेवानांचग्रहः २५३ चतुर्दशीपंचदश्योश्चार्थंसंगृह्णाति द्रव्याणीति । द्रव्याणिआज्यादीनि तत्तादात्म्यापन्नवसंतादिरूपःकालः एतदुपलक्षितादेवतायजमानोवाक्रियाकर्मवाअतःपुरुषात्पराभिन्नानेति २५५ उक्तः पुरुषोहृदयेध्येयइत्यर्थंविधायकत्वादधुनाप्रथमायाऋचोर्थमाह सहस्रेति । वृत्तौसहस्रशब्दोऽसंख्यातवचनः । यानिलोकेमस्तकादीनितान्यस्यैवेत्यतःसहस्रमस्तकः । एवमग्रेपि । सपुरुषोभूतानिक्षि तिकानिचसर्वाणिआवृत्याभिव्याप्यस्थितःसंनिहितः । दशांगुलपरिमितेहृदयेइतिशेषः । अत्रवृत्वापदस्यार्थआवृत्येत्युक्तः भूमिपदंचभूतोपलक्षणमितिदर्शितम् २५६ तस्यहृदयेसन्निधानेचवेदाहमेतं पुरुषमितिश्रुत्यनुसारिणंस्वानुभवंदर्शयति बुद्धीति । एतस्माद्दृश्यवर्गात्तमोरूपात्परतःपरस्तात्स्थितंबुद्धिसाक्षिणंस्वप्रकाशंनिरावरणंचात्मानमहंवेदसाक्षात्करोमीति २५७ 'सर्वाणिरूपाणिवि चित्यधीरोनामानिकृत्वाभिवदन्यदास्ते' इतिश्रुतिमपिसंवादयति नामेति । कृत्वेतिविचित्यपदस्यार्थः । वदन्अभिवदनादिव्यवहारंकुर्वन्इहहृदयआस्तेसंनिहितइत्यर्थः । तवापिमतिवं

भूमिःशूद्रास्तथापद्भ्यांजाताअस्यमहात्मनः ॥ चंद्रमामनसोजातोनेत्रात्तद्वद्दिवाकरः २५३ प्राणात्प्रभंजनोजातोनाभेस्तुगगनंमहत् ॥ मस्तकात्स्वर्गलोकोयं श्रोत्राज्जाताइमादिशः ॥ एवमन्येपिपुंसोस्माज्जातालोकामहात्मनः २५४ द्रव्याणिचतथाकालोवसंताद्यात्मकोमहान् ॥ देवतायजमानोवाक्रियावाऽतःपरा नहि २५५ सहस्रमस्तकोदेवःसहस्रेंद्रियवानपि ॥ भूतभौतिकजातंसआवृत्त्यात्मापरःस्थितः २५६ बुद्धिसाक्षिणमात्मानमेतस्मात्परतःस्थितम् ॥ स्वप्रकाश महंवेदसर्वाज्ञानविवर्जितम् २५७ नामरूपात्मकंसर्वंकृत्वाऽऽस्तेयोवदन्निह ॥ शक्रयंधातृवदनात्सम्यग्विज्ञास्यतेभवान् २५८ दिशोपिप्रदिशस्तद्वदधऊर्ध्वंसए वहि ॥ यतस्ततोत्रयज्ञेनयक्ष्यंतेतेनतंद्विजाः ॥ धर्मशब्देनतेनैतेस्वर्गंयास्यंतितच्छिरः २५९ पुंसोस्यमूर्धास्वर्गःस्याच्चंद्रसूर्यौचचक्षुषी ॥ प्राणःप्रभंजनः प्रोक्तोमध्यदेहोंतरिक्षकम् २६० जलानिविविधान्यस्यमूत्राशयउदीरितः ॥ भूर्लोकस्तुसमग्रोयंपादावस्यप्रकीर्तितौ २६१ वक्त्रमाहवनीयस्तुहृदयंचतथैवहि ॥ योगार्हपत्यनामास्याद्दक्षिणाग्निर्मनोमतम् २६२ उरोवेदिस्तथादर्भालोमजातमुरःस्थितम् ॥ ओषध्योवनस्पतयःशेषाःकेशाःशरीरगाः २६३ किंबहूक्तेनश क्रायंपक्षेपेणावधारय ॥ यदस्तियच्चनास्त्यत्रतत्सर्वंसमहेश्वरः २६४

110

३६

क्ष्यसेतदपरोक्षंभविष्यतीत्याह शक्रेति । हेशक्रयमात्मानंधातुर्ब्रह्मणोमुखादेकशतवर्षब्रह्मचर्यानंतरंभवानपिअपरोक्षीकरिष्यतेइति २५८ षोडशीमृचंव्याकरोति दिशइति । यतोयमेवदिगादिरूप त्वात्सोपकरणयज्ञरूपस्ततस्तेन एतत्पुरुषात्मकेनयज्ञेनतमेतंपुरुषंयेयक्ष्यंतेपूजयिष्यंतितेमहात्मानस्तेनयज्ञेनपूर्वैःपूर्वैर्धर्मशब्देनव्यवहृतेनसाधनेनतस्यविराजःशिरोरूपंस्वर्गंयास्यंति यत्रपूर्वेपज्ञकर्तारोग ताइतिशेषः अत्रयास्यंतीतिसचंतेतिपदस्यार्थः । एवंपुरुषसूक्तसमन्वयप्रदर्शनेनविराजःसकाशाद्वेदादिसृष्टिप्रतिपादकानिप्रथमाध्यायवाक्यानिप्रायोव्याख्यातप्रायाणीतिबोध्यम् २५९ अयमे वपुरुषोवैश्वानरविद्यायांमूर्द्धैवसुतेजातइत्यादिवाक्येनप्रतिपादितइत्याह पुंसइतिचतुर्भिः । प्राणोमुखनासिकावर्त्तीप्रसिद्धःसतस्यवायुः । अंतरिक्षलोकोदेहमध्यम् २६० जलानीति । मूत्राशयो वस्तिः २६१ वक्त्रमिति । आहवनीयनामाऽग्निस्तस्यमुखं । गार्हपत्यनामाऽग्निस्तस्यहृदयं । दक्षिणाग्निनामाऽग्निस्तस्यमनइति २६२ उरइति । यायागेवेदिःसंस्कृताभूमिःसातस्योरोवक्षः । कुशा स्तुलोमानि शेषालोमभिन्नाःकेशाओषधिवनस्पतिरूपाःएवमुपासकेनस्वशरीरेध्येयोयमितिभावः २६३ फलितमाह किंबहूक्तेनेति । अथअधुनेतियावत् । अत्रास्मिन्लोके नास्तिनदृश्यते सर्वंविराट् २६४

एवंहिरण्यगर्भेविराजोः परमैश्वर्यमुपासनाकर्मणोः फलोत्कर्षोवधिभूतंप्रदर्शितम् । अथतत्रक्षुधाभयंकामवैक्लव्यमित्यादिदोषप्रतिपादकानितंजातमभिव्यादादित्यादिवाक्यानिव्याख्येयानिदोषाभि धानंचमुमुक्षूणांतत्रवैराग्यायक्षुधाभिधानंतुहिरण्यगर्भस्यभोक्तृत्वेनोपासनंविराजश्चान्नत्वेनेतिविधानायापिभवतीत्येतत्सर्वमभिसंधायक्षुधावाक्यार्थंतावदाह एवंभूतमिति । एवंवर्णितंविराजंपुत्रंवी क्ष्यक्षुधाशालित्वादेवमृत्युसंज्ञोहिरण्यगर्भस्तंपुत्रमत्तुंभक्षितुंमुखंव्यात्तंप्रसृतंकृतवानिति २६५ ननुकथंपुत्रादनेच्छाभगवतोहिरण्यगर्भस्यजातेत्याशंकांवारयितुंक्षुधायाअनर्थकारित्वंदर्शयति अहोइति षोडशभिः । अहोविस्मयकरीक्षुधारूपापिशाचीकस्यबुद्धिभ्रंशंनकुरुतेयतोयंदेवोहिरण्यगर्भःसुतादनेसमुद्यतःकृतइति २६६ अस्मिन्निति स्पष्टम् २६७ पुत्रस्येति । क्षुद्व्यैतादृशंवैक्लव्यंसंभाव्यतेयतः पुत्रस्यमरणेयद्दुःखंततोधिकतमंक्षुधादुःखमिति २६८ तत्रहिरण्यगर्भएवोदाहरणमित्याह यस्मादिति । मरणाद्दुःखंततिरस्कृत्याऽगणयित्वाप्रवर्ततेतुमितिशेषः २६९ अधुनाप्येवंदृश्यतइत्याह पित्रिति । अत्रलोके २७० सत्यमिति । बलंशारीरं । वीर्यंमानसं । पराक्रमोयुद्धादिशक्तिः । चकारेणदयादिग्रहः २७१ गुणहंतृत्वंस्फुटयति बुभुक्षितइति । क्षुधितःकरुणयाहीनोभवतियतःस्वीया

एवंभूतंसुतंवीक्ष्यमृत्युःक्षुत्पीडितोभृशम् ॥ हिरण्यगर्भोवदनमत्तुंव्यात्तमथाकरोत् २६५ अहोक्षुधापिशाचीयंमतिभ्रंशंनकस्याहि ॥ कुरुतेयदयंदेवःसुतमत्तुंसमु द्यतः २६६ अस्मिन्समग्रसंसारेक्षुधारोगोऽतिदुःसहः ॥ यस्यनास्तिप्रतीकारोविनान्नस्यहिभक्षणात् २६७ पुत्रस्यमरणेदुःखंनिःसीमंजायतेयतः ॥ ततोधि कतमंदुःखक्षुधाजंनास्तिसंशयः २६८ यस्माद्धिरण्यगर्भोयंक्षुधादुःखप्रशांतये ॥ सुतस्यमरणाद्दुःखंतिरस्कृत्यप्रवर्तते २६९ पितृमातृगुरुभ्रातृपुत्रमित्रकल त्रकम् ॥ क्षुधातुरोहिनस्त्यत्रनिर्घृणोराक्षसोयतः २७० सत्यंशौचंश्रियोधैर्यंबलंवीर्यंपराक्रमम् ॥ यशोधर्मादिकांश्चान्यान्गुणान्हंतिक्षुधाक्षणात् २७१ बुभुक्षि तोनिष्करुणःसद्यएवविजायते ॥ श्ववद्भर्त्सयतिस्वीयान्यतोभार्यादिकानयम् २७२ अस्याबलमहोचित्रंदृश्यतेसर्वदेहिषु ॥ यतएषानिहंत्येतान्गुणान्दोषांश्चकृ त्स्नशः १७३ मृदौश्चचौशयानोपियतोनिद्रांनगच्छति ॥ क्षुधितःक्रोधमायातिनैवचित्तापहारिणीः २७४ पीनोन्नतकुचाम्रद्वीःपृथुश्रोणीःसुमध्यमाः ॥ चंद्रा ननाद्युत्स्वर्णामनोनेत्रसुखप्रदाः २७५ बिंबोष्ठीर्मृदुभाषिण्योनीलालकविराजिताः ॥ सीमंतिनीरप्सरोभिःसमानाःकाममोहिताः ॥ नेच्छत्यालिंगितोप्याभिः क्षुधितोबालवद्युवा २७६ हिरण्यंचपशून्वापिधान्यंभूमिमथापिवा ॥ लोकत्रयींवित्तपूर्णांक्षुधितोनेच्छतिकिंचित् २७७ कामःक्रोधस्तथालोभोजितलोकत्रया इमे ॥ क्षुधापिशाचीभयतःक्वापियांतिविभीतवत् २७८ कामादयोयदाशूराःप्रापिताहिदशामिमाम् ॥ तदातैर्विजितायेस्युर्वराकाहिगुणाइमे २७९

न्भार्यादिकान्शुनइवतिरस्करोतीति २७२ अस्याइति । अस्याःक्षुधायाश्चित्रंबलंयतएतान्सत्यादीन्गुणान्दोषांश्चप्रबलतयाप्रसिद्धान्निद्रादीनेषाहंतिजयतीति । अतिबलतयादोषविजयाद्यतस्यामहादो षत्वंपर्यवस्यतीतिभावः २७३ तत्रनिद्राक्रोधयोर्जयंदर्शयति मृदाविति । क्षुधितःकोमलशय्यायामपिनिद्रांनगच्छति तथान्नदातरितिरस्कुर्वत्यपिक्रोधंनैवयातीतिप्रसिद्धं चित्तापहारिणीरित्यस्यो त्तरत्रान्वयः २७४ कामजेतृत्वमाह पीनोन्नतेतिद्वाभ्यां । यतःक्षुधितोयुवाप्याभिःसीमंतिनीभिरालिंगितोप्येताःसीमंतिनीर्नेच्छति । चित्तापहारिणीरित्यादीनिद्वितीयाबहुवचनानिसीमंतिनी विशेषणानिबोध्यानि । भाषंतीर्मृदुर्बिंबोष्ठीरितिपाठःसाधुः २७५ । २७६ लोभजयमाह हिरण्यमिति २७७ त्रयाणांकामादीनांमहाबलानांविजयमभिनयति कामइति । जितंलोकत्रयंयैस्ते तथा २७८ कामादिभ्योहीनबलानांगुणानांविजयेकैमुत्यमभिनयति कामादयइति २७९

गुणानांकामादिभ्योहीनबलतांस्फुटयति कामादीनामिति । सत्यादयोगुणाःकामादीनांमध्येएकस्यान्यतमस्यापिपुरोग्रेयुद्धेस्थातुंक्षमानभवतितेकामाद्याअपिक्षुधयाजिताइति २८० फलितमाह
इयमिति । उत्तरार्धेदेवइतिशेषः २८१ एवंहिरण्यगर्भेजीवकोटिपक्षपातीक्षुधादोषोदर्शितोऽथप्रजापतिसंज्ञेविराजितादृशस्यैवभयस्यार्थात्प्रदर्शकंसभाणित्याद्यंशंव्याकरोति एवंप्रवृत्तमिति । एवमत्तुं
प्रवृत्तंप्रसारितमुखंचपितरंविलोक्यभयंप्राप्तःसुतोविराड्भाणित्याकारंशब्दमकरोदिति ९८२ येनसंस्कारद्वाराविराज्यपिभयंजनितंतंदेहाभिमानंसकारणंनिंदति अहोइतिदशभिः । अहोआश्चर्यरूपः
अनिर्वचनीयत्वात् पापतमोजीवतएवांधतामिस्रादिसंज्ञकेभयेपातनात् एतादृशःप्राणिनांदेहाभिमानः । एतत्स्पष्टयति क्षुधितंपितरमपिदृष्ट्वासुतोपिसन्यतोदेहाभिमानात्भीतोभयवानभूदिति
२८३ धर्मप्रतिबंधकत्वाच्चदेहाभिमानःपापरूपइत्याह भक्षयिष्यंतीति । यद्यपिअदःशरीरंश्वानोभक्षयिष्यन्तीतिसर्वथाजानातितथाप्यधुनाजीवदृशायांजनकायापिदेहदानात्मकंधर्मंनकरोतियतो
देहाभिमानरूपात्प्रतिबंधकात्तस्यपापरूपतायांकःसंशयः २८४ ननुदेहाभिमानादन्यदत्रदेहदानेप्रतिबंधकंभविष्यतीतिचेत्किमनिष्टसाधनताज्ञानंवावैफल्यज्ञानंवा नाद्यः न्यासवत्परकीयस्यैवपरे
णयथेष्टविनियोगेकृतेप्रत्यर्पयितुरनिष्टासंभवादितिपरकीयतांस्पष्टयन्नाह एतस्येति । एतस्यजनकस्यवीर्यपरिणामेनइदंशरीरंजायतेतच्छरीरंइत्थमात्मीयमयंजनकोपदिभक्षयेत्तर्हिदेहिनोवृथादेहाभि

कामादीनांपुरःस्थातुमेकस्यापिभवंतिन ॥ गुणाःसत्यादयस्तेहिकामाद्याःक्षुधयाजिताः २८० इयंसर्वाधिकालोकेक्षुधानामापिदुःसहा ॥ अनयापरिभूतःसन्न
नुमैच्छत्सुतंस्वकम् २८१ एवंप्रवृत्तंजनकंविदारितमुखंसुतः ॥ निरीक्ष्यभयमापन्नःशब्दंभाणितिसोकरोत् २८२ अहोपापतमोदेहाभिमानःप्राणिनामिह ॥
क्षुधितंजनकंदृष्ट्वायतोभीतःसुतोभवत् २८३ भक्षयिष्यंत्यदःश्वानःसर्वथास्वात्मनिर्गमे ॥ तथापिनाधुनादेहंजनकायापियच्छति २८४ एतस्यवीर्यपाकेनजाय
तेतदयंयदि ॥ भक्षयेत्प्रतिकूलंकिंभवेदत्रहिदेहिनः २८५ परोपकारोदेहेनभवेच्चेत्किमतःपरम् ॥ देहिनःकरणीयंस्याज्जातंदेहफलंयतः २८६ अन्नाद्यन्यशरी
राणांददत्स्वर्गंसमाप्नुयात् ॥ किमुस्वात्मशरीरस्यदानतोनफलंव्रजेत् २८७ यस्मैकस्मैचयत्किंचिद्दत्वास्वेष्टंफलंभवेत् ॥ पित्रेस्वस्यस्वदेहंहिदत्वाकिंनामनाप्नु
यात् २८८ विण्मूत्रादिमलानांहिसंचयोदेहईरितः ॥ अस्मिन्नहंमतिश्चेत्स्याद्बाह्येकस्मान्नसाभवेत् २८९ मायामहेश्वरस्यैषामायिनामपिमोहिनी ॥ अनयामो
हितोयस्माद्विराण्मायाश्रयःपुमान् २९०

मानिनःकिंप्रतिकूलंस्यान्नकिंचिदपि देहस्यपरकीयत्वादेवेतिभावः २८५ नद्वितीयइत्याह परोपकारइति । चेद्यदिदेहेनपरोपकारोभवेज्जायेततर्ह्यतःपरोपकारात्परमधिकंकिंकरणीयमवशिष्यतेन
किञ्चिदपिदेहफलस्यजातत्वादिति २८६ देहदानस्यफलवत्त्वंकैमुत्येनाह अन्नादीति । अन्यशरीराणांपरकीयशरीराणामुपकारकमन्नादिकंददत्प्रयच्छन्सन्स्वर्गंगच्छेत् एवंसतिस्वात्मनःशरीरस्यै
वदानेकिमुफलंवाच्यमिति २८७ कैमुत्यन्यायमेवप्रकारांतरेणाह यस्मैइति । यस्मैकस्मैचिदविज्ञातायापियत्किंचिदन्नादिकमपिदत्वास्वेष्टफलंलभतेस्वस्यपित्रेस्वदेहस्यैवदानेफलंकिमुवाच्यमिति
२८८ अशुद्धावलंबनत्वाच्चदेहाभिमानःपापइत्याशयेनाह विण्मूत्रादीति । मलसंघातेशरीरेचेदहंमतिःक्रियतेतर्हिबाह्येशरीराद्बहिःपतितेपितत्रमलेक्रियतांनोचेदत्रापिएवमस्त्वित्यनौचित्यप्र
स्तत्वाद्देहाभिमानःपापइत्यर्थः २८९ अथवाकार्याविद्यारूपदेहाभिमानस्यापियत्कारणंमायाविद्यादिशब्दवाच्यंतदेवसर्वानर्थप्रयोजकमित्याह मायेति । अनयामाययामायाश्रयोविराट्संज्ञः
पुमान्यस्माद्विमोहितस्तस्मात्पूर्वोक्तंयुक्तमेवेति २९०

कथंविमोहितोऽतआह अस्वकीयमिति । अस्वकीयत्वादिविशेषणकमपिदेहंपित्रेपिविराट्यन्नादान्नदत्तवांस्तन्मोहादेवेति । आस्थास्थिरत्वनिश्चयः २९१ यदाएतेनकार्यकारणताभ्यांद्विविधे नमोहेनविराज्यपिभयरूपोनर्थोजनिस्तदान्यत्रतज्जननंकिंपुवाच्यमित्याह अहोइति । अयंद्विविधोविमोहःकस्यविदुषोपिकिमयुक्तंनकारयेत्नप्रयुंजीतेति यत्यतःपित्रेपिक्षुधितायसुतःस्वमात्म शरीरंनादान्नदत्तवानिति २९२ भाणिति । भाणित्याकारायावाग्विभीतितःभयाद्विराजाविसृष्टाप्रकटीकृतासासर्वदेहिसंबंधिवैखरीवागासीदिते कीदृशी वर्णात्मिकाध्वन्यात्मिकाचेति २९३ ततःकिंवृत्तमतआह हिरण्येति । हिरण्यागर्भेऽत्तुंप्रवृत्तोप्ययमुंविराजंसुतंनादत्नभक्षितवान् यतोयंविद्वान्विद्यावलेनानिवृत्तइतियावत् २९४ विद्यायाअनर्थनिवारकत्वंयुक्तमेवेत्याह अहो विद्येति । सुतस्यहतिर्हननंतस्यां । अयंहिरण्यगर्भः २९५ विद्यांप्रशंसति अकार्यमितिपंचभिः । अकार्यंकुर्वतोपिदीनांदीनतमांवादशांप्राप्तस्यापिपुंसोविद्याधर्मकरीधर्महेतुर्भवति धर्मश ब्दःसुखतत्साधनसमुदायेलाक्षणिकः २९६ विद्ययेति । प्राप्तंदुस्तरमपिआपद्रूपंसमुद्रंलोकद्वयहानिकरंयशोनाशनंचविद्ययातरतीति २९७ विद्याहीति । विद्यैवसर्वेषांमातायतोनयाविद्यया

अस्वकीयमिदंदेहंदुर्गंधमशुचिक्षणात् ॥ नश्वरंघटवन्नात्मरूपमास्थाविवर्जितम् ॥ नादाद्विमोहितःपित्रेक्षुधितायविराट्पुमान् २९१ अहोविमोहःकस्यायंविदुषोपिनकारयेत् ॥ किन्नामपित्रेनादद्यत्सुतःस्वंक्षुधितायच ९२ भाणित्येवविसृष्टायाविराजावाग्विभीतितः ॥ वर्णध्वनिस्वरूपासावागासीत्सर्वदेहिनाम् ९३ हिरण्यगर्भोभगवान्क्षुधयापीडितस्तदा ॥ प्रवृत्तोप्यत्तुमेवामुंनादद्विद्वानयंयतः ९४ अहोविद्यानकस्येयमुपकारंकरोतिन ॥ सुतहत्यांप्रवृत्तोयमनयाविनिवारितः ९५ अकार्यंकुर्वतःपुंसोदीनांदीनतमांदशाम् ॥ प्राप्तस्यापिभवेन्नित्यंविद्याधर्मकरीहिसा २९६ विद्ययातरतिप्राप्तंदुस्तरंस्वापदर्णवम् ॥ लोकद्वयक्षयकरंस्फीतकीर्तिविनाशनम् २९७ विद्याहिसर्वजंतूनांजननीनापरास्मृता ॥ जातोनयापुमान्यस्मादृच्छेल्लोकद्वयेसुखम् २९८ विद्याहिधनमुद्दिष्टमक्षयंसर्वदेहिनाम् ॥ वृद्धिंप्रयातिदानेनमृतंचनविमुंचति २९९ क्षुधयाकामतोवाथक्रोधलोभादिभिःपुमान् ॥ हन्यमानोजयेत्तर्हिविद्याशस्त्रेणवैरिणः ३०० धातारंक्षुधयाभिन्नमर्यादं हृदिचैत्यसा ॥ इदमाहनमृत्योत्वंसुतंभोक्तुंसमर्हसि ३०१ भवान्सर्वगुरुर्लोकमर्यादांयदिभेत्स्यति ॥ अतःपरंकथंतांहिपालयेयुःपरेजनाः ३०२ लोकेनियामकः कश्चित्त्वादृशानांमहात्मनाम् ॥ नविद्यतेविनैकोमांहृदयेतवसंश्रिताम् ३०३ सुतस्यभक्षणान्मृत्योतवलोकद्वयेपिहि ॥ यशोधर्मस्वरूपंतत्सुखमेतद्विनश्यति ३०४ माकृथाःपातकंमृत्योचांडालैरपिनिंदितम् ॥ क्षुधार्ताअपिचांडालाःसुतान्नादंतिकर्हिचित् ३०५

जातःप्रादुर्भूतःपुमान्सर्वत्रसुखीति २९८ विद्याहिधनमिति स्पष्टम् २९९ क्षुधयेति । क्षुधादिभिर्हन्यमानोपिपुमांस्तर्हितस्मिन्कालेक्षुधादिरूपान्वैरिणोविद्यारूपेणशस्त्रेणैवजयेदिति ३०० धातारमिति । यस्याउक्तविधयामाहात्म्यंदर्शितंसाविद्याक्षुधयामर्यादाभेदनोद्यतंधातारंहिरण्यगर्भेहृदयदेशएत्यप्राप्यइदंवचःप्राह इदंकिं हेमृत्योत्वंसुतंहंतुंनार्हसीति ३०१ तत्रहेतुंलोकसं ग्रहस्यकर्तव्यत्वमाह भवानिति । तांमर्यादाम् ३०२ लोकानांमर्यादास्थापकाभवादृशाभवादृशानांतुमर्यादायांस्थापिकाहंविद्यैवेत्यतोमयैवमुक्तमित्याह लोकइति । एकांत्वद्धृदयनिवासिनींमां विनात्वादृशानांनियामकोन्योनास्तीति ३०३ स्ववचनोल्लंघनेदोषमाहविद्या सुतस्येति । हेमृत्योसुतस्यभक्षणाल्लोकद्वयेपिप्रसृतंतत्प्रसिद्धंयशस्तथाएतत्प्रत्यक्षंपुत्रसुखंचविनश्यति कीदृशंय शोधर्मस्वरूपंधर्मपरिणामभूतमितियावत् ३०४ अतिनिंदितत्वाच्चमैवमित्याह माकृथाइति । सुतभक्षणात्मकंपातकंमाकुरु कीदृशंपातकं चांडालैरपिशब्दात्पशुभिश्चगर्हितं । तन्निंदितत्वं तेषांतत्राप्रवृत्तेर्निश्चितमित्याह क्षुधार्ताअपीति । सुतान्नअदंतिनभक्षयंतीति ३०५

पशूनामत्राऽप्रवृत्तिमभिनयति . येपीति । येपशवःकामेनविमोहिताःसंतोजननीमपिस्वसारमपिचगच्छंतितेपिसुतान्नादंतीति ३०६ इत्यादीति । इत्यादिकंविचारंहृदयेप्रादुर्भूतयाविद्यया सहकृत्वान्यवर्ततनिवृत्तोऽभवत् । कीदृशोमृत्युः जातंजातमुत्पन्नमुत्पन्नमत्तुकामोपि आदिपदेनसस्यांकुरसमस्यास्यैवादनेऽन्नाल्पतास्यात् स्थितौतुचिरमनुवर्तमानस्यान्नस्यलाभोभविष्यतीत्यादि विचारपरिग्रहः । जातंजातमितिवीप्सयाविराजासृज्यमानेष्वपिमृत्योरदनेच्छाविचारेणतन्निवृत्तिश्चसूचिता ३०७ ततःकिंवृत्तमतआह तस्मैइति । तस्मैविराजेतनयायआत्मज्ञानंदत्वात थासृष्ट्यादिहेतुभूतान्वेदान्दत्वाअसौपिताहिरण्यगर्भोन्तर्धानंगतः ३०८ मृत्युजइति । मृत्योःसुतोविराडेवएकाकीएकलःस्थितःसन्पितरमदृष्ट्वाक्षणंभयंप्राप्तःयथाअजनेजनरहितेदेशेबालोभीतिं गच्छतितद्वदिति ३०९ क्षणमिति । क्षणमितिपूर्वान्वयि पश्चाद्विचारेणतांभीतिंजहौत्यक्तवान् । विचारेणभयत्यागेभयकारणबाधंद्वारमाह ब्रह्मेति । यदिब्रह्ममद्भिन्नंस्यात्तदासद्वितीयता पत्त्याअद्वितीयतालक्षणंस्वरूपंजह्यात्एवमात्मामद्भिन्नश्चेत्स्यादनात्मैवतदास्यादित्थंब्रह्मात्मपदार्थयोर्दृष्ट्यालोचनेनभेददृष्टेरदर्शनाल्लोपाद्भयाद्दितियावत् तथाचपदार्थद्वयेप्यालोचितेपरस्यविनाशहे तोरदर्शननिमित्तकस्वोच्छेददर्शनात्मकंभयंजहाविति ३१० भेददृष्टेर्भयकारणतांस्फुटयति स्वात्मनइति । प्रतिकूलंसर्पादिकंभिन्नंलोकेभिन्नतयाभिमतमपियदास्वात्मनोऽन्यधियाप्रपद्यतेनि

येपिगच्छंतिजननींस्वसारंचविमोहिताः ॥ कामेनपशवस्तेपिसुतान्नादंतिकर्हिचित् ३०६ इत्यादिविद्ययासार्धंविचार्यहृदयेनिजे ॥ अत्तुकामःक्षुधार्तोयंजा तंजातंन्यवर्तत ३०७ तस्मैदत्वात्मविज्ञानंवेदान्सृष्ट्यादिहेतुकान् ॥ उक्त्वाचतनयायासौतत्रैवांतर्दधेपिता ३०८ मृत्युजःपुरुषाकारेविराडेकाक्यवस्थितः ॥ अदृष्ट्वापितरंभीतिमगाद्बालोऽजनेयथा ३०९ क्षणंविचार्यपश्चात्सजहौभीतिंपरःपुमान् ॥ ब्रह्मदृष्ट्यास्वदृष्ट्याचभेददृष्टेरदर्शनात् ३१० स्वात्मनःप्रतिकूलंहिभिन्न मन्यंयदाधिया ॥ प्रपद्यतेतदासर्वोभयमेतिनसंशयः ३११ धियमेतांयदाजह्यान्नतदाभयमाव्रजेत् ॥ यथातथैवभगवान्विराण्निर्भयतामगात् ३१२ तथापिनैवत स्याभूत्कामिनःसुखमण्वपि ॥ शून्यएवसमग्रोभूदाकाशोवामभागगः ॥ कामिनोहियथालोकेयुवतीनामभावतः ३१३ कंदर्पसर्पसंदष्टोविराडेतदचिंतयत् ॥ स्व क्ष्याम्यन्यमहंदेहमात्मनःसुखकारणम् ॥ अयंसर्वात्मकोदेहोभोक्तुंभोगान्नचक्षमः ३१४ इतिसंचिंत्यभगवान्प्राणिकर्मप्रचोदितः ॥ पंचबाणप्रभिन्नांगोदेहमन्य मथासृजत् ३१५

श्चिनोतितदैवसर्वोजनोभयमेतिप्राप्नोतीतिभेददृष्टेर्भयव्यापकताप्रसिद्धा ३११ धियमिति । एतांभेदावगाहिनींधियंयदाजह्यात्तदानभयंगच्छेदिति । यथालोकेपिप्रसिद्धंतथाविराडपिभेददृष्टि बाधनेननिर्भयोभवदिति । एतेनश्लोकत्रयेणचतुर्थब्राह्मणगतस्यसोबिभेदित्यादेःसाक्षाद्भयप्रदर्शकस्यविद्ययातन्निवृत्तिंचप्रतिपादयतोवाक्यस्यार्थोदर्शितः ३१२ चतुर्थब्राह्मणगतस्यसवैनैवरेमेइत्यादेः कण्डिकाद्वयस्यकामवैक्लव्यप्रतिपादकस्यार्थमाह तथापीत्यूनविंशतिश्लोकैः । यद्यपिविद्ययाभयंनिवृत्तंतथापितस्यविराजःकामिनःसृज्यप्राणिकर्मवशादुत्पन्नकामात्मकदोषशालिनःअणुस्वल्पम पिसुखंनाभूत् । कामदोषेणसुखाभानप्रतिबंधेजननीयेद्वारमाह शून्यएवेति । यथालोकेकामिनःकामुकस्ययुवतीनामभावेवामभागावच्छिन्नःसमग्रआकाशःशून्यतयाभासतेतथाविराजोपिसआ काशःशून्यतयामतोभूदिति एकत्रांशेशून्यताभिमानजननंसर्वकामनासुप्रसिद्धम् यथापशुकामोगृहांगणात्मकाकाशंशून्यंमन्यते पुत्रकामोऽङ्काकाशंधनकामःकोशाकाशम् एवमन्यत्रापि । नि ष्कामस्तुपूर्णमेवात्मानंमन्यतइतिबोध्यमिति ३१३ कंदर्पेति । कंदर्पःकामस्तद्रूपेणसर्पेणसंदष्टःशून्यतयाभिमानात्मकेनतद्विषेणव्याप्तइतियावत् एतादृशोविराडेतदचिंतयत् एतत्किं अस्य व्यापकदेहस्यभोगाक्षमत्वात्तत्समर्थंदेहांतरंस्रक्ष्यामीति ३१४ इतिसंचिंत्येति । इत्थंसंचिंत्यसृज्यप्राणिनांकर्मभिःप्रचोदितोभगवानन्यंदेहमसृजत् कीदृशोभगवान् पंचबाणेनकामेनविद्धमनाः ३१५

विराडिति । ईश्वरत्वात्सत्यसंकल्पोविराड्याद्दशंशुक्तिकयोःसंपुटंमिलितयोराकारविशेषोभवतितादृशंदेहमजनयदिति । पुनःकीदृशं स्त्रीपुंसात्मकंसंसक्तस्त्रीपुरुषरूपमिति । पुटशब्दस्यटां पघत्वात्पुंस्त्वार्हस्यनपुंसकेपिप्रयोगोदृश्यते यथाभागवते 'बिलेबतोरुक्रमविक्रमान्येनशृण्वतःकर्णपुटेनरस्य' इति । अतएवोक्तंलिंगमशिष्यमित्यादि ३१६ विराजासृष्टेपुउक्तदेहप्रभृतिदेहेपुईश्वरहिरण्यगर्भविराजांत्रयाणांसमष्टितयातादात्म्यंबोध्यमितिवक्तुंहिरण्यगर्भविराजोस्तावदाह हिरण्यगर्भइति । अयंस्त्रीपुंसात्मकोदेहःहिरण्यगर्भरूपोविराड्रूपोपिचमंतव्यः धाशब्दःसमुच्चये उभयोःसर्वदेहभृत्त्वादस्यचसूक्ष्मस्थूलसमुदायात्मकत्वादितिभावः । उभयोःसर्वदेहभृत्त्वमभिनयति एताविति । एतौहिरण्यगर्भविराजौस्त्रीलोकेयावत्स्त्रीशरीरंतदेतन्मयंपुरुषोवापुरुषशरीरमप्येतन्मयं नपुंसकशरीरमप्येतन्मयमित्यर्थः तथैतावेवस्थावरादिरूपाविति ३१७ त्रयाणांतदाह हिरण्यगर्भःसर्वेषामिति । सर्वप्राणिनांसमष्टिसूक्ष्मरूपोहिरण्यगर्भःस्थूलसमष्टिरूपोविराट् तृतीयंसमष्टिशरीरंतुकारणोपाधिकेश्वररूपमित्यर्थः ३१८ उक्तंशरीरंतुसमष्टेर्विराजोदेहांतरत्वात्समष्टिकोठावेवगणनीयंनव्यष्टिमात्रमितिविशेषंदर्शयन्नाह स्त्रीपुंसेति । यत्स्त्रीपुंसात्मकंवपुरादिष्टमुक्तंतत्कामिनोविराजएवदेहमन्यद्देहांतरमितियावत् ततोदेहादेषामत्यक्षादिसिद्धासर्वासृष्टिर्जातेति ३१९ ततःसर्वसृष्टिंप्रपंचयन्नाह अर्द्धेति । अर्द्धनारीशरीरंयस्मिन्नेतादृशंतंदेहंदृष्ट्वाविराट्

विराडजनयत्सत्यसंकल्पःशुक्तिकापुटम् ॥ यादृशंतादृशंदेहंस्त्रीपुंसात्मकमीश्वरः ३१६ हिरण्यगर्भोदेहोयंविराड्वासर्वदेहभृत् ॥ एतौस्त्रीपुरुषावेतावेतावेवनपुंसकम् ॥ एतौनानाशरीराणिस्थावराणिचराणिच ३१७ हिरण्यगर्भःसर्वेषांसूक्ष्मंदेहमुदाहृतः ॥ विराट्स्थूलंचविद्धीशस्तृतीयंकारणंस्मृतम् ३१८ स्त्रीपुंसवपुरादिष्टंविराजःकामिनोहियत् ॥ देहमन्यत्ततःसर्वासृष्टिरेषाव्यजायत ३१९ अर्धनारीशरीरंतंनिरीक्ष्यपरमेश्वरः ॥ द्विधाचकारभगवान्कीटःशुक्तिपुटंयथा ३२० शकलेद्वेसमाख्यातेस्त्रीपुंसौकाममोहितौ ॥ स्वायंभुवःपुमान्ज्ञेयःशतरूपातथावधूः ३२१ आभ्यांहिमानवीसृष्टिरुत्पन्नाविविधाभुवि ॥ भाविकर्मानुसारेणवधूरेतदचिंतयत् ३२२ अयंममपितावास्याद्भ्रातावाधर्मतःपुमान् ॥ अनेनाहंकथंयामिस्वैरिणीवविनिंदिता ३२३ पुमानेषनजानातिधर्मंकामविमोहितः ॥ अहंकस्मान्नजानामिधर्मंस्वर्गप्रदंसदा ३२४ पुरुषाःप्रायशोदीनाःकामार्त्ताधर्मभेदकाः ॥ नवध्वस्तदहंकस्मान्नजानाम्यात्मनोहितम् ३२५ इत्यादिबहुशोनारीचिंतयित्वामनोगतम् ॥ उपायंचिंतयामासपुरुषस्यनिवारणे ३२६ पुरुषःकामसंभ्रांतोमयानैवनिवारितः ॥ करिष्यत्यतएवाहमंतर्द्धानंव्रजाम्यतः ३२७

द्विधाचकारशुक्तिसंपुटंकीटइवेति ३२० शकलेइति । तस्ययेद्वेशकलेखंडौतौकाममोहितस्त्रीपुरुषरूपौजातौ तत्रपुमान्स्वायंभुवोमनुर्ज्ञेयःस्त्रीतुशतरूपासंज्ञातत्पत्नीज्ञेया । शतमसंख्यातानिवक्ष्यमाणविधयारूपाणियस्याःसातथा ३२१ आभ्यामिति । आभ्यांमनुशतरूपाभ्यांमानवीमनुसंबंधितयाप्रसिद्धासृष्टिर्मनुष्यसृष्टिरितियावत् साप्रथममजायतेति । ततोभाविनांप्राणिनांकर्मानुसारेणवधूःशतरूपैतद्वक्ष्यमाणमचिंतयदिति ३२२ तच्चिंतामभिनयति अयंममेति । अयंपुमान्मनुर्विराडभेदालोचनेममपितास्यात्सहोत्पन्नत्वालोचनेतुभ्रातावास्यादित्यतोऽनेनसहगमनंविनिंदितंस्वैरिणीवन्ममानुचितमिति ३२३ पुमानिति । यद्यप्येषपुमान्धर्मंनजानातितथापिमयासज्ञेयः ३२४ तत्रहेतुंस्त्रीणांकामाधिक्येपिधीरत्वप्रसिद्धिमाह पुरुषाइति । कामार्त्ताःपुरुषाएवप्रायशोदीनाधर्मोल्लंघकाश्चभवंतिवध्वस्तुतथानभवंतीति तत्तस्मादहमात्मनोहितंकुतोनचिंतयामीति ३२५ इत्यादीति स्फुटम् ३२६ पुरुषइति । अयंपुरुषोनिवारितोपिकामसंतप्तत्वान्मदुक्तंनैवांगीकरिष्यत्यतोरूपांतरग्रहणेनांतर्धानंव्रजामीति ३२७

इतिसंचिंत्येति । एवमालोच्यसानारीशतरूपागोरूपाजातातदापुमान्मनुरपिवृषभरूपोभूत् । तत्रनिमित्तकारणंमृज्यानांकर्माणीति अत्रउभाभ्यामित्थंगोजातिरूपग्रहणेकृतेसतिलोकत्रयगता गावोजाताइति ३२८ एवमन्यत्रापिशतरूपयावडवादिरूपग्रहणेकृतेमनुनापितत्तज्जातीयपुंरूपग्रहणात्तत्तज्जातीयशरीराणिजनितानीतिबोध्यमित्याह एवमश्वादीतिद्वाभ्यां ३२९ एवमिति । स्थावरेष्वपिवल्ल्यादौस्त्रीत्वव्यवहारःवृक्षादौचपुंस्त्वव्यवहारःप्रसिद्धः तथाचस्थावरंजंगमंवास्त्रीपुंसात्मकमिदंविश्वमेवंजातमित्यन्वयः ३३० एवंचयद्व्याख्यास्यमानेमधुकांडांतगतेपुरश्चक्रेद्वि पदइत्यादिमंत्रेद्विपदादिशरीरात्मकपुरीनिर्माणमुक्तंतदित्थमुपपन्नमित्याह एवमेषइति । एवमहेशानःएवंद्विपदादिरूपाःपुरश्चक्रे द्वौद्वौपादौयासुतास्तथा एवंचतुष्पदइति । पदहीनाःपादरहि ताउरगादिरूपाः ३३१ एवंनामरूपात्मकोपाध्यध्यारोपपराणिसृष्टिवाक्यानिव्याख्यातानि । अथपरमात्मनस्तटस्थत्वभ्रमवारणद्वारातत्रजीवत्वाध्यारोपपरस्यप्रवेशवाक्यस्यसएषइहप्रविष्ट इत्यादेरर्थमाह सएषजगतइति । यःपरमात्माव्याकृतादिपदवाच्यमायामनुप्रविष्टोजगत्स्रष्टाकारणमितिचोक्तस्ततःसूक्ष्मसमष्टिमनुप्रविष्टोमृत्युरित्यादिपदैरुक्तःस्थूलसमष्टिमनुप्रविष्टोविराडित्यु क्तःसएषएवत्रिविधईश्वरः सर्वासुव्यष्टिभूतासुपुरीषुप्रविवेश तत्रहेतुगर्भविशेषणं आत्मेत्यादि । यदिसनप्रविशेत्तर्हिपुर्योनिरात्मकाःस्युस्तदितरस्यात्मनोऽभावादितिभावः ३३२ तस्याव्याकृता

इतिसंचिंत्यसानारीगौरभूद्वृषभःपुमान् ॥ तत्क्षणादभवत्सोपिभाविकर्मप्रचोदितः ॥ अत्रगावःसमुत्पन्नालोकत्रयगताहियाः ३२८ एवमश्वादिरूपेषुयत्रयत्रग तावधूः ॥ तत्तज्जातिःपुमानभूत्वातत्रतत्रगतःपुमान् ३२९ एवंसर्वमिदंजातंस्त्रीपुंसात्मकमेवहि ॥ प्राणिजातंस्थिरंचैवजंगमंचमहीतले ३३० एवमेषपुरश्चक्रेद्वि पदोपिचतुष्पदः ॥ पदहीनामहेशानोलोकत्रयगताहियाः ३३१ सएषजगतःस्रष्टाकारणंमृत्युरीश्वरः ॥ विराड्विवेशसर्वासुपुरीष्वात्मस्वरूपधृक् ३३२ महाका शोमठाकाशेसोप्यांतरगृहेपुनः ॥ घटेसोपिचयद्वत्स्यात्प्रविष्टस्तद्वदीश्वरः ३३३ चैतन्यरूपतोनित्यसुखविग्रहवानयम् ॥ आपादमस्तकंदेहंजंतूनांसंगवर्जितः ३३४ यथाकाशोघटाकाशेवर्तमानोनविद्यते ॥ एवमेषपुमानेषुवर्तमानोनविद्यते ३३५ घटेजातेयथाकाशःप्रविष्टोगीयतेजनैः ॥ तथाशरीरेसंजातेप्रविष्टइति गीयते ३३६ यथासर्वगतोभानोःप्रकाशोलभ्यतेक्वचित ॥ दाहादिहेतुरेवंसहृदयेलभ्यतेपुमान् ३३७ नापितस्ययथापात्रेक्षुराधारेऽतिविस्तृते ॥ लभ्यतेऽत्रक्षु रःक्वापिदेहेहृदितथापुमान् ३३८

त्पुपाधीनामंतरंतरनुप्रवेशेदृष्टांतमाह महाकाशइति । यथाचमहाकाशोमठेऽनुप्रविष्टोमठाकाशोभवति समठाकाशोपिमठांतरगृहेऽपवरकसंज्ञेनुप्रविष्टोऽपवरकाकाशोभवति सोप्यपवरकाकाशो घटेऽनुप्रविष्टोघटाकाशोभवति तद्वदीश्वरःसुखविग्रहवान्सुखरूपोजंतूनांप्रतिदेहंचैतन्यरूपेणापादमामस्तकमनुप्रविष्टइतिद्वयोरन्वयः । अत्रमठोव्याकृतोपमानंअंतर्गृहंतुसूक्ष्मस्थूलोपाध्योर्घटोव्यष्टि शरीराणामितिविवेकः ३३३ । ३३४ अस्यप्रवेशउपाधिस्थतयायदुपलंभनंसांप्रदायिकैराभासपदेनोक्तंतन्मात्ररूपोनचगृहादाविवान्नसंयोगादिरूपइतिसूचयितुंवस्तुतस्तत्रवृत्तितानियामकसंबं धाभावंसदृष्टांतमाह यथाकाशइति । यथाकाशोघटेवर्त्तमानतयाभ्रांतैर्व्यवह्रियमाणोपिवस्तुतस्तत्रनविद्यतेएवमत्रात्मेति ३३५ तस्यप्रविष्टव्यवहारेउपाध्यारोपएवप्रयोजकइतिसदृष्टांतमाह घटे इति । पूर्वसिद्धएवाकाशोघटस्यावच्छेदकस्योत्पत्त्यातत्रप्रविष्टइत्युच्यतेतथात्मेति ३३६ एवंशरीरप्रविष्टत्वेपिहृदयेविशेषतःप्रवेशइतिप्रदर्शकंश्रुतिगतंक्षुरदृष्टांतंव्याकरोति यथासर्वगतइतिद्वा भ्यां । यथासूर्यप्रकाशःसर्वगतोपिक्वचिदेवसूर्यकांतादौप्रविष्टःसन्दाहादिहेतुरेवमात्माहृदयेस्थितइति ३३७ नापितस्येति । यथानापितस्यविस्तृतेक्षुराधारेपात्रेक्वापिएकदेशेक्षुरःशीघ्रंलभ्यते तथात्मादेहनिष्ठेहृदयइति ३३८

देहेसामान्यव्याप्तिदर्शकंद्वितीयमग्निदृष्टांतंविवृणुते यथासर्वेतिपंचभिः ३३९ एतेनदृष्टांतेनउत्कृष्टत्वापकृष्टत्वलक्षणंतारतम्यमप्यौपाधिकमितिदर्शितमित्याह तारतम्यमिति ३४० सर्वगतत्वे सर्वत्रोपलब्धिःस्यादितिशंकाप्यनेनदृष्टांतेनसमाहितेत्याह मथनेनेति । श्रुतिःश्रवणंतत्प्रभृत्युपायेन ४४१ उपाधिधर्मभाक्त्वमुपाधिवशान्नानारूपत्वंचानेनदृष्टांतेनदर्शितमित्याह यथावन्हिरि विद्वाभ्याम् ३४२ । ३४३ ननुभासमानआत्मनिकथमेवमध्यारोपइतिचेदज्ञानेनतस्यसम्यग्भानप्रतिबंधादित्याह विद्यमानइति । यथारात्रौसूक्ष्मरूपेणविद्यमानोपिसवितुःप्रकाशस्तमसा भिभूतत्वान्नप्रकाशतेतथाविद्यमानोप्ययमात्माअज्ञानेसतिनप्रकाशतइति ३४४ ननुप्रकाशरूपेकथमावरणसंभवइत्याशंकावारणायदृष्टांतमाह प्रकाशमिति । यथादिवसेनिबिडंतमोराहुरूपं प्रकाशरूपमादित्यमाश्रयेत् तद्भास्यत्वात् तथात्राज्ञानमिति । अधुनाविद्यातःपूर्वदशायाम् ३४५ उक्ताध्यारोपहेयताप्रतिपादकस्यतंनपश्यंतीत्यादेरेकैकेनभवतीत्यंतस्यवाक्यस्यार्थमाह उद्योतइतिचतुर्दशभिः । यथाउद्योतेसूर्यस्यातपेकदेशेद्युमणौसूर्येचप्रकाशत्वंयद्यपिसमंतथापिकृत्स्नःपूर्णप्रकाशोद्युमणिरेवगण्यतेनापरः तथाघ्राणादिरूपेकरणेतदवछिन्नतयावर्त्तमानश्चित्प्रका शोऽकृत्स्नोऽपरिपूर्णउक्तइति ३४६ ननुवस्तुतःपूर्णस्यकल्पितावच्छेदेनपूर्णताक्षतिरितिचेत्सत्यं तथापिविपरीताभिमानःसंसारेपातयत्येवेतिनिश्चित्यबुधाःपरिच्छिन्नदृष्टिंत्यजंतीत्याह प्रत्ये

यथासर्वगतोवन्हिःकाष्ठेष्वेवोपलभ्यते ॥ एवंसर्वगतोप्यात्मादेहेष्वेवोपलभ्यते ३३९ तारतम्यंयथादृष्टंवन्हेःकाष्ठगतस्यहि ॥ सर्वदेहस्थितस्यापितारतम्यंतथा त्मनः ३४० मथनेनयथाक्वापिकाष्ठेवह्निःप्रजायते ॥ श्रुत्यादिनातथात्मायंदेहेक्वाप्युपलभ्यते ३४१ यथावन्हिर्महानल्पःकाष्ठभेदैःप्रजायते ॥ एवमेषमहानल्पः पुमान्देहविभेदतः ३४२ यथेंधनस्यभेदेनप्रकाशोविविधोभवेत् ॥ तथाकरणभेदेनभेदोनानाविधोभवेत् ३४३ विद्यमानोयथारात्रौप्रकाशोनप्रकाशते ॥ विद्यमान स्तथाऽऽत्मायमज्ञानेनप्रकाशते ३४४ प्रकाशमाश्रयेद्यद्वद्दिवसेनिबिडंतमः ॥ तद्वदात्मानमाश्रित्यह्यज्ञानंवर्ततेधुना ३४५ उद्योतेद्युमणौचैवप्रकाशत्वंसमंसदा ॥ तथापिद्युमणिःकृत्स्नःप्रकाशोनापरोयथा ॥ तथाघ्राणादिकरणेप्रकाशोऽकृत्स्नईरितः ३४६ प्रत्येकंकृत्स्नएवायंतथाहंविषयोमतः ॥ अकृत्स्नत्वेनवागादौतन्न पश्यंतिसूरयः ३४७ वागादीनिचनामानिकर्मणानस्वरूपतः ॥ वदन्वाक्कथितोदेवःकरणेनकरोतिच ३४८ कुर्वन्नेवयतःसर्वमादत्तेचघटादिकम् ॥ पदेस्तुगतिकर्म त्वंयस्मात्पादस्ततोभवत् ३४९ पालनात्पायुरुद्दिष्टोविसर्गस्येहमोचनात् ॥ विसर्गमोक्षरहितानहिजीवंतिजंतवः ३५०

कमिति । यद्यपिप्रत्येकंवागादौवर्त्तमानोप्ययमात्मावस्तुतःकृत्स्नएवतथापितथावागादिरूपेणाहमितिज्ञानस्यवागहमित्याकारकस्यविषयःसन्नकृत्स्नत्वेनापूर्णत्वेनैवमतस्तमकृत्स्नंपरिच्छिन्नं सूरयोविद्वांसोनपश्यंतीति ३४७ तस्यवागादिरूपस्याकृत्स्नतांस्फुटयति वागादीनीति । यथैकस्यदेवदत्तस्यपाचकपाठकादीनिनामानितत्तत्कर्मनिमित्तकान्येवनस्वरूपतःस्वरूपमात्रमालो चयनभवंतितानिचाकृत्स्नस्यैवोपस्थापकानि पाकक्रियाविशिष्टस्योपस्थापनेपाठक्रियाविशिष्टस्यानुपस्थापनात् एवंवागादीनिनामानिबोध्यानीति । वागादिशब्दानांतत्तत्कर्मनिमित्तकतामु भिनयति वदन्नित्यादिना । वदनरूपंव्यापारंकुर्वन्देवोवागित्युक्तः तथाकरणेनानुष्ठानरूपव्यापारेणकरइत्याकारिकांसंज्ञांप्राप्तः ३४८ ननुपाण्योरादानंव्यापारःप्रसिद्धःकथंकरणंव्यापारत योक्तमित्यतआह कुर्वन्निति । यतःकुर्वन्नेवसन्व्यापारोभवन्नेवसन्घटादिमादत्तेगृह्णातिअतआदानादिक्रियापकंकरणमेवप्रवृत्तिनिमित्ततयोक्तमितिशेषः यस्मात्पदेःपदधातोर्गतिकर्मत्वंगतिरूपक्रि यावाचकत्वंततोगतिंकुर्वन्देवःपादइतिपदेनोक्तः ३४९. पालनादिति । विसृज्यतेत्यज्यतेइतिविसर्गोमलंतस्यमोचनद्वारापालनंकुर्वन्पायुरित्युक्तः । विसर्गमोक्षस्यजीवनहेतुत्वमन्वयव्यतिरे कसिद्धमित्याह विसर्गेति ३५०

आनंदइति । आनंदोऽनुभूयमानःप्रशंसायाःस्वजनकस्यस्तुतेर्हेतुःप्रयोजकइति इतिप्रसिद्धं । तथाचप्रशंसापदंप्रशंसाहेतावानंदेउपचरितं साप्रशंसातुशंसेर्धातोरर्थः ततःशंसतिप्रशंसतिआनंदंप्र नयतीतिव्युत्पत्त्याशिश्नःपदार्थोदेवोजातआनंदहेतुत्वादिति शंसुधातोर्नप्रत्ययेउपधाकारयोरित्वेऽत्यस्यतालव्यत्वेचशिश्नशब्दःसाधुः ३९१ उपतिष्ठतीति । उपपूर्वकतिष्ठतेःसमीपस्थितिवचन त्वादूर्ध्वरेतसांज्ञानफलमोक्षाधिकारात् अधोरेतस्कत्वेनजंतूनांपुण्यपापयोःफलभोगाधिकारीसन्उपस्थइतिनामभजतीत्यर्थः ३९२ कर्मेंद्रियसंज्ञासंबंधंतादात्म्याध्यासमूलकमभिधायतथाज्ञा नेंद्रियसंज्ञासंबंधमाह जिघ्रन्निति । जिघ्रन्गंधमुपाददानोघ्राणसंज्ञोभवति चष्टेव्यक्तंकथयति दृष्टस्यनिःशंकमभिधानप्रसिद्धेः तथाभवन्दर्शनेनव्यक्तमभिधानसमर्थोभवंश्चक्षुरित्युक्तः शृ ण्वन्नित्यादिस्पष्टम् ३९३ प्राणसंज्ञांव्युत्पादयति देहेति । देहरूपेयंत्रेप्रकर्षेणाननून्चलन्सन्प्राणइत्युक्तः ३९४ अंतःकरणचतुष्टयसंज्ञायोगमाह मनुतेइतिचतुर्भिः । विश्वंजगद्भावापन्नमात्मा नंसकलंमनुतेविकल्पयतियतस्ततोमनःसंज्ञः ३९५ दधातीति । स्वस्यांगर्भधारकस्त्रीसमेस्वरूपेवासनारूपेणसकलमतीतानागतवर्तमानात्मकंविश्वंयतोदधातिधारयतिततोधीरित्युक्तः ३९६ चितिरिति । चितिरनुसंधानरूपाचित्संवलिताचित्तवृत्तिःसंविदितिप्रसिद्धा ततःसंवित्संज्ञवेदनरूपात्कर्मणोनिमित्ताच्चित्तमित्युक्तः ३९७ अहमिति । सोहमस्मीत्यग्रेव्याहरदितिश्रुतेर्विराजाप्रथममु

आनंदोहिप्रशंसायाहेतुःशंसेरियंस्मृता ॥ अर्थःशिश्नंततोलोकेआनंदस्यैकहेतुतः ३९१ उपतिष्ठतिवासर्वंपुण्यापुण्यफलंसदा ॥ जंतूनांतेनविज्ञेयमुपस्थइतिनामतत् ३९२ जिघ्रन्घ्राणमयंदेवश्चष्टेचक्षुस्तथाभवन् ॥ शृण्वन्श्रोत्रंहिरसयन्रसनंपरिकीर्तितः ॥ स्पर्शनंहिस्पृशन्नेषएवंनामान्यवाप्नुयात् ३९३ देहयंत्रेसदा यस्मात्प्रकर्षेणचलत्ययम् ॥ उत्तमश्चायमेतस्मात्प्राणएषोभिधीयते ३९४ मनुतेसकलंयस्माद्विश्वमात्मानमव्ययम् ॥ तस्मान्मनइतिख्यातिमगाद्ब्रह्मस्वरूप धृक् ३९५ दधातिनिखिलंस्वस्यांवासनारूपतोयतः ॥ धीरित्येषततोदेवःकथितोवेदवादिभिः ३९६ चितिःसंविदितिख्यातासंविद्वेदनकर्मतः ॥ चित्तमेषसदा ज्ञेयःसर्वज्ञःपुरुषोत्तमः ३९७ अहमित्यात्मनोनामजंतुमात्रस्यकथ्यते ॥ पृष्टमात्रोयतःपूर्वमानवोहंकरोत्ययम् ३९८ एवमेतानिनामानितथान्यान्यपिकोटि शः ॥ अकृत्स्नएषनज्ञेयःकिंतुकृत्स्नोमनीषिभिः ३९९ कृत्स्नआत्मेतिविज्ञेयःसंततोयंनभोयथा ॥ नात्रकश्चिद्विभेदोस्तिस्वान्योत्थःकर्हिचित्क्वचित् ३६० आत्मधीशब्दयोर्यस्माद्विषयस्तद्विवर्जितः ॥ आत्मेत्येवसविज्ञेयोह्यहमस्मीतिजंतुभिः ३६१

चरितत्वादहमित्याकारकंनामसर्वसाधारणं यतोधुनापिकोसीत्यादिनापृष्टोजनोऽहंदेवदत्तइत्याद्युत्तरयन्नहंशब्दंपूर्वमभिदधानोदृश्यतेइत्यर्थः ३९८ अकृत्स्नवर्णनमुपसंहरति एवमिति । एव मेतानिअकृत्स्नोपस्थापकानिनामान्युक्तानितथान्यान्यपिदेवमानुषासुरादीनिकोटिशःअकृत्स्नरूपस्याभिधायकानिद्रष्टव्यानितद्वाच्योऽकृत्स्नस्तुमनीषिभिर्नज्ञेयइति ३९९ उक्ताध्यारोपमेवकारे णापोह्यकृत्स्नरूपाभिनयपरस्यात्मेत्यादेर्विद्यासूत्रभूतस्यवाक्यस्यार्थमाह कृत्स्नआत्मेतिपंचभिः । आत्मेतिपदमत्रावर्तते तथाचयथाउपाधिकल्पिताभेदाःप्रतिबिंबरूपाःसूर्येबिंबभूतेएकतांग ताएवंयत्रात्मनिनिरूपिताविशेषाएकतांगच्छन्तिसकृत्स्नआत्माआत्मेत्युपास्यः इतिशब्दोऽविषये तत्रात्मशब्दोप्युपचरितइतिद्योतयति तस्यकृत्स्नतांस्फुटयति संततइत्यादिना । यथाघटाकाशा द्विविशेषेपुनभःसंततंतथायमिति अत्रात्मनिस्वोत्थःस्वगतःअन्योत्थःसजातीयादिनिरूपितश्चभेदोनास्तीति ३६० तत्रानुपलब्धिंहेतुतयाह आत्मधीति । यस्मादात्मेत्याकारकयोर्धीशब्दयो र्विषयःसंस्तेनभेदेनविवर्जितोऽनुभूयते आत्मेतिरूपेणदृष्टेभेदोनोपलभ्यतेइतियावत् । फलितमाह आत्मेत्येवेति । तस्मात्सर्वांतरबोधकेनात्मशब्देनलक्षणयाततसमानार्थेनाहंशब्देनवासविज्ञेयइ ति । एतेनात्रवाक्येउपासीतेत्रिपदंप्रमारूपविज्ञानपरमितिसूचितम् ३६१

नन्वनेकप्रमातॄणांतत्राहंशब्दप्रयोगभेदात्तत्रभेदःस्याद्देहवदित्याशंक्यांदृष्टांतेनवारयति एकस्मिन्निति । यद्वदेकस्मिन्नपिघटेऽनेकैरपिवक्तृभिर्जंतुभिर्घटइत्येवसमानरूपेणोच्यतेतत्रचवक्तॄणांभेदेपिवस्तुनो घटस्यनभेदःसंभवतीति तथाचवक्तव्यभेदाधीनप्रयोगभेदोव्यभिचारीतिभावः ३६२ अत्रापिप्रयोगैकरूप्यंदर्शयति अहमिति । अत्रलोकेपिसर्वेजंतवोऽहमित्येवात्मानंयतोवदंतिततएकएवज्ञेयइ ति । कीदृशमात्मानम् यद्वन्नभस्तद्वदेकरूपेणस्थितमिति ३६३ नभोदृष्टांतंस्फुटयति गृहइति । यथाघटाद्युपाधिकस्यनभसोघटाकाशादिरूपेणभेदेपिनभइत्याकारकयोःशब्दाभ्यांगम्यस्यभि दाभेदोन एवंशब्दात्मनःशब्दआत्मेत्याकारकःप्रतिपादकोयस्यशब्दात्मातस्यात्मशब्दार्थस्येतियावत् एतादृशस्यात्मनोऽपिनभेदइत्यर्थः ३६४ तदेतत्पदनीयमित्यादेःश्लोकंविंदतइत्यंतस्यवाक्य स्यार्थमाह प्रापणीयमित्यष्टभिः । यदात्मेतिशब्दगम्यंरूपंमयेरितंअदएतदेवाधिकारिभिःप्रापणीयंज्ञानलक्षणप्राप्तेर्विषयतांनेयमितियावत् अतोऽन्यच्छब्दादिकंनप्राप्तव्यमिति ३६५ अन्यस्या प्राप्तव्यत्वेउपपत्तिमाह ग्रहइति । सुखमुदर्कउत्तरंफलंयस्यएतादृशएवपदार्थोग्रहेग्रहणेयोग्योबुधैरुक्तः । विषयास्तुनतथेत्याह विषयाइति ३६६ विषयाणांदुःखोदर्कत्वाद्धेयत्वेसतिविषय भोगसाधनंस्थूलसूक्ष्मकारणसंज्ञंशरीरत्रयमपिहेयमितिसिद्धमित्याह विषयप्राप्तीति । साज्ञानमज्ञानेनकारणशरीरेणसहितंस्थूलंसूक्ष्मंचशरीरम् अतएवदुःखोदर्कविषयप्राप्तिहेतुत्वादेवनप्राप्यहे

एकस्मिन्हिघटेयद्वद्घटइत्येवजंतुभिः ॥ उच्यतेवक्तृभेदेनवस्तुभेदोनसंभवेत् ३६२ अहमित्येवचात्मानंजंतवोत्रवदंतिहि ॥ ततएकःसविज्ञेयआत्मायद्वन्नभः स्थितम् ३६३ गृहेमठेघटेचास्यनभसोनयथाभिदा ॥ नभेदोशब्दगम्यस्यह्येवंशब्दात्मनोभिदा ३६४ प्रापणीयमदोरूपंयदात्मेतिमयेरितम् ॥ नान्य च्छब्दादिकंलोकेप्राप्यंहंस्यात्कदाचन ३६५ ग्रहेयोग्यःसुखोदर्कःपदार्थोगीयतेबुधैः ॥ विषयानसुखोदर्काःप्राप्यर्हाःस्युःकथंनुते ३६६ विषयप्राप्तिहेतुःस्यात् स्थूलंसूक्ष्मंशरीरकम् ॥ साज्ञानमतएवैतन्नप्राप्यंहिकथंचन ३६७ अभिन्नेनपदायद्वद्गोर्गमेतेनविंदति ॥ अभिन्नेनात्मनात्मानंलभतेसुखरूपिणम् ३६८ गो पदांकांभुवंदृष्ट्वागोर्गतात्रपरत्रन ॥ विज्ञायलभ्यतेयद्वत्तस्मिन्मार्गेशनैर्व्रजन् ३६९ पदनीयंतथात्मस्थमानंदात्मानमेत्यसः ॥ सर्वभूतस्थितंतादृग्रूपंतंलभतेऽमु ना ३७० आत्मनापदरूपेणनिजचेतोध्वचारिणा ॥ स्थावरंजंगमंसर्वंलभतेस्वात्मरूपतः ३७१ आत्मलाभात्परोलाभोलोकेनास्तीहकश्चन ॥ यशःकी र्त्यादिकंतेनलब्धंफल्ग्वेवजायते ३७२

मिति ३६७ एवंकारणशरीरपर्यंतंदृश्यंपरिहायैतत्संघातांतर्वर्तिन्यात्मस्वरूपेसच्चिदानंदतयापरिचितेसतिसर्वत्रतत्परिचयोभवतीत्यस्मिन्नर्थेपददृष्टांतंविवृणुते अभिन्नेनेति । यथागोर्वृषभस्याभिन्ने नाखंडितेनपदाचरणांकितदेशेनेतियावत् तेनतंगांविंदति एवमत्रसंघातेवागाद्यवच्छेदकैरभिन्नेनाखंडितेनात्मनापरिचितेनसुखरूपिणंभूमानमात्मानंलभतेपरिचिनोतीत्यर्थः ३६८ एतदेवस्फुटय ति गोपदांकामिति । गोःपदेनांकोयस्यामीदृशींभुवंभूमिखंडंदृष्ट्वात्रैवदेशेगौर्गतापरत्रएतद्भिन्नेनगताइत्येवंविज्ञायानिश्चित्यतस्मिन्पदांकवतिमार्गेशनैर्व्रजन्सागौरन्वेषकैर्लभ्यते ३६९ दार्ष्टांतिकेयो जयति पदनीयमितिद्वाभ्याम् । तथापदनीयंप्राप्तव्यतयोक्तमात्मस्थंसंघातांतर्वर्तिनमानंदरूपमात्मानंपदांकस्थानीयमेत्यप्राप्यामुनापरिचितेनसर्वभूतेषुस्थितंतादृक्स्वरूपंसच्चिदानंदलक्षणमात्मानं लभतेसाक्षात्कुरुतेइति ३७० आत्मनेति । निजचित्तरूपेऽध्वनिसाक्षितयाप्रचरणशीलेनात्मनापदरूपेणपदांकसमेननिश्चितेनस्थावरादिकंसर्वंसच्चिदानंदात्मतयानिश्चिनोतीति ३७१ तस्यपरमफल रूपतामाह आत्मलाभादिति । आत्मलाभस्यनिरतिशयत्वात्तेनात्मलाभेनतदपेक्षयाफल्गुयशआदिकंलब्धमेवभवतिज्ञानफलेसर्वांतर्भावादितिभावः ३७२

अन्यत्परिहृत्योक्तात्मतत्त्वनिष्ठेवकार्येत्यर्थपरायास्तदेतत्प्रेयइत्यादिकंडिकायाअर्थंनिरूपयति आत्मापीत्यष्टादशभिः । आत्माप्रियइत्युक्तःपुत्रादिकमपिप्रियमुक्तमनयोःप्रिययोर्मध्येनिरुपाधिकप्रेमास्पदत्वेननिश्चितंयथाभवतितथाप्रियत्वातिशयादात्माप्रियान्सोपाधिप्रेमास्पदत्वादात्मभिन्नंसुतादिकंतुतथानेति ३७३ पुत्रादेःसोपाधिकप्रेमविषयतांस्फुटयति पुत्रेति। पुत्रादेर्याप्रियतासास्वात्मार्थंस्वोपकारार्थैवमता अन्यथापुत्राद्यर्थत्वेपुत्रत्वाद्यविशेषाद्वैरिपुत्रादेःसाप्रियताकुतोनस्यादिति फलितमाह आनंदात्मनइति । अतोमुख्यप्रियत्वात्भूयानभ्यधिकइतियावत् ३७४ नकेवलंबाह्यानांपुत्रादीनामेवसोपाधिकप्रेमविषयत्वंकिंतुसंघातवर्तिनांप्राणादीनामपीतिसूचयितुंतेषांपुत्रादिवद्बाह्यतांस्फुटयन्नात्मनःसर्वांतरत्वमाह इंद्रियाणीतित्रिभिः । अत्रदृश्यवर्गेविषयेभ्योबाह्येभ्यःस्थूलशरीराकारपरिणतेभ्यश्चइंद्रियाणिप्राणविशिष्टान्यांतराणिअंतर्भवानिएतेभ्योमनःसंकल्पविकल्पात्मकमांतरंततोपिबहिर्मुखनिश्चयात्मिकाबुद्धिरिति ३७५ बुद्धेरिति । ततोबुद्धेरपिजीवआंतरःजीवस्वरूपमाह गतइति । अहंतावगाहिन्यांप्रत्यक्प्रवणायामहमित्याकारायांमतौविषयतयास्थितिंगतः अहंकारविशिष्टइतियावत् अस्मादहंकारविशिष्टरूपाज्जीवादपिपरमांतरमव्यक्तमव्याकृतादिशब्दवाच्यंकारणमज्ञानंयत्सुषुप्त्यादिप्रसिद्धंतदिति ३७६ आंतरस्त्विति । ततोऽव्यक्तात्शुद्धात्माआंतरःयत्रांतरत्वतारतम्यंविश्रांतमिति ३७७ उक्तार्थेऽसंभावनांवारयन्यथाघटद्रष्टाघटादांतरस्तथैतेषामांतरत्वंपरिचेयमित्याह विषयानितित्रिभिः । अयमात्माइंद्रियविशिष्टःसन्विषयान्वेत्तिततोवेत्तृविशेषणत्वेनेंद्रियाणामांतरत्वंस्फुटमेवमग्रेपि मनोविशिष्टइंद्रियाणिवेत्तिपश्यामिजि

आत्मापिप्रियउद्दिष्टःप्रियंपुत्रादिकंयथा ॥ अनयोर्निश्चितंप्रेयानात्मानान्यत्सुतादिकम् ३७३ पुत्रवित्तकलत्रादेःस्वात्मार्थंप्रियतामता ॥ अन्यथावैरिणःकस्मात्पुत्रादेःसानसंभवेत् ॥ आनंदात्मनएवातोलाभोभूयानुदाहृतः ३७४ इंद्रियाण्यांतराण्यत्रविषयेभ्योहिदेहिनाम् ॥ आंतरंमनएतेभ्योबुद्धिस्तस्मादिहांतरा ७५ बुद्धेरथांतरोजीवोगतोहंतामतिस्थितिम् ॥ अस्मात्परंसदाज्ञेयमव्यक्तंकारणंहियत् ४७६ आंतरस्तुततोज्ञेयआनंदात्मामनीषिभिः ॥ नातोंतरतमंलोकेविद्यते वस्तुकिंचन ३७७ विषयानिंद्रियैर्वेत्तिमनसाचेंद्रियाण्यपि ॥ मनःसंशयरूपंतद्धियानिश्चितयापिच ३७८ धियंधीयुक्तरूपेणधीयुक्तंकारणात्मना ॥ कारणंच स्वरूपेणस्वप्रकाशेनसर्वदा ३७९ आनंदात्माततोलोकेसर्वांतरतमःस्मृतः ॥ पुत्रादिभ्यःप्रियश्चैवस्थिराणांचचरात्मनाम् ३८० प्रियंयस्मात्परंब्रूयादेहपुत्रधनादियः ॥ मनुजस्यास्यसर्वंतद्रोत्स्यत्येवनसंशयः ॥ आनंदात्माकदाचित्सनरोत्स्यतिस्वरूपतः ३८१

घ्रामिवेति । अथसंशयरूपंमनस्तुनिश्चितंनिश्चयरूपावृत्तिरस्त्यस्यामित्यर्शआद्यचिनिश्चितानिश्चयवृत्तिमतीबुद्धिस्तयापश्यति अत्रसंदिहानोस्मीति ३७८ धियमिति । उक्तनिश्चयरूपांधियमपिधीयुक्तेन अहंकाराख्यबुद्धिवृत्तियुक्तेनजीवरूपेणपश्यतिअहंनिश्चिनोमीति अथोक्तधीयुक्तंजीवमपिकारणात्मनाकारणाज्ञानोपाधिकसाक्षिरूपेणपश्यति अज्ञानंतुस्वप्रकाशेनस्वरूपेणैवेति ३७९ फलितमाह आनंदात्मेति । ततउक्तविधयात्मनिआंतरत्वतारतम्यविश्रांतेःसर्वेषामात्मैवसर्वांतरःसर्वांतरत्वाच्चसएवानंदात्माआनंदरूपत्वाच्चसएवपुत्रादिभ्यःकारणांतेभ्यःप्रियः विवेकदशायामितरत्रदुःखत्वनिर्णयात्तदतिशयवाचीतमबादिप्रत्ययोपिनप्रयोक्तुंशक्यतेइतिभावः ३८० ननुमुख्यप्रियत्वस्यात्मन्येवसंभवेपिगौणप्रियत्वस्येतरत्रापिसंभवात्कथमात्मैवप्रियइत्यवधारणमित्याशंक्यात्मेतरस्यातोन्यदार्तमित्यादिश्रुतेर्विनाशित्वेनतस्यगौणप्रेम्णोप्यनर्हत्वादुक्तमवधारणमुपपन्नमित्याशयेनाह प्रियमिति । यस्मात्परंसर्वांतरात्मभिन्नंदेहादिकंयःप्रियमितिब्रूयात्तस्यास्यमनुजस्यतद्देहादिकंरोत्स्यतिरोधंगमिष्यति । रोधोनामावरणंतच्चकारणेनकार्यग्रासात्मकविनाशरूपंतथाचविनंक्ष्यतीत्यर्थः । एतादृशेचप्रेमनयुक्तमितिभावः । आत्मातुस्वरूपेणकदाचिन्नविनंक्ष्यतीतितत्रैवप्रेम्णोयुक्तत्वात्सएवप्रियइतिभावः ३८१

इत्थमात्मन एवं प्रियत्वे पारमार्थिकेऽन्यस्य च प्रियाभासत्वे सति यथा रजततत्त्वविदः समीपे रंगरूपं मिथ्यारजतं मूढेन रजतमित्युच्यमानं तत्त्वविदोऽनृतमसहमानस्य रंगमिदमितिवचनाद्विनश्यति तथात्मेतरप्रियस्य विनाशभयात्प्रियात्मविदः समीपे आत्मेतरत्प्रियं न वक्तव्यमित्याह तस्मादिति । तस्मादात्मेतरस्य विनाशित्वे सत्यप्रियत्वात् विदुषः प्रियात्मविदः पुरः समीप आत्मनोऽन्यत्प्रियं न वक्तव्यं । वदनेऽनर्थप्रसंगमाह यदीति । मूढोक्तमनृतमसहमानो विद्वान्यदि इदं तव प्रियं विनाशीत्येवं ब्रूयात्तर्हि तत्प्रियं क्षणाद्रोत्स्यत्येवेति ३८२ कथं विदुषो वचनमात्रेणात्मेतरप्रियनाश इत्यत आह ईश इति । यतः प्रियात्मवित्तत्त्वज्ञत्वादनृतं वाग्व्यापारेण नाशयितुमीशः समर्थस्तस्माद्धेतोरित्यर्थः । एवं यदि पदाध्याहारेणईश्वरो हीत्येतस्यार्थो दर्शितः अथेश्वरपदस्य परमेश्वरपरतां गृहीत्वा विदुषोपेक्षाशीलेन तथाऽनभिधानेपि दोषो भवतीत्याह सन्निधावित्यादिना । तस्य विदुषः संनिधौ समीपदेशेऽनृतं न वदेत् कुतः यद्यतः स विद्वान् अनुवन्नपि फलं दद्यात् तदेव कुतः यद्यतो हेतोः पुण्यपापयोः फलप्रद ईश ईश्वरः 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेः । तथा च गंगातीरादिवद्विद्वत्संनिहितदेशस्य कृतपुण्यपापयोरुत्कर्षाधायकत्वादुत्कृष्टपुण्यपापानामिहैव फलमिति प्रसिद्धेर्नैर्घृण्यदोषप्रसंगोपीति भावः ३८३ ब्रह्मवित्संनिधेः पुण्यपापयोः शीघ्रफलप्रदत्वरूपोत्कर्षाधायकत्वे कैमुत्यन्यायमाह अल्पानामपीति । यदिमल्पानां स्थावरत्वादिनापकर्षशालिनामपि देवानां संनिधौ अनृतं वदेत्तर्हि ते देवा अवदंतोपि फलं ददति किमुत सर्वदेवात्मकः सवाग्व्यापारश्च विद्वानिति ३८४ एवं सति विदुषोऽग्रे आत्मैव प्रियमिति सत्याभिधाने इष्टसिद्धिरपि भवतीत्याह । यथेति । यथाऽनृताभिधाने प्रियस्य रोधो विनाशः स्यात्तथा सत्याभि

तस्मादन्यन्न वक्तव्यं प्रियं हि विदुषः पुरः ॥ यदि ब्रूयात्क्षणादस्य रोत्स्यतीदं न संशयः ३८२ ईशः प्रियात्मवित्तस्मात्संनिधौ तस्य नानृतम् ॥ वदेत्स यत्फलं दद्यादीशः पुण्यपापयोः ८३ अल्पानामपि देवानां संनिधावनृतं यदि ॥ वदेत्तेपि फलं दद्युरवदंतोपि भूरिशः ॥ वदन्विद्वान्कुतो नायं तत्फलं हि प्रदास्यति ८४ यथा रोधः प्रियस्य स्यादरोधोपि तथैव हि ॥ सत्यवादफलं लोके देवानां संनिधौ यथा ८५ एकैकोपि फलं दद्याद्देवः स्थावररूपभाक् ॥ जंगमोयं वदन्विद्वान्सर्वदेवः कथं तु न ८६ ततो यो लोक एतस्मिन्मायया तिविमोहितः ॥ पुत्राद्यरोधमिच्छन्सोप्यात्मानं हि प्रियं सदा ॥ उपासीतापि चेद्ध्यातुं शक्तो न मनुजो भवेत् ८७ उपासनं हि तत्प्रोक्तं गुरुशास्त्रादिवाक्यतः ॥ जायते यद्धि विज्ञानं सत्यसत्यपि वस्तुनि ८८ विश्वासमात्रतो नॄणां प्रत्ययानां प्रवाहतः ॥ उपदिष्टे सजातीनां विजातीनां च वर्जनम् ८९ प्रियानंदात्मविज्ञानात्सर्वदेववपुः पुमान् ॥ विद्वान्भवति नैवात्र विचार्यं शक्र कर्हिचित् ३९०

धानस्य फलं प्रियस्य पुत्रादेररोधोपि भवेदिति ३८५ दृष्टांतं स्फुटयति एकैकोपीति । सर्वदेवः सर्वदेवात्मकः ३८६ तत इति । ततः प्रियात्मविदुष ईश्वरत्वदर्शनात्तत्प्रियत्वाभिधानेपीष्टबलदर्शनाद्यसोपि मनुज आत्मानं प्रियरूपेणोपासीत सकः यो मायया तिविमोहितः वैराग्याभावेनात्मनः प्रमारूपविज्ञानेऽनधिकृत इति यावत् पुत्रादिरूपप्रियाणामरोधं कामयमानश्चेति ननु तादृश उपासनमपि कथं कुर्यादत आह अपि चेदिति । चेद्यदि ध्यातुमपि भावनासंतानं कर्तुमपि न शक्तो भवेत्तथापि कुर्यादेवेति । तथा चावश्यकं कार्यांतरं यथा हठेनापि करोति तथोपासनमपि कार्यमिति भावः ३८७ ननु प्रमारूपविज्ञानादुपासनस्य को भेद इत्यतस्तत्स्वरूपं दर्शयति उपासनमिति द्वाभ्यां । यद्विज्ञानं सति विद्यमानेऽसति अविद्यमाने वा वस्तुनि गुरुशास्त्रादिवाक्यमात्राधीनं वस्तुस्वरूपावरणभंगोदासीनमिति यावत् एतादृशं मानसवृत्तिरूपं जायते जाते च तत्र ज्ञाने विश्वासमात्रेण उपदिष्टार्थविषयकानां तत्सजातीयानां प्रत्ययानां धीवृत्तीनां प्रवाहतो विजातीनामन्याकाराणां प्रत्ययानां वर्जनं तदेतावदुपासनमित्युक्तमिति द्वयोरर्थः । एतेन उक्तज्ञानस्य वस्तुस्वरूपावरणभंजकत्वे वस्तुसौंदर्याच्च तत्र चेतसः स्थिरत्वे प्रमारूपत्वमिति सूचितम् ३८८ । ३८९ प्रमारूपप्रियात्मविज्ञानस्य फलमाह प्रियानंदात्मेति । प्रियत्वेनानंदरूपस्यात्मनो विज्ञानात्सम्यग्दृष्ट्या त्तु विद्वान्सर्वदेववपुः पुमान्सर्वात्मभूत ईश्वरो भवति हे शक्र अत्रार्थेन विचार्यं न संशय इति यावत् ३९०

तदाहुरित्याद्यैःसर्वमभवदित्यंतस्यार्थंप्रपंचयति अत्रतेइत्यादिद्विपष्टिश्लोकैः । अत्रआत्मविज्ञानात्सर्वात्मभावलाभइत्यस्मिन्नर्थेतेतुभ्यमिंद्रायपुरातनंवृत्तंवृत्तांतंकथयिष्यामि कीदृशंवृत्तं यदनेकेषांमहात्मनांब्राह्मणानांसमाजेविचारतोनिष्पन्नमितिशेषः ३९१ ब्राह्मणाइति ३९२ तत्रेति । तत्रसमाजे । कथाःवाक्यप्रबंधाः प्रवृत्ताःनिष्पन्नाः समाश्रयोविषयः एषावक्ष्यमाणा । तत्रकेचिन्महात्मानएवंद्विजोत्तमानाहुःपप्रच्छुः ३९३ प्रश्नमभिनयति मानवाइतिचतुर्भिः । मानवाविद्याधिकारिणोब्रह्मणोविद्ययाज्ञानेनसर्वात्मभावलाभंवदंतितत्रैवंविचार्यते यस्यब्रह्मणोविद्यया सर्वात्मभावःफलंतद्ब्रह्मापिकिंकिंचिज्ज्ञात्वासर्वात्मभूतं अज्ञात्वैववा । आद्येतन्निरूपणीयंब्रह्मकिंज्ञातवत् येनयद्विषयकज्ञानेनसर्वंसर्वात्मकमभूदिति ३९४ द्वितीयमनूद्यदूषयति विप्राइति । हेविप्राय दितद्ब्रह्मनज्ञात्वाज्ञानंविनैवसर्वरूपमभूत्तर्हिनराअपिसर्वेदातीतादिकालेषुअज्ञानादेवसर्वेस्युःसर्वात्मभूताःस्युः किंब्रह्मविद्यार्थंप्रयासेनेत्यर्थः ३९५ आद्येअन्यस्यविज्ञानाद्ब्रह्मसर्वात्मभूतमात्मनएववा तत्रनाद्यइत्याहुः ब्रह्मान्यस्येति । यदिस्वस्मादन्यस्यज्ञानाद्ब्रह्मसर्वमभवत्तदातेनान्यविषयकज्ञानेनैवब्रह्मवत्तेमानवाअपितत्सर्वेस्युः अनयावेदांतप्रसिद्धयाऐक्येनब्रह्मविषयकयाविद्ययाकिंप्रयोजनमि

अत्रतेकथयिष्यामिपुरावृत्तंविचारतः ॥ अनेकेषांसमाजेयद्ब्राह्मणानांमहात्मनाम् ३९१ ब्राह्मणामिलिताआसन्वेदवेदांगपारगाः ॥ एकदाकापिकस्मिंश्चिन्निमित्तेस मुपस्थिते ३९२ तत्रनानाकथावृत्तालोकवेदसमाश्रयाः ॥ तत्रैषापिकथाकापिप्रसंगेसत्यभूत्तदा ॥ तत्रकेचिन्महात्मानएवमाहुर्द्विजोत्तमान् ३९३ मानवाःसर्व भावाप्तिंवदंतिब्रह्मविद्यया ॥ ब्रह्मकिंज्ञातवद्येनतदभूत्सर्वमेवहि ३९४ विप्रायदिनतज्ज्ञात्वाब्रह्माभूत्सर्वमेवहि ॥ अज्ञानात्सर्वदैवस्युःसर्वमेवनराअपि ३९५ ब्रह्मान्यस्ययदिज्ञानात्सर्वमेवाभवत्तदा ॥ संतुतेनैवतत्तेकिमनयाब्रह्मविद्यया ३९६ ब्रह्मचेत्स्वात्मविज्ञानात्सर्वभावंसमाप्तवत् ॥ नृणामप्यात्मविज्ञानात्स्याद्व्यर्था सातथापिहि ३९७ एवंविचारकैःपृष्टाब्राह्मणाःशास्त्रकोविदाः ॥ अज्ञानमन्यविज्ञानंपरित्यज्योत्तरंददुः ३९८ नाज्ञंब्रह्मनचान्यस्यविज्ञानसहितंचतत् ॥ किंतु स्वात्मनएवैतज्ज्ञानात्सर्वात्मतांगतम् ३९९ सर्वात्मतासमाप्त्यर्थंविज्ञेयोमानवैरपि ॥ स्वात्मानैवहिताद्भिन्नंजंतोःकस्यचिदात्मनः ४०० बृहंतंब्रह्मणःशब्दःप्राहा र्थंत्वात्मनोपिच ॥ शब्दस्ततोनभिन्नार्थाविमौपाणिकरोक्तिवत् ४०१

ति ३९६ द्वितीयेदोषमाहुः ब्रह्मचेदिति । चेद्यदिब्रह्मस्वात्मविज्ञानादेवसर्वभावंसमाप्तवत्प्राप्तंतर्हिनृणामपियथास्वमात्मविज्ञानादेवसर्वभावाप्तिःस्यात्तथापिसाप्रकृताब्रह्मविद्याव्यर्थेति आत्मभेदमत्वे पाकोटिरितिबोध्यम् ३९७ सिद्धांतमवतारयति एवमिति । एवंविचारकैर्विचारंकुर्वाणैःपृष्टाःशास्त्रतात्पर्यविदोब्राह्मणाउत्तरंददुः किंकृत्वा पूर्वोक्तपक्षाणांमध्येऽज्ञानपक्षमन्यविज्ञानपक्षंचपरित्यज्ये ति ३९८ आत्मब्रह्मपदार्थगतोभेदोनास्तीत्याशयेनसिद्धांतमभिनयति नाज्ञमित्यादिना । ब्रह्माज्ञमज्ञानविशिष्टंसन्नसर्वात्मतांप्राप्तं तथान्यविषयकविज्ञानविशिष्टंनसर्वात्मतांगतंकिंतुस्वात्मनएवब्रह्मा त्मपदाभ्यामुक्तस्यविज्ञानात्सर्वात्मतांगतमिति । अत्रब्रह्मैवस्वस्मिन्कल्पितेनाज्ञानेनविद्याधिकारीभूत्वात्मविद्ययासर्वात्मभावंगतमित्यस्यार्थस्यप्रपंचोभाष्येद्रष्टव्यः ३९९ सर्वात्मतेति । ए वमात्मनएवज्ञानस्यसर्वात्मतालाभप्रयोजकत्वेमानवैरपिसर्वात्मतासमाप्त्यर्थमात्मैवविज्ञेयः । ननुब्रह्मविज्ञानंविनाकथमात्मज्ञानमात्रेणसर्वभावइत्याशंकांब्रह्मात्मपदार्थयोरैक्यस्फोरणेनवारयति नैवेत्यादिना । हियस्मात्तद्ब्रह्मकस्यचिदपिजंतोरात्मनःसकाशान्नैवभिन्नमिति ४०० तत्रहेतुतयाब्रह्मात्मपदयोःसमानार्थतामाह बृहंतमिति । ब्रह्मणोवाचकःशब्दोब्रह्मेत्याकारकात्बृहंतंत्रिविध परिच्छेदशून्यमर्थमाहप्रतिपादयति तथात्मनोपिशब्दआत्मेत्याकारकःसर्वांतरत्वेनतमेवार्थमाह । ततइमौब्रह्मात्मशब्दौपाणिकरादिपर्यायशब्दवत्समानार्थावित्यर्थः ४०१

पर्यायताशंकांप्रवृत्तिनिमित्तरूपद्वारभेदप्रदर्शनेनवारयन्समानार्थतांस्फुटयति बृहत्यतीइति । बृंहतिर्बृहबृद्धावितिधातुःअतिःसातत्यार्थकोऽतधातुश्चएतौपरिच्छेदहीनत्वेनसमानेऽर्थेपर्यवसन्नौ यतोबृहतेर्वचोबृहन्निघटितंब्रह्मपदमधिकरूपमर्थमाह तथाअततेर्वचआत्मपदंसंततमांतरतयाव्यापकमाहेति ४०२ उभयोःपदयोरद्वितीयतायांपर्यवसानंदर्शयति सर्वाधिक्यमितित्रिभिः । हियंतःअश्वाद्गजोबृहन्नित्यादिप्रयोगेष्वश्वाद्यवधिवशात्परिच्छिन्नमहत्त्वबोधकत्वेपिसंकोचकंविनाबृहतेःसर्वाधिक्यरूपएवमुख्योर्थः । सर्वाधिक्यंचत्रिविधपरिच्छेदहीनत्वात्मकत्वात्सर्वाभिन्नतारूपं कुतश्चिदपिभेदेसतिएषसर्वाभिन्नतारूपोर्थोनसिद्ध्यतिनज्ञानपथमारोहतीत्यर्थः ४०३ अतिरिति । सत्सुस्थूलेषुअसत्सुसूक्ष्मेषुअभिन्नंसंतमभिन्नतयावर्त्तमानमसंकुचितोऽतिरतिधातुघटितआत्मपदमाह अतउभयोर्ब्रह्मात्मपदयोःसमानार्थतेत्यर्थः ४०४ देशेनेति । अधिकोब्रह्मपदार्थःसर्वगआत्मपदार्थश्चदेशादिभिर्भिन्नश्चेत्तर्हिमुख्योनस्यात् महाराजपदार्थोमंडलेश्वररूपइवगौणएवस्यादितियावत् ४०५ भेदस्यकल्पिततयावाचारंभणमात्रविकारोपाधिकत्वेनगौणत्वाच्चब्रह्मात्मपदयोरखंडपरत्वेतिदर्शयति यथेतिचतुर्भिः । यथातज्जैर्नभसोजातैर्मेघविद्युत्प्रभृतिभिर्नभसिअखंडेभे

बृहत्यतीसमानार्थौनिश्चितौपदवेदिभिः ॥ बृहतेस्त्वधिकंप्राहसततंत्वततेर्वचः ४०२ सर्वाधिक्यंहिमुख्यार्थोबृहतेर्नापरःक्वचित् ॥ सर्वाभिन्नोभवेत्सोर्थोभेदेनैषप्रसिद्ध्यति ४०३ अतिःसर्वेषुदेशेषुकालेषुसत्स्वसत्सुच ॥ अभिन्नंसंतमाहातोनभिन्नाऽर्थौबृहत्यती ४०४ देशेनापिचकालेनसतावाप्यसतापिवा ॥ भिन्नोमुख्योभवेन्नार्थोह्यधिकःसर्वगोपिवा ४०५ यथानभसिभेदोयंतज्जैरभ्रादिकैःकृतः ॥ तथाब्रह्मणिभेदोपितज्जैःसदसदात्मकैः ४०६ गंधर्वनगरेणादौप्रासादैस्तत्रसंस्थितैः ॥ तत्रस्थितैरन्यगृहैःपदार्थैश्चात्रसंस्थितैः ४०७ यथानभसिभेदोयंमाययैवप्रजायते ॥ एवमात्मनिभेदोपिमाययैवप्रजायते ४०८ आदौपंचमहाभूतैःस्थूलैःसूक्ष्मैश्चदेहकैः ॥ प्राणबुद्ध्यादिभिश्चापिचरस्थावरशब्दितैः ४०९ आत्मनोब्रह्मणोयस्माद्भेदःकोपिनविद्यते ॥ ततःसर्वात्मताप्राप्तिरैक्याद्ब्रह्मविद्यया ४१० मनुष्यायद्धिमन्यंतेनान्यतत्कदाचन ॥ ब्रह्मज्ञानाद्यतोब्रह्मसर्वमेतदभूत्पुरा ४११ महाराजोयथासुप्तोवेत्तिनात्मानमीश्वरम् ॥ एवंमायावृतंब्रह्मवेत्तिनात्मानमंजसा ४१२ यथाविशुद्धआकाशेनिर्भेदेभेदकारणम् ॥ धूमाभ्रपवनादिस्याद्देवंमायांतरात्मनि ४१३ यथातमोनिशाकालेप्रकाशंनिरुणद्धिहि ॥ एवंसंसारकालेपिमायास्वात्मप्रकाशकम् ४१४

दःकृतस्तथातज्जैर्ब्रह्मविवर्त्तैःस्थूलसूक्ष्मैर्ब्रह्मणिभेदइति ४०६ समष्टिव्यष्टिरूपोपाधिकृतकल्पितपरिच्छेदेदृष्टांतमाह गंधर्वेति । यथादौप्रथमंकल्पितेनगंधर्वनगरेणाकाशस्यभेदस्ततस्तत्रगंधर्वनगरांतर्गतैःप्रासादैर्भेदस्ततस्तत्रप्रासादेष्वंतःस्थितैरन्यैर्गृहैरपवरकाख्यैर्भेदस्ततोत्रगृहेषुस्थितैर्घटादिपदार्थैर्भेदोमायामयएवमात्मनिपंचमहाभूतैस्तदंतर्वर्तिस्थूलसूक्ष्मदेहैस्तदंतर्वर्तिप्राणाद्यैश्चमायामयोभेदइति । कीदृशैःस्थूलैर्देहैश्चरस्थावरसंज्ञैरितित्रयाणामर्थः ४०७ । ४०८ । ४०९ फलितमाह आत्मनइतिद्वाभ्यां । ब्रह्मात्मनोरैक्याद्ब्रह्मविद्यारूपेणैकेनसाधनेनसर्वात्मताप्राप्तिरितियन्मनुष्यामन्यंतेतत्सत्यमेवयतोब्रह्मकारणादिसमष्टिव्यष्ट्युपाधिकंपूर्वंपूर्वंब्रह्मज्ञानात्सर्वात्मकमभूदिति ४१० । ४११ पूर्णस्यापिस्वरूपविस्मृतौदृष्टांतमाह महाराजइति । यथामहाराजश्चक्रवर्तीसुप्तःसन्नात्मानमीश्वरंमहाराजंनवेत्तितथाब्रह्मापिमायावशादात्मानमिति समष्ट्युपाधिकनिष्ठंविक्षेपंतुकारणोपाधिसंस्थमित्यादिनावक्ष्यतीतिबोध्यम् ४१२ आवारिकामायैवविक्षेपशक्त्यासविलासतीभेदकारणमपिभवतीतिसदृष्टांतमाह यथाविशुद्धइति ४१३ उक्ताज्ञानस्यजडेआवरणवैयर्थ्याच्चिन्मात्रविषयतांसदृष्टांतमाह यथातमइति । प्रकाशंचाक्षुषादिरूपम् ४१४

उक्ताज्ञानस्यानादितांदृष्टांतेनस्फुटयति वाहीकस्येतिद्वाभ्याम् । यथावाहीकस्यअरण्यवेष्टितग्रामवासिनःकस्यचित्शत्रुराजसेनातत्कर्तृकलुंठनादिकंचकोदृशंभवतीत्येवंपरसेनादिकमज्ञातंवर्ततेकदा चित्तद्दर्शनेसतिनिवृत्तमज्ञानंपुनर्नजायतेइति ४१५ एवंब्रह्मणीति । एवमस्मिन्नात्मरूपेब्रह्मण्यिअनादित्वपत्तिहीनमेवाज्ञानंवर्ततेतद्यदाब्रह्मज्ञानान्नष्टंतदारभ्यपुनर्नजायतेइति ४१६ उक्ताज्ञान स्याभावरूपतांवारयति अज्ञानमितिपङ्क्तिः । हेविप्राअज्ञानंज्ञानाभावरूपंनभवति यतःआत्माआत्मरूपःप्रकाशएवज्ञानम् अतआत्मनोऽपरंजडंबुद्ध्यादितुनज्ञानंजडत्वादिति आत्मनोभा वस्तुसाधकाभावादयुक्तइतिभावः ४१७ कथंतर्हिअंतःकरणवृत्तौज्ञानव्यवहारइतिचेदुपचारादित्याह जडइति । प्रकाशकृताचित्तादात्म्याध्यासकृतेत्यर्थः दृष्टांतःस्फुटः ४१८ ननुमास्तुजड स्यप्रकाशतातथापिप्रकाशरूपात्मनोधर्मःप्रकाशांतरमस्तुतदभावश्चाज्ञानमितिशंकांजडत्वादिप्रसक्त्यावारयति प्रकाशइति । आत्मभिन्नप्रकाशाभ्युपगमेयावद्विकारंतुविभागइतिन्यायेनविकार त्वाद्वयोरपिजडत्वंप्रसज्ज्येतेतिइष्टापत्तौतुघटतद्गतशुक्लरूपयोरिवजडत्वादनात्मत्वप्रसक्तिरित्यर्थः ४१९ आत्मनआनंदरूपतांस्फुटयितुमुक्तन्यायंसुखेऽप्यतिदिशति नभिन्नमिति । ताभ्यामा त्मप्रकाशपदार्थाभ्यांसुखंनभिन्नम् भेदेस्वीकृतेहित्रिपुआत्मप्रकाशसुखपदार्थेष्वपिअनात्मतास्यात्नकेवलमन्यतरस्यैवेत्यर्थः त्रयाणांभेदशालिनामनात्मत्वेदृष्टांतमाह यथेति । यथापरकीयदेह

वाहीकस्ययथाऽज्ञातंपरसेनादिवर्तते ॥ तद्दर्शनेनिवृत्तंचेत्पुनर्नैवप्रजायते ४१५ एवंब्रह्मण्यनाद्यस्मिन्नज्ञानंवर्ततेयदा ॥ ब्रह्मविज्ञानतोनष्टंपुनर्नैवप्रजायते ४१६ अज्ञानंनभवेद्विप्राज्ञानाभावःकथंचन ॥ यतोज्ञानंप्रकाशःस्यादात्मातोनापरंजडम् ४१७ जडेप्रकाशतायेयंसाप्रकाशकृताभवेत् ॥ दग्धृत्वमायसे पिंडेयथावन्हिकृतंभवेत् ४१८ प्रकाशोनात्मनोभिन्नोभेदेजाड्यंद्वयोरपि ॥ जडयोर्नात्मताहृष्टायथात्रघटशुक्लयोः ४१९ नभिन्नंहिसुखंताभ्यांभेदेत्रिष्वप्यना त्मता ॥ यथान्यदेहगौरत्वदीपानांहिप्रतीतितः ४२० अन्यतोबोध्यमानेहिस्यात्प्रकाशेऽप्रकाशता ॥ यथादीपेनेत्रेणप्रकाश्येजडतास्फुटा ४२१ ततः स्वयंप्रकाशोयमानंदात्मासदैवसन् ॥ असत्येवात्मतानस्यान्नरशृंगेयथानसा ४२२ स्वयंप्रकाशस्यसतआनंदात्मस्वरूपिणः ॥ भेदशून्यस्ययाविद्याब्रह्मविद्ये तिसोच्यते ४२३ संतंस्वयंप्रकाशंतमानंदात्मानमद्वयम् ॥ अनादिमाययाब्रह्मरूपेणब्रह्मनह्यवेत् ४२४

स्यतद्गतगौरत्वस्यतत्प्रकाशकदीपस्यचएषांभिन्नानामनात्मताप्रतीत्यानुभवेनसिद्धातद्वदिति ४२० किंचप्रकाशरूपेआत्मनिप्रकाशाभ्युपगमोजडभानायआत्मभानायवा नाद्यः आत्मप्रकाशेनैव निर्वाहात् अंत्येऽनवस्थापादिकाजडत्वापत्तिरित्याह अन्यतइति । प्रकाशेऽन्येनबोध्यमानेस्वीकृतेसत्यप्रकाशताजडतैवस्यात् चाक्षुषवृत्त्यवच्छिन्नचिद्भास्यदीपवदिति तथाचप्रकाशस्यप्रकाशांतर भास्यत्वनियमेऽनवस्थापत्तिरितिभावः ४२१ फलितमाह ततइति । ततउक्तयुक्तःअयमानंदरूपआत्मास्वयंप्रकाशःप्रकाशांतरानपेक्षप्रकाशःसर्वभासकत्वाच्चसदेवसन्सद्रूपस्तस्यचाभावोऽसा क्षिकोनांगीकर्तुंशक्यतेयेनतदभावोऽज्ञानंस्यादितिभावः । नन्वात्माशून्यरूपोस्तुतद्धर्मश्चप्रकाशइत्याशंकांव्याघातेनवारयति असतीति । असतिशून्येनरशृंगवदात्मतानसंभवति अधिष्ठानत्वा द्यनुपपत्तेःसर्वत्रासदवगाहिप्रतीत्यापत्तेश्चेति ४२२ एवमज्ञानस्याभावरूपताऽसंभवाद्भावरूपत्वंप्रदर्श्यतन्निवृत्त्यासफलांब्रह्मविद्यांनिरूपयति स्वयंप्रकाशस्येति । स्वयंप्रकाशस्यसद्रूपस्यआनं दाभिन्नात्मनास्वरूपवतःअतएवभेदशून्यस्यवस्तुनोविद्यातदाकाराचित्संवलितावृत्तिर्ब्रह्मविद्येत्युक्ता ४२३ एतांविद्यांविनात्मभूतमपिब्रह्मसंसारान्नरक्षति 'सएनमविदितोनभुनक्ति' इतिश्रुते रित्याह संतमिति । सच्चिदानंदाद्वयरूपमेनमात्मानंमाययावृतंब्रह्मकर्तृहियतोब्रह्मरूपेणाविर्भूयनअवेन्नरक्षेत् तस्मान्मायानिवर्तकब्रह्मविद्यार्थंयत्नोविधेयइतिभावः ४२४

समष्ट्युपाधिकंनिर्मुंविशेषमाह कारणोपाधीति । तद्ब्रह्मकारणाज्ञानसमष्ट्युपाधिकमीश्वरसंज्ञंसतत्तथामृत्युसंज्ञहिरण्यगर्भंशरीरगतंसत्स्वयमेवोपदेशंविनावेदांतार्थानुसंधानाद्व्युध्यत उक्तांविद्यांप्रा प्तमित्यर्थः । तत्रापिकारणाज्ञानस्यसंक्षेपशारीरकोक्तरीत्याहमज्ञइत्यहंकारारोहमंतरेणावरणाख्यामोहकारणत्वाभावादीश्वरेचाहंकाराभावात्सर्वज्ञतयानिःश्वसिततुल्यवेदानुसंधानंसदैव हिरण्यगर्भस्य तुकार्याभिमानात्किंचिदावरणमनुभूयस्मृतवेदार्थानुसंधानमितिविशेषोबोध्यः ४२५ स्वयंविबोधेदृष्टांतमाह यथेतिद्वाभ्यां । यथाभयव्यथाशब्दनोदनाद्वाराजागरणनिमित्तैर्जलादिभीरहितेउत्कृष्ट देशेसुप्तोमनुष्यःस्वप्नान्पश्यन्गाढंसुप्तोवापरेणानुत्थापितःस्वयंविबुध्यतेजागरणंलभतेइतिद्वयोरर्थः ४२६ । ४२७ दार्ष्टांतिकेयोजयति तथेति । तथाकारणसमष्टिसूक्ष्मसमष्टिरूपोपाधिद्वयस्थोपि ब्रह्मात्मपदार्थःपरःपुरुषआत्मनैवस्वयमेवआत्मविज्ञानादात्मविद्यालाभादात्मानंप्रतिपद्यतेप्राप्नोति ४२८ ननूक्तविधयासर्वज्ञस्याप्युपाधिद्वयस्थस्यपरमेश्वरस्यकथंसृष्ट्यादिकारणत्वंव्यापाराभा वादित्याशंकांसोपाधिकेऽस्त्येवकर्मेतिप्रदर्शयन्वारयति शयानइति । शयानेस्वप्नान्पश्यतिगाढंसुप्तेवाव्यष्ट्युपाधिकेपुंसिपुरुषेयादृशंकर्मस्वप्नपदार्थसृष्टिबीजभूताज्ञानानुभवःसन्निधिमात्रेणप्राण धारणमित्यादिरूपंवर्ततेतथापरमेश्वरेपिसमष्ट्युपाधिकेबोध्यमित्यर्थः ४२९ उपाधिविमुक्तेतुनिर्गुणत्वान्नकुत्रचिदपिकर्मेत्याह सुपुप्तेति । यथास्वप्नसुषुप्त्योरुपाधिविविक्तेनिर्गुणेपुरुषेनकिंचिदपि

कारणोपाधिसंस्थंतत्तथामृत्युशरीरगम् ॥ वेदांतार्थपरिज्ञानात्स्वयमेवव्यबुध्यत ४२५ यथाशयानोमनुजोजलवृक्षविवर्जिते ॥ चतुर्विधप्राणिजातैरहितेवायुना पिच ४२६ स्वप्नान्नानाविधान्पश्यन्नज्ञानेनसमावृतः ॥ सर्वविज्ञानशून्योवास्वयमेवविबुध्यते ४२७ तथोपाधिद्वयस्थोपिब्रह्मात्मापुरुषःपरः ॥ आत्मनैवात्म विज्ञानादात्मानंप्रतिपद्यते ४२८ शयानेयादृशंकर्मतादृशंपरमेश्वरे ॥ उपाधिद्वयसंस्थेपिविद्यतेनात्रसंशयः ४२९ सुपुप्तेवायथास्वप्नेनिर्गुणेपुंसिकर्मन ॥ कार णेवाथवासूत्रेनिर्गुणेतन्नविद्यते ४३० अन्तःकरणभोगार्थंयद्वदत्रप्रबुध्यते ॥ तथाजीवात्मभोगार्थंदेवएषप्रबुध्यते ४३१ प्रबुध्यगुरवोयद्वत्प्रवर्ततेसुखायनः ॥ उपाधिद्वयसंस्थःसन्नीश्वरोपितथैवसः ४३२ आश्रमान्हियथादृष्टुर्नानाक्लेशकरानपि ॥ सुखायैवतथैषोपिदद्यादेहेंद्रियादिकम् ४३३ गुरूक्तंपालयन्शिष्योयथो दर्केसुखंव्रजेत् ॥ ईश्वरोक्तंतथादेहीकुर्वन्सुखमवाप्नुयात् ४३४ एकएवशयानःसन्ब्रह्मात्मानंविदन्नपि ॥ पुरुषःसृजतेस्वप्नेविश्वमेतच्चराचरम् ४३५

कर्मतथाकारणोपाधिकेसूक्ष्मसमष्ट्युपाधिकेसूत्रसंज्ञेवातद्विविक्तोनिर्गुणेतत्कर्मनेति ४३० उक्तब्रह्मविद्यायाःसर्वज्ञताप्रयोजिकायाधारणमपिईश्वरस्यनित्यमुक्तस्यपरार्थमेवेत्याह अंतरिति । यद्वदत्र व्यष्टिसंघातेअभोक्तुःपुरुषस्यप्रबोधोजागरणमन्तःकरणनिष्ठस्थूलभोगार्थंतथादेवस्यपरमेश्वरस्यप्रबोधोजीवानांभोगार्थंइत्यर्थः ४३१ ईश्वरस्यसृष्ट्यादिप्रवृत्तिःपरार्थैवेतिसदृष्टांतमाह प्रबुध्येति । यथालोकेगुरवःप्रबुध्यप्रकृष्टंबोधंलब्ध्वास्वार्थनिरपेक्षाःसंतोनःशिष्याणांसुखायैवप्रवर्ततेतथेश्वरोपिजीवानांभोगायेति ४३२ यद्येवंकथंतर्हिदेहकारागृहेपुजीवान्पातयतीतिशंकामपिदृष्टांतेनवारयति आश्रमानिति । यथादृष्टुर्नानाक्लेशशालिनोप्याश्रमान्ब्रह्मचर्यादिधर्मान्गुरवःशिष्येभ्योदिशंति सचोपदेशःशिष्याणांशुद्धिद्वारासुखायैवभवतितथेश्वरोप्यवश्यभोक्तव्यकर्मणांभोगायअपवर्गायचजीवे भ्योदेहादिकंदिशतीत्यर्थः ४३२ अभ्युदयनिःश्रेयससाधनंचवेदादिरूपेणोपदिशतियदनुतिष्ठंतोजीवाःसुखिनःस्युरित्याह गुरूक्तमिति । यथागुरूक्तंपालयन्यथावदनुतिष्ठन्शिष्यउदर्केउत्तरफल कालेसुखीभवेत्तथेश्वरोक्तमपीति ४३४ ननुद्वैतभानविरोधिन्याविद्ययानित्यमुक्तईश्वरःकथंसृष्ट्यादिकरोतीतिशंकामपिदृष्टांतेनपरिहरति एकएवेतिद्वाभ्यां । यथाएकएवशयानोब्रह्मविदपिस्वप्नभो गप्रदप्रारब्धकर्मवशात्स्वप्नेविश्वंसृजतेतथेश्वरोपि । एतावांस्तुविशेषः ब्रह्मविदःसृष्टिप्रवृत्तौस्वयंकृतपूर्वाणिकर्माणिप्रयोजकानि ईश्वरस्यतुजीवसंबंधीन्येवेतिद्वयोरर्थः ४३५

४३६ उक्तमेवस्फुटयति अलुप्तेति । यथाब्रह्मविद्याभ्यासेनालुप्तब्रह्मबोधोब्रह्मवित्त्वादेवनिष्कामश्चाविद्वान्पुरुषःशयनेस्वप्नरूपेसंवीक्ष्यसम्यगालोच्यलीलामात्रेणानायासेनरथादीन्सृजतेएवंपरमेश्वरो पिनित्यमुक्तःप्राण्यदृष्टवशादीक्षणपूर्वकंजगत्सृजतीतिद्वयोरर्थः ४३७ । ४३८ ननुशुक्तितत्त्वज्ञानेनरजतमिवसमष्ट्युपाधेरीश्वरस्यब्रह्मात्मविज्ञानेनविश्वंकुतोननिवर्ततइतिशंकापिब्रह्मवित्स्वप्नदृष्टांते नपरिहृतेत्याह यथास्वप्नेतित्रिभिः । यथासोऽलुप्तप्रबोधोविद्वान्स्वप्नंविलोकयन्सन्नात्मानंतथास्वप्नंस्वप्नदृष्टपदार्थजातंचभेदेननपश्यति तस्यचइतिज्ञानेपिस्वप्नोनलीयते इतिकिं अहंशयनंगतःसन् सकलंविश्वंमदात्मकंअहमेवात्मास्वरूपंयस्यएतादृशंपश्यामीतिद्वयोःसंबंधः ४३९ । ४४० तद्वदिति । तथाब्रह्मईश्वरःसंसारेनिर्वाह्यतयास्थितेप्यानंदरूपमात्मानमद्वयंपश्यति अदःदृश्यंस्थूलसूक्ष्मा त्मकमात्मनोभिन्नंनपश्यति अस्येश्वरस्यइदंसर्वंमदात्मकमित्याकारकज्ञानेप्येतद्विश्वंनलीयतेइति । अत्रदृष्टांतदार्ष्टांतिकयोःस्वीयपरकीयकर्मणामपिस्थितिहेतुतोक्तानविस्मर्तव्या ४४१ एवमैकात्म्य सिद्धांतेसतिकल्पितबंधमोक्षव्यवस्थापिविद्वत्स्वप्नदृष्टांतेनोपपादनीयेत्याह विदुषइतिद्वाभ्यां । यथाअलुप्तंब्रह्मात्मविज्ञानंयस्मिन्नेतादृशेविदुषोब्रह्मविदःस्वप्नेस्वप्नावलोकिताःस्वप्नकल्पिताःकेचिज्जी वाःप्रमातारःअस्यविदुषोविदेहमोक्षंविनापिविमुच्यंतेमुक्ततयामन्यंतेतेभ्योन्येसंसारस्थितिप्रयोजकाबद्धाःसंतितत्त्वेनमन्यंतेइति ४४२ एवमिति । एवमीश्वरेअमुक्तेसंसारनिर्वाहकत्वेनस्थितेपिक

मायथैवयथातद्वदीश्वरोप्येकएवहि ॥ जानन्नात्मानमखिलंसृजतेभूतभौतिकम् ४३६ अलुप्तब्रह्मबोधःसन्नाप्तकामोयथापुमान् ॥ लीलयैवचसंवीक्ष्यसृजतेशयने थतत् ४३७ एवमेषजगत्स्रष्टाप्राप्तकामोविदन्नपि ॥ ईक्षित्वासकलंविश्वंसृजतेभूतभौतिकम् ४३८ यथास्वप्नदशायांसविद्वान्स्वप्नंविलोकयन् ॥ आत्मानंचतथा स्वप्नंनभेदेनप्रपश्यति ४३९ अहंहिसकलंविश्वंपश्यामिशयनंगतः ॥ मदात्मकमितिज्ञानेनचस्वप्नोविलीयते ४४० तद्वद्ब्रह्मापिसंसारेआनंदात्मानमद्वयम् ॥ नपश्यत्यात्मनोभिन्नमदःसदसदात्मकम् ॥ अहमेवेदमित्यस्यज्ञानेप्येतन्नलीयते ४४१ विदुषोऽलुप्तविज्ञानेस्वप्नेस्वप्नावलोकिताः ॥ केचिज्जीवाःप्रमुच्यंतेह्यस्य मुक्तिंविनापिहि ॥ अन्येबद्धाश्चसंत्यत्रस्वप्नसंस्थितिहेतवः ४४२ एवमीशेह्यमुक्तेपिमुच्यंतेऽत्रमुमुक्षवः ॥ बद्धाश्चकेचिद्वर्तंतेसंसारस्थितिहेतवः ४४३ अलुप्तात्मा वबोधस्यस्वप्नेयद्वन्नविद्यते ॥ बंधमोक्षादिकंकिंचित्पश्यतोत्रजडाजडम् ४४४ नापितेनप्रदृश्यानांबंधमुक्तिजुषामपि ॥ विचारेसतिजीवानांभिन्नाभिन्नधिया मपि ४४५ विचारेसतिनैवंस्याद्बंधमोक्षादिकंसदा ॥ ईश्वरस्यनजीवानांबंधमुक्तीप्रधावताम् ४४६ स्वप्नेयथोपदेशस्यवैयर्थ्यंनैवविद्यते ॥ बहून्प्रतितथाचा पिशास्त्रादेश्चनविद्यते ४४७

ल्पिताबंधमोक्षव्यवस्थाबोध्येत्यर्थः ४३ परमार्थतस्तुबंधमोक्षादिकंदृष्टांतेदार्ष्टांतिकेचनास्ति ननिरोधोनचोत्पत्तिरित्यादिश्रुतेरित्याह अलुप्तात्मेतित्रिभिः । यथाऽलुप्तात्मविज्ञानकस्यविदुषःस्वप्नेजडा जडरूपंविश्वंपश्यतोप्यत्रात्मनिकिंचिद्बंधमोक्षादिकंनवर्ततेवस्तुतोबंधाभावादेवेति ४४४ नापीति । नकेवलंविदुषएवबंधाद्यभावःअपितुतेनस्वप्नदृशायेकल्पिताएतेभिन्नदृशोबंधभाजःएतेऽभिन्नदृ शोमोक्षभाजइतिपरमार्थविचारेक्रियमाणेतेषामपिबंधादिकंनविद्यतेआत्मनोनित्यमुक्तस्यैकत्वादेवेति ४४५ विचारेइति । एवंविद्वत्स्वप्नवद्वस्तुविचारेक्रियमाणेईश्वरस्यनबंधमोक्षादिकंनवाजीवानां कीदृशानां बंधमुक्तीबंधंमोक्षंचप्रतिधावतांशीघ्रंसाधनेगच्छतामिति ४४६ ननुपरमार्थतोयदिबंधाद्यभावस्तर्हिशास्त्रस्यवैयर्थ्यमापततिमितिचेन्नाज्ञान्प्रतिसार्थक्यादितिस्वप्नदृष्टांतेनैवाह स्वप्नइति । यथास्वप्नेबद्धवउपदिष्टार्थानुष्ठानेनाभ्युदयनिःश्रेयसेप्राप्नुवंतोदृश्यंतेतावत्युपदेशस्यनवैयर्थ्यं तथाजाग्रत्येपिशास्त्रंवेदःआदिपदेनस्मृत्यादयस्तेषांनैववैयर्थ्यंविद्यतेअज्ञानामधिकारिणांलाभादिति ४७

विदुषःप्रतितुशास्त्रादिवैयर्थ्यमिष्टमेवेत्याह स्वप्नेयथैवेतिद्वाभ्यां । यथाउक्तस्वप्नेस्वप्नद्रष्टारंविद्वांसंप्रत्युपदेशस्यवैयर्थ्यमेवतथान्येचयेजीवन्मुक्ततयाकल्पितादेहिनस्तान्प्रतिचोपदेशस्यवैयर्थ्यमेव निवर्त्याज्ञानाभावात् । तथाजागरणेप्यात्मज्ञानवतःपुंसःपुरुषान्प्रतितथामहेश्वरंचप्रतिशास्त्रादेर्वैयर्थ्यमिष्टमेवेतिद्वयोःसंबंधः ४४८ । ४४९ वस्तुतस्तुनशास्त्रस्यवैयर्थ्यं तद्धिशास्त्रस्यसर्वाप्र तिप्रवृत्तौस्यात् शास्त्रंतुयथोत्सर्गोऽपवादविषयंपरिहृत्यप्रवर्ततेतथानधिकारिणःपरिहृत्यैवप्रवर्ततेइत्याशयेनसर्वसंमतं सर्वत्राधिकाराभावंप्रतिपादयति सर्वाधिकारतेति । सर्वत्राधिकारःफलार्थम नुष्ठेयतारूपोयस्यतत्सर्वाधिकारंतस्यभावःसर्वाधिकारतासाएकस्यापिकस्यचिदपिशास्त्रस्यनास्ति । हियतोवैश्यस्तोमनामायागविशेषोवैश्याधिकारिकत्वाद्राजानंब्राह्मणंचापेक्ष्यव्यर्थएवेति ४५० वैश्येष्विति । वैश्येष्वपिनसर्वेषुवैश्यस्तोमःसफलःकिंतुअर्थित्वंफलकामत्वमादिपदेनशक्तत्वंपातित्यादिदोषराहित्यंचगृह्यते एतादृशविशेषणवतोवैश्यानपेक्ष्यैवसफलः अर्थित्वादिमान्वै श्यस्तुवैश्यस्तोमेनकृतार्थःस्यादेव इयंव्यवस्थाक्वचिदप्यन्यथानभवतीति ४५१ विज्ञेयाइति । यतएववैश्यस्तोमवदेवब्राह्मणाद्यधिकारिकाएवबृहस्पतिसवादयः आदिपदेनराजसूयादयः एते सार्थकाज्ञेयाः । तथामोक्षशास्त्रमपिसाधनचतुष्टयसंपन्नेज्ञानवर्जितेजिज्ञासौसार्थकमिति ४५२ योयोदेवानामित्यादिवाक्यार्थमाह ब्रह्मसर्वात्मतामितिदशभिः । ब्रह्मकारणसूक्ष्मसमष्ट्यु

स्वप्नेयथैवविद्वांसंस्वप्नद्रष्टारमेवहि ॥ उपदेशस्यवैयर्थ्यमुक्तानन्यांश्चदेहिनः ४४८ तथाजागरणेपिस्याच्छास्त्रादेर्व्यर्थतासदा ॥ आत्मज्ञानवतःपुंसोह्यपेक्ष्यच महेश्वरम् ४४९ सर्वाधिकारताचात्रनैकस्यापिहिविद्यते ॥ वैश्यस्तोमोयथाव्यर्थोराजविप्रावपेक्ष्यहि ४५० वैश्येषुचनसर्वेषुह्यर्थित्वादिविशेषणात् ॥ वैश्या नपेक्ष्यवैश्यःस्यात्कृतार्थोनान्यथाक्वचित् ४५१ विज्ञेयाःसार्थकाह्येवंबृहस्पतिसवादयः ॥ मोक्षशास्त्रंतथैवस्यात्सार्थकंज्ञानवर्जिते ४५२ ब्रह्मसर्वात्मतांप्राप्तंयथै वब्रह्मविद्यया ॥ विराडादिस्तथाप्राप्तःप्राप्स्यन्प्राप्नोतिचापरः ४५३ क्वचित्स्वभावतोविद्याभवेद्यद्वद्विहायसि ॥ पक्षिणांगमनंनीरेमत्स्यानांवापिजन्मतः ॥ ४५४ पूर्वपुण्यविपाकेनक्वचिदेषाप्रजायते ॥ यशआदिसुखंयद्वज्जायतेयौवनादिषु ४५५ गुरुशास्त्रोपदेशेनसर्वेषामेवजायते ॥ नेत्राभ्यांहियथैवस्याद्रूपज्ञानम निंदितम् ४५६ स्वयंभातायदाविद्यायदावाकर्मजाभवेत् ॥ तत्रापिप्रथमंशास्त्रंभातिपश्चादियंततः ४५७

पाधिकंयथाब्रह्मविद्ययासर्वात्मभावंप्राप्तंतथास्थूलसमष्ट्युपाधिकोविराट्तत्प्रभृतिर्मन्वादिरपिविद्ययासर्वात्मतांप्राप्तः कश्चित्तुप्राप्स्यन्प्राप्तोभविष्यतीतियावत् अपरोऽधुनाप्राप्तइति ४५३ एवं ब्रह्मविद्यायाःफलेविशेषाभावेप्युत्पत्तौविशेषंदर्शयति क्वचिदितित्रिभिः । क्वचिद्विराट्कपिलसनत्कुमारादौस्वभावतःनिसर्गादागंतुकनिमित्तमनपेक्ष्यैवेतियावत् ब्रह्मविद्याजायते । यथापक्षिणामा काशगमनकौशलंमत्स्यादीनांनीरगमनकौशलंचजन्मतएवप्रभवतितद्वदिति । तत्रविराड्विषयिका ‘ज्ञानमप्रतिघंयस्यवैराग्यंचजगत्पतेः । ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयम्’ इतिस्मृतिः अ प्रतिघंकुतश्चिदपिप्रतिघातशून्यंसर्वविषयकमितियावत् । ‘ऋषिंप्रसूतंकपिलंयस्तमग्रेज्ञानैर्बिभर्तिजायमानम्’ इत्याद्याश्रुतिःकपिलविषया । एवमन्यत्रापिमानंबोध्यम् ४५४ पूर्वेति । क्व चिद्वामदेववाल्मीक्यादौदेशकालनिमित्तवशाभिव्यक्तफलाभिमुखपूर्वपुण्यतोविद्याजायते यथायौवनादिकालेपुण्यविपाकात्यशोधनपुत्रादिसुखंजायतेतद्वदित्ति ४५५ गुर्विति । गुरुशास्त्रोपदेशउप दिष्टंशास्त्रमितियावत् कृदभिहितइतिन्यायात् सर्वेषांज्ञानकारणं रूपज्ञानंप्रतिचक्षुर्वदिति ४५६ ननुकथंशास्त्रस्यविद्याकारणतापूर्वोक्तिपुव्यभिचारादतआह स्वयमिति । स्वयंभातास्वभावजन्याकर्म जापूर्वपुण्यपरिपाकजावायदाविद्यातत्रापिशास्त्रंविद्यातःप्रथमंभातिपक्षिणामाकाशगमनोपयोगिपक्षवत् स्वभावतएवेत्याद्यवधारणंतुशास्त्रलाभेदृष्टमध्ययनादिरूपंसाधनंवारयतीतिभावः ४५७

एवमव्यभिचारेचवाक्यतात्पर्यावधारणरूपश्रवणस्यश्रोतव्यइत्यादिश्रुतिसिद्धाकारणताउपपन्नेत्याह ब्रह्मविद्येति । ततोऽव्यभिचारात्सर्वेषुपक्षेषुकचित्स्वभावइत्यादिनोक्तेषुत्रिषुश्रवणरूपउपायस्त्व ॉमंप्रतिभोजनवन्नियतःव्यापकइत्यर्थः ४५८ ब्रह्मविद्यास्वरूपमभिनयति । ब्रह्मेति । बृहत्तेर्धातोस्तेश्चस्वारस्यात्सर्वाधिकसर्वांतररूपोब्रह्मात्मशब्दयोरर्थउक्तः सएवार्थोब्रह्मात्मशब्दाभ्यांत जन्यबुद्धिभ्यामपिविनिर्मुक्तःसन्नहंशब्दवाच्यार्थांतर्गतजडांशहीनोहंभवामीतीयमेवमाकाराब्रह्मविद्याविज्ञैरुक्तेति ४५९ इयंविद्याउत्पन्नासतीफलप्रदानेजात्यादिकंनापेक्षतेइत्याह अनयेतित्रि भिः । अनयाविद्ययायथाब्रह्मसर्वात्मकमभूत्तथान्योपियःकश्चित्सर्वात्मकोभवत्येवेति ४६० मानवइति । स्पष्टम् ४६१ ब्रह्मेति । भगवद्गीतास्वप्युक्तं 'बहवोज्ञानतपसापूतामद्भाव मागताः' इति ४६२ उक्तविद्याफलेवामदेवानुभवोपिमानमित्यर्थपरस्यतद्धैतदित्यादेरर्थमाह परोक्षमिति । इदंविद्याफलंसर्वेषांब्रह्मवेदिनांपरोक्षंनभवतिकिंतुविद्योत्तरक्षणएवोपलभ्यतइति । यतोस्माकमन्यतमोगर्भएवविद्याफलंसर्वात्मतारूपंपश्यन्सन्नस्माकमनुग्रहार्थंविद्याफलेविश्वासंजनयन्निदंवक्ष्यमाणंवाक्यमस्मान्प्रत्यब्रवीदितिद्वयोरन्वयः ४६३ । ४६४ वामदेवउवाच ब्राह्म

ब्रह्मविद्यासमुत्पत्तावुपायःश्रवणंततः ॥ नियतःसर्वपक्षेषुतृप्तौयद्वद्धिभोजनम् ४५८ ब्रह्मात्मशब्दधीशून्यउक्तोयोब्रह्मतेरतेः ॥ अर्थोभवामिनान्योहंशब्दधीविष योजडः ॥ ब्रह्मविद्येयमाख्याताविप्रैःसूक्ष्मार्थदर्शिभिः ४५९ अनयाहियथाब्रह्मसर्वात्मकमभूद्वितत् ॥ सर्वात्मकस्तथान्योपिस्यात्तथैवनसंशयः ४६० मानवो वामुनिर्वापिदेवोवादानवोथवा ॥ धीमानन्योपियःकश्चिद्ब्रह्मस्याद्ब्रह्मविद्यया ४६१ ब्रह्मसर्वात्मकंप्राप्ताबहवोत्रद्विजोत्तमाः ॥ असुरामुनयःसर्वेब्रह्मास्मीत्यात्मबो धनात् ४६२ परोक्षंनेदमस्माकंसर्वेषांब्रह्मवेदिनाम् ॥ वामदेवःस्थितोगर्भेकश्चिदस्मासुसद्विजः ४६३ अनुग्रहार्थमस्माकंविश्वासंजनयन्निदम् ॥ अस्मान्प्रत्य ब्रवीद्वाक्यंपश्यन्सर्वात्मतामिमाम् ४६४ ब्राह्मणाःशृणुतान्तैतद्विश्वासायवदामियत् ॥ युष्मभ्यंब्रह्मविद्यायाहेतौप्राप्तासमाप्यताम् ४६५ वामदेवोभवद्दृष्ट्वाग र्भेतिष्ठामिसंप्रति ॥ त्यक्तपूर्वशरीरःसन्भवतांकश्चिदेवहि ४६६ भवतांममचाप्यासीदुपदेशोमहात्मनाम् ॥ विषयांधधियःसर्वेद्धष्वंतोनकिंचन ४६७ हृदयस्थं स्वमात्मानंजात्यंधाःस्वकरेयथा ॥ नपश्यंतिमणिसंतमादित्यसमवर्चसम् ४६८ तेनदोषेणमेदेहकारागृहमदःपरम् ॥ जातंतद्भवतामाभूद्यतध्वंस्वात्मबोधने ४६९ ब्रह्मविद्यासमुत्पत्तौसदासर्वात्मतामवेत् ॥ विश्वासार्थमहंवक्ष्येप्राप्तांसर्वात्मतांद्विजाः ४७०

णाइतित्रयोदशभिः । भोब्राह्मणाः यदहंयुष्मभ्यंवदामितन्मत्सांनिध्यंप्राप्ताःसंतोयूयंशृणुत । कस्यैवदामि ब्रह्मविद्यायाःहेतौफलेविश्वासाय । फलस्यहेतुत्वमध्ययनेनवसतीत्यादौप्रसिद्धं । किंकृत्वावदामि तांविद्यांसम्यक्प्रतिबंधराहित्यंयथास्यात्तथाप्राप्यलब्ध्वेत्यर्थः ४६५ वामदेवइति । अहंभवतांदृष्ट्वाभवतांमध्येकश्चिदन्यतयोवामदेवनामात्यक्तपूर्वशरीरःसन्संप्रतिअधुनाग र्भेतिष्ठामि । स्वदृष्ट्यातुसर्वात्मास्मीतिभावः ४६६ भवतांममेति । पूर्वशरीरेममभवतांचसनकादिमहात्मभिःकृतउपदेशःसमआसीत् तदानींसर्वेवयंविषयांधधियःसंतोहृदयस्थमपिस्वमा त्मानंनदृष्टवंतः यथाजन्मांधाःकरेपिस्थितमुज्ज्वलंमणिंनपश्यंतितद्वदितिद्वयोरन्वयः ४६७ । ४६८ तेनेति । तेनमतिबंधवशादात्मसाक्षात्कारालाभरूपेणदोषेणमेअदोदेहरूपंकारागृहंजातं तद्देहकारागृहंभवतांयथामाभून्नभवेत्तथाबोधेयतध्वमिति ४६९ नचविद्याफलेसंशयोमयानुभूतत्वादित्याह ब्रह्मविद्येति । सदासर्वकालेपुनतुकृतयुगादावेवेतिनियमः तत्रभवतांविश्वासार्थमहं विद्याफलंसर्वात्मतांवक्ष्येइति ४७०

३९

वामदेवसूक्ताद्यऋक्त्रयार्थमाह अहंमनुरितिसप्तभिः । मनुःस्वायंभुवादिरहमेवाभूवं तथासूर्योहमेव तथाकक्षीवान्नाम्नाप्रसिद्धोमुनिरप्यहमेवेति ४७१ कुत्समार्जुनेयमित्यंशस्यार्थमाह शुक्लाना मिति । शुक्लानामर्जुनपदोक्तानांदीप्तिमतांसूर्यादीनांयत्कुत्सं कुत्सपदार्थमाह गोप्यमिति । तमेवभांतमित्यादिश्रुतेरादित्याभासकमपियत्तत्त्वमादित्याद्यैर्व्यवहारभूमौप्रकाशकतयाप्रसिद्धे रपावृतमिवतदहमस्मीति एतेनतत्पदार्थभावोदर्शितः । अथकक्षेइतिपदेनआत्मनेपदगत्यर्थकजिधातोर्लंडुत्तमपुरुषैकवचनप्रयोगरूपेणत्वंपदवाच्यजीवरूपतामाह अहंसंसारेति । अहमेवा स्मिन्संसारमंडलेजातउपाधिजन्मनाजन्माभिमानीसन्नुच्चावचलोकगतयोनिसहस्रंनितरांगच्छामीति ४७२ अहंकविरित्याद्यंशस्यार्थमाह क्रांतेति । क्रांताप्रसृताहष्टिर्यस्यसतथाउशनाशुक्रः । अहंभूमिमदामार्यायेत्यर्थमाह जामदग्न्येति । जामदग्न्यः परशुरामः । सर्वज्येष्ठायआर्यायकश्यपायअदांदत्तवानस्मीति ४७३ अहंवृष्टिंदाशुषेमर्त्यायेत्यर्थमाह अहंचतुर्विधायेति । चतुर्वि धायजरायुजादिरूपायकर्मकारिणेदाशृधात्वर्थदानादिकर्मकृतेजंतवेमेघःसन्वृष्टिंददामीति । कीदृशींवृष्टिम् सम्यगसम्यग्रूपेषुसुकृतदुष्कृतफलनानाशरीरोत्पत्तिनिमित्तत्वेनवासुखदुःखदाम् ४७४ अहमपोअनवाइत्यर्थमाह अंतरिति । त्र्यवयवोलोकस्त्रिलोकस्तस्यांतःस्थाबहिस्थाश्चएताअपोजलानिनयामिआकृष्टाःकरोमि वैश्वानरादिरूपतयांतर्बहिःस्थितसूर्यात्मनेति ४७५

अहंमनुस्तथासूर्यःकक्षीवानप्यहंमुनिः ॥ अतींद्रियार्थद्रष्टृत्वात्प्रसिद्धोब्राह्मणोहियः ४७१ शुक्लानांदीप्तिभाजांस्यांकुत्संगोप्यमहंसदा ॥ अहंसंसारचक्रेस्मि न्जातोगच्छामिसर्वदा ॥ नितरांयोनिसाहस्रमुच्चावचगतंहियत् ४७२ क्रांतदृष्टिरहंतद्वदुशनाभार्गवोहियः ॥ जामदग्न्यवपुर्भूत्वासर्वज्येष्ठायवैपुरा ॥ कश्य पायक्षितिंसर्वामदांवित्तेनपूरिताम् ४७३ अहंचतुर्विधायास्मैजंतवेकर्मकारिणे ॥ वृष्टिंददामिमेघःसन्सुखदुःखप्रदांसदा ४७४ अंतर्बहिश्चरोनित्यमहंसूर्य स्वरूपधृक् ॥ अंतर्बहिस्त्रिलोकस्थानयाम्येताअपःसदा ४७५ मामेवशरणंप्राप्ताःशक्राद्याःसर्वदेवताः ॥ दैत्याभिभूताजननींयथाबालाःक्षुधार्दिताः ४७६ शंबरस्यासुरेंद्रस्यनवतीस्तुनवाधिकाः ॥ मायाभयंकरीर्नित्यंदेवतानांदुरात्मनः ॥ व्यधमंतारकोयद्वत्तमएतद्दुरासदम् ४७७ इत्यादिनाहिभोविप्राःस्वात्म नःसर्वभावताम् ॥ वामदेवोवदत्यंतःस्मृतौनोवर्ततेऽधुना ४७८ एवंतेकथयन्विप्राःशक्रब्रह्मात्मबोधने ॥ अथापिब्रह्मवित्तस्मात्सर्वात्मैवप्रजायते ॥ यःकश्चि दपिदेवोवादानवोमनुजोथवा ४७९

वशानामयदेवासोनुकेतमायन्नित्यर्थमाह मामेवेति । वशकांतौवशानारक्षामिच्छंतःशक्राद्यादेवामांमेवमहेश्वररूपंशरणंगताअन्नमिच्छंतोबालाजननीमिवेति ४७६ अहंपुरइत्याद्यृगर्थमाह शंबरस्येति मंदमननयासेनस्यतिअसुरान्हंतीतिमंदसानःस्वामिकार्तिकेयस्तद्रूपःसंस्तारकासुरपक्षपातिशंबरस्यनवाधिकनवतिसंख्यामायामयीःपुरःदेवभयंकरीर्व्यधमंव्यनाशयमितियावत् । य थातारकःप्रणवएतद्धार्द्दंदुरासदंतमोविधमतितद्वदिति । इयंकथागणेशपुराणेस्पष्टा ४७७ इत्यादिनेति । आदिपदेनशततममित्यादिशेषस्यदेवोदासिप्रतर्दनार्द्दीतंहतकुलशतसंख्यापूरणवीतहव्य माश्रमेप्रविष्टंभृगुरूपोहंब्राह्मणजातौप्रावेशयंजिघांसवेप्रतर्दनायनात्राश्रमेऽब्राह्मणोस्तीत्यभिधानात् । प्रतर्दनेएतादृशंसामर्थ्यंकुतइत्यतआह दिवोदासमिति । यद्यतःदिवोदासंवीतहव्यकुलेभ्यो भीतंशरणागतंभारद्वाजरूपोहमावंरक्षितवानस्मि पुत्रकामेष्ट्याप्रतर्दनाख्यपुत्रप्रदानादित्याद्यर्थकस्यग्रहः इत्यादिनावाक्यगणेनवामदेवआत्मनःसर्वभावतांवदति वर्त्तमानसामीप्येलट् तद्यनोऽस्माकं स्मृतौअंतःस्मृतिमध्येविषयितासंबंधेनवर्त्ततइति ४७८ इतिहासमुपसंहरन्फलितंदर्शयति एवंतेइति । तेसमुदिताविप्राब्रह्मात्मबोधविचारेएवमकथयन्निति तस्माद्यःकश्चिदपिदेवादिरू पोविद्वान्ससर्वात्मरूपोभवत्येवेत्यर्थः ४७९

उक्तविद्याफलंदेवैरपिप्रतिबद्धुंनशक्यमितिप्रदर्शकस्यतस्यहनदेवाइत्यादिवाक्यस्यार्थमाह त्वदाद्याइतिदशभिः । हेशक्रत्वत्प्रभृतयोदेवाअपिएनंविद्वांसंनियंतुमाज्ञोल्लंघनेअभूतिप्रदर्शनेनवशेस्थापयितु मितियावत् नेशतेनसमर्थाः । तत्रहेतुंव्याघातमाह भवंतइति । भवंतोदेवाहियतःस्वमात्मानंनियंतुंनशक्ताः नह्यग्निरात्मानंदहतीतिप्रसिद्धम् ४८० नन्वात्मनोनियम्यत्वाभावेपिविदुषः कथंतथात्वमितिचेद्विद्वानपिविद्ययासर्वात्मभूतत्वाद्भवतामात्मैवेत्याह भवतामिति । नन्वात्मांऽऽतरोभवतिविद्वांस्तुस्वदेहावच्छिन्नःकथमस्माकमात्मेतिशंकांदृष्टांतेनवारयति नचेति । यथा काशोघटाद्युपाधिविमुक्तःसन्कस्यचिदपिहृदयदेशेनास्तीतिन किंत्वस्त्येव तथाविद्ययाबाधिताविद्यकपरिच्छेदोविद्वानपिसर्वांतःस्थत्वात्सर्वात्मेति ४८१ एवंविदुषआत्मत्वेचतदनिष्टप्रवृत्तिःस्व शिरस्ताडनप्रवृत्तिवत्स्वानिष्टहेतुरेवेत्याह अस्ययदिति । अस्यविदुषःप्रतिकूलंतथाभिमतंयद्भवद्भिरणुस्वल्पमपिकृतंतत्सर्वंभवतामेवसंबंधिजायतेतस्यविदुषोऽसंगस्यानिष्टमल्पमपिसंबंधिनजायतेइति ४८२ उक्तंविशदयन्सर्वेषांविद्वानसंगरूपंवास्तवंकर्तृत्वभोक्तृत्वाद्यभिमानिरूपंतुद्वितीयंससंगमविद्यकंतत्रयोग्येनसंबध्यतेइतिन्यायेनअसंगरूपोद्देशेनप्रयुक्तमपिप्रतिकूलंससंगरूपएवनिविशतेइत्यत्र दृष्टांतमाह स्मेराननमितिद्वाभ्याम् । यथाबालःस्मेरंमंदहासयुक्तंस्वस्याननंदर्पणासंगयपिदर्पणेसक्तमत्वातस्यदर्पणसंगितयाऽभिमतस्यमुखस्यानिष्टंविकृततारूपंविधास्यन्करिष्यन्चिकीर्षन्नितिया

त्वदाद्याअपिशक्रैनंनियंतुंनेशतेसदा ॥ भवंतोनस्वमात्मानंनियंतुंप्रभवोयतः ४८० भवतांसर्वदेवानामात्माब्रह्मविदीरितः ॥ सर्वात्मत्वान्नचाकाशःकस्यचि द्धृदयेनहि ४८ अस्ययत्प्रतिकूलंस्याद्भवद्भिःकृतमण्वपि ॥ भवतामेवतत्सर्वंभवेन्नाल्पंचतस्यतत ४८२ स्मेराननंयथावीक्ष्यदर्पणेस्वस्यबालकः ॥ तस्यानि ष्टंविधास्यन्सस्वात्मनःकुरुतेपुरः ॥ पश्चात्तस्यनचैतेनजायतेदुःखमण्वपि ४८३ दर्पणेदृश्यमानस्यमुखस्यासंगरूपिणः ॥ कर्तुरेवहितत्सर्वंभवेद्दुःखंससाध नम् ४८४ असंगरूपिणस्तद्वद्विदुषोविद्यतेनहि ॥ अनिष्टंकिंतुभवतांभोक्तृत्वात्स्यात्ससाधनम् ४८५ अलंकाराच्छरीरेस्वेभवत्येषोप्यलंकृतः ॥ तिरस्का राच्छरीरस्यप्रतिबिंबस्तिरस्कृतः ४८६ यथातथैवभवतांविद्वान्बिंबमुदाहृतः ॥ भवंतःप्रतिबिंबानिनीरेयद्वत्प्रभाकृतः ४८७ भवंतोयद्विकुर्वंतिशक्रास्यविदु षःसदा ॥ भवतामेवतत्सर्वंसुखंदुःखंनसंशयः ४८८ जलेनपांसुनावापिच्छादयेद्योदिवाकरम् ॥ तस्यैवाच्छादकंभूयात्तद्रष्ट्यंनात्रसंशयः ४८९

वत् । पुरःप्रथमंस्वस्यात्मनस्तथाभिमतसंघातस्यतद्विकृततारूपमनिष्टंकुरुतेपश्चात्तस्यदर्पणेदृश्यमानस्यमुखस्यकुरुते एतावतादर्पणेदृश्यमानस्यासंगस्यमुखस्यनकिंचिदनिष्टंजायते किंतुबालस्या भिमानिकेकर्तृत्वादिमतिससंगरूपएवससाधनंसोपकरणंदुःखंजायतेइतिद्वयोरर्थः ४८३ । ४८४ दार्ष्टांतिकमाह असंगेति । तथाविदुषोनिःसंगस्यतदनिष्टंनजायते भवतामेवतुकर्तृत्वाद्यभि मानिनांतज्जायते दुःखसाधनक्रियावत्त्वेनयोग्यत्वादित्यर्थः ४८५ नन्वस्मदभिन्नस्यापिविदुषोनदुःखंजायतेऽस्माकमेवतुजायतेइत्यत्रकिंनियामकमितिचेदुपाधिस्थत्वाभिमानलक्षणंप्रतिबिंबत्व मेवोपाधेःप्रतिबिंबपक्षपातित्वादित्याह अलंकारादितित्रिभिः । यथाबिंबभूतशरीरालंकारापकाराभ्यांप्रतिबिंबस्यतथात्वंतथाविदुषोब्रह्मभूतस्यबिंबत्वाज्जीवानांचप्रतिबिंबत्वाज्जीवैःकृतंसुखा दिकंजीवैरेवसंबध्यतेइतित्रयाणामर्थः भागवतेप्युक्तं 'नैवात्मनःप्रभुरलंनिजलाभपूर्णोमानंजनादविदुषःकरुणोवृणीते । यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनेप्रतिमुखस्यतथामुखश्रीः' इतिमु खेबिंबेश्रीःकृतासतीप्रतिमुखस्यप्रतिबिंबस्यसंबंधिनीभवतीतितुर्यपादार्थः ४८६ । ४८७ । ४८८ मुखस्यबिंबस्यालंकारादिसंसर्गोपिविदुषोनसंसर्गलेशोप्यतस्तत्पूजनादिकंपूजकात्मानंप्र त्येवसफलंधावतीतिदृष्टांतेनाह जलेनेति । पांसुर्धूलिः तस्याच्छादकस्यैवेति ४८९

120

एवंसफलंविद्यास्वरूपंदर्शितमथाविद्यास्वरूपादिप्रदर्शकस्यअथयोन्यामित्यादेर्विद्युरित्यंतस्यवाक्यस्यार्थमाह आत्मनइत्येकादशभिः । एतत्प्रसिद्धंयथाभवतितथायेआत्मनःसकाशाद्भिन्नंमत्वा देवताजातमुपासतेतेषांभेददर्शनलक्षणाविद्याशालिनांभवंतोनियंतारःप्रभवः हेशक्रेति ४९० उक्तविधाज्ञानशालिनःपशुत्वंनिरूपयति अज्ञानजेतित्रिभिः । अज्ञानरूपमृत्काष्ठोपादानिकास्वयं भुवापरमेश्वरेणनिर्मिता इयंसंसृतिरूपामहतीशालावर्तते । कीदृशी भेददर्शिरूपाणांगवांवासस्थानमितिशेषः । कीदृशानांभेददर्शिगवां अत्रव्यवहारभूमौभवतांदेवादीनामुपजीव्यानांहव्यकव्या दिरूपवृत्तिप्रदत्वेनाश्रयभूतानामित्यर्थः ४९१ कामेति । तत्रशालायांकामक्रोधादिरूपाःस्थूणाःश्रांताभारेणव्याकुलाइवस्थिताःसंति तासुकामादिरूपस्थूणासुएकाविधिनिषेधात्मकवेदलक्षण वाग्रूपातंतिर्दीर्घरज्जुर्बद्धावर्तते कामिनएवकर्माधिकारात् निष्कामस्यतुब्रह्मवित्त्वान्नविधिकैंकर्यमितिभावः ४९२ तत्रेति । तत्रवाग्लक्षणदीर्घरज्जौअधिकार्युपस्थापकब्राह्मणादिनामानिदामानि प्रतिपशुनिवेशिस्वल्परज्जुभूतानिवर्ततइति तथाचश्रुत्यंतरं 'तस्यवागेवतंतिर्नामानिदामानि' इत्यादि । तेषुदामसुबहूनामज्ञपशूनांबद्धत्वेपियागदानादिकारिगृहस्थरूपोऽज्ञस्तुहेशक्रभवतां देवादीनांकामधेनुसमइति ४९३ कामधेनुसमत्वमुपपादयति एकएवेति । यतोयंसन्यागादिकारिगृहस्थरूपोऽज्ञोनाकभाक्स्वर्गार्हःवोयुष्मान्देवान्स्वाहाकारेणपितॄन्स्वधाकारेणमुनीन्स्वाध्याये

**आत्मनोव्यतिरिक्तंयेदेवमेतदुपासते ॥ भवंतोहिनियंतारस्तेषांशक्रनसंशयः ४९० अज्ञानजामहाशालागवांभेददृशामियम् ॥ भवतामुपजीव्यानांनिर्मितात्र स्वयंभुवा ४९१ कामक्रोधादयःस्थूणास्तत्रश्रांताःसहस्रशः ॥ तास्वेकैवनिबद्धेयंवाक्तंतिःसुदृढाभृशम् ४९२ तत्रनामानिदामानिपशूनांबंधनानिच ॥ काम धेनुसमस्त्वज्ञोभवतांशक्रसर्वदा ४९३ एकएवयतोऽज्ञोयंसर्वान्वःपातिनाकभाक् ॥ पितॄन्मुनींश्चमनुजान्प्राणिनोऽन्यांश्चसन्गृही ॥ स्वधास्वाहाहंतकारप्रमुखै र्नित्यमेवसः ४९४ मनुजानामनेकेस्युःपशवोमनुजःसतु ॥ एकैकस्यापिभवतामेकएवपशुस्त्वयम् ४९५ चोरादिहरणाद्दुःखंपशोरेकस्यजायते ॥ नरस्यकिमुव क्तव्यंसर्वेषांहरणेसति ४९६ सर्वेषांहरणेयावद्भवेद्दुःखंकुटुंबिनः ॥ भवतांतावदेवस्यान्नरस्याज्ञाननाशने ४७ उपद्रवंयथाकुर्युश्चोराणांपशुहारिणाम् ॥ अहर्निशं नरायत्ताइतश्चेतश्चधावताम् ४९८ ब्रह्मविद्यार्थिनांतद्वद्ब्रह्मचर्यादिसेविनाम् ॥ उपद्रवंभवंतोपियथाशक्तिप्रकुर्वते ४९९**

नअतिथीन्हंतकारेणान्यान्प्राणिनोबलिप्रभृतिकर्मणापातीत्यर्थः 'अथोअयमात्मासर्वेषांभूतानांलोकः' इत्यादिश्रुतेः ४९४ अज्ञइत्येकवचनतात्पर्यंदर्शयति मनुजानामिति । मनुजानामे कैकस्यापिअनेकेबहवःपशवःस्युः भवतांदेवादीनांतुसतुसद्गृहस्थरूपोमनुजएकएवपशुः कामधेनुवत्सर्वोपकारकइत्यर्थः ४९५ एकस्मिन्नेवेत्याद्यंशस्यार्थमाह चोरादीतिपंचभिः । यथाबहुपशु कस्यनरस्यचोरादिकर्तृकैकपशुहरणेपिदुःखंकिमुतसर्वेषांहरणेसति तत्रसर्वेषांपशूनांहरणेयादृशंदुःखंनरस्यजायते तादृशंदुःखंसर्वपशुस्थानीयस्यनरस्यमनुष्यस्याज्ञाननाशनरूपेहरणेसतिदेवादीनां जायतेइतिद्वयोरर्थः ४९६ । ४९७ उपद्रवमिति । यथाइतस्ततोधावतांपशुहारिणांचोराणामुपद्रवयिष्टसिद्धिप्रतिबंधोपायंनानाविधंयत्ताःसावधानाःसंतोनराःकुर्युस्तद्वद्भवंतोदेवाअपिब्रह्म विद्याकामनयाब्रह्मचर्यादिसेविनामुपद्रवंबुद्धिविपर्ययात्मकंयथाशक्तिकुर्वतेइतिद्वयोरन्वयः । अत्रायंश्रुतेराशयोभाष्यकारैःकाकुस्वरसूचितोदर्शितः तस्मान्मुमुक्षुर्विद्याकामःश्रद्धादिसंपन्नोदेवा द्याराधनपरोभवेद्यथातेसद्बुद्धिप्रदानेनप्रतिबंधाद्रक्षेयुरिति । तदुक्तं 'नदेवादंडमादायरक्षंतिपशुपालवत् । यंहिरक्षितुमिच्छंतिबुद्ध्यासंयोजयंतितम्' इति । देवपराङ्मुखानांहिविघ्नप्राचुर्यंदृश्यते त दुक्तं 'प्रमादिनोबहिश्चित्ताःपिशुनाःकलहोत्सुकाः । संन्यासिनोपिदृश्यंतेदेवसंदूषिताशयाः' इति । विद्यासिद्ध्यनंतरंतुनकाचित्प्रतिबंधाशंकाज्ञानसमकालंसर्वात्मभावादितिपूर्वमुक्तम् ४९८ । ४९९

नराणामिति । यद्वत्पशुहारिणःपाटच्चराश्चौरायेऽवंध्याहंतुमशक्यास्तेनराणामप्रियास्तथाएतेविद्वांसोभवतांदेवादीनामप्रियाइति । अत्राप्यात्मभूतानांविदुषामप्रियत्वानुपपत्तेः'नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनाम्'इत्यादिशास्त्रोल्लंघिनामेवविदुषांदेवद्वेषविषयत्वं तत्रापिसविशेषणेहीतिन्यायाद्विशेषणांशएवद्वेषइतिबोध्यम् ५०० फलितमाह तस्मादिति । तस्माद्विद्यालाभात्पूर्वविघ्नसंभवेपिविद्याफलस्यदेवैरपिप्रतिबद्धुमशक्यत्वात् अयंविद्वान्सर्वात्मभूतत्वात्सर्वदेवरूपस्तथाब्रह्मभूतत्वाद्देवेभ्योऽधिकश्चास्यविदुषःसंनिधावन्नृतमात्मेतरप्रियरूपंनवदेदितियदुक्तंतदुपपन्नमिति ५०१ अथयोहवाइत्यादिकंडिकायाअर्थमाह पुत्रादेरितिसप्तभिः । पुत्रादेःसकाशात्प्रियमात्मानमज्ञात्वैवयोम्रियतेतस्यस्वरूपभूतोपिसआत्माअज्ञातःसन्नानंदरूपाविर्भावेणतमज्ञंनपालयेत् जन्मप्रवाहान्नरक्षेदिति ५०२ अज्ञातआत्मानरक्षतीत्यत्रदृष्टांतमाह अनधीतइति । यथागुरुपुस्तकादिद्वारासंहितोपिवेदःअनधीतःसन्स्वस्वरूपप्रकाशेननद्विजंपावयतिनपूतंकरोति यथावान्यत्सुकृतंयागादिरूपंकर्मज्ञातमपिनकृतमननुष्ठितंसन्नफलायमभवतितथात्माप्यज्ञातइति ५०३ अज्ञात्वेति । एनमात्मानमज्ञात्वाअश्वमेधादिकंमहदपिकर्मकृतंसत्फलरूपेणक्षीणंभूत्वादुःखमेवददातीति । ततोनित्यानंदमिच्छताआत्मज्ञानेयत्नःकर्तव्यइतिभावः ५०४ उपास्तइति । ज्ञानाशक्तोउपासनमपिवरं उपासकोज्ञानस्योपासनस्यकर्मणश्चप्रसादेनप्रभावेणहिचित्तशुद्धिद्वाराइहब्रह्मलोके

नराणामप्रियायद्वद्वध्याःपशुहारिणः ॥ पाटच्चरास्तथैवैतेविद्वांसोभवतामपि ५०० तस्मादयंसर्वदेवरूपःशक्रतथैवहि ॥ देवेभ्योप्यधिकोनास्यसंनिधावनृतंवदेत् ५०१ पुत्रादेःप्रियमात्मानमज्ञात्वायोमृतिंव्रजेत् ॥ आनंदात्मप्रकाशेनसोपितंपालयेन्नच ५०२ अनधीतोयथावेदःस्वप्रकाशाद्विजोत्तमम् ॥ नपावयेत्तथाचान्यत्सुकृतंनकृतंचतत् ५०३ अज्ञात्वाचैनमात्मानमश्वमेधादिकंयदि ॥ कुरुतेतदपिक्षीणंपुनर्दुःखंप्रयच्छति ५०४ उपास्तेयोपिचात्मानमशक्तोज्ञातुमंजसा ॥ ज्ञानकर्मप्रसादेनकालाद्विद्यांसमाप्नुयात् ५०५ संसारेपिवसन्सोयंनानैश्वर्यसमावृतः ॥ हिरण्यगर्भेणसमःस्वल्पान्नूयात्कदाचन ५०६ यद्यत्कामयतेतत्तत्सृजतेजगदीश्वरः ॥ हिरण्यगर्भोत्रयथाज्ञानकर्मप्रसादतः ५०७ ब्रह्मास्मीत्यनयाबुद्ध्यासाक्षाद्यःकुरुतेपुमान् ॥ तस्यसर्वमिदंदृश्यंवांतंशक्रयथातव ५०८ इतोन्यद्योविजानातिनासावात्मज्ञईरितः ॥ यथादृप्तोत्रबालाकिर्गार्ग्योहिविदितस्तव ५०९ अजातशत्रुशिष्योभूद्गुरुत्वेनसमागतः ॥ तांकथांत्वंचजानीषेकाश्यांवृत्तांमहीतले ॥ ततःशक्रनविज्ञेयमन्यत्किंचित्कदाचन ५१० इंद्रियैरुपलब्धिर्यास्थूलार्थानांप्रकीर्तिता ॥ स्थूलदेहेनतत्सर्वंभवेदात्मायथाघटः ५११

वाकालंप्रतीक्ष्यविद्यांप्राप्नुयादिति ५०५ अवांतरंफलमुपासनस्याह संसारेपीति । सउपासकउपासनोत्कर्षानुसारेणहिरण्यगर्भसाम्यपर्यंतमैश्वर्यंलभतेइत्यर्थः ५०६ ऐश्वर्यमभिनयति यद्यदिति । हिरण्यगर्भवदिच्छामात्रेणकामितंसृजतेइति ५०७ ब्रह्मवित्त्वीश्वररूपेणसर्वंसृजन्नपिनकिंचित्कामयतेइतिविशेषमाह ब्रह्मास्मीति । ब्रह्मास्मीत्याकारयाबुद्ध्यायआत्मानंसाक्षात्कुरुतेतस्यविदुषइदंसर्वंदृश्यजातंहेयमेवहेशक्रयथातवैवराजत्वाभिमानिनोवांतान्नंहेयमिति ५०८ अथचतुर्थाध्यायतात्पर्यप्रदर्शनमुपक्रममाणोयदात्मब्राह्मणेतृतीयाध्यायगतेविधिमुखेनप्रदर्शितंतत्त्वमेतदेवमूर्तामूर्तब्राह्मणेनिषेधमुखेनोच्यतेइतिसूचयन्नजातशत्रुब्राह्मणंव्याख्यातमितिदर्शयति इतोन्यदितिद्वाभ्यां । इतोविधिमुखेनवर्णितात्मस्वरूपादन्यत्प्राणादिरूपंयआत्मत्वेनजानातिअसावनात्मज्ञएवबालाकिर्यथाक्षितिमहीतलेप्रसिद्धमितिशेषः । फलितमाह ततइति ५०९ । ५१० अथमूर्तामूर्तब्राह्मणतात्पर्यार्थमभिनीयदर्शयति इंद्रियैरितिचतुर्भिः । यास्थूलदेहेऽभिमानिनइंद्रियैःस्थूलार्थानामुपलब्धिर्जागरणसंज्ञोक्तातत्सर्वंजाग्रत्त्रिपुटीरूपंसाक्षिभास्यत्वेनदृश्यत्वाद्घटवदनात्मैवेत्यर्थः ५११

स्वप्नेपीति । स्वप्नेपियन्मानसंमनोविकारभूतंत्रिपुटीरूपंतन्मात्रमित्युक्तं । यथाचभगवद्व्याससूत्रं मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति । तदपिगंधर्वनगरोपमत्वाज्जनिमृत्युयोगा द्यानात्मेतिज्ञेयमिति ५१२ नाडीभिरिति । यःपुरीतद्रूपदुर्गमध्यगतेहृदयेनाडीद्वारेणगत्वाऽज्ञोभवतिसोपितेनाज्ञानविशिष्टत्वेन ज्ञत्वाश्चिद्भिन्नत्वाद्घटवदनात्मामुख्यात्मभिन्नइत्युक्तः विशिष्टके वलयोर्भेदादितिभावः । तर्हिकिंस्वरूपआत्मेतिपृच्छति किन्त्विति । उत्तरयति स्वप्रकाशेति । सहिनिश्चयेनस्वप्रकाशरूपइत्यर्थः ५१३ सुषुप्तइति । यःसुषुप्तावस्थायांहृदयेकीर्तितः स्वप्नकालेतुमानसेमनसिकीर्तितःजागरणेतुस्थूलदेहेकीर्तितःसआत्मात्रप्रकरणेहेशक्रकथ्यते निषेधमुखेननिरूप्यतेइत्यर्थः ५१४ अथप्रतिपाद्यस्वब्रह्मणःसार्थकंनामयत्कौषीतकिनेंद्रभयान्नोक्तमित्यु क्तंतत्तावद्दर्शयति ज्ञानेतिचतुर्भिः । सांतःकरणज्ञानेंद्रियकर्मेंद्रियाणांसुप्तेर्गमेऽतेआगमेआदौचयथोक्तमुत्पत्तिविनाशशालित्वमतएषामसत्यतास्पष्टेतिभावः ५१५ प्राणइति । यद्यपिप्राणः सुप्तौनलीयतेऽतएवतदंतेनजायतेइतिसत्यः तथापिअस्मात्प्राणादसावात्मापरःपरमार्थसत्यत्वेनोत्कृष्टः ५१६ प्राणोजडइति । प्राणोहियतोजडोऽनात्माचातएवापरोपकृष्टः एवंसतिसत्यस्यसत्य इतिनामात्मनःसिद्धमिति ५१७ प्राणावाइत्यादिश्रुत्यनुसारिणींनामव्युत्पत्तिमाह सत्यमिति । भूतभौतिकसमुदायःसप्राणत्वाच्छत्रिणोयांतीतिवत्प्राणपदार्थःसत्यस्तस्यवि वर्तोपादानत्वा

स्वप्नेपिमानसंयत्स्यान्मायामात्रंतदीरितम् ॥ देशकालाद्यभावेनगंधर्वनगरोपमम् ॥ तदप्यनात्मेतिज्ञेयंजनिमृत्योश्चयोगतः ५१२ नाडीभिर्हृदयेगत्वापुरीतद्दु र्गमध्यगे ॥ अज्ञोभवतियःसोपितेनानात्मासमीरितः ॥ अज्ञत्वाद्घटवत्किंतुस्वप्रकाशवपुर्हिसः ५१३ सुषुप्तेहृदयेयोन्यश्चस्वप्नेपिमानसे ॥ देहेजागरणेयोपिस आत्माशक्रकथ्यते ५१४ ज्ञानकर्मेंद्रियाण्यस्यह्यंतःकरणमप्यदः ॥ जायंतेचविलीयंतेजंतोःसुप्तेर्गमागमे ५१५ प्राणोयद्यपिनैवायंलीयतेजायतेचनः ॥ सुप्तौ तेनभवेत्सत्यस्तथाप्यस्मादसौपरः ५१६ प्राणोजडस्तथानात्माततएवापरःस्मृतः ॥ सत्यस्यसत्यइत्येतदस्यनामततोभवत् ५१७ सत्यंवेदेसमुदिष्टंसप्राणंभूत भौतिकम् ॥ तस्यायंकारणंयस्मात्सत्यसत्यस्ततःपुमान् ५१८ प्रत्यक्षयोग्यंलोकेस्मिन्प्रसिद्धंस्थितिमत्तथा ॥ मूर्तंसंदृष्टनाशंचसदित्येतद्विगीयते ५१९ तस्यैतस्यसमुक्तस्यसतःसारउदाहृतः ॥ मंडलंसवितुर्योयंतापात्मापुरुषःपरः ५२० परोक्षंशास्त्रगम्यंयत्प्रसिद्धंगतिमत्तथा ॥ अदृष्टनाशंतज्ज्ञेयंत्यच्छब्देनस मीरितम् ५२१ अस्यत्यस्यसमुक्तस्यसवितुर्मंडलेपुमान् ॥ सारउक्तोत्रविद्वद्भिरधिदेवसमाश्रयात् ५२२

त्पुरुषःसत्यसत्यइत्युक्तइति ५१८ नन्वनृतस्यप्राणभूतभौतिकसमुदायस्यकथंसत्यपदार्थतेत्याशंकांवारयन्मूर्तामूर्तब्राह्मणकंडिकापंचकस्यार्थमाह प्रत्यक्षेतिदशभिः । नीरूपस्यापिब्रह्मणःप्रति पत्त्युपायभूतेद्वेरूपेतत्राद्यंरूपंचतुर्विशेषणकंतत्रप्रत्यक्षयोग्यत्वेनलोकप्रसिद्धत्वात्सदित्युच्यते परिच्छिन्नत्वात्स्थितिमदित्युच्यते दृश्यमानावयवरचनाविशेषशालित्वान्मूर्तमित्युच्यते संदृष्टनाश कत्वान्मर्त्यमित्युच्यतेइत्यर्थः ५१९ तस्यैतस्येति । तस्यैतस्याद्यरूपस्यसमुक्तस्यसतःस्थितत्वादिरूपेणवर्जितस्यसवितृमंडलेसारोगोरसेनवनीतवत्प्रधानमुक्तःसर्वरूपाभिव्यंजकत्वादिति । किंत न्मंडलमतआह योयमिति । योयमपरोक्षस्तापात्मातपनस्वभावःपरःपुरुषःपरमेश्वरविग्रहःप्रसिद्धइत्यर्थः ५२० द्वितीयरूपमपिचतुर्विशेषणकत्वेनदर्शयति परोक्षमिति । यद्द्वितीयंरूपंतत्परोक्ष त्वेनशास्त्रमात्रगम्यत्वात्त्यच्छब्देनोक्तंज्ञेयंव्यापकत्वाद्गतिमदित्युक्तंतथाअदृष्टसंनिवेशकत्वादमूर्तमितिअदृष्टनाशकत्वादमृतमित्युक्तमिति ५२१ अस्यत्यस्येति । अस्यसमुक्तस्यवर्णितस्यत्यस्यत्य च्छब्दार्थस्यसारःसूर्यमंडलांतर्वर्तीलिंगसमष्टिरूपोहिरण्यगर्भाख्यःपुरुषउक्तःतच्छरीरारंभायसूक्ष्मभूतसृष्टेरितिभावः । एवमधिदेवंरूपद्वयंदर्शितमित्यर्थः । अत्र सवाएषपुरुषोऽन्नरसमयइत्या दिश्रुतौयथान्नमयकोशेपुरुषशब्दप्रयोगस्तथासूक्ष्मशरीरेबोध्यः ५२२

अध्यात्ममपिरूपद्वयंदर्शयति अध्यात्मेपीति । अध्यात्मेऽत्रसंघातेपिस्थितयोर्द्वयोरूपयोःपूर्ववत्सारभावोबोध्यः । तदेवाभिनयति सत्पदार्थस्यसारश्चक्षुरात्मकोबोध्यः 'शश्वद्धैरेतसःसिक्तस्यचक्षुषीएवप्रथमंसंभवतः' इतिश्रुतेश्चक्षुषःप्राधान्यादितिभावः । तथादक्षिणेक्षणिविशेषेणवर्तमानःपरःस्थूलापेक्षयाश्रेष्ठःपुमान्सूक्ष्मव्यष्टिरूपस्त्यच्छब्दार्थस्यसूक्ष्मस्यसारोबोध्यः । पूर्ववदिति । इतोरूपद्वयादन्यद्भूतपंचकमसारमिति ५२३ सत्पदस्यत्यत्पदस्यचार्थावभिनीयदर्शयति पृथिवीति । पृथिव्यादित्रयंप्रत्यक्षत्वात्सदित्युक्तंवाय्वाकाशौतुपरोक्षत्वात्त्यदिति एतेनसच्चत्यच्चसत्त्यमितिव्युत्पत्त्यासत्त्यशब्दस्यानृतेपिप्रयोगउपपन्नइतिसूचितम् ५२३ स्थूलव्यष्टिसमष्ट्योरभेदंसाराभेदमुखेनाह मंडलमिति । सवितुर्मंडलंतथापुरुषस्यदक्षिणंचक्षुश्चएतद्द्वयमभिन्नमेवमूर्तंभूतत्रयात्मकत्वाविशेषादिति ५२५ एवंसूक्ष्माभेदोपिबोध्यइत्याह मंडलेइति । स्थूलांतरत्वादात्मेत्युक्तःअमूर्तःपुरुषउभयत्रैकएवेत्यर्थः ५२६ ननूक्तविधयास्थूलस्यभूतत्रयात्मकत्वेसूक्ष्मस्यभूतद्वयात्मकत्वेचशरीरत्वंनस्यात् पंचात्मकंपंचगुणमित्यादिश्रुत्याशरीरस्यपांचभौतिकत्वप्रसिद्धेरितिशंकांवारयन्शरीरत्वंसाधयति वाय्वाकाशादितिद्वाभ्याम् । पंचीकरणबलेनवाय्वाकाशयोःस्थूलेपिवर्तमानत्वात्स्थूलस्यदेहत्वमित्यर्थः ५२७ खवाय्वोरिति । सूक्ष्मारंभकयोःखवाय्वोःसूक्ष्मरूपेणपृथिव्यादीनामपिवर्तमानत्वादमूर्तःपुरुषःसूक्ष्मदेहसंज्ञकोबोध्यइति ५२८ षष्ठकंडि

अध्यात्मेपिचसारत्वंविज्ञेयंपूर्ववद्द्वयोः ॥ चक्षुःसारःसतोज्ञेयोदक्षिणेक्षण्ययंपरः ॥ पुमांस्त्यस्यचसारःस्यादसारंभूतपंचकम् ५२३ पृथिव्यापस्तथातेजःसदित्येतदुदाहृतम् ॥ वायुस्तथांतरिक्षंचत्यदित्येतदिहोच्यते ५२४ मंडलंसवितुश्चक्षुःपुरुषस्यापिदक्षिणम् ॥ एकमेवसमुद्दिष्टंमूर्तंभूतत्रयात्मकम् ५२५ मंडलेसवितुर्योयंयश्चायंदक्षिणेक्षणि ॥ अमूर्तएकएवायंपुमानात्मेत्युदाहृतः ५२६ वाय्वाकाशौसुसूक्ष्मौतौविद्येतेभूजलाग्निषु ॥ पंचीकरणतस्तेनस्थूलंदेहमिदंस्मृतम् ५२७ खवाय्वोरपिविद्यंतेसूक्ष्मास्तेभूजलाग्नयः ॥ तेनसूक्ष्ममिदंदेहममूर्तःपुरुषःस्मृतः ५२८ सूक्ष्मदेहस्यरूपाणिवासनाजान्यनेकशः ॥ विद्यंतेकानिचित्तानिशक्रवक्ष्यामितेऽधुना ५२९ हरिद्रारूपितंवस्त्रंयादृशंतादृशःपुमान् ॥ क्वापिक्वापिभवेत्सोयंयथाश्वेतोत्रकंबलः ५३० इंद्रगोपोयथारक्तस्तथाक्वापिभवेत्पुमान् ॥ अग्नेरर्चिर्यथादीप्तापुमानेषतथाक्वचित् ३१ सितांभोजंयथाशुभ्रंमृदुलंचतथापुमान् ॥ क्वचित्क्वचिच्चपुरुषोविद्युद्दीप्तिसमोभवेत् ३२ विद्युद्दीप्तिसमानाश्रीरस्यपुंसउपासनात् ॥ रागिणोजायतेशक्ररागःशस्तोनकर्हिचित् ३३ एवमादीनिरूपाणिशक्रसंतिसहस्रशः ॥ तानिवक्तुंनशक्तोहंश्रुतिश्चापिमहात्मनः ६३४

कायाअर्थमाह सूक्ष्मेत्यादिना । तत्रदेहद्वयमध्येसूक्ष्मदेहस्यतार्किकाणामात्मत्वप्रकारकभ्रमविषयस्यपूर्वपूर्ववासनाजन्यानिनानाविधानिरूपाणिविद्यंतेतेषुकानिचिद्रूपाणिशृण्विति ५२९ हरिद्रेति । हरिद्रयारूपितम् रूपभूषायाम् रक्तमितियावत् तादृशवस्त्रसमरूपःक्वापिपुरुषोरजसाभवति यथानार्यादिदर्शनकालेइति । क्वापिकुत्रचित्श्वेतकंबलसमाकारःपुरुषोभवतियथापर्वतकंबलईषत्पांडुः पुरुषश्चतद्वत्सत्त्वेनश्रद्धादिमान्रजसाचरोषादिमानपीतियावत् ५३० इंद्रेति । इंद्रगोपोवर्षाकालिकोजंतुविशेषस्तद्वदत्यंतरक्तरूपोभवति । यथाएकांतेस्थितोपिरजसोऽतिशयेनविषयस्मरणपरः । क्वचिच्चाग्नेर्ज्वालायथाप्रकाशमानादहंतीचतत्समरूपोभवति । यथासत्वगुणेनविद्यावानपिराजसेर्ष्यादिनापरेषांदुःखकरइति ५३१ सितांभोजमिति । यथाश्वेतकमलंस्वभावतःशुद्धत्वकोमलत्वादिमद्भवतितथाविधःक्वचित्पुरुषोजन्मनैवशमादिमान्भवतीति । क्वचिदुत्कृष्टसत्त्ववशाद्विद्युद्दीप्तिवत्सर्वभासकज्ञानवान्भवतियथाहिरण्यगर्भः सहसिद्धंचतुष्टयमितिवचनात् ५३२ हिरण्यगर्भवत्सर्वज्ञतापिसकामोपासनफलत्वेनानित्यतादिदोषशालित्वान्मुमुक्षुभिर्नकामनीयेत्याह विद्युद्दीप्तीति । रागिणःसकामस्यपुंसःसाजायतेरागःकामस्तुकस्यापिविषयस्यनयुक्तोनयोग्यः स्वरूपानंदप्रतिबंधकत्वादितिभावः ५३३ एवंज्ञानकर्मवासनाभिव्यक्तगुणवशान्नानाविधान्यमूर्तपुरुषस्यरूपाणिसर्वाणिमयाश्रुत्याचनगणयितुंशक्यानीत्याह एवमादीनीति ५३४

एवंवर्णितस्यरूपद्वयस्यनिषेधयोग्यतांस्फुटयन्नज्ञानप्रयुक्ततामाह अविद्येति । अस्मिन्द्वयेऽनुगतातादात्म्येनसंबद्धा ५३५ निषेधांशंव्याचष्टे स्थूलमिति । स्थूलंसूक्ष्ममविद्याचेतत्त्रयमपि नात्माद्दृश्यत्वात् घटवदितिप्रथमनकारार्थइतिभावः ५३६ द्वितीयनकारार्थमाह सर्वस्येति । सर्वस्यकार्यकारणरूपस्ययोनिषेधोऽभावोमयाकृतःप्रकाशितःसोपिनात्माअभावस्यप्रतियोगिसमानयोगक्षेमत्वादिति । नहिशुक्तिरजताभावःसत्यइतिभावः । एवंनकारद्वयार्थंग्रंथकृदेवस्फुटीकरिष्यतीति ५३७ नेतीत्यस्मादन्यदधिकमादेशनंब्रह्मणोनास्तीत्यर्थमाह एतदिति । आदेशनमुपदेशप्रकारः गुरोर्गुरुकर्तृकमिति ५३८ अस्यादेशस्यमुख्यतांचतुश्चत्वारिंशच्छ्लोकैःप्रपंचयन्ब्रह्मवित्संप्रदायप्रसिद्धतांतावदाह आदिश्यतइति । अयंपरआत्माभावाभावरूपजडभिन्नत्वेनरूपेणनेतिनेतीतिवाक्येनैवसदादिश्यतेइत्यन्वयः । सर्वदेत्युत्तरान्वयि ५३९ आत्मनएतद्भिन्नोपदेशायोग्यत्वाद्यमुपदेशोमुख्यइत्याह अवाङ्मनसेति । वक्तुंविधिमुखेनाभिधातुम् अतस्यात्मभिन्नस्यव्युदासोनिषेधस्ततएवसर्वदाअयमात्मोपदिश्यतेइति ५४० अस्योत्कर्षंस्फुटयन्विधिमुखोपदेशस्यापकर्षमभिनयति ब्रह्मास्मीत्यादिना । अयंविधिमुखेनबोधःशब्दस्यानुवेधेनानुगमेनविशिष्टएवजायतेसचावाङ्मनसगम्येबाधितइतिभावः ५४१ तत्रक्लेशान्तरंदर्शयति अपीति । अत्रविधिमुखेनप्रवृत्तेबोधेपारोक्ष्यदुःखिताभ्यांतत्त्वंपदवाच्यार्थगताभ्यांदृष्टोभेदःसजहदजहल्लक्ष

अविद्याकार्यमखिलंस्थूलसूक्ष्मात्मकंद्वयम् ॥ अस्मिन्ननुगताविद्यातंतवोत्रपटेयथा ५३५ स्थूलंसूक्ष्मंचसाविद्यामितियत्कथितंमया ॥ नतदात्मेतिविज्ञेयंदृश्यत्वेनघटोयथा ५३६ सर्वस्यास्यनिषेधोयःकार्यकारणवस्तुनः ॥ इत्थंमयाकृतःसोपिनात्माशक्रकदाचन ५३७ एतदादेशनंमुख्यंशक्रानंदात्मरूपिणः ॥ नास्मादभ्यधिकंकिंचिदस्त्यत्रादेशनंगुरोः ५३८ आदिश्यतेहिगुरुभिरयमात्मासदापरः ॥ भावाभावजडादन्योनेतिनेतीतिसर्वदा ५३९ अवाङ्मनसगम्योयंनवक्तुंशक्यतेयतः ॥ अतद्व्युदासतस्तस्मादात्मायमुपदिश्यते ५४० ब्रह्मास्मीतिचयोबोधःकथितःशक्रतेपुरा ॥ अयंशब्दानुवेधेनजायतेनतुकेवलः ५४१ अपिबोधेत्रदृष्टोयंभेदस्तत्त्वंपदार्थयोः ॥ पारोक्ष्यदुःखिताभ्यांसवाक्येनविनिवार्यते ॥ मुख्यार्थस्यापरित्यागाल्लक्षणायाःसमाश्रयात् ५४२ त्वंपदार्थस्ययद्वत्स्यादभेदोह्यधिकारिणि ॥ अभेदस्तद्वदेवस्याज्जंतुमात्रस्थितात्मनि ॥ इत्येतदनुमानस्याप्यपेक्षासहकारिता ५४३ व्युदासश्चजडस्यायमपेक्ष्योबहुधापुनः ॥ तदर्थमनुमानंस्यादपेक्ष्यंपुनरेवहि ५४४ अनुमानस्यचापेक्षाभवेन्मानांतरस्यच ॥ अन्यथानानुमानत्वंस्वतंत्रंनभवेत्सदा ५४५ प्रवर्ततेमानमनुह्यनुमानंतदीरितम् ॥ स्वातंत्र्येणभवेन्नामनिरर्थकमिदंयथा ५४६

णाश्रयणाद्वारणीयइतिक्लेशः ५४२ किंचविधिमुखेनबोधेऽनुमानापेक्षागौरवंचेत्याह त्वंपदार्थस्येति । त्वंपदार्थस्यसच्चिदानंदलक्षणस्ययथाधिकारिस्वरूपोऽभेदोभेदाभावस्तथाजंतुमात्रेसर्वत्रस्थितात्मनितत्पदार्थेपिभेदाभावइत्यर्थसाधकानुमानस्यापिसहकारितासंभावनार्थमपेक्षणीयेतिक्लेशः अनुमानस्वरूपंतुत्वंपदार्थःपरमात्मनोनभिद्यतेसच्चिदानंदलक्षणत्वादधिकार्यात्मवदिति । जडेमोक्षाधिकारबाधात्परमात्मैवोपाध्यनुप्रविष्टोधिकारीतिप्रपंचितमाकरेषु ५४३ नकेवलमेकमनुमानंतदपेक्ष्यंकिंतुपदार्थशोधनायदेहादिव्यावृत्तयेबहूनीत्याह व्युदासइति । जडस्यदेहादिरूपस्यव्युदासोव्यावृत्तिः ५४४ ननुमंतव्यइतिमननविधानाद्द्गौरवंसहिष्यतेइतिचेत्तथापिनिषेधवाक्यंविनाननिस्तारइतिवक्तुमनुमानस्येतरसापेक्षतांपूर्वोक्तामनुवदति अनुमानस्येति । अनुमानस्यमानांतरापेक्षाभवत्येवान्यथानुमानत्वहान्यापत्तिः यतोनुमानंस्वतंत्रंनभवेत्, मानमनुप्रवर्ततेइत्यनुमानमित्युक्तत्वादिति स्वातंत्र्येनिरर्थकत्वाच्च मानानुग्राहोहितर्करूपानुमानस्यफलमितिद्वयोरर्थः ५४५ । ५४६

प्रकृतात्मानात्मगोचरानुमानानांश्रुतिनैरपेक्ष्यरूपेणस्वातंत्र्येणनिरर्थकत्वंयथेतिपदेनप्रदर्शनीयतयाप्रतिज्ञातंस्फुटयति प्रत्यक्षमितिदशभिः । प्रमाहियथार्थनिश्चयात्मिकाप्रमाणफलंतच्चप्रकृता नुमानेननजनयितुंशक्यं अनुमानस्यद्वेअंगे व्याप्तिःपक्षधर्मताचेतिप्रसिद्धव्याप्तिरूपांगवैकल्येनदौर्बल्यात् तच्च अनात्मत्वरूपसाध्यस्यजडत्वादिरूपहेतूनांचसाहचर्यस्यप्रत्यक्षेणग्रहीतुमशक्यत्वात्तदे तदुक्तंप्रत्यक्षमिति । अक्षरार्थस्तुअस्यदेहाद्यनात्मतासाधकानुमानगणस्यव्याप्तिग्राहकतयामूलभूतंप्रत्यक्षंनसंभवति यतःक्वापिकदापिवाजडादिषुभावप्रधाननिर्देशेनजडत्वादिषुहेतुषुसत्सुअनात्म त्वमात्मभेदरूपंप्रत्यक्षेनदृष्टमिति । प्रत्यक्षस्यघटादिसत्त्वमात्रावगाहित्वात्प्रतियोग्यात्मनोविषयीकरणमंतरातद्भेदस्यदुर्ग्रहत्वादितिभावः ५४७ आत्मनःप्रत्यक्षविषयत्वाभ्युगमेपिविपक्षबाध काभावेनव्याप्तिर्दुर्ग्रहेत्याह घटस्येति । जडत्वेनदेहानात्मतासाधनेदृष्टांतस्यानात्मतायद्यपिदृष्टातथापिसाऽनात्मतातस्यघटस्यैवभवतादस्तु ततोन्यस्यदेहस्यमाभूदितिकेनचिद्विपक्षोद्भावनेकृतेसति बाधकंकिंचिन्नदृश्यतेइत्यर्थः ५४८ एतद्दृष्टांतेनस्पष्टयति घटेइति । यथाघटेस्तंभतानदृष्टाघटत्वावगाहिप्रत्यक्षेणनगृहीतातथापिसास्तंभान्ननिवर्ततेकिंतुतत्रवर्ततएव एवंघटेआत्मतामास्तुसाआ त्मनिदेहेऽस्तुइत्यत्रकिंबाधकमितिवक्तव्यमितिशेषः ५४९ ननुदेहोयद्यात्मास्याचर्हिजडोनस्यादितितर्कएवविपक्षबाधकइतिचेन्न विरोधमूलकस्यास्यतर्कस्यदेहस्यात्मतास्वभावइतिवादिनश्चार्वाक

प्रत्यक्षंनभवेन्मूलमस्यक्वापिकदाचन ॥ नहिप्रत्यक्षतोदृष्टमनात्मत्वंघटादिषु ५४७ घटस्यानात्मतादृष्टासातस्यभवतात्सदा ॥ माभूदन्यस्यसायस्माद्बाधकं नात्रदृश्यते ५४८ घटेनस्तंभतादृष्टानसास्तंभान्निवर्तते ॥ तद्वद्घटादिगामाभूदात्मतासास्तुचात्मनि ५४९ जाड्यदृश्यादयोनैवस्वभावंवस्तुनःक्वचित ॥ एतेऽन्यथयितुंशक्ताघटकुड्यादिरूपिणः ५५० सत्वंयथासमग्रेषुवर्ततेवादिनोमते ॥ तथापिनैवतत्कुर्याद्वस्तुनोत्रविपर्ययम् ५५१ जाड्यदृश्यादयस्तद्वदात्मा नात्मस्वरूपगाः ॥ संतुकिंवादिनश्छिन्नंयेनस्युर्नात्मगाहिते ५५२ अपिनात्मनिवर्ततेचक्षुरादीनिसर्वथा ॥ तेनायंमनसाग्राह्योविज्ञेयोवादिभिःपुमान् ५५३ गृह्णातिचमनस्त्वेकमहमित्येवनापरम् ॥ तत्रकेननिवर्तेतजाड्यमस्यात्मनोघुना ५५४

स्यपुरतोऽकिंचित्करत्वात् नहिजडत्वंपदार्थस्वभावंविपरीतंकरोति । घटेविद्यमानेनजडत्वेनघटस्याघटतायाअसंपादनादित्याह जाड्येति । दृश्येतिभावप्रधानोनिर्देशः घटकुड्यादिरूपिणोव स्तुनःस्वभावमन्यथयितुमन्यथाकर्तुमेतेजाड्यदृश्यत्वादयोनशक्ताइतिसंबंधः तथाचदेहस्यात्मतालक्षणंस्वभावंकथमन्यथाकुर्युरितिभावः ५५० जाड्यादीनांवस्तुस्वभावाविरोधित्वे दृष्टांतमाह सत्वमिति । यथासत्वंसत्ताजातिःसर्वत्रवर्तमानाकस्यचिद्वस्तुनोविपर्ययंस्वभावान्यथात्वंनकरोतीति ५५१ दार्ष्टांतिकेयोजयति जाड्यदृश्यादयइति । तद्वत्सत्ववज्जाड्यादयो प्यात्मनिचसंतुवर्तताम् अत्रएवमभ्युपगमेवादिनःश्रुतिनिरपेक्षोक्तानुमामप्रयोक्तुःकिंकार्यकारणभावादिच्छिन्नंभग्नंभवति येनकार्यकारणभावादिभंगभयेनतेजाड्यादयआत्मगानस्युरित्युच्येतेति वन्हिविनाधूमाभ्युपगमेतयोःकार्यकारणभावभंगवदत्रनकिंचिद्बाधकमितिभावः ५५२ नन्वात्मनश्चेतनत्वेनानुभवात्तद्विरोधेनजडस्यात्मतानमंतुंशक्यतेइतिचेत् किमत्रात्मनश्चेतनत्वेनानुभवेकरणं बहिरिंद्रियाणिमनोवा तत्रनाद्यः बहिरिंद्रियविरोधादित्याह अपिनेति । अंत्यपक्षंदूषयितुमनुवदति तेनेति । विज्ञेयोमंतव्यः ५५३ मानसमहमित्याकारकज्ञानमात्मनःसत्वमात्रं साधयिष्यतिनतुतस्यचैतन्यादिकंतत्रौदासीन्यात्तथाचजाड्यमबाधितंस्थितमेवस्यादित्याह गृह्णातीति । परमतेपिइंद्रियाणांमध्येएकमन्यतमंमनोऽहमित्याकारेणैवात्मानंगृह्णातितत्राहमित्या कारेणात्मग्रहणेप्यात्मनोजाड्यंकेननिवर्तेतनकेनापि जाड्यविरुद्धचैतन्यावगाहनादितिभावः ५५४

ननुजानामीतिज्ञानमात्मनश्चैतन्यमवगाहतेइतिचेन्न अस्यमनःसंवलितात्मविषयकत्वेनशुद्धात्मधर्मविषयकत्वानवधारणादित्याह जानामीति । अन्यस्यमनसः । तत्रदृष्टांतमाह यथेति ५५५ प्रत्यक्षेणात्मनश्चेतनस्यैवाग्रहणेतस्यविभुत्वादिरूपेणग्रहणेकाप्रत्याशेत्याह आत्मनइति । यदाऽऽत्मनश्चेतनत्वेनरूपेणापिप्रत्यक्षंनास्तितदासर्वगतत्वादौपरोक्षतयापरैरप्यभिमतेप्रत्यक्षंकुतःस्यादिति ५५६ एवंश्रुतिंविनामूलांतरमलभमानंविधिमुखप्रवृत्तवाक्यसाहाय्यायप्रवृत्तमनुमानंपरिवृत्यश्रुतिवाक्यमेवशरणीकुरुतेइत्याह अनुमानमिति । तत्रात्मनिर्णये अस्यानुमानस्य । किंतत् श्रुतिवाक्यमनुमानस्यमूलभूतमितिचेत्पदार्थशोधकावान्तरवाक्यरूपमित्याह सत्यमिति । समनुरूपानुमानस्यमूलभूतःआगमःसत्यमित्यादिरूपोबोध्यइत्यर्थः ५५७ वस्तुतस्तुतदपिसत्यमित्यादिवाक्यंनेतीतिवाक्यस्वभावमितरव्यावृत्त्या बोधनरूपमालंब्यैवाखंडंबोधयत्तन्निषेधमुखोपदेशप्राधान्यंद्योतयतीत्याशयेनाह तस्यापिवेति । वाऽथवातस्यसत्यमित्यादिवाक्यस्यापिअभिन्नएकस्मिन्नखंडेर्थेकथंचनलक्षणयाप्रवृत्तिर्विद्वद्भिरिष्टासंमता । केनद्वारेण असदज्ञानपरिच्छेदानांव्युदासेनव्यावृत्त्या । तत्रसत्पदमसद्व्यावृत्त्या ज्ञानपदमज्ञानव्यावृत्त्या अनंतपदंपरिच्छेदव्यावृत्त्या ब्रह्मणिपर्यवस्यति तथानंदोब्रह्मेतिवाक्यगतमानंदपदंदुःखव्यावृत्त्याशुद्धेपर्यवस्यतीत्यर्थः ५५८ नन्वेवंनिषेधमुखेनप्रवृत्तिःशास्त्रेणकिमर्थमाश्रीयतेइतिचेत्प्रमेयानुसरणेनप्रामाण्यलाभायाविशिष्टस्यविशिष्टतयाबोधनेहिअप्रामाण्यंस्यादित्याशयेनप्रमेयस्यब्रह्मपदार्थस्यस्वरूपमभिनयति एकमिति । एकमित्यादिपदत्रयेणस्वगतादिभेदान्निरस्यभूमरूपेणस्वेमहिम्निप्रतिष्ठितंयत्तद्ब्रह्मेतिबो

जानामीतिचयोबोधःसस्यादन्यस्ययोगतः ॥ यथातांबूलयोगेनमुखेस्याद्रक्तिमानृणाम् ५५५ आत्मनश्चेतनत्वेनप्रत्यक्षंनैवविद्यते ॥ कुतःसर्वगतत्वादौयस्यनित्यंपरोक्षता ५६ अनुमानंकथंतत्रमूलाभावात्प्रवर्तते ॥ आगमस्ततएवास्यसम्यग्योमूलंमनीषिभिः ॥ सत्यंज्ञानंतथानंतंब्रह्मेत्यादिर्हिसस्मृतः ५७ तस्यापिवाऽसदज्ञानपरिच्छेदव्युदासतः ॥ आनंदइतिवास्यापिदुःखस्यैवव्युदासतः ॥ इष्टाप्रवृत्तिर्विदुषांनभिन्नार्थेकथंचन ५८ एकमेवाद्वयंब्रह्मस्वसजातिविजातिजान् ॥ भेदान्व्युदस्यसततंस्वेमहिम्निप्रतिष्ठितम् ५५९ शास्त्रतोऽवगतंयस्माद्रूपादिवदलौकिकम् ॥ ततःशास्त्रस्यविश्वासाद्ब्रह्मज्ञेयंमनीषिभिः ५६० शास्त्रंचात्रप्रवृत्तंसत्प्रवृत्तिंकुरुतेद्विधा ॥ विधानेननिषेधेनलोकदृष्टिसमाश्रयात् ६१ शृंगग्राहिकयायद्धिबोधयेत्तद्विधायकम् ॥ यथालोकेकरेतेस्तिफलमित्यादिभाषणम् ५६२

ध्यमित्यन्वयः । स्वेमहिम्नीतिइतराश्रयतावारकं यथास्वयंदासास्तपस्विनइतीतरदासव्यावृत्तिपरमितिबोध्यम् ५५९ नन्वेतादृशंब्रह्मलोकेऽप्रसिद्धंकथंशास्त्रेणबोध्यतेपदार्थप्रसिद्धेर्वाक्यार्थबोधहेतुत्वादित्याशंक्यदृष्टांतेनपरिहरंस्तस्यशास्त्रमात्रवेद्यतामाह शास्त्रतइति । उक्तलक्षणंब्रह्मालौकिकमपियतःशास्त्रादेवगम्यतेततःशास्त्रस्याप्रामाण्यप्रयोजकैरबोधकत्वसांशयिकत्वगृहीतग्राहित्वबाधितार्थत्वैर्हीनत्वेनविश्वासाद्विश्रंभात्तेनब्रह्मविवेकिभिर्ज्ञेयमवधार्यमिति यथाऽलौकिकोपियूपपदार्थः ‘ यूपंतक्षतियूपमष्टाश्रीकरोति ’ इत्यादिवाक्यवशात्संस्कारविशेषविशिष्टकाष्ठरूपोवधार्यते आदिपदेनसंस्कारविशेषविशिष्टाग्निरूपाहवनीयादिग्रहः । तथाब्रह्मापिसत्यमित्यादिवाक्यादवधार्यतेइति ५६० सत्यमित्यादिवाक्यस्यप्रथमंयाविशिष्टवाचकपदैर्ब्रह्माभिधानेप्रवृत्तिस्तावन्मात्रेणविधिशास्त्रत्वव्यवहारःप्रमेयमनुसृत्यतुइदमपिनिषेधशास्त्रतांभजतइतिदर्शयितुंशास्त्रप्रवृत्तिद्वैविध्यंदर्शयति शास्त्रमिति । अत्रात्मनिप्रवृत्तंसच्छास्त्रंविधानेनसाक्षाद्बोधनरूपव्यापारेणइतरनिषेधरूपव्यापारेणचद्विविधांप्रवृत्तिंकुरुते लोकदृष्टिसमाश्रयात् यथाकालवासनयायुतंशिष्यंबोधयितुंसदेवसोम्येदमग्रआसीदित्यत्राग्रइत्यभिधानंतथाविधाननिषेधाभ्यांद्वाभ्यामपिप्रकाराभ्यांहिप्राप्रवर्तोलोकाननुरुध्येतियावत् ५६१ तत्रविधायकशास्त्रस्यलक्षणंलौकिकमुदाहरणंचाह शृंगेति । शृंगस्यग्रहणंयस्यांक्रियायांसाशृंगग्राहिका । संज्ञायामितिण्वुल् । यथागोव्रजेकामदीयागौरितिगोपःपृष्टःशृंगंगृहीत्वागांप्रदर्शयेत्तथाबोधकंशास्त्रंविधायकमुच्यते यथाहस्तेतवामलकमिति ५६२

आत्मनितुएवंप्रवृत्तमपिशास्त्रंतदयोग्यतामालक्ष्यव्यावृत्तिपरतामाश्रवतइत्याह नचैवमिति । एवमभिगमयितुंबोधयितुंयोग्योऽभिगम्योनचात्माभवति अवाङ्मनसगोचरत्वात् अतस्तत्सत्यंज्ञा नमित्यादिरूपंविधायकंशास्त्रमपिस्वस्मिन्नात्मनिइतरव्यावृत्तिमुखेनैवप्रवर्ततेइति ५६३ निषेधकंशास्त्रंलक्षयति निषेधकमिति । यच्छास्त्रंप्रकृतान्प्रस्तुतान्लक्ष्यरूपतयाभ्रांतैरभिमतान्प्रतियो गितयापेक्ष्यप्रवर्त्तमानंएतान्प्रकृतान्निषिध्यपरिशेषाल्लक्ष्यंबोधयेत्तन्निषेधकमुच्यतेइति प्रसक्तप्रतिषेधेन्यत्राप्रसंगाच्छिष्यमाणेसंप्रत्ययःपरिशेषइति ५६४ निषेधकंशास्त्रंलोकउदाहरति महारा जमितिदशभिः । यथाआरामगतंस्वसमानवेषैश्छत्रादिहस्तैर्वृतंचमहाराजमज्ञात्वाकश्चिन्मूढःप्रत्ययिनंविश्वस्तंनरंपृच्छेदित्यन्वयः ५६५ बुबोधयिषुरिति । एषप्रत्ययीनरस्तंमूढंबुबोधयिषुर्बो धयितुमिच्छन्नयंराजेतिनब्रवीति । यतोबाह्यानांपामराणांबुद्धिवृत्तस्यसाक्षादभिधानविपरीतग्राहित्वरूपस्यविशारदोऽभिज्ञः ५६६ बाह्यबुद्धिविशारदतांविशदयति अयमिति । एनंप्रत्येष राजेतियदिवक्ष्यामितर्हिराजपार्श्वंगतमन्यंपुरुषंछत्रादिकमेववाराजतयामन्येतमूढधीत्वादिति ५६७ इत्थमिति । सबुबोधयिषुर्नरस्तस्मैमूढायएवंप्राह । एवंकथं एतेवृक्षामहीपतिर्नभवंतिए

नचैवमभिगम्योयमवाङ्मनसगोचरः ॥ आत्मातस्तदपिस्वस्मिन्व्यावृत्त्यैवप्रवर्तते ५६३ निषेधकंतुयच्छास्त्रंप्रकृतान्समपेक्ष्यतत् ॥ प्रवर्ततेनिषिध्यैतान्परि शेषात्प्रबोधयेत् ५६४ महाराजंयथाकश्चिदारामस्थंडिलस्थितम् ॥ स्वसमानैर्वृतंपुंभिश्छत्रचामरशोभितैः ॥ अज्ञात्वामूढधीर्बालःपृच्छेत्प्रत्ययिनंनरम् ॥ ५६५ बुबोधयिषुरेषोपिमूढंतंबालकंपुमान् ॥ अयमित्येवनप्राहबाह्यबुद्धिविशारदः ५६६ अयमित्येववेदेनंवक्ष्याम्येषोत्रमूढधीः ॥ गृह्णीयात्पुरुषंचान्यंतद्व च्छत्रादिकंचवा ५६७ इत्थंविचार्यतंप्राहनैतेवृक्षामहीपतिः ॥ नाश्वानकरिणस्तद्वन्नरथानपदातयः ५६८ नानायुधधरायेत्रस्थंडिलस्यसमीपगाः ॥ नतूर्याण्य पिचित्राणिसच्छत्राणिनचामराः ५६९ नचतूर्यादिहस्तायेपुरुषाश्चवधूगणाः ॥ ननीलकंचुकोराजानचायंपीतकंचुकः ५७० नरक्तकंचुकस्तद्वन्नचचित्रांबरो पिहि ॥ नस्वर्णकरवालोयंनहेमधनुराश्रितः ५७१ इत्येवमादिवचनैर्महाराजात्परान्नरान् ॥ निराकरोतिबालोपिपरिशिष्टंप्रपद्यते ५७२ महाराजंसुवर्णांगंश्वेत च्छत्रविभूषितम् ॥ पतद्भिरुत्पतद्भिश्चचामरैर्हंससंनिभैः ५७३ पुरवारवधूहस्तपंकजौघप्रचारिभिः ॥ सेवितंविलसच्छ्वेतदुकूलंदिव्यवर्चसम् ॥ अध्यक्षेणैवजा नातिबालःसर्वविलक्षणम् ५७४ एवंनानाविधाभावानात्मनोत्रविलक्षणान् ॥ निषेधयतितच्छास्त्रमात्मनःपरिशेषकृत् ५७५ शास्त्रेणचनिषिद्धेषुतेषुसर्वेष्वनात्म सु ॥ परिशिष्टंतमात्मानमात्मनैवप्रपद्यते ५७६ अयमेवहिसम्यक्स्यादुपायःस्वात्मबोधने ॥ भावाभावविनिर्मुक्तमात्मानंकोहिबोधयेत् ५७७

तेऽश्वाअपिमहीपतिर्नभवंति एवमग्रेपि ५६८ नानेति । पूर्वार्द्धेनकारस्यानुषंगः ५६९ नचेति स्पष्टम् ५७० नरक्तेति । करवालःखड्गः हेमपृष्ठकधनुषाआश्रितः ५७१ इत्येवमि ति । परान्भिन्नान् ५७२ इतरव्यावर्तकत्वेपिपरिशिष्टस्यभासनेनशब्दस्यव्यापारइत्याह महाराजमिति । बालोमहाराजंसर्वविलक्षणमध्यक्षेणैवजानाति सर्वविलक्षणतार्थंविशेषणानिसुव र्णांगमित्यादीनि सुवर्णाङ्गंशोभनवर्णशाल्यंगकंपुरस्यवारवधूनांगणिकानांहस्ताएवपंकजानितत्रप्रचारिभिश्चामररूपहंसैःसेवितम् स्फुटमन्यदितिद्वयोरर्थः ५७३ । ५७४ दार्ष्टांतिकेयोजयति एवमितिद्वाभ्यां । एवंतन्निषेधशास्त्रमात्मनोविलक्षणान्नानाभावान्निषेधतिव्यावर्तयति आत्मानंचपरिशेषयतीत्यर्थः ५७५ ततआत्मास्वयमेवभासतइत्याह शास्त्रेणेति । आत्मनैवस्वयमेव ५७६ निषेधवाक्योत्कर्षमुपपादितंनिगमयति अयमेवेति । उत्तरार्द्धस्यान्यथेत्यादिः ५७७

यन्मनसाध्यायतितद्वाचावदतीतिनियमान्मनोविषयत्वसाक्षादबोधनीयत्वेहेतूकरोति अवाङ्मनसेति । तमात्मानंमनसाकःप्रतिपद्यतेविषयीकरोति कीदृशं महावाक्यानांतात्पर्यार्थभूतं ज्ञात्यादिहीनत्वात्साक्षात्शब्दसमुदायप्रतिपाद्यताहीनमित्यर्थः ५७८ अवाक्यार्थस्यापिनिषेधवाक्यव्यापारानंतरंस्वयमेवभाननियममात्राच्चतस्यवाक्यार्थत्वेनव्यवहारइत्याह यदेति । सद सदात्मकंभावाभावरूपंप्रकाशतेस्त्रयमेवेतिशेषः ५७९ निषेधवाक्यस्यात्मभानउपयोगेदृष्टांतमाह यथेति । यथादीपस्यभानप्रतिबंधकतमोपनयनएवव्यापारोघटादिदर्शनेतुचाक्षुषःपुरुषःस्व तंत्रएवेतिभावः । निःसारयेन्निवर्त्तयेत् ततःप्रतिबंधकापनयादित्यर्थः ५८० दार्ष्टांतिकमाह भावेति । भावाभावरूपंकार्यकारणरूपंवाद्वैतंनात्मेतियदाशास्त्रंबोधयेत्तदास्वयमेवाधिकारीआ त्मानंबुद्ध्यतेइत्यन्वयः ५८१ फलितमाह निषेधइति । तस्मादात्मबोधार्थंनिषेधरूपएवादेशउपदेशःपरमःश्रेष्ठोयतस्तत्रनिषेधरूपआदेशेकस्याचित्पदार्थशोधनस्यानुमानादेर्वापेक्षानास्तीति ५८२ ननुमूर्तामूर्तयोःश्रुतिगतयोर्नञ्द्वयेननिषेधेपियद्यतोन्यत्किंचिज्जडंस्यात्तर्हितत्तादात्म्याध्यासादात्मभानंनस्यादितिशंकांवारयति इयदेवेति । इयदेतावदेवजडंयत्सकारणंमूर्तामूर्तमितिअधिकं तुनास्तिसकारणमूर्तामूर्त्तव्यतिरेकमात्रेणात्मपरिचयस्यविद्वदनुभवसिद्धत्वादित्याह यदभावइति । यतःसकारणस्यमूर्त्तामूर्त्तस्यअभावेव्यतिरेकेकृतेसत्यात्मनोयमपरोक्षोविभावःपरिचयोदृश्यते

अवाङ्मनसगम्यंकोमनसाप्रतिपद्यते ॥ वाक्यार्थभूतमात्मानमवाक्यार्थैकरूपिणम् ५७८ यदासर्वंनिषिद्धंचेतयत्स्यात्सदसदात्मकम् ॥ प्रकाशतेतदादेवआनं दात्मास्वयंप्रभः ५७९ यथादीपःसमागम्यतमोनेत्रनिरोधकम् ॥ निःसारयेत्ततोनेत्रंवस्तुजातंप्रपद्यते ५८० भावाभावात्मकंतद्वत्कार्यकारणरूपधृक् ॥ नात्मे तिबोधयेच्छास्त्रमात्मानंबुद्ध्यतेस्वयम् ५८१ निषेधएवतस्मात्स्यादादेशःपरमःसदा ॥ आत्मबोधेयतस्तत्रनापेक्षाकस्यचिद्भवेत् ५८२ इयदेवजडंप्रोक्तंमूर्ता मूर्तंसकारणम् ॥ यदभावेविभावश्चस्वात्मनोयंनचापरम् ५८३ नकारएकोभावाख्यंस्थिरंयत्कार्यकारणम् ॥ तंनिषेधतिचान्योपिद्वयाभावमनात्मकम् ५८४ भावाभावौयदास्वस्मान्निर्गतौजडरूपिणौ ॥ तदानंदात्मकोबोधःस्वप्रकाशोवतिष्ठते ५८५ इंधनेपगतेवन्हिर्यथातिष्ठतिरूपतः ॥ तथात्मापिगतेतस्मिन्भा वाभावात्मकेजडे ५८६ अहंत्वंदृश्यमेतच्चतथान्येपिचजंतवः ॥ मूर्तामूर्तत्रिभेदोयंशक्तनात्मनिविद्यते ५८७ एतस्मिन्हियथाकाशेधूमविद्युद्घनाघनाः ॥ भेदंना नाविधंकुर्युस्तद्वदात्मनिजंतवः ५८८ मूर्तामूर्तमिदंविद्धिमायाकार्यंनवस्तुतः ॥ मायाचनहिसत्यासालोकेमायाविनिर्मिता ५८९

'विभावःस्यात्परिचये' इतिविश्वः ५८३ एतत्स्फुटयन्पूर्वसूचितांनकारयोजनांदर्शयति नकारएकइति । कारणपर्यंतंभावमेकोनञ्निषेधयति परस्तुतदभावमित्यर्थः ५८४ उभयोर्निषेधेआ त्मपरिचयंदर्शयति भावाभावाविति । स्पष्टम् ५८५ अत्रदृष्टांतमाह इंधनेइति । यथाविशेषभावप्रयोजकेइंधनेऽपगतेदग्धेसतिवन्हिःसामान्यरूपेणावतिष्ठतेतथातस्मिन्जडेगतेसत्यात्मास्वे नसच्चिदानंदात्मनावतिष्ठतेभासतेइतियावत् ४८६ आत्मनोरूपमुपलक्षयति अहंत्वमिति । अहंत्वादिरूपोमूर्त्तामूर्त्तोपाधिप्रयुक्तोभेदोयत्रस्वरूपेनास्तीत्यर्थः ५८७ अथब्रह्मात्मविद्यायानिग मभूतंमधुब्राह्मणमेकादशभिरवतारयंस्तत्रसूचयिष्यमाणमिदमनुमानं जगत्एककार्यपरस्परोपकारकत्वादेकमातृजपुत्रवदिति । तत्रव्यावर्तनीयभेदमौपाधिकंदर्शयति एकस्मिन्निति । यथाधू मेनविद्युताघनाघनैर्मेघैश्चआकाशेकल्पितसंबंधैराकाशस्यभेदःक्रियतेतथात्मनिजंतवःस्थूलसूक्ष्मशरीराणिभेदंकुर्युरिति ५८८ दृष्टांतेधूमादीनामाकाशोपादानकत्वाभावेपिदार्ष्टांतिकेउपाधीनामात्मो पादानकत्वमस्तीतिविशेषंसूचयन्कथमात्मनःकारणतेतिशंकावारणायासंगस्याप्यात्मनोमायाशबलस्यमूर्त्तामूर्तविवर्त्तोपादानतासंभवतीत्याह मूर्त्तेति । मूर्तंस्थूलममूर्तंसूक्ष्ममेतदात्मकमिदंदृश्यं मायाप्रयुक्तमतएवनवास्तवमिति । मायायाःसविलासायामिथ्यात्वंलोकेपिप्रसिद्धमित्याह मायाचेति । मायाविनानिर्मिताप्रयुक्ता ५८९

चतुर्थपादार्थंविशदयति मूर्तामूर्त्तमिति । यथालोकेमूर्त्तामूर्त्तंस्थूलसूक्ष्मपदार्थरूपमिंद्रजालमैंद्रजालिकनिर्मितंप्रतीयेततथाएतन्मूर्त्तामूर्त्तमिंद्रेणनिर्मितमिंद्रजालमिति । 'जालोदंभानाय्ययोः' इति हेमचंद्रः । दंभश्चमिथ्याकृतिः इंद्रस्यमायाविनोजालमिंद्रजालमिति । लिङ्गमशिष्यमित्याद्युक्तेःक्लीबत्वम् ५९० दार्ष्टांतिकेऽहमेवेंद्रइतिमन्यमानंप्रत्याह इंद्रइति । इंद्रःसएवात्रविवक्षितोयःपूर्वंसर्वात्मनात्मानंदृष्टवान् इदंदृष्टवानितिव्युत्पत्तेःसमन्वयात् परमैश्वर्यवाचकत्वेपींद्रपदस्यब्रह्मात्मविद्येवसमन्वयइत्याह इंद्रएवेति । यतोब्रह्मात्मवित्सर्वज्ञत्वादिशालित्वादिंद्रःपरमैश्वर्यवानेवमतीयतेप्रसिद्धः । तथाचब्रह्मैवमुक्तोपसृप्यमज्ञातमत्रेंद्रपदार्थोजगत्कारणमितिभावः । त्वंतुमूर्त्तामूर्त्तदेहद्वयाभिमानित्वेनतत्कार्यत्वान्नेंद्रपदार्हइत्याह नत्वमिति । हेशक्रत्वमिंद्रोनभवसि यतोमूर्त्तामूर्त्तशरीरतादात्म्याध्यासात्ततोजातस्तत्कार्यमसीत्यर्थः ५९१ कथंतर्हिममेंद्रत्वप्रसिद्धिरतआह इंद्रत्वमिति । यत्त्वयींद्रत्वंलोकामन्यंतेतदस्मदादेरपकृष्टैश्वर्यस्यापेक्षयैव यतस्तवास्मदादिभ्योमहदैश्वर्यमस्तीति ५९२ विवेकदृष्ट्यातुब्रह्मात्मविदीश्वरएवेंद्रः कार्योपाधिगतमुत्कर्षादिकंत्वभिमानमात्रं सच्चिदानंदरूपात्मनस्तादात्म्येनकीटादिशरीराणामपिप्रियत्वाविशेषादापेक्षिकैश्वर्यादीनामपिमन्यमानत्वादात्मविवेकेतुदेवशरीराणामपिदुःखत्वादिरूपेणभानादित्यज्ञत्वेनाविद्ययादेहाभिमानदशायामिंद्रस्यशुनश्चऐश्वर्यादिनासाम्यमाह ऐश्वर्यइत्यादिना । हेशक्रयथातवऐश्वर्यंत्रिलो

मूर्तामूर्तंयथालोकइंद्रजालंप्रतीयते ॥ इंद्रजालंतथैवैतद्रिंद्रेणैवविनिर्मितम् ५९० इंद्रोयोदृष्टवान्पूर्वमिंद्रएवप्रतीयते ॥ नत्वंशक्रयतोजातोमूर्तामूर्तवपुस्ततः ९१ इंद्रत्वंत्वयियल्लोकावदंत्येतदपेक्षया ॥ अस्मदादेर्यतस्तेस्तिह्यैश्वर्यंमहदत्रहि ९२ ऐश्वर्येत्रशरीरेवात्रिलोक्यांवावधूजने ॥ रागोमहान्यथातेस्तितथास्तीहशुनोपिच ५९३ शुनोपिमहदैश्वर्यमस्तिकीटाद्यपेक्षया ॥ अस्तिदेहोपिमृदुलःसूकरादेरपेक्षया ९४ वधूनांयादृशीप्रीतिस्तवशक्रेहविद्यते ॥ शुनोपितादृशीप्रीतिः शुनीनांविद्यतेभुवि ९५ यथामृतंप्रियंतुभ्यंतथावांतंशुनोपिच ॥ उपकारिणिसंतोषंयथाशक्रप्रयास्यरम् ॥ एवंस्वामिनिसंतोषंश्वापिगच्छतिनित्यशः ९६ अपकारिणिकोपंत्वंयासिशक्रयथातथा ॥ श्वापियातिमुखंकृत्वाविवृतंदंतदर्शकः ९७ उपकारमहंकुर्वेत्रिलोक्याःप्रतिपालनात् ॥ सर्वस्यश्वानचतथामामंस्थाइत्थमण्वपि ९८ पृथिव्यापस्तथावन्हिर्वायुःसूर्यस्तथादिशः ॥ चंद्रोविद्युत्तथामेघोनभोधर्मस्तथैवच ५९९

कीमृत्वेतथादेवराजशरीरेभोग्यायांत्रिलोक्यांचस्वर्गवधूजनेचरमणीयत्वबुद्ध्यातवरागआसक्तिरस्तितथाशुनोप्यैश्वर्यादौरागोस्तीति ५९३ नचशुनआसक्तियोग्यमैश्वर्यादिकंनास्तीतिवाच्यम् । आपेक्षिकस्यसत्वादित्याह शुनोपीति । मृदुलःकोमलः ५९४ वधूनामिति । हेशक्रतवइहशरीरेयादृशीवधूनांप्रीतिस्तादृशीप्रीतिःशुनःशरीरेशुनीनामपिविद्यते तथाचकमनीयशरीरतापि समेतिभावः ५९५ भोज्येरुचिसाम्यमप्याह यथेति । प्रियंरोचकं । तुभ्यंतव । वांतंछर्दितं । आत्मत्वाभिमतशरीरानुकूलेरागसाम्यमाह उपकारिणीति । संतोषंप्रीतिं । प्रयासि प्राप्नोषि । अरंभृशं । एवंस्वामिनिउपकारकेश्वापीति ५९६ प्रतिकूलेद्वेषोपिसमइत्याह अपकारिणीति । तथाप्रतिकूलेकोपंश्वापियातियतोमुखंविवृतंविकासितंविकृतंकृत्वादंतदर्शकइतिसंबंधः ५९७ उपकारकत्वेनाहमुत्कृष्टइत्यभिमानोपित्वयानकार्यइत्याह उपकारमिति । इतिमामंस्थाइत्यभिमानंमाकुर्विति ५९८ तत्रहेतुतयामधुब्राह्मणस्यचतुर्दशकण्डिकापर्यंतस्यार्थंसंक्षेपेणाह पृथिव्यापइतिपङ्क्तिः । पृथिवीस्थूलरूपातदभिमानिसूक्ष्मशरीरात्मिकादेवताचतेजोमयादिपदत्रयार्थभूताप्रथमकण्डिकायामुक्ता तथाआपोजलमनितदभिमानिसूक्ष्मात्मिकादेवताचद्वितीयकण्डिकायामुक्ताएवमग्रेपिकण्डिकाक्रमोबोध्यः । मेघःश्रुतौस्तनयित्नुपदेनोक्तः । नभआकाशः । धर्मोयागादिजन्यादृष्टरूपःशुभफलात्मककार्यद्वाराप्रत्यक्षइवेति ५९९

४१

12s

सत्येति । सत्यंयथार्थवाक्यादिरूपोऽनुष्ठीयमानोधर्मः अनयोर्धर्मसत्ययोरपिप्रत्येकंस्थूलंसूक्ष्मंचमूर्तिद्वयम् आकाशमूर्त्तिवत्तदीयास्थूलामूर्तिरपिनदृश्यतेइतिचबोध्यम् । एवंमनुष्यत्वादिजातिश्चद्विरूपा । तथाचतुर्दश्यांकण्डिकायामात्मपदेनोक्तंपौरुषंपरिपूर्णस्यएकस्यपुरुषस्यसंबंधिमनोबुद्धिप्राणप्रभृतिरूपंदेहद्वयंवैराजंहैरण्यगर्भंचद्वितीयात्मपदेनोक्तश्चिदाभासश्चेत्यपिबोध्यम् ६०० उपकारमिति । एषसर्वःपृथिव्यादिपदार्थोऽस्यसर्वस्यप्राणिजातस्यश्रुतौभूतपदोक्तस्योपकारंकरोति भूतेर्दृष्टादृष्टद्वाराऽऽरब्धत्वात् । श्रुतौमधुशब्दोहिदृष्टादृष्टद्वारारब्धत्वप्रयुक्तोपकारकतावाचकइतिभावः । तथाश्वाऽपिश्वप्रभृतिप्राणिनांस्थूलसूक्ष्माख्यंशरीरद्वयमपिउक्तपृथिव्यादीनामुपकारंकरोति पृथिव्यादीनांदृष्टादृष्टद्वारारंभकत्वादितिभावः ६०१ शुनइति । शुनःश्वप्रभृतेःप्राणिजातस्य । एतेपृथिव्यादयः । फलितमाह विशेषइत्यादिना ६०२ एवंपरस्परोपकारकत्वेचएकमातृजपुत्रवदेककार्यत्वनिश्चयेयस्यमायाशबलस्येदंसर्वंकार्यंसएवैकःसर्वत्रतादात्म्येनानुप्रविष्टउपकारकइतिसिद्धमित्याह उपकारंनेतिद्वाभ्याम् । कोपिपृथिव्यादिः प्राणिविशेषोवा किंशब्दार्थः किंचिदल्पमपि । कस्तर्ह्युपकारकइत्यतआह किंत्वित्यादिना । योमयातुभ्यंनेतीत्यादिनोपदिष्टएषएवपरःपुमान्पृथिव्यादिकार्येतिष्ठंस्तादात्म्येनानुगतःसन्विनाशरहितोऽमृतःस्वयंप्रकाशश्चपरोब्रह्मत्वेनसर्वोत्कृष्टःसर्वोपकारकइतिद्वयोरर्थः । अनेनश्लोकद्वयेनायमेवसइत्यादिरंशःसर्वकण्डिकांतगतोव्याख्यातः ६०३ । ६०४ उक्तंपरस्परोपकारकत्वंविशदयति पृथिव्यामितित्रयोदशभिः । सपरःपुरुषःपृथिव्यांवर्त्तमानःसन्सर्वप्राणिनांभोगसाधनानिशरीराणिकुरुते

सत्यवाक्यंमनुष्यादिजातिःपौरुषमेवच ॥ देहद्वयंमनोबुद्धिःप्राणादिकमिदंतथा ६०० उपकारंकरोत्यस्यसर्वेःसर्वस्यसर्वदा ॥ श्वापिसर्वस्यभूम्यादेरुपकारंकरोतिहि ६०१ शुनःसर्वेपिचैवैतेविशेषःकेनतेभवेत् ॥ माकुथास्त्वंततोगर्वमुपकारकृतंसदा ६०२ उपकारंनकस्यापिकोपिकिंचित्करोतिहि ॥ किंतुयोयंमयादिष्टोनेतिनेतीतितेपुमान् ६०३ एषएवपृथिव्यादौस्थावरेजंगमेपिच ॥ तिष्ठन्विनाशरहितःस्वयंभातःपरःपुमान् ६०४ पृथिव्यांवर्तमानःसन्शरीरंकुरुतेहिसः ॥ शरीरस्थश्चभूमेःसकरोत्युपचयंपुमान् ६०५ जलेतिष्ठन्हिजंतूनांरेतसोवृद्धिमीश्वरः ॥ रेतस्ययमपांवृद्धिंकुरुतेदेहरूपतः ६०६ वन्हौवाचःप्रवृत्तिंसतिष्ठन्पाकादिकंतथा ॥ मंत्राद्युच्चारणाद्वापितिष्ठन्वन्हेरुपस्क्रियाम् ॥ वायौतिष्ठन्क्रियांप्राणेस्तत्रवास्यप्रवर्तनम् ६०७

इतिप्राणिनःप्रतिपृथिव्युपकारिका तथाशरीरस्थःसर्वप्राणिरूपःसन्नाधारंविनाभोगासंभवादाधारभूतभूमेर्दृष्टादृष्टान्यतमद्वाराउपचयंवृद्धिंकरोति । तथाचपृथिव्यास्वारंभकत्वेनस्वार्थानांप्राणिनांसृष्टेःप्राणिभिश्चस्वारंभिकायाभूमेःस्वार्थमेवसृष्टेःपरस्परकार्यत्वंपरस्परभोग्यत्वंचतत्रजडांशप्राधान्येनकार्यत्वंभोग्यत्वंचचित्प्राधान्येनभोक्तृत्वंच तत्फलंचोक्तविधानुमानेनैकात्म्यसिद्धिरेवमग्रेपिबोध्यम् ६०५ जलइति । ईश्वरोजलरूपःप्राणिनांदेहेपुरेतसःशुक्रस्यवृद्धिंकरोति 'आपोरेतोभूत्वाप्राविशन्' इत्यैतरेयश्रुतेः एवमग्रेपिअधिदैवरूपाणामध्यात्मरूपोपबृंहकत्वेऐतरेयश्रुतयोऽनुसंधेयाः । प्राणिरेतःस्थितःकार्यदेहरूपेणजलारंभकदृष्टादृष्टव्यापारोत्पादनद्वाराजलवृद्धिंकरोतीतिपूर्ववत्सर्वंबोध्यमिति । इयमुपकारविधाइहाग्रेपिप्रकारांतराणामुपलक्षणमिति ६०६ वह्नाविति । वन्हौतिष्ठन्नीश्वरःप्राणिनांवागिंद्रियप्रवर्तनद्वारेणधातुपाकादिद्वारेणवाप्राणिनःप्रत्युपकरोति । प्राणिनांवाचितिष्ठंश्चमंत्रोच्चारणादिनाहवनीयाद्युत्पादिकामुपस्क्रियांसंस्कृतिंकुरुतेइति । पृथिवींरीत्योपकारस्तुसर्वत्राविशिष्टएवेतिचबोध्यम् । वायाविति । वायौतिष्ठन्सर्वेषांप्राणप्रयुक्तांक्रियांप्रवर्त्तयति वायुविरोधस्थलेप्राणनिरोधानुभवात् तथातत्रप्राणेषुतिष्ठन्नस्यवायोःप्रवर्त्तनंकरोति । प्राण्यदृष्टैर्वाय्वारंभादित्युक्तप्रायम् ६०७

सूर्येइति । सूर्यस्थःसर्वप्राणिनांदृष्टिंप्रवर्त्तयन्नुपकारकः प्राणिदृष्टिस्थश्चसूर्योयमितिज्ञानद्वारासूर्योपकारकोदृष्टिसृष्टिसिद्धांतात् ६०८ दिक्ष्विति । दिक्षुस्थितःसन्सर्वप्राणिश्रोत्राणांदिगंशभू
तानामनुग्राहकः श्रोत्रस्थश्चदिशामुपस्क्रियांसंस्कृतिंभेर्यादिजन्यशब्देनकृतांप्रतिध्वनिरूपांश्रुतौप्रतिश्रुत्पदेनोक्तांजानाति प्रतिध्वनिबलादेवहिविशेषतःपूर्वादिदिशोज्ञायंतेइतिप्रतिध्वनिज्ञानद्वारा
श्रोत्रस्यदिशःप्रत्युपकारकत्वंयुक्तमिति । एवंचंद्रस्यमनःप्रवर्तकत्वेनोपकारकत्वंमनसश्चसंकल्पैश्चंद्रलोकबृंहककर्मद्वाराऽऽल्हादकस्यचंद्रस्यसाधकत्वेनवाउपकारकत्वंबोध्यमितिद्वयोरर्थः ६०९
६१० विद्युतीति । अधिदैवंविद्युतिस्थितःसन्परःपुरुषःसकलप्राणिनांतमःपुंजंहंति सकलप्राणिनामध्यात्मंतैजसेत्वग्गतोज्ज्वलतारूपतेजोभिमानिनिस्थितःसन्सर्वतोव्याप्तंविद्युतःप्रकाशंप्रति
पद्यतेजानातीतिसूर्यैवर्णितन्यायेनोपकारकताबोध्या ६११ घनाघनेइति । घनाघनेमेघेस्थित्वासशब्दोगर्जिताख्येनशब्देनसहितःसन्नृणांभूतानामाल्हादकोहर्षजनकोभवति तथानृणामध्या
त्मंध्वनिरूपेशब्देस्थितःसंस्तंमेघंबहुप्रशस्ततयामन्यते यथामुखगतालालाबाह्यरसास्वादेहेतुस्तथांतर्ध्वनिर्बाह्यशब्दग्रहणेइतिपूर्ववदुपकारकताबोध्या ६१२ नभसीति । अधिदैवमाकाशेस्थितः
सर्वप्राणिनांहृदयच्छिद्रप्रदानेनोपकारकः हृदयाकाशस्थितश्चसर्वव्यापकरूपतयाऽऽकाशंजानातीतितस्यसाधकत्वेनोपकारकता अतएवसांप्रदायिकाःसाक्षिभास्यंनभइत्याहुःसाक्षिणश्चहृदयेवि

सूर्येतिष्ठन्हिनेत्राणामुपकारकरःपुमान् ॥ नेत्रेसूर्यंचजानन्संस्तमप्युपकरोतिसः ६०८ दिक्षुस्थित्वाचकर्णानामनुग्रहकरोभवेत् ॥ कर्णयोरपिसंस्थित्वादि
शांजानात्युपस्क्रियाम् ६०९ चंद्रएषपुमान्स्थित्वामनःसर्वंप्रवर्तयेत् ॥ मनस्येषव्यवस्थायचंद्रंसंप्रतिपद्यते ६१० विद्युत्येषपुमान्स्थित्वातमःस्तोमंनिहंति
हि ॥ तैजसेचपुमान्स्थित्वाविद्युतःप्रतिपद्यते ६११ घनाघनेप्ययंस्थित्वासशब्दोल्हादकोनृणाम् ॥ जंतूनामपिशब्देसौस्थित्वातंबहुमन्यते ६१२ नभस्ये
षव्यवस्थायहृदिच्छिद्रंप्रयच्छति ॥ हार्देछिद्रेस्थितोदेवोनभोजानातिसर्वगम् ६१३ धर्मेस्थित्वानराणांससुखंयच्छतिसर्वदा ॥ धार्मिकेपुनरेष्वेषस्थित्वाधर्मंक
रोतिच ६१४ सत्यवाक्येपुमान्स्थित्वासम्यगर्थंनिवेदयेत् ॥ सत्यवाक्येनरेस्थित्वासत्यवाक्यंवदेत्तथा ६१५ मानुषेपिचजात्यादौस्थित्वादद्यात्सुखंनृणाम् ॥
मानुषेवपुषिस्थित्वामानुषंसचगच्छति ६१६ देहेंद्रियमनःप्राणसंघातेबुद्धिपालिते ॥ स्थित्वाजनिमृतीतस्यकुरुतेसर्वदेश्वरः ६१७ बुद्धेःसर्वप्रचारेषुस्थित्वातां
विषयैःसह ॥ अवगच्छतिजंतूनामात्मातेपिशुनोपिच ६१८

शेषतोवस्थानमिति ६१३ धर्मेइति । धर्मरूपःसन्सर्वस्यसुखप्रदत्वेनोपकारकः धार्मिकनररूपेणधर्ममुत्पादयन्धर्मंप्रत्युपकारकइतिस्पष्टमिति ६१४ सत्येति । सत्यवाक्यरूपःयथावद
र्थबोधनेनोपकारकस्तथासत्यंवाक्यंयस्यतादृशेनरेस्थित्वासत्यवाक्यमुत्पादयतीत्यपिस्पष्टंपरोपकारकत्वमिति ६१५ मानुषेइति । मानुषत्वब्राह्मणत्वादिजातिरूपःसन्परमेश्वरोधिकारसंपादानद्वा
राजात्यभिमानिनांसुखप्रदत्वेनोपकारकः तत्तद्व्यक्तिस्थितश्चाभिमानेनजातिंसाधयन्दृष्टिसृष्टिन्यायेनोपकारकइति ६१६ पूर्वसंग्रहवाक्येपौरुषपदेनोक्तस्यसर्वसंघातस्यसर्वप्राणिबुद्धिप्रतिबिंबितचि
दाभासस्यचविज्ञानमयपदोक्तस्यपरस्परोपकारकतांदर्शयति देहेंद्रियेतिद्वाभ्याम् । देहादिसंघातेबुद्धिपालितेबुद्धिप्रधानकेबुद्धिपर्यंतइतियावत् स्थित्वातस्यविज्ञानमयस्यजन्मादिकंकरोतिबु
द्ध्यादिरूपोपाधीनांधर्मैर्विज्ञानमयंधर्मवंतंकरोतीतिविज्ञानमयंप्रतिसंघातस्योपकारकता उपाधिधर्माध्यासेनैवाहंभोक्तृत्वंतच्चाविद्यादशायांसुखवदवभासतइतिप्रसिद्धमितिभावः ६१७ बुद्धे
रिति । बुद्धेःप्रचारेषुवृत्तिसंज्ञपरिणामेषुस्थितःसंस्तांबुद्धिंविषयैःसहावगच्छतिभासयतीतिविज्ञानमयस्यसंघातंप्रत्युपकारकतातंविज्ञानमयंतत्पदार्थेनिवेशयति आत्मेति । एतादृशआत्माते
शक्रस्यापिशुनोप्यविशिष्टइत्यर्थः ६१८

परस्परोपकारेदृष्टांतमाह माक्षिकस्येति । यथामाक्षिकरसोमक्षिकाश्चपरस्परमुपकार्योपकारकभावमापन्नाइत्यर्थः ६१९ दार्ष्टांतिकमाह एवमिति । एवंपृथिव्यादिरूपंजगन्मण्डलंयंप्रत्युपकुरुतेतद्दुपकृतंतस्यउपकारकस्यउपकुरुतेउपकारंकरोति यथालोकेपिप्रभुर्वेतनेनभृत्यानुपकृतान्करोतिभृत्याश्चसेवयातमुपकुर्वंतीतिप्रसिद्धम् ६२० उक्ताश्चोपकाराउपलक्षणमवांतरभेदानांबहुत्वादित्याह उपकाराइति । दिङ्मात्रेणनिदर्शनमात्रेण प्रकृत्यादित्वात्तृतीया । एतत्स्पष्टीकृतंवार्तिककृद्भिः 'सर्वंसर्वस्यकार्यंस्यात्सर्वःसर्वस्यभोजकः । इत्येषामधुविद्यात्रवैषम्यक्लेशहारिणी' इति ६२१ उक्तानामुदाहरणत्वेसतियत्फलितंतदाह भूम्यादिकमिति । पृथिव्यादिकंसर्वंप्रत्येकमात्मनःस्वस्वरूपादन्यस्यसर्वस्योपकारंकरोति यथापृथिवीस्वातिरिक्तस्यजलादेरप्युपकारिकापंचीकरणादिविधयापरिपोषकत्वात्तथान्यत्पृथिवीभिन्नंसर्वमेकस्यपृथिवीस्वरूपस्योपकारकं एवमन्यत्रापीति । परस्परोपकारकाणांचैकात्मकत्वस्यएकशरीरावयवेपुदृष्टत्वात्सर्वत्रैकात्मकत्वंसिद्धमित्याह उपकारकरइति । समीरितः अत्रब्राह्मणेइतिशेषः ६२२ तेजोमयत्वादिविशेषणैःपृथिव्यादिसूक्ष्मशरीरविशिष्टपरत्वेआपेक्षिकार्थपरत्वाद्भिभ्यद्भिःसएवात्माप्रतिपाद्यतेइत्याशयेनशुद्धात्मपरत्वंतेजोमयादिपदद्वयस्याह तेजसेति । स्वरूपभूतप्रकाशात्मकेनतेजसाभ्राजमनः श्रुतौस्वार्थिकोमयड्डितिभावः । आमृतोपमःअमृतेदेवलोकप्रसिद्धेउपमाउपमितिर्यस्यसतथापरमामृतइतियावत् । तदेवाह जरेति । मरणाभावेनेतराभावोपिबोधितइतिभावः ६२३ अयमेवसइत्यादेरर्थमुपबृंहयति अयमितिपंचभिः । सर्वदेहिनांहृदयेवर्णितइतिशेषः । कथमित्यतआह नानेत्यादि ६२४ स्वयंभिन्नाअप्युपाधयस्तंभेत्तुंनालमित्याह समइति । समएकरूपः हेशक्रतेतवआत्माशुनश्चात्मापरमेश्वरइति ६२५ भिन्नोपाधिगतस्याप्यभेदेदृष्टांतमाह यथेति । घटाद्युपाधिनिष्ठोभेदोयथानभआकाशंनस्पृशतितथात्मानमित्यर्थः ६२६ अयमेवपूर्वंब्रह्मात्मतयावर्णितइत्याह निर्भेदइतिद्वाभ्यां । स्पष्टम् ६२७ । ६२८ सवाअयमित्यादिवाक्यार्थमाह सएवेति । सर्वाणितआत्मैवसर्वस्याधिष्ठायवशीकृत्यपालकः । तवत्वधिपतित्वमभिमानमात्रमित्याह नत्वमिति । तत्रहेतुतयाकार्याभिमानेननियम्यकोटिप्रविष्टत्वमाह तवापीति । हियतएषआत्मातवदेवराजशरीराभिमानिनोऽन्तर्व्यवहारभूमौनियामकोंतर्यंतेत्यर्थः ६२९ राजेतिपदस्यार्थमाह एषएवहीति । एषएवसर्वेषांमध्यमोमध्येभवः मध्येमाकांतिर्यस्य 'तस्यभासासर्वमिदंविभाति' इति श्रुतेः एतादृशःसन्दीप्यतेराजते रविवदिति । त्वंतुराजानभवसितदधिष्ठानभासकत्वादित्यर्थः ६३०

माक्षिकस्यरसोयद्वन्मक्षिकोपकृतःपुरा ॥ उपकारंमक्षिकाणांकुरुतेसर्वदैवहि ६१९ एवमेवजगच्चक्रंपृथिव्यादिकमत्रहि ॥ यस्योपकुरुतेतद्धितस्योपकुरुतेपुनः ६२० उपकाराश्चभूम्यादेर्दिङ्मात्रेणसमीरिताः ॥ एतेह्येकैकशःसंतिलक्षशःकोटिशस्तथा ६२१ भूम्यादिकमिदंसर्वंसर्वस्यान्यस्यचात्मनः ॥ उपकारंकरोत्येवह्येकस्यान्यत्तथाखिलम् ॥ उपकारकरस्तत्रसर्वत्रात्मासमीरितः ६२२ तेजसास्वप्रकाशेनभ्राजमानोमृतोपमः ॥ जरावामरणंवापिविद्यतेस्यनकर्हिचित् ॥ ६२३ अयमेवसआत्मायोहृदयेसर्वदेहिनाम् ॥ नानाबुद्धिप्रचाराणांसाक्षीसंगविवर्जितः ६२४ समोयंसर्वदेहेषुस्थावरेषुचरेषुच ॥ शक्रतेपितथात्मेतिशुनोपिपरमेश्वरः ६२५ यथानभसिनैवास्तिभेदोघटमठादिगः ॥ तथानात्मनिभेदोस्तिशक्रनानाशरीरगे ६२६ निर्भेदोयंपुमानुक्तोहृदयेसर्वदेहिनाम् ॥ जरामरणशून्योयंब्रह्मसर्वात्मकंपरम् ६२७ अयमेवात्मविज्ञानात्सर्वमेवाभवत्पुमान् ॥ ब्रह्मात्मायःपुरोक्तस्तेब्राह्मणानांविचारतः ६२८ सएवसर्वभूतानामधिष्ठायचपालकः ॥ नत्वंशक्रतवाप्येषह्यधिष्ठायात्रपालकः ६२९ एषएवहिसर्वेषांभूतानांमध्यमःपुमान् ॥ दीप्यतेरविवन्नत्वंकिंतुतेनैवराजसे ६३०

परस्परोपकारस्यपृथिव्यादिजगच्चक्रस्यसापेक्षत्वेएकात्मकत्वेचदृष्टांतंस्फुटयति रथेतिचतुर्भिः । यद्वद्रथचक्रस्यावयवभूतयोर्नेमिनाभिसंज्ञयोःकाष्ठयोर्मध्यगतायेअरास्तिर्यक्काष्ठरूपाएतेअराःस्वतंत्राःस्वाधीनानभवंतिकिंतुउभयत्रनेमौनाभौचप्रतिष्ठिताः सापेक्षवृत्तयइत्यर्थः ६३१ एवमिति । एवंसर्वंजगदध्यात्ममधिदैवंस्थितयोरात्मनःस्वरूपयोरंशयोःपृथिव्यादिवर्तिसूक्ष्माभिमानिनोर्मध्येवर्ततेतयोरधीनंवर्ततेइतियावत् । यथासर्वभूतशरीराणिपृथिवीचअरानिभानिपृथिव्यभिमान्यात्मांशंनेमिनिभंशरीराभिमानिनमात्मांशंनाभिनिभंचाश्रितानि एवमन्यत्रापिबोध्यं । कीदृशयोरात्मरूपयोरुपकारायसर्वत्रपृथिव्यादौवर्णितविधयास्थितयोरिति ६३२ एकमेवेति । दृष्टांतेयथाएकमेवशिंशिपादिकाष्ठंनेमिस्वरूपंनाभिस्वरूपमरास्वरूपंचबिभ्रत्सदुपकार्यभावमुपकारकभावमादिपदेनाधाराधेयभावादिकंगच्छति भूतलेइदंप्रसिद्धमितिशेषः ६३३ एकएवेति । एवमेकआत्मैवाधिदैवादिभावंतदभिमानिपुरुषभावंचगतःसन्सर्वत्रोपकारकः तवपृथिव्यादेश्चउपकारकताअभिमानमात्रमित्यर्थः ६३४ उपकारकस्यचात्मनएकरूपत्वादुत्कृष्टोपाधावेवायमुपकारकइत्यभिमानोवृथेत्याह उपकारमिति ६३५ वर्णितमात्मैक्यंनिगमयति किमिति । बहुनोक्तिनाकिंफलंनकिमपिततःसंक्षेपेणतत्त्वंनिश्चिनु । किमवधारयामीत्यतआह समइति । ममचक्ररेःसात्विकस्यतेदेवराजस्यराजसस्यशुनस्तामसस्यचात्मासमएकरूपइति ६३६ तदुपाधीनामुत्कर्षापकर्षौतुदृष्टिभेदेनसर्वत्रप्रतिष्ठितावितिदर्शयति निंदयामइतिद्वाभ्यां । यथावयंदेवमनुष्यादयःशुनोजन्मकष्टमितिनिंदयामस्तथास्माकंजन्मब्रह्मवादिनःसंसाराद्विरक्तानिंदंतीति ६३७ आत्मतादात्म्याध्यासात्तुसर्वे देहेषूत्कृष्टताभासतइत्याह उत्कृष्टेति । यथावयंस्वस्वदेहमुत्कृष्टंमन्यामहेतथाश्वापिस्वदेहंसर्वोत्कृष्टंमन्यतइत्यर्थः ६३८ तस्माद्यःसंबंधाद्देहादिकंरमणीयतयाभासतेसआत्मैवोपादेयोऽन्यत्सर्वंहेयमित्याह ततइति । हित्वेतिशेषः ततस्त्वंदेहंहित्वातथाप्सरोगणयुतंस्वर्गंचहित्वा अलमवयुत्यानुवादेनबहिर्यावद्दृश्यगोचरमतएवानर्थरूपत्वात्त्याज्यमभिमानंहित्वात्मानंस्वयमेवविद्धीतिसंबंधः ६३९ तत्रापिदेहाभिमानःप्रथमंपरित्याज्यः साक्षादात्मभानप्रतिबंधकत्वाद्देहाभिमाननिवृत्तौबाह्यगोचरममत्वनिवृत्तेःपृथक्साधनानपेक्षत्वादित्याह श्वेतिद्वाभ्यां । अन्यत्रकाकविष्ठयाहेयमुपमितमत्रश्वविष्ठयेति । हेयोऽभिमानादवतार्यः तस्मिन्देहे ६४० शरीरइति । देहेहंबुद्धित्यागेकृतेसत्यन्यत्रममताशालिबुद्धेर्देहेतोर्यद्दुःखंतत्समूलंसद्देतुकंनश्यतीत्यर्थः ६४१

रथचक्रस्ययद्वद्धिनेमिनाभ्योस्तुमध्यगाः ॥ अरानैतेस्वतंत्राःस्युरुभयत्रप्रतिष्ठिताः ६३१ एवंविश्वंसमग्रंस्यान्मध्येध्यात्माधिदैवयोः ॥ उपकारायसर्वत्रस्थितयोरात्मरूपयोः ६३२ एकमेवयथाकाष्ठंनेमिनाभ्यादिरूपभृत ॥ उपकार्योपकारादिभेदंगच्छतिभूतले ६३३ एकएवतथात्मायमधिदैवादिभेदभाक् ॥ तत्रस्थितश्चसर्वेषामुपकारंकरोतिहि ॥ नत्वंशकनभूम्यादिरुपकारकरंस्मृतम् ६३४ उपकारंकरोत्येषयथातेहृदयेस्थितः ॥ शुनोपिभगवांस्तद्वत्कुरुतेहृदयेस्थितः ६३५ किंवहूक्तेनदेवेंद्रसंक्षेपेणावधारय ॥ समःसंसारआत्माचममतेपिशुनोपिच ६३६ निंदयामोवयंयद्वत्कष्टंजन्मशुनोघुना ॥ अस्माकंचतथैवैतेनिंदंतिब्रह्मवादिनः ६३७ उत्कृष्टतायथास्माकंस्वदेहेशक्रविद्यते ॥ शुनोपिचस्वदेहेसाताद्दृश्येवहिवर्तते ६३८ ततोदेहंतथास्वर्गमप्सरोगणमंडितम् ॥ अभिमानंवहिस्त्याज्यंविद्ध्यात्मानंस्वमात्मना ६३९ श्वविष्ठासदृशोदेहःशक्रसर्वशरीरिणाम् ॥ हेयोधियापरित्यक्तेतस्मिन्नात्माप्रकाशते ६४० शरीरेहंधियस्त्यागेह्यन्यत्रममताधियः ॥ दुःखंसमूलंदेवेंद्रनाशमाप्नोतिदेहिनः ६४१

भा. पु.

एवंमधुब्राह्मणांतमधुकाण्डप्रतिपाद्याब्रह्मविद्यानिरूपिता अथतत्स्तुत्यर्थंइदंवैतदित्यादिग्रंथोव्याख्यातव्यस्तत्रप्रथमवाक्यस्यवैशब्देनस्मारितायाद्ध्यङ्ङ्हवाइत्यादिकायाःप्रवर्ग्यकाण्डगतायाभाष्ये ऽनूदिताख्यायिकायाउपबृंहणउपोद्घातभूतस्यकोपंतेनेतरस्मैउक्तविद्यादाननिवारणंततोदधीचस्तूष्णीमवस्थानंचपंचाशच्छ्लोकैर्दर्शयिष्यन्निंद्रायदधीचउपदेशानुवादमश्विनोरहस्यज्ञकादिरुपसंहरति इत्यादीति । दध्यङ्ङाथर्वणःशक्रंप्रतिइत्यादिकंआदिपदेनब्रह्मविद्योपकारकाणांप्राणादिविद्यानांग्रहः बहुशःबहुविधमर्थजातमब्रवीत् । कीदृशोदध्यङ् श्रोतारमविरक्तंजानानोपिसत्यवशेनवदनेमवृत्तइति ६४२ आनंददायिकापिमुनिवाणीइंद्रस्यदेहादिरागरूपदोषेणकोपहेतुर्जातेत्याह आथर्वणादिति ६४३ मोदसाधनस्यरोषसाधनत्वेदृष्टांतमाह दयालुनेति । यथादयालुनाकश्चिदतिक्षुधितोभुजंगमःपयःपायितोदुग्धपानेनीतःसन्नापेक्रोधंव्रजेदिति यथाश्रीमदांधइंद्रोहितोपदेशंश्रुत्वापिजातेनकोपेनएवंवक्ष्यमाणेनप्रकारेणाचिंतयदिति ६४४ तत्रेंद्रस्यकोपजांविपरीतकल्पनामनुवदति अयमित्येकादशभिः । अयंद्विजोत्तमोप्यसुरैःप्रेषितइतिमन्ये ममराज्याद्भ्रंशकत्वादित्यर्थः ६४५ वस्तुतस्तुनोत्तमःअयुक्तभाषित्वादित्याह अहोइति ६४६ स्वसादृश्यस्यायुक्ततां

॥ २९ ॥

इत्यादिबहुशःशक्रंदध्यङ्ङाथर्वणोब्रवीत् ॥ अविरक्तंप्रजानानःसत्यपाशवशंगतः ६४२ आथर्वणादिमांवाणीमानंदामृतपूरिताम् ॥ शक्रःश्रुत्वाऽतिरागांधःक्रोपमेवजगामह ६४३ दयालुनायथाकश्चित्क्षुधितोतिभुजंगमः ॥ पायितःपयएतस्मिन्क्रोधंप्राणहरंव्रजेत् ॥ श्रीमदांधस्तथाशक्रोमनसैवमचिंतयत् ६४४ अयंद्विजोत्तमोनूनमसुरैरिहचोदितः ॥ राज्यत्यागायमेयस्माद्बुद्धिमेषप्रयच्छति ६४५ अहोनिष्ठुरभाषित्वंचित्रमस्यदुरात्मनः ॥ शुनाममसमानत्वंकुरुतेसर्वथायतः ६४६ ब्रह्महत्याकरःकायंनिंदितःश्वाविडाशनः ॥ अश्वमेधसहस्राणांयोगीकाहंसुरेश्वरः ६४७ क्वचदेववधूगात्रंयज्ञैरपिसुदुर्लभम् ॥ शुनीनांक्वचयेनायंसमास्ताभिःकरोतिताः ६४८ अहंवज्रधरोविश्वंनियंतुमेकएवहि ॥ समर्थस्तस्यमेकेनशुनास्यात्सदृशंवपुः ६४९ तस्माद्देषोऽसुरःकश्चिदत्रस्वर्गजिघृक्षया ॥ तांपसंवपुरास्थायबुद्धिभ्रंशार्थमागतः ॥ ममापिदेवतानांचयाज्ञिकानांचवर्णिनाम् ६५० वाग्मीवाकविरेषस्याद्सुराणांगुरुर्मुनिः ॥ पुत्रयोःकश्चिदेषस्यात्तस्यतौधीधनौश्रुतौ ६५१ किमनेनाधुनैवाहमधमंतापसब्रुवम् ॥ हन्मिवास्थानतोवास्मात्सद्योनिःसारयाम्यमुम् ६५२ अद्यचैवंकृतेकीर्तिर्ममनाशंगमिष्यति ॥ उपायतस्ततस्त्वेनंघातयामिद्विजाधमम् ६५३

स्फुटयति ब्रह्मेति । ब्रह्महत्याफलभूतशरीरः ' श्वसूकरखरोष्ट्राणांगोऽजाविमृगपक्षिणां । चांडालपुल्कसानांचब्रह्महायोनिमृच्छति' इतिस्मृतेः निंदितःस्पर्शेस्नानप्रयोजकत्वात् । विट्पुरीषमाशनमशनसाधनंयस्यसतथा तस्येदमित्यण् ईदृशःश्वाकअहंक्वेति । कीदृशोहं अश्वमेधाद्यसंख्ययागानांयोगीकर्त्तादेवतात्वेनप्रयोजकश्च । कारीतिपाठेकरणंकर्तृप्रयोजकव्यापारसाधारणंकारःसोस्यास्तीति कारी ६४७ क्वचेति । यज्ञैरपिदुर्लभंदेववधूगात्रंक्वशुनीनांगात्रंक्व एवंसतियेनसाधर्म्येणायंमुनिस्तादेववधूस्ताभिःशुनीभिःसमाःकरोतितत्किमितिनज्ञायतेइतिशेषः ६४८ अहमिति । अहंवज्रहस्तःसर्वंलोकंनियंतुंवशेस्थापयितुमेकएवसमर्थोस्मि एतादृशस्यशुनःसाधर्म्यंकेनधर्मेणोक्तमिति ६४९ तस्मादिति । तस्मादयुक्तभाषित्वादेषविप्रवेषोऽसुरःकश्चिदस्ति । कीदृशः स्वर्गंग्रहणेच्छयाममदेवानांयागाधिकारिणामन्येषांचबुद्धिभ्रंशार्थमागतइति ६५० ब्राह्मणत्वेप्ययंदैत्यगुरुःस्यात्तत्सुतयोःशंडामर्कयोरन्यतरोवास्यादित्याह वाग्मीति । कविःशुक्रः तौशुक्रपुत्रौधीधनत्वेनयतःप्रसिद्धाविति ६५१ किमनेनेति । अनेनास्यब्राह्मणत्वादिविचारेणकिं सव्यर्थइतियावत् अहमेनंतापसब्रुवंआत्मानंतापसत्वेनख्यापयंतमधुनैवहन्मिअस्मात्स्थानान्निःसारयामिवाइति ६५२ किंचिद्विचार्यतथापिस्वरानविधेयेत्याह अद्येति । अद्यैवएवंकरणेकीर्तिनाशभयादुपायेनैवायंदंड्यइत्याह उपायतइति ६५३

टी० अ० ४

॥ २९ ॥

किंच पूर्वमप्यनेनाश्विनोर्मत्तोविमुखीकरणरूपापराधस्यकृतत्वादयंकंटकभूतोदंड्यएवेत्याह अनेनेति । मोहितौबुद्धिभ्रमंनीतौ ६५४ उपायमभिनयति आज्ञामिति । ततस्त्वरयादंडेकीर्तिहानेः अस्यमुनेर्ब्रह्मविद्यायाअसमीरणेऽनुपदेशेआज्ञांददामितस्याअतिक्रमेकृतेतुदंडयिष्यामीति ६५५ अथेंद्रकर्तृकमितरत्रब्रह्मविद्योपदेशनिवारणंदर्शयति इतिसंचिंत्येतिद्वाभ्यां । युवयोरश्विनोः आहरिष्यामिअपनेष्यामि ६५६ । ६५७ अथमुनेर्विचारेणतूष्णींभावेऽवस्थानंदर्शयति इत्युक्तेइत्यादिना । इतिइत्थमिंद्रेणोक्तेदध्यङ्ङाथर्वणोमुनिःकार्यंकृतमेवइष्टसिद्धिमेवमनुतेस्मेतियावत् यतोमहान्अतोनचुकोपकिंतुहृष्टचेताएवेंद्रेवभूवेति ६५८ तत्रयादृशविचारेणमुनिनाहर्षोधृतस्तमभिनयति ममेतिद्वादशभिः । इंद्राज्ञानुष्ठानेममदोषद्वयपरिहाररूपमिष्टंसिद्ध्यति तत्रोपदेशेनिष्ठुरताएकोदोषः विद्यायाअपात्रेदानंचद्वितीयइति ६५९ अहोइति । इयमिंद्रदत्ताज्ञाममगुरुदक्षिणावदनुकूलैवयतआज्ञारूपहेतोरहमिमांविद्यांदुर्धियांपुरतोनवक्ष्यामीति ६६० अनधिकारिषुविद्यादानदोषंस्फुटयति कामेति । रागादिमद्भ्योदत्तापिविद्याविफलाचांडालायदत्ताधेनुरिवेति ६६१ अत्रदृष्टांतांतरमाह स्वसुतेति । षंढायक्लीबायइयंविद्या ६६२ अशांतायेति । अशांतायब्रह्मविद्यादानेविद्यायावैफल्यरूपोघातः श्रोतुरुभयभ्रंशः वक्तुश्चद्वेषलाभइति तथाचोक्तंभारते 'यश्चाधर्मेणवैब्रूयाद्यश्चाधर्मेणपृच्छति । तयोरन्यतरःप्रैतिविद्वेषंवाधिगच्छ

अनेनममदेवौताऽवश्विनौधीधनावुभौ ॥ मोहितौकंटकस्तस्माच्छेद्यएषमयाधमः ६५४ आज्ञामस्यततोदास्येब्रह्मविद्याऽसमीरणे ॥ अतिक्रमेकृतेपश्चाद्धातयिष्याम्यमुंद्विजम् ६५५ इतिसंचिंत्यदेवेंद्रोरागांधधिषणस्तदा ॥ कोपादाज्ञापयामासततोसौयुवयोर्गुरुम् ६५६ अद्यप्रभृतिचेद्विप्रविद्यामन्यस्यवक्ष्यसि ॥ आहरिष्याम्यहंसद्यःशिरस्तेब्रह्मवादिनः ६५७ इत्युक्तेसमुनिःस्वस्यकार्यमेनेकृतंमहान् ॥ नकोपंप्राप्तवान्शक्रेहृष्टचेतामहामनाः ६५८ ममनिष्ठुरतानास्मिन्लोकेकापिभविष्यति ॥ अपात्रेचतथादानंविद्यायानभविष्यति ६५९ अहोशक्रेणशिष्येणदत्तामेगुरुदक्षिणा ॥ इतःपरंनवक्ष्यामियदहंदुर्धियामिमाम् ६६० कामक्रोधाभिभूतेभ्योदत्तापिविफलाभवेत् ॥ विद्यादत्तायथाधेनुश्चांडालायफलायन ६६१ स्वसुतारूपसंपन्नायौवनाभिमुखायथा ॥ दत्ताषंढायविफलातथेयंदुर्धियेसदा ६६२ अशांतायहियोदद्याद्विद्यांस्नेहादिमोहितः ॥ आत्मानंचतथाविद्यांतंचहन्यात्सपापधीः ६६३ इतःपरंहितत्पापंशांतंशक्रप्रसादतः ॥ लोकयात्रापरस्यायतापसस्यमुनेर्मम ६६४ किंचमेमनुजैर्वापिदानवैर्वाबहिश्चरैः ॥ ममात्मविदुषोनेकभेदबीजैर्दुरासदैः ६६५ अयंनानाविधोजंतुर्योयोनुभवतीहयत् स्वभेष्टतोचतत्सर्वंवासनाजंप्रपद्यते ६६६ अयमेवचसंसारोममयद्ब्रह्मदेशनम् ॥ देहमन्यंसमाप्स्यामिनूनंवासनयानया ६६७

ति' इति तंश्रोतारम् ६६३ इतइति । इतउक्ताज्ञादिरूपादिंद्रप्रसादान्ममतदनधिकार्युपदेशप्रयोज्यंपापंशांतंप्रसंगानर्हतयानिश्चितं । तत्प्रसंगेहेतुगर्भंविशेषणं लोकेति । 'स्याद्यात्रायापनेयानेगतौच ' इतिविश्वः । तथाचशिष्टलोकानांगतौमार्गेऽभ्यागतसंमानरूपेपरस्यतत्परस्य 'गतिर्मार्गेदशायांच ' इतिविश्वः । प्रकारांतरेणतुनममपापप्रसक्तिरितिद्योतयितुंतापसस्यमुनेरित्युक्तमिति ६६४ प्रकारांतरेणपापप्रसंगाभावंस्पष्टयितुंब्रह्मविद्ययापूर्णकामस्यमेनकुत्रचिद्रागइत्याह किंचेति । ममविदुषोमनुजाद्यैःकिंसाध्यं कीदृशैर्बहिश्चरैर्विषयप्रवणचित्तैरतएवसंगेननानाभेदबुद्धीनांबीजैःकारणैर्दुरासदैर्विवेकबुद्ध्याक्रम्पदुःखेनचित्तभूमेर्बहिर्निःसार्यैरितियावत् ६६५ तत्रभेदानुभवस्यपरिणामदुःखतामाह अयमिति । इहव्यवहारभूमौयोयोजंतुर्यंयदनुभवतितत्तत्सदृशमेव सर्वंविषयजातमनुभूतार्थवासनाजन्यंस्वप्नइवस्मृतिकालेपिप्राप्नोतीत्यर्थः ६६६ ममतुभेदज्ञानप्रसक्तेर्द्वारांतराभावेपिविद्योपदेशप्रवृत्तिरूपंद्वारमस्तीत्याह अयमेवेति । संसारोभेदज्ञानद्वारासंसारहेतुरयमेवयद्ब्रह्मणोदेशनमुपदेशः नूनमितिशंकायां किमियंभेदवासनाममापिदेहांतरंकरिष्यतीत्यर्थः ६६७

ननुभेदबुद्धेः कुतोजन्मान्तरहेतुतेतिचेदविद्याव्याप्यत्वादित्याह अहंगुरुरिति । गुरुत्वाद्यवगाहिनीभेदबुद्धिरप्यद्वितीयात्मनिवस्तुतोऽनुपपद्यमानासतीस्वप्रयोजकंमायालेशंसूचयतीतिभावः मा यांविनाभेदधी.कुतःस्यादित्यन्वयः । अतोऽविद्याकार्यभेदधीदर्शनरूपाद्धेतोरहंप्राकृतैःपामरैःसमःस्यांभवेयमित्यर्थः अतएवभाष्यकारैर्विदुषामपिव्यवहारेपश्वाद्यविशेषउक्तःपश्वादिभिश्चाविशे षादिति ६६८ अहंममेतिभेददर्शनेस्थितेचसर्वात्मभावरूपामुक्तिःकथंवक्तुंशक्येत्याह अहंममेति । अहंममेत्याकारकेयेशब्दज्ञानेतद्रूपंबंधनंयावन्ननिवर्त्ततेतावद्देहरूपात्कारागारान्निर्गमःकथं स्यादिति ६६९ तस्मान्मयापिमनोनाशवासनाक्षयाभ्यासोऽपेक्षितएवतत्रचउपायोपदेशपरंपरयाप्रयोजकोगुरुरिंद्रस्तुसाक्षादेवतत्प्रयोजकः । विद्योपदेशायैवव्युत्थानयोग्यचित्तंमांप्रतिपुनरु पदिशतस्तेशिरश्छेत्स्यामीत्यभिधानाद्दतोगुरोरप्यधिकंमान्यइत्याह देवइति । देवोथर्ववंशब्राह्मणोक्तस्ततोपिगुरुर्मान्यः यतोमामुपदेशव्याजेनबहिश्चित्तंसंतंनिहंतुमुद्यतः हंतुंप्रतिज्ञांकृतवानि त्यर्थः ६७० एवंविचारेणसक्षमांकृतवानित्याह इत्यादीति । अपकारिण्यपीतिशेषः ६७१ ननुतथापींद्रस्यायुक्तकर्मणःफलभूतःशापःकुतोनदत्तइतिचेद्विद्याप्रवृत्तानांशिक्षार्थमितिगृहाणेति सूचयितुंयादृशविचारेणशापोनदत्तस्तंविचारमभिनयति सर्पाणामितिदशभिः । यदिज्ञानिनोप्यपकारिणिकृतापराधेकोपंकुर्वंतितदासर्पादितिर्यग्भ्यःप्रतिकारकर्तृभ्योविदुषांविद्याप्रयुक्तःकोवि

अहंगुरुरयंशिष्यइतिमेभेदधीःकुतः ॥ विनामायामतोहंस्यांप्राकृतैःप्राणिभिःसमः ६६८ अहंममेतियावत्स्याच्छब्दज्ञानाख्यबंधनम् ॥ कुतोनिःसरणंतावद्दे हकारागृहाद्भवेत् ६६९ देवोथर्वामगुरुस्ततोप्येषगुरुर्मतः ॥ शक्रोयस्माद्बहिश्चित्तंमांनिहंतुमिहोद्यतः ६७० इत्यादिबहुशोदध्यङ्विचार्यहृदयेनिजे ॥ सं तोषंपरमंप्रापतस्मिन्नशक्रेऽपकारिणि ६७१ सर्पाणांचशुनांवाकोविशेषोविदुषांभवेत् ॥ अपकारिणिचेत्कोपंकुर्वंतिज्ञानिनोपिच ६७२ अपकारिणियेकोपंनकु र्वंतिमहाधियः ॥ उपकारंचकुर्वंतिविद्वांसस्तेनचेतरे ६७३ अपिकोपःकुतःकार्योविद्वद्भिरपकारिणि ॥ अपकारोजडेचेत्स्यात्किमायातिमहात्मनः ॥ स्वहस्तेनयथाहस्तंपादंवाताडयेत्पुमान् ॥ एकएवतथादेहाद्देहमन्यंविनाशयेत् ६७५ अत्रकोपःकथंनामविदुषःसर्वदेहिनः ॥ आत्मभूतस्यजायेतपुंसो हस्तांतरेयथा ६७६

शेषइति ६७२ कीदृशास्तर्हिविद्वांसइत्यतआह अपकारिणीति । स्फुटम् ६७३ किंचकूटस्थंनित्यमात्मानंजानतःकोपोनोपपर्तिसहते तथाहि किमात्मनोऽपकारेकुप्यतिजडस्यवा नाद्यः कूटस्थेनविकारासंबंधादित्याह अपीति । नद्वितीयइत्याह अपकारोजडइति । अस्तुजडेऽपकारस्तेनजडभिन्नस्यात्मन.किमनिष्टमायातंप्राप्तंनकिंचिदपीति नहिपाषाणेनपाषाणघातेचेतनस्यकिं चिद्दुःखमितिभावः ६७४ अथजडस्यापिशरीरसंघातस्यात्मशेषत्वात्शेषापकारेशेषिणआत्मनःकोपउचितएवराजपुरुषापकारेराज्ञइवेतिशंकांमधुब्राह्मणसिद्धांतानुसारिदृष्टांतेनापाकरोति स्व हस्तेनेति । यथाएकशरीरेहस्तेनहस्तांतरताडनेकोपोनभवति कुतः यतएकएवआत्मेतितथाएकदेहाद्देहांतरस्य विनाशनेप्रहारादिरूपेसत्यपिविदुषांकोपोनयुक्तः एकात्मकत्वस्यशास्त्रयुक्त्यनुभ वैःसिद्धत्वादितिभावः ६७५ एतदेवस्फुटयति अत्रेति । अत्रदेहांतरेणदेहांतरापकारेविदुषःकथंकोपःस्यात् तत्रहेतुगर्भविशेषणे सर्वदेहिनःसर्वदेहाःशेषभूताःसंत्यस्यसतथायतआत्मभूतस्या नात्मभावमपोह्यात्मयाथात्म्यमनुभवतः तथाजडस्यशेषत्वेनदर्शनेपिस्वात्मनएवसर्वजडशेषित्वात्स्वांगन्यायेननकोपसंभवइतिभावः ६७६

तस्माद्यआत्मवित्सनकोपंकरिष्यतियस्तुकरिष्यतिसनात्मविदित्याह भूतैरिति । भूतैःप्राणिभिरपकृतस्ताडनादिकंनीतःसन्यःकुप्यतिसआत्महाअनात्मन्यात्माभिमानात् अतएवनास्तिकः आ
स्तिकत्वेहिवेदांतैर्निर्णीतात्मैकतायानप्रमाद्येदितिभावः । प्रमादलिंगंदर्शयति भूतहिंसकइति । नह्यात्मैकत्वदर्शीभूतानिहंतुंशक्नोतीतिभावः ६०७ तिष्ठत्वात्मतत्त्वदर्शनंयोलोकप्रसिद्धसुखदुःख
योःपुण्यपापकार्यतामपिनिश्चिनुयात्तस्यापिकोपोनयुक्तः । दुःखोदयेमत्पापेनैवदुःखंजनितमितिबुद्ध्याकोपपरिहारसंभवादित्याह पुण्येति । साधनैरिष्टानिष्टपदार्थरूपोपकरणैःसहितंसुखादिकं
पुण्यादिहेतुकमितिजानन्नपिकथंकुप्येदिति ६७८ यस्तुशास्त्रादिनाज्ञात्वापिकुप्यतिसोज्ञएवज्ञेयइत्याह एतादृशइति । एतादृशःकोपकर्त्ताकथंविद्वानित्युच्येत विद्यावान्हिविद्वान् कोपनेतुन
विद्यास्पर्शः विद्याफलादर्शनादतःस्वानुपकारकविद्यांधारयन्सभारवाहकोवक्तव्यः । एतदेवस्पष्टयति शास्त्रेति ६७९ यस्तुशास्त्रप्रपंचंविनाप्यात्मैक्यंसर्वत्रपश्यतिससर्वशास्त्रार्थविदित्याह
अल्पमिति । द्रोहोजिघांसा । तदुक्तंभारते 'आत्मानंचेद्विजानीयात्सर्वभूतगुहाशयं । श्लोकेनयदिवार्द्धेनक्षीणंतस्यप्रयोजनम्' । क्षीणंसमाप्तंसिद्धमितियावत् । गीतासुच 'आत्मौपम्येनसर्वत्रसमं

भूतैरपकृतोयस्तुकुद्ध्यतीहनराधमः ॥ आत्महासचविज्ञेयोनास्तिकोभूतहिंसकः ६७७ पुण्यापुण्यनिमित्तंतत्सुखदुःखंससाधनम् ॥ जानातिचेत्कुतःकुप्ये
दात्मनस्त्वपकारिणि ६७८ एतादृशःकथंनामविद्वान्स्याद्भारवाहकः ॥ शास्त्रभारंवहत्येषमृद्भारंगर्दभोयथा ६७९ अल्पंवाशृणुयाच्छास्त्रंनवाकिंचिन्नरोत्तमः ॥
द्रुह्येन्नैवचभूतेभ्योयःससर्वविदीरितः ६८० कर्मणामनसावाचाभूतद्रोहपरोनरः ॥ नयातिसुखमेतैःसइहलोकेपरत्रच ६८१ इत्यादिमनसाधीमान्विचार्यानंद
निर्भरः ॥ समर्थोपिनशक्रायशापंदातुंमनोदधे ६८२ उवाचचपुनःशक्रंकरवाण्येवमेवतु ॥ अतिक्रमेकृतेच्छिंधिशिरोमेपाकशासन ६८३ अतिथिस्त्वंसदापू
ज्योममदेवाधिपोमहान् ॥ तुभ्यंप्रियंकिमद्याहंकरोमिस्वर्गवासिने ६८४ वित्तेनवपुषावापियेनकेनापितेप्रियम् ॥ तदहंसाधयिष्यामिमाकृथाःसंशयंक्वचित् ६८५
एवमुक्तेथशक्रोपिभीतोयमितिचिंतयन् ॥ सात्त्विकींप्रकृतिंप्राप्तोवाक्यमेतदुवाचह ६८६ उपद्रवंनकुर्वेहमपिविप्रर्षभस्यमोः ॥ साधोस्तुभवतःकेनकरिष्यामिद्वि
जोत्तम ६८७ विश्वरूपादयोविप्रानिहतायतयस्तथा ॥ दुरात्मानोविचार्यैवनतुकोपवशान्मया ६८८ अतिक्रमंममाज्ञायामाकृथाब्राह्मणोत्तम ॥ विश्वरूपादि
मार्गंत्वमेवंनैवप्रयास्यसि ६८९ अपेक्षितंत्वयाविप्रकृतंमद्वचनात्पुरा ॥ करणीयंततोनास्तिस्वस्तितेस्तुव्रजाम्यहम् ६९० इत्युक्त्वाथगतःशक्रोमुनिस्तत्रैवसं
स्थितः ॥ गुरुर्वाहियथापूर्वंन्हदोगाधजलोयथा ६९१

पश्यतियोर्जुन । सुखंवायदिवादुःखंसयोगीपरमोमतः' इति ६८० द्रोहस्यानर्थकारितांदर्शयति कर्मणेति । एतैर्द्रोहैः प्रतिबंधकैःस्वात्मभूतमपिसुखंनयातिनलभतेलोकद्वयेपीति ६८१
एवंविचारेणस्वात्मानंदप्रवणचित्तत्वादिंद्रायशापोनदत्तइत्याह इत्यादीति ६८२ प्रत्युतैवमाह उवाचचेति । एवमेवकरवाणि एवंत्वदुक्तानुसारेणअंतर्मुखएवभवेयमित्यर्थः अतिक्रमेत्वदाज्ञाया
इतिशेषः ६८३ उक्ताज्ञानुष्ठानंतुमदिष्टापत्तिभूतंतवस्वर्गादागतस्यातिथेरिष्टसिध्यर्थंतुमयाकिमनुष्ठेयमित्याह अतिथिस्त्वमिति ६८४ अहंत्वदिष्टसाधनायसर्वथोद्यतोस्मीत्याह वित्तेनेति ६८५
ततःकिंजातमतआह एवमुक्तेइति । प्रकृतिंस्वभावम् ६८६ इंद्रवाक्यमनुवदति उपद्रवमितिचतुर्भिः । विप्रर्षभस्यविप्रधर्माननुतिष्ठतोब्राह्मणस्यापि भवांस्तुतत्रापिसाधुःसर्वोपकारकइतित्वदुपद्रव
पराङ्मुखस्यममकिमुवाच्यमित्यर्थः ६८७ पूर्वमपियेमयादंडितास्तेपिदुष्टाश्चततांज्ञात्वैवदंडिताइत्याह विश्वरूपादयइति ६८८ फलितमाह अतिक्रममिति । मार्गंशिरश्छेदयोग्यतारूपम् ६८९
यदुक्तमपेक्षितंब्रूहीतितत्तुत्वयामद्वचनाद्विद्योपदेशप्रवृत्तेननिष्पादितमित्याह अपेक्षितमिति ६९० उपोद्घातंसमापयति इत्युक्त्वेति । वांयुवयोर्गुरुर्मुनिस्तुपूर्णह्रदवदक्षुब्धस्तत्रस्थितइति ६९१

ननूक्तविद्यायाइंद्रस्यक्षोभहेतुत्वात्कथमिंद्रेणोक्तमपेक्षितंत्वयापूरितमितीमामाशंकांवारयन्दधीचामुनिनाप्रवर्ग्यकांडयोःसमग्रयोरिंद्रंप्रतिश्रावितत्वात्तत्रनिर्विशेषात्मविद्याव्यतिरिक्तंसर्वमिंद्रेणगृहीतमित्याह ब्रह्मेतिद्वाभ्यां । इमांमधुब्राह्मणेनिगमनंनीतांतथाप्रवर्ग्यकांडेआख्यानिरूपणंयस्यास्ताद्दशींप्रवर्ग्यकर्मांगभूतमधुविद्यारूपां तथाकर्माणिप्रवर्ग्यादीनितथाश्वादेःअश्वमेधीयोऽश्वोग्निर्वाविराड्रूपःआदिपदेनहिरण्यगर्भादिग्रहः तद्गोचराण्युपासनानितथाविविधांसृष्टिंचहेदस्रौयुवयोर्गुरुःशक्रायप्रोवाचशक्रश्चब्रह्मविद्यांविनातत्सर्वमग्रहीदितियुक्तोऽपेक्षितपदप्रयोगइंद्रस्येतिद्वयोरर्थः ६९२ । ६९३ एवंकृतोपोद्घातांप्रवर्ग्यकांडगतांकथांव्यशीतिश्लोकैरुपबृंहयंस्तस्याश्चानुवादकौद्वौमंत्रौतत्रैकःसनरासनयेइत्यादिकःयस्यपूर्वार्द्धार्थइदंवेतदित्यादिवाक्यार्थेनसहितइतिहासोत्थापनायवंशव्याख्यानानंतरंदर्शितः परिशिष्टस्योत्तरार्द्धस्यतद्वांइत्यादिद्वितीयमंत्रस्यचार्थःकथोपबृंहणेनैवोपबृंहितोभविष्यतीतिमनसिनिधायतत्रदध्यङ्मुनिराभ्यामश्विभ्यांमधुविद्यामुक्तवानित्येतावदर्थकोभागोवक्ष्यमाणार्थप्रतिज्ञारूपस्तत्रहेतुभूतस्यतदेतयोःप्रियंधामेत्यंशस्यतन्मधुतत्त्वमश्विनोःप्रेमास्पदमासीदित्यर्थकस्यतात्पर्यार्थमश्विनोःश्रद्धातिशयरूपंस्फुटयति एवमितित्रिभिः । एवंवर्णितविधयातूष्णींभावेनमुनौदधीचिस्थितेसतिहेअश्विनौतदंतिकंप्राप्तौ कीदृशौ कालात्परिपकात्मनौशुद्धरूपेमानसेययोस्तौतथाअतएवविरक्ताविति ६९४ आगत्येति । तंगुरुं स्पष्टम् ६९५ भवताचैवंप्रतिज्ञातंपूर्वमित्याहतुः अधिकारइति ६९६ अथतदेवैनयोःएतेनोपगच्छतीत्यंशंतन्मधुतत्त्वमेनयोरश्विनोर्दातुमेतेनविचारेणोपगमनंकृतवानित्यर्थकमुपबृंहयन्मुनेर्दधीचःसंशयपूर्वकंनिश्चयमभिनयति युवाभ्यामितिसप्तभिः । यतएकतउपदेशपक्षेमरणंनिश्चितं अन्यतोऽनुपदेशपक्षेऽनृतप्रसक्तिरतःपरमंसंशयंगतइतिसम्बन्धः । तत्रदृष्टांतः गोचक्रेति । यथाशकटेनाक्रांतःपुरुषःअग्रतोगमनेगवांवृषभाणांपादाक्रमणभयंपृष्ठतोगमनेचक्राक्रमणभयमित्यालोच्यविवेकीसंशयंगच्छतितद्वदित्यर्थः ६९७ संशयमिति । पूर्वार्द्धंस्पष्टं । अनृतान्मरणंवरमित्युत्तरार्द्धार्थः ६९८ तत्रमरणदुःखादनृतदुःखस्यगौरवंवक्तुंमरणदुःखस्यानृतदुःखादपकर्षंलाघवरूपंदर्शयति निश्चितमिति । तन्मरणकालिकंदुःखंयत्किंचिन्निमित्तजन्यंजंतोरावश्यकमिति तथामरणस्यजातंप्रतिव्यापकत्वेनबहुशोऽनुभूतत्वात्नासह्यतारूपउत्कर्षइतिभावः ६९९ नचेंद्रवज्रजन्यत्वेनोत्कर्षस्तस्यापिप्रसिद्धनिमित्तांतर्गतत्वादित्याह व्याधिरितिद्वाभ्यां । अजीर्णंपरिपाकमप्राप्तमन्नंजलंवा एतादृक्व्याध्यादिविधंकिंचिन्मरणेनिमित्तंभवतिएवंसतिशक्रोयन्मेमरणंप्रतिनिमित्तंभवेदेतदपितेषामन्यतममिंद्रवज्रस्यदिव्याग्निरूपत्वादितिभावः ७०० । ७०१ अनृतदुःखस्यलोकद्वयेप्यसह्यतारूपमुत्कर्षमाह असत्येतिद्वाभ्यां । मेअनृतदोषंजानतः ज्ञातकृतकर्मणःफलाधिक्यस्यस्मृतिपुप्रसिद्धत्वादितिभावः उत्तरार्द्धस्यचिरभोग्यत्वेतात्पर्यम् ७०२

ब्रह्मविद्यामिमांसर्वांप्रवर्ग्याख्यांतथैवच ॥ कर्माण्युपासनाजालमश्वादेर्विविधांतथा ॥ सृष्टिंचप्रोक्तवान्दस्रौशक्राययुवयोर्गुरुः ६९२ शक्रोपिगुरुणादिष्टंयुवयोरग्रहीत्तदा ॥ ब्रह्मविद्यांविहायैवसर्वमेवमहामनाः ६९३ एवंस्थितेयुवांकालात्परिपक्वात्ममानसौ ॥ विरक्तौब्रह्मविद्यार्थंप्राप्तौतंमुनिपुंगवम् ६९४ आगत्यचतमब्रूतामावांविद्यार्थिनौगुरो ॥ अधिकारंहिसंपाद्यप्राप्तौतेचरणांबुजम् ६९५ अधिकारेहिसंप्राप्तेयुवयोर्ब्रह्मवेदनम् ॥ वक्ष्यामीतित्वयापूर्वंप्रतिज्ञातंगुरोसदा ॥ सत्यंतत्कुरुभोविप्रमानृतंत्वयितिष्ठतु ६९६ युवाभ्यामेवमुक्तःससंशयंपरमंगतः ॥ मरणंत्वेकतःस्वस्यह्यन्यतोऽनृतभाषणम् ॥ गोचक्रमध्यगोयद्वद्विद्वान्संशयमाव्रजेत् ६९७ संशयंपरमंप्राप्यसइमंनिश्चयंगतः ॥ वरंमेमरणंमाभूदनृतंवचनंक्वचित् ६९८ निश्चितंजंतुमात्रस्यजातस्यमरणंसदा ॥ अवश्यंभावितद्दुःखंनृणांकेनापिहेतुना ६९९ व्याधिर्वाप्यथवासर्पश्चोरोवाव्याघ्रएववा ॥ विषमग्निर्जलंवापिशत्रुर्वाऽजीर्णमेववा ७०० निमित्तंमरणेकिंचिदेतादृक्देहिनोभवेत् ॥ तेषामन्यतमंह्येतत्शक्रोमेमरणंप्रति ७०१ असत्यवादिनोमेस्यान्नरकोभूरिदुःखदः ॥ कल्पकोटिसहस्रांतेयस्यनास्तिप्रतिक्रिया ७०२

जीवन्मृतइति । मोहोदेहाद्यभिनिवेशः एतेनमुनेरनृतफलभयप्रदर्शनेनविधीनामधिकारःसकामस्यनिषेधाधिकारस्तुनिष्कामानामपिप्रवृत्तमात्रस्यनिषेधवाक्येपूद्देश्यत्वादितिवाचस्पतिनाप्रपंचितःसिद्धांतःसूचितः ७०३ सहोवाचेंद्रेणवाइत्यादेरुपमनेष्यइत्यंतस्यांशस्यार्थमुपबृंहयति इत्यादीतिपंचाशताश्लोकैः । सयुवयोर्गुरुरित्यादिकमर्थजातंमनोगतंवाचानुच्चारितंयथाभवतितथाचिंतयित्वायुवांप्रतिवक्ष्यमाणविषयाबभाषेइत्यन्वयः ७०४ दधीचीमुनेर्वचनमभिनयति व्याहृतमित्यादिना । मयाबाल्यतोबालभावमारभ्यनानृतमुक्तंस्थाविरेवृद्धत्वेतदनृतंकथमुच्येतेतितथापिमनसाचिंतितंशंकितंकिंचिदनृतस्यकारणंप्रयोजकंवक्ष्यामीति ७०५ तच्चकारणमत्रापिमहतीचिंतेत्यादिनावक्ष्यतेतदुपयोगिनंस्वकीयपूर्ववृत्तांतमश्विनौप्रतिश्रावयति अहमित्यादिना । अहंवांयुवाभ्यांदेवादीनांसर्वेषामुपकारकत्वेनविदितइत्यर्थः ७०६ क्षपयन्निति । कीदृशोहम् प्रियसमागमेनपुण्यमप्रियसमागमेनपापंचप्रारब्धरूपंक्षपयन्भोगेनसमापयन्हर्षशोकौविहायसमतायांस्थितइति ७०७ समतामेवस्फुटयति शत्रुरितिद्वाभ्याम् । तत्रशत्रुरपकारंविनापिस्वभावादपकारकरः । मित्रमुपकारमनपेक्ष्योपकर्ता । उदासीनउपेक्षकः । बंधुः

जीवन्मृतःपुमानज्ञेयोयोऽनृतंवक्तिमोहतः ॥ अत्रनिंदंतिमनुजामृतश्चनरकंव्रजेत् ७०३ इत्यादिबहुधाविप्रश्चिंतयित्वामनोगतम् ॥ युवांप्रतिबभाषेसयुवयोर्गुरुरात्मवान् ७०४ व्याहृतंनानृतंपूर्वमश्विनौबाल्यतोपिवा ॥ मयाकथमिदानींतत्स्थाविरेव्याहरिष्यते ॥ चिंतितंयन्मयाकिंचिद्वक्ष्याम्यत्रापिकारणम् ७०५ अहंवांविदितःशश्वदुपकारकरोमुनिः ॥ देवासुरमनुष्याणामन्येषामपिदेहिनाम् ७०६ क्षपयन्पुण्यपापेस्वेप्रियाप्रियसमागमात् ॥ हर्षंचैवविषादंचविहायसमतांगतः ७०७ शत्रुर्मित्रमुदासीनोबंधुर्द्वेष्योपिमध्यमः ॥ नकश्चिद्विद्यतेमेत्रसर्वत्रसमदर्शिनः ७०८ स्वदेहेस्थावरेचैवजंगमेवाखिलेपिहि ॥ श्वदेहेब्राह्मणेदेहेसर्वत्राहंसमःस्थितः ७०९ पुमानहंतथास्त्रीचनपुंसकमहंतथा ॥ महाभूतानिपंचापिभौतिकंसकलंत्वहम् ७१० अहंमनुरहंसूर्यश्चंद्रोहंवन्हिरप्यहम् ॥ ज्योतींषिचसमग्राणिभूर्भुवःस्वर्महर्जनः ॥ तपःसत्यंसपातालमहमेवनसंशयः ७११ सदसद्वस्तुजातंयन्मत्तोनान्यद्धितद्भवेत् ॥ स्वप्नदृष्टंयथासर्वंस्वप्नद्रष्टुर्नचापरम् ७१२ ब्रह्मांडोदुंबरस्थानांचतुर्विधशरीरिणाम् ॥ उच्चावचानामात्माहमहंकारविवर्जितः ७१३ नमेकामस्तथाक्रोधोलोभाद्याश्चकुतोमम ॥ नचमायापियेनाहंसर्वभेदविवर्जितः ७१४ उत्पादयाम्यहंसर्वंजगज्जातमनेकधा ॥ स्थापयामिचतत्सर्वंसंहरामिचलीलया ७१५ ऊर्णनाभिर्यथातंतून्सृजत्यत्तिचपातिच ॥ स्वात्मनैवतथैवाहममूर्तःसंगवर्जितः ७१६

संबंधेनोपकारकः । द्वेष्योऽपकारमपेक्ष्यापकर्ता । मध्यमोमध्यस्थोविवदमानयोर्द्वयोरपिहितपी एतेममनसंतीत्यर्थः ७०८ स्वदेहइति । स्वेअस्मिन्ब्राह्मणदेहेतथाऽखिलेस्थावरेजंगमेचदेहेतथाशुनोदेहेतथाब्राह्मणेब्रह्मणोहिरण्यगर्भस्यसंबंधिनिदेहेऽहंसमोस्मीति ७०९ साम्येहेतुतयासार्वात्मभावंदर्शयति पुमानितिचतुर्भिः । तत्रद्वयंनिगदव्याख्यातम् ७१० । ७११ सर्वात्मतापिविवर्तोपादानतयेत्याह सदसदिति । सदसत्स्थूलंसूक्ष्मंचसर्वंमत्तोनभिन्नम् स्वप्नद्रष्टुःस्वप्नदृश्यवदित्यर्थः ७१२ ब्रह्मांडोदुंबरेति । ब्रह्मांडरूपोदुंबरगतानांजरायुजादिचतुर्विधशरीरिणामुत्कृष्टापकृष्टानांसर्वेषामहमात्मायतोहंकारेणपरिच्छेदकेनमुक्तइति ७१३ अहंकारविमुक्तत्वेहेतुतयाविद्याबलात्सविलासाज्ञानराहित्यमाह नमेकामइति । मायापिविकाराणांप्रयोजिकामेनास्ति यतोहंसर्वभेदरहितब्रह्मत्वेनात्मानंद्रष्टवानस्मीत्यर्थः ७१४ ममात्मैवाज्ञातोजगज्जन्मादिकारणमित्याह उत्पादयामीति । स्पष्टम् ७१५ तत्रदृष्टांतमाह ऊर्णनाभिरिति । यथोर्णनाभिःकीटःस्वात्मनैवस्वशरीरेतरापेक्षामंतरेणैवतंतुसृष्ट्यादिकंकरोतितथाहमपिकरोमिपरंतुअमूर्तत्वमनवयवत्वमसंगत्वंचमयिविशेषइति ७१६

विवर्त्तोपादानताचोर्णनाभेर्ममविशेषइत्याह भिन्नानैवेति । यथास्वप्रप्रपंचसृष्ट्यादयःस्वप्रद्रष्टुःपुरुषान्नभिन्नास्तथामत्तोजगतइति ७१७ एवमिति । एवंब्रह्मनिष्ठतयावस्थितस्यममाश्रमं कदाचिदिंद्रोनुग्रहेणागतइति ७१८ समयेति । सइंद्रोमयापूजितोथचकिंतेप्रियंकरवाणीतिपृष्टश्चेति ७१९ एवमुक्तइति । एवंमयोक्तेसतिसइंद्रोदुर्लभांब्रह्मविद्यामेवयाचितवानिति ७२० एवमुक्तेमयेति । एवंतेनेंद्रेणोक्तेसतितस्मैइंद्रायमधुकांडप्रतिपाद्यादुर्लभाचब्रह्मविद्यैवत्रोक्तानापराअपरविषयिकेति यतइतिपदस्योत्तरेणसंबंधः ७२१ विद्यायादौर्लभ्यमितरसौलभ्यप्रदर्शनेनस्फु टयति सुलभइति । यतःस्वर्गेनरकेवावर्त्तमानोविषयउत्कृष्टेऽपकृष्टेवादेशेजातानांकार्मिणांदेहिनांसुलभः अनादौसंसारेऽननुभूतपूर्वोनास्तीतियावत् ब्रह्मविद्यातुसंसारदर्शनरूपलिंगेनज्ञायतेयन्न लब्धपूर्वेतिसैवदुर्लभेतिभावः ७२२ एतदेवस्फुटयति आत्मनइति । अविद्यादशायांयद्यदात्मभिन्नंसाधनैःसाध्यमभिमतंतत्सर्वंविहितनिषिद्धत्वाभ्यांप्रत्येकंद्विविधाभ्यांविद्याकर्मभ्यांमानसशा रीरव्यापाररूपाभ्यांनदुर्लभमिति ७२३ नचाभ्युदयसाधनभूतेज्ञानकर्मणीअपिदुर्लभेतयोरपिबहुशोज्ञायमानत्वादनुष्ठीयमानत्वाच्चेत्याह बहवइति । ज्ञानंमानसंकर्मउपासनात्वेनप्रसिद्धं क र्मेष्टपूर्तादिरूपं कीदृशेद्वे अपिज्ञानकर्मणीब्रह्मलोकादिहेतुभूतेअतोनदुर्लभेइति । ब्रह्मविदोदौर्लभ्यंतुमनुष्याणांसहस्रेष्वित्यादिनाभगवद्गीतासुप्रदर्शितमितिभावः ७२४ लोकेदुर्लभतातस्यप्रसि

भिन्नानैवचविद्यंतेसंहारस्थितिसृष्टयः ॥ मत्तःस्वप्नदृशोयद्वत्स्वप्नेदृश्यस्यवस्तुनः ७१७ एवंस्थितस्यकस्मिंश्चित्कालेशक्रउपागतः ॥ आश्रमंजगदीशोयमनुग्रह करोमम ७१८ समयापूजितःपूज्योयथाशक्तिमहेश्वरः ॥ अतिथिःप्रार्थितःकिंतेकरवाणिप्रियंवद ७१९ एवमुक्तेसमांप्राहविद्यायाऽत्यंतदुर्लभा ॥ मह्यंप्रयच्छ तांविप्रप्रियंचेन्मेकरिष्यसि ७२० एवमुक्तेमयातस्मैमधुकांडार्थसंयुता ॥ ब्रह्मविद्यैवदत्तासादुर्लभानापरायतः ७२१ सुलभोविषयःस्वर्गेनरकेपिचदेहिनाम् ॥ ब्रह्मलोकेचविष्ठायांजातानांकर्मिणामिह ७२२ आत्मनोव्यतिरिक्तंहिप्राप्यतेयेनकेनचित् ॥ विद्ययाकर्मणावापिदुर्लभंनैवतत्स्मृतम् ७२३ बहवोब्राह्मणायत्रजा नंतिज्ञानकर्मणी ॥ ब्रह्मलोकादिसंप्राप्तौहेतुभूतेनदुर्लभे ७२४ ब्रह्मलोकेचविष्ठायांशरीरंप्राणिनांध्रुवम् ॥ शरीरिणांसुखंयत्स्यादात्मज्ञानविवर्जितम् ॥ विषयें द्रियसंप्राप्त्यातत्सर्वत्रसमंस्मृतम् ७२५ श्रोत्रंत्वक्चक्षुषीजिह्वाघ्राणाख्यंचतथेंद्रियम् ॥ वाक्पाणिपायुचरणशिश्नाख्यानींद्रियाणिच ७२६ अंतःकरणसं युक्ताःप्राणाअपिशरीरिणाम् ॥ प्रायशोजंगमानांस्युःसमानाविषमाःक्वचित् ७२७ स्थावरेष्वपिविद्यंतेह्यभिव्यक्तिविवर्जिताः ॥ एतएवततस्तेपिजंगमैःसदृ शाःस्मृताः७२८

द्धायत्सजातीयंनलभ्यतेऽन्यथातत्तद्व्यक्तिरूपेणदेशांतरादावर्त्तमानानांघटादीनामपिदौर्लभ्यापत्तेः तथाचशरीरत्वादिनासजातीयानांशरीरादिसाधनानामाध्यासिकसुखादिरूपफलानांचसर्वत्रसा म्यात्कुत्रसांसारिकेदौर्लभ्यं ब्रह्मविद्यायास्तुसविलासाज्ञानध्वंसरूपायाःकिंचिदपिसजातीयंनास्तीतिसैवदुर्लभेत्याशयेनशरीरादिसमतामात्मैक्यज्ञानोपयोगिनींप्रतिपादयति ब्रह्मलोकइत्यष्टादश भिः । ब्रह्मलोकादौशरीरंविनाभोगोनास्तीतिप्रसिद्धं तत्रचशरीरिणामात्मज्ञानंविनाविषयेंद्रियसंयोगजन्यंयत्सुखंतत्सर्वत्रसममविशिष्टमित्यर्थः ७२५ एवंस्थूलशरीरसाम्यंप्रतिपाद्यसूक्ष्मशरी रसाम्यंसर्वत्रदर्शयति श्रोत्रमितित्रिभिः । श्रोत्रादीनिज्ञानेंद्रियाणिवागादीनिकर्मेंद्रियाणिअंतःकरणचतुष्टयंप्राणाश्चएतेसूक्ष्मशरीरावयवाःप्रायशोजंगमेषुसमतयाप्रसिद्धाएव कुत्रचिद्विषमाअ भिव्यक्तितारतम्येनवर्त्तमानाअपिभासंतइतियावत् इतिद्वयोरर्थः ७२६ । ७२७ स्थावरेष्विति । एतेवागादयःप्राणांताःस्थावरेष्वपिवर्तंते । तथाहि मोक्षधर्मेषु तस्माज्जिघ्रंतिपादपा इत्यादिनाइंद्रियसत्त्वंस्थावरेषुप्रतिपादितंपरंतुतत्राभिव्यक्तिःस्फुटतानास्तीतिविशेषःततःसर्वेंद्रियसत्त्वात्तेस्थावराअपिजंगमाइति ७२८

नन्वनभिव्यक्तेंद्रियाणांस्थावराणांकथमभिव्यक्तेंद्रियैर्जंगमैःसाम्यमितिचेन्न व्यापारराहित्यरूपायाअनभिव्यक्तेर्जंगमेंद्रियेष्वपिदृश्यमानत्वेनवैलक्षण्यप्रयोजकत्वादित्याशयेनजंगमेष्वपियत्किं चिदिंद्रियव्यापारकालइंद्रियांतराणांव्यापारराहित्यंदर्शयति गृहेति । यथागृहांतःस्थःपुरुषोबाह्यार्थमश्वादिकंश्रोत्रेणशब्दरूपलिंगग्राहकेणमनसानुमितिव्यापारकेणयज्जिज्ञिनोतितत्रचनेंद्रियांत रव्यापारइत्यर्थः ७२९ एवमिति । एवंगृहमध्यस्थवन्न्यूनेंद्रियाणांबधिरादीनांस्थावराणांवायज्ज्ञानंतादिंद्रियवर्जनादिंद्रियैर्विनानभवतिकिंतुतेषांन्यूनेंद्रियाणामभिव्यक्तेंद्रियभिन्नानींद्रिया णिआवृत्तानिस्वव्यापारेभ्योनिवृत्तान्येववर्ततइतिबोद्धव्यमित्यर्थः ७३० नचकुत्रचिद्गोलकादर्शनादिंद्रियाभावोबोध्यःपरगोलकेपिइंद्रियांतरस्यदर्शनादित्याह एकस्थानेति । पन्नगस्यसर्पस्य तथासर्वत्रेंद्रियसत्त्वेनकिंचिद्बाधकमितिभावः ७३१ एवंकरणसाम्यंप्रतिपाद्यतत्फलयोःसुखदुःखयोरपिसाम्यंदर्शयति एकेत्यादिना । एकमनेकंवाऽभिव्यक्तमिंद्रियंयेषांतेषांयत्सुखंदुःखंवाजा यतेतन्मनोनिष्ठमेवजायतेनान्यनिष्ठमिति । तच्चमानसंमनसिभवंसुखंदुःखमेकेंद्रियव्यापाराद्वाभवतुअनेकेंद्रियव्यापाराद्वाभवतुतयोःस्वरूपेनकोपिविशेषइतिद्वयोरर्थः ७३२ । ७३३ सुख

गृहमध्येस्थितोयद्वत्पुमान्बाह्यार्थवेदनम् ॥ मनसाश्रोत्रयुक्तेनकुरुतेनेंद्रियैःपरैः ७२९ एवंन्यूनेंद्रियाणांस्याज्ज्ञानंनेंद्रियवर्जनात् ॥ आवृत्तान्येववर्तंतेतेषाम न्येंद्रियाणिच ७३० एकस्थानस्थितान्येवक्वचित्कार्याणिकुर्वते ॥ पन्नगस्ययथाचक्षुर्गोलकेश्रोत्रचक्षुषी ७३१ एकानेकेंद्रियाणांस्यात्सुखंवादुःखमेवच ॥ जंग मानांस्थिराणांचमनस्येवनसंशयः ७३२ एकेंद्रियात्प्रजातेस्मिंस्तथानेकेंद्रियादपि ॥ नसुखेनापिदुःखेस्तिभेदःकोपीहमानसे ७३३ यत्रयस्यभवेद्रागोद्वेषो वाविषयेषुहि ॥ इंद्रियार्थेषुतत्प्राप्तौसुखदुःखेसमेस्मृते ७३४ जायतेव्यसनंयस्यजीवानांहिंसनंप्रति ॥ गीतस्यवातदाप्तौहिसुखंयादृक्प्रजायते ॥ ललनालिंग नेपिस्यात्तादृगेवहिकामिनः ७३५ कामिनोयादृगेवस्याद्वधूनांप्राप्तितःसुखम् ॥ पुत्रार्थिनस्तादृगेवपुत्रप्राप्तौप्रजायते ७३६ पुत्रिणोयादृगेवस्यात्पुत्रप्राप्तौसुखं हृदि ॥ अन्नलाभात्क्षुधार्तस्यतादृगेवप्रजायते ७३७ अनिष्टलाभतोप्येवंदुःखंज्ञेयंसमंसदा ॥ एकानेकेंद्रियैर्देहिनौमानसेजायतेहियत् ७३८ विष्ठायांयादृशंदुःख मसह्यंजायतेकृमेः ॥ तादृशंब्रह्मलोकेपिमरणादौप्रजायते ७३९ उत्पद्यतेसुखंयादृग्ब्रह्मणःपरमेष्ठिनः ॥ विष्ठाकृमेस्तादृगेवस्याद्योगादिंद्रियार्थयोः ७४० विट्कृमेरपिसंत्येवह्यन्नंदाराःसुतास्तथा ॥ ब्रह्मणोपिविशेषःस्यादनयोःकेनहेतुना ७४१

दुःखसाम्येहेतुंतत्प्रयोजकरागद्वेषसाम्यमाह यत्रेति । इंद्रियैरर्थनीयेषुविषयेषुमध्येयत्रविषयेयस्यदेहिनोरागइच्छातत्रप्राप्तेसुखमेवंयत्रद्वेषस्तत्रदुःखमिति । सचरागोयथोत्कृष्टानांस्वशरीरादौ तथानिकृष्टानामपिस्वशरीरादौवर्ततइतिभावः ७३४ यस्ययत्ररागस्तस्यतत्रसुखमित्येतत्स्फुटयति जायतेइतित्रिभिः । यस्यप्राणिहिंसनेमृगयादौतथागीतश्रवणेवाव्यसनमासक्तिरूपंजाय तेतस्यतदाप्तौमृगयादेर्वलाभेयादृशंसुखंजायतेतादृशमेवसुखंललनाकामस्यललनाप्राप्तौजायतेइत्यर्थः ७३५ कामिनइति स्पष्टम् ७३६ पुत्रिणइति स्पष्टम् ७३७ द्वेषप्रयु क्तदुःखसाम्यंस्पष्टयति अनिष्टेति । देहिनौअश्विनौएकानेकेंद्रियैरनिष्टलाभतोयन्मानसेदुःखंजायतेतदप्येवंसुखवदेवसमंसमानाकारंज्ञेयमित्यन्वयः ७३८ तदुदाहरति विष्ठायामिति । विष्ठा यांजातस्यकृमेर्मरणादिकालेयादृशमसह्यंदुःखंजायतेतादृशमेवब्रह्मलोकादावपिमरणादौजायतेइति ७३९ सिंहावलोकनन्यायेनसुखसाम्यमुदाहरति । उत्पद्यतेइति । रागसाम्यादितिशेषः ७४० नचबाह्यपरिग्रहैरपिविशेषस्तेषामपिकल्पितानांसर्वत्रसंभवादित्याह विट्कृमेरिति । ब्रह्मणोहिरण्यगर्भस्य अनयोःपरमोत्कृष्टतयाऽपरमोत्कृष्टतयाचप्रसिद्धयोःकेनधर्मेणविशेषइति ७४१

४३

हर्षशोकप्रयोजकौउपचयापचयावपितयोःसमावित्याह जायतेइति । एवंसंसारमूलंदेहाभिमानोपितयोःसमइत्याह सुखदुःखकरमिति । 'नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्ति' इतिश्रुतेः तस्मादशरीरताप्रयोजिकाब्रह्मविद्यैवदुर्लभेतिसिद्धमितिभावः ७४२ इत्यादीति । हेअश्विनौइत्याद्यर्थंजातंविद्यादुर्लभतोपपादकंविचिंत्याथएनांब्रह्मविद्यांदुर्लभविद्यांयाचकायशक्रायअतिथये ऽहुवमितिसंबंधः ७४३ श्रुत्वेति । सोपिशक्रःश्रुत्वादुष्टंकुपितंचित्तंयस्यताद्दशःसन्ममत्वंगुरुदक्षिणामदात् तामभिनयति इतइत्यादिना । स्नेहादिनाआदिपदेनभयादिग्रहः वक्तावक्ष्यति भवानितिशेषः ७४४ अङ्गीकृतमिति । एतदिंद्रोक्तं । अस्मिन्युवांप्रत्युपदेशरूपेकार्येवक्ष्यमाणविधयादुर्घटेचिंताममास्तीति ७४५ नन्विंद्रेणनिपिद्धस्यकार्यैतैवकथमित्याशंक्योपदेशेप्रवृत्तौमेप्रतिबंधकंनास्तीत्याह युवयोरितिपंचभिः । युवयोर्विद्योपदेशेवचनंदत्तमेवतथाशक्रायतस्योपदेशस्याभावेतद्वचनमुक्तंतन्नियतंनवक्ष्यामीत्याकारकंनोक्तंकिंतुवक्ष्यामिचेत्त्वंमेशिर

जायतेम्रियतेब्रह्माविद्वानग्निश्चतथैवहि ॥ सुखदुःखकरंतद्वत्सदेहत्वंसमंद्वयोः ७४२ इत्यादिमनसास्वेनविचिंत्यैनामथाब्रुवम् ॥ सुदुर्लभांब्रह्मविद्यांशक्रायातिथयेऽश्विनौ ७४३ श्रुत्वाऽदाद्दुष्टचित्तःसन्सोपिमेगुरुदक्षिणाम् ॥ इतःपरंब्रह्मविद्यांकस्मैचिन्मावदद्विज ॥ स्नेहादिनायदावक्तातदाछेत्स्मीहतेशिरः ७४४ अंगीकृतंमयाप्येतत्तथेतिवचनात्तदा ॥ अतश्चिंतामहंप्राप्तःकार्येस्मिन्दुर्घटेघुना ७४५ युवयोर्वचनंदत्तंब्रह्मविद्यासमीरणे ॥ मयातथैवशक्रायतदभावेसमीरितम् ७४६ नवक्ष्यामीतिनियतंनशक्रायसमीरितम् ॥ किंतुवक्ष्यामिचेत्त्वंमेशिरश्छिधिमहाबल ७४७ वक्ष्याम्येवेतिसततंयुवाभ्यामीरितंमया ॥ ततोवक्ष्यामिवांविद्यांमरणाद्भीतिवर्जितः ७४८ केनचिद्धिनिमित्तेनजातस्यनियतामृतिः ॥ दुर्लभंकारणंमृत्योर्देवराजोममाद्ययत् ७४९ सर्वस्वहरणंश्रेयोदारापुत्रसमर्पणम् ॥ मरणंचनतुश्रेयोमिथ्यावाक्यस्यभाषणम् ७५० अत्रैवमहतीचिंतामिथ्यावाक्यस्यभाषणे ॥ ब्रह्मविद्यांयुवाभ्यांचेत्प्रवृत्तेवक्तुमश्विनौ ॥ शक्रस्तदैवशिरसश्छेदंकुर्यान्नसंशयः ७५१ केनवक्ष्यामितांविद्यांशिरोहीनोयुवांप्रति ॥ पुनर्मिथ्यैवमेवाक्यंभविष्यतिसुदारुणम् ॥ अपप्रतिज्ञोनरकेयास्याम्यज्ञानकारणे ७५२ इत्येवममचिंताद्यवर्ततेकापिनापरा ॥ बुद्धिमंतौयुवांतस्माद्वदतंकिंकरोम्यहम् ७५३

श्छिधीत्याकारमेवोक्तमितिद्वयोःसंबंधः ७४६ । ७४७ एताद्दशेचवचनेयद्यहंमृत्युभीरुःस्यांतर्हिनप्रवर्त्तेयमेवमृत्योरप्यधिकतयामतादनृतादेवभीरुरहंकथमुपदेशेनप्रवर्तेयमित्याह वक्ष्याम्येवेति । यतोवक्ष्याम्येवेत्याकारेणयुवाभ्यामुदितंततःसत्यस्यपरिपाल्यत्वान्मरणभयहीनःसन्वांयुवांप्रतिविद्यांवक्ष्यामीति ७४८ तत्रहेतुतयामरणाद्भीतेरनौचित्यमाह केनचिदिति । नियता अवश्यंभाविनी । तत्रयत्यदिदेवराजोममृत्योःकारणंभवेत्तद्दुर्लभं सत्यंरक्षन्दध्यङ्ङाथर्वणोदेवराजादपिनभीतइतिमद्यशःपरिपोषकत्वादितिभावः ७४९ अनृतस्यात्यंतानौचित्यमाह सर्वस्वेति । सर्वस्यस्वस्यधनस्यहरणम् ७५० एवंकृतियोग्यवामुपदेशस्योक्त्वाऽथदुर्घटतामाह अत्रैवेतित्रिभिः । अत्रवक्ष्यमाणविषयाप्रवृत्तस्यापिपुनरनृतभाषणप्रसंगेमहतीचिंतास्ति । तामभिनयति ब्रह्मेत्यादिना स्पष्टम् ७५१ केनेति । केनाशिरसातांवक्ष्यामीति । अज्ञानव्यामोहकारणंफलंयस्यताद्दशेनरके ७५२ फलितमाह इत्येवेति । यतोबुद्धिमंतौअतोयुवामपि कर्तव्यंवदतमिति ७५३

अथतोह्यचतुरित्यादिमतिदयतुरित्यंतंकथाशेषमुपबृंहयति इत्युक्तइत्यादिद्वाविंशतिश्लोकैः । इतिगुरुणोक्तेसतिहेअश्विनौयुवांस्वार्थेलोभेनआढ्यौव्याप्तचित्तौसंतौतंगुरुंप्रतिइत्थमूचथुः इत्थंकथमतआह माभूदित्यादि । दुर्दांतचेतसःशक्रादियमुक्तविधाभीतिरस्मद्गुरोर्माभूत् यतआवांमृतजीवनींविद्यांजानीवः ययावज्रमेवविफलंस्यादितिद्वयोःसंबंधः ७५४ । ७५५ वैफल्यमिति । चेद्य दितस्यैंद्रवज्रस्यामोघतयाप्रसिद्धस्यतद्विरुद्धंवैफल्यंमोघत्वंभवताइष्टंचिकीर्षितंनभवतितर्हिआवामुपायांतरंकरिष्यावइति ७५६ उपायांतरंनिरूपयतः अश्वोयमितिद्वाभ्याम् । अयंसंनिहितःक श्चिदश्वोदृश्यतेतस्याश्वस्यशिरस्तवापिचशिरोदृश्यते एवंसतिआवामेते द्वेअपिमस्तकेशिरसीविपर्ययेणविनिमयेनस्थापयावः तवशिरोऽश्वग्रीवायामश्वशिरस्तवग्रीवायांचनिदध्वइतियावत् तत स्त्वमश्वमुखेनावामुपदिशेत्यर्थः ७५७ शक्रेणेति । तस्मिंस्तवग्रीवानिहितेऽश्वशिरसिब्रह्मणोवक्तरिउपदेशकेइंद्रेणच्छिन्नेसतियथापूर्वमश्वशिरोऽश्वग्रीवायांतवशिरस्त्वद्ग्रीवायामावांस्थापयाव इति ७५८ एवंकृतेएतानिफलानिभविष्यंतीत्याहतुः एवमिति । अश्वोभवांश्चमरणंनगच्छेदित्येकंफलम् आवयोर्गुरुहिंसानभवेदितिद्वितीयम् तथाभवतोऽभूतमयुक्तंहिंसनम् अपमृ त्युरितियावत् इंद्राशनिमृत्योरपमृत्युत्वेनस्मृतिपुप्रसिद्धत्वादिति सनभवेदितितृतीयम् तथाभवतोमरणंमरणरूपतयामतोमिथ्यावादश्चनभवेदितिचतुर्थमित्यर्थः ‘ युक्तेक्ष्मादावृतेभूतम् ’ इत्यमरः

इत्युक्तेस्वार्थलोभाढ्यावूचथुस्तंयुवांगुरुम् ॥ माभूच्छक्रादियंभीतिर्गुरोर्दुर्दांतचेतसः ७५४ अंगसंधानकरणींजानीवोमृतजीवनीम् ॥ विफलंवज्रमेवस्याच्छ क्रेणापिनिपातितम् ७५५ वैफल्यंतस्यचेन्नेष्टंभवताब्राह्मणोत्तम ॥ आवामुपायमपरंकरिष्यावोत्रतंशृणु ७५६ अश्वोयंदृश्यतेतस्यशिरस्तद्वत्तवापिच ॥ छित्वा विपर्ययेणैतेस्थापयावोत्रमस्तके ॥ आवामश्वस्यशिरसाब्रह्मविद्यांसमीरय ७५७ शक्रेणतस्मिन्संछिन्नेब्रह्मवक्तरिमस्तके ॥ स्थापयावोयथापूर्वमावांहिशिरसी उमे ७५८ एवमश्वोपिमरणंनगच्छेत्त्वभवानपि ॥ आवयोर्गुरुहिंसाचभवतोभूतहिंसनम् ॥ मिथ्यावादश्चमरणंनभवेद्ब्राह्मणोत्तम ७५९ अंगीचकारहृष्टःसन्नेव मुक्तेगुरुस्तदा ॥ सर्वभूतसमोविप्रोयुवयोःस्वार्थलुब्धयोः ७६० अंगीकृतेथवाक्येस्मिन्गुरुणाहितकारिणा ॥ निर्दयौक्रूरकर्माणौयुवांशस्त्रधरावुभौ ७६१ पशो रिवगुरोस्तस्यशिरश्छित्वामहात्मनः ॥ अश्वस्यशिरसासार्धंसंचक्राथेविपर्ययम् ७६२ आथर्वणोहयग्रीवस्तदैवयुवयोर्गुरुः ॥ प्रवर्ग्यादीनिकर्माणितद्वदश्वाद्युपा सनम् ७६३ हेयांहिवद्धयोक्त्वासब्रह्मविद्यांसमैरयत ॥ शक्रायथामुवाचादावाश्रमेऽतिथयेमुनिः ७६४ उवाचचेदंमतिमान्ब्रह्मविद्याप्रवर्तने ॥ इतःपरंब्रह्मविद्या वंशेयायुवयोःस्थिता ७६५

७५९ अंगीचकारेति । एवंयुवाभ्यामुक्तेसतियुवयोःस्वार्थलुब्धयोर्गुरुर्हृष्टःसन्नंगीचकारयतःसर्वभूतसमः ७६० अंगीकृतइति । एवंगुरुणांगीकृतेसतियुवांनिर्दयत्वादिविशिष्टौगुरोःशिरश्छित्वाअश्व स्यशिरसासहविपर्ययंचक्राथेइतिद्वयोःसंबंधः ७६१ । ७६२ आथर्वणइति । आथर्वणोयुवयोर्गुरुर्हयग्रीवःसन्प्रवर्ग्यकांडोक्तानिप्रवर्ग्यादिकर्माणित्वाष्ट्रंमधुचप्रवर्ग्यांगमुक्तातद्वन्मधुकांडो क्तमश्वाद्युपासनमुक्त्वाएवंशुद्धांतःकरणेनमुमुक्षुणाहेयंकर्मोपासनंचउक्त्वाब्रह्मविद्यांद्वितीयमंत्रेगोप्यार्थककक्ष्यपदेनोक्तांसमैरयदुपदिदेशयामिंद्रायोक्तवानितिद्वयोरर्थः ७६३ । ७६४ उत्तरा ध्यायोत्थापकाकांक्षाजनकमाथर्वणवाक्यमनुवदति, उवाचचेतिनवभिः । समतिमान्दध्यङ्मुनिर्ब्रह्मविद्यायांप्रवर्तनेसंप्रदायप्रवृत्तिविषयकमिदंवाक्यमप्युवाच । इदंकिमतआह इतइत्या दि । हेअश्विनौइतःपरंमत्कर्तृकोपदेशादुत्तरकालेसा ब्रह्मविद्याशंकितेवकथंप्रसृताभविष्यतीत्याकारकशंकाविषयतामिवगता साका यायुवयोर्वंशेविश्वरूपादियुग्मच्छिष्यपरंपरात्मकेमधुकां डांतेकीर्तितेश्रुता तथायाज्ञवंशेखिलकांडांतगतेश्रुता तथापुंवंशेयाज्ञवल्क्यकांडान्तगतेश्रुता तथावह्वृचानामृग्वेदविदांकौषीतक्यादीनांकुलेश्रुतेतिद्वयोःसंबंधः ७६५

७६६ विद्यायाःशंकितत्वेहेतुमाह इंद्रोयमितिपंचभिः । यतइंद्रोयंसमग्रायांविद्यायामुक्तायांसत्याममुंद्विजंघातयामिवज्रक्षतंकरोमीत्याकारकसंकल्पान्नभसिस्थितःस्ववाक्यपरिपालनायेति हेतौशतृप्रत्ययः ७६७ स्ववाक्यंपरिपालयन्निितिस्पष्टीकरोति मद्धदितिद्वाभ्याम् । मद्धन्मह्यंयथासमग्राउपदिष्टातथेत्यर्थः ७६८ इतिवाक्यमितिअयशसोऽनृतप्रयुक्ताद्भियाभयेन ७६९ हतेमयीति । मयिएवंहतेसतिकेचिद्भिमाभीताःसंतःपुत्रायापिनवक्ष्यन्तीति ७७० सामीति । केचित्कौषीतक्यादयःसामिअर्द्धमसमग्रामितियावत् वक्ष्यंति केचित्तुएकैकस्यैवशिष्यस्यपुरतः प्रवक्ष्यंति किंकृत्वा इंद्राद्दुर्भयंदुर्गतमीषद्भयमागम्यप्राप्य । भयस्येषद्भावेहेतुमाह कुलेति । विद्यावंशदेवस्यपरमात्मनःप्रसादंतपःप्रभृत्युपायेनसंपाद्य ल्यब्लोपेपञ्चमी तथाचेश्वरानुगृहीताअपिउपदेशकालेइंद्राद्भीताभविष्यंतीतिभावः । इंद्रादभयमितिपाठेकुलदेवप्रसादतइंद्रादभयंभयाभावमासाद्यराजमानंयाज्ञवल्क्यमित्युत्तरेणसंबंधः ७७१ उक्तस्यैंद्रभीत्योपदेशसंकोचस्य पर्युदासोयाज्ञवल्क्येबोध्यइत्याह याज्ञवल्क्यमिति । याज्ञवल्क्यमेकंद्विजंविहायउक्तोपदेशसंकोचोबोध्यइतिसंबंधः । कीदृशंयाज्ञवल्क्यम् वाजसनेयसंज्ञकम् तद्व्युत्पत्तिस्तुवाजैःकेसरैःसनिर्दानंयजुषांयस्यसवाजसनिरश्वरूपधरःसूर्यःपुराणेवर्णितः सवाजसनिर्भक्तिःसेव्योऽस्येतिसवाजसनेयः नद्यादिभ्योढगितिशैषिकोढक् । तत्रहेतुगर्भविशेषणंसूर्यशिष्यमिति । अतएवम

तथास्त्रीपुंसयोस्तद्वद्बह्वृचानांमहात्मनाम् ॥ कौषीतक्यादिकानांस्यात्शंकितेवकुलेश्रुता ७६६ इंद्रोयंवज्रपाणिःसन्मांहंतुंनभसिस्थितः ॥ उक्तायांब्रह्मविद्यायांसमग्रायाममुंद्विजम् ॥ घातयामीतिसंकल्पात्स्ववाक्यंपरिपालयन् ७६७ मद्वच्चेद्ब्रह्मविद्यांत्वमन्यस्मैकथयिष्यसि ॥ समग्रांततएवाहंहरिष्यामिशिरस्तव ॥ ७६८ इतिवाक्यंनिजंशक्रःपालयन्नयशोभिया ॥ नभःस्थितोधुनामांसघातयिष्यतिदेवराट् ७६९ हतेमयित्रिलोकीस्थाब्राह्मणाभयमागताः ॥ ब्रह्मविद्यांनवक्ष्यंतिपुत्रायापिप्रियायच ७७० सामिवक्ष्यंतिवैकेचित्कौषीतकिमुखाद्विजाः ॥ एकैकस्यैववाकेचित्प्रवक्ष्यंतिद्विजोत्तमाः ॥ इंद्राद्दुर्भयमागम्यकुलदेवप्रसादतः ॥ याज्ञवल्क्यंविहायैकंद्विजंवाजसनेयकम् ॥ सूर्यशिष्यंमहात्मानंसूर्यवद्दीप्ततेजसम् ७७२ यजूंषिश्वेतरूपाणितेनेमानिमहीतले ॥ याज्ञवल्क्यस्यनामैकंधारयिष्यंतिसर्वतः ७७३ इतिब्रुवाणस्यमुनेर्हयग्रीवस्यदेवराट् ॥ शिरोन्यपातयद्भूमौवज्रेणशतपर्वणा ७७४ तच्छिरःपतितंदृष्ट्वावाजिनस्तुगुरोःशिरः ॥ समाहृत्ययथापूर्वंचक्राथेगुरुवाजिनोः ७७५

हात्मानमित्यादि ७७२ यजूंषीति । तेनोक्तेनयाज्ञवल्क्योत्कर्षेणइमानिकाण्वादिपंचदशशाखारूपाणियजूंषिशुक्लवर्णानितैत्तिरीयसंज्ञककृष्णयजुर्भ्योविलक्षणानीतियावत् एतानिमहीतलेयाज्ञवल्क्यस्यैकंनामधारयिष्यंतिप्रसिद्धिरूपांपुष्टिंनेष्यंति पंचदशशाखाध्यायिषुवाजसनेयिपदप्रसिद्धेरितिभावः ७७३ इतिब्रुवाणस्येति । शतंपर्वाणिग्रंथयोयत्रतत्तथातेन ७७४ तच्छिरइति । तद्धुरुग्रीवायांस्थापितंवाजिशिरःपतितंदृष्ट्वाजिनःसकाशाद्गुरोःशिरःसमाहृत्यानीयगुरुवाजिनोःशिरसीयथापूर्वंयुवांचक्राथेविन्यस्तवंतावित्यर्थः । अनयाकथयैतत्सूचितंभवतियदिंद्ररक्षितेयंविद्याऽश्विभ्यामपिमहतायत्नेनलब्धात्यन्तदुर्लभेति । अपिचमंत्रयोरर्थश्चप्रदर्शितः तत्रप्रथमेएतावान्विशेषः ईमित्यनर्थकोनिपातः यत्प्रोवाचेत्यन्वयः । द्वितीयमंत्रेतुप्रत्यैरयतंप्रापितवंतौ ऋतायन्सत्यंपालयन् त्वाष्ट्रंआदित्यस्ययज्ञपुरुषशिरस्त्वेनज्ञानरूपंमधु यदाख्यायिकायज्ञपुरुषस्यशिरोवल्मीकजंतुभक्षितज्याकधनुष्कोट्याछिन्नंतत्संधानायाश्विनौदेवैःप्रार्थितावित्यादिरूपाप्रवर्ग्यकांडेगतायच्चकक्ष्यंगोप्यंमधुब्राह्मणोक्तंतदुभयंप्रोक्तवानित्यर्थः ७७५

एवंगवर्ग्यकांडोक्तकथानुवादकयोर्मंत्रयोरर्थोदर्शितः अथसकलमधुकांडतात्पर्यार्थप्रदर्शकंपुरश्चक्रेइत्याद्यग्ब्राह्मणसमुदायरूपंग्रंथंव्याकुर्वन्नसंवृतमित्यंतस्यतावदर्थमाह ब्रह्मविद्यामित्यष्टाभिः । हेअश्विनौयागुरुणावांयुवाभ्यांब्रह्मविद्यादत्तायत्कामनयायुवाभ्यांगुरुद्रोहःकृतस्तांयुवयोःस्मृत्यर्थंसंक्षेपेणवदामीति ७७६ जगदिति । जगतोऽभिन्ननिमित्तोपादानभूतःपरमात्मामहाराजवन्महापुरसमंसमष्टिशरीरंतावच्चक्रेकृतवानिति ७७७ ततोव्यष्टिशरीररूपाणिस्वल्पपुराणिकृतवानित्याह चतुष्पदइति । चत्वारःपादायासांतास्तथापुरःशरीररूपपुराणि एवमग्रेपि ७७८ स्थूलास्विति । आसुपूर्षुयथापक्षीनीडेप्रविशन्संकुचद्रूपोभूत्वाप्रविशतितथापरिच्छेदाभिमानलक्षणंसूक्ष्मात्सूक्ष्ममतिसूक्ष्मंरूपंभजन्सन्प्रवेशमकरोदिति ७७९ पुरुषपदार्थंद्विधाह पुरीति । यस्मादयमात्मा पुरीतिजातावेकवचनं सर्वासुपूर्षुशेतेवसतिततःपुरुषईरितः पुरशब्दोपपदाद्वसधातोरौणादिकेकप्रत्ययेसंप्रसारणेचसाधुः । अथवाएतांपुरंस्वव्याप्त्यापूरयेदितिपुरुषः पृधातोरौणादिकःकुषन्प्रत्ययइति ७८० एतंपुरुषमुपाधयःपरिच्छेत्तुंनालमित्याह अनेनेति । अनेनपुरुषेणांतर्बहिरवस्थितेनएतत्सर्वंविश्वमाकाशेनेवव्याप्तमिति ७८१ आंतरत्वेनव्याप्तौदृष्टांतमाह ओतेति । तंतावित्यपिजातावेकत्वंयथासंततेस्तिर्यग्भूतेश्चतंतुभिर्व्याप्तओतःप्रोतश्चपटस्तंतुपुञ्जांतरेपुस्थितस्तथाविवर्तोपादानेआत्मनिविश्वंस्थितमिति ७८२ सवाअयमित्यंशस्यार्थंदर्शयति सएवेति । योत्रपूर्षुप्रवेशकृच्छुद्धःसए

ब्रह्मविद्यांचगुरुणादत्तामेतांवदामिवाम् ॥ अश्विनौस्मृतिसिद्ध्यर्थंयुवयोर्हिगुरुद्रुहोः ७७६ जगत्कारणभूतोयमात्मासर्वशरीरिणाम् ॥ महाराजोपमश्चक्रेशरीरंहिपुरोपमम् ७७७ चतुष्पदःपुरश्चक्रेद्विपदोपिमहेश्वरः ॥ त्रिपदश्चैकचरणाह्यपदाअपिकाश्चन ७७८ स्थूलास्वासुयथापक्षीसूक्ष्मात्सूक्ष्मशरीरभाक् ॥ एवमेवायमात्मापिप्रवेशमकरोद्विभुः ७७९ पुरियस्मादयंशेतएतांचैषप्रपूरयन् ॥ स्वव्याप्त्याततएवायंपुरुषःपरईरितः ७८० अनेनपुरुषेणेतत्सर्वमेवसमावृतम् ॥ अंतर्बहिश्चनभसायद्वद्विश्वंसमावृतम् ८१ ओतप्रोतोयथातंतौपटस्तिष्ठतिसर्वदा ॥ एवमेवजगत्सर्वमात्मन्येवप्रतिष्ठितम् ८२ सएवायंपुरायोत्रप्रवेशमकरोद्धृदि ॥ युवयोर्ममवान्यस्यपयोयद्वद्घटेष्विह ८३ एकरूपंपयःस्थूलेघटेस्थूलंप्रकीर्तितम् ॥ सूक्ष्मेसूक्ष्मंचसंतप्तेसंतप्तंतत्रकीर्त्यते ८४ शीतलेशीतलंयद्वद्रजोयुक्तेरजस्वलम् ॥ सुगंधेचसुगंधंतद्दुर्गंधंचपरत्राहि ८५ वायुयुक्तेचलंतद्वन्निश्चलंवायुवर्जिते ॥ सूर्ययुक्तेप्रभाभृत्तत्तामसेतामसंपुनः ८६ एवमात्मापियादृक्स्याच्छरीरंतादृशोभवेत् ॥ स्थूलःसूक्ष्मोजडोधीमान्श्रीमान्निर्धनएवच ॥ उत्कृष्टश्चनिकृष्टश्चसुखीदुःखीतथैवच ८७ इत्यादीन्बहुधाधर्मानुपाधेरेवमन्यते ॥ आत्माह्येषविमूढःसन्कामीवचवधूगुणान् ७८८

वयुवयोर्ममवान्यस्यवासर्वेषांहृदेशेविशेषेणभासमानोस्ति प्रध्येभासमानस्यप्रवेष्टुरभेदेदृष्टांतः घटेषुप्रविश्यावस्थितंजलमिति ७८३ अथरूपंरूपमित्यादेरनुशासनमित्यंतस्यार्थमेवंसयुवयोरित्यतःपूर्वतनेनग्रंथेनोपबृंहयन्नुक्तंदृष्टांतमुपाधिसारूप्यपरतयातावन्निरूपयति एकरूपमिति । यथास्वतएकरूपमपिजलंस्थूलत्वादिमतोघटाननुरूप्यतथातथाकीर्त्यतेइतित्रयाणांसंबंधः । स्थूलंविशालंतद्विपरीतंसूक्ष्मं तत्रघटेवन्ह्यादिनासंतप्तेजलमपितथा ७८४ शीतलेइतिस्पष्टं ७८५ वायिवति । वायुनाचालकेनयुक्तेघटेतज्जलंचलंभवति तद्विपरीतेघटेनिश्चलमिति सूर्यप्रकाशयुक्तेघटेतज्जलंप्रभाभृद्भास्वरमिति तामसेतमसांधकारेणव्याप्तेघटेतज्जलंतथेति ७८६ दार्ष्टांतिकेयोजयति एवमिति । एवमात्मापिस्थूलत्वादिभेदैर्यादृशंयादृशंशरीरंतत्रतादृशोभवति एवंभावएवचास्यप्रतिरूपपदेनश्रुत्युक्तइतिभाव. । उपाधिसारूप्यमभिनयति स्थूलइत्यादिना ७८७ इत्यादीनिति । इत्यादीनुपाधेरेवधर्मान्स्वधर्मतयाआत्माामन्यतेयतोविमूढः अत्रैवापरोदृष्टांतः कामिन्याधर्मान्हर्षशोकादीनात्मनिमन्यमानःकामीति ७८८

कामिदृष्टांतंविशदयति प्रियेति । कामिनःप्रियाचेद्यदिचिंतयासमाविष्टान्याप्ताभवंतितदासंकामीचिंताविष्टंचलच्चित्तंयस्यएतादृशःसंश्चलतीवेतिव्यवह्नियतेइति ७८९ दार्ष्टांतिके एवमिति । एवं मायामृढआत्माबुध्यादिधर्मानात्मनिमन्यते कीदृशः बुद्धिशरीरादयोधर्मिणोयेषांतादृशैर्धर्मैर्विवर्जितः ७९० उक्तार्थेसमन्वितायाःसर्वाणिरूपाणिविचित्येत्यादिकायाःश्रुतेरर्थंसंगृह्णाति भौतिकानीतिद्वाभ्यां भौतिकानिशरीरादीनितत्कारणानिभूतानिचश्रुतौरूपपदेनोक्तानिसृष्ट्वासंचितानिकृत्वातत्रसृष्टेषुएकतांतादात्म्याभिमानंगतःसन्शब्दप्रपंचंचसृष्ट्वाप्रकटीकृत्यसृष्टानांनामानिविदधे कृतवानिति ७९१ वाचेति । वाचेतींद्रियांतराणामप्युपलक्षणं तथाचवागादींद्रियैस्तथावचसोवागिंद्रियादेःप्रेरकयाबुध्याचैक्यंप्राप्यवदनादिव्यवहारंकुर्वंस्तद्रूपोमद्रूपोन्यरूपश्चमहेश्वरोविद्यतेइति ७९२ एवमध्यारोपितस्यापवादार्थमयमस्यनानाभावःशास्त्राचार्यादिभेदद्वाराबुध्यभिव्यक्तरूपेणस्वरूपस्यव्याख्यानायश्रुतौप्रतिचक्षणपदोक्तायबोध्यइत्याह यःसएवेति । सउपाधितादात्म्यापन्नो वर्णितःसएवस्वरूपेणभेदलेशैरपिवर्जितःसन्यद्विदामसृजत्तत्स्वस्वरूपस्यदर्शनायेवेति कीदृशस्यस्वरूपस्य ऐंद्रस्यइंद्रस्यसर्वात्मदर्शिनःपरमेश्वरस्यसंबंधिनः ७९३ इंद्रपदार्थमैतरेयेवर्णितंस्मारयति सृष्ट्वेति । समग्रंजगत्सृष्ट्वाइदंविश्वमात्मदृशाआत्मदृष्ट्यात्मत्वेनयतोदृष्टवांस्तेनैंद्रसंज्ञोजातइति ७९४ नानाभावोपाधीनांबाधयोग्यतांवक्तुंमायामयत्वमाह माययेति । एकरूपआत्माआत्मनोमाय

प्रियाचिंतासमाविष्टाभवेच्चेत्कामिनोपिहि ॥ चिंताविष्टश्चलच्चित्तश्चलतीवसकामुकः ८९ एवंबुद्धिशरीरादिधर्मैर्धर्मैर्विवर्जितः ॥ अनादिमाययामूढआत्मास्वात्मनिमन्यते ९० भौतिकानिसभूतानिसृष्ट्वातत्रैकतांगतः ॥ सृष्ट्वाशब्दप्रपंचंचनामानिविदधेप्रभुः ९१ वाचावचःप्रेरकयाधियाचैक्यंसमाप्यसः ॥ विद्यतेत्वमहंतद्वदन्योप्येषमहेश्वरः ९२ यःसएवस्वस्वरूपेणभेदगंधविवर्जितः ॥ ऐंद्रस्यस्वस्वरूपस्यदर्शनायासृजद्विदाम् ९३ सृष्ट्वाजगत्समग्रंसइदमात्मदृशापुमान् ॥ दृष्टवान्येनतेनाभूदिंद्रनामापरःपुमान् ९४ माययाबहुरूपोभूदात्मनोबहुरूपया ॥ मायावीचैकरूपःसन्हस्तिव्याघ्रादिरूपभाक् ९५ अन्यदन्यात्मतांनेतुंसमर्थोपिनशक्नुयात ॥ किंतुतस्मिन्विशेषंहिकुरुतेधीधनोनरः ९६ हेमिकर्तुंनशक्नोतिसूत्रंकारुशतंतदा ॥ काष्ठमेकंमृदंतद्वत्कुंभकारसहस्रकम् ९७ धातुवादेनयेधातौकारयंत्याशुधातुताम् ॥ कारयंतिनतेप्येतामसतींतत्रकर्हिचित ९८ किंतुतस्यैवपूर्वस्यरूपादेःसंक्षयात्परम् ॥ रूपादिजायतेतत्रतेषामन्यदितिभ्रमः ७९९

याबहुरूपयाबहुरूपोभूत् यथालोकेएकरूपोमायावीऐंद्रजालिकोगजादिबहुरूपोभवतीति ७९५ भेदस्यमायामयत्वंद्रढयितुंप्रकारांतरेणानुपपत्तिमाह अन्यदित्यादिदशभिः । समर्थोपिनरोऽन्यदन्यस्वभावकंवस्तुअन्यस्वभावतांनेतुंनशक्नुयात्किंतुधीमान्नरस्तस्यैवधर्मिणःकनकादेर्विशेषंकुंडलादिरूपंकुरुतेआविर्भावंनयतीत्यर्थः ७९६ अन्यस्यान्यात्मतायाअकरणेदृष्टांतद्वयमाह हेमेति । यथाकारूणांशिल्पिनांशतमपितंतुमयसूत्रस्यसुवर्णभावंकर्तुंनशक्नोतितथाकुंभकाराणांसहस्रंकाष्ठस्यमृद्भावंकर्तुंनशक्नोतीति ७२७ ननुयद्यन्यद्वस्तुअन्यन्नभवतिकथंतर्हिधातुविद्याविदस्ताम्रादिकंस्वर्णादिभावंनयंतःप्रसिद्धाइत्यतआह धात्विति । धातुवादेनधातुमारणादिप्रतिपादकशास्त्रानुसारेणयेधातौताम्रादौआशुशीघ्रंधातुतांधात्वंतररूपतांकुर्वंतितेप्येतांधात्वंतरतांशशश्रृंगवदसतींनकारयंति प्राकृतेर्थेणिच् नकुर्वंतीत्यर्थः असदुत्पत्तौविशेषाभावाच्छशश्रृंगादेरप्युत्पत्त्यापत्तिः नासतोविद्यतेभावइत्यादिस्मृतिविरोधश्चस्यादितिभावः ७९८ कथंतर्हिधातुवादिनोऽसदुत्पत्तिंमन्यंतेइतिचेद्भ्रमादित्याह किंत्विति । किंतुतस्यैवताम्रादेर्यःपूर्वरूपंरक्तिमादिकंतस्यसंक्षयात्तिरोभावात्परंपूर्वरूपभिन्नंपीतिमादिकंयज्जायतेप्रादुर्भवतितत्रधर्म्यभेदेपिधर्मांतरोत्पत्तौसत्यांतेषांधातुवादिनामन्यदिदमित्याकारकोभ्रमोभवतीति ७९९

तस्माद्धर्मीमृदादिरूपोनकदाचिदन्यथाभवति धर्मैःपिंडघटादिभिरागमापायिभिस्तादात्म्यमात्रेणान्यथाभावव्यवहारंभजतइत्याह ततइति । ततउक्तयुक्तेः यन्मृत्सुवर्णादिरूपंवस्तुस्वभावोयादृशमस्तितत्तादृशमेवसदास्तिकालांतरेप्यन्यथानभवति । तर्हिदंडादिकारकवैयर्थ्यमतआह विशेषमिति । किंतुतद्वस्तुरूपंविशेषंपिंडादिधर्मात्मकंकारकैर्गच्छतीतिनकारकवैयर्थ्यंनवाव्यवहारानुपपत्तिरितिभावः ८०० उक्तंविशेषंसांख्यादयउत्पत्तेःपूर्वमपिसंतंतथावस्तुस्वभावेनवास्तवभेदाभेदशालिनंचमन्यंतेतथानमंतव्यमितिसूचयन्वक्ष्यमाणमायामयत्वोपपत्तयेतस्यवस्तुस्वभावाद्बहिर्भावमाह विशेषइतिचतुर्भिः । उक्तोविशेषोवस्तुनःस्वभावोनभवतीतिप्रज्ञा । तत्रहेतुंव्यापकत्वाभावमाह अस्येति । अस्यविशेषस्यतस्यवस्तुनःस्वभावत्वेसतितद्वस्तुतदपायेविशेषापायेनभवेन्नदृश्येतेति विपर्ययेणविपर्ययिणोलक्षणात् दृश्यतेतुघटभावंविनापिपृथिवीत्यव्यापकोघटोनपृथिवीस्वभावइतियावत् ८०१ एतत्स्फुटयति प्रकाशत्वस्येति । यद्वत्तेजःस्वभावस्यप्रकाशस्यापायेऽपगमेसतितेजसोऽप्यपायोदृश्यतेतद्वद्विशेषस्यवस्तुस्वभावत्वेविशेषापायेवस्तुनोऽपायःस्यादिति ८०२ नचैवंदृश्यतइतिसोदाहरणमाह अपायेहीति । हियतोविशेषस्यापायेसतिएषवस्तुनोऽपायोऽत्रलोकेपिनदृश्यतेयतोघनसंज्ञकमूर्तत्वस्वभावापृथ्वीमृत्पिंडभावमपनीयघटीकृताघटभावंनीतासतीपिंडाख्यविशेषापगमेपिस्वस्वभावंमूर्तत्वंनजहातिनत्यजतीतिप्रसिद्धं पृथिव्यामूर्तस्वभावताचमूर्तिर्भूमिः

ततोयद्यादृशंरूपंतादृशंतन्नचान्यथा ॥ कालांतरेपिभवतिविशेषंकिंतुगच्छति ८०० विशेषोवस्तुनोनायंस्वभावःक्वापिकस्यचित् ॥ अस्यतस्यस्वभावत्वेतदपायेनतद्भवेत् ८०१ प्रकाशत्वस्ययद्वत्स्यादपायेतेजसःसदा ॥ अपायस्तद्वदेवस्यादपायोवस्तुनःसदा ८०२ अपायेहिविशेषस्यनैवमेषोत्रदृश्यते ॥ घटीकृतायतःपृथ्वीमूर्तत्वंनजहातिसा ८०३ ततोविशेषोविज्ञेयआगंतासर्ववस्तुषु ॥ आगतोनस्वभावःस्यात्कोपिकस्यापिवस्तुनः ॥ हस्तित्वंनस्वभावःस्याद्यथामायाविनोऽधुना ८०४ विशेषोवस्तुसंश्लेत्स्यान्नापेयात्सस्वभाववत् ॥ अपैतिचततोऽसन्स्यात्संश्लेषंयत्प्रतीयते ८०५ इंद्रियाणांहिसंयोगेनरिशृंगंनदृश्यते ॥ नतथायंततोमायातस्यहेतुःप्रकल्पिता ८०६ अत्यंतासतएवास्यप्रतीतिर्यानसंभवेत् ॥ इंद्रियैस्तन्निमित्तस्यसंज्ञामायेतिकीर्तिता ८०७

स्नेहोजलमित्यादिनायोगभाष्येउक्ता ८०३ एवंचसांख्याभिमतंवस्तुसत्वेविशेषसत्वंनिरस्तमित्याह ततइति । ततःवस्तुसत्वेप्यदर्शनात् विशेषआगंताआगमनशीलःनिमित्ततंत्रइतियावत् सर्वत्रबोध्यः आगंतुकश्चपूर्वसिद्धस्यवस्तुनःकथंस्वभावःस्यात् नह्यागंतुकंव्याघ्रत्वंमायाविनःस्वभावःस्वरूपमिति ८०४ एवंविशेषस्यस्वभावाद्बहिर्भावंप्रसाध्यतस्यमायामयत्वंस्फुटयन्सदसद्भ्यां वैलक्षण्यमाह विशेषइति । सविशेषोयदिवस्तुवत्सन्स्यात्तर्हिवस्तुस्वभाववन्नापेयान्नबाध्येतपरंतुसविशेषोऽपैतिबाध्यतेएवंततोऽसन्सद्विलक्षणःस्यात्तथासन्नसद्विलक्षणश्चस्यात् यत्यतःएवंसद्रूपेणप्रतीयतेइति ८०५ योहिअसन्भवतिसनप्रतीतिविषयोभवतियथानरशृंगमित्याह इंद्रियाणामिति । असन्नृशृंगमिंद्रियसंयोगेननदृश्यतेइतिप्रसिद्धं अयंविशेषस्तुतथानृशृंगवद्ज्ञानाविषयोनभवतिततःसदसद्विलक्षणत्वेनमिथ्यात्वात्तस्यविशेषस्यहेतुतयामायाकल्पितेति ८०६ विशेषनिमित्तभूतांमायांनिरूपयति अत्यंतासतइतिदशभिः । अस्यविशेषस्यवस्तुतोऽत्यंतासतएवयाप्रतीतिर्दृष्टिरसंभवंतीअनुपपत्तिशालिनीतान्निमित्तस्यासदर्थप्रतीतेर्यन्निमित्तस्यमायेतिसंज्ञोक्ता सनिमित्तस्येतिपाठेसन्निमित्ततयाप्रसिद्धस्यवस्तुतोऽत्यंतासतःशुक्तिरूप्यादेर्याप्रतीतिःसैवमायेतिकार्यद्वारेणमायालक्षणंबोध्यमिति ८०७

ननुअत्यंतासन्नपिविशेषोभावविषयोभवन्निनतुनरशृंगमित्यत्रकिंनियामकमितिचेन्माययैवेत्याह असिद्धेइति । ननुशृंगस्यविशेषस्यचभेदेसर्वथाऽसिद्धेऽनुपपन्नेपिसत्येषनृशृंगविशेषयोर्भेदोमा ययैवाघटितघटनापटीयस्याकल्प्यतेउपपत्तिमिवनीयते नकेवलंविशेषोऽसतस्तद्भेदश्चएतद्वयमेवमाययाकल्प्यतेकिंतुएषामायापिमाययैवकल्प्यतेअसत्वाविशेषादिति तदुक्तं 'अविद्यायामिहास्ति त्वाअविद्यास्तीतिकल्प्यते । ब्रह्मदृष्ट्यात्वविद्येयंनासीदस्तिभविष्यति ' इति ८०८ एतत्स्फुटयति गुहायामिति । गुहायांव्याघ्रवत्प्रमाणैरनुपलभ्यत्वेनासतीमायामाययैवकल्पितेति ८०९ मायासाधिकांप्रतीतिंनिदर्शयति असतइति । अस्यशुक्तिरूप्यात्मकविशेषस्यासतोनृशृंगादेःसकाशात्कुतोभेदइतिपृष्टेसतियाऽज्ञानांधीर्नजानीमइत्यादिरूपासैवदुर्घटत्वात्स्वप्रकाशात्मनिमाया मायासाधिकेत्यर्थः ८१० अस्यादुर्घटत्वंदर्शयन्मायापदस्यचतुर्धाव्युत्पत्तिदर्शनेनव्युत्पत्तिरितिसूचयति नविद्यतइति । याएषास्वयंनविद्यतेऽतोमाया माशब्दस्यनिषेधवाचित्वाद्यामाकालत्रयेपिना स्तीत्यर्थसमन्वयात् तथायतोभेदेकार्यकारणादिरूपेकारणंहेतुर्भवतितातोमाया मामानेइतिधातोरौणादिकेयप्रत्ययेसाधु मिमीतेवस्तुपरिच्छेदसंज्ञंभेदंकुरुतेइतिमायाइत्यर्थसमन्वयात् तथानोऽ स्माकंस्वरूपभूतंज्ञानमावृणोतिततोमाया डुमिञ्प्रक्षेपेइत्यतःपूर्ववद्यप्रत्ययेसाधुमिनोतिस्वरूपप्रकाशंप्रक्षिपतिआवरणलक्षणंपरिभवंनयतीत्यर्थसमन्वयात् । तुरीयमर्थंदर्शयति गमनात्ततइति । ततोज्ञानाद्धेतोर्गमनादपसरणाद्यमाया मयाप्रमयायातीतिमायाइत्यर्थसमन्वयादित्यर्थः ८११ उक्तंव्युत्पत्तिचतुष्टयंपंचभिर्विशदंकुर्वंस्तत्रनविद्यतेस्वयंचैषाइत्येतद्दर्शयति आनंदात्मेति । य

असिद्धेसर्वथाभेदेनरशृंगविशेषयोः ॥ कल्प्यतेमाययैवैषमायाप्येषाऽसतीपुनः ८०८ गुहायांव्याघ्रवन्नात्रमायानास्तिकाचन ॥ शशशृंगसमाप्येषाकल्पितामा ययैवहि ९ असतोस्यकुतोभेदइत्युक्तेयाऽज्ञधीर्भवेत् ॥ सैवमायेतिविद्वद्भिःकीर्तितादुर्घटासदा ८१० नविद्यतेस्वयंचैषाभवेद्भेदेपिकारणम् ॥ आवृणोतिचनोज्ञानंमा यायागमनात्ततः ८११ आनंदात्मातुसोऽसंगःस्वप्रकाशैकरूपभृत् ॥ स्वसजातिविजात्युत्थभेदगंधविवर्जितः ८१२ एवंस्वभावोजगतःकारणंजगदप्यभूत् ॥ य तस्ततोबुद्धिमद्भिर्मायातत्रापिकल्पिता ८१३ जगज्जनौस्थितौवापिसंहृतौवाजगत्यपि ॥ उक्तात्मनितथायोगेआशुयातितमोयथा ८१४ अज्ञानंततएवैतदा त्मनोब्रह्मरूपिणः ॥ विशेषभावोमायेतिकथितंवेदवादिभिः ८१५ मादृशोबुद्धिमान्दृष्टौयत्रयत्रकरोतिमाम् ॥ तत्रतत्रनजानातिमायेत्येषाततोभवेत् ८१६

तत्रात्माऽसंगचिदानंदाद्वितीयरूपएववर्ततेतत्रकुतोमायायाःसंभवइतिभावः ८१२ भवेद्भेदेपिकारणमित्येतद्दर्शयति एवमिति । एवंस्वभावोवर्णितानंदादिस्वभावोप्यात्माजगतःकारणमभूत्तथाज गदाकाशादिप्रपंचरूपोपियतोऽभूत्ततोहेतोस्तत्रवर्णितरूपेप्यात्मनिवैदिकैर्मायाकल्पिता ८१३ तुरीयांव्युत्पत्तिंविशदयति जगज्जनाविति त्रिभिः यदा'यतोवाइमानिभूतानिजायंते'इत्यादिशास्त्रा जगतोजनिस्थितिसंहारेषुतटस्थलक्षणभूतेषुयोगःसमाधिःक्रियतेतथाजगत्यपिअस्तिभातिप्रियंरूपमित्याद्यनुसारेणनामरूपेपरिहृत्यसमाधिःक्रियतेतथाउक्तात्मनिसच्चिदानन्दरूपेस्वरूपलक्षणपर शास्त्रानुसारान्महावाक्यानुसाराद्वायदासमाधिःपरिनिष्ठताप्रमेतियावत् क्रियतएवंयोगेक्रियमाणेमायाऽऽशुशीघ्रंयातिनिवर्त्ततेसूर्येतमोवदित्यर्थः तथाचप्रमयापसरणंप्रमातःपूर्वंब्रह्मात्मस्वरू पावरणंचसिद्धमितिभावः ८१४ अज्ञानमिति । ततएवप्रमानिवर्त्यत्वादेवएतदज्ञानंवेदवादिभिर्मायेतिकथितम् अज्ञानस्यबाधयोग्यतायांहेतुगर्भविशेषणम् आत्मनोब्रह्मरूपिणोविशेषभा वइति निर्विशेषस्यब्रह्मात्मनोविशेषभावरूपमित्यर्थः तथाचकथंनबाध्यतेतिभावः ८१५ तुरीयव्युत्पत्तौविद्वदनुभवंसंवादयति मादृशइति । बुद्धिमान्विवेकीयत्रयत्रमांप्रमांकरोतितत्रदीपेनां धकारमिवमायांयतोनजानातिनपश्यतिततोमायेतिसंज्ञातुरीयव्युत्पत्त्यासमन्वितेति ८१६

सामायालाघवेनमायांतुप्रकृतिंविद्यादितिश्रुत्यनुसारेणचएकैवकल्प्यते प्रकृतश्रुतौमायाभिरितिवहुवचनंतुव्यावहारिकसाधारणप्रमाव्यक्तिभेदेननिवर्त्यतूलावस्थादिपदवाच्यांशभेदाभिप्रायेणेत्याह मानामिति । मानांप्रमाणानांघटादिरूपानेकविषयोपाध्यवच्छिन्नचैतन्यगोचराज्ञानविरोधिनीनामनंतत्वात्सामायाएकापिवहुरूपिणीबभूव । एवंमायापदार्थंप्रपंचेनोपपाद्यवाक्यार्थमाह तेनेत्यादिना । तेनोक्तविधयामायायास्तद्बहुत्वस्यचोपपन्नत्वेनएकोदेवोमायाभिश्चेष्टेनानारूपभावलक्षणांचेष्टांकुरुते सदाकालत्रयेपीत्यर्थंउपपन्नइतिशेषः ८१७ माययैवात्मनोनेकरूपतानवस्तुतइत्यत्रविद्वदनुभवमपिसंवादयति एकेति । वस्तुतएकरूपोपिदेवोमाययावव्यवद्बहुरूपोऽभूदित्येवंसर्वैविद्वद्भिर्बादरायणादिभिःकथ्यते कीदृशैः भ्रष्टमायैर्भ्रष्टाप्रमयानिवृत्तामायायेषांतैस्तथातैः ८१८ तस्यनानारूपतांयदभिदधतिबुधास्तदेकरूपतामध्यारोपापवादन्यायेनस्फुटयितुमेवनतुतेषांनानारूपतायांतात्पर्यं नानारूपताद्यभिधानप्रकारास्तूपेयप्रतिपत्त्यर्थाउपायाअव्यवस्थिताइतिन्यायेनानियताइतिसूचनेनवक्ष्यमाणेंद्रियवृत्त्युपाधिभेदाध्यारोपेपौनरुक्त्यशंकांवारयति विशेषानितिचतुर्भिः एतेआत्मनिरूपणेप्रवृत्ताविद्वांसोलौकिकविविधप्रमाणैःसिद्धान्भेदान्वदंति अनुवदन्तितेषांव्याख्यानकौशलंदर्शयति पदेति ८१९ कारणइति । तत्रकारणेलौकिकप्रमाणानांकुंठतांमंदप्रसरतामालोच्यतेमहाधियःसर्वव्यवहारोपपादिकामेकांमायामेवकारणतयाकल्पयंतिनतुका

मानामनंतरूपत्वादेकासावहुरूपिणी ॥ बभूवतेनमायाभिरिंद्रोसौचेष्टतेसदा ८१७ एकरूपोपिदेवोसौनानारूपोयथानटः ॥ विद्वद्भिःकथ्यतेसर्वैर्भ्रष्टमायैर्महात्मभिः ८१८ विशेषान्हिवदंत्येतेकार्यकारणसंश्रयात् ॥ प्रमाणैर्विविधैर्विप्राःपदवाक्यविशारदाः ८१९ कारणेकुंठतांदृष्ट्वाप्रमाणानांमहाधियः ॥ कल्पयंत्यत्रतेमायांव्यवहारप्रसिद्धये ८२० हेतुमेकंविधायैतेप्रमाणकुशलाद्विजाः ॥ सर्वमेववदंत्येतच्छिष्यबुद्धिविवृद्धये ८२१ देहभेदोदधीचातोयुवयोर्वर्णितःपुरा ॥ आत्मनोभिन्नताहेतुस्तथान्योपिमहात्मना ॥ तत्रेंद्रियकृतोभेदएवंतेनसमीरितः ८२२ यथास्वर्गगतेंद्रस्यमायाभिर्बहुरूपिणः ॥ रथेषुवाजिनोयुक्ताविद्यंतेवायुवेगिनः ८२३ एवंसंसृतिगेंद्रस्यनानादेहरथेष्वपि ॥ इंद्रियाश्वाश्चविद्यंतेयुक्ताअतिबलाइमे ८२४ देहएकत्रसंख्यातादशकेदशकेशतम् ॥ शतेसहस्रंतद्वत्स्यात्सहस्रेप्ययुतंतथा ८२५

येभेदवत्कारणभेदंनानारूपतार्थमनुवदंति यर्णनस्यलोकव्युत्पादनार्थत्वाल्लोकानांचकारणभेदौदासीन्यादितिभावः ८२० हेतुमिति । तस्माद्धेतुंमायारूपंकारणमेकमेवविधायमनासिकृत्वा यद्वाहेतुंफलमद्वैतबोधरूपमेकमुद्दिश्यकृत्वासर्वमेवाध्यारोपप्रकारभेदंवदंतिनानाप्रकारकथनफलंशिष्यबुद्धिविवृद्धिरिति ८२१ फलितमाह देहेति । अतउक्ताभिप्रायेणदधीचाथर्वणेनदेहभेदआत्मभेदारोपहेतुरूपंरूपमित्यादिवाक्येनयुवयोःप्रबोधार्थंवर्णितः । तथान्योपिविषयेंद्रियादिभेदस्तुएवन्यायेनसूचितइति तत्रेति । तत्रसूचितभेदानांमध्येइंद्रियकृतोभेदएवंवक्ष्यमाणप्रकारेणयुक्ताइत्यादिवाक्येनदर्शितः ८२२ तत्रदृष्टांततावदाह यथेति । यथाप्रसिद्धेंद्रस्यत्रिलोकीगतनानाकार्यार्थंनानारूपधारिणोरथेषुनानाविधामहावेगिनोऽश्वायुक्ताःसंलग्नाःसंति ८२३ एवमिति । एवंसंसारगतस्यात्मरूपेंद्रस्यदेहरूपेषुरथेषुयुक्ताइंद्रियरूपाअश्वाःश्रुतौहरिपदोक्ताःसंति अतिबलाअतिदुर्जयाः ८२४ देहइति । एकत्रापिदेहेइंद्रियाणांप्रत्येकंवृत्तिभेदाद्दशकेदशसंख्यापापरिमितेगणेशतंभेदाएवंशतेंतर्गताःसहस्रंभेदास्तथासहस्रेऽयुतमिति ८२५

एवमिति । एवमवांतरभेदैरनंताइंद्रियाश्चाअंतःकरणस्यवृत्तीर्भिन्दानाअंतःकरणेप्रतिबिंबितस्यात्मनोभेदकाइत्यर्थः । संबंधाइतिपाठः ८२६ एवमध्यारोपितस्यैंद्रियभेदस्यायंवाइत्यादिनोक्तमपवादंदर्शयति भेदैरिति । देवआत्मायैर्भेदैर्भिद्यतेतत्सकलाश्रयस्तेषांसकालानांभेदकानांसप्रपंचेंद्रियाणामाश्रयोविवर्तोपादानतयाधिष्ठानमित्यर्थः अतएवनेतिनेतीतिकल्पितनिरासेनसर्वभेदविमुक्तोऽवधारितइति । एतेनश्रुतौअयमितिपदार्थस्यात्मनश्चबाधासामानाधिकरण्यमितिसूचितम् ८२७ एवंत्वंपदार्थंपरिशोध्यतत्पदार्थंपरिशोधकस्यतदेतदित्यादिरर्थमाह भेदैर्नेति । यद्वस्तुभेदैर्नभिद्यतेतद्ब्रह्मेत्यवधारितंपूर्वमपीतिशेषः कीदृशंब्रह्म पूर्वादिरूपेणदेशेनकालेनचवर्जितं तथाऽन्तःस्वभावेनबाह्यस्वभावेनचपदार्थजातेनवर्जितमिति ८२८ सामानाधिकरण्येनवाक्यार्थंस्फुटयन्महावाक्यमप्यभिनयति एकमिति । स्पष्टम् ८२९ ननुकोयमात्मेतिपृच्छतांमंदानामनुग्रहायसर्वानुभवितेत्याह एषइति । अनुभवतिद्रष्टृश्रोत्रादिरूपेणेतिशेषः ८३० एवमश्विनोरहस्यज्ञ

एवमेतेह्यसंख्याताइंद्रियाश्चाःशरीरिणाम् ॥ अंतःकरणसंबंधाआत्मनोभेदहेतवः ८२६ भेदैर्यैर्भिद्यतेदेवआत्मातत्सकलाश्रयः ॥ सर्वभेदविनिर्मुक्तोनेतिनेत्यवधारितः ८२७ भेदैर्नभिद्यतेवस्तुतद्ब्रह्मेत्यवधारितम् ॥ पूर्वापरादिदेशेनकालेनचविवर्जितम् ॥ अंतर्बहिःस्वभावेनवस्तुनाचविवर्जितम् ८२८ एकमेवाद्वितीयंयत्सोयमात्माशरीरिणाम् ॥ अहंब्रह्मेतिवाक्येनविज्ञेयोब्रह्मरूपभृत् ८२९ एषोनुभवतिश्रीमान्सर्वमेवमहेश्वरः ॥ सर्वात्मासर्वधीसाक्षीस्वप्रकाशसुखात्मकः ८३० एवंसयुवयोर्दध्यङ्कृतवाननुशासनम् ॥ आनंदात्मस्वरूपस्यब्रह्मणोबोधरूपिणः ८३१ एवमुक्तेऽतिसंहृष्टावश्विनौजातकौतुकौ ॥ प्रणम्यतंमहात्मानमृषिंसर्वार्थदर्शिनम् ॥ चक्रतुस्तस्यतत्कार्यंयदर्थमयमागतः ८३२ एवमाथर्वणंदृष्ट्वानिहतंस्वोपकारिणम् ॥ इंद्रेणभीतिमगमद्विजःकौषीतकिस्ततः ८३३ विचित्रमिदमाख्यानंकथितंतवसुव्रत ॥ मंत्रेरितंपुनःकिंत्वंश्रोतुमिच्छसितद्वद ८३४ ॥ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणे बृहदारण्यकमधुकांडसारार्थप्रकाशकऋष्यश्विसंवादोनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥

ऋषिरितिहासंसमापयति एवमिति । हेअश्विनौसदध्यङ्एवंयुवांपुरस्कृत्यसर्वाधिकारिणःप्रतिब्रह्मणोऽनुशासनंकृतवानिति ८३१ एवमिति । उक्तेरहस्यविदेतिशेषः ८३२ त्वयायत्कौषीतकेर्भयनिमित्तंपृष्टमासीत्तत्समाहितमितिशिष्यंप्रत्याहगुरुः एवमाथर्वणमिति । स्वपदैर्नंद्रोग्राह्यः ८३३ उपसंहरति विचित्रमिति ८३४ ॥ उपाधिपरिहाणेनयःसर्वत्रप्रकाशते ॥ सर्वानुभवितादेवोराजतेचित्तमंदिरे ॥ १ ॥ इति श्रीदत्तकुलतिलककृष्णचंद्रात्मजदिल्लारामसूरितनुजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आत्मपुराणटीकायां सत्प्रसवाख्यायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ग्रंथसंख्या ३१०० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्रीगणेशायनमः ॥ ॥ सर्वात्मतोपपत्त्याप्रियस्यैवपरमात्मनः ॥ सिद्धांतंपरमेशानंवन्देप्रत्यूहशान्तये ॥ १ ॥ एवंप्रश्वाज्ञानिभागमप्रधानस्यमधुकांडस्यार्थोदर्शितः अथसुहृदुपदेशनिभोपपत्तिप्रधानस्ययाज्ञवल्क्यकाण्डस्यार्थमध्यायद्वयेननिरूपयन्पञ्चमाध्यायार्थेशिष्यजिज्ञासांपूर्वाध्यायेउत्थापितामभिनयति इत्थमितिनवभिः । स्पष्टम् १ तत्रस्वस्यमेधावितांसूचयन्शिष्यःश्रुतपूर्वमनुवदति । भगवन्नितिषड्भिः । स्फुटम् २ कौषीतकिरिति । यज्ज्ञानंयस्यसत्यसत्यस्यज्ञानंकौषीतकिस्तत्याजइंद्रभीत्यानोचेतत्सत्यसत्यंत्वयादध्यङ्ङश्विसंवादरूपकथांतरेणोक्तमिति ३ वंशश्चेति वंशश्चायमुदाहृतइतिलिङ्गविपरिणामेनसंबंधः । कीदृशोवंशः स्वयंभुवंतथात्रयीरूपादित्यंचोपक्रम्यपौतिमाष्यपर्यंतंख्यातः । ईदृशोयंविद्यावंशोद्विमूलः द्वेस्वयंभ्वादित्यरूपेमूलेयस्यसतथा । त्रिपर्वात्रिविधानिपर्वाणिशिष्याचार्यरूपाणियस्मिन्सतथा । यतएकंपर्वस्त्रियाःस्त्रीसंबंधिनामजातेनघटितम् पर्वद्वयंतुपुंसोर्मधुयाज्ञवल्क्यकांडांतरूपस्थानभेदभिन्नपुन्नामजातघटितमित्यर्थः ४ त्रिपर्वण्यीति । अस्मिन्द्विमूलेत्रिपर्वण्यपिचवंशेकेचित्पुरुषाभिन्नाविरूपनामकाःकेचिदभिन्नाःसरूपनामकास्त्वयाकथिताः ५ तेष्विति । तेषुवंशस्थपुरुषेष्वन्यतमस्यदेवस्याथर्वणोमुनेर्दीप्तस्यतेजस्विनःशिष्योदध्यङ्ङाथर्वणःख्यातःप्रोक्तोयोश्विभ्यामिंद्रायचमधुकांडोपदेशकइति । तथादेवेन्द्रस्यदौरात्म्यंहितोपदेशेकोपरूपमुक्तंतथाश्विनोरर्थि

श्रीः ॥ ॥ इत्थमाख्यातमाकर्ण्यशिष्यःपरमविस्मितः ॥ प्रष्टुकामःपुनःकिंचिद्गुरुंप्राहकृतांजलिः १ भगवन्नैतरेयस्यतथाकौषीतकेर्मुनेः ॥ नानाख्यानसमायुक्तमात्मज्ञानंत्वयेरितम् २ कौषीतकिश्चतत्याजयज्ज्ञानंतदपित्वया ॥ कथांतरच्छलेनैवसत्यसत्यमुदाहृतम् ३ वंशश्चायंमहान्ख्यातउपक्रम्यस्वयंभुवम् ॥ आदित्यंचत्रयीरूपंपौतिमाष्यांतमीदृशः ॥ द्विमूलश्चत्रिपर्वाचस्त्रियाःपुंसोरयंमहान् ४ त्रिपर्वण्यपिवंशेस्मिन्नद्विमूलेबहवस्त्वया ॥ पुरुषाःकथिताभिन्नाअभिन्नाअपिकेचन ५ तेषुशिष्यस्तुदेवस्यदीप्तस्याथर्वणोमुनेः ॥ दध्यङ्ङाथर्वणःख्यातोमधुकांडोपदेशकः ॥ देवेंद्रस्यचदौरात्म्यमश्विनोरर्थितापिच ६ तत्रदध्यङ्हयग्रीवश्छिद्यमानेस्वमस्तके ॥ याज्ञवल्क्यंरवेःशिष्यमूचेवाजसनेयकम् ॥ वक्तारंब्रह्मविद्यायाअभीतंशक्रतोपिच ७ अजातशत्रोःसंवादेगार्ग्येणोक्तस्त्वयापिच ॥ प्राप्तविद्योयमादित्याद्याज्ञवल्क्योमहामुनिः ८ तेनकस्मैकथंवापिब्रह्मविद्यासमर्पिता ॥ कीदृशीचेतिवाब्रह्मञ्छ्रोतुमिच्छाम्यहंगुरो ९ एवमुक्तेतिसंहृष्टोगुरुःशिष्यमथाब्रवीत् ॥ शृणुचित्रामहंवक्ष्येकथांवेदसमीरिताम् १० याज्ञवल्क्योथघोरेणतपसापरमेश्वरम् ॥ आदित्यमंडलावासंनामरूपक्रियात्मकम् ११

ताउग्रकर्मप्रवर्चिकालिप्साप्रोक्तेति ६ तत्रेति । तत्रेन्द्रकोपादिनिमित्तकेस्वमस्तकेच्छिद्यमानेसतिदध्यङ्हयग्रीवःसन्याज्ञवल्क्यंब्रह्मविद्यावक्तारमिंद्रादभीतंचोचे । कीदृशंयाज्ञवल्क्यम् रवेःशिष्यमतएववर्णितनीत्यावाजसनेयकम् ७ नत्वेवलंदध्यैवयाज्ञवल्क्योमहाप्रभावत्वेनवर्णितःकिंतुतत्रभवतापीत्याह अजातशत्रोरिति । अजातशत्रोर्गार्ग्येणबलाकिनासंवादेगततृतीयाध्यायेत्वयापिसवितास्त्रितथाप्राहेत्यादिश्लोकेनोक्तइत्यर्थः ८ एवमनूद्यपृच्छति तेनेति । तेनयाज्ञवल्क्येनकस्मैब्रह्मविद्यादत्ताकथंवादत्तासाविद्यावाकीदृशीतिप्रश्नत्रयम् ९ गुरोरुत्तरमवतारयति एवमिति । स्फुटम् १० तत्रयाज्ञवल्क्यस्येश्वरानुग्रहान्महाप्रभावतांजनकस्यतदिदृक्षांचोपोद्घाततयानिरूपयति याज्ञवल्क्यइत्यादिभिरष्टाविंशतिश्लोकैः । याज्ञवल्क्योवैशंपायनादधीतंवेदंपरित्यज्योद्विग्नःसन्नतिघोरेणतपसापरमेश्वरमतोषयदितिशेषः । कीदृशमादित्यमण्डलावासं 'यएषोन्तरादित्येपुरुषोदृश्यते' इत्यादिच्छान्दोग्यश्रुतेः अन्तस्तद्धर्मोपदेशादितिन्यायाच्च तथाचसर्वज्ञपरमेश्वरोपासनात्सर्वज्ञतालाभोयाज्ञवल्क्यस्योचितः मण्डलवाचकादित्यादिपदानांतदन्तस्थेलक्षणाचेतिभावः । आदित्यांतस्थपुरुषस्यसर्वात्मतामाह नामेति । 'त्रयंवाइदंनामरूपंकर्मच' इतिश्रुतेः विश्वस्वरूपभूतनामादित्रितयात्मकमिति । यद्वा सर्वपाप्मविनिर्मोकाभिधायकेनउदितिश्रुतिप्रसिद्धनाम्नावक्ष्यमाणरूपक्रियाभ्यांचयुक्तमित्यर्थेनसविशेषतासूचिता ११

तस्यदेवस्यभक्तानुग्रहार्थंरूपमाप्रणखात्सर्वएवसुवर्णइत्यादिश्रुतिप्रतिपादितंदर्शयति सुवर्णेति । नेत्रयोरतिरक्तपुण्डरीकाकारत्वान्नेत्रेविहायसर्वांगेषुस्वर्णवर्णमित्यर्थः १२ तस्यच्छांदोग्योक्तांसर्वेशनरूपांक्रियांदर्शयति अमुष्मादिति । योदेवःअमुष्मादादित्यपुरुषाद्येपरेउपरितनालोकायेचचाक्षुषाच्चक्षुर्वर्तिनस्तदीयरूपादर्वाञ्चोऽधस्तनालोकाः सन्दंशन्यायेनमध्यवर्तिनश्चयेलोकास्तेषांसर्वेषांलोकवर्तिजनानांसंबंधिनांकामानांकाम्यमानपदार्थानामीष्टेईशोभवतिप्रदातेतियावत् । यतएकएवदेवोऽध्यात्मंचक्षुषिअधिदैवमादित्यमंडलेचस्थितइति १३ अयमेवदेवःसूक्ष्मसमष्ट्युपाधिकत्वेनहिरण्यगर्भःकारणोपाधिकत्वेनेश्वरइतिचश्रुतावुक्तइत्याह योजीवेति । योदेवोजीवघनइतिपदघटितेअत्रवेदेसएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षतेइतिप्रश्नवाक्यरूपेजीवसमष्टिवाचकजीवघनपदेनहिरण्यगर्भतयाततःपरमीक्षणीयेश्वरतयाचवैदिकैःपठ्यतेइत्यर्थः । अयमेवदेवो 'अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदः ' इत्यादिश्रुतौवेदयोनित्वेनोच्यतइत्याह यस्मादिति । स्पष्टम् १४ सैषात्रय्येवविद्यातपतीत्यादिश्रुत्यनुसारेणतस्यवेदत्रयात्मकतामाह ऋग्भिरिति । ऋग्वेदरूपेणादित्यपुरुषःपूर्वाह्णेत्रिधाविभक्तदिवसप्रथमभागेतपतिप्रकाशयति तथामध्यतोमध्यान्हेयजुर्भिःतथासायान्हेतृतीयभागेऽथर्वांगिरसैर्युक्तैःसामभिस्तपतीति १५ तथायमेवदेवश्छान्दोग्येतृतीयप्रपाठकेमधुविद्यायांनिरूपितइत्याह वेदेतिद्वाभ्याम् । योदेवःसर्वकर्मफलप्रदआदित्यरूपेमधुनिप्रसिद्धमधुवद्वस्वादिदेवानांमोदहेतौआस्तेतिष्ठति । कीदृशेआदित्यरूपमधुनि विचित्ररूपेरक्तशुक्लकृष्णातिकृष्णगुह्यात्मकपंचरूपोपपन्ने । पुनःकीदृशे यथाक्रमंरक्तादिरूपैर्ऋग्यजुस्सामाथर्वांगिरसोपनि

सुवर्णसदृशंदेवंकेशेषुचनखेषुच ॥ एकरूपंहिसर्वत्रहित्वानेत्रेविलोहिते १२ अमुष्माद्येपरेलोकाअर्वाञ्चोयेचचाक्षुषात् ॥ ईष्टेतेषांसकामानामध्यात्मंभेदवर्जितः १३ योजीवघनइत्यत्रपठ्यतेवेदवादिभिः ॥ यस्माद्विनिःसृतावेदाःश्वासाइवमहात्मनः १४ ऋग्भिस्तपतिपूर्वाह्णेयजुर्भिश्चापिमध्यतः ॥ सायान्हेसामभिःश्चदथर्वांगिरसासमम् १५ वेदद्विरेफैरचितेरक्तशुक्लासितात्मभिः ॥ चित्ररूपेमधुन्यास्तेफलदःसर्वकर्मणाम् १६ कर्मपुष्परसोयस्मिन्नित्यमेवप्रधावति ॥ विमुंचतिचयोदेवोवृष्टिंसर्वस्यकारणम् १७ बहिश्चरोहियःप्राणःसर्वेषामिहदेहिनाम् ॥ स्थिराणांजंगमानांचब्रह्मादीनांहृदिस्थितः १८ यस्तमाराध्यसंतुष्टाद्देवाद्वेदानवाप्तवान् ॥ आदित्यमंडलस्थानादस्मात्सर्वगरीयसः १९ प्राप्यवेदान्मुनिःसर्वान्गृहस्थाश्रमधर्मवान् ॥ चतुर्वेदार्थिनःशिष्यानुपनिन्येमहामनाः २० चतुर्धादृश्यतेतस्यमुनेःशिष्यौघमंडली ॥ अध्यापनरतस्यैषायाज्ञवल्क्यस्यधीमतः २१

पदात्मकवेदरूपैर्द्विरेफैर्भ्रमरैरचिते । यथामधुमक्षिकाःपुष्पेभ्योरसमाहृत्यमधुदेशंनयंतितथाऋगादिवेदभ्रमरायागादिकर्मरूपपुष्पेषुमन्त्ररूपेणगत्वाकर्मणांसूक्ष्मावस्थात्मकमदृष्टसंज्ञंरसंनयंति । तदेतदुक्तं ' कर्मपुष्परसोयत्रनित्यमेवप्रधावति ' इति यत्रादित्यमधुनिप्रधावतिगच्छति । नकेवलंवस्वादिदेवानामेवमोदहेतुरपितुवृष्टिद्वारासर्वेषामित्याह विमुञ्चतीति । तदुक्तम् ' अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः ' इति १६ । १७ वहिश्चरइति । तथासआदित्यपुरुषःसर्वेषांबहिश्चरोबहिर्वर्त्तमानःप्राणः तथाचप्रश्नश्रुतिः ' प्राणःप्रजानामुदयत्येषसूर्यः ' इति तथायमेवपुरुषोन्तर्यामिब्राह्मणेऽतर्यामित्वेननिरूपितइत्याह स्थिराणामिति १८ यस्तमिति । योयाज्ञवल्क्यस्तंवर्णितमीश्वरमाराध्यसंतुष्टादस्मात्सर्वगुरोर्देवादादित्यांतरस्थाद्वेदांश्चतुरोऽवाप्तवान् । यंज्ञमितिपाठेयंदेवंज्ञंसर्वज्ञमाराध्यसन्तुष्टादस्माद्वेदानवाप्तवान् याज्ञवल्क्यइतिशेषः । यज्ञमितिपाठेवर्णितरूपंयज्ञंविष्णुं ' यज्ञोवैविष्णुः ' इतिश्रुतेः आराध्यतस्मात्तुष्टाद्वेदानवाप्तवानितिसम्बन्धः १९ प्राप्येति । एवंवेदान्प्राप्ययाज्ञवल्क्यमुनिश्चतुर्णांवेदानामर्थिनोऽधिजिगांसून्शिष्यानुपनिन्येऽध्ययनाङ्गमुपनयनसंस्कारंप्रापितवानित्यर्थः २० चतुर्धेति । तस्यमुनेःशिष्यगणमण्डलीऋगाद्यध्येतव्यवेदभेदेनचतुर्विधादृश्यतेइति २१

चतुर्मंडलेति । चतुर्विधशिष्यमण्डलमध्यस्थोमुनिःसूर्यवद्राजतेस्मेति । याज्ञवल्क्यस्यचतुर्वेदवित्त्वेलिंगंचत्वार्याख्यास्यमनिगवामाश्रमंप्रतित्तत्कालनवाश्येशिष्यस्यसामाध्यायित्वेनसंबोधनम् २२ याज्ञवल्क्यस्यकीर्त्तिमसंवृतचारित्वेनदिव्यवाराङ्गनात्वेननिरूपयति कीर्तीतिद्वादशभिः । तस्ययाज्ञवल्क्यस्यकीर्तिरूपावाराङ्गनांत्रिलोकीगतान्सर्वान्विद्वद्भुजङ्गमान्कीर्तेर्गुणख्यातिरूपायाःवारांगनात्वेतस्याविवेकेनआस्वादनरूपभोगशालिनांविदुषांसहृदयत्वेनप्रसिद्धानां 'भुजंगोगणिकापतिः' इतिहैमकोशानुसारेणभुजंगत्वंविवक्ष्यते तथाचविद्वांसएवभुजंगास्तान्प्राप्ताइति । कीदृशी तेषांसहृदयानांहृदयस्यतापदादाविकासन्तापिकावेत्यर्थः तप्तंतप्तेनसंबध्यतेइत्यादिवाक्येषुअभिकांक्षारूपंद्रवणमपिधातोरर्थःप्रसिद्धः । लोकेऽपिवारांगनानांस्वविशेषाभिज्ञजनोपस्थानेतद्धृदयतापकत्वंचप्रसिद्धमिति २३ तत्रसायेषांविदुषांहृदयेद्राक्षणाख्यंतापंकृतवतीतान्दर्शयति एतामिति । एतांयाज्ञवल्क्यकीर्तिवारांगनांकेचिज्जनकाद्याविद्वांसस्त्रैवर्णिकैर्लोहितशुक्लकृष्णवर्णैशास्त्रिगुणत्रयाभिमानिभिर्जनैराश्लाघ्यैर्वार्यमाणाअपिबुभुजिरेआस्वादितवन्तः यतःपुण्यात्मानः । मुदितयायोगसूत्रप्रसिद्धयादूत्यैवतद्वशीकृताइतिभावः । ननुकथंनिवारिताअपिवारांगनायांरताअतआह । महाधियःकीर्तेर्दिव्यत्वेननिषेधानर्हत्वंपूर्वमंगीकृतायामुदितायाअपरित्याज्यत्वंपुरुषार्थप्रदायास्तत्त्वजिज्ञासासख्याअनुसरणीयत्वंचालोचयन्तीमहवीर्यैपांतेतथा

चतुर्मंडलमध्यस्थोराजतेमुनिभास्करः ॥ दिशांमंडलमध्यस्थोयथायंभगवान्रविः २२ कीर्तिवारांगनातस्यसर्वान्विद्वद्भुजंगमान् ॥ लोकत्रयीस्थितान्प्राप्तातेषांहृदयतापदा २३ एतांबुभुजिरेकेचित्पुण्यात्मानोमहाधियः ॥ जनकाद्यावार्यमाणाःसदात्रैवर्णिकैर्नरैः २४ अस्यतांमृदुलांवीक्ष्यह्यसूयालयतांगताः ॥ निंदावधूंपिशाचींतांजज्ञिरेकीर्तिदूषिकाम् २५ आदित्यादाप्तवान्विद्यांयाज्ञवल्क्योमहामुनिः ॥ वक्त्रेणनविनाकस्मादेनामत्रवदत्ययम् २६ आदित्यस्यरथेस्थित्वा विद्याधीतामुनायदि ॥ अधीतेकेननैवायंस्थित्वाप्रौढेविभावसौ २७ ज्योतिर्मात्रंयदादित्यउक्तवान्वेदमंडलीम् ॥ ज्योतिर्मात्रवपुर्वन्हिर्नाधुनाकेनवक्त्यसौ २८ तपसातोषमायाताप्रत्यक्षायदिदेवता ॥ शरीरिणीकथंनित्याभवेद्देपायथावधूः २९

तथाचश्रीवशानिषेधेनगणयंतीतिलोकेपिप्रसिद्धमितिभावः २४ अथयेषांसासन्तापदासीत्तेषांवृत्तमाह अस्यतामिति । अस्ययाज्ञवल्क्यस्यतांकीर्तिवाराङ्गनांमृदुलांकोमलांजनकराजादिमनोहारिणीमितियावत् एवंविधांवीक्ष्यकेचिदाश्लाघ्याअसूयालयतांअसूययालयःसंश्लेषोयेषांतेषांभावस्तत्तातांगताःसन्तोनिंदारूपांवधूंवधूवत्तद्वश्यचारिणींकृष्णवर्णत्वेनपिशाचीतुल्यांशुक्लवर्णायाःकीर्तेर्दूषणोद्यतांजज्ञिरेजनितवन्तइत्यर्थः । 'लयोविलासेसंश्लेषे' इतिविश्वः । अयंभावः यथालोकेवारांगनासक्तंराजादिकंततोनिवर्तयितुंनूतनांवधूंवोढव्यांजनयेयुस्तथायाज्ञवल्क्यंद्विषद्भिर्निन्दावधूरसूयासंगेनजनितातथापिनिन्दावध्वाउद्वेजकरूपत्वेतैर्नालोचितमित्यहोतेनीतिशास्त्रतत्त्वमपिनजानन्तीति २५ जनकराजपुरोहितादिकृतांनिंदामभिनयति आदित्यादित्यष्टभिः । यद्ययंलौकिकगुरोर्विद्यांनाप्तःकिंत्वलौकिकादादित्याद्गुरोःप्राप्तस्तदाअलौकिकत्वादेवमुखंविनैवविद्यांकुतोनपाठयतीत्यर्थः २६ आदित्यस्येति । किंचादित्यस्यरथेस्थित्वामुनायाज्ञवल्क्येनविद्याधीताइतियद्युच्यतेतदायंप्रौढेप्रज्वलितेविभावसौअग्नौस्थित्वाकुतोनपठतीति 'विभावसुर्दिनमणौहारभेदेचपावके' इतिविश्वः २७ ज्योतिर्मात्रमिति । किंचज्योतिर्मात्रंतेजःपुंजमात्ररूपआदित्योयद्यस्मैयाज्ञवल्क्यायवेदमुक्तवांस्तर्हितादृशोवन्हिरपिकुतोनवेदमुपदिशतीति २८ तपसेति । यद्युच्यतेसातुष्टादित्यदेवताशरीरिणीसत्यस्माउपदिदेशेतितर्हिसादेवताशरीरिणीवध्वादिवत्कथंनित्यास्यादिति अनित्यत्वेअस्मदादिभ्यःकोस्याविशेषइतिभावः २९

तनइति । ततोस्यवेदलाभेउपपत्त्यभावादयंयाज्ञवल्क्यःस्वकल्पितंवाक्यंवैदिकस्वरवर्णादिसाम्येनपठन्नयंवेदइतिप्रसिद्धंकृत्वाऽस्मानल्पज्ञान्मोहयतीति ३० वेदलक्षणमाहुः वर्णानामिति । संप्रदायानुसारेणस्वरादिविशिष्टायावर्णानुपूर्वीपरिपाटीसैववेदस्ततोन्यन्नटवाक्यसममिति । संप्रदायस्तुनास्यलोकेप्रसिद्धइतिभावः ३१ किंचवेदांतरविज्ञोभवतुनामयाज्ञवल्क्यस्तथापितेत्ति रीयादिप्रसिद्धक्रमादिविलक्षणत्वान्नयजूंष्येपपठतीत्याहुः कंपितानीति । एषयाज्ञवल्क्यःकंपितानिहस्तकंपयुक्तानितथाप्रसिद्धपदादिमर्यादाहीनानियजूंषिनटवत्पठतीति । अतएवातिसाह सीअतिशयेनसाहसीअविमृश्यकर्ता ३२ किंचोपपातकेषुगणितेनाधीतनाशनेनयुक्तोयमित्याहुः यजुरिति । स्वयंपुरावैशंपायनादधीतंयजुर्वेदंनैवयोवेत्तिअतोवेदस्यविश्रावकोविस्मर्ताअपरा न्वेदान्स्वयंकथंजानीयादिति ३३ इत्यादीति । असूययानिंदाजनन्यासहिताःकेचिदित्यादि निंदावचनैर्वचनपदेनरूपकोपयोगिवाग्दानमपिसूच्यते कीर्तिवारांगनारोद्धुंप्रवृत्ताअपिनेशतेनस मर्थाअभूवन्निति ३४ याज्ञवल्क्यस्यपक्षमाशीलतामाह याज्ञवल्क्योपीतिद्वाभ्यां । प्रचारःप्रवृत्तिः । उत्तरार्द्धेअपीतिशेषः । ज्ञानात्ज्ञानप्रभावात् ३५ प्रावृट्कालेइति । प्रावृट्कालि

ततोयंस्वेच्छयार्किंचित्स्वरवर्णानुकारतः ॥ वेदइत्येवकृत्वानोमोहयत्यल्पमानसान् ३० वर्णानामानुपूर्वीयासंप्रदायानुसारतः ॥ सवेदइतिविज्ञेयोह्यपरंनटभाषणम् ३१ कंपितानिसदाब्रूतेयजूंष्येषनटोयथा ॥ पदवर्णक्रमैस्तद्वद्धिहीनान्यतिसाहसी ३२ यजुर्वेदंचयोनैववेत्त्यधीतंस्वयंपुरा ॥ वेदविश्रावकःसोयंजानीयादपरान्कथम् ३३ इत्यादिनिन्दावचनैरसूयासहचारिणः ॥ कीर्तिवारांगनारोद्धुंप्रवृत्तानेशतेपिते ३४ याज्ञवल्क्योपिमतिमान्सर्वबुद्धिप्रचारवित् ॥ स्वयंजानंस्तथाशृण्वन्नज्ञानादास्तेहसन्निव ३५ प्रावृट्कालेयथामेघोवर्षत्येवनगर्जति ॥ वेदान्सर्वांस्तथैवाहसार्थान्नोचेचतान्कचित् ३६ जनकोपिमहीपालोविदेहेषुवसन्सदा ॥ मिथिलाधिपतिर्नित्यंयाज्ञवल्क्यंदिदृक्षते ३७ पुरोहितादयस्त्वेनमाश्वलप्रमुखाद्विजाः ॥ निरुंधंतिसदोपायैर्विविधैर्निंदयापिच ३८ राजापिबुद्धिमांस्तेषांमतंविज्ञायधार्मिकः ॥ आप्तांस्त्रैवर्णिकान्सर्वान्ब्राह्मणानयनेऽदिशत् ३९ तेपिभृत्यास्तथाचक्रुर्गत्वादेशाननेकशः ॥ समानयन्सशिष्यांस्तान्विप्रान्वेदार्थकोविदान् ॥ याज्ञवल्क्येनसहितान्कुरुपांचालकानपि ४० वेदध्वनिर्महानासीत्तस्यराज्ञोनिवेशने ॥ त्रैवर्णिकजनौघस्यकर्णदावाग्निहारकः ४१ आश्वलस्तत्रहोतागाज्जनकस्यास्यभूभुजः ॥ आर्तभागस्तथाविप्रोजरत्कारुसुतोमहान् ४२

कमेघवदात्मश्लाघांगर्जननिभामकुर्वन्नेवयाज्ञवल्क्यःसार्थान्सर्वांस्तथापूर्ववदेवाहापाठयत् । तान्निंदकान्प्रतिकिंचित्किंचिदपिनोचेइति । अनेनकीर्तियोग्यतासूचिता ३६ उक्तरूपकस्यतात्प र्यंदर्शयति जनकइतिद्वाभ्यां । जनकःकीर्तिंश्रुत्वायाज्ञवल्क्यंदिदृक्षतेद्रष्टुमिच्छतिस्मेति ३७ पुरोहितादयइति । एनंदर्शनोद्यतंराजानंविषयान्तरप्रवर्तनादिरूपैरुपायैर्निन्दयाचपुरोहिता दयोनिरुन्धन्तिस्मेति ३८ जनकोहवेत्यादिप्रथमकंडिकार्थमुपबृंहयति राजापीत्यादिनाशास्त्रोक्ताआगाइत्यतःपूर्वतनग्रंथेन । तेषांपुरोहितादीनांमतंदुरभिप्रायंज्ञात्वायाज्ञवल्क्यदिदृक्षयाउपायान्त रंचिकीर्षन्नाज्ञाकारिणस्त्रैवर्णिकानाप्तान्विश्वस्तान्प्रतिमयायागश्चिकीर्षितस्तदर्थंसर्वतोब्राह्मणानाकारयतेत्यदिशदाज्ञांदत्तवानिति ३९ तेपीति । तेविश्वस्ताराजभृत्याअनेकदेशेभ्योब्राह्मणानान यंतःकुरुपाञ्चालदेशवासिनोपिविप्रांस्तद्देशवासियाज्ञवल्क्येनसहितानानीतवंतइति ४० वेदेति । तेषामागमनेसतिजनकराजगृहेमहान्वेदध्वनिरासीत् कीदृशः शूद्रातिरिक्तजनानांसुखदइति ४१ तेषुप्रधानभूतान्दर्शयति आश्वलइतिपंचभिः । आश्वलनामाजनकस्यहोताऋग्वेदोक्तकर्मकर्ताआगात्आगतः । तथाजरत्कारुपुत्रआर्तभागनामा ४२

भुज्युरिति । तथाभुज्युनामालाह्यायनिर्लह्यनामकस्यापत्यंलाह्यस्तस्यापत्यंलाह्यायनिरागतः तिकादित्वात्फिञ् तथाचाक्रायणश्चक्रनामकस्ययुवापत्यमुपस्तनामाऽऽगतः तथाकौषीतकेयःकुषीतकस्यापत्यं शुभ्रादित्वाड्ढक् कहोलनामाऽऽगतः तथागार्गीस्त्रीब्रह्मवादिनीब्रह्मनिष्ठा तथाआरुणिररुणस्यापत्यमुद्दालकनामागतः । यःश्वतोगार्ग्याउक्तेःप्रश्नपरंपरारूपायामध्येवदन्याज्ञवल्क्यंपृच्छन्निरूपयिष्यतइतिशेषइतिद्वयोरर्थः ४३ । ४४ शाकल्यश्चेति । शकलस्यापत्यंशाकल्योविदग्धसंज्ञश्चागतः कीदृशोवावदूकोऽतिवादीअतिमानोयाज्ञवल्क्यस्यसदाद्वेष्टाचेति ४५ याज्ञवल्क्यश्चेति । याज्ञवल्क्यश्चसशिष्यआगतः ४६ अन्येचउक्तानुक्ताःसशिष्याआगताइत्याह आश्वलाद्याइति । मिलिताःसंघीभूताअभूवन् ४७ याज्ञवल्क्यागमोपायमिति । एवंजनकोराजानैर्याज्ञवल्क्यंद्विपद्भिःपुरोहिताद्यैरवेक्षितोपितद्दर्शनप्रतिबंधेसावधानैःप्रायोदृष्टिगोचरीकृतोपियाज्ञवल्क्यागमोपायंकृतवान्सन्कुत्रचित्प्रसंगेसमवेतान्द्विजानिदंवाक्यंसभायामाह इदंकिं हेविप्राअहंभूरिदक्षिणैरश्वमेधाद्यैर्यज्ञैर्देवान्यष्टुमिच्छामितत्रभवंतोऽनुजानंतु अहंदिशोघोषयिष्यामियज्ञारंभसूचकडिंडिमशब्देनपूरयिष्यामीति । इतिराज्ञोक्तेसतितैर्विप्रैराजाऽऽज्ञातःयष्टुमारभ्यतेतिशेषइतिद्वयोरर्थः ४८ । ४९

भुज्युर्लाह्यायनिस्तद्वदुषस्तोब्राह्मणोत्तमः ॥ चाक्रायणश्चसर्वज्ञःकहोलोपिद्विजोत्तमः ४३ कौषीतकेयश्चतथास्त्रीगार्गीब्रह्मवादिनी ॥ उद्दालकश्चारुणिर्योगार्ग्युक्तेर्मध्यतोवदत् ४४ शाकल्यश्वविदग्धाख्योवावदूकोतिमानभाक् ॥ याज्ञवल्क्याययोद्वेष्टिसर्वदापापमोहितः ४५ याज्ञवल्क्यश्चमतिमांश्चतुर्वेदविशारदैः ॥ बहुभिःसंवृतःशिष्यैर्भास्करोभगणैरिव ४६ आश्वलाद्याश्चमुनयःशिष्यैःस्वैःस्वैःसमावृताः ॥ अन्येचशिष्यसहितामिलिताःकोटिशोभवन् ४७ याज्ञवल्क्यागमोपायंकृतवांस्तैरवेक्षितः ॥ प्रसंगेकुत्रचिद्विप्रानिदमाहकृतांजलिः ॥ पुरोहितमुखान्सर्वान्सभायांसंस्थितोनृपः ४८ यष्टुमिच्छाम्यहंविप्रायज्ञैस्तैर्भूरिदक्षिणैः ॥ अनुजानन्तुमांसर्वेघोषयिष्याम्यहंदिशः ४९ तत्रतेषूपविष्टेषुब्राह्मणेषुमहात्मसु ॥ सर्वज्ञेषुबुभुत्साभूदनूचानतमंप्रति ५० सर्वएतेमहात्मानोवेदवेदांगपारगाः ॥ सदाचाराःसशिष्याश्चह्येषुकोभ्यधिकोद्विजः ५१ एतत्कथंहिविज्ञेयमाधिक्यंब्राह्मणोत्तमे ॥ कस्मैचिच्चेदहंप्रष्टासब्रूयात्स्वमनोगतम् ५२ यस्ययत्रभवेद्द्वेषःसतंनिंदेद्धिसर्वथा ॥ अपिदेवंगुरुंचैवब्रह्माणंवास्वयंभुवम् ५३ यस्ययत्रभवेत्स्नेहस्तंस्तुवीतससर्वथा ॥ अप्यक्षरैकविज्ञानरहितंहालिकोपमम् ५४ उदासीनोनजानातिगुणान्दोषांश्चकस्यचित् ॥ तद्वक्तःस्वयंज्ञातेनिर्णयोमेभविष्यति ५५

तत्रेति । तत्रयागदेशेतेष्वभ्यागतेषुब्राह्मणेषूपविष्टेषुसत्सुसर्वज्ञेषुएतेषुसर्वेषुज्ञेषुमध्येकोवाऽतिशयेनानूचानःसांगवेदार्थविदित्याकाराजनकस्यबुभुत्साजिज्ञासाऽभूदिति ५० जिज्ञासामेवाभिनयति सर्वइति । स्पष्टम् ५१ तत्राधिकनिर्णयोपायंराजाचिंतयति एतदित्यादिना । एतत्सर्वाधिक्यंब्राह्मणोत्तमेवर्तमानंकथंविज्ञेयंनिर्णेयं । तत्राप्तवक्तृर्दुर्लभत्वात्प्रश्नोनाभ्युपायइत्याह कस्मैचिदिति । सपृष्टः स्वमनोगतंचित्तानुकूलम् ५२ तत्ररागद्वेषाभ्यांप्रायोविपरीताभिधानंदर्शयति यस्येतिद्वाभ्यां । द्वेषेसतिबृहस्पतिप्रभृतीनपिनिंदन्तीति ५३ यस्ययत्रेति । रागेसतिअक्षरस्यपदेकंकेवलमर्थानवगाहिज्ञानंतेनापिहीनंस्तुवंतीति ५४ तर्हिउदासीनंपृच्छेत्याशंक्यानिर्णयासिद्ध्यावारयति उदासीनइति । उदासीनस्याधिक्यव्याप्यगुणानांतदभावव्याप्यदोषाणांचज्ञानाभावात्तन्मुखादाधिक्यानिर्णयासिद्धिरिति । अथत्वमेवोदासीनंप्रतिगुणदोषौश्रावयित्वाधिकंपृच्छेतिचेत्तर्हिसिद्धसाधनमित्याह तद्वक्तइति । तस्यउदासीनस्यवक्तोयोमेनिर्णयोभविष्यतिसस्वयंज्ञातएवभविष्यतिनत्वज्ञाते येमत्तःश्रुतैर्गुणैरुदासीनेनाधिक्यंज्ञेयंतैर्गुणैर्लिंगभूतैरहमेवकुतोनजानीयामितिभावः ५५

१८०

५६

प्रत्येकंप्रश्नपक्षंदूपयति पृच्छामीति । स्पष्टम् ५६ ननुदुरवगाह्यमर्थंतावत्पृच्छ तत्रचयःसम्यक्तरंवदिष्यतितमधिकंजानीहीतिविकल्पमनिष्टप्रसक्त्यादूपयति अथेति । चोद्यैःप्रश्नैः । ज्ञास्यामिनि र्णेष्यामि । मेमह्यम् ५७ फलितमाह विवादमिति । ततउपायांतरस्यासंभवादेपांब्राह्मणानांपरस्परंविवादमेवकारयित्वाआधिक्यस्यनिर्णयंकरोमि विलोकयन्प्रत्यक्षगोचरीकुर्वन्सन्निति ५८ अथ विवादोपायंराजालोचयन्साक्षाद्विवदध्वमितिप्रेरणातुबलवदनिष्टहेतुत्वान्नकार्येत्याह कुरुध्वमिति ५९ तर्हिकिंकर्त्तव्यमतआह ततइति । एतेब्राह्मणाः अनुक्तेकुरुध्वमित्यादिवाक्यइत्यनुपंगः विव देरन्विवादंकुर्युस्तथोपायंकुर्वेइति ६० सचोपायःपणत्वेनापर्यंतंधननिधानमेवेतिसिद्धांतयितुंतदुपपत्तयेधनस्यविवादोपयोगिक्षोभहेतुतामाह विपयइति । बहुलोविपयोविपयभोगसाधनं धनमितियावत् सकस्यनक्षोभकः यतोब्रह्मविदांब्रह्मसंस्थपदेनछांदोग्यश्रुतौप्रसिद्धानांयतीनामपिचित्तक्षोभकः किमुतान्येपामिति ६१ तत्रद्रव्यस्यक्षोभहेतुत्वेद्वारभूतंकामादिचतुष्टयंद्रव्यजन्यत यादर्शयति द्रव्येणेति ६२ तत्रद्रव्यस्यकामहेतुतांस्फुटयन्द्रव्यव्यतिरेकेकामव्यतिरेकंदर्शयति निष्किंचनस्येतिचतुर्भिः । क्षुत्पीडितस्यनिष्किंचनस्यकःकामोनकोपीति यतोदरिद्रइतिसंचिंत्यस्त्री

पृच्छामिचेदमून्विप्रान्प्रत्येकमहमेवहि ॥ तथापिनिर्णयोनस्यात्स्वस्यकोन्यूनतांवदेत् ५६ अथनानाविधैश्चोद्यैरमून्ज्ञास्याम्यहंयदि ॥ तथापिकुपितादद्युः शापंमेब्राह्मणोत्तमाः ५७ विवादंततएवैषांकारयित्वात्रसंसदि ॥ करोमिनिश्चयंतेषामाधिक्यस्यविलोकयन् ५८ कुरुध्वंब्राह्मणाअद्यविवादमितिचेदमून् ॥ वदा मिकुपिताःकुर्युर्भस्मतांममदुर्धियः ५९ ततएतेमयानुक्तेस्वयमेवयथाद्विजाः ॥ विवदेरंस्तथाकुर्वेउपायंब्राह्मणान्प्रति ६० विपयोबहुलःकस्यचेतःसंक्षोभदो नहि ॥ अपिब्रह्मविदांचित्तंक्षोभयेत्किंकुटुंबिनाम् ६१ द्रव्येणजायतेकामःक्रोधोद्रव्येणजायते ॥ द्रव्येणजायतेलोभोमोहोद्रव्येणजायते ६२ निष्किंचनस्यकः कामोनित्यंक्षुत्पीडितस्यहि ॥ अन्नंयावत्प्रियादद्याद्भिताववदहंस्वयम् ॥ दरिद्रइतिसंचिंत्यस्त्रीमुखंनविलोकयेत् ६३ दरिद्रंपुरुषंदृष्ट्वानार्यःकामातुराअपि ॥ स्प्रष्टुंनेच्छंतिकुणपंयद्वत्कृमिविदूषितम् ६४ ब्राह्मादिभ्योविवाहेभ्यःप्राप्तानारीपतिव्रता ॥ भर्तुर्दरिद्रस्यमृतिंवांछतिक्षुधयार्दिता ६५ दारिद्र्यमंजनंप्रोक्तंनरा णांधर्मदर्शने ॥ दरिद्रःक्वासुचित्कामंनकुर्याज्जननीष्विव ॥ अन्नमेकंविहायार्यंकिंचिन्नेच्छतिकर्हिचित् ६६ विवेकीवदरिद्रोयंकोपंनकुरुतेक्वचित् ॥ राजादिभ यतोनित्यंधर्मराजभयात्तथा ६७ पुराकृतानांपापानांफलमेतत्समाप्तवान् ॥ दारिद्र्यंनामकिंनामभूयस्तस्मात्परंभवेत् ६८

मुखंनपश्यति इतिकिं यावदन्नंप्रियाविवाहादिसंपादिताऽऽदद्यात्भोजनार्थंगृह्णीयात्तावदहमेवाग्निप्रियायाअन्नंकुतोदास्यामीति ६३ स्त्रियोपितंनकामयंतेइत्याह दरिद्रंपुरुषमिति । कुणपंशवम् ६४ दरिद्रेस्त्रीणांविरागंकैमुत्येनस्पष्टयति ब्राह्मादिभ्यइति । 'ब्राह्मोविवाहआहूयदीयतेशक्त्यलंकृता' इत्यादिनाब्राह्मादिविवाहायाज्ञवल्क्यादिस्मृतिपुप्रसिद्धास्तेभ्योहेतुभ्यःप्राप्तापिपतिव्रतापिनारीक्षुध यातुरासतीदरिद्रस्यभर्तुर्मृतिमिच्छतीति ६५ दारिद्र्यमिति । श्रीमदांधतानिवर्तकंधर्मरूपनिधानस्यदर्शकंचदारिद्र्यंसिद्धांजनमिति यतोजननीवत्क्वासुचिदपिनारीपुकामनांनकरोतिअन्नमात्रमि च्छतिचेति ६६ दरिद्रेकोपाभावंस्फुटयति विवेकीवेतिपञ्चभिः ६७ पुराकृतानामिति । एवंविचार्यदरिद्रःपापंनकुरुते । एवंकथं अहंपुराकृतानांपापानांफलंदारिद्र्यरूपंसमाप्तवान्प्राप्तोस्मिततो दारिद्र्यात्परमधिकंभूयःपुनःकिंपापफलंस्यादितियतोजनन्यादीनामपिदरिद्रोऽनादरणीयःस्यात्महापापिवदिति । इतःपरमुक्तावस्थाप्राप्त्यनंतरमपिफलंपश्यन्नहंदरिद्रत्वहेतुभूतंपापंकथंकुर्यां सर्पंमृत्यु हेतुभूतंदृष्ट्वापिकोलंघयेदितित्रयाणांसंबंधः । उक्तविचारेणमोहाभावोपिदर्शितः ६८

६९ । ७० अत्रापिकैमुत्यमाह दरिद्रइति । गंधोलेशः । पापंहिंसादिरूपम् ७१ लोभाभावमापिदरिद्रेदर्शयति परेति । तस्मात्परस्मात् अयंदरिद्रःक्षुत्पीडितोप्यल्पेनतुष्यतीति ७२ एवंधनव्यतिरेकेदोषाणांव्यतिरेकमभिधायाथधनान्वयेदोषान्वयंदर्शयति समर्थइति । समर्थोधनमिदांधःसन्स्वबलेनराजादिकमवजानातिनगणयति ततःसर्वदोषभाग्भवतीतिभावः ७३ तत्र मोहस्यफलंलोकद्वयेप्यनर्थप्राप्तिंदर्शयति असह्यमिति । परदारिकादिपुप्रसिद्धमीदृशंदुःखमिति ७४ समर्थेलोभंस्फुटयति लोभश्चेतित्रिभिः । जातवेदसाऽग्निना अग्निसाधर्म्यमुत्तरार्द्धेनोक्तमिति ७५ उत्तरोत्तरेच्छामुदाहरति पृथिवीमिति ७६ लोभमोहयोःसमुच्चितयोःकार्यंसमर्थेदर्शयति समर्थइति । लोभेनपरार्थंहृत्वासर्वशोच्यतामापन्नोपियत्परानुपहसतितन्नराधमतांविनानघटतेइति ७७ समर्थस्यमोहमभिनयति समर्थोमोहमितिद्वाभ्यां । स्वात्मानंतथास्वात्मनोहितकारिणंचद्वेष्टिचेवेतिसंबंधः स्वात्मद्वेषोमूढस्यभगवद्गीतास्वप्युक्तः 'अनात्मनस्तुशत्रुत्वेवर्तेतात्मैवशत्रुवत्' इति

जनन्याअपिजायायाःपुत्रादीनांतथैवच ॥ दरिद्रोलंघनीयःस्यान्महापापीवसर्वदा ६९ इतःपरंदरिद्रत्वहेतुभूतंहिपातकम् ॥ पश्यन्फलंकथंकुर्यात्सर्पस्येवात्रलंघनम् ॥ विचार्यैवंदरिद्रोयंकुरुतेपातकंनहि ७० दरिद्रोधर्मविज्ञानगंधेनरहितोपियः ॥ नसोपिकुरुतेपापंधर्मज्ञःकिंपुनःपुमान् ७१ परदारान्परद्रव्यंभीतस्तस्मान्नचेच्छति ॥ क्षुधयापीडितश्चायंतुष्यत्यल्पेनसर्वदा ७२ समर्थःश्रीमदांधोयंराजानंदेवतांगुरुम् ॥ अवजानातिसहसास्वात्मनोबलमाश्रितः ७३ असह्यंदुःखमाप्नोतिलोकद्वयभयंकरम् ॥ कीर्तिहानिंचधिग्वादंसद्योगच्छतिमोहितः ७४ लोभश्चास्मिन्समर्थेस्यात्सदृशोजातवेदसा ॥ यावद्यावदवाप्नोतितत्तोभूयःसइच्छति ७५ पृथिवींधनपूर्णांचेदिमांसागरमेखलाम् ॥ प्राप्नोतिपुनरप्येषस्वर्गमिच्छतिनित्यशः ७६ समर्थःस्वात्मलोभेनपरदारधनादिकम् ॥ हृत्वाचोपहसत्यन्यान्सर्वशोच्योनराधमः ७७ समर्थोमोहमापन्नोनजानातिहिताहितम् ॥ स्वात्मानंद्वेष्टिचैवायंस्वात्मनोहितकारिणम् ७८ मातरंपितरंपुत्रान्ब्राह्मणांश्चबहुश्रुतान् ॥ कर्मणामनसावाचासमर्थोहंतिमोहतः ७९ दरिद्रस्यनलोभोस्तिनमोहश्चमहात्मनः ॥ इत्थमेषविचार्यैवसुखंतिष्ठतिनिश्चलः ८० मह्यंकोपिकदाचिद्वायाचमानायनित्यशः ॥ नदद्यादन्नमात्रंचकिमर्थंकांक्षयाम्यहम् ८१ इयंमातापिताचाथबांधवोहितकृत्तथा ॥ एतेमह्यंवदेयुर्यत्करणीयंमयाहितत् ८२ ततोधनेनसर्वेस्युःकामक्रोधादयोभुवि ॥ अपिब्रह्मविदांकिंतुनराणांतुबहिर्दृशाम् ८३ ततोधनमपर्यंतमधिकायपणीकृतम् ॥ सभायांस्थापयिष्यामिब्राह्मणायमहात्मने ८४ अधिकेनगृहीतेस्मिन्नपरेक्रोधमूर्छिताः ॥ सर्वएवकरिष्यंतिविवादंस्वयमेवहि ८५ नचैवंममपापंस्याद्राज्ञांधर्मेकृतेमया ॥ उपायेनैवविज्ञेयोराज्ञासर्वाधिकोद्विजः ८६

७८ हितकारिपुद्वेषमभिनयति मातरमिति । मोहतःपूज्यानामपकार्यत्वेनदर्शनात्मकात् ७९ दरिद्रेउक्तदोषाभावइत्याह दरिद्रस्येति । एषदरिद्रइत्थमुत्तरश्लोकद्वयोक्तप्रकारेणविचार्यैनिश्चलउग्रममकुर्वन्सुखंतिष्ठति ८० इत्थंपदार्थप्रकारमभिनयति मह्यमितिद्वाभ्यां । मह्यंयाचमानायापिकोपिअन्नमात्रमपिनदद्यादतःकामनाव्यर्थेतिविचारोलोभनिवर्तकः ८१ मोहनिवर्तकंविचारमाह इयमिति । मातृप्रभृतीनामाज्ञामयावश्यमनुष्ठेयेत्यर्थः ८२ फलितमाह ततइति ८३ एवंधनस्यक्षोभहेतुतायस्योपायस्यविवक्षयावर्णितातमुपायंसफलमभिनयति ततोधनमिति । अपर्यंतमतिप्रचुरमितियावत् अधिकायाधिकंनिर्णेतुंपणीकृतंग्रनेत्थापितद्रव्यभावंनीतंधनंमहात्मनेविप्रायस्थापयामीति ८४ तत्फलमाह अधिकेनेति । अस्मिन्पणीकृतेधने ८५ नन्वेवंविप्राणांक्षोभहेतोस्तवपापप्रसक्तिरित्याशंक्याह नचैवमिति । राज्ञांधर्मोनीत्याभीष्टसाधनं । तमेवप्रकृतेयोजयति उपायेनेति । क्षोभस्तुविप्राणांस्वदोषप्रयुक्तोनमत्कृतइतिभावः ८६

सर्वाधिकस्यविप्रस्यमयापात्रतयाभिमतत्वात्पात्रदानप्रयुक्तपरंपरयापिमेदोषप्रसंगोनभविष्यतीत्याह नचैवमिति । एवमुक्तविधयाधनतोधनमादायतस्यसर्वाधिकस्यविप्रस्यपापमपिनभवेत् पापमयोजकसदोषत्वविरोधिनःसर्वाधिकत्वादेवसर्वाधिकःकथंपापंकुर्यादिति ८७ नकेवलंसर्वाधिकस्यानर्थप्रयोजकदोषाभावोनुमेयएवकिंतुयोत्रसंसदिसर्वाधिकतयासंभावितोयाज्ञवल्क्यस्तस्य सर्वदोषराहित्यंप्रत्यक्षायमाणमित्याह अपीतिद्वाभ्यां । स्पष्टम् ८८ । तर्हिवीतरागोयंत्वदर्पितंधनमपिकथंग्रहीष्यतीत्याशंक्यपरोपकारायेत्याह धनंनायमितिद्वाभ्यां । अयंयाज्ञवल्क्यः स्वकामायस्वोपभोगाय अनुग्रहमयःप्रचुरानुग्रहः प्रायइत्युत्प्रेक्षायां । तथाचएवंसंभाव्यते यदयंमुनिरनुग्रहेणैवधनंस्वीकृत्येतान्विप्रान्जेष्यतीत्यर्थः ९० उपकारपरतांस्फुटयति यद्येतदि ति । अस्यधनंशरीरंचपरार्थमित्यर्थः ९१ अस्यधनस्वीकारादिप्रयोजकोनुग्रहोपिप्राधान्येनमद्विषयकएवेतिदर्शयति अस्येति । यथापामरोलिप्सयाभूभृतंराजानंपश्येत्तद्वन्मांयाज्ञवल्क्यो निरीक्षतेततोज्ञायतेअस्यमयिमहान्स्नेहोनुग्रहः । स्निग्धदृष्टेरनुग्रहलिप्सयोरन्यतरव्याप्यत्वाल्लिप्सायावीतरागेबाधादितिभावः ९२ अस्यचवीतरागत्वंक्षोभाभावादिनालक्ष्यतइतिवक्तुंक्षोभनि मित्तंदर्शयति मनसीति । एनंयाज्ञवल्क्यंमनसिनिधायजेतुकामाइतियावत् । ईदृशागर्विताब्राह्मणाःपरस्परंहसंतःसंतोदुरुत्तराणिदुरवगाह्यान्युत्तराणियेषामीदृशानिवाक्यानिभाषंतइति ९३

नचैवंधनतःपातंतस्यविप्रस्यसंभवेत् ॥ सर्वाधिकोधनंप्राप्यपापंकुर्यात्कथंत्वयम् ८७ अपिसर्वाधिकोनूनमेषवाजसनेयकः ॥ सूर्यशिष्योमहाभागोयाज्ञवल्क्यो मुनीश्वरः ८८ नास्यकामोनचक्रोधोलोभोमोहोनचास्यवै ॥ अस्यगर्वोपिनैवास्तियतस्तिष्ठतिमौनतः ८९ धनंनायंस्वकामायस्वीकरिष्यतिकर्हिचित् ॥ अ नुग्रहमयोविप्रःप्रायएतान्द्विजेष्यति ९० यद्येतद्धनजातंस्यादस्यहस्तेमहामुनेः ॥ भूतानामुपकारायशरीरेणसमंसदा ९१ अस्यस्नेहोमयिमहान्विद्यतेयंपुनः पुनः ॥ निरीक्षतेयथाकश्चित्पामरोभूभृतंजनः ९२ मनस्येनंविधायैतेब्राह्मणागर्वमागताः ॥ निरुत्तराणिभाषंतेहसंतइतरेतरम् ९३ अज्ञवच्चैषविप्रेंद्रःशृणोतिवच नानिन ॥ शृण्वन्नपिवचःकिंचिन्नाभाषतेनजडोयथा ९४ इत्यादिबहुधाराजाचिंतयित्वामनोगतम् ॥ कामधेनुसमानानांसहस्रंनिदधौगवाम् ॥ चत्वारिंशत्सहस्रा णिनिष्काणामपिभूपतिः ९५ शृंगेशृंगेगवांराजानिष्काणांविंशतिंद्विसः ॥ प्रत्येकंद्विसहस्रेपुशृंगेष्वर्पितवांस्तदा ९६ शास्त्रोक्तागाश्चसंस्थाप्यब्राह्मणानिदमब्र वीत् ॥ भवतांब्रह्मविच्छ्रेष्ठोयःसएतानयत्विति ९७

एषयाज्ञवल्क्यस्तुनक्षोभंगच्छतीत्याह अज्ञवदिति । वचनानितेषामितिशेषः । स्पष्टम् ९४ इत्यादीति । इत्यादिकंविचारंकृत्वागवांसहस्रंतथानिष्काणांदीनाराणांचत्वारिंशत्सहस्राणिस दक्षिनिदधौस्थापितवानिति 'पलेदीनारेपिचनिष्कइत्यमरः ९५ दीनाराणांचत्वारिंशत्सहस्रत्वेहेतुमाह शृंगेइति । द्वियत सहस्रसंख्याकानांगवांद्विसहस्रसंख्याकेषुशृंगेषुसत्सुप्रत्येकंशृंगे शृंगेनिष्काणांदीनाराणांश्रुतौकर्षचतुष्टयात्मकस्यपलस्यपादतयाप्रतिपादितानांविंशतिंश्रुतौद्विरावृत्तदशपदोक्तांबबंधेति । तथाचसहस्रद्वयस्यविंशत्यागुणनेउक्तसंख्यासिद्धिरितिभावः । अत्र यद्यपिभाष्यकारैःश्रुतिगतदशदशपदद्वित्वंवीप्साभिप्रायेणव्याख्यातंपंचपंचपादाएकैकत्रशृंगेबद्धाइत्युक्तेः तत्रचदशसहस्राणिनिष्कसंख्याभवति तथाप्यनेनग्रंथकृताउपाख्यानेपुनात्यंतमाग्रहइ तिशबरस्वामिवचनानुसारेणजनकौदार्यातिशयप्रकटनायचदशदशेतिपदंविंशतिपरतयाव्याख्यातमितिबोध्यम् ९६ अथतान्होवाचेत्यादिद्वितीयकंडिकार्थमुपबृंहयति शास्त्रोक्ताइत्यष्टाविंशति श्लोकैः । शास्त्रेयथोत्तमकल्पेउक्तास्तथाविधास्तागाःसंस्थाप्यब्राह्मणान्प्रतीदंजनकउक्तवानिति । इदंकिं योभवतांमध्येश्रेष्ठोब्रह्मवित्सएतागाःस्वाश्रमंप्रतिनयत्विति ९७

एवमिति । एवंजनकेनोक्तेसतिसर्वेविप्रास्तूष्णीमधोमुखाःस्थिताःसंतएतान्समवेतान्द्विजानतिक्रांतुंविद्याधिक्येनाभिभूयप्रगल्भीभवितुंनशेकुर्नसमर्थाबभूवुरित्यर्थः ९८ तूष्णीमिति । तेषुब्राह्मणेषुतूष्णींभूयस्थितेषुसत्सुयाज्ञवल्क्यःसामवेदपाठिनंशिष्यंप्रत्युवाच ९९ सामेति । हेसामाध्यायिन्त्वमेतागानोस्माकंगृहेशीघ्रंनय किंकृत्वा इतिविघुष्य डिंडिमशब्दवत्स्फुटंकथयित्वा इतिकिं याज्ञवल्क्योब्रह्मिष्ठोऽतिशयेनब्रह्मवित्तयाब्रह्मधनान्गानयतीति १०० सामाध्यायीति । तस्यमुनेःप्रोक्तकारीसामाध्यायीशिष्योयथागुरुणोक्तंतथैवकृतवानिति १०१ ततइति । विनीतासुशिष्यद्वाराआश्रमंप्रतिप्रेषितासुसतीषुविप्राःक्रोधंप्रापुः १०२ अतुलमिति । जनकस्त्वभीष्टसिद्धिंमत्वानितरांतोषंप्राप्तः । एवंसतियाज्ञवल्क्योयुगपत्समकालमेवजनकस्यब्राह्मणानांचसुखदुःखप्रदोभूदिति १०३ दर्शयन्निति । किंकुर्वन्याज्ञवल्क्यःसुखदुःखप्रदोभूदितिदर्शयन् । इतिकिम् यत्सांख्याआहुर्वस्तुनिविषयस्वरूपेसुखदुःखेवर्तेतेइतितथानमंतव्यंकिंतुस्वस्वमनस्येववर्तेते तत्रस्निग्धेस्नेहशालिनिचित्तेसुखंयथाजनकस्य तथाद्विष्टेद्वेषशालिनिचित्तेदुःखंयथाब्राह्मणानामिति १०४ सुखदुःखयोर्मनोनिष्ठत्वेकल्पनाजन्यत्वंहेतुमाह कल्पनातइति ।

एवमुक्तेथविप्रेंद्राःसर्वेतूष्णीमवस्थिताः ॥ अधोमुखाअतिक्रांतुंशेकुर्नैतान्द्विजोत्तमान् ९८ तूष्णींभूतेषुतेष्वेषयाज्ञवल्क्योभ्यभाषत ॥ साम्नामध्ययनेयुक्तंशिष्यंस्वोक्तार्थकारिणम् ९९ सामाध्यायिन्गृहेनोगानयशीघ्रंविघुष्यच ॥ ब्रह्मिष्ठोयाज्ञवल्क्योगानयतीतिद्विजन्मनाम् १०० सामाध्यायीप्रोक्तकारीशिष्यस्तस्यमुनेस्ततः ॥ तथैवकृतवान्यद्वद्गुरुणोक्तंमहात्मना १०१ ततोगोषुविनीतासुब्रह्मिष्ठेनद्विजन्मना ॥ चुकुधुःसकलाविप्रानानादेशसमागताः १०२ अतुलंप्रापसंतोषंजनकोमिथिलेश्वरः ॥ युगपद्याज्ञवल्क्योभूत्सुखदुःखकरस्तदा १०३ दर्शयन्सर्वभूतानांसुखदुःखेनवस्तुनि ॥ किंतुस्वस्यैवमनसिस्निग्धेद्विष्टेचसर्वदा १०४ कल्पनातःप्रजायेतेसुखदुःखेअकारणे ॥ महावनेयथाजंतोःप्राणिशून्येस्वमानसात् १०५ चलितान्यासनान्येषांश्मश्रूणिचचकंपिरे ॥ अधरादंतपंक्तिर्याप्रविष्टाऽऽस्येद्विजन्मनाम् १०६ केचिदश्रूणिमुमुचुर्नेत्रैर्लोहितपूरितैः ॥ जहसुःकेचिदेवामीउन्मत्तसदृशाद्विजाः १०७ शब्दश्चाभून्महांस्तत्रविप्राणांयज्ञमंडपे ॥ क्षोभोयथासमुद्रस्यपर्वकालेउपागते १०८ धिक्कुलानिमहाशालाअस्माकंधिक्चजीवितम् ॥ गुरुशुश्रूषणंधिग्धिग्धिग्वेदाध्ययनंतथा १०९ विद्याविदस्तथाशिष्यान्कीर्तिनोधिग्धिगेवहि ॥ एकएवयतोविप्रोह्यवजानातिनोखिलान् ११० इत्यादिवादिनोविप्रानालोच्यचविचार्यच ॥ प्रद्युम्नमभ्याययौकोपात्स्खलन्निवहसन्निव ॥ आगत्यचमुनिंशांतंभर्त्सयन्निदमब्रवीत् १११ याज्ञवल्क्यदुराचाररेरेवाजसनेयक ॥ अशुश्रूषितविप्रेंद्रगुरुपादांबुजद्वय ११२

कल्पनारमणीयत्वाद्यवगाहीसंकल्पस्ततएवसुखदुःखेजायेते यतःअकारणेबाह्यकारणहीने । तदुदाहरति महेति । यथाप्राणिशून्येमहावनेस्वमानसादेववीतरागाणांसुखंरागिणांदुःखंचजायतेइति १०५ अथविप्राणांदुःखप्रयुक्तंकोपमभिनयति चलितानीतित्रिभिः । याअधराअधस्तनादंतपंक्तिःसामुखस्यांतःप्रविष्टाऊर्ध्वदंतपंक्त्याअधरस्याक्रमणादिति १०६ कोपावेशस्यभूतावेशसाम्यमाह केचिदिति । लोहितेनरुधिरेणपूरितैरिवनेत्रैरश्रूणिमुमुचुः १०७ शब्दश्चेति । पर्वणिपूर्णिमायाम् १०८ धिगिति । महाशालाः महतीःशालाअध्यापनगृहाणिधिगिति १०९ विद्येति । विद्याविविधाःविदंतिजानंतीतिविद्याविदः एतादृशान्शिष्यान्धिगिति । सर्वत्रहेतुः एकएवेत्यादिः । अवजानातिअतिक्रामति ११० इत्यादीति । एवंवदतोविप्रानालोच्यकोपात्स्खलन्निवहसन्निवचअभ्याययौआगत्यचशांतंयाज्ञवल्क्यंप्रतीदंवक्ष्यमाणमुक्तवान् । आश्वलंनामाइतिशेषः १११ याज्ञवल्क्येति । अशुश्रूषितंसम्यगसेवितंविप्रेंद्रस्यप्रसिद्धविप्ररूपस्यगुरोःपादांबुजद्वयंयेनसतथा । अनेनवैशंपायनसंप्रदायत्यागोध्वनितः ११२

अस्माकमिति । किमस्माकंब्राह्मणानांत्वमेवाधिकोसितदपितवाधिक्यंगर्वलोभाभ्यामेवनविद्ययाइति । कीदृशानामस्माकं ब्रह्मकल्पानांहिरण्यगर्भसमानांमहात्मनांगर्वादिहीनानांउपशम शीलानांचतुर्दशादिविद्यानांविदुपांतर्कस्यमननस्यसिद्धये 'अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः । पुराणंधर्मशास्त्रंचविद्याएताश्चतुर्दश । आयुर्वेदोधनुर्वेदोगांधर्वंचेत्यनुक्रमात् । अर्थशास्त्रंत थेत्येताविद्याअष्टादशस्मृताः' इतिद्वयोरर्थः ११३ । ११४ निर्लज्जइति । कोवानिर्लज्जःसन्पंडितोनभूयादिति । तत्रत्वमेवोदाहरणमित्याह ब्रह्मिष्ठइति ११५ तत्रवादादोप्रसिद्धंवा चाथर्पणंनिदर्शयति कुलेइति । कुलीनान्पन्नगान्वासुक्यादीन्कःपदापादेनस्पृशेत् । शंभुवद्योगहीनःकालकूटंकःपिबेत् ज्वलितंवन्हिंमुष्टिनाकोवद्धानयेत् कोवाइमान्विप्रांस्त्वांविनाकोपयेत् वाक्यार्थयोःसदृशयोरक्यारोपोनिदर्शनेतिलक्षितोनिदर्शनालंकारः ११६ । ११७ एकैकोपीति । स्पष्टम् ११८ इत्यादिभिरिति । इत्यादिवाक्यरूपशल्यैःकर्णच्छिद्रद्वाराआश्वलेनताडि तोपियाज्ञवल्क्योमेघैःपापाणवृष्ट्याताडितगिरिवन्नक्षुब्धः प्रत्युतहसन्सन्निदंवक्ष्यमाणश्लोकचतुष्टयात्मकंवाक्यमुवाचेतिद्वयोरर्थः ११९ । १२० अनौद्धत्यंब्रह्मविदोलिङ्गमितिसूचयन्याज्ञव





अस्माकंब्रह्मकल्पानांब्राह्मणानांमहात्मनाम् ॥ गर्वलोभादिदोषौघवर्जितानांशमात्मनाम् ११३ चतुर्दशादिविद्यानांवेत्तॄणांतर्कसिद्धये ॥ त्वमेवैकोधिकोजातो गर्वलोभाधिकोधमः ११४ निर्लज्जःपंडितोभूयान्नकोनाममहीतले ॥ ब्रह्मिष्ठोयत्त्वमस्माकंमुनीनांब्रह्मवादिनाम् ११५ कुलेजातान्महावीर्यान्पन्नगान्कःपदास्पृ शेत् ॥ कालकूटंविषंकोवाभक्षयेद्योगवर्जितः ११६ मुष्टिनाज्वलितंवन्हिंबद्धाकःस्वगृहंनयेत् ॥ कःकोपयेदिमान्विप्रान्नानादेशसमागतान् ॥ मुक्त्वात्वांगर्वलो भाढ्यंदुर्विनीतंद्विजाधमम् ११७ एकैकोपिदहेद्विश्वंकुपितोब्राह्मणोत्तमः ॥ नानादेशाइमेसर्वेकिंपुनस्त्वांद्विजाधमम् ११८ इत्यादिभिस्तुवाक्शल्यैःकर्णरंध्रेप्र ताडितः ॥ आश्वलेनतदाविप्रोयाज्ञवल्क्योमहायशाः ११९ गिरिर्जलधरैर्यद्वद्बहुपाषाणवृष्टिभिः ॥ जगामाल्पंचनक्षोभंहसन्निदमुवाचह १२० ब्रह्मिष्ठोत्रभवे द्योयोह्यधिकोब्राह्मणोत्तमः ॥ तस्मैतस्मैनमस्कुर्मोवयमाश्वलसर्वदा १२१ हेम्नात्रसहितागावोदृष्टास्तास्त्वभिलाषतः ॥ हृतामयाकुतोविप्राःकोपंकुर्वंत्यकारणम् १२२ राजादाताह्यहंहर्तागवांकेनद्विजन्मनाम् ॥ कोपोनिष्कारणेजातोवदाश्वलमहामुने १२३ एतेप्येवंप्रगृह्णंतुराज्ञोस्तुबहुलंधनम् ॥ मद्वद्धनार्थिनश्चेत्स्यु स्त्वंवाश्वलयथासुखम् १२४ एवमुक्तस्ततःक्षुब्धःपुनरप्याश्वलोमुनिः ॥ घृताहुत्यायथावन्हिर्वादायोवाचतंमुनिम् १२५

ल्क्यआह ब्रह्मिष्ठइतिचतुर्भिः । हेआश्वलअत्रब्राह्मणसमवायेयोयोब्रह्मिष्ठतयाधिकोभवेत्तस्मैतस्मैवयंनमस्कुर्मः १२१ तर्हिगावःकुतोहृताइतिचेद्द्रोपुकामनोदयादित्याह हेम्नेति । सुवर्णस हितागाःसंवीक्ष्यतास्वभिलाषात्कामनातस्तागावोमयाहृतास्तत्रकिमर्थंब्राह्मणाःकुप्यंतीति १२२ यदिब्राह्मणानांस्वंकिंचिद्ध्रियेततर्हितेकुप्यंतुनाम मयातुराज्ञादत्तंहृतमतोऽयुक्तःकोपइत्याह रा जेति १२३ नाप्यहंब्राह्मणेभ्योराजकर्तृकदानस्यप्रतिबंधकोयेनतेकुप्येयुरित्याह एतेपीति । यदिमद्वद्धनार्थिनएतेब्राह्मणास्तर्हितेपिप्रतिगृह्णंतुत्वमपिचप्रतिगृह्णीष्व राजाचबहुलधनोऽस्तु युष्मभ्यंददानुचनाहंवारयेइति १२४ एवमुक्तआश्वलोघृताहुत्यावन्हिवत्पुनरपिक्षुब्धःसंस्ततोयाज्ञवल्क्येनब्रह्मिष्ठस्यनमस्कार्यतायोक्तातांमनसिनिधायतंयाज्ञवल्क्यंप्रविवादायवादंकर्तुमुवाचे तिसंबंधः १२५

अथाश्वलप्रश्नोत्तररूपस्य कण्डिकाष्टकस्यार्थं संगृह्णाति याज्ञवल्क्येतिचतुर्भिः । आश्वलः सर्वप्रश्नानामादौ याज्ञवल्क्येति संबोध्य अष्टौ प्रश्नानकरोत् । तत्र तेषु मध्ये चत्वारः प्रश्ना अतिमोक्षाः मोक्षः कर्मिणां जनानां वागादीनामध्यात्मपरिच्छेदलक्षणस्य मृत्योर्निवृत्तिसाधनं ज्ञानं फलत्वेन ततोऽप्युत्कृष्टा वागादीनामग्न्यादिभावप्राप्तिरतिमोक्षस्तद्विषयकत्वात्प्रश्ना अप्यतिमोक्षा इति । अपरे चत्वारः प्रश्नाः संपदः संपद्विषयकाः संपन्नाम निकृष्टे र्किंचित्साम्येन उत्कृष्टदृष्टिः यथा श्राद्धे अन्नेऽमृतदृष्टिर्ब्राह्मणे विष्णुदृष्टिः सापि कर्मसमृद्धिकरी इत्यष्टावपि प्रश्नाः कर्मसंबंधिन एवेति १२६ तत्रातिमोक्षविषयकंडिकाचतुष्टयस्य प्रश्नभागानामर्थं संगृह्णाति व्याप्तमिति । हे याज्ञवल्क्य सर्वं मृत्विगादिसाधनैः संपन्नमपि कर्माग्निहोत्रादिकं मृत्युना प्रमादरूपेण परिच्छेदहेतुना व्याप्तमेव यद्यपि शास्त्रोक्तानुष्ठानेनाशास्त्रीया इंद्रियादिवृत्तयो निवृत्तास्तथापि परिच्छेदो ज्ञानं विना न निवर्तत इति भावः । अदः परिच्छिन्नं सर्वं त्यक्ता तृन्प्रत्ययः एतत्त्यागशीलः अपरिच्छिन्नफलगामीतियावत् ईदृशो यजमानः कथं केन ज्ञानलक्षणप्रकारेण भवेदिति प्रथमः प्रश्नः । तथाऽहोरात्ररूपकालेन सर्वं परिच्छिन्नं तदतिक्रमः केन ज्ञानेनेति द्वितीयः । तथा शुक्लकृष्णपक्षरूपकालेन सर्वं परिच्छिन्नं तदतिक्रमः कथमिति तृतीयः । तथा एतं देहं त्यक्ता निराश्रये निरालंबने आकाशे गच्छन्यजमानः केन साधनेन यायात् गच्छेदिति चतुर्थ इत्यर्थः १२७ प्रश्नचतुष्टयस्य यथाक्रममुत्तराणि दर्शयन्नुक्तकण्डिकाचतुष्टयस्योत्तरभागार्थं संगृह्णाति इत्युक्त इति । इत्याश्वलेनोक्ते पृष्टे सति चतुर्णां प्रश्नानामुत्तरजातं क्रमेण मुनिर्याज्ञवल्क्य आह स्म कथमिति चेच्छृणु । अध्यात्मं या यजमानस्य वाक्तस्या अधिदैवं रूपमग्निस्तस्या एवाधियज्ञं यज्ञे वर्त्तमानं रूपम् होता नाम ऋग्वेदवित् ऋत्विक् एतेषां त्रयाणामभेदावगाहिनी अहमधिदैवाध्यात्मकयजमानवाग्रूपोऽग्निरित्याकारा होत्रा क्रियमाणा दृष्टिर्यजमानस्य

याज्ञवल्क्येति संबोध्याद्यादावष्टावथाकरोत् ॥ प्रश्नांस्तत्रापि चत्वारोऽतिमोक्षाः संपदोऽपरे १२६ व्याप्तं हि मृत्युना सर्वमह्ना रात्र्या तथैव च ॥ पक्षाभ्यां शुक्लकृष्णाभ्यामदस्त्यक्ता कथं भवेत् ॥ यजमानस्तथा यायात्केन खेऽत्र निराश्रये १२७ इत्युक्ते क्रमतः प्राह चतुर्णामुत्तरं मुनिः ॥ वाक्चक्षुःप्राणमनसामधिदैवात्मना द्विज ॥ होत्रावाध्वर्युणा तद्वदुद्गात्रा ब्रह्मणापि च १२८ चतुर्णामपि कर्माणि प्रत्येकं सफलानि च ॥ संपद्रूपाण्युवाचासौ तिसृभिस्त्वेवमादिना १२९

प्रथमोक्तमृत्योस्तरणसाधनमेवमितरदपीति भावः । तथा च वाक्चक्षुःप्राणानामधिदैवरूपेणाग्निसूर्यवाय्वात्मकेन यथाक्रममैक्यमनुसंदधानेन होत्राध्वर्युणा उद्गात्रा च ऋत्विजा यजमान उक्तमृत्युप्रभृतित्रयकृतं परिच्छेदत्रयं तरति । तथा मनश्चंद्रात्मैक्यं पश्यता ब्रह्मणा वेदत्रयविदा ऋत्विजा तज्ज्ञानप्रभावेणाकाशे सालंबनो गच्छतीत्यर्थः ' अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ' इत्यमरः १२८ अथ होत्रादीनां चतुर्णां संपद्रूपज्ञानविधायकस्य कंडिकाचतुष्टयस्यार्थं संगृह्णाति चतुर्णामिति । अयं याज्ञवल्क्यः पूर्ववत्पृष्टः सन् चतुर्णां होत्रादीनां कर्तव्यानि संपद्रूपाणि सफलानि कर्माणि तिसृभिरित्यादिश्रुतिग्रंथेन उवाचेति संबंधः । तत्र कतिभिः ऋग्जातिभिः किंरूपेण चिंतिताभिर्होता कर्म कुर्वन् किं फलं साधयतीति प्रश्नोत्तरं याज्यापुरोनुवाक्याशस्यासंज्ञाभिः यजेति प्रैषानंतरं पठ्यमाना याज्या अनुब्रूहीति प्रैषानंतरं पठ्यमाना अनुवाक्या एकनिःश्वासेन पठ्यमाना शस्या इति लक्षिताभिः त्रित्वरूपसाम्येन त्रिलोकीरूपतया होत्रा दृष्टाभिः सर्वं प्राण्यात्मकं लोकत्रयं यजमानस्य साधयतीति । एवमध्वर्युणाहुतासु आहुतिषु उज्ज्वलत्वसशब्दत्वाधोगामित्वैस्त्रिविधासु उज्ज्वलत्वादिसाधर्म्येण देवपितृमनुष्यलोकत्वेनाध्वर्युणा दृष्टाभिस्तल्लोकत्रयजयः फलमिति द्वितीयमुत्तरम् । तथोद्गात्रा गीयमानासु पूर्वोक्तयाज्यादृक्षु प्राणापानव्यानरूपतया क्रमेणोद्गात्रा दृष्टासु सतीषु भूरादिलोकत्रयजयः फलमिति चतुर्थमुत्तरम् । एवं ब्रह्मणा ध्यानमात्रव्यापारकेणानंतवृत्तिकत्वसाम्येन विश्वेदेवतया मनसि चिंत्यमानेऽनंतफलजयो यजमानस्य भवतीति दक्षिणया क्रीतैः ऋत्विग्भिः कृतस्य कर्मणः फलस्य यजमानगामित्वादिश्रुतोक्तं तृतीयमुत्तरमिति १२९

आश्वलब्राह्मणार्थमुपसंहरति अष्टाविति। सआश्वलउतयाज्ञवल्क्यस्यांजेयतामनुसंदधानउपरराममहप्रश्नव्यापारान्निववृते। मयाऽजितमार्तभागःकथंस्विदेनंजयत्वित्याशयेनार्तभागमुखंपश्यन्निति ३०
अथार्तभागप्रश्नपंचकतत्समाधानात्मकस्यद्वितीयब्राह्मणस्यार्थंपंचाशच्छ्लोकैःप्रदर्शयंस्तत्रप्रथमप्रश्नसमाधानस्यनवकंडिकामयस्यार्थंपूर्वोक्तोदेवताभावरूपोमोक्षोप्यापेक्षकःग्रहातिग्रहलक्षणमृत्युग्रस्तत्वादितिसूचकंनिबध्नाति आर्तभागइतिपंचदशाभिः । अथजारत्कारवआर्तभागएनंयाज्ञवल्क्यंयाज्ञवल्क्येतिसंबोध्यअल्पकैर्मंदमतिभिर्दुर्भेदंदुःसमाधानंप्रश्नमाहइत्यन्वयः १३१ संग्रहेणप्रश्नोत्तरेपूर्वोत्तरार्धाभ्याममभिनयति ग्रहाइति । ग्रहाणामतिग्रहणांचकासंख्येतिपूर्वार्द्धार्थः । एवमुक्तःपृष्टोवाजसनेयकोयाज्ञवल्क्यइत्थमुवाच इत्थंकथं द्वयेपिअष्टौग्रहाअष्टौअतिग्रहाअप्यष्टौइत्युत्तरार्धार्थः १३२
आर्तभागोहीति । आर्तभागइमंयाज्ञवल्क्यंप्रतिइतिपुनःसग्रहान्ग्रहैःसहितानतिग्रहान्संपृष्टवान् इतिकिंतेग्रहाअतिग्रहाश्चकेकिंस्वरूपाइति १३३ याज्ञवल्क्योग्रहाणांस्वरूपमाह घ्राणमिति । घ्राणादींद्रियाणिजीवस्यबंधकत्वाद्ग्राहाइत्युच्यंते अष्टत्वेतूपपत्तिर्वक्ष्यतेति १३४ केवलानामिंद्रियाणांबंधकत्वमपियदधीनंतान्विषयानतिग्रहत्वेनदर्शयति गंधइति । घ्राणादीनांक्रमेणविषयागंधाद्याः

अष्टौप्रश्नान्विधायैवंसहोतोपरराममह ॥ अशक्तोलज्जितःपश्यन्नार्तभागमुखंमुहुः १३० आर्तभागोह्यथहैनंसजारत्कारवोमुनिः ॥ याज्ञवल्क्येतिसंबोध्यप्रश्नंदुर्भेदमल्पकैः १३१ ग्रहाअतिग्रहास्तद्वत्कतिसंख्याउदीरिताः ॥ उक्तइत्थमुवाचाष्टौद्वयेवाजसनेयकः १३२ आर्तभागोह्यथहैनंसजारत्कारवोमुनिः ॥ पुनःकेतइतीमंसग्रहान्संपृष्टवान्मुनिः ३३ घ्राणंवाग्रसनाचक्षुःश्रोत्रंपंचममीरितम् ॥ मनोहस्तौत्वगित्यष्टौग्रहाउक्तामनीषिभिः ३४ गंधोनामरसोरूपंशब्दःकामोपिकर्मच ॥ अतिग्रहाइमेस्पर्शसहिताविषयामताः १३५ समुद्रेपतितोयद्वद्गृह्यतेत्रग्रहैर्नरः ॥ तेचाप्यन्यैरतिग्राहैर्गृह्यंतेभ्यधिकैर्यथा १३६ तथासंसारगोजंतुरिंद्रियैर्भक्ष्यते ग्रहैः ॥ इंद्रियाणिस्वविषयैर्भक्ष्यतेतान्यतिग्रहैः १३७ गृह्णंतिपुरुषंह्येतेमार्जारोमूषकंयथा ॥ इंद्रियाणिचगंधाद्यामत्स्यहेवजलाशयात् १३८ ग्रहाविष्टोयथाजंतुर्नपश्यतिहिताहितम् ॥ इंद्रियाश्रयवानेवंनपश्यतिहिताहितम् १३९ मकरोहियथाबद्धोनरस्याभिमुखंव्रजेत् ॥ अनिच्छन्नपिहंतुंसग्रहोतिग्रहमागतः १४० घ्राणादीनींद्रियाण्येवंगंधाद्यैर्विषयैःसदा ॥ ग्राहाअतिग्रहैरेतेगृहीतायांतिसर्वतः १४१

कामइच्छाकर्मक्रिया १३५ उक्तानांग्रहत्वमतिग्रहत्वंचोपपादयति समुद्रइत्यादिना । ग्रहैर्मकरादिरूपैः अतिग्राहैस्तिमिंगिलाद्यैः १३६ दार्ष्टांतिकेयोजयति तथेति । भक्ष्यतेस्वाधीनीक्रियते तथा स्वविषयरूपैरतिग्रहैरिंद्रियाणिभक्ष्यंते पुंबंधनक्रियायांस्वाधीनीक्रियंतइत्यर्थः १३७ एतदेवस्फुटयति गृह्णंतीति । हियतःप्रसिद्धमेतत् एतेइंद्रियग्रहाः तानिइंद्रियाणिचगंधाद्याविषयागृह्णंति यथा मत्स्यहाधीवरोजलाशयान्जलनिवासिनोमत्स्यान्गृह्णातितद्वदिति १३८ ग्रहशब्दोहैमकोशेपूतनादिबालग्रहवाचकोप्युक्तइतस्तत्साम्यमप्याह ग्रहाविष्टइति । इंद्रियाश्रयवान्इंद्रियप्रधानः १३९ विषयाणामतिग्रहत्वेऽभूतोपमामाह मकरइति । यथामकरःकेनचिद्रज्ज्वीबद्धेवप्रेरितःसन्स्वयमनिच्छन्नपिहंतुंनरस्याभिमुखंगच्छेत्तदासग्रहोमकरःअतिग्रहंस्वप्रेरकरूपमागतःप्राप्तःसन्दृष्टांतइतिशेषः १४० दार्ष्टांतिकमाह घ्राणादीनीति । एवंघ्राणादींद्रियरूपाग्रहाएतेगंधादिविषयरूपैरतिग्रहैर्गृहीताःसंतःसर्वतोयांतिपुंसोबंधायप्रवर्ततइत्यर्थः १४१

अथतेषामष्टत्वेउपपत्तिमाह एकादशेतिचतुर्भिः । यद्यपिसांतःकरणज्ञानकर्मेंद्रियाणिएकादशप्रसिद्धानिएवंतद्विषयाअपि तथापिप्राधान्यादष्टावित्युक्तमित्यर्थः । अथवात्वग्घस्तयोरुक्तांतर्गतयोः परिशिष्टानांपादपायूपस्थानामंतर्भावविवक्षयातथोक्तमित्याह त्वग्घस्तयोरिति । मुनेर्याज्ञवल्क्यस्य मतोऽभिप्रेतः १४२ तत्रोपस्थस्यत्वच्यंतर्भावंस्पष्टयति सर्वेति । यद्योषित्समागमात्शिश्नेउपस्थेसुखंजायतेतत्त्वचःसर्वदेहस्थितत्वेनस्पर्शजत्वात्त्वचैवजन्यतेऽतउपस्थस्यतत्रांतर्भावइतिशेषः १४३ पायुपादयोश्चहस्तेक्रियाहेतुत्वसाम्याद्धस्तेऽन्तर्भावइत्याह पद्भ्यामिति । कर्मजातंगमनरूपंमलोत्सर्गरूपंच हस्तवाक्यात्हस्तौवैग्रहइत्यादिश्रुतिरूपात् १४४ हस्तेंतर्भावेउपपत्त्यंतरमाह पाय्विति । अथवापाय्वादीनांनाडीबंधस्यसाम्यमभिप्रेत्यहस्तेपायुपादयोरंतर्भावउक्तः नाडीबंधसाम्येहेतुः विसर्गेति । विसृज्यतेइतिविसर्गोमलंतस्यमोक्षेपायुव्यापरेगमनेपादव्यापारेचक्रियमाणेयतःकरयोश्चलनंस्थूलंसूक्ष्मंवाआकुंचनप्रसारणादिरूपंयतोभवतिततोज्ञायतेनाडीबंधःसमः १४५ अथद्वितीयप्रश्नोत्तररूपायादशमकंडिकायाअर्थमाह एवमितित्रिभिः । स्पष्टम् १४६ तत्रपश्नमभिनयति जडेति । हिरण्यगर्भेपिक्षुत्कामादीनांवर्णितत्वेनोक्तग्रहातिग्रहलक्षणमृत्युनासर्वोलोकोऽन्नवत्क्रोडीकृतः तस्यमृत्योरप्यन्नाकश्चिदस्तिनवा यद्यस्तितर्ह्यनवस्था नास्तिचेन्मोक्षार्थंयत्नोवृथेतिभावः १४७ याज्ञवल्क्योदृष्टांतेनपरिहरति याज्ञवल्क्यइति । सामृत्योर्भक्षिकादेवताजलदृष्टांतेनास्तीतिसंभाव्यतां यतःसर्वभक्षकोपिवन्हिर्जलैर्भक्ष्यतेइतिप्रसिद्धं । तथाचोक्तमृत्योरग्निवत्तापकस्यात्तात्त्वज्ञानात्मकःसुधापूरोस्तीत्येवंसिद्धांतः नचानवस्था कतकरेणुवत्स्वयमुपरमादितिभावः १४८

एकादशग्रहास्तद्वत्तावंतःस्युरतिग्रहाः ॥ यद्यप्येतेतथाप्यष्टौप्रधानाइहकीर्तिताः ॥ त्वग्घस्तयोर्वेतरेषामंतर्भावोमतोमुनेः १४२ सर्वदेहस्थितत्वेनत्वचोयोषित्समागमात ॥ जायतेयत्सुखंशिश्नेस्पर्शजत्वात्त्वचाहितत् १४३ पद्भ्यांचपायुनाचैवकर्मजातंप्रजायते ॥ पायुपादावतोहस्तवाक्याद्युक्तसमौमतौ १४४ पायुपादकराणांवानाडीनांबंधनंसमम् ॥ विसर्गमोक्षेचगतौकरयोश्चलनंयतः १४५ एवमुक्तेपुनःप्रश्नमार्तभागश्चकारह ॥ याज्ञवल्क्येतिसंबोध्यसर्वज्ञंमुनिसत्तमम् ४६ जडाजडमिदंविश्वमन्नंमृत्योःसमीरितम् ॥ मृत्युरन्नंतुयस्याःस्याद्भवेत्सादेवतात्रका १४७ याज्ञवल्क्यइदंप्राहह्यापःसादेवतामता ॥ यतःसर्वादनोवन्हिरद्यतेऽयंजलैःसदा १४८ इत्युक्तेपुनरप्येनमार्तभागोह्यपृच्छत ॥ याज्ञवल्क्येतिसंबोध्यगुह्यमर्थंमहामुनिः १४९ ब्रह्मवादीयदादेहंजह्यात्कितस्यतेसदा ॥ प्राणायथामृतौजंतोरुत्क्रामंतिशरीरतः १५० उत्क्रामंतितथैवास्यतथाचेत्सशरीरभाक् ॥ स्यादज्ञवन्नचेत्केनम्रियतेप्राणसंस्थितौ १५१ एवमुक्तेमुनिःप्राहप्राणानामंतरेवहि ॥ नाशस्तस्मात्पुनर्देहीनस्यान्नाप्यमृतःपुमान् १५२

अथतृतीयप्रश्नोत्तररूपायाएकादशकंडिकायाअर्थमाह इत्युक्तेइतिसप्तभिः । उक्तेसमाहिते एनंयाज्ञवल्क्यं गुह्यंगूढाभिप्रायकं । अयंहिप्रष्टुरभिप्रायः उक्तंतत्त्वज्ञानस्यमृत्युभक्षकत्वंतदानिश्चितंभवेद्यदिब्रह्मविदिकश्चिद्विशेषोदृश्येतसचकथंलोकविरोधादिति १४९ उक्ताभिप्रायेणप्रश्नमभिनयति ब्रह्मवादीतिद्वाभ्यां । ब्रह्मवादीब्रह्मापरोक्षवान्यदादेहंत्यजतितदातथाज्ञवत्तस्यशरीरात्प्राणाउत्क्रामंतिऊर्ध्वंगच्छंतिनवा तथाचेदुत्क्रामंतिचेत्तर्हिसविद्वानपिअज्ञवल्लोकांतरेशरीरभागेवस्यान्नचेदुत्क्रामंतितर्हिप्राणानांस्थितौसत्यांकेनहेतुनासविद्वान्म्रियतेइतिव्यवन्हियते । नहिस्थितप्राणंमृतमितिलोकाव्यवहरंतीतिद्वयोरर्थः १५० । १५१ एवमिति । एवंपृष्टेसतिमुनिर्याज्ञवल्क्यइदंप्राह । इदंकिं विदुषःप्रारब्धक्षयेप्राणानांशरीरांतरेवनाशोविलयोभवतिनोत्क्रमणं । उत्क्रमहेतूनामविद्याकामकर्मणामभावादितिभावः । अयमेवचाज्ञाद्विशेषइत्याह तस्मादिति । तस्मात्प्राणानामंतर्विलयाद्विद्वान्पुमान्पुनर्देहवान्नस्यात् । नापिलोकविरोधइत्याह नाप्यमृतइति । मृङ्धातोरर्थोहिप्राणसंबंधहानिःसाचांतर्विलयेनापिभवतीतिमृतव्यवहारोयुक्तएवेतिभावः १५२

प्राणानामिति । विदुषःप्राणाअंतर्विलीनाइतिकुतोनिश्चितमितिशंकावारकंहेतुंदेहस्योच्छूनत्वंशोथशालित्वरूपंप्राहस्मयाज्ञवल्क्यः । कीदृशमुच्छूनत्वमाध्मानकारणं आध्मानंवायोरंतःपूरणंतत्कारणं यस्यतत्तथा । उच्छूनत्वस्यमरणालिंगत्वोपपादिकांव्यतिरेकव्याप्तिमाह जीवतइति । तदुच्छूनत्वंजीवनावस्थायांनदृश्यतेइति १५३ एतत्स्फुटयति मृतइति । यतोमृतोदेहोधनंजयाख्यवायुनापृथुर्भूत्वाभेरीवदृश्यमान.शेतेततोज्ञायतेप्राणालीनाइति यतएषाईदृशीअवस्थाजीवतोनासीदिति १५४ ननूत्क्रांत्यभावेकिंप्रमाणमतआह उत्क्रांताश्चेति । तस्यविदुषः शास्त्रमेवमेवास्य परिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंतीत्यादिश्रुतिरूपं । श्रुत्यर्थस्तु यथानद्यःसमुद्रेलीयंतेएवमिमाःषोडशकलाएकादशेंद्रियपंचप्राणरूपाःपरिद्रष्टुर्ब्रह्मविदःसंबंधिन्यःपुरुषायणाअधिष्ठानभूतेपुरुषेप्रतीयमानाःपुरुषंप्राप्यलीयंतइति । ननूत्क्रांतिस्वीकारेकोदोषइत्यतआह उत्क्रांतेष्विति । उत्क्रांतिस्वीकारेपुनर्देहांतरप्रसंगोदेहिनस्तुमोक्षोवक्तुंनशक्यइति 'नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्ति' इत्यादिश्रुतेरिति १५५ चतुर्थप्रश्नोत्तररूपायाद्वादशकंडिकायाअर्थमाह यदेतिचतुर्भिः । आर्तभागोयाज्ञवल्क्येतिसंबोध्येमंप्रश्नंचक्रे इमंकं यदायंपूर्वोक्तोविद्वान्म्रियतेविदेहमुक्तिंभजतेतदाएनंकिंनत्यजतीत्यन्वयः जीवन्मुक्तिवत्सावशेषोद्वैतलयःकिंवानिरवशेषइतिप्रष्टुरभिप्रायः १५६ एवंपृष्टोयाज्ञवल्क्योविद्वद्दृष्ट्यानाममात्रंशिष्यतेइत्युक्त्वा

प्राणानांविलयेहेतुमुवाचाध्मानकारणम् ॥ उच्छूनत्वंविदेहस्यजीवतोदृश्यतेनतत् १५३ मृतःशेतेपृथुर्भूत्वादेहोभेरीसमोयतः ॥ लीनाःप्राणास्ततोयस्मादेषावस्थानजीवतः १५४ उत्क्रांताश्चनतस्येमेप्राणाःशास्त्रप्रमाणतः ॥ उत्क्रांतेषुध्रुवंदेहीभवेन्मोक्षोनदेहिनः १५५ यदाऽयंम्रियतेविद्वान्जहात्येनंतदानकिम् ॥ याज्ञवल्क्येतिसंबोध्यप्रश्नंचक्रइमंपुनः १५६ एवमुक्तोमुनिःप्राहलोकबुद्ध्यनुसारतः ॥ नामैकंनजहात्येनंवामदेवादिनामवत् १५७ मुक्तायद्यप्यसंदेहान्नामरूपक्रियात्मभिः ॥ मुक्तिभाजांतथाप्येतेनामगृह्णंतिलौकिकाः १५८ अनंतंनामविज्ञेयंयतोमुक्तंचनत्यजेत् ॥ विश्वेदेवसमंतस्यज्ञानात्ताद्दृक्फलंभवेत् १५९ ज्ञानिनंपरिपृच्छ्यैवंपप्रच्छाज्ञानिनंपुनः ॥ याज्ञवल्क्येतिसंबोध्यसजारत्कारवोमुनिः १६० मुमूर्षोर्जंतुमात्रस्ययदावागग्निमाव्रजेत् ॥ प्राणोवातंतथादित्यंनेत्रंश्रोत्रंदिशस्तथा १६१

नित्याह एवमुक्तइति । एनंमुक्तम् १५७ नाम्नोलोकदृष्ट्याशिष्यमाणत्वंस्फुटयति मुक्ताइति । यद्यपिमुक्तिभाजःपुरुषानामरूपक्रियात्मकैर्भेदजातैर्निःसंशयंमुक्तास्तथाप्येतेलौकिकाजनामुक्तिभाजांवामदेवादिरूपंनामगृह्णंत्येवेतिप्रसिद्धम् १५८ एवंमोक्षेपिलोकदृष्ट्यावशिष्यमाणत्वादनंतेनाम्निअनंततयाप्रसिद्धानांविश्वेदेवानामभेदेचिंतितेऽनंतफलयोगोभवतीतिप्रसंगेनश्रुत्योक्तमनुवदति अनंतमिति । तस्यविश्वेदेवाभिन्ननाम्नोज्ञानाद्ध्यानात् । तादृगनंतम् १५९ एवंविदुषोब्रह्मभावरूपोमोक्षोयस्यज्ञानाग्निनादाहाद्भवतियस्यचसत्वेनाज्ञानांग्रहातिग्रहलक्षणमृत्योःपुनःपुनःप्राप्तिस्तस्यकर्मणःस्वरूपनिर्णयपरायाःपंचमप्रश्नोत्तररूपायास्त्रयोदशकंडिकायाअर्थमाह ज्ञानिनमित्यूनविंशतिश्लोकैः । ज्ञानिनंपरिपृच्छ्यज्ञानिविषयकंप्रश्नंकृत्वाथाज्ञविषयकंप्रश्नंकृतवान्जारत्कारवआर्तभागः १६० प्रश्नमभिनयति मुमूर्षोरितित्रिभिः । जंतुमात्रस्यसर्वस्यापिदेहिनोमुमूर्षोर्मरणाभिमुखस्याध्यात्मिकावागादयोयदाधिदैवमग्न्यादिभावंप्राप्नुवंतिदेवैरनधिष्ठिताभवंतीतियावत् । देवानधिष्ठितत्वरूपएववागादीनांतत्रलयइत्याकारेणुप्रपश्चितत्वादिति । तदाह एषोऽज्ञोजंतुःक्वसंभवतिआमुष्मिकंफलंकिमाश्रितोभुंक्तेइतितृतीयेनसंबंधः । प्राणोवायुदेवतांव्रजति नेत्रमादित्यंव्रजति एवमग्रेपि १६१

मनइति । शरीरंपृथिवींदेवतांव्रजति तथाशरीरांतरस्थितआकाशोबाह्याकाशरूपांदेवतांव्रजति । कीदृशआंतराकाशःआत्मशब्दाख्यः श्रुतौआत्मशब्देनाख्यानिरूपणंयस्यसतथा १६२ ओषधीरिति । लोममात्रंसर्वाणिलोमानिओषधीर्देवताःप्रतिव्रजंति । तद्वत्केशावनस्पतिरूपदेवताःप्रतिव्रजंति । लोहितरेतसीजलरूपेबाह्यजलरूपदेवतासुव्रजंतीति १६३ याज्ञवल्क्यइति । एवंपृष्टो याज्ञवल्क्यःप्रश्नरहस्यार्थंकंमत्वासंसदिउत्तरंनोक्तवान्किंतुतमार्त्तभागंहस्तेगृहीत्वाएकांतदेशेगत्वाउत्तरमब्रवीदिति १६४ ननुकर्मनिरूपणंकिंवक्ष्यमाणब्रह्मविद्यानिरूपणादपिरहस्यंयदर्थमेकां तेशावितमित्यस्वरसंमनसिनिधायप्रकारांतरेणएकांतगमनाभिप्रायमाह जानातीतिद्वाभ्यां । आबालंआचगोपालंसर्वोलोकएतज्जानाति एतत्किं मृतःपुमान्नियतंव्यवस्थितफलंकर्मानुसारेण प्रयातीति १६५ प्रश्नस्येति । एतादृशार्थविषयकत्वेनप्रश्नोत्तरयोस्तुच्छतासिद्धसाधनत्वेनानादरणीयतामाभूदित्यभिप्रेत्यवाएकांतेवाक्यमुक्तवानिति १६६ उत्तरमभिनयति अमुनेत्यादि ना । अमुनादेहिनायेपूर्वंपुण्यपापेकृतेतयोस्तदाश्रितएवमृतोजंतुर्वसति । जीवनावस्थायामिवतस्यभोगारंभेपुण्यपापेएवप्रधानकारणेइतियावत् १६७ एतदेवस्फुटयति पापीति । पुण्यंपु

मनश्चंद्रंशरीरंचपृथिवींमंतरास्थितः ॥ आकाशआत्मशब्दाख्योबाह्यमाकाशमेतिच १६२ ओषधीर्लोममात्रंचकेशास्तद्वद्वनस्पतीन् ॥ लोहितंचतथारेतोव्र जत्यप्सुमृतेसति ॥ तदाक्वसंभवत्येषजंतुर्ज्ञानविवर्जितः १६३ याज्ञवल्क्योतिगोप्यार्थंप्रश्नंमत्वानसंसदि ॥ उक्तवान्किंतुहस्तेतंगृहीत्वैकांतगोब्रवीत् १६४ जानात्याबालगोपालंसर्वएवयतोजनः ॥ मृतःकर्मानुसारेणप्रयातिनियतंपुमान् १६५ प्रश्नस्यतुच्छतामाभूदुत्तरस्यतथैवच ॥ इतिसंचिंत्यमतिमानेकांतेवाक्य मब्रवीत् १६६ अमुनायेकृतेपूर्वंदेहिनापुण्यपातके ॥ तयोरेववसत्येषमृतोजीवन्यथाधुना १६७ पापीनरकमभ्येतिपुण्यात्मापुण्यमेवच ॥ पुण्यपापकरोजंतुः सुखदुःखकरंवपुः १६८ नाधिकोनसमोवापिनन्यूनोपिचविद्यते ॥ जंतुःकिंतुभवेदेवंस्वकर्मवशमागतः १६९ पुण्यात्माधिकतांयातिपापोन्यूनत्वमेवच ॥ पा पपुण्यवतस्तद्वत्सुखंदुःखंनिरंतरम् १७० कर्मणामनसावाचासुखंवादुःखमेवच ॥ करोतियत्परस्यायंलभतेतन्नसंशयः १७१ यस्मिन्देशेयदाकालेनिमित्तेनन येनवा ॥ यावद्धियादृशंयेनवपुषायच्चयःपुमान् १७२ करोतितत्ततोभूयःस्वयमुक्तविशेषणम् ॥ सुखंदुःखंनिमित्तंवातयोराप्नोतिवैसदा १७३ समंसर्वत्रविज्ञेयंसु खंवादुःखमेववा ॥ निमित्तेनसमंकर्तुरिहदेहांतरेथवा १७४

ण्यफलंदेवभावादिकं सुखदुःखकरंमानुपादि १६८ नाधिकइति । जीवःस्वरूपेणाधिक्यादिहीनोपिकर्मवशेनतत्तद्रूपोभवतीत्यर्थः १६९ तदुदाहरति पुण्यात्मेति । पुण्यात्मापुण्यस्वभा वः अधिकतांहिरण्यगर्भभावतांपुण्यकारितारूपांवा । न्यूनत्वंस्थावरांतंपापकारित्वरूपंवा । मिश्रिताभ्यांमिश्रितंफलमिति १७० फलानामवांतरविशेषेपुपुण्यपापयोरवांतरविशेषान्प्रयोज कतयाह कर्मणेति । कर्मणाशरीरव्यापारेण । तथाचशरीरादिभिर्यत्परस्यसुखादिकंकरोतितैरेवतथासुखादिकंविंदतइत्यर्थः १७१ तद्विशेषहेतून्देशादीन्दर्शयति यस्मिन्निति । यस्मिन् यादृशेदेशेकालेवा।येननिमित्तेनवायेननयेनप्रकारेणवायावद्यत्परिमाणंयादृशमुत्कृष्टंनिकृष्टंवायेनशरीरेणवायच्चपरस्यसुखंदुःखंवायःपुमान्करोति । यद्वयाइतिपाठेयादृशावस्थावानित्यर्थः । सभूयःपुनस्तत्तत्फलंतन्निमित्तंदेहादिकंचोक्तविशेषणंकर्मकालिकदेशादिसजातीयदेशादिविशिष्टंप्राप्नोतीतिद्वयोःसंबंधः १७२ । १७३ फलितमाह सममिति । कर्तुःकर्मिणःइहलोकेदेहांतरेवा समुपजायमानंसुखादिरूपंफलंनिमित्तेनकर्मणासमंज्ञेयं यादृशविशेषणकंकर्मतादृशविशेषणकंफलंलभतेइतियावत् १७५

कुत्रचिद्वाराणस्यादिदेशेसूर्यग्रहणादिकालेवाब्राह्मणोपकारादिनिमित्तेवाकृतस्यस्वल्पकर्मणोपिमहत्फलंभवतीतिसदृष्टांतमाह देशेति । बीजंसंपन्नंसम्यग्गुप्तंयेषांतेतथा १७५ एवमज्ञस्यकर्मवृद्धिरवश्यंभवतीत्यत्रदृष्टांतांतरमाह वार्धुषेरिति । वार्द्धुषिर्वृद्ध्येधनप्रयोक्ता तस्ययथाधनंवर्द्धतेतथादेहाभिमानिनःकर्मेत्यर्थः १७६ कर्मानुष्ठानानंतरंसूक्ष्मभावंगतस्यापिकर्मणोमहाफलारंभेदृष्टांतमाह वटेति । यथालोकेसूक्ष्मापिवटस्यधानाबीजंमहतोवटस्यहेतुर्भवति तथामहतोःसुखदुःखयोःपुण्यपापेइति १७७ इत्यादीति । इतियाज्ञवल्क्येनोक्तेतौपरस्परंशशंसतुस्तुष्टुवतुरिति १७८ ताभ्यांचकर्मैवफलकालेपिक्रियाप्रियमाणत्वात्कालादिभ्यःप्राधान्येनवर्णितमित्याह प्रश्नोत्तराभ्यामिति । एतयोःप्रश्नोत्तरयोः अर्थंविषयम् १७९ आर्तभागब्राह्मणव्याख्यानमुपसंहरति आर्तभागइति. १८० अथपूर्ववर्णितकर्मफलोत्कर्षावधिप्रतिपादकस्यभुज्युप्रश्नोत्तररूपस्यतृतीयब्राह्मणस्यकंडिकाद्वयात्मकस्यार्थंदर्शयति याज्ञवल्क्येतीतिचतुर्विंशतिश्लोकैः । ततोभुज्युनामालाह्यायनिर्लह्यस्यापत्यत्वेनप्रसिद्धएनंयाज्ञवल्क्यंजिज्ञासितुंस्थितंनाम्नासंबोध्यालौकिकंलोकेऽप्रसिद्धमर्थंपप्रच्छ यतोदुष्टाभिसंधिर्दुष्टाभिप्रायः १८१ तत्रभुज्युर्मयादेवमुखादयमर्थोविदितइतिसूचनेनयाज्ञवल्क्यात्स्वोत्कर्षंसूचयन्पूर्ववृत्तंश्रावयित्वापृच्छति मद्रेतिचतुर्भिः । वयंवेदाध्ययनायमद्रदेशेविचरंतःसंतःपतंजलनामकस्यकपिगोत्रस्यविप्रवरस्यगृहेऽद्भुतंवृत्तंदृष्टवंतइति १८२ तस्ये

देशकालादियोगेनकोटिकोटिगुणंभवेत् ॥ वर्षासुबीजसंपन्नाःसुक्षेत्रेशालयोयथा १७५ वार्धुषेर्वृद्धिमभ्येतिघनधान्यादिसंचयः ॥ दिनेदिनेयथातद्वत्पुण्यपापेच देहिनः १७६ वटधानायथालोकेवटस्यमहतोभवेत् ॥ हेतुरेवंपुण्यपापेमहतोःसुखदुःखयोः १७७ इत्यादिवचनस्यांतआर्तभागोमहामुनिः ॥ याज्ञवल्क्यंशशंसाथयाज्ञवल्क्योपितंमुनिम् १७८ प्रश्नोत्तराभ्यांविप्रेंद्रावूचतुःकर्मकेवलम् ॥ शशंसतुस्तथान्योन्यमेतयोरर्थमादृतौ १७९ आर्तभागोमुनिस्तत्रप्रश्नादुपरराम ह ॥ भुज्युंलाह्यायनिंदृष्ट्वास्मयमानोऽभ्यवस्थितः १८० याज्ञवल्क्येतिसंबोध्यलाह्यायनिरवस्थितम् ॥ भुज्युर्दुष्टाभिसंधिःसन्पप्रच्छेनमलौकिकम् १८१ मद्रदेशस्थिताःपूर्वंवेदाध्ययनतत्पराः ॥ पतंजलस्यकाप्यस्यदृष्टवंतोगृहेऽद्भुतम् १८२ तस्यकन्यागृहीताभूद्गंधर्वेणाग्निनैकदा ॥ तमपृच्छामकोसीतिवयंसर्वेसमागताः १८३ सुधन्वाऽऽङ्गिरसोस्मीतिसोब्रवीन्नोद्विजोत्तमान् ॥ तमपृच्छामलोकानामंतान्गंधर्वपुंगवम् १८४ पारिक्षिताःस्थितायत्रलोकांतस्तत्रसंस्थितः ॥ इत्युक्तेलोकमानेस्मिन्नपृच्छामपुनर्वयम् १८५ पारिक्षिताःस्थिताःकुत्रेत्युक्तेस्थानंसनोवदत् ॥ तत्स्थानंकिंचमानंकिंलोकानांकेचतेवद ॥ इत्युक्तेयाज्ञवल्क्योपिसर्वमेतदुदैरयत् १८६

ति । तस्यपतंजलस्यकन्याएकदाअग्निनाउपास्यदेवतेनभूतवद्गृहीताआविष्टाभूत् कीदृशेनाग्निना श्रुतौगंधर्वशब्दोक्तेन । गंधर्वशब्दोहिकोशेऽश्ववाचकतयाप्रसिद्धोऽश्वसमानाकारतयाव्याख्यायमानोपनिषत्प्रथमाध्यायेवर्णितेग्नावपिवर्ततइतिभावः । तमग्निंप्रतिनामनिगोत्रेचपृष्टेतेनचसुधन्वेतिनामतःआंगिरसोगोत्रेणास्मीत्युक्तेऽथलोकानांकर्मफलानामंतान्प्रान्तान्स्वरूपाणिवयमपृच्छामपृष्टवंतइति 'अंतःप्रांतेऽतिकेनाशेस्वरूपेऽतिमनोहरे' इतिविश्वः १८३ । १८४ पारिक्षिताइति । तेनगंधर्वेणइतिलोकानांमानेउक्तेउत्तरितेसतिअस्मिन्नर्थेपुनर्वयंपृष्टवंतः इतिकिं पारिक्षितायत्रगच्छंतितत्रकर्मफलानामंतःस्थितोनिश्चितः ततोधिकंकर्मफलंनास्तीतियावत् पारिक्षितपदव्युत्पत्तिंतुग्रंथकृदेववक्ष्यतीति १८५ पारिक्षिताःस्थिताःकुत्रेति । तेपारिक्षिताएवकुत्रस्थिताइत्यस्माभिरुक्तेपुनःपृष्टेसतिसगंधर्वोनोस्मभ्यंपारिक्षितानांगतिंस्थानमवक्षदिति । हेयाज्ञवल्क्याधुनात्वंवद तत्स्थानंकिं तद्वांतरलोकानांमानंकिं तेतत्स्थानगामिनःपारिक्षिताश्चकेकिंस्वरूपाइति इत्युक्तइत्थंपृष्टेसतिएतत्सर्वंयाज्ञवल्क्यउदैरयत्संक्षेपेणविस्तरेणचोक्तवानित्यर्थः १८६

तत्रसंक्षेपाभिधानप्रयोजकंसूचयन्याज्ञवल्क्योभुज्युंतावदुपालभते गंधर्वेणेति । एतत्स्थानादिकंतुभ्यंगंधर्वेणोक्तंत्वंजानन्सन्समाजेकिंपृच्छसि समाजेऽस्यप्रश्नोऽयुक्तःयतोदेवगुह्यंदेवसंबंधिरहस्यमिति । तथाचज्ञातत्वंदेवगुह्यत्वंचविस्तरेणानभिधानेनिमित्तमितिभावः १८७ विश्वासायेति । तथापितवविश्वासायगुह्यत्वसंरक्षणायचसंक्षेपेणाधुनावदामि सोपासनाश्वमेधकृतोजनाःसोपासनाऽश्वमेधफलंयत्रभुंजंतितत्रत्वत्पृष्टाःपारिक्षिताअगच्छन्गताइति अत्रयेसोपासनाश्वमेधकृतस्तेएवपारिक्षिताइतिगुह्यत्वसंरक्षणायनोक्तमितिबोध्यम् १८८ एवमुक्तइति । एवंयाज्ञवल्क्येनोक्तेपियाज्ञवल्क्यसर्वज्ञतायामविश्वासाद्भुज्युःपुनरपृच्छदश्वमेधकृतःकुत्रयांतीति १८९ इतिपृष्टोयाज्ञवल्क्यःसमाजेरहस्यार्थप्रकाशनपापंपुनःपृच्छतोभुज्योरेवनममेतिमत्वाविस्तरेणवक्तुमुपचक्रमेइत्याह इत्युक्तइति १९० ननुतथापिलोकानांमानमेवसविस्तरंयाज्ञवल्क्येनोच्यमानंश्रुतौदृश्यतेनत्वश्वमेधकृतएवपारिक्षिताइत्यर्थस्यसव्युत्पत्तिकमभिधानंतत्रकिंप्रयोजकमितिचेत्प्रसिद्धत्वाभिमानएवेतिव्युत्पत्तिंदर्शयन्नाहग्रंथकृत् वित्तेति । समुद्रांतापृथिवीयेषांवशेस्तितेऽश्वमेधयाजिनःपरिक्षितयइतिपदेनोक्ताः परितःसर्वतःक्षितिर्येषामितिव्युत्पत्तेः परिक्षितिशब्दात्प्रज्ञादित्वात्स्वार्थिकेणिपारिक्षिताइत्यपितन्नाम । एवमश्वमेधयाजिनःपारिक्षितत्वेनसयाज्ञवल्क्योनोचेनोक्तवानतोलोकमानमेवाब्रवीदिति १९१ तत्रसर्वकर्मणांभोगस्थानंवैराजंशरीरंभूलोकत्वे

गंधर्वेणेरितंपूर्वंतुभ्यमेतत्पुनःकथम् ॥ देवगुह्यंसमाजेस्मिन्जानन्सन्विप्रपृच्छसि १८७ विश्वासायवदाम्येतत्तुभ्यंसंक्षेपतोधुना ॥ अश्वमेधकृतोयत्रभुंजंतिनृपपुंगवाः ॥ अगच्छन्भवतापृष्टास्तत्रपारिक्षिताअपि १८८ एवमुक्तेप्यविश्वासाद्बाह्यायनिरभाषत ॥ अश्वमेधकृतःकुत्रयांतीतिवदभोमुने १८९ इत्युक्तेयाज्ञवल्क्योपिविस्पष्टंजनसंसदि ॥ उक्तवान्देवतागुह्यंभुज्यौपापंनिधायसः १९० वित्तपूर्णाक्षितिर्येषामस्तिसागरमेखला ॥ परिक्षितयइत्येतेउक्ताःपारिक्षिताअपि ॥ स्पष्टाइतिनतानूचेलोकमानंतुसोब्रवीत् १९१ जंबूद्वीपःसमग्रोयमीरितोलक्षयोजनः ॥ तावांस्तन्मेखलाभूतोवर्ततेलवणोदधिः १९२ जंबूद्वीपःसमुद्रेणवृतोयद्वद्बहिर्वर्तते ॥ ससागरस्तथाद्वीपैर्वृतःषड्भिःससागरैः १९३ द्वीपानांससमुद्राणांस्थितानांपरिवृत्त्यहि ॥ अन्योन्यमावृतातस्माद्द्विगुणंद्विगुणंबहिः १९४ परिमाणममीषांयन्मिलितानांप्रकीर्तितम् ॥ तावदेवतुविज्ञेयंभूमेःशुद्धोदकाद्बहिः १९५ अत्रतिष्ठतिशैलेंद्रोदुर्गवत्सर्वतोभुवः ॥ तदंतंभास्करोगच्छेदहोरात्रेणसर्वदा १९६

नवर्णयंस्तत्परिमाणंदर्शयति जंबूद्वीपइतिषड्भिः । ईरितःपुराणेइतिशेषः । तावान्लक्षयोजनएवतस्यजंबूद्वीपस्यमेखलावद्वेष्टकःक्षाराब्धिः १९२ जंबूद्वीपःसमुद्रेणेति । यद्वज्जंबूद्वीपःसमुद्रेणवेष्टितएवंसलवणसागरोपिषड्भिःप्लक्षादिद्वीपैःससागरैरिक्षुरसोदाद्यसागरसहितैर्वेष्टितइति १९३ द्वीपानामिति । एवंससमुद्राणांद्वीपानांपूर्वंपूर्वंपरिवृत्त्यवेष्टयित्वास्थितानांमध्येआवृतातस्मात्पूर्वस्मात्पूर्वस्माद्बहिरुत्तरोत्तरंद्विगुणंद्विगुणंबोध्यमितिशेषः यथालक्षयोजानात्क्षारोदविशिष्टाज्जंबूद्वीपात्द्विलक्षयोजनात्द्विगुणइक्षुरसोदविशिष्टःप्लक्षश्चतुर्लक्षयोजनएवमग्रेपि। तथाप्लक्षद्वीपावृतात्क्षारोदात्रिलक्षयोजनात्द्विगुणइक्षुरसोदःशाल्मलिद्वीपविशिष्टएवमग्रेपीति १९४ परिमाणमिति । अमीषांससमुद्रद्वीपानांयावत्परिमाणम् 'कोटिद्वयंत्रिपंचाशल्लक्षाणिचततःपरम् । पंचाशच्चसहस्राणिसप्तद्वीपाःससागराः' इतिशैवागमेप्रसिद्धम् । तावच्छुद्धोदकात्परस्ताद्भूमेःपरिमाणंबोध्यमिति तदनन्तरमेकोनचत्वारिंशल्लक्षोत्तरकोटचष्टकपरिमितास्वर्णभूमिरप्यस्तीत्यपिशैवागमानुरोधेनबोध्यम् १९५ अत्रेति । अत्रपूर्वश्लोकोक्तदेशेशैलेंद्रोलोकालोकनामामंडलाकारस्तिष्ठतितदंतस्तस्यलोकालोकस्यांतर्मध्येतत्प्रावृतदेशमध्यवर्तिमानसोत्तरमूर्द्धनीतियावत् अहोरात्रभ्रमणेनभास्करोगच्छति मानसोत्तरपरिमंडलपरिमाणंतुयोजनानांलक्षोनरसार्धनवकोटयइतिपुराणानुरोध्यर्थः १९६

अहोरात्रेणेति । अहोरात्रेणयावंतंयत्परिमाणकंदेशंमानसोत्तरपरिमंडलरूपमादित्यःपरिक्रामतिश्रुतौतावान्देशोदेवरथान्हाशब्देनोक्तः देवस्यसूर्यस्यरथेनान्हाऽहोरात्रेणभोग्यत्वात्सचदेशोद्वात्रिं शद्गुणितोयावान्भवेत्तावान्देशोरविकिरणव्याप्तोबुधैर्भूर्भूमिरित्युक्तःश्रुत्यातुलोकइत्युक्तः । लोक्यतेकर्मफलंभुज्यतेऽत्रेतिव्युत्पत्तेरित्यर्थः : १९७ इतःपरमुपासकैरेवगम्योलोकशब्देनश्रुत्यो क्तोयोदेशस्तमाह भूर्लोकेति । भूर्लोकपदाभ्यांवर्णितोविराट्शरीरात्मकोयोदेशःसस्थंडिलसमस्तस्यसमंताद्भित्तिसमावरणत्वेनप्रसिद्धाभूमिर्द्विगुणावर्ततेतस्याआवरणभूमेर्द्विगुणस्तांभूमिंपरिवे ष्ट्यस्थितःसमुद्रोवर्ततेयंपौराणिकाघनोदमितिवदंति १९८ क्षुरेति । घनोदात्परोब्रह्माण्डोयस्यैकःकपालोरजतमयोद्वितीयःसुवर्णमयस्तयोःसंधिस्तुक्षुरधारावत्तीक्ष्णोमक्षिकापक्षवद्वासूक्ष्मःसोय मेतादृशःसंधिस्तत्रब्रह्मांडाद्बहिर्गमनमार्गेतिष्ठतीत्यर्थः । अत्रघनोदोब्रह्माण्डाद्बहिरितिपुराणाद्ब्रह्मांडस्यासमंतात्तुसन्निविष्टोऽमृतोदधिःसमंताद्घनतोयेनधार्यमाणःसतिष्ठतीत्यादिरूपात्प्रतीयते श्रुत्यातुब्रह्माण्डादंतरिति तयोर्विरोधस्तुसांप्रदायिकैरित्थंसमाहितः 'पुराणंबाध्यतेश्रुत्याध्यानार्थंवाश्रुतिर्मता'इति । विरोधेत्वनपेक्षंस्यादितिन्यायेनप्रत्यक्षश्रुतिविरोधेनुमानंस्मृतिरूपमनपेक्षमप्रा ह्यमित्यर्थकेनपुराणंबाध्यमथवाहिरण्यगर्भोपासकैरेतावच्छरीरमात्मनोध्येयमित्यत्रश्रुतेस्तात्पर्यमितितदर्थः १९९ देवैरिति । हेभुज्योयेत्वयापारिक्षितपदेनोक्ताःसोपासनाश्वमेधकृतःपृष्टास्ते देहत्यागानंतरंनानाविधैर्देवैःस्वबलेनोपासनाबलेनचघनोदपर्यंतंनीयंतइति २०० अश्वमेधंविनापियेकेवलहिरण्यगर्भोपासकास्तेपिपारिक्षिताइतिसूचयितुंपारिक्षितपदस्यव्युत्पत्त्यंतरंसूचयति अ

अहोरात्रेणयावंतंदेशंगच्छतिभास्करः ॥ द्वात्रिंशद्गुणितःसोयंभूर्लोकःकथितोबुधैः १९७ भूर्लोकस्थंडिलाद्वाह्याद्द्विगुणावरणस्यभूः ॥ द्विगुणोभूमितस्त स्याःसमुद्रस्तांपरिस्थितः १९८ क्षुरधारासमःसंधीरूप्यहेमकटाहयोः ॥ मक्षिकापत्रवद्वायंसूक्ष्मास्तिष्ठतितत्रसः १९९ देवैर्नानाविधैरेतेनीयंतेस्वबलेनच ॥ अश्वमेधकृतोयेतेपृष्टाःपारिक्षितास्त्वया २०० अश्वमेधफलंचैतेप्राप्ताःपारिक्षितामताः ॥ अश्वाद्युपासनाज्ज्ञानाद्द्विजाःसर्वेपिसत्तमाः २०१ अतिसूक्ष्मेतदा मार्गेतत्रशक्रोपिनप्रभुः ॥ किंतुदेवाःपरेयेस्युर्घनोदाऽपरतःस्थिताः २०२ इंद्रःपक्षिवपुर्भूत्वाघनोदंतान्विहायसि ॥ संतार्यवायवेदत्वास्वयंतस्मान्न्यवर्तत २०३ वायुस्तान्सूक्ष्मतांनीत्वाक्षिप्त्वादेहेनिजेततः ॥ संधौकटाहयोर्दत्वान्यधाद्ब्रह्मांडतोबहिः ॥ अश्वमेधकृतोयत्रगताःपूर्वेमहाधियः २०४ भुज्युर्लब्ध्वाय निप्रश्नादवापोपरतिंततः ॥ उपस्तस्यकहोलस्यमध्यगोविस्मयाकुलः २०५

श्वमेधेति । एतेसोपासनाश्वमेधकृतःअश्वमेधफलंप्राप्ताःसंतःपारिक्षिताइत्युक्ताः नकेवलंतएवकिंतुअश्वस्तदाकारोग्निःप्रथमाध्यायोक्तआदिपदेनहिरण्यगर्भस्तदुपासनावंतःसर्वेपिद्विजाःपारिक्षिताम ताः । परितःक्षीयतेदुरितमनेनेतिपरिक्षिदश्वमेधः 'ब्रह्मविद्याश्वमेधाभ्यांनपरंपुण्यपापयोः' इतिस्मृतेः तादृशीउपासनाचपरिक्षित्तद्वेदिनःपारिक्षिताइतिव्युत्पत्तेरिति २०१ अतिसूक्ष्मइति । तत्रब्रह्मांडकटाहसंधिमतेऽतिसूक्ष्मेमार्गेशक्रोऽश्वमेधदेवताविराड्रूपोग्निःसोपिगंतुंनशक्तस्ततःपरेभिन्नादेवानशक्ताइतिकिमुवाच्यम् यतस्तेघनोदस्यापरतएवस्थिताःस्युर्घनोदमपितर्त्तुंनशक्ताइतियावत् २०२ तर्हितेपारिक्षिताःकथंब्रह्मांडपारंगच्छंतीत्यतआह इंद्रइति । इंद्रोविराट्पाक्षिरूपोभूत्वातान्पारिक्षितान्घनोदंसंतार्यविहायसिआकाशेस्थितायवायवेहिरण्यगर्भरूपायदत्वास्वयंनिवृत्तोभ वतीति २०३ वायुरिति । वायुस्तान्पारिक्षितान्सूक्ष्मतांनीत्वानिजदेहेक्षिप्त्वास्वतादात्म्यंगतान्कृत्वेतियावत् कटाहयोःसंधिमार्गेणब्रह्मांडाद्बहिष्करोतिपूर्वेप्युपासकायत्रगताइति तथाचपारि क्षिताहिरण्यगर्भरूपेणब्रह्मांडादंतर्बहिश्चाभिव्याप्यावतिष्ठंतइतिभावः २०४ उपसंहरति भुज्युरिति । एवंयथागंधर्वेणोक्तंतथैवयाज्ञवल्क्येनोक्तंश्रुत्वाविस्मितोभुज्युःप्रश्नादुपरतः कीदृशः उ पस्तस्यचाक्रायणस्यकहोलस्यकौषीतकेयस्यचमध्यगतः । तौवादायनोदयन्निवेत्यर्थः २०५

एवंसोपासनकर्मणांफलोत्कर्षोहिरण्यगर्भभावावधिर्दर्शितस्तत्रचोक्तमृत्युसंबंधमालोच्यविरक्तस्यापिमोक्षेप्रवृत्तिस्तदासंभवेद्यदिसंघातविलक्षणोमोक्षयोग्यआत्मासंभाव्येतेत्यतस्तादृशात्मनिर्णयपर स्यकंडिकाद्वयात्मकस्योपस्तब्राह्मणस्यार्थंदर्शयति भुज्योरुपरतिमित्यूनविंशतिश्लोकैः । भुज्योःप्रश्नान्निवृत्तिंदृष्ट्वाचाक्रायणश्चक्रनामकस्ययुवापत्यमुषस्तोयाज्ञवल्क्येतिसंबोध्यपृच्छतिस्मेति २०६ प्रश्नमभिनयति उपचारेणेतिसार्धद्वाभ्यां । घटादयोजडाहिवन्हिव्याप्तलोहपिंडवद्वृत्त्यभिव्यक्तचित्संबंधाद्भासंतइत्यतोगौणंतेषामपरोक्षंस्वप्रकाशत्वात्तद्विपरीतंसाक्षादपरोक्षपदाभ्यांश्रुत्यो क्तंब्रह्मैवसर्वांतरत्वादात्मेतिसर्वशास्त्राणिवदंतितन्नसंभाव्यतइतिशेषः २०७ कुतोनसंभाव्यतइत्यतआह सर्वांतरत्वमिति । सर्वांतरत्वंब्रह्मत्वमद्वयत्वरूपंचयदात्मनउच्यतेतदुभयमास्तांतिष्ठतु आलोचयितुमनर्हमितियावत् तयोर्धर्मिण्येवसंशयादितिभावः । तत्रहेतुमाह आत्मेति । यतआत्माशरीरादिसंघाताद्विलक्षणएवनस्यात्तन्नसंभाव्यतइत्यर्थः २०८ मह्यमिति । यद्यस्तिसंघा तविलक्षणआत्मातर्हिमह्यंव्याचक्ष्वयथाऽपरोक्षतास्यात्तथानिरूपययेनतवकौशलंजानीयामिति । एवंपृष्टोयाज्ञवल्क्यःस्वरूपत्वेनहस्तामलकादप्यत्यव्यवहितेआत्मनिअसंभावनैवानुचितेत्यत्यन्ताव्यव हितवाचकेतच्छब्दप्रयोगेणसूचयन्नेपउक्तविशेषणआत्माइत्येतन्मात्रमाहस्मेत्यर्थः २०९ कतमइति । एवमंतर्मुखश्चेदयमुषस्तस्तर्ह्येषआत्मेत्येतावतोत्तरेणैवतोषमेष्यतीत्याशयेनयाज्ञवल्क्येनतथो क्तोपिसतुबहिर्मुखत्वात्संदिग्धःपुनःपृष्टवान्हेयाज्ञवल्क्यसआत्माकतमइति किंस्थूलंदेहंकिंवासूक्ष्मंकिंवासाक्षी नाद्यौ परिच्छिन्नत्वेनसर्वांतरत्वव्याघातात् । नांत्यस्तत्त्वेमानाभावादितिप्रष्टुरा

भुज्योरुपरतिंदृष्ट्वाततश्चाक्रायणोमुनिः ॥ उपस्तोयाज्ञवल्क्येतिसंबोध्यैनंस्मपृच्छति २०६ उपचारेणरहितंप्रत्यक्षंस्वप्रकाशनात् ॥ ब्रह्मैवात्मेतिशास्त्राणिसर्वे स्मादंतरंजगुः २०७ सर्वांतरत्वंब्रह्मत्वंद्वयमास्तामिहात्मनः ॥ आत्मानतुशरीरादिसंघातात्स्याद्विलक्षणः २०८ मह्यंव्याचक्ष्वतेनाहंज्ञास्येतेबुद्धिकौशलम् ॥ इत्युक्तोयाज्ञवल्क्यस्तमेषआत्मेत्युवाचह २०९ कतमोयाज्ञवल्क्येतिपुनःपृष्टउवाचतम् ॥ तत्रप्राणंतथापानमुदानंव्यानमेवच २१० व्यापारयतिदेहस्यमध्य गःसूत्रधारवत् ॥ सर्वांतरःसदेहादिसंघातात्स्याद्विलक्षणः २११ मर्कटानांयथासूत्रैश्चालकोबालकोमतः ॥ सूत्रधारःपृथग्दृष्टोमर्कटेभ्योमहाजनैः २१२ तथा सर्वांतरोप्यात्मादेहादिभ्यःपृथक्सदा ॥ एवमुक्तउपस्तोपिपुनःपप्रच्छतंमुनिम् २१३ याज्ञवल्क्यत्वयानायंविस्पष्टःकथितोमम ॥ यथासौगौरसावश्वएवंस्पष्टं समीरय २१४ आत्माविलक्षणःपृष्टःसंघाताद्धिमयाधुना ॥ व्यापारकारकःकश्चित्त्वयामेत्रसमीरितः २१५

शयः । एवंपृष्टोयाज्ञवल्क्यःप्रष्टुःस्वानुभवप्रदर्शनेऽनधिकारितामालोच्यतदनुग्रहायानुमानंसाक्षिणिप्रदर्शयन्निदमाह इदंकिं यस्तवप्राणापानादीनांसूत्रधारवत्प्रवर्तकःसउक्तलक्षणआत्मेति । सा मान्यतोदृष्टानुमानस्वरूपंतुप्राणादिनियन्तातद्भिन्नस्तत्प्रवर्तकत्वात्योयत्प्रवर्तकःसतद्भिन्नोयथासूत्रधारइति । नचानुमानप्रदर्शनेऽप्रमेयत्वविरोधः परासंभावनानिवृत्तिमात्रेऽनुमानस्यव्यापारा दितिभावः इतिद्वयोरर्थः २१० । २११ प्रकृतेसूत्रधारपदार्थंदर्शयित्वातत्रसाध्यस्यनियम्यभेदस्यसत्त्वंदर्शयति मर्कटानामिति । मर्कटानांसूत्रैश्चालकोनर्तकोयोबालकःसोत्रसूत्रधारतयावि वक्षितः । बालपदप्रक्षेपस्त्वज्ञानविशिष्टात्मनोदार्ष्टांतिकत्वसूचनाय । सचयथामहाजनैःप्रेक्षकैर्मर्कटेभ्यःपृथग्भूतोदृष्टइत्यर्थः २१२ दार्ष्टांतिकमाह तथेति । पूर्वार्धंस्पष्टम् । एवंमंदानु ग्रहाभिप्रायेणयाज्ञवल्क्येनानुमानेदर्शितेप्यभिप्रायमविदित्वाउषस्तउपहसन्निवपुनःपप्रच्छेत्युत्तरार्धार्थः २१३ पुनःप्रश्नमभिनयति याज्ञवल्क्येतिसार्धैस्त्रिभिः । हेयाज्ञवल्क्यमयास्पष्टतया वर्णनीयत्वेनपृष्टोप्यात्मात्वयास्पष्टोनोक्तोऽतोऽधुनास्पष्टंवर्णययथागौरश्वश्चपृष्टःशृंगादीगृहीत्वाप्रदर्श्यतेतद्वदिति २१४ आत्मान्पृष्टःकोविदारानाचष्टेइतिन्यायेनगवाश्वदृष्टान्तस्यप्रकारान्तरयोजने नोपहासंव्यंजयितुंमत्पृष्टादन्यथात्वयोक्तमित्याह आत्मेति । मयासंघाताद्विलक्षणआत्माकथंस्पष्टइतिपृष्टस्त्वयात्वस्तिकश्चित्प्राणादिव्यापारकारकइत्येतावन्मात्राकारेणोक्तइति २१५

निर्व्यापारस्यलोकेऽप्रयोजकत्वाप्रसिद्धेस्त्वदुक्तलक्षणहेतुरनात्मत्वव्याप्यत्वाद्विरुद्धइत्याह व्यापारेति । तथाचगविपृष्टेऽश्वप्रदर्शनमिवआत्मप्रश्नेऽनात्मप्रदर्शनंत्वयाकृतमितिचतुर्थपादार्थः २१६ फलितमाह ततइति । एवंसोपहासंपृष्टोपियाज्ञवल्क्योगांभीर्येणस्मयमानोमंदंहसन्नेवोवाचेति २१७ साक्षादपरोक्षतामयाप्रथममेवैतच्छब्दप्रयोगेणदर्शितातत्रतवमंदतामालोच्यत्वनुमानंदर्शितमितिसूचयितुंयाज्ञवल्क्येनएषइत्यादिवाक्यंपुनःपठितंतदर्थमाह यंत्वमिति । संघाताद्विलक्षणमात्मानंवदेतियत्त्वंपृच्छसिसतवप्रष्टुरप्यात्माएषसुतरामपरोक्षः यतस्त्वयापिअहंबुद्ध्यागतःअहमाकारवृत्त्याविषयीक्रियमाणइत्यर्थः २१८ इत्युक्तेइति । इतियाज्ञवल्क्येनोक्तेप्यहंप्रत्ययविषयत्वस्यबहुपुदर्शनाद्बुद्ध्यादीनांमध्येकतमोसावितिनज्ञायतेऽतःपृथक्कृत्यदर्शयेतिपुनरुपस्तःपप्रच्छेत्यर्थः २१९ उपस्तमिति । एवंपृष्टोयाज्ञवल्क्यइदमाह इदंकिं यावितदनुभवसिद्धातस्यापरोक्षतातत्त्वेनानिरूपणेनवाग्रहःकिंवाघटादिवदिंद्रियविषयत्वरूपापरोक्षत्वेन आद्येविद्वांसोयथातंनिरूपयंतितथामयोक्तोपित्वयाबहिर्मुखत्वान्नद्रष्टुंशक्यइत्यर्थः २२० नद्वितीयस्तस्याविषयस्वभावत्वादित्याह बुद्ध्येति । योयंनित्यापरोक्षआत्माबुद्ध्यास्वबिंबग्राहिण्यानानेंद्रियद्वारेणप्रसरंत्यासहितःसर्वंजानातितांबुद्धिंचस्वयमेवभासयतिएवंतस्याबुद्धेर्द्रष्टारंतंकेनत्वंपश्यसिविषयीकरोषि नकिंचित्करणजातंतंविषयीकर्तुंशक्नोतीतियावत् २२१ सेंद्रियबुद्धेःसाक्षिभास्यायास्तद्द्रा

व्यापारकारकस्तावत्संघातोत्रप्रतीयते ॥ विरुद्धमुत्तरंतेनगोप्रश्नेश्वस्ययादृशम् २१६ ततउक्तस्वरूपंत्वंकरामलकवद्वद ॥ इत्युक्तेयाज्ञवल्क्योपिस्मयमानस्तमब्रवीत् २१७ यंत्वंपृच्छसिसंघाताद्वदात्मानंविलक्षणम् ॥ एषआत्मातवप्रष्टुरहंबुद्ध्यागतस्त्वया २१८ इत्युक्तेकतमःसोयंबुद्ध्यादिष्वितितंवद ॥ उपस्तएवंपप्रच्छयाज्ञवल्क्यंमहामुनिम् २१९ उपस्तंयाज्ञवल्क्योपिवाक्यमेतदभाषत ॥ उक्तोपिनमयाशक्यस्त्वयाद्रष्टुंकथंचन २२० बुद्ध्यासर्वंविजानातियतोयंभूतभौतिकम् ॥ बुद्धिंचतस्याद्रष्टारंकेनपश्यसितद्वद २२१ घटोपलंभकंनेत्रंनघटेनोपलभ्यते ॥ यथातथात्रबुद्धीनांद्रष्टाताभिर्नलभ्यते २२२ बाह्यांतरविभेदानामिंद्रियाणांहियाधियः ॥ तासांद्रष्टात्रताभिर्योनदृश्यस्त्वेषआंतरः ॥ आत्मातवविनाशेनवर्जितोतोविलक्षणः २२३ एतस्माद्व्यतिरिक्तंयद्देहबुद्धींद्रियादिकम् ॥ विनाशितज्जडत्वेनजन्मयोगियथाघटः २२४ बुद्धिमानयमित्येवविज्ञायोपस्तआत्मवान् ॥ कहोलस्यसमीपस्थःप्रश्नादुपरराम ह २२५ कौषीतकेयोमतिमान्कहोलस्तमभाषत ॥ उपस्तोक्तमनूद्येत्थमात्माब्रह्मकथंभवेत् २२६

स्नेनशक्तिरितिसदृष्टांतमाह घटोपलंभकमिति । यथाघटप्रकाशकंचक्षुर्घटेननप्रकाश्यतेतथाबुद्धीनांतत्तदिंद्रियसंबंधेनदृष्टिश्रुतिघ्रात्यादिसंज्ञानांद्रष्टाप्रकाशकआत्माताभिर्बुद्धिभिर्नदृश्यतेइति २२ एतत्स्फुटयति बाह्येति । बाह्यांतरविषयकत्वेनभिन्नानामिंद्रियाणांसंबंधेनदृष्टिश्रुत्यादिसंज्ञायाधियोबुद्धिवृत्तयस्तासांयोद्रष्टाभासकोऽतएवताभिरप्रकाश्यःसतवात्मासर्वांतरोविनाशहीनःअतःसंघाताद्विलक्षणइति २२३ ननुतथापितद्भिन्नंबुद्ध्यादिसत्यमसत्यंवा आद्येकथंसर्वांतरइत्युक्तं नहिघटःपटस्यांतरः अंत्येपिकथंसर्वपदप्रयोगःसर्वस्याभावादित्याशंकांयथारज्जौकल्पितानामुरगजलधारादंडादीनांरज्जुरांतरस्तद्वदेतद्द्रष्टव्यमित्याशयेनपरिहरति एतस्मादिति । एतद्भिन्नंसर्वंजडत्वाजन्मनाशरूपार्तिमत् अतःकल्पितमितियावत् २२४ उपस्तब्राह्मणार्थमुपसंहरति बुद्धिमानयमिति । अयंयाज्ञवल्क्योबुद्धिमानित्येवंविज्ञायनिश्चित्योपस्तोमौनंचक्रेइति २२५ एवंबंधमोक्षयोग्यःसंघातविलक्षणआत्माउपस्तब्राह्मणेनिर्धारितोऽथतस्यमोक्षोयेनब्रह्मात्मैकत्वविज्ञानेनभवतितस्यससाधनस्यनिरूपणपरंयत्कहोलब्राह्मणंतस्यार्थःप्रदर्श्यते कौषीतकेयइत्यादिसप्तचत्वारिंशच्छ्लोकैः । अथकुषीतकस्यापत्यंकहोलनामातंयाज्ञवल्क्यमपृच्छत् किंकृत्वा यउपस्तेनपृष्टआत्मातद्विषयकएवममप्रश्नइतिसूचयितुमुपस्तोक्तंयत्साक्षादित्यादिवाक्यमनूद्यपुनःपठित्वाप्रश्नाशयमभिनयति आत्मेति । अयमात्माब्रह्मभावंगतःकथंभवेदिति २२६

ब्रह्मभावासंभवेहेतुंतयोर्वैधर्म्यमाह आत्मेति । अयमेतत्संघातप्रकाशकआत्मा 'क्षुत्पिपासेशोकमोहौजरामृत्यूषडूर्मयः' इतिप्रसिद्धषडूर्मिलक्षणसंसारधर्मकोऽनुभूयते ब्रह्मतुषडूर्मिरहितंश्रूयतेऽनयोर्वि रुद्धधर्मिणोस्तादात्म्यंभेदसहिष्णुरभेदइत्युक्तलक्षणमपिनसंभवतिकुतऐक्यमिति । तथाचप्रत्यक्षविरुद्धमात्मनोब्रह्मत्वमितिप्रष्टुराशयः एवंपृष्टोयाज्ञवल्क्यआहस्मेतिद्वयोरर्थः २२७ । २२८ स्यादेवप्रत्यक्षविरोधोयद्यात्माक्षुत्पिपासाधर्मिप्राणरूपःशोकमोहधर्म्यंतःकरणरूपोवाजरामृत्युधर्मिशरीररूपोवाभवेत्सतुएषांप्रकाशकएवप्रकाश्यधर्माश्चप्रकाशकंनस्पृशंतीतिप्रसिद्धमादित्यादावत ऐक्यबोधकस्यवेदांतप्रमाणराजस्यस्वार्थप्रकाशनेनकेनचिन्मानांतरेणविरोधइत्याशयेनोत्तरयति षडूर्मयइति । प्राणबुद्धिशरीरगाःषडूर्मयःअत्रात्मनिनसंतिएतेनहेतुनासआत्मासंसारधर्मराहि त्यरूपब्रह्मलक्षणशालित्वाद्ब्रह्मैवेतिवेदविद्भिःकथ्यतेइत्यर्थः २२९ आत्मनिसंसारधर्माभावेकैमुत्यमाह आत्मज्ञानेति । अविद्यालेशेनभासमानोपिसंसारआत्मविदांबंधप्रसवलक्षणांबाधांकर्तुं यदानशक्तस्तदाकिमुवक्तव्यमात्मनःसंसारधर्मराहित्यइत्यर्थः २३० एतादृशात्मज्ञानस्यविक्षेपपरिहारेणदृष्टद्वारोपकारकमंगंसंन्यासइत्याह असंसारिणमिति । एतंपूर्वार्द्धेनानूदितमेतद्ब्राह्मणउ क्तंबुद्धिसाक्षितयाउपस्तब्राह्मणवर्णितमात्मानंविज्ञायगतैषणाःपरित्यक्तकामाःसंतःपूर्वेवामदेवादयःप्रव्रजंतिस्मसंन्यस्तवंतइत्यर्थः २३१ तत्रैषणायाःस्वरूपभेदावाह सुतइतित्रिभिः । लोके कामनानामनेकविधत्वेप्यनुमतानित्रीणिरूपाणिईरितानिश्रुतौ । तत्रैकंरूपंसुतोभवत्वित्याकारंपुत्रैषणात्वंयेनदारसंग्रहादौप्रवर्तते । द्वितीयंवित्तैषणात्वं वित्तमपिद्विविधंदैवंमानुषंच तत्रदैवंदे

आत्मासंसारधर्मायंक्षुधितश्चपिपासितः ॥ शोकमोहसमाविष्टोजायतेम्रियतेतथा २२७ षडूर्मिरहितंब्रह्मतादात्म्यंह्यनयोःकथम् ॥ इत्युक्तेयाज्ञवल्क्योपितमाहमु निपुंगवम् २२८ षडूर्मयोनसंत्यत्रप्राणबुद्धिशरीरगाः ॥ आत्मन्येतेनसब्रह्मकथ्यतेवेदवादिभिः २२९ आत्मज्ञानवतांपुंसांसंसारोनैवबाधकः ॥ कुतआत्मनए पस्यात्सर्वदाब्रह्मरूपिणः २३० असंसारिणमात्मानंब्रह्माभिन्नंनिरंजनम् ॥ बुद्धिसाक्षिणमेतंतंविज्ञायात्रद्विजोत्तमाः ॥ वामदेवसमाःपूर्वेप्रव्रजंतिगतैषणाः २३१ सुतोभवतुमेतद्वद्वित्तंदैवंचमानुषम् ॥ सुखंलोकद्वयंचैतदेषणात्रयमीरितम् २३२ पितुःपुत्रोभवेद्वित्तंयथाक्षेत्रंयथापशुः ॥ वित्तंचसुखदंतद्वदिहलोकेपरत्रच ॥ ततःसुखस्यतद्वत्स्यात्तद्धेतोश्चैषणाद्वयम् ॥ एषणाद्वैतमेवात्रवस्तुतःसर्वदेहिनाम् २३४ इच्छत्यपियतःसर्वःसुखमस्त्वितिनापरम् ॥ सुखंचात्मन्यसंसारेसर्वा नंदातिशायिनि २३९ स्वप्रकाशेसतिप्रज्ञेसर्वभेदविवर्जिते ॥ नापरत्रयतःसर्वमुदर्केदुःखदंस्मृतम् २३६

वलोकजयसाधनमुपासनात्मकज्ञानं मानुषंतुमनुष्यलोकभोगसाधनंपशुहिरण्यादि । तृतीयंलोकैषणात्वंलोकपदेनचदेवमनुष्यलोकवर्तिसुखंगृह्यतेइत्यर्थः २३२ वस्तुतस्तुद्वेएवसकलकामनानु गतेरूपेइत्याह पितुरितिद्वाभ्यां । यथाक्षेत्रंपशुर्गवादिश्चएतल्लोकभोगसाधनत्वाद्वित्तमितिप्रसिद्धंतथापुत्रोपिपितुर्वित्तमेव पुत्रेणजय्योयंलोकइतिश्रुतेरेतल्लोकजयसाधनत्वात् वित्तपदंचइहलोके परलोकेवायत्सुखदंसुखसाधनंतत्रप्रसिद्धं तथाचवित्तैषणात्वेनसकलसुखसाधनैषणानांसंग्रहः अतएवश्रुतौपुत्रैषणावित्तैषणयोरभेदउक्तइतिभावः । लोकैषणापदेनचसकलफलकामनानांसंग्रहः । लोकपदस्यसुखपरतायाःपूर्वश्लोकउक्तत्वात् तस्मादेषणानामनुगतरूपालोचनायांद्वैतंद्वित्वमेवेतिद्वयोरर्थः १३३ । १३४ एषणाद्वित्वेलोकानुभवमप्यनुकूलयति इच्छत्यपीति । यतःसर्वो जनःप्रथमंफलभूतंसुखमेवेच्छतिफलस्यसाक्षाद्यत्नासाध्यतामालोच्यतत्साधनमपीच्छतीत्येषणाद्वित्वमुपपन्नमेवेतिशेषः । एतदभिप्रायेणैवश्रुतौवित्तैषणालोकैषणयोरभेदउक्तइतिभावः । अस्त्वेवं तथापिविद्वांसोयदेषणापरित्यागं कुर्वंतितत्रकोहेतुरितिचेदेषणामूलभूताविद्याहानिरेवेत्याह सुखंचेति । योवैभूमातत्सुखमित्यादिश्रुतेरात्मन्येवसुखंनान्यत्र । अयंतुपुरुषस्यचैतन्यमितिविवन्निर्देशः यतःसर्वंसांसारिकपदार्थजातमुदर्कपरिणामेदुःखदंतथाचअज्ञाएवएषणाभाजइतिद्वयोरर्थः २३५ । २३६

सांसारिकपदार्थानांदुःखरूपतांप्रपंचयति जननीत्यष्टादशभिः । याजंतूनांजननीस्तन्यदानादिनासुखकारिणीत्वेनप्रसिद्धासापिकोपमरणाभ्यांदुःखंदद्यादितिद्वयोःसंबंधः । स्तन्यंपयः । भूरिभ्योबहुविधेभ्यःअपायेभ्यःअपायहेतुभ्योजलाग्न्यादिभ्योरक्षणात् चित्रादद्भुतात्स्नेहादिलौकिकात् स्नेहआदिःकारणंयस्यतादृशाल्लौकिकान्मुखचुंबनादिरूपादित्यपिद्वयोरर्थः २३७ । २३८ तत्रजनन्यामरणाद्दुःखदत्वंतुल्ययोगितयास्फुटयति जनन्याइति । स्पष्टम् २३९ उक्तदुःखस्योत्कर्षंस्फुटयति नाग्नेरितिद्वाभ्यां । शूलसंक्षेपेशूलोपरिनिधाने भृगोःपर्वतोच्चदेशात् २४० तादृशमिति । स्पष्टम् २४१ जननीन्यायमन्यत्राप्यतिदिशति २४२ प्रियाणीति । नचवियोगोवारयितुंशक्यइत्याह वियोगइति । अचिकित्स्येनप्रतिकर्तुमशक्येनयेनकेनचिन्निमित्तेन संयुक्तानांवियोगोऽवश्यंभावीत्यन्वयः । निमित्तस्याचिकित्स्यत्वेहेतुगर्भविशेषणं कालेति । रोगवच्छरीरपरिणामहेतुत्वाद्रोगसमेनकालेनप्रयुक्तेनेत्यर्थः २४३ एवंप्रियत्वाभिमतानांदुःखदत्वमुपपादितं अप्रियाणांतुदुःखदत्वंप्रसिद्धमेवेत्याह अप्रियाणिचेति । दहंतितापयंति असुंदेहाभिमानिनम् २४४ जननीप्रभृतिचेतनेपूक्तंन्यायंजडेष्वप्यतिदिशति चेतनानीति । चेतनवज्ज

जननीसर्वजंतूनांप्रसिद्धासुखकारिणी ॥ स्तन्यदानात्तथाशश्वद्रक्षणाद्भूर्यपायतः २३७ मलाद्यपनयात्तद्वच्चित्रात्स्नेहादिलौकिकात् ॥ कोपतोमरणाद्वासादद्या दुःखंसुदुःसहम् २३८ जनन्यामरणंबाल्येदाराणांयौवनेतथा ॥ वार्धकेतनयानांचवज्रपातसमंस्मृतम् २३९ नाग्नेःप्रवेशनेदुःखंछेदनेवपुषोनच ॥ जीवतःशूलसंक्षेपेभृगोर्वापतनेनहि २४० तादृशंदुःसहंदुःखंनान्यस्मादपिकारणात् ॥ जनन्यादिमृतौदुःखंबाल्यादौजायतेयथा २४१ प्रियाणिसर्वभूतानिपित्रादीनिजनस्यहि ॥ वियोगेदुःखमत्यर्थंजनयंतिसुदुःसहम् २४२ वियोगःसर्वथाभावीसंयोगेसतिदेहिनाम् ॥ अचिकित्स्यनिमित्तेनकालरोगकृतेनहि २४३ अप्रियाणिचभूतानिसंयोगेनदहंत्यसुम् ॥ अग्निर्यथास्वसंयुक्तंसर्वमेवदहत्ययम् २४४ चेतनानियथातद्वज्जडान्यपिचसर्वदा ॥ जंतून्योगवियोगाभ्यांप्रीत्यप्रीतिकराणिच ॥ दहंत्यविरतांश्छश्वच्छलभान्पावकोयथा २४५ पुत्रावित्तानिलोकाश्चशरीरंचसबांधवम् ॥ एतेदुःखकराःसर्वेदृश्यंतेसर्वजंतुभिः २४६ यद्यत्कर्तुंप्रवृत्तःसन्नशक्याद्विनिवर्तते ॥ इच्छयासहितस्तत्तद्दुःखमुक्तंमनीषिभिः २४७ प्रवृत्तिंकुरुतेशश्वदुपकारापकारयोः ॥ शत्रुमित्रार्थमत्रायमशक्त्याविनिवर्तते २४८ शरीरेंद्रियजासेयंक्वचित्क्वापिसुतादिजा ॥ अशक्येच्छाविघातःस्याद्दुःखमिच्छावधेर्महत् २४९

डान्यपिवस्तूनिप्रीतिकराणिचेद्वियोगेनअप्रीतिकराणिचेद्योगेनअविरतान्विरागहीनान्शलभान्पावकवद्दहंतितापयंतीत्यर्थः २४५ सांसारिकभावानांदुःखहेतुतारागांधताहीनैःसर्वैरनुभूयतेइत्याह पुत्राइति । एतेपूर्वार्द्धोपदर्शिताः २४६ तत्रापिविहन्यमानाइच्छैवदुःखप्रयोजिकेत्याह यद्यदिति । इच्छयासहितोजंतुर्यद्यत्कर्तुंप्रवृत्तःसन्यस्मादशक्याद्विनिवर्त्ततेतत्तद्दुःखकत्वाद्दुःखमित्युक्तमित्यर्थः २४७ तदुदाहरति प्रवृत्तिमिति । अयंलोकःप्रायःशत्रूणामपकारायमित्राणामुपकारायचप्रवृत्तिंकुरुतेतत्रचाशक्त्यैवततोनिवर्त्ततेइतिप्रसिद्धमितिशेषः २४८ तत्रचेच्छायाःप्रयोजकमहंममाध्यासरूपंविपर्ययज्ञानंतथेच्छाकार्यंदुःखस्वरूपंचाह शरीरेति । सेयमशक्येच्छाकर्तुमशक्येप्यर्थेइच्छाक्वचिच्छरीरेंद्रियजाशरीराध्यासजाइंद्रियाध्यासजावाक्वापिकुत्रचित्सुतादिविषयकममत्वाध्यासजाअहंममाभिमानेनाशक्येच्छामपिकुर्वंतीतियावत् । एवंसतिइच्छावधेःकुड्यादश्वःपततीत्यत्रआरोढुमशक्यंकुड्यंयथावधिर्विभागाश्रयत्वात्तथाइच्छास्वकार्यद्वारायमारोढुमशक्तासोशक्यपदार्थइच्छावधिर्बुद्धिकृतमपादानंतस्माज्जातोयइच्छायावैयर्थ्यात्मकोविघातस्तद्रूपंमहद्दुःखमित्यर्थः विहन्यमानेच्छैवदुःखरूपेणपरिणमतेइतियावत् २४९

एवमनर्थप्रयोजकाःशरीरादयइच्छाप्रयोजकंचतेषामननुकूलतयावस्थानंसर्वत्रसममित्याह शरीरेंद्रियेति । तेचशरीरादयोहिरण्यगर्भभावपर्यंतंसर्वत्रसंतितेषसर्वदास्वाधीनाअनुकूलरूपान्सर्वतीत्यपिमसिद्धमितिशेषः ततःसर्वथानुकुलत्वाभावादिमेशरीराद्याःसर्वेपिदुःखमित्युक्ताः २५० एवमनात्मनिदुःखत्वमुक्त्वासुखत्वव्यतिरेकमपितेषांस्फुटयति सुखत्वमिति । कस्यचिदपिवस्तुनःसुखत्वंनैवविद्यते कुतः सुखत्वंविनाप्यवस्थानरूपाद्व्यभिचारात् व्यभिचारेपिकिंमानमितिचेल्लोकानुभवएवेत्याह यतोदृष्टेत्यादि । यदेववस्तुसुखदंतदेवकालांतरेदुःखदमित्येवंसर्वजंतुभिःसर्वेषांवस्तूनांपर्यायेणपरिपाट्याअनियमेनेतियावत् सुखदुःखयोर्जनकतादृष्टेति २५१ तत्रापिपदार्थानांयासुखहेतुतादृष्टिःसाभ्रमएवेत्याह यत्रापीति । यत्रदेशेकालेवाकश्चित्पदार्थःसुखहेतुर्मतस्तत्रापितत्सुखमस्यसुखहेतुतयाभिमतपदार्थस्यकार्यंतयानदृष्टंप्रमाणेननगृहीतम् मानाभावएवकुतइतिचेदानन्दोब्रह्मेत्यादिश्रुतेःसुखस्यात्मरूपत्वेनाजन्यत्वादित्यर्थः २५२ यदिचसुखंजन्यंस्यात्तर्हिदुःखरूपमेवस्यादित्याह जायमानमिति । सुखंयदिजायमानंस्यात्तर्हिदुःखमेवस्यात् आत्मनोभिन्नरूपत्वात् यत्रयत्रात्मभिन्नत्वंतत्रतत्रदुःखत्वमित्यत्रलोकसिद्धदृष्टांतमाह पुंसइति । यथावैरिसुखंसुखत्वेनज्ञातमप्यात्मभिन्नत्वेनदृष्टंतद्दुःखत्वेनलोकैरनुभूयतेइतिप्रसिद्धम् २५३ कथंतर्हिविषयेषुसुखजनकत्वानुभवोलोकानामितिचेत्सुखाभिव्यंजकांतःकरणवृत्त्युत्पत्तेस्तत्रारोपादि

शरीरेंद्रियपुत्राद्याब्रह्मणोपीश्वरस्यवा ॥ भवंतिसर्वथासर्वेस्वाधीनानैवसर्वदा ॥ ततोदुःखंसमुद्दिष्टाइमेसर्वेशरीरिणाम् २५० सुखत्वंविद्यतेनैववस्तुनःकस्यचित्क्वचित् ॥ व्यभिचाराद्यतोदृष्टाहेतुतासुखदुःखयोः ॥ पर्यायेणचवस्तूनांसर्वेषांसर्वदेहिभिः २५१ यत्रापिसुखहेतुर्हिदृष्टंतत्रापिनास्यतत् ॥ आत्मरूपंसुखंयस्माद्धेतुभ्योनजनिंव्रजेत् २५२ जायमानंभवेद्दुःखमात्मनोभिन्नरूपतः ॥ पुंसोवैरिसुखंयद्वज्ज्ञातमप्यसुखंभवेत् २५३ ततोभिव्यक्तिरेवास्यसुखस्यात्मस्वरूपिणः ॥ कारणैर्लेशतोयद्वत्खयोतैर्नभसोनिशि २५४ प्ररूढेन्द्रियतानूनंदुःखहेतुर्द्विजैःस्मृता ॥ अप्ररूढेंद्रियोयस्माद्बालोदुःखंनगच्छति २५५ अप्ररूढेंद्रियस्तस्माद्बालवन्निवसेन्मुनिः ॥ सुखैषणांविहायायंस्वप्रकाशसुखोदधिः २५६ ब्राह्मणोजातविज्ञानःपदवाक्यार्थकोविदः ॥ जानन्दुःखैकहेतुत्वमन्वयव्यतिरेकतः ॥ सर्वैषणासमेतस्यशरीरस्यास्यनाशिनः २५७

त्याह ततइति । यथाखद्योतैर्व्यापकस्याकाशस्यकिंचिदवच्छेदेनाभिव्यक्तिःक्रियतेतद्वत्सुखसाधनत्वाभिमतैर्व्यापकात्मस्वरूपस्यसुखस्यतदभिमुखवृत्त्युत्पादनद्वाराकिंचिदभिव्यक्तिर्लेशःक्रियतेइत्यर्थः तस्मात्पूर्णात्मानंदार्थिनएषणाःपरित्यजंतीतियदुक्तंतदुपपन्नमेवेतिभावः २५४ एवमात्मज्ञानस्यफलभूतःसाधनभूतश्चसंन्यासएषणापरित्यागात्मकवैराग्यसहितोनिरूपितः अथात्मज्ञानोत्पत्तौदृष्टद्वारोपकारकाणांश्रवणमनननिदिध्यासनानांविधायकस्यतस्माद्ब्राह्मणइत्यादिग्रन्थस्यार्थमाह प्ररूढेतिसप्तदशभिः । तत्रार्थक्रमेणचतुर्णामेवसंबंधः । ब्राह्मणोवक्ष्यमाणलक्षणस्वप्रकाशसुखोदधिरूपंब्राह्मणभावमिच्छन्वेदांतवाक्याज्जातविज्ञानस्तत्रापिपदार्थवाक्यार्थकोविदत्वलक्षणंपांडित्यंप्राप्यविनाशिनःसर्वविकारशालिनोऽस्यशरीरस्यसंघातस्याऽऽसंगद्वारासर्वैषणाजनकस्यान्वयव्यतिरेकाभ्यांदुःखहेतुतांजानन्विषयसुखैषणांविहायबाल्येननिवसेत् बहिर्मुखस्यहिवेदांतार्थमननंनोपपद्यतेऽयंतुबालवद्भावरूपंमननंकुर्यादितियावत् । तत्रबाल्येनसाम्यमप्ररूढेंद्रियत्वंप्ररूढत्वंरागद्वेषाभ्यांविषयप्रवणत्वंतद्रहितेंद्रियकत्वरूपम् । एतदेवबालसादृश्यंप्रकृतोपयोगाद्ग्राह्यमितिसूचयितुंप्ररूढेंद्रियतेत्याद्युक्तमितिभाष्यानुरोध्यर्थः ग्रंथकृतातुबालवद्भावोपलक्षणंनिर्दिष्टस्तस्यार्थभावः जिज्ञासुर्वेदांतश्रवणादपिपूर्वंरागद्वेषराहित्यरूपंबालभावमभ्यसेदिति २५५ । २५६ । २५७

निदिध्यासनविधायकस्याथमुनिरित्यंतस्यश्रुतिभागस्यार्थंदर्शयति गुरूपदेशादिति । गुरूपदेशात्संजातविज्ञानःरागद्वेषविवर्जितस्वरूपमप्ररूढेंद्रियत्वंश्रुतौबाल्यपदोक्तंतथास्वात्मनोयद्विज्ञानंवेदांततात्पर्यविषयत्वेनावधारणंश्रुतौपांडित्यपदोक्तंतत्प्राप्यध्याने निदिध्यासनेमननेनासंभावनानिवृत्तौयत्फलभूतंज्ञानंतद्रूपेतत्परोभवेदित्यर्थः । निर्भयइतिपदस्योत्तरेणसंबंधः २५८ अथमौनंचेत्यादेरथब्राह्मणइत्यंतस्यार्थंनिदिध्यासनस्वरूपप्रदर्शनपूर्वकमभिनयति अवाङ्मनसेतिद्वाभ्यां । वाङ्मनसपदेनवाङ्मनसविषयभूतंद्वयजातंलक्ष्यतेतद्विलक्षणरूपःअतएवस्वयंप्रभःसजात्यादिभेदराहित्येनानंदरूपोनिर्भयश्चाहमित्येवमाकारेमनने निदिध्यासनेनिष्ठायस्यसतथा उक्तनिदिध्यासनात्मकंमुनेरुत्तमाश्रमिणःकर्मतदाश्रितःसन्बाल्यपांडित्ययोःश्रुतौअमौनपदोक्तयोर्मौनस्यनिदिध्यासनस्यचाभिज्ञआदरेनैरंतर्यसत्कारैरासेवकोब्राह्मणोब्रह्मभावहेतुब्रह्मविद्याशालीमतइति ब्रह्मशब्दाद्वेदेत्यर्थेऽणप्रत्ययइतिद्वयोरर्थः २५९ । २६० सब्राह्मणःकेनेत्यंशस्यार्थमुपायांतरप्रश्नरूपमभिनयति बाल्येति । ब्रह्मविद्ब्रह्मैवभवतीतिश्रुत्यंतरात् ब्रह्मात्माब्राह्मणः ब्रह्मभावरूपंब्राह्मण्यमितियावत् एतदुक्तेभ्योऽपरेणकेनोपायेनस्यात् यद्यस्त्युपायांतरंतर्हितदपिवाच्यमितिभावः २६१ अथयेनस्यादित्यादेरुत्तरस्यार्थमभिनेतुंतदाशयंदर्शयति रागेतिसार्द्धैस्त्रिभिः । रागद्वेषादिराहित्यरूपंबाल्यंगुरुशास्त्रोपदेशनरूपंपांडित्यंतर्कतोविचारेणध्यानेनवास्वरूपसाक्षात्काररूपंमौनंचएतान्येवसाधनानि । एषांफलंतुब्रह्मवित्स्वरूपंब्राह्मण्यमितिद्वयोरर्थः २६२ । २६३ ब्राह्मणत्वप्रयोजकंब्रह्मबोधमभिनीयसएवप्रकृतेब्राह्मणपदप्रवृत्तिनिमित्तमितिदर्शयति स्वप्रकाशेति । स्वप्रकाशंसाक्षादपरोक्षं

गुरूपदेशात्संजातविज्ञानोध्यानतत्परः ॥ अप्ररूढेंद्रियत्वंतद्रागद्वेषविवर्जितम् ॥ स्वात्मविज्ञानपांडित्यसहितंप्राप्यनिर्भयः २५८ अवाङ्मनसरूपोहमानंदात्मास्वयंप्रभः ॥ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः २५९ एवंमनननिष्ठःसन्मुनिकर्मसमाश्रितः ॥ बाल्यपांडित्यमौनानामभिज्ञोब्राह्मणोमतः २६० बाल्यपांडित्यमौनानिविहायोक्तानिकेनसः ॥ ब्रह्मात्माब्राह्मणोभूयादुपायेनापरेणहि २६१ रागद्वेषादिराहित्यंगुरुशास्त्रोपदेशनम् ॥ स्वयंचावगमस्तद्वत्तर्कतोध्यानतस्तथा २६२ बाल्यपांडित्यमौनानिकथितानिमनीषिभिः ॥ साधनानिफलंतद्वद्ब्राह्मणोब्रह्मबोधधृक् २६३ स्वप्रकाशसुखंब्रह्मनामरूपविवर्जितम् ॥ बोद्धृबोध्यादिराहित्याज्ज्ञाताब्राह्मणईरितः २६४ उपायांतरतःसोयंनभवेद्धिकदाचन ॥ अस्त्वयेनतेनायमीदृशोनाग्रहोमम २६५ पारंनावापिगंतव्यंनद्याःसेत्वादिनापितत् ॥ गम्यतेचेत्किमर्थंस्यादादानंनावएवहि २६६ महावेगागाधजलाविस्तीर्णाचेद्भवेन्नदी ॥ नौरेवोपायउद्दिष्टःसेत्वादिस्तत्रनापरः २६७ यथातथात्रबाल्यादिरुपायोनापरोभवेत् ॥ ब्राह्मणत्वेयतोनेदृग्ब्राह्मण्यंप्राप्यतेनरैः २६८

यदुपस्तब्राह्मणेआत्मनोरूपमुक्तंतदेवसुखात्मकंब्रह्मनामरूपात्मकद्वैतविवर्जितत्वात्तस्यबोद्धृबोद्धव्यादित्रिपुटीरहितान्निर्विकल्पकाज्ज्ञानान्निमित्ताद्विद्वान्ब्राह्मणइत्युक्तः २६४ उपायांतरतइति । बाल्यादिभिन्नादुपायात्सोयंवर्णितोब्राह्मणोनभवतिकिंतुतएवबाल्यादयउपायाइतिपूर्वार्द्धार्थः । एवमाशयमुपवर्ण्योत्तरमभिनयति अस्त्विति । उक्ताभिप्रायेणश्रुताविवमुत्तरितं एवंकथं येनकेनोपायेनायंब्राह्मणईदृशोवर्णितलक्षणोऽस्तुसंपद्यतामत्रसाधनेषुममाग्रहोहठोनास्तीति ६५ साधनाऽग्रहाभावंदृष्टांतेनस्पष्टयतिपारमिति । नदीपारगमनरूपंफलंसेतुनाउडुपादिनावासिद्ध्यतिचेत्कोनावएवोपादानेहठंकुर्यादित्यर्थः २६६ उक्तस्योत्तरस्यपर्यवसानंवर्णिताशयेदर्शयितुंदृष्टांतमुपन्यस्यति महावेगेति । यदामहावेगत्वागाधत्वविस्तीर्णत्वैर्हेतुभिःसेत्वादिनादुस्तरानदीभवतितदानौरेवतरणोपायइति २६७ वर्णिताशयेदृष्टांतंयोजयति यथेति । यथामहावेगत्वादिशालिनद्युत्तारेनौरेवोपायस्तथात्रब्राह्मणत्वेबाल्यादिरेवोपायः यतईदृग्ब्राह्मण्यंनरैरुपायांतरेणनप्राप्यतेदुर्लभमितियावत् । अयंभावः भवदप्युपायांतरंहिरण्यगर्भाद्युपासनरूपमश्वमेधाद्युत्कृष्टकर्मरूपंवाभवेत् तत्सर्वंकालविलंबादिदोषग्रस्तंब्रह्मबोधोत्पत्तौबाल्यादिसापेक्षमेवद्वैतदर्शनादुद्विग्नेनातिशुद्धांतःकरणानुष्ठातुमशक्यंच तत्रश्रवणानंतरमपिफलमेतावदेवातएवमुक्तमिति २६८

अथातोऽन्यदार्त्तमित्यंशस्यअतोबाल्यादिरूपसाधनकदंबादन्यत्सांसारिकमवस्थाजातमार्त्तमार्तिग्रस्तमित्यर्थमभिप्रेत्याह कामेति । कामक्रोधादिमत्तयाबाल्यहीनोगुर्वादेर्गुरुप्रभृतेरुपदेशहीनत्वे नपांडित्यवर्जितोमननादिहीनत्वेनमौनवर्जितोविषयलंपटत्वेनएषणाव्युत्थानहीनईदृशोपिब्राह्मणोवर्णितब्राह्मणत्वंप्राप्तःकस्यदेवादेरपिलोकेवर्त्ततेनकुत्राप्यस्तीतियावत् २६९ फलितमाह अन्नादानमिति । अन्नादानंभक्षणंयथातृप्तेर्नियतउपायस्तथाबाल्यादिब्राह्मणत्वइत्यर्थः । अतएवहिरण्यगर्भस्यापिमहावाक्यस्यक्षणमनुसंधानेनैवस्वात्मसाक्षात्कारोत्पत्तिरुक्ता योगिनोपिमहा वाक्यसमानार्थकप्रणवार्थानुसंधानेनैवात्मानंसाक्षात्कुर्वन्तीतिप्रसिद्धमितिभावः २७० उपसंहरति एवमुक्तेइति २७१ अथात्मनःसर्वांतरत्वविनिर्णयपरस्याक्षरब्राह्मणांतग्रंथस्यार्थंप्रदर्शयंस्त त्रादौगार्गीब्राह्मणस्यार्थमभिनयति गार्गीतित्रयोविंशतिश्लोकैः । गार्गीनाम्नावाचक्नवीवचक्नुसंज्ञकस्यकन्यासाप्रसिद्धायाज्ञवल्क्येतिसंबोध्यमुनींद्रंपप्रच्छ कीदृशीतर्केणकर्कशातर्कप्रधाना याधीर्ज्ञानंतदेवधनंयस्याःसावधा । किंकृत्वापप्रच्छ पंचावयवयाप्रतिज्ञादिपंचावयवावगाहिन्याधियानुमानंसमाश्रित्येति २७२ अनुमानंपंचावयवमभिनीयप्रश्नाकारमाह कार्यमिति द्वाभ्याम् । विमतंकार्यंकारणेनव्यापकेनसूक्ष्मेणचोपादानेनव्याप्तंबहिरावृतम् ऊतंच अंतरनुप्रविष्टंचेतिप्रतिज्ञा कार्यत्वादितिहेतुः तंतावितिजातावेकवचनम् तंत्वाश्रितःतैरोतःप्रोतोऽत

कामक्रोधादिसहितउपदेशविवर्जितः ॥ गुर्वादेर्मननध्यानशून्योविषयलंपटः ॥ ईदृशोब्राह्मणःकस्यलोकेतंदर्शयाधुना २६९ अन्नादानंयथातृप्तावुपायोनियतस्त्विह ॥ ब्राह्मणत्वेतथैवस्याद्बाल्याद्येवहिसाधनम् २७० एवमुक्तेकहोलोपिप्रश्नाद्बुपरराम ह ॥ निरीक्ष्यगार्गीधर्मात्मास्वात्मनःपुरतःस्थिताम् २७१ गार्गीवाचक्नवीसाथपप्रच्छमुनिपुंगवम् ॥ याज्ञवल्क्येतिसंबोध्यतर्ककर्कशधीधना ॥ अनुमानंसमाश्रित्यपंचावयवयाधिया २७२ कार्यंहिकारणव्याप्तमूतंचैवसदाभवेत् ॥ कार्यत्वाद्धियथातंतौओतःप्रोतःपटःसदा २७३ ब्रह्मांडसकलंतद्वदपिकार्यमुदीरितम् ॥ ओतप्रोतमतोप्स्वेवस्थावरैर्जंगमैःसह ॥ आपओतास्तथाप्रोताःकुत्रेत्येतत्समीरय २७४ गार्गीवायाविति प्राहयाज्ञवल्क्योपितांस्त्रियम् ॥ यद्यपिस्यादपामत्रहेतुस्तेजस्तथापिहि ॥ तेजसस्त्विंधनेलब्धिर्नान्यत्रास्तीहकर्हिचित २७५ इंधनेनविनावन्हिर्जलाधारोनलभ्यते ॥ शास्त्रमेकंविहायातस्त्यक्त्वावायुमथाब्रवीत् २७६

वंदिन्यांतःपटोयथेतिदृष्टांतः २७३ ब्रह्मांडमिति । ब्रह्मांडपदंमनुष्यलोकेवर्तमानसकलपार्थिवधातुपरम् तथाचसकलमिदंपार्थिवमपिस्थावरजंगमैःसहकारणव्याप्तत्वव्याप्यकार्यत्ववदित्युपनयः तस्मात्पृथिवीकारणत्वेनप्रसिद्धास्वप्सुस्थितंताभिरोतंप्रोतंचवर्ततइतिनिगमनम् अन्यथासक्तुमुष्टिवद्विशीर्यतेत्यनुकूलस्तर्कोपिबोध्यः एवंपृथिव्यांकारणव्याप्तत्वनिश्चयेसतितद्दृष्टांतेनाद्भिरपिकार्यत्वात्कुत्रचिदोतप्रोताभिर्भवितव्यम् तथाचापःकुत्रोतप्रोतावर्त्ततइतिप्रथमप्रश्नइत्यर्थः २७४ गार्गीति । एवंपृष्टोयाज्ञवल्क्यस्तांस्त्रियंप्रतिहेगार्गिवायावापओतप्रोताइतिप्राहस्म तत्रजलोपादानत्वेनप्रसिद्धंतेजोविहायवायोर्जलोपादानत्वाभिधानेहेतुमाह यद्यपीत्यादिना । यद्यप्यत्रऔपनिषदमतेअपांहेतुरुपादानकारणंतेजइतिप्रसिद्धमतस्तदेवजलाधारत्वेनवर्णनीयंतथापिलोकेतैजसोवन्ह्यादिरूपस्यकाष्ठादिरूपइंधनएवोपलब्धिर्नान्यत्र इंधनस्थितवन्हेस्तुनिर्धूमस्यजलविरोधितैवप्रसिद्धानतुजलोपादानताइत्यतस्तथोक्तमितिभावः २७५ उक्तंस्फुटयति इंधनेनेति । इंधनविमुक्तोवन्हिर्जलोपादानतयाशास्त्रंविनानप्रसिद्धः आर्द्रेंधनसंपृक्तस्यधूमसंपर्कद्वाराजलकारणत्वंत्वार्द्रेंधनगतजलेपिसंदिग्धमितिभावः इत्याशयेनतेजस्त्यक्त्वावायुंजलाधारत्वेनाब्रवीदिति । नतुप्रमेयविरोधः परमकारणरूपस्वकार्यकार्याधारतायाःकैमुत्यन्यायसिद्धत्वादितिभावः २७६

वायुमिति । एवंदत्तोत्तरागार्गीवायुप्रभृतीन्प्रत्येकमनूद्यवायुःकुत्रोतप्रोतःअंतरिक्षलोकाःकुत्रोतप्रोताइत्येवमाधाराकारेणपूर्वपूर्वस्योत्तरोत्तरंस्थानमुपादानभूतमाधारंपप्रच्छ । लोकानितिपदस्य गंधर्वादिभिर्नक्षत्रादिभिश्चप्रत्येकंसंबंधोद्रष्टव्यः । लोकानितिबहुवचनंचपंचभूतसमुदायात्मकत्वेनोद्भूतावयवभेदविवक्षयाज्ञेयमितिद्वयोरर्थः २७७ । २७८ उत्तरोत्तरमिति । मुनिर्याज्ञवल्क्यस्तुएतेषांवाय्वादीनांगणितानांमध्यउत्तरोत्तरमाश्रयत्वेनोपादानत्वेनाब्रवीत् तत्रवाय्वाधारत्वेनोक्तस्यांतरिक्षलोकस्यस्वरूपमाह स्थूलेति । यददोऽवकाशरूपेणलोकेप्रसिद्धंस्थूलाकाशमस्तितदेवअंतरिक्षलोकपदेनोक्तमित्यर्थः २७९ गंधर्वलोकादिपदानामर्थमाह गंधर्वाद्याइति । गंधर्वलोकप्रभृतयइंद्रलोकपर्यंताःशब्दाभूतानामुत्तरोत्तरंसूक्ष्मावस्थानांवाचकाइत्यर्थः तथाचांतरिक्षाकारपरिणतभूतेभ्यःसूक्ष्माण्यंतरिक्षलोकंसर्वतःपरिवेष्ट्यस्थितानिचगंधर्वशरीरारंभकाणिभूतानिसंतितानिपरिवेष्ट्यस्थितानिसूर्यलोकारंभकाणिभूतानिततःसूक्ष्माणिच एवमग्रेपीतिनिष्कर्षः २८० सूक्ष्मतायास्तारतम्यमभिनयति अपेक्षयेति । गंधर्वलोकमारभ्यइंद्रांताइंद्रलोकपर्यंताःषडमूरेताभूतावस्थाःपूर्वपूर्वापेक्षयासूक्ष्माअप्युत्तरोत्तरापेक्षयास्थूलाएवबोध्याः यथागंधर्वलोकापेक्षयासूक्ष्माअपिसूर्यलोकाश्चंद्रलोकापेक्षयास्थूलाएवमग्रेपि २८१ अत्रेदंबोध्यं । भाष्यकारैर्यद्यपींद्रपदार्थस्त्रिलोकीपतिः प्रजापतिपदार्थश्चविराट् ब्रह्मलोकपदार्थश्चांडारंभकानिभूतान्युक्तानि

वायुंतथांतरिक्षाख्यलोकंतद्वत्परानपि ॥ लोकान्गंधर्वजातीनांसूर्याचंद्रमसोरपि २७७ नक्षत्रदेवदेवेंद्रप्राजापत्यात्मनामपि ॥ पप्रच्छपूर्ववद्गार्गीस्थानंप्रत्येकमेवसा २७८ उत्तरोत्तरमेतेषामाश्रयंचाब्रवीन्मुनिः ॥ स्थूलाकाशमदोलोकेत्वंतरिक्षाख्यईरितः २७९ गंधर्वाद्यास्तथालोकाइंद्रलोकांतगाअपि ॥ अवस्थाअत्रविज्ञेयाःसूक्ष्माभूतेपुकाश्चन २८० अपेक्षयाहिपूर्वस्यसूक्ष्माअप्युत्तरस्यच ॥ अपेक्षयाभवन्स्थूलाइंद्रांताःषडमूःसदा २८१ इंद्रोविराड्वपुर्ज्ञेयइदंयोदृष्टवान्प्रभुः ॥ सर्वमेतद्यतोविश्वंविराड्वपुषितिष्ठति २८२ ब्रह्मांडगोलकाद्बाह्यःप्रजापतिरितीरितः ॥ पारिक्षितास्तुयंप्राप्ताःसूत्रात्मानंमहेश्वरम् २८३ अस्याव्याकृतमेवस्यात्प्रतिष्ठासर्वकारणम् ॥ ब्रह्मलोकवचोगम्यमेकानेकात्मकंहितत् २८४ ओतप्रोतंसदाकार्यकारणेनैवकारणम् ॥ मायाख्यमात्मरूपेस्मिन्ननुमानेनगम्यते ॥ व्याप्तिलिंगाद्यभावेनैतद्गार्गीव्यधारयत् २८५ अविचार्यैवपप्रच्छमुनिमाग्रहतोहिसा ॥ कस्मिन्नोतास्तथाप्रोताब्रह्मलोकाइतीदृशम् २८६

तर्कमर्यादयाप्रश्नानर्हत्वंचसूत्रात्मनियथाश्रुतिव्याख्यातंतथाप्येतैर्निर्गुणविद्याप्रधानैर्भाष्यकृद्व्याख्यानेयत्कैमुत्यन्यायसूचितंशुद्धात्मनस्तर्कमर्यादयाप्रश्नानर्हत्वंतत्रैवगार्गीब्राह्मणेपर्यवसानंदर्शयितुं तदनुकूलाइंद्रप्रजापतिब्रह्मलोकशब्दानामर्थाःप्रतिपाद्यंते इंद्रइतित्रिभिः । अत्रइंद्रपदार्थोविराड्रूपोबोध्यः इदंसर्वमात्मत्वेनदृष्टवानितिव्युत्पत्तेःपूर्वमुक्तत्वात् संभवतिचेयंव्युत्पत्तिस्तत्रैवेतिदर्शयन्नाह सर्वमेतदिति २८२ प्रजापतिपदार्थमाह ब्रह्मांडेति । ब्रह्मांडगोलकाद्बहिरपिस्थितःसूत्रात्मात्रप्रजापतिपदार्थः पारिक्षितायंप्राप्ताभुज्युप्रश्नेवर्णिताइति २८३ ब्रह्मलोकपदार्थमाह अस्येति । अस्यसूत्रात्मनोऽव्याकृतंमायाज्ञानमित्यादिपदवाच्यत्वेनप्रसिद्धंयत्सर्वकारणंतदेवप्रतिष्ठाआधारः तदेवचात्रब्रह्मलोकपदार्थः कीदृशंतत् समष्टिरूपेणैकंव्यष्टिरूपैरनेकंचेत्यर्थः २८४ आत्मनस्तर्कमर्यादयाप्रश्नायोग्यतांस्फुटयन्नाह ओतप्रोतमित्यादिना । गार्गीएतन्नव्यधारयत्नविचारितवती एतत्किं तत्कारणमव्याकृतमात्मरूपेवर्तमानमप्यनुमानेनगम्यते कुतः तदनुकूलव्याप्तेर्लिंगस्यचाभावात् । सएवकुतइतिचेच्छृणु कार्यंकारणेव्याप्तमित्याकारैवव्याप्तिरुक्ताकार्यत्वमेवचालिंगमुक्तंतदुभयमव्याकृताश्रयत्वेनात्मज्ञानेनोपयुज्यते अव्याकृतस्याकार्यत्वादात्मनश्चकार्यकारणोभयविलक्षणत्वादिति वस्तुतस्तुसूत्रात्मापिनानुमानगम्यः अनुमानस्यदृष्टानुरोधेनैवप्रवृत्तेः । अतएवब्रह्मांडाद्बहिःसूत्रात्मास्तीतिकुत्रचिदपिताार्किकैर्नलिखितमित्यपिबोध्यम् ८५ अविचार्यैवेति । गार्गीउक्तंविचारमकृत्वैवआग्रहतस्तर्कपक्षपातेनमुनिंप्रतिइतीदृशंइत्याकारंप्रश्नंकृतवती । ईदृशंकीदृशं हेयाज्ञवल्क्यब्रह्मलोकाअव्याकृतरूपाःकुत्रोतप्रोताइति २८६

याज्ञवल्क्यइति । मुनिपुंगवोमुनिश्रेष्ठोयाज्ञवल्क्यस्तयागार्ग्याएवंशास्त्रमात्रवेद्यमर्थमात्मतत्त्वरूपंमोर्ख्यादनुमानरीत्यापृष्टःसंस्तांगार्गींप्रतीदमुवाच । इदंकिं । हेगार्गित्वमतिप्रश्नंप्रष्टव्यस्यात्मनः प्रश्नमर्यादामागमेनैवप्रष्टव्यत्वरूपामतिक्रांतंप्रश्नंवृथाऽकृथाःकृतवत्यसीत्यर्थः । अत्रपृष्टइतिगुणकर्मणिक्तप्रत्ययेमुख्यकर्मणोर्थस्यानुक्तत्वाद्द्वितीयाइति २८७ अतिप्रश्नायोग्यतांश्रुनावनति प्रश्नपदोक्तांस्फुटयति आश्रयइति । आश्रयःसर्वाधिष्ठानमात्माऽनुमानेनयतोनगम्यतेअतइयमात्मरूपादेवताऽनुमानविषयानप्रष्टव्याइति । आश्रयपदप्रयोगेचायमभिप्रायः यदापेक्षिकाश्रयताशालिनीसूत्रात्म्याकृतेअपिनानुमाननिर्णयेकिमुतसर्वाधिष्ठानमात्मेति २८८ यदीति । तथापियदिमानसान्मनोनिष्ठाद्दुराग्रहादतिप्रश्नंकरिष्यसितर्हितेमूर्द्धापतिष्यतीति २८९ परमोत्कृष्टमपकृष्टेनसमंपश्यतोनर्थोभवतीत्येतद्दृष्टांताभ्यांस्फुटयति अस्त्रमितिचतुर्भिः । यथार्जुनकरस्थंपाशुपतास्त्रमिदमन्यशरसममस्त्रत्वात्शरांतरवदित्यनुमानेनशरांतरैःसमीकर्तुंनशक्यंसमीक्रियेतेचेत्तर्हितत्पाशुपतास्त्रंतस्यविपरीतदर्शिनःशिरोनिकृत्यच्छित्वानिपातयेदितिद्वयोरर्थः २९० । २९१ द्वितीयंदृष्टांतमाह यथाभिचारेति । यथाथर्वांगिरसामथर्ववेदोत्पन्नानामभिचारमंत्राणांतत्प्राप्यलमत्यर्थंकोपिनोदुर्वासःप्रभृतेर्हृदिस्थानामनुमानबलेनप्राकृतवर्णैःसाम्यंनेतुरभिमंतुर्मूढस्यमूर्द्धाभूमौविशीर्णःसम्पतति । दार्ष्टांतिकेयोजयति एवमिति द्वयोरर्थः २९२ । २९३

याज्ञवल्क्यस्तयापृष्टएवंसमुनिपुंगवः ॥ अर्थंशास्त्रैकसंगम्यमनुमानेनमौर्ख्यतः ॥ उवाचतांतदागार्गीमतिप्रश्नंवृथाकृथाः २८७ आश्रयोनानुमानेनगम्यतेकेनचित्कचित् ॥ अनुमानादियंनैवप्रष्टव्यादेवतात्वया २८८ यदिपृच्छसिमूर्धातेनिपतिष्यतिभूतले ॥ मानसादाग्रहाद्गार्गिविचाररहितासती २८९ अस्त्रंपाशुपतंयद्वत्करस्थंफाल्गुनस्यहि ॥ अनुमानाच्छरैरन्यैःसमीकर्तुंनशक्यते २९० आग्रहादनुमानेनसमतांकुरुतेयदा ॥ तदातस्यशिरःसद्यस्तन्निकृत्यनिपातयेत् २९१ यथाभिचारमंत्राणामथर्वांगिरसामलम् ॥ कोपिनोवाहृदिस्थानामनुमानसमाश्रयात् २९२ वर्णैःसमानतांनेतुर्मूर्धाभूमौविशीर्यते ॥ एवंतवापिगार्गिस्यादेवतातिक्रमाद्ध्रुवम् २९३ एवमुक्तातिभीतासाकर्तव्यंनव्यधारयत् ॥ अगमत्सहसाविप्रमेषोद्दालकमारुणिम् २९४ उद्दालकोप्यशंसुब्धोयाज्ञवल्क्यंसमपृच्छति ॥ याज्ञवल्क्येतिसंबोध्यगोप्यार्थंदेवतोदितम् २९५ मद्रदेशेवयंपूर्वंपतंचलगृहेस्थिताः ॥ यज्ञवाक्यान्यधीयानाबहवोब्रह्मचारिणः २९६ पतंचलस्यभार्यासीद्गंधर्ववशमागता ॥ अपृच्छामैतमागम्यकोसीतिगुरुणासह २९७ सोब्रवीद्ब्राह्मणानस्मान्सगुरून्स्त्रीवपुःस्थितः ॥ आथर्वणःकबंधोहंगंधर्वोलोकविश्रुतः ॥ उपकारायसंप्राप्तोगुरोश्चब्रह्मचारिणाम् २९८

उपसंहरति एवमुक्तेति । एवमुक्तंश्रुत्वाऽतिभयेनव्याकुलासाएवागार्गीआरुणिंअरुणस्यापत्यमुद्दालकनामानमगमत् वादायमेरपितुंतत्समीपेतस्थावित्यर्थः २९४ अथसूत्रात्मांतर्यामिणोरपितत्त्वमागमविषयमेवविज्ञेयमितिप्रदर्शनपूर्वकंतत्स्वरूपनिरूपकंसप्तमब्राह्मणमेकत्रिंशच्छ्लोकैर्व्याकुर्वन्नादौतयोरागमवेद्यताबोधिकायाःप्रथमकंडिकायाअर्थमितिहासविषयानिरूपयति उद्दालकइतिचतुर्दशभिः । उद्दालकोदेवतोदितंदेवतयागंधर्वेणस्वस्माउपदिष्टंगोप्यमर्थंयाज्ञवल्क्यंप्रतिपृच्छतिस्मेतिसंबंधः २९५ उद्दालकःस्वस्यदेवोपदिष्टार्थवित्त्वेनाधिक्यंसूचयितुंभुज्युवत्पूर्ववृत्तमाह मद्रेत्यादिना । वयंबहवोब्रह्मचारिणोयज्ञवाक्यानियज्ञप्रतिपादकानिवेदवाक्यान्यधीयानाःपतंतःसंतोमद्रदेशेपतंचलनामकस्यकपिगोत्रकस्यविप्रवरस्यगृहेस्थिताइति २९६ पतंचलस्येति । तस्यपतंचलस्यभार्यागंधर्वेणाग्निनाऽऽविष्टासीत्तदाएतंगंधर्वंसर्वेवयंगुरुणासहापृच्छामत्वंकोसीति २९७ सोब्रवीदिति । संगंधर्वःस्त्रीवपुःस्थितोऽस्मद्गुरोर्भार्याशरीरेस्थितःसगुरून्गुरुसहितान्ब्राह्मणान्प्रतीदमब्रवीत् इदंकिं आथर्वणोगोत्रतःकबंधोनामतोलोकप्रसिद्धोगंधर्वोहंभवतामुपकारायागतश्चेति अत्रकेनजलेनबंधःपरिवेष्टनंवासाधारतयायस्यसतथेतिकबंधपदस्यार्थोसमन्वयोबोध्यः २९८

एवमुक्तेति । एवमुक्त्वापुनरेतद्वक्ष्यमाणंवाक्यंसगंधर्वःकपिगोत्रायास्मद्गुरवेउक्तवान् २९९ तद्वाक्यमभिनयति काप्येति । हेकाप्यपतंचलत्वंतत्सूत्रंजानासियेनेदंसर्वंजगद्बद्धंमालाकुसुमवद्धृतं । जगत्स्वरूपमाह लोकेत्यादिना । प्रत्यक्षपरोक्षभेदेनलोकद्वित्वंविवक्षितं कीदृशंलोकद्वयं भूतानामाधारभूतमितिशेषः तद्गतानिभूतानिचेति ३०० नाहमिति । एवंपृष्टोनोस्माकंगुरुरेवंप्राह । एवंकथं अहंयत्सर्वलोकस्यधारणेनिमित्तंसूत्रंतन्नजानामीति । ततःसगंधर्वःपुनरस्मद्गुरुमाह ३०१ अंतरिति । हेकाप्यसूत्राज्ञानेप्यंतर्यामिणंभवान्किंवेत्तीतिगंधर्वेणोक्तेप्यस्मद्गुरुर्नजानामीत्येवाहस्मेति ३०२ एवमुक्तइति । एवमुक्तोस्मद्गुरुणास्वाज्ञानावेदनेनदत्तोत्तरःसगंधर्वःपुनःसूत्रांतर्यामिणोर्ज्ञानोत्कर्षंप्राहस्म । कथमित्यतआह काप्येति । हेकाप्यमयापृष्टंसूत्रमंतर्यामिणंचयोवेत्तिससर्वज्ञइत्यर्थः ३०३ सब्रह्मांणमिति । सब्रह्माणंपरमात्मानंवेत्तितथालोकान्भूरादिकान्तथासर्वान्देवादीन्जानातिनात्रसंशयः इतिप्रभावमुक्त्वाउभयंसूत्रमंतर्यामिणंचसशिष्यायास्मद्गुरवेऽब्रवीत् ३०४ जानामीति । एवंदेवोपदेशेनाहंतद्द्वयंसूत्रांतर्यामिरूपंजानामिभवांस्तुतद्द्वयमजानन्सन्ब्राह्मणानांस्वभूतागाःसर्वागृहीतवान्आश्रमंप्रतिप्रेषयिताभविष्यसितर्हितेशिरःपातोभविष्यतीति ३०५ इत्युक्तेइति । इति

एवमुक्त्वापुनर्वाक्यमेतद्गंधर्वउक्तवान् ॥ गुरुंपतंचलंकाप्यस्माभिःपरिवारितम् २९९ काप्यजानासिसूत्रंत्वंयेनबद्धमिदंजगत् ॥ लोकद्वयंचभूतानांभूतानिनि खिलानिच ३०० नाहंजानामितत्सूत्रंनिमित्तंप्राहनोगुरुः ॥ पुनरप्याहगंधर्वोह्यस्माभिःसहितंगुरुम् ३०१ अंतर्यामिणमीशानंकाप्यजानातिकिंभवान् ॥ इत्युक्तेनेतितंप्राहगंधर्वंपूर्ववद्गुरुः ३०२ एवमुक्तःपुनःप्राहगंधर्वःकृपयान्वितः ॥ काप्यसूत्रंमयापृष्टमंतर्यामिणमेवच ॥ योवेत्तिसकलंविश्वंवेत्तिसोत्रनसंशयः ३ सब्रह्माणंतथालोकान्देवान्वेदांस्तथापरान् ॥ प्राणिनःपंचभूतानिस्वात्मानंसर्वमेवच ॥ जानातिनात्रसंदेहइत्युक्त्वोभयमब्रवीत् ३०४ जानामितद्द्वयंचाहंतदजा नन्भवान्यदि ॥ ब्राह्मणानांहिगाःसर्वाअज्ञानेनगृहीतवान् ॥ तदासद्यःशिरःपातोभवतोह्यभविष्यति ३०५ इत्युक्तेयाज्ञवल्क्योपितमाहोद्दालकंमुनिम् ॥ वेदा हंतद्द्वयंयत्तुगंधर्वस्तुभ्यमुक्तवान् ३०६ इत्युक्तेकोपसहितंगौतमोवाक्यमब्रवीत् ॥ वेदवेदेतिवचनंभाषसेपामरोयथा ॥ नतुतत्कथयस्यज्ञजानन्नेनंसंवदेत् ३०७ यदिजानासितद्ब्रूहिकिमर्थंगर्जनंवृथा ॥ इत्युक्तेयाज्ञवल्क्योपिगौतमंवाक्यमब्रवीत् ३०८ वायुरेवहितत्सूत्रंसर्वबंधनकारणम् ॥ अयंलोकस्तथान्यश्चभूतानिनि खिलान्यपि ॥ वायुनैवनिबद्धानितंतुभिस्तुपटोयथा ३०९ यतःसूत्रमयंवायुस्ततएवास्यनिर्गमे ॥ अंगानांशीर्णतांप्राहुर्मृतंतद्वन्मनीषिणः ३१० अंगीचका रतद्वाक्यमेवमेवेतिवाक्यतः ॥ अंतर्यामिणमात्मानंयाज्ञवल्क्यवदाधुना ३११

उद्दालकेनगौतमेनोक्तेसतियाज्ञवल्क्यस्तंप्रतीदमाह इदंकिं यद्गंधर्वस्तुभ्यमुक्तवांस्तद्द्वयमहंवेदेति ३०६ इत्युक्तेकोपेति । एवंयाज्ञवल्क्येनोक्तेसतिसकोपंवाक्यंगौतमआहस्म । तद्वाक्यमभिनयतिवेदे त्यादिना । अहंवेदवेदजानामिजानामीत्याकारंवचनमज्ञवद्भाषसेनतुतत्सूत्रांतर्यामिस्वरूपंकथयसिस्पष्टंनिरूपयस्यतोऽज्ञोसि योहिजानन्भवतिसएवंवेदेत्येतावन्मात्रंनवदेदिति ७ यदीति स्पष्टम् ८ याज्ञवल्क्यःप्राणप्रधानत्वेनवायुरूपंसूक्ष्मशरीरंसमष्टिव्यष्टिरूपंसूत्रत्वेनाह वायुरेवेति । यत्त्वयापृष्टंसर्वबंधनकारणंसूत्रंतद्वायुरूपमेव यतोवायुनाप्राणात्मनाधिदैवमध्यात्मंचस्थितेनसर्वंलोकादिकंनि बद्धंधारितंदृश्यते ३०९ तत्रलोकप्रसिद्धामुपपत्तिमाह यतइति । यतोयंवायुःसूत्रंसूत्रवद्विधारकस्ततएवास्यवायोर्निर्गमेमृतंदृष्ट्वामृतस्यांगानांशीर्णतांसूत्राकर्षणेकुसुमवद्विश्लकलिततांशिथिलतामिति यावत् प्राहुर्वर्णयंतीत्यर्थः ३१० अंगीचकारेति । एवमुक्तंश्रुत्वागौतमस्तुयाज्ञवल्क्यवाक्यमेवमेवेतिवाक्यमभिधायांगीचकार अंतर्यामिणंवर्णयेत्युवाचचेति एतेनद्वितीयकण्डिकार्थोदर्शितः ३११

याज्ञवल्क्येनैकविंशतिकंडिकाभिर्निरूपितमंतर्यामिणमुक्तस्यसूत्रस्यनियमेनचालकरूपंप्रतिपादयति । पृथिव्यामितित्रयोदशभिः । योदेवोऽधिदैवंदेवेषुनिरूपणप्रस्तावेपृथिव्यादिषुद्वादशसुश्रु
त्यानिरूपितःसोंतर्यामीतिपष्ठेनसंबंधः । अनिलेवायौ । दिविस्वर्गे । चंद्रतारकेचंद्रतारकसमाहारे आकाशेभूते । अंतरिक्षपदेनतुभुवर्लोकग्रहइत्यपुनरुक्तता । तमस्यंधकारे । कीदृशोदे
वः प्राज्ञःसर्वज्ञः ३११ अधिभूतमिति । तथाअधिभूतंनिरूप्यमाणोयोदेवःस्थावरेपुचरेपुचभूतेपुनिरूपितस्तथाध्यात्मंप्राणाद्यष्टसुनिरूपितः । विज्ञानंबुद्धिः । रेतउपस्थेंद्रियम् ३१३ एकविंशतीति ।
एवमेकविंशतिप्रकारासंस्थाव्यवस्थायेपाम्ईदृशेपुस्थानेपुयःपुमांस्तिष्ठन्नेतेभ्यःपृथिव्यादिस्थानेभ्योभिन्नोवर्त्ततेयथागृहपतिर्गृहाद्भिन्नः । एतेनश्रुतिगतांतरशब्दस्यभेदरूपाऽर्थपरतादाशंता । ' सं
स्थानाशेव्यवस्थायाम् ' इतिहेमचंद्रः । 'अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये'इत्यमरः ३१४ एतानीति । एतानिपृथिव्यादीनियंस्वांतःस्थितंनविदुर्नजानंति यस्तुएतानिनियंतुंशरीरांतरा
णिनोपादत्तेकिंतुयथास्माकंजीवानांशुक्रशोणितमयंशरीरंतद्वत्तस्यपृथिव्यादीन्येवशरीरभूतानीति ३१५ पृथिव्याद्यभिमानानीति । पृथिव्यादीनिआत्मत्वेनाभिमन्यमानानिचेतनानिलिंगरूपाणिए

पृथिव्यामप्सुचैवाग्नावंतरिक्षेऽनिलेदिवि ॥ आदित्येचतथादिक्षुदेवोयश्चंद्रतारके ॥ आकाशेतमसिप्राज्ञस्तेजस्यास्तेधिदैवतम् ३१२ अधिभूतंहिसर्वेषुस्थावरे
पुचरेपुच ॥ अध्यात्मंचतथाप्राणेवाक्चिक्षुषिसर्वदा ॥ श्रोत्रेमनसिसर्वात्मात्वचिविज्ञानरेतसोः ३१३ एकविंशतिसंस्थेषुतिष्ठन्स्थानेषुयःपुमान् ॥ एतेभ्योभि
न्नएवायंगृहाद्यद्वद्गृहीपुमान् ३१४ एतानिनविदुस्तद्वद्देनंस्वहृदयेस्थितम् ॥ शरीरंयस्यचैतानिपृथिव्यादीनिसर्वदा ॥ यथास्माकंवपुःप्रोक्तंशुक्रशोणितसंभवम्
३१५ पृथिव्याद्यभिमानानिचेतनानिस्वयंततः ॥ सर्वाण्येवयएतानिनियच्छतिमहेश्वरः ॥ व्यापारेषुनिजेष्वेकोराजाभृत्यान्यथाभुवि ३१६ अंतर्याम्येषआ
त्मातेयंत्वंगौतमपृच्छसि ॥ विवर्जितःसदात्रत्यमरणादिषडूर्मिभिः ३१७ एकविंशतिवारंसउक्तवान्मुनिसत्तमः ॥ पृथिव्यादिषुदेवेशंप्रत्येकंतन्नियामकम् ३१८
एवमुक्त्वाथतस्यान्यान्सर्वधर्मनिषेधकान् ॥ धर्मानुवाचधर्मज्ञोनेतिमंत्रंसमाश्रितः ३१९ नेत्रैर्नानाविधैरेषनदृष्टोज्ञानिनामपि ॥ श्रोत्रैश्चनश्रुतस्तद्वन्मनोभिर्नमतः
पुमान् ३२० बुद्धिभिश्चविशुद्धाभिर्नविज्ञातःकथंचन ॥ द्रष्टाश्रोतातथामंताविज्ञाताजगदीश्वरः ॥ दृष्टेःश्रुतेर्मतेस्तद्वद्विज्ञातेरपिसर्वदा ३२१ सर्वेंद्रियाणांव्या
पारमेषवेत्तिमहेश्वरः ॥ बाह्यमाभ्यंतरंवापिनेंद्रियंवेत्त्यमुंसदा २२ अंतर्यामिणएतस्मात्पृथिव्यादिषुसंस्थितात् ॥ द्रष्टाश्रोतातथामंताविज्ञाताचास्तिनापरः ३२३

तानिलक्षणयापृथिव्यादिपदार्थभूतानिसर्वाणिनानाव्यापारेषुराजाभृत्यानिवयोमहेश्वरोमायाधिपतिर्नियच्छतिनियमेनप्रवर्त्तयति ३१६ अंतरिति । सएषोंतर्यामीतवाप्यात्माहेगौतमयंपृच्छसीति ।
अमृतपदार्थमाह विवर्जितइति । योमरणोपलक्षितषडूर्मिभिर्वर्जितः ' क्षुधातृषाशोकमोहौजन्ममृत्यूषडूर्मयः ' इति ३१७ एकविंशतीति । एवंतंनियामकमंतर्यामिणंपरमदेवंयाज्ञवल्क्यएकविंशति
वारंपृथिव्यादिषुस्थितमुक्तवानिति ३१८ अंत्यकण्डिकागतस्यादृष्टोद्रष्टाइत्यादेरर्थमाह एवमुक्त्वेत्यादिना । एवमंतर्यामिणमुक्त्वाप्रतिपाद्यतस्यान्यानतुक्तान्धर्मानदृष्टत्वादीनुवाच । कीदृशान्धर्मान्
सर्वधर्माणामभावाभिव्यंजकान् । कीदृशोयाज्ञवल्क्यः नेतीत्याकारंमंत्रमंतर्यामिणोदेवस्यप्रादुर्भावप्रयोजकंसमाश्रितः तन्निष्ठइतियावत् ३१९ तान्धर्मानभिनयति नेत्रैरित्यादिना । एषदेवोज्ञा
निनांप्रशस्तज्ञानशालिनामपिनेत्रैश्चक्षुर्भिरद्ययावन्नदृष्टोनविषयीकृतोऽतोऽदृष्टत्वंतस्यधर्मएवमग्रेपि । स्वयंतुसर्वस्यद्रष्टाएवमग्रेपीति । तथादृष्टिश्रुत्यादिपदार्थभूतानांबुद्धिवृत्तीनांप्रकाशकत्वाद्द्रष्टा
इत्यादिपदैरुक्तइतिद्वयोरर्थः ३२० । ३२१ उक्तमेवस्फुटयति सर्वेंद्रियाणामिति । एषसर्वेंद्रियव्यापारंवेत्तिएनंत्विंद्रियाणिनविषयीकुर्वंतीत्यर्थः ३२२ अंतर्यामिणइति । एतस्मादंतर्यामिणः
सर्वत्रस्थितादन्योद्रष्ट्रादिरूपचेतनोनास्तिकिंत्वयमेवसर्वत्रद्रष्ट्रादिरूपइत्यर्थः ३२३

आत्मेति । अतस्तद्भिन्नस्यद्रष्ट्रादेरभावात्तवएषएवात्मा । सचाद्वितीयइत्याह एतस्मादिति । एतद्भिन्नंजडत्वाद्विनाशिविद्याबाध्यंतुच्छमितियावत् । सप्तमब्राह्मणार्थमुपसंहरति उद्दालक इति ३२४ आत्मयाथात्म्यवेदकस्याष्टमब्राह्मणस्यार्थंन्यूनश्लोकशतेनोपबृंहयंस्तत्रप्रथमकंडिकायाअर्थमभिनयति गार्गीतिचतुर्भिः । ततउद्दालकोपरमानंतरंवचक्नुपुत्रागार्गीएतद्वचोविप्रान्प्रत्युवाच एतत्किं हेअत्रसंगताःसमवेताविप्राभगवंतःपूजाशालिनोयूयमिदंमद्वचःशृणुत । इदंकिं अहमिमंयाज्ञवल्क्यंप्रतिद्वावनिंदितौप्रश्नौपृच्छामीति ३२५ ताविति । तौमत्प्रश्नावयंयाज्ञवल्क्योमहाशयोमहामतिर्वक्ष्यतिचेत्तर्ह्यमुंजेतुंयुष्माकमन्यतमःकोपिकोपिप्रजापतिसदृशोपिनक्षमोभवेदिति । कीदृशममुं ब्रह्मोद्यंब्रह्मवक्तारं छांदसत्वात्कर्त्तरिक्यप् । दृष्टांतःस्पष्टः । फलितमाह अनुजानंत्विति इतिद्वयोरर्थः ३२६ । ३२७ ब्राह्मणानुज्ञाप्रार्थनेहेतुमाह शापादिति । कश्चित्प्रश्नोद्यतोमांपृच्छंतींस्त्रियंमत्वामाशपेदितिशंकाविष्टासतीगार्गीविप्राज्ञांप्रार्थितवतीयतोतिशयेनधीधनाधीशालिनी ततोलब्धविप्राज्ञासतीयाज्ञवल्क्यमाभाष्यसंबोध्यइदंपप्रच्छ ३२८ द्वितीयकंडिकार्थंचतुर्विंशत्योपबृंहयन्सभयोर्विवादइतिन्यायमनुरुद्ध्यसर्वज्ञेनयाज्ञवल्क्येनस्वस्यवादयोग्य

आत्मातएषएवातोनापरोगौतमास्तिहि ॥ एतस्मादपरंयत्तुतद्विनाशिजडत्वतः ॥ उद्दालकस्ततोविप्रःप्रश्नादुपरराममह ३२४ गार्गीवाचक्नवीविप्रांस्ततएतदुवाचसा ॥ हंतविप्रावचोमेऽद्यभगवंतोत्रसंगताः ॥ शृणुताहमिमंविप्राःपृच्छामिद्वावनिंदितौ ३२५ तौचेद्वक्ष्यतिविप्रोयंयाज्ञवल्क्योमहाशयः ॥ कदाचित्कोपिनैवामुंजेतुंयुष्मासुसंभवेत् ३२६ ब्रह्मोद्यंब्राह्मणंकोपिखद्योतेपुयथारविम् ॥ अनुजानंतुमांतस्मात्सर्वएवद्विजोत्तमाः ३२७ शापाद्भीतातदागार्गीब्राह्मणानुमतिंमुहुः ॥ प्रार्थयामासपृच्छेतिलब्धानुज्ञातिधीधना ॥ पप्रच्छयाज्ञवल्क्यंतमिदमाभाष्यसंसदि ३२८ प्रसिद्धासर्वलोकेषुगार्गीवाचक्नवीह्यहम् ॥ प्रायोबुद्ध्याधिकालोकेपुरुषेभ्योपियोषितः ३२९ साहसेनचधैर्येणरागतःक्रोधतोपिच ॥ तासांमांप्रथमांविद्धिसरस्वत्यासमांधिया ३३० अहंपश्यामिविप्रेंद्रजगदेतदपौरुषम् ॥ नपुंसकमहंतद्वदहंस्त्रीचपुमानहम् ३३१ नपुंसकःपुमानज्ञेयोयोनवेत्तिहृदिस्थितम् ॥ पुरुषंस्वप्रकाशंतमानंदात्मानमव्ययम् ३३२ अयमेवपुमान्योषिन्नाहंपीनपयोधरा ॥ यतःस्वस्मात्परस्तस्यपतिरस्तिस्त्रियायथा ३३३

तायागार्ग्यहंपदप्रयोगेप्यसूचितात्तामभिनयति प्रसिद्धेत्याद्यष्टादशभिः । हेमुनेभवानपिप्रसिद्धोऽहमपिप्रसिद्धागार्गीति । यदिभवान्बुद्ध्याधिकस्तत्त्वंमय्यपिसंभाव्यतेइत्याह प्रायइति । पुरुषापेक्षयाबुद्ध्याधिक्यंयोषितांप्रसिद्धं ‘ बुद्धिश्चासांचतुर्गुणा ’ इतिप्रसिद्धेः ३२९ साहसेनेति । साहसादिचतुष्टयेनचाधिकाइत्यनुषंगः । साहसमविवेकः रागःकामः । तासांबुद्ध्यादिनिरूपिताधिक्यशालिनीनांमध्येप्रथमांप्रथमगुणेनबुद्ध्याप्रथमगणनीयांमांविद्धियतोधियासरस्वतीसमाम् ३३० ननुक्वासौतवबुद्धिर्ययात्वमाधिक्यमभिमन्यसइतिचेत्तत्त्वधीरेवेत्याह अहमिति । हेविप्रेन्द्रअहमेतत्स्वव्यतिरिक्तंजगदपौरुषंपौरुषेयपुरुषस्यभावेनकर्मणावाहीनंपश्यामि । किंतत्पौरुषमितिचेत्सर्वात्मभावदर्शनमेवेत्याशयेनाह नपुंसकमिति । नपुंसकादिभेदभिन्नंसर्वंजगदहमेवेतिबाधासामानाधिकरण्येनज्ञानमेवपौरुषमिति ३३१ उक्तपौरुषव्यतिरेकेनपुंसकत्वंस्त्रीत्वंवापर्यवस्यतीत्याह नपुंसकइतिचतुर्भिः । सपुमानपिनपुंसकोज्ञेयः आत्मनोपिज्ञानेऽशक्तस्यहिपौरुषंदुर्वचमित्यर्थः ३३२ उक्तज्ञानहीनस्यस्त्रीत्वंस्पष्टयति अयमेवेति । अयमज्ञःपुमानेवयोषित्पारतंत्र्येणस्त्रीसमत्वादित्यर्थः ३३३

स्त्रीत्वेपिवारांगनासमोऽज्ञइत्याह कामेति । कामक्रोधादयएवभुजगावेश्यापतयस्तैर्वारांगनाभूतोऽज्ञःसंभुज्यतेस्वस्ववृत्तिदशायामाक्रम्यतइतियावत् । स्वस्मिंस्तद्व्यतिरेकमाह नाहमिति ३३४ गर्भधारयितृत्वमप्यज्ञेस्त्रीसाम्यमित्याह अज्ञइति । सप्तमोधातूरेतोरूपस्तदात्मकंगर्भंकालरूपपुरुषसंयुक्तासौअज्ञरूपास्त्रीचतुर्थाग्निभूतापंचमाग्नियोषावद्धारति अत्रसंसारे 'पुरुषेहवाअयमादितो गर्भोभवति' इत्याद्यैतरेयश्रुतेः । एतदर्थप्रपंचःप्रथमेध्यायेगतइति ३३५ स्वस्मिन्दोषप्रयोजकदेहाभिमानमूलनिवृत्त्याउक्तलक्षणस्त्रीत्वव्यतिरेकंस्फुटयति नाहमिति । वरयौवनरूपेवयस्य वस्थायांवर्त्तमानापियूनांमध्येस्थितापिचविक्रियांनएमिप्राप्नोमि ३३६ नग्नेति स्पष्टम् ३३७ ननुशास्त्रदृष्ट्यात्वयिस्त्रीत्वाभावेपिलोकदृष्ट्यातुस्यादितिचेन्न स्त्रीशब्दावयवार्थसमन्वयाभावा दितिवक्तुंतद्व्युत्पत्तिमाह ततइति । स्त्यायतेःस्त्यैशब्दसंघातयोरितिप्रसिद्धधातोर्ड्रट्प्रत्ययांतस्यार्थंयाधारयतिसैवलोकेपिस्त्रीतिवाच्या अहंत्वेवमुक्तविधानास्मितेनवधूःस्त्रीकथंस्यामिति ३३७ कोसौस्त्यायतेरर्थइतिवीक्षायामाह स्त्यायतेरिति । यद्यपिशब्देसंघातेचपृथक्पृथक्शक्तिरुक्ताऽतएवसंहन्येतेशुक्रशोणितेऽस्यामितिस्त्रीशब्दव्युत्पत्तिमाहुर्वृद्धास्तथाप्येतैःसापेक्षार्थसंघातेप्रतियोगि

कामक्रोधादिभिस्तद्वद्भुजगैर्भुज्यतेपुमान् ॥ अज्ञोवारांगनातुल्योनाहमेवंकथंचन ३३४ अज्ञोगर्भंदधात्यत्रधातुंसप्तममातुरः ॥ कालेनपुरुषेणासौसंयुक्तालल नायथा ३३५ नाहमस्मिन्वयस्यग्रदुःसहेयौवनेवरे ॥ वर्तमानास्थितायूनांमध्यएमीहविक्रियाम् ३३६ नग्राहंभवतांमध्येस्थितास्म्येकांतगायथा ॥ निरीक्षंतेन मांविप्राविक्रियाभीरवःस्वयम् ॥ पश्यंत्यहममून्सर्वान्प्रशाम्यात्मकरादिभिः ३७ ततःस्त्रीनामसाज्ञेयास्त्यायतेरर्थधारिणी ॥ यालोकेनाहमेवंस्यांकथंतेनवधूरहम् ३३८ स्त्यायतेःशब्दसंघातःस्मृतोर्थोत्रमनीषिभिः ॥ अहंवधूःसमीचीनायुवतिःसुपयोधरा ३३ कामिनिमित्समानाकांविद्यतेत्रनितंबिनी ॥ अयंममपतिःपुत्र स्तद्वदेषासुतातथा ॥ धनंधान्यंगृहेमेस्तिवंध्याचाहंकुटुंबिनी ३४० इत्यादिशब्दसंघातःस्त्यायत्यर्थउदाहृतः ॥ मायापिशाचीसंपर्कादात्मनोबोधशून्यतः ॥ सयेपुवर्ततेतेस्युःस्त्रियोत्रमुनिसत्तम ३४१ आत्मबोधेनयेपूर्णाःपुरुषास्तउदाहृताः ॥ यादृशास्तादृशाःसंतुशरीरेणद्विजोत्तम ३४२ यथानटःपुमान्भूयाद्योषि ताहृदयंगमः ॥ क्षणेनललनावास्यान्नरधैर्यविनाशिनी ३४३ एवमेषपुमानेकआनंदात्मामहेश्वरः ॥ पुंसोवायोषितोवापिगृह्णातिवपुरिच्छया ३४४ पुमान्स्त्री कुंजरोवाजीत्यादिभेदोत्रमायया ॥ स्वमेयद्वद्भवेत्पुंसस्तद्वदेषोप्युदाहृतः ४५ ततःसर्वज्ञरूपात्वांललनादेहमास्थिता ॥ ब्राह्मणानांविजेतारंविप्रंसर्वज्ञमानिनम् ३४६

तयाशब्दस्यैवसंनिहितस्यान्वयोयोग्यइतिमत्वाशब्दसंघातइत्येकवचनंप्रयुक्तमितिबोध्यं केषांशब्दानांसंघातःस्त्रीशब्दार्थइत्याकांक्षायामविवेकिप्रयुज्यमानानहंममाभिमानविषयवाचकान्शब्दान्द र्शयति । अहमित्यादिना स्पष्टम् ३३९ । ३४० स्त्रीशब्दार्थनिरूपणंनिगमयति इत्यादीति । उदाहृतोबुधैरितिशेषः सचमायापिशाचीयोगेनात्मबोधहीनत्वाद्येपुप्राणिष्वस्तितेषांस्त्री त्वंबोध्यमित्यर्थः ३४१ स्वस्मिन्पुरुषत्वमावेदयितुंलक्षयति आत्मेति । येप्रमातारआत्मबोधेनपूर्णास्तेपुरुषाउदाहृताः 'सवाएषपुरुषःसर्वासुपूर्षु' इतिश्रुत्येतिशेषः । तेचशरीरेणयादृशास्तादृ शाःसंतुनकाचितक्षतिरितिबहुत्वमुपाधिदृष्ट्याबोध्यम् ३४२ कल्पितेनरूपभेदेनवास्तवैक्यस्यनक्षतिरितिसदृष्टांतंबोधयति यथेतिद्वाभ्यां । यथास्त्रीपुंवेशैर्नटस्यनान्यथाभावस्तथात्मनोपीतिद्वयो रर्थः ३४३ । ३४४ एकस्यमाययानानाभावेऽपरंदृष्टांतमाह पुमानिति । वाजीअश्वः एषजाग्रतिदृश्यमानः ३४५ फलितमाह ततइति । ततआत्मबोधलक्षणपौरुषशालित्वात् सर्वज्ञरूपाप्रशस्ता सर्वज्ञा सर्वज्ञतायाःप्राशस्त्यमापेक्षिकत्वराहित्यं एतादृश्यहंद्वोप्रश्नरूपबाणोवागिंद्रियरूपकोदंडेनिधायत्वांहंतुमागतास्मितत्त्वपावादरूपयुद्धायस्थैर्यवाकर्तव्यंअवनतिर्वाकार्येतिद्वयोरर्थः ३४६

३४७ श्रोतंदृष्टांतभागंव्याकरोति दिवइतितिभिः । काशिराजस्यदिवोदासस्यसुतःक्षत्रधर्मेणोग्राणांपूर्वजानांपितामहादीनांसमानधर्माअतएवशत्रुणयोद्धुकामःप्रतर्दनोजनकोवाशत्रूणामभिमुखे संग्रामेसुवर्णादिभूषितमात्मनःकोदंडंज्ययागुणेनहीनमधिक्रुष्टज्याकं कृत्वातथाऽऽकर्णमाकृष्टंकृत्वासशरहस्तःसन्शत्रून्व्यथयितुंतानुपतिष्ठतीतित्रयाणामर्थः ३४८ । ३४९ । ३५० दार्ष्टांतिक माह उपस्थितास्मीति । इतिगार्ग्योक्तेसति ब्रूहिपृच्छ ३५१ तृतीयकंडिकार्थमाह एवमितितिभिः । तर्काभियानंपरित्यज्यागमविषयागार्ग्याकृतंप्रश्नमभिनयति दिवइत्यादिना य त्सूत्रात्मस्वरूपंदिवऊर्ध्वांडकपालादूर्ध्वमुपरिष्टात्स्थितमुदितमागमिकैः तथाभुवोधोंडकपालादधस्तात्स्थितमुदितं तथाद्यावापृथिव्योरंडकपालयोर्मध्येचस्थितमुदितं अतीतानागतवर्तमानात्मक सर्वप्रपंचात्मकंचोदितंतत्कुत्रोतप्रोतंवर्ततइतिद्वयोरर्थः ३५२ । ३५३ नन्वेवंभंग्यागार्ग्याकिंपृष्टमित्याकांक्षायामाह ब्रह्मेति । पूर्वंहिसूत्राव्याकृताश्रयांस्तर्केणप्रश्नायोग्यान्निश्चितवतीगार्गी त्यत्रआगमविषयातन्निश्चयमिच्छंतीप्रजापतिपदोक्तसूत्रेणसंलग्नान्आधारतयासंबद्धान्ब्रह्मलोकान्अव्याकृतरूपतयावर्णितानेवपुनःपप्रच्छ किंकृत्वा पूर्वपरिपाटीत्यागसूचनायशब्दभेदंविधाय ल्य

उभाभ्यांप्रश्नबाणाभ्यांवाकोदंडेनिधायतौ ॥ हंतुमभ्यागतास्थैर्यंभजवाऽनतिंव्रज ३४७ दिवोदाससुतोयद्वदुग्रपूर्वजधर्मवान् ॥ क्षत्रधर्मरतःशत्रुंयोद्धुकामःप्रत र्दनः ३४८ जनकोवाविदेहोत्रस्वशत्रून्प्रतिसंगरे ॥ सुवर्णमणिरत्नादिभूषंकोदंडमात्मनः ४९ ज्याहीनंसहसाधिज्यंकृत्वाथाकर्णपूरितम् ॥ तीक्ष्णलोहौशरैर्हस्ते गृहीत्वाचातिकोपनः ॥ सपत्नानांव्यथाहेतुरुपतिष्ठतिवीर्यवान् ३५० उपस्थितास्मितद्वत्त्वांप्रश्नाभ्यांधैर्यमास्थिता ॥ तौप्रश्नौब्रूहिमह्यंत्वंयदिजानासितौद्वि ज ॥ इत्युक्तेब्रूहिगार्गीतियाज्ञवल्क्योवचोब्रवीत् ३५१ एवमुक्तामुनिंप्राहगार्गीवाचक्नवीवचः ॥ दिवोयदूर्ध्वमुदितमर्वाग्यच्चभुवस्तथा ३५२ द्यावपृथिव्योर्यन्म ध्येभूतंभाविभवच्चयत् ॥ कस्मिन्नेतद्भवेदोतंप्रोतंचमुनिसत्तम ३५३ ब्रह्मलोकान्पुनःशब्दभेदादागममंश्रयात् ॥ पप्रच्छसूत्रसंलग्नान्नतुसूत्रविवर्जितान् ३५४ एवंपृष्टोमुनिर्वाक्यमनूद्यास्यावचोब्रवीत् ॥ कार्यकारणविक्षेपरूपमेतत्त्वयेरितम् ३५५ कारणस्यसदैवैतेतिष्ठंत्यावरणात्मनि ॥ आकाशेकारणेगार्गिसदाव्याकृ तरूपिणि ३५६ एवमुक्ताथगार्गीतंनमस्कृत्यवचोब्रवीत् ॥ धारयस्वमनोविप्रपरप्रश्नोत्तरायमे ॥ पृच्छगार्गीतितामाहपुनर्वाक्यंद्विजोत्तम ३५७ एवमुक्तात तोगार्गीपप्रच्छोक्तंपुनर्द्विजम् ॥ उत्तरंचपुनःप्राहपूर्वोक्तंसावधारणम् ३५८

ब्लोपेपंचमी । तत्रहेतुरागमसंश्रयइति अत्रशब्दभेदश्चसूत्रंप्रजापतिपदेनाननूद्यदिवोयदूर्ध्वमित्यादिवाक्येनानुवादरूपः तत्रचसूत्रमपिप्रयातर्कागम्यत्वेनावधारितमितिसूचनमपिप्रयोजकं तदेत दुक्तंनतुसूत्रविवर्जितानिति ३५४ तुर्यकंडिकार्थमाह एवंपृष्टइतिद्वाभ्यां । अस्यागार्ग्यावाक्यंयदूर्ध्वमित्यादिकमनूद्यतद्वत्पठित्वाउत्तरमभिनयति कार्यमिति । एतद्यदूर्ध्वमित्यादिनादर्शितं सूत्रात्मरूपंकार्यंयत्त्वयेरितमनूदितंतत्कारणस्यआवरणविक्षेपरूपशक्तिद्वयशालिनोविक्षेपरूपंमतं एतेविक्षेपाश्चकार्यरूपाःकारणस्यावरणभूतेआत्मनिस्वरूपेतिष्ठंतीतिप्रसिद्धमितिशेषः । एतेइति बहुवचनंव्याप्तिसूचनाय । किंतत्सूत्रकारणमतआह आकाशइति । अव्याकृताकाशतयाप्रसिद्धेकारणेमूलाज्ञानेसूत्रंतिष्ठतीतिद्वयोरर्थः ३५५ । ३५६ पंचमकंडिकार्थमाह एवमुक्ताथेति । कारणतत्त्वंदुर्वचमपित्वयोक्तमितिसूचनायनमस्कृतिः । परंद्वितीयं स्फुटमन्यत् ३५७ षष्ठसप्तमयोःकंडिकयोरर्थमाह एवमुक्तातत इतिपंचभिः । एवमुक्तागार्गीद्वितीयप्रश्नंचिकीर्षन्तीतावत्पूर्व मुक्तमेवपृष्टमेवपुनःपप्रच्छ पूर्वोक्तमुत्तरमेवचमुनिराहस्मेति । अवधारणवाचकैवपदप्रयोगमात्रंचाधिकंकृतवानित्यर्थः ३५८

तस्यैवप्रश्नस्यपुनःकरणेगार्ग्याःकोभिप्रायइत्यतआह गृहमिति । गार्गीएतन्मनसिनिधायपुनःपप्रच्छ एतत्किं यथागृहंनकेवलंस्तंभाश्रितंकिंतुकुड्याश्रितमपितथासूत्रात्माप्यव्याकृताकाशेत थापरत्रान्यस्मिन्कुत्रचिदपिकिंतिष्ठतीति ३५९ उत्तरस्यपूर्वोक्तस्यैवदानेयआशयस्तमाह याज्ञवल्क्योपीतिद्वाभ्याम् । याज्ञवल्क्योप्येतन्मनसिनिधायोत्तरमुक्तवान् एतत्किं यथामेघस्यकेव लोभूताकाशआधारस्तथासूत्रात्मनोऽव्याकृताकाशइतिद्वयोःसंबंधः ३६० । ३६१ शिष्टांशार्थमाह याज्ञवल्क्येनेति । सोयमव्याकृतसंज्ञकआकाशःकुत्रोतप्रोतइति अत्रायंगार्ग्याशयः अव्याकृताधिष्ठानमात्मातत्त्वंवागगोचरंयद्विनवदिष्यतितदाकथनप्रकाराबोधरूपमप्रतिभासंज्ञंनिग्रहस्थानमेष्यास्यति यदितुवदिष्यतितदाविप्रतिपत्तिसंज्ञंविरुद्धाभिधानरूपंतद्यास्यतीति पराज यहेतुर्निग्रहस्थानम् ३६२ अष्टमकंडिकार्थमाह एवमुक्तउवाचेत्याद्येकादशभिः । किमाश्रयतयात्वत्पृष्टोऽव्याकृताकाशस्तस्मिन्सर्वसाक्षितयासाक्षादपरोक्षात्मरूपेऽक्षरेनिष्ठतीत्यर्थः ३६३ क थमात्मनएवाक्षरत्वमित्यतआह यत्रेति । अयमव्याकृताकाशोमूलाज्ञानरूपोयत्रतिष्ठतितदेवाक्षरमुक्तम् अज्ञानाधारश्चशुद्धात्मैव तदुक्तम् आश्रयत्वविषयत्वभागिनीनिर्विभागचितिरेवकेव

गृहंस्तंभेपुकुड्येपुयथातिष्ठतिकिंतथा ॥ तथाकाशेपरत्रापियाज्ञल्क्यात्रतिष्ठति ॥ एतन्निशम्यमनसागार्गीपप्रच्छलंपुनः ३५९ याज्ञवल्क्योपिनैवंतद् भयत्रव्यवस्थितम् ॥ किंतुमेघोयथाकाशेकेवलेत्रप्रतिष्ठितः ३६० केवलेतद्वदाकाशेकारणेतद्व्यवस्थितम् ॥ एवंमनसिसंधायपुनरुत्तरमभ्यधात् ३६१ या ज्ञवल्क्येनकथितउत्तरेसावधारणे ॥ याज्ञवल्क्यंपुनर्गार्गीपप्रच्छमुनिपुंगवम् ॥ याज्ञवल्क्याऽयमाकाशओतप्रोतश्चकुत्रसः ३६२ एवमुक्तउवाचैतामक्ष रेस्मिन्प्रतिष्ठितः ॥ प्रत्यक्षेसर्वलोकानांबुद्धिसाक्षिणिचात्मनि ३६३ यत्रस्थितोयमाकाशएतदेवतदक्षरम् ॥ आत्मरूपंसुखंव्याप्तंविनाशरहितंतथा ३६४ नस्थूलंनतुतत्सूक्ष्मंघटवत्तद्विसर्वदा ॥ नह्रस्वंनचदीर्घंतद्दृश्यतेतृणतालवत् ३६५ नलोहितंयथावन्हिःस्नेहवन्नजलोपमम् ॥ नच्छायासदृशंयद्व द्भूमिःकृष्णाप्रतीयते ३६६ तमालश्यामलंनैवतमोवन्नेत्ररोधकम् ॥ नवाय्वाकाशरूपंतद्गतिच्छिद्रविवर्जितम् ३६७ नचतेजःस्वरूपंतदमूर्तंसंगवर्जि तम् ॥ नजलंनचभूमिश्चद्रवगंधविवर्जितात् ३६८ नचज्ञानेंद्रियाण्यस्यनचकर्मेंद्रियाण्यपि ॥ नमनोनापितेजोवद्बुद्धिःसर्वप्रकाशिका ३६९

लेति । किंच अश्नुतेव्याप्नोतीतिवानक्षरतीतिवाऽक्षरपदस्यव्युत्पत्त्याप्यात्मनएवाक्षरत्वमित्याह आत्मेति । आत्मनःस्वरूपभूतंसुखंयतोव्याप्तंविनाशलक्षणक्षरत्वहीनंचातआत्मनएवाक्षरत्वमिति ३६४ अथाक्षरात्मनः स्वरूपमतन्निरसनेननिरूपयन्नप्रतिपत्तिविप्रपत्तिंचनिराकरोति नस्थूलमित्यादिना । घटोयथाबिल्वाद्यपेक्षयास्थूलःपर्वताद्यपेक्षयाचसूक्ष्मस्तद्वद्यद्यत्स्थूलंसूक्ष्मंवातद्विलक्षण मितिपूर्वार्द्धार्थः तृणवद्ध्रस्वंतालवद्यच्चदीर्घंतद्विलक्षणमित्युत्तरार्द्धार्थः एवमग्रेपिबोध्यम् ३६५ नलोहितमिति । वन्हिवद्रक्तवर्णाच्चविलक्षणंतथाछायासदृशभूमिवत्कृष्णाद्विलक्षणमिति ३६६ त मालेति । तमालश्यामलतयानेत्ररोधकृत्तमःसदृशंयत्तद्विलक्षणम् गतिवर्जितत्वाद्वायोश्छिद्रवर्जितत्वादाकाशाद्विलक्षणम् ३६७ श्रुतौतेजोव्यावृत्तयेऽसंगपदमित्याशयेनाह नचतेजइति । मूर्तं त्वेनससंगंहितेजःअक्षरंतुतद्विलक्षणमिति द्रवोरसस्तद्धीनत्वान्नजलम् गंधहीनत्वान्नभूमिरिति ३६८ श्रुतौचक्षुःश्रोत्राभ्यांज्ञानेंद्रियाणिवाचाचकर्मेंद्रियाण्युपलक्षितानिनज्ञाततादात्म्यंनिषिद्धयतइ त्याशयेनाह नचेति । अस्याक्षरस्यस्वरूपमितिशेषः । अंतःकरणरूपतांनिषेधति नमनइति । श्रुतौतेजःपदेनप्रकाशकतयातत्सदृशीबुद्धिर्विवक्ष्यतइतिभावः ३६९.

मनोबुद्धिभ्यामहंकारश्चित्तंचोपलक्षितमित्याह नचाहमिति । तथाक्रियाशक्तिरूपःप्राणोपिनास्यस्वरूपमितिशेषः तथामोक्षावधिस्थायित्वेनलोकद्वयगामित्वात्स्थूलशरीरापेक्षयाप्रधानमत एवमुखशब्देनश्रुतौविवक्षितंसूक्ष्मशरीरमपिनास्येत्यर्थः ३७० अमात्रपदार्थमाह मात्रेति । मीयतेऽद्वितीयोपिमंताआत्मापरिच्छिद्यतेजीवेश्वरादिभेदंनीयतेऽनयेतिव्युत्पत्त्यामात्रानामअ विद्याकारणशरीरंतद्वर्जितमित्यर्थः ३७१ अंतरिति । यदितदांतरमेवस्यात्तदाबाह्यंकःपश्येत्यदिचबाह्यमेवतदांतरंकःपश्येत्पश्यतिचैतदक्षरंलोकस्यांतरंबाह्यंचातःसर्वसाक्षित्वादंत र्बाह्यभावविहीनम् । एतेनत्वंपदलक्ष्यार्थतादर्शिता नतदश्नातीत्यादिनाचभोक्तृभोग्यभावराहित्यप्रतिपादनेनतत्पदलक्ष्यार्थतादर्शितेत्याह अभोक्रित्युत्तरार्द्धेन ३७२ फलितमाह यथेति । तथाचवस्तुतःसर्वपरिच्छेदहीनमितिभावः ३७३ एवमागमविधयावर्णितमप्यक्षरस्वरूपंयस्यचेतसिनावतरतितदनुग्रहायांतर्यामिविषयकाणिलिंगानिश्रुत्यादर्शितानि मायोपाधिकेंतर्या मिणिपरिचितेह्यन्तर्यामिलक्षणानामुपलक्षणत्वेनाक्षरमपिपरिचितंभवतीत्याशयेनतानिलिंगानिदर्शयति अक्षरस्यास्येति । जगतोव्यवहारप्रवर्तकौसूर्यचंद्रौअस्याक्षरस्यप्रशासनेआज्ञायांव र्तेतेनियतप्रवृत्तिकत्वाद्भृत्यवदिति ३७४ एवंद्यावापृथिव्यावपिगुरुत्वादिसत्वेपिपतनादिविरहात्केनचिद्विधृतेनियमेनधारितेवस्त्रादिवदित्याह द्यावेति ३७५ कालएषइति । तथाए

नचाहंकारचित्तेस्तोह्यंतःकरणरूपके ॥ नप्राणोनमुखाख्यंचशरीरंसूक्ष्मसंज्ञितम् ३७० मात्रानैवचतस्यास्तियाविद्येतिप्रकीर्तिता ॥ मंतारमेकंसाय स्मान्मातिमात्राततःस्मृता ३७१ अंतर्बाह्यविहीनंतत्सर्वसाक्षिस्वरूपकम् ॥ अभोक्तृतदभोग्यंचपरमात्मस्वरूपभृत् ३७२ यथानभसिमेघौघोविप्रका शेतमोयथा ॥ स्रजिसर्पोयथाध्यस्तःसर्वमेतत्तथाक्षरे ३७३ अक्षरस्यास्यगार्ग्येतौप्रवर्तेतेप्रशासने ॥ सूर्याचंद्रमसौदीप्तौजगतोस्यनियामकौ ३७४ द्यावापृथिव्यौचतथासर्वभूतविधारिके ॥ विधृतेतिष्ठतोगार्गिबालकेनेववाससी ३७५ कालएषतथात्युग्रोनिमेषादिर्महान्प्रभुः ॥ संवत्सरांतोभूतानांहिता हितकरोस्तिहि ३७६ श्वेतेभ्यःपर्वतेभ्योयाजाताःसर्वदिशोगताः ॥ नद्योनानाविधागार्गिस्यंदंतेसुखदानृणाम् ३७७ ददतोजुह्वतस्तद्वत्स्वधाकारंच कुर्वतः ॥ मनुष्याअमरास्तद्वत्पितरश्चसमाश्रिताः ३७८ एवमेतज्जगत्सर्वमक्षरस्यप्रशासने ॥ गार्गितिष्ठतियत्रायमाकाशःस्थितईरितः ३७९

षप्रसिद्धःकालोनिमेषमुहूर्त्तादिसंवत्सरांतरूपोराजनियुक्तोप्रदेशाधिपसमःसर्वेषांभावानामायुरादिकंपरिगणयन्वर्त्ततेयत्तदप्यक्षरस्यप्रशासितुःसत्त्वेलिंगमितिशेषः ३७६ श्वेतेभ्यइति । अत्र श्वेतशब्दश्छत्रिणोयांतीत्यत्रछत्रिशब्दवत्श्वेताश्वेतसमुदायेवर्त्तते । तथाचहिमालयादिपर्वतेभ्यःप्रभृतागंगादिनद्यो यांयांदिशंप्रतिप्रवृत्तास्तांतांदिशमेवप्रतिअद्ययावत्प्रवर्द्धमानानियताःस्यंदंते यत्तदपिप्रशासितुर्लिंगमिति ३७७ ददतइति । ददतोदानंकुर्वतोजनान्मनुष्याःप्रामाणिकाअपियत्सम्यक्प्रशंसापूर्वकमाश्रयंतेतदपिप्रशासितुर्लिंगमन्यथाद्यूतादिव्यसनेपुवृथाव्ययंकुर्वंत उपेक्षमाणाःशिष्टाःशास्त्रोक्तदानकर्तृनपिकथंननिंदेयुःकथंचाश्रयेयुः यदीश्वरंतत्फलप्रदातारंनपश्येयुरितिभावः । एवंजुह्वतोहोमोपलक्षितंयागंकुर्वाणान्देवाःसमाश्रिताराजानंवृत्तिकांक्षिणइ वाश्रिताः अन्यथापिजीवनेशक्ताइतिशेषः । एवंस्वधाकारंकुर्वतःश्रुतिगतदर्वीपदोपलक्षितदर्वीहोमादिपित्र्यकर्मकारिणोजनान्पितरःश्रिताः । तथाचदेवपितॄणांहव्यकव्यार्थित्वेनमनु ष्याधीनतारूपहीनवृत्तिभाक्त्वंप्रशासितारंकल्पयतीतिभावः । दर्वीहोमोनामएकयाऋचाक्रियमाणोहोमः । यागस्तुयाज्यापुरोनुवाक्यासंज्ञकऋग्द्वयेनहोमइत्यन्यत्रविस्तरः ३७८ फलि तमाह एवमिति । एवंश्लोकपंचकोक्तप्रकारेण ३७९

त्किंच येनप्रभुणामदज्ञानेसर्वकर्मअंतवदस्त्विति नियमःकृतस्तस्यप्रभोःसत्वेनासंभावनायुक्तेत्याह वर्षेति । एनमक्षरंप्रशासितारमजानताबहुकालंकृताअपियागादयःक्षयिष्णुफलाभवंतीत्यर्थः ३८०
एतदज्ञानमेवचकृपणत्वस्यशोच्यताप्रयोजकस्यलक्षणमित्याह अनेनेति । अनेनपुरुषरूपेणशरीरेणएतदक्षरंनज्ञात्वायोमृतःसकौलेयःश्वाकृमियुतस्तद्वत्शोच्यः ३८१ एतद्विज्ञानाच्चामृतोभवतीत्याह
विज्ञायेति । सएवचकहोलंप्रतिवर्णितविधोब्राह्मणइतिचतुर्थपादार्थः ३८२ नन्वक्षरस्यविज्ञानसाधनजातमपिमुनिनाकुतोनोक्तमित्याशंकांद्विधासमाधत्ते विज्ञानोपायइतिद्वाभ्यां । एतस्याक्षरस्य
विज्ञानोपायभूतंकामादिवर्जनरूपंबाल्यंश्रवणरूपंपांडित्यंतथामननध्यानोभयरूपंमौनंचएतत्रितयंकहोलंप्रत्युक्तमेवगार्ग्यापिचश्रुतमित्थंमत्वाइत्याशयेनअत्रगार्गींप्रतिबोधनकालेपुनःपुनर्नोक्तवा
नितियोजना । यद्यपिभाष्यकारैःपांडित्यबाल्यमौनानिश्रवणमनननिदिध्यासनरूपत्वेनव्याख्यातानिश्रवणानंतरमेवरागादिपरित्यागात्मकंबाल्यंसंभवतीत्याशयात् । ग्रंथकृतातुउत्कटविविदि
षायामपिबाल्यंसंभवतीत्याशयेनार्थक्रमेणबाल्यस्यपूर्वंनिर्देशोमननस्यचमौनेनिवेशःकृतः । अतएवकहोलब्राह्मणव्याख्यानेमौनस्वरूपंग्रंथकृतैवमुक्तंस्वयंचावगमस्तस्यतर्कतोध्यानतोथवेतिबोध्यम्
३८३ शंकायांद्वितीयंसमाधानंवदन्वृद्धकुमारीवरवाक्यन्यायेनेहापिसाधनजातमुक्तप्रायमेवेत्याह साक्षात्कारेति । ब्राह्मणोहिब्रह्मविदुक्तस्तस्यविशेषणंभावप्रत्ययेनाभिधेयंसाक्षात्काररूपब्रह्मवि

वर्षपूगान्बहूनेनमज्ञात्वायदिकुर्वते ॥ यागहोमतपोमुख्यंकर्मतत्क्षीयतेक्षणात् ३८० अनेनैवशरीरेणनज्ञात्वायोमृतिंव्रजेत् ॥ सशोच्यःसर्वभूतानांकौलेयःक्रिमि
युग्यथा ३८१ विज्ञायाक्षरमेतद्योव्रजेदस्माच्छरीरतः ॥ कृतकृत्यश्चलोकेस्मिन्ब्राह्मणोब्रह्मवित्तमः ३८२ विज्ञानोपायएतस्यबाल्यंकामादिवर्जनम् ॥ पांडि
त्यंश्रवणंध्यानंमौनंमनननमीरितम् ॥ कहोलंप्रतिमत्वेत्थंपुनरत्रनचोक्तवान् ३८३ साक्षात्कारसमाख्येनब्राह्मण्येनफलेनतत् ॥ अविनाभावसंबंधाद्गार्गीतामुक्तवान्मु
निः ॥ ब्राह्मणोक्त्याकहोलाययदादावुक्तवान्स्वयम् ८४ यउक्तोगौतमायादौद्वितीयप्रश्ननिर्णये ॥ अंतर्यामीतदेवैतदक्षरंनापरंततः ॥ एतदर्थमपृष्टत्वादुक्तवा
न्मुनिसत्तमः ८५ सर्वस्यास्यहितत्साक्षीसर्वैर्दृश्यैर्नगम्यते ॥ जीवोपिनपरस्तस्मादस्तिकुडयाद्घटोयथा ८६ एतस्मिन्नक्षरेगार्गिसदाकाशःप्रतिष्ठितः ॥ आत्मा
वरणरूपोयंविक्षेपस्यास्यकारणम् ३८७

द्यात्मकंफलमेवब्राह्मण्यं फलस्यचसाधनजातेनाविनाभावोव्याप्यव्यापकभावरूपःसंबंधोवर्ततएवातोयथाकाचिद्वृद्धाकुमारीवरंब्रूहीतींद्रेणोक्तासुतामेकांस्यपात्र्याक्षीरंभुंजीरन्निति वचनभंग्यासर्वंमि
ष्टजातंवृतवतीतथाब्राह्मण्यस्यफलस्योक्त्यामुनिस्तत्साधनजातमपिगार्गींप्रत्युक्तवान् । यत्कहोलायादौपूर्वमुक्तवानित्यर्थः । एतेनदशमकंडिकांतंपावद्व्याख्यातम् ३८४ अथैकादश्याःकंडिकाया
अर्थंत्रिभिःसंगृह्णन्तत्रजायमानांशंकांनन्वंतर्यामिब्राह्मणांतगतवाक्यसमानाकारंवाक्यमपृष्टेनापिमुनिनाकथमुक्तमित्याकारांवारयति यउक्तइति । शुद्धआत्माअक्षरमित्युच्यतेसएवमायोपाधिः
सृष्टिस्थितिसंहृतिनियमनप्रवेशान्कुर्वन्नंतर्यामीत्युच्यते । एतदर्थसूचनायपुनरुक्तिरित्यर्थः । सूत्रप्रश्नापेक्षयाअंतर्यामिप्रश्नस्यद्वितीयत्वम् ३८५ सर्वस्येति । स्वयंचक्षुराद्यविषयोपिसर्वसाक्षीति
विज्ञात्रान्तभागस्यार्थः नान्यदतोस्तिद्रष्टृइत्यादिग्रंथेनचद्रष्टृश्रोत्रादिरूपतयाप्रसिद्धस्यजीवस्वरूपस्यततोभेदोनिराकृतइतिभावः । कुडयाद्घटोयथापरोभिन्नस्तथाजीवोऽस्मान्नभिन्नइतिदृष्टांतार्थः
३८६ एतस्मिन्निति । अयंसाक्षिप्रत्यक्षसिद्धआत्मावरणरूपआकाशः अस्यस्थूलसूक्ष्मात्मकस्यविक्षेपस्ययःकारणंसउक्तेऽक्षरेप्रतिष्ठितइतिसंबंधः ३८७

द्वादश्याः कंडिकाया अर्थमुपबृंहयाति श्रुत्वेतित्रयस्त्रिंशच्छ्लोकैः । याज्ञवल्क्यरूपाद्घनाघनान्मेघादुत्थितंवाक्यरूपममृतंकर्णयोर्दावाग्नेःसंतापस्यहारकमतएवाद्भुतंश्रुत्वाश्रोत्रपुटेनगृहीत्वागार्गीप्रसन्ना विप्रानिदमाहेतिद्वयोरन्वयः ३८८ । ३८९ गार्गीवाक्यमभिनयति ब्राह्मणाइत्यादिना । हेब्राह्मणाइदंमेवचनंशृणुत कीदृशं पक्षपातहीनंआत्ममनोगतंचआत्मीयमनसिआलोचनरूपेणस्थितं इदंकिं यत्सभामध्येवक्ष्यामीति ३९० याज्ञवल्क्यएवपुरुषइतिवक्तुंतत्त्वज्ञानहीनत्वेनेतरान्निंदति पुरुषाइति । यद्यपिबहवोबहुविधाःपुरुषादृष्टास्तथापियाज्ञवल्क्यसमोनदृष्टइतिवक्ष्यमाणेनसंबंधः । तथाहि केचिद्धवलप्रासादवद्दूरतोरमणीयाअपित्वमोतिशयाज्जडाएवदृष्टाः तथाकेचिद्धुरंधरैर्भारवाहकैर्वृषभादिभिःसमाः बाह्यशास्त्रार्थस्यस्वयमनुपयोगात् । केचित्तुशुकसारिकादिवद्वाचापरचित्तहारित्वेपिस्वभापितस्यार्थमजानानादृष्टाइति ३९१ केचिदिति । केचित्पद्मदलाक्षाअपिअंधादृष्टावस्तुतत्त्वादर्शनात् । केचिद्रमणीयदर्शनाअपिचित्रलिखितवत्कार्याक्षमाएवेति ३९२ दृष्टाःकेचिदिति । केचित्तुलोकदृष्ट्यामहाभागाःसदसिसदुपदेशकत्वात्सहसाआपातमाह्लादकारिणोपिरहस्यसदुपदेशकत्वादुदर्केपरिणामेदुःखबीजभूतादृष्टाः अतएवकुपथ्यभोजनसमाइत्यर्थः ३९३ व्याघ्रेणेति । केचिद्व्याघ्रवत्पराभिभवपराः केचिच्चमदिरामत्तकपिवदतिचपलाअज्ञानरूपमदिरापानमत्तत्वाद्दृष्टाइति ३९४ कामेति । केचित्कामस्यशत्रोर्वशंगतादृष्टाः केचित्क्रोधस्यकेचिन्मोहस्येति येपिशास्त्रो

श्रुत्वेदमद्भुतंगार्गीयाज्ञवल्क्याद्घनाघनात् ॥ वाक्यामृतंतदाकर्ण्यदावाग्निपरिहारकृत ३८८ आनंदपूर्णनयनासमुत्थिततनूरुहा ॥ प्रसन्नमानसाविप्रानिदमाहकृपान्विता ३८९ ब्राह्मणाःशृणुतेदंमेपक्षपातविवर्जितम् ॥ वचनंयत्सभामध्येवक्ष्याम्यात्ममनोगतम् ३९० पुरुषाबहवोदृष्टाःप्रासादाधवलाइव ॥ धुरंधरसमाःकेचित्केचिच्छुकनिभाननाः ३९१ केचित्पद्मपलाशाक्षाअंधैर्हिसदृशास्तथा ॥ नेत्राभिरामाअपरेचित्रेपुलिखितायथा ३९२ दृष्टाःकेचिन्महाभागाःसहसाह्लादकारिणः ॥ उदर्केदुःखबीजानिकुपथ्याशनसन्निभाः ९३ व्याघ्रेणसदृशाःकेचित्केचिन्मर्कटसन्निभाः ॥ अज्ञानमदिरापानविमूढधिषणास्तथा ९४ कामक्रोधादिशत्रूणांकेचित्तत्रवशंगताः ॥ त्रैवर्णिकाःसुरास्तद्वद्वेदवेदांगपारगाः ९५ स्वप्नेजागरणेचैषांवैषम्यंनावलोकितम् ॥ आदावंतेसदाजंतुरज्ञानेनसमावृतः ॥ मध्येत्रैवर्णिकानांस्याद्देवानामपिबोधनम् ९६ विदुषांपदवाक्यादिसप्रमाणतयाक्वचित् ॥ क्वचिद्बुद्धिर्विवृद्धैवनैवात्मविषयेक्वचित् ३९७

क्तवृत्तिशालित्वेनसुरादेवाइतिद्वयाहवैप्राजापत्याइतिश्रुत्यनुसारित्वेनप्रसिद्धाविदवेदांगपारगास्तेपित्रैवर्णिकाःसत्वादिगुणत्रयप्रयुक्तरागशालिनएवदृष्टाः नतुगुणातीतत्वंकुत्रचिद्दृष्टमितिभावः । अतएवभगवतोक्तं । 'नतदस्तिपृथिव्यांवादिविदेवेषुवापुनः । सत्त्वंप्रकृतिजैर्मुक्तंयदेभिःस्यात्त्रिभिर्गुणैः ' इति ३९५ उक्तार्थेत्रिगुणाज्ञाननिद्रयाअनुत्थानंहेतुतयाह स्वप्नेइति । यतएषांसुराणांस्वप्नजागरणयोर्विशेषोनदृष्टः जागरणस्यहिस्वप्नान्निद्रामध्यगतादयमेवविशेषोयन्निद्राविरोधित्वं तच्चैषांत्रैगुण्याभिमानिनांनास्ति एषांबोधेनाज्ञानोच्छेदस्याकरणादितिभावः । उक्तमाशयंस्फुटयति आदाविति । यतोयंजंतुरादौपूर्वजन्मनोवाजागरणाद्वाअज्ञाननिद्रयावृतःप्रसिद्धः अंतेचतयोरुत्तरत्रचप्रसिद्धः तथासदाऽऽवृतोज्ञेयइतिशेषः । यतस्त्रैवर्णिकानांदेवानामुक्तलक्षणानांयद्बोधनंतत्पदार्थविषयकोबोधःसोप्यज्ञाननिद्रायामध्यमएवस्यान्नत्वंते लौकिकप्रमाणैर्हिमूलाज्ञानस्याभिभवमात्रंक्रियतेनतूच्छेदइतिसिद्धांतस्यप्रतिष्ठितत्वादितिभावः ३९६ उक्तार्थेहेतुतयातेषांसर्वाधिष्ठानप्रत्यगात्मपरत्वाभावमाह विदुषामिति । यद्यपिलोकेपदवाक्यादिविदुषांपदंवाक्यंआदिपदग्राह्यंप्रमाणंधर्ममर्यादांचजानतांसप्रमाणतयापदादिस्वरूपेप्रमाणभूतेऽर्थाकरणमीमांसान्यायधर्मशास्त्रैःसहिततथाकचित्कचिद्विषयेबुद्धिर्विवृद्धादृष्टातथाप्यात्मनोविषयेदेहोउपलब्धिस्थानभूतेवेदांतशास्त्रेइतियावत तद्बुद्धेर्विवृद्धिस्तत्परत्वानदृष्टेतिशेषः ३९७

आत्मनइति । आत्मशास्त्रेयेषांज्ञानंदृष्टंतदपिप्रायोऽसमग्रंदृष्टंसमग्रत्वेपिप्रतिबंधकत्ववशात्कार्यंमूलाज्ञानोच्छेदरूपंकर्तुमसमर्थंदृष्टमित्यर्थः ३९८ समग्रत्वेपिज्ञानस्यकार्यारंभप्रतिबंधकस्वरूपंसदृष्टांतं निरूपयति यथाभ्रष्टाइत्यादिना । यथाग्निसंयोगरूपप्रतिबंधकवशाद्धतशक्तयोधानाबीजानिफलंजनयितुंनशक्ताएवंकामक्रोधादिप्रतिबंधकसमानाधिकरणंज्ञानमपिनफलदमित्यर्थः ३९९ कामाद्यपेक्षयापिप्रतिबंधकतायामहंकारोऽग्रगण्यइत्याह अहंकारइति । संसारएवकारागृहंजीवानांबंधनाल्लयस्तस्यविधारणेपतनप्रतिबंधेहेतुभूतोमूलस्तंभरूपोऽहंकारोमतस्ततस्तमाश्रित्यपरेक्रोणस्तंभादिभूताःकामक्रोधादयोमताइति ४०० उक्तंस्फुटयति मूलेति । स्पष्टम् ४०१ अहंकारस्यसर्वत्रानुगमंसमवेतविप्रोदाहरणेनाह नपश्यामीति । अहंकारःसर्वजंतुषुप्रतिष्ठितः यतएतेविप्राःकामादीनांमध्येएकेनद्वाभ्यांबहुभिर्दोषैर्हीनाअप्यहंकारविवर्जितानदृश्यंतेइत्यर्थः ४०२ अहंकारस्यपरमदोषतांविशदयन्मित्राकारशत्रुवदयमनिष्टंकुर्वन्नपिनलक्ष्यतइत्याह कामाद्याइति । हेविप्राःकामादीनांशत्रुत्वंशास्त्रतोवाअन्वयव्यतिरेकसहकृतस्वानुभवाद्वाविदितंपरीक्षितमपिप्रायोभवति अहंकारस्यशत्रुत्वंत्वधीतशास्त्रैरपिनज्ञायतेतेष्वप्यहंकारदर्शनादित्यर्थः ४०३

आत्मनोविषयेयेषांज्ञानमस्तिमदात्मनाम् ॥ असमग्रंसमग्रंचनतुकार्यक्षमंक्वचित् ३९८ यथाभ्रष्टाःस्थिताधानानफलायकथंचन ॥ एवंकामादिचित्तानांज्ञानंनफलदंक्वचित् ३९९ अहंकारोत्रसंसारकारागृहविधारणे ॥ मूलस्तंभस्ततःकामक्रोधाद्याश्चपरेस्मृताः ४०० मूलस्तंभेस्थितेशालाननश्यतियथातथा ॥ अहंकारेस्थितेनाशंसंसारोपिनगच्छति ४०१ नपश्यामिक्वचिज्जंतुमहंकारविवर्जितम् ॥ कामाद्यन्यतमेनैतेद्वाभ्यांवाबहुभिश्चवा ॥ दृश्यंतेरहिताविप्रानाहंकारविवर्जिताः ४०२ कामाद्याःशत्रवःसर्वेभवंतिविदिताअमी ॥ शास्त्रात्स्वानुभवाद्विप्राअहंकारविवर्जिताः ४०३ अहंकारात्सुखंनास्मिन्लोकेप्राप्नोतिकिंचित् ॥ अमुंदोषंसमाश्रित्यभ्रांतोभवतितल्लक्षणात् ४०४ अवजानातिपितरंमातरंदेवतामपि ॥ बांधवानपिमित्राणिब्राह्मणांश्चबहुश्रुतान् ४०५ कालसर्पसमान्राज्ञःप्रसुप्तानिवपन्नगान् ॥ अनेकबुद्धिसंपन्नांस्तद्वत्त्रैवर्णिकानपि ४०६ अवजानन्सदैवंसनिखिलान्स्थिरजंगमान् ॥ सद्यएवफलत्येषदुःखंप्राणांतमाप्नुयात् ॥ प्रत्यवायात्परत्रापिनरकंरौरवंव्रजेत् ४०७ यतोहंकारदोषोपियाज्ञवल्क्येनदृश्यते ॥ कुतःकामादयोन्यस्मिन्स्वस्मिन्सत्येवसंतिये ॥ पुरुषोयाज्ञवल्क्योयंत्रिलोक्यांनास्तिचापरः ४०८ अनेनपूर्णमखिलंविश्वंसदसदात्मकम् ॥ एकएवपुमान्लोकेविद्यतेनापरःक्वचित् ॥ दृष्टःशास्त्रान्मयाविप्राआंतरानुभवादपि ४०९

तत्प्रयुक्तमनर्थमभिनयति अहंकारादिति । एतल्लोकेपिदुःखप्रदोहंकारः । तथाहि अमुमहंकाररूपंदोषंमद्यसमंसमाश्रित्यभ्रांतोविपरीतदर्शीभवतिविपरीतदर्शीसंश्चपितृप्रभृतीनवजानातिअनादृतान्करोतीतिद्वयोरर्थः ४०४ । ४०५ कालेति । तथाकृष्णवर्णसर्पसमान्राज्ञोप्यवजानाति तथाप्रसुप्तसर्पसमान्महाबुद्धींस्त्रैवर्णिकानप्यवजानातीत्यनुषंगः ४०६ ततःकिंभवतीत्यतआह अवजानन्निति । सदाएवंनिखिलानवजानन्नसन्नेषजंतुःसद्यःशीघ्रमेवफलतिफलवान्भवति फलशब्दादर्शआद्यजंतात्क्विप् ततश्चात्रैवलोकेप्राणांतदुःखसमंदुःखमाप्नुयात् अवज्ञाजन्यात्प्रत्यवायाद्दुष्कृताच्चपरत्रपरलोकेपिरौरवंतत्समंजन्ममरणप्रबंधंचप्राप्नोतीत्यर्थः ४०७ एतादृशोहंकारःसर्वदोषाणांयोव्यापकःसोऽपियदायाज्ञवल्क्येनास्तितदातद्व्याप्यानांकामादीनांकासंभावनेत्याह यतइति । येकामादयःस्वस्मिन्स्वकीयेअन्यस्मिन्परकीयेचसतिअहंकारवशाद्भासमानाएवभवंतीतिचतुर्थपादार्थः । फलितमाह पुरुषइति ४०८ पूरणात्पुरुषइतिव्युत्पादितश्रोतप्रसिद्धोप्ययमेवपुरुषइत्याह अनेनेति । अनेनब्रह्मविद्ययासर्वात्मभूतेनयाज्ञवल्क्येन त्वयाऽयमेवंभूतःकथंज्ञातइत्याकांक्षायामाह दृष्टइति । मयाशास्त्रानुभवाभ्यामस्यस्वरूपंविज्ञातमित्यर्थः ४०९

इदानीमिदमाश्चर्यंपश्यतेत्याह मांसजाभ्यामितिद्वाभ्याम् । नचक्षुषागृह्यतेनापिवाचाइत्यादिश्रुतेःसमानार्थंयदितिवाक्यम् इतिकिं असौपुरुषोमांसनेत्राभ्यांनदृश्यतेइतितदिदानींसत्यमिवभ्र सत्यतांभ्रांतिगोचरतामपिस्पृशत्स्थितम् यतोहंमांसजनेत्राभ्यामेनंयाज्ञवल्क्यंपुरुषंपश्यामीतिद्वयोःसंबंधः वस्तुतस्तुश्रुतिवाक्यंसत्यमेव मांसनेत्रैर्भवद्भिरेतत्तत्त्वादर्शनात् प्रत्यभिज्ञायामतीतां शग्रहणेसंस्कारस्येवएतत्तत्त्वदर्शनेमदीयशास्त्रांतरानुभवयोरेवव्यापारात् शास्त्रांतरानुभवमांसनेत्राणांत्रयाणामेकलोलीभावविवक्ष्यानेत्रदृश्यताभिधानेप्यविरोधादितिभावः ४१० । ४११ ए तत्संबंधिनःसर्वेकृतार्थाइत्याह धन्यइति ४१२ तस्मादेतत्साम्यमन्यत्रनास्तीत्याह नानेनेति । स्पष्टम् ४१३ तस्मात्क्षीरोदधिसमेचंदनसमेचास्मिन्विवादरूपंमथनंमाकुरुतेत्याह माकृ द्वमिति ४१४ अतिमथनेकृतेयथाक्षीराब्धेर्विषंचंदनाच्चवन्हिर्जायतेतद्वद्भवतांविनाशकःशापोमास्माज्जायतामित्याह कालकूटमिति ४१५ तर्हिकिंकुर्मइत्याकांक्षायामाह अहंकारमिति स्पष्ट म् ४१६ एतस्यनमस्कारेणार्चनेसर्वाभीष्टसिद्धिस्तस्मादात्मज्ञंह्यर्चयद्भूतिकामइत्याथर्वणश्रुतेरितिवक्तुंप्रस्तुतविचारारंभजनितदुष्कृतस्यप्रायश्चित्तमप्येतन्नमस्क्रियैवेत्याह उपक्रांतइतिपादोनात्रि

मांसजाभ्यांननेत्राभ्यांशक्योसौद्रष्टुमंजसा ॥ इतिवाक्यंश्रुतेर्यत्तन्मन्येसत्यमिवस्थितम् ४१० आभ्यामेवचनेत्राभ्यांपश्यामिपुरतःस्थितम् ॥ पुरुषंयाज्ञव ल्क्याख्यमेनंवाजसनेयकम् ४११ धन्योस्यजनकस्तद्वज्जननीचवसुंधरा ॥ राजाहंचतथाविप्राःसभाचानेनमंडिता ४१२ नानेनसदृशःकश्चिदासीदस्तिभ विष्यति ॥ पुमान्जगतिविप्रेंद्राजंतुरन्यःकथंभवेत् ४१३ माकृद्वंमथनंविप्राःशीतलेचंदनोपमे ॥ क्षीरोदधौयाज्ञवल्क्येह्यस्मिन्वाजसनेयके ४१४ कालकूटंविषं माभूद्वन्हिर्वाविश्वदाहकः ॥ क्षीरोदधिसमादस्मान्मुनीशाद्धरिचंदनात् ४१५ अहंकारंततोविप्रालोकद्वयविनाशनम् ॥ परित्यज्यसभामध्येनमस्कुर्वत्विमंगुरु म् ४१६ उपक्रांतोविवादोयंवृथास्माभिरबोधतः ॥ याज्ञवल्क्येनविज्ञानवादिनांतेसुदुःखदः ४१७ उल्लङ्घनार्थमस्माभिःपदास्पृष्टोमुनीश्वरः ॥ ज्ञानवारांनि धिस्तस्यमुक्तिःपापस्यभोद्विजाः ४१८ एतस्मैयाज्ञवल्क्यायसततंयानमस्क्रिया ॥ विद्यतेनपराकाचिदिहामुत्रसुखप्रदा ४१९ ब्रह्मोद्यंब्राह्मणंनैनंकदाचित्को पिजेष्यति ॥ किमुयुष्मासुविप्रेंद्रादेवैरप्येषदुर्जयः ४२० इत्युक्त्वावनताभूत्वागार्गीवाचक्नवीतदा ॥ याज्ञवल्क्यायमुनयेप्रश्नादुपररामह ४२१ गार्गीवा क्यपयःपीतंसर्वैस्तैर्ब्राह्मणोत्तमैः ॥ प्रणेमुःशिरसाकेचिन्मक्षान्येपरेगिरा ४२२

भिःश्लोकैः । उपक्रांतःप्रारब्धः विज्ञानवादिनाविज्ञानेनवस्तुतत्वापरोक्षेणसाधनभूतेनवादकर्त्रायाज्ञवल्क्येनसहअस्माभिःपरोक्षज्ञैः लोकेपिपरोक्षापरोक्षदर्शिनोर्विवादोनुचितत्वेनप्रसिद्धइति भावः । अंतेपरिणामे ४१७ उल्लंघनार्थमिति । अयंमुनिर्ज्ञानसिंधुरस्माभिःप्रतिवादिभिरुल्लंघनार्थंपदास्पृष्टःपादस्पर्शमिववादित्वंनीतस्तत्प्रयुक्तपापस्यमुक्तिःप्रायश्चित्तभूताएतत्प्रीत्यर्थंनम स्क्रियैवेतिद्वयोःसंबंधः कीदृशीनमस्क्रिया आथर्वणश्रुतेर्लोकद्वयहितावहेति ४१८ । ४१९ एतज्जयाशांतुदूरतःपरिहरध्वमित्याह ब्रह्मोद्यमिति । व्याख्यातप्रायम् ४२० अष्टमब्राह्म णार्थमुपसंहरति इत्युक्त्वेति । याज्ञवल्क्यायतंप्रीणयितुम् ४२१ अथनवमब्राह्मणस्योक्तात्मनोविभूतिख्यापनपूर्वकंस्वरूपनिर्धारणपरस्यार्थमध्यायांतंयावद्ग्रंथेननिरूपयन्वक्ष्यमाणोपयोगा यविदग्धस्यदौरात्म्यंतावत्प्रपंचयति गार्गीवाक्यपयइत्याद्यष्टचत्वारिंशच्छ्लोकैः । ततोगार्ग्यावाक्यरूपंपयःक्षीरंसर्वैर्द्विजैःश्रोत्रपात्रैःपीतंतेनविमुक्ताहंकाररूपपित्तविकाराःसंतोयाज्ञवल्क्यायशा रीरादिकांप्रणतिंयथारुचिचक्रुः तेषुविदग्धाख्यएकःशाकल्यगोत्रःउक्तंनचकार यतःकालेनसंनिहितमृत्युनाविपर्यस्ततरमतिरितिद्वयोरर्थः ४२२

४२३ विविधाभिरिति । नक्षत्रंसूचकंभाव्यर्थबोधकंयेषांतेसज्ज्योतिर्विदःकालांतरेभाविनींदशामालोच्यविविधंयाज्ञवल्क्यासूयाभिर्दग्धोभविष्यतीतियोगार्थंमनसिनिधायविदग्धइतितस्यनाम चक्रुः कीदृशंनामरूढ्यासमुदायशक्त्यापांडित्यस्यनैपुण्यस्यप्रकाशकत्वेनमातापित्रोःसुखप्रदमितिद्वयोरर्थः ४२४ । ४२५ असंभवतिरूढ्यर्थेयोगार्थप्रसरोध्रुवइतिन्यायेनापितत्रयोगार्थोग्राह्यः हितकरस्यापिगार्गीवचनस्यशाकल्येप्रतिकूलतादर्शनेननैपुण्याभावनिश्चयादित्याशयेनाह पयइति । गार्ग्यावचनंविदग्धस्यतथैवकोपविषस्यवृद्धिंकृतवदित्युत्तरार्द्धान्वयः ४२६ योगार्थस्यसंभवोस्तीत्याह आदित्यादिति । द्विजःशाकल्यः ४२७ असूयामभिनयति आदित्याद्याज्ञेतिद्वाभ्यां । शुक्लंयजुरादित्याद्याज्ञवल्क्यःप्राप्तइतिवचोयदायंविदग्धःशृणोतितदातंयाज्ञवल्क्यमुद्दिश्यवक्तॄन्जनान्प्रतिइत्येवमादिकठिनंवचउपहसन्भाषते । इतिकिं एषयाज्ञवल्क्यःसोमाच्चंद्रमसोरक्तवर्णमथर्ववेदकांडंप्राप्तवानिति । आदिपदेनहरितमृक्कांडंभौमादित्यादिग्रहइतिद्वयोरर्थः ४२८ । ४२९ अवज्ञयेति । असूयामसहद्भिर्लोकैर्विवादायप्रेरितोप्यवज्ञयामत्समोनास्तीत्यभिधानप्रयोजिकयायाज्ञवल्क्येनविवादायापिनायातीति ४३० स्पर्द्धयातुसदादह्यतइत्याह अर्जु

याज्ञवल्क्यायमुनयेब्रह्मोद्यायमहात्मने ॥ विहायैकंविदग्धाख्यंशाकल्यंकालमोहितम् २३ विविधाभिरसूयाभिर्याज्ञवल्क्यस्यकालतः ॥ दग्धोभविष्यतीत्येवंज्ञात्वा नक्षत्रसूचकाः ४२४ विदग्धइतितस्यैतन्नामचक्रुर्महाधियः ॥ रूढ्यापांडित्यकथनंपित्रोःसुखकरंतदा २५ पयोयथाभुजंगानांविषवृद्धिंप्रयच्छति ॥ कृतवद्वचनंगार्ग्याविदग्धस्यतथैवहि ४२६ आदित्यात्प्राप्तविद्योयंयाज्ञवल्क्योयदाश्रुतः ॥ असूययातदारभ्यदग्धोविविधयाद्विजः ४२७ आदित्याद्याज्ञवल्क्योयंशुक्लंयजुरवाप्तवान् ॥ एवंप्रसंगतोवाक्यंविदग्धश्चेच्छृणोत्ययम् ४२८ तदातंभाषतेविप्रोवचनंकर्णकर्कशम् ॥ रक्तमाथर्वणंसोमात्कांडमेषसमाप्तवान् ॥ इत्येवमादिकठिनंभाषतेहर्निशंजनान् ४२९ अवज्ञयानचायातिविवादायापिकुत्रचित् ॥ याज्ञवल्क्येनमुनिनासूर्यशिष्येणधीमता ४३० अर्जुनाययथाकर्णःशक्रायनमुचिर्यथा ॥ विदग्धोयाज्ञवल्क्यायतथासंस्पर्द्धतेसदा ४३१ याज्ञवल्क्येनहियदाहृतागावःसमागतः ॥ विदग्धःस्मयमानःसंस्तदातत्रव्यवस्थितः ४३२ इत्थंविचार्यमतिमानहोसाहसमस्यकिम् ॥ ब्राह्मणानांपरोक्षंयदेषएवंविडंबनम् ॥ कुरुतेकर्मणस्तस्यफलमेतत्समागतम् ४३३ लोकेयज्जीवनंपूर्वमस्यासीत्तद्गतंखलु ॥ अस्माभिरप्यवज्ञातोजीवताद्धंडवद्विजः ४३४ तदप्ययंनजानातिरूपंपापविमोहितः ॥ एकस्यापिपुरःशक्तःस्थातुंनायंकथंचन ॥ बालस्यापिचविप्रस्यकथमेषांमहात्मनाम् ४३५

नायेति । नमुचिर्दानवः ४३१ नन्वीर्ष्यांकुलेनविदग्धेनजनकसभायांप्रथममेवकुतोनपृष्टमितिशंकांवारयति याज्ञवल्क्येनहीतिपंचभिः । यदायाज्ञवल्क्येनगावोहृतास्तदातत्रसमागतोपिविदग्धइत्थंविचार्यस्मयमानोमंदंहसन्व्यवस्थितःइत्थंकथं अहोऽस्ययाज्ञवल्क्यगवाहरणरूपंसाहसमविमृश्यकृतिः किंतुयदनेनब्राह्मणानांपरोक्षेआदित्यशिष्यतादिविडंबनरूपंपापंकृतंतस्यफलमेतत्साहसप्रवृत्तिरूपेणागतमितिद्वयोरर्थः ४३२ । ४३३ लोकेइति । यदस्यायथावल्लोकेजीवनमासीत्तदधुनागतंसमाप्तमितिज्ञायतइतिशेषः यतोस्माभिरपिशब्दादन्यैश्चद्विजैरितिबुद्ध्योपेक्षितोऽजीवत् इतिकिं अयंद्विजोविडंबनपरोभंडवज्जीवतादिति ४३४ ब्राह्मणानांपुरतस्तुविडंबनंननिर्वहतियथाभास्वतःपुरतोनीहारइत्याशयेनाह तदपीति । तत्प्रसिद्धंब्राह्मणानांरूपंनीहारविरोध्यादित्यरूपसममेषयाज्ञवल्क्योनजानातिपतःपापमोहितः अन्यथायेषांमध्येएकस्यबालस्यापितेजइन्द्रेणाप्यसह्यंतेषांपुरतःकथमेवंकुर्यादित्यर्थः ४३५

इत्यादीति स्पष्टम् ४३६ ब्रह्मकल्पानिति । यदाशुब्राह्मणाःसमामुनंयोजिताद्दष्टास्तथागार्ग्याःप्रणतिर्याज्ञवल्क्येद्दष्टातदापादाहतसर्पवत्कोपाकुलोभृकुटीकुटिललाटोनिःश्वसंश्चविदग्धोदेवंमनसाधिग्देवमित्येवंनिंदितवान्मृतपुत्रकवदितिद्वयोः संबंधः भृकुटीतिशब्दोयद्यपिपाणिनीयेनसिद्ध्यतितथापिचंडीपाठेभगवद्व्यासप्रयुक्तत्वात्साधुः । अतएवोक्तंमल्लिनाथेन 'यान्युज्जहारमाहेशाद्व्यासोव्याकरणार्णवात् । तानिकिंपदरत्नानिमांतिपाणिनिगोष्पदे' इति ४३७ । ४३८ किंच इत्येवंचिंतितवानित्याह अधीतस्येति । अध्ययनादिबलान्यभिभूयदेवबलमेवोत्कृष्टत्वाद्बलपदंभजतेइत्यर्थः ४३९ नूनमिति । निमेषादिरूपःकालःसर्वहरःसर्वेषामन्यथाभावकारकोदुरत्ययोदुःखेनात्येतुमुल्लंघयितुंशक्यश्चेत्येतदितिहासेप्रसिद्धंवचोद्यसत्यंजातमिति ४४० देवबलस्योत्कृष्टत्वेकालस्यदुरत्ययत्वेचहेतुमाह ब्रह्मणेति । यतइमेविप्राब्राह्मणासभाअपिकेनचिदप्रसिद्धेनदुर्धियायाज्ञवल्क्येनाजिताः यथापाखंडिनागुरुहीनाविप्रबालाजीयेरन्निति ४४१

इत्यादिबहुधाविप्रःशाकल्योमनसास्वयम् ॥ विचार्यासीत्पुरातूष्णींगर्वपर्वतमाश्रितः ४३६ ब्रह्मकल्पान्मुनीन्दृष्ट्वाजितान्गार्ग्याश्चसंनतिम् ॥ कोपाकुलितनेत्रःसन्पादाहतइवोरगः ४३७ भृकुटीकुटिलंकृत्वाललाटंनिःश्वसन्मुहुः ॥ मनसागर्हयामासदैवंमृतसुतोयथा ४३८ अधीतस्यबलंनैवनकुलस्यबलंतथा ॥ मंत्रादेर्नबलंज्ञेयमहोदैवबलंबलम् ४३९ नूनंसत्यंवचोजातंलोकानामैतिहासिकम् ॥ निमेषादिःसर्वहरःकालएषदुरत्ययः ४४० ब्रह्मणासदृशाविप्रादुर्धियाकेनचिज्जिताः ॥ पाखंडिनायथाविप्राबालकागुरुवर्जिताः ४४१ भवतीहसदानूनमवश्यंभवितव्यता ॥ उपायानांसहस्राणियस्यनास्तिप्रतिक्रिया ४४२ कृपणोयाज्ञवल्क्योयमेषवाजसनेयकः ॥ क्वचकेमेहसर्वज्ञाब्रह्मकल्पामुनीश्वराः ४४३ ममैवयशसेवाथकालएषसमागतः ॥ पूर्वान्निर्जितवानेषजेष्याम्येनमहंद्विजम् ४४४ इत्यादिमनसामूयाश्चितयित्वाद्विजोत्तमः ॥ विदग्धःप्रष्टुमारेभेयाज्ञवल्क्यंमुनीश्वरम् ४४५ गार्ग्याभाव्यर्थविज्ञानवत्यायत्कीर्तितंहितम् ॥ तिरस्कृत्यप्रवृत्तस्तदनयासहितंधिया ४४६ इयंकुमारीयुवतिर्ब्राह्मणानांग्रहाद्बहिः ॥ निर्गतास्वैरिणीनित्यंमुष्करेषुघृतस्पृहा ४४७ सदाचाराइमेसर्वेसभास्थायेद्विजोत्तमाः ॥ इमांनग्नांनचेक्षंतेतस्यांकुर्युःस्पृहांकुतः ४४८ स्नानशौचरतानित्यंजटाश्मश्रुविधारिणः ॥ तापसाधमनीव्याप्तदेहावृद्धसमाद्विजाः ४४९ विटवेषोयुवास्निग्धोमुष्करोदेहपोषकः ॥ वेदविप्लावकोभंडोयाज्ञवल्क्योतिकामुकः ॥ योनिंवक्रंस्तनौह्यस्यावीक्षतेपापचक्षुषा ४५०

भवतीति । भवितव्यतेतिभवितृप्रधानोनिर्देशः तथाचयद्भवितव्यंतदवश्यंभवतीतिसंबंधः । यस्यभवितव्यस्यउपायसहस्रमपिप्रतिक्रियाप्रतिरोधसाधनंनास्तीत्यर्थः ४४२ याज्ञवल्क्यजयंस्यभवितव्यताऽभावेकास्यजययोग्यतेत्याह कृपणइति । हइतिखेदे कृपणोयाज्ञवल्क्यःक्वइमेसर्वज्ञामुनयश्चक्वेति ४४३ ममैवेति । अथवाममैवयशोवर्द्धयितुमेषकालोयद्येनंसर्वजेतारंजयेयमिति ४४४ इत्यादीति स्पष्टम् ४४५ गार्ग्येति । भाविनमर्थंविजानंत्यागार्ग्यायाद्धितंकीर्तितंतदनयावक्ष्यमाणयाधियासहितंसंयुक्तंयथाभवतितथातिरस्कृत्यप्रष्टुंप्रवृत्तइत्यन्वयः ४४६ गार्गींविपर्यांविदग्धस्यदुर्भावनामभिनयति इयमित्यादिना । मुष्करेषुप्रशस्तांडवत्सुकामुकेष्वितियावत् सस्पृहा। ऊषशुषिमुष्कमधोरइतिरप्रत्ययः ४४७ एतेमुनयस्त्वेतत्स्पृहणीयानभवंतीत्याह सदाचाराइतिद्वाभ्यां स्पष्टौ ४४८ । ४४९ याज्ञवल्क्यस्तुतथेत्याह विटेति । विटःपिङ्गः 'विटस्तुमूषकेखदिरेलवणेपिङ्गे 'इतिहेमचंद्रः । विप्लावकोऽन्यथाकर्ता हिंयतः ४५०

आगतस्येति । अस्ययाज्ञवल्क्यस्वसंसदंसभामागतस्योभयत्रराजनिजनकेगार्ग्यांचसंसक्तांदृष्टिंपश्यामइत्यन्वयः ४५१ अन्येत्वीदृशानभवंतीत्याह गुर्विति ४५२ हेमेति । सुवर्णार्थीयो पिदर्थंचसभामागतः ४५३ स्वसमानजातीयंसर्वःपरिचिनोतीत्याह स्वैरिणीति । स्वैरिणीव्यभिचारिणी तांस्वैरिणींस्वैरीपुरुषोवेत्ति पुनःशब्दोऽप्यर्थः । तत्रहेतुरनुभूतमिति ४५४ अनुभू तस्यपरिचयेदृष्टांतमाह जलेइति । गतागतंगमनागमनशालिनंमीनं । गार्ग्यपिस्वैरिण्येवेत्याह बाल्यादिति ४५५ स्वैरिणीत्वेकुलांगनाचरितव्यतिरेकंहेतूकरोति भर्त्तारमितिद्वाभ्यां । कुल स्त्रियोभर्त्रादीन्विहायवेश्मनोदेहल्याअतिक्रमंनकुर्वंति । इयंतुक्वसतीपुरुषान्वीक्षमाणालोकत्रयंचरतीतिद्वयोरन्वयः ४५६ । ४५७ अनयास्वसमोयाज्ञवल्क्यएवदृष्टइतिवक्तुमाह अस्मिन्निति । तेएतेस्वैरिणःपुरुषास्त्रेतायुगेकलिवन्नवर्त्ततेयतोवर्णाश्रमधर्मरहितोनकोप्यस्तीति ४५८ गृहिणइति । यतःपुत्रकामागृहिणोपिऋतावेवनिजान्दारान्व्रजंतीत्यन्वयः ४५९ ऊर्ध्वेति । परेगृहस्थभि

आगतस्यास्यपश्यामउभयत्रव्यवस्थिताम् ॥ दृशंराजनिवामोरौवाचक्नव्यांचसंसदम् ४५१ गुरुपादार्चनपराःशिक्षिताब्राह्मणाःपरे ॥ वर्ततेशतशःसर्वेनासाग्र न्यस्तलोचनाः ५२ हेमयोषित्कृतेतेनसभायामागतोधमः ॥ याज्ञवल्क्योनविद्यायाःप्रकाशार्थंसमागतः ५३ स्वैरिणीस्वैरिणंवेत्तितांस्वैरीस्वैरिणींपुनः ॥ अनु भूतंहिजानातिसर्वःसर्वंनचेतरत् ४५४ जलेयद्वद्विजानातिमत्स्योमीनंगतागतम् ॥ बाल्यादारभ्यगार्गीयंस्वैरिणीकामचारिणी ४५५ भर्तारंतनयंवापिभ्रातरं वासहोदरम् ॥ मातुलंश्वशुरंवास्वंसाध्वीवाललनांपराम् ४५६ हित्वानातिक्रमंकुर्युर्देहल्यावेश्मनःसदा ॥ कुलस्त्रियःस्त्रीयंत्वेकायातिलोकत्रयंवधूः ॥ स्वैरिणः पुरुषाँल्लोकेवीक्ष्यमाणाततस्ततः ३५७ अस्मिंस्त्रेतायुगेनैतेवर्ततेतेयथाकलौ ॥ अनाश्रमीनावर्णीस्यात्कोपिकुत्रापिभूतले ४५८ गृहिणःपुत्रकामास्तेऋतौदा रान्निजानपि ॥ व्रजंतितेपुनैवाशागमनेपरयोषितः ४५९ ऊर्ध्वरेतस्तयानैवव्रजंत्याश्रमिणोपरे ॥ अंत्यजाअपिदारान्स्वान्हित्वानेच्छंतियोषितम् ॥ त्रेतायुगे न्यललनामिच्छेयुःकिंपरेजनाः ४६० देवाद्यामानवीमेतांनस्पृशंतिकथंचन ॥ पशवोनैवगच्छंतिविजातीयांवधूंक्वचित् ४६१ इयंकामातुरानित्यंनग्नाभूत्वा पुरःस्थिता ॥ पुरुषाणामिमेसर्वेईक्षंतेतांनकर्हिचित् ४६२ पापमेकममुंहित्वाकलिजातसमंनरम् ॥ मुष्करंयाज्ञवल्क्याख्यंयुवानंनटवत्स्थितम् ४६३ निरी क्ष्यैनंदुरात्मानंस्वैरिणंस्वैरिणीस्वयम् ॥ ब्रह्मविद्याजतस्त्वेनमेकांतेगंतुमुद्यता ॥ स्वैरिणीमतमास्थायकुरुतेपादवंदनम् ४६४ ब्राह्मणानांतथाराज्ञःपश्यतांसर्व देहिनाम् ॥ अहंव्यभिचरिष्यामिप्रच्छाद्येतिव्यवस्थिता ४६५ स्तुतिमस्यकरोत्येषाभूयोभूयोद्विजन्मनाम् ॥ पुरतस्तेपिसंभ्रांताःस्वैरिण्यावाक्यमोहिताः ४६६ धर्मात्मनांपुरोगंताराजाप्येषविमोहितः ॥ स्वैरिणेस्वैरिणीवाक्याद्यन्नमस्कुरुतेस्वयम् ४६७

न्नाआश्रमिणऊर्ध्वरेतसएव अंत्यजाःश्वपचाः परेउत्कृष्टाः ४६ देवाद्याइति । स्पष्टम् ४६१ इयमिति । पुरुषाणांपुरःस्थिता तामिमेसभ्याःसर्वेयाज्ञवल्क्यंकलियुगजातसमंविनानेक्षंतइति द्वयोःसंबंधः ४६२ । ४६३ निरीक्ष्यैनमिति । एवंस्वैरिणंनिरीक्ष्यइयमेकांतेगंतुमुद्यतास्वैरिणीनांमतंकौशलमास्थायास्यपादवंदनंकुरुते ब्रह्मविद्याजतःअयंब्रह्मविदितिप्रख्यापनव्याजेनेत्यर्थः ४६४ ब्राह्मणानामिति । अहंब्राह्मणादीनांपश्यतामपिप्रच्छाद्यस्वकौशलैर्नैंद्रजालिकवद्देषांदृष्टिंप्रतिबद्धचव्यभिचरिष्यामीतिनिश्चयेनव्यवस्थितैषागार्गीअस्ययाज्ञवल्क्यस्यस्तुतिंद्विजन्मनांपुरतःकरोतिते पिसंभ्रांताःसंपन्नाइतिद्वयोःसंबंधः ४६५ । ४६६ धर्मात्मनामिति । पुरोगंताग्रगण्योराजापिमोहितः यतोगार्गीवाक्यादस्मैनमस्कुरुतेइति ४६७

इत्यादीति । इत्यादिकंकल्पयन्निति शेषः यतःकालपाशेनमोहितः द्विजोत्तमोपिहितामपिगार्गीमवज्ञायदीप्तंवन्हिशलभवद्याज्ञवल्क्यमुल्लंघयितुमुद्यतोभवदितिद्वयोरन्वयः ४६८ । ४६९ एवंविदग्धस्ययाज्ञवल्क्यद्वेषंवक्ष्यमाणोपयोगायप्रपंचयन्थतयोःप्रश्नोत्तररूपाणांसप्तदशकण्डिकानामर्थंसंक्षिप्याह याज्ञवल्क्येतीतिद्वाभ्यां । ततःसविदग्धआग्रहमन्यैरजितमपिजेष्याम्येवेनमित्याकारंहठमुपाश्रितःसन्कतिदेवाइत्याद्याकारैर्बहुभिःप्रश्नैर्देवानामंतर्यामिनियम्यसूत्रात्मविभूतीनांसंख्यांपप्रच्छ एवयाज्ञवल्क्योपितावद्भिःप्रश्नसमसंख्यैरुत्तरैरवांतरभेदशालिप्रत्युत्तरंसमाधानमभाषतेत्यर्थः ४७० विस्तरादिति । तत्रप्रत्युत्तरमितिअनेनप्रकारेणसंक्षेपविशिष्टविस्तरमादाय ल्यब्लोपेपंचमी अभाषत । इतिकिं विस्तरमादायवैश्वदेवाख्यस्यशस्त्रस्यऋग्वेदप्रसिद्धस्यगानवर्जितस्तुतिरूपस्यसंबंधिनीयानिवित्देवतासंख्यावाचकमंत्रपदसमुदायरूपातस्याघटकानियानिपदानित्रयश्चत्रीचेत्यादीनितदुक्तसंख्ययापडधिकत्रिंशताधिकत्रिसहस्ररूपयाआनंत्योपलक्षणभूतयाप्रत्यभाषत संक्षेपानुवस्वाद्यात्मकत्रयस्त्रिंशदाद्यात्मनाप्रवृत्तादंतर्भावात्तमादायाध्यर्द्धपदोक्तस्यवाह्यवायोरंतर्भावस्थानंप्राणोयस्यसर्वेदेवाविभूतयः सएवैकोदेवइत्यभाषत । तथाष्टौप्रश्नान् पृथिव्येवयस्यायतनमित्यादिनाकृतान्परान्पूर्वोक्तभिन्नानिमान्बुद्धिस्थान्शाकल्येनदुराग्रहेणकृतानभाषतेत्यनुषंगः समादधावित्यर्थः । अत्रायंसंक्षेपाभिप्रायः नवकण्डिकानामर्थोनिगदेने

इत्यादिकालपाशेनमोहितःसद्विजोत्तमः ॥ अवज्ञायहितांगार्गीसर्वदाब्रह्मचारिणीम् ४६८ ज्ञानोदर्धियाज्ञवल्क्यमुल्लंघयितुमास्थितः ॥ महावन्हिंयथादीप्तंशलभोनाशआगते ४६९ याज्ञवल्क्येतिसंबोध्यसंख्यांदेवगतांहिसः ॥ पप्रच्छबहुभिःप्रश्नैराग्रहंसमुपाश्रितः ॥ तावद्भिरुत्तरैरेषप्रत्युत्तरमभाषत ४७० विस्तराद्वैश्वदेवस्यनिविदःपदसंख्यया ॥ संक्षेपात्प्राणएवैकइतिसंक्षेपविस्तरात ॥ अष्टौप्रश्नान्परांश्चेमान्शाकल्येनाग्रहात्कृतान् ४७१ अनंतरमुवाचेदंशाकल्यंमूढचेतनम् ॥ कालसर्पमुखप्राप्तमंडूकसदृशंतदा ॥ शाकल्येतिचसंबोध्यकुलनाम्नाद्विजोत्तमम् ४७२ नैवंतेपूर्वजाश्चक्रुर्द्वेषंकुत्राप्यकारणम् ॥ नब्राह्मणाःपरेनैववर्णिनोमनुजानच ४७३ किमर्थंव्यर्थमत्यर्थंद्वेषंमयिकरोषिभोः ॥ माभूत्तेमरणंविप्रद्वेषिणोममसर्वदा ४७४ पितृमातृसुतादीनांमदीयानांयथामयि ॥ त्वदीयानांत्वयितथातेषांमाभूद्धिहाप्रियम् ४७५ सूर्याल्लब्धामयाविद्यातेजसादुःसहायतः ॥ मावजानीहितांविप्रधक्ष्यतित्वांक्षणादियम् ४७६ आदित्यात्प्राप्तविद्योहंयदागांपृथिवीतलम् ॥ तदामांसविताप्राहहृष्टचित्तःसुरोत्तमः ४७७

वस्पष्टः पृथिव्येवेत्याद्यष्टानामर्थस्त्वष्टावायतनानीत्यादिवाक्यव्याख्यानेनव्याख्यातोभविष्यतीति ४७१ अष्टादश्याःकंडिकायाअर्थमुपबृंहयति अनंतरमुवाचेत्यादित्रिंशच्छ्लोकैः । तदनंतरं शाकल्येतिगोत्रप्रत्ययांततयाकुलस्यगोत्रस्याभिधायकेननाम्नाशाकल्यंसंबोध्यइदंवक्ष्यमाणंवचउवाच । कीदृशंशाकल्यं कृष्णसर्पमुखप्राप्तमंडूकवत्कालवशं अतएवमूढधियमिति ४७२ कुलनाम्नासंबोधनाशयंस्फुटयति नैवमिति । पूर्वजाःपितृप्रभृतयस्तथापरेऽन्येपिब्राह्मणाऋषिवंश्यास्तथावर्णिनोब्रह्मचारिणोविद्यावंश्यास्तथान्येपिमनुजामनोर्वंशजाएवंत्वद्वद्द्वेषंनचक्रुस्त्वंतुमयिद्वेषंकिमर्थंकरोषि हेविप्रममविप्रस्यद्वेषेणप्रसूचितंतेमरणंमाभूदितीच्छामीतिशेषइतिद्वयोरर्थः ४७३ । ४७४ त्वन्मरणंनकेवलंतवानिष्टंकिंतुत्वद्बांधवानामपीत्याह पित्रिति । यथामदीयानां पित्रादीनांमयिप्रेमेतिशेषः तथात्वदीयानांत्वयिवर्ततेइहत्वन्मरणेतेषामप्रियंमाभूदितिसंबंधः ४७५ ब्रह्मद्वेषस्यसर्वत्रानिष्टसाधनत्वेपियाज्ञवल्क्यःस्वद्वेषस्यविशेषतोऽनर्थजनकत्वेहेतुंदर्शयाति सूर्यादित्यष्टभिः । इयंसूर्याल्लब्धाविद्यावज्ञातासतीत्वांक्षणाद्धक्ष्यतिदग्धंकरिष्यतीतिचतुर्थपादार्थः ४७६ आदित्यादिति । यदासूर्याद्विद्यांप्राप्याहंपृथिवीतलमागामागमंतदागमनकालेसवितासूर्योमामित्याह । इतिकिं योमयादत्तांविद्यामवज्ञास्यतिनमानयिष्यतितमहंभस्मसात्करिष्यामीतिद्वयोःसंबंधः ४७७

४७८ एवमुक्तेइति । एवमुक्तेसतिनानाप्रकारैर्वरैःकस्यचिदपिभस्मीभावोमाभवत्वित्यर्थपरवाक्यरूपैरादित्योमयाप्रार्थितोऽभूत्ततःसआदित्यइमम वधिंकृतवानिति ४७९ इमंक्रमित्याकांक्षा यामवधिमभिनयति समक्षमितिद्वाभ्यां । हेविप्रयःसमक्षंतंमुखेविंशतिवारंत्वामवज्ञास्यतितस्यविनाशकंशापंत्वजिव्हायांस्थित्वाऽहंदास्यामियेनसभस्मीभविष्यतीतिद्वयोःसंबंधः । दृश्यते चात्रनवमब्राह्मणेविंशतिवारंविदग्धप्रयुक्तंयाज्ञवल्क्येतिसंबोधनरूपमवज्ञानमितिभावः ४८० इतःपरमिति । इतःपरंवरत्वेनप्रार्थनेपिएतादृशोक्तानंतरमहंभयेनपुनःप्रार्थनातउपारमंनिवृत्तो ऽभवम् तस्मात्त्वंमोहवशेनहइतिखेदेमह्यंमाद्विष्ठाःमयिद्वेषंमाकुर्वित्यर्थः ४८२ मद्गुरुमिति । अहंचभवंतंकालमोहितमेवजानेयतस्त्वंमद्गुरुंसवितारंप्रसिद्धतममपिपापप्रतिबंधान्नजानासीति ४८३ त्वत्कृतइति । आदित्यस्यसमीरणवचनमनुस्मृत्य ल्यब्लोपेपंचमी त्वत्कृतेत्वदर्थंकास्यगतिर्भविष्यतीत्याकाराचिंताजायतेभवतीत्यर्थः । द्वेषस्यमन्निष्ठतांतुमासंभावयेत्याह नाहमिति । पापकारिणेपीतिशेषः ४८४ द्वेषाभावेदोषवीजदाहिकायाब्रह्मविद्यायाःसत्वंहेतुमभिप्रेत्यविद्यामभिनयति मयीतिसार्द्धैस्त्रिभिः । मयिएतच्छरीरेयद्वत्संस्थितोस्मितद्वत्त्वयित्वच्छरीरेअन्यत्रापि

अवज्ञास्यतियोविप्रांमयादत्तांस्थितांत्वयि ॥ भस्मसात्तमहंसद्यःकरिष्यामिनसंशयः ४७८ एवमुक्तेमयादित्यःप्रार्थितोबहुधाप्रभुः ॥ वरैर्नानाविधैःपश्चादवधिं सोकरोत्त्विमम् ४७९ समक्षंतवयोविप्रयदाविंशतिसंख्यया ॥ अवज्ञास्यतितस्याहंदुर्धियःपापकारिणः ४८० स्थित्वात्वदीयजिव्हायांशापंदास्यामिदारुणम्॥ येनभस्मीभवेत्सद्योवज्ञानान्मद्विरोधतः ४८१ इतःपरमहंभीतःप्रार्थनातउपारमम् ॥ मात्वंमोहवशंप्राप्तोमह्यंद्विष्ठाहनित्यशः ४८२ मद्गुरुंसवितारंचपापान्नैवा वगच्छसि ॥ जानेहंचभवंतंतंद्वेषिणंकालमोहितम् ४८३ त्वत्कृतेजायतेचिंताममादित्यसमीरणात् ॥ नाहंद्वेष्मिकदाचित्तुभवतेपापकारिणे ४८४ मयियद्वत्त्वयि यथायतोन्यत्रापिसंस्थितः ॥ अहमेववसाम्यत्रस्थावरेषुचरेषुच ४८५ अहंसर्वमिदंविश्वंसृष्टिस्थित्यंतसंस्थितम् ॥ मत्तएवचसृष्ट्याद्याजगतोद्वयरूपिणः ॥ ४८६ सुखदुःखादिकंद्वंद्वंममनैवास्तिकर्हिचित् ॥ शरीरस्यविनाशेमेस्थितौनातिशयोमम ४८७ घटादीनांयथानाशेस्थितौवानभसोनसः ॥ नाहंहन्मिनमां हन्युःसर्वदासर्वजंतवः ४८८ अज्ञानेनावृतंज्ञानंतवयद्वत्कृमेरिह ॥ तेनमांमनुजैस्तुल्यंमन्यसेपापकारिभिः ४८९ पापाग्निनाप्रदग्धंत्वांमाशोचंतुजनाइमे ॥ मारोदीद्भवतोजायासर्वाभरणवर्जिता ॥ निर्लज्जाबांधवान्दृष्ट्वादीनास्याविधवासती ४९०

चयतःसंस्थितोस्मिततःसर्वत्रस्थावरादावहमेववसामि तथाचसर्वांतरोहमित्यर्थः ४८५ अहमिति । सृष्टिस्थित्यंतेषुसंस्थितंसंबद्धमितियावत् इदंसर्वंविश्वंजगदहमेवयतोमत्तएवजगतःसृष्ट्या द्याःश्रुतिप्रसिद्धाः । तथाचाद्वयोस्मीति ४८६ सुखेति । आदिपदेनअशनायापिपासादिकंग्राह्यं अतएवमत्संबंधितयाऽभिमतस्यशरीरस्यविनाशेस्थितौवाममातिशयोविशेषोनास्ति घटाद्यु पाधिनाशस्थित्योर्नभसआकाशस्ययथासोतिशयोनास्तीति । यतोमय्यद्वितीयेसर्वक्रियाकारकत्वाभावइत्याह नाहमिनि । हन्मीतिसर्वक्रियोपलक्षणमितिद्वयोरर्थः ४८७ । ४८८ यथामदी यंस्वरूपमुक्तविधंवेदांतेषुसिद्धंतथातवाप्यस्तिपरंतुत्वंकृम्यादिसमतापादकेनाज्ञानेनप्रमत्तोसियेनमह्यंद्वेक्षीत्याह अज्ञानेनेति । ज्ञानमद्वितीयज्ञानात्मकमात्मस्वरूपमज्ञानेनाच्छादितंतवकृमिनिभ स्यपेनाज्ञानप्रभावेणात्मापन्हवलक्षणपापकारिभिर्मनुजैस्तुल्यंमामात्मयाथात्म्यविदंमन्यसेइति ४८९ अथयाज्ञवल्क्योविदग्धस्यभाविनींदुर्दशांत्रिकालज्ञतयाऽनुसंधायानुग्रहाविष्टःसामास्त्वि त्याह पापाग्निनेतिसप्तभिः । पापेनब्रह्मविद्वेषलक्षणेनप्रदग्धंप्रसिद्धाग्नितोप्यधिकंतापितंत्वांलोकामाशोचंतु तथाभवतोजायाबांधवान्दृष्ट्वानिर्लज्जादीनमुखीचसतीमारोदीदिति ४९०

159

मित्राणीति । मित्राणिबांधवाश्चतेशोकसागरेमापततु तथावैरिणःसंतोषावगमंसंतोषप्राप्तिंमाव्रजंत्वितिशेषः ४९१ धर्मेति । त्वंप्रेतोभूत्वाधर्मराजपुरंमाविलोकयेति ४९२ काकेति । ब लिर्निवापरूपः ४९३ अयमिति । अयंतवदेहोग्नेःशुनोवाभक्ष्योमाभूदिति तथाशिष्यान्विहायेकाकीमापरलोकंव्रजेति ४९४ अनेकेति । अनेकेषुकालेषुउद्दीपकसंनिधिरूपेषुसंजातःप्रादु र्भूतोब्रह्मणोब्रह्मविद्ययाब्रह्मभूतस्यममयोद्वेषरूपःपादपस्तवचित्तभूमौवर्तमानःसतेकारस्करफलसमंफलंमाददातु कारस्करशब्दःपारस्करादित्वात्सुटिनिष्पन्नोयद्यपित्रिकांडशेषेवृक्षसामान्यवाचक उक्तस्तथापिप्रकृते 'कारोवधेनिश्चयेच' इतिविश्वात् कारंवधंकरोतीतिव्युत्पत्त्याभल्लातकवाचकः तत्फलोत्कर्षस्याशुभंफलंवृक्षायुर्वेदउक्तम् 'आम्रैःक्षेमंभल्लातकैर्भयम्' इति । साक्षादपिभ ल्लातकफलानामनर्थकरत्वंलोकेप्रसिद्धमितिदृष्टांतता ४९५ मातवेति । हेविप्रेंद्रतवास्थीनिचोररूपाअंत्यजाश्चांडालामास्पृशंतु तथाऽस्मिन्मद्रूपेऽग्नौत्वंशलभवन्मापत । कीदृशेमद्रूपेऽग्नौ आ दित्यजिव्हे । आदित्योजिव्हायांसंनिहितोयस्यसतथातस्मिन् ४९६ एवमार्थिकमर्थंप्रपंच्यश्रौतमर्थंविशदयति भोजाइतिपंचभिः । भोजशब्दोत्रभोजयंतिधानादिकमितिव्युत्पत्त्यापचाय

मित्राणिबांधवामातेपुत्राद्याःशोकसागरे ॥ पतंतुवैरिणोमातेसंतोषाव्रगमंत्विह ४९१ धर्मराजपुरंमात्वंविलोकयसुदुःखितः ॥ क्षुत्पिपासापरिश्रांतःप्रेतोभू त्वातिदुःखितः ४९२ काकवद्बलिभुङ्मात्वंभूयाब्राह्मणसत्तम ॥ तप्तगात्रोभृशंदीनःपिबमात्वंतिलोदकम् ४९३ अयंचमृदुलोदेहोमाभूदग्नेःशुनोपिवा ॥ तवशि ष्यान्विहायैतानेकाकीमाव्रजाधुना ४९४ अनेककालसंजातोब्रह्मविद्वेषपादपः ॥ प्रयच्छतुफलंमातेकारस्करफलोपमम् ४९५ मातवास्थीनिविप्रेंद्रह्यंत्यजाः संस्पृशंत्विह ॥ माग्नावादित्यजिव्हेस्मिन्पतत्वंशलभोयथा ४९६ भोजायथामहोखायांमहांतंजातवेदसम् ॥ अशक्ताःस्वकरैःस्प्रष्टुंज्वलंतंसुदुरासदम् ४९७ दर्वींलोहमयींकृत्वाप्रौढामंगारधारिणीम् ॥ दीर्घदंडांस्पृशंत्येनंतथानैवनिजैःकरैः ४९८ प्रस्तोभयंतियेकेचिद्ब्राह्मणास्त्वांसभासदः ॥ कुर्वंतिबुद्धिसंयुक्तास्त्वांतथां गारधारिणम् ४९९ अहंकाष्ठानिसूर्योयंगुरुर्मेज्वलितोऽनलः ॥ उखासभासमुद्दिष्टाभोजाएतेसभासदः ५०० त्वंचकाष्ठमयंपात्रमादित्याग्नेर्विधारणे ॥ कृतोसि ब्राह्मणैर्नैवमात्मानमवगच्छसि ५०१ एवमुक्तोविदग्धोथयाज्ञवल्क्येनधीमता ॥ कालपाशावृतोद्वेषंचक्रेसोप्यधिकंपुनः ५०२ मुमूर्षुर्हियथाद्वेष्टिसुहृदंभिषजंत था ॥ गतश्रीकोयथाराजाऽमात्यायहितकारिणे ५०३ भाग्यहीनोयथाराज्ञेगुरवेपातकीयथा ॥ विदग्धोयाज्ञवल्क्यायतथाद्वेष्टिपुनःपुनः ५०४ जनयत्येषमे भीतिंशिशूनामिवमंदधीः ॥ सर्वज्ञंमांनजानातिसर्वतोभयवर्जितम् ५०५

जंतोर्भ्राष्ट्रोपजीविपरोमहोखाशब्दश्चभ्राष्ट्रपरोविवक्षितः तथाचयथाभोजाभ्रा ष्ट्रिकामहोखायांभ्राष्ट्रेस्थितंज्वलंतंवन्हिंस्प्रष्टुमशक्ताःसंतोदीर्घकाष्ठमयदंडशालिन्यादर्व्यैवस्पृशंतीतिद्वयोरर्थः ४९७ । ४९८ प्रस्तोभयंतीति । तथायेत्वांप्रस्तोभयंतिवादायोत्साहयंतितेबुद्धिमंतः स्वरक्षणकुशलास्त्वामंगारधारिणंकुर्वंति अंगारधारकपात्रवत्पुरतःकुर्वंतीत्यर्थः । तथाचब्राह्मणैरपिहितंव्यत्वेनमतोसिपरंतुदह्यमानमात्मानंनबुद्धसेइतिभावः । अंगारावक्षेपणमितिपदस्यअवक्षी यंतेबलात्कारेणधार्यंतेऽत्रेतिव्युत्पत्त्याऽधिकरणेल्युट्श्रुतोबोध्यः ४९९ दृष्टांतसाम्यंविशदयति अहमिति । अहमग्निज्वालककाष्ठरूपः । मद्गुरुरादित्योमज्जिव्हासन्निहितोग्निरूपः । इयंसभाव र्णितोखारूपा । विप्रावर्णितभोजरूपाः । त्वंतुकाष्ठमयदर्वीरूपआदित्याग्निविधारणायब्राह्मणैःकृतोसि । तत्रेदमतिचित्रंयच्चेतनोऽप्यात्मानंदह्यमानंनजानासीतिद्वयोरर्थः ५०० । ५०१ एवमुक्तो पिविदग्धोविपरीतमेवमेनेइत्याह एवमित्यष्टभिः स्पष्टम् ५०२ तत्रदृष्टांतमाह मुमूर्षुरिति । पातकीपातकोदयेनपातकोयतः 'पापःपापेनकर्मणा' इतिश्रुतेः । सनिवारकायगुरवेयथाद्वेष्टि शेषंस्फुटम् ५०३ । ५०४ विदग्धोययाबुद्ध्यापुनःपुनर्द्वेष्टिस्मतांबुद्धिमभिनयति जनयतीत्यादिना । एषयाज्ञवल्क्योबालानांयथाभयंजनयेत्तथाममभयंजनयतिमांसर्वज्ञंनिर्भयंचनजानातीति ५०५

ग्रामेष्विति । यथाग्रामादिषुकाष्ठादिजडानांबालादिमूढानांचमध्यगोभापेततथात्रसभायामप्येषनिःशंकंभापते । तत्रखेटाःकर्षकाणांग्रामाः खर्वटाःपर्वतग्रामाः ५०६ अस्यचेदिति । अस्य याज्ञवल्क्यस्यगुरुरादित्योयदिममदहनसमर्थोऽभविष्यत्तर्हिइतःपूर्वमपिद्वेषिणंमांकुतोनाधक्ष्यदिति । वस्तुतस्त्वयमादित्यःकिंकिंकर्तुंशक्तोयतोजडः ५०७ जडत्वमुपपादयति शब्दार्थाविति । यतःशब्दमयीदेवतेतिपक्षेशब्दस्याकाशगुणस्यजडत्वंप्रसिद्धं अर्थस्यतेजोमयमंडलस्यापितथात्वंप्रसिद्धं शब्दार्थाभ्यांभिन्नातुदेवतानविद्यतेसत्त्वेपिकर्मनिरपेक्षाकिंचित्कर्तुंनशक्तामम तुदुष्कर्महीन स्याकिंकरिष्यतीत्यर्थः ५०८ अस्यादित्यशिष्यत्वंदुर्घटमनयोःसंबंधस्यदुर्घटत्वादित्याह क्वायमिति । अयंयाज्ञवल्क्योविटसमोभूमिस्थःक्वनभःस्थआदित्यश्चक्वेति इत्यादिविपरीतंचिंतयित्वा असौविदग्धोयाज्ञवल्क्यस्यावज्ञामकरोदिति ५०९ एकोनविंशकंडिकायाअर्थमाह याज्ञवल्क्येतिसंबोध्येतिचतुर्भिः । ततःपरंकोपमुपागतोविदग्धएनंयाज्ञवल्क्यंयाज्ञवल्क्येतिसंबोध्यइदंवच नमाह ५१० इदंपदेनोक्तंवचनमभिनयति कुर्विंतिद्वाभ्यां । भवान्यत्कुरुपांचालदेशवासिनोब्राह्मणान्जितवान् ब्रह्मस्वहरणोद्यतोब्राह्मणधनापहारीचतज्जन्यदुष्कृतेनभाविष्वनेकशरीरेषुनि र्जलारण्यदेशवृत्तिब्रह्मराक्षसत्वलाभयोग्यःसोयमेवंविधस्त्वंससाहसःसाहसेनअविमृश्यकृतब्राह्मणावज्ञारूपेणसहवर्तमानःस्विदितिवितर्केकिंब्रह्मजानासिकाब्रह्मविद्यासफलासाक्षात्कृतायद्बलेनेवंवि

ग्रामेपुनगरेष्वेषखेटखर्वटकेष्वपि ॥ काष्ठादिपुयथाबालगोपालललनादिपु ॥ मध्यगोभापतेतद्वदत्राप्येषप्रभापते ५०६ अस्यंचेद्गुरुरादित्योद्वेषिणंमांहि धक्ष्यति ॥ इतःपूर्वंकुतोनायंदग्धवान्किमयंजडः ५०७ शब्दार्थौनविहायात्रदेवतानामविद्यते ॥ विद्यमानापिसाकर्महित्वाकिंचित्करोतिन ५०८ क्वायंविटः क्वचैपस्यादादित्योनभसिस्थितः ॥ इत्यादिचिंतयित्वाऽसाववज्ञामकरोत्पुनः ५०९ याज्ञवल्क्येतिसंबोध्यकोपंपरमुपागतः ॥ इदंवचनमाहेनंयाज्ञवल्क्यंमु नीश्वरम् ५१० कुरुपांचालदेशस्थान्ब्राह्मणान्जितवान्भवान् ॥ भाव्यनेकशरीरेषुभविताब्रह्मराक्षसः ५११ अरण्येनिर्जलेदेशेब्रह्मस्वहरणोद्यतः ॥ सोयंससाह सःकिंस्विद्ब्रह्मजानासितद्वद ५१२ याज्ञवल्क्योपिसर्वात्माब्रह्मवित्त्वंप्रदर्शयन् ॥ दिशोवेदेतितंप्राहविदग्धंपापमोहितम् ५१३ पप्रच्छपुनरप्येषदेवतादिदिशांत था ॥ देवतानांप्रतिष्ठानमिंद्रियाणांतथैवच ॥ विपयाणांससर्वेपांयाज्ञवल्क्योप्युवाचतत ५१४ आदित्योथयमस्तद्वद्वरुणःसोमएवच ॥ अग्निश्चेतिहिपंचानांदि शांदेवोभवाम्यहम् ५१५ नेत्रेयज्ञवचोग्राहिश्रोत्रेवासहकारिणि ॥ रसनेदिव्यभावेचक्षीणदोषेमनस्यपि ॥ वागिंद्रियेक्रमाद्देवाआदित्याद्याःप्रतिष्ठिताः ५१६

मानवजानासीतिद्वयोरर्थः ५११ । ५१२ याज्ञवल्क्योपीति । एवमुक्तोयाज्ञवल्क्योपिजनकेनब्रह्मविद्देवगोभिरभिप्रेतोऽतोममगवामुत्कालनेनदोषइतिसूचनायब्रह्मवित्त्वंप्रकटयन्सन्निति विद ग्धंप्रतिप्राह इतिकिं अहंसदेवाःसप्रतिष्ठाश्चदिशोवेद सप्रपंचमात्मतत्त्वपर्यवसायिचदिग्विषयंज्ञानंममास्तीति ५१३ अथकण्डिकापञ्चकस्यार्थंसप्तत्रिंशच्छ्लोकैरुपबृंहयंस्तत्रश्रौतमर्थंसंकलय्यदर्श यति पप्रच्छेत्यष्टभिः । एषविदग्धोदिशांपूर्वदक्षिणपश्चिमोत्तरोर्ध्वरूपाणांदेवतादिकंपप्रच्छ । आदिपदग्राह्यमाह देवतानामिति । प्रतिष्ठानंकारणं तथाचोत्तरोत्तरंदेवतादीनांकारणंपप्रच्छेत्य र्थः याज्ञवल्क्यस्तत्पृष्टंसर्वमुवाचेति ५१४ कथमुवाचेत्याकांक्षायामाह आदित्यइत्यादि । पूर्वादिक्रमेणचतसृणांदिशामादित्यादयश्चत्वारोदेवाः ऊर्ध्वदिशश्चध्रुवापदोक्तायाःप्रकाशभूयिष्ठा याअग्निर्देवता एवंदिगभिमानिदेवरूपेणावस्थितोहमित्यर्थः ५१५ अथदेवानांकिंकारणमित्याकांक्षायांहिरण्यगर्भोपासनयाहिरण्यगर्भभाविनोयाग्याध्यात्मंचक्षुरादींद्रियाणितान्येवादित्यादिरू पेणपरिणामित्वात्तत्कारणानीत्याह नेत्रेइति । आदित्यदेवोनेत्रेचक्षुरिन्द्रियेप्रतिष्ठितः यमस्तुश्रोत्रेप्रतिष्ठितः । ननुश्रुतौपितृयाणमाप्यचंद्रलोकस्ययमाधीनस्ययज्ञसाध्यत्वाभिप्रायेणयज्ञेयमः प्रतिष्ठितइत्युक्तंकथमुच्यतेश्रोत्रेइतीतिचेत् शृणु । श्रुतौयज्ञपदेनपरलोकजयसाधनक्षमायज्ञावस्थोच्यतेसाचयद्विनानोपपद्यतेतस्यापियज्ञपदार्थेनिवेशोवक्तव्यइत्यतोविद्वान्यजेदितिनियमेनाश्रुत–

–पूर्वकाण्डस्ययागेऽप्रवृत्तेःश्रोत्रस्यापितत्प्रवेशस्तत्रचहेतुभूतंश्रोत्रस्यविशेषणद्वयं यज्ञवचसांग्राहकत्वाद्वायज्ञसहकारित्वाद्वाश्रोत्रस्ययज्ञपदार्थेप्रवेशइतितदर्थः । एवंवरुणोरसनेंद्रियेप्रतिष्ठितः । कीदृशेरसनेन्द्रिये दिव्यभावेदिव्योदेवतात्मकउक्तविद्ययाभावःपरिणामोयस्यसतथातस्मिन् । श्रुतौचजलीयेन्द्रियमेवाप्पदेनोक्तमितिभावः । एवंसोमोदेवोमनसिप्रतिष्ठितः । श्रुतौचदीक्षापदेनयागांगव्रतविशेषनिर्वाहकंमनएवविवक्षितं एतत्सूचनायैवक्षीणदोषइतिमनोविशेषणमितिभावः । वागिंद्रियेचाग्निःप्रतिष्ठितःपूर्ववदित्यर्थः ५१६ अथेंद्रियाणांविषयरूपंकारणंश्रुतौप्रतिष्ठापदेनोक्तमाह प्रतिष्ठेति । चक्षुरिंद्रियस्यप्रतिष्ठाकार्यतयास्थितिःरूपेषुशुक्लादिषुज्ञेया विषयैःस्वप्रकाशनायेंद्रियस्यारंभात् । तथायज्ञशब्दस्ययज्ञशब्दार्थप्रविष्टतयाविवक्षितस्यवेदस्यश्रोत्रगृह्यमाणपूर्वकाण्डस्यद्विविधोर्थःप्रतिपाद्यतयाविषयःस्मृतःप्रसिद्धः ५१७ तद्द्वैविध्यमाह वागितिसार्धेन । तत्रप्रथमोवागादिक्लेशात्मकोव्यापाररूपोयोवेदार्थःसश्रुतौदक्षिणापदेनदक्षिणयाक्रत्विग्भ्यःक्रेतव्यार्थवृत्तिकेनोक्तस्तस्मिन्यज्ञोवेदोक्तःप्रतिष्ठितः तन्मयत्वाद्यज्ञस्येत्यर्थः ५१८ आस्तिक्यमिति । द्वितीयवेदार्थभूतमास्तिक्यंश्रद्धयादेयमित्यादिश्रुतिप्रसिद्धश्रद्धारूपंतत्रप्रथमवेदार्थभूतंकर्मप्रतिष्ठितं अतएवगीतासूक्तंअश्रद्धयाहुतंदत्तमित्यादि । तथाचचक्षूरूपेष्विवश्रोत्रंप्रथमश्रोतव्यवेदोक्तकर्मसुप्रतिष्ठितंकर्माणिचश्रद्धायामितिभावः । यतोध्यात्मरेतएवाधिदैवंरसरूपंर

प्रतिष्ठाचक्षुषोज्ञेयारूपेषुविविधेष्विह ॥ यज्ञशब्दस्यवेदस्यह्यर्थोत्रद्विविधःस्मृतः ५१७ वाक्कायमनसांपूर्वक्लेशःकर्मात्मकोहियः ॥ अत्रप्रतिष्ठितोज्ञेयोयज्ञोवेदउदीरितः ५१८ आस्तिक्यंहिद्वितीयंस्यात्तस्मिन्कर्मप्रतिष्ठितम् ॥ रसरूपंयतोरेतस्तत्रापोरसनात्मिकाः ५१९ मनसःक्षीणदोषस्ययथार्थेस्थितिरीरिता ॥ सत्येवाचोपितत्रैवतेनवागिंद्रियस्यन ॥ उक्तंहृदयतोभिन्नंप्रतिष्ठाकारणंतदा ५२० हृदयंस्थितिहेतुःस्यात्सर्वेषामेकमेवहि ॥ समुद्रइवनीराणांस्थानानांस्थानिनामपि ५२१ भित्तौयथाभवेच्चित्रंचित्रेवर्णाःसितादयः ॥ वर्णेषुद्रव्यजातंस्याद्दुग्धांजनमुखंसदा ॥ प्रतिष्ठितंभवेत्सर्वंभित्तावेवचसंश्रितम् ५२२ एवंसाक्षाद्धृदंभोजेस्यात्परंपरयापिच ॥ दिगादिकमिदंविश्वमादित्यादिस्वरूपधृक् ५२३

सगुणकजलरूपंसंपन्नमतोरसनेंद्रियरूपाआपस्तत्ररेतसिप्रतिष्ठिताःश्रुतावुक्ताइतिशेषः ५१९ मनसइति । क्षीणदोषस्यमनसःश्रुतौदीक्षापदोक्तस्ययथासत्येऽबाधितेर्थेविषयेऔत्सर्गिकीस्थितिरुक्तातथातत्रसत्येर्थेवाचोपिस्थितिरुक्तप्रायैव ‘यन्मनसाध्यायतितद्वाचावदति’ इतिश्रुतेः वाङ्मनसयोःसमानविषयत्वस्यसिद्धत्वात् । एतेनपञ्चमकण्डिकायांवागिंद्रियस्यविषयेप्रतिष्ठानोक्तेतिन्यूनताशंकानिरस्तेत्याह तेनेत्यादिना । तेनवाग्विषयस्योक्तप्रायत्वेनवागिंद्रियस्यहृदयतोभिन्नंकारणंश्रुतौनोक्तंकिंतुहृदयमेवकारणमुक्तमित्यर्थः ५२० हृदयमिति । हृदयंतुसर्वेषांस्थानानामुक्तानामिंद्रियाणांविषयाणांचतथास्थानिनांदेवानांचएकमेवस्थितिहेतुःकारणंस्यात् यथासर्वनीराणांसमुद्रइति । अत्रहृदयपदेनहृदयेसन्निहितोमायाशबलब्रह्मरूपोंतर्यामीविवक्षितः । तस्यचमनोद्वारेणसकलजगत्कारणत्वंश्रुत्यंतरेप्युक्तं । ‘असतोधिमनोसृजतमनःप्रजापतिमसृजतप्रजापतिःप्रजाअसृजततदिदंसर्वंमनस्येवप्रतिष्ठितम्’ इति असतोऽव्याकृतोपाधिकात् मनोहिरण्यगर्भः प्रजापतिर्विराडितिश्रुतिपदार्थः ५२१ एवंश्रौतार्थमभिधायआर्थिकमर्थंसदृष्टांतंप्रपञ्चयति भित्तावित्यादिना । यथालोकेभित्तौकुड्येचित्रंरेखामात्रंदेवतामूर्त्यादिरूपंप्रतिष्ठितंभवेत् तत्रचश्वेतादयोवर्णाःप्रतिष्ठिताभवेयुस्तेषुवर्णेषुचदेवतामुखादावर्पितंदुग्धादिकंप्रतिष्ठितंभवेत्व्यवह्रियेत वस्तुतस्तुतत्सर्वंचित्रादिकंभित्त्याश्रितमेवेति ५२२ एवमिति । एवंहृदंभोजावच्छिन्नेपरमात्मनिइदंविश्वंदिगादिकमादित्यादिदेवतारूपंचसाक्षात्किंचित्परंपरयाचप्रतिष्ठितंतत्रसवृत्तिकमन्तःकरणंसाक्षादन्यत्परम्परयेत्यर्थः ५२३

उक्तदृष्टांतेनसमानधर्मान्विशदयति भित्तेरित्यादिना । मृदाचित्राधारकुड्यलेपेयथाचित्रमदर्शनंयातितथाविचारकालेविश्वरूपंचित्रमित्यर्थः ब्रह्मज्ञानमेवमृत्तयालेपात् ५२४ यथादृष्टांतेभि
त्तिःसमाचित्रंतुनतोन्नतंतथात्रउत्कर्षापकर्षवृद्धिध्वंसभेहृदयावच्छिन्नेआत्मनिकल्पितमित्याह समायामिति ५२५ दृष्टांतेयथानानाविधारागाश्चित्रपरिपोषकास्तथात्रविपर्ययरूपाबोधावोद्ध्याह
त्याह वर्णैरिति ५२६ अत्रचचित्रकारस्थानीयानेकवासनासंस्कृताबुद्धिर्बोद्धव्येत्याह चित्रकारइति ५२७ विश्वचित्रनिर्माणेबुद्धेःप्रकारान्तरेणापिहेतुतांदर्शयन्हृदयस्यबुद्धेश्चद्वयोरेवान्वयव्य
तिरेकाभ्यांकारणतेत्याह काष्ठादीतिद्वाभ्याम् । बिम्बपदेनात्रचित्रकाराणामुपकरणविशेषश्छायाइतिभाषायांप्रसिद्धोग्राह्यः तथाचकाष्ठादिनिर्मितंचित्रांगस्यचित्रोपायस्यरागस्यधारकंचबिंबं
सहसावलेनसंघट्टितंयथास्वसंनिकर्षमात्रेणभित्तौचित्रंरचयेदितिबिम्बस्यान्वयव्यतिरेकाभ्यांकारणताप्रसिद्धेतिशेषः ' बिम्बंगात्रांतिकोपाये ' इतिविश्वः ५२८ चित्ररूपमिति । तथाभित्तिर
पिविम्बस्यसन्निधिमात्रेणचित्रस्यरूपमाकारमन्वयव्यतिरेकाभ्यांरचयतीत्यपिप्रसिद्धम् भित्त्यभावेहिचित्रंकुत्रस्यात् एवंविधंजगन्मयंचित्रंहृदिमायाशबलचिद्रूपेभित्तिभूतेनानावासनान्वितबुद्धि
बिम्बनिर्मितमित्यर्थः ५२९ अस्यविश्वचित्रस्यनिःशेषंनिवृत्तिर्मायाशबलस्यभित्तिस्थानीयस्यविशेषणनिवृत्त्यानिवृत्तौप्रारब्धान्तोपलक्षितायामेवभवति । जीवन्मुक्तिदशायांतुविचारकालेऽ

भित्तेर्यथामृदालेपाच्चित्रंनाशंप्रयातिहि ॥ ब्रह्मज्ञानमृदालेपाद्धार्दंचित्रंचनश्यति ५२४ समायामेवभित्तौस्याच्चित्रंविषमरूपधृक् ॥ समेहृदितथैवैतद्विषमंवि
श्वचित्रकम् ५२५ वर्णैर्नानाविधैर्यद्वद्भित्तौचित्रंविरच्यते ॥ अज्ञानजैस्तथाबोधैर्हृदिचित्रंविरच्यते ५२६ चित्रकारोयथाचित्रंभित्तौलिखतिसर्वदा ॥ हृदिबु
द्धिस्तथाविश्वचित्रंलिखतिनित्यशः ५२७ काष्ठादिरचितंयद्वद्बिंबंचित्रांगधारकम् ॥ सहसारचयेद्भित्तौचित्रंसंनिधिमात्रतः ५२८ चित्ररूपंतथाभित्तिर्बिंबस
न्निधिमात्रतः ॥ रचयत्यनिशंनृणांहृदिचित्रंजगन्मयम् ५२९ पुनःपुनर्मृदोलेपेयथानैवप्रतीयते ॥ चित्रंस्वल्पंचभित्तौतद्विद्यमानंसदैवहि ५३० एवंपुनःपुन
र्ब्रह्मविज्ञानेनविलेपनात् ॥ विश्वंचित्रंस्वहृदयेविद्यमानंनदृश्यते ५३१ यथामायाविनाकाशेचित्रंसैन्यंप्रदृश्यते ॥ एवंबुद्ध्यास्वहृदयेविश्वमेतत्प्रदृश्यते ५३२
मायाविनिसृतेयद्वत्सुप्तेवाव्यग्रतांगते ॥ नभःस्थितंनतद्दृश्यंचित्रमेतज्जडाजडम् ५३३ एवंबुद्धौविनष्टायांसुप्तायांवानिजात्मनि ॥ स्थितायांचित्रमेतद्धिहृदि
स्थंनोपलभ्यते ५३४ नभःस्थितंयथाचित्रंमायाव्येवततोपरम् ॥ कालत्रयेपिनैवैतदासीदस्तिभविष्यति ५३५

दर्शनमात्रंभवतीतिदृष्टांतानुरोधेनाह पुनरितिद्वाभ्याम् । यथाचित्रोपरिमृत्तिकायाःपुनःपुनर्लेपेकृतेभित्तौस्वल्पंलेशमात्रेणावस्थितमपिचित्रंबहिर्नदृश्यतेतथाब्रह्मज्ञानरूपमृदोविलेपनात्प्रार
ब्धपर्यन्तंलेशमात्रेणहृदयेविद्यमानमपिविश्वचित्रंसमाध्यादिकालेनदृश्यतेइतिद्वयोरर्थः ५३० । ५३१ तस्यादर्शनेतुमायाविचित्रकरसमायाबुद्धेर्विलयएवप्रयोजकइतिदर्शयितुंबुद्धेस्तन्निर्माणे
प्राधान्यमाह यथेति । मायाविनाहेतुभूतेनचित्रंनानारूपंयथादृश्यते तथाबुद्ध्याहेतुभूतयाप्रपञ्चइति ५३२ बुद्धेःप्राधान्यव्युत्पादनफलंदर्शयति मायाविनीति । यथाकाशेजडचेतना
त्मकचित्रकर्त्तरिमायाविनिसृतेसतिव्यग्रतांकार्यांतरासक्ततांगतेवासतितच्चित्रंनदृश्यतेएवंबुद्धौरोगादिनानष्टायांसुप्तायांवाआत्मनिस्थितायांसमाहितायांवाहृदयगतंविश्वरूपंचित्रंनदृश्यतेइतिद्वयोः
संबंधः ५३३ । ५३४ नभइति । यथामायाविनिर्मितंनभःस्थंचित्रंमायाविस्वरूपमेवततोमायाविस्वरूपाद्भिन्नंकालत्रयेपिनास्तितथाहृदयेस्थितंविश्वरूपंबुद्धिरेवततोबुद्धिस्वरूपाद्भि
न्नंकालत्रयेपिनेतिद्वयोःसंबंधः ५३५

161

५३

साचबुद्धिःस्वस्यापिविश्वचित्रांतर्गतस्यभानप्रयोजिका नचात्माश्रयः अविद्यायामेवचासित्वाऽविद्यास्तीतिकल्प्यते 'ब्रह्मदृष्ट्यात्वविद्येयंनासीदस्तिभविष्यति' इतिवार्त्तिकोक्तविधयाऽविद्या याश्चानिर्वचनीयत्वेनादोषत्वादित्याशयेनतत्सदृष्टांतमाह तमइति । यथाकाशस्थितोंधकारोंधकारेणैवदृश्यतेनतुतेजसा तेनविरोधात् तथाहृदयावच्छिन्नात्मनिवर्त्तमानाबुद्धिर्बुद्धिकालएव दृश्यंतेइति ५३७ उक्तमर्थंव्यतिरेकेणस्फुटयति यथेति । यथासूर्यादिप्रकाशेनविशुद्धआकाशेतमोनदृश्यतेनिर्दोषदृग्भिः तथात्मविज्ञानेनशुद्धेनिरावरणेआत्मनिसतिबुद्धिर्नदृश्याभवेदिति द्वयोरर्थः ५३८ । ५३९ नन्वेवंसतिप्रमाणस्पर्शमसहंत्याबुद्धेरसत्वमागतंतथाचतयाकथंव्यवहाराःसाध्यंतइत्याशंकांदृष्टांतेनपरिहरति शशेति । यथाशशशृंगमसदपिस्वशब्दाद्विकल्पात्मकंज्ञानंजनय तितथाबुद्धिःकार्यैःकारणेनचसहासद्रूपाविबोधंविविधंबोधंविपर्ययात्मकंकरोतीति ५४० ननुबुद्धेरसत्त्वेपितत्कारणमज्ञानंसद्भविष्यतियत्सर्वानर्थबीजमितिचेन्न यादृशोयक्षस्तादृशोबलिरितिन्याये नतस्याप्यसत्वादित्याशयेनासतोप्यनर्थजनकत्वेदृष्टांतमाह सर्पेइति । यथाकेचिद्भीरवोऽसत्यपिसर्पेसर्पशब्दमात्रेणमक्षिकाशनभ्रमइवशंकाविषात्प्राणान्मुंचंति ५४१ दार्ष्टांतिकमाह असत्येवे

हृदिस्थितंतथाविश्वंचित्रंबुद्धिर्नचापरम् ॥ कालत्रयेपिनैवैतदासीदस्तिभविष्यति ५३६ तमोयथानभस्येतद्दृश्यतेतमसैवहि ॥ हृद्यात्मनितथाबुद्धिर्बुद्ध्यैवे षाप्रतीयते ५३७ यथाविशुद्धआकाशेप्रकाशेननदृश्यते ॥ निरीक्ष्यमाणंचतमोनेत्रैर्दोषविवर्जितैः ३८ हृद्यात्मनितथाशुद्धेबुद्धिरेषासकारणा ॥ आत्मविज्ञानतो दृश्यानभवेद्धिकदाचन ५३९ शशशृंगंयथाशब्दात्स्वविज्ञानकरंभवेत् ॥ कार्यकारणसंयुक्ताबुद्धिरेवंविबोधकृत् ५४० सर्पेऽसतियथाकेचित्प्राणान्मुंचंतिजंतवः ॥ शंकाविषात्सर्पशब्दश्रवणेनभयातुराः ५४१ असत्येवतथाज्ञानेबुद्धिदेहादिकारणे ॥ सुखदुःखकरंघोरंसंसारंयांतिमानवाः ५४२ एकएवयथासुप्तोबहुधाजायते पुमान् ॥ एकएवतथाविद्यावशादात्मापिजायते ५४३ अंधोयथानिधिंस्पृष्टाकरेणापिनविंदति ॥ विदग्धत्वादृशाएनंनविदुर्हृदयेस्थितम् ५४४ अज्ञाना दृश्यसंसारचित्रस्याश्रयईरितः ॥ हृदयंकिंविदग्धान्यत्प्रष्टुमिच्छसितद्वद ५४५ एवमुक्तेप्यसौमूढःप्रश्नान्नोपरतिंगतः ॥ मंडूकःपृदृशःकालसर्पाह्वानकरीं गिरम् ॥ विससर्जततोयाज्ञवल्क्योभूदतिदुःखितः ५४६ अहोअस्यमृतिःप्राप्तासमीपेदुर्धियोधुना ॥ मण्डलादुत्तरत्येषपुमाँल्लोहितलोचनः ५४७ सवितामम जिह्वायांस्थातुंवेदत्रयात्मकः ॥ अतःपरवशाजिह्वाशापमेषाप्रदास्यति ॥ ममयेनभवेदेषभस्मीभूतःक्षणाद्द्विजः ५४८

ति । स्पष्टम् ५४२ वस्तुतोऽसतोप्यज्ञानस्यविविधप्रपंचनिर्माणसामर्थ्यंस्वप्नेपरीक्षितमित्याह एकएवेति ५४३ एवंविद्वद्दृष्ट्याअसदप्यज्ञानंत्वादृशानांदुराग्रहिणांवज्राचलवद्दुर्भेदत्वेनस्थि तंयद्वशाद्धृदयस्थोप्यात्मानभासतेइत्याह अंधइति । यथांधःकरसंस्पृष्टमपिनिधिंनविंदतितथात्वादृशाहृदयस्थमप्यात्मानमिति ५४४ उपसंहरति अज्ञानादिति । अज्ञानाद्दृश्यंयत्संसार रूपंचित्रंतस्याश्रयभूतंतत्त्वंदिग्विज्ञानमुखेनहृदयत्वेनोक्तंकिमन्यच्छ्रोतुमिच्छसीति ५४५ कस्मिन्नुहृदयंप्रतिष्ठितमितिप्रश्नमवतारयति एवमुक्तेपीतिचतुर्भिः । एवंदिग्विज्ञानमुखेनात्मतत्त्वेया ज्ञवल्क्यमुनिनोक्तेपिसत्यसौविदग्धोमूढउक्तेप्यप्रसरन्मतिःप्रश्नादनुपरतःसन्यथामण्डूकःकृष्णसर्पस्याह्वानस्याकारणस्यहेतुभूतांगिरंवाचमुत्सृजतितथाकालरूपसर्पस्याह्वानकरींगिरंपुनःप्रश्नरूपामु त्ससर्ज ततस्तंतादृशंवीक्ष्यकरुणयायाज्ञवल्क्योऽतिदुःखितोभूदिति ५४६ अहोइति । अहोइतिखेदे अस्यदुर्धियोमृतिःसमीपेप्राप्तायतोस्मैशापंदातुंममजिह्वायांस्थातुंसवितासूर्योमंडलादवतर त्यतोममैषाजिह्वाएतद्विनाशकंशापंदास्यतीतिसंचिंत्ययाज्ञवल्क्यःकृपाविष्टःसन्कथंस्विदस्यमरणंमाभूदितिचिंतयन्नेवव्यवस्थितइतित्रयाणांसंबंधः ५४७ । ५४८

५४९ विदग्धोपीति । मुमूर्षुर्मरिष्यतीत्याकारकशंकाविषयोमूढधीश्चविदग्धइतिपप्रच्छ इतिकिं तद्विश्वरूपचित्रधारकत्वेनवर्णितंहृदयंकुत्रप्रतिष्ठितंकिमाश्रयकमितियावत् ५५० पंचविंशति
तस्याःकण्डिकायाअर्थमाह अहल्लिकेतिसप्तभिः । एवंपृष्टोयाज्ञवल्क्योविदग्धमहल्लिकेतिनामांतरेणसंबोध्यवक्ष्यमाणमुत्तरमभाषत अस्यनाम्नोव्युत्पत्तिर्वार्तिककृद्भिर्यद्यपिएवमुक्ता अहनिली
यतेरात्रौचप्रादुर्भवतीत्यहल्लिकःप्रेतभावित्वात्तत्संबोधनम् । तथाअहन्शब्दनकारस्यरेफादेशेरलयोःसावर्ण्याल्लकारपाठेसंज्ञायांकन्प्रत्ययेकेणइतिईकारस्यह्रस्वइतितद्व्याख्यातृभिरुक्तम् तथाप्येतैःसं
भवाभिप्रायेणार्थांतराण्यपिप्रदर्श्यंते तत्रप्रथमोर्थश्चतुर्थपादेनोक्तः यस्मात्त्वमहनिअहर्वत्प्रकाशभूयिष्ठेपिमदुक्तेर्थेसंशयाल्लीयसेलययोग्योभवसिसंशयात्माविनश्यतीतिस्मृतेस्तस्मादहल्लिकेत्यु
क्तोसीतितदर्थः अत्रसाधनिकासैवेति ५५१ द्वितीयमर्थमाह अथवेति । योहिसूक्ष्मावधारणकुशलःसहृदयइत्युच्यतेअयंतुतद्विपरीतत्वादहृदयस्ततोहल्लिकेत्युक्तः । हल्लविकसनेइत्यस्माद्ध
अंतान्मत्वर्थेन्प्रत्ययेहल्लिशब्दोविकाशशालिहृदयवाचीतद्रहितस्तथेतिभावः । कथमस्यविवेकराहित्यमित्यतआह इतःपरमित्यादि । इतःपरंस्पष्टोक्तेरनंतरमपिकःपृच्छेदयंतुविदग्धःपृच्छतिततोऽ
हृदयोविवेकरहितइत्यर्थः ५५२ एतामेवव्युत्पत्तिमादायतृतीयमर्थमाह अथवापतितइति । अथावादेहेपतितेसतियन्मांसमयंहृदयंग्रामसिंहाःश्वानोऽद्युर्भक्षयेयुस्तदेवत्वयाबुद्धं मद्विवक्षितः

इतिसंचिंत्यमनसाकृपयापरयान्वितः ॥ प्रश्नेस्मिन्मरणंमाभूदित्यैवैषण्यवस्थितः ५४९ विदग्धोपिमुमूर्षुःसन्पुनःपप्रच्छमूढधीः ॥ हृदयंकुत्रतद्विश्वचि
त्रधृक्कुसमवस्थितम् ५५० अहल्लिकेतिसंबोध्ययाज्ञवल्क्योप्यभाषत ॥ नामांतरेणयस्मात्त्वंलीयसेहनिसंशयात् ५५१ अथवाहृदयेनायंरहितोऽहल्लिकःस्मृतः ॥
इतःपरंहिकोनामपृच्छेद्धीमान्पुमानिह ॥ अत्रापियदयंप्रश्नंकुरुतेऽहृदयस्ततः ५५२ अथवापतितेदेहेहृदयंपृथिवीस्थितम् ॥ ग्रामसिंहाःसमद्युर्यत्ततोऽहृदय
ईरितः ५३ अहंवाकारकोदेवोलयंतेत्रकरिष्यति ॥ अहल्लिकेतिनाम्नातमिदमाहमुनीश्वरः ५४ मय्येवस्थितमेतद्धिहृदयंचित्रधारकम् ॥ मच्छरीरंविनानै
वस्थूलंसूक्ष्मंस्थितिंव्रजेत् ५५ सूक्ष्माच्छरीरतोयर्हिस्थूलंदेहंपृथक्भवेत् ॥ हृदयेनसमंतर्हिश्वानएतददंतिहि ॥ पक्षिणःखंडशःकृत्वानयेयुर्वासमंततः ५६
अतोऽस्मच्छब्दसंयुक्तंसूक्ष्मंदेहमुदीरितम् ॥ स्थानंस्थूलस्यदेहस्यहृदयेनसहैवहि ५५७ हृदयंपरमात्माख्यमविज्ञाययथापुरा ॥ पृष्टवांस्तद्वदेवायंपुनःपप्र
च्छमंदधीः ५५८

परमात्मरूपोहृदयपदार्थोनबुद्धइत्याशयेनाहृदयोविदग्धोऽहल्लिकेत्युक्तः तथाचाविद्यमानमज्ञातंहल्लिहृदयंपरमात्मरूपंयेनसतथाइत्यर्थः ५५३ पदांतरैरपिनिर्ब्रूयादितियास्कोक्तिमनुरुध्यचतु
र्थमर्थमाह अहंवामिति । देवःसूर्यः तेमोहेनपृच्छतः अत्रसदसि तथाचअहस्तत्कर्त्तादित्योलियंनाशंकरिष्यतीतिव्युत्पत्तिकेनाहल्लिकनाम्नासंबोध्येदमुत्तरमाहेतिसंबंधः ५५४ उत्तरमभिन
यति मय्येवेति । एतद्विश्वचित्रधारकंहृदयंत्वयामांसखण्डत्वेनयन्मतंतन्मयिमत्सूक्ष्मशरीरेप्रतिष्ठितंयतोमदीयंसूक्ष्मंशरीरंविनास्थूलंनस्थितिंव्रजेत्तत्स्थूलंविनाचसूक्ष्मंनस्थितिंव्रजेदितिप्रसिद्ध
मेवेति ५५५ सूक्ष्मादिति । सूक्ष्माच्छरीरात्स्थूलमन्यत्रापितिष्ठतीतिनमंतव्यंयतोयर्हिसूक्ष्माच्छरीरात्स्थूलंपृथगिवयुक्तंभवेच्चेर्त्तर्हिहृदयेनत्वदभिमतेनसहितमेतच्छरीरंश्वानःअदंतिभक्षयंति प
क्षिणश्चखण्डंखण्डंकृत्वानयेयुरिति ५५६ अतइति । अतउक्ताभिप्रायेणसूक्ष्मंदेहंस्थूलस्यहृदयेनसहैववर्तमानस्यस्थानमित्युक्तमित्यन्वयः । कीदृशंसूक्ष्मं अस्मच्छब्दसंयुक्तम् श्रुतिगतास्म
च्छब्देनविवक्षितमित्यर्थः ५५७ अथषड्विंशतितम्याःकण्डिकायाअर्थमष्टपंचाशताश्लोकैरुपबृंहयंस्तत्रसमानेइत्यंतभागस्यार्थमाह हृदयमितिचतुर्भिः । याज्ञवल्क्येनहृदयपदेनहृदयमितिव्युत्प
त्त्यापरमात्मोक्तइत्यविज्ञाययथापूर्वंहृदयाश्रयंपृष्टवांस्तथापुनराधारविषयकंप्रश्नंकृतवानित्यर्थः ५५८

स्थूलमिति । स्थूलसूक्ष्मदेहौयावन्योन्यमाश्रितौश्रुतिगतयुष्मदात्मशब्दाभ्यांकीर्तितौतौकुत्रप्रतिष्ठितावित्याकारंप्रश्नंविदग्धःकृतवानित्यर्थः द्विजइत्युत्तरान्वायि ५९ प्राणइति । ततोद्विजोयाज्ञवल्क्यस्तंविदग्धंप्रतिशरीरद्वयमूर्ध्ववृत्त्यात्मकेप्राणेस्थितमित्याह ततःसोपिविदग्धः प्राणःकुत्रेतिपृष्टवांस्तदुत्तरमपानेधोवृत्तिरूपइति ५६० अपानःक्वेति । प्रथमेनचतुर्थेनचसपदेनविदग्धइतरैस्तु याज्ञवल्क्योग्राह्यः व्यानःप्राणापानयोःसंधिःशृंखलासमःउदानस्तत्रकीलसमइतिसमानस्तुसूत्रवच्छरीरधारकइतिविवेकः ५६१ अथयाज्ञवल्क्यतात्पर्यविषयीभूतमात्मस्वरूपंसएषनेतीत्यादिश्रुत्यासंवादरूपाद्वचुत्थायनिरूपितंतद्विदग्धेननबुद्धमितिवक्तुंव्याख्यावाक्येषुयाज्ञवल्क्याभिप्रेतार्थविपरीतार्थोयोयोविदग्धेनगृहीतस्तंदर्शयति हृदयमितिसप्तभिः । याज्ञवल्क्येनदिग्विज्ञानवाक्येषुहृदयपदेनपरमात्मैवोक्तः हृदिबुद्धावयमपरोक्षस्तत्साक्षित्वादित्याशयादित्यर्थः । तस्येति । तेनविदग्धेनतुतस्यांतःकरणस्याधारोमांसखण्डएवज्ञातोऽतएवतदाश्रयंपृष्टवानन्यथासभूमाकुत्रप्रतिष्ठितःस्वेमहिम्नीतिश्रुतिविरुद्धंहृदयपदार्थपरमात्माधारंकथंपृच्छेदितिभावः ५६२ अस्मच्छब्दइति । तथाहृदयाश्रयप्रश्नोत्तरवाक्येऽस्मच्छब्दोऽस्मच्छब्दार्थभूतःसआत्मायाज्ञवल्क्येनोक्तः । सकः यःशब्दस्यबोधस्यचानाश्रयोऽविषयःसन्नहंकारविषयःअहमितिप्रतीतौभासमानइत्यर्थः । विदग्धेनत्वस्मच्छब्दार्थतयासूक्ष्मशरीरमेवबुद्धमिति एतेनपूर्वंसूक्ष्मशरीरत्वेनव्याख्यानमपिविदग्धबुद्ध्यनुरोधेनकृतमिति

स्थूलंसूक्ष्मंचदेहंतदाश्रयाश्रयिकीर्तितम् ॥ प्रतिष्ठितंहिकुत्रेतिपप्रच्छेदंपुनर्द्विजः ५५९ प्राणइत्याहतंसोपिप्राणःकुत्रेतिपृष्टवान् ॥ अपानइतितंप्राहशाकल्यंबुद्धिवर्जितम् ५६० अपानःक्वेतिसोपृच्छद्व्यानेसोप्याहधीधनः ॥ व्यानःकुत्रेत्रिसंपृष्टउदानइतिसोब्रवीत् ॥ उदानःक्वेतिसप्राहसमानेसोप्यभाषत ५६१ हृदयंयाज्ञवल्क्येनपरमात्मासमीरितः ॥ जंतूनामखिलानांयदास्तेहृद्यमीश्वरः ॥ तस्याधारोमांसखंडोज्ञातस्तेनद्विजन्मना ५६२ अस्मच्छब्दोप्यहंकारविषयःशब्दबोधयोः ॥ अनाश्रयःसआत्मोक्तोयाज्ञवल्क्येनधीमता ॥ सूक्ष्मोदेहोविदग्धेनज्ञातोबुद्धिविवर्जनात् ५६३ प्राणःप्राज्ञःसमुद्दिष्टोयाज्ञवल्क्येनधीमता ॥ अपानाद्यैस्तथाशब्दैःसएवपरमेश्वरः ५६४ अनितिःकथितोलोकेचलनार्थोमनीषिभिः ॥ चलनंसर्वजंतूनांप्राज्ञादेवप्रजायते ६५ प्रकर्षश्चापकर्षश्चविशेषश्चोर्ध्वतापिवा ॥ सम्यक्त्वंचेतिभेदाःस्युश्चलनस्यास्यसर्वतः ६६ शाकल्योवायुभेदांस्तान्प्राणादीन्प्रतिपद्यहि ॥ पप्रच्छकुत्रकुत्रेतिमुमूर्षुर्बुद्धिवर्जितः ६७ समानःसर्वभूतानामाश्रयोवायुरेवहि ॥ शाकल्यावगतोनायंयाज्ञवल्क्यसमीरितः ६८ किंतुसर्वात्मकोदेवआनंदात्मामहेश्वरः ॥ नेतिनेतिवचोगम्यःस्थूलसूक्ष्मविवर्जितः ५६९

सूचितम् ५६३ प्राणइति । याज्ञवल्क्येनप्राणपदेनापानादिपदैश्चमायोपाधिस्तत्प्रवर्तकःपरमात्मैवलक्षणयाउक्तः ५६४ प्राणादिपदानांपरमात्मनिलक्षणाप्रयोजकंप्राणादिप्रेरकत्वरूपंसंबंधमाह अनितिरिति । प्राणादिघटकोऽनितिरनधातुश्चलनार्थकःप्रसिद्धस्तच्चलनंतुसन्निधिमात्रेणप्रेरकादात्मनएवहेतोर्जायतइति ५६५ प्राणादिशब्दपंचकेउपसर्गाणांद्योत्यार्थानाह प्रकर्षश्चेति । प्रकर्षोनासाद्युन्नतदेशसंबंधः अपकर्षोऽधःसंबंधः विशेषःप्राणापानयोर्निरोधोधनुराकर्षणादौप्रसिद्धः । शेषंस्फुटम् भेदाविशेषणानि ५६६ शाकल्यइति । शाकल्यस्तुवाच्यार्थभूतान्वायुभेदानेवप्रतिपेदे अतएवोत्तरोत्तरंकुत्रकुत्रेतिपप्रच्छेति ५६७ समानइति । अंतेनिरूपितत्वात्सर्वेषांभूतानांवर्णितानामाश्रयःसमानोवायुरूपएवेतिशाकल्येनबुद्धःपरंत्वयंवायुर्याज्ञवल्क्येननोक्तः ५६८ याज्ञवल्क्येनसमानपदार्थःकिमाकारकोविवक्षितइतिचेद्वायोरन्तर्यामिरूपेणयोनियन्तासविवक्षितइतिवदन्सएषनेतीत्यादिश्रुत्यर्थमाह किंत्वितिपद्भिः । किंतुसर्वात्मकोदेवोयाज्ञवल्क्यसमीरितःकीदृशइत्याकांक्षायामानंदात्मेत्यादि नञ्द्वयेनस्थूलसूक्ष्मप्रपंचयोर्निषेधइतिभावः ५६९

भावाभावेति । अथवा अविद्यादशायांनानाविधभावाभावावगाहिबुद्ध्यायुक्तोविषयीकृतोपिनञ्द्वयेनवीप्सयासर्वभावाभावविवर्जितोबोध्यतइति तथाचाद्वयत्वसिद्धिरित्याह स्वेति ९७० आत्मेति ।
आत्मासर्वांतरः । कथंतर्हिकरणैर्नदृश्यतइत्यतआह गृह्यइति । यतोग्रहीतुमयोग्योऽतःप्राणिभिःकरणैःकृत्स्वानगृह्यते योग्यतानियतत्वात्करणानामितिभावः ९७१ अशीर्यपदेनचवस्त्रादिवत्कालप
रिच्छेदोऽन्यथाभावरूपोवावार्यतेइत्याह कालेनेति ९७२ असंगपदार्थमाह आकाशइति ९७३ नित्यमुक्ततापतिपादकस्यासितइत्यांशस्यार्थमाह अबद्धइति । व्यथादुःखसंबंधः यतोपिनाशा
योग्यस्तस्मान्नकेनाचिद्धिंस्यतेश्रुतिगतरिपधात्वर्थभूतांहिंसांनेति तथाचामृतरूपइति ९७४ एवंबहुशःपृष्टेनयाज्ञवल्क्येनैतान्यष्टावायतनानीत्यादिवाक्येनविदग्धंप्रत्येकःप्रश्नःकृतस्तमवतारयति
एषएवेति । एषशाकल्योवर्णितमात्मानमज्ञानसंयुतत्वान्नजानाति एषवृथाब्रह्मविदास्पर्द्धतेइत्ययमर्थोयथास्पष्टोभवेदेवमादित्यएवशिष्यस्यजिह्वायांस्थित्वाविदग्धंप्रतिपप्रच्छ किमर्थं समर्थंविं
शतिवारंमदुक्तविद्यावज्ञातामयाशापेनवक्ष्यतइतिवर्णितांप्रतिज्ञांप्रतिपालयन् तदर्थमित्यर्थः ९७५ तदुपयोगायपृथिव्येवेत्यादिकण्डिकाष्टकस्यपूर्वमव्याख्यातस्यार्थंसंगृह्णाति पृथिवीतिचतुर्भिः ।
अत्रप्राणस्यैकदेवत्वेनोक्तस्याष्टौविभूतयःशारीरादिसंज्ञाश्चतुर्थश्लोकेगणितास्तेषामायतनानिनिवासभूमयःपृथिव्यादिरूपायथासंख्यंबोध्याइतिसंबंधः । तथाहि । तत्रपृथिवीशरीरेयन्मातृजंको
शत्रयंत्वङ्मांसरुधिरात्मकंतद्रूपाशारीरसंज्ञकपुरुषायतनं तथाकामःस्त्रीसंगमाभिलाषरूपःकाममयसंज्ञपुरुस्यायतनं रूपाणिशुक्लादीन्यादित्यपुरुषस्यायतनं आकाशःश्रोत्रपुरुषस्य कीदृशस्य

भावाभावधियायुक्तोभावाभावविवर्जितः ॥ स्वसंजातिविजात्युत्थपरिच्छेदविवर्जितः ९७० आत्माग्राह्योत्रबुद्ध्याद्यैःकरणैर्नकथंचन ॥ अतोनगृह्यतेसर्वैःप्राणिभिः
समहेश्वरः ९७१ कालेनापिनशीर्योयमतएवनशीर्यते ॥ यथावस्त्रंहिकालेनपुराणंशीर्यतेभुवि ९७२ आकाशोहियथाऽसंगोजलादिषुतथैवहि ॥ आत्माबुद्ध्यादि
भिस्तेनसंगंनोपैतिकर्हिचित् ९७३ अबद्धःसर्वदायस्मात्तस्मान्नव्यथतेपिच ॥ विनाशरहितस्तेनहिंस्यतेनैवकेनचित् ९७४ एषएवनजानातिशाकल्योऽज्ञानसं
युतः ॥ एवंपप्रच्छजिह्वायांस्थित्वादित्यस्तदामुनेः ॥ याज्ञवल्क्यस्यशिष्यस्यसमर्थंप्रतिपालयन् ९७५ पृथिवीचतथाकामोरूपाण्याकाशएवच ॥ तमोरूपा
णिचापश्चरेतश्चायतनानिहि ९७६ अग्निश्चहृदयंचक्षुःश्रोत्रंहृदयचक्षुषी ॥ हृदयंहृदयंचेतिलोकाअष्टावुदाहृताः ९७७ अमृतंचस्त्रियःसत्यंदिशोमृत्युरसुस्तथा
॥ वरुणःसतमोदेवोह्यष्टमस्तुप्रजापतिः ९७८

प्रातिश्रुत्कस्यप्रतिश्रुतौप्रतिध्वनौविशेषेणाभिव्यक्तस्य तमोंधकारश्छायामयस्यपुरुषस्यायतनं । रूपाणिभास्वराण्यादर्शप्रतिबिंबग्राहिपदार्थेस्थितस्यप्रतिबिंबसंज्ञपुरुषस्यायतनं । आपोजला
निअप्सुनिष्ठपुरुषस्यायतनं । रेतःशुक्रमुपस्थेंद्रियमितियावत् पुत्रसंज्ञपुरुषस्यायतनमित्यर्थः ९७६ उक्तक्रमेणैवशारीरादिपुरुषाणांचक्षुर्द्वारेनध्येयान्पदार्थानाह अग्निश्चेति । अग्न्यादयोष्टौशारीरादि
पुरुषाणांलोकाश्चक्षूंषिउदाहृताःपृथिव्येवेत्यादिकण्डिकाष्टकेक्रमेणोक्ताः तत्राग्निचक्षुःश्रोत्रपदार्थाःप्रसिद्धाः हृद्व्यपदेनबुद्धिर्ग्राह्याइति ९७७ शारीरादिपुरुषाणांदेवतापदेनोक्तानिकारणानिय
थासंख्यंबोध्यान्याह अमृतमिति । अमृतमाहारजःपरिणामःशारीरपुरुषस्यकारणं । स्त्रियःकाममयस्य । सत्यंचक्षुरिंद्रियमधिदैवस्यादित्यपुरुषस्यकारणं अध्यात्मेंद्रियाणामधिदैवात्मनाप
रिणामात् । दिशोऽधिदैवात्मिकाअध्यात्मंस्थितस्यश्रोत्रपुरुषस्यकारणंदेवतानामध्यात्मरूपेणावस्थानात् । एवंमृत्युर्देवोऽध्यात्मरूपस्यच्छायामयपुरुषस्यकारणं । तथाऽसुःप्राणोवलरूपेणानि
घर्षणादिनादर्पणादेःप्रतिबिंबयोग्यताकरणात्प्रतिबिम्बपुरुषस्यकारणं । वरुणोवृष्टिजलरूपोभूमिस्थजलवासिपुरुषस्यकारणं पुत्राख्यपुरुषस्यप्रजापतिरुपस्थेंद्रियदेवताकारणमित्यर्थः । अत्रेदं
बोध्यं श्रुतौवदेतिपदस्यपृच्छेत्यर्थः सर्वेषांदेवानांमनोलोकपदोक्तेनसर्वव्यवहारसाधनप्रकाशत्वेनध्येयमिति ९७८

देवानभिनयति शारीरइति । व्याख्यातम् ५७९ एवमुपोद्घातत्वेन शिष्टकण्डिकाष्टकस्यार्थमभिधायएतानीत्यादिवाक्यार्थमुपबृंहयति एतानीत्यादिना । एतानिवर्णितानिअष्टावायतनानि तथाष्टौलोकान्तथादेवान्कारणरूपान्तथापुरुषान् एतान्सर्वान्संप्राप्यकारणत्वेनानुप्रविश्यतत्तद्रूपेणस्थित्वाचनिर्वहतिलोकव्यवहारक्षमान्करोतिईश्वरःपरमात्माइतिप्रसिद्धंवेदांतेष्वितिशेषः उक्ता ष्टकचतुष्टयमुपलक्षणंसकलकार्यवर्गस्येत्यपिबोध्यम् । कार्येष्वनुप्रविश्यकारणमेवसर्वंनिर्वहतीत्यत्रदृष्टांतमाह तंतवइति । तथाचव्याससूत्रं संज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात् । त्रिवृत्कुर्वतः परमात्मनएवेयंकृतिर्यन्नामरूपकल्पना तस्यैवसर्वकारणत्वेनोपदेशादित्यर्थः ५८० एवंश्रुतिगतनिरुह्येतिपदार्थंप्रदर्श्यप्रत्यूह्येतिपदार्थमाह पुनरिति । अयंपुमान्ईश्वरःपुनरुपसंहारकालेदिगा दिक्रमतःदिशःस्ववर्त्तिपदार्थैःसहिताःसूर्यादिदेवेषूपसंहृत्यतानिन्द्रियेषुइंद्रियाणिविषयेषुविषयान्हृदयेतच्चशरीरद्वयेतत्प्राणादावित्युक्तक्रमेणसमानपर्यंतंनीत्वाउपसंहृत्यप्रतिकूलंवहतिकार्यभावविप रीतंप्रत्यग्रूपणावतिष्ठतेइत्यर्थः ५८१ अत्रदृष्टांतमाह पटमिति । यथातंतवःपटंस्वकार्यंपटरूपात्प्रच्याव्यतद्धीनंकृत्वाकेवलंकारणमात्ररूपेणस्थिताःप्रतिकूलंवहंतीतिव्यवह्रियंतेतद्वदित्यर्थः

शारीरोयंकाममयआदित्येपुरुषस्तथा ॥ प्रातिश्रुत्कोहियःश्रोत्रस्तथाछायामयोऽपरः ॥ आदर्शेचतथायोप्सुपुत्राख्यःपुरुषोष्टमः ५७९ एतान्यायतनान्यष्टौ लोकान्देवांश्चपूरुषान् ॥ संप्राप्यैतत्स्वरूपेणस्थित्वानिर्वहतीश्वरः ॥ तंतवोहियथाप्राप्यपटंतंनिर्वहंतिते ५८० पुनःस्वात्मतयासर्वान्दिगादिक्रमतःपुमान् ॥ समानांतमिमान्नीत्वाप्रतिकूलंवहत्ययम् ५८१ पटंयथास्वरूपाद्विप्रच्याव्यैतेत्रतंतवः ॥ कारणात्मतयास्थित्वाप्रतिकूलंवहंतिते ५८२ एवमेतान्निरुह्यैषप्रत्यूह्य चमहेश्वरः ॥ अत्यक्रामदिमान्सर्वान्नभोयद्वद्घटादिकान् ५८३ अंतर्बहिःस्थितोविश्वंव्याप्यसर्वात्मकःपुमान् ॥ केवलोपनिषन्मानगम्योनपरमानतः ५८४ तंत्वांपृच्छामिपुरुषमेकवारमहंवद ॥ बहुवारंत्वयापृष्टंतुभ्यमुक्तंमयायतः ५८५ नचेदत्रजनाकीर्णेपुरेतीर्थविवर्जिते ॥ कृष्णपक्षेपवरात्रावस्यांतेदक्षिणायने ॥ पतिष्यतिशिरोभूमौगतप्राणस्यदुर्धियः ५८६ अस्थीन्यपिनतेगेहंप्राप्स्यंत्यत्यंतविद्विषः ॥ ममचोरास्तुचांडालाहरिष्यंत्यधर्ममार्गतः ५८७ याज्ञवल्क्य वचस्येवंस्थित्वासौसवितापुमान् ॥ अभाषतध्वंशंकुद्धःसृष्टिस्थित्यंतकारणम् ५८८ एवमुक्तेयथाकल्पआत्मज्ञानविवर्जितः ॥ तूष्णींस्थितोमनस्तस्यवा ग्वृत्तिःसहसागता ५८९ ॥

५८२ एवमिति । एवंगतश्लोकत्रयोक्तप्रकारेणएतान्आयतनलोकदेवपुरुषात्मकचतुष्टयाष्टकादिपदार्थान्निरुह्यप्रत्यूह्यचइमानुपाधींस्तद्धर्मांश्चात्यक्रामदुल्लंघितवान्कार्यत्वकारणत्वहीनेस्वरूपएव स्थितइत्यर्थः । यथानभोघटादिस्थितिकालेतद्बहिर्भावेनव्यवहृतमप्युपाधिपरित्यागेतद्बाह्यभावपरित्यागात्मकमतिक्रमणंकरोतितद्वद्यःसर्वमतिक्रम्यपरिपूर्णोवस्थितःकेवलोपनिषद्रूपप्रमाणेनैवग म्योरसनयारसवत्परेणोपनिषद्भिन्नमानेननगम्यश्चतंपुरुषंतेतुभ्यंविदग्धायैकवारमहंपृच्छामितत्स्वरूपंत्वंवदयतस्त्वत्पृष्ठंमयाबहुवारमुक्तमितित्रयाणामर्थः ५८३ । ५८४ । ५८५ नचेदिति । नचेद्वादिष्यसितर्हितेशिरोऽत्राशुभेदेशेऽशुभेकालेचभूमौपतिष्यतीतिसंबंधः ५८६ अस्थीनीति । तेऽस्थीन्यपिगेहंनप्राप्स्यंति कीदृशस्यते ममब्रह्मविद्रूपस्यात्यन्तद्वेषकारिणः यतश्चोरभूताश्चंडा लाअधर्ममार्गेहरिष्यंतीति ५८७ एतादृशःशापोयाज्ञवल्क्येननदत्तस्तत्रक्रोधादिबीजदाहात्किंतुजगन्मर्यादापालकेनसकलकर्मफलप्रदेनादित्यात्मनेश्वरेणैवेत्याह याज्ञवल्क्येति ५८८ एवमुक्तइति । एवमुक्तेसतिविदग्धोऽनात्मवित्त्वात्तूष्णीमेवस्थितस्तदनंतरंतस्यविदग्धस्यमनःसकलेंद्रियाध्यक्षंवागिंद्रियंचइतरेंद्रियैःसहोत्क्रान्तंशरीरादित्यर्थः ५८९

पुरेइति । तत्रपुरेसभारूपेअशुभेदेशेदक्षिणायनकृष्णपक्षरात्रिरूपेऽशुभेकालेचशापेनशिरोन्यपतत्यथानमुचेरसुरस्यदेवान्जित्वास्वर्गवासिनःशिरोवज्रेणेति ५९० हाहेति । श्लोकद्वयंनिगदव्याख्यातम् ५९१ । ५९२ प्रादुरिति । ततःसभास्थितजनानांमुखेभ्यउद्गताएवावक्ष्यमाणावाक्प्रादुरासीत्तामभिनयति अहोइत्यादिना अनेनविदग्धेनकारस्करसमस्यब्रह्मविद्वेषरूपवृक्षस्यफलंप्राप्तमिति कारस्करपदार्थस्त्रिकांडशेषानुरोधीदर्शितः प्रपंचसारेतु 'कुचला' इतिप्रसिद्धेवृक्षेप्रयुक्तः तस्यविषरूपताप्रसिद्धैवेतिदृष्टांततोपपन्नाइति ५९३ अयमिति । अयंसर्वगुणोपेतोऽप्येकेनप्रबलेनाद्भुतसामर्थ्येनब्रह्मविद्वेषरूपेणदोषेणघातितस्ततःसनकर्तव्यइति ५९४ ब्रह्मविद्वेषस्यदुःसहत्वंस्फुटीक्रियते एकएवेति । ब्रह्मविजानतोब्रह्मविदोद्वेषस्तथावन्हिवत्सकलगुणान्दहेद्विफलंकुर्यादितियावत् ५९५ अत्रचोदाहरणंविदग्धएवेत्याहुः विद्वत्तमइति । विद्वत्तमोबहुविद्यासुकुशलः ५९६ ब्रह्मविद्वेषस्यकार्याद्भुतत्वकथनेनाद्भुतत्वंस्फुटीक्रियते संभाव्यतेइति । संभावनाशंका ५९७ दशामिति । यदायंसर्वगुणाढ्योऽपिब्रह्मविद्वेषेणएतांदुर्गतिंप्राप्तस्तदेतरस्तेनकःकांदुर्गतिंनप्राप्नुयादिति ५९८ ब्रह्मेति । ब्रह्मविदोब्रह्मभावप्रतिपादिकाब्रह्मवित्परमाप्नोतीत्याकाराश्रुतिः

पुरेराजगृहेऽनेकजनकोटिनिषेविते ॥ सभायांनिशिमूर्धाचन्यपतद्भूतलेतदा ॥ सद्योवज्रहतोयद्वन्नमुचेःस्वर्गवासिनः ५९० हाहेतिशब्दःसुमहान्विदग्धेपतितेह्यभूत ॥ जगामक्षोभमतुलमखिलाराजमंडली ॥ रुरुदुस्तस्यशिष्यायेबांधवाश्चद्विजोत्तमाः ५९१ विदग्धंपतितंभूमौदृष्ट्वाधिग्धिग्वदंतिहि ॥ सभास्थिताजनाःसर्वेद्विजाबालाःस्त्रियोपिहि ५९२ प्रादुरासीत्तथैषावाक्सभावक्त्रसमीरिता ॥ अहोफलमनेनैतत्प्राप्तमद्यसुदुःसहम् ॥ ब्रह्मविद्वेषवृक्षस्यकारस्करसमस्यतु ॥ अयंसर्वगुणोपेतोदोषेणैकेनघातितः ॥ ब्रह्मविद्वेषसंज्ञेनदुःसहेनाद्भुतेनच ५९४ एकएवयथावन्हिर्दहेद्विश्वंचराचरम् ॥ ब्रह्मविजानतःपुंसोद्वेषएकस्तथैवहि ॥ गुणराशिंदहेत्सर्वंसंशयोनात्रविद्यते ९५ विद्वत्तमोविदग्धोयंगुणानामाकरस्तथा ॥ क्षणमात्रेणनिर्दग्धोब्रह्मविद्वेषवन्हिना ९६ संभाव्यतेयथानैवसागरस्येहशोषणम् ॥ संभाव्यतेतथानास्यमरणंब्रह्मशापतः ९७ दशामेतामयंप्राप्तोयदाब्राह्मणसत्तमः ॥ ब्रह्मविद्वेषपापेनतदाकःकांनचाप्नुयात ९८ ब्रह्मवित्परमाप्नोतिसत्येयंशाश्वतीश्रुतिः ॥ विदग्धंहिनिहन्यात्कोविनाब्रह्मपरंसदा ९९ सर्वात्माब्रह्मविन्नूनंपरोक्षंनोनचास्तितत ॥ विदग्धेनिहतेयस्मात्सुखमस्तिशरीरिणाम् ६०० शत्रौस्वस्यहतेयद्वत्सुखमाप्नोतिदेहभाक् ॥ विदग्धेनिहतेतद्वज्जनएषसुखंगतः ६०१ विदग्धमेवनिंदंतिजनाःसर्वेनचेतरम् ॥ हंतारंयाज्ञवल्क्याख्यंसर्वात्मायंततोमुनिः ६०२ ब्रह्महत्याकृतापुंसोदद्याज्जन्मांतरेफलम् ॥ ब्रह्मविद्वेषएतस्मिन्फलंजन्मनियच्छति ॥ जन्मांतरेपिशाकल्येदृष्टमेतद्यतोधुना ६०३ वरशय्यासनार्होयंदेशेदहोत्रभूतले ॥ पांसुनागुठितोयद्वत्पिशाचोन्मत्तदेहकः ६०४

सत्येयंअबाधितार्थतयानुभूता यतोजीवैःकर्तुमशक्यमविदितयशकेःपरमात्मनःकर्मविदग्धस्यनानाविद्याशालिनोदंडनंयाज्ञवल्क्येनब्रह्मविदिदृष्टमित्यर्थः ५९९ किंचब्रह्मवित्सर्वभावमाप्नोतीत्यर्थिकायोयेदेवानामित्याद्याव्याख्याताश्रुतिरपिसत्याहृतायतोब्रह्मविदोयाज्ञवल्क्यस्ययशसोहतेस्वशत्रुनाशइवसर्वेजनानांहर्षोजातः यतश्चपरकृतिदूषकाअपिजनायाज्ञवल्क्यकृतिंननिंदंति । नहोतद्याज्ञवल्क्यस्यसर्वात्मभावंविनाघटतेइत्याह सर्वात्मेतित्रिभिः । नोस्माकंतत्प्रथमपादोक्तंपरोक्षंनकिंतुअपरोक्षमेवेत्यर्थः । शेषंस्फुटम् ६०० । ६०१ । ६०२ ब्रह्मविदोद्वेषइतरब्रह्महत्यायाअप्यधिकोलोकद्वयेपिदुष्टफलदर्शनादित्याह ब्रह्महत्येति । ब्रह्महत्याजन्मांतरएवदुष्फलदामायइतिशेषः तद्वेषस्तुइहजन्मनिजन्मांतरेचदुष्फलदः । अत्रोदाहरणंशाकल्यइत्यर्थः ६०३ शाकल्यस्येदैवयदुष्फलंतदभिनयति वरेति । अत्रतीर्थभिन्नेदेशे उत्तरार्द्धेइत्यतेइतिशेषः ६०४

९४

जन्मांतरानर्थस्तुदुर्देशकालमरणेनानुमीयतइत्याहुः कृष्णेति । पर्वममावास्या निर्गतोमृतः ६०५ अस्यदुष्फलदमज्ञानमपिद्वेषादेवास्माभिर्निश्चितमित्याहुः अहोइति । द्विष्टवान्द्वेषवि पर्यंकृतवान् ६०६ अनेनेति । अनेनविदग्धेनपातिताइतिपदस्यसर्वैःसप्तम्यंतैर्विपरिणामेनसंबंधः ६०७ अहोइति । स्फुटम् ६०८ इत्यादीति । वर्णिनश्चातुर्वर्णिकाः शशंसुस्तुष्टुवुः ६०९ ततःकिंजातमतआह अमंत्रेति । अमंत्रेलोकिकेग्नौअमुंविदग्धंदग्ध्वातदीयास्थीनिगृहीत्वानेतुंयदाशिष्याःपुराद्बहिःप्रस्थितास्तदादरेणश्रद्धयायुतैःशिष्यैरस्थीनिदुकूलेस्थापितानितानितुराज भीत्याचौरैश्चांडालैःकांश्चित्शिष्यानस्थीनिनयमानान्हत्वाहृतानि कीदृशैःसमुत्सुकैर्लुब्धैरितित्रयाणांसंबंधः ६१० । ६११ । ६१२ सप्तविंशतितमकण्डिकार्थमाह शाकल्यइतिपंचभिः । महायशाःब्रह्मस्वंब्राह्मणानुमतिमनासाद्यनीयमानमनर्थायस्यादितिलोकान्शिक्षयितुंविजयेपिब्राह्मणानुमतिसंपादनपरत्वात् स्फुटमन्यत् ६१३ ब्राह्मणान्प्रतियाज्ञवल्क्यवचनमभिनयति ब्रा

कृष्णपक्षेपर्वरात्रौनिर्गतोदक्षिणायने ॥ शाकल्यःशापतोनूनंनरकंहिप्रयास्यति ६०५ अहोअस्यविमूढत्वंशाकल्यस्यातिदुर्धियः ॥ याज्ञवल्क्यंमुनिंयस्माद्द्विष्टवान्व्यर्थमेवहि ६०६ अनेनपातिताःसर्वेबांधवाःशोकसागरे ॥ आत्मापिनरकेजायाविधवानांगणेपिच ॥ भूमौदेहोपिपापाग्नौसुकृतंचपुराकृतम् ६०७ अहो लोकद्वयभ्रंशंकस्यनायंकरोतिहि ॥ ब्रह्मविद्वेषतोजातोदुःसहोवडवानलः ६०८ इत्यादिवादिनःसर्वेयाज्ञवल्क्यंमहाधियम् ॥ शशंसुर्वर्णिनस्तत्रगार्ग्याराज्ञाचसंयुताः ६०९ अमंत्राग्नावमुंदग्ध्वातस्यास्थीनिगृहंप्रति ॥ शिष्यानेतुंयदामार्गेप्रस्थिताःपुरतोबहिः ६१० दुकूलेस्थापितान्यस्यह्यस्थीन्यादरसंयुतैः ॥ चांडालजातिभिश्चौरैस्तदातानिहृतानि वै ६११ सुवर्णमन्यमानैस्तैराजभीतैःसमुत्सुकैः ॥ हत्वाशिष्यानमून्कांश्चिदस्थिहारान्सुनिर्घृणैः ६१२ शाकल्येनिहतेतस्मिन्शब्देचोपरतेसति ॥ उवाचब्राह्मणान्सर्वान्याज्ञवल्क्योमहायशाः ६१३ ब्राह्मणाभगवंतोयेनानादेश्याःसमागताः ॥ मदीयंवचनंसर्वेशृणुताद्यमहाधियः ६१४ योवःकामयतेप्रष्टुंसमांपृच्छतुभूसुरः ॥ यस्तुकामयतेतंवापृच्छामिब्राह्मणोत्तमम् ६१५ पृच्छतात्रहियेकेचिद्ब्राह्मणाःसर्वएववा ॥ अहंपृच्छामिवासर्वान्युष्मानत्रसमागतान् ६१६ एवमुक्तेतदाविप्रानेशतेब्रह्मवादिनम् ॥ प्रष्टुंवक्तुंचतत्पृष्टंसर्वज्ञसदृशाअपि ॥ तूष्णींभूतानिरीक्ष्यैतेशाकल्यंनष्टचेतसम् ६१७ पृष्टवान्याज्ञवल्क्योथब्राह्मणान्स्वयमेवहि ॥ मंत्रैर्मंत्रविदःसर्वान्मंत्रवित्प्रथमोमुनिः ६१८ वनस्पतिर्यथावृक्षोमृषालोकेप्रतीयते ॥ अश्वत्थादिस्तथैवैषमृषादेहःप्रतीयते ६१९

ह्मणाइति । हेब्राह्मणाभगवंतोमान्याः नानादेश्याः दिगादित्वाद्यत् ६१४ योवइति । भूसुरोब्राह्मणः युष्माकंमध्येयोमांप्रष्टुमिच्छतिसपृच्छतु यदिवामत्प्रश्नंसमाधातुमिच्छतितर्हितमहंपृच्छामीति ६१५ पृच्छतात्रेति । अथवासर्वेमांपृच्छतअहंवासर्वान्पृच्छामीति ६१६ एवमिति । एवमुक्तेपिसर्वेविप्रास्तंब्रह्मवादिनंप्रष्टुंतत्पृष्टंवक्तुंसमाधातुंवानेशतेस्मप्रगल्भानबभूवुः यत एतेशाकल्यदशांवीक्ष्यतूष्णींभूताः ६१७ पूर्वनेतिनेतीतिनिषेधमुखेनप्रतिपादितस्यात्मनोविधिमुखेनप्रतिपादिकायाअंत्यकण्डिकायाअर्थमाह पृष्टवानित्यादिनाआंतग्रंथेन । तांस्तूष्णींभूतानपि सर्वान्ब्राह्मणान्प्रतिमुनिर्याज्ञवल्क्यःस्वज्ञानप्रकर्षप्रकटनायमंत्रैःश्लोकरूपैःपृष्टवान् यतःप्रथमःप्रथमगण्योमंत्रवित्वेदवित् कीदृशान्ब्राह्मणान्मंत्रविदइति ६१८ तत्रप्रश्नवाक्यार्थमभिनयति वनस्पतिरित्यष्टादशभिः । अश्वत्थःपिप्पलस्तत्प्रभृतिर्वनस्पतिर्विनापुष्पंफलग्राहीवृक्षोयथालोकेप्रसिद्धस्तथैवैषमनुष्यादिर्मृषाभूतोदेहःप्रतीयतइत्येतदमृषासत्यमेवनात्रसंशयइत्यर्थः ६१९

साम्यमभिनयति यथेतिसप्तभिः । वृक्षस्यपत्रसमान्यस्यशरीरिणोलोमानितथायाबाह्याकठिनात्वक्साश्रुतौउत्पाटिकाशब्देनोक्तासायथावृक्षस्यतथास्यपुंसोपिप्रसिद्धेत्यर्थः ६२० पुरुषस्येति । यथापुरुषस्यनिर्भिन्नायास्त्वचःसकाशाद्रक्तमुत्पटश्चनिस्सरतिप्रादुर्भवतीति । उत्पटपदार्थमाह श्वेतेति । श्वेतवस्त्रसमोयस्त्वचआंतरोभागःसउत्पटइतिश्रुतावुक्तइत्यर्थः ६२१ एवमिति । एवंपुरुषवद्वृक्षेकुठारनिहतेसतिरक्तसमोरसस्तथाउत्पटश्चवर्णितउत्पाटिकात्मनउत्पाटिकासंज्ञायाबाह्यत्वचःसकाशान्नियातीति ६२२ यथाचवृक्षस्यत्वङ्निर्भेदेरसोत्पटयोर्निर्गमस्तथापुरुषस्यरक्तोत्पटयोस्तथाचसाम्यंदृढमित्याह एवंपुंसइति ६२३ कुठारेति । यानिकुठारच्छेदेनवृक्षसकाशात्शकलानिखंडानिनिर्गच्छंतितान्यस्यपुंसोमांसखंडसमानीति ६२४ वृक्षेइति । यावृक्षांतःस्थिताःशिरानाड्योमिलिताःसत्योग्रंथिकारिकास्ताःश्रुतौकिनाटपदोक्ताः तच्चकिनाटंयथावृक्षशरीरेतथापुंसोपिशरीरेस्यात् यतःपुंसःशिरःप्रभृत्यंगेषुसूक्ष्माणांनाडीनांमेलनंसंघातोग्रंथिनिभोदृश्यतेइति ६२५ अस्थीनीति । यथायद्वत्पुंसःशरीरेअस्थीनिसंतितथावृक्षांतर्दारूणिसारसंज्ञानिप्रसिद्धानि तथामज्जाअस्थ्नामंतर्गतोरसःसयथापुंसस्तथातरोर्वृक्षस्यापि तस्यवृक्षेपुंसिचनामांतरकृतोभेदोनास्तिइत्यर्थः ६२६ एवमुपपादितंसाम्यमनूद्यशंकते पुरुषस्येति । अयंवक्ष्यमाणः ६२७ अयंपदोक्तंविशेषमाह प्ररोहतीति । वृक्षश्छिन्नोपिदृश्यमानान्मूलात्प्ररोहन्पुनरंकुरंलभमानोदृष्टः देहस्तुपुनर्दृश्य

यथावृक्षस्यपत्राणिलोमान्येवंशरीरिणः ॥ कठिनाबाह्यतस्त्वग्यावृक्षस्योत्पाटिकाहिसा ॥ यथातथात्रपुंसोपित्वगुक्ताबाह्यतःस्थिता ६२० पुरुषस्ययथारक्तं त्वचएवविनिःसरेत् ॥ उत्पटःश्वेतवसनसदृशस्त्वांतरस्त्वचः ६२१ एवंकुठारनिहतेवृक्षेरक्तोपमोरसः ॥ उत्पटश्चविनिर्यातित्वचउत्पाटिकात्मनः ६२२ एवंपुंसस्त्वचश्छेदेरक्तंचोत्पटिकापिच ॥ निर्गच्छतिबहिस्तेनतुल्यतावृक्षदेहयोः ६२३ कुठारच्छेदतोयांतिशकलानिवनस्पतेः ॥ विनिर्गच्छंतितान्यस्यपुंसोमांसोपमानिहि ६२४ वृक्षेह्यंतःशिराःस्थैर्यसहिताग्रंथिकारिकाः ॥ यथातथैवपुंसःस्यात्किनाटंग्रंथिसन्निभम् ॥ शिरआदिषुसूक्ष्माणांनाडीनांमिलनंभवेत् ६२५ अस्थीनिपुंसियद्वत्स्युर्दारूण्यंतरतस्तथा ॥ वृक्षेमज्ज्ञानभेदोस्तिमज्जापुंसस्तरोरपि ६२६ पुरुषस्यापिवृक्षस्यतुल्यमेतदुदीरितम् ॥ विशेषोयंकुतोविप्राःकथयंतुमहाधियः ६२७ प्ररोहतितरुश्छिन्नोमूलान्नवतरःपुनः ॥ देहश्छिन्नःपुनर्मूलाज्जायतेनपुनर्नवः ६२८ जीवतोजायतेरेतोयस्मात्तस्मान्नरेतसः ॥ ततोमूलं किमस्यास्तिपुंसोवृक्षसधर्मणः ६२९ अथमूलंनचात्रास्तितथाप्येषप्रजायते ॥ नवोभूत्वायथाश्वत्थोधानाभ्योमूलवर्जितः ६३० मूलबीजसमंकिंस्विन्मर्त्यस्यास्यहिकारणम् ॥ मृत्युनागतदेहस्यनवोदेहोयतोभवेत् ६३१

मानान्मूलान्नवतरत्वेनजायमानोनदृश्यते भवितव्यंचास्यापिमूलेनकेनचित् तद्ब्रूतेत्यर्थः ६२८ जीवतइति । रेतोरूपान्मूलाद्देहोजायतइतिनवक्तव्यंयस्माद्रेतोजीवतःप्राणान्धारयतोधर्मोदृश्यतेमयातुच्छिन्नदेहपदेनसर्वंकार्यवर्गभावशालिन्यवस्थोच्यतेतस्यांतुसुषुप्तप्रलयादिसंज्ञायांरेतआधारभूतंपित्रादिशरीरंनोपलभ्यतइतिभावः । ततोदृश्यमानमूलस्यवक्तुमशक्यत्वात् अस्यवृक्षसधर्मणः वृक्षसमस्यपुंसः तदुपलक्षितस्यसर्वजगतइतियावत् किंमूलमिति ६२९ अथेति । अथशब्दःपक्षांतरपरिग्रहे तथाचयथाश्वत्थोदृश्यमानंमूलंविनापिवृक्षांतरोपरिवंदारूपेणजायमानोधानाभ्योबीजेभ्यउद्भवन्दृष्टस्तथाएषदेहोवृक्षमूलसमंमूलंविनापिजायतेइतिचेत्तर्ह्यस्यकिमस्यबीजसमंकारणमितिशेषः ६३० तस्माद्वृक्षस्यमूलसमंबीजसमंवादेहादिरूपजगतःकारणंवक्तव्यमित्याह मूलेति । स्विदितिवितर्के वितर्कस्यफलंतुयथावृक्षोच्छेदेचिकीर्षितेतन्मूलबीजयोश्छेददाहाभ्यांनाशःक्रियतेतथास्यापिमूलादिनिर्णयेअसंगशस्त्रेणाच्छित्वातत्त्वज्ञानाग्निनादग्ध्वाचतन्नाशस्यसुकरतारूपंश्रुतिसूचितंबोध्यं अयंभावोगीतासुऊर्ध्वमूलमित्यादिनास्फुटीकृतः ६३१

अत्रस्वभाववादिनश्चार्वाकस्यमतंनिराकरोति जातइति । ननुयोजातःसजातएवसनपुनर्जायतेकिंत्वपूर्वएवस्वभावतःप्रादुर्भवतितत्राँऽमूलविचारेणेतिप्रथमपदेनशंका तदुत्तरंनेति नेवंवाच्यमित्यर्थः तत्रकृतनाशाकृताभ्यागमप्रसंगदोषमाह यस्मादित्यादिना । यस्मात्तेनाजातस्यैवोत्पत्तिस्वीकर्तृमतेनादृष्टंधर्माधर्मात्मककारणमप्रयोजकंव्यर्थमितियावत् एतादृशंस्यात् नचैतदिष्टमितिशेषः । कथंतर्ह्यदृष्टस्यसाफल्यंनिर्वहतीत्यतआह जातस्यैवेति । यःपूर्वंजातःसएवपुनर्जायतइतिस्वीकारेहिअदृष्टरूपकारणस्यतत्कार्याणांचसामानाधिकरण्यंनिर्वहतिनासतउत्पत्तौ यतोऽसताकार्येणनादृष्टस्यसद्रूपस्यसंबंधोभवतीतिभावः । तददृष्टंपूर्वंजातस्यैवधर्मःस्यादुपपद्येतयतोऽजातेकदाचिदप्यननुभूतोत्पत्तिकेवर्त्तमानंनदृश्यतेयथानृशृंगेइत्यर्थः ६३२ नन्वस्तुतर्हिंशरीरादृष्टयोर्बीजांकुरवत्कार्यकारणभावः नचानवस्थादोषः अनादित्वस्यतद्दोषाङ्कुशत्वेनसिद्धांतितत्वादित्याशंकांवारयति शरीरेणेतिद्वाभ्यां । शरीरादृष्टयोर्बीजांकुरवत्परस्परापेक्षयायाएषाकार्यकारणसंगतिःकार्यकारणभावसंबंधःसोऽनादित्वाददुष्टइतिनवाच्यंतत्रहेतुर्दृष्टांतवैषम्यरूपोयतइत्यादिनोक्तः यतएतस्यांदृष्टांतभूतायांबीजांकुरयोःपरंपरायांपृथिवीबीजांकुरयोर्धर्मयोर्धर्मिभूतानुगतादृश्यतेदार्ष्टांतिकेतुनकिंचिद्दृश्यतेइत्यर्थः । अयंभावः सत्यमनादिरनवस्थानदोषाययदिसाप्रामाणिकीस्यात् प्रामाणिकीहिदृष्टांते तत्रधर्मयोःकार्यकारणभावनिर्वाहकस्यपृथिवीरूपधर्मिणःप्रत्यक्षादिसिद्धत्वात् दार्ष्टांतिकेतुदेहादृष्टयोर्धर्मीनलौकिकमानसिद्धः । एवमपितत्स्वीकारेंधपरंपरादोषापत्तिरितिद्वयोरर्थः ६३३ । ६३४ फलितमाह अदृष्टेति । एवंप्रकारांतरेणानुपपत्तौसत्यामदृष्टदेहयोःकार्यकारणयोर्धर्मितयानुगतं

जातोनजायतेयस्मात्तेनादृष्टमकारणम् ॥ जातस्यैवयतस्तस्मादजातेदृश्यतेनहि ॥ नरशृंगेनतद्दृष्टंसदाजन्मविवर्जिते ६३२ शरीरेणविनानैतददृष्टंजायतेक्वचित् ॥ अदृष्टेनविनानैतच्छरीरंचद्विजोत्तमाः ६३३ बीजांकुरादिवन्नैषाकार्यकारणसंगतिः ॥ अनादिर्यतएतस्यांपृथिव्यनुगतास्तिहि ६३४ अदृष्टदेहयोःकिंचिद्वर्ततेनुगतंद्विजाः ॥ कारणंमूलभूतंतत्पृच्छाम्यद्यसमागतान् ६३५ अदृष्टदेहयोर्हेतुःकोन्वेनंजनयेत्पुनः ॥ परित्यक्तापुरादृष्टशरीरेवृक्षवन्नरम् ६३६ एवंपृष्टास्तदाविप्राःकारणंनप्रपेदिरे ॥ विज्ञानंजडवर्गस्यसदासदसदात्मनः ॥ आनंदंदुःखतोभिन्नंहेम्नोदातुःपरायणम् ६३७ वृक्षस्यमूलतोनाशेभवेदत्रहिकारणम् ॥ बीजानितद्वदस्यापिपुंसःसूक्ष्मशरीरकम् ६३८ बीजानांहियथानाशेतिष्ठेद्भूमिःसदातथा ॥ सुप्तौसूक्ष्मस्यदेहस्यनाशेऽज्ञानंव्यवस्थितम् ६३९ अदृष्टंकारणंयद्वद्वृक्षस्यभवनेसदा ॥ बीजानांसूक्ष्मदेहस्यतद्वत्स्थूलजनौहितत् ६४०

किंचित्कारणंवेदैकमानसिद्धमस्ति यदेवसर्वजगतोमूलभूतंतस्यस्वरूपंलक्षणंचसमस्तान्ब्राह्मणान्प्रतिपृच्छामीति ६३५ उक्तप्रश्नस्यैवनिष्कर्षमाह अदृष्टदेहयोरिति । अदृष्टदेहयोर्हेतुरुपादानभूतःकोनुएनंनरंवृक्षसमंजनयितुंशक्तोस्तिपुरापुरातनमदृष्टंशरीरंचवर्णितदोषंवर्जयित्वासहेतुर्वक्तव्यइति ६३६ एवमिति । एवंपृष्टाद्विजाजगतःकारणंनप्रपेदिरेनज्ञातवंतः तन्निरूपणंचदूरनिरस्तमितिपराजितावभूवुरितिभावः । श्रुतिस्त्वधिकारिणांहितायजगत्कारणस्यस्वरूपतटस्थलक्षणेवदतीत्याह विज्ञानमिति । विज्ञानानंदौस्वरूपलक्षणं हेम्नोरातिपदोक्तस्यदातुःपरायणत्वंफलप्रदानेप्रतिभूसमत्वंमर्यादाविधारकत्वमितियावत् तत्तटस्थलक्षणमितिविवेकः ६३७ एवंश्रुतिसिद्धेकारणेसतिशरीरस्यवृक्षसाम्यंसम्यगुपपन्नमस्यापिबीजसमस्यसूक्ष्मशरीरस्यक्षेत्रस्थानीयस्यचकारणाज्ञानस्यलाभादित्याह वृक्षस्येतिद्वाभ्यां । यथावृक्षस्यसमूलस्यनाशेप्यत्रपुनर्वृक्षोत्पत्तौबीजानिकारणंभवंतितथापुंसःस्थूलशरीरनाशेपिसूक्ष्मंशरीरंकारणंभवेदिति ६३८ बीजानामिति । यथाबीजानामपिनाशेऽदर्शनेसतिभूमिस्तिष्ठतितथासूक्ष्मशरीरनाशेप्यज्ञानंसुषुप्तप्रलययोरवशिष्यतइत्यर्थः ६३९ नन्वेतत्साम्यमुक्तलक्षणपरमात्मनोऽनभ्युपगमेपिकथंनोपपद्येतेतिशंकांपंचभिर्वारयन्सूक्ष्मस्यस्वोत्पत्तौपरमात्मापेक्षांतावद्दर्शयति अदृष्टमितिद्वाभ्यां । यथाबीजानांवृक्षस्यभवनेतद्वृक्षाकारपरिणामेकारणंव्यवस्थापकंनिमित्तमदृष्टंप्रत्यक्षादिप्रमाणैरविषयीकृतमेवंसूक्ष्मशरीरस्यस्थूलरूपेणपरिणामेपिव्यवस्थापकंतथेत्यर्थः तथाचव्यवस्थापकतयासूक्ष्मशरीरस्यपरमात्मापेक्षेतिभावः ६४०

नकेवलंसूक्ष्मस्योक्तविधयैवपरमात्मनोऽपेक्षाकिंतुसूक्ष्मनिमित्तानांसंस्काराणामालोचकत्वलक्षणकर्तृत्वेनापीत्याह पृथिव्यामिति । यथापृथिव्यांपतितानांबीजानांकार्यद्वारालाभेज्ञानेकारणं प्रयोजिकाबीजानांसंस्कृतिःसंस्कारभावेनावस्थानमितियावत् एवंकारणस्याज्ञानस्यसूक्ष्मत्वेतत्तत्सूक्ष्मशरीराकारपरिणामेप्रयोजिकासूक्ष्मशरीराणांसंस्कृतिरिति तेचसंस्काराईश्वरातिरिक्तेनदुर्ज्ञे याइतिभावः ६४१ अथाज्ञानस्यपरमात्मापेक्षांदर्शयति पृथिवीतित्रिभिः । यथासर्वावकाशदेनभसिपृथिवीस्थितातथाचिद्रूपेआत्मन्यज्ञानंस्थितमिति नहिजडेऽज्ञानंस्थातुमर्हतिपश्चाद्दृ वित्वात्तत्रावरणकृत्याभावाच्चेतिभावः ६४२ एतत्स्फुटयति अमूर्तइति । अमूर्तंघनीभावहीने संश्रयसमाश्रयशब्दावत्रस्थितिवाचकौ ६४३ आत्मनःसर्वेंपुस्वस्मिन्नरोपितेपुसत्तादिप्रदत्वा दपितदाश्रित्वमज्ञानस्येतिसदृष्टांतमाह लोकइति । धनिकमुपकारकमितिशेषः अज्ञानमितिच्छेदः स्पष्टमन्यत् ६४४ अथविज्ञानानंदपदयोःसामानाधिकरण्यसूचितंविज्ञानानंदयोरैक्यमु पपादयति आनंदइतिदशभिः । लोकेपिविज्ञानभिन्नमानंदस्वरूपंनदृष्टम् यतःसुखमित्याकारकंज्ञानंविनाआनंदस्यसंभवःसत्तादिलाभोनकुत्राप्यस्तीत्यर्थः तथाचज्ञानविमुक्तसुखस्वरूपस्याद र्शनाल्लौकिकमपिसुखमात्मरूपमेव विषयतयाभानंतुवृत्त्युपाधिकमितिभावः ६४५ ननुदुःखमपितथास्त्वितिशंकांवारयति नैवमिति । एवंसुखवद्दुःखमपिविज्ञानात्माभिन्नमस्त्वितिनशंक्यम् यतोस्यदुःखस्यसत्त्वेसदात्मरूपत्वेकिंचिन्मानंप्रत्यक्षादिकंनदृश्यते नहिकश्चिदहंदुःखमित्यनुभवति आनंदस्यत्वात्मरूपत्वेप्रकृतश्रुतिरूपःप्रमाणराजोस्तीति ६४६ यद्यपीति । अलब्धला

पृथिव्यांबीजलाभेहिकारणंबीजसंस्कृतिः ॥ अज्ञानस्यापिसूक्ष्मत्वेकारणंसूक्ष्मसंस्कृतिः ६४१ पृथिवीयद्वदेवैषासर्वापिनभसिस्थिता ॥ अज्ञानंतद्वदेवैतद्विज्ञा नात्मन्यवस्थितम् ६४२ अमूर्तेयद्वदाकाशेदृश्यतेमूर्तसंश्रयः ॥ विज्ञानेतद्वदेवस्यादज्ञानस्यसमाश्रयः ६४३ लोकेयोनिर्धनोदृष्टआश्रयेद्धनिकंहिसः ॥ दुः खात्मकंतथाऽज्ञानमानंदंज्ञानमाश्रयेत् ६४४ आनंदोहिनविज्ञानादन्योलोकेपिदृश्यते ॥ इदंसुखमितिज्ञानंविनानानंदसंभवः ६४५ नैवंदुःखंयतोनास्यसत्त्वे मानंहिदृश्यते ॥ आनंदस्यतुसत्त्वेस्तिमानंश्रुतिरिहाधुना ४६ यद्यप्येतेसदातुल्ययोगक्षेमेउदीरिते ॥ सुखदुःखेतथाप्येषविशेषोनैजकोस्त्यपि ४७ सुखमिच्छ तिसर्वोपिभूयादेतत्सदामम ॥ इत्थंदुःखंतथाद्वेष्टिमाभूदेतत्कदापिमे ४८ इत्थंयस्मिन्भवेदेतदनुकूलंस्वशब्दभाक् ॥ प्रतिकूलंपरंनस्वंलोकेवैरिसुखेतथा ६४९

भोयोगः लब्धप्रतिपालनंचक्षेमः । यद्यपिसुखदुःखेतुल्ययोगक्षेमतयासर्वतंत्रेपूक्ते तथाचसुखस्यात्मस्वरूपतांगीकारेदुःखस्यापिसांगीकार्या अन्यथातुल्ययोगक्षेमताप्रसिद्धिर्नोपपद्येतेतिशंका । तामेतांशंकांनहिदृष्टेनुपपन्नंनामेतिन्यायेनवारयन्स्वाप्रसिद्धिःसुखाकारवृत्तेरेवोत्पत्तिनाशादिसाम्यप्रतिपादनपरेतिदर्शयति तथापीति । यथाप्येषवक्ष्यमाणोविशेषोपिसुखदुःखयोरस्ति कीदृशो विशेषोनैजकः निजःअसाधारणः निजएवनैजःमूढैरज्ञातोनैजोनैजकः ६४७ सुखदुःखयोर्नैजंविशेषंदर्शयति सुखमितित्रिभिः । सर्वोपिजनइत्थंसुखमिच्छति इत्थंकथम् एतत्सुखंसदाम मभूयादिति तथाएतद्दुःखंकदापिमेमाभूदितिदुःखंद्वेष्टीति ६४८ नन्वेतावताकोविशेषःसुखेलब्धइतिचेदनुकूलत्वेसतिस्वरूपोयोन्यत्रनिरुपाधिकेच्छाविषयत्वेनप्रसिद्धइत्याह इत्थमिति । इ त्थंभूयादेतत्सदाममेत्याकारेणेच्छायन्नयद्विषयिकाभवेदेतद्वस्तुअनुकूलमनुकूलत्वेनव्यवहार्यंस्वशब्दभाक्स्वशब्देनव्यवहार्यंचभवति भूयादेतदित्यंशेनानुकूलत्वंममेत्यंशेनचस्वशब्दार्हत्वंहिसूचितमि तिभावः परंतद्विपरीतंतुप्रतिकूलमितिनस्वंस्यशब्दानर्हमितिचव्यवह्रियते । ननुसर्वस्यात्मनिकल्पितत्वेनात्ममात्रत्वेप्रतिकूलत्वादिकंकथंभासतेइतिचेदविद्यावलादितिसूचयन्प्रतिकूलत्वोदाहरण माह लोकेइति । लोकेसुखरूपेणेष्टमपिसुखंयदावैरिसंबंधमात्रेणप्रतिकूलंदृश्यतेतदासाक्षात्परत्वेनैवकल्पितस्यप्रतिकूलत्वादिकंकिमुवाच्यमितिभावः । वैरिसुखेतथाप्रतिकूलत्वादिकंदृष्टमित्यर्थः ६४९

ननुस्वशब्दभाच्चमात्रंसुखस्यविशेषोवक्तव्यः किमितिइष्यमाणत्वात्मकानुकूलत्वेन स्वपदार्थौविशेषितइतिशंकांवारयन्ननुकूलपदकृत्यमाह वैरीति । वैरीचदुःखंचएतेअपिसंबंधशब्दनेस्ववैरी स्वदुःखमित्येवमात्मसंबंधेनशब्दनंप्रतिपादनंययोस्तेतथाएतादृशेस्यातांतथापितयोर्वैरिदुःखयोरात्मसंबंधित्वेनेष्यमाणत्वंनदृश्यतेइत्यतस्तद्यावृत्तयेअनुकूलपदप्रयोगइतिभावः ६५० ननुअनुकूलत्वेसतिस्वत्वरूपोयःसुखस्यविशेषउक्तस्तत्रस्वपदार्थःकः आत्मीयत्वमात्मत्वंवा आद्येकथमात्मरूपता अंत्येकथंलोकाआत्मीयत्वेनसुखमिच्छंतिकथंवासुखंममभूयादितिषष्ठीप्रयोगइत्याशंक्यअंत्यपक्षमंगीकुर्वंस्तत्रोपपत्तिमाह कारकाणामिति । सुखस्यात्मरूपत्वेनभेदघटितेसंबंधेऽविद्यमानेपिसुखस्याजन्यत्वात्कारकाणांद्वितीयादिविभक्तिप्रयोजकानामभावेनपरिशेषेणशेषेशेषार्थकषष्ठीविभक्तौप्रयुज्यमानायांसंबंधधीर्याजायतेसाभ्रमोविकल्परूपेतियावत् तदुक्तम् ‘ अत्यंतासत्यपिह्यर्थेज्ञानंशब्दःकरोतिहि ’ इतिशब्दज्ञानानुपातीवस्तुशून्योविकल्पइतिच । तत्रदृष्टांतः स्वस्येति । यथास्वस्यस्वयमुपकरोतीतिप्रयोगेआत्मनिभेदाभावेपिशब्दबलात्स्वस्वयंपदार्थयोर्भेदोभासतेतद्वन्ममसुखमित्यत्रापीत्यर्थः तथाचसुखात्मनोरभेदएव लोकाअपिकथमिदंसुखंममात्मेवस्यादित्येवेच्छंति परंतुतेसुखस्यात्मतामजानंतःसुखात्मप्रतिबिंबग्राहिवृत्तिद्वाराएतत्संबंधंलब्ध्वासुखमात्मीयत्वेनाभिमन्यमानाएवतुष्यंतीतिभावः ६५१ उक्तविचारफलमाह स्वशब्दइति । तस्मात्सुखेयःस्वशब्दोदृष्टःप्रयुज्यमानःअसौस्वीयेआत्मीयरूपार्थेवर्तमानोनभविष्यतिकिंत्वात्मरूपार्थेएवेत्यर्थः । तत्रोपपत्तिमप्याह तथाचेति । तथासतिसुखवृत्तिस्वशब्दस्यात्मरूपार्थे

वैरिदुःखेअपिसदास्यातांसंबंधशब्दने ॥ तथापिनात्मसंबंधंतयोरिच्छतिकर्हिचित् ६५० कारकाणामभावेनशेषेसंबंधधीभ्रमः ॥ संबंधेऽविद्यमानेपियथास्वस्यस्वयंतथा ६५१ स्वशब्दोयःसुखेदृष्टोनासौस्वीयेभविष्यति ॥ तथाचसतिसंबंधोभवेन्नित्यंसुखात्मनोः ६५२ अनित्येसतिसंबंधआत्मनःप्रतिकूलता ॥ भवेन्नदृश्यतेचैषाप्राणिनःकर्हिचित्क्वचित् ६५३ नित्येचसतिसंबंधेतादात्म्यान्नापरोभवेत् ॥ संबंधोनेतिनेतीतिश्रुतिरन्यमपाकरोत् ६५४ आत्मनस्ततएवैतद्विज्ञानंनात्मनःपृथक् ॥ पृथक्त्वेबुद्धिविज्ञानंसदृशंतज्जडंभवेत् ६५५ जडानांहिपरापेक्षानियतात्रघटादिषु ॥ परापेक्षमविज्ञानंघटादिवददोभवेत् ६५६

परत्वेसतिसुखात्मनःसंबंधस्तादात्म्यरूपोनित्यःस्यात् तथाचसदात्मनिनिरतिशयप्रेमोपपत्तिरितिभावः ६५२ एतदेवव्यतिरेकेणद्रढयति अनित्यइति । यद्यात्मनस्सुखसंबंधोऽनित्यःस्यात्तदाकदाचिदात्मनिप्रतिकूलताद्वेषविषयतापिभवेत्सातुकदापिकस्यचिदपिनदृश्यतइति ६५३ ननुसंबंधस्यनित्यत्वेपिभेदघटितसमवायरूपत्वमस्त्वित्याशंकांवारयति नित्येचेति । नित्येसंबंधेन्विष्यमाणेसुखात्मनोःकल्पिताकल्पितभेदाभेदात्मकंतादात्म्यमेववक्तव्यंनापरोभेदघटितःसमवायः यतोनेतिनेतीतिश्रुतिरात्मनोन्यंभिन्नंवस्तुजातमपाकरोदिति ६५४ आत्मनइति । आत्मनइतिपदंपूर्वान्वयित्वेनव्याख्यातम् ततएवनेतिनेतीतिश्रुतिभयादेवविज्ञानमपिनात्मनोभिन्नंतत्समवेतमितिमंतव्यंकिंत्वात्मरूपमेव एतेनार्शआद्यजंतत्वकल्पनापरास्ता । नकेवलंश्रुतिभयादेवविज्ञानस्यात्मरूपताकिंतूपपत्तेरपीत्याह पृथक्त्वइति । विज्ञानस्यपृथक्त्वेस्वीक्रियमाणेतद्धदात्मलक्षणभूतमपिविज्ञानंजडंस्याद्यथाबुद्धिरूपंगौणंज्ञानमित्यर्थः तथाचानवस्थाविज्ञानत्वत्यागश्चदोषःस्यादित्याह जडानामिति । जडानांस्वनिर्वाहायपरापेक्षानियताअवश्यंभाविनीदृष्टायथाघटे तथाचोत्तरोत्तरंविज्ञानकल्पनायामनवस्था किंचपरापेक्षाणांघटादीनामविज्ञानत्वस्यविज्ञानभिन्नत्वस्यदर्शनाददआत्मलक्षणभूतंविज्ञानमपिअविज्ञानंभवेदतःस्वप्रकाशात्मरूपमेवेष्टव्यमित्यर्थः ६५६

ब्रह्मप्रयोगतात्पर्यमाह विज्ञानानंदेतित्रिभिः । विज्ञानाभिन्नानंदरूपोयआत्मासंसर्वजडवर्गकल्पितत्वस्फुटीकरणायब्रह्मपदेनोक्तइतिकथंब्रह्मपद प्रयोगेणाध्यस्तत्वंस्फुटीक्रियतइतिचेदित्थम् ब्रह्मश ब्दस्त्रिविधपरिच्छेदहीनत्वलक्षणनिरतिशयमहत्त्वप्रतिपादकः यदिजडजातंसत्यंस्यात्तदातन्निष्ठान्योन्याभावप्रतियोगित्वलक्षणवस्तुपरिच्छेदापत्तिःस्यादित्यतःस्वबोध्यभिन्नस्यमिथ्यात्वंबोधयतीति ६५७ तत्रसजातीयभेदस्यौपाधिकत्वेनाध्यस्तत्वंदृष्टांतत्वेनस्फुटयति यथैकस्मिन्निति । यथैकमेवशारीरंनभस्तत्रकर्णनासाद्युपाधिभिर्भेदकल्पनातथैकस्मिन्नेवब्रह्मण्यज्ञानाद्युपाधिभिर्भेदकल्प नेति ६५८ विजातीयभेदस्याध्यस्तत्वमुपाधीनामध्यस्तत्वबोधनद्वारासदृष्टांतमाह असन्नेवेति । यथाकाशेमायाविनानिर्मितेमायामयवपुषिउपाधौसतिमायिनोयआकाशादौभेदस्तत्र मायाविनिवाकाशादेर्भेदःसोऽसन्नेव उपाधेरपिकल्पितत्वात्तथाज्ञानाद्युपाधीनांकल्पितत्वात्तत्प्रयुक्तोभेदोब्रह्मण्यसन्नेवेतिस्वगतभेदस्याध्यस्तताविज्ञानानंदैकरसत्वप्रतिपादनेनसूचितेत्यपिबो ध्यम् ६५९ रातेर्दातुःपरायणमित्युक्तेस्तात्पर्यमाहेदमितित्रिभिः । इदंनिरूपितंविज्ञानानंदैकरसंयद्ब्रह्मतद्विशुद्धंजगतःकारणंनभवतिकिंतुमायोपाधिकंसर्वज्ञत्वादिशाल्येवसत्कारणमेतत्तात्पर्यं दर्शयितुंवेदःप्रकृताश्रुतिरेवमब्रवीत् । एवंकथम् वदान्यानांधनदानपराणांसंबंधीनियानिकर्माणितेषांफलदानेय त्परायणंप्रतिभूसमंजगद्विधारकंतद्देहस्यतत्प्रभृतिजगतःकारणमितिद्वयोरर्थः ।

विज्ञानानंदरूपोयमात्माब्रह्मेतिगीयते ॥ अध्यस्तत्वप्रसिद्ध्यर्थंजडजातस्यसर्वतः ६५७ यथैकस्मिन्नभस्येषाकर्णनासादिकल्पना ॥ ब्रह्मण्येवमिहैकस्मिन्न ज्ञानादिप्रकल्पना ६५८ असन्नेवयथाभेदोमायावपुषिमायिनः ॥ तत्रवान्भसोयद्वद्ब्रह्मण्येवंहिसस्मृतः ६५९ इदंविशुद्धंचैतन्यसुखंब्रह्मनकारणम् ॥ किंतु मायासमेतंतत्सर्वज्ञंसर्वशक्तिच ६६० एतद्दर्शयितुंवेदोवदान्यानांपरायणम् ॥ कर्मणांफलदानेचदेहकारणमब्रवीत् ६६१ तत्राप्यहेतुतांमत्वाजडस्यावर णात्मनः ॥ परायणंपरंब्रह्मप्रोक्तवान्केवलंहियत् ६६२ अनेनवचसावेदतिष्ठमानस्यतद्विदः ॥ आत्मानंयःप्रकाश्यास्तेब्रह्मचर्यादिसाधनः ॥ ब्रह्माहमिति तस्यापिस्यात्तद्ब्रह्मपरायणम् ६६३

नहिशुद्धस्यकर्मफलदत्वमितिभावः ६६० । ६६१ परमालंबनवाचकेपरायणशब्देपरपदप्रयोगाशयमाह तत्रापीति । तत्रापिमायायाअपिकारणबोधनायमायाशबलस्यकारणत्वोक्ताव पिइयमनुपपत्तिर्भासते । इयंका यन्मायाचैतन्यसत्तांविनाआत्मानमपिधारयितुमशक्ताकथंप्रपंचनिर्वाहेशक्तास्यादिति । एतस्याअनुपपत्तेरनुसंधानेनजडस्यावरणात्मनोमायासंज्ञस्याहे तुतांअनुपपन्नाहेतुतांमत्वावेदोयत्केवलंब्रह्मतदेवपरायणमित्यब्रवीत् तस्यैवाधिष्ठानत्वेनसर्वनिर्वाहकत्वादितिभावः ६६२ शुद्धस्यब्रह्मणोनकेवलंमायायाअधिष्ठानत्वेनपरायणत्वंकिंतुमुक्तंप्रत्य पिपरायणमित्याह अनेनेति । एवमत्रान्वयः तत्केवलंब्रह्मतस्यापिविदुषःपरायणम् । तस्यकस्य यस्तिष्ठमानस्यतद्विदइत्यनेनश्रुतिवचसाइत्थंप्रतिपादितइतिशेषः । इत्थंकथम् यो ब्रह्मचर्यादिसाधनसंपन्नःसन्ब्रह्माहमित्यात्मानंप्रकाश्यनिरावरणंकृत्वाआस्तेब्रह्माहमितिवेदचेति । अत्रतिष्ठमानस्येत्यात्मनेपदंप्रकाशनस्थेयाख्ययोरितिसूत्रेणेतिसूचयितुंप्रकाश्यास्तेइतितदर्थं उक्तः ब्रह्माहमितिवेदेतितद्विदइतिपदस्यार्थंउक्तइतिविवेकः ६६३

प्रकृतवाक्यस्यसंपिण्डितमर्थमाह ब्रह्मेति । यद्ब्रह्मविज्ञानानंदरूपंमायोपाधिकंकर्मणांफलदात्केवलंतुब्रह्मविदःस्वात्मभूतंचतद्विजगतःकारणमित्येवंद्विजानविदुः । कीदृशाः कोनु एनंजनयेदितियाज्ञवल्क्येनपृष्टाः । अस्माभिस्त्वधिकारिभिः केवलमनुग्रहेणवदतोवेदस्यवाक्यात् श्रुतमितिद्वयोःसंबंधः ६६४ । ६६५ इतिहासमुपसंहरन्नुत्तराध्यायजिज्ञासामुत्थापय ति एवमितित्रिभिः । याज्ञवल्क्योधीमवांपुरतःस्थितोऽग्रगण्यः गवांछलेनगवांग्रासाश्रमंप्रतिप्रेषणरूपनिमित्तव्याजेनब्राह्मणान्सर्वान्जित्वाविदग्धंदग्ध्वाजनकायउत्सुकायश्रद्धालवेज्ञानमुप



ब्रह्मविज्ञानमानंदंकर्मणांफलदात्टच ॥ ब्रह्मवित्स्वात्मरूपंचनविदुःकारणंद्विजाः ६६४ याज्ञवल्क्येनपृष्टास्तेकोन्वेनंजनयेदिति ॥ अस्माभिस्तुमहाभागश्रुतंवे दस्यवाक्यतः ६६५ एवंमहानुभावःसएषवाजसनेयकः ॥ याज्ञवल्क्यःसूर्यशिष्योधीमतांहिपुरःस्थितः ६६६ गवांछलेनजित्वैवंब्राह्मणान्पृथिवीगतान् ॥ विदग्धंभस्मसात्कृत्वाब्रह्मविद्वेषकारिणम् ६६७ मिथिलापतयेराज्ञेजनकायोत्सुकायहि ॥ सूर्योक्तंदिष्टवान्ज्ञानंयस्त्वयंपृष्टवान्द्विजान् ६६८ इति श्रीमत्प रमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेबृहदारण्यके याज्ञवल्क्यकांडसारार्थप्रकाशे ऋषियाज्ञव ल्क्यसंवादोनामपंचमोध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दिष्टवानितित्रयाणांसंबंधः ६६६ ॥ ६६७ ॥ ॥ ६६८ अज्ञानामपिविज्ञानांयएकोसिपरायणम् ॥ सच्चिदानंदरूपायसर्वज्ञायेशतेनमः ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारा मसूरितनूजरामकृष्णास्यश्रीविश्वेश्वराश्रमपूज्यप्रसादानुगृहीतस्यकृतौ आत्मपुराणटीकायां सत्प्रसवाख्यायां पंचमोऽध्यायः ॥ ५ ॥ ग्रंथसंख्या ॥ ३९२० ॥ ७ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ यःपष्ठःपञ्चभूतानिसंवर्धयतिरश्मिभिः ॥ मुनिनावर्णितःषष्ठेसपष्ठेनःप्रसीदतु ॥ १ ॥ अस्यार्थः । यःपरमात्मासिद्धांतेषष्ठतत्त्वात्मकोरश्मिभिःसत्ताद्यंशैस्तत्त्वांतराणिवर्धयतिसमुनिनायाज्ञवल्क्येनारण्यकषष्ठाध्यायेवर्णितोनोधिकारिणामिन्द्रियपंचकापेक्षयाषष्ठेंतःकरणेअत्राध्यायेवाप्रसीदतुआविरस्तुइति ॥ अथजिज्ञासोःशिष्यस्यप्रश्नंतत्समाधानप्रतिज्ञांचगुरोर्वर्णयति एवमितिसप्तभिः १ श्रुतंसंक्षेपेणानुवदति भगवन्निति २ तदेवविस्तरेणानुवदन् प्रथमाद्यध्यायचतुष्टयार्थंसंवादचतुष्टयेनाह अधिकारीति ३ पंचमाध्यायार्थमनुवदति आख्यानमिति ४ यदुक्तमित्यादित्रयंस्पष्टम् ५ । ६ । ७ तत्रप्रथमकंडिकार्थमुपबृंहयति शाकल्यइत्यादिसप्तत्रिंशच्छ्लोकैः । व्युष्टायांप्रभातभावंप्राप्तायां । एवंसतिवादित्राद्यैर्मुक्तनिद्रोराजाजनकोब्राह्मणाद्या

श्रीगणेशायनमः ॥ ॥ एवंगुरुमुखाच्छ्रुत्वाशिष्योनानाविधाःकथाः ॥ आत्मविज्ञानसंबद्धाःपप्रच्छस्वगुरुंपुनः १ भगवन्भवताख्यातमैतरेयसमीरितम् ॥ ज्ञानंकौषीतकिप्रोक्तंतथादित्यसमीरितम् ॥ इतिहासैस्तथाख्यानैःसहितंविविधैरपि २ अधिकारिजनाख्यानंतद्वदैंद्रप्रतर्दनम् ॥ अजातशत्रुगार्ग्याख्यंदध्यङ्ङाथर्वणंतथा ३ आख्यानंयाज्ञवल्क्यस्यविप्रसंवादरूपभृत् ॥ विविधंचात्मविज्ञानमत्रसर्वत्रकीर्तितम् ४ यदुक्तंयाज्ञवल्क्येनजनकायमहीभुजे ॥ ज्ञानंतच्छ्रोतुमिच्छामिभगवंस्त्वत्प्रसादतः ५ एवमुक्तेगुरुःप्राहशिष्यंस्नेहसमन्वितः ॥ जनकाययथाज्ञानंयाज्ञवल्क्योयदुक्तवान् ६ शृणुवक्ष्यामितत्सर्वमुक्तवान्यन्मुनीश्वरः ॥ जनकायस्वशिष्याययथाज्ञवल्क्योह्यगाधधीः ७ शाकल्येनिधनंप्राप्तेब्राह्मणेषुजितेष्वथ ॥ व्युष्टायामपिशर्वर्यामुदितेरविमंडले ८ वादित्रैर्विविधैस्तद्वद्दुंदुभिभिर्मधुरस्वरैः ॥ अप्सरःसदृशस्त्रीभिर्नानानीराजनैरपि ९ मुक्तनिद्रोमहाराजःकृतपौर्वाह्णिकक्रियः ॥ ब्राह्मणानांचवृद्धानांपरिगृह्यजयाशिषः १० वादित्राणांविचित्राणांघोषैर्गंधर्वमिश्रितैः ॥ सर्वालंकारसंपन्नोह्यगादेषसभांप्रति ११ प्रवालमणिरत्नौघैर्हेमराजतनिर्मिताम् ॥ सुधर्मासदृशींभाभिर्भासयंतींदिशोदश १२ चित्रेसिंहासनेतस्यामासांचक्रेजनेश्वरः ॥ विदेहोजनकोधीमांस्त्रैवर्णिकजनैर्वृतः १३ कालेस्मिन्नागतस्तत्रसूर्यशिष्योमहायशाः ॥ आराध्यस्वगुरुंदेवंसावित्र्याशिरसासह १४ पौर्वाह्णिकीःक्रियाःकृत्वाशिष्यैःसर्वैःसमावृतः ॥ चतुर्वेदार्थिभिर्याज्ञवल्क्योवाजसनेयकः १५ तमागतंतदाराजात्रैवर्णिकजनैर्वृतः ॥ अभ्युत्थानार्घ्यपाद्याद्यैरर्चयामासधर्मवित् १६ प्रवालमणिरत्नौघमंडितंकनकोद्भवम् ॥ आसनंमृदुलंचादान्मुक्तादामविभूषितम् ॥ उपविष्टस्तदातस्मिन्नासनेमुनिसत्तमः ॥ अन्वजानात्सराजानंसर्वांस्त्रैवर्णिकानपि ॥ वर्णिभिश्चतथाराज्ञास्वासनेषूपविश्यताम् १८ इत्युक्तेराजसहितावर्णिनोहृष्टचेतसः ॥ स्वासनेषूपविष्टस्तेनमस्कृत्यमुनीश्वरम् १९ अतिथिंमाननीयंतंराजाविनयसंयुतः ॥ उवाचेदंनमस्कृत्यधर्मयुक्तंतदावचः २०

शिषःपरिगृह्यवाद्यघोषैरुपलक्षितःसभामगादितिचतुर्णांसंबंधः ८ । ९ । १० । ११ सभांविशिनष्टि प्रवालेति १२ चित्रइति । तस्यांसभायांजनकोराजाउपविष्टवान् १३ कालइति । अस्मिन्राज्ञःसदस्युपवेशनोपलक्षितेकालेतत्रराजसदसियाज्ञवल्क्यआगतः किंकृत्वा शिरोविशिष्टगायत्रीमंत्रेणस्वगुरुमादित्यमाराध्यपौर्वाह्णिकीःपूर्वाह्णेविहिताःक्रियाःसमाप्यचेतिद्वयोरर्थः १४ । १५ तमिति १६ प्रवालेति । विद्रुमादिविभूषितंमृदुलमासनमदाच्चेति १७ उपविष्टइति । तत्रासनेउपविष्टोमुनीराजानंसभ्यांश्चैवमन्वजानात्आज्ञप्तवान् एवंकथं वर्णिभिस्त्रैवर्णिकैःराज्ञाचस्वस्वासनेषूपविश्यतामिति १८ इत्युक्तेइति १९ अतिथिमिति । तंयाज्ञवल्क्यंमानार्हमतिथिंप्रतिइदंवक्ष्यमाणंवचोब्रवीत्कीदृशं धर्मयुक्तं वाक्चतुर्थीचसुव्रतेतिधर्मशास्त्रेणविहितम् २०

॰राजवाक्यमभिनयति ब्राह्मणाइत्यादिना । अत्रलोकेब्राह्मणाएवपरमदैवतंयतएतेदेवानामपिसृष्ट्यादौप्रभवंतिशक्ताभवंतिपरमात्मवत्किमुतान्यजंतूनामितिद्वयोरर्थः २१ । २२ सर्वेति । सर्वभूतसमत्वादिनापूर्णकामाअपिभूतानुग्रहायैवविचरंति विचरणहेतुंपृष्टाश्चप्रयोजनांतरंप्रख्यापयंतीत्यर्थः २३ व्याजंस्फुटयति पश्विति । केचित्पृष्टाःपश्वादिलाभायचरामइतिवदन्तिकेचित्तुसत्संवादेनतत्त्वनिर्णयायचरामइतिवदन्तीत्यर्थः २४ अहंत्वेवंमन्येइत्याह भूपतीनिति । संसाराब्धौमज्जतोभूपतीनुद्दिधीर्षवउद्धर्तुमिच्छंतएवभवादृशाश्चरंतीति २५ तत्रापिभवतःसुतरांनिष्कामस्यमदुपकारायैवागमनमित्याह सूर्येतिद्वाभ्यां । भवान्यतःसूर्यशिष्योज्ञानानंदरूपात्मगोचरेणविज्ञानेनापरोक्षानुभवेनसंपन्नोऽतएवगतैषणश्चातस्तवलोकेकोपिकार्यंप्रयोजनमस्तिनकिंचिदपितथापिमदुद्धरणमेवप्रयोजनमितिद्वयोरर्थः २६ । २७ संसारदुःखमभिनयति अस्थीति । अस्थीन्येवस्थूणाभूतानियत्रएतादृशंदुर्गंधंदेहमहंबुद्ध्यागृहीत्वाश्वेवस्थितोस्मीति २८ श्वदृष्टांतंस्फुटयति जुगुप्सितेतिद्वाभ्यां । यथारुग्णःसकृमिःश्वाऽसदस्थिदंतेषुधृत्वाबहुभिर्वैरंकुर्वन्महादुःखमाप्नोतीतिद्वयोरर्थः २९ । ३० दार्ष्टांतिकेयोजयति अहमिति ३१ स्वस्यदुःखभाजनतांसर्वव्यवहाराणांदुःखात्मतानिरूपणेनविशदयति क्षुधयेतिनवभिः । अहंक्षुधार्त्तःसन्स्थावराणिव्रीह्यादिरूपाणिचराणिनांतरीयकभक्षणानिघुनादीनिमृगादिरूपाणिवाअझिभक्षयामिरक्षोवत् तथाचाभक्षणेक्षुद्दुःखंभक्षणेतुरक्षःसाम्यलाभोदुःखमेवमग्रेपिबोध्यमिति । भोगेपरिणामादिदुःखमप्यनुसंधेयम् ३२ कामेति । नारीकुणपंमृतशरीरसमंनारीशरीरं । प्रेतंमृतशरीरम् ३३ स्थावराणामिति । स्थावराणांचंदनादीनांगात्रंघृष्ट्वादुर्गंधेस्वशरीरेस्थापयामि । तत्रदृष्टांतमाह निर्घृणइत्यादिना ३४ अहमिति । अत्रापिअहननेमृगयारूपव्यसनंदुःखंहननेतुराक्षससाम्यमुक्तमेवेति ३५ तैलेति । अत्रापिप्रजाभ्योद्रव्याऽनादानेलिप्सादुःखंबोध्यं । यंत्रतःयंत्रेण ३६

ब्राह्मणाएवलोकेस्मिन्दैवंनापरमीरितम् ॥ प्रभवंतियतस्त्वेतेसृष्टिस्थित्यंतकर्मणि २१ देवानामपिकिंचान्यजंतूनांदेहधारिणाम् ॥ परमात्मायथाशक्तस्तथैवैतेद्विजोत्तमाः २२ सर्वभूतसमाःशांतादांताविगतमत्सराः ॥ आप्तकामामहात्मानोभूतानुग्रहचेष्टिताः ॥ विचरंतिमहीमेतांव्याजंकिंचिद्विधायहि २३ पशुधान्यादिलाभाख्यंव्याजंसंपाद्यकेचन ॥ तत्त्वनिर्णयसंज्ञंचकेचित्तद्वन्महाधियः २४ भूपतीन्मज्जतोगाधसंसारजलधिस्थितान् ॥ उद्दिधीर्षवआयांतियाज्ञवल्क्यभवादृशाः २५ सूर्यशिष्योभवान्किंतेकार्यंलोकत्रयेस्तिहि ॥ ज्ञानानंदात्मविज्ञानएषणात्रयवर्जितः २६ एकंकार्यमहंमन्येभवतोदीनवत्सल ॥ अस्मिन्संसारपंकेमांसीदंतंत्रातुमागतः २७ अस्थिस्थूणमिमंदेहंदुर्गंधंसुजुगुप्सितम् ॥ अहंधियागृहीत्वाहंश्ववदत्रव्यवस्थितः २८ जुगुप्सितशरीरस्थःकृमिकीटसमावृतः ॥ कर्णपुच्छादिविकलोव्याधिभिःपरिपूरितः २९ विष्ठादिग्धंयथाशुष्कमास्थिकिंचिन्निधायहि ॥ दंतपंक्तौपरैर्वैरंबलिभिःकुरुतेश्वभिः ॥ ततोदुःखंसमाप्नोतिप्राणांतंसुखवर्जितम् ॥ अहमेवंमुनेदेहंगृहीत्वाराज्यकामुकः ॥ स्थितोस्मिसुखलेशेनवर्जितोदुःखभाजनम् ३१ क्षुधयापीडितोनित्यमद्मिभूतान्यहंमुने ॥ स्थावराणिचराण्यत्रपुरुषादोयथानरान् ३२ कामग्रहसमाविष्टोनारीकुणपमाश्रये ॥ प्रेतंयथाश्मशानेषुपिशाचोदाहवर्जितम् ३३ स्थावराणामहंगात्रंसुगंधंगंधलोभतः ॥ घर्षयित्वात्रदुर्गंधेस्थापयामिकलेवरे ॥ निर्घृणोत्रयथाकश्चिद्राक्षसोनरगात्रकम् ३४ अहंहन्मिवृथाजंतून्मृगयायांविमोहितः ॥ तृणपर्णाशिनःशांतान्मुनीन्यद्वद्विराक्षसः ३५ तैलकारोयथातैलंतिलान्निष्पीड्ययंत्रतः ॥ गृह्णातितद्वदेवाहंप्रजानांद्रव्यमाददे ३६

नराणामिति । करभाउष्ट्राः । नरादीनांस्कंधांपृष्ठानिचस्वस्यमेपकरणस्यभारेणबाधेपीडयामि तत्रोपजातगडुरोगवदित्यर्थः साम्यंपूर्ववत् ३७ अधइति स्पष्टम् ३८ रक्षयामीति । अ त्रराज्येस्थितम् ३९ पुत्रेति । शोच्यस्तत्त्वविद्भिरयमज्ञः कांगतिंगमिष्यतीत्याकारेणशोचनीयः क्षुधादिदुःखमालोच्यभोगदशांराक्षसादिसाम्यापादिकामालोच्यतुशोच्यतमः ४० एवंयस्य तत्त्वज्ञानस्यव्यतिरेकेनिकृष्टेरविशेषस्तस्यतत्त्वज्ञानस्योपदेशेनमामुद्धरेत्याशयेनाह दुःखेति । अध्यात्मादिदुःखत्रयमेवत्रिशाखंशाखात्रयंयस्यएतादृशेऽज्ञानरूपलोहजेसंसारशूलेपतितंमांत्रातुमे वागतोसीति ४१ एवमागमनाभिप्रायोमयाज्ञातएवव्याजंतुद्विधाप्रसिद्धंनिरूपयेत्याह कथयेतिद्वाभ्यां । सर्वेषांमष्टृणांपुरतएवमुदीर्यकिमागतोसि एवंकथंराज्ञोबहून्पशूनवाप्स्यामीति ४२ द्वितीयंव्याजमभिनयति अथवेति । ज्ञानशुद्धिःसंवादेननिर्णयभावः समागाआगतोसि ४३ एवमिति । एवंपृष्टोयाज्ञवल्क्योजनकंराजानंहेसम्राडितिसंबोध्यपशुलाभज्ञानशुद्धिरूपमुभयं प्रयोजनमित्युक्तवानित्यर्थः ४४ अथद्वितीयादिषण्णामृचामर्थंसंकल्प्यदर्शयन्सगुणब्रह्मोपासनंवक्ष्यमाणनिर्गुणविद्यासाधनमितिसूचयति एवमुक्तेतिदशभिः । एवमुभयमित्याकारेणोक्त्वापुनरे

नराणांचगजानांचकरभाणांचवाजिनाम् ॥ स्कंधपृष्ठानिबाधेहंरोगोयद्वद्विदुःसहः ३७ अधःस्थितेषुसर्वेषुवर्णिषूच्चासनंभजे ॥ प्रासादशिखरंयद्वत्काकःकर्णोप तापनः ३८ रक्षयाम्यहमत्रस्थंद्रव्यंनानाविधंमुने ॥ महानिधिंयथासर्पःकोपसंरक्तलोचनः ३९ पुत्रभार्यादिसंसक्तोयथायंग्रामसूकरः ॥ तथाहंमुनिशार्दूलशो च्यःशोच्यतमोधुना ४० दुःखत्रयत्रिशाखेस्मिन्स्वात्माज्ञानसमुत्थिते ॥ संसारशूलेपतितंमांपातुंत्वमिहार्हसि ४१ कथयाद्यमुनेव्याजंकिंतआगमनेभवेत् ॥ राज्ञःपशूनवाप्स्यामिवहूनेवमुदीर्यकिम् ॥ इहागतोसिसर्वेषांपुरतोद्विजसत्तम ४२ अथवाज्ञानशुद्ध्यर्थंराज्ञोयास्याम्यहंसभाम् ॥ एवमुक्त्वासमागास्त्वंयाज्ञव ल्क्यमुनीश्वर ४३ एवमुक्तःसरोजानमुभयंत्वितिचोक्तवान् ॥ सम्राडितिहिसंबोध्यजनकंमिथिलेश्वरम् ४४ एवमुक्त्वाचतंप्राहपुनरेवमुनीश्वरः ॥ तुभ्यंबुद्धिमते विप्रोयज्ज्ञानंकश्चिदब्रवीत् ॥ तदहंश्रोतुमिच्छामिनचेद्गोप्यंमहीपते ४५ एवमुक्तोमुनिंप्राहयाज्ञवल्क्यंमहीपतिः ॥ स्वात्मनेमुनिराहान्योविज्ञानंयदनेकधा ॥ ४६ जित्वाशैलिनिनामायस्तद्वत्शौल्वायनःपुनः ॥ उदङ्कस्त्वयस्तथावर्कुर्वार्ष्णिस्तद्वत्परोमुनिः ४७ गर्दभीविपीतसंज्ञोभारद्वाजइतीरितः ॥ जाबालःसत्य कामश्चविदग्धोयोस्मृतोधुना ४८ एतेवैमुनयोविप्रषड्ब्रह्माण्यवदन्हिमे ॥ वाग्घ्राणचक्षुःश्रोत्राणिमनोहृदयमेवच ४९ इत्युक्तेतान्प्रशस्यासावेकपात्त्वेनषट्स्वपि ॥ न्यूनतामभिधायात्रपादत्रयमथाब्रवीत् ५०

वमुक्तवान् एवंकथं हेमहीपतेइतःपूर्वैर्विप्रः जाताचेकवचनं तुभ्यंविवेकिनेयद्यज्ज्ञानमुपदिष्टवांस्तद्यदिरहस्यंनभवतितदाश्रावय श्रुत्वाचपुनरहंवक्ष्यामीत्यर्थः ४५ एवमुक्तइति । एवं पृष्टोराजास्वस्मैयदनेकधामुन्यंतरेणनानासंज्ञकेनयद्यदुपदिष्टंज्ञानंतद्याज्ञवल्क्यायाहश्रावयामास ४६ पूर्वोपदेष्टणामृषीणांषण्णांनामान्याह जित्वेति । जित्वानाम्नाशिलिनसंज्ञकापत्यतयाशैलिन संज्ञकश्चप्रथमः । शुल्वसंज्ञकस्ययुवापत्यमुदङ्कसंज्ञोद्वितीयः । वृष्णेरपत्यंवर्कुसंज्ञस्तृतीयः । भारद्वाजगोत्रोगर्दभीविपीतसंज्ञश्चतुर्थः । जबालायाःपुत्रःसत्यकामःपंचमः । विदग्धःशाकल्य.प ष्ठइतिद्वयोरर्थः ४७ । ४८ एतेइति । हेविप्रएतेवर्णितनामकाःषट्प इत्रह्माणिसगुणब्रह्मणोरूपाणिवागाद्यात्मकान्यवदन्नुक्तवंतइत्यर्थः । अत्रेदंबोध्यम् वागादिशब्दाःक्रमेणदेवतानामग्निवायु सूर्यदिक्चंद्रप्रजापतीनांलक्षकाः । उपासनंचसर्वेषांसमुच्चयेनैवदेवान्प्राप्नोतीतिवद्देवभावप्राप्तेःफलस्योक्तेरिति ४९ इत्युक्तेइति । इत्युक्तेसत्यसौयाज्ञवल्क्यस्तान्वागादिदेवान्सर्वजगन्निर्वाहक त्वेनब्रह्मत्वेनोपास्यत्वायप्रशस्यतावतैवसंतोषवारणापतेषुएकपात्त्वेनपादहीनत्वेनशैलिनिप्रभृतीनामुपदेशेषुन्यूनतामुक्त्वाथशैलिन्याद्यैरनुक्तंप्रत्येकंपादत्रयमुक्तवानित्यर्थः ५०

वागादिदेवतारूपएकःपादोदर्शितएवंशिष्टंपादत्रयंदर्शयति प्रत्येकमाश्रयमिति । प्रथमपादरूपाणांवागादिदेवतानामाश्रयंकारणत्वेनाधारभूतंवागाद्याध्यात्मिकमिंद्रियंद्वितीयपादत्वेनोक्तवान् । अथापरंतृतीयंपादंतुसर्वाश्रयमव्याकृताकाशादिपदैःप्रसिद्धमत्रश्रुतौप्रतिष्ठापदेनोक्तमुक्तवान् चतुर्थःपादस्तूपनिषद्रूपः । उपनिषत्पदेनात्ररहस्यंनामोच्यते । तानिचवागादिनामानिक्रमेणप्रज्ञाप्रियंसत्यमनंतमानंदःस्थितिरित्याकाराणिबोध्यानि । तदुपासनफलानिचश्रुतावुक्तानीति । अत्रप्रथमपादचिंतनेहिरण्यगर्भस्यस्मृतिर्द्वितीयेविराजस्तृतीयेईश्वरस्यचतुर्थेतुरीयस्येतिप्रयोजनमपिबोद्धव्यमिति ५१ एकैकस्मिन्निति । एवंवागादिरूपैश्चतुष्पादिपादचतुष्टयशालिनिब्रह्मणिषड्वारंमहात्मनायाज्ञवल्क्येनोक्तेसतिसजनकोगुरुदक्षिणांदातुमेवमुवाच । एवंकथं हस्तिसमानऋषभयुक्तंगोसहस्रंतेगुरुदक्षिणांददामीतिद्वयोरर्थः ५२ । ५३ षड्वारमिति । एवंगुरुदक्षिणावाक्यंषड्वारमुक्तोयाज्ञवल्क्योमुनिःषड्वारमेवैवमाह । एवंकथं यावच्छिष्यःकृतार्थोनभवतितावद्गुरुदक्षिणानग्राह्येतिपितुरुपदेशमनुस्मृत्यनगृह्णामीति एतेनोपासनामात्रज्ञानेनकृतार्थतानभवतीतिसूचितम् ५४ एवमात्मज्ञानेचित्तैकाग्र्यद्वाराउपकारकोपासनपरस्यप्रथमब्राह्मणस्यार्थंप्रदर्श्यद्वितीय-

**प्रत्येकमाश्रयंतद्वत्सर्वाश्रयमथापरम् ॥ षट्स्वूपनिषदःप्राहयाज्ञवल्क्यःफलैःसमम् ५१ एकैकस्मिन्नभिहितेचतुष्पादिमहात्मना ॥ ब्रह्मण्युवाचराजामुंदातुंसगुरुदक्षिणाम् ५२ यस्मिन्हस्तिसमानोस्तिवृषभस्तत्सहस्रकम् ॥ तरुणीनांगवांतेहंदास्यामिगुरुदक्षिणाम् ५३ षड्वारमेवमुक्तोपिप्रत्युवाचमुनीश्वरः ॥ षड्वारंनाकृतार्थस्यशिष्यस्यगुरुदक्षिणा ॥ स्वीकार्याभवतीत्येवंपितामामुपदिष्टवान् ५४ एवंतंलोभरहितंयाज्ञवल्क्यंमुनीश्वरम् ॥ निरीक्ष्यानुग्रहकरंस्वस्यराजातिविस्मितः ५५ सिंहासनंपरित्यज्यभूमौस्थित्वाकृतांजलिः ॥ दंडवत्प्रणतोभूत्वामुनिमेतदभाषत ५६ याज्ञवल्क्यमुनेनित्यंनमस्तेस्तुमहामुने ॥ मामंधसदृशंशाधिमार्गमाद्यवृत्तिवर्जितम् ॥ पृच्छंतमज्ञंपतितंघोरेसंसारकानने ५७ कंदर्पसर्पसंवीतेनारीगर्तसमाकुले ॥ अनेककरणग्रामवृक्षकोटिनिषेविते ५८ अहंकारमहासिंहनादपूर्णदिगंतरे ॥ क्रोधास्त्रवह्निनिर्दग्धसर्वशाद्वलपादपे ५९ मनःकौलेयकंहस्तेगृहीत्वामृत्युलुब्धकः ॥ कालेधनुषिसंधायजराव्याध्यादिकान्शरान् ॥ मुक्त्वात्रबाधतेसर्वान्जंतून्काननवासिनः ६० यावत्प्राणहरोबाणोममनायातितावता ॥ शाधिशीघ्रंविलंबस्यनायंकालोमुनीश्वर ६१ एवमुक्तेकृपाविष्टोदयालुःसनिसर्गतः ॥ याज्ञवल्क्यस्तमाहेदंराजानमधिकारिणम् ६२**

स्यविस्तरेणार्थमुपबृंहयंस्तत्रप्रथमकंडिकायाअधिकारिलक्षणपरायाअर्थंनिरूपयति एवंतमितिपंचत्रिंशच्छ्लोकैः । एवंनिर्लोभंस्वस्यानुग्रहकरंचमुनिंवीक्ष्यातिचकितोराजायस्यज्ञानेनकृतार्थताभवतितज्जिज्ञासमानःश्रुतौकूर्चपदोक्तसिंहासनंत्यक्त्वादंडवत्प्रणम्यएतद्वक्ष्यमाणंवचआहेतिद्वयोरन्वयः ५५ । ५६ राज्ञोजिज्ञासावाक्यमभिनयति याज्ञवल्क्येतिपञ्चभिः । हेमुनेतुभ्यंनमोस्तु मामंधंसंसारकाननपतितंमार्गंपृच्छंतंचप्रतिमार्गंशाधिशिक्षयेति ५७ संसारस्योग्रकाननसाम्यंविशेषणैःस्फुटयति कंदर्पेतिद्वाभ्यां । कंदर्पएवसर्पस्तेननानारूपेणव्याप्ते नार्यएवगर्तास्तैर्दुर्गमेइंद्रियरूपेवृक्षैर्जुष्टे अहंकारसिंहेनशब्दिते क्रोधएवआग्नेयास्त्रवन्हिस्तेननिर्दग्धाःचित्तभूमिरूपशाद्वलदेशोगुणरूपाःपादपाश्चयत्रएतादृशेसंसारकाननेइतिद्वयोरर्थः ५८ । ५९ तत्रपरमभयप्रदंमृत्युंव्याधत्वेननिरूपयति मनइति । मनोरूपःश्वायस्याधीनएतादृशोमृत्युरूपोव्याधःक्षणलवाद्यात्मककालरूपेधनुषिजराव्याध्यादिरूपान्शरान्संधायमुंचन्जंतून्मृगान्निघ्नन्क्रीडते तस्यचबाणोमदभिमुखंयावन्नायाति तावत्त्वरितंशाधीतिद्वयोरर्थः ६० । ६१ एवमुक्तइति । एवमुक्तःप्रार्थितोनिसर्गतःस्वभावेनदयालुत्वात्कृपाव्याप्तचित्तोराजानमधिकारिणंपरीक्षमाणइदंवक्ष्यमाणंवचआहेति । यद्ययंकुतर्कादिनापृच्छतितदाश्रद्धाभावान्नाधिकारितायदात्वज्ञानात्तदाश्रद्धोत्कर्षादुत्तमइत्याशयोमुनेरितिबोध्यम् ६२

मुनिवाक्यमभिनयति मार्गइतिसप्तभिः । हेराजन्भवतापृष्टोमार्गस्तावद्वक्तुंनशक्यतेयावत्त्वदिष्टंगंतव्यंनज्ञायते तस्मात्त्वमादौस्वाभिमतंगंतव्यंनिरूपयेतिभावः ६३ त्वयाविज्ञातानिकर्माणिउपासनानिचसत्त्वशुद्धिद्वाराकस्यचिद्गंतव्यस्यप्राप्तिसाधनान्येवतैःप्राप्यंजानासिचेद्वदेत्याह राजन्नितिचतुर्भिः । हेराजन्यथादूरंमार्गंगच्छन्जनःस्थलेरथंजलेनावंचगतिसाधनतयाआददीतगृह्णीयात्तथा भवानुपनिषदोरहस्यानिनामानितदुपलक्षितान्युपासनानीतियावत्उपाददातीतिसंबंधः ६४ वागादिषुब्रह्मणांनामानिदर्शयति प्रज्ञेति । इष्टप्राप्तिसाधनत्वेनरथनौभ्यांसदृशस्तुल्यास्तवैताइति ६५ आढ्यइति । एतैःसाधनैराढ्यःसंपन्नःअतएवदैवसंपच्छालित्वाद्देववन्मान्यःअधीतोवेदःपूर्वकांडरूपोयेननानाऋषिभ्योज्ञातानिरहस्यान्युपासनानियेनसतथामहामतिर्महत्त्वेनलोकेप्रसिद्धश्च एतादृशस्त्वमितःशरीरतइत्यस्यार्थइदंशरीरंमुक्त्वाकुत्रयास्यसीतिकथयतच्छ्रुत्वामार्गोमयासम्यग्वक्तव्यइतिद्वयोरर्थः ६३ । ६७ गंतव्याज्ञानेतुअनेकधादिङ्मात्रेणमार्गाभिधानंव्यर्थमितिलौकिकदृष्टांतेनाह एषइति । यथाविदेहादिदेशानांदिङ्मात्रेणोक्तोपिमार्गोऽनुक्तसमोविशेषाज्ञानेनविशेषानभिधानात्तथामास्तुइत्यतोगंतव्यंनिरूपयेतिद्वयोःसंबंधः ६८ । ६९ एवमुक्तोराजास्वस्यदृढांजि

मार्गोत्रभवतापृष्टःशक्योवक्तुंमयानहि ॥ अविज्ञायहिगंतव्यंयत्स्यादभिमतंतव ६३ राजन्जनोयथागच्छन्दूरंमार्गंस्थलेजले ॥ आददीतरथंनावंतथोपनिषदोभवान् ६४ प्रज्ञाप्रियेतथासत्यमनंतानंदकौस्थितिः ॥ रथनौसदृशश्चैताःसर्वोपनिषदस्तव ६५ आढ्यएतागृहीत्वात्वंलोकेसुरवदर्चितः ॥ अधीतवेदोविज्ञातरहस्योधीधनोमहान् ६६ इतःशरीरतोमुक्त्वाशरीरंकुत्रयास्यसि ॥ तत्त्वंकथयगंतव्यंपथ्यान्मार्गंवदाम्यहम् ६७ एषपंथाविदेहानांकोशलानामयंतथा ॥ आनर्तानामयंतद्वत्त्रिगर्तानामयंपरः ६८ इत्यादिकथनेयद्वद्दिङ्मात्रमिहकथ्यते ॥ गंतव्याज्ञानतस्तस्मादुक्तंनोक्तसमंतथा ॥ तथामाभवताद्राजंस्ततोगंतव्यमीरय ६९ इत्युक्तेयाज्ञवल्क्येनराजातंप्राहधर्मवित् ॥ नाहंजानामिगंतव्यंस्वात्मनापिपरेणच ७० भगवंस्तत्रयद्वत्सद्बंधोवैदेशिकोवने ॥ दिङ्मूढःक्षुत्पिपासार्तोवृद्धोविस्मृतिमागतः ७१ पृच्छन्नशेषगंतव्यमार्गज्ञानविवर्जितः ॥ दयापरंहिदेशानांमर्मज्ञंकंचनातुरः ॥ भवेत्तादृगहंब्रह्मन्पृच्छामित्वांमुनीश्वर ७२ आगतोस्मिकुतोब्रह्मन्जानाम्येतदपीहन ॥ अनुभूतंस्वयंकेनजानेनागतमात्मनः ७३ गंतव्यमपिकोहंस्यांजानेनेदमपिप्रभो ॥ सुखदुःखेतथाहेतूंस्तयोरप्याप्नुवन्सदा ७४ दुःखमेकंसदाजानेबाल्यादारभ्यसर्वतः ॥ कस्यतत्केनवाकीदृगजानामीत्यपिनैवभो ७५

ज्ञासांश्रद्धांचावेदयन्नाह इत्युक्तेइतिद्वादशभिः । मयावापरेणवाधिकारिणायद्गंतव्यंसाधनैस्तत्त्वंतदहंनजानामीति ७० आत्मतत्त्वेस्वस्यात्यंतमज्ञतांदर्शयितुंदृष्टांतमाह भगवन्निति । हेभगवन्नत्रसर्पादिव्याप्तत्वेनप्रसिद्धेवनेएतादृशोयोयथाभवेत्तादृगहंपृच्छामीतिद्वितीयेनसंबंधः । वैदेशिकःविकृष्टदेशेवर्त्तमानः दिङ्मूढःदिग्भ्रांतः दयापरंदेशवृत्तज्ञंपृच्छन् आतुरश्चेत्यंधविशेषणानि ७१ । ७२ राजास्वाविद्यामेवाभिनयति आगतोस्मीत्यादिना । कुतःसिन्धुतुल्याल्लवणखिल्यतुल्यश्चागतोस्मीत्येतन्नजानामीतिसुषुप्त्याद्यवस्थागतात्मस्वरूपाबोधोदर्शितः तथायत्स्वयमनुभूतमतीतमितियावत् आगतमुदितंवर्तमानं गंतव्यंभविष्यदितिप्रसिद्धं एतत्त्रयंआत्मनःकेनधर्मेणवास्वरूपेणवाजानेइत्येतदपिनजानामीतिजाग्रदादिगतात्मस्वरूपाबोधोदर्शितः अहंकीदृक्कुतःकिंस्वरूपःस्यांभवेयमितिशुद्धात्मस्वरूपाबोधोदर्शितः तथासुखदुःखेआप्नुवन्भुंजानोपितयोःसुखदुःखयोर्हेतूनुत्पत्तिज्ञप्तिप्रयोजकान्नजानेइतिसंसारनिमित्तानामबोधोदर्शितइतिद्वयोरर्थः ७३ । ७४ तर्हित्वंकिंजानासीतिचेद्दुःखमेवविवेकिदृष्ट्यासर्वसंसारस्यदुःखरूपत्वादित्याह दुःखमेवेति । अहंसर्वावस्थासुदुःखमेवजानामिपरंतुदुःखस्यभोक्तृत्वेनसंबंधिनंहेतुंविशेषंचनजानामीत्यर्थः ७५

172

दुःखमधोवर्गतीदृष्टांतमाह महाग्नाविति द्वाभ्यां स्पष्टम् ७६ । ७७ दार्ष्टांतिकेयोजयति एवमेवेति । फलितमाहाहमेतादृशइति ७८ किंचयद्यहंजानीयांतदातन्मार्गमपिजानीयामेव दृश्यंतेहिइहगंतव्यमार्गपथिकेभ्योजानंतः तथाचमार्गप्रश्नभंग्याप्ययागंतव्यमेवभवतेपृष्ठमित्याह अपीति । ज्ञातुंसुशकःशक्यइतिसंबंधः ७९ तिष्ठतुमुक्तोपसृप्यस्यपरमगंतव्यस्यदुर्ज्ञेयताकर्मफलरूपंगंतव्यमपिलोकेदुर्ज्ञेयमित्याह शरीरादिति । शरीरान्निर्गतःसन्कःकिंस्वरूपःकथंकेनप्रकारेणकंफलंगमिष्यतितदेतदतींद्रियंलोकेकोवेदेति ८० एवंविधाऽज्ञाननिवर्तनायैवममभवंतंमहात्मानंप्रतिप्रश्नइत्याह अत एवेति ८१ जनकेनेति । एवमुक्तोमुनीराज्ञउत्तमाधिकारितामालक्ष्यतस्यतत्स्वप्रदर्शनभयनिवर्तकंप्रतिजज्ञावित्यर्थः ८२ मुनिनापूर्वंक्वगमिष्यसीतियत्पृष्टंतदाशयंमुनिमुखेनाह गंतव्यमिति । कारणंप्रयोजकम् ८३ लोकेइति । अजानत्कर्तृकोजानत्कर्तृकश्चेतिद्विविधःप्रश्नस्तत्राद्योयथाभवत्कृतइतिपूर्वार्धार्थः सम्यग्ज्ञानिकर्तृकोऽसम्यग्ज्ञानिकर्तृकश्चेतिजानत्कर्तृकोद्विविधस्तत्राद्यःसंवादार्थंस्व





महाग्नौपतितोयद्वत्पतंगोमृतिवर्जितः ॥ वायुनाभ्राम्यमाणःसन्दुःखमेवावगच्छति ७६ नात्मानंनपरंवापिनदुःखस्यापिकारणम् ॥ प्रकारंवापिजानातिदुःखमूर्तिरिवस्थितः ७७ एवमेवात्रसंसारेनाहंजानामिकिंचन ॥ क्लेशमेकंविजानामिप्रकाररहितंसदा ॥ अहमेतादृशोमूढोगंतव्यंकेनवेद्मिभो ७८ अपिगंतव्यविज्ञानेमार्गोपिसुशकोभवेत् ॥ ज्ञातंयथैवपांथानांपथिकेभ्यःसमंततः ७९ शरीरान्निर्गतःकोवाकथंवात्रगमिष्यति ॥ किंवातदत्रकोवेदपुमानर्थमतींद्रियम् ८० अतएवतुपृच्छामिसूर्यशिष्यंमहाधियम् ॥ भगवंतंमहात्मानमिहामुत्रार्थकोविदम् ८१ जनकेनैवमुक्तस्तंयाज्ञवल्क्योप्युवाचह ॥ अहंवक्ष्याभिगंतव्यंतवमाभूद्भयंनृप ८२ गंतव्यंयन्मयापृष्टंतत्रवक्ष्यामिकारणम् ॥ भवतेधर्मयुक्तायवदान्यायमहीभुजे ८३ लोकेस्याद्द्विविधःप्रश्नोऽजानतोजानतोपिवा ॥ गंतव्यस्ययदाज्ञानात्तदापिद्विविधोभवेत् ॥ संवादार्थंभवेत्कापिसंदेहाद्वाविपर्ययात् ८४ संवादार्थंयदाप्रश्नस्तदाप्येषद्विधाभवेत् ॥ आत्मनोबुद्धिवैशद्यज्ञानाद्यर्थंपरस्यवा ८५ पक्षेष्वेतेषुधीमद्भिर्गंतव्यस्यविनिश्चये ॥ वक्तव्योत्रभवेन्मार्गोनान्यथाराजसत्तम ८६ अज्ञानेनतुगंतव्यंमार्गंब्रूयान्नराधिप ॥ दयालुर्बुद्धिमान्नैवमार्गमात्रंकथंचन ॥ माकृथान्नृपसंदेहंसावधानमनाःशृणु ८७ इत्युक्तेप्राहविप्रेंद्रंराजासंहृष्टमानसः ॥ ब्रवीतुभगवानित्थंसावधानःस्वयंस्थितः ८८ इत्युक्तेयाज्ञवल्क्यस्तंज्ञानमादित्यकीर्तितम् ॥ अब्रवीदात्मविद्यार्थंनानोपायमितिप्रभुः ८९

ज्ञानपरज्ञानयोःसमानविषयत्वनिश्चयार्थंभवेत् द्वितीयस्तुसंशयेनविपर्ययेणवाकृतस्तन्निवृत्तिफलकइत्यर्थः ८४ संवादार्थमिति । संवादार्थःप्रश्नोपिस्वबुद्धेःपरबुद्धेर्वावैमल्यज्ञानरूपप्रयोजनभेदेनद्विधाभवेदित्यर्थः ८५ पक्षेष्विति । एतेषुजानत्कर्तृकप्रश्नभेदरूपेषुपक्षेषुसत्सुप्रष्टृसंबंधिगंतव्यस्यनिश्चयेसत्येवधीमद्भिर्मार्गोवक्तव्योभवतिनान्यथेति ८६ अज्ञानेनेति । यदातुअज्ञानेनपृच्छतितदादयालुर्बुद्धिमांस्तस्मैगंतव्यंतदीयंमार्गंचब्रूयात् तत्रापिमार्गमात्रंकथंचननब्रूयात्किंतुतद्विशेषमपिब्रूयादित्यर्थः एवंस्थितेहेराजंस्तुभ्यमज्ञानेनपृच्छतेऽहंगंतव्यंतावत्कथयामितत्रचेतसोवधानमेवमार्गइत्यतः संदेहंपरित्यज्यसावधानमनाःसन्शृण्विति ८७ इत्युक्तेप्राहेति । इतिमुनिनोक्तेसतिराजाइत्थमाह इत्थंकथं भगवान्ब्रवीतुअहंसावधानःस्थितोस्मीति ८८ इत्युक्तेइति । इतिराज्ञोक्तेसतिमुनिस्तंराजानंप्रतिइतिवक्ष्यमाणप्रकारेणआदित्यकीर्तितंज्ञानमब्रवीत् कीदृशं आत्मविद्यार्थंआत्मसाक्षात्कारहेतुंनानोपायंनानारूपैरंतरंगबहिरंगसाधनैर्लभ्यम् ८९

अथविश्वतैजसप्राज्ञानुवादेनतुरीयप्रदर्शनपरस्यइन्धइत्यादिकण्डिकात्रयस्यार्थमेकोनचत्वारिंशदधिकशतेनोपबृंहयंस्तत्रविश्वस्यवैश्वानरात्मनःस्वरूपप्रदर्शनपरस्यविराडित्यंतभागस्यार्थंदर्शयति इंद्रियैरित्येकाविंशतिश्लोकैः । यःकोपिलौकिकप्रमाणाविषयोपिदेहभाक्अविद्ययादेहतादात्म्याभिमन्ताएषसर्वापरोक्षआत्माइंद्रियैर्विषयान्यदागृह्णातितदाजागरणावस्थोभवतितंदेहेद्विधावक्ष्यमाणेन्द्राणीरूपाभ्यामवस्थितंजानीहीत्यर्थः ९० तत्रेंद्रतांव्युत्पादयति माययेति । माययासृष्टमिदंसर्वंदृष्टवानितिव्युत्पत्त्याइदंद्रइतिवक्तव्योपिपरोक्षनाम्नाइन्द्रइतियथास्मृतस्तथादीप्तत्वेनइन्धइतिवक्तव्योपिइंद्रइतिपरोक्षनाम्नास्मृतइत्यर्थः ९१ एतत्स्फुटपन्नस्येन्धतांचतुर्भिःप्रपंच्यततःपरैःपंचभिरिंद्रपदस्यपरोक्षनामतामुपपादयति अस्येति । अस्यभासादीप्त्यासर्वंभातिअन्येनतुनप्रकाश्यतेइतिद्वयोरर्थः ९२ । ९३ सर्वेति । यतःसर्वस्यप्रकाशकएवनप्रकाश्यस्तथाप्ययंस्वयंनप्रकाशतेइतिनाकिंतुप्रकाशतएव अतइतराप्रकाश्यत्वेसतिप्रकाशमानत्वार्थकेनस्वप्रकाशपदेनविद्वद्भिरुच्यतइत्यर्थः ९४ स्वप्रकाशत्वेचदीप्तत्वलक्षणमिंधत्वंतत्परोक्षरूपमिंद्रत्वंचोपपन्नमित्याह स्वप्रकाशात्मेति । स्वप्रकाशात्मस्वरूपभूतयादीप्त्यायुतत्वादिंधसंज्ञएषमहेश्वरोदेवैरिंद्रइत्युच्यतइति ९५ स्वप्रकाशात्मन

इंद्रियैर्विषयानेषकोपिगृह्णातिदेहभाक् ॥ यस्तंजागरणावस्थंद्विधादेहेवधारय ९० माययासकलंविश्वंसृष्टवायन्नृतभौतिकम् ॥ दृष्टवानिदमात्मायमिंद्रइन्धश्चसस्मृतः ९१ अस्यभासाविश्वमिदंविभातीहचराचरम् ॥ नायंसूर्येणभातीशोनैवचंद्रेणनैववा ९२ तारकाभिःसमग्राभिःकुतोग्निस्तंप्रकाशयेत् ॥ नेंद्रियैर्ज्ञानसंशब्दैःकुतःकर्मेंद्रियैरयम् ॥ मनसापिनगम्योयंकथंशब्देनगम्यते ९३ सर्वप्रकाशकोदेवोनचायंनप्रकाशते ॥ स्वप्रकाशस्ततःस्वात्माविद्वद्भिःपरिपठ्यते ९४ स्वप्रकाशात्मबोधाख्यदीप्त्याविशदयायुतः ॥ इंद्रइत्युच्यतेदेवैरिंधएषमहेश्वरः ९५ स्वप्रकाशात्मनोनामप्रत्यक्षंहींधशब्दितम् ॥ परोक्षंचेंद्रइत्येतदुच्यतेसात्विकैर्जनैः ९६ सात्विकानपितुर्नाममातुर्नैवगुरोरपि ॥ स्वाम्यादेरपिनैवैतेनामगृह्णंतिकर्हिचित् ९७ प्रत्यक्षंतामसायद्वत्स्त्रीपुंसवपुराश्रिताः ॥ प्रत्यक्षंगृह्यमाणंतत्सहंतेनपरैरपि ९८ परोक्षंहिप्रियंतेषांपित्रादेर्नामसर्वदा ॥ ततोव्यवहरंत्येतेनाम्नाकेनापिताहशा ९९ सात्विकानामिमेमौलिभूतादेवाउदाहृताः ॥ अग्न्यादयस्ततोहीन्धमिंद्रनाम्नावदंतिते १०० सोयंजागरणावस्थइंद्रनाम्नापरःपुमान् ॥ अधिष्ठायेंद्रियगणमास्तेस्मिन्दक्षिणेऽक्षिणि १०१ प्रासादेवैजयंताख्येइंद्रोयद्वद्दिविस्थितः ॥ भोगान्नानाविधान्गृह्णन्देवैःसर्वैःसमर्पितान् १०२ अग्न्यादिभिस्तथादेवैरर्पितान्विविधान्शुभान् ॥ विषयान्बहुधादत्तेप्रासादेदक्षिणेऽक्षिणि १०३

इति । स्वप्रकाशस्यात्मनइन्धइतिप्रत्यक्षंनाम इन्धीदीप्तावितिस्मृतेः इंद्रइतितुपरोक्षमित्यर्थः ९६ मान्यानांपरोक्षनाम्नाव्यवहरणंलोकेपिसात्विकजनेपुप्रसिद्धमित्याह सात्विकाइति । एतेसात्विकाःस्त्रीपुरुषवपुराश्रिताःपुमांसःस्त्रियोवातामसजनवत्पित्रादीनांनामप्रत्यक्षंनगृह्णंतिपरैःप्रत्यक्षंगृह्यमाणंनसहंतेचेतिद्वयोरर्थः ९७ । ९८ परोक्षंहीति । यतस्तेषांसात्विकानांपरोक्षंपित्रादीनांनामप्रियमतएवएतेसात्विकास्ताहशामुख्यनामसदृशेनकेनचिन्नाम्नापित्रादीन्व्यवहरंतीति ९९ यदालौकिकसात्विकानामप्ययंस्वभावस्तदापरमसात्विकानांब्रह्मादिदेवानांकिमुवाच्यइत्युक्ताफलितमाह सात्विकानामिति स्पष्टम् १०० अस्यदेवस्यविशेषाभिव्यक्तिस्थानंदक्षिणंनेत्रंबोध्यमित्याह सोयमिति । अधिष्ठायवशेकृत्वा १०१ प्रसिद्धइंद्रोयथावैजयंताख्येमंदिरेतिष्ठतिसर्वदेवाधिपतिःसंस्तथादक्षनेत्रइत्याह प्रासादेइतिद्वाभ्यां । अग्न्यादिभिर्वागादिदेवैः आदत्तेगृह्णाति दक्षिणाक्षिरूपेप्रासादेस्थितइतिद्वयोरर्थः १०२ । १०३

दक्षिणेऽक्षणिप्रकाशाधिक्यंवामेतुकिंचित्प्रकाशाल्पत्वमित्यनुभवसिद्धंतदादायवामेऽक्षणिविश्वस्यरूपंइंद्राणीत्वेनवैश्वानरोपासकैर्ध्येयमित्याह यद्वदिति । यथासभास्थस्येंद्रस्यभोग्याइंद्राणीइंद्रसमेश्वर्यैशालिनीसन्निहितेकुत्रचित्प्रासादेतिष्ठेदेवमस्यविश्वस्यात्मनइंद्रस्यदक्षाक्षिस्थस्यजायाइंद्राणीवामेतिष्ठतीतिद्वयोःसंबंधः १०४ । १०५ तस्याविराट्संज्ञांद्वेधाउपपादयति विविधमितिद्वाभ्याम् । साइन्द्रवल्लभाइन्द्राणीजाग्रतिस्थूलभोगभुजाऽनेनभर्त्राइन्द्रेणसहयतोविविधंराजतेततोविराडितिपदेनश्रुतिविद्भिरुक्ता १०६ अथवादशाक्षरच्छंदोवाचकंविराट्पदंदशेंद्रियतादात्म्येनदशधाभूतायामस्यांवर्ततेइत्याशयेनाह दशेंद्रियाणामिति । यथापुमानिंद्रोबाह्यदशेंद्रियाधिष्ठातातथासाइंद्राण्यपिभवतिततोवाविराट्पदेनोक्तेति । भाष्यकारैस्तुअन्नंविराडितिश्रुत्यनुरोधेनभोग्यभोक्तृत्वेनजाग्रतिद्विधावस्थितस्यात्मनोयतइयंभोग्यात्मकंरूपंततोविराडित्युक्ताभोग्यत्वेनान्नत्वादितिदर्शितं १०७ एवंजाग्रतिद्विधावस्थितोयंसर्वेषामात्मासमष्टिरूपेणैकोभ्रांतदृष्ट्याव्यष्टिरूपेणभिन्नोभासतेइत्याह एवमिति । सर्वेषांचक्षुष्मतांचक्षुपाइन्द्रियेणसहतद्गोलकयोरितियावत् इंद्राण्यासहेंद्रोवस्थितः । कीदृशः समष्टिरूपेणाभिन्नोविभिन्नवत्व्यष्टिदर्शिनांभासमानः १०८ विश्ववर्णनमुपसंहरति इयमितिद्वाभ्याम् । अधुनाइंद्रियव्यापारकाले १०९ अनेनोपदेशेनचवैश्वानरभावंप्रापितोसीत्याह अग्नीति । भोक्ताअग्निर्भोग्यःसोमइत्यन्यत्रप्रपंचितम् अ

यद्वदिंद्रस्यचेंद्राणीसभास्थस्यपरत्रसा ॥ प्रासादेकुत्रचित्तिष्ठेताद्दग्भोगसमन्विता १०४ एवमस्यात्मनोजायावामेचक्षुषितिष्ठति ॥ सदाजागरणावस्थांगतस्यजगदीशितुः १०५ विविधंराजतेह्येषास्थूलभोगभुजासह ॥ भर्त्रानेनविराडुक्ताविद्वद्भिःसेंद्रवल्लभा १०६ दशेंद्रियाणांबाह्यानामधिष्ठातायथापुमान् ॥ तथासापिततोस्याद्विराडिंद्रस्यवल्लभा १०७ एवमिंद्रःसहेंद्राण्याचक्षुषासमवस्थितः ॥ चक्षुष्मतांहिसर्वेषामभिन्नोपिविभिन्नवत् १०८ इयंजागरणावस्थायस्यांत्वंवर्ततेऽधुना ॥ भोगान्नानाविधान्राजन्भुंजानःपृथिवीपतिः १०९ अग्नीषोमात्मकोलोकव्यवहारस्यकारकः ॥ स्त्रीपुंसवपुरेकस्मिन्द्विधाराजन्मयेरितः ११० तयोःस्त्रीपुंसयोरेषहृदयाकाशईश्वरः ॥ एकांतगृहतुल्यःस्यात्संभोगायेतरेतरम् ॥ सुषुप्तिस्थानमेतद्धिकथितंवेदवादिभिः १११ योयंहृदयपद्मस्यकर्णिकाकारसंस्थितः ॥ राजन्हिलोहितःपिंडस्तयोरन्नमिदंस्फुटम् ११२ सुसूक्ष्माणांहिनाडीनांग्रथितानांपरस्परम् ॥ राजन्हृदयपद्मस्यकेसराणांसमंततः ॥ जालोपमंकिमप्यास्तेतत्स्यात्प्रावरणंतयोः ११३ हृदयान्निर्गतायेयमूर्ध्वानाड्यत्रमूर्धनि ॥ एतयोराजमार्गोयंगमनागमनेहृदि ११४

तस्त्वमपिभोक्तृभोग्यात्मकस्त्रीपुंसरूपेणद्विधाएकैकस्मिन्शरीरेव्यवस्थितःसन्नग्नीषोमात्मकःसर्वव्यवहारनिर्वाहकउक्तोसीत्यर्थः ११० एवंविश्वस्यवैश्वानरात्मकस्यस्वरूपेद्विधाभावावस्थानात्मकेप्रदर्शिते अर्थादितदुक्तंभवति यत्रेंद्रेंद्राण्योःसंभूयावस्थानंतत्तैजसप्राज्ञयोर्हिरण्यगर्भसूत्रात्मेश्वरात्मकयोरूपमिति अथतयोरवांतरविशेषसूचकस्यतयोरेषइत्यादेरवांचःप्राणाइत्यंतस्यग्रंथस्यार्थमाह तयोरितिविंशतिश्लोकैः । तयोःस्त्रीपुंसयोरिंद्रेंद्राण्योरितरेतरंसंभोगायसंगतयेएकांतगृहसमोहृदयाकाशउक्तः । कीदृशोहृदयाकाशः दहरविद्यादौईश्वरत्वेनोक्तःसुषुप्तिस्थानतयाचाजातशत्रूपाख्यानेवर्णितइत्यर्थः । संस्तूयतेसंगम्यतेऽत्रेतिसंस्तावइतिश्रुतिपदार्थः १११ तयोरिन्द्रेन्द्राण्योरन्नत्वेनहृदयकमलस्यकर्णिकानिभोरक्तवर्णोमांसपिंडोध्येयइत्याह योयमिति । अन्नत्वाभिप्रायंस्वयमेववक्ष्यति ११२ तयोर्वस्त्रत्वेनध्येयमाह सुसूक्ष्माणामिति । हेराजन्हृदयपद्मस्यकेसरसमानांनाडीनांपरिणामभूतंजालसमंयत्किंचिदस्तितत्तयोरिंद्रेंद्राण्योर्वस्त्रत्वेनध्येयमित्यर्थः ११३ इंद्रेंद्राण्योःशयनस्थानाद्धृद्देशाद्गमनागमनमार्गत्वेनसुषुम्नानाडीध्येयाइत्याह हृदयादिति । याइयंसुषुम्नानाडीअत्रशरीरेहृदयकमलान्मूर्द्धनिगत्वाततोप्यूर्ध्वाब्रह्मलोकपर्यन्तंनिर्गताप्रसिद्धा ‘ शतंचैकाचहृदयस्यनाड्यस्तासांमूर्द्धानमभिनिःसृतैका ’ इत्यादिश्रुतेः तद्रूपोनयोराजमार्गःश्रुतौसंचरणीपदेनोक्तोबोध्यः । कीदृशः हृद्देशेवर्तमानोगमनागमनप्रयोजकश्चेत्यर्थः ११४

सुषुम्नायागमनमार्गतांस्फुटयति अनयेति । अनयासुषुम्नयामार्गभूतयादेहाद्ब्रह्मरंध्रेनिर्गतोयदाभवतितदार्चिषमर्चिरायभिमानिदेवतोपलक्षितंदेवयानंब्रह्मलोकपंथानंयातिप्राप्नोति । यदातुशरीरांतरे
वगच्छन्भवतितदासुषुम्नावयवभूताभिरन्याभिर्नाडीभिर्मार्गभूताभिर्नयनादिदेशान्यातीति ११५ इतरासांहितासंज्ञानांनाडीनांसुषुम्नायावृक्षोपमायाःशाखोपमत्वंसूक्ष्मतांचसदृष्टांतमाह अन्याश्चेति ।
यस्याःसुषुम्नायाः ११६ सुषुम्नायाःसशाखायाआगमनमार्गतांस्फुटयन्सुप्तिस्वप्नयोर्देशत्र्यवस्थामाह सुषुम्नयेति । सुषुम्नयाताभिस्तच्छाखाभूताभिरितरनाडीभिर्वाअंतरागच्छन्भवतितदाहृदयं
चेत्प्राप्नोतितदासुप्तिसंस्थानंसुप्त्यवस्थांप्राप्नोतीतिशेषः । गमनागमनयोस्तासुनाडीष्वेवमार्गभूतासुतिष्ठन्स्वप्नंप्राप्नोति । अयमिंद्राणीमिलितइंद्रइत्यर्थः ११७ सुषुप्ताविति । येनहेतुना
नाडीभिःकेशस्यसहस्रतमांशसूक्ष्माभिर्मार्गभूताभिःसुषुप्त्यर्थेहृदयाकाशेयातितेनहेतुनासूक्ष्मतराहारःसुप्तिकालेप्रोक्तः । यतःस्वप्नदर्शिनस्तैजसस्यभोग्यंबुद्धिरूपंशरीरंनाड्यंतर्गतसूक्ष्मान्नरसोपचितं
भवति सुषुप्तस्तुततोपिपरतःस्थितइतिभावः । प्रविविक्तपदार्थमाह सूक्ष्ममिति । श्रुतौएतत्पदमन्नपरमाम्नवत्पदंगच्छादित्यर्थकमिति ११८ एतत्स्फुटयन्श्रुतिगतेवपदार्थमाह स्वप्नेति । तयो
र्नाडीमध्यहृदयमध्यदेशतयावर्णितयोःस्वप्नसुषुप्त्योर्मध्येस्वप्नदर्शिनःस्वप्नस्यद्रष्टुस्तैजसात्शरीरात्सूक्ष्मशरीराभिमानिनःपरतःस्थितोयःसुप्तःप्राज्ञःसतैजसभोगापेक्षयासूक्ष्मतरआहारोयस्यएतादृशो
वर्तते यतोभोक्तापिस्पष्टभोगहीनोपिसंस्कारभावापन्नबुद्ध्यानियंत्रितत्वेनभोगवद्भ्यांविश्वतैजसाभ्यांसदृशः अवस्थात्रयंबुद्ध्युपाधिकस्यैवबुद्धिश्चाहारपरिणामसूक्ष्मतातारतम्येनावस्थात्रयेत्रि

अनयानिर्गतोदेहाद्ब्रह्मयात्यर्चिषंनरः ॥ अंतर्गच्छन्विनिर्यातिनाडीभिर्नयनादिकान् ११५ अन्याश्चसंतिशतशोयस्याःशाखोपमाःशिराः ॥ केशःसहस्र
धाभिन्नोभवेचेत्सभवेदिह ॥ उपमानंहिनाडीनांसूक्ष्मतासुनराधिप ११६ सुषुम्नयाथवाताभिर्यातिगच्छन्नयंसदा ॥ हृदयंसुप्तिसंस्थानंतासुस्वप्नमथापिवा ११७
सुषुप्तौहृदयाकाशेनाडीभिर्येनयात्ययम् ॥ प्रविविक्ततराहारस्तेनसुप्तःप्रकीर्तितः ॥ प्रविविक्तंहिसूक्ष्मंस्याद्भोग्यंतत्स्वप्नदर्शिनः ११८ स्वप्नसुप्त्योस्तयोर्मध्ये
शारीरात्स्वप्नदर्शिनः ॥ सुप्तःसूक्ष्मतराहारोह्यभोक्ताभोगवानिव ११९ स्थूलंभुंक्तेतदादेवोदक्षिणेक्षण्यवस्थितः ॥ नाड्यादिभिर्गतश्चित्तेसूक्ष्मभुक्परिकीर्तितः
१२० हृदयाकाशतादात्म्यंप्राप्तइंद्रोऽत्रसप्रियः ॥ आनंदात्माभवेत्सुप्तौदेवआनंदभुक्तथा १२१ अस्यान्नंकर्णिकाकारःपिंडोलोहितरूपधृक् ॥ कथितस्त
स्यभोग्यत्वाभिप्रायंवचनंनहि १२२

रूपाभवतीतिभावः । अत्रभाष्यकारैःप्रविविक्ताहारत्वंतैजसस्यैवविश्वापेक्षयायदुक्तंतत्प्राज्ञस्यसमष्टितादात्म्येनासंसारितांस्पष्टयितुम् एतैस्तुप्राज्ञस्यव्यष्टिरूपेणसंसारितांद्योतयितुमेवंव्याख्या
तमितिबोध्यम् ११९ उक्तमर्थंप्रपंचयति स्थूलमितिपद्भिः । जाग्रतिदक्षिणेक्षणिस्थितःसन्स्थूलंविषयजातंबुद्धिरूपंचभुंक्तेततोनाडीभिःपुरीततावचित्तेचित्तस्थानेहृदयकमलकोणेपुस्थि
तस्तैजसःसूक्ष्मभुक्पूर्ववदुक्तः १२० हृदयेति । यदातुहृदयकमलमध्यच्छिद्रंदहरादिपदैःप्रसिद्धंप्राप्नोतिसप्रियःइंद्राणीयुक्तइंद्रस्तदासत्पदवाच्येनभूम्नातादात्म्यलाभात्स्वयंप्रकाशानन्दरूपोभ
वतीत्यभोक्तृत्वंतस्योपपन्नम् । नहिस्वयंप्रकाशानंदस्यज्ञानविषयतारूपभोग्यतासंभवतीति साक्षिरूपेणदुःखाभावावगाहनमात्रेणत्वानंदभुगित्युच्यतेउपचारादित्यर्थः १२१ ननुसुप्तोयद्य
भोक्तैवात्मातर्हितस्यान्नत्वेनहृदयमांसपिंडःकथमुक्तइतिशंकांवारयति अस्येतिद्वाभ्याम् । अस्यइंद्राण्याएकीभूतस्यइंद्रस्यान्नत्वेनहृदयकमलकर्णिकाभूतोमांसपिंडोयउक्तस्तद्वचनंतस्यहृदयपिंडस्यइं
द्रेणभोग्यत्वाभिप्रायकंनभवतिकिंतुतद्वाक्यंरूपकरूपेणरूपकालंकारघटिताकारेणतथाप्रवृत्तंयथाबाह्यैर्बहिर्मुखैर्वोधैरत्यंतचंचलस्यास्यमनसःस्थैर्यंभवेत् तथाचचित्तैकाग्र्यफलकध्यानमात्रविधानपरं
तद्वाक्यमितिद्वयोरर्थः १२२

१२३ मुख्योभोगस्तुसुप्तेनसंभवतीत्याह सुषुप्तइति । सुषुप्तोयतोविशेषविज्ञानहीनस्ततःसुखदुःखविषयीकरणात्मकभोगशालीकथंस्यात् तस्मादानंदभुक्त्वंयथौपचारिकंतथासूक्ष्मतराहारत्वम पि नहिसंस्कारभावापन्नांबुद्धिमयंविशेषतोऽनुभवतीत्यर्थः १२४ सुप्तौविशेषज्ञानाभावंकैमुत्येनाह सुप्ताविति । यतःसुप्तौआत्मानमपिबुद्धिवृत्तिरूपैर्विशेषविज्ञानैर्नविषयीकरोतिततःसर्वं विशेषविज्ञानानांविलयःस्पष्टइतिफलितमाह आनंदात्मेति १२५ सुषुप्तौव्यष्टिसमष्ट्युपाधिकयोःप्राज्ञेश्वरयोरभेदस्पष्टीकरणपरस्यतस्यप्राचीत्यादिवाक्यस्यार्थमाह तस्येतिपंचभिः । तस्यवर्णि तस्यमहेशितुरिंद्रस्यजाग्रतिस्त्रीपुंसभावेनस्थितस्यहृदयाकाशवासकालेरक्तपिंडोन्नंशिराजालंवसनंचयस्यैतादृशस्ययेसुषुप्तेः पूर्वमविच्छेदेनेश्वराभेदप्रयोजकाःप्राणाःशरीरेपूर्वादिदशदिगवच्छेदेनदशधा वस्थितासंस्तेऽधुनाकारणेलयेनकारणात्मनासर्वपदार्थविशिष्टप्राच्यादिदिग्भावमापन्नाइतिप्राणानुद्दिश्यअधिदेवेश्वराभेदोविधीयतइति । यद्वा दिशःसर्वपदार्थविशिष्टाउद्दिश्यप्राणत्वंविधीयते । प्राणशब्दोऽत्रसुषुप्तौशिष्यमाणेऽज्ञानात्मनिवर्तते सुषुप्तदृष्ट्याप्राणविलयेपिपरदृष्ट्याप्राणसत्वात्प्राणशब्दप्रवृत्तिरित्युक्तमिति । अत्रदृष्टांतः सर्वदिशामाधिपत्येनसर्वदिशःप्रियत्वेनप्राणतयाम न्यमानःस्वर्गस्थइंद्रइतिद्वयोरर्थः १२६ । १२७ दृष्टांताद्विशेषंस्वयमेवदर्शयति अत्रेति । अत्रदार्ष्टांतिकेऽयंविशेषः । अयंकः वर्णितेंद्रस्यसर्वजगत्कारणत्वेनसर्वैर्दिग्भिराधिदैविकपदार्थैः

किंतुरूपकरूपेणस्थैर्यमस्मिन्यथाभवेत् ॥ अत्यंतचंचलस्यास्यमनसोबाह्यबोधतः १२३ सुषुप्तःसर्वविज्ञानरहितोभोगवान्कथम् ॥ दुःखस्योपरमाद्यद्वद्वेदानं दभुक्पुमान् ॥ तद्वत्सूक्ष्मतराहारःसुषुप्तःकथितोद्विजैः १२४ सुप्तौविशेषविषयविज्ञानविलयोभवेत् ॥ आत्मानमप्ययंनैवविजानातिविमोहितः ॥ आनंदात्मा ततःसुप्तावभोक्ताभोक्तृवत्स्थितः १२५ तस्यस्त्रीपुंसरूपस्यहृदयाकाशवासिनः ॥ रक्तपिंडशिराजालद्वयान्नवसनस्यतु १२६ प्राच्याद्याःकथिताःसर्वाःप्राणाइ तिदिशोदश ॥ यथेंद्रस्यदिविष्ठस्यतथेंद्रस्यमहेशितुः १२७ अत्रायंतुविशेषःस्याद्दिग्भिःप्राणैरभिन्नता ॥ इंद्रस्यसर्वजगतःकारणस्येतरस्यन १२८ चतुर्वि धानांभूतानांपंचानांमहतामपि ॥ भौतिकानांचसर्वेषांसदासदसदात्मनाम् १२९ दिक्कालसहितानांस्याद्धृदाकाशेस्थितःपुमान् ॥ कारणंयद्वदेतत्स्यान्नभोऽभ्रा देर्विलक्षणम् १३० सएषभवताराजन्गंतव्यःसर्वदापुमान् ॥ इंधोयोहृदयाकाशेस्थितोदिक्प्राणमूर्तिमान् १३१ अयमेवभवान्राजन्नहमन्येचजंतवः ॥ देहादेर्भे दतोभिन्नोनभोयद्वद्घटादिना १३२

प्राणैराध्यात्मिकपदार्थैश्चाभिन्नतैवभवति कारणस्यसर्वविकारात्मतायाःकारणरूपेणैक्यस्यचलोकेपिप्रसिद्धत्वादितिभावः । इतरस्यदिविष्ठस्यतुतथान तस्यहिअभिमानमात्ररूपएवदिग्भिरभे दइत्यर्थः १२८ सुषुप्तौशिष्यमाणमायोपाधिकस्यसर्वजगत्कारणतासर्ववेदांतेषुप्रसिद्धेत्याह चतुर्विधानामितिद्वाभ्यां । जरायुजादिभेदेनचतुर्विधानांभूतानांप्राणिशरीराणांतथामहतांभूता नामाकाशादीनांतद्विकाराणांस्थूलसूक्ष्मात्मकानांचसदिक्कालानामेतेषांसर्वेषांकारणंभवतियएषसुप्तौहृदयाकाशेवर्णितःपुरुषः । ननुसच्चिदानंदात्मकःकथमनृतजडदुःखात्मकस्यजगतःकारणमि त्याशंकांदृष्टांतेनपरिहरति यद्वदिति । यथानिरवयवत्वादिनामेघविद्युदादिभ्योविलक्षणमपिनभोमेघादीनांकारणंतथायमात्मापिप्रपंचस्यविवर्तस्याभिन्ननिमित्तोपादानताशालीतिद्वयोरर्थः १२९ १३० अथतुरीयनिरूपणपरस्यसएषनेतीत्यादिश्रुतिग्रंथस्यार्थमुत्तरग्रंथेनाचक्षाणस्तत्रसएषइत्यनयोःपदयोरर्थमाह सएषभवतेतित्रिभिः । यस्त्वयागंतव्यत्वेनपृष्टःसएषएवयःपुमानिंधत्वेन जाग्रतिवर्णितोहृदाकाशेतैजसत्वद्वारादिगादिसर्वपदार्थात्मककारणरूपश्चवर्णितइत्यर्थः १३१ अयमेवतवसर्वेषांचपरमार्थतआत्मेत्याह अयमेवेति । उपाधिमात्रेणाकाशवद्भिन्नोवस्तुतस्त्वे कइत्युत्तरार्द्धार्थः १३२

अस्यात्मत्वेनातिसन्निहितत्वेनज्ञानमात्रमेवप्राप्त्युपायत्वेनराजमार्गभूतंनग्रामादाविवक्रियारूपागतिरन्येत्याह राजन्निति १३३ नेतिनेतीत्यंशस्यार्थमाह अवाङ्मनसेतित्रिभिः । यतोऽवाङ्मनसगम्यत्वेनसर्वैःसाक्षाद्वक्तुमशक्योऽयंतेनमयाइदंक्उत्तरश्लोकद्वयोक्तप्रकारेणकथितमुपदिष्टंभवतीतिशेषः १३४ नैवमिति । अत्रमत्कर्तृकोपदेशकालेएवंविधिमुखेनवनविज्ञेयःकिंत्वतद्व्यावृत्त्यावोद्धव्योयतोयंभावरूपोभावत्वेनलोकेप्रसिद्धायेपदार्थास्तद्रूपोनभवति तथाभावस्यप्रतिषेधात्मकाभावरूपोपिनभवति यतोभावत्वाऽभावत्वाभ्यांवर्जितइति १३५ अत्रदृष्टांतमाह नभइति । यथानभोमेघादिरूपंमेघप्रतिषेधरूपंचनभवत्येवमात्माविश्वविश्वाभावोभयात्मकोनभवतीत्यर्थः १३६ यत्राप्नोतियदादत्तेइत्यादिभगवद्व्यासोक्तिमनुरुद्ध्यसर्वंकल्पितंस्वज्ञानेनादत्तेग्रसतीतिव्युत्पत्तिंप्रदर्शयन्नात्मपदार्थमाह सकारणइति । स्वारोपप्रयोजकाज्ञानेनसहितःसर्पोज्ञातायांरज्ज्वांयथालीयतेतथासहमूलेनविश्वंज्ञातेऽधिष्ठानेलीयतेअतःसर्वाधिष्ठानमात्मेत्युच्यतइतिभावः १३७ अगृह्यपदार्थमुपबृंहयति । अगृह्योयमित्यादिभिःपञ्चाधिकचत्वारिंशताश्लोकैः ग्रहीतुंविषयीकर्तुमयोग्यत्वादेवज्ञानादिकरणैर्नगृह्यतेइति १३८ करणग्राह्यताभावेकरणविशेषात्मकप्रमाणग्राह्य

राजन्नेपसदाज्ञेयोघोरसंसारभीरुणा ॥ अस्यज्ञानंहिविज्ञेयंराजमार्गोत्रगच्छताम् १३३ अवाङ्मनसगम्योयंनशक्योवक्तुमंजसा ॥ मयात्वयानबोद्धुंचतेनेदंकथितंमया १३४ नैवंत्वयात्रविज्ञेयोभावरूपोनचापिसः ॥ भावस्यप्रतिषेधोवाभावाभावविवर्जितः १३५ नभोयथानमेघादिःप्रतिषेधोपिनैवतत् ॥ एवमात्मानविश्वंस्याद्विश्वाभावोपिनैवसः १३६ सकारणोयथासर्पोरज्ज्वामेवप्रलीयते ॥ रज्जुज्ञानात्तथाविश्वंभावाभावंसकारणम् ॥ आत्मबोधादिदंराजन्नात्मन्येवविलीयते १३७ अगृह्योयंसदैवात्माबाह्यैराभ्यंतरैस्तथा ॥ करणैरतएवायंगृह्यतेनकथंचन १३८ प्रमाणानांभवेल्लोकेविषयःकरणैर्हियः ॥ गृह्यतेनत्वगृह्यःस्यात्प्रमाणविषयःक्वचित् १३९ अर्थोयोतींद्रियोनित्यंबोद्धव्योसौमनसाभवेत् ॥ अन्यथातींद्रियोर्थोयमितिज्ञानंकथंभवेत् १४० प्रमाणमप्रमाणंवाप्रमातारमपेक्षते ॥ प्रमाप्रमायाविषयःफलंचाप्यप्रमातथा ॥ अप्रमायाश्चविषयःफलंवातंसमाश्रयेत् १४१ मानामानेतथाभग्नेविषयौतत्फलेअपि ॥ विषयौहियदास्यातांतथाभिन्नेपरेचते ॥ यथाकथंचित्पुरुषावर्णयंतीहसाहसात् १४२

तद्रूपंप्रमेयत्वंदूरापास्तमित्याह प्रमाणानामिति । योभावःकरणैर्गृह्यतेविषयीक्रियतेसएवप्रमाणविषयत्वेनलोकेप्रसिद्धोनतुतद्विपरीतः तथाचागृह्यआत्माकथंप्रमेयःस्यादितिभावः १३९ ननुबाह्यांतरकरणाविषयत्वंनप्रमाणविषयत्वव्यापकमतींद्रियेस्वर्गापूर्वदेवतादौप्रमाणविषयेकरणासंसर्गादर्शनादितिशंकांवारयति अर्थइति । अन्यथातस्यमनोग्राह्यत्वानङ्गीकारेअयमर्थोऽतींद्रियइत्याकारंमनस्यनुभूयमानंज्ञानंकथमुपपद्येतेति । तथाचवक्षासिज्ञानशब्दज्ञानादिसहकृतंमनोऽतींद्रियमपिविषयीकरोतीतिभावः । अत्रमनःपदेनतदुपहितःसाक्षीविवक्षितःसिद्धांतेमनसःकरणत्वाभावादितिबोध्यम् १४० एवमविषयस्वभावस्यात्मनोग्रहणायोग्यतादर्शिता अथात्मभिन्नस्यसर्वस्यविषयस्वभावत्वेनस्वभासकमात्मानंग्रहीतुंनसामर्थ्यमितिदर्शयितुमात्मभिन्नस्यसर्वस्यविषयस्वभावतामाह प्रमाणमित्यादिना । प्रमायाःप्रमाकरणं अप्रमाणमप्रमायाःकरणं एतेद्वेअपितावत्प्रमातारंप्रमातृत्वोपलक्षितंसाक्षिणंस्वसिद्धयेसमाश्रयतः । नकेवलमेतएव किंतुप्रमाअबाधितार्थगोचरावृत्तिस्तस्याविषयोघटादिरूपःफलंचावरणभंगादिरूपंतथाअप्रमाबाधितार्थगोचरावृत्तिस्तद्विषयस्तत्फलंचैतानिसर्वाणिसाक्षिणंस्वसिद्धयेसमाश्रयंतीति १४१ एवंसतियथासुचक्षुषःसन्निवेशोपयःश्वेतमेवअंधानांसदसितुनानारूपंभवतुंनामतथासाक्षिणोभासकस्यापेक्षयामानादीनांसर्वेषांविषयत्वमेवमानत्वादिरवांतरोविशेषस्तुतेषामंधपरम्परयेवसिद्धइत्याह मानेति ।–

–मानामानेप्रमाणंप्रमाणेयदात्रिपयौविषयत्वमात्रपात्रंजाते कीदृशे भग्ने शिलाभेदनप्रवृत्तकुठारवत्साक्षिणंप्रकाशयितुंप्रवृत्तेसतीभग्नेप्रतिहते । फलाश्रयोहिविषयइत्युच्यते तथाचमानामानेएवभ वतोनसाक्षीतिभावः तत्फलेइतिपदमावर्त्तते तथाचतयोर्मानामानयोःफलेप्रमाऽप्रमारूपेतयोःप्रमाऽप्रमयोःफलेचविषयनिष्ठेज्ञाततादिरूपेविषयोजातेतथातयोर्विषयोविपयाश्चेवतदातेमानामानादिरूपे द्वंद्वचतुष्टयेपरस्परंभिन्नेपरेविरुद्धस्वभावेसभवतइतियत्पुरुषवादिनोवर्णयंतितद्वर्णनंतेषांसाहसादेवविषयत्वेनाविशेषंमानादीनामननुसंधायैवप्रवृत्तमित्यर्थः १४२ तत्रमानामानयोर्निरूपणेसा हसंतावत्स्पष्टयति अमानमिति । मानामानयोर्मध्येअमानंवर्णयंतोवादिनःकिममानस्वरूपंप्रमाणेनगृहीत्वावर्णयंतिअप्रमाणेनवा अंत्येभ्रांतत्वंतेषांस्पष्टं । आद्येइदमुच्यते अमानंमानतो मानेनगम्यंग्राह्यंयदास्यात्तदातत्अमानग्राहकंमानंकिंमानंस्यादपितुनस्यात् मिथ्यार्थगोचरामानग्राहकस्यमानत्वंव्याहतमितिभावः । ननुयदेवंयस्यग्राहकंतदेवतत्रमानमितिचेत्तर्हिमिथ्यार्थग्राह कममानमपिमानंस्यादित्याशयेनाह तथात्वइति । तथात्वेग्राहकमात्रस्यमानत्वे १४३ मानामानकथायावृथात्वंप्रकारांतरेणास्पष्टयति अपेक्षयेति । यथारूपापेक्षयामानत्वाभिमतंचक्षु र्मानंतथागंधापेक्षयातदेवामानमिति १४४ अमानग्राहकत्वेमानस्यामानत्वापत्तिंदृष्टांतेनस्फुटयति मानेति । यत्यतोमानगम्यंमानेनगृहीतममानस्वरूपमपिभवतांगीकृतंततएवअमानभूतार्थग्राहक त्वादेवमानस्यापिमानतान मानतागता रज्जुसर्पज्ञानवदित्यर्थः १४५ एवंमानस्यग्रहणंमानेनामानेनवा आद्येस्वेनग्रहणेआत्माश्रयः परेणग्रहणेऽन्योन्याश्रयादिश्च अंत्येमानत्वहानि

**अमानंमानतोगम्यंयदास्यात्तर्हिकिंतदा ॥ भवेन्मानंतथात्वेस्यान्मानामानकथावृथा १४३ अपेक्षयायथामानममानंतद्वदेवहि ॥ अपेक्ष्यैवमानंस्यादमानंवा दिनांबलात् १४४ मानगम्यममानंयन्मानस्यापिनमानता ॥ रज्जुसर्पादिकानांस्याज्ज्ञानेष्वत्रनमानता १४५ एवंमायामपिज्ञेयमुक्तंयत्करणेष्विह ॥ फलेनैवविभेदोस्तिकचिदर्थप्रकाशने ॥ स्वतोऽस्तोभेदकंहित्वाकिंचिन्मानादिकारणम् १४६ विषयेषुनभेदोस्तिभेददृष्टेरभावतः ॥ सत्ताज्ञानेनगंतव्याऽज्ञानं चेदप्रमाभवेत् १४७ नचैवविषयःसिद्धिंयातिकुत्रापिकर्हिचित ॥ अन्यथारज्जुसर्पादेःसिद्धिःस्यादप्रमादतः १४८ मानंहिविषयान्गृह्णन्मानंस्यादथवास्व तः ॥ प्रथमेनैवसिद्धिःस्यात्सदाविषयमानयोः १४९**

रितीममर्थंसिद्धवन्मत्वाउक्तंन्यायंप्रमादावतिदिशति एवमिति । मायांप्रमायांतदुपलक्षितायामप्रमायांचज्ञेयंयोज्यं यत्करणेषुमानामानरूपेषुउक्तमिति । किंप्रमाप्रमयैवग्राह्याअप्रमयावा आ द्येआत्माश्रयादिरंत्येऽप्रमात्वापत्तिरिति यदाकरणानांतज्जन्यवृत्तीनांचप्रमासंज्ञानांभेदस्याप्रामाणिकत्वंसिद्धंतदाप्रमाणाद्युपाधिकएवयस्यभेदस्तस्यफलस्यभेदोऽप्रामाणिकइतिकिमुवक्तव्यमि त्याह फलेइति । अर्थप्रकाशनरूपेफलेआवरणभंगोपलक्षितेस्वतःस्वभावादेवभेदोनास्तिकिंतुमानादिकं अतः अनयाउपाधितयाभेदस्यकारणंप्रयोजकमपेक्ष्यैवभेदःसचोपाधीनामेव भेदसाधका भावोबाधितइत्यर्थः १४६ एवंमानादीनांविषयसाधकानांभेदस्याप्रामाणिकत्वेविषयाणांभेदस्याप्रामाणिकत्वंसुतरांसिद्धमित्याह विषयेष्विति । भेददृष्टेर्भेददृष्टिसामग्र्याअभावेअप्रामाणिकत्वे विषयेषुकथंभेदःसिद्ध्येत् । तदेवस्पष्टयति सत्तेत्यादिना । सत्ताविषयस्यैतिशेषः ज्ञानेनप्रमादिरूपेण अन्यथाअप्रमाविषयस्यापिसिद्धौरज्जुसर्पादीनामपिसिद्धिरप्रमादतःप्रमादाभावकालेपि स्यात्सत्यार्थस्यहिसावधानतादशायांभानंप्रसिद्धमितिद्वयोरर्थः १४७ । १४८ ननुचक्षुरादिमानेनविषयसिद्धिरितिदुराग्रहेणपृच्छतोदुराग्रहंमानत्वासिद्ध्यासोपपत्तिकंखण्डयति मानंहीति पंचभिः । भवदभिमतंमानंयदाविषयान्गृह्णत्प्रकाशयद्भवतितदामानंप्रमाणत्वशालिभवतिकिंवास्वतःस्वभावादेवमानं आद्येविषयमानयोःपरस्परसिद्धिसापेक्षसिद्धिकयोरन्यतरस्यापिसिद्धि र्नस्यात् नहिपरस्परापेक्षाणिकार्याणिलोकेपिसिद्ध्यंतीतिभावः १४९

ननुसापेक्षाणामपिसिद्धिःकुतोनभवतीतिचेत्परस्परापेक्षायाएवदोषत्वेनप्रतिबंधकत्वादित्याह अन्योन्याश्रयतेति । पुरोदितेप्रथमे अपिशब्देनसापेक्षसिद्धिकस्यतृतीयादेःकल्पनायांचक्रकान वस्थादिर्गृह्यते । अंतेतुस्वभावादेवमानस्यमानत्वेअमानस्यापिस्वभावादेवमानत्वंकुतोनसिद्ध्यतीति । नचस्वभावस्यपर्यनुयोगायोगइतिवाच्यं सत्यंस्वभावोनपर्यनुयोज्योयदिप्रामाणिकः स्यादत्रतुनमानमितिभावः १५० ननुमानानांमानत्वमौत्सर्गिकत्वात्स्वाभाविकं अमानानांतुदोषेणपरगृहीतेनापोद्यतेतिमीमांसकरीत्यामन्यमानंप्रत्याह परतइति । यदिअमानेषुअमान त्वंपरतःपरेणदोषग्राहकेणसिद्ध्यतीतिमन्यसेतथापितदमानस्यामानत्वंकेनचिद्दोषग्राहकेणमानेनैवस्यादुपपद्येत । तत्रैवंपृच्छ्यते तस्यदोषग्राहकस्यापितदमानत्वंपरेणतद्दोषग्राहकेणकिंनभवेदिति १५१ ननुदोषाग्राहकमानस्यामानत्वंभवेदेवयदितत्राप्रामाण्यप्रयोजकोदोषउपलभ्येतअत्रतुप्रत्युतअनुलब्ध्यादोषाभावएवगृह्यतेइतिकथमप्रामाण्यमितिशंकामनूद्यतन्निरासंप्रतिजानीते भवेदिति । त्वदुक्तविधयादोषग्राहकमानस्यामानताभवेदेवपरंतुतत्रामानत्वग्राहकस्यामानत्वेकारणंप्रयोजकंदोषरूपंनदृश्यतेइतित्वयोक्तेपिमानस्यस्वस्तिकुशलंसिद्धिरूपंदुर्लभमिति १५२ कुतइत्याकांक्षायामाह अदर्शनमिति । अदर्शनमनुपलब्धिर्दोषाभावंमानत्वोपयोगिनंगृह्णंतीकिंमानरूपासतीगृह्णातिअमानरूपासतीवा आद्येउक्तविधयास्वाभाविकमानत्वानुपपत्त्यादोषशंकावारणायोत्तरोत्तरंमानापेक्षायामनवस्थाभवेत् अंत्येविषयस्यानुपलब्धिग्राह्यदोषाभावकस्यामानतासिद्धिरित्यर्थः १५३ फलितमाह ततइति । यतउक्तविधयामानत्वसिद्धिर्नास्तिततएवविषयसत्तासाध

अन्योन्याश्रयतापिस्याद्दोषःपक्षेपुरोदिते ॥ स्वतश्चेन्मानतातस्यस्यादमानस्यसानकिम् १५० परतोयद्यमानत्वममानेषुतथापिहि ॥ मानेनैवभवेत्तद्धितस्यापिपरतोनकिम् १५१ भवेदमानतातत्रकारणंनैवदृश्यते ॥ इत्युक्तेपिभवेत्स्वस्तिमानायास्मैनकर्हिचित् १५२ अदर्शनंयथामानंतदोक्ताद्दोषसंततिः ॥ भवेदमानतायांस्याद्विषयस्याप्यमानता १५३ ततोविषयसत्तायांमानंनैवलभामहे ॥ मामानयोःकथंनामसत्तायांमानमस्तिते १५४ अपिसर्वस्यमेयत्वेकथमेतच्चतुष्टयम् ॥ चतुष्टयस्यचाभावेकथंमानादिसंस्थितिः १५५ ततोमानादिभेदोयंगंधर्वनगरोपमः ॥ अभिमानेनसंसिद्धोवादिनांनतुवस्तुतः १५६ अपेक्ष्याहियत्रभवेत्तत्रनतद्भवेत् ॥ पुरुषत्वंयथास्त्रीणामपेक्षाजंनविद्यते १५७ अपेक्षाबुद्धिरुद्दिष्टाबुद्धिर्नार्थग्रहक्षमा ॥ बुद्धित्वाद्यद्धदेषास्याद्रज्जुसर्पगतासदा १५८ अर्थग्रहंविनाप्येपव्यवहारोयथाभवेत् ॥ लौकिकस्तद्वदेवायंव्यवहारोप्यमानतः १५९

कस्याभावः । तेस्वप्रकाशात्मानमनभ्युपगच्छतोमते विषयसत्ताऽसिद्धौचत्वन्मतेविषयभानानुमेयसत्ताकयोर्मायाःप्रमायाःतथाऽमानस्यचसत्तासाधकमानाभावःकिमुवाच्यइत्यर्थः १५४ किंचमामानयोःफलस्यचमानेनसिद्धिर्स्वीकारेतेषांमेयत्वस्यैवापत्तौमामानमेयफललक्षणस्यचतुष्टयस्यतत्प्रयुक्तस्यव्यवहारस्यचसिद्धिस्तवमतेकथंस्यादित्याह अपीति । सर्वस्यमाप्रभृतेः संस्थितिर्व्यवहारक्षमत्वम् १५५ कथंतर्हिसिद्धांतेसर्वोपपत्तिरितिचेत्स्वप्रवदविद्यामूलकयाकल्पनयेत्याह ततइति । अभिमानेनकल्पनयेतियावत् । कल्पितानांतुसाक्षिमात्रभास्यत्वंप्रसिद्धमिति १५६ कल्पितस्यवस्तुतोऽभावंविशदयति अपेक्षयाइति । अपकृष्टादोषप्रयुक्ताईक्षादृष्टिरपेक्षातयायत्राधिष्ठानेयद्भवेत्सिद्ध्येत्तत्कल्पितंतत्राधिष्ठानेवस्तुतोनभवेत् । तथापुरुषवेषशालिनीपुस्त्रीपुपुरुषत्वमिति १५७ अपेक्षापदार्थप्रदर्शनपूर्वकंकल्पनायाविषयसत्तौदासीन्येऽनुमानमाह अपेक्षेति । अपकृष्टेक्षारूपापेक्षालोकेबुद्धिरित्युद्दिष्टाप्रोक्ता अतएवनूतनमर्थंकल्पयंतःकवयोमद्बुद्धावेवंभातीति व्यवहरंतीति । तथाचैवंप्रयोगः बुद्धिरर्थस्यग्रहेसत्तासाधनेनक्षमाबुद्धित्वाद्रज्जुसर्पविषयकबुद्धिवदिति नचाप्रयोजकत्वं नेहनानेत्यादिश्रुत्यनुगुणत्वादिति १५८ अर्थेति । यथाचएपरज्जुसर्पंबुद्धिकृतोव्यवहारोभयकंपादिलक्षणःसदर्थग्रहंविनापिभवतितद्वदेवायंलौकिकःसर्वोपिव्यवहारोविनामानंसिद्धइत्यर्थः १५९

५८

एवंदृश्यमात्रस्यकल्पितत्वेनसाक्षिमात्रभास्यस्यात्मभानाक्षमत्वंदर्शितंतत्रौपनिषदत्वप्रसिद्ध्याश्रुतिविषयत्वमाशंक्यतस्यान्यथोपपत्तिमाह श्रुतेरिति । श्रुतेरपिजडंनतात्पर्यविषयोमिथ्यात्वात् नात्मास्वयंप्रकाशत्वात् किंतुसाश्रुतिरपिभावाभावपदार्थस्थूलसूक्ष्मप्रपंचानुकूलःकृतीःकर्तृत्वानिजगज्जन्मादिकारणत्वमितियावत् आत्मनिअध्यस्याध्यारोप्यतदपवदंतीप्रवर्त्ततेबोधयतीत्यर्थः । तथाचावरणभंगएवतदाकारवृत्तिव्युत्पादनेनश्रुतेर्व्यापारोनात्मप्रकाशनेतावतैवचौपनिषदत्वमितिभावः १६० फलितमाह स्वयमिति । क्वापिलोकेवेदेच मानानामावरणभंगएवव्यापारादिति १६१ एवंमानादेर्भास्यत्वेनस्वभासकात्मभासकत्वंनास्तीत्युक्तं अथचेतनभास्यत्वनिरासेनस्वयंप्रकाशत्वंद्रढयितुंपूर्वोक्तमनुवदति अपीति । अपिशब्दःश्लोकादौवर्त्तमानोवाक्यांतरारंभसूचकइत्युक्तं । सर्वोमानादिभेदःप्रमातुःसंश्रयात्प्रमातृसिद्धौसत्यामेवभवतीतिप्रसिद्धंसर्वत्र। एवमन्वयमुखेनोक्तंव्यतिरेकमुखेनाह प्रमिणोमीत्यादिना । अहंप्रमिणोमिसम्यङ्निश्चिनोमीत्याकारकतदाश्रयंप्रमातारंविनामानादिभेदसिद्धिर्नदृष्टेत्यर्थः १६२ प्रमातात्विति । उक्तविधःप्रमातास्वरूपभूतस्वप्रकाशचैतन्येनैवसिद्धोविशिष्टकेवलयोरभेदादितिसिद्धांतः । अन्यथावादिनांमतेत्वन्यनुसृत्याहमित्याकारकज्ञानविषयत्वेनसिद्धिस्वीकारेवक्तव्यं । असौप्रमातार्किंस्वेनात्मनैवचेतनेनज्ञानलक्षणक्रियाविषयतांनीयतेपरेणवेति १६३ अंत्येआह परेति । य

श्रुतेरपिनकोप्यस्तिविषयःकिंतुसापिहि ॥ भावाभावकृतीरात्मन्यध्यस्यैवप्रवर्तते १६० स्वयंप्रकाशआत्मातःसिद्ध्यतिस्वतएवहि ॥ तस्मान्नमानतस्तस्यसिद्धिःक्वापीहसंभवेत् १६१ अपिमानादिभेदोयंप्रमातुःसंश्रयाद्भवेत् ॥ प्रमिणोमीतिविज्ञानकर्तारंनविहायहि ॥ प्रमाणादिविभेदोयंदृष्टःकेनापिकुत्रचित् १६२ प्रमातातुयदाज्ञेयोभवेद्वादिमतेतदा ॥ केनासौचेतनेनस्यात्स्वास्वेनपरेणच १६३ परविज्ञानपक्षेस्याज्ज्ञानाम्येनमितीवधीः ॥ आत्मानमितिनैवस्यान्नह्यन्योन्यात्मतांव्रजेत् ॥ आत्मनैवात्मनोज्ञानंदुष्करंतत्प्रसज्ज्यते १६४ अपिचेदात्मनात्मानमात्मावेत्तिसचेतनः ॥ ज्ञानादज्ञोघटोप्येवंस्वयंस्वंकेनवेत्तिन १६५ जडरूपोभवेदात्माघटश्चकथमेतयोः ॥ विशेषोनचमूर्तत्वंनभसोज्ञानिनांतथा १६६ नचदेहेनसंबंधोज्ञानित्वेस्यान्नियामकः ॥ नभआदेरसौनैवनास्तिकेननभस्तदा १६७

थादेवदत्तोयज्ञदत्तंजानन्नेनंजानामीत्यनुसंदधातितथापरविज्ञानपक्षेएनंप्रमातारंजानामीत्येवमनुसंदध्यान्नत्वात्मानंजानामीति परस्यपरत्रात्मशब्दप्रयोगानुपपत्तेरिति । आद्यआह आत्मनैवेति । आत्मकर्तृकाआत्मकर्मिकाचज्ञानक्रियाकर्मकर्तृत्वविरोधान्नसंभवतीत्यर्थः १६४ किंचतार्किकमतेजडेभ्यआत्मनःकोविशेषइत्याह अपिचेदिति । ज्ञानात्मनःसंयोगजंज्ञानगुणंप्राप्यचेतनःसन्नात्मात्मानंजानाति केवलस्त्वज्ञोजडएवेतिमतेघटोपिमनःसंयोगेनात्मानंकुतोनजानातीत्यर्थः । नचघटेमनोयोगोनास्तीतिवाच्यं अणुत्वेननित्यानामनेकमुक्तपुरुषसंबंधिमनसांसंबंधस्यसौलभ्यादितिभावः १६५ जडत्वेनघटात्मनोःसाम्येतवमतेघटात्मनोर्विशेषोदुर्वचइत्याह जडेति । ननुघटस्यमूर्त्तत्वंपरिच्छिन्नपरिमाणत्वरूपमात्मनोवैलक्षण्यप्रयोजकमितिचेत्तर्हिविभोराकाशस्यात्मत्वप्रसक्तिस्त्वयादुष्परिहरेत्याह नचमूर्त्तत्वमित्यादिना । यथाघटेवर्त्तमानंमूर्त्तत्वंघटस्यात्मनोविशेषस्तथाविभूनांज्ञानिनांभवदभिमतात्मनांनभसश्चकोपिविशेषोनास्तीत्यर्थः १६६ विशेषमाशंक्यनिराचष्टे नचेति । शरीरावच्छिन्नआत्मनिज्ञानंजायतेइत्यभ्युपगच्छतस्तवमतेदेहसंबंधोपिनियामकोज्ञाननियमनद्वाराआत्मभेदकोंगीकर्त्तुंनशक्यःयतोनभःप्रभृतेर्विभोरसौदेहसंबंधःकेनहेतुनानैवनास्तिकिंत्वस्त्येव विभुत्वस्यसाम्यात् । फलितमाह नभस्तदेति । तदाशरीरसंबंधस्यात्मत्वनियामकत्वेनभएवात्मास्यादित्यर्थः १६७

जडात्मवादिनइष्टापत्तिंनिरस्यति एवमिति । एवंस्वभावतोजडरूपात्मनःस्वीकारेस्वस्वामिभावोजडवर्गेणसहचेतनस्यभोक्तृभोग्यभावइतियावत् आदिपदेनउपकार्योपकारकभावादिःसंबंधश्चेतननिर्वाह्योदुर्निरूपःस्यात् आगंतुकज्ञानहेतोर्मनःसंयोगादेरुक्तविषयाघटादिदेशेपिसौलभ्यात्कर्तृत्वंभोक्तृत्वंचसर्वत्रस्यादिति १६८ ननुनघटादेःकर्तृत्वाद्यापत्तिः प्रत्यक्षरूपायास्तन्मूलकानुमितिरूपायाश्चदृष्टेर्व्यवस्थापकतयाश्रयणादितितार्किकशंकामनूद्यतन्निरासंप्रतिजानीते यद्यत्रेति । अपेशलमसुंदरम् त्वयाभ्युपगतादृष्टिःकिमात्मरूपातद्धर्मरूपावा आद्येअस्मदिष्टापत्तिः अंत्येधर्मस्यभवन्मतेधर्मिभिन्नस्यप्रकाशरूपत्वेपिधर्मिणोजडस्यभानंकथंनहिपुत्रपांडित्येनपितुःपांडित्यमित्याशयेनाह दृष्टिर्नामेति । अत्रआत्मनित्वदंगीकृतादृष्टिःकिंस्वरूपायाप्युपपाद्यभवान्कृतीकृतार्थःस्यादित्यर्थः १६९ आत्मभिन्नायादृष्टेरात्मनिनोपकारकत्वमितीममर्थंहेतुत्वेनाह अस्येति । दृष्टयामभ्युपगतायामप्यस्यात्मनस्तद्भिन्नस्यजडस्ययद्यसिद्धिस्तदातदाश्रितायादृष्टेःकथंसिद्धिः यदित्वात्मास्वयंप्रकाशत्वेनमानांतरेणवासिद्ध्यतितदानिष्फलयादृष्ट्याकोर्थइत्यर्थः १७० किंचत्वयादृष्टिःकरणव्युत्पत्त्याप्रमाणरूपाऽभ्युपगम्यतेप्रमाणत्वसिद्धिस्तुपूर्वोक्तरीत्यादुर्लभेतिकथंतयादृष्ट्यात्मसिद्धिरित्याह अपीति स्पष्टम् १७१ किंचभवदभ्युपगतादृष्टिर्मानंभवंतीकिंचक्षुरादिवत्करणव्युत्पत्त्यामानंभावव्युत्पत्त्यावा आद्येप्रमाकरणत्वलक्ष

एवंस्वस्वामिभावादिसंबंधोदुर्भणोभवेत् ॥ भोक्तृताकर्तृताचैवंसर्वत्रैवप्रसज्ज्यते १६८ यद्यत्रदृश्यतेतत्रतत्स्यादित्यप्यपेशलम् ॥ दृष्टिर्नामात्रकातेस्याद्यांसमर्थ्यकृतीभवान् १६९ अस्यासिद्धौयतोनैवज्ञानमात्रंप्रसिध्यति ॥ अस्यसिद्धौतयानार्थःसर्वदाफलशून्यया १७० अपिदृष्टिर्भवेन्नूनंमानंमानंचनैवहि ॥ सिद्धमद्यापिकेनत्वमात्मानंसाधयिष्यसि १७१ अपिमानंभवेन्मायाहेतुर्वासाप्रमाभवेत् ॥ माहेतोर्माननतातेस्यात्प्रदीपस्येवसर्वथा १७२ तथाचसर्वमानानांमानांतरमपेक्षितम् ॥ एवंस्यादनवस्थादिदूषणंदुर्भणंतव १७३ मापिमानंभवेद्याहितदासापिकथंभवेत् ॥ भातासतीस्वयंकिंसाप्यथवाभानवर्जिता १७४ भानशून्याभवेन्नैषामानंघटसमायतः ॥ भातापिनपरेणस्यादुक्तदोषप्रसंगतः ॥ नचस्वेनस्वयंस्वस्यभानंलोकेनदृश्यते १७५ अपिस्वयंयदाभातातदाप्येषाहिकीदृशी ॥ खद्योतसदृशीवास्यादादित्यसदृशीहिवा १७६ आद्येखद्योतवन्नस्याद्विषयस्यप्रकाशिका ॥ द्वितीयेसर्वविज्ञानमेकबुद्धौभवेत्तव १७७

णप्रामाण्यलाभायस्वजन्यज्ञानस्यप्रमात्वसाधकंमानांतरमपेक्षणीयम् । एवंतेनान्यत्तेनान्यदित्यनवस्थास्यादित्याह अपिमानमिति । सादृष्टिर्मानंभवंतीमायाःप्रमायाःकरणंयतस्ततोमानंभवेदथवाप्रमैवभावव्युत्पत्त्यामानपदार्थभूतासादृष्टिर्भवेदितिपूर्वार्द्धार्थः । आद्येप्रदीपवत्प्रमाहेतोर्माननतात्वदभ्युपगतातथाचस्वजन्यज्ञानप्रमात्वग्राहकमानांतरापेक्षापरंपरयानवस्था आदिपदेनानिःशंकप्रवृत्त्यनुपपत्तिर्ग्राह्या । दुर्भणंदुःखेनसमाधेयमितिद्वयोरर्थः १७२ । १७३ अंत्येयान्यायमतेप्रमाप्रसिद्धासैवसांख्यमतेयथाप्रमाणंतथात्वयांगीकारेपिवक्तव्यंसांख्यानामिवमानभूतादृष्टि किंस्वयंप्रकाशाप्रकाशहीनावापरप्रकाश्यावेतिविकल्प्यांत्यावनूद्यनिरस्यति मापीतिद्वाभ्याम् । माप्रमा १७४ भानेति । यदाभानशून्यातदांधकारस्यघटसाम्यंयदापरप्रकाश्यातदापिघटसाम्यम् अनवस्थाप्रसंगश्चाधिकः परस्यापिपरसापेक्षस्यापेक्षणादित्यर्थः । आद्यंस्वयंप्रकाशविकल्पंनिराचष्टे नचस्वेनेति । स्वेनभातेतिनचवक्तव्यम् यतोलोकेस्वयंस्वस्यभानंनदृश्यतइत्यन्वयः । त्वयाहिशुष्कतार्किकेणलौकिकदृष्टांतमनुरुद्ध्यैवार्थःसाधनीयः लोकेचस्वकर्मकप्रकाशकर्त्ताकश्चिदर्थोनदृष्टइत्याशयः १७५ स्वयंभानपक्षेप्यात्मभिन्नादृष्टिःकिंखद्योतवत्स्वरूपस्यैवप्रकाशिकाकिंवादित्यवत्सर्वप्रकाशिकेत्याह अपिस्वयमिति १७६ विकल्पयोःक्रमेणविषयासाधकत्वंसर्वज्ञतापत्तिंचदोषमाह आद्येइति । एकबुद्धावेकस्यार्थस्यापिज्ञानकालेसर्वज्ञानंस्यादिति १७७

एवंमानस्यदुर्निरूपत्वेनात्मनोऽगृह्यतोक्त्वा इदानीमभ्युपेत्यापिचक्षुरादीनांमानतांतत्सन्निकर्षायोग्यतयात्मनोऽगृह्यतेतिदर्शयति अपिबुद्धिरितित्रिभिः । किंचयदाबुद्धिर्विषयेघटादौजायतेतदापिस्वयमेवनजायतेकिंतुचक्षुरादिप्रमाणानांसंयोगादिसंबंधमपेक्ष्यैवजायतेइत्यर्थः १७८ ततःकिमतआह कर्तेति । आत्माकर्तृत्वेनभोक्तृत्वेनचविशिष्टइत्याकारकंज्ञानंतवकथंजातं नहिचक्षुरादींद्रियसंयोगेनैवमुक्ताकारेणज्ञानंसंभवति परांचिखानीत्यादिश्रुतेः । पराक्स्यैंद्रियसंयोगव्यापकस्याभावेनतद्व्याप्यस्यैंद्रियसंयोगस्याभावात् मनस्तुप्रमाणपरतंत्रत्वाद्धृत्तिप्रत्युपादानत्वेनतांप्रतिकरणत्वात्करणत्वाभ्युपगमेचानुमित्यादीनांप्रत्यक्षत्वापाताच्चनप्रमाणमितिभावः १७९ इंद्रियसंयोगविषयत्वाभ्युपगमेच पराक्पदार्थस्यदेहादेरात्मतापत्तिस्तथाचासुरव्यामोहार्थंचार्वाकमतप्रणेतुर्गुरोर्बृहस्पतेर्मतस्यस्वीकारप्रसंगइत्याह नेत्रेति । एतदुक्ताकारकंज्ञानंयदिनेत्रसंयोगतोजायेततर्हिदेहेएवजायेततथाचचार्वाकत्वमंधतमःप्रवेशकारणंबृहस्पतिप्रणीतलोकायतशास्त्रानुसारिप्रसज्जेतेत्यर्थः । इंद्रियकरणकप्रत्यक्षासंभवेचप्रत्यक्षमूलकानामनुमानादीनांविषयतादूरतोनिरस्तेत्याह नानुमानादिकमिति १८० ननुप्रमाणांतराभावेपिकर्तृवाचकतृच्प्रत्ययांतद्रष्टाश्रोतामंताइत्यादिपदरूपाऐतरेयश्रुतिःकर्तृत्वेमानमितिचेन्न दर्शनकर्तृत्वादिनिषेधकस्याद्रष्टाऽश्रोतेत्यादिश्रुत्यंतरस्याप्यपूर्वार्थत्वेनस्वार्थपरस्यतत्रविद्यमानत्वादित्याह द्रष्टेत्यादि । द्रष्टेत्या

अपिबुद्धिर्यदाजाताविषयेनतदास्वयम् ॥ उत्पद्यतेविनातत्रसंयोगादीन्कदाचन १७८ कर्ताभोक्तायमात्मास्यादितितेवगतंकथम् ॥ नेत्रसंयोगतोनैवंगम्यतेत्रकथंचन १७९ नेत्रसंयोगतश्चैतज्ज्ञानंदेहेविजायते ॥ तथाचमतमायातंबलादेवगुरोस्तव ॥ नानुमानादिकंकिंचिद्दृश्यतेमूलहीनतः १८० द्रष्टेत्यादिश्रुतिर्यद्वदद्रष्टेत्यादिकातथा ॥ तस्मादात्मगतोनैवंमानमेयादिलभ्यते १८१ अपिसर्वस्यनैवैतदुक्तरीत्यात्रलभ्यते ॥ आत्मनस्तुकथंनामभवेदेतत्सुदुर्लभम् ॥ अगृह्यस्ततएवायमुक्तोमात्रासमानया १८२ श्रुत्यासर्वात्मनस्तस्यशीर्णतापिनविद्यते ॥ भेदवत्शीर्णतांगच्छेल्लोकेयद्वसनादिकम् १८३ मूर्तिमच्चतथानायंशीर्यतेतत्कथंपुमान् ॥ अशीर्योऽतस्ततोक्तोयंश्रुत्यायस्मान्नशीर्यते १८४ अपिसंगवतांसंगाद्दोषआयातिकालतः ॥ यथाजलस्यशीतस्यह्युष्णतावन्हिसंगतः १८५ असंगस्यतथादोषोदृष्टोनैवकथंचन ॥ नभसोत्रविशुद्धस्ययथाब्दादिकृतोनहि १८६

दिकाकर्तृत्वानुवादिकाश्रुतिर्यथाविद्यतेतथाअद्रष्टेत्यादिकाकर्तृत्वनिषेधिकापिदर्ततेइत्यर्थः । ब्रह्मैवतेजएवेत्यादिकाआत्मनस्तेजस्त्वेनचैतन्यमात्रताबोधिकातथाविद्यावस्थायांकेनकंपश्येदित्यादिकाकर्तृत्वंप्रतिक्षिपंतीचश्रुतिरत्रानुसंधेया । फलितमाह तस्मादिति । आत्मनोगतौज्ञानेमानादिकंनास्तीतिकिंतुस्वयंप्रकाशतयैवात्माभासतेइत्यर्थः १८१ परमार्थतोवर्णितरीत्याकस्याप्यर्थस्यज्ञानेमानादिकंदुर्वचंकिमुतात्मनीत्याह अपिसर्वस्येति । परमफलितमाह अगृह्यइति । हितोपदेशकत्वेनजननीसमानयाश्रुत्याततएवागृह्यइत्ययमात्मोक्तइत्यन्वयः १८२ अशीर्यपदार्थमाह श्रुत्येति । श्रुत्येतिपदंपूर्वान्वयि । सर्वात्मकत्वेनहिंसकस्यासंभवात्शीर्णताहननकर्मताऽस्यात्मनोनयुज्यते किंचलोकेवस्त्रादिकंशीर्णतायाअवयवबंधशैथिल्यरूपायाआश्रयत्वेनप्रसिद्धंतद्भेदवत्तथामूर्त्यावयवघनीभावात्मकयायुक्तंचदृष्टं आत्मनितुशीर्णताव्यापकंतदुभयंभेदवत्त्वमूर्तिमत्त्वलक्षणंनास्ति ततस्तद्व्याप्यशीर्यत्वंकथमुच्यतेतेत्यभिप्रायेणयस्मान्नशीर्यतेऽतोऽशीर्यइतिश्रुत्योक्तइतिद्वयोरर्थः १८३ । १८४ । एवंस्वाभाविकविक्रियाभावउक्तोऽथागंतुकदोषाभावपरस्यासंगपदस्यार्थंदर्शयति अपिसंगवतामितिपंचभिः । येलोकेसंगवंतस्तेषांसंगहेतुकोदोषःपरिणामादिरायातिप्राप्नोतिकालवशाद्यथावन्हेःसंगाज्जलस्येति १८५ संगस्यदोषप्रयोजकतांव्यतिरेकेणापिदर्शयति असंगस्येति । अब्दोमेघः आदिपदेनविद्युदादिग्रहः १८६

श्रुतौनहिसज्जतेइत्यनेनसंगप्रयोजकयोर्मूर्त्तत्वपरिच्छिन्नत्वयोरभावःसंगाभावेहेतुतयासूचितइत्याशयेनाह मूर्तंहीति । तस्मान्मूर्त्तात्परिच्छिन्नाच्चविलक्षणस्यअस्यात्मनः १८७ संगस्यसफलस्य स्वरूपमभिनयति प्रत्यासत्तिरिति । प्रतिआभिमुख्येनआसत्तिर्लाभइतरंप्रतिगुणीभावइतियावत् यथावन्हेर्जलंप्रति अथवासंयोगादिःसंबंधः एतदुभयरूपःसंगःप्रसिद्धः तस्यसंगस्यफलंतु कंचित्कालंतदात्मतातस्यसंगप्रतियोगिनआत्मेवआत्मास्वरूपंयस्यतत्त्वं यथावन्हिसंगेनजलस्यउष्णतयावन्ह्यात्मकताइति १८८ आत्मनस्त्वद्वितीयत्वेनउक्तस्यसंगस्यतत्फलस्यचासंभवइत्याह स्वजातीति । यतआत्मासजातीयादिभेदहीनस्ततस्तादृशोवर्णितसंगवान्कथंभवेत्तथाइतरतादात्म्यलक्षणसंगफलशालीचकथंभवेदिति १८९ असंगत्वेचात्मनोनित्यमुक्तत्वंतेनरूपेणाविनाशि त्वंचपरमपुरुषार्थरूपताप्रयोजकंसिद्धमित्यर्थपरस्यासितोनरिष्यतीतिवाक्यस्यार्थमाह अपिसंगवतामितिद्वाभ्यां । येलोकेसंगवंतस्तेबंधरूपमादिपदग्राह्यपरिणामरूपंवाफलंभजंतोदृष्टास्तेषांवि नाशश्चसंभवति कुतःआरंभकाणांन्यायमतेसांख्यमतेतुपरिणामिनांहेतूनामुपादानादिकारणानांवियोगस्यविभागस्यादिपदग्राह्यविनाशस्यवासमुद्भवात् । कीदृशःसंगवतांनाशः क्वचित्सहसाअ

मूर्तंहिसंगवद्दृष्टंपरिच्छिन्नंचवादिभिः ॥ तस्माद्विलक्षणस्यास्यसंगःस्यात्केनहेतुना १८७ प्रत्यासत्तिर्भवेत्संगःसंयोगादिरथापिवा ॥ फलंतस्यभवेल्लोकेकंचित्का लंतदात्मता १८८ स्वसजातिविजात्युत्थभेदगंधविवर्जितः ॥ कथंसतादृशःकेनतत्फलोपिभवेत्पुमान् १८९ अपिसंगवतांसंगाद्बंधादिफलभाजिनाम् ॥ आरंभ कादिहेतूनांवियोगादिसमुद्भवात् ॥ विनाशःसहसाक्वापिशनैर्वाथक्वचिद्भवेत् १९० अयमात्मायतोऽसंगोबध्यतेनततःक्वचित् ॥ विनश्यतिनचाप्येषसंगाभावेनहे तुना १९१ विशेषैरखिलैःशून्योह्यवाङ्मनसगोचरः ॥ गंतव्योभवताराजन्भवान्सर्वात्मकःपुमान् १९२ मातेभवतुराजेंद्रभयंसंसारशूलतः ॥ अभयंसर्वजं तूनामानंदात्मानमीश्वरम् ॥ आत्मातमात्मरूपेणप्राप्तोस्यैक्येनसर्वदा १९३ सर्वप्राणभृतांराजन्द्वितीयाद्भयमाव्रजेत् ॥ नद्वितीयेभवेज्ज्ञानमात्मनःसर्वतोपि हि १९४ नात्मनःप्रतिकूलत्वंविद्यतेसर्वदेहिनाम् ॥ प्रतिकूलस्यनाज्ञानेराजन्भीतिःप्रजायते १९५ ततएवाभयंब्रह्मविज्ञानानंदरूपभृत् ॥ त्वमेवासिमहाराज सर्वभेदविवर्जितः १९६

लक्ष्यक्रमकःक्वचित्शनैर्लक्ष्यक्रमकइत्यर्थः १९० आत्मनित्वसंगेसंगव्याप्योर्बंधविनाशोनसंभवतइत्याह अयमात्मेति । नबद्ध्यतेनपिशूशात्वर्थंबंधभाक् १९१ एतदेवात्मनस्तुरीयंरूपंतवगंतव्य त्वेननिर्दिष्टमभूदित्याह विशेषैरिति । गंतव्योज्ञानमात्रेणप्राप्यः अधुनातुतंसाक्षात्कुर्वन्भवान्सर्वात्मकःपुमान्संपन्नोस्तीतिचतुर्थपादार्थः १९२ अभयमित्यादिवाक्यस्यार्थमाह मातेइ त्यादिना । अधुनासंसारशूलतोभयंतेमाभवतुत्वयिनसंभवति यतःसर्वजंतूनामात्मानमीश्वरमीश्वरत्वोपलक्षितमानंदात्मकमभयंतत्त्वमात्मरूपेणजानन्प्राप्तोसि ज्ञानमात्रेणप्राप्तोहेतुरैक्येनेति । य द्यात्मातटस्थोग्रामादिवत्स्यात्तदातस्यप्राप्तिःक्रियामार्गेणस्यात् ऐक्येतुज्ञानमेवतत्प्राप्तिरितिभावः १९३ नन्वात्मज्ञानेपिभयंकुतोनभवतीतिचेद्भयकारणद्वितीयविज्ञानस्याद्वितीयसतत्त्वकात्म ज्ञानस्यचविरोधादित्याशयेनाह सर्वेति । सर्वेषांप्राणिनांद्वितीयेविज्ञायेवभयंभवति सर्वतःसर्वस्मिन्बहुशोऽल्पशोवाद्वितीयेविज्ञातेआत्मनोज्ञानंप्रमारूपंदुर्वचंविपरीतरूपावगाहनादितिभावः १९४ अद्वितीयात्मविज्ञानेचभयप्रयोजकप्रतिकूलताविज्ञानव्यापकद्वितीयज्ञानाभावेकथंभयंस्यादात्मनिप्रतिकूलताभावस्यलोकेपिप्रसिद्धत्वादित्याह नात्मनइति । स्पष्टम् १९५ फलितमाह ततइति । यतःप्रतिकूलत्वव्यापकद्वितीयवर्जितंब्रह्मततएवाभयंभवतितस्यब्रह्मणःस्वरूपलक्षणंविज्ञानानंदरूपत्वमपियतोबिभर्षिततस्त्वमेवसर्वभेदविवर्जितोब्रह्मासीतियावत् १९६

भेदविवर्जितत्वंभेदप्रतियोगिद्वैतबाधेनस्फुटयति अहमिति । पूर्वार्द्धोक्तंविश्वंजडंबाधासामानाधिकरण्येनचेतनस्वरूपंत्वैक्यसामानाधिकरण्येनयतोब्रह्मैव अतएवाद्वितीयंब्रह्माभयंभवतीत्यर्थः १९७ कल्पितेनबाधयोग्येनद्वैताभावंदृष्टांतेनस्पष्टयति गंधर्वेति १९८ एतादृशस्यविश्वस्यप्रयोजकंज्ञाननिवर्त्यमज्ञानमेवेत्याह माययैवेति १९९ कल्पितस्याधिष्ठानेत्रैकालिकाभावोलोकेपि प्रसिद्धइत्याह गंधर्वेति २०० वस्तुतोऽसतोपिभानंभ्रमेणलोकेपिप्रसिद्धंतथास्यद्वैतस्यबोध्यमित्याह गंधर्वनगरंयद्वद्राजन्नितिद्वाभ्याम् २०१ । २०२ भ्रमकारणंत्वज्ञानमचिंत्यशक्तिकंय द्विशिष्टस्यात्मनःस्वप्नेनानाभावश्चत्याह यथाशयानइति । विसाधनोरथादिसामग्रीहीनः २०३ दार्ष्टांतिकेयोजयति एवमिति २०४ दृष्टांतेयथाप्रबोधादेवस्वाप्नद्वैतनिवृत्तिस्तथातवाधुनाप्र बोधाद्वैतनिवृत्तेरभयत्वमित्याह शयनादिति २०५ एवंयाज्ञवल्क्यमुनिनोपदिष्टोराजाआशीर्नमस्क्रियासर्वस्वंचेतित्रिविधांदक्षिणांददावितिश्रुतावुक्तंतत्राशीरूपदक्षिणाभिप्रायमाह एवमुक्तइति

अहंत्वंसर्वभूतानियद्वासदसदात्मकम् ॥ विश्वंब्रह्माभयंराजन्नेकमेवनचापरम् १९७ गंधर्वनगरंयद्वन्नभसोन्यन्नविद्यते ॥ तथाविश्वमिदंराजन्नात्मनोन्यन्नविद्यते १९८ माययैवयथाकाशेगंधर्वनगरस्थितिः ॥ स्थितिर्विश्वस्यतद्वत्स्यादात्मन्यपिचमायया १९९ गंधर्वनगरंयद्वन्नासीदस्तिभविष्यति ॥ गगनेतद्वदेवेदंवि श्वमात्मनिसर्वदा २०० गंधर्वनगरंयद्वद्राजन्सदसदात्मकम् ॥ जडाजडंचगगनेदृश्यतेभ्रांतबुद्धिभिः २०१ तद्वद्विश्वमिदंसर्वमात्मानात्मादिभेदधृक् ॥ आत्म न्येवमहाराजभ्रांतिबुद्ध्याप्रतीयते २०२ यथाशयानःपुरुषएकएवविसाधनः ॥ देशकालादिरहितोभूयान्नानाविधःस्वयम् २०३ एवमात्मामहाराजसर्वसाध नवर्जितः ॥ देशकालादिकंविश्वमेकएवभवत्ययम् २०४ शयनादुत्थितोयद्वत्स्वाप्नंविश्वंनपश्यति ॥ एवमात्मात्मविज्ञानादिदंविश्वंनपश्यति २०५ एवमुक्तस्त दाराजायाज्ञवल्क्येनधीमता ॥ मनसाचिंतयित्वेत्थंनापश्यद्गुरुदक्षिणाम् २०६ दारपुत्रसमेतंमांराज्यसेनादिसंवृतम् ॥ याज्ञवल्क्यायचेदेवंदास्यामिगुरुदक्षि णाम् ॥ नैषातथासमाभूयादेतदेवयतोधिकम् २०७ वसुभिःसकलैःपूर्णांभूमिंसागरमेखलाम् ॥ गुरवेदक्षिणांनैतामन्यंतेवेदवादिनः २०८ आत्मादत्तोत्रयेनायं दुर्लभःसर्वदेहिभिः ॥ अनेककोटिजन्मांतेब्रह्मचर्यादिसाधनैः २०९ आत्मलाभात्परोलाभोनास्तिलोकत्रयेयतः ॥ सदत्तोयेनतस्मैकादक्षिणानात्मसंश्रया २१० लोकत्रयींयदाद्यांजित्वादेवान्सवासवान् ॥ तदाप्येषाभवेन्नैवदक्षिणागुरवेमम २११ इतिसंचिन्त्यराजासौजातहर्षोवचोब्रवीत् ॥ याज्ञवल्क्यंमुनिंशांतमपश्य न्गुरुदक्षिणाम् २१२

द्वादशभिः । इत्थंवक्ष्यमाणप्रकारेण २०६ इत्थंपदोक्तंविचारमभिनयति दारेतिपंचभिः । मामात्मानंसपरिकरं एवंयथानेनविद्यादत्तातथायदिददामितथाप्येषासपरिकरमद्रूपादक्षिणास मानभवतियतएतदात्मज्ञानमधिकमिति २०७ आधिक्येयदीमामद्भिःपरिगृहीतांप्रयच्छेदेतदेवततोभूयइतिच्छांदोग्यश्रुतिमर्थतःपठति वसुभिरिति । वसुभिर्धनैः २०८ उपपत्तिमप्याह आ त्मेति । योनेकजन्माभ्यस्तसाधनैःसर्वदेहिभिर्दुर्लभःआत्मलाभान्नपरंविद्यतेइतिश्रुतौयस्यलाभोत्कर्षःप्रसिद्धःसआत्मायेनगुरुणादत्तस्तस्मैदेयाकासमादक्षिणायतःसर्वादक्षिणाअनात्मभूतैःपदार्थै र्घटितत्वेनानात्मसंश्रयातनत्वात्मादत्तइतिकथंसाम्यमितिद्वयोरर्थः २०९ । २१० लोकत्रयीमिति । यदींद्रादिदेवान्जित्वात्रिलोकीमपिदद्यांतदापिनसमादक्षिणा त्रिलोक्याःपरिच्छिन्न त्वान्मिथ्यात्वाच्चेतिभावः २११ इतिसंचिंत्येति स्पष्टम् २१२

राजाआशीरूपदक्षिणायाउपपत्तिमाह याज्ञवल्क्येति चतुर्भिः । नेत्राणि निरुणद्धीति व्युत्पत्त्या कर्म ण्यणंतानेत्रनिरोधेत्याकारिका आख्यायौगिकी संज्ञा यस्यैतादृशं लौकिकं तमस्त्वगुरुर्निहंति की दृशः देहिनां बहिश्वरः शरीराद्बहिश्चरन्प्राणः तेच देहिनस्तस्मै सूर्याय दीपं प्रयच्छंति । कीदृशा देहिनः उपकारस्य निष्कृतिं प्रतिक्रियामपश्यंतः । भवद्गुरुस्तु तावता पितुष्यति तथा भवानपि स्वल्पे नतुष्यतु कीदृशो भवान् प्रभाकर्तुः समः शिष्यः विज्ञानेनांतरतमो हंतृत्वात्प्रत्युपकारानपेक्षत्वाच्चेति चतुर्णामर्थः २१३ । २१४ । २१५ । २१६ एवमवतार्य आदित्य दीपसमामाशिषम भिनयति अभयंत्विति । स्थूलसूक्ष्मकारणरूपं जगत्त्रयं हित्वाऽवशिष्टं यत्तुरीयं ब्रह्म तदेवैकं भयवर्जितत्वादभयमुक्तं मह्यमिति शेषः ततो मत्तो मम भयदानात्त्वां प्रत्यपितदेवाभयं गच्छतात्प्राप्नोतु यद्दा तितदश्नुत इतिन्यायोप्यत्रानुकूल इति सूचयन्नाह मह्यमिति २१७ स्वस्मिन्यापूर्वभयसंपदासीत्तां निरूप्य तदपहरणलक्षणोपकारस्य समादक्षिणानास्तीत्याह अज्ञानेति । अज्ञानमय सूत्ररचिताः कामादिमय ग्रंथिशालिनश्च विपर्ययात्मकाः पाशा जालाः कालेन अविद्याचित्संबंधतया सिद्धांते लक्षितेन निर्मितास्ते प्रसिद्धाः संति तेभ्योहं मोचितोस्मि दयामात्रेण एतादृशोपकारस्य समाकादक्षिणेति द्वयो

याज्ञवल्क्ययथासूर्योगुरुस्तेत्रबहिश्चरः ॥ प्राणोनेत्रनिरोधाख्यंतमोहंत्यतिदुःसहम् २१३ देहिनांदेहिनस्तस्मैतेजसांनिधयेसदा ॥ प्रयच्छंत्यत्रतेदीपमपश्यंतो त्रनिष्कृतिम् २१४ उपकारस्यतेनैवतुष्यत्येषप्रभाकरः ॥ तथाभवान्प्रभाकर्तुःशिष्यस्तेनसमोयतः २१५ अभयब्रह्मविज्ञानदाताकामविवर्जितः ॥ भवतेगुर वेनान्यामत्रपश्यामिदक्षिणाम् २१६ अभयंत्वेकमेवोक्तंहित्वाब्रह्मजगत्त्रयम् ॥ ततस्त्वागच्छतात्ब्रह्मन्नभयंभयवर्जितम् ॥ मह्यंदास्यसियत्त्वंतद्भवतेभवतात्सदा २१७ अज्ञानसूत्रसंजाताःकामादिग्रंथिशालिनः ॥ कालेनरचिताःपाशाजंतुपक्षिवधायते २१८ तेभ्योहंमोचितोघोरदुःखमग्नोतिदीनधीः ॥ दयालुनात्वयाब्र ह्मन्कातेस्याद्गुरुदक्षिणा २१९ इमेविदेहनामानोदेशाःस्फीततमामुने ॥ मदाज्ञावशगाःसर्वेपुर्यामिथिलयासह २२० सदारसुतभृत्योहमेतैर्देशैश्चसंयुतः ॥ तवा स्मिकिंकरोब्रह्मन्गुरोर्ब्रह्मात्मरूपिणः २२१ दत्तमेतन्मयासर्वंतुभ्यमित्यप्यहंनच ॥ वक्तुंशक्तोस्मियेनैतत्तवैवस्याद्धिधर्मतः २२२ अशनेपिनमेब्रह्मन्स्वातंत्र्यं विद्यतेनिजे ॥ भवदाज्ञांविनाब्रह्मन्कथंतेदातुमुत्सहे २२३ नमस्तेयाज्ञवल्क्यायगुरवेब्रह्मवेदिने ॥ मुन्याद्यायसदादित्यशिष्यायपरमात्मने २२४

रर्थः २१८ । २१९ वित्तशाठ्याभावसूचिकायाः सर्वस्वार्पणरूपाया दक्षिणायाः स्वरूपमभिनयति इमे इति त्रिभिः । स्फीततमाः संपन्नतमाः २२० सदारेति । एतैर्विदेहसंज्ञैः ब्रह्मा भिन्नात्मानं रूपयति प्रतिपादयतीति स तथा तस्य एवंविधस्य तव गुरोः स्वामिनः स्वभृतोहं यतः किंकरः २२१ दत्तमिति । एतद्देशादिकं मया तुभ्यं दत्तमित्यपि वक्तुं न शक्तोस्मि स्वत्वपरित्यागलक्षणदा धात्वर्थस्य बाधानुसंधानान्मदीयस्वत्वस्य परित्यागप्रतियोगिनोऽसत्त्वात् यतो धर्मशास्त्रमालोच्य सर्वं तवैवेति तथाहि अजरामरशरीरप्रदस्य ब्रह्मविद्यादेशकस्य गुरोः पितृत्वं त्वं नः पिता योस्माकम विद्यायाः परं पारं तारयसीत्यादिश्रुतौ मन्वादिस्मृतौ च प्रसिद्धं शिष्यस्य पुत्रत्वेन धनस्वत्वहीनत्वं ‘त्रय एवाधना राजन्भार्या दासस्तथा सुतः । एते यत्समुपार्जंति यस्यैते तस्य तद्धनम्’ इत्यादिस्मृ तिप्रसिद्धमिति २२२ एतदेव स्फुटयति अशनेपीति । भवदाज्ञां विना भोजनेपि मम यदा स्वातंत्र्यं नास्ति तदा दानशब्दप्रयोगः कथमुपपद्येतेत्यर्थः २२३ नमस्काररूपदक्षिणामभिनयति नमस्तेइति । तुभ्यं सदा नमोस्तु कीदृशाय ब्रह्म वेदयति बोधयतीति स तथा तस्मै मुनिषु आद्याय प्रथमगण्याय । मन्वाद्यायेति पाठे मनूनां मंत्राणामाद्याय अभिव्यक्तिहेतवे कल्पय इतियावत् शास्त्रदृष्ट्या परमात्मरूपाय शे षं स्फुटम् । अत्र दक्षिणानां श्रौतक्रमस्य परित्यागेऽयमाशयः गुरोरभयप्राप्तेः सिद्धत्वेनाशीरयुक्ता सर्वस्वार्पणं तु स्वत्वाभावेनायुक्तमिति तदभिधायकर्त्तुः शक्यतया युक्तत्वेन नमस्कारस्यांते निर्देश इति २२४

१७९

५९

श्रुतौअर्थात्सूचितंयाज्ञवल्क्यवाक्यंतदाश्रमगमनंचदर्शयति एवमुक्तइतिपङ्क्तिः । स्पष्टम् २२५ अङ्गीकारप्रकारमाह सर्वमिति । तवदेहादिपदार्थजातंसदेशंममैवेत्यत्रनसंशयः २२६ तथा पिमदपेक्षितांदक्षिणांदातुमर्हसीत्याह मयोपदिष्टमितिद्वाभ्यां । तवोपासनपरत्वेनराज्यव्यग्रत्वेनचमदुपदिष्टार्थविस्मरणंसंभाव्यतइत्यतोब्रवीमितंमदुपदिष्टमात्मानंमाविस्मरएपैवदक्षिणेतिद्वयो रर्थः । अत्रउपासनपरत्वेनब्रह्मलोकाभिवांछयाराज्यव्यग्रत्वेनोत्कटप्रारब्धस्यचसाक्षात्कारप्रतिबंधकत्वंसूचितं । विस्मरणेचभयप्राप्तिस्तत्त्वेवभयंविदुषोऽमन्वानस्येतिश्रुत्यंतरप्रसिद्धासूचिता । यदविदुषईश्वराद्भयंतद्विदुषोपिभवतियदिविद्वानमन्वानःश्रुतार्थमननहीनःस्यादितिश्रुत्यंतरार्थः २२७ । २२८ इदंसर्वमिति । इदंराज्यादिकंसर्वंमदीयंसत्त्वयिकिंकरेतिष्ठतु अहंत्विदानींग त्वाकालांतरेआगमिष्यामीति २२९ इत्युक्त्वेति । स्वगृहमाश्रमंययौ यतःसमाध्युपयोगिनिएकांतदेशेसमुत्सुकउत्कंठितः २३० एवंगतग्रंथेनसंक्षेपेणोक्तस्यात्मनोविस्तरेणनिरूपणपरस्यज्यो तिर्ब्राह्मणस्यार्थंपङ्क्तिःशतैरुपबृंहयंस्तत्रप्रथमकंडिकायाअर्थंनिरूपयति गतइतिद्वाविंशतिश्लोकैः । मुनीश्वरेयाज्ञवल्क्येगतेसतिराजाजनकोराज्यव्यग्रत्वात्तथाग्निहोत्रदेवतायाअग्नेर्यत्परमंरूपंवैश्वान रविराडादिसंज्ञंतस्यात्मत्वेनचिंतनरूपायांवैश्वानरविद्यायांकुशलत्वेनतत्परत्वादुपासननिष्ठत्वादितियावत् । याज्ञवल्क्योपदिष्टमर्थंविस्मृतःकिंचिद्विस्मृतवानित्यर्थः । विस्मृतइत्यादिकर्मणीतिकर्तरि

एवमुक्तस्तदाराज्ञायाज्ञवल्क्योमुनीश्वरः ॥ अंगीचकारनिखिलंस्मयमानमुखांबुजः २२५ सर्वमेतन्महाराजममैवात्रनसंशयः ॥ सदेशंतवदेहादिजातंभूपति सत्तम २२६ मयोपदिष्टमात्मानमुपासनपरोभवान् ॥ राज्यव्यग्रश्चमाकालान्नृपतंविस्मरकाचित् २२७ एषैवपरमाराजन्दक्षिणाममनापरा ॥ आत्मानंयन्मदु क्तंत्वंनविस्मरसिकर्हिचित् २२८ इदंसर्वममैतत्सत्त्वयितिष्ठतुकिंकरे ॥ गत्वेदानींपुनाराजन्नागमिष्यामिकालतः २२९ इत्युक्त्वायाज्ञवल्क्यःसजगामस्वगृहंत दा ॥ राज्ञात्रैवर्णिकैःसार्धंप्रार्थितोपिसमुत्सुकः २३० गतेमुनीश्वरेराजाराज्यव्यग्रोथकालतः ॥ वैश्वानरात्मविद्यायांकुशलस्तत्परोपिच ॥ याज्ञवल्क्येनमुनि नास्वोपदिष्टंसविस्मृतः २३१ याज्ञवल्क्योपिविज्ञायलोकाद्दिव्याच्चनेत्रतः ॥ आजगामपुरंचैनंसभास्थंराजसत्तमम् २३२ एवंसंकल्प्यमतिमान्नवदिष्याम्यने नहि ॥ वक्ष्यामिवामुनातर्हिब्रह्मैवोक्तंनचापरम् २३३ एवंस्थितेस्वयंगत्वाराजानमतिधार्मिकम् ॥ त्रैवर्णिकैस्तैःसद्भिरूहापोहविशारदैः २३४ तत्रचित्राःकथा स्तेषांप्रवृत्ताराजसन्निधौ ॥ तासुवैश्वानरीविद्याप्रस्तुताकासुचिद्द्विजैः २३५ राजातस्यांहिविद्यायांप्रवीणोनितरांततः ॥ इदमाहसभासंस्थान्सर्वानेवद्विजोत्त मान् २३६ एनांजानाम्यहंविद्यांकृत्स्नामाहुतिधारिणीम् ॥ फलैर्बहुविधैर्युक्तांब्रह्मलोकफलप्रदाम् २३७

क्तः २३१ याज्ञवल्क्योपीति । याज्ञवल्क्योपितद्राज्ञोवृत्तंलोकमुखाद्दिव्यदृष्टितश्चविज्ञायजनकराजपुरमाजगामसभास्थंराजानंचाजगामप्राप किंकृत्वाजगाम एवंसंकल्प्यमनसावधार्य एवं कथं अनेनराज्ञासहनवदिष्यामिआगमनप्रयोजनंयोगक्षेमादिनप्रकाशयिष्यामीति । एतेनश्रुतौनवदिष्यइतिमेनेइत्यन्वयःसूचितः । तत्रएतेनसंवदिष्यइत्यन्वयमभिप्रेत्याह वक्ष्यामिवेति । अथवाउक्तंपूर्वमुपदिष्टंब्रह्मैवामुनासहसंवादेनवक्ष्यामिप्रकटीकरिष्यामीतिद्वयोरर्थः २३२ । २३३ एवंस्थितइति । एवंवर्णितेसंकल्पेस्थितेदृढीकृतेसतियाज्ञवल्क्योमुनीराजांतिकंगत्वाऽऽदृत उपविवेशेतिशेषः २३४ तत्रेति । तत्रराजसदसिराजसन्निधावुपविष्टैस्त्रैवर्णिकैःकृताःकथावाक्यप्रबंधाश्चित्रानानाविधाःप्रवृत्तास्तासुकथासुकासुचित्प्रवृत्तासुद्विजैर्वैश्वानरीअग्निहोत्रदेवतासंबंधि नीकथाप्रस्तुताप्रवर्तिता २३५ राजेति । तस्यामग्निहोत्रसंबंधिन्याम् २३६ इदंपदेनोक्तंराजवाक्यमभिनयति एनामिति । आहुत्योःसायंप्रातर्हुतयोर्याधारःअंतरिक्षादिलोकपरिपोषणरू पःतेइमेआहुतीअन्तरिक्षमाविशतइत्यादिनोक्तःसविषयत्वेनविद्यतेयस्याःसातथातां आनुषंगिकबहुविधफलकांब्रह्मलोकप्रधानफलकामिति २३७

अत्रेति । अत्रविद्यायांयोविशेषज्ञःसमांपृच्छतु अथवामेपृच्छतेवदतादुत्तरंददातु २३८ इत्युक्तइति स्पष्टम् २३९ तेष्विति । तेषुसभास्थत्रैवर्णिकेषुगृहीतमौनेषुसत्स्वेकोयाज्ञवल्क्यस्तंज
नकमग्निहोत्रसंबंधिनींविद्यांनानाविधैःप्रश्नैःपप्रच्छ जनकोपियाज्ञवल्क्यायसर्वंपरिपूर्णमग्निहोत्रमुवाचेति कीदृशोयाज्ञवल्क्यः प्रसंगंसंकल्पत्यागयोग्यकालमागतंवीक्ष्यसंकल्पंनवदिष्यामीत्या
कारकंब्रह्मैववदिष्यामीत्याकारकंवामौनप्रयोजकंत्यक्तवान्परित्यजन्नितियावत् नचविरोधः प्रथमाकारेणयोगक्षेमकथायाएवनिरोधात् द्वितीयाकारस्यापिकामप्रश्नद्वाराब्रह्मनिर्णयसाधनाग्नि
होत्रप्रश्नेनाविरोधादितिभावः इतिद्वयोरर्थः २४० । २४१ याज्ञवल्क्योपीति । तत्अग्निहोत्रविद्याविषयकं एक्ष्यालोच्य २४२ राजापीति । पुरतःस्थितःमुख्यः इत्थंवक्ष्यमाणप्रकारे
णकामप्रश्नंकामंसमुदायात्मकंप्रश्नंनानारूपप्रश्नमितियावत् अयाचतवव्रे ' कामंरेतोनिकाययोः ' इतिविश्वः २४३ इत्थंपदार्थमभिनयति अनेनेतिचतुर्भिः । अनेनयाज्ञवल्क्येनमह्यंयदुपदिष्टंतद्विस्म
रणरूपोऽपराधोमहान्मयिवर्त्ततेतस्यापराधस्यप्रतिक्रियातिरोधानोपायःकामप्रश्नरूपोमयाभाग्येनलब्धइतिद्वयोःसंबंधः २४४ । २४५ नष्टलाभोमहाभाग्यमितिन्यायेनकामप्रश्नरूपवरलाभो
विस्मृतस्याभीष्टस्यचज्ञानस्योज्जीवकःपरमभाग्यफलमित्याह विद्यतइतिद्वाभ्यां । ममांतिकेविविधंपशुहिरण्यादिरूपंमानुषंवित्तंविद्यतेतथादैववित्तात्मिकानानाविधाःसंत्येवविद्यास्तत्रममनस्पृ

अत्रत्रैवर्णिकोयस्तुजानातिसतुपृच्छतु ॥ मामेतामथवाहंतंपृच्छामिवदताद्धिमे २३८ इत्युक्तेसर्वएवैतेसभास्थावर्णिनस्तदा ॥ वक्तुंप्रष्टुंचराजानंसमर्थानाभवन्न
मुम् ३९ तेषुतूष्णींस्थितेष्वेकोयाज्ञवल्क्योमुनीश्वरः ॥ प्रसंगमागतंवीक्ष्यसंकल्पंत्यक्तवान्निजम् २४० पप्रच्छतंमहाराजंविद्यांवैश्वानरींप्रति ॥ प्रश्नैर्नानाविधैः
सोपितस्मैसर्वमुवाचतत ४१ याज्ञवल्क्योपिराज्ञस्तद्बुद्धिकौशलमेक्ष्यहि ॥ दत्तवान्हृष्टचित्तःसन्राज्ञेभीष्टमंवरम् ४२ राजापिकृतकृत्यःसन्धीमतांपुरतःस्थितः ॥
इत्थंविचार्यमनसाकामप्रश्नमयाचत ४३ अनेनपूर्वमादिष्टमात्मज्ञानंमहात्मना ॥ मह्यंमयातिमंदत्वाद्विस्मृतंपापचेतसा ४४ अपराधोमयिमहान्विद्यतेदुष्प्रति
क्रियः ॥ तस्यैषाममसंप्राप्ताभाग्यतोहिप्रतिक्रिया २४५ विद्यतेविविधंवित्तंविद्यानानाविधास्तथा ॥ ममनैवात्मविज्ञानंविस्मृतंयन्मयाधुना ४६ कामप्रश्नवरे
णातंपुनःसंपादयामितत ॥ गुरोरस्मान्महाभागात्संतुष्टाद्भाग्ययोगतः ४७ कामप्रश्नेवृतेतेननिजशिष्येणभूभृता ॥ दत्तवान्याज्ञवल्क्योपितंवरंस्वचिकीर्षितम्
४८ याज्ञवल्क्योहिराज्ञोस्यबोधंस्मारयितुंस्वयम् ॥ उक्तमत्रागतोनैवकार्यांतरमपेक्ष्यसः ४९ याज्ञवल्क्येनदत्तेस्मिन्वरेराजातिहृष्टधीः ॥ एवंविचार्यपप्रच्छयाज्ञ
वल्क्यंमहामुनिम् २५० यद्यप्यसौस्वभावेनशीतलोमुनिसत्तमः ॥ तथापिममदुष्प्रश्नमथनोत्थितवन्हिमान् ॥ दर्शयेन्ममपंथानंशाकल्यस्यकदाचन २५१

ष्टंयत्त्वात्मज्ञानेस्पृहातद्विस्मरणेनाक्रांतमतोभीष्टस्यात्मज्ञानस्यपुनःसंपादनोपायलाभःपरमभाग्यादेवेतिद्वयोर्भावः २४६ । २४७ कामप्रश्नइति । उक्ताभिप्रायेणभूभृताकामप्रश्नेवृतेसति
तस्यवरस्यचिकीर्षितत्वादाश्रमादागमनप्रयोजनस्यनिष्पत्तयेसंपादयितुमिष्टत्वात्तंवरंयाज्ञवल्क्योददाविति २४४८ स्वचिकीर्षितत्वमेवव्यनक्ति याज्ञवल्क्योहीति । हियतोयाज्ञवल्क्योराज्ञउक्त
मुपदिष्टंबोधंस्मारयितुमेवागतइति तस्यचसम्यक्स्मारणंवरद्वारैवेतिभावः २४९ याज्ञवल्क्येनेति स्पष्टम् २५० एवंपदोक्तांविचारेवरस्यप्रकृतोपयोगावगाहितामभिनयति यद्यपीतिद्वाभ्यां ।
असौयाज्ञवल्क्योयद्यपिक्षमाशीलत्वेनचन्दनवच्छीतलस्तथापिपुनरुक्तत्वादिदोषदुष्टेनप्रश्नेनक्षोभितःसन्शाकल्यगतिंदर्शयेदितिशंकयादुःखेनप्रष्टुंशक्यः वरसत्त्वेतुतादृशशंकाभावात्पुनरुक्तमप्यसंगत
मपिचपृच्छतोममाभयमितिद्वयोःसंबंधः । अत्रेदंबोद्धव्यं शतपथब्राह्मणस्यैकादशेकांडेचतुर्थेप्रपाठकेजनकोवैदेहइत्यादिनाश्वेतकेतुसत्यशुष्मयाज्ञवल्क्यैरथान्धावयद्भिःसहाग्निहोत्रविषयोजनकसं
वादोयाज्ञवल्क्येनकामवरदानंचप्रतिपादितंतदेवप्रकृतेग्रंथकृताकिंचिद्भेदेनवर्णितमिति २५१

२५२ एवंवरेणवशीकृतेयाज्ञवल्क्यंपृच्छन्राजा आदौत्वंपदार्थमात्मानंसंघातव्यतिरिक्ततयास्वयंज्योतिष्ट्वेनासंगतयाचनिर्धारयितुंपंचभिःकण्डिकाभिःप्रश्नपरम्परांलब्धपूर्वं पूर्वोत्तरःकृतवांस्तामभि नयति मुनेइत्यष्टादशभिः । हेमुनेअयंपुरुषःस्थूलसूक्ष्मसंघातरूपःश्रुतिगतायंपदेन विवक्षितेजागरणावस्थादेशकालादिभिर्विशिष्टःकिंज्योतिर्भवति किंसंघातांतर्वर्तिनाकेनचिज्ज्योतिषाभास्यः किं वासंघातव्यतिरिक्तेनकेनचिज्ज्योतिषाइतिपृच्छतेमह्यंवद हेधार्मिकवरलक्षणस्वप्रतिज्ञापरिपालकेत्यर्थः २५३ विशेषणानीति । प्रश्नवाक्येअयंपुरुषपदाभ्यामुक्तानिविशेषणान्यालोच्यतस्यव्य तिरिक्तज्योतिर्जिज्ञासयाप्रवृत्तस्यप्रश्नस्योचितंयोग्यमित्यक्षरकमुत्तरंयाज्ञवल्क्यआहस्म इतिकिं आदित्योस्यज्योतिरिति २५४ आदित्येइति । जगतःप्राणे 'प्राणःप्रजानामुदयत्येषसूर्यः' इतिश्रुत्यंतरात् स्पष्टमन्यत् २५५ चंद्रमसीति । प्रभूराजा अग्निर्दीपादिरूपः २५६ अग्नाविति । विस्रब्धंवरेणानिःशंकंमानसंयस्यसतथा २५७ उक्तंसंगृह्णाति रवीति । एवंसूर्या दिचतुष्टयरूपंज्योतिःपूर्वपूर्वाभावेसावधारणंसनियमंप्रकाशकंमुनिनाराजानंप्रत्युक्तम् । सकारणंकारणेनप्रकाशकार्यरूपहेतुनिर्देशेनसहितमित्यर्थः २५८ आदित्यादित्रयेप्रकाशकत्वेहेतुनिर्देशप

अधुनानैवमाभीतिर्विद्यतेममदुर्धियः ॥ प्रष्टुर्नानाविधंप्रश्नंपुनरुक्तमसंगतम् २५२ मुनेजागरणावस्थागतोयंदिवसेसति ॥ किंज्योतिःपुरुषोभूयादिदंमेवदधा र्मिक २५३ विशेषणानिवीक्ष्यायंप्रश्नेतदुचितंहिसः ॥ ज्योतिरादित्यइत्याहयाज्ञवल्क्योनृपोत्तमम् २५४ आदित्येजगतःप्राणेह्यस्मिन्नस्तमयंगते ॥ किंज्योति रितिपप्रच्छराजातंमुनिपुंगवम् ॥ चंद्रमाइतितंप्राहयाज्ञवल्क्योनृपोत्तमम् २५५ चंद्रमस्यस्तमायातेकिंज्योतिरितिसप्रभुः ॥ पप्रच्छपुनरप्याहतमग्निरिति विप्रराट् ५६ अग्नावस्तंगतेकिंस्याज्ज्योतिरित्येवतंपुनः ॥ पप्रच्छमुनिशार्दूलंराजाविस्रब्धमानसः ॥ वागित्येवचसोप्याहयाज्ञवल्क्योमुनीश्वरः ५७ रविसोमा ग्निवागाख्यंतज्ज्योतिःसावधारणम् ॥ याज्ञवल्क्येनमुनिनाराज्ञउक्तंसकारणम् ५८ आदित्यचंद्रमोग्नीनांलोकएकतमेनवै ॥ दृष्ट्वादेशंहिसर्पादिरहितंसुखकारणम् ५९ आस्तेतत्रचपर्येतिगृहक्षेत्रादिभूतले ॥ लोकद्वयफलंयद्वत्कुरुतेकर्मसर्वदा ॥ क्षेत्रादिभ्योविपर्येतिपुनरेवगृहादिकम् २६० गाढेतमसियत्रायंज्ञायतेनानिजः करः ॥ आसनादिकमत्रापिवाचासर्वंकरोतिहि ६१ सुखोदेशोयमत्रास्तीत्युक्तेतत्रसुखंपुमान् ॥ आसनंकुरुतेतद्वत्सर्वंपर्यटनादिकम् ६२ ततोवागपिसंप्रोक्तामु निनाज्योतिषांगणे ॥ कार्यतःशास्त्रतश्चैषाज्योतिरन्यादिवद्भवेत् ६३ एवंनानाविधंज्योतिरादित्यादिकमीरितम् ॥ अंगीचकारसंबोध्ययाज्ञवल्क्येतिभूपतिः २६४

रस्यआस्तइत्याद्यंशस्यार्थमाह आदित्येतिद्वाभ्याम् । आदित्यचंद्रमोग्नीनांमध्यएकेनप्रकाशेनसर्पादिरहितंसुखकारणमनुकूलंदेशंदृष्ट्वातत्रास्तेतिष्ठति तथागृहक्षेत्रादिरूपेभूतलेपर्येतिगच्छति । त त्रगत्वाचेहामुत्रवाहितंकर्मकरोतितद्वत्तथाक्षेत्रादिभ्योविपर्येतिगृहादिप्रत्यावर्तते श्रुतौरेफस्थानेसावर्ण्याल्लकारःप्रयुक्तइतिद्वयोरर्थः २५९ । २६० वाक्पर्यायगतस्यास्तइत्यादिभागस्यार्थमा ह गाढइतित्रिभिः । यत्रगाढांधकारेनिजहस्तोपिनदृश्यतेतत्रसर्वोव्यवहारोवागधीनः तथाहिअंधकारेअयंदेशःसुखोनुकूलइत्युक्तेसतितत्रदेशेआसनंस्थितिंकुरुते तथापर्यटनंकुरुते । आदिप देनश्रुतौउपन्येतीतिपदेनोक्तंवदउपगमनंग्राह्यमितिद्वयोरर्थः २६१ । २६२ ततइति । ततउक्ताकारात्कार्यान्मुनिनावाग्ज्योतिष्ट्वेनोक्तानकेवलमुक्तकार्यादेववाचोज्योतिष्ट्वंकिंतुशास्त्रादपि त थाहिमंत्राणांप्रयोगसमवेतार्थप्रकाशकत्वंकर्मकांडेप्रसिद्धमिति । अत्रेदंबोध्यम् वागंधादीनामप्युपलक्षणंगंधादिज्ञानेनाप्यंधकारव्यवहारदर्शनादिति २६३ आत्मप्रकाशसाधनेदृष्टांतभूताना मादित्यादीनांज्योतिष्ट्वमुक्तंराजांगीचकारेत्याह एवमिति २६४

योयःपुरुषव्यवहारःसस्वभिन्नप्रकाशप्रयुक्तोयथाजागरणइतिव्याप्तिबलेनयत्रनिर्णयश्चिकीर्षितस्तंस्वप्रस्थानमुपन्यस्यतिराजेत्याह एवंजागरणइति । स्पष्टम् २६५ वाचोपीति । यत्रस्वप्नावस्थायां वाचस्तथापिशब्दगृहीतानामादित्यादीनामुपरमोविलयोभवतितत्रपुमान्सूक्ष्मसंघातरूपःस्वप्नमुपागतःकिंज्योतिःकिमात्मकंज्योतिर्युक्तइति २६६ ननुभवतुतत्रमनोज्योतिरित्याशंकांवारयति य थेतिचतुर्भिः । यथाजागरणेविद्यमानमपिनेत्रमादित्यादिप्रकाशंविनासमावृतमंधकाराक्रांतंसज्ज्योतिःप्रकाशकंनभवेत्तथास्वप्नेविद्यमानंमनःसमावृतंआवरणाभिभावकसहकारिविनिर्मुक्तंज्योति रितिवक्तुमशक्यमित्यर्थः २६७ ननुकिंमनसःसहकारिप्रसिद्धमितिचेदिंद्रियवृन्दमित्याह सूर्येति । यथानेत्रस्यचक्षुषोऽर्थकर्मकेग्रहणलक्षणव्यापारेसूर्यादयोऽनुग्राहकास्तथामनसइंद्रियाणि सहकारीणितानितुस्वप्नेलीनानीतिकथंमनोविषयज्योतिष्मद्भजेदितिभावः २६८ किंचस्वाप्नपदार्थानांतदाकारवृत्तीनांचपरिणामिकारणंमनः यथाघटस्यमृत् तथाचतत्रप्रकाशकेनान्येनैवभवि तव्यमित्याह अपिस्वप्नेति । उपादानंपरिणामिकारणमिदंमनः २६९ फलितमाह तेनेति । तेनोक्तप्रकारेणस्वाप्नभावानामविद्योपादानकत्वपक्षेमनसोजाग्रत्संस्कारधारणव्यापारेणक रणत्वाभ्युपगमेपिनेत्रवदनुग्राहकसापेक्षत्वंमनसएव स्वाप्नभावोपादानकत्वपक्षेतुमृत्समत्वमतःस्वप्नावस्थागतंसर्वंबोधकारकंकिंचिज्ज्योतिःस्वभिन्नंहित्वानपेक्ष्यस्वप्नेविद्यमानमपिमनोनज्यो

एवंजागरणेराजापृष्टवान्ज्योतींष्यनेकशः ॥ स्वप्नेपृच्छापुनर्ज्योतिःपुरुषस्यास्यधीमतः २६५ वाचोप्युपरमोयत्रभवेत्स्वप्नेमुनीश्वर ॥ तत्रकिंज्योतिरुद्दिष्टंपुमा न्स्वप्नमुपागतः २६६ यथानेत्रंभवेन्नैतज्ज्योतिर्जागरणेसदा ॥ विद्यमानंतथानस्यान्मनोज्योतिःसमावृतम् २६७ सूर्यचन्द्राग्नयोयद्वदनुग्रहकाराःस्मृताः ॥ नेत्रस्यार्थग्रहेतद्वदिन्द्रियाण्यपिचेतसः २६८ अपिस्वप्नगतंचेतोमृत्समंविद्यतेत्रहि ॥ स्वाप्नानांसर्वभावानामुपादानमिदंयतः २६९ तेननेत्रसमंचैतन्मृदादि मदृशंहिवा ॥ विद्यमानंमनोहित्वास्वप्नगंसर्वबोधकृत् २७० आत्मानंतस्यमनसइन्धंसाक्षिणमुक्तवान् ॥ याज्ञवल्क्योपिराजानंस्वप्नेज्योतिःस्वरूपिणम् २७१ आस्तेयमात्मनास्वप्नेपर्येतिचगृहादिकम् ॥ कुरुतेचैवकर्माणिलोकद्वयफलानिसः ॥ क्षेत्रादिभ्योविपर्येतियद्वज्जागरणेपुमान् २७२ ततआत्मास्वयंज्योतिःप श्यनानाविधांश्रियम् ॥ स्वप्रहन्धगुरोक्तोयंकथितोमुनिनापुनः २७३ रविसोमाग्निवाचोयंस्वप्नेसृजतिसर्वतः ॥ प्रकाशकान्प्रकाश्यांश्चरथादीनीश्वरोयथा २७४ अनुग्राह्यांश्चनेत्रादीन्सर्वपाकारणानिच ॥ महाभूतानिकालांश्चदेशांश्चापिदिशस्तथा २७५

तिः तन्मनसोनुग्राहकंज्योतिःस्वप्नेकिमितिचेत्तत्र २७० उक्तार्थेनराज्ञापृष्टोयाज्ञवल्क्यःआत्मैवास्यज्योतिरित्याविवानमेनोत्तरंददौतस्यार्थमाह आत्मानमितित्रिभिः । एवंपृष्टोयाज्ञवल्क्यःपू र्वोक्तंस्वप्नगतंराजानंप्रतिस्वप्नेआत्मानंज्योतिःस्वरूपमुक्तवान् कीदृशमात्मानम् तस्यमनेत्रसमतयामृत्समतयाचवर्जितस्यमनसःसाक्षिणंसाक्षाद्द्रष्टारंअतएवइन्धंदीप्यतइतिव्युत्पत्तिकेनइन्धनाम्ना वर्णितमिति २७१ कथमात्मनःस्वप्नेज्योतिष्ट्वमितिचेत्ज्योतिःप्रयुक्तस्यासनादिव्यवहारस्यप्रयोजकत्वादित्याह आस्तेऽयमिति । उक्तार्थम् २७२ ततइति । ततःस्वप्नेप्रकाशकांतराभावे [illegible] २७३ [illegible]

[illegible] २७४ अनुग्राह्यानिति । [illegible] २७५

२७६ उरूनिति । उरून्विशालान्सप्तपातालाख्यलोकान्तथाअपरानूर्ध्वान्सप्तभूरादिलोकान्तथातदधिपतींश्चसृजति २७७ दशदिक्पतीन्सृजतीत्याह इंद्रमिति । ऊर्ध्वदिक्प्रतिर्ब्रह्माऽधरदिक्पतिःशेषः । परानिति परानीश्वरविग्रहान्विष्ण्वादीन्तथानानाजातीन्नानाभेदान्प्रभून्भूपत्यादीन् २७८ यदस्तीति । अस्तिस्थूलं नास्तिसूक्ष्मं गम्यतेप्रत्यक्षं नगम्यतेपरोक्षं २७९ ब्रह्मेति । आत्मनोब्रह्मैक्यावगाहकंब्रह्माहमित्याकारकंश्रुतेर्वाक्यंभ्रांतानामात्मनःपरिच्छिन्नत्वादिदर्शनेनाद्वैक्यायोग्यतांमन्यमानानामप्रामाण्यशंकास्कंदितमपिस्वप्नेआलोचितेसतिअप्रामाण्यशंकानिवृत्त्याप्रमाणतांगच्छतिअतिरोहितांप्रमाणतांधारयति । ननुकथंस्वप्नालोचनेनतद्वाक्यार्थयोग्यतानिश्चयइतिचेज्जगज्जन्मादिकारणत्वस्यब्रह्मलक्षणस्याद्वितियितापर्यवसन्नस्यात्मन्यपिदर्शनादित्याह यस्मादित्यादिना । यस्मादसामर्थ्यादिनाशोच्याअपिजंतवोब्रह्मवदीश्वरवन्मायाशबलेनात्मनैवनानाविधानांयथाभूतानामीश्वरसृष्टसमानांसृष्ट्यादिंकुर्वंतीतिद्वयोरर्थः २८० । २८१ एकस्मादात्मनोऽनेकप्रमातॄणामुत्पत्तौदृष्टांतस्तद्यथामहतोभ्याहितादग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंतीतिश्रुत्यंतरेयउक्तःसोपिस्वप्नेसुपरिचेयइत्याशयेनाह महतइति । यथाज्वलतोवन्हेःसरूपाःसमानरूपाःकणानिःसरंतितथाएकस्माज्जंतोरात्मनःसकाशाज्जंतवःप्रमातारोनिःसरंतीति २८२ जीवसृष्टौक्रमोपीश्वरकर्तृकसृष्ट्यासमानइत्याह यद्वद्देवेतितिस्त्रिभिः । यद्वद्यथासर्वस्यकारणंब्रह्मईश्वरः

स्थावरान्जंगमांस्तद्वज्जंतूनुच्चावचानपि ॥ समुद्रान्सरितोद्वीपान्गिरीन्मेर्वादिकानपि २७६ उरूनपिचपातालल्लोकान्सप्तापिचापरान् ॥ लोकपालांस्त्विमान्नानाविभूतिभिरधिष्ठितान् २७७ इंद्रमग्निंयमंरक्षोवरुणंपवनंतथा ॥ धनदंचमहेशानंब्रह्माणंशेषमेवच ॥ परानपिचविष्ण्वादीन्नानाजातिप्रभूंस्तथा २७८ यदस्तियच्चनास्त्यत्रगम्यतेयन्नगम्यते ॥ ब्रह्मांडादिसमग्रंतदेकःस्वप्नेसृजत्ययम् २७९ ब्रह्माहमितियद्वाक्यंश्रुतेस्तद्धिप्रमाणताम् ॥ स्वप्नेगच्छतियस्मात्तत्रशोच्याश्चजंतवः २८० ब्रह्मवद्विविधंविश्वंमाययैवसृजंतिहि ॥ आत्मनःस्थापयंत्येतत्स्वात्मन्येवमहेश्वराः ॥ संहरंतियथाभूतान्जंतून्नानाविधानिह २८१ महतोज्वलतोवन्हेःसरूपाविस्फुलिंगकाः ॥ निःसरंतियथास्वप्नेतथाजंतोश्चजंतवः २८२ यद्वद्देवजगत्सृष्टौब्रह्मसर्वस्यकारणम् ॥ भूतभौतिकगर्भाढ्यंप्रथमंसृजतेमनः २८३ तस्मिन्सृष्टेविजानातिनामरूपात्मकंजगत् ॥ अव्यक्तनामरूपेस्मिन्स्थितआत्मनिसर्वदा २८४ एवंशयानःपुरुषोमनोमात्रैकसाधनः ॥ मनसासृजतेविश्वमात्मनाभासितेनहि २८५ जंतूनांब्रह्मणोभेदेस्थूलादेहाउदाहृताः ॥ ससूक्ष्मायद्वदुद्दिष्टाःखस्यैतेसघटागृहाः २८६ बहिर्वापिगृहेचैतद्धटेवाविषमंनहि ॥ आकाशंविषमत्वंतुगृहकुंभादिसंस्थितम् २८७ स्थूलसूक्ष्मशरीरेषुवैषम्यंसमुपस्थितम् ॥ ब्रह्मणोनस्वरूपेणकुत्राप्येतत्तथैवहि २८८

प्रथमंमनोहिरण्यगर्भरूपंसृजते कीदृशंमनःस्थूलभूततद्विकारात्मकेनगर्भेणजनिष्यमाणभावेनआढ्यंयुक्तं २८३ तस्मिन्निति । तस्मिन्हिरण्यगर्भरूपेमनसिसृष्टेसतिनामरूपात्मकंजगत्सूक्ष्मंस्थूलंचविजानातिविस्पष्टमुपलभते कीदृशंजगत् मनःसृष्टेःपूर्वमात्मनिईश्वरेअव्याकृतनामरूपोपाधिकेअव्यक्तरूपेणस्थितं २८४ एवमिति । एवंशयानःअज्ञानव्यष्ट्युपाधिकःपुरुषोव्यष्टिमनसएवएकःअसहायःसाधनःसाधकोजनकइतियावत् सृष्टेनस्वयंप्रकाशितेनचमनसासर्वंसृजतीति २८५ ब्रह्माहमितिवाक्यार्थेयोग्यतांस्पष्टयितुमुपाधिविनिर्मुक्तेआत्मनिभेदोनास्तीतिताव दर्शयति जंतूनामितितिस्त्रिभिः । जंतूनांप्रमातॄणांब्रह्मणःसकाशाद्भेदेप्रयोजकाःससूक्ष्माःस्थूलादेहाउक्ताःरूपंरूपंप्रतिरूपइत्यादिश्रुतौ यथाखस्याकाशस्यभेदेप्रयोजकाःसूक्ष्माघटाःस्थूलागृहाउद्दिष्टालोकेव्यवहृताः २८६ बहिरिति । यथाकाशंबहिर्देशेगृहेघटेवाविद्यमानंविलक्षणंनकिंत्वेकरूपमेव विषमत्वंतुगृहाद्युपाधिगतमेव २८७ स्थूलेति । तथैवभेदउपाधिष्वेवस्वरूपेणतुब्रह्मणश्चिद्धातोःकुत्रापिवैषम्यंभेदोनास्तीति २८८

एवमुपहिताभेदमुक्त्वाउपाधीनामभेदंवक्तुंसूक्ष्मोपाधिस्वरूपंतावदभिनयति सूक्ष्ममिति । मनएवव्यष्टिरूपंप्रतिप्रमातृवर्त्तमानंजंतूनांसूक्ष्मंशरीरमुक्तं सूक्ष्मशरीरस्यमनःप्रधानत्वात् यथेश्वरस्यहि
रण्यगर्भःसूक्ष्मशरीरमिति २८९ ततःस्थूलशरीरोत्पत्तिसमष्टिदृष्टांतेनाह निर्मिमीतेइति । यथेश्वरस्तेनहिरण्यगर्भरूपेणसूत्रेणस्थूलजगद्रूपंपटंनिर्मिमीतेरचयतितथाव्यष्ट्युपाधिकःपुरुषोपिस्वप्ने
दौमनःसूत्रस्थानीयंयस्यएतादृशंजगत्पटंनिर्मिमीतेइति १०० व्यष्टिसमष्ट्योरभेदंवक्तुंतयोःसाधर्म्यमाह यथैवेतिपंचभिः । यथैकस्माज्ज्वलतोवन्हेर्नानाविधाःकणाविनिर्गच्छंतिउड्डीयमानपा
र्थिवांशोपाधिकंभेदंव्रजंति तथासूत्रात्मभूतादेकस्माद्ब्रह्मणःसकाशाज्जंतूनांमनांसिविनिर्गच्छंतिकार्योपाधिकभेदशालीनिभवंतीति २९१ यथावह्निरिति । यथाचवन्हेस्तत्कणानांचदाहकत्वप्रकाश
कत्वयोर्नविशेषः तन्महत्त्वाल्पत्वयोर्दाह्यप्रकाशाल्पत्वमहत्त्वापेक्षत्वादितिभावः २९२ एवमिति । एवंयथासमष्टेःसूत्रस्यसृष्ट्यादिसामर्थ्यंतथामनसामपिस्वप्नेप्रसिद्धमित्यर्थः २९३ एवंस
मष्टिव्यष्ट्योर्विश्वसृष्ट्यादितटस्थलक्षणसाम्यमभिधायस्वरूपलक्षणसाम्यमप्याह स्वाकारेणेति । यथादृष्टांतेस्वाकारेणस्वस्यवन्हेराकारस्तेजस्त्वंलोहितरूपंचतेनवन्हेःकणानांचसमानत्वंतथासूत्रा
त्मनोमनसांचसूक्ष्मत्वादिरूपसाम्यमित्यर्थः । स्वकारणेतिपाठेपूर्वश्लोकद्वयेनस्वरूपतटस्थलक्षणसाम्यमभिधायानेनश्लोकेनअव्याकृतेनसाम्यंसूक्ष्मसमष्टिव्यष्ट्योरुच्यते । तथाचयथाप्रज्वलतोवन्हेः

सूक्ष्मंशरीरंजंतूनांमनोमात्रमुदाहृतम् ॥ यथाहिरण्यगर्भोयंब्रह्मणोऽव्यक्तरूपिणः २८९ निर्मिमीतेयथातेनसूत्रेणैवजगत्पटम् ॥ तथाशयानःपुरुषोमनःसूत्रंज
गत्पटम् २९० यथैवज्वलतोवन्हेःकणास्तद्वन्मनांस्यपि ॥ जंतूनांब्रह्मणःसूत्राद्विनिर्गच्छंत्यनेकशः २९१ यथावह्निर्महान्दीप्तोदहेच्चापिप्रकाशयेत् ॥ कणाअपि
तथादाहंप्रकाशंचप्रकुर्वते २९२ एवंसूत्रंयथाविश्वंसृजत्यत्तिचपातिच ॥ तथामनांसिसर्वाणिशयनेसर्वदेहिनाम् २९३ स्वाकारेणसमानत्वंवन्हेःप्रज्वलतोपिहि ॥
कणानांचतथैवस्यात्सूत्रस्यमनसामपि २९४ अव्याकृतेयथैवस्याद्वन्हेदोरूपेनकश्चन ॥ कणानांचमहावन्हेःकाष्ठभेदंविहायहि २९५ सूत्रस्यमनसांचैवंरूपभेदो
नविद्यते ॥ विराट्स्थूलशरीराणांभेदमेकंविहायहि २९६ सूत्रंयथाजगच्चित्रभित्तिभूतमुदाहृतम् ॥ मनांस्येवंजगच्चित्रभित्तिभूतानिदेहिनाम् २९७ अव्याकृतं
यथासर्वंप्रकाश्यंप्रकाशकम् ॥ सूत्रस्यापिविराजश्चभूतभौतिकरूपिणः २९८

सूक्ष्मसमष्टिस्थानीयस्यकणानांचव्यष्टिस्थानीयानांस्वकारणेनतेजःसामान्येनधर्मैःकार्यैश्चसाम्यंतथासूत्रस्यमनसांचकारणेनकारणाज्ञानविशिष्टेनईश्वरात्मनासृष्टिसामर्थ्यादिधर्मैःसाम्यमित्यर्थः
२९४ एवंलक्षणसाम्यमुक्त्वातत्फलमभेदंदर्शयति अव्याकृतइतिद्वाभ्यां । यथाज्वलतोवन्हेःकणानांचाव्याकृतेतेजःसामान्यात्मकेरूपेउपाधिभूतंकाष्ठनिष्ठंभेदंविहायानपेक्ष्यनभेदस्तथासूत्रस्य
मनसांचस्वरूपेनभेदःकिंतुविराट्शरीरोपाधिकःसूत्रेभेदोव्यष्टिस्थूलशरीरोपाधिकोमनसांभेदःस्वतस्त्वभेदइतिद्वयोरर्थः २९५ । २९६ एवंचिद्धातोरेकत्वंतथाउपाधिभूतसमष्टिव्यष्ट्योरभेदोद
र्शितः अथचिज्जडयोर्द्वैतंवारणीयंतदर्थंदृग्दृश्यसंबंधस्यदृश्यमिथ्यात्वमंतरेणानुपपन्नस्यसूचनायचिद्भास्यतांजडस्यदर्शयिष्यमाणस्तत्रापिचितासाक्षान्मनएवप्रकाश्यतेइतरत्तुतद्द्वारेतिप्रदर्शनोपयोगि
नींचित्तस्यभित्तिस्थानीयतांदर्शयति सूत्रमिति । यथास्थूलसमष्टिरूपस्यचित्रस्यआलेख्यस्यकुड्यभूतंसूत्रंसूक्ष्मसमष्टिस्तथाव्यष्टिमनांस्यपिस्थूलव्यष्टीनांभित्तिभूतानीति २९७ यथादीपेनकुड्ये
भासितेतद्गतंचित्रमपिभासितंभवतितथामनएवसमष्टिव्यष्टिरूपंभित्तिभूतंसाक्षिणासाक्षाद्भास्यतइत्याह अव्याकृतमिति । अव्याकृतपदस्यसमष्ट्यज्ञानवाचकस्यतदुपाधिकईश्वरसाक्षिणिलक्षणा
तथाचाव्याकृतमीश्वरःसाक्षीसर्वस्योपाधिमायातद्विलासैरप्रकाश्योपिसूत्रस्यतद्द्वाराविराजश्चप्रकाशकः २९८

६०

102

तथाऽज्ञानेति । तथाआज्ञानसमष्ट्युपाधिकवत् अज्ञानस्याश्रयः अहमज्ञइत्याकारेणअज्ञानाभिमानीजंतुर्जीवसाक्षीतियावत् सूक्ष्मस्थूलशरीरेरप्रकाश्योपितेषांप्रकाशकइति जीवस्यैवाहंकारारूढमज्ञानंनेश्वरस्येतितिविशेषःसंक्षेपशारीरकेप्रपंचितः २९९ एवंमहावाक्यार्थयोग्यतादर्शिता अथात्मनिसंसारोपलब्धिर्मनोन्वयएवमनोव्यतिरेकेतदर्शनादितिसूचयितुंव्यष्टिमनोव्यतिरेकास्त्रिविधः समष्टौलये कारणेलये अधिष्ठानलयेच । तस्यावांतरभेदंपङ्क्तिःश्लोकैर्दर्शयन्समष्टिलयाख्यंमनोव्यतिरेकंतावदाह इंधनेति । यथालोकेपाकाद्यर्थंप्रज्वालितोवन्हिरिंधनाभावेसतिमहावन्हौतेजःसामान्येलीयतेतथाहिरण्यगर्भाद्युपासकानामुपासनाफलप्रादुर्भावकालेमुक्त्यादिअध्यात्मपरिच्छेदाभावलक्षणांमुक्तिदेवभावावाप्तिलक्षणामतिमुक्तिंचाश्वलप्रश्नेपंचमाध्यायेउक्तांफलत्वेनगच्छतांमनःसूत्रेसमष्टिमनसिलीयतेइत्यर्थः तावताप्याध्यात्मिकपरिच्छेदलक्षणसंसारनिवृत्तिरितिभावः ३०० द्वितीयंकारणलयेमनोव्यतिरेकंदर्शयति सएवचेतित्रिभिः । यथाभस्मनाछन्नोवन्हिर्दाहादिकार्यंनकरोतिभस्मनोऽपायेऽपसारणेतुयश्छन्नआसीत्सएवदाहादिकंकरोति ३०१ सुप्ताविति । तथासुप्तिदशायांमरणदशायांचजंतूनांतानिमनांस्यग्निरूपाणिभोगप्रदकर्माभावरूपाभिर्विभूतिभिर्भस्मभिरभिभूतानिच्छन्नानिसृष्ट्यादिकंनकुर्वंते ३०२ उद्बोधइति । पुनःकर्मणामुद्बोधेतुयानिमनांसिसुप्तिमरणयोःकारणेलीनानितान्येवस्वप्नजागरणयोःसृष्ट्यादिकंकुर्वंति तथाचकारणेमनोलयेकिंचित्कालंसंसारानन्नुभवेपिपुनरुद्बोधोभवतीतिमुक्तेर्विशेषइतिभावः ३०३ तृतीयमधिष्ठानेलयेबाधसंज्ञेसतिमनोव्यतिरेकंमुक्तिसंज्ञंप्रदर्शयति भस्मीकृत्येतिद्वाभ्याम् ।

तथाऽज्ञानाश्रयोजंतुरप्रकाश्यःप्रकाशकः ॥ सूक्ष्माणामपिदेहानांस्थूलानामपिसर्वदा २९९ इंधनाभावतोवन्हिर्महावन्हौयथैवहि ॥ लीयतेत्रमनांस्येवं सूत्रेमुक्त्यादिगच्छताम् ३०० सएवचयथावन्हिर्भस्मच्छन्नोनकार्यकृत् ॥ पुनश्चभस्मनोपायेदहेच्चैवंप्रकाशयेत् ३०१ सुप्तौमृतौचजंतूनांकर्माभावविभूतिभिः ॥ अभिभूतानितान्येवसृष्ट्यादिचनकुर्वते ३०२ उद्बोधेकर्मणस्तानिपुनःकुर्वंतिसर्वदा ॥ सृष्ट्यादिकंनचान्यानिस्वप्नेजागरणेपिच ३०३ भस्मीकृत्ययथाकाष्ठजातंवन्हिःक्षयंगतः ॥ मथनेनपुनर्जातुसएवचनजायते ३०४ ब्रह्मज्ञानाग्निनादग्धेस्वात्माज्ञानेतथैवहि ॥ जायमानेपुभूतेपुमुक्तोनैवप्रजायते ३०५ निदाघशर्वरीकालेतेजइंधनवर्जितम् ॥ नप्रकाशंहिसंतापंकुरुतेसर्वदेहिनाम् ३०६ स्वप्नस्थितस्तथैवात्मासर्वकारणवर्जितः ॥ आत्मनैवसृजत्येतद्विश्वंसदसदात्मकम् ३०७ शिशिरेत्रयथावन्हिरिंधनानिसमाश्रितः ॥ शीतंहरतिजंतूनामत्यंतनिकटस्थितः ३०८

यथासर्वकाष्ठचयंभस्मीकृत्यक्षयंगतोयोवन्हिःसएवपुनर्जातुकदाचिदपिनजायतेमथनेनापियन्वांतरमेवजायतइति ३०४ ब्रह्मेति । तथासाधनसंपन्नेनमनसातत्त्वज्ञानाग्निभावापन्नेनसविलासाज्ञानरूपकाष्ठचयेदग्धेसतिमनसोप्यज्ञानविलासत्वेनदग्धत्वात्प्रारब्धांतरेपुजायमानेष्वपिचित्तजन्मोपाधिकंजन्मानुभवतस्त्वपिमुक्तोनजायतेमनोजन्मोपाधिकंजन्मनप्राप्नोतीति । जायमानेपुभूतेष्वित्युक्तिरनेकजीववादाभिप्रायेण एकजीववादेतुनकोपिजायतइतिबोध्यम् ३०५ एवंमनोव्यतिरेकेसंसारव्यतिरेकोदर्शितः अथमनोन्वयेसंसारान्वयंप्रपंचयंस्तत्रापिस्वप्नेसूक्ष्मांसृष्टिंजाग्रतितुस्थूलांसृष्टिमात्मामनोविशिष्टःकरोतीतिविशेषंदृष्टांतेनस्पष्टयति निदाघेतिचतुर्भिः । यथाग्रीष्मर्तौरात्रिकालेतेजऊष्मरूपंप्रकाशहीनंसंतापमात्ररूपंकार्यमिन्धनानपेक्षमेवकरोतितथास्वप्नेमनोविशिष्टआत्मालौकिकसामग्रीहीनोप्यात्मनैवसूक्ष्मंरथादिकंसृजति तस्यकार्यस्यैवसूक्ष्मतायद्वाह्यसामग्र्यनपेक्षत्वम् एतादृशीसूक्ष्मतैवचस्वप्नस्यमिथ्यात्वेहेतूकृता मायामात्रंतुकात्स्न्र्येनानभिव्यक्तस्वरूपत्वादितिसूत्रेइतिद्वयोरर्थः ३०६ । ३०७ बाह्यसामग्रीसापेक्षत्वेनस्थूलांजाग्रत्सृष्टिंत्युत्पादयति शिशिरइति । यथाशिशिरर्तौवन्हिःशीतहरणलक्षणंकार्यंकुर्वन्निन्धनलक्षणमुपकरणंसान्निध्यंचापेक्ष्यैवकरोतितथाजागरणआत्मादेशाद्यपेक्षस्तत्कार्यंकुरुः देशाद्यपेक्षत्वमेवजाग्रत्कार्यस्यस्थूलत्वंभगवद्व्याससूत्रेकात्स्न्र्यपदेनोक्तमितिद्वयोरर्थः ३०८

३०९ सूत्रकारादिभिःस्वप्नेमिथ्यात्वंकात्स्न्यार्भावेनयत्प्रसाधितंतत्स्वप्नमात्राभिप्रायेणकिंतुस्वप्नदृष्टांतेन जाग्रत्यपिमिथ्यात्वसाधनायेतीममाशयंस्पष्टयन्स्वप्नजाग्रतोःसाम्यमभिनयति स्वप्नइ त्येकादशभिः । यथास्वप्नेप्रतीयमानंसदसदात्मकमनुकूलप्रतिकूलात्मकंविश्वंमनएवमनोमात्रमेवमिथ्येतियावत् तथाजाग्रत्प्रपंचोपीत्यर्थः । अत्रस्वप्नपदार्थानांमायोपादानकत्वपक्षेमनःप दंमनःकारणाज्ञानपरमितिबोध्यम् ३१० तत्रहेतुंमनोमात्रान्वयव्यतिरेकानुविधायित्वंदर्शयन्व्यतिरेकंतावदाह निरोधइति । यथास्वप्नेऽस्यमनसोनिरोधेविषयाकारवृत्तिक्षयेद्वैतंतत्तद्विषयरूपं नोपलभ्यतेतथाजाग्रत्यपीति ३११ अन्वयंदर्शयति शत्रुमित्रेति । यथास्वप्नेमनसःशत्रुमित्रात्मकेनभावेनपरिणामेनरागद्वेषादयोजायमानाःसंकल्पमात्रहेतुकाएवतथाजागरणेप्येतेरागादयस्त थारागद्वेषोपेक्षाविषयरूपाइष्टादिपदार्थाःसंकल्पादेवजायंतेविषयैर्बाह्योपकरणैर्विनेत्यर्थः । जाग्रत्पदार्थेषुबाह्यकारणजन्यत्वाभिमानोपिकारणत्वाभिमतानांपूर्वसंकल्पितत्वात्स्थिरत्वाभिमानो प्यभ्यासात्एतादृशमेवकात्स्न्र्यंजाग्रत्यभ्युपेत्यतदभावेनहेतुनास्वप्नेमिथ्यात्वप्रसाधनंसूत्रकारादिभिःकृतमितिभावः ३१२ । ३१३ ननुजाग्रत्पदार्थानांदृश्यमाननानाविधसामग्रीजन्यानांक थंमिथ्यात्वमितिचेद्यदिनानाविधसामग्रीदर्शनमात्रेणसत्यत्वमुच्यतेतर्हिस्वप्नेपिजाग्रद्दृष्टपदार्थानांसर्वेषामुपलब्धेःस्वाप्निकानांभावानांसत्यत्वापत्तिरित्याशयेनाह यावानिति स्पष्टम् ३१४ ननु

तथाजागरणेप्यात्मास्थूलंदेहंसमाश्रितः ॥ देशकालादिसापेक्षःसृजत्येतन्नचान्यथा ३०९ स्वप्नेमनोयथाभूयाद्विश्वंसदसदात्मकम् ॥ तथाजागरणेप्येतन्मन एवनसंशयः ३१० निरोधेमनसोयद्वत्स्वप्नेद्वैतंनलभ्यते ॥ तथाजागरणेप्यस्यनिरोधेलभ्यतेनहि ३११ शत्रुमित्रात्मभावेनरागद्वेषादयोयथा ॥ संकल्पेनैव जायंतेस्वप्नेसर्वशरीरिणाम् ३१२ तथाजागरणेप्येतेजायंतेविषयैर्विना ॥ इष्टानिष्टादिविषयाःसंकल्पादेवमानसात् ३१३ यावान्जागरणेदृष्टःप्रपंचोदेहधारि णा ॥ सुखदुःखकरःसर्वस्तावान्स्वप्नेपिविद्यते ३१४ यथासव्यभिचारत्वंस्वप्नदृष्टस्यवस्तुनः ॥ दृष्टंजागरणेस्वप्नेसुखदुःखकरस्यच ३१५ तथाजागरणावस्था गतस्याखिलवस्तुनः ॥ सुखदुःखकरस्यापिस्वप्नेसव्यभिचारिता ३१६ सुखहेतुर्यथादृष्टःकदाचिद्दुःखदोत्रसः ॥ सर्वोजागरणेस्वप्नेप्येवंसव्यभिचारता ३१७ शुक्रशोणितसंभूतंयथाजागरणेवपुः ॥ एवंस्वप्नेपिजंतूनांजायतेशुक्रशोणितात् ३१८ असत्येस्वप्नगेदृष्टेयथातेशुक्रशोणिते ॥ तथाजागरणेप्येतेअसत्येअ पिकारणे ३१९

जाग्रत्पदार्थेषुस्थिरत्वंविशेषइतिचेत्स्थिरत्वंकिंअन्यथाभावशून्यत्वंनियतकार्यकरत्वंवा नाद्यः तस्यात्मभिन्नेजडेपरिणामिनिदुर्वचत्वात् । नांत्यः सुखदुःखजनकत्वाभिमतानांविपरीतकार्यज नकतायादृष्टेरित्याह यथेतित्रिभिः । यथास्वप्नदृष्टस्यवस्तुनःपदार्थजातस्यजागरणेसव्यभिचारत्वंव्यभिचारेणदृष्टस्वभावपरित्यागलक्षणेनसाहित्यंदृष्टंस्वप्नेसुखदुःखकरस्यचजागरणेभिन्नकार्यसं बंधलक्षणंसव्यभिचारित्वंदृष्टंतथाजाग्रत्पदार्थानांस्वप्नेसव्यभिचारत्वंदृष्टमितिद्वयोःसंबंधः ३१५ । ३१६ सुखादिकार्यव्यभिचारितामेवविशदयति सुखहेतुरिति । यथात्रजागरणेयःसुहृदा दिर्भावःसुखहेतुर्दृष्टःसएवकदाचिद्वियोगादिकालेदुःखदोदृष्टःएवंविधाएवभावाःस्वप्नेपिसंतीतिसव्यभिचारतास्पष्टा एवंविधत्वंस्थिरत्वेऽनुपपन्नमितिभावः ३१७ नचजाग्रत्स्वप्नयोःपदार्थानांसा मग्रीवैलक्षण्यम् कल्पितसामग्र्याउभयत्रसाम्यात् सत्यायाःकुत्राप्यभावादित्याशयेनाह शुक्रेति । यथाजागरणेशरीरंपितृमात्रंशजंतथास्वप्नेपि यदिस्वप्नगयोःशुक्रशोणितयोरसत्यत्वंपश्य सितदाजागरणगयोरपिवाचारंभणश्रुत्यादर्शितमसत्यत्वंकुतोनपश्यसि भ्रमसिद्धायाःकारणतायाअसत्ययोरपिसुवचत्वादितिद्वयोरर्थः ३१८ । ३१९

कारणकारणानामपिकल्पितानांस्वप्नेसौलभ्यमित्याह पितेति । तयोःस्वप्नजाग्रतोः ३२० फलिमाह मनएवेति । ततःप्रपंचस्यमनोऽन्वयव्यतिरेकानुविधानात् सदसद्रूपंस्थूलसूक्ष्मात्मकं रूपंयस्यसतथातस्य ३२१ मनसःप्रपंचकारणतामेवप्रपंचयति तेनैवेत्यादिना । जीवेशादिनिरूप्योभेदोत्रसंसारेतेनवर्णितेनमनसैवनिर्मितोयेनभेददर्शनेनभृशंमोमुह्यतेपुनःपुनर्मोहंप्रमादाख्य मृत्युंगच्छति ' मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ' इतिश्रुतेः ३२२ मनएवेति । ततउक्तविधयासर्वप्रपंचकारणत्वादेवमनोबंधमोक्षयोरपिकारणं बंधमोक्षयोःप्रपंचनिरूप्यत्वेनप्रपंचांतर्गतत्वादिति । तत्रबंधप्रयोजकंमनसोरूपंदर्शयति आत्मनइति । आत्मविषयकमज्ञानमावरणरूपमायातमभिमन्यमानंमनोबंधस्याध्यासलक्षणस्यकारणंस्थितिहेतुर्भवति भेददर्शनंविक्षेपशक्तिरूपमज्ञानमभिमन्यमानंतुबंधफलस्याध्यात्मिकादिदुःखत्रयस्यकारणंक्षेत्रंभवतीत्यर्थः ३२३ मोक्षप्रयोजकंतत्त्वज्ञानात्मकंमनसोरूपंदर्शयति श्रुत्युक्तमिति । मनआत्मनःश्रुत्युक्तंरूपंजानत्स ज्जंतोर्मोक्षकारणंभवतीति ३२४ बंधमोक्षयोर्मनसिनिक्षेपेहेतुंशुद्धात्मनोबंधाद्ययोग्यत्वमाह नबंधइति । आनंदात्मकंरूपंयस्यएतादृशस्यमनसस्तद्विकाराणांचसाक्षिणआत्मनोबंधादिकंना

पितामातासुतोभ्रातेत्यादिस्वप्नेपिविद्यते ॥ यथाजागरणेकेनविषमत्वंभवेत्तयोः ३२० मनएवततोज्ञेयंस्वप्नेजागरणेपिवा ॥ सदसद्रूपरूपस्यप्रपंचस्यास्यकारणम् ३२१ तेनैवमनसासर्वोभेदोविरचितोत्रहि ॥ ईशानीशात्मकोयेनभृशंमोमुह्यतेपुमान् ३२२ मनएवततोज्ञेयंबन्धेमोक्षेचकारणम् ॥ आत्मनोऽज्ञानमायातंभवेद्बन्धस्यकारणम् ॥ त्रिविधस्यापिदुःखस्यभेददर्शनमागतम् ३२३ श्रुत्युक्तंस्वात्मनोरूपंस्वप्रकाशसुखात्मकम् ॥ जानन्मनोभवेज्जंतोर्मुक्तेरपिचकारणम् ॥ ३२४ नबंधोनचवैमुक्तिर्नचभेदस्यदर्शनम् ॥ आनंदात्मस्वरूपस्यसाक्षिणोमनसोपिच ॥ विद्यतेकिंतुमनसःसर्वमेतन्मनःकृतम् ३२५ क्रीडापरोयथालोकेमर्कटोत्यंतचंचलः ॥ आत्मनैवात्मनोदुःखंकुरुतेमरणांतिकम् ३२६ तथातिचंचलंसर्वजंतूनांमनईरितम् ॥ आत्मनैवात्मनोदुःखंसंसारंकुरुतेसदा ३२७ मत्स्योगाधेजलेयद्वत्स्थितोभयविवर्जितः ॥ बडिशार्थंबहिर्गच्छन्दुःखंप्राणांतमाव्रजेत् ३२८ आनंदजलधौतद्वत्स्वप्रकाशेऽभयेस्थितम् ॥ मनोविषयलाभार्थं बहिर्गच्छद्व्रजेद्भयम् ३२९ मर्कटश्चंचलोयद्वद्बद्धःसूत्रैर्दिशोदश ॥ धावन्दुःखंसमाप्नोतिसर्वतोदुःसहंसदा ३३० इंद्रियैर्दशभिस्तद्वन्मनोऽबद्धमभीतवत् ॥ धावद्बंधमवाप्नोतिदुःसहंदुःखमत्रहि ३३१ पारावतोयथाकाशेवर्ततेनयनातिगः ॥ वीक्ष्यपारावतींमंदस्तत्क्षणाद्भुवमाव्रजेत् ३३२ एवंशब्दादिपैशाचींनिरीक्ष्यात्मन्यवस्थितम् ॥ तत्क्षणाद्बहिरायातिमनोदुःखकरेस्थले ३३३

स्तिकिंतुमनःकृतत्वात्सर्वमेतद्बंधादिकंमनसएवविद्यतेइति ३२५ मनसआत्मनोनर्थकरत्वेदृष्टांतमाह क्रीडेति । मरणांतिकंमरणपर्यंतम् ३२६ तथेति । स्पष्टम् ३२७ तत्राद्यिमनस आत्माकारताप्रच्यावकःकामएवविशेषतोदुःखहेतुरितिसदृष्टांतमाह मत्स्यइतिद्वाभ्यां स्पष्टम् ३२८ । ३२९ इंद्रियाभिमानस्यविशेषतोदुःखजनकतांसदृष्टांतंदर्शयति मर्कटइति । यथादशरज्जुबद्धस्यमर्कटस्यधावनपरस्यमहद्दुःखंतथादशेंद्रियाभिमानिनोविषयाभिमुखंधावतश्चबंधदुःखयोःप्रसक्तिरितिद्वयोरर्थः ३३० । ३३१ मनसोविषयाभिमुखंवेगेनधावनेदृष्टांतमाह पारावतइति । यथापारावतःकपोतोऽतिदूरमाकाशेवर्तमानोनेत्राविषयोपिपारावतींवीक्ष्यतद्रागांधस्त्वरितंभुवंगच्छति ३३२ दार्ष्टांतिकेयोजयति एवमिति । एवंमनआत्मनिचिदाकाशेऽवस्थितंस्वभावतस्तदाकारतांआकाशेजन्मतएवघटवत्परिपूर्णतालक्षणांगतमपियदाशब्दादिविषयरूपांपैशाचीं प्रज्ञादित्वेन स्वार्थिकाणंतात्स्त्रियांङीप् । पश्यतितदाद्वैतदर्शनात्मकेदुःखदेस्थले—

–आयातीति अत्रशब्दादिविषयाणांपिशाचीत्ववर्णनेनमनसःपिशाचत्वंसूचितं तत्साहश्यस्याकाशवासित्वरूपस्यचसूचकमात्मन्यवस्थितमितीतिबोध्यम् ३३३ एवंकामस्यप्रवृत्तिद्वारादुःखद त्वंप्रदश्यार्थिकर्मणःफलजननेकामसापेक्षस्यदुःखदत्वंदृष्टान्तेनस्फुटयति पाशेति । यथापशुरजादिः पाशबंधनेनानीश्वरःपरतंत्रस्सन्नुत्तरोत्तरंदुःखदंदेशंयातितथामनोपिसकामंशुभाशुभादृष्टरूपपा शबद्धमुत्तरोत्तरंदुःखकरींविषयभूमींयातीतिद्वयोरर्थः ३३४ । ३३५ ननुबद्धस्यपशोर्देशांतरनेतृपुरुषस्थानीयोत्रकइतिचेल्लोकेऽप्रसिद्धआगमैकबोध्योंतर्याम्येवेतिसूचयन्नाह अकारणमिति । 'शेषःसंकर्षणेनन्तेउपयुक्तेतरेवधे' इतिविश्वकोशेवधपदोक्तमृत्युरूपशेषस्यसर्वत्रभूतलेऽव्यवस्थयाधावनंयथाअकारणंअलक्ष्यमाणकारणकंतथामनसोपिबहिस्तत्तदाकारतालक्षणंधावनंदुर्लक्ष्यकारणक मित्यर्थः । शेषपदस्थानेशिशुरितिपाठेअकारणंव्यर्थंयथाशिशोर्गृहांगणधावनंतथामनसोबहिरित्यर्थः । परंत्वत्रपाठेसर्वत्रपदास्वारस्यंसंकोचोवा व्यर्थत्वमात्रबोधनपरत्वंचास्यपद्यस्येतिबोध्यम् ३६ अथसंघाताध्यासरूपायाःकार्याविद्यायाअनर्थकरत्वंदृष्टांतेनस्फुटयति प्रमत्तैरितिद्वाभ्यां । यदिकश्चिद्रथीबंधनाद्यैःसंयुतोरथोपरिबद्धपादः आद्यपदग्राह्यविहाररागरथाभिनिवेशयुतश्चस्यात्त स्यचरथेयुक्तावाजिनःप्रमत्ताःशिथिलबंधनबद्धाश्चस्युः सयथागर्तपातेनसाश्वोनश्येत् तथामनःस्थितोमनस्तादात्म्याध्यासमापन्नएषपुरुषोदुर्दांतैरशिक्षितैरिंद्रियाश्वैर्मनसाप्रग्रहभूतेनक्षणभंगुरता

पाशबद्धोयथाकश्चित्पशुरायात्यनीश्वरः ॥ देशाद्देशांतरंनित्यंदुःखाद्दुःखकरंभृशम् ३३४ कर्मपाशैस्तथाबद्धंमनोविषयभूमिकाः ॥ आयातिविवशंनित्यंदुःखाद्दुःखकरीर्भृशम् ३३५ अकारणंयथाधावेच्छेषःसर्वत्रभूतले ॥ अकारणंतथैवैतन्मनोयातिबहिःसदा ३३६ प्रमत्तैर्वाजिभिर्युक्तैर्बद्धैःशिथिलबंधनैः ॥ यथानश्येद्रथीसाश्वोबंधनाद्यैश्चसंयुतः ३३७ दुर्दांतैरिंद्रियैस्तद्वन्मनोबंधनसंयुतैः ॥ मनःस्थितःपुमानेषसंसारंप्रतिपद्यते ३३८ बालोयथामुखेस्वस्यविक्रियाःकुरुतेयतः ॥ पुरःस्थितेऽतिसंशुद्धेविलोकयतिदर्पणे ३३९ एवंमनोपिसंसारविक्रियाकारणंसदा ॥ आत्मनिस्वप्रकाशेस्मिन्विलोकयतिविक्रियाः ३४० अम्लोरसोयथास्वस्यसंनिधौमुखपंकजे ॥ नीरमुत्पादयेत्क्षीघ्रंक्षोभयेद्वापिमानसम् ३४१ एवमात्मासदानंदस्वप्रकाशशरीरवान् ॥ आत्मसंनिधिमात्रेणक्षोभ यत्येषमानसम् ३४२ स्वप्नेयथासृजत्येषमनांसिविविधान्यपि ॥ सृजत्येवंमनोप्येतत्स्वप्रदर्शनकारणम् ३४३

लक्षणशिथिलताशालिनाबद्धैर्युतेसंघातरूपेरथेस्थितःपुमान्संसारलक्षणगर्तपातंप्राप्नोतीति । आत्मानंरथिनंविद्धीत्यादिकठश्रुतेरितिद्वयोरर्थः ३३७ । ३३८ सचसंसारोमनस्येववर्त्त मानोभ्रांत्यात्मनिप्रतीयतइत्येतद्दृष्टांतेनविशदयति बालइतिद्वाभ्यां । यथाबालःस्वमुखेविक्रियाःवक्रत्वादिविकारान्यतःकुरुतेततएवदर्पणेविलोकयतिनतुताविक्रियाःसंतिदर्पणेतथामनः स्वयंविकृतंसत्स्वनिष्ठाविक्रियाःशुद्धात्मनिपश्यतीतिद्वयोरर्थः ३३९ । ३४० . ननुजडस्यमनसोविकारकारणत्वमपिकथमितिचेच्चिदात्मनःसंनिधेःप्रतिबिंबादिपदैःप्रसिद्धस्यप्रभावादितिसूचय न्नात्मनःसंनिधिमात्रेणप्रेरकत्वंसदृष्टांतमाह आम्लइति । यथाजंबीरादिरम्लरसवान्पदार्थोदृष्टःसन्जिव्हांवाद्रावयतिमनोवाक्षोभयतिएवमात्मासन्निधिमात्रेणमनसोविक्रियासुप्रवर्तकइतिद्वयो रर्थः ३४१ । ३४२ नन्वसंगस्यात्मनोमनःक्षोभकत्वमपिकथमितिशंकांवारयन्मूलाज्ञानादिपदवाच्ययाअचिंत्यशक्त्याविशिष्टस्ययथामनआदिसर्जकत्वंतथैतदपीतिदर्शयति स्वप्नेइत्यष्टभिः । यथैषआत्मास्वप्नेस्रष्टानांनानाप्रमातॄणांमनांसिसृजतिएवंयेनमनसाविशिष्टःस्वप्नावस्थांगच्छतितन्मनोपिसृजतीति ३४३

ननुस्वप्नेमनसांसृष्टिर्मनःकृतैवदृष्टेतिप्रधानमनःसृष्टिरपिमनोंतरकृताभविष्यतीतिशंकांसदृष्टांतंपरिहरति नष्टेति । यथादिराजेनपृथुनापृथिवीदोहनात्पूर्वंकालेलोकेनष्टबीजेसति पृथुराजप्रेरणया वसुंधरायद्वीजहेतुर्बभूवतत्रनबीजानांबीजहेतुत्वंकिंतुनिर्बीजायाग्रस्तबीजायाःपृथिव्याएव एवंभगवानीशःस्वात्मज्ञानविवर्जितोमूलाज्ञानविशिष्टआत्मैवमनसःकारणं । कीदृशआत्मा अमनाः सुषुप्तिप्रलयादौमनोरहितत्वेनप्रसिद्धइत्यर्थः ३४४ आत्मनोविकारकारणतायांविकाराणांनविशेषणत्वंकिंतुमूलाज्ञानादिपदवाच्यायाःशक्तेरेवेत्येतदृष्टांतेनस्फुटयति यथेतिद्वाभ्यां । यथाकाशस्यमेघाद्युत्पत्तिकारणत्वंमेघादिहीनस्यानिर्वाच्यशक्तिविशिष्टस्यैवनमेघादिविशिष्टस्यतथाप्रपंचप्रागभावपदेनाव्याकृतपदेनवाभिलप्यंयदज्ञानंतद्विशिष्टएवआत्माप्रपंचकारणमितिद्वयोरर्थः ३४५ ३४६ नन्वज्ञानमात्रेणकथंविपरीतरूपलाभइतिनशंकनीयंदृष्टत्वादित्याह आत्मेति । यथाकुतश्चननिमित्ताद्भिक्षुर्दरिद्रोविप्रविशेषःअघमर्षणकालेराजाबभूवतस्यचराजभावनिर्वाहकमात्मनोभिक्षुत्वेनाज्ञानमेवप्रसिद्धमेतद्वासिष्ठे तथाराजालवणोदैवयोगाद्भिक्षुर्दरिद्रोबभूवतस्याप्यात्मनोराजत्वेनाज्ञानमेवभिक्षुत्वनिर्वाहकंतथात्मनोप्यात्माज्ञानान्नानाविधप्रपंचभावइतिद्वयोरर्थः ३४७

नष्टबीजेयथालोकेबीजहेतुर्वसुंधरा ॥ निर्बीजैवभवेदेवममनामनसोपिहि ॥ कारणंभगवानीशःस्वात्मज्ञानविवर्जितः ३४४ यथामेघादिरहितआकाशोत्यंतनिर्मलः ॥ उत्पत्तिस्थितिनाशानांमेघादेःकारणंभवेत् ३४५ मनआदिप्रपंचेनरहितोऽव्याकृतोथवा ॥ मनआदिप्रपंचस्यकारणंपरमेश्वरः ३४६ आत्माज्ञानाद्भवेद्भिक्षुर्यथाराजाकुतश्चन ॥ राजावापिभवेद्भिक्षुर्दैवयोगात्कथंचन ३४७ तथैवायंब्रह्मरूपआनंदात्माद्वयःपुमान् ॥ आत्माज्ञानाद्भवत्येतद्विश्वंसदसदात्मकम् ॥ ३४८ जायतेम्रियतेयद्वदजातोप्यमृतःपुनः ॥ स्वप्नेजागरणेप्येवंजायतेम्रियतेपिसः ३४९ दृश्यैर्घटादिभिर्यद्वद्दृश्योजागरणेनहि ॥ द्रष्टास्वप्नेतथैवायंमनसानैवदृश्यते ३५० मनोज्योतिर्यदप्युक्तंक्वापिनैवात्मबोधनात् ॥ किंत्वात्मव्यतिरेकस्यवस्तुनस्तत्प्रकाशनात् ३५१ यथालोकेभवेज्ज्योतिर्नयनंघटबोधकृत् ॥ मूर्तामूर्तधियोहेतुर्मनोज्योतिस्तथैवहि ३५२

३४८ नन्वनर्थांतराण्यज्ञानकृतानिसंभाव्यंतेजन्ममरणेतुनसंभाव्येतेअदृष्टत्वादितिचेत्स्वप्नेऽनुभूयापिकिमपलपसीत्याह जायतइति । यथाऽजरोऽमरश्चायंपुमान्स्वप्नेजायमानोम्रियमाणश्चाज्ञानप्रभावाद्दृष्टःस्वप्नदृष्टानामेतद्रूपत्वात्तथाजागरणेपिजानीहीति ३४९ एवंमूलाज्ञानोपाधिकात्मरूपादीश्वरादुत्पन्नस्यमनसःअविद्याकामकर्मभिःसहकृतस्यसकलप्रपंचोपादानतयाप्राधान्यमुक्तं अथतस्यचिदेकभास्यतांस्फुटयति दृश्यैरित्यादिना । यथाजागरणेघटादिभिर्द्रष्टापुरुषोनप्रकाश्यतेस्वयंतदृश्यत्वात्तथास्वप्नेदृश्याकारपरिणतंमनोद्रष्टारंनभासयतिकिंतुद्रष्ट्रात्मनैवमनोभास्यतइत्यर्थः ३५० ननुमनःस्वयंप्रकाशमेवकुतोनस्यात् शाकल्यब्राह्मणेपुरुषाष्टकस्यमनोज्योतिरित्युक्तत्वादित्याशंकांतदभिप्रायप्रदर्शनेनवारयति मनइति । क्वापिशाकल्यब्राह्मणेमनसोज्योतिष्ट्वंयदुक्तंतदात्मानंमनःप्रकाशयतीत्यभिप्रायेणनोक्तंकिंत्वात्मव्यतिरिक्तवस्तूनामात्मकर्तृकेभासनेमनःसाहाय्यमाचरतीत्यभिप्रायेणेत्यर्थः ३५१ आत्मेतरवस्तुप्रकाशनेचक्षुर्वत्संबंधघटकतामात्ररूपमेवंमनसोज्योतिष्ट्वमित्येतद्दर्शयति यथेति । यथालोकेनयनस्यचक्षुषोघटादिबोधेउपकारकत्वेनज्योतिष्ट्वंतथामनसोवृत्तिद्वाराविषयात्मसंबंधघटकत्वेनज्योतिष्ट्वमिति ३५२

घटादिभासनकालेमनसःकरणत्वविवक्षायामपिचिदपेक्षयामनसोघटादिसमत्वमेवेत्याह यथेंद्रियैरिति । यथावाह्यंसर्वंसदसदात्मकमनिर्वचनीयमिंद्रियैर्विजानातियथाचतदग्राह्यामिंद्रियाग्राह्यं परोक्षंविषयमिंद्रियाणिचमनसाजानातितथाएवपुमानात्मामनस्तद्विषयांश्चएकःप्रकाशयेदिति ३९३ आत्मनोमनोभासकत्वंकैमुत्यन्यायेनाह अपियदिति । यन्मनसःकारणमज्ञानमात्म मात्राश्रयविषयकंनामरूपकर्मभिर्हीनमव्याकृतमितियावत् तस्यापिभासकस्यात्मनस्तज्जन्यमनोभासकत्वंकिमुवाच्यमित्यर्थः ३९४ एवंसकारणेमनसिसिद्धमात्मभास्यत्वंजाग्रत्पदार्थेष्वति दिशति इंद्रियाणीति । यथामनश्चिदात्मनाभास्यंतथाइंद्रियादयोऽग्निपर्यंताःप्रकाशकत्वेनप्रसिद्धाअपिबोध्याश्चिद्भास्याःसदसद्रूपत्वेनानिर्वचनीयत्वेनाज्ञानकार्यत्वव्याप्येनाचिद्रूपत्वात् । फ लितमाह ततइत्यादिना । तैजसानितेजःप्रचुराणि इतिद्वयोरर्थः ३९५ । ३९६ एवमात्मनःसर्वभासकतासर्वतंत्रसिद्धांतःउपपत्तिबलेनापिसर्वैरभ्युपेयत्वादित्याशयेनसर्वभासकतामुपपत्तिं प्रपंचयति बोधेभ्यइतिचतुर्विंशतिश्लोकैः । बोधानांयानिकारणानिविषयकरणरूपाणितेषांजडतासर्वैर्वादिभिरंगीकृतैवभूतचैतन्यवादिनोबृहस्पतिशिष्यान्चार्वाकान्विहाय तेहिज्ञानविषयत्वेन प्रसिद्धानांभूतानांपृथिव्यादीनांशरीराकारपरिणतानांचैतन्यमिच्छंति परंतुतेकृतनाशाकृताभ्यागमरूपदोषदंडेनबालैरपिसुजेयाइत्युपेक्ष्याइतिभावः । ननुज्ञानकारणानामपिपूर्वज्ञानविशेषण ज्ञानव्याप्तिज्ञानादीनांजडत्वंवादिभिर्नाभ्युपगतमित्यतोज्ञानकारणविशेषणंबोधेभ्योव्यतिरिक्तानामिति । तथाचबोधभिन्नेषुप्रकाशत्वंकेनापिवक्तुमशक्यमितिभावः । ननुबोधानामेवप्रकाशत्वे

यथेंद्रियैर्विजानातिसर्वंसदसदात्मकम् ॥ इंद्रियाणितदग्राह्यंमनसायद्वदेवच ॥ तथामनःसविषयंपुमानेषप्रकाशयेत् ३९३ अपियन्मनसःप्रोक्तंकारणंरहितं सदा ॥ नामरूपादिभिःस्वात्माज्ञानंस्वात्मनिसंश्रितम् ॥ प्रकाशयेत्तदप्येषकिमुतद्धेतुकंमनः ३९४ इंद्रियाणिमनस्तद्वत्तारकामणयोपिहि ॥ तैजसानितथा न्यानिरत्नादीनिसहस्रशः ३९५ रविसोमाग्नयोप्येतेबोद्धयाःसदसदात्मकाः ॥ अचिद्रूपास्ततःसर्वेप्रकाश्याःस्युर्घटादिवत् ३९६ बोधेभ्योव्यतिरिक्तानांकार णानामनेकशः ॥ बोधानांजडतासर्ववादिसिद्धाह्यसंशयम् ॥ विनासुरगुरोःशिष्यान्बोधेष्वेवंविचार्यताम् ३९७ बोधाःस्वयंप्रकाशाःस्युर्यदितेतद्भिदाकुतः ॥ स्वप्रकाशेषुभेदोयंगृह्यतेवानवात्वया ३९८ गृह्यतेयदिसोप्येवंभेदइत्येवगृह्यते ॥ अमीषामितिवापूर्वंबोधानांकिंभवेत्तव ३९९

चिंतवेतिचेत्तेषांस्वप्रकाशत्वेपरप्रकाशत्वेवाश्रोतात्मसिद्धिरेव । तेह्ययदिस्वप्रकाशास्तदातएवात्मायदितुपरप्रकाशास्तदापितत्साधकतयात्मनःसिद्धिरित्याशयेनाह बोधेष्विति । बोधस्वरूपे पिएवंवक्ष्यमाणविधयाविचारःकर्तव्यइत्यर्थः ३९७ तत्रबोधानांस्वप्रकाशत्वपक्षेब्रह्मात्मरूपतांसाधयति बोधाइतिद्वाविंशत्या । तेघटादिबोधाःकिंचिद्रूपतयास्वप्रकाशाःकिंवावृत्तिरूपगौण ज्ञानात्मकतयापरप्रकाशाइतिविचारेयदितेस्वयंप्रकाशास्तदातेषांबोधानांभिदाभेदःकुतःसिद्धचति । किंस्वतःपरतोवा नाद्यः स्वपदेनभेदविवक्षायांभेदेनजडेनस्वसाधनोक्त्यर्थाहतत्वात् स्वपदेनभे दाश्रयज्ञानविवक्षायांप्रतियोग्यनुयोगिग्रहणसापेक्षस्यभेदग्रहणस्यभेदाश्रयेणकर्तुमशक्यत्वात् प्रतियोग्यनुयोगिनोरुभयोरप्यविषयत्वभावतालक्षणस्वप्रकाशताशालिनोर्ग्रहणायोग्यत्वादितिभावः । अथद्वितीयंपरतइतिपक्षंविचारयति स्वप्रकाशेष्विति । स्वप्रकाशबोधेषुतिष्ठन्भेदस्त्वयाभेदाश्रयज्ञानभिन्नेनपरेणगृह्यतेविषयीक्रियतेवानवाइति ३९८ तत्राद्यंविकल्पयति गृह्यतइति । यदि भेदोगृह्यतेतदापिकिंभेदोस्तीत्येतावन्मात्राकारेणगृह्यतेकिंवाअमीषांबोधानांभेदइत्यनेनाकारेणगृह्यतेइति पूर्वंप्रथमेतवपक्षेबोधानांकिंजातं बोधानांहिभेदसंबंधस्वरूपापरिच्छिन्नतातदाप्यधेतय दातेषांप्रतियोगिताअनुयोगितावागृह्येतसातुभेदइत्येतावन्मात्राकारेज्ञानेनभासतइतिभावः ३९९

एतदेवदृष्टांतेनस्फुटयति नहीति । यथाभेदइत्याकारेणभेदेगृहीतेआकाशस्याकाशाद्भेदोनसिध्यति आकाशस्यप्रतियोगित्वादिनाऽनुल्लेखात् अयोग्यतयाआक्षेपस्याप्यप्रसरात्तथातटस्थानां बोधानामपीत्यर्थः । द्वितीयंपक्षमादायनिराचष्टे अमीषामितीति । चेद्यदिअमीषामितिइदंरूपेणबोधान्विषयीकृत्यतद्भेदोगृह्यतेतदापरमकाश्यानांबोधानांस्वप्रकाशत्वंनस्यात्यथाघटादीना मित्यर्थः ३६० दृष्टांतंस्फुटयति भेदइति । यथामयाअमीषांघटादीनांभेदोगृह्यतेइत्येवंप्रतीतिविषयीक्रियमाणानांतेषांघटादीनांस्वप्रकाशतानदृष्टेति ३६१ एवंस्वप्रकाशानांभेदोग्रहीतुमश क्यः प्रतियोग्यनुयोगिग्रहणलक्षणायाःसामग्र्याअसंभवात् प्रतियोग्यनुयोगिनोरविषयस्वभावत्वादित्युक्तं । अथनगृह्यतेइतिपक्षेदोषमाह अग्रहेइति । अग्रहेभेदस्यग्रहणाभावपक्षेग्रहणाभावरूपे णहेतुनाभेदोनास्ति भेदात्यंताभावएवसिद्धचेदित्यर्थः । अयंभावः जडानांपराधीनसिद्धिकानांमानाधीनासिद्धिरित्यविवादं तेपुचकेनचिन्मानेनसिद्धेपुमत्यक्षाप्रवृत्तावपिनासत्वंनिश्चेतुंशक्यते भेदोपिचपरसापेक्षत्वेनस्वरूपेनिवेशमलभमानोजडएववाच्यःश्रुत्यादिबाधितत्वेनभ्रममात्रसिद्धश्च अतस्तत्रग्रहणाभावेनलिंगेननृशृंगवदसत्त्वानुमितौनकिंचिद्बाधकमिति । एतदेवनृशृंगप्रतिबिं बादर्शयति अगृहीतेष्विति ३६२ ग्रहणपक्षएवदोषांतरमाह अपियदिति । किंचबोधानांभेदग्रहणपक्षेग्राहकंज्ञानांतरंस्वप्रकाशंपरप्रकाशंवा अंत्येऽनवस्था आद्येभेदग्रहणायप्रतियोग्यनुयोगिनौ ग्रहीतुमिष्टावपिकथंगृहीयात्प्रकाशत्वेनसमत्वादन्यथासूर्याचंद्रमसोरपिप्रकाश्यप्रकाशकभावापत्तिरित्यर्थः ३६३ स्वप्रकाशंस्वप्रकाशस्यनसाधकमित्येतदेवस्फुटयति स्वप्रकाशेपीतिद्वाभ्यां ।

**नहिभेदेगृहीतेस्तिनभसोनभसोभिदा ॥ अमीषामितिचेद्भेदोगृह्यतेभवताधिया ॥ तथाचस्वप्रकाशत्वंनभवेद्धिघटादिवत् ३६० भेदोयंहिमयाग्राह्योघटस्यच पटस्यच ॥ एवंप्रतीयमानानांतेषांनस्वप्रकाशता ३६१ अग्रहेनास्तिभेदोयंग्रहणाभावहेतुना ॥ अगृहीतेषुसत्त्वंचेन्नरिशृंगंकुतोनसत् ३६२ अपियद्ग्रहणंत च्चेत्स्वप्रकाशंभवेत्तव ॥ तादृशंग्राहकंनस्यात्सवितुश्चंद्रमायथा ३६३ स्वप्रकाशेपिभेदश्चेज्ज्ञानेज्ञानेव्यवस्थितः ॥ नस्वप्रकाशतातेषांतारतम्याद्घटादिवत् ३६४ समानांनभवेत्क्वापिग्राह्यग्राहकताभुवि ॥ खद्योतानांचदीपानांयस्माद्देषानदृश्यते ३६५ ततोभेदेनशून्याश्चेद्बोधास्तेसुखरूपिणः ॥ नहिभेदंविनादुः खंसुख्यादौलभ्यतेनृभिः ३६६ स्वप्रकाशानचेतेस्युस्तेषांलाभोनसंभवेत् ॥ दुःखस्येवसुखस्यापिस्वप्रकाशास्ततोह्यमी ३६७**

यदिसर्वाज्ञानव्यक्तयःस्वप्रकाशाअपिपरस्परंप्रकाश्यंतइत्युच्यतेतदातासांप्रकाश्यप्रकाशकभावनिर्वाहकोभेदस्तारतम्यरूपोपिवाच्यः तत्स्वीकारेतुप्रकाश्यघटादिसमत्वापत्त्यास्वप्रकाशबोधेनस्वप्र काशस्यप्रकाशइत्युक्तेर्व्याहतत्वंस्पष्टमित्यर्थः ३६४ यदितुउक्तोविशेषोनांगीक्रियतेतदापिप्रकाश्यप्रकाशकभावोक्तिःसुतरांव्याहता खद्योतदीपादिनामपिप्रकाशत्वेनसमानांप्रकाश्यप्रकाशकभावा दर्शनादित्याह समानामिति । समानांसमानजातीयानाम् ३६५ अथबोधानांसच्चिदानंदत्वलक्षणात्मत्वविधानोपयोगिनींपूर्वोक्तविचारफलभूतांचसुखरूपतांदर्शयति ततइति । यतउक्तवि धयाभेदग्रहणंनसंभवतिततोग्रहणाभावेननृशृंगवद्भेदाभावासिद्धेस्तेबोधाभेदशून्याइतिचेदंगीकुरुषेतर्हितेबोधाःसुखरूपिणइत्यपिनिश्चिनोतुभवान्योवैभूमातत्सुखमितिश्रुत्युक्तसुखलक्षणयोगात् श्रुतो भूमपदस्यभेदशून्यतापरत्वादितिपूर्वार्द्धार्थः । ननुश्रुत्युक्तलक्षणस्यसुखेसमन्वयःकदृष्टइतिचेत्सुषुप्तेसमाधौचेत्याह नहीति । भेदंभेददर्शनंविनावर्तमानेसुख्यादिकालेनृभिःप्राणिभिर्दुःखंनदृश्यते किंतुसुखमेवतत्रभासतेइतिप्रसिद्धमित्यर्थः ३६६ ननुसुख्यादौभेदाभावलक्षणसुखसत्त्वेपितस्यसुखस्यस्वप्रकाशबोधात्मकत्वेकिंमानमितिचेद्भानान्यथानुपपत्तिरेवेत्याह स्वप्रकाशाइति । स्वप्र काशाःस्वप्रकाशत्वेनवर्णिताबोधायदितेसुखरूपानस्युस्तदातेषांनृणांसुख्यादौसुखस्यापिलाभोनसंभवेत्दुःखस्येवयथादुःखस्यतदालाभोनास्तिततःस्वप्रकाशाबोधाएवामीसुप्तौभासमानसुखरूपाइ त्यर्थः । अयंभावः सुखस्यस्वप्रकाशबोधभिन्नत्वेअद्वितीयत्वात्मकस्वलक्षणप्रच्युतिःदुःखवद्भेददर्शनव्याप्यताचस्यात्तथाचसुषुप्तौभेददर्शनहीनायांसुखभानंनस्यादिति ३६७

ननुसुषुप्तेदुःखाभावशालित्वयैवेच्छाविषयत्वोपपत्त्याबोधाभिन्नसुखसत्त्वंकिमर्थंतत्रव्युत्पाद्यतेइतिशंकांवारयन्ननंतत्वविशदीकरणायबोधानांदुःखाभावरूपतामपिदर्शयति दुःखाभावइति । दुःखाभावोप्यप्रकाशोबोधात्मकप्रकाशभिन्नश्चेचदानैवस्यान्नसिद्ध्येदित्यर्थः कथंनसिद्ध्येदित्यतआह । भेदेति । चिद्भिन्नोदुःखाभावःसुप्तोप्रकाशतइतिवदन्प्रष्टव्यः । किमादित्याद्यैःप्रकाश्यतेकिंवाबोधैरेव नाद्यः सुप्तौतेषांविलयात् नांत्यः वर्जितविषयाभेदहीनैर्बोधैःसदुःखाभावःकथंप्रकाश्यते । कीदृशोदुःखाभावोभेदवान्भवताअत्यंतंबोधभिन्नत्वेनाभिमतइत्यर्थः । चित्प्रकाशेहिद्वयमेवभासतेचित्स्वरूपंतत्तादात्म्यलक्षणविषयताशालिचनात्यंतभिन्नमितिभावः ३६८ दुःखाभावस्तुचित्स्वरूपएवेतिसूचयन्कथंभावरूपास्तेबोधादुःखाभावरूपाइतिशंकांवारयंश्चाह अप्यभावइति । किंचअभावपदार्थोपिभावेभ्योऽधिकरणतयाभिमतेभ्योनभिन्नःकिंत्वनुयोगिभावात्मकएवयथाघटःस्वेतरेषांसर्वेषामभावात्मकइतिसत्ख्यातिवादिभिरभ्युपगम्यते तेह्येवमाहुः ‘ भावांतरमभावोन्योनकश्चिदनिरूपणात् ’ इति । सर्वेपदार्थाःस्वरूपेणसद्रूपाःपरापेक्षयात्वाभावरूपाः भावभिन्नस्त्वभावोनास्तिभिन्नत्वेननिरूपयितुमशक्यत्वादितितदर्थः । तथैवास्माभिरप्यभ्युपगम्यतइतिभावः ३६९ ननुभावांतराभाववादिमतांगीकारेवःकोलाभःप्रत्युतसर्वेषामभावात्मतापत्तिरूपोदोषएवेतिचेन्न पदेपदेऽद्वैतानुसंधानस्यसिद्धेरेवफलत्वादितिशंकासमाधानाभ्यांदर्शयति अभावात्मकतेति । एवंभावात्मकाभाववादिमतस्वीकारेयदिविश्वस्यपदार्थजातस्याभावरूपताप्राप्नोतितर्हिप्राप्नोतुकानोहानिःप्रत्युताद्वैतपरिचयएवेति ३७० ननुकथंसत्ख्यातिमतांगीकारेऽद्वैतप

दुःखाभावोपिनैवस्यादप्रकाशःकथंचन ॥ भेदशून्यैःकथंह्येतैर्भेदवान्सप्रकाश्यते ३६८ अप्यभावोनभावेभ्योविभिन्नोविद्यतेभुवि ॥ यतोघटोत्रविज्ञेयःस्वान्याभावोमनीषिभिः ३६९ अभावात्मकताचैवंयदिविश्वस्यजायते ॥ जायतांकिंविनष्टंनोह्यद्वितीयात्मवादिनाम् ३७० नचाभावोद्वितीयःस्यात्सर्वाभावेनहेतुना ॥ सर्वाभावइदंयत्त्वंब्रूषेतन्नोऽद्वयंस्मृतम् ३७१ अपिचात्रपदार्थोस्तिपदत्वेनमतोपिहि ॥ पदस्यवृक्षइत्यादेर्नाभावोर्थउदीरितः ३७२

रिचयःप्रत्युततेषांस्वरूपभेदंमन्वानानामनुसरणेभेदधीप्रसक्तिरेवेतिचेत्स्यादेवंयदिसर्वथातन्मतमनुगम्येत औपनिषदैस्तुयथाज्वरकरमपिदधिशर्करयासंस्कृत्योपयुज्यतेतथापरमतमपिश्रुत्यनुकूलतर्कपरम्पराशर्करयासंस्कृत्योपयुज्यतेइतिनकोपिदोषइत्यभिप्रेत्योक्तमतोऽद्वैतसिद्धिमभिनयति नचेति । घटस्वरूपाद्द्वितीयोभिन्नःअभावोपिनस्यात्किमुतभावः कुतःसर्वाभावरूपेणहेतुना यदिहिर्किंचिदपिघटस्वरूपाद्भिद्येततदाघटस्यसर्वाभावरूपेणाभिधानंव्याहन्येतेति । ततश्चघटस्याद्वितीयत्वेनब्रह्मत्वंसिद्धमित्याह सर्वाभावइति । सर्वाभावपदेनयद्वस्त्वभिदधासितदेवनोस्माकंश्रुत्यनुगृहीतानामद्वयंब्रह्ममतं नचविरोधः घटनामरूपयोःपंचीकरणप्रक्रिययासन्मात्रत्वात्सत्ताभानप्रियांशानांब्रह्मत्वस्यनिश्चितत्वात् तथाचानुगुणोयंसत्ख्यातिपक्षोस्माकमितिभावः । नचाभावोद्वितीयस्यसर्वाभावप्रधानोयंनिर्देशः हेतुत्वेनेति । सर्वाभावपदेनयदुच्यतेतदस्मत्सिद्धांतप्रसिद्धाद्वयब्रह्मात्मनैवसिद्ध्यति । इतरथातुजडस्यासाक्षिकस्यसिद्धिर्दुर्लभास्यात् घटादौसर्वाभावव्यपदेशोपिस्वावच्छिन्नचैतन्यधर्माध्यासान्निर्वहतीतिभावः ३७१ अभावस्यभावभिन्नत्वाभावंपदार्थत्वानुपपत्त्यापिसाधयति अपिचेति । किंचात्रपरीक्षकव्यवहारेऽस्तिपदवाच्येनअस्तिपदतादात्म्येनसहितोभावःपदार्थत्वेनमतः शब्दार्थयोस्तादात्म्यात् अस्तिपदाभिधेयत्वंपदार्थसामान्यलक्षणमितियावत् पदस्यतुवृक्षइत्यादिरूपस्याप्यभावःप्रसिद्धोर्थोनदृष्टःकिमुतास्तिपदस्य तथाचपदार्थत्वानुपपत्त्यापिसर्वस्यसद्रूपतायाः—

–सिद्धिरिति । तदुक्तंवार्तिककृद्भिः 'स्फुरतापिसतोनान्यदभिधातुंघटादिवत् । शक्यतेह्यभिधानेननासद्वस्तुनिरुच्यते ' इति । स्फुरताव्याख्यानकुशलेनापिसतोन्यत्सद्भिन्नमभिधातुंघटादिवन्नशक्यते यतोभिधानेननाम्नासद्रूपेणासद्वस्तुनिर्वक्तुमशक्यंसदसतोस्तादात्म्यायोगादितिवार्तिकार्थः ३७२ ननुबाह्याःप्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशंचेतिवदन्तोबुद्धिपूर्वकाबुद्धिपूर्वकोनाशावाकाशं चेत्येतत्त्रयमसदितिमन्यंतेतद्दृष्टांतेनेतरत्राप्यसत्वमस्त्वितिशंकांनिराकरोति कथमिति । पदत्वेपदतादात्म्यरूपेकारणेसदर्थसाधकहेतौसतिआकाशोऽभावरूपःकथंस्यान्नकथंचिदपीत्यर्थः उपलक्षणंचेदं अधिकरणत्वेनप्रसिद्धस्याकाशस्यासत्वंदुर्वचमित्यस्य असतोधिकरणताऽदर्शनात्सिद्धांतेनास्तीतिपदविषयतासूक्ष्मत्वप्रयुक्तैवेतिभावः । फलितमाह वस्त्वंतरमिति । सत्ख्यातिमतइतिशेषः ३७३ अस्मत्सिद्धांतेपिअधिष्ठानावशेषोहिनाशःकल्पितवस्तुनइतिवचनस्यावशिष्यमाणाधिष्ठानरूपएवास्यकल्पितस्याभावइत्यर्थकस्यानुसारेणाभावस्यभावात्मकत्वंसिद्धमेवेतिसदृष्टांतमाह अध्यस्तस्येति । यथास्रजिकल्पितसर्पाभावःस्रग्रूपस्तथाप्रपंचाभावआत्मरूपइत्यर्थः । फलितमाह दुःखेति । ततोदुःखस्यकल्पितत्वात्परिपूर्णात्मनएवाधिष्ठानत्वाच्चमहेश्वरःपरमात्मैवदुःखाभावरूपइत्यर्थः ३७४ एवंबोधेषुव्युत्पादितैःपरमात्मलक्षणैःपरत्वादिभिःपरमात्मतांतेषांसाधयति स्वप्रकाशेति । यतोबोधाःस्वप्रकाशत्वेनसुखत्वेनभेदहीनत्वेनचआनंदोपमाःपरमात्मसमास्ततस्तेभ्रांतानाभिन्नत्वेनभासमानाअपिवस्तुतआत्माब्रह्मेतिसमीरितामहावाक्यैरितिशेषः ३७५ ननुबोधेषुसजातीयस्वगतभेदयोरभावेपिविजातीयविषयभेदःस्थितएवेतिचेन्न भ्रांतिदशायां



कथंनभोप्यभावःस्यात्पदत्वेसतिकारणे ॥ वस्त्वंतरमभावोतोनतुभावविवर्जितः ३७३ अध्यस्तस्येहसर्पस्ययथाभावःस्रगीरितः ॥ आत्माचैवमभावःस्यादध्यस्तस्यजडात्मनः ॥ दुःखाभावस्ततोज्ञेयआनन्दात्मामहेश्वरः ३७४ स्वप्रकाशसुखाबोधाःसर्वेभेदविवर्जिताः ॥ आनंदात्मोपमास्तस्मादानंदात्मासमीरिताः ॥ ३७५ बोधेषुचयदानस्याद्भेदःकेनभवेद्भिदा ॥ बोध्येषुनहिबोधस्यभेदशून्यस्यकर्हिचित् ॥ घटइत्यादिरूपस्यविषयेभेदईरितः ३७६ घटादशतथाशुक्लोघटश्चैत्रोव्रगच्छति ॥ दंडीमनुजजातीयःसुतोमित्रस्यरूपवान् ३७७ इत्यादावपिनैवास्तिभेदोऽभिन्नेत्रबोधने ॥ विशेषणमविज्ञायविशेष्यंनैतिधीर्यतः ३७८

तथात्वेपिविवेकेनविषयभेदव्यापकबोधभेदबाधेविषयभेदस्थितेर्दुर्लभत्वादित्याशयेनविषयबोधभेदयोर्व्याप्यव्यापकभावंदर्शयति बोधेष्विति पंचभिः । यदाबोधेषुनभेदस्तदाबोध्येषुविषयेषुभिदाभेदःकेनहेतुनासिद्धचेत् । अयंभावः विषयाणामविद्यादशायामेवभासमानानांप्रातिभासिकत्वेनदृष्टिसृष्टानांबोधरूपादृष्टिरेवसामग्री सामग्रीभेदाभावेचकार्यभेदोनदृष्टइति हियतोघटइत्याकारकस्यभेदशून्यस्यएकत्वेनलोकेप्रसिद्धस्यबोधस्यविषयेघटे केनापिपरीक्षकेणभेदोनोक्तः तथाचबोधभेदोविषयभेदव्यापकइत्यर्थः ३७६ ननुविशिष्टज्ञानविषयाणांविशेषणविशेष्यसंसर्गाणामेकज्ञानविषयत्वेपिभेदोदृष्टइतिचेन्न तत्रापिनागृहीतविशेषणाबुद्धिर्विशेष्येन्यवतिष्ठतइतिन्यायेनपूर्वंकल्पितोयोज्ञानभेदस्तदुपाधिकएवविषयभेदइतिदर्शयति घटाइतित्रिभिः । दशघटाइत्यपेक्षाबुद्धिजन्यदशसंख्याप्रकारकंविशिष्टज्ञानं शुक्लोघटइतिस्थिरत्वाभिमतगुणप्रकारकं । चैत्रइत्यादिनातुएकत्रद्रव्येआर्थक्रमेणजातिगुणक्रियासंज्ञासंबंधात्मकपंचविशेषणकंज्ञानमुक्तं तथाहि मनुजत्वंजातिः गतिःक्रिया चैत्रेतिसंज्ञा मैत्रस्यजन्यत्वलक्षणःसंबंधश्च एतेछत्रीकुण्डलीदेवदत्तइत्यत्रेवप्रकारतयात्रभांतीति ३७७ इत्यादाविति । इत्यादौवर्णितविशिष्टज्ञानप्रभृतिस्थलेष्वपिबोधनेअभिन्नेसतिविषयभेदोनबोध्यःकिंतुबोधभेदतएवविषयभेदः । कथमत्रबोधभेदइतिचेद्भवदंगीकृतन्यायादेवेत्याह विशेषणमिति । यतोधीर्विशेषणमज्ञात्वाविशेष्यंनएतिनावगाहते तथाचपूर्वकालिकज्ञानभेदाधीनएवतत्रापिविषयभेदइतिभावः ३७८

अस्मत्प्रक्रियायांतुपरस्परसापेक्षविशेषणादित्रितयाकारवृत्तित्रयोपाधिकश्चैतन्यभेदव्यवहारः फलचैतन्याभेदात्तुएकबोधत्वव्यवहारइतिसूचयन्नाह विशेषणमिति । ज्ञानत्रयेणवृत्तित्रयेणविज्ञाय विषयीकृत्यएकेनफलेनतत्त्रयंविषयीकरोतितदाज्ञानभेदाभेदव्यवहारयोरुभयोरुपपत्तिरितिभावः ३७९ अस्त्विति । अतउक्तनियमाद्वृत्त्युपाधिकबोधभेदापेक्षएवबोधानांविषयाणांभेदःसिद्ध्य तिनस्वतः वस्तुतस्तुसर्वबोधगतोभेदोनास्ति इतरसापेक्षत्वेनमिथ्यात्वात् विषयाबोधभेदबाधेत्वयंभेदोबोध्यगतःकथंभवेत्तिष्ठेत्स्वाप्रिकराजत्वबाधेतन्निरूपितराज्यबाधस्यप्रसिद्धत्वादितिभावः ३८० एवंस्वप्रकाशत्वपक्षेऽभीष्टात्मसिद्धिर्दर्शिताऽथपरप्रकाशत्वपक्षेपिदर्शिताऽत्मसिद्धिः तदस्वीकारेजगदांध्यप्रसंगादित्याह अस्वप्रकाशेति । यदितेविषयकरणभिन्नाभेदशालिनोबोधाअस्वप्र काशाइतिस्वीक्रियंतेतथापिघटवत्प्रकाश्यानांतेषांप्रकाशकेनकेनचिद्भवितव्यंतत्रचभेदग्राहकाणामप्रसरात्स्वप्रकाशानन्दत्वलक्षणंब्रह्मत्वंसिद्धमेवेत्याशयः ३८१ आशयप्रदर्शनमुपसंहरति इत्यभिप्राये ति । उक्ताशयेनयाज्ञवल्क्यःस्वप्नेपरमात्मनोधर्ममात्मज्योतिष्ट्वरूपमाहस्म एतदुत्तरश्लोकोक्तप्रकारकंयथाभवतितथाआत्मैवज्योतिःआत्मज्योतिषोभावःआत्मज्योतिष्ट्वं कुतः सर्वेषांज्योतिषाम पितेनप्रकाशनात् ४८२ एतत्पदोक्तमात्मज्योतिष्ट्वाभिधानप्रकारमभिनयति रवीतिस्पष्टम् ३८३ अथकतमइत्यादेःपुरुषइत्यंतस्यवाक्यस्यार्थंप्रपंचयति श्रुत्वैवमित्यादित्रिंशताश्लोकैः ।

विशेषणंविशेष्यंचसंबंधंचतयोस्तथा ॥ ज्ञानत्रयेणविज्ञायपश्चादेकेनगच्छति ३७९ अतोबोधगतंभेदमपेक्ष्यैवप्रसिद्ध्यति ॥ बोध्यभेदोनबोधेसकथंबोध्येभवे दयम् ३८० अस्वप्रकाशरूपास्तेभेदबोधास्ततोह्यमी ॥ प्रकाश्याघटवत्स्वात्मबोधेनैकात्मरूपिणा ॥ स्वप्रकाशेनसर्वेषांबोधानांसाक्षिणासदा ३८१ इत्यभि प्रायवान्याज्ञवल्क्यःस्वप्नेपरात्मनः ॥ आत्मज्योतिष्ट्वमाहैतत्सर्वज्योतिःप्रकाशनात् ३८२ रविसोमाग्निवागाख्येज्योतिष्युपरमंगते ॥ आत्मैवज्योतिरेकंतदा स्तेनुपरतंसदा ३८३ श्रुत्वैवंजनकोराजापप्रच्छमुनिपुंगवम् ॥ आत्मात्रकतमोब्रह्मन्देहेंद्रियादिषु ३८४ एवंपृष्टोयाज्ञवल्क्यआहैवंनृपतिंप्रति ॥ प्रसिद्धःसर्वे जंतूनामात्मनःशब्दबोधयोः ३८५ विषयःशब्दबोधाभ्यांरहितश्चेतनःपुमान् ॥ देहेंद्रियादिकंनैवभवेदात्मायथाघटः ३८६ प्रश्नविज्ञानएतस्मिन्यआस्ते साक्षिवन्नृप ॥ अयमात्मासदासाक्षिस्वरूपःसर्वदेहिनाम् ३८७

एवमुक्ताभिप्रायेणवर्णितमात्मतत्त्वंश्रुत्वापिराजाएवंपप्रच्छ एवंकथं हेब्रह्मन्अत्रसंघातेवर्तमानेषुदेहेंद्रियादिषुकतमआत्मेति एवमाकारेणराज्ञःप्रश्नकरणेबीजंतुउक्ताभिप्रायापरिज्ञानं आत्मै वास्यज्योतिरितिवाक्यस्ययोविपरीतोर्थःअस्यसंघातस्यआत्मास्वरूपमेवज्योतिरित्याकारकस्तस्यग्रहणंचेतिबोध्यम् एवंपृष्टइति । याज्ञवल्क्यस्त्वात्मपदेनसंघातस्याधिष्ठानभूतत्वंविवक्षिताभि तिदर्शयन्नितरव्यावृत्तिमुखेनात्मानमेवमाहप्रतिपादयतिस्म । एवंकथं आत्मपदार्थःसर्वजंतूनांप्रसिद्धएव । कीदृशः आत्मसंबंधिनोःशब्दबोधयोरात्मेत्याकारकशब्दस्यतदाकारवृत्तेश्चविषयः शब्दबोधाभ्यांभिन्नश्च नकेवलमात्मशब्देनैवप्रसिद्धःकिंतुचेतनपुरुषशब्दाभ्यांतथाप्रसिद्धः देहादिकंतुनात्मायतःसाक्ष्यमितिद्वयोरर्थः ३८५ । ३८६ एवंश्रुतिगतपदार्थमुक्त्वाऽय मितिपदार्थमाह प्रश्नेति । मादूरंगच्छएतस्मिन्प्रश्नानुरूपविज्ञानएवतत्परिचयंकुरुते कथमितिचेच्छृणु यःसाक्षिवत्साक्ष्यवर्गात्पृथग्भूतोभासतेअयमेवात्मा अस्यभेदेमानाभावादेकोऽयंसर्व साक्षिभूतइति ३८७

 



आत्मनःस्थूलदेहाद्व्यतिरेकस्फोरकस्यविज्ञानमयपदस्यार्थमाह नानेतिसप्तभिः । एषआत्मानानाविधांतःकरणेषुविज्ञानपदवाच्येषुअभेदेनाध्यासिकेनतादात्म्यसंबंधेनस्थितः यथाऽयसिवन्हिर्भे दशून्योदुर्लक्ष्यभेदइत्यर्थः ३८८ यथेति स्पष्टम् ३८९ तस्यात्मनोंतःकरणेतद्वृत्तिषुचतादात्म्यहेतुतयासवृत्तिकांतःकरणस्यस्वतोजाड्यंचिदात्मसंबंधेनबोधशालित्वंचाह विज्ञानानीति । स्पष्टम् ३९० एतद्दृष्टांतेनस्फुटयति लोहेतित्रिभिः स्पष्टम् ३९१ तथेति । तथालोहवत् अंतःकरणेउपादानभूतेस्थानेस्थितिर्यासांतास्तथाभूतावृत्तयःसकारणाःसोपादानाआत्मतादात्म्यमापन्नाएव प्रकाशंतेविषयजातंप्रकाशयंतिच कीदृश्योवृत्तयः स्मृत्यनुभवविकल्परूपैर्मानामानादिभेदैभ्यः पुनःकीदृश्यः भेदशून्यादुर्लक्ष्यचिद्भेदकाइतिद्वयोरर्थः ३९२ । ३९३ एवंवृत्तिषुचितादात्म्यफलंद र्शितमथात्मन्यपितत्फलंचेतनत्वव्यवहारलक्षणमाह विज्ञानमयएवेति । अतआत्मतादात्म्येनसवृत्तिकांतःकरणस्यबोधधर्मकत्वादेवविज्ञानमयःसन्नयंपुरुषश्चेतनोबोधाश्रयइतिस्मृतः अन्यथाहि चिद्रूपइत्येवव्यपदिश्येत यथालोहमयःसन्वन्हिर्दाहादिकर्त्ता ज्वलःज्वलनक्रियाकर्त्ताचव्यपदिश्यते केवलोहिप्रकाशकइत्येवाख्यायतेइत्यर्थः ३८४ अथप्राणात्मत्वभ्रमवारणपरस्यप्राणेष्विति

नानांतःकरणेष्वेषस्थितोऽभेदेनचेतनः ॥ वन्हिर्यथात्रलोहेषुभेदशून्योव्यवस्थितः ३८८ यथालोहमयोवन्हिर्लोहस्थोव्यपदिश्यते ॥ विज्ञानमयएवंसस्थितोंतःकरणेष्वपि ३८९ विज्ञानानिसदाबोधरहितानिस्वरूपतः ॥ आत्मसंनिधिमात्रेणबोधवंतिभवंतिहि ३९० लोहपिंडायथादाहप्रकाशाभ्यांविवर्जिताः ॥ वन्हितादात्म्यमापन्नाःप्रकाशंतेदहंतिच ३९१ तथांतःकरणस्थानावृत्तयोविविधाइमाः ॥ मानामानादिभेदैर्योभेदशून्याःसकारणाः ३९२ आत्मतादात्म्यमापन्नाःप्रकाशंतेत्रसर्वतः ॥ प्रकाशयंतिचैवैतद्विश्वंसदसदात्मकम् ३९३ विज्ञानमयएवातःपुरुषश्चेतनःस्मृतः ॥ यथालोहमयोवन्हिर्दाहभानकरोज्वलः ३९४ प्राणानांवायुभेदानामिंद्रियाणांचसर्वदा ॥ व्यापारेषुभवेद्धेतुस्तेषुतादात्म्यमागतः ॥ तेनप्राणेष्वयंदेवःकथ्यतेवेदवादिभिः ३९५ यथानभोघटेष्वेतद्वर्त्ततेतद्बहिःस्थितम् ॥ चालयन्नखिलान्वृक्षान्यद्वदेषप्रभंजनः ॥ उच्यतेतत्रतद्वत्स्यात्प्राणेष्वात्मापरःपुमान् ३९६ आत्मासर्वगतोह्येषविशेषाद्धृदितिष्ठति ॥ यतःसमग्रजंतूनांविज्ञानंहृदिलभ्यते ३९७ आपादमस्तकेदेहेयद्यप्येषोवगच्छति ॥ सुखदुःखेतथाप्येतेहार्दाद्विज्ञानतःसदा ३९८ यथासर्वगतंतेजोभानोरेकंतथापिहि ॥ घटेमणौसूर्यकांतेत्वैषम्येणैववर्तते ३९९

पदस्यतात्पर्यमाह प्राणानामितिद्वाभ्यां । वायुभेदरूपाणांमुख्यप्राणानामिंद्रियाणांचप्राणतादात्म्येनप्राणपदलक्ष्याणांव्यापारेषुहेतुःसंनिधिमात्रेणप्रयोजकोयतोभवतिततःप्राणेष्वित्येवंवेदिकैरा त्माप्रतिपाद्यतेइत्यर्थः ३९५ विभुमात्मानंप्रत्यपिप्राणानामधिकरणतयानिर्देशोऽवच्छेदकत्वेनाभिव्यक्तिस्थानत्वेनवाबोध्यइतिसदृष्टांतमाह यथेति । यथाविभ्वपिनभोऽवच्छेदकेषुघटेषुस्थितमित्यु च्यते यथाचव्यापकोपिवायुर्वृक्षचालनेनाभिव्यक्तोवृक्षेष्वितिवृक्षाधिकरणकतयोच्यतेतथात्मप्राणेष्वित्युच्यतेइति ३९६ अंतःकरणाद्व्यतिरेकबोधकस्यहृदीतिपदस्यतात्पर्यंदर्शयति आत्मेत्येकादश भिः । सर्वगस्याप्यात्मनोहृद्देशगतायांबुद्धौयतोविशेषतोऽभिव्यक्तिस्तेनहृदीतिदेवःकथ्यतेइत्येकादशेनसंबंधः । तत्रहेतुर्बुद्धेर्विशेषतोहृद्देशेऽवस्थानमिति ३९७ बुद्धेश्चित्प्रतिबिंबग्राहिण्याहृद्देशेविशेष तोवस्थानेलोकानुभवंप्रमाणयति आपादेति । यद्यप्येषजनःसर्वशरीरवर्तिनीसुखदुःखेअवगच्छतितथापिहार्दाद्विशेषतोहृच्छिष्टतयाभासमानाज्ज्ञानादेवावगच्छति तथाचघर्मतप्तस्यगंगान्हदप्रवेशेसर्वां गीणसुखानुभवकालेपिज्ञानस्यहृद्देशेविशेषतःस्थितिःसर्वानुभवसिद्धेतिभावः ३९८ उक्तमर्थंदृष्टांतबलेनविशदयति यथेति । एकंसमानम् ३९९

त्रिपुवैधर्म्यंदर्शयन्दार्ष्टांतिकेयोजयति  यथाघटेइतित्रिभिः । यथायंसूर्यप्रकाशोघटेविद्यमानोप्यभिव्यक्तःसन्नलभ्यतेतथादेहाद्बहिरात्मेत्यर्थः ४० यथामणाविति । यथाचसूर्यप्रकाशोमणौस्फटिकादौप्रतिबिंबवत्वलक्षणाभिव्यक्तिशालितयोपलभ्यमानोदाहलक्षणकार्यविशिष्टोनलभ्यतेतथादेहेहृदयातिरिक्तदेहप्रदेशेषुसुखदुःखज्ञानवर्जितेलभ्येते  सुखदुःखयोरुपसर्जनीभूतज्ञानस्यांगांतरेऽप्युपलंभेप्यनुसंधानलक्षणस्यज्ञानकार्यस्यहृद्देशान्यत्रोपलंभइतियावत् ४०१ सूर्यकांतेतुयथासकार्यस्यसूर्यप्रकाशस्योपलब्धिस्तथाहृद्देशेविज्ञानस्येत्याह  प्रकाशश्चेति । पूर्ववदाशयः ४०२ अथवाहृत्पदेनहृदयकमलमेवग्राह्यंतस्यचात्मानंप्रत्यधिकरणतांऽतःकरणद्वारेतिसूचयन्हृदयस्यसर्वकरणाधारतांशाकल्यब्राह्मणादावुक्तांनिरूपयति  अपीति । इंद्रियाणांतथांतःकरणस्यविश्वात्मकचित्रधारकस्यहृदयांबुजंप्रतिष्ठाआधारइति  ४०३  अथवासर्वभेदकोपाधिलयेनात्मनःस्वरूपावस्थानलक्षणायाःसुप्तेःस्थानतयाहृदयस्यात्माधारताहृदीत्युक्तेत्याह अपिसुप्तिमिति । विचित्रेपंचच्छिद्रत्वादिरचनाविशेषशालिनि ४०३ अथवाआत्मोपलब्धिस्थानतयाहृदयस्यात्माधारतोक्तिरित्याह  अपिविज्ञायतइति । यतःसद्भिरधिकारिभिर्हृदयांबुजआत्माविज्ञायतेसाक्षात्क्रियतेततोवाहृदीत्युक्तमितिसंबंधः ४०५ अथवामरणकालेभाविशरीराकारविशिष्टज्ञानंनाडीमार्गप्रकाशकंहृद्देशेजायतेऽतोहृदीत्युक्तमित्याह  अपिमार्गेति । अपिच

यथाघटेप्रकाशोयंविद्यमानोनलभ्यते ॥ देहाद्बहिस्तथैवात्माविद्यमानोनलभ्यते ४०० यथामणौप्रकाशोयंलभ्यतेदाहवर्जितः ॥ सुखदुःखेतथादेहेलभ्येतेज्ञानवर्जिते ४०१ प्रकाशश्चयथादाहोलभ्यतेसूर्यकांतके ॥ सुखदुःखेसविज्ञानेलभ्येतेहृदितेतथा ४०२ अपिसर्वेंद्रियाणांस्यात्प्रतिष्ठाहृदयांबुजम् ॥ तथान्तःकरणस्यापिविश्वचित्रविधारिणः ४०३ अपिसुप्तिमयंयातिविचित्रेहृदयांबुजे ॥ सर्वविक्षेपशून्यःसन्नानंदात्मामहेश्वरः ४०४ अपिविज्ञायतेसद्भिर्गुरुशास्त्रोपदेशतः ॥ अष्टांगयोगनिरतैर्ब्रह्मचर्यादिसाधनैः ४०५ अपिमार्गप्रकाशोस्माद्धृदयाग्रस्यदीपनात् ॥ मुमूर्षोःसर्वदाभूयात्स्थानत्रययियासतः ४०६ हृदितेनसदादेवःसर्वगोपिचकथ्यते ॥ मंडलेसवितुर्यद्वत्प्रकाशःसर्वगोपिच ४०७ अंतर्ज्योतिरयंदेवआनन्दात्मापरःपुमान् ॥ ज्योतिःप्रकाशकंदृष्टंघटादेरिहवस्तुनः ॥ आदित्यादिकमन्यत्स्यादज्योतिर्यदतैजसम् ४०८ आत्माप्रकाशकस्तद्वज्ज्योतिषोऽज्योतिषोपिच ॥ विलक्षणोतःसर्वस्माच्छ्रुत्याज्योतिरितीरितः ४०९ ज्योतिःप्रकाशकंयद्वत्स्वस्मादन्यस्यवस्तुनः ॥ देहाद्बहिर्नहीत्थंतदंतर्ज्योतिस्ततःस्मृतः ४१०

स्थानत्रयंब्रह्मलोकपितृलोककीटपतंगभावश्चेतिच्छन्दोगश्रुत्युक्तंयियासतोगन्तुमिच्छतोमुमूर्षोस्तत्तन्नाडीमयमार्गप्रकाशोऽस्मादुत्क्रांतिप्रतिपादकश्रुतिप्रसिद्धाद्धृदयाग्रस्यदीपनात्सविज्ञानभावलक्षणप्रज्वलनादेवभूयात्भवति  अतोवाविशेषाद्धृदीत्युक्तमिति ४०६ फलितमाह हृदीति । यथासर्वगोपिसवितृप्रकाशःसवितृमंडलाधिकरणकतयाव्यपदिश्यतेतत्रविशेषोपलब्धेस्तथात्मासर्वगोपिहृदीत्युक्तइत्यर्थः ४०७ अत्रात्मनिजडत्वव्युदासेनचिद्रूपताविधायकस्यांतर्ज्योतिरितिपदस्यार्थमाह  अंतर्ज्योतिरितिचतुर्भिः । तत्रज्योतिःपदार्थमाह  ज्योतिरिति । घटादेर्वस्तुनःप्रकाशकमादित्यादिकंज्योतिरितिदृष्टंप्रसिद्धंततआदित्यादेरन्यघटादिअतैजसंअतेजोमयंतदज्योतिरितिप्रसिद्धमित्यर्थः  ४०८  आत्मेति । आदित्योयथाघटादिभ्योविलक्षणःसन्घटादीन्प्रकाशयतितद्वदात्माज्योतिषआदित्यादेरज्योतिषोघटादेश्चप्रकाशकश्चित्त्वेनतस्माज्जडवर्गाद्विलक्षणश्चातोज्योतिरितिश्रुत्योक्तइत्यर्थः  ४०९  अंतःपदतात्पर्यमाह ज्योतिरिति । देहाद्बहिर्ब्राह्यमादित्यादिरूपंज्योतिःस्वस्मादन्यस्याभिन्नसत्ताकस्यवस्तुनःप्रकाशकंप्रसिद्धं  आत्मज्योतिस्त्वित्थंनभवतिकिंतुस्वाभिन्नसत्ताकस्यप्रकाशकंसर्वविवर्तोपादानत्वेनसर्वांतरत्वादित्याशयेनांतर्ज्योतिरित्यात्मोक्तइत्यर्थः ४१०

अथवास्वभासनायेतरानपेक्षत्वमंतर्ज्योतिःपदेनोच्यतेआदित्यादयोहिस्वभासनायचित्प्रकाशापेक्षाइत्याह आत्मानमिति । यतःसर्वभासनेइतरानपेक्षआत्माततोंतर्ज्योतिरित्युक्तोयतस्तस्मा दात्मनइतरत्स्वप्रकाशंनभवतीत्यन्वयः ४११ पुरुषपदार्थमाह अनेनेतिद्वाभ्यां । यथापरीक्षणायक्षीरेप्रक्षिप्तेनमरकतमणिनास्वभासासर्वंक्षीरंपूर्यतेतथानेनात्मज्योतिषासर्वंपूर्णंततःपुरुइत्यु क्तिरित्यर्थः ४१२ अथवापूर्पुवसतीतिचतुर्थाध्यायोक्तविधयापुरुषत्वमित्याह पुरइति । वाअथवाविविधाःस्थावरजंगमात्मकाःपुरःशरीराणिकृत्वातासुपूर्पुशेतेआध्यासिकसंबंधेनस्थितस्ते नात्मनःपुरुषतयोक्तिरिति ४१३ अथोक्तात्मनःकथंसंसारित्वमित्याशंकावारणपूर्वकमसंगत्वस्वप्रभत्वनिरूपणपरस्यससमानइत्यादिश्रुतिग्रंथस्यार्थमुपबृंहयति एकएवेत्यादिना । सोयं वर्णितःपुमानेकोऽद्वितीयएवस्वप्नेजागरणेचसमएकरूपःसन्यथासुखदुःखानिप्राप्नोतितथेमंलोकंपरंचजन्मांतरत्वेनप्रसिद्धंप्राप्यसुखदुःखानिप्राप्नुवन्भवतीति ४१४ लोकद्वयभ्रमणमेवाभिनयति जातइति । ग्राहंग्राहंगृहीत्वागृहीत्वा त्याजंत्याजंत्यक्त्वात्यक्त्वा कर्मपाशबद्धःसन्ननुसंचरतिसंसरतीतियावत् ४१५ ननुपरिपूर्णस्यकर्मादिसंबंधएवकथमितिशंकते यद्यपीति । विक्रिया मात्रवर्जितःसकलविकाररहितः ४१६ आविद्यकांतःकरणतादात्म्याध्यासएवात्मनिकर्मादिसंबंधहेतुरितिसमाधत्ते अंतःकरणेति । अविबोधतःअज्ञानादंतःकरणसंबंधंप्राप्यकर्माणितत्फला

आत्मानंचपरंचात्मज्योतिःसर्वंप्रकाशयेत् ॥ अंतर्ज्योतिस्ततस्तस्मात्स्वप्रकाशंनचेतरत् ४११ अनेनज्योतिषाविश्वंपूर्णमेतच्चराचरम् ॥ ज्योतीरूपस्ततः सोयंपुरुषःपरिकीर्तितः ४१२ पुरोवाविविधाःकृत्वापुमान्स्थावरजंगमाः ॥ शेतेतासुयथापक्षीतेनायंपुरुषःस्मृतः ४१३ एकएवपुमान्सोयंस्वप्नेजागरणेसमः ॥ प्राप्नुवन्सुखदुःखानिलोकमेनंपरंतथा ४१४ जातोमृतोमृतोजातोघटीयन्त्रसमःसदा ॥ ग्राहंग्राहंशरीराणित्याजंत्याजंचभूरिशः ॥ कर्मपाशनिबद्धःसन्ननुसंचर तीश्वरः ४१५ यद्यप्ययंपुमान्पूर्णोनचायातिनगच्छति ॥ नकर्तानचभोक्तावाविक्रियामात्रवर्जितः ४१६ अंतःकरणतादात्म्यंसंप्राप्यात्मातथापिहि ॥ क र्माणितत्फलैःसार्धंप्राप्नोत्यात्माऽविबोधतः ४१७ उष्णेपयसितत्रत्यंयथोष्णंजायतेनभः ॥ अनुष्णंवस्तुतस्तद्वदात्मायंपरमेश्वरः ४१८ भूत्वाधियासमानःसक र्माणिचफलानिच ॥ प्राप्नोतियतएतस्यांध्यायंत्यांध्यायतीवसः ॥ चलंत्यांचलतीवेशःकामिन्यांकामुकोयथा ४१९ ससमानोधियादेवःस्वप्नोभूत्वास्वयंप्रभः ॥ पश्यन्नानाविधंस्वप्नमिंद्रजालंस्वनिर्मितम् ४२० इमंजागरणावस्थंलोकंस्थूलशरीरकम् ॥ विषयेंद्रियसंयुक्तंमृत्युरूपमनेकधा ४२१

निचात्माप्राप्नोतितत्संबंधंलभतेइतियावत् ४१७ औपाधिकधर्माध्यासंदृष्टांतेनस्फुटयति उष्णइति । यथावस्तुतउष्णत्वाभावेऽपिनभआकाशमुष्णजलावच्छिन्नंतदंतिकोर्ध्वदेशावच्छिन्नंचोष्णमिव भातितद्वदयमात्मावस्तुतःपरमेश्वरोप्यविद्याप्रभावेणबुद्ध्यासमानस्तादात्म्याध्यासमापन्नःसन्कर्तृत्वंभोक्तृत्वंचाप्नोति । तथाचानुभूयतेइत्याह यतइत्यादिना । यतएतस्यांबुद्धौध्यानव्यापारंकुर्व त्यांतद्भासकआत्माध्यायन्निवभासतेतथाबुद्ध्याधारप्राणचलनेनबुद्धौचलंत्यांतद्भासकआत्माचलन्निवभासतेयथाकामिन्यनुसारीकामुकइतिद्वयोरर्थः ४१८ । ४१९ अयंबुद्धितादात्म्याध्या सोयदास्थूलदेहाध्यासंरचयतितदासुतरामनर्थकृदितिदर्शयितुंव्यतिरेकंतावदाह ससमानइतित्रिभिः । सधियासाम्यमापन्नोदेवःस्वप्नोभूत्वातैजससंज्ञोभूत्वास्वप्नप्रपंचंपश्यन्सइमंलोकंजाग्रदवस्था शालिनंस्थूलशरीरप्रधानंसुखादनायासादेवातिक्रामतिउल्लंघते यथामहाराजःसुखान्महानदींतरेत् अत्रनौस्थानीयास्वप्नगामिनीबुद्धिरेवबोध्या । कीदृशमिमंलोकं ग्रहातिग्रहरूपैर्विषयेंद्रिया दिभिर्युक्तं । पुनःकीदृशं अनेकधाप्रसृतं मृत्योरविद्याकामकर्मात्मिकायारूपंकार्यमितियावत् तथाक्षपाभंगुरंनानानर्थसंकुलंचेतित्रयाणामर्थः ४२० । ४२१

४२२ अथयदास्थूलशरीराभिमानस्तदादुःखातिशयइत्यन्वयंदर्शयति स्वप्नेतिचतुर्भिः । यःस्वप्नद्रष्टासएवायंपुमान्स्वाप्नस्यस्वप्नभोगप्रदस्यकर्मणःक्षयाज्जाग्रद्भोगप्रदपुण्यपातकाभ्यांबोधितःसन् मातुरुदराज्जायमानइवयदास्मिन्स्थूलेदेहेअभिमानंकरोतितदाश्रुतौपाप्मपदोक्तैर्विविधैर्दुःखैःसंसृज्यतइतिद्वयोरन्वयः ४२३ । ४२४ ननुकानिदुःखानिस्थूलदेहाभिमानेइतिचेत्प्रसिद्धत्वान्नतानिवर्णनीयानीत्याह अत्रेति । स्वप्नात्समागतस्यास्यपुंसोयज्जागरणेदुःखंतत्किंवर्णनीयमपितुनवर्णनीयंप्रत्यक्षसिद्धत्वादित्यन्वयः ४२५ उक्तमेवस्फुटयति यावदिति स्फुटम् ४२६ यथास्वप्नंगच्छन्देहाभिमानजंदुःखंनाप्नोतितथामरणादिकालेपीत्याह सउत्क्रामन्निति । उत्क्रामन्लोकांतरंगच्छन् इतःप्रत्यक्षात् दुःखकारणानिदुःखानिचपाप्मपदोदितानिक्षणेनजहाति ४२७ एतत्सदृष्टांतंप्रपंचयति सोपद्रवइतिचतुर्भिः ४२८ । ४२९ सोपद्रवादिति । धीधनोबुद्धिमान् ४३० । ४३१ एवमष्टमकंडिकातात्पर्यार्थोदर्शितोऽथनवमकंडिकार्थंस्पष्टयति स्वप्नेवैदर्शयंस्तत्रानंदांश्चपश्यतीत्यंशभागस्यनुपपन्नंपरलोकंगच्छन्नेतद्देहाभिमानजंदुःखंनाप्नोतीतितदनुपपन्नंपरलोकस्यैवाभावादितिशंकादारकस्पार्थमाह ग्राहंग्राहमितिपञ्चदशभिः । अ

जलबुद्बुदवच्छश्वन्नश्वरंदुःखकारणम् ॥ व्याध्यादिभिःसमाविष्टमतिक्रामत्ययंसुखात् ॥ महाराजोयथानावामाहागाधजलांनदीम् ४२२ स्वप्नद्रष्टासएवायंपुमान्स्वाप्नस्यसंक्षयात् ॥ कर्मणःस्थूलदेहेस्मिन्जायमानोयथोदरात् ४२३ अहंमानंकरोत्यात्मापुण्यपातकबोधितः ॥ पाप्मभिर्विविधैर्दुःखैर्देहीसंसृज्यतेतदा ४२४ अत्रजागरणेदुःखंवर्णनीयंकिमस्तिहि ॥ स्वप्नात्समागतस्यास्यपुंसःप्रत्यक्षदर्शनात् ४२५ यावत्स्थूलस्यदेहस्यनाभिमानंजहात्ययम् ॥ तावद्दुःखान्यनंतानिप्राप्नोत्यात्मापरःपुमान् ४२६ सउत्क्रामन्नितोदेहात्स्वप्नादौमरणेथवा ॥ पाप्मनोभूरिशोदुःखकारणानिबहून्यपि ॥ सदुःखानिपुमानेषविजहातिक्षणेनहि ४२७ सोपद्रवेयथादेशेमोहात्तत्रवसन्पुमान् ॥ सकारणानिदुःखानिप्राप्नोत्यनिशमेवसः ४२८ एवंदेहेवसन्नेषपरमात्माविमोहितः ॥ नानादुःखमवाप्नोतिबहुहेतुसमुत्थितम् ४२९ सोपद्रवाद्यथादेशाद्गच्छन्नन्यत्रधीधनः ॥ दुःखंतद्देशजंनैवप्राप्नोत्यन्यत्रसंस्थितः ४३० एवंदेहादितोदेवोनिर्गच्छन्देहसंभवम् ॥ नकदाचिदवाप्नोतिबहुदुःखंसकारणम् ॥ ४३१ ग्राहंग्राहंशरीराणित्यजतोनित्यमेवहि ॥ त्याजंत्याजंतथैवास्यग्रह्णानस्यात्मरूपिणः ॥ अयंलोकःपरश्चैवस्थानद्वयमुदाहृतम् ४३२ लोकयोरुभयोःसंधौजातंस्वप्नंमहाधियः ॥ स्थानंतृतीयमिच्छंतिराजंस्तस्यैवसर्वदा ४३३ नायंलोकोभवेत्स्वप्नःशुक्रशोणितसंभवे ॥ नाहंमानःशरीरेस्तियतोमृतसमंवपुः ॥ स्वप्नेभूमौनिपतितंदेहीजानातिनैवतत् ४३४

स्यपुंसोवस्तुतोब्रह्मात्मरूपिणःअविद्ययातुपुर्यष्टकवेष्टितस्यपुनःपुनःशरीराणिगृह्णतस्त्यजतश्चानुयातेद्वेस्वस्थानेविहारभूमीइवभवतः । केतेइत्यतआह अयंप्रत्यक्षोलोकःस्थूलशरीरादिकस्तथापरलोकोयत्रशरीरेतिष्ठतितद्भिन्नशरीरादिकइतियावत् ४३२ ननुपरलोकेकिंमानमितिचेत्स्वाप्नंप्रत्यक्षंतावदवधारयंतिदर्शयितुंस्वप्नस्यसांध्यत्वमाह लोकयोरिति । केचित्स्वप्नंभोगभूमित्वेनतृतीयंस्थानमिच्छंति महाधियस्तुसंधौजातत्वेनस्वप्नंसांध्यमेवाहुः तथाचग्रामद्वयसंधेर्यथानग्रामान्तरत्वंतथानस्वप्नस्यस्थानांतरत्वमितिभावः ४३३ तर्हिलोकपरलोकयोरन्यतरत्रांतर्भावएववर्णनीयःकिमितिसांध्यत्वमुच्यतइत्याशंकावारणायान्यतरत्रांतर्भावासंभवमाह नायमितिद्वाभ्यां । स्वप्नएतल्लोकात्मकएवनभवति एतच्छरीरेअभिमानाभावात् तत्रहेतुर्यतइत्यादिनोक्तः यतःस्वप्नेवर्तमानोदेहीमृतदेहवद्भूमौपतितंदेहंनजानातीत्यन्वयः ४३४

नापिपरलोकएवांतर्भविष्यतीत्याह लोकइति । परलोकमात्रात्मकएवन यतोदेहीस्थूलदेहंसर्वथानत्यक्तवान्सर्वथास्थूलदेहत्यागकर्त्तानभवतियेनतद्द्रोहेतस्यस्थूलदेहस्यद्रोहेपीडनेदुःखीभवतिनिःश्वसंश्चभवति तथाचएतत्स्थूलदेहाभिमानात्यंतपरित्यागऐहिकपीडाश्वासाभावाभ्यामनुमितःपरलोकधर्मस्तदभावःपरलोकेभेदेहेतुरेवंपूर्वत्रापिबोध्यमितिनवैयधिकरण्यशंकेतिभावः ४३५ फलितमाह शरीरस्येति । ततःशरीरस्यापरित्यागादेतल्लोकलक्षणादहंमानपरित्यागात्परलोकलक्षणाच्चस्वप्नःसांध्यएवभवेदिति ४३६ एतद्दृष्टान्तेनस्फुटयति अदर्शनादिति । यथोडूनामदर्शनाद्दिवसलक्षणात्तथानिर्मलेगगनेपिसवितृमंडलादर्शनरूपाद्रात्रिलक्षणात्सायंकालःअहोरात्रयोःसंधिरेवस्मृतः नकेवलमहर्नवाकेवलरात्रिरिति ४३७ तत्रेति । तत्रसंधौजातः । स्फुटमन्यत् ४३८ एवंसांध्यत्वंस्वप्नस्योपपाद्यतत्फलंपरलोकप्रत्यक्षमवतारयति तस्मिन्निति । तस्मिन्स्वप्नसंज्ञेसांध्येस्थानेस्थितःसन्नात्माउभयोरेतल्लोकपरलोकात्मकयोर्मध्येस्थितंपदार्थजातंद्वयमतीतमनागतंचपश्यतीति ४३९ तत्रातीतस्यैहिकामुष्मिकार्थजातस्यस्वाप्नप्रत्यक्षविषयतांदर्शयति अस्मिन्निति । अस्मिन्वर्त्तमानेदेहे देहांतरेचातीतेयदनुभूतंस्यात्संभवेत्तत्स्वप्नेमायोवलोकयतीति ४४० अनागतेतद्दर्शयति अपिभावीति । कदाचनमरणसन्निधौ ४४१ एतद्दृष्टान्तेनस्फुटयति देहल्यामिति । यथाकश्चिद्देहल्यामुपविष्टःसन्गृहमंगणंचपश्येत् तयोर्गृहाङ्गणयोःसंधौस्थितत्वात् ४४२

लोकःपरोपिनस्वप्नःस्थूलंदेहंनसर्वथा ॥ त्यक्तवान्येनतद्द्रोहेदुःखीभवतिनिःश्वसन् ४३५ शरीरस्यापरित्यागादहंमानविवर्जनात् ॥ लोकयोरुभयोःसंधौजातःस्वप्नस्ततोभवेत् ४३६ अदर्शनाद्यथोडूनांसवितुर्मंडलस्यच ॥ निर्मलेगगनेसंधिरन्होरात्रेश्चसस्मृतः ४३७ तत्रजातःपदार्थोयःससांध्यःकीर्त्यतेयथा ॥ तथास्वप्नोपिसांध्यःस्यात्संधिजत्वेनहेतुना ४३८ तस्मिन्स्थानेस्थितात्मासांध्येस्थानयोरुभयोरपि ॥ मध्येस्थितंसदैवात्मापश्यतिद्वयमेवतत् ४३९ अस्मिन्देहेमुनायत्स्यादनुभूतंशरीरिणा ॥ विलोकयतितत्स्वप्नेयच्चदेहांतरेपिवा ४४० अपिभाविशरीरेयदनुभाव्यंभविष्यति ॥ विलोकयेत्तदप्यत्रस्वप्नेकश्चित्कदाचन ४४१ देहल्यामुपविष्टःसन्यथाकश्चिद्गृहांगणे ॥ विलोकयेत्तयोःसंधौस्थितत्वेनैवहेतुना ४४२ इमंलोकंपरंचैवविलोकयतिसंधिगः ॥ आत्माचसर्वजंतूनांममतेपिचभूपते ४४३ यादृशंवपुरेतस्यभविष्यत्यत्रदेहिनः ॥ स्थूलस्यवपुषस्त्यागेशुभंवाऽशुभमेववा ४४४ संगृह्यस्वप्नगंसोयंतच्छरीरंसदापुमान् ॥ शुभेनसुखमाप्नोतिदुःखंतद्वत्परेणच ४४५ पुण्यकारीसुखान्येयाद्दुःखान्येवंचपातकी ॥ एवंलोकद्वयंपश्येदात्मायंपरमेश्वरः ४४६ सयदावपुषःस्थूलादयंलोकइतीरितात् ॥ स्वाप्नंसंध्याभिधंस्थानंपश्यँल्लोकद्वयंव्रजेत् ४४७

दार्ष्टांतिकेयोजयति इममिति । स्पष्टम् ४४३ यथाऽऽक्रमइत्यादिभागस्यार्थंयादृशेनाऽऽक्रमेणआलंबनेनधर्मादिरूपेणशरीरादिहेतुनासहितोलोकद्वयेफलंभुंक्तेतादृशःसन्नेवस्वप्नेपापफलानिदुःखानिपुण्यफलानिसुखानिचपश्यतीत्याकारंदर्शयति यादृशमितित्रिभिः । अस्यजंतोःस्थूलदेहत्यागानंतरंयादृशंवपुर्भविष्यतितत्तादृशमेवस्वप्नगंशरीरंपरिगृह्यशुभेनपुण्येनपरेणपापेनचसुखदुःखेप्राप्नोतीतिद्वयोःसंबंधः ४४४ । ४४५ एतत्स्पष्टयन्फलितमाह पुण्येति । तथाचपरलोकेस्वाप्नंप्रत्यक्षंमानंसिद्धमेवमन्यदपिश्रुतिस्मृतिपुराणादिबोध्यमितिभावः ४४६ ननूपाधिसंसर्गेणमलिनस्यात्मनोविविक्तंरूपंयावन्नेक्ष्यतेतावन्नमोक्षादिसंभाव्यतइतिचेत्स्वप्नेतावत्स्वयंप्रकाशतयातत्परिचिनुहीतिप्रदर्शकस्यसयत्रेत्यादेरर्थमाह सयदेत्यादिना । सआत्मायदास्थूलाद्देहात्तंविहायस्वाप्नंस्थानंलोकद्वयंदर्शनायव्रजेत्तदास्थूलदेहसंबंधिनोविषयानिंद्रियाणिचविषयेंद्रियवासनाःश्रुतौमात्रापदोक्तास्तासांधारकंमनश्चसहादायैवगच्छति यथाराजायच्छन्ननुचरान्सहनयतितद्वत् । कीदृशादेतल्लोकात् अयंलोकइति । अयमात्मासर्वेषांभूतानांलोकइत्यादिवाक्येनतृतीयाध्यायचतुर्थब्राह्मणगतेनसर्वभोग्यतयोक्तात् एतेनसत्रावस्पदंसर्वावतमात्रामपादायेत्यर्थकतयाव्याख्यातमिति ४४७

४४८ क्रीडन्निति । यथासिकतायांक्रीडन्सन्बालःक्रीडासाधनंसिकतामयंनिर्मायनिहत्यभंक्त्वाचक्रीडतितथायमात्मास्वप्नेविषयाणांनिर्माणमनुभूतानांभंगंचकुर्वन्क्रीडतीतिद्वयोःसंबंधः ४४९
४५० अस्यचनानापदार्थविषयीकरणमेवक्रीडनमित्याह स्वप्रकाशेति ४५१ स्वयंदासास्तपस्विनइत्यत्रप्रयोगेयथाह्येतरदासाभावोबोध्यतेतथास्वयंज्योतिःपदेनात्मेतरप्रकाशाभावोबोध्यइ
तिदर्शयन्नाह स्वप्रकाशेति । स्वप्रकाशमात्मभूतंस्वरूपभूतंविज्ञानंयस्यैतादृशमात्मानंविहायान्यज्ज्योतिर्नास्तीत्यर्थः ४५२ ननुमनोज्योतिर्भवत्वितिचेन्नतस्यपरिणामित्वेनजडत्वादितिदृष्टां
तेनाह बालकस्येति । यथाबालकस्यक्रीडासाधनानामार्द्रमृद्विकाराणांकारणमुपादानंमृद्रूपंजडंप्रसिद्धंतथास्वप्नभावकारणंमनोपिजडमित्यर्थः ४५३ जडत्वाच्चभास्यत्वमेवमनसोनभास
कत्वमितितंदृष्टांतमनुसृत्यैवदर्शयति बालकेनेति । यथाबालकेनविविधानानाकारपरिणतापुरःस्थिताचमृत्तिकादृश्याज्ञानविषयतांनीयातथात्मनास्वप्नगंमनइति ४५४ अस्तुतर्ह्यविद्याज्योति
रित्यपिनवाच्यंतस्याआवरकत्वेनदृश्यत्वेनचजडत्वस्यस्फुटत्वादित्याह अविद्येति । स्पष्टम् ४५५ लोकेप्रकाशकत्वाभिमतानामिंद्रियादीनामभावोपिस्वप्नेनिर्विवादइत्याह इंद्रियाणीति ।

तदास्थूलस्यदेहस्यविषयानिंद्रियैःसह ॥ आदायसर्वतोगच्छेन्महाराजोयथाजनान् ४४८ क्रीडन्निहयथाबालःक्रीडायाःसाधनंबहु ॥ क्रीडत्यविरतंसर्वंनिर्माय
चनिहत्यच ४४९ यथास्वप्नगतोदेवोनिर्मायचनिहत्यच ॥ स्वप्रकाशात्मविज्ञानात्स्वप्नान्पश्यत्यनेकशः ४५० स्वप्रकाशात्मविज्ञानात्पश्यन्स्वप्नानयंपुमान् ॥
क्रीडत्यविरतंदेवोह्यात्मज्योतिर्यईरितः ४५१ स्वप्रकाशात्मविज्ञानमात्मानंपरिहायन ॥ विद्यतेज्योतिरन्यद्यत्स्वयंज्योतिस्ततःपुमान् ४५२ बालकस्ययथैव
स्यात्क्रीडासाधनकारणम् ॥ स्वप्नद्रष्टुस्तथैवस्यान्मनःस्वप्नस्यकारणम् ४५३ बालकेनयथादृश्याविविधामृत्पुरःस्थिता ॥ स्वप्रकाशात्मनातद्वद्दृश्यंस्वप्नैःस
मंमनः ४५४ अविद्यानभवेत्कापिकस्यचिद्धिप्रकाशिका ॥ मनश्चघटवद्दृश्यंनित्यंस्वप्नदृशायतः ४५५ इंद्रियाणिनसंत्यत्रस्वप्नेजागरणेयथा ॥ रविसोमाग्नि
वाचोपितेजोरूपाश्चकेपिन ४५६ अगमन्मेमनोन्यत्रेत्यादिनागम्यतेमनः ॥ सर्वजागरणेयेनतेनदृश्यमिदंस्मृतम् ४५७ चेतनत्वंनचास्यास्तिवादिनःकस्य
चिन्मते ॥ यस्याप्यस्तिसवक्तव्यःकिमात्मैतदुतापरम् ४५८ अनात्मत्वेकुतोनस्यात्सर्वमेतद्धिचेतनम् ॥ भूतानांभौतिकानांचमनसोवापिबोधने ॥ सतिकिं
मनसाकार्यंचेतनेनसमेनतैः ४५९ प्रमाणंसर्वचैतन्येनास्मदादेस्तुकिंचन ॥ आगमोनुवदत्येतत्सर्वात्मात्मेत्ययंनहि ४६०

भावाइतिशेषः ४५६ मनसोदृश्यत्वेनुभवमपिसंवादयति अगमदिति । त्वदुक्तार्थंविहायमेमनोन्यत्रगतमित्याद्याकारेणानुभवेनलोकैर्मनोयतोगम्यतेविषयीक्रियतेतेनमनसोदृश्यत्वेनविवाद
इत्यर्थः ४५७ मनसोजडत्वमेवप्रपंचयति चेतनत्वमित्यादिना । अस्यमनसश्चेतनत्वंकस्याप्यस्तिकस्यवादिनोमतेनास्ति अथयस्यबौद्धस्यमतेचेतनत्वंमनसोस्तिसवादीएवंवक्तव्यःप्रष्टव्यः
एवंकथं किमेतन्मनआत्मरूपमुतापरमनात्मरूपमिति ४५८ अंत्येदोषंप्रपंचयति अनात्मत्वइतिद्वाविंशतिश्लोकैः । यद्यनात्मत्वेपिमनसश्चेतन्यंस्वीक्रियतेतदानात्मत्वाविशेषादेतत्सर्वंजडजातंचेतनं
स्यात् अत्रेष्टापत्तिंमनोवैयर्थ्यापादानेनवारयति भूतानामिति । यदाभूतादीनामनात्मनांसर्वेषांबोधनंचैतन्यंस्वीक्रियतेतदामनसोवैयर्थ्यंदीपेनदीपांतरवत् केनाप्यनपेक्षितत्वादित्यर्थः ४५९
नन्वागमोक्तत्वात्सर्वत्रचैतन्यंमन्यामहेइतिचेत्किमागमोनुवादरूपःसन्सर्वंचैतन्यमाहाहोस्विद्विधिरूपइतिविकल्प्यतत्राद्यइत्याह प्रमाणमिति । आगमोवेदःसर्वमात्मैवेत्याद्याकारकएतत्सर्वंचैत
न्यंनानुवदति हियतःसर्वचैतन्येऽस्मदादिसंबंधिप्रत्यक्षादिकंप्रमाणंनास्तियत्सिद्धमागमोनुवदेदिति ४६०

नद्वितीयस्तस्यागमस्यफलवदनधिगताबाधितविषयांतरलाभेनतद्विपरीतेजडस्यचेतनत्वेतात्पर्याभावात् प्रत्युतबाधासामानाधिकरण्येनजडस्यबाधनादित्याशयेनाह सर्वतामिति । सउक्ताका रआगमःसर्वतादित्रयंविदधाति सर्वत्वभ्रमापनोदायरज्जुत्वमिवद्वैतभ्रमापनोदायअज्ञातंबोधयतीत्यर्थः तर्ह्यनेकविधानेवाक्यभेदइतिचेन्न । पदार्थशोधनद्वाराजायमानमहावाक्यार्थज्ञानक्रमा नुसारित्वेनेष्टत्वादित्याशयेनाह अन्याहीत्यादि । इदंजगत्सर्वमद्वितीयात्मकब्रह्मरूपमित्येवंविधावचनस्यव्यक्तिःस्वरूपमितियावत् साम्यत्वेनेष्टैव यतोऽनयातत्पदार्थशोधनंक्रियतेइतिभावः । तथातत्पदार्थेचिद्रूपताविधायिकाएतत्सचराचरंचेतनमित्याकारावचनव्यक्तिरपिपृथगिष्टा तथात्मास्तीत्याकारावचनव्यक्तिस्त्वंपदार्थस्यसर्वान्तरताबोधनद्वाराशोधिकापिपृथगिष्टा परइतिप दमुत्तरश्लोकादपकृष्यते । तथाचपरस्तत्पदार्थःसआत्मैवेत्याकाराचतुर्थीवचनव्यक्तिरपीष्टैवमहावाक्यरूपत्वादितिद्वयोरर्थः ४६१ । ४६२ यदिचोक्तविषयावेदांतवाक्यानांब्रह्मात्मपरत्वमन भ्युपगम्योक्तवाक्यस्यचिज्जडयोस्तादात्म्यलक्षणसंसर्गपरत्वमिष्यतेतद्बलाच्चजडस्यचेतनत्वमापाद्यतेतदाचितोजडत्वमपिस्याद्विधीयमानजडतादात्म्यानुयोगित्वादित्याह परइति । प्रथमपदंपूर्वा न्वयित्वेनव्याख्यातं यदिआत्मैवेदंसर्वमित्यादिवाक्यार्थत्वेनाभिमतंचेतनतादात्म्यंहेतुत्वेनावलंब्यसर्वंजडंचेतनमित्युच्यतेतदाअचेतनतादात्म्यादात्माअचेतनइतिकिंनोच्यते यतस्तेमतेविधानंवि धीयमानतादात्म्यानुपयोगित्वमुभयोश्चिज्जडयोस्तुल्यंविनिगमनाहीनं तथाचचेतनेजडस्यचेतनत्वोपपादनेकिमाधिक्यंकानुकूलायुक्तिर्यतस्तदेवांगीक्रियतइत्यर्थः ४६३ किंचजडस्यचैतन्यंनवे

सर्वतामात्मतांतद्वद्बोधंचविदधातिसः ॥ अन्याहिवचनव्यक्तिर्जगत्सर्वंभवेदिदम् ४६१ अन्याचसर्वमेतत्स्याच्चेतनंसचराचरम् ॥ आत्मेतिचपरैवस्यादन्यास्या च्चेतनोहिसः ४६२ परश्चेतनतादात्म्यात्सर्वंचेत्तद्धिचेतनम् ॥ अप्यचेतनतादात्म्यादात्मातेऽचेतनोनकिम् ॥ विधानमुभयोस्तुल्यमाधिक्यंकिंतुचेतने ४६३ अपिदृष्टविरोधेनक्वचिद्वाक्यस्यमानता ॥ माभूद्यूपेनतादात्म्यंखस्थितस्यप्रभाभृतः ॥ माचाभूद्यजमानस्यप्रस्तरेणभृतात्मना ४६४ अपिवाक्येनय त्किंचिद्वैदिकेनविधीयते ॥ पुरुषार्थायतत्सर्वमितिवैदिकसंस्थितिः ६५ आत्मनोचेतनत्वेवाचैतन्येऽनात्मनोपिवा ॥ पुरुषार्थोनकोप्यस्तिविदधातिकथंहितत् ॥ पुरुषार्थविहीनंयत्प्रमाणंवेदईश्वरः ६६ वेदशब्दोपिनैवात्रक्वचिद्ब्रूयादनर्थकम् ॥ पुरुषार्थविहीनंयत्तदनर्थकमीरितम् ॥ पुमर्थंवेदयेद्यस्मात्तस्माद्वेदोयमीरितः ४६७

दप्रमेयमबाधितत्वादितात्पर्यप्रयोजकाभावादितिवक्तुमबाधितत्वस्यतात्पर्यव्यापकतांतावदाह अपिदृष्टेति । अपिचदृष्टेनानुभवेनविरोधेविरुद्धेक्वचिदप्यर्थेवेदवाक्यस्यमानतातत्परतानांगीकर्त व्याइतिशेषः । अंगीकारेऽनिष्टंदर्शयति माभूदिति । तथांगीकारेहिआदित्योयूपइतिवाक्यबलेनाकाशस्थितस्यप्रभाभृतःआदित्यस्ययूपेनाप्रकाशमयेनतादात्म्यंजगदंधकारापादकंप्रसज्ज्येत । तथा यजमानःप्रस्तरइतिवाक्यबलेनयजमानस्यप्रस्तरेणदर्भमुष्टिमयेनभृतात्मनाजडरूपेणतादात्म्यंस्यात् । तथाचसूक्तवाकेनप्रस्तरंप्रस्तरंप्रहरतीतिविहितसूक्तवाकाख्यमंत्रकरणकहोमकालेयजमानस्या ग्नौप्रक्षेपेसर्वक्रियालोपप्रसक्तिस्तदुभयंमाभूदिति ४६४ अथफलत्वस्यतात्पर्यलिंगस्यव्यतिरेकमुक्तार्थेदर्शयति अपिवाक्येनेति । वैदिकेनवाक्येनयत्किंचिद्विधीयतेअज्ञातंबोध्यतेतत्सर्वंपुरुषा र्थप्रयोजकमेवविधीयतइतिवेदविदांसिद्धांतइत्यर्थः ४६५ त्वदभिमतोर्थस्तुनतथेत्याह आत्मनइति । आत्मनोजडत्वेजडस्यचेतनत्वेवाज्ञातेनकिंचित्फलमतस्तज्जडस्यचैतन्यंपुरुषार्थविहीनंवे दईश्वरात्मकःकथंविदधीतयतःप्रमाणंभवतिविफलबोधनेह्यप्रामाण्यंप्रसिद्धमितिभावः ४६६ अन्वर्थनामावेदःस्वस्यतेदत्वसंरक्षणायापिनपुरुषार्थरूपमर्थंप्रतिपादयितुंतत्परोभवतीत्याह वेदेति । वेदइत्याकारकःशब्दोवाचकोयस्याम्नायस्यसप्रमाणराजःअत्रप्रमाणव्यापारेप्रवृत्तःसन्क्वचिदनर्थकमपिब्रूयात्प्रकाशयेत् यथाचक्षुरिष्टदर्शनायोन्मीलितमनिष्टमपिप्रकाशयतितद्वदितिनैववाच्यमि तिप्रथमार्द्धार्थः । द्वितीयार्द्धेनानर्थकस्वरूपमुक्तं । प्रथमार्द्धोक्तप्रतिज्ञायांहेतुतयावेदपदव्युत्पत्तिविरोधंदर्शयंस्तद्व्युत्पत्तिमाह पुमर्थमिति ४६७

चक्षुरादीनांविषयप्रकाशनप्रवृत्तौतात्पर्येणनियामकंवेदस्यतूपक्रमादिषड्विधलिङ्गगम्यंतन्नियामकमितिविशेषमभिप्रेत्यतत्रफलस्यानियामकतांन्यायेनसाधयति ज्ञानेतिचतुर्भिः । विदिर्वेदशब्दस्थःकोविं
दथातुर्ज्ञानकर्मोज्ञानंकर्मवाच्यंयस्यसतथाज्ञानार्थकइतियावत् एषवेदस्तत्रविदथात्वर्थेज्ञानेप्रयोजकोवेदयतीतिव्युत्पत्त्याज्ञानेप्रेरकत्वेननिर्दिष्टः प्रेरकत्वंतुमुख्यंतत्रैवलोकेप्रसिद्धंयत्रप्रयोज्यस्यक्रिया
यामपेक्षारागोभवतियथाक्षुधितस्यभोजनप्रवर्तके अपरःप्रयोज्यापेक्षामंतरेणप्रवर्त्तकस्तुजघन्योगौणःप्रयोजकःस्यात्यथामारीपदेनमारयतीतिव्युत्पत्त्यापुंसोलयेमरणेप्रयोजकतयानिर्दिष्टोपिमृत्युर्गौ
णएवप्रयोजकइष्यते पुंसांमरणेअपेक्षाभावादित्यर्थः ४६८ कुत्रतर्हिप्रयोज्यस्यपुंसोरागइतिचेत्फलेतत्साधनेवाइत्याह अपेक्षेति । पुंसोपेक्षाचतत्रैवभवतियोर्थःपुरुषार्थरूपःस्यात् पु
रुषार्थत्वमपिमुख्यंसुखेएवतत्साधनेतुगौणमित्यर्थः ४६९ उक्तस्यपुमर्थत्वस्यप्रकृतेव्यतिरेकमाह आत्मनइति । आत्मनोयदचेतनत्वंयच्चपरस्यानात्मनश्चैतन्यमेतदुभयंसुखरूपंनातस्य
कस्यचित्सुखविशेषस्यसाधनरूपंवाक्वचिदपिदेशेकालेवानभवतीति ४७० फलितमाह अप्रमेयमिति । अतोऽपुरुषार्थरूपत्वादनात्मगतंचेतनत्वमप्रमेयंप्रमातुमर्हंप्रमातुमिष्टमितियावत् एता
दृशंनभवति एतादृशेषविफलार्थज्ञानेवेदःकथंप्रयोजकःप्रवर्तकःस्यादपितुनस्यात्यतःपितृवाक्यवत्प्रमाणंभवति तादृशार्थप्रतिपादनेहिप्रामाण्यंभज्येतेत्यर्थः ४७१ किंतर्हिवेदप्रमेयमिति

ज्ञानकर्माविदिःप्रोक्तोज्ञानेचैषप्रयोजकः ॥ प्रयोजकोभवेल्लोकेप्रयोज्यापेक्षयैवहि ॥ मुख्योपरोजघन्यःस्यान्मारीपुंसोलयेयथा ४६८ अपेक्षाचभवेत्पुंसःपुरुषार्थे
परत्रन ॥ मुख्यःसुखंपुमर्थःस्याद्गौणंतस्यापिसाधनम् ४६९ आत्मनोऽचेतनत्वंवाचैतन्यंचपरस्यवा ॥ नसुखंनापितस्यस्यात्साधनंकस्यचित्क्वचित् ४७०
अप्रमेयमतस्तस्मिन्कथंस्याद्धिप्रयोजकः ॥ प्रमाणंहिभवेद्वेदःपितुर्वचनसंमितः ४७१ स्वप्रकाशमतःस्वात्मरूपंसिद्धंततोद्वयम् ॥ कुतर्कमतिभिःपुंभिःप्रपंच
द्वयदृष्टिभिः ॥ नशक्यंस्वात्मनागंतुमपिजन्मशतेनतैः ४७२ तेषांयथाप्रपंचस्यविलयोबुद्धिमाव्रजेत् ॥ तदर्थमिदमहैषाश्रुतिर्मातेवनोहिता ४७३ इदंसर्वंभवे
दात्मायोयंवोहृदयेस्थितः ॥ सर्पधारादिकंद्वैतंरज्जुरेवयथाद्वया ४७४ अनुमानंचचैतन्येजगतोनास्तिकिंचन ॥ प्रत्युतास्तिभुजाह्येतत्प्रत्यक्षंपरिपालनम्
४७५ प्रत्यक्षस्यतुनैवास्तिह्याशास्मास्वत्रकर्हिचित ॥ प्रत्यक्षमस्मदादेर्नचैतन्येजगतोस्तिहि ४७६

वेदात्मतत्त्वमेवानधिगताबाधितत्वेसतिफलत्वादित्याह स्वप्रकाशमिति । अतआत्मेतरस्याप्रतिपाद्यत्वात्ततोवेदात्प्रमाणराजात्स्वप्रकाशमद्वयंचात्मनोरूपंसिद्धमिति अद्वयत्वेनानंदरूपता
योभूमेतिश्रुतिसिद्धासूचिता । तस्यप्रमाणांतरागोचरत्वेनापूर्वतामबाधिततांचाह कुतर्केत्यादिना । कीदृशमुक्तमात्मरूपं प्रपंचात्मकंद्वैतंपश्यद्भिःकुतर्कमलिनमतिभिश्चतैर्लौकिकैःपुंभिः
स्वात्मनास्वयमेवजन्मशतेनापिगंतुंविज्ञातुंनशक्यमिति यदिवेदेतरप्रमाणगम्यंस्यात्तदातार्किकादयोपितंजानीयुरितियावत् ४७२ यदिजडस्यचेतनत्वंनवेदप्रतिपाद्यंतर्ह्यात्मैवेदंसर्वमित्यादि
वाक्यानांकोर्थइतिचेद्द्वैतबाधेनाद्वैतबुद्ध्यवतारणमेवेत्याह तेषामितिद्वाभ्यां । तेषांजिज्ञासूनांबुद्धिप्रपंचविलयोयथाआरोहेत्तदर्थंमातेवहितकारिणीश्रुतिरिदमाह इदंकिं इदंसर्वंदृश्यंयुष्माकंहृदय
स्थितआत्मैवभवतिदृश्यंतुनास्त्येवयथारज्जौदृष्टंसर्पजलधारामालादिरूपंद्वैतंरज्जुमात्रमित्युपदेशइतिद्वयोरर्थः ४७३ । ४७४ ननुवेदप्रतिपाद्यत्वाभावेपिजडस्यचैतन्यमनुमानेनसाधयिष्यतइ
तिचेन्नेत्याह अनुमानमिति । जगतश्चैतन्यसाधकमनुमानंकिंचिदपिनास्तिलिंगादिसामग्रीविरहादितिभावः । प्रत्युतविपरीतंजडत्वसाधकंत्वनुमानंदृश्यत्वादिलिंगकमस्तिनिर्बाधंभवतिहियत
एतत्प्रत्यक्षंजाड्यावगाहिपरिपालकत्वादनुग्राहकत्वादनुमानस्यभुजाइवसहायइतियावत् सिद्धिस्तुसिषाधयिषाबलान्नप्रतिबंधिकेतिभावः ४७५ तर्हिकस्यचित्प्रत्यक्षंजगतश्चैतन्यसाधकंभवि
ष्यतीतिमंदाशंकांव्यावर्तयितुंकिंजगच्चैतन्यविषयकप्रत्यक्षशालीजनोऽस्मज्जातीयःकिंवास्मद्विलक्षणइतिविकल्प्यतत्रनाद्यइत्याह प्रत्यक्षस्यत्विति । अस्मासुअस्मज्जातीयेषुजगच्चैतन्यग्रा-

६१

—चरस्यप्रत्यक्षरयाशाकदाचिन्नकार्या हियतोस्मदादेर्जगतश्चैतन्यगोचरंप्रत्यक्षंनदृश्यतइत्यर्थः ४७६ नद्वितीयइत्याह प्रत्यक्षमिति । जगतोयोबोधश्चेतनत्वमितियावत् तद्विषयकं प्रत्यक्षमस्मदादिविलक्षणेजनेवर्तमानमपिनास्तीति । तत्रहेतुंनृशृंगवत्साधकमानाभावमाह कुतइति । अस्माभिरिदंकुतोगम्यंज्ञातव्यंयतसत्प्रत्यक्षंतादृक्जगच्चैतन्यविषयकंतत्रास्मद्वि लक्षणेजनेविद्यतइति ४७७ ननुप्रमाणैरेवोक्तप्रत्यक्षसिद्धिःपरंतुतानिप्रमाणानियुष्मज्जातीयेपुनसंतीतिशंकांवारयन्सर्वकारणोपपन्नेपुमनुष्येष्वप्रसिद्धानांप्रमाणानामसत्त्वमेवान्यथासप्त मरसादीनामपिसिध्यापत्तिरित्याशयेनाह यदीति । तस्मिन्नुक्तेप्रत्यक्षेसाधकानिप्रमाणानियद्विसंतितर्हितानिनोस्माकंगोचरेकुतोनविद्यंते अत्रार्थेविचित्रादैवस्यसंगतिर्घटनेत्यर्थः ४७८ जग च्चैतन्यगोचरंप्रत्यक्षंकुत्रचित्पुरुषेस्तिकुत्रचिन्नास्तीत्येवंस्वीकारेव्याघातमुपपत्तिहीनत्वंचाह विषयइति । यद्वस्तुचेतनत्वेनविषयोविषयतार्हंनास्तितदेवस्थानजेदेशविशेषजेनरेवर्त्तमानज्ञानस्यविष यीभवतीतितथासएवविषयआत्मांतरेअस्मदादौवर्त्तमानज्ञानस्याविषयीभावंनयातितदपिस्वतःस्वभावइत्यर्थः तथाचएकस्यविषयत्वमविषयत्वंव्याहतंस्वभावमात्रेणचविरुद्धरूपतानयुज्यतेइतिभा वः ४७९ मनसोऽनात्मत्वपक्षेदोषप्रपंचनमुपसंहरति ततइति । ततउक्तदोषकदंबात् मनसश्चेतनत्वस्वीकारेतववादिनोव्यसनंदुःस्थत्वरूपाविपत्आयातं कीदृशंव्यसनं यदिमनसश्चैतन्यंस्वी क्रियतेतर्हिसर्वेअनात्मानश्चेतनाःस्युरितिप्रतिबंदीघटकैरनात्मभिःकृतंकीदृशैरनात्मभिर्मनःसमैर्जडत्वादिभिर्धर्मैरित्यर्थः ४८० अथाद्यंमनसआत्मत्वेसतिचेतनत्वपक्षंदूषयति सात्मतेतिपङ्क्तिः ।

प्रत्यक्षंजगतोबोधेनास्मदादिविलक्षणे ॥ कुतोस्माभिरिदंगम्यंतत्तादृक्तत्रविद्यते ४७७ यदितस्मिन्प्रमाणानिसंतितिनोविषयेकथम् ॥ विद्यंतेतानिनैवात्रविचित्रादै वसंगतिः ४७८ विषयोनास्तियत्तत्स्याद्विषयःस्थानजेनरे ॥ विषयोविषयीभावंनयात्यात्मांतरेस्वतः ४७९ ततोव्यसनमायातंचैतन्येमनसस्तव ॥ अनात्म भिःकृतंसर्वैःप्रतिपक्षैर्मनःसमैः ४८० सात्मतामनसश्चेत्स्याच्चेतनस्यात्रवादिनः ॥ तत्किंतस्यपरिच्छिन्नंसर्वगंवामनोभवेत् ॥ परिच्छेदेपुनस्तेनस्मर्यंतेभूतभौ तिकम् ४८१ वस्तुतःकालतश्चास्यदेशतोपिनकुत्रचित् ॥ वर्ततेऽतस्त्रिधाछेदशून्यंचेन्नमनोभवेत् ॥ स्वयंज्योतिरयंह्यात्माविज्ञानानंदरूपभृत् ४८२ मनोनाम त्रिलोकेस्मिन्संकल्पशतकारणम् ॥ तैजसंभवतानैतदुक्तंनामविनाधुना ४८३ नहिनाम्निविवादोपिकस्यचित्कर्हिचित्क्वचित् ॥ आत्मेतिर्यवयंब्रूमोमनइत्याहतंभ वान् ४८४ आत्मादीन्यपिनामानिनिविद्यंतेपरात्मनि ॥ अवाङ्मनसगम्येऽस्मिन्स्वप्रकाशात्मबोधने ४८५

सात्मिकात्मैतद्गुतापरमित्यथस्ताद्विकल्पिताआत्मताचेतनस्यमनसोयदित्रादिसंमतातदाप्येवंविचार्यं एवंकथं तस्यमनसश्चेतनत्वविशिष्टात्मत्ववादिनोमतेकिंमनःपरिच्छिन्नंविभुवा आद्येतुयावद्वि कारंतुविभागइतिन्यायेनभेदस्यकार्यत्वव्याप्यत्वात् तेनमनसाकार्येणधूमेनवन्हिवद्भूतभौतिकंकारणंस्मर्यंते भूतानिअपंचीकृतानिभौतिकंभुक्तान्नंतेषांसमाहारः तथाचजडकार्यस्यचेतनत्वमात्मत्वं चव्याहतमितिभावः ४८१ विभुत्वपक्षेत्वात्मैवत्वयानामांतरेणोक्तइत्याह वस्तुतइतित्रिभिः । अस्यवादिनोमतेमनःकुत्रचिदपिवस्तुनिकालेदेशेवानवर्ततेविभूनामवृत्तित्वस्यसिद्धांतितत्वादतस्त्रि विधपरिच्छेदशून्यमितिचेत्तर्ह्येवंप्रतिपादितंवस्तुमनोनभवेत्किंतुस्वयंज्योतिरादिलक्षणआत्मैवभवेदिति ४८२ मनोनामेति । यच्चास्मिंस्त्रिलोकेऽपवयवेलोकेसंकल्पशतकारणंतैजसंसत्वप्रधानंम नोनामप्रसिद्धंतदेतद्भवतानोक्तंस्यात् नामविनातदीयंनामैवआत्मपरत्वेनभवतोक्तंनत्वर्थइत्यर्थः ४८३ नाम्नितुनविवादइत्याह नहीति स्पष्टम् ४८४ ननुविद्यतएवात्रविवादोयतोभवतांसि द्धांतेआत्मादिनामानिमुख्यवृत्त्यावर्ततेमनःपदंतुलक्षणयामन्मतेतुविपरीतमितिचेन्नावाङ्मनसगोचरेलक्षणयैवसर्वशब्दवृत्तेःसिद्धांतितत्वादित्याशयेनाह आत्मादीन्यपीतिद्वाभ्यां । स्वप्रकाशा त्मबोधनेस्वप्रकाशात्मकबोधरूपे ४८५

अध्यस्यंतेइति । यथात्मतत्त्वकुशलैरन्यान्यात्मादिनामान्यत्रात्मन्यध्यस्यंतेआरोप्यंतेतथाभवान्मनइतिनामाध्यस्यतीति अयंभावः आत्मज्ञानानन्दशब्दाःशबलेरूपेव्युत्पन्नाःशुद्धेलक्षणयाप्रवर्तन्ते एतत्संक्षेपशारीरकेप्रपञ्चितमिति । फलितमाह परिशेषादिति । प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगात्परिशिष्यमाणेसंप्रत्ययइत्युक्तलक्षणात् प्रकृतेतल्लक्षणसमन्वयस्तु स्वप्नेज्योतिष्ट्वंभ्रांतदृष्ट्यायत्रमनसिप्रसक्तंतस्यप्रतिषेधःकृतःअन्यत्राविद्यायामावरकत्वेनप्रसिद्धायांतथाजाग्रत्प्रपंचेस्वप्नेअविद्यमानेज्योतिष्ट्वप्रसक्तिरेवनास्तीत्यतोहेतोःपरिशिष्यमाणेआत्मनिज्योतिष्ट्वसंप्रत्ययइति ४८६ परिशेषमेवव्यनक्ति प्रतीतेरिति । आत्मनःप्रतीतिर्भासमानताभवतितद्वत्तथाआत्मनोपेक्षयाव्यतिरेकिणोभिन्नस्यप्रत्यायकस्यबोधकस्याभावोपिभवतीत्यतःपरिशेषादयमात्मास्वयंज्योतिरित्यर्थः ४८७ यद्यप्यद्वितीयत्वपरश्रुत्यंतरानुसारितर्केणापिस्वयंज्योतिष्ट्वमनुसंधातुंशक्यंतथापिप्रकृतश्रुत्यान्वयव्यतिरेकाख्यायुक्तिःसुखबोधायदर्शितेतिनिरूपयति नज्ञानमितित्रिभिः । यथाप्राभाकराआत्मनोधर्मंस्वप्रकाशंज्ञानंमन्यंतेतथानमंतुंयुक्तं तथासतिहिभेदात्मकवस्तुपरिच्छेदादनात्मत्वव्याप्याद्धेतोरनात्मत्वमेवघटवत्ज्ञानात्मनोर्ज्ञानस्यात्मनश्चस्यात्ततोनयोर्ज्ञानात्मनोर्नभेदोज्ञानाभेदेचात्मास्वयंप्रकाशइतियद्यपितर्केणैवसिद्ध्यतितथाप्येषआत्मास्वप्नकालेचयेनभासकतयासत्त्वेनेतरेषांभासकत्वाभिमतानामादित्यादीनांव्यतिरेकाच्चसुखेनगम्यतेततइत्यभिप्रायेणस्वयंज्योतिरि

अध्यस्यंतेयथान्यानिनामान्यात्मविशारदैः ॥ मनइत्येवचात्रैकमध्यस्यतितथाभवान् ॥ परिशेषात्ततोज्ञेयःस्वयंज्योतिरयंपुमान् ४८६ प्रतीतेरात्मनस्तद्वदात्मनोव्यतिरेकिणः ॥ प्रत्यायकस्यचाभावात्स्वयंज्योतिरयंपुमान् ४८७ नज्ञानमात्मनोभिन्नंस्वप्रकाशंकथंचन ॥ परिच्छेदोभवेद्भेदेपरिच्छेदादनात्मता ४८८ ज्ञानात्मनोर्घटस्येवततोभेदोऽनयोर्नहि ॥ विभेदाभावतश्चापिस्वयंज्योतिरयंपुमान् ४८९ यद्यपिस्यात्तथाप्येषह्यन्वयव्यतिरेकतः ॥ गम्यतेस्वप्नकालेत्रस्वयंज्योतिस्ततोपिच ४९० सदादाहकएवाग्निःस्वयंज्योतिःपुमांस्तथा ॥ अव्याकृतजगद्योनिर्नामरूपविवर्जितम् ॥ ब्रह्मयत्सर्वदेहेषुतदेवात्मास्वयंप्रभः ४९१ यथातत्सृजतेसर्वमेतत्सदसदात्मकम् ॥ आत्मासर्वशरीरेषुस्वयंज्योतिस्तथैवसः ४९२ नहिस्वप्नेत्रविद्यंतेरथाःकनकभूषिताः ॥ अभ्रंलिहध्वजास्तद्वत्पताकाःकृतकौतुकाः ॥ मेघघोषाविचित्रैस्तैःपरिपूर्णाःपरिच्छदैः ४९३

त्युक्तइतित्रयाणामर्थः ४८८ । ४८९ । ४९० अत्रायंपुरुषःस्वयंज्योतिरितिश्रुतिभागस्याशयंवक्ष्यमाणोपयोगायप्रकारांतरेणाह सदेति । यथालोकेदाहकःकाष्ठादिपुंजंदहन्नेवाग्निःस्वयंज्योतिरितिव्यपदिश्यतेनतुकाष्ठांतर्गतोभस्मच्छन्नोवातथायमात्मास्वप्नेस्वयंज्योतिष्ट्वेननिर्दिष्टइत्यर्थः । दार्ष्टांतिकंस्फुटयति अव्याकृतेति । अव्याकृतंप्रलयकालेनभिव्यक्तनामरूपकंयज्जगत्तस्ययोनिरुपादानंसर्वस्यकारणंनिमित्तंचयद्ब्रह्मसर्वज्ञंसर्वशक्तिमत्तद्वेदांतेषुस्वयंज्योतिरितिप्रसिद्धंनिरपेक्षत्वात्तदेवचात्रवाक्येस्वयंज्योतिःपदेनानूद्यप्रमातुरात्मत्वेनोच्यतेइत्यर्थः ४९१ तस्यब्रह्मणःप्रत्यभिज्ञापकंलक्षणंकिमत्रदृष्टमितिचेज्जगज्जन्मादिकारणत्वंतटस्थलक्षणंतावदवधारयेत्याह यथेति । यथातद्ब्रह्मजगत्सृजतेतथायमपीत्यतःस्वयंज्योतिःशब्दवाच्यःसपरमात्मैवायमित्यर्थः स्वरूपलक्षणंतुसत्यत्वज्ञानत्वादिकंप्रसिद्धमेवेतिभावः ४९२ अथोक्ततटस्थलक्षणस्यप्रतिपादिकांतत्ररथाइत्यादिकांदशमकंडिकामुपबृंहयति नहिस्वप्नइत्यादिसप्तदशभिः । अत्रलोकप्रसिद्धेस्वप्नेरथानसंति । कीदृशाः स्वर्णखचिताः अभ्रंलिहाआकाशस्पर्शिनोध्वजायेषांतेतथा पताकाभिःस्वल्पध्वजैःकृतचमत्काराः मेघध्वनयोविचित्रोपकरणपरिपूर्णाश्चेति । अत्रेदंबोध्यं श्रोतुर्जनकस्यराजत्वात्तदनुकूलतयारथादिपदार्थाअत्रनिरूप्यन्तइति ४९३

रथयुक्ताइति । रथेयुज्यंतेइतिव्युत्पत्त्यारथयोगपदोक्तास्तुरगाअप्यत्रनसंति कीदृशाः विचित्रागतिःकर्णिकाःकर्णभूषणानिचयेषांतेतथा ' कर्णिकाकर्णभूषणे ' इतिविश्वः । पुनःकीदृशा वायुवेगसमवेगोत्कर्षात्पुरतोभूमिंदृष्ट्वालज्जमानाआकाशंयेउत्पतंतिअत्प्लुत्यगच्छंतीवतथायेपूर्वोत्तरपदद्वयात्पूर्वतोनिधायउत्तरतोवामतोनिहितेनपदद्वयेनकुद्दालसमेनभूमिंविदारयंतीव कीदृशींभूमिं आतुरांविदारणभयव्याकुलामिवेतिद्वयोरर्थः ४९४ । ४९५ पन्थानइति । तत्रस्वप्ने पंथानोरथमार्गाः ४९६ घनापणादीति । कीदृशाःपंथानोघनानांनिबिडबद्धपंक्तीनामापणानां आदिपदग्राह्यगृहाणांवामध्यगताः । पुनःकीदृशाः घटदीपैर्मंगलकलशोपरिनिहितदीपैःप्रकाशिताः चित्रस्थानेत्यादिदीपविशेषणं चित्राणामालेख्यानांस्थानेषुस्थितानियानिचित्राणितेषांमंड नभूताविकासिकामूर्तयोयेषांतेतथातैरित्यर्थः ४९७ अप्सरइति । पुनःकीदृशाःपंथानः सुरूपाभिर्भूषिताभिर्मङ्गलहस्ताभिश्चललनाभिर्विराजिताः ४९८ संतिनैवेति । अत्रानंदपदेनेष्टभो गजन्यंसुखंविवक्ष्यते यथाजागरणेभीष्टयुवतीनामन्नपानवस्त्रभूषणादीनांचसमागमहेतुकाआनंदाःसंतितथास्वप्नेनसंत्यस्थिरत्वादितिसंबंधः ४९९ संतिनैवमुदइति । यथाजागरणेप्रियाप्रिययो

रथयुक्ताहयानैवविचित्रगतिकर्णिकाः ॥ वायुवेगाःपुरोभूमिंदृष्ट्वालज्जामुपागताः ४९४ उत्पतंतइवाकाशेदारयंतइवातुराम् ॥ भूमिंभूधरविध्वंस्यांपूर्वोत्तरपदद्व यात ४९५ पन्थानोनैवविद्यंतेतत्रचित्रामनोरमाः ॥ मृदुलाःशीतलास्तद्वत्सिक्ताश्चंदनवारिभिः ४९६ घनापणादिमध्यस्थाघटदीपैःप्रकाशिताः ॥ चित्र स्थानस्थितानेकचित्रमंडनमूर्तिभिः ४९७ अप्सरःसदृशानंतललनाभिर्विराजिताः ॥ सुवर्णमणिरत्नौघमंडिताभिःसमंततः ॥ दधिलाजादिसंयुक्तस्वर्णपात्रा ब्जपाणिभिः ४९८ संतिनैवात्रचानंदाश्चेतनाचेतनैःकृताः ॥ यथाजागरणेभीष्टयुवतीनांसमागमात ॥ इष्टादन्नात्तथापानाद्वसनाभरणादितः ४९९ संतिनैवमुद स्तत्रयथाप्रियसमागमात ॥ अप्रियस्यवियोगाच्चदृष्टाजागरणेनृणाम् ५०० नपुत्रजननाद्याश्चविद्यंतेप्रमुदोपिहि ॥ यथाजागरणेलोकेपुत्रादिरहितस्यतु ५०१ पल्वलानिननीराणितत्रजागरणेयथा ॥ निर्गच्छदुदकानैवपुष्करिण्योपिसंतिहि ५०२ प्रासादाद्यागृहानैवंप्रांगणैरुपशोभिताः ॥ नपर्वतावनैःसाकंनसरित्साग रादयः ५०३ नचलोकालोकपालैःसहितानापिवादिशः ॥ नभूतानिमहांत्यत्रपंचचत्वारिनैवच ५०४ नभआदीनितद्वच्चस्वेदजादीन्यनेकशः ॥ नब्रह्मांडंनत द्बाह्यंसदसद्वस्तुकिंचन ५०५ विद्यतेस्वप्नकालेस्मिन्मनएकंविहायतत ॥ स्वयंज्योतिस्तदात्मायंकर्ताऽव्याकृतवद्भवेत् ५०६ मनोभित्ताविदंविश्वंचित्रंसृजति मायया ॥ कर्तात्मारथमुख्यंयत्स्वप्नेनेतिसमीरितम् ५०७

लाभवियोगाभ्यांमुदोहर्षादृष्टास्तथास्वप्नेनसंतीति ५०० नपुत्रेति । यथाजाग्रतिलोकेपुत्रादिहीनस्यपुत्रादिलाभजन्याःप्रमुदःप्रकृष्टहर्षाःप्रसिद्धास्तथानसंतीति ५०१ पल्वलानीति । श्रु तिगतवेशंतपदोक्तानिपल्वलानिस्वल्पसरांसियथाजागरणेसंतितथातत्रस्वप्नेनसंति कीदृशानिपल्वलानिनिनीराणिजलस्थानोपलक्षकानीत्यर्थः । स्रवंतीपदंपुष्करिणीविशेषणत्वेनव्याचष्टे निर्ग च्छदिति । निर्गच्छत्स्रवदुदकंयाभ्यएतादृश्यःपुष्करिण्योबृहत्तडागादिरूपाअपिजाग्रद्वन्नसंतीति ५०२ श्रौतानांरथादीनामुपलक्षणत्वालंबनेनेतरपदार्थानप्यभावप्रतियोगित्वेनाह प्रासादाद्या इत्यादिना । स्पष्टम् ५०३ नचलोकाइति । नभआदीनिपंचभूतान्यत्रनसंतितथास्वेदजोद्भिज्जादीनिचत्वारिभूतानिप्राणिजातयोनसंतितथाब्रह्मांडंब्रह्मांडाद्बाह्यंस्थूलंसूक्ष्मंचकिंचनस्वप्नेनविद्यते मनस्तुदृश्याकारपरिणाम्येकमवशिष्यतेअतस्तदास्वप्नेप्रकाशकांतराभावेनस्वप्रकाशआत्माकर्तारथादिविषयाणांतथाभवेत्अव्याकृतोपाधिकेश्वरवदितित्रयाणामर्थः ५०४ । ५०५ । ५०६ कर्तृत्वंस्पष्टयति मनइति । आत्मारथमुख्यंविश्वमेवचित्रंनेतिसमीरितंनत्वत्ररथाइत्यादिनानिषिद्धंस्वप्नेमाययासृजतिअतःकर्तेतिसंबंधः ५०७

अतइति । यतःस्वप्नेअस्यप्रभावोदृष्टोऽतएवएवआत्माविश्वस्यकर्ताईश्वरोभवेत् नत्वत्रमायाहानिःकार्याअन्यथानुपपत्त्यातत्सिद्धेरित्याह मायामिति । अयंपुमान्निर्गुणत्वेनदेशादिहीनोभवति यदियमापापिनस्यात्तर्हिकथंसृजेदितिसंबंधः ५०८ फलितमाह देहेति । स्वप्निर्जागरणेनुभूयमानंविश्वमीश्वरोयथादेशादिसृष्टिपूर्वकंसृजतितथायमात्मास्वप्नेचराचरंसृजतीत्यर्थः ५०९ तदेतेश्लोकाद त्यस्यार्थमाह ब्राह्मणेरिति । यथाब्राह्मणभागेरात्मनःस्वप्रकाशत्वमुक्तंतथाश्लोकपदोक्तेमंत्रेरप्युपपद्यतेइत्यर्थः ५१० तत्रस्वप्नेनेत्यादेःप्रथममंत्रस्यार्थमाह विषयेंद्रियेतिसप्त भिः । स्वप्नावलोकतःस्वप्नदर्शनार्थंस्थूलशरीरसंबंधिविषयेंद्रियसमूहंत्यक्त्वाइमान्मानसान्मनःपरिणामभूतान्सर्वान्भावान्सकारणान्कारणाज्ञानसहितान्जडान्जाड्यात्मक निद्रासुप्तान्स्वशरीरभाक्जीवात्माप्रकाशयति कीदृशःस्वैःसर्वैरप्रकाश्यःसुप्तिशून्योऽलुप्तदृक्स्वयंप्रभश्चेतिद्वयोरर्थः ५११ । ५१२ स्वयंज्योतिरिति । स्वयंज्योतिःस्वयंप्रकाशंयत्स्वरूपंश्रुतौशु क्रपदोक्तंतदेवादायाप्यत्रस्वप्नदृश्यजातंपरित्यज्यजागरणावस्थांगत्वापुनरेवस्वप्नाभिधसंध्यस्थानमायातीत्यन्वयः भाष्यव्याख्यातोवैलक्षण्यंतुममयाविरोधाद्दोपायेतिबोध्यम् कीदृशआत्मा

अतएवभवेदेषकर्ताविश्वस्यदेहगः ॥ मायांविनाकथंनामसृजेदेतच्चराचरम् ॥ देशकालनिमित्तादिरहितोनिर्गुणःपुमान् ५०८ देशकालनिमित्तादीन्सृष्ट्वायद्वद्ब हिःसृजेत् ॥ ईश्वरस्तद्वदेवायंस्वप्नेदेहगतःपुमान् ५०९ ब्राह्मणेर्यादृशःस्वप्नेकर्तोक्तःपरमेश्वरः ॥ आत्मासर्वशरीरेपुतादृङ्मंत्रैरपीरितः ५१० विषयेंद्रियजातं यत्स्थूलदेहस्यतत्पुमान् ॥ स्वप्नावलोकतस्त्यक्त्वासुप्तिशून्यःस्वयंप्रभः ५११ जडान्सर्वानिमान्भावान्मानसान्हिसकारणान् ॥ प्रकाशयतितैःसर्वैरप्रकाश्यःशरी रभाक् ५१२ स्वयंज्योतिःस्वरूपंयत्शुक्रमादायतत्स्वयम् ॥ आयातिपुनरेवायंगत्वाजागरणंसदा ५१३ स्थानंस्वप्नाभिधंयत्तुसांध्यमित्यभिधीयते ॥ हिरण्म यःसदास्वस्यभासायंभास्वरोयतः ५१४ एकश्चायंसमग्रासुयात्यवस्थास्वहर्निशम् ॥ हित्वावस्थांपूर्वजातांविक्रीडन्बालकोयथा ५१५ चराणांचस्थिराणांचश रीराण्यखिलान्यपि ॥ अन्नपानरसाद्यैश्चपूर्यंतेहर्निशंयतः ५१६ ततस्तानिपुरीशब्दैरुच्यंतेवेदवादिभिः ॥ शेतेपुरीष्वयंयस्मात्तस्मात्सपुरुषःस्मृतः ५१७ एकएवमदावस्थाआददानोजहत्तथा ॥ एकहंसःपुमांस्तेनपुरुषश्चेतिगीयते ५१८ स्थूलाद्देहाद्यदास्वप्नंप्रयातिपुरुषस्तदा ॥ देहरक्षाकरंप्राणंमुक्त्वायातिस्मृतिं विना ५१९ देहाभिमानतोबाह्येगत्वास्वप्नान्प्रपश्यति ॥ देहधर्मैरयंसर्वैर्विमुक्तोमरणादिभिः ॥ स्वेच्छयाविचरत्यत्रदेहयंत्रेस्वयंप्रभः ५२०

हिरण्मयः स्वार्थंमयट् मयटोमकारलोपश्छांदसः प्रकाशरूपइत्यर्थः । तत्रहेतुः यतःस्वस्यभासाभास्वरइतिद्वयोरर्थः ५१३ । ५४ एकहंसपदार्थमाह एकश्चेति । पूर्वापूर्वामवस्थांहि त्वाचराचरांयतएकएवहंतितस्मादेवमेनमेकहंसइत्युच्यतइत्यर्थः ५१५ पुरुषपदार्थमाह चराणामितिद्वाभ्यां । चराचरशरीराण्यन्नादिरसैःपुनःपुनःपूरणात्पुरीवाचकशब्दैर्देहलतपुरुशब्दप्रभृतिभिरुच्यंते तासुपुरुषुशयनात्पुरुषइत्युपपद्यतेइतिद्वयोरर्थः ५१६ । चतुर्थमंत्रार्थमेवसंक्षिप्याह एकएवेति । स्पष्टम् ५१८ प्राणेनेत्यादेर्द्वितीयमंत्रस्यार्थमाह स्थूलादिति । यथाराजापरदेशंगच्छन्स्व राजधानीरक्षार्थंकंचित्सामंतंप्रतिस्थाप्यगच्छतितथायंपुरुषःस्थूलदेहाभिमानंपरित्यज्ययदास्वप्नंयातितदास्थूलदेहरक्षायांप्राणंपंचवृत्तिकमवस्थाप्ययाति मरणकालेतुप्राणंसहैवनयतीत्यर्थः ५१९ देहेति । स्थूलदेहाभिमानतःश्रुतिगतकुलायपदलक्ष्याद्बाह्यंगत्वातंपरित्यज्येतियावत् स्वप्नान्पश्यति । कीदृशोयंपुरुषः मरणादिभिर्देहधर्मैर्मुक्तःस्वयंप्रभश्च योयंयथेच्छंदेहांतरेचनाडी षुविचरतिनानाभावान्पश्यतीत्यर्थः ५२०

193

स्वप्नांतइत्यादेस्तृतीयमंत्रस्यार्थमाह स्वेच्छयेत्येकादशभिः । एवंस्वप्ने स्वेच्छयापर्यटन्सन्देवोयमात्माब्रह्माहिरण्यगर्भस्तच्छरीरादिउच्चंस्तंबस्तृणगुच्छस्तच्छरीरपर्यंतमवचंचवपुराददातित्यज
तिच तत्तद्भोगप्राप्त्यइत्यर्थः श्रुतावंतशब्दोयमवचनइति ५२१ नानाभावप्रकारंविशदयति भोगोपकरणमिति । भोगोपकरणंशरीरेंद्रियादिकंतत्तन्नानाविधंसृजतितथास्वयमेवपित्रादिरूपोभ
वतिएवममुनाप्रकारेणउत्कृष्टंनिकृष्टंवारूपंकल्पयतीतिद्वयोरर्थः ५२२ । ५२३ भोक्तृत्वेति । तथावस्तुतोभोगस्यसंबंधेनवर्जितोपिस्वकीयभोक्तृत्वस्यकरणमारोपनिमित्तमंतःकरणवृत्तिवि
शेषंकल्पयतितथाभोग्यरूपाणिवस्तूनि कीदृशानि तत्तद्देवादिजातीनांतथाप्रधानस्यकर्मफलभोगस्यसदृशानियोग्यानीत्यर्थः ५२४ उतेवस्त्रीभिरित्यादेर्जक्षदित्यंतस्यांशस्यार्थमाह कदाचि
दितिपंचभिः । अयमात्माआप्तकामईश्वरोपिकदाचिदात्मनःकामितांकामिभावंकल्पयतितदातुकामुकस्त्वंकामुकैरनुभूयमानंस्वप्नमागतःसन्नारीभिर्नेत्रपंकजैरालिंगितोनिभृतंदृष्टःसन्रममाणोह
संश्वसन्नशोभनेस्वप्नेऽद्भुतंसुखमाप्नोतीतिपंचमेनसंबंधः ५२५ अप्सरइति । कीदृशीभिर्नारीभिरप्सरःसदृशीभिर्द्व्यष्टवर्षाभिःषोडशवर्षाभिश्चसोत्कंठाभिश्च ५२६ पीनोन्नतेति । पुनःकीदृशी
भिः पीनेनउन्नतेनचकुचद्वंद्वेनजघनेनचउत्थितःप्रयुक्तोयोभारस्तेनप्रस्खलद्गतिभिः पुनःकीदृशीभिः विह्वलतयाध्वस्तानिआकल्पःपुष्पादिनिर्मितोवेशआभरणानिचयासांतास्तथाताभिः ५२७

स्वेच्छयापर्यटन्देवोयथामायाविबालकः ॥ ब्रह्मादिस्तंबपर्यंतंस्वप्नउच्चावचंवपुः ॥ आदत्तेचजहात्येषतत्तद्भोगानवाप्नुवन् ५२१ भोगोपकरणंतत्रतत्तत्सृजतितादृ
शः ॥ स्वयंपितातथामाताभ्राताताद्वद्गुरुःस्वयम् २२ जायासुतादिकंतद्वत्स्वयमेवभवत्ययम् ॥ एवंकल्पयतेरूपमुच्चंवाऽवचमेववा २३ भोक्तृत्वकरणंस्वस्यभोग
संगविवर्जितः ॥ भोग्यरूपाणिचान्यानिकल्पयत्यात्मनःपुमान् ॥ तत्तज्जात्यनुकारीणिप्रधानसदृशानिसः २४ कदाचित्कामितामाप्तकामःकल्पयतीश्वरः ॥
आत्मनस्ततएवायंकामुकस्वप्नमागतः २५ अप्सरःसदृशद्व्यष्टवर्षाभिर्नेत्रपंकजैः ॥ आलिंगितोत्रनारीभिःसोत्कंठाभिश्चसर्वतः २६ पीनोन्नतकुचद्वंद्वजघनोत्थि
तभारतः ॥ प्रस्खलद्गतिभिर्ध्वस्तस्वाकल्पाभरणादिभिः २७ सीमंतलग्नसिंदूरपीतलोहितभूमिभिः ॥ नंदनादिवनप्रख्यवनगाभिरितस्ततः २८ परितस्तूर्यवा
दित्रध्वनिध्वनितभूमिभिः ॥ विद्याधरीसमानाभिर्गांधर्वेकंठसौष्ठवे ॥ रममाणइवोपैतिसुस्वप्नेसुखमद्भुतम् २९ पश्यन्दुर्गंधदुष्टानिवस्तूनिललनाःसदा ॥ मनोहरां
गहीनोयंयथाजागरणेगृही ३० तथातीवकचित्पश्यन्नानाहेतूत्थितान्यपि ॥ अनंतंदुःखमाप्नोतिप्रतीकारविवर्जितम् ॥ चोरव्याघ्रादितोयद्वत्पापीजागरणेसदा ३१

सीमंतेति । पुनःकीदृशीभिः सीमंतलग्नेनसिंदूरेणपार्वतीयधातुरागेणपीतालोहितारक्ताश्चभूमयोयदिभवंतितद्रूपाभिः गैरिकहरितालमयपर्वतोपत्यकाभूमिशोभामभिभवन्तीभिरितियावत्
अत्रपीतत्वंशरीरकांत्याबोध्यम् । पुनःकीदृशीभिः देववनसमवनगताभिः ५२८ परितइति । पुनःकीदृशीभिः तूर्यादिध्वनिभिर्ध्वनितासशब्दीकृताविहारभूमयोयाभिस्तास्तथाताभिः
पुनःकीदृशीभिः गांधर्वेगानविद्यायांकंठस्यसौष्ठवेमनोहरत्वेचविद्याधरीसमाभिः अत्रहसन्नित्यर्थकस्यजक्षदितिश्रुतिगतपदस्यार्थोरममाणपदेनोक्तइतिबोध्यम् ५२९ कदाचित्पुण्यपापयो
र्मिश्रितयोःफलमनुकूलप्रतिकूलोभयलक्षणंप्राप्यकदाचित्तुकेवलपापफलंव्याघ्रादिप्रतिकूलमात्रदर्शनंप्राप्योद्विग्नोभवतीत्यर्थपरस्यमंत्रचरमांशस्यार्थमाह पश्यन्नितिद्वाभ्याम् । यथाकश्चिद्गृहीजा
गरणेऽनुकूलाललनाःपश्यंस्तत्संनिहितानिदुर्गंधवस्तूनिप्रतिकूलानिचपश्यन्स्वस्यमनोहरांगहीनतांचप्रतिकूलांमन्यमानोदुःखितोभवेत्तथायमात्मास्वप्नेनानाहेतुभ्यःसंमिश्रितकर्मरूपेभ्यउत्थितान्यनु
कूलप्रतिकूलवस्तूनिअपिशब्दात्केवलप्रतिकूलानिवस्तूनिपश्यन्ननंतंदुःखमाप्नोति । केवलप्रतिकूलदर्शनजन्यदुःखेदृष्टांतमाह चोरेत्यर्धेन । अत्रश्रुतौबिभेत्येभ्यइतिव्युत्पत्त्याभयपदेनचोरादयोविवक्षि
ताइतिबोध्यमितिद्वयोरर्थः ५३० । ५३१

कश्चनेत्यंतस्यचतुर्थमंत्रस्यार्थमाह अयमुक्तइति । हेराजन्योयंमयातेआत्मोक्तःजंतवस्तस्यआराममेवपश्यंतितंकेचननपश्यंतींतंइत्यहोभाग्यहीनतालोकानामितिसंबंधः । करणव्युत्पत्त्या ऽऽरामपदार्थमाह आत्मनोव्यतिरिक्तंक्रीडायाःसाधनंरथादिकमिति ५३२ सुप्तआयंतंत्वरितंनबोधनीयइत्याकारायार्थविधेर्किजनप्रसिद्धेरपिहेतोर्जाग्रत्प्रपंचासंकरस्थलेस्थितिरात्मनःस्वप्नका शत्वसिद्ध्यनुकूलाबोध्याइत्याशयकस्यनप्रतिपद्यतेइत्यंतब्राह्मणभागस्यार्थमाह यदायमितिदशभिः । गाढनिद्रापदेनसुषुप्तिःशयनपदेनतुस्वप्नावस्थाविवक्षिता आत्मनइंद्रेंद्राणीरूपकल्पना अस्याध्यायस्यनवतितमश्लोकमारभ्याधस्तादुक्तानुसंधेया स्फुटमन्यत् ५३३ सुप्तप्रबोधनेदोषप्रसक्तिंलौकिकन्यायेनोपपादयति स्त्रीपुंसयोरिति । यथाएकान्तेरममाणयोःसर्वकार्यसमर्थ योरनिवृत्ताभिलाषयोरितियावत् एतादृशयोःस्त्रीपुंसोर्बहिर्निर्गमनेक्षोभोभवतितथासुषुप्तिस्वप्नयोरेकीभूतयोरिंद्रेंद्राण्योःप्रबोधेक्षोभोभवेदतःसुप्तंनप्रबोधयेदितिद्वयोरर्थः ५३४ । ५३५ सुप्तप्र बोधनेकारणांतरमपिदर्शयति अपिदेहस्येति । किंचसहसात्वरितमात्मनःप्रबोधेजागरणेसतिदेहस्यनाडीषुप्राणोऽनियमादन्यवस्थयाव्रजेत्धावेत्अतोपिनप्रबोधयेदिति ५३६ त्वरितप्रबो धनेसेंद्रियप्राणस्याकुलत्वं तद्यथाराजानमायांतमुग्रामत्ययेनसइत्यादिनाव्याख्यास्यमानश्रुत्यनुरोधेनाह अंतःपुरादितित्रिभिः । यथावश्यककार्यवशेनमहाराजेसंभ्रमात्सहसानिशादिकाले

अयमुक्तोमयाराजन्नात्मायस्तस्यजंतवः ॥ आरामंसाधनंचस्यात्क्रीडायास्तुरथादिकम् ॥ आत्मनोव्यतिरिक्तंतत्पश्यंत्येतंनकेचन ५३२ यदायंगाढनिद्रायां वर्ततेशयनेस्थितः ॥ तदानबोधयेदेनमिंद्राण्यालिंगितंहृदि ५३३ स्त्रीपुंसयोरिहैकांतेयथास्याद्रममाणयोः ॥ बहिर्निर्गमनेक्षोभःसर्वकार्यसमर्थयोः ५३४ इंद्रेन्द्राण्योस्तथैवस्याद्बोधेक्षोभोमहानिह ॥ सुषुप्तेस्वप्नकालेचतस्मात्तंनप्रबोधयेत् ५३५ अपिदेहस्यनाडीषुपवनोऽनियमाद्व्रजेत् ॥ आत्मनःसहसाबोधेसहसा बोधयेत्ततम् ५३६ अन्तःपुराद्यथायातिमहाराजोनिशादिषु ॥ सहसासंभ्रमादस्यसंभ्रांताःसैनिकाःक्रमात् ॥ मार्गादमार्गतश्चैवपुरस्तस्यव्रजंतिहि ५३७ अ मार्गतःसमायाताःपुराद्बालादिभेदनम् ॥ यद्वत्कुर्वंतितद्वत्प्राणाआत्मसमागमे ॥ निद्रायाःसहसामार्गंहित्वापीयुःकदाचन ५३८ अंगभंगादिकस्तत्ररोगोऽगद शतैरपि ॥ असाध्योजायतेतस्मात्शयानंनप्रबोधयेत् ५३९ प्राणांतिकेपिसंजातेकार्यतस्यात्मनोपिवा ॥ शयानंपुरुषंविद्वान्सहसानप्रबोधयेत् ५४० यदि कार्यंमहत्किंचिन्निद्रालुमनस्तस्यबाधयेत ॥ मृदुस्पर्शादिभिस्तद्धिशनैस्तंप्रतिबोधयेत् ॥ अन्यथासहसाबोधेह्यचिकित्स्योगदोभवेत् ५४१ दंपत्योश्चवियोगोयंसुभ योर्द्वंद्वदोषदम् ॥ प्रबोधयेन्नुमान्योयंयश्चायंप्रतिबुद्ध्यते ॥ उभयोर्जायतेपापंब्रह्मसुखापहम् ५४२

[illegible] ५३७ अमार्गतइति । यदायांतिसैनिकाअमार्गेण [illegible] आविर्भावनकुर्वन्तिपदः [illegible] ५३८ तत्रचिकित्स्यकाअपिदर्शयन्नाह अंगेति । [illegible] ५३९ प्राणे [illegible] । [illegible] देहीपिकार्यसहसानबोधयेदिति ५४० कथंतर्हिबोधयेदित्यतआह यदीति । आत्मनउत्थाप [illegible] । [illegible] अन्यथेति । [illegible] । गदोरोगः ५४१ [illegible] । [illegible] ५४२

अथोखल्वाहुरित्यादिवाक्यंभाष्यकृद्भिःस्वप्नमनभ्युपगच्छतांचार्वाकादीनांमतनिरसपरत्वेनयोजितंस्वप्नेजाग्रत्प्रपंचासंकरेणस्वयंज्योतिष्ट्वदाढर्याय एतेशंकरानंदास्तुप्रपंचविलयवादिमतानुसारे णजाग्रत्यपिद्वैतंनास्तितदभावेनस्वयंज्योतिष्ट्वबोधनायक्रिमर्थंस्वप्नपर्यंतानुधावनमित्यर्थपरत्वेनव्याकुर्वंति योयमित्यादिसप्तदशश्लोकैः । जाग्रत्स्वप्नयोरेकोयमात्मानुसंधानादित्यर्थः ५४३ अपिकेचिदिति । केचित्प्रपंचविलयवादिनोमहात्मानोद्वैतविस्मरणात्महाधियस्तत्त्वनिष्ठत्वात्तेएवमाहुः । एवंकथं जाग्रत्स्वप्नयोर्दृश्यानांदेशस्यचतदुपलक्षितकालस्यचनभेदः आत्मसत्ता तिरिक्तसत्ताभावेनासत्त्वादसतःप्रतियोगितानर्हत्वादितिभावः । तथाचजाग्रत्स्वप्नप्रपंचयोरधिष्ठानस्यात्मनएवदेशभूतस्यभेदकोपाधिविरहेणकथंभेदशंकास्यादित्यर्थः ५४४ एतदेवस्फुटयति देशकालाविति । भूतभौतिकरूपदृश्यसहितौदेशकालौजागरणसंबंधिनौआध्यासिकसंबंधेनयथात्मन्येवसंस्थितौसत्तालाभायपर्यवसन्नौ एवंस्वप्नगतावपितावात्मन्येवसंस्थितौतथाचतदधिष्ठान दृष्ट्याउभयत्रनतयोःप्रपंचयोर्भेदःस्वतस्तुअसत्त्वादेवनभेदप्रतियोगित्वमितिभावः । एतद्व्याख्यायांश्रुत्यर्थस्तुअयमेवस्वप्नप्रपंचस्याधिष्ठानत्वेनदेशभूतआत्माजागरितप्रपंचस्यापिदेशःयानियादृ शानिआत्मसत्तयासत्तावंतिवस्तूनिजागरणेपश्यतितादृशान्येवस्वप्नेतथाचपरमार्थदृष्ट्यानकस्यापिभेदइति ५४५ स्वमतेऽनुकूलांवादिसंमतिमपिसंभावनार्थंदर्शयति देशइति । देशेदिग्रूपेका लेचदेशांतरंकालांतरंचकेचननैयायिकादयोनेच्छंतियतस्तत्रउपपत्तिमपिचवदंतिदेशकालरूपंवस्तुतस्मिन्देशकालादिस्वरूपएवव्यवहारोपयोगिसत्स्थितमित्याकाराअदस्तदस्मत्सिद्धांतानुसारेणस

योयंस्वप्नंप्रयात्यात्मायातिजागरणंचसः ॥ आत्मनोनैवभेदोस्तिस्वप्नेजागरणेपिवा ५४३ अपिकेचिन्महात्मानएवमाहुर्महाधियः ॥ दृश्यानांदेशयुक्तानांना स्तिभेदःकथंचन ॥ स्वप्नेजागरणेचैवसस्यात्केनात्मनोधुना ५४४ देशकालौयथाऽध्यस्तावात्मन्येवचसंस्थितौ ॥ भूतभौतिकदृश्येनसहजागरणेसदा ॥ आ त्मन्येवमिमौस्वप्नेकथंभेदस्तयोर्भवेत् ५४५ देशेदेशंतथाकालेकालंनेच्छंतिकेचन ॥ तस्मिन्नेवहितद्वस्तुयेपिसत्यंवदंत्यदः ५४६ देशोदेशेतथाकालःकालेतद्वद्घ टोघटे ॥ व्यवहारोयथाव्यर्थोदेशादेस्तद्वदेवसः ॥ वास्तवत्वंततोनास्यदेशादेर्विद्यतेक्वचित् ५४७ व्यवहाराद्भवेत्सत्यंनैवकुत्रापिकर्हिचित् ॥ जघन्यासर्वसत्य त्ववादिनोबलतोभवेत् ५४८ देशेदेशांतरंतद्वत्कालेकालांतरंतथा ॥ घटेघटांतरंस्वस्मिन्नेकस्मिन्भेदवर्जिते ॥ अंगीकरोतियस्त्वेवंतस्यकैषाव्यवस्थितिः ५४९

त्यमबाधितमेववदंतीतियोजना ५४६ नन्वभेदेकथमाधाराधेयव्यवहारःदृश्यतेचासौदेशकालौविभूनित्यौचेति विभुर्हिसर्वदेशवृत्तिरुच्यतेनित्योपिसर्वकालवृत्तिरुच्यतइतिचेद्यथाऽभावाधिकरण काभावभेदमनभ्युपगच्छद्भिरपिघटाभावेपटाभावइतिव्यवह्रियतेतथाविकल्परूपेव्यवहारेनकोचिद्बाधकमित्याह देशोदेशेतथेति । यथालोकेव्यर्थःअर्थेनविषयेणहीनोविकल्परूपोव्यवहारःदृष्ट स्तथानृमिकोक्तरीत्यादेशेदेशःकालेकालस्तथाघटोघटेतादात्म्येनवर्ततइत्यादिरूपोव्यवहारोपिभवत्वितिसंबंधः । फलितमाह वास्तवत्वमिति ५४७ ननुव्यवहारजनकस्यभेदस्यकथमसत्त्वमिति चे न्नहिव्यवहारःसत्त्वस्यव्याप्योगालिदानादावसत्येनापिवाक्यार्थेनकोपजननदर्शनात्नापिव्यापकःसतोपिब्रह्मानंदस्यलोकेव्यवहाराभावादित्याशयेनाह व्यवहारादिति । व्यवहारमात्रप्रयुक्तंसत्यत्वं कस्यचिदपिपदार्थस्यकुत्रचित्कदाचिद्वानसंमतं येतुमीमांसकादयःसर्वस्वव्यावहारिकपदार्थजातस्यसत्यत्वंवदंतितेषांबलाज्जघन्याशक्तिलक्षणागौणीनांवृत्तीनांमध्येपाश्चात्यागौणीवृत्तिःप्रसज्येत नहिमुख्यंसत्यत्वंदृश्यजातस्यसंभवतीत्यर्थः ५४८ येतुभेदाभिनिवेशेनदेशादौविभुत्वादिव्यवहारायान्यद्देशादिकंमन्यंतेतेषामनवस्थापत्तिरित्याह देशेदेशांतरमिति । भेदवर्जितत्वादेकस्मिन्दे शादौपोदेशांतरादिकमंगीकुर्वतस्तस्यव्यवस्थितिःपर्यवसानंकथंभवेन्नकुत्रापीतियोजना ५४९

यदिकश्चिदनेकांतवादिनामार्हतानामनुगामीएकस्याप्यनेकतामंगीकुर्यात्तंप्रतिलोकव्यवहारविरोधरूपंदंडंप्रक्षिपति अव्यवस्थितेति । अस्यवादिनोऽव्यवस्थितवादित्वेएकत्वानेकत्वादिधर्माणाम नियमस्यांगीकर्तृत्वेऽव्यवस्थाशीतस्योष्णत्वमुष्णस्यशीतत्वमित्यादिरूपासंपतेत्प्रसज्ज्येत लोकेतुजीवहेतुतःजीवभोगार्थमितियावद्देशादिव्यवस्थैवदृश्यतेइतिशेषः ५५० अथसिद्धांतेकथंव्यवस्थेतिचेत्तत्त्वज्ञानात्पूर्वंस्वप्नवद्भ्रमसिद्धैवेत्याह व्यवस्थायामिति । सिद्धांतेव्यवस्थायामप्यंगीकृतायामेषाव्यवस्थाप्रमाणसिद्धानभवतिकिंतुभ्रमसिद्धेत्यर्थः । तस्मादधिष्ठानसत्तामादायैवजाग्रत्स्वप्नप्रपंचयोर्व्यवहारक्षमत्वेनसाम्यमित्याह ततइति । ततोभ्रमसिद्धत्वाद्देशकालौतद्वृत्तिस्थूलसूक्ष्मरूपंजगच्चाद्वितीयेआत्मन्यध्यस्तमिति ५५१ एतद्दृष्टांतेनस्फुटयति सर्पादिकमिति स्पष्टम् ५५२ अध्यस्तत्ववर्णनस्यफलमाह ततइति । ततोऽध्यस्तत्वात्जाग्रत्स्वप्नवृत्तिप्रपंचयोर्द्वयंयुगलंसहदेशकालाभ्यामात्मनिप्रलीयतेआलोचितंसदात्ममात्रंभवतीतिभावः ५५३ ततः किंमतआह आत्मनश्चेति । आत्माहिसर्वस्यपारमार्थिकंरूपंतद्भेदाभावेनकस्यापिभेदःरज्जुभेदाभावेतत्रकल्पितसर्पदंडजलधारादीनांयथानभेदस्तद्वदिति ५५४ अत्रयदिकश्चिदेवंब्रूयात्परमार्थदृष्ट्याभेदोपिविकारदृष्ट्यामममभेदभ्रमोननिवर्ततेइतितंप्रत्यद्वैतबुद्ध्यवतरणोपायंसूचयन्नाह एकेति । विज्ञानंविज्ञानशक्तिरूपमंतःकरणंतस्यनानेंद्रियद्वारोपाधिकभेदशालिनउपाधिविवेकेनैकत्वं

अव्यवस्थितवादित्वेह्यव्यवस्थाऽस्यसंपतेत् ॥ देशकालादिभेदस्यव्यवस्थाजीवहेतुतः ५५० व्यवस्थायांचनैषास्यात्प्रमाणात्कर्हिचित्क्वचित् ॥ ततोदेशस्तथाकालस्तत्रयत्सदसद्वपुः ॥ वस्तुजातंतदध्यस्तमात्मनिद्वयवर्जिते ५१ सर्पादिकंयथाध्यस्तंरज्ज्वांतद्वदिदंजगत् ॥ देशकालादिसहितमध्यस्तंसर्वसाक्षिणि ५२ ततोजागरणेयत्स्याद्यच्चस्वप्नेद्वयंजगत् ॥ देशकालादिसहितमात्मन्येवप्रलीयते ५३ आत्मनश्चनभेदोस्तिदेशादेरपिनैवसः ॥ रज्जुभेदंविनानस्यात्सर्पादेर्हियथाभिदा ५४ एकविज्ञानगम्यानांतथैकाश्रयवर्तिनाम् ॥ एकस्यविषयाणांस्याद्भेदःकेनात्रहेतुना ५५ ततोजागरणेदेशोयःसस्वप्नेपिनापरः ॥ दृश्यानांदृश्यतेनैवभेदोदेशस्यभेदकृत् ५६ घटःस्वावयवेष्वेकोदृष्टोयोबहिरंगगे ॥ गृहमध्येसचेद्दृष्टःस्वाश्रयेषुभिदानहि ५७ दृश्यानांभेदराहित्यात्स्वप्नेजागरणेपिच ॥ देशाभेदोभवेन्नात्मभेदोदेशैकरूपतः ५८ अतआत्मास्वयंज्योतिःसर्वभेदविवर्जितः ॥ स्वप्नेराजन्मयोक्तस्तेकिमन्यत्प्रष्टुमर्हसि ५९

तावदवधार्यसर्वेषांविज्ञानानांहृदयमेकायनमितिश्रुतेस्ततआश्रयस्याधारस्यमायाशबलस्यविश्वकारणस्यैकत्वमवधार्यततःसर्वभासकस्यशुद्धचैतन्यस्येतिक्रमेणकस्यचित्तमद्वैतंनाधिरोहति लोकेहि विज्ञानादिभेदाभिमानपूर्वकएवहिविषयभेदाभिमानोविज्ञानाद्यभेदज्ञानेतुकथंदृश्यजातस्यभेदोभायादित्याशयः एकस्यचैतन्यस्यविषयाणांसर्वभावानामितिशेषः ५५५ वर्णितार्थस्यप्रकृतोपयोगमाह ततइति । ततोभेदकत्वाभिमतानांविषयाणामुक्तयुक्त्याभेदाभावात्जागरणस्वप्नयोर्देशआत्मरूपकएवेतिपूर्वार्द्धार्थः । तत्रदृष्टांतंसूचयति दृश्यानामिति । यथाकाशेदृश्यानांमेघादीनांभेदआकाशरूपदेशस्यभेदकृन्नदृश्यतेतथाचिदाकाशरूपदेशस्यापिबोध्यमित्यर्थः ५५६ एवंपरमार्थात्मरूपदेशस्यआधेयानांभेदेननभेदइत्युक्तमथकल्पितानांदेशानांभेदेपिएकत्वेननिश्चितस्यभावस्यनभेदइत्याह घटइति । यथाएकएकत्वेननिश्चितोघटःस्वावयवरूपेषुअंतरंगाश्रयेषुयोदृष्टःसएवबाह्यांगणेगृहमध्येवाबहिरंगाश्रयेयदिदृष्टस्तथापिस्वाश्रयेषुभिन्नेष्वपिघटस्यभिदानहिदृष्टाइत्यन्वयः तथाचसर्वपदार्थानांस्वभावभूतमेकत्वंकल्पितदेशादिभिर्नान्यथाभवतीतिभावः ५५७ प्रकृतवाक्यार्थंनिगमयति दृश्यानामितिद्वाभ्याम् । एवंदृश्यानामपिभेदाभावेस्वप्नजागरणयोरेकोदेशःसिद्धःसचैकोदेश आत्मरूपइत्यतआत्माभेदःसिद्धइत्यर्थः ५५८ तथाचआत्मेतरस्यैवाभावादितरप्रकाशराहित्यरूपंस्वप्रकाशत्वंसुतरांसिद्धमित्याह अतइति । स्पष्टम् ५५९

ब्रूहीत्यंतायाश्चतुर्दश्याः कंडिकायाः शेषस्यार्थमाह एवमुक्तइत्यष्टभिः । एवंमुनिनोक्तेसतिराजामुनिंप्रत्याहस्म कीदृशोराजाकामप्रश्नरूपेणवरेणाप्यंसंपादयितुमिष्टंस्वात्मज्ञानंयेनसतथाअतएव बुद्धिमानिति ९६० एतावतामयाकामप्रश्नफलंतत्त्वज्ञानंनलब्धमतःसाधारणविद्यादक्षिणांतुभ्यंदास्यामीत्याशयकंराजवाक्यमभिनयति विद्यामात्रमितित्रिभिः । विद्यामात्रंसाधारणविद्या मपियोमह्यंब्रूयात्तस्मैगजसदृशवृषभयुक्तंगवांसहस्रंददामि कीदृशीनांगवां गोलक्षणशास्त्रोक्तलक्षणानां तच्छास्त्रंयथा 'अस्राविलरूक्षाक्षामूषकनयनाःशुभप्रदागावः । प्रविचलचिपिटविपाणा वरटाखरसदृशवर्णाश्च'इत्यादीतिद्वयोरर्थः ९६१ । ९६२ इतिमेइति । अतइत्यादिस्पष्टम् ९६६ अर्थलभ्यंमुनिवाक्यंप्रतिपादयति मयेतित्रिभिः । मुनिस्तुइतिसंचिंत्यनृपतिंप्रतिप्रोवा च इतिकिं मयापूर्णायांविद्यायामुक्तायामप्ययंनृपस्तस्याःपूर्णतामज्ञात्वासाधारणविद्यात्वेनतांविज्ञातवानितिद्वयोःसंबंधः ९६४ । ९६५ गोसहस्रमिति । विद्यानिष्क्रयायगोसहस्रंददामीति भवद्वाक्यात्संदिह्यतेकिंभवतातज्ज्ञातंनवा तत्किंयदात्मरूपंज्योतिर्योयंविज्ञानमयःप्राणेष्वित्यादिवाक्येनोक्तमिति ९६६ इत्युक्तेनेतीति । इतिमुनिनोक्तेसतिराजानज्ञातमित्याहस्म एतेनवि

एवमुक्तेततोराजायाज्ञवल्क्यमभाषत ॥ कामप्रश्नवरेणाप्यस्वात्मज्ञानोऽतिबुद्धिमान् ९६० विद्यामात्रंवदेन्मह्यंयःकश्चिद्ब्राह्मणोत्तमः ॥ एकैकस्यामहंतस्यांत स्मैदास्यामिसर्वदा ९६१ तरुणीनांगवांशास्त्रलक्षणानांसहस्रकम् ॥ गजेनसदृशोयत्रवृषभोस्तिमहावपुः ९६२ इतिमेसर्वलोकोयंव्रतंजानात्यतोधुना ॥ मुन येगोसहस्रंतुविद्यामात्रप्रदायिने ॥ याज्ञवल्क्यायदास्यामीत्युक्तोराज्ञामुनीश्वरः ९६३ मयाराज्ञेब्रह्मविद्याप्युक्तासर्वातथापिताम् ॥ नज्ञातवानयंसम्यङ्ममशि ष्योमहीपतिः ९६४ किंतुकाचिदियंविद्येत्येतावत्प्रतिबुद्धवान् ॥ इतिसंचिंत्यवचनंप्रोवाचनृपतिंतदा ९६५ गोसहस्रंददाम्यद्यविद्यायानिष्क्रयंत्विति ॥ योयमि त्यादिनोक्तंयज्ज्योतिरात्मस्वरूपकम् ॥ मयातेप्रोक्तमखिलंतज्ज्ञातंतेनवाधुना ९६६ इत्युक्तेनेतितंप्राहमुनिनासद्विजोत्तमम् ॥ तथापुनर्द्विवारंतंसमुनिंप्रत्यभा षत ९६७ भवतायोयमात्मोक्तःप्रथमंस्वप्नगःपुमान् ॥ दोषंपश्याम्यहंतत्रभोगसंगसमुत्थितम् ९६८ स्वप्नेयस्मादयंस्त्रीभिर्मोदतेचहसत्यपि ॥ अन्नंनानाविधं तद्वदत्तियातिनयात्यपि ९६९ इत्युक्तेमुनिवर्योपिस्वप्नेऽसंगत्वसिद्धये ॥ उत्तरंप्रथमंप्राहजनकंमिथिलेश्वरम् ९७० राजापुनर्याज्ञवल्क्यमभिप्रायमसुंश्रितः ॥ द्वितीयंपूर्ववत्प्रश्नंकृतवान्बुद्धिसत्तमः ९७१

शिष्टोमोक्षोयेनतस्मैतत्त्वज्ञानायैवब्रूहिपूर्वंतुनसम्यग्बुद्धमित्यर्थकोभागोव्याख्यातइतिध्येयम् एतादृशोराज्ञःप्रतिवचनस्यार्थःपंचदश्यांषोडश्यांचकंडिकायांबोध्यइत्याह तथेति ९६७ असौ सवाएषसंप्रसादइत्यादिकंडिकाचतुष्टयस्यतात्पर्यार्थभूतमुत्तरत्रयमर्थाक्षिप्तराजप्रश्नप्रदर्शनपूर्वकंनिरूपयति भवतेतित्रयोदशभिः । तत्रराजास्वप्नेवर्णितात्मस्वरूपएवंप्रथमंदोषमुद्भाव्ययन्प्रश्नंचकार एवंकथं हेमुनेभवतायोयमित्यादिवाक्येनस्वप्नेयोयमात्मोक्तस्तस्याविद्याकामकर्मात्मकमृत्योस्तरणंनसंभवति । यतःस्वप्नेभोगेनकामकर्मकार्येणसंगेनाविद्याकार्येणचसमुत्थितंप्रयुक्तंदोषंबंधा ख्यंपश्यामीत्यर्थः ९६८ तंदोषमभिनयति स्वप्नेइति । अयमात्मा अत्तिभुंक्ते यातिइष्टदर्शनायप्रवर्तते नयातिअनिष्टदर्शनान्निवर्ततेइतिपदार्थः ९६९ एवंपृष्टोमुनिःस्वप्नेऽसंगत्वंप्रतिपादयन् प्रथममुत्तरंसएषसंप्रसादइत्यादिकंडिकारूपमुक्तवानित्याह इत्युक्तइति । इत्युक्तेइतिराज्ञापृष्टेसति ९७० द्वितीयंप्रश्नमवतार्याभिनयति राजेतिद्वाभ्यां । अमुमुत्तरश्लोकाभिनेयमभिप्रायमाश्रितःसन्बुध्यासत्तमोविद्वत्तमोराजाद्वितीयंप्रश्नंकृतवानिति ९७१

स्वप्नेइति । स्वप्नेयदात्मनोऽसंगत्वमुक्तंतत्संभाव्यते यतःस्वप्नेशिष्यमाणोदेहोपिसूक्ष्मत्वादसंगः शिलादावपितत्प्रवेशस्यप्रसिद्धेः जाग्रतितुस्थूलदेहेनससंगतयाप्रसिद्धेनयुक्तायांवर्तमानस्यात्मनःकथमसंगत्वमित्यर्थः ५७२ एवंपृष्टोमुनिरमुमभिप्रायमाश्रित्यैपस्वप्नइत्यादिवाक्येनोत्तरंद्वितीयंददावित्याह याज्ञवल्क्योपीति स्पष्टम् ५७३ अमुमितिपदोक्तमभिप्रायमभिनयति यादृशइति । असंगइत्यत्रसंगपदेनशिलादौप्रवेशप्रतिबंधोनोच्यतेकिंतुमूर्तानांमूर्तैरेवक्रियाहेतुकःसंयोगः तदभावआकाशसमेआत्मनिनज्ञाबोध्यते तथाचभ्रांत्यात्मानंपरिच्छिन्नंमन्यमानैर्यथासूक्ष्मदेहेनात्मनःसंगःकल्प्यतेतथास्थूलेनापिसंगस्तद्भ्रांतिवारणायासंगपदेनायमर्थउच्यते एषआत्मानिखिलैःस्थूलैःसूक्ष्मैर्वाभावैर्भ्रांतिदृष्ट्यासक्तोपिवस्तुतोनसज्जतेइत्यर्थः ५७४ महामत्स्यनिदर्शनेनसमाधेयंतृतीयंप्रश्नमवतारयन्नभिनयति तृतीयमितित्रिभिः । एतमुत्तरश्लोकद्वयेननिरूप्यमभिप्रायमाश्रितोराजापूर्ववत्तृतीयंप्रश्नमाहस्म यतःकामप्रश्नरूपवरलाभेनपुनःपुनःप्रश्नेनिर्भयइत्यर्थः ५७५ स्वप्नइति । हेमुनेस्वप्नंजागरणंचगच्छतएकस्यात्मनःस्वप्नजागरणरूपमुभयंस्थानंकथंदुर्घटंनभवेत्किंतुदुर्घटमेवेति ५७६ एकस्यस्थानद्वयनिष्ठत्वंदुर्घटमित्यत्रदृष्टांतमाह माहिष्मत्यामिति । यथाउज्जयिन्यांकाश्यांचैकोभूपतिर्नतिष्ठेत्किंतुउज्जयिनीभूपतेःकाशीभूपतिर्भिन्नएवतथाजाग्रत्स्वप्नरूपस्थानस्थयोरात्मनोर्भेदःस्यादित्यर्थः ५७७ अस्यप्रश्नस्योत्तरंसवाए

स्वप्नेभवत्वसंगत्वंसूक्ष्मदेहसमाश्रयात् ॥ स्थूलदेहगतःकेनासंगोजागरणेभवेत् ५७२ याज्ञवल्क्योपिराजानमुत्तरंप्राहपूर्ववत् ॥ अभिप्रायममुंप्राप्याद्वितीयंमुनिपुंगवः ५७३ यादृशःसूक्ष्मदेहस्यसंगःस्थूलेपितादृशः ॥ नभोवन्निखिलैर्भावैःसक्तोप्येषनसज्जते ५७४ तृतीयंप्रश्नमाहेतंराजाभिप्रायमाश्रितः ॥ यथापूर्वंमुनिंविप्रवरंप्राप्याकुतोभयः ५७५ स्वप्नेजागरणेनित्यंगच्छतोदेहिनःकथम् ॥ एकस्यैवोभयंस्थानंनभवेद्दुर्घटंमुने ५७६ माहिष्मत्यांभवेद्योयंभूपतिर्नभवेद्द्विसः ॥ काश्यामेकस्ततोत्रापिभेदःस्थानस्थयोर्भवेत् ५७७ तृतीयमुत्तरंविप्रःपुनरेवमभाषत ॥ अभिप्रायेणामुनैनंजनकंमिथिलेश्वरम् ५७८ युगपद्यदिगच्छेत्सपुमान्स्थानद्वयंतदा ॥ स्थानभेदाद्भवेद्भेदोनैवमेषप्रयातिहि ५७९ साभिप्रायममीप्रश्नाउत्तरैःसहितास्त्रिधा ॥ जाताएषूत्तराण्येवंप्रवृत्तानिह्यनुक्रमात् ५८० सएवात्मामयायस्तेस्वयंज्योतिरुदाहृतः ॥ स्वप्नस्थितःकदाचित्तुसंप्रसादेव्यवस्थितः ५८१ सुषुप्तिःसंप्रसादाख्याकथितावेदवादिभिः ॥ सम्यक्प्रसीदतिह्यस्यांशरदीवजलंपुमान् ५८२

पद्मुद्धांतइत्यादिकपातथामहामत्स्यइत्यादिकयाचकण्डिकयाददावित्याह तृतीयमुत्तरमिति । अमुनाग्रिमश्लोकाभिनेयेनाभिप्रायेणमुनिस्तृतीयमुत्तरमुक्तवानिति ५७८ युगपदिति । यद्येकस्मिन्कालेस्थानद्वयवृत्तित्वमुच्येततदाभेदप्रसक्तिर्भवेदेवोक्तदृष्टांतात्परंत्वेषआत्माएवंयुगपत्स्थानद्वयंनप्रयातिकिंतुक्रमेणयाति । तथाचयथाएकस्यतीर्थाटकस्यक्रमेणमाहिष्मतींकाशींचगच्छतोनभेदस्तथात्मनोपीत्यर्थः ५७९ तात्पर्यप्रदर्शनेननिगमयन्कण्डिकाचतुष्टयस्यश्रौतार्थप्रदर्शनंप्रतिजानीते साभिप्रायमिति । येऽमीसाभिप्रायसोत्तराःप्रश्नास्त्रिरूपानिरूपितास्तेषामुत्तराणिउत्तराभिधायकश्रुतिवाक्यानिएवंवक्ष्यमाणप्रकारेणक्रमेणप्रवृत्तानिप्रवृत्तव्याख्यानानिबोध्यानीतिशेषः ५८० तत्रप्रथमप्रश्नसमाधानपरायाःसवाएषसंप्रसादइत्यादिकायाःपंचदश्याःकंडिकायाअर्थंनिरूपयति सएवेत्यादिद्वाविंशतिश्लोकैः । हेराजन्यआत्मामयातुभ्यंस्वप्नेस्वयंज्योतिष्ट्वेनोक्तःसएवकदाचित्संप्रसादेव्यवस्थितोभवतीति ५८१ अधिकरणव्युत्पत्त्यासंप्रसादशब्दार्थमाह सुषुप्तिरिति द्वाभ्यां । हियतःअस्यांसुषुप्तावस्थायांसम्यक्नितरांप्रसीदतिकालुष्यंत्यजति ५८२

सम्यक्त्वंविवृणोति विक्षेपमिति । विक्षेपंमनआद्युपाधितद्धर्माध्यासरूपमखिलंत्यक्त्वासदात्मरूपेणतिष्ठन्सम्यक्प्रसीदतीत्यतःसुषुप्तिःसंप्रसादसंज्ञिकेत्यर्थः ५८३ रतेःक्रीडायागतेर्गमनाद्विषयाट
नरूपायाश्चयद्यपिसुषुप्तौनसंभवस्तथापितेस्वप्नगतेएवानूद्येतेभूतभाविगत्येतिभाष्यव्याख्यानुरोधेनाह यद्यपीति । द्वितीयार्द्धस्यतथापीत्यादिः तथाचयद्यप्यत्रसुषुप्तौरतिगतीनस्तस्तथापिसुषुप्ति
प्राप्तेःपूर्वंपश्चाद्वास्वप्नेरतिगतीभवतः ततस्तेएवस्वप्नादिगतेअनूद्यसंप्रसादेरत्वाचरित्वेत्येवंपरःपुमानुक्तइतिसंबंधः ५८४ एवंपुण्यपापयोरपिदर्शनंयत्सुषुप्तावुक्तंतदपितयोःसफलयोःसुप्तौकारणात्मा
नरूपेणस्थितयोरेवबोध्यंतदानीमभिव्यक्तयोरसंभवादित्याह पुण्यपापेइति । यद्यप्यत्रसुषुप्तौपुण्यपापेनस्यातामभिव्यक्तेनभवतस्तथापितेसुषुप्तौकारणात्मनाविद्येतेअतोऽभिप्रायादेवपुण्यपापेस्व
प्रकाशेनाज्ञानभासकरूपेणविलोक्यैवेत्युक्तमितिशेषः ५८५ पुनःपदार्थमाह अनादाविति । यथापूर्वंसंप्रसादान्गतस्तथापुनरेषव्रजेदिति ५८६ निश्चितआयोगतिस्तमभिलक्ष्येत्यर्थंकस्यप्रति
न्यायपदस्यतथायद्योनिकंशरीरंसुप्तेःपूर्वमासीत्तदेवप्राप्नोतीत्यर्थकस्यप्रतियोनिपदार्थस्यपूर्वोत्तरार्द्धाभ्यांक्रमेणार्थमाह यथागतमिति । तथैवतेनैवगतिमार्गेणेतियावत् योयद्योनिशरीरकःसुप्तिंग
च्छतिसभूत्वातद्योनिशरीरकोभूत्वासमायाति अत्रमुखंव्यादायस्वपितीतिवत्क्त्वाप्रत्ययोबोध्यः ५८७ प्रतियोनिपदार्थमेवव्यवहितोत्तरश्रुत्यनुरोधेनविशदयति व्याघ्रदेहइतिद्वाभ्यां । व्याघ्रः

विक्षेपमखिलंहित्वासमनस्कंसुषुप्तिगः ॥ सम्यगात्मस्वरूपेणप्रसीदत्यात्मनास्वयम् ॥ संप्रसादस्ततोज्ञेयासुषुप्तिरिहमानवैः ५८३ यद्यप्यत्रनकाप्यस्तिरतिर्वा
गतिरेववा ॥ अस्याःप्राप्तेःपुरापश्चात्स्यातांरतिगतीसदा ॥ संप्रसादेततोरत्वाचरित्वाचपरःपुमान् ५८४ पुण्यपापेचनस्यातांयद्यप्यत्रतथापिते ॥ सुषुप्तावपि
सर्वेषांविद्येतेकारणात्मना ॥ अतएतेविलोक्यैवस्वप्रकाशात्मनापुमान् ५८५ अनादाविहसंसारेसंप्रसादान्ह्यनेकशः ॥ यथासमागतःपूर्वंपुनरेषतथाव्रजेत् ॥
५८६ यथागतंतथैवायंसमायातिसदापुमान् ॥ योगच्छतिसभूत्वायंसमायातिनचेतरः ५८७ व्याघ्रदेहोयदासुप्तिंव्रजेद्व्याघ्रोभवेत्तदा ॥ सुषुप्तादागतोनापितज्जा
तावपरंवपुः ५८८ सिंहोवृकोवराहोवाकीटादिर्मनुजोपिवा ॥ यज्जातियद्वपुःसुप्तिंगच्छेदायात्यसौतथा ५८९ विक्षेपदर्शनायैवजंतुःसर्वःसमाव्रजेत् ॥ स्वप्नायैवे
तितेनेदमुच्यतेसावधारणम् ५९० सुषुप्तादागतःसोयंतत्रस्वप्नेव्यवस्थितः ॥ नारीभोगादिकंयत्तत्पश्यत्यात्मास्वयंप्रभः ॥ नतेनसज्जतेयस्माद्द्रष्टायद्वद्घटादिना
५९१ स्वसंबद्धंनकोप्यत्रद्रष्टुमर्हतिकिंचन ॥ तथात्वेदृश्यतास्वस्यबलादेवसमापतेत् ५९२

सुप्तिंप्राप्यसमागतःसन्व्याघ्रदेहएवभवतितत्रचतामेवव्यक्तिंप्राप्नोतीत्यर्थः ५८८ सिंहइति । तथातज्जातितद्व्यक्तिवैशिष्ट्येनेत्यर्थः स्फुटमन्यत् ५८९ ननुसुषुप्ताद्यत्समायातितत्स्वप्नायैवेत्यवधार
णंनोपपद्यतेसुप्त्यनंतरंजाग्रत्प्राप्तेरपिदर्शनादितिचेन्न स्वप्नपदस्यविपर्ययज्ञानात्मकविक्षेपसामान्यपरत्वादित्याह विक्षेपेति । तेनस्वप्नपदस्यविक्षेपसामान्यपरत्वेनस्वप्नायैवेतिसावधारणमुच्यत
इति ५९० असंगताप्रतिपादकभागार्थमाह सुषुप्तादिति । सुषुप्तादागत्यतत्रविक्षेपात्मकेस्वप्नेव्यवस्थितःसन्नात्मायत्किंचिन्नारीभोगादिकंपश्यतितेनविषयजातेननसंबध्यतेयतोद्रष्टाभवति नहि
लोकेपिद्रष्टादृश्येनसंसृज्यतेयथाघटादिद्रष्टाघटादिनेतिसंबंधः ५९१ नन्वात्मनोप्यहमित्याकारेणस्वप्नेभानंपरेमन्यंतेतथाचात्मस्वरूपस्याप्यनतुगमापत्तिरितिचेन्न स्वयंप्रकाशस्यात्मनोविषयत
याभानंनसंभवति परेतदुपाधिबुद्धेर्विषयतामात्मनिमन्यमानास्तुभ्रांताइत्याशयेनात्मनोविषयतयाभानांगीकारेआत्मत्वादेवप्रच्युतिःस्यादित्याह स्वसंबद्धमिति । स्वसंबद्धंस्वेनात्मनाविशिष्टमि
तियावत् ईदृशमर्थंकोपिद्रष्टुंविषयीकर्तुंनार्हतियतस्तथात्वेआत्मविशिष्टस्यार्थस्यविषयत्वेस्वीक्रियमाणेस्वस्यात्मनोदृश्यताविशिष्टतावलाद्विशिष्टवृत्तिधर्मस्यविशेषणवृत्तित्वनियमात्प्रसक्ताभवेत् त
थाचबहिर्द्रूपानात्मत्वप्रसक्तिरितिभावः ५९२

यद्यात्मनोविषयविशेषणत्वमभ्युपगम्येततदानागृहीतविशेषणाबुद्धिर्विशेष्येपर्यवतिष्ठतइतिन्यायेनविषयत्वप्रसक्तिरवश्यंस्यादित्याह विशिष्टेति । त्रयाणांविशेष्यविशेषणतत्संबंधरूपाणामग्रहेविपर्यीकरणाभावेसतिविशिष्टस्यग्रहणंविपर्यीकरणंनस्यात्एतदेवस्फुटयति योनेत्यादिना ५९३ योगेति । यथासंयोगस्यसंबंधस्यदंडस्यविशेषणस्यपुरुषस्यविशेष्यस्यचाग्रहेसतिदंडीत्याकारकोविशिष्टग्रहःक्वाचिदपिनस्यात् ततएवन्यायादात्मवैशिष्ट्येविषयाणामंगीकृतेसतिआत्मनोविशेषणीभूतस्यगतंज्ञानविषयत्वरूपंप्रसज्जेतेतिशेषः ५९४ तच्चव्याहतमितिसदृष्टांतमाह नैवेति । केनापिवस्तुनैवात्मनोग्रहःकर्तुमशक्यः यथादक्षिणहस्तमुष्टिनादक्षिणहस्तमुष्टिर्ग्रहीतुमशक्यइतिसंबंधः ५९५ किंचात्मनोविषयत्वस्वीकारेविषयत्वव्यापकस्यजडत्वस्यप्रसक्त्यानात्मत्वंस्यादित्याह अपिस्वस्येति । स्वस्यात्मनः ५९६ परिच्छिन्नेविभुनिवावस्तुनियत्रयत्रजडत्वंतत्रानात्मत्वमितिव्याप्तिमाह आत्मतेति । एषात्मताखादीनामाकाशकालदिशाममूर्त्तानांविभूनामपिजडत्वेनात्मतानदृष्टेतिशेषः ५९७ उक्तविचारस्यप्रकृतोपयोगमाह ततइति । ततोग्राहकस्यग्राह्यकोटावनिवेशात्स्वप्नदृश्यैःसहद्रष्टुर्नसंबंधः यतोद्रष्टृत्वंदृश्यासंबंधव्याप्यत्वात्तत्रहेतुर्भवतीत्यर्थः ५९८ द्रष्टृत्वस्यदृश्यासंबंधेनव्याप्तिंविशदयति यद्येनेति । येनद्रष्ट्रायद्दृश्यतेतेनदृश्येनासौद्रष्टानबद्ध्यतेयथाघटद्रष्टाघटेनेत्यन्वयः ५९९ फलितमाह अनन्वागतइति । अतोऽसंगत्वा

विशिष्टग्रहणंनस्यात्त्रयाणामग्रहेक्वचित् ॥ योनजानातिसंबंधंविशेष्यंवाविशेषणम् ॥ प्रपद्यतेविशिष्टंसनकदाचित्पुमानिह ५९३ योगदंडनराणांस्यादग्रहेनग्रहःक्वचित् ॥ दंडीतिततएवात्मवैशिष्ट्येह्यात्मनोगतम् ९४ नैवात्मनात्मनःशक्योग्रहःकेनापिवस्तुना ॥ गृह्णीयादत्रकोनाममुष्टिंतेनैवमुष्टिना ९५ अपिस्वस्यग्रहेस्वस्य सर्वथास्यादनात्मता ॥ गृह्यमाणंजडंदृष्टमात्मतानजडेभवेत् ९६ आत्मताचेज्जडस्यस्याद्धटस्यैषानकिंभवेत् ॥ खादीनांवाप्यमूर्त्तानांजडानामात्मतानहि ९७ ततःस्वप्नेत्रयद्दृश्यंनारीभोगाऽदनादिकम् ॥ संबंधस्तेननद्रष्टुर्द्रष्टृत्वादेवहेतुतः ९८ यद्येनदृश्यतेद्रष्ट्रातेनासौबद्ध्यतेनहि ॥ यथापुमान्घटद्रष्टाबद्ध्यतेनघटेनसः ९९ अनन्वागतएवातस्तेनदृश्येनतत्रसः ॥ स्वप्नद्रष्टाभवेत्स्वप्नदृश्येनासंगरूपधृक् ६०० यतएवपुमान्स्वप्नेसंगलेशविवर्जितः ॥ स्वप्रकाशात्मनातस्मान्मोक्षायैवनरेश्वर ६०१ एवमेवेतिजनकोयाज्ञवल्क्यमभाषत ॥ याज्ञवल्क्येतिसंबोध्यमुनिंतंद्विजसत्तमम् ६०२ याज्ञवल्क्योपितंप्राहजनकंनृपतिंपुनः ॥ पुंसोजागरणावस्थासर्वस्यास्तितथैवच ३ तत्रमार्गाननेकांश्चदृष्ट्वैवभयमप्यदः ॥ पुण्यंपापंतथात्मानंयातिजागरणायसः ॥ केवलायबहिष्ठायसमायातियथागतम् ६०४

तत्रजागरणेसघटद्रष्टातेनघटादिरूपदृश्येनानन्वागतःअनुगतोनभवत्येवतथास्वप्नद्रष्टास्वप्नदृश्येनासंगत्वादनन्वागतइतिसंबंधः ६०० यथाचयत्त्वयाप्रथमप्रश्नेस्वप्नेसंगत्वदोषेणात्मनोमोक्षायोग्यत्वंसूचितंतन्निरस्तमित्याह यतएवेति । यतएषपुमानुक्तविधयास्वप्नेसंगलेशेनापिवर्जितस्तस्मात्स्वप्रकाशरूपेणमोक्षायमोक्षयोग्यएवहेनरेश्वरइति ६०१ एवमुक्तोराजाप्रथमप्रश्नोत्तरमेवमेवेत्याकारेणांगीचकारेत्याह एवमेवेति ६०२ जाग्रत्यसंगत्वबोधिकायाःषोडश्याःकंडिकायाअर्थंवदन्द्वितीयोत्तरमभिनयति याज्ञवल्क्योपीतिपंचभिः । हेराजन्सर्वस्यजंतोर्जागरणावस्थापितथैवस्वप्नावस्थावदेवास्ति यथास्वप्नावस्थाद्रष्टुर्नलेपाधायिकातथाजाग्रदवस्थापीत्युत्तरार्द्धार्थः ६०३ तथैवेत्युक्तंसाम्यमेवस्फुटयति तत्रेति । तत्रस्वप्नेअनेकान्नाडीमार्गान्दृष्ट्वातथापुण्यपापफलाकारेणपरिणतमात्मानंबुद्धिंदृष्ट्वैवनतुकिंचित्कृत्वासआत्माजागरणाययाति तत्रेतावान्स्वप्नाद्विशेषः । यज्जागरणेकेवलंबहिष्ठंवर्ततेस्वप्नेतुयद्यपिजाग्रदपेक्षयांतरत्वमपिवर्त्ततेतथापिसंप्रसादापेक्षयाबहिष्ठायपथागतंगमनमार्गमनतिक्रम्यागमनंसममेवेतिभावः ६०४

६५

१९२

द्रष्टृत्वेनात्मनोऽसंगताप्युभयत्रसमेत्याह यथेति । यथाएषपुमान्स्वप्नेदृश्येनसंगविवर्जितस्तथाजाग्रत्यपिदृश्येनसंगविवर्जितोयतोद्रष्टृत्वेननिःसंगोभवतीत्यन्वयः ६०५ एतदेवस्फुटयति स्वप्नदृश्यैरिति । स्वयमेवेत्यस्यस्वभावादेवेत्यर्थः तथाचयथास्वप्नेद्रष्टाद्रष्टृस्वभावादेवहेतोःस्वप्नदृश्यैर्नसज्जतेतथाजागरणेपीतिसंबन्धः ६०६ फलितमाह ततइति । तेनदृश्यजातेनअनन्वागतोऽसंबद्धः शेषंस्पष्टम् ६०७ एकस्यक्रमेणस्थानसंबंधेपिनभेदइत्याकारस्यतृतीयोत्तरस्यप्रतिपादकयोःसप्तदशयष्टादशयोःकंडिकयोरर्थमाह याज्ञवल्क्योपीतिपङ्क्तिः । यथापूर्वंपूर्ववाक्यसमानाकारवाक्यंसप्तदशकंडिकारूपमुच्चरन्याज्ञवल्क्योष्टादशकंडिकोक्तदृष्टांतेनैकस्यात्मनःक्रमेणावस्थाद्वयमाहस्मेतिसंबंधः ६०८ तत्रसप्तदश्याअर्थंसंगृह्णाति अत्रेतिद्वाभ्यां । अत्रप्रसिद्धेजागरणेस्थूलैर्वध्वादिरूपविषयैरत्वाक्रीडित्वातथास्थूलान्मार्गान्चरित्वातत्रापितद्विषयाकारांपुण्यपापाभ्यांसुखदुःखाकारांचबुद्धिंस्वप्नवद्दृष्ट्वैवनतुकिंचित्कृत्वापुनःस्वप्नंव्रजतीतिद्वयोःसंबंधः ६०९ ६१० अष्टादश्याअर्थंदर्शयति तत्रजागरणादितित्रिभिः स्पष्टम् ६११ महेति । यथाएकोमीनोमहानदीसंबंधिनीनामपांजलानांवामदक्षिणरूपेउभेकूलेगच्छतीत्यन्वयः ६१२ दा

यथास्वप्नेपुमानेषभवेत्संगविवर्जितः ॥ द्रष्टादृश्येननिःसंगःस्वप्नवत्संगवर्जितः ६०५ स्वप्नदृश्यैर्यथास्वप्नेस्वयमेवनसज्जते ॥ तथाजागरणेदृश्यैरपिद्रष्टानसज्जते ६०६ ततोजागरणेप्यात्मातेनानन्वागतोभवेत् ॥ असंगोयतएवायंपुरुषःस्वप्नदृक्समः ॥ अंगीचकारराजातदेवमेवेतिपूर्ववत् ६०७ याज्ञवल्क्योपितंप्राहयथापूर्वंपुनर्मुनिः ॥ अवस्थाद्वयमेकस्यदृष्टांतेनातिबुद्धिमान् ६०८ अत्रजागरणेरत्वावध्वाद्यैःस्वात्मनःप्रियैः ॥ गत्वाचविविधान्मार्गान्पुरग्रामादिमध्यगान् ६०९ सुखदुःखकरींबुद्धिंपुण्यपापसमुद्भवाम् ॥ दृष्ट्वैवस्वप्नवद्गच्छेत्पुनःस्वप्नंस्वयंप्रभः ६१० तत्रजागरणात्स्वप्नंस्वप्नाज्जागरणंपुनः ॥ एकस्यगच्छतःपुंसोदृष्टांतंविद्धिभूपते ६११ महानद्यांयथाकूलेउभेगच्छतिसर्वदा ॥ एकएवमहामीनोह्यपरंवामंचदक्षिणम् ६१२ एवमात्मासदैवायमेकएवस्वयंप्रभः ॥ स्थानद्वयंप्रयात्यत्रस्वप्नंजागरणंचसः ६१३ सुप्तावपिमहाराजदृष्टांतंशृणुबोधन ॥ नीडेस्थितोयथाकश्चित्श्येनोगरुडएववा ६१४ पक्षीभूमिसमीपस्थंदेशंक्रांत्वाव्रजेत्पुनः ॥ अस्मिन्दूरस्थितेभूमेराकाशेदृष्ट्यगोचरे ६१५ स्त्रियोभक्ष्यस्यवालाभंसमुद्दिश्यैषणावृतः ॥ कोपात्पक्ष्यंतरंहंतुमथवास्वेच्छयैवहि ६१६ गच्छन्नेवंभवेच्छ्रांतःपक्षौस्वस्यगतिप्रदौ ॥ संकोच्यात्मशरीरेसौनीडमेवाभिधावति ६१७ एवमात्मास्वयंज्योतिःस्वप्नजागरणांबरे ॥ कर्मपक्षोव्रजन्श्रांतोहृदयाकाशमाव्रजेत् ६१८

ष्टांतिकमाह एवमिति ६१३ अथस्वप्नजागराभ्यांतद्धर्मैःकामादिभिश्चात्मनोनस्वाभाविकःसंबंधस्तेषांसुषुप्तौ कारणेलयेप्यात्मनस्तद्भासकत्वेनावस्थानादितिसूचयितुंसदृष्टांतंसुषुप्तिप्राप्तिप्रतिपादिकायास्तद्यथास्मिन्नाकाशेइत्यादिकायाःकंडिकायाअर्थंनिरूपयति सुप्तावितिपङ्क्तिः । सुप्तौसुषुप्तिप्राप्तिविषयंदृष्टांतंशृणु यथाकश्चित्पक्षीश्येनोगरुडोवाभूमिसमीपस्थमाकाशदेशंक्रांत्वाआक्रम्यपुनर्भूमेर्दूरस्थितेऽतएवदृष्टेरगोचरेआकाशेव्रजेदितिद्वयोरन्वयः ६१४ । ६१५ पक्षिणोदूरगतौफलरूपंहेतुचतुष्टयंविकल्पितंनिर्दिशति स्त्रियइति । स्त्रियःपक्षिण्याःप्राप्तिःभक्ष्यप्राप्तिःपक्ष्यन्तरहननंस्वेच्छापूरणंचेतिहेतुचतुष्टयाकारः ६१६ गच्छन्नेवमिति । एवंरूपादिरागद्वेषनिमित्तंयथाभवतितथादूरंगच्छन्सन्यदाश्रांतोभवतितदासौपक्षीस्वस्यगतिप्रदौपक्षौआत्मशरीरेसंकोच्यविश्रामायनीडमेवाभिधावतीति ६१७ एवमात्मेति । एवंयथोक्तोदृष्टांतस्तथायमात्माविक्षेपस्थानेस्वप्नजागरणरूपेंबरेआकाशेपुण्यपापरूपपक्षाभ्यांविशिष्टोव्रजन्धावन्सन्यदाश्रांतोभवतितदाहृदयाकाशंसुषुप्तिस्थानमागच्छतीति ६१८

संप्रसादइति । यत्रहृदयाकाशेसुप्तःसुषुप्तिविशिष्टोयमात्मावैमल्यप्रवृत्तिनिमित्तकेनसंप्रसादशब्देनोक्तः । कस्यमलस्यतत्रत्यागइतिचेदविद्याकामकर्माख्यस्येत्याह नकंचनेत्यादिना । कामशब्दःकर्मघञंतः स्वप्नपदंनविपर्ययाख्याकार्याविद्याबोधिता तथाचयत्रनकंचनविषयमिच्छतिनवाकंचनविपर्ययंपश्यतीत्यर्थः विपर्ययरागयोरभावोत्तयाचतन्निमित्तकर्माभावोपिसूचितः ६१९ एवंस्थूलसूक्ष्मशरीराभ्यांतद्धर्मैश्चात्मनःस्वाभाविकःसंबंधोनभवतीत्युक्तमथकारणशरीरादविद्याख्यादात्मनोविवेकंदर्शयितुमविद्यास्वरूपस्यतदावृतात्मस्वरूपस्यचप्रतिपादिकायाविंशतितम्याः कंडिकायाअर्थद्वाप्रविष्टोक्तिंनिरूपयंस्तत्रजाग्रतःप्रकाशात्स्वप्नसुषुप्तिप्राप्तिद्वारभूतानांनाडीनांस्वरूपप्रदर्शकस्यपूर्णइत्यंतभागस्यार्थंवर्णयति मार्गोयोयमितिनवभिः । हेराजन्सतआत्मनःसर्वास्ववस्थासुगमनागमनार्थंमार्गोयस्तुभ्यंमयाश्रौतप्रतिन्यायपदेनोक्तःसमार्गोहृदयनिर्गतनाडीरूपोबोध्यः यासांहृयकंदनिर्गतनाडीनांमध्येएकाधिकंशतंप्रधानमत्रशास्त्रेवेदांतेप्रश्नोपनिषदादावीरितंतासांप्रधाननाडीनांवल्लीनिभानांशाखाभूतानाड्यस्तुकोटिशोबोध्याइतिद्वयोःसंबंधः । निश्चितआयोगतिर्मार्गइतियावत् तमभिलक्ष्येतिप्रतिन्यायपदार्थोऽधस्तादुक्तः ६२० । ६२१ तासांनाडीनांसूक्ष्मतांदर्शयति सहस्रधेति । यदिएकःकेशःसहस्रधाभिन्नोविभक्तोभवेत्तदातासांनाडीनांपरिमाणेसाप्रसिद्धाउपमादृष्टांतोभवेदुपपद्येतअथवानभवेत्ततोपिसौक्ष्म्यादितिभावः ६२२

संप्रसादःसमुद्दिष्टोयत्रसुप्तोनकंचन ॥ कामंकामयतेनापिस्वप्नंकंचनपश्यति ६१९ मार्गोयोयंमयातुभ्यंप्रतिन्यायमितीरितः ॥ अवस्थास्विहसर्वासुगमनागमनेसतः ६२० मार्गभूताःस्थिताएवह्येताहृदयनिर्गताः ॥ नाड्यएकाधिकंयासांप्रधानंशतमीरितम् ॥ शास्त्रेत्रकोटिशःसंतितासांशाखासमाःशिराः ६२१ सहस्रधाभवेत्केशोयदिभिन्नस्तदोपमा ॥ कथंचित्परिमाणेसाभवेद्वापिनवाभवेत् ६२२ आसांहिताइतिप्रोक्तंनामधेयंमनीषिभिः ॥ मातुःस्तनस्थितायद्वत्स्तनंधयहिताःशिराः ॥ वपुर्हितास्तथाराजन्नाड्योवपुषिसंश्रिताः ६२३ अन्नपानरसंशश्वत्सर्वंजंतुहितंयतः ॥ नयंत्यविरतंतेनहिताएताःशिराःस्मृताः ६२४ अन्नपानरसैःपूर्णाश्चित्रवर्णोपमैःसदा ॥ नीरैर्नानाविधैर्यद्वत्सरितोभूतलस्थिताः ६२५ अन्नपानरसास्तासुशुक्लानीलाश्चपिंगलाः ॥ हरितालोहिताःसंतिचित्रकारगृहेयथा ६२६ नीलमंजनसंकाशमीरितंहरितंपुनः ॥ दूर्वादलनिभंतेननैतयोःपुनरुक्तता ६२७

तासांहिताइत्याकारकनामधेयस्यान्वर्थतांदर्शयति आसामिति । यथामातृस्तनगतानाड्योबालस्यहितकरामातृभुक्तान्नरसप्रापकत्वात्तथासर्वेशरीरेन्नरसप्रापकत्वादासांनाडीनांहिताइतिनामोक्तमितिद्वयोरर्थः ६२३ । ६२४ तासांनाडीनांवर्णानन्नपानरसप्रयुक्तान्दर्शयति अन्नपानरसैरित्यादिना । चित्रानानाविधावर्णास्तत्प्रयुक्ताउपमाश्चयेषामेतादृशैरन्नरसैःसदापूर्णानानाविधनीरैर्नद्यइवेत्यन्वयः । तादृशरससंबंधाद्यनाड्योपिनानारूपाइतिभावः ६२५ रसानांवर्णान्कीर्तयति अन्नपानरसास्तास्विति । यथाचित्रकारस्यगृहेशुक्लादिवर्णारसाःपात्रेषुनिहिताःसंतितथैतासुनाडीषुकफवातपित्ताऽल्पपित्तरुधिरसंभृतासुयथाक्रमंशुक्लादिवर्णानिहिताइत्यर्थः तथाचोक्तंसुश्रुते 'अरुणाःशिराःपित्तवहानीलावातवहाःस्मृताः । असृग्वहास्तुरोहिण्योगौर्यःश्लेष्मवहाःस्मृताः' अरुणाःपिंगलारोहिण्योरक्ताइतितदर्थः ६२६ ननुदूर्वादलश्याममित्यादौहरितेनीलपर्यायप्रयोगादत्रनीलहरितपदयोःपौनरुक्त्यमित्याशंक्यार्थभेदप्रदर्शनेनवारयति नीलमिति । अत्रांजननिभंनीलमितिविवक्षितं हरितंतुदूर्वादलनिभमतोनपुनरुक्तिरिति ६२७

पिंगलमिति । पिंगलपदेनस्वर्णवर्णसमःपीतवर्णोत्रविवक्षितः । नन्वन्येपिकफादिसन्निपातजवार्णाःसंतीतिचेत्तेपिकफादिवर्णोपन्यासेनोपलक्षिताइत्याह तेनेत्यादिना । तेनकफादिसंबंधिनांप्राकृत वर्णानामुपन्यासेनसर्वेवर्णाउदाहृताउपलक्षिताः केते येवर्णाःशुक्लरक्तादिवर्णानामन्यथाभावतःपरिणामतःस्मृतालोकेपिप्रसिद्धाइत्यर्थः दृश्यंतेहिचित्रकराद्दिग्रवर्णयोजनेनापूर्ववर्णंजनयंतस्तथाचधा तुवैषम्यजाःसर्वेवर्णाअत्रसंगृहीताइतिभावः । वर्णितनाडीनांप्रकृतोपयोगंदर्शयति नाडीमार्गैरिति । स्वप्नंवासुप्तिंवाएतीत्यन्वयः ६२८ अथयत्रैनमित्यादिभागस्यार्थंवदन्स्वप्नेकार्यद्वारेणाविद्यायाः स्वरूपंस्पष्टयति स्वप्नोयइत्यादिना । नाडीमार्गंप्राप्यस्वप्नसुषुप्त्योर्मध्येयःस्वप्नःसजाग्रद्वद्यदापापसहकृताविद्याजन्यस्तदादुःखदोभवतिपुण्यसहकृताविद्याजन्यस्तुसुखदोभवतीतिद्विविधइत्यर्थः ६२९ नापिस्वप्नपदार्थैष्वपिजाग्रत्पदार्थेभ्यःस्वरूपेणदुःखादिजननव्यापारेणवाविशेषइत्याह दुःखदाइति । यादृशाश्चोरादिरूपाःप्रतिकूलतयाज्ञाताःसंतोजागरणेदुःखदादृष्टाः सुखदाअपिया दृशाःस्रक्चंदनादिरूपाअनुकूलतयाज्ञातास्तेभावाःस्वप्नेपितादृशाइत्यन्वयः ६३० तत्रदुःखदंस्वप्नमुदाहरणेनस्फुटयति अतइतिसप्तभिः । अतउक्तसाम्यात् स्वप्नेदुःखभोगकालेदुःखदंपाप कर्मणिअविद्यासहकारितयास्थितेसत्येनमात्मानंस्वप्नदृशंदीनभूतंचोरादयोयथाक्रमंशस्त्रादिभिर्दंष्ट्र्याद्यर्थैघ्नंतीवहिंसंतीव यतःस्वार्थसाधकाः कीदृशमेनमात्मानं वस्तुतोऽच्छेद्यममरंचेतिद्वयोः

पिंगलंस्वर्णवर्णस्यात्तेनसर्वउदाहृताः ॥ वर्णायेशुक्लरक्तादेरन्यथाभावतःस्मृताः ॥ नाडीमार्गैरयंगत्वास्वप्नंवासुप्तिमेतिवा ६२८ स्वप्नोयःसभवेद्द्वेधादुःखदः सुखदोपिच ॥ यथाजागरणंपुंसोदुःखदंसुखदंतथा ६२९ दुःखदायादृशाभावास्तादृशाःसुखदाअपि ॥ पुंसोजागरणेदृष्टाःस्वप्नेतेतादृशाःस्मृताः ६३० अतः स्वप्नेदुःखकालेदुःखदेकर्मणिस्थिते ॥ एनंस्वप्नदृशंदीनंचोरव्याघ्रवृकादयः ६३१ निष्ठुराःक्रूरकर्माणःशस्त्रैर्दंतैर्नखैःखुरैः ॥ आकाशसदृशंशस्त्रैरच्छेद्यंवधव र्जितम् ॥ घ्नंतीवद्रव्यमांसादिलाभार्थंस्वार्थसाधकाः ६३२ यथाजरावशीकुर्यात्पुमांसंवयसःक्षये ॥ अवश्यंसर्वगंदेवंजिनंतीवेहदुर्धियः ६३३ यथाकुनृपतेर्भृत्या अर्थार्थंधनिनोखिलान् ॥ वशीकुर्वंतिबलतोदीनान्नाथविवर्जितान् ॥ तथास्वप्नेप्यमुंकेचिद्वशीकुर्वंतिदेहिनम् ६३४ यथाकाष्ठमयोहस्तीहस्तीवन्नृपवेश्मनि ॥ सूत्रैर्विद्रावयेद्बालान्भयसंजातवेपथून् ॥ स्वप्नेहस्तीतथादृष्टोविद्रावयतिदेहिनम् ६३५ सभायांचित्ररूपायांसमायांसर्वतोयथा ॥ मत्वागर्तमिवाप्राज्ञोनिपतेन्मूढ चेतनः ॥ एवंगर्तमिवस्वप्नेपतत्यात्मातिमूढधीः ६३६ भयंजागरणेपश्येद्यत्स्वप्नेपितदेवसः ॥ मन्यतेऽविद्ययात्मायंसर्वमप्यभयःसदा ६३७

संबंधः ६३१ । ६३२ अपरमुदाहरति यथेति । यथावयसआयुषःक्षयेअपचयकालेजरापुमांसंवशीकुर्यात् तथाकेचिद्दुर्बुद्धयोधूर्ताःसर्वगमवश्यंवशीभावानर्हमप्येनंदेवंजिनंतीववशी कुर्वंतीवेत्यर्थः । यद्यपिज्याधातुःक्र्यादिकोवयोहानौवर्ततेतथापिजीर्णानांपारवश्यप्रसिद्धेरयमौपचारिकःप्रयोगइतिबोध्यम् ६३३ एतदेवदृष्टान्तेनस्फुटीकरोति यथाकुनृपतेरिति । यथा कुत्सितस्यराज्ञोभृत्याःपुरुषाधनाढ्यान्धनंग्रहीतुंवशीकुर्वंतितथैनंस्वप्नेकेचिद्वशीकुर्वंतीति ६३४ तथाविधमन्यंस्वप्नंदर्शयति यथाकाष्ठेति । यथाराजद्वारगतहस्तिवद्दृश्यमानःकाष्ठमयोहस्ती सूत्रैर्बद्धश्चालितःसन्बालान्भयेनकंपमानान्विद्रावयेत्पलायमानान्कुर्यात्तथास्वप्नदृष्टोहस्तीएनंविद्रावयेदित्यर्थः यद्यपिश्रुतौछोधातुश्छेदनार्थकस्तथापिविपूर्वकस्यात्रविद्रावणार्थकत्वमपिसं भवतीतिबोध्यम ६३५ तादृशमितरंदर्शयति सभायामिति । यथाचित्ररूपायांसर्वतःसमायांचसभायांसमदेशंगर्तंवन्मत्वादुर्योधनवन्मूढोनिपतेत्तथास्वप्नेमिथ्यागर्तेनिपततीत्यर्थः ६३६ अद्वैती यत्वेननिर्भयोप्यात्मास्वप्नेजागरणवदविद्ययाभयंपश्यतीत्याह भयमिति । यज्जागरणेभयंपश्येत्तदेवसर्वंस्वप्नेप्यविद्ययाआत्मामन्यते कीदृशः सदाऽभयोपीत्यन्वयः ६३७

अविद्यापदार्थंवक्तुंविद्यास्वरूपमाह विशिष्टमिति । पदांतरैरपिनिर्ब्रूयादितियास्कोक्तेर्विद्यापदेविपदार्थोविशिष्टमितिदपदार्थोदद्यादितियापदार्थोवगमयेदिति याप्रापणेइतिस्मृतेः तथाचविशिष्टंविलक्षणंयतःसर्वगंविभुंसर्वसंनिभंसर्वपदार्थाकारंसर्वात्मानमितियावत् स्वप्रकाशंसदानंदरूपंचएतादृशमात्मनोरूपंदद्यात्संनिहितंकुर्यात्गमयेद्वात्मतयाप्रकाशयेच्च तेनैतेनयोगार्थेनविद्येत्युच्यतेसाचविद्यावृत्त्युपलक्षितचिदात्मरूपेत्यर्थः ६३८ उक्तविद्याविरुद्धमज्ञानमयेवाविद्येत्युच्यतेइत्याह ततइति । ततउक्तविद्यास्वरूपाद्यदन्यत्परिच्छिन्नानात्मजडासद्दुःखरूपंतदविद्येत्युच्यते साचाविद्याअज्ञानरूपेवातोऽज्ञानान्नभिन्नेत्यर्थः ६३९ अविद्यायाअज्ञानरूपतांविशदयति स्वसजातीति । सजातीयादिभेदत्रयराहित्येनानंदरूपःस्वप्रकाशएकोयमात्मायदिवस्तुतोभवतितर्हिसचित्ररूपोनानारूपःकथंसंपन्नः इतउक्तरूपादात्मनःसकाशादस्यजडादिरूपस्यजगतःसृष्ट्यादिचकथंजातमित्याकारकेआक्षेपेकेनचित्कृतेसतियदाक्षेपश्रोतुश्चित्तेनजानामीत्याकारेणानुभूयमानमज्ञानंतदेवाऽविद्यास्वरूपमितिद्वयोरर्थः ६४० । ६४१ एवमविद्यास्वरूपंव्युत्पाद्यतस्याःस्वप्नेस्पष्टतामभिनयति अनयेति । अनयाऽविद्ययैवस्वप्नेवधादिकंवर्णितंपश्यति । कीदृशंवधा

विशिष्टमात्मनोरूपंसर्वगंसर्वसंनिभम् ॥ स्वप्रकाशंसदानंदंदद्याद्वागमयेच्चसा ॥ तेनैवसाभवेद्विद्यासर्वात्माचिद्वपुःपुमान् ६३८ ततोन्यद्यदसद्रूपंतदविद्येतिगीयते ॥ अज्ञानंचभवेत्तद्धिनातोन्यद्विद्यतेपरम् ६३९ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः ॥ आनंदात्मास्वप्रकाशएकश्चेत्सकथंभवेत् ६४० चित्ररूपःकथंवास्यसृष्ट्यादिकमितोभवेत् ॥ इत्याक्षेपेयदज्ञानंतदविद्येतिगीयते ६४१ अनयामन्यतेस्वप्नेवधंवश्यंपलायनम् ॥ पातंचभयजातंतदसदेवसहेतुकम् ६४२ वध्वादिजनितंमोहमेवमेवविपर्ययम् ॥ स्वप्नेगतःपुमान्व्यर्थंमन्यतेऽविद्ययैवतम् ६४३ उक्तंस्वप्नेनसंत्यत्ररथाद्यास्तान्विनाकथम् ॥ अकारणेकथंस्यातांसुखदुःखेरथादिजे ६४४ सुखदुःखकराभावानसंतिहृदयेसदा ॥ हृदयस्याल्पदेशत्वाद्रथादेश्चमहत्त्वतः ६४५ सृष्टिरप्यत्रतेनैषांस्वप्नेनैवोपपद्यते ॥ वास्तवीहृदयेकेनवस्तुतःसृज्यतेजगत् ६४६ देशकालनिमित्तानामभावेजायतेह्ययत् ॥ मायाकार्यंभवेत्तत्खेगंधर्वनगरंयथा ६४७ स्वप्रगस्यभवेच्छक्तिःसर्वसृष्ट्याद्यलौकिकी ॥ येयंसाकथिताऽविद्यासर्वशास्त्रविशारदैः ६४८

दिकं सहेतुकमसत् तस्यवधादेर्हेतवश्चोरादयोप्यसंतोमिथ्याभूताइतियावत् । वश्यमितिभावप्रधानोनिर्देशः । वध्वादीति एवंवध्वादिवदेववध्वादिवियोगप्रयुक्तंमोहंविषादंतथापरंविपर्ययंतंप्रसिद्धंस्वप्नेगतःपुमान्व्यर्थंतदविद्ययैवमन्यतेइतिद्वयोरर्थः ६४२ । ६४३ अविद्ययैवेत्यवधारणमुपपादयति उक्तमिति । श्रुत्योक्तंकथमुक्तमितिचेदतआह स्वप्नेइति । स्वप्नेरथादयोनसंतिअतस्तान्रथादीन्विनातैरथादिभिर्जन्येसुखदुःखेकथंस्यातांसंभवेतांयतोऽकारणंप्रसिद्धकारणवर्जितेअतोऽविद्ययैवेत्यवधारणमुपपन्नमिति ६४४ असंभवमेवविशदयति सुखेति । अल्पदेशेहृदयेरथादीनांमहतांमानाभावात्सुखादिसामग्र्यामुख्यायाःसंभवोनास्तितेनासंभवेनएषांरथादीनांवास्तवीसृष्टिरपिनसंभवतिअनःस्वप्नेहृदयेवस्तुतोजगत्सृज्यतइतिकेनवक्तुंशक्यमितिशेषः ६४६ । ६४६ तथाचदेशकालादिलक्षणकात्स्न्याभावात्स्वप्नपदार्थामायामाया मात्रंतुकात्स्न्येनानभिव्यक्तस्वरूपत्वादितिन्यायादित्याह देशेति । स्वयोग्यदेशाद्यभावेपियज्जायतेतन्मायामात्रंयथानगराधारतानर्हेखेगंधर्वनगरमिति ६४७ साचमायाख्याआत्मनःशक्तिरविद्यातोनभिन्नेत्याह स्वप्नगस्येत्यादिना । स्वप्नगस्यात्मनोयेयंशक्तिः कीदृशी सर्वस्यसृष्ट्यादिकरणेनालौकिकीलोकेऽप्रसिद्धासाऽविद्येतित्वंविद्धिरुक्तेत्यर्थः लोकेपिमायामणिमंत्रादिक्षोभ्याऽविद्यातोनभिन्नेयुक्तंप्रथमेध्याये ६४८

तस्याअविद्यातोभेदशंकामेवापाकरोति यदीति । यदिसाशक्तिरविद्यातोभिन्नाभ्युपेयतेततस्तमविद्यातोभेदपक्षमाश्रित्यापिकाकुत्रकार्यक्षमाभ्युपेयतेइत्यर्थः । तस्मात्कार्यद्वयंविकल्पयति किंतयेति । तयाऽविद्याभिन्नत्वेनाभ्युपगतयाशक्त्याआत्मस्वप्नेबाह्यंप्रपंचमंतर्हृदयेनयतिप्रापयतिकिंवास्वयंबहिर्गत्वाविलोकयतिअनयोरुभयोरपिपक्षयोरविद्यातोभेदस्तस्याःशक्तेर्नसंभवतीति द्वयोरर्थः ६४९ । ६५० अविद्यातोभेदासंभवप्रतिज्ञायामुक्तयोर्व्यापारयोरविद्यातोऽन्यत्रासंभवंहेतुतयावदंस्तत्र प्रथमस्यविश्वांतरानयनलक्षणस्यासंभवमाह अंगुष्ठमात्रेइतिद्वाभ्यां । सत्यतइति सार्वविभक्तिकस्तसिः तथाचसत्यंबाह्यप्रपंचंस्वल्पहृदयाकाशेकथमानयेतयथास्थूलस्यशतपादस्यचभुजंगस्यकर्णयोःस्थापनंविनामायामशक्यंतथैतदपीतिद्वयोरर्थः ६५१ । ६५२ द्वितीयस्यबहिर्गत्वावलोकनलक्षणव्यापारस्यापिमायातइतरत्रासंभवमाह बहिरपीति । अत्रशयनदेशेप्राणेपुवसत्स्वप्यस्यस्वप्नद्रष्टुर्यद्बहिर्द्वीपांतरादिपुक्षणाद्गमनंतदपिमायांपरिहायनस्यादित्यन्वयः ६५३ अत्रदृष्टांतमाह अत्रस्थितइति । यथात्रभूलोकेस्थितःक्षणात्सूर्यलोकंद्रष्टुंनागच्छेद्विनामायांतथास्वप्नेस्वरादिकंस्वर्गादिकंद्रष्टुंनागच्छेदित्यर्थः ६५४ किंचोक्तव्यापारविशिष्टायाशक्तेरविद्याभिन्नायाःकल्पनंश्रुतिबाह्यमित्याह विश्वस्येति । विश्वस्यबाह्यप्रपंचस्यचित्तेहृदयदेशआनयनप्रतिपादिकाबहिर्गत्वावलोकनप्रतिपादिकावाकाचित्श्रुतिर्नास्ति हृदयांतरेवविश्वस्यसृष्टिप्रति

यद्यन्यत्रभवेच्छक्तिरविद्यातस्ततस्तुका ॥ किंतयासर्वमेवांतर्नयेद्विश्वंजडाजडम् ४९ अथवासर्वदेशेषुस्वयंगत्वावलोकयेत् ॥ पक्षद्वयेपिमायैवसैषाशक्तिःप्रसज्जते ५० अंगुष्ठमात्रेहार्देस्मिन्नवकाशेकथंजगत् ॥ जडाजडमिदंसर्वमानयेत्सत्यतःपुमान् ५१ स्थूणास्थूलंशतपदंभुजंगंकर्णरंध्रयोः ॥ स्थापयेन्नविनामायांयथाहृदि तथाजगत् ६५२ बहिरप्यस्यगमनंक्षणाद्द्वीपांतरादिषु ॥ नमायांपरिहायस्यात्प्राणेष्वत्रवसत्स्वपि ६५३ अत्रस्थितःक्षणात्सूर्यलोकंगत्वानचाव्रजेत् ॥ विनामायांयथातद्वत्स्वप्नेद्रष्टुंस्वरादिकम् ६२४ विश्वस्यानयनेचित्तेबहिर्गत्वाऽवलोकने ॥ नविद्यतेश्रुतिःसृष्टौसातुकर्त्रीतिविद्यते ६५५ अपिनीत्वाजगत्सर्वमंतःपश्यतिवाबहिः ॥ गत्वोभयत्रनास्त्यत्रसंवादश्चेतनैःसमम् ५६ चेतनावयमानीतास्त्वयास्वप्नेहृदंबुजे ॥ स्वगृहेवास्थितादृष्टानैवंब्रूयुःकदाचन ५७ उत्थानेनचतेनोक्तामन्यंतेऽपिकथंचन ॥ अतस्तेषांप्रकल्प्यंस्यादज्ञानंघटकुडयवत् ५८ अपितेपियदास्वप्नंसमकालंहिचेतनाः ॥ विलोकयेयुर्निद्राणास्तदासंभावितंभवेत् ५९

पादिकातुसहिसर्वस्यकर्तेत्याकाराव्याख्याताश्रुतिरस्ति तथाचसृष्ट्युपपादिकाऽविद्यैवाभ्युपगंतव्येतिभावः । भित्तेरितिपाठेतुशयनदेशभित्तेर्बहिर्गत्वेतिसंबंधः ६५५ किंचोक्तव्यापारद्वयसंकल्पनं लोकानुभवविरुद्धमित्याह अपिनीत्वेतिपंचभिः । किंचस्वप्नकालेसर्वंजगदंतर्नीत्वाअथवाबहिर्गत्वापश्यतीत्याकारकेउभयत्रपक्षद्वयेस्वप्नद्रष्टुश्चेतनान्तरैःसमंसहसंवादःसमानानुभवशालित्वंनास्तीत्यर्थः ६५६ कथंनसंवादइत्याकांक्षायामाह चेतनाइति । यदिअंतरानयनेसंवादःस्यात्तदातेचेतनाःस्वप्नद्रष्टारंप्रत्येवंब्रूयुःकथयेयुः एवंकथं अद्यत्वयास्वप्नेहृदयांबुजेवयमानीताइति । यदि चबहिर्गमनेसंवादःस्यात्तदाअद्यत्वयास्वगृहेस्थितावयंदृष्टाइतिब्रूयुः अथवातेनस्वप्नद्रष्टाउत्थानकालेयूयंहृदयेआनीताःस्वगृहेस्थितादृष्टाइत्येवमुक्ताःसंतस्तथेतिमन्येरन्तेतुतथानब्रुवंतिनवामन्यंते एवमपिउक्तव्यापारद्वयकल्पनेतेषांचेतनांतराणांघटादिवदज्ञानंजडत्वमपिकल्पनीयंस्यात् जडाह्यानीतादृष्टावानब्रुवंतिनमन्यंते तथाचातिगौरवंलोकविरोधश्चेतिद्वयोरर्थः ६५७ किंचचेतनांतराणांस्वप्नेअंतरागमनंबहिर्दर्शनंवास्वाप्निकशरीरवतांजाग्रद्भवशरीरवतांवातत्रनाद्यइत्याह अपितेपीति । यदितेदृश्यमानाश्चेतनाअपिनिद्राणाःनिद्रांप्राप्ताःसंतःसमकालंस्वप्नंपश्येयुस्तदातेषांहृदंतरानयनादिकंसंभावितंसंभावनायोग्यंभवेत्तच्चबाधितमितिभावः निद्राणाइतिचानशन्तंधातोःपरस्मैपदित्वादितिबोध्यम् ६५९

नद्वितीयइत्याह हृदयति । एतान्चेतनान्स्वप्नेंतर्बहिर्वापश्यन्स्वप्नद्रष्टाप्रबुद्धःसंस्तान्बहिःस्थितानेवपश्यतितेचबहिःस्थिताश्चेतनायादृशाःशरीरादिविशेषणैस्तादृशाःस्वप्नेनदृष्टाःकिंतुनानाविपरीतविशेषणवंतोदृष्टाइत्यर्थः तथाचस्थूलशरीरविशिष्टानांस्वप्नेहृदंतरानयनादिकंबाधितमितिभावः ६६० प्रथमेपक्षेदोषांतरमाह एवमिति । एवंतथायमपिदोषः अयंकः तेषांचेतनांतराणां युगपत्स्वप्नेपिस्वस्वापेक्षयादेशांतरेहृदयेवापरान्पश्यतांततउत्थानेविसंवादोविरुद्धज्ञानवत्ताकलहइतियावत् तस्मान्नहिसर्वेषांदेशांतरस्यहृदयदेशस्यवाएकत्वं तथाचस्वस्वहृदयेदेशांतरेवापरेषां स्थितिंप्रतिपादयतांत्वंममहृदयेऽग्रागतःमैवंवदत्वमेवममहृदयआगतइत्याद्याकारकःकथंकलहोनभवेदित्यर्थः ६६१ फलितमाह ततइति । ततःस्वप्नदृश्यायेचेतनाःप्रमातारस्तेसर्वेवादिनोमायाकल्पितत्वेनस्वीकर्त्तव्याः कीदृशस्यवादिनः प्रपंचसत्यतावादितयामायामयतामनिच्छतोऽनंगीकुर्वतोपीत्यर्थः ६६२ चेतनन्यायमचेतनेष्वतिदिशति मायामयाइति । यथा चेतनामायामयाजाताःपूर्वयुक्त्यासिद्धास्तथाअचेतनाअपिमायामयावादिनाऽनिच्छतापिमंतव्याइत्यन्वयः ६६३ मायामयत्वंस्फुटयितुमचेतनानामपियोग्यदेशादिसंबंधलक्षणकात्स्न्याभावंदर्शयति । स्वगृहमितिचतुर्भिः । देशांतरस्थितंराजभवनंस्वगृहाभिन्नंस्वगृहदेशेकदाचित्स्वप्नद्रष्टाविलोकयतीत्यन्वयः ६६४ समुद्रमिति । विस्तीर्णंसमुद्रंस्वगृहद्वारिस्थितंविलोकयतीति ६६५

हृदयेंतर्बहिर्वापिपश्यन्नेतान्बहिःस्थितान् ॥ दिवसेपश्यतिस्वप्नेदृष्टास्तेनचतादृशाः ६६० एवंतेषामपिस्वप्नेविसंवादोमहान्भवेत् ॥ स्वस्यदेशांतरेस्वप्नान्हृदयेन्नापिपश्यताम् ६६१ ततोमायामयाःसर्वेबहिर्वाहृदिवास्थिताः ॥ स्वप्नदृश्याश्चेतनायेवादिनोऽनिच्छतोपिते ६६२ मायामयायथाजाताश्चेतनाअप्यचेतनाः ॥ मायामयास्तथैवस्युर्वादिनोऽनिच्छतोपिच ६६२ स्वगृहंराजभवनंस्वप्नद्रष्टाविलोकयेत् ॥ देशांतरस्थितंशश्वद्गृहदेशेकदाचन ६६४ समुद्रंस्वगृहद्वारिकचिदप्यवलोकयेत् ॥ स्थितंयोजनसाहस्रंबहुकल्लोलभूषितम् ६६५ अगाधंसरितांनाथमधस्ताल्लक्षयोजनम् ॥ अनेनवपुषाक्कापिगुल्फमात्रंविलंघयेत् ६६६ विलंघ्यचक्कचित्तुनीलपर्वतमग्रतः ॥ पश्येदित्यादिकंसर्वंतत्रासत्स्वप्नगःपुमान् ६६७ तेनमायामयंसर्वंस्वप्नदृश्यंजडाजडम् ॥ स्वात्मनोदेहसहितंकारणंसुखदुःखयोः ६६८ मायामयत्वेसंजातेविश्वस्मिन्नहिजडाजडे ॥ स्वप्नद्रष्टैवमायावीवर्ततैतद्धिसुस्थितम् ६६९ तथाचसतिकेनस्याद्बहिर्गत्वावलोकनम् ॥ स्वप्नस्यकेनवास्वांतर्नयनंजगतोपिच ६७० अज्ञानंयद्भवेत्तस्यस्वप्नस्यकरणादिषु ॥ सेयंमायेत्यविद्येतिकथ्यतेवेदवादिभिः ६७१

अगाधमिति । अधस्तादगाधमुपरिलक्षयोजनंचसमुद्रमनेनमानुषेणवपुषागुल्फमात्रंमन्यमानोलंघयेदिति ६६६ विलंघ्येति । नीलपर्वतःसमुद्रापरपारगोभगवतःपुरुषोत्तमस्यनरसिंहस्यस्वलीलाविग्रहस्यनिवासभूमिःप्रसिद्धस्तंपरपारेपश्येदिति आदिपदेनरात्रौसूर्योपरागादिग्रहः एवंतत्रस्वप्नेसर्वमसन्मिथ्याभूतमेवस्वप्नगःपश्यतीत्यर्थः ६६७ फलितमाह तेनेति । तेनवास्तवत्वाभावेनदेहसहितंस्वप्नदृश्यंस्वात्मनःसुखादिकारणंसर्वंमायामयमित्यन्वयः ६६८ ननुस्वप्नभावोपादानमाश्रयःकइतिचेत्सहिसर्वस्यकर्त्तेतिश्रुत्याइतराश्रयानुपपत्त्याचस्वप्नद्रष्टैवेत्याह मायामयत्वेइति । स्वप्नगतसर्वजडाजडनिष्ठेमायामयत्वेसंजातेसिद्धे सतितस्यामायायाआश्रयःस्वप्नद्रष्टैवेत्येतत्सुस्थितंश्रुत्युपपत्तिभ्यांसिद्धमित्यर्थः ६६९ एवंसतिस्वप्नद्रष्टुर्बहिर्गमनस्यविश्रांतरानयनस्यचकल्पनंवादिनोव्यर्थमित्याह तथाचेति । स्वप्नस्यस्वप्नदृश्यभावजातस्यबहिर्गत्वावलोकनंजगतःस्वांतर्नयनंचकेनप्रयोजनेनस्यात्कल्प्येतेत्यर्थः ६७० साचमायाअज्ञानरूपैवमायाचतमोरूपेत्याथर्वणश्रुतेरित्याह अज्ञानमिति । स्वप्नस्यकरणादिषुसृष्ट्यादिषुसमर्थयदज्ञानंतदेवमायाऽविद्यादिपदवाच्यमित्यर्थः ६७१

६६

स्वप्न यांयेनजाग्रत्यपिमायामयत्वंबोध्यंतदर्थमेवश्रुत्यास्वप्नमिथ्यात्वप्रतिपादनादित्याह अविद्ययेति । स्पष्टम् ६७२ स्वप्नजागरणयोरभेदएतदर्थमेवपूर्वंप्रपंचितइत्याह स्वप्नइति । आत्मनोद्रष्टृत्वेअनात्मनोदृश्यत्वेचस्वप्नजागरणयोर्नकश्चिद्विशेषइत्युक्तमितिशेषः ७७३ तथाचाविद्ययैवभयंमन्यतेइतियच्छ्रुत्योक्तंतदुपपन्नमितिनिगमयति अतइति । अतःस्वप्नस्यजाग्रदुपलक्षणत्वाज्जागरणेस्वप्नेवायद्वयंमन्यतेतदविद्ययैवमन्यतेयतोवस्तुतोऽद्वयत्वान्निर्भयइत्यन्वयः ६७४ एवंभेददर्शनलक्षणकार्यद्वारेणाविद्यास्वरूपंस्वप्नमधिकृत्यदर्शितमथयादृशात्मस्वरूपमावृत्याविद्योक्तकार्यंकरोतितत्स्वरूपंसुषुप्तिमधिकृत्यदर्शयन्नथदेवइवेत्यादेःकंडिकाशेषस्यार्थमाह एषस्वप्नइतिसप्तभिः । नाडीमार्गगम्यत्वेनोक्तयोःस्वप्नसुषुप्त्योर्मध्येस्वप्नोवर्णितोथसंप्रसादशब्दवाच्याताभिर्नाडीभिर्गम्यासुषुप्तिरुच्यतेइत्यर्थः ६७५ नाडीभिरिति । नाडीद्वारापुरीतद्वेष्टितंहृदयाकाशंगतइंद्राण्यभिन्नइंद्रोदेवएवआत्माप्रसिद्धदेवोपमोराजोपमश्चभवति । तत्रदीव्यतिद्योततइतिव्युत्पत्त्यादेवपदार्थेराजतेइतरानपेक्षयादीप्यतइतिव्युत्पत्त्याराजपदार्थंचाह स्वयमित्यादिना । स्वबोधेनस्वरूपभूतेनबोधेनस्वप्रकाशेनयतःस्वयमेवबोधितस्ततोदेवोपमइत्युक्तः यतश्चस्वयंज्योतिष्ट्वेनपरापेक्षांहित्वादेदीप्यतेऽतिशयेनदीप्यतेततोराजोपमइतिद्वयोरर्थः ६७६ । ६७७ सर्वस्मिन्निति । विक्षेपेविक्षेपशक्तिकार्येमनःपर्यंतेसर्वस्मिन्लयंगतेसतिएवंमनसोपिलीनत्वेसति

**अविद्यययायथास्वप्नेपश्यत्येषजडाजडम् ॥ तथाजागरणेप्यात्माविश्वंपश्यत्यविद्यया ६७२ स्वप्नेजागरणेनैवभेदःकोपीहदृश्यते ॥ द्रष्टृत्वेपिचदृश्यत्वआत्मनोऽनात्मनस्तथा ६७३ अतोजागरणेजंतोर्यत्स्यात्स्वप्नेपितद्वयम् ॥ मन्यतेऽविद्ययैवायंनिर्भयोद्वयवर्जितः ६७४ एषस्वप्नोत्रनाडीभिर्गत्वादेहेविलोक्यते ॥ ताभिर्गत्वात्रयासुप्तिर्लोक्यतेतन्निशामय ॥ संप्रसादइतिप्रोक्तायावस्थाभवतेमया ६७५ नाडीभिर्हृदयाकाशंपुरीतद्वेष्टितंगतः ॥ देवराजोपमोदेवइंद्राण्याभेदवर्जितः ६७६ इंद्रःस्वयंस्वबोधेनस्वप्रकाशेनबोधितः ॥ स्वयंज्योतिःपरापेक्षांहित्वादेदीप्यतेमुहुः ६७७ सर्वस्मिन्नेवविक्षेपेसमनस्केलयंगते ॥ अप्रतीतेचसत्येवंस्वात्माज्ञानेतमोनिभे ६७८ यदागत्वाप्रयात्यंतस्तादात्म्येनतदाभवेत् ॥ मुक्तेनसदृशःसर्वमहमेवेतिमन्यते ॥ दुःखैःसर्वैर्विहीनःसन्नानंदवपुषिस्थितः ६७९ सोयमस्यपरोलोकःस्वप्राप्तौप्राप्यतेहियः ॥ हृदयेयदिहाकाशंस्वप्रकाशसुखंस्थितम् ६८० तस्मात्परंचनानेनलोक्यंशास्त्रशतैरपि ॥ गुरुशास्त्रोपदेशेनलोक्यतेयद्धृदंबुजे ॥ ब्रह्मलोकादिलोकेषुतदाकाशमिदंपरम् ६८१**

तमोवद्आवरकेऽज्ञानेअप्रतीतेअल्पमस्फुटंयथाभवतितथाप्रतीतेसति अहमज्ञइत्याकारकांतःकरणवृत्त्यारूढस्यैवाज्ञानस्यस्फुटत्वात्सुषुप्तौतुसूक्ष्माज्ञानवृत्तिरज्ञानाकाराऽतोनञोऽनुदराकन्याइत्यत्रेवाल्पार्थकत्वमितिभावः ६७८ यदेति । एवंसतिहृदयस्यांतर्गत्वात्तत्रस्थितंपरमात्मानंतादात्म्यसंबंधेनयदायंजीवःप्रयातितदामुक्तेनसदृशोभवेत् । मुक्तस्यलक्षणमाह सर्वमिति । यःसर्वमात्मैवेतिविवेचितसविद्वान्मुक्तइत्यर्थः । अज्ञानमात्रशेषस्यसुप्तस्यज्ञानाग्निदग्धाज्ञानेनमुक्तेनकिंसाधर्म्यमित्याकांक्षायामाह दुःखैरिति । सर्वदुःखविवर्जितभूमानंदेस्थितिःसाधर्म्यमित्यर्थः एतेनमुक्तस्वरूपप्रदर्शनेनकारणाज्ञानमपिनात्मनःस्वभावोमुक्तौतद्व्यतिरेकादितिसूचितम् ६७९ इदमेवसुषुप्तिमुक्तिप्राप्यमात्मतत्त्वमनात्मभूतेभ्योलोकेभ्यउत्कृष्टत्वात्परमलोकपदाभिधेयमित्याह सोयमिति । यःस्वप्राप्तौस्वस्यात्मनःप्राप्तौसत्यांप्राप्यतेलभ्यतेसोयमस्यजीवस्यपरमोलोकः । किमात्मकोसावित्याकांक्षायामाह हृदयेइति । हृदयांतःस्वप्रकाशसुखरूपंयदाकाशंस्थितंवेदान्तैर्बोधितंतदात्मकइतिसंबंधः ६८० तत्रकर्मव्युत्पत्त्यालोकपदसमन्वयमाह तस्मादिति । तस्मात्सर्वांतराद्द्वितीयादात्मतत्त्वात्परंभिन्नंशास्त्रैर्लोक्यंदर्शनीयंनभवतिमिथ्यात्वात् आत्मतत्त्वंतूत्तमाधिकारिभिरिहजन्मन्येवगुरुशास्त्रोपदेशेनहृदंबुजेलोक्यतेउपासकैस्तुब्रह्मलोकादिलोकेषुगत्वालोक्यतेऽतस्तच्चिदाकाशमेवपरंलोक्यंलोकइतियावत् ६८१

सुपुप्तिमुक्तिप्राप्यात्मरूपप्रतिपादिकायास्तद्वाइत्यादिकायाएकविंशतितम्याः कंडिकायाअर्थंप्रदर्शयति एतदेवेतिपोडशभिः । एतदेवसुप्तिमुक्तिगम्यमात्मस्वरूपंछंदांस्यतिक्रांतमितिव्युत्पत्तिकेना तिच्छंदाइतिपदेनोक्तं यतोवेदयतानिच्छंदांसिगायत्र्यादीनिसकलप्रपंचप्रकाशकान्येषआत्माअत्येत्यतिक्रामतिनिर्विशेषत्वेनवाङ्मनसयोरगोचरत्वादित्यर्थः ६८२ पापमिति । यतोस्मिन्हृ दयाकाशेपरमात्मनिकिंचिदपिपापंकालत्रयेनास्तिततोऽपहतंनिरस्तंपाप्मपापंयस्मादितिव्युत्पत्तिकेनापहतपाप्मपदेनोक्तइत्यर्थः ६८३ अभयपदार्थमाह नास्येति । अस्येश्वरस्यहृदयाका शरूपस्यसर्वभेदशून्यत्वाद्यतोनकिंचिद्भयंततोऽभयमित्युक्तिरित्यर्थः ६८४ भेदज्ञानशून्यस्यभयाभावेहेतुतांविशदयति अप्यभेदस्येति । अपिचहृदयाकाशेहिस्वभावभूतत्वादभेदएवस्वप्रका शबोधेनभासते भेदस्तुपरसापेक्षत्वात्पराभावेकथंभासेत भेदज्ञानस्यकारणस्याभावेचभयंकथंस्यात् 'द्वितीयाद्वैभयंभवति' इतिश्रुतेरित्यर्थः ६८५ दुःखाभावाद्याभयत्वमित्याह अपिदुः खस्येति । अपिचइतरत्द्वितीयमपियद्भयंविभेत्यस्मादितिव्युत्पत्त्याभयहेतुर्भवतितत्स्वयंस्वभावेननभवतिकिंतुदुःखजनकत्वात्लोकेभयंस्यात् तद्भयत्वप्रयोजकंदुःखमत्रहृदयाकाशेकिमपिना स्ति कीदृशे स्वप्रकाशेइतरानपेक्षप्रकाशे अत्रहेतुगर्भविशेषणंस्वतेजसीति । आदित्यादयोहिपरतेजसः 'तस्यभासासर्वमिदंविभाति' इतिश्रुतेः 'यदादित्यगतंतेजोजगद्भासयतेखिलं । यच्चंद्रम

एतदेवभवेन्नित्यमतिच्छंदाइतीरितम् ॥ छंदांसिवेदगान्येषोह्यत्येत्यात्मामहेश्वरः ॥ मनसोवचसोयस्माद्गोचरेवर्ततेनसः ६८२ पापंकिमपिनैवास्मिन्नासीदस्ति भविष्यति ॥ ततोपहतपाप्मायंहृदयाकाशईरितः ६८३ नास्यसर्वात्मनोभेदगंधशून्यस्यकिंचन ॥ विद्यतेभयमेतस्मादभयंभवतीश्वरः ६८४ अप्यभेदस्य विज्ञानाद्भवेद्वैदोत्रकोपिन ॥ कारणाभावतस्तेनननात्मनीहभयंभवेत् ६८५ अपिदुःखस्यहेतुत्वात्स्याद्भयंनेतरत्स्वयम् ॥ नचदुःखंकिमप्यस्तिस्वप्रकाशेस्वते जसि ६८६ अपिदुःखंभवेज्ज्ञानेजातेसर्वशरीरिणाम् ॥ नचास्यविद्यतेज्ञानमैक्याद्धृदयगात्मनः ६८७ विशेषज्ञानशून्योयंयथाभवतिकामुकः ॥ गाढमालिंगि तोभीष्टयोषिताकंठलग्नया ६८८ बाह्यंकिमपिनैवायंपुत्रवित्तधनादिकम् ॥ वेत्तिनैवांतरंतद्वदात्मानंयुवतिंतथा ६८९ एवमेवपुमानेषप्राज्ञेनाकाशरूपिणा ॥ स्वप्रकाशेनतादात्म्यात्परिष्वक्तःसुखात्मना ६९० भूतभौतिकसंघातंबाह्यंवेत्तिनकिंचन ॥ नैवांतरमिमांमायामात्मानंचसुखात्मकम् ॥ इंद्राण्यासहितंय त्स्यादिन्द्रस्याकाशसंश्रयात् ६९१

सियच्चाग्नौतत्तेजोविद्धिमामकं' इतिस्मृतेश्च । तथाचपरमेश्वरत्वादत्रनकिंचिद्दुःखंतत्प्रयुक्तंभयंचेतिभावः ६८६ किंचलोकेदुःखस्यव्यापकंविशेषविज्ञानंदृष्टंअत्रहृदयाकाशेऽद्वितीयत्वेनविशेषवि ज्ञानरहितेकथंदुःखंस्यादित्याह अपिदुःखमिति । किंचसर्वशरीरिणांदुःखंविशेषविज्ञानेजातएवभवेदितिप्रसिद्धं अस्यहृदयगतस्यात्मनस्तुविशेषविज्ञानंनविद्यतेकुतऐक्यादद्वितीयत्वादित्यर्थः ६८७ यत्रनविशेषविज्ञानंतत्रनदुःखमित्यत्रश्रोतुर्जनकराजादेःप्रसिद्धंदृष्टांतमाह विशेषेतिद्वाभ्यां । यथाकामुकोभीष्टयोषितालिंगितोविशेषज्ञानशून्योभवतियतोबाह्यांतरादिकंनवेत्तीति द्वयोःसंबंधः ६८८ । ६८९ दार्ष्टांतिकेयोजयति एवमिति । यथोक्तोदृष्टांतएवमेषपुमान्जीवःसुषुप्तौहृदयाकाशरूपेणप्राज्ञेनसर्वज्ञेश्वरेणस्वप्रकाशसुखरूपेणगतादात्म्यसंबंधेनालिंगितःसन् बाह्यंभूतादिकमांतरमिंद्रियादिकंतथेमांसुप्तौशिष्यमाणांमायामज्ञानंचनवेत्तितथात्मानंसुखरूपंनवेत्ति । ननुकिंतत्सुखंयदस्यस्वरूपभूतमित्याकांक्षायामाह इंद्राण्येति । यत्सुखमिंद्राण्यासहि तंयथाभवतितथेंद्रस्यहृदयाकाशसंश्रयाद्भवति इंद्राणीसहितइंद्रोहृदयाकाशेशयनस्थानमाश्रित्ययत्सुखंलभतेतदपिविशेषतोनजानातीतियावत् इतिद्वयोरर्थः ६९० । ६९१

आप्तकामत्वादिविशेषणानामुत्तरोत्तरंहेतुभूतनामर्थंदर्शयति आप्तेत्यादिना । तदेतत्सुप्तौमुक्तौवागम्यमात्मरूपमाप्तकामंभवतीतिप्रथमार्द्धेनप्रतिज्ञा । द्वितीयार्द्धेनयत्यतोहेतोरितोऽस्मादेवरूपात्सर्वस्यविवर्त्तोपादानात्कामाःकाम्यमानपदार्थाआप्यंतेलभ्यंतेइत्यर्थकेनाप्ताःकामायत्रेतिव्युत्पत्तिरुपादानलाभेसर्वोपादेयलाभइतिन्यायानुगृहीतातत्रहेतुतयासूचिता । तृतीयार्द्धेनतुनिगमनमित्यपुनरुक्तिरित्यर्थः ६९२ उक्तार्थक्रमाप्तकामत्वमनूद्यतद्धेतुकतामात्मकामत्वस्यदर्शयति नास्येति । यथाकनकंविहायकुंडलादिकंनास्तितथाआनंदात्मरूपमेकंसर्वोपादानत्वेनाद्वयंयदेतत्स्वयंज्योतिःस्वरूपंतद्विहायपुत्रादिविषयःकामोऽस्यजीवस्यनास्तीत्यतआप्तकाममित्युक्तं ततउक्तविधाप्तकामत्वादेवइदंरूपमात्मकाममित्युक्तमित्यर्थः ६९३ कथमुक्तविधाप्तकामत्वेनात्मकामत्वमित्याकांक्षायामाह बाह्यइति । यतःपुत्रादौकल्पितेकामोनास्तीत्यतोऽनात्मनिकामाभावःसिद्धः । ततश्चपरिशेषादेतद्रूपमात्मकाममात्मैवकामःकाम्यमानोयत्रेतिव्युत्पत्तेरित्यर्थः ६९४ अकाममिति । तस्मादात्मकामत्वादेतद्रूपमकामंभवतियतोवस्तुतआत्मनिकामःकामनानविद्यते कामोह्यप्राप्तेविषयेभवतिआत्मनस्तुआत्मनास्वभावेननित्यप्राप्तेःसदाप्राप्तत्वात्सकामआत्मनिकथंस्यात्संभवेत् एतस्माद्धेतोरात्मकामंरूपमकामकमुक्तमित्यर्थः ६९५ शोकान्तरपदार्थमाहविद्यतेइतिद्वाभ्यां । यत्रस्वरूपेसर्वदुःखबीजभूतःकामोविद्यतेतत्रतेनकामेनप्रयुक्ताः

आप्तकामंतदेवस्याद्रूपंनान्यत्कथंचन ॥ पुत्राद्याःसकलाःकामाआप्यंतइतएववयत् ॥ ततोरूपमिदंज्ञेयमाप्तकामंमनीषिभिः ६९२ नास्यकश्चनकामोऽस्तिपुत्रादिविषयोयतः ॥ आनंदात्मानमेवैकंस्वयंज्योतिर्विहायहि ॥ आप्तकामंततस्त्वेतदात्मकाममुदाहृतम् ६९३ बाह्येपुत्रादिकेनास्यकामोयस्माद्धिविद्यते ॥ तेनात्काममेतत्स्यात्कामाभावादनात्मनि ६९४ अकामंवस्तुतस्तस्मात्कामोनात्मनिविद्यते ॥ अप्राप्तेविषयेकामोनित्यप्राप्तेःकथंहिसः ॥ आत्मनात्मनएतस्मादाप्तकाममकामकम् ६९५ विद्यतेयत्रकामोयंसर्वदुःखकरःसदा ॥ स्वरूपेतत्रशोकाद्याजायंतेतेनतत्रहि ६९६ अकामरूपंकेनैतच्छोकवृद्धिर्भविष्यति ॥ अशोकंततएवैतच्छोकादन्यदितीरितम् ६९७ अस्मिन्सुप्तेपरेलोकेह्यतिच्छंदःस्वरूपिणि ॥ विध्वस्तपापसंघातेसर्वदाभयवर्जिते ६९८ महिष्यावापरिष्वंगसमानानंदभाजिनि ॥ अंतर्बहिःस्थिताशेषविशेषज्ञानवर्जिते ॥ आप्तात्मकामेनिष्कामेशोकादिपरिवर्जिते ६९९ स्थूलदेहस्यजनकोजनकोनभवेदयम् ॥ जननीनैवजननीकुतोवध्वादयोहिते ७०० विषयाःसेंद्रियानैवभवेयुःस्वात्मरूपतः ॥ देवाअग्न्यादयोनैवयेवागाद्यधिदेवताः ॥ वेदाऋगादयोनैवसुप्तौवेदाभवंतिते ७०१

शोकविषादादयोदुःखभेदेजायंते तत्रसुप्त्यादौगम्यमात्मरूपंतुयतोऽकामंभवतिततःशोकादिवृद्धिःकथंस्यादित्याशयेनशोकादन्यदित्यर्थकेनशोकांतरपदेनएतद्रूपमशोकमित्युक्तमितिद्वयोरर्थः । श्रुतौशोकपदमशेआद्यजंतमितिभावः ६९६ । ६९७ अथउक्तस्यरूपस्यसर्वाध्यास्यविमुक्तत्वप्रतिपादिकायाद्वाविंशतितम्याःकंडिकायाअर्थंपूर्वकंडिकार्थानुवादपूर्वकमाह अस्मिन्नितिषोडशभिः । अस्मिन्सुप्तेसुप्तिगम्येस्वरूपेपरमलोकत्वाद्यशोकत्वांतविशेषणतयावर्णितेस्थूलदेहस्यजनकोऽजनकोभवतीत्येवंद्वयोस्तृतीयादिभिःसंबंधः आप्तात्मकामेआप्तकामेआत्मकामेचेत्यर्थः ६९८ । ६९८ स्थूलेति । वर्णितेस्वरूपेस्थूलदेहस्यजननव्यापारेणयोजनकःपितासोऽपिताभवति उक्तस्वरूपस्यस्थूलशरीरसंबंधप्रयोजकाविद्याकामकर्मातीतत्वात् एवंजनन्यादावपियोज्यं यदापाद्कौशिकस्यस्थूलशरीरस्योपादानभूतावयवकत्वेनांतरंगयोर्मातापित्रोःसंबंधत्यागस्तदाबहिरंगसंबंधवतांजायादीनांसंबंधत्यागःकिमुवाच्यइत्याह कुतइत्यादिना ७०० अथसूक्ष्मदेहसंबद्धानांसंबंधत्यागमाह विषयाइति । कर्मव्युत्पत्त्याकरणव्युत्पत्त्याचलोकपदेनोक्ताविषयाःशब्दादयःसेंद्रियाइंद्रियैःसहितास्तत्रस्वरूपेस्वात्मरूपतःस्वकीयेनविषयत्वादिरूपेणनभवेयुः तथायेवागादीनामधिदैवताअभिमानिनोऽग्न्याद्यादेवास्तेसुप्तौअदेवाभवंति तथाप्रमातृरूपेणसंबद्धावेदाःप्रमाणराजाअवेदाभवंति तन्निरूपकसूक्ष्मशरीरसंबंधातिक्रमादितिभावः ७०१

अवेदाइत्यंतेनग्रंथेनममत्वेनयेऽध्यस्यन्तेआरोप्यंतेपित्रादयस्तेषामभावउक्तः स्तेनइत्यादिग्रंथेनतुस्तेनोस्मीत्यादिरूपेणाहमित्याकारेणयेध्यस्यंतेतेषामभावउच्यतइत्याह ममाध्यासाइति । स्पष्टम् ७०२ स्तेनत्वाभिमानाभावंदर्शयति स्तेनइति । सुवर्णस्यान्यस्यवस्तुनःपश्चादेर्वायःस्तेनश्चोरःससुप्तौस्वप्रकाशसुखरूपत्वादस्तेनःस्तेनत्वाभिमानहीनोभवतीत्यर्थः ७०३ भ्रूणइति । भ्रूणशब्दोयज्ञस्यतत्कर्तुश्चवाचकः अतएवयागस्थयोर्वैश्यक्षत्रिययोर्वधेब्रह्महत्याप्रायश्चित्तमुक्तंस्मृताविंतिभावः तथाद्विजोत्तमोपिभ्रूणःतथाचविश्वः ‘अथभ्रूणोगर्भिण्यांश्रोत्रियद्विजे’ इति । तथातद्योग्योद्विजोत्तमत्वयोग्योगर्भोपिभ्रूणः अतएवस्मृतावुक्तंगर्भेअविज्ञातेब्रह्महेति एवंविधभ्रूणस्यहंतामहापातकयपिसुप्तौतत्पातकवर्जितोभवतीत्यर्थः ७०४ नकेवलमागंतुकैःपापैःसुप्तौमुक्तो भवतिकिंत्वधमजात्यारंभकैरपीत्याह ब्राह्मण्यामिति । पूर्वार्द्धेनचंडाललक्षणमुक्तं तृतीयपादेनप्रज्ञादित्वात्स्वार्थिकोणितिदर्शितं चतुर्थेनतज्जातिसंबंधाभावोक्तिरिति ७०५ क्षत्रियायामिति । एवंक्षत्रियायांमातरिशूद्रात्पितुर्योजातःसपुल्कसोथवाकश्चिदन्योऽधमजातिविशेषःपुल्कसःससुप्तावपुल्कसोभवतिश्रुतौतुस्वार्थिकाणंतत्वेनपौल्कसइत्युक्तमित्यर्थः ७०६ एवमाश्रमसंबंधाभावबो

ममाध्यासानकेप्यत्रविद्यंतेजनकादिषु ॥ यथातथाहमोध्यासानसुप्तेसंतिकेचन ७०२ स्तेनःसुवर्णस्यपुमानथवान्यस्यवस्तुनः ॥ नस्तेनःसुप्तिकालेस्यात्स्वप्रकाशसुखात्मकः ७०३ भ्रूणोयज्ञइतिप्रोक्तस्तस्यकृद्भ्रूणउच्यते ॥ द्विजोत्तमोथवागर्भस्तद्योग्योभ्रूणईरितः ॥ तस्यभ्रूणस्यहंतास्याद्भ्रूणहत्याविवर्जितः ७०४ ब्राह्मण्यांशूद्रतोजातश्चंडालइतिकथ्यते ॥ चंडालएवचांडालःसोऽचंडालोभवेदिह ७०५ क्षत्रियायांहियोजातःशूद्रात्तंपुल्कसंविदुः ॥ कश्चिज्जातिविशेषोवापुल्कसोऽपुल्कसोभवेत् ॥ पुल्कसःपौल्कसोज्ञेयोनापरःकश्चिदेवसः ७०६ श्रमणोयतिरुद्दिष्टोभवेदश्रमणोहिसः ॥ तापसोत्रवनीप्रोक्तःसुप्तौसस्यादतापसः ७०७ बहुनाकिमिहोक्तेनसुप्तौकश्चननास्त्यसौ ॥ अध्यासोममतायाःस्याद्योवास्यादहमोपिच ७०८ अहंममधियाहीनोहृदाकाशात्मतांगतः ॥ असंगःपुण्यपापाभ्यांहार्दान्शोकांस्तरत्ययम् ७०९ स्वप्नेजागरणेनित्यंशोकान्हृदयसंश्रितान् ॥ पुत्रादीष्टवियोगेनसंजातान्बहुभेदतः ७१० अनिष्टस्यापियोगेनजातान्कोटिसहस्रकान् ॥ जानन्कोनामलोकेस्मिन्स्वप्नेजागरणेपिवा ॥ हार्दान्शोकांस्तरेदेषदुःसहानग्निसंभवान् ७११ अतोविशेषविज्ञानरहितःसुप्तिमागतः ॥ तीर्णोभवतिशोकाब्धीन्हार्दान्नानाविधानपि ७१२ सुप्तौविशेषविज्ञानरहितश्चिद्वपुःपुमान् ॥ द्वैताभावादिदंसर्वंनावगच्छतिनान्यथा ७१३

धनायश्रुत्याश्रमणतापसपदाभ्यांयतिवानप्रस्थावनूद्यतदभावःसुप्तावुक्तइत्याह श्रमणइति । उद्दिष्टउक्तः ससुप्तः ७०७ उक्तानांसर्वाध्यासोपलक्षणतामाह बहुनेति । ममतायाअहमोवा अवगाहीअध्यासःकोप्यत्रसुप्तिगतेस्वरूपेनास्तीत्यन्वयः ७०८ अनन्वागतमित्यादेःकंडिकाशेषस्यार्थंवदनुक्तार्थंहेतुतयाअविद्याकामकर्मणामभावमाह अहमिति । हार्दान्कामभूलत्वेनहृदयस्यांतःकरणस्यधर्मान्शोकानयंसुप्तस्तरतिअतिक्रामतीत्यर्थः ७०९ जाग्रत्स्वप्नयोस्त्वविद्याकामकर्मसंबंधाच्छोकतरणमितिव्यतिरेकमाह स्वप्नेइतिद्वाभ्यां । इष्टानिष्टवियोगयोगाभ्यांजातानग्निजतापवद्दुःसहान्हार्दान्शोकान्स्वप्नजागरणयोरनुभवन्कथंतरेदितिद्वयोःसंबंधः ७१० । ७११ फलितमाह अतइति । स्पष्टम् ७१२ अथात्मनःस्वयंज्योतिष्ट्वेऽपिसुप्तौविशेषविज्ञानाभावोपपादिकानांत्रयोविंशतितम्यादीनामष्टानांकंडिकानांतात्पर्यार्थंदर्शयति सुप्ताविति नवभिः । चिद्वपुःस्वयंप्रकाशोयंपुमान्यत्सुप्तौचाक्षुषादिविशेषविज्ञानरहितोभवति तदित्थमवगंतव्यं इत्थंकथंद्वैतस्यविभक्तस्याभावादिदंद्रष्टजातंनपश्यतीति अन्यथास्वरूपभूतप्रकाशाभावात्तुतथानावगंतव्यमित्यर्थः ७१३

नान्यथेत्युक्तंस्फुटयति दृष्टाविति द्वाभ्यां । दृष्ट्यादिवृत्त्युद्ध्यंतपदार्थेषुचाक्षुषादिवृत्तिषुपाण्यादीतरेंद्रियवृत्तिषुचप्रतिबिंबेनानुगतायाचिच्छक्तिरस्तिसानभोवत्सर्वदानपायिनीवर्ततेतस्मात्स्वरूपभूता याश्चिच्छक्तेरनपायत्वात्सुप्तावात्माअज्ञोजडःअसन्अभावप्राप्तोवानभवतीतिद्वयोरर्थः ७१४ । ७१५ विशेषविज्ञानंह्यात्मनऔपाधिकंतदुपाधीनामिंद्रियादीनामभावेनभवतीतिदर्शयति पश्य न्नितिद्वाभ्यां । चक्षुरादिबुद्ध्यंतैःकरणैर्दर्शनादिज्ञानांतान्व्यापारांस्तथैंद्रियांतरैःपाण्यादिभिरादानादिव्यापारान्जाग्रतिसंघातसत्वकालेकुर्वाणोपिमहेश्वरःपुमान्यत्सुप्तिगोनकरोतितदुपाधिभूत विषयेंद्रियसंघातराहित्यप्रयुक्ताद्वैताभावादेवहेतोर्बोध्यंनतुसतःसद्रूपस्यात्मनश्चिदात्मकरूपस्यराहित्यादभावादितिद्वयोःसंबंधः ७१६ । ७१७ सतोप्युपाधिविशेषाभावेविशेषकार्याकरणंदृष्टांतेन स्फुटयति विद्यमानइति । यथेंधनसंनिधौदाहादिकरोपिवन्हिस्तदभावेनकरोतितथात्मासुप्तिगतइत्यर्थः ७१८ स्वयंप्रकाशरूपस्यतुनकदाचिद्विनाशइत्याह यथेति । यथावन्हेःस्वरूपभूतस्यप्र काशस्यतेजःसामान्यात्मकस्येंधननाशेपिननाशस्तथाद्रष्टुःस्वरूपभूतायादृष्टेर्नकदाचिन्नाशइत्यर्थः ७१९ तत्रहेतुमात्मनोद्रष्टुरविनाशितांसदृष्टांतमुपपादयति भावानामितिद्वाभ्यां । सर्वेषांभा वानांयत्स्वरूपंतत्स्वरूपिणोभावस्यसम्यक्स्थितौसत्यांननश्येत् यथावन्हेर्नाशएवतद्रूपनाशइत्यर्थः ७२० ततइति । ततउक्तव्याप्तेर्द्रष्टुरनाशेनाशाभावेसतितत्स्वरूपभूतायादृष्टेर्नाशोनविद्यतेनसं

दृष्टौघ्राणेचरसनेवाचिचश्रवणेपिच ॥ मनस्यपित्वगाख्येचबुद्धौचिच्छक्तिरस्तिया ७१४ इंद्रियेष्वपरेष्वेषासर्वदाप्यनपायिनी ॥ नभोवद्वर्ततेयस्मात्तस्मान्नाज्ञोनचाप्यसन् ७१५ पश्यन्जिघ्रंश्चरसयन्वदन्शृण्वन्सदैवसः ॥ मन्वानोपिस्पृशन्जानन्व्यापारानिंद्रियांतरैः ॥ अपरानपिकुर्वाणोनकरोतिमहेश्वरः ७१६ विषयेंद्रियसंघातराहित्यात्सुप्तिगःपुमान् ॥ द्वैताभावान्नचिद्रूपराहित्यादात्मनःसतः ७१७ विद्यमानोयथावन्हिर्दाहपाकप्रकाशकृत् ॥ भस्मच्छन्नोनतत्कुर्यादात्मैवंसुप्तिगःसदा ७१८ यथावन्हेःप्रकाशस्यविनाशोनैवविद्यते ॥ द्रष्टुर्दृष्टेस्तथैवस्याद्विनाशोनकदाचन ७१९ भावानांयत्स्वरूपंस्यात्तन्नश्येज्ञ्नसंस्थितौ ॥ तत्कदाचिद्यथावन्हेरनाशेनास्तिकर्हिचित् ॥ उष्णप्रकाशरूपस्यनाशोहेतुशतैरपि ७२० ततोद्रष्टुरनाशेनदृष्टेर्नाशोत्रविद्यते ॥ नचद्रष्टुर्विनाशोस्तिह्यविनाशित्वहेतुतः ७२१ भवेद्द्रष्टुर्विनाशश्चेत्सकिंकारणतोभवेत् ॥ कारणाभावतोवापिद्वेधाप्येषनसंभवेत् ७२२ आत्मनोव्यतिरिक्तस्यसत्तानाशस्यकेनसा ॥ नाशहेतोःकथंनामसैषास्यादतिदुर्भणा ७२३ स्वसजातिविजात्युत्थसर्वभेदविवर्जितः ॥ अयमात्माकथंतस्मादन्योनाशःप्रसिद्ध्यति ७२४ कथंतरांचनाशस्यकारणंयच्चदुर्भणम् ॥ कथंतमांभवेन्मानमेतयोरात्मभेदिनोः ७२५

भवति द्रष्टुस्तुविनाशोनास्तिअविनाशिशीलत्वादित्यर्थः । तथाचैवंश्रुत्यक्षरार्थः यद्वैतत्तत्रसुप्तोपुरुषोनपश्यतीतिमन्यसेनतथामंतव्यंयतस्तत्तत्रपश्यन्नेवनपश्यतितत्रविभक्तद्वैताभावान्नपश्यतीत्यु च्यतेस्वरूपप्रकाशसत्त्वात्तुपश्यन्नित्युच्यतइति एवंघ्राणादिवाक्येष्वपीति ७२१ श्रुत्युक्तमात्मनोऽविनाशित्वमुपपत्त्याविशदयति भवेदितिसप्तत्रिंशच्छ्लोकैः । योवादीआत्मनोपिविनाशोभवे दितिमन्यतेसप्रष्टव्यःकिमात्मनोनाशःकारणजन्यःकारणहीनोवा नोभयथापिसंभवतीत्यर्थः ७२२ तत्रकारणजन्यनाशपक्षंदूषयति आत्मनइतिषोडशभिः । कारणजन्योनाशइतिपक्षेपिविचार णीयं किंसनाशआत्मभिन्नआत्मरूपोवा अंत्येनाममात्रेविवादः आद्येसद्रूपादात्मनोभिन्नस्यनाशस्यतत्कारणस्यचसाप्रसिद्धासत्ताकेनमानेनस्यात्सद्भिन्नस्यासत्वात् प्रमाणंनकारकमितिवक्ष्य तीतिभावः ७२३ किंचकस्यापिपदार्थस्यात्मभेदोनसंभवति आत्मनोवस्तुपरिच्छेदहीनत्वादित्याह स्वसजातीति । स्पष्टम् ७२४ कथंतरामिति । यदानाशस्यैवसत्तादुर्लभातदातेननाशेनकार्ये णानुमेयस्यतत्कारणस्यसत्ताकथंतरांभवेत्सुतरांदुर्लभेत्यर्थः । तथाएतयोर्नाशतत्कारणयोरात्मभेदिनोरात्मभेदादसद्भावंगतयोःसाधकंमानंकथंतमांभवेत्तत्साधकमानस्यसत्तासुतमांदुर्लभेतियावन वक्ष्यमाणविधयामानसत्तायामेयाधीनत्वादितिभावः ७२५

किंचसआत्मनाशोभावरूपोऽभावरूपोवेतिविकल्प्यतत्राद्यंनिरस्यति अपिनाशइतित्रिभिः । भावत्वपक्षेपिसनाश किंघटवदनित्यःकिंवात्मवन्नित्यइतिविकल्प्यआद्यइदमुच्यते यद्यसौनाशः स्वयंभावःसन्घटोपमोघटवदनित्योभवेत्तदासनाशःस्वयंविनाशित्वेनासन्नसद्रूपःसन्नस्यआत्मनःसर्वसाक्षितयानित्यस्यनाशंकथंकुर्यादित्यर्थः ७२६ आत्मवन्नित्यत्वपक्षंनिरस्यति आत्मनेति । यदिसनाशआत्मनासदृशोभवेत्तदासनाशोनभवेत् चेतनत्वेनात्मसादृश्यात् नहिचेतनश्चेतनस्यनाशरूपोभवति तथाचायमात्मानंननाशयेदित्यर्थः ७२७ किंचसाम्यपक्षेआत्मैवतंकुतोननाशये दित्याह वैपरीत्येति । तत्रसाम्यपक्षेआत्मनैवनाशस्यनाशःकुतोनभवेदित्याकारकंवैपरीत्यप्रसंगंकोवारयेत् । कीदृशंवैपरीत्यं चेतनत्वेनहेतुनाविनिगमनाभावद्वाराप्रयुक्तमित्यर्थः ७२८ अथाभावत्वपक्षंदूषयन्किमयमभावोऽनात्मप्रतियोगिकआत्मप्रतियोगिकोवेतिविकल्प्यआद्येकात्मनःक्षतिरित्याह अभावत्वमिति । अस्यनाशस्यअभावत्वंकस्यस्यात्किंनिरूपितंस्यात् यद्यात्म भिन्ननिरूपितंतदात्रात्मव्यतिरिक्ताभावेसतिआत्मनःकिंहीनं नहिघटस्याभावेनपटेकश्चिद्विशेषोहानिसूचकोभवतीत्यर्थः ७२९ आत्मप्रतियोगिकइतिपक्षंनिरस्यति आत्मनइति । अत्रपक्षे प्यात्माकिमेकःकिंवाऽनेकः आद्येनाशस्यापिसएवात्माइतिनाशःकथमात्मनाविरुद्ध्येत अंत्येनाशेनान्येषामात्मनामपहारेपिस्वात्मानापहृतइत्यतस्तदर्थंनाशस्वरूपभूतात्मनोपहारार्थंनाशांतर

अपिनाशोभवेद्भावोयद्यसौसघटोपमः ॥ स्वयंनाशीकथंचास्यनाशंकुर्यादसन्स्वयम् ७२६ आत्मनासदृशोनाशोभवेच्चेन्नभवेद्धिसः ॥ चेतनत्वेनसादृश्यान्नात्मानंनाशयेदयम् ७२७ वैपरीत्यप्रसंगंचकोवातत्रनिवारयेत् ॥ आत्मनानाशनाशाख्यंचेतनत्वेनहेतुना ७२८ अभावत्वंचकस्यस्यादस्येत्येतद्विविच्यताम् ॥ आत्मनोव्यतिरिक्तस्ययद्ययंत्वात्मनोत्रकिम् ॥ घटाभावेननैवस्याद्विशेषःकोपिवैपटे ७२९ आत्मनश्चेत्तदर्थंस्यान्नाशांतरगवेषणम् ॥ नात्मनीदंनदृष्टंयत्घटाभावोघटेसति ७३० प्रागभावादयोभावानायंनाशःकथंचन ॥ तत्त्वेनैवात्मनोनाशःसंभवेदस्ययोगतः ७३१ प्रागभावोयदानाशस्तदात्मावर्त्ततेनच ॥ वर्त्तमानेस्वरूपेस्यान्नाशनाशोवलादिह ॥ आत्मानवर्त्ततेचेत्सनाशस्तस्यभवेन्नच ७३२ प्रागभावोनकस्यापिभावस्यात्रविनाशकः ॥ किंतुभावेननाश्योयंसर्वदोत्पत्तिकारणम् ७३३ अपिजन्मवतांदृष्टःप्रागभावोमनीषिभिः ॥ आत्मनोजन्मशून्यस्यकथमेवंभविष्यति ॥ नचनाशोस्तिसंसिद्धोजन्मयेनप्रकल्प्यते ७३४

स्यगवेषणमन्वेषणमपेक्षेतियावत्सास्यात् तथाचनाशात्मनामुत्तरोत्तरंनाशकल्पनादनवस्थेतिभावः । यद्विचोत्तरोत्तरंनाशोनकल्प्येततदात्मनाशोनस्यात्सामान्याभावोयावद्विशेषविरोधीति न्यायविरोधादित्याह नात्मनीदमिति । इदमात्मनाशइतिप्रतिज्ञातमात्मनियस्मिन्कस्मिन्नपिसतिविद्यमानेनस्यात् यथाएकत्रापिघटेसतिघटसामान्याभावोनव्यवह्रियतइत्यर्थः ७३० एवं सामान्यतोऽभावतांनिरस्यविशेषतोनिरस्यति प्रागभावादयइतिसप्तभिः । अयमात्मनाशःप्रागभावादिरूपोनभवतियतस्तत्त्वेप्रागभावादिरूपत्वेसत्यस्यनाशस्ययोगेनात्मनोनाशरूपाकाचित्क्ष तिर्नभवतीत्यर्थः ७३१ तत्रप्रागभावरूपत्वेहान्यसंभवंवर्णयति प्रागभावइतित्रिभिः । नाशस्यप्रागभावरूपताभ्युपगमेएवंवादीप्रष्टव्यः एवंकथं प्रागभावकालेकिमात्मस्वरूपंवर्त्ततेनवेति आद्येआत्मस्वरूपमेवस्वनाशंप्रतिक्षेप्स्यति अंत्येपरोक्षगालिदानवन्नाशःकिमात्मनोऽपकरिष्यति आत्मनासमंसंबंधाभावात् सतोरेवसंबंधार्हत्वादित्यर्थः ७३२ किंचोत्पादकस्वभावस्यप्राग भावस्यनाशरूपतावक्तुमयुक्तेत्याह । प्रागभावोनेति । स्पष्टम् ७३३ किंचजन्मव्याप्यःप्रागभावआत्मनिअजेकथमुच्येत नध्रुवंजन्ममृतस्यचेतिन्यायेननाशंदृष्ट्वाजन्मापिकल्प्यं नाशस्यमप्रा गसिद्धत्वाभावात् । नहिसंदिग्धेनपीनत्वेनरात्रिभोजनंकल्प्यतेइत्याह अपिजन्मवतामिति ७३४

अन्योन्याभावरूपतांनिराकरोति अन्योन्येति । यदिनाशोन्योन्याभावरूपस्तदासनाशआत्मनोविरोधीनस्यात् तत्रहेतुमात्मनस्तदाश्रयत्वमाह आश्रयइति यथाघटपटयोरन्योन्याभावःप्रतियोग्यनुयोग्याश्रितोघटपटयोराश्रययोरभावेनतिष्ठतितथात्मन्याश्रयेअसतिअविद्यमानेसतिसनतिष्ठेदित्यर्थः ७३५ अत्यंताभावरूपतांनिरस्यति अत्यंतेति । नाशस्यात्यंताभावरूपत्वेस्वीकृतेआत्मानृशृंगवदसत्त्वेनैवप्रतीयेतनचतथाप्रतीयतेअस्मीत्येवसर्वस्यात्मनोभानादित्यर्थः अयंभावः दैशिकपरिच्छेदशून्यस्यात्मनोऽत्यंताभावोऽप्युपगम्यमानःकेवलान्वय्येवाभ्युपगंतव्यः तथाचकेवलान्वय्यत्यंताभावप्रतियोगित्वलक्षणमलीकत्वमापद्येततच्चानुभवविरुद्धमिति ७३६ ध्वंसरूपतांनिराचष्टे प्रध्वंसत्वइतिद्वाभ्यां । नाशस्यध्वंसाभावरूपतायांपूर्वमुक्तोदोषगणआत्मसत्तांविहायनाशस्यसत्तादुर्लभेत्यादिकःसर्वोयोज्यः ननुध्वंसस्याभावत्वादभावपक्षोक्तदोषयोजनसंभवेपिकथंभावपक्षोक्तदोषयोजनेत्याशंक्यतस्यभावरूपतांमहीघटत्वंघटतःकपालिकाकपालकाच्चूर्णरजस्ततोणुरित्यादिविष्णुपुराणोक्तरीत्याअस्याध्यायस्यसप्तपष्टचधिकशतत्रयसंख्यापूरकश्लोकाद्युक्तयुक्त्याचसिद्धांस्मारयतिअपिकोपीति । अपिचक्कोप्यभावोभावभिन्नोनास्ति यथाघटध्वंसाभावोघटोपादानकपालात्मकइतिसंस्थितिःसिद्धांतः तथाचनित्यानित्यत्वविकल्पेनभावपक्षोक्तदूषणमपिपतत्येवेतिद्वयोरर्थः ७३७ । ७३८ कारणाजन्यनाशपक्षंदूषयति . अकारणइति । अकार

अन्योन्याभावरूपश्चेन्नाशःस्यान्नात्मनोहिसः ॥ आश्रयेसतिनैवायंस्वयंतिष्ठतिकर्हिचित् ७३५ अत्यंताभावरूपत्वेनाशस्यात्माभवेत्सदा ॥ नरशृंगोपमोनायंगम्यतेतादृशोनृभिः ७३६ प्रध्वंसत्वेचपूर्वोक्तोदोषआयातिसर्वथा ॥ अपिकोपिजगत्यस्मिन्भावादन्योनविद्यते ७३७ अभावोहिघटाभावःकपालानीतिसंस्थितिः ॥ भावत्वेपूर्वमुक्तंयद्दूषणंतत्पतेद्बलात् ७३८ अकारणोनकुत्रापिदृष्टोनाशःकथंचन ॥ कारणेपियथानाशेविकल्पस्तादृशोभवेत् ॥ दोषाअपितएवस्युस्तेनाहेतुर्नसिद्ध्यति ७३९ कारणेकारणंचेत्स्याद्धेतौहेतुपरंपरा ॥ अहेतौनित्यदैवस्यात्तद्वदात्मस्वरूपता ॥ आत्मनास्वात्मनाशादिभवेन्नैवकदाचन ७४० अपिमानंहियन्नामनाशहेत्वोःप्रकीर्तितम् ॥ तस्याऽसत्वेनसिद्धिःस्यान्नाशहेत्वोःकदाचन ४१ सत्वेसत्यपितन्मानंमेयेसत्यपिसंभवेत् ॥ विद्यमानेथवानाद्योमेयहानिप्रसंगतः ७४२

णकनाशाभ्युपगमोदृष्टविरुद्धः तथानाशेकारणजन्येस्वीकृतेयादृशोविकल्पआत्मभिदाभेदादिकोटिकःकृतोयेचतत्कोटिपुदोषाउक्तास्तेसर्वेत्रापिपक्षेस्युस्तेनोक्तदोषप्रसंगेनअहेतुर्हेतुनाकारणेनशून्योनाशोनसिद्ध्यतिनयुज्यतइत्यर्थः ७३९ सिंहावलोकनन्यायेनकारणजन्यत्वपक्षेदोषांतरमाह कारणेइति । नाशस्ययत्कारणंतत्कारणजन्यंतदजन्यंवेतिविकल्प्यप्रथमपक्षेदोषःपूर्वार्द्धेनोक्तः तदर्थस्तुकारणेकारणजन्यत्वपक्षेहेतौकारणेकारणंचेदभ्युपगम्यतेतदाहेतुपरंपरास्यात्तथाचानवस्थेति । अंत्येदोषमाह अहेताविति । अहेतौकारणस्यकारणाजन्यत्वेनित्यत्वेनआत्मत्वापत्तिः तथाचात्मास्वस्वरूपनाशेकथंहेतुःस्यादित्यर्थः ७४० नन्वात्मनाशःपूर्वोक्तयुक्तिबाधितोपियत्सत्तत्क्षणिकंयथाविद्युत्तथाचायमात्मेत्याद्यनुमानबलात्सेत्स्यतीतिचेन्न । मानस्यव्यंजकत्वमात्रस्वभावत्वेनाकारकत्वादितिदर्शयन्मानस्यमेयसत्तासापेक्षत्वंप्रपंचयति अपिमानमित्यष्टभिः । अपिचयत्त्वयास्वमतप्रसिद्धंमानंनाशहेत्वोरात्मनाशस्यतद्धेतोश्चसाधकतयाप्रकीर्तितंतस्यमानस्यसिद्धिःप्रमाणत्वलाभस्तन्नाशहेत्वोरसत्वेसतिकदाचननस्यात्तस्मान्मानविषयस्यसत्वंवक्तव्यमितिसंबंधः ७४१ ततःकिमतआह सत्वेसत्यपीति । मेयस्यसत्त्वेसत्यपिअंगीकृतेपिइदंविचारणीयंइदंकिं यत्प्रमाणंस्वप्रवृत्तेःपूर्वमसतिअविद्यमानेपिप्रमेयेसंभवेत्प्रमाणत्वेनव्यवहारार्हंभवेत् किंवाविद्यमानएवतत्रप्रथमःपक्षोनयुक्तः मेयहानिप्रसंगतः मेयंविनाप्रमाणत्वलाभेकिंमेयेनेतिमेयापलापप्रसंगादित्यर्थः ७४२

सतिचेदिति । विद्यमानएवमेयेमानंसंभवतीत्यंत्यपक्षेपिविचारणीयं किंप्रमेयस्यसत्तास्वबलात्प्रमेयस्वभावप्रभावादेवप्रयुक्ताकिंवामानबलात् मानस्वभावप्रयुक्तेत्याद्येमानंनिरर्थकं मानस्यकारकतामिच्छतोमतेइतिशेषः व्यंजकत्वेनसाफल्यस्यसिद्धांतसंमतत्वादिति । अंत्येदोषमाह बलान्मानस्येति । यदिमानस्यबलात्सत्ताभवतितर्हिअभाववद्गिराप्रतिपादकतासंबंधेनाभाववत्त्यातुच्छार्थप्रतिपादिकयेतियावत् एतादृश्यागिरावाण्यापिसासत्ताभूयादित्यर्थः ७४३ अभावप्रतिपादिकांगिरमनुमानवाक्यविधयाअभिनयति मिथिलायामिति । वंध्यापुत्रोमिथिलायांवर्त्तमानःसन्महाराज्यंकरिष्यतीतिप्रतिज्ञा जनकदौहित्रत्वात् यथान्योजनकदौहित्रइत्यर्थः ७४४ नन्वस्यागिरःप्रामाण्यमेवनास्तिकथमनयार्थसत्ताआपाद्यतइतिचेत्शृणु औत्सर्गिकस्यप्रामाण्यस्यत्रीणिबाधकानि बाधितार्थत्वमबोधकत्वंसंशयजनकत्वंच । तदुक्तंभट्टैः 'अप्रामाण्यंत्रिधाभिन्नंमिथ्यात्वाज्ञानसंशयैः' इति तत्रप्रमाणस्यकारकतामिच्छतोमतेबाधितार्थत्वंनदोषतयावाच्यंप्रमाणेनसत्यार्थसृष्ट्यातस्यकुत्राप्यसंभवात् तस्मात्तन्मतेअबोधकत्वसंशयजनकत्वेएवप्रामाण्यविरोधिनीइतिचप्रकृतवाक्येनस्तइत्याशयेनोक्तवाक्यस्यप्रामाण्यमाह प्रतिज्ञायामित्यादिना । अत्रवाक्येसाध्यविशिष्टतयाधर्मिवचनंप्रतिज्ञाइतिलक्षणलक्षितप्रतिज्ञारूपेपूर्वार्द्धेदोषानिराकांक्षत्वादयोबोधप्रतिबंधकाःकेपिनसंति अर्थबाधप्रयोजकाःप्रत्यक्षविरोधादयःप्रतिज्ञादोषाअप्यत्रनसंति यतोवंध्यापुत्रोनापुरुषोस्त्येवयतःशब्देनगम्यतेतवमानस्यकारकतांवदतोमतेबोधकतयाप्रमाणभूतेनशब्देनसोप्यारब्धइतियावत् ७४५ उक्तमाशयंविशदयति सत्तेति । यस्मात्त्वन्मतेसर्वस्यवस्तुनः

**सतिचेत्स्वबलात्तस्यसत्तामानबलेनवा ॥ स्वबलेनयदासास्यान्मानंतत्रनिरर्थकम् ॥ बलान्मानस्यचेद्भूयात्सत्तासाभाववद्गिरा ७४३ मिथिलायांमहाराज्यंवंध्यापुत्रःकरिष्यति ॥ जनकान्वयसंजातस्त्रीसुतत्वाद्यथापरः ७४४ प्रतिज्ञायांनकेप्यत्रदोषाःसंतिकथंचन ॥ वंध्यापुत्रश्चनास्त्येवशब्दतोगम्यतेयतः ७४५ सत्तामानबलेनैवयस्मात्सर्वस्यवस्तुनः ॥ वंध्यापुत्रवचोमानंबोधकत्वेनहेतुना ७४६ अतएवनहेत्वादिदोषःकोप्यत्रसंभवेत् ॥ ततोमेयबलात्सत्तानमानबलतःक्वचित् ॥ अन्यथामानमेयादिसर्वस्यादधरोत्तरम् ७४७ नचमेयस्यनाशस्यतद्धेतोर्वाकथंचन ॥ सत्तादृष्टाततोमानंनिष्फलंनाशहेतुगम् ७४८ अपिमानंभवेन्नात्रप्रत्यक्षंनापरंतथा ॥ आत्मनोऽतींद्रियत्वेनप्रत्यक्षाभावहेतुतः ७४९ आगमःकोपिनैवात्रदृश्यतेस्वात्मनाशने ॥ प्रत्यभिज्ञादिमानानिसंत्यत्रचविपर्यये ७५०**

सत्तामानबलेनैवभवतितस्मादुक्तंवंध्यापुत्रप्रतिपादकंवाक्यमपिबोधकत्वेनमानंसदर्थसत्तांकरोत्वितिशेषः ७४६ ननूक्तवाक्येप्रतिज्ञादोषाभावेपिआश्रयासिद्धत्वादयोहेतुदोषाःसंतीत्यप्रामाण्यमितिचेन्न त्वन्मतेशब्देनाश्रयादेरपिसर्जनादित्याह अतएवेति । फलितमाह ततइति । ततोवंध्यापुत्रवाक्यप्रामाण्यापत्तेर्भयात् अन्यथामानबलादेवसत्तांगीकारे अधरोत्तरंविपर्यस्तं अलीकवाक्यविरोधेनप्रमाणानामप्रामाण्यप्रसंगादितिभावः ७४७ उक्तविचारस्यफलंप्रकृतेयोजयति नचेति । त्वयात्मनाशस्तद्धेतुश्चेत्युभयंमेयंमानगम्यमिष्टंतत्तुनसंभवति उभयोःसत्ताहीनत्वेनतत्रमानस्यनिष्फलत्वात् मानफलभूतयाभिव्यक्त्याहिसतएवभवतीत्याशयः ७४८ एवमात्मनाशेमानसंभावनांसामान्यतोनिरस्यविशेषतोपिनिरस्यति अपिमानमित्यादिना । अपिचप्रत्यक्षंतदुपजीवकमनुमानादिकंचमानमात्मनाशेनसंभवति प्रतियोगिनआत्मनोऽतींद्रियत्वेनप्रत्यक्षायोग्यत्वादित्यर्थः प्रत्यक्षयोग्यतायाव्यापिकायाअभावेव्याप्यायाअनुमानादियोग्यतायाअप्यभावइतिभावः नचमनआत्मभासकंतस्यात्मभास्यतायाःप्रपंचितत्वादिति ७४९ अस्तुतर्हिप्रत्यक्षयोग्यताऽनपेक्षआगमोत्रेतिचेन्न तादृशागमानुपलब्धेरित्याह आगमइति । आत्मनाशप्रतिपादकआगमःश्रुतिवाक्यमत्रवेदेनदृश्यतेकिंतुसत्ताप्रतिपादनएवसर्वोवेदोव्यापृतइतिभावः । विपर्ययेआत्मसत्तासाधनेतुप्रत्यभिज्ञादिमानानिसंत्युपलभ्यंतइत्यर्थः ७५०

तत्रजागरणादिबुद्ध्यवस्थात्रयेबाल्यादिशरीरावस्थासुचात्मनएैक्यावगाहिनींप्रत्यभिज्ञामभिनयति अद्राक्षमितितिभिः । त्रयंनिगदव्याख्यातम् ७५१ । ७५२ । ७५३ एवमात्मनोऽविनाशित्वसाधकंप्रत्यभिज्ञालक्षणंप्रत्यक्षंदर्शितमथानुमानंनानालिंगकमाह सद्यइतित्रिभिः । जातस्यबालस्ययाःस्तन्यपानेआदिपदोक्तभयादिनेष्टासुचप्रवृत्तिरूपाःक्रियास्तालिंगभूताअतीतदेहेष्व प्यात्मनोऽविनाशित्वंपरंपरयानुमापयंतीत्यर्थः । तथाहि प्रवृत्त्यास्वकारणमिष्टसाधनताज्ञानमनुमीयते तच्चेष्टसाधनताज्ञानमन्वयव्यतिरेकज्ञानाधीनमेतज्जन्मन्यनुभवरूपेणासंभवा त्स्मृतिरूपमेववाच्यं तथाचस्मृत्यासंस्काराअनुमेयाःसंस्कारैश्चस्वाश्रयोजन्मांतरसंबंध्यात्मेति ७५४ पुण्येति । तथायेएतेविदुषांपुण्यपापक्रियासुकरणाकरणेप्रवृत्त्यप्रवृत्तीअपिशब्दात्तदनु कूलौरागद्वेषौचतान्येतान्युत्तरकालउपकारकाणिउत्तरकालिकोपकारकसंबंधिनमात्मानंविनानुपपद्यमानानिसंतिभाविदेहेष्यात्मनोविनाशाभावेलिंगानिभवंतीतिसंबंधः । अन्यथानुपपत्तिःसाध्ये नसाहचर्यनियमरूपाआदिःप्रथमंमुख्यंरूपंसहकारियेषांतानिअन्यथानुपपत्त्यादिरूपाणितानिचतानिलिङ्गानीतिविग्रहः । फलितमाह । ततएवायमित्यादिनेतिद्वयोरर्थः ७५५ । ७५६ द्रष्टे ति । यतउक्तयुक्त्याद्रष्टात्माविनाशरहितःसिद्धस्ततएवात्मस्वरूपभूताद्दृष्टिर्ननश्यति यथावन्हेरनाशेसतितत्स्वरूपभूतोष्णतेत्यर्थः ७५७ ततइति । यतआत्मस्वरूपभूताद्दृष्टिरविनाशिनी

अद्राक्षंहस्तिनंस्वप्नेयःसजागरणेधुना ॥ पश्यामिपंकजंनेलिंशृणोमिचवचस्तव ७५१ यश्चजागरणेद्राक्षंशब्दानशृणवंतथा ॥ गाढंमूढःसुषुप्तेयोनाविदंतत्रकिंचन ७५२ दृष्टवानपियःस्वप्नान्बाल्येनानाविधानपि ॥ सोधुनाजरयाग्रस्तस्तिष्ठामीहकुरूपभृत ॥ इत्यादिप्रत्यभिज्ञानंवर्त्ततेस्वात्मसंश्रयम् ७५३ सद्योजातस्यबालस्यस्तन्यपानादिकाःक्रियाः ॥ लिंगानिनाशशून्यत्वेपूर्वदेहेपिचात्मनः ७५४ पुण्यपापक्रियास्वेतेकरणाकरणेअपि ॥ विदुषांभाविदेहेपिनाशाभावेभवंतिहि ७५५ अन्यथानुपपत्त्यादिरूपलिंगान्यनेकशः ॥ आत्मनस्ततएवायंविनाशरहितःपुमान् ७५६ द्रष्टाविनाशरहितोयतोदृष्टिस्ततोनसा ॥ नश्यत्यात्मस्वरूपेयंवन्ह्यनाशेयथोष्णता ७५७ ततःसुप्तौपुमानेषद्वैतजालंनपश्यति ॥ द्वैताभावापराधेननतुदृष्टेरभावतः ७५८ यत्रद्वैतमिवाभातिस्वप्नेसुप्तीतरात्मनि ॥ मायाविनिर्मितेतद्वत्तत्समेजागरेपिच ७५९ तत्रान्यःकर्मणःकर्त्ताकर्मान्यदवगच्छति ॥ सर्वैराभ्यंतरैर्बाह्यैःकरणैर्भेदमोहतः ७६० सुप्तौतस्याप्यभावेन कथंभिन्नंप्रपद्यते ॥ स्वस्मादेकरसाद्विश्वंगंधर्वनगरोपमम् ७६१ यत्किंचित्सकलंविश्वंभूतभौतिकरूपभृत ॥ विभक्तंनात्मनःसुप्तावात्मायदवगच्छति ७६२

ततएवंबोध्यं एवंकथं एषपुमान्सुप्तौयंद्वैतजालंनपश्यतितत्रप्रयोजकोद्वैतस्यैवाभावलक्षणोपराधोनतुदृष्टेरभावस्तत्रप्रयोजकइत्यर्थः ७५८ ननुसुप्तौचितोविशेषाकारतालक्षणस्यद्वैतस्याभावएवकु तइतिचेत्तत्प्रयोजककार्याविद्याऽभावादितिदर्शयितुंकार्याविद्यायाःसविशेषताकारणत्वस्यान्वयव्यतिरेकाभ्यांस्पष्टीकरणपरायायत्रवाइत्यादिकायाएकत्रिंशत्तम्याःकंडिकायाअर्थंदर्शयति यत्रद्वैतमि तिचतुर्भिः । यत्रयस्मिन्कालेस्वप्नेस्वप्नावस्थारूपेतत्समेस्वप्नसमेजागरेजाग्रदवस्थारूपेवातद्वन्मायाविनिर्मितेमायाविनानिर्मितप्रपंचदर्शनकालेवाद्वैतमिवमिथ्याभूतंद्वैतमाभातितत्रकालेदर्शनादि क्रियाकर्त्तातत्क्रियाकर्मणोऽन्यआत्मानंभिन्नंमन्यमानःसन्स्वस्माद्भिन्नत्वेन कल्पितैःसर्वैश्चक्षुरादिभिर्बाह्याभ्यंतरकरणैःकर्मरूपादिकंस्वस्माद्भिन्नतयावगच्छति अत्रनानाविधविशेषदर्शनप्रयोजक स्तुभेदमोहोभेदाकारेणपरिणताऽविद्यैवेतिद्वयोःसंबंधः कीदृशेस्वप्नादौ सुप्तीतरात्मनिसुप्तिविलक्षणस्वरूपे ७५९ । ७६० सुप्ताविति । सुप्तौतुतस्यभेदमोहस्यापिशब्दात्कामकर्मादेश्चाभावे नस्वस्मादेकरसाद्विश्वंभिन्नतयाकथंप्रपद्येतजानीयादितिसंबंधः ७६१ तत्रहेतुतयासकलभेदकोपाधीनांसदात्मरूपकारणाद्विभागेनानवस्थानमाह यत्किंचिदिति । यतःसर्वंविश्वंसुप्तिकालेआ त्मनःसकाशाद्विभक्तंविभागेनावस्थितंनभवतियदात्मावगच्छेदित्यर्थः ७६२

अथद्वात्रिंशत्तम्याः कंडिकायाअर्थं वर्णयति । स्वसजातीतिद्वात्रिंशच्छ्लोकैः । श्रुतिगतसलिलपदेन शुद्धत्वाभिधायिना विजातीयभेदस्य एकपदेन सजातीयभेदस्याद्वैतपदेन स्वगतभेदस्य च वारणात्सुप्ता द्रष्टा एको निरंतरः सर्वभेदरहित इतियावत् एतादृशो यतो भवति अत एवायं ब्रह्मशब्दाभिधेयः स्वयंज्योतिश्च यः परः पुमान् भासमानानंदत्वेन परमपुरुषार्थरूपो लोकपदेनोक्तः स एव भवतीत्यर्थः ७६३ एवं विधउपदेशो याज्ञवल्क्येन जनकाय कृत इति श्रुतिरधिकारिजनान्प्रत्याह अनुशासनमिति । स्पष्टम् ७६४ किंविधं तदनुशासनमित्याकाराम धिकारिणां पुनरुत्थिताम् आकांक्षामालक्ष्य श्रुत्या एषास्येत्याद्युक्तं तदर्थमाह याज्ञवल्क्येनेत्यादिना । याज्ञवल्क्येन या सुप्तिरुक्ता सुप्तिगम्यमात्मस्वरूपमुक्तमितियावत् एषा सुप्तिगम्यात्मस्वरूपात्मिकाऽस्य जंतोः परमा गतिः गंतव्यं स्थानमित्यर्थः परममुत्तरार्द्धेनोक्तमिति ७६५ कैर्गंतव्येति जिज्ञासायां बहिरंगैर्यज्ञादिभिरंतरंगैः शमादिभिश्चोपकृतैः श्रवणाद्युपायैरित्याह यज्ञादिभिरिति । श्रवः श्रवणं । एषा गतिः ७६६ अस्यरूपस्य परमसंपद्रूपतामाह कुबेरस्येति । यथा लोके कुबेरस्य संपत्परमा प्रसिद्धा तथैषा सुषुप्तिः परमा संपत् यतोऽस्यां सुप्तावात्मनः सकाशात्परं भिन्नं किंचित्संपाद्यं यत्नेन साध्यं न तथा च नित्यसिद्ध

स्वसजातिविजात्युत्थभेदत्रयविवर्जनात् ॥ एको निरंतरो द्रष्टा सुप्तो भवति भूपते ॥ ब्रह्मशब्दाभिधेयोऽयं स्वयंज्योतिः परः पुमान् ७६३ अनुशासनमेवं स चकार मुनिसत्तमः ॥ जनकाय विदेहाय याज्ञवल्क्योऽतिबुद्धिमान् ७६४ याज्ञवल्क्येन या सुप्तिरुक्तैषा परमा गतिः ॥ नातः परं हि गंतव्यमस्ति लोकत्रयेषु हि ७६५ यज्ञादिभिर्महापुण्यैर्ब्रह्मचर्यादिसाधनैः ॥ श्रवादिभिस्तथोपायैर्गंतव्यैषात्मरूपिणी ७६६ कुबेरस्य यथा संपत्परमा तादृशी नृणाम् ॥ सुषुप्तिः परमा संपत्संपाद्यं नात्मनः परम् ७६७ सुषुप्तौ प्राप्यते सर्वै रेष आत्माऽस्य देहिनः ॥ परो लोको यतो नान्यल्लोकनीयं परं स्मृतम् ७६८ तरुणी रूपसंपन्ना पुत्रो वा गुणसंयुतः ॥ देहो वा मृदुलो रूपलावण्यसहितो निजः ७६९ गजैः पर्वतसंकाशैर्हयैराकाशगामिभिः ॥ मेघघोषै रथैस्तद्वत्पादातैरकुतोभयैः ७७० शंखपद्मनिधिप्रख्यैः कोशैश्चक्षयवर्जितैः ॥ कोष्ठागारैस्तथानंतैर्नानाधान्यप्रपूरितैः ७७१ अप्सरः सदृशानंतनानावारांगनागणैः ॥ वैजयंतोपमैः प्रौढप्रासादैः सुमनोहरैः ७७२ इंद्राणीसदृशस्वात्मजायासंघविराजितैः ॥ हृष्टपुष्टप्रजासंघैर्देशैरव्याहताज्ञकैः ७७३ इंद्रस्येव भवेद्राज्यमथवा स्वात्मनः सदा ॥ लोकनीयं यतो नेन सुखं संजायते नृणाम् ॥ परमो लोकनीयोऽयम् स्यात्मात्र शरीरिणः ७७४

त्वादात्मस्वरूपमेवं परमा संपत् अन्यास्तु संपद आगंतुकत्वादपरमा इतिभावः ७६७ उक्तस्यरूपस्य परमलोकतामाह सुषुप्ताविति सप्तभिः । यत्र आत्मा सुषुप्तौ सर्वैः प्राप्यते स एषोऽस्य देहिनो लोककामस्य परो लोको लोकनीयः यत इतोऽन्यद्यल्लोकनीयं तत्परमुत्कृष्टं न भवति किंत्वपकृष्टमेवेत्यर्थः ७६८ उक्तं स्फुटयन्नन्यपदार्थभूतान्कांश्चिद्दर्शयति तरुणीति । रूपादिसंपन्नास्तरुण्यादयोऽथवा वर्णितविशेषणैर्गजाद्यैरुपलक्षितमिंद्रस्येव राज्यं सदा तनं स्वात्मनः संबंधि भवेत् तत्सर्वं परं लोकनीयं न भवतीति पष्ठेनाभिसंबंधः लावण्यं मुक्तावदंगकांतिः ७६९ गजैरिति स्पष्टम् ७७० शंखेति । शंखादिनिधिस्वरूपं मार्कंडेयपुराणे द्रष्टव्यम् ७७१ अप्सर इति । स्पष्टम् ७७२ इंद्राणीति । एतत्पूर्वार्द्धमपि प्रासादविशेषणं अव्याहता अमोघा आज्ञा येषु तैस्तथा तैः ७७३ इंद्रस्येवेति । पूर्वार्द्धान्वयो दर्शितः तरुण्यादीनामपरमलोकत्वे हेतुर्द्वितीयार्द्धेनोक्तः यतोऽनेन तरुण्यादिसाधनेन लोकनीयं नृणां यत्सुखं तज्जायते जन्यमनित्यमितियावदितिवदर्थः । फलितमाह परम इति । तस्माद्यत्र सुप्तौ योऽयमात्मा स एव शरीरिणः परमो लोकनीय इति संबंधः ७७४

परमलोकपदेनयत्परमपुरुषार्थत्वमुक्तंतत्रहेतुतयापरमानंदत्वमाह परमेति । यआत्माऽमुनाशरीरिणासुप्तौप्राप्यतेसपरमानंदरूपः अस्त्वानंदत्वंपरमत्वंकथमित्यतआह परमत्वमित्यादि । यथागति रूपेणसंपद्रूपेणलोकरूपेणचपरमत्वंनासिद्धंकिंतुसिद्धमेवतथानंदरूपेणापिपरमत्वंनासिद्धंसर्वानंदाधिक्यादित्यर्थः ७७५ कथंसर्वाधिक्यमित्यतआह गतइति । उपजीवंतिआश्रित्यवर्तंते । मात्रांलेशम् ७७६ तत्रदृष्टांतमाह समुद्रस्येति । यथाकाशगतावपुंकामेघाःसमुद्रस्यजलसमष्टेर्लेशमाश्रित्यस्वरूपाभिव्यक्तिलभंतइत्यर्थः ७७७ मात्रापदार्थमभिनयति मात्रेति । यथा स्निग्धस्यघृतादेर्हस्तेगृहीत्वात्यक्तस्यापिकश्चिल्लेशोहस्तेतिष्ठतिसतस्यमात्रेत्युच्यतेइत्यर्थः ७७८ दार्ष्टांतिकेयोजयति ब्रह्मादीति । ब्रह्माहिरण्यगर्भः । स्तंबस्तृणादिगुच्छः ७७९ उक्तम र्थमुपपत्त्याविशदयन्संसारदशायामात्मनःपरमानंदतायाअभानेप्रयोजकंदर्शयति आत्मनइत्यादिना । एवंवक्ष्यमाणप्रकारेणआत्मनःपरमानंदत्वंजानीयात् । तत्रानंदत्वंसुखव्यवहारेण साधयति आनंदइति । विषयप्राप्तिजन्यत्वेनाभिमतस्यसुखनाम्नाप्रसिद्धस्यानंदपदार्थस्यसत्वेनविवादःकस्यचिदित्याशयः ७८० तस्यविषयाःकारणमितिलौकिकावदंतीत्याह अभीष्टमि ति । अशनंभक्ष्यं । तस्यसुखनामकस्य ७८१ तत्रापीदंविचार्यम् विषयाणांकिमुत्पादकत्वलक्षणंकारणत्वंकिंवाभानप्रतिबंधकापनयरूपाभिव्यंजकत्वलक्षणं तत्रनाद्यःनित्यात्मस्वरूपलक्षण

परमानंदरूपोयःसुषुप्तौप्राप्यतेमुना ॥ परमत्वंनचासिद्धंगतिसंपत्स्वरूपिणः ॥ लोकस्यानंदरूपस्यसर्वाधिक्येनहेतुना ७७५ यतःसर्वाणिभूतानिस्थावराणि चराणिच ॥ एतस्यैवोपजीवंतिमात्रामानंदरूपिणः ७६ समुद्रस्ययथामात्रामुपजीवंतिखेस्थिताः ॥ मेघानीरमुचोभूमौवर्षकालउपागते ७७ मात्रालेशः समुद्दिष्टोयथास्निग्धस्यवस्तुनः ॥ हस्तस्थितस्यसंत्यागेहस्तेतिष्ठतिकिंचन ७८ ब्रह्मादिस्तंबपर्यंताजंतवोलेशभागिनः ॥ आनंदस्यास्यतेनायमानंदःपरमः स्मृतः ७९ आत्मनःपरमानंदंजानीयादेवमत्रहि ॥ आनंदसुखनामायमस्तिकश्चिज्जनेष्विह ॥ विषयःप्राप्तितोजातोमनुजानामहर्निशम् ८० अभीष्ट मशनंतद्वल्ललनाश्वमनोरमाः ॥ पुत्रमित्रादिकंचैवकारणंतस्यकीर्तितम् ८१ यद्यप्येतैरसौनैवजायतेस्वात्मरूपकः ॥ तथापिदुःखहानिंतेकुर्वंतिविषयाःसदा ८२ आत्माज्ञानेनजंतूनांतथाबाह्यस्यदर्शनात् ॥ विषयेजायतेकामःकामाद्दुःखंचजायते ८३ विषयावाप्तितःकामोविनश्यतितदाहिसः ॥ यावदन्योनजायेत तस्मिन्नपिपरत्रवा ८४ कामस्यतस्यनाशेनतज्जंदुःखंविनश्यति ॥ यावद्दुःखविनाशोयमात्मन्यस्मिन्स्थितोभवेत ७८५

स्यानंदस्योत्पत्त्ययोगात् तस्मादंत्यःपक्षःपरिशिष्यतइत्याशयेनाह यद्यपीति । असावानंदोदुःखस्यसुखप्रतिबंधकस्यहानिंकारणापहारेणापचयम् ७८२ किंतद्दुःखकारणमितिचेत्कामइत्या ह आत्मेति । यथातृणप्रच्छादितमंभोविहायकश्चिन्मृगतृष्णामभिधावेत्तथात्मानमानंदरूपमज्ञानावृतंविहायविषयदर्शिनोकामइच्छादुःखमूलंभवतीति ७८३ विषयेति । विषयप्राप्त्यातु विषयेच्छाउपशाम्यतिसाकामोपशांतिरपितावत्तिष्ठतियावत्तस्मिन्पूर्वमिष्टेपरत्रतद्भिन्नेवाकामांतरंनजायतइति ७८४ कामस्येति । तस्यविषयगोचरस्यकामविशेषस्यनाशेतज्जंतस्मात्कामवि शेषाज्जातंदुःखंविनश्यतिसदुःखविनाशोयावदात्मनिबुद्धौतिष्ठतितावदात्मनोरूपंस्फुरेत् । कीदृशमात्मरूपम् एतावद्विक्षेपरहितंएतावताप्रतियोगिदुःखव्यक्तिमात्राकारेणविक्षेपेणरहितम् । त त्त्वज्ञानंविनाऽज्ञानानपायादज्ञानावृतंच ततआवरणानपायात्तद्विक्षेपरहितमात्मरूपमावृतंसल्लोकेसुखशब्देनव्यवह्रियतइतिद्वयोरर्थः । अयंभावः लोकेद्विविधंप्रतिबंधकम् किंचिदावरणरूपं यथारवेर्घनः किंचिद्विक्षेपरूपंयथानेत्रचांचल्यम् तथाचात्रविक्षेपस्यबुद्धिचांचल्यस्यनिवृत्तिमात्रेणाज्ञानावृतस्यैवात्मनोमेघावृतरवेरिवयद्भानंतथातत्सुखमितिलोकेव्यवह्रियतइति ७८५

७८६ अतएवेति । यतआत्मनोरूपमावृतमतएवसंसारिणामहंसुखमित्याकारोबोधोनदृश्यतइतिप्रथमदलार्थउत्तरदलद्वयेनस्फुटीकृतः ७८७ सुखस्यतारतम्यंदृष्टांतेनस्फुटयति तमोवृतइति पंचभिः । यथाएवखद्योतोमणिर्वाऽऽकाशगतःसन्यावद्देशावच्छिन्नंतमोनिहंतितावद्देशावच्छिन्नमेवचतदाकाशंस्फुरेदिति ७८८ एवमिति । एवंविषयप्राप्तिःखद्योतादिसमादुःखमिच्छाजन्यंतमोनिभमात्माकाशेकल्पितंनिहंतितावदपगतदुःखसपरिमाणमात्मरूपंसुखंजायतेविक्षेपरहितंभासतेइत्येवंतारतम्यंबोध्यमितिद्वयोरर्थः । अत्रतमोदुःखयोरावरणविक्षेपत्वरूपोऽवांतरविशेषोनविवक्षितः प्रतिबंधकतामात्रेणसाम्यस्यविवक्षितत्वादितिबोध्यम् ७८९ । ७९० एवंप्रतिबंधकाभावस्यआत्मभानेऽन्वयोदर्शितोव्यतिरेकमाह केनचिदिति । यथाकेनचिन्निमित्तेनवायुवेगादिरूपेणखद्योतादेरपायेऽपगमेसतिपुनस्तमःप्रादुर्भावादाकाशोनस्फुरति कीदृशआकाशः खद्योतादिसत्वकालेप्रतीतोपितथाकामांतरस्यआत्मानंदभानप्रतिबंधकदुःखप्रयोजकस्योत्पत्त्यात्मरूपंसुखंनभासते कीदृशं कामशांतिकालेयत्प्रतीतमितिद्वयोःसंबंधः ७९१ । ७९२ ननुकामोपशमस्यसुखप्रादुर्भावप्रयोजकत्वंनसंभवतिपीनसरोगिणश्छिक्काजन्यसुखेव्यभिचारादितिचेन्न तत्रापिछिक्कानिरोधकालेतदिच्छायाःस्फुटोपलंभेनान्यदाप्यस्फुटेच्छाकल्पनेबाधाभावादित्याह क्षुतादिजइति । क्षुतंछिक्का । तदुद्भवःतस्मिन्क्षुतादौविषयतासंबं

अज्ञानावृतमेतावद्विक्षेपरहितंस्फुरेत् ॥ आत्मरूपंततस्तत्स्यादावृतंसुखशब्दभाक् ७८६ अतएवसुखंनाहमितिबोधोनृणांभवेत् ॥ आत्मनस्त्वावृतंयस्मात्संसारेवर्ततेवपुः ॥ तेनात्मासुखरूपोहमितिबोधोनजायते ७८७ तमोवृतेयथाकाशेखद्योतोमणिरेववा ॥ यावत्तमोनिहंत्येषतावदेवचतत्स्फुरेत् ७८८ एवमेवात्रसंप्राप्तिर्यावतीविषयस्यहि ॥ तावत्कामफलंदुःखंनिहन्यादात्मनिस्थितम् ७८९ सुखंसंजायतेतावत्सर्वेषामिहदेहिनाम् ॥ तारतम्यंभवेत्तेनसुखस्यात्मस्वरूपिणः ७९० केनचिद्धिनिमित्तेनखद्योतादेरपायतः ॥ आकाशोनस्फुरेत्सोयंप्रतीतोपीहदेहिनाम् ७९१ तद्वत्कामांतरप्राप्त्यापूर्वजातंसुखंनहि ॥ प्रतीयतेसदैवात्मस्वरूपंसर्वदेहिनाम् ९२ क्षुतादिजेपिलोकेस्मिन्सुखेकामस्तदुद्भवः ॥ अस्त्येवयतएतस्यरोधाद्दृश्यतेस्फुटः ९३ ततोविषयजंनृणांतारतम्याद्यत्रास्थितम् ॥ प्रसिद्धंसुखमेतास्मिन्लोकेबुद्धिमतांसदा ॥ सुखमेवसमुद्दिष्टमानंदोनापरस्तुसः ७९४ मनुष्याणांचसर्वेषांप्रसिद्धोयोधिकःपुमान् ॥ युवादृढवपुस्तद्वद्वाग्मीमार्जुनसमोबली ७९५ सर्वज्ञोव्यासवत्तद्वत्पार्वतीपतिनासमः ॥ अश्वैर्नानाविधैर्मोक्षसंधानादिसमन्वितैः ॥ अश्विनाविवनीरोगःसिद्धएषप्रकीर्तितः ७९६

धेनोद्भवउत्पत्तिर्यस्यकामस्यसतथाकामइच्छाअस्त्येव यतएतस्यक्षुतादेर्निरोधादिकालेसस्फुटोदृश्यतइति । प्रथमादिपदेनोद्गारादिग्रहः । द्वितीयेनानुदयग्रहः ७९३ फलितमाह ततइति । ततःकामोपशमस्यसुखाविर्भावप्रयोजकत्वात्तारम्येनावस्थितंवैषयिकंसुखंलोकेप्रसिद्धंतत्सुखमात्मस्वरूपभूतानंदान्नभिन्नं यदिहिजन्यमभविष्यत्तदात्मभिन्नमभविष्यत् इदंत्वभिव्यंग्यमेवेत्यर्थः ७९४ एवंलौकिकसुखानामौपाधिकभेदभिन्नानामात्मानंदमात्रत्वंदर्शितमथेतरत्रआपेक्षिकपरमत्वप्रदर्शनपूर्वकमात्मानंदस्यनिरतिशयत्वस्पष्टीकरणपरायास्त्रयस्त्रिंशत्तम्याःकंडिकायाअर्थंपंचत्रिंशच्छ्लोकैर्वर्णयंस्तत्रमानुषानंदस्यपरमकाष्ठांदर्शयति मनुष्याणामितिसप्तभिः । यःपुमान्युवत्वादिभिर्गुणैःसर्वाधिकोभवेत्तस्ययआनंदःसद्विपदांमनुष्याणांपरमइतिपष्ठेनाभिसंबंधः । तत्रश्रुतिगतराद्धपदेनसिद्धत्वाभिधायिनासंगृहीतान्गुणान्दर्शयति युवेत्यादिनानीरोगइत्यंतेन । दृढवपुर्वज्रसंहननांगः । अश्वैःश्रीशंभुसमः मोक्षउत्सर्गः संधानंशरादौअस्त्रशक्तेराधानं । आदिपदेनोपसंहारग्रहः । एतन्मंत्रसमन्वितत्वमस्त्रविशेषणम् ७९५ । ७९६

४०६

६८

बाह्योपकरणसंपन्नत्ववाचकस्यसमृद्धपदस्यार्थमाह समृद्धइति । यथाबलानुजःश्रीकृष्णस्तत्प्रयुक्तात्साहाय्यात्पांडवोयुधिष्ठिरोऽर्जुनोवासमृद्धइतिप्रसिद्धस्तथाताद्दशाश्रीकृष्णसमेनसहाये नसंपन्नःप्रकृतेसमृद्धोज्ञेयइतिसंबंधः ७९७ अधिपतिपदार्थंचक्रवर्तिराजत्वरूपमाह सर्वेषामिति । द्विपदांमनुष्याणांतथापक्ष्यादीनांचसप्तद्वीपवासिनांसर्वेषांचक्रवर्तीस्वतंत्रोराजाभवेत्सो त्राधिपतिशब्देनोक्तइत्यर्थः ७९८ तथाभोग्यैर्भोगोपकरणैर्भोगशक्त्याचसंपन्नोभवेदित्याह मनुष्याणामिति ७९९ तस्येति । तस्यवर्णितस्य श्रुतौत्वानन्दानंदिनोरभेदविवक्षयासामा नाधिकरण्यमितिबोध्यम् ८०० तस्यपरमत्वंस्फुटयति एतद्वदिति । स्पष्टम् ८०१ वर्णितमनुष्यानंदात्शतगुणाधिकःपितृलोकवासिनामानंदइत्याह आनंदइति । जितःपूर्वकल्पार्जित श्राद्धादिकर्मणावशीकृतोलोकोयैस्तेतथेतिपितृविशेषणं स्वर्गश्चंद्रलोकः ८०२ ततोपिशतगुणोगंधर्वानंदइत्याह पितृलोकेति । पितृलोकगतानंदायदिशतसंख्याःस्युस्ततोपिगंधर्वलोकानंदव्य क्तिरधिका खंडव्यक्तिभ्यस्तत्समैकव्यक्तेराधिक्यस्यलोकेपिप्रसिद्धत्वादितिभावः । एवमग्रेपि ८०३ गंधर्वेति । गंधर्वलोकेवर्तमानोयआनंदस्तज्जातीयानांशतात्कर्मदेवानांसंबंध्यानंदो

समृद्धःपांडवोयद्वद्बलानुजसमुत्थितात् ॥ साहाय्यात्ताद्दशाज्ञेयःसहायेनसमन्वितः ७९७ सर्वेषांद्विपदांतद्वत्सप्तद्वीपनिवासिनाम् ॥ भवेदधिपतीराजाचक्रवर्तीम हायशाः ७९८ मनुष्याणांहियेभोगाअन्नपानांगनादयः ॥ तैःसंपन्नतमःसर्वैराप्तकामइवस्थितः ७९९ तस्ययोजायतेपुंसआनंदश्चक्रवर्तिनः ॥ अस्माकंद्विपदां सोयमानंदःपरमःस्मृतः ८०० एतद्वन्मनुजेष्वत्रसुखीकोपिनविद्यते ॥ यतोऽतःपरमोऽस्यायमानंदोद्विपदामिह ८०१ आनंदोयःपरःप्रोक्तोद्विपदांतच्छता दपि ॥ अधिकोजितलोकानांपितॄणांस्वर्गवासिनाम् ८०२ पितृलोकस्थितानंदशततोप्यधिकःस्मृतः ॥ गंधर्वलोकआनंदोगंधर्वाणांमहात्मनाम् ८०३ गंधर्व लोकआनंदशततोप्यधिकःस्मृतः ॥ आनंदःकर्मदेवानांयेदेवाःकर्मणाभवन् ८०४ कर्मदेवस्थितानंदशततोप्यधिकःस्मृतः ॥ आजानजानांदेवानामानंदोहिम हात्मनाम् ८०५ आजानदेवजानंदशततोप्यधिकःस्मृतः ॥ यस्मात्प्रजापतेर्लोकआनंदःपरमेष्ठिनः ८०६ विराडानंदशततोब्रह्मलोकेधिकःस्मृतः ॥ सूत्रा त्मनोमहेशस्यजगत्कारणरूपिणः ८०७ इतःपरंनदेहेषुस्थूलसूक्ष्मविभेदिषु ॥ वर्ततेधिकआनंदःकोपिकुत्रापिकर्हिचित् ८०८ अत्रवैराग्यसिद्ध्यर्थंस्थूलसूक्ष्म शरीरगः ॥ आनंदस्तारतम्येनकथ्यतेवेदवादिभिः ८०९ सार्वभौमेजनेतद्वत्पितृलोकेमनोरमे ॥ गंधर्वाणांतथालोकेकर्मदेववपुष्यपि ८१०

धिकः तेकर्मदेवाइतियेकर्मणाअग्निहोत्रादिरूपेणलब्धदेवभावाः ८०४ कर्मेति । कर्मदेवानंदानांशतादधिकआजानजदेवसंबंध्यानंदः आजानजदेवानामयेसृष्ट्यादौउत्पन्नायागदेवताअग्न्यादयः ८०५ आजानेति । आजानजदेवानंदात्प्रजापतिलोकेशतगुणाधिकआनन्दः यस्मात्प्रजापतिलोकानन्दात्परमेष्ठिनोविराजोलोकेआनन्दःशतगुणाधिकइतिसंबंधः ८०६ विराडिति । वि राडानंदशतात्सूत्रात्मनोहिरण्यगर्भस्यनिवासभूतेब्रह्मलोकेआनंदोधिकः कीदृशस्यसूत्रात्मनः स्थूलजगत्कारणस्य ८०७ शरीरिणामानंदोहिरण्यगर्भलोकानंदात्परोनास्तीत्याह इतइति । इतो हिरण्यगर्भानंदात् ८०८ वर्णितविषयायदानंदतारतम्यमुक्तंतत्फलंहिरण्यगर्भानंदाद्वैराग्यंपरमात्मानंदप्राप्तिसाधनभूतंश्रुतेर्विवक्षितमित्याह अत्रेति । अत्रहिरण्यगर्भानंदे ८०९ परमवैराग्य स्यपरमानंदप्राप्तिसाधनतांस्पष्टयितुंवैराग्यतारतम्यानुसारेणतत्तदानंदप्राप्तिप्रतिपादकानांश्रोत्रियपदघटितवाक्यानामर्थंदर्शयति सार्वभौमइतित्रिभिः । सार्वभौमेसर्वभूमेरीश्वरेजनेमनुष्येतथा पितृलोकेगंधर्वलोकेकर्मदेवशरीरेआजानजदेवशरीरेअपिशब्दोक्तप्रजापतिशरीरेविराट्शरीरेईश्वरपदोक्तहिरण्यगर्भशरीरेचयोयउत्तरोत्तरंशतगुणआनंदउक्तस्तस्यतस्यप्राप्तिसाधनंद्विविधंतत्रएकंसा–

धनंसार्वभौमत्वादिसंपादकंकर्मकालांतरभाविफलकंप्रसिद्धं । द्वितीयंसद्यःफलकमाह तमित्यादिना । तंतमानंदमयमधिकार्यपिप्राप्नोति अयंकः योवेदाध्ययनार्थज्ञानसंपन्नोनिष्पापोनिष्का
मश्च वेदाध्ययनार्थज्ञानाभ्यांहीनोहिजिज्ञासयादुःखितोभवति पापीतुपापफलभयेनाकुलः सकामेतुकामनैवसुखप्रतिबंधिका तत्रनिष्कामत्वतारतम्यानुसारेणतत्तदानंदविशेषलाभइतित्रया
णामर्थः । तथाचोक्तं 'यतोयतोविरज्यतेततस्ततोविमुच्यते' इति ८१० । ८११ । ८१२ फलितमाह यदेति । यदायमधिकारीहिरण्यगर्भानंदेशरीरिणामानंदोत्कर्षपर्यव
सानभूमावपिकामवान्नभवतितदातंहिरण्यगर्भानंदंगच्छेत् योयंहिरण्यगर्भानंदोयस्यानंदस्यलेशभूतःसआनंदःपरमात्मरूपःसर्वेषांसुषुप्तिगम्यइतिद्वयोःसंबंधः ८१३ । ८१४ सुषुप्तानंदस्यपर
मत्वमेवस्फुटयति अवाङ्मनसेति । अयंपरमात्मनःस्वरूपभूतआनंदःसूत्रजानंदादितरापेक्षयापरमादपिपरमोयतोऽवाङ्मनसगोचरस्तारतम्यवर्जितः कीदृशस्यपरमात्मनः अव्याकृतस्य
अव्याकृतोपाधिकत्वेनसविशेषस्यतत्साक्षितयानिर्विशेषस्यचेतिसंबंधः ८१५ अस्यपरमात्मानंदस्यसूचनायैवहिरण्यगर्भानंदस्यविरक्तश्रोत्रियलभ्यताश्रुतावुक्तेत्याह सूत्रतइति । देहिनःसूक्ष्मसम

आजानदेवदेहेपिविराज्यपितथेश्वरे ॥ योयआनंदउक्तोत्रतंतमाप्नोत्ययंसदा ८११ योधीतवेदोविज्ञातवेदार्थःपापवर्जितः ॥ यस्मिन्यस्मिन्हिनिष्कामआनंदेत्राति
शायिनि १२ यदासूत्रेपिनैवायमानंदावधिरूपिणि ॥ कामवानथतंगच्छेदानंदंयस्यसोपिहि १३ सूत्रानंदोभवेन्मात्राभूतोयःपरमःस्मृतः ॥ सतुसौषुप्तआनंदः
परमात्मेतिकीर्तितः ८१४ अवाङ्मनसगम्योयंतारतम्यविवर्जितः ॥ परमात्सूत्रजानंदात्परमःपरमात्मनः ॥ आनंदोऽव्याकृतस्यास्यसाक्षिणोव्याकृतस्यच
१५ सूत्रतःपरमानंदःपरस्तिष्ठतिदेहिनः ॥ इतिसिद्ध्यर्थमत्रापिश्रोत्रियःकीर्त्यतेश्रुतौ १६ आनंदमेनमादिश्यपरमानंदरूपिणम् ॥ याज्ञवल्क्यइदंवाक्यमुक्त
वान्जनकंप्रति १७ ब्रह्मलोकोमयाराजन्सुप्तोयस्तेसमीरितः ॥ सएषपरमानंदःसूत्रजादधिकोहियः १८ एवमुक्तेतदाराजायाज्ञवल्क्यमभाषत ॥ त्रिवारंचय
थापूर्वंनिजाभिप्रायदर्शकः १९ सोहंत्वयोपदिष्टोस्मिविद्यांतेगुरवेगुरोः ॥ गोसहस्रंददाम्यत्रविद्यायादक्षिणामिमाम् ॥ अतऊर्ध्वंविमोक्षायब्रूहिमेनापरंमुने २०
अभिप्रायोस्यराज्ञोयमवस्थाभवतेरिताः ॥ स्वप्नोजागरणंसुप्तिरेकस्तासुपुमानपि ॥ स्वप्रकाशोनिजाविद्याविमूढःसुखदुःखभाक् २१ वस्तुतःसंगशून्योपिकर्म
णायात्यहर्निशम् ॥ स्वप्नंजागरणंचैवसुप्तिंकर्मद्वयेक्षये ॥ श्रांतःसन्नीडतुल्येस्मिन्परमानंदआत्मनि ८२२ नैतावत्यत्रविज्ञातेमोक्षोभवतिकर्हिचित ॥ मृतिज
न्मादयोयस्मात्संतिजागरणेसदा ८२३

ष्टिशरीरात्सूत्रतःपरंयथाभवतितथापरमात्मानंदस्तिष्ठतीत्यस्यार्थस्यसिद्ध्यर्थमत्रहिरण्यगर्भानंदप्रतिपादिकायांश्रुतौश्रोत्रियउक्तविशेषणआनंदलब्धत्वेनोक्तइत्यर्थः ८१६ आनन्दमिति । स्पष्टम्
८१७ एषब्रह्मलोकइत्यादेःशेषस्यार्थमाह ब्रह्मेत्यादिना । योमयातुभ्यंसुप्तोगम्योब्रह्मलोकउक्तःसर्वोणितपरमानंदरूपएवेत्यर्थः ८१८ एवमिति । एवंमुनिनोक्तेसतिराजामुनिंप्रतितथाऽऽहस्म ।
तथाऽर्थं यथापूर्वंत्रिवारमुक्तं कीदृशोराजा निजाभिप्रायस्यवरापरिपूर्तिलक्षणस्यदर्शकःसूचकइत्यर्थः ८१९ तत्रराजवाक्यमभिनयति सोहमिति । हेमुनेसोहंत्वयाविद्यामनुशिष्टोस्मिअतस्ते
गुरवेगुरोर्दक्षिणांगोसहस्ररूपांददामि इतऊर्ध्वंविशेषेणमोक्षोयेनोपदेशेनसिद्ध्येत्तमेवोपदेशंकुर्वितिसंबंधः ८२० एवंवदतोराज्ञोभिप्रायमभिनयति अभिप्रायोस्येतिपंचभिः । हेमुनेभवतेतावदुक्तं
यत्स्वप्रकाशोवस्तुतःसंगशून्योपिपुमानविद्ययाएकोवस्थात्रयेभ्रमतितत्रापिकर्मवशेनस्वप्नंजागरणंवाऽऽप्नोति जाग्रत्स्वप्नभोगप्रदक्षयेतुश्रांतःपक्षीनीडमिवानंदरूपमात्मानंप्राप्नोतीतिद्वयोरर्थः ८२१
८२२ नैतावदिति । एतावतिअवस्थात्रयविवेकरूपेअर्थेविज्ञातेपिमोक्षोनभवतियतःशरीरांतरसंचरणस्यजन्ममरणाख्यस्यतद्धेतूनांकामानांचात्मसंबंधनिराकरणंनानोपपत्तिभिर्नकृतंतन्निराकरणा–

भावेचसंसारीपरमानंदरूपःकथंस्यात् कीदृशःसंसारी विपरीतात्मबंधनःमोक्षगम्यात्मस्वरूपाद्विपरीतकर्तृत्वभोक्तृत्वादिलक्षणशोकव्याप्तोमिथ्यात्मैववंधनंयस्यसतथेतिद्वयोरर्थः ८२३ । ८२४ यावच्चसंसारधर्मानवगाहिनिश्चयरूपंज्ञानंनजायतेतावन्मोक्षोनभवतीत्याह यावन्नेति स्पष्टम् ८२५ विज्ञायेति । एतादृशंराज्ञोभिप्रायंज्ञात्वाइदंवक्ष्यमाणप्रकारकंविचारंकुर्वन्मुनिर्भयंप्राप्तवान्तत्तरदानासामर्थ्येनमुनिर्भयंप्राप्तइत्यर्थः ८२६ इदंपदोक्तांमुनेश्चिंतामभिनयति संतीति । ममशिष्याणांमध्येजनकसमोबुद्धिमान्कोपिनास्ति योयंजनकःकामप्रश्नरूपेणैकव्यापारेणमदीयांनिखिलांविद्यांग्रहीतुमुद्यतइतिद्वयोःसंबंधः ८२७ । ८२८ निरुद्धोस्मीति । ततोबुद्धिमत्त्वादनेनकामप्रश्नवरंवृतवताराज्ञाहंनिरुद्धोवशीकृतोस्मि यतोहंसत्यपाशनिबंधनःसत्यरूपपाशाधीनस्तस्मादहंबहुकालार्जितांदुर्लभांचविद्यामस्मैवदाम्येवेति एवंविचार्यमुनिरेतद्वक्ष्यमाणंवाक्यमाहस्मेतिद्वयोरर्थः । तथाचदुर्लभायारहस्यायाश्चविद्यायाःप्रकाशनप्रसंगएवमुनेर्भयकारणमितिभावः ८२९ । ८३० एवमतीतग्रंथेनयद्यपिस्वप्नदृष्टांतेनपरलोकप्राप्तिःसुप्तिदृष्टांतेनमोक्षप्राप्तिश्चासंगस्यात्मनःसूचितातथापितत्तद्दृष्टांतमात्रमेवोक्तमित्यपरितुष्यताराज्ञादार्ष्टांतिकंश्रोतुकामेनपृष्टोमुनिस्तावत्परलोकसंबंधंनिरूपयिष्यन्नात्मनःस्वप्नजाग्रद्भूमिप्राप्तिंयथास्वप्नाज्जाग्रत्प्राप्तिस्तथाएतच्छरीरात्परशरीरप्राप्तिरित्येवंदृष्टांतभावार्हांचतुस्त्रिंशत्तम्याकंडिकयोक्तवांस्तस्याअर्थमभिनयति स्वयंज्यो

कामाश्चविविधाःपुंसोनात्मन्येतेनिराकृताः ॥ नानोपपत्तिभिर्यस्माद्भवतातःकथंभवेत् ॥ संसारीपरमानंदोविपरीतात्मबंधनः २४ यावन्नजायतेज्ञानंसंदेहादिविवर्जितम् ॥ तावन्नजायतेपुंसोमोक्षोजन्मशतैरपि २५ विज्ञायेममभिप्रायंयाज्ञवल्क्योमहामुनिः ॥ राज्ञोबुद्धिमिमांदृष्ट्वाभीतोभूच्चिंतयन्निदम् २६ संतिमेशतशःशिष्याबुद्धिमंतोनकोपिहि ॥ जनकेनामुनाराज्ञासदृशोविद्यतेमम २७ वरव्याजेनयोविद्यांनिखिलामेकहेलया ॥ गृहीतुमुद्यतोयातुवर्षपूगैर्नलभ्यते २८ निरुद्धोस्मिततोनेनसत्यपाशनिबंधनः ॥ वदाम्यस्माइमांविद्यामिदानीमेवभूभुजे २९ लब्धायाबहुकालेनगुरुशुश्रूषणान्मया ॥ इतिसंचिंत्यतंप्राहवाक्यमेतन्मुनीश्वरः ३० स्वयंज्योतिःपुमान्यस्तेमयोक्तोराजसत्तम ॥ सएवैषपुमान्बुद्धिसाक्षीदेहाख्यपंजरे ३१ सुप्तिंगत्वाप्यगत्वावास्वप्नेस्वेनैवतेजसा ॥ रत्वावध्वादिभिःसार्द्धंगत्वानाडीरनेकशः ३२ पुण्यपापंफलावस्थंसुखदुःखस्वरूपकं ॥ दृष्ट्वेनसंगरहितःस्वप्रकाशसुखात्मकः ३३ यथागतंयथादेहमेतिजागरणंपुनः ॥ अत्रभोगोपभोगायकेवलंनान्यकारणं ३४ आगतोत्रयथास्थूलदेहंकर्मक्षयेपुमान् ॥ तथात्रदेहमोक्षेस्मिन्दृष्टांतंवच्मिभूपते ३५ भवत्यत्रयथालोकेशकटंसपरिच्छदम् ॥ यियासतःपुरोध्वानंमहान्तंधनिकस्यहि ३६ वित्तैर्नानाविधैःपूर्णंबालकैश्चवधूजनैः ॥ शब्दान्नानाविधान्मुंचन्शनकैःशनकैर्व्रजेत् ८३७

तिरितिचतुर्भिः । हेराजन्योमयातुभ्यंस्वयंज्योतिःपुमान्वर्णितःसकदाचित्सुप्तिंगत्वास्वप्नंगच्छतिकदाचित्सुप्तिंविनापिस्वप्नंगच्छति एवंस्वप्नंगत्वातत्रकल्पितैर्वधूप्रभृतिभीरत्वाविहृत्यतथानानाविधनाडीपुभ्रमित्वातथाफलभावापन्नंपुण्यपापंसुखदुःखरूपंदृष्ट्वैवनतुकृत्वाअसंगत्वात्पुनःस्थूलदेहाभिमानरूपंजागरणंप्राप्नोति । किमर्थमत्रस्थूलशरीरेभोगानामुपभोगायदर्शनायैवेतिचतुर्णांसंबंधः । ८३१ । ८३२ । ८३३ । ८३४ परलोकमंतःकरणपरिवेष्टितईश्वरप्रेरितश्चगच्छतीतिसदृष्टांतंप्रतिपादयंत्याःपंचत्रिंशत्तम्याःकंडिकायाअर्थमाह आगतोत्रेतिचत्वारिंशच्छ्लोकैः । यथास्वप्नभोगप्रदकर्मणःक्षयेसत्यत्रजागरणेस्थूलदेहमागतस्तथैतच्छरीरभोगप्रदकर्मक्षयेशरीरांतरंयातीतिशेषः तत्रशरीरांतरप्राप्तौपूर्वशरीरत्यागेदृष्टांतंशृण्वित्यर्थः ८३५ दृष्टांतमभिनयति भवतीतिद्वाभ्यां । यथालोकेकस्यचिद्धनिकस्यशकटंसोपकरणंभवेत् कीदृशस्यधनिकस्य कस्याश्चित्पुरोनगरस्यमहांतमध्वानंयियासतोगंतुमिच्छतः ८३६ वित्तैरिति । तच्चशकटंनानाविधवित्तैर्बालकादिभिश्चपूर्णंनानाविधशब्दान्मुंचत्कुर्वत्सद्व्रजेत् ८३७

दार्ष्टांतिकमाह एतस्मादिति । तथापुरुषस्यधनिकस्थानीयस्यपरलोकयात्रानुकूलःसूक्ष्मदेहःपुण्यपापलक्षणैःपरिच्छदैःसंभृतःशकटस्थानीयोनानाशब्दान्कुर्वन्यातीत्यर्थः ८३८ तत्रपरलोकयात्रा कालेचिदाभासव्याप्तेनांतःकरणेनकर्मारमसंज्ञकेनकृतान्शब्दानभिनयति हासुताइत्यादिना । अत्रनीतिसंपन्नत्वादिगुणकान्पुत्रादीन्संस्मृत्यतद्वियोगेनात्मनःशोच्यताविवक्षितेत्यतोहाशब्दयोगेन पुत्रादिपुनद्वितीयेतिबोध्यं । हावित्तयत्त्वंनानाविधंमयाबहुसंक्लेशलब्धमतस्त्वद्वियोगेनममशोच्यता सुमित्राणिधियोजाड्यंहरतीत्यादिसन्मित्रलक्षणसंपन्नानि ८३९ उक्तानांवियोगेनात्मनः शोच्यतामेवाभिनयति धिङ्मामिति । एतान्विहायदूरमध्वानमेकाकिनमत्यंतंगच्छंतंमांधिगित्यन्वयः ८४० अथबाल्यादिकृतानिदुष्कृतान्यनुस्मृत्ययेशब्दाःप्रयुज्यंतेतानभिनयंस्तत्रबाल्यदुर्वृ त्तमनुवदति मयेतिनवभिः । दुर्बलबालानांभर्त्सनताडनेदेवावज्ञांचकृतवानस्मीत्यर्थः ८४१ तथाजनन्याःपरमोपकारकारिकायाबहवोपराधाःकृताइत्याह जननीति । स्पष्टम् ८४२ जनन्याहितकारितामभिनयति योनियंत्रमितिचतुर्भिः । यस्यायोनियंत्रंक्रकचवद्विदार्याहंकीटवन्निर्गतः कीदृशोहमनंतदुःखानांकारणभूतः तथाचमदुत्पत्तयेययानंतदुःखान्यंगीकृतानीतिस्पष्टं

एतस्मात्स्थूलतोदेहात्पुंसोनिर्गच्छतस्तथा ॥ सूक्ष्मोदेहोभवेत्पुण्यपापपूर्णपरिच्छदः ॥ निर्गच्छन्नतएवायंशब्दान्मुंचत्यनेकशः ८३८ हासुतानयसंपन्नाहा जायेनवयौवने ॥ हावित्तंबहुसंक्लेशलब्धंनानाविधंमया ॥ हामित्राणिसुमित्राणिहाबंधुजनसंगम ८३९ धिङ्मामेतान्विहायाद्यगच्छंतंपापकारिणम् ॥ दूरम ध्वानमत्यंतमितएकाकिनंत्विह ८४० मयाबाल्येऽतिबलिनाबालकाभर्त्सिताभृशम् ॥ ताडिताश्चापिदेवानांमस्तकेनिहितंपदम् ४१ जननीक्लेशितातद्वन्मह्यं याहितकारिणी ॥ गर्भेययाधृतःपूर्वंपाषाणइवदुःसहः ४२ योनियंत्रंविदार्याहंयस्याःक्रकचसंनिभः ॥ निर्गतोऽनंतदुःखानांकारणंकीटकोपमः ८४३ ययामूत्रं तथामेध्यंमदीयंहस्तपंकजात् ॥ स्वकीयादुद्धृतंभूरिमन्मलक्षालनायहि ४४ अन्नपानरसःस्वात्मभक्षितःस्तनसंस्थितः ॥ दत्तोमह्यंययापूर्वंजीवनायदिवानिशम् ४५ वंचयित्वापिचात्मानमन्नपानमनेकधा ॥ मह्यंदत्तंययास्नेहसंपूर्णनयनाब्जया ४६ सामयाबालभावेनराक्षसीवावधारिता ॥ ताडिताचकठोरैस्तैःकर्णबाणैः सुदुःसहैः ॥ नकृतंवचनंतस्यायथानाप्तजनेरितम् ८४७ पित्रादयस्तथावृद्धाब्राह्मणाश्चबहुश्रुताः ॥ सुहृदोबहवश्चान्येहतानिष्ठुरवाक्यतः ८४८ भक्षितान्यप्य भक्ष्याणिनिंदितानिबहून्यपि ॥ कर्माणिचकृतान्येवंबाल्यतोलोकशास्त्रयोः ८४९ यौवनेसततंचित्तेसंस्थाप्ययुवतिंप्रियाम् ॥ ध्यातवान्देववन्मूढःस्वस्यवापि परस्यच ८५० दुष्पूरेणापिलोभेनवर्द्धमानेननित्यशः ॥ हृतानिसाधुलोकानांमयावित्तानिभूरिशः ८५१

हितकारित्वम् ८४३ ययामूत्रमिति । तथाययाजनन्याममशरीरशोधनायमदीयंमूत्रंतथाअमेध्यंपुरीषंस्वकीयाद्धस्तादुद्धृतंउपरिधृतंप्रक्षेपायेतिशेषः ८४४ अन्नेति । तथाययाजनन्यास्वभ क्षितोन्नपानादिरसःक्षीररूपेणस्तनस्थितोमह्यंदत्तोमज्जीवनायेति ८४५ वञ्चयित्वेति । तथाचययाजनन्याआत्मानंवंचयित्वापिआत्मनेनदत्त्वेतियावत् अन्नादिकंमह्यंदत्तं कीदृश्या प्रेमाश्रुप्लु तनयनया ८४६ सेति सावर्णिताजननीमयाराक्षसीवदनादृता कर्णलग्नबाणवदुःसहैःकठोरवाक्यैस्ताडिताचेति तथातदीयंवचनमनाप्तवाक्यवन्नानुष्ठितम् ८४७ तथापित्रादयःक्रूरवाक्यैस्ताडिता इत्याह पित्रादयइति ८४८ भक्षितानीति । एवंअभक्ष्यभक्षणादीनिनिंदितकर्माणिकृतानि लोकशास्त्रव्यवहारयोर्बाल्यादबोधात् ८४९ यौवनानौचित्यस्मृतिपूर्वकान्शब्दानभिनयति यौवनइतिपंचभिः । यौवनेस्वकीयांपरकीयांवायुवतिंचित्तेधृत्वादेववद्ध्यातवानस्मि नेश्वरम् ८५० दुष्पूरेणेति स्पष्टम् ८५१

हिरण्यमिति । न्यायानुसारिवृत्तिमतोविप्रादेर्हिरण्यादिकंहृतवानस्मि ८५२ यूनइति । लिप्सालाभेच्छा ८५३ ब्रह्मेति । तत्रयौवनेयद्ब्रह्महत्यादिकृतंतदनंतदुःखदंभविष्यतीति ८५४ जरागतानौचित्यस्मृतिपूर्वकान्शब्दानभिनयति यदाहमितिषड्भिः । स्वांगानांसम्यक्चालनेऽशक्तः ८५५ कामातुरस्येति । तत्रावस्थायांयुवतीनामप्राप्त्याकामातुरत्वेनदुःखंतासांप्राप्तौतुशक्तिराहित्येनदुःखमभूदिति ८५६ क्रोधाग्नीति । तथातत्रावस्थायांक्रोधकालेयद्दुःखमभूत्तच्चेतनोनापुरुषःकःसहेतेति ८५७ तथातत्रलोभदुःखंततोप्यधिकमित्याह लोभेति ८५८ हृदयच्छिद्रवासिभिरतिवर्द्धमानैःकामादिभिर्हृदयंयत्कर्कटीवन्नविदीर्णंतदेवचित्रमित्याह कामइति । वृद्धस्यममहृदयेयःकामादिरभवत्तेनतद्धृदंबुजंयन्नविदारितमेतदेवचित्रमित्यन्वयः ८५९ अत्रेति । अत्रवार्द्धकेवृद्धत्वेप्राप्तेजायादयोममावज्ञांसकृमिशुनइवकृतवंतः ८६० नकेवलंजरायामेवैतेकामादयःकिंतुबाल्यादावपि तथाचतेषामुपशमासंपादनेनवृथाजन्मगतमित्याह कामइति ८६१

हिरण्यंसपशून्दारान्गृहक्षेत्रधनादिकम् ॥ हृतवानस्मिलोभेनविप्रादेर्न्यायवर्त्तिनः ८५२ यूनोममसदायातादिवसालिप्सयैवहि ॥ वधूजनसमाश्लेषाद्रात्रयोपिगतास्तथा ८५३ ब्रह्महत्यादिकंपापंयच्चतत्रमयाकृतम् ॥ नानाविधमनंतंतद्दुःखराशिफलप्रदम् ८५४ यदाहंजरयाग्रस्तःस्वांगसंचालनाक्षमः ॥ कामःक्रोधस्तथालोभस्तदामेभ्यधिकोभवत् ८५५ कामातुरस्यचलितुंशक्त्याविरहितस्यमे ॥ युवतीनामसंप्राप्त्यादुःखंप्राप्याप्यभून्महत् ८५६ क्रोधाग्निदीप्तगात्रस्यवृद्धस्याशक्तिभाजिनः ॥ यदासीन्ममदुःखंतच्चेतनःकःसहेतना ८५७ लोभाकुलितचित्तस्यह्यसमर्थस्ययन्मम ॥ दुःखमासीत्तदेवैकंब्रह्महत्याफलोपमम् ८५८ कामःक्रोधस्तथालोभोहृदयेयोभवन्मम ॥ वृद्धस्यतेनतच्चित्रंयन्नदीर्णंहृदंबुजम् ८५९ अत्रजायास्तथापुत्रावार्द्धकेसमुपस्थिते ॥ कृतवंतोममावज्ञांकृमिदष्टशुनोयथा ८६० कामःक्रोधस्तथालोभश्चतुर्थोमोहएवच ॥ बाल्यादारभ्यवर्त्ततेसर्वदानाशवर्जिताः ८६१ दिवसेदिवसेवृद्धिर्वह्नेःप्रज्वलतोयथा ॥ कामादीनांतथावृद्धिर्दिवसेदिवसेमम ८६२ एवंदीनतमावस्थागतंपापार्जनेरतम् ॥ मृत्युधीवरएषोत्रमांमीनंनेतुमागतः ८६३ गृहेक्षेत्रकलत्रादिदुर्जलेपल्वलेस्थितम् ॥ दुःखत्रयार्कसंतप्तंकामादिरजसावृतम् ८६४ हाकष्टंममगात्राणिकृंतत्येषसुनिर्घृणः ॥ सूनागृहेविनोदेनक्रकचेनपशोर्यथा ८६५ सूचीभिरिवसर्वांगंभिनत्त्यत्रहिकोपिमे ॥ हस्तौपादौचवर्त्ततेममकाष्ठसमाविमौ ८६६ नेत्रेमेवलनंप्राप्तेनाहंपश्यामिकिंचन ॥ मनसासहितान्यत्रममसर्वेंद्रियाण्यपि ॥ स्ववशानिनवर्त्ततेदुर्दांताःपशवोयथा ८६७ कंठोमेरोधितोभूरिश्लेष्मणादुःसहेनहि ॥ जाठरःपावकस्त्वेषोप्युपर्युपरिसर्पति ॥ पवनेनसमंदेहंशोषयंश्चदहंस्तथा ८६८

कामादेर्विषयप्राप्त्यातुनशांतिर्यथाहुत्यादीनामिंधनानांप्राप्त्यावह्नेरित्याह दिवसइति । प्रज्वलतोलब्धेंधनस्य ८६२ अथमरणकालिकदुःखानुसंधानजान्शब्दानाह । एवमित्यादिना । एवंकामाद्यनुपशमेनदीनतमंमांमीनंमृत्युरूपोधीवरोनेतुमागतः । कीदृशंमांमीनंगृहरूपेपल्वलेस्थितं कीदृशेगृहपल्वले कलत्रादिरूपेणदुष्टेनमलिनेनजलेनपूर्णे । पुनःकीदृशंमांमीनं दुःखत्रयरूपार्कतापतप्तं । पल्वलमीनोरजसापङ्केनमलिनोभवतितथाहंकामरूपरजसेतिद्वयोरर्थः ८६३ । ८६४ हाकष्टमिति कृंततिच्छिनत्ति एषमृत्युः यथासूनागृहेनानापशुवधस्थानेविनोदार्थंक्रकचेनपशोर्गात्राणिकृन्तेत्तद्वत् ८६५ सूचीभिरिति । भिनत्तिविद्धयति । कोपिअलक्षितः ८६६ नेत्रेइति । वलनंविपर्यासं तथासमनस्कानींद्रियाण्यप्यशिक्षितवृषभवद्वशेनसन्तीति ८६७ कफादीनांत्रयाणामुद्रेकंदर्शयति कंठइति । कफेनकंठोरोधितोनिरुद्धः उदराग्निश्चदाहरूपःपवनसहितऊर्ध्वमाक्रामतीति ८६८

तदानींतनींपीडांदृष्टान्तेनस्फुटयति दर्शंतीति । विषविशिष्टाःपुच्छकंटकायेषामेतादृशावृश्चिकाःकोटिसंख्याताःसकोपाश्चभूयोभूयोयदिदशेयुस्तज्जन्यपीडासमापीडाममवर्ततेइत्यादिशब्दान्कुर्वन्नितोस्माच्छरीराद्व्रजेदितिद्वयोःसंबंधः ८६९ । ८७० अपिवाचइति । किंचवाचोनिरोधोपियदिभवेत्तथापिघुरघुराद्याकाराःशब्दाःश्रूयंतएव अयमेवंविधशब्दमोक्तामुमूर्षुर्देहतोयात्येवपुनरिमंदेहंप्रतिनावर्त्ततेइत्यन्वयः ८७१ एवंसूक्ष्मशरीरस्यचचिदाभासस्यशकटसाम्यंप्रपंचितमथसारथिसमेनपरमेश्वरेणसंबंधंदर्शयति सुषुप्ताविति । परमानंदरूपंप्राज्ञमीश्वरम् ८७२ मरणकालेकारणोपाधिकेश्वरप्राप्तौहेतुतयाविशेषज्ञानलक्षणकारणाविद्यायाअभावमाह यथेति स्पष्टम् ८७३ ततइति । ततोविशेषज्ञानाभावरूपहेतोरेवजंतोर्मृत्युकालेप्राज्ञेनेश्वरेणकारणोपाधिकेनजंतोःसंगमःसंबंधोभवति । एतेनप्राज्ञेनतादात्म्यंसंबंधंप्राप्यवर्णितशब्दान्मुंचन्सन्अदःपरोक्षंस्थानंशरीरांतररूपमात्मनःसंबंधीनियानिकृतकर्माणितदनुसारेणपातियतोमरणकालेमुमूर्षुर्दीनधीर्भवतिकदादीनधीर्भवतीतिचेद्यदाऊर्ध्वोच्छ्वासीभवतीतिद्वयोःसंबंधः ८७४ । ८७५ अथपूर्वशरीरत्यागोत्तरशरीरप्राप्तिप्रकारप्रतिपादिकायाःषट्त्रिंशत्तम्याःकंडिकायाअर्थमाह सपूर्वमित्यादिपंचच

दर्शंतियदिगात्रेषुवृश्चिकाविषकंटकाः ॥ सर्वेपुकोटिसंख्याताभूयोभूयश्चकोपिताः ८६९ तैर्यथायादृशीनृणांतादृशीममजायते ॥ इत्यादीन्बहुशःसोपिशब्दान्कुर्वन्व्रजेदितः ८७० अपिवाचोनिरोधोपिकंठेघुरघुरादिकान् ॥ आप्राणनिर्गमंशब्दान्मुमूर्षुस्त्विहमुंचति ॥ सनावर्त्ततएवायंमुमूर्षुर्यातिदेहतः ८७१ सुषुप्तौयद्वदेवायंपरमानंदमाप्नुयात् ॥ प्राज्ञंहृदिस्थितंतद्वन्मरणेप्येषगच्छति ८७२ यथाविशेषविज्ञानरहितःसुप्तिगोभवेत् ॥ तथाविशेषविज्ञानरहितोमरणेपुमान् ८७३ ततएवसुप्तौजंतोर्भवेत्प्राज्ञनसंगमः ॥ तादात्म्यंतेनसंप्राप्यशब्दान्मुंचन्व्रजत्यदः ८७४ कृतकर्मानुसारेणस्थानंनोप्यात्मनोयतः ॥ ऊर्ध्वश्वासीयदभूयान्मुमूर्षुर्दीनधीःपुमान् ८७५ सपूर्वंदुर्बलोभूत्वाप्रायःपश्चादयंभवेत् ॥ यदाप्यस्यभवेद्देहेदौर्बल्यमणुमात्रकम् ॥ तदातज्जरयावास्याव्याधिभिर्वापिदेहिनः ८७६ तत्रदेहस्यमोक्षेस्मिन्दृष्टांतंशृणुभूपते ॥ आम्रोदुंबरसंज्ञानांपिप्पलानांयथाफलम् ॥ पक्वंवृंतात्पतेदेवप्रतीकारविवर्जितम् ८७७ एवमस्यशरीरस्यहेतोरारंभकस्यहि ॥ कर्मणःप्रक्षयेदेहीदेहमेतंप्रमुंचति ८७८ फलानांतरुभिर्यद्वत्तादात्म्यंपतनात्पुरा ॥ मरणात्पुरतस्तद्वत्स्थूलैर्देहैरिहात्मनः ८७९ तादात्म्येपियथादृष्टोवियोगस्तरुभिःसदा ॥ फलानामात्मनोप्येवंवियोगःस्याच्छरीरकैः ८८०

त्वारिंशच्छ्लोकैः । प्रायोबाहुल्येनेयंरीतिर्यत्समुमूर्षुःपूर्वंदुर्बलोभूत्वापश्चादयमूर्ध्वश्वासोपलक्षितदीनधीत्वविशिष्टोभवतीतिप्रथमदलार्थः तद्यदौर्बल्यंद्वाभ्यांहेतुभ्यांभवतिजरयाश्रुतावुपतपच्छब्दोक्तेनरोगेणवेत्याह यदापीतिदलद्वयेन ८७६ तत्रेति । तत्रोक्तदशायांपूर्वदेहत्यागेदृष्टांतोयथाआम्रादिवृक्षाणांपक्वंफलंप्रतीकारेणप्रतिरोधोपायेनवर्जितंसद्वृंताद्बंधनादवश्यंपततीति ८७७ दार्ष्टांतिकेयोजयति एवमिति । हेतोःस्थितिप्रयोजकस्यआरंभकस्यप्रारब्धफलकस्यकर्मणःप्रक्षयेसतिदेहीदेहंत्यजतीति ८७८ दृष्टांतस्वारस्यमाह फलानामिति । स्कंधादिफलपुष्पपल्लवांतानामवयवानांसमुदायरूपोहिवृक्षइत्यतःपतनात्पूर्वंफलानांवृक्षेणतादात्म्यमितिभावः तथात्मनोपिदेहेनाविद्यकंतादात्म्यमिति ८७९ नन्वभेदेनभासमानस्यशरीरस्यकथंवियोगोभवतीतिकस्यचिन्मंदमतेःशंकाप्यनेनदृष्टान्तेननिरस्तेत्याशयेनाह तादात्म्येपीति । यथापतनात्पुराफलानांतरुभिःसहतादात्म्येपिप्रतीयमानेवियोगोभवतितथाशरीरैरहंगौरइत्यादिविधयात्मतादात्म्येनभासमानैरात्मनोवियोगोभवतीत्यर्थः ८८०

एवंपूर्वंशरीरंत्यक्त्वाशरीरांतरमवश्यंयातीत्याह निराधारमितिद्वाभ्याम् । यथावृक्षफलजातंस्वस्माद्वृंताद्बंधनाद्विनिर्गतंवियुक्तंसन्निराधारंनिरालंबनंनतिष्ठतिकिंत्वाश्रितमेवावतिष्ठतेतथात्मापि पूर्वंशरीराद्विनिर्गम्यशरीरांतरंव्रजेत् तच्चशरीरांतरगमनंयथागतंपूर्वंशरीरप्राप्तिप्रकारमनतिक्रम्य तथायथादेहंपूर्वंदेहसजातीयदेहप्राप्तिमनतिक्रम्येतिद्वयोरर्थः । अत्रयथागतयथादेहपदाभ्यांप्रातयोन्यादिपदद्वयस्यार्थोदर्शितः ८८१ । ८८२ अत्रसर्वंवाक्यंसावधारणमितिन्यायेनावधारणवाचकस्यैवकारस्यनिवेशोवगुरंतरमाग्नेदित्यंशेकर्तव्योनतुयथागतमित्यंशेइत्याह यथागतंमिति । यथागतंयथादेहमितियदुक्तंतत्प्रायिकंबाहुल्याभिप्रायेणोक्तंनतुनियतंसावधारणम् देहांतरंयातीत्येतावत्तुनियतमितिसंबंधः ८८३ अथास्यश्लोकस्यार्थंस्फुटयंस्तत्रदेहांतरप्राप्तिनियमसुपपादयति ब्रह्मज्ञानमितिसप्तभिः । ब्रह्मज्ञानंविना अविनाशिनःसूक्ष्मशरीरस्याश्रयेणयेनकेनचित्स्थूलशरीरेणावश्यंभवितव्यमित्यर्थः ८८४ सूक्ष्मशरीरस्याश्रयापेक्षांविशदयति संस्कारेति । सूक्ष्मशरीरस्यसंसारदशायांद्वयीद्विविधागतिरवस्थेतियावत् । यतःसुप्त्यादिकालेसंस्काराख्यदोषभावेसूक्ष्मशरीरस्थितिःकारणाज्ञानेसंस्काररूपतयास्थितिरितियावत् अन्यदातुस्थूलशरीरालंबनेनस्थितिरिति ८८५ तत्रद्वितीयायांगतौहेतुतयाभोगार्थंसृष्टस्यसूक्ष्मस्यस्थूलंविनाभोगजननासामर्थ्यमाह यातनास्विति । यातनासुपापफलतीव्रपीडाभोगस्थानेपुनस्वर्गेषु ८८६ ननुकथंसूक्ष्मस्यगतिद्वयमेवेत्युच्यतेयतःशरीराद्बहिर्निर्गमनलक्षणोत्क्रांतिकालेतथापरलोकंप्रतिगमनकालेआत्मनउत्क्रांत्यादावुपाधिभूतत्वेनस्थितस्यसूक्ष्मस्यतृतीयापिगतिरंगीकार्या सं

निराधारंयथानैवफलंनभसितिष्ठति ॥ वृंताद्विनिर्गतंस्वस्मात्सर्ववृक्षसमुद्भवम् ८८१ एवमात्माविनिर्गम्यपूर्वस्माद्वपुषःसदा ॥ यथागतंयथादेहंवपुरंतरमाव्रजेत् ८८२ यथागतंयथादेहंप्रायिकंपरिकीर्त्यते ॥ देहाद्विनिर्गतोदेहंयात्येतन्नियतंस्मृतम् ८८३ ब्रह्मज्ञानंविनानैवसूक्ष्मंदेहंविनश्यति ॥ स्थूलंदेहंविनानैवसूक्ष्मोदेहोवतिष्ठते ८८४ संस्कारदोषभावेस्यात्स्थूलेवावपुषिस्थितिः ॥ सूक्ष्मदेहस्यसंसारेद्वयीगतिरुदाहृता ८८५ यातनासुतथास्वर्गेब्रह्मलोकेथवापिच ॥ भोगःसूक्ष्मशरीरस्यस्थूलदेहंविनानहि ८८६ सूक्ष्मेणवपुषानाम्भवनताद्गमनंबहिः ॥ स्थूलदेहस्थितिर्नैवस्थूलदेहांतरंविना ८८७ अस्तुनामगतिर्योयंभोगोदुःखफलोत्रसः ॥ सूक्ष्मदेहेनचान्यःस्यादन्नपानादिनाकृतः ८८८ गच्छन्नग्रध्रोपिनैवात्तिह्यपिमांसंमुखेस्थितम् ॥ कथंगच्छदिदंभोगंकुर्यादन्नादिसंभवम् ८८९ एतस्मात्ततएवार्यस्थूलाद्देहाद्विनिर्गतः ॥ सूक्ष्मोदेहोव्रजेद्देहंस्थूलमन्यंस्वभोगदम् ८९०

स्कारभावःस्थूलशरीरालंबनंवेत्युक्तयोर्गत्योस्तदानीमसंभवादितिचेदस्तुतादृशीसूक्ष्मशरीरावस्था तथापिसाभोगक्षमानभवतीत्याह सूक्ष्मेणेतित्रिभिः । यद्यपित्वेत्यत्रेनसूक्ष्मेणवपुषाशरीरेणस्थूलशरीराद्बहिर्निर्गमनमुत्क्रांत्यादिसंज्ञंभवतुनामतथापिभोगोपयोगिनीसूक्ष्मदेहस्थितिःस्थूलदेहांतरमन्यत्स्थूलदेहंविनानभवतीत्यर्थः ८८७ एतदेवस्फुटयति अस्त्विति । नचेति चकारोभिन्नक्रमःअन्यशब्दोत्तरंद्रष्टव्यः तथाचसूक्ष्मशरीरस्यगतिर्नामप्रसिद्धाभवतुतथापियोऽयंभोगःसुखदुःखसाक्षात्काररूपोदुःखफलःपरिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्चदुःखमेवसर्वंविवेकिनइतिपातंजलसूत्रोक्तविधयादुःखफलकः सतथान्यश्चभोगस्तत्साधनभूतोन्नपानादिनाकृतःअन्नादिजनितोपकारलक्षणःसद्विविधोपिस्थूलशरीरवियुक्तेसूक्ष्मशरीरेनस्यादितिसंबंधः ८८८ पूर्वंशरीरंपरित्यज्योत्तरशरीरप्राप्तेःपूर्वंमध्यमार्गेनकोपिभोगइत्येतदृष्टांतेनस्फुटयति गच्छन्निति । यथाभक्षणशक्तोगृध्रोपिमुखेस्थितंमांसंगच्छन्सन्नात्तिनभक्षयतिकिंतुकुत्रचित्स्थित्वैवात्ति तथाचइदंसूक्ष्मशरीरमशक्तमेतस्मात्स्थूलाद्गच्छत्सत्कथमन्नादिभोगंकुर्यादित्यन्वयः ८८९ फलितमाह एतस्मादिति । प्रथमपदंपूर्वान्वयित्वेनव्याख्यातम् ततःसूक्ष्मस्यभोगार्थंस्थूलापेक्षानियमात्सूक्ष्मोदेहःस्थूलाद्देहाद्विनिर्गतःसन्नन्यंस्थूलंदेहंस्वस्यसूक्ष्मस्यभोगोपकारकंव्रजेदेवेति ८९०

उक्तमनूद्यसजातीयशरीरप्राप्त्यंशेनियमोनास्तीत्याह ततइति । पूर्वार्द्धोक्तंयत्तन्नियतंचतुर्थपादेनतुयदुक्तंतन्नानियतमित्यन्वयः ८९१ तत्रहेतुतयामरणानंतरमनिश्चितोदयकनानाविधकर्मवशादनियतयोनिप्राप्तिदर्शनमाह नारकाइतिद्वाभ्यां । नारकानरकंभुक्त्वावतीर्णाः संसृष्टपुण्यपापोदयेमनुजाभवंतितेएवनारकाःकदाचित्केवलसुकृतोदयेदेवाअपिभवंतीति तथायेदेवास्तेपिभूमौमनुजत्वंप्राप्यनारकशरीराण्यपिप्राप्नुवंतीतिद्वयोरर्थः ८९२ । ८९३ ननुजीवैरलक्ष्यंतत्तद्योनिप्राप्तिंकोघटयतीतिचेत्सर्वज्ञईश्वरएवेतिरूपकेणदर्शयति अनंतेतिचतुर्भिः । सर्वेप्राणिरूपाःक्रीडनमर्कटाःपरमेश्वररूपेणशिशुनाविश्वकर्मणाप्रवंचकर्मकार्यंयस्यतथाभूतेनसंसाररूपेकाष्ठेनिबद्धाः कैः अनेकजन्मसुअनुष्ठितानियानिपुण्यपापानिशुभाशुभकर्माणितज्जन्यादृष्टरूपैःसूत्रैरितिद्वयोःसंबंधः ८९४ । ८९५ आकर्षयेदिति । सजगदीशःशिशुर्यस्यप्राणिनःसूत्रमदृष्टरूपमाकर्षयेत्फलाभिमुखंकुर्यात्ससर्वःप्राणीअनीश्वरःपरतंत्रस्तत्फलंप्राप्नोति ८९६ सर्वइति । प्रथमपदद्वयंपूर्वान्वयित्वेनदर्शितं ततउक्तविधयाफलप्राप्तौपारतंत्र्याद्यथागतंयथादेहंचसर्वोगच्छतीतिकथमुच्यतेतयतःसर्वईश्वरस्यवशेभवतीति ८९७ तर्हिकांयोनिमेषयास्यतीतिचेदयमस्यकर्मविपाकानुसंधाताईश्वरोनिर्मास्यतीत्याह अत

ततोदेहाद्विनिष्क्रांतोदेहीदेहांतरंव्रजेत् ॥ नियतंनैवनियतंयथादेहंयथागतम् ८९१ नारकाःप्राणिनःकेचिद्भवंतिमनुजाभुवि ॥ कदाचित्सुकृतात्स्वर्गेदेवाअपिभवंतिते ९२ कुतश्चित्पापतोभूमौदेवाअपिभवंतिच ॥ गच्छेयुर्भूगतास्तेपिकदाचिन्नरकान्बहून् ९३ अनंतभवसंजातपुण्यपापसमुत्थितैः ॥ सूत्रैर्निबद्धाःसंसारकाष्ठेक्रीडनमर्कटाः ९४ सर्वेलोकस्थिताःसर्वेप्राणिनःस्थिरजंगमाः ॥ क्रीडार्थंजगदीशेनशिशुनाविश्वकर्मणा ८९५ आकर्षयेद्धियत्सूत्रंजगदीशोयदृच्छया ॥ प्राणिनःपुण्यपापाख्यंतत्फलंयात्यनीश्वरः ८९६ सर्वःप्राणीततःकेनगच्छेद्देषयथागतं ॥ यथादेहंचसर्वोयमीश्वरस्यवशेयतः ८९७ अतईश्वरएवात्रपुण्यपापप्रवर्त्तकः ॥ तयोःफलस्यदाताचयतौदेहेचकारणम् ८९८ जंतुरेषपराधीनःकर्मपाशवशंगतः ॥ यथागतंयथादेहंकथमेयादनीश्वरः ८९९ ब्रह्माभवतियत्रायंतृणदेहस्थितःपुमान् ॥ ब्रह्मदेहस्थितस्तद्वत्तृणंभवतितत्क्षणात् ॥ ९०० ततोयंनरकेस्वर्गेभूमौनभसिवाव्रजन् ॥ नियमेनविनाशश्वद्वायोभूतोपमःपुमान् ॥ यथागतंयथादेहंनव्रजेन्नियतःसदा ९०१ प्रायेणपूर्वसंस्कारबलीयस्त्वेनहेतुना ॥ यथागतंयथादेहंदेहीदेहांतरंव्रजेत् ९०२ यथागतंयथादेहंनियमाच्चेदयंव्रजेत् ॥ पुण्यापुण्यव्यवस्थेयंव्यर्थास्याद्वैदिकीसदा ९०३ अनादाविहसंसारेप्राथम्याभावहेतुतः ॥ कस्यकिंवपुरित्येतन्नियतंनैवलभ्यते ९०४

इति । तयोःपुण्यपापयोः गतौतत्तल्लोकंप्रतीतिशेषः कारणंनिमित्तं ८९८ जंतुरिति । एयात्प्राप्नुयात् ८९९ कर्मवशत्वमेवस्फुटयति ब्रह्मेति । यत्रसंसारेतृणदेहगतोजीवःअत्यंतोत्कृष्टपुण्योदयेब्रह्माप्रजापतिभावार्हशरीरोभवेत् तथासब्रह्मातृणदेहंप्राप्नुयादतिदुष्कृतोदयेन वस्तुतस्तुयत्रेत्यव्ययमप्यर्थे 'नमर्षयेयत्रभवान्वृषलंयाजयेत्' इत्यादौदृष्टत्वात् तथाचतृणदेहस्थितोपीत्यर्थः ९०० फलितमाह ततइति । यथावायुतंत्रस्यभूतशरीरस्यननियतागतिस्तथास्वर्गादौनियमेनविनाजंतोर्गतिस्तथाचयथागतमित्याद्युक्तनियमेनसंसारेनव्रजेदित्यर्थः ९७१ तर्हिकथंश्रुतौयथागतमित्युक्तमितिचेद्यस्यपूर्वशरीरसमानस्यशरीरांतरस्यप्रापकंकर्मोद्भूतंतदभिप्रायेणेत्याह प्रायेणेति । पूर्वस्यपूर्वसमानस्यप्रापकायज्ञानकर्मणोःसंस्कारास्तेषांप्राबल्येपूर्वसमानाकारंदेहंप्राप्नुयादित्यर्थः ९०२ किंच पूर्वसमानदेहप्राप्तिनियमेधर्माधर्मयोःफलनिर्देशिशास्त्रमप्रमाणंस्यादित्याह यथागतमिति ९०३ संसारस्यानादित्वान्यथानुपपत्त्यापिसमानदेहप्राप्तिनियमोनास्तीत्याह अनादाविति । यतःसंसारेकस्यचिद्भावस्यप्राथम्यंनास्तीत्यतोहेतोःकस्यजंतोःकिंजातीयंशरीरमित्येवंपृष्टोनियमेनास्येदंशरीरमितिवक्तुंनशक्नोतीत्यर्थः ९०४

अनादित्वान्यथानुपपत्तिंस्फुटयति इदमिति । अस्यजंतोरिदंमनुष्याद्यन्यतमविशेषरूपमेवशरीरंयोग्यमित्याकारकेनियमेसतिजन्मांतरानन्वयात्संसारःसादिःस्यात्तच्चसर्ववादिनामनिष्टमित्यर्थः ९०५ संसारस्यानादितांविशदयति उत्पत्तावितिद्वादशभिः । यदाएकस्याउत्पत्तेःप्रवाहआदिमान्वक्तुंनशक्यस्तदाकिमुवाच्यमुत्पत्त्यादिसमुदायरूपस्यसंसारस्यानादित्वमितिप्रथमदलार्थः तत्रदृष्टांतोजाग्रदवस्थाप्रवाहोद्वितीयदलार्थः तत्रहेतुतयाघटीयंत्रसाम्यंतृतीयदलेनोक्तमिति ९०६ घटीयंत्रसाम्यंसत्कार्यवादेनाभिनयति उत्पन्नमिति । उत्पन्नंलब्धोत्पत्तिकंवस्तुस्थितिंवर्तमानतामायातीत्युत्पत्तिस्थित्योःक्रमनियमोवक्तुमशक्यः यतःकारणेसूक्ष्मरूपेणस्थितमेवोत्पद्यते तथाउत्पत्तिस्थित्योरनंतरंविनाशव्यवहारोदृश्यते तथाविनाशानंतरंकारणरूपेणस्थितिव्यवहारोदृश्यतेइत्यर्थः तथाचोत्पत्त्यादीनांपुनःपुनर्व्यवहारारूढत्वेनघटीयंत्रसाम्यमितिभावः ९०७ अथसंसारसादितावादिनश्चार्वाकादेर्मतपंकंप्रश्नोत्तरधारयाऽपाकरोति सादितामित्यादिना । यश्चार्वाकादिःसंसारस्यसादितांवदेत्सवादीइत्येवंप्रष्टव्यः इतिकथं कदास्यसंसारस्यादिरिति एवंपृष्टोयदासआदिकालंनजानातितदाकथंसादितांप्रतिपादयेदित्यर्थः तथाचसव्याहतप्रतिज्ञइतिभावः ९०८ स्वदेहस्येति । यदितुधृष्टतयाएवंवदेत् । एवंकथं अस्यस्वस्यात्मीयदेहस्योत्पत्तिस्तदासंसारस्यादिरिति तदापितदीयाप्रतिज्ञाव्याहतैव तदीयपित्रादीनांपूर्वंसत्त्वा

इदमस्येतिनियतौसादितासंसृतेर्भवेत् ॥ सादिताचनकस्यापिह्यभीष्टावादिनोत्रहि ९०५ उत्पत्तावपिनैवात्रप्राथम्यंजगतोस्तिहि ॥ यथाजागरणेनैवप्राथम्यंविद्यतेक्वचित् ॥ घटीयंत्रसमाएतेविसृष्टिस्थितिसंयमाः ९०६ उत्पन्नंस्थितिमायातिस्थितमुत्पद्यतेतथा ॥ उत्पन्नंचस्थितंतद्वद्विनाशमुपगच्छति ॥ विनष्टंजायतेतद्वद्विनष्टमवतिष्ठते ९०७ सादितांयोवदेद्दस्यसवक्तव्यःकदेतिच ॥ एवमुक्तोयदाकालंनैवायंप्रतिपद्यते ॥ तथाकथंभवेत्सादिःसंसारोवादिनोऽधुना ९०८ स्वदेहस्ययदोत्पत्तिस्तदेत्येवंवदेद्यदि ॥ तदापिनैवसंसारःसादिरस्यप्रसज्जते ॥ तद्देहजनकादीनांपूर्वसत्त्वेनहेतुना ९०९ स्वस्यसादिरयंभूयादितिचेत्तंवदेदिदम् ॥ संसारोभवतःकोयमभिप्रेतस्तमीरय ९१० अयंदेहइतिब्रूयाद्ययंतंवदेदिदम् ॥ नास्माभिरस्यदेहस्यसादिताविनिवार्यते ॥ किंतुदेहमिदंसर्वदेहेभ्यःप्रथमंनहि ९११ ममैतत्प्रथमंदेहमितिचेद्वक्तितंवदेत् ॥ कस्त्वंयस्यभवेऽत्रस्यादिदंहिप्रथमंवपुः ९१२ वपुषोन्यइतिप्रोक्तेवदेत्तंकुत्रसंस्थितः ॥ त्वमस्माद्वपुषःपूर्वंकुतोवाऽत्रसमागतः ९१३ आत्मन्येवस्थितःपूर्वमागतोस्मियदृच्छया ॥ एवंचेद्वक्तितंब्रूयादितःपूर्वंकुतोभवान् ९१४

दित्यर्थः ९०९ स्वस्येति । यदिपुनःसएवंब्रूयात् एवंकथं ममस्वस्यात्मनःअपेक्षयासंसारोनादिर्नतुमत्पित्राद्यपेक्षयेति तंवादिनंप्रतिआस्तिकइदंवदेत्पृच्छेत् इदंकिं भवतःसंसारःकिंरूपोऽभिमतइति ९१० अयमिति । एवंपृष्टोवादीयद्येतद्देहरूपःसंसारइतिवदेत्तंप्रत्यास्तिकइदंब्रूयात् इदंकिं एतद्देहस्यसादितास्माभिर्ननिवार्यतेकिंतुअभ्युपगम्यतएव तथाचतत्साधनेतवसिद्धसाधनं अस्माभिस्त्वेतत्साध्यतेयदयंदेहःसर्वदेहेभ्यःप्रथमोनभवतिइतःपूर्वमपिदेहपरंपरासीदितितत्तुत्वयाननिराकृतमित्यर्थः ९११ ममैतदिति । एवमुक्तोवादीयद्येवंनिरपत्रपोब्रूयात् एवंकथं ममैतद्देहंप्रथममेवेति तंप्रतिआस्तिकएवंब्रूयात् त्वंकःकिंस्वरूपोयत्स्वरूपस्यसंबंधिअत्रभवेसंसारेइदंशरीरंप्रथममुच्यतइति ९१२ वपुषइति । किंस्वरूपइतिप्रश्नेनकिंदेहरूपस्तदन्योवेतिविकल्पःसूचितः तत्राद्येममदेहइत्युक्तिविरोधःपित्रादिप्रत्यक्षविरोधश्चेत्यनुसंधायवादीयदीतिब्रूयात् इतिकिं अहंवपुषोन्योस्मीति तंप्रत्यास्तिकइतिपृच्छेत् इतिकिं त्वमस्माद्वपुषःपूर्वंकुत्रसंस्थितः अत्रशरीरेच कुतोहेतोरागतइत्यर्थः ९१३ आत्मनीति । एवंपृष्टोवादीयद्येवंवदेत् एवंकथं अहमेतच्छरीरात्पूर्वमात्मन्येवस्थितःअत्रशरीरेतुयदृच्छयाअचिंतितार्थप्रापकस्वभावेनागतइति तंप्रत्येवंब्रूयात् एवंकथं भवानितःपूर्वंदेहांतरंकथंनप्राप्तःसातेदेहलाभसाधनभूतायदृच्छावाइतःपूर्वंकुतोनाभूदिति । एवंपृष्टेयोग्यमुत्तरंनास्तीतिद्वयोरर्थः यदृच्छास्वैरितेत्यमरः ९१४

९१५ अथचैवमिति । यदिचसवादीस्मरणाभावलिंगेनातीतदेहाभावसाधनाभिप्रायेणएवंवदेत् अहमतीतंदेहंनस्मरामीति तंप्रत्येवंब्रूयात् त्वयास्मरणाभावरूपमतीतदेहाभावस्यसाधनमनेकांतंव्य भिचारवदुक्तंयतःसर्वस्यानुभूतस्यस्मृतिनियमोनास्तितथाचार्थाभावाभावेअर्थसत्स्वरूपेसत्यपिस्मरणाभावदृष्टेर्व्यभिचारःस्फुटइतिभावः ९१६ अथदेहइति । ससंसारसादितावादीयदिवपुषो न्यइतिपक्षेदोषगणंश्रुत्वादेहोहमित्याकारंदेहरूपतापक्षंवदेदवलंबेत । ननुपित्रादिप्रत्यक्षविरोधेनदूषितंपक्षंकथमवलंबेतेत्यतआह विस्मृतिमागतइति । यतःश्रुतदोषविस्मरणशीलइत्यर्थः तंप्र तिपूर्वोक्तंपित्रादिप्रत्यक्षविरोधादिकंदोषंपुनःश्रावयेदित्यर्थः ९१७ फलितमाह अनादितेति । श्रयणीयास्वीकर्तव्या अनादित्वसिद्धौपुण्यादिफलव्यवस्थासिद्धातस्यांचसत्यांयथादेहमित्या दिश्रुतिवचनंप्रायिकंप्रायोभिप्रायकमेवेतिद्वयोःसंबंधः ९१८ । ९१९ प्रायिकत्वंस्फुटयन्यथागतंयथादेहमित्यर्थकयोःश्रुतिगतप्रतिन्यायप्रतियोनिपदयोस्तात्पर्यमाह प्रतिन्यायमितित्रिभिः । प्रतिन्यायादिपदद्वयमुक्तवतीयेयंश्रुतिःसाइत्थमुत्तरश्लोकद्वयेनवक्ष्यमाणाभिप्रायवतीबोध्येत्यर्थः ९२० अनादाविति । अनादौसंसारेऽनेनपुरापूर्वंयोयज्जातीयोदेहःअधुनेदानीमिवकदाचि द्गतःप्राप्तःपुनस्तंतज्जातीयमेवप्रतिपद्यतेप्राप्नोतीत्यर्थः । अयंभावः अयंजीवोमृगादिकांयांयांयोनिंव्रजतितस्यातस्यायोनेर्व्यवहारेऽनुपदिष्टोपिकुशलोभवतीतिप्रसिद्धंतत्रपूर्वाभ्यासजन्यसंस्का

देहांतरंनसंप्राप्तोयदृच्छयावाकुतोनते ॥ एवमुक्तेनचास्यास्तिनाप्यंकिंचिदिहोत्तरम् ९१५ अथचैवंवदेन्नाहंस्मरामिस्वात्मनोवपुः ॥ अतीतमितितंब्रूयादनेकांतंत्वये रितम् ॥ अनुभूतस्यसर्वस्यस्मृतिःकस्यात्रविद्यते ९१६ अथदेहोहमित्येवंब्रूयाद्विस्मृतिमागतः ॥ सहिचेत्तंप्रतिब्रूयात्पूर्वोक्तंदूषणंपुनः ९१७ अनादिताततः सर्वैःश्रयणीयात्रसंसृतौ ॥ अनादाविहसंसारेपुण्यापुण्यव्यवस्थितिः १८ पुण्यापुण्यव्यवस्थायांयथादेहंयथागतम् ॥ नियतंनभवेत्तस्मात्प्रायिकंवचनंश्रुतेः १९ प्रतिन्यायमिदंतद्वत्प्रतियोन्यपियत्पदम् ॥ तद्वयंश्रुतिराहेत्थमभिप्रायवतीहिसा ९२० अनादाविहसंसारेयोधुनेवपुरागतः ॥ यश्चदेहःकदाचित्तुपुनस्तंप्रतिपद्य ते ९२१ नरकेब्रह्मलोकेवास्वर्गेवायेनकर्मणा ॥ गतवान्यादृशंभोगंतेपुतादृग्व्रजेत्पुनः ॥ कर्मणातादृशेनैवस्थूलदेहग्रहायहि ९२२ स्थूलदेहग्रहेतत्रकर्मिणोमर णात्परम् ॥ वक्ष्यामियमहंतुभ्यंदृष्टांतंतंनिशामय ९२३ क्षत्रियायांहिवैश्येनजाताउग्राःप्रकीर्तिताः ॥ अथवाक्रूरकर्माणउग्रालोकेउदाहृताः ॥ अनुलोमावि लोमाश्चसत्वएवात्रमानवाः ९२४ ब्राह्मण्यांक्षत्रियाज्जाताःसूताःसंकीर्तिताजनैः ॥ येस्युःसारथिनःकेचित्पुराणज्ञाश्चकेचन ९२५ अथवासर्वएवैतेवर्णिनोपिपरे तथा ॥ अनुलोमविलोमाभ्यांजाताःसूताउदाहृताः ९२६

रयेनतानसंभवतितथाचकदाचित्प्राक्पूर्वामेवयोनिमेषगच्छतीतिविज्ञायतइति ९२१ यथागतत्वंविशदयति नरकइति । नरकादिगताश्चयोनयःपूर्वंयादृशभोगप्रदेनयेनयज्जातीयेनकर्मणालब्धाःपुन स्तादृशभोगप्रदेनादृशेनकर्मणिफलायेप्सुखेलतितांयोनिंलभतेसचयोनिलाभःपुनस्तज्जातीयशरीरग्रहस्यहेतुःसंस्कारादृष्टयोरुत्पादनद्वारेत्यर्थः । पुनःप्राणलाभायेत्यर्थकस्यप्राणायेतिपदस्यार्थःस्थूलदेह ग्रहायेतिपदेनदर्शितइतिबोध्यम् ९२२ समर्थितमस्याःकंचिकायाअर्थमाह स्थूलेतित्रयोदशभिः । कर्मिणोजंतोर्मरणानंतरंस्थूलदेहांतरस्यसभोगोपकरणस्यग्रहेलाभेदृष्टांतंशृण्वित्यर्थः ९२३ तत्रोग्रपदार्थमाह क्षत्रियायामिति । क्षत्रियायांमातरिवैश्येनपित्रायेजातास्तेउग्रपदेनोक्ताः अथवाउग्रकर्मसुवधादिषुविनियुक्ताःसंकरजातयोनुलोमाहीनजातिकायांमातरिउत्कृष्टजातिका त्पितुरुत्पन्नाःप्रतिलोमास्तद्विपरीतावाउग्रपदार्थाइत्यर्थः ९२४ सूतपदार्थमाह ब्राह्मण्यामितित्रिभिः । ब्राह्मण्यांक्षत्रियात्पितुर्जाताःसूताइतिप्रसिद्धाः येषांसारथित्वंपुराणवृत्तज्ञानंवाजी विकेत्यर्थः ९२५ अथवेति । सर्वएवराजोपजीविनश्चातुर्वर्णिकाःसंकरजातयोवासूताइतिपदेनोक्ताइत्यर्थः ९२६

तत्रहेतुतयासूतशब्दस्ययोगार्थमाह सूताःप्रसूताइति । यतःप्रसूतागर्भान्निर्मुक्ताःसूतशब्देनोक्ताः अयमस्ययोगार्थःसर्वप्राणिषुवर्ततइत्यर्थः ९२७ प्रत्येनसइतिपदस्यार्थमाह एनइति । एनइ तिपदंपापवाचकंतत्रपापेपापिनांदंडेइतियावत् येविनियुक्ताअधिकृताभृत्याःसामंतेनपुराध्यक्षेणसहितास्तेप्रत्येनसइतिपदेनोक्ताः ग्रामाध्यक्षास्तुग्रामणीपदेनोक्ताइत्यर्थः 'स्यात्सामंतःपुराध्यक्षः' इतिहेमचंद्रः ९२८ पदार्थानुक्त्वावाक्यार्थमाह उग्राइतिपंचभिः । यथावर्णिताउग्रादयःकुत्रचिद्गत्वाआयांतंराजानंप्रतिसंमुखंयथाभवतितथाआयांतिप्रतीक्षंतइतियावत् कीदृशाः कृतानिसं पादितानिकौतुकानिउत्साहजनकानिमंगलानिचयैस्तेतथा पुनःकीदृशाः तूर्यनिनदादिभिर्युक्ताः नीराजनमार्तिक्यदीपः ९२९ । ९३० अन्नेति । किंकृत्वाराज्ञःसंमुखंयांति मनःप्रभृति सुखदान्यन्नादीनितत्रतत्रनिधानभाजनेपुनिधाय ९३१ स्कंधेति । पुनःकिंकृत्वा स्कंधावारस्थसैन्यस्यतथासामंतानांतथाभूपतेश्चवासार्थंपृथक्पृथक्प्रासादान्तत्रतत्रयोग्यस्थानेपुकल्पयित्वा 'चमूश्चक्रंस्कंधावारः' इतिहेमचंद्रः पुनःकिंकृत्वाप्रतीक्षंते तन्नगरादतिदूरमपिभूतलमतिक्रम्येति ९३२ वार्तामिति। पुनःकीदृशास्तेउग्रादयः इत्यादिरूपांवार्तातस्यराज्ञएवसंबंधिनींकुर्वंतः इतिकथं

सूताःप्रसूताइत्युक्ताःसर्वेतेदेहधारिणः ॥ नहिदेहधराःकेचिदजाताःसंतिजंतवः ९२७ एनःपापमितिप्रोक्तंतत्रयेविनियोजिताः ॥ भृत्याःसामंतसहिताःप्रत्येन सइतीरिताः ॥ ग्रामाणामत्रनेतारोग्रामण्यःपरिकीर्तिताः ९२८ उग्राःप्रत्येनसःसूतग्रामण्याद्यास्तथाजनाः ॥ देशस्वामिनमायांतंराजानंकुत्रचिद्गतम् ॥ आयांतिसंमुखंयद्वत्कृतकौतुकमंगलाः ९२९ महद्भिस्तूर्यनिर्घातैर्गीतैःकर्णसुखावहैः ॥ नानावारांगनाहस्तस्थितैर्नीराजनैःसह ९३० अन्नपानानिचित्राणि तत्रतत्रनिधायहि ॥ मनोनयनदेहानांसुखकारीणिभूरिशः ९३१ स्कंधावारनिवेशार्थंसामंतानांचभूपतेः ॥ प्रासादान्विविधान्हृष्टाःकल्पयित्वामनोरमान् ॥ तत्रतत्रातिदूरंतदतिक्रम्यापिभूतलम् ९३२ वार्तांतस्यैवकुर्वंतोराजाकुत्रसमागतः ॥ अयमायात्ययंतद्वदित्याद्येवपरस्परम् ९३३ एवंसर्वाणिभूतानिदेहांतर समागमे ॥ कृतकर्मानुसारेणभोगदानिशरीरिणाम् ९३४ अस्यापत्यमिदंब्रह्मह्यायातीदमिहेतिच ॥ कर्मिणंजायमानंतंप्रत्युद्गच्छंतिसर्वतः ॥ कर्मानुसारिभिर्भो गैरजडानिजडानिच ९३५ मरणेप्युक्तदृष्टांतंविजानीहिमहीपते ॥ यियासंतंहिराजानंकुत्रचित्तस्यदेशगाः ॥ उग्रादयोयथायांतितमन्वेवत्वरान्विताः ९३६ तथावागादयःप्राणामुख्यप्राणेनसंयुताः ॥ आत्मानमिममेवानुयांतिराजन्शरीरगाः ॥ ऊर्ध्वश्वासीयदादेहीमुमूर्षुर्जायतेतदा ९३७

राजाकुत्रसमागतःअयंराजाआयातिअयमायातीति ९३३ दार्ष्टांतिकेयोजयति एवमितिद्वाभ्यां । एवंदेहांतरसमागमकालेअजडान्यादित्यादिदेवतारूपाणिजडानिशरीरारंभकाणिचसर्वाणिभू तानिकर्मानुसारेणभोगदान्युपकरणानिसंपाद्यजायमानंदेहिनमित्येवंप्रत्युद्गच्छंतिप्रतीक्षंते इतिकथं इदंब्रह्मास्माकंकर्तृभोक्तृचअस्यदेवदत्तस्यइहपत्न्यामृतुस्नातायांजन्मनेआयातिइदंब्रह्मेहायाः तीति जीवेब्रह्मशब्दप्रयोगोवस्तुतोब्रह्मत्वाभिप्रायेणेतिद्वयोरर्थः ९३४ । ९३५ अथपरलोकशब्दितंदेहांतरंयियासंतंचिदाभासरूपंजीवंकेनुयांतीतिजिज्ञासांदृष्टान्तेनपरिहरंत्याअष्टत्रिं शत्तम्याःकंडिकायाअर्थंदर्शयति मरणइतिद्वाभ्यां । हेराजन्मरणेपूर्वदेहपरित्यागेप्युक्तराजवृत्तांतरूपंदृष्टांतंशृणु । यथाक्कुत्रचिद्यियासंतंगंतुमिच्छंतंराजानंविज्ञायतमनुतस्यराज्ञःपश्चादेवयांति के यतस्यराज्ञोदेशगताभृत्याउग्रादयः ९३६ तथेति । तथाशरीरगावागादयोगौणप्राणामुख्येनमुखबिलवासिनाप्रधानेनप्राणेनसहिताःपरलोकंयियासंतमात्मानमनुयांति कदा यदामुमूर्षुरूर्ध्व श्वासीजायतइत्यन्वयः एतेनमनएवपरलोकंयातीत्यादिकास्तार्किकाणांकल्पनाःपरास्ताः । इतितृतीयब्राह्मणस्यज्योतिराख्यस्यव्याख्यानम् ९३७

अथसंसारमोक्षयोःससाधनयोर्विस्तरेणप्रतिपादकस्यचतुर्थब्राह्मणस्यशारीरकाख्यस्यार्थमध्यायांतंयावद्ग्रंथेनप्रदर्शयंस्तत्रेतिनुक्रामयमानइत्यंतभागस्यसंसारप्रदर्शकस्यार्थःप्रदर्श्यते वल्हीनइत्यादिश्लोकशतत्रयेणाष्टत्रिंशदधिकेन । यदायंमरणकालेजंतुर्वल्हीनोभूत्वावागादिभिरिंद्रियैःसुतादिकंविषयजातंनविजानातिनविषयीकरोतिसंमूढोभवतीतियावत् तदासर्वान्वागादीन्सहकारिभावान्समंतात्गृहीत्वाहृदयाकाशमागच्छति कीदृशान्वागादीन् तेजसःसात्विकत्वेनप्रकाशप्रधानस्यसूक्ष्मशरीरस्यमात्रारूपान् अंशरूपानित्यर्थः ९३८ नेत्रइति । यदाएवंनेत्रादौकरणजातेस्थितश्चिदाभासरूपःपुरुषोहृदयाकाशंप्रतिकरणदेशेभ्यःपरावृत्त्यगच्छतिएवंसूर्यादिदेवतांशःस्वदेवरूपंप्रतिपद्यतेतदामुमूर्षुःपुरुषोहृदयाकाशरूपेपरमेश्वरेएकतांगतःसन्दर्शनादिकंनकरोतीतिचतुर्णांसंबंधः ९३९ । ९४० । ९४१ । ९४२ तस्मिन्कालेमुमूर्षुकर्तृकदर्शनाद्यभावोलोकेपिप्रसिद्धइत्याह नाप्रसिद्धमिति । इदंमुमूर्षोरदर्शनादिकमप्रसिद्धंनभवतिकिंतुप्रसिद्धमेवयतोमृत्योपतितंमुमूर्षुंप्रस्तुत्यतत्समीपगताःपुरुषाइदंवदंति इदंकिमित्याकांक्षायांपार्श्वस्थैःकृतंमुमूर्षोर्दर्शनाद्यभावानुवादमभिनयति नेत्यादिनाअवस्थिताइत्यंतेन । अयंमुमूर्षुरस्मान्नपश्यतिअस्मदीयं

वल्हीनोयदाजंतुर्नजानातिसुतादिकम् ॥ वागादिभिःसमंतात्सतेजोमात्रस्वरूपिणः ॥ गृहीत्वामरणेसर्वान्हृदयाकाशमाव्रजेत् ९३८ नेत्रेघ्राणेपिरसनेवाचिश्रोत्रेमनस्यपि ॥ त्वचिबुद्धौतथान्येपुकरणेपुस्थितःपुमान् ३९ हृदयाकाशमागच्छेन्नेत्राद्यैर्हिसमंयदा ॥ तदामुमूर्षुःपुरुषोनपश्यतिनजिघ्रति ४० रसयत्यपिनैवायंवक्तिनायंशृणोतिन ॥ मनुतेनस्पृशत्येपनैपजानातिनकचित् ४१ इंद्रियाण्यपराण्येवव्यापारयतिनप्रभुः ॥ एकतांहृदयाकाशेगतःसन्परमेश्वरे ४२ नाप्रसिद्धमिदंसर्वंप्राज्ञतादात्म्यमागते ॥ आत्मनीहयतोभूमौप्रक्षिप्तंसत्समीपगाः ४३ इदंवदंतिनैवायंपश्यत्यस्मान्समीपगान् ॥ नशृणोतिवचस्तद्वदस्माभिःसमुदीरितम् ९४४ नजिघ्रतितथागंधंमालायाःकंठआत्मनः ॥ रसयत्यपिनैवायंदधियन्निहितंमुखे ९४५ अस्मान्समीपगानेपनचवक्तिसदाप्रियान् ॥ नस्पृशत्यपिनोगात्रंपुत्रादीनांप्रियंसदा ९४६ अतोनमनुतेनैवविजानातिभुविस्थितः ॥ करणोपरमात्सुप्तौवयंयद्वदवस्थिताः ९४७ अभावेदर्शनादीनामेकीभावंवदंतिच ॥ हेतुंसर्वत्रविद्वांसःसुहृदःपरितःस्थिताः ९४८ यदायंहृदयाकाशतादात्म्यंप्रतिपद्यते ॥ मुमूर्षुस्तस्यपुरतोमार्गसंदर्शनायहि ॥ हृदयस्याग्रभागेत्रप्रज्वलत्यतिभूरिशः ४९ यथायियासतोराज्ञोदीपिकाराजमार्गगाः ॥ प्रज्वलंतितथैवास्यपरलोकंयियासतः ९५०

वचश्चनशृणोतीतिद्वयोरर्थः ९४३ । ९४४ नजिघ्रतीति । तथाकंठेनिहितायास्तुलसीदलमालायागंधंनजिघ्रतितथामुखेनिहितंदधिचनास्वादयति ९४५ अस्मानिति । सदाप्रेमास्पदानस्मान्नवक्तिअस्मदीयंगात्रंचनस्पृशति ९४६ अतइति । यतोबाह्येंद्रियव्यापारंनकरोतिअतोविज्ञायतेमनोबुद्ध्योरपिव्यापारंनकरोतियथावयंसुषुप्तिंगताःकंचिन्मनःप्रभृतिव्यापारंनकुर्मइत्यर्थः ९४७ अभावेइति । नकेवलंदर्शनाद्यभावमेववदंतिकिंतुमुमूर्षोर्दर्शनाद्यभावेहेतुतयासर्वेंद्रियाणांहृदयदेशेसूक्ष्मशरीरेएकीभावंपिंडीभावंवदंतिपार्श्वगाइत्यर्थः ९४८ एतावताकंडिकाद्वयंव्याख्यातमथतस्यैत्यादिकायास्तृतीयकंडिकायाअर्थमाह यदेतिद्वादशभिः । यदायंमुमूर्षुर्हृदयाकाशेनतादात्म्यंप्राप्नोतितदापिपरलोकगमनानुकूलविशेषज्ञानाभावोनमंतव्यः यतस्तस्यमुमूर्षोःपुरतःपरलोकमार्गस्यसंदर्शनायहृदयस्याग्रभागोनाडीमुखरूपःप्रज्वलति भाविशरीरप्राप्तिहेतुद्वाराकारचिदाभासव्याप्तवृत्तिरूपेणाधिकंप्रकाशेनयुक्तोभवतीत्यर्थः ९४९ यथेति । यथाराज्ञोगंतुमिच्छतःपुरतोदीपिकाःकिंकरकरगताःप्रकाशंतेतद्वत् ९५०

तेनैवेति । तेनहृदयाग्रगतेनप्रकाशेनप्रकाशितोमहापथःपरलोकमार्गोयस्यैताहशःसन्निंद्र एकादशद्वारात्स्थूलशरीररूपात्पुरान्निष्क्रामतीति ९५१ एकादशद्वाराणिगणयतिचक्षुरिति । चक्षुः
श्रोत्रनासिकानांप्रत्येकंद्वे द्वेछिद्रेइतिषट् पायूपस्थनाभीनांत्रीणिछिद्राणिमुखस्यैकंमूर्ध्निचैकमेतानिसंकलितान्येकादशेत्यर्थः ९५२ द्वाराणांगंतव्यानुसारेणविभागमाह नारकीतिचतुर्भिः । नार
कीनरकंगंता प्रेतसमःप्रेतयोनिगामी ९५३ अन्नेति । अन्नासक्तोभोजनलोलुपः ९५४ गीतज्ञइति । गीतज्ञःश्रोत्रमार्गेणगंधर्वलोकंव्रजेत् चक्षुर्द्वारेणनिर्गतस्तुसूर्यमन्यंवातेजोमयंभावमग्न्या
दिकंगच्छति मूर्द्धद्वारेणयातस्तुब्रह्मलोकंयातीतिद्वयोरर्थः ९५५ । ९५६ अधमत्वइति । अधमफलप्रदद्वाराणांमध्येपायुद्वारादपकृष्टंनास्तिउत्कृष्टफलदानांतुमूर्द्धद्वारादुत्कृष्टंनास्ति अन्येषुद्वारे
षुत्वापेक्षिकेउत्कृष्टत्वापकृष्टत्वेइत्यर्थः ९५७ अयमिति । अयंज्ञानशक्त्युपाधिकोमहेश्वरोयदानिर्गच्छतितदातदनुसारिणोवागादयोपिनिर्गच्छंतीत्यर्थः ९५८ एवमिति । बुद्ध्युपाधिकआत्मामहे
श्वरःस्वकलसंघाताधिपतिरेवमुक्तविधयामरणकालेप्राज्ञेनकारणोपाधिकेश्वरेणतादात्म्यंसुषुप्ताविवैकतांविशेषज्ञानाभावप्रयोजिकांप्राप्तोपिसविज्ञानोभवति । सविज्ञानपदार्थमेवाह पुनर्ज्ञानंप्रपद्य

तेनैवैषप्रकाशेनप्रकाशितमहापथः ॥ पुरादेकादशद्वारादिंद्रोनिष्क्रामतीश्वरः ९५१ चक्षुःश्रोत्रनसांद्वेद्वेपायूपस्थोदरेष्वपि ॥ मुखेमूर्द्धनिपंचस्युर्द्वाराण्यस्य
विनिर्गमे ९५२ नारकीपायुतोगच्छेत्कामीशिश्नाध्वनापुनः । नाभिमार्गेणनिर्यातिप्रायःप्रेतसमःपुमान् ९५३ अन्नासक्तस्तुनिर्यातिमुखतोबहुलोजनः ॥ गंध
प्रियोविनिर्यातिनासाविवरतःपुमान् ९५४ गीतज्ञःश्रोत्रदेशेनगंधर्वान्प्रायशोव्रजेत् ॥ चक्षुषोनिर्गतोगच्छेत्सवितारंप्रभानिधिम् ९५५ अन्यंवातैजसंकंचिदग्नि
वाचंद्रमेववा ॥ मूर्द्धतोनिर्गतोगच्छेद्ब्रह्मलोकमनिंदितम् ९५६ अधमत्वेपरासीमापायुद्वारमुदाहृतम् ॥ उत्तमंचतथानान्यन्मूर्द्धद्वारात्तुकिंचन ॥ अन्येषुतार
तम्येनह्युत्तमाधमतास्थिता ९५७ अयंयदाविनिर्यातिबुद्ध्युपाधिर्महेश्वरः ॥ प्राणस्तदाक्रियाशक्तिस्तमन्वेवव्रजत्ययम् ॥ प्राणेगच्छतिसर्वाणिवागादीन्यनुयां
तिच ९५८ एवमात्मासविज्ञानोबुद्ध्युपाधिर्महेश्वरः ॥ प्राज्ञतादात्म्यमायातःपुनर्ज्ञानंप्रपद्यते ९५९ तंशरीराद्विनिष्क्रांतंसुखदुःखोपभोगिनम् ॥ पूर्वसंस्कार
सहितेगच्छतोज्ञानकर्मणी ॥ शुभाशुभेसमुद्बुद्धेताहग्देहंप्रयच्छतः ९६० स्थूलदेहाद्विनिष्क्रम्यस्थूलदेहविवर्जितः ॥ नतिष्ठतिपुमानत्रदृष्टांतस्तृणयःकृमिः ६१
यथातृणजलौकाख्यःकृमिस्तृणगणंव्रजन् ॥ एकंतृणंगृहीत्वैवजह्यात्पूर्वंतृणंसदा ९६२

तइति । पूर्वंयद्धृदयाग्रभागप्रज्वलनरूपंज्ञानमुक्तंतन्निर्गमनमार्गोकारमिदंतुभाविशरीराकारमितिविशेषःपुनःशब्दार्थः ९५९ पूर्वंपरलोकयात्रायांशकटस्थानीयतासूक्ष्मशरीरस्योक्तातत्रसंभार
स्थानीयान्भावान्दर्शयति । तंशरीरादिति । तंबुद्ध्युपाधिकंजीवंशरीराद्विनिष्क्रांतमभिलक्ष्येतिशेषः । ज्ञानंमानसंकर्मकर्मशारीरंतत् एतेद्वेअपिदृष्टरूपेणगच्छतः गत्वाचताहक्तत्तद्भोगानु
कूलंदेहंप्रयच्छतः । कीदृशेज्ञानकर्मणी पूर्वसंस्कारेणपूर्वानुभूतवत्तद्योनिव्यवहारायनुभवजन्येनसंस्कारेणतत्रतत्रकौशलप्रयोजकेनसहितेइत्यर्थः ९६० आत्मनःपूर्वशरीरांतरग्रहणपूर्वशरीरप
रित्यागप्रकारयोःस्पष्टीकरणपरायाश्चतुर्थकंडिकायाअर्थंनिरूपयति स्थूलदेहादितित्रयोविंशतिश्लोकैः । स्थूलदेहविवर्जितःअनालंबितस्थूलदेहांतरःसन्पूर्वदेहाद्विनिष्क्रम्यनतिष्ठतिकिंत्वालंब्यैवदे
हांतरंपूर्वदेहाद्विनिष्क्रामतीत्यत्रार्थेदृष्टांतस्तृणयःतृणेषुयातिभ्रमतियःकृमिविशेषःसबोद्धव्यः ९६१ दृष्टांतंस्फुटयति यथेति । स्पष्टं श्रुतावाक्रमपदेनआक्रम्यतेइतिव्युत्पत्त्याआलंबनीयं
तृणांतरादिकमुक्तमितिबोध्यम् ९६२

दार्ष्टांतिकेयोजयति एवमिति । संपाद्यालंब्यपूर्वंस्मान्निर्गच्छेत्शरीरांतरस्याप्राप्तौतुतस्यदेहस्यसपरित्यागोनैवभवतीति ९६३ उक्तमर्थंलौकिकदृष्टांतेनापिस्फुटयति यथेतिद्वाभ्याम् । यथाराजादेर्गृहांतरगतिंप्रतिगृहांतरप्राप्त्यर्थंजीर्णगृहंपरित्यज्यनिर्गच्छतोयःपूर्वस्यपरित्यागःसोभिनवेगृहेनिष्पन्नेसत्येवभवेत् तथाएवंदेहिनोऽभिनवेदेहेनिष्पन्नेसत्येवपूर्वत्यागोभवेदितिद्वयोरन्वयः ९६४ । ९६५ ननुपूर्णस्यात्मनःकथंगत्यादिकमितिचेद्दृष्टाद्युपहिताकाशवद्बुद्ध्याद्युपहितात्मनिसर्वंसंभवतीत्याह आत्मनइति । यद्यपिसर्वगस्याद्वितीयस्यात्मनोगत्यादयोनसंभवंति तथापिबुद्ध्यादिसंबंधात्सर्वमुपपन्नमितिद्वयोःसंबंधः ९६६ । ९६७ ननुबुद्ध्यादेरेवकथंदेहांतरेगत्यादिकमित्यसंभावनांदृष्टांतेनापाकर्तुंप्रतिजानीते अस्मिन्निति । यद्यप्यस्मिन्देहेस्थिताबुद्धिरपरंदेहमाप्नुयादितिनसंभाव्यतेतथाप्येवंवक्ष्यमाणविषयादेहद्वयेबुद्ध्यादिप्राप्तिःसंबन्धरूपासंभावनीयेत्यर्थः ९६८ एवंपदोक्तांविधामभिनयति वृत्तिभिरिति । यथानयनंचक्षुरिंद्रियंनयनमंडलात्स्वगोलकाद्बहिर्बाह्यंदूरमपिध्रुवादिकंदेशंवृत्तिभिर्गच्छेदितिसर्ववादिसंमतंतथाबुद्धिःपूर्वदेहस्थितापिमरणकालेऽन्यंदेहंयाति । कीदृशीबुद्धिः धर्माधर्माभ्यांविहितनिषिद्धकर्मजन्या

एवमात्मावपुष्यस्मिन्स्थूलेस्थित्वापरंवपुः ॥ स्थूलंसंपाद्यनिर्गच्छेदप्राप्तौनैवतस्यसः ९६३ यथानिर्गच्छतोराज्ञोधनिकस्यापरस्यवा ॥ जीर्णगृहंपरित्यज्यगृहांतरगतिंप्रति ९६४ पूर्वस्यतुपरित्यागोनिष्पन्नेभिनवेगृहे ॥ भवेदेवंपरित्यागोनवेदेहेत्रदेहिनः ॥ निष्पन्नेपूर्वदेहस्यनान्यथाक्वापिकर्हिचित् ९६५ आत्मनःसर्वगत्वेनभेदस्यापिविवर्जनात् ॥ गत्यादयोनसंत्येवसर्वकर्मफलैःसमम् ९६६ यद्यप्यस्यतथाप्यत्रबुद्धितादात्म्यहेतुतः ॥ उपपन्नमिदंसर्वंगतिकर्मफलादिकम् ९६७ अस्मिन्देहेस्थिताबुद्धिर्नाप्नुयादपरंवपुः ॥ यद्यप्येषातथाप्येवंप्राप्तिर्देहद्वयेभवेत् ९६८ वृत्तिभिर्नयनंयद्वद्गच्छेन्नयनमंडलात् ॥ बहिर्ध्रुवादिकंदेशंबहुलक्षादियोजनम् ९६९ धर्माधर्माख्यसंस्कारैरेवंबुद्धिश्चवृत्तिभिः ॥ पूर्वदेहस्थितादेहमन्यंयातीश्वरेच्छया ९७० नेत्रमंडलमध्यस्थंनेत्रंगच्छद्ध्रुवादिकम् ॥ तत्प्राप्यापिनवेत्त्येतत्प्राप्तमेतन्मयायथा ९७१ पूर्वदेहस्थिताबुद्धिःप्राप्यदेहांतरंतथा ॥ प्राप्तमेतन्मयादेहंनवेत्तिनकर्हिचित् ९७२ अभिप्रायंयथाज्ञात्वाराज्ञस्तस्यात्रकिंकराः ॥ प्रासादमपरंकुर्युस्तत्रस्थेपिचराजनि ९७३ नयंतिचविधायान्यंप्रासादंराजकिंकराः ॥ हस्त्यश्वादीन्स्थितेप्यस्मिन्प्रासादेपूर्वनिर्मिते ९७४ वदंतिचजनास्तत्रहस्त्यश्वादिसमागमात् ॥ राजासमागतःसोयंयदिमार्गेपितिष्ठति ९७५

दृष्टाभ्यापूर्वानुभवजन्यसंस्कारेणचईश्वरेच्छयाचप्रयुक्तेतिशेषः । अनेनबुद्धिविशेषणेनजीवनदशायांभाविदेहाकारवृत्तिप्रसंगोनिरस्तः ९६९ । ९७० ननुमरणकालेभाविदेहमनुसंदधानाबुद्धिरहंदेहांतरंप्राप्तास्मीत्येवंकुतोनजानातीतिशंकाप्युक्तदृष्टांतेननिरस्तेत्याह नेत्रेतिद्वाभ्याम् । यथास्वगोलकस्थंचक्षुर्ध्रुवादिकंगच्छत्सत्तद्ध्रुवादिकंप्राप्यापिएतन्नवेत्ति । एतत्किं मयाएतद्ध्रुवादिकंप्राप्तमिति तथामरणकालेबुद्धिःपूर्वदेहस्थितादेहांतरंप्राप्याप्येतन्नवेत्ति । एतत्किम् मयाएतन्नवंदेहंप्राप्तमितिद्वयोःसंबंधः वेगातिशयाज्जडत्वाच्चेतिहेतुःपूरणीयः ९७१ । ९७२ देहांतरंतत्तद्भोगानुकूलमारप्स्यमानान्यपिकर्माणिभाविशरीराकारांवृत्तिमारभंतेइत्येतावदेवतृणजलौकादृष्टांतेनविवक्षितमित्याशयंदृष्टांतेनविशदीकरोति अभिप्रायमित्यादिना । यथाराजकिंकरास्तस्यराज्ञःप्रासादांतरगमनाभिप्रायंज्ञात्वाप्रासादांतरंनिर्माय्यतत्रराज्ञोहस्त्यश्वादीन्नयंति कसति अस्मिन्राज्ञिपूर्वप्रासादेस्थितेपि तानश्वादीन्दृष्ट्वाजनाएवंवदंति । एवंकथम् सोयंसोयंराजासमागतइति सचराजायद्यपिमार्गेपूर्वप्रासादेवातिष्ठतितथापीतित्रयाणांसंबंधः ९७३ । ९७४ । ९७५

दार्ष्टांतिकमाह मुमूर्षोरिति । एवंमुमूर्षोर्देहिनोराजस्थानीयस्यकर्माणिकिंकरस्थानीयानिशरीरांतरंप्राप्यंप्रासादांतरस्थानीयंस्वप्नकालइवप्रतिभासिकंमरणकालआरभंते तथाचतदाकारावृत्तिरश्वादिस्थानीयेतिभावः ९७६ आत्मनइति । एतेनाभिप्रायेणात्रजलौकानिदर्शनवाक्येमरणकालेजंतुर्देहद्वयेपिसंप्राप्तःसंबद्धःकथ्यते । एतेनकेन यदात्मासर्वगःसत्कार्यवादेभाविशरीरेणापिसंबद्धएवकर्माण्यपिभाविशरीराकारायफलायोन्मुखान्येवातएवबुद्धिरपिवृत्तिद्वारेणभाविशरीरेणापिसंयुक्तैवेति ९७७ देहद्वयस्थितत्वमभिनयति उपभोक्ष्यतीति । यदाकारामरणेवृत्तिर्जायतेतच्छरीरंभविष्यद्भोगसाधनंत्यज्यमानंत्वतीतस्येतिशरीरद्वयसंबंधोपपत्तिरितिभावः ९७८ भाविशरीराकारवृत्तिरूपैवमृतिरूपैवमृतिकालभाविशरीरप्राप्तिरितीममर्थंदृष्टांतेनस्फुटयति यथाकंठेतिद्वाभ्यां । यथाभुक्तंमालादिकंतित्यक्षुस्त्यक्तुमिच्छुरपरंतज्जातीयंवीक्षतेतदाकारांचित्तवृत्तिधारांकरोतितथाजंतुरपिपूर्वदेहंतित्यक्षुरपरदेहाकारांवृत्तिंकर्मभिःप्रयुक्तांप्राप्नोति कीदृशैः कर्मभिः नवैःपूर्वशरीरारंभकभिन्नैःशरीरांतरस्यारंभकैः बुद्धिसंस्थानैश्चबुद्धे संस्थानंतत्तद्भोग्याकारःपरिणामोयैस्तथातैरितिद्वयोरर्थः ९७९ । ९८० पूर्वदेहस्याविद्यागमनंनिहननंचस्पष्टीकरोति महावन्हिरितित्रिभिः । लोहमितिभावप्रधानोनिर्देशः यथाज्वलन्देदीप्यमानोमहावन्हिर्लोहपिंडंस्वसन्निभंस्वतादात्म्येनस्वसमानाकारतांनीतंसंत्यजन्सन्पुनर्लोहभावंगमयेत्प्रापयेत्

मुमूर्षोर्देहिनोप्येवंकर्माणिविविधानिह ॥ आरभंतेवपुस्त्वन्यद्यत्रयास्यत्यसौमृतः ९७६ आत्मनःसर्वगत्वेनह्याभिमुख्येनकर्मणाम् ॥ फलायबुद्धिसंयोगाद्वृत्तिद्वारेणहेतुना ॥ देहद्वयेपिसंप्राप्तोजंतुस्तेनात्रकथ्यते ९७७ उपभोक्ष्यतिदेहेनफलमेकेनदेहभाक् ॥ उपभुक्तंपरेणापितेनदेहद्वयस्थितः ९७८ यथाकंठस्थितांमालामन्यद्वावसनादिकम् ॥ तित्यक्षुरपरंजंतुर्वीक्षतेदूरसंस्थितम् ९७९ पूर्वदेहंतथाजंतुस्तित्यक्षुरपरंनिजैः ॥ कर्मभिर्बुद्धिसंस्थानैःप्राप्नोत्यारंभकैर्नवैः ९८० महावन्हिर्ज्वलन्यद्वल्लोहपिंडंस्वसन्निभम् ॥ गमयेत्संत्यजन्लोहंदाहदीप्त्यपराहतः ९८१ अविद्यांगमयेदेवंजडंदेहंत्यजन्पुमान् ॥ चैतन्यस्यापहारेणस्वाभिमानस्थितस्यहि ९८२ स्वात्मनस्तुपरित्यागाद्धंतिलोहंयथाज्वलन् ॥ अंतरात्मापिचतथात्यागाद्धंतिवपुस्त्विदम् ९८३ लोहपिंडंनिहत्याग्निरन्यंनवतरंव्रजेत् ॥ सुखप्रदंलोहपिंडंमनसोनयनस्यच ९८४ पूर्वदेहंतथात्मायंहित्वानवतरंपुनः ॥ कल्याणंसुखदंदेहंयातिकर्मक्षयेस्यहि ९८५ यथासुवर्णकृल्लोकेस्वर्णमेकमनेकधा ॥ पर्यायतःकरोत्येवमात्माऽविद्यामनेकधा ॥ पर्यायतःकरोत्येषनानादेहस्वरूपिणीम् ९८६

कीदृशोवन्हिः दाहदीप्तिभ्यामपराहतःअपरित्यक्तः नित्ययुक्तइतियावत् । तथाचदाहदीप्तिंवान्हिधर्मावपिवन्हिनात्यक्तंलोहपिंडंत्यजतइतिभावः ९८१ अविद्यामिति । एवंमहावन्हिवत् जडंदेहंचित्तादात्म्याध्यासाच्चेतनायमानंत्यजन्सन्पुरुषःस्वाभिमानाश्रितस्यचैतन्यस्यापहारेणाविद्यामव्याकृतादिशब्दवाच्यायाअविद्यायाःकारणीभूतायाःस्वभावंजडत्वामितियावत् । गमयेदित्यर्थः ९८२ एतावतैवपूर्वदेहस्यहननमित्याह स्वात्मनइति । यथावन्हिकर्तृकंलोहहननंपरित्यागरूपंतथात्मकर्तृकंदेहहननमित्यर्थः ९८३ आत्मनोनानाविधशरीरारंभिकाचपंचभूताकारपरिणामिनीअव्याकृताख्याऽविद्येवयथानानाभूषणोपादानमेकंसुवर्णमेवेतिप्रतिपादिकायाःपंचमकंडिकायाअर्थंवर्णयति लोहपिंडमितित्रयोदशभिः । यथाअग्निःपूर्वलोहपिंडंनिहत्यस्ववियोगेनदीप्त्यादिरहितंकृत्वाअन्यंलोहपिंडंव्रजेत्तंचलोहपिंडंस्वसंबंधेनमनोनयनयोर्हर्षप्रदंकुर्यात्तथात्माप्यस्यपूर्वदेहस्यभोगप्रदानांकर्मणांक्षयेसतिपूर्वदेहंत्यक्त्वाअन्यंदेहंयातितंचकल्याणंमन्यतेइतिद्वयोरर्थः ८८ ९८५ तत्रनवंशरीरंपूर्वशरीरोपादानभूताविद्यायाएवपरिणामइत्याह यथेतिद्वाभ्यां । यथासुवर्णकारःश्रुतौपेशस्कारिपदोक्तःकुंडलाङ्गुलीयकादिरूपेणैकंसुवर्णपिंडंपर्यायेणक्रमेणकरोतिविपरिणामयतितथात्माप्यविद्यांनानादेहरूपेणपरिणामयतीत्यर्थः ९८६

एतदेवस्फुटयति अविद्यामिति । देहस्यअविद्योपादानंपुण्यादिकंतुनिमित्तमित्यर्थः ९८७ उत्तरदेहस्यकल्याणतमत्वमाभिमानिकंदर्शयितुंपूर्वदेहेजंतोरसमीचीनबुद्धिर्भवतीत्याह समीचीनमिति । पूर्वदेहंसमीचीनमप्यसमीचीनंमन्यते ९८८ आगामीति । आगामिदेहंत्वसमीचीनमपिसमीचीनंमन्यते ९८९ दोषोपप्लुतांतःकरणस्यविपरीतदर्शनंनचित्रमितीममर्थंनिदर्शनेनविशदयति मं त्रौषधीतिचतुर्भिः । यथाकश्चिद्वशीकरणोपायैर्मंत्रादिभिःक्षोभिताविद्ययाव्याप्तबुद्धिर्नानादोषामपिपरस्त्रियमिंद्राणीसदृशींमन्यतेसद्गुणांस्वकीयांहित्वेतिद्वयोरन्वयः ९९० । ९९१ दार्ष्टांतिकेयोज यति श्वादीति । तथाजंतुःपुण्यपरिक्षयेराजादिदेहान्मनोरमानपित्यक्त्वाश्वादिदेहान्सुखदान्मन्यतेपापोदयवशादितिद्वयोःसंबंधः ९९२ । ९९३ कर्मानुसारेणदेहलाभंव्यवस्थामाह यदीतिद्वाभ्यां । यदिपूर्वदेहांतेपुण्योदयस्तदाशुभसंस्कारादिभिःपितृलोकादिगतंशुभंदेहंप्राप्नोतिमध्यमैःसंकीर्णैर्मनुष्यादिभावमधमैःश्वादिभावमितिद्वयोरर्थः ९९४ । ९९५ एवंजंतोःसंसारभ्रमणप्रकारोदर्शितइत्यु पसंहरति एवमिति स्पष्टम् ९९६ अथसंसारंप्राप्तस्याप्यात्मनोयत्सर्वाधिष्ठानभूतंशुद्धंस्वरूपंयच्चकल्पितंनानाविधंस्वरूपंतयोरुभयोर्विभज्यप्रदर्शिकायाःषष्ठकंडिकायाअर्थंपंचाशदधिकशतद्वयेनो

अविद्यांगमयित्वाहिपूर्वदेहंपरंपुनः ॥ अविद्यातःसमादत्तेपुण्यपापवशंगतः ९८७ समीचीनतमंपूर्वदेहंकर्मक्षयेपुमान् ॥ मनुतेह्यसमीचीनंभाविकर्मप्रचोदितः ॥ ८८ आगाम्यप्यसमीचीनंसमीचीनधियापुमान् ॥ गृह्णातिसर्वदाजंतुरीश्वरस्यवशेस्थितः ८९ मंत्रौषधिबलैर्यद्वद्दुर्द्धीः कुष्ठिनीमपि ॥ रजसावृतगात्रांचकर्णना सादिवर्जितां ॥ इंद्राणीसदृशीमेतांमन्यतेपरयोषितम् ९० इंद्राणीसदृशींस्वस्यगुणयुक्तांपतिव्रताम् ॥ कुलप्रसूतांयुवतिंहित्वास्वस्यसमीपगां ९१ श्वादिदेहा नयंतद्वत्पापपुंजविमोहितः ॥ आत्मानवतमान्स्वस्यसुखदानभिमन्यते ९२ राजदेहादिकांस्त्यक्त्वादेहान्पूर्वान्मनोरमान् ॥ अनेकसुखसंपन्नान्पुण्यपुंजपरिक्षये ९९३ यदिपुण्योद्भवस्तस्यभवेद्देहस्यसंक्षये ॥ तदानवतमंदेहंकल्याणंचैवगच्छति ९४ पितृगंधर्वदेवानांविराट्सूत्रात्मनोरपि ॥ यातिदेहंशुभैःपूर्वसंस्कारज्ञान कर्मभिः ॥ व्यामिश्रैर्मनुजादीनांश्वादीनामधमैरपि ९५ एवंसंसारचक्रेस्मिन्वर्ततेसर्वदेहिनः ॥ ब्रह्माद्याःस्तंबपर्यंताआत्मज्ञानविवर्जिताः ९६ आनंदेतारतम्यंय द्वर्णितंतन्निजात्मनः ॥ तारतम्यात्प्रकाशस्यतत्तद्बुद्धेरपेक्षणात् ९७ तारतम्यंयथादृष्टमाकाशस्यघटादिषु ॥ आनंदस्यतथाबुद्धौतारतम्यंव्यवस्थितं ९८ सूच्यां घटेगृहेतद्वत्प्रासादेनगरेपिवा ॥ स्वरूपेणहिवैषम्यंभौतिकेघटरूपिणि ९९ ब्रह्मलोकस्थितेब्रह्मदेहेदेहेशुनोत्रवा ॥ नविद्यतेहिवैषम्यंसुखेदुःखेतथैवच १०००

पन्यस्तंब्रह्मात्मनोब्रह्मतालक्षणमुद्धत्ताप्रतिपादकस्यप्रथमवाक्यस्यार्थंवर्णयति आनंदइत्यष्टादशभिः । तत्रात्मनआनंदलक्षणंस्वरूपंसर्वत्राविशिष्टमेव यच्चतत्तल्लोकेष्वानंदस्यतारतम्यमुक्तंतन्न स्वाभाविकंकिंतुचित्प्रतिबिंबग्राहिकायाआवरणभंजिकायावाबुद्धेःसत्वोत्कर्षतारतम्यवत्याःसंबंधमपेक्ष्ययदात्मनःप्रकाशस्याभिव्यक्तेस्तारतम्यंतदभिप्रायेणबोध्यमित्यर्थः ९९७ औपाधिकता रतम्यंदृष्टांतेनस्फुटयति तारतम्यमिति स्पष्टम् ९९८ औपाधिकंतारतम्यंवस्तुतउपहितंनस्पृशतीतिदर्शयति सूच्यामिति । यदासूचीच्छिद्रादिष्वनुगतेभौतिकेभूतस्याकाशाख्यस्यसंबंधि निस्वरूपेवैषम्यमुत्कर्षापकर्षयोगोनास्ति कीदृशेभौतिकस्वरूपे घटरूपिणि घटस्वरूपस्यसंयोगसंबंधेनाधारेपि तदाअसंगात्मनिऔपाधिकधर्मयोगोनास्तीतिकिमुवाच्यमितिभावः ९९९ ब्रह्मेति । अत्युत्कृष्टतयाप्रसिद्धेब्रह्मणोहिरण्यगर्भस्यदेहेअत्यपकृष्टेश्वदेहेवाशुद्धात्मनोवैषम्यंनास्तीतिकिमुवाच्यं यतआत्मनोयदुपाधिशबलंरूपंभोक्तृत्वेनप्रसिद्धंयच्चभोग्यंसुखादितत्रापिवैषम्यंन दृश्यतइत्यर्थः १०००

तत्रसुखेतद्धेतोक्तरिचवैषम्याभावमभिनयति कदन्नेनेति । कदन्नंकुत्सितमन्नंकोद्रवादितेनयथादरिद्रस्यतोषःसुखंतथैवराजादेर्लेह्यचोष्यादिभेदैरन्नैरिति १००१ दुःखतद्धेत्वोरपितमाह क्षुधादिभिरिति १००२ वैषम्येपीति । उक्तविधयाफलाविशेषेसतिसाधनप्रयुक्तवैषम्येपिदरिद्रस्येतरस्यसंपन्नस्यचनवैषम्यंनविशेषः कीदृशस्यदरिद्रादेः अत्रलोकेमनोगतंसुखदुःखौघंसमंपश्यतइतिशेषः । किंचबहिरंगाणांसुखादिसाधनानांवैषम्येप्यंतरंगाणांतत्साधनानांरागादीनांसाम्यमेवेत्याह क्षुत्पिपासेत्यादिना । क्षुत्तृड्भयनिद्राश्चतस्रःप्रियाप्रियगोचरौरागद्वेषौद्वौतथात्मविषयकोमोहस्तथामलमूत्रविमोक्षपूर्वकालेविषमदशाप्राप्तिरितिदोषाष्टकंतज्जंततोदोषाष्टकादुपशमद्वारेणजायमानंसुखंविपर्ययेऽनुपशमेतुदुःखंएतद्दोषाष्टकहेतुसहितंसुखादिकंसर्वदेहिपुसममितिद्वयोरर्थः १००४ १००५ दरिद्रादेरिति । तथासतिलोकदृष्ट्यादरिद्रादीनामवांतरवैषम्येमहत्यपिसतिकस्यापिजंतोर्वैषम्यमत्रफलंनविद्यतेइत्यन्वयः १००६ एवमिति । एवमुक्तविधयासहांतरंगसाधनैःफलाविशेषेसतिहिरण्यगर्भस्यात्युत्कृष्टोपाधेःशुनश्चनिकृष्टोपाधेर्नविशेषइत्यर्थः १००७ तत्रहेतुतयारागादिदोषसाम्यमाह कामेति । सूत्ररूपिणोहिरण्यगर्भाख्यस्य १००८ नचतत्रक्षुधादयोन

कदन्नेनदरिद्रोयंयथातोषंव्रजेत्सदा ॥ लेह्यादिभिस्तथैवान्नैराजावाधनिकोथवा १००१ क्षुधादिभिर्यथादुःखंदरिद्रोयातिमानवः ॥ राजादिकस्तथैवायंधनिकोपिप्रयातिहि १००२ वैषम्येपिनवैषम्यंदरिद्रस्येतरस्यवा ॥ विद्यतेसुखदुःखौघमत्रलोकेमनोगतम् १००३ क्षुत्पिपासाभयंनिद्राप्रियेरागस्तथाप्रिये ॥ द्वेषोमोहोनिजेरूपआनंदात्मन्यधीश्वरे १००४ मलमूत्रविमोक्षायविषयावाप्तिरेवच ॥ तज्जंसुखंतथादुःखंसममेतद्धिदेहिनाम् १००५ दरिद्रादेस्तथाराज्ञःपशोःकीटादिकस्यवा ॥ जंतोःकस्यापिनैवात्रवैषम्यंविद्यतेभुवि ॥ अवांतरेपुवैषम्यंनैवकिंचिद्धिविद्यते १००६ एवंहिरण्यगर्भस्यक्रमिदष्टस्यवाशुनः ॥ वैषम्येसतिवैषम्यंनैवकिंचिद्धिविद्यते १००७ कामक्रोधादयोभावायथासंतिशुनोभुवि ॥ तथैवजगदीशस्यसंतितेसूत्ररूपिणः १००८ शुनोपिचनिकृष्टोयंभगवान्जगदीश्वरः ॥ क्षुधादिविषयेयस्मान्नाद्यात्सस्वसुतान्क्वचित् १००९ अपितंपापनिरतंनिंदंतिसकलाजनाः ॥ नतुश्वानंततःसूत्रदेहंकृष्टतमंस्मृतम् १०१० स्वामिनेहितएवस्याद्व्यापारःप्रायशःशुनः ॥ कस्मैचिन्नहितस्तस्यव्यापारःसूत्ररूपिणः १०११ ततोविद्यैवहेतुःस्यादाधिक्येजगदीशितुः ॥ निकृष्टत्वेशुनस्तद्वद्वैषम्येणविनापिहि १०१२

संतीतिवाच्यं क्षुधयाविराडाख्यसुतभक्षणप्रवृत्तेश्चतुर्थाध्यायेवर्णितत्वादित्याह शुनइति । सश्वासुतादनेनप्रवर्त्ततेसूत्रात्मातुप्रवृत्तइति १००९ किंचशुनःसुतादनादिप्रवृत्तौनिंदाभयंनास्तिसर्वगुरोःसूत्रात्मनस्तुतदस्तीत्याह अपीति । तंसूत्रात्मानम् १०१० अपकर्षांतरमाह स्वामिनइति । शुनोव्यापारोभषणादिश्चौरादिवारकत्वात्स्वामिनोऽनुकूलोपिभवतिसूत्रात्मव्यापारस्तुजगत्सृष्ट्याद्यैश्वर्यरूपोनकस्यापिसुखदः । तथाहि किंकर्मिणांसुखदउपासकानांवाज्ञानिनांवानाद्यः त्रिलोक्यंतरालवर्तिनांतेषांसूत्रात्मनोनिद्रयात्रिलोकीविनाशिकयाभयप्रदत्वात् । नद्वितीयः सयत्पूर्वोऽस्मादित्यादिश्रुत्यासहिरण्यगर्भःप्रथममैश्वर्यलाभेनेतरानुपासकानीर्ष्यादुःखेनतापितवांस्तस्मात्पुरुषसंज्ञइत्यर्थकयातापदत्वोक्तेः । नतृतीयः ब्रह्मज्ञानप्रतिबंधकब्रह्मलोकेच्छाजननद्वारांतरायभयप्रदत्वादितिभावः । अथवाविराड्भक्षणप्रवृत्तिरूपोव्यापारोनकस्यापिसुखदः सर्वोपायसंपन्नसृष्टेःप्रतिबंधादित्यर्थः १०११ तर्हिकेनगुणेनजगदीशोत्कर्षइतिचेद्ब्रह्मविद्ययैवेत्याह ततइति । ततःजगदीशितुर्हिरण्यगर्भस्याधिक्येहेतुःप्रयोजिकाब्रह्मात्मविद्यैवभवति अन्यत्रापकर्षस्यघात्माविद्यैवप्रयोजिकाअन्यद्वैषम्यंतूक्तविधयानास्तीत्यर्थः १०१२

तथाचकल्पिताविद्यामात्रप्रयुक्तैर्विशेषैरात्मनोऽस्पृष्टत्वात्शुद्धत्वेनाकिंचिद्बाधकमित्याह आत्मेति । स्पष्टम् १०१३ शुद्धात्मनश्चाद्वितीयत्वाद्ब्रह्मत्वेनकिंचिद्बाधकमित्याह सएवायमिति ।
यःसर्वत्राकाशवदनुस्यूतोवस्तुतोऽद्वयश्चात्मासएवत्वत्प्रभृतीनांहृदिस्थितोब्रह्मरूपइति १०१४ एवंसर्वाधिष्ठानभूतंशुद्धात्मस्वरूपंदर्शितमथकल्पितानामात्मस्वरूपाणांप्रदर्शकस्यविज्ञानेत्यादेः
पापेनेत्यंतस्यवाक्यस्याक्षरार्थंतावदभिनयति विज्ञानेत्येकादशभिः । योयमात्मावर्णितःसविज्ञानोपाधिकोबुद्ध्युपाधिकःसन्विज्ञानमयइत्येवंपूर्वमतीतग्रंथेपितृभ्यंवर्णितः सचयथाबुद्ध्युपा
धिकोविज्ञानमयइत्युक्तस्तथामनःप्रभृत्युपाधिवशान्मनोमयादिसंज्ञकउक्तः श्रुतावित्यर्थः १०१५ तत्रेति । तत्रोपाधिविशिष्टेऽस्मिन्नात्मनिव्यपदेशोविशिष्टनामशास्त्रीव्यवहारएतादृगुक्तः
एतादृक्कीदृगित्याकांक्षायामाह मनोमयइत्यादिना सर्वत्रस्त्रीमयोजाल्मइतिवत्प्राधान्येमयट्प्रत्ययः अन्यानींद्रियाणित्वगादीनि तथाचत्वङ्मयरसनामयादिनामानिबोध्यानि पृथि
वीमयादीनिभूतसंबंधेननामानिबोध्यानि तमस्त्वज्ञानं । अधर्ममयशब्दगतनञाऽभावोभेदोविरोधश्चोक्तइतिदर्शयति तदभावमयइत्यादिपदत्रयेण । धर्माभावोयथासुषुप्तौधर्मभेदोजलताडना
दिव्यर्थक्रियासुधर्मविरोधस्तुनिषिद्धक्रियासुप्रसिद्धइतित्रयाणामर्थः १०१६ । १०१७ । १०१८ किमिति । अस्तिस्थूलंयत्प्रत्यक्षवाचकेदंपदेनोक्तं नास्तीतिसूक्ष्मंयत्परोक्षवाचकादःपदोक्तं

आत्माहिरण्यगर्भेवाशुनिवान्येषुजंतुषु ॥ एकएवयथाकाशःसर्वेष्वपिघटादिषु १०१३ सएवायंमहाराजममतेपिहृदिस्थितः ॥ ब्रह्मरूपोजंगमानांस्थावराणांच सर्वगः १०१४ विज्ञानमयइत्येवंयःपुरातेमयेरितः ॥ विज्ञानोपाधिकोयद्वद्विज्ञानमयईश्वरः ॥ मनःप्राणाद्युपाधिःसंस्तन्मयःपरिकीर्तितः १०१५ तत्रास्मिन्व्यपदेशोयमेतादृक्परिकीर्तितः ॥ मनोमयस्तथाप्राणमयश्चक्षुर्मयस्तथा ॥ देवःश्रोत्रमयस्तद्वदन्येंद्रियमयोपिच १०१६ पंचभूतमयश्चायमात्मातद्वत्तमोमयः ॥ कामक्रोधमयस्तद्वत्प्रभुर्धर्ममयस्तथा १०१७ तदभावमयश्चापितदन्यमयएवच ॥ तद्विरोधिमयोप्येषस्वयंज्योतिःपरःपुमान् १०१८ किंबहूक्तेननराजेंद्रह्यस्तिनास्तीतियज्जगत् ॥ तत्सर्वमयएवायंयतःसर्वत्रसंस्थितः ॥ प्रत्यक्षेवापरोक्षेवाततःसर्वमयःपुमान् १०१९ यादृशंकुरुतेकर्मयथाकारीभवेदयम् ॥ आचारंयादृशंकुर्याद्यथाचारीपरःस्मृतः १०२० आचारोपिभवेत्कर्मयद्यप्येषतथापिच ॥ देशादेःप्रविभागेनकर्मणोन्यत्रलभ्यते १०२१ कर्मात्रस्याद्धिशास्त्रीयंविहितंचपरंतथा ॥ आचारोलौकिकस्तद्वद्विहितोनिंदितोपिवा १२२ लौकिकंवैदिकंकर्मसाधुचेत्कुरुतेपुमान् ॥ साधुकारीतिसंप्रोक्तोऽसाधुकारीततोन्यथा १०२३ साधुकारीभवेत्साधुरसाधुरपरस्तथा ॥ पुण्यःपुण्येनभवतिपापःपापेनकर्मणा १०२४

तत्रसर्वत्रतादात्म्येनस्थितत्वात्सर्वमयइत्यर्थः १०१९ अस्यात्मनस्तत्तद्विशेषभावेनिमित्तभूतंकर्मेतिदर्शयति यादृशमितिपंचभिः । अयमात्मावस्तुतःपरःसर्वोत्कृष्टोयादृशंविहितंप्रतिषिद्धंवाक
र्मकुर्वन्यथाकारिपदेनोक्तः एवमुत्तरार्धंयोज्यम् १०२० कर्माचारपदयोरर्थभेदंदर्शयति आचारोपीतिद्वाभ्यां यद्यप्याचारपदार्थोपिकर्मैवतथापिदेशकुलावस्थादिपारतंत्र्येणानुष्ठीयमानत्वरूपविशे
षेणाचारपदार्थःकर्मपदार्थादन्यत्रभिन्नोलभ्यतेव्यवह्रियतेइतियावत् १०२१ एतदेवस्फुटयति कर्मात्रेति । यत्कर्मविहितत्वेनेष्टसाधनत्वेननिषिद्धत्वेनानिष्टसाधनत्वेनरूपेणवाशास्त्रीयंश्रुत्यादि
प्रमाणवेद्यंतत्कर्मपदेनात्रोक्तं यत्तुविहितादिरूपेणलोकाद्देशकुलादिरूपादेवविदितंतत्कर्मआचारपदेनोक्तमित्यर्थः १०२२ लौकिकमिति । कर्माचारपदाभ्यामुक्तंकर्मसाधुसमीचीनंकुर्वन्साधु
कारीतिपदेनोक्तस्तद्विपर्ययेत्वसाधुकारीतिपदेनेत्यर्थः १०२३ तत्फलमाह साध्विति । यःसाधुकारीससाधुरुत्कृष्टशरीरादिविशिष्टोभवति साधुकारीत्यादिपदगतंणिनिप्रत्ययंदृष्ट्वाअभ्यस्तमेवकर्मफ
लदमितिभ्रमोनकर्त्तव्योयतःसकृदनुष्ठितमपिकिंचित्कर्मफलदमित्याशयेनाह पुण्यइति । पुण्यःसत्फलदः पापस्तद्विपरीतः १०२४

उक्तान। विज्ञानमयादिरूपाणांकल्पितत्वंस्फुटयितुंतेषांवस्तुतआत्मन्यभावमाह पुरुषस्येतिचतुर्भिः यतएतानिरूपाण्युपाधिसंबंधात्पुरुषेकल्पितानिततःकर्माचारौवस्तुतःपुरुषेनस्तः कीदृशौ कर्माचारौ साधुत्वेनासाधुत्वेनचद्विधाविभज्यस्थितौ तत्रसाधूयौकर्माचारौतौलौकिकवैदिकत्वाभ्यांद्विविधपुण्यात्मकौ असाधूतुलौकिकवैदिकत्वाभ्यांद्विविधपापात्मकावित्यर्थः १०२५ काम इति। तथाकामादयोपिपुरुषस्यसंबंधिनोनभवंतीतिसंबंधः तदन्यादिर्नै धर्मभिन्नधर्मविरोधवर्माभावाश्चात्मनोनसंतीत्यर्थः तमःपदेनोक्तमांतरमज्ञानंवाह्यंध्वांतंचनेति १०२६ महाभूतानीति। तथामहाभूतादीनिपुरुषस्यसंबंधीनिनेतिसंबंधः। तथानानाविधप्राणादिरूपाक्रियाशक्तिस्तथानानाविधचित्तवृत्त्यात्मिकाज्ञानशक्तिस्तत्प्रपंचभूतेबुद्धिमनसीचएतानिनसंतीत्यर्थः १०२७ शब्दादीति। तथासुखदुःखलक्षणफलसमन्विताःशब्दादिविषयाश्चात्मसंबंधिनोनसंतियतस्तेसर्वेपरिच्छिन्नाःपरिणामादिनादुःखहेतवइतिसंबंधः १०२८ वर्णितरूपाणांदुःखहेतूनामात्मन्यसंभवेहेतुतयात्मनोभूमभावलक्षणामानंदरूपतामाह आनंदेति। स्पष्टम् १०२९ सआत्मासर्वत्रपरिपूर्णोहृद्गुहायांविशेषेणभासतेइत्याह ममेति। शरीरस्थितिपर्यंतंविशेषेणहृदि

पुरुषस्यततोनात्रकर्माचारौद्विधास्थितौ ॥ साध्वसाधूतथापुण्यपापेलौकिकवैदिके १०२५ कामःक्रोधस्तथाधर्मस्तदन्यादिश्चकश्चन ॥ अज्ञानंचतथावाह्यतमसासहितंनहि १०२६ महाभूतानिपंचापिनेंद्रियाणिदशापिच ॥ क्रियाशक्तिर्नचप्राणोनानाभेदोवपुःस्थितः ॥ ज्ञानशक्तिस्तथानानानबुद्धिमनसीअपि १०२७ शब्दादिविषयाःसर्वेसुखदुःखसमन्विताः ॥ नैवात्मनोमहाराजसर्वेदुःखकराःसदा १०२८ आनंदात्मास्वयंज्योतिरवाङ्मनसगोचरः ॥ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः १०२९ ममतेपितथान्येषांस्थिरजंगमदेहिनाम् ॥ सर्वावस्थासुहृदयेविशेषेणव्यवस्थितः ॥ आविमोक्षंशरीरस्यस्फुरत्यविरतंपुमान् १०३० सकारणंसमग्रस्यजगतोस्यमहीपते ॥ गंधर्वनगरस्येवगगनंसंगवर्जितम् १०३१ नजानातियदायंस्वमानंदात्मानमव्ययम् ॥ तदानानाविधंदुःखमेतिराजन्नकारणम् १०३२ विज्ञानमयतांप्राप्यघोरंसंसारकारणम् ॥ शुष्कालाबूसमोभूत्वाप्राप्नोत्येषमहेश्वरः १०३३ दंडहस्तैर्यथाबालैःकंदुकःसर्वतोदिशम् ॥ अशांतंप्रेर्यतेतद्वद्विविधैःकर्मभिःपुमान् १०३४ उच्चावचानिदेहानिग्राहंग्राहंत्यजत्ययम् ॥ त्याजंत्याजंचगृह्णातिघटीयंत्रस्थितायथा १०३५ ग्राहंग्राहंजलंयातित्याजंत्याजंतथापरम् ॥ प्राप्नोतिशश्वत्सुलभंतथैवनभसःस्थलम् १०३६

स्थितःसंश्चकास्तीत्यर्थः १०३० सोयमात्मासर्वस्यजगतोविवर्तस्योपादानमित्याह सकारणमिति स्पष्टम् १०३१ तस्यचनानाविधदुःखप्रयोजकानांविज्ञानमयादिरूपाप्तेर्निदानमात्माज्ञानमेवेत्याह नजानातीति। अकारणंवास्तवकारणहीनंदुःखमेतिप्राप्नोति १०३२ तत्रतावद्विज्ञानमयतायाअनर्थहेतुतांप्रपंचयति विज्ञानमयतामित्यादिना। मनोमयोयदायंस्यादित्यतःप्राक्तनेनग्रंथेन। तत्रकर्तृत्वभोक्तृत्वाद्युपाधिनाकार्याविद्याकामकर्माश्रयेणपरिच्छिन्नेनचविज्ञानेनतादात्म्यंप्राप्यएषआत्मामहेश्वरःपरिपूर्णोपिशुष्कतुंबीवल्लघुर्भूत्वासंसारस्यकारणंकामकर्मादिसंत्रंथंप्राप्नोतीत्यर्थः ३३ बुद्धितादात्म्यगाल्लब्धेर्दोषैःप्रयुक्तंसंसारमभिनयति दंडेत्यादिनाअशांतंशांतिःकंदुकस्यभूमिसंयोगस्तद्रहितंयथास्यात्तथासर्वासुदिक्षुकंदुकःप्रक्षिप्यतेबालैस्तथाजीवःकर्मभिर्नानायोनिष्विति १०३४ उच्चेति। ग्राहंग्राहंगृहीत्वागृहीत्वा एवंत्याजमिति यन्त्रमरघट्टाख्यम् १०३५ दृष्टांतंस्फुटयति ग्राहमिति। यथायंत्रस्थिताघटीजलंग्राहंग्राहंत्याजंत्याजंचअपरंजलंयाति नभःस्थलंचप्राप्नोति कीदृशंजलंनभःस्थलंच शश्वत्सुलभंबहुवारंप्राप्तमितियावत् १०३६

एवमिति । एवंघटीवत् १०३७ तत्तच्छरीरेपुकार्योविद्याव्यापारंदर्शयति यद्यदिति । आदत्तेनवंलभते आत्मतयायातिआत्मत्वेनमन्यते १०६८ यद्यत्त्यजतीति । अस्मात्शरीरात् १०३९ किंचयस्यदेहस्ययोयआहारस्तमेवश्रेष्ठंमन्यतेइत्याह । यदाहारमिति १०४० किंचप्राप्तदेहधर्मान्दाहपूजादीनात्मनिमन्यतइत्याह अस्येति । तस्यास्यदेहस्य १०४१ मरणमिति । एवं विज्ञानमयःसन्नात्मामरणादिकमेतिप्राप्नोति भुजिंभोगान् १०४२ नरकदुःखानिवर्णयितुंप्रतिजानीते दुःखात्मकमिति । हेराजन्यद्यपिभवताइदंसंसरणंसर्वंदुःखात्मकमित्यवगतंतथापित त्स्मृतयेतस्यसंसारदुःखरूपत्वस्यस्मृतयेयत्किंचिद्वक्ष्यामितच्छृण्विति १०४३ तत्रमरणकालेयद्दुःखंतदुत्सर्जन्यातीतिश्रुतिव्याख्यानकालेदर्शितमित्याह विज्ञानेति । पुरातृतीयब्राह्मणव्या ख्योपान्ते १०४४ अधुनातुनारकदेहप्राप्तौसत्यांयद्दुःखंतद्वर्ण्यतेइत्याह त्यक्तेति । एकंदेहंत्यक्त्वादेहांतरमवश्यंजीवोयातितत्रदेहांतरेनरकेप्राप्तेसतियद्दुःखंभवतितत्स्यस्मरणान्ममभीतिर्जायते इहविद्वद्दशायामपीत्यर्थः १०४५ ननूक्तदुःखकालेयातनादेहःकुतोनन्नश्यतीतिशंकांदृष्टान्तेनपरिहरति स्वप्नेति । यथास्वप्नेशिरश्छेदाद्यनुभवेपिदेहोननश्यतितथैतदपीतिभावः १०४६ तत्र

एवमेषपुमान्गच्छेत्कदाचिद्वसुधातलम् ॥ पातालंनरकंवापिनभोवादिवमेववा १०३७ यद्यच्छरीरमादत्तेब्रह्मणोवाशुनोपिवा ॥ तत्तदात्मतयायातिविज्ञानमयई श्वरः ३८ यद्यत्त्यजतिदेहंसब्रह्मणोवाशुनोपिवा ॥ तत्तद्विष्ठासमंपश्चात्पश्यत्यस्माद्विनिष्कृतः ३९ यदाहारंहियदेहंगृह्णात्येषपरःपुमान् ॥ तदेवाभ्यधिकंनान्य दितितत्रावगच्छति ४० अस्यदाहादिनासर्वदाहाद्यात्मनिमन्यते ॥ चंदनाद्यनुलेपादितस्यतद्वदयंव्रजेत् ४१ मरणंगर्भवासंचजननंचतथाशुजिम् ॥ उच्चावचे षुदेहेषुविज्ञानमयएत्ययम् ४२ दुःखात्मकमिदंसर्वंभवतावगतंस्वयम् ॥ राजंस्तथापिकिंचित्तेवक्ष्येतत्स्मृतयेधुना ४३ विज्ञानमयआत्मयमनादिःकर्मयोगतः॥ देहंत्यजन्महादुःखंप्राप्नोत्येतत्पुरोदितम् ४४ त्यक्त्वादेहंपुनर्यातिदेहांतरमयंसदा ॥ नरकेतत्रमेभीतिःस्मरणादिहजायते ४५ स्वप्नकालेयथादेहःसर्वनाशविवर्जि तः ॥ नरकेयातनादेहोननश्यतितथैवसः ४६ कर्मणामनसावाचादुःखंयद्याद्दृशंकृतम् ॥ यस्यानेनपुरादेहेतत्ताद्दक्ताद्दशःपुनः ॥ कोटिकोट्यधिकंसोपिकुरुतेत स्यदेहिनः४७ अदूराअपिपंथानःकोटियोजनविस्तृताः ॥ मार्गविप्लावकानांस्युर्नरकेक्रूरकर्मणाम् ४८ आयसारतीक्ष्णवदनाःसर्वतोविषकंटकाः ॥ कुर्वंति पादवेधंतेपादत्राणापहारिणाम् ४९ मरणांतसमोभूयात्क्षुधयाचपिपासया ॥ नरकेगच्छतामन्ननीरपाथेयहारिणाम् ५० वासोपहारिणांतद्वद्वसनानिहरंत्यमी ॥ यूनांमातुःपुरस्तद्वत्तन्मात्रादेश्चतत्पुरः १०५१ सुवर्णहारिणांतद्वत्स्वर्णाकारांत्वचंबलात् ॥ हरंतितदतोदेहाद्वशतशोपिसहस्रशः १०५२

तत्रलोकेसामान्यरूपेणदुःखंवर्णयति कर्मणेति । अनेनजंतुनाकायादिव्यापारैर्यस्यजंतोर्दुःखंयादृशंपूर्वंदेहेमानुपलोकेकृतंसदत्तदु खकोजंतुस्तस्यदुःखप्रदस्यदेहिनस्तादृशमूर्तिःसंस्तादृक्दुःखंकोटि गुणाधिकंकरोतीत्यन्वयः ९०४७ अथविशेषतस्तद्वर्णयति अदूराइत्यादिना । मार्गविप्लावकानांमार्गोपद्रवकारिणांक्रूराणामदूराअपिमार्गाः कोटियोजनविस्तृताभवंतीति १०४८ आ यसाइति । पादत्राणमुपानदादितस्यचौराणांलोहमयाःसविषाःकंटकाःपादवेधंकुर्वंतीति १०४९ । १०५० वासइति । अमीयमपुरुषावस्त्रचोराणांवस्त्राणिहरंति तथामातुस्तन्मात्रादे श्चपुरोवालवत्परतंत्रतयावर्त्तितव्यत्वेसतियेयुवानोयुववत्प्रगल्भतयावर्त्ततेतेषांयूनांतद्वर्जितविधंदुःखंभवतीत्यर्थः १०५१ सुवर्णेति । सुवर्णचौराणांत्वचंस्वर्णाकारांस्वर्णवदुज्ज्वलांविधायतत्तस्मा त्स्वर्णापहारदोषातश्रतोनुभूयमानाज्जीवतोदेहाद्यमदूताहरंतीति १०५२

ब्रह्मघ्नानामिति । यथालोहकारगृहेतप्तंलोहंताडयंतितथाएतेयमपुरुषाब्रह्मघ्नानांशिरांसिताडयंतीति १०५३ सुरेति । मद्यपानांमुखेतप्तांसुरांपुनःपुनःपातयंति कीदृशींतप्तांसुरां आयसींलोह द्रवरूपां १०५४ सुवर्णेति । ब्राह्मणस्यतुसुवर्णंतिलमात्रमपियेहरंतितेषांदेहंस्वर्णवदुज्ज्वलंबनंचविधाययमदूतास्तिलशश्छिंदंति १०५५ गुरुतल्पगानांगतिमाह जननीमिति । जननींगुरु स्त्रियंचग्राम्यधर्मेणगंतॄणांशिश्नंछित्वातेनमुखेक्षिप्तेनश्वासंनिरुद्ध्यतैर्जननीगंतृभिस्तजांननींक्रकचसमानांगत्वादिविशिष्टांनाथयंतिआक्रामयंतिपूर्ववदितिद्वयोरर्थः १०५६ । १०५७ परेति । पर दारगाणामपिएतद्गुरुतल्पगेपुयदुक्तंतदेवदुःखंवेदितव्यंपरंतुतत्रशिश्नच्छेदतन्मुखरोधौनस्तइत्यर्थः १०५८ यथापुरुषस्यदुःखमुक्तंतादृशंव्यभिचारिण्याःस्त्रियोपिबोद्धव्यमित्याह यथेति १०५९ न नुपापफलादेशकेपुयोब्राह्मणायावगुरेत्तंशतेनयातयादित्यादिश्रुतिस्मृत्यादिवचनेपुमायःपुंलिंगेनैवपापिनांनिर्देशात्कथंस्त्रीणांदुःखमितिचेन्नपुंल्लिंगनिर्देशस्योपलक्षणार्थत्वादित्याह नपुंसकमिति । परंकेवलंपुसांसंबंधिनिर्दिश्यतेउपलक्षणायनतुपुंस्त्वंविवक्षितमुद्देश्यविशेषणत्वात्गृहंसंमार्ष्टीत्यत्रैकत्ववदितिचतुर्थपादार्थः १०६० स्त्रीणांफलसंबंधंकैमुत्यन्यायंदर्शयति पश्वादीनामिति । केचि न्मुनयःपशुपक्ष्यादीनामपिधर्माधर्मफलमिच्छंतिस्वीकुर्वंतिस्त्रीणांतुपत्नीत्वेनयज्ञाधिकारित्वेनप्रसिद्धानामेतद्धर्माधर्मफलंकथंनभवेदित्यन्वयः १०६१ ननुपत्नीत्वेनापियज्ञादिधर्मस्यैवसंबंधइत्या

ब्रह्मघ्नानांशिरांस्येतेमुद्गरैर्वज्रसंनिभैः ॥ आताडयंतिबलिनस्तप्तलोहंयथाजनाः १०५३ सुरापानांसुरांतप्तामायसींपथिभूरिशः ॥ बलात्क्षिपंतिवदनेरुदतांदीन वत्नृणाम् १०५४ सुवर्णसंमितंस्वर्णंब्राह्मणस्यापहारिणाम् ॥ तिलशःस्वर्णसदृशंदेहंछिंदंतिमार्गगाः १०५५ जननीमधिगंतॄणांग्राम्यधर्मेणदुर्धियाम् ॥ छित्वा शिश्नंमुखेक्षिप्त्वाश्वासरोधंविधायच १०५६ क्रकचांगीतप्ततनुंमानवीतामयोमयीं ॥ नाथयंतियथापूर्वंग्राम्यधर्मेणसागता १०५७ परदारगतौचैतत्किंचिन्यू नमुदीरितम् ॥ दुःखंप्रतशरीराणांनरकेपापकारिणाम् ९८ यथापुंसोभवेद्दुःखंस्वैरिणोग्राम्यधर्मतः ॥ स्वैरिण्याश्चतथैवस्यान्नरकेदुःखमुत्कटम् ९९ नपुंसकंवचूर्ना पिपुमान्वापापकृद्यदि ॥ पाप्मनःफलमागच्छेत्पुंसांनिर्दिश्यतेपरम् ६० पश्वादीनामपीच्छंतिपुण्यापुण्यफलंद्विजाः ॥ केचित्कथंभवेन्नैतत्स्त्रीणांधर्माधिकारतः ६१ अपिवध्वाःफलाभावेव्यर्थःस्याद्विकरग्रहः ॥ धर्मेचार्थेचकामेचममत्वंस्याःसहायिनी ॥ इत्युच्चार्ययतोनैषापाप्मनःफलमाव्रजेत् ६२ दृष्टोनकोपिलोकेस्मिन् जंतुर्यःपाप्मनःफलम् ॥ हित्वाधर्मफलंगच्छेत्प्रमाणैर्विविधैरपि ६३ प्रवर्तकोत्रयःपापेजंतुर्नारीनरोपिवा ॥ तस्यस्यादधिकंदुःखंप्रवर्त्यस्यतथानतत् ६४ उभयो रागतःसंगेसमंदुःखमुदाहृतम् ॥ अज्ञानाच्चबलात्प्रायःकर्तुरेवपरस्यन ६५ नारीवापिनरोवापिग्राम्यधर्मबलाद्यदि ॥ प्राप्नुयान्नभवेत्पापंदुर्बलस्येच्छयाविना १०६६

शंकांवारयति अपीति । किंचवध्वाःस्त्रियाःफलंधर्माधर्मयोरुभयोरपियदिनस्यात्तदाइत्युच्चार्यपाणिग्रहोव्यर्थःस्यात् इतिकिं त्वंममधर्मादौसहार्थिनीस्याःसदैवप्राप्तिशीलाभवेति । यतएवा स्त्रीपाप्मनःफलंनगच्छेत् तथाचधर्मग्रहणस्याधर्मस्याप्युपलक्षणत्वात्सहैवेतिनियमोभज्येतेतिभावः १०६२ किंचयोयस्यशुभफलस्यसंगीसतस्याऽशुभफलमप्यादत्तेइतिलौकिकन्यायेनापिपतिध र्मफलभोक्त्र्याःस्त्रियाःपापसंबंधोदुर्निवारइत्याह दृष्टइति । यथालोकेराजादीनांसंपत्संबंधिनोविपत्तावपिसंबंधिनोदृष्टाइति १०६३ अथप्रयोजकादीनांफलंविवेचयति प्रवर्तकइत्यादिना स्प ष्टम् १०६४ यदिकश्चित्केनचित्कुत्रचित्पापेबलात्प्रवर्तितःसन्स्वयमपिरागवांस्तत्रपापेभवतितदाप्रयोज्यप्रयोजकयोःसमंफलंभवतीतिग्राम्यधर्मोदाहरणेनाह उभयोरिति । उभयोःस्त्रीपुंसयोर्यदि त्वन्यतमस्यतत्रप्रवृत्तिरज्ञानादिष्टसाधनत्वज्ञानाभावात्प्रायोबाहुल्येनवर्तमानात्परकीयबलाज्जायेततदाकर्तुर्हेतुसंज्ञकस्यप्रयोजकस्यैवपापंपरस्यप्रयोज्यस्यतुनेत्यर्थः १०६५ एतदेवस्पष्टयति ना रीतिद्वाभ्यां । तत्रप्रथमंस्पष्टं । द्वितीयेप्रतीकारविवर्जितत्वविशेषणप्रयोगाभिप्रायस्तुयदिप्रतीकारस्यप्रतिबंधोपायस्यसंभवःस्यात्तदास्याकरणंकर्तुर्दोषःस्यादेवेति १०६६

१०६७ बलात्पापकरणप्रसक्तोमरणेनापितत्प्रतीकारोविधेयइतिकेषांचिन्मुनीनांमतमाह मरणेनेति । अत्रबलात्पापकरणप्रसंगेयदिमरणेनापिप्रतीकारोभवेत्तदामरणमपिसदासर्वावस्थासुसं
पाद्यमितिसंबंधः । यदाचतन्मरणोपायमपिपरःकश्चिन्निरुणद्धिप्रतिबध्नातितदाणिकर्तुर्दोषोनास्तीत्यर्थः १०६८ मरणभिन्नेनैवोपायेनपापप्रतीकारोविधेयआत्महत्यायाःसर्वपापेभ्योऽधिक
त्वात् यस्तुपापभयेनात्महत्यांकरोतिसवृश्चिकाद्भीतःसर्पेणदष्टइतिन्यायस्यविषयोभवेदित्याशयवतांमुनीनांमतंसिद्धांततयाह अपरइतिषड्भिः । केचिन्मुनयोऽपरेपरेभ्यःपूर्वपक्षिभ्योभिन्नाः
सिद्धांतविदइतियावत् तएवंमन्यंते एवंकथं सदासर्वास्वप्यवस्थास्वात्ममरणंनसंपाद्यमितिशेषः तत्रहेतुरुत्तरार्द्धेनोक्तः १०६९ पापस्येति । प्रत्युतयदापापाकरणेमृत्युनिश्चयस्तत्रता
दृशेप्रसंगेकथंचननकर्तव्यमपिपापंकर्तव्यमितिसिद्धांतः १०७० हेतुमिति । एतेसिद्धांतविदोद्विजोत्तमाउक्तार्थेहेतुमुपपत्तिरूपमिमंवदंति इमंकं यद्बलेनपापकर्तुर्नकश्चिद्दोषः कारयितुःप्र
योजकस्यैवदोषभाक्त्वात् यदितुतद्भयेनप्रयोज्यआत्ममरणंसंपादयिष्यतितदाप्रयोज्यस्यैवदोषः हियतःअसौप्रयोजकइदंमरणंनकारयतिमरणेनप्रवर्तयतिकिंतुपापमात्रेप्रवर्तयतीतियावत् तथाचमर
णेस्वांतत्र्यलक्षणस्यकर्तृत्वस्याक्षतत्वादात्महत्यादोषोभविष्यत्येवेतिभावः १०७१ सर्वदापापनिषेधकवाक्यानांगतिमाह अकर्तव्यमितिद्वाभ्यां । अकर्तव्यमित्यादिवचनजातंहितत्पापनिषेधकंस

एवंबलात्कृतेपापेप्रतीकारविवर्जिते ॥ कर्तुःपापफलंनैवकिंतुकारयितुर्भवेत् १०६७ मरणेनप्रतीकारोयद्यप्यत्रभवेत्सदा ॥ निरुणद्धियदातच्चपरःकर्तुस्तदाचन
६८ अपरेकेचिदिच्छंतिमरणंनात्मनःसदा ॥ आत्महत्याधिकंपापंमहापातककोटितः ६९ पापस्याकरणेयत्रमृत्युःस्यादात्मनोध्रुवः ॥ कर्तव्यंपातकंतत्रनक
र्तव्यंकथंचन ७० हेतुंचेमंवदंत्येतेबुद्धिमंतोद्विजोत्तमाः ॥ पापंनबलतःकर्तुःकिंतुकारयितुर्भवेत् ॥ मरणेकर्तुरेवस्यान्नह्यसौकारयेदिदम् ७१ अकर्तव्यंनकर्तव्यं
प्राणैःकंठगतैरपि ॥ कर्तव्यमेवकर्तव्यंप्राणैःकंठगतैरपि ७२ इत्यादिवचनंस्वस्यस्वाधीनकरणस्यतत् ॥ नैतद्बलकृतोयस्मान्मृतोदोषोत्रविद्यते ७३ असुर्या
नामतेलोकाअंधेनतमसावृताः ॥ मृत्वातानभिगच्छंतियेकेचात्महनोजनाः ७४ ततःपापंनकर्तव्यंकारणीयंचकर्हिचित् ॥ प्रयोजकःप्रयोज्यश्चतदिच्छासहितो
यदि ॥ अनुमंतातटस्थोयःसामर्थ्येसतिमानवः ७५ त्रयाणामपियत्कुर्यात्पुण्यपापफलंसदा ॥ अत्ररोगादिवैषम्याद्विषमंतत्प्रजायते ७६ अज्ञानादिकृतेपापे
प्रायश्चित्तमुदाहृतम् ॥ पाप्मनोविनिवृत्तस्यनप्रवृत्तस्यकर्हिचित् ७७ पापंकुर्वन्परंजंतुःप्रायश्चित्तंकरोतिच ॥ प्रायश्चित्तंतदातस्यभवेत्कुंजरशौचवत् १०७८
ततोनारीनरोवापिप्रायश्चित्तविवर्जितः ॥ नरकेदुःखमाप्नोतिपापीजंतुःसुदुःसहम् १०७९

त्स्वाधीनकरणकस्यैवास्यजन्तोःसंबंधि परबलेनपापकरणेत्वेतन्निषेधकंवाक्यंनप्रवर्तते यस्माच्चमरणेऽयंस्वतंत्रस्तस्मान्मृतोहठेनकृतायांदोषोविद्यतएवेतिद्वयोरर्थः १०७२ । १०७३ आ
त्महत्यानकर्तव्येत्यत्रश्रुतिमप्यनुकूलयति असुर्याइति । असुर्याःअसुराणामविवेकिनांयोग्याः आत्महनःआत्मघातिनः १०७४ फलितमाह ततइति । यद्यस्माद्धेतोःप्रयोजकस्य
तथासरागस्यप्रयोज्यस्यतथावारणशक्तौसत्यामपियस्तटस्थउपेक्षकइतिलक्षितोऽनुमंताएतेषांत्रयाणामपिकर्मफलसंबंधोभवतिततःपापंस्वयंनकर्तव्यंपरेणनकारयितव्यंचेत्यन्वयः अत्रप्रयोजकादो
रोगाद्यापदांतारतम्यानुसारेणफलस्यवैषम्यंतारतम्यंभवतीतिद्वयोरर्थः १०७५ । १०७६ प्रायश्चित्तानुष्ठानेपिविषयरागिणांनक्षेममितिदर्शयति अज्ञानादीति । अज्ञानंव्यामोहआदिपदेनावि
भ्रमोविपत्तिभेदाश्चगृह्यंते एतैरेवनिमित्तैःकृतेपापेप्रायश्चित्तंयदुक्तंश्रुतिस्मृत्यादौतदपिपुनःपापकरणान्निवृत्तस्यैवक्षेमायभवति । यस्तुजंतुःपरमन्यत्पापंकुर्वन्कारिष्यामाणोवापूर्वपापस्यप्रायश्चित्तं
करोतितस्यजंतोस्तत्प्रायश्चित्तंकुंजरस्नानवद्व्यर्थमितिद्वयोरर्थः १०७७ । १०७८ फलितमाह ततइति । स्पष्टम् १०७९

ब्रह्महादिमहापापिन। येसंवत्सरंसंसर्गिणस्तेपिमहापापिनांगम्यंनरकंयांतीत्याह यस्त्विति । ब्रह्महादेर्नरकगामिनोयादृशंदुःखंभवतितथासंसर्ग्यपिप्राप्नुयादित्यर्थः १०८० हिंस्रस्यगतिमाह वि वादानिति । विगतोवादःसिंहव्याघ्रादिवत्प्रतिद्वंद्वितालक्षणोयेभ्यएतादृशान्प्राणिनोयोहंतितंनिर्दयंनरकमार्गेव्रहवस्तादृशाहतसजातीयाजीवाःप्राणरोधाद्युपायैर्घ्नंतीतिद्वयोःसंबंधः १०८१ । १०८२ मांसभक्षकस्यगतिमाह मांसाशिनइति । अत्रमनुष्यलोकेमांसभक्षकस्यनरकेजीवतएवमांसानिश्वगृध्रादयोभक्षयंतीति १०८३ अधर्मेणकुटुंबपोषणासक्तस्यगतिमाह एवमित्यष्टाभिः । अल्पमेधसःपरलोकचिंताशून्यबुद्धेःपरद्रव्यापहारादिनाकुटुंबपोषणपरस्यनरकंगतस्यपश्यतःसतःतस्यसुतादीन्पिशिताशिनोव्याघ्रादयोऽदंतीतिद्वयोःसंबंधः १०८४ । १०८५ क्वचिदिति । क्वचिन्नरकमार्गदेशे तमेतंअधर्मेणकुटुंबपोषकम् १०८६ क्वचित्क्वचिदिति । तेगृध्रास्तंमूषकव्याप्तदेशादानभसःक्षिपंति १०८७ खादयंतइति । क्वचिच्चतेगृध्रास्तंपापंखादयंतःसंतोदशनैःक्र

यस्तुसंवत्सरंसंगंमहापापिषुकेनचित् ॥ कुर्यात्सोपितथैवेयाद्दुःखंनरकगामिनः १०८० विवादान्प्राणिनोहन्यात्करुणारहितस्तुयः ॥ तंमार्गेतादृशाजीवाबहुशो घ्नंतिनिर्दयम् १०८१ प्राणरोधैस्तथाशस्त्रघातैर्दंतैश्चनिष्ठुरैः ॥ खुरैश्चनखरैस्तद्वत्पादघातैःसुदारुणैः ॥ लोहैस्तीक्ष्णैस्तथाशृंगैःप्रहारैर्वज्रसन्निभैः १०८२ मांसाशिनोत्रमांसानिजीवतोऽदंतिसर्वतः ॥ श्वगृध्रप्रमुखाःसर्वेजंतवःपिशिताशनाः १०८३ एवमेवकुटुंबेनसहितस्याल्पमेधसः ॥ परद्रव्यापहारेणकुटुंबभरणस्य हि १०८४ पश्यतस्तस्यखादंतिसुतान्प्राणादपिप्रियान् ॥ दारान्बंधुजनांश्चान्यान्जीवतःपिशिताशिनः १०८५ क्वचिद्गृध्रास्तमाकाशेवज्रतुंडानयंतिच ॥ कुटुंबसहितंतद्वद्दृष्ट्वावेतंक्षिपंत्यपि १०८६ क्वचित्क्वचिच्चमहतिमूषकादिसमाकुले ॥ जलाशयेक्वचिद्भूमौकठिनायांनभःस्थलात् १०८७ खादयंतःक्वचित्पापंगृ हीत्वादशनैर्निजैः ॥ कर्षयंतिमुहुर्दीनंसमेपिविषमेपिच १०८८ क्वचिदग्नौक्वचिद्वायौह्यगाधेपिजलेक्वचित् ॥ मलमूत्रादिसंघेवापरपीडाकरःपतेत् १०८९ आ धिभिर्व्याधिभिश्चायंपरिपूर्णकलेवरः ॥ क्षुत्पिपासापरिश्रांतःश्ववत्सर्वैर्निराकृतः १०९० तादृशैर्बंधुभिर्वीतएकाकीवाव्रजेत्पुमान् ॥ यमराजपुरस्यैतंमार्गंघोरत मंमृतः १०९१ क्वचिन्मार्गेतपत्येषसविताद्वादशात्मकः ॥ ताम्राभिर्धातुभिर्वन्हेर्वन्हिज्वालासमावृते ॥ ननीरंनतरुस्तत्रनाश्रयश्चाशनंकुतः १०९२ कर्मणाम नसावाचाभूतानांतापकृत्पुमान् ॥ मार्गमेतंसमायातिहन्यमानश्चकिंकरैः १०९३ यथाराजभटाश्चोरंबद्ध्वापाशैःसुदारुणैः ॥ प्रहारैर्विविधैस्तद्वन्निघ्नंतोनिर्दयंमु हुः १०९४ भर्त्सयंतश्चतत्कर्मकथयंतःपुरामुना ॥ कृतंयद्बहुधामीषांसराज्ञांविप्रियंमुहुः १०९५ एवंबद्ध्वादृढैःपाशैर्निघ्नंतोविविधैरपि ॥ प्रहारैर्मुद्गराद्युत्थैर्भर्त्सयं तश्चकिंकराः ॥ नयंतिनरकग्राममार्गेपापकृतंनरम् १०९६

र्षयंतिआकृष्टंकुर्वंति १०८८ क्वचिदग्नाविति । सपापोगृध्रादिभिर्मुक्तःसन्नग्न्यादिषुपतति १०८९ आधिभिरिति । अयमधर्मेणकुटुंबपोषकोमानसशारीरपीडाव्याप्तःक्षुधादिव्याकुलश्चश्ववत्सर्वैर्निरा दृतोभवतीति १०९० तादृशैरिति । तादृशैर्वर्णितदशापन्नैर्बंधुभिर्विशिष्टएकाकीवायमलोकमार्गंसपापीगच्छतीति १०९१ मार्गंवर्णयति । क्वचिन्मार्गइति तत्रमार्गेद्वादशमूर्तिरादित्यस्तपति कीदृशे अ धोज्वलतोवन्हेःसंबंधात्ताम्रवर्णैर्धातुभिर्युक्ते वन्हिज्वालाव्याप्तेनीरादिरहितेचेति १०९२ तत्रमार्गेगमनाधिकारिणंनिर्दिशति कर्मणेति । कर्मस्थूलशरीरव्यापारः ९३ तत्रमार्गेपापिनोयद्यमदूतैर्नयनं तत्रदृष्टांतमाह यथेतिद्वाभ्यां । एषांराजभटानांसराज्ञांराजसहितानांविप्रियंकोपजनकंयत्कर्मकृतंतत्कथयंतः ९४ । ९५ दार्ष्टांतिकेयोजयति एवमिति । किंकरायमस्य पापकृतंपापकारिणम् १०९६

यमदूतैःकृतंपापिभर्त्सनवाक्यजातमभिनयति आःपापेत्यादिना । आस्इत्यव्ययंकोपोक्तौ । वर्षखंडे १०९७ बांधवास्तुनारकशरीरेपिसुखवर्जंसंतीत्याहुः रेइति २०९८ येषांचिंतया त्वयासुकृतवैमुख्यंपापोन्मुख्यंचकृतंतेबांधवास्त्वांश्मशानेत्यक्त्वागताइत्याहुः दारादीनामिति १०९९ कृतमिति । यदित्वयासुकृतंकृतमभविष्यत्तदातत्त्वयासहागमिष्यत् यथादुष्कृतमागतमिति ११०० व्याघ्रादिवेति । तेषांप्राणिनांद्रव्याद्यपहारकाद्भवतःसकाशात्प्राणिनोव्याघ्रादिवविभीताभयंप्राप्ताः ११०१ यद्यदिति । अतःसमीचीनपरद्रव्यापहारदोषात् ११०२ वाक्पथेनेति । यश्चवाक्यादिनापरेषांसंतापःकृतःसएवत्वांप्राप्तः ११०३ धिगिति । विनश्यतिपतति ११०४ पापिनउद्वेगायत्वयापितृलोकप्रापकःपितृयाणाख्यःपंथाअपिनवशीकृतइतिवक्तुंपितृयाणमभिनयति मानुषादितित्रिभिः । अत्रधूमादिशब्दास्तदभिमान्यातिवाहिकदेवतापराःयेषण्मासादक्षिणायनसंज्ञास्तान्कृष्णपक्षाद्गच्छतीति ११०५ ततइति । ततोदक्षिणायनसंज्ञमासेभ्यः ११०६ आकाशादिति । अत्रचंद्रमंडलेसकर्मीदेवाधीनोभोगान्भुंक्तेइत्यर्थः ११०७ वर्णितवक्ष्यमाणयोःप्रकृतोपयोगउच्यते । यज्ञेति । हेपापयथायज्ञादिकर्त्तारोवर्जितमार्गेग

आःपापभवताकस्माल्लब्ध्वादेहंसुदुर्लभम् ॥ मानुषंभारतेवर्षेस्वर्गमोक्षप्रदंसुखात् ॥ नकृतंसुकृतंकिंचित्पातकंचकृतंमुहुः १०९७ रेमंदनरकेप्यस्मिन्भविष्यंतितवाधुना ॥ दाराःसुतास्तथाचान्येबांधवाःसुखवर्जिताः ॥ नभविष्यतिकिंत्वेवंसुखंयद्धितमिच्छसि १०९८ दारादीनांकृतेपापभवतापातकंकृतम् ॥ परित्यज्यगताःसर्वेश्मशानेत्वांतईदृशम् १०९९ कृतंचेत्सुकृतंपूर्वंभवतातत्त्वयासह ॥ समागच्छेद्यथापापमागतंदुःखदंत्विदम् ११०० व्याघ्रादिवविभीतानिभूतानिभवतोधम ॥ सर्वदाबलतस्तेषांद्रव्यादेरपहारकात् ११०१ यद्यद्यस्यसमीचीनंगोधनंस्त्रीधनादिकम् ॥ तत्तत्स्यहृतंपूर्वंत्वयादुष्कृतकारिणा ॥ अतोनेत्रेचहृदयंग्रास्तेपाटयंत्यमी ११०२ वाक्येननिष्ठुरेणैषांकर्मणाचवधादिना ॥ यःकृतोदुःसहस्तापःसोयंतेसमुपस्थितः ११०३ धिक्त्वांयोभारतेजातोनरकेपुनरागतः ॥ पुण्यहीनोयथालोकेप्राप्यराज्यंविनश्यति ११०४ मानुषाद्वपुषोधूमंधूमाद्रात्रिंततोपिच ॥ कृष्णपक्षंततोमासान्षडवेस्युर्दक्षिणायनम् ११०५ ततोरम्यतरंलोकंपितृणांप्रतिपद्यते ॥ पितृलोकादयंगच्छेदंतरिक्षंसदोज्ज्वलम् ११०६ आकाशाच्चंद्रमभ्येतिसुधामण्डलमत्रसः ॥ सुखंभोगानवाप्नोतिदेवैर्दत्तान्मनोरमान् ११०७ यज्ञदानादिपुण्यस्यकर्तानत्वंतथागतः ॥ कुतस्त्वयिभवेदाशाब्रह्मलोकगतिंप्रति ११०८ मानुषंवपुरास्थायमहात्मानोजितेंद्रियाः ॥ अष्टांगयोगसंपन्नानोपासनवेदिनः ११०९ उपासनेनकेनापिसमुपास्यमहेश्वरम् ॥ पंचाग्निविद्ययावैतेब्रह्मलोकंव्रजंतिहि १११० दशमद्वारतोयेयंबहिर्नाडीविनिर्गता ॥ तयागत्वार्चिषंयांतितस्माद्यांतिहिवासरम् ११११

पितृलोकंयांतितथात्वंयज्ञादिकर्त्तासन्नगतःएवंशारीरकर्मणापिसाध्यंस्वर्गंगंतुमनर्हस्त्वयिमानसकर्मरूपोपासनासाध्यब्रह्मलोकगतिंप्रतिकाआशासंभावनेत्यर्थः ११०८ ब्रह्मलोकगमनाधिकारिणोदर्शयति मानुषमिति । येमानुषंवपुःप्राप्यमहात्मानःक्षुद्रसुखेभ्योविरक्ताअतएवजितेंद्रियायमनियमादियोगांगसंपन्नाश्चनानोपासनानिशास्त्रतोविज्ञायतेष्वन्यतमेनपर्यंकविद्यादिसंज्ञेनपरमेश्वरमहंग्रहेणोपासंतेपंचाग्निविद्यांवानुतिष्ठंतितेब्रह्मलोकंव्रजंतीतिद्वयोरर्थः ११०९ । १११० अथब्रह्मलोकमार्गस्यदेवयानाख्यस्वरूपंतथाब्रह्मलोकस्यरूपंचछान्दोग्यबृहदारण्यकवाक्योपसंहारपूर्वकंकौषीतकिप्रथमाध्यायानुसारेणाह दशमेतिपंचविंशतिश्लोकैः । येयंनाडीशतंचैकेत्यादिश्रुतिप्रसिद्धासुषुम्नाख्यादशमद्वारेणशरीराद्बहिर्गतातयामार्गभूतयायेप्रथममर्चिषमर्चिरभिमानिनींदेवतांततोदिनाभिमानिनींदेवतांयांतीत्यर्थः । एवमग्रेपि ११११

शुक्लमिति । दिनात्शुक्लपक्षंशुक्लपक्षान्मासषट्करूपमुत्तरायणमुत्तरायणात्संवत्सरंव्रजंतीति ॥ १२ ॥ देवेति । संवत्सराद्देवलोकंदेवलोकाद्वायुंव्रजंति कीदृशंवायुं आगतायउपासकायस्व स्मिन्रथचक्रच्छिद्रसमच्छिद्रदायिनं वायोःसकाशादादित्यंयांति कीदृशमादित्यं आगतायउपासकायडंबराख्यवाद्यविशेषमध्यच्छिद्रसमच्छिद्रदायिनमित्यर्थः ' पटहाडंबरौसमौ ' इत्यमरः ॥ १३ ॥ आदित्यादिति । आदित्याचंद्रंदुंदुभिसंज्ञवाद्यविशेषमध्यच्छिद्रसमच्छिद्रदायिनंप्राप्नुवंतिततोविद्युल्लोकंयांतितत्रविद्युल्लोकेऽमानवोमनुसृष्टावनुत्पन्नःपुरुषविशेषआगत्यउपासकंब्रह्मलोकं प्रतिनयति । कीदृशंब्रह्मलोकं वरुणलोकादिंद्रलोकात्प्रजापतिर्विराट्तल्लोकाच्चपरतःस्थितं । पुनःकीदृशंकामक्रोधादिभिर्ब्रह्मलोकप्राप्तिप्रतिबन्धकैर्विरचितत्वादारसंज्ञकेनहृदेनआदिपदग्राह्यवि जरानद्यादिभिश्चप्रवेशदेशेयुक्तमितिद्वयोरर्थः ॥ १४ ॥ ॥ १५ ॥ ब्रह्मणेति । यत्रआरसंज्ञकहृदापरपारेवर्तमानमुपासकंब्रह्मणोयोग्येनालंकारेणालंकर्तुंब्रह्मणाप्रहिताःप्रेषिताःपंचशतसंख्याका अप्सरसआयांति नानाविधान्युपायनानिपाणिपुयासांतास्तथा ॥ १६ ॥ तासांशतपंचकस्यउपायनभेदेनविभागमाह शतमितित्रिभिः । तासांमध्येशतमप्सरसःसुगंधिपुष्पनिर्मितमालाहस्ताः

शुक्लपक्षंव्रजंत्यन्हस्तस्मादप्युत्तरायणम् ॥ उत्तरायणषण्मासाद्ययुःसंवत्सरंत्विमे ॥ १२ ॥ देवलोकंप्रयांत्यब्दाद्देवलोकात्प्रभंजनम् ॥ रथचक्रसमच्छिद्रंवायोरा दित्यमीश्वरम् ॥ व्रजेयुश्छिद्रसहितंडंबरस्येवमध्यतः ॥ १३ ॥ आदित्याचंद्रमायांतिदुंदुभिच्छिद्रदायिनम् ॥ चंद्राद्विद्युतमायांतिततोऽमानवएत्यतान् ॥ १४ ॥ वरुणेंद्रप्रजानाथलोकानांपरतःस्थितम् ॥ ब्रह्मलोकंनयेद्यत्रतिष्ठत्यारहृदादिकम् ॥ १५ ॥ ब्रह्मणाप्रहितायत्रह्यायांत्यप्सरसःसदा ॥ दिव्याःपंचशतंपूर्णनानोपा यनपाणयः ॥ १६ ॥ शतंसुगंधपुष्पाणांमालाहस्तंसमाव्रजेत् ॥ सुगंधीनिचदिव्यानिगृहीत्वाशतमाव्रजेत् ॥ १७ ॥ फलानिचास्यदिव्यानिगृहीत्वाशतमाव्रजेत् ॥ चूर्णानिचविचित्राणिसुगंधीनिसमंततः ॥ १८ ॥ गृहीत्वाशतमायातिवासोहस्तंशतंपरम् ॥ नानालंकारहस्तंचव्रजेत्पंचमकंशतम् ॥ १९ ॥ ब्रह्मायथाब्रह्मलो केदेवोलंक्रियतेसदा ॥ अलंकुर्वंत्यमुंतद्वत्तत्रतास्तुसमागताः ॥ २० ॥ अलंकृतस्ततस्ताभिरागंताऽऽरंक्षणेनहि ॥ मनसाभ्येत्यनिर्यातिमुहूर्तान्येष्टिहानमून् ॥ तंदृष्ट्वादर्शनेसर्वेविद्रुताःस्युर्दिशोदश ॥ २१ ॥ पापानिद्वेषिणांदत्वासुहृदांसुकृतानिच ॥ पुत्राणांचधनान्येषजरामरणवर्जितः ॥ मनसाविजरांनामनदीमभ्ये तितत्क्षणात् ॥ २२ ॥

समायांति द्वितीयमप्सरसांशतंसुगंधीनिकर्पूरादिवासिततैलादीनिशरीरांजनोपयोगीनिकरेषुगृहीत्वायातीत्यर्थः ॥ १७ ॥ फलानिचेति । अथतृतीयमप्सरसांशतंदिव्यफलहस्तमागच्छति । चतुर्थंशतमंगमर्दनोपयोगिनानासुगंधिचूर्णहस्तमागच्छति । पंचमंशतंवासोभिर्वसनैर्युक्तहस्तमागच्छति । एतत्पंचमंशतंनानालंकारहस्तंचबोध्यमितिद्वयोरर्थः ॥ १८ ॥ ॥ १९ ॥ ब्रह्मेति । यथाताभिरप्सरोरूपाभिःपरिचारिकाभिर्ब्रह्माहिरण्यगर्भःप्रतिदिनंभूष्यतेतथाऽमुमुपासकमपिब्रह्माज्ञयाभूषयंतीत्यर्थः ॥ २० ॥ अलंकृतइति । सब्रह्मलोकंप्रतिआगंताउपासकस्ताभिरलंकृतः सन्क्षणेनआरंनामहृदंमनसैवातीत्यतीत्वापरपारेस्थितान्मुहूर्तान्त्रिंशन्मुहूर्तान्प्रतियाति कीदृशान्मुहूर्तान् येष्टिहसंज्ञकान् अमून्मुहूर्तरूपेणसर्वैपांसन्निहितानित्यर्थः येष्टिहनामनिर्वचनंतुयांतिब्रह्म लोकंप्रतीतियाःउपासकास्तेषामिष्टिमुपासनांनानासंकल्पोत्पादनेनघ्नंतीतितेतथेति तमुपासकंविद्याबलेनागतंदृष्ट्वातस्यदर्शनगोचरदेशात्सर्वेमुहूर्ताःपलायंतइत्यर्थः ॥ २१ ॥ पापानीति । ततोविज रान्नदीतीरंगतस्योपासकस्यपापादीनितंपरिहृत्यविलीयमानानिद्वेषिप्रभृतिपुस्वसजातीयोत्पत्तिंकुर्वंतीत्यर्थः तथासत्येषउपासकोजरामरणवर्जितःसन्विजरांनामनदींमनसैवतरतीत्यर्थः ॥ २२ ॥

इल्येति । ततइल्यंइलापृथिवीतन्मयत्वेनइल्यसंज्ञंवृक्षंप्राप्नोतितत्रप्राप्तमुपासकंब्रह्मणोयोग्योदिव्यगंधःप्राप्नोति ततःशालज्यसंज्ञकंसंस्थानंनगरंप्राप्नोतितत्रगतंब्रह्मयोग्योदिव्योरसस्तंप्राप्नोति शाल ज्यनामनिर्वचनंतुशालवृक्षवत्तथाधनुर्ज्यावच्चसरलत्वेनमनोरमावापीकूपादिरचनायत्रतत्तथेति ११२३ अथेति । ततोऽपराजितंनामब्रह्मणआयतनंमंदिरंप्राप्नोतितत्रगतमुपासकंब्रह्मणस्तेजः प्रविशेत्येनतेजोलाभेनहेतुनाअमुनाब्रह्मणासमोभवतीत्यर्थः ११२४ इंद्रेति । तस्यब्रह्मगृहस्यद्वारपालतयाऽवस्थिताविंद्रप्रजापतीतस्मैउपासकायमार्गंदत्वाभीतवत्तिष्ठतः ११२५ विभुप्रमित मिति । सउपासकोविभुप्रमितेतिसंज्ञकंब्रह्मणःसभामंडपंयातितत्रगतंतंब्रह्मसंबंधियशःप्राप्नोति तेनयशोलाभेनब्रह्मणासमोयशस्वीभवति नामनिर्वचनंतुविभुनाब्रह्मणैवस्वयंविमितंनिर्मितमितिभा ष्यकृतोक्तं वृत्तिकृतातुविभुरहंकारस्तेनविमितंतन्मयमितेयावदित्युक्तम् ११२६ प्रज्ञेति । सउपासकःपरमेष्ठिनोवेदिकांसभामध्यगतंयत्पर्यंकस्थानभूतंकाष्ठादिनिर्मितंपादयुक्तमुन्नतमासनंतद्रू पामासंदीपदोक्तांबुद्धितत्वमयींप्राप्नोतितांवेदिकांप्राप्यबुद्धिवृद्धिंप्राप्नोतिततस्तत्रस्थितंब्रह्मणःपर्यंकंप्राप्नोतीत्यर्थः । तस्यावेदिकायाःस्वरूपविन्यासस्तु बृहत्सामतथारथंतराख्यंसामएतेपूर्वगतपादद्व यभावंप्राप्तेस्तः । श्येतसंज्ञंनौधससंज्ञंचएतेसामनीपश्चिमपादभावंप्राप्ते । तस्यावेदिकायाउपरिचत्वारःकोणाः तत्रदक्षिणःकोणोवैरूपाख्यसामरूपः उत्तरःकोणोवैराजाख्यसामरूपः पूर्वः

इल्यवृक्षंगतंब्रह्मगंधस्तंप्रविशेदिह ॥ ततःशालज्यसंस्थानेरसोपिब्रह्मणोविशेत् ११२३ अथायतनमायातिब्रह्मणःसोपराजितम् ॥ ब्रह्मतेजोविशेदेनंतत्रयेना मुनासमः ११२४ इंद्रप्रजापतीदेवौद्वारगोपाववस्थितौ ॥ दत्वामार्गमिमौतस्माआसातेभीतवत्स्वयम् ११२५ विभुप्रमितमायातिब्रह्मणःससभास्थलम् ॥ विशत्यमुंब्रह्मयशोयशस्वीतत्रतेनसः ११२६ प्रज्ञाभिधांसआसंदींवेदिकांपरमेष्ठिनः ॥ प्राप्यप्रज्ञासमायुक्तोव्रजेत्पर्यंकमीशितुः ११२७ आसंदीसंस्थितंचित्रंप्रा णाख्यममितौजसम् ११२८ पूर्वौपादौजगत्सर्वंकालत्रयवशीकृतम् ॥ इराश्रीश्चपरौपादौपर्यंकस्यमहात्मनः ॥ बृहद्रथंतरेज्ञेयेखट्वांगेवामदक्षिणे ॥ मूर्ध्नपादस्थि तेभद्रयज्ञायज्ञीयसंज्ञिते ११२९ ऋचश्चसामसहिताःपूर्वपश्चिमसंस्थिताः ॥ पट्टिकाश्चयजूंष्येतावामदक्षिणसंस्थिताः ११३० सोमांशवस्तुविज्ञेयामृदूपस्तरणं महत् ॥ क्षीरगौरंतथावस्त्रमुद्गीथस्तस्यचोपरि ॥ उपबर्हणमाख्यातंश्रीरस्योच्छीर्षकंमहत् ११३१

कोणःशाकराख्यसामरूपः पश्चिमस्तुरैवताख्यसामरूपइतिश्रुत्युक्तोबोध्यः ११२७ पर्यंकंवर्णयति आसंदीतिचतुर्भिः । कीदृशंपर्यंकं वर्णितायाआसंद्याउपरिस्थितंचित्रमद्भुतंप्राणरूपम मितौजससंज्ञंचेति तस्यपर्यंकस्यपूर्वौशिरोभागाधाररूपौपादौअतीतानागतंतदुपलक्षितंवर्त्तमानंचयज्जगत्तद्रूपौ इरापृथिवीश्रीर्लक्ष्मीश्चएतदुभयरूपौपश्चिमौचरणभागाधारभागगतौपादौबोध्या वित्यर्थः ११२८ बृहदिति । तस्यपर्यंकस्यबृहत्सामदक्षिणदीर्घपट्टिकारूपंखट्वांगंरथंतरंतुउत्तरदीर्घपट्टिकारूपंभद्रसंज्ञकंसामपूर्वप दयोर्मध्यगतायालघुपट्टिकातद्रूपंयज्ञायज्ञीयसंज्ञंसामतुपाद भागाधारयोःपश्चिमपादयोर्मध्यगतपट्टिकारूपमित्यर्थः ११२९ ऋचश्चेति । पर्यंकपूर्वपश्चिमायतादक्षिणोत्तरायताश्चसूत्रमय्यःपट्टिकाःप्रसिद्धाःतथात्रगीत्यात्मसामसहिताऋचश्छंदोबद्धमन्त्र रूपाःपूर्वपश्चिमायतसूत्रपट्टिकाभूताबोध्याः यजूंषिसंश्लिष्टपठितमंत्ररूपाणिदक्षिणोत्तरायतसूत्रपट्टिकाभूतानिबोध्यानीत्यर्थः ११३० सोमांशवइति । तस्यपर्यंकस्योपरियन्मृदुकोमलमुपस्त रणंतूलकादिरूपंतच्चंद्रकिरणात्मकंबोध्यं यच्चास्तरणोपरिश्वेतंवस्त्रंनिबद्धंतितदत्रोद्गीथरूपंबोध्यं उद्गीथोनामसाम्नोभागविशेषः तत्रपर्यंकेउपबर्हणंलक्ष्मीरूपं उपबर्हणपदार्थमाह उच्छीर्ष कमिति उदूर्ध्वंन्यस्यतेशीर्षंशिरोयत्रतत्तथा पूर्वपादत्वेनवर्णितालक्ष्मीर्लौकिकी इयंवैदिकीतिभेदोबोध्यः ११३१

आस्तइति । तस्मिन्वर्णितेपर्यंकेहिरण्यगर्भस्तिष्ठतियस्यानंदादुत्कृष्टआनन्दोलोकेनास्तीत्युक्तमितिशेषः ११३२ अश्वत्थइति । सोमस्यामृतस्यस्रावकत्वात्सोमसवननामकोश्वत्थवृक्षस्तस्य हिरण्यगर्भस्यनित्यंप्रियःप्रीतिजनकस्तिष्ठति तथाएकोऽर्णवःअरसंज्ञकोद्वितीयोण्यसंज्ञकःएतौद्वौद्वंद्वंसहभूतौअमृतपूर्णौब्रह्मणःप्रीत्यैतिष्ठतइत्यर्थः ११३३ मनसइति । मनसोमाताग्रेयमविद्यारूपाजगत्कारणभूताप्रसिद्धासादेवस्यहिरण्यगर्भस्यप्रियामुख्याभार्येति ११३४ चक्षुषइति । तथायेयंचक्षुरिंद्रियस्यप्रकृतिरुपादानभूतातेजसःसात्विकांशात्मिकासाहिरण्यगर्भस्यप्रभोश्छायाप्रतिबिंबरूपेत्यर्थः ११३५ अंबाइति । वाचकशब्दानुसंधानपूर्विकाजगत्सृष्टिःप्रसिद्धासभूरित्युक्ताभुवमसृजत् ‘वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरः’ इतिश्रुतिस्मृत्यादौ तथाचशब्दाालिर्वाचकशब्दपंक्तिस्तद्रूपेणजगतोजननीभूतायाःश्रुतयोवेदवाक्यानिताअंबापदेनात्रोक्ताःयाश्चतद्गताःताभिःश्रुतिभिर्लब्धाधियःशाब्दबोधरूपास्ताअंबायवीयाशब्देनोक्ताः अंबाभ्योयवमात्रमपिनाधिकाइत्यर्थकत्वात् ताएताःश्रुतयस्तज्जन्यबुद्धयश्चब्रह्मलोकेअप्सरोरूपेणवसंतीत्यर्थः ११३६ यस्येति । यस्यहिरण्यगर्भस्यप्रभोर्देशेनद्यएताःश्रुतिषुप्रसिद्धाउपासनारूपाःश्रुतौअंबपाशब्देन अंबंनेत्रसमंब्रह्मज्ञानंपांतिरक्षंतीतिव्युत्पत्तिकेनोक्ताः सगुणंनिर्गुणंवाब्रह्मज्ञानंजलवद्धारयंत्योवहंति धारावाहित्वंहिनदीनामुपासनानांचसममित्यर्थः तथाजगंतिनानाविधानिलोकसंस्थानानिविकाशित्वधर्मेणपुष्पाणियस्यप्रभोर्भोग्यतयासंति तथासूक्ष्मसमष्ट्यात्मनोहिरण्यगर्भशरीरस्याच्छादकत्वात्तानिजगंतिवाससीचदुकूलशाटिकात्मकवस्त्रद्वयात्मकानीत्यर्थः ११३८ एवमिति ।

आस्तेतस्मिन्ब्रह्मनामापूर्वजोजगदीश्वरः ॥ हिरण्यगर्भोयस्मात्स्यादानंदःपरमोनहि ३२ अश्वत्थःसोमसवनोयस्यनित्यप्रियोमतः ॥ अरण्यावर्णवौद्वंद्वंब्रह्मलोकेनिवासिनौ ३३ मनसोजननीयेयमविद्यासर्वकारणम् ॥ यस्यप्रियाहिदेवीसाब्रह्मणःसूत्ररूपिणः ३४ चक्षुषःप्रकृतिर्येयंतेजोरूपाव्यवस्थिता ॥ तेजोमयीमहेशस्यच्छायायस्यमहात्मनः ३५ अंबाःशब्दालिजननीश्रुतयस्तद्गताधियः ॥ वसंत्यप्सरसोयस्यपरितोत्रसुखप्रदाः ३६ यस्याम्बेवहंत्येतानद्यःसर्वसुखप्रदाः ॥ ब्रह्मज्ञानाभिधंनीरंगृहीत्वासर्वतोदिशम् ॥ जगंतियस्यपुष्पाणिवाससीचमहात्मनः ३७ एवंरूपमुपास्यैनंब्रह्माणंतस्यचासने ॥ सुतवत्पालितःसोपिसमारोहत्यशंकितः३८संवाद्यब्रह्मणापित्राशास्त्रदृष्टेनवर्त्मना ॥ अनुज्ञातोवसेत्तेनतत्रतद्वत्सुखंनरः३९चक्षुर्वाक्श्रोत्रमनसांवायोश्चापिसमंततः ॥ प्राणापानौतथाव्यानसमानौचापरौस्मृतौ ॥ उदानश्चेतिविज्ञेयाआश्रयाःपंचसूरिभिः ४० प्राच्यांप्रतीच्यांचतथादक्षिणोत्तरयोरपि ॥ ऊर्ध्वंवाहृदिपद्मेस्मिन्पंचच्छिद्राणितेस्मृताः ११४१

एवंरूपंवर्णितेनदेवयानाध्वनाआरन्हदादिभिश्चविशिष्टतयाध्येयंब्रह्माणमुपास्यपर्यंकविद्याख्यध्यानगोचरंकृत्वासउपासकस्तस्यब्रह्मणआसनेपुत्रवत्पालितःपतनस्थानाद्रक्षितोनिःशंकश्चसमारोहतीत्यर्थः ११३८ संवाद्येति । तत्रचतंब्रह्मापृच्छतीत्यादिशास्त्रेश्रुतिग्रंथेदृष्टंप्रसिद्धंयद्वर्त्मप्रकारस्तेनकृत्वाब्रह्मणापित्रासहसंवाद्यसंवादंकस्त्वमसिकानिचतवोपकरणानीतिचेत्यस्त्वमसिसएवाहमस्मियानिचतवोपकरणानितान्येवममएवंविधंकृत्वातेनब्रह्मणानुज्ञातःसंस्तत्तुल्यभोगभागीब्रह्मलोकस्थितिपर्यंतंब्रह्मलोकेवसतिततोमुच्यतेचेत्यर्थः ११३९ एवंपर्यंकविद्यादर्शिताअथान्यासामपिशांडिल्यविद्यादिसंज्ञानामहंग्रहोपास्तीनांब्रह्मलोकप्रापिकानामुपलक्षणायतासांसर्वासामंगभूतंहृदयकमलध्यानंछांदोग्यतृतीयेप्रसिद्धमभिनयति । चक्षुरिति चक्षुरिंद्रियस्याधिदैवरूपादित्यसंबद्धस्याध्यात्मंप्राणआश्रयस्तस्यप्राणस्यापिहृदयकमलपूर्वदिग्गतंछिद्रमाश्रय एवमग्निदैवतसंबद्धवागिंद्रियस्यापानमाश्रयस्तस्यापिहृदयकमलदक्षिणच्छिद्रमाश्रयः तथापर्जन्यदैवतकमनसःसमानआश्रयस्तस्यापिहृदयकमलोदक्छिद्रमाश्रयः । तथावायोराकाशसंबद्धस्यउदानआश्रयस्तस्यापिहृदयकमलोर्ध्वच्छिद्रमाश्रयइतिद्वयोस्तात्पर्यं । तेप्राणादयःप्राच्यादिवर्तिच्छिद्रात्मकाइतितुआश्रिताश्रययोरभेदविवक्षयोक्तमितिबोध्यम् ११४० । ११४१

हृदयवर्णनस्यप्रकृतोपयोगंदर्शयति पंचच्छिद्रइति ।। वर्णितपंचच्छिद्रवतिहृदयेत्वयासत्यकामादिगुणैःसगुणमपिब्रह्मनचिंतितंशांडिल्यविद्यादिविधिनानध्यातंनिर्गुणंब्रह्मतुत्वादृशचित्ताद्दूरतरं स्थितंयस्यनिर्गुणब्रह्मणोज्ञानादेनमधिकारिणंनतिनिखिलंसंसारदुःखंनागच्छति कीदृशंसंसारदुःखरूपंफलं स्थूलसूक्ष्मकारणशरीरैर्वृक्षांकुरबीजस्थानीयैःप्रयुक्तमितिद्वयोःसंबंधः ४२ । ४३ अहंग्रहोपास्तयोहिप्रत्यग्दृष्टिसाध्यत्वादुष्कराअतएवतासांक्रममुक्तिःफलं पंचाग्निविद्यातुप्रत्यग्दृष्टिहीनत्वेनसुकराऽतएवसपुनरावृत्तिब्रह्मलोकप्राप्तिफलका भवतातुसापिनकृतेतिबोधयंतोवा जसनेयिशाखानुरोधेनपंचाग्निविद्यामभिनयंति भवतेतिपड्भिः । हेजंतोभवताद्यौश्चस्वर्गःपर्जन्योमेघोधरामनुष्यलोकोरेतःसिक्पुरुषोयोषित्स्त्रीचएतद्रूपंवन्हिपंचकंनकृतंनध्यातम् । कीदृशं वन्हिपंचकं सुकृतं अर्चिरादिपथब्रह्मलोकप्रापकंपुण्यंतज्जनकमितियावत् । पुनःकीदृशं अग्निहोत्रादिकं अग्निहोत्रमादिरधिकारसंपादकंयस्यतत्तथा नह्यग्निहोत्ररहितैःपंचाग्निविद्यानुष्ठातुंशक्यते आहिताग्नेःपष्ठाग्नित्वेनध्यानस्यवाजसनेयिशाखाविहितस्यलोपप्रसंगादितिभावः ४४ स्वर्गादीनांयदग्नित्वेनध्यानंतत्परिपोषकाणामग्न्युपकरणानांकल्पनांप्रपंचयंस्तत्रसमिद्रूपेणध्येयान्पदार्थान् निर्दिशति आदित्येति । सम्यगिंधयतिदीपयत्यग्निमितिसमिद्यथाप्रसिद्धाग्नेस्तथास्वर्गरूपाग्नेरादित्यःसमित्सत्कर्मणांप्रवर्तकत्वात् । एवंपर्जन्याग्नेःसंवत्सरःसमित्संवत्सरेणहिजलेसंचितेपर्जन्योवर्षाकालेवृष्टिसमर्थोभवति । तथामनुष्यलोकाग्निःपृथिव्यासर्वाधारभूतयाशोभतेइतिपृथिवीतस्यसमित् । तथापुरुषोव्याप्तेनव्याख्यानादौप्रसारितेनमुखेनशोभतेइतिव्याप्तंमुखंपुरुषाग्नेः

पंचच्छिद्रेहृदंभोजेभवताचिंतितंनहि ॥ ब्रह्मैतद्गुणसंयुक्तंनिर्गुणंदूरतःस्थितम् ११४२ यस्यविज्ञानतोनैनंदुःखमण्वपिगच्छति ॥ शरीरद्वयसंजातमविद्याबीजमद्भुतम् ११४३ भवतासुकृतंपूर्वंनाग्निहोत्रादिकंकृतम् ॥ द्युपर्जन्यधरारेतःसिग्योषिद्वन्हिपंचकम् ११४४ आदित्यवत्सरौतद्वत्पृथिवीव्यात्तसंयुतः ॥ उपस्थइतियस्यैतत्समित्पंचकमीरितम् ११४५ रश्म्यभ्राग्निप्राणलोमधूमपंचकमीरितम् ॥ अहर्विद्युन्निशाजिह्वावक्रंयोनिश्चपंचमम् ॥ अर्चिषांपंचकंज्ञेयमंगाराणांतथैवच ११४६ दिशश्चाशनयश्चंद्रश्चक्षुर्मैथुनकर्मणः ॥ समाप्तेःपूर्वआनंदआरंभादुत्तरश्चयः ११४७

समित् । एवंयोषाग्नेरपिसमर्थैनोपस्थेनदीप्यतइतितयोनिर्योषाग्नेःसमिदिति तथाचयस्यस्वर्गादिरूपाग्निपंचकस्यएतदादित्यादिपंचकंक्रमेणसमित्पंचकमुक्तमित्यर्थः ४५ समिदुत्थितत्वरूपसाधर्म्याद्धूमत्वेनध्येयायेपदार्थायेचप्रकाशकत्वादिरूपसाधर्म्याज्ज्वालात्वेनध्येयास्तान्दर्शयति रश्मीति । लोमांतःसमाहारद्वंद्वः रश्मयःकिरणाःआदित्यात्मकसमिज्जन्यत्वात्द्युलोकाग्नेर्धूमः । अभ्राणिश्वेतमेघाःसंवत्सरजन्यत्वात्पर्जन्याग्नेर्धूमः । अग्निःकाष्ठादिरूपपृथिवीजन्यत्वान्मनुष्यलोकाग्नेर्धूमः । प्राणाख्यवायुर्मुखजन्यत्वात्पुरुषाग्नेर्धूमः । लोमानियोनिजत्वात्योषाग्नेर्धूमइत्यर्थः । आहरादिपंचकंयथाक्रममुक्ताग्नीनामर्चिर्त्वेनज्ञेयम् । तथाहि समिज्जन्यत्वेसतिप्रकाशकस्यार्चिष्ट्वंप्रसिद्धंतत्राहर्विद्युतोरादित्यजयोरविवादं निशायास्तमोमय्याःपृथिवीजन्यत्वंतुयत्कृष्णंतदन्नस्येतिश्रुत्याप्रसिद्धकृष्णवर्णायाःपृथिव्याःशरीरकांतित्वेनबोद्धव्यम् । रात्रेःप्रकाशकत्वमपिनक्तंचरान्प्रतिप्रसिद्धं एवंजिह्वावक्रंजिह्वायावक्रेमुखेअग्रभागेस्थितंवागिंद्रियंव्यात्तरूपसमिज्जन्यमर्थप्रकाशकंचेतिपुरुषाग्नेरर्चिः उपस्थेंद्रियार्थत्वात्तल्लोलकस्पृष्टेःरक्तवर्णसामान्याच्चयोषाग्नेर्योनिरर्चिरित्यर्थः अंगाराणांतथैवचेत्यस्योत्तरेणसंबंधः ४६ अर्चिषउपशमकालेप्रकाशमानत्वरूपसाधर्म्यादंगारत्वेनध्येयान्पदार्थानाह दिशश्चेति । दिशोहिअहरुपशमेसंध्याकालेनानारूपाःप्रकाशंतेतथाविद्युदुपशमेऽशनयोरात्र्युपशमेचमंदप्रभश्चंद्रोवाग्व्यापारोपशमेचचक्षुरिंद्रियंयोन्युपशमेचमैथुनमध्यकालिकआनंदइत्येतेयथाक्रमंद्युप्रभृत्यग्नीनामंगाराइत्यर्थः ११४७

विकीर्णत्वसाधर्म्येणविस्फुलिंगत्वेनध्येयान्पदार्थानाह विस्फुलिंगाइतिद्वाभ्यां । यत्रवर्णितानग्निपंचकेक्रमेणइमेअवांतरदिगादिरूपाविस्फुलिंगावन्हिकणाःप्रोक्ताः । तथाहि अवांतरदिशःक्रो णाःस्वर्गाग्नेर्विस्फुलिंगाः । ह्लादनयोमेघशब्दाःअपराःपरेभ्यउत्कृष्टेभ्योभिन्नाःपर्जन्याग्नेर्विस्फुलिंगाः । नक्षत्राणितारकाःपृथिवीलोकाग्नेर्विस्फुलिंगाः । मनुष्यलोकेयागादिकर्तारएवहितार कारूपेणपरिणताइतिभावः श्रोत्रंश्रोत्रेंद्रियवृत्तयस्तत्तच्छब्दग्रहणायविषयदेशंगच्छंत्यःपुरुषाग्नेःकणाः । आलिंगनाद्यानंदास्तुयोषाग्नेःकणाइत्यर्थः ११४८ । ११४९ आहुतित्वेनध्येयांस्त थाहोमकर्तृत्वेनध्येयान्पदार्थानाह श्रद्धेति । अत्रश्रद्धाशब्देनश्रद्धासाध्यानामग्निहोत्रादिकर्मणांयदपूर्वंपरलोकगामिजीवसंपृक्तंतदुच्यते तथाचस्वर्गाग्नेःश्रद्धाआहुतिः । सातत्रगतास्वर्गेशरी रारंभकामृतमयसोमात्मनापरिणमते भोगावसानेचतच्छरीरंशोकाग्निनाद्रुतंसन्मेघेघुपतततीत्यतःसोमःपर्जन्याग्नेराहुतिः । ततोवृष्टिरूपेणपृथिव्यांपततीतिवृष्टिर्मनुष्यलोकाग्नेराहुतिः । ततोन्नरूपेण पुरुषंगच्छतीतिपुरुषाग्नेरन्नमाहुतिः । ततोरेतोरूपेणयोषांगच्छतीतियोषाग्नेराहुतीरेतइति । एतासामाहुतीनांहोतारस्तुदेवायजमानकरणानामधिष्ठातारइंद्रादयोबोद्धव्याइत्यर्थः ११५० स्वर्गादव रोहमार्गंस्मारयति आगत्येति । एवंतत्रस्वर्गभोगेनकर्मक्षयेसतिआकाशवायुमेघादिमार्गेणस्वर्गतआगत्यभवान्मानुषंरूपंप्राप्तवान् कीदृशंमानुषंरूपं यद्वर्णिताहुतीनांस्वरूपंजलप्रधानंतदेवघनीभूतं

विस्फुलिंगाइमेयत्रकथितावेदवादिभिः ॥ अवांतरदिशःसर्वास्तथाह्लादनयोपराः ११४८ नक्षत्राणितथाश्रोत्रमानंदामैथुनोत्थिताः ॥ यस्मिन्नग्नौभवेदेतत्पंचकं विस्फुलिंगकम् ४९ श्रद्धासोमौतथावृष्टिरन्नंरेतश्चपंचमम् ॥ होमद्रव्यंचयत्रैतेदेवाहोतारईरिताः ११५० आगत्यस्वर्गतस्तत्रकृतकर्मपरिक्षये ॥ तद्रूपंघनतां प्राप्तंमानुषंप्राप्तवान्भवान् ५१ कललादिक्रमेणैवयदभूद्भवतःपुरा ॥ गर्भेदुःखंनतस्यायंलेशोपिनरकेस्तिहि ५२ जननीजठरेवासंकःसहेतात्रचेतनः ॥ मलमूत्रा दिसंपूर्णेदुर्गंधेकृमिसंवृते ५३ जरायुपटसंवीतोजंतुर्जठरगःसदा ॥ नोच्छ्वासंनचनिःश्वासंकर्तुंशक्नोतिकर्हिचित् ५४ जाठरोजातवेदाःसजनन्याःप्रज्वलन्मुहुः ॥ गात्रेतेकृतवांस्तापंयंतस्यायंनकोपिहि ५५ भ्रमणंयदभूद्गर्भेतवगर्भप्रभंजनात् ॥ समंतेनात्रदुःखंतेनैकेनापिहिविद्यते ५६ निर्गच्छतोयोनियंत्राद्यदासीन्निर्गमे पिच ॥ तवदुःखंवयंनास्यवक्तुंशक्ताःकथंचन ५७ कट्वम्ललवणात्युष्णैरसकृन्मातृभोजनैः ॥ दंदह्यमानदेहःसन्दशमासान्कथंस्थितः ५८ कृमिभिर्भक्ष्यमाणश्च महासर्पोपमैर्मुहुः ॥ कृपणत्वंकथंगर्भेस्थितोस्यग्निशतोपमे ११५९ जननीजठरेमंदयातेभूद्दुर्दशाधम ॥ तांवदंतोवयंखिन्नगात्राभयमुपागताः ११६०

'पंचम्यामाहुतावापःपुरुषवचसोभवंति' इतिश्रुतेः आपःक्षीरादिरूपाःप्रधानाग्निहोत्रादिकर्मापूर्वरूपाःपंचम्यामाहुतौरेतोरूपायांपुरुषपदवाच्याभवंतीतिश्रुत्यर्थः ११५१ गर्भदुःखंस्मारयति कललेतिपञ्चदशभिः । हेकृपणयद्भवतोदुःखंकललबुद्बुदाद्यवस्थाक्रमेणात्रगर्भेअभूत्तल्लेशसममपिदुःखंनरकेनास्तीति ११५२ तदेवस्फुटयति जननीति । स्फुटम् ११५३ जरायुपटेति । स्पष्टम् ११५४ जाठरइति । जनन्याःजाठरोग्निर्यंतापंतेगात्रेकृतवान्तस्यतापस्यकोपिभागोऽयंनरकतापोनभवतीत्यर्थः ११५५ भ्रमणमिति । यच्चगर्भवायुहेतुकंगर्भेनानाविधंभ्रमणदुःखमभूत्तेनतद्दुः खभेदेनएकेनापिसममत्रनरकेतेदुःखंनास्तीत्यर्थः ११५६ निर्गच्छतइति । प्रसूतिकालेयत्तवदुःखंतस्यवर्णनेवयंयातनास्वधिकृताअपिनशक्ताः ११५७ कट्वम्लेति । कट्वादिभेदैःस्वसजातीयर सारंभकैर्मातृभुक्तान्नैर्नितरांदह्यमानदेहःसन्भवान्दशमासान्कथंस्थितोऽभूरिति ११५८ कृमिभिरिति । हेकृपणक्षुद्रसुखलोभेनबह्वर्थविघातकअग्निशतव्याप्तदेशवत्तापमयेजनन्युदरेकृमिभिर्भ क्ष्यमाणःसन्कथंस्थितइति ११५९ जननीति । हेमंदाधमतवगर्भेप्राप्तांदुर्दशांवक्तुमस्माकंनशक्तिः तद्वर्णनेभयेनखिन्नगात्रत्वादिति ११६०

तस्यदुःखस्यभयहेतुतामेवस्पष्टयंति नरकेति । नरकरूपंग्रामंप्राप्यकल्पशतावच्छिन्नंदुःखंयदिकस्यचित्स्यात्तदागर्भदुःखमुपमानंलभेतेत्यर्थः ११६१ मातुर्ग्राम्यधर्मप्रसक्तौगर्भस्थस्यसुतरांदुः खंभवतीतिदर्शयंति नारीणामितिचतुर्भिः । गर्भधारणादुत्तरकालेयन्नारीणांपुंसासहसुरतंतद्गर्भस्थितबालस्यापिशब्दान्नारीपुंसोश्चदुरंतंदुःखदपरिणामकंभवतिपरंतुतद्दुरंतत्वंपरोक्षत्वाल्लोकेन व्यवहियतइत्यर्थः ६२ अपरमिति । येमनीपिणोदुरंतत्वंजानंतिते उपेतमितिभावेक्तः तथाचउपगमनंग्राम्यधर्मंदुरन्तंसन्तंसुरतमितियत्कथयंतितत्रहेतुरियंस्थितिः शिष्टाचाररूपेव भवति इयंका अपरंस्वभिन्नंभद्रत्वेनप्राशस्त्यबोधकशब्देनैवव्रूयात्व्यवहरेदिति अत्रस्वमुखेनस्वापकर्षबोधनमपिशिष्टाचारइत्यपरपदेनसूच्यतेइति ६३ दुरंततामेवविशदयंति अहोइति द्वाभ्याम् । रेतःसेकपर्यंतग्राम्यधर्मार्थिनारींगुर्विणींगच्छतःपुंसोद्वयोःस्त्रीबालयोर्हत्यादोपोभवेदित्यर्थः ६४ गर्भेति । तथानार्याःपुरुषसंगमेप्रवृत्तौआत्महत्यागर्भहत्यारूपौदोपौभवतइत्य र्थः ६५ एवंपुनःपुनरनुभूतमपिदुःखंविस्मृत्ययत्त्वयादुष्कृतंकृतंतस्येदंनरकदुःखंफलमित्याहुः अस्मिन्निितिचतुर्भिः । हेकृपणस्वान्यघातकरः 'कर्षयंतःशरीरस्थंभूतग्राममचेतसः' इतिभगव द्वाक्योक्तविधयास्वपरपीडाकरस्त्वमस्मिन्संसारचक्रेपतितोदुःसहंदुःखंप्राप्तोपितत्सर्वंविस्मृतः कर्तरिक्तोबाहुलकात् तत्रमानुषदेहेपुनःपापंकृतवानिति ६६ विष्ठेति । यच्छरीरंपि

नरकग्राममासाद्यदुःखंकल्पशतैरपि ॥ भवेत्तेनोपमीयेतजननीजठरेस्थितिः ११६१ नारीणांसुरतंपुंसादुरंतंगर्भधारणात् ॥ भवेद्गर्भस्थितस्यापिपरोक्षंतन्नगीयते ६२ अपरंभद्रमित्येवब्रूयान्नूनमितिस्थितिः ॥ उपेतंसुरतंतेनकथयंतिमहाधियः ६३ अहोग्राम्येणधर्मेणनारींपुंसोधिगच्छतः ॥ रेतःसिचोभवेद्धत्याद्वयोःस्त्रीबालयोस्तदा ६४ गर्भधान्यास्तथानार्याःसंगमेपुरुपस्यहि ॥ आत्मनश्चभवेद्धत्यागर्भस्यापिनसंशयः ६५ अस्मिन्संसारचक्रेत्वंस्वान्यघातकरोमुहुः ॥ पतितोदुःखमप्याप्तोदुःसहंदेहधारिभिः ॥ तत्सर्वंविस्मृतस्तत्रकृतवान्पातकंपुनः ११६६ विष्ठासमंसमाश्रित्यभूतानांस्वंविनश्वरम् ॥ निंदितंकृतवान्भूयःकर्मयल्लोकशास्त्रयोः ॥ तस्येदंफलमप्याप्तंकिमर्थमनुतप्यते ६७ नतेदुःखस्यकर्तारोवयंनायंविभावसुः ॥ भूतान्यपितथान्यानिभवानेवात्रकारणम् ६८ आत्मनःप्रतिकूलंयःपरेषामाचरेत्पुमान् ॥ कर्मणामनसावाचातस्यान्नंतद्धियद्भवेत् ६९ भवतासर्वजंतूनांसर्वदोपद्रवःकृतः ॥ साधूनांसमचित्तानांविशेषेणचदुर्धिया ७० अरण्यादिस्थितान्दृष्ट्वानैष्ठिकान्ब्रह्मचारिणः ॥ वनस्थांश्चयतींस्तद्वत्कामुकेनेरितंत्वया ११७१

त्रोर्विष्ठासमंविनश्वरंभूतानांश्वसृगालादीनांपृथिव्यादीनांवास्वंममत्वविपयंचतदात्मत्वेनाश्रित्ययत्त्वंनिंदितंभूयःपुनःकृतवानसितस्येदंनरकदुःखंफलत्वेनप्राप्तम् अतोधुनाकृताकृतानुतापोवृथेत्य र्थः ६७ नतेइति । वयंदूताःविभावसुःसूर्यपुत्रःअन्यानिभूतानिगृध्रादीनिचतवदुःखहेतवोनभवंतिकिंतुभवानेवतथेत्यर्थः ६८ आत्मनोदुःखहेतुताप्रयोजकंदर्शयंति आत्मनइति । यद्यस्माद्धेतोःआत्मनःप्रतिकूलंयत्तदेवपरस्ययआचारतिशरीरादिभिस्तत्परस्मैदत्तंप्रतिकूलंतस्यप्रतिकूलकर्तुरन्नमन्नवदवश्यभोग्यंभवेदित्यर्थः ६९ यदकृतमनुतापजनकंसत्कर्मजातंतत्प्रदर्शि तपूर्वमित्यभिसंधाययत्कृतमनुतापकंमनोवाक्कायैःकृतंदुष्कृतंतत्स्मारयंति भवतेत्यादिना । भवताआसुरप्रकृतिकेनसर्वतापकेनसाधवोविशेषेणतापिताइत्यर्थः ११७० तत्रसाधुता पेप्रवृत्तिप्रयोजिकांसाधुपुक्ततांदुर्भावनांस्मारयंति अरण्यादीति । आदिपदेनैकांतस्थानपरिग्रहः यथापित्तदूपितचक्षुष्कःशंखंपीतवर्णंपश्यति तथाकामदूषितेनभवतानैष्ठिकादिपुसकाम तामारोप्यइत्थंदुर्विनीतवाक्यजातमुक्तमित्यर्थः ११७१

९९/

७३

तद्दुर्विनीतवाक्यजातमभिनयंति अन्नेत्यष्टभिः । एतेब्रह्मचार्यादिरूपतपोहीनाअन्नाद्युपभोक्तृत्वादस्मद्वदित्यर्थः ११७२ रूपेति । इतरेंद्रियनिरोधाभाववत्स्वेतेपुकानामोपस्थनिरोधल क्षणब्रह्मचर्यसंभावनेतिद्वयोरर्थः ७३ । ७४ किंचसकलेंद्रियेजीवतिब्रह्मचर्यंनदृष्टंकुत्रापीत्याह आहारमिति ७५ अपिचव्यापृतेतरेंद्रियकस्यैकत्रेंद्रियेव्यापाराभावोनसंभाव्यतइत्याह अपीति । प्रजननमुपस्थेंद्रियम् ७६ किंचजलमात्राहारादिभिरप्यविजितस्यकामस्यविशिष्टान्नास्वादकेपुकाविजयाशेत्याह अपिकामेनेति ७७ फलितमाह युवानइति । तस्मा दित्यादिः ७८ नासाग्रेति । एतेषांध्यानमपिपरकीययुवतिविषयकंपरकीयद्रव्यविषयकंचेत्यर्थः ७९ यथानैष्ठिकादयोदूषितास्तथान्येपिधार्मिकाःपुरुषाःपतिव्रताश्चदूषिताइत्याहुः एव मिति ११८० पतिव्रतासुप्रयुक्तंदुर्विनीतवाक्यजातमभिनीयते । साध्वीमितिपङ्क्तिः । कायुवतिःपरपुरुषंनेच्छेत् यतःपित्रादिकमपिरूपिणंदृष्ट्वानारीणांयोनिःस्यंदतइतिद्वयोःसंबंधः ८१

अन्नपानोपभोगंचेत्कुर्वंत्येतेद्विजोत्तमाः ॥ अस्मद्वत्कुतएतेषांब्रह्मचर्यादिकंतपः ११७२ रूपगंधरसस्पर्शशब्दांश्चेत्रयनादिभिः ॥ गृह्णंतिमनसातद्वत्सुखदुः खेमहाधियः ७२ कर्मेंद्रियैश्चकर्माणिकुर्वंतीयदिकेनते ॥ मैथुनंनैवकुर्वंतिविजनेस्मिन्नवस्थिताः ७४ आहारंचतथानिद्रांवृतियंचात्रमैथुनम् ॥ जीवन्नजं तुस्त्यजेन्नायमिंद्रियैर्विकलोनचेत् ७५ अपिव्यापारशून्यंनकिंचिदस्तींद्रियंभुवि ॥ कथमेषांप्रजननंस्वव्यापारविवर्जितम् ७६ अपिकामेनबाध्यंतेतृणाहारा मृगावने ॥ जलेमीनोजलाहारःसर्पाश्चपवनाशिनः ॥ अन्नादाबुद्धिमंतोमीकथंकामविवर्जिताः ७७ युवानःपरचित्तानांहारिणोलोकवंचकाः ॥ मार्जारव्रतमा स्थायदांभिकानिवसंत्यमी ॥ वित्तस्त्रीहारिणोनूनंसाधूनांक्रूरचेतसः ७८ नासाग्रनयनाएतेध्यायंतियुवतिंसदा ॥ तथापरस्यवित्तानिह्यर्जितान्यतिदुःखतः ७९ एवंधर्मरताःसर्वेदूषिताभवतानराः ॥ साध्व्योनार्यश्चदुर्दांतचेतसापापकारिणा ११८० साध्वींनारींविलोक्याहभवान्पापविमोहितः ॥ कावधूःपुरुषंनेच्छेद्युव तीरूपशालिनम् ११८१ पितरंभ्रातरंवापिसुतंवापिनयान्वितम् ॥ नारीणांस्यंदतेयोनिर्दृष्ट्वारूपान्वितंनरम् ८२ नूनंदृष्टनिमित्तेनकेनचिन्नाधिगच्छति ॥ स्वस्यस्वबहुमानेनलोकानांलज्जयापिच ॥ भीत्यापत्यादिकानांवास्थानकाभावतोपिवा ८३ अधस्तात्पुरुषंदृष्ट्वाविलोकयतियावधूः ॥ त्रैलोक्यंलोकयेदेषामन साकाममोहिता ८४ विवेकाक्रांतचित्तानांपुरुषाणांमहात्मनाम् ॥ हरेद्वैर्यंस्मरःकेनवध्वानापहरिष्यति ८५ साध्वीभूतास्थितानारीविज्ञेयाव्यभिचारिणी ॥ गणि कायाद्वयंयस्मात्स्वजनानपिवंचयेत् ८६ इत्यादिव्रादिनासर्वंभवताकलुषीकृतम् ॥ जगत्सूत्रंयथावस्त्रंतैलस्नेहेनसर्वदा ८७ भवतानिंदितादेवागुरवश्चतपोधनाः ॥ पितृमात्रादिकाःसर्वेह्यधिक्षिप्ताश्चबांधवाः ११८८

८२ नूनमिति । नूनमितिसंभवे तथाचदृष्टेनिमित्तेपरपुरुषंसानाधिगच्छतीतियदुच्यतेतत्संभाव्यतइत्यर्थः । दृष्टनिमित्तान्येवनिदर्शयति स्वस्येति । मानलज्जाभीतिस्थानाभावरूपाणि चत्वारिदृष्टनिमित्तानीत्यर्थः ८३ अधस्तादिति । परपुरुषंदृष्ट्वाऽधोविलोकनंसाध्वीलक्षणंतुव्यभिचारि त्रिलोकीवर्तिनानापुरुषध्यानार्थत्वस्यापिसंभवादित्यर्थः ८४ विवेकेति । विवेकि नामिंद्रादीनांधैर्यंहारकस्यस्मरस्यवधूचित्तहरणेकिमुतेत्यर्थः ८५ फलितमाह साध्वीति । तस्मात्साध्वीत्वेनप्रसिद्धास्त्रीगणिकायाअधिकाव्यभिचारिणीज्ञेया स्वजनवंचकत्वादिति ८६ इ त्यादीति । एवंविधदुर्वाक्यानिवदताभवतासर्वंधर्मस्वरूपंकलुषीकृतंदूषितम् कीदृशंधर्मस्वरूपम् जगदात्मकपुष्पमाल्यस्यसूत्रवद्धारकम् । केनकिमिवकलुषीकृतं तैलेनवस्त्रमिवेत्यर्थः ८७ भवतेति । अधिक्षिप्ताअनादृताः ११८८

लोभमिति । यथाक्रोधेनदेवनिंदादिकंकृतंतथालोभकामाभ्यांपरवित्तंदाराश्चहृताः ११८९ मनसेति । तथामनसापरतापोपायाश्चिंतिताः । तांचिंतामभिनयंति । इदमित्यादिना । अस्यवैरिणइदंसुकरंदुःखसाधनंकृ वाऽदःदुष्करमपिदुःखसाधनंकरिष्ये । तथाअनेनवैरिणापूर्वंस्नेहंकृत्वापश्चाच्छनैःशनैरेतंवैरिणंदुःखांबुधौपातयिष्यामीतिद्वयोःसंबंधः ९० । ९१ । दूतवाक्यमुपसंहरन्नरकदुःखमुपलक्षयति इत्यादीतिद्वाभ्याम् । इत्यादिरूपंदुष्कृतंभवताशरीरादिभिःकृतमित्यादिवाक्यजातंवदंतोयमकिंकरानरकेषुपापिनांदुःखंकुर्वंति । कीदृशेषुनरकेषु मार्गादिदेशभेदेनभिन्नेषु । केचिद्धितप्तवालुकादयोयममार्गेनरकभेदाःकेचिद्यमपुर्यांकेचित्पातालाधइतिद्वयोरर्थः ९२ । ९३ नरकदुःखमन्यत्राप्यतिदिशति नानाविधमिति । यदिदंनानाविधंनरकेदुःखंवर्णितंतत्केवलंनरकएवनभवतिकिंतुसर्वत्रशरीरस्यजन्मस्थितिमरणेषुप्रसिद्धमित्यर्थः ९४ तत्रसर्वत्रजन्मदुःखंविशदयति ब्रह्मेति । वासुकिपुरंपातालं देवशरीरमपिसूक्ष्मभूतान्युद्धृत्यजाय

लोभमाश्रित्यदुष्पूरंकामंचाधमसर्वदा ॥ परेषांविविधंवित्तंदाराश्चापहृतामुहुः ११८९ मनसाचिंतितंभूरिजंतूनांतापकारणम् ॥ इदंकृत्वाकरिष्येदोदुःखमस्यस्ववैरिणः ११९० अनेनस्नेहमतुलंकृत्वापश्चाच्छनैरहम् ॥ एतंदुःखोदधौशत्रुंपातयिष्यामिकालतः ११९१ इत्यादिभवताभूरिकर्मणामनसागिरा ॥ कृतमित्यादिवचनाःकिंकराःपापकारिणाम् ११९२ नरकेषुचसर्वेषुमार्गस्थानादिभेदिषु ॥ कुर्वंतिदुःखमतुलंदुःखिनांदीनचेतसाम् ११९३ नानाविधमिदंदुःखंनरकेदेहधारिणाम् ॥ यथात्रनरकेदुःखंतथासर्वत्रजन्मनि ॥ शरीरस्यस्थितौतद्वन्मरणेपिचदुःसहम् ११९४ ब्रह्मलोकेतथास्वर्गेभूमौवावासुकेपुरे ॥ चतुर्विधानांदेहानांदेहमेकंप्रजायते ११९५ सुखंसातिशयंतत्रसर्वत्रैवशरीरिणः ॥ पराधीनंतथातोकंसाधनैर्जायतेपिच ११९६ समानेभ्योभयंतद्वदधिकेभ्यश्चनित्यशः ॥ क्लेशश्चसुमहानत्रजायतेनात्रसंशयः ११९७ ब्रह्मलोकेतथास्वर्गेभोगवत्यांतथैवच ॥ मरणाद्बिभ्यतेभीतिर्भोगेच्छासैवदारुणा ११९८ भूमौमरणतोयावद्भोगेच्छाचैवदुःसहा ॥ बांधवादिविनाशेनदुःखंसंजायतेनृणाम् ११९९ ततोप्यधिकंदुःखंकोटिकोटिगुणंभवेत् ॥ भोगवत्यांतथास्वर्गेब्रह्मलोकेचदेहिनाम् १२०० सर्वत्रजनकःकश्चिज्जननीचापिविद्यते ॥ दाराःसुतास्तथाबंधुर्जनोनानाविधोहियः १२०१ मित्राणिशत्रवस्तद्वदुदासीनाइमेजनाः ॥ देहिनोत्रयथासंतितथादेहांतरेपिवा ॥ ब्रह्मलोकेतथास्वर्गेपातालेपन्नगप्रिये १२०२ हिरण्यगर्भोभगवानस्माकंपूर्वजोहिसः ॥ सर्वाधिकसुखोदेवःशरीरीचत्रयीश्वरः १२०३

मानत्वादुद्भिज्जमितिबोध्यम् ९५ स्थितिदुःखमुपलक्षयति सुखमिति । तत्रतेषुलोकेषुसुखंसातिशयंपराधीनंसाधनजन्यंच तथाचयथाक्रममीर्ष्याभयनाशचिंताभिर्व्याप्तमित्यर्थः ९६ समानेभ्यइति । अत्रशरीरंस्थितौ ९७ मरणदुःखस्यसर्वत्रान्वयमाह ब्रह्मलोकइतिपंचभिः । यतोभोगेच्छादारुणाउत्कटाततःसर्वत्रलोकेमरणभीरिति ९८ भूमाविति । यादृशभूलोकेमरणेनबांधवविनाशेनवादुःखंततःकोटिगुणंभोगवतीनागपुरंतत्प्रभृतिलोकेषुबोध्यं तत्रभोगाधिक्यादितिद्वयोरर्थः ९९ । १२०० बांधववियोगदुःखमपिसर्वत्रेतिस्पष्टयितुंसर्वत्रबांधवसत्त्वमाह सर्वत्रेतिद्वाभ्याम् । द्वयंस्पष्टम् १ । २ यदासशरीरत्वंहिरण्यगर्भादीनामपिदुःखसंबंधप्रयोजकंतदान्यत्रकिमुतेतिदर्शयितुंहिरण्यगर्भंतावद्वर्णयति हिरण्यगर्भइतिचतुर्भिः । योयंहिरण्यगर्भोभगवान्येचइंद्रादयःप्रभवस्तेषांसर्वेषांकिंचनसुखंनास्तिशरीरित्वादितिसप्तानांसंबंधः । कीदृशोहिरण्यगर्भोऽस्माकंकार्योपाधीनांजीवानांपूर्वजःप्रथमजः त्रय्याःवेदत्रयसंप्रदायस्येश्वरःप्रवर्त्तकः १२०३

अनेकेति । विविधसृष्टिप्रकाराणांकर्त्तापालकःहर्त्ताचसइइसिद्ध विग्रयाद्वैतहीनश्च १२०४ पादपादिति । समष्टित्वेनपादपसमाद्यस्माद्व्यष्टिजीवदृष्टिसृष्टानिब्रह्मांडरूपोदुंबराणिप्रभवंतिजायंते नभवंतियत्रलीयंतेचेत्यर्थः ५ विभूतयइति । यस्यविभूतयएताःप्रजापत्यादिरूपाःप्रजापतिलोकादिपुवसंतियश्चप्राणरूपेपर्यंकेस्थितोब्रह्मलोकेवसतीति ६ यस्तिष्ठतीति । यश्चेंद्रोऽमरावती वासी ७ लोकेति । यश्चपूर्वादिदिगधिपतिरूपंलोकपालाष्टकंयचनागकुलेपुअधिकत्वेनप्रसिद्धंवासुक्यादिकमष्टकं आदिपदेनतक्षकपद्मकादिग्रहः ८ एवमिति । येचमनुजादिप्रभवएतेषांशरी रिणांविवेकिदृष्ट्यासुखंनास्तीत्युक्तम ९ तत्रहेतुनयाजन्माद्यविशेपमाह जननइति । येइमेजन्ममरणेयच्चविपयोत्थितंविपयगतंशतांघोरमूढत्वाख्यंवैपम्यंतारतम्यंकीदृशंसुखादिप्रयोजकंयश्चा यंनश्वरोभूतावासःपांचभौतिकंशरीरंएतेषांसंबंधेक्रमिमारभ्यसूत्रात्मपर्यंतंविशेपोनास्तीत्यर्थः १० फलितमाह सशरीरइति । विज्ञानमयआत्मासुखदुःखाभ्यांविवर्जितःकथंस्यात्यतःसश रीरः तथाचश्रुतिः 'नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्ति' इति ११ एतादृशोनर्थोबुद्धितादात्म्याध्यासस्यफलमित्युपसंहरति विज्ञानमयतामिति । स्पष्टम् १२ मनस्तादात्म्याध्या

अनेककल्पकोटीनांकर्तास्थितिविधायकः ॥ हर्तातथैकएवायंद्वैतगंधविवर्जितः १२०४ पादपाद्यतएतानिब्रह्मांडोदुंबराणिहि ॥ शतशःकोटिशश्चैवभवंतिनभ वंतिच ५ विभूतयस्तुयस्यैताब्रह्मलोकादिसंश्रयाः ॥ मानस्याजाययासार्धंपर्यंकेपरमेश्वरः ॥ ब्रह्मलोकेवसत्येषवेदात्माचतुराननः ६ यस्तिष्ठत्यमरावत्यांश चीहृदयनंदनः ॥ देवानांप्रथमोदेवस्त्रिलोक्याःपतिरीश्वरः ७ लोकपालाष्टकंतद्वद्दष्टकंकुलजेपुच ॥ सर्वेष्वधिकमत्यंतंवासुक्यादिकमद्भुतम् ८ एवंमनुजपक्ष्या दिप्रभवोविविधाअपि ॥ देहभाजःसुखंतेषांनकिंचिदिहविद्यते ९ जननेमरणेतद्वद्वैषम्येविषयोत्थिते ॥ सुखदुःखकरेतद्वद्भूतावासेचनश्वरे ॥ क्रमेःसूत्रात्मनश्चा स्यवैषम्यंनैवविद्यते १२१० सशरीरोहिलोकेनोसुखदुःखविवर्जितः ॥ विज्ञानमयआत्माकःशरीरेणविवर्जितः ११ विज्ञानमयतांप्राप्यततएषनिरंजनः ॥ उ च्चावचानिदेहानिप्राप्नोत्यविरतंपुमान् १२ मनोमयोयदायंस्यात्तदाऽस्यैतत्प्रजायते ॥ इच्छानानाविधास्तद्वत्संकल्पोपिशुभाशुभे १३ शुभाशुभत्वहेतुर्यःसंश योविविधस्तथा ॥ आस्तिक्यंचतथाजंतोर्नास्तिक्यंचसुदारुणम् १४ धैर्याधैर्येतथालज्जाबुद्धिर्श्चिंताशरीरिणाम् ॥ भीत्यादिकंचदेवस्यमनोरूपस्यसंभवेत् १५ देवःप्राणमयोभूत्वापंचधादेहमास्थितः ॥ दशधाशतधातद्वन्नाडीभेदादनेकधा १६ उच्छ्वासादेर्भवेद्धेतुर्जीवनस्यचसर्वदा ॥ अन्नादोनेकधानेककर्मणांपरमेश्वरः १७ नीलपीतादिरूपाणांशब्दानांचमहेश्वरः ॥ चक्षुःश्रोत्रमयोभूत्वाग्राहकःपरिकीर्तितः १२१८

सस्यफलमनर्थंदर्शयति मनोमयइतित्रिभिः । एतदिच्छादिकं संकल्पइच्छाकारणंशुभत्वादिप्रकारकंविशिष्टज्ञानं तथाशुभत्वादिप्रकारकःसंशयोविचिकित्सापदोक्तः तथाश्रद्धादिपदवाच्यमा स्तिक्यादिकंजायते तथाचश्रुतिःकामःसंकल्पइत्याद्याकामादीनांमनोधर्मत्वंप्रतिपादयतीतित्रयाणामर्थः १३ । १४ । १५ प्राणतादात्म्याध्यासस्यफलंतद्धर्माध्यासमाह देवइति । प्रा णापानादिरूपेणपंचधानागकूर्मादिभेदसंयोजनेदशधानाडीभेदेनत्वनेकधाभूत्वाऊर्ध्वश्वासादिव्यापारस्यजीवनव्यवहारस्यचहेतुर्भवतितथाऽनेकधाअन्नादःअन्नभोक्तासन्अनेकवलसाध्यकर्मणांकर्ताभ वतीतिद्वयोरर्थः १६ । १७ इंद्रियाध्यासस्यफलमाह नीलेति । चक्षुर्मयःसन्नीलादिरूपाणांश्रोत्रमयश्चतारादिशब्दानांग्राहकोभवति एवमितरज्ञानेंद्रियतादात्म्यंप्राप्यतत्तद्विपयज्ञानमितर कर्मेंद्रियतादात्म्येनचतत्तत्कर्मकरोतीतिद्वयोरर्थः १२१८

१९ पृथिव्यादिभूततादात्म्यस्यफलमाह पंचेति । भूतमयोभूत्वाशरीराणांदशेंद्रियनिरूपितत्वेनदशविधानांविषयाणांचनिर्वाहकोभवति २० अतेजोमयइतिपदेऽतेजःपदेनतमोग्राह्यंतच्चाविद्यारूपंप्रसिद्धांधकाररूपंचेत्यभिप्रेत्यद्वयोस्तादात्म्याध्यासस्यफलेदर्शयति अविद्येति । यदाऽविद्यामयोभवतितदास्वरूपावरणस्यविक्षेपस्यचकारणंभवति अंधकारमयस्तुनिद्रास्वप्रादीनांकारणंभवतीत्यर्थः २१ काममयत्वस्यतदाह तथेतिद्वाभ्यां । सृष्टेस्तथादुःखमुदर्कंउत्तरकालेयस्यएतादृशस्यराजससुखस्यतथादैन्यस्यतथापुण्यपापयोस्तथाइदंशुभमिदमशुभमितिदृष्टेश्चकारणंभवतीतिद्वयोरर्थः २३ क्रोधमयत्वस्यतदाह यदेति । कदाचित्शरणागतत्राणादौशरणागतविरोधिप्रभृतिविषयकःक्रोधोधर्महेतुरपिभवतीत्यतःप्रायःपापतत्फलेप्रतिक्रोधस्यहेतुत्वमुक्तं २४ । २५ अक्रोधमयत्वमकाममयत्वस्याप्युपलक्षणमित्यभिप्रेत्यतत्फलमाह कामेति । संसारोजननादिप्रवाहश्चकारात्तन्निमित्तादृष्टादिग्रहस्तयोःकारणभूतौकामक्रोधौतयोरभावोजीवन्मुक्तलक्षणमित्यर्थः २६ अदृष्टतादात्म्यफलमाह धर्मेति। सुखदुःखयोस्तथापार्थिवत्वादिनानिर्भेदेसमानेपिपांचभौतिकेशरीरेयउच्चनीचादिभावलक्षणोभेदोविशेषस्तस्यापिकारणंभवेदिति २७ एवंपरिशिष्टपदार्थानांपरोक्षादिरूपाणांतादात्म्याध्यासस्य

परिशिष्टेंद्रियात्मत्वंप्राप्यात्मासर्वगःपुमान् ॥ कुरुतेविविधेलोकेसर्वदाज्ञानकर्मणी १९ पंचभूतमयोभूत्वादेहानेपचतुर्विधान् ॥ दशधाविषयांस्तद्वत्प्रयच्छतिशरीरिणाम् २० अविद्यामयआत्मायंभवेदावरणंसदा ॥ आनंदात्मस्वरूपस्यविक्षेपस्यचकारणम् ॥ भूत्वातमोमयोदेवोनिद्रादेःकारणंस्मृतम् २१ तथाकाममयोभूत्वाप्रजोत्पत्तेस्तुकारणम् ॥ दुःखोदर्कस्यबहुशःसुखस्यविविधस्यच २२ गच्छेत्काममयोभूत्वादीनाद्दीनतमांदशम् ॥ वधूजनस्यचसदाक्रीडामर्कटकोभवेत् ॥ पुण्यपापकरस्तद्वच्छुभाशुभकरोपिच २३ यदाक्रोधमयोभूयात्प्रायःपापकरस्तदा ॥ दुःखंचातुलमाप्नोतिवन्हिमध्येस्थितोयथा २४ ब्रह्महत्यादिपापानियाति क्रोधमयःपुमान् ॥ कुंभीपाकादिकांस्तद्वन्नरकानतिदारुणान् २५ कामक्रोधावुभौज्ञेयौसंसारस्यचकारणम् ॥ अतन्मयोयदाभूयाज्जीवन्मुक्तस्तदाभवेत् २६ धर्माधर्ममयोभूत्वाकारणंसुखदुःखयोः ॥ उच्चनीचत्वभेदस्यनिर्भेदेपांचभौतिके २७ एवंसर्वमयोभूत्वासर्वमेवाधिगच्छति ॥ प्रत्यक्षंचपरोक्षंचतादृशोजगदीश्वरः २८ यद्यद्धिकुरुतेजंतुःकर्माचारादिकिंचन ॥ तेनतेनोच्यतेसर्वैरभिधानविवर्जितः २९ नायंसाधुरसाधुर्नेनपापःपुण्यएवन ॥ सर्वसंगविनिर्मुक्तोनभोवत्सर्वगःपुमान् ३० साधुवादंतथाकीर्तिंतथैवबहुलंसुखम् ॥ प्राप्नोतिपुण्यकृत्तद्वद्विपरीतंपरःपुमान् ३१ अत्रकेचिन्महात्मानएवमाहुर्विचक्षणाः ॥ पुरुषोनिर्गुणोऽसंगःसर्वभेदविवर्जितः ॥ स्वयंनकुरुतेकिंचित्कार्यकारणमण्वपि ३२३२

तत्तत्फलंबोध्यमित्याह एवमिति । तादृशःप्रत्यक्षमयःपरोक्षमयश्चसन् २८ अस्यतत्तद्व्यपदेशेप्रधानंनिमित्तंकर्मैवेतिदर्शयति यद्यदितित्रिभिः । आचारादिरूपंयादृशंकर्मकरोतितेनतेनतत्तत्कर्मप्रयुक्तेनसाधुप्रभृतिनाम्नोच्यतेऽयंवस्तुतोऽभिधानविवर्जितोपीति २९ अभिधानविवर्जितत्वंस्पष्टयति नायमिति ३० साधुवादमिति । तत्रापियःपुण्यकृत्ससाधुवादंप्रशंसांचसुखंचप्राप्नोतिपरःपापकृत्तुविपरीतमसाधुवादादिकंप्राप्नोतीत्यर्थः ३१ एवंकर्मप्राधान्यंपूर्वपक्षत्वेनदर्शितमथसिद्धांतःकामएवाऽविद्याजन्यःसंसारकारणमित्याकारकःश्रुत्याअथोखल्वाहुरित्यादिनाकंडिकांतवाक्येनोक्तस्तमभिनयति अत्रेतिचतुर्दशभिः । अत्रसंसारनिदानविचारेकेचिदतिकुशलाएवमाहुः । एवंकथंआत्माअसंगाद्वितीयत्वात्स्वतःकिंचिदपिस्थूलंसूक्ष्मंवानारभतेकिंतुअविद्यायाःसंगंसंबंधंप्राप्यप्रथमंकामंकुरुतेततःसर्वंभावंलभते । कीदृशमविद्यासंगमविद्याजमविद्ययैवप्रयुक्तमतएवदुर्भणमनिर्वाच्यमितिद्वयोरर्थः १३३२

१२३३ अतएवसृष्टिवाक्येपुकामपूर्विकासृष्टिःसोकामयतेत्यादिपूक्तेत्याह संकल्प्येति । अयमीश्वरोयतःसंकल्प्यैवससर्जेतिसंबंधः १२३४ अतएवजीवप्रवृत्तिरपिसर्वाकामपूर्विकैवदृश्यतइत्याह अन्यइति । अन्यईश्वरभिन्नइदंमेभवतुइदंचमाभवत्विति प्रथमंचिंतयन्नेवभवतिततःसंसारदशांःप्राप्नोतीतिद्वयोरर्थः १२३५ । १२३६ कामपदार्थंदर्शयति अनर्थांतरमिति । कामइच्छारागःस्पृहाइत्यनर्थांतरं एतेषांपदानामर्थांतरंभिन्नोर्थोनभवतीतिमहर्षिभिरुक्तं । येपियोपितांसंगःकामइत्याहुस्तैरपिसंगेच्छैवकामःप्रोक्तः । अन्यत्रतुलक्षणयेवकामशब्दोवर्ततइत्यर्थः १२३७ फलितमाह इच्छेति । ततइच्छायाएवकामपदमुख्यार्थत्वादिच्छारूपःकामःसंसारवृक्षस्यबीजभूतःकारस्करःकुचलेतिप्रसिद्धफलकोवृक्षइत्युक्तम् १२३८ पुमानिति । अस्यसंसारवृक्षस्यफलस्थानीयस्तुविज्ञानमयमनोमयादिपदोक्तोनानाविधावस्थावान्पुरुषोबोध्यः अपरोब्रह्मात्मपदाभिधेयावस्थाशालीपुरुषस्तुनफलंतस्यज्ञानाभिव्यंग्यस्यनित्यसिद्धत्वादित्यर्थः १२३९ हेतुमिति । अस्यसंसारिणःकामप्रधानत्वेइमंहेतुंचतेविचक्षणाःप्रवदंति । इमंकं सदेहीप्रथममित्याकारामिच्छांकरोति । इतिकिं इदमिष्टंप्राप्स्यामीदमनिष्टंत्यक्ष्यामिचेति साकामपदवाच्येच्छा

अविद्यासंगमासाद्यह्यविद्याजंतुदुर्भणम् ॥ प्रथमंकुरुतेकामंततःसर्वमयोभवेत् १२३३ संकल्प्ययतएवायंबहुस्यामितिवैपुरा ॥ ससर्जसकलंविश्वंदेवःसदसदात्मकम् ३४ अन्योपिजंतुरत्रायंचेतनोजातमात्रकः ॥ इदंभवतुमेभूयादिदंसेत्येवचिंतयन् ३५ प्रथमंततएवामुंसंसारंबहुदुःखदम् ॥ प्राप्नोतिविवशोभूत्वाकालपाशसमावृतः ३६ अनर्थांतरमुक्तंहिकामेच्छादेर्मनीषिभिः ॥ कामोपियोषितांसंगःसंगेच्छापरिकीर्तितः ३७ इच्छामात्रंततःकामोबीजमत्रप्रकीर्तितम् ॥ संसारपादपस्यास्यकारस्करसमस्यहि ३८ पुमान्फलमयोनित्यंसंसारीपरिकीर्तितः ॥ विज्ञानमयइत्यादिभेदोनैवापरःपुमान् ३९ हेतुंकाममयत्वेस्यवदंत्येतंमहाधियः ॥ देहधारीपुरःकाममिच्छाख्यंकुरुतेऽधमः १२४० इदंप्रियंसमाप्स्यामिहास्याम्यप्रियमप्यदः ॥ इतियादृग्भवेत्कामस्तादृङ्निश्चयवान्पुमान् ४१ यादृशंनिश्चयंकुर्यात्तादृक्कर्मसमारभेत् ॥ अस्मिन्लोकेपरस्मिन्वासुखदंदुःखहानिदम् ४२ यादृशंकुरुतेकर्मपापपुण्यसमाश्रयम् ॥ शुभाशुभंततस्तस्यफलमेतिपुमान्सदा ४३ प्राप्तयेपरिहारायसर्वदासुखदुःखयोः ॥ कर्मयद्यप्ययंकुर्यात्तथाप्यत्रनतद्भवेत् १२४४ साधनादेश्चवैगुण्यात्सत्यप्यस्मिन्सदैवहि ॥ सुखस्यदुःखबाहुल्याद्दुःखमेवव्रजेत्पुमान् १२४५ ततःकामेनसंसारंदुःखरूपंसमाप्नुयात् ॥ मानसेनसदादेहीदुःसहंबहुदेहजम् १२४६ यत्रासक्तोभवेज्जंतुर्भाविकर्मप्रचोदितः ॥ ब्रह्मलोकेतथास्वर्गेभूमौवानरकेथवा १२४७

यादृशीभवतितादृशंकर्तव्यगोचरंनिश्चयंक्रतुशब्दवाच्यंकरोतियादृशंचनिश्चयंकरोतितादृशंलोकद्वयोपकारायकर्मकरोतियादृशंचकर्मकरोतितादृशंशुभाशुभंफलमाप्नोतीतिचतुर्णामर्थः १२४० । १२४१ १२४२ । १२४३ ननुसुखदुःखप्राप्तिपरिहारकामनयायागादिकुर्वतःकथंदुःखमितिशंकांवारयति प्राप्तयइतित्रिभिः । यद्यपिसुखदुःखयोर्यथाक्रमंप्राप्तयेपरिहारायचायंकर्मकरोतितथाप्यत्रसंसारेतत्सुखप्राप्त्यादिरूपंफलंनभवतियतोस्मिन्काम्यकर्मरूपेसाधनेसत्यपिवर्तमानेपिकामिनामवश्यंभावीसाधनवैगुण्यादिदोषोभवति किंचसांसारिकसुखस्यदुःखसंसर्गनियमोपिभवत्यतःसकामीदुःखमेवाप्नोतीतिद्वयोरर्थः १२०४ । १२४५ फलितमाह ततइति । मानसेनमनोधर्मेणकामेनदुःखमेवाप्नोतीति १२४६ तदेवसक्तइत्यादेर्मंत्रस्यकाममयत्वसंवादकस्यार्थमुपबृंहयति यत्रेत्यूनत्रिंशच्छ्लोकैः । अयंजंतुःप्रबलैःभाविफलैःकर्मभिःप्रेरितोमरणकालेयत्रब्रह्मलोकादिगतभोगेसउत्कटरागवान्भवतितत्रैवब्रह्मलोकादौस्थूलदेहंमाप्नोतीति कीदृशः तेनरागोत्पादकेनकर्मणासहितःरागाश्रयेणसूक्ष्मशरीरेणविशिष्टश्चेतिद्वयोःसंबंधः १२४७

१२४८ स्वर्गादाविति । तत्रयदिदेवलोकादौसक्तोभवतितदादेवपितृगंधर्वादिदेहेनतत्तल्लोकभोगान्भुक्त्वाभोगांतेप्रोदितकर्मानुसारेणपृथिव्यादिलोकेपुस्थूलदेहंलभतइत्यर्थः ४९ भूमाविति । सस्व र्गीस्वर्गभोगक्षयेभूमौजायमानोयदित्रैवर्णिकोभवेत्तदासपूर्वसंस्कारेणपुनःस्वर्गप्रापकंकर्मकरोति ५० केवलकर्मिणामेतद्यातायातंघटीयंत्रवदनुवर्ततएवेत्याह स्वर्गादिति । ततःभूमेः । तांभूमिम् । मनुजइष्टापूर्तकारीतिशेषः । क्वचित्पापाधिक्ये ५१ कर्मरूपबीजस्यतत्तदारभेकामात्मकसलिलसंयोगएवप्रयोजकइत्यावेदयति पातालइति ५२ वासनात्मनाचित्तेस्थितस्यकामस्यमरणकालेऽ भिव्यक्तस्यशरीरांतरारंभकत्वंस्वप्रदृष्टांतेनोपपादयति दिवसइति । यस्यपुंसोयादृशीयद्विषयिकावासनारागादिसंस्काररूपायथाउत्कृष्टत्वादिरूपेणदिवसेवर्ततेसशयनंस्वप्नंप्राप्तस्तादृशंदेहंसृजते एवंदेहपातानंतरमपीतिद्वयोःसंबंधः ५३ । ५४ एतदेवस्फुटयति कर्मभिरिति । तन्मनाःसकामोमनसियस्यसतथादेहान्तेकर्मानुसारेणयद्यच्चिंतयेत्तत्तत्प्राप्नुयादिति ५५ नन्वेवंचिंतितसिद्धिर्म रणात्पूर्वंकुतोनभवतीतिचेत्प्रारब्धफलकर्मलक्षणप्रतिबंधकसत्वादित्याह पूर्वेति । तस्यजंतोर्मरणकालेपूर्वकर्मणःप्रारब्धाख्यस्यक्षयोभवति मरणात्पूर्वंतुभाविफलककर्मणोयोऽनारंभःफलाजनक

तत्रैवकर्मणातेनसहितोलिंगदेहभाक् ॥ प्राप्नोतिमरणादूर्ध्वंस्थूलदेहंनसंशयः ४८ स्वर्गादौयदिसक्तोयंसुकृतीदेवदेहभाक् ॥ उपभुज्यफलंस्वर्गेयातिभूमौपरत्रवा ४९ भूमौचेद्वारतेवर्षेस्वर्गात्रैवर्णिकोभवेत् ॥ स्वर्गकर्मक्षयेसोयंपूर्ववत्कुरुतेहितत् १२५० स्वर्गाद्भूमिंततःस्वर्गंस्वर्गाच्चपुनरेवताम् ॥ प्रायशोयातिमनुजःक्वचि त्तुनरकादिषु ५१ पातालेनरकेतद्वद्ब्रह्मलोकेतथादिवि ॥ भूमौचविविधान्देहान्यातिकाममयःपुमान् ५२ दिवसेयादृशीयस्यवासनावर्ततेयथा ॥ तादृशंशयनंप्रा प्तोदेहमाप्नोतिसर्वदा ५३ एवंजन्मांतरेयस्ययादृशीवासनाभवेत् ॥ तादृशंवपुराप्नोतिदेहपातात्परंपुमान् ५४ कर्मभिःपुण्यपापाख्यैःप्रेरितस्तन्मनाःपुमान् ॥ देहांतेचिंतयेद्यत्तत्प्राप्नुयात्समनंतरम् ५५ पूर्वकर्मक्षयस्तस्यमरणेसतिजायते ॥ अनारंभस्तथाभाविकर्मणोमरणात्पुरा ५६ अस्मिन्नवसरेदेवःकर्मकाराविनिर्ग तः ॥ सत्यसंकल्पआत्मायंचिन्तयेद्यद्भवेद्धितत् ॥ गृह्णीयाद्बहुधादेहान्नटोयद्वद्यदृच्छया ॥ आत्मातथैवसंसारीकामाद्देहानवाप्नुयात् ५८ कामिनोनिश्चयोभूया न्निश्चितस्यापिकर्मिता ॥ कर्मिणःकामिताचैवंक्रमेणैतत्प्रवर्तते ५९ कर्मानुसारतोभूयादिच्छाजंतोःशुभाशुभा ॥ इच्छानुसारतोज्ञेयाःसंस्काराबुद्धिहेतवः १२६० भाविबुद्ध्यनुसारेणकुर्यात्कर्मशुभाशुभम् ॥ भूयाच्छुभाशुभेष्विच्छातस्यकर्मानुसारतः ६१ कामएवततोज्ञेयोजातेदेहेत्रकारणम् ॥ कृतोःकर्मकरस्या स्यनिश्चयापरसंज्ञिनः १२६२

त्स्वरूपःसतथाप्रारब्धकर्मणःप्रतिबंधकतयैवेत्यर्थः ५६ एतदेवस्फुटयति अस्मिन्निति । अस्मिन्नवसरेमरणकालेप्रारब्धकर्मरूपायाःकारायाबंधनागाराद्विनिःसृतोमुक्तःसन्सत्यसंकल्पत्वाद्यदि च्छतितदाप्नोतीत्यर्थः ५७ गृह्णीयादिति । यदृच्छयास्वैरितया स्वातंत्र्येणेतियावत् ५८ काममूलकंसंसारचक्रमभिनयति कामिनइतित्रिभिः । सकामस्यकर्तव्यगोचरोनिश्चयोभवतितादृ शनिश्चयवतश्चकर्मानुष्ठानंतादृशकर्मानुसारेणपुनःकामोदयइतिक्रमेणैतत्संसारचक्रंप्रवर्ततइत्यर्थः ५९ कामजन्यस्यकर्मणःपुनःकामोदयहेतुतामेवविशदयति कर्मेति । चित्तभूमौद्विविधाःसं स्कारास्तिष्ठंतिकर्मजन्याश्चज्ञानजन्याश्चतत्रकर्मजन्यसंस्कारैःस्वफलारंभोपपत्तयेइच्छाताव ज्जन्यते येतुबुद्धिहेतवोज्ञानारंभकाज्ञानजन्याःसंस्कारास्तेयच्छातदनुकूलकर्तव्यादिज्ञानसंतानारंभकाबो ध्याइत्यर्थः १२६० भावीति भाविबुद्धिःकर्तव्यनिश्चयस्तदनुसारेणकर्मकरोतितदनुसारेणचपुनरिच्छाजायतइत्यर्थः ६१ फलितमाह कामएवेतिद्वाभ्याम् । तस्माद्देहजत्पत्तेसतिकर्मकरस्यक र्मारंभप्रयोजकस्यकृतोःसंकल्पस्यकर्तव्यनिश्चयरूपस्यकारणभूतःकामएवबोध्यइत्यर्थः १२६२

७८

एतस्मिन्निति । ततश्चएतस्मिन्संसारेकामएवकारणंबोध्यं सचकामइच्छारूपोयस्यतृप्तिकृदुपशामकंलोकेकिंकिंचिन्नास्तीत्यर्थः ६३ कामस्यविपयैरनुपशाम्यतावादिपुराणवाक्यमर्थतःपठति यदिति ।
सर्वमन्नंहिरण्यादिकंचवस्तुजातमेकस्यापिपुंसस्तृष्णाशमक्षमंनभवतीत्यर्थः ६४ अत्रार्थेत्रिलोकीराजएवब्रह्मलोकानंदकामनयातप्यमानउदाहरणमित्याह दरिद्रइति । तस्येंद्रस्य सप्रसिद्धोब्रह्म
लोकोनारित ६५ यदाचेंद्रस्येयंदशातदाकिमुवाच्यमन्येपांकामदुःखमित्याह कामग्नेरिति । यतइंद्रेपिनोपशांतिस्ततएवंज्ञायतेयद्यपिप्रसिद्धाग्नेर्घृतकुल्यादिकंतर्पकमिंधनंमहाभारतेप्रसिद्धंतथापित्रि
लोकींदहतःकामाग्नेस्तर्पकमिंधनंकुत्रापिनास्तीति ६६ कामएवचसंसारस्यविवेकाद्भिभ्यतस्त्राणकृदितिरूपकेणदर्शयति कामेति । एपजीवःकामात्मकेनकंचुकेनवर्मणारक्षितंपुंयानंशिबिकातुल्यं
वाहनंसूक्ष्मशरीररूपमतएवसर्ववस्तुभिर्विवेकराजसैन्यैरभेद्यमाश्रित्यत्रिलोकीवर्तिपुचतुरशीतिलक्षयोनिपुभ्रमतीत्यर्थः ६७ अतएवचप्राधान्यान्मनोवृत्तीनामभिनायिकायांकामःसंकल्पइत्यादि
कायांश्रुतौकामाख्यवृत्तेःप्रथमकीर्तनमित्याह कामोहीति । हियतःकामरूपावृत्तिर्जगद्रूपस्यपटस्यनिर्माणसूत्रस्थानीयाअतएवश्रुतौप्रथमंकीर्तितेत्यर्थः ६८ नन्वन्यत्राविद्यायामनसश्चसंसारदुःख

एतस्मिंस्ततएवायंसंसारेकारणंस्मृतम् ॥ कामइच्छाभिधोयस्यतृप्तिश्छिन्नैवकिंचन ६३ यत्पृथिव्यांव्रीहियवंयच्चास्तिबहुकिंचन ॥ एकस्यापिनपर्याप्तंपुंसः
कामाग्निधारिणः ६४ दरिद्रोभगवानिंद्रःसदायस्मान्नतस्यसः ॥ ब्रह्मलोकःसमग्राणामानंदानांहियोऽवधिः ६५ कामाग्नेस्ततएतस्यनेंधनंविद्यतेभुवि ॥ स्वर्गे
वाब्रह्मलोकेवादहतोजगतांत्रयम् ६६ कामकंचुकपुंयानमभेद्यंसर्ववस्तुभिः ॥ आश्रित्यत्रिपुलोकेपुसंचरत्येपसर्वदा ६७ कामोहिमानसीवृत्तिःप्रथमापरिकीर्तिता ॥
जगत्पटस्यनिर्माणसूत्रभूतामनीषिभिः ६८ अविद्यामनआश्रित्यवर्ततेजयकाशिनी ॥ मनःकामंसमाश्रित्यजयेद्विश्वंचराचरम् ६९ इच्छाहीनेपुकिंकुर्यान्मनो
वृत्तिसहस्रकम् ॥ अविद्यावापिजननीविश्वस्यात्मविमोहिनी ७० इच्छाहीनेनविज्ञातंसुखदुःखप्रदंभवेत ॥ मनोपिनभवेत्तद्वन्निश्चयस्यापिकारणम् ७१ संतो
प्यसंतएवस्युःप्राणाःश्वासादिहेतवः ॥ दशेंद्रियाणिभूतानिपंचापिवपुषासह ७२ तथायुवतयोनूनंयौवनाग्निप्रदीपिताः ॥ शत्रवःक्रूरकर्माणःकर्मणामनसागिरा ॥
धर्मःसुखप्रदस्तद्वदधर्मोदुःखदस्तदा ७३ सर्वंसर्वंकरंपुंसामिच्छासत्त्वेनहेतुना ॥ अनिच्छतोहिकेदाराःपुत्रालोकाश्चदेहिनः ७४ तस्मादिच्छैवसंसारोनान्यः
कश्चनविद्यते ॥ इच्छाविरहितोजंतुर्जीवन्मुक्तसमोभवेत् १२७५

कारणेपुप्राधान्यमुच्यतेअत्रकामस्यप्राधान्योक्तौकोहेतुरितिचेत्तयोरपिकामद्वारैवदुःखप्रयोजकत्वमित्याह अविद्येति । संसारकारणेपुप्राधान्यरूपेणजयेनकाशिनीप्रसिद्धिमतीयदविद्यावर्ततेतत्रमन
एवालंबनत्वेनप्रयोजकंमनोप्युक्तंजयंकामरूपवृत्तिप्रभावादेवप्राप्नोतीत्यर्थः ६९ कामस्यदुःखनिदानत्वंव्यतिरेकेणस्फुटयति इच्छेतिचतुर्भिः । इच्छाहीनेपुजनेपुसवृत्तिकंमनोवाऽविद्यावाविश्वजननी
किंदुःखंकुर्यादितिसंबंधः नहिसुपुप्तौसमाधौचवर्तमानयोरविद्यामनसोर्दुःखजनकत्वमितिभावः ७० इच्छाहीनेनेति । यतइच्छाहीनेनविज्ञातमपिविपयजातंतत्रसुखादिप्रयोजकंनभवतितथाइच्छा
हीनस्यमनःकर्तव्यगोचरनिश्चयंप्रतिकारणंनभवतीति ७१ संतइति । तथाइच्छाहीनस्यश्वासप्रश्वासादिव्यापारशालिनःप्राणापानादयःसंतोवर्तमानाअप्यसंतोदुःखाप्रयोजकत्वेनाविद्यमानसमाः
तथादशेंद्रियाणिपंचभूतानिशरीरंचएतान्यसत्प्रायाणिबोध्यानीत्यर्थः ७२ तथेति । तथायुवत्यादयोपीच्छाहीनस्याकिंचित्कराइत्यर्थः ७३ अन्वयमप्याह सर्वमिति । सर्वंकारणजातंसर्वंकरंसत्वं
स्यकार्यस्यारंभकंयद्भवतितत्रसर्वत्रेच्छायाःसत्त्वमेवप्रयोजकं यतोनिच्छंतंप्रतिदारादीनामकिंचित्करत्वंलोकेपिप्रसिद्धमित्यर्थः ७४ फलितमाह तस्मादिति स्पष्टम् १२७५

संसारप्रकरणोपसंहारकस्येतिनुकामयमानइतिवाक्यस्यार्थमाह इच्छयेति । यादृशमिहलोकेदृश्यमानंदुःखंकामीप्राप्नोतितज्जातीयंनानायोनिषुप्राप्नोतीत्यर्थः १२७६ अथवर्णितसुषुप्तेदृष्टी
तिकंमोक्षंप्रतिपादयतोथेत्यादिग्रंथस्यार्थंप्रपंचयंस्तत्राप्येतत्त्र्यंतस्यार्थंदर्शयति देवेतिचतुर्विंशतिश्लोकैः । दैवयोगात्पुण्योदयकृतोयःप्रतिबंधकदुरितापायस्तद्योगाद्यदाकामरहितोभवतित
दासंसारदुःखंनानुभवतिकिंतुमुक्तोभवतीत्यर्थः १२७७ तच्चकामरहितत्वंमुख्यंब्रह्मात्मविद्ययैवभवतीतिप्रदर्शकेऽकामइत्यादिविशेषणसमुदायेपूर्वंपूर्वंप्रत्युत्तरोत्तरस्यहेतुतांविशदयति कामशून्य
इतिचतुर्भिः । योयंसर्वदुःखाभावयोग्यःपुमानुक्तःसकामैःशून्योरहितोभवेत् कुतः यस्माद्वैराग्येणसर्वकामविनिर्गमान्निष्क्रांताःकामायस्मादितिव्युत्पत्तिसमन्वयाद्धेतोर्निष्कामोजायते
भवति यथासुषुप्तौनिष्कामत्वंवर्णितंतद्वदित्यर्थः ७८ ननुनिष्कामपदोक्तःसर्वकामविनिर्गमएवतस्यकुतइतिचेदाप्तकामपदोक्तात्सर्वकामलाभाद्धेतोरित्याह निष्कामोनेनेति । यत्यतोऽनेनपुंसासर्वे
पुत्रादयःकामाःकाम्यमानपदार्थाःसाकल्येनप्राप्ताःयेनकामेनसदानैवप्राप्यंतेतस्मादयंनिष्कामइतिसंबंधः नहिप्राप्तेर्थेकस्यापीच्छोदेतीतिभावः १२७९ तत्रहेतुराप्तकामत्वमित्याह आत्मेति ।
यतोयंनिष्कामःपुरुषोत्तमआत्मकामस्ततएवाप्तकामइतिपूर्वार्द्धसंबंधः । ननुकथमात्मकामत्वमाप्तकामत्वेहेतुरितिचेद्ब्रह्मविद्ययालब्धस्यात्मनःसर्वरूपत्वादित्याह प्राप्ताइति । यतःसद्रूपेणसर्वेविवर्तो

इच्छयाविविधंदुःखमुच्चावचशरीरजम् ॥ अस्माभिर्दृश्यतेयादृक्तादृक्कामीसमाप्नुयात् १२७६ दैवयोगाद्यदाकामरहितोजायतेपुमान् ॥ सदुःखंनेदमाप्नोति
कथंचित्कर्हिचित्क्वचित् १२७७ कामशून्योभवेद्योयंयस्मात्कामविनिर्गमात् ॥ वैराग्येणयथासुप्तौनिष्कामोजायतेपुमान् १२७८ निष्कामोनेनयत्पुंसाप्राप्ताः
कामाःसुतादयः ॥ साकल्येनसदानैवप्राप्यंतेकामिनाहिते १२७९ आत्मकामोयतोयंस्यान्निष्कामःपुरुषोत्तमः ॥ प्राप्ताःसदात्मनासर्वेयतःकामाःसुतादयः
१२८० आत्मकामस्ततोज्ञेयआप्तकामःपुमानिह ॥ आप्तकामस्तुनिष्कामोनिष्कामोऽकामईरितः १२८१ कदाचित्किंचिदेवात्रकामिनातनयादिकम् ॥ प्रा
प्यतेनश्वरंभूयःकामाग्नेर्दीप्तिकारणम् १२८२ आत्मकामस्तथानैवप्राप्नोत्येतत्सुतादिकम् ॥ किंतुविश्वमहंकृत्स्नंप्राप्नोत्येवसदैवसः १२८३ अपिदुःखंसुखंतु
गांधनिनांत्यागिनांतथा ॥ विषमंसर्वदातद्वद्दुःखादुःखकरंमहत् १२८४ इतश्चेतश्चधावन्सधनीराजादिकाज्जनात् ॥ दुःखंबहुविधंप्राप्यसुखमाप्नोतिमानवः
१२८५ दरिद्रस्तुप्रहृष्टहृदयोदुःखंकिंचिन्नगच्छति ॥ यथाप्राप्ताशनोलोकेमोदतेदेवराजवत् १२८६

पादानेनआनंदरूपेणात्मनासर्वेकाम्यमानाभावात्तेनापिदूरान्नप्राप्यइत्युत्तरार्द्धार्थः १२८० तस्मादात्मकामत्वमेवपरंपरयाकामाभावरूपेऽकामत्वेहेतुरितिफलितमाह आत्मेति स्प
ष्ट १२८१ आत्मकामत्वस्याकामत्वेप्रतिहेतुतामेवस्फुटयति कदाचिदिति । कामिनापुरुषेणयत्किंचित्प्राप्यतेततृष्णाशामकंनभवतिकिंतुतृष्णावर्द्धकमेवविकारित्वेनानित्यत्वादित्यर्थः
१२८२ आत्मेति । आत्मकामस्तुविद्वानेनत्सुतादिकंविषयजातंतथाकामिवत्कर्मसाध्यत्वप्रयोगाभावेनप्राप्नोतिकिंतुविश्वंसर्वमहंभवामीत्याकारयाविद्ययाकृत्स्नंविषयजातंसदैवात्मभावे
नप्राप्नोतीत्यर्थः १२८३ किंचनिमुक्तआत्मविद्ययाकामाभावरूपपरमानंदहेतुत्वंयोकोपिकामाभावलक्षणसंतोषवतामानंदोऽनुभवसिद्धइत्याह अपीति । विषममितिभावप्रधानोनिर्देशः
तथाचकोऽपिधनिनांधनतृष्णावतांतथात्यागिनांपिविषमत्वंवैलक्षण्यंयथाक्रमंदुःखरूपंसुखरूपंचप्रसिद्धम् । कीदृशंधनिनांदुःखमुत्तरकालेपिदुःखकरम् । कीदृशंत्यागिनांसुखमुत्तरकाले
पिसुखकरमित्यर्थः १२८४ तत्रधनिनांदुःखरूपवैषम्यंस्फुटयति इतइति । धनीहिव्यवहारकालेराजादिभ्योहेतुभ्योबहुदुःखंप्राप्यकदाचित्किंचिदाजसंसुखंमाप्नोति १२८५ त्यागिनांसुखरू
पवैषम्यंदर्शयति । तृष्णारहितस्तुदरिद्रोपियथाप्राप्तस्यानायासेनलब्धस्यपदार्थस्याशनादिनासुखमाप्नोतीत्यर्थः १२८६

किंचतोपिणोभयमपिनास्तियद्धनिनांदुःखदमित्याह नतस्येति । तस्यतोपिणः १२८७ तस्मात्संतोषस्यसुखप्रयोजकत्वंनिश्चितंकामस्यतुनानायासविशिष्टस्यापितत्संदिग्धमित्याह अल्पेति । अल्पायासेनस्वल्पोद्यमेनापिसंतोषःसुखविकासकः कामस्तुअसाध्यात्कष्टसाध्यान्महायासादपिदुःखमेवददातीत्यर्थः ८८ मनोगतःसंतोषःसर्वभावान्सुखमयान्करोतीत्यत्रदृष्टांतमाह यथेति । यथापादगतमुपानद्रूपंचर्मसर्वदेशानांकंटकराहित्यप्रयोजकंपांथान्प्रतितद्वदित्यर्थः ८९ उक्तमर्थंव्यतिरेकेणापिस्फुटयति वसुधामितिद्वाभ्यां । यथाकश्चित्पांथइत्याकारकेनसंकल्पेनदुःखितोभवति इतिकिं अहंसर्वांमार्गभूमिंनिष्कंटकांकोमलांचकुर्यामिति ९० तथेति । तथासकामःपुरुषोहंसर्वान्काम्यमानपदार्थानवाप्स्यामिसंपादयिष्यामीत्येवंसंकल्प्यदुःखितोभवति तस्यसुखलाभस्तुसंदिग्धइत्यर्थः ९१ परिणामादिकमालोचयतांनिष्कामानांदृष्टयातुब्रह्मलोकपर्यंतंनसुखंकिंत्वात्मन्येवतदित्याह नसुखमिति । बिडौजसइंद्रस्य ९२ कामाभावस्यब्रह्मात्मविद्याद्वारामोक्षप्रयोजकतांविवृणोति अकामस्येति । ब्रह्मलोकेच्छादिरूपप्रतिबंधकाभावेसतिमहावाक्येनात्मसाक्षात्कारोजायतेततःकर्मणांबीजशक्तिदाहात्कर्मारभ्यायालोकांत

नतस्यास्तिभयंकिंचिद्राजतश्चोरतोपिवा ॥ यथात्रधनिनोनित्यंविद्यतेसततंभयम् १२८७ अल्पायासेनसंतोषःसुखंयच्छतिदेहिनम् ॥ आयासान्महतोऽसाध्यात्कामोयच्छतिवानवा ८८ यथापादस्थितंचर्मसर्वदासुखकारणम् ॥ पांथानामेवमेवस्यात्संतोषोदेहधारिणाम् ८९ वसुधांसकलांकश्चिद्यथाकुर्यामकंटकाम् ॥ मृदुलांचेतिसंकल्प्यपांथःक्लेशमवाप्नुयात् १२९० तथाकामानवाप्स्यामीत्येवंसंकल्प्यकामुकः ॥ प्रवृत्तोदुःखमाप्नोतिसुखमाप्नोतिवानवा ९१ नसुखंसार्वभौमस्यविद्यतेनबिडौजसः ॥ ब्रह्मणोनसुखंयत्स्यात्पुंसःकामविवर्जनात् ९२ अकामस्यात्मविज्ञानमहंब्रह्मेतिजायते ॥ जातेतस्मिन्ननिर्यातितस्यलिंगंमनोबहिः ९३ अंतःशरीरएवैतेप्राणालिंगशरीरगाः ॥ तेनसार्धंविलीयंतेह्यंतर्दीपोयथागृहे ९४ ब्रह्मरूपःपुरैवायमहंब्रह्मेतिबोधतः ॥ ब्रह्मैवभवतीशःसप्राणनाशादनंतरम् ९५ महाकाशंयथापूर्वंघटनाशाद्घटेनभः ॥ घटनाशेमहाकाशंभवत्येवंपुमानिह ९६ यथाविशुद्धआकाशेगंधर्वनगरादिकम् ॥ आकाशाज्ञानतोभूयादात्माज्ञानात्तथाजगत् ९७ निष्कामआत्मनीशेस्तिकामबीजोजगत्तरुः ॥ जायतेस्वात्मविज्ञानेबीजनाशाद्विनश्यति ९८ आत्माज्ञानादयंजातकामःकामाज्जगत्त्रयम् ॥ आत्मज्ञानाद्विनश्येत्तत्सर्वमज्ञानमात्मगम् १२९९

राकारायाःसमुत्क्रांतिहेतोर्दीर्घभावनायाअसंभवात्तस्यविदुषोमनःप्रधानंलिंगंसूक्ष्मंशरीरंबहिःस्थूलशरीरान्ननिर्गच्छति तथासति सूक्ष्मशरीरगताःप्राणाःसेंद्रियवायवस्तेनमनसासहशरीराभ्यंतरएवविलीयंतेस्वविवर्तोपादानेविलयंयांतिगेहांतर्देशदीपवदितिद्वयोरर्थः ९३ । ९४ नन्वेवंविदुषःकरणवर्गस्यविलयेपिशेषश्चिद्धातुःकगच्छतीतिचेन्नकुत्रापीत्याह ब्रह्मरूपइति । अयंविदुषआत्मातत्त्वज्ञानात्पूर्वमावृतब्रह्मभावआसीत् इदानींतुनिरावरणःसर्वविशेषविनिर्मुक्तश्चविद्वद्दृष्ट्याभवतिअज्ञान्प्रतितुईशःसर्वेश्वरोभवतीत्यर्थः १२९५ आरोपितपरिच्छेदनिवृत्तौब्रह्मभावेदृष्टांतमाह महाकाशमिति । यथामहाकाशमेवघटनाशात्पूर्वंघटेनभःघटावच्छिन्नाकाशरूपमभूत्तच्चघटनाशोत्तरंमहाकाशमेवभवतितथाविदुषआत्मापीत्यर्थः ९६ उक्तार्थमुपपादयति यथाविशुद्धइति । यथाविशुद्धमाकाशमज्ञातंसतगंधर्वनगरादीनांक्षेत्रंतथाआत्मावस्तुतोविशुद्धोनिष्कामश्चकल्पिताज्ञानेनविपर्यीकृतोजगद्वृक्षस्यकामबीजकस्यक्षेत्रंतत्त्वज्ञानाग्निसंपर्कात्तस्यक्षेत्रभावेसबीजेविप्लुतेतुजगद्वृक्षोनभविष्यतीतिद्वयोरर्थः ९७ । ९८ उक्तमर्थमेवसंक्षिप्याह आत्मेति । अयमात्मातत्क्षेत्रभावापादकमज्ञानमितिद्वयोरर्थः १२९९

१३०० उक्तार्थदार्ढ्योपादकस्यनिष्कामत्वेजीवतोपिमुक्तिःकिमुतविदेहस्येतिप्रदर्शकस्यमंत्रस्यार्थमुपबृंहयति यदेत्यूनविंशतिश्लोकैः । यदास्यपुंसोहृदिबुद्धौश्रिताःस्थूलसूक्ष्मरूपाभ्यांवर्त्तमानाःसर्वेकामाइच्छाभेदाःपुत्रैषणादिसंज्ञाःप्रमुच्यंतेशांताभवंतितदामर्त्योमरणधर्माअपिपुमान्अस्मिन्नेवदेहेब्रह्मआप्यलब्ध्वाअमृतोभवतीत्यर्थः १ एतदुपपादयति अहमिति । देहादिष्वध्यासरूपोभिमानएवकामानांप्रयोजकस्तस्याभिमानस्यदेहविषयकस्यत्यागीदेहाद्विनिर्गतोजनःसर्वोभवति । यदितुदेहेसतिविद्यमानेपिसोभिमानोनस्यान्निवर्तेततदादेहस्थोपिजीवन्नपिनचदेहगःमुक्तएवेत्यर्थः २ मुक्तत्वेहेतुतयामोक्षलक्षणयोगमाह कामानामिति । हृदयबुद्धिसाक्षिणियःकामानांबुद्धिधर्माणांवासआरोपःसंबंधस्तेषांकामानांसर्वात्मनासमूलानांनाशोबाधस्तुमोक्षइति ३ सचात्यंतिकःकामनाशस्तन्मूलाविद्योच्छेदकब्रह्मज्ञानेनयदिजीवनावस्थायामेवजन्यतेतदाजीवतएवमुक्तिंकोवारयेदित्याह ब्रह्मेति । इदंकाममूलोच्छेदकंब्रह्मज्ञानम् ४ यदाब्रह्मज्ञानंबंधोच्छेदकंतदाब्रह्मसाक्षात्कारएवमोक्षलक्षणमित्याह आनंदेति । ब्रह्मसाक्षात्कारःसतिदेहेमुक्तिर्जीवन्मुक्तिलक्षणंदेहगतेविदेहावस्थायांयामुक्तिस्तांप्रतिब्रह्मसाक्षात्कारस्यलक्षणत्वंतुहिनिश्चितमेव तस्यतावदेवचिरमित्यादिच्छंदोगश्रुतेरित्यर्थः ५ ननुनित्यमुक्तत्वेनप्रसिद्धस्यात्मनःकीदृशोबंधोयःसाक्षात्कारेणनिवर्त्यतेइत्याशंकांवारयन्बंधस्वरूपंविशदयति कामानामिति

अज्ञाननाशतःकामोमूलभावाद्विनश्यति ॥ कामनाशाज्जगद्वृक्षोनिर्बीजोनभविष्यति १३०० यदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताः ॥ तदामर्त्योमृतोभूयाद्ब्रह्माप्यास्मिन्कलेवरे १ अहंमानस्यसंत्यागीदेहेदेहाद्विनिर्गतः ॥ सतिदेहेपिचेत्सस्याद्देहस्थोपिनदेहगः २ कामानांहृदयेवासःसंसारइतिकीर्तितः ॥ तेषांसर्वात्मनानाशोमोक्षउक्तोमनीषिभिः ३ ब्रह्मज्ञानाद्विनानायंकामोनश्यतिसर्वथा ॥ जीवतश्चेदिदंजातंसतिदेहेविमुक्तिभाक् ४ आनंदात्मनईशस्यस्वयंज्योतिःस्वरूपिणः ॥ साक्षात्कृतिर्भवेन्मुक्तिःसतिदेहेगतेस्तिहि ५ कामानांहृदयेस्थानंबंधउक्तोमनीषिभिः ॥ स्वस्यनायंतथातेनजीवन्मुक्तःप्रकीर्तितः ६ आत्मनोवरणंमायाचिदंशःकामएववा ॥ बंधउक्तोद्वयाभावाद्ब्रह्मविन्मुक्तईरितः ७ संबंधेनात्मनोदृश्यंपश्येच्चेद्बद्धईरितः ॥ विनातेनैषसंपश्येन्मुक्तोजीवन्नभवेत्पुमान् ८ कर्मणायद्भवेदस्यात्प्रमत्तादेःशुभाशुभम् ॥ आहारादिकमेवंस्याज्जीवन्मुक्तस्यदेहिनः ९ गर्भवासेस्थितोजंतुर्नवमान्मासतःपुरा ॥ रसान्नानाविधान्यद्वद्भुंजानोपिनवेत्त्यमून् १३१०

त्रिभिः । कामानांयद्धृदिस्थानंवासउक्तविधःसस्वस्यात्मनोबंधः अयंविद्वांस्तुतथावर्णितबंधवान्नभवतितेनबंधाभावेनजीवन्नपिमुक्तउच्यतइत्यर्थः ६ बंधसर्वस्वमाह आत्मनइति । अस्तिअविद्यायाःशक्तिद्वयमावरणविक्षेपनामकं तत्रविक्षेपशक्तेरप्यस्तिरूपद्वयं एकंप्रपंचभानापादकंद्वितीयंप्रपंचेरागोत्पादकमिति तत्रयदात्मनोवरणंमायाआवरणशक्तियुक्तामायाऽविद्यायश्चविक्षेपशक्तिरूपःकामआसक्तिरूपोरागः कीदृशः चिदंशःपरिपूर्णायाश्चितोऽशत्वस्यपरिच्छिन्नत्वरूपस्यप्रयोजकःएतदुभयात्मकोबंधोयदानिवर्ततेतदाजीवन्मुक्तिः । यदातुप्रपंचभानापादकोविक्षेपशक्तिभागोपिनिवर्ततेतदाविदेहमुक्तिरितिभावः ७ संबंधेनेति । यदिदृश्यजातंशरीरत्रयरूपमात्मनःसंबंधेनतादात्म्यरूपेणस्वत्वरूपेणवासंबद्धंदृश्यंपश्यतितदायंपुमान्बद्धइतिवाच्यःअसंगात्मदर्शीतुजीवन्मुक्तइतिनिश्चयइत्यर्थः ८ नन्वेवंविधस्यजीवन्मुक्तस्यकथंलोकयात्रानिर्वाहइतिशंकांनिदर्शनैःपरिहरति कर्मणाप्रारब्धविपाकेनप्रयुक्तंयथाप्रमत्तस्यबालादेश्चआहारादिकंशुभमशुभंवाभवत्येवंतथाऽस्यापीत्यर्थः ९ अस्यजीवन्मुक्तस्यचितंतुसर्वाधिष्ठानचिंतान्यग्रंनारोपितविशेषेष्वादरंदधातीत्यत्रदृष्टांतमाह गर्भेति । यथागर्भगोबालोनवममासात्पूर्वंनानाविधान्मातृभुक्तान्नरसान्भुंजानोपिविशेषतोनवेत्तितथायमपीति १३१०

तथास्वरूपनिष्ठातारतम्यानुसारेणमासजातबालादयोप्यत्रदृष्टांताइत्याह बालोन्मत्तेति १३११ अस्यचित्तंयदात्मविवेकप्रवणमेवभवतितत्रदृष्टांतउच्यते यथेति । यथाऽशोकवनिकान्याये नरावणेनकुत्रचिद्वनेनिवेयासीताअशोकवनिकायामेवधृतेत्यर्थेकेनप्रमत्तादिचित्तंकुत्रचिदेकत्रविषयेप्रायशोलग्नंभवतितथास्यमुक्तस्यचित्तमात्मविषयिकायांप्रतिपत्तौविचाररूपायामेवलगतीत्यर्थः १३१२ अस्यनिषिद्धाचरणेप्रवृत्त्यभावमपिदृष्टांतेनोपपादयति सुशीलइतिद्वाभ्यां । यथाकश्चिद्देहीसुशीलःसदाचारपरोदैववशादुत्पन्नप्रमादादिरोगवशात्स्वकीयंकुलादिप्रभावंविस्मरन्न पिपूर्वाभ्यासेननिंदितंनकरोतितथाजीवन्मुक्तोपिमुमुक्षुदशानुष्ठितशमाद्यभ्यासवशान्निंदितेनप्रवर्ततइतिद्वयोरर्थः १३१३ । १३१४ तस्यशास्त्रार्थप्रवृत्तिंदर्शयति वासनाभिरिति । यथा कश्चित्पंडितउन्मादादिरोगव्याप्तोप्यभ्यस्तान्शास्त्रार्थान्नैवप्रकाशयतितथाअस्माकंजिज्ञासूनांगुरुर्जीवन्मुक्तोपीत्यर्थः १३१५ ननुयोग्यायोग्यशिष्यभेदज्ञानाधीनमुपदेशव्यवहारंसजीवन्मुक्तोऽद्वैतात्मदर्शीकथंकरोतीतिशंकामपिदृष्टांतेनैवपरिहरति मायावीतिद्वाभ्यां । यथाकश्चिन्मायावीसर्वशास्त्रज्ञःस्वयंकृतैर्बहुभीरूपैःस्वस्यएकाकित्वेऽद्वितीयत्वेविस्मृतिंप्राप्तइवेतिशेषः ईदृशःसंस्तेषांपाठनादिकंकुर्यात्यथाचसवस्तुतोनिर्भेदोपिसभेदइवतथायंजीवन्मुक्तोविद्वानानंदात्मरूपेणाद्वितीयोपिप्रारब्धभोगोपयुक्ताविद्यालेशेनगुरुशिष्यादिभेदमपिपश्यतीतिद्वयोरर्थः १३१६ । १३१७ त

बालोन्मत्तजडादिर्वानानाभोगान्समाप्नुवन् ॥ नवेत्तितद्वदेवायंजीवन्मुक्तःपुमानपि १३११ यथाकश्चित्प्रमत्तोत्रकिंचिदेवप्रपद्यते ॥ आत्मानमेवमेवैषजीवन्मुक्तःप्रपद्यते १२ सुशीलोत्रयथाकश्चिद्देहीदैवादियोगतः ॥ विस्मृतात्मस्वरूपःसन्कुरुतेनिंदितंनहि १३ शांतोदांतस्तथैवायंसर्वकामविवर्जितः ॥ निंदितंकुरुतेनैवजीवन्मुक्तःकदाचन १४ वासनाभिर्यथामत्तःशास्त्रार्थान्प्रतिपद्यते ॥ वासनाभिस्तथाचायंजीवन्मुक्तोपिनोगुरुः १५ मायावीविस्मृतिंप्राप्तःसर्वशास्त्रविशारदः ॥ एकाकित्वेस्वरूपस्यस्वकृतैर्बहुरूपकैः १६ सयथागुरुशिष्यादिभेदोनिर्भेदएवहि ॥ आनंदात्मातथाचायंगुरुशिष्यादिभेदवान् १७ यथाशयानःपुरुषःस्थूलदेहंनवेत्त्यसौ ॥ स्वप्नान्पश्यन्हिसस्वप्नेस्वप्नाइत्येवमन्यते १८ कदाचिद्दैवयोगेनस्वयंशास्त्रार्थतत्त्ववित् ॥ वासनावासितस्तत्रह्युपदेशंकरोतिच १९ जीवन्मुक्तस्तथादेहद्वयंनैवावगच्छति ॥ साज्ञानंतद्विजानन्सकुरुतेचोपदेशनम् २० अभिमानस्यसंत्यागेदेहेसत्यपिदेहिनः ॥ तामसस्यापिसर्पादेर्दुःखंतज्जंनजायते २१ विदुषःकिमुतैतत्स्याद्धीमतोतिविवेकिनः ॥ दुःखंदेहोत्थितंयस्माद्देहेहंकारभाङ्गसः २२ कंचुकंहियथासर्पस्त्यक्त्वाद्वारिबिलस्यच ॥ उल्बाख्यंमृतकंस्वस्यदेहंपश्यन्नसज्जते २३

स्यजीवन्मुक्तस्यविशेषतःप्रपंचंविस्मृत्यजीवनमात्रप्रयुक्तंभेददर्शनंनबंधायभवतिमिथ्यात्वेननिश्चितत्वादित्येतदपिदृष्टांतेनविशदयति यथेतित्रिभिः । यथाकश्चित्स्वप्नावस्थांगतःस्थूलदेहविस्मरणंसर्वसुप्तसाधारणंधर्मंधारयन्कदाचिद्दैवयोगेनस्वप्नपदार्थानपिइमेस्वप्नाःस्वप्नपदार्थाइत्येवंमन्यमानस्तत्रनसज्जेतनासक्तोभवेत्तथाभ्यस्तशास्त्रवासनयातदुपदेशेप्रवर्तेततथायंविद्वानपिसाज्ञानंसकारणशरीरंस्थूलसूक्ष्मरूपंदेहद्वयंसमष्टिव्यष्टिरूपंमिथ्यात्वेनजानन्नुपदेशादिकंकरोतिनबद्ध्यतेचेतित्रयाणामर्थः १३१८ । १३१९ । १३२० ननुजीवन्मुक्तस्यसशरीरत्वेनोपलभ्यमानस्यवंधावस्थायाःकोविशेषइत्याशंकावारकस्यतद्यथेत्यादेस्तेजएवेत्यंतग्रंथस्यार्थंवर्णयति । अभिमानस्येत्येकविंशतिश्लोकैः । तामसस्यसर्पादेरपिदेहेकंचुकरूपेअभिमानस्यत्यागेसतिकंचुकखंडनादिकृतंदुःखंनभवतिकिमुतसत्त्वातिशयशालिनोविदुषोदेहप्रयुक्तंदुःखंनभवतीतिद्वयोरर्थः १३२१ । १३२२ उक्तंविशदयति कंचुकमितिद्वाभ्यां । यथासर्पस्त्यक्तंकंचुकंपश्यन्नपिनसज्जतेतद्धर्मानात्मनिमत्वानदुःखितोभवतीतियावत् । कीदृशं उल्बाख्यंउल्वंगर्भवेष्टनीभूतंसूक्ष्मंचर्मतत्तुल्यत्वेनतन्नाम्नाव्यवहर्तव्यं । पुनःकीदृशं स्वस्यमृतकंदेहंस्वकीयमृतदेहसमं तथाविद्वानपीमंवर्तमानंदेहंविवेकेनत्यक्तंपश्यन्नपिनपश्यतीतिद्वयोरर्थः १३२३

१३२४ अभिमानलक्षणसंबंधेनशरीरविशिष्टएवपुंसिदुःखंनत्यक्ताभिमानइत्येतदृष्टांतेनविशदयति भूतेति । यथाभूतेनदेवजातिविशेषेणाविष्टंव्याप्तंशरीरंपरशरीराभिमानविशिष्टंभूतमिति यावत् तत्कर्तृदुःखंप्रहारादिकृतंसुखंपूजादिकृतंचप्राप्नोति यत्तुतत्रशरीरेभूतंतच्छरीराभिमानहीनंसत्तेसुखदुःखेनाप्नोति एवंजीवन्मुक्तस्यदेहोप्यभिमानलक्षणसंबंधेनयदाव्याप्तोभवतितदा सुखदुःखेकर्मकृतेप्राप्तोभवतितद्देहगतोविद्वांस्तुशरीरविविक्तःसुखदुःखेनैवाप्नोतीतिद्वयोरर्थः १३२५ । १३२६ एवंजीवन्मुक्तस्यसमाधिकालेप्रारब्धकर्मफलाननुभवउक्तोथतस्यव्युत्थानकाले पिसुखदुःखयोरनुभवेवद्भ्योविशेषमाह शिशोरिति । यथाऽतीतानागतचिंताशून्यंशिशुकर्तृकंसुखादिज्ञानंरागाद्यजनकंतथाऽस्यापीत्यर्थः १३२७ किंचतेसुखदुःखेअपिपरेच्छासाध्यव्यापा रादेवविदुषोभवतइत्याह यथात्रेति । यथालोकेकश्चिद्वृद्धोरोगकृताशक्तेर्हेतोर्मृतिंमृत्युसमावस्थांप्राप्तःसन्परेषांवध्वादीनामिच्छायांनिमित्तभूतायामेवसुखादिकंप्राप्नोतितथायमपीत्यर्थः १३२८ तस्यलौकिकौलाभालाभौहर्षादिकंनकुरुतइत्येतदृष्टांतेनस्फुटयति प्रसंगादितिद्वाभ्यां । यथाकश्चित्कर्षकोभूयसाधनेनतुष्टमनाःकदाचित्क्षेत्रंगतःसंस्तत्रसस्यसंपत्तेरलाभंपश्यन्यद्वन्नविषीदातितितो

एवंविद्वानिमंदेहमभिमानविवर्जितः ॥ पश्यन्नपिनतेनायंसज्जतेसंगवर्जितः १३२४ भूताविष्टंयथादेहंसुखंदुःखंचगच्छति ॥ नसुखंनापिदुःखंवाभूतंतत्राधि गच्छति १३२५ एवमुक्तस्यदेहोपिसुखदुःखेसमाप्नुयात् ॥ कर्मतोनैवमुक्तोयंपुण्यपापविवर्जितः १३२६ शिशोर्यथाभवेल्लोकेविज्ञानंसुखदुःखयोः ॥ रागद्वेष विहीनस्यतद्वन्मुक्तस्यसर्वदा १३२७ यथात्रस्थविरोरोगीह्यशक्तोमृतिमागतः ॥ सुखदुःखेपरेच्छायांप्राप्नुयादात्मवित्तथा १३२८ प्रसंगात्क्षेत्रमायातोयथाक श्चिद्वनीपुमान् ॥ अलभेनविषादीस्याल्लाभेहृष्टोनचात्रसः १३२९ लाभालाभौतथैवास्यजीवन्मुक्तस्यसर्वदा ॥ हर्षंचैवविषादंचनसंजनयतःक्वचित् १३३० भृतकोभृतिमेवेच्छन्नात्यल्पंबहुवाक्वचित् ॥ स्वामीवकुरुतेकर्मकालावधिविलोकनः १३३१ जीवन्मुक्तस्तथैवायंव्यापारेष्वव्यवस्थितः ॥ आत्मानमवलोक्यैव तिष्ठत्यामरणंसदा १३३२ दारुयंत्रंयथासूत्रैर्गच्छेत्तत्सर्वतोदिशम् ॥ कर्मसूत्रैस्तथादेहोजीवन्मुक्तस्यगच्छति १३३३ यथाचर्ममयोहस्तीसुखदुःखकरोभवेत् ॥ कर्मानुसारतःपुंसांजीवन्मुक्तवपुस्तथा १३३४ आनिपातंयथागच्छेद्बाणोमुक्तोधनुष्मता ॥ आरब्धकर्मभिस्तद्वद्देहोप्यामरणंव्रजेत् १३३५ भूताविष्टोयथाक र्तांकुर्वन्वेत्तिनकिंचन ॥ व्यवहारंतथाकुर्वन्जीवन्मुक्तोनवेत्त्यमुम् १३३६

लाभंवापश्यन्नहृष्यतितथायंविद्वानपिब्रह्मानंदतुष्टोलौकिकलाभालाभयोर्हर्षादिकंनाप्नोतीतिद्वयोरर्थः १३२९ । १३३० तस्यचित्तमात्मचिंतायामेवप्राधान्येनवर्ततइत्येतदृष्टांतेनदर्शयति भृतकइति । यथाभृतकोवेतनोपजीवीभृतिंवेतनमेवमनसाचिंतयन्गृहस्वामिवन्नात्यल्पंमध्यविधंबहुवाकर्मकरोति । कीदृशोवेतनकालावधिदर्शी । तथायंजीवन्मुक्तोपिलौकिकव्यापारेष्वव्यवस्थितोऽतत्पर आत्मदर्शनप्रधानएवतिष्ठतीतिद्वयोरर्थः १३३१ । १३३२ । तस्यलोकयात्रामचिंतयतोपिप्रारब्धकर्मवशाल्लोकयात्रानिर्वहतीतिनिदर्शयति दारुयंत्रमिति । अत्रसूत्रबद्धंदारुयंत्रंतदेवयत्कार्पा ससूत्राणांखनिःसृतंतस्यभ्रमणंयथासूत्रप्रयुक्तंप्रसिद्धंतथाविद्वद्देहस्यप्रारब्धकर्मरूपसूत्रप्रयुक्तमित्यर्थः १३३३ वीतरागस्यविदुषःशरीरमेवसुहृदांदुर्हृदांचभावानुसारेणहर्षादिकरंभवतीत्यत्रदृष्टांत माह यथाचर्मेति । चर्ममयःकुतुकायचर्मणानिर्मितः १३३४ शरीरयात्रार्थमनोव्यापाराभावेपिपूर्वसंस्कारादेहप्रवृत्तौदृष्टांतमाह आनिपातमिति १३३५ देहेंद्रियादिभिःकृतमपिकर्मब्रह्म निष्ठावेशवशान्नजानातीतिदर्शयति भूतेति १३३६

एतादृशीमवस्थांप्राप्तोविद्वान्सशरीरतयादृश्यमानोप्यशरीरोऽमृतश्चवाच्यस्तद्दृष्टयासविलासाज्ञानदाहादितिवदन्नशरीरामृतपदयोस्तत्रसमन्वयंदर्शयति एतादृशीमिति । जनेःशरीरधर्मस्याभावादमृतः १३३७ तत्रहेतुतयाप्राणादिशब्दैःसूचितमखंडब्रह्मात्मत्वमाह प्राणस्येति । यतोयंविद्वान्वस्तुतःप्राणादिवर्जितत्वेपिसन्निधिमात्रेणसर्वप्राणानांचालकत्वात्प्राणपदलक्ष्यमद्वितीयत्वाद्ब्रह्मपदलक्ष्यंसर्वांतरचित्प्रकाशरूपत्वात्तेजःपदलक्ष्यमेवकारसूचिताखंडात्मकंचयद्वस्तुतद्रूपएवभवतीत्यर्थः १३३८ एवंज्ञेयंतत्त्वंज्ञात्वापिराजापुनःसाधनविशिष्टांविद्यांश्रोतुकामःपूर्ववत्सहस्रदक्षिणादानवाक्यमेवोवाचेत्याशयकस्यकंडिकाशेषस्यार्थमाह एवमितित्रिभिः । एवंतत्त्वंज्ञात्वापिराजाब्रह्मविद्यासाधनंयतोनज्ञातवानित्यतःपूर्ववदब्रवीत् । कीदृशोराजा इत्यभिप्रायवान् इतिकिं अशुद्धमनसाश्रुतोपिशब्दःप्रमितिप्रदःफलायायकोनभवतीत्यतःसत्वशुद्धिसाधनमपिश्रोतव्यमितीतिद्वयोःसंबंधः १३३९ । १३४० पूर्ववद्वाक्यमभिनयति प्राप्तेति १३४१ एवंपृष्टोमुनिर्मैत्रेय्रीब्राह्मणवाक्यैश्रवसाधनांविद्यांवक्तुमुपचक्रमेइत्याह इत्युक्तेइति १३४२ तत्रब्रह्मविद्यैवमोक्षमार्गइत्यवधारकस्याणुरित्यादेःप्रथममंत्रस्यार्थमाह पंथाइतिपंचभिः । साक्षात्कृतात्मतत्त्वोमुनिरेवमाह एवंकथं योयंचरमजन्मनिमांप्रमात्मानंविषयीकृत्यबोधोजातःसएवसूक्ष्मादिविशेषणकोमोक्षस्यपंथाइतिसंबंधः १३४३ एषपंथाअतिदुर्गमोमयैववेदमनुसृत्यज्ञातःफलवत्तयादृष्टश्चेत्याह ज्ञातइति । सर्वदःसर्वात्मभावप्रदोयोयंपन्थाःमयैवसर्वज्ञेनज्ञातइतिसंबंधः १३४४ मयैवेत्येवकारोऽयोगव्यवच्छेदार्थोनत्वन्ययोगव्यवच्छेदार्थइत्यभिप्रायेणतत्फलमितरेषामपिसाधनसंपन्नानांभवतीतिदर्शयति तेनेति । तेनज्ञानरूपमार्गेणअन्येविद्वांसोपिब्रह्मानंदरूपंस्वर्गंगच्छंतीतिसंबंधः १३४५ तत्फलस्येतरमार्गगम्यफलेभ्योवैलक्षण्यंगत्विशेषणेराह विलीनाइतिद्वाभ्याम् । विलीनाःस्थितोसैंधवपिंडवत्तद्भावंगतास्तिष्ठंतिजीवंतोपीतिशेषः देहाभिमानत्यागादूर्ध्वंनिर्बंधनामुक्ताः श्रुतौतूर्ध्वशब्दस्यौकारश्छांदसइतिद्वयोरर्थः १३४६ । १३४७ केचिन्मणिप्रभायांमणिदर्शिनइवसुषुम्नानाडीरूपंमोक्षमार्गमाहुस्तन्मतप्रदर्शकस्यद्वितीयमंत्रस्यार्थमाह हार्देतिपंचभिः । यःसुषुम्नारूपोमार्गोहृत्कमलगतादित्यमारभ्यबाह्यादित्येनसंबद्धोवर्ततेसमार्गोतेत्रब्रह्मणासहमोक्षकालेब्रह्मज्ञानाख्यमार्गेणसहएकीभवतितुल्यफलोभवतीत्यर्थः १३४८

एतादृशींयदावस्थांप्राप्तोभवतिमानवः ॥ तदाविनाशमायातेसतिवास्मिन्नशरीरके ॥ शरीरत्रयहीनःस्यादमृतोजन्यभावतः १३३७ प्राणस्यायंभवेत्प्राणःप्राणापाननिवर्जितः ॥ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः ॥ ब्रह्मैवात्मप्रकाशत्वात्तेजएवनचापरम् ३८ एवमात्मानमाज्ञायराजासम्यग्गुरोर्मुखात् ॥ कारणंब्रह्मविज्ञानेज्ञातवान्नमहीपतिः ३९ नहिशब्दःश्रुतोऽशुद्धमनसःप्रमितिप्रदः ॥ इत्यभिप्रायवान्भूयोराजापूर्ववदब्रवीत् ४० प्राप्तविद्योस्मिसोहंतेयाज्ञवल्क्यददाम्यहम् ॥ गवांसहस्रंविद्ययानिष्क्रयंमुनिसत्तम ४१ इत्युक्तेयाज्ञवल्क्योपिमंत्रब्राह्मणभागतः ॥ साधनंविविधंतस्माउक्तवान्मुनिसत्तमः ४२ पंथाःसूक्ष्मोतिविततःपुराणःसुखदोनृणाम् ॥ विषयीकृत्यमांजातोबोधश्चरमजन्मनि ४२ ज्ञातोमयैवयोनित्यंसर्वदःसर्वदेहिनाम् ॥ मदन्यःकोमुमध्वानंजानीयादतिदुर्गमम् ॥ गुरुर्वेदात्मकस्तस्माज्ज्ञानाम्येनमहंमुनिः ४४ तेनमार्गेणविद्वांसोब्रह्मचर्यादिसाधनाः ॥ अपिगच्छंत्यतिसुखंस्वर्गलोकंस्वयंप्रभम् ४५ विलीनाइवतिष्ठंतिगत्वानंदात्मरूपकम् ॥ दुःखैर्नानाविधैर्मुक्तानिश्चलाःस्वात्मनिस्थिताः ४६ रागद्वेषादिनिर्मुक्ताअज्ञानेनविवर्जिताः ॥ देहाभिमानसंत्यागादूर्ध्वंनिर्बंधनाजनाः ४७ हार्दादित्येतथाबाह्येसंलग्नोयोत्रवर्तते ॥ ब्रह्मज्ञानाख्यमार्गेणसोंतएकीभवेदपि १३४८

तमेवमार्गमभिनयति सगुणेति । सूर्येहृदिचसंलग्नइतिशेषः रश्मिनाडीमयःसूर्योत्पन्नताभीरश्मिभिर्हृदयात्प्रसृताभिर्नाडीभिश्चनिर्मितः ताआदित्यात्प्रतायंतइत्यादिछन्दोगश्रुतेः १३४९ नानाविधान्नरसपूर्णत्वेनतस्यनानाविधान्वर्णानुपासकाःप्राहुरित्याह तस्मिन्निति । तस्मिन्सगुणब्रह्मलोकमार्गे १३५० अयंसगुणोपासकेभ्योमार्गःसाक्षिप्रत्यक्षसिद्धइत्याह चित्रेति । सगुणब्रह्मणोहंग्रहेणोपासकस्तेनगच्छति तथापंचाग्निविद्गृहस्थोपितेनमार्गेणगच्छति तथान्योपिगृहस्थभिन्नाश्रमीउर्ध्वरेतस्त्वेनश्रुतौतेजसपदोक्तःस्वाश्रमकर्मात्मकपुण्यकर्त्तातेनगच्छतीतिद्वयोरर्थः भाष्यव्याख्यानभेदस्तुप्रमेयाविरोधात्समाधेयः १३५१ । १३५२ अथब्रह्मविद्यारूपमार्गएवमुमुक्षुभिरुपादेयइतिबोधयितुंतदितरमार्गाणांहेयताबोधकयोस्तृतीयचतुर्थयोर्मंत्रयोरर्थमाह अंधमिति त्रिभिः । येकेवलंकर्मिणोयागदानादिरूपकर्मात्मकाऽविद्याशालिनस्तेधूमादिकेनदक्षिणमार्गेणस्वर्गंगच्छंतोप्यंधंतमोदेहाभिमानरूपंव्रजंति कीदृशंतत्तमः पुत्रदारादिसक्तिद्वाराविवेकचक्षुःपिधायकत्वादंधमंधत्वकरमित्यर्थः एतेनकेवलपापकारिणःकीटपतंगादिभावलक्षणतृतीयमार्गगामिनोंधंतमोविशंतीतिकिमुवाच्यमितिसूचितम् १३५३ तथोपासनारूपांविद्यामनुतिष्ठंतोपिदेवभावद्वाराप्रतिरमणीयविषयेष्वासक्त्यतिशयात्पूर्वेभ्योधिकंतमोविशंतीत्याह ब्रह्मेंद्रादीनिति । स्पष्टम् १३५४ आधिक्यंविशदयति देवतेति । देवताविषयकयाविद्ययाऽपासनयाते

सगुणब्रह्मलोकस्यमार्गःसूर्येतथाहृदि ॥ रश्मिनाडीमयोनित्यंवर्ततेराजमार्गवत् १३४९ तस्मिन्शुक्लंतथानीलंपिंगलंहरितंतथा ॥ लोहितंचेत्येवमादिरूपमाहुर्मनीपिणः १३५० चित्रवर्णस्त्वयंपंथाब्रह्मणासाक्षिरूपिणा ॥ ज्ञातस्तेनव्रजेन्नित्यंसगुणब्रह्मचिंतकः १३५१ पंचाग्निवित्तथान्योपिगृहस्थान्यत्रयाश्रमी ॥ स्वाश्रमोचितमन्यंतंपुण्यकर्मविधायहि १३५२ अंधंतमोविशंत्येतेपुत्रदारादिमोहदम् ॥ धूमादिमार्गतोगत्वास्वर्गंकेवलकर्मिणः १३५३ ब्रह्मेंद्रादीन्सुरांस्तद्वन्नानोपासनयाहिये ॥ आराधयंतिकर्मिभ्यस्तेधिकांसंसृतिंययुः १३५४ देवताविद्ययागत्वापरमैश्वर्यमत्रते ॥ कर्मिभ्योभ्यधिकासक्तादारादिषुभवंतिहि १३५५ विद्ययाकर्मणावापिसक्तादारसुतादिषु ॥ कंचित्कालंसुखंप्राप्यपश्चाद्दुःखमिमेययुः १३५६ असुखानामयेलोकाअंधेनतमसावृताः ॥ मृत्वातानभिगच्छंतियेस्वज्ञानविवर्जिताः १३५७ एवमेतेत्रयोमार्गाःकथिताःसर्वदेहिनाम् ॥ अंधेतमसियोमार्गोब्रह्मज्ञानपथंहिसः ॥ नपरंपरयाप्येषयातियाम्यपुरंगतः १३५८ विद्याकर्मवतांमार्गोवुक्तौतोकर्हिचित्क्वचित् ॥ ब्रह्मज्ञानपथंयातोजंतोर्भाग्योदयेसति १३५९

उपासकाःपरमैश्वर्यंलब्ध्वाकर्मिभ्योधिकांदारादिषुसक्तिंलभंतइत्यर्थः १३५५ ततश्चतमसोहेतोर्जन्मपरम्परांदुःखरूपांतेकर्मिणउपासकाश्चप्राप्नुवंतीत्याह विद्ययेति । इमेउपासकाः कर्मिणश्चविद्ययाकर्मणावाकंचित्कालंसुखंप्राप्यपश्चाज्जन्मपरंपरारूपंदुःखंययुःप्रापुरिति १३५६ आत्माज्ञानरूपतमसःफलमेवदुःखात्मकसंसाररूपंदर्शयति असुखाइति । नामेतिप्रसिद्धौ लोकाःकर्मफलानि स्वपदार्थआत्मा १३५७ व्याख्यातमंत्रयोस्तात्पर्यार्थमाह एवमिति । एतेछांदोग्यादौप्रसिद्धाःसर्वेषांसात्विकादिभेदशालिनांदेहिनांसंसारिणांसंबंधिनस्त्रयोदेवयानपितृयाणतृतीयस्थानाख्याःपंथानोयद्यप्यंधंतमोद्वारात्स्वमयलोकप्रदत्वेनकथितास्तथाप्येषविशेषोबोध्यइतिशेषः । एषकः तेषांमध्येयोमार्गःकेवलमंधेतमसिवर्त्तमानस्तृतीयस्थानाख्यःसूचितः सब्रह्मज्ञानाख्यंतुरीयंपंथानंपरंपरयापिनस्पृशतियतोयाम्यपुरीनरकयातनाप्रत्येवगतः । तथाचोक्तंगीतासु 'तानहंद्विषतःक्रूरान्संसारेपुनराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ' इति १३५८ यस्तुविद्यावतांसंबंधीदेवयानाख्यःपंथायश्चसत्कर्मिणांसंबंधीपितृयाणाख्यस्ताविमौपरंपरयाचित्तशुद्धिद्वाराब्रह्मज्ञानाख्यमार्गोपयोगिनौभवतइत्याह विद्येति । यातःप्राप्नुतः १३५९

यस्तुब्रह्मविद्याख्येतुरीयमार्गेचरतितेनत्रयोपितेमार्गाहेयाइत्याह ब्रह्मेति । सदृशाहेयत्वेनेतिशेषः १३६० तानेवत्रीन्मार्गान्फलभेदेनविभजते पुण्येति । तत्रदेवयानाख्यःपंथाःसत्कर्मसमुचित सगुणविद्याफलेब्रह्मलोकेपर्यवसन्नः पितृयाणाख्यस्तुकेवलसत्कर्मफलेस्वर्गादिलोकेपर्यवसन्नः तृतीयस्थानाख्यस्तुकेवलपापफलेनरकेपर्यवसन्नइत्यर्थः १३६१ अथब्रह्मविद्याफलंसर्वदुःखनि वृत्तिलक्षणंप्रतिपादयितुमात्मानमित्यादेःपंचममंत्रस्यार्थमाह सुखेतिद्वादशभिः । सुखदुःखेशरीरस्योपाधेरेवधर्मौनात्मनस्तथासतिशरीरस्थोप्यात्माताभ्यांसुखदुःखाभ्यामसंबद्धइतिसंबंधः १३६२ एवंविधोप्यात्माशरीरधर्मानात्मनिमन्यमानस्तप्यतेइत्याह देहमिति । अयंपुमान्स्वात्मतत्त्वेमूढत्वाद्देहतादात्म्यमापन्नःसन्देहमुपाधिंसंसारधर्मैस्तप्यमानमनुसृत्यज्वलेत्तप्यतइव कुतः सुखेच्छायांसत्यांसुखस्यकामायभोगाय कीदृशःपुमान्सर्वोपिवस्तुतःसर्वात्मापि यद्वा सर्वःसर्वप्रकारःलोकेपंडितत्वादिनाप्रसिद्धोपीत्यर्थः १३६३ आनंदात्मेति । यस्तुनरःअयंसाक्षादपरो क्षःपुरुषःपूर्णोहमस्मीत्येवमात्मानंजानीयात्सकिमिच्छन्कस्यभोगायवाशरीरमनुसृत्यतप्येत् कीदृशमात्मानंएवंभूतात्सदाहृदयेवर्त्तमानान्महेश्वरादभिन्नंसदाहृदयेवर्तमानंच । एवंकथमित्यतउ

ब्रह्मविज्ञानमार्गेस्मिन्सुखदुःखविवर्जिते ॥ यातियस्तस्यसदृशाइमेमार्गास्त्रयोपिहि १३६० पुण्यविद्याफलेब्रह्मलोकेपुण्यफलेपिच ॥ स्वर्गभूम्यादिकेतद्वन्नरके पाप्मनःफले १३६१ सुखदुःखेशरीरस्यनात्मनस्तेकथंचन ॥ शरीरस्थस्ततस्ताभ्यामसंबद्धःपुमानयम् १३६२ देहंहिसुखदुःखाभ्यांज्वलंतमनुसंज्वलेत् ॥ देहतादात्म्यमापन्नोमूढःसर्वोप्ययंपुमान् ॥ सुखंभूयादितीच्छायांसुखकामायसर्वदा १३६३ आनंदात्मास्वयंज्योतिर्निःशेषसुखसागरः ॥ एवंभूतंसदासंतंहृद येस्वेमहेश्वरम् १३६४ आत्मानंचेद्विजानीयादयमस्मीत्यहंनरः ॥ किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत् १३६५ विज्ञातात्मस्वरूपस्यमोहोयस्मान्निव र्तते ॥ तन्निवृत्तौनिवर्तेतदेहतादात्म्यधीरपि १३६६ तादात्म्यबुद्ध्यभावेयदेहतापःकथंभवेत् ॥ सदानंदस्वरूपस्यपुंसोदेहात्परस्यहि १३६७ तादात्म्यमग्नि नायावदयसोविद्यतेत्रहि ॥ वन्हिज्वलंतंज्वलतितावदेवतुलोहकम् १३६८ तादात्म्येपगतेकस्माज्ज्वलंतमनुसंज्वलेत् ॥ एवंसंज्वलतोह्यात्मादेहादन्योनसंज्वलेत् १३६९ लोकेपिपुत्रमित्रादींयावदात्मतयापुमान् ॥ गृह्णातितावदाप्नोतिदुःखंत्यक्तेनचान्यथा १३७० यदाभिमानसंत्यागंपुत्रादौकुरुतेपुमान् ॥ नतद्दुःखंतदा प्नोतियथामार्गेस्थितोपरः १३७१ एवंदेहाभिमानेनदुःखीभवतिनिर्गुणः ॥ अभिमानस्यसंत्यागान्नसदुःखंसमाप्नुयात् १३७२ गुरुशास्त्रोपदेशेनयेनज्ञातःपरः पुमान् ॥ आनंदात्मात्रसंघातेप्रविष्टोदुर्विवर्तने १३७३

क्तमानंदात्मेति । निःशेषाणांसुखानांप्रतिबिंबभूतानांसागरोबिंबस्थानीयइतिद्वयोरर्थः १३६४ । १३६५ विदुषस्तापनिवृत्तौहेतुतयाविद्ययाःकार्यकारणरूपाविद्ययोःप्रहा णमाह विज्ञातेति । विज्ञातमात्मस्वरूपंयेनसतथातस्यमोहःकारणाविद्यातत्कार्यदेहात्मधीश्चनिवर्ततइति १३६६ धर्म्यध्यासाभावेचतत्प्रयुक्तोदुःखादितद्धर्माध्यासःकथंस्यादित्याह ता दात्म्येति । परस्यभिन्नस्य १३६७ एतद्दृष्टांतेनस्फुटयति तादात्म्यमितिद्वाभ्यां । तादात्म्यमभेदाध्यासोलोहस्यवन्हिनासहयावद्वर्ततेतावल्लोहंवन्हेरनुकारिभवतितादात्म्याभावेतुनैवंतथातप्यमा नाद्देहादन्योविविक्तःसन्नात्मानतप्यतइतिद्वयोरर्थः १३६८ । १३६९ तादात्म्याभिमानोलोकेपिदुःखदत्वेनप्रसिद्धइत्याह लोकेपीति । पुत्रादिकंयदात्मत्वेनमन्यतेतदातद्दुःखेनदुःखितोभवति त्यक्ते नचपुत्रादावात्माभिमानेनअन्यथातद्दुःखेनदुःखभागीनभवतीत्यर्थः १३७० त्यक्तेनचान्यथेत्येतदेवविशदयति यदेति । यथामार्गगामितटस्थतयादेवदत्तपुत्रादिसंबंधिदुःखंनाप्नोतीतितुरीयपादार्थः १३७१-। १३७२ नकेवलंब्रह्मविद्ययादुःखनिवृत्तिरेवभवतिकिंतुविश्वकर्तृत्वलक्षणमीश्वरत्वंसर्वात्मभावश्चभवतीतिप्रदर्शकस्यषष्ठमंत्रस्यार्थमाह गुर्वेतिपञ्चभिः । अत्रशरीरेंद्रियादिसंघातेदुर्विवर्तने-

—दुःखेन निःशिष्टं वर्त्तनं प्रवेशं मार्गो यत्र तत्तथा तंत्र गव्हरे इति यावत् अत्र प्रविष्टः स्वयंज्योतिरादिविशेषण आनंदरूप आत्मा येनाधिकारिणा गुरुशास्त्रोपदेशेन ज्ञातः स विश्वकृत्पदार्थ विश्वकर्तृत्ववान्भवती तिद्वयोरर्थः १३७३ । १३७४ तस्येति । यः स्तंबादिब्रह्मलोकांतो लोकः सुखदुःखपदः प्रसिद्धः सर्वस्तस्य विदुषो ब्रह्मात्मतया सर्वाधिष्ठानस्याधेयो भवेत् यथा रज्जौ कल्पितसर्पजलधारादंडादि कः सर्वोऽपरः प्रपंचो रज्ज्वधिकरणक इत्यर्थः १३७५ उक्तार्थे हेतुतया कल्पितस्याधिष्ठानाद्भिन्नसत्ताकत्वाभावमाह ब्रह्मेति द्वाभ्यां । वर्णितो लोकः सर्वोऽप्यस्माद्भिन्नसत्ताको न भवति किंतु सर्वमध्या त्मादिभेदभिन्नं स्थूलसूक्ष्मरूपं विश्वमस्य विदुष आत्मैव भवति बाधासामानाधिकरण्येनेति द्वयोरर्थः १३७६ । १३७७ अधिकारिदेहं लब्ध्वा यद्युक्तरूप आत्मा न ज्ञायते तदा महती अनर्थपरंपरा भव तीति प्रदर्शकस्य सप्तमंत्रस्यार्थमुपबृंहयति ततइत्यादिभिरष्टाधिकपंचाशच्छ्लोकैः । ततो ब्रह्मज्ञानलक्षणस्य मार्गस्य सर्वोत्कृष्टफलकत्वाद्धवाद्धर्वागतमार्गत्रयं हित्वा ब्रह्मज्ञानरूपमार्गेण ब्रह्माभिन्नं लो कं जीवनावस्थायामेव साधयेदित्यर्थः १३७८ त्रैवर्णिकेति । जानीयादात्मज्ञानसाधनं वेदांतश्रवणादिकमनुतिष्ठेत् यतः सर्वं सर्वात्मकं ब्रह्म भवामः सद्यो लभामह इत्यर्थः १३७९ अधिका

स्वयंज्योतिःस्वरूपोयंहार्दपद्मेव्यवस्थितः ॥ सर्वगःसर्वसंघातात्सर्वथायोविलक्षणः ॥ सविश्वकृद्भवेदस्यकर्ताविश्वस्ययेनहि १३७४ तस्यसर्वोभवेल्लोकःसुखदुः खप्रदोहियः ॥ यथारज्जौभवेत्सर्वःसर्पधारादिकोपरः ७५ ब्रह्मलोकादिकोलोकोनरकांतोयईरितः ॥ मार्गत्रयेणसंप्राप्योनास्मादन्योस्तिकश्चन ७६ किंतुसर्व मिदंविश्वमध्यदैवादिभेदभाक् ॥ सदसद्रूपआत्मायंरज्जुःसर्पादिकंयथा ७७ ततोमार्गत्रयंहित्वासंसारवनमध्यगम् ॥ ब्रह्मबोधेनसूक्ष्मेणमार्गेणविततेनच ॥ गच्छे ज्झटितिराजेंद्रमृत्युर्यावन्नचाव्रजेत् ७८ त्रैवर्णिकशरीरेषुस्थित्वैवात्मानमव्ययम् ॥ जानीयाद्यस्यविज्ञानाद्भवामःसर्वमेवभो ७९ अधिकारिशरीरेष्वात्मनोनि श्चयोनचेत् ॥ भविताभविताहानिरस्माकंमहतीनृप १३८० दुर्लभंप्राप्यमानुष्यंविद्युत्संपातचंचलम् ॥ तथाकुर्वीतनयथापुनर्दुःखंसमाव्रजेत् ८१ आददीतक थंराजन्हस्ततःप्रच्युतंघृतम् ॥ सैकतेवह्निसंतप्तेयोपिस्यादतिबुद्धिमान् ८२ सुलभाःसततंदेहानानायोनिषुभूपते ॥ उच्चावचासुजंतूनांमानुषंपरिहायहि ८३ तत्रापिभारतेवर्षेह्यधिकारिवपुर्यदि ॥ लभ्यतेनृपशार्दूलनातोधिकतमंक्वचित् ८४ विषयाःसंतिराजेंद्रदिविवानरकेपिवा ॥ प्राणिनांतेनतेनैवदेहेनसदृशाःसदा ॥ कर्मणातेनतेनैवप्राप्यंतेस्वयमेवहि ८५ कर्मार्थंभारतंवर्षमनुजानांविनिर्मितम् ॥ कृत्वात्रविविधंकर्मविविधंदेहमाप्नुयात् ॥ उच्चावचेषुलोकेषुदारपुत्रादिसंयुतम् ८६ भारतात्पुरुषोगच्छेत्पातालंस्वर्गतोधिकम् ॥ सप्तभेदविभिन्नंयन्नानाभोगैःप्रपूरितम् १३८७

रीति । आत्मनिश्चयो यदि न भविता न भविष्यति तदा महापुरुषार्थप्रतियोगिकत्वान्महती हानिर्भविष्यतीति ज्ञेयमिति शेषः १३८० दुर्लभमिति । स्पष्टम् १३८१ लब्धज्ञानसामग्र्याः पुनर्दु र्लभत्वे दृष्टांतमाह आददीतेति । यथा सिकताव्याप्तदेशे पतितस्य घृतस्योपादानं दुष्करं बुद्धिमतापि तथैतदपीति १३८२ तत्र मानुषभावादिसामग्री दौर्लभ्यमेव स्फुटयति सुलभा इति । मानुष भाव एव तावद्दुर्लभस्तत्राप्यधिकारिभावो दुर्लभतरः तल्लाभादधिको लाभो नास्तीति द्वयोरर्थः १३८३ । १३८४ विषयास्तु न दुर्लभाः तत्प्राप्तेस्तद्देहप्रापकैः कर्मभिरवश्यारभ्यत्वादित्याह विषया इति । हियतस्तत्तद्देहयोग्या विषयास्तेन तेन तद्देहारंभकेण कर्मणा प्राप्यंतेऽतः सर्वत्र सुलभा इति संबंधः १३८५ मानुषदेहस्य तत्तदिष्टसाधकत्वं दौर्लभ्यप्रयोजकं दर्शयति कर्मार्थमिति । स्पष्टम् १३८६ तत्र पातालस्वर्लोकभोगप्रदं कर्मापि भारतखंड एव साध्यमित्याह भारतादिति । भारताद्भारतखंडे कृतात्सुकृताद्धेतोः भोगैः सुखसाधनैः १३८७

नृत्यंत्यइवेति । यत्रपात्तालेएताःप्रसिद्धानागकन्यानृत्यंत्यइवेत्यस्यसविलासाइत्यर्थः पीनेपुउन्नतेपुचकुचद्वंद्वेपुप्रस्फुरद्विलसद्धरिचंदनंयासांतास्तथा १३८८ मणीति । पुनःकीदृश्यः म ण्याद्यावलीनांकांत्याकांतानिमनोहराण्याननान्येवसुधाकरायासांतास्तथा चित्रलिखिताभिःसदृश्यः धैर्यरूपस्यसर्वस्यस्यहारिकाः १३८९ स्वर्गइति । यदातादृशीसाप्रसिद्धाजात्यास्वभा वेनसुंदरीचललनास्वर्गेनविद्यतेतदाइहभुविलोकेतादृशीकुतःस्यात्संभाव्येतेति १३९० घनीभूतमिति । प्रायइत्युत्प्रेक्षायां तथाचपातालवासिनांसुकृतमेवघनीभूतंपातालरूपेणपरिणतमित्यु त्प्रेक्ष्यतइत्यर्थः १३९१ अत्रेति । अत्रपाताले १३९२ चन्द्रेति । मुक्तपदमर्शआद्यजंतं तथाचमुक्तावद्भिर्बिल्वसमैश्चगुच्छैर्घटिताहाराःसहस्रशोयत्रसंतीति १३९३ असूर्यमिति । मुनेःपा णिनेःस्मरणंस्मृतिविषयीभूतंयदसूर्यंपश्यइतिपदंतत्रपातालेएवसार्थकंमुख्यार्थकं तत्रत्यैःसूर्यादर्शनात् इतरत्रराजदारादौतुगौणमेवेत्यर्थः १३९४ पूर्वेति । अत्रपातालेपूर्वदेवाद्यसुरानागाश्च

नृत्यंत्यइवयत्रैतानागकन्यामनोरमाः ॥ पीनोन्नतकुचद्वंद्वप्रस्फुरद्धरिचंदनाः १३८८ मणिमुक्तावलीकांतिकांताननसुधाकराः ॥ चित्रस्थितायथायूनांधैर्यसर्व स्वहारिकाः १३८९ स्वर्गेनतादृशीकाचिद्विद्यतेललनाभुवि ॥ कुतःसासुंदरीजात्यातादृशीस्यादिहांगना १३९० घनीभूतमिदंप्रायःसुकृतंतलवासिनाम् ॥ पातालमितियत्प्रोक्तंनानाभेदंविचित्रकम् १३९१ अत्रसूर्येणसदृशामणयःसंतिकोटिशः ॥ नागानांनागकन्यानांमस्तकेपुमहात्मनाम् १३९२ चंद्रबिंबसमप्र ख्यैर्मुक्तैर्बिल्वसमानकैः ॥ प्रकंपितेपुगात्रेपुहाराःसंतिसहस्रशः १३९३ असूर्यंपश्यइत्येतत्स्मरणंसार्थकंमुनेः ॥ पातालेनाहिकोप्यत्रसूर्यंपश्यतिदेहभाक् ९४ पूर्वदेवावसंत्यत्रपन्नगाश्चमहाश्रियः ॥ भोगिनोनामयत्रैतत्सार्थकंजायतेसदा १३९५ वासुकिश्चात्रवसतिकंठेयःशूलिनःस्थितः ॥ शेषश्चात्रमहानागःशयनंयो ऽसुरद्विषः १३९६ तक्षकश्चमहानागोरथेयःसवितुःस्थितः ॥ नास्तियस्यप्रतीकारोविषस्यात्रकथंचन १३९७ कर्कोटकस्तथानागोमहान्नलसखोहियः ॥ पद्मश्चैवमहापद्मःसशंखःकुलिकस्तथा ॥ एलापत्रकइत्याद्याःकुलजाविषधारिणः १३९८ अनेककोटिसंख्यातैर्बंधुभृत्यादिभिर्वृताः ॥ कुंडलादिविभूषासुदेवा दीनांयईरिताः १३९९ विश्वकर्मसमोदैत्योमयोमायाविशारदः ॥ विप्रचित्तिस्तथान्येपिसंतिशक्रस्यवैरिणः ॥ बल्याद्याःशतशोयेभ्योभीतादेवाःसदासते ॥ १४०० वर्णयंतिसदास्वर्गेपातालानिमुनीश्वराः ॥ नारदाद्याःसमागत्यपातालेभ्योदिवंप्रति १४०१ अस्यांस्वर्गेतथाब्रह्मलोकेराजन्भवानपि ॥ वेत्तियत्प्राप्यते पुंभिःसुकृतैःसुखमद्भुतम् १४०२

श्रीमंतोवसंति यत्रयेपुनागेपुभोगिनइत्येतत्पदंसार्थकंपरिपूर्णसर्वार्थकं भोगपदार्थास्तु 'भोगःसुखेस्त्र्यादिभृतावहेश्चफणकाययोः' इतिप्रसिद्धाः भूमप्रशंसयोरिनिरितिभावः १३९५ तत्रनागेपुमु ख्यान्दर्शयति । वासुकिरितित्रिभिः । महादेवकंठभूपाभूतोवासुकिर्नारायणशय्याभूतःशेषश्चात्रपातालेवसति १३९६ तक्षकइति । सूर्यरथवासित्वेनप्रसिद्धोमहाविषस्तक्षकोप्यत्रवसतीति १३९७ कर्कोटकइति । नलस्यदमयंतीभर्तुर्मित्रत्वेनप्रसिद्धःकर्कोटकनामातथापद्मादयश्चसबांधवाअत्रवसंति महादेवादीनांकुंडलादिभूपणरूपत्वेनप्रसिद्धाः आदिपदेनदेवगिरुडादयोग्राह्याः मातलिजामाता नागोहिगरुडभूपणमितिप्रसिद्धंभारते १३९८ । १३९९ असुरमुख्यान्प्रदर्शयति विश्वेति । मयोविप्रचित्तिर्बलिरित्याद्यादेवभयप्रदाअसुरायत्रवसंति १४०० एतादृशंपातालप्रभावंपातालात्स्वर्गमागता नारदाद्याःकथयंतीत्याह वर्णयंतीति १४०१ हेराजन्पृथिव्यादिलोकेपुयद्यत्सुकृतफलंतद्भवान्जानात्येवेत्याह अस्यामिति । अस्यांपृथिव्याम् १४०२

तत्सर्वंसुकृतफलंतथादुष्कृतफलंनरकादिकंतथातत्त्वज्ञानफलंविदेहकैवल्यंचभारतभवमनुष्यदेहादेवलभ्यतइत्याह तत्सर्वमिति १४०३ भारतस्यक्षेत्रसाम्यमाह क्षेत्रेष्विति १४०४ यद्यपिब्रह्मविद्याधिकारोदेवशरीरेष्वपिसाधितस्तदुपर्यपीत्यधिकरणेतथापिपुनर्ब्रह्मविद्यायोग्यदेहलाभस्यसंदिग्धत्वादत्रैवयतितव्यमित्याह यद्यपीति । तत्रदेहांतरें पाक्षिकीसंदिग्धा १४०५ यस्तुदेहांतरेविद्यालाभाशयाइहतदर्थंनयततेसपिंडंन्यक्ताकरंलेढीतिन्यायस्यगोचरइत्याह हस्तेतिद्वाभ्यां । स्पष्टम् १४०६ । १४०७ लोकांतरेविद्यालाभस्यपाक्षिकत्वंस्फुटयति इतइतित्रिभिः । इतोमनुष्यदेहान्निर्गमने स्विदितिवितर्के किंकर्मफलाभिमुखंभविष्यतीतिकोवेदनकोपीति येनानेनसंशयेनहेतुनायःपुमान्सुस्थितःपुरुषार्थचिंताशून्यःशिशुरेवज्ञेयइतिशेषः १४०८ तदुपपादकतयाऽनेकसंचितकर्मणांस्थितिमाह संतीति । सुप्तानिसूक्ष्मरूपेणस्थितानिकर्मभिःपारब्धफलैःप्रतिबद्धानिकर्माणिशतशःसंतीति १४०९ तथाचयदिपापमेवमरणानंतरमुद्भवेत्तदायंकिंकुर्यादित्याह ततइति । महान्ग्लहोजेतव्यंद्रव्यंतस्मिन्द्यूतकालेनष्टेपराजितेसतीत्यर्थःकश्चतुर्थपादउत्तरान्वयी १४१० दीव्यन्निति । यथैषकितवःद्यूतेकदाचिदागतेमहाग्लहेनष्टेसतिपुनर्दीव्यन्न

तत्सर्वंभारतेवर्षेमानुषाद्देहतोव्रजेत् ॥ दुःखंयन्नरकेषूक्तंगच्छेत्तदपिभारतात् ॥ तथाविदेहकैवल्यंभारतादेवसंव्रजेत् १४०३ क्षेत्रेषुजायतेधान्यंभुज्यतेतद्गृहेषुच ॥ यथातथाभारतेत्रकर्मलोकांतरेफलम् ४ यद्यप्यत्रभवेद्ब्रह्मविद्यालोकांतरेपिच ॥ यथापिपाक्षिकीतत्रराजन्नत्रसुनिश्चिता ५ हस्तस्थितंमहापिंडंदधियुक्तोदनस्यतम् ॥ परित्यज्यकरंलेढितृप्तिकामोयथाज्ञधीः ६ तथैवमानुषेदेहेहित्वाब्रह्मात्मबोधनम् ॥ लोकांतरेयइच्छेत्सविज्ञेयोबालिशःपुमान् ७ इतोनिर्गमनेकस्याकिंस्वित्कर्मभविष्यति ॥ इतिकोवेदयेनायंसुस्थितोपिपुमान्शिशुः ८ संतिसुप्तानिशतशःप्रतिबद्धानिकर्मभिः ॥ कोटिजन्मार्जितान्यस्यपुण्यपापात्मकानिहि ९ ततःशरीरसंत्यागादुद्भवेपाप्मनोपिच ॥ किंकरिष्यतिवैदेहीनष्टेद्यूतेमहाग्लहे १४१० दीव्यन्पुनःपुनर्नैषतंग्लहंलभतेक्वचित् ॥ तथासंसारदुर्द्यूतेनष्टेनरवपुर्ग्लहे ॥ संसारीकितवःकेनप्राप्नुयात्पुनरप्यदः ११ पातालेदेवलोकेवाब्रह्मलोकेथवापुनः ॥ नरकेभूमिभागेवाशरीराणिसमाप्नुवन् १२ तत्रतत्रचवैदेहेपारतंत्र्यादिदूषितम् ॥ सुखाभिधंसमाप्नोतिदुःखमेवशरीरभाक् १३ यैरयंमानुषंदेहंकितवैर्निर्जितःपुमान् ॥ विषयैर्निर्जितेद्यूतेस्वयंतेसर्वतोप्यमुम् १४ अभिधावंतिलोकेषुकितवाजितभूमिकाः ॥ पराजयायसततंतत्रतत्रकृतोद्यमाः १५ विषयैःकितवैःसोपिसदादुर्द्यूतदेविभिः ॥ हृतपुण्यधनःपापकौपीनोत्रावशिष्यते १४१६

पितंतादृशंग्लहंपुनर्नलभतेइत्यन्वयः । तथासंसारिरूपःकितवःसंसाररूपेदुर्द्यूतेनरदेहरूपेग्लहेनष्टेसतिअदःमहाग्लहरूपंनरवपुःपुनःकेनहेतुनाप्राप्नुयादिति १४११ द्यूतेपराजिताःप्रच्छन्नंप्रकाशंचदुःखमनुभवंतीतिप्रसिद्धंतथायंसंसार्यपिभारतखंडेपराजितःसन्नानायोनिषुसुखाभासप्रच्छन्नंप्रकाशंवादुःखमाप्नोतीत्याह पातालइतिद्वाभ्यां । पारतंत्र्यादीत्यादिपदेनक्षयादिग्रहः १४१२ १४१३ अयंचकितवानांस्वभावःप्रसिद्धोलोकेयंत्वेयंमूढमेकवारंजयंतितंयत्रकुत्रापिगतंसुतरांजेतुमुद्यमंकुर्वन्तियावत्सकौपीनमात्रशेषोनभवेदितितथात्रभारतेविजयशालिनोविषयरूपकितवादेहांतरेप्यनुव्रजंतोऽस्यजंतोःपुण्यरूपंधनंविजित्यपापरूपकौपीनशेषमेनंकुर्वंतीत्याह यैरयमितित्रिभिः । अयंसंसारीपुमान्यैर्विषयैःकितवैर्मानुषंदेहंमहाग्लहरूपंनिर्जितोमुषितः अकथितंचेतिद्विकर्मकजिधातोर्गौणेकर्मणिक्तः तेविषयकितवाद्यूतेजितेसतिअमुंपराजितंपुमांसंलोकांतरगतमपिसम्यक्पराजेतुमभिधावंतियतोजितभूमिकाःजितावशीकृताभूमिकानानारूपपरिग्रहरूपायैस्तेतथा ‘भूमिकारचनायांतुरूपांतरपरिग्रहे’ इतिहैमः । एवमनुगतैर्विषयकितवैःस्वर्गलोकादौहृतपुण्यधनःपापकौपीनशेषश्चसन्नरकखड्डायामधोमुखःपततीतित्रयाणामर्थः १४१४ । १४१५ । १४१६

एवंहानिःप्रमादिनामापततीत्याह ततइति । नष्टिर्हानिः आयाताअवश्यंभाविनीतियावत् १७ वयंतदापत्तिभयादिहजन्मन्येवविज्ञानंसाधयामइत्याह माभूदिति १८ ननुब्रह्मविज्ञानेनकथंकितवभयनिवृत्तिरित्याशंक्यसोपकरणस्यब्रह्मविज्ञानस्यविज्ञानस्यविषयज्ञानकितवरूपारिनिवृत्तिसाधनतांविशदयति शास्त्रेत्यादिना । ब्रह्मज्ञानसाधनमध्यात्मशास्त्रंसाक्षितयायत्रस्थितमेतादृशंद्यूतमत्राधिकारिशरीरेऽस्माभिस्तैर्विषयकितवैःसहारब्धं कीदृशैस्तैर्द्यूतेद्यूतकालेदुर्द्यूतैःकपटपाशकैःकृत्वादेवनशीलैः १९ जेष्यामइति । अधुनातान्विषयान्कितवान्वंचकान्जेष्यामएवयतोनोऽस्माकमनुकूलंशास्त्रंशास्त्ररूपंसाक्षिअस्तिविद्यतेइतस्त्वमपितान्जेतुंस्थिरोदृढनिश्चयोभवेति २० तेचनिःसाक्षिकेद्यूतएवजेतारोधुनाकेनहेतुनाजेष्यंतीत्याह विषयाइति । शठाःसंमुखेहितवद्भासमानाःपरोक्षेऽनिष्टकराइमेविषयाः २१ पूर्वंविषयकितवैःसहद्यूतेनरवपुरात्मकोग्लहःकृतःसहिविषयाणामपिभोगोपयोगी अधुनाशास्त्ररूपसाक्षिणानुग्रहमात्रेणास्मानधिकारिणःप्रत्येवंहितमुक्तंयूयंब्रह्मचर्यादिरूपंग्लहंकुरुततस्मिन्विषयकितवैर्जितेऽपिभवतांजयएवब्रह्मचर्यादिकंदृष्ट्वाविषयैःपलायनादित्याशयेनाह ब्रह्मेति । ग्लाहैरितिदीर्घादित्वंस्वार्थिकाणंतत्वेनबोध्यं शास्त्रेणसाक्षिभूतेनाप्य

## ततोदेहस्यपतनादूर्ध्वमज्ञानिनामिह ॥ महतीनष्टिरायाताराजन्पापावशेषिणी १४१७ माभूदियंमहाराजह्यस्माकमधिकारिणाम् ॥ अत्रैवब्रह्मविज्ञानंकरिष्यामोधुनावयम् १८ शास्त्रसाक्षिकमस्माभिरारब्धंद्यूतमत्रतैः ॥ दुर्द्यूतदेविभिर्द्यूतेकितवैर्विषयैःसह १९ जेष्यामःकितवानेतान्नित्यंदुर्द्यूतदेविनः ॥ विषयानस्तिनःसाक्षिशास्त्रंराजन्स्थिरोभव २० विषयाःकितवाराजन्जेतारःसाक्षिवर्जिताः ॥ दुर्द्यूतदेवनैःकेनजेष्यंत्यस्मान्शठाइमे २१ ब्रह्मचर्यादिभिर्ग्लाहैःशास्त्रसाक्षिनिरूपितैः ॥ दुर्द्यूतदेविनःशत्रून्जेष्यामःक्षणतोधुना २२ बाणैर्यज्ञादिभिश्चापिनिहत्योन्मार्गवर्तिनः ॥ बध्वाशमादिभिःपाशैर्विषयारीनथापरान् ॥ स्वल्पशेषान्हिजेष्यामोब्रह्मचर्यादिभिर्ग्लहैः १४२३ एतेषांजनकंतद्वज्जननींचवयंनृप ॥ बंधुभिःसहितांमत्तांधक्ष्यामोब्रह्मवन्हिना १४२४ अन्यस्मिन्नन्यबुद्धिर्याजननीसाप्रकीर्तिता ॥ आत्मावरणसंयुक्ताकितवानांदुरात्मनाम् १४२५ मनःपितातथाबंधुजनोयंवासनागणः ॥ वयंब्रह्मस्मइत्येवंमहताज्ञानवन्हिना ॥ दग्ध्वाकुटुंबसहितान्विषयान्विजयेमहि १४२६

नुग्रहेणनिरूपितैःप्रदर्शितैर्ब्रह्मचर्यारण्यवासादिरूपैर्ग्लाहैर्दीप्यमानद्रव्यैर्निश्चितंतान्जेष्यामइति २२ ननुबहवोविषयाऽरयोद्यूतमात्रेणकथंजेतव्याइतिशंकांवारयन्नाह बाणैरिति । येतावदुन्मार्गेशास्त्रबाह्यमार्गेचरंतिविषयारयस्तान्शास्त्रविहितयज्ञदानादिबहिरंगसाधनैर्दूरगतानांहननसाधत्वेनबाणसमैर्निहत्यतेषांशिरःसमंप्रमादमृत्युंशास्त्रोक्तकर्मलक्षणाविद्ययाछित्वेतियावत् अविद्ययामृत्युंतीर्त्वेतिश्रुतेः । तथापरान्निषेधाभावेनसन्निहितान्विषयारीन्शमदमाद्यंतरंगसाधनैःप्रवृत्तिविरोधित्वेनपाशसमैर्बध्वाव्युत्थानदशायांकदाचिदुपलभ्यमानत्वेनस्वल्पावशिष्टान्विषयारीन्ब्रह्मचर्यादिग्लहकेनद्यूतेनजेष्यामइत्यर्थः २३ तथाप्रमाणिश्वरशास्त्रदृष्टिजेनब्रह्मज्ञानाग्निनातान्सबांधवान्दग्धान्करिष्यामइत्याह एतेषामितित्रिभिः । एतेषांविषयारीणां मत्तांगर्वितांधक्ष्यामोदग्धान्करिष्यामोब्रह्मज्ञानाग्निनेति २४ नन्वेषांजनकादयःकिंरूपाइत्याकांक्षायामाह अन्यस्मिन्निति । विक्षेपावरणलक्षणशक्तिद्वयवत्यविद्यैवतेषांजननीत्यर्थः २५ मनइति । तेषांस्रष्टृत्वेनमनःपिताभवति 'मनःप्रजापतिमसृजत्' इत्यादिश्रुतेः तथाकार्यकालेसन्निहितत्वसाधर्म्येणतेषांवासनागणोबंधुस्थानीयस्तद्दाहकोग्निस्तुब्रह्मास्मीतिज्ञानात्मकइत्यर्थः १४२६

नन्वेवंतेषांसर्वथोच्छेद्यत्वस्यप्रयोजकोपराधःकुतोभवद्भिर्निश्चितइत्याकांक्षायामाह एतैरिति । एतैर्विषयकितवैर्वयंबहून्वारान्पराजिताइत्यत्रार्थेयथासाक्षित्वेनप्रमाणभूताःसंति के इमेपृथिव्यादयोलोकास्तथालोकपालाधर्मराजादयस्तथेश्वरोंतर्यामीचेत्यर्थः । तदुक्तंमनुना ‘ आदित्यचंद्रावनिलोनलश्चद्यौर्भूमिरापोहृदयंयमश्च । अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तं ’ इति हृदयशब्देनसाक्षिणईश्वरस्यग्रहणमिति १४२७ अधुनातुवयंशास्त्रसाक्षिप्रसादात्सावधानाःसंतस्तान्जेष्यामएवेत्याह अद्येति । तेयेपूर्वंपराजिताःसर्वेवयमविकारिणःअक्षैरिंद्रियरूपपाशकैःप्रवृत्तिविशेषेणजयादिप्रयोजकत्वंहिपाशकानामिंद्रियाणांचतुल्योधर्मः तत्ररागादिहीनेंद्रियप्रवृत्तिरधिकारिणांजयावहेतिबोध्यम् । ‘ रागद्वेषविमुक्तैस्तुविषयानिंद्रियैश्चरन् । आत्मवश्यैर्विधेयात्माप्रसादमधिगच्छति ’ इतिस्मृतेः । तथाबाणैर्बहिरंगसाधनरूपैश्चतानरीन्शास्त्रानुगृहीताःसंतोजयेमेत्यर्थः १४२८ यथासर्वसाक्षीपरमेश्वरःश्रीकृष्णरूपेणपांडवाननुजग्राह तथास्मानपिवेदरूपेणानुगृह्णातीत्याह कृष्णेति । धार्तराष्ट्रान्जितवंतइतिशेषः । तथाचोक्तंगीतासु ‘ तस्माच्छास्त्रंप्रमाणंते ’ इत्यादि १४२९ येतुशास्त्रविमुखास्तेपराजीयंतएव अशास्त्रविहितंघोरमित्यादिभवदुक्तेरित्याह अस्पष्टकेत्रेति । येतुअस्पष्टकंशास्त्ररूपसाक्षिवर्जितंद्यूतंकुर्वंतितेषामत्रदुर्द्यूतेमहतीहानिरिति अस्माकंतुइदंद्यूतमीदृशंशास्त्रसाक्षिराहित्येनास्पष्टंनभवतीत्यर्थः १४३० त

एतैःपराजिताराजन्बहुकृत्वःपुरावयम् ॥ यथेमेसकलालोकालोकपालास्तथेश्वरः १४२७ अद्यप्रभृतितेसर्वेह्यप्रमत्तावयंस्थिताः ॥ अक्षैर्बाणैश्चजेष्यामोविषयान्कितवानमून् ॥ शास्त्रसाक्षिमलेनैवमातेभवतुसाध्वसम् २८ कृष्णसाक्षिबलेनैवयथापंचापिपांडवाः ॥ अधमान्धार्तराष्ट्रांस्तान्कितवान्कलहप्रियान् २९ अस्पष्टकेत्रदुर्द्यूतेकितवैर्विषयैःसह ॥ महतीनष्टिरुद्दिष्टानास्माकमिदमीदृशम् १४३० वामदेवादयोयद्वद्विषयान्कितवानमून् ॥ जित्वामरणनिर्मुक्ताबभूवुःस्वात्मरूपिणः ३१ वयंतथैवराजेंद्रजित्वैतान्कितवानिह ॥ ब्रह्माप्स्तंभविष्यामोनात्रकार्यविचारणा ३२ शास्त्रसाक्षिपरित्यागाद्विषयैःकितवैःसमम् ॥ दुर्द्यूतदेविभिर्मूढंप्रारब्धंयैरबुद्धिभिः ३३ हृतपुण्यधनास्तेमीपापकौपीनशेषिताः ॥ तत्रतत्रमहाराजदुःखाद्दुःखमुपागताः ३४ पक्षिणःस्थावरास्तद्वद्ग्राम्यारण्यविभेदिनः ॥ पशवश्चापिसर्पाद्यादृश्यंतेसर्वतःस्थिताः १४३५ विषयाःकितवाराजन्नेतेदुर्द्यूतदेविनः ॥ अनक्षहृदयान्पुंसोजयंत्यक्षैःकृताभिधैः १४३६ अद्याक्षहृदयंब्रह्मज्ञातमस्माभिरंजसा ॥ विज्ञानाद्यस्यसततंपुमानक्षैर्नजीयते १४३७ गुरुशास्त्रोपदेशेनयदैतमनुपश्यति ॥ ह्यक्षहृदयंब्रह्मस्वात्मानंदेवमंजसा ॥ ईशानंभूतभव्यस्यनततोनिंदतिस्वयम् १४३८

स्माद्वयमपिशास्त्रानुगृहीताःशुकवामदेवादिवदरीन्जित्वात्रब्रह्मभावलक्षणंस्वाराज्यंलभेमहीत्याह वामेतिद्वाभ्यां । स्पष्टंद्वयम् १४३१ । १४३२ येतुशास्त्रसाक्षिविमुखास्तेदैन्यंतितेऽधोधोभावलक्षणांदुर्गतिंलभंतइत्याह शास्त्रेति । येरबुद्धिभिर्मूढैःशास्त्रंविनाद्यूतमारब्धंतेपापरूपकौपीनमात्रशेषाःसंतोदुःखंयांतीतिद्वयोःसंबंधः १४३३ । १४३४ यथाद्यूतागारेपराजितानांमंडलीदृश्यतेतथेयंप्रकृतेपापयोनीनांमंडलीबोध्येत्याह पक्षिणइति । पक्षिणश्चस्थावराश्चग्राम्यारण्यभेदभिन्नाःपशवश्चसर्पाद्याश्चयेऽमीदृश्यंतेतेसर्वेविषयकितवैःपराजितानामाकाराबोध्याइतिसंबंधः १४३५ तद्विदुरित्यादिभागस्यार्थमाह विषयाइतिद्वाभ्यां । लोकेहिकितवाअनक्षहृदयान्अक्षानुकूलताप्रयोजकाक्षहृदयाख्यमन्त्रविशेषज्ञानशून्यानेवजयंति । कृताभिधैःकृताःकल्पिताःकृतत्रेताद्वापरकलिरूपाअभिधाःसंज्ञायेषांतादृशैरक्षैःपाशकैरिति १४३६ अद्येति । यथानलेनराज्ञाऋतुपर्णादक्षहृदयंज्ञातंतद्विज्ञानाद्विषयकितवान्जयामएवेत्यर्थः ३७ उक्तार्थेऽष्टममंत्रंसमन्वितंकरोति गुर्विति त्रिभिः । सर्वेश्वरब्रह्मरूपमात्मानमंतर्यामित्वेनाक्षहृदयभूतंयदाउपदेशानुसारेणहृदिसन्निहितःसाक्षात्करोतितदाश्रुतिगतजुगुप्सापदोक्तांनिंदामनुतापरूपांनकरोतीत्यर्थः १४३८

अनुतापरूपात्मनिंदामभिनयति अथेतिद्वाभ्यां । अथाक्षहृदयंज्ञात्वेतिनिंदति । इतिकथं अहंभारतेखंडेजातःसन्विषयकितवैःपुण्यरूपंविद्यारूपंचग्लहंनिर्जितोस्मिपापकौपीनशेषश्चकृतो स्मीतिद्वयोःसंबंधः १४३९ । १४४० आत्मनोनित्यत्वसर्वभासकत्वसर्वसत्ताप्रदत्वानांप्रतिपादकस्यनवममंत्रस्यार्थमाह नास्येतिचतुर्भिः । आत्माऽविनाशीयतःकर्तृत्वभोक्तृत्वप्रमातृत्व लक्षणविकारवान्नभवतिकिंतुततःकर्त्रादिरूपाद्विकारिणःपरःसाक्षिरूपइत्यर्थः १४४१ तत्रहेतुतयाकालापरिच्छेद्यत्वमाह यस्मादिति । ब्रह्माहिरण्यगर्भस्तत्प्रभृतीनामहोभिःसहस्रयुगादिरूपै रवयवैःसहितःसंवत्सरात्माकालोनानाविधोयस्मात्साक्षिरूपादात्मनोऽर्वागेवविकारेषुपरिच्छेदायप्रवर्ततइति १४४२ आत्मेति । तदात्मज्योतिरन्येनज्योतिषानप्रकाश्यतेयतस्तदेवसूर्यादीनांज्यो तिषांज्योतिःप्रकाशकंसद्विराजतइति १४४३ सएषआत्मैवसर्वसत्ताप्रदत्वादायुरित्युच्यतइत्याह नप्राणइति । आयुर्जीवनप्रदोऽयमात्माज्योतिषांज्योतिर्भूतएवदेवैरायुरितिनिश्चितइति १४४४ आत्मनोब्रह्मत्वयोग्यतास्फुटीकरणार्थंसर्वाधारताप्रतिपादकस्यदशममंत्रस्यार्थमाह यस्मिन्निति द्वाभ्याम् । प्राणाद्यावक्ष्यमाणस्वरूपाःपंचजनसंज्ञकायत्राधिष्ठानेसंतितथापरैर्भूतैःपृथिव्यादिभिः सहितआकाशश्चयत्रतिष्ठतितमेवाहंसर्वभासकमीश्वरममृतमात्मानंजानामितंविद्वान्जानन्सन्नहंतादृशःसर्वाधिष्ठानादिरूपःसंपन्नोस्मीतिद्वयोरर्थः १४४५ । १४४६ पंचजनपदार्थानांप्राणादी

अथाक्षहृदयंज्ञात्वाविषयैःकितवैरहम् ॥ दुर्द्यूतदेविभिर्नित्यंसर्वप्राण्योघवंचकैः १४३९ जातोपिभारतेवर्षेह्यधिकारिशरीरभाक् ॥ पुण्यविद्याग्लहंसर्वंनिर्जितो स्मिक्षणेनहि ॥ पापकौपीनशेषश्चकृतोस्मीतिकदाचन १४४० नास्यनाशःकथंचित्स्यादात्मनःसर्वदेहिनाम् ॥ कर्ताभोक्तातथामातानात्माकिंतुततःपरः ४१ यस्मादर्वागयंकालोनानाभेदःप्रवर्तते ॥ संवत्सरःसहाहोभिर्ब्रह्मादीनांमहात्मनाम् १४४२ आत्मज्योतिस्तदन्येनज्योतिषानप्रकाश्यते ॥ तदेवज्योतिषांज्योतिः सूर्यादीनांविराजते १४४३ नप्राणोनाप्यपानोवाभवेदायुःशरीरिणाम् ॥ ज्योतिषांज्योतिरेवायमायुर्देवैःसुनिश्चितः १४४४ यस्मिन्पंचजनाःपंचप्राणाद्याःसं तिसर्वदा ॥ भूतैश्चतुर्भिरपरैराकाशोपिचसर्वगः १४४५ तमेवज्योतिषांज्योतिर्जानाम्यात्मानमीश्वरम् ॥ मरणादिविनिर्मुक्तमहंविद्वांश्चतादृशः १४४६ प्राणश्च क्षुस्तथाश्रोत्रंमनोज्योतिःपुरेरितम् ॥ वागादिकथितंलोकएतज्ज्योतिश्चपंचकम् १४४७ आत्मेतिज्ञानवंतोयेनिश्चितंतैस्तुसर्वदा ॥ ब्रह्माक्षहृदयंपूर्णंपुराणंनाशव र्जितम् १४४८ उत्पत्तेर्जगतःपूर्वमेकमेवव्यवस्थितम् ॥ परतोनाशतोमध्येनैकधेवव्यवस्थितम् १४४९ नबाह्यैरिंद्रियैरेतत्सर्वभेदविवर्जितम् ॥ श्रुत्युक्तमात्मम ननसंस्कारसचिवेनहि ॥ मनसैवावगंतव्यंब्रह्मरूपंनिरंजनम् १४५०

नांस्वरूपंप्रदर्शयंतद्भासकतयातदांतरत्वमात्मनःप्रतिपादयतएकादशस्यमंत्रस्यार्थमाह प्राणइतित्रिभिः । प्राणचक्षुःश्रोत्रमनांसिचत्वारितथापुरातीतमंत्रेज्योतिषांज्योतिरितिषष्ठ्यंतज्योतिः पदेनेरितंवागादिपंचकंतद्धिलोकेऽप्ययंकारादौप्रकाशकत्वेनकथितंप्रसिद्धमितियावत् आदिपदेनचंद्रादित्यादयोगृह्यंते एतज्ज्योतिरेतेषांप्राणादीनांयज्ज्योतिःप्रकाशकंतत्त्वं । कीदृशं पंचकंपंचभिः प्राणादिशब्दैःप्रथमाविभक्त्यंतैःकायतेप्रतिपाद्यतेतत्तथा । कैधातोःशब्दार्थात्सुपिस्थइतियोगविभागात्कप्रत्ययः । तथाचप्राणादीनांप्राणादिरूपंसर्वांतरंतत्त्वमात्मेतीत्थंज्ञानवंतोयेभवं तितैरेवाक्षहृदयतयोक्तंब्रह्मज्ञातमितिद्वयोरर्थः १४४७ । १४४८ अग्र्यपदार्थमाह उत्पत्तेरिति । कीदृशमात्मतत्त्वं जगतउत्पत्तेःपूर्वंतथाजगतोनाशतःपरतोऽनंतरंचैकमेकरूपमेवावस्थितं तयोर्मध्येतुकल्पितोपाधिभिर्नैकधेवनानारूपमिवस्थितमितिसंबंधः अग्र्यशब्दोहिअपेक्षावशात्पूर्वमपरंचाभिधत्तेइतिभावः १४४९ द्वादशमंत्रस्यआत्मज्ञानसाधनमद्वितीयत्वंतदविज्ञानेऽनर्थंचप्र तिपादयतोऽर्थमाह नबाह्यैरित्येकोनपंचाशच्छ्लोकैः । एतत्सर्वभेदविवर्जितमद्वितीयंश्रुत्युक्तमात्मनोरूपंबाह्यैरिंद्रियैरवगम्यंनभवतिकिंतुश्रवणमननादिसंस्कृतेनमनसैवावगंतव्यमितिसंबंधः १४५०

मनसआत्मदर्शनयोग्यतांस्पष्टयति मनइति । यद्यपिबाह्येंद्रियाण्यात्मदर्शनायोग्यान्येवसृष्टानि परांचिखानीत्यादिश्रुतेः तथापिमनःसर्वार्थविषयंपरमेष्ठिनाप्रजापतिनासृष्टमितिप्रकृतश्रुतेरेवविज्ञायतइतिभावः । तेनमनसःसर्वार्थत्वेनहेतुना।त्रिकालंकालत्रयसंबंधिदृश्यजातंतथाकालतोऽतीतमात्मतत्त्वंचमनसापुमानवगच्छतीत्यर्थः १४५१ परंतुप्रमाणसहकृतस्यैवमनसःसर्वार्थदर्शनसामर्थ्यमित्याह यद्यपीतिचतुर्भिः । यद्यपिमनोऽव्यवस्थावर्जितमेकत्रार्थेनिश्चयरूपस्थितिरहितमेवभवेत्प्रायशोदृश्यतेतथापितस्यमनसःप्रमाणरूपसहकारिहीनस्यविभ्रांतत्वरूपोऽपराधोनमंतव्यः सहकारिणंविनाकार्यासिद्धेर्लोकेपिदृष्टत्वादितिभावः १४५२ सहकारिणंविनाकार्यवैगुण्यंनदोषायेत्येतदुदाहरणेस्फुटयति नमनइति । यथालोकेचक्षुष्मान्पुमान्रूपंपश्यतितथामनःसहकृतश्रोत्रसहितोपिपुमान्रूपंनपश्यति कुतः रूपदर्शनकरणस्यनेत्रस्याभावात् तथाप्रमाणासहकृतंमनोयद्येकत्रानवस्थितंतथापिनापराधीतिद्वयोरर्थः १४५३ । १४५४ गृह्णीयादिति । अयंप्रमाताचक्षुरादिबाह्यकरणैःसहितोभेदमेवगृह्णीयात् । मनसातुभेदग्राहिप्रमाणसहकृतेनभेदमभेदग्राहिवेदांतवाक्यादिप्रमाणसहकृतेनाभेदमात्मरूपंगृह्णीयान्निश्चिनुयादित्यर्थः १४५५

मनःसर्वार्थविषयंनिर्मितंपरमेष्ठिना ॥ त्रिकालंकालतोऽतीतंमनसातेनगच्छति १४५१ यद्यप्येतद्भवेन्नृणांव्यवस्थावर्जितंमनः ॥ तथापितस्यनैवस्यादपराधःकथंचन ९२ नमनःश्रोत्रसहितःपुमान्रूपंप्रपद्यते ॥ चक्षुष्मानिवलोकेस्मिन्नेत्राभावेनहेतुना ९३ नीलंपीतंतथाऽगृह्णन्नंधोनैवभवेत्क्वचित् ॥ अपराधीयथालोकेनिष्प्रमाणंमनस्तथा ९४ गृह्णीयाद्भेदमेवायंकरणैर्नयनादिभिः ॥ भेदाभेदंचमनसासर्वार्थत्वेनहेतुना ९५ मनसैवततोब्रह्मसर्वभेदविवर्जितम् ॥ आत्मरूपंमहाभागस्थिरजंगमदेहिनाम् ९६ नानेतिकथ्यतेलोकेभेदवद्वस्तुसर्वथा ॥ इहब्रह्मणिकिंचिन्नभेदवद्वस्तुविद्यते ९७ ब्रह्मशब्दोभवेन्नित्यंबृहतोर्थस्यवाचकः ॥ बृहत्त्वंनभवेल्लोकेभेदवत्यत्रवस्तुनि ९८ मुख्योगौणस्तथाज्ञेयःशब्दार्थःशाब्दिकैःसदा ॥ मुख्येसतिनगौणःस्यादेषाप्यत्रव्यवस्थितिः ९९ ततोबृहदिदंकिंचिद्वस्तुलोकेपुगीयते ॥ गौणमापेक्षिकंतद्धिनमुख्यंब्रह्मणाविना ६० परिच्छिन्नंभवेद्यद्धिबृहत्तत्केनकथ्यते ॥ परितश्छेदवज्ज्ञेयंपरिच्छिन्नंमनीषिभिः ॥ परिच्छेदवत्स्वल्पंस्याद्यद्वदामलकंकरे ६१ बृहदभ्यधिकंज्ञेयंपरिच्छिन्नंतथात्मकम् ॥ इदंविरुद्धमेकस्मिन्केनधर्मद्वयंभवेत् ६२ अधिकंचेन्नतत्स्वल्पंस्वल्पंचेदधिकंनहि ॥ स्वल्पत्वमधिकत्वंतदेकस्मिन्नोपपद्यते ६३ परिच्छेदोभवेत्त्रेधासर्वभावेषुसर्वदा ॥ देशतःकालतस्तद्वत्केषुचित्तत्स्वरूपतः १४६४

फलितमाह मनसैवेति । गृह्णीयादितिशेषः १४५६ नेहनानेत्यंशार्थमाह नानेत्यादिना । नानापदेनसर्वभेदवद्वस्तूच्यतेतदिहब्रह्मात्मनिनास्तीत्यर्थः १४५७ तत्रहेतुतयाब्रह्मत्वानुपपत्तिंदर्शयति ब्रह्मेत्यादिना । ब्रह्मशब्दोयंबृहतोऽपरिच्छिन्नस्यवाचकः तच्चभेदवतिवस्तुपरिच्छिन्नेनास्तीत्यर्थः १४५८ लोकेतुगजादिषुबृहत्त्वव्यवहारआपेक्षिकतयागौणःसोत्रनग्राह्यइतिवक्तुंन्यायंस्मारयति मुख्यइति । पदार्थोद्विविधोमुख्योगौणश्च यथाव्रीहिपदार्थःशालिबीजरूपोमुख्योनीवाररूपोगौणः १४५९ ततइति । ततउक्तव्यवस्थानुसारात्लौकिकवस्तुजातंबृहत्पदस्यगौणोऽर्थएव तन्मुख्यार्थस्तुब्रह्मैवेत्यर्थः १४६० लौकिकवस्तुनोमुख्यबृहत्त्वासंभवंविरोधहेतुकंविशदयति परिच्छिन्नमिति । परिच्छिन्नंतदल्पंभवेद्यथाकरदेशावच्छिन्नमामलकमिति १४६१ बृहदिति । बृहत्पदवाच्यमभ्यधिकरूपंपरिच्छिन्नपदवाच्यंतुतथात्मकंस्वल्परूपं इदमभ्यधिकत्वस्वल्पत्वरूपंधर्मद्वयमेकत्रवस्तुनिकथमस्त्वियादित्यर्थः १४६२ विरोधमभिनयति अधिकमिति स्पष्टम् १४६३ परिच्छेदत्रैविध्यंप्रथमाध्यायेवर्णितंस्मारयति परिच्छेदइति । स्वरूपतोवस्तुतः १४६४

तत्रवस्तुपरिच्छेदंस्वरूपसजातीयविजातीयप्रतियोगिकतयात्रिविधमन्यत्रदर्शयन्ब्रह्मणितदभावमाह स्वरूपादितिचतुर्भिः । अद्वितीयरूपंब्रह्मविहायसर्वलौकिकवस्तुषुवस्तुपरिच्छेदस्तिष्ठतीत्यर्थः १४६५ तत्रस्वरूपप्रतियोगिकंतमुदाहृत्यतद्व्यतिरेकंब्रह्मण्याह नहीति । यथावृक्षेशाखादिवैलक्षण्यरूपःस्वरूपभेदस्तिष्ठतिनैवंब्रह्मणीत्यर्थः १४६६ सजातीयात्तंतथाह ब्रह्मणइति । यथा शुक्लवर्णेगविवृषभेखण्डादिव्यक्तिभ्योभेदएवंनब्रह्मणीति । खंडोंगहीनः । मुण्डःशृंगहीनः १४६७ विजातीयाच्चंतथाह विजातीयैरिति । तस्मात्सजातीयभेदाभावलब्धकैमुत्यन्याया द्विजातीयैर्निरूपितोभेदोपिब्रह्मणिनविद्यतेयाहशोमनुष्यस्यघटादिभिरिति १४६८ सर्वविधभेदाभावेब्रह्मणःसर्वात्मकतांहेतुतयाह सदसदिति । जगतियावद्वस्तुजातंतत्सर्वंब्रह्मैवभवतीत्यर्थः १४६९ एतत्स्फुटयति भावेतिद्वाभ्यां । भावाभावात्मकमनिर्वचनीयंगंधर्वनगरंयथानाकाशात्कदाचिद्भिन्नंतथाविश्वंब्रह्मणइतिद्वयोरर्थः १४७० । १४७१ विश्वस्यब्रह्मभेदाभावेब्रह्मणिक ल्पितत्वंहेतुमाह देशेति । साश्रितौआश्रितैःपदार्थजातैःसहितौदेशकालौयथास्वप्नेहृदंबुजावच्छिन्नेचिद्वस्तुनिजायेतेकल्प्येतेतथाएतौजाग्रत्कालिकौब्रह्मणीत्यर्थः १४७२ ब्रह्मणःस्वरूपलक्षण

स्वरूपात्सर्वभावानांपरिच्छेदोमनीषिभिः ॥ इष्टोब्रह्मविहायैकंसर्वभेदविवर्जितम् १४६५ नहिस्वरूपतोभेदोब्रह्मण्यस्तियथातरौ ॥ शाखास्कंधादिरूपोयमेक स्मिन्नुपलभ्यते १४६६ ब्रह्मणोनसजातीयैःकृतोभेदोस्तिकश्चन ॥ खंडमुंडादिभिर्यद्वद्गोभिर्गोःशुक्लरूपिणः १४६७ विजातीयैश्चतस्माद्योभेदःकोपिनदृश्यते ॥ ब्रह्मणोघटकुड्याद्यैर्यद्वन्मनुजदेहिनः १४६८ सदसच्छब्दधीगम्यंयत्किंचिद्वस्तुविद्यते ॥ जगत्यस्मिन्हितत्सर्वंब्रह्मभेदविवर्जितम् १४६९ भावाभावात्मकंयद्व द्गंधर्वनगरंमहत् ॥ कालत्रयेपिगगनाद्भिन्नंनैवास्तिकिंचन १४७० तथाविश्वमिदंसर्वंप्रतीतंब्रह्मणीश्वरे ॥ कालत्रयेपिनैवास्तिभिन्नंतद्ब्रह्मणःक्वचित् १४७१ देश कालौयथास्वप्नेजायेतेहृदयांबुजे ॥ साश्रितौतद्वदेवैतौजायेतेब्रह्मणीश्वरे ७२ परमानन्दरूपंयज्ज्योतिषांज्योतिरव्ययम् ॥ भेदशून्यंस्वरूपेणसर्वत्रैवव्यवस्थितम् ७३ गगनस्ययथानास्तिभेदःस्वात्मनिकर्हिचित् ॥ ब्रह्मणोपितथानास्तिभेदश्चैतन्यरूपिणा ७४ अंतर्बहिःसमंयद्वत्पुत्तिकानागदेहयोः ॥ आकाशमात्मनोरूपं तद्वत्समतमंस्मृतम् १४७५ देशकालस्वरूपंचसर्वंसर्वस्यसर्वदा ॥ ब्रह्मैवनततोन्यत्स्यात्किंचिद्वस्त्वंतरंहिसत् १४७६ सर्पादयोयथाभावारज्ज्वामेवव्यवस्थिताः ॥ आदौमध्येतथाचांतेरज्ज्वोरन्येनकेचन १४७७ देशकालादयोभावास्तद्वद्ब्रह्मण्यवस्थिताः ॥ आदौमध्येतथाचांतेब्रह्मणोन्येनकेचन् १४७८ अयमात्मापरंब्रह्म भेदशून्यःशरीरिणाम् ॥ अत्रैवब्रह्मशब्दोयंमुख्योनान्यत्रकर्हिचित् १४७९

माह परमेति । यद्ब्रह्म १४७३ तत्पदार्थस्यब्रह्मणस्त्वंपदार्थाद्भेदशंकांवारयति गगनस्येति । यथागगनस्यस्वात्मनिस्वस्वरूपेभेदोनास्तितथाचैतन्यरूपिणाआत्मनात्वंपदार्थेनब्रह्मणो पिनभेदइत्यर्थः १४७४ तत्रहेतुतयासमोमशकेनसमोनागेनेत्यादिश्रुतिप्रसिद्धंसर्वत्रपरिपूर्णतालक्षणसाम्यरूपंब्रह्मणःस्वभावमाह अंतरिति । पुत्तिकास्वल्पमशकजातिर्नागोगजस्तद्देहयोराकाशं यथासमंतथासर्वत्रात्मरूपमित्यर्थः १४७५ तत्रहेतुतयाब्रह्मणएवसर्वरूपतयाऽवस्थानमाह देशेति । सर्वस्यसंबंधियद्देशकालादिकंस्वरूपंतत्सर्वंब्रह्मैवनततोन्यदित्यर्थः १४७६ ब्रह्मणिक ल्पितविश्वस्यान्यत्वाभावंदृष्टांतेनस्पष्टयति सर्पादयइतिद्वाभ्यां । स्पष्टंद्वयम् १४७७ । १४७८ तथाचायमात्माब्रह्मेतिश्रुतिप्रसिद्धंब्रह्मपदमुख्यार्थमात्मनएवसिद्धमित्याह अयमिति । सर्वशरीरिणामयमपरोक्षआत्माभेदशून्यत्वाद्ब्रह्मभवतितच्चब्रह्मत्वमस्यैवमुख्यमित्यर्थः १४६९

एतदेवस्फुटयति एतस्मादिति । यस्माद्धेतोरेतस्मादात्मनःकिंचिदधिकंनविद्यतेततोवेदैर्ब्रह्मादिपदघटितवाक्यैःसआत्मासर्वाधिकत्वलक्षणमहेश्वरत्ववानुच्यतेतस्मिन्नस्मिन्भेदस्यनावकाशइत्यर्थः १४८० तत्रहेतुतयाब्रह्मत्वभेदयोर्विरोधमाह यदीति । अत्रात्मनि १७८१ एवंविरोधेसतिब्रह्मत्वभेदयोरुभयोरुपादातुमशक्यत्वेनान्यतरस्यहेयत्वप्रसंगेपरसापेक्षत्वेनबहिरंगोभेदएवहेयोनतु निरपेक्षस्वरूपाब्रह्मताअसिद्धंबहिरंगमंतरंगइतिन्यायादित्याह अंतरंगतयेति । आदेयाग्रहीतव्याब्रह्मताअंतरंगत्वात् भेदस्तुहेयस्त्यक्तव्योयतस्तस्याब्रह्मतायाविघातकइत्यर्थः ८२ ब्रह्मताया अंतरंगत्वेहेतुमात्मतारूपतामाह आत्मतेति । ब्रह्मताआत्मतारूपाज्ञेया आत्मपदंहिसर्वांतरस्यवस्तुनोवाचकंयदाप्नोतीत्यादिश्रुतेरित्युक्तम् तन्नाशेतस्याब्रह्मतायानाशेसतितद्रूपात्मतानाशादा त्मनआत्मपदार्थस्यनाशःस्यात्तदपेक्षयाभेदनाशएवकर्तुमुचितइत्यर्थः ८३ आत्मरक्षार्थंभेदस्त्यक्तव्यइत्यत्रआत्मार्थेपृथिवींत्यजेदितिनीतिविदांवचनमप्यनुकूलमित्याह कामुकाइति । येषा मर्थकामौपुरुषार्थौतेनीतिविदोप्येवंवदंति एवंकथम् आत्मनाशप्रसंगेतद्रक्षार्थंसर्वंत्यजेदिति ८४ अत्रकैमुत्यन्यायंदर्शयति आत्मेति । येभेदिनोभेददर्शिनोबहिर्दृशोबहिर्मुखाश्चेतिआत्मसंबं धिनोदेहादेरात्मत्वेनाभिमतस्यनाशप्रसंगेसर्वंतदन्यत्त्यजंतिवयंनिष्कामत्वादिभिस्तद्विपरीताःसंतःअद्यपरमपुरुषार्थमोक्षसंपादनकालेजडंभेदजातंनत्यक्ष्यामइत्यत्रकोहेतुः तथाचयदागौणात्मरक्षा

एतस्मादधिकंयस्मात्किंचिदत्रनविद्यते ॥ सर्वाधिकस्ततोवेदैःकथ्यतेसमहेश्वरः ॥ सर्वाधिकत्वाद्भेदोस्मिन्कोपिनास्तिकथंचन १४८० यदिभेदोभवेन्नस्याद्ब्र ह्मतात्रकदाचन ॥ ब्रह्मताचेद्भवेन्नैपभेदःकोपिकथंचन ८१ अंतरंगतयाऽऽदेयाब्रह्मणोब्रह्मतानतु ॥ बहिरंगसमोहेयोभेदस्तस्याविघातकृत् ८२ आत्मताब्रह्मता ज्ञेयातन्नाशेस्यात्मनोभवेत् ॥ नाशस्तस्माद्वरंभेदनाशोभवतुसर्वथा ८३ कामुकाअर्थलुब्धाश्चइदमाहुर्महाधियः ॥ आत्मनाशेसमुत्पन्नेत्यजेत्सर्वमशंकितः ८४ आत्मसंबंधनाशेपिभेदिनोपिबहिर्दृशः ॥ सर्वंत्यजंतिकेनाद्यत्यक्ष्यामोनवयंजडम् ८५ आत्महानौभवेन्नाशोह्यत्यक्तस्यापिसर्वथा ॥ जडस्यततएवेदमस्माभि स्त्याज्यमेवहि ८६ विनाशेस्यात्मनोनाशंजगतःप्रवदंत्यमी ॥ शिष्याःसुरगुरोर्येचतादृशाःपामराजनाः ॥ प्रामाणिकाःकथंतस्यनाशेनाशंवदंतिन ८७ अजडे नविनासिद्धिंजडंयातिनकर्हिचित् ॥ अजडोज्योतिषांज्योतिरात्मान्यज्जडमीरितम् ८८ संतानस्ययथानाशेस्यात्मनोनतथैवहि ॥ जडनाशेननाशोस्तिब्रह्म णोद्वयरूपिणः ॥ ततोजडस्यसंत्यागंकुर्मोनब्रह्मणःक्वचित् ८९ अपिब्रह्मणिभेदोयंग्रहीतुंनैवशक्यते ॥ अगृहीतःकथंभेदःसिध्येदत्रात्मरूपिणि ॥ ब्रह्मेतिभेदशू न्यंस्यात्तत्रभेदग्रहःकुतः १४९०

र्थंसर्वत्यागःप्रसिद्धस्तदामुख्यात्मरक्षार्थंदुःखरूपस्यजडस्यचभेदस्यत्यागःकिमुतेतिभावः ८५ येतुजडाभिनिवेशेनात्मत्यागेसमुद्यतास्तेऽतिमुग्धाआत्महानौजडस्याप्यपहारादित्याह आत्महाना विति । आत्महानौजातायांस्वयमत्यक्तस्यापिजडस्यकृपणधनन्यायेननाशोभवतिततस्तमेतंन्यायमनुसंधायेदंजडजातमस्माभिस्त्याज्यमेवेत्यर्थः ८६ आत्मनाशेसर्वनाशइत्येतद्धात्यानामपिसं मतमित्याह विनाशइति । येसुरगुरोःशिष्याश्चार्वाकायेचतत्सदृशाःपामरास्तेपिदेहरूपस्यात्मनोनाशेजगन्नाशंवदंतितदाप्रामाणिकावैदिकास्तथाकथंनवदेयुरित्यर्थः ८७ तत्रोपपत्तिमप्याह अजडेनेति । नह्यसाक्षिकंकिंचित्सिद्ध्यतितत्रात्मासाक्षीतदन्यज्जडंसाक्ष्यंतदात्मानंविनाकथंसिद्ध्येदित्यर्थः ८८ ननुसर्वंजडविनाशेतत्साधकंब्रह्मापिकथंतिष्ठेदित्याशंकांवारयति संतानस्येति। यथासंतानस्यबुद्धिवृत्तिरूपज्ञानप्रवाहस्यसुषुप्त्यादौनाशेपितत्साक्षिणआत्मनोननाशस्तथासर्वंजडनाशेपितत्साधकब्रह्मणोननाशइत्यर्थः ८९ किंचयथोष्णस्वभावेवह्नौशैत्यंप्रमातुमशक्यंत थाऽद्वितीयस्वभावेब्रह्मणिभेदइत्याह अपिब्रह्मणीति । अत्रब्रह्मणिआत्मपदार्थरूपेज्ञातुमशक्योभेदःकथंसिद्ध्येदिति । कथंज्ञातुमशक्यइत्याकांक्षायांब्रह्मपदार्थमाह ब्रह्मेतीति १४९०

ब्रह्मणिवस्तुतोभेदाभावंदृष्टांतेनस्फुटयति रज्जाविति । यथारज्जुरूपेअवस्थानेआधारेसर्पस्यवस्तुतोनस्थितिस्तथात्रब्रह्मणिभेदस्येति १४९१ किंत्वविद्ययैवकल्पितःसइत्याह प्रकाशइति । माययाऽविद्यया तमसोघूककल्पितस्य प्रकाशेसूर्येस्थितिः १४९२ विचारदशायांसभेदःशशशृंगवदलीकइत्याह ततइति । ततोवस्तुतोऽसंभवात् स्वरूपादिभिर्निरूपितोभेदःशब्दमात्ररूपो ज्ञानमात्ररूपोवाबोध्योनत्वर्थात्मेत्यर्थः १४९३ भेदस्यवस्तुतोऽसंभवमेवस्फुटयति ब्रह्मणइति । यदिब्रह्मणःसकाशादन्यत्किंचिदपिवस्तुस्यात्तदाभेदःस्वरूपंलभेततदेवतुनास्तिब्रह्मणःसर्वात्मकत्वादित्यर्थः १४९४ शब्देति । तेनायंभेदःशब्दबुद्ध्योर्बलादेवस्थितःशशशृंगादिवदिति १४९५ शब्दबुद्ध्योश्चेति । शब्दश्चबुद्धिश्चतेद्वेयदाभेदस्यमध्येपततःप्रतिभूवन्मध्येतिष्ठतःस्वयंभेदेनदृष्टेशब्दबुद्धीविषयंभिन्नतयादर्शयतइतियावत् तदानानेवनानाविधइवदृश्यमानोपिभेदोवस्तुनिब्रह्मणिनास्तीत्यर्थः १४९६ भेददर्शनप्रयुक्तमनर्थंदर्शयति अवाङ्मनसेति । मृत्योर्मृत्युंपुनःपुनर्मृत्युम् १४९७ तत्रहेतुंसंसारावस्थानमाह भेदबुद्धिरिति । हियतोभेदबुद्धिःसंसारवर्द्धिकाततआत्मनिभेदंनपश्येदिति १४९८ दुःखादिति । तेनसंसारपातेननरकादिरूपमति

रज्जौसर्पस्थितिर्यद्वदवस्थानेभवेन्नहि ॥ ब्रह्मण्येवमवस्थानंनभेदस्योपपद्यते १४९१ प्रकाशेतमसोयद्वन्मायायास्यादवस्थितिः ॥ ब्रह्मण्यपितथाभेदोमाययैवावतिष्ठते ॥ वस्तुतोनैवभेदोयंकोपिब्रह्मस्वरूपिणः १४९२ ततोभेदःस्वरूपेणदेशकालादिभिःकृतः ॥ वंध्यासुतसमोज्ञेयःशब्दधीवपुरेवसः १४९३ ब्रह्मणोयदिकिंचित्स्यादन्यत्तत्रभवेदयम् ॥ यदाभूत्सकलंब्रह्मतदायंक्वभविष्यति १४९४ शब्दधीबलतस्तेननानेवायंव्यवस्थितः ॥ शशशृंगनिभोभेदोवंध्यापुत्रसमस्तथा १४९५ शब्दबुद्ध्योश्चभेदस्यमध्यतःपतनेनहि ॥ नानेवापिनभेदोस्तिब्रह्मण्यात्मस्वरूपिणि १४९६ अवाङ्मनसगम्येस्मिन्स्वप्रभेनिर्द्वयात्मनि ॥ नानेवापिचयःपश्येन्मृत्योर्मृत्युंसगच्छति १४९७ भेदबुद्धिर्हिसंसारंदुःखदंसंप्रयच्छति ॥ स्वरूपेणापिदृश्योनभेदस्तुपरमात्मनि १४९८ दुःखाद्दुःखतमंतेननरकादिशरीरजम् ॥ दुःखमाप्नोतिसततंभेददृग्ब्रह्मणीश्वरे १४९९ यतएवंततोब्रह्मज्योतिषांज्योतिरव्ययम् ॥ अवाङ्मनसगम्यंतदप्रमेयंसुनिश्चलम् १५०० द्रष्टव्यमेकधैवात्मरूपंसर्वशरीरिणाम् ॥ स्वसजातिविजात्युत्थभेदगंधविवर्जितम् १५०१ अविद्याविश्वरूपेयंजननीसरुजोस्यसा ॥ भेदस्यवर्ततेह्यर्वाङ्नीरुजोब्रह्मरूपिणः १५०२ ततोजन्मादिरहितआत्मायंनिश्चलःपरः ॥ देशतःकालतस्तद्वत्स्वरूपाच्चमहांस्तथा १५०३

दुःखंभेददर्शीप्राप्नोतीत्यर्थः १४९९ त्रयोदशस्यमंत्रस्यैकधेत्यादेर्ब्रह्माखण्डत्वावधारणपरस्यार्थमाह यतइतिचतुर्भिः । यतएवंवर्णितविधयाभेदराहित्यंततःसर्वेषामात्मरूपंब्रह्मएकधैवसर्वद्वैताभावलक्षणाखंडत्वेनैवज्ञेयं । कीदृशं सर्वभासकमवाङ्मनसगोचरत्वादप्रमेयमविषयस्वभावमितिद्वयोरर्थः । श्रुतौमेयशब्दस्यएकाराभावश्छान्दसः । अत्रबुद्धिगम्यत्वाप्रमेयत्वयोर्विरोधएवमाचार्यैःपरिहृतः ‘वृत्तिव्याप्तिमपेक्ष्यैववेद्यत्वंप्राहुरात्मनः । चिदंतरानपेक्षत्वादवेद्यत्वंतथागमाः’ इति १५०० । १५०१ विरजोरजसामलेनकामकर्मादिरूपेणरहितमात्मरूपमाकाशादव्याकृताख्यमायारूपात्परमित्याकारंतृतीयपादार्थंभंग्यंतरेणाह अविद्येति । इयमहमज्ञइत्यनुभूयमानाअविद्याआकाशाव्याकृतादिपदैःश्रुतिप्रसिद्धाब्रह्मरूपिणआत्मनःसकाशादर्वागेववर्तते साक्ष्यापेक्षयासाक्षिणःपरत्वस्यप्रसिद्धत्वादितिभावः । कीदृशीअविद्या अस्यभेदस्यजननीविश्वरूपानानारूपाच । कीदृशस्यभेदस्य सरुजोराजसत्वेनसंतापकस्य । कीदृशाद्ब्रह्मरूपिणआत्मनः नीरुजःरुग्भिःसंतापैर्हीनादानंदरूपादितियावदित्यर्थः १५०२ ततइति । ततोवस्तुतोमायासंसर्गहीनत्वात्सर्वविकाररहितआत्मानिश्चलःकूटस्थोदेशादिपरिच्छेदहीनत्वान्महान्परिपूर्णश्चमतइत्यर्थः १५०३

विदुपात्मनिष्ठेनेतरत्सर्वत्याज्यमितिबोधकस्यचतुर्दशस्यमंत्रस्यार्थमाह तमेवेत्येकसप्ततिश्लोकैः । तमुक्तलक्षणमात्मानंगुरूपदेशाच्छ्रुत्वाअनात्मप्रतिपादकशास्त्रंहित्वाचमनसोंतरवस्थानंविलय रूपंप्रज्ञाभिधंश्रुतिगतप्रज्ञापदेनविवक्षितंकुर्वीतेतिसंबंधः । कीदृशंमनसोंतरवस्थानं श्रुतिश्रवणेनतत्तात्पर्यार्थमननेनध्यानेननिदिध्यासनेनचसंयुतंश्रवणादिप्रभावादसंभावनाविपरीतभावनाभ्यां वर्जितमितियावत् । एतद्विशेषणंयोगप्रसिद्धविदेहप्रकृतिलयादिसाम्यवारणार्थंबोध्यं । कीदृशोधिकारी धीमान् धीमत्त्वविवरणंरागद्वेषराहित्यरूपंबालसाम्यमितिद्वयोरर्थः १५०४ १५०५ इतरस्यहेयत्वमुपपादयति आत्मनइति । लोकःलौकिकपदार्थजातंशास्त्रंतत्प्रतिपादकंआदिपदग्राह्यंतत्साधनवानिन्दितमनिषिद्धमप्यभिध्यातंचिंतितंसत्प्रवृत्तिद्वारावागादेरिंद्रियस्यके वलश्रमरूपदुःखहेतुरेवभवेदतोहेयमितिभावः १५०६ विषयसंबंधस्यदुःखहेतुतामेवस्फुटयति भारमितित्रिभिः । चकारोप्यर्थकोभिन्नक्रमः । तथाचातीतानागतचिंतांविहायवर्तमानमेववि षयंसेवमानोपिजनोभारवाहकवद्दुःखीभवेत् किमुतातीतानागतचिंताकुलइत्यर्थः १५०७ यावतइति । अयंजंतुरात्मानंविहाययावतोयत्परिमाणान्विषयानभिध्यायेच्चिंतयेत्तावंतस्तेध्याताविष याःप्रवृत्तिद्वाराइंद्रियाणांवृथाश्रमहेतवएवयतएतैर्विषयैःशास्त्रीयैःशास्त्राविरुद्धैरपिवागादयःखेदमेवयांति फलस्यसुखस्यप्रत्यगात्मरूपस्येंद्रियैरसंस्पर्शादितिद्वयोरर्थः १५०८ । १५०९

तमेवभेदरहितंविज्ञायगुरुशासनात ॥ धीमान्बालसमोभूत्वारागद्वेषविवर्जितः १५०४ श्रुतिश्रवणतात्पर्यमननध्यानसंयुतम् ॥ मनसोंतरवस्थानंसर्वदादुःखव र्जितम् ॥ प्रज्ञाभिधंप्रकुर्वीतत्यक्त्वाशास्त्रमनात्मगम् १५०५ आत्मनोव्यतिरिक्तंयल्लोकशास्त्रादिनिंदितम् ॥ अभिध्यातंतदप्यत्रवागादेर्दुःखकृद्भवेत् १५०६ भारंवहन्यथाजंतुर्दुःखीभवतिसर्वदा ॥ विषयंवर्तमानंचसेवमानस्तथापुमान् १५०७ यावतोहृदयांभोजेविषयान्मनसःप्रियान् ॥ अभिध्यायेदयंजंतुर्विहायात्मा नमव्ययम् १५०८ इंद्रियाणांहितावंतोभाराःश्रमकराहिते ॥ एतैर्वागादयःखेदंशास्त्रीयैरपियांतिते १५०९ संत्यजेत्ततएवामून्प्रज्ञामात्मस्वरूपगाम् ॥ कुर्वी तनमनोभूयोयथायातिसखेदताम् १५१० एवंयेज्ञातवंतस्तेप्रवृत्ताःस्वात्मबोधने ॥ श्रवणादिमुखैरेवोपायैर्नापरनामभिः १५११ द्वारैःपंचावयवकैर्बुद्धिशुद्धि करैरपि ॥ ब्रह्मचर्यादिसंपन्नाऊहापोहविशारदाः १५१२ संसारसागरंतीर्त्वाप्रवृत्त्यात्मावलोकनात ॥ दृष्टोमतःपरेणैषदृश्यतेनैवकर्हिचित १५१३ इयंरूढिरयं योगोगुणोयंलक्षणातथा ॥ हानाहानकरीतद्वदुभयीयंहिलक्षणा १५१४

फलितमाह संत्यजेदिति । ततःश्रममात्रहेतुत्वादमून्विषयान्संत्यजेत्तांस्त्यक्त्वाचप्रज्ञामात्मस्वरूपाकारांकुर्वीतयथामनःपुनःसखेदतांदुःखितांनप्राप्नुयादित्यर्थः १५१० एवमितरविस्मरण मेवात्मदर्शनंतस्यैवसाधनानिश्रवणादीनीत्याह एवमितित्रिभिः । एवंयेआत्मानंज्ञातवंतस्तेएवस्वात्मनोबोधनेसाक्षात्कारेप्रवृत्ताबोध्याइतिशेषः । कैर्ज्ञातवंतः श्रवणादिसंज्ञैरुपायैःतथापं चावयवैरन्नमयाद्यानंदमयांतकोशैः तेषांशिरःपक्षद्वयमध्यपुच्छैःपंचावयवकत्वात् । कीदृशैःकोशैर्द्वारैःशुद्धात्मज्ञानेस्थूलारुंधतिन्यायेनद्वारभूतैः । पुनःकैः बुद्धिशुद्धिकरैर्बहिरंगांतरंगसाध नैः । कीदृशास्ते ब्रह्मचर्यैणादिपदग्राह्यैकांतवासादिभिश्चसंपन्नाविचारकुशलाश्चेतिद्वयोरर्थः १५११ । १५१२ संसारेति । एवंसंसारसागरंद्वैतजातंतीर्त्वाविस्मृत्यप्रवृत्त्याप्रकृष्टयांतर्लीन याचित्तवृत्त्याअवलोकनादावरणध्वंसादात्माद्रष्टःसाक्षात्कृतोमतःसंमतः परेणोक्तभिन्नेनप्रकारेणतुनदृश्यतेनदृष्टतयाव्यवह्रियतेइत्यर्थः १५१३ परेणैपनदृश्यतेइत्येतत्स्फुटयितुंपराग्दृष्टीनांशा स्त्राध्ययनमपिरोगिणामपथ्याशनवद्दोषोत्कर्षहेतुरेवभवतीतिदर्शयंस्तत्रपदशास्त्रेव्याकरणेप्रसिद्धान्कांश्चित्पदार्थान्व्यामोहकतयाऽनुवदति इयमित्यष्टाभिः । इत्यादिरूपपदविषयकज्ञानात्पुमान्प राग्दृष्टिर्भृशमतिशयेनमोमुह्यतेपुनःपुनर्मोहंविपर्ययसंतानमुपैतिप्राप्नोतीत्यष्टमेनप्रभिसंबंधः इतिकथमित्याकांक्षायामियंरूढिरित्यादियोज्यं । रूढिःसमुदायशक्तिर्यथाविप्रादिपदे योगोऽवयवशक्ति–

—यथापाचकादिपदे गुणोगुणद्वारेणशब्दस्यान्यत्रवृत्तिर्यथाग्निर्माणवकइत्यत्रतेजस्वित्वगुणेनाग्निशब्दस्यमाणवकेवृत्तिः लक्षणाशक्यार्थसंबंधेनवृत्तिः साउभयीद्विविधाजहत्स्वार्थाऽजहत्स्वार्था च तत्राद्यास्वार्थस्यहानकरीयथागंगायांघोषइत्यादौ अंत्यास्वार्थाहानकरीयथाकाकेभ्योदधिरक्ष्यतामित्यादावित्यर्थः १५१४ स्वार्थस्येति । प्रथमपदंपूर्वान्वयित्वेनदर्शितं इयंद्विरेफादिपद गतालक्षणालक्षितेनवहुव्रीहौपरमतप्रसिद्ध्यालक्षणयालक्षितंयद्भ्रमरपदंतद्द्वारेणालिप्रभृतिपदार्थेवोध्या नोपचारतः उपचारोनामगुणयोगस्ततोहेतोरियंलक्षणानवोध्या । नहिरेफद्वयस्यकश्चि द्धर्मोऽलिशरीरेवर्ततइतिभावः । एवंपदवृत्तिभेदंविचार्यप्रकृतिप्रत्ययार्थयोःप्राधान्यव्यवस्थामाह प्रकृतेरिति । यत्रप्रत्ययस्यद्योतकत्वंतत्रद्योत्योर्थोविशेषणमेवेतिसिद्धांतात्प्रकृतेःप्रकृत्यर्थ स्यवलंप्राधान्यंयथाश्वकइत्यल्पार्थेकनिअल्पोश्वइत्यर्थः तद्वाचकत्वस्थलेतुप्रत्ययार्थप्राधान्यं यथापाचकइत्यत्रपाककर्तेत्यर्थइतिभावः १५१५ कारकमिति । इदंक्रियाजनकभावरूपंकर्त्रादि षड्विधंकारकपदाभिधेयमुद्दिष्टमुक्तं । इदंशेषरूपंनिपातादिरूपंचाकारकमुद्दिष्टं इयंधात्वर्थरूपाक्रियाउक्ता तथाइदंतंडुलादिकंपाकादिक्रिययाफलाश्रयत्वेनेष्टतमादिरूपंकर्मोक्तं तथेदंपश्यमृगो धावतीत्यत्रमृगकर्तृकधावनरूपंक्रियाकर्मक्रियारूपंकर्मेत्यर्थः १५१६ धातुरिति । अयंस्वार्थफलव्यधिकरणव्यापारवाचकरूपोधातुःपचादिःसकर्मकउक्तस्तत्समानाधिकरणव्यापारवाचकस्त्व कर्मकइत्यर्थः अयंणिच्प्रत्ययःसकर्मकधातुर्वाप्रयोजकस्यप्रेरकस्यव्यापारमाह अपरोणिच्प्रकृतिरूपोधातुरकर्मकधातुर्वाप्रयोज्यस्यस्वतंत्रकर्तुर्व्यापारमाहेत्यर्थः तत्रोदाहरणंघटोभवतीतिभूधातुर

स्वार्थस्यलक्षितेनेयंलक्षणानोपचारतः ॥ प्रकृतेर्बलमेतद्धिप्रत्ययस्यबलंत्विदम् १५१५ कारकंत्विदमुद्दिष्टमिदंस्यादप्यकारकम् ॥ क्रियेयंस्यात्तथाकर्मक्रियाक र्मेदमेवच १५१६ धातुःसकर्मकश्चायमयंनिष्कर्मकोपरः ॥ अयंप्रयोजकस्याहव्यापारमपरोपिहि ॥ प्रयोज्यस्यतथाजंतुर्विशिष्टंभाषतेध्रुवम् १५१७ प्रत्ययो यंसुबुद्दिष्टस्तिङेषोपिनचापरः ॥ प्रत्ययेप्रत्ययोभूयादस्मिन्नुभयरूपिणि १५१८ तद्धितोयंकृदेषस्यादेषकृत्यादिकःपरः ॥ समासोयंतथैवायंसमासांतपरो पिच १५१९ सनादिर्नामधात्वादावेषस्त्रीप्रत्ययःपरः ॥ अपत्यादिषुचैवायंचतुरर्थोयमीरितः १५२० भावादिषुतथाचायमयंवचनभेदकृत् ॥ इत्यादिपदविज्ञा नाद्रूशंमोमुह्यतेपुमान् १५२१

कर्मकोभाविणिच्प्रकृतिश्चप्रयोज्यमाह तथायंनियमोबोध्यः अयंकः यत्पदंप्रकृतिरूपंप्रत्ययरूपंवाजंतुर्भाषतेतद्विशिष्टमेवभाषतेनकेवलाप्रकृतिःप्रयोक्तव्यानकेवलःप्रत्ययइतिवचनादितिभावः १५१७ प्रत्ययोयमिति । अयंस्वौजसित्यादिरूपःप्रत्ययःसुप्संज्ञकः तिप्तस्झिइत्यादिस्तुतिङ्संज्ञकः अस्मिन्सुप्तिङ्रूपेप्रत्ययेजातेसतिअपरःप्रत्ययोनजायतेइत्यर्थः प्रायेणेतिशेषः अन्य थापचतितरामितितरप्तत्इतिपंचम्यंतात्तसिश्चनस्यादितिबोध्यम् १५१८ तद्धितोयमिति । एषयूनस्तिरित्यादिकस्तद्धिताधिकारपठितःप्रत्ययस्तद्धितसंज्ञकः तथाएषकृदतिङित्यधिकारप ठितःप्रत्ययःकृत्संज्ञकः तथाएषकृदधिकारेण्वुलःप्राक्पठितस्तव्यदादिःप्रत्ययःकृत्यसंज्ञः कीदृशः परःसामान्यविशेषयोर्भेदपक्षेकृत्सामान्याद्भिन्नइत्यर्थः तथायंप्राक्कडारात्समासइत्यधिकारेप ठितसूत्रैर्निष्पन्नोभूतपूर्वादिःशब्दःसमाससंज्ञकः तथायंद्वित्राइत्यादिकःसमासःसमासांतसंज्ञकडजादिप्रत्ययांतइत्यर्थः १५१९ सनादिरिति । धात्वादावितिधातुपदंभावप्रधानं तथाचसनादिः सन्क्यच्काम्यजित्यादिर्द्वादशविधःप्रत्ययः धात्वादौधातुत्वारंभेनिमित्तमितिशेषः सनाद्यंताधातवइत्यनुशासनादित्यर्थः एषङीप्टाबादिःप्रत्ययःपरस्तद्धितभिन्नस्तदाधिकारात्पूर्वंपाठादितिभावः तथायमणादिःप्रत्ययोऽपत्याद्यर्थेषुविहितः तथायंतदस्मिन्नस्तीत्याद्यर्थचतुष्टयेविहितःप्रत्ययश्चतुरर्थइत्युक्तः १५२० भावादिष्विति । तथायंघञादिःप्रत्ययोभावादिषुआदिपदेनकर्तृभिन्नकार केषुचबोध्यः परंत्वयंघञादिर्यदाभावेभवतितदावचनस्यतद्रुपलक्षितलिंगस्यचभेदंविशेषंकरोति कृदभिहितोभावोद्रव्यवत्प्रकाशतेइतिसिद्धांतादित्यर्थः इत्यादीत्यद्वंव्याख्यातमिति १५२१

वाक्यशास्त्रेमीमांसायांप्रसिद्धान्पदार्थान्कांश्चित्तथानुवदति वाक्येपीत्यादित्रिंशताश्लोकैः । एवंकथमित्याकांक्षायामेतत्पदमित्यादियोज्यं एतद्वर्णसमुदायात्मकंपदंबोध्यं तथैतत्पदसमुदा
यात्मकंवाक्यं तथायंज्योतिष्टोमादिशब्दःशब्दपरोविष्णुमुच्चारयेत्यादाविवस्वस्वरूपस्यैवोपस्थापकः सहिस्वभिन्नपदानुपस्थितएवयागादिनाऽभेदसंबंधेनान्वेतीतिभावः । तथामीषांज्योति
ष्टोमेनयजेतस्वर्गकामइतिवाक्यगतपदानांविभागतःएकैकप्रयोगकालेशून्यतावाक्यार्थाबोधकत्वलक्षणाकांक्षाइयमनुभवसिद्धावर्ततेऽतएषांमिलितानांवाक्यत्वमितिशेषः १५२२ एकवाक्यलक्षण
परस्यार्थैक्यादेकंवाक्यंसाकांक्षंचेद्विभागेस्यादितिसूत्रस्यार्थमाह इदमितिद्वाभ्यां । इदमुद्भिदायजेतपशुकामइतिवाक्यमुक्तज्योतिष्टोमवाक्याद्वाक्यांतरंभिन्नंवाक्यंभवतियतोविभागेपृथक्प्रयोगेए
तद्गतपदसंघस्यतथापूर्वमुक्तंयज्ज्योतिष्टोमवाक्यंतत्रस्थितस्यचपदसंघस्यपरस्परमाकांक्षानास्तीत्यर्थः १५२३ एकमिति । एकंएकवारंप्रयुक्तंपदंवाक्यंवाएकमेवार्थंवदेत् द्वितीयस्याप्यर्थस्यव
चनेप्रतिपादनेतस्यवाक्यस्यभेदोभवति । विधेयभेदाद्वाक्यभेदइतिसिद्धांतादित्यर्थः १५२४ पदवाक्ययोःस्वरूपघटकानांवर्णानांतत्त्वंमतभेदेनाह वर्णाइतिद्वाभ्यां । वर्णाःसर्वगताविभवोनि
त्याश्चेतिपूर्वमीमांसकावदंति उत्तरमीमांसकानांमतेतुतेवर्णाःपरब्रह्मणोविवर्त्तामाययातत्रब्रह्मणिकल्पिताआकाशादिवद्व्यावहारिकसत्ताशालिनइतिविशेषोभिन्नक्रमस्यवाशब्दस्यार्थः । तेवर्णाइति
शिक्षायुक्तप्रकारेणशुद्धैर्दोषसंकरहीनैःस्थानैःकंठादिभिःप्रयत्नैःस्पृष्टादिभिश्चध्वनिद्वारासंस्कृताभवंतीत्यर्थः १५२५ अभिव्यक्ताइति । तेवर्णास्ताल्वादिस्थानेष्वाभ्यंतरवायुसंयोगैरभिव्यक्ताः

वाक्येप्येवंमहाराजविद्वान्मोहमुपैतिसः ॥ एतत्पदमिदंवाक्यमयंशब्दपरोस्तिह ॥ तथेयंशून्यतामीषांपदानांहिविभागतः १५२२ इदंवाक्यांतरंयस्माद्विभागे
विद्यतेनहि ॥ आकांक्षापदसंघस्यपूर्ववाक्यस्थितस्यहि १५२३ एकमर्थंवदेदेकंवाक्यंवापदमेववा ॥ द्वितीयेवचनेतस्यभेदोभवतिसर्वथा १५२४ वर्णाःसर्वग
तानित्याविवर्त्ताब्रह्मणोपिते ॥ स्थानप्रयत्नैःशुद्धैरितिवासंस्कृताहिते १५२५ अभिव्यक्ताश्चताल्वादिसंयोगैःकर्णमंडलीम् ॥ क्रमादस्यागताःसंतःक्रमबुद्धि
मुपागताः १५२६ संस्कारसचिवोयोयमंत्यवर्णःपदादिषु ॥ पदवाक्यादिबुद्धीनांकारणंसप्रकीर्तितः १५२७ नित्यःशब्दार्थयोस्तद्वत्संबंधःपदवाक्ययोः ॥
अर्थस्याकृतिरूपस्यशब्दःस्याद्बोधकःसदा १५२८ स्मारयंत्यात्मनोह्यर्थंवाक्यगानिपदानिहि ॥ तेनाभिधायकान्याहुःपदानिपदकोविदाः १५२९ वाक्यार्थ
प्रत्ययायैवयद्यप्येषांप्रवर्तनम् ॥ नांतरीयकसंबंधाद्बोधयंतिहितानपि १५३०

संतोऽस्यश्रोतुःकर्णमण्डलींश्रोत्रदेशंक्रमाद्वक्तृमुखजन्यवायुनाश्रोतृश्रोत्रपिधायकवाय्वपसारणक्रमेणाभ्यागताःप्राप्ताश्चसंतःक्रमबुद्धिंक्रमेणोपलब्धिमुपागताःपदरूपावाक्यरूपाश्चकथ्यंतइतिशेषः २६
ननुपदादिरूपेणवर्णानांबोधकत्वंनसंभवतितदुपलब्धीनांयौगपद्यासंभवादितिशंकांवारयति संस्कारेति । पक्षादिषुपदवाक्यमहावाक्येषुवर्तमानोयोयमंत्यवर्णःसएवपदादिजन्यबुद्धीनांकारणत्वे
नोक्तः । कीदृशोंत्यवर्णः संस्कारसचिवःपूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतइत्यर्थः १५२७ औत्पत्तिकसूत्रार्थंपूर्वार्द्धेनाकृत्यधिकरणार्थंचोत्तरार्द्धेनसूचयति नित्यइति । पदवाक्ययोः
संबंधिनौयौशब्दार्थौशब्दोवर्णात्मकोघटकतयातत्संबंधीअर्थस्तुबोध्यतयेतितयोःसंबंधोबोध्यबोधकभावरूपःसनित्यःस्वाभाविकोनतुकेनचित्कृतइत्यर्थः । नन्विदमयुक्तंसंबंधनित्यत्वस्यसंबंधिनि
त्यताधीनत्वाद्वर्णव्यक्तीनांनित्यत्वेप्यर्थव्यक्तीनांनित्यत्वासंभवादित्यतआह अर्थस्येति । आकृतिर्जातिस्तद्रूपस्यजातिरूपस्यैवार्थस्यशब्दःप्रतिपादकोव्यक्तिबोधस्तुलक्षणयाभवतीतिभावः
१५२८ तत्रवर्णानामनुभावकत्वंवाक्यरूपेणैवभवतीत्याह स्मारयंतीति । यतोवाक्यगतानिपदान्यात्मनोऽर्थंपदार्थंस्मारयंतितेनतावताव्यापारेणपदान्यभिधायकान्याहुर्नत्वनुभावकत्वेनेतिसं
बंधः १५२९ वाक्यार्थेति । यद्यप्येषांपदानांप्रवर्तनमुच्चारणंवाक्यार्थबोधायैवक्रियतेतथापिपदानितान्पदार्थानपिबोधयंति कुतः नांतरीयकसंबंधात् अंतराविनाभवतीत्यांतरीयकंतद्भिन्नं
नांतरीयकंअविनाभावीतियावत् । तादृशात्संबंधात्पदार्थबोधनंविनावाक्यार्थबोधनानुपपत्तेरितियावत् १५३०

भट्टसंमतमभिहितान्वयवादमभिनयति तेनेति । तेनपदानांस्मृतिमात्रजननोपक्षीणत्वेनवाक्येवर्तमानैःपदैरभिहिताःस्मारिताअर्थाएवान्वयंवाक्यार्थंयांतिबोधयंति कीदृशेवाक्ये सच्चिदानंदरूपोयमात्मेत्यादिरूपे एतद्विशेषणंप्रकृताभिप्रायेणेत्यर्थः अर्थइत्येकवचनंतुजात्यभिप्रायेणबोध्यं । ननुकियंतःपदार्थावाक्यार्थपूरकाइतिचेद्यावंतआकांक्षिताइत्याह येषामिति । येषांपदार्थानामाकांक्षतासाकांक्षत्वंतेषांतावतांतत्रवाक्यार्थेसंबंधोघटकत्वरूपःकीर्तितइत्यर्थः १५३१ वाक्यार्थःक्रियापदार्थेनैवपूर्यतइतिसूचयंस्तदितरेषांवाक्यार्थापूरकत्वंतद्भूताधिकरणसिद्धांतमाह कारकाख्यमिति । कारकाख्यंकारकंकर्तृकर्मादिरूपमेवाख्यात्यभिदधातीतिकारकाख्यमेतादृशंपदमेकमनेकंवावाक्यंवाक्यभावापन्नंभवेदितिनियतंनियमइत्यर्थः । तथाशेषःषष्ठ्यर्थोप्येकोनेकोवाअवाचकोवाक्यार्थाप्रतिपादकइत्यर्थः । क्रियालक्षणयातुकारकादिपदानामपिवाक्यार्थबोधकत्वंभवति यथावैश्वदेव्यामिक्षेत्यादौदेवतादिवाचकपदानांयागलक्षणयेतिभावः ३२ एकेनक्रियापदेनैकंवाक्यंपूर्यतइत्याह क्रियेति । एकमेवक्रियापदंवाक्येस्यादितिसंबंधः यतोहेतोर्यद्वाक्यंवाक्यांतरापेक्षंवाक्यांतरसापेक्षंनभवतितदेववाक्यमीरितं तत्रवाक्यस्यवाक्यांतरापेक्षायांतुप्रकरणलक्षणप्रमाणंकेचिद्वदंति कीदृशाः केचिद्विपश्चितःसर्वज्ञाद्भट्टपादादन्ये भट्टपादस्तुतत्रमहावाक्यमाह । तदुक्तं ' स्वार्थबोधेसमाप्तानामंगांगित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वंपुनःसंहत्यजायते ' इति । तथाचप्रमाणांतराभ्यु

तेनाभिहितएवार्थोबाह्योयात्यन्वयंसदा ॥ सच्चिदानंदरूपोयमात्मेत्यादिस्वरूपके ॥ येषामाकांक्षतातेषांसंबंधस्तत्रकीर्तितः १५३१ कारकाख्यंपदंवाक्यंनियतंनभवेत्क्वचित् ॥ अनेकंवाभवेदेकंतथाशेषोप्यवाचकः १५३२ क्रियापदंसदैवैकंवाक्येस्यान्नाधिकंक्वचित् ॥ वाक्यंवाक्यांतराकांक्षंनयत्तद्वाक्यमीरितम् ॥ तत्रप्रकरणंकेचिद्वदंत्यन्येविपश्चितः १५३३ क्रियावाक्येषुविज्ञेयौलिङ्लोटौहिविधायकौ ॥ कृत्याश्चवैदिकेतद्वल्लकारःपंचमोहियः १५३४ अपूर्वार्थेविधिर्ज्ञेयोलोकेवेदेचसर्वदा ॥ प्रमाणांतरतोऽप्राप्तेविधिर्वेदेनचान्यथा १५३५ मंत्रब्राह्मणभागेनवेदोद्वेधाप्रकीर्तितः ॥ अंगादिलक्षणैर्युक्तोविध्याद्यर्थसमाहृतः १५३६ विधेरर्थात्परस्त्वर्थोह्यर्थवादइतीरितः ॥ परकृत्यादिभेदेनभिद्यतेससहस्रधा १५३७

पगमेवृथाउभयाकांक्षारूपस्यप्रकरणस्यवाक्यभावकल्पनोपक्षीणत्वादितिभावः ३३ तत्रविधायकवाक्यलक्षणानिसंगृह्णाति क्रियावाक्येष्विति । क्रियायाःसाध्यार्थस्यप्रतिपादकेषुवाक्येषुविधेःप्रवर्तनारूपस्यप्रतिपादकालिङ्लोट्लेदलकाराःकृत्यसंज्ञास्तव्यदादिप्रत्ययाश्चबोध्याइत्यर्थः ३४ अप्राप्तार्थेएवविधिरितिदर्शयन्प्राभाकराभिमतालौकिकापूर्वार्थतांनिरस्यति अपूर्वार्थइति । सर्वत्रापूर्वार्थेविधिर्ज्ञेयः अपूर्वपदार्थमाह प्रमाणांतरतोऽप्राप्तइति प्रमाणांतरेणाज्ञातेइतितदर्थः विधिर्लिङाद्यर्थोवेदेऽन्यथालोकाद्विलक्षणोनचभवति तथाचप्राभाकराभिमतमलौकिकमपूर्वंविध्यर्थत्वेननस्वीकार्यमितिभावः ३५ वेदपदार्थमाह मंत्रेति अंगेषुशिक्षाकल्पादिषुआदिपदग्राह्यमीमांसादिशास्त्रेषुचप्रदर्शितानियानिलक्षणानिअपौरुषेयवाक्यत्वादीनितैर्युक्तोवाक्यसमूहोवेदपदार्थोबोध्यः कीदृशोविध्याद्यर्थैर्विधिनिषेधदेवतादिस्वरूपात्मकार्थैर्युक्तः सद्वेधामंत्ररूपेणब्राह्मणरूपेणचेत्यर्थः तत्रमंत्रलक्षणंमंत्रत्वेनवैदिकप्रसिद्धत्वंतद्भिन्नत्वंब्राह्मणत्वमितिबोध्यम् ३६ अर्थवादंलक्षयति विधेरिति । विधेर्विधायकवाक्यस्यार्थाद्विधेयरूपात्परोभिन्नोर्थोऽर्थवादइतिपदोक्तेनवेदभागेनईरितउक्तइत्यर्थः । सचार्थवादःपरकृतिप्रभृतिरूपैरनेकधा तत्रपरकृतिर्नामपरकीया तत्रहेतुर्यथाशूर्पेणजुहोतीत्यत्रतेनह्यन्नंक्रियतेइतिहेतुनिर्वचनं साधारणीकृतिर्व्यापारः यथादर्शयागप्रकरणेबहुनाम्नःकस्यचिद्वृत्तमुक्तंमापानेवप्रह्वांपचतेति आदिपदेनहेतुनिर्वचनादयोग्राह्याःयथावज्रहस्तःपुरंदरः १५३७

गुणवादाख्यमर्थवादभेदंलक्षयति अपूर्वमिति । अपूर्वमप्यर्थंयदिप्रमाणांतरैर्विरुद्धंभापतेसोर्थवादोगुणवादइत्युक्तः एतेनप्रमाणांतरसिद्धार्थाभिधानेनुवादत्वंप्रमाणांतरसंवादविसंवादयोरभावेभूतार्थ वादत्वमितिसूचितं १५३८ पूर्वमीमांसाद्वितीयाध्यायप्रसिद्धस्यानुषंगाधिकरणस्यतात्पर्यमाह क्रियापदमिति । यत्रवाक्येक्रियापदंनदृश्यतेतत्रपूर्वस्मादुत्तराद्वावाक्यादनुषंगस्तत्रस्थितस्यैवबुद्ध्यापरामर्शरूपःकार्यः एवंकारकवाचकपदानामप्यनुषंगइतिकेचिद्वाप्यकारादयआहुरित्यर्थः १५३९ अध्याहारादिस्थलमाह सन्निधानमितिद्वाभ्यां । यत्रवाक्येउपयोगिपदघटितस्यकस्यचित्पूर्वस्योत्तरस्यवावाक्यस्यसन्निधानंसामीप्यंनास्तितत्रैवाध्याहारोऽनुक्तपदप्रक्षेपरूपःकार्यइतिसंबंधः यथाइपेत्वेतिमंत्रेच्छिनद्मीतिपदाध्याहारः हेशाखेइपेअन्नायत्वांछिनद्मीतितदर्थः ४० आकांक्षादीति । तथाआकांक्षायोग्यतादिवशात्पदानांवचनादीनांविपर्ययःकर्तव्यः यथापशुयागमंत्रे ' संतेप्राणोवातेनगच्छतांसमंगानियजत्रैः ' इत्यत्र हेपशोतेप्राणोवातेनसंगच्छतांसंगतोभवेत् तथाअंगानिचतेयजत्रैर्यज्ञोपकरणैःसंगच्छन्तामितिवचनव्यत्ययः एवंलोकेप्ययंन्यायःसाधारणइत्यर्थः । आदिपदेनवाक्यान्यथात्वकरणरूपव्यवधारणकल्पनाग्राह्या तदुदाहरणंयथा यावतोऽश्वान्प्रतिगृह्णीयात्तावतोवारुणान्चतुष्कपालान्निर्वपेदित्यत्रप्रतिगृह्णीयादित्यस्यप्रतिग्राहयेदित्यर्थइति १५४१ लोकवेदाधिकरणार्थमाह संगतीति । यतःसर्वःशब्दःसंगतिग्रहसापेक्षः संगतिश्चपदपदार्थसंबंधरूपालोकत एवग्राह्या अतोयेलौकिकाःशब्दास्तएववैदिकास्तेषांभूयोवयवसामान्यशालिनांयत्किंचित्स्वरादिवैलक्षण्यंनधर्मिभेदापादकमितिभावः १५४२ एवंपदपदार्थानांलोकवेदयोरविशेषेपिवाक्यार्थोवेदेऽ

अपूर्वमपिचेदर्थंविरुद्धंभापतेक्वचित् ॥ प्रमाणैर्गुणवादाख्यःसोर्थवादइतीरितः ३८ क्रियापदंहियद्वाक्येदृश्यतेनैवकर्हिचित् ॥ कार्यस्तत्रानुषंगोस्यवाक्यात्पूर्वापरास्थितात् ॥ कारकाणांपदेष्वेवंकेचिदाहुर्मनीषिणः ३९ सन्निधानंनयत्रास्तिवाक्येवाक्यस्यकस्यचित् ॥ अध्याहारस्तुतत्रैवकार्योनान्यत्रकर्हिचित् ४० आकांक्षादिवशात्तद्वद्वचनव्यत्ययादिकम् ॥ एवंलोकेचसर्वत्रसाधारणमुदीरितम् ४१ संगतिग्रहसापेक्षःशब्दःस्वार्थस्यबोधकः ॥ यएवलौकिकाःशब्दास्तेवैदिकाश्चतएवहि ४२ विध्यर्थोधर्मउदिष्टोब्रह्मवाऽपूर्वरूपकम् ॥ अर्थवादादिकंसर्वमानंविध्यर्थईरितम् ॥ स्तुतिनिंदादिकंकृत्वाप्रवृत्तिंजनयेद्यतः ४३ विनियोगःप्रयोगश्चह्युत्पत्तिश्चाप्यधिक्रिया ॥ चतुर्विधंहिविज्ञेयंविधिवाक्यंमनीषिभिः ४४ केनकिंकथमित्येतदंशत्रयमुदीरितम् ॥ भावनायाश्चवाक्यार्थेऽथापूर्वंचेष्टसाधनम् ४५ कर्माणिप्राकृतान्यत्रकानिचिद्वैकृतान्यपि ॥ इदमेवंप्रकुर्वीतेत्यादिप्राकृतमीरितम् ॥ एतद्वदिदमप्यत्रयदुक्तंवैकृतंहितत् १५४६

पूर्वएवेत्याह विध्यर्थइति । विधेरज्ञातज्ञापकत्वलक्षणविधित्वशालिनोवेदवाक्यस्यार्थोद्विविधः पूर्वकांडेधर्मरूपः उत्तरकांडेचब्रह्मरूपउभयोरपूर्वत्वात्प्रमाणांतराविषयत्वादित्यर्थः । अर्थवादमंत्रादिकंतुविधेयस्तुतिंतदितरनिंदांदेवतादिस्मृतिंचकृत्वाप्रवृत्तिंजनयत्सद्विध्यर्थेविधिवाक्यार्थएवप्रमाणमित्यर्थः १५४३ विधिभेदानाह विनियोगइति । कर्मस्वरूपबोधकउत्पत्तिविधिः । अंगांगिभावबोधकोविनियोगविधिः । प्रयोगःक्रमेणानुष्ठानंतद्बोधकःप्रयोगविधिः । अधिक्रियाफलसंबंधस्तद्बोधकोधिकारविधिरित्येवंविधिवाक्यंचतुर्विधमित्यर्थः १५४४ एकवाक्यताप्रयोजकमाकांक्षात्रयंतथाऽपूर्वकल्पनाप्रकारंचदर्शयति केनेति । भावनापूर्वोत्पत्त्यनुकूलव्यापाररूपतात्प्रतिपादकस्यवाक्यस्यार्थेसाधनंसाध्यमितिकर्तव्यताचेत्याकारकमंशत्रयंकेनेत्याद्याकारकाकांक्षाविषयभूतमुक्तंतेननवाक्यभेदइतिभावः । अथवाक्यार्थबोधोत्तरमिष्टस्यस्वर्गादेःसाधनंसाधनस्ययागादेर्व्यापारभूतमपूर्वंकल्पनीयमित्यर्थः १५४५ कर्मणांभेदमाह कर्माणीति । कर्माणिद्विविधानिप्राकृतानिवैकृतानिचेति । तत्रप्रकृतौसमग्रांगोपदेशवतियागेदर्शपूर्णमासादाविदंकर्मैवंकुर्वीतेत्येवंविधीयमानंप्रयाजादिप्राकृतमित्युच्यते । विकृतौसौर्यादियागेप्रकृतिवद्विकृतिःकर्तव्येत्येवंविधीयमानमंगजातंवैकृतमित्युच्यतइत्यर्थः १५४६

७८

शब्दादिभिरिति । शब्दःशब्दांतरं आदिपदेनाभ्याससंज्ञासंख्यागुणप्रकरणांतराणिगृह्यंते उदाहरणानियथाक्रमं दद्यात्जुहुयादिति समिधोयजतितनूनपातंयजतीति अथैषज्योतिरथैषसर्वज्योतिरिति सप्तदशप्राजापत्यानालभेतेति वैश्वदेव्यामिक्षावाजिभ्योवाजिनमिति कुंडपायिनामयनेमासमग्निहोत्रंजुह्वतीत्याद्याकाराणिबोध्यानि तानिचकर्माणिकानिचिदंगानिशेषभूतानियथाप्रयाजादीनिका निचिदंगीनिप्रधानानियथाआग्नेयादीनि । तेषामंगांगिभावेप्रमाणानितुश्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यारूपाणिबोध्यानीत्यर्थः । एतेनप्रयोज्यप्रयोजकभावश्चतुर्थाध्यायार्थोपिसूचितः । यद र्थमंगस्यानुष्ठानंतत्प्रयोजकंयथापुरोडाशकपालेनतुषानुपवपतीत्यत्रपुरोडाशएवकपालप्रयोजकःकपालःप्रयोज्यइति ४७ पंचमषष्ठयोरर्थंसूचयति शब्दादिक्रमतइति । तेषांक्रमेणामनुमानमंगांगि भावनिश्चयोत्तरंमानंपरिमाणमियत्तारूपंशब्दादिभिःश्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपैःषड्भिःप्रमाणैर्बोध्यमित्यर्थः । उदाहरणानिमीमांसाप्रकरणेषुप्रसिद्धानि । कीदृशंकर्मणांपरिमाणं त्रैवर्णिकैः सपत्नीकैरधिकारिभिर्व्यवस्थितंव्यवस्थयाक्रियमाणं । कीदृशैरधिकारिभिरेकानेकैः यागेष्वेकसंख्याकैःसत्रेष्वनेकसंख्याकैरित्यर्थः ४८ सप्तमाष्टमयोरर्थंसूचयति द्रव्यादीति । दर्शकस्येतिकर्तरि षष्ठी तथाचदर्शकेनविवेकिनाविकृतिगतंद्रव्यदेवतादिकंदृष्ट्वाइयंविकृतिरस्यकर्मणइतिविशेषतःप्रकृतिविकृतिभावोज्ञेयइत्यर्थः । यथासौर्ययागेएकदेवताकत्वमोषधिद्रव्यकत्वंचनिश्चित्याग्नेयपुरोडाश विकृतित्वंज्ञायतइति एतेननोदनालिंगाख्यप्रमाणप्रदर्शनेनप्रत्यक्षवचनातिदेशोनामातिदेशश्चसूचितः तयोरुदाहरणंचसमानमितरत्तुइष्येनेनेतिकुंडपायिनामयनेमासमग्निहोत्रंजुह्वतीतिचबोध्यम् ४९

शब्दादिभिर्विभिन्नानिकर्माण्येतानिसर्वशः ॥ अंगांगिभेदभिन्नानिनानाशाखागतानिच ॥ श्रुत्यादिभिस्तुनियतातेषामंगांगितामता ४७ शब्दादिक्रमतस्तेषा मनुमानंसमीरितम् ॥ त्रैवर्णिकैःसपत्नीकैरेकानेकैर्व्यवस्थितम् ४८ द्रव्यादिदर्शनेनैवदर्शकस्यविशेषतः ॥ अस्येयंविकृतिर्ज्ञेयानान्यथासामनीषिभिः १५४९ विकृतौसर्वदेवोहःपदादीनांमनीषिभिः ॥ बाधश्चखलुविज्ञेयस्तत्रसर्वेषुकर्मसु १५५० अन्यार्थंहिकृतेनस्यादुपकारःपरस्ययः ॥ सप्रसंगःपरंतंत्रमेकंनानार्थसि द्धये १५५१ यइत्यादिपुमान्वक्तिह्यन्यच्चापिसदावदेत् ॥ ब्रह्मज्ञानेयतःसंतियज्ञादीनिसहस्रशः ॥ साधनान्यहमेवैतत्सर्वंवेद्मिनचापरः १५५२ इदंत्र्यवयवंवा क्यमेतद्व्यवयवंतथा ॥ पंचावयवमेतत्स्यात्साधनंचेतरन्नहि १५५३

नवमदशमयोरर्थंसूचयति विकृताविति । विकृतियागेप्रकृतितःप्राप्तमंत्रादिगतानांपदपदावयवसामसंस्काराणामूहःप्रधानानुसारेणरूपांतरापत्तिरूपोज्ञेयः तथातत्रविकृतौकर्मसुविशेषविहितांगैः सर्वेषुपूर्णेषुसत्सुप्राकृतांगानांबाधोनिवृत्तिरूपोविज्ञेयः यथाग्नयेजुष्टंनिर्वपामीतिमंत्रस्यसौर्ययागेसूर्यायजुष्टमित्यादिप्रयोगरूपऊहःशतकृष्णलचरौचव्रीहीणांतत्संस्काराणामवहननादीनांचबाधः ५० द्वादशैकादशयोरर्थमाह अन्यार्थमिति । यत्रान्यार्थकृतेनांगेनान्यस्योपकारःसप्रसंगइत्युच्यते यथापशुयागेपश्वर्थंकृतैःप्रयाजैःपुरोडाशस्योपकारइति यत्रत्वेकमेकवारंकृतंकर्मनानाप्रधानानामंग भूतंतत्तंत्रमित्युच्यते यथापूर्णमासेआग्नेयोपांशुयाजाग्नीषोमीयाख्यप्रधानानांसकृदनुष्ठितप्रयाजाउपकारकाः ५१ पूर्वमीमांसार्थमुपसंहृत्योत्तरमीमांसापदार्थांस्तथोपलक्षयति यइत्यादीति । यःपंडितंमन्यइत्यादिपूर्वमीमांसापदार्थजातंसदसिवदतिसोन्यच्चशास्त्रांतरार्थजातमेवंवदेत् । एवंकथं ब्रह्मज्ञानसाधनानामहमेववेद्मीति । ज्ञात्वापिसाधनाननुष्ठानेनत्रपतेइत्यतिचित्रमितिभावः ५२ प्रमाणशास्त्रेन्यायेप्रसिद्धान्कांश्चित्पदार्थान्व्यामोहकतयानुवदति इदमितिपंचभिः । इदंप्रतिज्ञाहेतूदाहरणरूपमुदाहरणोपनयनिगमनरूपंवाव्यवयवंपरार्थानुमानवाक्यंमीमांसकैरुच्यते इदंउदा हरणोपनयरूपंद्व्यवयवंबौद्धैरुच्यते तथापिएतन्न्यायशास्त्रेप्रसिद्धंप्रतिज्ञादिनिगमनांतमेववाक्यसाधनंसाध्यनिश्चयोपयोगिस्यात्पूर्णत्वादित्यर्थः १५५३

अनुमानमूलव्याप्तिज्ञानमूलत्वेनप्रधानस्यतर्कस्यपङ्भेदानात्माश्रयान्योन्याश्रयचक्रकाऽनवस्थाव्याघातप्रतिबंदिरूपान्प्राचीनसंमतानभिनयति अयमिति । तार्किकएवंपरान्दूषयति एवंकथ मित्याकांक्षायांत्वन्मतेअयमात्माश्रयाख्यस्तर्कइत्यादियोज्यं । तत्रस्वसिद्धौस्वापेक्षयैवबाधकस्तर्कआत्माश्रयइत्युच्यते यथास्वभाववादिनंस्वयंजन्यतांकार्याणांस्वीकुर्वंतंप्रत्युच्यते । यदिकार्यंस्वजन्यंस्यात्तर्हिस्वपूर्वकालवृत्तिस्यादिति । एवंपरस्परापेक्षणेबाधकस्तर्कोऽन्योन्याश्रयः अपेक्षणद्वयव्यवहितेपूर्वापेक्षणेबाधकस्तर्कश्चक्रकं अपर्यवसितोत्तरापेक्षणेबाधकस्तर्कोनवस्थेति प्रसंगहतोव्याघातः यथायदिवन्हिःशीतोनस्यात्तदावन्हिरेवनस्यादित्यादिः यंप्रकृत्येदमुक्तं 'संभावितःप्रतिज्ञायांपक्षःसाध्येतहेतुना । नतस्यहेतुभिस्त्राणमुत्पतन्नेवयोहतः' इति । प्रतितर्कःप्रतिबंदीतुल्यायुक्तिरितियावत् तयाहतःप्रतिरुद्धः यथाशब्दोयदिनित्योनस्यात्तदाश्रावणोनस्यादितिमीमांसकेनोक्तेनैयायिकआह शब्दोयद्यनित्योनस्यात्तदाकृतिसाध्योनस्यादिति १५५४ असत्तर्कोनाह इष्टापत्त्येति । यत्रतर्कैपरस्येष्टमेवसिद्ध्यति यथायदिविषयाणांभेदोज्ञानान्नस्यात्तदातेषांसत्यत्वंनस्यादित्यद्वैतवादिनंप्रत्यापादनेतादृशस्तर्कइष्टापत्त्याग्रस्तउच्यते यश्चतर्कःप्रतिवादिनोऽनिष्टस्याकृतौअकरणेपर्यवसन्नःपरानिष्टानारंभकइतियावत् सोपितथाइष्टापत्तिग्रस्तवदसन्नित्यर्थः यथाव्यवहारेयदिकर्मवैचित्र्यंनस्यात्तदासृष्टिवैचित्र्यंनस्यादितिकर्मवैचित्र्यसाधनेपरमार्थाद्वैतवादिनोनकिंचिदनिष्टमिष्टंवेति यत्राव्याप्येनाव्यापकापादनंयथावन्हिनाधूमस्यतर्कोव्याप्तिहीनः यत्रतुव्यापकंप्रथमंनिर्दिश्यव्याप्यमापाद्यते यथायदिधूमोनस्यात्तदावन्हिर्नस्यादिति

अयमात्माश्रयस्तर्कोह्ययमन्योन्यसंश्रयः ॥ चक्रग्रहस्तएषोपिह्यनवस्थाहतोपरः ॥ प्रसंगहतएषस्यात्प्रतितर्कहतोपरः १५५४ इष्टापत्त्यास्वयंग्रस्तएषोऽनिष्टाकृतौतथा ॥ व्याप्त्याहीनस्त्वयंतर्कोविपरीतोप्ययंतथा ॥ अनुग्राहकशून्योयमयंस्यादप्रयोजकः १५५५ आपादकोत्रविज्ञेयोहेत्वाभासोपिदुर्बलः ॥ आपाद्यंचतथैवैतदाश्रयादिविवर्जितम् १५५६ दृष्टांतोनास्तिकोप्यत्रसमीचीनोहियोभवेत् ॥ उदाहरणमस्योक्तंव्यर्थमेवात्रदुर्धिया ॥ नस्यान्निगमनस्यास्यह्युपयोगोत्रकश्चन १५५७ इत्यादितर्कसंसक्तचित्तश्चंचलधीरयम् ॥ एतत्सर्वमहंवेदनान्योवेत्तीतिमन्यते १५५८ एवंमन्वानआत्मानंगर्वपरमुपागतः ॥ दंतदर्शश्वभिःश्वेवव्यर्थक्रोधमुपाव्रजेत् १५५९ क्षुधानिद्रापिपासावावहुकस्यनजायते ॥ अहर्निशंप्रसार्याऽऽस्यंक्रोष्टेवैषोत्रवर्तते १५६० अकारणमिमान्सर्वान्विदुषोब्रह्मचिंतकान् ॥ अधिक्षिपत्ययंतद्वदर्थकर्तॄन्हसत्यपि १५६१

सतर्कोविपरीतउच्यतइति यस्यतर्कस्यानुग्राहकंप्रमाणांतरंनास्तिसोनुग्राहकशून्यः अयमनुग्राहकशून्यएवाप्रयोजकउच्यतइत्यर्थः यथायदिनित्यःफलारंभकोनस्यात्तदास्वरूपयोग्यएवनस्यादित्यादिः १५५५ हेत्वाभासान्सूचयति आपादकइति । साध्यस्यापादकःसाधकतयोपन्यस्तोयंहेतुर्हेत्वाभासोयतोदुर्बलोव्याप्तिपक्षधर्मतारूपेणबलेनहीनः तथात्रतवानुमानेआपाद्यंसाध्यंआश्रयेणादिपदग्राह्ययाप्रसिद्ध्याचहीनमित्यर्थः १५५६ दृष्टांतइति । दृष्टांतस्यसमीचीनत्वंसाध्यादिमत्तयोभयवादिप्रसिद्धत्वं उदाहरणंउदाहरणसंज्ञंवाक्यमत्रानुमानेमंदबुद्धिनावादिनाव्यर्थमुक्तंविपरीतत्वेनव्याप्त्यनिश्चायकत्वादितिभावः तथाहेतुनिर्देशोत्तरप्रतिज्ञावचनरूपस्यनिगमनस्यविपरीतःप्रयोगोव्यर्थइत्यर्थः १५५७ वर्णितप्रपंचस्यप्रकृतोपयोगमाह इत्यादीत्यादिना । अयंशास्त्रवासनावान्मुक्तायितर्केष्वेवसक्तचित्तोरजसाव्याप्तत्वादात्मानंसर्वज्ञंमन्यतइत्यर्थः १५५८ एवमिति । एवंसर्वज्ञतयाआत्मानंमन्यमानोऽतिमानीदंतदर्शीसकलान्दंतान्दर्शयन्व्यर्थंक्रुद्ध्यति सर्वदंतदर्शनेदृष्टांतःश्वभिर्वेष्टितःश्वेति कर्मणिदृशिविदोःसाकल्यइतिणमुल् १५५९ अनात्मविदःशास्त्रज्ञत्वेपीतरजंतुभ्यःकोविशेषःक्षुत्पिपासादिधर्मैःसाम्यात् यदितुवाचाटत्वमात्रंविशेषस्तदावहुक्रोशनेनलब्धक्रोष्टुनाम्नाशृगालेनसाम्यमित्याह क्षुधेति । दिवाक्षुत्पिपासादिभिर्नक्तंनिद्रयाचसर्वजंतुप्रभूयस्याप्तमुखप्रसारणसाम्येक्रोशनाधिक्यंक्रोष्टुःसाम्यातिशयंपुष्णातीतिभावः एषपंडितंमन्यः १५६० अकारणमिति । अयंपंडितमानीअकारणंनिष्प्रयोजनंविवेकिनोजनानधिक्षिपतिअवजानातितथाअर्थकर्तॄन्व्याख्यातॄनुपहसति, १५६१

पिशुनइति । आरोप्यासतोपिकल्पयित्वासाधूनांदोषानयंपंडितपाशोवदेदित्थंवक्ष्यमाणविधया १५६२ इत्थंपदार्थमभिनयति पाणिनिरिति । अत्रएतत्सूत्रनिर्माणे तृतीयात्रपदस्यएत त्सूत्रइत्यर्थः इदंपदमहंसर्वंवेद्मीतिभावः १५६३ वेदेति । इदंवेदवाक्यमिहप्रकरणेप्रमत्तवाक्यवदसंगतमतःकेनचिदत्रप्रक्षिप्तंभविष्यति अथवानव्यर्थंसार्थकमेवभविष्यति एतदर्थमहमेववे द्मीतिभावः १५६४ स्वरेति । आदिपदेनपदादिग्रहः तथास्वानभ्यस्तेस्वराद्युच्चारणप्रकारेवेदपाठकानेपपंडितमानीनिंदति कथमित्याकांक्षायामाह अहोइत्यादि १५६५ वदन्निति । ईदृशगर्वाढ्योवदन्नात्मश्लाघांकुर्वन्गुरुमप्यवजानाति तदभिनयति यादृशीति । मद्बुद्धिसदृशीबुद्धिर्मद्गुरोर्दुर्लभैव तस्याब्रह्मण्यपिसंशयएवेत्यर्थः १५६६ तत्रनिरर्गलरमणीयवाक्यप्रवृ त्तिहेतुमाह समुद्रस्येति । पदवाक्यशास्त्रयोरुक्तानिलक्षणानियासांतास्तथा १५६७ एवंविधस्यबहुभाषणंभाराक्रांतक्रोशनसमंमत्वाविवेकिभिःसउपेक्षणीयइत्याह इत्यादीति । विद्वत्तां दुःखदत्वाद्भारसमांप्राप्यइत्याद्युक्तप्रकारंबहुधायत्क्रोशत्यतोयंदुर्जनइतिसंबंधः १५६८ केचित्प्रव्रजिताअप्युक्तविधपांडित्यगर्वभारंवहंतितानुद्दिश्याह गृहेति । जंतुभिर्दुस्त्यजंगृहादित्यक्त्वा

पिशुनोदुर्जनोयद्वदारोप्यापित्वदेदयम् ॥ दोषान्साधुजनस्येत्थंदुर्वादीह्येषनित्यशः १५६२ पाणिनिस्त्वत्रविभ्रांतोभ्रमाच्चित्तोत्रजैमिनिः ॥ अविचार्य्यैवमाहात्रभग वान्बादरायणः ६३ वेदवाक्यमिदंमत्तशक्येनसदृशंत्विह ॥ क्षिप्तंत्राकेनचिन्नैवव्यर्थमेतद्भविष्यति ६४ स्वरवर्णक्रमादौचपाठकानेषनिंदति ॥ अहोएतैस्त्वयंवेदः सर्वोप्यत्रविनाशितः ६५ वदन्नीदृशगर्वाढ्योगुरुमप्यवमन्यते ॥ यादृशीवर्ततेबुद्धिर्ममतीक्ष्णानतादृशी ॥ मद्गुरोर्ब्रह्मणोवैषानासीदस्तिभविष्यति ६६ समुद्रस्ये वकल्लोलाममवाचोमनोरमाः ॥ निर्यांत्यविरतंचित्राःपदवाक्योक्तलक्षणाः ६७ इत्यादिबहुधाप्राप्यविद्वत्ताभारमातुरः ॥ क्रोशत्यतोऽतिनिंद्योयंदुर्जनोरासभोय था ६८ गृहक्षेत्रकलत्रादिदुस्त्यजंसर्वजंतुभिः ॥ त्यक्त्वापिनत्यजत्येषगर्वपर्वतमद्भुतम् ६९ दध्योदनंयथाकश्चिद्भारभृन्मस्तकास्थितम् ॥ परित्यज्यवहेद्व्यर्थंपापाणं हस्तिसन्निभम् ७० तथासुखकरंसर्वंत्यक्त्वादारादिकंपुमान् ॥ दुःखदंगर्वमत्यंतंवहत्येपसुदुर्वहम् ७१ नानुध्यायेद्बहूनशब्दान्स्वात्मनेहितकृत्ततः ॥ शब्दानांबहु शोध्यानंवाचोविग्लापनंहितत् ७२ चतुःस्तनींकामधेनुंक्षीरिणींजननीसमाम् ॥ वाचंग्लानिंनयेत्कोवाचेतनःपुरुषोभुवि ७३ तस्मात्प्रज्ञांविधायैवब्रह्मणिस्वा त्मरूपिणि ॥ व्यापारमिंद्रियाणांहिजह्यादेवाविचारयन् ७४ अथचेन्मनसोत्यंतचंचलस्यप्रमाथिनः ॥ अशक्योनिग्रहःकर्तुंतदावक्ष्यामितेनृप ७५ सएवैषम हानात्माह्यजोयःपरिकीर्तितः ॥ प्राणेज्ञानमयोयोयमाकाशोयोहृदिस्थितः ॥ यस्मिन्नज्ञानमयःशेतेसुषुप्तेसातिसर्वदा १५७६

पिभारेणदुःखदत्वात्पर्वतखंडसमंगर्वंनत्यजतीत्यत्यंद्भुतमित्यन्वयः १५६९ गर्वपर्वतमित्येतत्स्फुटयति दध्योदनमिति । यथाकश्चिद्भारभृत्भारवाहकउपकारकंदध्योदनंविहाययमहापाषाणं शिरसिधारयेत्तथोपकारकंदारादिकंत्यक्त्वागर्वरूपमहापापाणस्यधारणंवृथेतिद्वयोरर्थः १५७० । १५७१ फलितमाह नानुध्यायेदिति । विग्लापनंवृथाश्रांतीकरणम् १५७२ वाग्रूपांधेनुः प्रसादितैवामृतंस्रवतिनतुग्लानिंनीतासतीत्याह चतुरिति । स्वाहाकारवषट्कारस्वधाकारहन्तकाररूपादेवपितृमनुष्याणांसप्तमाध्यायोक्तविधयातर्पकाश्चत्वारःस्तनायस्याःसातथातामभृत मयक्षीरप्रदांवाग्रूपांधेनुंकोविवेकीग्लानिंप्रापयेदित्यर्थः १५७३ केनवाग्धेनुस्तुष्यतीत्याकांक्षांपूरयन्निगमयति तस्मादिति । स्पष्टम् १५७४ सवाएषइत्यादिब्राह्मणवाक्यंसंगमयति अथेति । अथेतिपक्षांतरपरिग्रहे यदित्वंनिर्गुणेमनसोविलयरूपंनिग्रहंकर्तुंनशक्नोपितथापिसगुणेश्वराभेदचिंतनरूपमुपायांतरंवक्ष्यामीत्यर्थः १५७५ सवाइत्यादेरसंभेदायेत्यंतस्यात्मप्रभावकथ नपरस्यार्थमाह सएवेत्यूनविंशतिश्लोकैः । आत्मामहान्परिपूर्णोऽजोजन्मादिविकारहीनःसएव सकः योऽतीतग्रंथेकीर्तितः । कथंकीर्तितइत्याकांक्षायामाह प्राणइत्यादि । प्राणेइतिज्ञातावेकवचनं—

—तथाचयः प्राणेषुवायुभेदेषुइंद्रियेषुचसन्निहितोज्ञानमयोबुद्धितादात्म्यापन्नउक्तस्तथाहृदिहृत्कमलांतराकाशेआकाशरूपःअजातशत्रूपाख्यानउक्तः यस्मिन्हृदंतराकाशोविज्ञानमयोनीवः यस्मा लुग्वल्लोपेपंचमी यस्मादायजाग्रदादौआधाराधेयभेदवान्व्यपदिश्यतेसुप्तिसमयेतुसविज्ञानमयोयेनाभिन्नएवभवतिसमहानजःसर्वेषामात्मतयामयोक्तइत्यर्थः ७६ । ७७ आत्मनोमायाशबलस्यैश्वर्यंविशदयंस्तत्रवशित्वंद्वेधाह सर्वमितिद्वाभ्यां । यस्यात्मनोवशेऽधीनत्वेसर्वंभूतभौतिकात्मकंजगद्वर्ततेयथामंत्रवादिनःसिद्धमंत्रस्यवशेलोकइत्यर्थः १५७८ अयंवेति । अथवाअयमात्मासर्वस्यहृदयागारंपरित्यज्यनयातीत्यनेनवश्यसाधर्म्येणवशीत्युच्यते वशोऽधीनत्वंतद्वत्त्वादितिभावः । तत्रजननीदृष्टांतः 'वशोजन्मस्पृहायत्तेष्वधीनत्वप्रभुत्वयोः' इतिहैमः १५७९ तत्रहेतुभूतंप्रभुत्वलक्षणमीशत्वंतदुपपादकमधिपतित्वंचाह सर्वमीष्टइति । सोयमात्मासर्वंजगदीष्टेप्रशास्ति तथाधिष्ठायप्रभुर्भूत्वापातिचयथासूर्यःस्ववंश्यराजरूपेणपातितद्वदित्यर्थः १५८० अस्यशुभाशुभकर्मभिर्वृद्धिहानीनभवतइत्याह कर्मणेतिद्वाभ्यां । यथालोकेसुकृतीयशःप्रभृतिभिर्वर्धमानोभवतितथानायमित्यर्थः यथाचपातकीयशआदिनाकनीयान्हीनोभवतितथानायमिति

अयंज्ञानमयोयस्मादाधाराधेयभेदवान् ॥ अभिन्नःसुप्तिसमयेमयोक्तःसमहानजः १५७७ सर्वमेतज्जगद्राजन्वशेयस्यात्रवर्तते ॥ मंत्रवादिवशेयद्वत्सकलंभूतभौतिकम् १५७८ अयंवासकलैर्जीवैर्हृदिस्वस्यवशीकृतः ॥ अपत्यैर्जननीयद्वत्स्नेहस्निग्धावशीकृता १५७९ सर्वमीष्टेजगत्सोयंस्वगृहंहिगृहीयथा ॥ आधष्ठाय जगत्सर्वंपातिचैवंयथारविः १५८० कर्मणासुकृतेनैषनाधिकःस्यात्कथंचन ॥ सुकृतीहियथालोकेभूयान्स्याद्यशआदिना १५८१ कर्मणापातकेनायंकनीयान्न भवेत्क्वचित् ॥ लघुर्भवतिपापेनयथापापरतोजनः १५८२ एषसर्वेश्वरोदेवःपुण्यपापविवर्जितः ॥ राजादिवज्जगत्सर्वमीष्टेवैषम्यवर्जितः १५८३ भूताधिपतिरप्येषयद्वद्देषदिवाकरः ॥ भूतपालोप्ययंयद्वच्छिशूनांजननीयथा १५८४ एषदेवःस्वयंज्योतिःपरमानंदरूपभाक् ॥ वर्णाश्रमादिमर्यादाधारकःसेतुरीरितः ॥ १५८५ पारावारांतरेयद्वन्नीरपूरस्यधारकः ॥ नद्याःकाष्ठादिजोदृष्टःसेतुःसकलजंतुभिः १५८६ एषांभूरादिलोकानांतद्वदेषविधारकः ॥ असांकर्यायसर्वेषां स्वेनस्वेनात्मनासदा १५८७ यद्ययंनभवेल्लोकेमर्यादानांविधारकः ॥ महाभूतान्यमून्यत्रकोनामविनिवारयेत् १५८८ बलवीर्यादिसंपन्नान्क्षत्रियान्पावकोपमान् ॥ शस्त्रास्त्रकोविदांस्तद्वत्सुशूरानकुतोभयान् ॥ धर्मेप्रवर्तयेदेतान्कोन्योनभ्यधिकान्भुवि १५८९ ब्राह्मणान्क्रोधसंदीप्तान्शापानुग्रहकारिणः ॥ निवारयेच्चकोनामदहतोनिखिलंजगत् १५९०

द्वयोरर्थः १५८१ । १५८२ कर्मणाहानिवृद्ध्योरभावेहेतुतयासर्वेश्वरत्वादीन्योजयति एषइतिद्वाभ्यां स्पष्टंद्वयम् १५८३ । १५८४ अस्यसकलमर्यादाधारकत्वेनसेतुतांप्रतिपादयति एष देवइत्यादिना १५८५ सेतुपदार्थमाह पारेति । यथानद्याःपारस्यपरतीरस्यअवारस्यापरतीरस्यचांतरेमध्येकाष्ठादिनिर्मितःसेतुर्जलप्रवाहस्यमर्यादाकरःसर्वलोकप्रसिद्धइत्यर्थः १५८६ दार्ष्टांतिकंयोजयति एषामिति । तथाएषआत्माएषांपृथिव्यादिलोकानांस्वेनस्वेनात्मनारूपेणविधारकोव्यवस्थापकःअसंकराय स्वार्थेष्यञ् १५८७ विधारकत्वंविशदयति यदीति । यद्ययमात्मामर्यादाकरोनभवेत्तदापृथिव्यादिमहाभूतानिमर्यादामुल्लंघमानानिकोवारयेदिति १५८८ बलेति । तथाबलादिसंपन्नांस्तेजस्विनःक्षत्रियान्प्रियव्रतादीन्भुविअनभ्यधिकान्स्वाधिकवर्जितानेतरमात्मनोन्यःकोधर्मेप्रवर्तयेदिति १५८९ ब्राह्मणानिति । तथादुर्वासःप्रभृतीन्ब्राह्मणानजगद्दाहात्कोवारयेदिति १५९०

आशीति । तथासर्पवत्क्रोधनान्सिंहादींस्तामसान्जंतून्सकलप्राणिहिंसोद्यमात्कोवारयेदिति ९१ अंभोनिधीनिति । तथासमुद्रान्जगदाचमनंप्रत्युद्यतान्कोवारयेदिति जगदाचमनेसतीतिपाठेजगत आचमनेग्रासेसतिप्रसक्तेइत्यर्थः ९२ नदीनामिति । कोनदीनांजलानिमर्यादयाचालयति कोभुवंजलस्थांमज्जंतींस्तंभयति कोवासूर्यादीन्खात्पततोवारयतीति ९३ इत्यादिकमिति । आदिशब्दः प्रकारे तथाचइतिप्रकारकंलोकविधारणंयेनात्मनाईश्वररूपेणाक्रियतेसत्वयात्मत्वेनज्ञेयइत्यर्थः १५९४ तमेतमित्यादेरनाशकेनेत्यंतस्यवाक्यस्यार्थंनिरूपयति बहिर्मुखेनेत्यूनपंचाशच्छ्लोकैः । यदिस गुणात्मापिबहिर्मुखेनमनसाज्ञातुंनशक्यतेइतिमन्यसेतदातदुपायश्चित्तांतर्मुखतायाउपायोपिवेदाविद्भिरुक्तस्तंकुरुष्वेतिशेषः ९५ तत्रमनसोबहिरंतर्वातात्पर्येणप्रवृत्तौप्रयोजिकेच्छैवेत्याह बहिर्मुखमिति स्पष्टं ९६ इच्छायाःकारणंचदोषज्ञानाभावविशिष्टंविषयसौंदर्यज्ञानमेवेत्याह समीचीनमिति । समीचीनंसुंदरं प्रतिबंधोदोषज्ञानंतद्धीनं ९७ विषयस्येति । यतोविषयसौंदर्यज्ञानमिच्छाकारणंम सिद्धमतश्चित्तस्यात्मप्रवणतारूपांतर्मुखतासिद्ध्यर्थमात्मनःसौंदर्यंपरमानंदादिरूपतांजानीयादित्यर्थः ९८ आत्मनःसौंदर्यज्ञानेप्रयोजकंचप्रतिबंधनिवर्तकंशुभादृष्टमितिसदृष्टांतमाह अदृष्टादिति ।

आशीविषनिभांस्तद्वत्तामसानतिकोपिनः ॥ निवारयतिकोनामसर्वदाप्राणिहिंसने ९१ अंभोनिधीनगाधोदान्कल्लोलशतमालिनः ॥ निवारयेच्चकोनामजगदाचमनंप्रति ९२ नदीनामपिनीराणिकोनयेन्निम्नभूमिकाम् ॥ वसुधांनीरसंस्थानांकोमज्जंतींनिवारयेत् ॥ सूर्यादीनपिखादस्मात्पततःकोनिवारयेत् ९३ इत्यादिकंसमग्रस्यलोकस्यास्यविधारणम् ॥ क्रियतेयेनसज्ञेयःसेतुरात्मामहेश्वरः ९४ बहिर्मुखेनमनसायादिज्ञातुंनशक्यते ॥ तदुपायःसमुक्तोस्तिब्राह्मणैर्वेदवादिभिः ९५ बहिर्मुखंसमायातिमनोत्रविषयेच्छया ॥ यथातथैवतद्वच्छेदंतरात्मेच्छयास्वयम् ९६ समीचीनंयदायद्धिविजानातिमनःस्वयम् ॥ तदातद्यातिसहसाप्रतिबंधविवर्जितम् ९७ विषयस्यात्रसौन्दर्यंज्ञातइच्छास्वयंभवेत् ॥ ततःसौंदर्यविज्ञानआत्मनोयत्नवान्भवेत् ९८ अदृष्टाज्जायतेज्ञानंयथानिष्टेषुवस्तुषु ॥ अदृष्टादेवतद्वत्स्यादभीष्टेष्वपिसर्वदा ९९ अशुभज्ञानहेतुःस्यात्पापंयद्वनृणामिह ॥ शुभज्ञानस्यतद्वत्स्याद्धेतुःपुण्यंमहात्मनाम् १६०० यज्ञदानादिकंपुण्यमुक्तंशास्त्रेस्तिसर्वदा ॥ तेनविज्ञानउत्पन्नइच्छातस्मिन्स्वयंभवेत् १६०१ यज्ञाद्यायद्यपिप्रोक्ताःस्वर्गादिफलहेतवः ॥ आत्मनोपिचविज्ञानेतथाप्येतेभवंतिहि १६०२ तएवास्माकमाकांक्षावशाद्दर्शादिकंयथा ॥ नित्यंकाम्यंतदेवस्यादेवंयज्ञादयोपिनः ॥ स्वर्गप्रदाःस्वविज्ञानेभविष्यंत्यत्रहेतवः १६०३

यथाऽनिष्टवस्तुविषयकज्ञानंप्रत्यदृष्टंप्रयोजकंतथेष्टपदार्थज्ञानंप्रत्यपीत्यर्थः ९९ तत्रादृष्टस्यव्यवस्थामाह अशुभेति । स्पष्टम् १६०० पुण्यस्वरूपंकथयंस्तस्यात्मज्ञानेच्छाप्रयोजकतामाह यज्ञेति । शास्त्रविहितंयज्ञदानादिकंपुण्यमित्युक्तंतेनपुण्येनआत्मसौंदर्यज्ञातेसतिइच्छातत्रस्थितिहेतुःस्वयमनायासेनभवेदिति १६०१ ननुस्वर्गादिफलेषुतत्तद्वाक्यैर्विनियुक्तानांयज्ञादीनांकथमात्मज्ञानार्थत्वमितिशंकांवारयन्नेकस्यकर्मणोभिन्नार्थविनियोजकयोर्द्वयोर्वाक्ययोःसामर्थ्यादुभयार्थत्वमपिभवतीतिसंयोगपृथक्त्वन्यायमभिनयति यज्ञाद्याइतिद्वाभ्यां । यद्यपियज्ञादयःपूर्वकाण्डपठितस्वर्गकामादिवाक्यैःस्वर्गादिफलहेतवःप्रोक्तास्तथापितएवयज्ञादयआत्मविज्ञानेप्येतेहेतवोभवंतीतिसंबंधः प्रकृतवाक्यबलादितिभावः १६०२ एतद्दृष्टांतेनस्फुटयति तएवेति । प्रथमपदद्वयंपूर्वान्वयित्वेनव्याख्यातं यथायद्दर्शपूर्णमासादिकंयावज्जीवंदर्शपूर्णमासाभ्यांयजेतेतिवाक्यान्नित्यंतदेवदर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेतिवाक्योत्थायाअस्माकमधिकारिणामाकांक्षायावशात्संबंधात्काम्यमपिभवति । तथायज्ञादयोपिनोस्माकमधिकारिणांस्वर्गकामादिवाक्योत्थाकांक्षावशात्स्वर्गादिप्रदाअपिअत्रयज्ञेनेत्यादिवाक्येसतिस्वस्यात्मनोविज्ञानेपिहेतवोभवंतीत्यर्थः १६०३

अत्रवाक्येउक्तानांयज्ञदानतपोनशनानांस्वरूपाणिनानाविधानिवर्णाश्रमभेदापेक्षयाव्यवस्थितरूपाणिबोध्यानीत्याह यज्ञइति । अपरंचतुर्थं १०६४ तत्रयज्ञस्वरूपाणांव्यवस्थामाह ज्योतिरिति । ज्योतिष्टोमादिरूपाद्रव्यसाध्यायज्ञागृहिणांयथाधिकारंकर्तव्यतयोक्ताः स्वाध्यायोजपोयोगःसमाधिश्चएतद्रूपायज्ञास्तुगृहस्थभिन्नाश्रमिणामपिशब्दाद्गृहस्थानामपियथावकाशंकर्त्तव्याः तथाज्ञा नाभ्यासरूपायज्ञायतिभिर्विशेषेणप्राधान्येनकर्त्तव्याः इतराश्रमिभिस्तुकर्मप्रधानैरुपसर्जनत्वेनेत्यर्थः १६०५ दानस्वरूपव्यवस्थामाह दानमिति । अन्नंसिद्धान्नंधान्यमामान्नं आदिपदेनगवादयः एतादृशद्रव्यसाध्यंदानंयतिभिन्नाश्रमस्थैःसर्वैःकर्त्तव्यतयोक्तमित्यर्थः १६०६ यतेस्तुसर्वभूताभयसंपादनरूपमेवदानमितिदर्शयति चतुर्विधेभ्यइतात्रिंशताश्लोकैः । जरायुजादिचतुर्विधभूतसंप्रदान कमेतद्दानंपरमुत्कृष्टंस्मृतं एतत्किं आत्मवत्सर्वभूतानांप्रतिकूलस्ययाशरीरादिभिरकृतिरनाचरणंतदभयमित्यर्थः १०६७ सर्वेति । एतद्दानंसर्वेषामधिकंप्रशस्तं यतिभिस्त्वेतदेवकर्तव्यं एतदनुष्ठाना येवसंन्यासाश्रमस्यविधानादित्यर्थः १६०८ अभयदानोद्देश्यकत्वंसंन्यासाश्रमस्यसंन्यासकरणमंत्रादेवसिद्धमित्याह अभयमिति । मत्तःस्वस्मादभयंसर्वभूतेभ्योददामीत्यर्थकंस्वाहांतंमंत्रमु

यज्ञोदानंतपस्तद्वदनाशकमथापरम् ॥ वर्णाश्रमादिभेदेनकर्तव्यंशास्त्रकीर्तितम् १६०४ ज्योतिष्टोमादिकायज्ञागृहिणांपरिकीर्तिताः ॥ स्वाध्याययोगयज्ञाश्च तथान्याश्रमिणामपि ॥ ज्ञानयज्ञाविशेषेणयतीनांपरिकीर्तिताः १६०५ दानंनानाविधंतद्वदन्नधान्यादिकंमहत् ॥ यतेरन्याश्रमस्थस्यसर्वस्याप्यत्रकीर्तितम् १६०६ चतुर्विधेभ्योभूतेभ्यःकर्मणामनसागिरा ॥ आत्मवत्प्रतिकूलानामकृत्याख्यमुदीरितम् ॥ दानमेतत्परंनास्मादधिकंकिंचिदस्तिहि १६०७ सर्ववर्णाश्र मादिस्थैःकर्तव्यमधिकंस्मृतम् ॥ यतिभिस्तुविशेषेणकर्तव्यमिदमेवहि ॥ आश्रमोयममीषांस्यात्सर्वभूताभयायहि ८ अभयंसर्वभूतेभ्योमत्तःस्वाहेत्युदीरयन् ॥ निर्गच्छत्यत्रपरमोहंसोप्यन्योयतिस्तथा १६०९ ततस्तस्यतदेवोक्तंदानंपरममण्वपि ॥ यथानैवभवेत्पीडादेहेन्द्रियमनस्स्वहं १६१० चतुर्विधानांभूतानां तथाकुर्वीतसर्वदा ॥ विद्यादेर्न्यस्तकर्मायंदानंनैवान्यथाक्वचित् १६११ वित्तैर्नानाविधैःपूर्णांत्रिलोकींब्रह्मणेयदि ॥ न्यायलब्धांकुरुक्षेत्रेसूर्यग्रहउपागते ॥ स्वदेह सहितांदद्याच्छ्रद्धयापरयान्वितः १६१२ ततोपिह्यधिकंदानमभयंपरिकीर्तिम् ॥ स्थिरजंगमभूतानांमध्येकस्यापिदेहिनः १६१३ स्थिरजंगमभूतानांसर्वेषाम भयंसदा ॥ ददातिसर्वथासर्वदेशेयःकोपिमानवः ॥ तस्माद्दानात्परंदानंसदृशंचनविद्यते १६१४ अभयंसर्वभूतेभ्योदत्वायोत्रचरेद्यतिः ॥ अस्मिन्देहेतथान्य स्मिन्भयंतस्यनविद्यते १६१५

च्चारयन्नेवयतःपरमश्रौतोयतिस्तथान्यःस्मार्तःकुटीचकबहूदकहंसान्यतमरूपःपूर्वाश्रमान्निर्गच्छतिनिष्क्रामतीत्यर्थः १६०९ ततइति । यतस्तस्ययतेस्तदेवसर्वभूताभयप्रदानमेवपरमंदानंप्रोक्तंततो यतिस्तथाकुर्वीत तथाकथं यथाचतुर्विधानांभूतानांदेहेंद्रियमनस्सुअणुकिंचिदपिपीडानभवेदित्यन्वयः । न्यस्तंत्यक्तंकर्मयेनसन्यस्तकर्मातद्योग्यंन्यस्तकर्मीयंविद्यादेर्विद्यायास्तत्साधनस्यचयद्दानंत दपिअन्यथाप्रतिष्ठालाभाद्युद्देशेनकचिदपिनोक्तंकिंतुशरणागतस्याभयोद्देशेनैवविद्यादिकंयतिर्दद्यादितियावदितिद्वयोरर्थः १६१० । १६११ सर्वाभयदानस्यसर्वदानेभ्यउत्कर्षंकैमुत्यन्यायेनाह वित्ते रितित्रिभिः । सर्ववित्तपूर्णांन्यायार्जितांचसर्वांपृथ्वींब्रह्मणेब्रह्मविद्ययाब्रह्मीभूतायविप्रायकुरुक्षेत्रेसूर्यग्रहणकालेपरमश्रद्धयायदिकश्चिद्दद्यात्ततस्तद्दानादप्यधिकंस्थावरादीनामेकस्यापिजंतोरभयदानमि तिद्वयोःसंबंधः १२ । १३ यस्तुसर्वभूतेभ्योऽभयंसदासर्वत्रचददातितद्दानस्योत्कर्षःकिमुवाच्यइत्याह स्थिरेति । स्पष्टम् १४ अभयदानफलप्रदर्शकं'अभयंसर्वभूतेभ्योदत्वायश्चरतेमुनिः । नतस्यत्रिपुलो केषुभयंभवतिकर्हिचित्'इतिवाक्यमर्थतःपठति अभयमिति । चरतिआत्मविद्यामभ्यसतिसत्रिपुसूक्ष्मकारणात्मकेषुसमष्टिव्यष्टिलोकेषुभयंद्वितीयदर्शनजंनाप्नोतिअद्वितीयब्रह्मभावंप्राप्नोतीतियावत् १९

७९

सर्वभूताभयप्रदानोत्कर्षंस्फुटयंस्तल्लक्षणभूतायाअहिंसायाःसर्वधर्मांतर्भावकत्वेनोत्कर्षमाह चतुर्विधानामिति । हिंयतश्चतुर्विधभूतानांशरीरवाङ्मनोभिरपीडनरूपायामहिंसायांचतुष्पात्पादचतुष्टयेन सत्यदयातपोदानाख्येनविशिष्टःपूर्णइतियावत् व्यवस्थितोविशेषेणाधर्मसंकरराहित्यात्मकस्पष्टत्वेनस्थितइत्यर्थः १६१६ एतत्स्पष्टयितुंप्रतियोगिभूतांशरीरादिकृतांहिंसामधर्मरूपां निर्दिशति कर्मणेतिनवभिः । चतुर्विधभूतानांकर्मणास्थूलशरीरव्यापारेणप्रयुक्तायाशस्त्रघातादिरूपाहिंसायाचमंत्रेणमंत्रसाध्याभिचाराख्ययागेनऔषधादिनाचपरशरीरेरोगजननात्मिकासाद्विविधाशारीरत्वेनप्रसिद्धेवेतिसंबंधः १६१७ वित्तेति । यन्नराणांवित्तादिहरणंतदपिपूर्वोक्तादधिकंकर्मजंहिंसनंज्ञेयं परस्यआधिर्मानसपीडातद्द्वाराप्राणवियोगानुकूलत्वादित्यर्थः १६१८ वाचिकींहिंसामभिनयति पापस्येति । परकीयपापस्यराजपुरुषादेःपुरतःप्रकाशनंयच्चनिंदाकरणंयच्चपरकीयगुणेषुदोषाविष्करणमेवंविधंवाचिकंहिंसनंबोध्यमित्यर्थः १६१९ मानसंहिंसनमाह गुणानामिति । यद्विद्यादिजातानांपरकीयगुणानांमनसाऽसहनंमत्सराख्यं यच्चपरकीयदारादीनांस्वंप्रतिप्राप्त्यर्थंचिंतनं यच्चभूतानांद्रोहस्यनाशोपायस्यचिंतनं एवंविधंमानसंहिंसनंबोध्यमितिद्वयोरर्थः १६२० । १६२१ उक्तमानसादिव्यापाराणांपरंपरयाहिंसनत्वमितिदर्शयन्परंपराहिंसामुदाहरति परेति । परकीयवैरिप्रभृतिभ्योयद्बुद्धेर्धनादीनांचदानंतद्धिंसोपायत्वादुपायहिंसनमितिप्रोक्तंलोकेनानाविधंप्रसिद्धमिति १६२२ तथानृतभाषणमपिहिंसनमेवइहलोकेपरलोकेवाभूतानांस्वस्यवादुःखहेतुत्वादित्याह असत्येति । यतोलोकद्वयेभूतानामात्मनश्चदुःखकारणमतोऽसत्यवचनमपिहिंसनमेवेतिसंबंधः २३

चतुर्विधानांभूतानांकर्मणामनसागिरा ॥ अहिंसायांसदाधर्मश्चतुष्पाद्व्यवस्थितः १६ कर्मणाभूतहिंसायाप्रसिद्धामरणप्रदा ॥ चतुर्विधानांभूतानांशस्त्रघातादिकाचया ॥ शरीरेरोगजननंहिंसामंत्रौषधादिना १७ वित्तदारादिहरणंनराणामधिकंसदा ॥ हिंसनंतत्रविज्ञेयमाधिद्वारेणकर्मजम् १८ पापस्यराजभृत्यादेः कथनंहिंसनंगिरा ॥ अपकीर्तेश्चकरणंदोषकीर्तिर्गुणेष्वपि १९ गुणानांपरकीयानांमनसाऽसहनंचयत् ॥ विद्याकीर्त्यादिजातानामन्यदारादिचिंतनम् २० प्राप्त्यर्थंस्वस्यविज्ञेयंतथाद्रोहस्यचिंतनम् ॥ चतुर्विधानांभूतानांमानसंहिंसनंस्मृतम् २१ परवैर्यादिबुध्यादिदानमेतदुदाहृतम् ॥ उपायहिंसनंतच्चलोकेनानाविधंभवेत् २२ असत्यवचनंतद्वद्भूतानांदुःखकारणम् ॥ आत्मनोवात्रलोकेवापरलोकेचहिंसनम् २३ यज्ञादिधर्मकरणेप्रवृत्तस्यनिवारणम् ॥ स्वयंचाकरणंपुंसःकुतर्कैस्तुहिंसनम् २४ शौचादीनांतुसंत्यागःकर्तव्यानांसदात्मनः ॥ अकर्तव्यस्यकरणंकुलात्मादेस्तुहिंसनम् २५ एतस्माद्विपरीतःस्याद्धर्मःशास्त्रोक्तलक्षणः ॥ अहिंसायांततःसर्वोप्यंतर्भवतिसर्वदा १६२६

अनृतस्यपरलोकेपरेषांस्वस्यचहिंसनरूपतांस्फुटयन्नास्तिक्यमपिहिंसैवेत्याह यज्ञादीति । यत्कुतर्काद्यैःपरस्यधर्मप्रवृत्तस्यनिवारणंयच्चस्वयंधर्मानाचारणंततस्वस्यपरेषांचहिंसनमेवनिंदानरकादिहेतुत्वादित्यर्थः १६२४ एवंसर्वंविहिताकरणंनिषिद्धाचरणंचात्मनःकुलादेश्चपातित्यादिहेतुत्वाद्धिंसैवेत्याह शौचादीनामिति । विहितानांशौचादीनामकरणंप्रतिषिद्धस्याचरणंचस्वस्यकुलदेशादेश्चपातित्यादिहेतुत्वाद्धिंसनमेव यथाविश्वामित्रपुत्रैःशुनःशेपज्येष्ठीकरणात्मिकायाःपितुराज्ञायाअकरणान्म्लेच्छत्वप्राप्तिरूपंहिंसनंस्वस्यस्वकुलस्यचकृतमिति देशहिंसनोदाहरणंचयथादंडकाख्येनराज्ञाऽगस्त्यकन्याधर्षणेनदेशनाशःकृतइतिरामायणेप्रसिद्धमिति । एतेननिद्रातंद्रादितामसवृत्तीनामपिवृथाकालक्षेपिकानामुदर्कदुःखप्रयोजकत्वाद्धिंसनत्वमितिसूचितम् २५ एतस्मादिति । एतस्मात्प्रपंचिताद्धिंसास्वरूपाद्विपरीतरूपोधर्मःशास्त्रेप्रसिद्धस्ततःसधर्मःसर्वोप्यहिंसायामंतर्भवतीति १६२६

अहिंसेति । ततउक्तविधयासर्वयमांतर्भावकत्वादेवपरमधर्मत्वमहिंसायाःशास्त्रेपूक्तमतःसर्वैर्विवेकिभिरहिंसाकर्तव्येति सर्वथासर्वयत्नेन १६२७ अहिंसायाःफलमाह तयेति । तयाअहिंस याधर्मोऽशुक्लकृष्णाख्योयोगशास्त्रेप्रसिद्धस्तथामोक्षश्चकरेस्थितोवश्योभवति ससाधनेतरपदार्थलाभस्तुसुकरत्वात्तस्याःफलत्वपदवीयोग्यइत्यर्थः १६२८ अतएवाहिंसासत्यास्तेयब्रह्मचर्यापरि ग्रहायमाइतियोगसूत्रेऽहिंसायाआदौकीर्तनंतस्याःसर्वयमांतर्भावकत्वादितिवक्तुंतदितरयमानांतत्रांतर्भावंदर्शयति ब्रह्मेतिषड्भिः । ब्रह्मचर्यंस्त्रीव्यतिकराभावरूपमहिंसांतर्गतमेव । स्त्रीसंबंधस्यो दर्केउत्तरफलेसंसारसंततिरूपेदुःखप्रदत्वादित्यर्थः १६२९ इहलोकेपिस्त्रीसंबंधस्यपरपीडाकरव्यापाररूपंहिंसात्वंप्रसिद्धमित्याह ग्राम्येतिद्वाभ्यां । ग्राम्यधर्मेणेतिप्रकृत्यादित्वात्तृतीया तथा चयौवनेग्राम्यधर्मरूपाद्योषिद्गमनाद्गर्भोजायतेयतोगर्भभवान्नारीतद्गर्भयोर्मरणतुल्यंमरणरूपंवादुःसहंदुःखंजायतइतिप्रसिद्धमित्यर्थः १६३० नारीति । किंचनारीसंयोगात्पुंसोरेतोजनिष्यमा णजंतवेदेहरूपस्यकारागृहस्यबंधनागारस्यप्रदायकंभवेत् यतोदेहकारागृहलाभादेतदद्भुतात्मादित्रिविधंदुःखंजंतूनांस्यादिति १६३१ रेतइति । रेतःसिंचतीतिरेतःसिक्तस्यरेतःसिचःपुंसस्ततो नारीसंसर्गतउक्तविधदुःखदंपापंजायते ब्रह्मचर्येकृतेतुएतदुक्तविधंहिंसनंनकिंचिज्जायतेऽतोब्रह्मचर्यमहिंसायामंतर्भूतमितिसंबंधः १६३२ अहिंसकइति । अहिंसकोवर्णितसर्वहिताचरणरूपाहिं

अहिंसापरमोधर्मस्ततएवात्रकीर्त्यते ॥ अहिंसासर्वथासर्वैःकर्त्तव्याबुद्धिजीविभिः १६२७ तयाधर्मस्तथामोक्षोभवेत्तेषांकरेस्थितः ॥ अर्थकामौचकिंनामवक्त व्यौसुलभौहियौ २८ ब्रह्मचर्यमहिंसायामंतर्भवतिसर्वदा ॥ उदर्केमहतीहिंसाजंतूनांभोगतःस्त्रियः २९ ग्राम्यधर्मेणगमनाद्योषितांयौवनेसति ॥ भवेद्गर्भोयतोना रीगर्भयोर्मरणोपमम् ॥ मरणंवाभवेद्दुःखंदुःसहंदेहधारिभिः ३० नारीसंयोगतोवीर्यंदेहकारागृहप्रदम् ॥ जंतूनांयतएतत्स्यात्त्रिविधंदुःखमद्भुतम् ३१ रेतःसिच स्ततःपापंभवेदत्यंतदुःखदम् ॥ ब्रह्मचर्येकृतेनैतद्भवेत्किंचिद्धिहिंसनम् ३२ अहिंसकोत्रभूतानांकर्मणामनसागिरा ॥ वदेदसत्यंकेनायंनिर्निमित्तंमहामुनिः ३३ परद्रव्यापहारंचकुरुतेकेनहेतुना ॥ परिग्रहंकथंकुर्याद्भूतपीडाविवर्जितः ३४ अहिंसाततएवेयंयमानांजननीमता ॥ अहिंसकोत्रयःकश्चित्सज्ञेयःपुरुषोत्तमः ३५ अहिंसैवततोदानंयतीनांपरमंस्मृतम् ॥ अन्येषामपिकिंत्वन्यैःकर्तुंनैतद्धिशक्यते ३६ सर्ववर्णाश्रमस्थानांस्वधर्मपरिवर्तिनाम् ॥ शास्त्रस्थेनविधानेनतपएतदु दीरितम् ३७ शास्त्रेणाप्यनिषिद्धानांविषयाणामसेवनम् ॥ सर्ववर्णाश्रमाणांयत्स्यादनशनंपरम् १६३८

सापरःपुमानत्रलोकेऽनृतभाषणंस्तेयंपरिग्रहंचसंचयरूपंकिमर्थंकरिष्यतिअतःसत्यास्तेयापरिग्रहरूपायमाअप्यहिंसायामंतर्भूताइतिद्वयोरर्थः १६३३ । १६३४ फलितमाह अहिंसेति । ततः सर्वयमांतर्भावकत्वादहिंसाजननीवाभ्यर्हितत्वेनयमानामादौनिर्दिष्टेत्यर्थः । तथाचोक्तंयोगभाष्ये इतरेचयमनियमास्तद्वदातकरणायैवोपादीयंतइति । तस्याअहिंसायाअवदातत्वस्यशुद्धत्व स्यकरणायेतितदर्थः । तस्मादहिंसकःसर्वोत्तमइत्यर्थः १६३५ अहिंसैवेति । ततएकानुष्ठानेनसर्वधर्मसिद्धिरूपलाघवादहिंसारूपंपरमंदानंयतीनांभाराद्बुद्धिभ्रानांकर्तव्यतयाविहितं यद्यप्य न्येषामाश्रमिणामप्येतदहिंसारूपंदानंकर्तुंयोग्यंतथापिशक्यंनभवति परिग्रहादेःपरपीडाकरस्यसर्वथातैस्त्यक्तुमशक्यत्वादितिभावः १६३६ तपोविभागमाह सर्वेति । सर्वेषांवर्णिनामाश्र मिणांचस्वस्वधर्माविरोधेनशास्त्रोक्तविधिनाएतच्छरीरेंद्रियमनसांनियमरूपंतपोभगवद्गीतादिपूक्तमित्यर्थः १६३७ अनशनविभागमाह शास्त्रेणेतित्रिभिः । यत्शास्त्रेणानिषिद्धानामपिविष याणांयथाशक्तिअसेवनंभोगत्यागःएतद्यतिंहित्वासर्वेषांवर्णाश्रमाणांयोग्यमनशनमित्यन्वयः १६३८

यथेति । प्रथमपादःपूर्वान्वयित्वेनदर्शितः यतेस्तुयोग्यमिदमनशनं इदंकिं इहामुत्रवाविद्यमानपदार्थेष्विच्छालेशस्याप्यकरणंतथायथोपपन्नेनयथाप्राप्तेनभिक्षान्नेनतादृशायथोपपन्नेनवाससाचदेहस्यविधारणंनिर्वहणमितिद्वयोरर्थः १६३९ । १६४० एवमिति । एवंविधयज्ञादिचतुष्टयरूपंपुण्यंब्रह्मविज्ञानहेतुतयोक्तमित्यर्थः १६४१ यज्ञादीनांदृढविज्ञानजननेद्वारमाह जातेइतिद्वाभ्यां । यदादृष्टादृष्टरूपेभ्यःसहायेभ्योब्रह्मविज्ञानंजायतेतदाब्रह्मरूपविषयस्यस्वभावसुंदरत्वात्तत्रेच्छास्वयमेवजायतइति १६४२ अदृष्टादिति । तत्रादृष्टाद्यागादिजन्यसुकृतरूपाद्दृष्टंगुरुशास्त्राधिकारिशरीरादिलाभरूपंजायतेततोगुरुप्रभृतिलाभरूपादृष्टादात्मज्ञानंपरोक्षंजायतेततआत्मसाक्षात्कारेच्छाजायतेइच्छयाचचित्तस्यात्मन्येकाग्रत्वंजायतेइत्यर्थः । तथाचसामग्रीसंपादनायप्रतिबंधकदुरितापनयायचयागादिपुण्यमपेक्षितमितिभावः १६४३ ननुकिमर्थमात्मविज्ञानमपेक्षणीयंमहाप्रभावैःकर्मभिरेववयंकृतार्थाइत्याशंकावारकस्यमुनिर्भवतीत्यन्तवाक्यस्यार्थमाह यदाचित्तमिति त्रिभिः । यदाचित्तेकाग्र्यंभवतितदादृढमसंभावनादिभिरनास्कंदनीयंमहावाक्यजंज्ञानंजायतेततोदृढज्ञानादेषब्राह्मणोमुनिर्जीवन्मुक्तिफलकज्ञानशीलताशालीभवतियतोहेतोर्यदायज्ञादिभिरात्मनिब्रह्मरूपेदृढाज्ञानेच्छाजायतेतदात्मानंविज्ञायैवमुनिर्जीवन्मुक्तिलक्षणोभवतिनान्यथाइतरत्कर्मफलंप्राप्येतित्रयाणांसंबंधः १६४४ । १६४५ । १६४६ उक्तविधमुनित्वकामनयाविविदिषा

यथाशक्तियतिंहित्वायतेरनशनंविदम् ॥ इच्छामात्रस्यसंत्यागइहामुत्रार्थसंश्रयः १६३९ यथोपपन्नभैक्षेणवाससापिचतादृशा ॥ विधारणंतुदेहस्ययतेरुक्तंनचापरम् ४० एवंयज्ञस्तथादानंतपोनशनमेवच ॥ चतुष्टयंभवेत्पुण्यंब्रह्मविज्ञानकारणम् ४१ जातेब्रह्मणिविज्ञानेदृष्टादृष्टसहायतः ॥ इच्छाविषयसौंदर्यात्स्वयमेवप्रजायते ४२ अदृष्टाज्जायतेदृष्टंदृष्टाज्ज्ञानंप्रजायते ॥ इच्छाज्ञानाद्भवेच्चित्तमिच्छातोनबहिर्व्रजेत् ४३ यदाचित्तंबहिर्नैतिस्वात्मनोदैवयोगतः ॥ तदातस्मिन्हिविज्ञानंदृढमस्यप्रजायते ४४ ततोमुनिर्भवेदेषआत्मज्ञोब्राह्मणोयतः ॥ आत्मानमेवविज्ञायमुनिर्भवतिनान्यथा ४५ यदायज्ञादिभिःपुण्यैरिच्छाभवतिदेहिनः ॥ आत्मनिब्रह्मरूपेस्मिन्स्वयंज्योतिःसुखाद्वये ४६ इच्छावंतोमहात्मानएतमेवात्मरूपिणम् ॥ संन्यासिभिःसदादृश्यमवाङ्मनसगोचरम् ॥ इच्छंतःसर्वकर्माणिसंन्यस्यंतिमहाधियः ४७ कर्मासक्तस्यनैवस्यात्कर्हिचित्स्वात्मनिस्थितिः ॥ निषिद्धकाम्ययोस्त्यागोनशक्योदेहधारिभिः ॥ कर्तुमस्यतुशक्यत्वेप्यास्तिदोषोमहानयम् ४८ नित्यंनैमित्तिकंकर्मदेशकालाद्यपेक्षया ॥ चोदितंकर्मिभिःकार्यमन्यैराश्रमिभिःसदा ॥ अकृतौतस्यतेषांस्यात्प्रत्यवायोतिदुःखदः १६४९

संन्यासविधायकस्यप्रव्रजंतीत्यंतवाक्यस्यार्थमाह इच्छावंतइतिद्वादशभिः । इच्छावंतइत्यतिशयार्थेमतुप् तथाचोत्कृष्टेच्छाशालिनोभोगकार्पण्यरहिताइतियावत् एतेनप्रव्रजनशीलवाचकस्यप्रव्राजिपदस्यार्थःसूचितः । एतादृशाह्यमात्मानएतमेवात्मरूपंलोकमिच्छंतःसंतःसर्वकर्माणिसंन्यस्यंतीत्यन्वयः १६४७ कर्मणस्त्याज्यत्वेहेतुंविक्षेपरूपत्वंदर्शयन्नयंविक्षेपोयतिभिन्नाश्रमिभिःपरिहर्तुंनशक्यतइत्याह कर्मेत्यादिना । कर्मानुष्ठानपरस्यात्मज्ञानेस्थितिर्निष्ठादुर्लभाकर्मत्यागस्त्वितराश्रमिभिर्दुष्करः । तथाहि प्रायेणनिषिद्धानांकाम्यानांचकर्मणांत्यागएवकर्तुमशक्योदृश्यतेतेषांस्थूलसूक्ष्मदेहाभिमानिनांभोगानुकूलत्वात् अस्यनिषिद्धकाम्यत्यागस्यकथंचिद्विवेकेनकर्तुंशक्यत्वेप्ययमुत्तरश्लोकेवक्ष्यमाणउभयतःपाशरज्जुनिभोदोषःप्राप्नोत्येवेत्यर्थः १६४८ तदेवोपपादयति नित्यमिति । कर्मिभिरन्यैराश्रमिभिश्चोदितंशास्त्रविहितंनित्यंसंध्याग्निहोत्रादिकंनैमित्तिकमुपरागस्नानादिकंचदेशकालानुसारेणावश्यंकर्तव्यमन्यथाप्रत्यवायापत्तेरित्यर्थः तथाचकर्मत्यागेआत्मैकाग्र्यहानिरकरणेतुप्रत्यवायप्राप्तिरित्युभयतःपाशारज्जुरितिभावः १६४९

संन्यासविधिनाकर्मत्यागेतुनदोषइत्याह शास्त्रोक्तेनेति । इतिवेदव्यवस्थितिर्नित्यादिकर्मविधायकानांसंन्यासविधायकानांचवाक्यानांविषयव्यवस्थयासिद्धोयमर्थइत्यर्थः भगवताप्युक्तं ' मोहात्तस्यपरित्यागस्तामसःपरिकीर्तितः ' इति १६५० विषयव्यवस्थामेवस्फुटयति स्रगादीत्यादिना । यस्यमानसंस्रक्चंदनादिसांसारिकविषयेपुव्यग्रंरागिसदात्मविषयकविज्ञानंकथंप्राप्नुयादित्यर्थः तथाचतेनकर्मैवकर्तव्यमितिभावः १६५१ संन्यासाधिकारिणंनिर्दिशति अपीति । निर्विषयंविषयेभ्योनितरांविरतंयस्यचित्तंसकर्मभारंकिमर्थंवहेदित्यर्थः १६५२ तत्रोपपत्तिमाह कर्तव्यानीति । अधिकारःफलसंबंधःफलकामनादिरूपस्तद्वंतंप्रत्येवशास्त्रंकर्मविधत्ते अयंवीतरागस्तुकथंतदधिकारीस्यादित्यर्थः नित्यकर्मसुसामान्यरूपेणफलकामोधिकारीस्वर्गपश्वादिविशेषरूपेणफलकामस्तुकाम्येष्वितिविभागोबृहदारण्यकभाष्यादौद्रष्टव्यः १६५३ ततइति । ततःसरागस्यैवकर्माधिकारित्वात्यस्यचित्तंविरक्तंतंप्रत्येतत्प्रकृतंशास्त्रंकर्मणांत्यागंवदति कीदृशंत्यागं आगतंकर्मप्रयोजनाभावेनस्वयंप्राप्तमित्यर्थः तदुक्तं ' प्रत्यक्प्रवणतांबुद्धेःकर्माण्युत्पाद्यशुद्धितः । कृतार्थान्यस्तमायांतिप्रावृडंतेघनाइव ' इति १६५४ प्रत्यक्प्रवणताविरोधित्वेनविषयवद्विरक्तःकर्मनित्यमपित्यजेदित्याह यथेति । बहिर्दृष्टिंप्रत्यग्विवेकवैमुख्यम् १६५५ ननुसंन्यासेपिभिक्षाटनादिरूपंकर्मावशिष्यतएवेतितद्वन्नित्याग्न्यपितिष्ठंत्वितिशंकांविशेषप्रदर्शनेनवारयति भिक्षे

शास्त्रोक्तेनैवमार्गेणत्यक्तंकर्मसुखायहि ॥ अन्यथादुःखदंतत्स्यादितिवेदव्यवस्थितिः १६५० स्रगादिविषयेष्वेववर्ततेयस्यमानसम् ॥ व्यग्रंसविषयासक्तःकथमात्मनिगच्छति १६५१ अपिनिर्विषयंचित्तंजातंयदिहिकर्मिणः ॥ किमर्थंकर्मजंभारंवहतिस्वस्यदुःखदम् १६५२ कर्तव्यानीतिकर्माणिशास्त्रंवक्त्यधिकारिणम् ॥ विषयप्रार्थनाहीनोह्यधिकारीकथंत्वयम् १६५२ ततोनिर्विषयंचित्तंयस्यजातंमहात्मनः ॥ तस्यत्यागंवदत्येतत्कर्मणांशास्त्रमागतम् १६५४ यथात्रविषयाःकुर्युर्बहिर्दृष्टिंशरीरिणाम् ॥ कर्माण्यपितथाकुर्युर्नित्यादीनिहिदेहिनः १६५५ भिक्षाटनादिभिर्नैवक्रियतेत्रबहिर्दृशिः ॥ नियतायादृशीनृणामग्निहोत्रादिकर्मभिः १६५६ अकृतौप्रत्यवायोपिनास्तिभिक्षाटनादिषु ॥ यादृशोविद्यतेलोकेह्यग्निहोत्रादिकर्मणाम् १६५७ ततःकर्माणिसंत्यज्यनैष्कर्म्याश्रममागताः ॥ आत्मानंद्रष्टुकामास्तेसर्वसंगविवर्जिताः १६५८ विद्वांसोयेऽभवन्पूर्वेब्राह्मणाःस्वात्मवेदिनः ॥ विक्षेपकारकत्वेनतत्यजुःकर्मतेपिहि ॥ किमुयैर्नैवविदितआत्मासाक्षादयंपुमान् १६५९ प्रत्यक्षतोपिदृष्टोयैःकरामलकवत्पुमान् ॥ स्वयंज्योतिःसदानंदोभेदगंधविवर्जितः १६६०

तिद्वाभ्यां । अग्निहोत्रादीनिकर्माणिकर्मप्रवणचित्तेनैवकर्तुंशक्यानिअकरणेप्रत्यवायप्रयोजकानिच भिक्षाटनादीनितुभोजनेसुखंप्रतिहस्तव्यापारवदन्यपरचित्तेनापिकर्तुंशक्यानि ननियतामावश्यकांबहिर्दृष्टिंबहिर्मुखतांकुर्वंति नवाअकरणेप्रत्यवायप्रयोजकानीतिविशेषइतिद्वयोरर्थः १६५६ । १६५७ फलितमाह ततइति । तेज्ञानाधिकारिणःसर्वसंगविवर्जिताजाताइतिशेषः १६५८ यस्यगृहस्थाश्रमादौतत्त्वसाक्षात्कारेपिजीवन्मुक्तिलक्षणमुनित्वंनसिद्ध्यतितेनविद्वत्संन्यासःकार्यइतिबोधकस्यैतद्धस्मेत्यादेर्भवतइत्यंतवाक्यस्यार्थमाह विद्वांसइतित्रयोदशभिः । पूर्वमपियेब्रह्मात्मसाक्षात्कारवंतोऽभूवंस्तेपिविक्षेपजनकत्वेनकर्मसंन्यस्तवंतः यैस्तुआत्मानसाक्षात्कृतस्तेविविदिषयासंन्यस्यंतीतिकिमुवाच्यमित्यर्थः १६५९ विद्वत्पदार्थविशेषणभूतंज्ञानंसाक्षात्काररूपंग्राह्यमितिदर्शयन्नुक्तंस्फुटयति प्रत्यक्षतइति । यैःस्वयंज्योतिरादिरूपआत्माप्रत्यक्षतोदृष्टस्तेपिकर्मणोविषयभोगवद्विक्षेपरूपतांविज्ञायसर्वविषयकामनांसंत्यज्यकर्मनचक्रुःसंन्यस्तवंतइतियावदितिद्वयोःसंबंधः १६६०

१६६१ विमाइति । तेचमहाधियोविद्वांसइतिउक्ताःपृष्टाःसंतएवंवक्ष्यमाणविधयाआहुरुत्तरंदत्तवंतः । इतिकथं हेविमाभवद्भिर्दारसंग्रहःकिमर्थंनकृतः । कीदृशोदारसंग्रहः सुखप्रजादःसुख हेतुसंततिप्रदायकइत्यर्थः १६६२ तेषामुत्तरवाक्यमभिनयति सुखमितित्रिभिः । आत्मस्वरूपभूतसुखादधिकंसुखंनास्तितच्चात्मरूपंसुखंसाध्यसाधनभावविवर्जितमस्माकमपरोक्षमित्यर्थः १६६३ प्रजातीति । इहलोकेपरलोकेवाप्रजातिसुखस्यसंततिप्रयुक्तसुखस्यसिद्ध्यर्थंसाधकोद्वारद्वारतयापरम्परयासद्दारसंग्रहःस्यात् वयंतुतेविद्वांसःस्वयंसुखरूपाःसंतःप्रजयाकिंप्रयोजनंसाधयामः नहितयामोक्षेकश्चिदुपकारोनरययोनिष्वपिविद्यमानत्वादित्यर्थः १६६४ नचास्माकंक्षुद्रसुखकामनाआनंदनिधिरूपत्वादित्याहुः अस्माकमिति । हियतःएषांलौकिकानंदानांबिंबभूतआनंदोस्माकंस्वात्मनःस्वरूपादभिन्नोनिधिवदक्षयःस्वयंज्योतिरादिलक्षणोऽयमपरोक्षोवर्ततइत्यर्थः १६६५ इत्येवमिति । इत्येवंवादिनस्तेसर्वेविद्वांसःसंन्यासाश्रममागताःसंतोभिक्षाचर्यंभिक्षांचरन्तिस्मकुर्वंतिस्म । कीदृशास्ते केचित्कृतदाराःविवाहिताः केचिदपरे । अपरपदार्थमाह अगृहीत्वेति । दारपाणिग्रहणमकृत्वैवतुष्टाः । किंकृत्वा पुत्राणांवित्तानांलोकानांचसंबंधि

विक्षेपकारणंकर्मनित्यंविषयवद्भवेत् ॥ इतिविज्ञायसंत्यज्यकर्मचक्रुर्नकामनाम् १६६१ विप्राभवद्भिःकेनायंनकृतोदारसंग्रहः ॥ सुखप्राजादइत्युक्ताएवमाहुर्महाधियः १६६२ सुखंनैवाधिकंकिंचिदात्मनोविद्यतेत्रभोः ॥ तच्चास्तिसर्वदास्माकंसाधनादिविवर्जितम् १६६३ प्रजातिसुखसिद्ध्यर्थंइहचापिपरत्रवा ॥ द्वारद्वारतयासस्यात्सुखरूपाश्चतेवयम् ॥ प्रजयाकिंकरिष्यामःश्वादीनांविद्यतेहिया १६६४ अस्माकंविद्यतेह्येषामानंदोयंनिधेःसमः ॥ अक्षयःस्वात्मनोभिन्नःस्वयंज्योतिःसदद्वयः १६६५ इत्येवंवादिनःसर्वेकृतदारास्तथापरे ॥ अगृहीत्वैवदाराणांपाणिंपरमनिर्वृताः १६६६ पुत्राणामपिवित्तानांलोकानांचोभयात्मनाम् ॥ इहामुत्रसुखार्थानांपरित्यज्यैषणात्रयम् ॥ भिक्षाचर्यंचरंतिस्मसंन्यासाश्रममागताः १६६७ पुत्रैषणाऽत्रयाप्रोक्तासैववित्तैषणास्मृता ॥ पुत्राणामपिवित्तत्वंपितुःस्याद्गोधनादिवत् १६६८ वित्तैषणातुयाप्रोक्तासास्याल्लोकैषणासदा ॥ वित्तंहिसुखहेतुःस्याल्लोकोनाकादिकोयथा १६६९ उभेएवततोज्ञेयेएषणेवेदुवादिभिः ॥ सुखेचैकाद्वितीयास्यात्साधनेतस्यसर्वदा १६७० असाधनंसुखंयेषांसर्वातिशयवर्जितम् ॥ वर्ततेकेनतेकुर्युरेषणामुभयीमपि १६७१ स्वयंज्योतिःपुरीतत्स्थआनंदात्मामहेश्वरः ॥ सएवात्मतयाराजन्विद्वद्भिरधिगम्यते १६७२

एषणात्रयंकामनात्रयंपरित्यज्य कीदृशानांलोकानां ऐहिकामुष्मिकभोगसाधनत्वेनोभयात्मनांद्विविधानामितिद्वयोरर्थः १६६६ । १६६७ वस्तुतस्तुवर्णितत्रिविधैषणाएकत्वेनैवगण्यासाधनैषणात्वेनसर्वासांसंग्रहाद्वितीयातुफलैषणेत्येषणाद्वैविध्यमेवेतिवक्तुंवर्णितमेषणात्रयंसाधनैषणात्वेनैकीकरोति पुत्रैषणेतिद्वाभ्यां । पुत्रैषणावित्तैषणात्वेनैवमंतव्या पुत्राणामपिगोसुवर्णादिरूपवित्तवद्भोगोपकरणत्वेनवित्तत्वात् । तथावित्तैषणापिलोकैषणात्वेनमंतव्या लोकपदस्यभोगसाधनवाचित्वाद्वित्तस्यापिचस्वर्गादिवद्भोगसाधनत्वादितिद्वयोरर्थः १६६८ । १६६९ फलितमाह उभेइति । फलतत्साधनविषयकत्वेनसंसारेएषणाद्वैविध्यमेवेत्यर्थः १६७० विद्वांसस्तुनित्यसिद्धसुखरूपत्वात्साधनस्यानपेक्षितत्वाच्चद्विविधामप्येषणांनकुर्वंतीत्याह असाधनमिति । असाधनंसाधनानपेक्षंनिरतिशयंसुखंयेषांवर्ततेनोद्विविधामेषणांकिमर्थंकुर्वीरन्नित्यर्थः १६७१ आत्मनःसंन्यासादिसहकृतज्ञानैकलभ्यत्वस्फुटीकरणायउत्पाद्यविकार्यादिकर्मफलविलक्षणस्वरूपंप्रदर्शयतःसएषइत्यादेर्नेरिष्यतीत्यंतस्यवाक्यस्यार्थमाह स्वयमितिनवभिः । यःपूर्वंग्रंथेआनंदादिरूपतयामहेश्वरोवर्णितःसविद्वद्भिरात्मतयैवाधिगम्यतेइतिसंबंधः १६७२

एषइति । एषएवमयापूर्वंशाकल्यायपृष्टः कीदृशोनेतिनेतीतिवाक्यगतनञ्द्वयेनमूर्तामूर्तजगतोर्भावाभावयोर्वाक्रमेणानिषेधेनतद्वार्जितइत्यर्थः १६७३ अगृह्यपदार्थमाह स्वयंज्योतिरिति ॥ स आत्मास्वयंज्योतिरविषयोऽतोवागाद्यैराध्यात्मिकैरग्न्यादित्यादिभिर्बाह्यैश्चप्रकाशैर्नगृह्यतेनप्रकाश्यते । तत्रोपपत्तिमाह ग्राहकत्वमित्यादिना । हियतोग्राहकत्वंग्राहकशब्दप्रवृत्तिनिमित्तभूतंग्रहण मितरसापेक्षंबुधैरुक्तमित्यर्थः १६७४ ग्रहणस्यप्रकाशनरूपस्यभेदसापेक्षत्वेऽनुभवंप्रमाणयति ग्राहकेति । यस्माद्ग्राहकादिपंचपदार्थानांकर्तृकरणकर्मतन्निष्ठफलतत्संबंधानांभेदशाल्येवग्रहणंप्र काशनंलोकेजायमानंदृष्टंनतुतद्भेदहीनमित्यर्थः १६७५ आत्मातुसर्वभेदहीनःकथंग्राह्यःस्यादित्याह स्वसजातीति स्पष्टम् १६७६ अशीर्यइति । भेदाभावहेतुकात्ततोविषयत्वाभावादयमा त्माऽशीर्योहिंसनयोग्योनभवतियतोहिंस्रशिरोमणेःकालस्यसंबंधात्परिणामरूपंविशरणमपिवस्त्रादिवदात्मनिनदृश्यतइत्यर्थः १६७७ अतएवेति । अतोभेदाभावादेवआत्माअभितउभयतोंतर्बहिर्वा वर्तमानैःसर्वपदार्थैःसंगहीनः यतोभेदवदेववस्तुसंगवद्दृष्टमितिसंबंधः किंचभेदवदेववस्तुप्रबद्धचतेबंधंप्राप्नोतिविनश्यतिचआत्मातुअतोभेदाभावान्नसज्जतेनबद्धचतेनविनश्यतिचनवाक्रियासंबंधम युक्तंदुःखमाप्नोतीतिद्वयोरर्थः १६७८ । १६७९ एतादृशस्वभावत्वादेवात्मविज्ञानेधिकारिणःसकलकर्मत्यागिनउक्ताइत्याह एषणेति स्पष्टम् १६८० उक्तात्मविज्ञानफलप्रदर्शकस्यैतमुहेत्यादे

एषपृष्टोमयापूर्वंशाकल्यायमहात्मने ॥ मूर्तामूर्तजगद्भावाभावरूपविवर्जितः १६७३ स्वयंज्योतिःसवागाद्यैरग्न्याद्यैश्चनगृह्यते ॥ ग्राहकत्वंहिसापेक्षंसर्वदोक्तं मनीषिभिः ७४ ग्राहकग्रहणग्राह्यफलसंबंधभेदभाक् ॥ ग्रहणंजायतेयस्मान्नतुभेदविवर्जितम् ७५ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः ॥ आनंदात्माततोऽग्र ह्यःस्वयंज्योतिःपरःपुमान् ७६ अशीर्यस्ततएवायंभेदाभावेनहेतुना ॥ नशीर्यतेयतःस्वात्मायथावस्त्रादिकंशनैः ७७ अतएवाभितःस्वात्मासर्वसंगविवर्जितः ॥ संगवद्भेदवद्दृष्टंभेदवच्चप्रबध्यते ७८ विनश्यतिचनात्मातःसज्जतेनविनश्यति ॥ नचदुःखंसमाप्नोतिकिंचिद्दुःखविवर्जितः ७९ एषणात्रयनिर्मुक्ताभिक्षाचर्यपराय णाः ॥ यंजानंतिमहात्मानस्तंकोवेत्तिपुमान्सुधीः १६८० एतमेवात्मविज्ञानसंपन्नंपुरुषोत्तमम् ॥ सुखदुःखकरेनित्यंपुण्यपापेसुदुःसहे ८१ अकर्तुश्चतथाकर्तुः सदासंतापकारके ॥ नतापयतइत्यंतेतापदेसर्वदेहिनाम् ८२ करणात्तापयेत्पापंकर्तारंफलतोपिच ॥ सुकृतंकरणात्तद्वत्स्वफलस्यक्षयादिना ८३ गर्वेणतापयेत्तद्वद् कर्तारंहिपाप्मनः ॥ लोकदुःखासहिष्णुत्वात्तापयेच्चापरंहितत ८४ सुकृतंदुःखसंप्राप्त्याह्यकर्तारंप्रतापयेत ॥ लोकद्वयेपिलोकानामुच्चतावीक्षणेनच १६८५

वाक्यस्यार्थमाह एतमेवेत्येकादशभिः । एतमात्मविदंपुरुषोत्तमंपुण्यपापेनतापयतः । कीदृशे सुखदुःखरूपफलारंभणेनसुदुःसहेउत्कटवेगतयाप्रसिद्धे । पुनःकीदृशे इतिवक्ष्यमाणप्रकारेणकर्तुरकर्तु श्चसदातापके अंतेउत्क्रमणानंतरंविशेषतश्चतापकेइतिद्वयोःसंबंधः १६८१ । १६८२ तत्रसदातापकत्वंपुण्यपापयोर्विशदयति करणादितित्रिभिः । पापंपापरूपंकर्मकष्टंकर्मेतिन्यायात्करणादनुष्ठानक्ले शात्तापयेत्तथाफलतःफलरूपेणतापयेत् एवंसुकृताख्यमपिकर्मकरणादनुष्ठानक्लेशात्तथाफलरूपेणक्षयित्वाच्चकर्तारंतापयतीत्यर्थः ८३ एवंकर्त्तारंप्रत्युभयोस्तापकत्वमुक्त्वाअकर्त्तारंप्रत्यपितापकत्वं विशदयति गर्वेणेति । पाप्मनःपापस्याकर्त्तारंतत्पापंगर्वद्वारातापयति दृश्यंतेह्यज्ञाःपापाकरणेगर्विताइतिभावः । तथाऽपरंपुण्यंतत्कर्मअकर्त्तारंकृपादुःखेनतापयति पुण्यंहिलोकोपकाररूपंतदकृ तंसदुपकार्याणांदुःखितलोकानांदर्शनेकृपयादुःखयति तदुक्तं 'ईर्षुर्घृणीत्वसंतुष्टःक्रोधनोनित्यशंकितः । परभाग्योपजीवीचषडेतेनित्यदुःखिनः'इति ८४ सुकृतमिति । तथासुकृतंपापफलस्यदुःखस्य प्रतिबंधाकरणेनाकर्त्तारंतापयति तथाइहामुत्रवालोकानांस्वाननुष्ठितकर्मफलानांभोग्यानांस्वभोग्येभ्यउत्कर्षस्यदर्शनेनईर्ष्याद्वारासुकृतमकर्त्तारंतापयतीत्यर्थः १६८५

अंतेदुःखदत्वंविशदयति अस्मिन्निति । अस्मिन्नूलब्धेमनुष्यलोकेजननमारभ्यमरणपर्यंतमहंपापान्यकरवंकृतवानस्मितथापरंकेवलंपुण्यानिनाकरवमित्याकारेणसंकल्पेनपुण्यपापेअंतेतापयतइ त्यर्थः १६८६ विद्वांस्तुविज्ञानबलेनतयोरश्लेपादिरूपंतरणंकरोतियथाजांववदादिप्रकाशितंस्वमहिमानमनुसृत्यहनूमतासिंधुस्तीर्णइत्याह तरतीति । एवंविद्वान् एतेपुण्यपापे १६८७ सं कल्पवंतंहिपुण्यपापेतापयतोविदुषस्तुसंकल्पएवनास्तीतिकथंतापयतइत्याह विदुषइति । संकल्पभेदानभिनयति अनेनेत्यादिना स्पष्टम् १६८८ पुत्रेति । अनेनपुत्रेष्ट्यादिरूपकर्मणाअ स्मिन्नेवशरीरेपुत्रादिफलंभविष्यतितथाऽदःस्वाराज्यादिफलमस्मिन्नेवशरीरेनभविष्यतिइतिइत्यतोहेतोर्वाजपेयादिकर्मअदृष्टफलप्रदंपारलौकिकमेवेत्यर्थः १६८९ तथानेनेति । तथानेनब्राह्मणा पकारादिरूपेणकर्मणास्वार्थस्यस्वकीयप्रयोजनस्यसिद्धिंकुर्वतोममकुष्ठादिरोगोऽपकीर्तिश्चभविष्यतीति १६९० इत्यादीति । इत्यादिरूपेणबोधनसंकल्पेनतापकेइमेपुण्यपापेअस्यविदुषस्ताप प्रदेनभवतः ततोब्रह्मवित्पुण्यपापेतरतीत्युच्यतेइत्यर्थः १६९१ उक्तार्थसंवादकस्यऋक्संज्ञकमंत्रस्यार्थमाह मंत्रोपीतित्रिभिः । हेमहाराजउक्तविधंविद्वांसंमंत्रोपिइतिइत्थंप्रतिपादयति इतिक थं आत्मविदोब्राह्मणस्यायंस्वरूपभूतोमहिमाकूटस्थनित्यःकालत्रयेऽनन्यथाभावादित्यर्थः १६९२ यतःशुभाशुभकर्मकृतवृद्धिहानिरहितइत्याह वर्धतइति १६९३ तस्येवेति । तस्यपुरा

अस्मिन्देहस्यजननान्मरणांतमहंसदा ॥ पापान्यकरवंतद्वत्पुण्यानिनतथापरम् ॥ एवंसंकल्पतश्चापितपतःपुण्यपातके १६८६ तरत्येषउभेएतेदुस्तरेपुण्य पातके ॥ आत्मविज्ञानसंपन्नोहनूमानिवसागरम् ८७ विदुषोनास्तिसंकल्पःकोपिकुत्रापिकर्हिचित् ॥ अनेनकर्मणास्वर्गःसुकृतेनभविष्यति ॥ अनेननरकस्त द्वन्महतापातकेनमे ८८ पुत्रपश्वादिकंतद्वन्ममानेनभविष्यति ॥ अस्मिन्नेवशरीरेऽदोनेत्यदृष्टफलप्रदम् ८९ तथानेनमहारोगोलोकेऽकीर्तिश्चदारुणा ॥ भवि ष्यत्यचिरादेवस्वार्थसिद्धिंप्रकुर्वतः १६९० इत्यादिबोधतोयस्मान्नास्यतापप्रदेइमे ॥ ब्रह्मवित्तत एवायंपुण्यपापेतरेत्सदा ९१ मंत्रोप्याहमहाराजविद्वांसमिति सर्वदा ॥ ब्राह्मणस्यात्मविदुषोमहिमायंमहानहो ॥ नित्यःकालत्रयेप्यस्यनविपर्येतिकर्हिचित् ९२ वर्द्धतेकर्मणानायंसुकृतेनयथापरः ॥ कनीयानपिपापीवन भवेत्पातकेनच ९३ तस्यैवब्राह्मणस्यायंमहिमाब्राह्मणोभवेत् ॥ पदनीयात्मविज्ञानाद्योद्वयात्मवपुःस्थितः ॥ कोनामान्यस्तरेदेतेदुस्तरेपुण्यपातके ९४ यस्मा त्पूर्वेपिविद्वांसःपुण्यपापविवर्जिताः ॥ एषणात्रयनिर्मुक्ताजाताभिक्षाटनेरताः ॥ आत्मलोकेनसंपन्नाःपरिव्राजोजितेंद्रियाः ९५ तस्माद्यज्ञादिभिःक्षीणपातकःशु द्धमानसः ॥ आत्मेच्छुःप्रव्रजेदेवंगुणोभूत्वासदामुनिः ९६ मनसाविषयान्सर्वान्परित्यज्यार्भकोपमः ॥ दशेंद्रियाणिसंयम्यदुर्दांतानिववाजिनः १६९७

ब्रह्मीभूतस्यब्राह्मणस्यमहिमास्वरूपभूतंमहिमानंप्राप्तोऽयमिदानींतनोब्राह्मणोपिभवेत् कीदृशइदानींतनब्राह्मणः यःपदनीयस्पययथापदेनपादचिन्हेनगवादिर्बुद्ध्यतेतथाअस्तिभातिप्रियमित्याकारैः पदैर्वेदनीयस्यात्मनोविज्ञानादद्वयादिरूपतयास्थितः अन्यथापुण्यपापाभ्यामतीतोमहिमादुर्लभइत्यर्थः १६९४ वर्णितफलकमात्मज्ञानमुद्दिश्यशमाद्यंतरंगसाधनविधानपरस्यतस्मादित्यादेःप ञ्चतीत्यंतस्यार्थमाह । यस्मादित्यूनविंशतिश्लोकैः । यस्मात्पूर्वेपिविद्वांसोविवेकिनइहजन्मनिजन्मांतरेवानुष्ठितैर्यज्ञादिभिःशुद्धांतःकरणत्वात्पुण्यपापाभ्यांतत्प्रयोजकैषणात्रयेणचरहिताः संतआत्मनोलोकस्यदर्शनस्यदार्ढ्यरूपसंपत्तिफलकंजितेंद्रियत्वाद्यंतरंगसाधनसंपन्नंभिक्षाटनोपलक्षितंपारिव्राज्यंसंन्यासंकृतवंतइत्यर्थः १६९५ तस्मादिति । तस्मादिदानींतनोपियज्ञादिभिःक्षीण पातकत्वेनशुद्धमानसआत्मेच्छुरात्मज्ञानसंपत्तिकामएवंगुणोवक्ष्यमाणशमादिगुणसंपन्नःसन्प्रव्रजेदिति १६९६ तत्रशमदमौपूर्वोत्तरार्धाभ्यामभिनयति मनसेति । बालवद्रागादिराहित्यंशम मिंद्रियनिरोधात्मकंदमंचकुर्यादित्यर्थः शमादीनांपूर्वपूर्वस्योत्तरोत्तरंप्रतिहेतुत्वात्क्रमेणोपन्यासः १६९७

संतोषातिशयरूपामुपरतिमाह यथोपपन्नेति । यथोपपन्नमनायासागतम् १६९८ तितिक्षांक्षमारूपामभिनयति कर्मणेतिदशभिः । शरीरादिभिःकृताभूतैःप्राणिभिःपीडाममदेहादिष्वे वर्ततेनमत्स्वरूपेइतिजानन्नकुप्येदित्यर्थः १६९९ विचारयेदिति । भूतैरपकृतश्चइदमेवंविधंविचारंकुर्यात् इदंकिमित्याकांक्षायांनिंदामित्यादियोज्यं यदीमेलोकामांनिंदंतितदाबांधवा एवमदर्जितपापहरणरूपोपकारकारित्वादित्यर्थः १७०० बांधवत्वेहेतुमुपकारमेवविशदयति इतइति । काउपकृतिरितिच्छेदः १७०१ परोपकारेति । किंचएतेनिंदकत्वेनभासमा नाममतेपरोपकारिणःसज्जनाएवयतःस्वकीयेमनसिवःचिचमदीयदोषचिंतनादिरूपंदुःखमायासंदत्वानिधायममदुःखदंपापंहरंति कीदृशंपापं स्वस्यदुःखकरंह्रियमाणंसत्स्वस्यहर्तुर्दुःखप्रयो जकमित्यर्थः । तथाचशंभोर्हालाहलपानमिवपरपापहरणंसज्जनानांनचित्रंपरंत्वेतेनिंदकादुर्जनत्वेनप्रसिद्धाइतिचित्रमितिभावः १७०१ एवंनिंदाकालेविचारमुक्त्वाभूतानांस्वंप्रतिजि घांसांदृष्ट्वाकर्तव्यंविचारमभिनयति मह्यमित्यादिना । अमीलोकाःकस्मान्मह्यंद्रुह्यंतिजिघांसंतिमदनिष्टचिंतनफलंचांडालयोनित्वमेषांमास्त्विति कामये तदुक्तंमनुना ' परद्रव्याण्यभिध्यायं

यथोपपन्नलाभेनवर्त्तयेत्स्वकलेवरम् ॥ हर्षंनलाभतोगच्छेद्विषादंनाप्यलाभतः १६९८ कर्मणामनसावाचापीडांभूतैःकृतामपि ॥ देहेंद्रियमनःस्वेषजानन्कोपंनव्रजेत् ९९ विचारयेदिदंस्वस्यचित्तेस्वच्छतमेसदा ॥ निंदांयदिप्रकुर्वंतिममेमेबांधवास्ततः ॥ मयासमार्जितंपापंसर्वमेवनयंत्यमी १७०० इतःपरंममामीभिःकार्याकोपकृतिस्त्विह ॥ यतोदुःखकरंपापंममसर्वंनयंत्यमी १ परोपकारनिरताअहोएतेमहाधियः ॥ मनसोवचसःस्वस्यदुःखंदत्वाहिदुःखदम् ॥ ममपापंहरंत्येतेस्वस्यदुःखकरंसदा २ मह्यंद्रुह्यंतिमनसावतकस्मादमीवृथा ॥ माभूदंत्यजयोनित्वमेतेषांममचिंतनात् ३ हस्तयोःपादयोःकस्माद्व्यथामेतेप्रकुर्वते ॥ स्वस्यमेताडनादेषांमाभूद्दुःखंयथामम ४ नैतेकुर्वंतिमेकिंचिद्दुःखमत्रसमागताः ॥ पुराकृतंमयायत्तुतदेवात्रकरोतिमे ५ एतेममशरीराणिगुरुशास्त्रोपदेशतः ॥ माभूदेतेषुतद्दुःखंयदस्तिमयिसंप्रति ६ सर्वेत्रसुखिनःसंतुसर्वेसंतुनिरामयाः ॥ ममगात्रसमाजीवामाकश्चित्पापमाप्नुयात् ७ इत्यादिचिंतयित्वायंनिर्विकारोभवेत्सदा ॥ दुःखेभूतकृतेस्वस्यदेहेंद्रियमनःस्वपि ८ सावधानःसदाभूयादात्मनोदर्शनायहि ॥ गुरुशास्त्रोपदेशेनपरमास्तिक्यमागतः ९ तर्कैर्नानाविधैःसम्यक्शास्त्रमार्गानुसारिभिः ॥ यथोपदिष्टंत्वेतस्मिन्प्रत्ययानांप्रवाहतः १७१०

स्तथाऽनिष्टानिचिंतयन् । वितथाभिनिवेशीचजायतेऽत्यासुयोनिषु ' अभिध्यायन्स्पृहयन् वितथाःपाखंडास्तत्राभिनिवेशीआग्रहवानिति १७०३ हस्तयोरिति । यथास्वस्यहस्तयोःपाद योर्वास्वयंताडनमनुचितंतथामेशरीरस्यताडनंतेलोकाःकस्मात्कुर्वंति एकात्मकत्वाविशेषेणस्वांगवत्परांगताडनस्याप्ययुक्तत्वाविशेषात् अहंत्वेवंकामये एतेषांस्वस्यमेस्वशरीरतुल्यस्यमच्छ रीरस्यताडनान्मद्वद्दुःखंमास्त्वित्यर्थः १७०४ मद्दुःखदंतुमयापुराकृतंदुष्कृतमेवेत्याह नैतेइति स्पष्टम् १७०५ एतेइति । यतएतेप्राणिदेहाःसर्वेपिममैकस्यात्मनःशरीराणीतिगुरुशास्त्रो पदेशान्निश्चितमतइतिकामयेयत्संप्रत्यधुनामयिमच्छरीरेयद्दुःखंनंदतेषुप्राणिषुमाभूदिति १७०६ तस्मादेवमस्त्वित्याह सर्वेइति । गात्रंशरीरम् १७०७ इत्यादीति । स्वस्यदेहादिषुभूतैर्दुःखेकृतेसतिवर्णितविधविचारेणनिर्विकारोभवेदितिसंबंधः १७०८ समाधानंश्रद्धांचदर्शयति सावधानइति । अवधानंचित्तैकाग्र्यंतदद्वावरूपंसमाधानंगुरुप्रभृत्युपदेशानुसारिविश्वासरूपां श्रद्धांचकुर्यादित्यर्थः १७०९ तर्कैरिति । चकारोभिन्नक्रमः तथाचउक्तसाधनसंपत्त्यनंतरंसम्यक्शास्त्रंवेदांतरूपंतन्मार्गानुसारिभिरुत्तरमीमांसाप्रसिद्धैस्तर्कैःश्रवणमननसंज्ञैस्तथातथोपदि–

–टमुपदेशानुसारेणएतस्मिन्नात्मतत्त्वेप्रत्ययानांचित्तवृत्तीनांप्रवाहरूपेणनिदिध्यासनेनचसहकृतेनब्रह्माहमस्मीत्यादिरूपेणशास्त्रेणकरणेनउपकृतंयन्मनस्तेनैवदेवमवलोकयेत्साक्षात्कुर्यात् । कीदृशंदेवं मनसिसाक्षितयास्थितं । पुनःकीदृशं यज्ज्योतिषांज्योतिरुक्तंतद्रूपं । पुनःकीदृशं अद्वयत्वादानंदरूपमितिद्वयोःसंबंधः १७१० । १७११ तत्साक्षात्कारात्किंभवतीत्याकांक्षायां परिच्छेदहेतोरविद्याया निवृत्त्यासर्वात्मभावइत्याह तेनेतिद्वाभ्यां । तेनब्रह्मात्मविषयकेनविज्ञानेनआवरणविक्षेपरूपशक्तिद्वयवतीमायायतोबाधिताभवतीत्यतआत्मानंसर्वरूपंविदुषआत्मापश्यति कया स्वरूपभूतयाभासा यतोवागाद्यविषयइतिद्वयोरर्थः १७१२ । १७१३ नैनमित्यादिर्दास्यायेत्यंतस्यवाक्यस्यार्थमाह एवमितिद्वादशभिः । यएवमात्मवित्तत्स्वरूपंपुण्यपापेनतरतो नप्राप्नुतोनवातपतस्तापयतःकिंतुसविद्वानेवतेपुण्यपापेतरेत्तयोःपारंगच्छेत् यथानौरर्णवं किंचसविद्वांस्तेपुण्यपापेतपेद्दहेत् यथागमनादुत्थितोवैद्युतोग्निस्तूलराशिमितिद्वयोरर्थः १७१४ । १७१५ अनेनेति । वर्णितेनविदुषावर्णितैःसाधनैःप्राप्योयआत्मासयतःपापैस्तदुपलक्षितैःपुण्यैस्तन्मूलभूताविद्ययाचवर्जितोऽतएवासंशयश्चअतोहेतोर्ब्राह्मणोब्रह्मवित्ब्रह्मैवप्रोक्तः 'ब्रह्मवेदब्रह्मैवभवति'

सहब्रह्माहमस्मीतिशास्त्रेणकरणेनच ॥ मनस्यवस्थितंदेवंमनसैवावलोकयेत् ॥ यदुक्तंज्योतिषांज्योतिरानंदात्मानमद्वयम् १७११ तेनज्ञानेनविध्वस्तास्वात्मावरणरूपिणी ॥ विक्षेपजननीमायापुनर्नैवभविष्यति १७१२ अस्याःसर्वात्मनानाशेसर्वमात्मेतिसर्वदा ॥ पश्यत्यात्माऽऽत्मनोभासाह्यवाङ्मनसगोचरः १७१३ एवंयआत्मविल्लोकेउभेसुकृतदुष्कृते ॥ अल्पेचमहतीराजंस्तरतस्तपतोपिन १७१४ किंतुतेएवविद्वान्सतरेन्नौरर्णवंयथा ॥ तपेच्चगमनाद्वह्निस्तूलराशिंयथाक्षणात् १७१५ अनेनविदुषाप्राप्योयएतैःसाधनैःसदा ॥ पुण्यपापैर्विनिर्मुक्तोह्यविद्यागंधवर्जितः ॥ असंशयस्ततःप्रोक्तोब्राह्मणोब्रह्मभूतकृत् १७१६ सुषुप्तेसर्वंसंप्राप्योब्रह्मलोकःपुरेरितः ॥ एषबुद्धिप्रचाराणांसाक्षीसर्वशरीरिणाम् १७१७ अयंहृदिस्थितोराजन्ममतेप्यन्यदेहिनाम् ॥ अयंहिज्योतिषांज्योतिरानंदोयंपरःस्मृतः १७१८ मरणेजननेवायंतथावस्थात्रयेपिवा ॥ अविद्ययामहाराजगच्छन्नपिनगच्छति १७१९ अभयंब्रह्मयत्पूर्वंमयातेकथितंनृप ॥ तदेवायमितोनान्यःसन्नसन्नात्रविद्यते १७२० इतितेकथितंसम्यक्ज्ञानंसाधनसंयुतम् ॥ सम्राट्प्रसन्नचित्तस्त्वंप्रतिबुद्धोसिधीधन १७२१ इत्युक्तेयाज्ञवल्क्येनप्रतिबुद्धोनराधिपः ॥ अनयोक्त्यानिजंबोधमुक्तवान्मुनयेतदा १७२२ इमेविदेहायेपूर्वंतुभ्यंदत्तामयिस्थिताः ॥ सुतादिसहितोहंचपुरतोयंस्थितस्तव १७२३

इतिश्रुतेः । कीदृशंब्रह्म भूतकृत्जगत्कारणत्वोपलक्षितमित्यर्थः १७१६ सुषुप्तइति । यःपूर्वंसुप्तौसर्वगम्यब्रह्मलोकतयावर्णितःसएवसर्वबुद्धिसाक्षितयातेदर्शितइत्यर्थः १७१७ अयमिति । अयमात्मासर्वेषांहृदिस्थितःसर्वभासकानंदरूपोमरणाद्यवस्थास्वविद्ययागच्छन्भ्रमन्नपिवस्तुतोमरणादिकंनगच्छति सर्वसंसारधर्मातीतइतियावत् १७१८ । १७१९ अभयमिति । यत्पूर्वंकूर्चब्राह्मणेअयमात्माअभयंब्रह्मेतितुभ्यमुक्तंतदेवाभयंब्रह्मेहात्मतयावर्णितमितिव्यतिहारभेदान्नपौनरुक्त्यमितिभावः अत्रात्मनिअन्योभिन्नसत्ताकःसन्स्थूलोऽसन्सूक्ष्मोवाकश्चिद्भावोनविद्यतेइत्यर्थः १७२० इतितेइति । हेसम्राट्महाराजत्वंप्रबुद्धोसीत्यतःप्रसन्नचित्तोभवेति १७२१ इत्युक्तेइति । याज्ञवल्क्येनेत्युक्तेसतिराजाअनयाबोधापूर्तिबोधकसहस्रदक्षिणावाक्यविलक्षणयाउक्त्यावचनभंग्यास्वंबोधंपरिपूर्णंज्ञापितवानित्यर्थः १७२२ तांवचनभंगीमभिनयति इमेइतिद्वाभ्यां । हेब्रह्मन्निमेविदेहानांनिवासोजनपदोयेपूर्वमेवमयार्पितामय्यन्यासवत्स्थिताःअहंचसानुबंधःसंमुखेस्थितोस्मि मामेतांश्चमत्सुतादीन्दास्यायदासकर्मणेगृहीत्वास्वीकृत्यापरंस्थानंगच्छेद्वातिष्ठ अहंतुत्वयाविनानासेनस्थास्यामीतिद्वयोरर्थः १७२३

१७२४ इत्युक्तइति । स्नेहोनुग्रहः आसनंस्थानम् १७२५ उत्तराध्यायार्थंजिज्ञासामुत्थापयति पश्चादिति । समुनिःपश्चाजायायैब्रह्मविद्यांसमर्प्यसंन्यस्यचराज्ञासहमोक्षंप्राप्तः १७२६ पूर्वग्रंथेइतिहासरूपेणवर्णितंयदात्मतत्त्वंतस्यसगुणनिर्गुणंचरूपंतद्विज्ञानफलंचकंडिकाद्वयेनोक्तंतत्रध्येयस्यसगुणरूपस्यप्रदर्शिकायाःप्रथमकंडिकायाअर्थमाह सएवेतिद्वाभ्यां । योवर्णितःसएवात्मासगुणरूपेणान्नादःसर्वोपाधिपुस्थित्वासर्वान्नानांभोक्तातथावसुदानःवसोर्धनस्यकर्मफलात्मकस्यदाताच वसोरातेर्धनस्यतद्दातुश्चपरायणंपरमालंबनं तत्ररातेर्भोग्यरूपधनस्यपरायणत्वादन्नादः दातुर्यजमानस्यप्रतिभूत्वपरायणत्वाद्वसुदानइतिविभागश्चतुर्थपादरूपाश्रुतिःपंचमांतेपिव्याख्याताति १७२७ अन्नादत्ववसुदानस्वरूपविशेषणद्वयेनोपासनस्यफलमाह संप्रदानेति । अयमुक्तविशेषणात्मोपासकःसंप्रदानवपुर्नानोपायनानांपात्ररूपोभूत्वालोकैर्दत्तमर्पितमन्नादिरूपंवसुधनमत्तिभुंक्तेतथा यतोदातात्रजन्मांतरेवाभोक्ताभवतीत्यतोदातृरूपःप्रशस्तोदातासन्नानाविधंवसुधनंप्रयच्छतिददातीत्यर्थः १७२८ अंत्यकंडिकायाःसफलनिर्गुणविद्यानिगमनरूपायाअर्थंदर्शयति विज्ञानेतित्रिभिः । अयमात्माविज्ञानादिरूपोमुनिनाजनकायाभयत्वेनवर्णितइत्यर्थः १७२९

स्वदास्यायचमांब्रह्मन्गृहीत्वैतान्व्रजापरम् ॥ स्थानकंतिष्ठवात्रत्वमासेनाहंत्वयाविना १७२४ इत्युक्तोयाज्ञवल्क्योपिराजस्नेहसमावृतः ॥ मिथिलोपवनेतस्थौकृत्वासनमनिंदितम् १७२५ पश्चात्संन्यस्यजायायैब्रह्मविद्यांसमर्प्यच ॥ राज्ञातेनसमंप्राप्तःस्थानमावृत्तिवर्जितम् १७२६ सएवायंमहानात्माजरामरणवर्जितः ॥ अन्नादोवसुदानश्चरातेर्दातुःपरायणम् १२२७ संप्रदानवपुर्भूत्वादत्तमन्नादिकंवसु ॥ अत्तिदाताचभोक्तायंभवेज्जन्मांतरेत्रवा ॥ वसुनानाविधंतद्वद्दातृरूपःप्रयच्छति १७२८ विज्ञानानंदरूपोयंजनकायमहात्मने ॥ याज्ञवल्क्येनमुनिनाकीर्तितोभयवर्जितः १७२९ दुःखंजनिस्मृतिप्रोक्तंप्राप्नुयाज्जरसावृतः ॥ अजरोमरआत्मातोजायतेम्रियतेनच १७३० देहद्वयविनिर्मुक्तोमाययाचविवर्जितः ॥ सर्वगोब्रह्मरूपोयंनभोवन्मुनिनेरितः १७३१ इतितेकथितंसर्वंजनकाय यदेरयत् ॥ याज्ञवल्क्योमहाप्राज्ञःकिमन्यच्छ्रोतुमिच्छसि १७३२ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेबृहदारण्यकयाज्ञवल्क्यकांडसारार्थप्रकाशेयाज्ञवल्क्यजनकसंवादोनामषष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

अभयत्वेहेतुतयाऽजरत्वादिकंयोजयति दुःखमित्यादिना । योहिजरसामृतोजरयामरणेनचसंबद्धःसजन्मादिकालिकंदुःखंभयंचप्राप्नुयादयमात्मातुनतथायतोऽजरादिरूपइतिसंबंधः १७३० तत्रहेतुर्ब्रह्मत्वलक्षणंमहत्त्वमित्याह देहेति । स्पष्टम् १७३१ उपसंहरति इतीति । ऐरयदुक्तवान् १७३२ यःपष्ठोविश्वमारभ्यदेवःषष्ठीपतेःपिता । सषष्ठार्पणसंतुष्टःकष्टंदृष्ट्वाप्रतक्षति । अस्यार्थः । विश्वतैजसप्राज्ञविराट्सूत्रेश्वरात्मकानामवस्थानांगणनेयःषष्ठईश्वरःषष्ठीपतेःस्कंदस्यपिताचसषष्ठस्याध्यायस्यमनसोवाषष्ठेंद्रियस्यार्पणेनतुष्टःसन्दृष्ट्वासानुग्रहकटाक्षेणस्वरूपाविर्भावेणवाकष्टमज्ञानेनतत्कार्येणवाप्रयुक्तंप्रतक्षतिहरतीति ॥ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आत्मपुराणटीकायां सत्प्रसवाख्यायांषष्ठोध्यायःसमाप्तः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ सप्तभिःकरणैर्द्वारैःप्रमायस्यप्रजायते ॥ सदेवःप्रथमःसम्यक्सप्तमेत्रविविच्यते ॥ १ ॥ ज्ञानेंद्रियाणिमनोबुद्धिश्चेत्याकारैःसप्तभिःकरणै रेकार्यनप्रक्रियायांवक्ष्यमाण विधयाप्रमेयत्वादात्मासप्तमपदवाच्यइतिभावः ॥ बृहदारण्यकतृतीयाध्यायेषष्ठाध्यायेचपठितमैत्रेयीब्राह्मणस्यार्थमुपबृंहयितुंतत्रशिष्यजिज्ञासांपूर्वोक्तानुवादपूर्विकांदर्शयति ब्रह्मेतिदशभिः । याज्ञवल्क्येनजनकायोक्तांब्रह्मविद्यांगुरुमुखात्श्रुत्वाशिष्योभूयःपप्रच्छेतिसंबंधः १ भगवन्निति द्वयंस्पष्टम् २ । ३ मधुनइति । षडध्यायीरूपेबृहदारण्यकेद्वाभ्यांद्वाभ्यामध्यायाभ्यांघटितानांकाण्डानांत्रयं । तत्रप्रथमंमधुनोमधुविद्यायाःप्राधान्येनप्रकाशकत्वान्मधुकांडमित्याख्यायते । द्वितीयंयाज्ञवल्क्यसंबंधायाज्ञवल्क्यकांडमिति । तृतीयंतुखिलस्यपरिशिष्टार्थस्यसंबंधात्खिलकांडमिति । तेषामंतेपुप्रोक्तवंशानांभेदोऽभेदश्चकश्चनाद्भुतोव्याख्यातइतिसंबंधः ४ अश्विनोरिति । सर्वज्ञेनदधीचामुनिनासहाश्विनोःसंवादोव्याख्यातः ताभ्यामश्विभ्यांततोमुनेर्यथापूर्णब्रह्मावि

श्रीगणेशायनमः ॥ ॥ ब्रह्मविद्यामिमांश्रुत्वाजनकायसमीरिताम् ॥ याज्ञवल्क्येनशिष्योसौगुरुवक्त्रारविंदतः ॥ पप्रच्छस्वगुरुंभूयोब्रह्मविद्याश्रयांकथाम् १ भगवन्भवताख्यातमैतरेयसमीरितम् ॥ ज्ञानंनानाविधाख्यानयुक्तंवैराग्यसंयुतम् २ यच्चकौषीतकिप्रोक्तंसूर्योक्तंचविभागशः ॥ इंद्रप्रतर्दनाख्यानमद्भुतंरोमहर्षणम् ॥ अजातशत्रोःसंवादोदृप्तबालाकिनातथा ३ मधुनोयाज्ञवल्क्यस्यतृतीयस्यखिलस्यच ॥ कांडत्रयस्ययोवंशोभिन्नाभिन्नश्चकश्चन ४ अश्विनोःसहसंवादऋषिणासर्वदर्शिना ॥ दध्यङ्ङाथर्वणात्ताभ्यांप्राप्ताविद्यातिदुर्लभा ॥ पूर्णस्यब्रह्मणस्तद्वच्छक्रेणचदिवौकसा ५ परोपकारनिरतोदध्यङ्ङाथर्वणोमुनिः ॥ प्राप्तवान्व्यसनंशक्रादश्विभ्यांचसुदुःसहम् ६ याज्ञवल्क्यस्यसंवादोमुनिभिश्चाश्वलादिभिः ॥ विजयस्तस्यविप्रस्यशाकल्यस्यमृतिस्तथा ७ जनकस्योपदेशोयोयाज्ञवल्क्यकृतोमहान् ॥ पुनश्चकामवरतोयतोराजाभवत्कृती ८ तत्रांतेभवताप्रोक्तंयाज्ञवल्क्योमहामुनिः ॥ जायायैब्रह्मविज्ञानंदत्वासंन्यासमागतः ९ तदहंश्रोतुमिच्छामिजायायाआहयद्द्विजः ॥ कीदृशंतद्धिविज्ञानंयदुक्तंप्रव्रजिष्यता १० इत्युक्तेगुरुरत्यंतंसंतुष्टहृदयस्तदा ॥ मधुनोयाज्ञवल्क्यस्यकांडद्वयसमीरिताम् ॥ वैदिकींशिष्यमाहैतांकथांकर्णसुखप्रदाम् ११ धर्मात्मायाज्ञवल्क्योयमासीद्वाजसनेयकः ॥ बाल्यादारभ्यतेजस्वीविषयेपुगतस्पृहः १२ विकारीवबहिर्भातिचित्तदोषविवर्जितः ॥ लोकोपकारनिरतोबाल्येतपउपाश्रितः १३ नारीवृकसमाकीर्णेप्रविष्टोयद्वनेवने ॥ नचचालमुनिर्धैर्याद्धीराणांप्रथमःस्थितः १४ वर्षासुस्थंडिलेष्वेववसत्यावरणंविना ॥ वृक्षपर्वतवत्तिष्ठन्गृह्णन्धारामपोमयीम् १५ उष्णकालेचमध्याह्नेबहुतप्तशिलादिषु ॥ वसत्यावरणंहित्वावह्नीनांमध्यतःस्थितः १६

द्याप्राप्ताइंद्रेणचतथाव्याख्यातमेवमग्रेपि ५ परोपकारेति । व्यसनंशिरश्छेदरूपांविपत्तिम् ६ याज्ञवल्क्यस्येति । स्पष्टम् ७ जनकस्येति । कामवरतःकामवरेणयतःकामवरप्रभावाद्राजाकृतीकृतकृत्योजातः ८ तत्रेति । तत्रकामवरप्रयुक्तसंवादाध्याये प्रव्रजिष्यतासंन्यासोद्यतेन ९ । १० इतिपृष्टोगुरुर्मधुकांडेयाज्ञवल्क्यकांडेचप्रोक्तस्यमैत्रेयीब्राह्मणस्यार्थोपबृंहिकांकथांवक्तुमुपचक्रमइत्याह इत्युक्तइति ११ तत्रप्रथमकंडिकार्थंपादोनशतद्वयश्लोकैरुपबृंहयन्बाल्यादारभ्ययाज्ञवल्क्यकथामाह धर्मात्मेत्यादिना । अयंधर्मात्मायाज्ञवल्क्योबाल्यादारभ्यविषयेपुगतस्पृहआसीत् १२ तत्रहेतुमाह विकारीवेतिद्वाभ्यां । विकारीवविकारितुल्यः तपउपाश्रितस्तपोरतः १३ नारीति । यत्यतोघनेगहरेवनेनारीभिरिंद्रप्रेषिताभिर्वृकवद्दंष्ट्रस्युपयांतीभिर्व्याप्तेप्रविश्यतपस्यन्धैर्यान्नचचालयतोधीराणांप्रथमोमुख्यः १४ तस्यतपोवर्णयति वर्षास्वितिषड्भिः । वर्षाकालेच्छत्रादिकमावरणंविनास्थंडिलेष्वेववृक्षादिवन्निश्चलोवसति १५ उष्णेति । स्पष्टम् १६

शीतेति । हिमचयस्तुहिनराशिस्तद्व्याप्ते १७ आराधयन्निति । तदेकनयनं आदित्यप्रणिहितदृष्टिः १८ पर्णेति । पर्णाद्याहारेणक्रमेणदेहंशोषयन्नादित्यमेवपरब्रह्मरूपेणध्यायन्पित्रोपनय नकालेउपदिष्टांगायत्रींजपंश्चतेपे १९ । २० एवमिति । एवंतपःकुर्वतोविघ्नभयेनाप्रमत्तस्यचतस्यबहुकालेव्यतीतेआदित्यःपुरुषरूपेणप्रादुरासेत्यर्थः २१ एताभ्यामिति । पाण्यादिविशे षणैरेतच्छब्दैःप्रत्यक्षविषयस्थूलशरीरसंबंधबोधकैर्मानसत्वंव्यावर्त्यते तथाचक्रमेणभूमिस्पर्शिभिःपाणिमूर्द्धहृदयपादैर्दंडवत्प्रणतोयाज्ञवल्क्योजगतःप्राणभूतमादित्यंपश्यंस्तुष्टावेतिद्वयोःसंबंधः । जगत्प्राणत्वेश्रुतिस्तु 'प्राणःप्रजानामुदयत्येपसूर्यः' इत्याथर्वणेप्रोक्ता २२ । २३ देवोपीति । रविर्देवोपिप्रसन्नःपाणिभ्यांमुनिंस्पृष्टवानिदंवचनमाहचेति इदंकिं हेवत्सत्वंप्रथमेवयसि वनंगतोबहुधाक्लेशंप्राप्तोऽतोवरंगृहाणेतिद्वयोरर्थः २४ । २५ इत्युक्तेइति । तिर्यग्दृष्टिरितितेजस्विनःसंमुखंद्रष्टुमशक्यत्वात् २६ याज्ञवल्क्यवाक्यमभिनयति भगवन्नितिद्वादशभिः । स्प

शीतकालेस्थिरेतोयेस्थलेहिमचयावृते ॥ चित्तेविकारशून्यःसन्निमग्नइवातिष्ठति १७ आराधयन्नमुंदेवंज्योतीरूपंत्रयीमयम् ॥ मंडलस्थितमादित्यंतदेकनयनः सदा १८ पर्णमूलफलाहारःशोषयन्नात्मनोवपुः ॥ तृतीयेदिवसेभुंक्तेक्कापिषष्ठेमहामुनिः १९ द्वादशेदिवसेक्कापिश्रमनिद्राविवर्जितः ॥ मनसाब्रह्मपरममादित्यं चिंतयन्मुहुः ॥ पित्रादत्तांचसावित्रींसर्वदाप्रजपन्गिरा २० एवंतपस्यतस्तस्यविघ्नराशेश्चबिभ्यतः ॥ अप्रमत्तस्यविप्रस्यकालेमहतिभास्करः ॥ वरदोमांसन यनगोचरोभूत्पुमाकृतिः २१ एताभ्यामेवपाणिभ्यांमूर्ध्नानेनोरसातथा ॥ पद्भ्यामाभ्यांचसहसापतितोदंडवद्भुवि २२ दुर्दर्शंजगतांप्राणंदृष्ट्वास्तपसःफलम् ॥ याज्ञवल्क्योपिसंहृष्टस्तुष्टावचयथामति २३ देवोपिचजगत्प्राणआनंदाश्रुविलोचनः ॥ रोमांचकंचुकोभूत्वापस्पर्शमुनिपुंगवम् ॥ पाणिभ्यांवचनंचेदमाहभक्त प्रियोरविः २४ वत्सत्वंबहुधाक्लेशंप्रथमेयद्वनंगतः ॥ वरंवरयभद्रंतेदास्यामीप्सितमेवते २५ इत्युक्तेयाज्ञवल्क्योपिप्राहदेवंप्रभाभृतम् ॥ बद्धांजलिपुटोमूर्ध्नितिर्यग्दृष्टिरधोमुखः २६ भगवन्जगतःप्राणकर्मसाक्षिन्महेश्वर ॥ नतेस्त्यविदितंकिंचित्तथाप्येतद्वदाम्यहम् २७ वैशंपायननामानंव्यासशिष्यमहंसदा ॥ देवव त्पूजयन्नासंकर्मणामनसागिरा २८ तस्यसंकेतभेदेनब्रह्महत्यावृथाभवत् ॥ ब्रह्मघ्नंखिन्नवदनमवदंगुरुमप्यहम् ॥ गुरुभक्त्यैवचतथाबटूनामनुकंपया २९ भवा न्वृद्धोमहाभागप्रायश्चित्तेक्षमोनहि ॥ अशक्ताश्चतथासर्वेशिष्यास्तेब्रह्मचारिणः ३० बालाइमेहिकठिनदेहोहंयौवनोन्मुखः ॥ प्रायश्चित्तंकरिष्यामिब्रह्महत्याकृते तव ३१ इत्युक्तेदैवयोगेनगुरुःकोपमुपागतः ॥ मामभाषतकोपेनबहुशोनिर्घृणोयथा ॥ मुंचमुंचेतिविद्यांत्वंमद्दत्तांविप्रनिंदक ३२ एवमुक्तोहमप्येनंप्रणिपाता दिनाबहु ॥ प्रसादयितुमारब्धःकर्मणामनसागिरा ३३

ष्टम् २७ वैशंपायनेति । अहंवैशंपायनंगुरुंदेववत्सेवितवानस्मीति २८ तस्येति । तस्यगुरोःऋषीणांसंकेतस्य 'ऋषियोंद्यमहामेरौसमाजेनागमिष्यति । तस्यवैसप्तरात्रात्तुब्रह्महत्याभविष्य ति' इतिविष्णुपुराणेप्रसिद्धस्यभेदनेनप्रयुक्तावृथापादप्रहारमात्रेणस्वस्रीयस्यमरणरूपाब्रह्महत्याजातांतयाखिन्नंप्रायश्चित्तायशिष्यानाज्ञपयन्तंचतंप्रतिभक्त्यावटूनांब्रह्मचारिणामनुकंपयाचैवमवदमुक्त वानस्मीत्यर्थः २९ गुरुंप्रत्युक्तंवाक्यंश्रावयति भवानितिद्वाभ्यां । भवतोवृद्धत्वादेतेषांबालत्वाच्चप्रायश्चित्ताशक्तेर्हेतोरहमेवनववयाःप्रायश्चित्तंब्रह्महत्याकृतेब्रह्महत्यायानिवृत्त्यर्थंकरिष्यामीतिद्व योरर्थः ३० । ३१ इत्युक्तइति । इतिमयोक्तेसतिकुपितोगुरुर्मामित्युवाच इतिकिं हेविप्रनिंदकविप्रेष्वपकर्षदर्शिंस्त्वंमद्दत्तांविद्यांमुंचमुंचेति ३२ एवमुक्तोहमिति स्पष्टम् ३३.

ब्रह्मेति । सगुरुर्ब्रह्महत्ययाव्याकुलचित्तत्वेनात्यंतंनिर्घृणःसन्मामेतत्पुनरुवाच । एतत्किं यदित्वंमत्प्रसादनेउद्यमंकरिष्यसितदाइतोधिकेदेहादिहारकंशापंदास्यामितस्मान्मद्दत्तांविद्यांमुंचैवयदि तेलोकद्वयक्षितेच्छाअन्यथातदत्यागेतुअद्यशीघ्रंविनंक्ष्यसीतित्रयाणांसंबंधः ३४ । ३५ । ३६ इत्युक्तेइति । इतिगुरुणोक्तेसतिअहंतस्माद्गुरोर्भीतःसन्क्षमापणादुपारमंनिवृत्तोऽभवंतद्दत्तांवि द्यांचादांदत्तवानस्मीत्यर्थः । फलितमाह सोहमिति । स्पष्टम् ३८ एवमुक्तोरविस्तस्याचार्यत्वं 'उपनीयतुयःशिष्यंवेदमध्यापयेद्द्विजः । सकल्पंसरहस्यंचतमाचार्यंप्रचक्षते' इत्युक्तलक्ष णंचकारेत्याह इत्युक्तेइति । अंगानिशिक्षादीनि रहस्यादयोऽपूर्वश्रुत्यर्थबोधकानिगमादिग्रंथास्तत्सहितांश्चतुरोवेदानध्यापयामासेति ३९ अंभिणीति । अंभिणीनामदेवताम्नीविंशेआदित्य शिष्यतयावर्णितातत्तुल्योयाज्ञवल्क्योभूदित्यर्थः ४० सत्त्विति । सयाज्ञवल्क्यःसर्ववेदार्थंविज्ञायब्रह्मचर्यादेवप्रव्रजितुमुद्यतोभूत् दारादिसंग्रहेविरक्तत्वादित्यर्थः ४१ विरक्तमिति । तंविर

ब्रह्महत्यार्तचित्तःसनिर्घृणोभूद्दतीवसः ॥ कोपसंरक्तनयनोमामेतत्पुनरुक्तवान् ३४ प्रसादयसिमांचेत्त्वमधिकंविप्रनिंदक ॥ इतोदास्यामितेशापंदेहप्राणादिहार कम् ३५ मुंचतस्मादिमांविद्यांमद्दत्तांक्षणतोयदि ॥ लोकद्वयसुखेच्छातेह्यन्यथाद्यविनंक्ष्यसि ३६ इत्युक्तेभीतिमापन्नस्तस्मादहमुपारमम् ॥ क्षमापणाददां चास्मैविद्यांवांतेनकर्मणा ३७ सोहंविद्याविहीनोस्मिभवंतंशरणंगतः ॥ मानुषात्प्रार्थयेनैनांपूर्वदुःखमनुस्मरन् ३८ इत्युक्तोभगवान्सूर्योयाज्ञवल्क्यंमहामु निम् ॥ वेदान्षडंगसहितान्रहस्यादिसमन्वितान् ॥ चतुरोध्यापयामासस्थापयित्वारथेनिजे ३९ अंभिणीयद्वदेतस्यशिष्याऽभूत्सवितुःपुरा ॥ तथैवयाज्ञव ल्क्योपिशिष्योभूत्प्रीतिवर्द्धनः ४० सतुसंजातविज्ञानःसंन्यासायसमुद्यतः ॥ ब्रह्मचर्याश्रमादेवनिस्पृहोदारसंग्रहे ४१ विरक्तंवीक्ष्यशिष्यंतंभगवान्रविरब्रवीत् ॥ याज्ञवल्क्यात्रविद्यायाःप्रयच्छगुरुदक्षिणाम् ४२ संप्रदायप्रवृत्त्याख्यांवेदानध्यापयाखिलान् ॥ त्रैवर्णिकान्गृहस्थःसन्पश्चात्संन्यासमाव्रज ॥ ब्रह्मविद्यांचसंन्य स्यन्वदनापूर्वमेवबा ४३ इत्युक्तेयाज्ञवल्क्योपितथेतिगुरुशासनम् ॥ गृहीत्वाशिरसाभूमिंसमागाद्भास्करोयथा ४४ पितुराज्ञामलंप्राप्यजनकाच्चधनंबहु ॥ स्नातोदारद्वयंचक्रेयाज्ञवल्क्यःसमागतः ॥ कात्यायनस्यतनयांमित्रयोश्चमहाधियम् ४५ ऋषीणांब्रह्मचर्येणऋणंदत्तंयथामुना ॥ देवानांचपितॄणांचदत्तवान्सत थैवतत् ४६ अग्निष्टोमादिकान्यज्ञान्कृतवान्बहुदक्षिणान् ॥ स्वात्मनःसदृशान्पुत्रान्कन्यकाश्चोदपादयत् ४७

क्तंवीक्ष्यरविरेवमुक्तवान् एवंकथं हेयाज्ञवल्क्यत्वंसंप्रदायप्रवृत्तिरूपांगुरुदक्षिणांदेहि । कथंसंप्रदायःप्रवर्त्तनीयइत्याकांक्षायामाह वेदानित्यादि । त्वंगृहस्थःसन्वेदानधिकारिणःप्रतिपाठयततःसं न्यस्य ब्रह्मविद्यासंप्रदायप्रवर्तनंतुसंन्यासात्पूर्वमुत्तरंवाकुरुइतिद्वयोरर्थः ४२ । ४३ एवमाकारांगुरोराज्ञांतथास्त्वितिप्रणतेनशिरसागृहीत्वायाज्ञवल्क्योभूलोकमागमदित्याह इत्युक्तइति । भास्करोयथातेजसारविसमः ४४ पितुरिति । समागतोयाज्ञवल्क्यःपितुर्यज्ञवल्काख्यस्याज्ञांप्राप्यस्नातःसमावर्तनाख्यसंस्कारंप्राप्तःसन्जनकराजाद्धनंचप्राप्यद्वेभार्येउदवहत् तत्रैकानाम्नाका त्यायनीकतगोत्रस्यापत्यत्वात् द्वितीयामैत्रेयीसंज्ञामित्रयुसंज्ञकस्यापत्यत्वादित्यर्थः । पित्र्ययज्ञफलमितिपाठेदारद्वयविशेषणं पित्र्यंपितृप्रीतिदंकर्मयज्ञोदेवप्रीतिदंतदुभयानुष्ठानफलकामि त्यर्थः ४५ ऋषीणामिति । यथाब्रह्मचर्येणऋषीणामृणममुनायाज्ञवल्क्येनापाकृतंतथादेवानामृणापाकरणार्थंयज्ञान्पितॄणामृणापाकरणार्थमपत्योत्पादनंचकृतवानितिद्वयोरर्थः ४६ । ४७

ननुतस्यविरक्तस्यऋणप्रसंगएवकथमितिशंकांवारयति ऋणमिति । आश्रमयोर्ब्रह्मचर्यगार्हस्थ्यरूपयोःसंबन्धादस्मिन्याज्ञवल्क्येऋणंप्रसक्तमित्यर्थः तथाचश्रुतिः 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणैऋणवान्जायते' इत्यादिः तत्रजायमानइत्यस्योपनयनादिनाकर्माधिकारीसंपद्यमानइत्यर्थः ४८ एतमर्थंस्फुटयति । ब्रह्मचर्याश्रमीतिसतदशभिः । यथाब्रह्मचर्याश्रमपरिग्रहेवेदाध्ययनापनोद्यस्यार्षस्यऋणस्यप्राप्तिस्तथागृहस्थाश्रमसंबंधाद्यज्ञापनोद्यस्यदेवानृणस्यप्राप्तिरित्यर्थः ४९ तीव्रवैराग्येणसंन्यासेतुनांकिंचिद्दणमितिलोकेपिप्रसिद्धमित्याह संन्यासेत्विति । यत्पूर्वाश्रमसंबंधिऋणंतत्संन्यासेकृतेनिवर्ततइतिपूर्वदलार्थः तदुक्तंभागवतेपि 'देवर्षिभूताप्तनृणांपितॄणांनकिंकरोनायमृणीचराजन् । सर्वात्मनायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकर्तं' इति कर्त्तभेदं । यथालौकिकोत्तमर्णानामृणंसंन्यासिनामसंबंधितयाप्रसिद्धंतथावैदिकमृण्यादिसंबंध्यपिऋणंसंन्यासिनामसंबंधिमतमतःसंन्यासात्पूर्वंविदुषोपितद्दणमाश्रमसंबंधात्स्यादेवेत्यर्थः ५० किंचसंन्यासात्पूर्वमृणत्रयापाकरणंनैमित्तिकन्यायेनविदुषापिकर्त्तव्यमित्याह नैमित्तिकमिति । निमित्तेपुत्रजन्मादौजातंनैमित्तिकंजातेष्ट्यादिरूपंनियतमवश्यकर्त्तव्यंस्यादितिलोकवेदयोःप्रसिद्धंतथाब्रह्मचर्यगृहस्थरूपमाश्रमद्वयमृण्यादिऋणापाकरणकर्मणिनिमित्तमित्यर्थः ५१ यदिपूर्वाश्रमद्वयमृणसंबंधप्रयोजकंतर्हितदकृत्वाप्रथमंवानप्रस्थाश्रमएवशुद्धिकामेनकर्त्तव्यइतिशंकांवारयति द्विजानामिति । 'अनाश्रमीनतिष्ठेतक्षणमेकमपिद्विजः' इतिस्मृतेराश्रमाभावस्यायुक्तत्वाद्वनवासस्यवक्ष्यमाणविधयागृहस्थोत्तरकालिकत्वनियमाच्चप्रथमंशुद्धिकामेनपूर्वाश्रमद्वयंकर्त्तव्यमेवेत्यर्थः ५२ वनवासस्यगृहस्थोत्तरकालिकत्वेमनुवाक्यमर्थतःपठति गृहस्थस्त्विति । वलीचर्मशैथिल्यं कृदिकारादितिङीप् पलितंकेशशुक्लता तयोःसमाहारंयदादेहेपश्येत्पौत्रोत्पत्तिंवातदावनस्थोभवेदित्यर्थः ५३ संन्यासस्यवैराग्यमेवप्रयोजकंयदिवेतरथेत्यादिजाबालश्रुतेः वनवासस्यतुतादृशश्रुत्यभावात्क्रमएवेत्याह ब्रह्मेति । यथाजाबालश्रुतौब्रह्मचर्याद्युत्तरंसंन्यासउक्तस्तथाब्रह्मचर्यादिर्ब्रह्मचर्यंआदिप्रथमंयस्यतादृशोब्रह्मचर्योत्तरइतियावत् वनवासःक्वापिश्रुतोनश्रुतः तथाचतद्विषयेपूर्वोक्तएवनियमइत्यर्थः ५४ ननुब्रह्मचर्यंपरिचरेदाशरीरविमोक्षणादित्यादिनावसिष्ठादिवचनेनबाधितत्वात्क्रमनियमोऽयुक्तइतिचेन्न तस्यवचनस्यप्रत्युतक्रमदार्ढ्यसंपादकत्वादित्याशयेनाह आनिपातादिति । आमरणमेकमाश्रमंसेवमानस्तिष्ठेदित्याद्यर्थकंवसिष्ठादिवचनंक्रमंननिवारयेत्किंतुतंद्रढयेदितिशेषः ५५ अस्यवचनस्यक्रमदार्ढ्यसंपादकतांविशदयति किंत्वितिद्वाभ्यां । किंत्वित्यस्यपूर्वोन्वयः यदिब्रह्मचर्यादौप्रीतीरागःस्यात्तदाआनिपातसंकल्पंकृत्वैवतत्रवस्तव्यंतथासतिसंकल्पेकृतेसतिउपरिउत्तरंकर्त्तव्यतयाप्राप्तस्यक्रमशाल्याश्रमस्यपरिग्रहंग्रहणमकुर्वन्नप्रत्यवेयात्नदोषंप्राप्नुयात् तत्रवैधर्म्येदृष्टांतोरागीजनइतिद्वयोरर्थः ५६ । ५७

ऋणंयद्यपिनैवास्तिविरक्तस्यास्यकिंचन ॥ तथाप्याश्रमसंबंधादृणमस्मिन्नुपागतम् ४८ ब्रह्मचर्याश्रमीयद्वदृषीणांहिभवेदृणी ॥ ऋणीगृहस्थश्चतथादेवपित्रोःसदाभवेत् ४९ संन्यासेतुकृतेनस्याद्यत्स्यात्पूर्वाश्रमेऋणम् ॥ लौकिकंचयथानस्यादृणंतद्वद्धिवैदिकम् ॥ संन्यासिनामतःपूर्वंविदुषोपिभवेद्धितत् ५० नैमित्तिकंनिमित्तेस्यान्नियतंलोकवेदयोः ॥ ऋणत्रयेनिमित्तंस्यात्पूर्वोक्तंह्याश्रमद्वयम् ५१ द्विजानामाश्रमाभावोनप्रशस्तःकदाचन ॥ वनवासस्यनियतःकालउक्तोमनीषिभिः ५२ गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः ॥ अपत्यस्यतथापत्यंतदारण्यंसमाश्रयेत् ५३ ब्रह्मचर्याद्गृहाद्वापिवनाद्वाप्रव्रजेद्यथा ॥ नतथाब्रह्मचर्यादिर्वनवासःश्रुतोश्रुतः ५४ आनिपाताच्छरीरस्यह्येकमाश्रममाश्रितः ॥ तिष्ठेदित्यादिवचनंनक्रमंविनिवारयेत् ५५ किंतुचेज्जायतेप्रीतिर्ब्रह्मचर्येगृहेवने ॥ रागतस्तत्रनस्थेयंसंकल्प्यैववसेदिह ५६ तथासत्युपरिप्राप्तक्रमाश्रमपरिग्रहम् ॥ विनानप्रत्यवेयात्सयथारागीजनोपरः ५७

ननुनैष्ठिकब्रह्मचार्यपिवनवासादिरूपंवानप्रस्थादिसंबंधिकर्मकृत्वावानप्रस्थादिभावमात्मनःसाधयतुतथाचकिमर्थमुक्तव्यवस्थाकल्प्यतेइतिशंकांदृष्टांतेनपरिहरति ब्रह्मचारीति । यथाएषप्रसि द्धोगृहीआपत्कालेवनेवासंकुर्वन्नरण्यवासीवानप्रस्थोनभवेत् तथाचयतिकर्मभिक्षाटनकाषायधारणादिकंकुर्वन्यतिर्नभवेत्तथाब्रह्मचारीवनवासादिनावनस्थादिसंज्ञोनभवेदितिसंबंधः ५८ तत्रहेतु तयावनस्थादिभ्योविशेषमृणसंबंधमाह नैष्ठिकइति । यद्यपिसनैष्ठिकोब्रह्मचारीगृहिवद्देवानांपितृणांचऋणीनभवतितथापिऋषीणामृणभागेवेतिसंबंधः ५९ फलितंनियममभिनयति अपाकृ त्येति । अत्रपूर्वार्धार्थएवोत्तरार्धेनस्फुटीक्रियते तंवानप्रस्थरूपंक्रमाश्रमंक्रमवंतमाश्रममन्यथाऋणसत्त्वेनसमाव्रजेदितिसंबंधः ६० वानप्रस्थस्यक्रमवत्त्वमेवस्फुटयति ब्रह्मचर्येति । यथाद्वि जानांगृहित्वंब्रह्मचर्यपूर्वकमेवतथावनस्थत्वंगार्हस्थ्यपूर्वकमेवेत्यर्थः ६१ तत्रप्रमाणमाह त्रयाणामिति । त्रयाणांब्रह्मचर्यगार्हस्थ्यवनस्थत्वानामितिउक्तविधःक्रमःश्रुत्यादिकेनप्रमाणेनसिद्धः तथाचजाबालश्रुतिर्ब्रह्मचर्यादृहीभवेदित्याद्या । दक्षस्मृतिश्च ' त्रयाणामानुलोम्यंस्यात्प्रातिलोम्यंनविद्यते । प्रातिलोम्येनयोयातिनतस्मात्पापकृत्तमः' इति । वैराग्यमात्रकारणकस्यसंन्यासस्य तुनकेनचिदाश्रमेणक्रमनियमइत्याह चतुर्थइति । सोयंक्रमस्तदादिनाश्रुत्यादिनाबाधितः तत्रश्रुतिर्यदिवेतरथेत्याद्योक्ता । स्मृतिश्च 'यदेवचास्यवैराग्यंजायतेसर्ववस्तुषु । तदेवसंन्यसेत्' इत्याद्यानुसं

ब्रह्मचारीवनेतिष्ठन्वनस्थोनभवेत्क्वचित् ॥ गृहीयथारण्यवासीतथैषोपियतिस्तथा ५८ नैष्ठिकोब्रह्मचारीयदृषीणामृणभाङ्गसः ॥ देवानांचपितॄणांचगृहीयद्व द्भवेदृणी ५९ अपाकृत्यऋणंतस्माद्वनंपश्चात्समाव्रजेत् ॥ ऋणत्रयविनिर्मुक्तोनान्यथातंक्रमाश्रमम् ६० ब्रह्मचर्याश्रमंयद्वद्गत्वानगृहीभवेत् ॥ गृहाश्रममगत्वै वंवनीनैवभवेत्क्वचित् ६१ त्रयाणामितिसंसिद्धःक्रमःश्रुत्यादिनासदा ॥ चतुर्थआश्रमेसोयंबाधितोस्तितदादिना ६२ चतुर्थमाश्रमंहित्वानभावोस्तिहिकस्य चित् ॥ द्विजस्याश्रमिणोनस्याद्द्विजआश्रमवर्जितः ६३ ऋणाद्वनीवनस्थोयंशुद्धोभवतिसर्वथा ॥ आश्रमाभ्यांहिपूर्वाभ्यामृणंदत्वायतोगतः ६४ ऋषीणामनृ णोयद्वद्गृहस्थोत्रवनीतथा ॥ सर्वेषामनृणीन्यासीसंन्यासादेवकेवलात् ॥ ऋणीगृहाश्रमाज्जातोविद्वानपिततोमुनिः ६५ देवानांचपितॄणांचकृपयादत्तवानिदम् ॥ विचार्यैवंहिमातिमान्सूर्यशिष्यस्तपोधनः ६६

धेया ६२ न्यासोहिब्रह्मेत्यादिश्रुतेःसंन्यासस्यब्रह्माश्रमत्वात्तदेतद्ब्रह्मापूर्वमनपरमित्यादिश्रुतिप्रसिद्धब्रह्मवदेवकेनचित्पौर्वापर्यंनास्तीतिसूचयन्संन्यासादुत्तरःकश्चिदाश्रमोनास्तीत्याह चतुर्थमिति । द्वियतआश्रमिणोद्विजस्यचतुर्थमाश्रमंहित्वाकस्यचिदाश्रमस्यभावःसत्तानास्तीतिप्रसिद्धं तद्भूतस्यतुनातद्भावइतिव्याससूत्रादौ तथाद्विजआश्रमवर्जितोनस्यादित्यपिप्रसिद्धं । तथाचदक्षः 'अना श्रमीनैवतिष्ठेदह्नमेकमपिद्विजः । आश्रमेणविनातिष्ठन्प्रायश्चित्तीयतेहिसः ' इति । तथाचसंन्यासोत्तरआश्रमोनास्तीतिभावः । व्याससूत्रार्थस्तुतद्भूतस्योर्ध्वरेतस्काश्रमंप्राप्तस्यातद्भावः अवरोहो नास्तिनियमादाविमोक्षाच्छरीरस्येत्यादिरूपात्अतद्रूपात्श्रुतीनामवरोहप्रतिपादकरूपाभावात्तादृशशिष्टाचाराभावाच्चेति ६३ तस्मादनृणएववनवासंकुर्यादित्याह ऋणादिति । ऋणपदमर्श आद्यजंतं तथाचऋणाद्दणद्वयवतोगृहस्थाश्रमादुत्तरंवनीभवेत् यस्तुवनस्थःससर्वथाशुद्धोऽनृणोभवतिपूर्वाश्रमाभ्यामपाकृतर्णत्वादित्यर्थः ६४ संन्यासीतुसर्वेषामनृणइत्याह ऋषीणामिति । य द्वद्गृहस्थऋषीणामनृणीवनीचत्रयाणामनृणीतथासंन्यासीसर्वेषामनृणः संन्यासस्यऋणसंबंधाभावप्रयोजकतायालोकेपिप्रसिद्धत्वादित्यर्थः । फलितमाह ऋणीगृहाश्रमादिति ६५ याज्ञवल्क्यस्यगृह स्थाश्रमेतिशयेनदानादिप्रवृत्तौप्रयोजकमाह देवानामितित्रिभिः । सतपोधनोमुनिरेवंविचार्यदेवानांपितॄणांचतोषायप्रवृत्तयाकृपयाइदंगोसुवर्णादिकंद्रव्यंदत्तवानित्यन्वयः ६६

८१

एवंकथमित्याकांक्षांपूरयति ऋषीणामिति । मयाब्रह्मचर्याश्रमसंपत्त्याऽनायासेनऋषीणामृणंसमर्पितं । अथततःऋषिभ्यःशेषप्राणिनांदेवादिरूपाणांतत्प्रसिद्धमृणद्वयंसमर्प्यसम्यग्दत्वैवसंन्यस्यामिसंन्यासंकरिष्यामियथात्रयाणाममीषामृष्यादीनांपंक्तिभेदोविषमार्चनरूपोनभवेदित्यर्थः ६७ एवंचेति । एवंसतिश्रगत्रयापाकरणोत्तरंसंन्यासेकृतेसतिगुरोर्भगवतआदित्यस्यवाक्यमाज्ञारूपंसम्यक्कृतंभविष्यति कुतः प्रवृत्तस्यनिवृत्तस्यचाधिकारिणोगम्यतयासंबंधिनोयावध्वानोअभ्युदयंनिःश्रेयसंचप्रतिगामिनोमार्गौतयोःपालनात्सेवनादित्यर्थः ६८ अयमात्मासर्वेषांभूतानांलोकइत्यादिमधुकांडप्रथमाध्यायप्रसिद्धकंडिकानुसारिणंतस्यमुनेर्गृहाश्रमंवर्णयति चित्रइतिपाड्भिः । चित्रःपश्यतांविस्मयकरः ६९ द्विभार्यइति । सम्मुनिर्द्विभार्यत्वादिविशेषणकोयागादिभिर्देवानामाश्रयउपकारकोभूदित्यर्थः ७० नित्यैरिति । तथानित्यवेदपाठादिभिर्ऋषीणामाश्रयःप्रजोत्पादनश्राद्धादिभिःपितॄणांचाश्रयोभूत् ७१ सायमिति । सायंकालेवासादिभिर्धनांतैःसंपादितेनदानकर्मणामनुष्याणामाश्रयोभूदिति ७२ तृणोदकेति । तथातृणादिदानेनपशूनामाश्रयः भांडलेपकणप्रक्षेपबलिदानादिभिःश्वादीनांचाश्रयोभूदिति ७३ स्वाहेति । यथाधनिनांगृहेदुंदुभिशब्देरन्नार्थिनआकार्यंतेआहूयंतेतथातद्गृहेस्वाहाकारादिरूपाणांवाग्धेनुस्तनानांखिलकांडप्रथमाध्यायप्रसिद्धानांमध्येस्वाहाकारवषट्काराभ्यांदेवाआकार्यंतेस्वधाकारेणचपितरोहंतकारेणइर्ष्द्योतकेनमनुष्याआकार्यंते एवंविधोगृहीसोभूदितिद्वयोरर्थः ७४ । ७५ उपोद्घाततयातस्यभार्यांनाम्नाकात्यायनींवर्णयति कात्यायनीतिसप्तभिः । तस्यमुनेर्याकात्यायनीनामभार्यासानारीणांप्रज्ञायांनीतिकौशलमास्थितासतीगृहकर्मणिविचक्षणाऽभूदित्यन्वयः ७६ तस्यागृहकर्मकौशलमेवप्रपंचयति गृहेति । देहलींद्वारदेशं वेदिकांयागभूमिम् ७७ तथेति । सर्वत्रबहुदेशेषु ७८ भांडानीति । करकान्कमंडलून्न्युब्जपात्राणिकमंडल्वादिमुखपिधायकलघुपात्राणितैःसह ७९ भीमेति । यथाभीमसेनादयःपाकविद्यायांप्रसिद्धास्तथासापीत्यर्थः । सूर्यपाकआतपेनपचनंआदिपदेनपुटपाकपिठरपाकादिग्रहः ८०

ऋषीणामृणमत्यर्थमनायासान्मयार्पितम् ॥ समर्प्यैवततःशेषंप्राणिनांतदृणद्वयम् ॥ संन्यस्यामिततोमीषांपंक्तिभेदोनसंभवेत् ६७ एवंचसतिवाक्यंयद्गुरोस्तच्चकृतंमया ॥ भविष्यतिप्रवृत्तस्यनिवृत्तस्याध्वपालनात् ६८ चित्रोभूदाश्रमस्तस्यगृहस्थस्यमहामुनेः ॥ दिवारात्रौचसततंसर्वभूतोपकारकः ६९ द्विभार्यःपुत्रसंपन्नोधनिकोमुनिसत्तमः ॥ यज्ञैर्होमैश्चदेवानामाश्रयोभूदहर्निशम् ७० नित्यैःस्वाध्यायवचनैर्ऋषीणांचमहात्मनाम् ॥ प्रजाभिःपिंडदानाद्यैःपितॄणांस्वर्गवासिनाम् ७१ सायंवासादिभिस्तद्वदन्नपानैर्मनोरमैः ॥ धनादिभिश्चदानेनमनुष्याणांतथार्थिनाम् ७२ तृणोदकादिदानेनपशूनांविविधात्मनाम् ॥ एवंभांडादिलेपेनधान्यादिपतनैरपि ॥ श्ववायसादिजंतूनांकीटादीनांसमाश्रयः ७३ स्वाहावषट्स्वधाहंतकारैर्वाचःस्तनैःसदा ॥ देवाःसपितरस्तद्वन्मनुष्याःसर्वतःस्थिताः ७४ दुंदुभेरिवनिर्घोषैराकार्यंतेगृहेस्यहि ॥ याज्ञवल्क्यःप्रसिद्धोयंबभूवैवंपुरागृही ७५ कात्यायनीतियातस्यभार्याभूत्साविचक्षणा ॥ गृहकर्मणिनारीणांप्रज्ञायांनीतिमास्थिता ७६ गृहकुड्यादिसर्वत्रसंमार्जयंतिसर्वदा ॥ भूमिंचदेहलींतद्वद्वेदिकामंगणंतथा ७७ तथासर्वत्रधवलंगृहंरक्तंचकुत्रचित् ॥ करोतिचित्रितंकापिहस्तकौशलमास्थिता ७८ भांडानिचघटांस्तद्वत्प्रक्षालयतिसर्वदा ॥ करकांश्चविचित्रैस्तुन्युब्जपात्रैस्तुसंयुतान् ७९ भीमसेननलादीनांमतमास्थायनित्यशः ॥ लेह्यंपेयंतथाचोष्यंभोज्यंचेतिचतुर्विधम् ॥ अन्नंपचतिसानित्यंसूर्यपाकादिनामुहुः ८०

श्वश्रूश्वशुरेति । स्पष्टम् ८१ इत्येवमिति । इत्येवंप्रज्ञयानारीणामाद्यामथमगण्याभूतत्तयासदृशीचापरानाभूदित्यर्थः ८२ तस्यद्वितीयांभार्यांज्ञानाधिकारितयावर्णयति द्वितीयेतिचतुर्भिः । दुःखदर्शना त्सांसारिकदुःखालोचनात् ८३ काहमिति । साएवमादिसदाचिंतयंतीसतीमृतवत्साागोरिवभृशंक्लिन्नाद्रनचित्तासदावर्ततेस्म । एवंकथमित्याकांक्षायांकाहमित्यादियोज्यं । अहंकाकिंदेहादिसंघातरू पातदन्यावेति अन्यत्वेपिकिमात्मिकाकिंजडरूपाचिद्रूपावा एवमग्रेपि इतित्रयाणांसंबंधः ८४ । ८५ । ८६ याज्ञवल्क्योपीति । मुनिस्तुतस्याश्चित्तवृत्तिंजानन्नपिगृहनिर्वाहायगृहकर्मण्येवपूर्वमादिदे शआज्ञापितवानित्यर्थः तस्यमुनेःकरिष्यमाणसंन्यासोपयोगिवैराग्यकारणंसंसारदोषदर्शनमन्यद्वृत्तमित्याद्यंशेनसूचितंप्रपंचयति स्वयमित्यादिना । गृहस्थाश्रमानुष्ठानेनवहुतिथेभूयसिकालेगतेसति समुनिःकदाचिदेकांतेस्थितइदंवक्ष्यमाणविधंविचारयामासेति ८८ इदंपदार्थमभिनयति अहोइत्यादिना । अहोइत्यद्भुते प्राणिनांप्रियत्वेनप्रसिद्धंयत्प्राणधारणंतदेवदुःखं यत्रयदर्थंदेहरूपंकारागृहंस्वी

श्वश्रूश्वशुरभर्तॄणांनित्यंशुश्रूषणेरता ॥ देवरांश्चतथाज्येष्ठान्वांधवानतिथीनपि ॥ ननांद्राद्याःस्त्रियस्तद्वत्पूजयंत्सायथोचितम् ८१ इत्येवमाद्यानारीणांप्रज्ञयास दृशीतया ॥ ललनानापराकाचिदासीदस्तिभविष्यति ८२ द्वितीयाप्यस्यभार्याभून्मैत्रेयीतिचविश्रुता ॥ प्रमत्तसदृशीनित्यमुद्विग्नादुःखदर्शनात् ८३ काहंकि मात्मिकाकस्मादेनंछोकमुपागता ॥ कुत्रस्थितामयाकिंचगंतव्यंमरणेसति ८४ कोयंपतिरितिप्रोक्तःकेसुताःकाश्चकन्यकाः ॥ किंदुःखंकिंचमेतद्वत्सुखंकेचक्षु रादयः ८५ कोयंजनोमयादृश्यएवमादिसदैवसा ॥ चिंतयंतीभृशंक्लिन्नामृतवत्सेववर्तते ८६ याज्ञवल्क्योपितत्सर्वंजानात्यस्यामनोगतम् ॥ गृहस्थाश्रमसिद्ध्यर्थं मादिदेशपुराचताम् ८७ स्वयमेकांतआसीनःकदाचिन्मुनिसत्तमः ॥ इदंविचारयामासकालेवहुतिथेगते ८८ अहोदुःखंमहत्प्रोक्तंप्राणिनांप्राणधारणम् ॥ यत्र कारागृहंदेहःसप्तधातुस्त्रिदोषभाक् ॥ पूयविण्मूत्रसंपूर्णोदुर्गंधातिभयप्रदः ८९ शिरोक्षिरोगातिसारप्लीहगुल्मादिकंतथा ॥ भगंदरगुदावर्तगंडमालाद्यनेकधा ॥ दुःखंव्याधिसमुत्पन्नंसर्वावस्थासुयच्चतत् ९० सर्पव्याघ्रश्चिकलूतादिजातंदुःखंतथापरम् ॥ शीतातपादिसंजातंदुःखमन्यच्चदुःसहम् ९१ शत्रुभिर्दुर्जनैस्तद्वत्क्रियते दुर्जयैरिह ॥ कर्मणामनसावाचादुःखंत्रासकरंसदा ९२ बाल्येमोहादवाप्नोतिदुःखमत्रातिदुःसहम् ॥ रागाद्वेषात्तथाशोकादशक्त्याबहुरूपया ९३ सर्वावस्थासु सततंदुःखमत्रनियच्छति ॥ प्राणानामागमेतद्वन्निर्गमेचमहद्भयम् ॥ गर्भवासेचमरणेनहिदुःखंततोधिकम् ९४

कर्तव्यंदेहविशेषणानिसप्तधातुत्वादीनिस्फुटानि ८९ तत्रदेहेवर्तमानान्याध्यात्मिकादिदुःखानिदर्शयति शिरोक्षीतिषड्भिः । शिरोरोगाक्षिरोगातिसारादिव्याधिजंयद्दुःखंयच्चकामक्रोधादिसर्वावस्थासु आधिसमुत्पन्नंदुःखंतदाध्यात्मिकत्वेनप्रसिद्धमित्यर्थः तत्रगुदावर्तःपाय्विन्द्रियनिरोधरूपः गण्डमालाकण्ठकर्णादिषुविस्फोटरूपपंक्तिरूपा इतरेरोगाःप्रसिद्धाः ९० सर्पेति । लूतातंतुवायाख्यकीटःशरी रोपरिपरिभ्रमणेनकंड्वत्यादिकारीप्रसिद्धः । तथाचसर्पादिजंशत्रुप्रभृतिजंचाधिभौतिकं । शीताद्युत्पातजंचाधिदैविकंदुःखंभयप्रदंसिद्धमितिद्वयोर्भावः ९१ । ९२ बाल्यइति । बाल्येमोहरागद्वेषशोकै र्नानाविधयाअशक्त्याचप्रयुक्तंदुःखमत्रदेहेप्रसिद्धंतथान्यदापिवोध्यम् ९३ अभिनिवेशाख्यंक्लेशमभिनयति सर्वावस्थास्विति । प्राणानामागमेनूतनदेहप्रवेशेदेहान्निर्गमेचस्मर्यमाणेसतियन्महद्भयं मानभूर्वमित्याद्याशीःप्रयोजकंतत्सर्वावस्थासुदुःखंनियच्छति नियतंकरोति ततउक्तभयजाद्दुःखादधिकंदुःखंगर्भवासादावपिनास्तीत्यर्थः ९४

फलितमाह एवमिति । स्पष्टम् ९५ मुक्तस्यापीति । मुक्तस्यवीतरागस्यापिदेहंदुःखरूपंस्यात्किमुतान्यस्येत्यर्थः ९६ यदाएकत्रापिदेहेऽहंममाभिमानलक्षणःसंगोदुःखदस्तदाकिमुवाच्यंदारपुत्राद्य नेकदेहसंगस्यदुःखदत्वमित्याह अहोसंगइति । गृहीतस्याभिमतस्यदारादिरूपस्यदेहस्यसंगोदुःखदइतिकिमुवाच्यमिति ९७ तदर्थंसंगस्यानर्थहेतुतांप्रपंचयति संगइतिनवभिः । निर्गुणत्वादसंगो प्यात्मायतःसंगाद्दुःखमागतः ९८ तदुदाहरणेनस्फुटयति स्वभावादित्यादिना । स्पष्टंद्वयम् ९९ । १०० संगाद्बहिरिति । यन्मनःस्वभावादंतरात्माभिमुखंप्रवर्तते तदुक्तं ' आत्मानात्माकारंस्व भावतोऽवस्थितंसदाचित्तं ' इति । तदपिसंगाद्बहिर्मुखंयातीति । तथापापीसंचितपापशाल्यपिदुःसंगादेवपापफलंदुःखमनुभवतीतिप्रसिद्धं । तथानिर्दुःखःशांतात्मापिदुःखिनांसभायामुपविष्टोदुः खीभवतीतिप्रसिद्धमित्यर्थः १०१ एवंकामिप्रभृतीनांसंगात्तथाभूतोभवतीतिप्रसिद्धमित्याह एवमिति । इदंसंगफलंप्रत्यक्षंप्रसिद्धमत्रलोकेनोस्माकम् १०२ किंचसंनिधिमात्रेणविकारहेतुत्वंविष याणांस्वभावएवेतिदाडिमाद्यम्लपदार्थदर्शनेदंतादिजलस्रावेणनिश्चितमित्याह अपीति १०३ यदाजडेष्वपिसंगप्रयुक्ताविक्रियादृश्यतेतदाचेतनेपुकिंवाच्यमित्याह जडेष्वपीतिद्वाभ्यां । यदाभावस्य

एवमादीनिदुःखानिविविधानिबहूनिच ॥ देहमाश्रित्यजायंतेलोकेस्मिन्हिपरत्रवा ९५ मुक्तस्यापिभवेदुःखंदेहमेकांतवासिनः ॥ मादृशस्यकुतोनस्यात्संसारा सक्तचेतसः ९६ अहोसंगोऽस्यदेहस्यह्येकस्याप्यतिदुःखदः ॥ आत्मैक्येनगृहीतस्यकिमुदारादिरूपिणः ९७ संगोविनाशहेतुःस्यात्सर्वेषामिहदेहिनाम् ॥ निः संगोनिर्गुणोयस्मात्संगाद्दुःखमुपागतः ९८ स्वभावाच्छीतलंतोयमुष्णंभवतिसंगतः ॥ वन्हेस्ततोत्रसंगोयमतिदुःखप्रदःस्मृतः ९९ संगात्कुठारजनिताद्वृक्षश्छे दंसमाप्नुयात ॥ शस्त्रसंगात्तथाकायःप्राणिनांशतधाव्रजेत् १०० संगाद्बहिर्मुखंयातिमनोंतर्यत्प्रवर्तते ॥ दुर्धियांप्राणिनांसंगात्पापीदुःखंसमाप्नुयात् ॥ निर्दुःखोदुः खिनांसंगाद्दुःखीसंजायतेजनः १०१ एवंकाम्यादिसंसर्गात्कामादिपरिवर्जितः ॥ काम्यादिर्जायतेजंतुःप्रत्यक्षमिदमत्रनः १०२ अपिसंनिधिमात्रेणभावाःकुर्वं तिविक्रियाम् ॥ अम्लोरसोयथाकुर्याद्दंतेपूदकनिर्गमम् १०३ जडेष्वपिचदृष्टेयंविक्रियाभावसंनिधेः ॥ लोहमाकर्षयेद्दूरात्पाषाणश्चुंबकोयतः ॥ अयस्कांतस्तथै वैतद्भ्रामयेद्दारुयंत्रवत् १०४ चेतनस्यतुसांनिध्याच्चेतनस्येहकिंपुनः ॥ वक्तव्याविक्रियायस्मान्नानैकेयंप्रदृश्यते १०५ एवमेववपुर्दुःखंसर्वेषामिहदेहिनाम् ॥ दारादिसंगतेर्जातंममानेकमिदंवपुः १०६ यद्वनेहमहोधैर्यंप्राप्यवैराग्यमाश्रितः ॥ विष्ठावांतसमंपश्यन्देहंतपउपाश्रितः १०७ नाकुर्वन्ममधैर्यस्यविलोपंवामलो चनाः ॥ स्वर्गादभ्यागताःशश्वद्दहुमन्मथमंथराः १०८ केतकीचंपकादीनांगंधान्देहोत्थितैर्मुहुः ॥ गंधैरधिक्षिपंत्यस्ताःकांचनोत्पलसंनिभाः १०९

पदार्थविशेषस्यसंनिधिहेतुकाविक्रियाजडेष्वपिदृष्टा । यथाचुंबकायस्कांतपदाभ्यांव्यवन्हियमाण पाषाणविशेषोलोहमाकर्षयेत्दारुयंत्रवद्भ्रामयेच्चेतिप्रसिद्धंतदाचेतनस्यदारादिशरीरस्यसांनिध्या च्चेतनस्यविक्रियाकिंवक्तव्याव्याख्यातुंशक्याअपितुन यस्मादेकापीयंचेतनगताविक्रियाऽवांतरभेदान्नानाबहुविधादृश्यतेइतिद्वयोःसंबंधः १०४ । १०५ फलितमाह एवमिति । एवंसंगविषये वसर्वेषांदेहिनांवपुर्देहंदुःखरूपंजातं तत्रचाहमेवदृष्टांतइत्याह दारादीति । यथाममेदंवपुर्दारपुत्रादिसंगतिवशादनेकं अनेकविक्षेपमयंजातमित्यर्थः १०६ संगस्यविक्षेपकारणत्वेव्यतिरेकमन्वयंचप्रमा णयति यद्वनइति । यद्यस्मादहंयदाब्रह्मचर्यकालेएकाकीदेहादपिविरक्तस्तपःकृतवानस्मितदाममधैर्यंविलोपंस्वर्गांगनाअपिनाकुर्वन् इदानींवार्धकेदारादिसंगतिप्रभावान्ममधैर्यंवृथागतमितिस्फुटं दर्शयावदभिसंबंधः बहुमन्मथेनमंथरामंदगतयः १०७ । १०८ केतकीति । पुनःकीदृश्यःस्वर्गांगनाः स्वदेहगंधैःकेतक्यादिगंधानभिभवंत्यः १०९

पीनोन्नतेति । पुनःकीदृश्यः पीनादुन्नताश्चकुचद्वंद्वाज्जघनाश्चवायुनापहृतमंबरंयासांतास्तथा तद्वत्पूर्णचंद्रवद्दीप्तिमद्भिर्वसनादिभिर्युताश्चेति ११० ताश्चकैर्ममधैर्यंनहृतवत्यइत्याकांक्षायांतत्र कारणतयाप्रसिद्धान्भावान्दर्शयति उद्दामेति । उत्कृष्टाभिप्रायसूचकैःकटाक्षैस्तथामृदुलादिभूरिकीर्तितत्वान्तविशेषणकैर्वचनैः । तत्रश्लक्ष्णत्वंमनोहरत्वं सिद्धत्वंप्रसिद्धवाच्यार्थकत्वं गुर्वर्थत्वं गंभीराभिप्रायकत्वं भूरिकीर्तितत्वंदीर्घललितस्वरेणोच्चारितत्वं स्फुटमन्यत् तथामंजीरशिंजितशालिभिःपदन्यासैश्चेतिद्वयोरर्थः १११ । ११२ श्लथदिति । तथाखिन्नैःश्रमभराक्रांतैःसर्वांगैः । कीदृशैःसर्वांगैः श्लथदुकूलादिभिःसहितैः । तत्रतारामस्तकभूषणं अथवातारत्वंभास्वरत्वमंगदविशेषणमिति । पुनःकीदृशैरंगैः रोमांचमयकंचुकविशिष्टैः ११३ भ्रष्टेति । तथा भ्रष्टेनविकीर्णेनसीमंतगतसिंदूरेणनयनांजनेनचसहितैःललाटादिगतैःकुंकुमादिभिः ११४ सममिति । तथासमेतानिसम्यग्ग्रथितानिकुसुमानियत्रतादृशस्यधम्मिल्लस्यकेशपाशस्यपतनेनग्रंथिविमोकेनसमंसहवर्तमानकंदर्पदर्पणविलसद्भिर्हासादिभिः ११५ कोकिलादीति । तथानंदनादिवनेष्वन्तर्वर्तमानैर्देशैःस्थलविशेषैः । कीदृशैर्देशैः कोकिलादिस्वरविशिष्टवसंतादिशालिभिः । मंदाकिनीजलसान्निध्येनकोमलैःवालुकाराजितैर्देवसेवितैश्चेति । इंद्राभ्यनुज्ञातदेवमाययातपःस्थानेपिनंदनाद्युपलंभोनचित्रमितिबोध्यं । नहृतंअहृतपूर्वंममधैर्यंवार्धकेवृथाविभ्रममात्रेणगत

पीनोन्नतकुचद्वंद्वजघनापहृतांबराः ॥ पूर्णचंद्राननास्तद्वद्वसनाभरणैर्युताः ११० उद्दामभावपिशुनैःकटाक्षैर्धैर्यहारिभिः ॥ मृदुलैःसस्मितैःश्लक्ष्णैःसिद्धैर्गुर्वर्थसंयुतैः १११ वचनैःकामदावाग्निदीपकैर्भूरिकीर्तितैः ॥ प्रस्खलत्पदविन्यासैर्मंजुमंजीरमंजुलैः ११२ श्लथद्दुकूलवलयैःकांचीतारांगदादिभिः ॥ सहितैःखिन्नसर्वांगैस्तथारोमांचकंचुकैः ११३ भ्रष्टसीमंतसिंदूरनयनांजनसंयुतैः ॥ ललाटोरःस्थलस्थानबहुकुंकुमचंदनैः ११४ समंसमेतकुसुमधम्मिल्लपतनेनच ॥ कंदर्पदर्पविलसद्धासवादित्रगीतकैः ११५ कोकिलादिस्वरासकवसंतमलयानिलैः ॥ मंदाकिनीजलप्रांतमृदुलैर्वालुकाचितैः ११६ नंदनादिवनेष्वंतर्देशैर्देवैर्निषेवितैः ॥ ममधैर्यंहृतंनाद्यवार्धकेतद्गतंवृथा ११७ मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतिः ॥ देहोममतथामीषांदाराणांसुखकारणम् ११८ मृज्जलैर्बहुशोदेहोमयाप्रक्षाल्यतेनिजः ॥ नसोपिशुद्धोजातोस्तिदुःखदोदुःसहःपरम् ११९ दारामद्भिन्निजंदेहंनैवंप्रक्षालयंत्यमी ॥ तेषुमोहंविनाकेनसुखमत्रभविष्यति १२० पीनोन्नतौस्तनौस्यातांवध्वाःप्रथमयौवने ॥ पीडितस्ययथाग्रंथीरोगादुरसिनिर्गतौ १२१ स्तनयोश्चस्फिजोर्नैववस्तुतोविद्यतेंतरम् ॥ शेषोदेहःसमःस्त्रीणांपुंसश्चस्मरनिर्गमे १२२

मितिद्वयोरर्थः ११६ । ११७ विभ्रमनिमित्तकत्वरूपंवृथात्वमेवस्फुटयति मांसेति । मांसादिसंहतिरूपोदारादिदेहोममसुखकारणमितिविभ्रमत्वंस्फुटमितिभावः ११८ एतदेवव्यनक्ति मृज्जलैरिति । यद्यामद्देहोबहुशःप्रक्षाल्यमानोपिवस्तुतोऽशुद्धएव तदुक्तं ‘स्थानाद्बीजादुपष्टंभान्निष्पंदान्निधनादपि । कायमाधेयशौचत्वात्पंडिताह्यशुचिंविदुः’ इति स्थानंजनन्युदरं । बीजंशुक्रशोणिते । उपष्टंभोभुक्ताहारपरिणामः । निष्पंदोनवद्वारप्रस्रावः । नियतंश्रोत्रियशरीरस्याप्यशुचित्वकारणं । आधेयत्वंस्वाभाविकत्वाभावइतितदर्थः । अतएवविवेकिनोदुःखदोदुःसहश्च । परंकेवलंदारास्तुमद्वतशौचमपिनकुर्वंतितेषुदारेषुसुखबुद्धिर्मोहंविनाकथमुपपद्येतेतिद्वयोरर्थः ११९ । १२० मोहमेवप्रपंचयन्रोगजमांसग्रंथिनिभयोःस्तनयोःस्वर्णकलशधीर्मुग्धवेत्याह पीनोन्नताविति । पीडितस्यरोगिणइत्यर्थः १२१ किंचपुरुषस्यस्वदेहसमेनारीदेहविशेषबुद्ध्याप्रयुक्तासुखहेतुत्वबुद्धिर्बाधितार्थैवेत्याह स्तनयोरितित्रिभिः । स्फिजौकटिगतमांसपिंडौ अंतरंविशेषः स्मरनिर्गमेस्मरवेगापगमकालेस्तनभागाच्छेषःस्त्रीपुंसदेहःसमइति १२२

पायोरिति । यतःपाय्वादिस्वरूपभूतयोश्छिद्रयोर्वैषम्यंनअतइदंसिद्धं । इदंकिमतआह नारीत्यादि । एकःपायुर्यस्यतत्तथापुंवपुःपुंशरीरम् १२३ एवमिति । एवमुक्तविधयावधूदेहःपुं देहसदृशःसिद्धः अस्मिन्वधूदेहेसुखःसुखजनकोयमित्याकारायाममधीरुत्पन्नासावृथावाधितार्थेत्यर्थः १२४ किंचनारीदेहमात्रस्यस्त्रीत्वेपितदंतरात्मनःपुरुषत्वमेव सवाअयंपुरुषःसर्वासुपूर्ष्वि तिश्रुतेः । तथाचतत्तत्रपामकुर्वतोममात्यंतमनौचित्यमित्याह अपिग्राम्येणेति स्पष्टम् १२५ किंचकामसुखस्यभावनाविशेषएवोपशांतिद्वाराप्रयोजकोननार्यादिदेहयोगोऽन्वयव्यभिचारा दित्याह देहयोरितिपंचभिः । देहयोगस्यहेतुत्वेयुवासुतोजननीमालिंगन्युवतिःसुतावासम्यक्स्नेहाद्युवानंपितरमालिंगंतीसतीएनंकामुकप्रसिद्धमानंदंकस्मान्नगच्छतिअतोदेहयोगोनहेतुरिति द्वयोःसंबंधः १२६ । १२७ उदाहरणांतरेआह भगिनीतिद्वाभ्यां । स्नेहिनौस्नेहवंतौ विद्विष्टौद्वेषंप्राप्तौ १२८ । १२९ फलितमाह ततइति । भावोविकारः १३० स्ववृत्तंस्मृत्वो पहसति अहोइति । नारीरूपासुनरकभूमिषु १३१ किंचपरमानंदरूपमतिसंनिहितंचात्मानंविहायसुखायनारीनरकाश्रयणंममानौचित्यसीमानमावेदयतीत्याह अहोमेइतिद्वाभ्यां । अहोअति

पायोर्योनेश्चवैषम्यंछिद्रयोर्नैवविद्यते ॥ नारीदेहोद्विपायुःस्यादेकपायुचपुंवपुः १२३ एवमस्मिन्वधूदेहःपुंदेहसदृशःसदा ॥ ममयाबुद्धिरुत्पन्नासुखोयमितिसा वृथा २४ अपिग्राम्येणधर्मेणनारीहृदयसंस्थितम् ॥ पुरुषंगच्छतःकस्मान्ममलज्जानजायते २५ देहयोर्योगतोभूयात्सुखंप्राणिषुनैवतत् ॥ आलिंगयन्सुतं स्नेहाज्जननीयुवतींयुवा २६ सुतावायुवतिःस्वस्ययुवानंपितरंमुहुः ॥ आलिंगयंतीसंस्नेहात्कस्मादेनंनगच्छति २७ भगिनीभ्रातरौयद्वद्युवानौस्नेहिनौमिथः ॥ आलिंगयंतौकेनेमौसुखमेतंनगच्छतः २८ परस्परंहिविद्विष्टौदंपतीदैवयोगतः ॥ आलिंगयंतौकेनेमौसुखंनैवात्रगच्छतः २९ ततोमानसएवायंभावःस्त्रीपुंसयो र्मिथः ॥ सुखप्रदोभवेदत्रनिःसुखेस्मिन्कलेवरे १३० अहोभूतैरिवाविष्टःपतनोत्पतनादिकम् ॥ कृतवानस्मिसंमोहान्नारीनरकभूमिषु ३१ अहोमेहृदयेशश्व ज्ज्योतिषांज्योतिरद्वयः ॥ परमानंदरूपोयमात्मातिष्ठतिसर्वदा ३२ आनंदात्मानमेतंतंस्वस्थंप्रियतमंसदा ॥ सुहृदंसर्वजंतूनांपितृमात्रादिरूपकम् ॥ परि त्यज्यसुखप्रेप्सुर्नारीनरकमागतः ३३ मत्तःपापतमःकोवापितृमात्रादिघातकः ॥ सर्वात्मानममुंयस्माद्धतवानस्म्यवज्ञया ३४ पामरेभ्योप्यहंतुच्छोजानन्ना त्मानमद्वयम् ॥ अयंबहिर्मुखोजातोनैतेजानंतितंप्रभुम् ३५ अहोतेपिचनेच्छंतिवृद्धावृद्धांचयोषितम् ॥ अहंवृद्धोत्रसंजातोजरसाथवशीकृतः ३६ दाराअपि तथैवैतेशुष्ककाष्ठसमाममः ॥ भेरीसमोदरास्तद्वन्नापिस्पष्टपयोधराः १३७ अपत्यपीतसर्वस्वहतदृष्टिपयोधराः ॥ किंस्विदद्यापिमेचित्रंमनस्तेषुप्रवर्तते १३८

चित्रंयदात्मासाक्षादपरोक्षोवर्ततेतंविहायसुखेप्सयानरकआश्रीयतइतिद्वयोःसंबंधः १३२ । १३३ किंचमहतामवज्ञैवहननं यथात्वंकारेणगुरूणामितिकर्णपर्वणिप्रसिद्धंतथात्मवधेसर्वपापांतर्भावोऽन्य थासंतमात्मानमित्यादिस्मृतिप्रसिद्धः तथाचसर्वात्मकस्यात्मनोऽवज्ञयोपेक्षारूपयाहननेसर्वपापप्रसक्तिरित्याह मत्तइति । मत्तःमत्सकाशात् १३४ अपिचज्ञात्वात्मावमानःपामरेभ्योपकर्ष मावहतीत्याह पामरेभ्यइति । तुच्छोपकृष्टः यतोहमात्मानंजानन्बहिर्मुखोजातः एतेपामरास्तुतमात्मानंनजानंतीति १३५ किंचवार्धकेमान्मथाविकारालोकदृष्ट्याप्यनुचिताइत्याह अहोतेपीति त्रिभिः । तेपामराअपिवृद्धाःसंतोवृद्धांनेच्छंति तथाचाहमपिवृद्धोदाराअपिवृद्धाःशुष्ककाष्ठसमत्वादिभ्यः पयोधरयोःस्पष्टत्वमुन्नतत्वंतदभावादितिद्वयोरर्थः १३६ । १३७ अपत्येति । तथाऽप त्यैःपीतंसर्वस्वंययोस्तौतथाहताउद्वेजितादृष्टिर्याभ्यांतौतथातथाविधौपयोधरौयेषांदाराणांतेतथातेषुमेमनःस्विदितिवितर्केकिंकिमर्थंप्रवर्ततइतिचित्रमितिसंबंधः १३८

किंचगुरोराज्ञापूर्तावपिममगृहरागसंततिरूपोनर्थःसंगस्यैवफलमित्याह अहोभगवतइतिदशभिः । अहोइतिविषादे ‘अहोधिगर्थेशोकेचकरुणार्थविषादयोः’ इतिहेमचंद्रः । तथाचगुरोराज्ञाअप त्योत्पादनसंप्रदायप्रवर्तनयोरेवाभून्मयातुअधिकःकालक्षेपःकृतइतिविषादइतिभावः १३९ विषादमेवविशदयति संप्रदायइत्यादिना । तत्रसंप्रदायोनानाशिष्यादिपरम्परारूपोमत्तोजातइति १४० तेष्विति । तेषुशिष्यादिषुजातेष्वपिइतिसंचिंत्यमयागृहरूपंबंधनंनत्यक्तं । इतिकिं मदीयेभार्येवनेवर्तेतेअधुनात्यागेतुतयोर्मद्वर्जनान्मद्वियोगाद्दाहोभवेदिति १४१ ततइति । भार्य योर्वियोगासहिष्णुत्वात् अनयोर्भार्ययोः १४२ कालइति । परस्तदुत्तरःकश्चित्कालएवमेवएवंविधविचारेणैवमयानीतः । एवंकथमित्याकांक्षायामाह एतयोरित्यादि । एतयोर्भार्ययोः इतोगृहाश्रमात् उद्विग्नेतसे १४३ ततइति । नयामिअतिवाहयामि १४४ जातेति । तेषुतनयसंस्कारेषु १४५ एवमिति । एवमितिमयाचिंतितं इतिकिं तनयेभ्यःस्वगतांविद्यांदा

अहोभगवतस्तस्यगुरोर्मंडलवर्तिनः ॥ ममाज्ञाभूदपत्यार्थेसंप्रदायप्रवर्तने १३९ संप्रदायोमहान्मत्तोजातोवेदचतुष्टये ॥ शिष्याःप्रशिष्यास्तच्छिष्याय तोमेसंतिकोटिशः १४० तेषुजातेष्वपिमयानत्यक्तंगृहबंधनम् ॥ इतिसंचिंत्यमेजायेवर्तेतेयद्वनेधुना ॥ स्निग्धेमयितयोर्मोहाद्दाहोमद्वर्जनाद्भवेत् १४१ ततोहमन योःकंचित्कालंदत्वासुखंततः ॥ स्वकार्यंसाधयिष्यामिह्युपकारकृतेसति १४२ कालःकश्चिन्मयानीतएवमेवतथापरः ॥ एतयोर्यदिनापत्यमुत्पाद्याहमितोगतः ॥ मद्वियोगात्तदानूनमुद्विग्नेतेभविष्यतः १४३ ततस्तयोरपत्यानिशीघ्रमुत्पादयाम्यहम् ॥ उत्पन्नेषुचपुत्रेषुनयामिकालमात्मनः १४४ जातकर्मादिसंस्कारान्क रिष्येतनयेष्वहम् ॥ कृतेपुतेषुचैवाहंस्तवानायुपोष्ययम् १४५ एवंविद्यांप्रदास्यामितनयेभ्योमयिस्थिताम् ॥ जातविद्येषुदाराणांसंयोगोभवतान्मम १४६ तनयानांसुतास्तद्वत्पतिभिर्यांतुसंगमम् ॥ द्वंद्वीभावेप्रजायास्तुतत्प्रजांद्रष्टुमुद्यतः १४७ अहमेवंस्थितेचित्तंममधावतिदुर्धियः ॥ अहोपापतमःसंगश्चतुर्थाश्रम गामिनाम् ॥ मादृशोपियतःसंगात्प्रापितोत्रदशामिमाम् १४८ करामलकवद्यस्यप्रत्यक्षंब्रह्मवर्तते ॥ संगस्तेनापिकर्तव्योनकेनापीहकर्हिचित् १४९ विशेषत स्तुनारीणांयुवतीनांततोपिच ॥ मूर्तिमानेषनरकोद्विपाद्योपिदितीरितः १५० बलिष्ठोनरकस्तद्वद्युवतिःपतितोत्रयः ॥ उद्धर्तुंस्वंनशक्तःस्याद्विद्वानपिसमा हितः १५१ निदर्शनमहंतेषांभाविनांविदुषामिह ॥ युवत्यानरकाद्यस्मादुद्धर्तुंस्वंनहिक्षमः १५२ अहोनिष्पन्नयोगोपिसंगात्पततिनिश्चितम् ॥ अहमेतादृशो विद्वान्नरकेत्रयतःस्थितः १५३ नरकग्राममार्गोयंनारीदेहःप्रकीर्तितः ॥ सर्वथापरिवर्ज्योतोमोक्षमार्गंयियासता १५४

स्यामीति तनयेषुजातविद्येषुइतिचिंतितंयत्तनयानांदारसंयोगोभवतात् तथासुताःकन्यकाःपतिभिःसंगमंयांत्विति प्रजायाअपत्यानांद्वंद्वीभावेपरिणयेजातेपितत्प्रजांपौत्रादिरूपांद्रष्टुमहमुद्यतइति द्वयोरर्थः १४६ । १४७ अहमिति । अहंपदंपूर्वान्वयित्वेनदर्शितं एवंस्थितेएवंकामादिदोषमयतयास्थितेनिश्चितेसंसारेयन्ममनोधावतितत्इतिनिश्चितंयत्संगःपापतमःअतिपापनिदानं यतीनांतुविशेषतःसतथा यतोमादृशोविद्वानीदृशदशांगतइतिसंबंधः १४८ संगदोषानेवप्रपंचयति करेत्यादिनाइत्यादिबहुधेत्यतःपूर्वंतनेनग्रंथेन स्पष्टम् १४९ विशेषतइति । नारीणांतत्रापियुवती नांसंगस्तुविशेषतोवर्ज्यः यतोद्विपात्पादद्वयसंचारीनरकोयंयायोपिदिति १५० बलिष्ठइति । युवतिरूपोनरकोबलिष्ठोऽतिबलवान् अत्रयुवतिरूपनरकेयःपतितःसस्वमात्मानमुद्धर्तुंनशक्नो तितत्राहमेवदृष्टांतइतिद्वयोरर्थः १५१ । १५२ अहोइति । निष्पन्नयोगोयोगारूढः अत्रनारीरूपे १५३ नरकेति । नरकरूपग्रामस्यमार्गः यियासतागंतुमिच्छता १५४

चतुर्थेति । संन्यासमार्गेणमोक्षंगच्छतांमार्गमध्येनारीदेहतएवभयंनसर्पादिभ्यइतित्रयाणांभावः १५५ । १५६ । १५७ निष्कामलभ्यस्यमोक्षस्यमार्गेनारीप्रयुक्तंभयमिदमेवयत्स्मरणादिनाकामा दिवृत्तिजननमित्याह स्मरणादिति । यदावधूनांस्मरणादपिकामोजायतेतदादर्शनादेःकिमुवाच्यमित्यर्थः १५८ आत्मनइति । यतिःशुभमिच्छन्मनआदिभिर्योषित्संगंनकुर्यात् तत्संसर्गस्यघृता ग्निसंसर्गवद्द्रावकत्वादितिद्वयोरर्थः १५९ । १६० एकएवेति । नारीरूपसर्पस्यविषेप्रसक्तेएकमेवौषधंयन्नारीस्मरणादिवर्जनमिति १६१ तच्चेति । तच्चनारीस्मरणादिवर्जनंमयात्रगृहाश्रमेवसतात्य क्तुमशक्यमतःसंन्यसिष्यामिअन्यथासंगात्यागेदेहांतरलाभद्वाराविनंक्ष्यामीत्यर्थः १६२ संगस्यदेहांतरहेतुत्वंकामद्वारकंविशदयति वासनेतिद्वाभ्यां । वासनापूर्वकर्मानुभवजन्यःसंस्कारःसका मिनांदेहांतरहेतुःस्वप्नवदिति परलोकस्यस्वप्नसाम्यंचप्रपंचितंषष्ठे सचकामःकामिनीनांसंगाज्जायतेस्वसंस्कारद्वारादेहांतरेरागद्वेषादिसंवर्तिचकरोतिततःपुनर्जन्मांकुरबीजोद्भवः । तदुक्तं क्लेशसलिला

चतुर्थाश्रममार्गेणगच्छतामिदमेवहि ॥ महद्भयंसमुद्दिष्टंनारीदेहसमुद्भवम् १५५ नसर्पाद्व्याघ्रतोनैवचोरेभ्योनचराजतः ॥ नजलान्नविषान्नाग्नेर्नाधेर्व्याधेश्चविद्यते ॥ १५६ देवेभ्योनचभूतेभ्योभयंकिंचिदुपाव्रजेत् ॥ चतुर्थाश्रममार्गेणगच्छतामधिकारिणाम् ॥ विहाययोषितस्तद्वद्युवतीश्चविशेषतः १५७ स्मरणाज्जायतेका मोवधूनांधैर्यनाशनः ॥ दर्शनाद्वचनात्स्पर्शात्कस्मादेषनसंभवेत् १५८ आत्मनःक्षेममन्विच्छंश्चतुर्थाश्रममागतः ॥ नकुर्याद्योषितांसंगंमनसावपुषेंद्रियैः १५९ विलीयतेघृतंयद्वदग्नेःसंसर्गतस्तथा ॥ नारीसंसर्गतःपुंसोधैर्यंनश्यतिसर्वथा १६० एकएवप्रतीकारोनारीसर्पविषेभुवि ॥ आसामस्मरणंतद्वद्दर्शनादेश्चवर्जनम् १६१ तच्चसंगवताऽशक्यंमयानिवसतात्रहि ॥ ततःसर्वात्मनानारीसंगंत्यक्ष्याम्यहंसदा ॥ विनंक्ष्याम्यन्यथासंगाद्देहांतरसमाप्तितः १६२ वासनायत्रयस्यस्या त्सतंस्वप्नेपुपश्यति ॥ स्वप्नवन्मरणेज्ञेयंवासनातोवपुर्नृणाम् १६३ कामिनांकामिनीनांचसंगात्कामीभवेत्पुमान् ॥ देहांतरेततःक्रोधीलोभीमोहीचजायते १६४ कामक्रोधादिसंसर्गादशुद्धंजायतेमनः ॥ अशुद्धेमनसिब्रह्मज्ञानंतच्चविनश्यति ॥ दूरापास्तोभवेत्तत्रतस्योत्पादोत्रदुर्लभः १६५ कामक्रोधादिसंसक्तोब्रह्मज्ञान विवर्जितः ॥ मार्गद्वयपरिभ्रष्टस्तृतीयंमार्गमाव्रजेत् १६६ तृतीयेध्वनिसंप्राप्तःपुण्यविद्याविवर्जितः ॥ कीटादिदेहभाजीसन्नरकाच्चननिःसरेत् १६७ कामिनां कामिनीनांचसंगादेवंसमाव्रजेत् ॥ कल्पकोट्यादिकंकालंदुःखंसुखविवर्जितः १६८ कामिनीनांयथासंगोदुःखदःकामिनामपि ॥ तथैववर्णयंतेतेयतःका मंचकामिनीम् १६९

वसिक्तायांचित्तभूमौधर्माधर्मांकुरंजनयतइतीतिद्वयोर्भावः १६३ । १६३ कामादीनांतत्त्वज्ञानप्रतिबंधद्वारापिसंसारहेतुत्वमित्याह कामेति । कामादिसंबंधान्मनोऽशुद्धंजायतेअशुद्धेचमनसि जातमपिज्ञानंविनश्यतिप्रतिबंधात्कार्यंकरंनभवतितत्राशुद्धेमनसितस्यज्ञानस्योत्पादस्तुदूरापास्तोदूरान्निरस्तोऽतएवदुर्लभइति १६५ ततःकिमतआह कामेति । कामादिमान्ब्रह्मज्ञानादुपासनाकर्म लक्षणमार्गद्वयाच्चपरिभ्रष्टःसंस्तृतीयंमार्गंजायस्वम्रियस्वेत्यादिश्रुत्युक्तंप्राप्नुयादिति १६६ तृतीयेइति स्पष्टम् १६७ कामिनीसंगवत्कामिसंगोपिपरित्याज्यउक्तविधदुःखहेतुत्वादित्याह कामिनामि ति । एवंउक्तविधया १६८ तत्रकामिसंगस्यदुःखजननेद्वारमाह कामिनीनामितिद्वाभ्यां । तथैवकामिनांसंगोपिदुःखदोयतस्तेकामिनःकामादिकंवर्णयंतितद्वर्णनाच्चनारीविषयंज्ञानंजायते यतोत्यं तासत्यपिज्ञानमर्थेशब्दःकरोतिहीतिशब्दसामर्थ्यंप्रसिद्धमस्तितेनज्ञानेनचमनोरूपेगृहेकल्पितायोषिदग्निवद्दहेत्तापयेदितिद्वयोरर्थः १६९

१७० फलितमाह श्रेयस्कामइति । स्पष्टम् १७१ तत्रहेतुतयोक्तांसंगस्यज्ञानप्रतिबंधकर्तांस्मारयति महावातेइति । यथामहतिवातेज्वलन्दीपःकार्यंमार्गप्रकाशादिरूपंनकरोतितथासंगे ब्रह्मज्ञानंविद्यमानमपिकार्यमविद्याध्वंसंनकरोति तज्ज्ञानंतत्रसंगकालेउत्पत्तुंजन्मलब्धुंकथमर्हतीति १७२ एवंत्यागस्ययोग्यतांविचार्यपुनर्भार्ययोरुपकारोपयोगिइदंवक्ष्यमाणंचिंतयामासेत्याह इत्यादीति १७३ इदंपदोक्तंविचारमभिनयति यावदितिपड्भिः । सप्तपादन्यासान्यावताकालेनगच्छेत्तावत्कालंयेनसहयःस्थितःसतस्यमित्रंसद्भिरुक्तः अहंतुभार्याभिःसहचिरंस्थितोस्मीतिसंबंधः १७४ ब्रह्मेति । स्त्रीमहाख्रीयोग्याप्रज्ञागृहकौशल्यरूपायस्याःसातथा हिताहितंमोक्षबंधरूपम् १७५ मयीति । एषामैत्रेयीमयिप्रव्रजितेसतिचिंतयाशोपंगमिष्यतीतिसंभाव्यते वित्तेनतुतोपंनैवगमिष्यतिसंसारविरक्तत्वात्तद्ध्वंचसंसारदोषदर्शनेनमोक्षैककामत्वादितिद्वयोःसंबंधः १७६ । १७७ स्नेहश्चेति । अस्यामैत्रेय्यायदानिजेपिशरीरेस्नेहोनास्तितदापत्यादिपुस

वर्णनाच्छब्दसामर्थ्याज्ज्ञानंनारीपुजायते ॥ ज्ञानेनचित्तगृहगायोपिदग्निर्देहेदिदम् १७० श्रेयस्कामस्ततोनित्यंचतुर्थाश्रममागतः ॥ कामिनांकामिनीनांचसंगंसर्वात्मनात्यजेत् १७१ महावातेज्वलन्दीपोयथाकार्यंकरोनहि ॥ संगेसतितथाब्रह्मज्ञानंकार्यंकरोतिन ॥ विद्यमानंकथंतद्धितत्रोत्पत्तुंसमर्हति १७२ इत्यादिबहुधाचित्तेचिंतयित्वातदामुनिः ॥ इदंविचिंतयामासपुनश्चकरुणान्वितः १७३ यावत्कालमयंगच्छेत्पुमान्सप्तपदंभुवि ॥ तावत्कालंस्थितोजंतुस्सहमित्रमुदाहृतः ॥ सद्भिर्बहुतिथंकालंभार्याभ्यांतुस्थितोह्यहम् १७४ ब्रह्मविद्याधिकारश्चकात्यायन्यानविद्यते ॥ स्त्रीप्रज्ञैवयतःसेयंनजानातिहिताहितम् १७५ मयिप्रव्रजितेचिंताशोषमेषागमिष्यति ॥ वित्तेननैवसंतोपंमैत्रेयीतुगमिष्यति १७६ एषासंसारसंतप्तामोक्षमेवसमिच्छति ॥ अस्यानविद्यतेकामोयौवनेपिकदाचन १७७ स्नेहश्चननिजेप्यस्तिदेहेकेनपरत्रसः ॥ पत्यादिषुभवेदस्याःसर्वदोद्विग्नचेतसः १७८ अनुवृत्तिंकरोत्येषामयिधर्मविभीतितः ॥ नतुकामेनललनापत्यौयद्वत्पराभुवि ॥ अथवक्ष्यामितेनाहंब्रह्मज्ञानमनिंदितम् १७९ इतिसंचिंत्यसंन्यासंकरिष्यन्निदमुक्तवान् ॥ मैत्रेयीतिचसंबोध्यमैत्रेयींमुनिसत्तमः १८० अरेजायेप्रियेन्यासंचतुर्थंयोग्यमाश्रमम् ॥ करिष्याम्यहमत्रत्वंगृहस्थत्वंविहायहि १८१ हंतजायेततःकुर्वेवित्तंभागंतवाधुना ॥ कात्यायन्यानयासार्द्धंपश्चात्सुखंकरंद्वयोः १८२ एवमुक्तातिसंखिन्नासंसारभरमंथरा ॥ अप्राप्तावसरापूर्वंसाहोवाचपतिंप्रति १८३ भगवन्वित्तमिच्छामिमरणेनविवर्जितम् ॥ त्वयादत्तंनचान्यत्तुलोकेयन्मरणप्रदम् १८४

स्नेहःकेनस्यादिति १७८ अनुवृत्तिमिति । एषायन्मत्सेवांकरोतितद्धर्मभयान्नतुलौकिकललनावत्कामतःतेनास्याज्ञानाधिकारित्वेनअथसंन्यासात्प्रथमंब्रह्मज्ञानमस्यैउपदेक्ष्यामीत्यर्थः १७९ प्रथमकंडिकार्थमुपसंहरन्द्वितीयकंडिकार्थमुपक्रमते इतिसंचिंत्येति । भविष्यत्संन्यासकर्तामुनिर्मैत्रेयीं हेमैत्रेयिइतिसंबोध्यइदंवाक्यमुक्तवानिति १८० इदंकिमित्याकांक्षायामाह अरेइति । अरेप्रियेअहंगृहस्थत्वंविहायचतुर्थमाश्रमंकरिष्यामिअत्रत्वमनुमन्यस्वेतिशेषः । अत्रत्यमितिपाठेगृहस्थत्वविशेषणं । अत्रकर्माधिकारेसतिभवंप्रसिद्धमितितदर्थः १८१ हंतेति । हंतेत्यनुकंपायां कात्यायन्यासहतववित्तविभागंकरिष्यामियेनपश्चात्सुखंभवेदिति १८२ तृतीयकंडिकार्थंप्रपंचयति एवमितिद्वाविंशतिश्लोकैः । एवमुक्तासंसाराद्धारादिवात्यंतमुद्विग्नामैत्रेयीपूर्वमलब्धावसराप्यवसरंप्राप्येदमुवाचेति १८३ इदंपदोक्तंमैत्रेयीवाक्यमभिनयति भगवन्नितिद्वाभ्यां । हेभगवन्अमृतत्वकरमेवविचमिच्छामीत्यर्थः १८४

पृथिवीति । यदिसकलापृथ्वीवित्तपूर्णामदीयास्यात्तदातेन वित्तेनाहममृतभावंप्राप्ताभवेयंनवेत्यनयोःपक्षयोरेकंपक्षमवधारयपश्चादहंयोग्यतामालोच्यवित्तंग्रहीष्यामीत्यर्थः १८६ इत्युक्तइति । इतिमैत्रेय्याउक्तेसतिमुनिर्द्वितीयंपक्षंनेत्याकारकमेवावधारितवानितिप्रथमदलार्थः तमुपपादयति शरीरीत्यादिना । नश्वरेणनाशशीलेनवित्तेनकःशरीरीअविनश्वरोऽमृतोभवेत् प्रत्युतवित्तेनतत्साध्येनकर्मणाचमरणमेवप्राप्नुयादित्यर्थः ८६ तत्रवित्तस्यमृत्युभयप्रदत्वंलोकेप्यन्वयव्यतिरेकाभ्यांदर्शयति वित्तवानित्यादिना । दुःखतःदुःखद्वारा ८७ वित्तवान्कोहीति । स्पष्टम् ८८ व्यतिरेकंदर्शयति.निर्धनानामिति । अनुकूलंनीरोगत्वादिप्रयोजकत्वादितिभावः ८९ अनुकूलत्वमेवधनिपुव्यतिरेकेणस्फुटयति यतोत्रेति । दृश्यंतइतिसंबन्धः १९० विरोधिनइति । अंतःप्रच्छन्नंपुत्रादिभिर्विरोधिनःकेचिद्धनिनोदृश्यंतेकेचित्तुबहिःस्फुटमपिश्वभिःश्ववद्विरोधिनोदृश्यंतइत्यर्थः १९१ चित्तइति । तेषांधनिनांइदंकर्त्तव्यमिदंनकर्तव्यमितिचिंतयातथाव्याकुलतावर्ततेयथाअणुस्वल्पमपिसुखंनगच्छेयुरित्यर्थः १९२ नैतैरिति । किंचसाधवोजनायथानिर्धनैःस्नेहंकुर्वंतितथाएतेधनिभिःस्नेहंनकुर्वंतीतिसंबंधः कीदृशैर्निर्धनैः शोच्यैरनुग्राह्यैः क्षुधयाकृशत्वात् १९३ धनेति । तथाधनिनोधनमदेन

पृथिवीसकलाचेत्स्यात्पूर्णावित्तेनमेमुने ॥ त्वयादत्तात्रतेनाहममृतास्यांनवेतितत् ॥ वदपश्चादहंत्वत्तोवित्तमिच्छामिधार्मिक १८५ इत्युक्तेयाज्ञवल्क्यस्तांनेत्याहमुनिसत्तमः ॥ शरीरीकोत्रवित्तेननश्वरेणाविनश्वरः ॥ भवेत्प्रत्युतवित्तेनमरणंप्राप्नुयात्सदा १८६ वित्तवान्राजतस्तद्वच्चोरेभ्योपिचदुर्जनात् ॥ राजादिभ्योपिसततंमृत्युमाप्नोतिदुःखतः १८७ वित्तवान्कोहिलोकेस्मिन्निश्चितःकुत्रचिद्वसेत् ॥ अपिस्वप्नेपितस्यास्तिभयंराजादिजंमहत् १८८ निर्धनानांसदादैवमनुकूलंहिजायते ॥ धनिनांप्रतिकूलंतत्प्रायशोभुविदृश्यते १८९ यतोत्रधनिनोलोकेरोगिणःक्षुद्विवर्जिताः ॥ अल्पायुषोह्यदृष्ट्वाश्चधनराशौमहत्यपि १९० विरोधिनश्चसततमंतःपुत्रादिभिर्जनैः ॥ केचिद्बहिश्चदृश्यंतेश्वभिःश्वानोयथाभुवि १९१ चित्तेव्याकुलतातेषांकर्तव्यासक्तचेतसाम् ॥ वर्त्ततेनैवगच्छंतियथातेसुखमण्वपि १९२ नैतैःकुर्वंतिसततंसाधवःस्नेहमद्भुतम् ॥ धनहीनैर्यथाशोच्यैर्नित्यंक्षुत्क्षामदेहिभिः १९३ धनमत्ताःप्रकुर्वंतिपापानिविविधानिहि ॥ दरिद्राःसर्वतोभीतानैवकुर्वंतिकिंचन १९४ अवजानंतिधनिनोदेवान्राज्ञोगुरूनपि ॥ अतिथीन्ब्राह्मणांस्तद्वद्वेदवेदांगपारगान् ॥ मनुजान्बुद्धिसंपन्नानगाधान्जलधीनिव १९५ दुःखान्यपिबहून्येतेगच्छंत्यविरतंजनाः ॥ पक्षद्वयेपिमैत्रेयिभूतोपद्रवकारकाः १९६ इत्यादिकंधनीदुःखंप्राप्नुयान्निर्धनोनतत् ॥ शक्त्यभावेनमैत्रेयिधनिनोनिर्धनोवरः १९७ धनिनांजीवितंयादृक्तादृगेवतवापिच ॥ धनलाभाद्धिमैत्रेयिभविष्यतिनसंशयः १९८ वित्तासक्तेषुपतिषुचलचित्तेषुसर्वदा ॥ अमृतत्वस्यनैवाशायथातेपितथैवसा १९९

पापानिकुर्वंतिदरिद्रास्तुनतथेति १९४ अवेति । तथाधनिनोदेवादीन्वेदपारगब्राह्मणांतान्अवजानंति तथासमुद्रवद्गंभीरान्ब्रह्मविदुषोमनुष्यानप्यवजानंतीति १९५ दुःखान्यपीति । तथाएतेधनिनोजनाबहूनिदुःखान्यपिगच्छंति कीदृशाः स्वपक्षेपरपक्षेचवर्तमानानांभूतानामुपद्रवकारकाः तदुक्तंगीतासु ' कर्षयंतःशरीरस्थभूतग्राममचेतनाः । मांचैवांतःशरीरस्थंतान्विध्द्यासुरनिश्चयान् " इति कर्षयंतःक्लेशयंतः १९६ इत्यादिकामिति । इत्यादिकंदुःखंधनीप्राप्नुयान्नतुनिर्धनःपरदुःखजननादौसामर्थ्याभावादतोनिर्धनोधनिनःसकाशाद्वरइति १९७ धनिनामिति । हेमैत्रेयियदित्वंधनंलप्स्यसितदायादृशंप्रकृष्टोपकरणशालिधनिनांजीवनंस्यात्तादृशंतवापिभविष्यतीति १९८ वित्तासक्तेष्विति । पतिषुधनस्यस्वामिषुतदासक्तयाचलचित्तेष्वमृतत्वस्ययथानैवाशाभवतितथातवापिधनसक्तायाःसाअमृतत्वाशानभविष्यतीति १९९

धनिष्वमृतत्वाशाभावममृतत्वसामग्र्यभावेनोपपादयति अमृतत्वमितिपंचभिः । अमृतत्वशब्दवाच्यस्यमोक्षस्यप्रयोजकोदेहादिसंबंधाभावस्तत्प्रयोजकोऽज्ञानाभावःअज्ञानाभावस्यतुप्रयोजकआ त्मबोधस्तत्रधनासक्तेष्वात्मबोधोदुर्लभस्तदभावेऽज्ञाननाशाभावइतिद्वयोरर्थः २०० । २०१ अज्ञानानाशतइति । अज्ञाननाशाभावेचतत्कार्यसूक्ष्मदेहस्यस्थितिस्तत्स्थितौचतदाश्रितपुण्यपापयोः स्थितिस्तत्स्थितौचपुनःस्थूलशरीरोत्पत्तिस्तत्सत्वेचकर्मांतरारंभप्रयोजकसुखदुःखोपभोगोमरणंचेतिपूर्वजोहिरण्यगर्भोपिशरीरीकोनमरिष्यतीति फलितमाह अमृतत्वस्येति इतित्रयाणामर्थः २०२ २०३ । १०४ चतुर्थकण्डिकार्थमाह इत्युक्तेतिद्वाविंशतिश्लोकैः । एवमुक्तामैत्रेयीतंमुनिंप्रतिइदमभाषत । इतिकिमित्याकांक्षायामाह अमृतत्वस्येत्यादि । यदिवित्तेनामृतत्वसाधनंतदाऽमृतत्वका माहंतेनवित्तेनाकिंप्रयोजनंसाधयेयं नकिंचिदपीत्यर्थः २०५ भगवन्निति । ततोमदिष्टासाधनत्वादेतद्धनंकात्यायन्यर्थमेवास्तु हेपतेस्वामिन् २०६ देहधारणंत्वहंभवद्भिक्षान्नेनैवकरिष्यामीत्याह

अमृतत्वंहिमोक्षःस्यान्मोक्षोदेहाद्यभावतः ॥ अज्ञानस्यविनाशःस्यादानंदात्मावबोधतः २०० धनिनांचलचित्तानांभवेद्बोधःकथंहिसः ॥ बोधाभावेकथंनाश मज्ञानंतुगमिष्यति १०१ अज्ञानानाशतःकेनसूक्ष्मदेहंविनश्यति ॥ सूक्ष्मदेहस्यसंस्थानेननश्येत्पुण्यपातकम् २०२ पुण्यपातकसंस्थानेस्थूलोदेहोविजायते ॥ सतिस्थूलशरीरेस्मिन्सुखदुःखोपभोगवान् २०३ नमरिष्यतिकोनामशरीरीयोपिपूर्वजः ॥ अमृतत्वस्यनैतस्मादाशावित्तेनविद्यते २०४ इत्युक्तायाज्ञवल्क्ये नमैत्रेयीतमभाषत ॥ अमृतत्वस्यनैवाशायदिवित्तेनविद्यते ॥ किमहंतेनवित्तेनकुर्यांमरणहेतुना २०५ भगवंस्ततएवैतन्माभून्ममकदाचन ॥ कात्यायन्यैभव त्वेतद्वित्तंतेसकलंपते २०६ भिक्षाहारेणदेहंस्वमानिपाताद्यथाभवान् ॥ धारयिष्यत्यहंतद्वद्धारयिष्यामिसुव्रत २७० जीवनेपिततोमाभून्ममदेहस्यचिंतनम् ॥ भवतोमुनिशार्दूलगच्छतोह्याश्रमांतरम् २०८ दशमासानहंगर्भेरक्षितायेनकेनचित् ॥ देवःसएवमेचिंतामधुनापिकरिष्यति २०९ अपिविप्रयदादेहोगमिष्य तितदामम ॥ दुर्गंधोदुस्तरोभारआधिव्याधिसमाकुलः ॥ अनेकदुःखजनकोयास्यत्येषमहामुने २१० पापाद्विस्त्रस्तचित्ताहंनैवास्थामेकलेवरे ॥ भूरिभारकरे नित्यंदोषदुःखशताकरे २११ आहारग्रहणेनित्यंप्रवृत्तास्म्यतिदुःखतः ॥ यथाराजभटैर्जंतुर्बाध्यमानःप्रवर्तते २१२ आहारग्रहणात्कामःक्रोधश्चापिहिजायते ॥ लोभोमोहस्तथातद्वन्निद्रातंद्रादयोपिच ॥ मलमूत्रविसर्गोपिह्याहारादेवजायते २१३ कर्मज्ञानेंद्रियाण्यत्रमनोदेहयुतानिच ॥ व्यापारान्विविधान्कुर्युराहारादे वनान्यथा २१४ क्षुधैकाबाधतेब्रह्मन्नाहाराग्रहणेसदा ॥ ग्रहणेतस्यवार्धतेकामाद्याःकोटिशत्रवः २१५

ʼभिक्षेति । आनिपातानआमरणात् २०७ जीवनेपीति । ततोभिक्षयापिनिर्वाहसंभवान्मद्देहस्यजीवनेनिर्वेदिपिभवतश्चिंतामास्तु २०८ जीवनचिंताकरणंमौढ्यमेवविश्वंभरदेवप्रभावानालोचनमूल त्वादित्याशयेनाह दशेति । केनचिदचिंत्यप्रभावेणापिनदेवेनाहंगर्भेरक्षितासएवेदानीमपिमद्रक्षांकरिष्यतीति २०९ अपिचजीवनालाभेनदेहापगमेपिनमेभयंमत्युतोपकारोदेहस्यभारभूतत्वादित्याह अपिविप्रेति । दुस्तरोदुःखेनतर्तुंधारयितुंशक्यइतियावत् २१० किंचप्रवृत्तिद्वारापापहेतावत्तएवदोषाणांदुःखशतानांचआकारभूतेदेहेममासक्तिर्नास्तीत्याह पापादिति २११ आहारेति । गाममनि त्यंभोजनेप्रवृत्तिःसापिनरागात्किंतुराजभटप्रेरितजंतोरिवपारतंत्र्यादित्यर्थः २१२ आहारग्रहणेदोषान्प्रपंचयति आहारग्रहणादिति । अन्नाहरणात्कामादयोजायंतेतथेंद्रियाणिचप्रवर्तंतइतिद्वयो रर्थः २१३ । २१४ क्षुधैकेति । भोजनाकरणेएकंक्षुधादुःखंभोजनेतुकामादिकृतानिबहूनिदुःखानीत्यर्थः २१५

तत्रयन्ममकामकृतंदुःखंतद्भवान्जानात्येवेत्याह कामेनेति २१६ कामदुःखेति । कामदुःखस्यफलंगर्भरूपंनारीणांसंयोजायतेतद्दुःखंतुगर्भदुःखंतुनरकान्मरणाच्चाधिकमित्यर्थः २१७ कामःकारस्करइति । कामरूपोवर्णितकारस्करवृक्षःकटुरसंफलंयन्नारीणांदुःखंप्रसूतेतन्नारीवत्नरानजानंतीत्यर्थः २१८ तेनेति । तेनदुःखेनममदेहायशेपोपिचित्रमतएवोत्प्रेक्षतेयन्नारीदेहोवज्रमयइत्यर्थः २१९ क्रोधादीनांत्विति स्पष्टम् २२० कामादीति । कामादिभिर्बहुभिःप्रयुक्तान्मरणादेकयाक्षुधयाप्रयुक्तंमरणभयंश्रेष्ठंमन्ये । तत्रन्यायमाह एकएकेनेत्यादिना । यथाएकःशूरएकेनशूरेण योद्धुंशक्तोबहुभिस्तुअशूरैरपिसंग्रामेएकःकुशलोपिसीदेदुःखितोभवेदितिद्वयोरर्थः २२१ । २२२ दार्ष्टांतिकेयोजयति एकयेति । दुर्गंदुष्करमपीत्यर्थः २२३ फलितमाह ततोवित्तमिति २२४ परंतु यथाममौर्ख्येनश्येत्तथाविधेहीत्याशयेनाह मौर्ख्येणेति । यथाहंमौर्ख्येणविशिष्टादेहंनत्यक्ष्यामिभवद्भवोपादिशालिनीचभवेयंतथानुगृहाणेतिशेषः २२५ ततोयदीति । ततोभवान्य दिकिंचिन्मो

कामेनममयाब्रह्मन्कृतादीनतमादशा ॥ तांत्वंवेत्थनवक्तव्यमत्रकामकृतंतव २१६ कामदुःखफलंब्रह्मन्सद्योनारीपुजायते ॥ गर्भस्तस्यचतद्दुःखंधारणेमोचनेपिच ॥ नरकादपितद्भूयोमरणाच्चापिकोटिशः २१७ कामःकारस्करोवृक्षोनारीणामिहजन्मनि ॥ ददातिकटुकंयत्तत्फलंदुःखोदधिप्रदम् ॥ प्रत्यक्षंननराणांतन्नारीणामिवसर्वदा २१८ तेनदुःखेनमेदेहोनगतोयत्तदद्भुतम् ॥ वज्रसारवपुःप्रायोनारीधात्राविनिर्मिता २१९ क्रोधादीनांतुयद्दुःखंतज्जानासिस्वयंमुने ॥ नवक्तव्यंमयातत्रसर्वज्ञस्यपुरस्तव २२० कामादिमरणाच्छ्रेयःक्षुधयामरणंमुने ॥ एकएकेनशक्नोतियोद्धुंशूरतमेनच २२१ अशूरैर्बहुभिश्चैकोभटःशूरतमोपिच ॥ सीदेत्संग्राममागत्यशस्त्रास्त्रकुशलोपिच २२२ एकयाक्षुधयाकर्तुंब्रह्मन्प्रबलयापिच ॥ शक्तास्मिकलहंदुर्गंदुर्बलापिमुनीश्वर ॥ दुर्बलैरपिकामाद्यैर्बहुभिर्नोत्सहेमुने २२२ ततोवित्तंविनादेहोनातिष्ठेच्चेत्कदाचन ॥ भारएषतदाविप्रममयास्यत्युपेक्षितः २२४ मौर्ख्येणनैवदेहंस्वंत्यक्ष्यामिमुनिसत्तम ॥ भवानिवप्राप्तलाभसंतुष्टाजितमानसा २२५ ततोयदिभवान्किंचिदमृतत्वस्यकारणम् ॥ वेत्तिमह्यंवदत्वेतत्कृपाचेद्विद्यतेमयि २२६ इत्युक्तेयाज्ञवल्क्योपिवक्तुंब्रह्ममहामुनिः ॥ अंगीचकारसकलंयित्तंप्रतितयेरितम् २२७ भवेद्यद्यपिवित्तेनधर्मःकामश्चसर्वदा ॥ अमृतत्वंतथापिस्यान्नवित्तेनकदाचन २२८ अपिवित्तेनकामोयंजायतेतेनकिंसुखम् ॥ नारीसंभोगजंतत्स्यादितिचेन्नात्रकिंचन ॥ सुखंमोहंविहायस्यात्प्रहारेष्विवदुर्धियः २२९ अप्यर्थरहितानांतत्श्वादीनामपिदृश्यते ॥ पुरुषस्ययथानारीशुनस्तद्वत्शुनीमता ॥ अतएवनपुष्पादिभोगजंतत्सुखंभवेत् २३०

क्षकारणंवेत्तितदातदेवमह्यंवदेति २२६ अथपंचम्याःकण्डिकायाअर्थेनमैत्रेयीवाक्यानुमोदनरूपेणसूचितंवित्तस्यामृतत्वासाधनत्वांगीकारंप्रपंचयति इत्युक्तेइतिपंचदशभिः । इतिमैत्रेय्योक्तेसतितस्याअधिकारंविज्ञायब्रह्मवक्तुमिच्छन्मुनिस्तयावित्तविषयकंयद्वाक्यमुक्तंतत्सर्वमंगीकृतवानिति २२७ अंगीकारमेवाभिनयति भवेत्यादिना । यदिवित्तस्यधर्मकामौपुरुषार्थौप्रतिसाधनत्वमिष्यतेतथाप्यमृतत्वंप्रतिसाधनत्वंनास्तीत्यर्थः २२८ वस्तुतस्तुधर्मकामौपुरुषार्थौप्रत्यपिवित्तस्यसाधनत्वंनास्तीतिदर्शयंस्तत्रकामस्यपुरुषार्थत्वमेवनभवतितत्फलेसुखत्वस्यभ्रममात्रसिद्धत्वादित्याह अपिवित्तेनेति । वित्तेनकामोविषयसंबंधोजायतेतेनकामेनकिंसुखंनकिंचिदपि नारीसंसर्गजंचेन्न अत्रहिनारीसंसर्गेश्रांतपादप्रहारन्यायेनमोहंभ्रमंविनानकिंचित्सुखमित्यर्थः २२९ तादृशसुखंप्रत्यपिधनस्यव्यतिरेकव्यभिचारंदर्शयति अप्यर्थेति । तत्कामसुखं अतएवकामसुखंप्रत्यर्थस्याऽहेतुत्वादेवपुष्पचंदनादिभोगजंसुखमपितन्नअर्थजंनभवेदित्यर्थः २३०

अपिवित्तेति । निर्धनाअपिभ्रमरागंधान्जिघ्रंति कोकिलाश्चरस्यानास्वादनीयामाम्रादिरसान्स्वादयंतीति २३१ शृण्वंतीति । तथादेवालयादिगताःपश्वाद्याअपिगीतादिशब्दान्शृण्वंतीति २३२ पश्यंतीति । तथानिर्धनाअपिपुरुषावारांगनादीनांरूपंपश्यंतीति २३३ तथैवेति । तथामक्षिकाद्याराजयोषितामपिदुर्लभान्स्पर्शान्गच्छंतिप्राप्नुवंति २३४ अन्वयव्यभिचारमपिदर्शयति सर्वमिति । सर्वधनीवहुविधधनोपिधनेनसर्वविषयसुखंनप्राप्नुयात् यत्किंचिद्विषयसुखंतुदरिद्रोपिप्राप्नुयादिति २५ धर्मंप्रत्यापिवित्तस्याहेतुत्वंव्यभिचारेणस्फुटयति धर्मोपीति । एतद्धनस्यधर्महेतुत्वंनियतमव्यभिचारिनदृश्यते २३६ निर्धनाइति । मुद्गलाख्योविप्रःसकुटुंबःशिलोंछवृत्त्यार्जितंप्रस्थपरिमितमन्नमतिथयेदत्वास्वर्गंगतइतिभारतेप्रसिद्धं तत्प्रभृतयोगृहस्थाअपिक्षुत्कृशाःस्वर्गंगताःश्रूयंते २३७ धनिकास्तुप्रायशःप्रमादेननरकयोग्याएवकालत्रयेप्रसिद्धाइत्याह धनिनइति । स्पष्टम् २३८ ननुयागादयोधनंविनानस्युरिति चेन्नसंतुतत्फलस्यस्वर्गस्योपायांतरेणापिसंभवेनक्षत्यभावादित्याह अग्निष्टोमादयइति । उपायाजपयज्ञादयः २३९ किंचधनस्यमोक्षंप्रतिहेतुतायागादिद्वारैववक्तव्यातत्रयागादीनामेवमो

अपिवित्तविहीनायेभ्रमराःकोकिलाअपि ॥ गंधान्जिघ्रंतिचरसान्रस्यानास्वादयंतिच २३१ शृण्वंतिचतथाशब्दान्गीतवादित्रजान्मुहुः ॥ देवालयादिसंस्थानाःपश्वाद्याअपिजंतवः २३२ पश्यंतिललितंरूपंनिर्धनाःपुरुषाअपि ॥ लोकेवारांगनादीनांयुवतीनामशंकिताः २३३ तथैवमृदुलान्स्पर्शान्मक्षिकाद्याश्चजंतवः ॥ दुर्लभानपिगच्छंतिह्यपितेराजयोषिताम् २३४ सर्वंसर्वधनीनापिप्राप्नुयाद्विषयेस्थितम् ॥ धनेननिर्धनोप्यत्रकिंचित्क्वापिसमाप्नुयात् २३५ धर्मोपिपरलोकस्यसुखदःकेवलाद्धनात् ॥ भवेदेतच्चनियतंनैवलोकेत्रदृश्यते २३६ निर्धनाबहवःस्वर्गंप्राप्तास्तेगृहिणोपिहि ॥ मुद्गलाद्यामहात्मानोनित्यंक्षुत्क्षामवर्चसः २३७ धनिनोबहवस्तद्वद्गतायास्यंतियांतिच ॥ नरकंतेननस्वर्गोधनेनैवात्रलभ्यते २३८ अग्निष्टोमादयोयज्ञायदिनस्युर्धनंविना ॥ माभूवन्काममेतेषांफलंस्वर्गोभविष्यति ॥ उपायाविविधायस्माद्दृश्यंतेस्वर्गसाधने २३९ अप्यमीनामृतत्वस्यकारणंस्युःकथंचन ॥ स्वर्गस्यकारणत्वेस्यात्समत्वंतपआदिभिः २४० अग्निष्टोमादयस्तेनभवंतुधनकारणात् ॥ अमृतत्वस्यनैवस्यादाशातेनोक्तहेतुतः २४१ इत्यभिप्रायवान्विप्रोयाज्ञवल्क्योवचोब्रवीत् ॥ मैत्रेयीममृतत्वस्यप्रीतिदंमुनिसत्तमः २४२ मैत्रेयितववाक्येनप्रियेप्रीतिर्ममाभवत् ॥ प्रियासतीयतःप्राहभवतीप्रीतिदंवचः ॥ प्रियंवृतवतीतद्वन्ममतेपितथानृणाम् २४३

क्षंप्रतिहेतुतानास्तिकिमुतवित्तस्येत्याह अप्यमीति । अमीअग्निष्टोमादयोज्ञानमात्रलभ्यममृतत्वंप्रतिनहेतवइतिप्रसिद्धं यदितुस्वर्गहेतवस्तदाभ्युदयार्थरूपंतपःप्रभृत्युपायतुल्यत्वमेषामस्तु तथाचस्वर्गार्थमप्येषांनावश्यकतेतिभावः २४० फलितमाह अग्निष्टोमादयइति २४१ एवंतात्पर्यार्थमुक्त्वाऽस्याःकंडिकायाअक्षरार्थमाह इत्यभिप्रायवानितिसप्तभिः । उक्ताशयवान्मुनिर्मैत्रेयींप्रतिइदंवक्ष्यमाणश्लोकषट्काभिनेयंवचोऽब्रवीत् कीदृशंवचः अमृतत्वप्राप्तिदंमोक्षाधिकारसूचकमितियावत् २४२ मैत्रेयीति । हेमैत्रेयियतोभवतीपूर्वमपिप्रियासतीप्रीतिदंवित्तहेयत्वप्रतिपादकंवचःप्राहतथाममतवसर्वेषांचपतिप्रियंवस्तुज्ञानद्वारामृतसाधनत्वान्वृतवतीचततस्तववाक्येनममप्रीतिरभवदितिसंबंधः । अभूदितिवक्तव्येऽभवदित्युक्तिःकालविस्मृतिबोधनद्वाराहर्षातिशयसूचिका २४३

त्वमेवेति । लोकेपुत्ररूपेणयतोजायतेसाजायेतिप्रसिद्धं वस्तुतस्तुपुत्रादयोपिपदार्थास्तादृशप्रीतिविशिष्टरूपेणयतोजायंतेसाजायेतिवक्तव्यातादृशीचत्वमेवासियतोऽहंत्वत्तउक्तविधवचनेनकरणे नप्रीतिविशिष्टरूपेणजातोस्मीत्यर्थः २४४ जायेतीति । त्वादृश्येवजायेतिपदेनवक्तव्याअपरातुलल्लनाभार्येत्येववक्तव्या अशनवसनादिभिर्भरणक्लेशदायकत्वात् २४५ एहीति । तस्मात्हेजायेत्वंममनिष्कामस्यनिष्कामत्वेनसदृशीआत्मानंपृच्छंतीसतीपुरतःसमीपमेहि याचलज्जास्त्रीणांनिसर्गतःस्वभावतःप्रसिद्धातांमाकुर्विंतिद्वयोरर्थः २४६ । २४७ हंतेति । हंतहर्षे हे जायेअहंत्वत्पृष्टममृतसाधनंवक्ष्यामित्वंतुचक्षुःश्रोत्रमनश्चप्रणिधायमदुक्तमवधारयेत्यर्थः । अत्रेदंबोध्यंयायाज्ञवल्क्यकाण्डेपंचमीकण्डिकासामधुकांडेचतुर्थी एवमग्रेपीति २४८ अथषष्ठींनवत्याश्लोकैर्व्याकुर्वंस्तत्रात्मन्येवचित्तैकाग्र्यकर्तव्यताबोधनायात्मनःपरमानंदरूपताबोधकस्यसर्वंप्रियंभवतीत्यंतभागस्यार्थमाह इत्युक्तेतिचतुर्विंशतिश्लोकैः । अन्वयःस्वसंबंधेनप्रियत्वप्रयोजकत्वरूपोव्यतिरेकःस्वसंबंधाभावेप्रियत्वाभावप्रयोजकत्वरूपस्ताभ्यामात्मनःपरमानंदरूपतामुवाचेति २४९ अरेइति । अरेमैत्रेयिइदंभवतिप्रसिद्धं इदंकिं यत्तेमद्रूपःपतिःप्रियःप्रीतिकरोमम

त्वमेवममजायेतित्वत्तोजातोस्म्यहंयतः ॥ प्रीतिमान्बहुशोऽनेनवचसाभृशमेवच २४४ जायेतित्वादृशीप्रोक्तालल्लनात्वपराभुवि ॥ भार्येतिप्रोच्यतेयस्माद्भरणीयाशनादिभिः २४५ एहिजायेसमीपंमेनिष्कामस्यात्मवेदिनः ॥ निष्कामप्रियमात्मानंपृच्छंतीप्रीतिकारिणि २४६ आश्रमेपुरतःसुभ्रुयथापूर्वमशंकिता ॥ भवत्यामाभवेल्लज्जास्त्रीणांयास्तिनिसर्गतः २४७ हंतजायेप्रियेतुभ्यंव्याख्यास्याम्यमृतंहितम् ॥ त्वयाप्रष्टंममत्वंहिवीक्षमाणामुखांबुजम् ॥ सावधानमनास्तद्वक्तकर्णावधारय २४८ इत्युक्त्वायाज्ञवल्क्यःसपरमानंदरूपताम् ॥ आत्मनोऽन्वयतस्तद्वद्व्यतिरेकादुवाचताम् २४९ अरेभवतिमैत्रेयिपतिस्तेहिप्रियःसदा ॥ जायाममतथात्वंचप्रियास्यतितरांबहु २५० आवयोःप्रीतिरत्यर्थमितरेतरदेहयोः ॥ इतरेतरकामायनकथंचनभामिनि २५१ किंतुस्वस्यप्रियार्थंतेप्रियोस्मिपतिरात्मनः ॥ ममापित्वंतथाजायाप्रियासिस्वात्मनश्छते २५२ आत्मनःसुखमिच्छंत्यानार्याःकामाग्निदीपनात् ॥ अन्नवस्त्रादिलोभाच्चजायतेत्रपतिःप्रियः २५३ आत्मनःप्रतिकूलेतुपत्यौप्रीतिर्नजायते ॥ अन्यनार्यादिसंसक्तेनारीणांकर्हिचित्प्रिये २५४ जायायांप्रीतिमांस्तद्वत्पतिर्भवतिकामुकः ॥ पाकादिकृतिलोभाच्चनान्यथाकर्हिचित्प्रिया २५५ आत्मनःप्रतिकूलायाभवेज्जायारतादिषु ॥ नतस्यांप्रीतिमान्दृष्टःपतिरत्रकथंचन २५६ आत्मैवप्रियएवायंजायेप्रियतमोमतः ॥ स्वयंज्योतिःसदानंदःस्त्रियःपुंसश्चसर्वदा २५७

चत्वंजायाप्रियासीति १५० आवयोरिति । परंतुइयंममतवचप्रीतिःस्वभिन्नस्यकामायोपकारायनभवतिकिंतुस्वस्यैवकामायेतिद्वयोरर्थः २५१ । १५२ तत्रनार्याःपतिगोचरप्रेम्णःस्वात्मार्थतांविशदयति आत्मनइति । कामाग्न्युपशमद्वाराअन्नादिलाभद्वाराचात्मनःसुखायनार्याःपतिःप्रियोभवतीति २५३ एतद्व्यतिरेकेणस्फुटयति आत्मनःप्रतिकूलइति । अन्यनारीसक्त्यादिनाप्रतिकूलेपत्यौतुनारीणांप्रीतिर्नदृश्यतेइत्यर्थः २५४ पतिप्रेम्णोपितथात्वमाह जायायामिति । कामाग्निशांतिद्वारापाकादिकृतिद्वाराचात्मोपकारायपत्युर्जायायांप्रीतिरित्यर्थः २५५ एतदपिव्यतिरेकेणविशदयति आत्मनःप्रतिकूलायेति । रतादिपुरतप्रभृतिव्यापारेषु २५६ फलितमाह आत्मैवेति । यथाशर्करास्वतोमधुराइतरेषांमधुरताधायकत्वान्मधुरतमाचतथात्माप्रियत्वात्प्रियतमत्वाच्चपरमानन्दरूपइत्यर्थः २५७

उक्तन्यायमन्यत्राप्यतिदिशति जायेति । यथाजायापतीस्वात्मार्थंप्रियत्वेनोक्तौतथापुत्रश्चवित्तंचगवादयःपशवश्चब्राह्मणजातिश्चक्षत्रियजातिश्चभूरादयोलोकाश्चदेवाश्चवेदाश्चस्थावरादिभूतानिच एतेरुपलक्षितंसर्वंजगच्चएतत्सर्वंस्वात्मोपकारार्थमेवप्रियंनान्यथेतिद्वयोरर्थः २५८ । २५९ नेतरदित्युक्तमेवस्फुटयति पुत्रादयइति । येपुत्रवित्तादयःप्रियत्वेनप्रसिद्धास्तेपिप्रातिकूलाःसंतःप्रियानभवंति अतःस्वकामायस्वस्यपित्रादेःप्रयोजनायैवप्रियाः तेषांपुत्रादीनांप्रियायप्रयोजनायप्रियानभवंतीत्यर्थः २६० ननुकिमितिपदार्थानामात्मसंबंधेनप्रियत्वमुच्यतेस्वभावादेवतात्किंनस्यां दितिशंकते यद्यपीति । यद्यपिवर्णितंपतिजायादिरूपंसर्वंजगत्प्रतिकूलंस्थितंसन्मुदेमुदंजनयितुंयोग्यंनस्यात्अनुकूलंस्थितंतुमुदेस्यादितिसंबंधः तथाचस्वभावादेवप्रियत्वादिकमितिभावः २६१ अन्वयव्यतिरेकाभ्यामात्मोपकारकत्वलक्षणानुकूलत्वज्ञानमेवप्रियत्वप्रयोजकमित्युत्तरयति तथापीति । दृश्यतेहिसुहृदोप्यनुकूलस्यप्रतिकूलतयाबुद्धस्याप्रियत्वं प्रतिकूलतयास्थितस्यवैरिणो प्यनुकूलतयाबुद्धस्यप्रियत्वं तथाचतत्पतिजायादिकंचप्रतिकूलतयाग्रहात्ज्ञानान्नसुखदं अनुकूलतयाग्रहादेवचसुखदंभवेदितिसंबंधः स्वाभाविकत्वेत्वन्यथात्वंनस्यात् नहिस्वभावोभावानांव्या वर्त्ततोप्यवद्वेरिति यायेनेतिभावः २६२ यदिचस्वभावतःपदार्थानांप्रियत्वंस्यात्तदाऽतीतदशायामपिप्रियत्वंस्यान्नचतथादृश्यतइत्याह विनाशइति । विनाशेसत्कार्यवादिप्रसिद्धेऽतीतताख्य

जायापतीयथातद्वत्पुत्रवित्तगवादिकाः ॥ ब्रह्मक्षत्राभिधेजातीलोकाभूरादिकाअपि २५८ देवावेदाश्चभूतानिस्थावराणिचराणिच ॥ किंबहूक्तेनमैत्रेयिजगत्सर्व मिदंचयत् ॥ स्वात्मनःसुखदंसर्वंप्रियंस्यान्नेतरत्क्वचित् २५९ पुत्रादयःप्रियायेस्युःप्रतिकूलानतेप्रियाः ॥ ततएवस्वकामायप्रियास्तेषांप्रियायन २६० यद्य पीदंजगत्सर्वंपतिजायादिकीर्तितम् ॥ प्रतिकूलंमुदेनस्यादनुकूलमपिस्थितम् २६१ तथापिप्रातिकूल्येनगृहीतंनसुखायच ॥ आनुकूल्यग्रहादेवजंतूनांसुख दंभवेत् २६२ विनाशेदुःखदंसर्वंपतिजायादिकंजगत् ॥ अनुकूलमपिस्थित्यांततोनैवानुकूलता ॥ जडवर्गस्यकस्यापिविनात्मानंहिचेतनम् २६३ तथापिग्र हणंतस्ययदिस्यादनुकूलतः ॥ तदाप्रियंभवेत्तेनान्यथादेहिनःक्वचित् २६४ पतिजायादिकंतेननप्रियंस्यात्स्वरूपतः ॥ किंतुस्वस्यप्रियत्वेनसुखदत्वेनहे तुना ॥ आनंदात्माप्रियतमस्ततःसर्वस्यदेहिनः २६५ दुःखंतत्साधनंनैवप्रियंकस्यापिदेहिनः ॥ पतिजायादिकंयत्तुप्रियंतत्सुखसाधनम् ॥ सुखंतस्मात्प्रियं तेनयुक्तंप्रियतरंसदा २६६ सुखमप्यात्मकामायप्रियंनसुखकामतः ॥ सदाविज्ञायमानंवैसुखंशत्रोर्नहिप्रियम् २६७

परिणामेसर्वंपत्यादिकंदुःखदंयत्स्थित्यांस्थितिकालेअनुकूलमपीति ततोनुकूलत्वस्यस्वाभाविकत्वव्यतिरेकदर्शनात्कस्यापिजडस्यात्मसंबंधानादरेणानुकूलतानैवास्तीतिसंबंधः २६३ आत्मोप कारकत्वज्ञानस्यत्वन्वयोदृश्यतइत्यतस्तदेवप्रियत्वप्रयोजकमित्याह तथापीति । तथापिप्रियत्वस्यस्वाभाविकत्वाभावेपितस्यपतिजायादिपदार्थस्यानुकूलतोऽनुकूलत्वेनयदिग्रहणंस्यात्तदातत्प त्यादिकंप्रियंभवेदिति २६४ फलितमाह पतीति । स्वरूपतःस्वभावतःपत्यादिकंप्रियंनभवति किंतुस्वस्यात्मनोमुख्यप्रियत्वेनयत्सुखदत्वंस्वसंबंधिपुसुखत्वप्रयोजकत्वंतेनहेतुनाप्रियत्वंततश्चा त्माप्रियतमइतिसंबंधः २६५ आत्मनःप्रियतमत्वंस्फुटयितुमप्रियंप्रियतरंचदर्शयति दुःखमिति । दुःखंतत्साधनंचाप्रियं पत्यादिकंसुखसाधनत्वात्प्रियमित्युच्यते सात्विकांतःकरणवृत्तिरू पंसुखंतुतस्मात्सुखसाधनादधिकंप्रियंभवति तेनप्रियतरपदेनवक्तुंयुक्तंयोग्यमित्यर्थः २६६ तादृशसुखापेक्षयापिप्रियत्वादात्माप्रियतमइतिवक्तुमेवसुखस्यात्मापेक्षयापकर्षमाह सुखमपीति । सुखम पिनिरूपंयत्प्रियंभवतितदात्मनःकामायस्फुटत्वरूपप्रयोजनायैवनसुखस्यप्रयोजनाय यतःशत्रोःसुखंविज्ञायमानमपिनप्रियंदृष्टमित्यर्थः सुखप्रेम्णःसुखार्थत्वेवैरिसुखेपिप्रेमास्यादितिभावः २६७

आत्मार्थमिति । यतइतरापेक्षयाप्रियतरमपिसुखमात्मार्थंप्रियंततआत्माप्रियतमइतिसंबंधः २६८ फलितमात्मनोभासमानपरमानंदरूपत्वेनपरमपुरुषार्थत्वमाह स्वयमिति । ब्रह्मणोहिरण्यगर्भानंदात्परमःसदातनोब्रह्मानन्दः हियतोस्यब्रह्मस्वरूपभूतस्यानंदस्यमात्रांलेशंहिरण्यगर्भादयउपजीवंति आश्रित्यवर्ततेइत्यर्थः २६९ सचब्रह्मानंदआत्मरूपइत्याह परेति । यत् ब्रह्मलोकांतस्वर्गानंदाधिकंपरसंबंधेनद्वैतेनरहितंसुखंतद्रूपोयमात्मेत्यर्थः २७० उक्तविधयापरमानंदरूपात्मनःपरमपुरुषार्थत्वमितरत्रहेयत्वंचविज्ञायचित्तैकाग्र्यशालिनंप्रत्यात्मसाक्षात्कारायश्रवणादिविधायकस्यनिदिध्यासितव्यइत्यंतवाक्यस्यार्थमाह अरेइतिचतुर्दशभिः । हेमैत्रेयितस्मादात्मनएवपरमपुरुषार्थत्वात् अत्रात्मज्ञानेअधिकारिभिःशमादिगुणसंपन्नैरात्मसाक्षात्कारायाऽयमात्माब्रह्मब्रह्माहमस्मीत्येवंविधंश्रुतेर्वचोवाक्यजातमसकृत्श्रोतव्यं कुतः श्रोत्रियत्वादिलक्षणकगुरोर्मुखादितिद्वयोरर्थः २७१ । २७२ मननमाह वेदेति । वेदवाक्याविरुद्धेनतर्केणविचारणरूपंमननंकुर्यात् कीदृशेनतर्केण व्यासादिभिःव्यासोविस्तारः एकस्यकारणस्यनानारूपतयावस्थानमितियावत् आदिपदेनसमासरूपःकारणेकार्याणांप्रलयस्तथात्मनःसर्वावस्थास्वनुगमरूपोन्वयइतरेषांव्यतिरेकश्चगृह्यते एवंविधपदार्थालोचनजन्येनअतएवात्मसाक्षात्काररूपप्रत्यक्षस्यसहकारिणाअसंभावनादिदोषवारकेणेत्यर्थः । तदुक्तंगीतासु यदाभूतपृथग्भावमित्यादि । व्याख्या

आत्मार्थंहिप्रियंतस्मात्सुखंप्रियतरंयतः ॥ ततःप्रियतमःशश्वदानंदात्मातुदेहिनाम् २६८ स्वयंज्योतिःसदानंदःपरमोब्रह्मणोपिच ॥ आनंदस्योपजीवंतिमात्रांब्रह्मादयोस्यहि २६९ परसंबंधरहितंभासमानंसदासुखम् ॥ स्वर्गानंदाधिकंस्वात्मामैत्रेय्येषोत्रदेहिनाम् २७० अरेजायेप्रियेतस्मान्मैत्रेय्यत्राधिकारिभिः ॥ करामलकवत्स्वात्मप्रत्यक्षज्ञानसिद्धये २७१ आत्माब्रह्माहमस्मीतिह्येवमादिश्रुतेर्वचः ॥ श्रोत्रियब्रह्मनिष्ठाख्यगुरोर्वक्त्राद्विदंतः ॥ श्रोतव्यमसकृच्छांतदांतादिगुणयोगिभिः २७२ वेदवाक्याविरुद्धेनतर्केणचविचारयेत् ॥ व्यासादिभिःसमुत्थेनप्रत्यक्षस्थैर्यकारिणा २७३ मनसोयोग्यतायास्यात्कारणंज्ञानसंततेः ॥ एकस्मिन्विषयेचैकंजानीयात्सर्वदेहिनाम् ॥ तामप्यात्मनिकुर्वीतबहिश्चारनिवारिणीम् २७४ एवंतर्कैस्तथाध्यानैःसंदेहादिविवर्जितम् ॥ आगत्यांतर्मनःकुर्यात्प्रत्यक्षंवाक्यमानतः २७५ चक्षुरादीनियद्वत्स्युर्मानामानसमानिहि ॥ मनोपितद्वदेवस्यान्मानामानसमंहितत २७६

दिभिरितिपाठेतर्कपदेनानुमानग्रहः आदिपदेनचपक्षधर्मतादिग्रहइति २७३ निदिध्यासनमाह मनसइति । मनसोयाएकस्मिन्विषयेयोग्यताएकाग्रतातिशयरूपासाज्ञानस्यसाक्षात्कारस्यसंततेर्धारायाःकारणंभवति । साकथंकर्तव्येत्याकांक्षायामाह एकमिति । प्रथमंसर्वदेहिनांमध्येकंचिदेकंजानीयात्ध्यायेत् तदुक्तंपतंजलिना यथाभिमतध्यानाद्वेति । पुनश्चतांचित्तयोग्यतामात्मनिकुर्याद्यथापुनश्चित्तस्यबहिश्चारोबहिर्मुखतानस्यादित्यर्थः २७४ एवंविधश्रवणादिसंस्कृतमनःसहकृतान्महावाक्यादात्मसाक्षात्कारोभवतीत्याह एवमिति । संदेहोऽसंभावनाआदिपदेनविपरीतभावनाताभ्यांहीनंमनःअंतरागत्यप्रत्यक्प्रवणतांलब्ध्वामहावाक्यरूपप्रमाणफलंप्रत्यक्षमात्मसाक्षात्कारंजनयेदित्यर्थः २७५ ननुस्वतंत्रमेवमनआत्मसाक्षात्कारंकुतोनजनयेदितिशंकांवारयति चक्षुरादीनीति । मानमबाधितार्थगोचरवृत्तिरूपंअमानंचबाधितार्थगोचरवृत्तिरूपंतयोःसमानिपक्षपातरहितानियथाचक्षुरादीनिबाहींद्रियाणिप्रसिद्धानि । नहिचक्षुषःपीतंशंखंनपश्यामीत्यादिरूपआग्रहःतथामनसोपिवृत्त्युपादानस्यप्रमाणाप्रमाणरूपवृत्तिपुनपक्षपातइत्यर्थः । महावाक्यंतुप्रमाणमेवजनयतीतितदेवप्रधानमितिभावः २७६

तर्हिस्वतंत्रंवाक्यमेवसाक्षात्कारंजनयेदित्याशंकामपिवारयन्नाह वस्तुयोगइति । यथाचक्षुरादिनाजन्येप्रत्यक्षेचक्षुरादेर्विषयेणयोगोऽपेक्षितस्तथामानसेमनःपरिमाणतयामनसिवर्त्तमानेप्रत्यक्षेपि मनसोविक्षेपवस्तुनासाकंयोगोऽपेक्षितइत्यर्थः । अयंभावः महावाक्येनाप्यात्मसाक्षात्काररूपावृत्तिर्मनस्येवजननीयातस्याश्चसाक्षात्कारत्वंज्ञेयेनमनःसंयोगमंतरेणनघटतइत्यतोमनःसंयोगो पिवाक्यस्यापेक्षितइति २७७ फलितमाह मननेति । मनननिंदिध्यासनाभ्यांयुक्तंमनःश्रुतिरूपेणप्रमाणेनआत्मनिसाक्षात्कारंस्फुटीकुर्यादित्यर्थः २७८ ततःकिंभवतीत्यतआह प्रत्यक्षेति । दुःखंदुःखरूपंजगत्कर्तृत्वादीति २७९ स्वयमिति । सविलासाज्ञाननिवृत्त्यनंतरंस्वयंज्योतिरानंदरूपआत्मातस्याधिकारिणआविर्भवति कीदृशः भासास्वरूपविकासेनद्वैतविवर्जितः अतएवानंदरूपःप्रियतमश्चेति २८० अविद्यानाशेविशदात्मभानंदृष्टांतेनस्फुटयति अभ्रादीति । अभ्रंमेघः आदिपदेननीहारादिग्रहः २८१ जीवन्मुक्तस्यभासमानमपिद्वैतंमिथ्यात्वेननिश्चि तत्वान्नाद्वैतविज्ञानविरोधीतिदर्शयन्द्वैतस्यमिथ्यात्वंसदृष्टांतंव्युत्पादयति स्वप्नादिति । इदंदृश्यजातम् २८२ दृष्टांतांतरमाह । महाराजइति । यथाचक्रवर्तीराजानिर्भयोपिस्वप्नआगतो ऽकारणंभयंपश्यतिप्रतिबुद्धस्तुतत्भयंनपश्यति २८३ दार्ष्टांतिकेयोजयति आत्माज्ञानादिति । स्पष्टम् २८४ अथकंडिकाशेषस्यात्मज्ञानात्सर्वज्ञानप्रतिपादकस्यार्थसंभावनायप्रपंचस्यात्म

वस्तुयोगोयथाहेतुःप्रत्यक्षेचक्षुरादिजे ॥ मनोयोगस्तथाहेतुःप्रत्यक्षेमानसेपिच २७७ मननध्यानसंयुक्तंमनोत्रश्रुतिमानतः ॥ प्रत्यक्षंजनयेज्ज्ञानमानंदात्मनि निर्द्वये ७८ प्रत्यक्षज्ञानउत्पन्नेआत्माऽविद्याविनश्यति ॥ तन्नाशान्नाशमायातिदुःखंसर्वमिदंजगत् ७९ स्वयंज्योतिस्ततस्तस्यभासाद्वैतविवर्जितः ॥ आनंदात्मा प्रियतमआविर्भवतिसर्वतः २८० अभ्रादिनाशतोयद्वद्गगनंभातिकेवलम् ॥ अविद्यानाशतोभातिह्यानंदात्मैवमद्वयः ८१ स्वप्नाद्बुद्धोयथास्वाप्नंदुःखंमिथ्येति मन्यते ॥ आत्मज्ञानात्तथाविद्वानिदंमिथ्येतिमन्यते ८२ महाराजोयथास्वप्नेनिर्भयोभयमागतः ॥ पश्यत्यकारणंपश्चात्प्रतिबुद्धोनपश्यति ८३ आत्माज्ञाना त्तथादुःखमानंदात्मात्रमन्यते ॥ आत्मज्ञानात्पुनःस्वस्मिन्निदंमिथ्येतिमन्यते २८४ गंधर्वनगरंयद्वज्जायतेखेह्यविद्यया ॥ अविद्ययाजगत्सर्वमात्मन्येवंप्रजायते ८५ गंधर्वनगरंयद्वन्नासीन्नास्तिनभाव्यपि ॥ गगनेनगरंयद्वद्भूमौक्षेत्रंपिनाकिनः ८६ आत्मन्येवंजगत्सर्वंनासीन्नास्तिनभाव्यपि ॥ दुःखरूपंहिमैत्रेयिनिर्दुःखे निर्द्वयेसति २८७ दोषात्तैमिरिकोयद्वच्चंद्रंभिन्नंप्रपश्यति ॥ आत्मानंचतथाभिन्नंदोषादेवावलोकयेत् २८८ अंगुल्यानयनंयद्वद्विष्टभ्यस्वस्यबालकः ॥ केशोंडूक मसत्पश्येद्गगनेचित्ररूपकम् २८९ जगदेतद्सद्दुःखमानंदात्मनिकेवले ॥ असत्याविद्ययाबालतुल्यएषप्रपश्यति २९०

सत्तातिरिक्तसत्ताराहित्यंमिथ्यात्वेनप्रपंचयति गंधर्वेतिसप्तदशभिः । यथाकाशेगंधर्वनगरमविद्ययैवजायतेतथात्मनिजगदपि २८५ तस्यातिरिक्तसत्ताभावमाह गंधर्वनगरमिति । गंधर्व नगरंयद्वन्नासीदिति यथागगनेगंधर्वनगरंकालत्रयेपिनास्ति । तत्रवैधर्म्येणदृष्टांतमाह नगरमित्यादिना । यथापिनाकिनःशिवस्यक्षेत्रभूतंनगरंवाराणसीसंज्ञंभूमौस्थितमित्यर्थः । वस्तुतस्तु 'वियत्स्थासापुरीदिव्यातेनयोगबलाद्धृता'इतिकाशीप्रस्तुत्यकाशीपुराणोक्तेः । तथा ' गच्छवाराणसींव्यासयत्रविश्वेश्वरःशिवः । नतत्रयुगधर्मोस्तिनैवलग्नावसुंधरा ' इत्यादिस्यपुराणोक्तेश्चसाधर्म्ये णापिदृष्टांतइतिबोध्यम् २८६ दार्ष्टांतिकेयोजयति आत्मनीति । नहिनिर्दुःखेदुःखरूपंजगत्संभवतीतिद्वितीयदलार्थः २८७ आत्मभेदमिथ्यात्वमपिदृष्टांतेनस्फुटयति दोषादिति । तैमि रिकस्तिमिराख्यरोगवान्यथाचंद्रमनेकंदोषादेवपश्येत्तथाज्ञोप्यात्मानमिति २८८ दृष्टांतांतरमाह अंगुल्येति । केशोंडूकंमयूरपक्षतंतुनिभंतंतुसमुदायरूपंयथाबालकोंऽगुल्यानेत्रनिरोधेनपश्यति तथाऽसन्मिथ्याभूतंदुःखरूपंचजगदसत्यामिथ्यारूपयाऽविद्ययाबालवन्मूढोयंजीवःपश्यतीतिद्वयोरर्थः २८९ । २९०

ननुप्रपंचस्याविद्यकत्वेअविद्याविरोधिविद्याशालिनांप्रपंचोनभासेतेतिशंकामपिदृष्टांतेनपरिहरति दिशामिति । यथादिग्भ्रमोविदुषामपिदृष्टस्तथात्मनिसंमोहोविपरीतदर्शनंविदुषामपिसममिति २९१ प्रारब्धसंरक्षिताविद्यालेशरूपदोषवशाद्विदुषामपिप्रपंचभानंदृष्टांतेनोपपादयति निश्चितोपीति । यथापित्तोद्रेकेसतिधवलत्वेननिश्चितःशंखःपीतोभातिगुडश्चमधुरत्वेननिश्चितस्तिक्तःकटुर्भा तितथानंदात्मापिदुःखात्मकप्रपंचरूपेणभातिभेददृशाभेदज्ञानेनसहेतिशेषः अधुनाजीवन्मुक्तिकालेइतिद्वयोरर्थः २९२ । २९३ अथमूढस्यप्रपंचदर्शनंदृष्टांतैर्विशदयति रिंगदितिपंचभिः । रिंगतइ तस्ततःप्रचलंतोयेतरंगास्तैश्चंचलंजलंयथातृषार्तस्यभातितथासतृष्णस्यअज्ञस्यनानायोनिमयःप्रपंचआत्मनीतिद्वयोरर्थः २९४ । २९५ शुक्तिकायामिति स्पष्टं २९६ मंदांधकारेइति । शेषकंसर्पं स्वभीतितःस्वचित्तगतभयरूपदोषात् २९७ आनंदात्मनीति । एतज्जगदनात्मनिःस्वरूपंमिथ्याभूतमितियावत् २९८ पतीति । यथाचस्वप्नेकल्पितंपत्यादिकमसत्यंतथाजाग्रत्यपीति २९९ फलित माह आत्मैवेति । यतःसर्वमात्मैवातस्तस्यात्मनःप्रत्यक्षरूपंज्ञानंत्वंसाधय केन संयुक्तेनसमाहितेनमनसासहकृतंयत्श्रुतिवाक्यंतेनतथाऽभयेन 'अस्पर्शयोगोनामैषदुर्दर्शःसर्वयोगिभिः । योगिनोबि

दिशांमोहोयथालोकेविदुषामपिजायते ॥ आनंदात्मनिसंमोहोविदुषामेवमस्त्यपि २९१ निश्चितोपियथाशंखोधवलोभातिपित्ततः ॥ पीतोगुडस्तथातिक्तोम धुरोपिविभातिहि २९२ स्वयंज्योतिस्तथैवायमानंदात्मासुनिश्चितः ॥ दुःखरूपेणमैत्रेयिभातिभेददृशाधुना २९३ रिंगत्तरंगतरलंजलंभातियथोषरे ॥ तृषार्त स्यस्वदोषेणमध्यान्हादिषुगच्छतः २९४ एवंविषयसंजातमृगतृष्णस्यदुर्धियः ॥ आनंदात्मनिनिर्भेदेभेदएषप्रतीयते २९५ शुक्तिकायांयथारूप्यंभातिलुब्ध स्यसर्वदा ॥ आनंदात्मन्येवमेतद्भातिभेददृशोजगत् २९६ मंदांधकारेपुरुषोरज्वांपश्यतिशेषकम् ॥ अथवास्थाणुगंचोरंपश्यत्येषस्वभीतितः २९७ आनंदा त्मनिनिर्दुःखेस्वप्रकाशेतथाजडम् ॥ दुःखरूपमनात्मैतन्मूढःपश्यतिसर्वथा २९८ पतिजायादिकंविश्वमात्मनोन्यन्नविद्यते ॥ यथास्वप्नेतथैवेतन्नास्तिजागर णेपिच २९९ आत्मैवैतज्जगत्सर्वंपतिजायादिभेदवत् ॥ मैत्रेयितस्यविज्ञानंप्रत्यक्षंत्वंप्रसाधय ३०० अभयेनचसंयुक्तंमनसाश्रुतिवाक्यतः ॥ ततोदुःखमिदंजाये पुनर्नैवगमिष्यसि ३०१ आत्मासर्वमिदंयस्माद्गंधर्वनगरादिकम् ॥ यथाखंततएवात्मश्रुत्याद्यैर्जगतोपिते ३०२ श्रवणंमननंध्यानंदर्शनंचात्मनोहियत् ॥ सर्वं तज्जगतोपिस्यात्सर्वमात्मनितद्यतः ३०३ अपिसर्वस्यविज्ञानउपयोगोनविद्यते ॥ अर्थज्ञतापिनैवस्यात्सुखंपत्त्यादिवत्ततः ३०४

भ्यतिह्यस्मादभयेभयदर्शिनः'इतिप्रसिद्धभयाकरणेन तत्फलंसकलसंसारदुःखनिवृत्तिरितिद्वयोरर्थः ३०० । ३०१ एवमवतारितस्यतस्याक्षरार्थमाह आत्मेत्यष्टाभिः । यथागंधर्वनगरादिकंखमाका शमात्रंतथासर्वमिदमात्मैवयस्माद्भवतिततआत्मनःसर्वस्यपारमार्थिकस्वरूपत्वाज्जेत्वयाकृतैरात्मनःश्रवणाद्यैर्जगतोपिश्रवणादिकंकृतंस्यात् हियतआत्मनःसंबंधियत्श्रवणादिकंतज्जगतोपिसंबंधि स्यात् यतस्तत्सर्वंजगदात्मनिकल्पितत्वात्तन्मात्रमितिद्वयोरर्थः ३०२ । ३०३ एवमात्मनिज्ञातेतद्विवर्तस्यजगतःस्वरूपजातमानुषंगिकतयाज्ञातंभवतीत्युक्तं प्राधान्येनतुनानाविशेषंजगन्नज्ञेयं अविहितत्वादपुरुषार्थत्वादशक्यत्वाच्चेत्याह अपिसर्वस्येतिद्वाभ्यां । सर्वस्यसविशेषस्यजगतोविज्ञानेविज्ञानरूपक्रियायामुपयोगःसंबंधबोधकंवाक्यंसर्वंजानीयादेवमाद्याकारकंनविद्यते तथाजगतो ज्ञानेसतिअर्थज्ञतापुरुषार्थज्ञतापिनास्ति जगतःसुखदुःखाभावभिन्नत्वेनपुरुषार्थरूपत्वाभावादितिभावः । नापिजगत्पुरुषार्थसाधनमित्याह नैवेति । ततोजगतोरूपविशेषेभ्यःसर्वेभ्यःसुखंनैवस्या त्जायेत यथापतिजायादिभ्यःसुखंजायतइतिवैधर्म्यदृष्टांतः नहिहिमालयावयवपाषाणानांप्रत्येकज्ञानात्किंचित्सुखंदृश्यतइतिभावः ३०४

अशक्यत्वमाह उपयोगइति । उपयोगेपिसकलकार्यस्यादृष्टारब्धत्वेन सुखाद्युपयोगेपिसर्वस्यश्रवणादिकमशक्यंप्रत्युतात्मनोदुःखदंचक्लेशरूपत्वादतस्तज्जगतोविशेषरूपजातंनज्ञेयमितिसर्वथः ३०५ अथचेदिति । अथेतिपक्षांतरे । यदित्वंस्त्रीस्वभावात्कुतूहलरूपादिदंसर्वंजगत्ज्ञातुमिच्छसितथापितस्यसर्वजगतोज्ञानेऽयमेवोपायः अयंकः यदात्मनःश्रवणादीनांकरणमिति यत स्तदात्मीयंश्रवणादिकंतस्यजगतोपिस्यादित्यर्थः ३०६ उपादानंहिविकाराणांपारमार्थिकंरूपंतज्ज्ञानेचसर्वेविकाराज्ञायंतइत्येतद्दृष्टांतेनस्फुटयति मृत्तिकायाइतिद्वाभ्यां । यथामृदोज्ञानात्स कलंमृत्कार्यंघटादिरूपंज्ञायतेमृदभिन्नत्वात् कीदृशंकार्यं व्यवहितमपि व्यवधानंदेशादिभिस्त्रिधा तत्रदेशेनयथादेशांतरस्थे कालेनयथातीतादौ स्वभावेनयथापरोक्षेद्व्यणुकादौ इतिद्वयोरर्थः ३०७ । ३०८ दार्ष्टांतिकेयोजयति आत्मेति । नापरंअभिन्नं यतःततआत्मनःश्रवणादिहेतुकज्ञानाज्ज्ञायतेइति ३०९ भेदेनदर्शनस्यानर्थहेतुताबोधिकायाःसप्तमकंडिकायाअर्थंप्रपंचयति अपिभेदेतित्रिंशच्छ्लोकैः । किंचभेददर्शिनांलोकद्वयेसुखमपिदुर्लभंकिमुतमोक्षइत्यर्थः ३१० तत्रेहलोकेभेददर्शिनांसुखाभावंस्फुटयति आत्मवदिति । तेभेदेनदृष्टास्तंभेददर्शिनंत्यजंतीति तथा

उपयोगेपिसर्वस्यनशक्यंश्रवणादिकम् ॥ कर्तुंततोनतज्ज्ञेयंदुःखदंस्वात्मनःसदा ३०५ अथचेत्त्वमिदंज्ञातुंस्त्रीस्वभावात्समिच्छसि ॥ तथापितस्यविज्ञानउपायोयंनचापरः ॥ आत्मनःश्रवणादीनांकरणंतस्यतद्भवेत् ६ मृत्तिकायास्तुविज्ञानाद्यथाविज्ञायतेनृभिः ॥ घटादिसकलंतस्याःकार्यंव्यवहितंचयत् ७ देशकालस्वभावैर्हियत्स्याद्व्यवहितंसदा ॥ ज्ञायतेमृन्मयंसर्वंमृत्कार्यंनमृदोऽपरम् ८ आत्मकार्यंजगत्सर्वमात्मनोनापरंतथा ॥ जायतेस्वात्मनोज्ञानाच्छ्रवणादेःसदाप्रिये ९ अपिभेददृशापुंसामिहलोकेपरत्रवा ॥ नसुखंविद्यतेजायेकुतोमोक्षोभविष्यति ३१० आत्मवद्यदिजायेयंपत्यादिपुनवर्त्तते ॥ पतिर्वापिचजायादौततस्तेसंत्यजंतितम् ११ पतिःपुत्रस्तथावित्तंपशवोविविधाअपि ॥ नारींजहतिविज्ञायस्वात्मनोभेदकारिणिम् १२ पुत्रादिसहितातद्वत्पतिंनारीत्यजेद्ध्रिया ॥ स्वस्मिन्भेददृशंज्ञात्वानिस्पृहातत्रसर्वदा १३ चेतनाचेतनंवस्तुयावदात्मसमंजनः ॥ स्त्रीपुंसवपुरेपोत्ररक्षयेत्तावदेवतत् १४ सुखदंतस्यचेद्भेदमेषपश्यतिमंदधीः ॥ तस्यदुःखमवाप्नोतिवियोगादिसमुत्थितम् १५ ततआत्मैवलोकेस्मिन्पतिजायादिकंस्थितम् ॥ अन्वयव्यतिरेकाभ्यांनवक्तव्यंमयात्रतत् १६ पतिजायादिकंयद्वद्भेददृष्टेर्हिदुःखदम् ॥ ब्रह्मक्षत्राभिधेजातीआत्मनोऽन्येविलोकिते ॥ एतस्मादपयातस्तेजन्मन्यस्मिन्परत्रच १७ पातित्यादिसमुद्भूतदोषादस्मिन्द्विजन्मनि ॥ पराकुरुतएतेतमात्मनोभेददर्शिनम् ३१८

चश्रुतौपराद्दानपदेननिरसनमुच्यतेतत्स्वरूपाद्बहिष्करणरूपमनादरेपर्यवस्यतीतिबोध्यम् ११ पतिरिति । तथापत्यादयोनारींत्यजंति कीदृशीं स्वस्माद्भेदंवैपर्म्यंकुर्वाणाम् ३१२ पुत्रादीति । तथानार्यपिभेददर्शिनंपतिंज्ञात्वाधियाबुद्ध्यात्यजेत्उपेक्षेत ३१३ चेतनेति स्त्रीपुंसवपुःस्त्रीरूपःपुंरूपोवाजनोमनुष्योजडंचेतनंवावस्तुयावदात्मवत्पश्यन्पालयेत्तदातत्सुखदंभवति यदितुद्वैपम योजकंतत्रभेदंपश्यतितदातस्यभेददृष्टवस्तुनोवियोगादिप्रयुक्तंदुःखंप्राप्नोतीतिद्वयोरर्थः ३१४ । ३१५ ततइति । योहियद्रूपोभवतिसतद्विपरीतरूपेणदृष्टःकुप्यतीतिन्यायेनात्मभेददृष्ट्याऽपकारकत्व दर्शनेनपत्यादीनामात्मैवरूपमन्वयव्यतिरेकाभ्यांसिद्धमित्यत्रमयानवक्तव्यंकिंतूक्तमेवेत्यर्थः ३१६ पतिजायेति । यथाभेददृष्टेःपत्यादिकंदुःखदंतथाब्राह्मणादिजातिरप्यद्वितीयरूपादात्मनोभिन्नत यादृष्टासत्येतस्माद्भेददर्शिनोऽपयातिविमुखीभवतिअपकारंकरोतीतियावत् । लोकद्वयेपीत्यर्थः जातेरात्मभेददर्शनाकारस्त्वहंब्राह्मणजातिरेवास्मिनब्रह्मेत्यादिरूपोबोध्यः ३१७ तत्कृतमनर्थमभि नयति पातित्येति । पातित्यंयोन्यथासंतमात्मानमित्यादिप्रसिद्धदुष्कृतमसंगस्तत्कृतोदोषःपंचक्लेशप्रचयः पराकुरुतःअपकुरुतः एतेब्रह्मक्षत्रजाती ३१८

जन्मांतरेत्विति । जन्मांतरेतुस्वस्यत्राह्मणादिजातेर्दुर्लभत्वेनापकृष्टजातिप्राप्स्येतियावत् दीनतमंकुर्वंत्येतेत्रह्मक्षत्रजातीपराकुरुतः कं भेदिनंभेददर्शिनं कीदृशं दुःखकारणंस्वस्यैवस्वयंदुःखहेतुभूतमित्यर्थः ३१९ यथाजातीइति । यथाब्राह्मणक्षत्राख्यजातीअपाकुरुतस्तथादेवादयोपिभेददर्शिनमपाकुर्वंतीति ३२० लोकापाकरणफलंदर्शयति लोकापाकरणादित्यादिना । तत्र भेददर्शनकुपितैःस्वर्गादिलोकैःकृतंयदनादरणात्मकमपाकरणंतत्फलंनरकप्राप्तिःतादृशदेवकृतापाकरणफलंतुनारकीयदुःखप्राप्तिरित्यर्थः ३२१ लोकापाकरणादस्मिन्निति । तथाऽस्मिन्नेवलोके श्ववद्दीनतयाभ्रमणंलोकापाकरणफलंबोध्यं वेदापाकरणेतुयद्दुःखमवाप्नोतितदुच्यतइतिशेषः ३२२ वेदापाकरणमिति । वेदापाकरणंभेददर्शनकुपितैर्वेदैःकृतंयदपाकरणंतत्फलमितियावत् तदस्मिन्परस्मिन्वाजन्मनिबोध्यं तत्फलंकिमात्मकमित्याकांक्षायामाह शूद्रादीत्यादि । शूद्राद्यपकृष्टजातिलाभस्त्रैवर्णिकानांव्रात्यत्वस्यसंस्काररराहित्यरूपस्यादिपदग्राह्यपातित्यस्यवाप्राप्तिःफलतयाबोध्येत्यर्थः ३२३ पदेति । तथात्रैवर्णिकानांवेदाध्ययनेपदादीनांन्यूनतासातत्फलम् तथाएतेपदादयःस्वाधीनोच्चारणाःसम्यगुच्चारणविषयायत्नभवेयुरेतदपितत्फलमित्यर्थः ३२४ अर्थेति ।

जन्मांतरेत्वसंप्राप्स्यास्वस्यदीनतमंजनम् ॥ पराकुरुतएवंतेभेदिनंदुःखकारणम् १९ यथाजातीतथालोकादेवावेदाश्चसर्वदा ॥ लोकद्वयेपिपुरुषमपाकुर्वंतिभेदिनम् ३२० लोकापाकरणादेषनरकान्प्रतिपद्यते ॥ देवापाकरणाद्दुःखंयातितत्रापिदारुणम् २१ लोकापाकरणादस्मिन्लोकेभ्रमतिसर्वदा ॥ श्ववद्दुःखमवाप्नोतिवेदापाकरणात्तथा २२ वेदापाकरणंज्ञेयमस्मिन्वापरजन्मनि ॥ शूद्रादिजातिर्मास्तद्वद्व्रात्यादिर्वात्रिवर्णभाक् २३ पदवाक्यस्वरादेर्वान्यूनतोच्चारणेसति ॥ स्वाधीनोच्चारणानैतेभवेयुर्वाकदाचन २४ अर्थज्ञानादिशून्यत्वंतेषुवासर्वदाभवेत् ॥ विस्मृतिर्वापितेषांस्यादर्थतःपाठतोपिवा ॥ तदुक्ताकरणंवापिकारणैर्वहुधेवतत् २५ एवंभूतानिसर्वाणिस्थावराणिचराणिच ॥ पराकुर्वंतिसततंह्यात्मनोभेददर्शिनम् २६ भूतैःपराकृतिर्ज्ञेयातत्तज्जातिसमुद्भवे ॥ कर्मभिर्मानसैर्वाग्भिःप्राणिभिःस्थिरजंगमैः २८ अपकारस्यकरणमुपकारस्यचाकृतिः ॥ लोकद्वयेपिसर्वत्रसर्वथासर्वदैवहि २८ एवंसर्वजगत्पंचमहाभूतसमन्वितम् ॥ पराकरोतिसततमात्मनोभेददर्शिनम् २९ यद्यद्भेदेनसंपश्येदेषस्वस्माद्विमोहितः ॥ तत्तद्दुःखंकरोत्यस्यजडंवाऽजडमेववा ३३० अप्राप्स्यादुःखदंज्ञेयंप्रियंसर्वशरीरिणाम् ॥ लोकद्वयेतथाप्राप्त्यादुःखमेतत्करोतितत् ३१ केनचिद्विनिमित्तेनभोगाभावात्तथागतौ ॥ अन्यत्राप्यथवास्वस्माद्विच्छेदान्नाशतोपिवा ३३२

अध्ययनेजातेपियत्तेषुपदादिष्वर्थज्ञानतद्विनियोगादिज्ञानशून्यत्वंयाचतेषांपदादीनांपाठादिविस्मृतिर्यच्चतदुक्तस्यवेदविहितस्याकरणंतत्सर्वंतत्फलमित्यर्थः ३२५ एवंभूतानीति । यथाउक्तालोकादयोभेददर्शिनमपाकुर्वंतितथाभूतानिप्राणिनःसर्वेप्यपाकुर्वंतीति ३२६ भूतैःपराकृतिरिति । भूतैःकृतापराकृतिरपकारोयमेवबोध्यः अयंकः यल्लोकद्वयेतत्तज्जातिषुप्राणिभिःकर्तृभिःशरीरवाङ्मनोभिःकृत्वाप्रतिकूलाचरणमनुकूलानाचरणंचेतिद्वयोःसंबंधः ३२७ । ३२८ किंबहुनासर्वंजगत्पंचभूतात्मकंभेददर्शिनमपाकरोतीत्याह एवंसर्वमिति ३२९ अपकारोनामदुःखकरणमितिदर्शयन्नेवोक्तंस्फुटयति यद्यदिति । अयमज्ञोयद्यद्वस्तुजडंचेतनंवास्वस्माद्भेदेनपश्येत्तत्तदस्यदुःखंकरोतीति ३३० अप्राप्स्येति । तथाप्रियरूपंवस्तुतुप्राप्स्यास्त्रसंबंधेनदुःखकरमित्युत्तरार्द्धार्थः ३३१ प्राप्तस्यापिप्रियस्यदुःखदत्वंनानानिमित्तप्रयुक्तंदर्शयति केनचिदिति । केनचित्प्रतिबंधकेनभोगाभावात्तथान्यत्रगतौगमनेसतियःस्वस्माद्विच्छेदोवियोगस्तस्मात्तथानाशाद्वाप्रियंदुःखकरमित्यर्थः ३३२

एवमिति । यतएवमुक्तविधयासर्वभेदेनदृष्टमपाकुर्यात्ततएतद्भेदविशिष्टंवस्तुनद्रष्टव्यंकिंतुयत्परमंसर्वभावानांसर्वोत्कृष्टरूपंब्रह्मपदाभिधेयंतदेवद्रष्टव्यमितिसंबंधः ३२३ तत्रनैतद्द्रष्टव्यमित्युक्तांभे ददर्शनस्यानर्थकारितांविशदयति एषइतिद्वाभ्यां । एषसर्वापकारकत्वरूपोदोषोभेददृशांयतोभवतिअतःसभेदस्त्वयानद्रष्टव्यः ३३४ विपरीतेति स्पष्टम् ३३५ द्रष्टव्यंपरममित्येतत्स्फुट यति स्वसजातीति । अद्वितीयत्वादानंदरूपःस्वप्रकाशश्चायमात्माइत्याकारकमेवज्ञानंसम्यगित्युक्तंश्रुतिषु ३३६ द्वैतावगाहितुसर्वमेवज्ञानंभ्रांतिरूपमित्याह एतस्मादिति । भेदस्यमिथ्या भूतस्यावलोकनादवगाहनात् ३३७ तस्माद्ब्राह्मणजात्यादिकंसर्वंब्रह्मैवेतिनिश्चितमित्याह ब्रह्मक्षत्रमिति ३३८ उपसंहरति आनंदात्मेति । स्पष्टम् ३३९ एतावताश्रवणरीतिःप्रपंचिता अथमननरीतिप्रदर्शकस्याष्टम्यादिकंडिकाषट्कस्यतात्पर्यार्थमाह जडाजडमितिद्वाभ्यां । जडाजडंसर्वंजगदस्मिन्वर्णितेआत्मन्येवास्तितत्सत्तयैवसत्तावत्सत्तिष्ठतितथाऽस्मादेवात्मनोजायतेतथा त्रैवात्मनिलीयते । विश्वंलीयतइतिकिमुवाच्यंयतोविश्वभ्रमोपादानभूताऽविद्याप्यत्रात्मनितत्त्वज्ञानेजातेसतिलीयतेअतआत्माऽद्वितीयइतिशेषः । तत्रस्थित्यादिकालेष्वात्मनोऽद्वितीयत्वेनम

एवंसर्वमपाकुर्याद्भेददृष्टंजडाजडम् ॥ द्रष्टव्यंपरमंनैतद्द्रष्टव्यंकर्हिचित्क्वचित् ३३३ एषभेददृशांदोषोलोकद्वयउदाहृतः ॥ एतद्दोषात्तथाजायेनद्रष्टव्यस्त्वयाहि सः ३३४ विपरीतदृशांयस्माद्दुःखंभवतिदारुणम् ॥ विपरीतमिदंज्ञानंत्यक्तव्यंसर्वथाततः ३३५ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः ॥ आनंदात्मास्वयं ज्योतिःसम्यग्ज्ञानमितीरितम् ३३६ एतस्मादात्मनोभिन्नंयद्यत्पश्यतिकिंचन ॥ विपरीतंभवेदेतज्ज्ञानंभेदावलोकनात् ३३७ ब्रह्मक्षत्रमतोलोकादेवावेदाःस भूतकाः ॥ सर्वंजडाजडंचैतद्ब्रह्मैवेत्यवधारय ३३८ आनंदात्माततोब्रह्मनिर्द्वयोयंमहेश्वरः ॥ ब्रह्मक्षत्रादिकंयस्मात्ततोन्यन्नैवविद्यते ३३९ जडाजडमिदंविश्वम स्मिन्नऽस्त्यात्मनस्तथा ॥ जायतेलीयतेचात्रसदैतन्निखिलंप्रिये ३४० अविद्याप्यत्रसंजातआत्मज्ञानेविलीयते ॥ दृष्टांतांस्तत्रतेवक्ष्येमनसःस्थैर्यहेतुकान् ॥ ३४१ तामसाराजसाभावाःसात्विकाश्चत्रिधास्थिताः ॥ आत्मनोभेदरहिताःस्थितिकालेयतःप्रिये ३४२ भेरींशंखंतथातंत्रींदृष्टांतान्वच्मिभामिनि ॥ मातेभव तुसंमोहःस्थितौमेविदुषोगिरा ३४३ भेरीशंखस्तथावीणाक्रूरमध्यममंजुलान् ॥ शब्दान्कुर्वंतिसततंनिमित्तेसतिभामिनि ३४ भेरीशब्दस्तथाशंखशब्दोयमपर स्तथा ॥ वीणाशब्दइतित्रेधाविशेषग्रहणंसति ॥ भेर्यादिशब्दसामान्याग्रहेनैवास्तिकिंचन ३४५

नसोयत्स्थैर्यमसंभावनानिरासेनस्थिरत्वंतद्धेतुःफलंयेषांतादृशान्दृष्टांतान्ब्रवीमीतिद्वयोरर्थः ३४० । ३४१ तत्रस्थितिकालेदृष्टांतप्रदर्शकस्यकण्डिकात्रयस्यार्थंप्रपंचयति तामसाइति द्वाविंशतिश्लोकैः । येतामसादिरूपैस्त्रिविधाभावास्तेस्थितिकालेभेदरहिताइत्यत्रार्थेसंभावनाहेतून्भेर्यादिरूपान्दृष्टांतान्यतोवच्मिअतस्तेव्यामोहोमास्तु कया स्थितौअद्वितीयत्वप्रतिपादि कयामद्गिराइतिद्वयोःसंबंधः ३४२ । ३४३ दृष्टांतस्वरूपंव्याकरोति भेरीतित्रिभिः । यथाभेर्यादयोवाद्यविशेषानिमित्तेदंडमुखवायुकोणाद्यभिघातरूपेसतिक्रूरान्वीरादिरसव्यंजकान्मध्य मान्भयानकादिरसव्यंजकान्मंजुलान्शृंगारादिरसव्यंजकांश्चशब्दानुच्चनीचाद्यवांतरभेदान्कुर्वंतीत्यर्थः ३४४ भेरीशब्दइति । तेचशब्दविशेषाभेरीशब्दत्वादिसामान्यैस्त्रेधा तानिचत्रीणिसामान्या निशब्दत्वसामान्यापेक्षयाविशेषरूपाणि । हेसवितेषांविशेषाणांग्रहणंतुभेर्यादिशब्दसामान्यानांभेरीशब्दत्वादिरूपाणामवांतरसामान्यानांशब्दत्वरूपमहासामान्यस्यचाग्रहेऽग्रहणेसतिनैव–

—भवति किंतुभेर्यादिशब्दव्यापकसामान्यस्यग्रहणेसत्येव अनंतरंभेरःभेरीसंबंधादिकृतोविशेषस्तद्विशेषरूपश्चशब्दोगृह्यतइतिद्वयोरर्थः । अत्रेदंबोध्यं दुंदुभेस्तुग्रहणेनेत्यादिश्रुतौदुंदुभिपदेनशब्दत्वाख्यमहासामान्यव्याप्यंदुंदुभिशब्दत्वसामान्यमुक्तं । दुंदुभ्याघातपदेनचतद्विशेषोवीरादिरसव्यंजकःशब्दउक्तः । शब्दपदेनचतद्विशेषाउच्चादिशब्दाउक्ताः । एवंशंखादिवाक्येपीति ३४५ ३४६ दार्ष्टांतिकेयोजयति सदानंदात्मेति । एवमात्मनोऽस्तिभातिप्रियमितित्रिविधसामान्यरूपस्यस्फुरणरूपेणमहासामान्यरूपस्यचाऽग्रहणेसतिकस्यापिपदार्थविशेषस्यग्रहणंनभवतीत्यर्थः ३४७ आत्मनःसामान्यरूपतांसर्वत्रानुगमेनस्फुटयति अयंवेत्यादिना । इदमादिभिरस्मदन्तैःसर्वनामसंज्ञैःशब्दैर्विशेष्यसमर्पकैस्तथाअसत्सद्भिरनिर्वचनीयैर्ममत्वादिभिःप्रकारैश्चयोभावोगृह्यते विपर्यीक्रियतेससर्वोपिप्रथमादिकएवेत्यन्वयः प्रथमःसमष्ट्युपाधिकोहिरण्यगर्भादिसंज्ञ सर्वेशरीरीप्रथमइत्यादिश्रुतिप्रसिद्धः । तथाचएकश्चेतनएवसर्वात्मनास्थितोरज्जुरिवसर्पधारादिरूपैरिति भावः ३४८ तद्रूपाणांयुष्मदस्मच्छब्दार्थत्वरूपाभ्यांद्वेधास्थितिरित्याह युष्मदोर्थइति । तत्रेदमादिशब्दैरुक्तोभावोयुष्मच्छब्दार्थःयुष्मच्छब्दोहिसंबोध्यचेतनाभिधायकः चेतनसत्ताचजडेष्वपीतिभावः । तथाहंशब्देनप्रधानतयाप्रत्यक्चेतनाभिधायकेनममशब्देनचउपसर्जनतयाप्रत्यक्चेतनाभिधायकेनआदिपदग्राह्यैरनिदंपदादिभिश्चास्मदर्थतयासभावउक्तइत्यर्थः ३४९ भागत्या

भेर्यादिशब्दसामान्यग्रहणेसत्यनंतरम् ॥ भैरःशांखस्तथावैणःशब्दोयंगृह्यतेनृभिः ३४६ सदानंदात्मरूपस्यज्योतिषांभासकस्यच ॥ एवमग्रहणेनैवग्रहणंकस्यचिद्भवेत् ३४७ अयंवाप्ययेषवाभावःसचाहंचात्रगृह्यते ॥ प्रथमादिकएवायमसत्सन्ममतादिभिः ३४८ युष्मदोर्थःसमुद्दिष्टइदमादिरनेकधा ॥ अहंममादिभिर्भावैरस्मदोप्यर्थईरितः ३४९ युष्मच्छब्दोत्रयंब्रूतेह्यस्मच्छब्दोपितंपुनः ॥ अर्थमाहयतोनेमौभिन्नार्थौस्तोविचारतः ३५० वागादियोगतःशंखश्चेतनोदेहसंगतः॥ अस्मदर्थंविजानातिमनसाभिन्नमेवसः ३५१ युष्मदर्थात्परोप्येवमवगच्छतिदेहभाक् ॥ अधिष्ठितंजडंसर्वंकेनचिच्चेतनेनहि ३५२ नयदात्मतयाजंतुर्गृह्णीयादस्तिनात्रतत् ॥ अविद्यामीश्वरःस्वात्मबुद्ध्यागृह्णातिनिर्द्वयः ३५३ अविद्याकार्यमखिलंसूक्ष्मंस्वात्मतयाप्रभुः ॥ हिरण्यगर्भोगृह्णातिविराजोजनकःपुमान् ॥ ३५४ अविद्याकार्यमखिलंस्थूलंस्वात्मतयाविराट् ॥ महाभूतादिसहितंब्रह्मांडंप्रतिपद्यते ३५५ जडजातंपरंसर्वंकश्चित्किंचित्प्रपद्यते ॥ जंतुरात्मतयातस्मात्सर्वंचेतनपालितम् ३५६

गलक्षणयातुयुष्मदस्मच्छब्दौतुल्यार्थावित्याह युष्मच्छब्दोत्रेति । अत्रउक्तविभागेसत्यपिविचारतोवस्तुविचारेक्रियमाणेयमर्थंयुष्मच्छब्दोवदतितमेवास्मच्छब्दोपिवदतिप्रतिपाद्यचेतनांशस्योभयत्रसमानत्वादिति ३५० तयोःसमानार्थत्वंस्फुटयितुंयुष्मदर्थतयाप्रसिद्धेपराक्पदार्थेप्यस्मदर्थसत्त्वंदर्शयति वागादीतिद्वाभ्यां । यःपदार्थःशंखःशंखादिजडरूपतयाप्रसिद्धोपियदावागादिकंकरणजातंगतःप्राप्तोऽभवद्भवेद्वातदाचेतनश्चेतनत्वव्यवहारयोग्योदेहसंगतःदेहतादात्म्याभिमान्यपिसन्अस्मदर्थमात्मानंयुष्मदर्थात्स्वापेक्षयाभिन्नात्सर्वस्माद्भिन्नमेवावगच्छति एवमन्योपियुष्मदर्थतयाभिमतश्चेतनःस्वात्मानंसर्वस्माद्भिन्नतयावगच्छति सर्वजडस्यचेतनव्याप्तत्वेनतच्छरीरत्वादितिद्वयोरर्थः ३५१ । ३५२ सर्वस्यजडस्यचेतनाधिष्ठितत्वमेवविशदयति नयदात्मतयेति । यज्जडंचेतनआत्मतयानगृह्णात्येतादृशंजडंकिंचिन्नास्ति यतःसर्वेषांजडानांमूलभूताऽविद्याईश्वरेणउपाधित्वलक्षणशरीरत्वेनगृहीतासूक्ष्मसमष्टिश्चहिरण्यगर्भेणशरीतयागृहीतेतिद्वयोरर्थः ३५३ । ३५४ अविद्याकार्यमखिलमिति । तथास्थूलसमष्टिंविराट्शरीरतयागृह्णातीत्यर्थः ३५५ जडजातमिति । यथासर्वंव्यष्टिरूपंजडजातमप्यनेकचेतनैःशरीरतयागृहीतमित्यर्थः ३५६

एवंसतिसर्वस्यभावस्यभावनाभेदेनयुष्मदस्मच्छब्दार्थतेत्याह एकैकापेक्षयेति । सर्वैवस्तुप्रत्येकस्यसर्वस्यापेक्षयास्वतयास्वकीयतयागृहीतंसद्युष्मदर्थोभवेत् अन्यत्रयुष्मदर्थाद्भिन्नेत्वस्मदर्थता कसति स्वग्रहेस्वत्वेनआत्मत्वेनग्रहणेसतीत्यर्थः ३५७ वस्तुतस्त्वात्माकस्यापिपदस्यवाच्यार्थोनभवतिकिंतुलक्ष्यएवाधिष्ठानत्वेनसर्वसंबद्धत्वादित्याह अवाङ्मनसेति । कस्यापिपदस्यार्थो वाच्योनभवतिकिंतुअत्रात्मनिस्वरूपतयावर्तमानंयत्स्फुरणंतत्सर्वप्रपंचस्यानपायिअधिष्ठानत्वेनव्यापकंभवति अतोलक्ष्यमेवेतिशेषः ३५८ फलितमाह एकार्थाविति । ततस्तमात्मरूपंलक्ष्यार्थमादाययुष्मदस्मदौसमानार्थौ तयोरेकार्थत्वेतुतदर्थव्याप्यार्थकाइदमादिशब्दाअप्येकार्थाः कीदृशाइदमादिशब्दाः तामसादिपदार्थानांप्रतिपादकाइत्यर्थः ३५९ योयंसर्वपदानामेको लक्ष्यार्थःसकिमात्मकइत्यपेक्षायामाह सर्वत्रेति । सर्वत्रसर्वपदार्थेषु ३६० वर्णितात्मभानपूर्वकमेवसर्वभानमित्येतदुक्तदृष्टांतयोजनपूर्वकमाह यथेतिद्वाभ्यां । यथाभेर्यादिशब्दसामान्ये अविरतेऽपरामप्राप्तेऽतएवस्फुरतिभासमानेसतिभेरःभेरीशब्दांतर्गतोविशेषःश्रुतौवाद्यपदोक्तोज्ञेयोभवति तथासर्वोऽहमादिव्यवहारआत्मस्फुरणेसतिभवतीअसतिभवतित्विनतिद्वयोरर्थः ३६१

एकैकापेक्षयासर्वंयुष्मदर्थोभवेत्सदा ॥ गृहीतंस्वतयान्यत्रस्वग्रहेचास्मदर्थता ३५७ अवाङ्मनसगम्योयमात्माकस्यापिनैवसः ॥ अर्थःशब्दस्यकिंत्वत्रस्फुरणं परिकीर्तितम् ॥ शब्दार्थज्ञानरूपस्यप्रपंचस्यानपायितत् ३५८ एकार्थाततएवेमौशब्दौयौयुष्मदस्मदौ ॥ इदमाद्यास्ततःशब्दास्तयोरर्थस्यवाचकाः ॥ एकार्थास्तेपिविज्ञेयास्तमःसत्वरजोभिधाः ३५९ सर्वत्रचैकएवायंज्योतिषांज्योतिरव्ययः ॥ आनंदात्मास्फुरत्यस्मिन्विशेषोध्यस्यतेन्वभिः ३६० यथाभेर्या दिसामान्येस्फुरत्यविरतेसति ॥ भैरादिकस्ततोज्ञेयोविशेषोमंदबुद्धिभिः ३६१ अहंत्वमयमित्यादिव्यवहारोनसंभवेत् ॥ असतिस्फुरणेतच्चज्योतिषांज्योतिरी रितम् ३६२ स्थितौसर्वंजगत्तस्मादानंदात्मास्वयंप्रभः ॥ उक्तःप्रियतमोयस्तेप्रियेतस्मान्नचापरः ३६३ उत्पत्तौशृणुदृष्टांतमात्मनोभेदवर्जने ॥ महतोज्वलतो वह्नेःस्फुलिंगाधूमसंयुताः ॥ जायंतेसदृशाःकेचिद्यथाविसदृशाअपि ३६४ आनंदात्मनएवंतच्चेतनाचेतनंजगत् ॥ सर्वमुत्पद्यतेनित्यंप्रियेभेदविवर्जनात् ३६५ जडाजडमिदंजातंजानीपेत्वंस्वयंप्रिये ॥ वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरः ३६६ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ इत्यादिवचनाद्वित्वावेदराशेस्तु संभवम् ३६७ वेदानांशब्दसंदर्भरूपाणामतएवते ॥ वक्ष्याम्युत्पत्तिमखिलामानंदात्मस्वरूपतः ३६८ अग्नेर्यद्वद्विजातीयोधूमोमैत्रेयिजायते ॥ अभ्रंलिहोम हान्लोकेशुष्काद्रेंधनसंचयात् ३६९

३६२ स्थितिदृष्टांतव्याख्यानमुपसंहरति स्थिताविति । तस्मात्स्थितिकालेसर्वमद्वितीयात्मरूपमेव कोसावात्मेतिचेद्यस्तेतुभ्यंप्रियतमत्वेनोक्तःसएवनापरइत्यर्थः ३६३ अथोत्पत्तेःपूर्वम प्यद्वैतप्रतिपादिकायाएकादशकंडिकायाअर्थंप्रपंचयति उत्पत्तावित्यूनपंचाशच्छ्लोकैः । जगतउत्पत्त्युपलक्षितकालेपियदात्मनोभेदवर्जनंभेदराहित्यंतत्रदृष्टांतंशृणुयथाभेदवर्जनात्कार्योत्पत्तेःपूर्वंनि र्भेदाज्ज्वलतआर्द्रैंधनाद्वह्नेर्धूमास्तदुपलक्षिताःस्फुलिंगांगारादयश्चजायंतेतथात्मनःसर्वंजगज्जायतेइतिद्वयोःसंबंधः ३६४ । ३६५ जडाजडमिति । हेप्रियेइदंस्थूलंजगज्जडाजडरूपंयथाहिरण्य गर्भाज्जातंतथात्वंस्वयंजानीषे कुतः 'तेषांचनामरूपाणिकर्माणिचपृथक्पृथक् । वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरः' इत्यादिस्मृतिवाक्यात्सूर्येत्यादिश्रुतिवाक्याच्च परंतुवेदात्मकशब्दराशेःसं भवंत्वंनजानीषेइतिद्वयोरर्थः ३६६ । ३६७ वेदानामिति । अतस्त्वयाऽविज्ञातत्वादेववेदानामुत्पत्तिःपरमात्मनएवाखिलासर्वविधाहिरण्यगर्भादिव्यापारानपेक्षेतियावत् सायथाभवतितथातु भ्यंवक्ष्यामीत्यर्थः ३६८ अग्नेरिति । यथाऽनापासादग्नेःस्वरूपाद्विलक्षणोधूमोजायतेतथाचिद्रूपात्परमात्मनःशब्दात्मकत्वेनविलक्षणोवेदोजायतइतिद्वयोरर्थः ३६९

३७० ननुयदिवेदउत्पद्यतेतदातस्यपौरुषेयत्वापत्तिरितिशंकावारयितुंतदुत्पत्तिंलौकिकशब्दोत्पत्तेर्विलक्षणांदर्शयति शब्दइतिद्वाभ्यां । यत्रशब्देजायमानेविवक्षितार्थनिश्चयायप्रमाणांतरापेक्षाजायतेतत्रव्यवहारेसशब्दोविचार्यैवालोचनपूर्वकमेवउत्पद्यतेयथाऽऽधुनिकोलोकरवोलौकिकःशब्दइत्यर्थः ३७१ नायमिति । अयंवेदस्तुतथालोचनपूर्वकंनजायतेकिंतुनिःश्वासवदयत्नतएवपरमात्मनोजायतइत्यर्थः ३७२ तथाचपुरुषेणार्थालोचनपूर्वकंनिर्मितंवाक्यंपौरुषेयंतादृशंतुवेदवाक्यंनभवतीत्याह विचार्येति । यद्वचनंपुरुषोविचार्यरचयेत्तत्पौरुषेयमित्युक्तं कीदृशंतद्वचनमसम्यक्यावांछितार्थप्रकाशनासमर्थं नहिसिताक्षीरादिमाधुर्यावांतरविशेषःपुरुषवचसाप्रकाशयितुंशक्यः वेदवाक्यंत्वीदृशंविचारजन्यमसम्यक्वचनभवतीत्यर्थः ३७३ तर्हिपौरुषेयमपिवाक्यमविचार्योक्तंवेदवत्प्रमाणंस्यादितिचेन्न प्रमत्तगीतवदर्थव्यभिचारित्वेनसुतरामप्रामाण्यादित्याशयेनाह अविचार्येति । अनीश्वरईश्वरभिन्नःपुरुषोब्रह्मलोकेपिवर्तमानोयद्वाक्यमविचार्यब्रूयात्तत्स्वार्थंव्यभिचरेदेवेतिनियमः ईश्वरभाषितंतुवेदरूपमेवमविचार्योक्तत्वेसतिस्वार्थव्यभिचारिनभवतीत्यर्थः ३७४ ततोऽज्ञाताबाधितार्थत्वेनवेदस्यमुख्यंप्रामाण्यंसिद्धमित्याह ततइति । ततःअविचार्येश्वरोक्तत्वात्प्रतिपाद्यार्थप्रकाशनायप्रमाणांतरापेक्षास्वार्थव्यभिचारश्चनास्तितेनानुवादकत्वबाधितार्थत्वरूपदोषद्वयाभावेनवेदोमानंप्रमाणराजईरितः ३७५ अथवेदप्रामाण्येकैमुत्यन्यायंस्फुटयन्लौकिकशब्दानामप्यौत्सर्गिकंप्रामाण्यंमीमांसकमतप्रसिद्धंदर्शयति अप्यनाप्तेनेत्यादिना । अपिकिंचअनाप्तेनविप्रलंभकतयाप्रसिद्धेनपुरुषेणाप्युक्तस्यशब्दस्यवाक्यस्यकुत्रचिदर्थव्यभिचारोनभवतिकिमुतवेदस्यापौरुषेयस्यसोर्थव्यभिचारोभवेदित्यर्थः ३७६ अनाप्तोक्तवाक्यमुदाहृत्यतस्यमानतामुपपादयति संतीतिद्वाभ्यां । अस्यपथिकस्ययोग्यानिफलानिनद्यास्तीरेसंतीत्याकारकमनाप्तोक्तमपिवाक्यमर्थस्यनदीतीरगतफलरूपस्यबोधंकरोत्येवातस्तदप्युत्सर्गतःप्रमाणमेवेतिशेषः परंतुसोर्थोनदृश्यतेवाक्यश्रवणकालेपथिकेननसाक्षात्क्रियतेऽतस्तत्रार्थेप्रत्यक्षंनमानंभवेदबोधकत्वादितिसंबंधः ३७७ शब्दस्त्विति । किंतुतत्रार्थेसशब्दएवमानंबोधकत्वात् यतोमानामानयोर्व्यवस्थास्वरूपविभागोबोधकत्वाबोधकत्वाभ्यामेवकृता मानंहिव्यंजकंनकारकमतोबोधकतयैवतस्यमानत्वंविज्ञेयंनान्यथेत्यर्थः ३७८ संवादिप्रवृत्त्यानुमेयंज्ञानप्रामाण्यमितिवदतांनैयायिकादीनांमतंप्रत्याह बोधकमिति । येषांवादिनांमतेबोधकमात्ररूपंमानंभवतितेषांमतेतन्मानस्वरूपंकुतःसिद्ध्यतिसमर्थायाःप्रवृत्तेर्हेतोरितिचेन्नेत्यर्थः ३७९

एवंनानाविधज्ञानसंपन्नात्परमात्मनः॥ शब्दराशिरयंवेदोविजातीयःप्रजायते ३७० शब्देमानांतरापेक्षाजायतेयत्रतत्रसः॥ उत्पद्यतेविचार्यैवयथालोकरवोधुना ३७१ नायंतथासमुत्पन्नःकिंतुनिःश्वाससन्निभः ॥ स्वप्रभादात्मनोजातोयथाभूतार्थवादिनः ३७२ विचार्यपुरुषोऽसम्यग्रचयेद्वचनंहियत ॥ पौरुषेयंहितज्ज्ञेयंवेदवाक्यंनचेदृशम् ३७३ अविचार्यतुयद्ब्रूयाद्ब्रह्मलोकेप्यनीश्वरः॥ स्वार्थंव्यभिचरेत्तत्तुनैवमीश्वरभाषितम् ३७४ ततोमानांतरापेक्षावेदवाक्येनविद्यते ॥ नस्वार्थव्यभिचारश्चमानंतेनायमीरितः ३७५ अप्यनाप्तेनचोक्तस्यव्यभिचारोनविद्यते ॥ शब्दस्यार्थेनकुत्रापिकथंवेदस्यसस्मृतः ३७६ संतितीरेफलान्यस्यनद्याइतिवचोयतः ॥ अर्थबोधंकरोत्येवपरमार्थोनदृश्यते ॥ अबोधकत्वात्प्रत्यक्षंतत्रमानंनतद्भवेत् ३७७ शब्दस्तुबोधकत्वेनमानंतत्रभविष्यति ॥ मानामानव्यवस्थेयंबोधाबोधकतायतः ३७८ बोधकंचनचेन्मानंयेषांतेषांकुतोहितत ॥ मानस्यमानतानैवसमर्थायाःप्रवृत्तितः ३७९

तत्रसमर्थीप्रवृत्तिहेतुतयावदन्प्रष्टव्यः किंप्रवृत्तेःसामर्थ्यंसमोबोधेनसमानोर्थोविषयोयस्याःसातथातस्याभावस्तत्त्वमितिव्युत्पत्त्याशक्यध्वादित्वेनचसमानविषयत्वरूपं किंवासम्यग्विद्यमानोर्थःफलं यस्याइतिव्युत्पत्त्यासंप्रयोजनत्वरूपं आद्येसाम्यप्रतियोगिनंबोधंप्रत्येवप्रवृत्तेर्लिंगत्वंभविष्यतीतिसूचयन्प्रवृत्तेस्तद्धर्मसामर्थ्यस्यचबोधसापेक्षतामाह प्रवृत्तेरपीति । बोधेनेष्टसाधनताविषयकेनवि नाप्रवृत्तिसामान्यस्याप्युदयाभावादेतस्याःप्रवृत्तेःसामर्थ्यंबोधशून्यंबोधनिरपेक्षंकुतःस्यादित्यर्थः । अंत्येपिसुखादिलक्षणप्रयोजनोपयोगिनंबोधमात्रमेवआक्षिपेत्प्रवृत्तिर्नप्रमाणंपरंपरयाप्रयोजक त्वेनअन्यथासिद्धत्वादितिदर्शयंस्तादृशीचसमर्थताऽनाप्तवाक्येप्यस्तीत्याह समर्थताचेति । सुखदुःखयोःकृतेरारंभस्यबलादन्यथानुपपत्तेर्विज्ञेयासमर्थतात्वनाप्तवाक्येप्यस्तीतिशेषः ३८० अनाप्तवा क्येतत्सत्वमेवव्यतिरेकमुखेनाह नहीत्यादिना । अनाप्तस्यवादिनोवक्तुर्वाक्येनप्रवृत्तस्यपथिकस्यनदीतीरंदृष्ट्वासुखादिकंनजायतइतिनहिकिंतुजायतएवेत्यर्थः ३८१ ननुफललाभेपथिकःसुखमेवप्रा प्नुयादितिवक्तव्येसुखदुःखयोरुभयोःफलत्वेननिर्देशोनुचितइतिचेत्किमस्थानेभ्रांतोसिकिंनजानासिप्रवृत्तिसामान्यस्यदुःखहेतुतांकष्टंकर्मेतिन्यायसिद्धामित्याशयेनाह । प्रवृत्तिर्नैवेति । एतादृशीप्र वृत्तिःक्वापिनास्तियासुखमेवजनयेदित्यर्थः ३८२ अत्रार्थेतार्किकसिद्धांतोप्यनुकूलइत्याह अपिकुत्रापीति । दुःखविवर्जितंदुःखासमानाधिकरणंसुखंकुत्रापिनास्तीत्याकारकस्तार्किकाणांसंकेतो

प्रवृत्तेरपिबोधेनविनानैवोदयोयतः ॥ कुतःसामर्थ्यमेतस्याबोधशून्यंभविष्यति ॥ समर्थताचविज्ञेयासुखदुःखकृतेर्बलात् ३८० नह्यनाप्तस्यवाक्येनप्रवृत्तस्या त्रवादिनः ॥ सुखदुःखेनजायेतेनदीतीरस्यदर्शनात् ३८१ प्रवृत्तिर्नैवकाचित्स्यादुभयोर्लोकवेदयोः ॥ कुर्याद्यासुखमेवैकंदुःखगंधविवर्जितम् ३८२ अपिकुत्रा पिनैवास्तिसुखंदुःखविवर्जितम् ॥ इतितार्किकसंकेतोमहानस्तियतोहिते ३८३ भीतामोक्षेपिनेच्छंतिपरमानंदरूपिणि ॥ आनंदंततएवैतद्यत्किंचित्त्वीरितं भवेत् ३८४ बोधकत्वंततोमानेमानतायांहिकारणम् ॥ बोधकोविद्यतेशब्दःप्रत्यक्षंनैवतादृशम् ॥ ततोऽनाप्तस्यवाक्येस्याच्छब्दोमानमनिंदितम् ३८५ कामंत स्यापिबाधोस्तुनकारसहितेनच ॥ वाक्यांतरेणबलवान्नकारोवर्णसंहतौ ८६ मृगाणांहियथासिंहोवर्णानांतादृशःस्मृतः ॥ नकारस्तेनबलवानन्यशब्दार्थहारकः ३८७

भिप्रायोमहान्दुरतिक्रमोस्ति । तस्यमहत्त्वमुपपादयति यतइत्यादिना । तेतार्किकायतःस्वसंकेताद्भीताःसंतःश्रुतिप्रसिद्धपरमानंदरूपेमोक्षेप्यानंदंनेच्छंतिनांगीकुर्वंतिकिंतुदुःखाभावरूपतयैवमोक्ष स्यपुरुषार्थतामुपपादयंतीत्यतस्त्वयायदेतत्प्रवृत्तेःसुखमात्रहेतुत्वमुक्तंतद्यत्किंचित्तुच्छमितिद्वयोरर्थः ३८३ । ३८४ फलितमाह बोधकत्वमिति । ततउक्तविधयामानस्यबोधमात्रजननक्षमत्वान्मान निष्ठायांमानतायांबोधकत्वमेवकारणंप्रयोजकं तच्चबोधकत्वंयादृशंशब्देवर्ततेतादृशंप्रत्यक्षादौनास्ति अतोनाप्तवाक्यरूपोदाहरणेपिशब्दोमानमित्यनिंदितंयुक्तमेवेत्यर्थः ३८५ विप्रलंभकवाक्यादा वपियदुक्तंप्रामाण्यंतदपिबाधावतारात्पूर्वमेवापवादविषयंपरिहृत्योत्सर्गस्थितेरित्याशयेनाह काममिति । तस्यप्रमाणत्वेनव्यवहृतस्यपश्चान्नकारसहितेननञ्घटितेनवाक्यांतरेणबाधोभवतुनाममै तावताऔत्सर्गिकस्यपूर्वकालिकप्रामाण्यस्यकाचित्क्षतिरितिशेषः । प्रपंचितंहिभाष्यकारैर्बाधपर्यंतंलौकिकवैदिकप्रमाणानांप्रामाण्यमहंब्रह्मास्मीत्येतदवसानाएवसर्वेविधयइत्यादिना नञ्घटितवा क्यस्यैवबाधकतायांप्रयोजकंबलवत्त्वमाह बलवानित्यादिना । नकारोनिषेधवाचकोवर्णोवर्णानांसंहतौसमुदायमध्येबलवान्मृगाणांसिंहवत् स्वसंबद्धपदार्थानांसत्तालक्षणप्राणापहारकत्वा दितिद्वयोरर्थः ३८६ । ३८७

यत्रतुसमानविषयौद्वौनिषेधौस्यातांयथासमयोर्वादिनोर्विप्रतिपत्तौतत्रोभयोर्नञ्घटितवाक्ययोःपरस्परप्रतिबंधेननिश्चयाजनकत्वात्ताभ्यामपरंकिंचित्प्रमाणंनिश्चयायान्वेष्टव्यमित्याह नकारयोरिति । तृतीयमपिमानंतदन्वेष्टव्यंयस्यचतुर्थादिकंबाधकंनस्यादितिचतुर्थपादार्थः ३८८ तत्रापियद्येकंनिषेधवाक्यंलौकिकंस्याद्द्वितीयंतुवैदिकंतत्रतृतीयमानान्वेषणानकर्तव्याद्वयोरेकस्यदौर्बल्यनिश्चयादित्याह नकारयोर्विरोधेत्विति लोकवेदयोर्लौकिकवैदिकयोर्नकारयोर्विरोधेतुलौकिकोदुर्बलोयतःशंकितोदोषोलौकिकेभवतिनवैदिकइतिसंबंधः ३८९ एतदेवस्फुटयति अन्ययोरिति । अन्ययोः केवललौकिकयोःशब्दयोर्नदीतीरफलभावाभावप्रतिपादकयोर्यद्वद्विरोधोभवतितथालौकिकवैदिकयोरपिपरलोकनास्तित्वसत्त्वादिप्रतिपादकयोर्विरोधोभवतितत्रलौकिकःसंभावितदोषत्वाद्दुर्बलोवैदिकस्तुनतथेत्यर्थः ३९० बोधकत्वलक्षणंप्रामाण्यंतुशब्दस्वरूपमात्रपरेष्वपिवाक्येषुविद्यतेइत्याह कखगादिरिति । स्पष्टम् ३९१ यस्त्विति । यस्तुशब्दोदशदाडिमानिषडपूपाइत्यादिवाक्यरूपोबोधंनजनयतितस्याप्रमाणत्वेप्यस्माकंबोधकत्वलक्षणप्रामाण्यवादिनांनकाचिद्धानिरित्यर्थः ३९२ किंचनप्रवर्तकतालक्षणंप्रामाण्यंकिंतुबोधकतामात्ररूपमित्यत्रनिषेधवाक्यमेवोदाहरणंतस्याभावमात्रबोधकत्वेनप्रामाण्यस्यसमन्वयसूत्रेभाष्यकारैःप्रपंचनादित्याशयेननिषेधवाक्यप्रामाण्यमाह अपिसर्वाणीतिद्वाभ्यां । परस्परंविरुद्धानियानिप्रत्यक्षादीनिमानानितानिकर्मभूता

नकारयोर्विरोधेस्यादुभयोरप्रमाणता ॥ तृतीयंतत्रविज्ञेयंमानमन्याप्रपीडितम् ३८८ नकारयोर्विरोधेतुदुर्बलोलोकवेदयोः ॥ लौकिकःशंकितोदोषोलौकिकेस्तिनवैदिके ३८९ अन्ययोःशब्दयोर्यद्वद्विरोधोलोकवेदयोः ॥ लौकिकोदुर्बलोनैवं वैदिकोदोषवर्जितः ३९० कखगादिस्तुयःशब्दःसोपिचेद्वर्णगोचरम् ॥ बोधमुत्पादयेत्कस्मादप्रमाणमयंभवेत् ३९१ यस्तुनोत्पादयेद्बोधंकामंसोऽमानमस्तुनः ॥ नचात्रच्छिद्यतेकिंचिद्बोधमानत्ववादिनाम् ३९२ अपिसर्वाणिमानानिविरुद्धानिपरस्परम् ॥ नकारानुग्रहाज्जेतुंप्रभवंतिपराणिहि ३९३ तस्माद्वर्णगणेज्ञेयोनकारोबलवानिह ॥ बलवत्त्वात्सचेद्बोधंकरोत्यस्तुससर्वदा ३९४ ततःशब्दोनकोप्यस्तिबोधकोयोनमानताम् ॥ गच्छेदतःकुतोवेदोमानतांनगमिष्यति ३९५ एवंमानशिरोरत्नभूतोवेदोमहानयम् ॥ मंत्रब्राह्मणभागेनद्विधाभूतःस्वभावतः ३९६ ऋग्यजुःसामभिस्तद्वदथर्वांगिरसासह ॥ चातुर्विध्यंसमापन्नइतिहासादिभेदवान् ३९७ इतिहासइतिप्रोक्तइतिहेतिबभूवयत् ॥ जनकोहेत्यादिरूपोवेदेऽनेकत्रसंस्थितः ३९८

निजेतुंपराणिअविरुद्धानिमानानिकर्तॄणिसमंते कुतोनकारानुग्रहात्निषेधवाक्येनविरुद्धानांशिथिलीकरणद्वाराअनुगृहीतत्वादिति तस्मात्स्वानुग्रहेणान्येषांबलाधायकत्वाद्बलवत्त्वेनप्रसिद्धोनकारोयदास्वार्थंबोधंजनयतीत्यनुभवसिद्धंतदासनकारजोबोधःसर्वदास्तुअबाधितार्थकःसंस्तिष्ठत्वितिद्वयोरर्थः । तथाताद्दशनिषेधवाक्यवद्बोधकतामात्ररूपंप्रमाणत्वमितिभावः ३९३ । ३९४ फलितमाह ततइति । ततउक्तयुक्तेर्बोधकत्वेनलौकिकशब्दोप्यौत्सर्गिकप्रामाण्यभाजनंभवतिकिमुतवेदोनिरस्तदोषाशंकइत्यर्थः ३९५ एवंवेदस्यापौरुषेयतयानिरस्तदोषाशंकस्यस्वतःप्रामाण्यमुपपाद्याथतद्विभागप्रतिपादकस्ययद्दग्वेदइत्यादेर्वाक्यशेषस्यार्थमाह एवमित्यादिना । स्वभावतःप्रमाणानांशिरोमणिभूतोवेदःप्रथमंद्विधाभूतोमंत्ररूपोब्राह्मणरूपश्चेति तत्रमंत्ररूपोमंत्रत्वेनप्रसिद्धत्वलक्षणकःऋग्यजुःसामाथर्वभेदेनचतुर्विधःमंत्रभिन्नत्वलक्षणकब्राह्मणरूपस्तुइतिहासादिश्रुत्युक्ताष्टविधभेदवानितिद्वयोरर्थः ३९६ । ३९७ तत्रेतिहासस्यस्वरूपमाह इतिहासइति । इतिइत्थं हप्रसिद्धं आसबभूव इतिव्युत्पत्त्याजनकोहवैदेहइत्यादिरूपोवेदभागइतिहासपदेनोक्तइत्यर्थः ३९८

पुराणाख्यंवेदभागंलक्षयति सृष्टिरितित्रिभिः । सर्गपदोक्तेसृष्टिस्थितीप्रतिसर्गपदोक्तःप्रलयश्चआकाशाद्वायुरित्येवंविधवाक्यैर्यत्रोच्यतेतथायंपौतिमाप्यादिरूपोमहान्विद्यायावंशःस्वायंभुवमनोः स्थितिर्वंशश्चयत्रोच्यतेतत्सृष्टिजानांब्राह्मणादीनांकर्माणिचयत्रोच्यंतेएतादृशपंचलक्षणकोवेदभागःपुराणमित्युच्यतेइतिद्वयोरर्थः ३९९ । ४०० लक्षणंपठति सर्गश्चेति स्पष्टम् ४०१ विद्यो पनिषदोःस्वरूपमाह उपेति । उपेतिपदादिकेनोपासीतेतिपदेनविधीयमानाउपासनाविद्याइत्युच्यते तथारहस्यंदेवतादिनामोपनिषदित्युच्यते यथासत्यस्यसत्यमितिब्रह्मणोनामचतुर्थाध्या यउक्तमित्यर्थः ४०२ श्लोकादिपदार्थानाह श्लोकाइति । ब्राह्मणेपठितामंत्राःश्लोकाइत्युच्यंते तथाबह्वर्थस्यसंक्षेपेणप्रतिपादकंवाक्यंसूत्रमित्युच्यते तथात्मेत्येवोपासीतेतिवाक्यंब्रह्मविद्यायाः संक्षिप्यप्रतिपादकत्वाद्विद्यासूत्रमितिभाष्यकारादिभिर्व्यवहृतं मंत्रार्थविवरणरूपंब्राह्मणंतुव्याख्यानमित्युक्तमित्यर्थः ४०३ अनुव्याख्यानपदार्थमाह अन्वितिद्वाभ्यां । यत्संग्राहकवाक्यरूपंसूत्र मुक्तंतस्यार्थवादमंत्रादिरूपेणग्रंथेनार्थप्रपंचकंवाक्यजातमनुव्याख्यानमित्युक्तमित्यर्थः ४०४ अतएवेति । यतस्तादृशंवाक्यजातंकर्तृअनेकविधत्वेनगुरुभूतार्थकंसूत्रंपुनःपुनर्व्याकरोतिविशदीकरो तिअतएवइमंविशेषंबोधयितुमेवानुव्याख्यानमितिपदेनुशब्दःपठ्यतेइत्यर्थः एतदुदाहरणंतुउक्तसूत्रोत्तरंवाक्यजातमुत्तराध्यायसमाप्तिंयावद्बोध्यम् ४०५ ननुसकृदुच्चरितःशब्दःसकृदर्थंगमयती

सृष्टेःस्थितिर्लयोयत्रकीर्त्यंतेमूलकरणात् ॥ आकाशाद्वायुरित्यादिवंशोपिचमहानयम् ॥ विराजस्तनयस्यास्यमनोःस्वायंभुवस्यच ३९९ सृष्टिजानांहिसर्वेषां कर्माणिविविधानिच ॥ इदंपुराणंविज्ञेयंपंचलक्षणसंयुतम् ४०० सर्गश्चप्रतिसर्गश्चवंशोमन्वंतरस्थितिः ॥ वंश्यानुचरितंयच्चतत्पुराणमितिस्थितम् ४०१ उप इत्यादिकाप्रोक्ताविद्यात्रोपासनासदा ॥ सत्यस्यसत्यमित्यादिकास्थितोपनिषद्द्विजैः ४०२ श्लोकामंत्रास्तथासूत्रमात्मेत्यादिसमीरितम् ॥ मंत्राणामर्थकथनं व्याख्यानमितिकीर्तितम् ४०३ अनुव्याख्यानमित्येतदुक्तसूत्रार्थकीर्तनम् ॥ अर्थवादादिभिःसार्द्धंग्रंथेनमहताहियत् ४०४ अतएवानुशब्दोयंव्याख्यानेसू त्रगेभवेत् ॥ पुनःपुनर्यतःसूत्रंव्याकरोत्यर्थगौरवात् ४०५ अनेकार्थत्वमस्यस्याद्भूषणंसूत्ररूपिणः ॥ वाक्यस्यनपरस्यैवदूषणंकर्हिचिद्भवेत् ४०६ पिंडीभूता न्बहूनर्थान्सूचयत्यात्मनाहियत् ॥ व्यापारैर्विविधैर्नित्यंतत्सूत्रंपरिकीर्तितम् ४०७ अष्टभेदःसमुद्दिष्टोवेदकल्पद्रुमोमहान् ॥ ऋगादिभिश्चतुःस्कंधःशाखाभिः शतधागतः ४०८ एवमेषसमुत्पन्नोब्रह्मणोब्रह्मजन्मना ॥ शब्दात्मकोवेदराशिरर्थस्तस्याप्ययंतथा ४०९ योगोमहांस्तथादानंवहिर्वेदिसहस्रधा ॥ सुखदुःखे तथैवास्मिन्जन्मन्यपिपरत्रच ४१०

तिन्यायविरोधात्सूत्रस्यानेकार्थत्वंकथमितिचेन्न आवृत्त्यातत्संभवात् नचावृत्तिरेवदोषः सूत्रस्वरूपघटकत्वेनतस्याभूषणत्वादागंतुकस्यैवदोषत्वादित्याशयेनसूत्रस्यानेकार्थतामुपपादयति अने कार्थत्वमितिद्वाभ्यां । अस्यसूत्ररूपिणोवाक्यस्यानेकार्थत्वंभूषणमेवनेतरवाक्यवद्दूषणंयतःपिंडीभूतबह्वर्थसूचकत्वादेवसूत्रसंज्ञांप्राप्तमितिद्वयोःसंबंधः ४०६ । ४०७ अष्टेति । एवंब्राह्मणभागेऽष्टवि धोवेदरूपःकल्पद्रुमऋग्यजुःसामाथर्वात्मकस्कंधचतुष्टयशालीनानाशाखश्चब्रह्मणोब्रह्मरूपात्क्षेत्रात्समुत्पन्नः कीदृशोवेदकल्पद्रुमः जन्मनाब्रह्मणोजन्मरूपान्निमित्ताद्ब्रह्मब्रह्मशब्दार्थः एषावेदसृष्टिरर्थ सृष्टेरप्युपलक्षणमित्याशयेनाह शब्दात्मकइति । यथाशब्दात्मकोवेदराशिर्ब्रह्मणउत्पन्नस्तथातदर्थोपीतिद्वयोरर्थः ४०८ । ४०९ प्रवाहनित्यतयानित्यस्यवेदस्यार्थभूतान्पदार्थान्सामान्यतःसंगृह्णाति योगइतित्रिभिः । योनादिसंज्ञानिवस्तून्यनायासान्महेश्वरान्निःश्वासवन्निर्गतानीतितृतीयेनसंबंधः । तत्रयोगःकर्मयोगज्ञानयोगभेदेनप्रथमंद्विविधः अवांतरभेदैस्तुबहुविधः महान्महाप्रभावः तथाब हिर्वेदिवेदर्यागार्थंसंस्कृतभूमेर्बहिर्वर्तमानंस्वतंत्रमितियावत् ईदृशंदानं अस्यकर्मयोगेनसंग्रहेपिपृथगुपादानंब्राह्मणवशिष्ठन्यायेनप्राशस्त्यबोधनार्थंतथासुखादिरूपमैहिकमामुष्मिकंवाफलमिति ४१०

तत्साधनानीति । तयोःसुखदुःखयोर्भोगसाधनभूतानि स्थावरादिशरीराणितथाकाशादिपंचमहाभूतानि कीदृशानि । स्वंपंचभूतानांस्वरूपंदेहोयेषांतेस्वदेहाःस्वाभिमानिदेवास्तैःसहितानि एते नान्येदेवाअप्युपलक्षिताः सूक्ष्मंशरीरघटकैरिंद्रियादिभिःसहितानिचेतिद्वयोरर्थः ४११ । ४१२ अथप्रलयेऽद्वितीयत्वप्रतिपादिकायाद्वादशकंडिकायाअर्थमाह जडाजडानामित्यष्टभिः । जडाजडरूपाणांदृश्यानामंतेप्रलयेपिब्रह्माद्वैतत्वबोधकंदृष्टांतंशृणु यथापार्थिवानिमेघगतानिचनीराणिसाक्षात्परंपरयावासमुद्रंयांति कीदृशं स्वातिरिक्तेपुसर्वेपुजलस्थानेष्वतिशयहीनंसर्वतोधिकमितियावत् । अत्रसमुद्रशब्देनजलसामान्यमुच्यतेतत्प्राप्तिश्चतद्रूपेणावस्थानमितिवदंतीति ४१३ । ४१४ दार्ष्टांतिकेयोजयति एवमिति । स्पष्टम् ४१५ ननुकेनक्रमेणभूतपदोक्तानिजन्यवस्तूनिलयंयांतीत्याकांक्षायांतत्क्रममाह विषयाइति । दृष्टिसृष्टिविषयाशब्दादिविषयाणामिंद्रियाण्युत्पत्तिहेतुत्वाच्छ्रुतिगतैकायनपदोक्तलयस्थानताशालीनिअतोविषयाइंद्रियेपुलीयंतेइंद्रियाणितुस्वोपादानकारणभूतेपुलीयंतेतानिभूतानितुसंतिस्थूलानिअसच्छब्दभांजिसूक्ष्माणिचप्रलयकालेमायोपाधिकंपरमात्मानंप्रयांतीतिद्वयोरर्थः ४१६ । ४१७ विषयादीनामिंद्रियादिपुलयप्रकारमेवविशदयति स्पर्शइतिचतुर्भिः । स्पर्शादयोविषयास्त्वगादिपुलीयंतइतियथाक्रमंसंबंधोबोध्यः लौकिकावैदिकशब्दभिन्नाः ४१८ अभिलाषाइति । संकल्पोमनसिविद्यापदोक्तावृत्तयस्तुहृदयशब्दो

तत्साधनानिसर्वाणिस्थावराणिचराणिच ॥ महांत्यपिचभूतानिस्वदेहसहितान्यपि ४११ एकादशेंद्रियगणप्राणादिसहितानिच ॥ निःश्वासवदनायासान्निर्गता निमहेश्वरात् ४१२ जडाजडानामंतेपिदृष्टांतमत्रधारय ॥ यथासर्वाणिनीराणिसरितामभ्रगानिच ४१३ साक्षाद्यांतिवेगेनतंपरंपरयापिवा ॥ समुद्रंसरितांनाथंसर्वातिशयवर्जितम् ४१४ एवंसर्वाणिभूतानिसंहारेसमुपस्थिते ॥ आनंदात्मानमायांतिमैत्रेयिपरमेश्वरम् ४१५ विषयाइंद्रियाण्येवस्वकीयानिप्रयांतिहि ॥ इंद्रियाण्यपिभूतानिकरणान्यात्मनोपिच ४१६ भूतानिचप्रयांत्येनमानंदात्मानमीश्वरम् ॥ मैत्रेयिसंत्यसच्छब्दभांज्यपिप्रलयेसति ४१७ स्पर्शस्त्वचंरसोजिह्वांगंधोघ्राणंव्रजत्यपि ॥ चक्षुश्चैवचरूपाणिश्रोत्रंशब्दाश्चलौकिकाः ४१८ अभिलाषाअशेषायेमनोबुद्धिंचवृत्तयः ॥ हस्तौसर्वाणिकर्माणियांत्युपस्थंचसर्वतः ४१९ आनंदाश्चविसर्गास्तुपायुंपादौगतागतम् ॥ निखिलोवेदराशिश्चवाचमेवप्रयात्ययम् ४२० गत्वैवंकारणंसर्वंकारणैःसहितंसदा ॥ प्रयातिपरमात्मानंमैत्रेयिप्रलयेसति ४२१ ब्रह्मविज्ञानउत्पन्नेयथामायालयंव्रजेत् ॥ तथामैत्रेयिदृष्टांतंशृणुवक्ष्यामितेधुना ४२२

क्तायांबुद्धौलीयंतेतथासर्वेव्यापाराहस्तयोःसर्वेआनंदाश्चउपस्थे ४१९ आनंदाइति । तथासर्वेविसर्गाःपायौगमनादिकंपादयोर्वेदात्मकशब्दस्तुवाचिलीयतेइति अत्रवेदस्यवाचिलयाभिधानाभिप्रायस्तुवेदस्याध्ययनाख्यवाग्व्यापारविषयतानियताइतितस्यवाचाविशेषतःसंबंधः लौकिकशब्दानांत्वनिच्छतोपिश्रोत्रस्यविषयतांगच्छतांश्रोत्रेणविषयसंबंधात्तत्रैवलयउक्तइतिबोध्यम् ४२० गत्वैवमिति । यथाक्षुद्रनद्योगंगांप्राप्यतयासहसमुद्रंयांत्येवंसर्वाणिकार्याणिकारणानिप्राप्यतैःसहपरमकारणंपरमात्मानंप्रलयेयांतीत्यर्थः । अत्रभाष्यकारैरुक्तोलयक्रमइत्थंबोध्यः इंद्रियवाचकैस्त्वगादिशब्दैर्लक्षितेपुस्पर्शादिविषयसामान्येपुविषयविशेषाणांलयःबाह्यविषयसामान्यानांचमनोविषयसामान्येसंकल्पसामान्येलयःतेषांसंकल्पमात्ररूपत्वात्संकल्पसामान्यस्यचबुद्धिव्यापारसामान्येविज्ञानाख्येतस्यमायाशबलात्मनीति ४२१ एवंप्राकृतप्रलयेमोक्षदृष्टांतभूतेऽद्वितीयत्वमात्मनउक्तमथदार्ष्टांतिकेमोक्षेआत्माद्वितीयताविशदीभावपरायास्त्रयोदशकंडिकायाअर्थंप्रपंचयति ब्रह्मविज्ञानइतिचतुर्विंशत्याश्लोकैः । यथाचविद्योत्पत्तौसविलासमायायाआत्यंतिकःप्रलयोभवतितत्स्फुटीभावायसैंधवखिल्याख्यंदृष्टांतंशृण्वित्यर्थः ४२२

दृष्टांतंदार्ष्टांतिकंचाभिनयति द्रवेत्यादिना । सैंधवंसामुद्रंलवणं आदिपदेनहिमकरकादिग्रहः तद्रूपत्यकार्यस्योपादानभूतानिसमुद्रादिनीराणिदृष्टादृष्टनिमित्तवशात्परिणामदशायांघनतांमूर्ततांपिंडी भावरूपांयथायांतितथाशुद्धात्माप्यविद्यारूपनिमित्तेनघनतांजीवभावरूपांयातीत्यर्थः ४२३ दशेति । यथाचउक्तरूपेसैंधवघनेसामुद्रलवणपिंडेपूर्वादिभागेषुकुत्रापिलवणसमुद्रजलाद्भेदोनास्तितथा जीवात्मन्यपीत्यर्थः ४२४ द्रवरूपमिति । यथाचद्रवरूपंसमुद्रजलंक्षेत्रपातातपसंयोगादिरूपनिमित्तवशाद्घनतांयातितथात्मापिकार्यकारणरूपाविद्यात्मकानिमित्तवशात्संसारंयातीत्यर्थः ४२५ यथासैंधवघनस्यलयप्रयोजकंनीरप्रक्षेपमात्रंतथाजीवघनस्यमायामयस्यलयप्रयोजकंब्रह्मविद्ययाब्रह्मरूपजलेप्रक्षेपमात्रमित्याह नीरेति । घनःसैंधवः ब्रह्मविद्याजलेविद्यात्मकेब्रह्मरूपजलेप्रक्षेपान्ना शमदर्शनंमायाघनोजीवोव्रजेदिति ४२६ समुद्रजलेति । यथालवणेवर्तमानाघनतासमुद्रजलाद्भेदेपृथग्भावएवस्यादुपलभ्येततथापूर्णात्मनःसकाशाद्भेददर्शनकालेएवास्माकंजीवानांमायामाया मयःसंसारोदृश्यतइत्यर्थः ४२७ आदाविति । यथाकालत्रयेकुत्रचिदंशेवासामुद्रंलवणंसमुद्रतःसमुद्रजलान्नभेदंवस्तुतोभजतितथाजीवाअपिब्रह्मणइत्यर्थः ४२८ यथाचसामुद्रलवणेघनीभावोऽनि

द्रवरूपाणिनीराणिप्रयांतिघनतांयथा ॥ सैंधवादेस्तथैवात्माविद्ययाघनतांगतः ४२३ दशदिक्षुतथामध्येबहिरंतश्चकश्चन ॥ यथाघनेनभेदोस्तितथात्मन्यपि नास्त्यसौ ४२४ द्रवरूपंघनीभावंनीरंयातिनिमित्ततः ॥ यथातथैवसंसारीभवत्यात्माविचक्षणः ४२५ नीरप्रक्षेपमात्रेणघनोयद्वल्लयंव्रजेत ॥ ब्रह्मविद्याजलेतद्व न्नाशंमायाघनोव्रजेत ४२६ समुद्रजलभेदेस्याद्घनतालवणेयथा ॥ आनंदात्मविभेदेपिमायास्माकंतथैवसा४२७ आदावंतेतथामध्येसामुद्रंनसमुद्रतः ॥ भेदंय थासमायातितद्वज्जीवाःपरात्मनः ४२८ घनतानश्वरीयद्वत्सामुद्रस्यननीरता ॥ जीवतानश्वरीतद्वदात्मनोनात्मतासति ४२९ घनतायायथानाशेसामुद्रंनाश माप्नुयात ॥ संसारित्वंतथाविद्यानाशान्नाशंप्रयातितत ४३० सर्वतोलवणंयद्वत्क्षारमेतन्नचापरम् ॥ घनतामपिसंप्राप्तंपूर्वंपश्चाच्चसर्वदा ३१ अरेमैत्रेयितद्वत्स्या दात्मासर्वत्रसर्वदा ॥ स्वयंज्योतिःस्वभावोयंनकदाचिदितोपरः ४३२ विद्यमानःप्रकाशोयंसवित्रादेर्यथानृभिः ॥ तमसावृतनेत्रैर्नलभ्यतेकस्यचित्क्वचित ४३३ एवंमायातमश्छन्ननयनैःपुरुषैःसदा ॥ नलभ्यतेस्वयंज्योतिरात्मासर्वगतःपुमान् ४३४ अन्यासक्तोयथालोकेनपश्यतिपुरःस्थितम् ॥ तद्वत्संसारसंसक्तोनानंदा त्मानमीक्षते ४३५ विशेषज्ञानजनकंस्थूलंदेहमुदीरितम् ॥ जीवतोभौतिकंतस्यनाशादेषविनश्यति ॥ स्वयंज्योतिरनंतात्मापरिच्छेदविवर्जितः ४३६

त्यस्तथाविद्यानाश्यंजीवत्वमपीत्याह घनेति । हेसति ४२९ यथाचदृष्टांतेघनत्वनाशमात्रेणलवणनाशव्यवहारस्तथाऽविद्यानाशमात्रेणमोक्षेजीवनाशव्यवहारोनतुचेतनांशस्यनाशादित्याह घन तायाइति ४३० सर्वतइति । यथाचलवणंघनीभावावस्थायावर्तमानस्वेततःपूर्वंपश्चाचसर्वांशेषुक्षारैकरसमेवतथात्मापिसर्वदासर्वांशेषुचिदेकरसइतःस्वयंप्रकाशचित्स्वभावादपरोऽन्यस्वभावोने तिद्वयोरर्थः ४३१ । ४३२ यद्यात्मास्वयंज्योतिःस्वभावस्तदासर्वेषांकुतोनप्रकाशतइतिशंकांपरिहरति विद्यमानइति । यथासूर्यादिप्रकाशोविद्यमानोपितमोरोगावृतनेत्रैःकस्यचिदपिघटादिविष यस्यसंबन्धितयाक्वचिदपिनदृश्यतेतथामायारूपतमसाच्छादितबुद्धिदृष्टिकैरात्मानलभ्यतेइतिद्वयोःसंबंधः ४३३ । ४३४ कारणाज्ञानस्यात्मभानप्रतिबंधकतामुक्त्वाकार्याविद्यायाअपितथात्वमाह अन्यासक्तइति । अन्यासक्तःकांतादिगतमनाःपुरःस्थितमपियथानपश्यतितथात्मानमपीत्यर्थः ४५ अस्यात्मनोविशेषज्ञानलक्षणांघनतांविहायाद्वितीयरूपेणमुक्ताववस्थानंमरणावस्थादृष्टांतेनवक्त मुक्तघनताविशिष्टस्यशरीरनाशेननाशमाह विशेषेतिद्वाभ्यां । जीवतःप्राणान्धारयतःसूक्ष्मशरीरविशिष्टस्येतियावत् एतादृशस्यात्मनोपादिदंपांचभौतिकंस्थूलंशरीरंतद्विशेषज्ञानस्यमनुष्योहमित्यादि–

रूपस्यघनतामयस्यजनकंप्रसिद्धंतस्यभौतिकशरीरस्यनाशेत्वेषघनताविशिष्टआत्मास्वयंज्योतिरादिलक्षणोपिनश्यतिविशिष्टरूपाभावंप्राप्तोभवतीत्यर्थः ४३६ तत्रदृष्टांतमाह लोहस्येति । यथावन्हि तादात्म्येनज्वलनाश्रयत्वेनप्रसिद्धस्यलोहपिंडस्यनाशेसतिलोहपिंडतादात्म्येनचतुष्कोणत्वादितद्धर्मविशिष्टस्यवन्हेरपिनाशोन्यवन्हियतेतथादेहभिन्नोप्यात्मादेहतादात्म्येनजीवनकालेतद्धर्मभागी मरणावस्थायांदेहनाशेसतितत्तादात्म्यप्रयुक्तविशेषविशिष्टरूपेणनश्यतीत्युच्यतेइत्यर्थः ४३७ एतच्चमरणेआत्मनाशाभिधानंविशेषज्ञानाभावसाधर्म्येणमोक्षेदृष्टांतत्वाभिप्रायेणैवेत्याह अभिप्रायेणेति त्रिभिः । याज्ञवल्क्यआत्मनाशंयदुक्तवान्तदमुनाभिप्रायेणेत्यन्वयः ४३८ अमुनाकेनेत्याकांक्षायांतमभिप्रायमभिनयति मरणेइति । मरणावस्थायांसर्वस्यभेदभानप्रयोजकस्यविशेषज्ञान स्यविलयात्पूर्वंदेहगतंकिंचिदपिदुःखंनपश्यतीतितस्यमोक्षदृष्टांतत्वयोग्यतेतिद्वयोरर्थः ४३९ । ४४० ननुसुप्तिरपिविशेषज्ञानाद्यभाववतीअतःसैवकुतोनदृष्टांततयोक्तेतिशंकते यद्यपी ति । भेदद्वयविशेषज्ञानस्यचदुःखहेतोर्यद्यपिसुप्तावपिलयोभवतीत्यर्थः ४४१ तथापिमोक्षेआत्यंतिकदुःखाभावबोधनायमरणावस्थैवदृष्टांतत्वयोग्यानसुषुप्तिस्तदनंतरंजागरणेएतद्देहदुःखा नांसर्वैरनुभूयमानत्वादित्याह तथापीति । तथापिएषपुमान्पुनःसुप्त्यनंतरमस्मिन्नेवदेहेजागरंप्राप्यदुःखमाप्नोतिमरणेसतितुएनंदेहंसदुःखंपुनर्नव्रजति ततइति । मोक्षदृष्टांतत्वयोग्यताम

लोहस्यज्वलतोनाशादनुनाशंव्रजेद्यथा ॥ वन्हिरात्मातथादेहनाशादेषविनश्यति ॥ मरणेदेहतोभिन्नोदेहतादात्म्यमागतः ४३७ अभिप्रायेणमुनैवंयाज्ञवल्क्य उदैरयत् ॥ आत्मनाशवचोविद्वानधीमतांपुरतःस्थितः ४३८ मरणेसुप्तिवत्सर्वजंतूनांविलयोभवेत् ॥ विशेषज्ञानमात्रस्यभेददृष्टिकरस्यहि ४३९ भेददृष्टौ विलीनायांदुःखंकिंचिन्नपश्यति ॥ मरणेऽनेनदेहेनकदाचिन्मनुजोभुवि ४४० यद्यप्यस्तीहविलयःसुप्तौभेदस्यसर्वतः ॥ विशेषज्ञानमात्रस्यहेतोर्दुःखप्रदस्य हि ४४१ तथाप्येषपुनर्गत्वादेहेस्मिन्जागरंपुमान् ॥ दुःखमाप्नोतिमरणेनैनंदेहंपुनर्व्रजेत् ॥ ततःसुप्तिंपरित्यज्यमृतिमाहमुनीश्वरः ४४२ भूतावासस्यभूता नांनाशाद्यद्वदयंपुमान् ॥ अनेनजनितंदुःखंभूतावासेननाप्नुयात् ॥ विशेषज्ञानशून्यःसन्स्वप्रकाशैकबोधवान् ४४३ अविद्यानाशतस्तद्वद्विशेषज्ञानसंक्षये ॥ आनंदात्मास्वयंज्योतिःपुनर्दुःखंनगच्छति ४४४ अविद्यायाश्चसद्भावान्मृतोदेहांतरात्पुनः ॥ दुःखमेतिनमुक्तोयंमायानाशात्कदाचन ४४५ अभिप्रायमिमं तस्यमुनेर्गंभीरचेतसः ॥ अजानंतीवधूरेवंपप्रच्छाकुलमानसा ४४६

भिप्रेत्यमुनिर्भूतावासस्यपांचभौतिकस्यदेहस्यमृतिंमरणावस्थामुक्तवान्नसुप्तिमित्यर्थः ४४२ एवंमरणावस्थायादृष्टांतत्वयोग्यतामुपपाद्यतस्यादृष्टांतत्वमभिनयति भूतावासस्येति । प्रथ मपदंपूर्वान्वयित्वेनदर्शितं यद्वदयंस्वप्रकाशबोधरूपःपुमान्भूतानांशरीराकारपरिणतानांनाशानंतरमनेनभूतावासेनशरीरेणजनितंदुःखंनाप्नुयात् विशेषज्ञानशून्यत्वादितिसंबंधः ४४३ दार्ष्टांतिकेयोजयति अविद्येति । तथाऽविद्यानाशेनात्यंतिकलयेपिपुनःसंसारदुःखाप्राप्तिरित्यर्थः ४४४ मरणेतुदुःखाभावोनात्यंतिकोदुःखबीजाविद्यावशेषादतोदृष्टांततयैवतदभिधानमि त्याशयेनाह अविद्यायाइति । मृतोजंतुरविद्याशेषात्पुनर्देहांतरंप्राप्यदुःखमेतिमुक्तस्तुमायारूपबीजदाहान्नकदाचनदुःखमाप्नोतीतिविशेषइत्यर्थः ४४५ औपाधिकविशेषभावस्यैवलयो नाद्वितीयस्वप्रकाशचैतन्यस्वरूपस्येत्येतदेवस्फुटयंत्याश्चतुर्दशकंडिकायाअर्थंप्रपंचयति अभिप्रायमितित्रयोविंशत्याश्लोकैः । उक्ताभिप्रायमज्ञात्वामैत्रेयीएवंपप्रच्छ इपतेपूर्वंत्वयात्मासच्चिदानं दरूपउक्तइदानींतुभूतात्मकोपाधिनाशात्तन्नाशउच्यतेइतिविरोधइतिद्वयोरर्थः ४४६

४४७ ततइति । ततउक्तविप्रतिषेधात्त्वद्वाक्यरूपःपवनोमदीयमनोरूपंतूलंसर्वतोभ्रामयतीत्यर्थः ४४८ मोमुह्यतइति । आत्मस्वरूपेतववचनान्मेमनोऽतिशयेनमोहंप्राप्नोतीत्यभिप्रायाज्ञानात् राज्ञोभिप्रायमजानन्सेवकइवेति ४४९ किंचवृद्धिमिच्छतोमूलहानिरितिन्यायोममापन्नःपूर्वावगतात्मनोनाशश्रवणादित्याशयमावेदयति तृणेतिचतुर्भिः । परावृत्तंविपरीतंजातं चतुर्थ्यं स्पष्टम् ४५० । ४५१ । ४५२ । ४५३ एवमुक्तोमुनिःस्वाभिप्रायंप्रकाशितवानित्याह इत्युक्तइति ४५४ मातइति । हेमैत्रेयिमद्वचनात्तवमोहःपूर्वावगतहानिचिंताप्रयुक्तःखेदश्चमास्त्विति ४०५ नाहमिति । हेप्रियेत्वंयंमोहंप्रतिपन्नाप्राप्तासितस्यमोहस्यहेतुतयामोहपदप्रतिपाद्यंवाक्यंनाहंब्रवीमित्वंत्वस्थानेविभ्रांतासीत्यर्थः . तत्रहेतुश्चपूर्वापरवाक्याभिप्रायानालोचनमेवेत्याह अरे इति । येनएतद्वचनाभिप्रायंपूर्ववचनाभिप्रायंचनबुध्यसेतेनेमंमोहंगतासीतिसंबंधः ४५६ मयातुयदभिप्रेतंतच्छृण्वित्याह विज्ञानेतित्रिभिः । चिन्मात्ररूपोयमात्मामाययाजीवतारूपांघनतांप्राप्तोमायायाःपरिक्षयेसतिस्वरूपेणैवतिष्ठतितस्यांचावस्थायामौपाधिकानांविषयविशेषज्ञानानांहानावपिनानंदस्वरूपहानिरितिबोधयितुमेवमरणावस्थाउक्तेतिद्वयोरर्थः ४५७ । ४५८ तद

पतेसर्वंप्रियतमःपुरात्मायंत्वयेरितः ॥ अधुनातस्यनाशोपिभूतावासविनाशतः ४४७ ततस्तेवाक्यपवनोमनस्तूलमिदंमम ॥ इतस्ततोनयत्यत्रव्यवस्थानविवर्जितम् ४८ मोमुह्यतेमनोमेत्रभगवन्वचनात्तव ॥ अभिप्रायमजानंत्याराज्ञोयंसेवकोयथा ४९ तृणलुब्धायथाधेनुर्दूरंयात्यविवेकतः ॥ तृणच्छन्नेतिमहतिपंकेमज्जतिदीनधीः ४५० तथातेवाक्यपंकेस्मिन्मग्नास्मिमुनिसत्तम ॥ आत्मविज्ञानलोभेनभवंतंप्रष्टुमुद्यता ५१ आत्मनोनविनाशोस्तिमयैतद्बहुशःश्रुतम् ॥ ब्राह्मणेभ्योमहाभागभवतश्चप्रसंगतः ५२ इदानींतत्परावृत्तंनिश्चितंसकलंमम ॥ देहनाशमनुस्वात्मानश्यतीतितवोक्तितः ५३ इत्युक्तेयाज्ञवल्क्योपिमैत्रेयींप्रत्यभापत ॥ कृपयापरयाविष्टःस्वाभिप्रायंमहामुनिः ५४ मातेभवतुसंमोहोमैत्रेयिवचनान्मम ॥ माचखेदंव्रजाद्यत्वंस्वस्थचित्ताभवप्रिये ५५ नाहंमोहंब्रवीमित्वंप्रतिपन्नासियंप्रिये ॥ अरेमैत्रेय्यभिप्रायंमदीयंनैवबुध्यसे ॥ पूर्वोक्तंवचनंचैवयेनमोहमिमंगता ५६ विज्ञानघनएवायमात्मामायापरिक्षये ॥ घनतांतांपरित्यज्यस्वप्रकाशोवतिष्ठते ५७ विशेषज्ञानविलयेसत्यप्यस्यनदुःखिता ॥ अस्मिन्नर्थेइदंतुभ्यमुक्तंमरणमात्मनः ५८ देहनाशमनुस्वात्मनाशोनैवस्वभावतः ॥ इत्यभिप्रायतोजायेस्वात्मनोनाशईरितः ५९ घटनाशमनुप्राप्तनाशंयद्वद्घटस्थितम् ॥ भवेन्नभस्तथात्मापिदेहनाशाद्विनश्यति ६० अरेमैत्रेयिनित्योसावानंदात्मास्वयंप्रभः ॥ विज्ञानैकस्वभावश्चमरणेसर्वदेहगः ६१ देहाद्यभावतोनॄणांमरणेसतिसर्वदा ॥ ज्ञानानिजनिमंत्यत्रनजायंतेकदाचन ४६२

वस्थोपन्यासेनचइतिसूचितंयदात्मस्वरूपेऽविनाशिन्युपाधिधर्मोनाशएवारोप्यव्यवह्रियते उपाधिनाशएवहिलोकैर्दृश्योनत्वविषयात्मनाशइतिदर्शयति देहनाशमिति । देहनाशमनुसृत्यारोप्यैवात्मनाशव्यवहारोनस्वरूपनाशमादायेत्यर्थः ४५९ एतद्दृष्टांतेनस्फुटयति घटनाशमिति। यथाघटस्थितंनभोघटीयंनाशमारोप्यैवनाशवदुच्यतेतथादेहनाशमारोप्यात्मापिमूढैर्नाशवानुच्यते इत्यर्थः ४६० स्वरूपेणाविनाशितामेवस्फुटयति अरेइत्यादिना । आत्मनाशेकृतनाशाकृताभ्यागमादिदोषप्रसंगोपीतिसूचयन्विशिनष्टि सर्वदेहगइति ४६१ उपाध्यभावआत्मस्वरूपभानेऽनुकूलएवविशेषज्ञानात्मकप्रतिबंधकाभावरूपत्वादित्याह देहाद्यभागतइतित्रिभिः । देहेंद्रियादीनामभावेऽनुपलंभेसतिजनिमंतिज्ञानानिबुद्ध्यादिवृत्तिरूपाणिनजायंतेतादृशदशायांचसंसारेप्यात्मादुःखंनगच्छतिकिमुताद्वितीयभावरूपायांमुक्ताविति त्रयाणांसंबंधः ४६२

४६३ । ४६४ यश्चताद्दशदशायामात्मद्वैतंनजानातिसद्वैतस्यासत्वल्लक्षणाऽपराधान्नात्मनिभासनाक्षमत्वरूपादित्याह अविनाशीति । यथासुप्तोमृतोचचिद्रूपेणविद्यमानोप्यात्माद्वैताभावादेवद्वैतं नजानातितथामुक्तावपीतिसंबंधः ४६५ आत्मस्वरूपंतुनकदाचिदन्यथाभवतिअविनाशित्वादित्याह सुप्ताविति । नजहातिनत्यजति ४६६ द्वैताभावाद्वैताज्ञानंसुप्तिदृष्टांतेनस्फुटयति सुतादी निति । करणादिकरूपिणइंद्रियादिरूपस्य ४६७ यच्चमुक्तावात्मनःस्वरूपंतत्संसारदशायामपिविद्यतेपरंतुदेहादिसंबंधान्नस्फुटमवभासतइत्याशयेनाह ज्ञानेति । ज्ञानेंद्रियादिसत्वकालेआत्मस्व रूपंचैतन्यमनुगतमेवेत्यर्थः ४६८ फलितमाह सुप्ताविति । सुषुप्त्यादौस्वप्रकाशाद्विनीयचिदात्मकमात्मस्वरूपंनान्यथाभवतीत्यर्थः ४६९ एवंशोधितस्यत्वंपदार्थस्यपरिपूर्णताप्रतिपादनेन ब्रह्मविद्यायास्तद्दृढिमप्रयोजकसंन्यासस्यचाभिनयपरायाःपंचदशकंडिकायाअर्थमाध्यायांतग्रंथेनप्रपंचयंस्तत्रद्वैतभानस्याविद्याव्याप्यताप्रतिपादकस्ययेनेदमित्यतःपूर्वग्रंथस्यार्थमाह स्वयंज्योतिरि

जंनिमज्ज्ञानरहितआनंदात्मास्वयंप्रभः ॥ द्वैतावगतिशून्यत्वादिदंदुःखंनगच्छति ४६३ संसारेपिकुतोगच्छेन्मुक्तावाविद्यकंहितत् ॥ अविद्यारहितोयत्रद्वै ताशापिनविद्यते ४६४ अविनाशीततःस्वात्माविशेषज्ञानसंक्षये ॥ स्वप्रभोपिनजानातिद्वैताभावेनहेतुना ॥ यथासुप्तोमृतोचैवमुक्तावपितथैवसः ४६५ सुप्तोमृतोतथामुक्तावानंदात्मास्वयंप्रभः ॥ अविनाशीस्वस्वभावंनजहातिकदाचन ४६६ सुतादीन्विषयान्सुप्तोस्वप्रभोपिनगच्छति ॥ अभावाद्वैतजाल स्यकरणादिकरूपिणः ४६७ ज्ञानकर्मेन्द्रियगणेदेहांतःकरणेपिच ॥ वर्ततेसर्वदाप्यात्मायतःसर्वगतःपुमान् ४६८ सुप्तोमृतोतथामुक्तावविनाशीस्वयंप्र भः ॥ मैत्रेयितितएवायंचिच्छक्तिर्भेदवर्जितः ॥ अग्न्यादिवत्स्वभावोस्यनविपर्येतिकर्हिचित् ४६९ स्वयंज्योतिःस्वभावेस्मिन्नानंदात्मनिनिर्द्वये ॥ व स्तुतोविद्यतेनैवद्वैतंकिंचिन्नकर्हिचित् ४७० ततोमायामयंद्वैतंद्वैतवद्वर्ततेऽत्रतत् ॥ संसारित्वदशाकालेनिःसंसारस्वरूपिणः ४७१ यदाद्वैतमिवैतद्धिस्व रूपंस्वात्मनोभवेत् ॥ अन्यदेवान्यमात्मानंनानाभेदसमन्वितम् ४७२ विषयत्वंसमापन्नंजगद्रूपमनेकधा ॥ सुखदुःखकरंब्रह्मज्ञानादर्वाक्शरीरिणाम् ॥ एकादशेंद्रियैरंतर्बहिश्चैवाधिगच्छति ४७३ अविद्यायांविलीनायामानंदात्मस्वरूपिणि ॥ स्वप्रभेब्रह्मविज्ञानाद्भेदगंधविवर्जिते ॥ कर्तृकर्मादिरहितेकःकिंकेना धिगच्छति ४७४ सर्वंब्रह्मेतिविज्ञानेनदेहाःस्थिरजंगमाः ॥ ज्ञानकर्मेन्द्रियाण्यत्रनैवस्युर्विषयैःसह ४७५ सुखदुःखादिभिःसार्द्धंनैवांतःकरणंक्वचित् ॥ कारणा भावतोयस्मादविद्यानाशमागता ४७६

तिदशभिः । अस्मिन्नात्मनिवस्तुतोद्वैतासंभवात्संसारित्वदशाकालेयद्वैतंकार्यकारणात्मकंद्वैतवत् द्वितीयचंद्रादिवद्वर्ततेतन्मायामयमितिद्वयोरर्थः ४७० । ४७१ तत्रान्वयव्याप्तिंस्फुटयति यदेति । यदाएतदात्मनःस्वरूपंद्वैतापेक्षयाअन्यदेवविलक्षणमेवाद्वैतमितियावत् तद्वैतमिवमायया द्वैताकारेणभासमानमिवभवतितदायंजीवआत्मानमन्यंतत्पदार्थाद्भिन्नंविश्वतैजसादिभेदत्रंतंप्रमात्रादिभेदवंतं वातथानानाविधंविषयात्मकंजगद्रूपंचएकादशेंद्रियैरंतर्बहिर्वावर्तमानंपश्यति कीदृशंजगद्रूपमनेकधासुखदुःखकरमितिद्वयोरर्थः ४७२ । ४७३ व्यतिरेकंस्फुटयति अविद्यायामिति । किंशब्दआक्षेपे अविद्याहीनस्वरूपेत्रिपुटीनसंभवतीत्यर्थः ४७४ तत्रहेतुतयात्रिपुटीरूपकाणामंतर्बाह्यभावानामभाक्षमविद्यात्मककारणाभावप्रयुक्तमाह सर्वंब्रह्मेति । सर्वंब्रह्मेतिज्ञानेसतिअत्रात्मस्वरूपेदेहादयः कारणाभावान्नसंति । कारणाभावएवकुतइत्यतआह यस्मादित्यादि इतिद्वयोःसंबंधः ४७५ । ४७६

ततश्चात्माकेवलोऽवशिष्यतेइत्याह अविद्याभावतइति । स्पष्टम् ४७७ अस्यांदशायांज्ञानलक्षणाक्रियापिनसंभवतीत्याह अस्मिन्निति । अस्मिन्नविद्याविनिर्मुक्ततस्यदर्शनस्यफलमावरण भंगादिरूपमपिकथंजायेतासिद्धत्वादिति ४७८ ननुतदानीमात्मानमेवजानीयादितिशंकांवारयन्विजानीयादित्यंतवाक्यस्यार्थमाह अपीतिद्वाभ्यां । यदाऽविद्याकालेद्वैतमिवभवतितदापिसर्वं आत्मभिन्नमेवज्ञानस्यविषयीकरोतिनात्मानमितिप्रसिद्धं विद्योदयानंतरमात्मानंनविषयीकरोतीतिकिमुवाच्यमितिद्वयोरर्थः ४७९ । ४८० उक्तार्थेउपपत्तिमगृह्यादिपदैःसूचितांप्रपंचयति । विज्ञातारमित्यादिना । सर्वस्यविज्ञातारमात्मानमहंज्ञानस्यविषयीकुर्यामितियोवदतिसमूढएवंप्रष्टव्यः एवंकथं त्वयात्माकेनकरणेनज्ञातइति ४८१ ज्ञानेनविषयीकरणेकरणमवश्यमपेक्षित मित्याह यद्यइति । योमनुजोयद्वस्तुज्ञानस्यविषयीकरोतितद्विषयीकरणंकेनचित्करणेनैवेत्यर्थः ४८२ तत्रमूर्तामूर्तलक्षणंद्वैतंतदभावश्चकरणतयानवाच्योऽविद्यारहितात्मनिसदातदभावादतएवा यमात्माश्रुतावगृह्यइत्युक्तइत्याह मूर्तेति । स्पष्टम् ४८३ किंचयद्यात्मनोगृह्यत्वंस्यात्तदागृह्यत्वव्यापकानिशीर्यत्वादीन्यपिस्युरितितर्कंसूचयन्शीर्यत्वादीनांतद्व्यापकतांधाराविवयादर्शयति अ

अविद्याऽभावतोयस्माद्विनाशःसर्ववस्तुनः ॥ जातस्तेनस्वयंज्योतिरानंदात्मावतिष्ठते ४७७ अस्मिन्नात्मनिकोनामपश्येत्किंकेनवाकथम् ॥ कुत्रकालेपिक स्मिन्वाकिंचितस्यफलंभवेत् ४७८ अपिद्वैतमिवेदंस्याद्यदात्मायंस्वयंप्रभः ॥ तदापिस्वात्मनोभिन्नंजानीतेसकलोजनः ॥ नात्मानंकर्हिचित्कमपिविज्ञातारं स्वयंप्रभम् ४७९ सर्वमात्मेतितुयदाजातमात्मावबोधतः ॥ तदातुनिर्द्वयंदेवंस्वप्रभंकोधिगच्छति ४८० विज्ञातारमहंजानइतियोनिश्चितोभवेत् ॥ पृच्छाम स्तंवयंमंदंकेनतेधिगतस्त्विति ४८१ यद्योजानातिमनुजस्तत्केनापिनचान्यथा ॥ ततस्तवात्मविज्ञानंकेनेत्येतत्समीरय ४८२ मूर्तामूर्तद्वयंसर्वंतदभावश्चना त्मनि ॥ अविद्यारहितेसोयंगृह्यतेकेनहेतुना ॥ अगृह्यःसर्वकरणैर्बाह्यैश्चाभ्यंतरैरपि ४८३ अपिगृह्यंविशीर्येतकालतस्तच्छनैःशनैः ॥ यथावस्त्रादिकंशीर्यम शीर्योगृह्यतेकथम् ४८४ अपियच्छीर्यतेलोकेयुक्तंस्वावयवैर्हितत् ॥ नशीर्यतेततःस्वात्मासंयोगरहितःसदा ४८५ अपिसक्तस्यभीतिःस्याच्छरीरस्ययथात्रहि ॥ इंद्रियैर्योगतश्चात्मानिर्भयःकेनसज्जते ॥ अस्तिभीतौव्यथादृष्टाविनाशस्यापिकारणम् ४८६ अविनाशीव्यथाशून्यआत्माकेनभयंव्रजेत् ॥ निर्ममःसज्जतेकेन निःसंगःशीर्यतेकथम् ॥ अशीर्योगृह्यतेकेनह्यगृह्येकरणंतुकिम् ४८७ भावाभावविनिर्मुक्तेनिर्मायेस्वप्रकाशके ॥ करणादेश्चवार्तापिह्युपपन्नाकथंभवेत् ४८८ ततोनैवात्मविज्ञानेकरणंश्रुतिमार्गतः ॥ लभ्यतेनापियोगस्यदर्शनेनचकेनचित् ४८९

पिगृह्यमितित्रिभिः । शीर्यत्वमवयवशैथिल्येननाशशीलत्वम् ४८४ शीर्यत्वस्यव्यापकंचावयवद्वारासंयोगित्वलक्षणंसंगित्वमित्याह अपियच्छीर्यतइति । यच्छीर्यतेतदवयवैःकृत्वायुक्तंसंयोग वदपिभवतिआत्मातुनतथेत्यर्थः ४८५ संगस्यव्यापकंचभयमित्यस्यव्यथातस्याश्चविनाशकारणसंबंधइत्याह अपिसक्तस्येति । सक्तस्यसंगिनोभयंदृष्टंयथाइंद्रियैस्तदुपलक्षितविषयैश्चयोगिनः शरीरस्येति । तथाभीतौसत्यांव्यथादृष्टास्तिव्यथायांसत्यांचविनाशकारणसन्निधानंदृष्टमित्यर्थः ४८६ व्यापकाभावेचव्याप्याभावइत्याह अविनाशीति । आत्मायतोविनाशीततोव्यथा शून्यएवमग्रेपियोज्यम ४८७ किंचात्मनःस्वभावमालोच्यापिकरणादिकंतत्स्वरूपभानेनवाच्यमित्याह । भावाभावेति । स्पष्टम् ४८८ फलितमाह ततइति । औपनिषदमतेनपातंजलमतेनचा त्मभानेकरणंकेनचिदपिवक्तुमशक्यमित्यर्थः ४८९

अथचार्वाकादिवैशेषिकांतमतेष्वपिकरणासंभवंप्रपंचयति आत्मेतिनवभिः । येतावद्बृहस्पतिशिष्येषुचार्वाकेषुदेहेंद्रियमनःप्राणानात्मत्वेनपश्यत्सुप्रथमंपृथिव्यप्तेजोवायुसंघातात्मकंदेहंरूपादिमत्त्वाइंद्रियविषयत्वेनात्मत्वानहंमप्यात्मानंमन्यंतेतेषांमतेतस्यदेहरूपात्मनोभानेकरणंनहिसंभवेदित्यर्थः ४९० कथमित्याकांक्षायामाह सर्वस्येति । तन्मतेहियद्यन्नेत्रादिकंकरणत्वेनविवक्ष्येततत्तत्कर्तृत्वेनाक्रांतंसंघातलक्षणात्मनएवज्ञानकर्तृत्वात् संघातस्यचसंहतमात्ररूपत्वात् तथाचसर्वंकरणत्वेनविवक्षितंकर्तृरूपमेवस्यान्नकरणंभेदाभावात् करणत्वस्यकर्तृभेदनियतत्वादित्यर्थः । एतदुक्तंदूषणमिंद्रियसंघातात्मवादिमतेपियोज्यं देहस्तुतन्मतेनकरगंज्ञानक्रियांप्रतिकर्मत्वात् एवंबाह्यविषयाअपि इंद्रियेभ्यआंतरोभावस्तुतैरनभ्युपगमादेवनकरणमितिभावः ४९१ देहेंद्रियादीति । यैरपिदेहेंद्रियसमुदायाद्भिन्नोमनोरूपःप्राणरूपःकर्तृभोक्तृरूपोवात्माभ्युपगम्यतेतेप्रष्टव्याःकिमात्मारूपादिमान्नीरूपोवा आद्येतस्यरूपादिमतइंद्रियैर्मनसावाऽनुपलभ्यमानत्वात्तानींद्रियाणितदुपलब्धौनकरणानिवक्तुंशक्यानि मनोपिरूपादिमतोग्रहणइंद्रियैर्विनाऽसमर्थत्वान्नकरणत्वेनवाच्यमित्यर्थः ४९२ अंत्येआह नीरूपोपीति । यदायंदेहेंद्रियसंघातव्यतिरिक्तआत्मानीरूपःस्वीक्रियतेतदापिमनस्तद्ग्रहणेकरणंवक्तुमशक्यं तदाहिआत्माकर्मवास्यात्कर्तावा । आद्येकर्तृहान्याकरणत्वहानिः करणत्वस्यकर्तृसापेक्षत्वात् । अंत्येतु नुइतिवितर्के आत्मग्रहणक्रिया

आत्मासुरगुरोःशिष्यैरुक्तोरूपादिमानयम् ॥ ऐंद्रियस्तर्हितस्यापिकरणंग्रहणेनहि ४९० सर्वस्यकरणस्यास्यसंघातांतर्निपातनात् ॥ ततःकर्तैवसर्वंस्यात्करणंनैवकिंचन ॥ इंद्रियाणांयदात्मत्वंतदाप्युक्तंव्यवस्थितम् ४९१ देहेंद्रियादिसंघाताद्व्यतिरिक्तोयदापुमान् ॥ रूपादिमांस्तदातस्यचक्षुराद्यैरदर्शनात् ॥ नतानिकरणानिस्युर्मनोप्येतैर्विनानच ४९२ नीरूपोपियदायंस्यात्तदापिमनसानहि ॥ गृह्यतेकरणंयस्मात्कर्तारंसमपेक्षते ४९३ आत्मायंकर्मतांप्राप्तःकर्तातस्यभवेद्विकः ॥ अकर्मत्वेपिकर्तैवकर्मकिंनुभविष्यति ४९४ एकस्यापिसदानस्यादपायेकर्तृकर्मणोः ॥ करणंयतएतत्स्यात्सापेक्षंकर्तृकर्मणोः ४९५ करोत्यनेनसततंकर्ताकर्मणिकिंचन ॥ यस्मात्ततोत्रकरणमुक्तमेतन्मनीषिभिः ४९६ एकदैवचनैकस्यव्यापारेभेदवर्जिते ॥ कर्तृताकर्मताद्दष्ट्याह्युपपन्नाथवाभवेत् ४९७ अदृष्टमुपपत्त्यापिहीनमंगीकरोषिचेत् ॥ करणादिविभागेनविनाप्यस्यप्रकाशनम् ॥ अंगीकरोषिकस्मान्नमूढमादिप्रवेदिनम् ४९८

यामात्मभिन्नंकिंकर्मभविष्यतिनकिंचिदपितथाचकर्महान्याकरणत्वहानिरितिद्वयोरर्थः ४९३ । ४९४ कर्तृकर्मणोर्मध्येऽन्यतरस्यापिहानेकरणस्यकरणत्वंनस्यात्तस्यकर्तृकर्मसापेक्षत्वादित्याह एकस्यापीति । व्याख्यातम् ४९५ सापेक्षतांस्फुटयितुंकरणलक्षणमाह करोतीति । येनकर्ताकर्मनिष्ठंकिंचित्फलंजनयतितत्करणमित्युक्तमित्यर्थः तदुक्तंहरिणा 'क्रियायाःपरिनिष्पत्तिर्यद्व्यापारादनंतरं । विवक्ष्यतेयदायत्रकरणंतत्तदास्मृतम्' इति । एतेनाकर्मकधातुयोगेतृतीयाहेत्वर्थेबोध्येतिसूचितम् ४९६ युगपदेकत्रव्यापारेएकस्यात्मनःकर्तृत्वंकर्मत्वंचनसंभवतिदृष्टिविरोधादुपपत्तिविरोधाच्चेत्याह एकदैवेति ४९७ किंचप्रमाणन्यायविरुद्धंयुगपदेकस्यकर्मकर्तृत्वमंगीकृत्यश्रुत्यनुभवसिद्धंस्वयंप्रकाशित्वमनभ्युपगच्छतास्वमौढ्यमेवाविष्क्रियतेइत्याह अदृष्टमिति । हेमूढकरणादिविभागेनकरणस्वरूपस्यादिःकारणंनिर्वाहकइतियावत् ईदृशोयःकर्तृकर्मणोर्विभागोभेदस्तेनविनाप्यस्यात्मनःप्रकाशनंभानेकरणंदृष्टंह्युपपत्तिविरुद्धमप्यंगीकरोषिचेत्तदामादिप्रवेदिनंमाप्रमाआदिपदेनाप्रमादिग्रहःतेषांप्रवेदिनंसाक्षिणंस्वप्रकाशंश्रुत्यादिप्रसिद्धंकस्मान्नांगीकरोषिकोत्रतेभारइत्यर्थः तदुक्तंवार्तिककृद्भिः 'प्रमाणमप्रमाणंचप्रमाभासस्तथैवच । कुर्वंत्येवप्रमांयत्रतदसंभावनाकुतः' इति ४९८

कथंतार्हसिद्धांतेश्रुतेःकरणत्वमितिचेदात्मभानप्रतिबंधकावरणापसारणेनगौणमित्याह श्रुतिरपीतिद्वाभ्यां । वस्तुतःश्रुतिरप्यात्मभानेकरणंनभवतिकिंतुतांश्रुत्वाऽस्माकमधिकारिणामात्माकाराबृत्तिर्जायतेतयावृत्त्याचस्वात्मावरोधनंआत्मस्वरूपावरकंतमोऽज्ञानंनश्यतिततःस्वयमेवात्माभातीतिद्वयोरर्थः ४९९ । ५०० फलितमाह एवमित्यादिना । केवललोकदृष्ट्याश्रयणाद्येमंदास्तेषांमतेपिकरणमात्मभानेनसंभवतिकिमुतवैदिकमताश्रयणेइत्यर्थः ५०१ किंतद्वैदिकमतमित्याकांक्षायामाह देहादेरिति । करकःकमंडलुस्तत्प्रभृतिवजडत्वाद्देहादीनामनात्मत्वमित्यविवादंतेषांचभानमाध्यासिकचित्संबंधंविनानसंभवतीत्यतस्तेषांमिथ्यात्वात्सर्वाधिष्ठानभूतआत्माऽद्वयइत्यर्थः ५०२ सचाद्वयःसर्वबुद्धिसाक्षिणोनभिन्नइतिबोधयितुंमधुकांडेविज्ञातारमित्याद्युक्तमितिसूचयंस्तस्याविषयतांभानेकरणानपेक्षतारूपांनिगमयति विज्ञातेति । सआत्मासाक्षिरूपएवतंचकेनकरणेनजानीयादितिसंबंधः ५०३ एवमात्मानंविज्ञायत्वयातन्निष्ठैतवसंपाद्येत्याह ततइति । पत्यादिकंदृश्यजातंविस्मृत्यस्वयंप्रकाशात्मानंदैकरसिकाभवेतिद्वयोरर्थः ५०४ । ५०५ एवमिति । यत्त्वयाऽमृतत्वममृतत्वसाधनंपृष्टंतदात्मविचाररूपमुक्तमित्यर्थः ५०६ अरेइति । सर्वांतराद्द्वितीयात्मज्ञानादन्य

श्रुतिरप्यात्मनोज्ञानेकरणंनैववस्तुतः ॥ अस्माकंकिंतुवचनात्श्रुतेर्वृत्तिःप्रजायते ४९९ वृत्त्यातयातमोनाशंयातिस्वात्मावरोधनम् ॥ आनंदात्मास्वयंज्योतिस्ततोभातिस्वयंहिनः ५०० एवंमंदमतेप्यात्मज्ञानेलोकसमाश्रयात् ॥ करणंनास्तिकेनेदंभवेद्वेदसमाश्रये ५०१ देहादेर्नात्मताद्दृष्टाजडत्वात्करकादिवत् ॥ ततोऽजडःस्वयंज्योतिरानंदात्मैवनिर्द्वयः ५०२ विज्ञातासर्वबुद्धीनांसाक्ष्येवात्मानचापरः ॥ विज्ञातारमरेकेनजानीयात्ततएवहि ॥ मैत्रेयिकरणेनायमानंदात्मानमव्ययम् ५०३ ततस्त्वमपिमैत्रेयिसर्वंप्रियतमंत्विमम् ॥ स्वयंज्योतिःस्वभावेनस्वप्रकाशंसदाद्वयम् ५०४ आनंदात्मानमात्मस्थमात्मनैवावधारय ॥ पतिपुत्रादिकंहित्वादुःखजातमिदंप्रिये ५०५ एवमुक्तंमयातुभ्यंप्रियेस्वात्मानुशासनम् ॥ एतावदेवविज्ञेयममृतत्वेनसंशयः ५०६ अरेमैत्रेयिनैवान्यदमृतत्वंहिविद्यते ॥ मुक्तात्महृदयेसंतमानंदात्मानमद्वयम् ५०७ आत्मनस्त्वस्यविज्ञानान्मरणंतेपुनर्नहि ॥ भविष्यतिवपुस्त्यागात्तस्मान्मैत्रेय्यनंतरम् ५०८ एवंस्वहृदयेसंतंस्वयंज्योतिःस्वरूपिणम् ॥ आनंदात्मानमद्वैतमनंतमविनाशिनम् ५०९ परित्यज्यबहिश्चित्तंमाकृथास्त्वंकदाचन ॥ तथाचमरणंभूयोनभविष्यतितेप्रिये ५१० एवमुक्त्वामुनिवरोयाज्ञवल्क्यःप्रियांनिजाम् ॥ मैत्रेयींजातवैराग्यःप्रवव्राजगृहाश्रमात् ५११ आत्मशक्तिंगुणैर्गूढामात्मनोन्यांविलोकयन् ॥ विचारात्कारणानांयांदृष्टवंतोमुनीश्वराः ५१२ आत्मैवजगतोहेतुर्मायेत्येवदर्शनात् ॥ यस्याविनिश्चयोजातोमुनीनांभावितात्मनाम् ५१३

दमृतत्वसाधनंनास्तीत्यर्थः ५०७ आत्मनस्त्विति । अस्यात्मनोज्ञानप्रभावादेतद्देहत्यागानंतरंपुनर्मरणंतेनभविष्यतीति ५०८ एतदेस्फुटयति एवमिति । उक्तविधयाहृदयस्थात्मानमद्वैतंनिश्चित्यचित्तस्यतत्प्रवणताकरणंविज्ञानंततफलंतुपुनःसंसाराभावइतिद्वयोरर्थः ५०९ । ५१० उक्तात्मज्ञानदार्ढ्यायविद्वत्संन्यासःकार्यइतिदर्शयन्मुनिःसंन्यस्तवानित्याह एवमुक्त्वेति स्पष्टम् ५११ उत्तराध्यायजिज्ञासामुत्थापयति आत्मशक्तिमितिद्वाभ्यां । किंकुर्वन्मुनिःप्रवव्राज आत्मनःशक्तिंमायांप्रकृत्यादिपदवाच्यांसत्वादिगुणैर्गूढामात्मनःसच्चिदानंदलक्षणादन्यांविलक्षणांमिथ्यात्वेनविलोकयन्सन् यांशक्तिंकालादीनांजगत्कारणानांविचारेणमुनयःसाक्षात्कृतवंतइत्यर्थः ५१२ तांचशक्तिंनस्वतंत्रत्वेननिश्चितवंतःकिंत्वात्मनोजगत्कारणत्वादिनिर्वाहकत्वेनतच्छेपतयेत्याह आत्मैवेति । आत्मैवजगतःप्रधानंकारणंमायातुतत्रोपकरणमित्ययमर्थोयदादृष्टस्तदैवयस्याःशक्तेर्विनिश्चयःशुद्धात्मनांमुनीनांजातइत्यर्थः ५१३

शीतोष्णेति । पुनःकिंकृत्वाप्रवव्राज ब्रह्मादिस्तंबपर्यंतेजगतिसमोभूत्वा । कीदृशेब्रह्मादिस्तंबपर्यंतेजगति शीतोष्णादिसाधुपापांतरूपेद्वंद्वयात्मनिउभयरूपेअनुकूलप्रतिकूलात्मकइतियावत् स्व देहेचेतिचकारेणपरदेहग्रहः ५१४ प्रवृत्तमिति । समुनिरिंद्रियाणांप्रवृत्तिनिवृत्त्योरुदासीनोऽभवत् किंकृत्वागुणाबाह्यांतरकरणात्मकाएवगुणेषुविषयेषुप्रवृत्तिनिवृत्तिस्वभावाआत्मातुसदा निर्विकारइतिभगवद्गीतोक्तंविचारंकृत्वा ५१५ देहेंद्रियैरिति । एवंमनोवाग्देहैर्भूतानामभयप्रदःसन्विचचार कीदृशः रविचंद्रविदेशितः रविचंद्राभ्यांविशेषेणदेशितोभागवतैकादशोक्तविधया दत्तात्रेयवदितरेषांविकारित्वेपिनिर्विकारत्वलक्षणांशिक्षांप्रापितः । रविचंद्रवदीशतइतिपाठेईशतइतिभावप्रधानोनिर्देशः ईशत्वेननिर्विकारत्वलक्षणैश्वर्येणेत्यर्थः ५१६ मैत्रेयीवृत्तांतमाह याज्ञव ल्क्यइत्यादिना । संन्यासलिंगंदंडादिकंतद्रहिता । आत्मस्वरूपिणीआत्मस्वरूपानुसंधानपरा ५१७ 'मुखजानामयंधर्मोयद्विष्णोर्लिंगधारणं । बाहुजातोरुजातानांनायंधर्मोविधीयते' इतिवाक्यानु सारेणस्त्रियोदंडग्रहणानधिकारंकैमुत्येनाह द्विजोत्तमस्येति । अन्येषांक्षत्रियाणांवैश्यानांच ५१८ ब्राह्मणादितरेतुदंडधारणादिकमकृत्वाऽहिंसासत्यादिकंयतिधर्मंकुर्वीरन् तेषांसाधारणधर्म त्वेनापिपुराणादिषुविधानादित्याशयेनाह ब्रह्मचर्यादिकमिति । चतुर्थाश्रमवासिनांयोब्रह्मचर्यादिरूपोधर्मस्तदनुष्ठानरूपमुत्तमाश्रमधारणंयोषित्क्षत्रियाद्याश्चकुर्वंत्वितिसंबंधः ब्रह्मचर्यमुपस्थसं

शीतोष्णसुखदुःखेषुतथामानापमानयोः ॥ मित्रेशत्रौस्वदेहेचसाधौपापेद्वयात्मनि ॥ ब्रह्मादिस्तंबपर्यंतेसमोभूत्वामहामुनिः ५१४ प्रवृत्तमिंद्रियगणंनामुंद्वेष्टि कदाचन ॥ स्वव्यापारेनिवृत्तंचतस्मात्कांक्षतिनैवसः ॥ गुणागुणेषुवर्ततइतिमत्वामुनीश्वरः ५१५ देहेंद्रियैर्मनोयुक्तैर्भूतानामभयप्रदः ॥ चचारवसुधांकृत्स्नां रविचंद्रविदेशितः ५१६ याज्ञवल्क्योयथातद्वन्मैत्रेय्यपिचचारह ॥ संन्यासलिंगरहिताध्रुवमात्मस्वरूपिणी ५१७ द्विजोत्तमस्यलिंगंस्याच्चतुर्थाश्रमवासिनः ॥ वर्णिनामपिनान्येषांकुतएतत्स्त्रियोभवेत् ५१८ ब्रह्मचर्यादिकंधर्मंचतुर्थाश्रमवासिनाम् ॥ योषिदाद्याश्चकुर्वंतुआश्रमस्यविधारणम् ५१९ विटादिवेषयुक्तोपिचरे द्धर्ममनिंदितम् ॥ आश्रमेऽनधिकारोयउक्तमाश्रमिणःसदा ५२० कामंत्रैवर्णिकस्त्रीणांतथाक्षत्रियवैश्ययोः ॥ विज्ञानंवेदवाक्येनकारयेद्ब्राह्मणःस्वयम् ॥ ५२१ चतुर्थमाश्रमंनैवकारयेत्तुकदाचन ॥ लिंगधारणरूपंतमलिंगंधर्मतःसमम् ५२२ कारयेत्केपिकुर्युर्वानधर्मंकरणेनहि ॥ विरोधोविद्यतेयद्वद्यागेशूद्रस्य कीर्तितः ५२३

यमः ५१९ एतदेवस्फुटयति विटादीति । विटःखिङ्गः 'विटोद्रौलवणेखिङ्गे' इतिविश्वः । यआश्रमेऽनधिकारोऽधिकारहीनःसआश्रमिणआश्रमाधिकारिणःप्रतिउक्तंविहितमहिंसादिकं धर्मंकुर्वीत कीदृशःसन् शैलूषादीनांवेषेणप्रच्छन्नश्चरन्नपीत्यर्थः ५२० उक्ताधिकारिणांविद्यालाभायगुरुशिष्यव्यवस्थामाह काममित्यादिना । ब्राह्मणोगुरुर्द्विजस्त्रीणांक्षत्रवैश्ययोश्चात्मज्ञा नंस्वयमेवोच्चारितेनवेदवाक्येनकामंयथेच्छंकारयेज्जनयेत् एतेषांवेदवाक्यश्रवणेशूद्रवत्पर्युदासाद्यभावान्मैत्रेय्यांब्राह्मणाद्यनुसारिशिष्टाचाराच्चेतिभावः परंत्वध्ययनंस्त्रीणांनास्तीतिस्वयमेववक्ष्यतीति ५२१ चतुर्थमिति । सब्राह्मणउक्ताधिकारिणांलिंगधारणरूपंचतुर्थमाश्रमंतुनकारयेत् यदितंचतुर्थाश्रमंकारयेत्तदाअलिंगंदंडादिलिंगरहितंब्रह्मचर्यादिधर्मैःसमवेतंकारयेत् नवाकेपिविप्रभिन्नास्तं लिंगधारणरूपंचतुर्थाश्रमंकुर्युः यदिकुर्युस्तदाऽलिंगंधर्मतःसमंकुर्युःहियतोधर्ममात्रानुष्ठानेनकोपिश्रुत्यादिविरोधोविद्यते विशेषानुष्ठानेतुसविद्यते उभयत्रोदाहरणंशूद्रः यथाशूद्रस्यश्रौतस्मार्तयागेषु शूद्रोयज्ञेऽनवक्लृप्तइत्यादिवाक्यैःपर्युदासस्तत्तुल्यदानादिसाधारणधर्मेष्वनुमतिर्नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेदित्यादिवाक्यैरितिद्वयोरर्थः ५२२ । ५२३

क्षत्रियाश्चेति । विद्यावंतइतिगुमान्स्त्रियेत्येकशेषः क्षत्रियादयोविद्यावंतोप्यात्मविद्यायामन्येषांगुरुत्वंनभजेरन्ब्राह्मणंप्रतितुसुतरामित्युत्सर्गइत्यर्थः ५२४ उक्तोत्सर्गस्यापवादस्थलंप्रपंचयन्क्ष त्रियादिभिरावश्यकत्वेस्वसजातीयोऽपकृष्टोवाशिष्यःकार्यइत्याह क्षत्रियइत्यादिना। क्षत्रियःक्षत्रियवैश्ययोस्तयोःक्षत्रियवैश्ययोःसजातीयानांस्त्रीणांचगुरुर्भवेद्यदिब्राह्मणस्तज्जातीयास्त्रीवागुरुत्वयो ग्यानलभ्येतेत्यर्थः ५२५ वैश्यस्तुवैश्यंसजातीयांस्त्रियंवाकामंशिष्यतांनयेत् उत्तमवर्णगाब्राह्मणक्षत्रियजातीयाःस्त्रियस्तुशिष्यतांननयेदित्याह वैश्यमिति ५२६ स्त्रियस्तुद्विजानांगुरुत्वंनमति पद्येरन् अध्ययनहीनत्वेनतेभ्योऽपकृष्टत्वादित्याह स्त्रियइति ५२७ संप्रदायस्येति । यदातुसंप्रदायप्रवर्तकःकश्चित्पुरुषोनलभ्येततदास्त्रियोपिसमानजातीयानामपकृष्टजातीयानांचविद्योपदेशि काभवेयुरित्यर्थः ५२८ त्रैवर्णिकाइति । त्रैवर्णिकाअप्युत्तमगुरोरलाभेसतिसंप्रदायमात्रंकृतश्चिद्विज्ञायवेदवाक्येभ्यःसम्यग्ज्ञानंस्वयमेवसंपादयंत्वित्यर्थः ५२९ ब्राह्मणजातीयायाःस्त्रियोगुरु स्तुविप्रएवतस्यसर्वगुरुत्वादित्याह ब्राह्मणानामिति ५३० अत्रापीति । अत्रविप्राणांमध्येपीदृशोविप्रःप्रशस्तोगुरुरुक्तोयःकुलीनोबाल्येमात्रासंबुद्धःशिक्षितस्ततःपित्राततआचार्येणेत्यर्थः

क्षत्रियाश्चतथावैश्यास्तद्वत्त्रैवर्णिकाःस्त्रियः ॥ विद्यावंतोपिनान्येभ्यःकुर्युरात्मोपदेशनम् ॥ उपदेशेपिविप्रस्यकेपिनैवाधिकारिणः ५२४ क्षत्रियःक्षत्रियंवापिवै श्यंवापिद्वयोःस्त्रियः ॥ विप्राद्यभावतःकामंशिष्यंकुर्वीतधर्मवित् ५२५ वैश्यंवैश्यस्तथावैश्यस्त्रियोवाधर्मसंयुताः॥ शिष्यत्वेनप्रगृह्णीयात्कामंनोत्तमवर्णगाः ५२६ स्त्रियस्त्रैवर्णिकानांस्युर्गुरवोनैवकर्हिचित् ॥ अनधीतायतस्त्वेतावेदवाक्याविचक्षणाः ५२७ संप्रदायस्यविच्छेदेकामंत्रैवर्णिकस्त्रियः ॥ उपदेशान्प्रकुर्वंतुसमाना नधमान्प्रति ५२८ त्रैवर्णिकास्तुविज्ञायसंप्रदायंस्वयंधिया ॥ वेदेभ्योप्यवगच्छंतुवक्ष्मावेस्थितेसति ५२९ ब्राह्मणानांस्त्रियोविप्रोगुरुरुक्तोनचापरः ॥ अन्य स्यापिभवेदेषगुरुःसर्वशरीरिणः ५३० अत्रापिकुलविद्यादिसंपन्नःपितृतस्तथा ॥ मातृतश्चापिसंबुद्धःप्रशस्तोगुरुरीरितः ५३१ पतिःसर्वत्रनारीणांप्रथमःप्रोच्य तेगुरुः ॥ तदभावाद्भवेदन्यउत्तमोपिसमोपिवा ५३२ वर्णोनैवनिकृष्टःस्यादधमःकस्यचिद्गुरुः ॥ कस्यांचिदपिविद्यायामापद्यपिचकर्हिचित् ५३३ शूद्रादयस्त दीयायायोषितोयदिधमंतः ॥ वर्ततेतत्रविज्ञेयंपुराणादेश्चवाक्यतः ॥ उपदेशनमत्रस्याद्वेदवाक्यान्नकर्हिचित् ५३४ यदाधमोगुरुर्ब्रूयात्कदाचित्संकटेसति ॥ वर्णिनोविक्रयादेवविद्यामस्मात्समाप्नुयात् ५३५

तथाचश्रुतिः 'मातृमान्पितृमानाचार्यवान्'इति ५३१ तत्रापिस्त्रियाःपतिरेवमुख्योगुरुस्तस्यविद्यागुरुत्वासंभवेत्वन्योप्युत्तमजातीयःसमजातीयोवागुरुःकार्यइत्याह पतिरिति ५३२ वर्णोनै वेति । निकृष्टोऽधमोविप्रापेक्षयाअधमानांक्षत्रियादीनांमध्येनिकृष्टोवर्णःशूद्रस्तुकदाचिदापद्यपिकस्यामपिविद्यायांगुरुर्नस्यादित्यर्थः एतेनापदिक्षत्रियादेर्गुरुत्वमनुमतमिति ५३३ शूद्रादयइ ति । आदिपदेनसंकरजातयस्तदीयाःशूद्रजातीयाः एतेषामात्मजिज्ञासायांसत्यांपुराणकाव्यादिवाक्यश्रवणेनज्ञानंसंपाद्य अत्रशूद्रादिषुवेदवाक्येनोपदेशनंतुकदाचिन्नकर्तव्यमित्यर्थः तथाचश्रु तिः 'पद्युवाएतत्श्मशानंयच्छूद्रस्तस्माच्छूद्रसमीपेनाध्येतव्यम्' इति पद्युपादयुक्तम् ५३४ यदाधमइति । यदाऽधमोऽधमजातीयोगुरुत्वेनब्रूयाद्विद्योपदेष्टास्याचदोत्तमजातीयोविद्याकामस्त स्मादधमजातीयगुरोःसकाशाद्विद्यांविक्रयादेवधनादिविनिमयेनैवप्राप्नुयात्संकटेउत्तमजातीयगुरुलाभासंभवरूपापदीत्यर्थः ५३५

८८

निःस्पृहइति । यदिंतुसोऽधमजातीयगुरुस्तत्रधनेनिःस्पृहःस्यात्तदाकांचिद्विद्यांदत्वाततोविद्यामाप्नुयात्सचगुरुस्तस्मात् स्वयबलीपेपंचश्री सप्रुत्तमजातीयंशिष्यंप्राप्याधिकंपादसंवाहनादिकंनकार येदित्यर्थः तदुक्तंमनुना 'अब्राह्मणादध्ययनमापत्कालेविधीयते । अनुव्रज्याचशुश्रूषायावदध्ययनंगुरोः' इति अत्रमनुवाक्येचकारःपादसंवाहनादिरूपसेवाव्यावृत्त्यर्थइतितद्व्याख्यातारः । श्रुतिश्च ता नूहानुपनीयेति तानुद्दालकादीननुपनीयपादग्रहणमकारयित्वैवराजाऽश्वपतिस्तेभ्योविद्यांदत्तवानितितदर्थः ५३६ अश्वपत्यादिकानिति । अश्वपत्यादिकानुत्तमजातीयोद्दालकादिमुनीनांगुरूनदृष्ट्वाश्रुतिप्र सिद्धान्विज्ञायमन्वादिभिरिदमपकृष्टगुरोःसकाशाद्विद्याग्रहणमुक्तंपरंतुतत्संभवेउत्तमगुरुलाभयोग्यत्वेसतिनशस्तंनकर्तव्यमित्यर्थः ५३७ एतांसकलमर्यादांजानानामैत्रेयीदंडादिरहितासतीप्रच्छन्न

निःस्पृहोयदितत्रापितदान्यविद्ययाप्नुयात् ॥ विद्यागुरुश्चनोतस्मादधिकंकारयेत्क्वचित् ५३६ अश्वपत्यादिकान्दृष्ट्वागुरूनधमवर्णिनः ॥ प्राचीनशालप्रभृतीन् शिष्यानुत्तमवर्णिनः ॥ इदमुक्तंनतच्छस्तंकदाचित्सतिसंभवे ५३७ मैत्रेयीसकलंत्वेतद्वेदयस्मात्ततोत्रसा ॥ पत्युःसंप्राप्तविज्ञानाब्रह्मचर्यादिसंयुता ॥ चतुर्थाश्र मलिंगेनशून्याभूमिंचचारसा ५३८ याज्ञवल्क्यस्यमैत्रेय्यावैषम्यंलिङ्गधारणम् ॥ अभूत्नैवापरंकिंचिच्चतुर्थाश्रमधर्मतः ५३९ इत्युक्तंयाज्ञवल्क्येनब्रह्मज्ञानंमये रितम् ॥ मैत्रेय्याःकिंपुनर्भूयःश्रोतुमिच्छसिसुव्रत ५४० ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणश्रीशंकरानंदभगवताविरचितउप निषद्रत्नआत्मपुराणेबृहदारण्यकयाज्ञवल्क्यमैत्रेयीसंवादोनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥ ॥

वेषेणविचचारेत्याह मैत्रेयीति ५३८ याज्ञवल्क्यस्येति । तदायाज्ञवल्क्यस्यदंडादिधारणमात्ररूपोविशेषोमैत्रेयीसकाशादभूत्समदृष्टित्वादिधर्मास्तुसमाएवाभवन्नित्यर्थः ५३९ उपसंहरति इत्युक्तमिति ५४० ॥ हिताथींयजमानस्ययस्यसप्तापिमूर्तयः ॥ तत्रमानमयंपूर्णःसप्तम्यांसप्तमोऽजनि ॥ १ ॥ यस्याष्टमूर्तेर्यजमानाख्यमूर्त्युपकारार्थंसप्तशिष्टाःपंचभूतरविचंद्रात्मिकामूर्तयः सदोद्यतास्तत्रास्यप्रभोःस्वरूपेमानभूतोयंसप्तमोध्यायःसप्तम्यांतिथौपूर्णोजातइत्यर्थः ॥ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानु गृहीतस्यकृतावात्मपुराणटीकायां सत्प्रसवाख्यायां सप्तमोध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ ॥ सर्वज्ञःसर्वशक्तिश्चश्वेताश्वतरदर्शितः ॥ देवोऽष्टमूर्त्तिःसर्वात्मासम्यगद्यमईर्यते ॥ १ ॥ शिष्यप्रश्नंपूर्वोक्तानुवादपूर्वकमभिनयति याज्ञवल्क्येरितमितिद्वादशभिः । स्पष्टंद्वयम् परन्तुउक्तमिति १ । २ आदित्येनेति । यत्रयदुपबृंहणार्थं यत्रआदित्यप्रोक्तज्ञाने ३ कांडत्रयस्येति । भेदाभेदाभ्यांभिन्नः ४ दध्यङ्ङाथर्वणस्येति । अश्विनोःशिष्यता अस्यदध्यङ्ङाथर्वणस्य ५ पंचमाध्यायार्थमनुवदति संवादइति ६ षष्ठसप्तमयोरर्थमाह भूपतेरिति । जनकस्ययाज्ञवल्क्यशिष्यताषष्ठउक्ता मैत्रेय्यास्तच्छिष्यतातुसप्तमउक्ता तत्रसप्तमांतेयदुक्तं याज्ञवल्क्यःसंन्यस्याविद्याख्यामात्मशक्तिंपरमार्थात्मस्वरूपात्पृथग्दृष्टवान्यस्याःशक्तेःस्वरूपंमुनिभिःकारणस्वरूपेणदृष्टमिति । अत्रपृच्छ्यते तेषांमुनीनांविचारःकीदृशोजातः तेषांसभाच कीदृशीजाता तत्रकेनवादिनाबुद्धिःस्वस्वाभिप्रायरूपाकीदृशीकथंचप्रकटितइतिचतुर्णामर्थः ७ । ८ । ९ । १० कारणानामिति । तेनविचारेणमुनिभिःकिंकारणंनिश्चितंब्रह्मवाअन्यत्किं

श्रीगणेशायनमः ॥ ॥ याज्ञवल्क्येरितंब्रह्मज्ञानंश्रुत्वातिविस्मितः ॥ शिष्यःपुनरिमंप्रश्नंकृतवान्स्वगुरुंप्रति १ भगवन्भवताब्रह्मज्ञानमाख्यानसंयुतम् ॥ ऐतरेयोदितंतद्वत्कौषीतकिसमीरितम् २ आदित्येनतथाप्रोक्तंयत्रचित्रकथाइमाः ॥ इंद्रप्रतर्दनौयत्रगुरुशिष्यौमहाबलौ ॥ अजातशत्रुबालाकीसर्वज्ञसदृशौत था ३ कांडत्रयस्यवंशोपिभेदाभेदविभेदवान् ॥ ऋषिणासहसंवादोह्यश्विनोर्देवयोस्तथा ॥ दध्यङ्ङाथर्वणेनापिशक्रस्यामिततेजसः ४ दध्यङ्ङाथर्वणस्यैव गुरुताशिष्यतापिच ॥ अश्विनोरस्यसंक्लेशोमरणांतस्तथामुनेः ५ संवादोयाज्ञवल्क्यस्यह्याश्वलाद्यैर्द्विजोत्तमैः ॥ नानादेश्यैश्चमरणंशाकल्यस्याततेजसः ६ भूपतेर्जनकस्यापिशिष्यतागुरुतातथा ॥ धीमतोयाज्ञवल्क्यस्यमैत्रेय्याश्चापिशिष्यता ७ गुरुतायाज्ञल्क्यस्यकथितासोपिवैद्विजः ॥ संन्यस्यसर्वकर्माणिह्यविद्यांस्वात्मनिस्थिताम् ८ दृष्टवान्पृथगेवायंयथापूर्वंमुनीश्वराः ॥ कारणानांविचारेणदृष्टवंतोमहाधियः ९ अत्रतेषांमुनीशानांविचारःकीदृशोगुरो ॥ जातःसभावाबुद्धिर्वाकथंकेनैवकीदृशी १० कारणानांविचारेणकारणंकिंमुनीश्वरैः ॥ निश्चितंब्रह्मवाऽन्यद्वानिश्चयोपिचकीदृशः ११ तेषांमहात्मनामासीद्गुरोत्वंतद्वदाधुन ॥ कृपयापरयामह्यमवक्तव्यंनतेस्तिहि १२ एवमुक्तोतिसंहृष्टोगुरुःशिष्यमभाषत ॥ शृणुवत्सकथामेतांश्वेताश्वतरकीर्तिताम् ॥ यतिभ्योतिविरक्तेभ्योह्यर्थिभ्योब्रह्मवेदने १३ श्वेताश्वतरमासीनंतपसादग्धकिल्बिषम् ॥ यतयःकुत्रचिद्दृष्ट्वापप्रच्छुस्तंमहाधियम् १४ श्वेताश्वतरतेस्वस्तिवेदशाखाप्रवर्तिने ॥ ब्रह्मज्ञानंस्वशाखोत्थंभिक्षांयच्छाद्यनोमुने १५ भवतायादृशंब्रह्मज्ञानंप्राप्तंस्वयंभुवः ॥ तद्वयंश्रोतुमिच्छामएतदर्थमिहागताः १६ अस्माकंकारणेवादोयतीनांसुमहानभूत् ॥ भिन्नकारणदृष्टीनांसंप्रदायविभेदिनाम् १७

चिद्वा एवंतेषांमहात्मनांसर्वेषांसिद्धांतनिश्चयश्चकिमाकारकः एतत्सर्वंवद यतोमत्सकाशाद्गोप्यंतवनास्तीतिद्वयोरर्थः ११ । १२ एवंपृष्टोगुरुःश्वेताश्वतरेणमुनिनापात्रब्रह्मविद्यातदार्थिभ्यउक्तातां वर्णयितुमुपचक्रमेइत्याह एवमिति १३ तत्रश्वेताश्वतरमुनिंप्रतिअर्थिनांयतीनांप्रश्नादिकमुपोद्घाततयाकथयति श्वेताश्वतरमितिनवभिः । तंप्रसिद्धम् १४ श्वेताश्वतरतेइति । ब्रह्मज्ञानरूपां भिक्षांदेहीति १५ भवतेति । स्वयंभुवस्तपसानुस्मृताद्वेदाद्धिरण्यगर्भाद्वाभवतायादृशंज्ञानंप्राप्तंतज्ज्ञानमेतदर्थंश्रोतुमिहागताःस्मेतिसंबंधः १६ एतदर्थंकिमर्थमित्याकांक्षायांविमतिपत्तिजन्य संशयवारणार्थमितिदर्शयंति अस्माकमित्यादिना । संप्रदायभेदेनभिन्नंभिन्नंकारणंमन्यमानानामस्माकंजगतःकारणेविवादोभूदित्यर्थः १७

चिरकालमिति । संकेतंकर्तव्यनिश्चयं । स्पष्टमन्यत् १८ संकेतमभिनयति श्वेताश्वतरनामेतिद्वाभ्यां । अयंमुनिर्यत्कारणंब्रूयात्तदस्माभिःसर्वैःप्रणम्यांगीकार्यमित्यर्थः १९ तत्रहेतुतयामुनेरासतामाहुः पक्षेति २० इत्थमिति स्पष्टम् २१ गुरुःशिष्यंप्रत्याह एवमिति । एवंपृष्टःश्वेताश्वतरोमुनिस्तेभ्योयातिभ्योयदुक्तवांस्तदहंतुभ्यंश्रावयामीत्यर्थः २२ तत्रब्रह्मवादिनोवदंतीतिब्राह्मणभागस्यार्थंप्रपंचयति ब्राह्मणाइतिनवभिः । श्वेताश्वतरउवाच हेपतयोयथेदानींभवंतोमिलिताःसमवेतास्तथापूर्वमपिनानाविधमुनीनांसमाजोऽभवदितिद्वयोरर्थः २३ । २४ तेष्विति । तेषांसमुदितानांमध्येकेचिद्ब्रह्मविदएतान्अविज्ञान्अनुग्रहीतुमिच्छंतएवमूचुरिति २५ एवंकथमित्याकांक्षायांतद्वाक्यमभिनयति भवंतइतित्रिभिः । भोब्राह्मणाभवतांलोकोपकारिणामत्रदेशेसमाजोलोकोपकारायास्तु सचलोकोपकारइदानींवाचोग्लानिहेतुभूतालौकिकीःकथाःविसृज्यजगत्कारणविचारेणसिद्ध्येदितित्रयाणामर्थः २६ । २७ । २८ एवंब्रह्मविद्भिरुक्ते

चिरकालंवयंसर्वेसंवाद्यचपरस्परम् ॥ इतरेतरसंकेतंकृत्वात्वांहिसमागताः १८ श्वेताश्वतरनामायंवेदशाखाप्रवर्तकः ॥ कारणंयदयंब्रूयात्तदस्माभिर्यतीश्वराः ॥ अभिवादेननिखिलैरंगीकार्यमसंशयम् १९ पक्षपातेनरहितःसर्वज्ञोयंमुनीश्वरः ॥ शत्रौपुत्रेस्वदेहेचविषमोनकदाचन २० इत्थंविधायसंकेतंवयमत्रसमागताः ॥ छिंधिनःसंशयान्ब्रह्मन्स्वस्तितेमुनिपुंगव २१ एवमुक्तोयतीन्प्राहयथान्यायमुपागतान् ॥ कारणंयदहंतत्तेकथयामिमहामते २२ ब्राह्मणाबहवःपूर्वंयतयोवेदवादिनः ॥ षडंगकुशलास्तद्वदूहापोहविशारदाः २३ शिष्यानानागुरूणांचकेचिद्ब्रह्मविदामपि ॥ यथाभवंतोयतयएकत्रमिलिताःक्वचित् २४ तेषुब्रह्मविदःकेचिदेताननुजिघृक्षवः ॥ इदंवचनमाहुस्तेनिरीक्ष्यैवपरस्परम् २५ भवंतोब्राह्मणाःसर्वेवेदवेदांगपारगाः ॥ अत्रागतामहाभागालोकानुग्रहकारिणः २६ समाजोभवतांतस्मादेपलोकोपकारकः ॥ भवताद्ब्राह्मणाहेतुर्जगतोत्रविचार्यताम् २७ परित्यज्यकथाएतालौकिकीर्ग्लानिहेतुकाः ॥ वचसोमुनिशार्दूलाभवद्भ्योरोचतेयदि २८ एवमुक्तेऽथतेसर्वेसंहृष्टाजातकौतुकाः ॥ ब्राह्मणामिलितास्तत्रतर्ककर्कशबुद्धयः ॥ कारणंजगतःश्रोतुमूचुस्तान्ब्रह्मवादिनः २९ भवंतएवमुनयःकीर्तयंतुमहाधियः ॥ कारणंजगतःसर्वेश्रोष्यामःसंगतावयम् ३० इत्युक्तामुनिवर्यास्तेसर्वदास्वात्मवेदिनः ॥ तर्ककर्कशबुद्धींस्तान्ज्ञात्वामीमांसयोचिरे ३१ अकारणंजगत्सर्वंविप्रानैतत्प्रजायते ॥ पटोयथानजायेतविनातंत्वादिकारणम् ३२ अहेतुताभवेद्दृष्टेयदितेनविनाभवेत् ॥ पटस्तंतून्विनाविप्रानभवत्येवसर्वथा ३३ अपिकार्याणिहेतूनामभावेपिजनियदि ॥ व्रजेयुश्चरितार्थाःस्युःसर्वएवात्रजंतवः ३४

सतिइतरेतर्कप्रधानाविप्राएवमाहुरित्याह एवमुक्तेइति २९ इतरवाक्यमभिनयति भवंतएवेति स्पष्टम् ३० इत्युक्ताइति । एवमुक्तास्तेब्रह्मविदइतरद्विजांस्तार्किकान्ज्ञात्वामीमांसयामीमांसारीत्याविषयसंशयपूर्वपक्षादिरूपाधिकरणोपन्यासेनेतियावत् उक्तवंतइत्यर्थः ' विषयोविशयश्चैवपूर्वपक्षस्तथोत्तरम् । प्रयोजनंचपंचांगंशास्त्रेधिकरणंस्मृतम् ' इति ३१ तत्रविषयशोधनपरत्वेनकिंकारणमित्यादिमंत्रंयोजयन्किंकारणमित्यंशस्यार्थंप्रपंचयति अकारणमित्यादिभिरष्टपाष्टिश्लोकैः । हेविप्राः एतज्जगदकारणकंजायतेइतिनवाच्यं । यथापटस्तंत्वादिकारणंविनाजायतेइतिनवक्तुंशक्यमित्यर्थः ३२ दृष्टांतमेवस्फुटयति अहेतुतेति । यदिदृष्टेप्रत्यक्षसिद्धेपटेअहेतुताभवेत्तदापटस्तंतून्विनापिभवेत्सचतथासर्वथानभवत्येवेतिसंबंधः ३३ उक्तमर्थमुदाहरणांतरंविशदयति अपिकार्याणीतिचतुर्भिः । यदिकार्याणिकारणैर्विनापिस्युर्जायेरंस्तदासर्वेजंतवःसाधनार्जनमंतरेणापिकृतार्थाःस्युरित्यर्थः ३४

तथाचनार्यादिभिर्नरसमीपगमनादिकंनक्रियेतेत्याह नारीति ३५ स्वस्वाम्यादिश्चेति । धनाद्यनपेक्षत्वेचसेव्यसेवकभावादिसंबंधेनसंबद्धोपिकश्चननस्यात् तथान्नादीच्छयापिनकश्चिद्गमेत् अन्नादिभिस्तृप्तिश्चनस्यादित्यर्थः ३६ एवमिति । तथावस्त्राद्यर्थमपिनकश्चिद्गमेत् एवमन्योपिव्यवहारोनस्यादित्यर्थः । फलितमाह । ततइति ३७ केचिद्बाह्याःकारणाभावंबीजाद्य भावरूपमंकुरादिकार्याणांकारणमाहुस्तन्मतासंभवेप्युक्तहेतुजातंयोजयति कारणाभावइति । एतेनव्यवहारलोपांतदोषप्रसंगेनकारणाभावःकारणमितिपक्षोपिनोपपद्यते अत्रपक्षेइदंवक्ष्यमाणं दूषणजातमपिव्याख्यातंविस्तरेणोक्तंसद्बोध्यमित्यर्थः ३८ इदंपदोक्तंदूषणजातमेवप्रपंचयति अपिचेदित्यादिना । कारणाभावःकारणमित्यत्रपक्षेकोसौकारणस्याभावःकारणं किंकारण स्यात्यंताभावःकिंवाप्रागभावःकिंवाध्वंसःकिंवान्योन्याभावः तत्रनाद्यः त्वदुक्तेर्व्याघातदोषेणव्यर्थत्वापत्तेरित्यर्थः ३९ व्याघातमभिनयतिअकारणमिति । इदंविश्वमकारणकमितिपक्षस्त्व यांगीकृतएवतदुपपादनायैवहित्वयाकारणाभावःकारणमितिपक्षउपपाद्यते तथाचतदत्यंताभावस्यकारणत्वांगीकारेसतियथासप्रथमांगीकृतपक्षोपिनस्यात्हीयेततथात्वयोक्तंस्यात् तथाचप्र तिज्ञाविरोधरूपोव्याघातःस्फुटइत्यर्थः एतद्दूषणंकारणप्रागभावस्यकारणत्वांगीकारेपिबोध्यमित्यर्थः ४० प्रागभावपक्षेदोषांतराणिवक्तुंविकल्पयति प्रागभावादिति । यदाप्रागभावात्कार्या

नारीननरमागच्छेन्नरोनारींचकामुकः ॥ प्रजाद्यर्थंतथान्योपिनिर्धनोधनिनंनच ३५ स्वस्वाम्यादिश्चसंबद्धोनैवकश्चिद्भविष्यति ॥ क्षुत्पिपासातुरस्तद्वदन्नपाने च्छयानहि ॥ इतस्ततोजनोगच्छेत्तृप्तिरन्नादिनानच ३६ एवंवासःप्रभृत्यर्थंनगच्छेत्कोपिकुत्रचित् ॥ व्यवहारस्तथासर्वःपरिलोपंगमिष्यति ॥ ततःसकारणंसर्वं जायमानंमुनीश्वराः ३७ कारणाभावएतेनकारणंनोपपद्यते ॥ व्याख्यातमिदमप्यत्रज्ञातव्यंमुनिसत्तमाः ३८ अपिचेत्कारणाभावःकारणंस्यात्तथात्रकः ॥ अ त्यंताभावएवैषइतिचेद्व्यर्थमेवतत् ३९ अकारणमिदंविश्वंपक्षएषव्यवस्थितः ॥ तथाचसतिसोप्यत्रयथानस्यात्तथेरितम् ॥ प्रागभावोयदासस्यात्तदाप्येतत्सम्भ वेत् ४० प्रागभावाद्यदाजन्मकार्याणांवादिनोभवेत् ॥ प्रागभावस्तदानष्टःस्थितोवेतिविचार्यताम् ४१ यदानष्टस्तदाकार्यंजनेःपूर्वमनंतरम् ॥ अथवायदिपूर्वः स्यात्तदानैषोत्रकारणम् ४२ अनंतरंयदानाशोभवेत्तस्यतदाहिसः ॥ किमेकोप्यथवानेकोयद्येकस्तर्हिकिंहिसः ४३ नष्टोधुनाथवानैवयदिनष्टःकथंभवेत् ॥ कार्यमेतदि दानींयद्दृश्यतेसर्वजंतुभिः ४४ अधुनायद्यनष्टोयंभावीनाशःकदास्यसः ॥ यस्मिन्कालेत्वयंनाशंयास्यत्येतत्तदादिकिम् ॥ भविष्यतिजगत्कार्यमथवानभविष्यति ४५

णांजन्मभवतीत्याकारकंवादिनोमतंतदाइतिविचार्यतांविकल्प्यतां इतिकिं तदाकार्योत्पत्तिकालेप्रागभावोनष्टःस्थितोवेति ४१ यदेति । आद्येपिइदंविचार्यंकिंप्रागभावःकार्योत्पत्तेःपूर्वंनष्टोथ वानंतरंनष्टइतियदितुपूर्वंनष्टस्तदासकथंकारणंस्यात् नहिघटोत्पत्तेःपूर्वंमृतःकुलालोघटकारणमित्युच्यतइत्यर्थः ४२ कार्योत्पत्तेरनंतरंप्रागभावोनश्यतीतिपक्षेपिविकल्पयति अनंतरमिति । यदातस्यप्रागभावस्यनाशःकार्योत्पत्तेरनंतरंभवतितदाप्येतद्वक्तव्यं एतत्किं सप्रागभावःकिमेकव्यक्तिकोऽनेकव्यक्तिकोवा यदिसकलकार्यहेतुःप्रागभावएकव्यक्तिकस्तर्हिइदंवक्तव्यंकिमधुनानष्टो नवेति आद्येइदानींजायमानंकार्यंकथंस्यातनहिकारणेनष्टेसतिकार्यंजायतइतिद्वयोरर्थः ४३ । ४४ अधुनासप्रागभावोननष्टइतिपक्षंदूषयति अधुनेतिद्वाभ्यां । प्रागभावोहिकार्येनाश्यइति प्रसिद्धं यदित्वधुनाइदानींतनकार्यपर्यंतकार्येषुजातेष्वप्ययंप्रागभावोननष्टस्तदास्यप्रागभावस्यसनाशःकदाभावीभविष्यतीति अस्मिंस्तेपक्षेइदमपरंपृच्छ्यते यदायंप्रागभावोनंक्ष्यतितदाप्रभृतिइदं जगद्रूपंकार्यंभविष्यतिनवेति ४५

भविष्यतीतिपक्षेव्यवहारलोपांतंपूर्वोक्तदूषणंप्रसज्जेतेत्याह कार्यभावइति । प्रागभावरूपंकारणंविनापिकार्यस्यभविउत्पत्तौसत्यांकारणेनविनाकार्यजनिरितिपक्षःस्यादापद्येत तथाचपूर्वोक्तदो षप्रसक्तिरित्यर्थः ४६ अस्मिन्पक्षेनिर्युक्तिकत्वंचेत्याह अपिचेदिति । यदितदाप्रागभावनाशोत्तरकालेऽकारणकंकार्यंभविष्यतितदाइदानीमपितथाकुतोनभवतीतिप्रश्ने इदानीमकारणक कार्यसंभवोपपादिकायुक्तिर्वक्तव्यासाचनास्तीत्यर्थः ४७ प्रागभावनाशेकार्येनभविष्यतीतिपक्षंदूषयति तस्मिन्निति चतुर्भिः । तस्मिन्प्रागभावेनष्टेसतिकार्यंनभविष्यतीतिचेदितिशेषः तर्हिअना यासेनमुक्तिसिद्धिनिश्चयान्मुक्त्यर्थंप्रयासवैयर्थ्यमित्यर्थः ४८ किंचात्रपक्षेसंसारस्यानंततयाऽनादितयाचसर्वसंमतस्यसान्तत्वसादित्वयोरापत्तिरित्याह अप्यनंतस्येति । विवेकख्यातिहीनान् प्रतिसंसारोऽनंतोऽनादिश्चप्रसिद्धस्तस्यात्रपक्षेसांतत्वंस्यात्सांतत्वेचसादित्वमपिस्यादित्यर्थः ४९ सादित्वेचमुक्तस्यापिबंधापत्तिरित्याह अंतवानिति । वादिनोमतेइतिशेषः । तस्योक्तवादिस म्मतस्यमुक्तस्यायंसंसारःपुनःकेनहेतुनानभविष्यतिकिंतुभविष्यत्येवेत्यर्थः ५० ततःकिमतआह यदीति स्पष्टम् ५१ एतावतैकव्यक्तिकःप्रागभावोजगत्कारणमितिपक्षोनिरस्तोऽथानेकव्य क्तिकःसतथेतिपक्षंदूषयति यदानेकइत्येकादशभिः । प्रागभावस्यानेकव्यक्तित्वेतस्यभेदःप्रतियोगिभेदादेववाच्यः स्वरूपमात्रेणाभावेभेदासंभवादित्यर्थः ५२ तस्यप्रतियोगित्वंकारणानांका

कार्यभावेविनैवस्यात्कारणेनतदाजनिः ॥ तथाचसतिपूर्वोक्तंदूषणंपुनरावजेत् ४६ अपिचेत्कारणाभावेसदाकार्यंभविष्यति ॥ इदानींकेनतन्नैवभवतीतिवदं तुते ४७ तस्मिन्नष्टेतदानैतत्कार्यंक्वापिभविष्यति ॥ अनायासेनमुक्तिःस्यात्तर्हितेषांमहात्मनाम् ४८ अप्यनंतस्यचेदंतःसंसारस्यभविष्यति ॥ अनादेःसा दिताकस्मात्तस्यनैवभविष्यति ४९ अंतवांश्चतथासादिःसंसारोयदिवादिनः ॥ मुक्तस्यतस्यकेनार्थंपुनर्नैवभविष्यति ५० यदिमुक्तस्यसंसारःपुनरेवभवि ष्यति ॥ व्यर्थास्तदासमस्ताःस्युर्वादिनोमुक्तिहेतवः ५१ यदानेकस्तदातस्यभेदःकेनभवेदिह ॥ प्रागभावोहियस्यस्यात्तद्भेदादेवभेदवान् ॥ अभावस्यस्वतो भेदोनदृष्टोवादिभिर्यतः ५२ कार्यभेदाद्यदाभेदःप्रागभावगतोभवेत् ॥ तदायंकारणाभावोनभवेत्कर्हिचित्क्वचित् ५३ एवंचसतिकार्यस्यकारणेनविनाजनिः ॥ पूर्वोक्ताऽऽवर्ततेभूयोवादिनंदुर्धियंप्रति ५४ अपिकार्येह्यनुत्पन्नेतस्याभावःकथंभवेत् ॥ विशेषणेसतिज्ञातेविशिष्टावगतिर्यतः ॥ अनुत्पन्नंकथंतत्स्यात्कथंवा ज्ञायतेत्रतत् ५५

र्याणांवा नाद्यः अनादेःप्रागभावस्यकारणासंभवादित्यभिप्रेत्य नांत्यः तथासतितस्यकार्याभावत्वेनतत्कारणाभावःकारणमितिप्रतिज्ञाहीयेतेत्याह कार्यभेदादिति । यदाप्रागभावस्यभेदः कार्यरूपप्रतियोगिभेदाधीनस्तर्हिसकारणाभावपदेनव्यवहार्योनस्यात्किंतुकार्याभावपदेन तथाचत्वत्प्रतिज्ञाहानिरित्यर्थः ५३ एवंचकारणाभावरूपस्यत्वदुक्तकारणस्याप्यसंभवेव्यवहारलोपां तदूषणविशिष्टाऽकारणककार्योत्पत्तिःप्रसज्जेतेत्याह एवंचसतीति । आवर्ततेपुनःप्रसज्जते ५४ किंचप्रागभावःप्रागभावत्वरूपेणघटजनकोघटीयत्वरूपेणवाआद्येपटप्रागभावादपिघटोत्पत्त्यापत्तिः अंत्येतस्यघटीयत्वंप्रतियोगितासंबंधेनघटविशिष्टत्वंतच्चविशिष्टज्ञानाधीनं नहिपदार्थानामयःशलाकासदृशानांस्वभावेनपरस्परंसंश्लेषः । विशिष्टज्ञानंतुविशेषणज्ञानाधीनमित्यतोनुत्पन्नेघटेतद्दर्श नाद्विशिष्टरूपेणकारणमपिनवक्तुंशक्यमित्याशयेनाह अपिकार्येइति । कार्येऽनुत्पन्नेसतिअभावःप्रागभावस्तस्यतदीयत्वेनकथंभवेत्ज्ञायेत यतोविशेषणज्ञानंविशिष्टज्ञानंप्रतिहेतुरिति । अनु त्पन्नंकार्यंनतद्विशेषणंकथंस्यात् अत्रअनुत्पन्नकार्यरूपेविशेषणेसतितद्विशिष्टरूपंकथंज्ञायेतेत्यर्थः ५५

ननुविशिष्टज्ञानंप्रतिविशेषणज्ञानंकारणमितिनस्वीक्रियतेकारणाभावःकारणमितिवादिभिःकस्यापिकारणस्यकुत्राप्यनभ्युपगमादित्याशंक्यतर्हिसुतरांप्रागभावस्यकारणतावच्छेदकंविशिष्टरूपंनज्ञायेतोपायांतराभावादित्याह कारणात्मतयेति । तद्विशेषणज्ञानंकारणरूपेणविशिष्टज्ञानोपयोगिस्यादित्यालोच्यइदंविशेषणज्ञानंयदिभवतःकारणाभावकारणतावादिनोमतेनकारणंविद्यतेतर्हितस्यविशिष्टस्यस्वरूपज्ञानंतेनसामग्र्यभावेनसुतरांदुर्घटंस्यादित्यर्थः ५६ ननुविकल्परूपेणज्ञानेनानुत्पन्नकार्यविशिष्टत्वंप्रागभावस्योपपादयिष्यतइत्याशंक्यतर्हिवंध्यापुत्रप्रागभावइत्याकारेणविशिष्टज्ञानेन यथाप्रागभावस्यनवंध्यापुत्रकारणत्वंतथाघटादिकंप्रत्यपिनस्यादसत्त्वाविशेषादित्याह वंध्येति । तस्यानुत्पन्नकार्यस्य शब्दयोगतःशब्दप्रभावात् तदुक्तं ‘ अत्यंतासत्यपिज्ञानमर्थेशब्दःकरोतिहि’इति ५७ ननुघटादिकार्योत्पत्त्यनंतरंप्रागभावोघटादिकार्यसंबंधीभविष्यतितथाचभाविसंबंधमादायकुमारेराजत्ववद्घटीयत्वादिव्यपदेशोपिस्यादित्याशंकते उत्पन्नेइति । कार्येउत्पन्नेसतिप्रागभावस्तस्यकार्यस्यसंबंधीभविष्यतीतिचेदित्यर्थः । कार्येउत्पन्नेप्रागभावस्यनष्टत्वात्संबंधिद्वयाश्रितःसंबंधःकथंस्यादित्याशयेनोत्तरयति नहीति । अत्रकार्योपादाने ५८ किंचकार्योत्पत्त्यनंतरंप्रागभावस्यकार्येण संबंधांगीकारेप्रागभावस्याविनाशित्वापत्तिः । तथाचप्रागभावस्तदानष्टःस्थितोवेतिविचार्यतामित्यधस्तादुक्तस्थितत्वेनकारणरूपंपक्षांतरंप्रसज्जेतेत्याह अपिचैवमिति । कार्यस्यजन्मनइतियोजना तच्चपक्षांतरंप्रागभावपदघटकप्राक्पदार्थविरोधादेवासंगतमितिभावः ५९ उत्पत्त्यनंतरसंबंधाङ्गीकारेविनाशित्वापत्तिमेवस्फुटयति कार्यस्येति । कार्योत्पत्तिरेवप्रागभावनाशसामग्रीत्वेनप्रसिद्धातयाय

कारणात्मतयातत्स्याद्यदीदंनैवकारणम् ॥ विद्यतेभवतस्तेनतस्यज्ञानंचदुर्घटम् ५६ वंध्यापुत्रादिवत्तस्यज्ञानंचेच्छब्दयोगतः ॥ तद्वदेवचतस्यापिजनिर्नैवभविष्यति ५७ उत्पन्नेसतिचेत्तस्यप्रागभावोभविष्यति ॥ नहिजातेघटेतस्यप्रागभावोत्रविद्यते ५८ अपिचैवंननाशःस्यात्प्रागभावस्यजन्मनः ॥ कार्यस्यततएवैतत्पक्षांतरमुपागतम् ॥ अनष्टप्रागभावोयंकारणंजगतामिति ५९ कार्यस्यजनिरेवस्यात्प्रागभावविनाशिनी ॥ तयाननाशितोयस्मात्प्रागभावस्ततोध्रुवः ६० नित्येननैवभेदोस्तिप्रागभावेत्वकार्यतः ॥ अनित्येनास्यभेदश्चेत्प्रध्वंसोयंभविष्यति ६१ कारणस्याप्यनित्यत्वेसममेतद्विदूषणम् ॥ नित्यत्वेप्रागभावश्चनभवेदात्मनोयथा ६२ अपिचेत्कारणंलोकेविद्यतेकिंचिदेवहि ॥ अनित्यंवापिनित्यंवातस्याभावेनकिंतव ६३

दिनसनाशितस्तदाकस्तंप्रागभावंनाशयिष्यति तथाचसध्रुवोनित्यःस्यादित्यर्थः ६० स्वरूपेणप्रागभावस्यनित्यत्वेतुतस्यानेकत्वंयदुक्तंतद्व्याहतंस्यादित्याह नित्येनेति । अस्यनित्यस्यप्रागभावस्यनित्येनोपाधिनाभेदोनस्यात्कुतोऽकार्यतःनित्यस्यभावस्यअकार्यत्वात्प्रागभावप्रतियोगित्वलक्षणकार्यत्वविरहात्प्रागभावभेदस्यप्रतियोगिभेदमात्रनिरूप्यत्वादितियावत् अनित्येनोपाधिनास्यनित्यप्रागभावस्यभेदश्चेदंगीक्रियतेतदायमेवप्रागभावोध्वंसाभावरूपोपिस्यादतिरिक्तस्यध्वंसस्यकल्पनेगौरवात् नचेष्टापत्तिः ध्वंसस्यकार्यविरोधिनःकारणत्वस्यव्याहतत्वादितिभावः ६१ एवंकारणनित्यानित्यत्वपक्षयोरपितत्प्रतियोगिकप्रागभावासंभवस्तस्यध्वंसत्वापत्तिश्चदूषणतयाबोध्येत्याह कारणस्यापीति । एतदुक्तंदूषणंखंडनीयतयाप्रकृतेकारणाभावस्यप्रागभावरूपत्वेपिबोध्यं यतःकारणस्यनित्यत्वेआत्मवत्प्रागभावासंभवः अनित्यत्वेतुनित्यस्यप्रागभावस्यैवध्वंसत्वापत्तिरित्यर्थः । अत्रेदंबोध्यं यथाकार्यध्वंसःकार्यविरोधीतथाकारणध्वंसोपि नहिमृत्तिकाध्वंसेघटोजायतइति ६२ अथकारणाभावस्यध्वंसरूपस्यकारणतांपक्षमेकावशिष्टंपर्यस्तत्रवादिनआशयंश्रोतुंतंपृच्छति अपिचेदिति । किंचयदिलोकेनित्यानित्यभावरूपंकारणंप्रसिद्धंतर्हितदेवास्तु तस्यलौकिककारणस्याभावेनकारणतयास्वीकृतेनतववादिनःकिंप्रयोजनमित्यर्थः ६३

एवंसिद्धांतिनापृष्टःसौगतःस्वाभिप्रायमुद्घाटयति बीजादीति । बीजादिरूपंकारणमविनष्टंचेत्कार्यस्यांकुरादेःकारणंनभवतिकिंतुविनष्टमेव एतस्मादेतदालोच्यमयाकारणाभावःकारणमुच्यतेनबीजादिरूपंकारणमित्यर्थः ६४ एतत्श्रुत्वासिद्धांतीवादिनंप्रतिज्ञांतरेणानिगृह्णंस्तदुक्तितएवप्रागभावविचारसमाप्तिंदर्शयति आयुष्मानितिद्वाभ्यां । समाधानार्थंवादिनामहदायुरपेक्ष्यमितिसूचनायायुष्मानित्युच्यतेवादी । तत्रोक्ताभिप्रायेसतिसवादीतावदितिवदतु इतिकिं बीजादिरूपकारणस्यप्रागभावःकिमंकुरादेःकार्यस्यनजनकइति त्वयासंमतंयतःप्रागभावपक्षंपरित्यज्यबीजादिनाविनष्टमित्युक्तयाप्रध्वंसस्यकारणत्वंवृपेइतिद्वयोःसंबंधः ६५ । ६६ तत्रमौनेनवादिनःस्वीकारंलक्षयित्वाध्वंसस्याकारणतायांहेतुतयाव्यभिचारंदर्शयति बहूनामिति । बहूनांबीजकंदादिरूपाणांकारणानांभक्षकोदरादिषुप्रध्वंसेप्यंकुरादयोनजायंतइतिव्यभिचारात्कथंतस्यकारणत्वमित्यर्थः ६७ कारणाभावःकारणमित्युक्तौव्याघातश्चेत्याह अपियद्यस्येतिद्वाभ्यां । जनकत्वलक्षणंकारणत्वंबीजादेर्यदिनास्तितदाबीजाद्यभावपरःकारणाभावशब्दःकथंनव्याहतइत्यर्थः ६८ यद्यभावइति । किंचयदित्वन्मतेबीजाद्यभावःकारणंतदातस्यबीजाद्यभावस्याप्यभावःकारणमितित्वयावक्तव्यं कारणत्वाविशेषात्

बीजादिनाऽविनष्टंचेत्कारणंकार्यकारणम् ॥ कारणाभावएतस्मात्कारणंनैवकारणम् ६४ आयुष्मांस्तत्रवदतुप्रागभावःकिमत्रसः ॥ अंकुरादेर्हिजनकोबीजादिःकारणंनतु ६५ प्रागभावस्यपक्षत्वंत्यक्तवानसिसंप्रति ॥ प्रध्वंसस्ययतोब्रूषेकारणत्वंजगज्जनौ ६६ बहूनांकारणानांस्यात्प्रध्वंसोजठरादिषु ॥ अंकुरादीनिकार्याणिकुतस्तत्रभवंतिन ६७ अपियद्यस्यजनकंकारणंतस्यतद्भवेत् ॥ बीजाद्यजनकंकेनकारणंभवतोच्यते ६८ यद्यभावोभवेत्कार्यजनौकारणमत्रते ॥ तर्हितस्याप्यभावःस्यात्कारणत्वेनहेतुना ६९ एवंचकारणंहित्वाभवेत्कार्यजनिस्तव ॥ तत्रोक्तदूषणंपूर्वंपुनरावर्त्ततेधुना ७० अपितंतुसुवर्णादेःकारणस्यात्रदर्शनात् ॥ कार्योत्पादेपिकेनास्यप्रध्वंसःकीर्तितस्त्वया ७१ ततोबीजस्यचेन्नाशोमाभूत्कारणमत्रतत् ॥ अनष्टाबीजजठरेपृथिव्यवयवाहिये ॥ तएवकारणंतत्रसत्तुसर्वाविरोधतः ७२ प्रागभावेहियेदोषाःप्रध्वंसेपितएवहि ॥ उक्तिभेदाद्भवंत्येतेह्यभावेसकलेपिच ७३ अन्योन्यभेदधीहेतुरभावोपिनकारणम् ॥ अदर्शनादभावोतःकारणंकोपिनैवसः ७४

तथाचबीजाद्यभावस्यकारणतोक्तिर्व्याहताअनवस्थिताचेति ६९ किंचयद्यत्कारणत्वेनाघ्रातंतस्य तस्याभावःकारणमित्युक्तौव्यवहारलोपांतदोषविशिष्टाऽकारणककार्योत्पत्तिःपुनःप्रसज्जेतेत्याह एवंचेति ७० ध्वंसस्यकारणत्वंप्रत्यक्षविरुद्धंचेत्याह अपितंत्विति । कार्योत्पादेसतिअत्रपटकुंडलादिकार्यशरीरेअनुगतस्यतंतुसुवर्णादिरूपकारणस्यप्रत्यक्षसिद्धत्वात्कारणाभावःकारणमितित्वयाकथंकीर्त्यतेइत्यर्थः ७१ एवमन्वयव्यतिरेकाभ्यांभावानांकारणत्वेनिश्चितेसतियत्रबीजांकुरोदाहरणेत्वयाध्वंसस्यहेतुतोच्यतेतत्रबीजाद्यवयवानांहेतुतासंभवाद्ध्वंसोन्यथासिद्धत्वान्नहेतुरित्याह ततइति । ततःसतःकारणस्यसिद्धत्वाद्बीजस्यनाशेसतितद्बीजंकारणंमास्तु येतुबीजस्यांतर्वर्त्तमानाअनष्टाःपार्थिवाअवयवास्तएवकारणतांभजंतु सर्वप्रमाणाविरोधादित्यर्थः बीजस्यबीजत्वंतुतदुपाधिकमितिभावः ७२ प्रागभावपक्षोक्तादोषाअपिध्वंसादिपक्षेयोज्याइत्याह प्रागभावइति । उक्तिभेदात्किंचित्प्रकारकभेदात् यथाएकस्यध्वंसस्यजगद्धेतोरिदानींजातत्वेपूर्वंसृष्टयनापत्तिः अनेकत्वेअविद्यमानप्रतियोगिसंबंधानुपपत्तिरित्यादयः एवमत्यंताभावेऽन्योन्याभावेचयथासंभवंदोषायोज्याइत्यर्थः ७३ अन्योन्याभावस्यकारणत्वंत्वनुपलब्धिबाधितमित्याह अन्योन्येति ७४

अत्यंताभावपक्षंदूषयितुंशून्यवादिमतंखंडनीयत्वेनोपन्यस्यति अतएवेति । अतोऽभावत्वावच्छिन्नस्यकारणत्वासंभवादेवहेद्विजोत्तमाःशून्यस्यकारणत्वंनमंतव्यं शून्यमितिहिसामान्याभावात्मकात्यंताभावस्यैवनामवादिभिःकल्पितंतस्यवन्ध्यापुत्रवत्सत्ताहीनस्यकारणत्वंकथंस्यादित्यर्थः ७५ तत्रदोषंवक्तुंविकल्पयति अपिकार्यस्येति । शून्यपदार्थघटकोऽभावःकिंकार्यप्रतियोगिकःकारणप्रतियोगिकोवाकार्यकारणोभयप्रतियोगिकोवा त्रेधाप्यसंभवइत्यर्थः ७६ तत्रनाद्यः कारणाभावःकारणमित्यभ्युपेत्यकार्याभावस्यकारणतांवक्तुःप्रतिज्ञाहानेरपसिद्धांतस्यवादोषस्यापातादित्याह कार्यस्ययदीति । कार्यस्यात्यंताभावस्तत्कारणमित्यंगीकारेपक्षहानिरित्यर्थः ७७ अत्रैवदोषांतरमाह अपिभूयानिति । अस्यकार्याभावःकारणमित्याकारकस्यपक्षस्यांगीकारेऽतोहेतोर्भूयान्बहुविधोविरोधःस्यात् । अतःकुतइत्याकांक्षायामाह कारणतइत्यादि । अयंभावः कार्याभावोनिरपेक्षःकारणंकिंवादंडोयथाचक्रादिसापेक्षोघटकारणंतद्वत्सापेक्षः आद्येसर्वत्रसर्वकार्योपत्तिः अंत्येपिदृष्टसामग्रीसद्भावाद्वंध्यायाःसुतःकुतोनजायते एतन्मतेकार्यस्यात्यंतासद्रूपत्वाद्वंध्यासुतस्याप्यत्यंतासत्त्वाविशेषादिति ७८ ननुवंध्यायाःसामग्रीघटकत्वमेवनास्तिशक्त्यभावेनकारणत्वविरहादितिशक्तिवादिनःशंकामनूद्यतन्निरासायशक्तिलक्षणंपृच्छति अथेति ७९ यद्बलात्कारणात्कार्यंजायतेसाशक्तिरितिलक्षणमाशंक्यसाशक्तिःकिंकारणाद्भिन्नाऽभिन्नावेतिविकल्पयति ययेति । साशक्तिः ततःशक्तेःसकाशात्कारणंभिन्नमभिन्नंवाइत्यर्थः ८० आद्येपिकार्यारंभकत्वंकिंशक्तेरेवोतकारणस्यापि प्रथमेकारणस्यकारणत्वहानिःकारणत्वस्यकार्यारंभकतामात्ररूपत्वात् चरमेतुकिंशक्त्यातांविनापिकार्यारंभकतायाःसत्त्वादित्याह शक्त्येतिद्वाभ्यां । यदिशक्त्याकार्यंजायेततदाप्रसिद्धंकारणमकारणंकारणताहीनंस्यात् किंचशक्तिसद्भावेभावमात्रस्यएतत्प्रसिद्धंकारणत्वंनस्यात्तयैवनिर्वाहात् तार्किकैःशक्तिस्थानाभिषिक्तःप्रतिबंधकाभावःकारणंस्यादित्याशयेनभावमात्रस्येत्युक्तम् ८१ तेनेति । तेनएकत्रैवारंभकत्वौचित्येनशक्तिकारणयोरन्यतरस्यवैयर्थ्यंयतःकार्यंजनकात्मकंकारणं त्वमतेतुशक्तिरप्येतादृशीकार्यजनकात्मिकैवेत्यर्थः ८२ शक्तिकारणयोरभेदपक्षेतुशक्तिकारणपदयोःपर्यायत्वापत्तिरित्याह एतयोरिति ८३ एवंशक्त्यंगीकारस्याप्यसामंजस्येकार्यात्यंताभावःकारणमित्याकारकेऽसत्कार्यवादेवंध्यासुतोत्पत्तिप्रसक्तिरपरिहार्यैवेत्याह ततइति । एतत्प्रत्यक्षसिद्धमत्यंतासत्त्वरूपंकार्यलक्षणंयतोवंध्यासुतस्यापिवर्ततेऽतोवंध्यापिकथंसुतंनजनयेदितिसंबंधः ८४

अतएवनशून्यस्यकारणत्वंद्विजोत्तमाः ॥ अत्यंताभावएवायंशून्यंवादिजनेरितम् ॥ वंध्यासुतसमस्यास्यकारणत्वंकथंभवेत् ७५ अपिकार्यस्यवायंस्यादथवाकारणस्यहि ॥ उभयोर्वापिनैवस्यात्त्रेधाप्येषमहाधियः ७६ कार्यस्ययदिसोयंस्यात्तदापक्षपरिक्षयः ॥ कारणाभावतःकार्यंपक्षएषयतस्तव ७७ अपिभूयान्विरोधःस्यादस्यपक्षस्यसंग्रहे ॥ अतःकारणतःकार्यमत्यंतासत्प्रजायते ॥ वंध्यायास्तनयःकस्मात्तादृगेवनजायते ७८ अथवंध्याभवेन्नैषाकारणंशक्त्यभावतः ॥ केयंशक्तिस्त्वदंतुवक्तव्यंशक्तिवादिना ७९ ययासंजायतेकार्यंकारणात्सेतिचेन्मतम् ॥ कारणंकिंततोभिन्नंशक्तेरेतन्निरूप्यताम् ८० शक्त्यासंजायतेकार्यंकारणंस्यादकारणम् ॥ भावमात्रस्यनैवैतत्कारणत्वंप्रसिद्ध्यति ८१ तेनशक्तेस्तुसद्भावेकारणंव्यर्थमेवतत् ॥ कारणस्यापिसद्भावेशक्तिर्व्यर्थाप्रसज्जते ॥ कारणंकार्यजनकंशक्तिश्चैतादृशीतव ८२ एतयोर्यद्यभेदःस्यात्तदानामद्वयंभवेत् ॥ कारणंशक्तिरित्येतद्व्यर्थाशक्तिस्तदातव ८३ ततोवंध्यापिकस्मान्नजनयेत्सुतमात्मनः ॥ अत्यंतासत्त्वसामान्यंतत्सुतस्यापिविद्यते ८४

नन्वत्यंतासद्रूपमपिकार्यंकारणादेवजायतेवंध्यातुनकारणमितिचेत्तत्त्वंविचार्यंब्रूहिनहिवंध्यायाःकारणत्वमेव कुतोनेतिपृच्छंतंप्रतिसंदिग्धःकारणत्वाभावोहेतुतयोपन्यसितव्यइत्याह नकारणत्व मिति । अस्यावंध्यायाःअस्यकारणत्वाभावस्यनियामकंनियमेनबोधकंकार्यादर्शनंनसंभवति इदंकार्यदर्शनमेवकुतोनस्यादितिप्रश्नारूढतयासंदिग्धत्वादित्यर्थः ८५ नचवंध्यात्वंकारणत्वाभा वोवापुत्रादर्शनप्रयोजकत्वेनवाच्यस्तयोःपुत्रादर्शनैकप्रयोज्यत्वेनान्योन्याश्रयतयासंदिग्धत्वादित्याशयेनाह पुत्राजनिमिति । पुत्राजनिरूपंहेतुंविनावंध्यात्वंकारणत्वाभावेकारणंसाधकंचधी मतापिदुर्लभमित्यर्थः ८६ किंचयथासत्कार्यवादिभिःकारणेकार्यस्यसूक्ष्मरूपेणस्थितिःकार्यनियामिकाङ्गीकृतातथाभवद्भिरनभ्युपगमात्सर्वंसर्वत्रोत्पद्येतात्यंतासत्वात्मकस्यभवदभ्युपगतस्यका र्यतावच्छेदकस्याविशेषादित्याह अपिकार्यमिति । यतःकारणेकार्यंनास्त्यतःसर्वंसर्वत्रकुतोनजायतइतिसंबंधः ८७ अपिचासतःकार्यस्यसत्कारणाऽभ्युपगमोऽयुक्तः योग्यंयोग्येनसंबद्ध्य तइतिन्यायविरोधादित्याह अत्यंतासदिदमिति । यदिकार्यमत्यंतासत्तर्हितस्यसद्रूपंकारणंकुतःस्यात् नहिविलक्षणयोःकार्यकारणभावेकिंचित्कारणंसाधकंविद्यते फलितमाह अत्यंतासत्वमि त्यादिना ८८ किंचासत्कार्यवादिभिस्तार्किकैःसत्ताजातिसंबंधादसतःसत्त्वरूपोत्पत्तिरिष्यतेतथावंध्यापुत्रस्यापिस्यादित्याह सतश्चेदिति । सत्तायाःसंबंधाद्यदसतःकार्यताउत्पत्तिरिष्यतेतदा

नकारणत्वंचास्त्यस्याइतिचेत्तत्त्वतोवद ॥ कार्यस्यादर्शनंनैवभवेदस्यनियामकम् ॥ कुतोनस्यादिदंयस्मादस्माभिःपृच्छ्यतेधुना ८५ पुत्राजनिंविनाचैवनवं ध्यालभ्यतेक्वचित् ॥ अभावेकारणत्वस्यकारणंधीमतापिच ८६ अपिकार्यंनकुत्रापिकारणेस्तिकुतोनतत् ॥ सर्वस्माज्जायतेसर्वमत्यंतासत्त्वसाम्यतः ८७ अत्यंतासदिदंकार्यंयदितस्यकुतोभवेत् ॥ कारणंसदिदंनैववैलक्षण्येस्तिकारणम् ॥ अत्यंतासत्त्वमेतस्मात्कार्येनैवोपपद्यते ८८ असतश्चेद्धिसत्तायाःसंबंधात्का र्यताभवेत् ॥ तस्यसत्ताभिसंयोगोयदिकेनभवेन्नहि ॥ वंध्यासुतस्यतस्यापिकार्यतास्तुतथैवसा ८९ अप्यर्धजरतीयंस्यात्कार्यस्यासत्त्ववादिनः ॥ कारणस्यापि तत्कस्मान्मतेतस्यभवेन्नहि ९० कारणस्यतथात्वस्यस्वीकारेपक्षसंक्षयः ॥ असिद्धिश्चयतोनात्रकार्यंसंजायतेऽसतः ९१ वंध्यासुतादयोभावाःपटतैलादिहेतवः ॥ नदृश्यंतेप्रदृश्यंतेतिलतंत्वादिकास्तथा ९२ दर्शनेपियदाभ्रांतिर्विद्यतेभवतस्तदा ॥ अस्तिकिंचिदसंभ्रांतंयतःपक्षविनिर्णयः ९३

तस्यवंध्यापुत्रस्यापिसत्तायोगःकार्यतावास्त्वितियोजना ८९ स्वेच्छयैवकार्यस्यासत्त्वमभ्युपगम्यकारणस्यासत्त्वमनभ्युपगच्छतस्तार्किकस्यार्धजरतीयन्यायापत्तिरित्याह अप्यर्धेति । यथा जरतीकामुकःस्वेच्छयैवार्किंचिदङ्गमुपादत्तेकिंचित्त्यजतितथेदमपीत्यर्थः एतदसत्त्वम् ९० यदितुतार्किकःकारणस्याप्यसत्त्वमंगीकुर्यात्तदातस्यसतोसज्जायतइत्याकारकसिद्धांतहानिर्दृष्टविरोधरूपा ऽसिद्धिश्च नह्यसतःसकाशात्कार्यंजायमानंदृश्यतइत्याह कारणस्येति । तथात्वस्यासत्त्वस्य ९१ दृष्टविरोधरूपाऽसिद्धिमेवस्फुटयति वंध्यासुतादयइति । वंध्यासुतादयोऽसंतःपटादीनां हेतुभूतानदृश्यंतेकिंतुसद्रूपास्तंत्वादयएवतथापटादिहेतुत्वेनदृश्यंतइत्यर्थः ९२ ननुभ्रांतत्वाल्लौकिकान्वयव्यतिरेकदर्शनंनसत्कारणत्वेनप्रमाणमितिशंकांवारयति दर्शनेपीति । यदासदन्वयव्यतिरे कयोर्दर्शनेसतिइदंदर्शनंभ्रांतिरूपमितितेमतंतदापिनसर्वंज्ञानंभ्रांतित्वेनस्वीकार्यंकिंतुकिंचिद्धर्मिविपर्यज्ञानमभ्रांतमस्तीत्यभ्युपगंतव्यं सर्वंज्ञानंधर्मिण्यभ्रांतंप्रकारेतुविपर्ययइतिन्यायात् । यतोय द्धर्म्यंशेज्ञानप्रामाण्यमाश्रित्यैवपक्षाणांपूर्वपक्षसिद्धांतरूपाणांनिर्णयोभवति धर्मितत्त्वबहिर्भूताहिपक्षाःपूर्वपक्षाइत्युच्यंतेयथारज्जोसर्पदण्डधारायवगाहिनः धर्मितत्त्वावगाहिपक्षस्तुसिद्धान्तोयथे यंरज्जुरिति । धर्म्यंशेज्ञानप्रामाण्यानङ्गीकारेतुसनस्यादित्यर्थः ९३

धर्मित्वेनतुसद्रूपमेवसर्वत्रानुगतंगृह्यतेनासदित्याह प्रत्यक्षेणेति । कार्यस्यकारणस्यवासद्रूपत्वंप्रत्यक्षेणानुमानेनवानगृह्यतइत्यर्थः ९४ यदिसर्वमसद्रूपंस्यात्तदासत्त्वंसर्वत्रानुगतंभासेतनचतथाभासते अपिचदृश्यासत्त्वांगीकारेपितद्ग्राहकस्यसाक्षिणःसत्त्वमनपन्हवनीयमेवनिःसाक्षिकस्यकस्याप्यसिद्धेरित्याह अत्यंतासदिदमिति । यदिइदंकार्यकारणरूपंजगदत्यंतासत्स्यात्तदातेनासद्रूपेणग्राह्यंस्यात यथानरशृंगमसद्रूपेणगृह्यते इदंसर्वस्यासत्त्वमपिसद्रूपंग्राहकंसाक्षिणंविनानसिद्ध्यतिकिंतुसाक्षिणमाश्रि त्यैवेत्यर्थः ९५ किंचयदिसर्वमसद्रूपंस्यात्तदानरशृंगवद्भ्रांतिदशायांनप्रतीयेतइदंतुप्रमाणव्या पारैःप्रतीयतइतिकथमसत्त्वमित्याह अपिभ्रांतिंविनेति । बाह्यैरतिपामरैरपिनरिमनुष्येशृंगंभ्रांतिंविनानचगृह्यते कार्यकारणरूपंजगत्तुअत्रप्रमाणव्यापारदशायांगृह्यतेइतिसंबंधः एतेनोभयाभावः कारणमितिपक्षोपिनिरस्तइति ९६ यदिकार्यकारणात्मकंजगदसत्स्यात्तदातस्यकेनापिप्रमाणेनबोधोनस्यात् असतःप्रमाणसंसर्गायोग्यत्वादित्यर्थंकैमुत्येनसूचयन्शब्देनाप्यलीकानुभवासंभवमाह अपिशब्दइति । गृहीतोर्थसंबंधोयस्यैतादृशएवसन्शब्दोयतोर्थंबोधयतिअतोहेतोरसतिवंध्यासुतादिरूपेविषयेकेनकरणेनग्रहोऽनुभवःसंजायतइतिवदेतिसंबंधः यच्चजायतेऽलीकविषयकंज्ञानंतद्विकल्प रूपं नचतादृशंजगद्ज्ञानंमंतव्यंसर्वव्यवहारलोपप्रसंगादितिभावः ९७ अलंदूरंगत्वाशब्दरूपकार्योदाहरणेनैवसतःकारणतांभवानवधारयत्वित्याह अपिशब्दस्येति । वागादिव्यापारवान्सत्त्वविशिष्टो

प्रत्यक्षेणचकेनापिकार्यकारणयोर्भुवि ॥ असत्त्वंगृह्यतेनैवनानुमानंचविद्यते ९४ अत्यंतासदिदंसर्वंकार्यकारणरूपकम् ॥ ग्राह्यंतेनयथैवैतन्नरशृंगमिदंनच ॥ ग्राहकंसंतमात्मानंपरिहायप्रसिध्यति ९५ अपिभ्रांतिंविनाबाह्यैर्नरशृंगंकदाचन ॥ गृह्यतेनचकार्यंचकारणंचात्रगृह्यते ९६ अपिशब्दोगृहीतार्थसंबंधोबोधको नृणाम् ॥ वंध्यासुतादिविषयेकेनायंजायतेग्रहः ९७ अपिशब्दस्यजनकोदेहोवागादिसंयुतः ॥ दृष्टःसत्त्वेननैवासद्दृष्टोवंध्यासुतस्यसः ९८ अपिवेदस्यमानत्वे कथंचिन्माययाभवेत् ॥ अनुमानमिदंमानंनैवमानमयंतव ९९ अपिवेदोनकुत्रापिब्रूतेऽसत्तांकदाचन ॥ कार्यकारणयोःकेनस्यादसत्त्वंतवानयोः १०० असद्वा इदमित्यादिपूर्वपक्षानुवादकम् ॥ यतआहपुनःसोयंततोवैसदजायत ॥ इत्यादिकंततोऽसत्त्वेनमानंकस्यचिद्भवेत् १०१ ततःशून्यंचनैवस्यादत्यंताभावसंहितम् ॥ कार्यकारणयोर्यस्मात्सिद्धोभावःप्रमाणतः १०२

देवदत्तादिदेहएवशब्दस्यजनकोदृष्टः वंध्यापुत्रदेहस्तुअसन्नसद्रूपःशब्दजनकतयानदृष्टइत्यर्थः ९८ ननु'असद्वाइदमग्रआसीत्ततोवैसदजायत'इत्यादिश्रुतार्थानुपपत्त्याकल्पितमाययाऽसत्कारणतामुपपा दयिष्यामीतिचेन्मैवंवोचः तवमतेवेदप्रामाण्यस्यैवाभावादित्याह अपिवेदस्येति । अनुमानमनुमानरूपंतवमतमपिश्रुतिसिद्धमाययाऽऽलंबनभूतयाकथंचिन्मानंभवेदपिपरंतुअयंवेदस्तवमतेमानंना स्तीत्यर्थः ९९ वस्तुतस्तुतत्रवाक्येअसत्पदमव्याकृताख्यसूक्ष्मावस्थापरंनशून्यत्वपरमित्याशयेनाह अपिवेदइति । वेदोपिकार्यकारणयोरसत्तांकुत्रापिनब्रूतेनचान्यत्किंचिन्मानमस्तीत्यतस्तवमते अनयोःकार्यकारणयोरसत्त्वंकेनसिद्ध्येदित्यर्थः १०० छांदोग्येअसद्वाइत्यादिवाक्यंतुपूर्वपक्षस्यानुवादरूपं तद्धैकआहुरित्युपक्रमात् तदुत्तरवाक्येनासतःसदुत्पत्त्यसंभवस्योक्तत्वाच्चेत्याह असद्वाइद मिति । सोयंवेदोयतस्ततोवैसदजायतेत्यादिकंसत्कारणतोपपादकमाहततोहेतोरसद्वाइत्यादिकंपूर्वपक्षानुवादकमितिसंबंधः यद्यपिततोवैसदजायतेत्यंशोपिपूर्वपक्षवाक्येपठितस्तथापिपूर्वपक्षेतस्या नुपपद्यमानत्वात्सिद्धांतहेतुतयातदुपन्यासइतिबोध्यं । फलितमाह ततइत्यादिना १०१ शून्यवादनिरासंनिगमयति ततःशून्यमिति । अत्यंताभावेनसंहितंघटितंशून्यमपिनकारणंयतः कार्यकारणयोर्भावःसत्ताप्रमाणसिद्धेति १०२

एवंकिंकारणमित्यंशेनप्रागभावादीनांकारणत्वासंभवउक्तेसतितर्हिब्रह्मकारणमस्त्वितिशंकाब्रह्मपदार्थस्यकारणत्वायोग्यताप्रदर्शनेनपरिहरन्ब्रह्मेत्यंशंयोजयति नचब्रह्मापीतिपंचभिः । हेविप्रेंद्रा ब्रह्मापिजगत्कारणंनसंभवतिसर्वाधिक्यात्मकेनब्रह्मपदमुख्यार्थेनप्रयुक्तत्वात्तच्चसर्वाधिक्यंसजातीयादिनिरूपितभेदराहित्यरूपं सजातीयादीनांब्रह्मण्यसंभवादितिद्वयोरर्थः १०३ । १०४ तथाचद्वितीयनिरूपितंकारणत्वंब्रह्मणिकथंस्यादित्याह आनंदात्मेति १०५ ब्रह्मणइति । यच्चकुत्रचित्शास्त्रेपुब्रह्मणोजगत्कारणत्वमुच्यतेतत्प्रत्यक्षानुमानादिविरोधान्नसंभाव्यतेइत्यर्थः १०६ ब्रह्मशब्दमिति । ब्रह्मशब्दवाच्यंयन्मुख्यंतन्नकारणत्वयोग्यंकिंतुपरंआपेक्षिकमहत्त्वाद्गौणंब्रह्मशब्दप्रतिपाद्यमाकाशादिकंकारणंमंतव्यं अथवाब्रह्मणउपाधितयाकारणत्वोपपादकंकिंचित्कल्पनीयमित्यर्थः १०७ कुतोजाताइत्यंशंव्याकरोति अतइत्येकविंशत्या । यतउक्तविधयाजगतोऽकारणकत्वमभावकारणकत्वंब्रह्मकारणकत्वंवानसंभवतिअतःकिंचित्कारणांतरमस्तितत्किमितिजिज्ञासाप्रसंगेप्रथममिदंशरीर

नचब्रह्मापिविप्रेंद्राःकारणंजगतोभवेत् ॥ ब्रह्मशब्दस्यमुख्यार्थःसर्वाधिक्यंप्रकीर्तितः ॥ सर्वाधिक्येचभेदस्यस्यादभावोत्रसर्वथा १०३ स्वसजातिविजातीयैर्देशकालार्थरूपिभिः ॥ भेदोत्रक्रियतेविप्रानतेब्रह्मणिसंतिहि १०४ आनंदात्मस्वभावेस्मिन्स्वयंज्योतिषिनिर्द्वये ॥ ब्रह्मण्येकरसेकेनकारणत्वंभविष्यति १०५ ब्रह्मणोयदपिप्राहशास्त्रंकारणतामिह ॥ तथापितर्कसहितैःप्रत्यक्षाद्यैर्विरुध्यते १०६ ब्रह्मशब्दंहितेनात्रविप्रामुख्यंनकारणम् ॥ किंतुकिंचित्परंतत्रकल्प्यंवाकारणांतरम् १०७ अतःकारणजिज्ञासाकरणीयाद्विजोत्तमाः ॥ जायमानंयतःसर्वंकारणादेवजायते ॥ ततोवयमिमेसर्वेकुतोजाताःशरीरिणः १०८ रेतसश्चेद्भवेज्जन्मविप्रास्तस्मात्कुतोनहि ॥ सप्तमात्पितृदेहस्थधातोर्जन्मसदानृणाम् १०९ धातुभ्योपिपृथग्भावेहृदिकामाग्निदीपनात् ॥ समागतात्कुतोनस्याज्जन्मसर्वशरीरिणाम् ११० अथप्रजननद्वारानिर्गताच्चेज्जनिर्भवेत् ॥ निद्रादिदोषतस्तस्यनिर्गमेनजनिःकुतः १११ अथयोनौप्रमथनान्निर्गमेचेद्वपुर्भवेत् ॥ स्वप्नेयोनिप्रमथनान्निर्गमेनकुतोवपुः ११२ अथजागरणेयोनिमथनेनविनिर्गतात् ॥ जरायुजांडजस्थानांतिजसोजायतेवपुः ११३ बालवृद्धस्त्रियोयोनेर्मथनात्केननैवसः ॥ निर्गतोरेतसोदेहोभवेत्सर्वशरीरिणाम् ११४ युवत्याइतिचेत्केनवंध्यायांनभवेद्विसः ॥ गर्भधारणशक्तायाइतिचेत्संगमंप्रति ॥ सर्वदैवकुतोदेहोनजायेतशरीरिणाम् ११५ ततोरेतोनविप्रेंद्राःकारणंदेहजन्मनि ॥ ततोवयंपितृभ्यांनजाताःसर्वेशरीरिणः ११६

मेवकुतोजायतेइतिविचार्यमित्यर्थः १०८ तत्ररेतसःकारणत्वमाशंक्यान्वयव्यतिरेकव्यभिचाराभ्यांनिराकरोति रेतसइतिनवभिः । त्वगसृङ्मांसमेदोस्थिमज्जाशुक्ररूपाणांधातूनांमध्येसप्तमाद्रेतसश्चेज्जन्मस्यात्तर्हिपितृदेहगतादेवतस्मात्कुतोदेहजन्मसदानभवतीत्यर्थः १०९ यदितुधातुभ्यःपृथग्भूतात्तस्माज्जन्मभवतीत्युच्यतेतदापिकामाग्नितापाद्धृदयदेशमागतादेवतस्माद्रेतसःकुतोदेहजन्मनभवतीत्याह धातुभ्यइति ११० अथप्रजननेति । प्रजननमुपस्थः १११ अथयोनाविति स्पष्टं ११२ जरायुजानामंडजानांचदेहोजागरणेयोनिमथनाज्जायतेइतिशंकते अथजागरणइति । विनिर्गतात्तेजसोरेतसइतिसंबंधः ११३ तत्रापिव्यभिचारप्रदर्शनेनोत्तरयति बालेति । बालायावृद्धायावास्त्रियोगमनाद्देहःकुतोनजायतइत्यर्थः ११४ तत्रयौवनावस्थाकृतंविशेषमाशंक्यनिषेधति युवत्याइति । वंध्यायांतद्भिन्नायामपिचप्रतिसंगमंदेहाजननान्नयुवत्याअपिकारणत्वमित्यर्थः ११५ रेतसःकारणत्वाभावेचमातापित्रोःकारणत्वंनवाच्यमित्याह ततइति ११६

किंचस्वेदजोद्भिज्जशरीराणांदेहस्यरेतोविनाजायमानत्वदृष्टेर्नरेतसःकारणत्वमित्याह उद्भिज्जाइति ११७ धर्माधर्मात्मकमदृष्टमपिनदेहकारणमित्याह अदृष्टमितित्रिभिः । पुण्यपापात्मकम दृष्टंहेतुरित्युच्यतेचेत्सदापिइदंविचार्यं किमदृष्टस्यहेतुः शुद्धआत्मादेहोवा आद्येमुक्तानामपिबद्धत्वापत्तिः यस्मान्मुक्तानामपिसआत्मापुण्यपापकर्तृत्वस्यतत्फलभोक्तृत्वस्यचभागी एतच्चसर्ववा दिनामनिष्टमितिद्वयोरर्थः ११८ । ११९ पुण्यपापयोर्देहजन्यत्वरूपमंत्यंपक्षंदूषयति देहेनेत्यादिना । तत्रआत्मनोविकारित्वप्रसंगेनानिर्मोक्षापत्तेरेवपुण्यपापयोर्देहजन्यत्वमभ्युपेयंतत्रापि चेदंविचार्यं किंसदेहःपुण्यपापाभ्यामेवजायतेअन्यस्माद्वा आद्येअन्योन्याश्रयः नचबीजांकुरवत्परिहारः देहादृष्टयोःकार्यकारणभावस्यप्रत्यक्षविषयस्यांगीकारेअंधपरंपरापत्तेः अंत्येतुतत्स्वरूपं वाच्यमित्यर्थः १२० ननुस्थूलदेहस्यकारणंसूक्ष्मशरीरमेवेतिचेदुच्यतेतत्रापिकिंयंकंचित्स्थूलदेहंप्रतिसूक्ष्मंकारणमुतसर्वान्प्रति आद्येयत्किंचिद्घटपूर्ववर्त्तिनोरासभस्यापिसर्वघटकारणत्वापत्तिर विशेषात् अंत्येदेवदत्तसूक्ष्मशरीराद्देवदत्तदेहवदन्येपिस्थूलदेहाःकुतोनजायंतइत्याशयेनाह सूक्ष्मादिति । यदिसूक्ष्मदेहादेवपुण्यपापहेतुभूतःस्थूलोदेहविशेषोजायतेतदाऽपरोपिततोजायतां स मर्थस्यक्षेपायोगादितिन्यायात् क्षेपोविलंबः १२१ अत्रपक्षेपुण्यपापयोःकारणत्वाभ्युपगमोवृथासूक्ष्मदेहेनैवसर्वनिर्वाहादित्याह पुण्यपापेइति । सूक्ष्मेणैवनिर्वाहसाम्येतददृष्टमितिचेदित्या

उद्भिज्जाअपिजीवायेस्वेदजायेचजंतवः ॥ पित्रोर्वीर्यंविनादृष्टंतेषांजन्मशरीरिणाम् ॥ ततोवीर्यंनजंतूनांदेहधारणकारणम् ११७ अदृष्टमितिचेत्किंचित्पुण्यपापात्मकंयदि ॥ केनतज्जायतेविप्राआत्मनाचेन्नमुक्तता ११८ मुक्तानामपियस्मात्सपुण्यपापंकरोतिच ॥ सुखदुःखोपभोगीचमुक्तोबद्धसमोभवेत् ॥ अनिर्मोक्षप्रसंगोयमनिष्टःसर्ववादिनाम् ११९ देहेनततएवैतत्क्रियतेपुण्यपातकम् ॥ पुण्यपापकरोदेहःकुतएषप्रजायते १२० सूक्ष्माच्छरीरतःसोयंजायतेपुण्यपापकृत् ॥ देहश्चेत्तर्हिविप्रेंद्रास्तथैवान्योपिजायताम् १२१ पुण्यपापेभवेतांनकारणंदेहजन्मनि ॥ तथाचसतितद्व्यर्थंकारणत्वंतयोर्भवेत् १२२ अपिसूक्ष्मंवपुःकेनजायतेद्विजसत्तमाः ॥ अज्ञानादितिचेत्तस्मात्स्थूलंकस्मान्नजायते १२३ पुण्यपापविनिर्मुक्तमज्ञानंसूक्ष्मकारणम् ॥ भवेच्चेन्नभवेत्केनतादृक्स्थूलस्यकारणम् १२४ पुण्यपापादिकार्याणांवासनाकोटिवासितम् ॥ सूक्ष्मस्यचेदिदंहेतुःस्थूलस्याप्यस्तुतादृशम् १२५ वासनाअपिसंस्काराःसंस्काराश्चविनाशनः ॥ पुण्यादीनांप्रजायंतेनासतांचविनाशनम् ॥ पुण्यपापेततःपूर्वंजायेतेकेनहेतुना १२६ पुण्यपापाच्चसंस्काराःसंस्कारेभ्यस्तथावपुः ॥ सूक्ष्मंवाप्यथवास्थूलंततःपुण्यंचपातकम् १२७

दिनांगीकृतंतयोःपुण्यपापयोःकारणत्वंव्यर्थंस्यादित्युत्तरार्धार्थः १२२ किंचसूक्ष्मशरीरस्याप्यागंतुकत्वेनकार्यत्वात्तत्कारणान्वेषणायांयद्यज्ञानंसूक्ष्मस्यकारणमुच्यतेतर्हितदेवस्थूलस्यापिकारणम स्तुकिं.सूक्ष्मस्यकारणत्वाभ्युपगमेनतद्धेतोरेवास्तुहेतुत्वंकिंतेनेतिन्यायादित्याह अपिसूक्ष्ममिति । तस्मादज्ञानात् १२३ किंचतदज्ञानंपुण्यपापानपेक्षंसूक्ष्मशरीरकारणंतत्सापेक्षंवा आद्येस्थूलशरीरमपितथैवाकिंनजनयेदित्याह पुण्येति । तादृक्पुण्याद्यनपेक्षम् १२४ तत्सापेक्षत्वपक्षंदूषयति पुण्यपापादिकार्याणामितिचतुर्भिः । यदिपुण्यकर्मादिरूपकार्याणांवासनाकोटिभिर्वासितमिदमज्ञानंसूक्ष्मस्यहेतुरित्युच्यतेतर्हितादृशमेवाज्ञानंस्थूलस्यापिहेतुरस्त्विति १२५ तथाचांधपरंपरापत्तिरित्याह वासनाइतित्रिभिः । वासनापदंहिसंस्काराणांवाचकंसंस्कारास्तुविनश्यदवस्थैःपुण्यादिभिःकार्यैर्जन्यंतेविनाशयोग्यतातुपूर्वंविद्यमानानामेवनासतामित्यतःसंस्कारोत्पत्तयेपूर्वंपुण्यादीनांसत्तापेक्षितेत्यर्थः १२६ एवंसतिप्रसक्तांघदीयंत्रसमामनवस्थामभिनयति पुण्यपापाच्चेति । कर्मादिभ्यःसंस्काराजायंतेतेभ्यश्चद्विविधंशरीरंशरीराच्चपुनःकर्माणीत्येवमनवस्थास्यादित्यर्थः १२७

फलितमाह एवमितिद्वाभ्यां । एवंसतिसर्वानुपपत्तिपरिहारक्षमंकारणंदेहस्यापिनलभ्यतेकिमुतान्यस्यपरंतुतेनकारणेनभवितव्यमकारणककार्योत्पत्तेरसंभवस्योक्तत्वादिति १२८ ततोस्मादि ति स्पष्टम् १२९ नचान्नमपिदेहकारणंवक्तुंशक्यंतस्यजन्मानंतरंभक्ष्यमाणत्वेनजन्मनिकारणान्तरस्यैववाच्यत्वादित्याह अन्नतइति । वयमन्नतोनजाताःस्मयतोजाताःप्राप्तजन्मानःसंतइद मन्नंभक्षयामः तृप्त्याद्यर्थमित्यर्थः १३० तिष्ठतूत्पत्तिकारणंस्थितिकारणमेवनिर्णेतुंनशक्यतेइतिप्रतिपादकस्यजीवामकेनेत्यंशस्यार्थमुपबृंहयति जीवनस्यापीतिचतुर्त्रिंशच्छ्लोकैः । एतदन्नंजीवन स्यापिहेतुतयानवक्तुंशक्यंयतोन्नभक्षकाजंतवोऽन्नेविद्यमानेपिम्रियमाणादृष्टाइत्यर्थः १३१ प्रत्युतान्नस्यव्याधिद्वारामरणहेतुत्वंवैद्यशास्त्रप्रसिद्धमित्याह अन्नदोषादिति १३२ अन्नोपलक्षितानां विषयांतराणामपिजीवनंप्रत्यहेतुत्वंप्रत्युततद्विरोधित्वंचदर्शयति विषयांतरेत्यादिना । एवमन्नसंयोगवद्विषयांतराणांसंयोगोभोगोपिमरणहेतुः तथाहि नारीसंयोगेनसंजातःस्वांतेहृदयेतापोयस्य तथाभूतोऽयंकामीपुमान्प्रसिद्धइतिशेषः १३३ श्रोत्रविषयस्यमरणहेतुतामुदाहरति घंटेति । घंटाशब्दादितुल्यानाभ्यंतरवायोःशब्दान्शृण्वन्रोगीशीघ्रंम्रियतेइतिनैमित्तिकानिमित्तशास्त्रविद आहुरित्यर्थः १३४ वीर्येति । वेदार्थतत्त्वज्ञाअपिएवंस्त्रीयोगेनतुमरणंकथयंति एवंकथं स्वकीयनारीषुदिवारात्रौदिनादिकालानियमेनवीर्यभ्रंशात्परकीयासुतुसकृदेकवारमपिवीर्यभ्रंशात्कामी

एवंनकारणंकिंचिदस्माकंदेहजन्मनि ॥ लभ्यतेतेनचैवात्रभवितव्यंद्विजोत्तमाः १२८ ततोस्मादिहसंजाताइतिनैवास्तिनिश्चयः ॥ अस्माकंद्विजशार्दूलाःकुतो जातावयंततः १२९ अन्नतोनैवसंजातावयंजातायतस्त्विदम् ॥ भक्षयामोवयंविप्रास्तृप्तितुष्ट्यादिकारणम् १३० जीवनस्यापिनैतत्स्यात्कारणंद्विजसत्तमाः ॥ अन्नादाएवसत्यन्नेम्रियंतेजंतवोयतः १३१ अन्नदोषाद्यतोव्याधिःसर्वेष्वेवप्रजायते ॥ मरणंचेतिविप्रेंद्राश्चिकित्साशास्त्रनिर्णयः १३२ विषयांतरसंयोगएवंमरण कारणम् ॥ नारीसंयोगसंजातस्वांततापःपुमानयम् १३३ घंटारवादिसदृशान्शृण्वन्प्राणरवान्बहून् ॥ अल्पकालान्मृतिंगच्छेदेवंनैमित्तिकाविदुः १३४ वीर्य भ्रंशाद्विनारीणांयोनौकामविमोहितः ॥ स्वकीयानांदिवारात्रौप्रत्यवेयात्पुमानयम् ॥ परेषांतुसकृद्वापिप्रत्यवायान्मृतिंव्रजेत १३५ एवंवेदार्थतत्त्वज्ञामरणंयोग तःस्त्रियः ॥ कथयंतितथादेहयोगशास्त्रविशारदाः १३६ च्युतोरसोविनाशायदेहस्यास्यप्रकीर्तितः ॥ वृक्षस्येवचपुंसोपिधारणाज्जीवनंतथा १३७ सरसःस्नि ग्धतांप्राप्यचिरंजीवतिपादपः ॥ नीरसःशुष्कसर्वांगःसमूलोपिविनश्यति १३८ यथातथैवपुरुषोजीवेद्विरसधारणात ॥ कंदर्पसदृशोभूत्वाम्रियतेरसनिर्गमात१३९ शाखास्कंधादिगेयद्वन्निर्गतेपिरसेक्वचित ॥ वृक्षोननाशमायातिमूलाच्चेन्नाशमाव्रजेत १४०

प्रत्यवायद्वारामरणंगच्छेदिति तथाचाथर्वणश्रुतिः 'प्राणंवाएतेप्रस्कंदंतियेदिवारत्यासंयुज्यंते' इति । तथाप्रपंचसारेभगवत्पादैरप्युक्तं हानिंनगच्छेज्जीवस्येति । जीववासस्थानस्यरेतसोहा निस्त्यागोयथानभवतितथायतेतेतितद्व्याख्यातारः । 'परदारानगंतव्याःसर्ववर्णेषुकर्हिचित् । नहीदृशमनायुष्यंत्रिषुलोकेषुविद्यते' इतिधर्मशास्त्रेप्युक्तं । तथादेहयोगोदेहांतर्वर्तिषट्चक्रादि ध्यानंतत्प्रतिपादकशास्त्रेषुशैवागमादिषुवक्ष्यमाणविधयावीर्यभ्रंशाद्वानिरुक्तेतिद्वयोरर्थः १३५ । १३६ देहयोगशास्त्रोक्तांप्रक्रियामभिनयति च्युतइत्यष्टादशभिः । अस्यदेहस्यवृक्षस्येवरसश्च्युतः सन्विनाशायधृतःसंश्चजीवनायभवतीत्यर्थः १३७ एतदेवस्फुटयति सरसइति । यथावृक्षस्यस्थितिशोषौरसस्थितिनाशाभ्यांप्रयुक्तौप्रसिद्धौतथापुरुषोपिधातुरूपरसधारणात्कंदर्पसदृशोभूत्वाजी वति रसनिर्गमात्तुम्रियतइतिद्वयोःसंबंधः १३८ । १३९ इतरधातुभ्योरेतसउत्कर्षंसदृष्टांतंप्रतिपादयति शाखेतित्रिभिः । यथाप्रसिद्धोवृक्षःशाखादिगतेरसेनिर्गतेपिननश्यतिमूलाच्चेद्रसोनिर्गच्छतितदा सनश्यतितथापुमान्वनस्पतिःपुरुषरूपोवृक्षोहस्तादिगतेरसेनिर्गतेपिक्वचिन्ननश्यतिशिरसःसकाशाद्रसेनिर्गतेतुनित्यंनिश्चितंनश्यतीतिद्वयोःसंबंधः १४०

१४१ वृक्षस्यैवेति । वृक्षस्यमूलसमंपुरुषस्यशिरोबोद्धव्यं ' ऊर्ध्वमूलोऽवाक्शाखएषोऽश्वत्थःसनातनः ' इतिश्रुतेः एषशरीररूपःसनातनःप्रवाहानादिः । यथाचवृक्षमूलस्यमध्यभागस्तत्तुल्यंमस्तिष्कंमस्तकगतस्निग्धभागरूपंबोध्यमित्यर्थः १४२ मूलमध्यगतरसतुल्यंचमस्तिष्कांतर्गतंरेतोबोध्यमित्याह मूलमध्येति । जीवनंजीवनहेतुः १४३ मस्तिष्कपदार्थंविशदयति मस्तिष्कमिति । यत्श्लेष्मलत्वादिविशिष्टंमांसंतन्मस्तिष्कमित्युच्यतेइत्यर्थः १४४ पद्मेति । यत्रमस्तिष्केविद्यमानाःसहस्रशोनाड्यःसहस्रदलकमलाकारेणपरिणताभवंतीत्यर्थः १४५ गंगांचेति । अत्रमस्तिष्कदेशेगंगामिडाख्यवामनाडीरूपांयमुनांचपिंगलाख्यदक्षिणनाडीरूपांहित्वासुषुम्नाख्यतन्मध्यनाडीरूपांसरस्वतींजीवात्मकोहंसोगच्छति । कीदृशोमानसोमनोरूपमानससरोवासीत्यर्थः तदुक्तंस्वरोदयेपि 'इडागंगेतिविज्ञेयापिंगलायमुनानदी । मध्येसरस्वतींविद्यात्प्रयागादिसमस्तयोः'इति तयोरिडापिंगलयोर्मध्येतिसृणांसंगमस्तुप्रयागादिसमइतिसंबंधः १४६ यस्तुमोक्षद्वारभूतसुषुम्नागतिंनजानातितस्यसंसारेस्थितिंनिरूपयति षट्चक्रेति । षट्चक्राणिमूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञासंज्ञानिकुंडलिनीसंचरणस्थानानितद्रूपस्यमार्गस्याचार्याद्यनुग्रहमंतरासंरोधेअविज्ञानरूपेनिरोधेसतितुसंजीवरूपोहंसोऽनेकशोविविधासुदेहनाडीपुभ्रामंभ्रामंभ्रमित्वाभ्रमित्वाअन्नविसानि ' विश्वस्तुस्थूलभुङ्नित्यंतैजसःप्रविविक्तभुक् । आनन्दभुक्तथाप्रा

हस्तपादादिगेतद्वन्निर्गतेचरसेपुमान् ॥ वनस्पतिःक्वचिन्नित्यंशिरसस्तुविनश्यति १४१ वृक्षस्यैवयथामूलंपुरुषस्यतथाशिरः ॥ मूलमध्यंयथावृक्षेमस्तिष्कंपुरुषे तथा १४२ मूलमध्यस्थितोयाद्वग्रसोवृक्षस्यजीवनम् ॥ मस्तिष्कमध्यगस्ताद्वग्रसःपुंसोत्रजीवनम् १४३ मस्तिष्कंश्लेष्मलंमांसंदशमद्वाररोधकम् ॥ चंद्रबिंबसमंसर्वनाडीसूत्रविधारकम् १४४ पद्मपत्रसमायत्रस्थूलानाड्यःसहस्रशः ॥ सहस्रपत्रसंयुक्तंकमलंतत्प्रकुर्वते १४५ गंगांचयमुनांतद्वद्धित्वाहंसोत्रमानसः ॥ यत्र पश्चिमवाहिन्यासरस्वत्याप्रयात्ययम् १४६ षट्चक्रमार्गसंरोधेभ्रामंभ्राममनेकशः ॥ रसपाकसमुत्थानिखादित्वान्नविसानिसः ॥ चिरंवसतिदेहेस्मिन्सर्वव्याधिविवर्जितः १४७ त्वगादिधातुषट्कस्यसारएषउदीरितः ॥ रसोत्रसप्तमोधातुर्योसौमस्तिष्कसंस्थितः १४८ अयंत्रेधाशरीरेस्मिन्परिणामंप्रयातिहि ॥ अकामहृदयांभोजेसर्वस्यापिचदेहिनः ॥ सर्वांगेसंस्थितःकुर्याद्बलंवैरिभयंकरम् १४९ मस्तकस्थोपिकुरुतेचिरंदेहविधारणम् ॥ क्षुब्धोवाभ्यधिकोवैषओजोनामाष्टमींदशाम् ॥ कुरुतेयद्बलादेषनीरोगोवर्ततेपुमान् १५०

ज्ञस्त्रेधाभोगंविबोधत ' इतिभगवद्गौडपादोक्तत्रिविधान्नरूपाणिभुक्त्वाऽस्मिन्देहेचिरंवसतिसर्वव्याधिविवर्जितश्चेदितिशेषः । कीदृशानितान्यन्नविसानिरसपाकसमुत्थानिरसोभुक्तान्नजोद्रवांशस्तत्परिणामात्मकानि स्फुटमेतत्पष्ठेकूर्चब्राह्मणे । अयंभावः यथाहंसोजलोर्ध्वगतिनिरोधेजलांतर्भ्रमन्विसान्येवभुंजानस्तिष्ठेत्तथायमपिनिरुद्धोर्ध्वगतिकःसंसारेतिष्ठतीति १४७ तस्मात्सप्तधातूनांमध्येरेतउत्कृष्टमित्याह । त्वगादीति १४८ रेतसस्त्रेधापरिणाममाह अयमितिद्वाभ्यां । अयंरेतोधातुः । तत्रप्रथमंपरिणाममाह अकामेति । सर्वस्यापिदेहिनःअकामेकामरहितेहृदयांभोजेविशेषेणेतरांगेपुचसामान्यरूपेणस्थितःसन्वैरिभयहेतुबलरूपेणपरिणमतेइत्यर्थः १४९ द्वितीयमाह मस्तकस्थइति । मस्तकगतोरेतोधातुश्चिरदेहधारणोपयोगिसामर्थ्यात्मनापरिणमतइत्यर्थः । तृतीयमाह क्षुब्धइति । क्षुब्धःप्राप्तक्षोभोपिनिरुद्धःसन्अभ्यधिकःसन्वाओजःसंज्ञकाष्टमधातुरूपांदशांप्राप्नोतियेननीरोगःक्षेत्रज्ञस्तिष्ठेदित्यर्थः । तदुक्तंप्रपंचसारेभगवत्पादैः 'शुक्रपाकात्स्वयंभियेदोजोनामाष्टमीदशा । क्षेत्रज्ञस्यतदोजस्तुकेवलाश्रयइष्यते ' इति. १५०

रेतसःक्षरणेदोषमाह क्षरतीति । अयंरेतोधातुर्यदादेहात्क्षरतितदादेहिनइदमुक्तंफलंनभवतीत्यतोमंत्राद्युपायैस्तस्यक्षरणंनिवारयेदितिसंबंधः योगाःध्यानविशेषास्तैः १५१ तन्निरोधस्यलक्षणमाह अग्नेरिति । यदाअग्नेर्मुखेसन्निधानेपिसतिरसस्तिष्ठेत्तदाबद्धोज्ञेयः तस्मिन्बद्धेतुखेचरताऽऽकाशगमनंतत्प्रभृतिःसिद्धिर्भवेज्जायेतेत्यर्थः १५२ अग्निरसपदयोरर्थमाह नारीति स्पष्टं १५३ अग्नीति । यदाएकदाप्यग्निसंपर्केणवृक्षस्यमूलाद्रसोनिःसरेत्तदापिवृक्षोनश्येत् बहुवारंरसनिर्गमेवृक्षोनश्यतीतिकिमुवक्तव्यमित्यर्थः १५४ दार्ष्टांतिकेयोजयति नारीति । तंरसविनिर्गमं १५५ देहयोगोक्तप्रक्रियामुपसंहरति इत्यादीति । अयंनारीभोगः १५६ त्वग्विपयस्यप्रतिकूलतामाह चंदनैरिति । चंदनकर्पूरादिभिर्युक्ताद्बहुशोलेपनाज्जातोयोतिशीतःकफरोगोवातरोगःसंनिपातरोगोवातैर्हेतुभिर्म्रियतेइत्यर्थः १५७ परिशिष्टविषयाणांतथात्वमाह अन्यैरपीति । तथान्यैरपिभोगःसद्योमरणमाव्रजेदित्यनुषंगः । तत्रहेतुगर्भभोगानांविशेषणं परेति । परैःकुदृष्टिभिर्दृष्टउपभोगोयेषांतेतथातैः । नकेवलंविषयाएवमरणहेतवःकिंतुतेकुदृष्टयःसर्पाद्याश्चापिमरणहेतवोभवंति यतस्तदर्थिनस्तत्तद्भोगकामाइतिसंबंधः १५८ फलितमाह ततइति । स्पष्टम् १५९ प्राणस्यापिजीवनंप्रतिहेतुत्वाभावंव्यभिचारेणाह

क्षरत्ययंयदादेहाद्देहिनोनतदाभवेत् ॥ इदंसर्वंततस्तस्यक्षरणंविनिवारयेत् ॥ मंत्रैरप्यौषधैस्तद्वद्योगैर्नानाविधैरपि १५१ अग्नेर्मुखेयदातिष्ठेद्रसोबद्धस्तदाभवेत् ॥ बद्धेखेचरतादिःस्यात्सिद्धिःसर्वशरीरिणः १५२ नारीयोनिर्भवेदग्निःपुमान्वृक्षइतीरितः ॥ रसोरेतइतिप्रोक्तंयोगशास्त्रविचक्षणैः १५३ अग्निसंपर्कतोमूलाद्रसोवृक्षस्यनिःसरेत् ॥ एकदापिविनश्येत्सबहुकृत्वस्तुकिंपुनः १५४ नारीवन्हिसमाश्लेषात्पुंसोरसविनिर्गमे ॥ वृक्षस्येवविनाशःस्यात्ततस्तंपरिवर्जयेत् १५५ इत्यादिदेहयोगेपिश्रूयतेमृतिकारणम् ॥ नारीभोगस्ततोनायंजीवनायद्विजोत्तमाः १५६ चंदनैर्बहुशोयुक्तादतिशीतादयंपुमान् ॥ वाताद्वासंनिपाताद्वासद्योमरणमाव्रजेत् १५७ अन्यैरपितथाभोगैःसुगंधैश्चमनोहरैः ॥ परदृष्टोपभोगैस्तैर्भुक्तैस्तेपितदर्थिनः ॥ सर्पदुर्जनवैर्याद्याःसद्योमरणहेतवः १५८ ततोमीविषयाःकेपिजीवनायनदेहिनः ॥ जीवनायापिनस्युर्येतेस्युःकेनजनौनृणाम् १५९ प्राणोपिनचदेहेस्मिन्जंतूनांजीवनायहि ॥ निष्प्राणाअपिजीवंतिदेहिनःस्थावरायतः १६० जंगमाअपिमूर्च्छादौप्राणशून्यादिनाधिकम् ॥ जीवंतितत्तएवायंप्राणोहेतुर्नजीवने १६१ नचवन्हिश्चरक्तंचजीवनेकारणंस्मृतम् ॥ नीरक्ताःप्राणिनःकेचिज्जीवंत्यपिनिरग्नयः १६२ शस्त्रच्छेदेपिकेषांचिद्रोगिणांनैवदृश्यते ॥ रुधिरंस्पर्शतोप्येषामौष्ण्यंनैवोपलभ्यते १६३ केनतेनवयंविप्राजीवामइतिसंशये ॥ जीवनस्यापिचेच्छक्तानिश्चेतुंकारणंनहि ॥ शक्रमःकेनचोत्पत्तिकारणेनिश्चयंप्रति १६४

प्राणोपीति । प्राणपदेनात्रश्वासप्रश्वासाख्यःप्राणव्यापारोलक्ष्यते स्थावरेष्वप्यंकुराद्युद्गमेनप्राणसत्वस्यसर्वसंमतत्वात् तथाचनिष्प्राणाअनुपलभ्यमानश्वासकाअपिस्थावरायतोजीवंतोदृश्यंतेतःश्वासप्रश्वासरूपःप्राणव्यापारोपिनजीवनहेतुरित्यर्थः १६० जंगमाअपिमूर्छाद्यवस्थास्वनुपलभ्यमानप्राणव्यापारकाअपिजीवंतोदृश्यंतइत्यतोनतस्यहेतुत्वमित्याह जंगमाअपीति । दिनाधिकंएकादिनादधिकंकालं अत्यंतसंयोगेद्वितीया १६१ केचिद्वैदर्याग्निंकेचिचरुधिरंजीवनहेतुंवदंतितन्मतंदूषयति नचेतिद्वाभ्यां स्पष्टम् १६२ तत्रोदाहरणमाह शस्त्रेति । केषांचिद्रोगिणांशस्त्रेणनाडीविदारणेपिरुधिरंनदृश्यतेकेषांचिद्रोगिणांचस्पर्शेनौष्ण्यंनलभ्यतेतथापितेजीवंतोदृश्यंते यतइतिशेषः १६३ एवंजीवनहेतुनिश्चयस्यापिदुर्लभत्वेउत्पत्तिहेतुनिश्चयस्यदुर्लभत्वंकिमुवाच्यमित्याह केनेति । वयंकेनजीवामइतिसंशयेसतियदिजीवनस्यकारणंनिश्चेतुंनशक्ताःस्मतदाउत्पत्तिकारणविषयकनिश्चयंप्रतिकेनप्रकारेणशक्तुमःशक्ताभवेमनकेनापीत्यर्थः १६४

वयंकिमाधारकाइत्यर्थेकंकचसंप्रतिष्ठाइत्यंशंविवृणोति प्रतिष्ठामितिचतुर्भिः । प्रतिष्ठामाधारमप्यात्मनःसंघातस्यनजानीमःतथाहि यदिदेहोभूम्याश्रितस्तर्हिसाभूमिःकिमाश्रयिकायश्चभूमेराधारः कल्प्यतेसोपिक्कुत्रतिष्ठतीत्याकांक्षानशाम्यतीति एवंचित्ताधारोदेहाद्याधाराद्विलक्षणएववाच्यः । देहाविशेषेपिचित्तगतीनांनानाविधत्वस्यानुभूयमानत्वादित्याशयेनाह एवंननइति । एवंनोऽस्माकं चित्तमत्रदेहाधारएवव्यवस्थितमितिनवक्तव्यमितियोजना १६५ । १६६ किंचदेहस्याप्याधारताभूमेर्नसंभवतिभूमिसत्वेपिपतनाभावलक्षणस्याधारफलस्यानुपलंभादित्याह अपीति । यतोयंदेह स्तिष्ठन्नूर्ध्वेस्थितःआसनेस्थितआसीनोवानिद्रादिकालेपततिस्थातुंनशक्नोतितेनज्ञायतेयदयंदेहोभूमेःसकाशादन्यस्मिन्कुत्रचिदाधारेस्थितइति १६७ नचतमिति । तंदेहस्यस्थितिहेतुंभूमिसंश्रयंभूमेर प्यालंबनभूतमाधारमपियदानजानीमस्तदाजीवनादिहेतुंज्ञातुंकथंशक्नुयामइति १६८ केनप्रेरिताश्चसुखदुःखफलकेपुकर्मसुप्रवृत्ताःस्मतत्रव्यवस्थांनिर्णयंकुर्मइतिप्रतिपादकस्योत्तरार्धस्यार्थमाह अपि केनेतिपंचभिः । अस्माकंजीवानामनिच्छतामपिनानाविधकर्मसुकर्तृत्वस्यहेतुःकइत्यर्थः १६९ किंचनानाफलानांभोक्तृत्वस्यचहेतुःकोनचतत्रवयंस्वतंत्राःसुखाद्यर्थानुष्ठितकर्मणोविपरीतरूपस्यदर्श

प्रतिष्ठामपिजानीमोनवयंस्वात्मनःक्वचित् ॥ यदिभूमिस्थितोदेहोस्त्यस्माकंकुत्रसास्थिता १६५ यत्रसावर्ततेभूमिराधारःसोपिकुत्रवा ॥ तिष्ठत्येवंननश्चित्त माधारेत्रव्यवस्थितम् १६६ अपिनिद्राभिभूतोयंतिष्ठन्नप्यासनेस्थितः ॥ देहःपततितेनायंभूमेरन्यत्रसंस्थितः १६७ नचतंवयमाधारंजानीमोभूमिसंश्रयम् ॥ जीवनस्यतथोत्पत्तेर्ज्ञास्यामःकारणंकथम् १६८ अपिकेनहृदिस्थेनभूताविष्टाइवाधुना ॥ अनिच्छंतोपिकर्माणिकुर्मोनानाफलान्यपि १६९ अपिकुर्मःसुखा र्थानिकर्माण्यत्रतपोधनाः ॥ दुःखदानिकुतस्तानिभवंत्यस्माकमर्थिनाम् १७० दुःखदेपिकृतेक्वापिकर्मण्यस्तिसुखंद्विजाः ॥ सुखदुःखेततोऽस्माकंस्वतंत्रः कोपियच्छति ॥ प्रविष्टोहृदयांभोजेतंनविद्मोवयंद्विजाः १७१ यदैतमपिजानीमःसुहृदंहृदयस्थितम् ॥ सुखदुःखप्रदंनैवजानीमःकेनवापरम् ॥ आधारेजीवने तद्वज्जनेहेतुमलक्षितम् १७२ ततोमीमांस्यतांविप्राःकारणंजगतोत्रकिं ॥ वयंदैवादिहायाताःसर्वएवमहाधियः १७३ इत्युक्तातइमान्पक्षान्ब्राह्मणानांसभा स्थिताः ॥ ब्रह्मविज्ञानसंपन्नानिराकार्यानथोचिरे १७४ ब्राह्मणाःकालइत्येवकेचित्कारणमास्थिताः ॥ कालतोजायतेसर्वंपंचभूतादिकंजगत् ॥ सर्वंतिष्ठतिकाले चलीयतेकालआगते १७५

नादित्याह । अपिकुर्मइति । वयंसुखार्थंकर्माणिकानिचित्कुर्मस्तानितुदुःखदानिकुतोभवंति अर्थिनांसुखमिच्छतांनइत्यर्थः १७० दुःखदेपीति । कदाचित्तुदुःखदत्वेनाभिमतेकर्मणिकृतेपिसुखंभव तियथाऽपथ्यसेवनाद्रोगनिवृत्तिरित्यादि तस्मादेवंज्ञायतेयदस्माकंहृद्गतःकश्चित्कर्तृत्वभोक्तृत्वयोःप्रेरकोवर्ततेपरन्तुतंनजानीमइति १७१ यदैतमिति । आधारपदेनाधारकार्यंधारणंलक्ष्यते तथाचएतं कर्मसुप्रेरकंसुखादिप्रदंचयदानैवजानीमस्तदापरंधारणजीवनादौहेतुंकेनजानीमइतियोजना १७२ ततःश्रुतिगतव्यवस्थापदोक्तोनिर्णयोविचारेणकार्यइत्याह ततइति स्पष्टं १७३ एवंविपयांशशोधन परत्वेनप्रथममंत्रोव्याख्यातोऽथनानापक्षोपन्यासमुखेनसंशयपूर्वपक्षयोर्निरूपणपरत्वेनकालइत्यादेर्द्वितीयमंत्रस्यार्थंपंचसप्ततिश्लोकैर्निरूपयंस्तत्रैकेनावतारयति इत्युक्तेति । निराकार्यान्खंडनी यान्पक्षानथानंतरेणद्वितीयमंत्रेण । ऊचिरेउक्तवंतः १७४ तत्रकालस्यस्वतंत्रकारणतावादिनांज्योतिर्विदांपक्षंप्रपंचयति ब्राह्मणाइतित्रयस्त्रिंशच्छ्लोकैः । केचिद्ब्राह्मणाःकालएवकारणमितिपक्षमा स्थिताःप्रतिज्ञातवंतः तमभिनयति कालइत्यादिना १७५

कालतःस्वर्गमित्याद्यादशश्लोकानिगदव्याख्याताः १७६ । १७७ । १७८ । १७९ । १८० । १८१ । १८२ । १८३ । १८४ । १८५ तत्रोपपत्तिमपिप्रपंचयति भावांतरमित्यादिना । यदिकिंचिद्भावांतरंकालवर्जितंकालनिरपेक्षंकारणंकार्यंनियतपूर्ववर्तिस्यात्तदातस्यैवकारणत्वंभवतादस्तुनिवारयामःपरंतुतादृशंभावांतरंनास्तियतएवकालःसर्वेषुकारणेषु कारणत्वाभिमतेषुस्थितेष्वपिसंनिहितेष्वप्यपेक्ष्यतेऽतोऽनन्यथासिद्धान्वयव्यतिरेकशालित्वात्कालएवकारणमितिद्वयोरर्थः १८६ । १८७ अन्यानिकारणत्वाभिमतानिव्यभिचारीणिनियतपूर्ववर्तीनिनभवंतिकालस्तुतथाभवतीत्यतःकालएवकारणमित्याह व्यभिचारीणीति १८८ अनन्यथासिद्धान्वयव्यतिरेकशालित्वरूपंकारणलक्षणंकालेयोजयति यस्मिन्निति । यस्मिन्भावेसतिपूर्वंविद्यमानएवयद्भूयाज्जायेतअसतिचअविद्यमानेतुनजायेततत्कारणमुच्यते कालस्तुतादृग्युक्तकारणलक्षणवान्लभ्यतेदृश्यतेइत्यर्थः १८९ किंचकालस्यसर्वत्रानुगतत्वात्तस्यै

कालतःस्वर्गमागच्छेत्कालतोनरकंव्रजेत् ॥ कालतश्चाखिलान्लोकान्भूरादींश्चापिदेहभाक् १७६ कालेनैवोच्चतांगच्छेत्कालादेवचनीचताम् ॥ कालेनमध्यमोभूयाद्देहधारीजनोखिलः १७७ संपदोविपदश्चापिकालादेषसमाप्नुयात् ॥ कालतोविषयान्सर्वान्सुखदुःखप्रदानपि १७८ विद्यानानाविधाःकालाद्भोगमोक्षसुखप्रदाः ॥ कालतःप्राप्नुयाद्दारान्वयौवनशालिनः १७९ पुत्रान्नानागुणोपेतान्बांधवांश्चसहस्रशः ॥ सुहृदोपिचमध्यस्थान्वैरिणोद्वेषकारिणः १८० उपकारापकाराणांकर्तॄन्जंतूंश्चकालतः ॥ कालतोलभतेजन्मबाल्ययौवनवार्द्धकम् १८१ मरणंचतथाकालात्पितरंमातरंपुनः ॥ सहोदराननेकांश्चस्त्रीपुंसवपुराश्रितान् १८२ गर्भवासंतथाकालाद्गर्भान्निःसरणंपुनः ॥ ऐश्वर्यंविविधंकालात्तद्भ्रंशमपिकालतः १८३ कालादृतुमतीनारीगर्भंकालाच्चगच्छति ॥ वातवर्षातपाद्याश्चजायंतेकालतःसदा १८४ किंबहूक्तेनविप्रेंद्राःकालात्सर्वस्यसंभवः ॥ जायमानंततःसर्वंकालकार्यमुदीरितम् १८५ भावांतरंयदाभूयात्कारणंकालवर्जितम् ॥ कारणत्वंतदातस्यभवतांननिवार्यते १८६ कारणेषुचसर्वेषुस्थितेष्वेपोप्यपेक्ष्यते ॥ यदातदाकथंकालःकारणंनभविष्यति १८७ व्यभिचारीणिसर्वत्रकारणानिपरस्परम् ॥ कार्येष्वव्यभिचार्येकःकालस्तेनात्रकारणम् १८८ यस्मिन्सत्येवयद्भूयान्नभवेदसतीहतत् ॥ कारणंप्रोच्यतेसर्वैःकालस्तादृग्विलभ्यते १८९ तंतुभ्यस्तुपटोयद्वज्जायतेचमृदोघटः ॥ बीजेभ्यस्त्वंकुरस्त्वत्रभूमिःसर्वत्रकारणम् ॥ सर्वत्रानुगतत्वेनहेतुनापार्थिवेष्विह १९० एवंसर्वत्रकार्येषुनानाकारणजेष्वपि ॥ कालःसर्वगतःसर्वकारणंपरिकीर्तितः १९१ कालेनरहितंनैवकारणंकार्यजन्मनि ॥ समर्थंदृश्यतेनापिकार्यंस्वस्यजनौतथा १९२ एवंस्थितिविनाशेषुकालेनरहितंनहि ॥ कारणंवापिकार्यंवादृश्यतेकेनचित्क्वचित् १९३

वलाघवात्कारणत्वमस्तुइतरेषांसहकारित्वमात्रमितिदर्शयन्ननुगतस्यकारणतायांदृष्टांतमाह तंतुभ्यइति । यथापटघटांकुराणांतंत्वादिरूपाणिविशेषकारणान्युपलभ्यंतेतथापिसर्वेषुपार्थिवेषुकार्येषुभूमिरेवकारणत्वेनस्वीक्रियतेऽनुगतत्वाद्विशेषास्तुतत्सहकारित्वेनैवांगीक्रियंतेइत्यर्थः १९० दार्ष्टांतिकेयोजयति एवंसर्वत्रेति स्पष्टम् १९१ कालस्यसर्वत्रापेक्षितत्वरूपंसर्वत्रानुगतत्वमेवस्फुटयति कालेनेति । कार्यमपिस्वोत्पत्तौतथाकालमनपेक्ष्यसमर्थंनेतिचतुर्थपादार्थः १९२ यथाचोत्पत्तौकालनिरपेक्षंकारणंलभ्यतेतथास्थित्यादिष्वपीत्याह एवमिति १९३

फलितमाह ततइतिद्वाभ्यां । ततउक्तयुक्त्याकालस्यैवकारणत्वौचित्यात्यदिकिंचित्कारणांतरंप्रधानरूपमपरंपरमाण्वादिरूपंवावादिभिःकल्प्यतेतदकारणंबोध्यमितिसंबंधः कारणांतरक
ल्पनायांहेतुमाह स्फुरणेति । स्फुरणंप्रत्यक्षरूपंज्ञानंबोधस्तुपरोक्षरूपंताभ्यामित्यर्थः किंचिद्धिप्रत्यक्षेणान्वयव्यतिरेकौगृहीत्वाकारणंकल्प्यतेयथापार्थिवानांपृथिवी किंचित्तुपरोक्षज्ञानं
नसामान्यतोदृष्टाख्येनयथाप्रधानादीति १९४ कालयोगाद्धिति । तेषांकल्पितकारणांतराणांयतःकालसंबंधेनैवकार्यजननसामर्थ्यंततःकालएवहेतुरिति १९५ अत्रतार्किकमतसिद्धं
परमाणूनांकारणत्वमाशंक्यतेषांकारणत्वमनित्यत्वादेवनसंभवतीतिपरिहारंसूचयंस्तदनित्यत्वंसाधयति अपिनैवेति । पृथिवीपरमाणवोननित्याःपृथिवीत्वान्मृत्तिकावदित्यादयःप्रयो
गाः ननुमध्यममानमनित्यत्वस्यव्यापकंतदभावेकथमणूनामनित्यत्वमितिचेन्न शब्दादिपुगुणेषुमध्यमपरिमाणाभावेप्यनित्यत्वदर्शनेनमध्यमपरिमाणस्यानित्यत्वव्यापकत्वादित्याशयेनाह
नचेति । अणुपरिमाणपरममहत्परिमाणभिन्नपरिमाणरूपस्यमध्यममानस्ययोगःसंबंधोप्यनित्यत्वस्यकारणंप्रयोजकोनभवतीत्यर्थः १९६ लाघवेनविभुभिन्नत्वमेवाऽनित्यत्वस्यप्रयोजकं
तद्बलाच्चपरमाणूनामनित्यत्वमभ्युपेयमित्याह असर्वगतेति । सर्वस्यभूतात्मकस्यवस्तुनःअसर्वगतमानत्वेविभुभिन्नत्वेसत्यसत्त्वमनित्यत्वंदृष्टमेवंसत्यपितवपरमाणुषुकःपक्षपातोयन्मूर्तानामपिनि
त्यत्वंमन्यसइत्यर्थः १९७ ननुपरमाणवोनित्याःस्युर्निरवयवत्वादितिसत्प्रतिपक्षमाशंक्यनिरवयवत्वस्यगुणादिषुव्यभिचारित्वेनहेतुत्वायोग्यतामाह नचावयवेति । निरवयवत्वंनित्यत्वसाधकंनभ

ततोत्रजगदुत्पत्तौयदिस्फुरणबोधतः ॥ प्रधानंचापरंवापिकारणंतदकारणम् १९४ कालयोगाद्धिसामर्थ्यंतेषांनैवस्वतोयतः ॥ कालस्ततोत्रविज्ञेयःकारणंनापरं
ततः ९५ अपिनैवाणवोनित्यामूर्तत्वाद्धिमृदादिवत् ॥ नचमध्यममानस्ययोगोऽनित्यत्वकारणम् ९६ असर्वगतमानत्वेऽसत्त्वंसर्वस्यवस्तुतः ॥ भूतात्मकस्यके
नायंपक्षपातस्तवाणुषु ९७ नचावयवहीनत्वंनित्यत्वेकारणंमतम् ॥ क्रियागुणादयोयस्मादनित्याःसंतितादृशाः ९८ नचावयवहीनत्वेसतिद्रव्यत्वसंगमात् ॥ नि
त्यत्वंतेष्वयस्मात्स्यान्मूर्तत्वंचविपर्यये ९९ विरोधादनयोर्नैकंनिर्णेतुंशक्यतेत्वया ॥ विभक्तत्वादनित्यत्वमस्माभिरवधार्यते २०० अप्यष्टदिक्समाश्लिष्टाःकुतोव
यववर्जिताः ॥ अणवोयोगिनोयस्मात्सर्वेसावयवामताः २०१ अणवोपिततस्त्वेतेकालादव्यक्तजन्मनः ॥ प्रभवंतिजगत्सर्वंयथातस्मान्महात्मनः ॥ नित्यावासं
तुमेवैतेकारणंकालवर्जिताः २०२

वतियतोगुणादयस्तादृशानिरवयवाअप्यनित्याइष्यंतइत्यर्थः १९८ अथनिरवयवत्वमात्रंनहेतुःकिंतुनिरवयवत्वेसतिद्रव्यत्वंतस्यचनकुत्रापिव्यभिचारइतिचेत्तथाप्यस्माभिःप्रयुक्तेनमूर्तत्वरूपहेतुना
अनित्यत्वसाधकेनप्रतिरोधात्तवनिश्चयोनसेत्स्यति सत्प्रतिपक्षस्थलेपरस्परप्रतिबंधादेकेनाप्यनुमितिरूपोनिश्चयोनजन्यतइतिसिद्धांतादित्याशयेनाह नचावयवहीनत्वेसतीति । निरवयवत्वेस
तिद्रव्यत्वस्यहेतोःसंगमात्संबंधान्नित्यत्वंनसिध्यतियतोऽस्मत्प्रयुक्तोमूर्तत्वरूपोहेतुर्विपर्ययेऽनित्यत्वेसाधनक्षमोवर्त्ततेतथासतितवनिर्णयोनभविष्यतीति नन्वेवंसतिभवतामप्यनित्यत्वनिर्णयःकथं
स्यादितिचेद्यावद्धिकारंतुविभागोत्वेकव्यक्तिन्यायप्रसिद्धेनातोन्यदार्त्तमितिश्रुत्यनुगृहीतेनविभक्तत्वरूपहेतुनेत्याह विभक्तत्वादिति । अस्माभिस्तुविभक्तत्वादनित्यत्वमवधार्यतइतिद्वयोरर्थः १९९
२०० किंचोक्तोहेतुर्विशेषणासिद्धः निरवयवत्वस्यपरमाणुष्वसंभवादित्याह अप्यष्टेति । अपिचपरमाणवोमूर्तत्वात्सकोणपूर्वाद्यष्टदिग्भिस्तद्वर्त्तिपरमाण्वंतरादिभिर्वासमाश्लिष्टाःसंयुक्ताइष्यं
तएवमवद्भिस्तथाचकथंनिरवयवत्वं संयोगिनोहितावयवाद्दृष्टाः संयोगस्यैकदेशवृत्तित्वरूपाव्याप्यवृत्तित्वस्यप्रसिद्धेरिति २०१ अणूनामनित्यत्वेचतेस्वोत्पत्त्यर्थंयंकालमपेक्षंतेसएवजगद्धेतुस्तद्धेतोरि
तिन्यायादित्याह अणवोपीति । अव्यक्तमलक्षितंजन्मयस्यतस्मात्कालादेवाणवोजायंतइतिवाच्यमनित्यत्वात् तथाचसएवजगद्धेतुरस्त्वित्यर्थः तेषांनित्यत्वाभ्युगमेपिसर्वदासतांसृष्टिव्यवस्थार्थं
कालस्यावश्यापेक्षणीयत्वादपिकालस्यैवजगद्धेतुत्वमुचितमित्यर्थः २०२

किंचाणुभिःप्रलयेविभागेनावस्थितैःसृष्टचनारंभात्संयोगहेतुःकालोऽपेक्षणीयइत्यतोपिकालस्यैवहेतुतोचितेत्याह अपिभिन्नाइति भिन्नाविभागेनावस्थिताएतेऽणवोजगतःकृतौनिर्माणेनप्रभवंतिश क्तानभवंति २०३ फलितमाह ततइति । सर्वव्यापारान्कारयतीतिसतथा ण्यन्तात्कर्त्तरिल्युः २०४ स्वभावस्यजगत्कारणतांवदतांलोकायतानांमतंप्रपंचयति अत्रापीतिचतुर्दशभिः अत्रका लवादिमते एवंवक्ष्यमाणविधया २०५ युक्तिजालंप्रपंचयति कारणमिति । भवतांकालवादिनांकारणत्वेनाभिमतःकालःकथंकारणंस्यादितिविचार्यं किमेषकालोनिखिलवस्तुनःकारणंभवन्ना त्मनःस्वस्यकार्यस्यवास्वभावात्स्वभावमपेक्ष्यकारणंभवेत्किंवास्वभावमनपेक्ष्येत्यर्थः २०६ अंत्यंदूषयति अस्वभावादितिदशभिः यद्येषकालःस्वभावमनपेक्ष्यहेतुस्तदावन्हेःसंहतौपुंजेखेआ काशेवाअनाश्रयेजलानाधारस्वभावेजलंकुतोनोत्पादयतीत्यर्थः २०७ एवंवन्हिनातृट्शांतिजलेनचशीतशांतिंकुतोनकरोतीत्याह वन्हिनेति २०८ तथान्नादिसाधनानिंविनाक्षुन्नाशादिकार्या

अपिभिन्नाइमेनैवसर्वस्यजगतःकृतौ ॥ प्रभवंतिकुतस्त्वेषांसर्वकारणताभवेत् २०३ ततःसर्वगतःकालःसर्वव्यापारकारणः ॥ एकःकारणमुद्दिष्टोनेतरत्कारणांतरम् २०४ अत्रापिदूषणंप्राहुःकेचिन्मुनिवराद्विजाः ॥ एवंवदंतोबहुशोयुक्तिजालंमहाधियः २०५ कारणंभवतांकालःकथंस्यादितिचिंत्यताम् ॥ किमेषकारणं कालोभवेन्निखिलवस्तुनः ॥ आत्मनस्तस्यकार्यस्यस्वभावाद्वाऽस्वभावतः २०६ अस्वभावाद्यदाहेतुस्तदावन्हेस्तुसंहतौ ॥ कालोजलंकुतोनैषकुरुतेखेह्यनाश्रये २०७ वन्हिनाकुतएवैषतृषाशांतिंकरोतिन ॥ नीरेणशीतलेनात्रकस्मात्वशीतक्षयंनच २०८ अन्नंविनाक्षुधानाशंकस्मादेषकरोतिन ॥ जायांविनासुतानेषद दात्वेषांसुतार्थिनाम् २०९ मृतानामपिसंयोगंशरीराणामिहैवच ॥ सुखदुःखकरंकस्मान्नददातिमहेश्वरः २१० कुतोवामृतदेहोयंनास्माभिर्भाषतेधुना ॥ नारीं पुरुषयोगेनविनागर्भंदधात्विह २११ नभोनिच्छिद्रतांयातुपृथिवीचरसातलम् ॥ अस्नेहत्वंचनीराणितेजोयात्वप्रकाशताम् २१२ वायुर्निश्चलतांयातुयतोनापेक्ष तेतव ॥ कालःस्वभावंकस्यापिस्वस्यवापिपरस्यवा २१३ अपिकस्मादयंकालोमलमूत्रविसर्जनम् ॥ नराणांवदनेनैवनकारयतिकारणम् २१३ घ्राणेनशब्दश्र वणंश्रोत्राद्गंधग्रहंतथा ॥ नयनाभ्यांतथाहारग्रहणंसर्वदेहिनाम् २१५ एवंशेषेंद्रियाणांचव्यापाराणांविपर्ययम् ॥ नकारयतिकस्मात्सकालःसर्वस्यकारणम् २१६ ततःस्वभावएवात्रकालस्यापिनियामकः ॥ कारणस्यापिकार्याणांस्वभावस्तेनकारणम् २१७

णिकुतएषकालोनजनयेदित्याह अन्नमिति २०९ एवंमृतशरीरसंयोगद्वारापिसुखादिकंकुतोनजनयतीत्याह महेश्वरःकालः २१० कुतोवेति । भाषतेभाषणंकरोति २११ तथाकाशा दयोऽवकाशादिरूपाणिकुतोनत्यजंति कालःस्वस्यपरस्यवास्वभावंनापेक्षतइतित्वयाभ्युपेतत्वादित्याह नभइतिद्वाभ्यां । पृथिवीचरसातलमित्यस्यपृथिवीधारणव्यापारंत्यजत्वित्यर्थः शेषंस्प ष्टंद्वयम् २१२ । २१३ एवंस्वभावानपेक्षःकालइतरेंद्रियव्यापारमितरेंद्रियेणकुतोनकारयतीत्याह अपिकस्मादितित्रिभिः । निगदव्याख्यातंत्रयम् २१४ । २१५ । २१६ एवंस्वभावा नपेक्षत्वपक्षस्यदुष्टत्वेस्वभावसापेक्षत्वपक्षएवाभ्युपेयः तथाचतद्धेतोरितिन्यायात्स्वभावएवजगद्धेतुरस्त्वित्याह ततइति । ततःकारणस्यकार्याणांवास्वभावएवकालस्यनियामकोव्यवस्थापको भ्युपेयस्तेनावश्यापेक्षणीयत्वेनस्वभावएवकारणमस्त्वितिसंबंधः २१७

सचस्वभावःसर्वशंकापरिहारक्षमइत्याह व्यापारानिति । एवंस्वभावस्यहेतुतांगीकारेंसतिरूपग्रहणेचक्षुषएवकरणत्वंरूपस्यचचक्षुषएवविषयत्वंकुतइत्यादिशंकासुस्वभावादित्येवोत्तरमिति भावः २१८ एवमिति । एवंविषयेंद्रियनियमवत्सर्वस्यप्रवृत्तौनिवृत्तौजन्मादौचस्वभावएवहेतुरित्यर्थः २१९ स्वभावस्यापिव्यवस्थाहेतुर्धर्मात्मकमदृष्टंनियतिपदवाच्यंजगद्धेतुरितिमीमांसकमतंप्रस्तौति अत्रापीतिपंचभिः । स्वभावोपिनियतःकेनचिद्व्यवस्थापितःसन्हेतुरनियतोवा अंत्येवन्ह्यादिभिःशैत्यादिजननापत्तिरितिद्वयोरर्थः २२० । २२१ एवमिति । दूषणमव्यवस्थारूपंस्यादितिशेषः ततोनियतोनियत्याव्यवस्थापितएवस्वभावःकारणमभ्युपेयइति २२२ नियतेरेवकारणत्वेपूर्वन्यायमतिदिशति यथेतिद्वाभ्याम् । यथाजगत्सृष्ट्यादौकारणीभवन्नपि कालःस्वभावसापेक्षःकारणंभवतीत्यालोच्यसनकारणंकिंतुस्वभावएवकारणमित्युक्तंएवंस्वभावसंस्थानास्वभावस्यसंस्थानंव्यवस्थारूपोविन्यासोययातादृशीनियतिरेवहेतुतयात्वयाऽभ्युपेयान स्वभावइतिद्वयोःसंबंधः २२३ । २२४ प्रत्यक्षैकशरणाःकेचित्काकतालीयन्यायेनोत्पत्तिंकेषांचिद्भावानांदृष्ट्वाकार्यस्यकर्त्राद्यालोचनानपेक्षत्वरूपांयदृच्छामेवहेतुतयामन्यंतेतन्मतंदर्शयति अत्रापिदूषणमितिचतुर्भिः । अत्रनियतिकारणवादेदूषणंव्यभिचाररूपंसूक्ष्ममल्पंकाचित्कमितियावत् तादृशमर्थंपश्यंतइत्यर्थः 'सूक्ष्मंस्यादल्पकेऽन्यवत्'इतिविश्वप्रकाशः । नियतिस्वरूपमनूद्यत

व्यापारानिंद्रियाण्येवंस्वभावादेवकुर्वते ॥ विषयाश्चस्वभावेनस्वेंद्रियाणिव्रजंत्यमी २१८ एवंसर्वंस्वभावेनजगदेतच्चवर्तते ॥ निवर्ततेचजन्मादिस्वभावादेवगच्छति २१९ अत्रापिमुनयःकेचिद्दोषंप्राहुर्विचक्षणाः ॥ स्वभावोनियतोहेतुरथवानियतिंविना २२० विनापिनियतिंचेत्स्यात्स्वभावःकार्यकारणम् ॥ सर्वत्रसर्वदासर्वंसर्वथाकिंनजायते २२१ एवंस्थितौविनाशेचदूषणंनियतिंविना ॥ नियतस्ततएवायंस्वभावःकारणंस्मृतः २२२ यथाकालोजगत्यस्मिन्सृष्टिस्थित्यंतकारणम् ॥ भवन्नपिस्वभावेनभवतीतिनकारणम् ॥ किंतुस्वभावएवायंकारणंकालगोपियः २२३ एवंस्वभावसंस्थानानियतिःसर्वकारणम् ॥ नियतिश्चयतोहेतुःस्वभावोनतयाविना २२४ अत्रापिदूषणंप्राहुःकेचित्सूक्ष्मार्थदर्शिनः ॥ अनेनैवभवेदेवंहीदमेवनचापरम् २२५ इतिभावेतथाभावेव्यतिरेकेणकारणम् ॥ नियतिर्वादिनामिष्टापुष्पवत्यायथारजः ॥ एतद्यादृच्छिकंदृष्टंलोकेकार्यंसकारणम् २२६ धर्मात्मनांयथादुःखंपापिनांवायथासुखम् ॥ नारीपुत्रादयस्तद्वत्सुखार्थादुःखकारणम् ॥ प्रहाराद्याश्चदृश्यंतेदुःखार्थाःसुखहेतवः २७ नियतिःकारणंतेनभवेल्लोकेयदृच्छया ॥ यदृच्छैवततोहेतुर्नियतिर्ननियामिका २८

व्यभिचारप्रदर्शनमेवाभिनयति अनेनैवेत्यादिना । व्यतिरेकपदमन्वयस्याप्युपलक्षणम् तथाचइदंकार्यमनेनैवकारणेनभवेत्तथाएवमेवानेनैवप्रकारेणभवेत्तथास्मात्कारणादिदमेवकार्यंभवेदित्येवंविधानियतिःकार्यस्यभावाभावयोरन्वयव्यतिरेकाभ्यांकारणत्वेनवादिभिरभिमतायथाऋतुमत्याःस्त्रियोरजएवगर्भधारणकारणमितिपरंतुतथानमंतव्यम् यतोलोकेकार्यंकारणंचयादृच्छिकंयदृच्छायाःस्वैरितायाःकर्त्राद्यालोचनाद्यनपेक्षत्वरूपायाहेतोरागतंदृष्टमितिद्वयोरर्थः 'यदृच्छास्वैरितास्वेच्छा' इतिहेमचंद्रः २२५ । २२६ तत्रोदाहरणंदर्शयति धर्मात्मनामिति । यथासुखसाधनधर्मसंपन्नानामकस्माद्दुःखंजायमानंदृष्टंतथादुःखसाधनपापशालिनांसुखं सुखसाधनत्वेनप्रसिद्धानांनार्यादीनांदुःखहेतुत्वं दुःखहेतुतयासिद्धानांपादप्रहारादीनांश्रांतादौसुखहेतुत्वंचदृष्टमित्यर्थः २२७ नियतिरिति । तेनोक्तव्यभिचारेणएवंज्ञायतेयत्कुत्रचिद्यदृच्छयैवसंपादितानियतिःकारणत्वेनलोकेर्मन्यतेपरंतुतन्नयुक्तम् । घटपूर्वकालेयदृच्छयासन्निहितानांरासभादीनांकारणत्ववारकेणार्थसमाजग्रस्तानांनकारणत्वमितिन्यायेनविरोधात्किंतुतत्प्रयोजिकायदृच्छैवकारणतायोग्येत्यर्थः २२८

अथयदृच्छायाधर्मभूतायाधर्मिनिरपेक्ष्येणकारणत्वासंभवात्प्रत्यक्षाणिभूतानिविहायधर्म्यंतरकल्पनायामन्याय्यत्वाच्चपृथिव्यादीनिभूतान्येवकारणमित्याकारंप्रत्यक्षशरणानामेवमतांतरमाह अत्रापि केचिदितित्रिभिः । सायदृच्छापिभूतलक्षणधर्मिसापेक्षैवेत्युत्तरार्द्धार्थः २२९ यदृच्छानामेति । नियतिनिरपेक्षोयंयदृच्छानामधर्मः कस्यचिद्धेतोःकारणस्यैवसंबंधितयावाच्यःयतोधर्मोधर्मिनिरपेक्षो नदृश्यतेइत्यर्थः २३० तस्यचधर्मीभूतभिन्नोनाभ्युपेयःसंभवतिदृष्टेऽदृष्टकल्पनायाअन्याय्यत्वात्तथाचभूतान्येवकारणमित्याह धर्मीनैवेति । अत्रयदृच्छायामुपयोगीधर्मीनकल्पनीयःप्रत्यक्षाणांभूतानामेवधर्मित्वसंभवादिति । फलितमाह प्रत्यक्षाणिचेति २३१ भूतानामपिसावयवत्वेनकारणसापेक्षाणांत्रिगुणत्वादिसाधर्म्येणकारणत्वयोग्याप्रकृतिरेवश्रुतिगतयोनिपदोक्ताजगत्कारणमितिसांख्यमतंदर्शयति अत्रापिमुनयइतिपंचभिः । अत्रभूतकारणत्वे असंतोषमेवाभिनयति भूतानीति । घटवत्सावयवानांकारणेनविनाभावासंभवादेतेषामपिकिंचिदन्यत्कारणमभ्युपेयमित्यर्थः २३२ तच्चकारणंसजातीयमेवाभ्युपेयमितिसदृष्टांतमाह कार्यमिति स्पष्टं २३३ तच्चसाजात्यंसुखदुःखमोहलक्षणसत्वादिगुणत्रयशालित्वेनेतिदर्शयन्भावानांत्रैगुण्यंप्रतिजानीते रत्नेति । तत्रसुखरूपत्वेन

अत्रापिकेचिन्मुनयइत्थमाहुर्महाधियः ॥ भूतेषुसत्सुसापिस्यान्नभूतानिविनाक्वचित् २२९ यदृच्छानामधर्मोयंहेतोर्नियतिवर्जितः ॥ धर्मिणंतुविनानैवधर्मः सिध्यतिकुत्रचित् २३० धर्मीनैवप्रकल्प्योत्रप्रत्यक्षेसतिधर्मिणि ॥ प्रत्यक्षाणिचभूतानिततस्तान्येवकारणम् २३१ अत्रापिमुनयःकेचिदसंतुष्टाइदंजगुः ॥ भूतानिघटतुल्यानिकारणेनविनाकथम् ॥ भवंतिततएतेभ्योह्यन्यदप्यस्तिकारणम् २३२ कार्यंहियादृशंदृष्टंतादृगेवात्रकारणम् ॥ भवेद्यद्वद्घटादेःस्यान्मृत्तिकैवात्र कारणम् २३३ रत्नस्त्रीहिमवस्त्राद्याभावास्त्रिगुणकाइमे ॥ सुखस्यैतेभवेयुस्तेहेतवोयस्यहस्तगाः ॥ दुःखस्यापिभवंत्येतेकारणंस्वातिवैरिणः २३४ मोहंचजनयन्तस्तेलोभाविष्टस्यकामिनः ॥ एतानलभमानस्यसर्वदादीनचेतसः २३५ एतेषांकारणंतस्मात्त्रिगुणंसर्ववस्तुषु ॥ अनुस्यूतंजडंचैतद्योनिशब्दसमीरितम् २३६ अत्रापिमुनयःकेचिदिमंदोषंवदंतिहि ॥ सर्वात्मनानसादृश्यंविद्यतेहेतुकार्ययोः ॥ नियमस्ततएवायंव्यर्थोयस्तुयथातथा २३७ जडानांशकटादीनांनस्वतः स्यात्प्रवर्तनम् ॥ ततोजडाकथंचैषायोनिर्विश्वंकरोतिसा २३८ अतोऽजडःपरःकश्चित्पुरुषस्तत्प्रवर्तकः ॥ पुमानेवततोहेतुर्नयोनिःशकटोपमा २३९

सत्वात्मतामाह सुखस्येति । एतेरत्नादयोयस्यहस्तगास्तस्यसुखहेतवोभवंतीतिदुःखात्मकत्वेनराजसत्वमाह दुःखस्येति । स्वस्यरत्नादिमतोयोतिवैरीतस्यदुःखदाः २३४ मोहात्मकत्वेनतामसत्वमाहमोहंचेति । तेरत्नादयः ३५एतेषामिति । तस्मात्सदृशस्यैवकारणतायोग्यत्वादेतेषांजन्यभावानांत्रिगुणत्वेनजडत्वेनचसदृशंसर्वत्रानुगतंचयत्प्रधानाख्यंकारणंतदत्रश्रुतौयोनिशब्देनोक्तमित्यर्थः ३६ संघातपरार्थत्वादिभ्योहेतुभ्यःप्रकृतिरपियदर्थासपुरुषएवहिरण्यगर्भादिरूपोजगद्धेतुरित्याकारंयोगिनांमतंदर्शयति अत्रापिमुनयइतित्रिभिः । तत्रप्रधानकारणाभ्युपगमेहेतुकृतंयत्सादृश्यंतत्सर्वात्मनाअत्यंतंभवद्विवक्षितंयत्किंचिद्रूपेणवा । तत्रनाद्यः अत्यंतसादृश्येभेदाभावप्रसंगेनभेदसापेक्षकार्यकारणभावस्यैवासंभवादित्याशयेनाह सर्वात्मनेति । नांत्यः यत्किंचित्सादृश्यस्यसर्वत्रसंभवेनातिप्रसंगावारकत्वादित्याह नियमइति । यस्त्वयंयथातथायत्किंचिद्रूपेणवर्तमानसादृश्यनियमःसव्यर्थः भावत्वादिरूपेणशुद्धचितोपिजडानांसादृश्यसंभवादित्यर्थः २३७ तस्माज्जडत्वेनप्रवृत्तौ शकटरथादिवत्परसापेक्षाप्रकृतिर्नहेतुतयांगीकार्येत्याह जडानामिति । जडायोनिःप्रकृतिः २३८ तस्मादजडःसर्वशेषीपुरुषोहेतुतयामंतव्यइत्याह अतइति स्पष्टम् २३९

चिंत्यमितिपदस्यार्थमाह एवमेतेइतिद्वाभ्यां । एतेकालादयःपुरुषांताः तेषुकआदेयोग्राह्योनकोपिसर्वत्रदोषसद्भावादितिभावः २४० ननुपुरुषपक्षेकोदोषइतिचेदसंगत्वादिभिःकारणत्वायोग्यत्वमेवे तिदर्शयन्फलितमाह पुरुषेपीति २४१ अस्तुतर्ह्येषांकालादीनांपुरुषार्थोयःसंयोगःसहेतुरितिशंकावारकस्यतृतीयपादस्यार्थमाह संयोगइति । चेतनेसतिचेतनार्थयस्तेषांसंयोगःसोपिनकारणंप्रकृति वज्जडत्वेनपरसापेक्षतयाअत्रसंयोगेपिकिंकारणमित्याकांक्षायाअनुपरमादित्यर्थः । एतेनश्रुतिगतस्यतथात्मभावादित्यस्यसापेक्षतयातत्तुल्यभावादित्यर्थइतिसूचितं ४२ ननुशुद्धात्मनःकारणत्वायोग्य त्वेपिप्रतिबिंबात्मनोऽभिव्यंग्यचिच्छक्तित्वेनसांख्यमतप्रसिद्धस्यपरिणामित्वेनकारणत्वयोग्यस्यकारणत्वमस्त्वितिशंकावारयंश्चतुर्थपादार्थमाह परिणामीति । यदिजीवःसृष्टौस्वतंत्रःस्यात्तदा सुखसाधनमेवसृजेन्नदुःखसाधनमितिभावः २४३ अथसिद्धांतपक्षप्रकाशकस्यतेध्यानेत्यादेस्तृतीयमंत्रस्यार्थमाह एवमुक्तेइतिसप्तदशभिः । एवंब्रह्मवादिभिरुक्तेसतितत्सभागताःसर्वेशुद्धचित्ताःश्रुति वाक्याद्ब्रह्मकारणतांविज्ञायापितत्रोपपत्तिजिज्ञासंतस्तत्पूर्वपक्षेषुदोषान्निरीक्ष्य श्रुत्यनुकूलत्वात्सिद्धांतभूतेकेवलब्रह्मरूपेगुरुवेदोपदिष्टार्थेसमानाकारांचित्तवृत्तिसंतानात्मकंध्यानंयोगशास्त्रानुसारेण कृतवं

एवमेतेद्विजाःपक्षाःसप्तास्माभिरुदाहृताः ॥ पूर्वपूर्वपरित्यागादुत्तरोत्तरसंग्रहात् ॥ आदेयस्तेषुकोनामपक्षोब्राह्मणसत्तमाः २४० पुरुषेपिवयंदोषंपश्यामःसंगव र्जिते ॥ निर्गुणेहेतुताकेनभवेद्व्यापारवर्जिते ॥ चिंतनीयंततोविप्राःसर्वैरस्माभिरेवहि २४१ संयोगोपिनतेषांस्यात्कारणंसतिचेतने ॥ जडःप्रकृतिवत्तस्मादत्रकिं कारणंद्विजाः २४२ परिणाम्यपिनैवात्माकारणंयेनसोपिच ॥ आत्मनःसुखदुःखादावनीशःकारणंकथम् २४३ एवमुक्तेमहात्मानःसर्वेसंशुद्धचेतसः ॥ कारणं ब्रह्मजानानावेदवाक्यप्रमाणतः २४४ तेसर्वेसर्वपक्षेषुतर्कतोदूषणानिहि ॥ निरीक्ष्यश्रुतिवाक्योक्तपक्षेब्रह्मणिकेवले २४५ गुरुवेदोपदिष्टार्थेप्रत्ययानेकरूपकान् ॥ संतत्याकृतवंतोमीयोगशास्त्रविशारदाः २४६ एवंयोगान्महात्मानोध्यानंप्राप्याथचेतसि ॥ ब्रह्माश्रयामिमांशक्तिमविद्यांददृशुस्तदा २४७ आत्मनोब्रह्मणःशक्तिः सृष्टिस्थित्यंतकारिणी ॥ जगतोयातिदुर्दर्शाकुतर्कहतबुद्धिभिः २४८ भूदेवास्तामिमांस्वस्यगुणैरावरणादिभिः ॥ निगूढामवलोक्याथविस्मयंपरमंगताः २४९ स्वयंप्रकाशमद्वैतमानंदात्मानमीश्वरम ॥ आत्मनाजाड्यरूपेणह्यावृणोतिनविद्यते ॥ तत्रचैषेतिसंप्रोक्तस्तस्याःस्वाभाविकोगुणः २५० सृष्टिस्थितिविनाशा द्याजगतोस्यतथापरे ॥ अहंममादयश्चान्येकामक्रोधादयोपिच २५१

तइतित्रयाणामर्थः २४४ । २४५ । २४६ एवंयोगादिति । एवंचेतसिध्यानंप्राप्यनिष्पन्नाद्योगात्समाधेर्हेतोर्ब्रह्मणोदेवस्यशक्तिमायाविद्यादिपदवाच्यांददृशुः याब्रह्माभिन्नात्मनःशक्तिर्जगतःसृष्ट्या दिहेतुःकुतार्किकैर्दुर्दर्शाचेतिद्वयोःसंबंधः २४७ । २४८ भूदेवाइति । तेभूदेवाब्राह्मणास्तांशक्तिंवक्ष्यमाणैरावरणादिभिर्गुणैर्निगूढांप्रच्छन्नांविलोक्यविस्मिताआसन्निति २४९ आवरणादिगुणान्दर्शयति स्वयमितित्रिभिः । एषाशक्तिस्तत्रात्मनिवस्तुतोऽविद्यमानापितत्रैवभासमानायत्स्वयंप्रकाशादिरूपमात्मानंतद्विपरीतजाड्यादिरूपेणात्मनास्वरूपेणआवृणोतिएषतस्याःप्रथम स्वाभाविकोगुणइ तिसंबंधः २५० विक्षेपरूपांस्तद्गुणानाह सृष्टीति । अस्यस्थूलसूक्ष्मात्मकस्यजगतोयेसृष्ट्याद्यास्तथायेचअहंताममताकामक्रोधादयएतमात्मानंप्रत्यागंतारोदेहद्वयाध्यासेनागमनशीलाःगंतारोनिवृत्तिशी लाश्चतेसर्वेअस्याःशक्तेर्गुणाः कीदृशमेतमात्मानं अद्वयत्वेनस्वयंप्रकाशानंदरूपं वस्तुतोमायारहितमपिचानयामाययैवास्यामायायाविषयतामाश्रयतांचगतमितिद्वयोर्योजना २५१

२५२ कीदृशोयमात्मरूपोदेवोयस्येयंशक्तिरित्याकांक्षापूरकस्योत्तरार्धस्यार्थमाह यइत्यादिना । यएकोऽद्वितीयउक्तानिकालादीन्यात्मपर्यंतानिकारणान्यधितिष्ठतिस तास्फूर्तिप्रदानेनव्याप्नोतिय थासूर्यश्चाक्षुपान्भावान्विपयीकरोतितद्वदित्यर्थः २५३ आकाशवदिति । योयंदेवःकारणानिसमष्टिरूपाणिव्याप्योतिशेपः अतःकारणव्याप्त्यनंतरमिदंव्यष्टिरूपंविश्वमप्यधितिष्ठति यथाकाशोघटादी नित्यर्थः २५४ येयमस्यात्मनःकार्यकारणाधिष्ठातृतोक्तासाप्यनयाऽघटितघटनापटीयस्यामाययैवोपपद्यतेइत्याह अनयेति । तस्यासंगस्वप्रकाशरूपस्ययत्कारणतादात्म्यंतदनयामाययैवसंभवतिन स्वतःस्वभावतइत्यर्थः २५५ एवंकार्यसंगोपितथेत्याह पुरुपइति । संगमायातःससंगोजातः यथाकयाचिद्योपिताकार्मणौपधैर्मोहितःकश्चित्तद्विलासेपुसज्जेततद्वदित्यर्थः २५६ तत्रदृष्टान्तान्तरमाह असंगइति । यथाकश्चिदसंगःसंगविमुखोपिसकलानुग्राहकत्वलक्षणसौहार्दवशेनकेनचिद्दुर्जनेनापिसंगमागत्याभिशापंमिथ्यापवादंपापंतत्फलंचाणीमांडव्यवत्प्राप्नुयादित्यर्थः २५७ दार्ष्टांतिकेयोज यति एवमिति स्पष्टं २५८ तदुपपादकंमायायाअघटितघटनापटीयस्त्वमाह अहोइति । कीदृगचिंत्यंयतोऽनयाऽसंगादिरूपोप्यात्मामोहितः २५९ एतत्संबंधादेवात्मासंसारचक्रंप्रविष्टइतिदर्शयन्संसारंचक्रतयाप्रतिपादयंतंचतुर्थमंत्रमवतारयति एवंभूतोपीतिद्विपष्टिश्लोकैः । एवंभूतोऽसंगादिरूपोप्यात्माअनयामाययामोहितःसंसारचक्रंप्राप्तवान् कीदृशंचक्रं स्वात्मनामायाशवलरूपेणनिर्मित

आगंतारश्चगंतारःकोटिशस्तद्गुणाइमे ॥ आनंदात्मानमप्येतंविषयंचाश्रयंतथा ॥ माययारहितंचापिमाययात्रस्वयंप्रभम् २५२ यःकारणानिसर्वाणिकालादीन्यधितिष्ठति ॥ उक्तानिभगवानेकःसवितानिषयान्यथा २५३ आकाशवदयंदेवःकारणानिघटादिवत् ॥ अतोविश्वमिदंसर्वमधितिष्ठत्ययंपुमान् २५४ अनयामाययातस्यसंगेनरहितस्यहि ॥ स्वयंज्योतिःस्वरूपस्यकारणत्वंस्वतोनहि २५५ पुरुषोनिर्गुणोऽसंगोविक्रियालेशवर्जितः ॥ माययासंगमायातऔषधैरिवमोहितः २५६ असंगःसंगमागत्ययथाकश्चित्सुहृज्जनः ॥ अभिशापंचपापंचप्राप्नुयाद्दुःखकारणम् २५७ एवमेषपुमान्मायासंगात्क्लेशाननेकधा ॥ प्राप्नोतिजीवतांप्राप्य हेतुतांजगतोपिच २५८ अहोमायाबलंकीदृगनयासंविमोहितः ॥ असंगोनिर्गुणोज्योतिरानंदात्मास्वयंप्रभः २५९ एवंभूतोपिसंसारचक्रंस्वात्मविनिर्मितम् ॥ प्राप्तवानिदमत्युग्रंमाययापरिमोहितः २६० अविद्यायस्यचक्रस्यनेमिरुक्तामनीषिभिः ॥ यतःसंसारचक्रस्यपरितोनेमिवत्स्थिता २६१ रूपैस्त्रिभिस्तुसंवीतंकृष्णशुक्लारुणैर्बहिः ॥ अयोरूप्यप्रवालानांपट्टिकाभीरथांगवत् २६२ एकादशेंद्रियैःसार्द्धंभूतपंचकमस्यहि ॥ नाभिच्छिद्रस्यसंस्थानमरायत्रप्रतिष्ठिताः २६३ अराःपंचाशदस्यापिचक्रस्योक्तामनीषिभिः ॥ पंचक्लेशास्तथाचाष्टौसिद्धयोनवतुष्टयः ॥ अशक्तयस्तथैवाष्टाविंशतिःस्युरराइमे २६४

मितिसंबंधः अत्रस्वात्मविनिर्मितमितिपदेनेदंसूच्यते मंत्रगतःपुल्लिंगोद्वितीयांतश्चतच्छब्दआत्मानंपरामृश्यचक्रेणसहतत्तादात्म्यंमूढदृष्ट्यात्रैवबोधयतीति २६० अविद्येति । यस्यसंसारचक्रस्यमूलप्रकृत्यादिपदवाच्याअविद्याकेवलानेमिर्बहिर्मंडलाकारकाष्ठसमासर्वतोव्याप्यावस्थितत्वादित्यर्थः २६१ त्रिवृत्पदार्थमाह रूपैरिति । तच्चक्रंशुक्लरक्तकृष्णवर्णतयाप्रसिद्धैःसत्वरजस्तमोगुणैःसंवीतंवेष्टितंयथालोहरजतविद्रुममयफलकैःखचितंप्रसिद्धंरथचक्रंभवेदित्यर्थः २६२ पोडशांतपदार्थमाह एकादशेंद्रियैरिति । नाभिच्छिद्रस्येतिजातावेकवचनं अरानाभिनेम्योस्तिर्यक्प्रोतानिकाष्ठानितानियेपुनाभिगतच्छिद्रेपुतिष्ठंतितेपांछिद्राणांयत्संस्थानंसन्निवेशस्तद्रूपाःपोडशविकाराबोध्याः तेचएकादशेंद्रियभूतपंचकात्मकाःप्रसिद्धाः तथाचपोडशअंतानाभिप्रांतायस्येतिश्रौतपदार्थः नाभिर्नामअराणामंतरतआधारभूतंकाष्ठमित्यर्थः २६३ शतार्धारपदार्थमाह अराइतिपट्त्रिंशच्छ्लोकैः । अस्यचक्रस्याराःक्लेशादिरूपास्तत्तद्भेदसंख्ययापंचाशच्चबोध्याः क्लेशादेर्भेदान्सांख्यप्रसिद्धान्दर्शयति पंचेत्यादिना २६४

तत्रपंचक्लेशानविद्यास्मितारागद्वेषाभिनिवेशरूपान्तमोमोहमहामोहतामिस्रांधतामिस्रसंज्ञान्निरूपयति अन्यस्मिन्निति त्रिभिः । येयंविपर्ययरूपाऽविद्यासातमइत्युक्तायानुमूढस्यदेहादिविषयिकाहंबुद्धिरस्मिताख्यःसामोहइत्युक्तेत्यर्थः २६५ महामोहइति स्पष्टम् २६६ स्याद्योत्रेति । ममत्वेनैवजायतेत्यागासहिष्णुत्वलक्षणममतारूपइतियावत् २६७ सिद्धचष्टकमुद्दिशति ऊहइति । एतत्स्वरूपंस्वयमेववक्ष्यति २६८ तुष्टीरुद्दिशति आध्यात्मिकाइति । अध्यात्मंसंघातांतर्वर्तिनंप्रकृत्यादिपदार्थमाश्रित्यप्रवृत्ताआध्यात्मिकास्ताश्चतस्रोवाह्यावाह्यविषयोपरमनिमित्ताः २६९ अशक्तीरष्टाविंशतिसंख्याःकीर्तयितुंतदुपयोगीन्येकादशेंद्रियाणिदर्शयति त्वगितिद्वाभ्यां । स्पष्टंद्वयम् २७० । २७१ अशक्तीनामष्टाविंशतिंस्फुटीकृत्यताभिरराणांपञ्चाशत्संख्यापूर्तिंदर्शयतितेषामिति द्वाभ्यां । तेषामेकादशेंद्रियाणांयत्कुष्ठादिरोगैःस्वरूपस्यहानंनाशःसत्त्वेविद्यमानत्वेपिवाविषयग्रहणरूपकार्यराहित्यंअथवापुरुषांतरेंद्रियापेक्षयास्वल्पकार्यकारित्वंसमकार्यकारित्वंवाउत्कर्षाभावइतियावत् तद्रूपेइंद्रियाणांवधेसतिबुद्धेस्तत्प्रयुक्तासामर्थ्यरूपाअशक्तयोनिरूपकभेदादेकादश एवमष्टसिद्ध्यभावप्रयुक्ताबुद्धेरशक्तयोष्टौ नवतुष्ट्यभावप्रयुक्ताश्चतानव संकलनयाष्टाविंशतिरेताअशक्तयो नवभिस्तुष्टिभिरष्टाभिःसिद्धिभिःपंचभिःक्लेशैश्चसहिताःपंचाशदरात्मकाउक्ताइतिद्वयोरर्थः २७२ । २७३ प्रसंगात्क्लेशानामवांतरभेदानाह तमोऽविद्येतिनवभिः । तमइतिअविद्येतिचनामद्वयेनप्रसि

अन्यस्मिन्नन्यबुद्धिर्यासाऽविद्यातमईरिता ॥ मोहोहंबुद्धिरुद्दिष्टादेहादौमूढचेतसः २६५ महामोहोत्ररागःस्याद्विषयेसुखहेतुके ॥ तामिस्रोद्वेषउद्दिष्टःप्रतिकूले पुवस्तुपु ६६ स्याद्योत्राभिनिवेशाख्यःसोंधतामिस्रईरितः ॥ पुत्रदारादिविषयेममत्वेनैवजायते ६७ ऊहःशब्दश्चसंप्रोक्तस्तथैवाध्ययनंपुनः ॥ दुःखत्रयविघातश्चसुहृत्प्राप्तिश्चसप्तमी ॥ दानमित्युदिताअष्टौसिद्धयोमुनिसत्तमैः ६८ आध्यात्मिकाश्चतस्रःस्युस्तुष्टयोमुनिसत्तमाः ॥ अत्रप्रकृत्युपादानकालभाग्याभिधाइमाः ॥ पंचवाह्याश्चसंप्रोक्तास्तुष्टयःपरमाइमाः ६९ त्वक्चक्षुःश्रोत्ररसनाघ्राणानींद्रियपंचकम् ॥ ज्ञानाभिधमिदंचान्यत्पंचकंकर्मसंज्ञितम् ॥ वाक्पाणिचरणद्वंद्वपायूपस्थाख्यमीरितम् २७० एकादशंमनश्चात्रकारणंज्ञानकर्मणोः ॥ एकादशेंद्रियाण्यत्रकथितानिमनीषिभिः ७१ तेषांस्वरूपहानंवासत्त्वेवाकार्यशून्यता ॥ स्वल्पसाम्यादिकारित्वमथवेंद्रियजोवधः ७१ सिद्धितुष्टींद्रियाणांस्युर्वधाउक्तास्त्वशक्तयः ॥ अष्टाविंशतिरित्येतास्तुष्टिसिद्धिसमन्विताः ॥ अविद्याद्यैःसहक्लेशैरराःपंचाशदीरिताः ७३ तमोविद्येतिद्याप्रोक्तासाक्ष्यापरिकीर्तिता ॥ अष्टधाविषयोयस्मादष्टधायंव्यवस्थितः २७४ कारणंत्वेकरूपंस्यात्कार्यंसप्तविधंपुनः ॥ द्विधांतःकरणंतद्वन्महाभूतानिपंचच ७५ मोहोस्मिताचतेपुस्यादहंबुद्ध्याग्रहेसति ॥ सोपितेनाष्टधाप्रोक्तोनंतभेदोपिपूर्ववत् ७६ परत्रात्रचलोकेस्युःपंचपंचविभेदिनः ॥ दिव्याश्चमानुषाश्चैतेविषयाःसुखहेतवः ॥ रागोदशसुसर्वेषांतत्संख्यस्तेनसस्मृतः २७७

द्धायाऽनात्मन्यात्मबुद्धिरूपाऽविद्यासाऽष्टधाज्ञेयातद्विषयस्याष्टधाव्यवस्थितत्वादित्यर्थः २७४ तद्विषयाष्टकमेवदर्शयति कारणमिति । कारणंप्रकृत्याख्यंप्रथमम्आत्माध्यासविषयोभवतितदनंतरंकार्यक्रमेणमहत्तत्त्वाहंकाररूपमंतःकरणद्वयंभूतपंचकंचतेअध्यासगोचरीभवंतीत्यर्थः २७५ उक्ताऽविद्यावीजरूपेणसुषुप्तावपितिष्ठतितस्याअंकुरभूतामोहाख्याऽस्मितापिजाग्रत्स्वप्नयोरहंरूपेणतानेवाष्टावविद्याविषयान्विषयीकरोतीत्यतःसमोहोप्यष्टधाज्ञेयइत्याह मोहइति । तेष्वविद्याविषयेष्वहंबुद्ध्यात्मकेग्रहणेसतिनिरूप्यमाणोयोमोहोऽस्मिताख्यःसोपिपूर्ववदविद्यावदष्टधाज्ञेयः कीदृशोविषयव्यक्तिभेदेनानंतभेदोपीतिसंबंधः २७६ पंचज्ञानेंद्रियविषयाणांदिव्यादिव्यभेदेनप्रत्येकंद्वैविध्यात्तद्विषयकोरागोदशविधइत्याह परत्रेति । परत्रलोकेभवादिव्याःपंचेंद्रियविषयाःस्युःअत्रलोकेभवामानुषाविषयाअपिपंचस्युः तेषुदशसुसुखसाधनत्वाज्जायमानोरागइच्छात्मकोपिदशविधइत्यर्थः २७७

द्वेषस्याष्टादशविषयभेदादष्टादशधाभावमाह अणिमेतित्रिभिः । दिव्यादिव्यभेदेनोक्तविषयैःसहिताअणिमाद्याअष्टौसिद्धीर्वक्ष्यमाणविषयाद्वेषस्यविषयभूताःप्राहुरितिशेषः । केचित्तुमनीषिणइत्थमाहुः इत्थंकथमित्याकांक्षायामाह अस्मितेत्यादि । भेदादितिल्यब्लोपेपंचमी तथाचास्मितायायःकारणाद्यष्टविषयकत्वेनभेदोयश्चरागस्यदशविधविषयकत्वेनभेदस्तंसविषयकमादायैवउत्तरयोर्द्वेषाभिनिवेशयोर्भेदोवर्णनीयः तेनास्मितारागयोर्विषयोपादानेनैवद्वेषाभिनिवेशयोर्मध्यएकैकःप्रत्येकमष्टादशधोक्तइतिद्वयोरर्थः २७८ । २७९ अष्टादशधात्वमेवस्फुटयति केनापीति । तेदशविषयाअणिमादिसिद्ध्यष्टकसहिताःपक्षांतरेऽस्मिताविषयसहितावाकेनचिन्निमित्तेनविहताःसंतोदुःखहेतवोभवंतितदाविघातनिमित्तगतप्रातिकूल्यमाश्रित्यतेषुद्वेषोजायतेतत्संस्थातस्यद्वेषस्यसंस्थासम्यग्भेदेनस्थितिर्विषयापेक्षयाष्टादशधोक्तेत्यर्थः २८० एवमुक्तविषयाणांविनाशभयरूपोऽभिनिवेशोप्यष्टादशधाज्ञेयइत्याह प्रातिकूल्यस्येति । विषयेषुममत्वाद्धेतोस्तदपहारकेआत्मनःप्रातिकूल्यंविज्ञाययाऽधिकाद्बलिनःसकाशाद्भीतिर्जायतेतद्रूपोभिनिवेशोपिद्वेषवदष्टादशधाभवेदितिसंबंधः २८१ अविद्यादीति । योयंविपर्ययःअविद्यादिपंचक्लेशरूपैःपंचधोक्तोविद्वद्भिर्व्यासाद्यैःतथाचोक्तं ‘ अविद्यापंचपर्वैषातस्माज्जातामहात्मनः’इति । सतुविपर्ययोऽवांतरभेदैःसूक्ष्मोभवतितांसूक्ष्मतामादायतुद्व्यधिकषष्टिसंख्याकउक्तः तथाहि अविद्यास्मितयोरुक्तविधयाप्रत्येकमष्टविधत्वं

अणिमागरिमाचैवलघिमामहिमातथा ॥ प्राप्तिःप्राकाम्यमप्युक्तमीशित्वंवशितातथा ॥ अष्टावेतामहासिद्धीःकेचिदाहुर्मनीषिणः २७८ अस्मितारागयोर्भेदाद्द्वेषोत्रोत्तरयोर्द्वयोः ॥ एकैकस्तेनकथितोलोकेऽष्टादशधास्थितः २७९ केनाप्यत्रनिमित्तेनयदातेदुःखहेतवः ॥ प्रातिकूल्यान्निमित्तस्यतेषुद्वेषःप्रजायते ॥ विषयाष्टादशत्वेनतत्संस्थापरिकीर्तिता २८० प्रातिकूल्यस्यविज्ञानाद्भीतिर्याजायतेऽधिकात् ॥ आत्मनोभिनिवेशोयंममत्वाद्द्वेषवद्भवेत् २८१ अविद्यादिःसमुद्दिष्टोविद्वद्भिर्योविपर्ययः ॥ पंचधासतुसूक्ष्मत्वाद्द्विषष्टिरिहसंस्थितः २८२ ऊहस्तर्कःसमुद्दिष्टोमननंयत्प्रकीर्तितम् ॥ शब्दोवेदोत्रसार्थःस्याद्यतःसाज्ञानसंततिः २८३ प्रवर्ततेततोध्यानंशब्दःशब्दादुदीरितम् ॥ तदेवाध्ययनंप्रोक्तंश्रवणंशास्त्रगंहियत् ८४ अध्यात्ममधिदैवंस्यादधिभूतमितित्रिधा ॥ दुःखंतस्यविघातोयंसिद्धित्रयमुदीरितम् ८५ गुरुःप्रोक्तःसुहृन्नृणांप्राप्तिस्तस्यातिदुर्लभा ॥ सप्तमीसिद्धिरुद्दिष्टायतःसर्वाश्चसिद्धयः ८६ दानंवेदांतविज्ञानसंप्रदायप्रवर्तनम् ॥ ऊहाद्याःसिद्धयस्त्वेवंकथितादुर्लभानृणाम् ८७ प्रकृत्याख्याभवेत्तुष्टिरित्थमालस्यभाजिनाम् ॥ मायेयंसकलंविश्वंसृजत्यत्तिचपातिच ॥ सैवविक्रियतेनानाकार्यरूपाविकारिणी २८८

रागोदशधा द्वेषाभिनिवेशौप्रत्येकमष्टादशधा संकलनेद्विषष्टिरिति २८२ सिद्ध्यष्टकस्वरूपंस्फुटयति ऊहइतिपंचभिः । ऊहपदेनतर्कात्मकंमननमुच्यतेशब्दपदेनतुवेदवाचकेनस्वतःप्रवर्तमानाज्ञानसंततिर्लक्ष्यते ततोध्यानंनिदिध्यासनंशब्दइतिपदेनोक्तं अध्ययनंतुश्रवणंबोध्यं तथाचार्थवशेनअध्ययनमूहःशब्दइत्येवमेषामुत्पत्तिक्रमोबोध्यइतिद्वयोर्भावः २८३ । २८४ अध्यात्मादिदुःखत्रयस्ययद्विघातत्रयंतद्रूपंफलभूतंसिद्धित्रयंचबोध्यमित्याह अध्यात्ममिति २८५ फलरूपसिद्धित्रयस्यश्रवणादिसिद्धित्रयद्वाराजनिकागुरुप्राप्तिरूपासुहृत्प्राप्त्याख्यासप्तमीसिद्धिर्बोध्येत्याह गुरुरिति २८६ दैपशोधनेइतिधात्वर्थानुसाराद्दानपदेनविवेकख्यातेःशुद्धिःसंप्रदायानुसारेणविमलप्रमेयावगाहित्वरूपाप्रतिपाद्यतेइत्याह दानमिति । एताएवमोक्षोपयोगित्वात्सिद्धिपदाभिधानयोग्याअणिमादयस्त्वैश्वर्यरूपत्वाद्गौण्यइतिसूचयन्नुपसंहरति ऊहाद्यइति २८७ नवतुष्टीश्चतुर्दशाभिर्निरूपयंस्तत्राध्यात्मिकासुप्रथमांप्रकृत्याख्यांतुष्टिमभिनयति प्रकृत्याख्येतित्रिभिः । इत्थंप्रकृत्याख्यातुष्टिरलसानांज्ञेया इत्थंकथं मायायाःसकलकार्यकारित्वात्तयायथाकार्यांतरंजन्यतेतथात्मज्ञानमपिजनिष्यतेतत्रममोद्यमैःकिमित्यालोच्ययदात्मज्ञानेउद्यमाभाववर्जनमेषाप्रकृतितुष्टिरित्युच्यतेइतित्रयाणामर्थः २८८

२८९ । २९० संन्यासस्यज्ञानसाधनतांश्रुत्वासंन्यासानुष्ठानमात्रेणकृतकृत्यतांमन्यमानोयच्छ्रवणादिकंनकुर्यादेषाउपादानाख्यातुष्टिरित्याह कारणमितिद्वाभ्यां । यन्नियतंकार्यजनकंतत्कारणमित्युच्यते संन्यासोपिचात्मज्ञानस्यकारणतयाशास्त्रेप्रसिद्धस्ततउक्तकारणतालंबनेनसंन्यस्यापियःश्रवणादेःकृत्यभावःसाउपादानाख्यातुष्टिराश्रमोपादानप्रयुक्तत्वादितिद्वयोरर्थः २९१ २९२ कालमालंब्यश्रवणादेरकरणरूपाकालाख्यातृतीयातुष्टिरित्याह कालतइतिद्वाभ्यां । ततःसर्वस्यफलस्यकालाधीनत्वाद्यःश्रवणादौव्यग्रंचित्तंकुर्वन्भवतिसउचितंनकरोतीतिशेषः २९३ इतिसंचिंत्येति स्पष्टम् २९४ चतुर्थींभाग्यतुष्टिमभिनयति भाग्यादितिद्वाभ्यां । राज्यादिलाभवदात्मज्ञानलाभोपिभाग्याधीनएवंविचार्ययाश्रवणादेर्निवृत्तिस्तद्रूपाभाग्यतुष्टिरितिद्वयोरर्थः ९५ । ९६ बाह्यतुष्टिपंचकंत्रिधादर्शयति शब्देतिचतुर्भिः । अनुकूलानामप्रतिषिद्धानामपिशब्दादिपंचेंद्रियविषयाणांयदग्रहणमेतद्रूपंबाह्यतुष्टिपंचकंकैश्चिदुक्तमित्यर्थः २९७ द्वितीयंप्रकारमाह अर्जनमिति । अर्थसंबंधादर्जनमारभ्यपंचममेतद्धिंसनंक्लेशरूपंभवेदित्यनुसंधाययःसंचितानामर्थानांत्यागस्तेनपंचनिमित्तकेननिरूप्याःपंचोपरमाभवंतीतिकेचिद्विदुरितिद्वयोःसंबंधः २९८ । २९९ अथवार्जनादि

ततस्तयैवसकलंमाययैवयथाभवेत् ॥ तयैवचतथैवस्यादात्मज्ञानंकिमुद्यमैः २८९ एषाप्रकृतितुष्टिःस्याज्ज्ञात्वामायामयंजगत् ॥ आत्मविज्ञानजननेउद्यमस्यविवर्जनम् ९० कारणंकार्यजनकंनियतंसंस्थितंयतः ॥ संन्यासोप्यात्मविज्ञानजनकःसंप्रकीर्तितः ९१ संन्यस्यापिततोनैवश्रवणादिकृतिर्हिया ॥ सोपादानाभिधाख्यातुरालस्यादेवजायते९२ कालतोजायतेविश्वंकालाज्ज्ञानंभविष्यति ॥ श्रवणादौततोव्यग्रंचित्तंकुर्वन्नचोचितम् ९३ इतिसंचिंत्यदुर्बुद्धिःश्रवणादावनुद्यमम् ॥ करोतिकालतुष्टिःसापुनर्देहकरीनृणाम् ९४ भाग्याज्जन्तुःसमाप्नोतिराज्यंलक्ष्मींयशस्तथा ॥ भाग्यतश्चममाप्येतदात्मज्ञानंभविष्यति ९५ इत्थंविचारउद्दिष्टाभाग्यतुष्टिर्मनीषिभिः ॥ विचार्यैवंप्रवृत्तोपिश्रवणादेर्निवर्तते ९६ शब्दस्पर्शरूपरसगंधानामिंद्रियैर्निजैः ॥ अग्रहोप्यनुकूलानांतुष्टिपंचकमीरितम् ९७ अर्जनंरक्षणंतद्वत्क्षयभोगौचहिंसनम् ॥ प्राणिनामर्थसंबंधाद्भवेदेतत्तुपंचमम् ९८ अर्थसंत्यागतोप्येतेपंचाप्युपरमाविदुः ॥ एवंवापंचकंज्ञेयमत्रतुष्टेर्मनीषिभिः ९९ अर्थानामर्जनेक्लेशस्तथैवपरिपालने ॥ नाशेव्ययेचभोगेचधिगर्थान्क्लेशभाजिनः ॥ इतिवापंचकंज्ञेयंबाह्यतुष्टेर्मनीषिभिः ३०० सर्वथैवात्रसंतुष्टोनात्मज्ञानेप्रवर्तते ॥ बाह्येवाभ्यंतरेवापिस्वल्पस्तुष्टिगणेपुमान् १ पंचाशत्संख्ययाप्रोक्ताअराविंशतिसंख्यया ॥ इंद्रियाणिदशैवस्युरतेषांविषयाअपि ॥ क्षुद्राअराश्चतिष्ठंतितस्यचक्रस्यसर्वतः २ भूमिरापोनलोवायुःखमहंबुद्धिमानसे ॥ प्रकृत्यष्टकमेतत्स्यात्प्रकृत्यावासहापिच ॥ मनोबुद्ध्योरभेदेनसंयोगेप्यष्टकंभवेत् ३०३

क्लेशमनुसंधायार्थसंचयादेवनिवृत्तिःपूर्ववत्तुष्टिपंचकात्मिकाबोध्येत्याह अर्थानामिति । क्लेशभाजिनःक्लेशप्रयोजकान् ३०० सकलाएतास्तुष्टयोज्ञानसाधनानुष्ठानविरोधित्वाद्बंधहेतवइत्याह सर्वथैवेति । स्वल्पोलघुचित्तःपुमान्बाह्यतुष्टिगणेआंतरेतुष्टिगणेवाअत्रएकत्रापिसंतुष्टःसन्नात्मज्ञानेनप्रवर्ततेइत्यन्वयः १ उक्तंचक्रंविंशतिप्रत्यराभिर्दशेंद्रियदशविषयात्मिकाभिर्युक्तमित्याह पंचाशदिति । अस्यपंचाशदराःप्रोक्तास्तस्यविंशतिसंख्याःक्षुद्राअराःप्रत्यरापदोक्ताःसर्वतस्तिष्ठंतीतिसंबंधः प्रत्यराअराणांप्रतिअभिमुखंवर्तमानाःस्वल्पाअराः २ तस्यचक्रस्यषड्भिरष्टकैर्नेमिगततीक्ष्णधारारूपैर्योगंदर्शयितुंषण्णामष्टकानांस्वरूपंमतभेदेनदर्शयंस्तत्रप्रथमंकेषांचिद्व्याख्यातॄणामभिमतंप्रकृत्यष्टकस्वरूपंप्रतिपादयति भूमिरितिचतुर्भिः । भूतपंचकंमनोबुद्ध्यहंकाररूपंप्रकृत्यष्टकंभगवद्गीतासूक्तंप्राह्यं अथवामनोबुद्ध्योरभेदेनसंयोगेऐक्येविवक्षितेसतिमूलप्रकृत्याष्टसंख्यापूरणीया तथाचसांख्यप्रसिद्धंप्रकृत्यष्टकंप्रथमंग्राह्यमितिभावः ३०३

योगांगाष्टकंद्वितीयंबोध्यमित्याह यमइति २पष्टं ३०४ ऊहादीति । सिद्धेरितिजातावेकवचनं तथाचवर्णितमूहशब्दादिकंसिद्धीनामष्टकंतृतीयं अणिमादिकमष्टकंचतुर्थं तथावागादीनांस्पर्शपदोक्त त्वक्पर्यंतानांपंचमाध्यायेग्रहपदेनव्यवहृतानामष्टकंपंचमंबोध्यमित्यर्थः ५ अमीषामिति । अमीषांवागादीनांविषयाइंद्रियाणांबंधकत्वप्रयोजकत्वादतिग्रहपदोक्तास्तेषामष्टकंषष्ठमित्यर्थः ६ वैदिक्या कांक्षादिकेनैवपूरणीयेतिन्यायमनुसृत्यवैदिकपदार्थैरेवषडष्टकसंख्यापूर्तिंदर्शयतांपरेषांव्याख्यानंदर्शयति ग्रहातिग्रहेति । ग्रहादिशब्दाजातिपराः तथाचग्रहाणामतिग्रहाणांचपंचमाध्यायेआर्तभागप्रश्ने प्रसिद्धानामायतनादीनांचप्रत्येकमष्टकान्यादायषडष्टकंबोध्यमित्यन्येआहुरित्यर्थः ३०७ आयतनादीनामष्टकचतुष्टयंपंचमाध्यायेपंचसप्तत्यधिकपंचशतसंख्यापूरकंश्लोकमारभ्यवर्णितंस्मारयति पृथि वीतिचतुर्भिः । चतुर्णामर्थोपिततएवावगंतव्यः ३०८ । ३०९ । ३१० एतत्षडष्टकंसंसारचक्रस्यविदारकस्यनेमिगततीक्ष्णधाराभूतमित्याह षडष्टकमिदमिति । नेमेर्धाराभूतमिदंषडष्टकमत्रसंसृतिच क्रेतिष्ठति स्थितिमात्रेदृष्टांतः कुलालचक्रेघटादिवदिति ३१२ पुष्पमालायाःसूत्रवद्धिधारकत्वेनपाशभूतस्त्वस्यचक्रस्यमायाशबलःपरमेश्वरएवेत्याह विश्वेति १३ यदिपाशोनस्यात्तदाचक्रंविशीर्यैतेति

यमोपिनियमस्तद्वदासनंप्राणसंयमः ॥ प्रत्याहारोधारणाचध्यानंसहसमाधिना ३०४ ऊहादिचाणिमाद्येततसिद्धेःस्यादष्टकद्वयम् ॥ घ्राणंवाग्रसनंचक्षुःश्रोत्रंच मनसासह ॥ हस्तौस्पर्शश्चविज्ञेयंग्रहाष्टकमिदंसदा ३०५ अमीषांविषयास्तद्वदेवउक्ताअतिग्रहाः ॥ एतद्धिकथितंकैश्चिद्विद्वद्भिःषष्ठमष्टकम् ३०६ ग्रहातिग्रहयो रन्येतथायतनलोकयोः ॥ सुरेचपुरुषेतद्वत्प्रवदंतिषडष्टकम् ३०७ पृथिवीचतथाकामोरूपाण्याकाशएवच ॥ तमोरूपाणिनीराणिरेतश्चायतनाष्टकम् ३०८ अग्निश्चहृदयंचक्षुःश्रोत्रंहृदयचक्षुषी ॥ हृदयंहृदयंचैतल्लोकाष्टकमुदीरितम् ३०९ अमृतंचस्त्रियःस्वर्गोदिशोमृत्युरसुस्तथा ॥ अपांनाथःप्रजानाथोदेवाष्टकमुदी रितम् ११० शारीरोयंकाममयआदित्यःश्रोत्रएवच ॥ छायामयस्तथादर्शेस्थितोयश्चोदकस्थितः ॥ योयंपुत्रमयश्चैतद्विज्ञेयंपुरुषाष्टकम् ३११ षडष्टकमिदं चक्रेकुलालस्यघटादिवत् ॥ वर्ततेसंसृतेश्चक्रेधारानेमिर्द्विजोत्तमाः ३१२ विश्वरूपःपुमानेषरूपंरूपंबभूवयः ॥ स्थावरंजंगमंसर्वंमहाभूतसमन्वितम् ॥ सएकः पाशइत्युक्तोजगच्चक्राभिबंधने ३१३ अरनेम्यादिसंयुक्तंबंधनेनविनायथा ॥ सद्यश्चक्रंविनश्येतत्तद्वदेतद्द्विजोत्तमाः ३१४ पुत्तिकाकीटमुख्यायेस्वल्पाकारास्तुदे हिनः ॥ संतत्याजनिमृत्यादिगच्छंतोदुःखभाजनम् ३१५ एषमार्गस्तृतीयःस्याद्दक्षिणोत्तरयोर्द्वयोः ॥ अपेक्षयात्रमार्गोयंचक्रभेदस्यकारणम् ॥ त्रिनाभित दिदंचक्रंज्ञातव्यंमुनिसत्तमैः ३१६

लोकेपिप्रसिद्धमित्याह अरेति । विनश्येतविशीर्येत तद्वदेतत्संसारचक्रं ३१४ त्रिमार्गभेदमितिपदस्यत्रिभिर्मार्गैर्भेदोनाभिविन्यासविशेषोयस्यतत्तथेतिव्युत्पत्तिमभिप्रेत्यार्थमाह पुत्तिकेतिपंचभिः । पुत्तिकापतंगिकाख्यात्वर्षासुजायमानाकृमिजातिस्तत्प्रभृतयःकीटाःपुनःपुनर्जनिमृतिभ्यांदुःखभाजनत्वेनप्रसिद्धाः ३१५ एषइति । एषक्षुद्रजंतुभावरूपोमार्गोदक्षिणोत्तरयोःपितृयाणदेवयानाख्य योर्मार्गयोरपेक्षयातृतीयत्वेनप्रसिद्धोत्रच्छांदोग्यादौ तथाचश्रुतिः ' जायस्वम्रियस्वेत्येततृतीयंस्थानम् ' इति अयंत्रिविधोमार्गउक्तचक्रस्यभेदविन्यासविशेषेकारणंप्रयोजकंतत्तस्मान्मार्गत्रयान्नाभि भावमापन्नादिदंचक्रंत्रिनाभिज्ञेयं तदिदंत्रिनाभित्वंमध्यगोलकस्यवलयत्रयेणमंडलत्रयेणसंयोगाद्वेष्टनाज्जायते अतएवैतच्चक्रंद्वयोरपिनेमिनाभ्योस्त्रिवृतमावृत्तित्रययुक्तमितिद्वयोर्योजना । अयं भावः एकंमंडलंकर्णिकावत्सूक्ष्मंलिखित्वातंत्रिभिर्मंडलैर्बहिर्विस्तृतैर्वेष्टयेत् तथाचतेषुमध्यमंडलंनाभिरेवबाह्यंनेमिरेव आंतरालकयोर्मंडलयोर्बाह्यापेक्षयानाभित्वमांतरापेक्षयाचनेमित्वं तथाचनाभि त्रयंनेमित्रयंचसिद्ध्यतीति ३१६

३१७ मार्गत्रयस्यनाभित्रयभावेन्यवस्थांदर्शयति मध्यनाभिरितिद्वाभ्यां । अंतर्मुखगम्यत्वसाधर्म्येणदेवयानमार्गोमध्यनाभिस्तदपेक्षयाबहिर्मुखगम्यत्वात्पितृयाणोद्वितीयनाभिःकेवलदुष्कृतप देरतिबहिर्मुखैर्गम्यत्वात्तृतीयःपंथाबहिर्नाभिः ततोप्यधमैःस्थावरादिभावयोग्यैरतितामसैर्गम्याऽविद्यात्मिकानेमिस्ततोपिबहिर्ज्ञेया कीदृशी नाभिद्वयोपमावेष्टकत्वसाधर्म्येणद्वितीयतृतीयनाभि भ्यांतुल्येतिद्वयोरर्थः ३१८ । ३१९ द्विनिमित्तपदार्थमाह निमित्तमिति । कारणाभ्यांपुण्यपापाभ्यांतादात्म्येनविवक्षितेयेसुखदुःखेतदुभयरूपंनिमित्तंफलरूपमस्यचक्रस्यबोध्यम् यथाध्य यनेनवसतीत्यत्राध्ययनंवासस्येति । निमित्ततायांदृष्टांतमाह कुलालेति । यथाकुलालचक्रस्यकाष्ठंलोष्ठंमृत्पिंडश्चकारणंतद्वदित्यर्थः ३२० एकमोहपदार्थमाह मोहइति । तमोरूपोमोहस्तुए तच्चक्रप्रयुक्तएकरूपएव किंतस्यरूपमितिचेत्यदात्मतत्त्वविस्मरणंनामेत्यर्थः येआत्मतत्त्वंनस्मरंतितेसर्वेऽनेनमोहिताज्ञेयाः अज्ञानस्यचिदात्ममात्रविषयत्वस्यासिद्धांतितत्वादितिभावः ३२१ एवंचतुर्थोमंत्रःपूर्वमंत्रादपश्यन्नितिपदमनुषज्ज्येतादृशचक्रभावापन्नमज्ञानशबलमात्मानंदृष्टवंतइतियोजनाभिप्रायेणव्याख्यातोऽथतमेवात्मानंनदीरूपेणवर्णयंतंपंचमंमंत्रंव्याकरोति अस्यचक्रस्ये तिद्वात्रिंशच्छ्लोकैः । अस्यचक्रस्यजननीउपादानभूतायामायातच्छबलात्मरूपामहानदीमंत्रेणोक्ता तस्याविक्षेपप्रधानायाइदंवक्ष्यमाणंरूपंमुनीश्वराअपश्यन्नितिशेषः ३२२ पंचस्रोतांसिअंबूनि

वलयत्रयसंयोगात्तदिदंजायतेसदा ॥ त्रिवृतंततएवैतन्नेमिनाभ्योर्द्वयोरपि ३१७ मध्यनाभिस्तुविज्ञेयामार्गोयोब्रह्मलोकगः ॥ पितृलोकगतोमार्गोह्यंतरानाभिरीरिता ३१८ बहिर्नाभिस्त्वियंज्ञेयापंथायःस्यात्तृतीयकः ॥ तस्यापिचबहिर्ज्ञेयानेमिर्नाभिद्वयोपमा ३१९ निमित्तमस्यविज्ञेयंसुखदुःखेसकारणे ॥ कुलालचक्रस्ययथाकाष्ठलोष्ठात्मकंद्वयम् ३२० मोहस्तमोत्रविज्ञेयश्चक्रस्यास्यैकरूपकः ॥ आनंदात्मानमत्रैकंवेत्तिनैतद्भ्रमायतः ३२१ अस्यचक्रस्यजननीमायानाममहानदी ॥ तस्याविक्षेपरूपायाइदंरूपंमुनीश्वराः ३२२ पंचज्ञानेंद्रियाणांस्युस्रोतांसिस्थानकानिहि ॥ अंबूनितेषुचलनात्पंचज्ञानेंद्रियाणिच ३२३ स्रोतसामंभसांचैवमहाभूतानिकारणम् ॥ मेघानद्याययायोनिःस्रोतसामंभसामपि ३२४ आसुराणींद्रियाणांस्युर्ज्ञानान्युग्राणिदेहिनाम् ॥ प्रवाहानीरसंयुक्ताःप्रावृष्युग्रायथैवते ३२५ नक्राःदुःखकरानृणांयथाकुटिलगामिनः ॥ अशास्त्रीयेतथैवैतेविषयेवक्रचारिणः ३२६ अथवाऽशास्त्रजनिताउग्राबोधाःप्रकीर्तिताः ॥ स्रोतसामंभसांयद्वच्चक्रभूताअधोगतौ ३२७

चयस्याइतिव्युत्पत्तिमभिप्रेत्यप्रथमपदार्थमाह पंचेति । पंचज्ञानेंद्रियाणांयानिस्थानकानिगोलकानितानिस्रोतांसिजलवहनस्थानानिबोध्यानि तद्गतानिज्ञानेंद्रियाणितुजलस्थानीयानि तेषु स्रोतस्सुचलनात्मकसाधर्म्यादित्यर्थः कर्मेन्द्रियाणीतिपाठेतुज्ञानेंद्रियविशिष्टानितद्गोलकानिस्रोतांसि । तत्रत्वगाधारतयाप्रसिद्धेनशरीरेणविशिष्टेपुस्रोतस्सुचलनसामान्यात्कर्मेंद्रियाण्यंबूनीत्यर्थः २३ तस्यानद्यायोनिपदोक्तानिकारणानिपंचेत्याह स्रोतसामिति । यथाप्रसिद्धनद्याःस्रोतसामंभसांचमेघाःकारणंतथाऽस्याःस्रोतसामंभसांचपंचमहाभूतानिकारणमितियोजना ३२४ तस्याःपंचो ग्रात्मकावक्राःकुटिलप्रवाहाःसंतीतिवक्रेतिपाठाभिप्रायेणाह असुराणीतिद्वाभ्यां । असुराःकामक्रोधाद्यात्मकासुरसंपच्छालिनोजीवास्तेषुवर्त्तमानानिपंचेंद्रियजानिज्ञानान्युग्राणिभवंतिदुःखहेतु त्वात् यथाप्रावृषिआगंतुकजलसंयुक्ताःप्रवाहाउग्राभवंतितद्वदित्यर्थः ३२५ तेषामुग्रतांस्फुटयति नक्राइति । नक्राख्यजलजंतुवत्कुटिलगामिनस्तेनदीप्रवाहायथादुःखदास्तथैतेआसुराबोधाअ पिअशास्त्रीयविषयेषुप्रवर्त्तयंतोदुःखदाइत्यर्थः ३२६ वस्तुतस्तुश्रुतौचक्रेतिपाठइतिसूचयन्नुक्तविधयोग्रास्तेबोधाश्चक्रभूताअधोगतिहेतुत्वाद्यस्याइत्याह अथवेति । अशास्त्रजनिताःप्रामादि काउग्राबोधाश्चक्रंजलभ्रमस्तद्रूपाःसंतोऽधोगतौप्रयोजकाइतिशेषः यथास्रोतसामंभसांचचक्रभूतागतिविशेषाअधोगतिहेतवःप्रसिद्धाइत्यर्थः ३२७

तस्याःपंचप्राणात्मकाःपंचवृहत्तरंगाइत्याह प्राणइति ३२८ बुद्धयःशब्दादिज्ञानानिआदिपदग्राह्याइच्छाश्चसंस्कारद्वारातस्यामूलमित्याह नद्याइतिद्वाभ्याम् । अस्यामूलपंचकमत्रश्रुतोउक्तमितिशेषः किंतदित्याकांक्षायामाह शास्त्रीयाइत्यादि । याविषयेपुशास्त्रीयाअशास्त्रीयावाबुद्धयइच्छाश्चजायंतेतद्रूपमस्याःपंचविधंमूलमुत्पत्तिस्थानमितिद्वयोरर्थः ३२९ । ३३० पंचावर्त्तामितिपदार्थंप्रपंचयति शब्दइतित्रयोदशभिः । आवर्तोनाममहास्रोतोभ्रमणस्थानंमज्जनहेतुत्वात्तत्तुल्याअत्रशब्दादिविषयाबोध्याइत्यर्थः ३३१ आवर्त्तस्यमज्जनहेतुतामेवस्फुटयति नाविकइति । जलेमत्स्यसमः तरणविधावितिशेषः ३३२ दार्ष्टांतिकेयोजयति एवमिति । शब्दादिजेशब्दादिरूपेःकल्पितेआवर्त्तेपतितोविद्वानपिस्वंपरंवोद्धर्तुंनक्षमतेइति ३३३ अत्रविदुषेवमभिमानोनकर्त्तव्योयन्ममपरेषांतारकस्यकिंविषयावर्त्ताःकरिष्यंतीति यतस्तारकाअप्यावर्त्तेपतिताःशोच्यतामुपहास्यतांवागच्छंतोदृश्यंतेइत्याह तारयित्वेतिचतुर्भिः । तारयित्वानीत्वा स्पष्टम् ३३४ तस्य

प्राणोपानस्तथाव्यानःसमानश्चाप्युदानकः ॥ पंचप्राणाइमेपंचकल्लोलाःपरिकीर्तिताः ३२८ नद्याअस्याद्विजश्रेष्ठामूलपंचकमत्रच ॥ शास्त्रीयाअप्यशास्त्रीयाबुद्धयोविषयेपुयाः ३२९ शब्दादिपुप्रजायंतेइहवामुत्रवानृणाम् ॥ इच्छाभिःसहितास्तास्तुपंचमूलमुपाहृताः ३३० शब्दःस्पर्शस्तथारूपंरसगंधौचपंचते ॥ आवर्त्ताःकथितायस्मादेपुमज्जतिदेहभाक् ३३१ नाविकोपियदावर्त्तेपतेन्मत्स्यसमोजले ॥ उद्धर्तुंनैवशक्नोतिस्वात्मानंतारकोनृणाम् ३३२ एवंशब्दादिजावर्त्तेविद्वानपिपतेद्यदि ॥ उद्धर्तुंनैवशक्नोतिस्वात्मानंपरमेववा ३३३ तारयित्वापरंपारंनद्यायद्वद्धितारकः ॥ आवर्त्तेपतितोनैवमुद्धर्तुमिहशक्यते ३३४ परतीरंगतायेस्युरुपकारस्यबोधकाः ॥ शोचंतितत्रतंत्वन्येगच्छंतिचयथासुखम् ३३५ शब्दाद्यावर्त्तपतितोविद्वानपितथैवसः ॥ शोच्यतेत्रोपकारज्ञैःपरपारमुपागतैः ३३६ अशक्तैरेनमुद्धर्तुंतत्प्रसादाद्बहिर्गतैः ॥ कृतघ्नैरपरैःसोयंबहुशस्तूपहस्यते ३३७ तस्मात्शब्दादिजावर्त्ताद्भेतव्यंद्विजसत्तमाः ॥ विदुषापिपरंपारंदर्शकेनापरेणकिम् ३३८ आवर्त्तामुनिशार्दूलाःशब्दादिजनिताइमे ॥ दुस्तराःसर्वजंतूनामज्ञानांविदुषामपि ॥ तार्याणांतारकाणांचयथावर्त्तानदीकृताः ३३९ आवर्त्तास्तारकायद्वद्वामदक्षिणभागतः ॥ परित्यज्यैवगच्छंतिनप्रविश्यकथंचन ३४० एवंशब्दादिविषयाआवर्त्तामुनिसत्तमाः ॥ विदुषापिपरित्याज्याःप्रवेशेनविनैवहि ३४१ तारकोपियदावर्त्तेप्रविष्टोनबहिर्व्रजेत् ॥ विद्वानपितथावर्त्तेपतितोनबहिर्व्रजेत् ३४२ ततःशब्दादिविषयाआवर्त्तामुनिसत्तमाः ॥ सर्वथैवपरित्याज्याविदुषाऽविदुषापिच ३४३ शब्दादिजनितंयत्स्यात्सुखंपंचप्रकारवत् ॥ दुःखंतदेवविप्रेंद्राअंतेनाशादिदर्शनात् ३४४ ततःसुखमिदंसर्वंदुःखमेवप्रकीर्तितम् ॥ तेनशब्दादयोविप्रादुःखानामेवकारणम् ३४५

शोचकानुपहासकांश्चदर्शयति परेति । तंतारकमावर्त्तेपतितम् अन्येकृतघ्नाः ३३५ दार्ष्टांतिकेयोजयति शब्दाद्यावर्त्तेइतिद्वाभ्यां । स्पष्टंद्वयम् ३३६ । ३३७ फलितमाह तस्मादितिद्वाभ्यां । निगदव्याख्यातंद्वयम् ३३८ । ३३९ विषयावर्त्तेभ्योरक्षाहेतुस्तेषांदूरतःपरिवर्जनमेवेतिसदृष्टांतमाह आवर्तास्तारकाइतिद्वाभ्यां । प्रसिद्धमेतत ३४० । ३४१ अंतःप्रवेशिनांत्वनुतापएवभवतीत्याह तारकोपीति ३४२ निगमयति ततइति तस्याः ३४३ पंचेंद्रियविषयजानांदुःखानांप्रवाहएववेगइतिदर्शयितुंविषयसुखानांमधुविषसंपृक्तान्नवद्दुःखत्वमाह शब्दादीतिद्वाभ्यां । पंचप्रकारवत्कारणभेदात्पंचविधम् नाशादीत्यादिपदेनभयादिग्रहः ततःदुःखसंसर्गात् इदंवैषयिकम् ३४४ । ३४५

उक्तपंचविधदुःखसंततिरूपोस्यावेगइत्याह पंचानामेवेति स्पष्टम् ३४६ तस्याःपंचाशद्भेदत्वंद्विधादर्शयंस्तत्रप्रथमंस्रोतःप्रभृतीनांमंत्रोक्तदशपदार्थानामेवप्रत्येकंपंचसंख्याःसंकलय्यपंचाशत्त्व
बोध्यमित्याह स्रोतसामिति । उग्ररूपिणांचक्राणामेकंपंचकंविषयाणामावर्त्तरूपाणांचकाराद्वक्ष्यमाणपर्वणांग्रहः एवंपंचकानिदशजातानि तैःसंकलितैरेषापंचाशद्भेदेतिद्वयोरर्थः ३४७ । ४८
अथवासांख्यप्रसिद्धंप्रत्ययसर्गंपंचाशद्भेदमादायएषापंचाशद्विधेतिदर्शयन्स्मारयति अथवेति । सिद्धेरष्टकंतुष्टेर्नवकमितिसंबंधः ३४९ । ३५० तमआदिपंचकंदर्शयन्पंचपर्वतामपितस्याःप्रतिपाद
यति तमइति । एतैस्तमआदिभिरविद्यादिरूपैःकृत्वाएषानदीस्वात्ममायारूपापंचपर्वापंचभागाप्रोक्तेति ३५१ अपश्यन्नितिपदेनानुषक्तेनविशिष्टस्यस्मरणार्थंकस्यचरमपदस्यफलितार्थमाह एनामि
ति । एषाशक्तिरात्मस्थाविश्वकारणभूतेब्रह्मणिआगमानुमानार्थापत्तिभिःपूर्वंनिश्चितासंभावितापितामेनांध्यानयोगकालेमुनयोदृष्टवंतःसाक्षादिवकृतवंतः ननुब्रह्मणिसमाहितानांकथंशक्तिभानमि
तिशंकांवारयन्नाह स्मृतिंप्राप्येति । यदातेसमाधिकालेप्रणवार्थमिवसृष्ट्याद्यनुपपत्तिस्मरंतितदैनांशक्तिमवधारयन्तीतिभावः ३५२ षष्ठंमंत्रमवतारयति भविष्यतीतिद्वाभ्याम् । यतोभवतामपिश

पंचानामेवदुःखानांनैरंतर्यमहर्निशम् ॥ सएववेगइत्युक्तोनद्याअस्याद्विजोत्तमाः ३४६ स्रोतसामंभसांतद्वद्योनीनामुग्ररूपिणाम् ॥ चक्राणांचतथैवैतत्प्राणा
नांचधियामपि ३४७ इच्छानांविषयाणांचदुःखानांपंचकानिहि ॥ दशतैर्जायतेचैषापंचाशद्भेदसंयुता ३४८ अथवातमआदिस्यात्पंचकंत्वष्टकंपुनः ॥
सिद्धेश्चनवकंतद्वत्तुष्टेश्चैताअशक्तयः ३४९ अष्टाविंशतिभेदिन्यःपंचाशदितिकीर्तिताः ॥ एतैर्भेदैरियंज्ञेयापंचाशद्भेदमागता ३५० तमोमोहोमहामोहस्तामि
स्रोह्यंधसंज्ञितः ॥ एतैःपंचभिरुद्दिष्टापंचपर्वामहानदी ॥ संसारचक्रजननीस्वात्ममायेतिकीर्तिता ३५१ एनांशक्तिंहितेविप्राह्यपश्यंतोयतीश्वराः ॥ आत्म
स्थांतांस्मृतिंप्राप्यनिश्चितांब्रह्मकारणे ३५२ भविष्यत्येवमेवात्रभवतामपिनिश्चयः ॥ यतीश्वराभवद्भ्योत्रततोब्रह्मवदाम्यहम् ३५३ ज्ञातेब्रह्मणितत्रस्थांशक्ति
मेतांमहानदीम् ॥ स्वयमेवभवंतोपिज्ञास्यंतिब्रह्मवादिनः ॥ योगध्यानंसमागत्ययथापूर्वंमुनीश्वराः ३५४ ब्रह्मयन्निर्गुणंप्रोक्तंदृष्टंतैर्मुनिपुंगवैः ॥ कारणानामधि
ष्ठातृतद्भवंतोनचापरम् ३५५ भवतांहृदयेयोयंबुद्धिसाक्षीप्रकाशते ॥ अविद्यांप्राप्यसंसारचक्रएषप्रवर्तते ३५६ अस्मिन्नुक्तेमहाभागाःसर्वजीवनहेतुके ॥ सर्वे
षामपिसंस्थानेमहत्याकाशतोपिच ३५७ अत्रस्थितोमहानेकोबुद्धिभेदविभेदवान् ॥ कामक्रोधादिभिर्दंडैर्भ्राम्यतेविवशःसदा ३५८

क्तिनिश्चयएवमेवब्रह्मसमाधानेनैवभविष्यतिततोयथाभवतांब्रह्मनिश्चयोभवेत्तथावदामीत्यर्थः ३५३ ज्ञातेइति । योगध्यानमितरवृत्तिनिरोधात्मकंब्रह्माकारवृत्तिप्रवाहम् ३५४ मंत्रेणासमानाधिकरण
योर्जीवब्रह्मपदयोस्तात्पर्यार्थमाह ब्रह्मेति । यन्निर्गुणंब्रह्मसर्वकारणानामधिष्ठातृअधिष्ठानरूपंप्रसिद्धंतद्भवंतएवभवतांशुद्धंस्वरूपमेवेत्यर्थः ३५५ तदेवभवतांब्रह्मात्मस्वरूपंमायोपहितंसाक्षीईश्वरइति
चव्यपदिश्यते स्वरूपावरणलक्षणाविद्ययासंसारीसन्जीवश्चभवतीत्याह भवतामिति । योयंभवतांब्रह्मरूपआत्माबुद्धिसाक्षीसन्प्रकाशतेसएवाविद्यांप्राप्यास्मिन्नुक्तेवर्णितेसंसारचक्रेप्रवर्त्तमा
नोजीवइत्युच्यतेइतिशेषः ३५६ अस्मिन्निति । प्रथमपद्यद्वयंपूर्वान्वयित्वेनव्याख्यातम् । हेमहाभागाःसजीवोत्रहृदयस्थसाक्षिरूपेईश्वरेस्थितःसन्बुद्ध्युपाधिकनानाभेदशालीकामादिदंडैस्ताडितत्वे
नविवशोऽनेनांतर्यामिणेश्वरेणभ्राम्यते कीदृशेऽश्वरे सत्तादिप्रदत्वेनसर्वजीवनहेतुभूतेसर्वाधारेआकाशाद्दहतिचेतिद्वयोरर्थः ३५७ । ३५८

अयंजीवोयदाहृदयाकाशरूपेसमागतोभवतितदाविद्यांघ्नन्सन्हंसपदाभिधेयोभवतीत्याह ब्रह्मजइति । ब्रह्मजेशुद्धब्रह्मणएवंविवर्त्तभूतेहृदयाकाशेसाक्षिरूपेसंसारचक्राद्बंधकात्पृथङ्मोक्षहेतुतया विलक्षणत्वेनस्थितेसमागतःसमाहितःसन्स्वबोधेनाविद्यायाघातकोभवतितदाहंसइत्युच्यते हंतीतिहंसइतिव्युत्पत्तिसमन्वयादित्युत्तरश्लोकाद्धंसपदानुषंगेणार्थः ३५९ हंसइति । सहंसआत्मानं सर्वजडप्रेरकत्वेनसर्वांतरंत्वंपदार्थंज्ञात्वातेनैवरूपेणप्रीतस्तुष्टःसंस्ततस्तत्पदार्थभूताद्वयसदानंदरूपेणतदेवनिजंरूपंदृष्टवान्यतोभवतिततएवामृतत्वंगच्छतीत्यर्थः ३६० ब्रह्मात्मज्ञानादमृतत्वमित्ये तदेवस्फुटयति आनंदात्मनीति । स्पष्टम् । एतेनजीवस्यब्रह्मणःसकाशादुत्पत्तिकथनेनकुतःस्मजाताइतिप्रश्नोपिसमाहितइतिबोध्यम् ३६१ ब्रह्मणःसर्वाधिष्ठानतांतस्यात्मत्वज्ञानान्मोक्षंच विशदयतःसप्तमंत्रस्यार्थमाह योयमितिपंचभिः । योयमीश्वरोहृदयाकाशरूपोहंसेनात्मतयादृश्यतेसवेदांतवाक्यैःकर्मणःकर्मप्रतिपादकात्पूर्वकांडात्उत्ऊर्ध्वेस्थितैर्गीतःप्रतिपादितः अथवा कर्मणःकर्मफलादूर्ध्वमुपरिष्टात्स्थितोगीतःसहृदयाकाशरूपईश्वरएवपरंब्रह्मेतिद्वयोरर्थः ३६२ । ३६३ कृष्णमिति । तस्मिन्नेवब्रह्मणिकृष्णादिवर्णत्वेनच्छांदोग्येपष्ठेप्रपाठकेवर्णितंतेजःप्रभृति

ब्रह्मजेहृदयाकाशेपृथक्संसारचक्रतः ॥ समागतःस्वबोधेनह्यविद्यायाश्चघातकः ३५९ हंसोज्ञात्वास्वमात्मानंप्रेरकंचजडस्यहि ॥ प्रीतस्तेनसदानंदंसर्वप्रियतमं निजम् ॥ दृष्टवान्यतएवायममृतत्त्वंततोव्रजेत् ३६० आनंदात्मनिविज्ञातेसत्येप्रियतमेपुमान् ॥ अविद्यारहितोभूयोमरणंनैवगच्छति ३६१ योयंहंसेनसर्वात्मा हृदयाकाशईश्वरः ॥ आनंदात्मापरप्रीतिकरःस्वस्यात्मदर्शनात् ३६२ दृश्यतेसहिवेदांतैरूर्ध्वंगीतस्तुकर्मणः ॥ सएवपरमंब्रह्मयतोनावर्त्ततेगतः १६३ कृष्णं श्वेतंतथारक्तंतेजोबन्नात्मकंत्रयम् ॥ ब्रह्मज्ञानाद्विनायस्यानाशोनास्तिकथंचन ॥ मायासापिचतत्रैवस्वात्मावरणकारणम् ३६४ एतस्मिन्हृदयाकाशेचिदानं दात्मरूपिणि ॥ स्वयंज्योतिषिमायातःसकार्यायाविभिन्नताम् ॥ ज्ञात्वावेदविदोविप्राब्रह्मात्मत्वेनतत्पराः ३६५ विक्षेपावरणाद्योनेर्विनिर्मुक्ताःसुनिर्वृताः ॥ अ स्मिन्नेवचतादात्म्याल्लीनाभवनवार्जिताः ३६६ तत्पदार्थोत्रविज्ञेयोहृदयाकाशईश्वरः ॥ ब्रह्महंसस्तथैवायंत्वंपदार्थःप्रकीर्तितः ३६७ औपाधिकोऽनयोर्भेदःकथि तोद्विजसत्तमैः ॥ उपाधिश्चानयोरेवंविभिन्नोत्रयतीश्वराः ३६८ व्यक्ताव्यक्तमिदंविश्वंकार्यकारणरूपधृक् ॥ क्षराक्षरवचःप्रोक्तमीशोब्रह्मबिभर्त्यदः ३६९ सुख दुःखोपभोगेनस्वात्मानंबुद्धिसंयुतः ॥ अजानानोऽविवेकेनजीवत्वंगम्यतेपरः ३७०

त्रयंस्थितंतथास्वात्मावरणकारणत्वेनस्वप्रतिष्ठापदोक्ताब्रह्मात्मज्ञानेतरानाश्यत्वेनाक्षरपदोक्ताचमायास्थितेत्यर्थः ३६४ एतस्मिन्निति । एतस्मिन्हृदयाकाशेसकार्यायाःसविलासायामायायाः सकाशाद्विभिन्नतारूपमंतरंप्रथमंज्ञात्वापुनर्ब्रह्मात्मत्वेनचतंज्ञात्वातत्पराऐक्यपरावेदज्ञविप्राविक्षेपावरणरूपायायोनेरविद्यायाविमुच्यसुनिर्वृताआनंदमग्नाअस्मिन्नेवब्रह्मणितादात्म्येनलीनाभवनेनजन्म नावर्जिताजाताइतिद्वयोरर्थः ३६५ । ३६६ तत्त्वंपदार्थयोर्विभाजकोपाधीतद्विवेकेनमोक्षंचदर्शयतोऽष्टममंत्रस्यार्थमाह तत्पदार्थइत्यष्टभिः । अत्रप्रस्तुतविवेकेहृदयाकाशरूपईश्वरोब्रह्माद्विती योमहावाक्यगततत्पदार्थउक्तस्तथाहंसत्वेनोक्तोजीवस्त्वंपदार्थइत्यर्थः ३६७ औपाधिकइति । अनयोस्तत्त्वंपदार्थयोरेवमुत्तरश्लोकोक्तविधयाविभिन्नउपाधिर्ज्ञेयइति ३६८ व्यक्तेति । तत्र व्यक्तंकारणसंबद्धकार्यरूपंविश्वंक्षरपदोक्तंत्वंपदार्थोपाधिरव्यक्तंकारणमक्षरंतुतत्पदार्थोपाधिरनयोर्द्वयोरधिष्ठानभूतंतुशुद्धंब्रह्मपरमीशानमित्यर्थः ३६९ एवमस्यात्मनोबुद्ध्यविवेकेनजीवत्वंदर्शय ति सुखेति । परआत्मैवबुद्धिसंयुतआत्मानमजानानःसन्जीवत्वंगतइति ३७०

सएवोपाधिविवेकेनात्मानमीशंजानानोमुच्यतइत्याह जीवत्वस्येति स्पष्टम् ३७१ एतस्यात्मनःसमष्टिव्यष्ट्युपाधिवशात्तत्त्वंपदार्थभावंदृष्टांतेनस्फुटयति सूचीति । सूचीपाशःसूचीमूलच्छिद्रं तद्गतमाकाशंस्वल्पमित्युच्यतेब्रह्मांडावच्छिन्नंमहदितितथाबुद्ध्यवच्छिन्नआत्माजीवःकारणावच्छिन्नस्तुपरमईश्वरइत्युच्यतेइतिद्वयोरर्थः ३७२ । ३७३ एवमिति । एवंपरमार्थतोवस्तुनऐक्ये नात्मानमद्वयंज्ञात्वाजीवःकामादीन्पाशांस्तत्कारणीभूतांमायांचत्यजतीत्यर्थः ३७४ नन्वात्मनएकत्वेऽयंभेदव्यवहारःकिंकृतइतिशंकांनिवार्यमोक्षसाधनंविज्ञानमभिनयतोनवममंत्रस्यार्थमाह अ नादीति । एतद्वक्ष्यमाणंपदार्थत्रयमनादिमाययैवकल्पितंतेषांत्रयाणांपदार्थानामजत्वमनादित्वमप्यतएवमायातएवस्यात् तेपदार्थाअनादित्वेनैवमाययाकल्पिताइतियावत् ३७५ केतेइत्या कांक्षायामाह सर्वज्ञइति । तथाचईशोजीवःशुद्धंब्रह्मचेतित्रयमनादीतिपादत्रयार्थः एतेषामनादित्वेउक्तेतत्प्रयोजिकायामायायाअनादित्वमर्थादुक्तमित्याह मायेति । सर्वस्यत्रयाणांभेद स्यतदनादित्वादेश्चकारणंप्रयोजिकेत्यर्थः तदुक्तंवार्तिककृता ‘जीवईशोविशुद्धाचिद्विभागश्चतयोर्द्वयोः । अविद्यातच्चितोर्योगःषडस्माकमनादयः’इति ३७६ मोक्षोपायमाह एतत्त्रयमिति । यदाय मधिकारीएतद्वर्णितंत्रयंस्वस्वरूपादभिन्नंजानातिआत्मानंस्वस्वरूपंचसर्वात्मतयास्थितमतएवानंतंजानात्ययमहमस्मीति तदामुच्यतेइतिशेषः ३७७ अथबोधात्पूर्वमक्षरत्वेनप्रसिद्धायाअविद्या

जीवत्वस्यपरित्यागादेषमायाकृतस्यहि ॥ ईशमात्मानमाज्ञायमुच्यतेसर्वपाशतः ३७१ सूचीपाशस्थितंयद्वन्नभोन्यूनमुदाहृतम् १ ब्रह्मांडोदरसंस्थानंमहदेत त्प्रकीर्तितम् ३७२ तद्वद्बुद्धिस्थितोजीवआत्मेवपरिकीर्तितः ॥ मायास्थितश्चपरमोह्यतोभेदोनवस्तुनि ३७३ एवंविज्ञायजीवोयमानंदात्मानमीश्वरम् ॥ का मक्रोधादिकान्पाशान्संत्यजेन्माययासह ३७४ अनादित्रयमेतत्स्यान्माययैवयतीश्वराः ॥ अजत्वमतएवस्यात्त्रयाणामपिसर्वदा ३७५ सर्वज्ञःपरमात्मैकोमूढो जीवस्तथापरः ॥ आनंदात्मातथान्यश्चमायासर्वस्यकारणम् ३७६ एतत्त्रयंयदाजंतुर्जानीतिस्वस्वरूपतः ॥ अभिन्नंभोक्तृभोग्यादिरूपेणपरितःस्थितम् ॥ अ नंतमेकमात्मानमहमस्मीत्यसंशयम् ३७७ अजाभोग्यस्वरूपेणसुखदुःखप्रदायिनी ॥ अव्यक्तनामरूपत्वादक्षरंचेतिकीर्तिता ॥ स्वात्मनोज्ञानउत्पन्नेनश्वरत्वा त्क्षरंभवेत् ३७८ मरणादिविनिर्मोक्षादक्षरंनाशवर्जितम् ॥ अविद्याहरणादेषपरमात्माहरःसदा ॥ ईष्टेक्षरमिदंसर्वंकार्यकारणरूपधृक् ३७९ यतीश्वराअयंब्रह्म सर्वात्माभेदवर्जितः ॥ ज्ञातोविद्यागतानेतिनमंतव्यंकदाचन ३८० तस्याभिध्यानतःकाचिदविद्यानाशमाव्रजेत् ॥ आत्मासर्वमिदंजानन्नयतोरागादिभिःपुमान् ॥ नयुज्यतेयथापूर्वंभवंतइवचाधुना ३८१

याःक्षरत्वलक्षणःस्वभावविपर्ययश्चतुर्भिर्निमित्तैर्भवतीतिप्रदर्शयतोदशममंत्रस्यार्थमाह अजेत्येकादशभिः । याअजामायासृष्टिकालेभोग्यादिरूपेणप्रलयेऽव्याकृतरूपेणचविद्यमानत्वादक्षरमिति नाम्नाप्रसिद्धासाबोधकालेक्षरणशीलत्वात्क्षरपदेनव्यवहार्याभवतीत्यर्थः ३७८ बोधकालेत्वविद्याक्षपणाद्धरसंज्ञआत्मैवाक्षरपदेनव्यवहार्यइत्याह मरणादीति । यद्वस्तुनाशवर्जितंतदक्षरमिति वाच्यंतादृशश्चात्मैवयोऽविद्यायाहरणाद्धरइतिक्षररूपयोःकार्यकारणयोर्नियमनादीशइतिचोक्तइत्यर्थः ३७९ मंत्रोत्तरार्द्धार्थमवतारयति यतीश्वराइति । हेयतयोभवद्भिरितिनमन्तव्यं इति॰ अ स्माभिरात्माज्ञातस्तथाप्यविद्यानगतानिवृत्तेतिकथंज्ञानस्याविद्यानिवर्त्तकत्वमिति ३८० तत्रहेतुतयाआसक्त्या.देहेतवोऽविद्याशक्तयस्तत्त्वज्ञानावस्थाभेदैर्निरस्यमानादृश्यन्तइतिप्रतिपादकस्यो त्तरार्धस्यार्थमाह तस्येत्यादिना । यतस्तस्यहरस्यात्मनोऽभिध्यानातअभितःसर्वत्रजगत्यनुस्यूतत्वचिंतनात्काचिज्जगतिसत्यत्वभ्रमद्वारासक्तिप्रयोजिकाअविद्याअविद्याशक्तिःक्षीयमाणाबुद्ध्यते प तःसर्वमिदंदृश्यमात्मैवेतिजानानःपुमान्पूर्ववद्रागादिभिर्युज्यमानोनदृश्यतेतत्रभवंतएवोदाहरणमित्यर्थः ३८१

फलितमाह तेनेति । तेनोक्तज्ञानफलप्रदर्शनेनात्युत्कटासक्तिहेतुत्वाद्यथायेनउत्कटाविद्यानाशेनसंसारिभ्यःसंसारासक्तेभ्योविलक्षणोभवेदिति ३८२ जीवानांपरस्परंब्रह्मणश्चभेदभानहेतुभूताद्वितीयाविद्याशक्तिरैक्यचिंतनलक्षणाद्योजनादपगच्छतियेनात्मनोब्रह्मत्वेनिःसंशयोभवेद्यथात्मनोब्राह्मणत्वादिजातौलौकिकजनोनिःसंशयस्तद्वदित्याह आत्मनइतिद्वाभ्यां । तांब्रह्मात्मतां शेषंस्पष्टंद्वयम् ३८३ । ३८४ अथाद्वयनिष्ठारूपात्तत्त्वभावाख्यात्तत्त्वज्ञानावस्थाविशेषात्ज्ञानकर्मवासनाप्रयोजिकातृतीयाविद्याशक्तिर्नश्यतियेनसमाहितोविद्वान्जीवन्नपिविदेहमुक्तसमोभवेदित्याह तत्त्वभावादिति । तत्त्वस्याद्वयरूपस्यभावोनैरंतर्येणानुसंधानंतस्मात् ३८५ अत्रेति । अत्रतत्त्वभावेसमाहितत्वरूपेसर्वासर्वविधामायासंस्कारैर्वासनाभिःसहनश्यतिविदेहमुक्तिवदित्यर्थः ३८६ अत्रस्वाप्नमिति । तथात्रतत्त्वभावेजाग्रदवस्थःस्वाप्नंप्रपंचमिवविश्वंदेहपर्यंतंनपश्यतिस्वयंप्रकाशानंदरूपेवस्थितत्वादित्यर्थः । तदुक्तंभागवते 'देहंचनश्वरमवस्थितमुत्थितंवासिद्धोनपश्यतियतोऽध्यगमत्स्वरूपं'इति । एतेनप्रपंचभानप्रयोजिकाचतुर्थीअविद्याशक्तिःप्रारब्धांतेलीयतेइतिसूचितं । समाधेरपिप्रारब्धात्प्राबल्यस्यसर्वतंत्रसिद्धत्वादिति ३८७ उक्तव्यवस्थामेवस्फुटीकुर्वंतएकादशमंत्रस्यार्थं

तेनाभिध्यानतश्चैकाविद्यानाशंप्रयातिसा ॥ अत्युत्कटायथाविद्वान्संसारिभ्योविलक्षणः ॥ भवेच्छांत्यादिसंपन्नोरागद्वेषविवर्जितः ३८२ आत्मनोब्रह्मभावेनयोजनाच्चापरापिसा ॥ विनश्यतिमहाभागायथाब्रह्मात्मतांप्रति ३८३ संदेहादिविहीनःसन्ब्राह्मणत्वादिकंयथा ॥ अवगच्छतितद्वत्तामवगच्छतिसर्वदा ३८४ तत्त्वभावात्तृतीयैषामायालयमुपाव्रजेत् ॥ यथाविदेहकैवल्येमुक्तानांमुनिसत्तमाः ३८५ अत्रसर्वापिमायेयंसंस्कारैश्चशुभाशुभैः ॥ सहैवनाशमायातिमुक्तानांद्वियतीश्वराः ३८६ अत्रस्वाप्नमिदंविश्वंप्रतिबुद्धोनपश्यति ॥ आनंदात्माद्वयःसोयंस्वयंज्योतिर्वपुःस्थितः ३८७ अभिध्यानाद्यदात्मानंजानात्येषोऽविमूढधीः ॥ कामक्रोधादिकान्पाशांस्तदासर्वान्यंत्यजेत् ३८८ यैर्निबद्धोभिसंयातियोनिमुच्चावचामयम् ॥ तत्रापित्रिविधंदुःखंव्रजेन्नानाविधंपुनः ॥ यैर्निबद्धोत्रनैवायंसंसारेपिसुखंव्रजेत् ३८९ तइमेदारुणाःपाशाहीयंतेप्रथमंसदा ॥ इदंजडाजडंविश्वंस्वात्मेत्येवावधारणात् ॥ गुरुशास्त्रोक्तविश्वासात्तदभिध्यानरूपिणः ३९० अहंब्रह्मेतितादात्म्याद्योजनेसतियद्दृढम् ॥ जायतेब्रह्मविज्ञानंनभोवत्स्वात्मनोयदा ३९१ हृदयेसंप्रभेदःस्यात्तदातस्यमहात्मनः ॥ क्लेशकर्मक्षयश्चैवच्छिन्नसंशयबोधता ३९२ मायालयेयदाक्लेशाःक्षीयंतेप्राणिनामिह ॥ तदाकारणशून्यानिदुःखानिनभवंतिच ३९३

मेकत्रिंशताश्लोकैःप्रपंचयंस्तत्राभिध्यानफलप्रदर्शकस्यपूर्वार्द्धस्यार्थंस्फुटयति अभिध्यानादितिचतुर्भिः । एषोधिकारीपूर्वंमूढःअभिध्यानेनोक्तलक्षणेनयदात्मानंजानातितदाअविमूढाव्यामोहहीनामतिर्यस्यसतथाभूतःसन्सर्वान्कामादिरूपपाशांस्त्यजेद्यैःकामाद्यैर्बद्धोनानायोनिपुकारागारस्थानीयासुभ्रमति तत्रतासुयोनिपुअत्रदेहेचनानादुःखानिचानुभवतीतिद्वयोरर्थः ३८८ । ३८९ तइमेइति । तेनानायोनिद्वारादुःखप्रयोजकाइमेकामादयःपाशाःक्षयंगच्छंति कुतः इदंविश्वमात्मैवेत्याकारकादभिध्यानादात्मज्ञानात्श्रद्धयालब्धादित्यर्थः ३९० अथार्थाल्लब्धंयोजनफलंप्रपंचयति अहंब्रह्मेतिचतुर्दशभिः । नभोवत्घटाकाशस्यमहाकाशइवअहंब्रह्मेतिस्वात्मनस्तादात्म्येनब्रह्मणियोजनेसतियदाब्रह्मज्ञानंजायतेतदाहृदयेहृदयग्रंथौअध्यासरूपेसंप्रभेदोविशीर्णताक्लेशादिक्षयोनि संशयबोधशालित्वंचभवति भिद्यतेहृदयग्रंथिरित्यादिश्रुतेरितिद्वयोरर्थः ३९१ । ३९२ क्लेशानामविद्यादीनांक्षयेतुदुःखानिकारणाभावादेवनभवंतीत्याह मायेति । मायायाभेदप्रयोजकाज्ञानस्यक्षये ३९३

अज्ञानस्यक्लेशद्वाराद्दुःखप्रयोजकतामेवान्वयव्यतिरेकाभ्यांस्फुटयति अज्ञानमितिद्वाभ्यां । अहंताअस्मितारूया ममताअभिनिवेशः ३९४ व्यतिरेकमाह अज्ञानेइति । तल्लयेअहंतालये ३९५ तस्यविदुषःप्रारब्धकर्मणादेहसंघातधर्माणांदुःखादीनांभानमात्रंभवतिनत्वात्मन्यध्यासइत्याह एवमित्यादिना । निर्वाणंसमाधिं एषविद्वान् ३९६ दुःखादिकंसंघातधर्मएवेत्याह सुकृतैरिति । बुद्धिसहितदेहरूपःसंघातोदुःखाद्याश्रयोनात्मेति ३९७ अतइति । अतउक्तविवेकात्विद्वान्सुखादिकंनयातियथामूढोऽभिमानाद्देहधर्मान्याातीतिसंबंधः । उपहतेताडिते उपघातंपीडाम् ३९८ एवमिति । मूढोदेहभाक्देहात्मदर्शीअनुकूलात्सुखंप्रतिकूलाद्दुःखंचगच्छतीति ३९९ विद्वांस्तुनतथेत्याह अभिमानेनेति । देहांतरधर्मानिवस्वदेहधर्मानपिनात्मन्यारोपयतीत्यर्थः ४०० देहतादस्थ्येलौकिकंदृष्टांतमाह मध्यस्थइति । मध्यस्थःपक्षपातहीनः ४०१ दार्ष्टांतिकेयोजयति एवमिति स्पष्टम् ४०२ तस्यसमाधेर्व्युत्थानकालेप्रपंचभावंभवतीतिदृष्टांतेनस्फु

अज्ञानंहियदैवस्यात्तदाहंताप्रजायते ॥ रागद्वेषभयैःसार्द्धंममतायास्तुकारणम् ३९४ अज्ञानेविलयंप्राप्तेयात्यहंतालयंततः ॥ तल्लयेकेनदुःखानिप्राप्यादेषमानवः ३९५ एवंनिर्दुःखतांप्राप्यपुण्यपापविवर्जितः ॥ आरब्धकर्मनिर्वाणमिच्छन्नेषोत्रवर्त्तते ३९६ सुकृतैःसुखमायातिदुःखंयातिचदुष्कृतैः ॥ संघातोबुद्धिसहितोदेहोनाहंकदाचन ३९७ अतोदेहकृतंकिंचित्सुखंदुःखंनविंदति ॥ अभिमानाद्यथादेहेमंडितेमंडितोभवेत् ॥ तस्मिन्नुपहतेतद्वदुपघातंचयात्यसौ ३९८ एवंदेहाभिमानेनसुखंदुःखंचगच्छति ॥ अनुकूलात्तथैवायंप्रतिकूलाच्चदेहभाक् ३९९ अभिमानेनरहितोयथादेहांतरेपुमान् ॥ सुखदुःखेनयात्येवमस्मिन्नपिवपुष्ययम् ॥ पश्यत्येषनिजंदेहंपरदेहसमंपुमान् ४०० मध्यस्थोत्रयथाकश्चिद्द्वयोर्विवदमानयोः ॥ सुखदुःखेविजानन्सनैवजानातिकिंचित् ४०१ एवमेवशरीरस्थःपुमान्संगविवर्जितः ॥ सुखदुःखेविजानन्सनजानात्येकरूपभाक् ४०२ वासनाभिर्यथास्वप्नंपश्यत्येवविमूढधीः ॥ पुमान्क्वचित्तथैवायंक्षीणक्लेशःसुखादिकम् ॥ जीवन्मुक्तवपुर्गच्छेत्सर्वदुःखविवर्जितः ४०३ तत्त्वभावादविद्यायाःक्षयेसंस्कारवर्जितः ॥ तत्पदार्थेस्तियत्किंचिद्विश्वैश्वर्यंपुरोदितम् ॥ देहभेदेतृतीयंतद्द्वयमाद्यमपेक्ष्यहि ४०४ रागद्वेषादिराहित्यंसर्वपाशविमोक्षणम् ॥ ऐश्वर्यंप्रथमंप्रोक्तमिंद्रस्यापिनचास्तियत् ४०५ सर्वक्लेशप्रहाणेनजायतेयदद्दुःखदम् ॥ द्वितीयंनतदस्त्यत्रब्रह्मणोऽव्यक्तजन्मनः ४०६ तृतीयंसर्वसंस्कारसमुच्छेदात्प्रजायते ॥ विश्वैश्वर्यंतृतीयंतद्विद्यतेपरमात्मनः ४०७

यति वासनाभिरिति । यथास्वप्नभानंस्वप्नभोगप्रदकर्मवासनाधीनंतथास्यप्रारब्धकर्माधीनंविश्वभानमित्यर्थः ४०३ अथोत्तरार्द्धोक्तंतत्त्वभावफलंविशदयति तत्त्वभावादिति । तदेकनिष्ठारूपात्तत्वभावाद्यदानिरविद्यःसंस्कारवर्जितोभवतितदातत्पदार्थेपरमेश्वरेविद्यमानेविश्वैश्वर्यंपुराएषह्येवसाधुकर्मकारयतीत्यादिश्रुतिव्याख्यानावसरेउक्तं देहभेदेवक्ष्यमाणस्वरूपे प्राप्नोतीतिशेषः । कीदृशंतदैश्वर्यं अभिध्यानयोजनयोःफलभूतंयदैश्वर्यद्वयंतदपेक्षयातृतीयमित्यर्थः ४०४ तत्राभिध्यानफलस्यैश्वर्यभावंसकामस्येंद्रस्यापिदुर्लभत्वेनाह रागद्वेषादीति । रागादिराहित्यात्मकसर्वपाशविमोक्षणरूपमैश्वर्यंप्रथमंप्रथमस्याभिध्यानस्यफलम् ४०५ योजनफलस्यतथात्वमाह सर्वेति । अदुःखदंभेदाभावेनभूमानंदरूपंद्वितीयमैश्वर्यंभेददर्शनकालेहिरण्यगर्भस्यापिदुर्लभमित्यर्थः ४०६ तत्त्वभावप्रयुक्तमैश्वर्यंविशदयति तृतीयमितित्रिभिः । परमात्मनःपरमेश्वरस्य ४१७

तस्यभूमानंदरूपतामेवदर्शयति नात्मानमिति । संस्कारप्रयुक्तंदर्शनंस्मृतिः तथाचभिन्नत्वेनात्मादिकंस्मरत्यपिनतथानुभवनंतुदूरतइत्यर्थः ४०८ स्वसजातीति अयंविद्वान् ४०९ देहभेदपदार्थं ब्रुवंस्तत्रोक्तमैश्वर्यंविदुषालभ्यतइत्याह यदेति । सत्पृथिव्यादिभूतत्रयंत्यत्परोक्षंवाय्वाकाशरूपंतत्समुदायात्मकत्वेनसत्यपदार्थतयासत्यस्यसत्यमितिब्रह्मनामव्याख्यानेउक्तःप्राणोयदादेहएवली यतेतद्रूपेदेहभेदेइदमैश्वर्यंकश्चिल्लभतेइत्यर्थः ४१० एतादृशस्यांविदुषोदौर्लभ्यंगीतादिषुप्रसिद्धंदर्शयति मनुष्याणामिति । मनुष्येषुमुमुक्षुर्दुर्लभस्तेषुमुमुक्षुष्वपिसाधनसंपन्नोदुर्लभतरस्तेष्वप्यात्मवान् परोक्षात्मविद्दुर्लभतमइतिद्वयोरर्थः ४११ । ४१२ तेष्वप्यपरोक्षात्मविदउक्तलक्षणस्यप्रभावोनवाङ्मनसगोचरइत्याह आत्मबोधेनेति ४१३ कुलंपवित्रंजननीकृतार्थेत्यादिपर्यंतस्यैवमाहात्म्यं किंचित्ख्यापयतीत्याह कृतार्थेतिद्वाभ्यां । ब्रह्मबोधस्यजनिमुत्पत्तिस्थानंविद्वांसंविपर्यीकृत्यबहुनोक्तेर्नांक्रियतस्तस्यजनन्यादिमहिमापिवर्णयितुमशक्यइतिद्वयोःसंबंधः ४१४ । ४१५ 'यस्यानु

नात्मानंनपरंयत्रसंस्कारैरपिपश्यति ॥ आनंदात्मास्वयंज्योतिरवाङ्मनसगोचरः ४०८ स्वसजातिविजात्युत्थभेदत्रयविवर्जितः ॥ वर्त्ततेप्राप्तकामोयमु पमादिविवर्जितः ४०९ यदाविलीयतेदेहेप्राणःसत्यइतीरितः ॥ उत्क्रांतिरहितस्तस्मिन्देहभेदेयतीश्वराः ॥ इदमाप्नोतिकोप्यत्रपुमांश्वरमजन्मानि ४१० मनुष्याणांसहस्रेषुकोपिविद्वान्विमुक्तये ॥ चित्तंकरोतितेष्वत्रसहस्रेष्वपिकश्चन ४११ श्रवणादिसमुद्युक्तोभवेत्पुण्यकरःपुमान् ॥ तादृशेष्वपिकश्चित्स्यात्स हस्रेष्वात्मवानयम् ४१२ आत्मबोधेनसंपन्नोरागद्वेषविवर्जितः ॥ आत्मवत्सर्वभूतानिकश्चिदेषप्रपश्यति ४१३ कृतार्थाजननीतस्यजनकोपिमहात्मनः ॥ कुलंपवित्रंतस्यैतद्यत्रजातःपुमानयम् ४१४ किंबहूक्तेनसर्वज्ञाब्रह्मबोधजनिंप्रति ॥ विश्वंभरापिसकलाकृतार्थातेनजायते ४१५ विदुषःस्वात्मविज्ञानंय स्यजातंमहात्मनः ॥ मुच्यंतेपातकैर्घोरैरपितद्दृष्टिगोचराः ॥ महापातकिनोप्येतेसर्वमात्मेतिजानतः ४१६ क्षयीयथानिजंकायंगच्छत्येवात्रकालतः ॥ क्लेशैरागादिभिःशून्यआत्मध्यानपरायणः ॥ प्रत्यक्षमात्मनोज्ञानंगच्छत्येवतथैवसः ४१७ तस्मिन्नाप्तेसमाप्नोतिदेहभेदादनंतरम् ॥ विश्वैश्वर्यंयतश्चायं भयंकिंचिन्नगच्छति ४१८ आत्मनोहृदयाकाशमिदंज्ञेयंसदैवहि ॥ सर्वदैवात्मसंस्थानंसर्वाधारविवर्जितम् ४१९ आत्मनोब्रह्मणोनैवभेदःकश्चित्तुविद्यते ॥ इतिब्रह्मात्मविज्ञानात्परंज्ञेयंनविद्यते ४२०

भवपर्यंताबुद्धिस्तत्त्वेप्रवर्त्तते । तद्दृष्टिगोचराःसर्वेमुच्यंतेसर्वकिल्बिषैः' इत्यस्यार्थमाह विदुषइति । एतेब्रह्महादयः ४१६ तस्यविदुषआत्मतत्त्वंयादृशंभवतितादृशंहस्तामलकवत्स्फुटंभासतइत्येतद्दृष्टान्ते नस्फुटयतिक्षयीति । यथाक्षयरोगीनिजकायस्यतत्त्वंसर्वदोषनिधानत्वादिरूपंबहुनाकालेनजानाति नीरोगस्तुदेहमात्मत्वेनमन्यमानोनतथादेहदोषान्जानाति तथाविद्वांश्चिरमात्मध्यानेनात्मगुणा न्सत्यत्वादीन्सम्यग्गच्छतिजानातीत्यर्थः ४१७ तस्मिन्निति । तस्मिन्नात्मबोधेप्राप्तेब्रह्मवेदब्रह्मैवभवतीतिश्रुत्युक्तंफलंप्राप्नोतीत्यर्थः ४१८ ज्ञेयस्वरूपावधारणपरस्यद्वादशमंत्रस्यार्थमाह आ त्मनइतिपङ्क्तिः । यदेतद्धृदयाकाशंमायाशबलेश्वररूपं कीदृशमात्मसंस्थानंस्वस्मिन्नवस्थितं तदेवविवृणोति सर्वाधारविवर्जितमिति ४१९ तस्यब्रह्मणोहृदयाकाशत्वाभिधानेनसूचितमात्म नैक्यमेवज्ञेयमित्याह आत्मनोब्रह्मणइति । नुइतिवितर्के ४२०

उक्तैक्यज्ञानसाधनंचपदार्थशोधनमितिसूचयन्सोपाधिकजीवेशरूपमभिधायतत्रलक्ष्याखंडैकमात्रतामाह हंसइतिचतुर्भिः । संसारचक्रेसंस्थानंस्थितिर्यस्यतथाभूतोयंसुखादिभोक्ताहंसस्त्वंपदार्थस्तयो
क्तोयाचतस्यहंसस्यभोग्याकारपरिणामिनीमायाशक्तिरुक्तायश्चहंसस्यांतर्यामितयाप्रेरकईशस्तत्पदार्थस्तयोक्तएतत्त्रयमपिवस्तुतोखंडब्रह्मैक्यमात्रंबोध्यं आकाशभेदवत्तद्भेदस्यकल्पितोपाधिमात्रप्रयु
क्तत्वादितिचतुर्णांसंबंधः ४२१ । ४२२।४२३।४२४ पराग्दर्शिनंमंदंप्रत्यप्यात्मसत्तामुपायद्वारेणबोधयतस्त्रयोदशमंत्रस्यार्थंपंचदशभिःप्रपंचयंस्तत्रनिकस्यचिन्मंदाशंकामनूद्यतत्समाधानार्थंतामुत्तरग्रंथ
स्योपन्यस्यति नानेकेतिद्वाभ्यां । हेयतयोभवद्भिरितिनकदाचिन्मंतव्यं इतिकिं अस्यात्मनोनेकरूपतैवनाऽद्वितीयरूपता कुतः मायायारूपेभ्योदेहादिभ्योऽविशेषेणावैलक्षण्येनप्रतीयमानत्वादिति
४२५ देहादाविति । एवमुक्तविधाशंकातदाभवतादस्तुयदाउपायेनापिदेहादिसंघातेआत्मनोदर्शनंनस्यात् अत्रतुउपायादात्मनोस्तितासत्त्वंलभ्यतेअतोनतथाशंकितव्यमित्यर्थः ४२६ तत्रानुमानेन
विज्ञानरूपंप्रथममुपायमेकादशभिःप्रपंचयंस्तत्रदृष्टांतमाह यथेति । यथाकाष्ठगोवन्हिःस्वरूपेणानुपलभ्यमानोपिनास्तीतिनचवाच्यः यतऊष्मातत्रकाष्ठेदृश्यतेसऊष्माहिदेहेजीवस्येवकाष्ठेवन्हेर्लिंग

हंसोभोक्तायउद्दिष्टःसर्वदासुखदुःखयोः ॥ संसारचक्रसंस्थानोमाययानीशतांगतः ४२१ मायाशक्तिश्चयाप्रोक्तासंसारजननीनदी ॥ भोग्यासापिचसंसाररूपा
त्मावरणात्मिका ४२२ हंसेनयश्चविज्ञेयःप्रेरकःसर्वकर्मसु ॥ ईश्वरोयस्यविज्ञानाद्धंसईशःप्रजायते ४२३ ब्रह्मैवैतत्त्रयंज्ञेयंसर्वभेदविवर्जितम् ॥ माययाद्वित्वमाप
न्नमेकरूपंनभोयथा ४२४ नानेकरूपताप्यस्यमायारूपाविशेषतः ॥ दर्शनादितिमंतव्यंकदाचिन्नयतीश्वराः ४२५ देहादावात्मनोनित्यंनैवस्याद्दर्शनंयदा ॥
तदैवंभवतात्त्वत्रह्युपायादस्तितात्मनः ४२६ यथाकाष्ठगतोवन्हिःस्वरूपान्नोपलभ्यते ॥ नचासौनास्तियेनायमूष्मातत्रप्रदृश्यते ॥ लिंगंमानेस्तुसत्त्वेयःशरी
रइवदेहिनः ४२७ तथैवात्मापिदेहेषुविद्यमानोनलभ्यते ॥ उपायेनविनाप्यस्तिलिंगंस्फुरणनामकम् ४२८ प्रकाशःसर्ववस्तूनांजडानांलिंगमीरितः ॥ सत्ताया
आत्मनोनित्यंमुनिभिर्हियतीश्वराः ४२९ घटेपटेयथाकुड्येभेदोनस्फुरणेस्तिहि ॥ अभिन्नंततएवैतत्स्वप्रकाशमुदीरितम् ४३० इंद्रियादेस्तुसंयोगात्प्राकट्यं
स्फुरणेभवेत् ॥ एकरूपंनभोवत्तत्रजनिंधर्तुमर्हति ४३१ ततोभिव्यक्तिकारिस्यात्करणंहींद्रियादिकम् ॥ स्फुरणेचनतस्यास्तिपरापेक्षाकथंचन ४३२ स्वयंप्र
काशमेतस्मादिदमुक्तंयतीश्वराः ॥ अंतर्बहिश्चनैवास्तियस्यभेदःकथंचन ३३ देहांतरतएवैतदात्मेत्युक्तंमनीषिभिः ॥ सर्वप्रियतमश्चात्मातेनानंदस्वरूपकः ४३४

अनुमापकइत्यर्थः ४२७ तथात्मादेहेउपायेनविनानुपलभ्यमानोप्यस्तीतिबोध्यः यतस्तस्यस्फुरणरूपंलिंगमस्तीत्याह तथैवेति ४२८ स्फुरणपदार्थमाह प्रकाशइति । योयंजडानांसर्ववस्तूनांप्र
काशःसस्फुरणसंज्ञआत्मनोलिंगमुक्तः ४२९ स्फुरणस्यसच्चिदानंदाद्वितीयरूपात्मनोलिंगत्वयोग्यत्वंदर्शयंस्तस्याभिन्नत्वंस्वप्रकाशत्वंचदर्शयति घटेइतिचतुर्भिः । यतोघटादिविषयेष्वेवभेदोभातिन
तत्स्फुरणेततएतत्स्फुरणमभिन्नंततोऽभिन्नत्वादेवपराप्रकाश्यत्वेनस्वप्रकाशंचेत्यर्थः ४३० इंद्रियादिभिर्ज्ञानकरणैस्तुतस्यस्फुरणस्यावरणाभिभवलक्षणंप्राकट्यमेवक्रियतइत्याह इंद्रियादेरिति ।
तत्स्फुरणंजनिंधर्तुंजन्मशालिभवितुंनार्हतीति ४३१ फलितमाह ततइति । स्फुरणेअभिव्यक्तिमात्रंप्राकट्यमेवकरोतींद्रियादिकंतस्यस्फुरणस्ययतःपरापेक्षानास्तिएतस्मात्स्वप्रकाशमुक्तंनिर्भेदत्वा
द्धेतिद्वयोरर्थः ४३२ । ४३३ तस्यैवस्फुरणस्यसर्वांतरत्वेनात्मपदार्थत्वंनिरतिशयप्रेमास्पदत्वेननिर्भेदत्वेनचानंदपदार्थत्वंचेत्याह देहांतरतइति । एतत्स्फुरणंयतोदेहस्यसंघातस्यांतरतःप्रत्यक्भवति
ततआत्मेत्युक्तमितिपूर्वदलार्थः ४३४

यथातापकत्वेनवन्हिसदृशस्योष्मणोवन्हिलिंगत्वंतथात्मलक्षणलक्षितस्यस्फुरणस्यात्मलिंगत्वमित्याह ऊष्मेति । भेदवर्जितःसमः । अथवानन्तुक्तविधयाआत्मनःस्वरूपभूतस्यस्फुरणस्यकथमात्मलिंगत्वमितिशंकामपिदृष्टांतेनपरिहरति ऊष्मेति । अयंभावः यथावस्तुतोभिन्नानामपिसत्यत्वादीनांकल्पितभेदेनब्रह्मलक्षणत्वंतथागमकत्वेनलिंगत्वमप्यस्तुअन्यथास्वरूपलक्षणंकथोच्छिद्येतेति ४३५ यथामथनरूपोपायेनलौकिकोवैदिकोवाऽग्निर्लभ्यतेतथोक्तलिंगजानुमानलक्षणोपायेनसंसारीशुद्धश्चात्मालभ्यतइत्याह मथनेनेतिद्वाभ्यां । तत्रात्मनोरूपद्वयंपादद्वयेनाह स्वर्गादेरिति ४३६ ४३७ यस्याधिकारिणउक्तविवेकेप्यसामर्थ्यंतंप्रतिप्रणवोपासनामुपदिशेदित्याह अविद्यायाइतिद्वाभ्यां । हेमनीपिणोयदासाविलासाविद्यायाःसकाशाद्भेदेनविवेकेनब्रह्मबोधोमहावाक्येभ्योनजायेततदाएवंवक्ष्यमाणप्रमाणेनध्यानंकारयेदितिद्वयोरर्थः ४३९ प्रणवोपास्यतामभिनयतश्चतुर्दशमंत्रस्यार्थमाह एवमितिचतुर्भिः स्पष्टम् ४४० एवंकथमित्याकांक्षायामाह अधरेति । अरणिरग्निमथनकाष्ठंतत्रदेहःसंघातोऽधरारणिःप्रणवस्तूत्तरउपरिगतोऽरणिर्बोद्धव्यअयंप्रणवोममनामेतिचिंतनमेवमथनमितिद्वयोरर्थः । अयंभावः अस्मिन्संघातेऽनुप्रविष्टंयत्प्रणवेनाभिधानयोग्यंवस्तुतदेवमात्मे

ऊष्मायथाभवेल्लिंगंवन्हिर्भेदविवर्जितः ॥ तथैवस्फुरणंलिंगमात्मनोभेदवर्जितम् ४३५ मथनेनयथैवायंकाष्ठाद्वन्हिःपृथक्कृतः ॥ लौकिकोवैदिकश्चापिलभ्यतेसर्वजंतुभिः ४३६ तद्वदात्मास्वबोधेनलभ्यतेत्रपरापरः ॥ स्वर्गादेःफलभोक्ताचनिर्गुणब्रह्मरूपधृक् ४३७ अविद्यायाःसकार्यायाभेदेनैवमनीषिणः ॥ ब्रह्मबोधोयदानैवजायतेत्राधिकारिणः ४३८ तत्त्वमस्यादिवाक्येभ्यःकुतश्चित्प्रतिबंधतः ॥ तदास्यप्रणवेनैवंकारयेद्ब्रह्मवित्गुरुः ४३९ एवमेनंमहात्मानंशिष्यंविगतकल्मषम् ॥ आदिशेद्बुद्धिसंपन्नोगुरुःसर्वार्थदर्शकः ४४० अधरारणिरेषोयंतवदेहोत्रधार्मिकः ॥ उत्तरारणिरेषस्यात्प्रणवोब्रह्मवाचकः ४४१ नामधेयमयंनित्यंममब्रह्मस्वरूपिणः ॥ इतिप्रत्ययसंतत्यामथनंकुरुसर्वदा ४४२ अनेनमथनेनैषपश्येद्देवंयथारणौ ॥ निगूढमग्निमचिरादेवंदेहेनिजेपिच ४४३ ततश्चतुर्विधेदेहेनायंनास्तियतीश्वराः ॥ उपायाल्लभ्यतेयस्माद्देहेष्वत्रचतुर्ष्वपि ॥ चतुरस्तत्रदृष्टांतान्भवद्भ्यःकथयाम्यहम् ४४४ तिलेषुलभ्यतेतैलंयथासर्पिर्दधन्यपि ॥ स्रोतस्यापोऽरणौवन्हिरेवमात्मायतीश्वराः ४४५ सत्यादिभिर्यमैस्तद्वन्नियमैस्तपआदिभिः ॥ शुद्धेमनसिसंग्राह्योभवेदात्माधिकारिभिः ॥ अनुपश्यंतियेनित्यंगुरुशास्त्रोपदेशतः ४४६ सर्वव्यापिनमात्मानंक्षीरेसर्पिरिवस्थितम् ॥ कर्मविद्यातपोमूलंब्रह्मतत्सर्वकारणम् ॥ आत्मनोविद्ययाशक्त्यायोधिगच्छतिवेदवित् ४४७ एषसंक्षेपतःसर्वशास्त्रार्थःकथितोमया ॥ पुनर्विस्तरतोवक्ष्येभवद्भ्योहंयतीश्वराः ४४८

तिचिंत्यं प्रणवोहिमहावाक्यार्थाभिधायकइत्यन्यत्रविस्तरः ४४१ । ४४२ अनेनेति । देवमात्मानं ४४३ सचात्माशुद्धांतःकरणैरेवदृष्टांतचतुष्टयेनवेद्यइतिदर्शयतःपंचदशमंत्रस्यार्थमाह ततइति त्रिभिः । ततउक्तविवेकेनचतुर्विधेजरायुजादिभेदैरयमात्मानास्तिनोपलभ्यतेइतिन शेषंस्पष्टम् ४४४ तिलेष्विति । स्रोतसिसिकतामयप्रवाहेखननेन स्पष्टमन्यत् ४४५ सत्यादिभिरिति । श्रुतिगतसत्यतपोभ्यामुपलक्षितैर्यमनियमैर्मनसिशुद्धेसत्याधिकारिभिःसंग्राह्योभवति कीदृशैरधिकारिभिर्गुरुशास्त्रोपदेशानुसारिभिरित्यर्थः ४४६ निगमनपरस्यषोडशमंत्रस्यार्थमाह सर्वेति । क्षीरेसर्पिरिवसर्वांतर्गतंतथेशरूपेणकर्मोपासनातपसांमूलंसंप्रदायप्रवर्त्तकंफलप्रदंवासर्वकारणमात्मानंयोधिगच्छतिसएववेदविदुपनिषदर्थज्ञः केनाधिगच्छतीत्याकांक्षायांमंत्रतृतीयपादस्यार्थांतरंसूचयन्नाह आत्मनइति । आत्मनोविद्यामहावाक्यजातदाकारावृत्तिःशक्तिश्चतद्योग्यतारूपातयेत्यर्थः तथाचमूलपदंसाधनवाचकंबहुव्रीहिश्रुताविति भावः ४४७ प्रथमाध्यायसमाप्तिंसूचयन्नुत्तराध्यायार्थव्याख्यानंप्रतिजानीते एषइति । स्पष्टम् ४४८

पूर्वाध्यायांतेपरमेश्वरस्यतपोविद्यामूलत्वंयदुक्तंतस्फुटीकुर्वतांमनःप्रभृतिनिरोधात्मकतयातपोरूपस्ययोगस्यारंभेविघ्नपरिहारायांतर्यामित्वादिरूपेणेश्वरस्तुतिपराणांसप्तमंत्राणामर्थंपाड्विंशतिश्लोकैः प्रदर्शयंस्तत्रप्रथममंत्रार्थमाह आत्मेतिद्वाभ्यां । योयमात्मातत्त्वंपदाभ्यांप्रतिपाद्यतयापूर्वमुक्तःसएवायमात्माधिकारिणांमनःसंकल्पात्मकंतत्रैवात्मस्वरूपेतत्त्वायतथाभूतस्वरूपलाभायाष्टांगयोग विषयायुंजानोयोजयन् अंतर्भावितण्यर्थत्वात् तस्यमनसःपरिणामभूतायानिश्चयात्मिकाबुद्धिस्तस्याजनकःकारणंभवेदिति तथाचसएवांतर्यामीतिभावः ४४९ एवमीश्वरेणानुगृहीतोयस्तंसाक्षात्करोतिसतद्वत्सर्वात्मभावेनतिष्ठतीत्याकारमुत्तरार्द्धस्यार्थमाह अयमात्मेति । प्रथमपदद्वयंपूर्वान्वयित्वेनदर्शितम् अयमधिकारीतमात्मानमभ्युपलक्षितसर्वज्योतिषांभासकत्वेनस्वयंप्रकाशंतत्त्वावगाहिन्याबुध्यानिश्चित्यपृथिवीपदोपलक्षितदेहाख्यसंघातात्पृथक्त्वेनतन्नियंतृतयास्थितःसन्नंतर्बहिःपूर्णत्वेनतिष्ठतीत्यर्थः ४५० द्वितीयमंत्रेंत्यंपदत्रयमुत्तरान्वयियतामहइतिशेषश्चेत्यभिप्रेत्यतदर्थमाह युक्तेनेति । सवितुःसूर्यमंडलाधिष्ठातुर्देवस्यांतर्यामिणःअभ्यनुज्ञानेसतितदीयशक्त्यैवपूर्वकालेप्यस्मज्जातीयाअधिकारिणोयुक्तेनतत्परेणमनसासर्वदुःखपरिहारकंज्ञानाभ्यासरूपंयत्नंकृतवंतइत्यर्थः किमर्थं स्वर्गिभिर्देवैर्गेयंप्रशस्यंयत्सुखंब्रह्मानंदाख्यंतत्स्वरूपलाभायेत्यर्थः ४५१ पूर्वात्यपदत्रयविशिष्टस्यतृतीयमंत्रस्यार्थंपरमेश्वरएवेंद्रियाणांसन्मार्गेप्रवृत्तिहेतुरित्याकारमाह सवितुरितिद्वाभ्यां । मंत्रेयुक्तायेतिचतुर्थ्यातृतीयार्थेप्रथमार्द्धेनसूच्यते तथाचईशशक्तियुक्तेनमनसायमधिकारीयान्वागादिकरणरूपान्देवान्सुवःपदोक्तनित्यसुखार्थंप्रवृत्तिशालिनउत्पादयतिकरोतितानिमान्सवितादेवः

आत्मायोयंहंसरूपोब्रह्माभिन्नोमयेरितः ॥ मनस्तत्रैवयुंजानोयोगेनाष्टांगरूपिणा ॥ तत्त्वायाऽथभवद्बुद्धिस्तस्याःसजनकोभवेत् ४९ अयमात्मातमात्मानंस्वयंज्योतिःस्वरूपिणम् ॥ तत्त्वबुद्ध्याविनिश्चित्यपृथिव्यादेहरूपतः ॥ अधितिष्ठन्नयंस्वांतर्बहिश्चैवावतिष्ठते ५० युक्तेनमनसापूर्वंतेवयंमुनिसत्तमाः ॥ देवस्यसवितुःशक्त्यास्वर्गिगेयसुखात्मने ॥ कृतवंतोत्रतज्ज्ञानंयतोदुःखंनसंव्रजेत् ५१ सवितुःस्वात्मनःशक्त्यायद्धियुक्तंमनोभवेत् ॥ मनसातेनवागादीन्देवान्नित्यसुखार्थिनः ५२ करिष्यतोबृहज्ज्योतिःसुखज्ञानमनेकधा ॥ उत्पादयतियान्देवःसवितातानिमान्धिया ५३ आनंदात्मैकगामिन्यापरिबुध्यस्वयंप्रभम् ॥ देवंतंपरमात्मानमधिगच्छंतिसूरयः ५४ अतएवमनःपूर्वंयुंजतेयोगतत्पराः ॥ ततस्तज्जनितांबुद्धिंपरमानंदगोचराम् ५५ ब्रह्मणस्तस्यबृहतःस्वयंज्योतिःस्वरूपिणः ॥ यस्याःप्रसादतोज्ञानंप्रत्यक्षमिहजायते ४५६ पूर्वेविप्रामहात्मानःप्राणापानाग्निहोत्रिणः ॥ योगिनोयेत्रदेवोयमभिप्रायावधारकः ४५७

परमेश्वरएवोत्पादयति तस्यैवांन्तर्यामित्वेनसर्वशक्तिमदत्वात् कीदृशान्वागादिदेवान् बृहज्ज्योतिःसुखज्ञानंकरिष्यतःबृहज्ज्योतिःपदाभ्यामुक्तस्यसुखज्ञानस्यभूमानंदरूपज्ञानस्याभिव्यंजयितॄनिति द्वयोरर्थः ५२ । ५३ एतादृशईश्वरानुग्रहोब्रह्मसाक्षात्कारात्मककार्येणानुमेयइतिदर्शयन्धियादिवमित्यनयोःपदयोरर्थमाह आनंदेति । आनंदात्मैकगामिन्याधियाउक्तविधदेवानांकार्यभूतयापरिबुद्ध्यचवागादिदेवानामीश्वरानुगृहीतत्वमनुमायदिवंद्योतनात्मकंतंपरमात्मानंदेवमधिगच्छंतितदेकनिष्ठाभवंतीत्यर्थः ५४ चतुर्थस्यार्थंदर्शयति अतएवेतिषड्भिः । यतईश्वरानुग्रहःकार्यैकगम्यःअतएवयोगिनःप्रथमंमनईश्वरतत्त्वेयोजयंतिनत्वीश्वरानुग्रहप्रतीक्षयाविलंबंतेततोबुद्धिमपियुंजते कीदृशींबुद्धिं तस्यपरमात्मरूपस्यब्रह्मणःपरमब्राह्मणस्यस्वयंप्रकाशस्यस्वरूपभूतानंदगोचरांयस्याबुद्धेःप्रसादतोनैर्मल्येनप्रत्यक्षज्ञानसिद्धिः यस्येतिपाठेयस्येश्वरस्यानुग्रहेणेतिद्वयोरर्थः ५५ । ५६ येहोत्राःप्राणाग्निहोत्रिणआसंस्तेषांवयुनापदोक्ताभिप्रायाणांवेत्ताएकःपरमेश्वरइदित्थंममैवाभिप्रायान्विदथेपूरयामासेतियोजनामभिप्रेत्यतृतीयपादार्थमाह पूर्वेइति । प्राणापानयोःश्वासप्रश्वासयोःपरस्परविलयलक्षणमग्निहोत्रमपानेजुह्वतिप्राणमित्यादिनाभगवद्गीतासुप्रदर्शितंकुर्वाणायोगिनोयेआसंस्तेषांमनोरथानेवईश्वरइत्थंपूरयतियथामदीयोब्रह्मवेदनविषयकोमनोरथःपूरितइतिद्वयोःसंबंधः । ईश्वरस्यसन्मार्गवर्तिनामनुग्राहकत्वंस्वभावइतिभावः ४५७

४६८ एतांचपरमेश्वरशैलीमतिप्रशंसनीयांपश्यतयद्वाङ्मनसागोचरोप्यधिकारिणांमतिगोचरोभवतीत्यर्थपरत्वेनचतुर्थपादंव्याचष्टे महतीति । साऽविषयस्वभावस्यविषयीभावरूपापरिसर्वतःप्रसिद्धास्तुतिःस्तूयमानाशैली ४५९ अथवामंत्रेकर्त्तव्येतिशेषइत्यभिप्रेत्यवक्ष्यमाणमंत्रत्रयोक्तविषयातस्यस्तुतिःकर्त्तव्येत्यर्थमाह स्तोतव्यइति । ततोधिकारिणांसकलमनोरथपूरकत्वादेववक्ष्यमाणविषयामनःसंबंधियोगपरेणसभगवांस्तोतव्यइति ६० अथसाक्षात्स्तुतिपराणांपंचमादित्रयाणांमध्येपंचमस्यार्थमाह कुर्वेइतिपङ्क्तिः । मंत्रेप्रथमपदेउत्तमपुरुषस्थानेप्रथमपुरुषप्रयोगोव्यत्ययादितिसूचनाययोगंकुर्वेइत्युक्तिः हेब्रह्मणःसोपाधिकरूपात्मकौतत्त्वंपदार्थौअहंयुवयोर्योगमैक्यलक्षणमतिप्रमाथिनाशास्त्राचार्यप्रसादलब्धबलेनमनसाकुर्वे यतोयुवयोर्जीवानंदात्मकयोःसर्वांतराद्वितीयात्मकलक्ष्यरूपाभ्यांभेदाभावंशास्त्रंमहावाक्यरूपमवांतरवाक्यैरुपकृतंप्रतिपादयति अतएवतत्पदार्थशोधकैर्वाक्यैःसृष्टेःपूर्वंभवतोरद्वितीयब्रह्मात्मत्वंप्रतिपाद्यतेइतिद्वयोरर्थः ४६१ । ४६२ भवतेइति । भवतेएवमैक्येनज्ञातंभवत्स्वरूपंलब्धुंकृतैर्नमस्कारैस्तत्प्रवणत्वरूपैःकीर्तिंकीर्तिवन्निरतिशयप्रेमास्पदत्वेनानंदरूपंमोक्षंव्रजंत्येव यशोहंभवामिब्राह्मणानामित्यादिश्रुत्यंतरात् । केनमोक्षंव्रजंति ब्रह्मज्ञान

तेषांमनोरथंसर्वमित्थमेकोदधातिसः ॥ यथाममहाभागावर्त्ततेब्रह्मवेदने ५८ महतीतस्यदेवस्यसवितुःसापरिस्तुतिः ॥ अवाङ्मनसगम्योपियथाधीविषयोभवेत् ५९ स्तोतव्यस्ततएवायमेवंनित्यंयतीश्वराः ॥ दुर्दांतस्यात्रमनसोयंजानेनाधिकारिणा ६० कुर्वेत्रयुवयोर्योगंमनसातिप्रमाथिना ॥ जीवानंदात्मरूपौवांश्रुतौशास्त्रात्प्रमाणतः ६१ भेदोपियुवयोर्नैवकोपितत्त्वंपदार्थयोः ॥ सर्वस्यजगतःपूर्वंयुवांब्रह्माद्वयंसदा ६२ भवतेब्रह्मरूपायनमस्कारैरनेकशः ॥ कीर्तिमेवव्रजंत्येतंमोक्षमानंदरूपिणम् ॥ ब्रह्मज्ञानाध्वनायद्वन्मार्गेणनगरंपरे ६३ सूरयोज्ञाततत्त्वार्थाःसर्वदोषविवर्जिताः ॥ शृण्वंतिबहुशःस्वीयकीर्तिंसाधुजनैःकृतां ६४ सर्वएतेमहाभागाअमृतेब्रह्मरूपिणि ॥ पुत्राइवात्रदायादामोक्षआवृत्तिवर्जिते ६५ येसमंताद्धहून्यत्रतेजांस्यात्मावबोधतः ॥ प्राप्ताहृदयस्त्वमादिस्थानकस्थाजितेंद्रियाः ६६ भवतोर्ब्रह्मरूपत्वंप्राप्तयोर्भेदशून्ययोः ॥ जानामिस्थानकंनित्यमुपदेशाद्गुरोरहम् ४६७ मथ्यमानोयतोवन्हिर्जायतेस्थानकादिह ॥ दग्धेंधनानिसर्वाणियत्रचैषलयंव्रजेत् ६८ यतश्चोत्पद्यतेवायुरेषयत्रचलीयते ॥ सोमादीनिचतेजांसियत्रोत्पन्नानिसर्वतः ६९ आधिक्यंचविनाशंचव्रजंतीहस्वकारणे ॥ तदेतद्भवतोरूपंपरित्यक्तविभेदयोः ४७०

रूपेणमार्गेणयथालौकिकमार्गेणपरेलौकिकानगरंव्रजंतीत्यर्थः ४६३ एतादृशंब्रह्मज्ञानफलंसर्वेषांभवति 'योदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणाम्'इतिश्रुत्यंतरादित्याशयेनोत्तरार्धार्थमाह सूरयइत्यादिना । सर्वएतेसूरयोब्रह्मविदःस्वीयांकीर्तिंसद्भिःकृतांश्शृण्वंति पुत्रवन्मोक्षलक्षणेब्रह्मवित्तेभागार्हत्वादितिद्वयोःसंबंधः ४६४ । ४६५ धामान्यातस्थुरित्यस्यसूर्यचंद्रमःप्रभृतिगुणानीश्वरांशभूतानितेजांसिप्राप्ताःअथवाहृदयादिस्थानान्याक्रम्यस्थिताअथवाइंद्रियरूपाणितेजांस्याक्रम्यस्थिताइत्यर्थत्रयंसूचयन्नाह येसमंतादिति । येविद्वांसोहृदयादिस्थानेषुब्रह्मचिंतनार्थंस्थिताः ४६६ षष्ठस्यार्थमाह भवतोरितिचतुर्भिः । हेतत्त्वंपदार्थौअहंभवतोःस्थानंउपलब्धिद्वारंगुरूपदेशाज्जानामीति ४६७ किंतदित्याकांक्षायांजगज्जन्मादिकारणमायाशबलरूपमितिसूचयन्नक्षरार्थमाह मथ्यमानइति । मथ्यमानोग्निर्यतोजायतेयत्रलीयतेचतथावायोःसोमादितेजसांचयत्रोत्पत्तिलयौएवंरुपलक्षितानिकार्यांतराणिचयत्राधिक्यमाविर्भावंविनाशंतिरोभावंचव्रजंतितदेतच्छबलंरूपंभवतोःशुद्धरूपव्यंजकमितित्रयाणामर्थः ४६९ । ४७०

शवलस्यशुद्धव्यंजकतांस्फुटयन्सप्तमस्यार्थंदर्शयति तत्रेतिपंचभिः । तत्रविश्वकारणेमायाशवलरूपेज्ञातेसतिविद्वान्ब्रह्मरूपःसंजायते केन नानात्वरूपदर्शनप्रयुक्तायेसर्वेमोहाभ्रमास्तेषांपरित्यागतः सिद्धोयस्तत्त्वभावोऽखंडभावस्तेनेतियोजना अयंभावः यदापुरुषःकारणदृष्टिर्भवतितदाकार्योपाधिप्रयुक्तान्भेदांस्त्यजति अथशुद्धंप्रकाशतइति तथाचश्रुत्यंतरं ' अस्तीत्येवावबुद्धस्यतत्त्वभावःप्रसीदति'इति ४७१ मंत्रेजुषेतेतिकर्मणिव्यत्ययेनरूपं तथाचसविशत्तत्पदार्थेनाविर्भावलक्षणाभ्यनुज्ञानेनत्वंपदार्थःसेव्यतेत्वंपदार्थेनचब्रह्मतत्पदार्थःसेव्यतइतियोजनांदर्शयति ब्रह्मरूपइतिद्वाभ्यां । प्रथमपदंपूर्वान्वयित्वेनदर्शितं ततःशुद्धाविर्भावात् जीवंत्वंपदार्थं ४७२ तादात्म्येनेति । अमुनात्वंपदार्थेनत्वंतत्पदार्थोब्रह्मरूपःसेव्यसेइत्यर्थः ४७३ तदासंसारयोनिमविद्यां कृण्वसेनिःशेषं हंसीत्याह तस्यामिति स्पष्टम् ४७४ तेत्वत्प्राप्त्यर्थंपूर्तादिकंनक्षिपेन्नकुर्यात्किंतुज्ञानमेवाभ्यसेदितिलिङ्स्थानेलङोव्यत्ययमभिप्रेत्यार्थमाह पूर्त्तादिकमिति । सृजेत्कुर्यात् भवंतमुद्दिश्येति शेषः ४७५ एवंसप्तभिर्मंत्रैःकृतायाःस्तुतेर्योगोपकारितांदर्शयति । एवंहीति एवंस्तुत्याप्रतिबंधकदुरितापाययेयोगेवक्ष्यमाणेइच्छाजायतेततोयोगंकुर्यात् योगफलंतुमनसासंबद्धस्यमनःसाक्षिणो दर्शनमित्यर्थः ४७६ वक्ष्यमाणोपयोगायाष्टांगंयोगमभिनयति अहिंसेतिसप्तभिः । अहिंसापष्ठेयज्ञेनदानेनेतिश्रुतिव्याख्यावसरेव्याख्याता । सत्यंयथार्थभाषणं । अस्तेयंपरस्वाद्यावृत्तिः ।

तत्रसंजायतेभूयोविद्वान्नानात्वरूपतः ॥ सर्वमोहपरित्यागात्तत्वभावेनसर्वतः ४७१ ब्रह्मरूपस्ततोनित्यंजीवंहंसस्वरूपिणम् ॥ आत्मज्ञानेनजातेनसेवसेप्रीतिमानपि ४७२ तादात्म्येनामुनावापिसेव्यसेप्रीतियोगिना ॥ भवानद्वयरूपःसन्परमानंदरूपभाक् ४७३ तस्यामीदृग्दशायांत्वमविद्यांदुःखकारिणीम् ॥ विनाशयसिभेदस्यजननीमात्मबोधतः ४७४ पूर्तादिकंततःकर्मनैवकिंचित्सृजेदिह ॥ भवंतमेकमेवैतदात्मज्ञानंविहायहि ४७५ एवंहिस्तुवतस्तस्यपुंसःसंशुद्धचेतसः॥ स्तुतितोजायतेयोगइच्छापश्चादिमंपुमान् ॥ कुर्यात्ततोवसंबद्धंमनसैनंप्रपश्यति ४७६ अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहाः ॥ सर्वदिग्देशकालेषुनित्याएतेयमाःस्मृताः ४७७ स्वाध्यायस्तपसासार्द्धमीशध्यानादयस्तथा ॥ नियमादेशकालादिसापेक्षाःकथिताद्विजैः ४७८ पद्मकस्वस्तिकादीनिप्रोक्तान्यत्रासनानिच ॥ पूरकःकुंभकस्तद्वद्रेचकश्चत्रिधास्मृतः ॥ प्राणायामोगुरुमुखाज्ज्ञातव्योमुनिसत्तमैः ४७९ विषयाभिमुखत्वस्यव्यावृत्तिर्यास्वबुद्धितः ॥ प्रत्याहारःसविज्ञेयइंद्रियाणांविनिग्रहः ४८० पंचकंबाह्यमेतत्स्यादांतरंहित्रयंत्विदम् ॥ धारणामनसोज्ञेयाबंधनंब्रह्मसद्मनि ॥ ध्यानंप्रत्ययसंतानस्तत्रैवसदृशोहियः ४८१

ब्रह्मचर्यमितरेंद्रियनिरोधसहितउपस्थसंयमः । अपरिग्रहोभोगसाधनानामसंग्रहः । एतेनित्यादेशकालाद्यनवच्छिन्नाःसदासर्वत्रचवर्त्तमानायमसंज्ञायोगस्यप्रथमांगमित्यर्थः ४७७ स्वाध्याय इति । स्वाध्यायःप्रणवादिजपः । तपःकृच्छ्रादि । ईशध्यानमीश्वरप्रणिधानं । आदिपदेनशौचादिग्रहः । एतेविहितदेशादिष्वनुष्ठीयमानानियमसंज्ञाद्वितीयमंगंयोगस्येत्यर्थः ४७८ आसनप्राणायामाख्यमंगद्वयमाह पद्मकेति । पद्मासनमूर्वोरुपरिपादद्वयनिधानरूपंप्रसिद्धं । स्वस्तिकंतुवामपादंदक्षिणजंघोर्वंतरेनिधायदक्षिणपादस्यवामजंघोर्वंतरेनिधानरूपं इत्यादीन्यासनानिप्राणायामप्रकारश्चगुरुमुखादवगंतव्यः ४७९ प्रत्याहाराख्यंपंचमांगमाह विषयेति । याबुद्धेःसकाशाद्विषयाभिमुखत्वस्यव्यावृत्तिस्तिरस्कृतिरिंद्रियनिरोधलक्षणातद्रूपःप्रत्याहारइत्यर्थः ४८० पंचकमिति । एतत्प्रत्याहारांतमंगानांपंचकंबहिरंगमित्युच्यते अंगिनःसमाधेर्भिन्नविषयत्वात् इदंधारणादित्रयंतुतत्समानविषयत्वादंतरंगं तत्रब्रह्मणिमनसोविनियोजनंधारणेत्युच्यते तत्रनियुक्तस्यमनसोयःप्रत्ययसंतानःविजातीयप्रत्ययानंतरितोवृत्तिप्रवाह सध्यानमित्युच्यतेइत्यर्थः ४८१

समाधिरिति । यच्चधारणाध्यानयोःफलभूतंब्रह्मप्रत्यक्षंसविकल्पकनिर्विकल्पकत्वाभ्यांद्विविधंतद्रूपोयोगःसमाधिरित्युच्यते एतेनपरोक्षविज्ञानरूपःसमाधिरंगमितिसूचितम् ४८२ उक्तसमाधेःफलंदर्शयति उत्पन्नेस्मिन्निति । अस्मिन्ब्रह्मप्रत्यक्षे आत्मज्ञानंआत्माकारावृत्तिः ४८३ योयमष्टांगोयोगउक्तस्तस्योपलक्षणमुत्तरमंत्रैःक्रियतइत्याह यमादिरिति । दिशमुपलक्षणमत्रप्रकरणेवक्ष्याभि मंत्रानुसारेणप्रकाशयामीत्यर्थः ४८४ तत्रदेहेंद्रियानवधानवारकयोरासनप्रत्याहारयोःप्रदर्शकस्याष्टममंत्रस्यार्थमाह पद्मेतिपंचभिः । वक्ष्यमाणादशममंत्रेणनिरूपयिष्यमाणागुणायस्यसतथातस्मिन्देशेकृतपद्मासनाद्यन्यतमासनआसीनःसन्उरश्चांसद्वयंचउदरंचएपुत्रिपुदेशेपुत्रिवारंकृताद्वायुपूरणाख्यप्रयत्नादुत्पन्नतत्त्वफलकाद्धेतोस्त्रिरुन्नतपदेनोक्तंदेहंदंडवत्सरलंस्थापयेत् अंसपदेनग्रीवोपलक्ष्यतेतिकेचित् वस्तुतस्तुउत्क्रमणेग्रीवायाजत्रुदेशेनिधानप्रसिद्धेरंसपदंमुख्यार्थमेवेतिद्वयोरर्थः ४८५ । ४८६ इंद्रियाणीति । तथाइंद्रियरूपान्वाजिनःमनोरज्ज्वाबध्वाअत्रहृदिदेशेसमर्पयेत् । कीदृशेहृदि बुद्धिसारथौश्रुत्यंतरेबुध्यात्मकसारथित्वेनवर्णिते । तथाचकठश्रुतिः ‘ बुद्धिंतुसारथिंविद्यात्’इति ४८७ अहमिति । अहंब्रह्मेतिबोधरूपयानौकयामायानद्याःस्रोतांसिइंद्रि

समाधिःफलमुद्दिष्टंधारणाध्यानयोरपि ॥ प्रत्यक्षंब्रह्मविज्ञानंसविकल्पमथापरम् ४८२ उत्पन्नेस्मिन्निवर्तेयंमायाकार्यकारणरूपिणी ॥ आत्मज्ञानविनष्टासापुनर्नैवभविष्यति ४८३ यमादिःकथितोयोगःसमाध्यंतोमनीषिभिः ॥ अष्टांगस्तस्यवक्ष्याभिदिशमत्रयतीश्वराः ४८४ पद्मासनाद्यन्यतममासनंसुखमास्थितः ॥ वक्ष्यमाणगुणेदेशेऋजुकायोतिनिर्मलः ४८५ उरोंसोदरदेशेषुप्रबलाद्वायुपूरणात् ॥ त्रिरुन्नतमिमंदेहंस्थापयेद्दंडवत्समम् ४८६ इंद्रियाणिप्रमाथीनिवाजिनोबुद्धिसारथौ ॥ हृदिस्थितोमनोरज्ज्वाबध्वात्रैवसमर्पयेत् ४८७ अहंब्रह्मेतिबोधेननावासुदृढयापुमान् ॥ मायानदीसमुत्थानिस्रोतांस्येतानिसर्वथा ४८८ इंद्रियाणिमनोरज्ज्वाबद्धान्यपिततस्ततः ॥ गतिमंत्यतिदुःखाययांतितानितरेदयम् ॥ संसारभयकारीणिपुंसःसंसक्तचेतसः ४८९ नवद्वारागतान्प्राणान्वायून्हृदिनिरुध्यच ॥ योगोपयोगिनींचेष्टांकुर्वाणोगुरुदेशतः ॥ आवायुप्रक्षयंस्वांतरभ्यसेदेवरागतः ४९० क्षीणेवायौततोमंदंनासिकापुटयोःपुमान् ॥ श्वासोच्छ्वासंप्रकुर्वीतयावत्स्वल्पोवतिष्ठते ॥ एवंवायुजयेजातेजायतेहिमनोजयः ४९१ यथारश्मिजयेदुष्टानश्वान्जयतिसारथिः ॥ अप्रमत्तस्तथाविद्वानिंद्रियाणिमनोजये ४९२ देशोयमासनार्थंस्याद्विदुषःसुखदःसदा ॥ निम्नोन्नतादिरहितोगोमयाद्युपलेपितः ४९३ महानद्यादिसांनिध्यवर्जितःकंटकादिभिः ॥ वालुकाशर्कराभ्यांवाशीतोष्णाभ्यांचसर्वदा ४९४

याणितरेदिति तानिहिब्रह्मबोधमंतरादुस्तराणिपतोमनोरज्ज्वाबद्धान्यपिइतस्ततोगतिमंतिचज्ञानिपुंसोदुःखाययांतिप्रवर्त्तंतेसंसारभयकारीणिचभवंतीतिद्वयोःसंबंधः ४८८ । ४८९ अथमनोजयफलकस्यप्राणायामप्रदर्शकस्यनवमस्यार्थमाह नवेतित्रिभिः । गुरुदेशतोगुरूपदेशानुसारेणसर्वद्वारनिरोधात्मिकांचेष्टांकुर्वन्सर्वद्वारागतान्वायून्हृदिनिरुद्धचआवायुप्रक्षयंस्वांतःअंतरेववायोर्लयपर्यंतंरागतउत्साहेनाभ्यसेदिति ४९० क्षीणइति । एवमंतःक्षीणेविलयंप्राप्तेसतिवायौततोनासाद्वारेणश्वासोच्छ्वासविषयावहिर्निःसारयेद्यावद्वायुःसूक्ष्मतामापद्येततावदयमभ्यासस्ततश्चवायुजयेनमनोजयोनिश्चयेनभवतीत्यर्थः ४९१ मनोजयेत्विंद्रियजयोऽनायासेनभवतीत्याह यथेति । अप्रमत्तःसावधानस्तथाइंद्रियाणिजयतीतिसंबंधः ४९२ योगदेशप्रदर्शकस्यदशमस्यार्थमाह देशइति । अयंसुखदत्वादिविशेषणकः ४९३ महेति । नद्यादिजलस्थानसामीप्येनवर्जितः तथाकंटकादिभिर्वर्जितः शर्करासूक्ष्मपाषाणाः ४९४

शब्दैरिति । पाथसोजलस्यसमीपस्थोयोनभवति ४९५ किंबहूक्तेनेति । मशकादिराहित्येनमनोनयनसुखदोयोदेशःसोत्रमंत्रेगुहादिरूपोनिर्वातोवायुरहितःकीर्तितः तत्रयोगंकुर्यादित्यर्थः ४१६ यत्रेति । यत्रयोगारंभेदैवादिदोषाद्विघ्नःसंभावितःशंकितोभवेत्तत्रयोगंनकुर्यादिति ४९७ एतेनासननियमेनद्वौभागौपूरयेदन्नैरित्याद्युक्तोऽशनयोगोपिसूचितइत्याह यथेति । स्पष्टम् ४९८ एकादशस्यब्रह्मोपलब्धिस्तांनिध्यसूचिकानांसिद्धीनांतत्रसक्तस्यविघ्नहेतूनांप्रदर्शकस्यार्थमाह एवमितिपंचभिः । प्रादुःस्युःप्रकटीभवेयुः कीदृश्यःसिद्धयः तत्रसक्तस्यविघ्नरूपाः ४९९ नीहारे णेति । नीहारादिसमानिमनोरूपाणिपश्यतीति ५०० नीहारइति । तत्रनीहारोजलस्ययद्रूपंशुक्लाख्यंतद्वानेव । धूमस्यवर्णस्तुकृष्णः । सूर्यस्यपिंगलःअनेकवर्णसमुदायात्मकत्वात् । आदित्यस्यहिपंचरोहितादिरूपाणिच्छांदोग्येमधुविद्यायामुक्तानि । तथावन्हेर्वर्णोरक्तःप्राटलोवायोर्वर्णस्तुदूर्वाभःश्यामउक्तःशास्त्रेआगमे तथाचप्रपंचसारेआकाशादिवर्णाःक्रमेणोक्ताः 'सित शितिपाटलशुभ्रपीतभासः'इति ५०१ तथाखद्योतादिरूपाणिचपश्यतीत्याह खद्योतेनेति ५०२ नकेवलंचाक्षुषविषयानेवदिव्यान्पश्यतिकिंत्वितरेंद्रियविषयानपीत्याह यथेति । एताश्च

शब्दैर्नानाविधैर्मुक्तोनात्यंतमपिपाथसः ॥ समीपस्थोतिसुखदःसर्वलक्षणसंयुतः ४९५ किंबहूक्तेनदेशस्यलक्षणेनयतीश्वराः ॥ मनोनयनयोर्यःस्यात्सुखदःसो त्रकीर्तितः ॥ गुहादिकोतिनिर्वातस्तत्रयोगरतिर्भवेत् ४९६ यत्रयोगउपक्रांतेयदिदैवादिदोषतः ॥ विघ्नःसंभावितोनैवतत्रकुर्वीततंसुधीः ४९७ यथादेशस्तथा चान्यदाहारादिकमात्मनः ॥ आश्रयेद्यत्रकुर्वीतयोगविघ्नंकदाचन ९८ एवमष्टांगयोगेनस्वात्मप्रत्यक्षमिच्छतः ॥ प्रथमंसिद्धयोनानाप्रादुःस्युर्विघ्नहेतुकाः ४९९ नीहारेणसमंरूपंपश्यत्येषकदाचन ॥ धूमेनचकदाचित्तुभास्करेणचकर्हिचित् ॥ वन्हिनापिचकुत्रापिवायुनापिसमंतथा ५०० नीहारोजलरूपत्वंगच्छेदुक्तोमनी षिभिः ॥ धूमःकृष्णस्तथैवार्कःपिंगलोनेकवर्णितः ॥ रक्तोवन्हिस्तथावायुर्दूर्वाभःशास्त्रतोभवेत् ५०१ खद्योतेनतथैवान्यद्विद्युतास्फटिकेनच ॥ शशिनापिसमं रूपंकदाचित्तुप्रपश्यति ५०२ यथारूपाणितद्वत्तुशब्दस्पर्शरसानपि ॥ गंधांश्चविविधानेषपूर्वंपश्यतियोगतः ॥ समाधिस्थःसदायोगीब्रह्मबोधसमीपगः ५०३ समाधौयोगिनोयद्वदांतराःप्रत्ययाःसदा ॥ भवंतितद्वदेवात्रबाह्याअपिभवंतिच ५०४ योगिनोरोगनिर्मुक्तोदेहोभवतितत्क्षणात् ॥ जरयामृत्युनातद्वदन्यलोकवि लक्षणः ५०५ योगाग्निनासमग्रोपिरोगःपंचात्मकस्यहि ॥ देहस्यनाशमायातिहेम्नोयद्वद्धिहाग्निना ५०६ एतेगुणाश्चदेहस्यजायंतेयोगयोगतः ॥ लघुत्वमंगजा ड्यानामभावश्चाप्यरोगता ॥ अलोलुपत्वंसर्वेषुभूस्वर्गविषयेष्वपि ५०७

सिद्धयोयोगाभ्यासद्वाराचित्तस्थितिहेतवोपिभवंति 'तदुक्तं विषयवतीवाप्रवृत्तिर्मनसःस्थितिनिबंधनी'इति । तदेतत्सूचयति ब्रह्मबोधसमीपगइति ५०३ तथाविधशारीरसिद्धिप्रतिपादकयोर्द्वादश त्रयोदशयोरर्थंदर्शयति समाधावित्यष्टभिः । समाधिकालेयथोक्ताआन्तरानीहारादिदर्शनरूपाःप्रभवंतितथाइमावक्ष्यमाणाबाह्यावहिर्व्युत्थानदशायामुपलब्धाःसिद्धयोपिभवंतीत्यर्थः ५०४ योगिनइति । योगिनोदेहोरोगाद्यभावेनान्यविलक्षणोभवतीति ५०५ योगाग्निनेति । पंचात्मकस्यपांचभौतिकस्यदेहस्यरोगोहियोगाग्निनानश्यतीति एतेनमंत्रेपंचभूतसमुदायेसतिसमुत्थि तउत्पन्नोथःपंचात्मकोदेहस्तस्मिन्योगगुणेयोगकृतातिशयेप्रवृत्तेसतीतियोजनासूचिता ५०६ त्रयोदशार्थमुपक्रमते एतइति । योगस्ययोगादनुष्ठानात्अंगगतजाड्याभावरूपंलघुत्वंनीरोगत्वं विषयेषुवैतृष्ण्यंचभवतीत्यर्थः ५०७

स्निग्धेत्यादिद्वयंनिगदव्याख्यातम् ५०८ । ५०९ भूयसइति । प्रचुरस्यान्नस्यभक्षणेस्वल्पमलत्वंजीर्णस्याप्यन्नस्यसम्यक्पाकात् ५१० इयमिति । इयमेवंविधायोगस्ययोगफलस्यप्रवृत्तिःप्रवाहः प्रथमंस्यात् 'प्रवृत्तिःकथितावृत्तौप्रवाहोदंतयोरपि'इतिविश्वप्रकाशः । अत्रउक्तफलप्रवाहे ५११ आत्मसाक्षात्कारेसिद्ध्यादिपुरागःप्रतिबंधकोऽतस्तत्परिहारेणात्मानंसाक्षात्कृत्यकृतार्थोभवेदित्यावेदकस्यचतुर्दशस्यार्थमाह अस्यामितिपंचभिः । अस्यांयोगफलप्रवृत्तौ एतान्दिव्यादिव्यविषयान् वेदितंवेदप्रतिपाद्यम् ५१२ तत्रदृष्टांतमाह मृदेति । यथासूर्यस्यचंद्रस्यवाबिंबमंगलंरजतादिनापूजार्थंनिर्मितंभवेत्तद्यदामृदामृत्तिकयालिप्तंतदातन्मृत्परिहारमंतरेणसम्यग्द्रष्टुंयोग्यंनभवतिद्रष्टुरित्यर्थः ५१३ दार्ष्टांतिकेयोजयति एवमिति । मृदस्त्यागेतुअमृदंमृद्रहितंतद्बिंबंपश्येत्तथाऽमृतादिविशेषाद्यमात्मानंसिद्धिरागपरिहारेणपश्यतीतिद्वितीयादिदलार्थः ५१४ ततश्चकृतार्थोभवतीत्याह सर्वसिद्धीति स्पष्टं ५१५ शोकात्कर्तृत्वादिरूपात्संसारप्रयोजकाद्यमुच्यतेइत्याह एतदिति ५१६ योगिनस्त्वंपदार्थज्ञानमात्रान्मोक्षंमन्यंतेतथानमंतव्यंकिंत्वात्मानंपूर्णतयामहावाक्यानुसारेणज्ञात्वैवमुच्यतेइतिप्रदर्शकस्यपंचदशस्यार्थमाह यदायमितित्रिभिः । यदायमधिकारीमहाभागोब्रह्मणस्तत्प

स्निग्धवर्णस्तथैवायंजायतेकनकादिवत् ॥ दर्शनात्सर्वलोकानांमनोनयननंदनः ५०८ स्वरश्चमधुरःसर्वलोककर्णसुखप्रदः ॥ चंपकादिसमोदेहगंधःशुभतमस्तथा ५०९ भूयसोप्यन्नपानस्यग्रहेतद्वच्चयोगिनः ॥ अल्पेमूत्रपुरीषेचसम्यक्जीर्णस्यपाकतः ५१० इयंयोगप्रवृत्तिःस्यात्प्रथमंतुयतीश्वराः ॥ अत्राणिमादिकासिद्धिर्जायतेविघ्नहेतुका ५११ अस्यांसंसक्तचित्तःसन्योगभ्रष्टोभिजायते ॥ एतांस्त्यजन्नवाप्नोतिप्रत्यक्षंब्रह्मवेदितम् ५१२ मृदालिप्तंयथाबिंबंरवेश्चंद्रस्यवाम्रदः ॥ अपरित्यागतोनैतद्द्रष्टुमर्हतिकर्हिचित् ५१३ एवंसिद्धेरसंत्यागान्नात्मानंद्रष्टुमर्हति ॥ मृदस्त्यागेऽमृदंबिंबममृतंतेजसांनिधिम् ॥ पश्येदात्मानमेवंहिसिद्धित्यागात्प्रपश्यति ५१४ सर्वसिद्धिपरित्यागादानंदात्मानमद्वयम् ॥ निरीक्ष्यैवकृतार्थःस्यात्कश्चिदेवपुमानिह ५१५ एतद्विज्ञानतःशोकःकृतार्थस्यापयास्यति ॥ यस्मात्शोकादिदंदुःखंदुःसहंदेहजंव्रजेत् ५१६ यदायमात्मरूपेणस्वप्रकाशेनसर्वदा ॥ ब्रह्मतत्त्वंविजानातिभेदत्रयविवर्जितम् ५१७ योगात्प्रत्यक्षविज्ञानंप्राप्यभाग्याधिकःपुमान् ॥ जन्मादिरहितंतद्वच्छुवंविगतविक्रियम् ५१८ कार्यकारणनिर्मुक्तमानंदात्मानमद्वयम् ॥ प्रत्यक्षीकुरुतेतर्हिसर्वपाशाच्छिदिर्भवेत् ५१९ एषएवस्वयंज्योतिर्देवःसर्वादिशोदश ॥ एषएवपुराजातःशरीरीब्रह्मरूपधृक् ५२० एषएवजलादीनांगर्भेतिष्ठतिसर्वदा ॥ ब्रह्मांडादिस्वरूपेणयोनियंत्रसमीपगः ५२१ आंतरोपिचबुध्याद्देःसर्वेंद्रियशरीरवान् ॥ योगिभिस्त्वग्गम्योयोमयोक्तःपरमेश्वरः ५२२ अग्नावप्सुचभूतेषुमहत्स्वप्येषसंस्थितः ॥ जातोजनिष्यमाणश्चेत्येपएवमहेश्वरः ५२३

दार्थस्यतत्त्वंसर्वभेदरहितस्वप्रकाशात्मरूपंप्रथमंविज्ञायततस्त्वंपदार्थस्यजन्मादिराहित्याद्युपलक्षितस्यप्रत्यक्षविज्ञानंप्राप्यतयोरैक्यंकार्यकारणात्मकसर्वतत्त्वराहित्यात्मकाखंडत्वशालिप्रत्यक्षीकुरुतेतदासर्वपाशेभ्योमुच्यतइतित्रयाणांसंबंधः ५१७ । ५१८ । ५१९ आत्मनःपरिपूर्णताप्रतिपादकस्यषोडशस्यार्थमाह एषएवेतित्रिभिः । एषआत्मदेवःसर्वदिग्रूपःतथापुराजातोहिरण्यगर्भस्तद्रूपः ५२० एषएवजलादीनामिति । तथाविराट्शरीरब्रह्मांडादिरूपेणअप्प्रभृतिस्त्रीणांयोनियंत्रसमीपदेशरूपेगर्भेतिष्ठत्येषएवेत्यर्थः ५२१ आंतरइति । तथासर्वव्यष्टिपुबुध्यादेरांतरःसर्वसंघातशेषीएषएव एषकः योमयायोगिगम्यउक्तइति ५२२ आत्मनःसर्वांतरत्वंविघ्नपरिहारायनमस्कार्यत्वंचदर्शयतःसप्तदशस्यार्थमाह अग्नावितित्रिभिः । प्रसिद्धाग्निजलयोर्महाभूतेषुचायंस्थितःतथाजातोलब्धजन्माजनिष्यमाणोलप्स्यमानजन्मावायोभावस्तदंतर्गतोप्येषएवेत्यर्थः ५२३

वर्ततेइति । तथावर्तमानभूतानामंतःसाक्षिरूपेणस्थितः यतःसर्वंसृष्ट्वायमेवांतःप्रविष्टवानिति ९२४ सर्वेति स्पष्टम् ९२५ द्वितीयतृतीयाध्यायव्याख्यायाःसमाप्त्यारंभौसूचयति एषसंक्षेपतइति । योगेनगम्योयआत्मातस्यविषयालाभोयथाभवेत्तथाप्रतिपादयतस्तृतीयाध्यायस्यार्थंशृणुतेत्यर्थः ९२६ अस्मिन्नध्यायेंऽतर्यामित्वादिलक्षणैस्तत्पदार्थप्राधान्येनप्रतिपादयंतिमंत्रास्तेषुप्रथमस्यार्थमाह यःपुरेति । यईश्वरःपुराप्रथमाध्यायेतथाअधुनाद्वितीयाध्यायेचकथितःसएकोऽद्वितीयःसंसाराख्यजालस्यस्वामीबोध्यइत्यर्थः ९२७ ईशिनीभिरिति । ईशिनीभिस्तत्तन्नियमनसाधनभूताभिःस्वमायायाःशक्तिभिःसर्वांल्लोकान्ईष्टेवशेस्थापयति ततस्तंसर्वस्यजगतउत्पत्त्यादौईशंसमर्थंयेजानंतितेऽमृताःस्युरिति ९२८ अमृतत्वमेवस्फुटयति एतदिति । उक्तात्मनोज्ञानेनरागादिक्लेशप्रहाणेनजन्मनएवाभावेकुतोमृत्युरित्यर्थः ९२९ उक्तमेवस्फुटयतोद्वितीयस्यार्थंदर्शयति अंत्येतिचतुर्भिः । रुत्पदोक्तंदुःखंप्राणिभ्योंतकालेरातिददातीतिरुद्रःद्वितीयत्वयोग्यतयाकेनापिभावेनानवस्थानाद

वर्ततेसर्वभूतानामंतर्हृदयसंस्थितः ॥ सर्वेषुनिखिलंविश्वंसृष्ट्वेवात्रप्रविष्टवान् ९२४ सर्वभूतात्मकोयोयंस्थावरेषुचरेषुच ॥ तस्मैसर्वात्मनेशुद्धरूपायचनमोनमः ९२५ एषसंक्षेपतोयोगःकथितोत्रयतीश्वराः ॥ योगगम्यमिमंदेवमात्मानंशृणुताधुना ९२६ यःपुराकथितोदेवईश्वरोप्यधुनाचयः ॥ एकएवसविज्ञेयःसदासंसारजालवान् ९२७ ईशिनीभिःस्वमायायाविभिन्नाभिस्तुशक्तिभिः ॥ सर्वांल्लोकानिमानीष्टएकोजन्मनिचस्थितो ॥ सर्वदाजगतोपीशंयेविदुस्तेऽमृताःस्मृताः ९२८ एतज्ज्ञानाद्यतोजन्मपुनर्नैवभविष्यति ॥ अजातानांकुतोमृत्युस्ततोमीअमृताःस्मृताः ९२९ अंतकालेददद्दुःखंरुद्रएषप्रकीर्तितः ॥ एकएवद्वितीयेनशून्यईशःपुरेरितः ९३० सृष्टिंस्थितिंयथैवायमीशिनीभिःकरोतिहि ॥ तथैवजगतोनाशमंतकालमुपागते ९३१ संचुकोचात्मनोरूपंप्रत्यङ्डेषव्यवस्थितः ॥ गोप्ताविश्वमिदंसृष्ट्वास्थावरंचचरंतथा ९३२ यथासंहरतेलूतातंतून्निर्मायपालकः ॥ आत्मन्येवमयंदेवोरुद्रएकोवतिष्ठते ९३३ अस्यसर्वत्रसर्वाणिज्ञानकर्मेंद्रियाणिच ॥ शरीराणिचसर्वाणिस्थावराणिचराणिच ९३४ अयंसर्वमिदंविश्वंनिर्मिमीतेस्वमायया ॥ महाभूतादिकंतद्वन्नित्यंभौतिकमेवच ९३५ पतत्रैःपंचभिर्भूतैःसदापतनशीलकैः ॥ उत्पत्त्याचविनाशेनग्रस्तत्वाद्विहगादिवत् ९३६ भुजाभ्यामिवपुण्याख्यपापाभ्यांचमहेश्वरः ॥ भौतिकंसकलंविश्वंप्रलयांतंसृजत्ययम् ॥ द्यावाभूमीचजनयन्देवएकोत्रवर्तते ९३७

रुपदोक्तश्चायमीशोयथाजगतःसृष्टिस्थितीकरोतितथानाशमपिकरोतीतिद्वयोरर्थः ९३० । ९३१ संचुकोचेति । ईशस्यायमेवसंसाराख्योव्यापारोयत्सर्वांतःस्थितत्वेनकार्याकारपरिणतस्यात्मरूपस्यसंकोचनमितिप्रथमदलार्थः यथालूताख्यःकीटस्तंतून्निर्मायतत्पालकःसन्नंतेस्वस्मिंस्तान्संहरतितथाविश्वमयमपि । फलितमाह रुद्रइत्यादिनेतिद्वयोरर्थः ९३२ । ९३३ तस्यप्रत्यक्त्वेसर्वसष्टृत्वंचस्फुटयतस्तृतीयस्यार्थमाह अस्येतिचतुर्भिः । सर्वाणिज्ञानेंद्रियादीनिसर्वांतरस्यास्यवसंति ९३४ अयमिति । अयमेवमहाभूतद्वाराभौतिकंमाययासृजति ९३५ कथंमहाभूतद्वाराभौतिकसृष्टिरित्याकांक्षापूरकस्योत्तरार्द्धस्यार्थमाह पतत्रैरिति । नवनवोत्पत्तिविनाशशालित्वलक्षणसाधर्म्येणपक्षिपक्षसमैःपंचभूतैर्बाहुसमाभ्यांपुण्यपापाभ्यांचसहितोयंविहंगवन्नीडसमंभौतिकजातंप्रलयपर्यंतंसृजति किंकुर्वन् ऊर्ध्वाधोलोकविभागंकुर्वन् परंतुपक्षीस्वतोभिन्नंनीडादिकंकरोतिअयंतुआत्मानमेवतथाकरोतीतिसूचयन्नाह एकइत्यादीति द्वयोरर्थः ९३६ । ९३७

चतुर्थादीनांत्रयाणामेकवाक्यतया अर्थंदर्शयंति विश्वाधिकइतिचतुर्दशभिः । योरुद्रोविश्वाधिकोमहर्षिः सर्ववेदस्मर्ता अतएवसर्वज्ञानसंपन्नोदेवादीनामुत्पत्त्यादिकर्त्ताचस्थावरादीनांपूर्वजंहिरण्यगर्भंजन यामासदेवोऽस्मान् शुभयाबुद्ध्यायोजयन्नस्त्वित्यर्थकानांत्रयाणांमयाइतिसंप्रार्थितइतिदशमेनाभिसंबंधः ५३८ । ५३९ । ५४० ईश्वरप्रार्थनापरस्ययातेइत्यादिमंत्रयुगलस्यार्थंप्रदर्श्यते तवेति सप्तभिः । महादेवस्यद्वेमूर्त्ती सात्विकीतामसीचतयोराद्यामथममंत्रेणस्तूयते तथाहि हेरुद्रयातेसौम्यरूपातनुर्गुरुरूपिणीमोक्षसाधनविद्यासंप्रदायप्रवर्त्तिकावर्त्ततेतयातन्वाअस्मान्मोहांधान्प्रकाशवतः कुर्वितिद्वयोःसंबंधः ५४१ । ५४२ उक्तंदृष्टांतेनस्फुटयति यथेति । गुरोर्विद्याप्रवर्त्तकस्यतवयातनुस्तांप्रकाशयदर्शयेत्यर्थः ५४३ अथद्वितीयांतामसीमभिप्रेत्यप्रार्थनापरस्यद्वितीयस्यार्थमाह कामे त्यादिना । हेगिरिशंतगिरिशन्त्वेसतिशंतसंहारक शंकरेत्यादिः यांद्वितीयांतनुंनारीरूपांतामसींहस्तेस्वेकदेशेबिभर्षिधारयसि कस्मै मोक्षायपापिपुरुषक्षेपाय कीदृशाय प्राणिनांसंसारगर्त्तपातात्मकाय तामस्मान्प्रतिशिवांशुभावहांकुर्वित्यन्वयः । कीदृशींद्वितीयांतनुं कामक्रोधात्मकंयल्लोहंतन्मयीं । अत्रलोहांगीपदेनश्रौतेपुपदसूचितंप्रहारसाधनशस्त्रतुल्यत्वंदर्शितं तस्याअतिदुःखदत्वसूचना

विश्वाधिकोत्रयोरुद्रोविद्यतेनाधिकोयतः ॥ महर्षिःसर्वविज्ञानसंपन्नोलोकभावनः ५३८ देवानामग्रिमुख्यानांनागादीनांतथैवच ॥ उत्पत्तिस्थितिनाशानांकर्ता सर्वात्मकोविभुः ३९ हिरण्यगर्भमीशानंजनयामासपूर्वजम् ॥ स्थावराणांचराणांचसर्वेषांदेहधारिणाम् ॥ सदेवःशुभयाबुद्ध्यासदास्मान्योजयन्त्विह ४० तवरुद्र तनुर्यात्रप्रसिद्धामंगलात्मिका ॥ सौम्यरूपाथपापानांहारिणीगुरुरूपिणी ४१ तयातन्वामहेशानस्वानंदतमयापिच ॥ अस्मान्मोहपिनद्धाक्षान्गिरीशत्वंप्रका शय ४२ यथानयनदानेनह्यंधान्वैद्यःप्रकाशयेत ॥ अस्मान्प्रतितथैवैनांप्रकाशयगुरोस्तनुम् ४३ कामक्रोधादिलोहांगींनारींवैर्यादिबालिकाम् ॥ अप्रसिद्धाति रूपांयांबिभर्ष्यत्रसदाभवान् ४४ संसाररूपमापन्नोहस्तेनेमोक्षायसर्वदा ॥ संसारचक्रपातायप्राणिनांतांशिवांकुरु ४५ मानयाभगवन्हिंसीर्जगत्पुरुषरूपकम् ॥ मावांस्यांतःस्थितंतद्वद्रूपंपरममैश्वरम् ४६ इतिसंप्रार्थितोदेवोमयापूर्वंमहेश्वरः ॥ कामक्रोधादिरहितस्ततोहंस्वगुरोस्तनुम् ४७ दृष्ट्वान्देवदेवस्यरुद्रस्यशिव रूपिणीम् ॥ तद्दर्शनादहंजातःकृतकृत्योयतीश्वराः ४८ अपुत्रोत्रयथापुत्रंसंप्राप्यधनिकोगृही ॥ यथावाकामुकःकांतांसंप्राप्यात्ममनःस्थिताम् ॥ यथावाकृप णोलुब्धःप्राप्यनष्टंमहाधनम् ४९ तयातन्वाममकृतउपकारोयतीश्वराः ॥ यस्तस्यनैवपश्यामिकांचनापचितिंभुवि ॥ दिविवाप्यन्यलोकेवाकर्तुंजन्मशतेनवा ५५०

यविशेषणं वैर्यादिबालिकामिति । यथावैरिणःआदिपदग्राह्यराक्षसादेर्वाबालिकाकन्यादुःखदाभवतितादृशीमिति अथवेपुतुल्यत्वस्फुटीकारणायवैर्यादीनांवारिकामितिरलयोःसावर्ण्यादुक्तं अत एवाप्रसिद्धंअतिभयानकंरूपंयन्याःसातथा ! ईश्वरस्यतादृशरूपधारणमेवकुतइतिशंकांवारयन्नाह संसाररूपमापन्नइति । यतोभवान्अज्ञानांसंसाररूपेणभासमानइत्यर्थः पापिनःप्रतिदुः खहेतुत्वमीश्वरस्यभगवद्गीतास्वप्युक्तंतानहंद्विषतइत्यादिनेतिद्वयोरर्थः ५४४ । ५४५ मानयेति । हेभगवन्अनयाकामादिमय्यातामस्यानार्याकारयामूर्त्यापुरुषरूपंजगत्माहिंसीःप्रमादलक्षणं मृत्युंमाप्रापय अथवापुरुषपदोक्तमैश्वररूपंमाहिंसीर्माप्रच्छादयेत्यर्थः ५४६ अनेनमंत्रत्रयेणकृतास्तुतिरंतःकरणशुद्ध्यादिद्वाराकृतकृत्यताहेतुरितिदर्शयति इतिसंप्रार्थितइतिपंचभिः । एवंयदा मयादेवःप्रार्थितस्तदाहंकामादिरहितःसन्देवस्यगुरुमयींमूर्तिंदृष्ट्वाकृतकृत्योजातइतिद्वयोःसंबंधः ५४७ । ५४८ कृतकृत्यत्वहेतुतयादुर्लभलाभंसूचयन्दृष्टांतत्रयमाह अपुत्रइति । आत्ममनःस्थितांध्या ताम् ५४९ तयाभगवन्मूर्त्यागुरुरूपयायउपकारःकृतस्तत्प्रत्युपकारःकथंचिदपिकर्तुंनशक्यइत्याह तयेति ५५०

अतोभवद्भिरपिसामूर्तिरुक्तस्तुतिद्वाराद्दष्टव्याकृतकृत्यत्वायेत्याह अतइति स्पष्टम् ५५१ ईशानुग्रहादेवनिर्गुणंज्ञानंभवतीतिदर्शयन्सप्तमार्थमवतारयति इदमितिद्वाभ्यां । सागुरुरूपारुद्रस्यमूर्तिर्मह्यमेवमुपदिष्टवती एवंकथं हेसौम्ययत्समूलकारणात्संसारात्परंब्रह्मतदेवतवरूपंत्वंसंसारीनासीति ५२ अनेकैरिति । उक्ताकारयातद्गिरातस्यरुद्रस्यगुरुमूर्तेरुक्तयानानायुक्त्युपेतयाहंनिःसंशयोजातः ५३ तदुपदिष्टब्रह्मतत्त्वाभिनयपर सप्तमोमंत्रइतिसूचयंस्तदक्षरार्थमाह ततइतिपङ्क्तिः । तस्यरुद्रस्यप्रसादेनततःसंशयादिप्रतिबंधापायात्संसारात्परंब्रह्मापश्यमिति ५४ परमिति । परब्रह्मपदाभ्यांसमानाधिकरणाभ्यांसर्वातिशयउच्यतेबृहत्पदेनचततउत्कृष्टंकिंचिन्नास्तीत्युच्यतेश्रुतौयथानिकायपदेनचयथादृश्यानिसकारणपंचभूतानिशरीरभूतानियस्येत्युच्यतेइत्यर्थः ५५ अथवासमःप्लुषिणासमोमशकेनेतिश्रुत्यनुसाराद्यस्यदेहिनोयादृशोदेहस्तादृशरूपेणस्थितमितियथानिकायपदार्थइत्याह यादृशइति । तस्यकायेइतिसंबंधः ५६ गूढपदार्थमाह सर्वेति । स्पष्टम् ५७ परिवेष्टितृपदार्थमाह विश्व

अतःशिवतमामेतामानंदात्मस्वरूपिणीम् ॥ तनुंरुद्रस्यसंप्राप्यभवंतोपियतीश्वराः ॥ कृतकृत्याभविष्यंतिमद्वदत्रनसंशयः ५५१ इदमुक्तवतीमह्यंरौद्रीशिवतमा तनुः ॥ अस्मात्संसारचक्राद्यत्परतोस्तिसकारणात् ॥ तत्त्वंब्रह्मनसंसारीमादुःखंव्रजपुत्रक ५५२ अनेकैःसंशयैःशून्यस्तदाहंतद्गिराऽभवम् ॥ नानायुक्तिसहस्रेणयुक्तयाचमनोज्ञया ५४ ततस्तस्यप्रसादेनतस्मात्संसारजालतः ॥ अपश्यंपरमीशानंब्रह्मानंदात्मरूपकम् ५४ परंब्रह्मनयस्मात्स्यात्किंचिदभ्याधिकंत्विदम्॥ नितरांयस्यकायोयंविकायस्यमहात्मनः ॥ महाभूतानिसर्वाणिमाययासहितानिच ५५५ यादृशोयस्यकायोयंवर्ततेदेहधारिणः ॥ तादृग्रूपंस्थितंतस्यवर्ततेगगनोपमम् ५५६ सर्वभूतेषुसततंगूढत्वान्नप्रकाशते ॥ यथासर्वेषुकाष्ठेषुवन्हिरंतरवस्थितः ५५७ विश्वस्यास्यसमग्रस्यवेष्टकोयःसमंततः ॥ तंतूनांयादृशीलूताजीवत्वात्तस्वरूपिणाम् ५५८ तमेवमीश्वरंज्ञात्वाभवंतिमरणादिना ॥ रहितायेत्रविद्वांसःप्राप्ताःशिवतमांतनुम् ५५९ पुरुषंतमहंजानेमहांतंसर्वदेहगम् ॥ स्वयंज्योतिपमात्मानंमायायाःपरतःस्थितम् ५६९ तमेवपुरुषंसर्वेविदित्वास्वगुरोर्मुखात् ॥ मृत्युमत्येतिसंसारंसर्वदुःखौघकारणम् ५६१ आत्मविज्ञानतोनान्यःपंथामुक्तिपुरंप्रति ॥ गमनायततस्तेनकर्तव्यंतद्यतीश्वराः ५६२ यस्मादभ्यधिकंकिंचिन्नान्यदस्तिमहात्मनः ॥ ज्यायस्तद्वदणीयश्चपुरुषाद्विश्वरूपिणः ६३ शतशाखोयथावृक्षःपन्निरुद्धश्चावतिष्ठते ॥ एवंस्वयंप्रकाशेस्मिन्स्वरूपेसमवस्थितः ॥ एकस्तेनेदमखिलंपूर्णंपुरुषरूपिणा ५६४ वायुशून्येयथादेशेनिविडोबहुपर्णवान् ॥ स्तब्धोवृक्षोभवेदेकस्तद्वदेकःपुमानयम् ५६५

स्येति । जीवत्वमात्मंप्राप्तंस्वरूपंयेषांतेषांजीवानांजडवर्गस्यचयोवेष्टकस्तान्वेष्टयित्वातदंतरवस्थाता तंतूनांयथालूताख्यकीटोवेष्टकस्तथेत्यर्थः ५८ तमेवेति । येशिवतमांगुरुमूर्तिंप्राप्यतमीश्वरंजानंतितेमरणादिरहिताभवंतीति ५९ मंत्रदर्शिनक्षरात्मापरोक्षानुभवंमोक्षस्यज्ञानेकलभ्यत्वंचाभिनयनोऽष्टमस्यार्थंदर्शयति पुरुषमितित्रिभिः । तंवर्णितरूपं मायायास्तमोरूपायाःपरम् ६० तमेवेति । सर्वोधिकारीतंज्ञात्वैवसंसाररूपंमृत्युमत्येतिअतिक्रम्यगच्छतीति ६१ आत्मेति । यतआत्मज्ञानाद्भिन्नोमोक्षगमनायमार्गोनास्तिततस्तदात्मज्ञानंकर्तव्यंपुरुषेणश्रवणादिद्वारासंपाद्यमित्यर्थः ६२ ईशस्याद्वितीयतांविशदीकुर्वन्नेनवमस्यार्थंनिरूपयति यस्मादिति । यस्मादपिकंज्यायःप्रशस्तंअणीयःसूक्ष्मंचनास्तिविश्वात्मत्वात् ६३ शतेति । यथाबहुशाखोवृक्षोभूयांसमवकाशंसंनिरुद्धश्चव्याप्यतिष्ठत्तथायमपिविश्वंव्याप्यदिविस्वप्रकाशस्वरूपेऽवस्थितः ६४ वृक्षदृष्टांतमेवस्फुटयति वाय्विति । निबिडोघनशाखः स्तब्धोऽनम्रः एकःआलंबनायलतादिवत्परानपेक्षः ५६५

मुमुक्षुणानिर्गुणमेवात्मतत्त्वंज्ञेयमितिबोधयतोदशमस्यार्थमाह यद्यपीतिपंचभिः । यद्यप्येषआत्माचराचरविश्वशरीरकविराड्रूपःसूक्ष्मसमष्ट्युपाधिकहिरण्यगर्भरूपश्चभवतितथाप्येतत्कार्योपाधिकंरूपमुपासनामात्रोपयोग्येवनज्ञेयंकिंतुतस्मात्कार्योपाधिकात्परंयत्तत्त्वंतदेवज्ञेयमावरणभंजकधीवृत्तिगोचरीकार्यमितिद्वयोरर्थः ५६६ । ५६७ तत्रहेतुमाह कार्यइति । यस्मात्कार्येब्रह्मणि हिरण्यगर्भादौनामशब्दप्रपंचोरूपमर्थप्रपंचःकर्मक्रियाप्रपंचएतत्त्रयमेवदृश्यतेतच्चत्रयंसामयंआमयेनआर्त्यायुक्तं कुतः विनाशस्यबाधस्यकारणंप्रयोजकंयन्मिथ्यात्वंतद्वत्त्वात् तथाचश्रुत्यंतरं अतोन्यदार्त्तमिति अतश्चिदात्मनः एतेनतुल्ययुक्त्याऽव्याकृतेपिमिथ्यात्वंसूचितमिति ५६८ हिरण्येति । हिरण्यगर्भादुत्तरंअव्याकृतंततःपरंशुद्धंयत्तदेवज्ञेयमिति ५६९ तद्विज्ञानस्यान्वयव्यतिरेकाभ्यां मोक्षहेतुतामाह येजानंतीति । स्वात्मसंस्थानंस्वेमहिम्निप्रतिष्ठितंसर्वांतरंवा ५७० अथेश्वरस्यसर्वांतरतान्यथानुपपत्त्यापूर्णतांविशदयतामेकादशादीनामर्थःप्रदर्श्यंते सर्वाननेत्यादिना । यतःसर्वाणिआननादीनियस्यसतथासर्वहृदिस्थितःसर्वस्यात्माचभवतिततःशिवःसर्वगतःपूर्णः ५७१ शिवेतिनामैवतस्यसंसारधर्माभावमाहेतिदर्शयति स्वयमिति । अमंगलंशोकादि यतस्त

यद्यप्येषभवेद्विश्वंकार्यमेतच्चराचरम् ॥ हिरण्यगर्भश्चतथातथाप्येषमुमुक्षुणा ५६६ नज्ञेयःकिंतुतस्माद्यदुत्तरंपरतःस्थितम् ॥ रूपंतदेवविज्ञेयंनकार्यंब्रह्मकर्हिचित् ५६७ कार्येब्रह्मणियस्मात्स्याद्रूपंनामचकर्मच ॥ साऽऽमयंततएवैतन्नाशकारणवत्त्वतः ५६८ हिरण्यगर्भतोयत्स्यादुत्तरंपरतःस्थितम् ॥ एतन्मुमुक्षुभिर्ज्ञेयंस्यादरूपमनामयम् ५६९ येजानंतीदमात्मस्थंतेभवंत्यमृताःसदा ॥ अन्येसंसारमासाद्यदुःखमेवाभियांतिच ॥ यएतत्स्वात्मसंस्थानंरूपंजानंतिनक्वचित् ५७० सर्वाननशिरोग्रीवःसर्वभूतहृदिस्थितः ॥ सर्वव्यापीचभगवानात्मायस्माच्छारीरिणाम् ॥ आनंदात्मस्वरूपःसंस्तस्मात्सर्वगतःशिवः ५७१ स्वयंज्योतिःस्वरूपेस्मिन्नानंदात्मनिनिर्द्वये ॥ भवेदमंगलंकेनतस्यहेतुश्चनास्तियत् ५७२ महतोपिमहानेषआनंदात्माप्रभुस्तथा ॥ पुरेएकादशद्वारेसर्वेषांसमवस्थितः ५७३ बुद्धेःप्रवर्त्तकोदेवःशांतिमात्मस्वरूपिणीम् ॥ सुनिर्मलांसदास्वात्मज्योतिषायोऽवगच्छति ५७४ ईशानोभूतभव्यस्यज्योतिषांज्योतिरेवच ॥ अव्ययःपुरुषःसाक्षीक्षेत्रज्ञवपुरास्थितः ५७५ अंगुष्ठमात्रःपुरुषोहृदयेंगुष्ठमात्रके ॥ स्थितःस्वरूपतोयोयमतिमात्रनभःसमः ५७६ बुद्धेरंतःस्थितोदेवआत्मासर्वशरीरिणाम् ॥ सदाहृदयएवायंलभ्यतेसर्वगोपिच ५७७

स्यशोकस्यहेतुरविद्यानास्तीति ५७२ द्वादशार्थमाह महतोपीति । महतआकाशादेःसकाशान्महान् नवद्वाराणिप्रसिद्धानिमूर्द्धच्छिद्रंनाभिच्छिद्रंचसंकलय्यएकादशद्वारंशरीरंतदंतःस्थितः ५७३ बुद्धेरिति । बुद्धेःसत्वपदोक्तायाःप्रेरकोयोदेवःस्वस्वरूपभूतांशांतिमानंदंस्वरूपभूतेनप्रकाशेनजानातीति ५७४ त्रयोदशस्यार्थंदर्शयति ईशानइतिचतुर्भिः । भूतभव्यस्यअतीतानागतस्यप्रभुःक्षेत्रज्ञरूपः ५७५ अंगुष्ठेति । सर्वेषांशरीरिणांस्वस्वांगुष्ठपरिमितंहृदयच्छिद्रंतत्रोपलभ्यत्वात्पुरुषःपरमात्माप्यंगुष्ठमात्रइत्युक्तः नतावतातस्यपूर्णत्वक्षतिः । यतोतिमात्रंमात्रांपरिच्छेदमतिक्रांतंयन्नभस्ततुल्यः तथाचश्रुत्यंतरं'यावान्वाअयमाकाशस्तावानेषोंतर्हृदयआकाश'इति अयंबाह्यः एषआत्मरूपइत्यर्थः ५७६ हृद्युपलभ्यत्वादेवतस्यहृदयस्थत्वव्यवहारइतिस्फुटयति बुद्धेरिति । बुद्धेरंतःस्थितः साक्षित्वेनेतिशेषः ५७७

तस्योपलंभेश्रवणादिसंस्कृतंमनएवसाधनमित्याह मनसेति । अस्यात्मनएतावत्त्वंहृदयावच्छिन्नत्वंप्रकल्प्यहृदयस्थेनहृद्येकाग्रतामापन्नेनसर्वधीवृत्तीनामीश्वरेणनियमनसमर्थेनमनसायमुपलभ्यते येएवमेनमात्मानंजानंतितेऽमृताभवंतीतिसंबंधः ५७८ चतुर्दशार्थमाह सहस्रेति । तस्यसहस्रमूर्द्धत्वादिकंसर्वात्मत्वादेवोपपन्नमिति ५७९ सउपाधिमतिक्रम्यबहिरपिनिर्गच्छतिउपाधिनानि रुद्धत्वांतरवस्थापयितुमशक्यत्वादितिदर्शयति सभूमिमिति । सपरमात्माभूमिंसमष्टिव्यष्टिरूपांसर्वतःअंतरतोबाह्यतश्चव्याप्यअधिकत्वेनतिष्ठतियथाकाष्ठंव्याप्यदशांगुलपरिमितंदेशंवन्हिकर्षांच्या ग्निज्वालातिष्ठतीति अत्रात्मनोबहिर्व्याप्तिर्वृत्त्वेत्यनेनैवलब्धत्वात् दशांगुलावच्छिन्नेहृदयेआकाशस्थानेपृथिव्यनाक्रांतेपरमात्मनःस्थितिविवक्षायामपिपृथिव्यपेक्षयादशांगुलाधिकास्थितिःसंभव तीत्याशयेननचतुर्थाध्यायगतव्याख्ययाविरोधइतिध्येयं अथवा'उभेअस्मिन्द्यावापृथिवीअंतरेवसमाहिते' इतिदहरविद्यागतश्रुत्यनुसारेणमनःकल्पितत्वेनपृथिव्याहृदयांतरगुदेशेस्थितायांअपेक्षयास र्वंहृदयव्यापिनःपरमात्मनःस्थितिर्दशांगुलमधिकेत्युक्तं वस्तुतस्तुभूमिंविराजंतदावरणभूतंहिरण्यगर्भंसकारणंहृदयस्थत्वेनदशांगुलपदोक्तंव्याप्यततोधिकत्वेमहिम्नितिष्ठतीत्यर्थः ५८० फलितमाह

मनसाबुद्धिवृत्तीनामीश्वरेणोपलभ्यते ॥ हृदयस्थेनदेवोयमेतावत्त्वंप्रकल्प्यच ॥ येजानंत्येतमात्मानममृतास्तेभवंतिहि ५७८ सहस्रशीर्षापुरुषःसहस्राक्षःसह स्रपात् ॥ सर्वप्राणिस्वरूपत्वादुपपन्नमिदंसदा ७९ सभूमिंसर्वतोवृत्वाप्यधिकत्वेनतिष्ठति ॥ दशांगुलंयथावृत्त्वाकाष्ठंवन्हिशिखाबहिः ५८० ततोब्रह्मांडपिंड स्यवाहिरंतरयंस्थितः ॥ नभोवत्पुरुषःसर्वव्यापीज्ञानसुखात्मकः ८१ सर्वंपुरुषएवेदंभूतंभव्यंभवच्चयत् ॥ अपिमोक्षस्यचेशानोह्यमृतत्वस्वरूपिणः ॥ किमुता न्यस्यसर्वादेस्त्रिवर्गस्यास्यसर्वतः ८२ अन्नरूपेणचैपोत्रपृथिव्यामतिरोहति ॥ जंगमानांयनःसृष्टिर्जायतेभक्षणात्सदा ८३ यस्मात्सर्वात्मकोदेवःपुमानब्रह्मस्व रूपधृक् ॥ सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुखम् ८४ एतादृक्ततएवास्यस्वरूपंब्रह्मईरितम् ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति ८५ सर्वेंद्रियगुणाभा संसर्वेंद्रियविवर्जितम् ॥ सर्वस्यप्रभुचेशानंसर्वस्यशरणंसुहृत् ८६ इदंसर्वात्मकंरूपंसर्वभूतोपकारकम् ॥ हंसरूपेणसततंदेहआस्तेयतीश्वराः ८७ द्वाराणिवदने सप्तद्वेअधस्ताच्चसंस्थिते ॥ देहस्यतेनमुनिभिर्नवद्वारंप्रकीर्तितम् ८८ पूर्यंतेधातुभिर्नित्यमन्नपानानुगामिभिः ॥ ततएवपुरंचैतच्छरीरंपरिकीर्तितम् ८९ हि नस्त्यविद्यामखिलामात्मनोब्रह्मतागतौ ॥ ततएवशरीरस्थोहंसएषप्रकीर्तितः ५९०

ततइति स्पष्टम् ५८१ यतस्तेनपुरुषेणव्याप्यंविश्वंततोभिन्नसत्ताकंनभवतिअतःसर्वपुरुषार्थानांसएवदाताअतएवान्नरूपेणलोकसमृद्धिहेतुत्वंतस्यप्रसिद्धमित्यर्थपरतयापंचदशमंत्रंव्याचष्टे सर्व मितिद्वाभ्यां । ईशानोदानसमर्थः त्रिवर्गस्यधर्मार्थकामात्मकस्य कीदृशस्य सर्वादेःसर्वत्वंहिरण्यगर्भभावात्मकमुपासनाफलंतत्प्रभृतेरित्यर्थः स्वर्गादेरितिपाठेस्पष्टत्वेपिछंदोहानिःपंचमस्यगुरु त्वापत्तेरिति ५८२ अन्नेति । अतिरोहतिप्रादुर्भवति ५८३ एवंप्रपंचस्यभेदकृतस्तिमन्नास्तीत्युक्तमथचिद्देवारकयोःषोडशसप्तदशयोरर्थमाह यस्मादिति । यस्मादयंपुरुषःसर्वात्मकस्ततएवा स्यस्वरूपंसर्वतःपाणिपादत्वादिमहत्त्वांतविशेषणैरुपलक्षितंपद्ब्रह्मतदात्मकमुक्तमितित्रयाणांसंबंधः सर्वेन्द्रियैर्वर्जितमपिसर्वेषामिंद्रियगुणानामिंद्रियविषयाणांप्रकाशकं प्रभुस्स्वामि. ईशानंनियंतृ शरणंरक्षकं सुहृदुपकारकम् ५८४ । ५८५ । ५८६ सएवपरमात्मासर्वंदेहपुर्जीवरूपेणप्रविष्टइतिबोधयतोष्टादशस्यार्थमाह इदमितिनवभिः । इदंसर्वात्मकंपरमात्मनोरूपंयदुक्तंतदेहहंसरूपेणदे हस्यमिति ५८७ नवद्वारपदार्थमाह द्वाराणीति ५८८ देहेपुरपदसमन्वयंदर्शयति पूर्यंतइति । अनुगामिकार्यं ५८९ हंसपदव्युत्पत्तिंस्मारयति हिनस्तीति । प्रतिबोधः ५९०

चेष्टावाचकलेलाधातोरूपस्यार्थमाह नवेति ५९१ वशःपराधीनत्वंतद्वानित्याकारंवशिपदार्थमाह वशीतिद्वाभ्यां । अयमात्मात्मवशःस्वतंत्रोप्यविद्ययाउपाधिपारतंत्र्याद्वशीत्युक्तइत्यर्थः ९२ तत्रदृष्टांतउच्यते कामुकत्वादिति ५९३ अथवावशोवशीकरणसाधनंतद्वान्वशीत्युक्तइत्याह अथवेति । मंत्रादिरूपंवशीकरणसाधनंयस्यहस्तेभवतिसजनोवशीतिप्रसिद्धः ५९४ तथात्मन्य पिजडवशीकरणसाधनंचैतन्यरूपमस्तीतिसवशीत्युक्तइत्याह तथेति ५९५ ईश्वरस्यज्ञानशक्तिःक्रियाशक्तिश्चकरणानपेक्षासचस्वयंप्रकाशइतिविशदयन्नोऽपाणीत्यादिश्रुत्यर्थमाह अपाणिःस न्निनिसप्तभिः । अयंदेवःपाणींद्रियहीनोपिग्रहणंकरोति पादहीनोपिचमनसोऽधिकेनवेगेनयातिति ५९६ एवंनेत्रादिहीनोपिदर्शनादिकंकरोतीत्याह नेत्रेति ५९७ ननुतस्यसर्वोपादानत्वेनसर्वे वतइंद्रियाभावःकथमुच्यतेइतिचेन्नित्यसिद्धविद्ययासंघाताभिमानाभावादित्याह ज्ञानेति । इंद्रियाणितद्गोलकाश्चदेहस्यसूक्ष्मस्यस्थूलस्यचघटकतयावर्ततेअतस्तत्संबंधोदेहाध्यासवतएवननित्यमुक्तस्ये त्यतएवआत्मातेनदेहेनहीनोऽकायमव्रणमित्यादिश्रुतिषूक्तइत्यर्थः ५९८ एवंभूतोपिसस्वोपाधिमायाशक्तिवशादिंद्रियैर्विनापितद्व्यापारान्करोतीत्याह ज्ञानकर्मेन्द्रियाणमिति । व्यापारोविषययोगः

नवद्वारेपुरेस्थित्वाहंसोवहिरुपागतः ॥ चेष्टांविषयलाभार्थंकुरुतेमाययावृतः ५९१ वशीसर्वस्यलोकस्यस्थावरस्यचरस्यच ॥ संसारचक्रंसंप्राप्यभवत्यात्मवशोप्ययम् ५९२ कामुकत्वाद्यथाजंतुरिंद्रियाणांवशंगतः ॥ नारीणांवशमायातोवशीत्येवप्रकीर्तितः ५९३ अथवायस्यहस्तेस्याद्वशीकरणकारणम् ॥ मंत्रौषध्यादिकंसस्यात्स्वतंत्रोत्रवशीजनः ५९४ तथास्यापिचचैतन्यंवशीकरणकारणम् ॥ स्थावरस्थचरस्यापिविद्यतेऽतोवशीस्मृतः ५९५ अपाणिःसन्नयंसर्वमादत्तेपुरुषोत्तमः ॥ वेगवान्मनसोप्येषपादहीनोपिसर्वदा ५९६ नेत्रहीनोपिसर्वाणिरूपाण्येषप्रपश्यति ॥ अकर्णोपिशृणोत्येषशब्दान्विश्वस्थितानपि ५९७ ज्ञानकर्मेंद्रियगणोयस्मादेहस्यनात्मनः ॥ तस्मात्तेनविहीनोयमात्माश्रुतिषुकीर्त्यते ५९८ ज्ञानकर्मेंद्रियाणांयेव्यापाराःसफलाहिते ॥ भवंत्यनिंद्रियात्पुंसस्तस्मादात्माकरोतितान् ५९९ किंबहूक्तेनपुंसोत्रव्यापारकरणंप्रति ॥ बाह्यैर्वाभ्यंतरैर्वापिकरणैरवगम्यते ६०० तत्तत्सर्वमयंतेनह्यात्मासर्वगतःपुमान् ॥ अस्यकोपिनवेत्तास्तिजडोवाप्यजडोपिवा ६०१ आनंदात्मास्वयंज्योतिरयंस्यात्पुरुषोत्तमः ॥ अग्रेस्थितमिमंप्राहुर्जगतोब्रह्मवादिनः ६०२ अणोरणीयानात्मायंमहीयान्महतोपिच ॥ अस्यप्राणिशरीरस्यमध्येतिष्ठतिसर्वदा ६३ संकल्परहितंदेवंमहत्त्वैकस्वरूपिणम् ॥ गुरोःप्रसादतोवीतशोकःपश्यतितंप्रभुम् ६०४ गुरूरुद्रोमहेशानोधाताशिवतमातनुः ॥ तेनसंसारतप्तोयंदेवेनपरिबोधितः ६०५

फलंविषयाविर्भावः । भवंतिजायंते । तस्मादचिंत्यशक्तिविशेषात्तानिंद्रियव्यापारानयमेवकरोतीत्युच्यतेइति ९९ अयमितरनिरपेक्षइंद्रियव्यापारान्करोतीतिकिमुवाच्यंयतःसर्वविषयरूपेणाप्ययमे वविवर्ततेइत्याह किंबहूक्तेनेति । इंद्रियव्यापारजननविषयकेणबहुप्रशंसनेनकिंयतोयद्यत्करणगम्यंवस्तुजातंतत्तत्सर्वमयमेवदेवोघटादिरूपेणनृविवर्ततेतेनसर्वोपादानत्वेनायंसर्वगतःसर्वपरिच्छेद हीनःसर्वतःपूर्वंसिद्धत्वादविषयस्वभावः अतएवश्रुतावव्यपदेनोक्तइतित्रयाणामर्थः ६०० । १ । २ अयमात्मासूक्ष्मत्वमहत्त्वयोःपर्यवसानभूमिःसर्वेषांहृद्गुहायांसंनिहितोपिगुरुकृपैकलभ्यइतिदर्श यतोविंशस्यार्थमाह अणोरितिपंचभिः । मध्येहृद्गुहायाम् ३ संकल्पेति । तंदेवंविषयभोगसंकल्परहितंगुरोःप्रसादतःपश्यन्वीतशोकोभवतीत्यर्थः ४ गुरुप्रसादस्यचस्वरूपमभिनयति गुरुरिति । शिव तमतनुरूपेणधातापोषकोयोरुद्रःसएवगुरुरुक्तः ' योजयतिपरेतत्त्वेसदीक्षयाचार्यमूर्तिस्थः ' इत्यागमात् अयमधिकारीतेनदेवेनइत्थंपरिबोधितोभवतीति ६०५

इत्थंकथमित्याकांक्षांपूरयति नत्वमितिपादसप्तकेन । तेनउक्तोपदेशजज्ञानेन ६०६ । ६०७ उक्तात्मज्ञानेऽसंभावनानकर्त्तव्यायतोममतथाविज्ञानंसिद्धमितिविदुषोनुभवमभिनयतएकार्थंश्लस्या र्थमाह वीतशोकइतिद्वाभ्यां । वीतशोकत्वंप्राप्नुवन्यथात्मानंपश्येत्तथाहंश्वेताश्वतरनामावेदजानामि कीदृशमजरत्वाद्युपलक्षितंयस्यात्मनोजन्मादिकंलौकिकाअज्ञाःजडतादात्म्यदर्शिनोवदंति तत्त्व विदस्तुनित्यमेवयत्स्वरूपंवदंतीतिद्वयोरर्थः ६०८ । ६०९ तृतीयचतुर्थाध्यायव्याख्ययोःसमाप्त्यारंभौसूचयति अध्यात्ममिति । एवमधिदैवंप्रतिपाद्यअध्यात्ममांतरत्वेनवर्त्तमानमात्मरूपमुदि तमुक्तं एवमेवअन्यत्रचतुर्थाध्यायमंत्रेपुप्रतिपादिततत्त्वंवक्ष्येहेमुनयइत्यर्थः ६१० तत्रप्रथममंत्रचतुष्टयंबुद्धिशुद्ध्याधायकंयदीश्वरस्यसगुणरूपचिंतनंतत्परामितिदर्शयंस्तदर्थमाह एकवर्णेतित्रयोद शभिः । योदेवःपरापरविभागवान्द्वेवावब्रह्मणोरूपेपरंचापरंचेतिश्रुत्यंतरानुसारेणसगुणनिर्गुणात्मकरूपद्वयवान्प्रणवादिस्वरूपःशब्दार्थयोस्तादात्म्यमितिन्यायेनस्ववाचकप्रणवरूपः'अकारोवैसर्वा वाक्'इतिश्रुत्यंतरप्रसिद्धस्यविष्णुवाचकस्याकारस्यादिपदेनग्रहणादकाररूपोवासन्स्ववाचकवर्णरूपेणबहून्वर्णान्शब्दांस्तदुपलक्षितानर्थांश्चमायया सृष्ट्यादौकरोतिजीवानांभोगादिप्रयोजनसिद्धये पुनःसंहारकालेतत्सर्वंस्वात्मनिशांतेविक्षेपशून्येअतएवनिर्नादेनादेनसूक्ष्मशब्देनापिरहितेएकीकरोतिविलापयति सोस्मान्शुद्धयाबुद्ध्यायुक्तान्करोतुयस्याबुद्धेःशुभायानैर्मल्यमहंब्रह्मेतिबोधहेतुरि

नत्वंकर्ताचभोक्ताचदुःखित्वंतेकथंभवेत् ॥ ब्रह्मवेदांतकथितंत्वमस्यत्रनसंशयः ६०६ त्वत्तोन्यत्सकलंविश्वंत्वय्येवपरिकल्पितम् ॥ स्वप्नाभंनश्वरंतेनवीतशोकः प्रजायते ६०७ वीतशोकःपुमान्यद्वदात्मानंपरिपश्यति ॥ वेदाहमेतमजरंसर्वात्मानंपुरातनम् ६०८ विभुत्वात्सर्वगंदेवंसर्वभेदविवर्जितम् ॥ जन्मनाशंचयस्यैते लौकिकाःप्रवदंतिहि ॥ नित्यंचयंवदंत्येतेसर्वदाब्रह्मवादिनः ६०९ अध्यात्ममेवमुदितंमयाचैवंयतीश्वराः ॥ अन्यत्राप्येतमधुनावक्ष्येवोबुद्धिवृद्धये ॥ ६१० एकवर्णस्वरूपेणपरापरविभागवान् ॥ प्रणवादिस्वरूपोयोबहून्वर्णान्करोतिहि ॥ प्रयोजनवशेनैवदेवःशक्त्यास्वमायया ६११ आदौविश्वंसमग्रंच संहारेपुनरेवतत् ॥ शांतआत्मनिनिर्नादेसर्वमेकीकरोतिच ६१२ सयोजयतुनःसर्वान्सर्वदाशुभयाधिया ॥ अहंब्रह्मेतिजानीमोवयंयस्याःप्रसादतः ६१३ विज्ञेयं शुभयाबुद्ध्याब्रह्मयद्यतिपुंगवाः ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तच्चचंद्रमाः ६१४ तदेवदीप्तंतद्वेदास्तदापस्तत्प्रजापतिः ॥ विराड्हिरण्यगर्भोवामरीच्यादिर थापिवा ६१५ तदेवस्त्रीपुमांस्तच्चकुमारस्तत्कुमारिका ॥ जातंतदेववृद्धंसच्छनैर्दंडेनगच्छति ६१६ तत्सर्वंत्वंपदार्थोयंतत्पदार्थात्पृथङ्नयः ॥ ज्ञानंतदेवभवति बहुरूपंयतीश्वराः ६१७

तित्रयाणामर्थः । प्रणवात्सर्ववर्णोत्पत्तिप्रक्रियातुप्रपंचसाराद्यागमग्रंथेभ्योबोध्या ६११ । ६१२ । ६१३ अयमेवेश्वरःसर्वेष्वधिदैवशरीरेष्वेकोऽवस्थितइतियोजयतोद्वितीयस्यार्थःप्रदर्श्यते विज्ञेयमि तिद्वाभ्यां । अहंब्रह्मेत्याकारयाबुद्ध्यायद्विज्ञेयंब्रह्मतदेवाग्न्यादिरूपमितिसंबंधः दीप्तंसत्वगुणाधिक्येनदेदीप्यमानं अव्याकृतंतारामंडलंवा वेदायजुराद्यभिमानिदेवाः आपःअप्प्रधानानिसूक्ष्मभूतानि प्रजापतिपदेनविराड्हिरण्यगर्भोमरीचिदक्षादयोवाग्राह्याइतिद्वयोरर्थः ६१४ । ६१५ सएवेश्वरस्त्वंपदार्थोपाधिभूतव्यष्टिशरीरेष्वप्यवस्थितइतिदर्शयतस्तृतीयस्यार्थमाह तदेवस्त्रीतिद्वाभ्यां । तदेवब्र ह्मस्त्रीत्वपुंस्त्वशालियुवशरीरावच्छिन्नंतथाकुमारादिबालशरीरावच्छिन्नं तथादंडालंबनकचलनोपलक्षितवृद्धशरीरावच्छिन्नं किंपरिगणनेनयावज्जातंजन्मवच्छरीरंतदवच्छिन्नंतदेव । फलितमाह तत्सर्वमिति । उक्तरूपादिशरीरावच्छिन्नोयोयंत्वंपदार्थःसतत्पदार्थान्नभिन्नइत्यर्थः तथाआश्रयस्यविषयस्यस्वस्यचप्रकाशकत्वेनविश्वतोमुखपदाभिधानयोग्यंबुद्धिवृत्त्युपाधिभिर्नानारूपंचयज्ज्ञानं तदपितदेवेतिद्वयोरर्थः ६१६ । ६१७

बृहदारण्यकपंचमाध्यायेभुज्युप्रश्नेइंद्रःपक्षीभूत्वेतिश्रुतंतदनुसारेणेश्वरस्यपक्षिरूपतापरत्वंदर्शयंश्चतुर्थस्यार्थंवर्णयति कारणमितिपङ्क्तिः । अत्रविराड्रूपापन्नमितिशेषोबोध्योऽतोनपंचमाध्यायविरोधः तथाचकारणोपाधिकमीश्वरंविराड्भावापन्नंवक्ष्यमाणविधयापक्षित्वेनकल्पयंतिअल्पानांमंदमतीनामुपासनादिसौकर्यायेत्यर्थः तदुक्तं ‘ निर्विशेषंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः । येमंदास्तेऽनुकंप्यंतेसविशेषनिरूपणैः । वशीकृतमनस्येपांसगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ’ इति ६१८ कारणात्मेति । कारणात्मेश्वरोविराड्रूपोदूर्वादलश्यामपक्षिरूपेणध्येयस्तस्याक्षिणीतुरक्तवर्णेध्येयेइत्यर्थः ६१९ तडिदिति । क्षणभंगुरत्वलक्षणंदृष्टनष्टत्वेनतडिताविद्युतातुल्यंकार्यजातंतस्यगर्भेभवतीत्यतस्तडिद्गर्भपदेनोक्तइत्यर्थः ६२० ऋत्विति । वसंतादिऋतुरूपःकालःसमुद्रश्चइत्येतौप्रत्येकंनानाविधौतस्यपक्षिणःपक्षत्वेनध्येयावित्यर्थः ६२१ मंत्रतृतीयपादेनतत्पदार्थमीश्वरंत्वंपदेननिर्दिश्यविभुपदवाच्यंइंद्ररूपेणवर्तमानोसीत्युच्यतइत्याह आदीति । पारिक्षिताःपंचमाध्यायेभुज्युप्रश्नेव्याख्याताः यआदिशून्यस्तत्पदार्थइंद्ररूपोभूत्वाब्रह्मांडस्यांतर्बहिर्वर्तमानःपारिक्षितानांबहिर्नेतोक्तःसोत्रमंत्रेत्वंपदेननिर्दिष्टइतिसंबंधः ६२२ यतइति । यतइंद्राद्ब्रह्मांडांतर्वर्ती

कारणंकल्पयंत्येतत्पक्षित्वेनमहाधियः ॥ यथैवशक्यतेज्ञातुंस्तोतुमल्पैश्चदेहिभिः ६१८ कारणात्माभवेत्पक्षीनीलोदूर्वादलप्रभः ॥ लोहितेतस्यविज्ञेयेचक्षुषीपतगात्मनः ६१९ तडित्समानमखिलंदृष्टनष्टस्वभावकम् ॥ अस्यगर्भेस्थितंयद्वज्जनन्याजठरेशिशुः ६२० ऋतुरूपस्तुकालोयमपांराशिश्चसागरः ॥ अनेकभेदसंभिन्नःपक्षौतस्यमहात्मनः ६२१ आदिशून्यस्तत्पदार्थस्त्वमित्यपिचकीर्तितः ॥ इंद्रःसर्वगतोभूत्वाविद्यतेंतर्बहिस्तथा ॥ पारिक्षितानांब्रह्मांडाद्बहिर्नेतामहेश्वरः ६२२ यतोजातानिसर्वाणिमहाभूतानिपंचच ॥ येभ्योजातानिसर्वाणिब्रह्मांडेभुवनानिच ६२३ एवंसंकल्प्यतेहेतुंपक्षिरूपंमहाधियः ॥ पुनरत्रत्रिधाभावंकृत्वैवंकल्पयंतिच ॥ तत्त्वंपदार्थौतद्भेदहेतुर्मायाचदुःखदा ६२४ अजामायायतोनास्याजन्मस्यात्कारणात्मना ॥ कार्यात्मनात्रिरूपासातेजोबन्नस्वरूपिणी ६२५ लोहितावन्हिरूपेणश्वेतानीरात्मनापिच ॥ भूमिरूपातथाकृष्णात्रिरूपेतिप्रकीर्तिता ६२६ त्रिरूपेयंत्रिरूपंताद्विश्वंस्वसदृशंमुहुः ॥ जनयत्यपरायद्वच्छागीवर्णत्रयात्मिका ॥ सावर्करान्स्वसरूपान्जनयेत्सुबहूनपि ६२७ तामेकःकामुकश्छागःप्रीतियुक्तस्तुसेवते ॥ अपरःसुरतंकृत्वाभुक्तभोगांजहातिताम् ६२८ एवमस्यामजावेतौबंधंमोक्षमुपागतौ ॥ त्वंतत्पदार्थौपुरुषःसस्पृहोनिःस्पृहोपिच ६२९

निभुवनानितदुपादानभूतानिस्थूलभूतानिचजातानीत्यर्थः ६२३ एवंमंत्रचतुष्टयाराधितेश्वरानुग्रहाद्विमलधियामहावाक्योपयोगिविचारःकर्त्तव्यइतिसंगत्याअजामित्यादेर्मंत्रस्यार्थमाह एवमित्यष्टभिः । हेतुंजगत्कारणमीश्वरंएवंउक्तविधयापक्षिरूपंसंकल्प्यध्यात्वापुनरत्रशबलस्वरूपेपदार्थद्वयंतद्भेदिकामायाचेत्येवंत्रिधाभावंकल्पयंतीति ६२४ तत्रपदार्थयोर्भेदिकामायाऽनादित्वेनाजेत्युक्तातथातेजोवन्नलक्षणकार्यरूपेणच्छांदोग्यप्रसिद्धरूपकत्रयेणतुत्रिरूपेत्युक्तेत्याह अजेति ६२५ छांदोग्यप्रसिद्धंतेजःप्रभृतीनांरूपत्रयमभिनयति लोहितेति ६२६ त्रिरूपेयमिति । इयंमायाउक्तविधयालोहितादिभिःत्रिरूपासतीत्रिरूपत्वेनस्वसदृशंविश्वंजनयति तथाचच्छांदोग्यश्रुतिः ‘ यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्य ’ इति । यद्वदपरालौकिकीअजाछागीत्रिवर्णास्वसमानरूपान्वर्करांश्छागान्जनयेत् ‘ वर्करःपरिवारेस्याच्छागेयुवपशावपि ’ इतिविश्वः ६२७ तामिति । तांछागींयथाकश्चिच्छागःकामुकःसेवेतकश्चित्तुनिष्कामस्त्यजेदिति ६२८ एवमिति । एवंलौकिकाजावद्वर्तमानायामस्यांमायायांसत्यांसस्पृहनिःस्पृहपुरुषरूपौत्वंतत्पदार्थावजरूपौबंधमोक्षभागिनावुक्ताविति ६२९

एतदेवस्फुटयति स्पृहायुक्तइति । स्पष्टम् ६३० निःस्पृहइति । सुरतेननिःस्पृहतांप्राप्येतिसंबंधः ६३१ षष्ठमंत्रोप्येवमेवसोपाधिकंपदार्थद्वयंप्रतिपादयतीतिदर्शयंस्तदक्षरार्थमाह एवंचेतित्रिभिः । एतेमहाधियोबुद्धेःसाकल्यादत्युत्कर्षादेवमपिकल्पयंतिरूपकंवर्णयंति एवंकथं सकार्याविद्यावृक्षरूपाबोध्यातत्रवर्त्तमानपक्षिरूपौतुजीवेश्वरौबोध्यावित्यर्थः ६३२ पक्षिणाविति । तौपक्षिणौवस्तुतोभेदराहित्यान्नित्ययुक्तावित्युक्तौसखायौसमानरूपावेनंसकार्याविद्यारूपंवृक्षमाश्रितौ ६३३ तयोरिति । तयोर्मध्येएकःपतगःपक्षीबुद्धिविशिष्टजीवरूपस्तस्यवृक्षस्यकर्मरूपपुष्पजन्यसुखाद्यात्मकंफलंस्वादुमन्यमानोऽत्तिभुंक्तेअपरस्तुपश्यत्येवेत्यर्थः ६३४ अनयोर्मंत्रयोर्जीवेयाभोक्तृताउक्तासानविधेयाकिंतुबुद्ध्युपाधिकभ्रमसिद्धत्वादनूद्यैव तदनुवादोपिजीवस्यशुद्धचैतन्यात्मकब्रह्मताबोधनायं अतएवपैंगिब्राह्मणेएतन्मंत्रव्याख्यानेसत्वपदोक्तायांबुद्धौभोक्तृत्वंप्रक्षिप्तमितितात्पर्यार्थमाह अजाविवितिसप्तभिः । अनयोर्मंत्रयोःअजरूपोपक्षिरूपौचतत्त्वंपदार्थौभोक्तृत्वाभोक्तृत्वाभ्यांविलक्षणौयदुक्तौतदुक्तेस्तात्पर्यंत्वंपदार्थस्यभोक्तृतानिवृत्तावेवेत्यर्थः ६३५ तत्रहेतुतयाअप्राप्तेशास्त्रमर्थवदितिन्यायविरोधेनप्रसिद्धायाभोक्तृतायाअज्ञातज्ञापनलक्षणविधानायोग्यत्वमाह प्रतीतेति । जीवेस्वात्माज्ञानप्रयुक्ताभोक्तृतायतःप्रतीताप्रसिद्धाऽतोनशास्त्रेणविधानयोग्या शास्त्रश्रवणात्पूर्वमेवज्ञातत्वादित्यर्थः ६३६ नन्विदंवाक्यंतत्पदार्थेश्वरस्यैवभोक्तृतावारकमस्त्वितिचेन्न प्रसक्तंहि

स्पृहायुक्तःपुमानेनांप्रकृतिंविश्वरूपिणीम् ॥ नजहातियथाच्छागींछागःसुरतकामुकः ६३० निःस्पृहःप्रजहात्येनांसुरतेनयथापरः ॥ छागोनिःस्पृहतांप्राप्य छागींत्यजतिलौकिकः ६३१ एवंचकल्पयंत्येतेबुद्धिसाकल्यहेतुतः ॥ अविद्याकार्यसहितापादपत्वेनकीर्त्तिता ॥ भिन्नातस्यांपदार्थौतुसुपर्णौपरिकीर्त्तितौ ६३२ पक्षिणौद्वाविमौनित्ययुक्तौभेदविवर्जितौ ॥ सखायावेकमेवैनंवृक्षमाश्रित्यसंश्रितौ ६३३ तयोःकर्मप्रसूनोत्थंसुखदुःखात्मकंफलम् ॥ एकःस्वाद्वत्तिपतगोबुद्धिजायावशंगतः ॥ अन्यःप्रकाशयत्येवनतदश्नातिकर्हिचित ६३४ अजौवापक्षिणौवापिभोक्तृभोक्तृविभागतः ॥ उक्तौतौत्वंपदार्थस्यभोक्तृताविनिवृत्तये ६३५ प्रतीताभोक्तृताजीवेस्वात्माऽज्ञानान्नृणामिह ॥ नसाविधीयतेयस्माज्ज्ञातापूर्वमियंस्वयम् ६३६ तत्पदार्थस्यभोक्तृत्वेज्ञानंशास्त्रंविनानहि ॥ शास्त्रांतरात्तुतस्यापिप्राप्तैवाभोक्तृतासदा ६३७ ततोब्रह्माहमस्मीतिशाब्दंद्रूतेह्यनर्थकम् ॥ भोक्त्रभोक्तृपदार्थौतौस्यातांकेनैकरूपिणौ ॥ इतिशंकाव्युदासार्थमिदंरूपकमीरितम् ६३८ आरोपितायथाचात्रच्छागतापिसुपर्णता ॥ तत्पदार्थेत्रनिःशेषधर्मशून्येप्रतीयते ६३९ आरोपितैवनत्वेषावस्तुतोस्तिकथंचन ॥ त्वंपदार्थेपिचतथाभोक्तृतात्रप्रतीयते ६४० अतोरूपकरूपेणभोक्तृत्वमिहकीर्त्तितम् ॥ जीवस्यबुद्धिसंसर्गान्नस्वरूपात्कथंचन ६४१

प्रतिषिद्ध्यतेइतिन्यायविरोधादित्याह तत्पदार्थस्येति । ईश्वरस्यभोक्तृत्वंकिंलौकिकैःप्रत्यक्षादिप्रमाणैःसिद्धंकिंवाश्रुत्यंतरेण नाद्यः तस्यालौकिकत्वेनलौकिकप्रमाणायोग्यत्वात् नांत्यःईश्वरेभोक्तृत्वप्रतिपादिकायाःश्रुतेरनुपलंभात्प्रत्युतभोक्तृत्वाभावप्रतिपादिकायानतदश्नातिकिंचनेत्यादिश्रुतेरक्षरप्रकरणेआरण्यकपंचमाध्यायेउपलंभादितिभावः ६३७ फलितमाह ततइति । ततस्तत्पदार्थेभोक्तृत्वस्याऽप्रसंगेननिषेधायोग्यत्वादिदंगतमंत्रद्वयदर्शितंरूपकमित्यस्याःशंकायावारणार्थमेवोक्तं इत्यस्याःकस्याः नन्वहंब्रह्माहमित्यर्थकंशाब्दंशब्दसमूहःअनर्थकंबाधितमर्थंब्रूतेयतोभोक्तुर्जीवस्यत्वंपदार्थस्यअभोक्तुरीश्वरस्यतत्पदार्थस्यचएकरूपत्वंनसंभवतीति ६३८ कथमस्याःशंकायाअनेनरूपकेणनिराकरणमितिचेद्दृष्टांतविषयेत्याह आरोपितायथेति । यथाचात्ररूपकद्वयेतत्पदार्थेशुद्धेअजत्वंपक्षित्वंचशब्दबलात्प्रतीयमानमारोपितमेवतथात्वंपदार्थेभोक्तृत्वंबुद्धिसंबंधात्प्रतीयमानमारोपितमेवनसत्यमितिद्वयोरर्थः ६३९ । ६४० एतदभिप्रायस्फुटीकरणायैवपैंगिब्राह्मणेबुद्धौभोक्तृत्वंदर्शितमित्याशयेननिगमयति अतइति । स्वरूपंशुद्धंरूपमादायभोक्तृत्वंनोक्तमिति ६४१

एपाजीवस्यसंसारवृक्षफलभोक्तृताआविद्यकीविपवृक्षफलभोक्तृतेवासामर्थ्याधानद्वारशोकहेतुस्तस्याःपरित्यागेनतत्पदार्थस्वरूपदर्शनंतुनद्भावहेतुरित्यावेदकस्यसप्तमस्यार्थमाह एकस्मिन्नेवेतित्रिभिः । एकस्मिन्पदार्थद्वयात्मकसुपर्णद्वयस्यसाधारणेवृक्षेसकार्याविद्यारूपेसजीवरूपःसुपर्णःफलभोगीसन्ननीश्वरत्वमसामर्थ्यंप्राप्यशोचतितत्रसर्वत्रहेतुःस्वरूपाज्ञानरूपोविमोहइत्यर्थः ६४२ आनंदात्मानमिति । यदातुनिरतिशयप्रेमास्पदत्वादिनोपलक्षितानंदादिरूपंसर्वांतरमात्मानंहृदयाकाशरूपंगुरुप्रसादलब्धयाबुद्ध्यापश्यतितदावीतशोकःसन्नस्यतत्पदार्थस्यमहिमानमेवैति श्रुतोऽहस्वत्वंछांदसमिति । महत्त्वप्राप्तिमेवस्फुटयति तादात्म्यादिति । तादात्म्यंतत्पदार्थस्वरूपंप्राप्यततःपूर्णःसर्वात्माभवेत् 'सआत्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत्' इतिश्रुत्यंतरादितिद्वयोरर्थः ६४३ । ६४४ तत्पदार्थस्वरूपंतदविज्ञानेविज्ञानेचदोषंगुणंचदर्शयतोष्टमस्यार्थमाह यन्महत्त्वमितिपङ्क्तिः । अयंगुरुणाऽनुगृहीतोविद्वान्यस्यतत्पदार्थस्यमहत्त्वंगच्छतितस्यस्वरूपमक्षरात्मकंपंचमाध्यायेगार्गींप्रतियाज्ञवल्क्येनवर्णितम् यत्राक्षरस्वरूपेधिष्ठानेऋक्प्रभृतयोवेदास्तत्प्रतिपादितादेवादयश्चनिवसंतितित्सत्ताभानादिभिःसत्तादिकंलभंतइत्यर्थः ६४५ आधिक्येनेति । आधिक्यंसर्वंसत्तादिप्रदत्वलक्षणंसर्वांतरत्वंतेनरूपेणतदक्षरंयोनजानातिसवृथाजीवतियश्चजानातिसधन्यः ६४६ यथाचंदनमयोभारोगर्दभस्यनोपकारायतथापरागदर्शिनःशास्त्राध्ययनमित्याह किं

एकस्मिन्नेववृक्षेससुपर्णःफलभोगभाक् ॥ देहबुद्ध्यादिसंबंधान्मग्नोदुःखोदधाविह ॥ अनीश्वरत्वमापन्नःशोचत्यात्मविमोहतः ६४२ आनंदात्मानमद्वैतंस्वयंज्योतिषमीश्वरम् ॥ देहादिभ्यःपरंबुद्ध्वायदैषगुरुलब्धया ६४३ पश्यतिस्वंहृदाकाशंवीतशोकस्तथापुमान् ॥ महत्त्वमस्यसंयातितादात्म्यातसभवेत्ततः ४४ यन्महत्त्वमयंगच्छेत्तदक्षरमुदीरितम् ॥ ऋगादिकस्तुयत्रायंवेदराशिःप्रतिष्ठितः ॥ विश्वेदेवाश्चयत्रैतेवन्ह्याद्यानिवसंतिच ६४५ आधिक्येननयोवेदतद्यर्थंतस्यजीवनम् ॥ आधिक्येनचयोवेदसफलंतस्यजीवनम् ६४६ किंकरिष्यत्यनात्मज्ञोवेदैःसांगैर्ऋगादिभिः ॥ अधीतैर्गर्दभोयद्वद्भारैस्तैश्चंदनैरपि ६४७ यइत्थमात्मनस्तत्त्वमुक्तरीत्याविजानते ॥ समास्तेहितेसर्वेमहाराजसमाःसुखम् ॥ इमेभवादृशाःसर्वेमादृशाश्चयतीश्वराः ६४८ ऋगाद्यध्ययनस्यापिफलमेतावदीरितम् ॥ यदात्मनोत्रविज्ञानंनाधिक्यंह्यितीश्वराः ६४९ आत्मन्यविदितेसर्वंज्ञातुंनैवात्रशक्यते ॥ तस्मिन्हिविदितेसर्वंज्ञातमेवयतीश्वराः ६६० अज्ञातेकारणेनैवज्ञायतेकार्यमल्पकम् ॥ विज्ञातेकारणेशक्यंज्ञातुंकार्यंतथाखिलम् ६६१ आत्मात्रकारणंज्ञेयोवेदादीनांयतीश्वराः ॥ माययैवयथाकश्चिन्मायावीकारणंत्विह ६६२ छंदांसिविविधान्येवगायत्र्यादीनिवेदराट् ॥ वेदानपितथायज्ञानग्निष्टोमादिकान्बहून् ६६३

करिष्यतीति ६४७ येतुतज्जानंतितेहेमुनयोभवादृशाःसुखंतिष्ठंतीत्याह यइत्थमिति । समासतेसम्यक्तिष्ठंति ६४८ ऋगादीति स्पष्टम् ६४९ ननुकथमात्मज्ञानेनकृतकृत्यताज्ञेयानांबहूनांजगत्यवशेषादित्याशंकावारणायात्मनोविश्वकारणताप्रतिपादकस्यनवमस्यार्थमाह आत्मनीतिदशभिः स्पष्टम् ६५० तत्रोपपत्तिमाह अज्ञातइति । कारणंहिसर्वकार्याणांवास्तवंस्वरूपमितितज्ज्ञानेसर्वकार्याणांस्वरूपंविज्ञातमेव विशेषतोविकाराणांज्ञानंतुकाकदंतनिर्णयवद्विफलमितिभावः ६५१ यथामायावीनानारूपाणांकारणमिहलोकेप्रसिद्धस्तथात्मावेदादीनांमाययाकारणत्वेनशास्त्रप्रसिद्धइत्याह आत्मेति । तुशब्दश्छंदःपूरणार्थः ६५२ आत्मनःसर्वस्रष्टृत्वमेवविशदयति छंदांसीतित्रिभिः । एषमहेश्वरोवेदराट्वेदानांस्रष्टृत्वसंप्रदायप्रवर्त्तकत्वपालकत्वादिभिःप्रभुश्छंदःपदोक्तानिगायत्र्यादीनिवेदान्वाछंदःपदोक्तांस्तथायज्ञांस्तथाक्रतुपदोक्तान्नानाविषयकसंकल्पांस्तथाव्रतादीनिभवदन्तानियज्जगत्स्वरूपंवेदाबहुधाप्रतिपादयंतितत्सर्वंजगदस्मादितिश्रुतिपदोक्तादात्मस्वरूपत्तोभिन्ननिमित्तोपादानात्सृजतिमाययैवेतित्रयाणांसंबंधः ६५३

६५४ । ६५५ । यास्वसत्तासाधकंमानंनयातिनिर्मिमीतेचकार्यजातंसामायेत्याकारांमायापदव्युत्पत्तिंस्मारयति मानमिति ६५७ तयैवेति । तयामाययैवस्वप्नप्रपंचवद्विश्वंसृजति ६५७ अस्मिन्नीशसृष्टेजगतित्वंपदवाच्यश्चिदाभासःकामाद्यैर्निरुद्धइत्याकारंचतुर्थपादार्थमाह अनेनेतिद्वाभ्यां । अयंचिदाभासः अन्यत्वंभेददर्शनं अहोअत्यद्भुतंमायान्वलंयतोवलंसंवरणकरं वलसं वरणेइतिस्मरणात् ६५८ । ६५९ मायायाःसामर्थ्यातिशयप्रतिपादकरूपदशमस्यार्थमाह मायांत्वितिसप्तभिः । करणव्युत्पत्त्याप्रकृतिपदार्थमाह प्रकर्षेणेत्यादिना ६६० तस्याःप्रकर्षमघ टितघटनापटीयस्त्वेनदर्शयति पुरुषइतिद्वाभ्यां । वस्तुतोविक्रियारहितस्यनानापदार्थाकारतामद्वितीयस्यनानात्वंचासंभाव्यंयतोमायाकरोतिअतःप्रकृतिरित्युक्तेतिद्वयोरर्थः ६७१ । ६६२ असदर्थकरणमेकस्यनानात्वकरणंचेत्येतत्स्वभावद्वयंमायायालोकेपिदृष्टमित्याह असदेवेतिद्वाभ्यां । वस्तुजातंसूत्रेणाकाशारोहणादिरूपम् ६६३ तथेति । स्वयंपुमानैंद्रजालिकः

संकल्पानपिनानार्थान्व्रतान्यपिबहूनिच ॥ तपआदीनिसर्वाणिभूतंभव्यंभवच्चयत् ६५४ वेदावदंतितत्सर्वमस्मादात्मस्वरूपतः ॥ सृजतेमाययैवैषमायावीसम हेश्वरः ६५५ मानंनयातियासत्वेकार्यंचकुरुतेपुनः ॥ मायेतिकथितासेयंदुर्घटावेदवादिभिः ६५६ तयैवसृजतेविश्वंपालयत्यत्तिचेश्वरः ॥ यथाशयानःपुरुषः स्वप्नजातमनेकधा ६५७ अनेनसृष्टएतस्मिन्घोरेसंसारचक्रके ॥ माययैवनिरुद्धोयमस्मादन्यत्वमागतः ६५८ तथाकामादिभिःपाशैर्बद्धोदीनदशांगतः ॥ कर्म कारागृहेसोयमहोमायाबलंबलम् ६५९ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ प्रकर्षेणययासर्वंकार्यंबहुविधंत्विदम् ॥ क्रियतेप्रकृतिःसेयंकथ्यतेवेदवादिभिः ६६० पुरुषोनिर्गुणोऽसंगोबहुधाक्रियतेकथम् ॥ कार्याकारेणसर्वाभिर्विक्रियाभिर्विवर्जितः ६६१ वस्तुतःक्रियतेचायंतयानानाविधःपुमान् ॥ अनानापिततो मायाप्रकृतिःसोच्यतेबुधैः ६६२ असदेवात्रसकलंवस्तुजातंप्रदर्शयेत् ॥ यासामायेतिकथितापुरुषैर्लौकिकैरपि ६६३ तथानानाविधोयःस्यादनानापिस्वयंपु मान् ॥ मायीतिकथितःसोयमत्राप्येतद्द्वयंतथा ६६४ मायावीपुरुषोयोयंमाययाबहुधाभवेत् ॥ असंगोनिर्गुणोनंतएकएवमहेश्वरः ६६५ अस्यावयवभूतैस्तुम हाभूतादिभिःसदा ॥ इंद्रियैश्चजगत्सर्वंव्याप्तमेतच्चराचरम् ६६६ एनंसर्वगतंदेवंचतुर्विधशरीरकम् ॥ एकंसर्वस्यजगतांसृष्टिस्थित्यंतकारिणम् ६६७ विलो क्यात्मतयासर्वःशांतिंमोक्षाभिधांव्रजेत् ॥ ईशानंवरदंत्वीड्यंदेवैःसर्वैःसवासवैः ६६८ देवानांजनकःपूर्वमुक्तोबुद्धिप्रदोमया ॥ देवानामधिपोयश्चयस्मिन्लोका अधिश्रिताः ॥ भूराद्यानिखिलायद्वत्प्रोच्यंतेमनुजादयः ६६९

अनानाएकोपिययानानाविधःप्रदर्श्यतेतयामाययाविशिष्टोमायावीसइंद्रजालेश्वरःप्रसिद्धस्तथात्रात्मनिएतन्मायास्वभावद्वयंबोध्यमित्यर्थः ६६४ तथेत्युक्तमेवस्फुटयति मायावीतिद्वाभ्यां । अयंमायावीईश्वरोमाययाबहुधाभवतिस्वतःपृथगवस्थातुमशक्तत्वेनस्वावयवभूतैर्महाभूतादिभिर्जगद्व्याप्नोतिचेतिद्वयोरर्थः ६६५ । ६६६ एकादशस्यार्थमाह एनमितिद्वाभ्यां । एनंदेवंपदा यमधिकारीसर्वोयत्रकुत्रचिच्छरीरेस्थितोविलोकयतितदामोक्षरूपांपरांशांतिंव्रजति कीदृशंदेवं । सर्वयोनिशरीरोपाधिषुएकंस्थितंजगतःसृष्ट्यादिकरमीशानंवरदंदेवैरीड्यंचेतिद्वयोःसंबंधः ६६७ ६६८ द्वादशस्यार्थःपूर्वंदर्शितप्रायइतिप्रथमार्धेनसूचयंस्त्रयोदशस्यार्थमाह देवानामितिपंचभिः । योदेवोदेवानांहिरण्यगर्भादीनांजनकस्तेभ्योऽधिकारिभ्यश्चबुद्धिप्रदइत्यादिविशेषणैर्विशिष्टत यापूर्वमुक्तः यस्मिन्श्चाधारेभूराद्यालोकाःश्रिताःस्थिताः यथामनुजादिशरीराणिपृथिव्याद्याश्रितानिप्रोच्यंतेतद्वत यश्चद्विपदादिशरीरशालिनांप्राणिनामीशोनियंताचतमेकंदेवंप्रीणयितुमिमां–

परिचर्यांहविःपदोक्तेनदेवदेयद्रव्येणांधसाभोज्यान्नेनचसाध्यांवयमधिकारिणःकुर्मइतित्रयाणामर्थः श्रुतौत्वेकपदस्यैकारलोपश्छांदसः ६६९। ६७०। ६७१ तत्रतस्त्वज्ञानात्पूर्वंशास्त्रोक्तविधिनादेवप्रदेयान्नरूपेणहविपापरिचर्यांकुर्मइत्याह आत्मेति । आत्मज्ञानोत्पत्तेःपूर्वंबहिर्वात्यांवेदज्ञैर्द्विजैर्वर्णाश्रमाधिकारमनुसृत्ययथोपदिष्टातथातांकुर्मइतिसंबंधः ६७२ तदुत्तरंतुअंधसान्नेनयच्छरीरधारणमियमेवतस्यपूजातस्यदेवस्यास्माकंविदुषामात्मनिप्रविष्टत्वादित्याह संजातइति । ज्ञानेजातेसतियतःसदेवोवयमेवास्माकंस्वरूपमेवसंपन्नोऽतस्तत्रविद्यावस्थायामपितस्यदेवस्यइयमेवपरिचर्यायद्देहधारणमिति ६७३ चतुर्दशस्यार्थंदर्शयति सूक्ष्मंहीतिचतुर्भिः । यल्लोकेइंद्रियैरग्राह्यंकेवलंबुद्ध्यैवगृह्यतेतत्सूक्ष्ममित्युच्यते अयमात्मातुततःसूक्ष्मादप्यतिसूक्ष्मोदुर्लक्ष्यप्रभावोयोरेतोद्वारायुवतिशरीरंगतःसन्नानाविधशरीरेंद्रजालंनिर्मिमीतेइत्यर्थः ६७४ आर्तवमिति । नारीवीर्यंनार्यावीर्यस्थानीयमार्तवंरजःसंप्राप्यरेतःकर्तृकललंफेनतुल्यावस्थारूपंभवति ६७५ तस्येति । तस्यकललस्यउपाधिभूतस्यमध्येविविधकार्यानुकूल्यलक्षणेनविशेषेणस्थित्वासर्वंकार्यजातंस्वांतर्गतंपरिवेष्ट्याभिव्याप्यजगत्स्रष्टाईश्वरोऽवतिष्ठते कीदृशः नानाविधशरीरभेदान्नानारूपो

ईष्टेयोद्विपदांतद्वत्सर्वेषांचचतुष्पदाम् ॥ प्राणिनांनिखिलानांचस्थिराणामपिसर्वदा ६७० एकस्मैसर्वपतयेतस्मैज्योतिःस्वरूपिणे ॥ परिचर्यामिमांकुर्मोहविषाप्यंधसापिच ६७१ आत्मज्ञानस्यजननात्प्राग्बहिर्यातिसत्तमाः ॥ निजवर्णाश्रमप्रोक्तांवेदवादरतैर्द्विजैः ७२ संजातेब्रह्मविज्ञानेत्वयमेवयतोत्रसः ॥ तत्रापितस्यचेयंस्यादस्मद्देहस्यधारणम् ६७३ सूक्ष्मंहिकथितंयत्तुगम्यतेत्रधियैवहि ॥ ततोप्यत्यंतसूक्ष्मोयोरेतसायुवतिंगतः ६७४ आर्तवंस्वमनुप्राप्यनारीवीर्यंतुगर्भगम् ॥ एकरात्रेणकललंरेतःस्यात्फेनसंनिभम् ६७५ तस्यमध्येजगत्स्रष्टानानारूपोव्यवस्थितः ॥ नानाविधशरीराणांविभेदाद्भेदवर्जितः ॥ एकएवजगत्सर्वंपरिवेष्ट्यावतिष्ठते ६७६ आनंदात्मानमद्वैतंयस्तंपरममंगलम् ॥ जानीतेसतुमोक्षस्थोदुःखंनैतिकदाचन ६७७ सएवस्थितिकालेस्मिन्प्राप्तेविश्वस्यगोपकः ॥ विश्वाधिपःशरीरेषुहृदिगूढोवतिष्ठते ॥ यथाकाष्ठेषुभगवान्वन्हिःसर्वेषुसंस्थितः ६७८ सर्वदायत्रतिष्ठंतियोगयुक्तामहाधियः ॥ अतींद्रियदृशोविप्रादेवताश्चसहस्रशः ६७९ उक्तेनैवप्रकारेणज्ञात्वातंपरमेश्वरम् ॥ मृत्युपाशांस्तुकामादींश्छिनत्त्येषनसंशयः ६८० दध्नस्तुनिर्गतंयद्वत्सर्पिस्तस्मात्परंपुनः ॥ द्रवरूपाद्घनीभावोदधिमंडोपमःपरः ६८१

पिस्वतोभेदवर्जितःअतएवैकइत्यर्थः एतत्कललोदाहरणंवटादिबीजानामपिकुर्वद्दवस्थोपलक्षणमितिबोध्यम् ६७६ आनंदात्मानमिति । तमीश्वरमात्मानमद्वैतत्वादानंदरूपंस्मरणमात्रेणसर्वसंसारभयापहत्वात्परममंगलरूपंचयोजानीतेसमुक्तःसन्दुःखंनपश्यतीति ६७७ पंचदशस्यार्थमाह सएवेतित्रिभिः । यः पूर्वंमंत्रबीजाद्यांतरत्वेनजगत्स्रष्टोक्तःसएवस्थितिकालेसर्वस्यांतर्गूढःसन्पालकःअतएवविश्वस्याधिपःअंतर्यामीत्युक्तः। गूढत्वेदृष्टांतउच्यते यथेति ६७८ सर्वदेति । यत्रउक्तंगोभुःस्वरूपेतत्परतयायोगिनःसांख्याश्चांतर्मुखाविप्रास्तथादेवताश्चहिरण्यगर्भाद्यास्तिष्ठंति ६७९ उक्तेनैवेति । उक्तेनसर्वोपादानत्वसर्वांतरत्वादिनाप्रकारेणविशेषेणयस्तंजानातिसमृत्युनाप्रमादलक्षणेनकृतान्कामादिरूपपाशाञ्ज्ञानासिनानिश्चितंछिनत्ति ६८० षोडशस्यार्थमाह दध्नइतित्रिभिः । यद्वद्दध्नोनिर्गतंघृतंदध्यपेक्षयापरमुत्कृष्टंतस्माद्घृताद्द्रवावस्थाशालिनःसकाशात्तस्यघृतस्यघनीभावःपिंडावस्थारूपःपरःस्वादीयस्त्वात् कीदृशोघृतस्यघनीभावोदधिमंडसमः दधिमंडोनामवस्त्रेणनिःसारितजलकंदधीत्यर्थः ६८१

यद्वदिति । प्रथमपदंपूर्वान्वयि तद्वज्जगतःस्थूलसूक्ष्मरूपाद्धिस्थानीयादुत्कृष्टंघृतस्थानीयंमायाशबलंसत्यकामत्वादिगुणंब्रह्मततोप्युत्कृष्टंशुद्धमानंदघनंपद्यापकंसर्वांतर्गूढंतंशिवंतुरीयंक्वाजाना तितदासर्वेपाशाःक्षीयंतेइतिद्वयोरर्थः ६८२ । ६८३ सप्तदशस्यार्थःप्रदर्श्यते अंगुष्ठेति । योमहेश्वरःअंगुष्ठमात्रत्वेनहृदयाद्युपाधिवशादुक्तोबुद्धेर्मनसश्चसाक्षित्वप्रेरकत्वाभ्यांसिद्धःस्वयंप्रकाशश्च सविश्वकर्माविश्वानिसर्वाणिकर्माणियस्यतथाविधःअतएवमहात्मापूर्णोज्ञेयइत्यर्थः ६८४ विद्योपलक्षितमात्मरूपंप्रतिपादयतोऽष्टादशस्यार्थंनिरूपयति मायेति । यदाविश्वकारणभूताआत्मरू पाआत्मसत्तयालब्धसत्ताकाचयामायातद्रूपंतमएतल्लौकिकंचतमःप्रलीयतेतदादिनंनिशास्थूलंसूक्ष्मंचएतेपदार्थानिशिष्यंतेकिंतुकेवलःशिवएवस्वयंज्योतिर्भासतेइतिद्वयोरर्थः ६८५ । ६८६ तदक्षर मिति । तच्छुद्धमात्मरूपमक्षरमित्युक्तंतदेवचसवितृपदेनोक्तस्यजगत्कारणस्यसूर्यमंडलांतस्थस्यवरणीयमाराध्यंरूपंगायत्र्योक्तमित्यर्थः ६८७ तदेवचाराधितंसद्बुद्धिप्रदमित्याह प्रज्ञेति । तस्मा देवहेतोरियंप्रज्ञापुराणीअनादिसंप्रदायागतास्माकंजातायया सएषदेवःपुराणोजगत्कारणत्वोपलक्षिततत्पदार्थरूपःसाक्षात्कृतइत्यर्थः ६८८ ऊनविंशतितमस्यार्थमाह बुद्धिरितिद्वाभ्यां । गुरो

यद्वत्तद्वद्द्विजगतोमायैपापरतःस्थिता ॥ मायायाःपरतोदेवोजगतोव्यापकोद्वियः ६८२ गूढःसर्वेषुभूतेषुज्ञात्वातंशिवमद्वयम् ॥ पाशाःसर्वेप्रहीयंतेकामक्रोधा दिनिर्मिताः ८३ अंगुष्ठमात्रःपुरुषोयोमयापरिकीर्त्तितः ॥ महात्माविश्वकर्मैषस्वयंज्योतिर्महेश्वरः ८३ मायाविश्वस्यजनिकाआत्मरूपायदातुसा ॥ प्रलीयते तमश्चैतन्नदिवाननिशापिच ८५ नसन्नैवाप्यसच्चैतवशिवएवाक्षरस्तथा ॥ केवलोभासतेस्वस्यभासाद्वैतविवर्जितः ८६ तदक्षरंपरंब्रह्मगायत्र्याप्रतिपादितम् ॥ सवितुर्वरणीयंतज्जनकस्यमहात्मनः ८७ प्रज्ञाचनिर्गतातस्मादस्माकंबुद्धिरूपिणी ॥ पुराणीभगवान्सैषययास्माभिर्विलोकितः ॥ पुराणःसर्वजगतःकर्तार्थस्त त्पदस्ययः ८८ बुद्धिरेषासमुत्पन्नाप्युपदेशात्पुरागुरोः ॥ नैनमूर्ध्वंनसर्वासुदिक्षुमध्येपिनैवच ॥ पर्यग्रहीदिदानींचगृह्णीतेसर्वतोपिच ८९ नतस्यप्रतिमालोकउ पमार्थेत्रविद्यते ॥ महद्यशइदंनामयस्यास्तेत्रमहात्मनः ९० विलोक्यतेनकेनापिरूपमस्यात्रचक्षुषा ॥ नैवतद्ग्रहणेयोग्यमानंदात्मस्वरूपतः ९१ हृदयस्थेन मनसामनोवृत्तिंनियम्यहि ॥ विलोकयेत्प्रसादेनरुद्रस्यास्यमहात्मनः ९२ एवंसंप्रार्थ्यतंदेवमेकाग्रहृदयेस्थितम् ॥ जन्मादिविक्रियाशून्योभगवन्पाशमोचकः ९३ अग्निमध्येयथाजंतुर्मरणेनविवर्जितः ॥ प्राप्नोतिदुःसहंदुखमहमेवंवपुःस्थितः ६९४

रुपदेशात्पूर्वमस्माकंबुद्धिस्तदाकारतयासमुत्पन्नाप्यूर्ध्वादिदिक्षुकोणेपुचभ्रांतापिचएनमात्मानंनाग्रहीत् इदानींगुरोरुपदेशानंतरंतुतमात्मानंसर्वत्रगृह्णातीत्यर्थः ६८९ कीदृशंतदात्मरूपमितिनप्र ष्टव्यंतदुपमानाभावेनतदुत्तरस्यावचनीयत्वादित्याह नतस्येति । प्रतिमाउपमानं तस्यनिरतिशयप्रेमास्पदत्वबोधकंमहद्यशइत्याकारंनामेति ६९० आत्मनोऽविषयतांबोधयतोविंशस्यार्थमाह विलोक्यतइतिद्वाभ्यां । अस्यात्मनःस्वरूपंचक्षुरादिभिःकरणैर्नालोक्यतेयतस्तत्सहक्ष्यदोक्तायग्रहणाययोग्यंनभवतिअद्वयलक्षणानंदरूपत्वादित्यर्थः ६९१ हृदयस्थेनेति । हृदयस्थंमनःकृत्वात तद्वृत्तीर्निरुध्यचईश्वरानुगृहीतःकश्चिदेवतंविलोकयेदिति ६९२ ईश्वरप्रसादहेतुप्रार्थनाभिनयपरमंत्यमंत्रद्वयंतत्रप्रथमस्यार्थमाह एवमितित्रयोदशभिः । सचसाक्षात्कारहेतुःप्रसादस्तंदेवंहृदये स्थितंसन्निहितमेवंसंप्रार्थ्यलभ्यतेइतिसंबंधः एवंकथमित्याकांक्षायामाह जन्मादीत्यादि । हेभगवन्भवान्जन्मादिविक्रियाशून्यत्वादस्माकंजीवानांपाशमोचनशक्तोभवतीत्यर्थः ६९३ अहंत्वि त्थंपाशबद्धोभयार्तोस्मीत्याह अग्नीत्यादिना । यथाजीवन्नेवाग्निमध्यगतोजंतुर्दुःखीभवेत्तथाहंशरीरेदुःखाग्निमयेस्थितोदुःखितोस्मीति अतएवपशुवदस्वातंत्र्यात्तवपशुपतेरधीनोस्मीतिद्वयोरर्थः ६९४

९८

६९५ दशामिति । मत्समोदीनोनास्तित्वत्समश्चोद्धरणक्षमःकृपालुर्नास्तीतियोग्यःसंबंधोविधिनाकृतइतिभावः ६९६ ईशंशपथेनवध्नाति यदीति । यदिचवेदानाप्रामाण्यमसंकुचद्वृत्तियदिचशंकरः सुखप्रतानकत्वेनशंकरनामादेवःप्राणमोक्षाततःप्राणेजीवनावस्थायांमोक्षेचआततःपूर्णइतिप्रसिद्धं तत्रप्राणेतत्सांनिध्यं 'कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यात्'इतिश्रुतिर्दर्शयति मोक्षेत त्सांनिध्येतुयदाऽतमइत्यादिकाःद्वादशमंत्रपूर्वार्द्धादीनिशतशोवाक्यानि तेनसत्येनहेभगवन्मेदुःखंनाशयेत्यर्थः प्राणमोक्षादितिपंचम्यंतपाठेप्राणमोक्षान्मरणात्पूर्वमितिशेषः ततःतेनसत्येनजीवतएव मेदुःखंनाशयेत्यर्थः ६९७ आर्तेति । यतोभवतआर्त्तानांदुःखितानांत्राणकरत्वंवेदवाक्यसमुदायादवगतमतस्त्वांप्रपन्नोस्मीत्यर्थः ६९८ ननुत्वंस्वयमेवात्मानंविचार्यनिर्दुःखोभवकिंमदनुग्रहेणेत्या शंकांवारयन्नाह अहमिति । अहंकश्चित्कुत्रापिगुणिगणनायामागण्योस्मियतःस्वात्मानमपिनजानामि तत्किंजडोसीतिशंकांवारयति दुःखमित्यादिना । यथाशिशुर्बालःसुधीःअतिमुग्धावस्थाम तिक्रांतःसोपद्रवेनिर्जनारण्येप्रक्षिप्तोभीतःसन्दुःखमेवजानातितथाहमपिदुःखमात्रज्ञानोपक्षीणचैतन्यइतिद्वयोरर्थः ६९९ । ७०० स्वप्रक्षेपस्थानस्यसंसारस्यसोपद्रवारण्यसाम्यमेवस्फुटयति क्षुत्पि

त्रिविधैर्दुःसहैर्दुःखैःपीडितोस्मिनिरंतरम् ॥ तवाधीनःपशुर्नित्यमनीशःपुण्यपापयोः ९५ दशांदीनतमांप्राप्तोमत्तोनान्योस्तिकश्चन ॥ कृपालुश्चतथात्वंतुनियं तापुण्यपापयोः ९६ यदिवेदाःप्रमाणानियदितिष्ठतिशंकरः ॥ प्राणमोक्षाऽऽततःप्रोक्तंदुःखमेतद्विनाशय ९७ आर्तत्राणकरोयस्माद्वेदवाक्यान्मयाश्रुतः ॥ भवा नतःप्रपन्नोस्मिभवंतंदीनवत्सलम् ९८ अहंकश्चिन्नजानामिस्वात्मानमपिशंकर ॥ दुःखमेकंविजानामिमातृहीनःशिशुःसुधीः ९९ अरण्येनिर्जनेसर्पव्याघ्रादि परिवारिते ॥ परित्यक्तोयथातद्वत्परंभयमुपागतः ७०० क्षुत्पिपासेपिशाच्यौद्वेबाधेतेमामहर्निशम् ॥ यौवनंवनमाविष्टःसर्पःकंदर्पनामकः ॥ दशत्यतिविषोनि त्यंप्रतीकारविवर्जितः ७०१ इमेशब्दादयस्तद्वद्वृकाःसर्वत्रसंस्थिताः ॥ वधूकाकैश्चसहिताहंतुमायांत्यनेकशः ७०२ क्रोधसिंहस्यनादेनहृदयंपरिद्रूयते ॥ मम लोभोपिचित्रोयंतरक्षुर्नेत्रदाहकः ॥ रुणद्ध्यपिप्रकाशंचममाहंनामकोगिरिः ७०३ एवमादिसहस्राणिदुःखानिमयिसंतिभोः ॥ यानिश्रोतुंनचभवानशक्तोति करुणावृतः ७०४ रुद्रयत्तेमुखंसौम्यमघोरंदक्षिणेस्तिहि ॥ दक्षंशिवतमंतत्तुगुरुरूपंमहेश्वर ॥ पाहितेनाद्यमांनित्यंवीतशोकंकुरुप्रभो ७०५ यावन्नोजायतेनैत द्ब्रह्मानंदःशुचापहः ॥ तावत्त्वंभगवान्मृत्युर्माहिंसीर्नोत्रकिंचन ॥ कुपितोयद्वदेतेषांनिहंसीशाखिलंप्रियम् ७०६

पासेइतित्रिभिः । अत्रसंसारारण्येक्षुत्तृड्रूपेपिशाच्यौदुःखयतःयौवनरूपमहारण्यंप्रविष्टंचमांकंदर्परूपःसर्पोदशतिदंशविषेणमोहयति ७०१ इमेइति । यत्रयौवनारण्येशब्दादिविषयरूपावृकानारी रूपाःकाकाश्चममधर्मविवेकादिमयंशरीरंहंतुमायांति ७०२ क्रोधेति । अत्रारण्येक्रोधरूपःसिंहोहृदयंगर्जितेनतापयतितथालोभस्तरक्षुःडाकिनीवाहनत्वेनप्रसिद्धोमृगविशेषश्चित्रोनानारूपोदर्शनेन नेत्रतापकोवर्त्तते अतएवलुब्धंदृष्ट्वादातारोदृष्टिंपरिवर्त्तयंतीतिप्रसिद्धं तथाहंकाररूपोगिरिर्मदात्मरूपादित्यस्यप्रकाशंछादयतिविंध्याचलवदित्यर्थः ७०३ एवमादीति । एवमादीनिसहस्राण्यसंख्या तानिरूपाणियेषांतादृशानिममदुःखानिसंतियानिश्रोतुंभवान्करुणावेगाकुलितत्वान्नसमर्थइत्यर्थः ७०४ रुद्रेति । हेरुद्ररुत्पदोक्तदुःखस्यपरिहारकत्वाद्रुद्रसंज्ञयत्तवमुखानांतत्पुरुषाघोरसद्योजात वामदेवेशानाख्यानांपूर्वादिदिक्षुमध्येचक्रमेणस्थितानांमध्येदाक्षिणंमुखमघोराख्यंदक्षमुपदेशेकुशलंचप्रसिद्धंतेनमांरक्षेत्यर्थः ७०५ मानइत्यादेरंत्यस्यार्थमाह यावन्नइतिपंचभिः । यावन्नोस्माकम धिकारिणामिदमुक्तलक्षणंब्रह्मज्ञानंनजायतेतावदस्माकंप्रियंसुतादिरूपंमृत्युरूपःसन्माहिंसीः यथाइतरेषांपापिनांप्रियंहंसितथेत्यर्थः ७०६

रोगादिकमिति । तथास्माकमपत्येषुविशेषतोमंत्रोपात्तेषुपुत्रेषुगवादिषुचरोगादिकंचित्तक्षोभकंमास्तु ७०७ वीरानिति । तथावीरपदार्थान्पुत्रभ्रात्रग्निरूपांस्तथा भामिपदोक्तानुपकारकरान्राजादी नस्मत्तःप्रथमंमाहिंसीः तत्राग्नेर्वीरपदार्थत्वं'वीरहावाएषदेवानांयोग्निमुद्वासयते'इतिश्रुतिसिद्धं । नइत्यादिपदत्रयमुत्तरान्वयि ७०८ परंत्वेतत्प्रार्थनंत्वधिकरुणावरुणालये स्वभावादस्माकंत्राणपरेऽ नुवादभूतमित्याह नहिनस्तीति । यतोभवानस्माकंप्रियंस्वयंनहिनस्तिनहंतिप्रत्युतायुर्ददाति ततःप्रार्थनापुनरुक्तिप्रायत्वादनुवादभूतेत्यर्थः ७०९ धनेति । यथावासाधनसंपन्नाःसदमित्पदोक्ते सर्वकालेस्वयंपरिचर्यामाराधनंकुर्मस्तथाकुरु ७१० चतुर्थपंचमाध्यायव्याख्ययोःसमाप्त्यारंभौसूचयन्नाह एवमिति । योदेवइत्थंस्तुतोभोगमोक्षप्रदस्तंपुनःपंचमाध्यायमंत्रानुसारेणवोयुष्मभ्यंव च्मिग्नतशोपिपथ्यंवक्तव्यमितिन्यायादित्यर्थः ७११ अत्रप्रथमेपण्मंत्रास्तेतत्पदार्थप्रतिपादकास्तेष्वाद्यस्यकर्मज्ञानमार्गयोःसंप्रदायप्रवर्तकत्वमीश्वरस्यदर्शयतोऽर्थमाह क्षराक्षरेइतिपंचभिः । अनि त्याभ्युदयफलकत्वेनक्षरपदोक्ताकर्मरूपाऽविद्यामोक्षहेतुर्विद्यात्वक्षरपदोक्ताद्वेअपिइमेब्रह्मणासंबद्धे यतःकर्मविद्यापिचित्तशुद्धिद्वाराब्रह्मप्राप्तिहेतुरितिभावः । पुनःकीदृशे वेदवृक्षेपत्राच्छादितफलव

रोगादिकंचमाभूयादपत्येषुसुतेषुच ॥ विशेषतोत्रनोदेवगवाश्वादिषुवासदा ७०७ वीरान्भ्रातॄन्सुतानग्नीन्राज्ञोवामत्प्रियानपि ॥ अस्मत्तःपूर्वमेवैतान्माहिंसीर्नः स्वयंप्रियान् ७०८ नहिनास्तिभवान्यस्माच्चित्रमायुर्ददातिच ॥ ततोस्मद्विषयेनैवंसंप्रार्थ्यमिहविद्यते ७०९ धनधान्यादिसंपन्नावयंतेपरिचारकाः ॥ यथासु खेनतेकुर्मःपरिचर्यांतथाकुरु ७१० एवंसंप्रार्थितस्तेषांयोददातियतीश्वराः ॥ भोगंमोक्षंचवोदेवस्तंभूयःकथयाम्यहम् ७११ क्षराक्षरेइहप्रोक्तेविद्याविद्येमनी षिभिः ॥ द्वेइमेब्रह्मसंबद्धेनिगूढेवेदपादपे ॥ उभयोरेतयोरीष्टेकर्मज्ञानाख्ययोःशिवः ७१२ अविद्यापठचतेवेदेकर्ममार्गोविनश्वरः ॥ ब्रह्मज्ञानार्थमेषोपिकृतोब्रह्म परोभवेत् ७१३ ब्रह्मज्ञानंसदाब्रह्मपरंताद्विपर्ययतः ॥ अमृतंमोक्षहेतुत्वाद्विद्यास्याच्चयथार्थतः ७१४ कर्मविद्येसदाऽनंतेनादत्वास्वफलंनृणाम् ॥ विनश्यतोय तस्तेनकीर्तितेमुनिपुंगवैः ७१५ विद्याविद्येइमेस्यातांशिवस्यैवप्रसादतः ॥ मनुजानांसदासौम्यानान्यथाकर्हिचित्क्वचित् ७१६ चतुर्विधानांभूतानांयोबीजा न्यधितिष्ठति ॥ यश्चसर्वाणिभूतानिबीजानिचमहेश्वरः ७१७ विचित्रवर्णंकपिलमृषिंसर्वार्थदर्शकम् ॥ हिरण्यगर्भंप्रथमंजातंविश्वस्यकारणम् ७१८

द्गूढतयास्थिते अनयोरीशःप्रवर्तकःफलदश्चशिवएवेत्यर्थः ७१२ प्रथमंक्षरपदोक्तकर्मविद्यारूपाविद्यायाःपरंपरयामोक्षहेतुत्वमाह अविद्येति । एषकर्ममार्गः ७१३ ब्रह्मज्ञानस्ययथार्थत्वेनविद्यापदो क्तस्यब्रह्मप्रापकत्वेनाक्षरत्वममृतत्वंचप्रसिद्धमेवेत्याह ब्रह्मज्ञानमिति । यतस्तद्विपर्ययंब्रह्माकारम् ७१४ उभयोरुक्तरूपविद्याविद्ययोरनंतत्वंस्फुटयति कर्मेति । यतःकर्मचविद्याचएतेस्वंस्वंफलमदत्वा ननश्यतःकिंत्ववश्यंफलंददातिएवतेनहेतुनाअनंतेइत्युक्तेइत्यर्थः ७१५ तयोरीशत्वंशिवस्यस्फुटयति विद्याविद्येइति । हेसौम्यायतयःशिवस्यजीवेभ्यःसंसारिभ्योऽन्यस्यविलक्षणस्यप्रसादात्तयोःसिद्धिः ७१६ द्वितीयस्यार्थमाह चतुर्विधानामितित्रिभिः । यःसर्वेषांजरायुजादीनांभूतानांबीजानिकललादिरूपाण्यधिष्ठायस्थितोयश्चसर्वभूतरूपेणयोनिपदोक्ततद्वीजरूपेणचविवर्तते ७१७ विचित्रेति । वि चित्रवर्णत्वेनकपिलपदोक्तंसर्वार्थदर्शकत्वेनऋषिपदोक्तंचहिरण्यगर्भंवेददानद्वाराज्ञानैर्नानाविषयैर्योबिभर्तितंचहिरण्यगर्भंजायमानंसृष्टिसमर्थंपश्यत्यालोचयतिसईश्वरस्तत्पदार्थोबोध्यइतिद्वयोरर्थः ७१८

७१९ तृतीयस्यार्थंनिरूपयति चतुर्विधानामिति । जरायुजांडजस्वेदजोद्भिज्जरूपंयोनिचतुष्टयंप्रत्येकंबहुधाएकविंशतिलक्षविधंकुर्वन्अनेकशोऽवांतरभेदैर्योगेनसाधर्म्येणजालसमंयःकरोतीत्यर्थः ७२० भूयश्चेति । भूयःप्रलयकालेसकलंसृष्टंस्वकीयेक्षेत्रेमायारूपेसंहरति ततःपुनःसृष्टिकालेनानाविधंपूर्ववत्स्रष्टाव्यत्ययेनद्वितीयाबहुवचनस्थानीयप्रथमाबहुवचनांतपतिपदोक्तान्दिक्पालांदीश्चसृष्ट्वास्वस्य सर्वाधिपत्यंप्रकटयतिसोयमीश्वरइत्यर्थः २१ चतुर्थपंचमयोरर्थमाह प्रकाशयन्नितिपङ्क्तिः । यश्चानड्वान्वृषभइवविश्वभारंवहन्रविरूपोभूत्वासर्वादिशःप्रकाशयन्यातिभ्रमतिस्वेनतेजसाराजतेचलोका नुग्रहाय ७२२ एवमिति । एवंतथाचतुर्विधानांभूतानामेकैकमितिश्लोकोक्तेनप्रकारेणनानाविधाननेकान्योनिस्वभावानधिष्ठायतिष्ठति ७२३ भगवानिति । तथायंभगवान्ऐश्वर्यादिसंपन्नोवरणीय आराध्यःस्त्रीपुरुषादीनांस्वभावान्पूर्वसंस्कारानुरोधिचित्तवृत्तिविशेषरूपान्संतत्यादिप्रयोजकानधितिष्ठतिपाकंफलाभिमुखंनयतिच ७२४ विश्वेति । तथायंविश्वस्यकारणभूतोभगवानेतान्नानायो

ईश्वरःसभवेन्नित्यंयस्तंज्ञानैर्बिभर्त्यपि ॥ दत्वातुचतुरोवेदाननेकार्थसमन्वितान् ॥ जायमानंचतंस्वस्माद्यःपश्यतिसईश्वरः ७१९ चतुर्विधानांभूतानामेकैकंब हुधात्रयः ॥ जालवत्कुरुतेनानायोनिभेदैरनेकशः ७२० भूयश्चसकलंस्वस्मिन्क्षेत्रेससंहरत्ययम् ॥ नानाविधंततस्तद्वत्सृष्ट्वादेवोमहेश्वरः ॥ सर्वाधिपत्यंस्व स्यायंमहात्माकुरुतेतथा ७२१ प्रकाशयन्दिशःसर्वास्तिर्यगूर्ध्वमधस्तथा ॥ अनड्वानिवयात्येषरविर्विश्वधुरंवहः ॥ भ्राजतेतेजसास्वेनलोकानुग्रहकारकः ७२२ एवमुक्तप्रकारेणदेवएकोमहेश्वरः ॥ नानाविधाननेकांस्तुस्वभावांश्चाधितिष्ठति ७२३ भगवान्वरणीयोयंपाकंनयतिसर्वतः ॥ स्त्रीपुंसादिस्वभावांस्तान्प्रजोत्प त्त्यादिहेतुकान् ७२४ विश्वयोनिस्तथैवैतान्पूर्वांश्चपरिणामयेत् ॥ यतोभवतिबालोयंयुवावृद्धश्चसोपिहि ७२५ किंबहूक्तेनतस्यात्रह्यधिष्ठातृत्वमस्यहि ॥ प्रति सर्वाणिभूतानिगुणैश्चसहितान्यपि ७२६ विश्वस्यसंतियस्यात्रगर्भेतदधितिष्ठति ॥ अधिष्ठायचसर्वाणिव्यापारेष्वपियोजयेत् ७२७ एकएवपुमान्ब्रह्मनित्यंसर्व स्यकारणम् ॥ जानाम्यहंहितद्ब्रह्मवेदगुह्यंसनातनम् ॥ नानाज्ञानेषुसंगूढंस्वयंज्योतिःस्वरूपकम् ७२८ जानातिभगवान्ब्रह्मायश्चलोकस्यकारणम् ॥ रुद्रप्र सादतश्चान्येजानंतिचमहाधियः ॥ वेदकारणमीशानंसर्वज्ञंचस्वयंप्रभम् ७२९ देवाश्चमुनयोयेन्येब्रह्माहमितिदेहिनः ॥ तद्विदुस्तन्मयाभूत्वातेऽमृतत्वंहिभेजिरे ७३०

निदेहान्पूर्वान्पूर्वावस्थाशालिनःपरिणामयेदुत्तरावस्थांनयेत् यतईश्वरप्रयुक्तपरिणामिस्वभावादयंदेहोबालादिवृद्धांतरूपोभवतीत्यर्थः ७२५ तस्यसर्वाधिष्ठातृत्वेकैमुत्यन्यायंदर्शयति किंबहूक्ते नेति । तस्याधिष्ठातृत्वंप्रतिअभिलक्ष्यबहुनाविशेषतउक्तेनकिं यतोयस्यास्यविश्वस्यजगतोगर्भेउक्तानिस्वभावलक्षणगुणसहितानिभूतानिसंतिवर्त्तंतेतद्विश्वमेवसईशोधितिष्ठतिअधिष्ठायचसर्वाणिवि श्वांतर्गतानिभूतानिस्वस्वव्यापारेषुयोजयतीतिद्वयोःसंबंधः ७२६ । ७२७ षष्ठस्यार्थमाह एकएवेतित्रिभिः । सउक्तलक्षणःपुमान्सर्वस्यकारणत्वादभिन्ननिमित्तोपादानत्वाद्ब्रह्माद्वितीयोभवतित द्ब्रह्माहंश्वेताश्वतरनामावेद्मि । कीदृशं वेदगुह्यंउपनिषद्भागेनप्रदर्शितं । पुनःकीदृशं लौकिकघटादिज्ञानेष्वपिस्वयंप्रकाशचिद्रूपेणस्थितं गूढंमूढैरलक्षितं ७२८ जानातीति । तज्जगत्कारणंतत्त्वंरुद्रा नुग्रहात्ब्रह्माहिरण्यगर्भःअन्येचसुधियोजानंति कीदृशं वेदकारणतयास्फुटीकृतसर्वज्ञताकं ७२९ देवाइति । देवादयोन्येचदेहिनोयेयेतत्तत्त्वंविदुर्जानंतिस्मतेतेऽमृतत्वंगताः ७३०

अथसप्तमादयोद्वादशांतामंत्रास्त्वंपदार्थतयात्मानंप्रतिपादयंतीतित्रिसूत्र्यस्तेषांक्रमेणार्थमाह कामेत्यादिना देहानांग्रहणेइत्यतःपूर्वग्रंथेन । यःपुरुषोजीवतामापन्नःसन् कामादिरूपान्सत्वरजस्तमइत्याकारान्वागुणानुपाधिगानन्वेतिभजते यथाजलंस्वसंयोगिवह्निपुष्पादीनांधर्मानौष्ण्यगंधादीन्भजतितथेत्यर्थः ७३१ तादात्म्यमिति । गुणैस्त्रिगुणात्मकैरुपाधिभिस्तादात्म्याध्यासंप्राप्य रागादिदृष्टद्वाराकर्माणिकरोतिअदृष्टद्वाराचकर्मणांफलानिकृत्वातेनउपाधितादात्म्याध्यासेनैवकर्मफलानांभोक्ताभवति कीदृशः वस्तुतएकोमहेश्वरः पुनःकीदृशः नानारूपैःसत्वादिगुणैस्तादात्म्याध्यासाद्विश्वरूपोनानारूपइतिद्वयोरर्थः फलस्येत्येकत्वंजातौ ७३२ । ७३३ उत्तममिति । तथायमात्माप्राणाधिपःप्राणतादात्म्यापन्नःसंस्तेनप्राणेनक्रियाशक्तिरूपेणकृतैःकर्मभिर्देवयानपितृयाणक्षुद्रजंतुभावरूपमुत्तमादिमार्गत्रयंगच्छन्सर्वतोयातिभ्रमति ७३४ अष्टमार्थमाह हृदयेनेतित्रिभिः । तथायंपुमान्सर्वपरिच्छेदातिगतोपिहृदयदेशधर्माध्यासादंगुष्ठपरिमाणोभवतितथाहमाअहंकारेणसंकल्पेनमनोधर्मेणसहितस्तथाबुद्धेर्गुणैर्धर्मैर्वृत्तिरूपैःपरिणामैः कीदृशैः आत्मनाप्यविद्याशबलेनविवर्त्तोपादानतयारचितैरतएवस्वप्नदृष्टसमैःसाक्षिगमंतराभानानर्हैर्युक्तस्तद्वासक्ततयालो

कामक्रोधादिकानित्यंतथासत्वादिकानपि ॥ योऽन्वेतिपुरुषोनीरंयद्वदौष्ण्यादिकान्गुणान् ७३१ तादात्म्यंचगुणैःप्राप्यकर्माणिकुरुतेभुवि ॥ फलानामपितेनैव भोक्ताभवतिचेश्वरः ॥ कर्ताचतद्वदेवैषफलस्यैकोमहेश्वरः ॥ विश्वरूपःसत्वरजस्तमोगुणसमन्वितः ७३३ उत्तमंमध्यमंमार्गमधमंचसमाव्रजन् ॥ प्राणाधिपः कृतैस्तैनकर्मभिर्यातिसर्वतः ७३४ हृदयेनसमोभूत्वासर्वमानातिगःपुमान् ॥ अंगुष्ठमात्रोरविवत्स्वयंज्योतिःप्रकाशते ७३५ अहंसंकल्पसंयुक्तोगुणैर्बुद्धिकृतैः सदा ॥ आत्मनारचितैस्तद्वत्स्वप्नदृष्टसमैरपि ७३६ बुद्धेरल्पप्रमाणत्वात्तत्रस्थःपुरुषोमहान् ॥ आराग्रमात्रोभवतिबुद्ध्याहष्टोमनीषिभिः ॥ निकृष्टोजीवतांगत्वा सर्वोत्कृष्टःपरःपुमान् ७३७ बुद्धौस्थितस्यजीवस्यसूक्ष्मतायेहविद्यते ॥ तस्यामानमिदंप्रोक्तंविद्वद्भिःसूक्ष्मदर्शिभिः ७३८ केशांतःशतधाभिन्नःपुनश्चशतधाकृतः ॥ सयावांस्तावतातुल्योजीवोज्ञेयोमनीषिभिः ७३९ ब्रह्मविज्ञानउत्पन्नेबुद्ध्युपाधिपरिक्षयात् ॥ सएवानंतरूपःस्याज्जीवोब्रह्मात्मरूपतः ७४० आत्मान स्त्रीपुमान्नापिनैवचायंनपुंसकः ॥ यद्यच्छरीरमादत्तेतत्तत्स्यान्नदवत्पुमान् ७४१ बाह्यैर्विषयजैर्भोगैरांतरैश्चसुखेच्छया ॥ अन्नपानादिसंप्राप्याद्वृद्धिमे तिचजायते ७४२

चितःसन्रविवत्स्वयंज्योतिष्ट्वेनाविर्भवतीतिद्वयोरर्थः । एतेनबुद्धिगुणात्मगुणपदयोःसामानाधिकरण्यंसूचितम् ७३५ । ७३६ तुरीयपादार्थमाह बुद्धेरिति । तथायंपुमान्बुद्धेरल्पंपरिमाणमध्यापन्नःबुद्धौस्थितःप्रतिबिंबितःसन् आराग्रमात्रमर्थमेभिर्निीतद्ग्रतुल्यपरिमाणोभवति एवंजीवतांगत्वाबुद्ध्याऽवरोनिकृष्टोपिसन्मनीषिभिर्विवेकिभिर्नास्तिवरोयस्मादितिनुत्तमस्याऽवरपदोक्तेनसर्वोत्कृष्टेनदृष्टइत्यर्थः ७३७ नवमार्थंदर्शयति बुद्धावितित्रिभिः । तस्यांसूक्ष्मतायामुपलक्ष्यायांसत्यांसूक्ष्मतायाउपलक्षणार्थम् ७३८ केशांतइति । केशस्यांतोऽग्रभागःसकेशभागोयावान्यत्परिमाणः ७३९ यदात्वयमात्मानंब्रह्मत्वेनजानातितदानंतोभवतीत्याह ब्रह्मेति ७४० दशमस्यार्थमाह आत्मेति । आत्मास्वतःस्त्रीत्वादिहीनोपितत्तद्देहतादात्म्याध्यासरूपाऽविद्यैवस्त्र्यादिर्भाभवति ७४१ एकादशार्थंकथ्यते बाह्यैरितिचतुर्भिः । तथायमात्माऽविद्ययास्वरूपानंदविस्मृत्योपाधिरूपमात्मानंमन्यमानःसुखेच्छयाकृतैर्दर्शनस्पर्शनादिजन्यैर्बाह्यैःसंकल्पादिजन्यैरांतरैश्चभोगैर्दीपपदोक्तैः 'शब्दादीन्विषयानन्यइंद्रियाग्निषुजुह्वति' इतिभगवद्गीतोक्तैस्तथाअन्नपानसंप्राप्यातथांबुवृष्टिपदोक्तपानसंप्राप्यावृद्धिमेतिदेहादिपुष्टिंभासुतस्त्वात्मनोवृद्धिंमन्यतेजायते—

—चतत्तद्वासनावासितोजन्मानिलभतेचेत्यर्थः ७४२ एषुजन्मादिषुकर्मापिनिमित्तमित्याह पुण्येति । स्पष्टम् ७४३ देहविशेषलाभेतत्तल्लोकलाभेचकर्मनिमित्तमित्याह कर्मानुसारतइति । समाप्तिःसम्यक्प्राप्तिस्तदर्थंनपुंसकादिसंज्ञाश्रयान्देहांस्तत्रतत्रस्थानेलोकेक्रमेणप्रयातिएवंनानाजनौनानाविधजन्मसुयातिभ्रमतीतिद्वयोःसंबंधः ७४४ । ७४५ द्वादशार्थउच्यते स्थूलानिति द्वाभ्यां । अयमात्मायन्नटवत्स्थूलान्गजादिदेहान्सूक्ष्मान्पुत्तिकादिदेहान्प्रयाति तत्रस्वपदोक्तायाबुद्धेर्गुणानांसमावेशःसंसर्गोपिहेतुरित्यर्थः ७४६ नकेवलमुक्ताएवसंसरणहेतवःकिंतुनिकृष्टत्वप्रयोजकंस्वरूपाज्ञानमप्यन्यन्मुख्यंनिदानंबोध्यमित्याकारमुत्तरार्धार्थमाह निकृष्टत्वमिति । निकृष्टत्वंकार्पण्यलक्षणनिकृष्टत्वप्रयोजकंकारणमज्ञानंसमाप्यस्वस्मिन्कल्पयित्वाएकादशेंद्रियैर्ज्ञानकर्मेन्द्रियमनोरूपैःक्रियागुणात्मगुणपदाभ्यामुक्तैस्तादात्म्यंप्राप्तःसन्वस्तुतःसर्वसंगविवर्जितोप्यात्मातेषांदेहानांग्रहणेहेतुर्भवतीत्यर्थः ७४७ एवंत्वंपदवाच्यार्थउक्तोऽथतस्यलक्ष्यार्थंतत्पदार्थाभेदेनदर्शयतित्रयोदशोमंत्रस्तदर्थउक्तप्रायइत्याह अनाद्यनंतइति । यतोजन्मनाशौनस्तस्ततोऽनाद्यनंतोयःकललादिसर्वबीजस्थितःपुरुषउक्तस्तद्रूपएवायंतत्पदार्थस्तद्विज्ञानफलंसर्वपाशच्छेदरूपम

पुण्यापुण्याभिधंकर्मनिमित्तमिहतद्भवेत् ॥ जन्मवृध्यादिकेकार्येसर्वदेवयतीश्वराः ७४३ कर्मानुसारतश्चात्मासुखदुःखसमाप्तये ॥ अनुक्रमेणसंसारेयातिदेहाननेकशः ७४४ नपुंसकस्यत्वादेवःस्त्रियोवापुरुषस्यवा ॥ भूमिस्वर्गादिकेस्थानेयातिनानाजनौपुमान् ७४५ स्थूलानपिचसूक्ष्मान्सावहून्देहान्प्रयात्यपि ॥ बौद्धैर्गुणैःसमाविष्टोनटवत्पुरुषःपरः ७४६ निकृष्टत्वंसमाप्यैवजीवोभवतिकारणम् ॥ एकादशेंद्रियैःसार्द्धंतादात्म्यंसमुपागतः ॥ देहानांग्रहणेहेतुःसर्वसंगविवर्जितः ७४७ अनाद्यनंतएवायंसूक्ष्मोयःकललस्थितः ॥ उक्तोमयापुरातस्यनास्तिनाशोजनिस्तथा ॥ अस्यविज्ञानतःपाशच्छेदःपूर्वंमयेरितः ७४८ प्राणःप्रतर्दनायोक्तोयःपुरंद्रेणसत्वयम् ॥ अहंब्रह्मेतिबोधेनग्राह्योभावाभिधेनहि ७४९ प्राणंश्रद्धांचभूतानिमहांतिदशकंतथा ॥ इंद्रियाणिमनश्चैवतद्वदन्नंशरीरिणाम् ७५० वीर्यंतपश्चमंत्रांश्चकर्मलोकान्सनामकान् ॥ कलाएताःससर्जादौसर्वदेहस्थितोहियः ७५१ यस्मात्कलाकरस्तस्माद्भावाभावकरःशिवः ॥ आनंदात्मास्वयंज्योतिर्मंगलानांहिमंगलम् ७५२ यएनंपरमात्मानंज्ञातवंतोमुनीश्वराः ॥ देहंसकारणंतेत्रत्यक्तवंतोयतीश्वराः ७५३ एषएवंमयादेवःकारणंपरिकीर्तितः ॥ परपक्षव्युदासेनपुनरेवंवदामिवः ७५४

पिपूर्वमुक्तमित्यर्थः ७४८ ऐक्यपरस्यचतुर्दशस्यार्थमाह प्राणइति । यइंद्रेणप्रतर्दनायप्राणत्वेनोक्तःसआत्माभावपदोक्तेनाहंब्रह्मेत्याकारबोधेनलभ्यतइत्यर्थः मंत्रप्रथमार्द्धेनअन्प्राणःईडेनईडचेनेंद्रेणआख्यानिरूपणंयस्येत्याकाराऽनीडाख्यपदव्युत्पत्तिःसूचिता ७४९ तथायमेवात्माप्रश्नोपनिषत्प्रसिद्धानांकलानांस्रष्टेत्याह प्राणमितिद्वाभ्यां । प्राणआत्मनउत्क्रमणादिसाधनंश्रद्धाचिकीर्षारूपापंचमहाभूतानिएवंसप्तइंद्रियाणांदशकमष्टमंमनोनवमंअन्नंदशमंततोवीर्यंसामर्थ्यंततस्तपस्ततोमंत्राःस्मर्यमाणास्त्रयोदशास्ततःकर्मयागादिरूपंततोलोकाःफलानिततस्तेषांलोकानांनामषोडशं एताःकलाउत्तरोत्तरंप्रतिकारणभूताःससर्जेतिद्वयोरर्थः ७५० । ७५१ यस्मादिति । उक्तकलाहेतुत्वादेवयावद्दृश्यस्यभावाभावयोरुदयास्तमययोर्हेतुर्भवतितितश्चाद्वितीयत्वादानंदादिरूपइत्यर्थः ७५२ एवंज्ञानफलमाह यएनमिति । सकारणंदेहंशरीरत्रयरूपंबंधमितियावत् ७५३ पंचमषष्ठाध्यायव्याख्ययोःसमाप्त्यारंभौसूचयति एषएवमिति । एषदेवएवमागमधियापंचमाध्यायउक्तोऽथपुनःषष्ठेपरपक्षनिरासयुक्तिपूर्वकमेवंवक्ष्यमाणविधयावच्मि ७५४

तत्रस्वभावमित्यादेःप्रथमस्यार्थमाह कालेत्यष्टभिः । केचित्कवयःकालादिरूपान्जगद्धेतून्वदंतिपरंतुतेएतेकालादिकारणवादिनोवेदार्थेपरिनिष्ठितानिष्णातानभवंति ७५५ वेदार्थइति । यतस्ते वेदार्थेऽतिगंभीरेनिर्णेतुमशक्ताअतएवमोमुह्यमानाव्यामोहंगताःसंतोयत्किंचिद्बहुजल्पंति ७५६ तत्त्वविद्भिस्तेषांवचनंनग्राह्यंमानयुक्तिभ्यांहीनत्वादित्याह नतेषामिति ७५७ तत्रमानहीनतां स्फुटयति कालादीति । कालादयोजगत्कारणमित्यत्रार्थेवेदवाक्यरूपंप्रत्यक्षंतावन्नैवास्तिलौकिकप्रत्यक्षमपितत्रनास्तिजगत्कारणस्येंद्रियायोग्यत्वात् एवंप्रत्यक्षरूपमूलाभावेअनुमानंस्मृतिरूपंतर्क रूपंवानप्रवर्ततेनिर्मूलस्यकुत्राप्यप्रामाण्यादित्यर्थः ७५८ युक्तिहीनतांस्फुटयति कालादीनिचेति । कालादीनिहिजडान्येवकारणतयाकल्प्यानि जडानांस्वातंत्र्येणहेतुत्वंतुबाधितमित्यर्थः ७५९ जडमिति । किंचजडत्वस्यकार्यत्वव्याप्यतायादर्शनात्कालादीनामपिकिंचित्कारणांतरंकल्प्यंस्यात् तथाचतद्धेतोरेवहेतुत्वमस्तुकिंतेनेतिन्यायेनमूलकारणस्यैवहेतुत्वमुचितंनकालादीनामितितन्मतं युक्तिहीनमित्यर्थः नचतैर्जडत्वस्यश्रुतिसिद्धमायायांव्यभिचारःशंक्यः तैःश्रुत्यर्थाननुसरणादितिभावः ७६० ननुवेदरूपादित्यैभास्वतिकथंतेषामेवंव्यामोहइतिचेन्न ईशमायाचरितस्यापर्य नुयोज्यत्वादित्याह नाश्चर्यमिति । इदंबहुभाषणमत्रकारणत्वेतेषांवादिनांयद्दृश्यतेतन्नाश्चर्यंयत्स्वयंप्रकाशस्यदेवस्यमायाविनोद्भुतोमायालक्षणोमहिमा ७६१ ईशेनमाययाजगद्भ्रामणंसदृष्टांतंद

कालस्वभावमुख्यान्यान्हेतून्केचिद्वदंतिये ॥ कवयस्तेपरंनैतेवेदार्थपरिनिष्ठिताः ५५ वेदार्थेनिर्णयंकर्तुंनशक्ताःकर्हिचिद्द्विजाः ॥ मोमुह्यमानाजल्पंतिजात्यंधस दृशंबहु ५६ नतेषांवचनंक्वापिग्राह्यंवेदार्थकोविदैः ॥ मानहीनंविहीनंचयुक्त्यातद्वद्यतीश्वराः ५७ कालादिकारणेनास्तिवेदवाक्यंयतीश्वराः ॥ प्रत्यक्षंजगतोय स्यात्कारणंतन्नविद्यते ॥ अनुमानंततोनास्तिमूलहीनत्वहेतुतः ५८ कालादीनिचकल्प्यानिजडान्येतानिकारणम् ॥ चेतनेनविनानैवभवंत्यत्रतुकर्हिचित् ५९ जडंसर्वंभवेत्कार्यंकालादिचजडंतथा ॥ ततःकारणतातेषांयुक्तिहीनायतीश्वराः ६० नाश्चर्यमिदमत्रैषांमूढानांभाषणंमुहुः ॥ स्वयंज्योतिःस्वरूपस्यमहिमात्राय मद्भुतः ॥ संसारचक्रमखिलंभ्राम्यतेयस्यमायया ६१ वायुनाभ्राम्यतेतद्वत्तूलंनभसिसर्वतः ॥ तद्वद्बुद्धिमतांबुद्धीर्भ्रामयत्येषदेहिनाम् ६२ येनावृतमिदंसर्वंसर्वदा ज्ञानरूपिणा ॥ कालकालोगुणैर्युक्तःसर्ववित्कर्मणांप्रभुः ६३ पंचभूतस्वरूपेणविवर्तंयोधिगच्छति ॥ चिंतनीयःससर्वात्मासर्वदामुक्तिकामिना ६४ ईश्वरःशुद्ध मनसाकृत्वायज्ञादिकाःक्रियाः ॥ व्यापारेभ्यःपुनःकृत्वानिवृत्तिंमनसासह ॥ इंद्रियाणांविजानीयादविद्यादेःपरंस्थितम् ६५ अविद्ययैकयाऽयुक्तंपुण्यपापद्वयेन वा ॥ त्रिभिःसत्वादिभिर्वापिमहाभूतैःसकारणैः ७६६

ज्ञेयानि वायुनेति । स्पष्टम् ७६२ द्वितीयार्थमाह येनेतिद्वाभ्यां । येनेश्वरेणज्ञानरूपेणेदंसर्वंविश्वमावृतंवेष्टितं यश्चकालस्यापिकालःस्वस्मिन्नुपसंहारकः गुणैःसत्यकामत्वादिभिर्युक्तः सर्ववित्सर्वज्ञः कर्मणांप्रभुःफलदःआकाशादिभूतपंचकरूपेणविवर्तमवास्तविकान्यथाभावंगताचसईश्वरःसर्वदामुमुक्षुणाचिंत्यइतिद्वयोरर्थः । श्रुतौचिंत्यमित्यत्रलिंगव्यत्ययस्तुछांदसः ६३ । ६४ तृतीयार्थमाह ईश्वरइतित्रिभिः । ईश्वरपदंपूर्वान्वितत्वेनदर्शितं मुमुक्षुःप्रथमंशुद्धेनफलाभिसंधिरहितेनमनसाकृतैर्यागादिकर्मभिश्चित्तशुद्धिंसंपाद्यततःसमनसाभिंद्रियाणांस्वस्वव्यापारेभ्योनिवृत्तिं कृत्वापायत्वंपमाणाविद्यादिभ्यःपरंवस्तुतःकालत्रयेप्यसंबद्धमात्मतत्त्वंजानीयादित्यर्थः । एतेनात्मतत्त्वस्यतत्त्वांतरेणायोगंसमेतिजानातीत्याकारकस्तुरीयपादार्थःसूचितः ७६५ उक्तंस्फुटयंस्त त्वांतराण्यंक्यादिरूपेणदर्शयति अविद्ययेति । अयुक्तमितिच्छेदः अविद्यारूपेणएकेनतत्त्वेनायुक्तंसदाऽसंबद्धमेवंपुण्यपापाभ्यांसत्वादिगुणरूपैस्त्रिभिःपंचमहाभूतानितत्कारणमव्यक्तंबुद्धिरहंकारश्चए तैरष्टभिर्वाऽसंबद्धमित्यर्थः । अथवाऽपरैश्चैतावित्प्रहादिरूपैरष्टभिस्तत्त्वैःपंचदशपंचदशभिःपापैर्दर्शितैर्युक्तंतथाकालेनतत्त्वच्छेदकेनात्मपदोक्तबुद्धिधर्मैश्चायुक्तमितिद्वयोरर्थः ७६६

७६७ पुनर्विवेकिनोमोक्षप्रकारमेवविशदयतश्चतुर्थस्यार्थमाह कृत्वेतित्रिभिः । यएषमहेश्वरआत्मानानाकर्माणित्रैगुण्याभिमानेनकृत्वाबाह्याभ्यंतरान्भावांस्तत्तद्व्यापारेषुयोजयति स एवयदातेषांबाह्याभ्यंतरभावानांस्वस्वरूपेअभावमालोचयतितदाकर्मणांक्षयोज्ञानाग्निनादाहोभवतितितस्तेभ्योभावेभ्योपरोविविक्तःसन्स्वात्मरूपंप्रज्ञानवलाद्यातीतित्रयाणांसंबंधः ७६८ ७६९ । ७७० ईशस्यजगत्कारणत्वादिनाऽद्वयत्वादिकंदर्शयतःपंचमस्यार्थउच्यते सर्वस्येतित्रिभिः । यःपुमानस्यकार्यजातस्यपुरापूर्वकालेमायाशवलरूपेणकारणतयास्थितस्तथाऽविद्यायाःसकार्यायायश्चेतनत्वेनसंयोगश्चिदाभाससंबंधेनचेतनायमानतेतियावत् तत्रचकारणंभवति ७७१ कालेति । यश्चमहात्मभिःकालत्रयानवच्छिन्नोवर्णिताभिःप्राणादिषोडशकलाभिर्हीनत्वलक्षणेनशुद्धरूपेणसाक्षात्कृतः ७७२ तंदेवमादावुपास्यज्ञानोदयद्वारावहवःस्वंब्रह्मात्मरूपंगताइत्याह तंविश्वरूपमिति स्पष्टम् ७७३ षष्ठार्थंदर्शयति संसारेतिपंचभिः । यःसंसारवृ

बुद्ध्याहमाष्टभिर्वापिसंसारेवापरैरपि ॥ कालेनचतथाबुद्धिगुणैःसूक्ष्मतमैरपि ७६७ कृत्वाकर्माणिसर्वाणिगुणैश्चविविधैःसह ॥ भावांश्चविविधांस्तद्वद्योयोजयति नित्यशः ६८ व्यापारेषुनिजेष्वेकःसुखदुःखप्रसिद्धये ॥ तेषामात्मकृतानांस्यादभावेकर्मणांक्षयः ६९ कर्मक्षयेपरंब्रह्मयातितेभ्यःसदापरः ॥ आत्मरूपंततः स्वात्मज्ञानादेषमहेश्वरः ७७० सर्वस्यास्यपुरादेवःस्थितोऽविद्याश्रयःपुमान् ॥ अविद्यायाश्चसंयोगेचेतनत्वेनकारणम् ७१ कालत्रयादतीतश्चप्राणाद्याभिर्विवर्जितः ॥ कलाभिःसकलाभिःसद्दृष्टःपूर्वैर्महात्मभिः ७२ तंविश्वरूपंसर्वात्मभूतमीडचंसुरासुरैः ॥ स्वचित्तेषुस्थितंदेवमुपास्यादौस्वमागताः ७३ संसारकालाविद्यानामन्योय परतःस्थितः ॥ विश्वंप्रजायतेयस्माद्धर्मदःपापहापुमान् ७४ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरितम् ७५ उत्पत्तिःप्रलयश्चैवभूतानामागतिर्गतिः ॥ विद्याचैवाप्यविद्याचषट्कंचेदंभगःस्मृतः ७६ तस्येशःकर्मणांस्वामीमरणादिविवर्जितः ॥ प्राणिनांहृदयावासःस्वयंज्योतिःसदाद्वयः ७७ विश्वस्यस्थानकंतद्वत्प्रकाशस्यप्रकीर्तितः ॥ यस्तंविज्ञायपुरुषःकृतकृत्यःप्रजायते ७८ तमीश्वराणांपरमंमहेशानंतथैवच ॥ देवतानांपरंदैवंपतीनांपरमंपतिम् ७९ जानीमोयतयःसर्वेवयमीडयंसुरासुरैः ॥ भुवनानांनियंतारंस्वयंज्योतिषमद्वयम् ७८० ईशाब्रह्मादयःप्रोक्तादेवतावासवादयः ॥ पतयश्चमरीच्याद्याभुवनानिचतुर्दश ८१ नियंतैषांपरोयस्मादात्मानान्योयतीश्वराः ॥ अतएनंविजानीमोवयंवेदप्रमाणतः ७८२

क्षात्कालादविद्यायाश्चपरतःस्थितोयतस्तद्भिन्नोयश्चविश्वोपादानंस्मरणेनधर्मदःपापहाच ७७४ ऐश्वर्यस्येति । यश्चैश्वर्यादिषड्रूपस्यउत्पत्त्यादिषड्रूपस्यवाभगपदार्थस्यईशःकर्तुमकर्तुमन्यथाकर्तुंचशक्तोमरणादिहीनःसर्वेषामंतस्थश्चेतित्रयाणांसंबंधः । तत्रागतिः परलोकादवरोहः अविद्याविपर्ययः ७७५ । ७७६ । ७७७ विश्वस्येति । यश्चविश्वस्यवाभगपदार्थस्यईशःकर्तुमकर्तुमन्यथाकर्तुंचशक्तःसर्वस्यप्रकाशस्यएकःस्थानमाश्रयस्तदेवंविज्ञायकृतकृत्योभवतीत्यर्थः ७७८ सप्तमार्थमाह तमीश्वराणामितिचतुर्भिः । तंदेवमीश्वराणामपिपरमंमहेशानमीश्वरं पतीनांप्रजापतीनां स्पष्टमन्यद्द्वयोः ७७९ । ७८० षष्ठचंतेश्वरादिपदेरुक्तानभिनयति ईशाइति । प्रजानांपतयोमरीचिप्रभृतयः ७८१ नियंतेति । एषामीश्वरादीनांनियंतापरमात्मैवभवतितंचप्रमाणांतराविषयमपिवेदवाक्यमेवतात्पर्येणबोधयतीत्यर्थः ७८२

कथंवेदस्तंबोधयतीत्याकांक्षायामष्टमनवमयोरर्थमाह तस्येत्यष्टभिः । तस्यदेवस्यस्थूलप्रपंचात्मकदेहरूपंकार्यंनास्तितथाचक्षुरादिघटितंकारणंसूक्ष्मदेहाख्यमपिनास्ति ७८३ समानइति स्पष्टम् ७८४ मायाख्येति । तस्यमायाख्याशक्तिःप्रसिद्धा याप्रथमंज्ञानशक्तिक्रियाशक्तिरूपाभ्यांद्विविधा तत्रक्रियाशक्तिर्बलादिरूपैर्ज्ञानशक्तिश्चप्रमाणादिरूपैःसहस्रधाभिन्नेतिद्वयोरर्थः ७८५ । ७८६ पुत्रादेरिति । यथापुत्रस्यपितापतिःस्वामीप्रसिद्धः राजातुईशोनियंतेति तथाऽस्यात्मनःपतिःईश लिंगंचेतत्त्रयमपिनास्ति तद्धिसगुणस्यपरिच्छिन्नस्यस्यात् आत्मातुनि र्गुणाद्वितीयत्वेनपूर्णश्चभवतीतिद्वयोरर्थः ७८७ । ७८८ सकारणमिति । सपरमेश्वरःसर्वस्यकारणंकरणाधिपानांचक्षुरादीनांनियंताचभवतितस्यतुजनकःकोपिनास्तीत्यर्थः ७८९ तदनु ग्रहादेवतद्विज्ञानमित्येतत्प्रार्थनापरस्यदशमस्यार्थमाह तंत्विति । योदेवोलूतावन्मायायास्तंतुस्थानीयैर्भूतादिकार्यैर्जीवानावेष्टयित्वास्थितःसोद्वयब्रह्मरूपोऽस्माकमधिकारिणांचित्तस्थंनिर्गुणं

तस्यदेवस्यविश्वाख्यंकार्यंदेहात्मकंनहि ॥ करणंचननेत्रादिकिंचिदस्तिमहात्मनः ७८३ समानस्तेनलोकेस्मिन्विद्यतेकोपिनैवहि ॥ कुतोधिकोभवेत्तस्माद्यतो नास्तिसमोपिच ८४ मायाख्यास्यपराशक्तिःश्रूयतेविविधेवसा ॥ स्वाभाविकीभवेज्ज्ञानक्रियाभ्यांयासहस्रधा ८५ बलवीर्यादिभेदेनक्रियाशक्तिर्विभिद्यते ॥ प्रमाणसंशयाद्यैस्तुज्ञानशक्तिस्तथैवच ८६ पुत्रादेश्चयथादृष्टःपतिःपित्रादिकोनृभिः ॥ ईशिताचतथैवायंराजादिःसर्ववर्णिनाम् ८७ यथैवगमकोदृष्टोधूमोव ह्नेःसदानृभिः ॥ नतथास्यपतिःकश्चिदीशिताचात्रविद्यते ॥ वस्तुतोनैवलिंगंचनिर्गुणस्यमहात्मनः ८८ सकारणंसमग्रस्यविश्वस्यपरमेश्वरः ॥ करणेशाश्च सूर्याद्यास्तेषामेषनियामकः ॥ नचास्यजनकःकश्चिद्विद्यतेवानियामकः ८९ तंतुनाभसमोदेवोमायाजैस्तंतुभिःसदा ॥ महाभूतादिभिःसर्वानस्मानावृत्त्य तिष्ठति ७९० एकएवस्वयंज्योतिरस्माकंब्रह्मसोद्वयम् ॥ प्रकाशयतुचित्तस्थमात्मनोनिर्गुणंपरम् ९१ एकःपुमान्स्वयंज्योतिःसर्वभूतगुहाशयः ॥ सर्वव्या पीयथाकाशोह्यंतरात्मातथैवच ९२ सर्वस्यकाष्ठसंघस्यवन्हिर्व्यापीयथैवच ॥ कर्मणांपुण्यपापानामध्यक्षःफलदायकः ९३ स्वयंसर्वेषुभूतेषुयतोवसतिसर्वगः ॥ द्रष्टासर्वत्रबुद्धीनांसाक्षीचैतन्यरूपतः ९४ वस्तुतःकेवलोनात्रसाक्षित्वमपिविद्यते ॥ गुणोवानिर्गुणस्तस्मात्पुरुषःसंगवर्जितः ९५ एकोवशीनिष्क्रियाणांजडा नांबहुधाह्यियः ॥ कुरुतेस्वप्रवेशेनभूतानांबीजमात्मजम् ९६ एकएवसदादेवोविश्वोत्पत्तिविधायकः ॥ आत्मचित्तस्थितंतंयेब्रह्मचर्यादिसाधनाः ९७ धीराःप श्यंतिविद्वांसस्तेषांशांतिर्भवेद्ध्रुवा ॥ दुःखानांमोक्षसंप्राप्त्यानेतरेषांकदाचन ७९८

रूपंप्रकाशयत्वितिद्वयोरर्थः ७९० । ७९१ एकादशार्थमाह एकइतिचतुर्भिः । यथाकाशोव्यापीतथात्मापि यथाकाष्ठेष्वग्निर्गूढस्तथासर्वस्यांतरात्मागूढःकर्मणांफलदायकत्वलक्षणा ध्यक्षतावानितिद्वयोरर्थः ७९२ । ७९३ स्वयमिति । सदेवःसर्वभूतशरीरेष्वात्मरूपेणवसति कीदृशः सर्वधीवृत्तीनांद्रष्टृत्वलक्षणसाक्षित्ववान्यतश्चिदेकरूपः ७९४ वस्तुतइति । सदे वोवस्तुतःकेवलरूपोयतोऽस्यसाक्षित्वंगुणोवानविद्यतेअतएवनिर्गुणइत्युक्तइत्यर्थः ७९५ द्वादशार्थमाह एकइतित्रिभिः । योदेवएकोऽखंडचिद्रूपःअनेकेषांजडानांस्वतोनिष्क्रियाणांप्रवृत्त्यशक्ता नांवशीस्वातंत्र्येणप्रवर्त्तयितायश्चबहुधास्थितानांभूतानांव्यष्टीनांबीजभूतमात्मजंहिरण्यगर्भरूपंस्वयमुपाधिष्वनुप्रविश्यकरोति ७९६ एकएवेति । यश्चएकएवविश्वोपादानंतमंतस्थंयेपश्यंतिते षामेवमोक्षेणदुःखानांशांतिर्भवतीतिद्वयोरर्थः ७९७ । ७९८

त्रयोदशार्थमाह नित्यानामित्येकविंशतिश्लोकैः । यआत्मालोकेनित्यत्वेनप्रसिद्धानामाकाशादीनांनित्यश्चेतनत्वेनप्रसिद्धानांनानाप्रमातॄणांचेतनः यदीयांनित्यतांचेतनतांचादायैवान्येभावा नित्याश्चेतनाश्चाख्यायंतेइतियावत् अतोन्यदार्त्तमितिनान्योतोस्तिद्रष्टेतिचश्रुत्यंतरात् तथायस्यस्वरूपभूतंसुखंशांतिरूपमेतैर्ब्रह्मचर्यादिसंपन्नैःप्राप्यतेइत्युक्तंसोयमात्मायदात्रअज्ञानादविद्यानिवृ त्याभासतेतदासर्वेअविद्याजाःपाशाश्छिद्यंतेइत्येकविंशेनाभिसंबंधः ७९९ अथतल्लाभसाधनतयानिर्दिष्टौसांख्ययोगौनिरूपयंस्तत्रविचारात्मकंसांख्यमभिनयति अनिर्देश्यमित्यष्टादशभिः । मुमुक्षुरितिइत्थंअस्यब्रह्मणःप्राप्त्यैचिंतयेत् इतिकथम् तद्ब्रह्मअनिर्देश्यंवाङ्मनसागोचरंवेदज्ञावदंतितत्तत्त्वंकथंजानीयाम् तावदेवमहंविचारयामिकिंब्रह्मसुखंममभातिनवाभानस्वभावमभानस्वभा वंविपरीतंवाभाति वस्तुतोभानरूपत्वेपिकेनचननिमित्तेनविषयत्वादिनाभासमानंवेतिद्वयोरर्थः ८०० । ८०१ अयंविचारोगुरूपदेशानंतरमेवकार्यःश्रवणोत्तरमेवासंभावनानिवृत्तयेमननविधा नादित्याशयेनाह यदेति । मुमुक्षुर्यदात्वमानंदात्मकंब्रह्मासीत्येवंगुरुणादेशितउपदिष्टोभवेत्तदैवंचिंतयेदित्यन्वयः ८०२ तत्रभातिनभातीत्युक्तयोःपक्षयोरन्यतरमवधारयितुमात्मनःस्वरूपभूत स्यानंदस्यप्रकाशाद्भेदोऽभेदोवेतिविचार्यमित्याह आनंदात्मेति । आनंदरूपआत्मा 'आनंदोब्रह्मेतिव्यजानात्' इत्यादिश्रुतिप्रसिद्धःप्रकाशाच्चिद्वस्तुनःसकाशाद्भिन्नोऽभिन्नोवा । तत्रप्रथमपक्षो

नित्यानामपियोनित्यश्चेतनानांचचेतनः ॥ यत्सुखंप्राप्यतेह्येतैःशांतिरूपंमनीषिभिः ७९९ अनिर्देश्यंपरंतत्तुमन्यंतेवेदवादिनः ॥ कथंनुतद्विजानीयांमुमुक्षु रितिसर्वदा ८०० चिंतयेदस्यसंप्राप्त्यैकिंमुभातिनभातिवा ॥ विपरीतमिदंवापिभातिब्रह्मसुखंमम ८०१ यदाविवेकसंपन्नोमुमुक्षुर्गुरुदेशितः ॥ आनंदात्मा त्वमेवैषब्रह्मासीहनसंशयः ॥ तदैवंचिंतयेच्चित्तेनिजेनित्यमतंद्रितः ८०२ आनंदात्माप्रकाशात्स्याद्भिन्नोभिन्नोथवापुमान् ॥ यदाभिन्नस्तदाकेनप्रकाशं यातिसर्वदा ८०३ आनंदश्चप्रकाशश्चभिन्नौस्यातांयदातदा ॥ इतरेतरसंबद्धौस्यातांतौकेनहेतुना ८०४ अजातश्चैवजातश्चसंबद्धौनैवसर्वदा ॥ ततोद्वयो र्जनिर्वास्यादजनिर्वासदैवहि ॥ अप्रकाशोथवाक्वापिस्यात्सुखस्यात्मरूपिणः ८०५ आत्मानैवात्रकस्यापिजंतोर्दुःखस्वरूपतः ॥ प्रतीयतेपरप्रेमसंश्रयो हृदयस्थितः ॥ तेननित्यप्रकाशेनसंबद्धंसुखमात्मनः ८०६

नसंभवतीत्याह यदेति । आनंदात्मनश्चिद्भिन्नत्वेकिंद्वयोर्नित्यत्वमन्यतरस्यवा आद्येद्वयोःपूर्णयोर्निर्विकारयोश्चकालाकाशयोरिवसंयोगःसमवायोवानसंभवति तादात्म्यंत्वन्यतरस्यकल्पितत्वएव युक्तम् तत्रात्मनःकल्पितत्वंनयुक्तंकृतनाशादिप्रसंगात् नापिचैतन्यस्यततःपूर्वमात्मनोऽसिद्धिप्रसंगात् नापिचैतन्यस्यगुणत्वादिनात्मनिसंबंधः निर्गुणत्वादिश्रुतिविरोधात्प्रथमाध्यायोक्तयु क्तिकलापाच्चेत्याशयेनेदमुच्यतेआनंदात्मायदाप्रकाशाद्भिन्नस्तदाकेनप्रकाशंभानंगच्छेदिति ८०३ एतदाशयमेवस्फुटयति आनंदइत्यादिना स्पष्टम् ८०४ यदानंदात्मप्रकाशयोर्मध्येऽन्यतरस्ये तजन्यत्वंनित्यत्वंवास्यात्तदातयोःसंबंधोनस्यात् योग्यंयोग्येनसंबध्यतेइतिन्यायविरोधात् तथाचसंबंधयोग्यतार्थंद्वयोरेवजन्यत्वमजन्यत्वंवास्वीकार्यमित्याह अजातइति । यदितुतयोरसंबंधए वांगीक्रियतेतदाआनंदात्मनःप्रकाशाभावःसदास्वीकार्यःस्यादितितृतीयदलार्थः ८०५ तत्रानंदात्मनश्चप्रकाशाभावोनस्वीकर्तुंशक्यःप्रकाशंविनानिरतिशयप्रेमानुपपत्तेरित्याह आत्मेति । आत्मा हिकस्यापिजंतोर्दुःखरूपेणद्वेषयोग्योनप्रतीयतेप्रत्युतपरप्रेमविषयएवभवतितेनज्ञायतेआत्मनःस्वरूपभूतंसुखंनित्यंप्रकाशसंबद्धमित्यर्थः ८०६

सचप्रकाशेनसुखस्यसंबंधएकरूपएवेतिदर्शयितुंसुखप्रकाशयोर्नित्यताप्रदर्शनीया तदर्थंसुखस्यात्मरूपतयानित्यत्वंप्रतिपादयति आत्मनइतिद्वाभ्याम् । तत्सुखंयद्यात्मनःसकाशाद्भिन्नंस्यात्तदात्मा प्रियतमोनस्यात्किंतुस्रक्चंदनादिवत्सुखार्थत्वेनप्रियइत्येवस्यात् दृश्यतेतुमानभूवंभूयासमित्याकारकोनिरतिशयःप्रेमात्मन्येव तेनात्मसुखयोरैक्यमेवेत्यर्थः ८०७ एवंसुखस्यात्मरूपत्वेआत्म नोजन्मायोग्यत्वादनात्मनआत्मानंप्रतिहेतुत्वस्यवक्तुमशक्यत्वाच्चसुखंनित्यमित्याह आत्मनइति स्पष्टम् ८०८ एवंसुखस्यनित्यत्वेतेनसंबंधयोग्यस्यप्रकाशस्यापिनित्यत्वमभ्युपेयमित्याह सुख स्येति । प्रकाशस्यजन्मांगीकारेहिनित्येनसुखेनसंबंधायोगादात्मासदानंदरूपोनप्रतीयेततथाचपरंप्रेमनस्यात्तच्चानुभवविरुद्धमित्याह प्रकाशस्येत्यादिना ८०९ किंचात्मरूपनित्यसुखस्यभान मागंतुककरणाधीनंनवाच्यंनित्यानित्यसंयोगविरोधन्यायादित्याह किंन्विति । न्विति वितर्के यत्सुखस्यबोधसंज्ञंअतएवनित्यंनिरतिशयप्रेमनिर्वाहायनित्यमपेक्षितंचविज्ञानंजनयेत्तादृशंकरणंकिं भवेन्नकिंचिदपीत्यर्थः ८१० अस्तुमनस्तथेतिशंकांनिरस्यति मनस्त्विति । यदामनआत्मभानेकरणंस्वीक्रियेततदाकरणस्यप्रयोजकत्वेनापेक्षितःकर्ताकःस्यात् नचात्माकर्ताभवितुमर्हतितस्यकर्मत्वे नावस्थितस्यकर्तृत्वविरोधादितिभावः । ननुमनएवकर्तृतामपिभजत्वित्याशंकांवारयति एकदैवेति । कर्तृचेन्मनोभवेत्तदास्वात्मनःकर्तृस्वरूपस्योपकारकतालक्षणांहेतुतांकरणतांकथंव्रजेत्कर्तृत्वांगी

आत्मनस्तद्विभिन्नंचेदात्माप्रियतमोनहि ॥ भवेत्सुखार्थतायस्मादात्मनोत्रप्रसज्जते ॥ सुखरूपस्ततःस्वात्मासर्वेषामिहदेहिनाम् ८०७ आत्मनोनजनिर्युक्ता कारणाभावहेतुतः ॥ आत्माभिन्नस्यतेनास्यसुखस्यापिजनिर्नहि ८०८ सुखस्यजन्मनोभावेप्रकाशस्यकुतोजनिः ॥ प्रकाशस्यजनौनैवनित्यमानंदरूप ता ॥ आत्मनस्तुप्रतीयेतसदासंबंधवर्जनात् ८०९ किंनुतत्करणंनामसुखरूपेनिजात्मनि ॥ जनयेन्नित्यविज्ञानंसुखबोधात्मकंहियत् ८१० मनस्तुकरणं चेत्स्यात्कर्तातस्यभवेद्धिकः ॥ एकदैवकथंकर्तृहेतुतांस्वात्मनोव्रजेत् ८११ अपिदृश्यंमनश्चैतद्दृश्यतेमन्मनस्त्विति ॥ कथंविनात्मविज्ञानंभवेदेतदमानसम् ८१२ ततःसुखप्रकाशात्मासर्वदैवव्यवस्थितः ॥ तदात्मनःसुखंकिंमेइदानींभातिवानवा ८१३ विरुद्धंकिंनिमित्तेनभातितत्सुखमात्मनः ॥ भिन्नंतथामयाज्ञे यंजातंविषयसेवनात् ८१४ यद्यादृशंनतत्तादृग्यदिवस्तुप्रतीयते ॥ विपरीतंतदाज्ञानंतस्यनूनमवस्थितम् ८१५ विपर्ययस्यजनकंनहिसत्यमुदीरितम् ॥ अस त्यंजनकंचेतितत्तन्मायेतिकीर्तितम् ८१६

कारकरणत्वंनस्यादितियावत् नहियुगपदेकस्योपकार्यत्वमुपकारकत्वंचसंभवतीतिभावः ८११ किंचमनसोपिदृश्यत्वानुभवान्मनःस्वसाधकज्ञानेनकरणीभवितुमलमतस्तदात्मरूपमेवेत्याह अपि दृश्यमिति । अपिचएतन्मनइतिइत्थंदृश्यतेऽनुभूयते इतिकथम् मदीयंमनइति । एतन्मनसोदृश्यत्वंकथमुपपद्येतयदिअमानसंमनसाजनयितुमशक्यंआत्मस्वरूपभूतंविज्ञानंनस्यादित्यर्थः ८१२ फलितमाह ततइति । सुखप्रकाशात्मपदार्थानामैक्यंसिद्धंततश्चात्मसुखंभातिनवेतिसंशयइदानींकिंसंभवतिअपितुनैवसंभवतीत्यर्थः ८१३ अथविपरीतभानपक्षंनिरसितुंवैपरीत्यमभिनयंस्तद्धे तुंविचारयति विरुद्धमिति । तदात्मरूपंविरुद्धंविपरीतरूपंकेननिमित्तेनभाति । ननुकाविरुद्धतेत्यतआह आत्मनइत्यादि । आत्मनःसकाशाद्भिन्नत्वंज्ञानविषयत्वंविषयसेवनजन्यत्वंचयत्सु खेभासतेएतत्त्रयंविरुद्धमित्यर्थः ८१४ नचेदंभिन्नत्वादिज्ञानंप्रमेतिवाच्यंविषयस्वभावाननुसरणादित्याह यद्यादृशमिति । यद्वस्तुयादृशंभवतितादृशंयत्रज्ञानेनप्रतीयतेतज्ज्ञानंविपर्ययरूपमेव प्रसिद्धमित्यर्थः ८१५ विपर्ययस्त्वनृतत्वात्स्वसजातीयमनृतंकारणमपेक्षतेतथानृतत्वेसतिकारणत्वंमायायाएवप्रसिद्धमित्याह विपर्ययस्येति । सामायातुसत्यदृष्टेर्मत्तःपलायितेतिभावः ८१६

ईदृग्विचाररूपंसांख्यमात्मसाक्षात्कारहेतुरित्युपसंहरति इतिचिंतयतइति ८१७ योगरूपमात्मलाभोपायमाह कर्मणेति । यागादिरूपंबाह्यमुपासनरूपमांतरंचयत्कर्मतद्योगसंज्ञंचित्तशुद्धितत्त्वज्ञा नद्वाराआत्मलाभसाधनमित्यर्थः ८१८ ब्रह्मेति व्याख्यातं ८१९ चतुर्दशस्यार्थमाह ब्रह्मज्ञानात्स्वयमितिद्वाभ्यां । यत्स्वयंज्योतिर्ज्ञानमात्मरूपमधिकारिणस्तत्त्वज्ञानादुपलभ्यतेतदिदंज्ञानंसूर्यचं द्रादिभिर्नप्रकाश्यंप्रत्युतसूर्यादयस्तेनभास्यंतेइत्यर्थः ८२० किंचबाह्यानांसूर्यादीनांभासकंचित्प्रतिबिंबशालिवृत्तिरूपंज्ञानंतदपियेनात्मज्योतिषाअविषयस्वभावेनभास्यतेतस्यात्मज्योतिषोबाह्य प्रकाशैर्भानायोग्यत्वंकिमुवाच्यमित्याह ज्ञानस्येति । यआत्माज्ञानस्यचित्संवलितवृत्तिरूपस्यज्ञानभासकःसतैर्जडतेजोमयैरेतैःसूर्यमंडलादिभिःकथंप्रकाश्येतेति ८२१ पंचदशार्थंवर्णयति एकएवे तित्रिभिः । एकएवपुरुषःसर्वव्यष्टीनांत्रिलोक्यात्मकसमष्टेश्चांतस्थःअविद्यांघ्नन्हंसइत्युक्तः । तस्यसर्वरूपतामाह अग्नीति । नीरंसमुद्रादिजलंआदिपदेनजाठरंजलंतद्गतवाडवाग्न्यादिरूपः अथवानी रंआपइत्युक्तानिसूक्ष्मभूतानितद्रूपेआदौकारणेस्थितोयोग्निर्विराट्तद्रूपइत्यर्थः ८२२ तमेवेति । तमेवज्ञात्वासंसाररूपंमृत्युमत्येत्यउल्लंघ्यअमृतंगच्छेदेपविद्वान्सर्वज्ञत्वादिविशेषरूपेणईशभावंग

इतिचिंतयतस्तस्यमायातःपृथगेवतत् ॥ स्वयंज्योतिःसुखंनित्यमनिर्देश्यंप्रकाशते ८१७ कर्मणायज्ञदानादिरूपेणात्मास्वयंप्रभः ॥ जगतःकारणंब्रह्म ज्ञानोत्पत्तौप्रतीयते ८१८ ब्रह्मज्ञानात्स्वयंज्योतिर्यदायमवभासते ॥ अविद्यानाशतस्तज्जाःपाशानाशंप्रयांतिच ८१९ ब्रह्मज्ञानात्स्वयंज्योतिर्यज्ज्ञात्यत्राधिका रिणः ॥ नहिज्ञानंकदाचित्तुभातिसूर्यादिभिस्त्विदम् ॥ किंतुतेनैवसूर्याद्याःप्रतीयंतेसदैवते ८२० ज्ञानस्यापिचयोज्ञानंज्ञानेनापिनभातिच ॥ सकथंतैजसैरेतैः प्रतिभायात्स्वयंप्रभः ८२१ एकएवपुमानेषसर्वभूतहृदिस्थितः ॥ अविद्याघातकोहंसोमध्येपिचजगत्त्रये ॥ अग्निरूपःसएवायमस्तिनीरादिसंस्थितः ८२२ तमेवात्मस्वरूपेणज्ञात्वादेहीसमाव्रजेत् ॥ मृत्युमत्येत्यसंसारमीशश्चाप्येषजायते ८२३ नान्योहेतुर्जगत्यस्मिन्नीश्वरत्वायविद्यते ॥ ब्रह्मज्ञानादतस्तत्तुकरणीयं यतीश्वराः ८२४ विज्ञेयोयःपुमान्सोयंसर्वज्ञोविश्वकृत्तथा ॥ अनुत्पन्नःसदाकालकालःसर्वगुणैर्युतः ८२५ विशेषेणापिनिखिलंजानातीदंचराचरम् ॥ क्षेत्रज्ञस्या स्यजीवस्यमायायाश्चपतिस्तथा ८२६ गुणानामपिसर्वेषांसुखदुःखादिकारणम् ॥ नियंतासंसृतेर्बंधस्थितिमोक्षैककारणम् ८२७ सआत्माविश्वरूपःसन्हेतु र्बंधस्थितौभवेत् ॥ मरणादिविहीनश्चबंधमोक्षैककारणम् ८२८ ईशआत्मनिसंस्थायज्ञानरूपोऽत्रसर्वगः ॥ स्थितिकालेसदादेवोभुवनस्यास्यगोपकः ८२९ यईष्टेजगतोनित्यंयस्मादन्योनचेश्वरः ॥ कश्चिदस्तिसएवात्मातस्मादन्योनविद्यते ८३०

च्छतीत्यर्थः ८२३ नान्यइति । ब्रह्मज्ञानादन्यईशभावलाभायहेतुर्नास्तीत्यतस्तद्ब्रह्मज्ञानंकरणीयंश्रवणादिद्वारासंपाद्यमित्यर्थः ८२४ ईशरूपावेदकयोःषोडशसप्तदशयोरर्थउच्यते विज्ञेयइतिषड्भिः । योयंमोक्षसाधनविज्ञानविषयत्वेनोक्तःपुमान्ससर्वज्ञतादिधर्मशाली तत्रसर्वज्ञत्वंसामान्येनसर्ववित्त्वं अनुत्पन्नत्वंकारणहीनत्वं ८२५ विशेषेणेति । श्रुतौज्ञपदेनतस्यविशेषतःसर्वविश्वमुक्तं तथाजी वस्यमायायास्तद्गुणानांचपतिःप्रभुःसुखादिरूपकर्मफलदस्तथाबंधादिकारणत्वेनसंसारस्यनियंताव्यवस्थाहेतुःपालकश्चेतिद्वयोरर्थः ८२६ । ८२७ सआत्मेति । सप्रपंचरूपेणदृष्टोबन्धहेतुः मरणा दिहीनत्वेनदृष्टस्तुमोक्षहेतुः तथाज्ञानरूपेआत्मनिस्वरूपेस्थित्वाईशःसर्वगश्चतथास्थितिकालेगोपकश्चेतिद्वयोरर्थः ८२८ । ८२९ यईष्टेइति । यश्चऐश्वर्यस्यपरमकाष्ठाभूतःकश्चिद्विशेषतोवर्णयितु मशक्यःसएवात्मत्वेनविज्ञेयइत्यर्थः ८३०

अष्टादशादिमंत्रद्वयस्यैकवाक्यतयार्थंदर्शयति अहमितिपंचभिः । हेपतयोऽहमित्थंनियतोनियमैःशौचादिभिर्युतःसंस्तंदेवंसंप्रार्थ्यज्ञानंप्राप्तवानस्मीति ८३१ इत्थंकथमित्याकांक्षायामाह ब्रह्माण
मित्यादि । योब्रह्माणंहिरण्यगर्भमुत्पाद्यतस्मैसहवेदैर्ज्ञानंदत्तवांस्तंदेवमात्माकारवृत्तिलभ्यमहंमोक्षकामःशरणंगतोस्मीतिसंबंधः ८३२ तस्यदेवस्यस्वरूपलक्षणमाह निष्कलमित्यादिना ।
कीदृशंतं निष्कलंनिरवयवं स्फुटमन्यत् ८३३ अमृतत्वस्येति । मोक्षरूपस्यामृतत्वस्यस्वरूपेणमर्यादांकुर्वंतं यत्स्वरूपमेवामृतत्वमितियावत् तथादग्धेंधनाग्निवदुपाधिविनिर्मुक्तरूपेणाव
स्थितमितिद्वयोरर्थः ८३४ । ८३५ विंशार्थमवतारयति एवमितिद्वाभ्यां । एवंप्रार्थितोदेवोमह्यंतादृशंज्ञानंदत्तवान्येनाहंतंदेवमात्मत्वेनदृष्टवानस्मियद्विज्ञानंविनामोक्षोनैवभवतीतिद्वयोरर्थः
८३६ । ८३७ विंशार्थमाह यदेतिदशभिः । आकाशस्यचर्मवद्वेष्टनंयःकुर्यात्सदेवमविज्ञायापिमुच्येतेत्यर्थः ८३८ अस्याशयंस्फुटयति आकाशेति । स्फुटम् ८३९ शिवपदप्रदर्शितामात्मनस्तु

अहंपूर्वमिमंदेवमित्थंसंप्रार्थ्यसर्वदा ॥ प्राप्तवानात्मविज्ञानंनियतोत्रयतीश्वराः ८३१ ब्रह्माणंजगतोयोनिंयस्त्वुत्पादितवान्पुरा ॥ यश्चवेदानदादस्मैतंदेवंस्वात्मनि
स्थितम् ॥ आत्मज्ञानैकसंवेद्यंमुमुक्षुःशरणंगतः ८३२ निष्कलंनिष्क्रियंशांतंसुखमात्मस्वरूपकम् ॥ सर्वदोषविनिर्मुक्तंकारणेनविवर्जितम् ८३३ अमृतत्वस्यमो
क्षस्यसेतुवद्धारकंपरम् ॥ दग्धेंधनोयथावन्हिःस्वरूपेणावतिष्ठते ८३४ तथास्वस्यस्वरूपेणवर्तमानंमहेश्वरम् ॥ मायामयसमुत्थानकार्यजातविवर्जितम् ३५
एवंसंप्रार्थ्यमानःसन्मह्यंसभगवान्शिवः ॥ मोक्षस्यकारणंज्ञानंदत्तवान्करुणाकरः ८३६ येनज्ञानेनतंदेवमात्मस्थंपरमेश्वरम् ॥ दृष्टवानयमविज्ञायमुक्तिर्नैवभवे
दिह ८३७ यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः ॥ तदादेवमविज्ञायदुःखस्यांतोभविष्यति ८३८ आकाशवेष्टनंयद्वत्कर्तुमत्रनशक्यते ॥ आत्माविज्ञानतस्त
द्वन्मोक्षःप्राप्तुंनशक्यते ८३९ एषएवततोदेवःस्वयंज्योतिरितीरितः ॥ आनंदात्मैवयतयोज्ञातव्योत्रमुमुक्षुणा ८४० अयमेवजगद्योनिर्मायावीमाययाप्रभुः ॥
भवतांचममाप्येषस्थिरजंगमदेहिनाम् ॥ आत्मासर्वगतोनित्यःसर्वभेदविवर्जितः ८४१ अस्मिन्नेवचकालाद्याहेतवःपरिकल्पिताः ॥ यथाविशुद्धआकाशेमे
घानानाविधाअपि ८४२ अस्मिन्सर्वमिदंविश्वंमाययापिसमन्वितम् ॥ प्रतीयतेयथाकाशेगंधर्वनगरंतथा ८४३ एकएवयथास्त्रप्रेशयानोबहुभेदवान् ॥ एवमा
त्मात्रसंसारेबहुभेदोप्यपैवच ८४४ करणोपरमाद्यद्वत्सुषुप्तौनैवकिंचन ॥ द्वैतजालंविजानातिसंसारेपिस्थितःपुमान् ८४५ अविद्योपरमात्तद्वदिदंदुःखमनेकधा ॥
नपश्यतिपुमान्मुक्तावानंदात्मास्वयंप्रभः ८४६

शिवतामभिनयन्सर्वग्रंथप्रमेयमुपसंहरति एषएवेत्यष्टभिः । एषदेवःस्वयंप्रकाशानंदरूपोज्ञेयोमुमुक्षुणेति ८४० यतःसएवमाययासर्वोपादानंसर्वेश्वरःसर्वात्माचेत्याह अयमेवेति ।
प्रभुरीश्वरःभवतांममान्येषांचात्माचेति ८४१ तस्यसर्वाधिष्ठानत्वंदर्शयति अस्मिन्नेवेतिद्वाभ्यां । स्पष्टम् ८४२ कालादिकारणानिवादिभिर्यथातत्रकल्पितानितथाअव्याकृतानिकार्यविश्व
मप्यध्यारोपप्रदर्शकाभिःश्रुतिभिस्तत्रकल्पितमित्याह अस्मिन्सर्वमिति ८४३ तत्रजीवभेदकल्पनांदृष्टांतेनस्फुटयति एकएवेति ८४४ ज्ञानलभ्यमोक्षकालेतस्यशुद्धतांदृष्टांतेनाह करणोपरमा
दिति । करणानामिंद्रियाणामुपरमरूपायांसुषुप्तौसंसारांतर्गतायामपिविज्ञेयोपरममात्रेणापियथाद्वैतंनजानातितथाअविद्योपरमोपलक्षितेमोक्षेपीतिद्वयोःसंबंधः ८४५ । ८४६

तत्त्वज्ञानेनप्रपंचोपरमंदृष्टांतेनविशदयति यथेति ८४७ अस्यज्ञानस्यदौर्लभ्यंवर्णयन्नुत्तराध्यायजिज्ञासामुत्थापयति इदमितित्रिभिः । हेपतयइदंज्ञानंदुर्लभमितियद्यथाभवद्भिर्बुद्ध्यतेतथाव च्मीतिशेषः देवताअपिमनुजैस्तोपिताःसत्यःइदंज्ञानंनवदन्तिकिन्तुवरानेवतस्मैमनुजायउपन्यस्यंति यस्तुतैर्वरैर्नतुष्यतितंप्रत्येवंसत्यपाशवद्धावदंतीतिद्वयोःसंबंधः ८४८ । ८४९ तत्रोदाहरण भूतंयमनचिकेतसोर्वृत्तमित्याह यमइति । यथासत्यपाशवद्धोयमोवरैरसंतुष्टायनचिकेतसेब्रह्मविद्यामवादीत्तथावृत्तंभवेतस्तपःप्रभावात्स्वयंजानंत्येवेति ५० तर्हिभवताकथंसभायामिदमुक्तमिति शंकांवारयति भवतांत्विवितिचतुर्भिः । दुर्लभमपीदंज्ञानंयन्मयाभवतांपुरतउक्तंतत्रहेतुरियमेवंविधाममबुद्धिरित्यर्थः ५१ एवंविधाकीदृशीत्याकांक्षांपूरयति अहमपीतिद्वाभ्यां । यद्यहमर्थिभ्यो ऽर्थिभ्योनवक्ष्यामितर्हिमत्तोपरःकोवक्ष्यतितस्यचमत्तुल्यंब्रह्मवित्त्वंसंदिग्धमित्यर्थः ५२ अहमिति । अहंदध्यङ्ङाथर्वणवत्सर्वोपकारायप्रवृत्तःसन्नेतानधिकारिणोऽतिथीश्चप्रतिकथंस्वज्ञानंवंचया मिअपलपामीत्यर्थः ५३ इत्यादीति । आदिपदेन ' इदंयःपरमंगुह्यंमद्भक्तेष्वभिधास्यति । भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः । नचतस्मान्मनुष्येपुकश्चिन्मेप्रियकृत्तमः । भवितानचमेतस्मा

यथाजागरणज्ञानात्स्वप्नःसर्वःप्रलीयते ॥ तथानंदात्मविज्ञानात्प्रपंचोपिविलीयते ८४७ इदंकारणविज्ञानंदुर्लभंयतिपुंगवाः ॥ मनुजैर्देवतायद्वद्बहुशःपरितोषि ताः ॥ नवदंतिप्रयच्छंतिवरान्नानाविधानपि ४८ संतोषंयोनतैर्गच्छेत्पुमानत्यंतबुद्धिमान् ॥ तस्मैवदंतिकृच्छ्रेणसत्यपाशवशंगताः ४९ यमोयथापुरावादीत्सं तुष्टोनचिकेतसे ॥ स्वयमेवभवंतोपिजानंत्येतद्यतीश्वराः ५० भवतांतुमयायत्तुकथितंब्रह्मवेदनम् ॥ दुर्लभंतदिदंकिंतुममबुद्धिरियंस्थिता ५१ अहमप्यात्मवि ज्ञानमर्थिभ्यश्चेद्ददामिन ॥ अर्थिभ्यःकोपरोब्रूयान्मत्तोयोब्रह्मविद्भवेत् ५२ अहंसर्वोपकारायप्रवृत्तोस्मिसदायतः ॥ ततःकथंनिजंज्ञानंवंचयामियतीन्प्रति ॥ ए तेमेऽतिथयस्तद्वद्ब्रह्मज्ञानाधिकारिणः ५३ इत्यादिबहुधाचित्तेचिंतयित्वोक्तवानहम् ॥ आत्मज्ञानमिदंगुह्यंभवद्भ्योत्रयतीश्वराः ५४ एतावदुक्त्वाभगवान्सश्वे ताश्वतरोमुनिः ॥ वाक्यादुपरतिंप्राप्तआस्तेपूर्ववदीश्वरः ५५ तपःप्रभावतस्तद्वदीश्वरस्यप्रसादतः ॥ श्वेताश्वतरनामायंवेदवेदांगपारगः ५६ आत्मविज्ञानसं पन्नोह्यतिथिभ्योनिजाश्रमे ॥ अत्याश्रमिभ्योन्यासिभ्यउक्तवानात्मबोधनम् ५७ लोकेस्यात्परमोहंसआश्रमीह्यधिकोहिसः ॥ आश्रमिभ्यश्चसर्वेभ्यस्तस्माद त्याश्रमीत्वयम् ५८ एतदाश्रममापन्नायतयोधीयिरेततः ॥ इदंपवित्रंब्रह्मात्मविज्ञानंमोक्षकारणम् ॥ मोक्षार्थिभिःसदासद्भिर्मुनिसंघैर्निषेवितम् ५९ वेदांतेपरमं गुह्यंपुराकल्पप्रणोदितम् ॥ पूर्वेषांकथ्यतेयत्रसृष्ट्यादिकमनेकधा ॥ सपुराकल्पइत्युक्तस्तेनैतत्परिकीर्तितम् ८६० .

दन्यःप्रियतरोभुवि'इतिभगवदुक्तिप्रदर्शितस्यपात्रोपदेशेभगवत्प्रसादस्यग्रहः स्पष्टमन्यत् ५४ एवमुक्त्वाश्वेताश्वतरोमौनंकृतवानित्याह एतावदिति ५५ एकविंशस्यार्थमाह तपइतिचतुर्भिः । तपःप्रभावेणदेवानुग्रहेणचात्मविज्ञानंलब्ध्वानिजाश्रमागतेभ्यःअत्याश्रमिपदोक्तेभ्यःसंन्यासिभ्यइदंज्ञानमुक्तवानितिद्वयोःसंबंधः ५६ । ५७ अत्याश्रमिपदस्यसंन्यासिपुसमन्वयंदर्शयति लोकेइ ति । परमहंसोह्याश्रमीभवतिइतराश्रमिभ्योऽतिशयितश्चभवति ' न्यासएवात्यरेचयत्'इतिश्रुतेः अतःसंन्यासीअत्याश्रमीत्युक्तः ५८ एतदाश्रममिति । एतंसंन्यासाश्रमंप्राप्ताऋषयस्ततःश्वेताश्वतरा दिदंज्ञानंपवित्रत्वादिशालिअधीयिरेअध्ययनेनलब्धवंतइत्यर्थः ५९ द्वाविंशस्यार्थमाह वेदान्तेइति । इदंज्ञानंवेदांतेपुगुह्यंगोप्यतयोक्तं अत्रतुपुराकल्परूपेणग्रंथेनोक्तं यत्रवेदभागेपूर्वेषांप्राचीनानां सृष्ट्यादिरूपोव्यवहारउच्यतेसपुराकल्पइत्युच्यतेयथात्रैवब्रह्मवादिनांविचारायसमागमउक्तइति ८६० .

शांतीति । इदंज्ञानंकृपालुनापिशांत्यादिगुणहीनायअर्थिनेपिनदेयं शांत्यादिलक्षणाधिकार संपन्नायापिपुत्रशिष्यभिन्नायनदेयमित्यर्थः ८६१ अंत्यमंत्रतात्पर्यार्थंप्रपंचयति उक्तइत्यादिना । गुरुभक्त्याविहीनायाधिकारिणेतुयथाकथंचिदुक्तापिसारंतात्पर्यार्थंनवदेदित्यर्थः ८६२ कीदृशायतर्हिवक्तव्यमित्यतआह देववदिति । अधिकारंसाधनचतुष्टयसंपन्नत्वंभजन्देववद्गुरुसेवायामप्रमत्तश्चयोभवेत्तस्मैवदेदित्यर्थः ८६३ गुरुवैमुख्येऽनर्थप्रदर्शकानिपुराणागमादिवाक्यान्यर्थतःपाठतश्चानुक्रामति गुरुमित्यादिना । मोहःप्रमादः ८६४ कर्मणेति । योनामनुष्योगुरुमवमन्यतेसरुरुभिर्वृश्चिकसहस्रसमविषैर्जंतुभिर्व्याप्तेनरकेपततीत्यर्थः ८६५ एकाक्षरेति । एकाक्षरप्रदातारमपीतिशेषः भूतसंप्लवःप्रलयस्तत्पर्यंतम् ८६६ कृतघ्नानामिति स्पष्टम् ८६७ समहेति । सगुरुद्रोहीमहापातकानिब्रह्महत्यासुरापानादीनि उपपातकानिगोवधादीनिस्मृतिप्रसिद्धानि गत्वानरकमितिशेषः ८६८ अत्रेति । अत्रशास्त्रे ८६९

शांतिदांत्यादिहीनायविषयासक्तचेतसे ॥ अर्थिनेपिनदातव्यंगुरुणापिकृपालुना ॥ अपुत्रायाप्यशिष्यायवक्तव्यंनाधिकारिणे ८६१ उक्तेसत्यपितत्सारोवक्तव्यःसर्वथानहि ॥ गुरुभक्त्याविहीनायसर्वदाप्यधिकारिणे ६२ देववद्योगुरुंपश्येदप्रमत्तोधिकारभाक् ॥ सएवब्रह्मविज्ञानंफलवत्प्राप्नुयान्नरः ६३ गुरुंयोमानवैरन्यैःसमंपश्यतिमोहतः ॥ नतस्यास्मिन्भवेल्लोकेसुखंनैवपरत्रवा ६४ कर्मणामनसावाचागुरुंयोनावमन्यते ॥ सयातिनरकान्घोरान्महारौरवसंज्ञितान् ६५ एकाक्षरप्रदातारंगुरुंयेनैवमन्यते ॥ समूढोनरकंयातियावदाभूतसंप्लवम् ६६ कृतघ्नानांहियेलोकायेलोकाब्रह्मघातिनाम् ॥ मृत्वातानभिसंयातिगुरुद्रोहपरोनरः ६७ समहापातकीज्ञेयस्तथोपपातकीत्यपि ॥ गत्वाकल्पसहस्रांतेविष्ठायांजायतेकृमिः ६८ अत्रसर्वासुविद्यासुकारणंगुरुरीरितः ॥ यथाशिवस्तथैवायंपूजनीयःप्रयत्नतः ६९ शिवेरुष्टेगुरुस्त्रातागुरौरुष्टेशिवोनहि ॥ शिवादप्यधिकंतस्माद्गुरुंयत्नेनपूजयेत् ७० अहंमानादिदोषेणस्वगुरुंयोवमन्यते ॥ प्रायश्चित्तंनतस्यास्तिलोकेस्मिन्पापकारिणः ७१ ब्रह्महत्यादिपापानांदृष्टाशास्त्रेणनिष्कृतिः ॥ गुरुद्रोहस्यनैवस्यात्कापिशास्त्रेप्रदृश्यते ७२ ब्रह्मघ्नादधिकोज्ञेयःकृतघ्नोमनुजोभुवि ॥ गुरुद्रोहीततोपिस्यादधिकोयंनराधमः ७३ गुरुर्मातापितावापिगुरुर्दैवमुदाहृतम् ॥ गुरुर्बंधुःसखातद्वन्नगुरोरपरःसुहृत् ७४ गंतव्योगुरुरेवात्रस्वात्मज्ञानेनदेहिना ॥ ततोगुरोरवज्ञानादात्मनःकुरुतेत्विमाम् ७५ आत्मन्यस्मिन्नवज्ञातेविश्वावज्ञाकृताभवेत् ॥ अवज्ञावधउद्दिष्टःशस्त्रशून्योतिदारुणः ७६ हतःशस्त्रात्क्षणंदुःखंप्राप्नुयाद्वानवापुमान् ॥ अवज्ञयाहतोदुःखंयावज्जीवंसगच्छति ॥ विश्वदुःखकृतःकेनशुभंपुंसोभविष्यति ८७७

शिवेइति । रुष्टेरोषंगते ८७० अहमिति । स्पष्टम् ८७१ ब्रह्मेति । निष्कृतिःप्रायश्चित्तं गुरुद्रोहस्यतुसानसंभवतिशास्त्रेनदृष्टाचेत्यर्थः ८७२ ब्रह्मघ्नादिति । कृतघ्नवृत्तंभारतेगौतमोपाख्यानेद्रष्टव्यं ततोप्यधिकोगुरुध्रुक् ८७३ अस्यकृतघ्नादाधिक्यंस्फुटयितुंगुरोःसर्वोपकारिरूपतामाह गुरुरिति । सखामित्रं सुहृदुपकारकः ८७४ गुरुद्रोहस्यसर्वपापाधिक्येउपपत्तिमप्याह गंतव्यइति । 'ब्रह्मवेदब्रह्मैवभवति' इतिश्रुतेर्देहिनाज्ञानेनलभ्यंयत्ब्रह्मतद्रूपोगुरुर्भवतितदवज्ञायांब्रह्मणोऽभिन्नस्यात्मनोऽवज्ञाभवतिआत्मनोऽवज्ञायांतुआत्ममयस्यसकलप्रपंचस्यावज्ञावधरूपाभवतीतिद्वयोरर्थः ८७५ । ८७६ अवज्ञारूपवधस्यशस्त्रवधादुत्कर्षमाह हतइति । शस्त्राद्धेतोर्योहतस्तस्यक्षणंदुःखप्राप्तिःसंदिग्धाअवज्ञयातुस्मृतिद्वारामरणांतंदुःखंजन्यते एवंविश्वंदुःखयतःशुभंदुर्लभमित्यर्थः ८७७

१००

फलितमाह तस्मादित्यादिना । स्पष्टंद्वयम् ८७८ । ८७९ उक्तमिति । अस्यगुरोर्वचनंस्वशरीररक्षाचिंतांविहायकर्तव्यमित्यर्थः ८८० कर्णाभ्यामिति । तस्यगुरोःकीर्तिंशृणुयात्त त्त्रिंदकंस्यतुपरिभवमपमानंयथाशक्तिकुर्यादिति ८८१ अशक्येइति । निंदकस्यपरिभवेऽशक्येतुस्वयंततोगंतव्यं तदशक्तौकर्णौपिधायनिरुद्धश्वस्थेयमित्यर्थः ८८२ किंवहूक्तेनेति । वहुनोक्तेनकिंसंक्षेपाद्ब्रवीमि इदंगुरुभजनंगुरुव्रतभक्त्यैवसुखकामेनकार्यमित्यर्थः ८८३ मोक्षरूपःपुरुषार्थस्त्वनेनैवलभ्यइत्याह अभीष्टेति । अयंमोक्षरूपः ८८४ उक्तार्थेमूलभूतंप्रमाणंमेषमंत्रइत्याह यस्येति । एतेश्रुत्युक्ताअर्थाःपदार्थाःपुरुषार्थावा ८८५ अर्थपदस्यपुरुषार्थपरत्वमादायमंत्रार्थमाह एतेइति । हस्तस्थावश्याः ८८६ गुरुभक्तिमवणत्वउपपत्तिमप्याह ब्रह्मेति । यथाब्रह्मचर्येभ्वर

तस्मात्सर्वात्मनाकार्यंकर्मणामनसागिरा ॥ गुरोःप्रियतमंसर्वंस्वात्मनाक्षेममिच्छता ८७८ सावधानोयथाजंतुर्देवपूजापरोभवेत् ॥ गुरुपूजारतस्तद्वत्सावधानः सदापुमान् ८७९ उक्तमस्यप्रकुर्वीतशुभंवाऽशुभमेववा ॥ मनसाहर्षयुक्तेननिजदेहमरक्षयन् ८८० कर्णाभ्यांशृणुयात्तद्वत्तस्यकीर्तिंचसर्वदा ॥ दोषवक्तुर्यथाशक्ति कुर्यात्परिभवंसदा ८८१ अशक्येसतिकुर्यात्सएवंबुद्धिमतांवरः ॥ यत्रात्मनोगुरोर्निन्दाक्रियतेपापमोहितैः ॥ तत्रकर्णौपिधायैवस्थेयंशक्यागतिर्नचेत् ८८२ किंबहूक्तेनसंक्षेपाद्गुरुभक्त्यावदाम्यहम् ॥ करणीयमिदंस्वात्मसुखकामेनसर्वदा ८८३ अभीष्टदेववन्नित्यंगुरुभक्तिमहर्निशम् ॥ कुर्वंतोजायतेचायंपुरुषार्थोधिकारिणः ८८४ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः ८८५ एतेवेदोदिताःसर्वेपुरुषार्थाश्चतुर्विधाः ॥ गुरुभक्तस्यहस्तस्थाभवंत्यत्रनसंशयः ८८६ ब्रह्मचर्यादिकेयद्वद्प्रमत्तोत्रसाधने ॥ वर्त्ततेगुरुभक्तौचवर्तितव्यंतथैवहि ८८७ तद्भ्रंशेपिचसंतुष्टेगुरौनास्तिभयंततः ॥ प्रायश्चित्ताद्युपायेनयतएषविशोधयेत् ८८ गुरुभक्तेस्तुविद्वेषेगुरौविमुखतांगते ॥ प्रायश्चित्तादिकंनैवतत्रकिंचनविद्यते ८८९ गुरौविमुखतांयातेविमुखाःसर्वदेवताः ॥ भवंतिक्रियमाणंचपुण्यंपापंहिजायते ८९० तस्मात्सर्वात्मनासर्वैश्चतुर्विधफलार्थिभिः ॥ देववन्नित्यमेवायमर्चनीयोऽप्रमादिभिः ८९१

प्रणिधानादिपुसावधानोवर्त्ततेतथाधिकारिणागुरुभक्तावपिसावधानेनभवितव्यमित्यर्थः ८७ तद्भ्रंशइति । तेभ्योब्रह्मचर्यादिभ्योभ्रंशेभ्रंशेपिसतिप्रसन्नोगुरुःप्रायश्चित्ताद्यैर्विशोधयिष्यति ८८ गुरुभक्तेस्त्विति । यदापुमान्गुरुभक्तेर्विद्वेषवान्भवतितदानकिंचित्त्राणं यतोदेवताअपिविमुखीभवंतिक्रियमाणंपुण्यमपिचपापात्मनापरिणमतेइतिद्वयोरर्थः ८८९ । ८९० तस्मादिति । चतुर्विधंधर्मार्थकाममोक्षरूपंफलमिच्छद्भिस्तथाशांत्यादिसंपन्नैर्ज्ञाततत्त्वैर्जीवन्मुक्तैःपरमहंसैरपिगुरुरर्चनीयः 'यावदायुस्त्रयोवंद्यावेदांतोगुरुरीश्वरः'इत्युक्तेः । अन्याश्रमवासिभिःसपूज्यइतिकिमुवाच्यमिति ततोभवद्भिर्ज्ञाततत्त्वैरपिगुरवःपूजार्थंगंतव्याइतिद्वयोरर्थः ८९१

८९२. इत्यभिप्रायवानिति । उक्ताशयेनश्वेताश्वतरोमौनीजातस्तस्यचित्तमभिप्रायंज्ञात्वातदुपदिष्टमभिनंद्यप्रशस्यसर्वेमुनयःस्वस्वगुरुदेशान्गताइति ८९३ उपसंहरति इतितेइतिद्वाभ्यां । कारणविचारपूर्वकंमायाशक्तिदर्शनेनिष्पन्नंमुनीनांप्राचांज्ञानंयत्श्वेताश्वतरउक्तवांस्तत्तेकथितं अन्यच्चकिंश्रोतुमिच्छसीति ८९४ । ८९५ यमष्टांगेनयोगेनप्रणवाष्टमदर्शितम् ॥ भजंतेयमिनोऽष्टाभिर्नामभिःसोऽस्तुशंकरः ॥ १ ॥ अस्यार्थः प्रणवस्यावयवेष्वकारोकारमकारार्धमात्रानादबिंदुशांतिशांत्यतीताख्येषुविश्वादितुरीयांतानामध्यात्मनांचतुर्णामोतानुज्ञात्रनुज्ञाऽ

शांत्यादिगुणसंपन्नैःकिमन्याश्रमवासिभिः ॥ ततएवभवंतोपिगुरून्यांतुमुनीश्वराः ८९२ इत्यभिप्रायवान्मौनीसश्वेताश्वतरोभवत् ॥ ज्ञात्वातेयतयस्तस्यचित्तमुक्तंचधीमतः ॥ अभिनंद्ययथान्यायंसर्वेस्वान्स्वान्गुरून्ययुः ८९३ इतितेकथितंज्ञानंयच्छ्वेताश्वतरोवदत् ॥ कारणानांविचारेणमायाशक्तेश्चदर्शनात् ८९४ मुनीनांब्रह्मविज्ञानसंपन्नानांमहात्मनाम् ॥ इतःपरंकिमन्यत्त्वंश्रोतुमर्हसिसुव्रत ८९५ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणश्रीशंकरानंदभगवताविरचिते उपनिषद्रत्नआत्मपुराणे श्वेताश्वतरोपनिषत्सारार्थप्रकाशे श्वेताश्वतरसंन्यासिसंवादोनामाष्टमोऽध्यायःसमाप्तः ॥ ८ ॥ ॥ ॥

विकल्पाख्यानामर्धिदेवसाक्षिरूपाणांचतुर्णांचक्रमेणवाचकेषुमध्येअष्टमेनदर्शितमविकल्परूपंयंयतयोयोगेनभजंतेसोऽस्माकंतदशक्तानांभवशर्वाद्यष्टनामभिरेवशंतनोत्विति ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिल्लारामसूरितनुजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौ आत्मपुराणटीकायां सप्तमसवाख्यायामष्टमोऽध्यायःसमाप्तः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ ॥ नवमेनवमेघाभःश्रीवत्साङ्कितमध्यमः ॥ पीताम्बरधरोदेवोवृणीतांकठगामिमाम् ॥ १ ॥ अस्यार्थः । “ कठःस्वरेऋचांभेदे ” इतिविश्वात् माधवःकठंस्वरंवंशीरवंप्रतिगतां गोपींयथानवमेनवशोभावतिवनेवृतवांस्तथेमांमन्मतिंनवमेनवद्वारशोभितेदेहेतद्वंशीरवनिभांकठश्रुतिंगतांवृणीतामङ्गीकुर्यादित्यर्थः । शिवपक्षे अनवःपुराणःशारदोघनस्तदाभःश्रीवत्साङ्कितस्य विष्णोर्मध्येमाकान्तिर्यस्यसतथा एवंहिपुराणेऽपाख्यायते सात्विकत्वात्शुक्लवर्णोविष्णुस्तमसाकृष्णवर्णस्यशंभोर्ध्यानात्श्यामतांगतःशंभुश्चतद्ध्यानात्शुक्लतामिति वरधरोवरप्रदइमांमतिंपी तांकांतिकेकुरंटकपुष्पवद्दीपितामंगीकरोत्विति “ पीताकुरंटकोझिंटी ”इत्यमरः कठंतद्दीपस्वरनिभामिमांश्रुतिंगतामित्यर्थः । ग्रन्थप्रमेयनिर्गुणपक्षेतु नवमेघवदावरकेअज्ञानेपिआभाचिदाभासलक्षणा यस्य श्रीवत्सेनजीवेनअङ्कितंमध्यंमंयस्य यन्मध्येजीवःकल्पितइतियावत् पीतंस्वस्मिन्विलापितमंवरंधराचयेनसतथादेवोद्योतनात्मकःपरमात्मा कठगामिनांकठाध्यायिनांमांप्रमाख्यांवृत्तिमा विष्कारेणभजेतवयमाध्यायइत्यर्थः जीवस्यश्रीवत्सरूपत्वंतु “ कौस्तुभव्यपदेशेनस्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभांव्यापिनींसाक्षाच्छ्रीवत्समुरसाविभुः ” इतिप्रसिद्धंश्रीमद्भागवतेइति ॥ अथशि

श्रीगणेशायनमः ॥ ॥ एवंमयापृथक्छ्रुत्यग्रैरमीषांविचारणाम् ॥ श्रुत्वाशिष्योगुरुंभूयः पर्यपृच्छदिदंवचः १ गुरोत्वयासमानेकमुनिदृष्टंस्ववेदनम् ॥ वि चित्राख्यानसंयुक्तमुक्तंतन्मोक्षसाधनम् २ ऐतरेयोमुनिस्तद्वन्मुनिःकौषीतकिस्तथा ॥ आदित्योभगवांस्तद्वद्यच्छ्वेताश्वतरोमुनिः ॥ वेदतत्सकलंत्वत्तःश्रुत माख्यानसंयुतम् ३ मयागुरोविचित्रार्थास्तत्रचित्राःकथामताः ॥ प्रजानामृषिभिःसार्धंसंवादोब्रह्मबोधकः ॥ वामदेवस्यमुक्तस्यनिजानुभवकीर्तनम् ४ प्रतर्द नस्यकाश्यस्यदैवोदासेर्महात्मनः ॥ विजयःशक्रसंवादरूपोब्रह्मात्मबोधनः ५ बालाकेश्चैवदृप्तस्यसंवादोजातशत्रुणा ॥ वंशःकांडत्रयस्यापिभिन्नाभिन्नस्वरूपतः ६ अश्विभ्यामपिसंवादरूपेःसर्वार्थदर्शिनः ॥ दध्यङ्ङाथर्वणस्यापिव्यसनंशक्रसंभवम् ॥ ब्रह्मविद्याकृतेतद्वदश्विभ्यामपियत्कृतम् ७ याज्ञवल्क्यस्यसंवा दोनानादेश्यैर्द्विजोत्तमैः ॥ शाकल्यस्यतथैवात्रमरणंद्वेषकारिणः ॥ याज्ञवल्क्येनमुनिनाब्रह्मविद्योपदेशनम् ८ वारद्वयंक्षितीशायजनकायमहात्मने ॥ मैत्रे य्यैचस्वजायायैप्रवव्राज्यांहियियासुना ९ अत्याश्रमिभ्योविज्ञानंयच्छ्वेताश्वतरोमुनिः ॥ उक्तवांस्तच्चतत्रैतच्छ्रुतमित्थंमयागुरो १० संप्रार्थिताश्चदेवानब्रह्मविद्यां कदाचन ॥ प्रयच्छंतिवरान्किंतुततोन्यानपिदुर्लभान् ११ सत्यपाशवशंप्राप्ताःकथंचित्तांवदंतिच ॥ यथायमःपुरावादीदर्थिनेनाचिकेतसे १२ तदिदंश्रोतुमि च्छामिमहत्कौतूहलंगुरो ॥ कथंयमोब्रह्मविद्यामुक्तवान्नाचिकेतसे ॥ कीदृशायचकासापिब्रह्मविद्यागुरोवद १३

ष्यप्रश्नमवतारयति एवमिति । येमुंनिभिर्माषास्वरूपंपृथक्शुद्धात्मस्वरूपाद्दृष्टंतेषांविचारणांपरस्परविचारनिष्पन्नमर्थंश्रुत्वाइदंपृष्टवानिति १ मेधावितासूचकोक्तानुवादपूर्वकंशिष्यप्रश्नम भिनयति गुरोइत्येकादशभिः । स्वकीयंज्ञानंभवतामस्मुक्तमिति २ ऐतरेयइति । ऐतरेयादिसंज्ञोमुनिवर्गोयद्वेदवत्श्रुतमिति ३ क्रमेणकथाअनुवदति मयेतिषड्भिः । प्रथमद्वितीयार्थौ द्वाभ्यांक्रमेणोक्तौ ४ । ५ तृतीयचतुर्थौनूद्यते बालाकेरितिद्वाभ्यां । यत्कृत्वंशिरोव्यपत्ययरूपम् ६ । ७ पंचमार्थंवदति याज्ञवल्क्यस्येति ८ षष्ठसप्तमयोस्तमाह याज्ञवल्क्येने ति । पियासुनागंतुमिच्छुना ९ अत्याश्रमिभ्यइति । तत्रअतीतग्रंथेएतत्एतावदर्थजातंमयाश्रुतम् १० यद्यवत्रभवतासंप्रार्थिताश्चेत्यादिनायमनचिकेतसोःसंवादउपक्षिप्तस्तत्रतांविद्यांसम कारांवदेत्याह संप्रार्थिताश्चेतित्रिभिः । साविद्याकार्यकादृशी ११ । १२ । १३

इत्युक्तेइति । वेदकीर्त्तितंकठशाखागतम् १४ तत्रप्रथमकंडिकाद्वयार्थमुपबृंहयति आसीदितिदशभिः । अरुणाख्यस्यपुत्रःकमनीयोर्थिभिःस्पृहणीयोयतोवाजपदोक्तान्नदानेनकीर्तिंप्राप्तइति १५ कदाचिदिति । कुत्रचिद्विश्वजिदाख्ये याःशुभागावस्ताःपुत्रस्यस्वंधनमितिप्रविधायकल्पयित्वा यतोऽतिबालेपुत्रेस्नेहवानिति धर्मज्ञमुख्यः 'वृद्धौचमातापितरौभार्यासाध्वीसुतःशिशुः । अप्यकार्यशतंकृत्वाभर्त्तव्यामनुरब्रवीत्' इतिवाक्यानुसरणात् १६ गोवित्तमिति । गोरूपंवित्तम् स्वभागेनस्वकीयभागाभिप्रायेण ताःगाः १७ पातुमिति । एतावृद्धागावोहिजलपानादिकमपिसम्यक्कर्तुमशक्ताइत्यभिव्यक्तुमेवपीतोदकाइत्यतीतार्थप्रत्ययप्रयोगःश्रुतौकृतइतिभावः गर्भधारणमिंद्रियपदोक्तम् १८ । १९ तस्येति । तस्योद्दालकस्यस्वभावादास्तिकःसांसिद्धिकधर्मश्रद्धावान् २० तद्विचारमभिनयति यद्येनेत्यादिना । स्पष्टम् २१ एताजरत्योगावोविप्राणांनसुखदाःप्रत्युतदुःखदाःसंति ततएतादृशीनांदानान्मेपितादुःखंयास्यतीति २२ अथ

इत्युक्तेगुरुराहैतदाख्यानंवेदकीर्तितम् ॥ प्रहृष्टोहृष्टमनसेस्वशिष्यायप्रियायसः १४ आसीदुद्दालकोनाम्नाविप्रोवेदविदांवरः ॥ अरुणस्यसुतोलोकेकमनीयतमःसदा ॥ अन्नदानेननितरांकीर्तिंप्राप्तोद्विजोत्तमः १५ कदाचित्कुत्रचिद्यागेसर्वस्वंदातुमुद्यतः ॥ पुत्रस्वंप्रविधायैवशुभागाःस्नेहसंयुतः ॥ पुत्रेऽतिबालकेविप्रोधर्मज्ञानांपुरःस्थितः १६ गोवित्तमेवबहुलमस्यासीद्ब्राह्मणस्यहि ॥ वृद्धागास्तुस्वयंतत्रजगृहेपुत्रलोभतः ॥ स्वभागेनचताःसोपिब्राह्मणेभ्योददौतदा १७ पातुंपानीयमप्येताअतुंचयवसंतथा ॥ नशक्ताःकेनदुग्धस्यदानेशक्तास्तुधेनवः १८ आशातासुकथंनामभवेद्गर्भस्यधारणे ॥ एतादृशीस्तुगादातुंप्रवृत्तोयंकदाचन १९ तस्यासीत्तनयःकश्चिन्नाचिकेताइतिश्रुतः ॥ स्वभावादास्तिकोनित्यंकुमारःपंचहायनः ॥ इदंविचारयामासपितुरंकस्थितस्तदा २० यद्येनदीयतेयस्मैयादृशायचयादृशम् ॥ ततेनलभ्यतेयस्मात्तादृशेनचतादृशम् २१ एतागावोऽधुनादत्ताःपित्राक्लेशैकहेतुकाः ॥ विप्राणांततएवायंपिताक्लेशंगमिष्यति २२ असुखानामयेलोकाःसर्वदैवभयप्रदाः ॥ दुःखदोब्राह्मणानांयस्तान्सयातिनसंशयः २३ तादद्दुःखदोमेत्रपितायाःस्युर्निरर्थकाः ॥ गास्तस्माद्मुमेतस्माद्वारयामिकुदानतः २४ अनेनस्थापितागावोमदर्थंयाःसुशोभनाः ॥ तासामेषकरोत्वत्रदानमस्यमयाहिकिम् २५ पुत्रदारादिकंवित्तंपरलोकोपकारियत् ॥ तदेववित्तंविज्ञेयमपरंलोहशृंखला २६ अहंचास्यसुतोयस्मात्तस्माद्वित्तंनसंशयः ॥ अस्यैवधर्मतःस्वस्यजनकस्यमहात्मनः २७ अंधंतमःपितायस्यदुःखोदधिसभंव्रजेत् ॥ सुतस्यजानतःपुत्रःपितुरुच्चारएवसः २८ ततोहमात्मनोदानेप्रेरयिष्याम्यमुंमयि ॥ स्नेहयुक्तंततश्चित्तमयंमेज्ञास्यतिस्वयम् २९

मर्थोमंत्रेणोक्तइतिदर्शयंस्तदर्थमाह असुखाइतिद्वाभ्यां । योब्राह्मणानांदुःखदःसोऽसुखसंज्ञान्भयप्रदान्लोकान्यातीति २३ साददिति । यानिरर्थकानिष्फलागावस्तागाविप्रेभ्योददत्समर्पयन्मेपिताविप्राणांदुःखदःसन्नुक्तंफलंगच्छेदतस्तंवारयामीति २४ तृतीयकंडिकार्थमुपबृंहयति अनेनेतिनवभिः । अनेनपित्रा अत्रयागेयागावोमदर्थंस्थापितास्ताएवकुतोनददाति अस्यपितुर्मेवितयाकिंप्रयोजनमिति २५ यतोवित्तस्यपरलोकोपकारएवप्रधानंफलमित्याह पुत्रेति । यत्पुत्रादिरूपंवित्तंतत्सर्वंपरलोकोपकारिसदेववित्तत्वेनवाच्यमपरंकेवलंबंधकत्वात्शृंखलाभामिति २६ अहमिति । अहमप्यस्यपुत्रत्वेनवित्तंभवामिधर्मतोधर्ममर्यादामालोच्येति २७ यस्यचपुत्रस्यपश्यतःपितुःपरलोकहानिनिमित्तंस्यात्सपुत्रःपुरीषसमइत्याह अंधमिति २८ ततइति । ततःस्वस्यवित्ततामालोच्यएतंमयिस्नेहयुक्तंपितरमहमात्मनोदानेप्रेरयामि एतावताऽयंमदभिप्रायंमदर्थस्थापितगोदानीयतारूपंज्ञास्यति अथवाप्रक्ष्यतिततःस्वाभिप्रायंवक्ष्यामीतिद्वयोरर्थः २९

३० इतिसंचिंत्येति । तनयोनचिकेताःपितरंप्रतीत्युक्तवान् इतिकिं हेतातमह्यंकस्मैद्विजायदास्यसीतिनकेवलमेकवारंतेनेदमुक्तंकिंतुद्वितीयवारंतृतीयवारंचेत्यर्थः ३१ एवंतंप्रगल्भंवदंतंपिताप्राहेत्याह पितापीति ३२ पितृवाक्यमभिनयाते त्वामिति । स्पष्टम् ३३ चतुर्थार्थंप्रपंचयाति एवमुक्तइति । ततःसनचिकेताएवंचिंतयामास एवंकथं एषपितास्वस्यदुःखप्रयोजकंवचनं किमर्थमुक्तवान् ३४ पुत्रस्येति । एतद्दुःखम् ३५ ममत्विदंप्रतिकूलंनभवतिअवश्यंभाविन्यर्थेपितृवाक्यपरिपालनजन्यधर्मस्यप्रत्युतलाभादित्याह ममेति । श्रेयोधर्मानुकूलमतःपरंनास्ति यःस्वयंग्रहीष्यतितस्मैपित्रादानमिति ३६ परंत्वेतस्यदुःखमनुसंधायममचित्तंविषीदतीत्याह अस्येत्यादिना । अत्रमद्वियोगे पुत्रस्यशिष्यस्यवातिस्रोवृत्तयः 'उत्तमश्चिंतितंकुर्यात्प्रोक्तकारीतुमध्यमः । अधमोऽश्रद्धयाकुर्यात्प्रत्याख्याताथतद्वचः ' इतिप्रसिद्धाः तत्राधमांवृत्तिमहंनकदाचिद्भजामिकिंत्वेतस्यबहूनांशिष्याणांपुत्राणांवाउत्तमांमध्यमांवावृत्तिमेवभजामिअतःप्रियोऽसत्य

अथचैवंवचःश्रुत्वाप्रश्नमेषकरिष्यति ॥ ततोहंविशदंतस्मैवक्ष्येपित्रेत्रपृच्छते ३० इतिसंचिंत्यतनयःपितरंप्राहधर्मवित ॥ तातकस्मैद्विजेंद्रायमांभवान्संप्रदास्यति ॥ द्विस्त्रिवारमिदंवाक्यमुक्तवान्पितरंप्रति ३१ पितापिपंडितंमन्यंविज्ञायतनयंततः ॥ कोपसंरक्तनयनइदंवचनमब्रवीत् ३२ त्वामहंपंडितंमन्यंपितृस्नेहावमानकम् ॥ दास्याभिमृत्यवेसर्वलोकसंहारहेतवे ३३ एवमुक्तेसपुत्रोपिचिंतामेतामुपागतः ॥ अयंदुःखकरंस्वस्यकस्मादेतद्वचोब्रवीत ॥ पितामामयथाकश्चित्तामसःपामरःपरः ३४ पुत्रस्यमरणाद्दुःखंब्रह्महत्याफलंविदुः ॥ कुतएतत्स्वयंस्वस्यकृतवान्बुद्धिमानयम् ३५ ममनातःपरंश्रेयोयन्मांतस्मैपितास्वयम् ॥ दत्तवान्मृत्यवेयोमांस्वयमेवग्रहीष्यति ॥ अस्यदुःखंपरंनित्यंपितुरत्रभविष्यति ॥ यतोहंप्रथमोनित्यंबहूनामस्मिमध्यमः ३७ तनयानांप्रियश्चैवसर्वदास्मिमहात्मनः ॥ मांविनानक्षणंत्वेषपितामेत्रावतिष्ठते ३८ किंस्विद्यमस्यसंयातेगृहेमयिकरिष्यति ॥ कार्यंमयाविनानूनंमत्तएषभविष्यति ३९ इतोमयिगतेनूनंदुःखमस्यभविष्यति ॥ कर्तव्यंचमयाकिंस्विद्यमस्याद्यभविष्यति ४० ममास्यचवियोगोयमुभयोरप्रयोजकः ॥ यमस्यचततःकष्टंकृतवान्मेपिताधुना ४१ इदानीमेववदनंपरिम्लानंपितुर्मम ॥ अश्रूणिचबहून्येषमांविलोक्यविमुंचति ४२ आलिंगयतिमांगाढंस्नेहपूर्णांतरात्मना ॥ अनुतापंपरंप्राप्तस्तिष्ठत्येषोतिदुःखितः ४३ ततएवंवदाम्यद्यमयिस्नेहंयथात्यजेत ॥ अन्यथात्वृतवाक्येननरकोस्यभविष्यति ॥ इतिसंचिंत्यपितरमिदंवाक्यमभाषत ४४ अनुपश्ययथापूर्वेपूर्वजास्तवसुव्रत ॥ अनृतंनोक्तवंतस्तेमरणेपिमहाधियः ॥ आत्मानमवलोक्याथतान्सर्वांश्चस्वपूर्वजान् ४५ प्रतिपश्यपरांस्तद्वत्ताद्दशान्सत्यवादिनः ॥ त्रैवर्णिकान्महाभागान्दध्यङ्ङाथर्वणादिकान् ४६

वियोगश्चास्मीतिद्वयोरर्थः ३७ । ३८ किंचमद्गमनेनयमस्यकश्चिदुपकारोनास्तीत्याह किंस्विदिति । स्विद्वितर्के । कार्यंउपकारं । मत्तोविश्रांतः ३९ ततइति स्पष्टम् ४० ममेति । अप्रयोजकःअनुपकारकः यमस्यचाप्रयोजकइतिसंबंधः ४१ अस्येदानीमेवपरितापस्तुलक्षणैरनुभाव्यतइत्याह इदानीमेवेतिद्वाभ्यां । स्पष्टंद्वयम् ४२ । ४३ पंचमार्थंप्रपंचयति ततइति । ततएतादृशींदशामस्यालोच्यअनृतादेनंपरित्रातुंमयाकिंचिद्वाच्यमेवंविचार्यनचिकेताइदमुक्तवानित्यर्थः ४४ इदंकिमित्याकांक्षायामाह अनुपश्येत्यादि । अनुपश्येत्यस्यकोर्थः हेतातत्वमात्मानमभापितपूर्वानृतमालोच्य पूर्वान्पितृपितामहादीननुक्तानृतकान्पश्येति । तथाप्रतिपश्येत्यस्यकोर्थः तान्सर्वानालोच्यस्ववंश्यतुल्यान्परांश्चत्रैवर्णिकान्सत्यवादिनःपश्येतिद्वयोरर्थः ४५ । ४६

परानुदाहरति कर्णइत्यादिना । कर्णोविप्ररूपायेंद्रायत्वचंददौ । शिबिश्चशरणागतपोतत्राणार्थंस्वमांसं जीमूतवाहनश्चशरणागतार्थंराक्षसायतनुंददौ सिंहायमयूरध्वजवत् दधीचिश्चदेवेभ्योवज्रार्थं मस्थीनियाचमानेभ्यस्तानिददावितीतिहासादौप्रसिद्धमित्यर्थः ४७ तथात्राप्यतीतग्रंथेप्रोक्तानिसत्यसंरक्षणायमहात्मनांचरितान्यनुसंधेयानीतियद्दध्यङ्ङाथर्वणादिकानित्युक्तंतत्स्फुटयति दध्य ङ्ङितिद्वाभ्यां । स्पष्टम् ४८ । ४९ तथाकैकेय्यैदत्तवरयोःपूर्त्यर्थमात्मत्वेननिरतिशयप्रेमास्पदंश्रीरामचंद्रमपिवनेविसर्जयतोदशरथस्यराज्ञोवृत्तमनुसंधेयमित्याह तथेति ५० एवमिति । 'बहुलाः कृत्तिकामावः'इत्यमरस्तथाचयथागावःशरणागतत्राणात्मकस्वप्रतिज्ञानिर्वाहार्थंयतमानायथागावोगोपायंतीतिश्रुतौलोकेचप्रसिद्धास्तत्प्रभृतयोऽन्येचबहवःसत्यपराःसंतीत्यर्थः ५१ अनित्येनक्षणभं गुरेणजीवितेननित्यस्यसत्यस्यसाधनमेवकौशलमितिदर्शयन्नाह अपिसस्यमिति । किंचसस्यंवृक्षादिफलमिवजनःशरीरजातंकालरूपसूर्येणपच्यतेविनाशोन्मुखीक्रियतेतथातद्वदेवेपजनःपुनःपुनर्जा यतेइत्यर्थः ५२ फलितमाह ततइतिद्वाभ्यां । एवंसत्यपालने श्रेयःशुभम् ५३ । ५४ एवमुक्तइति । प्राहिणोत्प्रेषितवान् ५४ पष्ठसप्तमयोर्यमंप्रतियमपरिवारवाक्याभिनयपरयोरर्थम

कर्णस्त्वचंशिबिर्मांसंजीवंजीमूतवाहनः ॥ ददौदधीचिरस्थीनिप्रतिश्रुत्यवचःपुरा ४७ दध्यङ्ङाथर्वणोश्विभ्यांब्रह्मविद्यांप्रतिश्रुताम् ॥ त्यक्त्वानिजंशिरोप्याह ब्राह्मणोवेदवित्तमः ४८ इंद्रःप्रतर्दनायाहब्रह्मविद्यांस्वशत्रवे ॥ प्रतिज्ञायददौकामवरंजनकभूभुजे ॥ याज्ञवल्क्योपिमेधावीब्राह्मणोवेदवित्तमः ४९ तथादशरथो राजाप्राणेभ्योपिप्रियंसुतम् ॥ अरण्येप्रेषयामाससिंहव्याघ्रादिसेविते ५० एवमन्येपिबहवःकृतवंतोतिदुष्करम् ॥ सत्यपाशनृशंप्राप्ताबहुलाद्याश्चजंतवः ५१ अपिसस्यंयथातद्वद्दिवसेदिवसेजनः ॥ पच्यतेकालसूर्येणतद्वदेवप्रजायते ५२ ततोहंस्वयमेवात्रमरिष्यामिनसंशयः ॥ त्वंचतद्वज्जनाःसर्वेमृत्युपाशवशंगताः ५३ ततस्त्वंवचनंसत्यंकुरुदत्वायमायमाम् ॥ एवंतवममाप्यत्रश्रेयस्तातभविष्यति ५४ एवमुक्तोतिदुःखेनपितापुत्रंयमायसः ॥ प्राहिणोद्दीनवचनःसत्यपाशवशंगतः ५५ सतुगत्वामहाभागोनचिकेतायमालयम् ॥ पितृभक्त्यातथैवास्मतपसाशुद्धचेतसा ५६ यमेग्रामांतरंयातउपवासत्रयंगृहे ॥ चकारतस्यतेनात्मपरिग्रहणका रणात् ५७ अन्यथास्वपितुर्वाक्यमसत्यंतद्भविष्यति ॥ दातव्यस्यात्मनस्तेनयमेननपरिग्रहे ५८ यमोपिपरिवारेणकृत्वासंकेतमात्मनः । दिनत्रयंगृहेनागात स्यचित्तपरीक्षकः ५९ एनमागतमाज्ञायसर्वेतेयमकिंकराः ॥ गृहेस्थितमिदंवाक्यमुक्तवंतोतिधार्मिकाः ६० अस्मिन्यमपुरेनोरेकिमर्थंविप्रबालक ॥ आगतो सीतितैरुक्तेसर्वमेतदुवाचसः ६१ पूर्वमेवचतेसर्वेज्ञाततत्त्वायमाश्रिताः ॥ ज्ञात्वाबालस्यवचनात्पुनरूचुरिदंवचः ६२

वतारयति सत्विति । सनचिकेताःपितृभक्त्यादिप्रभावात्सशरीरोयमालयंगत्वायमेग्रामांतरगतंश्रुत्वादिनत्रयमुपवासंकृतवान्मांपितृदत्तंयमोगृह्णीयादित्येतदर्थमितिद्वयोरर्थः ५६ । ५७ अन्य थेति । अन्यथाउपवासात्मकहठाकरणेयमकर्तृकआत्मनोनचिकेतसःपरिग्रहोंगीकारोनस्यात्तथाचपितुर्वाक्यमसत्यंस्यात्तन्माभूदित्याशयेनतथाकृतमितिपूर्वेणसंबंधः ५८ यमोपीति । यमोपिप रिवारेणानुजीविवर्गेणसहतस्यनचिकेतसश्चित्तधैर्यंपरीक्षितुंसंकेतंसभवद्भिर्यथाकथंचिद्विसर्ज्यइत्याकारंकृत्वात्रिदिनंनागादिति ५९ एनमिति । एनंनचिकेतसम् ६० अस्मिन्निति । हेविप्रात्मज त्वमिहकिमर्थमागतइत्येवंतैर्यमपुरुषैःपृष्टेसतिसएतदागमननिमित्तंसर्वमुवाचेति ६१ पूर्वमेवेति । धर्मराजसांनिध्याज्ज्ञाततत्त्वाअपियमपुरुषास्तद्वाक्यात्पुनर्ज्ञात्वाइदमाहुः इदंकिं हेवत्सयमआ युःक्षयात्पूर्वंचतुर्विधशरीरिणांमध्येकंचनापिअदत्तंदत्तंवानगृह्णाति किंत्वयमस्येहासन्निधानात्त्वयागृहंप्रत्येवगंतव्यमितित्रयाणामर्थः ६२

६३। ६४ इत्यादीति। नचचाल्धैर्यादितिशेषः स्फुटमन्यत् ६५ एवमवतारितयोस्तयोरर्थमाह यमेति । हेयमराजतेगृहेविप्रकुमाररूपोऽतिथिरग्निरूपआगतोवर्त्ततेतस्यशांतयेझटितिशीघ्रमुदकं पाद्यादिजलमाहरप्रापयेत्यर्थः ६६ एतत्स्फुटयति ज्वलतइतिद्वाभ्यां । यथावह्नेःशांतिर्जलेनतथापाद्यादिदानेनातिथेरिति ६७ शांतीति। यथाशांतिमनीतोग्निर्गृहंदहेत्तथाऽनर्चितोतिथिःसर्वंदहेदि त्यर्थः ६८ सर्वपदार्थंदर्शयति संभावितेतिचतुर्भिः। संभावितस्यानिश्चितप्राप्तिकस्यसुखस्येच्छाआशेत्युच्यते निश्चितस्यसुखस्येच्छाप्रतीक्षेत्युच्यते स्वाभीष्टेनजनेनसहसमागमःसंगतमित्युच्यते त थालोकेवेदेचार्थप्रकाशिकासुखकरीवाणीसूनृतेत्युच्यतइतिद्वयोरर्थः ६९। ७० इष्टपूर्तशब्दयोरर्थौदर्शयति अग्नीति । तटाकादीत्यादिपदेनप्रपादानादिपरिग्रहः ७१ पुत्रपशुपदयोरर्थावुच्येते और साइति। गवाद्याश्चसल्लक्षणाःपशवइति एतदाशादिरूपंसर्वमतिथिर्दहतियस्यमंदस्यगृहेसोतिथिर्ब्राह्मणोनश्नन्वसेदितिसंबंधः तस्मात्सोवश्यमर्च्यइतिभावः ७२। ७३ अष्टमार्थमाह एवमिति

वत्सनायुःक्षयात्पूर्वंयमोगृह्णातिकिंचन ॥ अदत्तंवापिदत्तंवाचतुर्विधशरीरिणाम् ६३ धर्मराजश्चनात्रास्तिप्राणिनांयोनियामकः ॥ ततस्त्वंस्वगृहंशीघ्रंगच्छस्त्वंपि तरंप्रति ६४ इत्यादिबहुधोक्तस्तैर्नचचालयदातदा ॥ तृतीयेदिवसेतीतेयमआगान्निजंगृहम् ॥ आगतंधर्मराजंतंकिंकराइदमूचिरे ६५ यमवैश्वानरोविप्रकुमा रस्तेगृहेतिथिः ॥ तस्यशांत्यर्थमुदकंझटित्याहरमानद ६६ ज्वलतोत्रयथावन्हेर्भवेच्छांतिर्जलैःसदा ॥ अर्घ्यपाद्यादिभिस्तद्वदतिथेःशांतिरीरिता ६७ शांति शून्योयथावन्हिरुदकैःसपरिच्छदान् ॥ गृहान्दहतितद्वत्स्यादतिथिःसर्वदाहकः ॥ अपूजितोनरेणायमर्घ्यपाद्यादिभिर्जलैः ६८ संभावितसुखस्याशाप्रतीक्षा निश्चितस्यच ॥ सुखस्यसंगतंतद्वद्विविधंसुखहेतुकम् ६९ स्वाभीष्टेनजनेनात्रसूनृतायासमीरिता ॥ वाणीसुखकरीलोकेवेदेचार्थप्रकाशिनी ७० अग्निष्टोमा दिकोयागइष्टमित्युच्यतेबुधैः ॥ कूपारामतटाकादिपूर्त्तमुक्तंमनीषिभिः ७१ औरसास्तनयास्तद्वत्सर्वलक्षणसंयुताः ॥ गवाद्याःपशवस्तद्वद्बहुमूल्याअनेकशः ७२ एतत्सर्वंदहत्येवपुरुषस्याल्पचेतसः ॥ यस्यानश्नन्वसेदत्रब्राह्मणस्त्वतिथिर्गृहे ७३ एवमुक्तोयमस्तैःस्वैःकिंकरैरुक्तवानथ ॥ अतिथिंभीतचेताःसंस्तंतदा नचिकेतसम् ७४ तिस्रोरात्रीर्गृहेयन्मेह्यवात्सीस्त्वंप्रियोऽतिथिः ॥ अनश्नंस्ततएवत्वंवरांस्त्रीन्वरयाधुना ७५ स्वस्तितेस्तुप्रियंकर्तुंयदिब्रह्मन्समुद्यतः ॥ नमस्तेऽ तिथयेतस्मादस्तुमेचास्त्वनामयम् ७६ एवमुक्तोयमेनैवनचिकेतावरांस्त्विमान् ॥ ववेत्रीन्बुद्धिसंपन्नोधर्मराजंप्रतीदृशान् ॥ पितृप्रसादमग्नेश्चज्ञानंचैवात्मनस्त था ७७ पितृप्रसादमेवंसवव्रेबुद्धिमतांवरः ॥ दुःखशून्योयथाहंवैत्वत्प्रसादाद्विविस्थितः ७८ सुमनाविगतक्रोधस्तथामांप्रतिगौतमः ॥ यमलोकात्पुनःप्राप्तंना विश्वासमुपागतः ॥ यथापूर्ववदेदेपवरोमेप्रथमःस्मृतः ७९

भिर्भिः। इत्थंतैःपार्षदैरुक्तोयमस्तमतिथिंप्रत्येवमुक्तवानिति ७४ एवंकथमित्याकांक्षांपूरयति तिस्रइतिद्वाभ्यां । हेब्रह्मन्यतस्त्वंमद्गृहेऽनश्नंस्तिस्रोरात्रीरवात्सीरुषितवानसिततस्तद्दोषशांत्यर्थंवर प्रयंवरयेति ७५ स्वस्तीति । हेब्रह्मन्यदित्वंक्षमयामत्प्रियंकर्तुंसमुद्यतोसितस्मात्तेपिस्वस्त्यस्तुनमश्चास्तुत्वत्प्रसादान्ममसपरिवारस्यानामयंदुःखाभावश्चास्त्वित्यन्वयः ७६ उत्तरग्रंथमवतारयति एवमुक्तइति। इत्युक्तोनचिकेताःपितृप्रसादाग्निज्ञानात्मज्ञानरूपांस्त्रीन्वरान्वृतवानित्यर्थः ७७ नवमार्थंदर्शयति पितृप्रसादमितिपङ्क्तिः । तत्रपितृप्रसादमित्थंसनृतवान् इत्थंकथं हेधर्मराजयथादि विस्वर्गरूपेमवल्लोकेस्थितोहंदुःखशून्यत्वादिमांस्तथामत्पितादुःखशून्यत्वसौमनस्यनिष्क्रोधत्वविश्वस्तत्वैर्युक्तःसन्मामितोगतंपूर्ववत्संभाषेतेतिद्वयोरर्थः ७८। ७९

ननुतत्रमुनिवर्येदुःखशून्यत्वादिमतिद्वंद्विदुःखादिकंकथंसंभाव्यतइतिशंकांवारयितुंदुःखादिनिमित्तानिदर्शयति पितुरिति । मददर्शनेनदुःखंमांप्रतिक्रोधावेशेनक्रूरवाक्यसमीरणोपलक्षितंदौर्मन
स्यंचसंभाव्यतइत्यर्थः ८० पंडितमिति । यथामयिपंडितंमन्यतांमत्वाक्रोधश्चसंभाव्यते ८१ यममिति । तथायमंगतानातेनैवदेहेनपुनरागमनस्यप्रायेणादर्शनादविश्वासश्चेतोगतेमयिसंभा
व्यते ८२ इवइति । एतद्दुःखादिकंसंभाव्यंवस्तुतोमत्पितर्यसंभवदपिव्यवहारदृष्ट्यासंभावनायोग्यंत्वत्प्रसादतइतोमयिगतेमास्त्वित्यर्थः ८३ दशमार्थमाह एवमुक्तइतिचतुर्भिः । स्पष्टम् ८४
यथेति । मयाप्रेरितेत्वयिइतोगतेसतिसत्वत्पितायथापूर्वंविश्वासीभविष्यतितथातवापिसर्वंदुःखशून्यत्वादिकंभविष्यतीति ८५ त्वत्कृतेनेति । तथात्वत्कृतेनत्वदाचरितेनदुःखंदौर्मनस्यंनभवि
ष्यतिसचोद्दालकोऽरुणस्यापत्यंवीतमन्युःस्वस्थश्चसन्निद्रादिकंकरिष्यतित्वामागतंदृष्ट्वेतिद्वयोःसंबंधः उद्दालकपदेश्रुतौस्वार्थिकइञितिबोध्यम् ८६ । ८७ द्वितीयवराभिनयपरयोरेकादशद्वाद

पितुर्मेसुमहद्दुःखंवर्ततेमामपश्यतः ॥ मनसश्चतथातापोमहान्वाक्यसमीरणे ॥ मृत्यवेत्वाददामीतिसुक्रोधाविष्टचेतसः ८० पंडितंमन्यतांतद्वन्ममज्ञा
त्वामहात्मनः ॥ क्रोधश्चसुमहांश्चित्तेवर्ततेवह्निनासमः ८१ यमंप्राप्यतथाकेपिमर्त्यलोकंनयांतिच ॥ तेनैववपुषातस्मादविश्वासश्चसंभवेत् ८२ इतो
मयिगतेतत्रधर्मराजवरप्रद ॥ माभूयादखिलंत्वेतत्संभाव्यंत्वत्प्रसादतः ८३ एवमुक्तोधर्मराजोनचिकेतसमब्रवीत् ॥ सर्वमेतत्त्वयाप्रार्थ्यंपितुस्तेद्यभविष्य
ति ८४ यथापूर्वंसविश्वासीमर्त्यलोकंगतेत्वयि ॥ मयासंप्रेरितेतेपितावत्ससर्वंभविष्यति ८५ त्वत्कृतेनैवदुःखंनगमिष्यतिकदाचन ॥ वीतमन्युश्चभवि
तासुखंस्थास्यतिसर्वदा ॥ निद्राहारादिकंतद्वत्सुखचित्तोगमिष्यति ८६ उद्दालकःपितातेसआरुणिःसर्वशास्त्रवित् ॥ दृष्ट्वामृत्युमुखान्मुक्तंभवंतंपुनराग
तम् ८७ पितृप्रसादमासाद्यवरंयमसुखात्पुनः ॥ नचिकेताधर्मराजमिदंवव्रेवरांतरम् ८८ स्वर्गेलोकेभयंकिंचिन्मनुजानांनविद्यते ॥ मृत्योस्त्वत्तोजरा
तोव्याधितःशत्रुतोपिवा ८९ क्षुधातोवापिपासातःशोकतोमोहतोपिवा ॥ मोदतेचसदाजंतुःसुखीभूत्वेतिहिश्रुतम् ९० सतुस्वर्गोनृभिर्गम्यश्चितेनैवा
ग्निनासदा ॥ स्वर्ग्यमग्निंभवान्स्वर्गेस्मरत्येवनसंशयः ॥ श्रद्दधानायमह्यंत्वंतमग्निंवक्तुमर्हसि ९१ मोक्षंचस्वर्गलोकस्थाभजंतिब्रह्मविद्यया ॥ आभूतसं
प्लवंस्थानंब्रह्मज्ञानंविनापिच ॥ अयंवरोद्वितीयोमेदातव्योभवतानघ ९२ एवमुक्तोयमोराजानचिकेतसमब्रवीत् ॥ स्वर्ग्यमग्निमहंजानन्ब्रवीमिनचिकेतसे ॥ तु
भ्यंप्रकर्षतस्तत्त्वंसावधानमनाःशृणु ९३

शयोरर्थमाह पितृप्रसादमितिपंचभिः । वरांतरंद्वितीयंवरम् ८८ इदंकिमित्याकांक्षायामाह स्वर्गेइति । स्वर्गपदेनात्रस्वर्लोकमारभ्यब्रह्मलोकावसानऊर्ध्वलोकसमुदायोविवक्षितः तत्रस्वर्गेलोके
गतानांमनुजानामधिकारिणांभयंमृत्युरूपाद्भवतोजरादिभ्यश्चनविद्यतेतत्रगतोजंतुःसुखेनमोदतेहृष्यत्येवेतिमयाश्रुतंवेदविद्भ्यइतिशेषइतिद्वयोःसंबंधः ८९ । ९० सत्विति । सचस्वर्गोश्चितेनचय
नसाध्येनाग्निनानिश्चितंलभ्यइतिचश्रुतं तंचस्वर्ग्यंस्वर्गसाधनभूतमग्निंस्वर्गेवर्तमानोभवानभिजानात्येवतंमह्यंव्याचक्ष्वेत्यर्थः ९१ अयमग्निरमृतत्वहेतुःश्रुतइत्याह मोक्षमिति । यतोऽनेनाग्निना
स्वर्गंगताब्रह्मविद्याद्वारामोक्षरूपंमुख्यममृतंभूतसंप्लवाख्यप्रलयपर्यंतस्थितिरूपंगौणममृतत्वंवायांतीत्यर्थः ९२ त्रयोदशादित्रयाणामर्थमाह एवमुक्तइतिद्वादशभिः । एवमुक्तोयमआह हेनचिकेत
स्तुभ्यमहंस्वर्ग्यमग्निंप्रकर्षेणइतिकर्तव्यताख्यांगादिकलापवैशिष्ट्यरूपेणाहंब्रवीमितंशृणु ९३

अनंतेति । अनंतस्यस्वर्गलोकस्यलाभेक्षेमेचकारणभूतमेतमग्निंवक्ष्यमाणविराड्रूपत्वात् काष्ठेष्वग्निवत्रिपुलोकेपुस्थितमपिधीमतांबुद्धावेवगुहाभूतायांस्थितंगोप्यत्वाद्वस्तुतःसाक्षिरूपत्वाद्वाजानी हीत्यर्थः ९४ एवमिति । एवमुक्ताधर्मराजस्तस्मैशिष्यायतमग्निंविराड्रूपत्वेनसर्वकारणत्वाल्लोकादिंलोकानामाद्यमवदत् तथाचयनयागेतस्याग्नेःस्वरूपघटिकाइष्टकायावत्योयत्संख्याकायादृशरू पाश्चभवंतियथाचयेनप्रकारेणचीयंतेन्यस्यंतेयच्चान्यत्तदुपयुक्तंद्रव्यादिकंतत्सर्वमवददितिद्वयोरर्थः ९५ । ९६ प्रत्यवादीदिति । सचनचिकेतास्तत्सर्वंमृत्युतोयमादधीतंतदाज्ञयाप्रत्यवादीत् प्रत्युच्चारितवान् विश्वाससहितोभयप्रयुक्तगद्गदत्वादिहीनः ९७ शिष्यस्येति । अग्नेश्चित्याग्निग्रंथस्यप्रत्युच्चारणादनुवादात्तुष्टोयमइदमाह इदंकिं हेनचिकेतःअयमधिकोवरोदीयतेयदयमग्नि स्त्व संबंधवाचकेननाचिकेतइतिनाम्नाप्रसिद्धोभविष्यतीतिद्वयोरर्थः ९८ । ९९ एतदेवस्फुटयति नाचिकेतमिति । सद्धियःसुबुद्धयः १०० अन्यंचवरंसृंकापदोक्तमालारूपंददामीत्या ह अन्यामितित्रिभिः स्पष्टम् १०१ मालांवर्णयतिजांबूनदेति । उत्तमकनकमयामणयोमण्याकाराःकणाःप्रोतायत्रतादृशैःसूत्रयष्टिभिर्विराजितांनवभिर्वज्रादिभीरत्नैःसूर्यवद्दीप्तांस्थूलामलकतु

अनंतलोकसंप्राप्तौस्थितावपिचकारणम् ॥ एतमग्निंसदाबुद्धौधीमतांसमवस्थितम् ॥ विद्धिस्वरूपतःसंतंकाष्ठेष्विवजगत्त्रये ९४ एवमुक्तायमोराजालोकादिंस र्वकारणम् ॥ विराडात्मकमग्निंतंतस्मैशिष्यायसोवदत् ९५ यद्रूपाइष्टकास्तद्वद्यावंत्योवायथापिवा ॥ चीयंतेसकलंतद्वद्द्रव्यमंत्रक्रियादिकम् ९६ प्रत्यवादीत्स चाप्येतदधीतंयत्तुमृत्युतः ॥ विश्वाससहितःशिष्योधर्मराजस्यशासनात् ९७ शिष्यस्यतस्यसंलोक्यमृत्युःप्रज्ञामलौकिकीं ॥ यथोक्तोच्चारणादग्नेःसंतुष्टइदमब्र वीत् ९८ वरत्रयाद्वरोन्योयंमयातुभ्यंप्रदीयते ॥ तवैवायंमयोक्तोग्निर्नामधारीभविष्यति ९९ नाचिकेतममुंवन्हिंकथयिष्यंतिसद्धियः ॥ यावद्वेदाश्चसूर्यश्चत थाभूतादिकंजगत् ॥ तावदग्निरयंब्रह्मंस्तवनाम्नाभविष्यति १०० अन्यंचैववरंतुभ्यंददामिनचिकेतसे ॥ अग्नेरुच्चारणात्तुष्टःस्वशिष्यायमहात्मने १०१ जांबू नदमणिप्रोतसूत्रसंगविराजितां ॥ अमूल्यनवरत्नौघमंडितांसूर्यसन्निभाम् १०२ स्थूलामलकसंमानमुक्ताकोटिविलंबिनीं ॥ मालामिमांमयादत्तांस्ववक्षसिविधार य ॥ चित्रवर्णांयथामेघोविद्युतंशब्दसंयुताम् १०३ इत्युक्त्वातामदान्मालांतस्मैसनचिकेतसे ॥ धर्मराजोऽतिसंतुष्टोह्यग्नेरत्रानुभाषणात् १०४ नाचिकेतममुंयो ग्निंत्रिश्चित्त्वोक्तविधानतः ॥ यागांस्त्रीन्कुरुतेमातृपित्राचार्यैःसुशिक्षितः १०५ जन्ममृत्यूतरेत्सोत्रब्रह्मविज्ञानजन्मना ॥ विनापिब्रह्मविज्ञानसाकल्यंवाभवेत्र हि १०६ स्वर्गेवासोथवामोक्षोब्राह्मणस्यहिकस्यचित् ॥ स्वर्गादस्यपरिभ्रंशोधर्मिष्ठस्यमहात्मनः ॥ नभवेत्पुण्यंयावद्वैतावत्कालंवसेद्ध्रुवम् १०७

स्थानांमुक्तानांकोटिभिरसंख्यपंक्तिभिरग्रभागैर्वापरस्परंमिलितैर्दीर्घाभिमांसशब्दांमालांविद्युतंमेघइवधारयेतिद्वयोरर्थः १०२ । १०३ इत्युक्तेति । अग्नेरग्निग्रंथस्यात्रगुरोःसन्निधावनुभाष णादनुवादात्तुष्टः १०४ त्रिणाचिकेतइत्यादेःषोडशस्यार्थमाह नाचिकेतमितित्रिभिः । इममग्निंमद्दत्तान्नाचिकेतसंज्ञंत्रिस्त्रिवारंचित्वाचयनेनसंपाद्यत्रीन्यागानग्निष्टोमादिकान्योमात्राआपंचमव र्षात्ततःपित्राततआचार्येणचसुशिक्षितःशिक्षाद्वारासंबद्धःसन्कुरुतेसब्रह्मविज्ञानजन्मनाविनापिब्रह्मलोकाप्तिद्वाराजन्ममृत्यूतरेत् अथवाअत्रभवेजन्मनिब्रह्मविज्ञानस्यसाकल्यंसंपत्तिंजन्मादितरण साधनभूतांलभेतेतिद्वयोरर्थः १०५ । १०६ स्वर्गइति । अथवातस्यस्वर्गवासरूपंमोक्षरूपंवाजन्ममृत्युतरणंभवतिपरंतुसमोक्षःकस्यचिदेवभवतिदुर्लभत्वात् स्वर्गस्यजन्ममृत्युतरणरूपतामु चितमत्यंतिकत्वमिदमेव इदंकिं धर्मिष्ठस्यस्वर्गाच्चपरिभ्रंशोनभवेत्पुण्यपर्यंतंवासश्चस्यादित्यर्थः १०७

ब्रह्मणइति । हिरण्यगर्भरूपाद्ब्रह्मणोजातंविराडात्मकमेतमग्निंदेदीप्यमानंसर्वैःस्तुत्यंचयोज्ञात्वाबाह्यंकर्मयागादिरूपंआदिपदग्राह्यमुपासनंचकरोतिसभावनातारतम्यानुसारेणस्वर्गरूपांमोक्षरूपांवाशांतिंव्रजतीत्यर्थः १०८ सकलकर्मलोपसंहारपरस्यसप्तदशस्यार्थमाह यतएवमिति । यतएवमीदृक्प्रभावोऽयमग्निस्ततइदंसिद्धं इदंकिं येनरूपसंख्याप्रकारैस्त्रिविधायाइष्टकाश्रित्याग्नेः स्वरूपभूतास्तदात्मकमेतत्त्रयंविज्ञायअयंनाचिकेतोग्निस्त्रिवारंचितःसस्वर्गंमोक्षंवाक्रमेणप्राप्यमोदतेइत्यर्थः १०९ अष्टादशस्यार्थमाह फलेनेति । एवंसफलमग्निरूपदेवविज्ञानमुक्त्वापुनर्यमऊर्ध्वलोकात्मकमग्निंनिर्दिशन्सन्निदमाह हेनचिकेतःयस्तुभ्यंमयाग्निरुक्तःसएषदृश्यतेस्वर्गरूपेण एवंद्वितीयवरपूर्त्तौसत्यांतृतीयंवरयेतिद्वयोरर्थः ११० । १११ येयंप्रेतेइत्यादेरूनविंशस्यार्थमुपबृंहयति एवमुक्तेपुनरितित्रिंशता । स्पष्टं ११२ धर्मराजेति । हेधर्मराजसर्वस्यदेहिनोमरणंप्रारब्धांतकालावच्छिन्नत्वाद्भवति मृत्युर्जन्मवतामित्यादिपुराणवचनैर्मृत्योर्जन्मव्यापकतायाःप्रसिद्धेरितिद्वयोःसंबंधः ११३ । ११४ अतोऽन्यदार्त्तंजातस्यहिध्रुवोमृत्युरित्यादिश्रुतिस्मृतिवचनानिचोक्तव्याप्तिंदर्शयंतीतिसूचयन्नाह जातानामिति । ब्रह्माहिरण्यगर्भस्तत्प्रभृतीनांजन्मभाजांमरणंध्रुवमितिमयाश्रुतमिति

ब्रह्मणःसूत्रतोजातमग्निंसर्वज्ञरूपिणम् ॥ विराजंदीप्तवपुषंस्तुत्यंसर्वैःसुरासुरैः ॥ ज्ञात्वाकर्मादिकंकृत्वास्वर्गंमोक्षंचवाव्रजेत् १०८ यतएवंततोयेनत्रिश्चितोग्निर्भवेदयम् ॥ एतत्त्रयंसुविज्ञायरूपसंख्याप्रकारतः ॥ इष्टकाअग्निरूपंसस्वर्गेलोकेत्रमोदते १०९ फलेनसहितंदेवमग्निमुक्त्वायमःपुनः ॥ इदंवचनमाहैतत्स्वशिष्यंनचिकेतसम् ११० अंगुल्यानिर्दिशन्नाग्निमेषतेग्निर्मयेरितः ॥ नचिकेतस्त्वयापृष्टःस्वर्ग्योयोदुर्लभोनृणाम् ॥ द्वितीयोयंवरोजातस्तृतीयंवरयाधुना १११ एवमुक्तेपुनःप्राहतृतीयवरलिप्सया ॥ नचिकेताधर्मराजंसत्यपाशवशंगतम् ११२ धर्मराजजनःसर्वश्चतुर्विधशरीरभाक् ॥ म्रियतेसर्वथैवांतेकालादेवनसंशयः ११३ मृत्युर्जन्मभृतांयस्माद्देहेनसहजायते ॥ अद्यवाब्दशतांतेवाततःसर्वोमृतिंव्रजेत् ११४ जातानांमरणंनित्यंब्रह्मादीनांसमंततः ॥ आवश्यकंधर्मराजश्रुतमेतन्मयापुरा ११५ विद्यमानेपिदेहेस्मिन्नसत्तामात्मनःसदा ॥ केचिद्वदंतिधीमंतएवंयुक्तिपरायणाः ११६ आत्मानामनदेहादिसंघातादपरोस्तिहि ॥ सतेभ्यस्तुपृथक्त्वेनयस्मान्नैवोपलभ्यते ११७ आत्मादेहादिसंघातात्पृथक्चेसतुकीदृशः ॥ स्पर्शादिमान्यथान्योवाप्रापितःसर्वदेहिनाम् ११८ स्पर्शेनलभ्यमानश्चेद्वायुरेवभविष्यति ॥ आत्माप्राणइतिप्राप्तोह्यनिष्टंतच्चवादिनाम् ११९ अपिप्राणोवायुरूपोभवेदात्मायदातदा ॥ तेजआदिकुतोनात्माभवेदेतद्वदंत्विह १२०

११५ तत्रजन्मव्यापकेमरणेआत्मनःसत्तायांसंशयेकैमुत्यंदर्शयितुंजीवनदशायांतत्संशयंचार्वाकादियुक्तिभिर्दर्शयति विद्यमानेपीतिविंशत्या । केचिद्धीमन्तस्तार्किकादेहेसत्यप्यात्मनोनसत्तांसत्ताभावमित्थंवदंतीत्यर्थः ११६ इत्थंकथमित्याकांक्षायामाह आत्मेत्यादि । आत्मेत्यास्तिकानांप्रसिद्धोयोभावःससंघाताद्भिन्नोनास्तिदेहादिभ्यःपृथगनुपलभ्यमानत्वादित्यर्थः ११७ यदितुसंघातात्पृथक्सइष्यतेतदावक्तव्यंकिंसआत्मास्पर्शादिगुणकस्तद्रहितोवेत्याह आत्मादेहादीति । प्रापितःप्रसंजितोभ्युपगतइतियावत् चार्वाकैर्वाय्वादिभूतचतुष्टयस्यैवांगीकारात्स्पर्शस्यादौनिर्देशइतिबोध्यं ११८ तत्रात्मनःस्पर्शवत्वेनत्वग्ग्राह्यत्वस्वीकारेवायुतत्त्वात्मकप्राणरूपत्वापत्तिःस्यात्साचनित्यात्मवादिनामनिष्टाप्राणानित्यतायाःस्पष्टत्वादित्याह स्पर्शेनेति । तदात्मनःप्राणरूपत्वं १९ अत्रपक्षेविनिगमनाविरहमपिदर्शयति अपीति । यदिप्राणरूपोवायुरात्माभवतितदातेजःप्रभृतिभूतत्रयमात्मानभवतीत्यत्रकिंचिद्विनिगमकंवाच्यमित्यर्थः १२०

ननुजीवनाभावप्रयोजकाभावप्रतियोगित्वमेवप्राणस्यात्मत्वसाधकमितिचेत्तस्मयेतत्तेजःप्रभृतिष्वपि । यतस्तद्गतत्वाद्यभावेपिजीवनंनदृश्यतेइत्याह प्राणेनेति । ओजोनामरेतसःसारभूतांशमोधात्रित्युक्तंप्रथमाध्यायेतद्रहितोऽनोजाः १२१ औष्ण्यादीनांतेजोमयत्वादिकंदर्शयति अग्नेरिति । स्पष्टम् १२२ मरणकालेतेषांसर्वेषामेवासत्त्वंसममित्याह अपायइति । चतुर्णांप्राणोऽग्यरक्तोजसामपायोवियोगोमरणेसमोदृश्यतेज्ञाडचेचसर्वेषांसंमतःप्राणएवात्मेतिपक्षपरिग्रहोऽयुक्तइत्यर्थः १२३ नचज्ञानप्रयोजकत्वंप्राणेविशेषइतिवाच्यं ज्ञानकालेचतुर्णांसान्निध्यस्याविशेषेणतेष्वेकस्यैवज्ञानप्रयोजकत्वमितिवक्तुमशक्यत्वादित्याह अवस्थानइति । यदाउक्तानांचतुर्णांमस्थानेसन्निधौसत्येसतिज्ञानमुत्पद्यमानंदृष्टंतदाइदंज्ञानंप्राणस्यैवधर्मइतिवक्तुमयुक्तमित्यर्थः १२४ अतइति । आत्मनोवक्तुंविमोहकापतिशब्दयतिप्रकाशयतीतियावत्ससतथा १२५ प्राणस्यात्मत्वायोगेहेतुतयानुपपत्त्यंतरंदर्शयति अपिप्राणइत्यादिना । किंचप्राणरूपआत्मादेशांतरंपरलोकंगच्छन्निराधारःसन्कथंव्रजेत्मार्गेएवबाह्यवायुवत्कथंनलीयेतेतिवक्तव्यमित्यर्थः नचबाह्यवायूनांलयेदृष्टांतताकथमितिवाच्यं यतोबाह्यवायवोनाशंनयांतीतिव्यवस्थितिर्निश्चयोलोकस्यनास्तिप्रत्युतविलयएवलोकप्रसि

प्राणेननविनायद्वज्जीवनंतद्वदेवहि ॥ तेजआदिविनाप्यत्रनदृष्टंजीवनंक्वचित् ॥ अनुष्णोवापिनीरक्तोह्यनोजावानजीवति १२१ अग्नेरौष्ण्यंवपुष्यस्मिन्रक्तंनीरात्प्रजायते ॥ पृथिवीतस्तथौजोपिवायोःप्राणश्चदेहिनाम् २२ अपायोत्रचतुर्णांहिसमएवप्रदृश्यते ॥ मरणेपक्षपातोयंव्यर्थःप्राणेतुवादिनाम् ॥ औष्ण्यादीनामचैतन्यंयदिप्राणेपितत्समम् १२३ अवस्थानेचतुर्णांहिज्ञानमुत्पद्यतेयदा ॥ तदाप्राणस्यविज्ञानमितिकेनविनिर्णयः १२४ अतःप्राणात्मवादोयंमोहमात्रविनिर्मितः ॥ वालिशैर्वादिभिर्युक्तिहीनैरात्मविमोहकः १२५ अपिप्राणोनिराधारःकुतोदेशांतरंव्रजेत् ॥ व्रजन्वाविलयंकेनन्नव्रजेद्बाह्यवायुवत् ॥ नबाह्यावायवोनाशंनयांतीतिव्यवस्थितिः १२६ अपिवायुस्वरूपोयंसच्छिद्रेस्मिन्शरीरके ॥ केनबद्धोवपुर्हित्वायेनतायंवहिर्व्रजेत् १२७ कर्मणाबंधनंदेहेकर्मणैवविनाशनम् ॥ यदिप्राणस्यतत्कर्मनित्यंवानित्यमेववा १२८ नित्येनकर्मणादेहेबंधनंवाविनाशनम् ॥ यदितस्यतदेवात्माकुतस्तेनभविष्यति १२९ अनित्येतस्यनाशेनदेहाद्यद्वद्बहिर्व्रजेत् ॥ नाशंकेनतुतन्नाशादेषनैवप्रयास्यति १३० तस्मात्प्राणस्ययेषांस्यादात्मत्वंतन्मतेपिहि ॥ भूतानामात्मतैवस्यात्प्रच्छन्नाशब्दभेदतः १३१ स्पर्शवांस्ततएवात्मानमत्रदेहतःपृथक् ॥ अदर्शनाद्यसत्तत्वंनरूपरसगंधवान् १३२ चतुर्भ्योपिचभूतेभ्यःशब्दवान्नपृथक्क्वचित् ॥ पृथक्त्वसंभवेवंध्यापुत्रोत्रकलभाषणः १३३

द्धइति १२६ किंचवायुरूपस्यात्मनोबद्धत्वंदेहेस्थितिरेवानुपपन्नेत्याह अपिवाग्विति । स्पष्टम् १२७ यदिचप्राणस्यदेहस्थितेर्विनाशस्यचप्रयोजकंकर्मेष्यतेतदातस्यकर्मणोनित्यत्वमनित्यत्वंवाइतिवाच्यमित्याह कर्मणेति १२८ आद्यकर्मणएवात्मत्वापत्तिरित्याह नित्येनेति । तस्यप्राणस्यदेहेबंधनंविनाशनंचयदिकर्माधीनंतदातत्कर्मैवात्मास्त्विति १२९ अंत्यआह अनित्येइति । अनित्येकर्मणिसतितस्यकर्मणोनाशात्प्राणोवहिर्गच्छतीतियथाकल्प्यतेतथाकर्मनाशादेवप्राणरूपआत्मानश्यतीत्येवकुतोनकल्प्यतेइत्यर्थः तथाचवादिनामनिष्टापत्तिरितिभावः १३० फलितमाह तस्मादिति । यतःपरलोकगमनाद्युपपत्तिरत्रवादेनास्तिततोभूतचतुष्टयसंहितमात्मेतिवदंतंचार्वाकमनुसरतेवकेनचिद्भाषाभेदमात्रेणप्रच्छन्नःपृथगिवभासमानोयंवादःप्रवर्तितोनत्वास्तिकेनेत्यर्थः १३१ एवंस्पर्शवत्त्वंयथात्मनोनोपपद्यतेतथारूपादिमत्त्वमपिसदानास्तिअनुपलब्धेरित्याह स्पर्शवानिति १३२ नचशब्दवत्त्वमप्यात्मनःस्वीकर्तुंशक्यंभूतचतुष्टयस्यैवशब्दवत्त्वेनोपलब्धेः यदितुभूतचतुष्टयभिन्नस्यापिशब्दवत्त्वमिष्यतेतदावंध्यापुत्रोपिशब्दवत्त्वेनाभ्युपगम्येतेत्याह चतुर्भ्यइति । कलभाषणोमधुरस्वरःस्यादितिशेषः १३३

किंचात्मनःशब्दवत्त्वांगीकारेतस्यश्रोत्रेणग्रहणंनवाच्यंश्रोत्रस्यशब्दवद्द्रव्यग्रहणाक्षमत्वंस्यवादिभिरेवस्वीकृतत्वादित्याह अपिचेदिति १३४ अस्तुतर्हिमनस्तत्रकरणमितिशंकांवारयति मनसेति। शब्दवतोग्रहणंकेवलमनसाभवतीत्येतल्लोकेव्यवस्थितंनिश्चितंनास्ति यतोयद्यदेवमनोरथादिकंमनःकर्तृकल्पयतिरचयतितत्तदेवतेनमनसापश्यन्जनःप्रसिद्धोनतुशब्दादिकमपिमनसापश्यन्नित्यर्थः १३५ अतएवेति । अतोऽनित्यत्वादिप्रसंगादयमात्मास्पर्शादिगुणरूपोपिनसंभवतीत्यर्थः गुणरूपत्वेचकारसूचितंदोषांतरंदर्शयति स्पर्शादयइत्यादिना । स्पर्शादयोगुणाभवंतिआत्माचद्रव्यंभवतीतिवदतांतेषांमतेद्रव्यंगुणरूपंकथंभविष्यतीतिसंबंधः १३६ अतएवनरूपादीति । अतउक्तदोषादेवरूपादिगुणभिन्नत्वमप्यात्मनोनभवतीत्यर्थः कोसावुक्तदोषइत्याकांक्षायामाह ग्राहकत्वेनेति । यदासौचाय्वादिद्रव्यरूपेणगुणभिन्नोवाय्वादिभिन्नोवाभवेदुभयथापितद्ग्रहणमभिलक्ष्यकरणविचारेक्रियमाणेनेत्रादिकंग्राहकरूपेणनतिष्ठति तेषांरूपादिष्वेवशूरत्वादित्यर्थः १३७ इत्यादीति । इत्यादिभिस्तेषांकुतार्किकाणांवचनैर्धीमंतोपिजीवनदशायामपिचसंघातव्यतिरिक्तात्मसत्तायांव्यामोहंगच्छंतीति १३८ यथातार्किकास्तस्यनास्तित्वंवदंतितथातस्यास्तित्वंवेदानुसारिणोवदंतीत्याह वेदेति । तंसंघातव्यतिरिक्तात्मानम् १३९ एतस्मिन्निति । एतस्मिन्नस्तित्वनास्तित्वकोटिकेसंशयेसतिभवान्निर्णययोग्यमर्थंब्रवीतुयथाहंत्वयाशिक्षितःसन्विद्यांजानीयामिति १४० ततइति । अत्रानयोःपक्षयोर्मध्येअन्यतरपक्षोपपादकंसविशेषंवाक्यंवदेति १४१ नचिकेतसःश्रद्धापरीक्षणाययमवाक्याभिनयपरस्यविंशस्यार्थमाह एवमुक्तइतिपंचभिः । एतच्छ्रुत्वायमस्तंनचिकेतसंहस्तद्वयभ्रामणलक्षणयाचेष्टयावारयन्सन्नेतन्मामाक्षीरित्युक्तवांस्तत्रहेतुमप्यवददिति ४२ दुर्विज्ञेयमिति । इदमात्मतत्त्वंदुःखेनज्ञेयंभवतियतःपूर्वेपिदेवाःशमादिशालिनोऽत्रात्मनिसंदिह्यनिश्चयंनगताइत्यर्थः ४३ तत्रहेतुमाह अस्तितेति । यतआत्मनोऽस्तितारूपोनास्तितारूपोवाधर्मःसूक्ष्मोदुर्लक्ष्यः ४४ वरमन्यमिति । हेनचिकेतस्त्वमितोन्यरूपंतृतीयंवरंवरयमोपरोत्सीः अत्रार्थेममोपरोधंदाक्षिण्येनप्रेरणरूपंप्रतिमांननयेत्यर्थः ४५ मुंचेति । मांसत्यपाशमुक्तंकुरु दुर्ज्ञेयार्थगोचरमतिप्रश्नंमयिमाक्षिपउपन्यसितुंनार्हसीत्यर्थः ४६ एकविंशस्यार्थमाह एवमितिचतुर्भिः । एवंयमेनोक्तेसतितंप्रतिनचिकेताइदमुवाच इदंकिं हेधर्मराजयत्रात्मतत्त्वेदेवानांसंशयोयस्यचदुर्ज्ञेयत्वंभवतापूर्वैश्चप्रोक्तंयस्यचदुर्लभोवक्ताभवान्लब्धस्तच्चेदहंभवतोनजानीयांतदान्यंकंवक्तारमन्विच्छेयमितिद्वयोरर्थः १४७

अपिचेत्शब्दवानेषगृह्यतेकेनतद्वद ॥ नहिशब्दवतांश्रोत्रादस्तिलोकेग्रहःक्वचित् १३४ मनसाग्रहणंनैवक्वचित्स्याद्धिव्यवस्थितम् ॥ यद्यत्कल्पयतेयस्मात्तत्तेनात्रपश्यति १३५ अतएवचनैवायंस्पर्शाद्यात्माकदाचन ॥ स्पर्शादयोगुणायस्माद्द्रव्यमात्माचवादिनाम् ॥ गुणरूपंकथंद्रव्यंमतेतेषांभविष्यति १३६ अतएवनरूपादिव्यतिरिक्तोभवेदिह ॥ ग्राहकत्वेननेत्रादेरसत्त्वाद्ग्रहणंप्रति १३७ इत्यादिवचनैस्तेषांमोमुह्यंतेत्रधीधनाः ॥ जीवत्यपिमृतेप्रायःसर्वेसंशेरतेयम १३८ वेदवाक्यबलेनैवकेचिदस्तीतितंविदुः ॥ अपरेयुक्तिबलतोनास्तीत्येवंप्रपेदिरे १३९ एतस्मिन्संशयेमह्यंब्रूहित्वंनिर्णयंप्रभो ॥ अनुशिष्टस्त्वयाविद्यामत्राहंनिर्णयंसदा १४० ततोन्यतरदत्रत्वंसविशेषंवदाधुना ॥ अयंतृतीयोभवतादेयोमेवरईश्वर १४१ एवमुक्तेयमःप्राहतंतदानचिकेतसम् ॥ नैतन्माक्षीरिति श्रीमान्वारयन्हस्तसंज्ञया ॥ हेतुंचाप्यवदत्तत्रतत्कृतप्रश्नवारणे १४२ दुर्विज्ञेयमिदंयस्माद्देवैश्चविचिकित्सितम् ॥ संदिह्यचपुरादेवाःकेचिदद्याप्यनिश्चिताः १४३ अस्तितानास्तिताधर्मःसूक्ष्मएषनिजात्मनः ॥ यतस्ततोनजानंतिदेवाअपिमहाधियः १४४ वरमन्यंतृतीयंत्वंनचिकेतोवृणीष्वभोः ॥ मोपरोत्सीर्महाभागमात्वंसत्यवशंगतम् १४५ मुंचमांसत्यवचनाद्बद्धंतववशंगतम् ॥ मातिप्रश्नमिमंब्रह्मन्दुर्विज्ञेयंमयिक्षिप १४६ एवमुक्तेयमंप्राहनचिकेताइदंवचः ॥ देवाःसंशेरतेयत्रदुर्विज्ञेयंचयत्त्वया ॥ पूर्वैरप्युदितंत्वंचवक्तायस्यातिदुर्लभः १४७

४८ फलितमाह ततइतिद्वाभ्यां । स्पष्टंद्वयं १४९ । १५० द्वाविंशादित्रिकस्यार्थंवर्णयति एवमितिद्वाविंशतिश्लोकैः । एवंविधंनचिकेतसोवाक्यंश्रुत्वाधर्मराजइदंवक्ष्यमाणंवचनमब्रवीत् किंकुर्वन् नचिकेतसोवैराग्यपरीक्षणायाष्टमानष्टसंख्ययामिताःपरिच्छिन्नास्तेतथातानितिव्युत्पत्त्याऽष्टसंख्यावाचकेनपरिखावत्डप्रत्ययसाधुनाष्टमपदेनोक्तानष्टवरांस्तथातेभ्यःप्रथमाष्टभ्योन्यानपिअष्टत्रा न्कृत्वाउपन्यस्यमानिवन्प्रशंसन्प्रलोभयन्निनियावत् । तथाहि द्वाविंशेपुत्राःपौत्राःपशवोहस्तिनोहिरण्यमश्वाभूमंडलाधिपत्यंचिरजीवनमित्यष्टौवराउक्ताः । त्रयोविंशचतुर्विंशयोश्चवित्तंस्थिरंजीविकाचक्रवर्तित्वंदिव्यमानुषकामभोगित्वंसत्यकामत्वंदिव्यस्त्रियस्तासांदासयस्तासांतूर्यपदोक्तनाद्यकौशलंचेत्यांकारात्रष्टौवराउक्ताइति १५१ तत्रप्रथमंवराष्टकमभिनयति शतायुषइतित्रिभिः । शतायुषःशतवर्षजीविनःपुत्रान्पौत्रांश्चरूपादिसंपन्नान्वृणीष्वेतिसंबंधः तथागवादिकान्पशूंस्तथानागान्हस्तिनस्तथास्वर्गेस्थितंकांचनंचेतिद्वयोरर्थः १५२ । १५३ सवितुरिति । सूर्यांश्वसमानांस्तथासर्वत्रभूमौगुणैःप्रसिद्धंभूमेर्भण्डलस्यराज्यंयथेष्टमायुश्चेति १५४ एतदिति । एतत्पुरोदितंयदितृतीयवरेणसमंमन्यसेतदावृणीष्वेति १५५ द्वितीयंवराष्टकमभिनयति वित्तमितिद्वादशभिः ।

तच्चेदहंनभवतोजानीयांकःपरोमम ॥ त्वादृगस्यभवेद्वक्तापुमानलोकत्रयेपिच १४८ ततोयदिमयिप्रीतिर्यदिसत्यंवचस्तव ॥ एतमेववरंमह्यंलोकपालप्रयच्छभोः १४९ अनेनसदृशोनान्योवरःकश्चनविद्यते ॥ यतस्ततःकथंमेन्यंत्वंवरंदातुमुद्यतः १५० एवमुक्तोयमोराजापरितुष्टोब्रवीदिदम् ॥ अष्टमानपितेभ्योन्यान्वरान्कृत्वाष्टमानयन् १५१ शतायुषोगुणैर्युक्तान्पुत्रपौत्राननेकशः ॥ रूपयौवनसंपन्नान्बहुमूल्यान्बहून्पशून् १५२ गवादिकांस्तथानागानप्रत्यक्षानिवपर्वतान् ॥ कांचनंकांचनगिरेःसमानंस्वर्गतःस्थितम् १५३ सवितुर्यादृशास्तादृगश्वाश्चाकाशगामिनः ॥ सार्वभौमंतथाराज्यंभूमेःकंटकवर्जितम् ॥ आयुःस्वस्यापितद्वद्यथावदिष्टंतवात्रभोः १५४ एतत्सर्वंपुरोक्तंयत्तुल्यंतद्यदिमन्यसे ॥ पुरोक्तेनवरेणात्रतद्वृणीष्वयथेच्छया १५५ वित्तंबहुविधंतद्वदात्मनश्चिरजीविकाम् ॥ महाभूमावाधिपत्यंनचिकेतस्त्वमाप्नुहि १५६ पुत्रपौत्रादयःकामास्तेचतेमत्प्रसादतः ॥ भवंत्वव्याहताःसर्वेनचिकेतःसदैवहि १५७ येयत्रदुर्लभाःकामाःसंतिलोकत्रयेपिहि ॥ प्रार्थयस्वमहाभागस्वेच्छयात्वंहितानपि १५८ इमारामाःसदायुंसांमनोनयननंदनाः ॥ स्वर्गिणांबहुभिर्यज्ञैःप्राप्तानयनगोचरम् १५९ पीनोन्नतकुचद्वंद्वतिरस्कारसुधाकराः ॥ नितंबबिंबसंलग्नकांचीक्वणितभूमयः १६० मुखपंकजसौगंध्यमारुतावासितांतराः ॥ अवृंतचंपकोद्दामस्पर्शभर्त्सकमार्दवाः १६१ उद्दामहावभावैश्चरसोल्लासविलासकाः ॥ कलकंठरवत्रस्तभृंगीसंगीतसुस्वराः १६२

महाभूमौ सर्वस्यांभूमौआधिपत्यम् १५६ पुत्रेति । पुत्रादयोलौकिकाःकामाःकाम्यमानपदार्थास्तेदिव्याश्चयेकामास्तेसर्वेव्याहताःप्रायांतुरहिताःसंतुतवेति १५७ येयत्रेति । येदुर्लभाःकामास्तानपीच्छयासंकल्पमात्रेणनिर्णयमानान्प्रार्थयस्ववरयेत्यर्थः १५८ इमाइति । याइमारामाःस्वर्गस्त्रियःपश्यसिताभिरात्मानंपरिचारयेतिदशभेनाभिसंबंधःस्फुटमन्यत् १५९ तासांदोलंभ्यस्यकानिविशेषणान्याह पीनेत्यादिनास्पष्टंद्वं । पीनोन्नतेनकुचद्वंद्वेनतिरस्कारोयस्यतथाभूतःसुधाकरश्चंद्रोयाभिस्तास्तथा अयंभावः चंद्रश्चक्रवाकद्वंद्वस्यदुःखदइतिप्रसिद्धंतत्प्रतीकारायचक्रवाकद्वंद्वंपरकुचद्वंद्वभावंगत्वाचंद्रमुखाकारत्वशोभानिराकरणादिभिस्तिरस्करोतीवेति । अथवाताद्दशकुचाच्छादकाश्चताःसुधायाअधरवृत्तेराकराः नितंबमंडललग्नकांचीशब्दवत्यश्च १६० मुखेति । मुखपंकजस्यसौगंध्यशालिनायाचतेनवासितमंतरंगृहमध्यंयाभिस्तास्तथा अवृंतरहितचंपकमयंयद्दुत्कृष्टंदाममालातत्स्पर्शस्यभर्त्सकंमार्दवंमृदुत्वंयासांतास्तथा १६१ उद्दामेति । उत्कृष्टैर्हावैःशृंगारचेष्टाभिर्भावैर्मानसविकारैश्चरसोल्लासविलासायासांतास्तथा कलकंठानांकोकिलानांरवाश्चत्रस्तानांभृंगीणांसंगीतंचतत्तुल्यःशोभनःस्वरोयासांतास्तथेति १६२

स्निग्धेति । स्निग्धंमुग्धंचयत्स्मितंतेनअनेकेषांचित्रार्थानांपदानांभाषिकाः देहकांत्यारवेर्जेत्र्यः मदनस्यापिमादकाश्चेतिद्वयोरर्थः ६३। ६४ विचित्रेति । ताराणिभास्वराणिअनर्घ्याणिचयानिआभरणानितैर्मंडिताः तथादासीनांकायशतेनस्वसमानवेषेणश्चोतरथपदोक्तेनयुताःतथातूर्यैर्वाद्यैर्युताः 'रथःस्याच्चरणेकाये' इतिविश्वः ६५ आसामिति स्पष्टम् ६६ आलिंग्यंतइति । याएतामदनुगृहीतैः स्वर्गस्थैरेवालिंग्यंतेमनुष्यलोकेनसंतिचेति ६७ मद्दत्ताभिरिति । हेनचिकेतस्त्वमेताभिर्मद्दत्ताभिरात्मनःपरिचर्यांकारय मरणविषयकंप्रश्नंमाकुर्वित्यर्थः ६८ तत्प्रश्नस्यवैयर्थ्यंस्फुटयति मृतेइति । मरणानंतरंजीवःस्वर्गादिकंगच्छतुवाअभावंगच्छतुवातच्चितायांकाकदंतसदसद्भावचिंतासमायांकिफलमिति ६९ इदमिति । इदंवर्णितविषयजन्यंसुखं अधुनासाक्षात्फलंत्वयासंपादनयोग्यं मरणविषयकविचारस्तुस्वयंकस्यचित्फलंनभवति अथवानतत्फलंभवेद्वच्छेदित्यर्थः भूप्राप्तोचौरादिकोविभापितणिच् ७० यत्कर्मस्वकीयेष्टसाधनंतद्देवानुष्ठेयमित्याह चेष्टेतेति । चेष्टनमनुष्ठानं ७१

स्निग्धमुग्धस्मितानेकाचित्रार्थपदभाषिकाः ॥ स्वदेहाविमलस्वच्छकांतिभर्त्सितभास्कराः १६३ सर्वलक्षणसंपन्नाःप्रथमोद्गतयौवनाः ॥ स्वदेहेनस्मरस्यापिसततंस्मरदायिकाः १६४ विचित्रवसनास्तारानर्घ्याभरणमंडिताः ॥ दासीनांचशतेनापिस्वात्मरूपसमेनहि ॥ तूर्यैर्नानाविधैस्तद्वत्सर्वदापरिवारिताः १६५ आसांकटाक्षमोक्षोपिमोक्षादप्यक्षयंसुखम् ॥ प्रयच्छतिकथंस्पर्शःपरमानंददोनहि ६६ आलिंग्यंतइमानित्यंनिःशंकंस्वर्गवासिभिः ॥ मदाज्ञावशगैर्नैतामनुष्यैर्कर्हिचिद्द्विज १६७ मद्दत्ताभिःस्वमात्मानंसततंपरिचारय ॥ नचिकेतस्त्वमत्रैतन्मरणंपृच्छमाक्वचित् १६८ मृतेसतिगतःस्वर्गंयदिवाभस्मतांपुमान् ॥ भवतःकोत्रलाभःस्यात्काकदंतपरीक्षणे १६९ इदंसुखंतवैवस्यादधुनाफलमत्रभोः ॥ विचारोमरणेनायंफलंकस्यापितद्भवेत् १७० चेष्टेतसफलंधीमान्निष्फलंनकदाचन ॥ सफलेपिफलंस्वस्ययत्रतच्चेष्टनंवरं १७१ एवमादिवरान्प्राहयमस्तंनचिकेतसम् ॥ लोभयन्स्वात्मविज्ञानप्रश्नस्योपरमायहि १७२ नचिकेतास्तुतच्छ्रुत्वाधर्मराजसमीरितम् ॥ वचनंतदिदंवाक्यंप्रत्यभाषतधर्मवित् १७३ इमारामास्त्वयाप्रोक्तारूपलावण्यसंयुताः ॥ पुण्यपुंजसमारब्धानिःशेषसुखहेतवः १७४ एताउत्पत्तितःपूर्वंविनाशाच्चतथोत्तरम् ॥ स्वस्यकांतस्यवास्वर्गेधर्मराजसुखंनुकिं ॥ कृतवत्यःकरिष्यंतिमध्येकेनसुखायताः १७५ अपिस्वर्गस्थितावध्वस्त्वयायावर्णिताःसुखम् ॥ ग्राम्यधर्मेणताःपुंसःकुर्युश्चेदधिकाःकथं ॥ अन्याभ्योमनुजस्त्रीभ्योधर्मराजविचारतः १७६ पूतिगंधधरानार्यःसुगंधायदिवायम ॥ कामुकानांसुखंकुर्युरासांभेदःकथंभवेत् १७७

एवमादीति स्पष्टम् ७२ श्वोभावाइत्यादिनाचिकेवसोवाक्यमवतारयति नचिकेताइति । स्पष्टम् ७३ तत्रश्वोभावाइतिपदेनश्वउत्तरदिनेभविष्यंतिनवेतिव्युत्पत्त्यायमोपन्यस्तपदार्थानामनित्यत्ववाचकेनसूचितंयत्तेषांसुखसाधनत्वस्यभ्रममात्रसिद्धत्वंतत्प्रपंचयति इमारामाइतित्रयस्त्रिंशताश्लोकैः । हेधर्मराजयाइमारामाभवतासुखहेतुत्वेनोक्तास्ताएताःकिमुत्पत्तितःपूर्वंस्वस्यपरस्यवासुखंकृतवत्योविनाशोत्तरंवाकिंसुखंकरिष्यंतिअपितुनकृतवत्योनकरिष्यंतीत्येववाच्यं तथाचमध्येयदेताःसुखवदाचरंतितत्रहेतुरेतासांस्वभावोनभवतिकिंतुव्यामोहएवेतिद्वयोरर्थः ७४ । ७५ कामजव्यामोहेनसुखायमानत्वस्येतरनारीष्वपितुल्यत्वादेतासामाधिक्यंविचार्यमाणंनदृश्यतेइत्याह अपीति । यास्त्वयावर्णिताःस्वर्गवध्वस्ताअपियदिग्राम्यधर्मद्वारेवपुंसांसुखंकुर्युस्तदामनुजस्त्रीभ्यःकथमधिकाइतिसंबंधः ७६ एतदेवस्फुटयति पूतीति स्पष्टम् १७७

१ इतोऽग्रे अयमधिकोमुद्रितपुस्तके 'प्राणिनांपुण्यपुंजेननिर्मिताःसुखमूर्तयः । शश्वत्परिवृताएतैरथनागाश्वपत्तिभिः'।

यदिचेतासांस्वभावेनसुखरूपत्वंस्यात्तदासर्वास्त्रिष्वियक्तिःसर्वंप्रत्यविशेषेणसुखहेतुःस्यात्तथाचनदृश्यते कामव्यामोहेनप्रयुक्तंसुखत्वंतुसर्वत्रदृश्यतइत्येवंव्याप्तिमेवविशदयति शुनीत्यादि । यदातत्तज्जातीयायास्तत्तज्जातीयंप्रत्येवसुखत्वंदृष्टं रदात तज्जातिकृतोभेदोव्यामोहस्यैवसिद्धोनतुसुखभानरूपस्यफलस्यापिसइत्यर्थः ७८ तथाहिसुगंधत्वादिभिर्देवांगनांरमणीयत्वेनपश्यतोदेवस्यैवतस्यांव्यामोहोनतुतथाऽपश्यतःशुनएवंशुनातथात्वेनदृष्टायांशुन्यांदेवस्यनव्यामोहइत्याह सुगंधाचेतिद्वाभ्यां । वैपम्यंस्वभाविकोत्कर्षरूपंकिंकृतंकेनसंपादितंनकेनापीत्यर्थः ७९ । ८० नचशुन्यादोपधीविपयत्वेनापकर्षः देवाङ्गनायाअपिश्वनिष्ठदोपधीविपयत्वस्यसमानत्वादित्याह शुन्याइति । नपरितुष्यतिकिंतुदेवांगनायादोपानेवपश्यतियतएषश्वाशुन्याएवगुणान्पश्यतीतिसंबंधः ८१ शुनादृष्टानशुन्यागुणानभिनयति सुदीर्घेतिचतुर्भिः । एवंहिश्वरमन्यते एवंकथं एपाशुनीसुदीर्घवदनत्वादिविशिष्टामांसेवतेइतिचतुर्णांसंबंधः यस्याअस्याजिह्वारक्तोत्पलसमामांसासृग्भ्यांचारुगंधिनीचभवतीतियोजना । उगुमितिभमिंतितच्छब्दानुकरणं स्फुटमन्यत् ८२ । ८३ । ८४ । ८५ तामिति । तांशुनींदृष्ट्वायादृशीशुनःप्रीतिस्तादृशीशक्रस्यशचीदर्शनेभवेन्नवेतिसंशयइत्यर्थः ८६ उक्तन्यायमन्यत्राति

शुनीयथाशुनःकुर्यात्सुखंनारीनरस्यवा ॥ देवांगनातथैवैषादेवस्यसुखदायादि ॥ भेदोजातिकृतोजातःफलेकोपिनविद्यते १७८ सुगंधाचसुरूपाचसुस्पर्शासुरसा तथा ॥ सुशब्दाचारुसर्वांगीसुश्रोणीपृथुलस्तनी १७९ देवांगनाशुनोनैषाग्राम्यधर्मसुखप्रदा ॥ शुनिदेवस्यतद्वच्चवैषम्यंकिंकृतंयम १८० शुन्यादोषान्यथा देवोगुणान्हित्वात्रपश्यति ॥ तथाश्वापिचदेवानांघ्रानपरितुष्यति ॥ शुन्यागुणानमूनेषश्वानित्यंपरिपश्यति १८१ सुदीर्घवदनासृद्वीतीक्ष्णदंष्ट्रारुणानना ॥ रक्तोत्पलसमाजिव्हामांसासृक्चारुगंधिनी १८२ दीर्घनेत्रासुघोणाचनित्यमुत्तब्धकर्णिका ॥ सदाशीघ्रगतिस्तद्वन्मांसलाचकृशोदरी १८३ उत्तब्धपुच्छासंकीर्णयोनिच्छिद्रातिशोभना ॥ उगुंकारैश्चभंकारैर्मन्मनःकर्णनंदनैः १८४ गमनैःपृष्ठतोदिक्षुपुरतश्चनिरंतरम् ॥ सेवतेमांसदैवैषामनोनयननंदिनी १८५ तांदृष्ट्वा यादृशीप्रीतिर्धर्मराजशुनोस्तिह ॥ दृष्ट्वाशचींचशक्रस्यनियतेतादृशीनवा १८६ एवंपुत्रादयोभावाःसर्वेषामपिदेहिनाम् ॥ समाश्चनरदेवानांविषमाश्चपरान्प्रति १८७ यज्जातीयोहियोजीवस्तज्जातीयंहितत्प्रियम् ॥ अन्नपानांगनाद्यत्रतदेवबहुमन्यते १८८ शुनःपरिकरेयद्वज्जुगुप्सायोषिदादिषु ॥ भवतांग्राम्यधर्मादौयम स्वर्गनिवासिनाम् १८९ तथाशुनोपिसर्वत्रस्वजातेरपरत्रहि ॥ जुगुप्सायतएवायंशुनींहित्वावगच्छति १९० ततोनकोपिसंसारेदेहःसम्यगिहास्तिभोः ॥ किंतु कामज्वरात्पित्तंजातंसर्वशरीरिणाम् १९१ सजातीयेषुसम्यक्त्वबुद्धिमेतत्प्रयच्छति ॥ भ्रमंपरंगतस्यात्रस्त्रियोवापुरुषस्यवा १९२ क्वसुखंप्राणिनांदेहेस्त्रियोवापुरुषस्यवा ॥ नारीयदिसुखंकस्मात्स्वस्यैषानसुखंभवेत् १९३

दिशति एवमिति । समाव्यामोहजसुखसाधनत्वेनतुल्याः परान्भिन्नजातीयान्प्रतितुविषमाविपरीताइत्यर्थः ८७ अदृष्टसंस्कारादिकृतस्तज्जात्यध्यासएवप्रियत्वव्यवस्थाहेतुरित्याह यज्जातीयइति । अत्रतत्तज्जातिपुतदेवतज्जात्यनुकूलमेववहुसुखरूपंमन्यते ८८ एतदेवविशदयति शुनइतिद्वाभ्यां । परिकरोभोगसाधनं तथाचशुनःपरिकरभूतेषुयोषिदादिभावेषुयथाभवतांदेवानांजुगुप्साग्लानिस्तथाशुनोपिस्वजातेरन्यत्रजुगुप्सायतएषश्वाशुनींहित्वादोपानेवावगच्छतीतिद्वयोःसंबंधः ८९ । ९० फलितमाह ततइति । सम्यक्स्वभावेनसुखरूपोनार्यादिदेहोनभवतिकिंतुपित्तेनशंखेपीतबुद्धिर्यथाजायतेतथाकामज्वरजातव्यामोहरूपपित्तेनविभ्रमंगतस्यजंतोःसजातीयस्त्र्यादिशरीरेसुखबुद्धिर्भवतीतिद्वयोरर्थः ९१ । ९२ नार्याःस्वभावेनसुखत्वाभावमेवविशदयति क्वसुखमिति । प्रथमःसुखमितिनिर्देशोभावप्रधानः नारीयदिसुखरूपातदात्मानंप्रत्यपिसुखत्वेनभायात् यदितुदेहांतरस्यसुखदास्यात्तदाऽपरांवधूंसपत्न्यादिरूपांप्रत्यपितथास्यादितिद्वयोरर्थः १९३

९४ पुंसइति । पुमांसंप्रतिसातथेतिनवाच्यम् यतोबालेनप्रायाहृदिक्रीडंस्ताहरूपुंपदवाच्योनभवंति साधतंप्रतियुववत्सुखदानदृश्यतेइति १९५ एवंयुवत्वावच्छिन्नंप्रत्यपिनतस्याःसुखद त्वनियमोयूनःपुत्रादिरूपत्वेमदनज्वरापायशालित्वेवातथात्वादर्शनादित्याह यूनश्चेदितिद्वाभ्यां । अस्मिन्यूनि १९६ । १९७ एवंरुग्णापिसम्नसुखदेत्याह एवंव्याध्यादीति १९८ ए वंपुमानपिनस्वभावेनसुखदइत्याह पुरुषोपीति । पुत्रपादोकृत्याप्रभृतिपुसमत्वतःकामसुखदस्वरूपविशेषाभावात् १९९ ततश्चकामदोषजत्वाद्देहेपुसुखबुद्धिर्भ्रमरूपैवेत्याह ततइति । सुखाय सुखत्वेनभानायक्षमाइतिशेषः २०० यथाधत्तूरबीजभक्षिणांपीतंजगद्भासतेतथाकामिनांरूपादिदेहाःसुखाइत्याह उन्मत्तेतिद्वाभ्यां । वैपरीत्येनयुक्तामितिशेषः २०१ । २०२ कामज्वरस्य निदानंतुयौवनमेवेतिसदृष्टांतमाह जरेति । यथाविरूपताहेतुर्जरातथाकामज्वरहेतुर्यौवनमिति २०३ भवतात्तुयदेतासांप्रशंसनंकृतंतद्भ्रमसिद्धार्थानुवादरूपमेवनविधिरूपमित्याह कामज्व

अपरस्याःकुतोनस्याद्बध्याएषासदासुखम् ॥ देहांतरस्यसततंभवेद्धिसुखदायदि १९४ पुंसश्चेत्कुतएवैषाकुमारस्यभवेन्नहि ॥ विवस्त्रायाउरोमध्येशयानस्या पितादृशः १९५ यूनश्चेत्कुतएवैषापुत्रादेस्तादृशीनहि ॥ अपियूनोतिसंभोगेनिवृत्तेसमनंतरम् १९६ तत्क्षणात्पुनरप्यस्मिन्नजातेमदनज्वरे ॥ कुतएषा सुखंतस्यपूर्ववन्नकरोतिहि १९७ एवंव्याध्यादिदोषेपिसंजातेनेवकामुकम् ॥ सुखयेद्युवतिस्तेनसुखंनैवकदाचन १९८ पुरुषोपिसुखंनायंभवेत्कापिवधूरिव ॥ स्वस्यवाप्यथवावध्वाःपुत्र्यादेर्हिसमत्वतः १९९ ततःकामज्वरस्यायंमहिमाकोपिदेहिनाम् ॥ येनदेहाःसुखायस्युरसुखाअपिसर्वदा २०० उन्मत्तबीजसे वातोयथाहेममयंजगत् ॥ अहेममपिसंभ्रांतोविलोकयतिमानवः २०१ एवंकामज्वराज्जंतुःस्त्रीपुंसवपुरास्थितः ॥ सजातीयेपुसुखतांवैपरीत्येनमन्यते २०२ जरायथाविरूपत्वहेतुःस्याद्धिवपुषामपि ॥ यौवनंतद्वदेवस्यात्कामज्वरकरंसदा २०३ कामज्वरवशंप्राप्तोधर्मराजततोभवान् ॥ प्रशंसातिवधूरेताअपिदुःखकरीः सदा २०४ किंबहूक्तेनताह्येताअनित्याइतिनिश्चितम् ॥ प्रियंहिसुखहेतुःस्यादनित्यंसर्वदानृणाम् २०५ यद्यस्यातिप्रियंवस्तुतत्स्यदुःखस्यकारणम् ॥ सु खंकृत्वाव्रजेद्यावत्तावच्छतगुणंपुनः ॥ वियुक्तंकुरुतेदुःखंकथंप्रियतमंततः २०६ इमाःप्रियतमारामाःपुत्रपौत्रादयोपिच ॥ आयुर्भूमिर्महाराज्यंहस्त्यश्वकन कादयः २०७ अद्यनासन्पुनःश्वस्तेभवितारःपरेहनि ॥ नभविष्यंतितेनामीयमकृतमाःस्मृताः २०८ अपिसत्तायदातेषांरामादीनांतदापिन ॥ सुखंकि मपिकुर्वंतिदुःखंकुर्वंतिकिंतुते २०९ रामाःसंभोगतःपुंसोवीर्यंजीवनहेतुकम् ॥ हरंतियंत्रतोयद्वद्वान्हिःपुष्परसांत्विह २१०

रेति २०४ तासांदुःखकरत्वंत्वनित्यत्वमेवप्रख्यापयतीत्याह किंबहूक्तेनेति । यतःसुखहेतुरूपंप्रियमनित्यमितिप्रसिद्धम् २०५ अनित्यस्यवियोगेसंयोगादधिकदुःखहेतुत्वंसर्वेजानंतीत्याह यद्यस्येति । अतिप्रियंवस्तुकर्तृयावत्सुखंरागोदयद्वारादुःखबीजभूतंकृत्वाव्रजेत्ततःशतगुणंदुःखंवियुक्तंसत्कुरुतेइतिसंबंधः २०६ सांसारिकभावानांवियोगशीलतामेवस्फुटयति इमाइति । एतेरामाप्रभृतयोभावाःप्रियतमत्वेनभवतोपन्यस्तास्तेसर्वेअद्ययावन्नासन्नजाताभवद्वरात्श्वउत्तरदिनेभवितारोलब्धजन्मानोपिततःपरदिनेनभविष्यंतीत्येवमागमापायित्वेनानित्यत्वाद्दुःखमयाएवे तिद्वयोरर्थः २०७ । २०८ मृत्यस्येत्यादेस्तेजइत्यंतभागस्यार्थमाह अपिसत्तेतिपंचभिः । किंचयदेतेषांरामाप्रभृतिभावानांसत्तालोकदृष्टयनुसारेणस्थिरत्वमभ्युपगम्यतेतदाप्येषांदुःखदत्व मेवालोच्यतेयतस्तेपुरामाःपुरुषस्यरेतोलक्षणंचिरस्थितिहेतुभूतंसारंहरंति यथासारोद्धरणसमर्थिकयंत्रारूढकुसुमानांसारांशमग्निर्हरतिवद्वदितिद्वयोरर्थः २०९ । २१०

ततः किमत आह गतेति । यथोद्धृतसारंपुष्पमल्पकालेनक्षीयतेतथातेजसारेतसाहीनः पुमान्सर्वैरिंद्रियैःसहाल्पजीवनोभवतितदीयानींद्रियाण्यायुश्चक्षीयतेइतियावत् ऊर्ध्वरेतसस्तुसहेंद्रियैश्चिरंजी विनः प्रसिद्धाइत्युक्तंप्रथमेऽध्याये २११ एवमिति । एवमन्येपिपुत्रादिभावामनसः श्रोत्रादीनांचरसस्यसारस्यसत्त्वाख्यस्यधर्मज्ञानादिवृद्धिहेतोरपहारकाः तत्रोदाहरणंचमत्पितैव यतस्तस्य मच्चिंतयाजरद्गवीदानप्रवृत्त्याधर्महानिर्येंद्रियोगेनमनःक्षोभश्चाभूत् मनःक्षोभेहिसर्वेंद्रियाणांतेजोबलंजीर्यतइतिप्रसिद्धमिति २१२ फलितमाह तस्मादिति । हेधर्मराजतस्मादुक्तन्यायादिमेभा वाअनित्याःदुःखदाश्चसिद्धाः एवमपियद्यपीतवाधिकारिकस्यसंमतालोकपालाधिकारपरिपालनायसम्यक्त्वयांगीकृतास्तथापि नुइतिवितर्के ममजिज्ञासोःसंमताःकिंकिमर्थंभवेयुरित्यर्थः २१३ उत्तरार्द्धार्थमाह अपियदित्यादिना । यद्ब्रह्मणोहिरण्यगर्भस्यायुस्तदप्यल्पंद्विपरार्द्धपरिच्छिन्नत्वात् तदंतर्गतानामितरायुषामल्पत्वंकिमुवाच्यमित्यर्थः २१४ उक्तंस्फुटयति । मनुष्याणामि त्यष्टभिः मनुष्याणांवत्सरोदेवानामहोरात्रंतत्रोत्तरायणंदिनंदक्षिणायनंतुरात्रिरित्यर्थः २१५ देवतानामिति । देवानांषष्ट्यधिकशतत्रयसंख्यैरहोरात्रैर्वत्सरोभवतिएतादृशैर्वत्सरैर्द्वादशसहस्रसं

गतसारंयथापुष्पंभुक्तभोगस्तथापुमान् ॥ तेजसारहितःसर्वैरिंद्रियैरल्पजीवनः २११ एवंपुत्रादयोभावामनःश्रोत्ररसापहाः ॥ धनिनःपुत्रिणोदृष्टंदुःखंमेत्र पितुर्मया ॥ मनोदुःखाज्जर्जरीयंतितेजइंद्रियगंमहत् २१२ तस्मादिमेचरामाद्याअनित्यादुःखदेतवः ॥ तथापिसंमताधर्मराजाकिंनुममत्वमी २१३ अपि यद्ब्रह्मणःप्रोक्तंपरमायुर्महात्मनः ॥ द्विपरार्द्धावसानंतदत्यल्पमिहकीर्त्यते २१४ मनुष्याणांहियःप्रोक्तोवत्सरःसदिवौकसाम् ॥ अहश्चैवतथारात्रिरयनेदक्षि णोत्तरे २१५ देवतानामहोरात्रैःषष्ट्यासहशतैस्त्रिभिः ॥ संवत्सरोयमुदितोदेवानांस्वर्गवासिनाम् २१६ दिव्यैर्द्वादशसाहस्रैर्वत्सरैस्तच्चतुर्युगम् ॥ कृतंत्रेता द्वापरश्चकलिश्चेतिचकीर्तितम् २१७ चतुर्युगसहस्रंस्याद्ब्रह्मणोदिवसःसदा ॥ रात्रिश्चतावतीयस्यांनाशंलोकत्रयीव्रजेत् २१८ ब्रह्मणोवत्सरस्त्वेतैःसहषष्टि शतैस्त्रिभिः ॥ अहोरात्रैःशतंसोपिवत्सराणांहिजीवति २१९ पंचाशद्वर्षमात्रंस्यात्परार्द्धमेकमेवतत् ॥ ब्रह्मणस्तद्गतंतस्याद्द्वितीयमिहविद्यते २२० अय मर्द्धवयाःश्रीमान्ब्रह्मालोकपितामहः ॥ मरणेयस्यकोप्यत्रजीविष्यतिनदेहभाक् २२१ मरणत्रासतःसोपिनित्यंमीलितलोचनः ॥ आस्तेत्रसर्वदाकिंचिच्चिंतय न्जगदीश्वरः ॥ ततःकथंभवान्मह्यंपरमायुःप्रयच्छति २२२ ततस्तवैवलोकेशसंसारेक्षणभंगुरे ॥ असारेदुःखजलधौफेनबुद्बुदसंनिभे २२३

ख्यैःकृतादिसंज्ञंयुगचतुष्टयंभवतीतिद्वयोरर्थः २१६ । २१७ चतुर्युगसहस्रमिति । तावतीदिनसमा यस्यांब्रह्मरात्रौ २१८ ब्रह्मणोवत्सरइति । एतैरेतादृशैःषष्ट्याधिकशतत्रयसंख्यैरहोरा त्रैर्ब्रह्मणोवत्सरस्तच्छतंचतस्यपरमायुरित्यर्थः २१९ पंचाशदिति । ब्राह्मपंचाशद्वर्षपरिमितःकालःपरार्द्धमित्युच्यते परस्यहिरण्यगर्भस्यायुषोऽर्द्धमितिव्युत्पत्तेः तत्परार्द्धमेकंगतमतीतमेव द्वितीयंतुविद्यमानइत्यर्थः २२० अयमिति । अयंश्रीमान्ब्रह्माअर्द्धवयाःअर्द्धंवयोऽतीतंयस्यसतथावर्त्तते यस्यांतेमहाप्रलयोभावीत्यर्थः २२१ मरणत्रासतस्तुब्रह्मणोपिलक्ष्यतेयतःसकिंचिदात्मत त्त्वंध्यायन्नेववर्त्ततेअतस्तदंशभूतैर्भवद्भिःपरमायुःप्रदानमशक्यमित्याह मरणत्रासतइति । अत्रब्रह्मलोकेआस्तेतिष्ठति २२२ ततइति । यतउक्तविधयादुःखदत्वंसिद्धंततोहेलोकपालक्षणभंगु रत्वादिशालिनिसंसारेवर्त्तमानावादनादयःपदार्थास्त्वय्येवतिष्ठंत्वितिद्वयोःसंबंधः २२३

२२४ नवित्तेनेत्यादेरर्थःप्रपंच्यते अपिवित्तेनेतिद्वादशभिः । हेलोकपालमर्त्यस्यतृष्णावित्तेनभोग्यपदार्थजातेननशाम्यतियतस्त्रिलोकीराज्यप्राप्तावपिब्रह्मलोकमिच्छातितदाप्तावपिपतनाभाव मसृतत्वादिकंचेच्छत्येवेतिद्वयोरर्थः २२५ । २२६ उक्तंदृष्टांतैःस्फुटयति नजात्वितिद्वाभ्यां । यथावन्हिसागरललनायथाक्रमंकाष्ठजलपुरुषैर्नतृप्यंतितथावित्तैःपुरुषोपीति २२७ । २२७ यावदपेक्षितद्रव्यलाभस्त्वस्माकंभवद्दर्शनप्रभावादेवसिद्धोतोनवरणीयइत्याह अपिवित्तमितिपंचभिः । यतस्त्वांदृष्टवंतोऽतोऽनायासेनवित्तंप्राप्स्यामएवेति १२९ धर्मराजरूपंवर्णयति मेघे त्यादिना । उदारांगंदीर्घतनुंपीतांबरंरक्तनेत्रंचेति २३० कंबुग्रीवमिति । आदित्यनयनंतेजस्विनेत्रम् २३१ महेति । दृष्ट्यादर्शनेनक्रुद्धसर्पवद्भयप्रदं चित्तेदयालुम् २३२ सद्यत्वेहेतुभूता निविशेषणान्याह वेदोदितेति २३३ चिरजीवनमप्यस्माकंभवदीयशिष्यत्वमात्रेणलब्धत्वान्नवरेणार्थनीयमित्याह सर्वेषामिति । भवानेवहिसर्वेषांमृत्युरूपोभवत्यस्माकंगुरुश्चगुरोश्चशिष्या

वाहाःसंतुमहाभागगजवाजिरथादयः ॥ नृत्यगीतैश्चसंयुक्ताइमारामाश्चसर्वदा ॥ पुत्रादयश्चसकलायान्मेदातुंत्वमुद्यतः २२४ अपिवित्तेनकोनामतर्पयेन्मानवंभुवि ॥ लोकपालत्रिलोकींचेत्प्राप्नोत्येषकथंचन २२५ सत्यलोकंपुनःसोयमिच्छत्येषनसंशयः ॥ ब्रह्मलोकेतुसंप्राप्तेपुनरिच्छतिकिंचन २२६ नजातुपुरुषोवित्तैस्तृप्तिंगच्छतिकुत्रचित् ॥ वन्हिःकाष्ठैर्जलैस्तद्वत्सागरःपुरुषैरपि १२७ ललनानैवसंयातितृप्तिंवित्तैःपुमानपि ॥ तद्बद्धिमतावित्तैस्तर्पणीयोनरोनहि २२८ अपिवित्तंधर्मराजवयंलप्स्यामहेस्वयम् ॥ दृष्टवंतोमांसनेत्रैस्त्वांमहादुःखघातकम् २२९ मेघश्याममुदारांगंपीतकौशेयवाससम् ॥ लाक्षारससमस्वच्छविशालनयनोत्पलम् २३० कंबुग्रीवंमहोरस्कमाजानुभुजमद्भुतम् ॥ आदित्यनयनंदेवमादित्यसमवर्चसम् २३१ महामहिषसंस्थानंपुरुषंदंडधारिणम् ॥ आशीविषसमंदृष्ट्याचित्तेप्राणिकृपायुतम् २३२ वेदोदितमहामार्गरक्षाकरणकर्मकम् ॥ आत्मविज्ञानसंपन्नंभगवंतमनामयम् ॥ समंसर्वेषुभूतेषुशत्रुमित्रविवर्जितम् २३३ सर्वेषांहिभवान्मृत्युश्चरस्थिरशरीरिणाम् ॥ गुरुभूतस्ततोमृत्युःकेनास्माकंभविष्यति २३४ लोकपालोभवान्यावद्दक्षिणस्यांदिशिस्थितः ॥ जीविष्यामोवयंतावद्धर्मराजनसंशयः २३५ अतोवरःस्वयंसिद्धश्चिरकालंहिजीवनम् ॥ भवतःकरुणापांगमोक्षवज्रशरीरिणाम् २३६ ततोवरःसएवात्रवरणीयोमृतोहियः ॥ संशयच्छेदकृद्ब्रूयाद्धर्मराजपरोनहि २३७ जरामरणशून्यानांभवतांस्वर्गवासिनाम् ॥ दैवयोगेनसांनिध्यंप्राप्तोत्रयदिकश्चन २३८ जरामरणवान्भूमावधस्ताद्भवतांस्थितः ॥ मादृशःपुरुषोजानन्नात्मानंचपरांस्तथा २३९

नुग्रहशीलत्वंप्रसिद्धमतोनास्माकंमृत्युभयमित्यर्थः २३४ अतोयावद्भवतोऽयंलोकपालत्वलक्षणोऽधिकारस्तावज्जीवनेऽस्माकंनकश्चित्प्रतिबंधकइत्याह लोकेति २३२ अतइति । भवत्कृपाकटाक्षपातेनवज्रसमंशरीरंयेषांतेतथातेषाम् २३६ अतोभवतासएवबोधोवरत्वेनदेयोयोनउक्तस्यमरणविषयकसंशयस्यच्छेदनंकुर्यादित्याह ततोवरइति २३७ किंचभवादृशांमहात्मनांसन्निधिंप्राप्तस्यमर्त्यस्यचित्तेसभोगचिरजीवनतृष्णाकथंहतेत्यावेदकस्य अजीर्यतामित्यादेरर्थंदर्शयति जरेतिचतुर्भिः । योजरादिमान्भवतांस्वर्गवासिनामधोभवेश्चोतकृपदोक्तेभूमिलोकेवसनशीलोमादृशोमर्त्योभवतांदेवानांसान्निधिंप्राप्तःसन्नात्मानात्मतत्त्वविवेकवान्यदिभवेत्सइमान्रामाप्रभृतीन्भावान्वस्तुतोदुःखकारकान्मूढानांनानारूपदर्शनद्वाराराप्तिपद्योकोपभोगद्वाराचसुखदानभिध्यायन्रमणीयत्वेनमन्यमानःसंश्चिरजीवितेकःसज्जेतेतित्रयाणांसंबंधः २३८ । २३९

२४० फलितमाह ततइति । यतोहंमनुजानंदमारभ्यब्रह्मलोकानंदपर्यंतजन्यानंदानामुक्तविधयादुःखमयत्वमेवजानाम्यतस्त्वयासमीरितेवरत्वेनोपन्यस्तेविषयजातेमेप्रीतिःसक्तिर्नास्तीत्यर्थः २४१ वल्ल्यंतकंडिकार्थमाह यत्रेति । यत्रपरलोकगतौमहत्यांदुर्ज्ञेयायांनिर्णयंविनादेवाअपिसंदिग्धास्तंनिर्णयरूपमेवदरंदेहीत्यर्थः २४२ यमेनेति । एवंयमेनलोभ्यमानोपिनचिकेताः स्वात्मज्ञानादन्यंवरंनवृणीतेस्मकिंतुसर्वेषुभूतेषुगूढतयास्थितमात्मानमेवविषयीकुर्वंतःप्रश्नस्यसमाधानमेववृतवानितिद्वयोरर्थः २४३ । २४४ द्वितीयवल्लीव्याख्यामुपक्रमते एवंनिश्चल चित्तमिति । निश्चलंविषयकामनयाऽक्षोभ्यंचित्तंयस्यतादृशंतंज्ञात्वातदिष्टंवरंदातुंतंप्रशंसन्निदमाहेति २४५ तत्रप्रथमास्त्रयोदशऋचोऽभ्युदयनिःश्रेयसविभागादिप्रदर्शनद्वाराअधिकारिनिर्णया र्थास्तासामाद्ययोरर्थंप्रपंचयति अन्यदितित्रिंशताश्लोकैः । मोक्षरूपंफलमतिप्रशस्तत्वात्श्रेयःपदोक्तमन्यत्स्वरूपसाधनप्रमाणाधिकारिभिर्विलक्षणतयास्थितं तथासांसारिकसुखरूपमभ्युद याख्यंफलमतिमूढानांप्रेमास्पदत्वात्प्रेयःपदोक्तमन्यत्स्वरूपादिभिर्विलक्षणमित्यर्थः तथाहि आद्यस्यस्वरूपंनित्यसिद्धात्मरूपं साधनंविद्या प्रमाणंवेदांताः अधिकारीसाधनचतुष्टयवान् अं

दर्शनेनतथारत्यारामायाःसुखदाहिये ॥ अभिध्यायन्निमानत्रसर्वदादुःखकारिणः ॥ रमेतजीवितेकोनुबहुकालेपिबुद्धिमान् २४० ततोजानामिदेवानामानंदंस्व र्गिणामपि ॥ मनुजानांचधर्मज्ञनमेप्रीतिःसमीरिते २४१ यत्रसंशेरतेदेवाजरामरणवर्जिताः ॥ परलोकगतौमृत्योमहत्यांनिर्णयंविना ॥ तमेवब्रूहिभगवन्महांश्चे द्वरदोभवान् २४२ यमेनलोभ्यमानोपिनचिकेतामुहुर्मुहुः ॥ वरमन्यंवृणीतेनस्वात्मज्ञानात्कथंचन २४३ एवंसर्वेषुभूतेषुगूढस्तिष्ठतिसर्वदा ॥ सृष्ट्वाजगत्प्रवि श्यतमेकंपरिपृच्छति २४४ एवंनिश्चलचित्तंतंज्ञात्वासनचिकेतसम् ॥ यमोऽभीष्टतमंतस्यवरंदातुमिदंजगौ २४५ अन्यन्मोक्षाभिधंश्रेयःप्रेयोन्यत्सुखशब्दि तम् ॥ सांसारिकंद्विधातत्स्यादिहलोकेपरत्रवा २४६ श्रेयसःप्रेयसश्चापिद्वयोर्मध्येऽत्रसर्वदा ॥ आददानःपुमान्श्रेयःस्वार्थान्नैवप्रहीयते २४७ प्रेयःसमाददान स्तुसंसारंयातिमानवः ॥ अनेकदुःखनिकरंमोहितोयंसुखाशया २४८ यथाजलगतोमत्स्योमोहितोबडिशाशया ॥ अनवाप्यसुखंकिंचिद्दुःखंमरणमाव्रजेत् २४९ एवंस्वर्गंचभोगंचसमिच्छन्पुरुषःसदा ॥ अनवाप्यसुखंभूरिदुःखमेवाधिगच्छति २५० वधबंधादिकंयद्वत्कुराज्येपिनिर्धनः ॥ प्राप्नोतितद्वदेवायं विरागीदुःखमण्वपि ॥ नैवाप्नोतिसदामोक्षीनचिकेतोभवादृशः २५१ अतोभिन्नार्थकारित्वात्श्रेयःप्रेयोपिसर्वदा ॥ विभिन्नंपुरुषंस्वस्यबध्नीतोत्राधि कारिणम् २५२

त्यस्यस्वरूपंजन्यसुखं साधनंकर्म प्रमाणंपूर्वकांडादि अधिकारीसकामइति २४६ श्रेयसइति । श्रेयःप्रेयोरूपयोर्द्वयोःफलयोर्मध्येश्रेयएवयःपुमानाददानःसंपाद्यतयांगीकुर्वाणोभवतिस स्वकीयादर्थात्प्रयोजनान्नपरिच्युतोभवति इतरःप्रेयोग्राहीतुसंसारेभ्रमन्पुरुषार्थंनलभतेइतिद्वयोरर्थः २४७ । २४८ प्रेयोर्थीप्रत्युतदुःखमेवलभतेइतिसदृष्टांतमाह यथेतिद्वाभ्यां । निगद व्याख्यातंद्वयम् २४९ । २५० श्रेयोर्थीप्रारब्धवशेनसंसारेवर्तमानोपिनदुःखंलभतेइत्येतदृष्टांतेनस्फुटयति वधमिति । यथानिर्धनःकुराजकदेशेवर्तमानोपिवधादिदुःखंनप्राप्नोतितथाविर क्तोमोक्षाधिकारीसंसारस्थोप्यणुस्वल्पमपिदुःखंनैतीत्यर्थः २५१ अतइति । अतःप्रदर्शितात्विभिन्नौयावदर्थौदुःखाभावदुःखरूपौतयोःप्रयोजकत्वाद्धेतोःश्रेयःप्रेयसीविभिन्नंपरस्परविलक्षण मधिकारिणंपुरुषंबध्नीतःस्वेनसंबद्धंकुरुतइत्यर्थः २५२

अधिकारभेदमेवदर्शयति त्वादृशाइति । भवद्विधाःसविवेकाअधिकारिणःश्रेयसासंबद्धामंदधियस्तुप्रेयसेति २९३ उभयोःसंबंधप्रसक्तिस्तुशास्त्राध्ययनकालेभवतीत्याह वेदाध्ययनेति । यदायंवेदंत न्मूलकंपुराणादिकंवाअधीतेतदर्थेकुशलश्चभवतितदाश्रेयःप्रेयसीउभेअपिअनेनसंबंध्यतेसंबंधयोग्येभवतः तत्रप्रशस्तमतिःश्रेयोऽभ्यर्थयेत्प्रेयोऽपेक्षयाधिकृत्वात्मंदधीस्तुप्रेयइच्छतीतिद्वयोरर्थः ९४ २९५ प्रेयोर्थिनोमंदत्वंस्फुटयति अप्राप्तमिति । यतएवंप्रेयोर्थीअप्राप्तंपुत्रादिमाप्तुंतथास्थितंप्राप्तंपुत्रादिरक्षयितुंचइच्छन्भवतितत्पुत्रादिप्राप्त्यादिकंदैवाधीनंनजानातीति २९६ बुद्धिमानि ति । त्वादृशोबुद्धिमांस्तुयोगक्षेमयोर्दैवाधीनत्वंविज्ञायविवेकपरोभवतिसचविवेकएवंवक्ष्यमाणविधयाश्रेयःप्रेयसोर्यविवेकेनस्वरूपादिभेदेनविचाररूपइत्यर्थः २९७ तत्रप्रेयसःस्वरूपादिगोचरं विचारमभिनयति सुखंमेइत्यादिनाअमूढोहमित्यंतःपूर्वग्रंथेन । सर्वोजंतुरात्यंतिकंसुखंदुःखाभावंचकामयन्नपिसतत्सुखादिकंनलभतेइतिप्रसिद्धं तद्विपरीतंचलभतेइति । इत्थंसुखाद्यर्थोद्यमें पिविपरीतफललाभप्रयोजकोदोषःकस्यधर्मःकिंपुरुषस्यकिंवाकर्मणइतिद्वयोरर्थः २९८ करणादेरिति । तत्रनाद्यः पुरुषदोषोहिवैगुण्येनकर्मानुष्ठानरूपोवाच्यः सचनदृश्यते यतःकरणस्यफल

त्वादृशाःश्रेयसानित्यंसंबद्धाह्यधिकारिणः ॥ अन्येचप्रेयसानित्यंसंबध्यंतेल्पमेधसः २९३ वेदाध्ययनमात्रेणश्रेयःप्रेयश्चसर्वदा ॥ संबध्येतेमनुष्येणवेदार्थकुशलेन हि ९४ बुद्धिमान्प्रेयसोयत्स्यादधिकंश्रेयईरितम् ॥ प्रार्थयेततदेवान्योमंदःप्रेयोत्रयाचते ९५ अप्राप्तंपुत्रपश्वादिप्राप्तुमिच्छंस्तथास्थितम् ॥ अभिरक्षयितुंनैत द्दैवाधीनंप्रपश्यति ९६ बुद्धिमान्सर्वमेवैतद्दैवाधीनमवस्थितम् ॥ एतयोश्चविवेकंचत्वादृशोत्रावगच्छति ॥ अयमेवंविवेकेनविचारयतिसर्वदा ९७ सुखंमेस्या त्तथादुःखंमाभूदण्वपिसर्वदा ॥ जंतुरिच्छतिसर्वोपिनचैतदधिगच्छति ९८ ततःकस्यात्रदोषोयंपुरुषस्योद्यमेसति ॥ सुखंनजायतेदुःखंजायतेचानभीप्सितम् ९९ करणादेःप्रचारेणदृश्यंतेसर्वदोद्यताः ॥ ततःसुखकरंनूनंदुःखमस्मैकरोतितत् ६० प्रतिग्रहप्रजारक्षाकृष्याद्याहेतवोयतः ॥ अर्थंसंपादयंतीष्टमिहलोकेसुख प्रदम् ६१ अर्थतोन्नंततोदारान्भोगान्नानाविधानपि ॥ तेभ्यस्तृप्तिंप्रजांतुष्टिंमनसोपियशस्तथा ॥ स्वर्गादिकंचपुंसःस्यात्सर्वदानियतंयतः ६२ एवमर्थेनजाये तदत्तमिष्टंसपूर्तकम् ॥ ततःस्वर्गंप्रयात्येषतत्रभोगान्यथाभुवि ॥ प्राप्नोतिविविधान्दिव्याननेकसुखहेतुकान् ६२ एवंस्थितेपुतत्सर्वंसुखबीजंसुदारुणम् ॥ दुः खवृक्षमयंजातमिहलोकेपरत्रवा ६४ अर्थादीनांचसंप्राप्तौदुःखंस्यान्मरणांतिकम् ॥ प्राप्तानांचवियोगोत्थंभयंदुःसहमेवच २६५

साधनतयाप्रापितस्ययथागादेरादिपदग्राह्यस्यतदुपकारिव्यापारादेश्चप्रचारेणसम्यगनुष्ठानेनउद्यताःसमीक्ष्यंतेजनाअतःपरिशेषात्सुखसाधनत्वाभिमतंयत्काम्यकर्मादिकंतदेवदुःखहेतुरितिनिश्चीयत इत्यर्थः २६० तत्रसंसारेसुखहेतुतयाभिमतान्भावान्दर्शयति प्रतिग्रहेति । प्रतिग्रहादयोब्राह्मणादीनामर्थसंग्रहहेतवःप्रसिद्धाः सचार्थःकामसुखसाधनमित्यर्थः २६१ अर्थस्यसुखकरत्वंविशद यति अर्थतइति । अर्थेनह्यन्नंदाराभोगसाधनानिगृहादीनिचलभ्यंते तेभ्योन्नादिभ्यस्तुतृप्तिःसंततिर्मनस्तुष्टिश्चलभ्यते अन्नादिविभागादिनायशःस्वर्गश्चलभ्यतेइति २६२ अर्थात्स्वर्गलाभेदान यागपूर्त्तादिकंव्यापारतयाप्रसिद्धमित्याह एवमर्थेनेति । पूर्त्तंवाप्यारामादिकृतिस्तत्फलेस्वर्गेचनानाभोगाःप्रसिद्धाः हेतुपदेकःस्वार्थे २६३ वर्णितानांसुखकराणांदुःखकरत्वंप्रपंचयति एवमि त्यादिना । एवंघटीयंत्रवदुक्तपदार्थेपुस्थितेपुसत्सुसर्वंसुखसाधनंदुःखरूपवृक्षाकारेणपरिणामिसिद्धमित्यर्थः २६४ अर्थानामर्जनेदुःखमित्यादिवाक्यानितथात्वमेवदर्शयंतीत्याह अर्थादीनामिति । अर्थाधनं आदिपदेनभोगसाधनांतरग्रहः संप्राप्तिरर्जनम् २६५

अन्यत्रेति । जडस्यान्यत्रगमनाशंकापिदहतीति अप्रियागमनंप्रतिचयाएपाशंकासापितथेति २६६ प्रियाप्रियगमनागमनयोर्वह्नित्रद्धृदयदाहकत्वंप्रसिद्धमित्याह प्रियस्येति २६७ आत्मनइति । तथालोकद्वयेइहलोकेपरलोकेवास्थितिर्यस्यतादृशस्यात्मनआत्मीयशरीरस्यस्वामिशरीरस्यवामरणत्रासाद्यः सुखस्यसंक्षयोभिभवः ततोदुःखंप्रसिद्धमितिशेषः २६८ तथाभाविशरीरंकिंभविष्यतीतिचिंतयाभयदुःखंप्रसिद्धमित्याह दिवीति २६९ तथाध्यात्मिकादिदुःखानिप्रसिद्धानीत्याह आध्यादयइति । तेनोक्तदुःखसद्भावेनइहसंसारेस्विदितिवितर्केकिंसुखमितितुरीयपादार्थः २७० मूढानांदुःखसाधनेसुखसाधनबुद्धौदृष्टांतमाह विषेति २७१ अथश्रेयोगोचरंविचारंदर्शयति अमूढोहमिति । अनेनप्रेयसाममामूढस्यनकिंचित्सुखंभवेद्यतस्तत्प्रेयः शुनांमैथुनवदुदर्केदुःखमतोमयाधीमतातत्प्रेयोलोकद्वयगंनग्राह्यमिति २७२ किंतुमयाश्रेयःसंज्ञंनित्यसुखमेवसंपाद्यमित्याह अशरीरमिति । भवतात्आविरस्तु २७३ तत्प्राप्तयेअहंमहात्मनःप्रतिपृच्छामीत्याह एतदिति २७४ यद्वद्दिष्यं

अन्यत्रगमनाशंकास्वप्रियस्येहवस्तुनः ॥ दहत्यविरतंचित्तंचेतनस्यजडस्यवा ॥ अप्रियस्यतथैवैषानित्यमागमनंप्रति २६६ प्रियस्यगमनंतद्वदप्रियस्यसमागमः ॥ उभौहृदयगौवन्हीदहतोदिविवाभुवि २६७ आत्मनोमरणत्रासात्तथैवसुखसंक्षयात् ॥ पित्रादेःस्वामिनश्चापिनित्यंलोकद्वयस्थितेः २६८ दिविवाभुविवायत्स्यात्वशरीरंतस्यसंक्षये ॥ कर्मांतरेणकिंनामवपुःस्यादितितद्भयम् २६९ आध्यादयश्चवर्ततेदिविवाभुविवासदा ॥ सशरीरस्यसर्वस्यकिंस्वित्तेनसुखंत्विह २७० विषमिश्रंयथैवान्नंमूढस्यसुखदंभवेत् ॥ एवंप्रेयइदंसर्वंमूढस्यसुखदंस्मृतम् २७१ अमूढोहंततोनेनममकिंस्वित्सुखंभवेत् ॥ उदर्केदुःखदंप्रेयःश्वमैथुनसमंकथम् ॥ धीमताचमयाग्राह्यमिहवापिपरत्रवा २७२ अशरीरंततोयत्स्यात्सर्वदुःखविवर्जितम् ॥ सुखंतदेवभवतान्ममनान्यत्कदाचन २७३ एतत्पृच्छाम्यहंवृद्धान्वेदवेदांगपारगान् ॥ अशरीरंसुखंकिंचिद्विद्यतेवानवाक्वचित् २७४ यद्वदिष्यंतितेतत्तत्श्रेयोज्ञात्वाविचक्षणः ॥ विवेकेनवृणीतेत्रश्रेयःसत्वादृशोजनः २७५ सत्वंविवेकिनामग्रेसरःशिष्योममासिभोः ॥ मयादत्तान्यतस्त्वित्थंत्यक्तवानसिवांतवत् २७६ प्रियरूपानिमान्कामान्नित्यंप्रियकरानपि ॥ अभिध्यायंस्तदेकांस्तांस्तेषांदुःखोदधिप्रदान् २७७ नचिकेतइमांहैमींशृंखलांवित्तरूपिणीम् ॥ हस्तपादस्थितांत्यक्त्वागतोसिविगतज्वरः ७८ ययानिबद्धाबहवोबुद्धिमंतोपिमानवाः ॥ संसारजलधौमग्नानिःसरंतिनकर्हिचित् २७९

तीति । तेवृद्धायद्वदिष्यंतिप्रतिपादयिष्यंतितत्देववस्तुतन्मजिज्ञासितंश्रेयोभविष्यतीत्येवंज्ञात्वाविचार्यविचक्षणः श्रेयोवृणीतेसतथाश्रेयोवरितात्वादृशःकश्चिदेवेत्यर्थः २७५ तृतीयायाअर्थःप्रदर्श्यते सत्वमितिचतुर्भिः । सश्रेयोग्राहीममशिष्यस्त्वंविवेकिनांमुख्योसियतोमयोपन्यस्तान्काम्यपदार्थान्वांतवत्त्यक्तवानसि किंकुर्वन् तान्कामान्तदेकान्तद्दुःखमेकंप्रधानंयेषुतेतथातान् ' एकोन्यार्थे प्रधानेच ' इत्यमरः अतएवतेषांमूढानांदुःखोदधिप्रदानभिध्यायनजानन्सन्नितिद्वयोरर्थः २७६ । २७७ नचिकेतइति । वित्तंभोगसाधनंतदुपादानरूपांस्वर्णमयींशृंखलांहस्तपादयोःसत्प्रवृत्तिरोधिकांविवेकवत्वेनविमथ्यनिर्गतत्वाद्विगतज्वरोसीत्यर्थः २७८ ययेति । कीदृशीशृंखला ययाबद्धाबहवःसंसारेमग्नाइत्यर्थः अत्रेदंबोध्यम् स्रुक्किगतावित्यनुशासनात्स्रंकयतेगम्यतेसंसारोऽनयेतिव्युत्पत्तिंबाहुलकात्संप्रसारणंचाभिप्रेत्यग्रंथकृताभोगसाधनासक्तिःसृंकापदार्थतयोक्ता भाष्यकारैश्चसैवकर्मगतित्वेनोक्ता पूर्वंतुसृंक्यतेक्रांतिरनयेतिविवक्षयामालाव्याख्यातेति २७९

चतुर्थ्यर्थमाह अतिदूराविति द्वाभ्यां । इमौ मार्गौ परस्परमतिदूरौ भवतः ययोरेकः कर्मरूपो द्वितीयस्तत्त्वज्ञानरूपः अतिदूरत्वे हेतुगर्भं विशेषणद्वयं संसारक्रमेण यौ स्थितिभेदौ स्थितिः संरक्षणं भेदो विदारणं च तत्प्रयोजकौ अतएव श्रेयोरूपं प्रेयोरूपं च नगरं प्रतिक्रमेण प्रविष्टावित्यर्थः २८० तयोर्मार्गयोर्मध्ये ज्ञानरूपमार्गपरं भवंतं जाने कामैरविहस्थैर्यैकत्वादित्याह मन्येइति २८१ द्वितीयः कर्ममार्गस्तु द्विविधः शास्त्रेण विहितो निषिद्धश्च तत्राद्यं सकामतयानुतिष्ठतां निंदकः पंचमो मंत्र इति सूचयंस्तदर्थमाह प्रेयांस इति दशभिः । कर्मिणः कर्मसक्तस्य प्रेयांसः अनिप्रियाः कामाः काम्यपदार्थास्तथा तत्कामायितारोऽज्ञाश्च एते सर्वे अविद्याभूमावेव वर्त्तंते यद्भ्रमेभासते तन्मिथ्येति न्यायात् कीदृशा अज्ञाः सर्वदा आत्मन आत्मत्वेनाभिमतस्य देहादिसंघातस्य प्रशंसां कुर्वंतः यतो दुर्धियोपि पंडितमानिनः ते अज्ञाः संसारे कुत्सितां गर्भवासादिमयीं गतिं प्राप्नुवंतः संतो दुःखिता भवंति तद्दुःखनिदानं तु तेषामविद्यैवेति द्वयोरर्थः २८२ । २८३ गुरूपदेशेति । एतेऽज्ञाः परमार्थविद्गुरूपदेशराहित्येन मोक्षमार्गे कुशलताहीना अज्ञान् गुरुत्वेनाश्रयंतः 'अंधस्येवांधलग्नस्य विनिपातः पदेपदे' इति न्यायविषयतां नातिवर्त्तंते इत्यर्थः २८४ एतेइति । एतेऽज्ञाः संसारे पतनशीला नानाविधा द्विविधाः तत्र केचिदृष्टद्वारा सुखार्थिनः केचिद्दृष्टद्वारेवतथेत्यर्थः २८५ वेदेति । तत्राद्यानां राशिर्गणो वेदवादे सार्थवादकर्मवाक्यरूपे सक्तः इतरेषां दृष्टसुखार्थिनां राशिस्तु आगमविमुखः प्रत्यक्षप्रमाणमात्रशरणत्वादित्यर्थः २८६ तत्राद्यराशिमभिलक्ष्याह

अतिदूराविमौ मार्गौ संसारस्थितिभेदिनौ ॥ कर्मज्ञानात्मकौ प्रेयः श्रेयः पुरमुपागतौ २८० मन्ये ज्ञानार्थिनं त्वत्र भवंतं नचिकेतसम् ॥ यतस्त्वां बहवः कामा न चकृषुर्यतश्च्युतम् २८१ प्रेयांसः कर्मिणः कामा अविद्यायास्तु मध्यगाः ॥ अज्ञाश्च पंडितंमन्याः सर्वदात्मप्रशंसनम् २८२ कुर्वंतो दुर्धियोत्यंतं संसारे कुत्सितां गतिं ॥ व्रजंतो मोहसंपन्ना दुःखं ते यांत्यविद्यया २८३ गुरूपदेशरहिता मोक्षमार्गाविचक्षणाः ॥ अंधा इव स्वयं त्वन्यैरंधैर्नीता दिशो दश २८४ एते नानाविधास्तत्र दृष्टादृष्टसुखार्थिनः ॥ संसारेस्मिन्महामोहप्रदे नित्यं पतिष्णवः २८५ वेदवादरतः कश्चिदेको राशिर्व्यवस्थितः ॥ अपरो वेदवादेन रहितोध्यक्षमानभाक् २८६ गुरुणा यादृशो दृष्टः पंथाः शिष्येण तादृशः ॥ पंडितंमन्यता प्राप्ता गुरुशिष्यपरंपरा २८७ घोरां भवाटवीमेता मुपरिष्टादधोगतिम् ॥ अधोगतेस्तु संप्राप्त उपरिष्टादयं जनः २८८ तर्जनं ताडनं निंदा मठादिपरिलुंठनम् ॥ अधस्ताद्वेदमार्गेण रहितः काममोहितः २८९ आनंदात्मा स्वयंज्योतिः प्रतिभाति न कस्यचित् ॥ सर्वेषां हृदये नित्यं वसन्नाकाशसन्निभः २९० दूरं गत्वा यथा पक्षी निपतेल्लुब्धकस्य हि ॥ जाले कश्चिदयं यद्वत्पुमानत्यंतबालिशः ॥ कालेन कियता स्वर्गी ममायाति वशं पुमान् २९१

गुरुणेति । यादृशः पंथाः सेवितो गुरुणा पित्राचार्यादिरूपेण तादृश एव शिष्येणाक्षिणी निर्माल्य सेव्य इत्यध्यवसायवती गुरुशिष्यधारा पंडितमानिनां कर्मिणां दृश्यत इति शेषः २८७ तस्यां परंपरायां वर्त्तमानो जनस्तु घोरां भवाटवीं गच्छन्नूर्ध्वाधोलोकपरिभ्रमणं प्राप्नोतीत्याह घोरामिति । प्रथमपादांते गच्छन्निति शेषः अयं आद्यराशिवर्त्ती ८८ इतरं राशिमभिलक्ष्याह तर्जनमिति । अर्द्धं तिकुर्वन्निति शेषः मठश्छात्रादिनिलयः वेदविमुख ऐहिककाममात्रसक्तस्तर्जनादि पापं प्राधान्येन कुर्वन्नधस्तान्नरकक्षुद्रजंतुभावादिष्वेव वर्त्तत इत्यर्थः २८९ राशिद्वयवर्तिनां सर्वेषामात्मतत्त्वविस्मरणं साधारणधर्म इत्याह आनंदात्मेति २९० तत्राद्यानामेतावान्विशेषो यत्ते पुण्यफलभोगांते ममयमस्य यातनाप्रदस्य वशं यांतीति सदृष्टांतमाह दूरमिति । यथा जालाद्दूरमाकाशे भ्रमन्नपि पक्षी ततोऽवतरन्नूर्ध्वं जाले पतेत्तथा स्वर्गी क्षिपतापुण्यफलभोगावसानोपलक्षितेन कालेन ततः पतन्मम वशं यातीति तथा च स्वर्गिणं प्रकृत्य श्रुत्यंतरं 'कपूयचरणाः कपूयां योनिमापद्यंते' इति स्वर्गभोगांते कुत्सितकर्मफलोदये कुत्सितां योनिं नरकद्वारा गच्छंतीति तदर्थः २९१

द्वितीयराशिग...नांकवैरूपापिनांगतिविशदयतः पद्यस्यार्थमुपबृंहयति अपरइत्येकविंशत्याश्लोकैः । योऽपरोराशिर्घनेनगाढेनमोहेनतमसाप्रमाद्यन्ननवधानंप्राप्नुवन्नित्यंपापरतःसनित्यंममयमस्य यातनाप्रदस्यवशेवर्त्तते २९२ तद्राशिगतानांलक्षणभूतंपापप्रवृत्तिप्रतानकंकुतर्कमभिनयति अयंलोकइतिनवभिः । अयंप्रत्यक्षसिद्धःअत्रलोकेयोदेहोवर्त्ततेतस्मिन्मृतेसतितस्यदेहरूपात्मनःपरलोकेदे हांतरंभविष्यतीत्यत्रकोहेतुः नहिदेहांतरारंभकंकिंचिद्दृश्यतइत्यर्थः २९३ कर्मतत्रहेतुरितिचेन्नान्येनकृतस्यान्येनोपभोगानुपपत्तेरित्याह देहइति । येदिहादतिरिक्तस्यात्मनोऽस्तित्वंमन्यतेतन्मतेइदं विरुद्धंकथमुपपद्येत इदंकिं देहःकर्माणिकरोतितत्फलंतुतदन्यआत्माभुंक्तइति २९४ तथाचपरलोकार्थधर्मकर्त्तुःकृतनाशादिदोषप्रसंगइत्याह कृतेति । महात्मनइत्युपहासः २९५ उक्तदोषद्वयमेव स्फुटयति योदेहइति । योदेहोधर्मंकृतवान्सपुण्यफलंनभुंक्तेयश्चायंभवदभ्युपगतआत्माधर्मंनकृतवान्सतत्फलंभुंक्तइति २९६ आत्मनइति । यद्युक्तदोषपरिहारायात्मनःकर्मकर्तृत्वेप्यतेतदानिष्क्रिय त्वहेतुकाआत्मनोनित्यताकथंसिध्येत् यदितुसक्रियस्याप्यात्मनोनित्यतांगीक्रियतेतदादेहस्यापिसास्त्वित्यर्थः २९७ किंचसक्रियत्वस्यस्पर्शवत्त्वव्याप्यतादर्शनात्सक्रियत्वांगीकारेस्पर्शवत्त्वम

अपरोनित्यमेवैषमद्वशेवर्ततेजनः ॥ प्रमाद्यन्घनमोहेननित्यपापरतोहियः २९२ अयंलोकोत्रसत्यःस्याद्देहोयोवर्ततेधुना ॥ मृतेसतिपुनस्तस्यदेहःकेनभविष्य ति २९३ देहःकरोतिकर्माणिफलमात्माधिगच्छति ॥ इदंकथंविरुद्धंस्यादात्मनोस्तित्ववादिनः २९४ कृतनाशःकथंनाममतेनास्यभवेद्ध्रुवः ॥ अकृताभ्यागम श्चापिधार्मिकस्यमहात्मनः २९५ योदेहःकृतवान्धर्मंभस्मतांसगतोस्तिह ॥ तस्यनैवफलंकिंचित्पुण्यापुण्यसमुद्भवम् ॥ यश्चायंकृतवान्नात्माभुंक्तेमोकर्मणःफ लम् २९६ आत्मनःकर्तृताचेत्स्यान्नित्यतात्वक्रियत्वतः ॥ कथंस्यात्केनदेहस्यनभवेत्साचनित्यता ९७ क्रियावान्स्पर्शवान्दृष्टःस्पर्शवांश्चेत्कुतोभवेत् ॥ विभि न्नोदेहतस्तस्मान्नास्तिदेहात्पृथग्विसः ॥ अतएवपरोलोकोनास्तिकश्चिन्मृतेसति ९८ अपिचेन्मरणंप्राप्तःपुमान्लोकांतरंव्रजेत् ॥ प्रियान्दारान्सुतान्कस्माद्द्रष्टुं नायातिकर्हिचित् २९९ देहाद्यमभटैर्बध्वायद्ययंनीयतेपुमान् ॥ आक्रोशंकुरुतेकस्मान्नबहिर्देहतःस्थितः ॥ यथाराजभटैर्गेहान्नीयमानोबलात्पुमान् ३०० आक्रोशमपिकुत्रापिमृतःकिंचित्करोतिन ॥ शुभाशुभंचतेनात्मानदेहात्पृथगास्थितः १ आत्मनःपरलोकेऽस्यसत्त्वेवेदवचोस्तियत् ॥ ब्राह्मणानांहितज्ज्ञेयंपर वित्तापहारिणाम् ३०२ दत्तेसतिमृतस्यस्याद्यदितृप्तिर्द्विजन्मनाम् ॥ भूमौकिमन्यदानेनान्यस्यैषानहिजायते ३०३ इत्यादिबहुधामूढःकुरुतेजल्पनंतथा ॥ कामाल्लोभात्तथाक्रोधादपिस्नेहादिनाद्विज ३०४ मन्यमानस्यतस्यैवंपरलोकदर्शिविना ॥ जन्मांतरंनभात्यस्यबालिशस्यदुरात्मनः ३०५

प्युपलभ्येत तथाचदेहादात्मनोभेदकथानयुक्तेत्याह क्रियावानिति । देहाद्भिन्नःकुतइतिसंबंधः सआत्मा अतोदेहभेदासंभवात् २९८ किंचयद्यात्मापरलोकंगच्छेत्तदादारादीन्द्रष्टुंकदाचिदागच्छन्नु पलभ्येतनचतथादृश्यतइत्याह अपिचेदिति २९९ तथापरलोकंनीयमानउच्चैःशब्दंकुर्वन्दृश्येतेतिसदृष्टांतमाह देहादिति स्पष्टं ३०० नचतथादृश्यतइत्याह आक्रोशमिति । यतआक्रोशंतथाशुभा शुभमुपकारमनुपकारंवामृतःकुर्वन्नदृश्यतेततोदेहात्पृथक्त्वेनात्मनःस्थितिरयुक्तेत्यर्थः ३०१ तस्मादस्यात्मनःपरलोकेसत्त्वप्रतिपादकंवेदवाक्यंयदुपलभ्यतेतद्ब्राह्मणैर्लुब्धैःप्रक्षिप्तमित्याह आत्मन इति ३०२ यदिविप्रेभ्योदानेनमृतस्यतृप्तिस्तर्हिपांथादेरपिलोकेस्यादित्याह दत्तइति । एषातृप्तिः ३०३ एवंविधान्कुतर्कान्कामादिवशोबहुशःसदसिजल्पतीत्याह इत्यादीति ३०४ तस्यनास्ति कस्यचिद्देहांतरंभविष्यतीतिशंकापिनोदेतीत्याह मन्यमानस्येति । नभातिनचिंतावि‍षयोभवति ३०५

तादृशस्तुपुनःपुनर्मद्वशंयातीत्याह एवमिति । मारंमारंमृत्वामृत्वामेयमस्यमृत्युरूपस्ययातनाप्रदस्यचवशैयाति ३०६ ममधर्मरूपस्यनिंदारूपंतदीयवाक्चापल्यंतावदेवदृश्यतेयावन्मयोपेक्ष्यते मयावेक्षितस्तुकर्मफलमनुभवतीतिदर्शयितुंदृष्टांतमाह यथेतिद्वाभ्यां । धन्विनोधनुर्धरस्यहेलनमवज्ञांक्षणमात्रंतावदेवमर्कटःशाखारूढःकुरुतेयावत्सधन्वीगुणात्ज्यातोबाणंनमुंचति बाणमोक्षेतुमर्कटःस्वकर्मणःफलमनुभवतीतिद्वयोरर्थः ३०७ । ३०८ दार्ष्टांतिकेयोजयति तथेति । तथायंपापोमरणात्प्रागेववेदादिनिंदायांप्रगल्भोदृश्यतेतदुत्तरंतुनरकेफलंभुंक्तेइति ३०९ दानादेरिति । अमुनापापपुरुषेणदानादेर्विडंबनादत्तेसतीत्याद्युपहासरूपायाकृतातस्याःप्रयोजकःपदार्थानांसामर्थ्यविज्ञानाभावएवेत्यर्थः ३१० दृष्टानुसारिणएवसर्वेभावाइतिननियमोदीपेव्यभिचारादित्याह वासरेइति । वासरेतमःस्तोमानाशकत्वेनदृष्टोपिदीपस्तथैवनतिष्ठतिकिंतुरात्रौगृहमध्येतमोनाशयत्येवेत्यर्थः ३११ किंचअरेमूढदृष्टानुसारेणापिसंभवंतंसत्तर्कंकुतोनकरोपियेनतेभव्यंस्यादित्याह अदत्तइति । अयंजनोमूर्छितोरोगेणमूर्छांप्राप्तोविप्रेभ्योऽदत्तेसतिमूर्छितएवस्यात्तिष्ठेत्दत्तेग्रहादिदानेकृतेतुजीवितोनिवृत्तमूर्छःअत्रप्रत्यक्षव्यवहारेस्यादेषाएवंविधामतिस्तर्करूपाभविष्यतिभाविनिमरणेपिववकुतोनभवति और्ध्वदेहिकादिदानेमरणमूर्छांतउत्थानमन्यथाप्रेतत्वेनतथाभावस्थितिरितिन्यायस्यसाम्यादित्यर्थः ३१२ ‘ अचिंत्याःखलुयेभावानतांस्तर्केणयोजयेत् ’

एवंवदन्नहिपापात्मादुर्जनोनित्यमेवहि ॥ मारंमारंचसततंवशंमेयातिदीनधीः ३०६ यथावनगतःकश्चिन्मर्कटःकपिचेष्टया ॥ धन्विनोहेलनंकुर्याच्छाखामारुह्यशाखिनः ३०७ क्षणमात्रमयंयावत्बाणंप्राणहरंगुणात् ॥ नमुंचतिविमुक्तेतुफलमेतिस्वकर्मणः ३०८ तथायंपापपुरुषोवेददेवादिनिंदकः ॥ प्राङ्मृतेर्मरणादूर्ध्वंकल्पांतंनरकंवसेत् ३०९ दानादेरमुनायेयंकृतापायाविडंबना ॥ भावानामत्रसामर्थ्यविज्ञानाभावजाहिसा ३१० वासरेयदिदीपोयंतमःस्तोमंननाशयेत् ॥ रात्रावपितथैवायमस्तुकिंगृहमध्यतः ३११ अदत्तेमूर्छितोयंस्याद्दत्तेसत्यत्रजीवितः ॥ विप्रेभ्योमरणेनैषाभविष्यतिकुतोमतिः ३१२ ततःप्रमाणतोयत्स्याद्यादृशंतद्धितादृशम् ॥ अंगीकार्यंसदैवात्रस्वात्मनःक्षेममिच्छता ३१३ कृतनाशादिदोषेणस्वात्मनोसत्त्ववर्जनम् ॥ यद्यप्यनेकवचसानघटेतकदाचन ३१४ ततआत्मास्वयंज्योतिर्विक्रियालेशवर्जितः ॥ जीवतांप्राप्यकर्तासभोक्ताचभवतिप्रभुः ३१५ वेदवाक्यस्यविज्ञेयःश्रवणेनसदाहृदि ॥ अगण्यपुण्यपाकेनकेनचिद्धिमहात्मना ३१६ श्रवणायापिबहुभिर्बहुपाशविमोहितैः ॥ नलभ्यतेपुमानेषकथंसाक्षाद्धिलभ्यते ३१७

इतिन्यायेनागमप्रमेयेऽसंभावनानकार्येत्याह ततइति । ततोऽचिंत्यत्वाद्दानादिस्वरूपंप्रमाणतःशब्दाख्यात्यादृशंसिद्ध्यतितादृशमेवांगीकार्यंहितकामेनेत्यर्थः ३१३ एवमात्मस्वरूपमप्यागमेनैवावधार्यमितिदर्शयन्सप्तममवतारयति कृतेतित्रिभिः । यद्यपिकृतनाशाद्यापादनरूपतर्केणात्मनोऽसत्तायावारणंनघटेतनोपपद्येत तत्रहेतुरनेकवचसेति ‘ बहुशाखाह्यनंताश्चबुद्धयोऽव्यवसायिनाम् ’ इतिभगवद्गीतोक्तविधयाअनेकेननानामतजन्येनवचसावादिवाक्यसमूहेनेत्यर्थः यतोदेहःकरोतिकर्माणीत्यादिनाकृतनाशादिदूषणमतिरिक्तात्मसत्त्वाभावसाधकतयैवोपन्यस्तमतस्तर्केणनाविश्वासइतिभावः ३१४ तथाप्युपक्रमादिलिंगैस्तात्पर्यावधारणरूपश्रवणसंस्कृतवेदवाक्येनतदवधारणंभवतीत्याह ततइति । तवस्तर्कायोग्यत्वादात्मावेदवाक्यस्यश्रवणेनैवकरणेनकेनचिन्महात्मनाऽधिकारिणाविज्ञेयोभवति कीदृशआत्मा स्वप्रकाशोवस्तुतोनिर्विकारोप्यविद्ययाजीवत्वकर्तृत्वभोक्तृत्वानिप्राप्तोपिसुविद्ययासर्वात्मभावरूपप्रभुत्वयोग्यइतिद्वयोरर्थः ३१५ । ३१६ तच्छ्रवणादिदौर्लभ्यप्रतिपादकस्यसप्तमस्यार्थमाह श्रवणायापीत्यष्टभिः । पाशैरविद्यादिक्लेशैर्दुष्कृताभिव्यक्तैर्मोहितैःकैश्चित्तच्छ्रवणमपिदुर्लभमित्यर्थः ३१७

सुप्ताविति । केचित्तुसुप्ट्यादिकालेयःसर्वैर्जंतुभिःसद्रूपोगम्यतेसाक्षिरूपेणहृदिसंनिहितःसइत्येवंवेदांतैःप्रतिपादितंश्रुत्वापिक्लेशप्रतिबद्धाननिश्चिन्वंति यथालोकेबालिशाःप्रमत्ताआप्तैरुपदिष्टस्यापिकार्यस्यगौरवंतत्परतयानुष्ठेयत्वरूपंनजानंतीतिव्यतिरेकेवादृष्टांतः यथालौकिककार्यगौरवंजानंतितथातन्निर्णयगौरवंनजानंतीत्यर्थः ३१८ तथास्यात्मनोयथावत्तात्पर्यवृत्त्याप्रतिपादयितापिदुर्लभइत्याह अस्यात्मनइति । यतोवागाद्यगोचरमपिप्रतिपादयत्यतआश्चर्योविस्मयाधायकोदुर्लभइतियावत् .३१९ तादृशगुरूपदेशादात्मनःसाक्षात्कर्त्तापितद्वद्दुर्लभइत्याह लब्धेतिद्वाभ्यां । लब्धाज्ञाता ३२० कुशलेनेति । युक्तिभिःशुष्कतर्कैर्योनुशिष्टोनभवतिकिंतुवेदवाक्येनैवानुशिष्टस्तादृशःकश्चिदेवजानात्यतोलब्धाऽऽश्चर्यइत्युक्तइत्यर्थः ३२१ वक्तृतेति । यस्मादस्यात्मस्वरूपस्यवक्तृत्वंप्रतिपादनंज्ञातृत्वंज्ञानंचएतद्द्वयमाश्चर्यंततस्तद्वंतौपुरुषावप्याश्चर्यत्वेनोक्तावित्यर्थः ३२२ अतिसूक्ष्मेणेति । अतिसूक्ष्मःसंसर्गानवगाहीनिर्विकल्पकइतियावत् तादृशेनबोधेनचरमवृत्तिरूपेणयतआत्मनोलाभआवरणभंगोभवतिसचबोधःसूक्ष्मविवेकलभ्योऽतस्तादृशबोधवान्कुशलइत्युक्तइत्यर्थः ३२३ तादृशेनकुशलेनगुरुणाऽनुशिष्टएवाधिकारीजानात्यात्मतत्त्वंनपरोक्षविदाशिक्षितइत्याह आनंदात्मेति । तेनकुशलेनउपदिष्टेउपदेशेकृतेसति ३२४ अष्टमार्थमाह स्वात्मेतिसप्तभिः । स्वात्मसाक्षात्कारहीनतालक्षणाऽपकृष्टताशालिनाचिरमुक्तेउपदेशेकृतेसतित्वयमात्मानज्ञातुंशक्यः तथाअपरेणकुशलानुशिष्टव्यतिरिक्तेननरेणबहुधातर्कैश्चिंत्यमानोपिचनज्ञातुंशक्यइतिसंबंधः ३२५ एतदृष्टांतेनस्फुटयति महारण्यइतिद्वाभ्यां । यथामार्गानभिज्ञःस्वसदृशेनमार्गानभिज्ञेनकथितमुपदिष्टंमार्गंभजंस्तेनमार्गेणनश्यतिविषीदति ३२६ एवमिति । तथासंसारारण्यगतोऽकुशलेनशिक्षितश्चेत्स्यात्तदाएतदात्मज्ञानंमोक्षमार्गभूतंनैतिकिंत्वन्यंविपर्ययरूपंसंसारमार्गमेवसम्यगेतीति ३२७ तस्मान्मुमुक्षुणाकुशलोगुरुरन्वेष्यइत्याह अतइति । तेनगुरुणानुशिष्टइतिशेषः ३२८ श्रुतौगुरोर्विशेषणमनन्यत्वमुक्तंतदर्थमाह वक्तेति । यःकुशलोवक्तासस्सर्वस्मादनन्योऽभिन्नोभवतियस्मात्सर्वात्मकंब्रह्माहमस्मीतिवेत्तीति 'ब्रह्मवेदब्रह्मैवभवति' इतिश्रुतेः ३२९ अनन्योक्तइति । तादृशेनानन्येनगुरुणाउपदिष्टेसतितत्त्वेतद्विज्ञानस्यगतिःफलंस्वस्मादुपदेष्टुःस्वरूपादद्वितीयब्रह्मलक्षणादन्यानभवतितस्मात्तादृशगुरूपदिष्टःसर्वात्मकोपिविरलः मनुष्याणांसहस्रेष्वित्यादिस्मृतेरित्यर्थः ३३०

सुप्तौप्रतौनराःकेचिज्जानंत्येतंहृदिस्थितम् ॥ नैवयद्वद्धिपुरुषाबालिशाःकार्यगौरवम् ३१८ अस्यात्मनोत्रवक्तास्यादाश्चर्यःपुरुषोत्तमः ॥ अवाङ्मनसगम्यंयद्ब्रूतेतंवचसास्वयम् ३१९ लब्धास्यकुशलोज्ञेयोयःसाक्षात्कुरुतेपरम् ॥ अशेषगुणशून्यंकोलभेतकुशलंविना ३२० कुशलेनात्मविज्ञानसंपन्नेनमहात्मना ॥ वेदवाक्येनशिष्टःसन्ननुशिष्टश्चयुक्तिभिः ॥ विजानातिपुमान्नान्यआश्चर्यइतिकीर्तितः ३२१ वक्तृताज्ञातृताचास्ययस्मादाश्चर्यवद्भवेत् ॥ वक्ताज्ञाताचतेनोभावाश्चर्यइतिकीर्तितौ ३२२ अतिसूक्ष्मेणबोधेनयस्मादात्मात्रलभ्यते ॥ कुशलस्तेनलब्धास्यादात्मनोब्रह्मरूपिणः ३२३ आनंदात्मस्वरूपस्यलब्धायःकुशलःपुमान् ॥ तेनोपदिष्टआत्मायंज्ञायतेनान्यथाक्वचित् ३२४ स्वात्मज्ञानविहीनेनह्यपरेणनरेणतु ॥ उक्तेनैवचिरंज्ञातुंशक्यआत्माकथंचन ॥ बहुधाचिंत्यमानोपितर्कैर्नानाविधैरपि ३२५ महारण्येयथाकश्चिदज्ञात्वासम्यगेवहि ॥ मार्गंस्वसदृशेनैवकथितंतेननश्यति ३२६ एवंभवाटवीस्थातापुमानकुशलेनचेत् ॥ उपदिष्टोनवैत्येतन्मार्गमन्यंसमेतिच ३२७ अतोत्रकुशलःपूर्वमन्वेष्यःस्वात्मनोहियः ॥ वक्ताभवतितेनायंजानात्येवपुमान्सदा ३२८ वक्तायःकुशलःसस्यादनन्यःसर्वतोपिच ॥ ब्रह्मसर्वमिदंयस्मादहमस्मीतिवेत्त्ययम् ३२९ अनन्योक्तेनिजेतत्त्वेस्वस्मादन्यागतिर्नहि ॥ तस्मात्कुशलवक्तापिभवेत्सर्वमिदंजगत् ३३०

अयमात्माकेवलतर्केणतुज्ञातुमशक्योऽतिसूक्ष्मत्वादित्याह सूक्ष्मादिति । सूक्ष्मोदुर्लक्ष्यः ३३१ नवमार्थमाह आत्मन्यत्रेतिविंशत्या । येयंकुशलाचार्योपदेशजाआत्माकारामतिर्जातातांकु तर्कालंबनान्नापनयेन्नदूरीकुर्यादित्यर्थः ३३२ प्रत्युतकुतर्कमेवश्रुत्यनुकूलतर्कैर्बाधित्वाब्रह्मात्मनिष्ठांद्रढयेदित्याह नास्तिकेनेति । नास्तिकेनश्रुत्यार्थानंगीकर्त्रायस्तर्कउक्तस्तमात्मनिर्णयार्थं श्रुत्यायेतर्काउक्तास्तैश्छित्वाऽपहत्यब्रह्मणातत्पदार्थेनसात्मतांसमानरूपतांत्वंपदार्थस्यस्थापयेद्दृढीकुर्यादित्यर्थः तेनकुतर्केणतूत्पन्नाप्येषाविद्यायातिमतिबंधकृतंवैफल्यमितिशेषः यदिकुशलःश्रु त्यनुसारीतर्कोनावतरेदित्यर्थः ३३३ सचात्मविद्याप्रतिपक्षभूतस्तर्कोवादिभिर्बहुधाकल्पितइत्याह अन्योहीति । अन्यःश्रुत्यननुसारी मतेरात्मविद्यायाःप्रतिपक्षउत्पत्तौफलेचप्रतिबंधकः अ त्रेदंबोध्यम् फलेप्रतिबंधोविद्यायाःपरोक्षदशायामेवेति ३३४ तंकुतर्कमभिनयति आत्मायमितिनवभिः । अयमात्मासर्वदेहेष्वेकोऽनेकोवा आद्येत्वमहमित्याद्याकारकोभेदोपलंभःकथम् अंत्येत्वद्वैतहानिरिति ३३५ देहेति । यदितुनानादेहोपाधिकोभेदउच्यतेतदापीदंपृच्छ्यतेएकस्यात्मनोनानादेहप्रसंगएवकथमितिनत्वनेनतदुपपादिकाकाचिद्योगसिद्धिर्लब्धेतिद्वयोरर्थः ३३६ । ३३७

सूक्ष्मादपियतःसूक्ष्मएषआत्माशरीरिणां ॥ अतएवनतर्केणशक्योज्ञातुंकथंचन ३३१ आत्मन्यत्रभवेद्यैषामतिःकुशलशासनात् ॥ नैनामपनयेत्तर्कादात्म नोनरकप्रदात् ३३२ नास्तिकेनहियस्तर्कःकथितःस्वात्मसिद्धये ॥ श्रुत्युक्ततर्कैस्तंछित्वास्थापयेद्ब्रह्मसात्मताम् ॥ तेनोत्पन्नापियात्येषापुराकुशलतर्कतः ३३३ अन्योहिबहुधातर्कःप्रतिपक्षोस्त्यनेकधा ॥ मतेरस्यामहाभागपापिभिःपरिकल्पितः ३३४ आत्मायंसर्वभूतानांस्यादेकोनेकएववा ॥ एकत्वेत्वमहंचा न्यइतिभेदःकथंभवेत् ३३५ देहभेदादयंभेदःस्यात्तस्येत्यभिधीयते ॥ एकस्ययुगपद्देहभेदःकेनभविष्यति ३३६ योगिनामिवनैवास्यसिद्धिःकापिसमागता ॥ संसारेयेनचैकोपिबहुधायुगपद्व्रजेत् ३३७ अपिचेदेकएवायंसर्वदेहव्यवस्थितः ॥ सर्वत्रैवकुतोनास्यमदेहइतिधीर्भवेत् ३३८ विनोपायमयंयातिकस्मादत्रसु खादिन ॥ सर्वदेहगतंसाक्षात्स्वदेहगतवत्पुमान् ३३९ अप्ययंपुरुषोज्ञानीजडोवापिघटादिवत् ॥ जडत्वेपुरुषेणस्यादमुनाकिंप्रयोजनम् ३४० नजडार्थंजडं दृष्टंघटार्थंचसमंयथा ॥ पुमर्थंततएवायंदेहोपिनभविष्यति ३४१ पुमर्थोज्ञानसंबंधाद्विनातेनाथवाभवेत् ॥ यदाज्ञानेनसंबंधस्तदाज्ञानंचकिंहितत् ३४२ अनि त्यंवापिनित्यंवापक्षयोरुभयोरपि ॥ प्रकाश्यतेत्रकिंज्ञानंस्वेनवाथपरेणवा ३४३ इत्यादीन्श्रुतिमार्गेणविरुद्धान्क्रकचोपमान् ॥ तर्कान्बहुविधान्मूढाःकल्प यंतिस्वबुद्धितः ३४४

यदितुयोगिवदयंसर्वदेहेष्वेकत्वेनावस्थितःस्यात्तदासर्वदेहेष्वहमत्वंकुर्यादित्याह अपिचेदिति ३३८ किंच विनोपायमिति । सर्वदेहेपुयद्ययमेकःस्यात्तदास्वदेहगतंसुखादिकमिवसर्वदेहगतंसुखादिकंकुतो नजानीयात् ननुनानायोनिभ्रमणेनसर्वदेहवृत्तंजानात्येवेतिशंकावारणायविनोपायमित्युक्तम् उपायोयोनिभ्रमणादिः ३३९ किंचायमात्माजडश्चेतनोवा आद्येसकिमर्थंस्वीकार्यः जडस्यकर्तृत्व भोक्तृत्वयोरनुपयोगादित्याह अप्ययमिति ३४० किंचजडत्वेतदर्थंशरीरारंभोनस्यात् नहिजडस्यघटस्यभोगायजडत्वेनतत्समंपदार्थांतरंदृष्टमित्याह नजडार्थमिति ३४१ पुमर्थइति । किं चदेहापिरूपःपदार्थःपुमर्थःपुरुषोपकारीभवन्ज्ञानरूपसंबंधाद्भवतिकिंवातेनज्ञानरूपसंबंधेनविनैवभवति नांत्यः असंबद्धस्यज्ञानातिरिक्तसंबंधशालिनश्चपुमर्थतायाअदर्शनात् आद्येज्ञान स्यस्वरूपंनित्यंकिंवाऽनित्यं नित्यत्वेसर्वदाभोगाविशेषापत्तिः अंत्येपितज्ज्ञानंकेनप्रकाश्यंकिंस्वेनकिंवापरेण आद्येकर्मकर्तृत्वविरोधः अंत्येत्वनवस्थेतिद्वयोरर्थः ३४२ । ३४३ इत्यादीनि ति । क्रकचःकाष्ठदारणसाधनंतत्तुल्यान् ३४४

कथमेतेतर्का अनिष्टपर्यवस्यंतीत्याकांक्षायामाह एतैरिति । अस्याः पूर्वमेषांतर्काणांप्रसक्तौएषामतिरनुत्पन्नैवभवति उत्पत्त्यनंतरंतर्कप्रसक्तौतुविनश्यतितिरोहिताभवति कुतःश्रुत्यविश्वासेनप्रयुक्तोयःसंशयोविपर्ययोवातस्मादित्यर्थः ३४५ तस्मात्सिंहाद्गौरिवकुतर्कादेपारक्ष्येत्याह ततइति ३४६ प्रोक्तेत्यादिद्वितीयपादस्यार्थमाह नास्तिकेभ्यइति । यद्यप्येषाआत्मव्यवस्थितिरात्मस्वरूपाकारामतिर्नास्तिकेभ्यःपरेभ्यआस्तिकेभ्यश्चगुरुभ्योहेतुभ्यःप्रोक्तातैरुपदिष्टासतीजायते यतएषासर्वेषांदेहिनांप्रेष्ष्यार्किंकरवदधीनाभवति सर्वेहिदेहिनोयादृशंतादृशमात्मस्वरूपंजानंतिवदंतिचेतितथापिआत्मविज्ञानसंपन्नःश्रुत्यनुगृहीततर्ककुशलश्चगुरुर्यद्येतांवदेत्तदासुखेनभूमानंदाख्येनफलतिएषाप्रजायते क्वसति आत्मनिविशेषेणसमस्ताध्यासापोहरूपेणज्ञातेसतीतिद्वयोरर्थः ३४७ । ३४८ प्राप्तवानिति । किंविधासासफलात्मव्यवस्थितिरितिचेत्शृणु यांयादृशीमात्मनिष्ठामतिभाग्यवशाद्भवान्प्राप्तोभवतितत्प्राप्तिलक्षणमाह आश्चर्यमित्यादिना । हियतस्त्वमाश्चर्यविस्मयावहंधैर्यंप्राप्तोयतोमयाप्रलोभितोपिविषयाभिमुखंनगतइति ३४९ त्वादृशाःप्रष्टारःशिष्याःसुदुर्लभाःपुरुषोत्तमत्वादित्याह त्वादृगितिद्वाभ्यां । नि

एतैस्तर्कैरनुत्पन्नाश्रुत्याविश्वाससंशयात् ॥ विनश्यतिमतिर्नूनमथवापिविपर्ययात् ४५ ततएषामतिःसाध्वीधेनुवत्तर्कसिंहतः ॥ सदारक्ष्यामहाभागस्वात्मनःक्षेममिच्छता ४६ नास्तिकेभ्यःपरेभ्यश्चसर्वदात्मव्यवस्थितिः ॥ प्रोक्तैषाजायतेप्रेष्ष्यासर्वेषामिहदेहिनाम् ४७ आत्मविज्ञानसंपन्नःकुशलश्चेद्वदेदिह ॥ तदासुखेनविज्ञातआत्मन्येषाप्रजायते ४८ प्राप्तवान्यांभवानत्रस्वयमेवातिभाग्यवान् ॥ आश्चर्यंत्वंहियद्धैर्यप्राप्तोस्यवितथंयतः ॥ मयाप्रलोभ्यमानोपिगतोनविषयंप्रति ४९ त्वादृङ्नचिकेतःस्यात्प्रष्टाजन्मनिजन्मनि ॥ शिष्यायतोजगत्यस्मिन्सुलभानभवादृशाः ३५० नानाविषयसंप्राप्तौसत्यांहिगुरुणापिच ॥ लोभमानोपिधैर्यान्नच्युतःसपुरुषोत्तमः ५१ इदंधैर्यंहिकस्यापिनासीन्नास्तिनभाव्यपि ॥ त्वयियद्वर्ततेतातशिष्येममकुमारके ॥ ममापिनेदृशंधैर्यंवर्ततेयादृशंतव ५२ यतोजानाम्यहंनित्यमानंदात्मनिधिंहृदि ॥ निहितंस्वामरत्वंचसाधिपत्यंसदेहकम् ५३ अनित्यंचतथाप्यत्रत्वद्वद्बुद्धिर्नमेस्तिहि ॥ नासीत्पूर्वंचतातैवंमतिस्तेवर्त्ततेयथा ५४ अध्रुवैर्नहियज्ञाद्यैर्ध्रुवंमोक्षंप्रयात्ययम् ॥ यतएवमविज्ञायनाचिकेतश्चितोमया ५५ अग्निर्द्रव्यैरनित्यैस्तदमरत्वंसमाप्तवान् ॥ आभूतसंप्लवस्थानंनित्यंनैवाविनाशियत् ५६ एतदर्थंपुरायज्ञान्कृतवान्भूरिदक्षिणान् ॥ अहंहिमहतःक्लेशादिमांभूमिंसमाप्तवान् ३५७

गद्व्याख्यातंद्वयम् ३५० । ३५१ मत्तोपितवधैर्यमधिकमितियोतनपरस्यदशमस्यार्थमाह इदमितिसप्तभिः । स्पष्टम् ३५२ तत्रहेतुतयायमःस्वस्यैश्वर्यादिसक्तिमाह यतइति । यतोहंहृद्गुहायांनिहितंब्रह्मानंदरूपंनिधिंजानामितथास्वकीयंदेवत्वंसाधिकारंसदेहंचअनित्यंजानामि तथापित्वद्वदत्रदेवत्वादौहेयत्वबुद्धिर्ममनास्तिनवापूर्वमासीत् हेतातयथातवसावर्ततइतिद्वयोरर्थः ३५३ । ३५४ पूर्वंनासीदित्यत्रहेतुतयाऐश्वर्यकामनयाग्निचयनादिकर्मानुष्ठानंदर्शयति अध्रुवैरित्यादिना । यतोमयाएवमविज्ञायअनित्यैर्द्रव्यैःपश्विष्टकादिभिर्नाचिकेताख्योग्निश्चितः एवंकथं अध्रुवैरनित्यैर्यज्ञादिकर्मभिःपरमार्थनित्यंमोक्षरूपमयमधिकारीनप्राप्नोतीतियदहमेतदवेदिषंतदाकर्मनाकरिष्यमितिभावः तच्चस्मादग्निचयनाख्यकर्मणोहेतोरहमापेक्षिकनित्यताशालिअमरत्वादिकंप्राप्तवानस्मिनतुमुख्यंनित्यमितिद्वयोरर्थः ३५५ । ३५६ नकेवलमग्निचयनमेवैतदर्थंमयाकृतवानस्मिकिंत्वग्निष्टोमादियज्ञानपीत्याह एतदर्थमिति । इमांभूमिंधर्मराजाधिकाररूपाम् ३५७

कीदृशीयंयत्रसर्वस्यसांसारिकभोग्यजातस्यानायासेनपृथग्यत्नानपेक्षाप्राप्तिर्भवतियथाभोजनेकृतेतृप्तिरनायासेनभवतीत्याह काम्यमानस्येति । त्वंत्वेतत्सर्वमैश्वर्यमुपस्थितमपित्यक्तवानसीत्यहो तेधैर्यमित्याह अनायासादिति ३५८ उक्तार्थपरत्वेनैकादशमपियोजयति आप्तकाममितित्रिभिः । आप्तकामत्वादिविशेषणकंदेवंयथातथायथावद्दृष्ट्वाप्यहंतथाविषयान्नत्यक्तवानस्मियथाभवानात्म दर्शनायत्यक्तवानितितृतीयेनसंबंधः आप्ताअंतर्भूताःकामालौकिकानंदायत्रसतथातंजगदाधारंपूर्णस्तुत्यंसर्वैर्वेदैरुरुत्वेनपूर्णत्वेनअनेकधास्तुत्याग्रुपन्यासैर्गेयमित्यर्थः ५९ संकल्पस्येति । संकल्प स्यक्रतुपदोक्तस्यप्रतिष्ठामाश्रयंप्रवर्त्तकमंतर्यामिणमितियावत् कीदृशस्यसंकल्पस्य नानाविपयैर्भेदवतः पुनःकीदृशं देशादिप्रयुक्तभेदराहित्यादनंतमित्यर्थः ३६० अभयस्येति । भयराहित्य स्यपरंपारंकाष्ठाभूतंदृष्ट्वेत्यादिव्याख्यातमिति ६१ यत्त्वमात्मानंपृच्छसितल्लाभसाधनमप्येतदेवयत्प्रत्यक्प्रवणत्वंचित्तस्यफलंतुहर्षशोकादित्यागइतिप्रदर्शयतोद्वादशस्यार्थमाह यस्यतेइतिचतुर्भिः । यस्यानंदरूपस्यदेवस्यदर्शनादेवतवप्रीतिर्नतुविषयदर्शनात् तंबुद्धिसाक्षिणंदेवंमत्वाहर्षशोकौभवद्धज्जहातीतिचतुर्थेनाभिसंबंधः कीदृशंतं असंयतात्मभिर्दुर्दर्शं काष्ठेपुवन्हिवद्गूढतयाऽऽवृततयास्थितंसर्वं

काम्यमानस्यसर्वस्यस्वप्रियस्येहवस्तुनः ॥ यत्रप्राप्तिरनायासात्सुतृप्तिर्भोजनादिव ॥ अनायासात्त्वयालब्धंतत्सर्वंत्यक्तवान्भवान् ३५८ आप्तकामंजगत्स्थानं महांतंस्तुतिसंश्रयम् ॥ वेदैःसर्वैश्चसततमुरुगेयमनेकधा ५९ संकल्पस्यप्रतिष्ठानंनानाविषयभेदिनः ॥ अनंतंदेशकालादिसर्वभेदविवर्जितम् ६० अभयस्यपरं पारंयतोनास्त्यभयंपरम् ॥ दृष्ट्वायथातथादेवंत्यक्तवान्विषयानिमान् ॥ नाहंत्वंतुयथात्याक्षीरात्मनोदर्शनायहि ६१ यस्यतेदर्शनात्प्रीतिरानंदात्मस्वरूपिणः ॥ तंबुद्धिसाक्षिणंदेवंदुर्दर्शमकृतात्मभिः ६२ वन्हिर्यथात्रकाष्ठेपुतद्वद्गूढमवस्थितम् ॥ सर्वभूतानिसृष्ट्वातुप्रविष्टंतेषुसर्वतः ॥ नभोवन्निहितंसर्वबुद्धौहृदयगह्वरे ६३ पुराणंपुरुषंशश्वन्नवीनमपिसर्वदा ॥ अहमस्मीतियोगस्यसंप्राप्त्याप्राप्यमीश्वरम् ६४ स्वप्रकाशंसदैवंतंमत्वाधीरोतिबुद्धिमान् ॥ हर्षशोकौसुदुस्त्यागौविजहा तियथाभवान् ॥ धीरोधृत्यामयादत्तंत्यक्तवान्क्षणतोखिलम् ६५ एतत्सर्वात्मकंरूपंश्रुत्वागुरुमुखात्पुमान् ॥ सम्यगात्मतयातद्वत्स्वीकृत्यचसमग्रतः ६६ अ त्रधर्माविरुद्धायेसंतितत्त्वंपदार्थयोः ॥ त्यक्त्वातानखिलान्धर्मिमात्रचैतन्यरूपकम् ६७ सूक्ष्ममात्मतयाप्राप्तोयःसदासोत्रमोदते ॥ मोदनीयमिमंलब्ध्वास्वा नंदात्मस्वरूपकम् ६८ आनंदसद्महृदयंप्राप्यतेयद्गुरोर्मुखात् ॥ विवृतद्वारकंतत्त्वांप्रत्यास्तेनचिकेतसम् ३६९

कार्यजातंसृष्ट्वातत्रघटमठादौनभोवत्प्रविष्टंबुद्धिगुहायांहृदयरूपेगह्वरेबहिर्मुखैर्दुष्प्रवेशेदेशेवर्त्तमानायांनिहितंस्थितं प्रासादेशेतेपर्यंकेशेतेइतिन्यायेनश्रुत्यविरोधइतिद्वयोरर्थः ६२ । ६३ पुराणमि ति । पुनःकीदृशं पुराणं तदेवविवृणोति सदानवीनमिति । पुनःकीदृशं सत्यंब्रह्माहमस्मीत्याकारकस्ययोगस्यनिदिध्यासनस्यसंप्राप्त्यालाभेनप्राप्यंगम्यम् ६४ स्वप्रकाशमिति । एवंशा स्त्रोक्तविधिना । स्फुटमन्यत् ६५ त्रयोदश्याअर्थउच्यते एतत्सर्वात्मकमितिपंचभिः । यःपुमानेतत्सर्वात्मकंपूर्णमात्मनस्तत्पदार्थस्यरूपंगुरुमुखात्श्रुत्वातद्वत्तादृशमेवरूपंसम्यगात्मतयात्वंपदा र्थतयागृहीत्वाअत्रअनयोस्तत्त्वंपदार्थयोर्विरुद्धायेईश्वरत्वानीश्वरत्वादयोधर्मास्तानखिलांस्त्यक्त्वाश्रुतौप्रवृद्धेत्युक्तंविवेचनंनीत्वाचधर्मिमात्रंसूक्ष्मंचैतन्यंब्रह्मात्मतोपयोगितयाप्राप्तोभवतिससदामोदते किंकृत्वा मोदनीयंकोपनीयं रंजनीयादिवत्कर्त्तरिअनीयर् एषह्येवानंदयातीतिश्रुतेःसर्वानंदप्रदमिममात्मानंभूमानंदरूपंलब्ध्वेतित्रयाणामर्थः ६६ । ६७ । ६८ आनन्देति । हेनचिकेतःयद्ब्र ह्मानंदरूपंसद्मगृहंहृदयंहृद्गुहायांस्थितमुपदेशाल्लभ्यतेतत्त्वांमुख्याधिकारिणंनचिकेतसंप्रतिविवृतद्वारकंविमुक्तप्रवेशमार्गकंवर्ततइत्यर्थः ३६९

एतदेवस्फुटयति आनंदसद्मनीति । भवानत्रानंदरूपेसद्मनिप्रविष्टइतिजानेयतएतस्ययःप्रवेशःप्रवेशमार्गभूताप्रत्यक्प्रवणताचित्तस्यतस्याःसंरोधेप्रतिबंधेविषयाकारावृत्तयोऽर्गलात्वेनस्थितास्तद्भंग
स्त्वयाविवेकबलेनकृतोऽतस्तवप्रवेशप्रतिबंधःकेनकर्तुंशक्यइत्यर्थः ३७० एवंविधैर्धर्मराजवचनैरर्थादात्मनोऽस्तित्वपक्षःस्थापितइत्याह एवमुक्तेइतित्रिभिः । अर्थतःश्रुतार्थापत्त्या ३७१ तामर्थाप
त्तिमभिनयति श्रेयइति । यमःश्रेयःप्रेयोरूपंफलद्वयमधिकारादिभिर्भिन्नंयत्प्राहयश्चमरणकालेआत्मनोजीवस्यस्ववशतांस्वस्ययमस्यमृत्युरूपस्याधीनतांप्राह यदपिपापिनांनृणांतंनरकंप्रतिगतानां
स्ववशतांपुनःपुनर्वशमापद्यतेमेइतिवाक्येनप्राहतत्सर्वंदेहाद्भिन्नस्यात्मनःसत्त्वेएवसंभवेत् यदात्वेपाप्राकृतजनानुभवसिद्धादेहस्यैवात्मतास्यात्तदाएतदुक्तंसर्वंनोपपद्यते नहिदेहआमुष्मिकफलभागीति
द्वयोरर्थः ३७२ । ३७३ चतुर्दशार्थंदर्शयति इत्थमितित्रिभिः । मतिमान्नचिकेताइत्थंविचारेणात्मनःसत्तांस्वयंस्वीकृत्यनिश्चित्यात्मनोयोऽतिशयितोविशेषःशुद्धत्वनित्यमुक्तत्वादिकस्तंधर्मराजं
प्रतिपृष्टवानिति ३७४ प्रश्नमभिनयति धर्मेतिद्वाभ्यां । हेलोकपलोकपाल यद्वस्तुधर्माधर्माभ्यांसकारकाभ्यांसफलाभ्यांचभिन्नंकार्यकारणाभ्यांचकृतादिपदोक्ताभ्यांभिन्नंकालत्रयावच्छिन्नभिन्नंचअत

आनंदसद्मनिभवान्प्रविष्टइतिमेमतिः ॥ एतत्प्रवेशसंरोधकारणंविषयार्गलाः ॥ भग्नायतस्ततःकेनतवरोधोभविष्यति ३७० एवमुक्तेयमेनायंनचिकेतामहाय
शाः ॥ मरणेस्वात्मनःसत्तामर्थतोधिजगामसः ३७१ श्रेयःप्रेयइतिप्राहभिन्नंस्ववशतांतथा ॥ आत्मनोमरणेनॄणांपापिनामपितंप्रति ३७२ तत्सर्वंस्वात्मनःस
त्वेदेहाद्भिन्नस्यसंभवेत् ॥ देहात्मतायदानैषातदैवमुपपद्यते ३७३ इत्थंविचार्यमतिमान्स्वयंस्वीकृत्यचात्मनः ॥ पप्रच्छातिविशेषंतंस्वात्मनोत्रयमंप्रति ३७४
धर्मराजमहाप्राज्ञगुरोसर्वज्ञलोकय ॥ धर्माधर्मविनिर्मुक्तंकार्यकारणवर्जितम् ३७५ कालत्रयेणनिर्मुक्तंसुखदुःखविवर्जितम् ॥ यत्त्वंपश्यसितद्वस्तुमह्यंशिष्याय
कीर्तय ३७६ एवमुक्तेयमोराजानचिकेतसमब्रवीत् ॥ सर्वधर्मविनिर्मुक्तमानंदात्मानमद्वयम् ३७७ प्रणवेनात्मरूपेणस्वाभिधानेनसर्वदा ॥ अभिन्नमभिधेयंतं
बुद्धिसौकर्यहेतवे ३७८ पदनीयंपरंब्रह्मसर्वेवेदावदंतियत् ॥ तपांस्यपिचसर्वाणिकृच्छ्रादीनिसहस्रशः ३७९ तपोभिःशुद्धहृदयेयस्मादेषपरंव्रजेत् ॥ वेदवत्ततएवैत
तपांस्यपिवदंतिच ३८० नारीणांस्मरणंतासांकीर्त्तनंताभिरेववा ॥ आभिस्तथैवकाचिच्चक्रीडाद्यूतादिरूपिणी ३८१ प्रेक्षणंचतथैवासांकामासक्तेनचक्षुषा ॥
गुह्यानांभाषणंतद्वद्ग्राम्यधर्मोपकारिणाम् ३८२

एवमुखादिवर्जितंत्वंजानासितन्मह्यमुपदिशेत्यर्थः श्रुतावन्यत्रेत्यस्यान्यदित्यर्थकत्वात् ७५ । ७६ पंचदश्यादित्रयस्यतात्पर्यार्थमाह एवमितिद्वाभ्यां । एवंपृष्टोयमःशुद्धमात्मानंबोधयन्प्रथमंबुद्धे
स्तत्रप्रवेशसौकर्यायप्रणवेनब्रह्मणोभिधानेननाम्नाऽभिन्नतयातमात्मानंप्रणवाभिधेयमब्रवीदितिद्वयोःसंबंधः ३७७ । ३७८ तत्रपंचदश्याअर्थमाह पदनीयमितिनवभिः । यत्परंब्रह्मपदनीयंपदांकैर्ग
वादिवच्चिदाभासलिंगैर्बुद्धैर्गम्यंयच्चवेदाउपनिषद्रूपावदंतिकृच्छ्रादीनितपांसिचयद्वदंतितत्प्रणवरूपंजानीहीतिनवमेनाभिसंबंधः ३७९ ननुवेदास्तद्वदंतीतियुक्तंतपांसितद्वदंतीतिकथमुपपद्येतेत्याशंक्यां
समाधत्ते तपोभिरिति । यस्मादेषोधिकारीतपोभिःशुद्धएवहृदयेपरंब्रह्मावगच्छतिततस्तपांसितंवदंतीत्युक्तमितिसंबंधः । अयंभावः वेदैस्तत्प्रतिपादनंनामतदावरणभंजकवृत्त्युत्पादनंतादृशवृत्त्यनुकू
लत्वंतपसामपिचित्तमलापहरणद्वारेतितेपिवदंतीवेति ३८० ब्रह्मचर्यस्वरूपंदर्शयितुंतत्प्रतियोग्यष्टविधंमैथुनंनिरूपयति नारीणामितिपंचभिः । नारीणांस्मरणंप्रथमं तासांकीर्त्तनंताभिःसहवाकीर्तं
नंद्वितीयं नारीभिःसहद्यूतादिक्रीडातृतीयमिति ३८१ प्रेक्षणमिति । सकामेनमनसाप्रेरितेनचक्षुषायदालोकनंतत्प्रेक्षणमित्युक्तंचतुर्थं गुह्यांगादीनांग्राम्यधर्मपरिपोषायभाषणंपंचममिति ३८२

पष्ठंसंकल्पमभिनयति इयमिति। इयंसुभ्रूर्मेमग्राम्यधर्मोपयोगिन्यस्त्वित्याकारकंचिंतनंसंकल्पइत्युक्तम् ३८३ सप्तममध्यवसायमभिनयति अनयेति। तत्रोक्तरूपाध्यवसायेसुरतंकारणंफलंवासस्या ध्ययनवदितितुरीयपादार्थः ३८४ अष्टम्याःक्रियानिर्वृतेःक्रियपानिर्वृतिःसुखमितिव्युत्पत्त्यनुसारेणाकारमाह ग्राम्येति ३८५ उक्तमष्टविधंव्यापारंमुमुक्षुर्वर्जयेत्तद्वर्जनमेवतुब्रह्मचर्यमित्युक्तमित्याह स्मरणमिति ३८६ यदिच्छंतइति । उक्ताकारंब्रह्मचर्यंयद्वाप्तीच्छयाकुर्वंतितद्ब्रह्मप्रणवाभिधेयत्वात्प्रणवप्रतीकत्वाद्वाप्रणवतादात्म्यापन्नंविद्धीत्यर्थः अन्यत्रान्यदृष्ट्यालंबनत्वंप्रतीकत्वम् ३८७ षोडशीसप्तदश्योःप्रणवस्यप्रतीकतामालंबनतांचक्रमेणप्रशंसंत्योरर्थमाह एतद्ध्येवेतिद्वाभ्यां । एतत्प्रणवरूपमक्षरंब्रह्मकार्यंब्रह्मात्मकंहिरण्यगर्भदृष्ट्याध्येयमितियावत् तथापरंब्रह्मापिएतत् परब्रह्मा त्मत्वेनापिध्येयमितियावत् तस्मादस्याक्षरस्यब्रह्मत्वेनोपासकःकार्यब्रह्मभावपरब्रह्मभावरूपफलयोर्मध्येयदिच्छतितदेवाप्नोतीत्यर्थः ३८८ प्रणवोच्चारणेप्रतीयमानंतन्मात्राचतुष्टयवाच्यस्थूलसू क्ष्मकारणतुरीयावस्थावच्छिन्नंशुद्धंचिन्मात्रमेवास्मीतिचिंतनरूपामालंबनोपासनांप्रशंसाति एतदालंबनमिति। एतत्प्रणवरूपमालंबनंश्रेष्ठंश्रेष्ठस्यकार्यब्रह्मणोध्यानोपकारकंतथापरंपरब्रह्मणोध्यानो

इयंमेभवतात्सुभ्रूर्ग्राम्यधर्मोपकारिणी ॥ इतियच्चिंतनंसस्यात्संकल्पःकामुकस्यहि ३८३ अनयासहसंभोगंकरिष्यामीतिनिश्चयः ॥ कथितोध्यवसायोयंसुरतंत त्रकारणम् ८४ ग्राम्यधर्मेणगमनंललनायाःसुखप्रदम् ॥ क्रियानिर्वृतिरित्युक्तासर्वदात्रमनीषिभिः ३८५ स्मरणंकीर्तनंक्रीडाप्रेक्षणंगुह्यभाषणम् ॥ संकल्पंनि श्चयंचैवक्रियानिर्वृतिमष्टमीम् ॥ वर्जयेद्वर्जनंतत्तुब्रह्मचर्यमुदाहृतम् ३८६ यदिच्छंतोमहात्मानोब्रह्मचर्यंचरंत्यपि ॥ तत्तेसंग्रहतोवक्ष्येओमित्येवावधारय ३८७ एतद्ध्येवाक्षरंब्रह्मएतद्ध्येवाक्षरंपरम् ॥ एतद्ध्येवाक्षरंज्ञात्वायोयदिच्छतितस्यतत् ॥ फलंभवतिनैवात्रसंशयःकोपिविद्यते ३८८ एतदालंबनंश्रेष्ठमेतदालंबनंपरम् एतदालंबनंज्ञात्वाब्रह्मलोकेमहीयते ३८९ अयमोंब्रह्मणोभावःसर्वदैवविभावयेत् ॥ नजायतेनम्रियतेस्वयंज्योतिःस्वरूपकम् ३९० नायमात्माकुतश्चि त्स्यात्कारणाभावहेतुतः ॥ अस्मादपिनकोपिस्याद्द्वितीयाभावहेतुतः ३९१ अजस्ततोयमात्मास्यान्नित्योजन्मविवर्जितः ॥ यतोनित्यस्ततःशश्वद्वर्त्ततेत्रजग त्त्रये ३९२ शाश्वतस्ततएवायंपुराप्यस्तिमहेश्वरः ॥ पुराणोनवएवात्मासर्वेषामपिदेहिनाम् ३९३ हन्यमानेशरीरेस्मिन्नहन्यतेनैवकस्यचित् ॥ हन्यमानेघ टेयद्वन्नभोनैवात्रहन्यते ३९४

पकारकं एवंप्रणवमालंब्यद्विविधब्रह्मध्यानेनब्रह्मलोकप्राप्तिद्वारामुच्यतेइत्यर्थः ३८९ एवंद्विविधप्रणवोपासनयाशुद्धांतःकरणंप्रत्यात्मतत्त्वबोधिकानामष्टादश्यादीनामृचामर्थप्रदर्शनमुपक्रमते अयमोमित्यादिना। ओंब्रह्मणःप्रणवप्रतिपाद्यस्यब्रह्मणोभावःस्वभावोऽयंभवतितंसदामुमुक्षुश्चिंतयेत् । अयंकइत्याकांक्षांपूरयति नजायतइत्यादिना । अयमात्मास्वयंज्योतिष्ट्वेनसर्वभासकतया विपश्चित्पदोक्तोजननमरणाभ्यांतदुपलक्षितविकारांतरैश्चहीनइत्यर्थः ३९० तत्रहेतुतयाकारणाभावंद्वैताभावंचाह नायमिति । अयमात्माकुतश्चिन्नजायतेतत्कारणतायोग्यस्यकस्याप्यसंभवात् नाप्यस्मात्किंचिदवस्थांतरादिकंजायतेद्वितीयस्यैवाभावादित्यर्थः ३९१ अतएवायमजोनित्यश्चोक्तइत्याह अजइति । नित्यत्वाच्चसदावर्त्तमानत्ववाचकेनशाश्वतपदेनोक्तइत्याह यतइति। शाश्व तत्वाच्चपुराणइयुक्तःपुरापिनवइतिव्युत्पत्तिसमन्वयादित्याह ततएवेत्यादिना। ततःशाश्वतत्वात्पुरापिनवएवेत्यतःपुराणोभवतीतिद्वयोरर्थः ३९२ । ३९३ यतईदृशआत्मनःस्वभावोऽतउपाधि नाशेतन्नाशशंकानकार्येत्याह हन्यमानइति । स्पष्टम् ३९४

यः स्वात्मानंक्रियाकारकंमन्यतेसभ्रांतइतिप्रदर्शयंत्याऊनविंशतिपूरण्याअर्थमाह हंतेतिपंचभिः । यदिहंताहननक्रियाकर्तृसंघातावच्छिन्नआत्मानंहंतृंक्षमंहननक्रियाकर्त्तारमितियावत्मन्यते योवाहतं हननक्रियाकर्मभूतंमन्यतेतावुभावज्ञौआत्मनोऽकारकस्वभावत्वादित्यर्थः ९५ एतत्स्फुटयति कार्येति । लोकेकार्यंस्थूलंकारणंसूक्ष्ममिंद्रियादिकमेतयोरेवनाशदर्शनेनकार्यकारणान्यतरत्वंनाशव्यापकं दृष्टं वस्तुतस्तद्राहितात्मनःकथंनाशःस्यादित्यर्थ.९६ देहेंद्रियेति । देहादिरूपकार्यादिहीनमात्मानंयःकारकंमन्यतेसमूढइत्यर्थः९७ ज्ञानेति । तौहंतृत्वेनहतत्वेनचात्मानंमन्यमानौशास्त्रज्ञानवंतावप्ये तयोर्हंतृहतयोस्तत्त्वंमिथ्यात्वरूपंनजानीतःअनयोर्मिथ्यात्वंचविपर्ययकालएवभानादित्यर्थः ९८ नाभावोविद्यतेसतइतिन्यायेनात्मनोऽविध्यत्वंदर्शयति. सतइति । देहःस्वतःसत्ताहीनोयथानाशयोग्य स्तथायंसद्रूपआत्माकथंस्यादित्यर्थः ९९ आत्मनोनाशायोग्यतायांहेतुप्रपंचकत्वेनविंश्याअर्थमाह अणोरितिसप्तभिः । केचिद्वादिनोनैयायिकादयोऽणोःसूक्ष्मस्यमनःप्रभृतेर्नाशंनांगीकुर्वंतिआत्मा तुतस्मादणोरप्यणीयान्भवतितद्विवर्त्तोपादानत्वादतःसकथंनाशयोग्यइत्यर्थः ४०० एवंमहत्त्वेनानाशयोग्यतयाभिमतस्यकालादेरप्यधिष्ठानतयातिमहतआत्मनःकथंनाशयोग्यत्वमित्याह महतश्चे ति ४०१ साक्षितयाबुद्धिगुहानिहितत्वाच्चसननाशयोग्यइत्याह आत्मनइतित्रिभिः । वस्त्रादिकंस्वभावेनपरिणामित्वलक्षणेनयथानाशयोग्यंतथाआत्मायतोनभवतिअतःस्वरूपाद्बहिर्भूतंकिंचित्तस्य

हंताचेन्मन्यतेहंतुंहतश्चेन्मन्यतेहतम् ॥ उभौतौनविजानीतोनायंहंतिनहन्यते ३९५ कार्यकारणयोर्नाशंवधउक्तोमनीषिभिः ॥ अकार्यकारणःकेननिहंतिचक थंहतः ३९६ देहेंद्रियगणैःशून्यमात्मानंनभसासमम् ॥ हन्मीतिमन्यतेमूढोयश्चासौहन्यतेपिच ३९७ ज्ञानवंतावपिनतौजानीतस्तत्त्वमेतयोः ॥ विपरीतमि दंज्ञानमवध्येवधदर्शनात् ३९८ सतोनविद्यतेनाशोवस्तुनोत्रकदाचन ॥ सन्नात्मासर्वदाकेनवधमर्हतिदेहवत् ३९९ अणोरपिननाशोस्तिकेषांचिदपिवादिनाम् ॥ मतेकेनात्मनःस्यादपितस्मादणीयसः ४०० महतश्चननाशोस्तिकालादेर्वादिनांमते ॥ केनात्मनोभवेदेषमहतोत्रमहीयसः ४०१ आत्मनोनस्वभावेनवि नाशोवसनादिवत् ॥ ततःकारणतोनाशोवर्णनीयोमनीषिभिः ४०२ कारणानिचसर्वाणिविनाशंप्रतियांतिवै ॥ देहेंद्रियगणंप्राप्यनापिबुद्धिंव्रजंतिहि ४०३ बु द्धेरप्यांतरःस्वात्माबुद्धावेषस्थितोयतः ॥ जंतोःसर्वस्यकेनायंकारणैर्नाशमेष्यति ४०४ गुरुप्रसादतःस्वच्छचित्तोत्रविजितेंद्रियः ॥ दुःखेष्वनुद्विग्नमनाःसुखेषु विगतस्पृहः ४०५ आत्मनोमहिमानंतंमहत्त्वाणुत्वसंश्रयम् ॥ आनंदात्मस्वरूपेणभेदगंधविवर्जितम् ॥ पश्यत्यात्मतयायेननहंतिनचहन्यते ४०६

नाशेनिमित्तंवाच्यमात्मनाशवादिनेत्यर्थः ४०२ स्वरूपाद्बहिर्भूतानांनाशनिमित्तानांप्रवृत्तिस्तुदेहेंद्रियगणमभिव्याप्यैवदृष्टानतुसाक्षात्बुद्धिमभिव्याप्यापि बुद्धेःसाक्षिणमात्मानंप्रतिनकिंचिन्ना शकारणंगंतुंसमर्थमित्याह कारणानीतिद्वाभ्यां । नाशकारणानिसर्वाणिकुठारौषधादीनिदेहेंद्रियगणंप्राप्यविनाश्यस्वयंविनाशंयांतिक्षीणबलानिभवंतिनहिशरीरेंद्रियहीनेनाशकारणानिप्रवर्त्तमा नानिक्वेनचिद्दृष्टानीतिभावः ४०३ तथाचबुद्धेरप्यांतरस्यनाशःकथंस्यादित्याह बुद्धेरपीति स्पष्टम् ४०४ यश्चैवंविधमात्मनस्तत्त्वंजानातितस्यहंतृत्वादिव्यवहारोनिवर्त्ततइत्याकारमुत्तरार्धार्थमाह गुरुप्रसादतइति । अत्रश्रुतौधातुपदेनसचित्तेंद्रियाणांविवक्षितत्वात्तन्नैर्मल्यंस्वच्छेत्यादिविशेषणद्वयेनोक्तंगुरुप्रसादतइतित्वर्थापत्तिलब्धानुवादइतिभाष्याविरोधः उत्तरार्धेनवीतशोकत्वंक्रतुपदोक्तसं कल्पहीनत्वंचोक्तं एतादृशोऽधिकारीयदात्मनोमहिमानंशास्त्रप्रसिद्धमात्मतयाऐक्येनपश्यतितदाकर्तृत्वादिरहितोभवति. कीदृशंमहिमानं महत्त्वस्याणुत्वस्यचसंश्रयंपर्यवसानभूमिं अद्वितीयत्वेनानंदरूपंचेतिद्वयोरर्थः ४०५ । ४०६

अयमात्माकल्पितोपाधिभेदैस्तथातथाभासमानोपिवस्तुतःपूर्णःशुद्धोऽविषयस्वभावश्चेतिप्रकल्पयंत्याएकविंशतितम्याअर्थमाह दूरमितित्रिभिः । लौकिकोजनस्तिष्ठन्शयानोवादूरंगंतुंनशक्तःपरिच्छिन्नत्वादितिप्रसिद्धं अयमात्मातुतद्विलक्षणत्वात्समासीनोजाग्रदवस्थांपश्यन्नपितथाशयानःस्वप्रसुषुप्तोपश्यन्नपिदूरंसर्वत्रगतःपूर्णस्वभावत्वादित्यर्थः ४०७ तथाबुद्ध्यादिसंयाततादात्म्याध्यासाद्विद्याधनादिप्रयुक्तंमदंतदुपलक्षितंधर्मांतरंचप्राप्नुवन्भासमानोपिवस्तुतःशुद्धइत्याह बुद्ध्यादीनामिति । धातवोगैरिकादयःतत्संगाज्जलमिवबुद्ध्यादिसंगान्मदादिमानपिस्वभावादानंदलक्षणादमदोमदादिरहितोभवतीत्यर्थः ४०८ तस्याविषयत्वमाह कस्तमिति । तदेवंमदामदंमदवंतममदवंतंचमदन्योममतत्त्वविदःस्वरूपादखंडचिद्धातुलक्षणाद्भिन्नोजडभावःकोज्ञातुंक्षमइत्यर्थः मदन्यइत्याद्येवस्फुटयति मत्तइति । मत्तोममस्वरूपाद्भिन्नंहिजडंताद्दक्तज्ज्ञनात्मप्रकाशार्हंयतोमूढामोहव्याप्ताधीर्भवतितेनतथात्वात्तस्मात्स्वयंप्रकाशआत्मेत्यर्थः ४०९ आत्मविज्ञानफलप्रदर्शिकांद्वाविंशतितमींपठति अशरीरमिति । वस्तुतःशरीरत्रयरहितमनित्येषुसर्वशरीरेष्वंतःस्थितंपूर्णंचात्मानंयदाजानातितदाशोकमतिक्रामतीत्यर्थः ४१० शोकातिक्रमेउपपत्तिमाह शोकइति । शोकःकर्तृ

दूरंयातिसमासीनआत्मायंसर्वदेहिनाम् ॥ यतःसर्वगतोनित्यविक्रियालेशवर्जितः ॥ ततःशयानएवात्रशरीरेयातिसर्वतः ४०७ बुद्ध्यादीनांहिसंयोगाद्विद्यादिमदमेतिच ॥ जलंयथैवधातूनांसंयोगात्तादृशंभवेत् ॥ अमदश्चस्वभावाद्यआनंदात्मास्वयंप्रभः ४०८ कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति ॥ मत्तोयोहिविभिन्नःस्यात्सोनात्मात्रघटादिवत् ॥ ममात्मानंकथंताद्दग्ज्ञातुमर्हतिमूढधीः ४०९ अशरीरंशरीरेष्वनवस्थेष्ववस्थितम् ॥ महांतंविभुमात्मानंमत्वाधीरोनशोचति ४१० शोकोऽज्ञानसमुत्थोयमज्ञानंस्वात्मबोधनात् ॥ विनष्टंकेनशोकःस्यादहेतुःपुनरस्यसः ४११ अयमात्माविभुत्वेनमहान्यःपरिकीर्तितः ॥ नाध्यापनैर्नाध्ययनैरादेयोनबहुश्रुतात् ॥ नानाशास्त्रोत्थविज्ञानान्नलभ्योजन्मकोटिभिः ४१२ एषयंप्रतिदेवेशोदर्शयेद्विनिजंवपुः ॥ गुर्वादिरूपमापन्नस्तेनलभ्योधिकारिणा ४१३ यतएनंप्रतिस्वात्मातादात्म्येनात्मनोवपुः ॥ आनंदात्मस्वरूपंयत्तत्साक्षात्कृतवान्प्रभुः ४१४ नाविरतोदुश्चरितान्नाशांतोनासमाहितः ॥ नाशांतमानसोवापिप्रज्ञानेनैनमाप्नुयात् ४१५ पुण्यात्माक्रोधरहितोजंतौजंतौक्षणेक्षणे ॥ आत्मनश्चिंतयायुक्तोरागद्वेषविवर्जितः ॥ अहंब्रह्मेतिविज्ञानादात्मानमवलोकयेत् ४१६ ब्रह्मक्षत्रादिकंविश्वमन्नंयस्यमहात्मनः ॥ मृत्युःसर्वहरस्तद्वच्छाकसूपादिवत्स्थितः ॥ अन्यःकइत्थमात्मानंजानीयाद्यत्रसस्थितः ४१७

त्वादिरूपोबंधःसोऽज्ञानकार्यंभवतितदज्ञानंतुतत्त्वज्ञानेननष्टमतोनिष्कारणःशोकःकथंस्यादित्यर्थः ४११ त्रयोविंशतितम्याअर्थमाह अयमात्मेति । एषवर्णितआत्माअध्ययनादिभिरुपायैर्नादेयोनलभ्यइत्यर्थः ४१२ एषइति । किंत्वेषआत्मागुरुदेवादिरूपःसन्यमधिकारिणंप्रतिस्वरूपप्रदर्शनरूपंवरणंनयेत्तेनैवलभ्यतइति ४१३ यतइति । कीदृशंगुरुदेवादिकर्तृकंवरणं यतःयस्यवरणस्यप्रभावादयमात्माप्रभुरेनमधिकारिणंप्रतिस्वीयमानंदात्मकंवपुःस्वरूपंतादात्म्येनाभेदेनसाक्षात्कृतवानपरोक्षतांनीतवान्भवतीत्यर्थः ४१४ आत्मापरोक्षाधिकारिणंदर्शयंतीं चतुर्विंशतितमींपठति नाविरतइति । दुश्चरितंपापंतस्मादनिवृत्तःशमहीनःसमाधिहीनोऽशान्तमानसःसमाधिफलादैश्वर्यरूपादनिवृत्तमनाश्चपुरुषएनमात्मानंप्रज्ञानपदोक्तसाक्षात्कारविषयंन करोतीत्यर्थः ४१५ व्यतिरेकमुखेनोक्तमन्वयमुखेनाह पुण्यात्मेति । जंतौजंतौसर्वोपाधिषु आत्मनःअखंडात्मतत्त्वस्य ४१६ द्वितीयवल्ल्यंत्यकंडिकार्थमाह ब्रह्मेतिद्वाभ्यां । यस्यमहात्मनोदेवस्यतमःप्रधानमायाशबलस्यब्रह्मक्षत्रोपलक्षितंसर्वंजगदोदनस्थानीयंभवति सर्वसंहारकोमृत्युस्तुशाकसूपस्थानीयः सदेवोयत्रशुद्धेस्थितस्तमात्मानमित्थंयथामयायमेनज्ञातस्तथान्यःकोज्ञातुंशक्नुयादित्यर्थः ४१७

तज्ज्ञानस्यदुःशकत्वमेवस्फुटयति सएवेति । तस्याधिकारिणःसएवशबलांशिष्ठानभूतःशुद्धात्मैवआत्माआत्मतयापदार्थशोधनदशायांज्ञातःस्यात्सएवतंवाक्यार्थतयाज्ञातुंशक्तोनपरःशुद्रशरीरत्रयात्मदृष्टिरित्यर्थः ४१८ तृतीयवल्ल्यांप्रथमायाअर्थमाह अयमात्मेतिचतुर्भिः । आत्मनोविज्ञानप्रकारोऽयंबोध्यः अयंकइत्यपेक्षायामाह तत्त्वमित्यादि । तत्त्वंपदार्थौदेहेद्विधावक्ष्यमाणद्वैविध्यशालिव्यापारवत्तयास्थितौचिंतनीयौ ४१९ तद्व्यापारद्वयंपिबत्पदेनभोक्तरिमुख्यतयाभोजयितरितूपचारेणवर्तमानेनोक्तंदर्शयति एकइति । ययोःपदार्थयोर्मध्येएकस्त्वंपदार्थोदेहेऽपूर्ववशाज्जातेसत्यवश्यभोक्तृत्वेनकृतपदनिर्दिष्टंकर्मफलंभुंक्तेअपरस्तत्पदार्थस्त्वंतर्यामित्वाद्भोजयतीति ४२० उभाविति । कीदृशौतौ । बुद्धिरूपेउत्कृष्टस्थानेसहस्थितौ भोक्तृत्वाभोक्तृत्वसर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्मशालिनौचेत्यर्थः ४२१ तयोःस्वरूपंतुदक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यसंज्ञानांपंचाग्नीनामुपासनेननाचिकेताग्नेस्त्रिवारंचयनेनवाशुद्धांतःकरणाःप्रतिपादयंतीत्याह वेदेति । त्रिवेलंत्रिवारम् ४२२ ननुपंचाग्निवित्प्रभृतीनांब्रह्मविज्ञानंनदृश्यतेइतिशंकांवारयंत्याद्वितीयायाअर्थमाह प्रायइतित्रिभिः । यद्यपितेपंचाग्न्यादयःप्रायोब्रह्मविज्ञानहीनाजीवपरयोर्भेदमेववदंतोदृश्यंतेतथापि

सएवचेद्वेदात्मातस्यतादात्म्यबोधतः ॥ जानीतेसकथंचित्तंनपरोत्रकथंचन ४१८ अयमात्मावगंतव्यउपायेनामुनामदा ॥ तत्त्वंपदार्थौवपुषिपरिकल्प्यौद्विधासदा ४१९ एकःकर्मफलंभुंक्तेभोजयत्यपरोपितम् ॥ पूर्वकर्मविपाकेनजातेस्मिन्हिशरीरके ४२० उभावपिचबुद्धिस्थावुत्कृष्टस्थानकप्रियौ ॥ विलक्षणस्वभावौचभोक्तृताभोक्तृतादिगौ ४२१ वेदवादरतैःप्रोक्तौनित्यंपंचाग्निधारिभिः ॥ त्रिवेलंनाचिकेताग्निर्यैश्चितोत्रमहात्मभिः ४२२ प्रायस्तेब्रह्मविज्ञानरहिताभेदमेवहि ॥ वदंतिजीवपरयोर्यावद्गुरुसमागमः ४२३ नाचिकेतममुंचित्वापूर्वंशुद्धधियोहिते ॥ प्रणवेनात्मनःपश्चात्कृत्वोपासनमैक्यतः ४२४ तत्पदार्थश्चयसेतुरीजानानांमहात्मनाम् ॥ संसारसागरस्यास्यपरंपारंतितीर्षताम् ॥ अभयंब्रह्मयांत्येतत्सदाकल्पनयानया ४२५ भोक्तारंरथिनंविद्धिशरीरंरथमेवच ॥ बुद्धिंतुसारथिंतद्वन्मनःप्रग्रहमेवच ॥ इंद्रियाणिहयांश्चैवविषयानश्वभूमिकाः ४२६ बुद्धेर्यद्यपिभिन्नःसन्भोक्तानान्यःपरात्मनः ॥ तथापींद्रियबुद्ध्यादियोगादात्मैवकल्पितः ॥ भोक्तातद्योगनिर्मुक्तोगम्यएवपरेश्वरः ४२७

तेषांतथाविधंवदनंतावदेवयावत्सद्गुरुणासमागमोनजातइतिशेषः तथाचतेसत्संगंविनाकामहताएवदृश्यंतइतिभावः ४२३ लब्धसद्गुरुसमागमास्तुतेब्रह्मभावमिदानीमपियांतीत्याह नाचिकेतमिति । तेकर्मिणःसद्गुरुसंगतास्तुनाचिकेताख्याग्निचयनेनप्रणवोपासनानुष्ठानेनचशुद्धधियःसंतःसदाइदानीमपिअभयंब्रह्मयांतिअनयावक्ष्यमाणकल्पनया कीदृशंब्रह्म तत्पदार्थरूपेणईजानानांयागादिकारिणांसंसारस्यपरंपारंतितीर्षतांगंतुमिच्छतांसेतुभूतमनुग्रहेणपारप्रापकमितिद्वयोरर्थः ४२४ । ४२५ अनयेत्युक्तांकल्पनांदर्शयंस्तृतीयाचतुर्थ्योरर्थमाह भोक्तारमितिद्वाभ्यां । तत्रकर्मफलभोक्तृतयोक्तमात्मानंत्वंपदार्थंरथिनंरथेनसंसारमोक्षयोर्गंतारंजानीहि तंरथंतुशरीरात्मकंजानीहि यस्यरथस्यबुद्धिःसारथिस्थानीयामनोरश्मिस्थानीयमिंद्रियाण्यश्वस्थानीयानिशब्दादयोविषयास्त्वश्वप्रचरणदेशस्थानीयाइत्यर्थः ४२६ यद्यपिबुद्धेर्विविक्तस्यशुद्धात्मनोभोक्तृत्वंगंतृत्वंवानसंभवतितथापींद्रियमनोबुद्धिसंबंधरूपेणकल्पिताश्चिदाभासाख्यआत्माभोक्तागंताचेत्युक्तःशुद्धात्मातुगंतव्यत्वेनोक्तइत्याह बुद्धेरिति । भिन्नोविविक्तःसन्नात्मापरमात्मनोन्योभोक्तानभवतितथापिसइंद्रियादियोगाद्भोक्ताकल्पितः सएवचेंद्रियादियोगहीनोगंतव्यतयोक्तइत्यर्थः ४२७

उक्तकल्पनायाःफलमाह यांत्येतेइति । एतेशुद्धधियोऽधिकारिणोभोक्तृतारूपंपूर्वदेशंविहायपरमात्मभावरूपमुत्तरंदेशंयांति किंकृत्वा बुद्धिरूपसारथिनाइंद्रियरूपाश्वान्जित्वेति ४२८ तत्र बुद्धिरूपसारथेर्द्वौगुणौगम्येतरदेशेरागहीनत्वंविज्ञानाख्यंकौशलंचतत्राद्यंगुणंप्रशंसंत्योःपंचमीषष्ठ्योस्तात्पर्यार्थमाह वैराग्येति । यस्यरथिनोबुद्धिरूपःसारथिर्वैराग्यवान्भवतिसरथीदृढेनबल वतामनोरूपप्रग्रहेणेंद्रियात्मकवाजिनःसारथिद्वारावशीकृत्यइष्टंपरमात्मरूपंदेशंयाति ४२९ तयोरक्षरार्थमाह रागेतिद्वाभ्यां । योरथीरागशलित्वेनापकृष्टंविज्ञानंबुद्धिर्यस्येतिव्युत्पत्तिकेनवि ज्ञानवत्पदेनोक्तःसरागबुद्धिकोधैर्यबलहीनमनस्कश्चतस्येंद्रियाश्वाअवश्याभवंतियथालोकेदुष्टाश्वाःसारथेरित्यर्थः ४३० इतरस्यतुतेवश्याइत्याह विरक्तइति स्पष्टम् ४३१ सप्तम्यष्टम्यौतुबु द्धिसारथेःकौशलेनमनोरूपप्रग्रहांतराकर्षणरूपेणप्रयुक्तंफलंव्यतिरेकेणान्वयेनचदर्शयंत्यौपठति यस्त्वविज्ञानेति । अपकृष्टंविवेकहीनंविज्ञानंयस्यसतथा अमनस्कःअनंतर्मुखमनाः अतएवसदा ऽशुचिः तदीयस्नानादेःकुंजरस्नानसमत्वात् एतादृशोविष्णुपदंनाप्नोतिकिंतुसंसारमेवेत्यर्थः ४३२ सविवेकधीस्तुतदाप्नोतीत्याह यस्त्विति । मनःपदंनिगृहीतमनःपरम् यस्माद्यंप्राप्यभूयोन जायतेइत्यर्थः ४३३ एवंविधसत्करणवतालभ्यंयत्तदेवपरंपदमितिदर्शयंतींनवमींपठति विज्ञानेति । सद्बुद्धिसारथिकोमनसानिगृहीतेंद्रियश्चसंसारसिंधुमार्गात्पारंपरंविष्णोःपरमात्मनःपदं

यांत्येतेपरमात्मानंभोक्तृतांपरिहायहि ॥ इंद्रियाश्वान्विनिर्जित्यबुद्धिसारथिसंश्रयात् ४२८ वैराग्यकवचंप्राप्तोयस्यस्याद्बुद्धिसारथिः ॥ दृढधैर्येणमनसाप्रग्रहेणेंद्रियाभिधान् ॥ वाजिनःस्ववशेकृत्वापरंयातिनचापरः ४२९ रागबुद्धिस्तुयोत्रस्यान्मनसाधैर्यवर्जितः ॥ तस्येंद्रियाण्यवश्यानिदुष्टाश्वाइवसारथेः ४३० विरक्तोयस्तुलोकेस्मिन्मनसाधैर्यसंयुतः ॥ तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेः ४३१ यस्त्वविज्ञानवान्भवत्यमनस्कःसदाशुचिः ॥ नसतत्पदमाप्नोति संसारंचाधिगच्छति ४३२ यस्तुविज्ञानवान्भवतिसमनस्कःसदाशुचिः ॥ सतुतत्पदमाप्नोतियस्माद्भूयोनजायते ४३३ विज्ञानसारथिर्यस्तुमनःप्रग्रहवान्नरः ॥ सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदम् ४३४ विरक्तातत्एवेयंबुद्धिर्विज्ञानरूपिणी ॥ मनश्चधैर्यसंपन्नंनित्यंयत्सुखकामुकम् ॥ पुंसोमोक्षायकथितमन्यथाबंधनायच ४३५ मोक्षःप्रत्यक्त्वमुदितंबहिष्ट्वंबंधनंतथा ॥ प्रत्यक्त्वंकारणेनित्यंबहिष्ट्वंकार्यसंश्रयम् ४३६ महाभूतात्मकाएतेशब्दाद्याविषयाःसदा ॥ इंद्रियाणांहिकथिताःकारणंसर्वदेहिनाम् ४३७ इंद्रियाणितथैतानिविषयग्रहणान्यपि ॥ मनोयोनीनिसततंव्यापारयतितद्यतः ४३८ सुखंमेभवतात्तद्वदुःखंमाभूदितीदृशम् ॥ मनोनिश्चयविज्ञानरूपांबुद्धिमपेक्षते ४३९

स्वरूपंयातीत्यर्थः ४३४ फलितमाह विरक्तेति । यतःसरागत्वेधैर्यराहित्येचानर्थःप्रसिद्धस्ततएवविरक्ताबुद्धिःसधैर्यमनश्चएतद्द्वयंमोक्षसाधनंविपरीतंबंधसाधनंचेति ४३५ दशम्यादिद्वयमवता रयति मोक्षइतिसप्तभिः । प्रत्यक्त्वमांतरभावस्तद्रूपोमोक्षोबाह्यभावस्तुबंधस्तत्रकार्यापेक्षयाकारणेआंतरेतद्दृष्टिर्मोक्षइत्यर्थः ४३६ तत्रपरमकारणभावएवमुख्योमोक्षइतिदर्शयितुंकारणपरंपरा माह महेत्यादिना । तत्रशब्दादयोविषयाःपंचभूतसारात्मकत्वात्पंचभूतरूपेणइंद्रियाणांभौतिकत्वेनप्रसिद्धानांकारणतांयांति ४३७ इंद्रियाणीति । तानींद्रियाणितुमनोयोनीनिमनःकारण कानि यतस्तन्मनएवतानिव्यापारेप्रवर्तयतीतिप्रसिद्धम् तथाचसमुद्रोलहरीणामिवमनइंद्रियाणांकारणमितिभावः कीदृशानिइंद्रियाणि विषयग्रहणानिभौतिकत्वेनसजातीयविषयाणांग्राहका णिविषयरूपाणीतियावत् तथाचयथाभूतरूपेणार्थाइंद्रियेभ्यःपराउक्तास्तथेंद्रियरूपापन्नेभ्योऽर्थेभ्योमनःपरमुच्यतइत्याशयः ४३८ तस्यचमनसइच्छारूपस्यनिश्चयात्मिकाबुद्धिःकारणमि त्याह सुखमिति । भवतात्जायेत इतीदृशंइत्याकारम् अपेक्षतेउत्पत्त्यैइतिशेषः ४३९

व्यष्टिबुद्धीनांकारणंतुमहत्तत्त्वाख्यासमष्टिबुद्धीनांकारणंतुमहत्तत्त्वाख्यासमष्टिरूपाहिरण्यगर्भबुद्धिरित्याह बुद्धिरिति । बुद्धिर्व्यष्टिरूपातुहिरण्यगर्भबुद्धिंसर्वस्यस्थूलप्रपंचव्यवहारस्यानिमित्त भूतांमहत्तत्त्वाख्यामुत्पत्तयेऽपेक्षतइत्यर्थः साहिरण्यगर्भबुद्धिरप्यव्यक्तपदोक्तंसूक्ष्मशरीरस्योपादानमायाख्याविद्यासहितमपेक्षते कीदृशम् । समायंसूक्ष्मंस्थूलविलक्षणत्वादव्यक्तपदेनोक्तम् सामायातुआश्रयविषयलाभायचिद्रूपंपरंपुरुषमपेक्षतेइतिद्वयोरर्थः ४४० । ४४१ पुरुषइति । सचपुरुषःस्वसिद्धयेऽन्यंयतोनापेक्षतेततःसमुख्यःपरोभवतितद्बोधनायैवतुएनामुक्तरूपांकारणपरंप रांप्राहुरिति ४४२ वर्णितकारणपरंपराभिधायिकांदशम्याद्विकामृग्द्वयींपठति इंद्रियेभ्यइति । बुद्धेर्व्यष्टिरूपायाःपरःमहान्समष्टिबुद्धिरूपः कीदृशआत्मा कार्यापेक्षयांतरः स्फुटमन्यत् ४४३ । ४४४ पुरुषस्यस्वरूपंदर्शयन्परत्वंविशदयति इयमेवेति । इयंसाक्षादपरोक्षासंवित्सर्वप्रमाणफलभूताचित्दिक्कालयोरपिकल्पनाधिष्ठानत्वान्नित्यापराज्ञेया यस्याःसंविदःपरस्ताद्ग तिर्नास्ति कीदृश्याःसंविदः हेतोर्विश्वविवर्तोपादानभूतायाः ४४५ तस्याःपरमकाष्ठात्वंस्फुटीकरोति इदमिति । इदमस्मात्परमिदमस्मात्परमित्येवमाकाराएषाहेतूनांपरंपराधारायतःपुरुष पर्यंतैवभवतिततःपरमकाष्ठेतिसउक्तः ४४६ परमगतित्वंस्फुटयति पुरुषेइति । पुरुषस्वरूपविषयककारणाभावाद्धेतोरस्मात्पुरुषात्परागतिर्नविद्यते पुरुषएवपरमागतिरित्युक्तः तथाच

बुद्धिर्हिरण्यगर्भस्यबुद्धिंसर्वस्यकारणम् ॥ अपेक्षतेमहतत्त्वंसापिलिंगशरीरकम् ४४० अविद्याप्रभवंनित्यमव्यक्तंस्थूलदेहतः ॥ विलक्षणंहिसाविद्यंमायाचपुरु परम् ४४१ पुरुषःस्वात्मनोनैवकदाप्यन्यमपेक्षते ॥ यतस्ततःपरःप्राहुरेनांहेतुपरंपराम् ४४२ इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनसस्तुपराबुद्धि र्बुद्धेरात्मामहान्परः ४४३ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः ४४४ इयमेवपराज्ञेयानित्यादिक्कालरूपिणी ॥ संवित्स्वयंप्रभायस्याहेतोर्नास्तिपरागतिः ४४५ इदमस्मात्परंचास्मादिदमस्मात्परंतथा ॥ पुरुषंनैवयात्येवसैषाहेतुपरंपरा ४४६ पुरुषेकारणाभावाद्गतिर स्मान्नविद्यते ॥ परातत:पुमानुक्तःपंडितैःपरमागतिः ४४७ एषसर्वेषुभूतेषुगूढआत्माशरीरिणाम् ॥ गुरूपदेशतःपूर्वंस्पष्टंनैवप्रतीयते ॥ यथासर्वेषुकाष्ठेषुगूढो ग्निर्मंथनात्पुरा ४४८ गुरूपदिष्टयासम्यक्कृतत्त्वमस्यादिजन्यया ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ४४९ आत्मनोज्ञानकाम सन्नेनंयोगंसमाच रेत् ॥ वागादिमिंद्रियगणंज्ञानकर्मोभयात्मकम् ॥ सुखार्थिनिमनस्यादौनियच्छेद्दांतिसंयुतः ४५० अश्वान्यथातिदुर्दांतान्बाह्यदाहृत्यभूस्थलात् ॥ निय च्छेदश्वशालायामश्वानामभिरंजकः ४५१

व्यासःस्मरति मुक्तानांपरमागतिरिति ४४७ अस्याऽऽत्मनोऽदर्शनदर्शनयोर्हेतूप्रदर्शयंतीद्वादर्शीन्याचष्टे एषइतिद्वाभ्यां । एषआत्माकार्यकारणाविद्याभ्यांगूढआवृतःसर्वदेहांतःस्थोगुरूपदे शात्पूर्वंदर्शनश्रवणादिलिंगैःकिंचिच्चिद्रूपेणाज्ञायमानोपिस्पष्टमानंदादिरूपेणनभासतेकाष्ठगूढाग्निवदित्यर्थः ४४८ गुरूपदिष्टयेति । यदातुगुरूपदिष्टमहावाक्यजन्यांप्राधान्येनांगीकृतत्वादग्र्य पदोक्तांदुर्लक्ष्यात्मगोचरत्वात्सूक्ष्मांब्रह्मात्माकारवृत्तिंलभतेकुशलमतिस्तदायमात्मासम्यग्भासतइत्यर्थः ४४९ आत्मज्ञानसाधनंयोगमुपदिशंत्यास्त्रयोदश्याअर्थमुपबृंहयति आत्मनइतिचतुर्भि श्लोकैः । आत्मसाक्षात्कारायअग्रेवक्ष्यमाणचतुरवस्थोयोगोनिरोधःकार्यस्तत्राद्यामवस्थामाह वागादिमिति । इंद्रियगणस्यसुखकामनयाप्रेरकेमनसियन्नियमनंविलापनंदमसंज्ञंमनोमात्रव्या पारावशेषणमितियावत् साप्रथमावस्थाऽस्ययोगस्येत्यर्थः श्रुतौमनसीतिदीर्घश्छान्दसः ४५० तत्रदृष्टांतउच्यते अश्वानिति । यथाश्वानामभिरंजकःशिक्षको बाह्यादरण्यादिरूपात्तत्प्रचार प्रदेशादानीयाश्वान्मंदुरायांबध्नीयात् तत्रयथाश्वानांबाह्यव्यापारोनिरुद्ध्यतेशरीरसंचलनमात्रमवशिष्यतेतथाप्रकृतेमनसिइंद्रियात्मनाबहिर्व्यापारोनिरुध्यतेआंतरोवशिष्यतेइति ४५१

द्वितीयामवस्थामाह मनइति । मनस्तुइच्छात्मकंस्तब्धंसगर्वंअतएवसदाबलात्प्रमादकरणेसाहसेउद्यतंगजसमंतदंकुशस्थानीयया बुद्ध्याअंकुशदंडस्थानीयवैराग्ययुतयानियच्छेन्निश्चयात् तन्निश्चयरूपायांबुद्धौविलापयेदितियावत् कीदृशीसाबुद्धिः निश्चयात्मिकी निश्चयलक्षणेआत्मनिस्वरूपेभवा अध्यात्मादित्वाट्ठञ् ४५२ तृतीयांचतुर्थींचावस्थामाह बुद्धिमिति । तांनिश्चयरूपांव्यष्टिभूतांबुद्धिंमहतिमहत्तत्त्वाख्येईशाख्येईशस्यहिरण्यगर्भस्यआख्यानिरूपणंयेनतथाभूतेज्ञानेअस्मीत्याकारकेसामान्यावगाहित्वाद्बुद्ध्यौघस्यविशेषावगाहिव्यष्टिबुद्धिजातस्यकारणेविलापयेत् तत्सामान्याकारसमष्टिबुद्धिरूपंज्ञानंतुपरमात्मनिविलापयेदित्यर्थः ५३ एवमागमविधयोक्तेर्थेसंभावनायैअनुकूलांयुक्तिंप्रपंचयति अत्रेत्यादिना । नियमःप्रतिज्ञा ' नियमोयन्त्रणायांस्यात्प्रतिज्ञायांचसंयमे ' इतिविश्वप्रकाशात् प्रकारःसामान्यस्यभेदकोविशेषः । तथाचअत्रउक्तेनियमेप्रतिज्ञासमेसंक्षिप्तवाक्येअयंवक्ष्यमाणःप्रकारोविशेषबोधकानुकूलयुक्तिरूपःपंडितैर्बोध्यइत्यर्थः । तत्रेंद्रियाणांमनसिनियमनाभिधानेऽयमभिप्रायः इंद्रियाणांद्विविधानांसुखकामनयाप्रवृत्तिरित्यविवादं तत्रयत्सुखरूपंप्रयोजनंतदिच्छेतियावत यच्चतदनुकूलंरमणीयत्वावगाहिस्मृ

मनःस्तब्धंबलान्नित्यंप्रमादकरणोद्यतम् ॥ महागजोपमंनित्यंबुद्ध्याचांकुशरूपया ॥ नियच्छेन्निश्चयात्मिकयादृढवैराग्ययुक्तया ४५२ बुद्धिंतांमहतीशाख्येज्ञानेबुद्ध्यौघकारणे ॥ नियच्छेत्तच्चविज्ञानमानंदात्मनिकेवले ४५३ अत्रायंनियमेज्ञेयःप्रकारःपंडितैःसदा ॥ कर्मेंद्रियाणिकुर्वंतिव्यापारंयंशुभाशुभम् ॥ सुखार्थमेवतंसर्वंतथाज्ञानेंद्रियाण्यपि ४५४ सुखंप्रयोजनंतत्रतज्ज्ञानंचापिकारणम् ॥ व्यवस्थितंतदुभयंमनोमात्रविजृंभितम् ४५५ सुखज्ञानात्मकस्यास्यमनसोनिश्चयाज्जनिः ॥ ननिश्चयंविनायस्माद्विद्यतेसुखकारणम् ॥ स्मृत्यादिवाजनिंगच्छेत्सर्वेषामिहदेहिनाम् ४५६ सनिश्चयोबुद्धिरूपोमनसःकारणंहियः ॥ हिरण्यगर्भजांबुद्धिंविनानैवात्रसंभवेत् ४५७ तटाकादिषुनीराणियथानजलदंविना ॥ धीमतांहिधियस्तद्वन्नेश्वरेच्छांविनाक्वचित् ४५८ इयमीश्वरसंस्थानाबुद्धिर्विश्वस्यकारणम् ॥ जडाजडस्यकृत्स्नस्ययथानःस्वप्नधीरिह ४५९ शयानःपुरुषोयद्वद्बुद्धिमात्रविजृंभणात् ॥ महाभूतानिदेहांश्चसृजतेत्रचतुर्विधान् ॥ तेषुसर्वेषुसर्वत्रस्वयमेवावतिष्ठते ४६० एवंहिरण्यगर्भोपिभगवान्भूतभावनः ॥ स्वात्मबुद्धिविलासेनसृजतीदंजडाजडम् ४६१ सृष्ट्वाचविविधान्देहांश्चरस्थिरशरीरिणाम् ॥ आस्तेतेषुचसर्वेषुनिर्भेदोभिन्नवत्सदा ४६२

तिरूपंज्ञानंतदुभयंमनोमात्रविलासत्वेनव्यवस्थितंप्रसिद्धमितिद्वयोरर्थः ४५४ । ४५५ द्वितीयावस्थानुकूलांयुक्तिमाह सुखेति । सुखेच्छातदनुकूलज्ञानोभयात्मकस्यमनसउत्पत्तिर्निश्चयाद्भवति यतःपूर्वानुभवरूपनिश्चयंसंस्कारजनकंविनासुखकारणंलौकिकसुखाभिव्यंजिकाइच्छातदनुकूलंस्मृत्यादिरूपंज्ञानंवाजनिमुत्पत्तिंनगच्छेदितिप्रसिद्धमित्यर्थः ४५६ सचनिश्चयोविशेषरूपःसामान्यरूपांहैरण्यगर्भींबुद्धिमुत्पत्तयेऽपेक्षतेइत्याह सनिश्चयइति स्पष्टम् ४५७ सामान्यरूपायाहैरण्यगर्भबुद्धेर्विशेषाधियांहेतुत्वेदृष्टांतमाह तटाकादिष्विति । यथातटाकादिजलानांमेघजलंकारणंतथाईश्वरस्यहिरण्यगर्भस्येच्छाकारणभूताबुद्धिर्व्यष्टिजीवधियांकारणमित्यर्थः ४५८ तस्याःकारणत्वमेवस्फुटयति इयमिति । यथास्माकंस्वप्नकालिकीधीःस्वप्नकालिकस्यजडाजडप्रपंचस्यहेतुस्तथेयमीश्वरेहिरण्यगर्भेस्थिताबुद्धिर्विश्वस्यकारणमिति ४५९ स्वप्नदृष्टांतंविशदयति शयानइति । तेषुसृष्टेषु ४६० दार्ष्टांतिकेयोजयति एवमितिद्वाभ्यां । निगदव्याख्यातंद्वयंनिर्भेदइत्यत्रवस्तुतइतिशेषः ४६१ । ४६२

फलितमाह अतइति । अतोयोगिनःयोगकर्तुर्व्यष्टिजीवस्यैषाबुद्धिरत्रव्यवहारेदृश्यतेसाएपातद्बुद्धिस्तस्यहिरण्यगर्भस्ययाबुद्धिस्तद्रूपैवघटाकाशमठाकाशन्यायेनसामान्यविशेषयोरभेदात् कीदृशीयोगिनोव्यष्टिरूपाबुद्धिः सांसारिकसकलदुःखजालस्यकारणामित्यर्थः ४६३ तुरीययोगावस्थायामुपपत्तिमाह तस्याइतिद्वाभ्यां । तस्याहिरण्यगर्भबुद्धेरविद्याख्यमायोपाधिकब्रह्मोपादानकत्वात्तत्रलयउचितइतिभावः ४६४ सर्वविशेषबुद्धिविशिष्टसमष्टिबुद्धेर्निरासेनिमित्तंतुब्रह्मास्मीतिज्ञानमेवेत्याह अहमिति । कंचुकभूतत्वग्विशिष्टानामेवव्रीहीणांबीजत्वंनकंचुकहीनानां तथात्मनोबीजत्वप्रयोजकस्याविद्यालक्षणकंचुकस्यमहावाक्यजज्ञानेनक्षयेसतिअधिदेवात्मनोहिरण्यगर्भबुद्धिःकेवलात्मनिलीयतेअतआत्मनस्तल्लयस्थानत्वात्सासमष्टिबुद्धिस्तत्रआत्माधिकरणकत्वेनचिंतनीयाध्यातव्येत्यर्थः ४६५ तथाचिंतनंहिनिदिध्यासनत्वेनब्रह्मसाक्षात्कारहेतुरित्याह एवमिति । एवंसमष्टिबुद्धिःशबलात्मोपादानिकेत्याकाराचिंतांकुर्वतस्तस्ययोगिनःपुण्यपरिपाकात्प्रतिबंधहीनस्यभेदहरंज्ञानंजायते कीदृशस्ययोगिनः अधिदैवाभिजातस्यव्यष्ट्यभिमानंत्यक्त्वासमष्टिरूपेबुधस्यकुशलस्येत्यर्थः 'अभिजातःस्मृतोन्याय्येकुलीनप्राप्तरूपयोः'इतिविश्वः प्राप्तरूपोबुधेरम्येइतिच । समष्टिदृष्टिरूपोपासनानामतएवब्रह्मसाक्षात्कारांगत्वमितिभावः ४६६ एवंविधयोगस्यपरमपुरुषार्थप्रापकत्वंदर्शयति जातेइतित्रिभिः । तस्मिन्ब्रह्मविज्ञानेजातेस

अतस्तद्बुद्धिरेवैषाबुद्धिर्यैषात्रयोगिनः ॥ कारणंसकलस्यास्यदुःखजालस्यसंसृतौ ४६३ तस्याःकारणमीशानःपरमात्मामहेश्वरः ॥ साविद्योब्रह्मणोबुद्धेरेकएव निरंजनः ४६४ अहंब्रह्मेतिविज्ञानादविद्याकंचुकक्षये ॥ अधिदेवात्मनोबुद्धिरानंदात्मनिकेवले ॥ विलीयतेयतस्तत्रचिंतनीयासदैवसा ४६५ एवंचिंतयतस्तस्ययोगिनःशुद्धचेतसः ॥ अहंब्रह्मेतिविज्ञानंभेदपर्वतभेदकम् ॥ अधिदैवाभिजातस्यजायतेपुण्यपुंजतः ४६६ जातेतस्मिन्नविद्यायाःक्षयोभवतिसर्वथा ॥ अविद्यायाःक्षयेनस्याद्ब्रह्मधीःकारणंविना ४६७ ब्रह्मणोबुद्धिनाशेथनभवेद्योगिनोपिधीः ॥ बुद्धेरभावेनभवेन्मनश्चतदभावतः ४६८ व्यापाराइंद्रियाणांनभवेयुर्दुःखहेतवः ॥ तदभावादयंदुःखंनाणुमात्रंचगच्छति ४६९ किंतुनित्यंस्वयंभातमानंदात्मानमद्वयम् ॥ अवाङ्मनसगम्यंतमाश्चर्यःकुशलोव्रजेत् ४७० अहोमायाबलंचित्रमेकस्मिन्भेदवर्जिते ॥ नलीयतेलीयतेचस्वयमेकाजगज्जनिः ४७१ उत्पन्नंयस्यविज्ञानमहंब्रह्मेतिकेवलम् ॥ तंप्रत्यदर्शनंयातिनापरान्प्रतियातिसा ४७२ एकमेवयथानेत्रंवामंपश्यतिनेतरत् ॥ स्थानभेदात्तथैवात्मासर्वभेदविवर्जितः ४७३

त्यविद्यायाअभावस्ततश्चब्रह्मधीरस्मीत्याकारासमष्टिबुद्धिःक्षीयते कारणस्याविद्यात्मकस्याभावात् ४६७ ब्रह्मणइति । ब्रह्मणोहिरण्यगर्भस्ययाबुद्धिःसमष्टिरूपातस्यानाशेसतियोगिनोबुद्धिर्व्यष्टिरूपापिनश्यतिततश्चमनइच्छाद्यात्मकंनप्रवर्त्ततेमनःप्रवृत्त्यभावेत्विंद्रियव्यापाराभावस्ततोदुःखाभावइतिद्वयोरर्थः ४६८ । ४६९ ततश्चब्रह्मभावेनावतिष्ठतेइत्याह किंत्विति । किंतुतमात्मानंव्रजेत्यत्प्राप्त्याकुशलश्चरमदेहआश्चर्यइतिचोच्यतेइति ४७० ननुएवंविधयोगेनसर्वप्रपंचंविलाप्यैकस्मिन्मुक्तेसत्ययोगिनामितरेषांसंसारोपलब्धिःकथमितिशंकांमायायादुर्घटतास्वभावमादायपरिहरति अहोइति । मायायाबलंप्रभावआश्चर्यं यदेकापिमायाजगज्जनिर्जगतोहेतुभूताएकस्मिन्कालेलयालयव्यवहारयोग्याभवतीति ४७१ यौगपद्येनलयालयौयोग्ययोगिनौप्रतिमायायाःस्फुटयाति उत्पन्नमिति । तदुक्तंपतंजलिना कृतार्थंप्रतिनष्टमप्यनष्टंतदन्यसाधारणत्वादिति ४७२ ननुपातंजलानामात्मभेदाभ्युपगंतॄणांमतेउक्तव्यवस्थोपपत्तावपिसिद्धांतेएकात्मत्वेकथमियमुपपद्येतेतिचेन्न उपाधिभूतांतःकरणभेदेनदृष्टस्यव्यवहारस्यापर्यनुयोज्यत्वादितिदर्शयितुंदृष्टांतमाह एकमिति । एकमित्यावर्त्तते तथाचयथागोलकद्वयेएकमपिचक्षुरिंद्रि-

यमेकंदक्षिणगोलकावच्छिन्नमेवसत्वामंसुंदरंयथाभवतितथापश्यतिनेतरद्वामगोलकावच्छिन्नंतथेकोप्यात्मायोग्याख्योयोगिशरीरावच्छिन्नएतांसविलासांमायांनपश्यति अयोगिशरीरावच्छिन्नस्तुतांपश्यति इतिस्थानपदोक्तोपाधिभेदादस्मन्मतेप्युपपन्नमितिशेषः याचसाकल्यतोमायानलीयतेमूढैरुपलभ्यमानत्वात् विवेकिदृष्ट्याचनिरूपणमुपपत्तिंनसहतेविलीयतइतियावत् । एषानुपपत्तिःसामायायादुर्घटस्वभावत्वेनसमाधेयेतिवक्ष्यमाणेनसंबंधइतिद्वयोरर्थः ४७३ । ४७४ मायायादुर्घटत्वांतराण्यपिदर्शयति एकएवस्वयमितित्रिभिः । एकएवप्रकाशरूपआत्मा अस्यामायायाआश्रयोविषयश्चभवतीत्यनुपपन्नं लोकेज्ञानादीनामाश्रयविषयभेददर्शनात् तथाऽद्वितीयोपिईशितव्यसापेक्षोमहेश्वरोभवतीत्यनुपपन्नं तथामायासंबंधरहितेआत्मनिमायानिरूपितमाश्रयत्वादिकंमाययैवभवतीत्यनुपपन्नमात्माश्रयादित्यर्थः ४७५ तथासत्त्वासत्त्वादिभिरनिर्वचनीयापिभावरूपत्वेनप्रसिद्धाभवतीत्यनुपपन्नं तथाजडापिस्थूलसूक्ष्मस्यजगतोहेतुःकर्त्रीत्यनुपपन्नमित्याह स्वयमिति । कर्तृत्वादिकंमायाप्रयुक्तत्वान्मायाशिरस्येवनिक्षिप्यतेइतिस्पष्टं भाष्येपैंगिरहस्यब्राह्मणवाक्यव्याख्यानेइतिभावः ४७६ गामिनइति । तथामरणसुषुप्त्योःस्पष्टमनुपलभ्यमानापिगामिनआगामिनोदेहस्यबीजभूतावर्ततेइत्यनुपपन्नं तथाहेतुशून्याअनादिरपिनश्यतीत्यनुपपन्नं अनादिभावस्यनाशादर्शनात् तथाविद्वदपेक्षयातन्नाशेपीतरेषांसंसारोनन

एकएवचयोग्याख्योनाविद्यांपरिपश्यति ॥ पश्यत्येतामयोग्याख्यःस्थानभेदान्नलीयते ॥ मायासाकल्यतश्चापिसहतेननिरूपणम् ४७४ एकएवस्वयंज्योनिरानंदात्मागुणोद्वयः ॥ मायायाआश्रयस्तद्वद्विषयश्चमहेश्वरः ॥ माययापिचमायायाःसंबंधादिविवर्जितः ४७५ स्वयंचसदसत्त्वादिप्रकारैरपिवर्जिता ॥ भावरूपाजडाहेतुःसदसद्वपुषस्तथा ४७६ गामिनोपिचदेहस्यहेतुशून्याचनश्यति ॥ नष्टायामपिसंसारोननश्यतिकदाचन ४७७ इत्यादिदुर्घटत्वंस्यायस्मात्तस्मादियंसदा ॥ मायातिदुर्घटेत्येवंवदंतिसकलाजनाः ४७८ दुर्घटत्वमविद्याया भूषणंनतुदूषणम् ॥ कामिनःकामितायद्वत्क्रोधिनःक्रोधितायथा ॥ भूषणंदुर्घटायाश्चदुर्घटत्वंतथैवच ४७९ सुघटस्यभवेद्याहिदुर्घटत्वंतदेवतत् ॥ गच्छेद्दूषणतांनैवंप्रविद्यासुघटायतः ४८० अहोधाष्टर्यमविद्यायायदियंस्वविवर्जिते ॥ सर्वमानैर्विरुद्धाचतिष्ठत्येवनतिष्ठति ४८१ तस्मादेतत्कृतेदुःखेविरक्तःसततंपुमान् ॥ महायत्नंप्रकुर्वीतसर्वदुःखप्रशांतये ४८२

श्यतीति ४७७ इत्यादीति । आदिपदेनअप्रामाणिक्याअपिबंधमोक्षादिनानानावैचित्र्यहेतुत्वग्रहः यस्मादेवंविधंदुर्घटत्वमविवादमतस्तस्यादुर्घटत्वमादायैवसर्वाक्षेपान्परिहरंतिसर्वेमायावादिनइत्यर्थः ४७८ स्वभावभूतस्यदुर्घटत्वस्यभूषणतांसदृष्टांतमाह दुर्घटत्वमिति । यथाकामिनोगोपवधूटीदुकूलचोरस्यकामिताक्रोधिनोरुद्रस्यक्रोधिताचभूषणमेवतथाध्यानेनसत्फलदत्वात्तथामायायादुर्घटत्वमपीत्यर्थः ४७९ यत्रसुघटत्वमुपपन्नत्वलक्षणंस्वभावभूतंस्यात्तत्रैवक्वचिदंशेदृश्यमानंदुर्घटत्वंदूषणंयथासत्कार्यविकृतिषु मायातुस्वभावेनदुर्घटैवेत्याह सुघटस्येति ४८० अहोइति । धाष्टर्यंभूयोभूयोऽनादरेपिसम्मुखीभवनशीलत्वंतदविद्यायांयादृशंतादृशंनान्यत्र यतइयंसर्वप्रमाणैरावरणभंजनफलकैःशतशस्तिरस्क्रियमाणापिस्वसंसर्गपराङ्मुखेचिदात्मनितिष्ठत्येवेतितद्धाष्टर्यमद्भुतंचवस्तुतोऽसत्वात्यतइयंतत्त्वविद्दृष्ट्याकालत्रयेपिनतिष्ठतीत्यर्थः ४८१ फलितमाह तस्मादिति । यस्मादियंमायातत्त्वज्ञानंविनानाबिभेतिदुःखयतिचतस्मादेतयाकृतेदुःखमयेसंसारेविरक्तेनसर्वदुःखापहारनिदानलाभायपत्नःकार्यइत्यर्थः ४८२

किंतत्सर्वदुःखापहारनिदानमितिचेत्समष्टिबुद्धिलयस्थानस्यात्मनोज्ञानमेवेत्याह हिरण्येति । यत्रशांतेआत्मनिहैरण्यगर्भीबुद्धिर्लीयतेतस्यज्ञानेहेपुरुषोत्तमाःप्रयतध्वमिति ४८३ तत्त्वविज्ञानोद्यमलक्षणंहितंमातृवदुपदिशंत्याश्चतुर्दश्याअर्थमुपबृंहयति उत्तिष्ठतेतिविंशतिश्लोकैः । हेअधिकारिणोयूयंमायाप्रयुक्तंजाड्यंविवेकवैमुख्यंविहायोत्तिष्ठतविवेकाभिमुखाभवत यतोजाड्यादात्मसंबंधोअंत्मविषयकइतियावत् मोहोविस्मृतिलक्षणःसम्यगागतःसंततोवर्ततेइत्यर्थः ४८४ निद्रामिति । तथानिद्रांमूलाविद्यारूपांत्यजत संयत्ताःसावधानाभवत यतः सुप्तानांभवतांसर्वस्वंधर्मज्ञानादिरूपंकामादिरूपाःपाटच्चराश्चोराहरंति ८५ तस्यांनिद्रायामेषविपर्ययसंतानात्मकःस्वप्नःप्राप्तोयत्राहंताममताभ्यांसंसारदुःखंप्रतन्यतेइत्याह स्वप्नोयमिति ८६ तत्राहंताघटितंविपर्ययमभिनयति गर्भस्थइतिद्वाभ्यां । अयंसत्यज्ञानानंदलक्षणोप्यहंतापिशाच्याविष्टोगर्भस्थत्वादिनाऽत्मानंमन्यतेइतिद्वयोरर्थः ४८७ । ४८८ ममताघटितंमाह अहंतेति । अहंतायाःपुत्रीममताप्येपाएवमादिभेदैःसहस्रधायातिप्रसरतीतितृतीयेनाभिसंबंधः अयंममशत्रुर्दुःखेनसाध्योवशंनेयःसर्वदापकारकरत्वात् अयंममसुहृदुपकारकरत्वात् ४८९ मित्रमिति । उपकारेणवशीकृतत्वंमित्वम् ४९० ममेति । इदंममक्षेत्रंवस्त्रादिकंवाऽसारमस्थिरंसारंस्थिरं ममकामोस्तिनास्तिवेतिसंबंधः ४९१ उक्तयोरहंताममतयोःफलमाह मरणमिति । आभ्यांपुनःपुनर्मरणादिकंप्राप्नुवंश्चक्रवद्भ्रमतीत्यर्थः ४९२ निगमयति एवमिति स्पष्टम् ४९३ भवतामिति । यदिभवतामियंमूलाज्ञानरूपानिद्रास्वयंवामदेवादिवन्नयातिनदूरीभवतितदावरपदोक्तान्कुशलान्प्रत्युपदेशायगच्छतेत्यर्थः ४९४ तेचकुशलाःकरुणयायुष्मानुपदेक्ष्यंतीत्याह विनिद्राइति ४९५ तेभवतांसाक्षाद्विद्योपदेशेऽनधिकारमालोच्यचित्तशुद्धिहेतून्नानाविधसंयमानप्युपदेक्ष्यंतीत्याह नियमानिति । 'नियमोयंत्रणायांस्यात्प्रतिज्ञायांचसंयमे'इति विश्वः । त्रयमेकत्रसंयमइतियोगसूत्रं धारणाध्यानसमाधिरूपंत्रयमेकविषयकंसंयमपदवाच्यमितितदर्थः । तथाचतेमहात्मानोयोगविद्याविदोभवतःप्रतिनियमान्संयमरूपानपिशिक्षयेयुः कीदृशान्नियमान् योगजनकान्योगस्यआत्मसाक्षात्कारप्रयोजकसमाधेराविर्भावहेतून पुनःकीदृशान् योगजान्योगाभ्यासादेवप्रादुर्भूतान् तथाचोक्तंयोगभाष्ये 'भूमेरस्याइयंभूमिरनंतरेत्यत्रयोगएवोपायः' इति संयमदेशोयोगेनैवप्रदर्श्यतइतितदर्थः ४९६

हिरण्यगर्भगाबुद्धिःशांतआत्मनिलीयते ॥ यस्मिंस्तस्यात्मनोज्ञानेयतध्वंपुरुषोत्तमाः ८३ उत्तिष्ठतपरित्यज्यजाड्यंमायाविनिर्मितम् ॥ आत्मनोब्रह्मरूपस्ययतोमोहःसमागतः ८४ निद्रांत्यजतसंयत्तायतःपाटच्चराइमे ॥ कामादयोत्रसर्वस्वंहरंतिभवतांसदा ८५ स्वप्नोयंभवतांभूरिभीतिदःसमुपस्थितः ॥ यतोहंसमतावशाद्दुःखमेतदुपस्थितम् ८६ गर्भस्थोहंतथाजातःकुमारोप्यथवायुवा ॥ वृद्धोहंधनवांस्तद्वन्निर्धनोथसुखीतथा ८७ दुःखीसदारोनिर्दारश्चापुत्रःपुत्रवानपि॥ देहेऽहंतासमावेशादित्याद्येषोधिगच्छति ८८ अहंतातनयाप्येषाममताभूरिदुःखदा ॥ शत्रुर्ममायंदुःसाध्यःसर्वदाप्यपकारकृत् ८९ मित्रमेषतथास्माभिर्बहुधोपकृतोयतः ॥ उदासीनोयमस्माकंकुरुतेनप्रियाप्रियम् ९० ममक्षेत्रादिकंतद्वदसारंसारमेववा ॥ कामःक्रोधस्तथालोभोभयंमोहोथवामम ॥ अस्तिनास्तीत्येवमादिभेदैर्यातिसहस्रधा ९१ मरणंचपुनर्देहग्रहणंपुनरेवतत ॥ गर्भवासादिकंभूयश्चक्रवत्परिवर्तते ९२ एवमेषोतिदुःखानांकारणंस्वप्नआगतः ॥ ततोजाग्रतविद्वांसोभयमेतदुपस्थितम् ९३ भवतांयदिनिद्रेयंबहुस्वप्नप्रदर्शिका ॥ स्वयमेवनयात्येतान्व्रजंतुकुशलान्वरान् ९४ विनिद्रास्तेमहात्मानःसर्वभूतदयापराः ॥ बोधयिष्यंतिवःप्राप्तानुपायैर्विविधैरपि ९५ नियमान्योगजनकान्योगजान्योगवीविदः ॥ शिक्षयेयुःशनैस्तद्वद्भवतोप्युपदेशकाः ४९६

वरपदेनाभीष्टदेवतादितोलभ्यमुच्यतेइतिपक्षेपिवाक्यंधर्मराजमुखेनयोजयति निबोधतेति । यथामांवरपाशेनबध्वानचिकेताआत्मानंबुद्धवांस्तथान्येपिहेअधिकारिणोयूयंगुरून्वरपाशैर्वशीकृत्यात्मानंनिबोधतेत्यर्थः ४९७ यद्यत्रेति । यद्यस्मिन्नधिकारिदेहेबोधोनभविष्यतितदादेहदानानादेहप्रयोजिकाविनष्टिर्हानिःप्राप्स्यतीति ४९८ अतिसूक्ष्मेति । हेअधिकारिणःअयंब्रह्मबोधरूपोमार्गः सूक्ष्मतमोदुर्लक्ष्यतमोविषमश्चालितुंदुःशकश्चभवतिततःसावधानैर्भवितव्यमित्यर्थः ४९९ तत्रविषमत्वेदृष्टांतमाह क्षुरस्येति । क्षुरपदेनगोक्षुरकंग्रंथकृतोविवक्षितं जातावेकवचनंच धारासंततिः कीदृशस्यक्षुरस्य त्रिशाणकंकंटकत्रयंतेनशितस्यतीक्ष्णस्य तथाचगोक्षुराणांसंततिर्महावनमार्गगतायथापत्रेणवाहनेनहीनैर्दुरत्ययादुरतिक्रमेतिद्वयोःसंबंधः 'शाणोमाषचतुष्टयेकषणेच' इतिविश्वः । कषणःकंटकोहिंसकत्वात् 'धारासैन्याग्रिमस्कंधसंतत्योः' इतिच त्रिःशाणेतिपाठेवारत्रयंशाणसंघर्षेणतीक्ष्णस्यक्षुरस्यनापितास्त्रस्यधारासंततिर्मार्गगायद्विस्यादित्यभूतोपमेयमितिभाष्यानुसारेणबोध्यम् ५०० । ५०१ दार्ष्टांतिकेयोजयति एवमिति । एवंमोक्षरूपपुरद्वारभूतमात्मज्ञानंगुरुपरमेश्वरानुग्रहरूपवाहनंविनादुर्गमंविघ्नकंटकाक्रांतत्वादित्यर्थः ५०२ एतन्मार्गचलनप्रकारोप्येतन्मार्गपांथेभ्योबुधेभ्योज्ञेयइत्याह वदंतीति । तद्वत्पूर्वंतरवत्येपुराएनंमार्गंदृष्टवंतस्तेकवयःतद्गतिमकारंवदंतिमादृशादेवाअपिचेति ५०३ अथज्ञानस्यातिसूक्ष्मतांसूचयन्नात्मनःसर्वदृश्यधर्मराहित्यप्रतिपादिकांपंचदर्शीव्याचष्टे यस्मादितिपङ्क्तिः ।

निबोधतमहाभागाजाड्यनिद्रेविहायहि ॥ आनंदात्मानमद्वैतंवरान्प्राप्यस्वयंप्रभम् ॥ नचिकेतायथामत्तःसंप्राप्यविविधान्वरान् ४९७ यद्यत्रभवतामात्मबोधोनैवभविष्यति ॥ ततोविनष्टिर्महतीभवतांदेहदैष्यति ४९८ अतिसूक्ष्मतमोमार्गोविषमश्चाधिकारिणः ॥ ब्रह्मात्मबोधसंज्ञोयमप्रमत्ताभवंत्वतः ४९९ क्षुरस्ययाद्दशीधारात्रिशाणकशितस्यच ॥ अनेकशतसंख्यस्यमार्गस्थस्यानिरंतरम् ५०० पत्रेणरहितैर्यद्वत्पुरुषैःसादुरत्यया ॥ सिंहव्याघ्रादिसंकीर्णेदुर्गमेत्रमहावने ५०१ एवमेतद्धिविज्ञेयमात्मज्ञानंमहात्मभिः ॥ दुर्गमंमुक्तिपुर्यायद्राजमार्गसमंस्मृतम् ५०२ वदंतिकवयस्तद्वद्दृष्टवंतःपुराहिये ॥ एनंमार्गंमहात्मानोमादृशाःकुशलाअपि ५०३ यस्मादात्मात्रजंतूनामेकएवव्यवस्थितः ॥ आनंदात्मास्वयंज्योतिरवाङ्मनसगोचरः ५०४ शब्दःस्पर्शस्तथारूपंरसोगंधश्चपंचमः ॥ अस्मिन्नविद्यतेयस्माद्दृश्यतेतेननेंद्रियैः ५०५ व्ययःशनैर्विनाशःस्यात्यथास्पर्शवतामिह ॥ सकेनात्रभवेद्यस्मात्कोपिभूतगुणोनाहि ५०६ अतोव्ययमिदंब्रह्मनित्यंनाशविवर्जनात् ॥ अंतवद्यद्भवेद्वस्तुह्याद्यादिमत्तत्प्रसज्जते ॥ यथाघटादिकंनायमंतवान्पुरुषःपरः ५०७ हिरण्यगर्भबुद्ध्यादेरंतवत्ताप्रकीर्तिता ॥ तस्याअपिपरंयत्स्यादव्यक्तंविक्रियायुतम् ५०८

यस्मादयमात्माऽद्वयत्वानंदरूपोऽवाङ्मनसगोचरोभवतितस्मात्कवयःकुशलाएवतज्ज्ञानमार्गंवदंतीतिपूर्वेणसंबंधः ५०४ तत्रावाङ्मनसगोचरत्वंविशदयितुंशब्दादिराहित्येनेंद्रियायोग्यतामाह शब्दइति । यस्मात्शब्दादिर्गुणोस्मिन्नात्मनिनविद्यतेतस्मादिंद्रियाग्राह्योयमिति ५०५ अव्ययादिपदार्थमाह व्ययइति । शनैरवयवापचयक्रमेणयोविनाशःसव्ययइत्युच्यतेसचस्पर्शवतांवाय्वादीनामेवप्रसिद्धइहात्मनितुकथंस्यात् यतोत्रकोपिभूतगुणोनास्तीतिसंबंधः ५०६ अतइति । यतश्चाव्ययमतएवनित्यं नाशाभावस्यनित्यपदप्रवृत्तिनिमित्तस्यसत्वात् सचनाशाभावोऽनादित्वेनस्फुटीकृतइत्याह अंतवदिति । यद्वस्तुभावरूपमादिमद्भवेत्तदंतवदपिप्रसज्जतेभवति अयंपुरुषस्त्वनादिःकथमंतवान्स्यादितियोजना ५०७ सआत्माहिरण्यगर्भीयबुद्धेर्महत्पदोक्तायाआद्यंतवत्याःपरोध्रुवत्वाच्चकूटस्थत्वलक्षणात्परिणामिन्याःप्रकृतेश्चपरइत्याह हिरण्येति । तस्याहिरण्यगर्भबुद्धेःपरंपदव्यक्तमव्याकृतंततोप्ययमविक्रियत्वात्परोभवतीत्यतोध्रुवइत्युक्तइतिद्वयोरर्थः ५०८

५०९ फलितमाह अनंतइति । यतोनंतोभवतियतश्चमहद्भिर्हिरण्यगर्भबुद्धिवज्जन्मवान्नभवतिततोनित्यइति ५१० वर्णितात्मज्ञानफलमाह एनमिति । स्वयुक्तिभिःश्रुत्यनुकूलतर्कैः मत्वाविचार्य ११ अध्यायांत्यपद्यस्तात्पर्यार्थमाह देशेति । यःपुमान्देशकालवस्तुसंबंधिभिर्भेदैःशून्यस्तस्यज्ञानादमृतत्वंभवेदेतच्चाश्चर्यंयतोस्यात्मनःप्रतिपादकोयोयंग्रंथःअस्यकीर्त्तनादितोप्यचिरादिमार्गेणब्रह्मलोक लाभोभवतीतिद्वयोःसंबंधः ५१२ । १३ एतद्ग्रंथश्रवणादितोयदनंतफललाभउक्तस्तत्रप्रमाणमेतद्वाक्यद्वयंबोध्यमित्याह श्रवणादिति । यावदित्यवधारणे २१४ किंतद्वचनद्वयमित्याकांक्षायांतत्प ठति नाचिकेतमिति । नाचिकेतंनचिकेतसालब्धंयमेनप्रोक्तमिदंवल्लीत्रयरूपम् ५१५ यइममिति ब्रह्मसंसदिब्राह्मणसभायां प्रयतःपवित्रः तत्श्राद्धं ५१६ इतिकाठकप्रथमाध्यायव्याख्या द्वितीया ध्यायार्थप्रदर्शनमवतारयति एवमिति । एवंप्रणवप्रतीकंप्रणवालंबनंवाब्रह्मसंक्षेपेणवल्लीत्रितयात्मकप्रथमाध्यायेप्रतिपाद्यतदेवविस्तरेणप्रतिपादयितुमिदंवल्लीत्रितयात्मकाद्वितीयाध्यायरूपंवचो यमःप्राहेत्यर्थः ५१७ तत्रात्मज्ञानप्रतिबंधकमिंद्रियाभिमानरूपंप्रदर्शयंत्याःपरांचीत्याद्यायाश्चतुर्थवल्लीप्रथमायाःपूर्वार्द्धरूपायाऋचोर्थमाह नायमितिद्वादशभिः । हेनचिकेतःयोमयावर्णितआ

अविक्रियस्ततोप्येषपरःपुरुषईरितः ॥ ध्रुवोननाशमायातिनिर्मायःपरमेश्वरः ५०९ अनंतोयतएवायंमहद्भ्यश्चनकर्हिचित् ॥ जन्मवांस्ततएवायंपुमान्नित्यउदी रितः ५१० एनंगुरुमुखात्श्रुत्वातथामत्वास्वयुक्तिभिः ॥ संसारमृत्युमुखतोमुच्यतेत्रपुमान्सदा ५११ देशकालस्वरूपाणांभेदशून्यःपुमान्हियः ॥ तज्ज्ञाना न्मृत्युमुखतोमुच्यतेयन्नतद्भवेत् ५१२ आश्चर्यकारणंयस्मादस्यग्रंथस्यकीर्त्तनात् ॥ श्रवणाच्चभवेद्ब्रह्मलोकोगम्योचिरादिना ५१३ श्रवणात्कीर्तनाद्यावन्मननाच्च तथाप्यतः ॥ अनंतफलसंप्राप्तिरंतस्माद्वचनद्वयात् ५१४ नाचिकेतमुपाख्यानंमृत्युप्रोक्तंसनातनम् ॥ उक्त्वाश्रुत्वाचमेधावीब्रह्मलोकेमहीयते ५१५ यइमंपर मंगुह्यंश्रावयेद्ब्रह्मसंसदि ॥ प्रयतःश्राद्धकालेवातदानंत्यायकल्पते ५१६ एवंसंग्रहतोब्रह्मप्रोच्यप्रणवनामकम् ॥ विस्तरेणचतद्वक्तुमिदमाहयमोवचः ५१७ ना यमिंद्रियतोलभ्योनचिकेतःकदाचन ॥ आनंदात्मामयायस्तेसंग्रहात्प्रागुदीरितः १८इंद्रियाणिपरांयातिस्वात्मनःससृजेविभुः ॥ बहिर्मुखान्यतस्तानिहिंसितानी वपाणिनः ५१९ राजायथाश्रमायैतेबहिर्विषयदानतः ॥ आंतरस्यापहरणात्संमर्दिंसितवानिव ५२० आनंदात्मानमंतस्थमदत्वाविषयंतथा ॥ शब्दादीन्दत्तवा नयस्पानस्पार्द्धंहिंसितवानिव ५२१ विरोधिनोयथाराज्ञोबहिर्विषयवासिनः ॥ सामंतानुपहन्युस्तेच्छिद्रैश्छिद्रैःसमीपगान् ५२२

[illegible] ५१८ [illegible] । [illegible] ५१९ [illegible] ५२० [illegible] आनंदात्मानमिति । [illegible] ५२१ [illegible] । [illegible] ५२२

५२३ फलितमाह इंद्रियैरिति । यथादूरस्थसामंतानांराजदर्शनंदुर्लभंतथाबहिर्मुखेंद्रियाणामांतरात्मदर्शनमित्यर्थः ५२४ नन्विन्द्रियाणामित्थंभावेपिमनसःकागतिरितिचेच्छृणु द्विविधंमनःसका मंनिष्कामंच तत्राद्यमिंद्रियकिंकरत्वात्तत्समानगतिकंद्वितीयंत्विंद्रियनिरोधादात्मसाक्षात्कारसाधनमितिसूचयंत्याद्वितीयायाउत्तरार्द्धरूपायाअर्थमाह इंद्रियाणामितिपंचाभिः । तत्सकामंमनइंद्रि याण्यनुसरतितेषामन्तर्निरोधेतुमनोनिष्कामंबहिर्नगच्छति ५२५ इंद्रियाणामिति । इंद्रियाणामंतर्नयनंनिरोधरूपंनृणांदेहाभिमानिनांदुर्भणंकथितुमप्यशक्यंतत्करणंदूरतइतिभावः कश्चिदेवमनु ष्याणांसहस्रेपुमध्येशमादिमांस्तानींद्रियाण्यंतःस्थापयेदित्यर्थः ५२६ इंद्रियनिरोधेचनिर्द्वारंमनोंतरेवशाम्यतीत्याह तेषामिति । तेषामिंद्रियाणां असंश्रयंबाह्यालंबनरहितं ५२७ तत्रदृष्टांतउच्यते नवेति स्पष्टम् ५२८ एवंनिरुद्धंमनःश्रवणादिसंस्कृतमात्मतत्त्वाकारतांभजतइत्याह अंतर्नीतामिति । मोक्षेच्छोर्मुमुक्षोः ५२९ तथाचेंद्रियसंगरूपआत्मदर्शनप्रतिबंधोयैर्नदूरीकृतस्तेसंसारेपतंतिविवे

इंद्रियाणितथैतानिबहिर्विषयगानिहि ॥ आनंदात्मविरोद्धारोहन्युःकामादयस्त्विह ५२३ इंद्रियैरतएवायंशब्दादीन्परिपश्यति ॥ नानंदात्मानमंतस्थंमहारा जसमंसदा ५२४ इंद्रियाणांबहिर्भावेमनोपिबहिरेतितत् ॥ तेषामंतरवस्थानेबहिर्नैतिमनःक्वचित् ५२५ इंद्रियाणांस्वदेहांतर्नयनंदुर्भणंनृणाम् ॥ धीरःकश्चिन्न येत्तानिस्वांतःशांत्यादिसंयुतः ५२६ तेषामंतरवस्थानेबहिर्गंतुमशक्नुवत् ॥ द्वाराभावान्मनस्तिष्ठेदेहस्यांतरसंश्रयम् ५२७ नवद्वारेयथाबद्धकपाटेमर्कटःस्थि तः ॥ गृहेविचेष्टयतन्नैवश्रांतःसन्नवतिष्ठते ५२८ अंतर्नीतंमनस्तद्वच्छास्त्रसंस्कारसंस्कृतम् ॥ मोक्षेच्छोःकुरुतेस्वात्मसाक्षात्कारमसंशयम् ५२९ अमीभिरिं द्रियैर्नित्यंबहिर्विषयचारिभिः ॥ आत्मनोन्यांस्तुशब्दादीनिहवामुत्रवापिये ॥ विषयानभिगच्छंतिविवेकज्ञानवर्जिताः ५३० विस्तीर्णस्यात्रतेमृत्योर्व्याधिवै र्यादिरूपिणः ॥ देहेदेहेवशंयांतिविवशादीनचेतसः ॥ मत्स्यायथात्रजालेनमृत्युंयांतिविमोहिताः ५३१ मृत्युपाशवशंप्राप्तान्स्थिरजंगमदेहिनः ॥ ब्रह्मादी न्स्तंबपर्यंतान्निरीक्ष्याथविवेकिनः ५३२ ध्रुवंविज्ञायमोक्षंतमध्रुवंकर्मणःफलम् ॥ प्रार्थयंतेकदाचिन्नत्वद्वद्धीतमपंडिताः ५३३ दर्शेंद्रियाणांव्यापारानधिगच्छति चेतसा ॥ विषयग्राहकंचेतोयेनह्यत्राधिगच्छति ५३४ स्वभावाज्ज्योतिषातत्तुधर्मादिभ्यःपरंत्वया ॥ पृष्टमात्मस्वरूपंयदेतदेवनचापरम् ५३५

किनस्तुतंप्रतिबंधमपनीयमुच्यंतेइतिप्रदर्शिकायास्तृतीयायाअर्थमाह अमीभिरितिचतुर्भिः । इहलोकेअमुत्रपरलोकेवायेसंतितान्शब्दादीन्विषयानात्मभिन्नान्येविवेकहीनाइंद्रियैरभिगच्छंतिभजंतेते विस्तीर्णस्यप्रसृतस्यव्याध्यादिनानारूपस्यमृत्योःपुनःपुनर्वशंयांतिजालबद्धामत्स्याबंधकस्येवेतिद्वयोःसंबंधः ५३० । ५३१ विवेकिवृत्तमाह मृत्युपाशेतिद्वाभ्यां । अथविवेकिनस्तुहिरण्यगर्भा दीन्स्तंबपर्यंतान्देहिनउक्तदशान्निरीक्ष्यमोक्षमेवनित्यंविज्ञायानित्यंकर्मफलंब्रह्मलोकांतंकदाचिन्नप्रार्थयंतेनेच्छंतिहेनचिकेतःत्वद्वत्पण्डितत्वादितिद्वयोःसंबंधः ५३२ । ५३३ उक्तप्रतिबंधहीनैर्ज्ञेयमा त्मानंनानालक्षणैःप्रदर्शयतांयेनेत्यादिवाक्यानामर्थमाह दर्शेंद्रियाणामित्यादिना । अयंप्रमातादशानांज्ञानकर्मेन्द्रियाणांव्यापारान्दर्शनादिरूपांश्चेतसाचित्ताख्यांतःकरणेनाधिगच्छत्यनुसंदधा तीतिप्रसिद्धंतच्चेतश्चित्तंसविपर्ययेनस्वाभाविकेनज्योतिषासाक्षिसंज्ञेनात्रसंघातांतास्थितेनाधिगच्छतितत्साक्षिसंज्ञंज्योतिस्त्वेतदेव एतत्किं यत्त्वयाधर्माधर्माद्यतीतत्वोपलक्षितमात्मरूपंपृष्टमि तिद्वयोरर्थः ५३४ । ५३५

तस्याद्वितीयतामाह परिशिष्टमिति । अत्रप्रपंचेवर्त्तमानमेतस्मात्साक्षिरूपिणःसर्वांतरात्परिशिष्टंभिन्नसत्ताकंकिमस्तिनकिंचिदपि यतःकालत्रयावच्छिन्नंकालत्रयंचएतत्सर्वमत्रसाक्षिण्यध्यस्तंकल्पितंभवतियथारज्जौसर्पदंडजलधारादिकमित्यर्थः ३६ चतुर्थ्यर्थमाह येनेति । येनचेतसःसाक्षिणाअवस्थाजागरणादिकाःपश्यतिसएवपूर्वोक्तोमहानात्मायस्याद्वितीयत्वलक्षणंमहत्त्वंज्ञानंतःशोकंकर्तृत्वादिरूपंतरंतीतिद्वयोरर्थः ५३७ । ५३८ पंचमींपठति यइममिति ५३९ अस्याअर्थमाह अंतिकइतिद्वाभ्यां । अयमात्मापुमान्पुरुषोधियःसाक्षितयासर्वेषामंतिकेसमीपेभवति कीदृशःकर्मफलानांसारघमधुसमानांभोक्ताऽत्तातमेतंभूतभव्योपलक्षितसर्वविश्वाधिपतित्वेनयोविजानातिससंशयंत्राणेच्छाप्रयोजकंनिंदांप्रतिकूलबुद्धिप्रयुक्तांकिंकुर्वीतअपितुनकुर्वीत अद्वितीयात्मवित्त्वादितिद्वयोरर्थः । अत्रेदंबोध्यं गुपेर्निन्दायामितिस्मरणान्निंदाजुगुप्सापदस्यमुख्योर्थः संशयस्तुविचिकित्सापदइवव्युपसर्गप्रसादलभ्योभाष्यकारोक्तानुसरणयोक्तइति ५४० । ४१ एवंत्वंपदार्थशोधनप्रधानंवाक्यद्वयंव्याख्यातमथपष्ठ्यादिकऋक्चतुष्टयस्यतत्पदार्थशोधनप्रधानस्यार्थंदर्शयति हिरण्यगर्भइत्यादिना । यस्मात्सहिरण्यगर्भोजातःसकःयोनीरतःअप्प्रधानस्थूलभूतसमुदायाद्ब्रह्मांडारंभकात्पूर्वंजातः कुतः तपसःपूर्वजन्मानुष्ठितकृच्छ्रादिसमुच्चितोपासनाबलादित्यर्थः ४२ ब्रह्मणइति । ब्रह्मणस्तस्यहिरण्यगर्भस्यापिजनकंयत्तत्त्वंसर्वशरीरेषुसर्वबुद्धिरूपांगुहांप्रविश्याखिलपदा

परिशिष्टंकिमत्रास्तितस्मादात्मस्वरूपिणः ॥ कालत्रयांतरेयत्तुयच्चकालत्रयात्मकम् ॥ तत्सर्वमत्रचाध्यस्तंरज्जौसर्पादिकंयथा ३७ येनजागरणंतद्वत्स्वप्नंप्रपंचपरिपश्यति ॥ चेतसःसाक्षिणासोयमात्माज्ञेयःसदात्वया ३७ विभुत्वाद्यःपुरात्मातेमहानेवमयेरितः ॥ यस्यविज्ञानतोधीरानशोकंयांतिकर्हिचित् ३८ यइमंमध्वदंवेदह्यात्मानंजीवमंतिकात् ॥ ईशानंभूतभव्यस्यनततोविजुगुप्सते ३९ अंतिकेस्तिसदैवात्माजीवरूपोधियःपुमान् ॥ फलानांकर्मणांभोक्तासर्वदामधुरूपिणाम् ४० योविजानातितत्रायंसंशयंकेनहेतुना ॥ निंदांत्रापिचकेनायंकुरुतेकस्यचित्स्वयम् ॥ जानन्नात्मानमद्वैतंप्रपंचरहितंशिवम् ४१ हिरण्यगर्भोभगवान्जातोयस्मान्महात्मनः ॥ यःपूर्वंतपसोजातःकृच्छ्रचांद्रायणादिकात् ॥ ब्रह्मांडपिंडजनकादखिलादपिनीरतः ४२ ब्रह्मणोजनकंयत्तुचतुर्विधशरीरगम् ॥ पश्यदास्तेखिलांबुद्धिंतदेतद्ब्रह्मविद्धिभो ॥ सर्वबुद्धीःप्रविश्यैवंनभोवत्सर्वतोगतम् ४३ देवतातपसःपूर्वंयाजाताप्राणरूपिणी ॥ अदितिःसर्वतोजातमन्नमत्तियतस्त्विदम् सर्वदेवमयीतद्वत्सर्वभूतमयीतथा ॥ जायतेविविधानंतप्राणिभेदसमाश्रयात् ॥ तद्रूपमपियत्तत्त्वंब्रह्मजानीहिसुव्रत ४५ अदितेर्जायतेयोयंविराडग्निस्वरूपधृत् ॥ अरण्योर्निहितोनित्यमधरोत्तरसंज्ञयोः ४६ गर्भंदधतिगर्भिण्योयद्वत्स्नेहसमन्विताः ॥ अरणिभ्यांधृतस्तद्वदग्निरित्थंमहेश्वरः ५४७

थोकारांतांबुद्धिंसाक्षितयापश्यन्सदास्तेतदेवत्वत्पृष्टंब्रह्मेत्यर्थः श्रुतौतुविभक्तिवचनलिंगव्यत्ययश्छांदसः ४३ सप्तम्याअर्थंउच्यते देवतेति । यादेवताहिरण्यगर्भाख्यातपसोऽतीतकल्पानुष्ठितादेतोःपूर्वंविराडादितःप्रथमंजाता कीदृशी प्राणरूपिणीअशनायाव्याप्तप्राणशरीरा अतएवादितिरितितस्यानाम सर्वमन्नंस्थूलप्रपंचात्मकमत्तिभुंक्तइतिव्युत्पत्तिसमन्वयादित्यर्थः ४४ सर्वेति । पुनःकीदृशीसादेवता सर्वेदेवायस्याविभूतयः कोसावेकोदेवःप्राणइतिश्रुत्यंतरात् तथायादेवताविविधव्यष्टिप्राणिष्वनुगमात्सर्वभूतमयीसर्वप्राणितादात्म्यमापन्नाभवतिसादेवतापियस्यपरमेश्वरस्यरूपंध्येयाकारोणितः अतएवारण्योरुत्तराधरमथनकाष्ठयोर्निहितोयज्ञेप्रादुर्भूतः ४६ नकेवलंयज्ञएवप्रादुर्भूतःकिंतुयोगिनामंतरपीतिसदृष्टांतमाह गर्भमिति । यथागर्भिण्योगर्भंदधतिधारयंतिस्नेहप्रयुक्तपथ्याशनादिनातद्वदयंमहेश्वरोविराडग्निरूपोयाज्ञिकैररणिभ्यांधृतः इत्थंतथैवनिद्राविवर्जितैर्योगिभिरंतर्धृतः कीदृशः सर्वभूतेषुस्थितः स्वर्गमोक्षकांक्षिभिर्देवैर्मनुष्यैश्चप्रतिदिनमीड्यइतिद्वयोःसंबंधः ५४७

५४८ अयमिति । अयमुक्तरूपोविराडप्यदितिपदोक्तहिरण्यगर्भवत्परमात्मनोरूपत्वेनध्येयइतिशेषः ननुसाक्षादेवतदीयंज्ञेयंरूपमुच्यतामितिचेन्न तस्यवागाद्यगोचरत्वादित्याह स्वरूपतस्त्विति । तस्यज्ञेयस्यरूपंस्वरूपतःस्वभावतोवक्तुमशक्यं अध्यात्माद्युपाधिप्रयुक्तसर्वभेदराहित्यात् नहिजात्यादिविशेषरहितंशब्दःसाक्षाद्वक्तुंक्षमते ततएतैःसविशेषरूपैर्विराडादिभिःप्रकारैरनंतत्वादिरूपसा दृश्यद्वारातदुपलक्षणभूतैस्त्वंतत्स्वरूपंजानीहीतिद्वयोरर्थः ५४९ । ५५० नवम्यर्थंदर्शयति यस्मादितिद्वाभ्यां । यस्मात्प्राणाख्याद्रूपादधिदैवंवाय्वात्मकात्सूर्यादिकंतेजउदेतितत्रैवास्तंचगच्छति तथा चश्रुत्यंतरं ' प्राणाद्वाएषउदेतिप्राणेऽस्तमेतीति ' तथासर्वेदेवावागादयोऽध्यादयश्चयत्रप्राणेरथचक्रनाभावरवत्समर्पिताःस्थिताः 'सर्वंप्राणेऽर्पितम्' इतिश्रुत्यंतरात् तथायमेनंप्राणंबलेनातिक्रम्यकोपिगंतुंनसमर्थःसएषवर्णितःप्राणोपियस्यब्रह्मणोध्येयंरूपंतदेवब्रह्मविद्धीतिद्वयोरर्थः ५५१ । ५५२ दशम्याऐक्यपरत्वान्महावाक्यरूपायाअर्थंदर्शयति यदेवेहेति । यच्चिद्वस्तुइहदृश्यमानेपुमर्दीया दिशरीरेपुसर्वबुद्धिसाक्षितयावर्ततेतदेवामुत्रपरोक्षेपुईशादिशब्दप्रवृत्तिनिमित्तेपुअव्याकृताद्युपाधिपुवर्ततेनिर्भेदत्वात् यच्चामुत्रईशादिपुवर्ततेतदेवेहदृश्यमानेपुवर्ततेनिर्भेदत्वादेवेतिद्वयोरर्थः ५५३ । ५५४

लोकेषुसकलेष्वेषस्थितोनिद्राविवर्जितैः ॥ ईड्योदेवैर्मनुष्यैश्चस्वर्गमोक्षाभिकांक्षिभिः ४८ अयमप्यात्मनोरूपंसर्वदैवादितिर्यथा ॥ स्वरूपतस्तुतद्रूपंनवक्तुम पिशक्यते ४९ अध्यात्ममाधिदैवंवासर्वभेदविवर्जितम् ॥ ततएतैःप्रकारैस्त्वंविजानीहिमहामते ५० यस्माद्रूपादुदेत्येषयत्रचास्तंनिगच्छति ॥ सूर्यचंद्रादिकंते जोयत्रदेवाश्चसंत्यमी ५१ रथचक्रेह्यरायद्वत्सर्वेदेवसमर्पिताः ॥ समर्थोपिनकोप्येनमतिक्रम्यव्रजेत्परम् ॥ एतद्ब्रह्ममहाभागनचिकेतोवधारय ५२ यदेवेहशरीरे पुममतेपिपरस्यवा ॥ सर्वबुद्धिप्रचाराणांयःसाक्षीभेदवाजतः ५३ तदेवामुत्रविज्ञेयमीशेसूत्रेविराज्यपि ॥ यदमुत्रतदेवेहचैतन्यंभेदवर्जितम् ५४ यथानभसिनै वास्तिभेदःकोप्येकरूपिणि ॥ चैतन्येतद्वदेवात्रभेदःकोपिनविद्यते ५५ निर्भेदंगगनंयद्वद्भिद्यतेत्रगृहादिना ॥ ईशादिनातथैवैतच्चैतन्यमपिभिद्यते ५६ गंधर्वनग रंयद्वदसदेवविभेदकृत् ॥ कालत्रयेपिखस्यैवंविश्वमप्यात्मनोभवेत् ५७ अतोनानेवनैवास्तिब्रह्मनानाकुतःपुनः ॥ संसारादपिसंसारंघोरदुःखप्रदंपुमान् ॥ व्रजे द्विलोकयेद्यस्तुनानेवचकदाचन ५८ नानैवेतिचयोमंदःपश्येत्पापविमोहितः ॥ नरकान्नरकंसोयंयातिदुःखप्रदंबहु ॥ एकधैवततोब्रह्मद्रष्टव्यंभेदवर्जितम् ५९ तस्यापिदर्शनेयत्स्यात्कारणंतन्नकिंचन ॥ बाह्यंयेनपराग्ग्राहीणींद्रियाणीतिकीर्तितम् ५६० मनसैवततोब्रह्मज्ञातव्यंब्रह्मवादिना ॥ सर्वभेदविनिर्मुक्तमानं दात्मस्वरूपकम् ५६१

निर्भेदत्वंदृष्टांतेनस्फुटयति यथेति । एकरूपिणिअखंडे ५५५ उपाधिदर्शिनोभ्रांताएवतत्रभेदंपश्यंतीत्याह निर्भेदमिति । ईशःअव्याकृतंतत्प्रभृत्युपाधिना ५५६ वस्तुतोऽसतामप्युपाधीनांभेदभ्र महेतुत्वेदृष्टांतमाह गंधर्वेति । यद्वत्कालत्रयेऽसदपिगंधर्वनगरंखस्यविभेदकृत्तथाविश्वंजडजातमात्मनइत्यन्वयः ५५७ अतइति । अतोऽखंडत्वादत्रब्रह्मणिनानेवकल्पितंनानात्वमपिविद्वद्दृष्ट्यानास्ति एतद्ब्रह्मनानापरमार्थतोनानात्ववस्तुकुतःस्यादित्यर्थः योत्रब्रह्मणिकल्पितंनानात्वंपश्यतिसनानायोनिभ्रमणलक्षणंसंसारंयातीति ५५८ यस्तुसत्यमेवात्रभेदंपश्यतिसनरकमेवयातीत्याह नानैवेति । फलितमाह एकधैवेति । एकधाऽखंडत्वेन ५९ एकादश्यर्थंदर्शयति तस्यापीतिपङ्क्तिः । अपिःसंभावनायां तस्यात्मनोदर्शनेकारणंबाह्यंबहिर्मुखंकिंचिदपिनसंभाव्यते यतइंद्रियाणिपराचोबाह्यस्यैवा र्थस्यग्रहणशीलानीत्युक्तंप्रथमाध्यायेइत्यर्थः ५६० मनसैवेति । ततोब्रहिरिंद्रियायोग्यत्वाद्ब्रह्मवादिनालब्धब्रह्मोपदेशेनाधिकारिणामनसानिष्कामेनैवाद्वितीयब्रह्मावरणमपनेयमित्यर्थः ५६१

तस्यभेदराहित्यमेवस्फुटयति नहीत्यादिना । गगनवदेकरूपेब्रह्मणिस्वाभाविकंनानात्वंनसंभवतीत्यर्थः ५६२ परतइति परतउपाधितआरोपितोयोभेदःसोभेदरूपएवबोध्यः औपाधिकभेदस्योपाधि
मात्रनिष्ठतायाःप्रसिद्धत्वात् यथाघटमठादिप्रयुक्तोगगनभेदोनगगनंस्पृशतिकिंतुघटादिष्वेवतिष्ठतीत्यर्थः ५६३ किंचोपाधयोपिवस्तुतोनब्रह्मणःपृथक्सत्ताकाइत्याह अपिभिन्नमिति । किंचिदपि
ब्रह्मणोभिन्नंविविक्तंसत्सत्ताशालिनभवति तथाचासतानृशृंगसाम्यंगतेनतेनोपाधिनासर्वेषामात्मभूताद्ब्रह्मणःसकाशाद्भेदःकथंस्यादित्यर्थः ५६४ फलितमाह तस्मादिति । तस्मात्शास्त्रसंस्कारव
त्त्वेनसूक्तंसुष्ठूपदिष्टंतत्तथातेनमनसैवनिर्द्वैतमात्मरूपंद्रष्टव्यं भेददर्शनेदोषस्योक्तत्वादित्यर्थः ५६५ द्वादश्यर्थमाह अयमितिद्वाभ्यां । अयमद्वितीयत्वेनवर्णितआत्माजीवरूपेणमनुष्याणांहृदिस्थित
स्तस्यचमनुष्यहृदयस्यप्रायेणांगुष्ठपरिमितत्वात्सोपितदवच्छेदेनांगुष्ठमात्रइत्युक्तइत्यर्थः ५६६ अंगुष्ठमात्रइति । तंहृदयांतःस्थमंगुष्ठमात्रंपुरुषंसर्वेशानरूपेणयोजानीयात्तस्यजुगुप्सापदोक्तंसंशयादि
कंनभवतीत्यर्थः ५६७ त्रयोदश्यर्थमाह अंगुष्ठेतिद्वाभ्यां । अंगुष्ठमात्रःसर्वेशानःस्वयंज्योतिर्निर्धूमाग्निवद्देदीप्यमानःअद्यश्वःपदोपलक्षितकालत्रयेप्येकरूपस्तिष्ठतीत्यर्थः ५६८ नास्येति । अस्यात्म

नहिब्रह्मणिनानात्वंविद्यतेस्वयमेवतत् ॥ एकरूपेकथंतत्स्यात्सर्वदागगनोपमे ६२ परतोयत्रनानात्वंतदनानात्वमीरितम् ॥ यथैवगगनेतत्स्यान्निमितंहिघटादि
ना ६३ अपिभिन्नंनकिंचित्तुसदस्तिब्रह्मणःसदा ॥ असताकेनभेदःस्यात्तेनस्वात्मस्वरूपतः ६४ तस्मान्निर्द्वैतमेवैतद्द्रष्टव्यंमनसैवहि ॥ शास्त्रसंस्कारसूक्तेनहृ
दिस्थेनात्मनःसदा ॥ यतोनानात्वदृष्टौस्याद्दोषःप्रागेवकीर्तितः ६५ अयमात्माजीवरूपोमनुष्याणांहृदिस्थितः ॥ अंगुष्ठमात्रंहृदयंतेषांप्रायःप्रकीर्तितम् ॥ अं
गुष्ठमात्रस्तेनायंहृदयस्थोभवेत्सदा ६६ अंगुष्ठमात्रःपुरुषोमध्येस्तिहृदयस्यहि ॥ ईशानोभूतभव्यस्ययज्ज्ञानात्संशयादिन ६७ अंगुष्ठमात्रईशानःस्वयंज्यो
तिर्हृदिस्थितः ॥ कालत्रयेप्येकरूपोनविपर्येतिकर्हिचित् ६८ नास्यभेदोस्तिकुत्रापिचैतन्यैकस्वरूपिणः ॥ यथाजलस्यसर्वत्रद्रवस्नेहस्वरूपिणः ६९ उच्चैर्निप
तितंयद्वद्यातिनीचैःपयःसदा ॥ भेदवानपिचात्मैवंमंतव्योभेदमाव्रजेत् ७० मेघान्निपतितंनीरंसमेवाविषमेस्थले ॥ पर्वतानपिसंप्राप्यततोनिम्नांभुवंव्रजेत् ७१
एवंकर्मनिमित्तेननानायोनीःसमाव्रजन् ॥ आत्मात्रब्रह्मविज्ञानादेकतांयातिसर्वथा ७२ यथाजलंस्थलेशुद्धेशुद्धमेवावतिष्ठते ॥ कलुषंगैरिकादीनांसंयोगादापत
द्व्रजेत् ७३ एवमात्मासदाशुद्धोविशुद्धेमनसिस्थितः ॥ रागादिसहितेतद्वदशुद्धश्चभवेदयम् ९७४

नश्चिदेकरूपस्यकुत्रापिदेशेकालेवाभेदोनास्ति यथासर्वत्रजलंद्रवादिरूपमेवनभिन्नमित्यर्थः ५६९ चतुर्दश्याअर्थंदर्शयति उच्चैरिति । यथापयोजलंमेघेभ्यउच्चैरुच्चेषुपर्वतशिखरादिदेशेषुनिपतितं
सन्नीचैर्यातिविशीर्यतइतियावत् एवंभेदवान्भेदेनदृष्टआत्मापिबोध्यः किंतस्यभवतीतिचेत्शृणु भेदमाव्रजेदिति । भेदंविदारणंनानायोनिभावंगच्छेदितिभाष्यानुसारेणार्थः ५७० फलितार्थमाह
मेघादितिद्वाभ्यां । यथापर्वतीयेसमेविषमेवाऊर्ध्वदेशेमेघान्निपतितंनीरंपर्वतात्पर्वतस्यमध्यादिभागान्प्राप्यततोपिनिम्नांभूमिंव्रजति निम्नाभूमिस्तस्यविश्रामस्थानमितियावत् ५७१ एवमिति ।
यथोक्तोदृष्टांतस्तथाभेददर्शनलक्षणोधनिपातमयुक्तंनानायोनिभ्रमणलक्षणंविशरणंव्रजन्सन्नात्माब्रह्मज्ञानात्मिकांविश्रामभूमिंप्राप्यएकतांभूमानंदरूपांविश्रांतिंव्रजेदित्यर्थः ५७२ चतुर्थंवह्लयंत्या
याअर्थमाह यथाजलमिति । यथाशुद्धदेशेपतितंजलंशुद्धमेवतिष्ठति तस्यहिमालिन्यंगैरिकादिवद्देशसंसर्गकृतमेव तथास्वतःशुद्धस्यात्मनःशुद्धधियामंतःसम्यग्भानंमलिनधीभिस्तस्यान्यथादर्शने
पितत्स्वरूपस्यनक्वापिक्षतिरितित्रयाणांभावः ५७३ । ५७४

५७५ पंचमवल्ल्याद्यामृचमवतारयति सुशीतलमितिपद्भिः । यथास्वभावतःशीतलमपिनीरंवन्हियोगादुष्णंजायतेतथास्वभावतःसुखरूपोप्यात्मादेहयोगाद्दुःखीभवतीति ५७६ नचिकेतइति । हेनचिकेतस्ततोदेहस्यदुःखेनान्वयव्यतिरेकदर्शनात्कारणाज्ञानसहितंस्थूलसूक्ष्मरूपंशरीरद्वयंदुःखहेतुरित्यर्थः ५७७ तत्रकारणज्ञानंनसाक्षाद्दुःखहेतुः किंतुविषवृक्षबीजमंकुरादिद्वारेवसूक्ष्मादिदेहद्वयद्वारेत्याह बीजमिति ५७८ तत्रापिसूक्ष्मदेहःस्थूलदेहंविनानभोगदइत्याह माययेतिद्वाभ्यां । तत्रयःसूक्ष्मोदेहःसमायायाःकार्यंमायानाशमंतराऽविनाशीचस्थूलदेहाश्रयेणैवात्मनोभोगहेतुश्च कीदृशस्यात्मनःतत्रशरीरद्वयेतादात्म्याध्यासंगतस्येतिद्वयोरर्थः ५७९ । ५८० स्थूलेइति । तेनस्थूलदेहस्यभोगलिंगद्वारात्मवैशद्यदेशत्वेनअत्रस्थूलदेहेऽयंपुरुषःशास्त्राचार्यप्रसादादतिविशदोपिभवतितस्मात्तदात्मवैशद्यात्मकंप्रयोजनमभिसंधायतंस्थूलंदेहंवर्णयामीत्यर्थः ५८१ अवतारितांव्याचष्टे पूर्यतेइतिविंशत्या । पुरुषपदंसूक्ष्मशरीरवाचकंमधुब्राह्मणादौप्रसिद्धं धातवस्त्वगादयःसप्तप्रसिद्धाअन्नादिरसश्चएतैःपूर्यमाणत्वलक्षणव्युत्पत्तिसमन्वयादेतत्स्थूलंशरीरंपुरमित्युच्यतेअथवायथालौकिकंपुरमीशेनस्वामिनाराजादिरूपेणसमन्वितंतद्वत्पूर्णेनप्रभुणासमन्वितत्वाद्गोण

स्वभावःस्वच्छतायद्वद्दर्पाचसर्वदैवहि ॥ आत्मनोपितथैवैषास्वच्छतापरिकीर्तिता ५७५ सुशीतलंयथानीरंवन्हियोगात्प्रजायते ॥ उष्णमात्मासुखंतद्वद्दुःखीदेहस्ययोगतः ५७६ नचिकेतस्ततोदेहोद्विविधोपिसकारणः ॥ दुःखस्यकारणंदृष्टोब्रह्मविद्भिर्महात्मभिः ५७७ बीजंयथाफलायस्यान्नांकुरेणविनाक्वचित् ॥ एवंदेहंविनामायानदुःखायकदाचन ५७८ माययाजायतेदेहःसूक्ष्मोयोनविनश्यति ॥ मायानाशंविनायोयंसूत्रमित्युच्यतेबुधैः ॥ संसारपटनिर्माणेसर्वेषामिहदेहिनाम् ५७९ स्थूलंदेहंसमाश्रित्यसहिभोगंप्रयच्छति ॥ आत्मनस्तत्रतादात्म्यंमन्यमानस्यसर्वदा ५८० स्थूलेवपुषितेनायंविभातिविशदःपुमान् ॥ गुरुशास्त्रोपदेशेनतस्माद्देहंवदामितम् ८१ पूर्यतेपुरुषेणैतद्धातुभिश्चतथैवहि ॥ त्वगादिभिस्तथैवान्नपानजातरसैर्मुहुः ॥ पुरंशरीरंतेनैतत्पूर्णेनसमन्वितम् ८२ द्वारवद्धियथालोकेपुरंभवतिसर्वतः ॥ अधिष्ठितंचकेनापिभोगिनाप्रभुणागृहम् ८३ तद्वदेकादशद्वारमिदंदेहमुदाहृतम् ॥ सप्तद्वाराणितस्योर्ध्वमधस्ताद्द्वेचसंस्थिते ८४ उदरेदशमंनाभिच्छिद्रमुक्तंमनीषिभिः ॥ कपालत्रयसंधिस्थमुक्तमेकादशंसदा ८५ सरस्वतीगतायत्रनित्यंप्रच्छन्नचारिणी ॥ ऊर्ध्वंययाव्रजन्योगीव्रजेदर्चिषमंजसा ८६ जन्मशून्यःपुमानिंद्रःस्वयंज्योतिःसदैवयः ॥ वर्जितःकुटिलेनान्यचेतसाजडरूपिणा ८७ अधितिष्ठतिसर्वज्ञःकरणैरपिवर्जितः ॥ इदंपुरंसदादेवैर्वागाद्यैरप्यधिष्ठितम् ५८८

मस्यपुरत्वमित्यर्थः ५८२ लौकिकपुरसाम्यमेवप्रपंचयति द्वारवदिति । यथागृहंप्रभुणागृहस्वामिनाऽधिष्ठितंतथाकेनचित्स्वामिनाधिष्ठितंचलौकिकंपुरंभवति ५८३ तत्रद्वारवत्त्वरूपंसाम्यमस्यस्फुटमित्याह तद्वदिति । सप्तश्रोत्रनेत्रनासिकायुगानिमुखंचेति द्वेपायूपस्थरूपेदशमंनाभिःशिरोमध्यद्वारंत्वेकादशमितिद्वयोरर्थः ५८४ । ५८५ सरस्वतीति । यत्रकपालत्रयसंधिस्थएकादशेद्वारेसरस्वतीसुषुम्नारूपावहतिप्रच्छन्नचारिणीअयोगिभिर्दुर्लक्ष्याययासुषुम्नारूपसरस्वत्याऊर्ध्वंगच्छन्योगीअर्चिराद्युपलक्षितंदेवयानंपंथानमाक्रामतीत्यर्थः ५८६ तदधिष्ठातारंदर्शयति जन्मेति । जन्मादिविकारशून्यइंद्रःपरमेश्वरःस्वयंप्रकाशत्वाज्जडतयास्वतोभिन्नेनचेतसामनसावर्जितः स्वभानेतदनपेक्षइतियावत् कीदृशेनकुटिलेन सत्तादिप्रदमात्मानंविहायविषयाभिमुख्यरूपकौटिल्यशालिना ५८७ संदेवोस्यपुरस्यवागाद्यैर्नगरवासिसमैर्युतस्याधिष्ठातेत्याह अधितिष्ठतीति ५८८

फलितमाह ततइति । ततःसंबंधस्यदुर्निरूपत्वात् सदाबंधनशून्यत्वेनमुक्तोप्यात्माकल्पितबंधात्मिकांमायामात्मबोधेननिघ्नन्पुनर्मुच्यतेइत्युक्तः ६०१ एवंनिरावरणात्मनःप्रभाववर्णयतोहंसइत्यादेर्मंत्रस्यार्थंषोडशभिर्निरूपयंस्तत्रहंसपदार्थंसमन्वयंदर्शयति आरमेतिद्वाभ्यां । तत्राद्यंस्फुटम् ६०२ सूर्येति । अथवा'प्राणःप्रजानामुदयत्येषसूर्यः'इतिश्रुत्यंतराद्बहिश्चरप्राणात्मकसूर्यरूपेणत्रिलोकीभासकत्वात्सूर्यवाचकहंसपदेनात्मोक्तइत्यर्थः ६०३ शुचिषदादिपदत्रयार्थमाह शुचाविति । शुचौशुद्धे यथालोकेसुवर्णंप्रियंतद्वत्प्रियत्वादयंमहेश्वरआत्माधनवाचकवसुपदेनोक्तःतथाहृदयाकाशेआत्मरूपेणबाह्याकाशेसूर्यादिरूपेणस्थितत्वादंतरिक्षवासीमोक्तइत्यर्थः ६०४ तथापमेघात्माधियज्ञंहोतृसंज्ञकऋत्विग्रूपेणवेद्यांसंस्कृतभूमौतिष्ठतीत्याह यज्ञेति ६०५ अथवाप्राणाग्निहोत्रादिविधयाअन्नभोक्तृत्वादयमात्माहोतेत्युक्तः वेदिसममध्यच्छिद्रवतिहृदयेसूर्यमंडलेवास्थितत्वाच्चवेदिषदित्युक्तइत्याह आत्माग्नाविति । आत्माग्नौभोक्तृरूपाग्नौयतःसर्वमन्नंजीवनहेतुभूतंजुहोतिततोभोक्तात्माहोतेतिकथितः हृदिबिंबेवामध्यतोमध्येवेदिसमंयच्छिद्रंतत्रयतःश्रितस्ततोवेदिषदित्युक्तइत्यर्थः ६०६ दुरोणइति । द्रोणपदंछांदसदकारोत्तरोकारागमेन

ततोबंधनशून्यत्वाद्विमुक्तःसर्वदैवसः ॥ विमुच्यतेपुनर्मायानाशादात्मप्रबोधतः ६०१ आत्मप्रबोधतोयस्माद्धंत्यविद्यामयंपुमान् ॥ तस्माद्धंसइतिप्रोक्तःपंडितैर्वेदवादिभिः ६०२ सूर्यरूपेणत्रलोकत्रयमिटतिसर्वदा ॥ प्राणोबहिश्चरस्तेनहंसआत्मानिगद्यते ६०३ शुचौतिष्ठतिसर्वात्माहृदिवागगनेपिवा ॥ वसुमूतःसुवर्णेनसदृशोवैमहेश्वरः ॥ अंतरिक्षेहृदयगेबाह्येवैषोवतिष्ठते ६०४ यज्ञकर्मणिदेवोयंहोतृरूपेणसर्वदा ॥ वेद्यांतिष्ठतिसर्वात्मायजमानप्रमोदकः ६०५ आत्माग्नौसर्वमेवान्नंजुहोत्येवयतस्ततः ॥ होतात्माकथितोभोक्ताहृदिबिंबेथवाश्रितः ॥ वेदिवन्मध्यतश्छिद्रेप्राणिजीवनहेतुके ६०६ दुरोणेद्रोणकलशेगृहेवागृहमेधिनाम् ॥ तत्रसीदतिसोमोयमतिथिर्यज्ञकर्मणि ६०७ अज्ञातकुलगोत्रोवामध्यान्हादिसमागतः ॥ अन्नाद्यर्थीमानवोयःसोतिथिःपरिकीर्तितः ६०८ नृषुनानाविधैरूपैरेषतिष्ठतिदेवराट् ॥ नानेंद्रियसमुत्थानैर्वीर्यैर्भोक्तात्मनापिच ६०९ वरंसम्यक्सुखंप्रोक्तंतत्रतिष्ठत्ययंपुमान् ॥ आनंदात्मास्वयंज्योतिःस्वस्मिन्नेवस्वयंप्रभे ६१० ऋतंकर्मसमुद्दिष्टमवश्यंफलदायियत् ॥ तत्रतिष्ठत्ययंदेवःफलरूपेणसर्वदा ६११ आदित्यपुरुषस्यांतर्बुद्धेर्वापिव्यवस्थितम् ॥ व्योमयत्तत्रसंस्थानआनंदात्मैवकेवलः ६१२

दुरोणेत्याकारकंसत्यज्ञेसोमरसाधारेकलशेमुख्यवृत्त्यावर्ततेतेनकलशेनातिथिसमानकत्वलक्षणसाधर्म्येणसद्गृहिणांगृहेपिगौण्यावर्त्तते तथाचसोमयागेऽतिथिवत्पूज्यत्वाद्ब्रह्मात्मकसोमरसरूपेणद्रोणकलशेऽयमात्मासीदतितिष्ठतितथाप्रसिद्धातिथिरूपेणगृहमेधिनांगृहेसीदतीत्यर्थः ६०७ प्रसिद्धातिथिंनिरूपयति अज्ञातेति । वाशब्देनज्ञातकुलगोत्राणामाचार्यऋत्विगादीनांपरिग्रहः स्फुटमन्यत् ६०८ नृष्विति । तथायमात्मानृषुतिष्ठन्ज्ञायते कैःनानेंद्रियेषुसमुत्थामंप्रादुर्भावोयेषांतथाविधैर्वीर्यैःशक्तिविशेषैः तेषामंतर्याम्यभिव्यंग्यत्वात तथाभोक्तृरूपेणच तथाचस्मृतिः 'सुखंदुःखंभवाभावः' इत्याद्या क्षेत्रज्ञंचापिमांविद्धि' इतिच ६०९ वरमिति । तथायमात्मावरपवाच्येसम्यक्सुखेभूमाख्येस्वरूपेतिष्ठति समूमाकस्मिन्प्रतिष्ठितःस्वेमहिम्नीतिश्रुत्यंतरात् ६१० ऋतमिति तथायमात्माऋतपदेनसत्यवाचिनाअवश्यभाविफलकत्वसाधर्म्येणलक्षितेकर्मणिफलरूपेणतिष्ठतीत्यर्थः ६११ आदित्येति । तथायमानंदरूपआत्मातत्रसंस्थानःसम्यक्स्थितिमान् तत्रकुत्र यद्व्योमाकाशंसूर्यमंडलांतःस्थस्यपुरुषस्यसूक्ष्मसमष्टिरूपस्यांतः बुद्धेःसूक्ष्मव्यष्टिरूपायावाअंतर्गुहासंज्ञकंव्यवस्थितमिति ६१२

सदेवोवस्तुतःसर्वेकर्मरहितत्वादानंदरूपत्वाच्चकल्पितेनकर्मणाउक्तंपुरंनानाक्लेशागारंसंपाद्यापिशोकादिनिर्मुक्तइत्याह संपाद्येति । स्पष्टम् ५८९ वस्तुतःशोकादिराहित्येउपपत्तिंदर्शयति शो कइति । स्पष्टम् ५९० यएवंवर्णितःपुरुषःसएवत्वत्पृष्टधर्माद्यतीततत्त्वमित्याह आनंदात्मेति ५९१ अयमधिकारीनित्यमुक्तात्मरूपेणनित्यमुक्तरूपोप्येतद्विज्ञानात्कल्पितमज्ञानरूपंबंधंस्य जन्पुनर्मुक्तत्वव्यवहारभाग्भवतीत्याह एतदिति ५९२ यथाभाग्यवान्लोकेसुखंप्राप्यपुनःसुखीभवेत्तथाविद्वान्मुक्तएवमुच्यतेइत्याह सुखादिति स्पष्टम् ५९३ आत्मनोनित्यमुक्ततांस्फुटयि तुंबंधपदेनकिंरज्ज्वादिनावेष्टनंविवक्ष्यतेकिंवासंसर्गइतिविकल्प्यतत्रनाद्यस्यमूर्तत्वव्याप्यत्वादात्मनोगगनवत्पूर्णत्वादित्याह बंधनमिति । बंधनात्मकोबंधोमूर्तानांपरिच्छिन्नानांघटादीना मेवदृष्टोनगगनादाविति ५९४ नद्वितीयइत्याह संयोगेति । संयोगादिसंबंधरूपंबंधनंयद्वादिभिःकल्पितंतत्सत्सत्यमेवनभवतिकल्पनामात्रत्वादेवेत्यर्थः ५९५ संयोगादेःकल्पनामात्रत्वमप्रा माणिकत्वेनस्फुटयितुंतत्रप्रत्यक्षंतावन्नास्तीत्याह संयोगइति । वस्तुनीअनुयोगिप्रतियोगिरूपेविज्ञायविशेषेणावहितचिसताख्येपेणावधार्यंताभ्यांपृथग्भूतःसंयोगादिर्नदृश्यतेतस्मादनुपलंभादेवसं योगादिःपदार्थोऽत्रवस्तुस्वरूपेनास्तीत्यर्थः तथाहि दंडीपुरुषइत्यत्रप्रतियोग्यनुयोगिनोर्दंडपुरुषयोःस्वरूपविवेकेक्रियमाणेसंयोगपदार्थःपृथङ्नदृश्यते एवंसमवायोपि ५९६ नानुमानमिति ।

संपाद्यकर्मणास्वेनसर्वकर्मविवर्जितः ॥ आनंदात्मास्वरूपेणनशोचतिकदाचन ५८९ शोकोदुःखसमुत्थःस्याद्दुःखंसंगसमुद्भवम् ॥ निःसंगःपुरुषःकेनशोकंग च्छेदकारणम् ९० आनंदात्मास्वयंज्योतिर्विशोकोयःपुरःस्थितः ॥ धर्मादिरहितंरूपंसएवैतन्नसंशयः ९१ एतद्विज्ञानतःसोयंविमुक्तःस्वात्मरूपतः ॥ अ ज्ञानबंधनाद्भूयोमुच्यतेत्रभवादृशः ९२ सुखात्सुखंयथैवायंलौकिकःपुरुषोव्रजेत ॥ विमुक्तस्तद्वदेवात्मापुनरेवविमुच्यते ९३ बंधनंहिभवेद्बंधोमूर्तानांजडरू पिणाम् ॥ घटादीनामयंदृष्टोगगनेनकदाचन ५९४ संयोगसमवायादिकल्पितंबंधनंहियत् ॥ वादिभिर्नभवेत्सत्तत्कल्पितत्वेनहेतुना ५९५ संयोगःसमवायोवा प्रत्यक्षोनैवदृश्यते ॥ विज्ञायवस्तुनीयस्मात्तस्मान्नैषोत्रविद्यते ५९६ नानुमानमतोत्रास्तिग्रहेकिंचनकींहचित ॥ शब्दस्तुनरशृंगादौपक्षपातविवर्जितः ५९७ नचवेदस्यवचनंतयोःसत्वेस्तिकिंचन ॥ प्रमाणांतरमेतस्माद्दूरापास्तंकथंभवेत् ५९८ गगनादौततोनैतौविद्येतेजडवस्तुनि ॥ भविष्यतःकथंत्वेतावमूर्तेज्ञान रूपिणि ५९९ देहादिनापियःकश्चित्संबंधोदुर्भणःस्थितः ॥ आनंदात्मनिसोप्यत्रविद्यतेनचवस्तुतः ६००

अतःप्रत्यक्षायोग्यत्वादत्रसंयोगादिस्वरूपविषयकेग्रहणेसाध्येऽनुमानमपिनप्रवर्तते नहिप्रत्यक्षेणकेनापिरूपेणागृहीतेअनुमानंप्रवर्तते तथाचन्यायभाष्यंनानुपलब्धेन्यायःप्रवर्ततेइति । श ब्दोपिद्विविधः लौकिकोवैदिकश्च तत्रनाद्यस्तस्यप्रमाणांतरानुग्रहेणैवार्थसाधकत्वदृष्टेरित्याह शब्दस्त्विति । पक्षपातःप्रमाणांतरानुग्रहस्तद्वर्जितःशब्दोयदिप्रमाणंस्यात्तदानरशृंगादावपि स्यादित्यर्थः ५९७ नद्वितीयइत्याह नचेति । तयोःसंयोगसमवाययोः । एवंप्रत्यक्षादित्रयाभावेतदुपजीविनामुपमानादिप्रमाणांतराणांसंभावनादूरतोनिरस्तेत्याह प्रमाणांतरमिति । एतस्यउक्तस्यउपजीव्यप्रमाणत्रयस्याभावात् ५९८ तथाचउक्तरीत्यासंयोगादेःसंभवोजडेष्वपिदृश्येपुनवक्तुंशक्यः तदाद्रूपात्मनिसर्वांतरेतदसंभवःकिमुवाच्यइत्याह गगनादाविति ५९९ अस्तुतर्ह्यनिर्वचनीयःसंबंधइतिचेन्न तस्यापियोग्यंयोग्येनसंबध्यतेइतिन्यायेनानिर्वचनीयदेहादिष्वेवसत्वादित्याह देहादिनापीति । यःकश्चिद्दुर्भणःअनिर्वचनीयःसंबंधःसोपिदेहादिनैवानिर्वे चनीयेनसहस्थितःअत्रानंदरूपेब्रह्मात्मनिवस्तुतोनविद्यतेइतियोजना ६००

उदकेभ्यइति । तथायमात्माब्रह्मपदोक्तहिरण्यगर्भरूपेणउदकेभ्यः अप्प्रधानेभ्यःसूक्ष्मभूतेभ्योजातः तथागोपदोक्तसूर्यकिरणेभ्योमेघात्मनापरिणतेभ्योजलरूपेणजातइत्यर्थः ६१३ ऋतेति । तथाय मात्माऋतपदोक्तात्फलारंभोन्मुखात्कर्मणःसकाशात्सुखादिमदनानाविधदेहादिरूपेणजायते तथाचयोगसूत्रं ' सतिमूलेतद्विपाकेजात्यायुर्भोगाः ' मूलेअविद्यादिक्लेशरूपेसतिअबाधितेतस्यकर्मणः फलानिजात्यादिरूपाणिभवंतीतितदर्थः ६१४ अद्रेरिति । तथायमात्माचतुराननवेधोरूपेणसुमेरुरूपपर्वताद्भूवलयात्मककमलकर्णिकाभूताज्जातः कीदृशान्मेरोः उल्बतश्चतुराननात्मकगर्भप्रादुर्भा वेजरायुस्थानीयात् ' गर्भाशयोजरायुःस्यादुल्वंच ' इत्यमरः । अद्रिजाइतिटाबंतमित्यभिप्रेत्यहिमाद्रेर्गिरिजारूपेणायमुत्पन्नइत्याह अथवेति ६१५ किंबहूक्तेनेति । ऋतपदोक्तकर्मफलात्मकंयाव ज्जगत्तत्सर्वंबाधासामानाधिकरण्येनब्रह्मैवेत्यर्थः ६१६ अथात्मनोधिगमेलिंगमुपदिशतस्तृतीयमंत्रस्यार्थमाह आत्मायमिति । अयमात्मासर्वेषांहृदयस्थःसन्प्राणाख्यंवायुमूर्ध्वंनयति अपानाख्यं तुप्रत्यगधःअस्यतिक्षिपतितथाचप्राणापानविधरणमात्मनोलिङ्गमिति ६१७ अंगुष्ठेति । तथायमात्माहृदयस्यमध्येअंगुष्ठमात्रेआसीनःसन्वामनःपरिच्छिन्नपरिमाणइवभासमानः । यद्वावामानां

उदकेभ्यस्त्वयंजातोब्रह्मणोवपुराश्रितः ॥ गोभ्यश्चापितथैवायंनीररूपोत्ररश्मितः ६१३ ऋतरूपादयंजातःसर्वदाकर्मणःफलात् ॥ सुखदुःखफलानेकदेहेंद्रिय विभेदवान् ६१४ अद्रेर्मेरोरयंजातउल्वतश्चतुराननः ॥ अथवाहिमवन्नाम्नोगिरिजारूपएवसः ६१५ किंबहूक्तेननिखिलंचराचरमिदंजगत् ॥ ऋतंकर्मफलंसर्वंब्र ह्मैवैकंनचापरम् ६१६ आत्मायंसर्वजगतांहृदयेसर्वदास्थितः ॥ ऊर्ध्वंप्राणंनयत्येषोह्यपानंप्रत्यगस्यति ६१७ अंगुष्ठमात्रआसीनोवामनोहृदयस्यहि ॥ मध्य तश्चाप्युपास्योयंवागाद्यैर्विश्वदैवतैः ६१८ यदाशरीरतोयातिबहिर्मरणकर्मणा ॥ शरीरस्थस्तदातस्मिन्देहेकिंपरिशिष्यते ६१९ देहःकाष्ठसमोयस्मादस्यनिर्ग मनेभवेत् ॥ तस्मान्नकिंचिदप्यत्रचैतन्यमवशिष्यते ६२० यदेतद्देहसंस्थानंचैतन्यंमेदवर्जितम् ॥ तदेतद्भवताप्रृष्टंघर्मादिरहितंहियत् ६२१ नप्राणेननापानेन मर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ ६२२ प्राणापानौततोनात्मरूपौकस्यापिदेहिनः ॥ किंतुयस्मिन्नुभावेतौमूर्छादौसंप्रतिष्ठितौ ॥ श्वासाद्यल्परूपायांसआत्मासर्वदेहिनाम् ६२३ धर्माधर्मादिनिर्मुक्तएषआत्मामयेरितः ॥ प्रियदृष्टेनमनसातुभ्यंहिनाचिकेतसे ६२४ प्रवक्ष्यामित्वयापृष्टमि दानींपरमंवरम् ॥ आत्मात्रमरणंप्राप्ययथाभवतितच्छृणु ६२५

प्रशस्तफलानांनायकःसर्वैर्देवैर्वागादिरूपैरुपास्यउपजीव्यः ६१८ चतुर्थस्यमंत्रस्यदेहादिस्थितिप्रयोजकत्वमात्मलिंगंदर्शयतोऽर्थमाह यदेति । अयमात्माशरीरस्थोमरणप्रयोजकेनकर्मणाविस्रंसन पदोक्तंशरीरतोबहिर्गमनंकरोतितदापुनर्देहस्थितिकारणंकिंशिष्यतेनकिंचिदपियतःकाष्ठवद्दाहादियोग्योदेहोऽस्यात्मनोनिर्गमनेभवतिअतोज्ञायतेएतद्देहस्थितिहेतुभूतंचैतन्यंनावशिष्यतेइतिद्वयोरर्थः ६१९ । ६२० यदेतदिति । यदेतद्देहस्थितिप्रयोजकंचैतन्यंतद्भवत्पृष्टमद्वितीयंब्रह्मेत्यर्थः ६२१ ननुदेहस्थितिप्रयोजकत्वंप्राणेऽतिप्रसक्तमित्याशंक्यस्वधारणेप्यशक्तस्यपरधारणकथान्याहतेतिदर्श यन्पंचमंपठति नप्राणेनेति ६२२ एतत्तात्पर्यमाह प्राणापानाविति । ततःपरायत्तत्वात्प्राणापानावात्मरूपावात्मनोरूपंस्वपरस्थितिप्रयोजकत्वंधारयितुंयोग्यौनभवतःकिंत्वेतौप्राणापानौयत्र कारणेप्रतिष्ठितौभवतः कदा श्वासाद्यल्पभरूपायांश्वासाद्यदर्शनोपलक्षितायांमूर्छामरणादिपदवाच्यायामवस्थायांसएतत्कारणभूतंतत्त्वमेवसर्वेषामात्मेत्यर्थः ६२३ षष्ठ्याविद्यस्यार्थमाह धर्माधर्मेत्यादिदशभिः । एवंशुद्धआत्मानृण्यमुक्तःअथयत्त्वयात्मनःपरलोकसत्त्वंपृष्टं कीदृशं परमंवरंत्रयाणांवराणांमध्येऽत्यवरत्वेनोपन्यस्तंतदिदंशृण्वितिद्वयोरर्थः ६२४ । ६२५

योनिमिति । मरणेआत्मनःअत्यंतोच्छेदोनभवतिकिंतुकेचिज्जंतवोजंगमशरीरलाभाययोनिंयोन्युपलक्षितंजंगमबीजभावंप्राप्नुवंति केचित्तुस्थावरभावायस्थावरबीजभावं तत्रचकर्मकायिकादिश्रुतपदल क्षिताभावनाचव्यवस्थापिकेत्यर्थः ६२६ तत्रकर्मणोव्यवस्थापकतांस्फुटयति पुण्याधिक्यादितित्रिभिः । पापापेक्षयापुण्याधिक्यंजंगमदेहप्रयोजकंपुण्यापेक्षयापापाधिक्यंतुस्थावरत्वस्य तथाजंगमे ष्वपिपुण्यतारतम्यंकीटमारभ्यहिरण्यगर्भांतदेहेषुधर्मज्ञानादितारतम्यप्रयोजकमितिद्वयोरर्थः ६२७ । ६२८ येषांपुण्यमणुवत्पापंपर्वतवत्तेस्थावराभवंतीत्याह पुण्यमिति । स्तब्धंगमनादिस्वातंत्र्यर हितंजीवितुंशीलंयेषांतथा ६२९ श्रुतस्यकर्मानुष्ठानद्वाराव्यवस्थापकतांस्फुटयति पुण्यंवेति । वृद्धेभ्यआप्तत्वाभिमतेभ्यःपितृप्रभृतिभ्यःपुण्यंपातकंवायत्कर्त्तव्यतयाश्रुतंतदुत्थभावनयातदेवपुण्यादि कमनुष्ठायतदनुरूपंजन्मलभंतेपुनश्चताद्दशरुच्याताद्दशंकर्मकुर्वंतीतिद्वयोरर्थः ६३० । ६३१ एतदेवस्फुटयति पापिनामिति । स्पष्टम् ६३२ हिरण्यगर्भशरीरमपिपुण्यपापोभयारब्धमितिदर्शयितुंत त्रसोऽबिभेदितिश्रुतिप्रसिद्धभयानुमितपापलेशारब्धत्वमाह वालाग्रेति । वालाग्रशतभागेनतुल्यमितिशेषः पूर्वंशरीरिणिसवैशरीरीप्रथमइतिप्रसिद्धे ६३३ वर्णितस्यात्मसत्तायांपर्यवसानमाह ब्रह्मा

योनिमन्येप्रपद्यंतेजंगमत्वायदेहिनः ॥ स्थावरत्वंपरेयांतियथाकर्मयथाश्रुतम् ६२६ पुण्याधिक्याद्भवंत्येतेजंतवोजंगमात्मकाः ॥ पापाधिकाश्चसततंभवंतिस्था वराअपि ६२७ जंगमेषुचपुण्यस्यतारतम्याद्भवंत्यमी ॥ ब्रह्मादयश्चकीटांताःसर्वेदेवशरीरिणः ६२८ पुण्यंस्वल्पांशतोयेषांपापंपर्वतवत्स्थितम् ॥ तेदुःखबहु लाएतेस्थावराःस्तब्धजीविनः ६२९ पुण्यंवापातकंवापिकरणीयतयापुरा ॥ पित्रादिभ्यःस्ववृद्धेभ्यःश्रुतंजन्मांतरेयथा ६३० तथातत्समनुष्ठायजातास्तेताद्द शाःपुनः ॥ कुर्वंतिचतथैवैतच्छृण्वंतिचपुनःपुनः ॥ कुर्वंतिचतथैवैततस्वदेहेनपुनःपुनः ३१ पापिनांपातकस्यैवश्रवणेकरणेपिच ॥ प्रीतिरुत्पद्यतेतद्वद्धर्मस्यचमहा त्मनां ६३२ वालाग्रशतभागेनपापंपूर्वशरीरिणि ॥ पुण्यंपर्वतसंकाशंविद्यतेपरमेश्वरे ३३ ब्रह्मादिस्थावरांतोयंपुण्यपापफलात्मकः ॥ संसारःकर्मतोजातस्तत्रपू र्वशरीरतः ६३४ पूर्वशरीरंनैवैतदसत्यात्मनिविद्यते ॥ आत्मास्तिततएवायंशरीरांतरभाक्पुमान् ६३५ अतःप्रश्नद्वयेप्येतदेकमेवात्मनोवपुः ॥ पृष्टंतन्मिलितं कृत्वागुह्यंब्रह्मसनातनम् ॥ अस्तितामाभिधायैवंयमआहानयादिशा ६३६ योजागर्तिपुमानेषुस्वप्रकाशचिदात्मकः ॥ कामंकामंबहुविधंपुत्रक्षेत्रादिरूपकम् ॥ निर्मिमाणःसदास्वप्नेसर्वेषामिहदेहिनाम् ६३७

दीति । एवंसर्वसंसारस्यपुण्यपापोभयारब्धत्वात्पुण्यपापयोश्चपूर्वशरीरारब्धत्वात्पूर्वशरीरस्यात्मसत्ताव्याप्यत्वात्ततःसंसारवर्णनेनात्मनःसत्यत्वचेतनत्वादिकंसिद्धमितिद्वयोरर्थः ६३४ । ६३५ षष्ठ्याद्वितीयंपादंयोजयन्पूर्वोत्तरसंगतिमाह अतइति । अतःसंसारवर्णनस्याप्यात्मरूपेपर्यवसानाद्यमएवमुक्तविधयाआत्मनोस्तित्वमभिधायानयादिशावक्ष्यमाणप्रकारेणगुह्यमुपनिषत्प्रमेयंसना तनंब्रह्मआह ननुअपृष्टंसनातनंब्रह्मकथंयमेनोच्यतेइतिशंकावारणायोक्तं प्रश्नद्वयेपीत्यादिकृत्वेत्यंतं अयमर्थःवरत्रयंलब्ध्वानचिकेताएकेनवरेणपितुःसौमनस्यंद्वितीयेनाग्निविद्यांचप्राप्यतृतीयेनपूर्णां ब्रह्मविद्यामादित्सुरेकमेवात्मवस्तुप्रथमंसंसारोपलक्षितत्वंपदार्थरूपेणपृष्ट्वाधर्माधर्मोद्यतीतत्वोपलक्षिततत्पदार्थरूपेणपृष्टवान् पदार्थद्वयमेलनेनवाक्यार्थसिद्धेरर्थप्राप्तत्वात् अतस्तदभिप्रायंविज्ञाय वाक्यार्थभूतब्रह्मात्माभिधानंयमस्ययुक्तमिति ६३६ अष्टममंत्रार्थमाह योजागर्तीतिचतुर्भिः । यएवस्वप्रकाशश्चिद्रूपःपुरुषःसर्वेषामात्माइंद्रियेषुसुप्तेषुसत्सुजागर्त्तिननिद्राति किंकुर्वन् स्वप्नेआवृत्त कामपदेनोक्तंबहुविधंपुत्रादिरूपंकाम्यमानंवस्तुजातंनिर्मिमाणोरचयन् ६३७

पौरुपमिति । यदेतत्स्वप्रद्रष्टृतयावर्णितंपुरुषस्यस्वरूपंतदेवदीप्तंचिन्मात्ररूपतयाशुद्धंतदेवचब्रह्माद्वितीयंमोक्षरूपंचउच्यतेश्रुतिभिः ६३८ तस्यब्रह्मत्वेहेतुतयासर्वाधारतामाह तस्मिन्निति । लोकप दोक्ताःपृथिव्यादयः जनाश्चतदाश्रिताः ६३९ मोक्षरूपत्वेहेतुंपरमगतित्वमाह संसारेति । संसारस्यपारंजिगमिषुःकश्चिदपितद्वर्णितात्मनःस्वरूपंनात्येतिन।तिक्रामतिकिंतुतदेवसंसारपारभूतंग च्छति तदतिरिक्तस्यपरमगत्यात्मकमोक्षस्वरूपस्यात्रसंसारपारेऽसत्वादित्यर्थः ६४० अथज्ञातकृत्वोपिपथ्यंवक्तव्यमितिन्यायेनोक्तात्मस्वरूपंविशदयतामग्निरित्यादिमंत्राणामर्थमाह एकएवेत्या दिना । अयंसर्वेषामात्मासर्वशरीरेष्वेकइत्यर्थः ६४१ यथेति । यथासर्वेषुकाष्ठेषुतिष्ठन्वन्हिस्तत्तत्काष्ठसमानरूपतापन्नोभवति वस्तुतस्तुतेजोरूपेणतेभ्यःकाष्ठेभ्योपिविलक्षणइत्यर्थः ६४२ दार्ष्टांति केयोजयति एवमिति । एवंवस्तुतोदेहविलक्षणःसोप्यात्मातत्तद्देहेषुताहस्तत्तद्देहसरूपोभवति ६४३ वायुरित्यादेरर्थमाह वायुरितिद्वाभ्यां । अतद्वदितिच्छेदः यथासूक्ष्मसमष्टिरूपोवायुःसूक्ष्मेषुव्य ष्टिभूतसूक्ष्मशरीरेषुतद्वत्तत्तादात्म्येनव्यवस्थितोपिवस्तुतःअतद्वत्व्यष्टिविलक्षणपूर्णत्वादिरूपेणव्यवस्थितइत्यर्थः ६४४ तद्वदिति । सूक्ष्मेषुबुद्ध्यादिषुताहशस्तत्तत्सरूपआत्मातिष्ठति कीदृशः वस्तुतोऽता

पौरुषंयदिदंरूपंह्यास्तेस्वप्रसंश्रयम् ॥ तदेवदीप्तंतद्ब्रह्ममोक्षरूपंतदुच्यते ६३८ तस्मिंल्लोकाःश्रिताःसर्वेभूराद्याबहुयोजनाः ॥ चतुर्विधजनास्तद्वन्नानालोक समाश्रयाः ६३९ संसारपरपारार्थीतच्चनात्येतिकश्चन ॥ एतस्मादपरस्यात्रपरस्यासत्त्वहेतुतः ६४० एकएवायमात्मास्यात्सर्वेषामिहदेहिनाम् ॥ स्थूलेष्वपि चसूक्ष्मेषुशरीरेषुससर्वदा ६४१ यथास्थूलेषुकाष्ठेषुवन्हिःसर्वत्रसंस्थितः ॥ सदृशःकाष्ठसंघैस्तैर्वस्तुतोन्यादृशोपिच ४२ एवंस्थूलेषुदेहेषुदेवासुरनरादिषु ॥ ता दृगात्माभवेदेषवस्तुतोपिविलक्षणः ६४३ वायुर्यथात्रसूक्ष्मेषुसूक्ष्मरूपोव्यवस्थितः ॥ तद्वत्प्रतीयतेऽतद्वद्वस्तुतःसमवस्थितः ६४४ तद्वत्सूक्ष्मेषुदेहेषुतिष्ठत्या त्मात्रतादृशः ॥ अतादृशःस्वरूपेणसदानंदात्मरूपभृत् ६४५ शरीरद्वयसंस्थोपिपरमात्मामहेश्वरः ॥ शरीरद्वयदोषेणलिप्यतेनकदाचन ६४६ सूर्योयथात्रस र्वेषांनेत्रेष्वास्तेनिरंतरम् ॥ नलिप्यतेचतत्रस्थैर्दोषैर्नैवगुणैरपि ६४७ बाह्येनभासिर्बिबात्मायस्मादन्यःप्रप्रत्यते ॥ शास्त्रदृष्ट्यातथैवात्माहार्देनभासिप्रत्यते ॥ दे हद्वयात्पृथक्तेनतद्धर्मैर्नैवलिप्यते ६४८ स्वतंत्रएकएवायमात्मासर्वशरीरिणाम् ॥ सूर्यवद्बहुधाभातिनेत्रभेदात्पृथैवसः ६४९ यथैवबहुधाभानेर्भानोर्नैवभिदाक्व चित् ॥ आत्मनोबहुधाभानमेवंभेदेनकारणम् ६५० भानौभेदंयथाऽसंतंगृहीत्वादुःखमाव्रजेत् ॥ उपहासादिजनितंबहुधाबालिशःपुमान् ६५१

दृशःसदानंदात्मकत्वादित्यर्थः ६४५ सूर्यइत्यादिविवृणोति शरीरद्वयेतिसप्तभिः । स्थूलसूक्ष्मोपाधिष्वात्मातद्दोषैर्नलिप्यतेयथालोकानांनेत्रेषुदेवतात्वेनस्थितोप्यादित्यस्तत्रस्थैस्तत्तन्नेत्रगतैर्दोषादि भिर्नलिप्यतेतद्वदितिद्वयोरर्थः ६४६ । ६४७ यथाचदृष्टांतेसर्वचाक्षुषदोषवर्जितत्वमनुभवसिद्धंतद्वदत्रापीत्याह बाह्येति । यथासूर्योबाह्याकाशेस्थितोऽन्यःसर्वदोषवर्ज्योभिन्नोनुभूयतेतथात्मापि हार्दाकाशेसाक्षिरूपेदेहद्वयात्पृथक्तद्धर्मासंगीचानुभूयतेइत्यर्थः ६४८ एकत्वेपीमंदृष्टांतंयोजयति स्वतंत्रइत्यादिना । अयमात्मास्वतंत्रःसत्ताभानादौपरानपेक्षएकश्चसन्नपियद्बहुधाभातितद्बहु धाभानंवृथामिथ्यैव यथातत्तद्देशवासिनामादित्यस्यस्वसन्निकृष्टयोजनादिपरिमितदेशवर्तितयाबहुधाभानंमिथ्यातद्वदित्यर्थः ६४९ यथादृष्टांतेकल्पितैर्बहुधाभानैरादित्यस्वरूपमखंडंनस्पृश्यतेत थात्रापीत्याह यथैवेति स्पष्टं ६५० यथादृष्टान्तेभेददर्शनस्योपहासादियुक्तदुःखंफलंतथात्रात्मनिभेददर्शनस्यसंसारभयमित्याह भानाविति । असंतमितिच्छेदः स्पष्टंद्वयं ६५१

६५२ एकइत्यादेरर्थमाह अंतरात्मेतिन्त्रिभिः । ततउक्तविधयासर्वभूतानामेकएवात्मासासिद्धः सकः यःस्वतंत्रःस्वकीयंरूपंमाययाबहुधाकरोतितंस्वहृदयेसंतमुपदेशानुसारेणपश्यंतितेषामेव नित्यंमोक्षाख्यंसुखंभवतिइतरेसंसारदुःखभागिनइतित्रयाणांसंबंधः ६५३ । ६५४ । ६५५ नित्यानामित्यर्थोवर्ण्यते नित्यानामितित्रिभिः । नित्यानांकालादीनामपियोनित्यईश्वरःस्व सत्ताप्रदानेननित्यताप्रयोजकस्तथाचेतनानामिंद्रियाणामिंद्रियावच्छिन्नधीवृत्तीनांचेतनःस्वाभासदानेनचेतनत्वप्रयोजकइत्यर्थः ६५६ यमन्वीक्ष्येति । तथायंसाक्षात्कृत्यपूर्वेपूर्वमुक्तंशा श्वतंसुखंयातितथायएकएवसर्वेषांकामितार्थप्रदः ६५७ तस्येति । तस्यब्रह्मणएतदेवस्वरूपंयद्हृदयेस्वप्रकाशंस्थितमित्यर्थः ६५८ तदेतदित्यादिवाक्यार्थमाह तदेतदितीत्यूनाविंशत्या । तद्व र्णितमात्मनःस्वरूपभूतंपरमंसुखमनिर्देश्यंवक्तुमशक्यमपिमहात्मानःकोविदाएतदितिअपरोक्षत्वेनमन्यंतेजानंतीत्यर्थः ६५९ तस्यानंदस्यानिर्देश्यतायांकैमुत्यंदर्शयितुंलौकिकानंदस्याप्यनिर्दे

आनंदात्मनितद्ध्योऽसंतंभेदंस्वचेतसा ॥ गृह्णीयात्सतुसंसारदुःखमेतत्समाप्नुयात् ६५२ अंतरात्माततःसर्वभूतानामेकएवसः ॥ स्वतन्त्रःस्वात्मनोरूपंबहुधा कुरुतेस्वयम् ॥ माययाजगदीशानोमाययापिविवर्जितः ५३ यस्तंस्वहृदयेसंतंगुरुशास्त्रोपदेशनात् ॥ अनुपश्यंतियेधीराब्रह्मचर्यादिसाधनाः ५४ शाश्वतंमो क्षसंज्ञंस्यात्सुखंतेषांमहात्मनाम् ॥ अन्येषांदुःखमखिलंसंसाराख्यंभवेत्सदा ५५ नित्यानामपिनित्योयंकालादीनांमहेश्वरः ॥ इंद्रियाणांहिसर्वेषांचेतनानांच चेतनः ५६ यमन्वीक्ष्यसुखंधीरायांतिपूर्वसमीरितम् ॥ एकएवबहूनांयःकामान्मनसिसंस्थितान् ॥ ददातिसर्वजंतूनांदुःखशांतिकरःपुमान् ५७ तस्यरूप मिदंब्रह्मसर्वप्राणिहृदिस्थितम् ॥ अवाङ्मनसगम्यंयत्स्वयंज्योतिःस्वरूपधृक् ५८ तदेतदितिमन्यंतेनिर्देश्यंपरमंसुखम् ॥ महात्मानोत्रविद्वांसःसदास्वानुभवे रताः ५९ अपिवैषयिकंयत्स्यात्सुखंतदपिकोवदेत् ॥ मृष्टान्नभोजनादौयज्जायतेन्नसुखंनृणाम् ६६० सुखमित्येवतद्ब्रूयुर्लौकिकानविशेषतः ॥ विशेषंकथयं तोपिनैववक्तुंक्षमाःक्वचित् ६१ अध्यस्यकस्यचित्तस्यसादृश्यंतेवदंतितत् ॥ ततःसुखमनिर्देश्यंसर्वमेवव्यवस्थितम् ॥ ततःस्वानुभवेनैवगम्यतेनान्यथाहितत् ६२ ब्रह्मणोपिसुखंयत्तुसर्वानंदशताधिकम् ॥ यतोधिकंनकिंचित्स्यात्सुखंवैषयिकंक्वचित् ६३ आनंदवारिधेस्तच्चबिंदुमात्रमुदीरितम् ॥ अतःकथंहिनिर्देश्यंभवेत्त त्परमंसुखम् ६४ गुरवःश्रुतिभिःसार्धमात्माप्रियतमःसदा ॥ इत्थंवदंतोनैवेतेशक्ताःसाक्षाद्विभाषितुम् ६६५

श्यतामाह अपिवैषयिकमिति । मृष्टंस्वादु ६६० यतस्तद्वर्णयंतोपिसुखत्वादिसामान्यरूपेणैववर्णयंतीत्याह सुखमिति ६६१ अध्यस्येति । यतस्तेवक्तारस्तस्यभोजनादिसुखस्य स्व रूपेइतिशेषः कस्यचित्सादृश्यमध्यस्यारोप्यैवतद्भोजनादिसुखंवदंतीति । फलितमाह ततइति । ततोवक्तुमशक्यत्वात् हिशब्दःपादपूरणार्थः ६६२ किंचमानुषामनुष्यगंधर्वादेवगंधर्वाःपितरआजा नपदोक्तस्मार्त्तकर्मजदेवाःश्रौतकर्मजदेवाहविर्भुग्देवाइंद्रोबृहस्पतिर्विराट्हिरण्यगर्भश्चैतेषामानंदाःशतगुणोत्तरास्तित्तिरिश्रुतिप्रसिद्धास्तेष्वंत्योहिरण्यगर्भानंदोपियस्यब्रह्मानंदस्याब्धेर्मात्रापदेनविंदुत योक्तस्तस्यानिर्देश्यत्वंकिमुवाच्यमित्याह ब्रह्मणइतिद्वाभ्यां । ब्रह्मणोहिरण्यगर्भस्यसुखंसर्वोविराट्तदीयानंदात्शताधिकंयतोहिरण्यगर्भसुखात्वैषयिकंसुखंकिंचिदप्याधिकंनभवतितच्चहिरण्यगर्भ सुखमपि ६६३ । ६६३ अतएवगुरवःश्रुतयश्चतत्स्वरूपंप्रियतमत्वात्मकसामान्यरूपेणैववदंतिसाक्षाद्भाषितुमक्षमत्वादित्याह गुरवइति ६६५

गुरूपदिष्टमिति । यतस्तत्स्वरूपंकेनापिनिर्देष्टुमशक्यंतेनायमधिकारीतत्साक्षात्कारार्थीयद्गुरूपदिष्टंपरमंसुखंतदहंकथंसाक्षाद्विजानीयांएवंकामयानितिवक्ष्यमाणाविधयाचिंतयेत्विचारयेदित्यर्थः ६६६ तद्विचारमभिनयति परममितिमवभिः । तद्ब्रह्मणःस्वरूपभूतंसुखमिदानींकिंममभातिकिंवाविभातिविपरीतंभाति : कीदृशस्यममतदावरणापहारकविज्ञानवत्त्वेनप्रसिद्धस्यरागाख्यप्रतिबंधकहीनस्यचेत्यर्थः ६६७ नन्वनिर्देश्यस्वलक्षणेनतज्ज्ञानस्यदुर्ज्ञेयत्वात्किमनेनविचारेणेतिचेन्न अनिर्देश्यत्वस्यलौकिकसुखेपिसत्त्वेनातिसक्तत्वादित्याह आनंदस्येति । स्वयंपदंस्वरूपपरं तथाचान्यस्यलौकिकस्याप्यानंदस्यस्वरूपंतादृशमनिर्देश्यंभवतीत्यर्थः अतउक्तोविचारोयुक्तइत्याह ततइति । विरुद्धंविपरीतं ६६८ तदर्थंयोवैभूमातत्सुखमित्यादिश्रुत्यनुसारेणसुखलक्षणमाह कारकाणीति । कारकाणिकर्मादीनिषट् शेषःषष्ठ्यर्थःसंबंधःक्रियाच वाशब्दश्चार्थे तेननिपातार्थसंग्रहः एतेसर्वेभेदंविहायनतिष्ठंति एतदुपलक्षितभेदशालिपदार्थवतितत्परंसुख्यंसुखंनभवतिकिंतुनिर्भेदमेवसुखमित्यर्थः ६६९ सभेदंवस्तुहिभयादिप्रयोजकत्वाद्दुःखमेवेत्याह भेदेसतीति । भेदेसतियत्सुखंतज्जन्मादिविकारैर्ग्रस्तमेवभवेत्तादृशेविकारिणिसुखत्वमेवबाधितंसुतरांपरसुखत्वमित्यर्थः ६७० तादृशेसुखबुद्धिस्तुभ्रमएवेतिसदृष्टांतमाह आदाविति । आदौस्पृहादिप्रयोजकत्वादंतेवियोगाच्चयद्वस्तुदुःखरूपंतन्मध्येसुखरूपंकथंभविष्यति वियोगभयादिभिर्दुःखतायाएवौचित्यात् तादृशंचबालाएवसुख

गुरूपदिष्टंतेनायंयदस्तिपरमंसुखम् ॥ कथंतुतद्विजानीयांसाक्षादितिविचिंतयेत् ६६६ परमंसुखमात्माख्यंकिंमुभातिविभातिवा ॥ ममब्रह्मात्मविज्ञानवतोनीरागचेतसः ६६७ आनंदस्यस्वयंयस्मादन्यस्यापिचतादृशम् ॥ ततोमेभातिसम्यक्तुतद्विरुद्धंभातिवाधुना ६६८ कारकाणीहयत्रस्युःशेषोवाक्रिययायुतः ॥ तत्रभेदोभवेन्नित्यंभेदवन्नसुखंपरम् ६६९ भेदेसतिहिजन्मादिग्रस्तमेवसुखंभवेत् ॥ सुखत्वमपिनैवास्तितादृशेपरतःकुतः ६७० आदावंतेचयद्दुःखंवर्तमानेकथंसुखम् ॥ ततोदुःखेसुखाख्येयंबालैर्वैषयिकेकृता ६७१ तेनभानंहियस्यस्यात्कारकादेरभावतः ॥ सुखंतदेवविज्ञेयंपरमंचमहात्मभिः ६७२ यदितद्धिस्वयंभातिस्वभानंयत्सुखंपरम् ॥ ततोभात्येवविशदंसर्वदापरमंसुखम् ६७३ अन्यथाध्यासमात्रंमेसुखंभातीतिवर्तते ॥ कामुकानांयथाध्यासात्सुखंभात्यत्रकामिनी ६७४ इत्थंचिंतयतोनित्यंविरक्तस्यमहात्मनः ॥ अवाङ्मनसगम्यंतत्प्रतिभातिसुखंपरम् ६७५

मितिमन्यंतेयथावातरोगिणोमुष्टिकादिप्रहारंसुखंमन्यंतेतद्वदिति ६७१ फलितमाह तेनेति । अभावोऽप्रामिरनपेक्षितियावत् तथाचकारकादिद्वैतमनपेक्ष्यवर्तमानंयद्वस्तुतदेवपरमंसुखमित्यर्थः ६७२ एवंलक्षितेसुखेभातीतिकोटिरेवोपपन्नास्वयंप्रकाशेनचैतन्येनसहतस्याऽभेदादित्याह यदीति । यदितत्परमंसुखंभातिस्वयंप्रकाशचिद्रूपंयच्चस्वभानंस्वयंप्रकाशचित्तद्रूपंपरमंसुखमित्येवंप्रतिहारेणचित्सुखयोरभेदःसिद्धस्तदातत्परमंसुखंसदाविशदंभातीत्येवयुक्तमित्यर्थः निरतिशयप्रेमास्पदत्वानुपपत्त्यादयोनुकूलतर्काश्चात्रानुसंधेयाः ६७३ तस्यसर्वदाभानेऽनुकूलांयुक्तिमप्याह अन्यथेति । ममसुखंभातीत्यादिलौकिकबोधेपुयतोन्यथाध्यासइतरस्यान्यधर्मेणावभासस्तन्मात्रंवर्तते आत्मधर्मभूतेसुखमंतःकरणवृत्त्याद्यावारोप्यैवलोकेसुखव्यवहारइतियावत् यथाकामुकाःकामनोपशमेनाभिव्यक्तंस्वरूपसुखमेवानिर्विभक्तंस्त्रीकायेकल्पयंतीतिप्रसिद्धंतथाचयदीदंवर्जितंसुखंसदानभासेत तदातद्धर्मसुखत्वस्यान्यत्रारोपोनस्यादितिभावः दुःखकालेपिकिंचित्प्रेमास्पदमालंबयेवजनाजीवंतीत्यपिध्येयम् ६७४ एवंविचारेणापगतविरुद्धांशकंतत्सुखंयोगिनःसम्यगाविर्भवतीत्याह इत्थमिति ६७५

तदानिःशेषदुःखनिवृत्तिंनिरूपयति यस्येति । यस्याराात्रेरंतेमंगलावहःसूर्योदयोभवतिसासुप्रभातेत्युच्यते ल्यब्लोपेपंचमी तथाचयस्यउक्तानंदरूपब्रह्मणोदर्शनंतदाकारवृत्तिरूपमानंदरूपोदि वाकरोभिव्यक्तोयत्रतथाभूतंप्राप्यइयंप्रसिद्धादुःखरूपाशर्वरीसुप्रभाताभवेदित्यर्थः ६७६ आनंदात्मनोदिवाकरत्वंसाधर्म्यैःस्फुटयति आनंदात्मेति । मायारूपस्यतमःस्तोमस्यवृत्तिलक्षणपू र्वाचलारूढत्वेननाशकः ६७७ अत्रार्थैपंचमंवक्ष्यंत्यामृचमनुकूलयति सूर्यादिभिरितिपंचभिः । अयमात्मासूर्यादिभिर्नभास्यःकिंतुतेनैवसूर्यादयोभास्याइत्यर्थः ६७८ यथाग्निंभांतमनुसृ त्याऽयोभातितथासर्वंजगत्तमात्मानंभासमानमनुसृत्यभातीत्याह स्वयमिति । प्रतीयतेभासते ६७९ एतद्दृष्टांतेनस्फुटयति यथेतिद्वाभ्यां । यथादीपशिखाभानतंत्रंवर्त्यादिभानंतथाबु द्ध्यादिप्रपंचभानंचिदात्मभानतंत्रम् उभयत्रस्वयंभानशक्तेरभावादितिद्वयोरर्थः ६८० । ६८१ ननुप्रकाशानामादित्यादीनांप्रकाशांतरापेक्षाबाधितेतिशंकांकैमुत्यसूचकदृष्टांतेनपरिहरति भा नवश्चेति । भानवःप्रकाशत्वेनप्रसिद्धाःसूर्यादयश्चतमपेक्ष्यभांतीतियोजना . यथातैजसमपिचक्षुःसूर्यानुग्रहेणघटादिकंप्रकाशयतीतिप्रसिद्धंतथाचयदातैजसमपिचक्षुःस्वव्यवहारायतैजसमप्यादि

यस्यदर्शनतोदुःखरूपैषाशर्वरीनृणाम् ॥ सुप्रभाताभवेन्नित्यमानंदात्मादिवाकरात् ६७६ आनंदात्मास्वयंज्योतिर्दुःखरात्रिविनाशकः ॥ दिवाकरःसदामा यातमःस्तोमविनाशकः ६७७ सूर्यादिभिःसदैवायंतैजसैर्नप्रतीयते ॥ किंतुतेनैवसकलंसूर्याद्येतत्प्रतीयते ६७८ स्वयंज्योतिर्यदैवायमानंदात्माप्रतीयते ॥ तदापश्चाज्जगत्सर्वमनुभातिजडाजडम् ६७९ यथादीपस्यकलिकाभानादनुविभातितत् ॥ वर्त्तितैलादिकंतद्वदात्मभानादनंतरं ६८० बुद्ध्यादिकंजगत्सर्वं मध्यात्मादिविभेदवत् ॥ आत्मभासैवभात्येतत्स्वयंभानविवर्जितम् ६८१ भानवश्चयथादित्यभासाभातंघटादिकम् ॥ चक्षुःप्रकाशयेत्सर्वंस्वयंतदपितैजसम् ६८२ पुरमेकादशद्वारंयदुक्तंतेमयापुरा ॥ तदेवाश्वत्थरूपेणकेचिदाहुर्द्विजोत्तमाः ६८३ ऊर्ध्वंसर्वस्यजगतःकारणंब्रह्मयत्पुरा ॥ स्वयंज्योतिःसदामोक्षरूपंव स्तुचकीर्त्यते ॥ मूलंतदेवस्यादस्यसदाश्वत्थस्वरूपिणः ६८४ श्वोनतिष्ठतियस्मात्सतस्मादश्वत्थईरितः ॥ प्रतिक्षणविनाशित्वंभूतावासस्यदृश्यते ॥ ततः कथंनुविश्वासःश्वोवस्थानेस्यसंभवेत् ६८५ अर्वागधइतिप्राहुःकारणापेक्षयाद्विज ॥ अधोनिकृष्टतालोकेकथ्यतेसर्वजंतुभिः ६८६ शाखानानाविधादेहाःसें द्रियाःकर्मसंभवाः ॥ अस्यस्थूलस्यदेहस्यनिकृष्टाब्रह्मरूपतः ६८७

त्यादिकमपेक्षतेतदाजडानांविजातीयचिल्लक्षणप्रकाशापेक्षोपपत्तिःकिमुवाच्येतिभावः ६८२ संसारमूलत्वाविनाब्रह्मावधारणपरायाःषष्ठवल्ल्याआद्यांकंडिकांव्याकरोति पुरमित्यष्टाभिः । य च्छरीरंसंसारमयंपूर्वमेकादशद्वारपुरत्वेनवर्णितंतदेवाश्वत्थवृक्षत्वेनवर्णयंतिवेदविदइत्यर्थः ६८३ ऊर्ध्वमिति यद्ब्रह्मसर्वस्माज्जगतऊर्ध्वमुत्कृष्टंकारणत्वात्पूर्वोक्तपरमार्थस्वयंप्रकाशानंदात्ममोक्षरू पत्वाच्चतदेवास्यशरीरस्याश्वत्थरूपवृक्षस्यमूलमिति ६८४ तत्राश्वत्थपदसमन्वयंदर्शयति श्वइति । श्वउत्तरदिनेयस्यभूतावासस्यपांचभौतिकस्यक्षणस्थितावप्यविश्वासस्तत्रदिनांतरपर्यंतमास्था कस्यस्यादित्यर्थः ६८५ अस्यार्वाक्शाखतांविवृणोति अर्वागितिद्वाभ्यां । अर्वाक्पदमधःइत्यर्थेप्रयुंजतेवेदविदः तथाचश्रुत्यंतरे ‘अर्वाग्देवाअस्यविसर्जनेन’ इति अधःपदंनिकृष्टेपिलो केप्रयुज्यते तथाचब्रह्मात्मकमूलान्निकृष्टानानायोनिदेहाःसेंद्रियाःसूक्ष्मदेहाश्चकर्मलक्षणस्कंधप्रभवाअस्यदृश्यमानस्यस्थूलदेहात्मकाश्वत्थस्यशाखास्थानीयाइतिद्वयोरर्थः ६८६ । ६८७

अस्याश्वत्थपदसूचितास्थानहंताकत्वेपिबीजांकुरप्रवाहरूपेणनित्यत्वमुक्तमित्याह अश्वत्थोपीति ६८८ अयंवृक्षोमूलस्यसर्वाधिष्ठानत्वादिविज्ञानेनैवनिकृत्यतेइतिसूचयन्नाह मूलमिति । अ स्यवृक्षस्ययन्मूलंतदेवसर्वाधिष्ठानंस्वयंप्रकाशात्मरूपत्वाचकेनाप्यतिक्रमणीयंनभवतीत्युक्तम् हेनचिकेतएतदेवत्वत्पृष्टंतत्त्वमित्यर्थः ६८९ निर्धृतत्वात्मब्रह्मलिंगप्रदर्शकद्वितीयार्थमाह प्राण त्मनीतित्रिभिः । यस्मिन्प्राणपदोक्तेआत्मनिविश्वकारणेप्रतिष्ठितंलब्धस्थितिकंसर्वंजगत्स्वस्वव्यापारंप्रवर्ततेततएवचप्राणादात्मरूपाज्जायतेचं ६९० सहीति । सस्थित्याद्युपलक्षितोमायोपा धिरीश्वरःसर्वसंहारकत्वेनमृत्युरूपत्वात्कार्यात्माभिमानिनांभयहेतुरुद्यतंवज्रवत्तंयेआत्मत्वेनविदंतितेऽमृतत्वंभजंतेइत्यर्थः ६९१ आत्मभूतानाममृतत्वेउपपत्तिमाह आत्मनइति । यथाग्नि रात्मानंदग्धुमशक्तस्तथात्मनाआत्ममरणस्यकर्तुमशक्यत्वादात्मस्वरूपममृतमित्यर्थः ६९२ तस्यसर्वभयप्रदत्वेकैमुत्यंदर्शयंत्यास्तृतीयायाअर्थमाह सूर्याग्नीइतित्रिभिः । तपतःप्रकाशादि मंतंकुरुतः वातिवहति ६९३ मृत्युश्चेति । तेषामेतद्वाक्योक्तानांमध्येपंचमोयोमृत्युस्तद्रूपोमृत्युरहंप्रमोधावन्सन्प्राणान्हरामि कीदृशःतस्मादीश्वरादत्यंतभयरूपाद्भीतः ६९४ तथा

अश्वत्थोप्येषमततंनित्योबीजांकुरादिना ॥ प्रवाहरूपतोयद्वत्तरुरन्योवटादिकः ६८८ मूलंयदस्यतस्मिन्हिलोकाःसर्वेसमास्थिताः ॥ यदतिक्रम्यकोप्यत्र नगच्छेदितिकीर्तितम् ॥ एतदेवत्वयापृष्टंधर्मादिपरिवर्जितम् ६८९ प्राणात्मनिजगद्धेतौयस्मिन्विश्वंप्रतिष्ठितम् ॥ व्यापारंस्वस्यकुरुतेसर्वदाशंकयाविना ॥ ततएवचसंजातंप्राणादात्मस्वरूपिणः ६९० सहिसर्वस्यकथितोमृत्युरूपोमहेश्वरः ॥ अयमेवमिहलोकेभयमुद्यतवज्रवत् ॥ एतदात्मतयाविप्रायेविदुस्तेऽमृ ताःस्थिताः ६९१ आत्मनोमरणंनात्माकारयेत्कस्यचित्क्वचित ॥ ततएवमृतिंहित्वानिर्भयोभयदःस्थितः ६९२ सूर्याग्नीतपतोनित्यंनिखिलंभुवनत्रयम् ॥ इंद्रोवर्षतिवायुश्चवातिलोकसुखप्रदः ६९३ मृत्युश्चपंचमस्तेषामहंभीतःसदाततः ॥ धावन्प्राणान्शरीरेभ्यस्तस्मादत्यंतभीतितः ६९४ कुतोपरेभयंनै वगच्छेयुःप्राणिनःसदा ॥ अस्माद्धामनतःप्राणात्प्राणापानांतरस्थितात् ६९५ आत्मविज्ञानतोयस्माद्भयमेतन्नजायते ॥ इहैवततएवार्यंज्ञातव्योमृत्युभी रुणा ६९६ इहचेदात्मविज्ञानंनजातंपतनात्पुरा ॥ ततःसर्वेषुलोकेषुसृज्यमानेषुसर्वदा ६९७ शुभाशुभेषुसततंशरीराण्यधिगच्छति ॥ बहुमृत्युकराण्येष यतःस्यात्सततंभयम् ६९८ यथाविशुद्धआदर्शेविस्पष्टंदृश्यतेमुखम् ॥ अधिकारिशरीरेस्मिन्बुद्धावात्मातथैवहि ६९९ स्वप्नेयथानविशदंस्वस्यरूपंप्रतीयते ॥ पितृलोकेतथैवात्माभोगासक्त्यानगम्यते ७००

एवमनन्यादिरूपेणवर्णितादस्मादीश्वरादन्येषांभयंकिमुवाच्यमित्याह कुतइति ६९५ तद्भयनिवृत्त्यर्थेइहदेहएवतत्त्वज्ञानंसंपाद्यमित्याकारंवक्तुंचतुर्थ्यर्थमाह आत्मविज्ञानेतित्रिभिः । यस्मादेत द्भयानुत्पत्तिर्यस्मात्मविज्ञानमेवनतद्देहेइहैवज्ञातव्योमृत्योर्बिभ्यता अतएवोक्तम् ' मृत्योर्बिभेषिकिंमूढभीतंमुंचतिकिंयमः । अजातंनैवगृह्णातिकुरुयत्नमजन्मनि ' इति ६९६ इहचेदिति । यदि इहदेहपतनात्पूर्वंज्ञानंनलब्धंततःसर्गकालेषुलोकेषुसृज्यमानेषुनानालोकेषुनानादेहान्मृत्युभयव्याप्तान्प्राप्नोतीतिद्वयोःसंबंधः ६९७ । ६९८ पंचमीमुक्तार्थेयोजयति यथेतिसप्तभिः । यथा शुद्धेदर्पणेस्पष्टंमुखंदृश्यतेतथाध्यानचतुष्टयसंपन्नाधिकारिशरीरेविशुद्धबुद्धावात्मनःस्पष्टदर्शनमित्यर्थः ६९९ तथापितृलोकपदोक्तेपितृयाणगम्येस्वर्गलोकेरम्यविषयभवनायां मनोनस्वप्नवत्अदर्शनमितिसूचयन्नाह स्वप्नेइति । स्वस्यात्मनः ७००

अप्स्विति । यथाचंचलेजलेकंपादिविपरीतधर्मयुक्तंमुखमीक्ष्यतेतथागंधर्वलोकेध्वनिमयत्वादिविपरीतधर्मकमात्मरूपमीक्ष्यतइतिउपलक्षणमेतल्लोकांतराणामिति ७०१ एतत्स्फुटयति गंधर्वेति । भोगाभुज्यमानाविषयाः उत्तरार्द्धेशुद्धरूपेणाविज्ञानादित्तिशेषः ७०२ यद्यपिहिरण्यगर्भलोकेस्पष्टमात्मभानंतथापितस्यचहंतरायकत्वेनदुष्करोपासनालभ्यतयादुष्प्रापत्वात्तत्प्रतीक्षयइह्य त्नशैथिल्यंनकार्यमित्याह ब्रह्मलोकइति । अत्रश्रुतिप्रसिद्धे ७०३ ब्रह्मलोकउपाधिविविक्ततालक्षणशुद्धतयात्मभानेदृष्टांतमाह छायेति ७०४ फलितमाह अस्मिन्नेवेति । स्वाधीनेसुलभेच ७०५ आत्मसाक्षात्कारेसाधनंतुद्वयंसांख्यंयोगश्चतत्रसांख्यंविवेकात्मकंप्रदर्शयंत्योःषष्ठीसप्तम्योरर्थमाह इंद्रियाणामितिषड्भिः । इंद्रियाणांसवृत्तिकानांपृथक्पृथक्स्वस्वकारणेभ्योजायमानानांपृथग्भावंस्वस्वरूपात्परस्परंचभेदंयश्चैतत्पंजानातितदेवबुद्धेःसाक्षिभूतमात्मतयाज्ञेयम् षएवंबुद्धिसाक्षिणमेवात्मतयामन्यतेनदृश्यवर्गंसएवशोकंतरतिसएवचविद्वानितियावदितिद्वयोरर्थः ७०६ । ७०७ तत्पदार्थशोधनपरतयासप्तमींयोजयति आत्मेत्यादिना । यआत्माहेतुशून्योऽजःपूर्वमुक्तःसज्ञानेंद्रियकर्मेंद्रियभेदेनद्विविधानामिंद्रियाणांसंबंधिनोव्यवहारात्प्रपंचात्कर्मज्ञा

अप्सुयद्वच्चलास्वत्रवैपरीत्यात्प्रतीयते ॥ मुखंगंधर्वलोकेपितथैवात्माप्रतीयते ७०१ गंधर्वलोकआत्मायंभोगासक्तेनचेतसा ॥ प्रतीतोपिकरोत्येषनाऽविद्याविनाशनम् ७०२ ब्रह्मलोकेतिविशदमात्माजंतोःप्रतीयते ॥ यद्यप्यत्रतथाप्येषदुष्प्रापःप्राणिभिःसदा ७०३ छायातपौयथैवैतौप्रतीयेतेपृथक्पृथक् ॥ ब्रह्मलोकेतथैवात्माजगद्भिन्नःप्रतीयते ७०४ अस्मिन्नेवततोदेहेस्वाधीनेसुलभेसति ॥ आत्मनोनुभवःसाक्षात्संपाद्यःसुखमिच्छता ७०५ इंद्रियाणांपृथग्भावमुदयास्तमयौचयत् ॥ पृथगुत्पद्यमानानांव्यापारज्ञानरूपिणाम् ७०६ जानात्यात्मासविज्ञेयोबुद्धिस्थःसर्वदेहिनाम् ॥ एनमात्मतयाविद्वान्मत्वाधीरोनशोचति ७०७ आत्मायस्तेमयापूर्वंहेतुशून्यःप्रकीर्तितः ॥ विषयैर्भेदशून्यानामिंद्रियाणांद्वयात्मनाम् ॥ कर्मज्ञानात्मकादस्मात्परतोव्यवहारतः ७०८ इंद्रियेभ्यःपरंज्ञेयंमनोबुद्धिस्ततःपरा ॥ सत्वादधिमहानात्मामहतोव्यक्तमेवच ॥ अव्यक्तात्पुरुषस्तद्वत्परःसर्वगतःसदा ७०९ कार्यकारणरूपेणलिंगेनचविवर्जितः ॥ यज्ज्ञात्वामुच्यतेजंतुरमृतत्वंचगच्छति ७१० अविद्यायाःसकार्यायानाशोमोक्षइतीरितः ॥ आनंदात्मप्रभानंयदमृतत्वंतदीरितम् ७११ मोक्षामृतत्वयोरस्माद्भेदाद्भेदउदीरितः ॥ अभेदेपिचविद्वद्भिर्भेदंकंचिद्विगम्यच ७१२



नात्मकात्कर्मज्ञानोभयमयात्परतःस्थितइतिशेषः कीदृशानामिंद्रियाणाम् विषयैर्भेदशून्यानांदृष्टिसृष्टिविधयामैत्रेयीब्राह्मणादौएकायनप्रक्रियोक्तयास्वस्वदृश्यविषयेभ्यःकारगतयाभेदायोग्यानां इदंविशेषणमद्वयत्वस्फुटीकरणायोत्तरत्रविषयाणामनुपादानेनन्यूनतापरिहारायचोक्तमितिध्येयम् ७०८ तत्रपरंपरांश्रोतींदर्शयति इंद्रियेभ्यइति । इंद्रियेभ्योविशेषभूतेभ्योमनःसामान्यरूपंपरंततश्चसविकल्पात्बुद्धिःसत्त्वपदोक्तानिर्विकल्पकरूपापराततश्चमहत्पदोक्तासमष्टिबुद्धिःपराततश्चाव्यक्तंसूक्ष्मलयस्थानमव्याकृतंपरंततःपरःपूर्णःपुरुषइत्यर्थः ७०९ कार्येति । कीदृशःपुरुषः स्थूलसूक्ष्मप्रपंचेनदृश्यतयाद्रष्टुरनुमापकेनवर्जितः ज्ञानद्वारामोक्षामृतत्वयोःप्रयोजकश्चेत्यर्थः ७१० एकस्मिन्नात्मनिसाविलासाविद्याध्वंसत्वंभासमानानंदरूपत्वंचवर्ततेतेनक्रमेणमोक्षामृतपदयोःप्रवृत्तिनिमित्तभूतेइत्याह अविद्यायाइति ७११ मोक्षेति । अस्माद्वर्णितात्प्रवृत्तिनिमित्तयोर्भेदाद्विशेषाद्धेतोर्मोक्षामृतत्वयोर्भेदःअपर्यायतारूपउक्तः ननुकल्पिताभावस्याधिष्ठानात्मकत्वादुक्तभेदोपिकथमित्याशंकांवारयति अभेदेपीति । प्रतिपाद्यवस्तुनएकत्वेपिकंचित्कल्पितप्रतियोगिनिरूप्यंभेदंविगम्यकल्पयित्वेत्यर्थः ७१२

अथसाक्षात्कारायइंद्रियनिरोधलक्षणंयोगंविदधत्याअष्टम्याअर्थमाह दर्शनेइतिचतुर्भिः । अस्यात्मनोरूपंदर्शनेइंद्रियजज्ञानेयोग्यतांयतोनप्राप्नोतिततश्चक्षुषातदुपलक्षितेतरैरिंद्रियैश्चैनंनकश्चित्पश्यतीत्यर्थः ७१३ योग्यताऽभावेहेतुतयारूपाद्यभावमाह यतइति ७१४ ततोनिरोधेनैवात्मानमात्मतयाजानीयादित्याह हृत्स्थयेति । अयमधिकारीतेनयोगेनस्वात्मत्वेनात्मानंगमयेत्साक्षात्कुर्यात् कीदृशेनतेन हृत्स्थयाहृद्येकाग्रतामापन्नयाबुद्ध्यामनसःसविकल्पकस्यनियंत्र्यावशीकर्त्र्याकंचनकमप्याकारंदृश्यरूपमानंदात्मनिनसंकल्प्यनिष्पादितेनेतिशेषेणयोजना इत्थमित्यादिस्फुटमितिद्वयोरर्थः ७१५ । ७१६ योगस्योत्कर्षंबोधयंतींनवमींपठति यदेति । ज्ञानानिज्ञानेंद्रियाणिमनोबुद्धिश्चएतेषांनैश्चल्यरूपापरमागतिरिति ७१७ परमतामुपपादयति जीवतइतिद्वाभ्यां । यन्मनःप्रभृतीनांनिरंतरमैकाग्र्यमस्याअवस्थायाःसंप्राप्तितुल्यापराउत्कृष्टागतिर्नास्तिकिंत्वियमेवपराआनंदात्मभानेनसकलदुःखप्रहाणादितिद्वयोरर्थः ७१८ । ७१९ दशमींविवृणुते तामितित्रिभिः । तांवर्णितांबाह्यांतरकरणानांधारणांस्थिरांविघ्नैरप्रकंप्यांसकलदुःखवियोगरूपामपिविपरीतलक्षणयायोगपदेनाहुरित्यर्थः अयंयोगोयतःसृष्टिसंहारक्षमत्वलक्षणैश्वर्यलाभहेतुरतस्तदर्थमप्रमत्तोभवेदित्यर्थः ७२० एतत्स्फुटयन्निंद्रियप्रवृत्तेःप्रमादस्यचयोगविरोधितामाह अहमिति । ब्रह्मात्मैक्यावधारणरूपोयंयोगइंद्रियधारणांविनानभवति तथाकामसंकल्पादि

दर्शनेयोग्यतांनैतिरूपमस्यात्मनःसदा ॥ नचक्षुषैनमात्मानंकोपिपश्यतिकर्हिचित् ७१३ यतोरूपादिहीनोयमिंद्रियैर्नैवगम्यते ॥ उक्तमेतत्पुरातुभ्यंमयात्रनचिकेतसे ७१४ हृत्स्थयाक्षततोबुद्ध्यानियंत्र्यामनसोपिहि ॥ संकल्प्यकंचनाकारमवाङ्मनसगोचरे ७१५ आनंदात्मनितेनायंगमयेत्स्वात्मरूपतः ॥ इत्थंजानंतियेनित्यममृतास्तेभवंतिच ७१६ यदापंचावतिष्ठंतेज्ञानानिमनसासह ॥ विचेष्टतेनबुद्धिश्चतामाहुःपरमांगतिम् ७१७ जीवतोविदुषोनास्याःसंप्राप्त्यास्तिपरागतिः ॥ मनोबुद्धींद्रियाणांस्याद्यदैकाग्र्यंनिरंतरम् ७१८ एतेषांनिश्चलीभावआनंदात्मास्वयंप्रभः ॥ प्रतिभातियतोदुःखंनाणुमात्रंचगच्छति ७१९ तांयोगमितिमन्यंतेस्थिरामिंद्रियधारणाम् ॥ अप्रमत्तस्तदाभूयाद्योगोहिप्रभवाप्ययौ ७२० अहंब्रह्मेतिविज्ञानंयोगोनेंद्रियधारणाम् ॥ विनाभवतिकामादिप्रमादाभासएववा ७२१ अप्रमत्तःपुमान्योगीजगदुत्पत्तिनाशने ॥ समर्थोभवतिश्रीमानीश्वरोत्रयथैवहि ७२२ योगमेकंविहायायमानंदात्मामहेश्वरः ॥ नैववाचानमनसाप्राप्तुंशक्योनचक्षुषा ७२३ आत्मरूपमिदंश्रद्धावित्तादेवोपलभ्यते ॥ आनंदात्मास्वयंज्योतिरस्तीत्येतत्समीरणम् ॥ गुरुशास्त्रादिविश्वासात्तस्मिन्श्रद्धेयमीरिता ७२४ कालत्रयात्मकंयत्तुयच्चकालत्रयात्परम् ॥ सदसद्वस्तुतत्सर्वंधियावाचावगम्यते ७२५

चित्तवृत्त्युदयलक्ष्यस्यप्रमादस्यआभासेदंपदुदयेपिसतिनभवतीत्यर्थः ७२१ तस्यपरमैश्वर्यहेतुतांसोपाधिकब्रह्मभावद्वारिकामाह अप्रमत्तइति । यथानित्यसिद्धईश्वरोजगदुत्पत्त्यादौशक्तःतथायमपिभवतीत्यर्थः ७२२ नैवेत्यादेरेकादश्याअर्थमाह योगमितिचतुर्भिः । अयमात्माउक्तंयोगंविनानलभ्यः वागाद्यगोचरत्वादित्यर्थः ७२३ उत्तरार्द्धार्थंस्फुटयति आत्मेत्यादिना । इदमात्मनोरूपंश्रद्धालक्षणाद्वित्ताद्धनादेवहेतोर्लभ्यं श्रद्धायाःस्वरूपंतुनास्तिकविकल्पान्परिहृत्यसदुपदेशविश्वासेनानंदात्मास्तित्वांगीकरणमित्यर्थः ७२४ इतश्चान्योहेतुरात्मसाक्षात्कारेनास्तीत्याहकालेतिद्वाभ्यां । यत्सदसत्स्थूलंसूक्ष्मंवस्तुकालत्रयावच्छिन्नत्वेनवागादिगोचरतयाप्रसिद्धंयच्चकालानवच्छिन्नलक्षणानित्यतयाचलोकेप्रसिद्धंतत्सर्वमस्तिमायाशबललक्षणंयत्सत्तन्मयं यच्चालौकिकंशुद्धंतदस्तिसन्मात्रमित्येवंब्रुवतआस्तिकस्यमतादन्यत्रमतेस्वीकृतेसतितदात्मतत्त्वंकथमुपलभ्यमितिद्वयोरर्थः ७२५

द्वादशीमुपादत्ते सदसत्त्वेति । यद्यप्ययमात्मा सत्त्वासत्त्वलक्षणधर्माभ्यांविमुक्तत्वात्सदसत्त्वयोर्मध्येभवति सत्त्वलक्षणधर्मराहित्यात्सत्पदेनाभिधातुमशक्यःसर्वव्यवहारनिर्वाहकत्वाच्चासत्पदप्र
योगानर्हइतियावत् तथापितद्दर्शनेऽयमेवक्रमः अयंकः प्रथमंविश्वकारणलक्षणसद्रूपेणद्रष्टव्यः पश्चात्तत्त्वभावपदोक्तशुद्धरूपेण यतउभयोरनयोरस्तित्वतत्त्वभावयोः सोपाधिकनिरुपाधिकयोर्मध्ये
पूर्वमस्तीत्येवोपलब्धस्यात्मनः पश्चात्प्रत्यस्तमितसर्वोपाधिरूपआत्मनस्तत्त्वभावोविदिताविदिताभ्यामन्योऽद्वयस्वभावोत्वस्थूलमनण्वह्रस्वमित्यादिश्रुतिनिर्दिष्टः प्रसीदत्यभिमुखीभवतीत्यर्थः
७२७ उक्तक्रमेहेतुंस्फुटयन्विशिष्टरूपेणयादृष्टासत्तासैवशुद्धरूपेणस्थितासतीतत्त्वभावपदेनोक्तेत्याह आनंदेति । यतआनंदरूपत्वेननिरतिशयप्रेमास्पदस्यात्मनएवास्तित्वंभवतिनास्तितातुने
वास्तिततःकेवलास्तित्वमेवतत्त्वभावइत्युक्तमित्यर्थः ७२८ आत्मनोऽस्तितामेवस्फुटयति नास्तितेति । आत्मनोनास्तित्वस्यापिसाधकत्वान्नास्तित्वंवक्तुमशक्यंयतस्तद्दृश्यजातंद्रष्टुःप्रसादा
त्सिध्यत्यतआत्मनोऽस्तित्वमादायैवभाति एवंसर्वसत्ताप्रदत्वात्सत्त्वमयःसदेकरूपआत्मागौणेनआत्मनासद्रूपेणकथंसिध्येतकिंतुसएवमुख्यसद्रूपइत्यर्थः ७२९ योहियद्रूपस्तद्रूपेणैवज्ञातःसप्रसी

अवाङ्मनसगम्यंयत्सर्वतोपिविलक्षणम् ॥ अस्तीतिब्रुवतोन्यत्रकथंतदुपलभ्यते ७२६ सदसत्त्वविनिर्मुक्तोमध्येयंसदसत्त्वयोः ॥ अस्तीत्येवोपलब्धव्यस्तत्त्व
भावेनचोभयोः ॥ अस्तीत्येवोपलब्धस्यतत्त्वभावःप्रसीदति ७२७ आनंदात्मस्वरूपस्यस्वप्रियस्यास्तितायतः ॥ तत्त्वभावस्ततोस्तित्वमात्मनोनास्ति
नास्तिता ७२८ नास्तितताभासकोनास्तीत्येवंवक्तुंनशक्यते ॥ अस्तित्वाद्भातिनिखिलंद्रष्टुस्तद्धिप्रसिद्ध्यति ॥ कथंसत्त्वमयोगौणेनप्रसिद्ध्येतचात्मना ७२९
यथाराजात्रराजेतिविज्ञातःसन्प्रसीदति ॥ सुखदस्तद्वदात्मायंतत्त्वज्ञानात्प्रसीदति ७३० भृत्यादिरूपतोयद्वदतत्त्वज्ञानतोनृपः ॥ विज्ञातोज्ञातुरात्मायंन
प्रसीदतिकर्हिचित ॥ प्रत्युतप्राप्तकोपःसन्ननर्थंसंप्रयच्छति ७३१ एवमात्माप्यतत्त्वेनविज्ञातोऽनर्थदोभवेत् ॥ अस्तिताचेदात्मनोनविज्ञातानर्थदाभवेत् ॥ त
त्त्वभावेनतस्मात्सज्ञातव्यःसुखमिच्छता ७३२ अस्तितायाश्चनस्तत्त्वभावउक्तोमनीषिभिः ॥ तत्त्वभावेनतेनायमात्मादृष्टःप्रसीदति ७३३ यदासर्वेप्रमुच्यं
तेकामायेस्यहृदिस्थिताः ॥ अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुते ७३४ तत्त्वभावेनदृष्टःसन्नात्मकामंहृदिस्थितम् ॥ इहामुत्रसुखेनैकंनाशयत्यात्मसौष्ठवात् ३५
रूपयौवनसंपन्नाकामिनीस्वीयसौष्ठवात् ॥ कामुकस्ययथैवान्यवधूरागंविनाशयेत् ७३६ सद्यस्तप्तंयथैवैतत्सुगंधंगोघृतंनृणाम् ॥ हृदिश्रितंतैलकामंनाशय
त्यात्मसौष्ठवात् ७३७ आनंदात्मास्वयंज्योतिःप्रतीतस्तुतथैवसः ॥ रागंविनाशयेत्सद्योनृणांवैषयिकेसुखे ७३८

दतीत्येतद्दृष्टांतेनस्फुटयति यथेति । यथाराजाराजत्वेनज्ञातःप्रसीदतिसुखदश्चभवतितथात्मापिकेवलास्तित्वरूपेणेत्यर्थः ७३० भृत्यादीति । यथाचातत्त्वज्ञानतोऽन्यामोहाद्भृत्यमंत्र्यादिरू
पेणविज्ञातोनृपोज्ञातुरात्माआत्मवत्प्रेमास्पदभूतोपिनप्रसीदतिप्रत्युतकोपेनानर्थंकरोतीत्यर्थः ७३१ एवमिति । प्रथमदलंस्पष्टम् । तत्त्वंत्वात्मनोस्तितैवेत्याह अस्तितेति । फलितमाह त
त्त्वेति । तत्त्वभावःपरमार्थभूतमस्तित्वम् ७३२ तत्रपूर्वोक्तःक्रमोनविस्मर्तव्यइत्याह अस्तितायाइति । यतोस्तितादृष्टेरनंतरंतत्त्वभावोपदेशोनोऽस्मानधिकारिणःप्रतितेनतथैवावधारणंक
र्तव्यमित्यर्थः ७३३ तत्त्वभावेनदर्शनात्किंभवतीत्याकांक्षायांत्रयोदशींपठति यदेति ७३४ अस्याअर्थंदर्शयति तत्त्वेत्येकादशभिः । अयमात्मातत्त्वभावेनदृष्टःसन्नैहिकादिविषयसुखराग
मनेकविधंस्वकीयसौंदर्यान्नाशयेदिति ७३५ तत्रदृष्टांतद्वयमाह रूपेति । प्रथमदृष्टांतःस्फुटः । यथाचनवनीतंयथारुचिभक्षिततैलभक्षणेवांछांवारयेदितिद्वितीयदृष्टांतस्वरूपम् ७३६ । ७३७
दार्ष्टांतिकेयोजयति आनंदात्मेति । प्रतीतोभातः इतरत्स्पष्टम् ७३८

ततोमर्त्यत्वापगमेनामरत्वमाविर्भवतीतिसोपपत्तिकमाह मर्त्यस्येत्यादिना । मर्त्यपदप्रवृत्तिनिमित्तभूतंमरणमिदमेवयद्विषयसुखेप्रसंजनंकामपदोक्तंतस्यापगमेत्वयंनमर्त्यः किंत्वमरएवेत्यर्थः ७३९ एतदेवस्फुटयति देहेति । प्रसिद्धंमरणमपिदेहांतरकामनैव निष्कामस्योत्क्रांत्यनुपपत्तेरितिभावः ७४० कामेष्विति । सर्वकामव्यपगमेसत्यमरःसन्नयंपुमान्सर्वदुःखवर्जितंजीवनंजीवतीत्येवंव्यवहारंकथंनप्राप्नुयादित्यर्थः ७४१ तत्रहेतुतयाब्रह्मभावाप्तिमाह सर्वेति । शुद्धात्मनिआनंदरूपेप्रतिभातिभासमानेसत्ययंनापुरुषःकथंब्रह्मरूपोनस्यात् किंतुस्यादेवेत्यर्थः ७४२ तत्रहेतुतयाआत्मभूतस्यब्रह्मणोज्ञानंकलभ्यतामाह ब्रह्मेतित्रिभिः । आनंदात्मलक्षणस्यस्वरूपस्ययद्विबोधनंविज्ञानमेतद्रूपैवब्रह्मप्राप्तिःश्रुतिप्रसिद्धा यदिब्रह्मआत्मभिन्नंस्यात्तदाऽद्वितीयत्वंजह्यादित्याद्युपपत्तिविरोधेनब्रह्मात्मनोर्भेदःकथंस्यात् ७४३ एतदेवस्फुटयति आनंदात्मानमिति । यदिआनंदादिलक्षणकमेतमात्मानंप्राप्तवान्ज्ञातवान्भवतितदाद्वयंब्रह्मनप्राप्तमितिकेनवक्तुंशक्यमित्यर्थः

मर्त्यस्यमरणंनामकामोवैषयिकेसुखे ॥ तस्मिन्नपगतेजीवन्नमरःसप्रजायते ७३९ देहनाशोनविद्वद्भिर्मरणंकीर्त्यतेक्वचित् ॥ किंतुकामाभिधंदैन्यंमरणंसर्वदुःखदम् ७४० कामेष्वपगतेष्वस्मादमरत्वमयंपुमान् ॥ जीवनंचकुतोनेयात्सर्वदुःखविवर्जितम् ४१ सर्वदुःखविनिर्मुक्तआनंदात्मनिकेवले ॥ प्रतिभातिकथंनायंजीवन्ब्रह्मात्मकोनहि ७४२ ब्रह्मप्राप्तिरियंनामजीवतोयद्विबोधनम् ॥ आनंदात्मस्वरूपस्यस्वात्मभेदविवर्जनात् ७४३ आनंदात्मानमेतंचेत्स्वप्रभंसर्वगंमहत् ॥ भावाभावविनिर्मुक्तंसर्वभेदविवर्जितम् ॥ देहेस्मिन्प्राप्तवान्केननाप्तंब्रह्माद्वयंपरम् ॥ ७४४ ततःकामविनिर्मोकेदुःखशून्योऽमृतःपुमान् ॥ ब्रह्मानंदात्मरूपंतद्देहेस्मिन्नवगच्छति ७४५ अहंब्रह्मेतिविज्ञानेसंशयाग्रंथिसन्निभाः ॥ विपर्ययाश्चजायंतेप्रायःसर्वशरीरिणाम् ॥ असत्यास्ततएवाहंब्रह्मेतिज्ञानवान्भवेत् ७४६ असद्ब्रह्मप्रतीतेश्चसच्चेत्किंनप्रतीयते ॥ सर्वधर्मविनिर्मुक्तंकथंब्रह्मभवामितत् ७४७ इत्यादिरूपिणोनॄणांमुग्धानांसंशयाहृदि ॥ विपर्ययाश्चजायंतेपंडितंमन्यसेविनाम् ७४८ हृदयस्ययदैवैतेग्रंथयःसंशयादिकाः ॥ छिद्यंतेयस्यतेनैतत्प्राप्यंब्रह्मामृतात्मना ॥ एतावदेवविज्ञेयमप्येतद्धृदयेनिजे ७४९ हृदयस्यास्यनाड्यःस्युःशतमेकोत्तरंशतम् ॥ तासामेकाचमूर्द्धानंविभिद्यास्तेबहिःसदा ॥ द्वारभूतायया गच्छेदनिशंवामनःसदा ७५० अन्यास्तुशतसंख्याताबहिर्निर्गमनेसदा ॥ भवंतिगच्छतोनित्यंत्वग्रूपेणसमावपुः ७५१

७४४ फलितमाह ततइति । विनिर्मोकेबाधे ७४५ चतुर्दशींव्याचष्टे अहमिति । ब्रह्मात्मविज्ञानेसतिसर्वेसंशयाविपर्ययाश्चअसत्याबाधिताजायंतेभवंतिततोब्रह्मात्मज्ञानंसंपाद्यं कीदृशाः संशयादयः हृदयपदोक्तमनोरूपजालस्यग्रंथिनिभाः ७४६ संशयादीन्कुतर्करूपान्दर्शयति असदिति । ब्रह्मनास्त्येवअनुपलभ्यमानत्वात् सच्चेदुपलभ्येत किंचममकर्तृत्वादिमतोब्रह्मभावोनसंभवीत्यादिकुतर्करूपाःसंशयादयःपंडितंमन्यानामतत्त्वविदांसंगेनभवंतीतिद्वयोर्योजना ७४७ । ७४८ हृदयस्येति । यस्याचार्यानुगृहीतस्ययस्मिन्क्षणेएतेसंशयादयोविघटंतेतदेवतेनब्रह्माद्वयंप्राप्तंभवति बोधार्कोदयस्यतमोनिवृत्तेश्चसमानकालतायाःप्रसिद्धत्वात् एतावदेवयतस्वंज्ञात्वाचार्योपदेशेनविज्ञेयमित्यर्थः ७४९ येनतूक्तविधयात्मतत्त्वंनविज्ञातंतस्यद्वयीगतिरुक्ताग्निविद्यादिनाब्रह्मलोकाप्तिरितरलोकाप्तिर्वातदुपयोगिद्वारप्रदर्शिकायाःपंचदश्याअर्थमाह हृदयस्येति । हृदयकंदादुद्गताएकाधिकशतसंख्याकाःप्रधाननाड्यःसंतितास्वेकासुषुम्नाख्यामूर्द्धानंविभिद्यसूर्यमंडलद्वाराब्रह्मलोकपर्यंतंसंततास्मतएवब्रह्मलोकद्वारभूतायया द्वारावामनउपाधिपरिच्छिन्नोजीवोऽनिशमापेक्षिकंनित्यंब्रह्मलोकंगच्छेदित्यर्थः ७५० अन्यास्तुलोकांतरगमनद्वारभूताइत्याह अन्याइति । अन्यास्तु—

—वपुःशरीरांतरंगच्छतोजीवस्यबहिर्गमनेउपयोगिन्योभवंति कीदृश्यः स्वग्रूपेणासाम्यादस्पष्टरूपाइत्यर्थः ७५१ ताभिर्बहिर्गतोयंपरिच्छेदाभिमानेनवामनोजीवोममयमस्यवशंयात्येवेत्याह अंगुष्ठेति ७५२ अथसर्वग्रंथप्रतिपाद्यंप्रदर्शयंत्याःषोडश्याअर्थमाह हृदयेइतिपङ्क्तिः। अयमंगुष्ठमात्रःपुरुषःसूक्ष्मदेहाविद्याभ्यांबाह्यांतरकंचुकभूताभ्यामावृतोहृदयदेशेसंनिहितोवर्ततेइत्यर्थः ७५३ तमिति। तमेतंविवेकयुक्तेनमनसैवाधिकारीसूक्ष्मदेहाद्भाह्यंकुर्यात् कीदृशात्सूक्ष्मदेहात् दुःखदात् चित्तमेवनिग्रहःशृंखलास्थानीयंयत्रतथाभूतात् यथाइषीकाख्यंमध्यतृणंमुंजाख्यग्रूपाद्बाह्यतृणात्सावधानेनमनसाकरेणचशिशुर्बाह्यंकुरुतेतथेतिद्वयोर्योजना ७५४। ७५५ पृथक्कृतइति। एवमुपाधितःपृथक्कृतोयंवामनःअवामनःपूर्णःसंपद्यतेइति ७५६ सचपूर्ववन्ममृत्युरूपस्यगोचरेनवर्ततेइत्याह अवामनइति ७५७ एवमवामनःपूर्णःपुरुषएवात्मतयात्वयाविज्ञेयइत्याह अवामनःपुमानिति। स्वप्रभःशुक्रपदार्थः ७५८ षोडशींविवृणोति इत्युक्तेतिपंचभिः। स्पष्टंद्वयं ७५९। ७६० लब्ध्वाचे

अंगुष्ठमात्रःपुरुषःसर्वदामद्वशेपुमान् ॥ निर्गतःशतसंख्याभिरायात्येवनसंशयः ७५२ हृदयेसन्निविष्टोयंपुरुषःसर्वदेहिनाम् ॥ सूक्ष्मदेहधरोनित्यमविद्याकंचुकावृतः ७५३ तंसूक्ष्मदेहाद्दुःखौघकारणाच्चित्तनिग्रहात् ॥ विवेकेनतृणंबाह्यंमनसाचत्वचोयथा ॥ इषीकाख्यंहिमुंजाख्यात्कुरुतेकरतःशिशुः ७५४ ब्रह्मचर्यादिसंपन्नोधैर्ययुक्तोविवेकवान् ॥ मनसैवैनमात्मानंकुर्यादस्माज्जडात्पृथक् ७५५ पृथक्कृतोवामनोयंजडजातादशेषतः ॥ अवामनोभवेत्सद्योविश्वरूपधरःपुमान् ७५६ अवामनोनमेपाशैर्बध्यतेकर्हिचित्क्वचित् ॥ हृत्स्थितोवामनोयद्वन्नित्यंदेहपरिक्षये ७५७ अवामनःपुमान्योयंस्वप्रभोमूर्तिवर्जितः ॥ सएवात्मेतिविज्ञेयोनचिकेतःसदात्वया ६५८ इत्युक्त्वाभगवान्धर्मराजस्तूष्णींबभूवसः ॥ नचिकेताश्चसंतुष्टःकृतकृत्योभवत्तदा ७५९ मृत्युप्रोक्तामिमांविद्यामात्मनोलब्धवान्पुरा ॥ कृत्स्नंयोगविधिंतद्वन्नचिकेताःकुमारकः ७६० लब्ध्वाचदेहएतस्मिन्जीवन्ब्रह्माद्वयंपरम् ॥ आनंदात्मस्वरूपंतत्स्वप्रभंप्राप्तवानपि ७६१ अविद्यालेशरहितोदुःखशोकविवर्जितः ॥ मरणेनविनिर्मुक्तोमोक्षमेवगतोमुनिः ७६२ नचिकेतायथायादृगात्मविज्ञानतोभवत् ॥ अन्योपिचतथातादृगात्मविज्ञानतोभवेत् ७६३ आख्यानमुक्तवानेतत्कठस्त्रैवर्णिकान्प्रति ॥ अपौरुषेयवचसायदिदंतेमयेरितम् ७६४ ब्रह्मविज्ञानमेतद्धिदुर्लभंसर्वदेहिभिः ॥ एतद्यस्मात्पुराप्राप्तंदेवेभ्योमानवैरिह ॥ आश्चर्यात्माब्रह्मबोधवक्ताश्रोताचदुर्लभः ७६५ अत्रवक्तुस्तथाश्रोतुर्द्वयोरन्यतरस्यवा ॥ विक्षेपोजायतेप्रायोब्रह्मविद्याप्रबोधने ७६६

ति। आत्मविद्यांसयोगांलब्ध्वाचजीवन्नेवब्रह्मप्राप्तवान् कीदृशं अद्वयत्वादानंदरूपमात्मरूपंच अतएवस्वप्रकाशं ७६१ ततश्चविदेहमोक्षंगतइत्याह अविद्येति। लेशःप्रारब्धफलकर्मभिः स्वर्निर्वाहायसंरक्षितोविक्षेपशक्तिभागः ७६२ नचिकेताइति। यथानचिकेताःस्वात्मज्ञानाद्यादृक्द्विविधंमोक्षंगतोऽभवत्तथान्योप्यात्मवित्तादृक्स्यादित्यर्थः ७६३ उपसंहरति आख्यानमिति। यदाख्यानंकठस्तपसालब्धेनवेदवाक्येनाधिकारिणःप्रत्युक्तवांस्तदिदंतुभ्यमुक्तमिति ७६४ सहनाविवतिशांतिमंत्रस्यतात्पर्यंदर्शयति ब्रह्मेत्यादिना। एतज्ज्ञानंदुर्लभं देवानुग्रहेणैवपूर्वैर्लब्धत्वात् अतएवास्यब्रह्मबोधस्यवक्ताश्रोताचाश्चर्यरूपतयादुर्लभइत्युक्तमित्यर्थः ७६५ अत्रेति। अत्रविद्योपदेशेगुरुशिष्ययोर्द्वयोरेकस्यवाविक्षेपःफलप्रतिरोधीविघ्नोदुष्कृतकुपितैर्देवैःकृतःप्रायोदृश्यतेतदेतद्वतुर्थाध्यायेदध्यङ्ङिन्द्रसंवादेउक्तमित्यर्थः ७६६

७६७ कुशलइति । हेतुत्वंफलरूपेण तथाचयस्यशिष्यस्यगुरुःकुशलःसंप्रदायवित्तस्यसविशेषोदेवजोनजायते कीदृशोविशेषः कौशलस्यकुशलोस्यलब्धेतिश्रुत्युक्तस्याभावप्रयोजकइत्यर्थः ७६८
विशेषमभिनयति पूर्वेति । अस्यशिष्यस्य ७६९. गुरुसेवेति । कृतपदंभावक्तांतं तथाचगुरुसेवाकरणेसतिज्ञानलाभोभवतिदेवसेवाकरणेतुज्ञानस्यफलेतन्निष्ठारूपकौशलात्मकंभवत्यतोद्वयोर्गुरुदेव
योःसेवारूपेणैकेनप्रधानेनतंत्रेणसाधनेनकुशलभावप्रयोजिकांविद्यांनिर्विघ्नःशिष्योलभतेइत्यर्थः‘तंत्रंशास्त्रेकरणेच’इतिहेमः ७७० मोक्षमिति । स्वप्रकाशत्वंविधानंप्रकारोयस्यसतथातंस्वप्रकाशात्मरू
पमितियावत् एवंविधंमोक्षरूपंफलमुक्तविधयासाकल्यप्रयोजकदेवानुग्रहाधीनंमन्येऽतोदेवप्रीत्यैशांतिमंत्रःपठनीयइतिभावः इत्येवंकठोनाममुनिरधिकारिणःप्रत्युक्तवानित्यर्थः ‘ विधानंप्रकारे ’

दैवैःकृतस्तदेतत्तेमयाप्रागेवकीर्तितम् ॥ शंकेणसहसंवादेदध्यङ्ङाथर्वणस्यहि ७६७ कुशलोत्रगुरुस्तस्यविक्षेपोदेवजोनहि ॥ शिष्यस्यजायतेसोत्रकौशलाभा
वहेतुतः ७६८ पूर्वपापसमायोगाद्विपरीतास्यधीर्भवेत् ॥ विपरीतधियासोयंगुरुद्वेषादिकंपुमान् ॥ कुर्यात्तेनैवनरकान्गच्छेच्छिष्योबहूनपि ७६९ गुरुसेवाकृ
तेज्ञानंदेवसेवाकृतेफलम् ॥ द्वयोःसेवैकतंत्रेणततोविघ्नैर्विवर्जितः ॥ गुरोर्विद्यामवाप्नोतिशिष्यःकुशलभावदाम् ७७० मोक्षंदेवकृतंमन्येस्वप्रकाशविधानकम् ॥
कठएवमुवाचादौशिष्यान्विद्यार्थिनःप्रति ७७१ तित्तिरिश्चमहात्मायोब्रह्मविद्यामनेकधा ॥ उवाचशिष्यसंघेभ्योनानाख्यानसमन्विताम् ७७२ इतिश्रीमत्पर
महंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येण शंकरानंदभगवता विरचितउपनिषद्रत्नआत्मपुराणे काठकोपनिषत्सारार्थप्रकाशे यमनाचिकेतःसंवादोनाम न
वमोऽध्यायः समाप्तः ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इतिहेमः ७७१ यद्वाग्रंथितत्वेनसमानशांतिमंत्रकर्तृत्वेनचतैत्तिरीयजिज्ञासामुत्थापयति तित्तिरिश्चेवमुवाचेत्यनुषंगः यस्तित्तिरिरनेकधाविद्यामुवाचेति ७७२ ॥ कारुण्यैकरणोयस्यसमीहितसमर्थने ॥
यंभूयानंमयवदयोभीनोऽवतुनंस्वतः ॥ श्रीनृणामपिचनृणांसदेवःशरणंपरम् ॥ १ ॥ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृही
तस्यकृतावात्मपुराणटीकायां सत्प्रसन्नाख्यायां नवमोऽध्यायः समाप्तः ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ सत्यानंदंगुहागूढंनिभृतानिललक्षणम् ॥ सेवेदेवंविधेर्वंद्यंदशमेशमितापरम् ॥ १ ॥ अस्यार्थः । सत्येपितुर्वचनरूपे ' सकृदेवप्रपन्नायतवास्मीतिच याचते । अभयंसर्वभूतेभ्योददामीतिव्रतंमम ' इत्यादिरामायणेस्ववचनरूपेवाआनंदोयस्यसतथातं गुहःसखाआगूढआलिंगितोयेनसतथातं निभृतःसेवापरआनिलोहनुमान्लक्षणोलक्ष्मण श्चयस्यसतथातं ' लक्ष्मणोलक्षणोपिच ' इतिद्विरूपकोशः विधेर्ब्रह्मणोवंद्यं कसति दशमेदाननांरावणवदनानांशमेविदारणेकृते ' दोऽशुद्धोदश्चवदने ' इतिविश्वः अतएवशमिनामृषी णांतापस्यअसुरकृतदुःखस्यरंवन्हिभूतंविध्वंसकमितियावत् यद्वाक्षर्पितअपरातिआदचेहरतीतियवत्सतथातं एवंविधंश्रीरामंसेवेइति । शंभुपक्षे । सत्याःपार्वत्याआनंदकरं गुहेनषडाननेनआ गूढंआलिंगितं निभृतानिवशीकृतानिअनिलानांपंचप्राणानांलक्षणानिस्वरूपाणियेनसतथा योगिनमितियावत् दशमेदशमद्वारेवंद्यंजपासकैर्गुरुरूपेणाध्येयंविधेःविहितत्वात् शमितायामुपशम निष्ठायांपरंतत्परमित्यर्थः । निर्गुणपक्षे । सत्यानंदरूपंदेवंस्वप्रकाशं पंचकोशगुहागतं निभृतौमर्यादयाचलंतावनिलौप्राणापानौउपलक्षणभूतौयस्य ' कोह्येवान्यात्'इत्यादिश्रुतेः सतथातं विधेर्वाक्य स्यवंद्यंवाङ्मनसातीतत्वात् शमितमपरंद्वैतंयेनसतथास्वाकारवृत्त्यभिव्यक्तमितियावत् तंपरमात्मानंदशमाध्याययेसेवेअनुसंदधेइत्यर्थः । अथशिष्यस्योक्तानुवादेनप्रश्नमभिनयति श्रुत्वैव

श्रीगणेशायनमः ॥ श्रुत्वैवमद्भुताख्यानंसशिष्योनचिकेतसः ॥ अपृच्छत्पुनरेवैनंस्वगुरुंब्रह्मबोधकम् १ भवताकथितंब्रह्मज्ञानंनानाविधंगुरो ॥ ऐतरेयोमहात्मा ज्ञस्तथाकौषीतकिर्मुनिः २ याज्ञवल्क्यगुरुस्तद्वदादित्योभगवानयम् ॥ श्वेताश्वतरनामाचतथैवचकठोमुनिः ३ एतेजानंतियद्ब्रह्मात्मज्ञानंमहाधियः ॥ तत्त्व याकथितंसम्यङ्ज्ञानाख्यानसमन्वितम् ४ प्रजानामृषिभिःसार्द्धंसंवादोब्रह्मवेदने ॥ प्रतर्दनस्यशक्रेणविप्रस्याजातशत्रुणा ५ अश्विनोर्गुह्यविज्ञानमृषिणाकीर्तितं चयत् ॥ दध्यङ्ङाथर्वणस्यापितत्रशक्रोपदेशनम् ६ अश्विनोःशिष्यतातद्वत्तस्यब्रह्मात्मवेदिनः ॥ याज्ञवल्क्यस्यसंवादोजल्पाख्योमुनिपुंगवैः ७ जनकेनचमै त्रेय्याशिष्याभ्यांवादशब्दितः ॥ मुनीनामपिसंवादःकारणेब्रह्मरूपिणि ८ इदानींकथितस्तद्वन्मृत्योश्चनचिकेतसः ॥ संवादस्तत्रकथितंविघ्नराशिप्रशांतये ९ पठनीयोत्रशिष्येणसहनावितिमंत्रकः ॥ एवंकठःपुराप्राहतित्तिरिश्चमुनीश्वरः ॥ ब्रह्मविद्यांवदन्धीमान्स्वशिष्यान्प्रतिसप्तधा १० मुनिभिःकथितातत्रब्रह्मविद्याम याश्रुता ॥ तित्तिरिःकीदृशींतांतुस्वशिष्येभ्यःसमुक्तवान् ११ श्रोतुमिच्छाम्यहंत्वत्तोगुरोमेकृपयावद ॥ अत्रचित्रंसमाख्यानमस्तीतिमतिरस्तिमे १२

मितित्रयोदशभिः । तत्रचतुष्टयंनिगदव्याख्यातम् १ । २ । ३ । ४ आख्यानानिप्रदर्शयति प्रजानामितिचतुर्भिः । विप्रस्यबालाकेः ५ चतुर्थपंचमयोरुक्तंदर्शयति अश्विनोरितिद्वाभ्यां । तद्वदित्यंतंचतुर्थार्थउक्तः तस्यप्रसिद्धस्ययाज्ञवल्क्यस्य जल्पोविजिगीषुवाक्यप्रबंधइविद्वषोरर्थः ६ । ७ षष्ठाद्यध्यायत्रयार्थमाह जनकेनेति । वादस्तत्त्वनिर्णयार्थोवाक्यप्रबंधस्तद्रूपःसंवा दःषष्ठसप्तमयोरुक्तोब्रह्मरूपकारणविषयकस्त्वष्टमइत्यर्थः ८ नवमोक्तंप्रश्नबीजंदर्शयति इदानीमिति । इदानींपूर्वाध्यायेकथितोयःसंवादस्तत्रेदंभवताकथितं इदंकिं सहनादिकोमंत्रोविघ्नशांतये शिष्येणपठनीयएवंकठउक्तवान् तथातित्तिरिश्चशिष्येभ्योब्रह्मविद्यांवदन्नस्यमंत्रस्यपठनीयतामाहेतिद्वयोःसंबंधः सप्तधेत्युत्तरान्वयि ९ । १० मुनिभिरिति । तत्रातीतग्रंथेसप्तधावर्तमानैर्मु निभिरैतरेयकौषीतक्यादित्यदध्यङ्ङाथर्वणयाज्ञवल्क्यश्वेताश्वतरकठसंज्ञैःशाखाप्रवर्तकैरुक्तांविद्यांश्रुत्वापितित्तिरिप्रोक्तांश्रोतुमिच्छामीत्यर्थः ११ श्रोतुमिति । अत्रतित्तिरिप्रोक्ते मतिःसंभावना युक्तमित्यंतंक्रियाविशेषणं सतित्तिरिः स्फुटमभ्यत् १२

१३ एवंपृष्टस्यगुरोःप्रतिज्ञामवतारयति इतिशिष्येति । आरण्यकेअरण्येपठनीयेब्राह्मणभागे कर्णोति । श्रोत्रमनसोरनुकूलाम् १४ तत्प्रतिज्ञामभिनयति शृण्विति १५ तित्तिरिपदस्य मुनिगणपरतांदर्शयितुमितिहासमाह यदेनमितिदशभिः । एवंहिविष्णुपुराणादावुपाख्यायते सुमेरौऋषीणांसमाजआसीत्तत्राऽनागमनेब्रह्महत्याप्रसक्तेऋषिभिरुपन्यस्तत्वादथतत्समाजाप्राप्तिप्रयुक्तांहत्यामपाकर्तुंशिष्यानादिशन्वैशंपायनोगुरुर्याज्ञवल्क्योक्तिमहमेवव्रतंकरिष्यामिकिमेतैरक्षमैरित्याकारांश्रुत्वाचुकोपेतिवृत्तंपदाशब्दार्थः एनंयाज्ञवल्क्यम् १६ अष्टांगेति । करणीकर्मगजवत्पीतस्योद्धरणंतद्रीत्यासयाज्ञवल्क्योऽधीतमत्यजद्गुरूपदेशात् १७ भूमाविनि । तानियजूंषियजुःसंज्ञामंत्रायाज्ञवल्क्येनत्यक्ताअभिमानिदेवरूपेणसूर्यवद्भास्वरमूर्त्तयोभूमौसर्वतोविकीर्णाअभवन्नित्यर्थः १८ सर्वतइति । एतद्दृष्ट्वाचकितान्शिष्यान्प्रतिगुरुरित्थमाहेति १९ इत्थंकथमित्याकांक्षायामाह यथेति । भोविप्राएतानियजूंषियतोयथाशास्त्रमधीतान्यतएवभा

नानाख्यानसमायुक्तंस्वशिष्येभ्यःसउक्तवान् ॥ इतिपूर्वंत्वयाख्यातंतत्रकौतूहलंमहत् ॥ श्रोतुमिच्छामितद्ब्रह्मन्यदितेवर्त्ततेकृपा १३ इतिशिष्यवचःश्रुत्वागुरुः स्नेहसमन्वितः ॥ आरण्यकेस्थितांब्रह्मविद्यांतित्तिरिकीर्तिताम् ॥ उक्तवानखिलांकर्णमनस्तापापहारिणीम् १४ शृणुवत्सप्रवक्ष्यामिविद्यांतित्तिरिकीर्तिताम् ॥ याज्ञवल्क्येननिर्मुक्तांतित्तिरिर्यांसमाप्तवान् १५ यदैनमुक्तवान्कोपान्मुंचविद्यांमयेरिताम् ॥ याज्ञवल्क्यगुरुःश्रीमान्वैशंपायननामकः १६ अष्टांगयोगवित्तस्य शिष्योवाजसनेयकः ॥ करणीकर्ममार्गेणविद्यांचच्छर्दसोपिताम् १७ भूमौयजूंषितान्यासन्सूर्यवर्चांसिसर्वतः ॥ मुक्तानियाज्ञवल्क्येनवैशंपायनवाक्यतः १८ सर्वतःस्थितमालोक्यदीप्तंतंयजुषांगणम् ॥ वांतंशिष्येणसंप्राहवैशंपायननामकः ॥ शिष्यानन्यानिदंवाक्यंविस्मयाविष्टचेतसः १९ यथाशास्त्रमधीतानियजूंषि मुनिसत्तमाः ॥ याज्ञवल्क्येनमुनिनासूर्यवर्चांसितान्यतः २० गृह्णीध्वंसहसाविप्रास्त्वरितंब्रह्मणःसभाम् ॥ इतउत्प्लुत्यगच्छंतिनैतान्यस्मद्धनानिभोः २१ वांतानीतिविचारंमाकुरुतब्राह्मणोत्तमाः ॥ शरीरांतरतोवांतंभक्ष्यंभवतिदेहिनाम् २२ ततस्तित्तिरिरूपाणिकृत्वाझटितियोगतः ॥ दिविभूमौप्रसर्पंतियृह्णंतुमुनिसत्तमाः २३ एवमुक्तेमुनिगणास्तेनतित्तिरिरूपिणः ॥ यजूंषिजगृहुःशीघ्रंसूर्याभानिसमंततः २४ यथातित्तिरयोलोकेपतंगान्सर्वतःस्थितान् ॥ भक्षयंतिक्षुधाक्रांताभूमौवानभसिस्थितान् ॥ एवंमुनिगणःसोयंतित्तिरिःपरिकीर्त्तितः २५ वांत्याचभक्षणेनापिकृष्णान्यासन्यजूंष्यपि ॥ ब्रह्मविद्याचतेष्वेषाकथितारण्यकेसदा २६ ब्रह्मवित्परमाप्नोतीत्येतत्सूत्रमुदाहृतम् ॥ अत्रैवसकलायस्माद्ब्रह्मविद्याप्रतिष्ठिता २७

स्वराणितानीमानियथाइतःपृथिव्याउत्प्लुत्यब्रह्मसभांनगच्छेयुस्तथायूयंगृह्णीध्वमितिद्वयोःसंबंधः २० २१ वांतानीति । अत्रवांतत्वमालोच्यविलंबोनकार्योदेहांतरेणवांतभक्षणेदोषाभावादित्यर्थः २२ तच्चदेहांतरंतित्तिरिपक्षिरूपंभवद्भिःकार्यंप्रकृतोपयोगादित्याह ततइति । योगतोयोगबलेन प्रसर्पंतियजूंषीतिशेषः २३ एवमिति । तेनगुरुणाएवमुक्तेसति १४ यथेति । फलितमाह । एवंमुनिगणइति २५ वांत्येति । एवंवांत्यादिदोषेणतानियजूंषिकृष्णानीतिप्रसिद्धानि तेष्वारण्यकभागेप्रोक्ताब्रह्मविद्याएषाउच्यतेइति २६ आनंदवल्लींव्याख्यातुमुपक्रमते ब्रह्मेति । तत्राप्नोतीत्यंतवाक्यंसूत्रमित्युक्तंसकलार्थस्यसूचनादित्यर्थः २७

सर्वार्थसूचकतांस्फुटयितुमनुबंधचतुष्टयमनेनवाक्येनसूचितंतद्दर्शयति ब्रह्मेतिचतुर्भिः । अत्रसूत्रेब्रह्मपदेनास्यशास्त्रस्यविषयएतच्छास्त्रजप्रमानिवर्त्याज्ञानगोचरउक्तः यतोनेनपदेनसामान्य तोबोधितेपिब्रह्मण्यात्मत्वानात्मत्वजडत्वचेतनत्वादिसंशयानामनिराकरणेनोत्तरवाक्येपुजिज्ञासोत्थाप्यतेइत्यर्थः २८ तस्येति । तस्यब्रह्मणोयद्विज्ञानंविदधातुनोक्तंतदाकारवृत्तिरूपंतन्मध्ये भवंगौणमितियावत्एतादृशंप्रयोजनं परमंमुख्यंप्रयोजनंतुसकलानर्थमूलाज्ञानाध्वंसात्मकपरब्रह्मप्राप्तिरूपमुक्तमित्यर्थः २९ तदर्थीति । तस्यउक्तद्विविधप्रयोजनस्यअर्थीप्राप्तिकामोधिकारी तुएषएवबोध्यः एषकः योब्रह्मविज्ञानतोब्रह्मप्राप्नोतीतिफलसंबंधयोग्यतयानिर्दिष्टइतियोजना नहिमोक्षरूपफलश्रवणजांमुमुक्षानित्यानित्यविवेकादिमंतरानिष्पद्यतेइतिसाधनचतुष्टयसंपन्नाधिकारि सिद्धिरितिभावः तस्यशास्त्रस्यसंबंधस्तुयोग्यतावशादनेकविधोबोध्यइत्यर्थः ३० संबंधस्यानेकविधत्वंस्फुटीकरोति अर्थिनेति । अर्थिनाधिकारिणासहशास्त्रस्यबोध्यबोधकभावलक्षणःसंबंधः अधिकारिणोबोध्यत्वाद्बोधंप्रतिप्रापणीयत्वात्शास्त्रस्यबोधकत्वात् अन्यत्रार्थिभिन्नेपुवेदनादिपुवेदनपदोदिततत्त्वज्ञानेब्रह्मणिअज्ञानेचशास्त्रस्यक्रमेणजन्यजनकभावोऽभिव्यंग्यव्यंजकभावोनिवर्त्य निवर्त्तकभावएतेसंबंधाबोध्याइत्यर्थः ३१ नकेवलमिदंवाक्यमनुबंधसूचकतयैवसूत्रमित्युक्तंकिंतूत्तरग्रंथव्याख्येयतयापीत्याह आसमाप्तेरिति । आत्मदर्शकमात्मदर्शनायप्रवृत्तमिदंवाक्यमे

ब्रह्मयत्कथितंसूत्रेतदेवविषयोमतः ॥ आत्मानात्मादिसंदेहायतःसंत्यत्रकोटिशः २८ तस्यविज्ञानमुदितंमध्येयत्स्यात्प्रयोजनम् ॥ परमंचपरप्राप्तिरूपंदुःखौघ घातकम् २९ तदर्थीत्वधिकार्येषयआप्नोतिपरंमहत् ॥ ब्रह्मविज्ञानतस्तस्यसंबंधोनेकधास्मृतः ३० अर्थिनाचापिशास्त्रस्यबोध्यबोधकलक्षणः ॥ अन्यत्रजन्य जनकत्वादिस्तद्वेदनादिपु ३१ आसमाप्तेरिदंसूत्रमेकमेवात्मदर्शकम् ॥ व्याख्येयमत्रविज्ञेयंतित्तिरेर्ब्रह्मवेदने ३२ ब्रह्मेतिकथ्यतेवेदेआनंदात्मामहेश्वरः ॥ लक्ष्य स्तस्यात्रकथितंलक्षणंमंत्रवाक्यतः ॥ सत्यंज्ञानमनंतंचब्रह्मणोलक्षणंत्विदम् ३३ लक्षणत्रयमेतत्स्यादथवैकमिहात्मनः ॥ लोकदृष्ट्यनुसारेणकथ्यतेवेदवादिभिः ३४ सत्यंयथार्थमुदितंयथार्थंनजडंयतः ॥ ज्ञानंचनपरिच्छिन्नंवेदवादिमतेकचित् ३५ ततोनंतमितिप्रोक्तेज्ञानमित्येवलक्ष्यते ॥ ज्ञानमित्युदितेतद्वत्सत्यमित्येवलक्ष्य ते ३६ सत्यंकालत्रयेयत्तुनपर्येतिकदाचन ॥ आनंदात्माचतादृक्स्यात्सर्वदैकस्वरूपभाक् ३७

वासमाप्तेस्तित्तिरिप्रवर्त्तकेब्रह्मवेदनेब्रह्मविद्याप्रकाशकेग्रंथेव्याख्येयंभवतीत्यतःसूत्रमित्युक्तमितिसंबंधः ३२ उक्तवाक्यसंग्रहेणव्याकुर्वतःऋक्संज्ञमंत्रस्यार्थंप्रपंचयति ब्रह्मेतिपञ्चोनपष्टि श्लोकैः । ब्रह्मपदेनोक्तोऽद्वयत्वादानंदरूपस्ततपदार्थोलक्ष्योभवतितस्यलक्षणवाचकानिसत्यज्ञानानंतपदानिमंत्रप्रथमपादेबोध्यानीत्यर्थः ३३ एषांत्रयाणांपदानांप्रत्येकंब्रह्मपदान्वितानांलक्षण त्रयपरत्वंशास्त्रदृष्ट्यावेदविद्भिरुक्तं लोकदृष्ट्यनुसारेणत्वेकलक्षणपरत्वमित्याह लक्षणेति । एतत्एभिःपदैःप्रतिपादितम् ३४ तत्रशास्त्रदृष्ट्यालक्षणत्रयपरत्वंप्रपंचयति सत्यमितिपंचविंशतिश्लो कैः । सत्यपदंतावद्यथार्थस्याबाधितस्यवाचकंतच्चाबाधितंवस्तुतश्चैतन्यमेव जडस्यदृश्यजातस्यदृक्स्वरूपेकल्पितत्वात् एवंसर्वाधिष्ठानभूतस्यचैतन्यस्यपरिच्छिन्नतायादुर्वचत्वादनंतत्वमपिसि द्धमेवेत्यर्थः ३५ तथाचैकैकस्यातिप्रसंगादिहीनार्थकत्वात्पदांतरार्थोपस्थापनक्षमत्वाच्चपरस्परानिरपेक्षंलक्षणत्रयमेवात्रोक्तमित्याह ततइति । ततःसत्यत्वादीनांज्ञानत्वादिनियतत्वात्अनंतपद मात्रप्रयोगेपियज्ज्ञानरूपमनंतंवस्तुतदेवप्रतीयते एवंज्ञानपदोक्तौसत्यपदोक्तमनंतंवस्त्वेवप्रतीयतेइत्यर्थः ३६ सत्यपदेनाबाधितत्वमुखेनानंतज्ञानात्मकब्रह्मप्रतिपादनंस्फुटयति । सत्यंकाल त्रयइति । यत्कालत्रयेपिनपर्येतिनान्यथाभवतितदेवयथार्थंवस्तुसत्यपदेनोदितंतादृशत्वंत्वात्मनएवचिद्रूपेणकूटस्थत्वादित्यर्थः ३७

आत्मभिन्नंतुविकारित्वान्नसत्यपदेनाभिधानयोग्यमित्याह, सर्वमेवेति । विपर्येतिअन्यथाभवति । आत्मातुनविकारीसर्वांतरत्वेनएतद्विनाशेकस्यापिकारणीभावानर्हत्वादित्याह आत्मेति ३८ किंचात्मनाशस्यसाधकाभावाच्चासत्त्वमित्याह आत्मनइति । आत्मनोनाशःकेनचिदज्ञातएववाच्यः केनचिद्विज्ञातस्यसत्ताभिधानेममप्रमातावंध्येतिवद्व्याघातदोषप्रसक्तेरित्यर्थः ३९ किंचा ज्ञःतस्यासत्तायाअपिवक्तुमशक्यत्वात्सत्तावधारणासंभवइत्याह अज्ञातस्यापीति । तस्माज्ज्ञातत्वपक्षस्यैवाङ्गीकारेपीदंविचार्यं किमात्मातस्यज्ञाताअनात्मावा नांत्यस्तस्यजडत्वाल्लोकप्रसिद्धिविरोधाच्चेत्यर्थः ४० आद्येपिकिंविनष्टआत्मानाशंजानात्यविनष्टोवा नाद्यः अक्षमत्वादित्याह विनष्टेनेति । अयमात्मनोविनाशोविनष्टेनज्ञातुंनशक्यइतियोजना । अंत्येतुनाशस्यैवबाधितेत्याह तेनेत्यादिना । तेननाशवर्जितआत्माएनंज्ञातवानित्यंगीकर्त्तव्यंतच्चनसंभवतिज्ञेयस्यैवासत्त्वादित्यर्थः ४१ नन्वसन्नेवाभावआत्मनाज्ञायतेइतिचेच्छतंजीवेत्याह सत्तयेति । सोयमात्मनाशः सत्ताहीनएवगम्यतेविकल्प्यइइत्यंगीकारेशशशृंगादिसाम्यस्यसिद्धत्वादिष्टापत्तिरित्यर्थः अविनाशित्वादेवचात्मनःप्रियतमत्वंततश्चानंदरूपत्वंसिद्धमित्याहात्मेति । यस्मादात्माविनाशरहितोऽतएवप्रियतमस्तेनप्रियतमत्वेनानंदरूपइतियोजना ४२ विनाशिनांप्रियत्वमेवमुख्यंनभवतिआत्मोपकारोपाधिकत्वादित्याह पुत्रादयइति । ससुखाःसुखरूपोपकारेणसहिताः ४३ आत्मातुतेभ्यःप्रि

सर्वमेवत्रिपर्येतिविनात्मानंविनेश्वरम् ॥ आत्माविनाशरहितोनाशकारणशून्यतः ३८ आत्मनोत्रविनाशःस्याज्ज्ञातएवनचान्यथा ॥ अज्ञातोविद्यतेचेतिव्याहतंस्यादिदंवचः ३९ अज्ञातस्यापिचेत्सत्तास्यादसत्ताकुतोनवा ॥ ज्ञातश्चेदात्मनैवायंज्ञातव्योज्ञातृतायतः ॥ आत्मन्येवचसंसिद्धालोकवादिमतेसदा ४० विनष्टेनात्मनानायंशक्योज्ञातुंकथंचन ॥ विनाशआत्मनस्तेनज्ञातवान्नाशवर्जितः ॥ अनष्टआत्मनिस्वस्यनाशोस्तीतिनगम्यते ४१ सत्तयारहितःसोयंगम्यतेचेद्सत्स्मृतः ॥ आत्माविनाशशून्योतःसर्वेषामिहदेहिनाम् ॥ यस्मात्प्रियतमश्चायंतेनानंदस्वरूपधृक् ४२ पुत्रादयोत्रयेभावाजंतूनांसुखकारकाः ॥ ससुखाःसर्वएवैतेआत्मार्थाहिप्रियाःस्मृताः ४३ सुखादपिपरप्रेमसंश्रयोयंशरीरिणाम् ॥ आत्मात्रपरमानंदरूपःसिद्ध्यतिसर्वदा ॥ परमानंदरूपोतआत्मानाशविवर्जितः ४४ आत्मैवब्रह्मशब्दार्थउक्तस्तेपूर्वमेवहि ॥ बृहत्यत्योरिहैकार्थकथनेनमयाद्विज ॥ दध्यङ्ङाथर्वणस्योक्तौशक्रंप्रतिसुरेश्वरम् ४५ आनंदात्मैवतेनायंलक्ष्योब्रह्माभिधःपुमान् ॥ सदाविनाशिनःसत्यंलक्षणंतस्यतद्भवेत् ४६ लक्ष्यलक्षणयोर्भेदोबुद्ध्यैवपरिकल्पितः ॥ सर्वत्रवस्तुतोनायंकुतोब्रह्मणिनिर्द्वये ४७ पृथिव्यागंधरूपायागंधवत्त्वंपृथङ्नहि ॥ पृथक्त्वेधर्मधर्मित्वंनश्येदत्रगवाश्ववत् ४८

यत्वाभिमतेभ्यःसुखाच्चप्रियतरत्वाभिमताच्छेपितयोत्कृष्टत्वेनप्रियतमःपरमानंदरूपःसिद्धइत्याह सुखादपीति । फलितमाह परमानंदेति ४४ नन्वात्मनःसत्यत्वादिसिद्धावपिब्रह्मणःकथंतत्सिद्धिरितिनशंक्यंब्रह्मात्मपदयोरेकार्थत्वाद्बृंहत्यततिधात्वोःसमानार्थत्वेनचतुर्थाध्यायेप्रपंचितत्वादित्याह आत्मैवेति ४५ तथाचात्रापिब्रह्मनाम्नात्मैवलक्ष्यत्वेननिर्दिष्टस्तस्यचाविनाशशीलस्यउक्तरूपंसत्यत्वंलक्षणमुपपन्नमित्याह आनंदात्मैवेति । तेनब्रह्मात्मपदयोरेकार्थत्वेन ४६ ननुब्रह्मणःस्वरूपभूतानांसत्यादिपदार्थानांकथंभेदव्याप्यंलक्षणत्वमितिचेत्किंकल्पितभेदव्याप्यत्वंलक्षणत्वस्योतपरमार्थभेदव्याप्यत्वं आद्येनविरोधः शब्दप्रयोगायकल्पितस्यभेदस्येष्यमाणत्वात् नांत्यः सत्यभेदस्यकुत्राप्यदृष्टेरित्याशयेनाह लक्ष्येति । सर्वत्रलौकिकोदाहरणेष्वपिलक्ष्यलक्षणयोर्भेदःकल्पितएवनवस्तुतोभवतिसब्रह्मणिअखंडेकथंस्यादित्यर्थः ४७ लौकिकोदाहरणेभेदस्यवास्तवत्वाभावंदर्शयति पृथिव्याइति । यथापृथिव्यागंधगुणेनतादात्म्यशालिन्याःसकाशाद्गंधवत्त्वरूपलक्षणंपृथक्त्ववास्तवत्वलक्षणात्यंतिकत्ववताभेदेनयुक्तंनभवति आत्यंतिकभेदेहिगवाश्वयोरिवधर्मधर्मिभावोपिनस्यादित्यर्थः तथाचकल्पितएवतत्रभेदइतिभावः ४८

एवंपृथिवीत्वंजातिरूपंपृथिव्यालक्षणमपिनवस्तुतोभिन्नमित्याह पृथिवीत्वादिकमिति । तेनधर्मधर्मिभावासंभवेनपृथिवीत्वादिकमपिबुद्धचैवभिन्नत्वेनकल्पितं गोरश्ववत्विशेषेभ्योव्यक्तिभ्यः पृथक्अत्यंतभेदेनाग्रह्यमाणत्वादित्यर्थः ४९ पृथगग्रहणेव्यतिरेकदृष्टांतमाह यथेति । यथाघटःपटात्पृथग्गृह्यतेतथातत्सामान्यंनगृह्यतेइति ५० तथाचकल्पितभेदेनप्रकृतेपिलक्ष्यत्वादिकमुपपन्नमित्याह ततइति ५१ ब्रह्मणःस्वरूपभूतानपिकल्पितभेदेनधर्मतयानिर्दिष्टान्पदार्थान्दर्शयति आत्मतेति । कल्पितेकल्पितभेदनिरूपिते ५२ ब्रह्मत्ववदिति । यथाब्रह्मत्वरूपोधर्मःकल्पितस्तथापूर्वोक्ताःपंचापीत्यर्थः ५३ सत्यमिति । तेनकल्पितभेदशाल्युक्तधर्मषट्कलक्षणप्रवृत्तिनिमित्तलाभेनसत्यादित्रयंब्रह्मादित्रयंचेतिषण्नामानिसर्वाधिष्ठानस्यसाक्षिरूपस्यवागाद्यगोचरवस्तुनोवेदमुख्यतयास्वरूपबोधकतालक्षणप्राधान्येनप्रसिद्धानीत्यर्थः ५४ तस्यस्वरूपपदोक्तांसर्वाधिष्ठानतांस्फुटयति अध्यस्तमितिद्वाभ्यां । यत्रपरमार्थतत्त्वेनामाद्यात्मकंविश्वमध्यस्तं विश्वंविभजते कालेति । कालातीतंनित्यतयाभिमतं कालांतःपातिअतीतानागतकालयोर्मध्यवर्तिवर्तमानमितियावत् कालसंयुतंअतीतादिरूपंसदक्षगम्यं इतरदतींद्रियंत्वसदित्यर्थः ५५ गंधर्वेति । तच्छून्येगंधर्वनगरहीनेगगनेएतत्पदाभ्यांवर्णितविश्वग्रहः ५६ उक्तेपुषट्सुनामस्वविशेषेणतत्त्वंबोधयत्सुकथंलक्षणवाक्यव्यवस्थेत्याकांक्षायांव्यवस्थांदर्शयति षट्पदानामिति । अभिन्नार्थइतिभावप्रधानोनि

पृथिवीत्वादिकंतेनसामान्यंबुद्धिकल्पितम् ॥ विशेषेषुयतोनास्यग्रहणंविद्यतेपृथक् ४९ यथाघटःपटाद्भिन्नउदकाहरणक्षमः ॥ गृह्यतेपृथगेवायंतथातन्नैवगृह्यते ५० ततोब्रह्मणिनिर्भेदेकल्पयित्वाभिदामिमाम् ॥ लक्ष्यलक्षणभावोयंकथितोत्रमनीषिभिः ५१ आत्मतानंदतायद्वद्विद्येतेकल्पितेउभे ॥ सत्यताज्ञानतातद्वद्विद्येतेनंततापिच ५२ ब्रह्मत्ववदिमेधर्माआनंदाद्यामनीषिभिः ॥ पंचप्रोक्ताःपरेनित्येनिर्गुणेभेदवर्जिते ५३ सत्यंज्ञानमनंतंचब्रह्मात्मानंदइत्यपि ॥ नामषट्कमिदंमुख्यंकीर्तितंवेदवादिभिः ॥ अवाङ्मनसगम्यस्यस्वरूपस्यात्रसाक्षिणः ५४ अध्यस्तंयत्रसकलंनामरूपक्रियात्मकम् ॥ कालातीतंचकालांतःपतितंकालसंयुतम् ॥ सदसद्वस्तुजातंयदक्षैर्गम्यंतथेतरत् ५५ गंधर्वनगरंयद्वद्गगनेपरिकल्पितम् ॥ तच्छून्येत्रतथैवेतच्छून्यएतत्प्रकल्पितम् ५६ षट्पदानामभिन्नार्थेकत्वेकंवाचकंपदम् ॥ वाच्यंपदद्वयस्यार्थमानंदात्मानमीश्वरम् ॥ पदत्रयार्थमुनयोलक्षणंकथयंतिते ५७ आनंदात्माचलक्ष्यंस्याद्ब्रह्मशब्दाभिधोहियः ॥ सत्यंज्ञानमनंतंचभवेत्तल्लक्षणत्रयम् ५८ एवंवेदांतसिद्धांतसारसर्वस्ववेदिनः ॥ ब्राह्मणाज्ञाततत्त्वार्थाअर्थमाहुरलौकिकाः ५९ लौकिकास्त्रितयंचैतत्प्राहुरेकंहिलक्षणम् ॥ आनंदात्मस्वरूपस्यब्रह्मशब्दस्यसर्वदा ६०

र्देशः एषांपदानामभिन्नार्थत्वेप्येषांमध्येएकंपदंवाचकंलक्ष्यप्रतिपादकंकृत्वाउपन्यस्यपदद्वयस्यआनंदात्मेत्याकारस्यार्थंसर्वांतरमद्वयंवस्तुवाच्यंलक्ष्यस्वरूपंचकृत्वापरिशिष्टपदत्रयमध्येएकैकंपदंलक्षणवाचकत्वेनाहुरित्यर्थः ५७ एतदेवप्रकृतेयोजयित्वादर्शयति आनंदात्मेति । यथाप्रकृतवाक्येआनंदात्मशब्दौनप्रयुक्तौतयोर्लक्ष्यस्वरूपांतर्भावस्यविवक्षितत्वात् ब्रह्मपदंत्वानंदादिपदद्वयार्थरूपलक्ष्यवाचकतयोपन्यस्तं सत्यादिपदत्रयंतुप्रत्येकमसाधारणधर्मवाचकत्वाद्विकल्पेनलक्षणवाचकमित्यर्थः ५८ शास्त्रदृष्टिजप्रत्येकलक्षणमुपसंहरति एवमिति । उपनिषत्सिद्धांतरूपंयत्सारंतस्ययत्सर्वंस्वमसाधारणंरूपंतद्विदः अलौकिकाःशास्त्रदृष्टयः ५९ लौकिकदृष्ट्यनुसारिणमेकलक्षणपरत्वपक्षमुपपादयति लौकिकाइत्यादिना । लौकिकालोकबुद्ध्यनुसारिणआचार्याएतत्सत्यज्ञानानंतरूपंपदानांत्रयमेकलक्षणघटकमाहुरित्यर्थः लोकेहिसत्यमित्युक्तेव्यवहाराबाधितमात्रंप्रतीयतेनतुब्रह्मैव एवंज्ञानमित्युक्तेवृत्तिसंवलितमेवप्रतीयते अनंतपदेनचकालाद्यपरिच्छिन्नमेव अतोतिप्रसक्तार्थकत्वेनप्रत्येकंलक्षणत्वासंभवाद्विशिष्टेशक्तानांपदानांशुद्धेलक्षणयावृत्तिमंगीकृत्यैकलक्षणत्वमुक्तमितिभावः ६०

नन्वेषांपदानांसमानार्थलक्षणकत्वेएकेनैवेष्टसिद्धेःपदांतरवैयर्थ्यमितिशंकांपरिहरति एकार्थेति । समानार्थपराणामप्येषांपदानांफलभूतव्यावृत्तीनांभेदात्पुनरुक्तत्वंनस्यादिति तत्रैतावान्विशेषोवा तिंककृद्भिरुक्तः सत्यज्ञानपदेसत्यत्वंज्ञानत्वंचविधायार्थादितरव्यावृत्तिंबोधयतः अनंतपदंतुसाक्षादेवपरिच्छिन्नतांवारयतीति एवंसतिधर्मधर्मिभावादिरूपोभेदोनप्रसज्जतेइत्यर्थः ६१ एतदेवस्फु टयति असज्जडमिति । यतःसत्यपदंब्रह्मणिभ्रमसक्तमसत्त्वंवारयति ज्ञानपदंजडत्वं अनंतपदंतुपरिच्छिन्नत्वंवारयति ततएवंव्यावृत्तिपरत्वान्नीलमुत्पलमित्यादिवाक्यस्ययथागुणगुणिभावसंसर्गपर त्वंविशिष्टपरत्वंवाभवतितथास्यवाक्यस्यनबोध्यं किंत्वखंडार्थपरत्वमेवेत्यर्थः ६२ ननुतथापिब्रह्मनिष्ठव्यावृत्तीनांभेदादेवाद्वैतहानिःस्यादितिशंकांभावाद्वैतपक्षंनृसिंहाश्रमादिभिर्व्युत्पादितमालंब्यप रिहरति असदादीति । यद्यप्यसज्जडपरिच्छिन्नैर्निरूपिताअभावव्यावृत्तयआत्मनिस्थिताःस्युस्तथापिब्रह्मातिरिक्तोभावोनास्तीत्येवमद्वैतमुपपादयतामस्माकमद्वैतहानिरूपोविरोधोनप्राप्नोतीत्यर्थः ६३ भावाद्वैतवादिभिर्येनांशेनद्वैतविलयव्यापारेभावाउपेक्षितास्तंविवृणोति अभावाइत्यादिना । असंख्यातानामभावानामवशेषेप्यात्मनःस्वभावभूतामद्वितीयतांप्रतिपादयतांकिंचिदपिमतिज्ञा दिकंनहीयतेइत्यर्थः ६४ तत्रहेतुतयाऽभावस्यतुच्छत्वेनाद्वैतविघाताक्षमत्वंदर्शयन्किमभावःस्वरूपेणभिद्यमानोऽद्वैतंविहन्यात्स्वप्रतियोगिद्वारावास्वव्यवहारद्वारावाइतिविकल्प्यनप्रथमद्वितीयावि

एकार्थविषयत्वेपिपदानांपुनरुक्तता ॥ व्यावृत्तिभेदतोनस्यान्नचभेदोपिकश्चन ६१ असज्जडंपरिच्छिन्नंनिरस्यातिपदत्रयम् ॥ ततोनगुणगुण्यादिभवेन्नीलोत्प लादिवत् ६२ असदादित्रयाभावायद्यप्यात्मन्यवस्थिताः ॥ तथापिनविरोधःस्याद्भावाद्वैतवादिनाम् ६३ अभावाःसंतुशतशोनिर्भेदेब्रह्मरूपिणि ॥ अस्मा कंकिंचिदप्यत्रहीयतेनात्मवादिनाम् ६४ अभावेपुयतोभेदःस्वयंकोपिनविद्यते ॥ विनाश्यंभावरूपंतंविहायप्रतियोगिनम् ६५ व्यवहारोत्रभिन्नःस्याद्विनाशःप्र तियोगिनः ॥ अभावस्यस्वरूपंनभिद्यतेकर्हिचित्क्वचित् ६६ साक्षात्कृतेसदाऽद्वैतआनंदात्मनिकेवले ॥ व्यवहारश्चकोप्यत्रनैवास्तिवचनादिकः ६७ एकएव ततोभावोद्वैतस्यात्रावतिष्ठते ॥ अभावःसोपिनैवस्याद्वस्तुतत्त्वेविचारिते ६८ अभावस्यतुकेयंस्यात्सत्ताद्वैतविनाशिनी ॥ घटादिष्विवनैतस्यसत्ताकाचनविद्य ते ॥ तत्सत्त्वेकेनभेदःस्याद्भावाभावस्वरूपयोः ६९

त्याह अभावेष्विति । प्रतियोगिनंविनास्वरूपेणाभावेभेदोनवक्तुंशक्यः नचप्रतियोगिद्वारापिभेदः सहितदावक्तुंशक्योयदाऽविद्यादशायांप्रतियोगिनोविनाश्यतयास्थिताआसन् इदानींतुनेहनाना स्तीतिवाक्यनृसिंहेनकवलीकृतानांतेषांविनष्टत्वेनभेदकत्वंनसंभवतीतिभावः ६५ नतृतीयइत्याह व्यवहारइति । प्रतियोगिनइतिपंचमील्यब्लोपे तथाचप्रतियोगिनमपेक्ष्यैवभिन्नोभेदघटितोव्यव हारोऽभिलापादिरूपोविनाशविषयकःअत्रव्यवहारभूमौस्यात्संभवेन्नस्वरूपतइत्यर्थः अत्रतुप्रत्यग्दृष्ट्यापरागर्थाकारताबुद्धेरपहृतेतिभावः ६६ एतदेवविशदयति साक्षादिति । अद्वितीयत्वादानंदरू पात्मनिविषयेलब्धेबुद्धिःसर्वंव्यवहारंत्यजतीत्यर्थः ६७ फलितमाह एकएवेति । ततःप्रतियोगिभेदालोचनमंतराऽभावेभेदासंभवात्सर्वद्वैताभावएकरूपेणावशिष्टःसोपिवस्तुनस्तत्त्वेऽधिष्ठानत्वरूपे विचारितेतुनैवपृथक्केनतिष्ठेत् कल्पिताभावस्याधिष्ठानात्मकत्वादितिभावः ६८ किंचलोकदृष्ट्याप्यभावस्यनभिन्नत्वंसत्ताराहित्येनप्रसिद्धत्वात् यदित्वभावेपिसत्ताभ्युपगम्यतेतदाऽभावस्यापिभाव त्वापत्त्यासद्रूपात्मनःसकाशात्सुतरामभेदइत्याह अभावस्यत्विति । किंशब्दआक्षेपे एतस्यभावस्यसत्तायतोनप्रसिद्धाऽतःसाऽभावसत्ताअद्वैतस्यविनाशिकाकथंस्यात् तस्याभावस्यसत्त्वांगीकारे तुभावाभावयोर्विशेषोनस्यादित्यर्थः ६९

तस्यसत्त्वासंभवमेवस्फुटयति स्वरूपेति । यतोभेदोविशेषःसत्तादयोधर्माश्चएतैःसर्वसत्तारूपेणप्रसिद्धैर्वर्जितोऽभावस्ततोस्तीतिवक्तुंनयोग्यस्तेनविकल्पाख्यज्ञानमात्ररूपइत्यर्थः ७० विकल्पलक्षणं शब्दज्ञानानुपातीवस्तुशून्योविकल्पइत्याकारंस्मारयति वचनादिति । सोयमसत्पदार्थः ७१ अविषयात्मसाक्षात्कारेतुविकल्पोपिनिवर्त्ततेइत्याह विकल्पादिरिति ७२ भावाद्वैतवादिनामाशयप्रदर्शनंनिगमयति द्वैताभावइति स्पष्टम् ७३ अनयादिशेत्युक्तंस्फुटयन्द्वैताभावसाधनेप्रधानस्यानंतपदस्यव्यावर्त्यंदर्शयति देशेतिपङ्क्तिः । कार्यत्वेनप्रसिद्धंसर्वमुभाभ्यांदेशकालाभ्यांपरिच्छिन्नंप्रसिद्धं देशकालौतुस्वरूपेणवस्तुनापरिच्छिन्नौ अन्योन्याभावप्रतियोगित्वादित्यर्थः ७४ नन्वेकेनवस्तुपरिच्छेदेनेदसकलव्यावर्त्यसंग्रहात्किमितित्रिविधःपरिच्छेदस्तत्रतत्रनिरूप्यतइतिचेन्मंदधियामनुग्रहायेत्याह देशेनैवेतिद्वाभ्यां । केषांचिदर्द्धवैनाशिकैःप्रतारितधियांमतेपरमाणवोनामपदार्थादेशेनैवपरिच्छिन्नाःसंति नकालेन नित्यत्वाभ्युपगमात् नवस्तुना भेदस्यपरिच्छेदरूपतायास्तैरनुद्यमानत्वात् । नन्वप्रामाणिकानांपरमाणूनांकथंसत्त्वमितिशंकांदृष्टांतेनपरिहरति यथेति । स्पष्टं ७५ कालेनैवेति । तथाकेषांचित्सांख्यानांमतेमहन्महत्तत्त्वंविभुत्वेनाभिमतत्वात्सर्वविकारकारणत्वाच्चदेशवस्तुभ्यांपरिच्छिन्नमपिप्रलयेलयशालित्वात्कालपरिच्छिन्नमस्ति नभआकाशंआदिपदेनदिगादिग्रहस्तेषांनित्यत्वाद्विभुत्वाच्चदेशकालपरिच्छेदायोग्यत्वाद्भेदात्मकवस्तुपरिच्छेदशा

स्वरूपभेदसत्तादिसर्वसत्ताविवर्जितः ॥ यतोभावस्ततःकेनसोस्तीतिव्यपदिश्यते ॥ विकल्पमात्रंतेनायमभावोनरशृंगवत् ७० वचनाद्व्यवहारःस्यादसतोयस्य वस्तुनः ॥ विकल्पविषयःसोयमुच्यतेन्यायवेदिभिः ७१ विकल्पादिरयंयत्रव्यवहारःक्षयंगतः ॥ अवाङ्मनसगम्येऽस्मिंस्तत्राभावःकुतोभवेत् ७२ द्वैताभावोपितेनस्यादद्वैतस्यनघातकः ॥ विचारेसतिनिर्द्वैतंभवेद्ब्रह्मानयादिशा ७३ देशकालपरिच्छिन्नंजायमानंघटादिकम् ॥ देशकालौस्वरूपेणभिन्नौतौहिपरस्परम् ७४ देशेनैवपरिच्छिन्नाःकेषांचित्परमाणवः ॥ मतेसंतियथावंध्यापुत्रोस्त्येवशिशोर्मते ७५ कालेनैवपरिच्छिन्नंकेषांचिन्महदस्तिच ॥ रूपादेवपरिच्छिन्नंकेषांचिन्नभआदिकम् ॥ इतिभ्रांतप्रसिद्ध्यायंपरिच्छेदस्त्रिधास्थितः ७६ अन्योपिलौकिकःकश्चित्परिच्छेदस्त्रिधैवहि ॥ विद्यतेवृक्षएतस्मिन्नुदाहरणमस्तितत् ७७ वृक्षःस्वयंविभिन्नोयंशाखास्कंधादिभेदतः ॥ वटोवटांतराद्वद्दश्वत्थादेश्चसर्वदा ७८ स्वसजातिविजात्युत्थःसोयमत्रत्रिधास्थितः ॥ देशकालस्वरूपोत्रत्रिधापूर्वश्चकीर्तितः ७९ सर्वोप्ययंपरिच्छेदोनंतशब्देनवार्यते ॥ परिच्छिन्नपरिच्छेदद्वयाभावविवर्जितम् ॥ आनंदात्मस्वरूपंयत्तद्ब्रह्मेतिसमीरितम् ८०

लित्वमेवकैश्चिदभ्युपगम्यते इत्येवंविधभ्रांतानांप्रबोधायतदनुसारिणपरिच्छेदत्रयमुक्तमित्यर्थः रूपादेववस्तुनः ७६ तथावस्तुपरिच्छेदात्मकभेदस्यैवस्वावयवसजातीयविजातीयात्मकप्रतियोगित्रित्वप्रयुक्तंत्रैविध्यंदर्शयति अन्योपीति । अन्योभेदमात्रप्रपंचत्वेनपूर्वोक्ताविलक्षणःपरिच्छेदस्त्रिविधोविद्यते यत्रवृक्षरूपमुदाहरणंतत्प्रसिद्धमस्तीत्यर्थः ७७ वृक्षस्योदाहरणतांस्फुटयति वृक्षइति । यथायंवटाख्योवृक्षःशाखादिभिःस्वरूपैर्भिद्यमानःस्वयंभिन्नइत्युच्यते वटांतरात्सजातीयाद्भिन्नः अश्वत्थादेर्विजातीयाच्चभिन्नइत्यर्थः ७८ स्वसजातीति । सोयंपरिच्छेदःस्वस्मात्सजातेर्विजातेश्चप्रतियोगिनउत्थितोनिरूपणंप्राप्तःअत्रवृक्षोदाहरणेस्थितःकीर्तितः देशादित्रितयनिरूपितत्वेनत्रिविधस्तुपूर्वंकीर्तितइत्यर्थः ७९ अस्यपरिच्छेदस्यब्रह्मणिसंभावनांकुतर्कैःपंकजातामनंतशब्दःक्षालयतीत्याह सर्वोपीति । अनंतशब्दप्रसादात्शोधितंतत्त्वमभिनयति परिच्छिन्नेति । परिच्छिन्नंचप्रत्येकंत्रिविधपरिच्छेदयोर्द्वयंचतदभावश्चएतैर्विवर्जितं अभावोपियदिभिन्नत्वेनावतिष्ठेत्पुनरनंतशब्दःकुप्येदित्यतोऽभावोपिवार्यते तत्पूर्णस्वरूपंब्रह्मेतिवाक्यार्थः ८०

ज्ञानपदकृत्यंदर्शयंस्तस्याशंआद्यजंतत्त्वेनज्ञानवत्परत्वभ्रमंवारयति संभावितमिति । तद्व्र्णितंब्रह्मजडमितिकेनचित्संभावितंशंकितंस्याद्वतस्तज्जडंज्ञानपदंनवार्यतेइत्यर्थः एवंचिद्भिन्नत्वलक्षणजडतां वारयितुंप्रवृत्तंज्ञानपदंयदिज्ञानवत्परंस्यात्तदानेष्टसिद्धिंलभेत् नहिनरवतीभूमिरित्युक्तेभूमेर्नरभिन्नत्वंवार्यते अतःशुद्धंज्ञानपदंज्ञानरूपतामेवाचष्टेइत्यर्थः ८१ यावताविनानुपपत्तिस्तत्सर्वंकल्प्यतेइति न्यायेनभट्टानामिवज्ञाततानुमेयतांवृत्तिज्ञानवत्परप्रकाश्यतांचज्ञानपदमेवस्वार्थस्यवारयतीत्याह ज्ञानंचेति । तज्ज्ञानपदोक्तंवस्तुयद्यभातंअप्रकाशशीलंस्यात्प्रकाशशीलत्वेपिपरप्रकाश्यंस्यात्त दाघटादिवत्सूर्यादितैजसवच्चपुनर्जडंस्यात्ततस्तंदोषंवारयितुंस्वयंप्रकाशतैवानेनपदेनबोध्यतेइत्यर्थः ८२ तत्रस्वरूपेव्यामोहजांमिथ्यात्वभ्रांतिंसत्यपदंवारयतीत्याह रज्जुसर्पादीति । तत्तत्त्व मसत्यंमाभूदित्याकारकासंभावनयाप्राप्तमसत्यत्वंतत्पदेनवार्यतेइत्यर्थः ८३ ननुभ्रमकालिकाबाधितत्वस्यरज्जुसर्पादावपिसत्त्वात्कथमनेनासत्त्वंवार्यतेइतिचेत्ज्ञानानंतपदयोःसामानाधिकरण्य बलादित्याह रज्जुसर्पादिकमिति । लोकेहिबाध्यत्वेनतदेवप्रसिद्धंयत्प्रहारादिगोचरतांजडतांवाभजेत् एतत्तत्त्वंतुस्वयंप्रकाशत्वादगोचरंपूर्णंकोबाधेतेत्यर्थः फलितमाह असत्याज्ञानेति । भेद परिच्छेदः अभावोव्यावृत्तिः ८५ एवंप्रथमंपादंव्याख्यायपरिशिष्टपादत्रयार्थमाह सर्वत्रेति । तद्ब्रह्मसर्वत्रपूर्णमपियतोबुद्धावेवपंचकोशमयगुहाप्रधानायांसाक्षितयोपलभ्यतेऽतस्तस्यगु

संभावितंजडंतत्स्यात्तज्ज्ञानेननिवार्यते ॥ ज्ञानवत्तानजडतांविनिवारयितुंक्षमा ॥ नरवत्तायथाभूमेरनरत्वंनवारयेत् ८१ ज्ञानंचयद्यभातंस्याज्ज्ञातंवान्येनचे द्भवेत् ॥ घटःसूर्यादिवन्नैतदजडंस्यात्कथंचन ॥ ततःस्वयंसदाभातंज्ञानमेतदवस्थितम् ८२ रज्जुसर्पादिवत्तच्चासत्यंमाभूत्स्वयंप्रभम् ॥ इत्यसत्यत्वमत्रैत द्वार्यतेसत्यशब्दतः ८३ रज्जुसर्पादिकंबाध्यंपरिच्छिन्नंजडंयतः ॥ अपरिच्छिन्नमजडंबाध्यतेकेनहेतुना ८४ असत्याज्ञानभेदानामभावेनपदत्रयम् ॥ स त्यंज्ञानमनंतंचततःस्याद्ब्रह्मलक्षणम् ८५ सर्वत्रापिस्थितंब्रह्मबुद्धावेवोपलभ्यते ॥ गुहायांनिहितंतेनबुद्धिस्थंवेदईरितम् ८६ यएतत्सर्वबुद्धीनांसाक्षिरूपंसदापु मान् ॥ अहंब्रह्मेतिजानातिसव्याप्नोतिचराचरम् ॥ ब्रह्मवद्ब्रह्मतादात्म्यंप्राप्यसर्वमवाप्नुयात् ८७ सत्यादिलक्षणोयोयमानंदात्मासमीरितः ॥ निर्भेदोभेदराहि त्यात्तत्रयुक्तिरियंस्मृता ८८ कारणान्नपृथक्कार्यंमृदोयद्वद्घटादिकम् ॥ कारणंचतथाब्रह्मनभआदेस्ततोऽद्वयम् ८९ एतस्मादात्मनोजातंगगनंशब्दसंयुतम् ॥ स्पर्शवांश्चततोवायुःसंजातोगगनात्मकात् ९० वायुरूपादिदंतेजोरूपवद्भिव्यजायत ॥ तेजोरूपादिदंनीरंरसवत्समभूत्पुरा ॥ जातानीराद्रसवतोभूमिर्गंधव तीत्वियम् ९१

हानिहितत्वमुक्तम् तथाचोक्तंयोगभाष्ये 'नपातालंनविवरंगिरीणांनैवांधकारंकुक्षयोनोदधीनाम् । गुहायस्यांनिहितंब्रह्मशाश्वतंबुद्धिवृत्तिमवशिष्टांकवयोवेदयंते' इति बुद्धेर्वृत्तिमवशिष्टांचि त्तादात्म्यापन्नाम् ८६ यएतदिति । यएतत्तत्त्वमवगच्छेत्सत्रब्रह्मवत्सर्वंव्याप्नुयात्व्याप्यचसर्वमिष्टजातंयुगपत्प्राप्नुयात् सहशब्दस्यश्रुतौयौगपद्यार्थकत्वात् ८७ तस्मादित्यादेरन्नरसमयइत्यं तस्यवाक्यस्यार्थंविशत्याप्रपंचयंस्तत्रसृष्टिप्रदर्शनस्यफलवत्सन्निधावफलंतदंगमितिन्यायेनाद्वयत्वबोधशेषतांदर्शयति सत्यादीतिद्वाभ्यां । समीरितः सूत्रवाक्येमंत्रेचेतिशेषः सभेदासंभवान्नि र्भेदोऽद्वयोभवति तत्रभेदराहित्येयुक्तिस्तुइयंसृष्टिवाक्यप्रदर्शितास्मृताप्रसिद्धेत्यर्थः ८८ इयंकुत्यतआह कारणादिति । कारणाद्भिन्नसत्ताकत्वाभावःकार्यस्यप्रसिद्धः ततोब्रह्मणएवविश्वका रणत्वेप्रतिपादितेऽद्वयत्वंस्फुटंभवतीत्यर्थः ८९ एतस्मादिति । एतस्माद्वर्णितादात्मनःशब्दगुणकआकाशउत्पन्नः गगनात्मकाद्गगनभावापन्नाद्यस्माद्वायुःस्पर्शगुणकउत्पन्नः एवमग्रेपीति ९० वायुरूपादिति । रूपवद्रूपगुणकम् ९१

उत्पन्नेकार्येतत्रतादात्म्यसंबंधेनोपसर्जनतयावस्थितिरूपंकारणस्यानुगममाह सर्वेष्वपीति । यतःसर्वत्रकार्येकारणानुगमःप्रसिद्धस्तेनसद्रूपंगगनेस्थितंगगनादिकंचोत्तरेत्रेति अपरंत्वत्रकार्येयाकारण स्थितिःसातादात्म्यसंबंधेनभेदसहिष्णुरभेदइतिलक्षितेनबोध्या अत्रभेदस्तुकल्पितइतिद्वयोरर्थः ९२। ९३ एकेति । तेचखादयःपृथिव्यंताःपदार्थाःपंचभूतसंज्ञकाःएकादिगुणकाश्चोक्ताः उत्तरेषां कारणगुणशालित्वादित्यर्थः ९४ गुणानाह शब्देति।एतेसर्वेपीतिशेषः तत्तस्मादाकाशादितादात्म्यरूपाद्धेतोरासमंतात्पृथिव्यांस्थिताः ९५ यदिज्ञानमात्मनोगुणोभविष्यत्तदाभूतेषुदृष्टमभविष्य त्परंतुतत्स्वरूपमेवात्मनोनगुणोऽतोनदृश्यतेइत्याह ज्ञानमिति । यतोज्ञानंगुणोनभवतिततःखादौनदृश्यतइतियोजना इदमानंदस्याप्युपलक्षणं ९६ किंचपरिणामिनःकारणस्यगुणाःकार्येदृश्यंते इतिनियमः आत्मनस्तुविवर्त्तोपादानत्वान्नतत्प्रसक्तिरित्याह आत्मनइति । आत्मनोयत्सत्यंरूपमानंदादितेनयद्यात्माकारणंभवेत्तथासत्यानंदादिकमत्रखादिषुदृश्येतैवतदभावादात्मनोविवर्त्तोपादा नतैवज्ञायतेइतिद्वयोरर्थः ९७ । ९८ विवर्त्तोपादानतातुमायाशबलात्वेनकल्पितेनैवरूपेणभवतीत्याह परिणामंविनेति ९९ तत्रदृष्टांतमाह माययैवेति १०० आकाशादीनांतुपरिणामित्वात्तद्गु

सर्वेष्वपिचकार्येषुवर्त्ततेकारणंसदा ॥ तेनब्रह्मात्रगगनेगगनंपवनेपिच ९२ पवनोपितथावन्हौवन्हिर्नीरेष्वपिस्थितः ॥ पृथिव्यामपिनीराणितादात्म्येनात्रसंस्थि तिः ९३ एकद्वित्रिचतुःपंचगुणाउक्ताश्चखादयः ॥ कारणानांगुणैःसार्धंपंचभूतानितेस्मृताः ९४ शब्दःस्पर्शस्तथारूपंरसोगंधश्चपंचमः ॥ पृथिव्यांखादिता दात्म्याद्गुणाएतेतदास्थिताः ९५ ज्ञानंनामगुणोनायमानंदात्मस्वरूपिणः ॥ यतस्ततोनखादौसदृश्यतेकर्हिचित्क्वचित् ९६ आत्मनःसत्यरूपेणयद्यात्माकारणं भवेत् ॥ आनंदादिकमप्यत्रदृश्येतचतथासति ९७ खादिकेचजडेयस्मादानंदादिर्नलभ्यते ॥ परिणामंविनातस्मादात्मास्यादस्यकारणम् ९८ परिणामंवि नायस्माज्जगतःकारणंपुमान् ॥ माययैवचतेनायंकारणंनचवस्तुतः ९९ माययैवयथारज्जुःसर्पादेःकारणंभवेत् ॥ परिणामंविनातद्वत्पुमानप्यस्यकारणम् १०० आत्मनोव्यतिरिक्तानिखादीनिपरिणामतः ॥ कारणानियतस्तेषांगुणाःकार्येषुसंत्यमी १०१ अथवाकारणंसर्वपरिणामविवर्जितम् ॥ ब्रह्मसर्वत्रविज्ञेयंकार्यंस्या दितरत्पुनः १०२ ततोब्रह्मजगत्कर्तृपूर्वकार्यसमन्वितम् ॥ यदोत्तरंकरोत्येतत्कार्यंतत्तर्हितद्द्वयम् १०३ मिलित्वासंविभात्यत्रकार्येकारणवत्सदा ॥ ततःपूर्वगुणा वेशउत्तरस्मिन्प्रजायते १०४ एवंभूतेषुचरमंकार्यंपंचगुणामही ॥ जाताब्रह्मांडजननीस्थिरजंगमधारिणी १०५ अस्याःपृथिव्याःसंजाताग्राम्यारण्याःसहस्र शः ॥ ओषध्योयवमाषाद्याअद्यायाजंगमैःसदा १०६

णानुगमउत्तरत्रयुक्तइत्याह आत्मनइति १०१ वस्तुतस्तु'सर्वाणिरूपाणिविचित्यधीरः'इत्यादिश्रुतेर्ब्रह्मणएवसर्वत्रकारणत्वं भूतानांकारणत्वव्यवहारस्तुमायावत्कारणावच्छेदकतयेत्याह अथवेति त्रिभिः । अथवासर्वपरिणामैर्वर्जितंब्रह्मैवसर्वत्रकारणमितरदाकाशादिकंतुकार्यमित्येववाच्यंनकारणत्वयोग्यमक्षमत्वादित्यर्थः १०२ कथंतर्हिखादिषुकारणत्वधीर्लोकस्येत्यतआह ततइति । ततो ब्रह्मातिरिक्तस्यकारणत्वानर्हत्वात् जगत्कर्तृब्रह्मयदापूर्वेणकार्येणाकाशादिनासमन्वितमवच्छिन्नंसदुत्तरंवाय्वादिकंकार्यंतत्प्रसिद्धंकरोति तर्हितद्द्वयंब्रह्माकाशंचेत्युभयमत्रवायुरूपेकार्येकारणवत्संवि भातिततोब्रह्मवदाकाशस्यापिकारणाभिमानाद्वायौशब्दंदृष्ट्वाकारणगुणोयमागतइत्याकारकआवेशोभ्रमइतियावत् सलोकस्यजायतइतिद्वयोरर्थः १०३।१०४ प्रकृतसृष्टिक्रमंगृह्णाति एवमिति स्पष्टम् १०५ अस्याइति । ग्राम्याओषध्योयवाद्याआरण्याःश्यामाकादयःअद्याभक्ष्याः १०६

ताभ्यइति । ताभ्यओषधिभ्योऽन्नरूपंगताभ्यःततोरेतोभावंगताभ्यश्चपंचम्यांस्वर्गाभ्रभूपुरुषयोषात्मकाग्निषुमध्येपंचमाग्निगोचरायामाहुतौगर्भरूपेणशिरःपाण्यादिमान्पुरुषोजायतेइत्यर्थः ननुप श्वादीनामप्यन्नजत्वेसमानेपुरुषस्यैवनिर्देशःकुतइतिशंकांपरिहरंस्तस्यप्राधान्यमैतरेयव्याख्यानेप्रथमाध्यायेउक्तंस्मारयति उक्तइति । गवाश्वादिदेहसृष्टावपरितुष्टेर्देवैर्मनुष्यदेहःसर्वाधिकारस्सं पन्नतयासुकृतमितिपदप्रयोगेणप्रशस्तइत्युक्तइत्यर्थः १०७ बीजतइति । सोयंपुरुषोनकेवलंपितृमात्रैशद्वाराऽन्नविकारःकिंतुनित्यभक्षणेनोपचयादप्यन्नरसमयइत्यर्थः १०८ एवंस्थूलदर्शिनंप्रति सर्वांतरात्मतत्त्वंबोधयितुंप्रवृत्तांपंचकोशप्रक्रियामवतारयति आत्मनइति । अस्यात्मनःस्थूलसूक्ष्मकारणाख्यंशरीरत्रयंप्रसिद्धंतेषुत्रिषुशरीरेषुपंचधाकोशान्खड्गप्रावरणवदसंगशस्त्रहीनैर्दुर्भेदांस्ति त्तिरिशाखाध्यायिनःकल्पयंतीत्यर्थः १०९ त्रिषुशरीरेषुपंचकोशभावमभिनयति स्थूलमिति । स्थूलशरीरंप्रथमोऽन्नमयाख्यःकोशः सूक्ष्मंतुप्राणमयमनोमयविज्ञानमयाख्यकोशत्रयात्मकं पंच मआनंदमयःकारणशरीरात्मकइत्यर्थः ११० तेषुशिल्पिबुद्धिसौकर्यायपक्षितांकल्पयित्वापक्षिणोऽवयवान्पक्षादीन्कल्पयंतीत्याह पक्षित्वमिति १११ तत्रान्नमयनिरूपणपरस्यतस्येत्यादेरन्नंतदु

ताभ्योह्यन्नस्वरूपाभ्यःस्थिताभ्योरेतआत्मना ॥ पंचम्यामाहुतौगर्भःपुरुषोयंप्रजायते ॥ शिरःपाण्यादिमानुक्तःसुकृतंदेवतैरपि १०७ बीजतोयोनितस्तद्वन्नि त्यमन्नस्यभक्षणात् ॥ पुरुषोन्नरसानांस्यात्कार्यंस्थूलवपुःसदा १०८ आत्मनोस्यत्रिधादेहःकथ्यतेवेदवादिभिः ॥ स्थूलःसूक्ष्मस्तथाऽज्ञानमत्रतेष्वपिपंचधा ॥ असेरिवातिदुर्भेदान्कोशांस्तित्तिरयोद्विजाः १०९ स्थूलंशरीरमेकःस्यात्कोशस्तेषुत्रयोपरे ॥ कोशाःसूक्ष्मंशरीरंस्यादज्ञानंपंचमोपिच ११० पक्षित्वमत्रकोशे षुपंचस्वपिमहाधियः ॥ कल्पयित्वात्रपक्षादीन्कल्पयंत्यपितेद्विजाः ॥ एवंहिबुद्धिसौकार्यकामाःशिष्यहितैषिणः १११ अस्यस्थूलस्यदेहस्यशिरएवशिरःस्मृ तम् ॥ वामदक्षिणपक्षौचहस्तौतौवामदक्षिणौ ११२ उदरंचोदरंतस्यपक्षिणश्चात्मशब्दितम् ॥ पादौदीर्घाविमौपुच्छसदृशौपुच्छमीरितौ ॥ तावेवचप्रतिष्ठा ख्यावत्रायंप्रतितिष्ठति ११३ प्रतिष्ठापक्षिदेहानांसमाप्तिर्नापरास्तिहि ॥ पक्षिणःप्रतितिष्ठंतिनपुच्छेकर्हिचिद्यतः ११४ यद्यप्यत्रतथाप्यत्रप्रतितिष्ठंतिकेचन ॥ वानराद्याश्चपुच्छेषुप्रतिष्ठातेनतद्भवेत् ११५ अन्नकार्येशरीरेस्मिन्स्थूलेश्लोकंनदंत्यमुम् ॥ अन्नादेवप्रजाःसर्वाजायंतेपृथिवींस्थिताः ॥ अन्नेनैवचजीवंति लयमन्नेव्रजंतिच ११६

च्यतेइत्यंतस्यार्थमाह अस्येतिद्वादशभिः । अस्यान्नमयस्यस्थूलदेहात्मकस्यपक्षिणःप्रसिद्धंशिरएवशिरोबोध्यं वामभुजोवामःपक्षः दक्षिणोभुजोदक्षिणःपक्षः उदरात्मकोमध्यभागएवपक्षिमध्यभागः कीदृशः श्रुतावात्मपदेनोक्तः तथाचश्रुत्यंतरं मध्यंह्येषामंगानामात्मेति पादद्वयंपुच्छवद्दीर्घत्वात्पुच्छत्वेनबोध्यं स्थित्याधारत्वात्प्रतिष्ठात्वेनापिबोध्यमितिद्वयोरर्थः ११२ । ११३ नन्वत्रप्रतिष्ठाप दस्यस्थित्याधारतारूपोर्थःप्रतिष्ठागौरवेस्थितरविति हैमकोशानुगुणोपिनयुक्तः प्रसिद्धपक्षिपुच्छस्यतदाधारतायाअप्रसिद्धत्वात्किंतुप्रतिःपदसमाप्तिप्रतिधानेत्याद्युपसर्गसूत्रानुसारात्पदपदोक्तदेहसमा प्तिरर्थोवाच्यइत्याशंक्यवानरादिशरीराधारतायादृष्टत्वाद्विवक्षितायाब्रह्मणःसर्वाधारतायाअनुकूलत्वाचस्थित्यर्थएवग्राह्यइत्याह प्रतिष्ठेति । यद्यपिप्रतिष्ठापदार्थतयापक्षिदेहसमाप्तिरेववाच्यायतःपक्षि णःपुच्छेस्थितिंकुर्वंतोनदृश्यन्तेतथापिवानरभल्लूकादीनांतथात्वदृष्टस्तेनस्थित्याधारत्वेनतत्पुच्छंप्रतिष्ठापदवाच्यंभवेदितिद्वयोरर्थः १४ । १५ अन्नकार्येइति । अस्मिन्ब्राह्मणेप्रतिपादितेस्थूलशरीरा त्मकेकोशेअमुंश्लोकंमंत्रं जातावेकवचनंवदंतिपठंति । अमुंकमित्याकांक्षायांपठति अन्नादेवेति । अन्नादेवरसवीजादिभावापन्नात्सर्वप्रजानामुत्पत्तिःस्थितिश्चप्रसिद्धा लयश्चपृथिव्यात्मकेतत्रेत्यर्थः ११६

सर्वंपदार्थंस्फुटयितुंस्थावराणांतावद्भूमिरससंपृक्तनीररूपान्नादुत्पत्त्यादिकमाह स्थावराणामितिद्वाभ्यां । तेनोक्तान्नेनैवजीवनमस्मिन्नन्नेएवनाशश्चजायमानःप्रसिद्धस्तेषांस्थावराणामितिद्वयोरर्थः ११७ । ११८ जंगमानांतूत्पत्त्यादिकमन्नहेतुकंप्रसिद्धमित्याह ओषध्यात्मकमिति स्पष्टम् ११९ अथैनदपियंत्यंततइतिपादस्यान्नेलीयंतइत्यर्थोदर्शितः अन्नरूपाःसत्यःप्रजानश्यंतीत्याकारकमर्थांतरंदर्शयति स्थावराइतिद्वाभ्यां । स्थावरादिदेहानांशाकादिभावेनथंकंचित्प्राणिनंप्रत्यन्नभावःप्रसिद्धइत्यर्थः १२० किंचपृथिवीसर्वभूतानामन्नंभोगसाधनत्वात्तल्लीनानांसर्वेषामन्नत्वंविनाशदशायांसिद्धमित्याह पृथिव्याइति । अभिन्नाइतिच्छेदः पृथिव्याःसकाशाद्देहहीनाःसंतइतितदर्थः स्फुटमन्यत् १२१ द्वितीयमंत्रार्थमाह अन्नमिति । ततःसकलप्रजोत्पादादिहेतुत्वादन्नंसमष्ट्यात्मकंज्येष्ठंप्रथमोत्पन्नमुच्यते क्षुधायाःसर्वरोगात्मिकायाअपहारकत्वात्सर्वौषधमितिचोच्यतइत्यर्थः १२२ अन्नंब्रह्मेति । येधिकारिणःअन्नेसमष्टिरूपेसकलभूतोत्पादादिहेतुत्वेनलक्षणेनब्रह्मत्वंनिश्चित्यतदेवध्यायंतितेयथेष्टान्नलाभरूपंफलंभजंतइत्यर्थः अन्नपदव्युत्पत्तिस्तुव्यष्टिरूपेणअद्यतेसमष्टिरूपेणात्तिचभूतानीतिद्विविधाबोध्येत्यर्थः शिष्टमंत्रभागस्तुव्याख्यातप्रायत्वान्नलिखितइति १२३

स्थावराणांनीररूपादन्नादुत्पत्तिरीरिता ॥ जीवनंचतथानाशस्तेनैवास्मिंश्चजायते ११७ नकेवलेननीरेणतेषामपिहिजीवनम् ॥ वर्तनंवाविनाशोवाकिंतुभूमियुतेनच ११८ ओषध्यात्मकमन्नंतुजंगमानांहिकारणम् ॥ उत्पत्तौजीवनेनाशेप्रसिद्धंसर्वदेहिनाम् ११९ स्थावराजंगमादेहाःसर्वेजीवविवर्जिताः ॥ जीवस्यकस्यचित्केचिद्भवंत्यन्नमसंशयम् १२० पृथिव्याश्चतथाऽभिन्नाःसर्वेसर्वशरीरिणाम् ॥ अन्नंततोभवंत्येतेविनष्टाःसर्वएवहि १२१ अन्नंततोत्रभूतानांज्येष्ठमुक्तंमनीषिभिः ॥ सर्वौषधंचयेनायंक्षुधारोगोविनश्यति १२२ अन्नंब्रह्मेतियेनित्यंब्राह्मणाद्याउपासते ॥ प्राप्नुवंतिचतेसर्वेह्यन्नंस्वमनसेप्सितम् ॥ अद्यतेत्तिचभूतानितस्मादन्नंतदुच्यते १२३ अत्रपुच्छंप्रतिष्ठायदीर्यतेपंचकोशके ॥ प्रधानंतद्विविज्ञेयंकारणंचकथंचन ॥ कोशेकोशेचकोशस्यप्रतिकोशंमनीषिभिः १२४ क्रियानामचरूपंचसूक्ष्मेदेहेपृथक्त्रयम् ॥ कृत्वाप्राणमनोबुद्धिरूपमेवंवदंतिच १२५ अंतःस्थूलस्यदेहस्यप्राणएषव्यवस्थितः ॥ स्थूलंशरीरंयादृक्स्यात्तादृग्भवतिसस्वयम् १२६ प्राणस्यांतर्मनश्चैवंमनसोपिचधीस्तथा ॥ धियोपिचतथाऽविद्यासदृशंसर्वमेवतत् १२७ मूषारसेनयद्वत्स्यात्पूर्णाताम्रादिजेनहि ॥ उत्तरोत्तरतस्तद्वत्पूर्वःपूर्वःप्रपूर्यते ॥ कोशःकोशेनसर्वत्रप्राणेनेदंवपुर्यथा १२८

वक्ष्यमाणात्मतत्त्वनिर्णयायपुच्छपदोक्तस्यतथोत्तरोत्तरकोशस्यप्राधान्यादिकंबोध्यमित्याह अत्रेति । यदंगंपुच्छप्रतिष्ठापदाभ्यामत्रपंचकोशकउच्यतेतदंगंकोशेकोशेप्रधानंकथंचित्कारणंचविज्ञेयमितिसंबंधः तथाप्रतिकोशमांतरमांतरंकोशंकोशस्यपूर्वपूर्वस्यकारणंविद्यादितिशेषः १२४ सूक्ष्मशरीरेकोशत्रयकल्पनायांनिमित्तभेदंदर्शयति क्रियेति । सूक्ष्मेदेहेक्रियाप्रधानोंशःप्राणमयःकोशउक्तःवक्ष्यमाणविधयाप्रमाणभूतनामप्रधानोंशोमनोमयःरूपंप्रमेयंतत्प्रधानस्तुविज्ञानमयइत्यर्थः १२५ प्राणमयपरस्यवाक्यजातस्यार्थंप्रदर्शयति अंतरितिदशभिः । अस्यस्थूलशरीरात्मकान्नमयस्यपंचावयवकत्वेनवर्णितस्यांतःस्थितत्वात्प्राणःप्राणमयकोशोपितादृक्प्रपंचावयवकोबोध्यइत्यर्थः १२६ प्राणस्येति । प्राणमयस्यांतर्गतोमनोमयस्तस्यांतर्गतस्तुविज्ञानमयस्तस्याप्यंतर्गतआनंदमयोविद्यारूपः एषांमध्यउत्तरोत्तरंयत्तत्पूर्वपूर्वेणसदृशमित्यर्थः १२७ पूर्वपूर्वसादृश्येदृष्टांतमाह मूषेति । द्रुतंताम्रंयत्रपात्रेप्रतिमाकारार्पकेक्षिप्यतेसामूषेत्युच्यते सामूषायथाताम्रादिद्रवेणमूषाकारग्राहिणापूर्णाभवति तथाउत्तरोत्तरेणमनोमयादिनापूर्वपूर्वःकोशःप्रपूर्यते तत्रोदाहरणं यथाप्राणमयेनेदंस्थूलशरीरंपूर्णमिति १२८

अस्यप्राणमयस्यावयवकल्पनामभिनयति प्राणरूपइति । अत्रकोशेप्राणामुखादिसंचारीवृत्तिविशेषःशिरस्त्वेनध्येयः अपानोऽधःसंचारीव्यानःप्राणापानयोःसंधिरूपाएतौवामदक्षिणपक्षत्वेनध्ये यावित्यर्थः १२९ आकाशेनइति । आकाशइनःस्वामीदेवतेतियस्यतादृशःसमानोमध्यत्वेनध्येयः पृथिवीनःपृथिवीदेवताकउदानस्तुपुच्छत्वेनप्रतिष्ठात्वेनचध्येयइत्यर्थः १३० तस्यप्रतिष्ठा त्वंस्फुटयति उदानेति । यद्युत्क्रमणशीलउदानोनिर्गच्छेत्तदासर्वःप्राणमयोबहिर्गच्छेदतःपृथिवीदेवतयागुरुत्वेनप्रतिबद्धोत्क्रमणशक्तिकःसन्नुदानःप्रतिष्ठापदप्रयोगमर्हत्येवेत्यर्थः १३१ यथान्नमयः समष्टिरूपेगध्यातःसर्वान्नलाभहेतुरुक्तस्तथायंप्राणमयःसमष्टितयादृष्टःसर्वायुर्लाभहेतुरित्याह यथैवेति १३२ अत्रापीति । अत्रपदस्यव्याख्याप्राणमयंप्रतीतिश्लोकपदोक्तंमंत्रंपठति प्राणंतीत्या दि । समष्टिप्राणाभिमानिनंदेवंप्राणंतंप्राणव्यापारंकुर्वंतमनुसृत्यैवसर्वेदेवादयःप्राणिनःप्राणंतिचेष्टंतेइत्यर्थः १३३ प्राणोहीति । प्राणःसर्वेषामायुरात्मकः यस्मात्प्राणेसत्येवजीवनंप्रसिद्धं अतएवप्राणस्यसर्वायुषमितिनामवेदेप्रसिद्धमित्यर्थः १३४ अस्यब्रह्मत्वेनोपासनात्पूर्णायुर्लाभःफलमित्याह उपासतइति । आदिपदेनसहस्रसंवत्सरादिपुराणोक्तायुर्ग्रहः १३५ तस्येति ।

प्राणरूपेचकोशेऽस्मिन्शिरःप्राणउदीरितः ॥ अपानउत्तरःपक्षोव्यानोदक्षिणएवच १२९ आकाशेनःसमानोयउदरंसतुकीर्तितः ॥ पृथिवीनउदानोयंप्रति ष्ठापुच्छमीरितः १३० उदाननिर्गमाद्यातिप्राणःसर्वोबहिर्यतः ॥ उदानस्ततएवायंप्रतिष्ठापरिकीर्तितः १३१ यथैवान्नमयःकोशःसर्वान्नंपरिकीर्तितः ॥ एवं प्राणमयोप्येषसर्वायुःपरिकीर्त्यते १३२ अत्राप्युदाहरत्येतंश्लोकंप्राणमयंप्रति ॥ प्राणंतिप्राणिनःप्राणंप्राणंतमनुसर्वदा ॥ देवामनुष्याःपशवोजीवंतः सर्वएवहि १३३ प्राणोहिसर्वभूतानामायुर्यस्माद्धिजीवनम् ॥ प्राणेसतिहिसर्वेषांतस्मात्सर्वायुषंहिसः ॥ वेदेषुपठ्यतेवेदवादिभिस्तत्त्वदर्शिभिः १४ उपासतेत्र येप्राणंब्रह्मबुद्ध्यामहाधियः ॥ शतसंवत्सराद्यायुःसर्वमेवप्रयांतिते १३५ तस्यस्थूलस्यसर्वस्ययएषइहकीर्तितः ॥ आत्माप्राणमयोयस्माद्व्याप्यतेतेनतद्वपुः ॥ १३६ यथैवान्नमयादन्यआंतरोन्नमयेस्थितः ॥ आत्माप्राणमयस्तद्वत्तस्मिन्नास्तेमनोमयः १३७ यजुस्तस्यशिरोज्ञेयंपक्षऋक्दक्षिणःस्मृतः ॥ उत्तरश्चतथा सामह्यादेशोब्राह्मणात्मकः ॥ अंतरंचतथापुच्छमथर्वांगिरसःस्मृतः १३८ यद्यप्ययंशब्दराशिर्यजुरादिर्नमानसम् ॥ तथापितादृशीवृत्तिर्यजुरादेर्मनोगता ॥ वर्ततेतेनेननामत्वंमनसोनविरुद्ध्यते १३९

यएषप्राणमयःकीर्तितःससर्वस्यस्थूलप्रपंचात्मकस्यान्नमयस्यात्माबोध्यः यतस्तेनप्राणमयेनतद्वपुर्व्याप्तमित्यन्वयः अन्नमयादात्मबुद्धिमपकृष्यप्राणमयेनिदध्यादितिभावः ३६ अन्नमयवाक्यजा तार्थमाह यथैवेति । यथाप्राणमयःकोशोऽन्नमयाद्भिन्नत्वेनततआंतरत्वेनतस्यात्मत्वेनचसत्ताप्रदत्वलक्षणेनोक्तस्तथातस्मिन्प्राणमयेऽतःस्थोमनोमयोबोध्यइत्यर्थः १३७ तस्यपंचावय वानाह यजुरिति । यजुर्वेदःशिरस्त्वेनध्येयः ऋक्सामेदक्षिणवामपक्षत्वेन आदेशपदोक्तोब्राह्मणभागस्तुअंतरपदोक्तमध्यमभागत्वेन अथर्ववेदस्तुशांत्यादिप्रयोजकत्वेनस्थितिहेतुत्वात्पुच्छमि तिप्रतिष्ठेतिचध्येयइत्यर्थः ३८ ननुशब्दात्मकानांयजुरादीनांकथंमनोमयावयवत्वमित्याशंकांपरिहरति यद्यपीति । यद्यपियजुरादिर्वेदःशब्दराशिरूपएवप्रसिद्धोनमानसज्ञानरूपस्तथापियजुरादेः स्वरूपघटिकाप्रमाणत्वर्घटिकावावृत्तिर्मानस्येवतिष्ठतितेनयजुरादिशब्दानांवृत्तिपरत्वांगीकारेणमनोमयस्यनामावयवकत्वमुपपन्नमित्यर्थः अयंभावः नकेवलावर्णावेदःकिंतुस्थानप्रयत्नस्वराद्यनु संधानविशिष्टाः तथाचयजुरादिस्वरूपंमनोवृत्तिघटितं एवंप्रमाजनकत्वमपिनस्वरूपेणैववेदवाक्यानांकिंतुमानसवृत्तिरूपेणैवेति १३९

अनेनमनोमयेनप्रमाणात्मकेनाविषयोऽध्यात्माऽवरणभंगद्वाराप्रकाश्यतेइत्यर्थपरत्वेनश्लोकाख्यमंत्रमवतारयति मनसेति । यथामनःकर्तृवेदरूपेण आत्मानंब्रह्मरूपंसाक्षाद्विषयीकर्तुंनशक्नोतित थास्वरूपेणाप्यात्मनोगोचरस्वभावत्वादित्यस्मिन्नर्थेइमंश्लोकंपठतीत्यर्थः १४० तंपठति यतश्चति १४१ इदमुक्तार्थंयोजयति मनसेतिद्वाभ्यां । यद्यपियजुराद्यावाचस्तत्स्वरूपघटकंमनश्च एतेषांप्रमाणभूतानांस्वांतर्गतमानंदरूपमात्मानंप्रवेदयितुंप्रकाशयितुंनशक्तिस्तथाप्यात्माऽधिकारीआत्मनोमनोमयस्यस्वरूपांतर्गतमानंदंमनसैवांतर्मुखेनावरणभंजकेन विद्वान्ज्ञानवान्संसाराच्च बिभेतीत्यर्थः तस्मात्प्राणमयादात्मत्वदृष्टिमपकृष्यमनोमयेपरमानंदलाभहेतौतांकुर्यादितिभावः १४२ । १४३ अस्मादपिनामात्मकप्रमाणलक्षणान्मनोमयात्प्रमातृत्वेनसकलप्रमेयात्मक त्वेनचोत्कृष्टस्यविज्ञानमयस्यबोधकंवाक्यजातंव्याकरोति तस्यप्राणमयस्येत्यष्टभिः । यएषमनोमयस्तस्यप्राणमयस्यात्मत्वेनोक्तस्तस्मिन्मनोमयेंतर्विज्ञानमयःसकर्तृप्रमात्रादिरूपप्रपंचात्मकः कथितोस्तीत्यन्वयः १४४ एतदेवस्फुटयति मनोमयइति । यथामनोमयःप्राणमयस्यांतस्तथात्रमनोमयेतस्यकर्तृत्वादिनाप्रसिद्धस्यविज्ञानमयस्यास्तित्वंस्थितिरुक्तेत्यर्थः १४५ तदीयपंचावयवा नाह शिरइति । श्रद्धाआस्तिक्यरूपासर्वकर्ममूलभूताशिरस्त्वेन विज्ञानमयस्यध्येयातथाविहितेस्वाध्यायोध्येतव्यइतिविधिप्रयुक्तेकर्मज्ञानेकर्मविचारेमनसिवर्तमानेमानसीयाशास्त्रजामीमांसाशा

**मनसावेदरूपेणब्रह्मात्मानैवगम्यते ॥ तथातेननगम्योयमवाङ्मनसगोचरः ॥ अस्मिन्नर्थेइमंश्लोकंवदंतिब्रह्मवादिनः १४० यतोवाचोनिवर्तंतेअप्राप्यमनसासह ॥ आनंदंब्रह्मणोविद्वान्नबिभेतिकदाचन १४१ मनसासहितावाचोयजुराद्याःप्रकीर्तिताः ॥ निवर्तंतेत्रताःसर्वाआनंदात्मप्रवेदनात् १४२ यद्यप्येवंतथाप्यात्मानबिभेतिकदाचन ॥ आनंदमात्मनोविद्वान्मनसैवनचान्यथा १४३ तस्यप्राणमयस्यात्मापूर्वस्योक्तोमनोमयः ॥ यएषकथितस्तस्मिन्सविज्ञानमयोस्तिहि १४४ मनोमयोयथैवास्तेसतुप्राणमयेस्वयम् ॥ विज्ञानमयरूपस्यतस्यात्रास्तित्वमीरितम् १४५ शिरःश्रद्धातथापक्षोदक्षिणःशास्त्रजैवधीः ॥ मानसीविहितेकर्मज्ञानेमनसिसंस्थिते १४६ क्रियमाणेचतस्मिन्स्यात्सत्यशब्दोदितैवधीः ॥ सोत्तरोपिभवेत्पक्षोयोगःशास्त्रार्थनिश्चयः ॥ उदरंसतुविज्ञेयोविज्ञानमयरूपिणः १४७ महःप्रथमजस्यैषाबुद्धिर्विज्ञानकारणम् ॥ अस्यपुच्छंप्रतिष्ठैषायदियंसर्वकारणम् १४८ अत्रापिमुनयःश्लोकंवदंत्येतंमहाधियः ॥ बुद्धिर्यज्ञांस्तथानेकंकर्मजातंचलौकिकम् ॥ कुरुतेपूर्वजांचैतांदेवाब्रह्मेत्युपासते १४९ विज्ञानंब्रह्मचेद्वेदतस्माच्चेन्नप्रमाद्यति ॥ शरीरेपाप्मनोहित्वासर्वान्कामान्समश्नुते १५० मनोमयस्यपूर्वस्यतस्यात्मैषप्रकीर्तितः ॥ विज्ञानमयरूपोयःपूर्णोयेनमनोमयः १५१**

स्त्रजन्याधीःसाक्षतपदोक्तादक्षिणपक्षत्वेनध्येयेत्यर्थः १४६ क्रियमाणइति । तथातस्मिन्विहितेकर्मणिअनुष्ठीयमानेयाधीःश्रौतसत्यपदोक्तासावामपक्षत्वेनध्येया तथायोगपदोक्तोऽध्यात्मशास्त्रार्थनिश्चयःसमाधानरूपोदक्षिणोत्तरपक्षाभ्यांचित्तशुद्धिद्वारोपकार्यत्वेनमध्यभागोविज्ञानमयात्मनोध्येयइत्यर्थः १४७ महइति । तथामहःपदोक्ताप्रथमजस्यहिरण्यगर्भस्यबुद्धिःसमष्टिरूपा सर्वकारणत्वात्पुच्छमितिप्रतिष्ठेतिचध्येया १४८ अत्रापीति । अत्रविज्ञानमये एतंएतदर्थकं श्लोकार्थंलिखति बुद्धिरिति । बुद्धिर्विज्ञानाख्यैवसकलस्ययज्ञादिरूपस्यवैदिकस्यलौकिकस्यचकर्मजातस्यकारणंभवति एतांबुद्धिंपूर्वजांसमष्टिरूपांसर्वेदेवाद्देवभाविनोब्रह्मेत्युपासतेइत्यर्थः १४९ एतदुपासनफलप्रदर्शकंद्वितीयंश्लोकंपठति विज्ञानमिति । यएतंविज्ञानमयंविज्ञायेतरात्मबुद्धिंत्यजन्नेतन्निष्ठोभवतिसदेहाभिमानप्रयुक्तंपापजातंविहायसर्वमैश्वर्यंलभतेइत्यर्थः १५० मनोमयस्येति । यएषविज्ञानमयरूपःकोशःकीर्तितः सतस्यवर्णितस्यमनोमयस्यात्माबोध्यः मूषाताम्ररसन्यायेनतत्पूरकत्वादिति १५१

आनंदमयवाक्यार्थमाह विज्ञानमयतइत्यादिना । तस्माद्विज्ञानमयात्कर्त्रादिरूपात्भोक्तृत्वेनोत्कृष्टआनंदमयशब्दितआत्माअन्यआंतरश्चबोध्यः कीदृशः अव्याकृतमयइत्यर्थः १५२ अस्याव यवानाह अस्येतित्रिभिः । इष्टार्थदर्शनजंसुखंप्रियपदोक्तमस्यानंदमयस्यशिरस्त्वेनध्येयम् तथेष्टार्थलाभजन्यंसुखंमोदपदोक्तंदक्षिणपक्षत्वेन तस्येष्टस्यभोगजंसुखंप्रमोदपदोक्तमुत्तरपक्षत्वेनेत्यर्थः १५३ सुखमिति । यत्सुखंप्रियादिषुविशेषेषुसामान्यरूपेणानुगतमानन्दपदोदितंसुषुप्तौप्रसिद्धंतदस्यमध्यभागत्वेनध्येयमित्यर्थः १५४ निर्विशेषानंदरूपंप्रतिपाद्यत्वेनप्रधानंसर्वाधिष्ठानंब्रह्मैवास्य पुच्छादिरूपेणबोध्यमित्याह आनंदात्मेति स्पष्टम् १५५ एतेपंचकोशाब्रह्मात्मावगमायैवंश्रुत्याप्रोक्ताइतीममर्थंलौकिकन्यायैरेकविंशत्याश्लोकैर्विशदयंस्तत्रलोकानुग्रहार्थंमहतांप्रवृत्तिरितिन्याये नश्रुतिप्रवृत्तिमाह चित्तमितिपङ्क्तिः । सर्वेषांजंतूनांबाह्यविषयार्थंप्रवृत्तिर्बहिर्मुखचित्तेंद्रियाद्यभिमानप्रयुक्ताप्रसिद्धातत्रप्रवृत्तौचनित्यप्राप्तस्वरूपानंदाबोधोमूलतयादुःखसिंधुपातःफलतयाचप्रसि द्धइतित्रयाणामर्थः १५६ । १५७ । १५८ एवमिति । सर्वेषांजंतूनामुक्तविधयाप्राप्तंव्यसनंपरमपुरुषार्थध्वंसरूपंदुःखपातात्मकंविपद्रूपंवावीक्ष्यमातृवत्स्नेहाकुलाश्रुतिःकरुणार्द्रासाक्षा

विज्ञानमयतस्तस्मादानंदमयशब्दितः ॥ आंतरोह्यन्यएवायमात्माऽव्याकृतरूपधृक् १५२ अस्यानंदमयस्यस्याच्छिरइष्टार्थदर्शनम् ॥ प्रियंलाभस्तथेष्टस्य मोदःपक्षोपिदक्षिणः ॥ भोगस्तस्यप्रमोदःस्यादुत्तरःपक्षएवसः ५३ सुखंसामान्यमेतेषुह्यानंदोयःप्रियादिषु ॥ आत्मोदरंसविज्ञेयःपक्षिणोस्यमहात्मनः ५४ आनंदात्मस्वरूपंयद्ब्रह्मसर्वस्यकारणम् ॥ यस्यावगमसंप्राप्त्यैकोशपंचकमीरितम् ॥ अस्यपुच्छंप्रतिष्ठाचतदेवोक्तंमनीषिभिः ५५ चित्तंबहिर्मुखंप्रायःसर्वेषामिहदे हिनाम् ॥ नित्यंबहिर्मुखान्येवज्ञानकर्मेंद्रियाणिच ॥ अतःसर्वोपिबाह्यार्थंजंतुर्गच्छतिनांतरम् ५६ आनंदात्मानमंतस्थंसुखपाथोनिधिंनिजम् ॥ परित्यज्यबहिः सर्वःसुखार्थंपरिधावति५७ धावंश्चनकुतश्चित्सुखलेशंचगच्छति ॥ जनःसर्वःपरंतीव्रदुःखपाथोनिधौपतेत्५८एवमेतत्समापन्नंदुस्तरंव्यसनंतदा ॥ सर्वेषांप्राणिनां दृष्ट्वाश्रुतिर्मातेववत्सला ५९ साक्षाद्बाह्यार्थलोभेनप्रवृत्तंनकथंचन ॥ श्रुतिर्वारयितुंशक्तादुःखितान्वीक्ष्यदुःखिता १६० उपायाततएवैतानित्थंवारयतिद्विजान् ॥ वारयिष्यंतितेपश्चादित्थमन्येनिवारिताः ॥ इतिसंकल्प्यजननीश्रुतिःकोशानिमान्जगौ ६१ रूपयौवनसंपन्नःपुमानपिगुणोदधिः ॥ ललनावापिनस्वेनदेहेनप रितुष्यति ६२ देहमन्यंसुखप्रेप्सुर्जंतुःसर्वोभिधावति ॥ जीवंतंवामृतंवापिपिशाचसदृशंसदा ६३ स्थूलादेहाश्चसर्वेषामन्नकार्याणिसर्वदा ॥ विज्ञानंचमनःप्राणाः सूक्ष्माणांकारणानिच ॥ अव्याकृतंतृतीयंस्याद्धेतुशून्यंवपुःसदा ६४ एतावानेवसकलःप्रपंचोनापरोस्तिहि ॥ लोकत्रयेपिदेहेस्तिप्रत्येकंप्राणिनांचसः १६५

द्वारयितुमशक्ताचसतीउपायात्निवृत्त्युपायमालोच्यततोबाह्यप्रवृत्तेःसकाशादित्थंद्विजान्वेदाध्ययनाधिकारिणस्तावद्वारयति इत्थंकथमित्यतआह कोशानिमान्जगाविति । ननुसर्वेहितायप्र वृत्तयाश्रुत्याकथंद्विजाएवोपदिष्टाइत्यतआह वारयिष्यंतीत्यादिसंकल्प्येत्यंतं । तेद्विजावारिताइतरानपिपुराणादिवाक्येनवारयिष्यंतीतिसंकल्प्यद्विजाएवोपदिष्टाइतित्रयाणांसंबंधः १५९ । १६० । १६१ ननुकथंपंचकोशोपदेशेनबाह्यप्रवृत्तिर्निरस्तेत्याशंक्याऽर्केचेन्मधुविंदेदितिन्यायमादर्शयति रूपेतिपंचभिः । लोकेरूपादिसंपन्नाअपिपुमांसःस्त्रियोवापरशरीरंजीवंतंमृतंवापिशा चवच्चित्तपरितोषायभजंतःप्रसिद्धाइतिद्वयोरर्थः १६२ । १६३ स्थूलाइति । तच्चपरशरीरंत्रिविधंस्थूलसूक्ष्मकारणभेदात् तत्रप्रथममन्नकार्यमेवद्वितीयंतुविज्ञानादित्रितयात्मकमेवतृतीयमप्य न्नाद्यज्ञानरूपमेवेत्यर्थः १६४ एतावानिति । नकेवलंपरशरीरमेवान्नाद्यात्मकंकिंतुयावान्लोकत्रयेप्रपंचःस सर्वोप्यन्नप्राणमनोबुद्धिकारणेभ्योभिन्नोनभवतितन्मयत्वात् सचसर्वःप्रपंचःप्राणि नांप्रत्येकंस्वदेहएववर्ततेऽतोबहिरर्थनीयंनकिंचिदितिभावः १६५

आनंदात्मेति । तत्रबहिर्गच्छन्बालएवंश्रुत्यावोध्यते एवंकथं हेतातयदितवायमेवाग्रहोयन्मयानंदात्मस्वरूपंनस्पष्टव्यमात्मनोन्यदेववस्तुममसुखायेतितर्हिभवतःसुखंसुखदमात्मनोन्यदेवभवताद स्तुतथापित्वंतदात्माग्यदन्नादिकंस्वदेहएवविद्यमानंप्रयाहिभजविमर्थंबहिर्गच्छसीत्यर्थः १६६ एवमुपदेशेलौकिकमात्रवृत्तंदृष्टांतयति क्षुधितइतिचतुर्भिः । यथाक्षुधावशात्कामवशाद्वास्वगृहंपरि त्यज्यबहिर्गच्छन्सुतएवंजनन्याहस्तंगृहीत्वानिवार्यते एवंकथं हेवत्सतवेष्टस्यसर्वस्यगृहएवमयासंपाद्यमानत्वाद्बहिर्गमनंक्लेशदमयुक्तमितित्रयाणामर्थः १६७ । १६८ । १६९ एवमुक्तइति । एवं जनन्योक्तःपुमान्यदिधीमान्भवतिवुद्धेःफलमनाग्रहइतिन्यायात्तर्हिबहिर्गतिंत्यक्त्वाकुत्रकुत्रेतिवदन्नंतर्गत्वासर्वमिष्टंलभतेइत्यर्थः १७० दार्ष्टांतिकेयोजयति एवमित्यादिना । एवंदेहाद्बाह्यंपरशरी रादिकंप्रतिसुखायधावंतंजंतुमंतर्मुखंकर्तुंप्रथममन्नमयकोशःश्रुत्योक्तइत्यर्थः १७१ अस्मिन्नेषइति । ततःश्रुत्युपदेशादस्मिन्नन्नमयएवसर्वंस्थूलविषयजन्यंसुखंलभतेइत्यर्थः १७२ बाह्यादिति । एवं बाह्यान्निवृत्तःसन्नन्नमयेपिवास्तवंसुखमलब्ध्वाश्रुतिजनन्यावचनविश्वासेनतदंतर्गच्छन्सूक्ष्मशरीरंकोशत्रयात्मकंयातीत्यर्थः १७३ कोशक्रममाह तत्रापीति । तत्रसूक्ष्मेपिप्राणमयंमनोमयंविज्ञान

आनंदात्मस्वरूपाच्चेदन्यतोपिसुखंभवेत् ॥ भवताद्भवतस्तत्त्वंस्वदेहेन्यत्प्रयाहिभोः १६६ क्षुधितःकामुकोवापिपरित्यज्ययथानिजम् ॥ गृहंगच्छन्निवार्येतह स्तग्राहंकदाचन १६७ जनन्यावत्सकस्मात्त्वंबहिर्यास्यसिदुःखितः ॥ गृहएवतवाभीष्टमन्नंनानाविधंशुभम् १६८ रूपयौवनसंपन्नादाराश्चमनसेप्सिताः ॥ सं पादयामिमाक्लेशंगमिष्यसिकदाचन १६९ एवमुक्तेयथाधीमान्कुत्रकुत्रेतिचेरयन् ॥ गृहस्यांतःप्रयात्याशुबहिस्त्यक्त्वागतिंपुमान् १७० एवंसुखार्थिनोजंतोर्देहा द्बाह्यंप्रधावतः ॥ अंतर्मुखत्वसंपत्त्यैदेहःपक्षीपुरोदितः १७१ अस्मिन्नेषसमायातिझटित्येवपुमानिह ॥ परित्यज्यततोभिन्नंविषयंसुखकारकम् १७२ बाह्याद्व्या वृत्तचित्तःसन्नस्मिन्स्थूलेस्थितःपुमान् ॥ प्रयातिसहसासूक्ष्ममुत्सुकःसुखलिप्सया १७३ तत्रापिप्राणमायातिप्रथमंसततोमनः ॥ ततश्चबुद्धिमायातिकार्यंतत्रज हातिसः १७४ अव्यक्तंकारणंबुद्धेस्ततोयातिगुहाक्षितः ॥ तत्रयातिसुखस्यायंदर्शनंहिततोपिच ॥ लाभंतस्माच्चभोगंससामान्यंचततोव्रजेत् १७५ सुखसामा न्यसंस्थानःसर्वदुःखविवर्जितः ॥ आनंदात्मानमात्मायमात्मत्वेनाधिगच्छति १७६ यदीदमात्मनोरूपंब्रह्मनात्मतयापुमान् ॥ अधिगच्छतिजीवन्सन्नसत्तुल्यः प्रजायते ॥ अत्रापिश्लोकमाहुस्तेमुनयोब्रह्मवेदिनः १७७ असन्नेवभवेदात्मानास्तिब्रह्मेतिवेदचेत् ॥ अस्तिब्रह्मेतिचेद्वेदसंतमेनंततोविदुः १७८ ब्रह्मणोनास्ति ताज्ञानान्नित्यंसंजातपातकः ॥ बहिर्विषयलाभार्थंव्रजन्देहादहर्निशम् १७९

मयंचक्रमेणयातितत्रविज्ञानमयेपिविरज्यमानःकार्यवर्गंजहातीत्यर्थः १७४ एवंस्थूलारुंधतीन्यायमनुसरन्कारणात्मकमानंदमयंयातीत्याह अव्यक्तमिति । तत्रानंदमयेसुखस्यस्वरूपंदर्शनंजला भजंभोगजंचक्रमेणप्राप्यसामान्यमानंदाख्यंरूपंयातीत्यर्थः १७५ ततःश्रुतिजनन्याप्रापणीयतयेष्टंब्रह्मानंदंसर्वांतरंपुच्छभूतंलभतइत्याह सुखसामान्येति । संस्थानःसम्यक्स्थितिमान् १७६ एव मनुग्रहेणश्रुत्याप्रदर्शितमप्यात्मानंयोनजानातिसोऽसत्शब्दप्रयोगार्होभवतीत्यस्मिन्नर्थेपर्यवसन्नउत्तरोमंत्रइत्याह यदीदमिति । यदीदमात्मरूपंब्रह्मत्वेननावगच्छतितर्हिअसत्तुल्यःअसतान्नृशृंगा दिनाअसत्शब्दप्रयोगार्हत्वधर्मेणतुल्योभवतीत्यत्रार्थेइममुत्तरंमंत्रंपठंतीत्यर्थः १७७ तंदर्शयति असन्नेवेति । योब्रह्मनास्तीतिवेदतस्यात्माऽसन्भवतीतिपूर्वदलार्थः १७८ तत्रपूर्वदलार्थंस्फुटयन्स त्पदार्थानां 'सद्विद्यमानेसत्येचप्रशस्तार्चितसाधुषु' इतिकोशोक्तानांव्यतिरेकंनास्तिकेदर्शयति ब्रह्मणइतित्रिभिः । सत्यंयथार्थेवाङ्मनसीइतियोगभाष्योक्तेर्ब्रह्मणोनास्तितांजानन्ननृतदूषितचित्तो भवतिस्वदेहाद्बहिर्विषयलाभार्थंगमनेनासन्तुष्टतालक्षणामसाधुतांचस्वस्यदर्शयतीतिभावः १७९

दुःखादिति । तथादुःखसंतानंदैन्यंमरणंचपुःपुनःप्राप्नुवन्नविद्यमानइवभवतिअल्पायुष्ट्वेनाप्रशस्तोधिकृतत्वेनानर्चितश्चजायतेइतिद्वयोरर्थः १८० मंत्रोत्तरार्द्धार्थमाह आस्तिकइति । आस्तिकस्तुब्रह्मणःसत्तामवधार्यमाययाऽज्ञानेनदुःखेनचहीनताप्रयोजकंज्ञानंसंपाद्यब्रह्मरूपेणतिष्ठतीत्यर्थः १८२ ततइति । ततोज्ञानफलसंबंधादमुमास्तिकंसंतमाहुः विद्यमानत्वादिशालित्वादितिभावः १८३ फलितमाह तस्मादिति स्पष्टं १८४ तस्यैपइत्यादेर्वाक्यार्थमाह पूर्वमिति । योविज्ञानमयःपूर्वंसमीरितस्तस्यैपएवात्मा एपकः योयमानंदमयःकथितइतियोजना १८५ आनंदमयःकोशएवब्रह्मत्वेनदर्शितइत्येकदेशिनआहुस्तन्निरस्यन्सोपानारोहणसमांकोशावयवपरंपरांपुच्छभूतेब्रह्मणिसमाप्तांदर्शयतिशिरइत्यष्टभिः । आत्मजठरंआत्मपदोक्तंजठरंशिरःप्रभृतिभिःपंचभिरंगैर्युक्ताःपंचकोशायेप्रोक्तास्तेपामंगानिसंकल्प्यपंचविंशतिर्भवंतितानिब्रह्मजिज्ञासूनांचित्तालंबनभूमित्वेनदर्शितानीतिद्वयोरर्थः १८६ । १८७ तत्रक्रममाह शिरसइति । प्रथमंशिरोध्यात्वादक्षिणंकरंपक्षंध्यायेत्ततोवामंततोमध्यंततःपदद्वयंपुच्छमितियावत् १८८ एवमेकंकोशंध्यात्वाद्वितीयंकोशंगच्छेदित्याह पदद्वयादिति १८९ एवमिति । गच्छेत्ध्यायेत् अतःपंचविंशतितम्याः १९० सर्वांतेनिर्देशात्सर्वाधिष्ठा

दुःखाद्दुःखांतरंप्राप्यमरणंसोधिगच्छति ॥ मृतश्चजायतेदुःखीदुःखीचम्रियतेपुनः १८० एवंयमवशोदीनःसंसारेपरिवर्त्तते ॥ असन्नेवशरीरेषुभूत्वाभूत्वानिरंतरम् ॥ अल्पायुश्चाप्यवज्ञातोजनैर्भवतिनास्तिकः १८१ आस्तिकोब्राह्मणःसतांदृढांज्ञात्वागुरोर्मुखात् ॥ संपादयतितज्ज्ञानंयतस्तिष्ठतिसर्वदा ॥ आनंदात्मस्वरूपेणमायादुःखविवर्जितः १८२ ततःसंतममुंप्राहुर्ब्राह्मणावेदवादिनः ॥ आस्तिकंनास्तिकश्चायमसन्नेवप्रजायते १८३ तस्मान्नास्तिकतानैवकरणीयासुखेप्सुना ॥ गुरुशास्त्रादिकथितेतींद्रियार्थेकदाचन १८४ पूर्वंयस्तस्यविज्ञानमयस्यात्मासमीरितः ॥ एषएवायमानंदमयोयंकथितोधुना १८५ शिरःपक्षौतथैवात्मजठरंपुच्छमेवच ॥ पंचांगःकथितःकोशएकैकोमुनिसत्तमैः १८६ पंचकोशेषुविज्ञेयाःपंचविंशतिभूमिकाः ॥ बहिर्मुखस्यचित्तस्यस्थिरीकरणहेतवः १८७ शिरसस्तुकरंगच्छेद्दक्षिणंततएवच ॥ वामंततोपिजठरंजठराच्चपदद्वयम् १८८ पदद्वयात्परंनास्तिकोशेतस्मिन्नहिकिंचन ॥ ततःकोशांतरंगच्छेत्पूर्ववत्शिरआदिकम् १८९ एवंकल्पनयायोगीपंचविंशतिभूमिकाः ॥ गच्छेदतःपरंनैवगंतव्यंविद्यतेत्रहि १९० ब्रह्मपुच्छंप्रतिष्ठेतियदुक्तंपादरूपतः ॥ नित्यंतत्रैवतिष्ठंतिचतुर्विंशतिभूमिकाः १९१ अस्यैवबोधनायैतेकोशाःश्रुत्यासमीरिताः ॥ पंचांगसहिताःपंचप्राणिनांवपुषिस्थिताः १९२ ब्रह्मणःपुच्छभूतस्यसर्वेषामाश्रयात्मनः ॥ अज्ञानेनसुखंकिंचिदिहलोकेपरत्रवा १९३ आज्ञानादात्मनोऽसत्तांजानातिऽसन्स्वयंततः ॥ उक्तरीत्याभवत्यत्रपुमान्लोकद्वयेपिच ॥ ततोब्रह्मात्मविज्ञानाद्भवेल्लोकद्वयंसदा १९४ इदंविचार्यमुनिभिर्निश्चितंतद्यथाशृणु ॥ एवंविचारयंत्यत्रमुनयोब्रह्मदर्शिनः ॥ ब्रह्मवेदनतोब्रह्मप्राप्तिंकर्तुंस्थिरामिमे १९५

नत्वमपिदर्शितमित्याह ब्रह्मेति । यथान्नमयस्यांतेकीर्तितंपादद्वयंतदाधारस्तथासर्वान्तेपुच्छप्रतिष्ठापदाभ्यामुक्तंयद्ब्रह्मतत्रैवतदाश्रिताएवार्वाक्चतुर्विंशतिभूमिकाःस्थिताबोध्याइत्यर्थः १९१ एतद्देवात्रप्रतिपाद्यमज्ञातत्वादप्राप्तेशास्त्रमर्थवदितिन्यायादित्याह अस्यैवेति । अस्यब्रह्मणएव नह्यानंदमयःप्रियाद्यवयवकोऽप्रसिद्धइतिभावः १९२ असन्नेवेत्यादिमंत्रानुसारेणतद्विज्ञानस्यैवफलवत्त्वाद्यतदेवप्रतिपाद्यमित्याह ब्रह्मणइतिद्वाभ्यां । अस्याज्ञानेसतिनकिंचित्सुखं यतोऽज्ञानादात्मनोऽसत्तांजानानउक्तविधयाअसन्भवति ततोब्रह्मविज्ञानादेवसर्वेष्टसिद्धिरितिद्वयोरर्थः १९३ । १९४ एवंश्रवणविधयात्मतत्त्वंदर्शितमथमननविधयातत्प्रदर्शकउत्तरग्रंथइतिदर्शयति इदमिति । इदमात्मनःसत्यत्वादिकंविचार्यमननंकृत्वापिनिश्चितंतत्तदीयविचारस्वरूपंयथाउदाहियतइत्यर्थः । विचारप्रयोजनंप्रमेयासंभावनानिवृत्तिंदर्शयति एवमिति । ब्रह्मविज्ञानस्यब्रह्मप्राप्तिहेतुतांस्थिरामसंभावनाहीनांकर्तुंवक्ष्यमाणोविचारइत्यर्थः १९५

तत्रानुप्रश्नपदोक्तसंशयत्रयप्रदर्शकस्यउतेत्यादिश्लोकस्यार्थंदर्शयति ब्रह्मास्तीतिपंचभिः । अत्रभाष्येपूर्वमंत्रेचेदितिप्रयोगमूलकोऽस्तित्वनास्तित्वकोटिकोब्रह्मणिप्रथमःसंशयोदर्शितःअविद्वत्प्राप्यत्वाप्राप्यत्वकोटिकोद्वितीयः विद्वत्प्राप्यत्वाप्राप्यत्वकोटिकस्तृतीयः तत्रप्रथमसंशयस्यकोटिर्नास्तित्वरूपात्रश्लोकेपूर्वपक्षतयोच्यते तथाहि येषांवादिनामौपनिषदानांमतेसत्यादिलक्षणंब्रह्मास्तितेषां ज्ञानंमतंव्यर्थंविषयशून्यं तादृशब्रह्मणोऽनुपलब्धेः यदितत्स्यात्तर्हिपृथिव्यादिवदुपलभ्येतेत्यर्थः १९७ द्वितीयसंशयस्यकोटिमविद्वत्प्राप्यतांपूर्वपक्षतयाह विदुषइतिद्वाभ्यां । यस्माद्भवद्भिरभ्युपगत आत्माब्रह्मरूपोविदुषोऽविदुषश्चसमःपक्षपातरहितस्तस्मात्स्मृत्वाप्रत्यभिज्ञायतमात्मानंविद्वान्यथायातितथैवाऽविद्वानपिकुतोनगच्छेत् अतोविदुषएवब्रह्मणिगतिरित्यत्रकारणंवाच्यमित्यर्थः अविदुषआत्मस्मरणंनभवतीतितुनयुक्तंसर्वस्यात्मप्रसिद्धेरितिभावः १९७ एतदेवस्फुटयति ततइति । यदाऽद्वितीयस्यब्रह्मणःसर्वात्मतयासत्तातदाततस्तस्यसमत्वादेवोभयोर्विद्वदविदुषोस्तत्प्राप्तिःसमास्यादित्यर्थः १९८ तृतीयसंशयकोटिंविद्वदप्राप्यतांपूर्वपक्षतयाह अविद्वांश्चेदिति । यद्यप्यविद्वांस्तद्ब्रह्मनयातितर्हितद्ब्रह्मासदेवस्यात् नहिआत्माअप्राप्तश्चेतियुज्यतेतथाच विद्वानपितद्ब्रह्मकथंप्राप्नु

ब्रह्मास्तिवादिनांयेषांसत्यंज्ञानमनंतकम् ॥ तेषांव्यर्थंभवेज्ज्ञानंतस्यानंदात्मरूपिणः १९६ विदुषोऽविदुषोयस्मादेकआत्मासमःस्मृतः ॥ स्मृत्वाविद्वान्यथा गच्छेत्तंतथैवकुतोनहि ॥ अविद्वान्यातितद्वाच्यंकारणंविदुषोगतौ १९७ ततःसत्तायदाब्रह्मरूपस्यस्यात्तदाद्वयोः ॥ विदुषोऽविदुषश्चापिगातिस्तत्रसुनिश्चिता १९८ अविद्वांश्चेदिदंब्रह्मनयात्यात्मस्वरूपकम् ॥ असदेवतदातत्स्याद्विद्वानपिकुतोव्रजेत् १९९ नह्येकमेवगगनंयातिविद्वान्नचापरः ॥ सर्वज्ञस्याशिशोश्चापि जीवतोमृतयोरपि ॥ प्राप्त्यप्राप्तीसमेयद्वद्गगनेतद्वदात्मनि २०० इत्याक्षिप्यततःप्राहुरुत्तरंब्रह्मवेदिनः ॥ यद्यप्येतत्समंब्रह्मविदुषोऽविदुषोपिवा २०१ आत्मरूपंचसंप्राप्तमुभाभ्यामपिवस्तुतः ॥ आप्नोतिनतथाप्येतदविद्वान्हिकदाचन २०२ प्राप्तिरत्रप्रकाशःस्यादविद्यायाःक्षयेसति ॥ अविद्यायाःक्षयोनित्यंविद्यया ब्रह्मजातया ॥ अविद्वान्नतयाशून्यःकथंब्रह्मसमाप्नुयात् २०३ यथानिधिंनिधिज्ञःसन्ननिधिज्ञश्चतावुभौ ॥ प्राप्तावपिचनप्राप्तःस्यादज्ञोबोधवर्जनात् २०४ अविद्वानपितद्वत्स्याद्ब्रह्माप्नोतिनिरंतरम् ॥ तज्ज्ञानराहितत्वेनदुःखत्रितयपीडितः २०५

यात् असत्कर्मकप्राप्त्ययोगादित्यर्थः १९९ सत्त्वेहिकिंचित्प्रतिप्राप्तिःकंचित्प्रत्यप्राप्तिरितिनसंभवतीतिगगनदृष्टान्तेनस्फुटयति नह्येकमिति । यथासर्वज्ञंप्रतिबालंप्रतिचआकाशस्यप्राप्तिःसमातथाऽस्यापियुक्तेत्यर्थः २०० एषांपूर्वपक्षाणामुत्तराणियद्यपिसोऽकामयतेत्यादिश्रुत्यनुसारेणवक्ष्यमाणानितथापिसुखबोधायसूचीकटाहन्यायेनप्राप्त्यप्राप्तिव्यवस्थामादौदर्शयति इत्याक्षिप्येतिषड्भिः । एवंपूर्वपक्षयित्वामुनयइत्थंसिद्धांतयंति इत्थंकथं यद्यपिब्रह्मसमंविज्ञाविज्ञौप्रति यद्यपिचउभाभ्यांविज्ञाविज्ञाभ्यांवस्तुतःप्राप्तमात्मत्वात्तथापिअविज्ञस्तन्नप्राप्नोतीत्येवयुक्तमितिद्वयोःसंबंधः २०१ २०२ तत्रहेतुतयाब्रह्मप्राप्तेरविद्याक्षयोपलक्षितप्रकाशरूपतामाह प्राप्तिरिति । अविद्वांस्तुतयाऽविद्ययाशून्योनभवति अविद्याक्षयप्रयोजकविद्यायाअभावात् वस्तुयाथात्म्यावगाहिज्ञानस्यैवविद्यात्वात् तथाचाविदुषस्तत्प्राप्तिर्नवक्तुंशक्येत्यर्थः २०३ अज्ञानमात्रेणाप्राप्तौतद्यथाहिरण्यनिधिमित्यादिश्रुत्यंतरप्रसिद्धंदृष्टांतमाह यथानिधिमिति । यथासन्नुपरिनिधिर्भूमिखातद्रव्यंतज्ज्ञःअनिधिज्ञश्चएतौवस्तुतोनिधिंप्राप्तावप्यज्ञोऽप्राप्तइत्येवोच्यतेइत्यर्थः २०४ दार्ष्टांतिकेयोजयति अविद्वानपीति । तथाऽज्ञोवस्तुतःप्राप्तोपिब्रह्मतथापिस्वाज्ञानदोषादध्यात्मादितापपीडितःस्यादित्यर्थः २०५

फलितमाह असत्त्वमिति । सत्यस्वभावतावलेनासत्त्वंपरिहायैवस्थितस्यापिब्रह्मणोयोयमविद्वांसंप्रतिप्राप्त्यभावःसएवंवर्णितइतिसंबंधः २०६ अथकामनालोचनस्रष्टृत्वप्रवेष्टृत्वभोग्याकारपरिणामैः पंचभिर्हेतुभिर्ब्रह्मणःसत्तांसाधयतःसोकामयतेत्यादेःसत्यमभवदित्यंतस्यार्थमाह ब्रह्मणोऽसत्यतेतिविंशतिश्लोकैः । सर्वजगद्धेतोर्ब्रह्मणोऽसत्ताशंकितुमप्यशक्येति २०७ एतदेवविशदयति एवमिति । एवंवक्ष्यमाणविधया ८ एवंकथमित्यतआह जगदित्यादि । अनादिवासनाविचित्रमायाशबलोभगवानीश्वरःसृष्टेःपूर्वमद्वितीयतयास्थितः अथभूतभौतिकात्मकंजगत्स्रष्टुमिदंव्यचिंतयत्कामेतवान् इदंकिं अहमात्मनएवजन्मकृत्वाबहुरूपोभवेयामितिद्वयोःसंबंधः ९ । २१० कामनामुक्त्वातपःपदोक्तनानाविशेषगोचरमालोचनंदर्शयति इत्थमिति । इत्थंकामनाक्षिप्तांस्रष्टव्यसामान्यगोचरांचिंतां कृत्वाजगतोनामादिरूपांतरविशेषान्कर्तुंपुनःपर्यालोचयत् कीदृशईशः पूर्वकल्पेऽस्यजगतोनामादिकंयादृशंयत्स्वरूपंयत्संबंधिचतत्तथाविधमेवकर्तुंकामइतिद्वयोःसंबंधः २११ । २१२ स्रष्टृत्वमाह

असत्त्वंपरिहायैवब्रह्मणःसत्यरूपतः ॥ स्थितस्यापिनसंप्राप्तिरेवंह्यविदुषोभवेत् २०६ ब्रह्मणोऽसत्यताकेनशक्याशंकितुमप्यहो ॥ यतएतज्जगज्जातंमहाभूतात्मकंमहत् २०७ एवंहिजगतःसृष्टिमानंदात्माचकारयः ॥ तस्यासत्त्वंहिकोनामप्रतिपत्तुमिहार्हति २०८ जगत्सिसृक्षुर्भगवान्भूतभौतिकरूपधृक् ॥ अनादिवासनाचित्रंमायाकंचुकमाश्रितः २०९ एकएवस्थितःपूर्वमिदमीशोव्यचिंतयत् ॥ बहुरूपोहमत्रस्यांजन्मकृत्वात्मनःस्वयम् २१० इत्थंविचिंत्यजगतोनामरूपक्रियात्मनः ॥ जडाजडस्यबहुधानामरूपक्रियाअपि ॥ सिसृक्षुःपुनरप्यस्यपर्यालोचयदीश्वरः २११ यादृश्योयाश्चयस्यास्यनामरूपक्रियाःपुरा ॥ तादृशस्ताश्चतस्यैताःकर्तुंकामोजगत्प्रभुः २१२ एवंविचिंत्यसर्वेषांनामरूपक्रियाःप्रभुः ॥ असृजत्सयथापूर्वमिदंसर्वंजडाजडम् २१३ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींतद्वदंतरिक्षंसभागणम् २१४ यदिदंकिंचविश्वंस्याद्भूतभौतिकरूपभृत् ॥ सर्वमेवजगन्नाथःसृष्टवान्पूर्ववत्प्रभुः २१५ सृष्ट्वाचसकलंविश्वंसहस्थावरजंगमैः ॥ अनंतरंप्रविष्टोयंतत्राहंतात्मनाप्रभुः २१६ सत्यंज्ञानमनंतंयोब्रह्मानंदात्मरूपकम् ॥ सर्वस्मिन्सर्वदासोयंवर्तमानोपिविश्वकृत् २१७ स्थावरेजंगमेदेहेप्रविश्याहंतयाविभुः ॥ एवंनानाविधोजातएकएवजनार्दनः २१८ पृथिव्यापस्तथातेजश्चक्षुर्गम्यंसदीरितम् ॥ वायुश्चैवांतरिक्षंचपरोक्षंत्यदितीरितम् २१९ भूतपंचककार्यंचतथैतद्भूतपंचकम् ॥ नामरूपक्रियाभिःस्यान्निरुक्तंकीर्त्यतेहियत् २२० अनिरुक्तंतुताभिर्यन्नोच्यतेमनुजादिभिः ॥ साश्रयंतच्चकिंचित्स्यात्किंचित्स्यात्तन्निराश्रयम् २२१ जडंकिंचिच्चतत्रापिभवेत्कुडच्यघटादिकम् ॥ अजडंचेंद्रियादिस्याद्व्यवहारेत्रमानुषे २२२

एवंविचिंत्येतित्रिभिः स्पष्टम् २१३ तत्रमंत्रसम्मतिमाह सूर्येति । भानांदीप्तीनांगणोयत्रतेनस्वर्गेणसहितं २१४ यदिदमिति । किंचविशेषरूपं २१५ सृष्टोपाधिषुप्रतिबिंबितत्वलक्षणंप्रवेष्टृत्वमाह सृष्ट्वाचेति । अहंतात्मनाहंकारावच्छिन्नरूपेण २१६ एतत्प्रवेशांतंकर्मतस्यैवब्रह्मणोयस्यसत्यादीनिलक्षणानीत्याह सत्यमिति । सर्वत्रसर्वदावर्तमानोपीत्यस्याधिष्ठानतयापूर्वंसिद्धोपीत्यर्थः २१७ २१८ अथसृष्टानांभोग्याकाराणांविशेषाभिधायकानिपदानिव्याचष्टे पृथिव्यापइत्यादिना । पृथिव्यादिभूतत्रयंचक्षुरादिगोचरत्वात्सदित्युच्यते वाय्वाकाशौतुपरोक्षत्वात्त्यदित्युक्तावित्यर्थः २१९ भृतेति । तथानामरूपादिभिर्निरूपयितुंशक्यंभूतभौतिकंनिरुक्तमित्युक्तं तद्भिन्नंकपोतरूपादिअनिरुक्तमित्युक्तं तथासाधारतयाप्रसिद्धंनिलयनमित्युक्तं निराश्रयतयाप्रथितमाकाशादिकंतु अनिलयनमितिद्वयोरर्थः २२० । २२१ जडमिति । किंचिद्वस्तुविज्ञानराहित्येनजडमितिप्रसिद्धं तद्विलक्षणमिंद्रियादिकमजडमिति २२२

अवाध्यमिति । लोकेकिंचित्पृथिव्यादिकंबाधाभावेनसत्यमितिख्यातंतद्विलक्षणंरज्जुसर्पादिकमनृतमित्यर्थः २२३ एवंविविधजगदात्मतांब्रह्मणःसयथाकाशंगंधर्वनगरात्मताभित्याह सर्वमि तिद्वाभ्यां । स्पष्टम् २२४ । २२५ यदिदमित्यादेस्त्रयोदशाक्षरवाक्यस्यार्थमाह यस्मादितिचतुर्भिः । यत्सत्यरूपंब्रह्मैवविश्वात्मकंजातंतस्मादनृतमपिविश्वंयाचितमंडनन्यायेनब्रह्मणःस त्तामादायैवसत्यंजातमितिवेदविद्भिरुक्तमित्यर्थः २२६ स्वतःसत्तातुजगतोनास्तिकूटस्थत्वरूपायास्तस्याजन्मादिविकारैःसहविरोधादित्याह जायमानमिति २२७ नासतोविद्यतेभावइतिन्या यविरुद्धंजगतोमध्यएवसत्त्वंततोनृतत्वमेवजगतइत्याह आदाविति २२८ परसत्तयासत्तावत्त्वंदृष्टांतेनस्फुटयति अनृतमिति २२९. अयमर्थोमंत्रेणाप्युक्तइत्याह अनृतंसत्यतामिति २३० तं श्लोकंकिंचिद्व्यत्यासेनपठति असद्वाइति २३१ अस्याक्षरार्थमाह गंधर्वेतिद्वाभ्यां । यथागंधर्वनगरंजनैरुत्पत्तेःपूर्वमाकाशेअसदभवत्तथाविश्वमप्यात्मनिजनेःपूर्वमसदभवत् असत्त्वंनिर्वक्ति नामादीति । नामरूपंचस्पष्टंनासीदितितदर्थः २३२ स्पष्टेति । ततःसृष्टिकालेसदभूदित्यस्यकोर्थः आत्मसत्तायाःप्रसादादाध्यासिकसंबंधात्स्पष्टनामरूपकमभूदिति यतइदंविश्वंसत्येनात्मनै

अबाध्यंकिंचिदेवस्याद्यथाभूमिघटादिकम् ॥ किंचिच्चबाध्यमानंतद्रज्जुसर्पादिकंयथा २२३ सर्वमेतज्जगच्चित्रमस्तिनास्तीतिचस्थितम् ॥ सत्यादिलक्षणं ब्रह्मजातमेकमनेकधा २२४ एकमेवयथाकाशंगंधर्वनगरात्मना ॥ नानाभवतितद्वत्स्याद्ब्रह्मविश्वात्मनासदा २२५ यस्मात्सत्यमिदंब्रह्मजातंविश्वात्मनापुरा ॥ तस्मादनृतमप्येतद्विश्वंसत्यमितीरितम् २२६ जायमानंजगत्सर्वंसत्यंकेनभविष्यति ॥ सत्यंकालत्रयेयत्स्यादेकरूपंतदीरितम् २२७ आदावंतेचयन्नास्तिम ध्येतत्केनहेतुना ॥ भवेत्सततएवैतदनृतंसचराचरम् २२८ अनृतंसकलंविश्वमात्मनासत्यरूपिणा ॥ सत्यंस्यादग्नितोयद्वल्लोहपिंडोग्नितामियात् २२९ अनृतंसत्यतांगच्छेदात्मनासत्यरूपिणा ॥ इत्यत्रमुनयःश्लोकमेतमाहुर्विचक्षणाः २३० असद्वाइदमग्रेभूत्ततोवैसदजायत ॥ ब्रह्माऽऽत्मनःप्रपंचत्वमकरो त्सुकृतंततः २३१ गंधर्वनगरंयद्वद्गगनेतद्वदात्मनि ॥ विश्वंततोजनेःपूर्वमसन्नामादिनाभवत् २३२ स्पष्टनामादिकंस्वात्मसत्यतायाःप्रसादतः ॥ जातंसुकृत मित्युक्तंसत्यंसत्यात्मनायतः २३३ केचिदेनमनालोच्यप्रक्रमंमंदबुद्धयः ॥ असद्वाइदमित्यादेःकारणासत्त्वमास्थिताः २३४ इदंशब्दसमादानात्कार्यस्यैवे तिकेचन ॥ कार्यकारणयोःसाम्यमिदंशब्दस्यकेचन ॥ स्वीकृत्यसर्वजगतःशून्यतांप्रतिजानते २३५ कारणस्यविचारेतदस्माभिर्ब्रह्मवादिभिः ॥ निराकृतम भावौघखंडनेऽनेकधायतः २३६

वसत्यंनस्वतस्ततःसुकृतमितिब्रह्मणोनामसिद्धमित्यर्थः सुष्ठुआत्मसत्तयासत्तावद्विश्वंकृतवदितिव्युत्पत्तिः छांदसत्वेनकर्त्तरिक्तप्रत्ययश्चबोध्यइतिभावः २३३ केचित्तुअस्यप्रकरणस्यात्मसत्ता स्फुटीकरणायप्रवृत्तिरूपंप्रक्रममनालोच्यास्यमंत्रस्यप्रथमपादेनकारणासत्त्वमुक्तमित्याहुरित्याह केचिदिति । आस्थिताःस्वपक्षत्वेनगृहीतवंतः यथाबीजध्वंसादंकुरोत्पत्तिवादिनोबाह्याः २३४ केचनार्द्धवैनाशिकास्तुइदंपदस्यकार्यपरस्यासत्पदेनसामानाधिकरण्यात्कार्यस्यैवासत्त्वमाहुरित्याह इदमिति । समादानंसामानाधिकरण्यम् केचिच्चइदंपदस्यकार्यकारणोभयपरत्वंमत्वासर्व शून्यतामाहुरित्याह कार्यकारणयोरिति । साम्यमपक्षपातित्वंस्वीकृत्येति २३५ तेषांमंदमतित्वंस्फुटयन्नैंकयुक्तिबलेनतैःकारणासत्त्वादीनिस्थाप्यंतेश्रुतिबलेनवेतिविकल्प्यतत्रनाद्यः कालः स्वभावइत्यादिश्रुतिव्याख्यानेऽष्टमाध्यायादौतद्युक्तिकदंबस्यनिराकृतत्वादित्याह कारणस्येति । तच्चेषांयुक्तिवृंदंयतोऽभावानांप्रागभावादीनांखंडनेननिराकृतमतस्तेमंदमतयइतिसंबंधः २३६

नद्वितीयउपक्रमादिविरोधादित्याह सत्यादीति । ब्रह्मणःसत्तांकारणत्वोपन्यासमुखेनदर्शयितुंप्रवृत्तोवेदःकथंकारणासत्तांव्याघातावहांवदेदित्यर्थः २३७ अर्द्धंवैनाशिकंप्रत्याह इदमिति । यदीदंशब्दउद्देश्यसमर्पकउत्पत्तिपूर्वकालिकासत्त्वरूपायविधेयायकार्यजातंनयेत्तदाधुनाकार्यंसत्त्वंकुतआगच्छेदित्यर्थः तथाचासदसदित्यनुगताबुद्धिःस्यान्मृत्कार्येषुमृद्बुद्धिवत् मंत्रद्वितीयपादश्चबाधितार्थःस्यादितिभावः ननुब्रह्मसत्तयैवकार्यंसत्तावदिष्यतेइतिचेदायातंमार्गेइत्याह ब्रह्मणाचेदिति । इदंकार्यंब्रह्मणासद्रूपेणतादात्म्यंलब्ध्वासत्यंभवतीतियद्युच्यतेतर्हितथाभवतादस्त्वित्यर्थः २३८ इष्टापत्तौहेतुतयाप्रकृतमंत्रस्योक्तार्थबोधनार्थंप्रवृत्तिंदर्शयति एतदर्थमिति । एतत्पदार्थमभिनयति असत्यमिति २३९ ननुब्रह्मसत्ताप्रपंचेकेनानीतेतिचेत्सकलप्रपंचनिर्वाहकेणाज्ञानेनेत्याह कार्यमिति । कालत्रयेअसदपिकार्यंयद्ब्रह्मसत्तयासत्यंनोऽस्मान्प्रतिभातितत्रप्रयोजकोऽनादिमायाकृतोमोहएवाध्यासनामेत्यर्थः २४० अथब्रह्मव्यतिरिक्तस्यसत्तयाकार्यंसत्स्यादितितुनशंक्यंतस्यसत्तायाएवदुर्वचत्वेनान्यत्रसत्ताधानशक्तेःसुतरामसंभवादित्याह ब्रह्मणइति । तेनब्रह्मव्यतिरिक्तेनास्यकार्यस्यसासत्ताकुतःस्यादितितुरीयपादार्थः २४१ यथांधोमार्गंप्रदर्शयितुमुद्यतएवमुपालभ्यतेभवतैवमार्गःकुतोनदृश्यतेइतितथाब्रह्मभिन्नंपरत्रसत्ताधानोद्यतंप्रतिवक्तव्यंभवतास्वकीयासत्तैवकुतोनसाधितेत्येतदाह कार्यस्येति । तद्ब्रह्मभिन्नंप्रथममात्मनःस्वस्यासतः

सत्यादिलक्षणंप्रोच्यब्रह्मणःकारणात्मनः ॥ वेदःकथंनुतस्यायमसत्तांचस्वयंवदेत् २३७ इदंशब्दोपिकार्यस्ययद्यसत्त्वंवदेदयम् ॥ उत्पत्तेःपूर्वमधुनातत्सत्यंकेनहेतुना ॥ ब्रह्मणाचेदिदंनामभवतान्ननिवार्यते २३८ एतदर्थमयंश्लोकःकीर्त्यतेवेदवादिभिः ॥ असत्यमपियत्सत्स्याद्ब्रह्मसत्ताप्रभावतः २३९ कार्यंकालत्रयेप्येतदसत्यंब्रह्मसत्तया ॥ अनादिमाययामोहान्मध्येसत्यंविभातिनः २४० ब्रह्मणोव्यतिरिक्तस्यकार्यकारणवस्तुनः ॥ सर्वस्यापिनसत्तास्तिकुतस्तेनास्यसाभवेत् २४१ कार्यस्यकुरुतेसत्तांब्रह्मान्यद्यदिकिंचन ॥ आत्मनस्तत्करोत्वेतांप्रथमंह्यसतःसदा २४२ अप्यसद्ब्रह्मणोभिन्नंनास्तिकेनतुसद्भवेत् ॥ ब्रह्मैवसकलंयस्माज्जगत्सदसदात्मकम् ॥ असकृत्कथ्यतेवेदवादिभिःसर्वपंडितैः २४३ ब्रह्मणोत्रविभिन्नंयत्सदसद्वस्तुकिंचन ॥ यदातदानंततास्यनभवेद्गगनादिवत् २४४ अभावेनंततायाःस्याद्ब्रह्माभावःसुनिश्चितः ॥ प्रकाशोष्माद्यभावेस्यात्तेजोभावोयथाभुवि २४५ ब्रह्माभावाच्चवेदांतागच्छंत्यत्राप्रमाणताम् ॥ अप्रामाण्येनतेषांस्याद्वेदानामप्रमाणता २४६ अप्रामाण्येचतेषांस्याद्वचसामप्रमाणता ॥ अप्रामाण्येनवचसांनेत्रादेरप्रमाणता २४७ तदप्रमाणतायांचव्यर्थामानकथाभवेत् ॥ तदभावेकथंनामब्रह्मणोन्यद्भवेदिह ॥ सदसद्वाद्वयंचापिमानान्मेयंयतोभवेत् २४८

सत्ताहीमस्यसत्तांकरोत्विति २४२ किंचतिष्ठतुब्रह्मभिन्नस्यसत्तासत्ताधायकत्वंच यतोब्रह्मभेदएवकुत्रचिद्वक्तुमशक्यः श्रौतस्यब्रह्मत्वस्यव्याघातप्रसंगादित्याह अपीति । अपिचअसत्असद्रूपेणप्रसिद्धमपिसूक्ष्मादिब्रह्मभिन्नतांनसहतेकुतःसदपीति ब्रह्मणःसर्वात्मतायाःप्रमाणराजेनवेदेनप्रतिज्ञातत्वादित्यर्थः २४३ ब्रह्मणोभिन्नस्याणुमात्रस्यापिस्वीकारेअनिष्टप्रसंगंविशदयति ब्रह्मणोत्रेतिपंचभिः । अनंतताअन्योन्याभावप्रतियोगित्वलक्षणवस्तुपरिच्छेदहीनतानभवेत् गगनादिवदितिव्यतिरेकेदृष्टांतः २४४ स्वरूपलक्षणभूतायाअनंततायाअभावेतुब्रह्मपदार्थाभावःस्यात्प्रकाशाद्यभावेतेजोभाववदित्याह अभावेइति २४५ ततश्चप्रमेयाभावाद्वेदांतानामप्रामाण्यंस्यात्तथासतितत्सजातीयस्यपूर्वकांडस्यापितथात्वापत्तिरित्याह ब्रह्माभावाच्चेति २४६ अपौरुषेयवेदेप्येवंभावंगतेलौकिकवाक्यानांप्रत्यक्षाणांशतशोदृष्टव्यभिचाराणांकाप्रामाण्यप्रत्याशेत्याह अप्रामाण्येचेति । तेषांवेदानाम् २४७ तदप्रमाणतायामिति । तेषांप्रमाणत्वेनप्रसिद्धानांविशेषाणामप्रामाण्येसतिनिर्विशेषंसामान्यंनेतिन्यायात्प्रमाणसामान्यकथाप्युच्छिद्येत ततोब्रह्मभिन्नस्यापिसिद्धिर्दुर्लभास्यात् मानाधीनामेयसिद्धिरितिन्यायादित्यर्थः द्वयंकार्यकारणरूपम् २४८

फलितमाह तस्मादिति २४९ यत्तुइदंशब्दपरामृष्टस्यकार्यादेःशून्यताअनेनोच्यतेइतिमंदधीभिरुक्तंतन्नसंभवति कालत्रयाभावरूपायाःशून्यतायाःप्रत्यक्षेणवर्तमानमात्रगोचरेणग्रहीतुमशक्यत्वात् इदंशब्देनप्रत्यक्षसन्निकृष्टवाचिनापरामृष्टुमयोग्यत्वाच्चेत्याह कार्यस्यापीतित्रिभिः । यत्तत्रासत्तायांप्रत्यक्षंकारणंसाधकंनभवतिअतःकार्यकारणयोरसत्ताअसतोरिदंताइदंशब्दाहिताचनेति २५० प्रत्यक्षतेति । तस्यकार्यादेःप्रत्यक्षत्वेअसत्त्वंव्याहतम् प्रत्यक्षस्यसदर्थगोचरतायाःसर्वसंमतत्वादित्यर्थः २५१ अनागतमिति । ततइत्यस्यार्थोऽसत्त्वादिति अतीतानागतयोरसत्वादेवप्रत्यक्षागोचरत्वमन्यथाऽसतोपिप्रत्यक्षगोचरत्वेनतस्यातीतादेरपिप्रत्यक्षत्वंकथंनस्यादित्यर्थः २५२ मायांतुप्रकृतिंविद्यादित्यादिश्रुत्यंतराच्चनकार्यकारणयोःशून्यतालक्षणमसत्त्वंकिंतुसूक्ष्मतारूपमेवेत्याह ततइति । ततःशून्यत्वेप्रत्यक्षादिविरोधादेवकारणादिकमसत्शून्यंनोच्यतेकिंतुमायामयमित्यर्थः २५३ मंत्रार्थमुपसंहरति आत्मनइति । यस्मादसत्सर्वंमायामयमागमापायित्वेनमुख्यसत्तानर्हमप्यात्मसत्तयैवसत्संपद्यतेततआत्मैवपरमार्थसत्यइत्येतदनेनमंत्रेणोक्तमित्यर्थः २५४ एवंसत्यतांकेवलांस्फुटीकृत्यअथानंदत्वविशिष्टांतांप्रदर्शयतोयद्वाइत्यादेर्यातीत्यंतस्यग्रंथस्यार्थ

तस्मान्नैवविभिन्नंस्यादसदप्यात्मरूपतः ॥ कुतोभिन्नंभवेत्सत्तुसत्तायस्यात्मसत्तया २४९ कार्यस्यापिनचासत्ताकारणस्यकुतोहिसा ॥ इदंताचकथंतत्रप्रत्यक्षंनहिकारणम् २५० प्रत्यक्षतायदातस्यतदाऽसत्ताभवेन्नहि ॥ सदेकविषयंयस्मात्प्रत्यक्षंपंडितैःस्मृतम् २५१ अनागतमतीतंवाप्रत्यक्षंततएवन ॥ असत्त्वादन्यथातस्यप्रत्यक्षत्वंकथंनहि २५२ ततोनकारणंनापिकार्यंनैवद्वयंतथा ॥ असदत्रोच्यतेवेदेकिंतुमायाविनिर्मितम् २५३ आत्मनःसत्तयायस्मात्सदसत्ततएवसः ॥ सत्त्वरूपोनचासत्त्वमस्याशक्यंकदाचन ॥ एतावदेवमंत्रेस्मिन्नुच्यतेनापरंकचित् २५४ सुष्ठुयत्सुकृतवद्ब्रह्मानंदात्मस्वसत्तया ॥ रसःसारःसविज्ञेयःसुखसंवित्स्वरूपतः २५५ लब्ध्वैनंरसमात्मानमानंदात्मानमीश्वरम् ॥ अहमस्मीतिविज्ञानादानंदीभवतिस्वयम् २५६ यद्येषरसआकाशआनंदात्माहृदिस्थितः ॥ नभवेज्जीवनेहेतुःक्रियायामपिनात्मनः ॥ प्राणापानादिभिःकुर्यान्नक्रियाजीवनप्रदाः २५७ हृदयाकाशआनंदएषइत्यत्रसंशयः ॥ नकार्योयतएतस्मात्पुरुषैर्लभ्यतेसुखम् २५८ विषयाःसदृशादीपैःसुखमात्मनिसंश्रितम् ॥ प्रकाशयंतिसततंततोजन्यंनतद्भवेत् २५९ अतआत्मैवसर्वेषामानंदंसंप्रयच्छति ॥ अज्ञातोविषयाज्ज्ञातंज्ञातआत्मास्वमव्ययम् २६०

माह सुष्ठुयदिति । यद्ब्रह्मानंदात्मिकयास्वसत्तयाविश्वंसुष्ठुलब्धसत्ताकंकृतवत्तदेवविश्वस्यरसः सारइतियावत् भासमानानंदरूपत्वादित्यर्थः २५५ अस्यात्मनआनंदरूपेणसत्त्वविद्वदनुभवोमानमित्याह लब्ध्वैनमिति । एनमात्मानंब्रह्मास्मीतिज्ञानेनलब्ध्वैवबाह्यसामग्रीहीनाअपिविद्वांसआनंदिनआनंदमग्नाद्दश्यंतेइत्यर्थः २५६ किंचसंघातपरार्थत्वन्यायेनसर्वाःप्राणादिक्रियापदार्थास्तस्यात्मनःशेषिणआनंदत्वेकःसंदेहइत्याह यद्येषइति । हृदयाकाशरूपोरसत्वेनानंदरूपआत्मावामनःप्रशस्तफलप्रदउपाधिसंबंधेनपरिच्छिन्नतयाभासमानोवाजीवनेक्रियायांतदनुकूलप्राणादिव्यापाररूपायांचहेतुःप्रयोजकोनस्यात्तर्हिप्राणनादिकंनकश्चित्कुर्यादित्यर्थः २५७ लौकिकानंदानांप्रतिबिंबस्थानीयानांबिंबतयाप्रयोजकत्वाच्चास्यानंदरूपत्वसिद्धिरित्याह हृदयाकाशइति । अस्यहृदयाकाशस्यानंदत्वेसंशयोनकार्यः सर्वानंदप्रयोजकत्वादित्यर्थः २५८ विषयास्तुलब्धाःकामनाशमनद्वारेणात्मानंदस्यतारतम्येनाभिव्यंजकाएवनजनकाइतिसदृष्टांतमाह विषयाइति । ततोविषयेभ्यस्तत्सुखंजन्यंनभवेदितितुरीयपादार्थः २५९ अतइति । यतःसुखमात्मरूपमेवातआत्मैवाऽज्ञातःसन्विषयानंदप्रयोजकोज्ञातस्तुपूर्णानंदप्रदइत्यर्थः २६०

११५

एवमस्तित्वमवधारितमथतस्यविद्वदेकलभ्यतांविद्वदभयहेतुत्वोपन्यासद्वारेणप्रतिपादयतोयदेत्यादेर्भवतीत्यंतस्यवाक्यस्यार्थमाह विद्वानेवेतिचतुर्भिः । ततउक्तात्मस्वरूपस्यविषयेवस्फुटीभावाद्विदेहोजीवन्वाविद्वान्आत्मरूपंसुखंयातीत्येवयुक्तम् अविद्वांस्तुसुखंविषयसंभवंमन्वानोविपरीतदर्शित्वान्नतत्प्राप्तिंकथामर्हतीत्यर्थः २६१ तदर्थंब्रह्मानंदलाभप्रयोजिकायाविद्यायाःपरमंस्वरूपमभिनयति एषइतित्रिभिः । एषविद्वान्कुशलोधिकारीयदास्वात्मनस्त्वंपदार्थस्यसर्वांतरलक्षणस्यबोधादभययोग्यरूपःसन्गुरुप्रोक्तमहावाक्यजेनतेनबोधेनएतस्मिन्हृदयाकाशरूपेतत्पदार्थेप्रतिष्ठापदोक्तंतादात्म्यमैक्यंलभतेतदासब्रह्मवित्तमःसन्नभयंब्रह्मानंदंयातितस्यब्रह्मवित्तमतांस्फुटीकर्त्तुंहृदयाकाशस्यविशेषणानिक्रमेणबाह्यप्रपंचस्यस्थूलसूक्ष्मकारणदेहानांचव्यावर्त्तकानि तथाहि अदृश्यत्वाद्बाह्यप्रपंचहीनत्वमुक्तम् अनात्म्यपदार्थेनअनात्मनादेहेनतादात्म्यंगतेइत्याकारेगभूतार्थक्तप्रयोगात्स्थूलविवेकउक्तः निरुक्तत्वस्यसूक्ष्मधर्मस्यनिलयनपदोक्ताधारत्वस्याव्याकृतधर्मस्यचनिषेधात्सूक्ष्मकारणयोर्व्यावृत्तिरितीतित्रयाणामर्थः २६२ । २६३ । २३४ अथविद्वदप्राप्यताकोटिंस्फुटयितुमज्ञान्प्रतीश्वरस्यभयहेतुतांदर्शयतोयदाहीत्यादेःपंचमइत्यंतस्यार्थंविवृणुते यथेतिदशभिः । यथाविद्वान्ब्रह्मयातितथाअविद्वान्गंतुंनयोग्यः अनर्थहेतुभेददृष्टिशालित्वात् २६५ भेददृष्टेरनर्थहेतुत्वेकैमुत्यमाह विद्वानपीतित्रिभिः । यद्वाविद्वानपिबहिर्मुखत्वात्पंडितंमन्यपद

विद्वानेवततोयातिमत्वानंदात्मरूपकम् ॥ जीवन्वापिसुखंनित्यंपरोविषयसंभवम् २६१ एषविद्वान्यदास्वात्मबोधादभयरूपधृक् ॥ प्रतिष्ठांतेनतादात्म्यंलभतेगुरुवाक्यतः ६२ एतस्मिन्हृदयाकाशेह्यदृश्येनयनादिभिः ॥ अनात्मनात्रतादात्म्यंगतेसर्वात्मनीश्वरे ६३ अनिरुक्तेवचनतःसर्वाश्रयविवर्जिते ॥ अभयंब्रह्मसंयातितदासब्रह्मवित्तमः २६४ यथाविद्वानविद्वांश्चनतथायातिकर्हिचित् ॥ भेददर्शीयतःसोयंभेददृष्टिश्चदुःखदा २६५ विद्वानपियदैवैषपंडितंमन्यतांगतः ॥ अल्पमप्यात्मनोभेदंकुरुतेव्यावहारिकम् २६६ वस्तुतोनास्तिभेदोयमात्मनोब्रह्मणासह ॥ व्यवहारदशायांतुकश्चिदस्तीतिचेद्दृशम् ॥ तदातस्यापिभीतिःस्याद्भेदपर्वतसंनिधेः २६७ किमुयोवेत्तिनात्मानंभेदपर्वतभेदिनम् ॥ भेदपर्वतवासीसन्वर्ततेसर्वदापुमान् २६८ पंडितंमन्यरूपस्यविदुषोऽविदुषोपियत् ॥ तत्त्वेनस्याद्भयंनित्यंविदुषोपिप्रमादिनः २६९ अप्रमत्तस्ततोनित्यंविद्वान्सद्गुरुणेरितम् ॥ चिंतयेत्कुशलीभावात्परानंदात्मरूपकम् ॥ अन्यथासंसृतिंगच्छेद्दृढवद्भेदवासनः २७० आत्मनश्चिंतनाद्भेदवासनानांक्षयोभवेत् ॥ नान्यथातस्तदैवैकंकुर्यान्नान्यत्कदाचन २७१ आत्मज्ञानंविनाब्रह्मदेवानांविदुषामपि ॥ कुर्याद्भयंकथंनान्यजंतूनांकुरुतेतुतत् २७२

प्रयोगार्होऽल्पमपिव्यवहारकालमात्रवृत्तित्वेनाल्पमपिभेदंकुरुतेतदातस्यविदुषोपीश्वराद्भयंस्यात् भेदरूपस्यपातहेतोःपर्वतस्यसपक्षस्यनैकट्यादितिसंबंधः तत्रव्यावहारिकभेदाकारःप्रदर्श्यते. वस्तुतइत्यादिना २६६ । २६७ किमुइति । यस्त्वात्मानंद्वैतपर्वतखंडनेवज्रभूतमजानानोभेदपर्वतानांमध्यएववसतितस्यभयंकिमुवाच्यमित्यर्थः २६८ पंडितंमन्येति । पंडितंमन्यस्याविप्रलंभकस्यविदुषोभ्रांतौविद्वत्तयामतस्यतथाअज्ञस्यचयद्भयमीश्वरात्स्याच्चदेवभयंविदुषोपिप्रमादिनोयथावद्विज्ञायापिश्रुतार्थेनिष्ठामकुर्वतःस्यादित्यर्थः २६९ फलितमाह अप्रमत्तइति । कुशलीभावःश्रुत्यनुसारितर्कनिपुणता अन्यथामननाकरणे तदुक्तंभागवतेसप्तमे 'विद्वानपीत्थंदनुजाःकुटुंबं' इत्यादि २७० मननेनतुवासनालक्षणानांभेदभ्रमबीजानांदाहोभवतीत्याह आत्मनइति २७१ ईश्वरस्याविदुषांभयहेतुत्वेकैमुत्यांतरमाह आत्मज्ञानमितित्रिभिः । उपासनासिद्धिरूपयाविद्वत्तयाप्रसिद्धानांदेवानामप्युक्तात्मनिष्ठामंतरेणभयकरंयदाब्रह्मतदाज्ञान्प्रतिभयदत्वंतस्यकिमुवाच्यमित्यर्थः २७२

अत्रापीति स्पष्टम् २७३ अस्यतात्पर्यमाह वाय्वाद्याइति । स्फुटं २७४ एवंसत्यत्वंमंत्रोक्तंविवृतमथानंदतांनिरतिशयांप्रदर्शयतोऽथेत्यादेःसएकइत्यंतस्यार्थमाह हृदयाकाशेत्येकविंशतिश्लोकैः । योयमात्मागुहाप्रविष्टत्वादिरूपैर्वर्णितस्तत्स्वरूपभूतआनंदःकिंपरिमाणइतिजिज्ञासायांवक्ष्यमाणशताधिक्यपरंपरयातस्यानंततांतिचिरयोवदंतीतिद्वयोःसंबंधः २७५ । २७६ तत्रमनुष्यानंदोत्कर्षमभिनयति यौवनेतिचतुर्भिः । यौवनाद्यैर्लोकस्पृहणीयैर्गुणैःसंपन्नोभवेत् तथापुराणादीनिधर्मशास्त्रांतानिचत्वारिशिक्षादीनिषड्वेदांगानिचत्वारोवेदाश्चएतानिचतुर्दशज्ञानधर्मयोःस्थानान्यभिव्यंजकान्यधीयानोयथावत्पाठनशक्तऊहादिकुशलत्वादितिद्वयोरर्थः २७७। २७८ आसमंतात्शिष्टःशिक्षितइत्याकारमाशिष्टपदार्थमाह मात्रेति । क्रमेणेतिशेषः । द्रढिष्ठादिपदार्थमाह वज्रेति । बलभिदिंद्रः २७९ आध्यात्मिकगुणसंपत्तिलोकद्वयहितामुक्त्वाबाह्यामाह तस्येयमिति । तस्यवर्णितस्ययदिसप्तसमुद्रांतासुमेरुमध्यकासर्वापृथ्वीवशेस्याच्चदातस्ययश्चित्तप्रसादः ससर्वमानुषानंदसमष्टि

अत्राप्युदाहरंतीमंश्लोकंपूर्वेमहाधियः ॥ ब्रह्मणोभयतोवातोवातिसूर्यंउदेतिच ॥ अग्निर्दोज्वलत्यग्निर्धावन्मृत्युर्निहंतिच २७३ वाय्वाद्याःपुरुषाःपंचजगतोपि नियामकाः ॥ यतोभीतास्ततःकोन्यःपुमान्नभयमाव्रजेत् २७४ हृदयाकाशरूपोयमानंदात्मासुखप्रदः ॥ भयदश्चसुखंतत्रकियदित्यत्रचिंत्यते २७५ अनंतमितितत्प्राहुर्विद्वांसःस्वात्मकोविदाः ॥ सुखेस्मिन्नवतार्यैवमानंदस्यपरंपराम् २७६ यौवनेनाभिसंपन्नोरूपशीलादिसंयुतः ॥ पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः २७७ वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दश ॥ सर्वाण्येतान्यधीयानऊहापोहविशारदः २७८ मात्रापित्रातथाचार्यैःशिक्षितोविनयान्वितः ॥ वज्रसारसमानांगोबलवान्बलभिद्यथा २७९ तस्येयंपृथिवीसर्वासप्तसागरमेखला ॥ सर्वैर्वित्तैश्चसंपूर्णानामिकांचनपर्वता ॥ स्वाधीनाचेद्भवेत्सोयमानंदोमानुषःपरः २८० शतंयेमानुषाःप्रोक्ताआनंदाअधिकाइह ॥ एकोमनुष्यगंधर्वानंदःसपरिकीर्तितः १८१ अत्रानंदेषुसर्वेषुवक्ष्यमाणेष्वपीरिते ॥ यस्मिन्यस्मिन्विरक्तोयस्ततस्तस्यसुखंभवेत् ॥ श्रोत्रियस्यसदाशुद्धचेतसोत्राधिकारिणः २८२ तेयेमनुष्यगंधर्वानंदाःस्युःशतसंख्यया ॥ देवगंधर्वजःसोयमेकआनंदईरितः २८३ देवगंधर्वजानंदाःशतंयेपरिकीर्तिताः ॥ भवेत्सएकआनंदःपितॄणांचिरवासिनाम् २८४ पितॄणांचिरलोकानामानंदायेशतंस्मृताः ॥ आजानजानांदेवानामेकःसपरिकीर्तितः २८५ देवयोनिप्रजातानामानंदायेशतंस्मृताः ॥ सएकःकर्मदेवानांकर्मणायेदिवंगताः २८६ आनंदाःकर्मदेवानांशतंयेपरिकीर्तिताः ॥ वसुरुद्रादिदेवानामेकएवहिसस्मृतः २८७ वसुरुद्रादिदेवानामानंदायेशतंस्मृताः ॥ इंद्रस्यैकःसविज्ञेयआनंदोजगदीशतुः २८८

रूपएकआनंदइत्यर्थः २८० शतंयइति । उक्तानंदाःशतगुणिताःसंतोमनुष्यगंधर्वानंदएकोभवति येमनुष्ययोनिजाःकर्मोपासनाबलाद्गंधर्वत्वंप्राप्तास्तेमनुष्यगंधर्वाउच्यंतेइत्यर्थः २८१ अत्रेति । अत्रवर्णितेषुवक्ष्यमाणेषुचानंदेषुमध्येयत्रयत्रयःश्रोत्रियःशुद्धमनाविरक्तोभवेत्तस्यततोमानुषाद्यानंदात्शतगुणाधिकंसुखंज्ञेयमित्यर्थः २८२ तेयेइति । शतंमनुष्यगंधर्वानंदाएकीभूतादेवयोनिजगंधर्वानंदएकोभवतीत्यर्थः एवमग्रेपीति २८३ देवगंधर्वजानंदाइति । चिरवासिनांचिरस्थायिलोककानां २८४ पितॄणामिति । आजानोदेवलोकस्तत्रस्मार्तकर्मानुष्ठानेनजातादेवाआजानजाः २८५ देवयोनीति । कर्मदेवाःश्रौतकर्मणादेवभावंगताः ८६तेभ्योपिवसुरुद्रादीनामाधिकारिकदेवानामानंदःशतगुणाधिकइत्याह आनंदाइति८७वस्विति । वस्वादिदेवानंदशतात्मकइंद्रस्यानंदइत्यर्थः २८८

आनंदायत्रेति । यत्रानन्देइंद्रानंदशतमंतर्भूतंतादृशआनंदोदेवगुरोर्बोध्यः बृहस्पतेरानंदाःशतंयत्रलीनास्तादृशआनंदःप्रजापतिपदोक्तस्यविराजोबोध्यइत्यर्थः २८९ प्रजापतेरिति । विराडानंदशतं यत्रांतर्भूतंतादृशआनंदोब्रह्मपदोक्तस्यहिरण्यगर्भस्यज्ञेयइत्यर्थः २९० अस्मादिति । अस्माद्धिरण्यगर्भानंदादधिकआनंदोदेहिनामुपाध्यभिमानिनांनास्तिकिंतुहिरण्यगर्भानंदादपिविरक्तस्यश्रोत्रियस्यचित्तेभासमानोयश्चिदाकाशरूपआनंदःसततोधिकइत्यर्थः २९१ सक्रियानितिचेदनंतइत्याह आनंदेतिद्वाभ्यां । योयंब्रह्मणोहिरण्यगर्भस्यानंदःसोऽस्माकमपेक्षयापरोपितस्यचिदाकाशानंदस्यवारिधिस्थानीयस्यबिंदुमात्रंभवतीत्यर्थः तस्यसइतिपदद्वयमुत्तरान्वायि २९२ आनंदइति । तस्यस्वयंभातस्याद्वयात्मरूपस्यसआनंदस्ततएवानंतइतियोजना २९३ तस्याद्वयात्मतांमहावाक्येनाह अयमिति । अयंचिदाकाशरूपआनंदोयःपुरुषेव्यष्ट्युपाधौवर्त्तते सएवादित्येमूर्तामूर्तसमष्टिसारभूतेवर्ततेअतस्तयोस्तत्त्वंपदार्थयोर्भेदोनेत्यर्थः २९४ फलितमाह अतइति स्पष्टं २९५ एवमित्यादि । पंचकोशोपसंक्रमणवाक्यार्थमाह ज्ञातेतत्त्वेपीति । परोक्षतत्त्वेज्ञातेसाक्षात्कारात्पूर्वंमोहोभ्रमस्तिष्ठतियथादिग्भ्रमइत्येवंभ्रममर्यादांजानन्सन्यःसाक्षात्काराययततेसोन्नमयादिपंचकोशानांसमष्टि

आनंदायत्रशक्रस्यशतंसतुबृहस्पतेः ॥ एकएवशतंतस्ययआनंदोबृहस्पतेः ॥ प्रजापतेर्विराजःसएकएवप्रकीर्तितः २८९ प्रजापतेःशतंयेस्युरानंदाएकएवसः भवेत्परमआनंदोब्रह्मणःसूत्ररूपिणः २९० अस्मात्परोनकोपिस्यादानंदोदेहिनामिह ॥ आनंदात्मानमाकाशमेकंहित्वास्वयंप्रभम् २९१ आनंदवारिधेस्तस्य परमानंदरूपिणः ॥ ब्रह्मानंदःपरोस्माकंबिंदुमात्रंतुतस्यसः २९२ आनंदस्ततएवायमनंतःपरिकीर्तितः ॥ आनंदात्मस्वरूपस्यस्वयंभातस्यसर्वदा २९३ अयमानंदआकाशःपुरुषेयश्चवर्तते ॥ आदित्येयश्चसूत्राख्येतयोर्भेदोनवर्तते २९४ अतोभेदोनिजाज्ञानात्सर्वत्रैवप्रतीयते ॥ अध्यात्ममधिदैवंवाह्यधिभूतमथापिवा २९५ ज्ञातेतत्त्वेपिदिङ्मोहोयथाप्रत्यक्षजन्मनः ॥ प्रागास्तेततएवायंवर्ततेभेदविभ्रमः ॥ साक्षात्कारात्पुराब्रह्मविदुषामपिसर्वदा २९६ एवंजानन्पुमान्योत्रसाक्षात्कारप्रसिद्धये ॥ क्रमतोन्नादिकान्कोशानगत्वाब्रह्मसगच्छति २९७ आनंदात्मानमद्वैतंपुच्छंब्रह्मविनिर्भयम् ॥ प्राप्तस्यविदुषोभीतिःकुतश्चिन्नैवजायते ॥ अस्मिन्नर्थइमंश्लोकंपठंतिब्रह्मवादिनः २९८ यतोवाचोनिवर्त्ततेअप्राप्यमनसासह ॥ आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन २९९ शब्देवाचःप्रवर्तन्तेशब्दार्थेचमनस्तथा ॥ अशब्दार्थेप्यशब्देस्मिन्कथंगच्छेन्मनोपिवाक् ३०० अस्मिन्नात्मतयाऽज्ञातेसर्वेषांभयरूपिणि ॥ विदुषस्तुकुतोभीतिर्भेदशून्यस्यसंभवेत् ३०१ अहंब्रह्मेतिविज्ञानादानंदात्मस्वरूपिणम् ॥ एतंहितपतोनैतेनित्यंसुकृतदुष्कृते ॥ अकृतेचकृतेचापियथान्यंभेददर्शिनम् ३०२

रूपाणांगमनमुपसंक्रमणपदोक्तंतत्तन्मात्रनिष्ठारूपंक्रमेणकृत्वाचरमकोशपुच्छभूतंब्रह्मगच्छतिसाक्षात्करोतीतिद्वयोरर्थः २९६ । २९७ एवंब्रह्मप्राप्तःसनिर्भयोभवतीत्यत्रार्थेइममुत्तरंश्लोकंमंत्रंपठंतीत्याह आनंदात्मानमिति २९८ यतइति २९९ अस्यमंत्रस्यार्थमाह शब्दइतिद्वाभ्यां । शब्देनामप्रपंचेवाचःप्रवृत्तिःतदर्थेरूपप्रपंचेतुमनसः नामरूपाभ्यामतीतेब्रह्मणिमनोवाक्चकथंप्रवर्तेतेत्यर्थः अस्मिन्निति । अस्मिन्वाङ्मनसागोचरेब्रह्मण्यज्ञातदशायांसर्वेषांभयप्रदेआत्मतयाज्ञातेसत्यद्वयस्यविदुषःकुतोभीतिःस्यादित्यर्थः ३०१ विदुषोद्वयत्वेनकिंचिद्भयप्रदंनसंभवतियथाकृताकृतेदुष्कृतसुकृतेइतिदर्शयतएतमित्यादेःफलवाक्यस्यार्थमाह अहंब्रह्मेतिचतुर्भिः । यथाभेददर्शिनंअहंपातकंकृतवान्पुण्यंकिंनकृतवानित्येवंदीनंप्रतिकूलंपातकंअकृतंपुण्यंचैतेतापयतस्तथाएतंविद्वांसंविज्ञानाद्ब्रह्मात्मभूतंतेनतापयतइतिद्वयोरर्थः ३०२

तत्रहेतुतयापुण्यपापयोर्विदुषआत्मनिलीनत्वमाह आनंदात्मनीति । सर्वात्मदर्शीपुण्यपापेअपिआत्मतयापश्यंस्ताभ्यांकथंतप्येत् नह्यग्निरात्मानंदहतीत्यर्थः ३०४ ततोज्ञानफलेऽभयप्राप्तिरूपेनसंदेहइत्याह ततइति । स्पष्टम् ३०५ आनंदवल्ल्याख्यामुपसंहरति एवमिति स्पष्टं ३०६ भृगुवल्ल्याख्यांप्रवर्तयति गुरूपदेशइत्यादिना । योगुरूपदिष्टंब्रह्मतत्त्वंमननगोचरंकरोतिसपंचकोशानात्मतयानावगच्छतिकिंतुचरमकोशपुच्छभूतंब्रह्मैवात्मतयावगच्छतिसाक्षात्करोतीत्यत्रार्थेभृगुवल्लींपितृपुत्रयोर्वरुणभृगुसंज्ञयोर्वृत्तप्रकाशिकांतित्तिरयःपठंतीतिद्वयोरर्थः मननायमननाकारंस्फुटयितुं ३०७ । ३०८ इतिहासमभिनयति भृगुरिति । महान्महाप्रभावः जानीषेस्मरसि इदंवक्ष्यमाणं स्फुटमन्यत् ३०९ । ३१० तत्रयद्ययंशुद्धधीस्तर्हिस्वयमेवोपलक्ष्यंज्ञास्यतीत्याशयेनशिष्यबुद्धिपरीक्षणायोपलक्षणान्येवप्रदर्शयन्वरुणःश्रुतावन्नादिपदोक्तान्शरीरादीन्पदार्थांस्त्वंपदार्थोपलक्षणभूतांस्तावदाह शरीरमितिद्वाभ्यां । शरीरंस्थूलंपंचप्राणास्तथावागुपलक्षितानिदशेंद्रियाणिमनः

कृतवान्पातकंकस्मात्पुण्यंचाहंकुतोनहि ॥ इतियद्वत्सदादीनंसर्वशक्तिविवर्जितम् ३०३ आनंदात्मनिविज्ञातेपुण्यपापेउभेअपि ॥ असावात्मतयाजानन्कथंतापंततोव्रजेत् ३०४ ततोविद्वानमुंलोकमानंदात्मस्वरूपकम् ॥ जानन्नात्मतयागच्छेज्जीवन्वापिमृतोपिवा ३०५ एवंविचारेसंप्रोक्ताब्रह्मविद्यामनीषिभिः ॥ आनंदात्मस्वरूपस्यप्राप्तिहेतुःसदानृणाम् ३०६ गुरूपदेशतोब्रह्मज्ञात्वाथयश्चविचारयेत् ॥ कोशपंचकमप्येतत्ततोनात्मतयाव्रजेत् ३०७ अत्रचोदाहरंतीममाख्यानंपितृपुत्रयोः ॥ गुरूपदेशतःपश्चान्मननायेतिपंडिताः ३०८ भृगुर्नामाभवत्कश्चिद्वरुणस्यसुतोमहान् ॥ वरुणंपितरंगत्वापप्रच्छेदंकदाचन ३०९ भगवन्ब्रह्मजानीषेमह्यंतत्त्वंवदप्रभो ॥ इत्युक्तोवरुणस्तस्मैप्रोवाचेदंमहामतिः ३१० शरीरंचतथाप्राणभेदाःपंचशरीरगाः ॥ ज्ञानकर्मेंद्रियाणिस्युर्दशात्रचचतुर्विधम् ॥ मनोंतःकरणंनामविद्यतेभुवनत्रये ३११ अध्यात्ममधिदैवंवाह्यधिभूतमथापिवा ॥ एतावदेवविश्वस्मिन्नधिकंनैवविद्यते ३१२ एतेष्वन्यतमंवात्वमेतेभ्योवाविलक्षणम् ॥ अवगच्छस्वयंबुद्ध्यातनयब्रह्मलक्षणात् ३१३ वक्ष्यामिलक्षणंतत्तेब्रह्मणोव्यक्तजन्मनः ॥ येनत्वंस्वयमेवैतद्ब्रह्मबुद्ध्यावगच्छसि ३१४ यतउत्पद्यतेविश्वंसकलंभूतभौतिकम् ॥ यत्रतिष्ठतियत्रातेलीयतेचतदेवतत् ३१५ जगज्जनिस्थितिध्वंसानेवंसब्रह्मलक्षणम् ॥ उक्त्वापुनरुवाचेदंपुत्रंतंब्रह्मवित्तमः ३१६ ब्रह्मणोयत्स्वरूपाख्यंलक्षणंतत्त्वयाधुना ॥ अधिगंतुमशक्यत्वान्मयातेकथितंनहि ३१७

पदोक्तमंतःकरणचतुष्टयंचएतावदेववस्तुजातंव्यष्टिसमष्टिरूपंविश्वस्मिन्सर्वस्मिन्जगतिभोग्यादिरूपेणवर्त्ततेइतिद्वयोरर्थः तत्सर्वंकंचिद्भोक्त्रादिरूपंसाक्षिणंविनानुपपन्नमितिभावः ३११ । ३१२ अथतत्पदार्थस्योपलक्षणतयाजगज्जन्मादीनिदर्शयितुमाह एतेष्विति । हेतनयलक्षणाद्वक्ष्यमाणादुक्तपदार्थरूपंतद्विलक्षणरूपंवाब्रह्मतत्पदार्थंजानीहीत्यर्थः ३१३ लक्षणंवक्तुंप्रतिजानीते वक्ष्यामीति । अव्यक्तंलोकेप्रसिद्धंजन्मप्रादुर्भावसाधनंयस्यतथाभूतस्यब्रह्मणःप्रादुर्भावायलक्षणंवच्मीत्यर्थः ३१४ यतोवाइत्याद्युक्तंलक्षणमभिनयति यतइति । यतउपादानात्कार्यस्यसमस्तस्यजन्मभवतियत्रसमस्तकार्यस्यस्थितिर्यत्रचनस्यलयस्तद्ब्रह्मेत्यर्थः ३१४ अत्रापिपूर्ववत्शास्त्रदृष्टचालक्षणत्रयमिदंबोध्यमनतिप्रसंगात् मंदधियामनुरोधेत्वेकलक्षणत्वमितिसूचयन्रेकवक्तटस्थलक्षणाभिधानेस्वाशयमुद्घाटयामासेत्याह जगज्जनीति । जगज्जिष्ठान्जन्मस्थितिभंगान्ब्रह्मलक्षणभूतानुक्त्वापिताइदमाहेति १६ इदंकिमतआह ब्रह्मणइति । ब्रह्मणःस्वरूपलक्षणंत्वयाज्ञातुमशक्यत्वान्नोक्तमित्यर्थः ३१७

अधिगंतुमशक्यत्वेहेतुतयासूक्ष्मधीग्राह्यत्वमाह सूक्ष्मेति । भवांस्तुसूक्ष्मधीर्यतोनभवत्यतःस्थूलेतटस्थलक्षणमुक्तं लक्षणस्यतटस्थत्वंलक्ष्यस्वरूपाद्बहिःस्थितत्वमित्यर्थः ३१८ तटस्थलक्षणंस्फुटयितुंलो केस्वरूपलक्षणमुदाहरति स्थूलाइति । यथासोमशर्मस्वामिकप्रासादानांस्थूलत्वादिकंस्वरूपघटकत्वात्स्वरूपलक्षणत्वेनप्रसिद्धमित्यर्थः ३१९ तत्प्रासादानांतटस्थलक्षणमभिनयति कीराइति । की राःशुकाः ३२० तत्रलक्ष्यापायाप्रयोजकापायकत्वंतटस्थलक्षणलक्षणमित्याह लक्षकाणामिति । लक्षकाणांलक्षणतयानिर्दिष्टानां ३२१ लक्ष्यापायप्रयोजकापायकत्वंतुस्वरूपलक्षणमित्याह लक्षका णामपायइति ३२२ ननुस्वरूपभूतानांकथंलक्षणत्वंलक्षणत्वस्यभेदघटितत्वादितिचेत्कल्पितंभेदमादायेत्याह स्वरूपेति । धियावक्तुर्विवक्षयाकृतोनतुवास्तवः एतेनवास्तवभेदशालित्वेसतिलक्षण त्वंतटस्थलक्षणत्वमित्येवसिद्धमित्याह अन्यत्रेति । अन्यत्रतटस्थेगवाश्वादिवद्भेदोवास्तवइत्यर्थः ३२३ दार्ष्टांतिकेयोजयति जगदिति । जगतोजडत्वपरिच्छिन्नत्वादिभिर्ब्रह्मभेदस्यप्रसिद्धत्वात्तद्ध र्माणांजन्मादीनांतटस्थलक्षणत्वमेवयुक्तमित्यर्थः ३२४ तटस्थलक्षणोपन्यासेनैवविचारात्मकतपसआक्षेपंदर्शयति तटस्थलक्षणेइति । तटस्थलक्षणेप्रोक्तेसतिलक्ष्यंलक्ष्यासाधारणरूपंसाक्षात्झटित्ये वननिश्चीयतेकिंतुसामान्यरूपेणतदानीमवधार्यतेपश्चात्तुमानांतरेणसमागमोयस्यतथाभूतात्तर्कात्मकविचारादयंलक्ष्यगतोविशेषोनिश्चीयते अयंन्यायःसर्वत्रप्रसिद्धइत्यर्थः ३२५ भवानपीति ।

सूक्ष्मबुद्ध्यैवतन्नित्यंगम्यतेसूक्ष्मबुद्धिभिः ॥ स्थूलबुद्धिर्भवानद्यततस्तेस्थूलमीरितम् ॥ तटस्थलक्षणंतस्यब्रह्मणोयद्बहिःस्थितम् ३१८ स्थूलामनोरमाःशुभ्रा श्वित्रध्वजपताकिनः ॥ अभ्रंलिहाइमेवत्सप्रासादाःसोमशर्मणः ॥ स्वरूपलक्षणंत्वेतत्प्रासादानांपरंतथा ३१९ कीराःससारिकायत्रचित्रशब्दाःसमासते ॥ इमे तेभवताज्ञेयाःप्रासादाःसोमशर्मणः ॥ तटस्थलक्षणंत्वेतत्प्रासादानामुदाहृतम् ३२० लक्षकाणामभावेपिलक्ष्यंयत्रावतिष्ठते ॥ तटस्थलक्षणंतद्धिविज्ञेयंपंडितैः सदा ३२१ लक्षकाणामपायेहिलक्ष्यापायःप्रसज्जते ॥ यत्रतत्कथितंनित्यंस्वरूपस्येहलक्षणम् ३२२ स्वरूपलक्षणंयत्रतत्रभेदोधियाकृतः ॥ लोकेभवतिचान्य त्रगवाश्वादेरिवस्वतः ३२३ जगज्जडमिदंसर्वंप्राणिभिःपरिगृह्यते ॥ जन्मादिमदतस्तत्स्यात्ताटस्थ्येनैवलक्षणम् ३२४ तटस्थलक्षणेलक्ष्यंसाक्षान्नैवावधार्यते ॥ किंतुसामान्यतःपश्चान्मानांतरसमागमात् ॥ निश्चीयतेविशेषोयंसर्वत्रैवात्रवस्तुनि ३२५ भवानपिततोब्रह्मस्वयमेवविचारतः ॥ तटस्थलक्षणादुक्तमवगच्छतु धधिनः ३२६ निधिर्यथासमीपस्थैरंजनेनविनानहि ॥ गृह्यतेतद्वदेवैतद्ब्रह्मज्ञानंविनानच ३२७ अंजनेहियथानस्यादत्रयत्किंचिदौषधम् ॥ ब्रह्मज्ञानेपिनैवस्या दुपायोन्योपिकोपिच ३२८ उपायःप्रथमोज्ञेयोगुरुशास्त्रसमीरणात् ॥ विज्ञानेब्रह्मणोलोकेनाशुद्धमनसांहिसः ३२९

ततउक्तन्यायानुरोधात्हेभृगोभवानपिविचारसहकृतादुक्तलक्षणवाक्याद्ब्रह्मावगच्छत्वित्यर्थः ३२६ ननुस्वतःप्रमाणभूतस्यवेदवाक्यस्यकथंविचारापेक्षेत्याशंक्यफलजननेतदनपेक्षत्वेपिपुरुषापरा धस्यासंभावनादेर्निवृत्तयेविचारोपेक्षितोयथाचक्षुषोविषयप्रकाशनेंजनानपेक्षत्वेपितत्प्रतिबंधकमलापहारायतदपेक्षेत्याह निधिरिति । यथासमीपस्थोनिधिर्भूमिनिखातद्रव्यंसुलोचनैरप्यंजनेन विनानप्रेक्ष्यतेतथाब्रह्मापिज्ञानंविचारंविनेत्यर्थः ३२७ सचविचारःश्रुत्यनुकूलतर्कात्मकएवात्रोपयुज्यतेनान्यइतिसदृष्टांतमाह अंजनेहीति । यथासिद्धांजनरूपेणपरिणामशालिऔषधंयत्किंचि त्सर्वलोकसाधारणंनभवतिकिंतुविलक्षणमेवतथाब्रह्मज्ञानप्रयोजकउपायउक्तलक्षणवाक्यविचारात्मकएवनान्यइत्यर्थः ३२८ एवंभाष्योक्तस्यविचारात्मकस्यतपःपदार्थस्याक्षेपोदर्शितोऽथरूढ्या तपःपदोक्तस्यशारीरादित्रिविधस्यतपसोप्याक्षेपंदर्शयति उपायइतिपंचभिः । ब्रह्मज्ञानेयोयमुपायोलक्षणवाक्यज्ञानात्मकःसप्रथमोमुख्यः अस्याहिचक्षुषोंजनमिवविचारःसहकारिमात्रं सचगुरु शास्त्रोपदेशाल्लब्धोप्यशुद्धधियांनकिंचित्फलंजनयतीत्यर्थः ३२९

सानुद्धेरशुद्धीरागाद्भवतिरागस्तु विषयाभिलापात्मकःसदेहेंद्रियाणांदर्पोद्भवति दृप्तोधर्ममतिक्रामतीतिन्यायात् सचदर्पआहाराद्विषयसंसर्गात्मकाद्भवतितस्मादाहारसंक्षयेणदर्पादिक्षयंकुर्यादित्याह चित्तेति । दर्पोगर्वः तेषांसदेहेंद्रियाणाम् ३३० तस्माद्विषयग्रहणंशरीरधारणमात्रोपयुक्तादधिकंनकुर्यादिदमेवतपइत्याह यथायमिति ३३१ ततःकिंभवतीत्यतआह एवमिति । तपस्यतस्तपःकुर्वतः ३३२ नीरागमिति । गुरुवाक्यविषयकोयउक्तोमंतव्यइतिविहितस्तर्कस्तेनतद्ब्रह्मप्रकाशयेत्निरावरणंकुर्यात् ३३३ फलितमाह ततइति स्पष्टम् ३३४ प्रथमपर्यायतपसःसूचितत्वमेवविशदयति इदमिति । तपोधनमिवप्रियंयस्यसतथा तथाचतपसिप्रेम्णःसर्वाभीष्टसाधनताधीजन्यत्वादन्वयव्यतिरेकाभ्यांतपसोज्ञानकारणत्वस्यत्वयाज्ञातत्वादिदंतपसोज्ञानकारणत्वंनवक्तव्यंनविधियोग्यमित्यर्थः ३३५ सतपइत्यादिग्रंथार्थमाह पितुरित्यादिना । तंतपोरूपमुपायम् स्वधर्मोब्राह्मणधर्मःशमादिः स्फुटमन्यत् ३३६ शुद्धइति । मनःशुद्ध्यनंतरंपितृप्रोक्तलक्षणानुसारेणान्नपदोक्तंसमष्टिव्यष्टचात्मकस्थूलदेहरूपंप्रथमंकोशंब्रह्मत्वेनविज्ञायतत्रदोषंदृष्ट्वाचपितुरंतिकंगतइतिद्वयोरर्थः आदिपदेनाधिदैवस्यसमष्टिरूपस्यग्रहः ३३७ । ३३८

चित्तशुद्धिश्चनैवास्यरागिणःसहसैवहि ॥ इंद्रियाणिसदेहानिरागेदृप्तानिकारणम् ॥ दर्पआहारजस्तेषांक्षयआहारसंक्षयात् ३३० यथायंनपतेद्देहोनचदर्पंसमाव्रजेत् ॥ तथावर्णाश्रमप्रोक्तमाहारंपुरुषोग्रसेत् ३३१ एवंतपस्यतोनाशंदर्पोदेहादिगोव्रजेत् ॥ दर्पनाशाच्चचित्तस्थोरागोपिविलयंव्रजेत् ३३२ नीरागंविमलंचित्तंस्वस्थंसर्वार्थदर्शकम् ॥ निश्चलंगुरुवाक्योक्ततर्कंतस्तत्प्रकाशयेत् ३३३ ततस्त्वंतपसाशुद्धचित्तस्तर्कप्रसादतः ॥ मदुक्तलक्षणंब्रह्मजानीहितनयस्वयम् ३३४ इदंमयानवक्तव्यंतपोज्ञानस्यकारणम् ॥ स्वयमेवभवान्यस्माज्जानीतेतत्तपोधनः ३३५ पितुर्मुखाद्भृगुःश्रुत्वाब्रह्मणोलक्षणंहितत् ॥ उपायंतंस्वयंजानन्सूचितंजनकेनच ॥ तपःस्वधर्मंर्वर्तित्वंकृतवान्मुनिसत्तमः ३३६ शुद्धेमनसिपित्रोक्तंपर्यालोच्यमहामुनिः ॥ अन्नंस्थूलमिदंदेहमध्यात्मादिविभागवित् ३३७ आत्मनःप्रथमंकोशंब्रह्मलक्षणसंयुतम् ॥ विज्ञायदोषदृष्ट्याथपुनःपितरमाव्रजत् ३३८ देहेभ्योजायतेविश्वंदेहएवात्रजीवति ॥ स्थितंदेहेषुयात्यंतेतानेवात्रनसंशयः ३३९ यद्यप्येवंतथाप्येतेस्त्वयंदेहाविनश्वराः ॥ परिच्छिन्नाश्चकेनस्युर्ब्रह्मकारणवर्जितम् ३४० महाभूतात्मकोयोयंविराजोपिस्थवीयसः ॥ सोपिदेहःपरिच्छिन्नोजातश्चैवान्यदेहवत् ३४१ एवंदोषंविलोक्याथप्रष्टुकामोन्नकारणम् ॥ आगत्यचयथापूर्वंप्रश्नंसकृतवान्शृणु ३४२ वरुणस्तूत्तरंत्वेतदुक्तवान्ब्रह्मवित्तमः ॥ त्वयादृष्टउपायोयःसूचितश्चमयातथा ॥ सएवब्रह्मविज्ञानेमुख्योनान्योस्तिकश्चन ३४३

कथमन्नेब्रह्मलक्षणसमन्वयस्तत्रदोषश्चकोदृष्टइत्याकांक्षायांलक्षणसमन्वयंतावदाह देहेभ्यइति । समष्टिव्यष्टिदेहेभ्यएवप्राणिनामुत्पत्त्यादिकंप्रसिद्धमित्यर्थः तान्देहानेवान्तकालेयाति यथामृतशरीरंश्वकृम्यग्निदेहान्अन्नतोविड्देहंयातीति ३३९ तत्रदोषमभिनयति यद्यप्येवमितिद्वाभ्यां । परिच्छिन्नत्वंविनाशित्वंचब्रह्मत्वविरोधिदोषइतिभावः ३४० समष्टावप्ययंदोषस्तदुत्पत्त्यादेःश्रुतत्वेनपरिच्छिन्नतायाविनाशितायाश्चसिद्धत्वादित्याह महाभूतात्मकइति । स्थवीयसःअतिस्थूलस्य ३४१ एवमिति । अन्नस्यकारणंप्रष्टुकामः ३४२ वरुणइति । ततोवरुणस्तस्मैभृगवेइदमुत्तरमाह इदंकिं यस्तपोरूपउपायस्त्वयादृष्टउपदेशमंतरेवकर्त्तव्यत्वेनावधारितोमयासूचितश्चसएवपुनःकर्तव्यः तेनतपसोब्रह्मज्ञानसाधनेषुमुख्यत्वेनजगत्कारणंब्रह्मतपसाजानीहि तेनमुख्यसाधनत्वेनैवविहितपसिब्रह्मतद्रूपंप्रयुंजतेइतिद्वयोरर्थः ३४३

३४४ एवमिति । तप्तवान्अर्जितवान् ३४५ एवंत्रिवारमिति । यथाद्विवारंगमनंप्रतिपादितमेवंत्रिवारंगमनमन्यद्बोध्यम् तथाचपंचवारंगमनंपितरंप्रतिभृगोःसिद्धम् तपसाजानीहीत्या कारकःश्रत्यर्थाभ्यांकृतःपितुरुपदेशोपिपंचधाबोध्यइतिभावः ३४६ द्वितीयतृतीयचतुर्थपर्यायेपुकारणंतयादृष्टान्पदार्थानाह क्रियेति । तत्रक्रियात्मकंप्राणमयंशक्तिरूपेणादृष्टाख्येनान्नस्यकार णंदृष्टवान् तस्यकारणंनामात्मकंमनोमयंतस्यचविज्ञानमयंरूपात्मकमेवंदृष्ट्वातेष्वेतान्वक्ष्यमाणान्दोषानलोकयदित्यर्थः ३४७ तत्रप्राणेब्रह्मलक्षणान्वयंतत्रदोषंचाभिनयति सप्राणादितिद्वाभ्यां। प्राणविशिष्टादेवशरीराद्भूवानांजन्मदर्शनात्प्राणकृतेनान्नभक्षणेनैवस्थितिदर्शनात्प्राणनिर्गमनेविलयदर्शनाच्चप्राणस्यब्रह्मत्वमित्यर्थः ३४८ दोषमाह यद्यपीति । तथापिप्राणःकथंजगतःकार णंस्यात् जडत्वात् तच्चजडत्वंप्राणस्यस्थूलदेहस्यचसमंप्रसिद्धमित्यर्थः ३४९ ततश्चेतनकारणान्वेषणायांममनोजानातीत्यादिलोकदृष्ट्याचेतनत्वेनप्रसिद्धंमनोजगत्कारणत्वेनभृगुर्निश्चितवानि त्याह ततइति ३५० ततःपूर्ववद्दोषंचिंतयन्मनसीमंवक्ष्यमाणंदोषमालोकयदित्याह प्राणेइति ३५१ संशयात्मकत्वेनकारणसापेक्षतैवात्रदोषइत्याह इदमिति । इदंमनःसविकल्पात्मकसंश यरूपंकारणानपेक्षंकथंस्यात् यतःसंशयस्यधर्मिसामान्यज्ञानादिजन्यत्वंप्रसिद्धमित्यर्थः ३५२ तच्चधर्मिज्ञानादिकंनिर्विकल्पकबुद्धिरूपमित्याह संशयस्येति । बुद्धिस्वरूपभूतोनिश्चयोधर्मि

तपसाब्रह्मतेनत्वंजगतोविद्धिकारणम् ॥ तपोब्रह्मेतितेनेत्थंवदंतिब्रह्मवादिनः ३४४ एवमुक्तेयथापूर्वंतप्तवांस्तपआत्मवान् ॥ विज्ञायकारणंभूयःपितरंगतवान् भृगुः ३४५ एवंत्रिवारंगतवान्पितरंदोषदर्शकः ॥ पितापितपसेत्यादित्रिवारमपिसोवदत् ३४६ क्रियानामचरूपंचशक्तिरूपेणदृष्टवान् ॥ कारणंक्रमतस्तत्रदो पानेतानलोकयत् ३४७ सप्राणादेवजगतोजातोदेहश्चतुर्विधः ॥ प्राणेनान्नादनात्तद्वत्तिष्ठत्येषनसंशयः ॥ प्राणनिर्गमनादंतेविनाशंचसगच्छति ३४८ यद्य प्येवंतथाप्येषजडःप्राणःकथंभवेत् ॥ कारणंहिसमादृष्ट्याजडताप्राणदेहयोः ३४९ ततःप्राणस्यकिंचित्स्यात्कारणंचेतनंसदा ॥ चेतनंहिमनोलोकेप्रसिद्धंतस्य कारणम् ३५० प्राणेयथापुरादोषंदृष्टवान्मुनिसत्तमः ॥ मनस्यपितथैवायमिमंदोषंव्यलोकयत् ३५१ इदंसंशयरूपंस्यान्नमनःकारणंविना ॥ अकारणोयतोलो केपंशयोनैवजायते ३५२ संशयस्यसदैवायंनिश्चयोबुद्धिनामकः ॥ कारणंनविनाबुद्धिंसंशयोजायतेक्वचित् ३५३ निश्चित्योर्ध्वंपुरावस्तुसंशयःस्यादनंतरम् ॥ ततोबुद्धिर्हिमनसःकारणंनापरंक्वचित् ३५४ बुद्धावपिमनोहेताविमंदोषंव्यलोकयत् ॥ कादाचित्केयमखिलाब्रह्मबुद्धिःकथंभवेत् ॥ देहोपमापरिच्छिन्नातस्मादे षाप्रजायते ३५५ बुद्धिःसुखंसमुद्दिश्यजायतेधीमतांसदा ॥ कारणांतरतोदुःखमुपेक्ष्यंचाधिगच्छति ३५६

गोचरःसंशयस्यकारणमितिसंबंधः ३५३ एतदेवस्फुटयति निश्चित्येति । यतःपुराप्रथमंवस्तुधर्मिस्वरूपमूर्ध्वत्वलक्षणसामान्यधर्मवन्निश्चित्यानंतरंस्थाणुत्वपुरुषत्वकोटिकःसंशयःप्रसिद्धः त तोमनोविहायतत्कारणंबुद्धिंब्रह्मत्वेनभृगुर्विज्ञातवानित्यर्थः ३५४ बुद्धावपिकारणसापेक्षत्वरूपंदोषंदृष्टवानित्याह बुद्धावपीति । अखिलासर्वप्रकाराबुद्धिर्ब्रह्मत्वंनार्हतिकादाचित्कत्वात् का दाचित्कत्वेहेतुःप्रजायतेइत्युक्तंकार्यत्वम् तत्रहेतुर्देहवत्परिच्छिन्नत्वमिति ३५५ अस्याबुद्धेःकर्तृत्वरूपायाउदयेभोक्तृत्वलक्षणआनंदएवनिमित्तम् शास्त्रेलोकेचतथान्वयव्यतिरेकदर्शनात् तथाहि स्वर्गकामोयजेतेत्यादौस्वर्गकामादिमुद्दिश्ययागकर्तृत्वंविधीयतेइतिवदद्भिरुद्देश्यस्यविधेयंप्रतिपूर्वसिद्धतामीमांसकैःसंमतैव फलेहेतुतृतीयांविदधद्भिर्वैयाकरणैःपुरुषार्थएवहेतुरितिवदद्भिःसांख्यैश्च तथाप्रयोजनमनुद्दिश्येतिन्यायःसर्वलौकिकपरीक्षकसंमतोऽत्रानुकूलइत्याशयेनसुखस्यबुद्धिंप्रतिकारणतांश्रुत्युक्तांसंभावयति बुद्धिरितिचतुर्भिः । बुद्धेःप्रवृत्तिःसुखार्थैवदृष्टायतोदुःखादौद्वेष्येउ पेक्ष्येचतत्प्रवृत्तिःकारणांतरतोदोषपारवश्यरूपादेवभवतीत्यर्थः लौकिकानिप्रमाणान्यप्यविद्याकामकर्मात्मकदोषपक्षपातीन्येवेतिभावः ३५६

एतत्स्फुटयति इच्छयेति । निष्कामानांसमाहितानांबुद्ध्युत्थानादर्शनाद्बुद्धिकारणत्वमिच्छायाःसिद्धं इच्छातुसुखएवजायते नह्युपेक्ष्यंद्वेष्यंवाहंजानीयांप्राप्नुयांवेत्याकारिकेच्छास्वतोजायमाना दृष्टेत्यर्थः ३५७ ततोघटायोन्मीलितंचक्षुःपटंनहिनपश्यतीतिन्यायेनसुखार्थेप्रवृत्तेच्छादुःखादिकमपिगोचरयतीत्याह ततइति । यत्प्रसक्तंप्रयत्नेनपरिहर्तुंनशक्यतेतदनुपादेयमित्युच्यते अनुपादेयस्यरूपमपरिहार्यत्वंतेनदुःखादिकंगोचरयतीत्यर्थः ३५८ फलितमाह ततःसुखैकेति । ततउक्तव्याप्तेः ततइच्छाप्रयुक्तत्वात् सुखमेवबुद्धेःफलरूपंनिमित्तं अनुपादेयंदुःखादिकंत्विच्छायाइवबुद्धेरपिफलरूपनिमित्ततांनार्हतीत्यर्थः तथाचाप्रियाद्यवयवकआनंदमयोविज्ञानमयस्यकारणत्वेनब्रह्मतयानिश्चितइतिभावः ३५९ आनंदमयस्यापियेप्रियमोदप्रमोदानंदाश्चत्वारोवयवास्तेपिब्रह्मत्वयोग्यास्नभवंत्यागमापायित्वेनकारणसापेक्षत्वादित्याह सुखंचेति । प्रियादित्रयमंतःकरणवृत्तिरूपंसोपुप्ताविद्यावृत्तिरूपंत्वानंदाख्यंसुखंतत्सर्वंजायमानत्वात्कारणापेक्षमित्यर्थः ३६० तस्मात्पुच्छभूतंभूमाख्यंसुखमेवप्रियादीनामपिप्रतिबिंबानांबिंबभूतंसर्वकारणमित्याह कारणेनेति । बुद्धिहेतुःबुद्ध्यादिप्रपंचस्याज्ञातरूपेणकारणमुद्देश्यलक्षणनिमित्तंवा ३६१ इतिविचार्येति । एवंविचार्य

इच्छयाजायतेबुद्धिरिच्छाचसुखगोचरे ॥ उपेक्ष्येनिखिलेचात्रदुःखेवादुःखसाधने ॥ जानीयांप्राप्नुयांवापिनैवमिच्छाप्रजायते ३५७ ततःसुखेप्रवृत्तेयमिच्छा दुःखादिकंसदा ॥ अनुपादेयरूपेणगोचरीकुरुतेनृणाम् ३५८ ततःसुखैकविषयाइच्छाबुद्धेस्तुकारणम् ॥ बुद्धिश्चततएवेयंसुखएवप्रजायते ॥ इच्छावच्चानुपादेयेजातातद्धेतुकानसा ३५९ सुखंचजायमानंयत्प्रियमोदप्रमोदकम् ॥ अविद्यावृत्तिरूपंतदन्यकारणजंभवेत् ३६० कारणेनविनानंदोयोभवेद्ब्रह्मरूपभाक् ॥ तारतम्यविहीनश्चबुद्धिहेतुर्हिसस्मृतः ३६१ इतिविचार्यमतिमान्भृगुर्ब्रह्मविदांवरः ॥ आत्मरूपोयमानंदोब्रह्मेतिप्रत्यपद्यत ३६२ आनंदादेवभूतानिजायंतेनिखिलान्यपि ॥ स्त्रीपुंसयोश्चसंभोगजाताज्जन्मविवर्जितात् ३६३ आनंदेनैवजीवंतिजातानिनिखिलान्यपि ॥ निद्राहारविहारांगरागस्त्रीविषयादिना ३६४ आनंदेहृदयाकाशेप्राज्ञेतादात्म्यरूपतः ॥ प्रयांतिदेहतस्तद्वत्सर्वतोभिविशंतिच ॥ निखिलान्यपिभूतानिस्थावराणिचराणिच ३६५ निरविद्यानिचेदेनंव्रजेयुर्नपुनर्भवेत् ॥ शरीरग्रहणंतेषांमुक्तवद्ब्रह्मसंभवात् ३६६ सुप्ताविवमृतौयस्मादानंदंहृदयेस्थितम् ॥ व्रजंतिसर्वभूतानिसाविद्यान्येवसर्वदा ॥ मृत्वाततःपुनर्देहग्रहणंचप्रकुर्वते ३६७ जगज्जन्मस्थितिध्वंसाएवमानंदतःसदा ॥ यतोभवंतितेनायमानंदोब्रह्मशब्दभाक् ३६८

पुच्छभूतमानंदंब्रह्मत्वेननिश्चितवानित्यर्थः ३६२ तत्रलक्षणसमन्वयवाक्यस्यार्थमाह आनंदादेवेतित्रिभिः । सर्वाणिलौकिककारणान्यानंदंप्राप्यैवकार्यजननक्षमाणि यथागर्भहेतुभूतौस्त्रीपुंसौ अतोज्ञायतेसर्वत्रानुगतआनंदएवजगत्कारणं सचनित्यः विषयाणांतदभिव्यंजनमात्रेव्यापारादित्यर्थः ३६३ स्थितिहेतुतामाह आनंदेनेति । तथासर्वाणिभूतान्यानंदेनैवजीवनंगच्छंतिप्रसिद्धानि कीटशेनानंदेन निद्राचाहारश्चविहारश्चांगरागश्चचंदनलेपादिरूपःस्त्रीचेत्यादिविषयाआदयोऽभिव्यंजकायस्यसतथातेनेत्यर्थः पूर्वन्यायोऽत्रापिध्येयः ३६४ तत्रलयमाह आनंदइति । तथासर्वाणिभूतानिसर्वतःस्थूलात्सूक्ष्माच्चदेहतोविक्षेपमयादुद्विग्नानिप्रयांतिप्रयाणंतदभिमानत्यागरूपंकुर्वंतिसंति हृदयाकाशप्राज्ञपदाभ्यांप्रोक्तेऽत्रानंदेब्रह्मणितादात्म्यरूपसंबंधेनाभिविशंतितद्भावंयांतीत्यर्थः ३६५ ननुब्रह्मलीनानांकथंजन्मेतिचेदविद्याख्यबीजावशेषादित्याह निरविद्यानीतिद्वाभ्यां । निवृत्ताविद्यानिसंतिभूतानियदितत्रविशेयुस्तर्हिमुक्तवज्जातिंनैवभजेयुः ब्रह्मत्वस्यसंभवाल्लाभादित्यर्थः ३६६ संसारिणस्तुसुप्ताविवाविद्याशेषाएवलीयंतेऽतःपुनर्जन्मयुक्तमित्याह सुप्ताविवेति ३६७ एवंविधजन्मादिकारणत्वेनानंदस्यब्रह्मत्वंसिद्धमित्याह जगज्जन्मेति ३६८

फलितमाह एवमिति । इदंमननम् ३६९ सैवेति । एषाप्रसिद्धाविद्यावरुणेनप्रोक्ताभृगुणालब्धाचहृद्गुहागतेपरमचिद्रूपेआकाशेआनंदात्मकेअस्तिपर्यवसन्नेत्यर्थः ३७० व्याख्यातवाक्यस्यतात्पर्यार्थमाह अन्योपीति । यतोऽनयाविद्ययैवसहसर्वात्मभावलक्षणफलस्यसंबंधोनतुवरुणसुतत्वकृपित्वादिनाततोन्यस्याप्येवंमननपरस्यतत्फलंभवत्येवेत्यर्थः ३७१ उपासनावाक्यार्थंसूचयन्नानंदात्मविदउक्तंफलंयुक्तमित्याह अन्नादीति । अन्नमयादिकोशानांसमष्टिरूपाणामात्मत्वेनविज्ञानात्सर्वान्नलाभादिफलंयथाश्रुत्युक्तंभवतितथानंदात्मविज्ञानात्तद्भावरूपमपिफलंयुक्तमित्यर्थः ३७२ अथोक्तविज्ञानफलस्यसर्वात्मभावस्यजीवन्मुक्तेनानुभूयमानस्याभिनयपरंसामवाक्यंव्याचष्टे क्रमादित्यष्टभिः । वर्णितानांकोशानामतिक्रमणमुपसंक्रमणपदोक्तंकृत्वाहावुइत्यादिकंसामगायन्सन् जीवन्मुक्तस्तिष्ठतीत्यर्थः ३७३ अहोइति । इदमत्याश्चर्यंयदहमेकःसर्वभोग्यभोक्तृरूपःसन्स्थितइत्यर्थः ३७४ अन्नादइत्यस्यार्थांतरंमृत्युरूपेणान्नवद्भक्षकइत्याकारमाह मृत्युरूपइति । अन्नंदेवादिभ्योऽदत्वाभोक्तारंकृपणंमृत्युरूपोहमग्निभक्षयामीत्यर्थः ३७५ मंत्राणामिति । तथामंत्राणांश्लोकपदोक्तानामीश्वररूपेणकर्त्ताकृपिरूपेणद्रष्टास्मत्तांचास्मीत्यर्थः तथाकृतपदोक्तकर्मविद्याफलरूपे

एवंमननतःपूर्वंभृगुरात्मावबोधनम् ॥ प्राप्तस्तस्मादिदंसर्वंकरणीयंमुमुक्षुणा ३६९ सैषाविद्यापुरालब्धाभृगुणावरुणेनच ॥ प्रोक्तास्तिपरमेव्योम्निहृद्यानंदस्वरूपिणि ३७० अन्योपिभृगुवद्वेदयःपुमान्सोत्रसर्वदा ॥ प्रतितिष्ठतिसर्वात्मभूतआवृत्तिवर्जितः ३७१ अन्नादिकोशविज्ञानादन्नाद्याप्तिर्यथाफलम् ॥ आनंदज्ञानतस्तद्वदानंदाप्तिःफलंभवेत् ३७२ क्रमात्कोशानतिक्रम्यपंचाथानंदबोधतः ॥ गायन्नास्तइदंसामहावुहेत्यादिकंबहु ३७३ अहोअहोइदंचित्रमाश्चर्यमिहविद्यते ॥ अन्नादश्चतथैवान्नमेकएवास्म्यहंयतः ३७४ मृत्युरूपस्तथैवाहमन्नदानविवर्जितम् ॥ अन्नादमाद्मिमनुजंसर्वदास्वोदरंभरिम् ३७५ मंत्राणामपिकर्त्ताहंद्रष्टावासर्ववित्तमः ॥ कर्मणांफलरूपेणजातश्चाहंसुखात्मकः ३७६ देवेभ्यश्चापिपूर्वोहंजातःसूत्रंविराडपि ॥ आनंदस्यामृतस्याहंमध्येनाभिरिवस्थितः ॥ संसारचक्रंनिखिलमपियस्मिन्समर्पितम् ३७७ धर्मार्थकाममोक्षाख्यंमामन्नादिस्वरूपतः ॥ योददातिपुमान्मांसआत्मानमपिचावति ३७८ अद्मियत्कृपणंदीनमन्नदानविवर्जितम् ॥ मृत्युःसन्निखिलंविश्वंनित्यंदेहेंद्रियक्षयात् ३७९ तिरस्करोमिपुरुषःस्वर्णवत्सूर्यसंस्थितः ॥ आनंदात्मास्वयंज्योतिःसर्वधर्मविवर्जितः ३८० एवंस्वानुभवंविद्वान्प्रकटीकुरुतेसदा ॥ लोकानुग्रहकामःसन्श्रुतिवद्दीनवत्सलः ॥ एतदर्थंस्यतस्यासौसाम्नोगानच्छलेनहि ३८१

णनित्यानित्यसुखात्मकेनाहमेवस्थितइति ३७६ देवेभ्यइति । अहंहिरण्यगर्भादिसमष्टिरूपेणव्यष्टिभूतेदेवेभ्यःप्रथमंजातः तथानंदरूपस्यमोक्षस्यसंसारस्यचमध्येविधारकत्वेनस्थितोस्मिनाभिरिवमदधीनौसंसारमोक्षौजनानामितियावत् ३७७ योमेत्यादिखंडार्थमाह धर्मेति । श्रुतौइत्थपदेनेत्थमित्यर्थकेनवर्णितःसर्वात्मभावःप्रदर्श्यतेतथाचयतोहंधर्मादिसकलपुरुषार्थरूपोऽन्नादिपदार्थरूपोदातृरूपश्चाहंभवामिततोयोमामन्नादिरूपमनिथ्यादिभ्योददातिसदातायदात्मानंयमाद्रक्षतितन्मामेवरक्षतिममैवतस्यात्मत्वादित्यर्थः अपिरवधारणे ७८ तत्रहेतुतयाऽदातुर्मृत्युभक्ष्यत्वमाह अद्मीति । यत्यतःकृपणंदीनमुदरंभरिंप्रतिदिनमिंद्रियादिक्षयहेतुकालरूपेणांतेमृत्युरूपेणचाहमद्मीत्यर्थः ७९ तिरस्करोमीति । तथायोयमादित्यमंडलांतस्थःस्वर्णवद्देदीप्यमानःपुरुषोनिरतिशयज्ञानैश्वर्यादिमांस्तद्रूपेणाहमेवसर्वंतिरस्करोमिसर्वतउत्कृष्टोस्मीतियावत् ३८० ईदृशानुभवप्रकाशनेविदुषःश्रुतेरिवकरुणैवकथमिमेजनाविद्यायांप्रवर्त्तेरन्नित्याकारिकाप्रयोजिकेत्याह एवमिति । एतदर्थस्यइत्यंव्याख्यातस्य तस्यहावुइत्यादिः छलंव्याजः ३८१

प्रतिचंद्रांसिश्रुतरणेतरणीनारायणेनमस्येका ॥ श्रुतिसंमतोयमर्थःप्रतिभूर्नारायणीयभावाय ॥ १ ॥ चतुर्थीविकासयितुमितितुर्मंतल्लोपापेक्षयेति बृहन्नारायणोपनिषदितिनारायणीयमितिचप्रसि
द्धस्यतैत्तिरीयारण्यकभागस्यनिर्गुणविद्याप्राधान्येनार्थंदर्शयितुमुपक्रमते विदुषेत्यादिना । यद्ब्रह्मख्यातसामभिर्येणविदुषागीयतेतदेवनारायणेनारायणप्रतिपादकेग्रंथेप्रतिपाद्यतयास्थितंमया
वर्णितंशृण्विति गुरोःशिष्यंप्रत्युक्तिः ३८२ तत्रप्रथमकंडिकार्थंदर्शयति आनंदात्मेतित्रयोदशभिः । अविद्याजलमयेसंसारसागरेतदंतर्गतस्यानेकजातीयस्यभुवनस्यचमध्येपरमःपुमानानंदात्मागग
नवच्छुद्धःसमनुगतोवर्ततेइतिद्वयोरर्थः ८३ । ८४ सनसंसारेणावच्छिन्नोऽतिमहत्त्वादित्याह स्वर्गस्यापीति । स्वर्गस्योन्नतत्वेनप्रसिद्धस्याप्युपरिष्टादयमीश्वरोभवति गगनाद्यपेक्षयातिमहत्त्वात्
यतोयंसर्वगोवर्ततेइत्यर्थः ८५ वर्ततइति । प्रथमपदेपूर्वान्वयि यश्चदेवःशुक्रपदोक्तेनस्वप्रकाशेनचैतन्यज्योतिषाप्राणिनांचक्षुरादीनिकरणान्यंतर्यामितयाप्रविष्टः कीदृशानिचक्षुरादीनि ज्योतिः
पदोक्तान्यधिदेवादित्यादिरूपेणाध्यात्मरूपेणचस्थितानीत्यर्थः ३८६ सम्यगात्मतयेति । अयंस्थूलसूक्ष्मकारणोपाधिकत्वेनविराडादिसंज्ञःसम्यगात्मतयासर्वस्यमुख्यात्मत्वात्सृष्टिपरंपराविधा

विदुषागीयतेयद्धिब्रह्मतत्त्वंमयेरितम् ॥ सावधानमनाभूत्वाशृणुनारायणेस्थितम् ३८२ आनंदात्मास्वयंज्योतिरविद्यायाःपरःपुमान् ॥ संसारसागरेऽगाधेह्यवि
द्याजलपूरिते ८३ यस्मिन्नस्तितिष्ठंतिमततंभुवनानिचतुर्दश ॥ अनेकभुवनस्यास्यमध्येगगनसन्निभः ८४ स्वर्गस्यापितथैवायमुपरिष्टान्महेश्वरः ॥ गगनादेश्चमह
त्त्वाद्यान्सर्वगोयतः ८५ वर्ततेयश्चशुक्रेणस्वप्रभेणात्मतेजसा ॥ ज्योतींषिचक्षुरादीन्यधिदेवादिरूपतः ॥ स्थितानिप्राणिनांदेवःप्रविष्टोगगनोपमः ३८६
सम्यगात्मतयासृष्टेरनुसृष्टेर्विधायकः ॥ प्रजापतिरयंदेवोविराट्सूत्रंतथेश्वरः ८७ स्थावराणांचराणांचह्यधिदेवादिभेदिनाम् ॥ चरतिप्राणिनांगर्भेसोंतर्हृदयसद्म
नि ८८ यस्मिन्समवरुद्धंचजगदेतच्चराचरम् ॥ उत्पत्तौचस्थितौतद्वत्प्रलयेचमहेश्वरे ८९ अधितिष्ठंतियस्मिंश्चविश्वेदेवाःसवासवाः ॥ भूतंभव्यंभवच्चैतद्विश्वमा
त्मन्यैवहि ३९० आनंदात्मस्वरूपंयदिदंक्षरणवर्जितम् ॥ आत्मन्याकाशरूपेस्तिस्वमहिम्निचसर्वदा ९१ येनावृतंनभस्तद्वत्स्वर्गोभूमिश्चविस्तृता ॥ आदि
त्योयेनयद्भासःस्वप्रभेणात्मतेजसा ॥ तपत्यविरतंसर्वलोकमंडलमध्यगः ९२ संसारसागरेसूत्रभूतमंतःसदैवयम् ॥ जगत्पटात्मनानित्यंवयंतिकवयोजनाः ३९३
तन्तुवायायथातद्वद्वर्णयंतिमहेश्वरम् ॥ जगत्यैक्यंसमापन्नमवाङ्मनसगोचरम् ३९४

यकत्वेनप्रजापतिरित्युक्तेइत्यर्थः ३८७ अयंदेवःसर्वस्यहृदयाकाशेगर्भपदोक्तेतिष्ठतीत्याह
स्थावराणामिति ३८८ श्रुतौयत्रविश्वंभवत्येकनीडमित्यस्यार्थंदर्शयन्नाह यस्मिन्निति । सर्वंजगत्सदायस्मिन्समवरुद्धंयदधीनमित्यर्थः ३८९ नकेवलमैहलौकिकंजगदेवतदधीनंकिंतुपरोक्षदे
वादिरूपमपीत्याह अधितिष्ठंतीति । अधीनंतत्पदार्थमेवदेवाभ्यति भूतमिति । नकेवलमुक्तात्मरूपमेव समंतादित्यर्थकस्यश्रौतस्य आइतिपदस्यव्याख्यानंविश्वमिति ३९० ननूक्तमात्मरूपंकुत्रस्थित
मित्यपेक्षायांपदांतरंस्वमहिम्नीत्याह आनंदात्मेति । यदिदंवर्णितंतच्चिदाकाशरूपेस्वमहिम्न्येवस्थितमित्यर्थः ३९१ येनेति । आवृतंवेष्टितमाकाशादिकंयेनयेनचादित्योपिचैतन्यज्योतिषाप्रकाशि
तस्सन्तपतीत्यर्थः ३९२ संसारेति । यथातंतुवायाःसूत्रंपटभावापन्नंवयंतिसंतानयंतितथायमेनंदेवंसंसारसमुद्रांतर्गतसकलपदार्थात्मकपटानांसूत्रभूतंकवयउशनःप्रमुखामौनिप्रभृतयोजगत्पटात्मनावयं
तिरूपयंतितथावागाद्यविषयस्यापिवाक्यजातस्यनामरूपवर्णनमितिद्वयोरर्थः अयंभावः यथापटवर्णनेसूत्रस्यैववर्णनंपटस्यतदतिरिक्तत्वाभावात्तथाकवयःपराधीनसत्ताकंजगद्वर्णयंतःपरमे
श्वरमेववर्णयंतीति यथोक्तंवेदस्तुतौ ' अनक्षरमीशभूतयोपिमनोवचनायितेकथमयथाभवंतिभुवित्तपदानिनृणाम् ' इति । श्रुत्यंतरंच ' यइमंवीणायांगायंतिएतमेवतेगायंति ' इति ३९३ । ३९४

यस्मिन्नेतस्मिन्नीश्वरे अव्यक्तत्वात्सर्वविशेषशून्यत्वरूपात्तथा सर्वोत्कृष्टत्वादक्षरत्वेन श्रुत्यंतरप्रसिद्धे सर्वाः प्रजाः सदा तिष्ठंतीत्याह यस्मिन्निति ३९५ यस्मादिति । यस्मादीश्वरादुत्पन्नो जगद्योनिर्जगत्प्रसवाङ्कुरभूतो हिरण्यगर्भस्तोयपदोक्तजलप्रधानपंचभूतैः सर्वाः प्रजाः ससर्ज तत्र भूमिलोके पुरुषादिरूपाः प्रजाः ससर्ज एवं सृष्ट्वा चराचरशरीरेषु नानाविधरूपेण विज्ञानशक्तिप्रमुखेन प्रविशतीति द्वयोरर्थः ३९६ ३९७ अत इति । अत ईश्वरादद्वितीयात्मलक्षणात्परं सूक्ष्मं दुर्लक्ष्यं किंचिन्नास्ति तत्र हेतुतयाऽणीयस्त्वादिकमाह अणोरित्यादिना ३९८ अनंतमिति । यदेतद्ब्रह्माद्वितीयत्वादनंतं विश्वकारणत्वात्पुराणं सविलासमायालक्षणात्तमसः परं च प्रसिद्धं वेदांतेष्वित्यर्थः ३९९ द्वितीयकंडिकार्थमाह व्यापार इति दशभिः । योऽयं मानसः शास्त्रीयो व्यापारः सकृतसंज्ञः कायिकस्तु सत्यसंज्ञः अवश्यभाविफलकत्वात् सद्द्विविधो व्यापारस्तत्स्यात्तत्किं यत्कवीनां सूत्रवद्धानीयत्वेनोक्तमित्यर्थः तथा तदेवेष्टापूर्तरूपमाहुः जगदभ्युदयबीजभूतं कर्मापि ब्रह्मणो विभूतिरिति यावदिति ४०० । ४०१ जातमिति । तथातीतादिरूपजगतः प्रतिष्ठाश्रयत्वात्संसारचक्रनाभित्वेन यदुक्तं ब्रह्म तदेवाग्न्यादिरूपमिति संबंधः तत्र दीप्तं स्वप्रकाशचिद्रूपममृतं मोक्षः आपः सूक्ष्म

यास्मिन्नव्यक्तरूपेऽस्मिन्नुत्कृष्टे जगदीश्वरे ॥ कालत्रयेऽवतिष्ठंते प्रजाः सर्वाश्चराचराः ३९५ यस्माज्जातो जगद्योनिर्ब्रह्मा लोकपितामहः ॥ अप्प्रधानैर्महाभूतैः ससर्ज निखिलाः प्रजाः ॥ भूमौ ब्रह्मांडरूपायां व्रीह्याद्योषधिरूपतः ३९६ पुरुषांश्च पशूंस्तद्वद्यो विशत्यत्र सर्वदा ॥ चराचराणि भूतानि तथा नानाविधात्मना ३९७ अतः परं न किंचित्स्यात्सूक्ष्मं ब्रह्मात्मरूपतः ॥ अणोरणीय एतत्स्यान्महीयो महतोपि च ॥ परात्परमिदं ब्रह्म ह्येवमव्यक्तरूपकम् ३९८ अनंतं भेदशून्यत्वात्पुराणं विश्वरूपभृत् ॥ परस्तात्तमसो मायातत्कार्याच्च स देवयः ९९ व्यापारो मानसस्तत्स्याच्छास्त्रीयः कायिकोपि वा ॥ ऋतसत्याभिधो योयं फलं यच्छति देहिनाम् ४०० कवीनां सूत्रभूतं च ब्रह्म यद्द्विवयंतिते ॥ इष्टं पूर्तं च तत्प्राहुर्बहुधा विश्वरूपकम् ४०१ जातं च जायमानं च विश्वं यस्मिन्प्रतिष्ठितम् ॥ नाभिः संसारचक्रस्य ब्रह्म विद्भिर्यदीरितम् ४०२ अग्निस्तदेव तद्वायुस्तत्सूर्यस्तच्च चंद्रमाः ॥ तदेव दीप्तममृतं तदापः स प्रजापतिः ४०३ निमेषा जज्ञिरे तस्माद्ब्रह्मणः सर्वरूपिणः ॥ स्वभानात्पुरुषात्सर्वे ह्याधिक्येन सहस्रधा ४०४ कलाः काष्ठा मुहूर्ताश्च ह्यहोरात्राश्च सर्वशः ॥ अर्द्धमासास्तथा मासा ऋतुभिः सह वत्सराः ४०५ अपस्तथा त्रिलोकीं च सृष्ट्वा स दुदुहे पुमान् ॥ नानाभोगस्वरूपं तत्पयो नः सुखरूपकम् ४०६ नैनमूर्ध्वं न तिर्यक्नं मध्ये पि च कश्चन ॥ पर्यग्रहीन्न तस्येष्टे कोपि तस्य महात्मनः ४०७ महद्यशो त्र नाम स्यादृश्यात्मस्वरूपिणः ॥ चक्षुषा कोपि नात्मानं पश्यत्यत्र कदाचन ॥ हीनो रूपादिभिर्यस्मादिंद्रियैश्च न गम्यते ४०८ हृदयस्थेन बोधेन नियंत्रा मनसोपि च ॥ गम्यं ये विदुरात्मानं ते भवंत्यमृता अपि ४०९

भूतानि प्रजापतिर्विराडिति द्वयोरर्थः ४०२ । ४०३ एतस्मादेव निमेषादिरूपकालावयवोत्पत्तिरित्याह निमेषा इति द्वाभ्यां । स्वभानात्स्वप्रकाशतालक्षणविशिष्टद्योतनशालिनः कलादिस्वरूपं कोशतः प्रसिद्धं ४०४ । ४०५ अप इति । एवं सृष्ट्वा स देवोपः पंचभूतानि तन्मयीं त्रिलोकीं च धेनुवद्दुहत्तद्दोहनलब्धं दुग्धं तु इदमेव यन्नानाविधभोगस्वरूपमित्यर्थः ४०६ अस्याविषयस्वभावतामाह नैनमिति । द्वितीयस्य तस्य पदस्योत्तरेणान्वयः एनं देवं जगत ऊर्ध्वादिदेशेऽन्विच्छन् कोपि न गृहीतवान् अत एवास्येशो नियंता पि कोपि नास्तीत्यर्थः ४०७ महदिति । तस्यात्मत्वेन निरतिशयप्रेमास्पदत्वसूचकं नाम महद्यश इत्याकारमुक्तम् तथायं रूपादिहीनत्वाच्चक्षुराद्यगोचर इत्यर्थः ४०८ कथमस्योपलब्धिरिति चेन्न कल्पनया तदाकारबुद्ध्येत्याह हृदयस्थेनेति । हृदि एकात्मतां गतेन बोधेन बुद्धिरूपेण मनसः सविकल्पकस्य निरोधकेन गम्यमिमं देवं ये जानंति ते मुक्ता भवंतीत्यर्थः ४०९

अत्रोपनिषद्विद्याख्यातमंत्रानंतरंअद्भ्यः संभृतइत्यादयउत्तरेमंत्राःपठ्यंतथाहिरण्यगर्भइत्यादयोष्टौचमंत्राःपाठ्याइत्युक्तं तत्राद्भ्यइत्यादीनामर्थमाह अयमेवेत्यष्टाविंशतिश्लोकैः । आदित्यमंडलांतर्वर्तित्वेनब्रह्मस्वरूपमत्रप्रस्तूयते तथाहि योदेवोऽद्भ्योऽप्प्रधानसूक्ष्मभूतेभ्यः पृथिव्युपलक्षितस्थूलभूतानांयोरसःपूर्वानुष्ठितोपासनाप्रभावेणशोभनःपरिणामस्तस्माच्चतथाविश्वकर्मकार्यंयस्यतथाभूतात्परस्माद्ब्रह्मणोजगत्पटसूत्रभूतात्कालात्मकाद्योदेवोहिरण्यगर्भवैश्वानरादिसंज्ञःसर्वंजगतोऽप्यधिरूपात्समष्टित्वेनाधिकउत्पन्नःअस्मिन्लोकेऽग्रेऽजनसमुदायेसमवर्तत कीदृशः प्रथमःशारीरः 'सवैशरीरीप्रथमःसवैपुरुषउच्यते । आदिकर्त्तासभूतानांब्रह्माग्रेसमवर्त्तत'इतिस्मृतेः तस्यप्रथमशारीरस्यरूपंविश्वरूपंसर्वप्रपंचमयम् अयमेवदेवोनारायणाख्यस्त्वष्टाआदित्यमंडलांतस्थःसन्जगतोधारकोविनिर्ममेसत्ताभानादिविशिष्टंकृतवानित्यर्थः अयंकः यमेनंब्रह्मविषयापुमानधिकारीलभतेइतित्रयाणांयोजना ४१० । ४११ । ४१२ आदित्यमंडलांतस्थोनारायणएवपुरुषस्यनानाविधौपाधिकविशेषान्गतस्यापिपारमार्थिकंस्वरूपमित्याह स्वभावेति । अस्यपुरुषस्यप्रथमशारीरादिसंज्ञस्यतदेवनारायणतत्त्वंस्वभावसिद्धमाजानसिद्धंपारमार्थिकमितियावत्तादृशंरूपम् तत्किं यत्सृष्टेःपूर्वमनंतत्वनिर्गुणत्वचिद्घनत्वादिभिर्लक्षितमित्यर्थः ४१३ तस्मिन्रूपेऽसत्वशंकांमंत्रद्रष्टाऋषिःस्वानुभवविरोधेननिरस्यति वेदाहमिति । तादृशंनारायणरूपंमायालक्षणतम

अयमेवपुरादेवोजातोद्भ्योब्रह्मगोलके ॥ पृथिवीरसतश्चापिलोकेस्मिन्समवर्तत ४१० ब्रह्मणःसूत्रतोनित्यात्परस्माद्विश्वकर्मणः ॥ अधिकःसर्वजगतःशारीरःप्रथमोह्ययः ४११ त्वष्टात्रजगतोधातातस्यरूपंविनिर्ममे ॥ विश्वरूपंपुमानेतियंनित्यंस्वात्मबोधनात् ४१२ स्वभावसिद्धंरूपंतदग्रेयत्पुरुषस्यहि ॥ अभूदनंतमगुणमस्मात्पुरुषजन्मनः ४१३ वेदाहमेतंपुरुषंमहांतंसूर्यवर्चसम् ॥ परस्तात्तमसोज्योतिरानंदात्मस्वयंप्रभम् ४१४ जानन्नेवंतमात्मानमहंब्रह्मेतिनिश्चितम् ॥ अस्मिन्देहेमृतोभूत्वाब्रह्मसन्ब्रह्मयातिसः ॥ ब्रह्मप्राप्त्यैनमार्गोन्योविद्यतेब्रह्मबोधनात् ४१५ अयंप्रजापतिर्भूत्वाचरत्यंतःशरीरिणाम् ॥ गर्भेशिशुर्यथामातुर्बहुधात्रविजायते ४१६ अजायमानस्तस्यास्यधीराजानंतिकारणम् ॥ मरीचीनांहिसूर्यादेर्यदिवेच्छंतिवेधसः ॥ आनंदात्मस्वरूपंयत्कारणंतन्नचापरम् ४१७ वन्हिवागादिदेवार्थंयआतपतिसर्वदा ॥ पुरोहितश्चदेवानामभूद्यश्चबृहस्पतिः ४१८ देवेभ्यश्चपुराजातोनमस्तस्मैमहात्मने ॥ तेजसेब्रह्मणेशुद्धस्वप्रकाशस्वरूपिणे ४१९

सःपरंयज्ज्योतिरानन्दात्मकंस्वयंप्रकाशंचतल्लक्षणंममापरोक्षमित्यर्थः ४१४ अन्योपियोमद्वदेनंपुरुषमहंब्रह्मेत्येवंवेदसोस्मिन्देहेसत्येवब्रह्मसम्भृतःकेवलंब्रह्मयातियतोयंपुरुषोज्ञानैकलभ्यइत्याह जानन्नेवमिति । तमादित्यांतःस्थम् ४१५ अस्यज्ञानविधांस्फुटयंस्तत्रत्वंपदार्थशोधनमाह अयमितिद्वाभ्यां । अयमादित्यांतःस्थःपरःपुरुषःप्रजापतिरूपेणसर्वशरीरिणामंतःस्थित्वानानाविधसृष्टिंकुर्वंश्चरति कीदृशोऽजायमानउपाधिजन्मसत्वेपिवस्तुतोजन्मरहितः तस्यास्यप्रजापत्याख्यस्यमायाशबलरूपस्यकारणमधिष्ठानंशुद्धंरूपंधीराःकुशलालक्षयंति कथं यदिवायथासूर्यादेर्मरीचीनांकारणंसूर्यमंडलादिकमिच्छंतिनत्वकारणकामरीचयःसंभवंतितथावेधसःप्रजापत्याख्यस्यकारणंशुद्धंसर्वांतरंवस्त्वेवावगच्छंतीतिद्वयोरर्थः ४१६ । ४१७ तत्पदार्थशोधयंस्तदाराधनस्यचित्तशुद्धिहेतोर्विधामप्याह वन्हीत्यादिना । वन्हीत्यादयोदेवाःसमष्टिगताःप्रसिद्धावाक्पाण्यादयस्त्वाध्यात्मिकास्तेषांसर्वेषामुपकारायआदित्यमंडलांतःस्थआसमंताच्चपतितिविद्योततेयस्यचविभूतिर्देवपुरोहितोबृहस्पतिरित्यर्थः ४१८ देवेभ्यश्चेति । यश्चविभूतिभूतेभ्यःसर्वदेवेभ्यःपूर्वंजगत्प्राणात्मकादित्यरूपेणप्रादुर्भूतस्तस्मैदेवायस्वप्रकाशचैतन्यज्योतिषेरोचमानायब्रह्मरूपायनमःप्रव्हीभावोस्त्वित्यर्थः श्रुतौब्रह्मशब्दादपत्यार्थेकञ्प्रत्ययआदित्यमंडलमाधाराभिप्रायेणेतिबोध्यम् ४१९

तेनपरमेश्वरेणायंवरोदेवेभ्योदत्तइत्याह आनंदात्मेति । हेसुरा आनंदरूपंमामादित्यरूपंप्रीणयितुंवर्णिनोऽधिकारिणोनमस्कारंकुर्वंतु । एवंविज्ञायनमस्कारेणक्षीणपापानांज्ञानलाभोभविष्यती त्यर्थः ४२० अयंवरःकदादत्तइत्याकांक्षायांयदादेवैःप्रार्थितंतदेतिदर्शयन्रुचमित्यादेरर्द्धस्यार्थमाह दीप्तिमंतमितिचतुर्भिः । पूर्वंदेवाब्रह्मपुत्रेणरोचमानेनचादित्येनतादात्म्यापन्नंभगवंतंनम स्कारेणप्रादुर्भूतंकृतवंतस्तंचप्रकटीकृतंदेवमित्थमगुवन्प्रार्थितवंतः तेनदत्तंवरंप्रतिअभिलक्ष्यवरकामनयेतियावदितिद्वयोरर्थः ४२१ । ४२२ देवप्रार्थनामभिनयति आनंदात्मेति । जगदात्म नेसकलजगदात्मकविग्रहायनमस्यतिनमस्करोति ४२३ इत्युक्तेइति । इत्थंदेवैःप्रार्थितेसतिभगवतासउक्तरूपोवरोदत्तस्ततोवरप्रभावान्नमतोनतिंकुर्वतोधिकारिणोब्रह्मात्मज्ञानंभवतीत्यर्थः ४२४ उत्तरार्द्धार्थमाह यएवमिति । नमस्कारविषयकंदेवतानांगुह्यंगोप्यंवरप्रदानात्मकंव्यवहारंयोजानातितस्यविदुषोवशेसर्वेदेवाभवंतीत्यर्थः ४२५ पंचमार्थमाह स्तुतिमितिद्वाभ्यां । नमस्कारंकुर्वन्सन्निमांस्तुतिंकुर्वीत इमांकामतआह श्रीश्चेति । श्रीरैश्वर्याभिमानिनीदेवतालक्ष्मीःसौंदर्याभिमानिनीदेवताएतेद्वेतवपत्नीभूतेवश्येइतियावत् दिनंरात्रिश्चएतौकालौसहावच्छिन्नैर्भा वैस्तवपार्श्वस्थानीयौ नक्षत्राणितारागणादीप्तिलक्षणंतवरूपंधारयंतितथाऽश्विकुमारकौ सादृश्येकन् अश्विकुमारवद्द्वंद्वत्वेनवर्त्तमानौद्यावापृथिव्यौतेव्यात्तंप्रसृतमुखस्थानीयावितिद्वयोरर्थः ४२६

आनंदात्मस्वरूपायमह्यंकुर्वंतुवर्णिनः ॥ एवमेषामिदंज्ञानंबहुधायत्समीरितम् ॥ भविष्यतिसुराःपापप्रक्षयाच्छुद्धचेतसाम् ४२० दीप्तिमंतंमहात्मानंब्रह्मपुत्रंन मस्यया ॥ प्रकटंकृतवंतस्तेदेवावन्हिपुरोगमाः २१ ब्रह्मानंदात्मरूपंतंनमसाप्रकटीकृतम् ॥ पुराकालेब्रुवन्देवास्तेनदत्तंवरंप्रति २२ आनंदात्मस्वरूपायभवतेज गदात्मने ॥ योनमस्यतितस्यत्वंप्रकटीभवसर्वदा २३ इत्युक्तेतेनदत्तःसवरोब्रह्मस्वरूपिणा ॥ नमतस्ततएवात्माप्रत्यक्षोत्रप्रजायते २४ यएवंदेवतागुह्यंनमस्का रंप्रतिद्विजः ॥ विद्यात्तस्यवशेदेवाभवंतिसकलाअपि ४२५ स्तुतिंचेमांप्रकुर्वीतस्वात्मज्ञानप्रसिद्धये ॥ कुर्वाणोत्रनमस्कारंब्रह्मणेपरमेष्ठिने ४२६ श्रीश्चलक्ष्मी श्चतेपत्न्यौपार्श्वेरात्रिस्तथादिवा ॥ नक्षत्राणिचतेरूपंव्यात्तमश्विकुमारकौ ४२७ इष्टंमेकुरुदेवेशह्यमुंसर्वंस्वयंप्रभम् ॥ आनंदात्मानमात्मस्थंप्रकटीकुरुतेनमः ४२८ हिरण्यगर्भोभगवानग्रेयःसमवर्तत ॥ भूतस्यपतिरेकश्चजातआसीन्महेश्वरः ४२९ त्रिलोकींधृतवानादौमहास्तंभोयथागृहम् ॥ तस्मैदेवायहविषास्ववर्णा श्रमजेनहि ॥ परिचर्यांवयंकुर्मएकस्मैज्ञानहेतवे ४३० प्राणतोजगतोयश्चव्यापारमपिकुर्वतः ॥ इंद्रियैर्ज्ञानकर्माख्यैराजाभून्महिमान्वितः ॥ इत्थमाश्चर्यरूपः सन्यश्चेष्टेद्विचतुष्पदाम् ४३१

४२७ वरप्रार्थनात्मकस्यपष्ठस्यार्थमाह इष्टमिति । हेदेवेशमदीयमिष्टंकुर्वन्नमुंस्वयंप्रकाशात्मरूपंलोकंप्रकटीकुरुतुभ्यंनमोस्त्वित्यर्थः अत्रेदंबोध्यम नमस्कारस्यत्वंपदार्थार्पणरूपत्वेमहावा क्यार्थलाभइति ४२८ एवंवैश्वानरांतर्यामित्वेननारायणरूपंदर्शितमथहिरण्यगर्भांतर्यामित्वेनतत्प्रतिपादकानांहिरण्यगर्भइत्यादीनामर्थमाह हिरण्यगर्भइत्याद्येकविंशतिश्लोकैः । योहिरण्यग र्भःपूर्वंप्रादुर्भूयसकलस्यभूतस्यकार्यवर्गस्यएकोमहेश्वरआसीत् त्रिलोकीरूपंगृहंस्तंभवद्धृतवांश्च तस्मैहिरण्यगर्भरूपायएकस्मैदेवायतंप्रीणयितुंस्ववर्णाश्रमानुरूपेणहविषापरिचर्यांकुर्मइतिद्वयोरर्थः श्रुतौकस्मैइत्यतःपूर्वमेकारलोपइतिभावः ४२९ । ४३० अथद्वितीयादिमंत्राणांचतुर्थपादानवगतार्थत्वेनविहायक्रमेणार्थमाह प्राणतइत्यादिना । श्रुतौमिषधातुश्चलनार्थकःइत्पदमित्थ मित्यर्थकम् तथाचयोदेवःप्राणतःप्राणान्धारयतोज्ञानेंद्रियादिभिर्व्यापारंकुर्वतश्चजगतश्चेतनवर्गस्यराजाधिपतिरासीत् यश्चेत्थंसर्वकरणप्रेरकत्वेनाद्भुतरूपोद्विपदांचतुष्पदांचईशइत्यर्थः यत्पदा नांतमहंशरणंगतइतिवक्ष्यमाणेनसंबंधः ४३१

तृतीयार्थमाह आत्मानमितिद्वाभ्यां । यश्चतत्त्वज्ञानेनात्मानंददातिबलंचात्म नार्थिंदतेवीर्यमितिवेनश्रुतेः आत्मलाभेनैवबललाभइतितदर्थः तथायंवपुषिस्थित्वासर्वेदेवादयआराधयंतीत्यर्थः ४३२ प्रशिषंपदस्यशिष्याइत्यर्थः अथवाआशिषमित्यर्थः प्राप्ताइतिशेषइत्याशयेनाह यस्येति स्पष्टम् ४३३ चतुर्थार्थमाह हिमवदितिद्वाभ्यां । हिमालयादयोगिरयोयस्यजगद्धिधारकस्यमहिमाविभूतिरूपाः अथवागिरयइमेपरिच्छिन्नाएवयस्यदेवस्यमहिमहिमातुअसमंताद्व्याप्तइतिश्रुतियोजनामुत्तरार्द्धेनसूचयति गरीयानत्यधिकः ४३४ पातालैरिति । तथायस्यशिशुवद्विहरतःपातालाःसमुद्राश्चक्रीडापुष्करिणीस्थानीयाः कीदृशाःसमुद्राः महागिरयोहिमवदादयस्तत्टभूतायेषांते तथाकिंचदिशःकोणाश्चयस्यबाहुभूताः ४३५ पंचमार्थमाह रक्षणेनेति । तथाश्रुतौक्रंदसीपदोक्तेद्यावापृथिव्यौयत्कर्तृकरक्षणेनविधृतेधारितेस्थितेसत्यौयंदेवंनिर्विशेषात्मरूपंमनसाऐक्षेतांध्यायतः 'ध्यायतिपृथिवीध्यायतिद्यौः' इतिच्छंदोगश्रुतेः कीदृश्यौ शोभमानेब्रह्मवित्तमत्वादित्यर्थः ४३६ आधिक्येनेति । तथायत्रयमाश्रित्यआधिक्येनोदितःप्रसिद्धोरविर्विविधंयातिभ्रमतिसदायतोभीतइत्यर्थः ४३७ षष्ठार्थमाह उग्रेतित्रिभिः । यद्विभूतिभिरिंद्रादिभिर्वीर्यैर्युक्तत्वात्द्यौःस्वर्गलोकउग्रत्वेनप्रसिद्धातथा

आत्मानंयश्चजंतूनांददातिस्वात्मबोधतः ॥ बलंचवपुषिस्थित्वायंचविश्वउपासते ४३२ यस्यशिष्याइमेदेवाःप्राप्ताश्चयतआशिषः ॥ छायावद्यस्यवर्त्तेतेमोक्षमृत्यूचकिंकरौ ४३३ हिमवत्प्रमुखायस्यगिरयोमाहिमेरिताः ॥ हिमवत्प्रभृतिभ्योवागरीयान्महिमाविभोः ४३४ पातालैःसहितायस्यसमुद्राभूमिसंश्रयाः ॥ महागिरितटाक्रीडातटाकास्तेशिशोरिव ॥ दिशश्चप्रदिशस्तद्वद्यस्यबाहुःप्रकीर्तितः ४३५ रक्षणेनचयस्येमेविधृतेतिष्ठतःसदा ॥ शोभितेयंसदात्मस्थमैक्षेतांब्रह्मवित्तमे ॥ मनसास्वात्मनोरूपंसर्वधर्मविवर्जितम् ४३६ आधिक्येनचयत्रायमुदितोभगवान्रविः ॥ विविधंयातिसततंदिवारात्रौचभीतवत् ४३७ उग्रायेनचभात्येषाक्षत्रधर्मरतासदा । द्यौरत्रेंद्रादिरूपेणपृथिवीचातिनिश्चला ॥ दृढाजलेस्थितानित्यंननिमज्जतिनौरिव ३७ स्वर्गलोकस्तथाकाशोयेनस्तंभात्मनाधृतः ॥ ब्रह्मलोकश्चपततिनैवाश्रयविवर्जितः ४३९ योन्तरिक्षेरजोजुष्टोभगवान्विषयोत्सुकः ॥ नित्यंदेववधूवक्त्रचंद्रस्थनयनोत्पलः ॥ मानहीनश्चसततंदेवप्रासादरूपभाक् ४४० भूतपंचकगर्भिण्योमहत्योलोकसंश्रयाः ॥ आपोऽविद्यात्मिकादेवंयमापुर्विश्वरूपिणम् ॥ समुद्रमिवलौकिक्योदक्षंकुशलरूपिणम् ४४१ दधानाश्चात्मनोगर्भंजनयंत्यःसमंततः ॥ लौकिकंवैदिकंतद्वदग्निंसर्वार्थसाधकम् ४४२

यदनुगृहीतापृथिवीदृढाबलवत्त्वेनप्रसिद्धानानाभाराक्रांतायाअपिउत्कृष्टनौवज्जलनिमज्जनविरहादित्यर्थः ४३८ स्वर्गेति । स्वर्गलोकस्तदुपलक्षितोंऽतरिक्षलोकोनाकपदोक्तोब्रह्मलोकश्चएतेयेनस्तंभभूतेनधृताइत्यर्थः ४३९ योंतरिक्षइति । योभगवानंतरिक्षेविमानारूढनानाभोगिरूपेणदेववधूनामप्सरसांवक्त्रचंद्रेष्वर्पितानिनयनोत्पलानियस्यतादृशोभवतीत्यर्थः । अथवाविमानपदस्यमानहीनत्वमर्थःतत्रहेतुर्देवेत्यादि । देवानांसमष्टिरूपाणांप्रासादभूतंमन्दिरभूतंवैश्वानरसंज्ञंरूपंभजतिसततमेतितदर्थः ४४० सप्तमार्थमाह भूतेतित्रिभिः । यथालौकिक्यआपोनद्यादिरूपाःसमुद्रमापुःपतित्वेनवृतवत्यस्तथाअविद्याऽव्याकृतंप्रकृतिरितिप्रसिद्धातद्रूपाआपोयंदेवंविश्वरूपंसर्वात्मानंपतित्वेनवृतवत्यःकीदृश्यः महत्यःतत्रहेतुःपंचभूतगर्भकत्वेनसर्वलोकाधारत्वं तथाहिपंचमेगार्गिब्राह्मणव्याख्यानेसर्वलोकाधारत्वमव्याकृतस्याकाशपदोक्तस्योक्तमिति पतित्वेनवरणेहेतुःसर्वज्ञत्वलक्षणंदक्षत्वमिति एतेनतस्यस्वतंत्रत्वंसूचितं ४४१ दधानाइति । पुनःकीदृश्यस्ताआविद्यात्मिकाआपः अग्निंविराडात्मकंवैदिकंगृह्यादिरूपंलौकिकंचबीजरूपेणगर्भंदधानाधारयंत्योजनयंत्यश्चेत्यर्थः ४४२

अग्नीति । नकेवलमग्निरेवताभ्यउत्पन्नः किंतुसर्वेषामाध्यात्मिकाधिदैविकदेवानांविधारकःप्राणोपिततस्तत्कार्यत्वादेवप्राणस्याद्भिर्विनाव्याकुलत्वमप्युपपद्यतेइत्यर्थः तथाचश्रुत्यंतरं'आपोमयः प्राणः'इति ४४३ अष्टमार्थमाह एकएवेति । योदेवःताउक्तलक्षणाअपःस्वयंप्रकाशचैतन्यलक्षणातिशयिततेजसाव्यलोकयत् नहीश्वरंविनानानासंस्कारसंभृतस्याव्याकृतस्यदर्शनेकस्यापिशक्तिरिति भावः ४४४ सर्वात्मकइति । अहंतंप्रीणयितुंसपर्यांकुर्वाणस्तंदेवंहिरण्यगर्भरूपंशरणंगतोस्मीतिसंबंधः ४४५ । ४४६ श्रौतस्यचित्पदस्यार्थमसादृश्येनवाङ्मनसागोचरत्वरूपंदर्शयन्नमस्यामभि नयति नमोस्त्विति । यस्मैकस्मैचित्वक्तुमशक्याय ४४७ मह्यमिति स्पष्टं ४४८ उक्तस्तुतेःफलमाह एवमिति । इदंवक्ष्यमाणरूपम् ४४९ एवंपाठ्यत्वेनोपन्यस्तमंत्राणांवैश्वानरहिरण्यगर्भतादात्म्येननारायणप्रतिपादकानामर्थउक्तोथसाक्षात्तत्प्रतिपादकस्यैषहीत्यादेरभिसंबभूवेत्यंतस्यमंत्रसमुदायस्यार्थमाह एषदेवइत्येकविंशतिश्लोकैः । एषनारायणाभिधानोदेवःस्वयंप्रकाशःसर्वेदिगादिरूपोयतोयमेवहिरण्यगर्भरूपेणजगतःस्थूलात्पूर्वमुत्पन्नइत्यर्थः ४५० ब्रह्मांडेति । तथायमेवब्रह्मांडगर्भगतस्त्रैलोक्यशरीरोविराड्व्यष्टिरूपाण्यतीतानागतवर्त्तमानशरीरकाणिभूतानिचायमेवेत्यर्थः

अग्निवागादिदेवानामद्भ्यःप्राणोव्यजायत ॥ ताभिर्विनाततोनायंप्रायस्तिष्ठत्यहर्निशम् ४४३ एकएवपुमानयश्चमहिम्नाताव्यलोकयत् ॥ स्वेनसर्वगतेनैवस्वप्रभेणातितेजसा ४४ सर्वात्मकश्चयोदेवोदेवानामधिदैवतम् ॥ हिरण्यगर्भंतमहंमुमुक्षुःशरणंगतः ४५ कुर्वाणःसततंतस्माएकस्मैहविरादिना ॥ सपर्यांपरमेशायब्रह्मणेऽव्यक्तजन्मने ४४६ नमोस्तुतेजसेतस्मैयस्मैकस्मैचिदात्मने ॥ एकस्मैकापिसंस्थायसर्वगम्यायसर्वदा ४४७ मह्यंमुमुक्षवेब्रह्मज्ञानंयच्छतुकश्चन ॥ सर्वात्मकोविहीनश्चधर्मैःसर्वैश्चिरंतनः ४४८ एवंहिस्तुवतोनित्यंतथैनंचनमस्यतः ॥ मुमुक्षोरात्मविज्ञानमिदमेवप्रयच्छति ४४९ एषदेवःस्वयंज्योतिःप्रदिशोपिदिशस्तथा ॥ सर्वाःपूर्वंहियोजातोजगतःसूत्ररूपभाक् ४५० ब्रह्मांडगोलकस्यापिगर्भएषव्यवस्थितः ॥ वधूनांचयथैवैषचतुर्विधशरीरभाक् ॥ जातोजनिष्यमाणश्चसचैषपरिजायते ४५१ अंतर्मुखायमात्मानमीक्षंतेविश्वतोमुखम् ॥ सएषप्रतिभात्यात्मातस्यास्मिन्विश्वतोमुखः ४५२ विश्वतश्चक्षुरादिर्योविश्वतोवदनस्तथा ॥ विश्वतःकरपादादिःसर्वभूतोयतःपुमान् ४५३ बाहुभ्यामिवपापाख्यपुण्याभ्यांभूतपंचकैः ॥ सहिताभ्यामिदंविश्वंचतुर्विधशरीरभृत् ४५४ सृष्टिस्थितिविनाशेनसंयोजयतिनित्यशः ॥ देवोयंजनयन्द्यावापृथिव्यावेकएवहि ४५५

४५१ एवमद्वयत्वेनोक्तस्यप्रत्यक्त्वमाह अंतर्मुखाइति । विश्वतःसर्वतोमुखंसान्निध्यंयस्यतथाभूतंयंप्रत्यग्दृष्टयःपश्यंतिसएषदेवएवास्मिन्नंतर्मुखीभावलक्षणेसमाधौप्रतिभाति यतस्तस्यसमाहितस्यद्रष्टुरात्माभवतिविश्वतोमुखत्वात् अनात्मत्वेहिप्रत्यङ्मुखान्प्रतिसंमुखत्वाभावेनविश्वतोमुखत्वंनस्यादितिभावः ४५२ आत्मत्वमेवस्फुटयति विश्वतश्चक्षुरादिरिति । विश्वानिसर्वाणिचक्षुरादीनियस्यसतथा एवमग्रेपि सर्वभूतःसर्वस्यात्मा ४५३ तत्रहेतुतयाजगज्जन्मादिकारणत्वमाह बाहुभ्यामितिद्वाभ्यां । श्रुतौसमुपसर्गेणव्यवहितेनयुक्तस्यनमधातोःसंयोजनमर्थः संपतत्रशब्देनपतनात्मकविनाशवाचकेनजन्मादिकमुपलक्षितं तथाचपुण्यपापाभ्यामधीनत्वेनबाहुभृताभ्यांवियदादिपंचभूतव्यापृताभ्यांजरायुजादिचतुर्विधशरीरात्मकंविश्वंजन्मस्थितिभंगेनसंयोजयतिअयंदेवः किंकुर्वन् द्यावापृथिव्योऊर्ध्वाधोलोकौएकोऽसहायएवजनयन्सन्नितिद्वयोरर्थः ४५४ । ४५५

एतादृशंनारायणतत्त्वंपूर्ववेनाख्येनगंधर्वेणोक्तःस्तुत्यादिभि शुद्धचित्तेनविज्ञायवामदेववल्लोकानुग्रहेणप्रकटीकृतमित्याह वेनइति । श्रुतौवेनगंधर्वपदयोःप्रोपसर्गवचनात्वोश्चव्यवहितान्वयइतिबोध्यं ४५६ वेनानुभवमेवाभिनयति यस्मिन्नित्यादिना । यस्मिन्नेकस्मिन्नानाविधैर्लोकदेवादिविशेषैर्युक्तंजगत्तिष्ठतितथायतउत्पद्यतेयत्रलीयतेचयश्चप्रपंचाख्यपटेसूत्रवदोतःप्रोतश्चसर्वेशरीरेषुजीवरूपेणानुप्रविष्टश्चतमेतंदेवंसर्वान्तरमद्वयानंदरूपंसाक्षात्करोमीतिश्लोकत्रयाणामर्थः ४५७ । ४५८ । ४५९ पदानीति । 'पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि'इतिस्तुत्यंतरात्ब्रह्मचतुष्पात् तत्रभूतानामेकपादत्वाभिधानंब्रह्मणोनंतत्वख्यापनायनतुपरिमाणबोधनायेतिभाष्येस्पष्टं तथाचतुष्पदःपादचतुष्टयवतोब्रह्मणःसर्वभूतलक्षणादन्येत्रयःपादाबुद्धिगुहायांसाक्षिलक्षणेस्वरूपेस्थिताइत्यर्थः ४६० यस्तदिति । तत्साक्षिरूपंपादत्रयंसदामंदरूपंसवितुःसूर्यमंडलांतस्थस्यनारायणस्यब्रह्मणःसंबंधियोधिकारीवेदसाक्षात्करोतिसविद्वानस्माकंबंध्वादिरूपइतिद्वयोःसंबंधः तत्रएषइतिपदस्यपितेत्यर्थः विधाताब्रह्मा ४६१ । ४६२ तत्रहेतुतयासर्वात्मभूतब्रह्मभावमाह यतइति । यतोयंविद्वान्यामपदोक्तानितेजःस्थानानिसूर्यचंद्रादीनांभुवनानियदात्मभूतंब्रह्मैवेत्येवंजानातीत्यर्थः ४६३

वेनोनामपुराकश्चिद्गंधर्वःशुद्धमानसः ॥ उक्तस्तुतिनमस्याद्यैर्दृष्ट्वाब्रह्मसनातनम् ॥ प्रोवाचानुभवंस्वस्यलोकानुग्रहकारकः ४५६ यस्मिन्जगदिदंनित्यमेकस्मिन्नवतिष्ठते ॥ नानालोकादिसंयुक्तंतथाकालत्रयेपिहि ॥ यतउत्पद्यतेयत्रलीयतेचाखिलंतथा ४५७ ओतःप्रोतश्चलोकाख्यपटेसौसूत्ररूपभाक् ॥ जीवरूपश्चयोदेवःस्थिरजंगमरूपिणाम् ४५८ एतंसर्वशरीरेषुसंतंबुद्धिपुरेस्थितम् ॥ आनंदात्मानमद्वैतंमरणादिविवर्जितम् ४५९ पदानित्रीणियस्यस्युरात्मनःपरमेष्ठिनः ॥ बुद्धिस्थानिमनुष्याणांसर्वदैवचतुष्पदः ४६० यस्तत्पादत्रयंवेदस्वप्रकाशंगतद्वयम् ॥ सदनंतंसदैवास्यसवितुर्ब्रह्मरूपिणः ४६१ सनोबंधुस्तथैवैषजनीचास्मद्धितप्रदान् ॥ विधाताचसएवस्यात्ततोन्योनैवकश्चन ४६२ यतःसर्वाणिधामानितेजःस्थानानिसर्वतः ॥ भुवनानिसदैवायंब्रह्मेत्येवावगच्छति ४६३ यत्रवन्ह्यादयोदेवामरणादिविवर्जितम् ॥ प्राप्नुवंतिसदामोक्षमहंब्रह्मेतिबोधतः ॥ तृतीयस्यात्मनीशानेविश्वमायाविवर्जिते ४६४ स्थानानिहिसतेजांसिप्रेरयंतोजनेष्वपि ॥ भक्तेषुवरदानाद्यैःसर्वदाभक्तवत्सलाः ४६५ द्यावापृथिव्योःपरितोयंतिसद्यउपर्यधः ॥ लोकानपिदिशस्तद्वत्स्वर्गाद्यान्गोलकांतरे ४६६ अवश्यंभाविनःकर्मकार्पासस्यफलात्मनः ॥ तंतुंसूत्रात्मरूपंतंविसृज्येहजगत्पटे ४६७

एतद्ब्रह्मज्ञानाद्वन्ह्यादयोदेवाःसिद्धिंप्रापुरित्याह यत्रेतिचतुर्भिः । यत्रउक्तलक्षणेब्रह्मणिजातोपीयमहंब्रह्मेत्याकारकोबोधस्तेनाश्रितेसतिवन्ह्योदेवामोक्षंसाक्षात्प्राप्नुवंति कीदृशेयत्रब्रह्मणि स्थूलसूक्ष्मकारणलक्षणोपाधीनांमध्येतृतीयस्याव्याकृतस्येशानेऽधिपती अतएवस्वरूपेणशुद्धेइत्यर्थः ४६४ नकेवलंमोक्षमेवप्रापुःकिंतुब्रह्मवद्भक्तेषुवरदानादिसामर्थ्यमपीत्याह स्थानानीति । कीदृशास्तेदेवाः सतेजांसितेजोवंतिस्थानानिभुवनानिभक्तजनेषुप्रेरयंतःप्रयच्छंतः अनुग्रहादित्यर्थः ४६५ तेषांसर्वलोकेषुकामचारोपिभवतीत्याह द्यावेति । परितइत्यस्यविवरणंउपर्यधोमध्यानीति तथाच आकाशपृथिव्योःसर्वतोवर्तमानान्लोकान्यंतियथेच्छमटंतिचतेदेवाब्रह्मविदइत्यर्थः ४६६ सूत्रात्मदृष्टिस्तत्साक्षात्कारद्वारमित्याह अवश्यमितिद्वाभ्यां । अवश्यंभाविफलकत्वेनकृतपदोक्तयागादिकर्मैककार्पासवृक्षस्थानीयंतज्जन्यमपूर्वंकार्पासफलस्थानीयंअपूर्वारब्धानिस्थूलसूक्ष्मभूतानितंतुस्थानीयानितच्छरीरईश्वरोपितंतुस्थानीयस्तंजगद्रूपेपटेविसृज्यसंसृज्यग्रथित्वाऽनुगतंबुद्ध्येत्यावत श्रुतौचृतधातोर्ग्रंथनार्थस्यप्रयोगः ४६७

तेनेति । तेनेश्वरेण सूत्रवदनुगततया हेतुनोपलक्षितं निजं वपुरखंडतत्त्वमपश्यं साक्षात्कृतवानस्मीत्यर्थः तत्र हेतुतया सूत्रात्मस्वरूपस्य विचार्यमाणस्य नैर्गुण्येनावस्थानमाह सूत्रात्मतामिति । ततः प्रजा स्रष्टृसूत्रात्मनः स्वरूपम् ४६८ न केवलं मयैवेत्थं विचारेण ब्रह्मात्मत्वं लब्धं किंतु हिरण्यगर्भेणापीत्याह परीत्येति द्वाभ्यां । स्वर्गादीन्लोकान्जरायुजादीनि भूतानि पंचाकाशादीनि वा पूर्वाद्या दिशः प्रदिश श्च परीत्याभिव्याप्य उत्कृष्टकर्मोपासनाबलेन तत्स्वामित्वं लब्ध्वेति यावत् तथाप्यपरितुष्टः प्रजापतिर्हिरण्यगर्भः शुभकर्मणां फलमयशरीरो यदात्मानमालोचितवांस्तदैव स्वयंप्रकाशं ब्रह्मानंदं प्राप्त इति द्वयो रर्थः तथा च प्रत्यग्विचार एवात्मलाभहेतुर्न बाह्यैश्वर्यमिति भावः ४६९ । ४७० सदसस्पतिमद्भुतमित्यादिमंत्राणां इमं मे गंगे इत्यादिमंत्रांतानां तात्पर्यार्थमाह सदसस्पतिमिति । 'सर्वे वेदा यत्पदमामनं ति' इति श्रुतेः सदसस्पतिमित्यादिभिर्मंत्रैरग्न्यादिसंज्ञजडाजडदेवशरीरोपहितो यः परमात्मा प्रतिपाद्यते तद्रूप एव विद्वान्भवतीति पूर्वेणास्य संबंधः ४७१ अघमर्षणमंत्रस्यार्थमाह स्वयमिति षड्भिः । स्वयंप्रका शविज्ञानरूपेण सर्वतः इद्धाद्दीप्तादद्वयत्वेनानंदरूपाद्यस्मात्परमात्मन ऋतसत्याख्ये कर्मफले जाते तद्भावं मुक्तो गच्छतीति पूर्ववत्संबंधः ४७२ ऋतसत्यपदयोरर्थमाह मानसस्येति । मानसस्य सत्कर्मणः

तेन सूत्रात्मरूपेण तदपश्यं निजं वपुः ॥ सूत्रात्मतां परित्यज्य तदभूद्ब्रह्म निर्गुणम् ४६८ परीत्य लोकान्नाकाद्यान्भूतान्यपि तथैव सः ॥ चतुर्विधानि पंचापि प्रदिशो पि दिशस्तथा ४६९ प्रजापतिः प्रथमजः फलं यः कर्मणामिह ॥ आत्मनात्मानमालोच्य ब्रह्मैवाभूत्स्वयंप्रभः ४७० सदसस्पतिमित्यादिमंत्रैर्नानाविधैरपि ॥ प्र तिपाद्यो महेशो यो जडाजडवपुः स्थितः ४७१ स्वयंप्रकाशविज्ञानादानंदात्मस्वरूपिणः ॥ ऋतं सत्यं तथा यस्मादुत्पन्ने कर्मणः फले ४७२ मानसस्य तु पूर्वं स्यादुत्त रं कायजस्य हि ॥ ऋतं सत्यं च चंद्रार्कावितिकेचन पंडिताः ४७३ अजायत ततो रात्रिः समुद्रो विविधस्तथा ॥ संवत्सरस्ततो जातः कालोयं भास्करात्मकः ॥ अहश्चै व तथा रात्रिं कुरुते यश्वरन्सदा ४७४ स्वतंत्रः परमेशानो यो जीवघन ईर्यते ॥ इदं सर्वं जगत्स्रष्टा सृजन्नपि विलक्षणम् ॥ पूर्वसृष्टेर्न कुरुते कल्पे कल्पे जगत्प्रभुः ४७५ च तुर्विधानि भूतानि महाभूतानि पंच च ॥ एकादशेंद्रियाणीह पंचप्राणादयोपि च ॥ एतैः सर्वैः समं देवो भगवान्भूतभावनः ४७६ सूर्याचंद्रमसौ धाता यथापूर्वमकल्प यत् ॥ दिवं च पृथिवीं तद्वदंतरिक्षं सभागणम् ४७७ यः पृथिव्यां पुमानेष वरुणः पापनाशनः ॥ पुरुषेणामुना सोपि संसृष्टः पूर्ववत्प्रभुः ४७८

फलं पूर्वं ऋतपदोक्तं कायजस्य शारीरस्य सत्कर्मणः फलं तु उत्तरं सत्यपदोक्तमित्यर्थः केचन ऋतसत्यपदवाच्यौ चंद्रार्कावित्याहुस्तत्र वक्ष्यमाणेन पुनरुक्तिरेवास्वरसः ४७३ एवं सृष्टिकाले ऋतादिसंज्ञकर्मफ लानामुदयाभिमुख्ये सति रात्रिपदोक्तोंधकारः समुद्रपदोक्तान्यप्रधानानि सूक्ष्मभूतानि चोत्पन्नानीत्याह अजायतेति । तदनंतरं भ्रमणेन दिवारजन्योर्विधायको योयमादित्यस्तद्रूपः संवत्सराख्यः कालो जात इत्याह संवत्सर इति ४७४ स्वतंत्र इति । स्वतंत्रः सर्वस्य व्यापारवतो जगतो वशे स्थापयिता परमेश्वरो जीवघनसंज्ञ हिरण्यगर्भो भूत्वा विश्वं सृजन्पूर्वसृष्टेर्विलक्षणं न कुरुते इत्यर्थः ७५ चतुर्विधानीति । भूतानि प्राणिशरीराणि महाभूतानि तदुपादानानि स्थूलभूतानि एतैर्भूतादिभिः सह सूर्यादिकं यथापूर्वं पूर्वकल्पीयसमानं धाता हिरण्यगर्भः अकल्पयदिति द्वयोर्योजना दिवं स्वर्गादूर्ध्वलोकं भागणो दीप्तीनां गणस्तत्सहितं स्वर्गमित्यर्थः ४७६ । ४७७ यत्पृथिव्यामित्यादेरघमर्षण इत्यंतस्य तात्पर्यार्थमाह यः पृथिव्यामिति । योयं वरुणो देवः सकलजलमयशरीरः पापस्य रजःपदोक्तस्य नाशकत्वेन पृथिव्यां प्रसिद्धः सोप्यमुना सर्वात्मत्वसर्वस्रष्टृत्वादिभिर्धर्मैरुपलक्षितेन पुरुषेण परमेश्वरेण संसृष्टः संबद्ध एव पूर्ववत्पूर्वोक्तहिरण्यगर्भवत्प्रभुः स्वव्यापारे शक्तः तथा चोक्तं गीतासु 'ईश्वरः सर्वभूतानाम्' इत्यादीत्यर्थः ४७८

एषइत्यादेःसंशिशाधीत्यंतस्यार्थमाह भूतानामिति । अयंपरमेश्वरःसर्वलोकानांमध्येस्थितःसृष्टिकालेरक्षकः ४७९ एषपुण्यकृतामिति । अयमेवचसुकृतिनांसत्फलप्रापकःपापिनांतद्गोचर कस्यमृत्योश्चभयंप्रयच्छतीत्यनुषंगः कीदृशः विदुषांस्वयंप्रकाशानंदरूपइत्यर्थः श्रुतौहिरण्मयपदेनस्वयंप्रकाशत्वंसंशिशाधीतिपदेनभयप्रदत्वमुक्तमितिभावः ४८० द्यावेति । तदुपर्यधस्त स्थभुवनजातस्यउपरिअधश्चस्थितयोर्द्यावापृथिव्योस्तथास्वर्गस्यस्वात्मनिअंतःसंश्रितंविधारणप्रयोजकत्वेनस्थितंभयंतदेषएवप्रयच्छतीतिसंबंधः ४८१ आर्द्रमित्यादेःस्वाहेत्यंतस्यार्थमाह स चेति । सएवदेवःस्वर्गादिप्रदत्वेनोक्तोयोप्सुआर्द्रपदोदितासुवन्हौज्वलत्पदोदितेचतादात्म्येनस्थितश्चिद्रूपइत्यर्थः ४८२ ब्रह्मेति । तच्चिज्ज्योतिर्ब्रह्मणोऽद्वयस्यस्वरूपभूतमहंपदलक्ष्यंसर्वांतरंव स्तुभवतियतोहंपदार्थस्यास्माद्ब्रह्मपदार्थात्पृथक्त्वंनसंभवति पृथक्त्वेहिउभयोःस्वरूपहान्यापत्तिः ततोब्रह्मैवेत्यादिव्यतिहारःसिद्धइत्यर्थः ४८३ मज्ज्ञानादिति । उक्तरूपेणमत्स्वरूपविज्ञानेन मूलाज्ञानपंचक्लेशकर्मवासनारूपाद्बंधान्मुच्यते तत्रहेतुतयासंसारभ्रमणयोग्यचिदाभासदाहमाह अहमिति । आत्मैवचरमवृत्तिसमिदारूढोऽग्निःसविलासाज्ञानदाहकत्वात्तद्रूपेऽस्मिन्नग्नावण्वा

भूतानांमध्यसंस्थोयंविश्वकृद्भगवान्प्रभुः ॥ गोप्ताभुवनजातस्यस्थितिकालेसमागते ४७९ एषपुण्यकृतांलोकान्प्रयच्छतिसुखात्मकान् ॥ एषमृत्योर्भयंनित्यमा नंदात्मास्वयंप्रभः ४८० द्यावापृथिव्योश्चसदास्थितयोस्तदुपर्यधः ॥ स्वर्गस्यापितथैवायंभयंस्वात्मनिसंश्रितम् ४८१ सचस्वर्गंतथामोक्षंप्राणिनांसंप्रयच्छ ति ॥ योप्सुवन्हौचभगवानास्तेन्यत्रचचिद्वपुः ४८२ ब्रह्मरूपंतदेवाहमहमस्मात्पृथक्कचन ॥ ब्रह्मैवततएवाहमहंब्रह्मेतिवापुनः ४८३ मज्ज्ञानान्मुच्यतेमायाक्ले शकर्माशयात्पुमान् ॥ अहमात्माग्निरूपेस्मिन्जुहोम्यात्मानमेवहि ४८४ इत्यादिमंत्रजानर्थान्विचार्यसततंपुमान् ॥ कृत्वाकर्मजपित्वाचमंत्रान्कांश्चिदिहस्थि तान् ४८५ यदातिकीर्तिमान्लोकेजायतेपुण्यकर्मणा ॥ तदाब्रह्मपरंगच्छेत्पुरुषःशुद्धमानसः ४८६ चंपकादेस्तरोर्यद्वत्पुष्पितस्यदिशोदश ॥ वायुर्वातिसु गंधोयंप्राणिनांसुखकारकः ४८७ पुण्यात्मनस्तथाकीर्तिःप्रधावतिदिशोदश ॥ आनंदयतिसततंधीमतोत्रबहुश्रुतान् ४८८ पुण्यात्मासहिविज्ञेयःपाप्मनोयः सदाभयम् ॥ प्राप्नोतिमरणान्नैवनचदारादिदुःखतः ४८९ असिधाराःसुसंतीक्ष्णागर्तस्योपरिसंस्तृताः ॥ अतिक्रमाद्यथातासांयत्रशून्यपदांबुजात ॥ भयंभवतिता दृक्स्याद्भयमस्यमहात्मनः ४९०

त्मानंचिदाभासंप्रक्षिपामीत्यर्थः ४८४ अकार्येत्यादिमंत्रमारभ्यैतत्तपइतिमंत्रपर्यंतस्यग्रंथस्यतात्पर्यंदर्शयति इत्यादीति । इतिपदेनव्याख्यातपरिग्रहः आदिपदेनाकार्येत्यादीनांमंत्राणांग्रहः तथाचैतेषुमंत्रेषुकेषांचिदर्थान्विचार्यतैर्ब्राह्मणोक्तंकर्मकृत्वाकांश्चित्तुयइछंदसामित्यादीन्केवलंजपित्वायदाकीर्तिमान्प्रशंसायोग्योभवतितदाज्ञानाधिकारीभवतीतिद्वयोःसंबंधः ४८५ । ४८६ य थावृक्षस्येत्यादिमंत्रस्यार्थमाह चंपकादेरितिपंचभिः । यथाचंपकादिवृक्षस्यपुष्पितस्यसुगंधविशिष्टोवायुर्जनान्मोदयतितथापुण्यात्मनःकीर्तिःसाधुजनानितिद्वयोरर्थः ४८७ । ४८८ पुण्या त्मनोलक्षणमाह पुण्यात्मेति । यःपापादेवभयंप्राप्नोतिनचमरणाभवादारादिवियोगात् मरणादिप्रसंगेपियःपापंनाचरतीतियावत् सपुण्यात्मेत्युच्यतेइत्यर्थः ४८९ विवेकिनःपापभयहेतुभूतं परमेश्वरभयमाह असिधाराइति । यदितीक्ष्णाःखड्गधारागर्तस्योपरिप्रसारिताःस्युस्तासामतिक्रमादुल्लंघनात् कीदृशात् वाहनरहितावंबुजवत्कोमलौपादौयत्रतथाभूतात पादृशंभयंभवति अ स्यविदुषस्तादृशंभयंमहात्मनःपरमेश्वराद्भवतियेनपापाद्बिभेतीत्यर्थः श्रुतौगुपधातोःसनिच्छायाम् त्रातुमिच्छेदितितदर्थः न्हेद्गुधातुःक्रोशनार्थइतिचबोध्यम् ४९०

अस्यमंत्रस्यईश्वरस्वरूपेपर्यवसानप्रकारमभिनयति यद्द्वयमिति । यत्तत्त्वंविदुषःपापनिवृत्तिप्रयोजकमयरूपमुक्तंतेनविदुषात्मरूपतयालभ्यमानंचतद्रूपोऽयमेवनारायणाख्यईश्वरोभवतीत्यर्थः ४९१ अणोरित्यादिमंत्रस्यार्थमाह अणीयानितिद्वाभ्यां । अतिसूक्ष्मोऽतिमहांश्चात्मासर्वबुद्धिसाक्षितयास्थितोस्तितमसंकल्पंनिर्विकल्परूपंविद्याधायकत्वेनधातृपदोक्तस्यगुरोरनुग्रहेणपश्यती तिद्वयोःसंबंधः ४९२ । ४९३ तस्यात्मनोऽद्वयत्वस्फुटीकरणायविश्वकारणत्वंप्रतिपादयतःसप्तप्राणाइत्यादेरंतरात्मेत्यंतस्यार्थमाह सर्वस्येतिसप्तभिः । महिमेतियोवैभूमेत्यादिश्रुतौभूमश ब्दइवभवितृप्रधानोनिर्देशःतथाचसर्वदःसर्वप्रदोयोयंसर्वस्यजगतईश्वरःसमहिमामहानद्वितीयइतियावत् यतइतोस्मादेवसप्तलोकवर्तिशरीरावच्छिन्नत्वेनसप्तसंख्याकाःप्राणाजातास्तथार्चिःपदोक्ताः सप्तवन्हयोजाताइत्यर्थः ४९४ सप्तवन्हीनूगणयति भौमइति । भौमःकाष्ठादिस्थितोग्निःप्रथमः जाठरोद्वितीयः सूर्यसोमविद्युद्वाडवाश्चत्वारइतिषट् चक्षुरिंद्रियरूपःसप्तमःइत्येवंतेवन्हयः सप्तेत्यर्थः ४९५ सप्तसमिधःसप्तलोकाश्चततोजाताइत्याह आदित्याद्याइति । द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपाणांपंचानामग्नीनांक्रमेणआदित्यवायुसंवत्सरवाग्उपस्थरूपाःपंचसमिधश्छांदोग्ये प्रसिद्धाः श्रौतीश्रौतेषुआहवनीयाद्यग्निषुनिधीयमानकाष्ठरूपाषष्ठीस्मार्त्तीस्मृतिप्रसिद्धावसथ्याग्निसंबन्धिनीसप्तमी स्फुटमन्यत् ४९६ मुंडकप्रसिद्धाग्नेःसप्तजिव्हाअपिततोजाताइत्याह काली

**यद्द्वयंविदुषःप्रोक्तंयच्चतेनात्मरूपतः ॥ गम्यतेसोयमेवस्यादानंदात्मामहेश्वरः ४९१ अणीयानप्यणोस्तद्वन्महीयान्महतोपिच ॥ आत्मास्यजंतोर्निहितोबुद्धौ हृदयसद्मनि ४९२ असंकल्पंतमात्मानंस्वस्थचित्तोगुरोःसदा ॥ प्रसादाद्वीतशोकःसन्पश्यत्यात्मतयापुमान् ४९३ सर्वस्यजगतोयोयंमहिमासर्वदेश्वरः ॥ ईश्वरादितएवेमेसप्तलोकशरीरगाः ॥ जायंतेप्राणिनांप्राणास्तथासप्तापिवन्हयः ४९४ भौमोयंविविधस्त्वेकोद्वितीयोजाठरस्तथा ॥ सूर्यःसोमस्तथाविद्युद्वाडवश्चक्षुरत्रते ४९५ आदित्याद्याश्चसमिधःपंचाग्नौपंचकीर्तिताः ॥ श्रौतीस्मार्त्तीचसप्तैताःसमिधोपिततोभवन् ॥ भूराद्याःसप्तयेलोकास्तेप्यस्मादात्मनोभवन् ९६ कालीचैवकरालीचतृतीयास्यान्मनोजवा ॥ सुलोहितातथैवान्याधूम्रवर्णाचपंचमी ॥ स्फुलिंगिनीविश्वरूपीसप्तजिह्वास्ततोभवन् ४९७ लोकायेब्रह्मणोजाताःस प्तसप्तमरुद्गणाः ॥ चरंतितेपुसततंबाह्याःप्राणाःशरीरिणाम् ४९८ अतःसमुद्राःसंजाताःसर्वेपिगिरयस्तथा ॥ नद्योनानाविधास्तद्वत्स्यंदंतेयादिशोदश ४९९ अतोरसात्स्वयंभासओषध्योभूमिसंश्रयाः ॥ जायंतेयेनदेहेषुजीवत्स्वेषोवतिष्ठते ५०० ब्रह्मादयोहियस्यस्युःपुरुषस्यविभूतयः ॥ मुख्याहियमजामंत्रेहिंसमंत्रेचजानते ५०१**

ति । काल्यादीनिविश्वरूप्यंतान्यग्निजिव्हानांनामानीति ४९७ लोकाइति । येभूरादयोलोकाब्रह्मणोजाताउक्तास्तेषुविचरंतःसप्तसप्तएकोनपंचाशत्संख्याकामरुतोपिब्रह्मणोजाताइत्यनुषंगः की दृशांमरुतःसर्वेषांबाह्यप्राणरूपाः ४९८ अतइति । अतउक्तलक्षणादीश्वराद्देवसमुद्रादयोजाताइति ४९९ अतोरसादिति । तथाऽतएवेश्वरादंकुरादिपरिणामहेतुरसरूपेणावस्थितादोषध्योय वव्रीह्यादयोजायंते नकेवलंरसरूपईश्वरओषध्युत्पत्तिहेतुःकिंतुजीवनस्यापीत्याह येनेति । येनरसरूपेश्वरेणदेहाजीवंतइतिव्यवन्हियंतेतेष्वेषजीवात्मातिष्ठतिचेत्यर्थः ५०० ब्रह्मादेवानामित्यादि मंत्रत्रयस्यार्थंसूचयति ब्रह्मादयोहीति । यस्यपरमेश्वरस्यब्रह्माहिरण्यगर्भस्तत्प्रभृतयोदेवादीनांमध्येमुख्याविभूतयइतिसंबंधः श्रुतौपदवीपदेनपदंत्राणंमृतसंजीवनीविद्यारूपंवेत्तिजानातीतिव्यु त्पत्त्याशुक्रउक्तःस्वधितिपदेनधनदानंवनपदेनवशीकरणसाधनमुक्तंरेभन्नितिपदस्यस्तूयमानइत्यर्थइतिभावः । निरुक्तोविभूतिपक्षंत्यक्त्वाप्रकारांतरेणास्यमंत्रस्यव्याख्यानंततएवावगंतव्यम् त थायमीश्वरंअजामित्यादिरेषमंत्रेऽष्टमाध्यायेव्याख्यातिहंसइत्यादिकेपूर्वोक्त्यायेव्याख्यातेप्रतिपादितंबुधाजानंतीत्यर्थः ५०१

घृतमित्यादीनांपंचमंत्राणांतात्पर्यार्थमाह घृतमित्यादीति । यदेवंघृतमित्यादिमंत्रेषुप्रतिपादितंकर्मस्विघृताद्यंगरूपेणयज्ञरूपेणचसंबद्धंवदंतीतियो जना तत्रचत्वारीत्यादिमंत्रोयज्ञपरइतिबोध्यमिति ५०२ योदेवानामित्यादेःपरमःस्वराडित्यंतस्यमंत्रग्रंथस्यानुक्रमेणार्थमाह देवानांप्रथमइत्यादिन्यूनपष्टिश्लोकैः । तथायोनारायणाख्योदेवानांप्रथमआदौपूज्यःपुरस्तात्पूर्ववर्तमानत्वात् यश्चसर्वदेहिनांहृदिस्थित्वासर्वाश्चित्तवृत्तीःपश्यति यश्चरुद्ररूपःसर्वकर्मणांगुरुर्ब्रह्मापंहिरण्यगर्भंजायमानमनुग्रहदृष्ट्यासर्वज्ञंकरोतिसोस्मान् शुभयाधियायुक्तान्करोत्वितिद्वयोरर्थः ५०३ । ५०४ एवमिति । एवमित्थंव्याख्यातमंत्रेणाधिकारिभिःस्तूयमानःसंस्तानधिकारिणःप्रतिएनमुत्तरश्लोकप्रतिपाद्यमात्मानमात्मनःस्वरूपंदर्शयति कीदृशंस्वरूपं प्रतिवर्जितंतुल्यहीनमित्यर्थः प्रतिःसादृश्येइत्युपसर्गसूत्रेपूक्तं ५०५ सादृश्यहीनंरूपमभिनयति यस्मादिति । परोभिन्नः परोधिकः वृक्षःस्थाणुस्तद्वन्निश्चलः दिविस्वप्रकाशस्वरूपे स्फुटमन्यत् ५०६ तत्प्राप्तिहेतुश्चसर्वदृश्यत्यागएवेत्याह नकर्मणेति । नृभिरधिकारिभिः ५०७ त्यागस्यनारायणलाभहेतुत्वसाधकमन्वयव्यतिरेकौदर्शयति पुरुषइतिद्वाभ्यां । अयंनारायणाख्यःपुरुषोमोक्षसंज्ञकामृतत्वरूपोभवतितमेनंकेचिद्भाग्यवंतस्त्यागेने

घृतमित्यादिमंत्रेपुयंकर्मण्यपिसंगतम् ॥ वदंतिकवयोनित्यमानंदात्मानमीश्वरम् ५०२ देवानांप्रथमोयश्चपुरस्तात्सर्वदेहिनाम् ॥ वर्तमानोहृदिस्थित्वाधियः सर्वाःप्रपश्यति ५०३ हिरण्यगर्भमुत्पाद्यभगवान्भूतभावनः ॥ संयोजयतुनःसर्वानात्मनःशुभयाधिया ५०४ एवंसंप्रार्थ्यमानोयंभगवानधिकारिभिः ॥ आत्मानंदर्शयत्येनंतान्प्रतिप्रतिवर्जितम् ५०५ यस्मात्परःपरोनास्तिकश्चिज्ज्यायानणुश्चवा ॥ निश्चलोवृक्षसदृशःस्वप्रकाशोदिविस्थितः ॥ एकस्तेनेदमखिलंपूर्णंपुरुषरूपिणा ५०६ नकर्मणानप्रजयानधनेनकदाचन ॥ नारायणःपुमानेषलभ्यस्त्यागंविनानृभिः ४०७ पुरुषोमोक्षनामायममृतत्वंप्रकीर्तितः ॥ त्यागेनैनंपुराकेचित्प्राप्ताआत्मस्वरूपतः ॥ वर्णिनांहिसहस्रेषुभाग्यवंतोनरोत्तमाः ५०८ स्वर्गादपिसमुत्कृष्टमानंदात्मानमीश्वरम् ॥ स्वप्रकाशंसमायांतियतयोगुरुवाक्यतः ॥ नहितंस्वात्मनोबुद्धौतादात्म्याभेदवर्जिताः ५०९ वेदांतजात्मविज्ञानसुनिश्चितपदार्थकाः ॥ संन्यासयोगतःशुद्धचित्ताःशांत्यादिसंयुताः ॥ यतयोयत्रजीवंतःसाक्षान्नैवविजानते ५१० तेमृत्वाब्रह्मणोलोकेगत्वाब्रह्मसमाःसदा ॥ आत्मविज्ञानसंपन्नाःसंस्थिताःपरमामृते ५११

चात्मरूपतःआत्मत्वेनप्राप्ताइतिसंबंधः ५०८ नकेवलंपूर्वेएवप्राप्ताःकिंत्विदानीमपितंज्ञानसमकालंयतयःप्राप्नुवंतीत्याह स्वर्गादिति । स्वर्गोनाकपदोक्तात्परमुत्कृष्टंबुद्धिगुहायांस्थितमानंदरूपमीश्वरंयतयस्त्यागिनोगुरुवाक्यदर्शितंविशंति येतुदेहादौतादात्म्याभिमानेनाभेददृष्टिरहितास्त्यागहीनाइतियावत् तेनविशंतीत्यर्थः ५०९ ननुकेषांचिद्यतीनामपीहब्रह्मसाक्षात्कारोनभवतीतिव्यभिचारेणत्यागस्यकथंहेतुत्वमितिचेन्न प्रतिबंधविशेषेणविलंबेपिब्रह्मलोकेतेषामवश्यंतल्लाभादित्याह वेदांतेति । वेदांतवाक्येभ्योजातेनात्मविचारेणनिश्चितौतत्त्वंपदार्थौयैस्तेतथासंन्यासेनयोगेनचित्तवृत्तिनिरोधेनचशुद्धधियःशमादिसंपन्नत्वादेवंविधायेयतयःप्रतिबंधविशेषादिहजीवनावस्थायांपदिसाक्षात्कारंनलभंतेतथापितेब्रह्मलोकेमृत्वाब्रह्मणाहिरण्यगर्भेणसाम्यंगताःसंतः परमेऽमृतेमोक्षसाधने ज्ञानेस्थितास्तत्पराभवंतीतिद्वयोरर्थः ५१ । ५११०

ब्रह्मणइति । ब्रह्मणोहिरण्यगर्भस्यपरपदोक्तस्यदेहांतकालेब्रह्मणाहिरण्यगर्भेणस्वात्मनाआत्मतयोपासितेनसहतेसर्वेमुच्यंते तत्रहेतुतयामहावाक्यार्थसाक्षात्कारंपरामृतपदोक्तमभिनयति अमृतादि त्यादिनाविशेषणेन । जीवस्वरूपेऽनुगतोयआनंदःसर्वांतरतयावस्थितःश्रुतावमृतपदोक्तस्तमादायानंदरूपंतत्पदार्थमात्मनऐक्येनगत्वामायादिसकलबंधहीनाभवन्तीत्यर्थः ५१२ एतच्छ्रुत्वात्रजन्म निसाक्षात्कारार्थंयत्नशैथिल्यंनकार्यंयतस्तत्रब्रह्मगत्वाप्ययमेवसाक्षात्कारोपायइत्यर्थपरतयादहमित्यादिमंत्रंयोजयति अत्यल्पइतिचतुर्भिः । यदिदंशरीररूपमेकादशद्वारंपुरंविश्वकर्मणेश्वरेणनि र्मितंतत्रयद्धृदयकमलमत्यल्पमङ्गुष्ठपरिमाणत्वात्तदात्मरूपस्यब्रह्मणोवेश्मभूतंतस्मिन्हृदाकाशसंज्ञःअणोरणीयानतिसूक्ष्मःपरमेश्वरोवर्ततेतंसाक्षात्कृत्यैवयतीनांमोक्षइतित्रयाणांसंबंधः ५१३ । ५१४ ५१५ फलितमाह अत्रवापीति । अत्रास्मिंल्लोकेतत्रब्रह्मलोकेवाआत्मज्ञानादेवमोक्षइतियदासिद्धंतर्हिहेयतयःअत्रैवसआत्माज्ञेयः बह्वंतरायकब्रह्मलोकाशयानशैथिल्यंयुक्तमित्यर्थः ५१६ आत्मसाक्षा त्कारायप्रणवालंबनंयोगंविदधतंमंत्रंपठति योवेदादाविति ५१७ अस्यार्थमाह स्वस्मिन्निितित्रिभिः । स्वस्मिन्नात्मतत्त्वेजयपरान्रमयतिक्रीडयतीतिव्युत्पत्त्यास्वरपदेनप्रणवउक्तइत्यर्थः ५१८

ब्रह्मणोदेहपातेथब्रह्मणास्वात्मनासह ॥ अमृताज्जीवआनंदादानंदात्मानमात्मना ॥ गत्वामायादिनिर्मुक्तामुच्यंतेसर्वएवते ५१२ अत्यल्पेहृदयांभोजेस्वांगुष्ठेन समेसदा ॥ विपापेपरमेवेश्मभूतेस्वात्मस्वरूपिणः ५१३ पुरएकादशद्वारेविहितेविश्वकर्मणा ॥ अणोरणीयांस्तस्यांतर्वर्ततेयःपुमान्परः ५१४ आनंदात्माहृ दाकाशःस्वप्रभोदुःखवर्जितः ॥ साक्षात्कृत्यैवतंतत्रब्रह्मलोकेयथाभुवि ॥ यतयःपरिमुच्यंतेनान्यथातेपिकर्हिचित् ५१५ अत्रवापिचतत्रायंसज्ञेयोयतयःसदा ॥ अत्रैवचततोज्ञेयःस्वात्मनःक्षेममिच्छता ५१६ योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः ॥ तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः ५१७ स्वस्मिन्रमयतिस्वस्य जयशीलान्महात्मनः ॥ ओंकारःस्वरएतस्मादुच्यतेवेदवादिभिः ५१८ निश्चलंनभवेच्चित्तंयदात्मश्रवणेनृणाम् ॥ ओंकारेणसदातेषामात्मज्ञानंश्रुतिर्जगौ ५१९ उच्चारितोयमोंकारःकारणेयत्रलीयते ॥ तस्मात्परंचिंतयतआत्मज्ञानंविजायते ५२० अणोरणीयान्हृदयेपुरुषोयोत्रकीर्तितः ॥ सहस्रमस्तकःसोयंमहतोपिमहा नयतः ५२१ सर्वदेहेंद्रियप्राणःसर्वेषांसुखदुःखदः ॥ विश्वरूपःस्वयंज्योतिर्नारायणइतीरितः ५२२ मायानारेतिसंप्रोक्तातत्कार्यंनारजंतथा ॥ तत्रा यंवर्ततेयस्मात्तेननारायणःस्मृतः ५२३

यस्यमहावाक्यश्रवणमात्रेणात्मसाक्षात्कारोनभवतितस्यप्रणवालंबनेनसभवतीत्यस्मिन्नर्थेश्रुतिजातंमानमित्याह निश्चलमिति । श्रुतिस्तत्समूहः ५१९ प्रणवालंबनंध्यानमभिनयति उच्चारि तइति । अयंवेदस्याद्यन्तयोःपाठ्यःप्रणवउच्चारितःसन्लयावस्थायांयत्रकारणेपराख्येलीयतेतस्मात्परंचिद्रूपंशुद्धंचिंतयतोध्यायतःस्वरूपसाक्षात्कारोभवतीत्यर्थः ५२० सहस्रेत्यादिग्रंथार्थमाह अणोरित्यादिना । योयंसर्वेहृदयेसन्निहितःपुरुषःअणोरणीयानित्युक्तःसमहतोपिमहीयान्बोध्यः यतःसहस्रमसंख्यानानिमस्तकानियस्यसतथाभूतःतत्रहेतुः सर्वेत्यादिः । सर्वेदेहाइंद्रियाणि प्राणाश्चयस्यसतथा सर्वेषांकर्मिणांसुखस्यशंपदोक्तस्यतदुपलक्षितदुःखस्यचप्रापकः सर्वांतर्यामीसर्वफलप्रदश्चेतियावत् विश्वरूपःस्वयंज्योतिष्ट्वेनदेवपदोक्तोवक्ष्यमाणाभिर्व्युत्पत्तिभिर्नारायणपदो क्तश्चेतिद्वयोरर्थः ५२१ । ५२२ नारायणपदस्यएकादशव्युत्पत्तीर्दर्शयंस्तत्राद्यामाह मायेति । नयतिसन्निधिमात्रेणप्रवर्तयतीतिनरश्चिदात्मापुरुषस्तस्यद्दश्येनसंबंधिनीमायानाराउक्ता अजा दित्वाट्टाप् तस्यामायायाःकार्यंसूक्ष्मप्रपंचरूपंतयाउक्तव्युत्पत्त्यानारमित्युक्तंतत्रमायातत्कार्यरूपयोर्नारपदार्थयोरुपाधिभूतयोर्यतोऽयतेप्रतिबिंबतयावर्तते नंद्यादित्वाल्ल्युः सईश्वररूपोहिरण्यगर्भ रूपोवानारायणइत्युक्तइत्यर्थः ५२३

विराड्भावपरांद्वितीयांव्युत्पत्तिमाह आपइति । प्रथमंनरेणसृष्टागर्भोदकसंज्ञाआपोनाराइतिप्रोक्तास्तायतोविराड्रूपस्यभगवतआधारःअयनंभवंतितेनवासतथा ५२४ तृतीयामाह अपामिति । प्रथमवापदंपूर्वान्वयिदर्शितं भूमेर्नौकासमायाआधारभूतायाआपोनरसृष्टाएवतासांसूत्रभूतप्राणरूपेणविधारकत्वाद्वासतथा नाराणामयनंविधृतिर्येनेतिव्युत्पत्तेरितिभावः ५२५ चतुर्थीमाह स्थूलेति । अथवास्थूलसूक्ष्मप्रपंचमहाभूतशरीरकोविराट्सूत्रात्मावानरपदेनोक्तस्तस्यनरस्येदंनारमयनंस्थानंयस्मिन्कारणेसतथेत्यर्थः ५२६ पंचमीमाह नराणामिति । अथवानरपदोक्तानांजीवानांप्रतिबिंबभूतानांसंबंधिअयनंनिरूपणंयस्माद्बिंबभूताद्भवतिसपरमेश्वरस्तेननिमित्तेननारमयनंयतइतिव्युत्पत्त्यानारायणइत्युक्तइत्यर्थः ५२७ षष्ठीमाह पुंसइति । 'अरोऽजिनेरंचक्राङ्गे'इतिहेमः तथाचपुंसोजीवस्यमृगाजिनवत्स्वभावसिद्धाःकामादयोदोषागौण्याअरपदेनोक्तास्तेभ्यःकामादिभ्योजातंदुःखंतुआरंतस्याश्रयभूतमज्ञानादिजडजातमारायणमित्युक्तं नविद्यतेआरायणंयस्मिन्स्वयंप्रकाशानंदरूपेसाक्षिणीतिव्युत्पत्त्याशुद्धात्मानारायणइत्युक्तइतिद्वयोरर्थः ५२८ । ५२९ सप्तम्यष्टम्यावाह अराइति । अथवासंसाररूपचक्रस्यपंचक्लेशकर्मविपाकवासनारूपाअरास्तिर्यक्काष्ठ

आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ आधारस्ताविराजोयत्तेननारायणोह्यसौ ५२४ अपांवायःसमाधारःसूत्ररूपीमहेश्वरः ॥ भूमेराधारभूतानांततोनारायणोथवा ५२५ स्थूलसूक्ष्मवपुर्योयंविराट्सूत्रंचवानरः ॥ महाभूतात्मकस्तस्यहेतुर्नारायणोथवा ५२६ नराणांवापिजीवानांस्थिरजंगमरूपिणाम् ॥ तादात्म्यादयनंयस्मात्तेननारायणोथवा ५२७ पुंसोनिसर्गसिद्धाःस्युःकामक्रोधादयोह्यराः ॥ आरंतज्जंभवेदुःखंयत्रतज्जडमुच्यते ५२८ आनंदात्मास्वयंज्योतिर्विपरीतोयतस्ततः ॥ नारायणइतिप्रोक्तएषवेदवादिभिः ५२९ अराःसंसारचक्रस्यक्लेशकर्मादिकाःस्मृताः ॥ परिणामेनयस्तेषांमायासाश्रयउच्यते ५३० नारायणस्ततोभिन्नोविकारपरिवर्जितः ॥ परमात्मात्रमायायाआश्रयोवात्रकीर्त्यते ५३१ नरसंबंधिनीनित्यमभीष्टासर्वदेहिनाम् ॥ श्रीरियंसकलानानारूपात्यंतमनोरमा ५३२ सर्वदासुखदापुण्यकारिणांप्राणिनामिह ॥ पापिनांदुःखदातद्वदप्राप्यानिर्गमेनच ५३३ स्थितायस्मात्परेपुंसिनिश्चलाततएवसः ॥ नारायणइतिप्रोक्तएषवाब्रह्मवादिभिः ५३४ नरसंबंधिनीवेयंबुद्धिःसर्वशरीरिणाम् ॥ नानार्थदर्शिकातस्याभासकःस्वस्यतेजसा ५३५

रूपाःप्रसिद्धाः पुंस्त्वंतद्यथारथस्याऽरेषुनिमिभिरर्पितानाभावराअर्पिताइतिश्रुत्यनुसारात् तेषामरात्मकानांक्लेशादीनांयःपरिणामेनाश्रयःपरिणाम्युपादानमितियावत् सातद्रूपामायाआरमयनंपरिणामेनस्थितिर्यत्राश्रयेइतिव्युत्पत्त्याआरायणइत्युक्तातत‌ःपरिणामिनःकूटस्थत्वेनभिन्नःपरमात्मानारायणइत्युक्तः अथवानार्यांमायारूपायाइदंनारंनारमयनमध्यासेनस्थितिर्यत्रेतिव्युत्पत्त्यामायायाआश्रयोधिष्ठानभूतःपरमात्मातथोक्तइतिद्वयोरर्थः ५३० । ५३१ लीलाविग्रहरूपांनवमींव्युत्पत्तिमाह नरेतित्रिभिः । प्रथमनरस्यपुरुषविग्रहस्यपरमेश्वरस्यसंबंधिनीलक्ष्मीर्नारीतिपदेनोक्तातस्याइदंनारंनारमयनंस्थितिरूपंयत्रसतथा श्रियोविशेषणानिस्फुटानि तत्रसकलाकलाभिश्चतुःषष्टिकौशलैःसहिता निर्गमोऽपायः इतित्रयाणामर्थः ५३२ । ५३३ । ५३४ प्रत्यगात्मत्वपरांदशमीमाह नरसंबंधिनींवेयमिति । अथवानरस्यद्रष्टुर्नानार्थदर्शनद्वारत्वेनसंबंधिनीबुद्धिर्नारीत्युक्तातदीयमयनंभानरूपंनिर्वहणंयतश्चिद्रूपाद्भवतिसनारायणः एकादशीमाह अथवेत्यादिना । अथवायस्माद्भिन्नंकिंचिन्नास्तिसनारायणःआराणांभिन्नसत्ताकानामयनंप्रवर्तनंयत्रसआरायणस्तद्भिन्नस्तथेतिव्युत्पत्तिसमन्वयादितिभावः ५३५

५३६ तत्रहेतुतयाअक्षरत्वादिकमाह अयमेवेति । अक्षरलक्षणंपंचमाध्यायेगार्गींप्रतियाज्ञवल्क्येनोक्तंबोध्यं तथायंसनातनःपुरुषोविश्वरूपोपिविश्वतःपरःत्रिपादस्यामृतंदिवीतिश्रुत्यंतरादित्यर्थः ५३७ हरिपदार्थमाह अविद्येति । आदिपदेनकीर्तनादिग्रहः ५३८ पुरुषइति । अयंपुरुषःसर्वात्मकोयतइदंविश्वंतमेवोपजीवतिततएवसत्तादिकंलभतेतथाअयंविश्वपालकत्वात्पतिरित्युक्तः ५३९ आप्नोतीति । स्वात्मनासदादिरूपेणयतःसर्वंव्याप्नोतितेननिमित्तेनात्मसंज्ञः मंगलानामपितथात्वप्रयोजकत्वाद्यतःपरमकल्याणरूपस्ततःशिवइत्युक्तः यतश्चब्रह्माहिरण्यगर्भोप्यस्यानंदलेशमुपजीवतितत आनंदइत्युक्तः ५४० च्युतिरिति । कालप्रयुक्तोभावानांनाशश्च्युतिरित्युच्यतेसाच्युतिरत्रेश्वरेनास्ति मृत्युभयप्रदत्वेनकालकालत्वेनचप्रसिद्धत्वात् यथाथर्व्याख्यातश्रुतिः 'मृत्युर्धावति पंचमः ज्ञःकालकालः'इतिच तेनाच्युतइत्युक्तइत्यर्थः ५४१ सर्वनियंतृत्वादीश्वरसंज्ञःअन्यथाभावलक्षणापगमाभावात्शाश्वतसंज्ञश्चायंबोध्यइत्याह ईश्वरइति ५४२ महाज्ञेयपरायणपदयोरर्थंपूर्वोत्तरार्द्धाभ्यामाह महद्भिरिति । महद्भिरुत्तमाधिकारिभिः ५४३ ज्योतिषोरिति । आर्चिर्वह्निज्वालातत्प्रभृतिजडंज्योतिःस्वात्मशब्दवाच्यंचिदाभासरूपंचेतनंज्योतिरनयोरुभयोर्ज्योतिषोरपेक्षया

सत्यज्ञानादिरूपोयमानंदात्मास्वयंप्रभः ॥ नारायणोथवायस्मादन्यत्किंचिन्नविद्यते ५३६ अयमेवस्वयंज्योतिरक्षरंपरमंपदम् ॥ विश्वतःपरमोनित्योविश्वरूपः सनातनः ५३७ अविद्यासहितान्क्लेशान्पापानिचमहांत्यपि ॥ स्मृत्यादिनाहरत्येषयतस्तेनहरिःस्मृतः ५३८ पुरुषोविश्वमेवेदंतंविश्वमुपजीवति ॥ पालयत्येषनिखिलंविश्वंयस्मात्पतिस्ततः ५३९ आप्नोतिचयतःसर्वंस्वात्मनात्माचतेनसः ॥ शिवःपरमकल्याणोमंगलानांचमंगलम् ॥ आनंदात्मायदानंदलेशंब्रह्मोपजीवति ५४० च्युतिर्विनाशइत्युक्तःकालाद्भावेषुयोभवेत् ॥ अच्युतोमृत्युभयदःकालकालोयमीरितः ५४१ ईश्वरोजगतोयस्मान्नियंताभगवानयम् ॥ शाश्वतश्चयतोनायमपगच्छतिकर्हिचित् ५४२ महद्भिश्चसदैवायंज्ञेयोब्रह्मादिभिःपुमान् ॥ सर्वेषामपिभूतानामेषएवपरागतिः ५४३ ज्योतिषोरर्चिरादेश्चस्वात्मशब्दाभिधस्यच ॥ परमात्मापरंज्योतिर्ब्रह्मतत्त्वंपरंतथा ५४४ ध्याताध्यानंतथाध्येयंसर्वंनारायणात्मकम् ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ५४५ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः ॥ अनंतोव्ययशून्यश्चस्वप्रभःसर्वदर्शनः ५४६ अगाधजलधेरस्यसंसारस्यजडात्मनः ॥ मायायांकारणेतिष्ठन्मायादिपरिवर्जितः ५४७ एषसर्वगतोप्यात्माहार्देपद्मेत्रलभ्यते ॥ अणीयस्यात्मनोबुद्ध्याततोणुःपूर्वमीरितः ५४८ यथैवाष्टदलंपद्मंसुरक्तंमुकुलीकृतम् ॥ एवंहृदयपद्मंतल्लंबतेहृदयस्यके ५४९

अखंडचिद्रूपत्वेनोत्कृष्टत्वात्परमात्मापरंज्योतिरित्युक्तः अतएवब्रह्मेतिपरंतत्त्वमितिचोक्तइत्यर्थः ५४४ तस्यसर्वात्मत्वमेवश्रुत्युक्तमभिनयति ध्यातेतिद्वाभ्यां । सर्वदर्शनपदेनकविपदार्थउक्तः स्फुटमन्यत् ५४५ । ५४६ संसाररूपसमुद्रस्यांतेकारणरूपेस्थितइत्याकारंसमुद्रंतमित्यस्यार्थंदर्शयति अगाधेति । संसारस्यकारणेमायारूपेनियंतृतयातिष्ठन्नपिवस्तुतोमायादिहीनइतिसंबंध. ५४७ हृदयकमलवर्णनस्यप्रकृतोपयोगमाह एषइति । एषपरमात्मासर्वगतोपिहृदयकमलांतर्गततयाऽतिसूक्ष्मयाबुद्ध्योपलक्ष्यत्वादणुरितिपूर्वमुक्तस्तत्स्फुटीभावायहृदयकमलमुच्यतेइतिभावः ५४८ दहरादिविद्योपयोगिनंहृत्कमलस्वरूपंशाखांतरगुणोपसंहारेणश्रुत्युक्तमभिनयति यथैवेत्यष्टभिः । यथालोकेऽष्टदलंरक्तवर्णंमुकुलीकृतमीषद्विकसितंकमलंभवेत्तादृशंहृदयस्यकेशिरसिलंबमानमिदमांतरंकमलंबोध्यमित्यर्थः ५४९

अतिरम्यमिति । कीदृशंनतरमणीयं पूर्वादिचतुर्दिक्षुमध्येचवर्तमानानिपंचच्छिद्राणियस्यतत्तथा वितस्तिर्द्वादशांगुलस्तत्परिमितेनाभेरूर्ध्वदेशेस्थितमिति ९५० तेपुच्छिद्रेपुवास्तव्यान्चिक्षुरादीनिब्रह्मपुरुषत्वेनध्येयानीत्याह पूर्वमिति । तथास्यकमलस्यमूलस्थानीयाजिह्वाबोध्या तथाउरसोवक्षसोंतरदेशमारभ्यगलपर्यंतोदेशोभूमित्वेनध्येयइतिद्वयोरर्थः ९५१ । ९५२ मनइति । तथेदंहृदयकमलंमनोनिवासत्वान्मानसमितिप्रसिद्धं'समानसीनआत्माज्ञनानाम्'इत्यादिश्रुतिपु मानसेभवइतितदर्थः गलतःगलगतघंटिकाप्रदेशान्निर्गतत्वेननिष्टयापदोक्तादधोवितस्तिमात्रेदेशेस्थितमित्यर्थः ९५३ ज्यालेत्याद्यर्थमाह सोमाग्नीति । सोमादिवदतितेजस्विविश्वस्यालंबनभूतंचेदंकमलमंतर्वर्त्याकाशद्वारेत्यर्थः ' यावान्वाऽयमाकाशः'इत्यादिश्रुतेः ९५४ विश्वस्येति । यतोविश्वस्यायतनंततोल्पमपिमहदितियोगिभिरुक्तम् ९५५ नानेति । पुनःकीदृशं नानारजतादिधातुमयशिलास्थानीयैरस्थिभिर्मांसादिपंकलिप्तैर्वेष्टितमिति ९५६ प्राकारेणेति । यथाचप्राकारवेष्टितप्रासादांतर्गतंराज्ञोविहारस्थानभूतंसरोभवेत्तादृशंतस्यपद्मस्यहृदिमध्येसुषिरंछिद्रंभवतितदाकारयाधियाआत्मसाक्षात्कारोभवतीतिद्वयोरर्थः ९५७ । ९५८ तत्रहृत्कमलेध्येयस्यविशेषणान्याह

अतिरम्यंहिभूतानांपंचच्छिद्रमधोमुखम् ॥ वितस्तिमात्रतोदेशेनाभेरूर्ध्वमवस्थितम् ९५० पूर्वंछिद्रंतुचक्षुःस्यात्पश्चिमंवागिहेरिता ॥ श्रोत्रंचदक्षिणंछिद्रंमनउत्तरमीरितम् ९५१ मध्यच्छिद्रंतथाघ्राणंजिह्वामूलंतथास्यच ॥ गलंभूमिरिहप्रोक्ताह्युरसोंतरतस्तथा ९५२ मनोयोगादिदंनित्यंमानसाख्यंप्रकीर्तितम् ॥ गलतोप्यधएतत्स्याद्वितस्तिपरिमाणतः ९५३ सोमाग्निरविनक्षत्रविद्युद्वत्तेजसायुतम् ॥ भातिविश्वस्यकृत्स्नस्यह्याश्रयोयोगिनांसदा ९५४ विश्वस्यायतनंयस्मात्तस्मादेतन्महत्स्मृतम् ॥ अत्यल्पमपिविद्वद्भिर्योगिभिःस्वात्मदर्शिभिः ९५५ नानाधातुशिलाप्रख्यैरस्थिभिर्वपुषिस्थितैः ॥ मांसादिधातुचित्रांगैःसर्वतःपरिवेष्टितम् ९५६ प्राकारेणयथाराज्ञःसरःप्रासादसंश्रयम् ॥ तस्यांतःसुषिरंसूक्ष्मंहृदिपद्मस्यवर्तते ९५७ तत्रस्थयाधियायोगादानंदात्मोपलभ्यते ॥ यस्मिन्प्रतिष्ठितंसर्वंरज्ज्वांसर्पादिकंयथा ९५८ मध्येहृदयपद्मस्यमहानग्निसमःपुमान् ॥ आनंदात्मास्वयंज्योतिर्विश्वार्चिर्विश्वतोमुखः ॥ बुद्ध्युपाधिंसमाश्रित्यभुंक्तेविषयजंसुखम् ९५९ अग्निःप्राणात्मकश्चास्तआहारंविभजन्निव ॥ स्थूलमध्यमसूक्ष्मांशैर्जठरेसर्वदेहिनाम् ९६० तिर्यगूर्ध्वमधश्चैवरश्मयस्तस्यसंतताः ॥ संतापयतिदेहंसआपादतलमस्तकम् ॥ क्षुधादिरूपमापन्नोजाठराग्नेस्तुतेजसा ९६१ सत्यज्ञानादिरूपेणयदायंनोपलभ्यते ॥ तदामुनाप्रकारेणचिंतनीयोमनीषिभिः ९६२ तस्यमध्येदीपशिखाहार्दांभोजस्यतिष्ठति ॥ अणीयसीतथैवोर्ध्वंज्वलंतीनिश्चलासदा ९६३

मध्येइति । तस्यपद्मस्यमध्येपरमात्मातिष्ठति कीदृशः महानद्वितीयानंदः पुनःकीदृशः अग्निसमः स्वयंप्रकाशत्वात् विश्वार्चिःविश्वस्मिन्सर्वस्मिन्नर्चिषश्चिदाभासरूपायस्यसतथा अतएवविश्वतोमुखःसर्वतःसन्निहितः बुद्ध्युपाधिकजीवरूपेणसर्वविषयभोक्ताचेत्यर्थः ९५९ अग्निरिति । पुनःकीदृशःसपरमात्मा प्राणात्मकोयोजाठराग्निस्तद्रूपेणआहारंभुक्तान्नादिकंस्थूलमध्यमसूक्ष्मांशैश्छांदोग्यप्रसिद्धैर्विभजन्विभागंनयन्सन्सर्वेषांजठरेआस्तेस्थितइत्यर्थः ९६० तिर्यगिति । तस्यपरमात्मनोजाठराग्नेर्जठराग्निरूपस्यरश्मयःकिरणास्तिर्यगूर्ध्वमधश्चतेजसासन्तताव्याप्ताःसंति कीदृशारश्मयः क्षुत्तृट्क्रोधादिरूपाः ताभिःसजाठराग्निरूपःपरमात्मादेहमापादतलमस्तकंसंतापयतीतिसंबंधः ९६१ एवंध्यातोपियदिसत्यादिरूपेणपरमात्मानप्रादुर्भवतितदाऽमुनावक्ष्यमाणेनप्रकारेणध्येयइत्याह सत्येति ९६२ अमुनेत्युक्तमभिनयति तस्येतित्रिभिः । तस्यहार्दांभोजस्यमध्येऽतिसूक्ष्माऊर्ध्वंदेदीप्यमानानिश्चलाचदीपशिखाध्येयेत्यर्थः ९६३

नीलेति । पुनःकीदृशी नीलमेघघटागतविद्युल्लेखावद्दीप्ता श्यामाकांकिंशारुवत्तन्वीसूक्ष्मापीतवर्णाअणूपमापिभास्वतीप्रभाशालिनीत्यर्थः ५६४ तस्यादीपशिखायामध्येपरमात्मासर्वात्माध्येय इत्याह मध्येइति । स्वराट्स्वेनैवराजमानः ५६५ आदित्योवाइत्यादेःउपतेनमइत्यंतस्यमंत्रवृंदस्यतात्पर्यार्थमाह आदित्यइति । आदित्यइत्यादिमंत्रजातेनप्राणरूपोविराड्रूपश्चएषएवेश्व रोनानारूपैर्वर्ण्यतेयतोयंस्वराडद्वितीयोभवतीत्यर्थः ५६६ सत्यंपरमित्यादेरुपनिषदित्यंतस्यार्थसंक्षिप्याह सत्यंतपइति । सत्यादीनिमानसपर्यंतान्येकादशसाधनानिसत्फलकत्वेनस्तुत्वाते भ्यःसर्वेभ्योहिरण्यगर्भवदुत्कृष्टत्वोक्त्यासंन्यासोविहितः विधेयंहिस्तूयतेइतिन्यायादितिवाक्यार्थः तत्रप्रजातयःप्रजाः आहिताआधानसंस्कृताअग्नयः मानसंचित्तशुद्धिः स्फुटमन्यत् ५६७ संक्षेपेणोक्तस्यव्याख्यानंप्रजापतेरारुणिपृष्टस्यवक्तुरुपन्यासपूर्वकंश्रुत्यैवकृतंतद्विशदयति सर्वेत्यादिना । अत्रग्रंथकृताधर्मस्यादौकीर्तनमार्थक्रमानुरोधात्कृतम् दमशमौदयारूपत्वेनैकीकृत्यधर्मा त्पूर्वोपात्तानांतत्पादत्वेनविवक्षितत्त्वात् पादेभ्योविशेषस्थानीयेभ्यःपूर्वंसामान्यात्मनोधर्मस्योपन्यसनीयत्वादितिबोध्यम् सर्वेषांपुरुपार्थचतुष्टयस्यतदुपकरणानांचपरमसाधनत्वाद्धर्मःश्रेयस्कर

नीलतोयदमध्यस्थाविद्युल्लेखेवभास्वरा ॥ नीवारशूकवत्तन्वीपीताभास्वत्यणूपमा ५६४ मध्येतस्याःशिखायाःसपरमात्माव्यवस्थितः ॥ ब्रह्मायंशिवएवायंहरि रेषसनातनः ॥ सएवेंद्रोक्षरंतद्वत्परमंसस्वराट्प्रभुः ६५ आदित्योवाएषइतिप्रभृतिप्राणईश्वरः ॥ नानारूपःस्वराडेषस्वराडेवचकीर्त्यते ६६ सत्यंतपोदमःशांति र्दानंधर्मःप्रजातयः ॥ आहिताअग्निहोत्रंचयज्ञामानसमेवच ॥ एकादशात्रसंस्तुत्यन्यासःश्रुत्याविधीयते ५६७ सर्ववर्णाश्रमाणांस्यात्स्वधर्मःसाधनंपरम् ॥ अर्थेकामेचमोक्षेचतेषामपिचसाधने ५६८ धर्मतःसर्वमेवात्रदुष्करंचप्रसिध्यति ॥ धर्मःसर्वस्यजगतःस्थितिहेतुरुदाहृतः ५६९ धर्मिष्ठमुपसर्पंतिप्रजाःसर्वाम हातरुम् ॥ सुपेव्यंफलपुष्पादिपूर्णमार्गस्थितंयथा ॥ ज्ञानाज्ञानकृतंपापंसर्वंधर्माद्विनश्यति ५७० सत्यंतपोदयादानंचतुष्पाद्धर्मईरितः ॥ सर्वैरपिसदासेव्यो जन्मतोमरणावधि ५७१ सत्यंवाचनिकोधर्मोयथादृष्टार्थवेदनम् ॥ उक्तार्थतश्चाचलनमिदमुक्तंमनीषिभिः ५७२ सत्यवाक्यादिमेसर्वेलौकिकावैदिकाअपि ॥ व्य वहाराःप्रवर्ततेकालांतरफलेष्वपि ५७३ अजातशत्रुप्रमुखाःसत्यवाक्याद्दिवंगताः ॥ नच्यवंतेततोद्यापिसत्यवादपरायणाः ५७४ सत्येनवातिवातोयंसूर्यःसत्ये नरोचते ॥ सत्येनविधृताभूमिःसर्वंसत्येप्रतिष्ठितम् ५७५ शीतवातातपादीनांसहनंक्षुत्पिपासयोः ॥ संकल्पात्तद्धिविज्ञेयंतपोत्रान्नादिवर्जितम् ५७६

इत्यर्थः ५६८ धर्मतइति । धर्मोदुष्करमपिसाधयति किंचधर्मःप्रजानांस्थितिहेतुःपालनकरीसत्त्वमयीभगवतोमूर्त्तिरुक्ता अतएवधर्मपरंसर्वेआश्रयंतेपथिकाःसत्तरुमिव तथायंधर्मोज्ञात्वाऽ ज्ञात्वावाकृतानिपापानिहंतीतिद्वयोरर्थः ५६९ । ५७० अस्यधर्मस्यसत्यादयश्चत्वारःपादाःसदासेव्याइत्याह सत्यमिति ५७१ तत्रसत्यलक्षणमाह सत्यमिति । वाचनिकोवागिंद्रिये णानुष्ठेयःसत्यरूपोधर्मः तत्स्वरूपंतुयथादृष्टस्यभूतहितस्यकीर्तनंप्रतिज्ञातार्थादचलनंचेत्यर्थः ५७२ अस्यसत्यस्यसर्वव्यवहारनिर्वाहकत्वंप्रसिद्धमित्याह सत्येति । कालांतरेफलंयेषांतेषुकर्म सुलौकिकाव्यवहाराःसत्यापनादयोवैदिकाआर्त्विज्यादयःप्रवर्ततेइतिप्रसिद्धम् सत्यापनं ‘ साई ’ इतिभाषायांख्यातम् ५७३ तथायुधिष्ठिरादीनांसशरीरस्वर्गगमनंतत्रचिरंस्थितिश्चसत्यबलेनैवप्र सिद्धेत्याह अजातेति ५७४ तथासत्यधर्मानुष्ठानबलेनैववाय्वादिदेवानांस्वस्वाधिकारनिर्वाहकत्वंप्रसिद्धमित्याह सत्येनेति ५७५ धर्मस्यद्वितीयपादंतपोवर्णयति शीतेति । संकल्पपूर्वकं यत्शीतादीनांक्षुधापिपासयोर्वासहनमन्नादिवर्जनंचएततपसःस्वरूपंव्यासप्रभृतिभिरुक्तमित्यर्थः ५७६

तत्फलमाह तपसेति । आयन्प्राप्तवंतः ५७७ सर्वमेवेति । सर्वंजगत्कार्यभूतंकारणभूतेतपसिस्थितम् तथाहिविश्वामित्रोनूतनंजगत्सृष्टवानितित्रिशंकूपाख्यानेरामायणेप्रसिद्धम् सतप स्तप्त्वाइदंसर्वमसृजतेतिश्रुतिश्च दुर्धर्षतेजस्वि ५७८ तृतीयःपादोदयारूपोदमशमाभ्यांदययाअसाधारणकारणाभ्यांसूचितइत्याह दयेति । यतोदांत्याशांत्याचविनादयानजायतेततोदयाप्रयो जकौदमशमौश्रेयःसाधनतयोक्तावित्यर्थः ५७९ तत्रदमलक्षणमाह बाह्येंद्रियाणामिति । यथाप्रमत्तस्यवृषभस्यबन्धनेनविजयस्तथायइंद्रियाणांविजयःसदमउच्यतइत्यर्थः ५८० अस्यफ लमाह ब्रह्मचर्येति । तेनदमेनबाह्येंद्रियनिग्रहंकुर्वंतोब्रह्मचारिणोब्रह्मलोकंस्वर्गंवावहवोगताइत्यर्थः ५८१ शमलक्षणमाह शमइति । सर्वविषयाभिलाषान्हित्वाआनंदरूपात्ममात्राभिलाषः शमइत्युक्तइत्यर्थः ५८२ अयंशमःप्रत्याहारफलत्वेनयोगिभिरुक्तइतिदर्शयति यथेति । यथाज्वरादिरोगवशेनविषयेष्विच्छायाअभावःअनुत्थानंतथाविषयदोषदर्शनेनतेष्विच्छायाअजनिरनु त्पत्तिर्जातायाइच्छायायद्वात्यंतिकंविवर्जनंवातद्रूपःशमउक्तः तथाचोक्तंयोगभाष्ये ‘ चित्तैकाग्र्यादप्रतिपत्तिरेवेतिजैगीषव्यइति ’ चित्तैकाग्र्यबलेनेंद्रियाणांविषयेष्वप्रवृत्तिरूपावश्यतैवप्रत्याहा

तपसामुनयोदेवाःस्वर्गमायन्निजेप्सितम् ॥ सपत्नविजयंतद्वदिहलोकेचमानवाः ५७७ सर्वमेवजगन्नित्यंतपस्येवप्रतिष्ठितम् ॥ तपसायतएवायंशापानुग्रहकृद्भ वेत् ॥ तपस्ततोतिदुर्धर्षंसाधनंपंडितैःस्मृतम् ५७८ दयादांत्याचशांत्याचनविनात्रप्रजायते ॥ यतोदमःशमश्चेतिद्वयंसाधनमीरितम् ५७९ बाह्येंद्रियाणां विजयोदमउक्तोमनीषिभिः ॥ वृषभस्यप्रमत्तस्ययथाबंधनतोभवेत् ५८० ब्रह्मचर्यंरतास्तेनबाह्येंद्रियविनिग्रहम् ॥ कुर्वंतःस्वर्गमायांतिब्रह्मलोकमथापिवा ॥ परित्यज्याखिलंशापंसफलंमरणात्परं ५८१ शमउक्तोभिलाषोयमानंदात्मस्वरूपिणः ॥ हित्वाविषयजान्सर्वानभिलाषान्सदैवहि ५८२ यथाव्याध्यादिदोषेण विषयेच्छानजायते ॥ एवंविषयदोषेणविषयेच्छाजनिर्नया ॥ सशमःकथ्यतेपुंसोविषयेच्छाविवर्जनम् ५८३ अरण्येशमसंपन्नामुनयःस्वार्थसाधकाः ॥ शांत्या कुर्वंतिभूतानांशिवंहिंसाविवर्जनम् ॥ स्वर्गंचमुनयोयांतिकामक्रोधादिवर्जनात् ५८४ कामक्रोधादिसंपन्नःपुमान्शमविवर्जितः ॥ ज्ञानकर्मेंद्रियगणजयशून्यःप्र मादवान् ५८५ कर्मणामनसावाचाकुरुतेभूतहिंसनम् ॥ हिंसकोनिर्दयःकोनुपुमान्कुर्याद्दयामयम् ॥ ततःशमदमौज्ञेयौपरमंसाधनंनृणाम् ५८६ दानंवाच स्तथाबुद्धेर्वित्तस्यविविधस्यच ॥ शरीरस्यापिकुत्रापिकेचिदिच्छंतिपंडिताः ५८७ प्रशंसंतिप्रजानित्यंकर्णबल्यादिकानिह ॥ वदान्यादानतःस्वर्गंव्रजं तिसततंनराः ५८८

रफलमितिजैगीषव्यमुनेःसिद्धांतइतितदर्थः ५८३ अस्यशमस्यफलंलोकेवेदेचप्रसिद्धमित्याह अरण्यइति । अरण्येऽसहायाअपिमुनयोऽनेनशमेनस्वार्थमनुष्ठितेनापिभूतानांसन्निहितानांव्याघ्रा दीनांशांत्याधानेनशिवंहिंसानिवृत्तिरूपंकुर्वंतःप्रसिद्धाः तथाकामादिजयेनसद्गतिश्चतेषांशास्त्रेप्रूक्तेत्यर्थः ५८४ अनयोःशमदमयोर्दयाप्रयोजकत्वंव्यतिरेकमुखेनाह कामेति । शमराहित्येन कामादिमान्दमराहित्येनेंद्रियजयशून्यश्चयोभवतिसशरीरादिभिर्हिंसांकुर्वाणएवप्रसिद्धस्तस्यहिंसकस्यनिर्दयत्वमपिप्रसिद्धम् यतोयंहिंसकोदयायाःसंभावनायाअपिनविषयः फलितमाह तत इत्यादिनेतिद्वयोरर्थः ५८५ । ५८६ धर्मचतुर्थपादस्यदानस्यस्वरूपमाह दानमिति । वाक्चतुर्दशविद्यारूपा दास्यामीत्यादिप्रतिज्ञायतत्प्रभृतीनांपात्रेऽर्पणंदानमित्युच्यते तत्रशरीरदानं कुत्रचित्शरणागतत्राणादिविषयएवेत्याहुः ५८७ तत्फलंयशःप्रभृतिप्रसिद्धमित्याह प्रशंसंतीति । कर्णत्वग्दानाद्बलिस्त्रिलोकीदानात् आदिपदेनशिबिप्रभृतीनांग्रहः वदान्याःप्रदातारः ५८८

यज्ञाइति । दक्षिणाआत्मारूपंयस्यतथाभूतेनदानेनैवपूर्णताप्रसिद्धा तथादातारंसर्वेभूतैःपितृवदाश्रयणीयोभवतीति ५८९ दानतइति । दानेनवैरिणोपिवशेभवंति अतएवउपायज्ञःसामदानभेददंडानां बलाबलविचारकःकुशलएतान्वैरिणोदानेनैवनिहंतिजयतीत्यर्थः तथादानस्यसर्वजगत्स्थितिहेतुत्वंप्रसिद्धं'देवान्भावयतानेनतेदेवाभावयंतुवः'इतिभगवद्गीतादिषु ५९० अयंसत्यादिपादचतुष्टयवान्धर्मःसर्वसाधारणत्वाद्वर्णाश्रमावस्थादिसापेक्षत्वाभावेनाभ्यर्हितत्वाच्चादौनिर्दिष्टइत्याह चतुष्पादिति । 'पंचवर्षोध्रुवःसिद्धःकपोतोदानतस्तथा । निदर्शनंतौधर्मस्यनैरपेक्ष्यंपरीक्षितुं' ५९१ प्रजातिपदोक्तस्यसप्तमस्यापकृष्टत्वद्योतकंसापेक्षत्वंदर्शयति गृहस्थत्वमितिद्वाभ्यां । प्रजाजनिर्हिगृहस्थत्वंयौवनावस्थांचापेक्ष्यैवमनुजादीनांभवतितद्व्यतिरेकेप्रजापतेरपिप्रजोत्पादनेऽशक्तत्वादितिद्वयोरर्थः ५९२ । ५९३ संततेःफलंसांसारिकंसुखमेवेत्याह प्रजावानितिद्वाभ्यां स्पष्टं ५९४ संसारस्येति । तस्मात्कीर्त्यादिहेतुत्वदर्शनात्प्रजाःसंततयःसंसारसंबंधिनिसुखएवकारणतयोक्ताः मोक्षरूपेनिष्का

यज्ञाःसंपूर्णतांयांतिदानतोदक्षिणात्मनः ॥ दातारंसर्वभूतानिश्रयंतिपितरंयथा ५८९ दानतोवैरिणोपिस्युर्मित्राण्येवनसंशयः ॥ दानेनहिनिहंत्येतानुपायज्ञोनरोभुवि ॥ दानेसर्वमिदंविश्वंप्रतितिष्ठतिसर्वदा ५९० चतुष्पादेषधर्मःस्यात्सर्वेषामिहदेहिनाम् ॥ नवर्णमाश्रमंवापिनवयोवाप्यपेक्षते ५९१ गृहस्थत्वंवयश्चापिह्यपेक्ष्यैवप्रजाजनिः ॥ मनुजानांभवत्यत्रसर्वेषामपिदेहिनाम् ५९२ कःकुमारःपुमानत्रजाययावाविवर्जितः ॥ उत्पादयेत्प्रजाधीमानुत्सुकोपिप्रजापतिः ५९३ प्रजावान्कीर्तिमाप्नोतिसुखंवैरिजयंतथा ॥ पितॄणामनृणोभूत्वास्वर्गंयातिमृतःपुनः ५९४ संसारस्यसुखेतस्मात्प्रजाःकारणमीरिताः ॥ मोक्षाख्येप्रायशोविघ्नःकथितःपंडितैरयम् ५९५ प्रजानांमोक्षहेतुत्वंकेचिदिच्छंतिबालिशाः ॥ उपपत्तिमिमांतत्रप्राहुःकामज्वरातुराः ५९६ आरुरुक्षुर्यथालोकेप्रासादंसप्तभूमिकम् ॥ निःश्रेणिकंसमासाद्यशनैःप्रासादमस्तकम् ॥ व्रजेत्सोपानपंक्तौचपदंन्यस्यक्रमात्पुमान् ५९७ एवंधर्मस्तथाचार्थःकामोमोक्षश्चकीर्तितः ॥ चतुर्विधःपुमर्थोयमुपर्युपरिसंस्थितः ५९८ धर्मादर्थमवाप्नोतिपुमाँल्लोकद्वयेपिहि ॥ अर्थतश्चतथाकामंकामान्मोक्षंचधीधनः ५९९ दरिद्रंदुःखसंपन्नंपापिनंप्रवदंत्यतः ॥ श्रीमंतंसुखसंपन्नंपुण्यात्मानंचलौकिकाः ६०० धर्मोत्रद्विविधःप्रोक्तोदृष्टादृष्टफलोन्वभिः ॥ यदिदृष्टफलोनायंकल्प्योऽदृष्टफलस्तदा ६०१ पापिनामपिसोयंस्याज्जन्मांतरकृतोयतः ॥ दृश्यंतेसुखिनःकार्यंनविनाकारणंभवेत् ६०२

मतालभ्येसुखेत्वयंप्रजारूपोविघ्नउक्तः रागोत्पादकत्वात् पृथुसदृशोंसंततिमभिप्रेत्याह प्रायशइत्यादि ५९५ अत्ररागिणांमतंपरिहारायानुवदति प्रजानामितित्रयस्त्रिंशताश्लोकैः । केचिद्बालिशाअतत्त्वविदःकामज्वरवेगेनप्रलपंतःसंततेर्मोक्षहेतुतामाहुस्तत्रमोक्षहेतुत्वेइमांवक्ष्यमाणांयुक्तिंचाहुरिति ५९६ तत्रविषयभोगेनकामंक्षपयित्वैवमोक्षइतिवक्तुंदृष्टांतउच्यते आरुरुक्षुरिति । यथोच्चप्रासादशिखरारोहणंसोपानद्वारैवसोपानारोहणमपिदंडालयतदवयवक्रमेणैवेत्यर्थः ५९७ एवंधर्मादिपुरुषार्थचतुष्टयमध्येउत्तरस्यप्राप्तिःपूर्वंपूर्वंप्राप्तिंविनानभवतीत्याहुः एवमिति ५९८ क्रममेवस्फुटयति धर्मादिति । अर्थभोगसाधनजातं ५९९ तत्रधर्मस्यफलमर्थएवेत्युच्यते दरिद्रमितिचतुर्भिः । अतोऽर्थाभावस्यधर्माभावप्रयुक्तत्वाल्लौकिकादरिद्रंपापिनंवदंतिश्रीमंतंपुण्यात्मानमिति ६०० ननुकेषांचित्श्रीमतामिहजन्मनिपुण्यानुष्ठानंनदृश्यतेतत्कथंतेषांपुण्यात्मतयाव्यवहारइतिचेत्कार्यद्वाराकारणानुमानादित्याह धर्मइति । धर्मोद्विविधः दृष्टफलकोऽदृष्टफलकश्च तत्राद्यऐहिकफलमुद्दिश्यविहितःकारीर्यादिरूपोद्वितीयोजन्मांतरभाविफलकस्तत्रप्रथमाभावेद्वितीयःपापपरेष्वपिसुखदर्शनादनुमेयः यतस्तेपापिनःसुखिनोजाताः नहिकार्यंविषयसुखंकारणंधर्मंविनासंभवतीतिद्वयोरर्थः २

पुण्यात्मनइति । ततोदुःखस्यपापफलत्वनिश्चयात्पुण्यात्मनइहजन्मनिपुण्यानुष्ठानपरस्यापिदुःखलिंगेनजन्मांतरीयंपापमनुमेयमितिफलितमाह सुखमिति । वैषयिकमितिशेषः ६०३ अथार्थ स्यविषयभोगएवफलमितिदर्शयति सुखंवैषयिकमित्यादिना । प्रजाःसंततीः गृहस्थत्ववादंगृहस्थत्वेनप्रसिद्धिं तस्यापिधर्मात्मनोपि स्फुटमन्यत् ६०४ । ६०५ अन्ननार्यादिकमिति । अन्नप्रभृ तिभोगसाधनंनिर्धनस्यविद्यमानमपियतःसुखदंनभवतिततोर्थःकामसुखनिदानमित्यर्थः ६०६ निर्धनस्यविषयसुखासंभवमेवस्फुटयति अर्थहीनमितित्रिभिः । सुताअपित्यजंतीति ६०७ निर्धन मिति । एतेवांधवामित्राद्याइतरेमानवाश्चअवजानंतिनाद्रियंते ६०८ कुलमिति । शववत्शवइव ६०९ व्यतिरेकमुक्त्वाऽन्वयमाह धनीति स्पष्टं ६१० तत्राप्यर्थस्यवैशेषिकंफलंस्त्रीसुखमेवेत्यनु वदतिअर्थतइति । ततोर्थादयंकामोनारीसंभोगात्मकोजायतइति ६११ किंचब्रह्मचर्यादेवमोक्षाधिकारीकश्चिन्नसंभवतिसर्वस्यजगतःकामव्याप्तत्वादित्यनुवदति जातइतित्रिभिः । अत्रसंसारेसावि

पुण्यात्मनस्तथैवैतत्पापंजन्मांतरस्थितम् ॥ ऊहनीयंयतोदुःखंनविनातेनसंभवेत् ॥ सुखंधर्मात्ततोनित्यंजायतेसर्वदेहिनाम् ६०३ सुखंवैषयिकंनार्थंविनाक स्यापिसंभवेत् ॥ धर्मात्मापिविनानारींस्त्रीसुखंनाधिगच्छति ६०४ नप्रजानगृहस्थत्ववादंलोकेपुकर्हिचित् ॥ अन्नंविनानतस्यापिक्षुधाशांतिंप्रयातिहि ६०५ अन्ननार्यादिकंसर्वंसुखदंविद्यतेनहि ॥ निर्धनस्यततोनित्यमर्थःकामस्यकारणम् ६०६ अर्थहीनंपतिंनारीत्यजेदपिपतिव्रता ॥ ॥ पितरंप्राणतःस्निग्धमर्थहीनं सुताअपि ६०७ निर्धनंसर्वएवैतेश्वसंतंपुरतःस्थितम् ॥ अवजानंतिमित्राद्यामानवाधनगर्विताः ६०८ कुलंशीलंतथाविद्यागुणानानाविधाअपि ॥ निर्धन स्यनकार्यायक्षमंतेशववत्स्थिताः ६०९ धनीभोगान्समाप्नोतिधनीस्वर्गंचगच्छति ॥ विपुलांचतथाकीर्तिंगुणान्नानाविधानपि ६१० अर्थतस्ततएवायंकामोभो गाभिधोनृणाम् ॥ जायतेत्रविशेषेणनारीसंभोगसंभवः ३११ जातःपुमानकामोयंकोपिनास्तिजगत्त्रये ॥ सुखेच्छाकामउद्दिष्टःकस्यसात्रनविद्यते ६१२ वृद्धो बालोयुवावापिपुमान्वाप्यथवापशुः ॥ स्त्रीवानपुंसकंवापिजंगमंस्थावरंतथा ६१३ सर्वैःप्रदृश्यतेनित्यंकामुकंनिखिलंजगत् ॥ ततोविरक्तिःकस्यस्यात्सुखभोगं विनात्रनु ६१४ रागाभावोविरक्तिःस्यान्नरागस्यजनिंविना ॥ उत्पन्नोत्रकथंरागस्तद्भोगमनवाप्यसः ॥ विनश्यतियथालोकेक्षुधानान्नंविनाक्वचित् ६१५ अपि रागोत्रमंजातोविषयावाप्तिवर्जितः ॥ जननीमिवसंरुध्यशिशुश्चित्तंव्यवस्थितः ६१३ तस्मिन्सतिनयात्येवचित्तेत्रविपर्यांतरम् ॥ मुमुक्षाकुतएवैषादूरापा स्ताभविष्यति ६१७

षयसुखेच्छाकस्यनास्तियतोवृद्धादिरूपस्यसर्वस्यजगतःकामुकत्वंसर्वानुभवसिद्धमिति फलितमाह ततइति । नुइतिवितर्के ६१२ । ६१३ । ६१४ वितर्कमेवाभिनयति रागाभावइति । रागस्या भावोध्वंसस्तद्रूपाविरक्तिःकिंरागोत्पत्तिंविनाभवतितदुत्पत्तौवा नाद्यः प्रतियोगिनोध्वंसकारणत्वेनप्रतियोगिजनिंविनाध्वंसासंभवात् नांत्यइत्याह उत्पन्नइत्यादिना । यथाउत्पन्नाक्षुधाअन्नला भेनैवशाम्यतितथारागोपिविषयभोगेनैवेत्यर्थः तथाचब्रह्मचारिणांविरक्त्यसंभवान्मोक्षोद्यमोनयुक्तइतिभावः ६१५ ननुजातमपिविषयरागंविषयदोषदर्शनेननिरुद्ध्यविरक्तिर्मुमुक्षाचभविष्यती त्याशंक्यनैवंसंभवतीत्याह अपिरागइति । उक्तोरागोयावद्विषयंनलभतेतावद्गर्भांजनन्युदरमिवचित्तंनिरुद्ध्यावतिष्ठते तस्मिन्नेकविषयरागेचित्तमवेसतिगर्भांतरमिवविषयांतरंनप्रवेशाद्रं तथाचालो किकंमोक्षइच्छासुतरांदुर्लभेतिद्वयोरर्थः ६१६ । १६७

अत्रदृष्टांतमाह मदेति । मदेनभिन्नःकरटोगंडस्थलंयस्यसतथाषष्टिहायनोयुवाचगजोयथाऽरण्यान्यामहारण्यंयस्यंसूक्ष्मेपुदुर्लभेपुमार्गेषुविचरणपरस्तामरण्यानींद्वारदेशेनिरुद्धचतिष्ठन्सन्प्रवेशंपरस्यप्रतिवध्नातीत्यर्थः ६१८ दार्ष्टांतिकेयोजयति एवमिति । एवंविषयविशेषरागरूपोगजश्चित्तरूपेवनेस्थितःकथंमोक्षविषयकरागस्यावकाशदःस्यादित्यर्थः ६१९ उक्तेर्थेकैमुत्यंदर्शयन्लौकिकविषयरागस्यलौकिकविषयांतररागंप्रत्यपिप्रतिबंधकत्वंरावणादौदृष्टमित्याह अपिसीतेतिचतुर्भिः । सीतायांसमाविद्धःप्रयोजितोरागोयेनसतथाभूतोरावणस्त्रिलोकीवर्तिपदार्थांतरंनकामितवानितिद्वयोःसंबंधः ६२० । ६२१ अत्रदमयंत्यप्युदाहरणंययास्वयंवरागताइंद्रादयोनलंविहायनवृताइत्याह नलेति ६२२ एकविषयरागेणविषयांतरविमुखाःशतशोऽतीतादिकालेपुप्रसिद्धाइत्याह एवमन्येपीति । नगमिष्यंतिनभजिष्यंते ६२३ यदिकश्चित्प्रथमंमोक्षएवरागवान्स्यात्ससंन्यासाधिकारीस्यादितिचेन्न न्यायविरोधेनासंबंधादित्याह अत्रापीति । येषामत्रलौकिकेसुखांतरेसुखविशेषेसक्तिर्नास्तितेषांप्रथममेवालौकिकेमोक्षसंज्ञेसुखेसाकथंस्यादित्यर्थः योहिलौकिकंसुखंसम्यग्जानीयात्सस्वर्गसुखमिवमोक्षसुखमपिकामयेतेतिसंभवति इच्छायाइष्टतावच्छेदकप्रकारकज्ञानजन्यत्वात्

मदप्रभिन्नकरटःकुंजरःषष्टिहायनः ॥ अरण्यान्यायथैवैषसूक्ष्ममार्गप्रचारकः ॥ निरुध्यद्वारतस्तिष्ठन्प्रवेशंनप्रयच्छति ६१८ एवंविषयसंभोगरागश्चित्तवनेस्थितः ॥ कथंरागांतरस्यायंप्रवेशंदातुमर्हति ६१९ अपिसीतासमाविद्धरागोयोषिद्गणस्थितः ॥ मंदोदरीपतिःश्रीमान्रावणोलोकरावणः ६२० त्रैलोक्यैश्वर्यमतुलंबंधुमंडलमंडितम् ॥ चकमेनकथंनामपुमानन्यःसुखांतरम् ६२१ नलसंलग्नहृदयादमयंतीप्रसंगतः ॥ शक्रादीनपिसंप्राप्तान्नववेपुरतःस्थितान् ६२२ एवमन्येपिबहवोरागांधधिषणाजनाः ॥ नगमिष्यंतिनोयांतिनयाताविषयांतरम् ६२३ अत्रापिविद्यतेनैवशक्तिर्येषांसुखांतरे ॥ अलौकिकेकथंमोक्षेशक्तिस्तेषांभविष्यति ६२४ ततोमोक्षंपुमान्नैवगच्छेत्कामान्हृदिस्थितान् ॥ अनवाप्यापिधीमान्योमंदधीःकिंपुनर्जनः ६२५ अनधीत्यद्विजोवेदानुत्पाद्यतथासुतान् ॥ अनिष्ट्वाचैवयज्ञैश्चमोक्षमिच्छन्व्रजत्यधः ६२६ एवंमनुरपिप्राहप्रथमोयःशरीरिणाम् ॥ इदंरागस्यमाहात्म्यंजानानःसर्ववित्पुमान् ६२७ ततःसर्वोपभोगेनक्षीणेरागेचसर्वतः ॥ विरक्तोमोक्षमार्गायमनःकुर्वीतपंडितः ६२८ इत्यादिबहुशोमंदाःसर्वदाभोगलालसाः ॥ जल्पंतितद्वचःकोत्रगृह्णीयात्पंडितःपुमान् ६२९ सुखेपुण्यस्यहेतुत्वंदुःखेपापस्यचेरितम् ॥ एतत्तथेतिकोनामनेतीदंभाषतेपुमान् ६३० अर्थस्यसुखहेतुत्वंयदुक्तंतद्वृथैवहि ॥ अर्थहीनाश्चसुखिनोदृश्यंतेबहवोयतः ॥ अर्थिनोदुःखिनश्चैवलोकेशतसहस्रशः ६३१ अर्थंविनापिभोगाप्तिर्मनुष्यादेर्मयेरिता ॥ याज्ञवल्क्यस्यमैत्रेय्याःसंवादेपूर्वमेवते ६३२

नान्यथेतिभावः ६२४ तस्माद्बुद्धिमानपिसर्वान्कामान्पूरयित्वैवमोक्षाययतेतेत्याह ततइति । धीमानपिहृदिस्थान्कामान्अनवाप्यापूरयित्वामोक्षंमोक्षाश्रमंसंन्यासंगच्छेदित्यर्थः ६२५ अत्रमनुवाक्यंपठति अनधीत्येति । स्पष्टम् ६२६ एवमिति । यःसवैशरीरीप्रथमइत्यादिवाक्योक्तप्रजापतिरूपःसर्वज्ञश्चप्रसिद्धःसमनुरिमंवर्णितंरागप्रभावंजानन्नूर्वंश्लोकंप्राहेत्यर्थः ६२७ फलितमाह ततइति ६२८ एतन्मंदमतंपरिहरति इत्यादीत्यादिनात्रैवर्णिकानधीतांस्तानित्यतःपूर्वतनेनग्रंथेन । एवंविधंवाक्यजातंयेमंदावदंतितेपंडितैरुपेक्ष्याएव तद्वाक्येसंमतिकरणंविद्वत्सुनसंभाव्यतेइत्यर्थः ६२९ तत्रपत्तैःसुखदुःखेप्रतिपुण्यपापयोर्हेतुत्वमुक्तंतत्रनेतिनकुर्मःकिंतुतदंशमंगीकुर्मइत्याह सुखइति ६३० यत्त्वर्थस्यसुखहेतुत्वमुक्तंतद्व्यभिचाराद्वैपरीत्याच्चायुक्तमित्याह अर्थस्येति ६३१ अर्थंविनाभोगाप्त्युदाहरणंसप्तमाध्यायेअपिवित्तविहीनायेभ्रमराइत्यादिनाप्रपंचितमित्याह अर्थंविनेति ६३२

अर्थानामर्जनेदुःखमित्यादिजानतांसुधियांमतेऽर्थादुःखदाएवयेतुपंडितानांरूपमाकारंधारयंतितेषांसुखदाइत्यपितएवजानंत्वित्याह प्रसिद्धाइति ६३३ यच्चदरिद्रंवध्वादयस्त्यजंतीत्युक्तंतदपि शिष्टवृत्तापरिज्ञानविलसितमित्याह वध्वादयइति ६३४ यच्चसुखेच्छाशालित्वेनसर्वजगतःकामुकत्वमुक्तंतदप्ययुक्तम् कामुकत्वस्यजिव्होपस्थपरेष्वेवलोकेप्रसिद्धत्वादित्याह सुखेच्छेति । तथैवसर्वभूतसंबंधिन्येवसासुखेच्छायत्किंचित्तुच्छमितिद्वयोःसंबंधः ६३५ । ६३६ रागइति । यच्चोक्तमेकस्मिन्विषयेजातोरागइतरविषयगोचरंरागंनिरुंध्यात्प्रतिबध्नीयादित्येतदस्माकंप्रति कूलंनभवतिमोक्षविषयकरागेणेतररागप्रतिबंधस्यास्मदिष्टत्वादित्यर्थः ६३७ यच्चानधीत्येत्यादिकंमनुवाक्यमुपन्यस्तंतदपिनहिनिंदांनिंदितुंप्रवर्ततेऽपितुविधेयंस्तोतुमितिन्यायेनाज्ञाप्रतिकर्मप्रशंसापरमित्येवयुक्तमित्याह मनोरिति । अमुनावादिनायामनोरुक्तिःसमुक्ताउपन्यस्तासामोक्षनिंदापरानभवतीत्येवांगीकारणंशोभनंयुक्तमित्यर्थः ६३८ तदनुकूलंविपक्षबाधकंतर्कमभिनयति मोक्षइति । यदिमोक्षार्थाप्रवृत्तिर्मनोरनिष्टाभविष्यत्तदामनुस्मृतिषष्ठाध्यायेमोक्षधर्मंसनावदिष्यत् नचतस्मिन्भ्रमादयोदोषाःसंभावनीयाः यद्वैकिंचनमनुरवदत्तद्भेषजमित्यादिश्रुतिषुप्रसिद्धसार्वज्ञ्यादिमाहात्म्यस्यतदयोगादितिभावार्थः ६३९ सत्यंमोक्षोमनोरिष्टःपरंत्वेभ्योवेदाध्ययनादिभ्योनंतरत्वेनैवेतिकल्पनापिनयुक्तेत्याह आनंतर्यमिति । युक्त्यानुसारेणमनुवाक्येविचारिते

प्रसिद्धाविदुषांयस्मादर्थादुःखस्यहेतवः ॥ तेभ्यःकथंसुखंनामभवेत्पंडितरूपिणाम् ३३ वध्वादयोदरिद्रस्यविमुखाःस्युरितीरितम् ॥ यत्तत्क्वाचित्कमेतत्स्याद्यतःसर्वत्रनैवतत् ३४ सुखेच्छासर्वभूतानामीरितायातथैवसा ॥ तावताकामुकंकेनजगदेतद्भविष्यति ३५ कामुकोविषयासक्तःपुमान्लोकेसमीरितः ॥ नसुखेच्छुस्ततोन्योयस्ततोयत्किंचिदीरितम् ३६ रागएकत्रसंजातोनिरुंध्याद्विषयांतरे ॥ रागमस्माकमेतच्चनानिष्टंमोक्षरागिणाम् ३७ मनोरुक्तिःसमुक्तायामोक्षनिंदापरामुना ॥ नसामोक्षस्यनिंदायांप्रवृत्तेतिहशोभनम् ३८ मोक्षोमनोरनिष्टश्चेत्षष्ठाध्यायेकथंहिसः ॥ मोक्षधर्मंवदेत्प्राज्ञोमनुःसर्वार्थदर्शकः ३९ आनंतर्यंचतस्यैभ्योनेष्टंयुक्त्यावलोकिते ॥ अनेकशतशाखानांभेदैर्नानाविधानिमान् ॥ ब्रह्मायुरपिविद्वान्नःकोधीयीतजगत्त्रये ६४० पुत्राणांचबहुत्वंस्यात्त्रिपुर्वेकंपरंतः ॥ अनंतेपुद्वयंचैतत्शक्यंकर्तुंनमानवैः ४१ एवंयज्ञेपुविज्ञेयाबहुसंख्यासदैवसा ॥ अशक्यंविदधच्छास्त्रमशास्त्रंतत्प्रजायते ४२ त्रिपुत्राश्चत्रियज्ञाश्चस्वशाखाध्यायिनोपिच ॥ मोक्षस्येच्छामकुर्वाणादृश्यंतेबहवोद्विजाः ४३

सतितस्यमोक्षोयमस्यएभ्योवेदाध्ययनादिभ्यआनंतर्यमिष्टमितिनसिद्ध्यतीत्यर्थः तत्रहेतुतयाबहुवेदाध्ययनादीनामशक्यत्वमाह अनेकेत्यादिना । ब्रह्मबृहत्आयुर्यस्यतथाविधोपिकस्त्रिलोकीवासीनोधिकारिणामन्यतमोनानाशाखाभिन्नान्बहून्वेदानध्येतुंशक्तोभवेदित्यर्थः ६४० तथापुत्रेपुबहुत्वमप्यशक्यंकर्तुमित्याह पुत्राणामिति । कपिंजलाधिकरणेत्रित्वरूपंबहुत्वंप्रथमोपस्थितपरित्यागानर्हत्वादियुक्तिभिःसिद्धांततयोक्तम् चतुष्ट्वादिभेदैरनंतेपुबहुत्वेष्वन्यतमरूपंतत्पूर्वपक्षतयोक्तंतद्वदत्रपुत्राणांबहुत्वंत्रिपुपर्यवसन्नंस्यादथवाततस्त्रित्वात्परंवर्तमानेपुचतुष्ट्वादिष्वनंतेपुभेदेपुएकमन्यतमरूपंस्यादेतद्बहुत्वप्रकारद्वयमपिदृष्टादृष्टसामग्र्यधीनत्वान्मानवैःस्वातंत्र्येणकर्तुमशक्यमित्यर्थः ६४१ एवमिति । तथायज्ञैरितियज्ञगताबहुत्वसंख्यापिसात्रित्वरूपाचतुष्ट्वादिरूपावाएवंमानवैःस्वातंत्र्येणकर्तुमशक्यैवसदाप्रसिद्धा एतादृशाशक्यार्थविधानेशास्त्रस्याननुष्ठापकत्वलक्षणाप्रामाण्यापत्तिरित्यर्थःतदुक्तं'प्रवृत्तिर्वानिवृत्तिर्वानित्येनकृतकेनवा । पुंसांयेनोपादिश्येततच्छास्त्रमभिधीयते ' इत्यादि ४२ ननुबहुवेदाध्ययनादिष्वपूर्वविधिर्मनोर्नाभिप्रेतःकिंतुवेदपदेनस्वशाखातदवयवाभिप्रायेणबहुवचनंचाभिप्रेत्यवेदाध्ययनादीनामन्वयव्यतिरेकसिद्धकारणतामनुनानूद्यतेइत्याशंक्यान्वयव्यभिचारेणकारणत्वासंभवादनुवादोनयुक्तइत्याह त्रिपुत्राश्चेति । यदित्रिपुत्रत्वादीनांमोक्षेच्छांप्रतिकारणत्वंस्यात्तर्हित्रिपुत्रत्वादिशालिनोमोक्षपराएवदृश्येरन्नतुतथादृश्यंतेकिंतुबहवःसंसारसक्तामोक्षविमुखाएवदृश्यंतइत्यर्थः ६४३

961

अस्तुतर्हिनियमविधिःपरिसंख्याविधिर्वामनुनाविवक्षितइत्यपिनशंक्यंमोक्षसौंदर्यज्ञानोत्थितायामोक्षेच्छायाव्यावर्त्तयितुमशक्यत्वादित्याह नियमइति । नियमपरिसंख्यात्मकमेतद्विधेःप्रकारद्वयमपिनसंभवतितयोःफलस्यमोक्षेच्छाव्यावर्तनस्याशक्यत्वात् यतइहमोक्षेसौंदर्यज्ञानेनभवंतींजायमानामिच्छांकोवारयेदित्यर्थः ६४४ तत्रनियमविधिमभिनीयतद्वैयर्थ्यमाह एतत्त्रयमिति । एतद्वेदाध्ययनत्रिपुत्रत्वत्रियज्ञत्वात्मकंत्रयंकृत्वैवमोक्षमिच्छेत् एतस्मात्पूर्वंप्रसक्तांमोक्षेच्छांनिरुद्ध्यएतदेवकुर्यादितियावत् एवमाकारोनियमस्तदोपपद्येतयदीच्छायांपुरुषस्यस्वातंत्र्यंस्यात् साइच्छात्वशक्यास्वातंत्र्यानर्हाभवतिततोयंनियमोव्यर्थइत्यर्थः ६४५ परिसंख्याविधिमभिनीयतत्रदूषणंस्फुटयति एतत्त्रयंचेतित्रिभिः । द्वयोर्युगपत्प्रसक्तावेकव्यावृत्तिपरोविधिःपरिसंख्येत्युच्यते तथाचात्रएतदुक्तरूपंत्रयंएकाकोटिःमोक्षेच्छाचद्वितीयाकोटिःएवंविधस्वरूपयुक्तंकोटिद्वयंयदापुरुषंप्राप्नोतितदाएतत्त्रयमेवकुर्यादित्येवंवाक्यविपरिणामेनमोक्षेच्छायाःपरित्यागोवारणंक्रियतेतदापरिसंख्याभवतीत्यर्थः ६४६ एवमिति । एवंपरिसंख्याविधित्वेनमोक्षेच्छावारणेकृतेसतिमोक्षोनुपादेयोऽग्राह्यःपुंप्रयत्नानुद्देश्यइतियावत् तथाविधःस्यात् यत्रपक्षेदूषणंसौंदर्यज्ञानेइच्छायानिरोद्धुमशक्यत्वेनव्याघातरूपंपूर्वमुक्तमेवतथेदंपरिसंख्याविधिपरत्वंक्त्वाप्रत्ययंप्रयुंजानस्यमनोरनिष्टमपिभवतीत्यर्थः ६४७ मनोरनिष्टत्वमेवस्फुटयति क्त्वाप्रत्ययस्येति । यदिमोक्षेच्छाव्यावर्त्यास्यात्तदावेदाध्ययनादिंकृत्वामोक्षमिच्छेदित्येवंततोवेदाध्ययनादिभ्यःपरत्वंकथमुच्येत तथाचक्त्वाप्रत्ययस्यवैयर्थ्यंकुर्वतीपरिसंख्याऽयुक्तेत्यर्थः ६४८ तस्मादिदंमनुवाक्यंकर्मप्रशंसामात्रपरत्वादर्थ

नियम परिसंख्यावाद्वयमेतन्नसंभवेत् ॥ अशक्यत्वादिहेच्छांकोभवंतींविनिवारयेत् ६४४ एतत्त्रयंपुरामर्त्यःकृत्वैवेच्छेन्नचान्यथा ॥ नियमोममशक्यत्वेर्थेव्यर्थएवप्रजायते ६४५ एतत्त्रयंचमोक्षेच्छास्वरूपेणद्वयंयदा ॥ तदेच्छायाःपरित्यागात्परिसंख्याप्रसज्जते ६४६ एवंमोक्षोनुपादेयःसर्वदैवभविष्यति ॥ तत्रोक्तंदूषणंपूर्वमनिष्टंचमनोरपि ६४७ क्त्वाप्रत्ययस्यवैयर्थ्यंपरिसंख्याकरोतिहि ॥ व्यावर्त्यायाःकथंतुस्यादिच्छायाःपरताततः ६४८ इच्छन्पततिचैवैतत्प्रत्यक्षंनैवदृश्यते ॥ अर्थवादस्ततोह्येषविध्यर्थासंभवाद्भवेत् ७४९ अनिच्छानविधेयात्रमोक्षस्याभावरूपतः ॥ अभावोनहिकेनापिकर्तुंशक्यःपुरास्थितः ६५० ब्रह्महत्यादिवन्नायंमोक्षःशास्त्रैर्निषिद्ध्यते ॥ ध्वंसोपिचततोनायमिच्छायाःप्रविधीयते ६५१

वादरूपमित्याह इच्छन्निति । योवेदाध्ययनादिभ्य पूर्वंमोक्षमिच्छतिसपततिअधोगच्छतिइत्येतदनेनवाक्येनोक्तंनैवभवतिबाधितमितियावत् यतःप्रत्यक्षंश्रुतिवाक्यं'यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेत्' इत्यादिकं'तद्धैतत्पूर्वेविद्वांसआहुःकिमर्थावयमध्येष्यामहे'इत्यादिकंचदृश्यतेइतिपूर्वार्द्धेयोजना ततोबाधितार्थत्वेनविधियोग्यस्यार्थस्यासंभवादिदंवाक्यमर्थवादमात्रंभवेदिति ६४९ नन्वत्रनिंदार्थवादेनेच्छानिषेधःसूच्यतेनिषेधवाक्येपुतुप्राभाकरैर्नकलंजंभक्षयेदित्यस्यकलंजभक्षणाभावविषयकंकार्यमितिबोधमभिलपद्भिरभावोविधेयतयांगीक्रियतेतथात्रकिंनस्यादित्याशंकांवारयति अनिच्छेति । मोक्षस्यानिच्छाइच्छायाअभावोनविधेयोनविधियोग्यः कुतःअभावरूपतःभावोधात्वर्थस्तद्भिन्नत्वात् धात्वर्थएवलिङर्थविधिसंबंधयोग्यइतिभावः यदितुदध्नाजुहोतीत्यादौधात्वर्थसंबद्धप्रागभावात्यंताभावान्योन्याभावानविधेयाःपूर्वमेवसिद्धत्वादित्याह अभावोनहीति ६५० ननुक्षेमसाधारणकारणतामभ्युपेत्यमोक्षेच्छाप्रागभावःकर्तव्यःसंरक्ष्यइतियावत् इत्येवंबोधोभविष्यतीतिचेत्स्यादेवंयदिब्रह्महत्यादिवन्मोक्षेच्छानिषिद्धास्यान्नतुतथादृश्यतेप्रत्युतक्षणमेकंक्रतुशांतस्येत्यादिश्रुतिभिर्मोक्षेच्छाप्रशस्यतेइत्याह ब्रह्मेति । ततइच्छायाःक्षणभंगुरत्वेनस्वतःसिद्धत्वादेवतदिच्छाध्वंसोपिनविधेयइतिद्वितीयदलार्थः ६५१

किंचमोक्षेच्छाध्वंसस्यविधानंव्यर्थंमोक्षसौंदर्यस्यलोकवेदप्रसिद्धस्यज्ञानेनपुनरिच्छोत्थानस्यावश्यकत्वादित्याह विहितोपीति । ध्वंसइत्यनुषंगः ६५२ किमर्थंतर्हिमनुनातदिच्छानिन्द्यतइतिचेद ज्ञान्प्रतिकर्मविधातुमित्याह कर्मणामिति । ततइच्छाभावस्यविध्यनर्हत्वात्संसारसक्तानांकर्माधिकारितामालोच्यएषामोक्षेच्छानिंदाद्वारिकाकर्मस्तुतिरेवमनुनाक्रियतइत्यर्थः ६५३ किंचमोक्षे च्छानिषेधेमनोस्तात्पर्यंनभवतीत्येतन्मनुवाक्यादेवायातीत्याह सर्वेतिद्वाभ्यां । यआत्मयाजीअंतःकरणशुद्ध्यर्थंसत्कर्मकारीवेदांतवाक्यैरात्मनःकारणतयासर्वत्रानुगमंसर्वभूतानामात्मनिकल्पि तत्वंचसंपश्यतिसस्वाराज्यंगच्छतीत्यर्थंकवाक्यंद्वादशाध्यायेकथयंस्तत्रअधिकारिणंमोक्षकामंकथंमोक्षेच्छातोवारयेदितिद्वयोरर्थः ६५४ । ६५५ फलितमाह ततइति । नहिनिंदेतिन्यायेनयद्वचःकर्म स्तावकंमनोरभिप्रेतंतदेवमोक्षनिषेधायोपन्यसद्भिर्बालिशत्वंस्वस्यविष्कृतंमनोरभिप्रायाज्ञानादित्यर्थः ६५६ यद्यतेरुक्तंसर्वविषयभोगेनैवमोक्षार्होभवतीतितद्दूषयति सर्वेत्यादिना । कामाग्निर्जृंभि तंकामाग्नितापकृतधातुवैषम्यप्रयुक्तप्रलापरूपमित्यर्थः ६५७ तत्रसहस्रशोवेदांतानांशास्त्राणांचमोक्षपरस्याप्रामाण्यापत्तिःस्यात्तदर्थस्यमुक्तिरूपस्यासंभवादित्याह सर्वेषामिति । इहसर्वविषयेषु

विहितोपिभवेद्व्यर्थःपुनरिच्छाजनोनृणाम् ॥ निसर्गसुंदरेमोक्षेप्रसिद्धेलोकवेदयोः ६५२ कर्मणांस्तुतिरेवैषाक्रियतेमनुनाततः ॥ संसाररागिणांवीक्ष्यकर्मणोत्रा धिकारिताम् ६५३ सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ पश्यन्नात्मतयाजीवःस्वाराज्यमधिगच्छति ६५४ एवंवदन्मनुर्धीमान्वेदांतार्थविशारदः ॥ सर्व ज्ञोमोक्षकामंतंकथमेषनिवारयेत् ६५५ ततोमनोरभिप्रायमज्ञात्वाबालिशैरिह ॥ उदाहृतंवचःकर्मस्तावकंन्यायसंयुतम् ६५६ सर्वभोगोपलाभेनवैराग्यंसमुपा गतः ॥ मुक्तिमेतीतियत्प्रोक्तंतत्तुकामाग्निजृंभितम् ६५७ सर्वेषांविषयाणांचेल्लाभान्मुक्तिर्नृणामिह ॥ विरक्त्याजायतेतेनभवेन्मुक्तेरसंभवः ६५८ अनंतभेदसं भिन्नाजीवानांयोनयःस्मृताः ॥ तत्रापिशतधाभेदोवर्ततेवांतरस्त्विह ६५९ एकैकस्याःशरीरस्यव्यक्तेःसंतिसहस्रशः ॥ विषयाःसंख्ययाशून्यास्तान्कथंसमुपाव्र जेत् ६६० अपिमोक्षंयियासुःसन्पुमान्नरकमाव्रजेत् ॥ नरकेपियतःसंतिविषयाबहुभेदिनः ६६१ अपिस्वर्गादिसंस्थानाविषयादुर्लभाहिये ॥ सर्वेतेकेनलभ्याः स्युर्यज्ञानामयुतैरपि ६६२ हिरण्यगर्भसंप्राप्तौभोगःकोपिनशिष्यते ॥ यस्मादस्मान्नकोप्यन्योभोग्योर्थोनेनदृश्यते ६६३ हिरण्यगर्भसंप्राप्तिर्दुर्लभाप्रथमंत्वि ह ॥ साधनैर्विविधैःसत्यांचास्यांनास्तिप्रयोजनम् ६६४

विरक्त्यातेनोक्तार्थोगीकारेणमुक्तेरसंभवःस्यादिति ६५८ असंभवमेवस्फुटयति अनंतेत्यादिना । जंतूनांयोनयस्तावदनंतास्तासांयोनीनांप्रत्येकंव्यक्तयःसुतरामनंताःप्रत्येकंव्यक्तीनामपिरुचिभेदे नविषयाःसुतमामनंतास्तेषांसर्वेषांमानुपदेलाभोऽसंभवीतिद्वयोरर्थः ६५९ । ६६० किंचयथाकंटकभक्षणास्वादउष्ट्रजातावेवलभ्यस्तथासर्वविषयलाभार्थिनारकयोनिस्वीकारापत्तिःसर्वलोकभ्रम णापत्तिश्चस्यादित्याह अपिमोक्षमिति । स्पष्टंद्वयं ६६१ । ६६२ ननुहिरण्यगर्भलोकप्राप्तिसंपादनेनसर्वविषयभोगंसंपादयिष्यामइतिशंकने हिरण्येति । यतोऽस्मादेनंहिरण्यगर्भभवंप्राप्यकोपि भोग्यःपदार्थोऽनेनाधिकारिणास्वस्मादन्योनदृश्यतेइत्युत्तरार्द्धार्थः ६६३ एतांशंकांदोषद्वयेनपरिहरति हिरण्यगर्भसंप्राप्तिर्दुर्लभेति । संभावितबहुविघ्नकत्वेनदुर्लभत्वंब्रह्मलोकपतीक्षयाऐहिकसुकरमो क्षयत्नपरित्यागेनोपदासत्वमेकोदोषः ब्रह्मलोकप्राप्तानांमोक्षस्यनांतरीयकत्वेनमोक्षशास्त्रस्यतदधिकारिकत्ववर्णनेननिष्प्रयोजनत्वलक्षणाप्रामाण्यापादनंद्वितीयोदोषइतिभावः ६६४

किंचभोगेनकामोपशमंयेप्रतिपादयंतितेइतिहासादिविद्भिरुपहास्याइतिसूचयन्नितिहासादिवाक्यानुसारेणभोगेनकामोपशमाभावमाह नचकामइतित्रिभिः । निगदव्याख्यातंत्रयम् ६६५ । ६६६ ६६७ ततइति । यतोभोगाभ्यासेनकामोवर्द्धतेततोभोगोविरागस्यहेतुर्नभवतिकिंतुरागस्यैवेति ६६८ फलितमाह ततोर्थतइति । एवंसतियत्कामुकैरित्युक्तं इतिकिं अर्थस्यफलंभोगस्तस्यफलंवैराग्यद्वारामोक्षइति तत्स्वप्रसिद्ध्यास्वकीयव्यामोहानुसार्येवोक्तंनतुप्रमाणानुसारीत्यर्थः ६६९ कस्तर्हिरागोपशमोपायइत्याकांक्षायांपूर्वंप्रपंचितंदोषदर्शनमेवेत्याह उपायस्त्वेकइति ६७० यद्यपि विषयदोषदर्शनंप्रथमाध्यायेचतुर्थाध्यायेचप्रपंचितंतथापिसुबोधायपुनरुच्यतइत्याह दोषेति ६७१ विषयइति । सर्वगःसर्वलोकेषुभवःसर्वःसमस्तविधोविषयःअनात्मानिस्तत्त्वोनश्वरोविनाशीदुःखोदर्कउत्तरकालेदुःखरूपेणपरिणामीपराधीनश्चभवतीत्यर्थः ६७२ सर्वपदद्वयार्थमेवस्फुटयति नरकइति । नरकादौदारादिप्रयुक्तोविषयभोगःसमइत्यभिमानमात्रेणभेदः ६७३ तदर्थंशरीरसाम्य



नचकामस्तुसंभोगाद्विनश्यतिकदाचन ॥ किंतुसंभोगतोभूयःपूर्वस्मादधिकोभवेत् ६६५ नजातुकामःकामानामुपभोगेनशाम्यति ॥ हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते ६६६ यत्पृथिव्यांव्रीहियवंयच्चास्तिवसुकिंचन ॥ एकस्यापिनपर्याप्तंतृष्येपुंसोत्रकामिनः ६६७ ततोविषयसंभोगोनविरागस्यकारणम् ॥ किंतुरागस्यसततंसर्वेषामिहदेहिनाम् ६६८ ततोर्थतोभवेत्कामःकामान्मोक्षइतीरितम् ॥ कामुकैरर्थलुब्धैश्चस्वप्रसिद्ध्यैवसर्वथा ६६९ उपायस्त्वेकएवात्रशांत्यैरागस्यविद्यते ॥ सर्वेषांदेहिनांतस्माद्विषयेदोषदर्शनम् ६७० दोषदृष्टिश्चबहुधावर्णितातेपुरामया ॥ ऐतरेयादिविज्ञानेसंवादेप्यधिकारिणाम् ॥ संक्षेपतस्त्विमांभूयःशृणुवक्ष्यामितेधुना ६७१ विषयःसर्वएवायमनात्मानश्वरस्तथा ॥ दुःखोदर्कःपारतंत्र्यग्रस्तस्तिष्ठतिसर्वगः ६७२ नरकेब्रह्मलोकेवाशुनिवापरमेष्ठिनि ॥ समोदारादिसंभूतोविनाहंतांमनोगतां ६७३ पंचभूतात्मकोयद्वद्भूतावासःशुनोभुवि ॥ ब्रह्मलोकेपितद्वत्सब्रह्मणोव्यक्तजन्मनः ६७४ जन्ममृत्यूशुनोयद्वत्तद्वत्पुंसःपरस्यच ॥ सशरीरोयथादुःखीश्वातथाप्रथमःपुमान् ७५ तस्मादित्यादिमनसाविचिंत्यबहुधातुगान् ॥ वांतवद्विविधान्भोगांस्त्यजंतिब्रह्मवादिनः ७६ ततःप्रजननंनैतदुपायोब्रह्मबोधने ॥ किंतुपुत्रादिलाभार्थंकामुकस्येहकीर्तितम् ६७७ सत्यादयोभवंत्यत्रब्रह्मज्ञानस्यसाधनम् ॥ यथाप्रजननंलोकेसुखपुत्रादिसाधनम् ६७८ अपिचैतत्स्वतःसिद्धमाहारादिसमंसदा ॥ पश्वादीनांकथंनामवदेत्कार्यंश्रुतिस्त्विदम् ६७९

माह पंचेति ६७४ सर्वानर्थसाम्यमाह जन्मेति । परप्रथमशब्दौहिरण्यगर्भपरौ ६७५ विषयाणांदोषमयत्वंशिष्टप्रवृत्त्यास्फुटयति तस्मादित्यादीति । तस्माद्विषयाणांनिःसारत्वादेवब्रह्मविदइत्यादिवर्णितविधंबहुदोषजातंमनसाविचिंत्यविविधान्भोगांस्त्यजंति कीदृशान्भोगान् धातुगान्धातवःपृथिव्यादिलोकास्तद्गतान् ‘धातूरसादौश्लेष्मादौभ्वादिग्रावविकारयोः । महाभूतेषुलोकेषुशब्दाद्यर्थेंद्रियेस्थनि’इतिहैमः ६७६ परमंफलितमाह ततःप्रजननमिति । ततोरागप्रचयहेतुत्वेनसंसारप्रयोजकत्वादेतत्प्रजननमपत्योत्पादनंयद्यपिब्रह्मबोधस्योपायोनभवतितथापिइहब्रह्मबोधनसाधनप्रयोःकामुकस्यसकामस्याभ्युदयार्थंकीर्तितमिति ६७७ अस्यप्रकरणउपयोगस्तुदृष्टांतसंगत्येतिदर्शयति सत्यादयइति । यथाप्रजननंलौकिकसुखसाधनंतथासत्यादयोब्रह्मबोधसाधनभूताइतिसंगतिरित्यर्थः ६७८ किंचास्मिन्प्रजननेशास्त्रेणलोकानांप्रवर्तनमयुक्तंरागतएवभोजनानिद्रादिवत्प्राप्तत्वादित्याह अपिचैतदिति । एवत्प्रजननं सिद्धंप्राप्तम् ६७९

ननुनिःश्रेयससाधनानांमध्येरागप्राप्तस्यकीर्तनमयुक्तमित्यस्वरसात्पक्षांतरमाह अथवेति । अथवाइदंप्रजननपदंकार्यंविधेयप्रतिपादकमस्तु विधेयगणप्रतिपादकश्रुत्यंतर्गतत्वात् कीदृशंप्रजननपदं प्रवचनपदस्यार्थमध्यापनरूपंविभ्रत्प्रकृतोपयोगायाभिदधानं नचायमर्थोऽयुक्तः लोकतोवंशोद्विधाविद्ययाजन्मनाचेत्यादिलोकप्रसिद्धितोलब्धत्वादित्यर्थः तथाचहेमः 'प्रजननंप्रगतेयोनिजन्मनोः' इति तत्रप्रगतपदस्यप्रकृष्टंगतंज्ञानमितिव्युत्पत्त्याध्यापनसामर्थ्यमर्थइति ६८० नन्वध्यापनपरत्वमप्ययुक्तंजीविकार्थत्वेनयाजनप्रतिग्रहवद्ब्राह्मणंप्रतिवाक्यांतरैःप्राप्तत्वादितिशंकते यद्यपीति । समाधत्ते तथापीति । भवेदेवाशंकायद्यध्यापनमेवविधीयेततत्तुनविधीयते वेदांतस्यवेदसिद्धांतस्याद्वैतात्मतत्त्वस्यबोधकेत्रप्रकरणेअसंगतत्वात् किंतुततःप्रकरणानुरोधादध्यापनफलभूतंश्रुत्यर्थावधारणरूपंश्रवणमेवलक्षणयाएतत्प्रजननपदोक्तंभविष्यतीत्यर्थः ६८१ यदाऽयमर्थोविवक्षितस्तदाप्रजननस्यसापेक्षत्वंवयःप्रभृतिषुयदुक्तंतत्परित्यज्यसंन्याससापेक्षत्वंसंन्यस्यश्रवणंकुर्यादित्यादिवचनसिद्धंवर्णनीयमित्याह । अस्मिन्निति अस्मिन्प्रजननस्यश्रवणरूपत्वात्मकेपक्षे ६८२ दारादिसापेक्षत्वंतुआहितादिपदोदितेषुत्रिषुयोज्यमितिदर्शयति त्रैवर्णिकानिति । अग्नयःअग्निहोत्रंयज्ञाश्चएतद्रूपंत्रयंकर्तृअध्ययनदारसंबद्धान्विप्रक्षत्रियवैश्यान्स्वाधिकारितयासमाकांक्षतेइति अत्रकिंप्रमाणमित्यतआह अत्रैतदित्यादि । अत्रउक्तार्थेवैदिकंवाक्यजातंवक्ष्यमाणमर्थतउपन्यस्य

अथवास्तुश्रुतिप्रोक्तंकार्यंप्रजननंत्विदम् ॥ अत्रप्रवचनस्यार्थंविभ्रल्लब्धंचलोकतः ६८० यद्यप्यध्यापनंप्राप्तंवृत्त्यर्थंब्राह्मणस्यहि ॥ तथापिनविधेयंतदत्रवेदांतबोधने ॥ श्रवणंततएवैतत्पारिशेष्याद्भविष्यति ६८१ अस्मिन्पक्षेवयःरूप्यादिनापेक्ष्यंकेनाचित्क्वचित् ॥ किंतुसंन्यासएवैकःशांत्यादिगुणसंयुतः ॥ विवेकिनोविरक्तस्यमुमुक्षोरप्यपेक्ष्यते ६८२ त्रैवर्णिकानधीतांस्तान्कृतदारानपेक्षते ॥ अग्न्यादित्रयमत्रैतद्वक्ष्यमाणंहिवैदिकम् ६८३ जातपुत्रःकृष्णकेशस्त्रिवर्णीदोषवर्जितः ॥ विद्वान्सामर्थ्यसंयुक्तआदधीतविधानतः ॥ अग्नीन्पंचापिचत्रीन्वाश्रौतान्कर्मप्रसाधकान् ६८४ जाययैवतुसंयोगादेकमग्निंचकेचन ॥ स्मार्तंवदंतिमुनयस्तेषांशक्तेरभावतः ६८५ अग्निभिःकर्मिणःस्वर्गंव्रजंतिज्ञानिनोपिच ॥ ब्रह्मलोकंतथाकीर्तिंसर्वेलोकद्वयेपिच ६८६ अग्निहोत्राभिधंकर्मसायंप्रातरुदाहृतम् ॥ अभ्याश्रयंविरागेणविनात्रमरणावधि ६८७

मानंयानमितिशेषः ६८३ तत्राग्नीनांतत्सापेक्षत्वादिप्रतिपादकंवाक्यजातमर्थतःसंगृह्णन्सफलंस्वरूपमाह जातेतित्रिभिः । जातपुत्रकृष्णकेशपदाभ्यांत्रिंशद्वर्षरूपःकालोलक्ष्यते दोषाअंधत्वादयस्तद्वर्जितः विद्वान्कर्मोपयोगिमंत्रादिवेत्ता सामर्थ्यंकर्मोपयोगिद्रव्यसंपदादिरूपंतद्युक्तस्त्रैवर्णिकः पंचदक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यसंज्ञान् . त्रीन्आहवनीयांतानेवयथाशास्त्रमादधीतआधानाख्यकर्मणाउत्पादयेत् कीदृशानेतानग्नीन् श्रुतिविहितान्श्रौतकर्मणांसाधकांश्चेत्यर्थः ६८४ जाययैवेति । केचनाथर्वणिकाएकमग्निमेकाग्निसंज्ञकंश्रौतंवदंतितस्याधानंजायायाःसंयोगंविवाहकालमारभ्यैवतेरुक्तमितिप्रथमदलार्थःतेषांश्रौतानामग्नीनामाधानशक्त्यभावेतुस्मार्तमौपासनाख्यमेकमग्निमादधीतेतिगृह्यसूत्रकारावदंतीत्यर्थः ६८५ तत्फलमाहअग्निभिरिति । उक्ताग्निभिःकेवलकर्मानुष्ठानेनस्वर्गोभवति ज्ञानिनामुपासनासमुच्चितकर्मपराणांतुब्रह्मलोकोभवति लोकद्वयेकीर्तिश्चतेषामित्यर्थः ६८६ अथाग्निहोत्रस्वरूपंसफलंवर्णयति अग्नीति । सायंप्रातःकालयोरुक्ताग्निषुविधिवदाहुतिप्रक्षेपरूपमग्निहोत्राख्यंकर्मयावज्जीवनमनुष्ठेयमुक्तं यदिवैराग्यंसंन्यासाधिकारप्रयोजकंनजायेततदेत्यर्थः अत्राऽभ्याश्रयमितिविशेषणेनाग्निपूक्तंसापेक्षत्वमत्रापिसंबद्ध्यतेइतिसूचितम् ६८७

अस्यफलंप्रपंचयति गृहस्थानामित्यादिना । सूनाहिंसास्थानानिकंडनादीनिसेतितदुत्थपापस्यस्पर्शाभावोऽग्निहोत्रस्यैकंफलमितिसंबंधः तत्रकंडनीउलूखली दलनीविदारणसाधनम् पेर णी पेषणसाधनंशिलोपलादि स्फुटमन्यत् यद्यपिमन्वादिभिर्दलनीसाक्षान्नोक्तातथापि 'पंचसूनागृहस्थस्यचुल्लीपेषण्युपस्करः ॥ कंडनीचोदकुंभश्चबद्ध्यतेयास्तुवाहयन्' इतिमनुवाक्येउपस्करपदेनगृहोपकरणत्वरूपेणप्रदर्शिता एतैस्तुउदकुंभस्योपलक्ष्यत्वमभिप्रेत्यस्फुटहिंसास्थानत्वेनदलन्येवोक्तेत्यविरोधः ६८८ मनूक्तंविश्वतर्पणजन्यधर्मलाभरूपंफलंदर्शयति अग्नाविति । हुताहुतिरग्निद्वारादित्यंगत्वावृष्ट्यादिपरिणामेनप्रजातंतिहेतुर्भवतीत्येवमग्निहोत्रीपुमान्विश्वकारणमुक्तइत्यर्थः ६८९ तथाग्निहोत्रीदेवानांमातृसमउक्तइत्याह देवानामिति मातृसमत्वप्रतिपादकंवाक्यमर्थतःपठति यथेहेति ६९० अग्निहोत्रस्यदृष्टंफलंकीर्तिर्दर्शपूर्णमासादियज्ञाधिकारश्चेत्येवंरूपंबोध्यमित्याह अग्निहोत्रीजनइति ६९१ आमुष्मिकंतदाह नाकमिति । परमनंतरंविद्वानुपासकश्चेदितिशेषः दशमेयज्ञरूपसाधनेतदेवफलंबोध्यंयद्दानउक्तमित्याह यज्ञेपीति ६९२ एकादशंमानसाख्यंसाधनंवक्तुमवतारयति साधनमिति । एतदुक्तंदशविधंसाधनंतथावक्ष्यमाणंसंन्यास

गृहस्थानांगृहेनित्यंसूनाःपंचसंतिहि ॥ कंडनीदलनीचुल्लीपेषणीमार्जनीतथा ॥ आभिःकृतस्यपापस्यस्पर्शोनैवाग्निहोत्रिणः ६८८ अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः ॥ इत्थंविश्वस्यहेतुःस्यादग्निहोत्रीपुमानिह ८९ देवानांजननीतुल्यःप्रोक्तोयंवेदवादिभिः ॥ यथेहक्षुधिताबालामातरंपर्युपासते ॥ अग्निहोत्रिणमेवंतेदेवानाकसमाश्रयाः ६९० अग्निहोत्रीजनःकीर्तिंधनमप्यधिगच्छति ॥ यज्ञानपिकरोत्येषदर्शादीनपरानपि ९१ नाकंप्रयातिमरणात्परंदेवैर्नमस्कृतः ॥ विद्वांश्चत्रिदिवंगत्वाब्रह्मलोकंचगच्छति ॥ यज्ञेप्येतत्फलंप्रोक्तंयच्चदानेप्रकीर्तितम् ९२ साधनंसर्वमेवैतद्वक्ष्यमाणंचसर्वदा ॥ अपेक्षयाभवेद्भूयःकस्यचित्किंचिदेवहि ९३ साधनानिदशैतानित्यागेनसहितान्यपि ॥ एकस्मान्मानसान्नित्यंप्रभवंतिनचान्यथा ९४ मनस्वीधैर्यसंपन्नःपुमान्पुण्यरतःसदा ॥ अनुतिष्ठतिसर्वंतत्रापरोदीनमानसः ९५ मनोमूलमिदंसर्वंलौकिकंवैदिकंतथा ॥ प्रवृत्तंचनिवृत्तंचकर्मसिद्ध्यतिदेहिनाम् ॥ मानसंततएवैतदुक्तमेकादशंत्विह ९६ प्रजापतिःपुरासृष्ट्वामनसैवजगत्त्रयम् ॥ पवित्रःप्रथमःपूज्यआसीत्सर्वशरीरिणाम् ९७ प्रजापतिर्यथातद्वन्मुनयोदेवताअपि ॥ मनुजाश्चाभवन्सर्वेमानसस्यप्रसादतः ९८ इदंततोधिकंसर्वसाधनेषुप्रकीर्तितम् ॥ मानसंसर्वभूतानांस्वर्गमोक्षंचगच्छताम् ६९९

रूपंसाधनंचकस्यचिदेतद्भिन्नस्य साधनस्ययोगात्पूर्वावस्थापेक्षयाकिंचिद्भूयोधिकंवीर्यवद्भवतीत्यर्थः ६९३ किंतदित्याकांक्षायांमानसपदोक्तंधैर्यशालिमनएवेत्याह साधनानीति। एतानिउक्तानिदशसाधनानित्यागःसंन्यासश्चएतत्सर्वंसाधनजातंमानसाधीनफलकमित्यर्थः ६९४ मानसस्यसर्वोपचयहेतुत्वमेवान्वयव्यतिरेकाभ्यांस्फुटयति मनस्वीत्यादिना। मनस्वीत्यस्यव्याख्यानंधैर्यसंपन्नइतितत्श्रेयःसाधनजातम् ६९५ मनोमूलमिति यतःसर्वंकार्यजातंलौकिकादिकंमनोऽधीनंततोमनसएकादशसाधनत्वेनोपन्यासःश्रुत्याकृतइत्यर्थः ६९६ मानसस्यसर्वमूलत्वेउदाहरणंहिरण्यगर्भएवतावदित्याह प्रजापतिरिति । धैर्यशालिमनःप्रभावादेवहिरण्यगर्भोविश्वंसृजति पवित्रःस्मरणेनपापहंताप्रथमंपूज्यःश्लाघ्यश्चासीदिति ६९७ प्रजापतिर्यथेति । नकेवलंप्रजापतिरेवतथाकिंत्वन्येपिमुनिप्रभृतयोमानसबलादभवन्पवित्राःपूज्याश्चेतिवचनविपरिणामेनसंबंधः ६९८ फलितमाह इदमिति । ततोविश्वमूलत्वान्मानसंसर्वतःश्रेष्ठंसाधनंस्वर्गादिगंतुमिच्छतामुक्तमित्यर्थः ६९९

अथसंन्यासस्यद्वादशसाधनस्योत्कर्षंयथाश्रुतिवर्णयिष्यंस्तद्भेदान्स्मृतिप्रसिद्धांस्तावदाह लिंगधारणेतित्रयोदशभिः । संन्यासस्तावद्विविधः दंडादिलिंगधारणसहितस्तद्रहितश्च तत्राद्येविप्रस्यैवा धिकारोऽन्यत्रक्षत्रियादीनामित्यर्थः ७०० आद्यइति । आद्योलिंगधारणरूपस्तुद्विविधःत्रिदंडएकदंडश्चेति तत्रत्रिदंडस्यभेदौकुटीचकबहूदकौ एकदंडस्यहंसपरमहंसाख्याविति द्वयोरर्थः ७०१ । ७०२ तत्रकुटीचकस्याधिकारिणंधर्मांश्चदर्शयति पुत्रीतित्रिभिः । स्निग्धःस्नेहवान् मृदुलःक्लेशासहिष्णुः स्फुटमन्यत् ७०३ । ७०४ पुत्रदत्तेति । पुत्रेणदत्तमशनमन्नादिकंयस्मैसतथा ७०५ बहू दकाधिकारिणमाह विदारइतिद्वाभ्यां । योमृतदारःपुनस्तत्संपादनेऽक्षमोऽनुत्सुकःकर्मसुसंध्योपासनादिपुश्रद्धावान्जरयापुत्रादिपुस्नेहहीनोवृद्धदारोवाभवेत्सबहूदकोभवेदितिद्वयोरर्थः ७०६ ७०७ तद्धर्मानाह कमंडलुमिति । शिक्यंभिक्षान्नधारणार्थं पवित्रंजलशोधनवस्त्रं 'वस्त्रपूतंजलंपिबेत्'इतिवचनात् एताःपंचमात्राउपकरणानिदधानःकीटवन्मंदंमंदंभूमिंपर्यटेदन्यांश्चयतिधर्मान्कुर्या

लिंगधारणरूपोयंत्यागोब्राह्मणजन्मनः ॥ अलिंगःक्षत्रियादेःस्यात्सम एवात्रधर्मतः ७०० आद्यश्चतुर्विधःप्रोक्तोमुनिभिर्वेदवादिभिः ॥ त्रिदंडोद्विविधस्तद्वदेकदं डोपितादृशः ७०१ कुटीचकोबहूदश्चद्वौत्रिदंडौप्रकीर्तितौ ॥ हंसःपरमहंसश्चद्वावुक्तावेकदंडिनौ ७०२ पुत्रीगृहीधनीतद्वद्भार्ययाचविवर्जितः ॥ जरसाव्याधि नाचैवग्रस्तःस्निग्धःसुतादिषु ७०३ भिक्षायाभोजनेतद्वदशक्तोमृदुलःपुमान् ॥ त्रिदंडंधारयेदेषगृहेकृत्वाकुटींसदा ८०४ पुत्रदत्ताशनोनित्यंस्वधर्मंपरिपालकः॥ कुटीचकोभवेद्भिक्षुःप्रणवादिजपेरतः ७०५ विदारोयःपुनर्दारान्संपादयितुमक्षमः ॥ ब्रह्मचर्यरतःकर्मश्रद्धावांश्चजरादिना ७०६ पुत्रादिषुगतस्नेहोवृद्धभार्योथवा स्वयम् ॥ त्रिदंडंपरिगृह्णीयभवेद्विप्रोबहूदकः ७०७ कमंडलुंत्रिदंडंचशिक्यंपात्रंपवित्रकम् ॥ दधानःपंचमात्रास्ताःकीटवत्पर्यटेद्यतिः ॥ यतिधर्मानशेषांस्तान नुतिष्ठेत्सदैवसः ७०८ वैराग्यंपरमंप्राप्तोयईपत्कर्मवासनः॥ यज्ञोपवीतीविशिखःसामगोत्रयथाबटुः ७०९ एकदंडधरोनित्यंकीटवत्पर्यटन्महीम् ॥ प्रणवादिज पेयुक्तोभवेद्धंसोयतिःस्वयम् ७१० वैराग्यंपरमंप्राप्तइहामुत्रसुखेयदा ॥ आनंदात्मानमेवैकंसंप्रेप्सुर्हृदयेस्थितम् ७११ कर्मसंस्कारशून्योयःसभवेत्परमःसदा ॥ हंसोविसृज्यकरतएकदंडंद्विवैणवम् ७१२ एवंचतुर्विधःप्रोक्तश्चतुर्थाश्रमवासिनाम् ॥ न्यासश्चतुर्थस्तत्रापिसर्वोत्कृष्टउदाहृतः ७१३ भूतानांप्राणिनःश्रेष्ठाःप्राणि नांबुद्धिजीविनः ॥ चतुष्पादोबुद्धिमतांचतुष्पात्स्वपिगोगणः ७१४ उत्तमागोगणेभ्यश्चद्विपदाःसर्वजंतवः ॥ द्विपत्स्वपितथाप्रोक्ताःशूद्रावर्णसमाश्रमाः ७१५ शूद्रेभ्यश्चतथावैश्यावैश्येभ्यःक्षत्रवर्णिनः ॥ क्षत्रियेभ्यस्तथाश्रेष्ठाब्राह्मणाजन्मनाहिये ७१६

दित्यर्थः ' मात्रापरिच्छेदे ' इतिहेमः ७०८ हंससंन्यासस्यतानाह वैराग्यमिति । यःपरमवैराग्यवानपिकर्मसुकिंचित्श्रद्धावान्भवतिसहंसोयतिर्भवेत् कीदृशः सामवेदाध्यायिब्रह्मचारिवद्विशि खोयज्ञोपवीतीच स्फुटमन्यत् ७०९ । ७१० परमहंसस्यतानाह वैराग्यमिति । प्रेप्सुःसाक्षात्चिकीर्षुःकर्मवासनाहीनश्चयःकरेणदंडंवैणवंधृत्वापरमहंसोभवेदितिद्वयोरर्थः ७११ । ७१२ एपुचरमो तिश्रेष्ठइत्याह एवमिति स्पष्टं ७१३ न्यासस्यसर्वोत्कृष्टतांस्फुटयितुमुत्कृष्टपरंपरांपुराणादिप्रसिद्धामभिनयति भूतानामितिसप्तभिः । भूतानांशरीरिणांमध्येप्राणिनःस्फुटप्राणव्यापारकाः श्रेष्ठाः तेभ्योपिस्फुटबुद्धयःसर्पादयःश्रेष्ठाः एवमग्रेपि चतुष्पादःपशवस्तेपुगावस्तथेति ७१४ उत्तमाइति । कीदृशा शूद्राःवर्णेनसमःसमानकालेप्राप्तआश्रमोयैस्तेतथाजन्मारभ्यामरणंशूद्रस्यएकवर्णत्व मेकाश्रमत्वंचद्विजत्वाभावइतियावत् ७१५ शूद्रेभ्यइति स्पष्टम् ७१६

ब्राह्मणैश्चेति । अग्न्यादयोदेवामाननीयत्वेनब्राह्मणैर्भूदेवत्वेनप्रसिद्धैःसमाउक्ताःपुराणादिषु विद्वांसोविद्यावंतः तेष्वपिवेदपाठविद्भ्योऽर्थविदोधिकाइतिभावः ७१७ विद्वत्स्वपीति । आपा ततोर्थविद्भ्योपिमीमांसयाकृतावधारणाःश्रेष्ठाइत्यर्थः ७१८ निश्चितेष्वपीति । शास्त्रावधारणपराणांमध्येपिषेआश्रमाणांसंबंधिकर्मयथावत्कुर्वंतितेश्रेष्ठाः केआश्रमाइतिवेद्येचतुर्धाब्रह्मचर्यगृह स्थवनस्थसंन्यासभेदैरुक्ताइत्यर्थः ७१९ आश्रमेष्वप्युत्तरोत्तरंश्रेष्ठत्वमित्याह बटुभ्यइति । बटुभ्योगृहिणोधिकत्वंसर्वोपजीव्यत्वादिभिरुक्तंश्रुतौ सोयंयत्याश्रमः ७२० कुटीचकइति । स्पष्टं ७२१ यत्याश्रमंचचतुर्थभेदंसर्वोत्कृष्टंदर्शयन्न्यासइतिब्रह्मेत्यादिश्रुतिग्रंथस्यार्थमाह चतुर्थाइतिषड्भिः । परमहंसाब्रह्मनिष्ठाश्चोक्ताः यतस्तेषांसंन्यासपरिग्रहोब्रह्मसाक्षात्कारार्थमेवेत्यर्थः ७२२ ब्रह्मसाक्षात्कारार्थत्वेवार्तिककृद्वचनमर्थतःसंगृह्णाति त्वंपदार्थेति । त्वंपदार्थःसर्वांतरमात्मतत्त्वंतस्यसर्वोपाधिविवेकायैवसर्वकर्मणांसंन्यासःश्रुत्याविधीयतइतिशेषः तंविवेकंमोहेनत्यक्त्वाकर्म प्रकुर्वाणएषयतिःपततीतिसंबंधः । एवमावश्यकत्वेपरमहंसोयतिरात्मज्ञानेनब्रह्मवेदब्रह्मैवभवतीतिश्रुतिप्रसिद्धंब्रह्मभावंयात्येवेत्याह कुर्वाणइति । आत्मविवेकमितिशेषः ७२३ ब्रह्मभावे

ब्राह्मणैश्चसमादेवाअग्न्याद्याःपरिकीर्तिताः ॥ ब्राह्मणेष्वपिविद्वांसोवेदवेदार्थवेदिनः ७१७ विद्वत्स्वपितथैवस्युरुत्तमानिश्चिताहिये ॥ शास्त्रार्थेसंशयंहित्वावर्तंते निश्चलाइव ७१८ निश्चितेष्वपिविज्ञेयाउत्तमायेत्रकर्मिणः ॥ आश्रमाणांविभेदेनचतुर्धायेप्रकीर्तिताः ७१९ बटुभ्योत्रगृहीज्ञेयउत्तमोगृहिणोपिच ॥ वनीततो यतिःसोयंचतुर्धापरिकीर्तितः ७२० कुटीचकोबहूदश्चहंसःपरमहंसकः ॥ चतुर्विधोयतिःप्रोक्तोयोयःपश्चात्सउत्तमः ७२१ चतुर्थाःपरमाहंसावेदेब्रह्मविदःस्मृताः ॥ ब्रह्मनिष्ठायतस्तेषांन्यासःस्यादात्मवेदने ७२२ त्वंपदार्थविवेकायसंन्यासःसर्वकर्मणाम् ॥ प्रकुर्वाणःपतत्येषतंत्यक्त्वाकर्ममोहतः ॥ कुर्वाणश्चपरंब्रह्म भवत्येवनसंशयः ७२३ ब्रह्मसर्वात्मकंयस्मात्पूर्वमेवसमीरितम् ॥ विद्वांसोब्रह्मविज्ञानात्ततःसर्वंभवंतिते ७२४ कालात्मकमकालंचसदसच्चपरापरम् ॥ ब्रह्मविद्यास्ततस्तेभ्योनासीन्नास्तिनभाव्यपि ॥ उत्कृष्टंततएवैतेस्मृताःसर्वोत्तमाभुवि ७२५ ब्रह्मविज्ञानदोन्यासस्ततएवपरःस्मृतः ॥ परंचब्रह्मतस्माद्यद न्यत्स्यात्साधनंभुवि ॥ तपआदिनिकृष्टंतदयमेवाधिकस्ततः ७२६ न्यासेब्रह्मात्मकेसर्वजगतोहेतुतांद्विजाः ॥ विवक्षवइमांप्राहुर्युक्तिंवेदसमीरिताम् ७२७ न्या साद्ब्रह्मात्मविज्ञानंविदुषांजायतेयतः ॥ ततोन्यासःपरंब्रह्मकारणंहेतुवर्जितम् ७२८

चसर्वात्मनःसर्वोत्कृष्टत्वमपिविदुषःसिद्धमित्याह ब्रह्मेति । यतोब्रह्मणःसर्वात्मकत्वविज्ञानेनलाभश्चपूर्वमुक्तस्ततस्तेविद्वांसःसर्वंभवंतीतियुक्तमितिसंबंधः ७२४ सर्वपदार्थस्फुटयन्फलितमाह कालात्मकमिति । कालात्मकंकालोपाधिभूतंकार्यजातंअकालंनित्यंचएतत्सर्वरूपाःब्रह्मविद्याःब्रह्मणिविद्यायेषांतेनथाभूताभवंतिततस्तेभ्यउत्कृष्टंभूतादिकंनास्तिअतस्तेसर्वोत्कृष्टाइति ७२५ अतो विद्याद्वारासर्वोत्कृष्टत्वप्रयोजकत्वात्संन्यासोब्रह्मत्वेनपरःश्रुत्योक्तइत्याह ब्रह्मविज्ञानदइति । यथाचब्रह्मापेक्षयासर्वंकार्यंकारणजातमपरंतथाब्रह्मरूपतयोक्तान्न्यासात्सर्वमुक्तंसाधनजातमपरमिति सिद्धमित्याह परंचेत्यादिना ७२६ अथसंन्यासपरमत्वेउपपत्तिंप्रपंचकस्यन्यासइत्याहुर्मनीषिणइत्यादिग्रंथस्यार्थमाह न्यासइति । न्यासेब्रह्मरूपत्वंतत्प्रयुक्तांसर्वजगतोहेतुतांचविवक्षवोव क्तुमिच्छवःस्फुटीकर्तुमिच्छंतइतियावत् तथाभूताद्विजास्तित्तिरयइमांवक्ष्यमाणांयुक्तिमाहुरित्यर्थः ७२७ तत्रब्रह्मरूपतामुपपादयति न्यासादिति । यतोन्यासाद्ब्रह्मात्मज्ञानंब्रह्मभावप्रयो जकंभवतिततोन्यासोमूलकारणात्मकब्रह्मरूपउपचारेणोक्तइत्यर्थः ७२८

ब्रह्मणोमूलकारणतांस्फुटयति यतइति । यतोब्रह्मणइदंसूक्ष्मंस्थूलंचभूतपंचकंजातंतत्रसूक्ष्ममयोहिरण्यगर्भइत्युच्यतेसूक्ष्मकार्यस्थूलसमष्ट्युपाधिकस्तुप्रजापतिरितिविराडितिसंवत्सरइतिआदित्यइति चनामभिरुक्तःश्रुतावितिद्वयोरर्थः ७२९ । ७३० तत्राप्यादित्यमंडलांतःस्थस्यभगवतोजगत्कारणत्वंप्रत्यक्षसिद्धान्वयव्यतिरेकाभ्यांनिश्चीयतेइत्याह आदित्येति ७३१ प्रत्यक्षेणकारणतासिद्धिमेवश्रुत्युक्तपरंपरयादर्शयति रश्मिभिरितिनवभिः । यतोयमादित्यांतस्थःपुरुषःस्वशरीरोत्थकिरणैर्जलमाकृष्यमेघगतंकृत्वाचमुंचति कीदृशंजलं सर्वकारणं ७३२ कथंतत्सर्वकारणमित्यतआह स्थावराइति । ततोवृष्टिजलादेवस्थावरजातयस्तत्रान्नहेतुत्वेनप्रधानभूताओषधिवनस्पतयश्चजायंतेतेभ्योन्नंतस्मात्प्राणधारणंचजंतूनांभवतीतिप्रसिद्धमितिद्वयोरर्थः ७३३ । ७३४ एवमन्नसृष्ट्या सकलहेतुत्वमादित्यमंडलांतःस्थस्योक्त्वाथतत्कार्येन्नेसकलाभ्युदयनिःश्रेयससाधनतोपन्यासेनादित्यमंडलस्थस्यब्रह्मणोविश्वहेतुत्वंस्फुटयन्नन्नादभ्युदयनिःश्रेयसयोःसिद्धिपरंपरामाह प्राणइति षड्भिः । अन्नेभ्यःप्राणेभ्यःकर्मकरणसामर्थ्यरूपंबलंभवति बलाच्छुद्धकर्मरूपंतपोभवति यद्भृगुणावरुणोपदेशेनकृतमित्युक्तं ततःशुद्धकर्मरूपात्तपसःश्रद्धापरलोकास्तित्वबुद्धिरूपाभवति ततश्च

यतःसूत्रमिदंजातंससूक्ष्मंपंचभूतकम् ॥ हिरण्यगर्भइत्येतदुच्यतेवेदवादिभिः ७२९ अस्मात्प्रजापतिर्जातोविराट्संवत्सरश्चयः ॥ आदित्यइतिचाप्युक्तो वेदवादरतैर्द्विजैः ७३० आदित्यमंडलेयोयंस्वर्णवर्णःपुमान्स्थितः ॥ सएवजगतोहेतुःप्रत्यक्षमिहदृश्यते ७३१ रश्मिभिःस्वशरीरोत्थैर्यतोजलदसंश्रितम् ॥ नीरंमुंचतिलोकेस्मिन्सर्वेषामिहकारणम् ७३२ स्थावरास्ततएवैतेजायंतेभूमिमाश्रिताः ॥ ओषध्यःकीर्तितायाश्चयेवनस्पतयोपिच ७३३ स्थावरेभ्योभवत्यन्नंविविधंप्राणिनामिह ॥ अन्नतःसर्वजंतूनांप्राणाजीवनहेतवः ७३४ प्राणतश्चतथैवस्याद्बलंतत्कर्मकारणम् ॥ बलतस्तपएतत्स्याद्यत्कृतंभृगुणापुरा ७३५ कर्मशुद्धंततःश्रद्धापरलोकास्तिधीरपि ॥ श्रद्धातोजायतेमेधायास्याद्वेदार्थधारिणी ७३६ मेधातोजायतेबुद्धिर्मनसोपिनियामिका ॥ यस्यानियमतोनित्यं शास्त्रार्थेनप्रवर्तते ७३७ मनीषयामनश्चैतज्जायतेशास्त्रसंस्कृतम् ॥ मनसोजायतेशांतिरात्मन्येवहियात्रधीः ७३८ शांत्याचजायतेचित्तमात्मज्ञानोन्मुखंहियत् ॥ चित्तात्स्मृतिर्भवेद्वेदवाक्यार्थगुरुकीर्तिते ७३९ स्मृत्यास्मारोभवेत्तस्यप्रकाशोवगमात्मकः ॥ स्माराद्ब्रह्मात्मविज्ञानंश्रवणादिसमुद्भवम् ॥ आनंदात्माततःसाक्षाद्भवतीहशरीरिणः ७४० एवंब्रह्मात्मकोन्यासोयस्मादन्नस्यकारणम् ॥ तस्माद्दन्नंददज्जंतुःसर्वाण्येतानियच्छति ७४१

शास्त्रार्थधारणक्षमबुद्धिरूपामेधाभवतीतिद्वयोरर्थः ७३५ ७३६ मेधातइति । तस्यामेधातोबुद्धिर्मनसोनियमनसमर्थाबुद्धिवृत्तिर्जायते यस्यानियमतोहेतोस्तन्मनोनियमेनइतराकारपरिहारेणशास्त्रार्थेप्रवर्ततेइत्यर्थः ७३७ मनीषयेति । तयामनीषयाशास्त्रार्थवासनासंस्कृतांतःकरणावस्थामनःपदवाच्याजायते ततोमनसआत्माकारधीवृत्तिरूपाशांतिर्भवतीत्यर्थः ७३८ शांत्याचेति । उक्तरूपायांशांतौसत्यामात्मनआनंदादिविशेषनिर्णयोन्मुखांतःकरणवृत्तिरूपंचित्तंजायतेततश्चानंदत्वादिप्रतिपादकगुरूपदिष्टवेदवाक्यार्थगोचरास्मृतिर्भवति ततश्चशुद्धतरत्वंपदार्थप्रकाशःस्मारपदोक्तोजायतेततःस्माराद्ब्रह्मवाक्यार्थभूतब्रह्मात्मज्ञानंपरोक्षंभवतिततश्चानंदात्मनोऽपरोक्षत्वंन्याससमयोजकंजायतेइतिद्वयोरर्थः ७३९ ७४० एवमिति । यतएवमुक्तविधयाब्रह्मरूपःसंन्यासोन्नस्य कारणंजनकंफलंचभवतितत्रादित्यांतस्थरूपेणवृष्टिद्वाराजनकंप्राणादिपरंपराजन्यसाक्षात्काराद्वैतेनफलरूपंचभवतीतितस्मादुभयतोब्रह्मसंबद्धमन्नंजानन्योन्नंददत्प्रयच्छन्भवतिसजनएतानिवर्जितान्यन्नस्यकार्याणिकारणानिप्रयच्छन्भवतीत्यर्थः इहदिकार्यदानेकारणदानंयथाप्रफलदानेतद्बीजदानंतथाकारणदानेकार्यदानमपियथागोदानेदुग्धदानमिति ७४१

तत्रान्नस्याध्यात्मप्रपंचकारणतांपूर्वोक्तकोशपंचकानुवादेनश्रुत्यादर्शितामभिनयति अन्नतइतिद्वाभ्यां । अन्नादिशब्दाःकोशपराः ज्ञानाद्विज्ञानमयात्सुखमानंदमयाख्यंजायतेआविर्भवतीत्येवं पंचकोशरूपेणान्नमवस्थितमित्यर्थः ७४२ पंचमइति । तेषुकोशेषुपंचमआनंदोज्ञानतोविज्ञानमयाज्जातोभवतीतियदुक्तंतन्माययैवमायामयप्रियमोदादिविशिष्टरूपाभिप्रायेणैवेतिबोध्यं यतोऽयमानंदःपुच्छभूतशुद्धात्मरूपेणवास्तवेनजायतेइत्यर्थः ७४३ तस्यवस्तुतोजन्मायोग्यतांस्फुटयितुंसएषइत्यादिश्रुत्युक्तामाधिदैविकींविभूतिमाह पुरुषइत्यादिना । योयमानंदरूपःपुरुषःसत्रिलोक्यादिभि.पंचभीरूपैरूपवानितिप्रथमदलार्थः रूपपंचकमभिनयति लोकेति । पृथिवीअंतरिक्षंद्यौर्दिशःकोणाश्चएतेरूपैरधिदैवंपंचविधोजातइत्यर्थः ७४४ नकेवलमेतान्येवास्यरूपाणिकिंतुसमस्तंजगदित्याह पुरुषेणेति । अमुनापुरुषेणसर्वंकालत्रयावच्छिन्नंजगत्ओतप्रोतंसर्वतोव्याप्तमित्यर्थः ७४५ जिज्ञासाकृतपदस्यऋतजापदस्यरयिष्ठपदस्यचार्थंदलत्रयेणाह जिज्ञासयेति । विचाररूपयाजिज्ञासयालभ्यः अवश्यभाविफलकत्वेनऋतपदोक्तात्कर्मणःसकाशात्फलरूपेणजातः समस्तसत्फलरूपइतियावत् तथारयिपदेनधनवाचकेनसुवर्णंसमीचीनंवस्तुलक्षितंतत्रसर्वत्र

अन्नतःप्राणिनांप्राणःप्राणेभ्यश्चमनस्तथा ॥ विज्ञानंमनसोज्ञानात्सुखमत्रप्रजायते ॥ अन्नपंचात्मकंह्येवंपंचकोशेषुकीर्तितम् ७४२ पंचमोज्ञानतोजातआनंदःसुखशब्दभाक् ॥ माययैवायमात्माख्योजायतेनतुतत्त्वतः ७४३ पुरुषोयस्त्रिलोक्याश्चदिशामपिचरूपभाक् ॥ लोकत्रयीदिशस्तद्वदवांतरदिशोपिच ॥ इत्थंपंचात्मकोजातःपुमान्भेदविवर्जितः ७४४ पुरुषेणामुनासर्वमोतप्रोतंजगत्त्रयं ॥ तंतुनेवपटोभाविभवद्भूतंतथापुमान् ७४५ जिज्ञासयासदागम्यःपुरुषोमननाख्यया ॥ ऋतादेषपुमाञ्जातःफलरूपेणकर्मणः ॥ सुवर्णेत्रसमीचीनेवस्तुन्येषोवतिष्ठते ७४६ श्रद्धयातुतथासत्यादेषगम्योमहेश्वरः ॥ स्वयंज्योतिर्यतस्तेनतेजस्व्यपिचगीयते ७४७ तपसोभृगुणापूर्वंसमनुष्ठितरूपिणः ॥ वरोतिशयितोयस्माद्वरिष्ठस्तेनकथ्यते ७४८ एवंभूतंपुराप्रोक्तमानंदात्मानमीश्वरम् ॥ हृदयस्थेनमनसाज्ञात्वाक्लेशविवर्जितः ॥ भूयोनमरणंगच्छेदेतद्देहस्यपाततः ७४९ मृत्वानाम्रियतेयस्माद्भ्यासाद्ब्रह्मात्मवेदनम् ॥ अत्रैवब्रह्मलोकेवासंप्राप्याज्ञाननाशनम् ७५० तस्मान्न्यासंपरंप्राहुःसाधनंब्रह्मवादिनः ॥ सत्यादीनांपुरोक्तानामेषांसाधनरूपिणां ७५१ न्यासेनगम्यतेयोयमानंदात्मास्वयंप्रभः ॥ सत्यःसूक्ष्मोविभुःस्वांतःप्राणापानव्यवस्थितः ॥ संधितयोःप्रकुर्वाणोवामनोव्यानरूपतः ७५२

अंशांशेनस्थितइतिदलत्रयार्थः ७४६ श्रद्धादिपदत्रयार्थमाह श्रद्धयेति । श्रद्धयासत्येनचलभ्यमानत्वात्श्रद्धासत्यपदाभ्यामुक्ता तथास्वयंप्रकाशत्वात्तेजस्वीतिकथ्यतेमहस्वत्पदेनेत्यर्थः ७४७ तपोऽपेक्षयावरिष्ठत्वमाह तपसइति । भृगुणानुष्ठितंयत्तपस्तत्साधनांतरेभ्योवरंतस्मादपिसाधनभूतादभिव्यंग्यफलरूपतयाऽत्युत्कृष्टत्वादयंपुरुषस्तप्रसोवरिष्ठइत्युक्तइत्यर्थः ७४८ तद्विज्ञानफलमाह एवंभूतमिति । एवंभूतंवर्णितगुणैरुपलक्षितंतत्त्वमेकाग्रेणमनसाज्ञात्वाक्लेशवर्जितोभवतिदेहपातानंतरंपुनर्नजायतेचेत्यर्थः ७४९ वर्णितात्मज्ञानंप्रत्यसाधारणकारणत्वाच्चन्यासस्योक्तसाधनेभ्यउत्कृष्टत्वंसिद्धमित्याह मृत्वेतिद्वाभ्यां यतोन्यासप्रभावादिहब्रह्मलोकेवाअज्ञाननाशकंब्रह्मात्मवेदनंप्राप्यमृत्वानम्रियतेमुच्यतेततोन्यासउक्तसाधनेभ्यःश्रेष्ठइतिद्वयोरर्थः ७५० ७५१ न्यासलभ्यात्मनःप्रतिपत्तिस्वरूपमभिनयतोवसुरण्वइत्यादेःप्रणवांतस्यश्रुतिवाक्यस्यपदानामर्थंदर्शयति न्यासेनेतिनवभिः । योयंन्यासेनगम्यआत्माप्तस्वयंप्रकाशानंदरूपत्वेनवित्तवान्निरतिशयप्रेमास्पदत्वाद्वसुपदेनश्रुत्योक्तःअन्यपदेनतस्यविभोर्वैलक्षण्यंसत्यत्वसूक्ष्मत्वरूपमुक्तं तथास्वांतःस्वस्यसंघातस्यांतःप्राणापानयोर्नियंतृत्वेनविशेषतोव्यवस्थितःसंस्तयोःसंधिंव्यानरूपंकुर्वाणःपूर्वोक्तवामनसंज्ञोभवतिततःप्राणसंघातेत्युक्तइत्यर्थः ७५२

ब्रह्मेति । पुनःकीदृशःब्रह्मरूपःपूर्णत्वात् तथाविश्वस्यधारकःपोषकः सूर्यचंद्रादीनांतेजसःप्रदायकः ब्राह्मणादीनांवर्चसोदाता ७५३ तेजःपदस्यवर्चःपदस्यचार्थभेदमाह तेजइति । दाह प्रकाशयोःप्रयोजकंतेजइत्युच्यते सौष्ठवस्यसौंदर्यस्यकारणंप्रयोजकंयज्ज्योतिस्तद्वर्चइत्युच्यते तत्रवर्चोदायकत्वंयद्भगवतउक्तंतज्जाठराग्निरूपेणबोध्यम् यतोजाठराग्निकृतान्नपरिपाकवशादेवांग सौष्ठवंदृश्यतेइत्यर्थः ७५४ द्युम्नोदाइतिपदार्थमाह द्युम्नमिति । सुवर्णदर्पणादिषुसूर्यकिरणसंपर्केणयद्भास्वरंपरप्रकाशकंज्योतिरुद्भवतितद्द्युम्नमित्युच्यतेतस्यदायकोप्ययमेवेत्यर्थः ७५५ अथवेति । अथवाद्युम्नपदेनसूर्यचंद्रयोस्तेजउच्यते अग्नेस्तेजस्तुवर्चइत्युच्यते तथाचअग्निसूर्यचंद्राणांतेजोयोददातिसपुमान्हृदयस्थःसंन्यासेनलभ्यइतिद्वयोरर्थः ७५६ । ७५७ उपयामगृ हीतादिपदत्रयार्थमाह उपेति । उपसमीपेयमाअहिंसासत्यादयोयस्येतिव्युत्पत्त्यासंन्यासउपयामपदेनोक्तःतेनगृहीतत्वाल्लब्धत्वादयमात्माउपयामगृहीतइत्युक्तः अयंकः यःस्वप्रकाशत्वा

ब्रह्मरूपोत्रविश्वस्यधारकस्तेजसःप्रदः ॥ सूर्यादीनांतथावर्चोब्राह्मणादेःप्रयच्छति ७५३ तेजोदाहादिहेतुःस्याद्वर्चःसौष्ठवकारणम् ॥ वर्चोददातिभगवान्जा ठरोग्निःशरीरिणाम् ॥ पुरुषोदृश्यतेयेननीरोगःकांतिसंयुतः ७५४ द्युम्नंस्याद्भास्वरंवस्तुसूर्यस्यकिरणादिना ॥ जांबूनदादिसंजातंतदप्येषप्रयच्छति ७५५ अथवाद्युम्नमुद्दिष्टंतेजएवमनीषिभिः ॥ सूर्याचंद्रमसोस्तद्वदग्नेर्वर्चःप्रकीर्तितम् ७५६ अग्नेःसूर्यस्यसोमस्यवर्चोद्युम्नंचयच्छति ॥ यःपुमान्सोत्रसंन्यासाल्लभ्य तेहृदयस्थितः ७५७ उपयामोत्रसंन्यासोयमास्तस्यसमीपगाः ॥ यतस्तेनामुनादेवोगृहीतोवेदवादिभिः ७५८ उपयामगृहीतोयमानंदात्मानिगद्यते ॥ स्वप्र काशंपरंब्रह्मसत्यज्ञानादिलक्षणम् ७५९ जाबालादिश्रुतिप्रोक्तंन्यासंकृत्वाजितेंद्रियः ॥ तत्त्वमस्यादिवाक्यार्थवाचकंप्रणवाक्षरम् ७६० हंसादिश्रुतिसंप्रोक्तंयो गमास्थायधैर्यवान् ॥ गुरूपदिष्टमार्गेणयुंजीतात्मानमात्मना ७६१ यएतांमहतींब्रह्मविद्यांमोहविनाशिनीं ॥ देवानांगुह्यभूतांचनिधिवत्तैस्तुरक्षिताम् ॥ जा नीतेब्रह्मणःसोयंमहिमानंसमाप्नुयात् ७६२ यस्मादयंपुमान्गच्छेन्महिमानममुंतया ॥ तत्कामस्ततएवायमेनांकुर्वीतसर्वथा ७६३

न्महःपदेनसत्यादिलक्षणत्वाद्ब्रह्मपदेनचोक्तइतिद्वयोरर्थः ७५८ । ७५९ उत्तराध्यायजिज्ञासामुत्थापयन्प्रणवालंबनेनवर्णितपुरुषेचित्तैकाग्र्यंकुर्यादित्याह जाबालादीतिद्वाभ्यां । जाबा लाद्युपनिषदुक्तप्रकारेणन्यासंकृत्वातथामहावाक्यार्थस्यऐक्यस्यसोहमित्यत्रसकारहकारलोपनिष्पन्नतयावाचकंप्रणवंविदित्वेतिशेषः तथाहंसाद्युपनिषदुक्तविषयंयोगमास्थायावलंब्यधीरआत्मानं परमात्मनायुंजीतऐक्येनचिंतयेदितिद्वयोरर्थः ७६० । ७६१ उक्तज्ञानस्यफलमाह यएतामिति । तैर्देवैर्वित्तवद्रक्षितत्वेनगुह्यभूताम् ७६२ फलितमाह यस्मादिति । यस्मात्पुमानधि कारीतयोक्तविद्ययाअमुंब्रह्मसंबंधिनंमहिमानंगच्छतिततस्तत्कामोब्रह्ममहिमाप्राप्तिकामोयमधिकारीएनांविद्यांसर्वप्रकारेणसंपादयेदित्यर्थः ७६३

उपनिषत्पदेनमुख्यवृत्त्याब्रह्मविद्यावाचकेनतदुपायभूतोग्रंथोलक्षणयोच्यतइत्याह सद्देरिति । उपनिइत्युपसर्गद्वयपूर्वकस्यसदिधातोरुदितःसमुद्भूतोयमुपनिषच्छब्दउपसान्निध्येननितरांसादयति विशीर्णंकरोत्यबोधमितिव्युत्पत्त्याब्रह्मविद्याया अभिधायकस्तेनसैवब्रह्मविद्यैवोपनिषदितिवक्तव्या तस्याब्रह्मविद्यायाःप्रापकत्वाद्ग्रंथोपितथोक्तइत्यर्थः ७६४ उपसंहरति एषोपनिषदत्रेति । अन्नदशमाध्यायेतित्तिरिशाखागतारहस्याब्रह्मविद्याप्रोक्ताअतोवर्णितरूपायाविद्यायाअधिकाविद्याअस्मिंस्तित्तिरिशाखाग्रंथेनास्तीत्यर्थः ७६५ तस्यैवंविदुषइत्याद्यनुवाकस्ययज्ञांगानांसांगो नांविदुच्छरीरेसमारोपोपन्यासद्वारेणससंन्यासात्मविद्याप्रशंसनपरत्वांगीकारेतदुपासनंमंदैर्यज्ञादिबहिरंगसाधनवदंतःकरणशुद्ध्यर्थंकर्त्तव्यंनतुशमादिवदंतरंगसाधनत्वादुक्तात्मविद्यावतापिकर्त्तव्यमित्याशयेनाह पुरुषस्येति । अत्रनारायणीयांतिमानुवाकेपुरुषस्यउक्तात्मविद्यावतःसंबंधीयोयज्ञोज्ञाननिष्ठारूपस्तस्यकर्ममययज्ञांगानांयजमानपत्न्यादीनामात्मश्रद्धादिषुसमारोपरूपमु

सदेरुपनिपूर्वस्यशब्दोयमुदितःसदा ॥ ब्रह्मविद्याभिधस्तेनसैवोक्तोपनिषद्द्विजैः ॥ तस्यास्तुवाचकःसोयंग्रंथोप्युपनिषन्मतः ७६४ एषोपनिषदत्रोक्तातिति र्युक्तामयाधुना ॥ ब्रह्मविद्याधिकानातोग्रंथेस्मिन्नविद्यतेकचित् ७६५ पुरुषस्यात्रयोयज्ञस्तस्योपासनमीरितम् ॥ मंदानामधिकारस्यसिद्ध्यैनैवात्मबुद्धये ॥ इतःपरंपुनःकिंत्वंश्रोतुमिच्छसितद्वद ७६६ इति श्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणश्रीशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपु राणे तैत्तिरीयसारार्थप्रकाशोनामदशमोऽध्यायः समाप्तः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पासनंचित्तशुध्यैमंदैःकर्त्तव्यमित्येतदर्थमुक्तंनत्वात्मसाक्षात्कारार्थमुक्तंयेनविदुषापिकर्त्तव्यंस्यादित्यर्थः अधिकमाकरेष्वनुसंधेयम् ७६६ यस्मिन्न्यस्तंमनोवस्थांभोमानौचित्यतोऽश्नुते ॥ वा चामगोचरंदेवंतंनारायणमाश्रये ॥ १ ॥ अस्यार्थः ॥ भगवतिन्यस्तचित्तानांकृतकृत्यत्वेनमनसाकृत्यंनास्ति भगवतोपिपूर्णकामत्वान्न्यासापहारदोषोपदेष्टृत्वाद्यनतेनकृत्यम् तथाचानंद सिंधौभगवतिज्ञानाग्निपरिहृतबीजभावेन्यस्तस्यचित्तस्यकानुगतिरितिभावः ॥ १ ॥ इति श्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीत स्यकृतावात्मपुराणटीकायांसत्प्रसवाख्यायांदशमोध्यायः समाप्तः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ स्मृतीरावणदर्प्पारेर्हरेरक्षाधिमंथिनः ॥ एकादशावतारस्यतारिण्येकादशांबुधेः ॥ १ ॥ अस्यार्थः । रावणदर्प्पहरस्यअक्षंरावणपुत्रमधिष्ठाय मंथितुंशीलंयस्यतथाभूत स्यएकादशरुद्रावतारस्यचहरेर्हनुमतःस्मृतिरेकादशाध्यायरूपासिंधोस्तारिकेत्यर्थः । श्रीरामचंद्रपक्षे । रक्षयाकृष्यादिप्रजानामाधिमानसपीडांमंथितुंशीलंयस्यसतथातस्यदशावतारस्यचस्मृ तिरेकाऽसहाय्यातारिण्यभिवतियतोऽम्बुधेरेकाविलक्षणादशाभीतावस्थाभूदित्यर्थः । शंभुपक्षे । कैलासोत्थापनोद्यतरावणस्यपदांगुष्ठनमनेनगर्वहरस्यतथाहरेर्विष्णोःसहस्राब्जैःपूजयतोयस्तत्सं ख्यापूरणार्थमक्षस्यनेत्रस्यअर्पणेआधिःक्लेशस्तंमंथितुंपुण्डरीकाक्षनामसुदर्शनयोर्दानेनपरिहर्तुंशीलंयस्यसतथातस्य एकादशमूर्त्तेरतएवएकादशानांअम्बूनांगंगाप्रवाहाणामाधारस्यचस्मृतिरेकाअस हायातारिणीत्यर्थः । ग्रंथप्रमेयपक्षे । रावणःनानाप्रलापहेतुर्योदर्प्पोदेहाद्यभिमानःसएवअरिःशत्रुस्तस्यहरेर्वृत्त्यारूढरूपेणहारकस्यअक्षाणामिंद्रियाणामधिमंथिनोनियंतुरंतर्यामिणइतियावत् ए कादशसंख्याभिर्जाबालादिभिरत्राध्यायउपात्तनामभिरुपनिषद्भिरवतारेबुद्धिप्रसरोयस्यतत्तथातस्यस्मृतिर्दशांबुधेःसंसारदशारूपासिंधोरेकाऽसहायावारिकेत्यर्थः । जाबालगर्भब्रह्मपरमहंसहंसआ

श्रीगणेशायनमः ॥ ॥ श्रुत्वैवंतित्तिरेर्ज्ञानंशिष्योविस्मयमागतः ॥ संन्यासंप्रष्टुकामःसन्निदंवचनमुक्तवान् १ ऐतरेयोद्विजश्रेष्ठस्तथाकौषीतकिर्मुनिः ॥ आदित्योभगवानेषसश्वेताश्वतरोपिच २ कठश्चतित्तिरिश्चैतेयज्ज्ञानंतिमहाधियः ॥ ज्ञानंतद्भवतामोक्तंदुःखसागरशोषकम् ३ गुरोर्यत्रश्रुताएताःकथाश्चित्रार्थ संयुताः ॥ प्रजानांमुनिभिःसार्द्धंसंवादोब्रह्मबोधने ४ तत्रैववामदेवस्यगर्भस्थस्यमहात्मनः ॥ प्रतर्दनस्यशक्रेणविप्रस्याजातशत्रुणा ५ कांडत्रयस्यवंशश्चभेदाभे दस्वरूपवान् ॥ अश्विभ्यामपिसंवादऋषेःसर्वार्थदर्शिनः ६ दध्यङ्ङाथर्वणस्यापिमाहात्म्यंगुरुतातथा ॥ शक्रस्यसाहसंतद्वदश्विनोस्तस्यशिष्ययोः ७ याज्ञव ल्क्यस्यसंवादोमुनिभिर्जल्पसंज्ञितः ॥ विदग्धेनचयत्रेमेस्वस्यप्राणाःप्रणीकृताः ८ जनकेनचतस्यैववादसंज्ञोमहात्मनः ॥ द्विवारंयत्रशास्त्रार्थःसकलोपिनिरू पितः ९ मैत्रेय्यापिचतस्यैवविरक्तस्यमहात्मनः ॥ मुनीनामपिसंवादःकारणस्यचनिर्णयः १० यमेनसहसंवादस्तथैवनचिकेतसः ॥ भृगोश्चवरुणस्यापिसंवादो न्योपिकश्चन ॥ एतत्सर्वंमयात्वत्तःश्रुतंब्रह्मावबोधनम् ११ अत्रतित्तिरिविज्ञानेसाधनानांपरंपरा ॥ न्यासांताकीर्तितान्यासोबहुशश्चश्रुतस्तथा १२ चातुर्वि ध्यंचसंन्यासेतत्रैतद्भवतेरितम् ॥ चतुर्थेपरमेहंसेजिज्ञासाममवर्तते १३ पृच्छाम्यत्रचतत्पृष्टाजाबालाद्यैःसमीरितम् ॥ न्यासंयोगंचहंसाद्यैस्त्वत्तस्तंपूर्वमीरय १४

रुणेयक्षुरिकाअमृतनादमहत्आत्मप्रबोधकैवल्येत्यादीन्युपनिषत्पदांतानिएकादशनामानिमूलेकीर्तयिष्यमाणानिबोध्यानि आरुणेयोपनिषद्उपन्यासःसंवादोपन्यासेनैवकृतइतिभावः ॥ १ ॥ शिष्यप्रश्नमवतारयति श्रुत्वैवमिति १ संन्यासंसफलंसेतिकर्त्तव्यंचप्रष्टुकामोजिज्ञासुर्मेधावीसंक्षेपेणोक्तमनुवदति ऐतरेयइतिद्वाभ्यां २ । ३ विशेषतोनुवादेहेतुमाह गुरोरिति । यत्रय स्यज्ञानस्योपबृंहणार्थमेताःकथाःश्रुताः । एताःकाइत्यतआह प्रजानामित्यादि । तैर्मुनिभिः संवादइतित्रिवारमनुषंगः ४ । ५ चतुर्थार्थमनुवदति कांडेतिद्वाभ्यां । शक्रनिरूपिता गुरुता ६ । ७ पंचमोक्तमनुवदति याज्ञवल्क्यस्येति । पर्णीकृतापणबद्धारिता जल्पोविजिगीषयाकृतः ८ षष्ठार्थमनुवदति जनकेनेति । वादोनिर्णयार्थः द्विवारंकूर्चब्राह्मणेतदुत्तर ग्रंथेच ९ सप्तमादिचतुर्णामर्थंदर्शयति मैत्रेय्येत्याद्यर्द्धचतुष्टयेन । तस्ययाज्ञवल्क्यस्य अन्योपिनारायणीयाख्यः उपसंहरति एतदिति १० । ११ प्रश्नबीजमाह अत्रेति । अत्र पूर्वाध्याये न्यासांतासंन्यासपर्यंता १२ । १३ पृच्छामीति । उत्कटजिज्ञासागोचरत्वेनतत्परमहंसस्वरूपंप्राधान्येनपृष्टाउपसर्जनतयाजाबालाद्युक्तन्यासंहंसाद्युक्तंयोगंचपृच्छामि अतउ त्कटजिज्ञासागोचरत्वात्तंपरमहंसंप्रथमंवर्णयेत्यर्थः १४

तत्प्रश्नमेवाभिनयति कैरिति । अयंपरमहंसधर्मःकस्याधिकारिणोयोग्यइतिशेषः किंवेद्यंयस्मिन्सतथा १५ एवंकौशलेनपृष्टोगुरुःप्रीतःसन्नुवाचेत्याह इत्युक्तइति १६ वृद्धकुमारीवरन्यायेनभवता पारमहंस्यप्रश्नएवसर्वंसंगृहीतमित्याह प्रश्नेस्मिन्निति । अस्मिन्नुक्तरूपेभवत्प्रश्नेसर्वंजाबालादिनानोपनिषत्प्रतिपादितंप्रष्टव्यमर्थजातंसम्यगवस्थितंसंगृहीतमितियावत् यथाकयाचिद्वृद्धयाकुमार्येंद्रेणवरंब्रूहीत्युक्तेसुतामेदधिसंपृक्तमोदनंसुवर्णपात्र्यांभुंजीरन्नितिवाक्येनसर्वंमिष्टंसंगृहीतंतद्वदित्यर्थः । तत्संग्रहमेवविशदयति जाबालाद्यैरिति । यतःपरमहंसधर्माःजाबालब्रह्मारुणेयपरमहंसाख्यासुउपनिषत्सुप्रपंचितास्तथायोगआत्मसाक्षात्कारोपयोगीहंसक्षुरिकादिषुतदुपयोगिवैराग्यंचगर्भोपनिषदिअतस्त्वत्प्रश्नसमाधानेसर्वासामेतासामर्थोवर्णनीयतामापन्नइतिभावः १७ । १८ एतासामर्थप्रदर्शनप्रार्थक्रमेणयथाकांक्षमेकवाक्यतामापाद्यकरिष्यतेइतिसूचयन्संन्यासप्रतिपादिकासुजाबालादिषुकीर्तितानिप्रश्नकर्तॄणांवक्तॄणांचनामान्याह अत्रेतिद्वाभ्यां । अत्रपरमहंसधर्मेजाबालोपनिषच्चतुर्थखंडेजनकेनयाज्ञवल्क्यंप्रतिप्रश्नःकृतःपंचमखंडेत्वत्रिणाकृतइत्यर्थः १९ प्रजापतिमिति । तथारुणेयोपनिषदिआरुणिनाप्रजापतिंप्रतिसप्रश्नःकृतःपरमहंसोपनिषदितुनारदेनतंप्रति

कैरयंचरितःपूर्वैःकदाकस्याधिकारिणः ॥ किंवेद्यःकीदृशाचारःकिंफलोमुनिसत्तम १५ इत्युक्तोगुरुराहैतत्शिष्यंवाक्यमुदारधीः ॥ शिष्यबुद्धिंसमालोक्यपरंत्रह्मुपागतः १६ प्रश्नेस्मिन्भवतःसर्वंप्रष्टव्यंसमवस्थितम् ॥ जाबालाद्यैःपरोहंसोयतःसर्वैःसमीरितः १७ हंसाद्यैश्चतथायोगोब्रह्मात्मैक्यावबोधने ॥ उक्तःपरमहंसस्यफलसिद्धिर्यतोभवेत् १८ अत्रपूर्वंकृतःप्रश्नोजनकेनमहात्मना ॥ अत्रिणामुनिनातद्वद्याज्ञवल्क्यंप्रतिद्विजम् १९ प्रजापतिंप्रतितथाकृतआरुणिनापुरा ॥ नारदेनचतद्वत्सयथायंभवताकृतः २० ब्रह्मोपनिषदिस्पष्टःस्वयमेवसमीरितः ॥ अयंसपरमोहंसोजाबालादिश्रुतावपि २१ अतःसर्वःसमुक्तंतंस्वप्रश्नार्थमयेरितम् ॥ सावधानमनाभूत्वाशृणुवक्ष्यामितेधुना २२ बृहस्पतेःसुरगुरोर्भ्रातायस्तुसहोदरः ॥ विप्रआंगिरसोनाम्नासंवर्तकइतीरितः २३ आरुणस्यसुतोधीमानारुणिःसर्वशास्त्रवित् ॥ उद्दालकःसुतस्तस्यश्वेतकेतुश्चसत्तमः २४ दुर्वासाःशंकरस्यांशस्तपसांपतिरूर्जितः ॥ ऋभुःप्रजापतेःपुत्रोमानसःसनकादिवत् २५ निदाघःस्यादृभोःशिष्यःपुरायःकर्मठोभवत् ॥ भरतोजडनामापिभूपालोयोन्यजन्मनि २६ विष्णोरंशस्तथैवैषदत्तात्रेयोमहामुनिः ॥ तथारैवतकःकश्चिद्ब्राह्मणोगुणसंयुतः २७

श्नःकृतः २० ब्रह्मोपनिषदिति । तथायोयंजाबालादौपरमहंसःसमीरितःसब्रह्मोपनिषदिस्वयमेवप्रश्नोपन्यासमंतरेणैवब्रह्मणोक्तइत्यर्थः २१ फलितमाह अतइति । सर्वैर्जाबालाद्यैःप्रपंचितंस्वप्रश्नगोचरमर्थंश्रृण्विति २२ अथफलार्थंप्रवृत्ताइच्छासाधनमपिगोचरयतीतिन्यायेनसाधनानिनिरूपयिष्यंस्तावत्फलावस्थविद्वत्संन्यासशालिनःपरमहंसान्जाबालपंचमखंडेदर्शितान्सहतद्धर्मैर्वर्णयति बृहस्पतेरित्यादिद्विचत्वारिंशताश्लोकैः । तत्रसंवर्तोनामबृहस्पतेर्भ्रातायस्यमहिमाभारतेऽश्वमेधपर्वण्यपिवर्णितः २३ आरुणस्येति । द्वितीयःपरमहंसआरुणापत्यत्वादारुणिसंज्ञोयस्योद्दालकइतिनामांतरं तत्पुत्रःश्वेतकेतुसंज्ञस्तुतृतीयइत्यर्थः २४ चतुर्थपंचमौवर्णयति दुर्वासाइति । शंकरस्यकालाग्निरुद्रस्यावतारोमहातपाश्चदुर्वासाःप्रसिद्धस्तथाऋभुर्ब्रह्मणोमानसःपुत्रःपुराणेपुख्यातइति २५ निदाघइति । षष्ठःपरमहंसोनिदाघोनामयःकर्मासक्तोपिऋभुणाबहुशःप्रदर्शितात्मतत्त्वतयाविष्णुपुराणेवर्णितः तथाभरतःसप्तमोयोमृगयोनिव्यवहितेतीतजन्मनिराजाभूद्यन्नाम्नाभारतवर्षंप्रसिद्धिरिति २६ अष्टमोदत्तात्रेयःप्रसिद्धोनवमस्तुरैवतकनामाकश्चिद्ब्राह्मणोनतुक्षत्रियोब्राह्मणसाहचर्यविरोधादित्याह विष्णोरिति २७

श्रौतप्रभृतिपदेनभारद्वाजशुकादयोज्ञेयाइतिदर्शयंस्तेषांब्रह्मभावप्राप्ततामाह भारद्वाजादयइति २८ तेषामव्यक्तलिंगतामाह नमुंडाइति । मुंडाःमुंडिताः तेप्रसिद्धाः एतेनरक्तवाससः २९ तथैतेऽव्यक्ताचाराइत्याह आचारइति । अव्यक्ताचारःकीदृशोभवतीतिचोदेत्थमित्याह अव्यक्ताचारवानिति । एवमित्थं ३० एवंपदार्थंप्रपंचयति अव्यक्तेत्यादिना । अव्यक्ताअलक्षितामतिर्यस्यसतथा ३१ सर्वज्ञवदिति । श्रुतंशास्त्रं 'श्रुतमाकर्णितेशास्त्रे'इतिहेमः एकत्रक्वचित् ३२ रागांधेति । स्पष्टम् ३३ 'यंनसंतंनचासंतंनाश्रुतंनबहुश्रुतं । नसुवृत्तंनदुर्वृत्तंवेदकश्चित्सब्राह्मणः'इतिस्मृतावप्येषएवोक्तइत्याह अयमिति । अयमव्यक्तलिंगःपुरुषः सन्सज्जनः असन्तद्विपरीतः सुवृत्तःसदाचारः ३४ ब्राह्मणोवेति । अयंकुशलेनापिब्राह्मणादिवर्णैर्ब्रह्मचर्याद्याश्रमैश्चविशिष्टतयानज्ञातुंशक्यति ३५ उक्तेर्थेदत्तात्रेयवृत्तंदत्तात्रेयसंहितायांप्रसिद्धमुदाहरणतयाह दत्तात्रेयइतित्रिभिः । रेवानर्मदा अर्जुनःसहस्रबाहुः ३६ रक्तांबरेति । एकस्मिन्करेपानपात्रमन्यस्मिन्यतिचिन्हंदंडंधारयन् ३७ वामांगेइति ।

भारद्वाजादयश्चान्येविप्राःशास्त्रविशारदाः ॥ अहंब्रह्मेतिविज्ञानात्परिक्षीणात्मबंधनाः २८ नमुंडानैवजटिलानैकदंडादिधारिणः ॥ नश्वेतवसनानैवएतेतेरक्तवाससः २९ आचारोपितथैवैषामव्यक्तोब्रह्मवादिनाम् ॥ अव्यक्ताचारवानित्थंपुमानेवंव्यवस्थितः ३० अव्यक्तमतिरव्यक्ताकृतिरव्यक्तलिंगकः ॥ जातोऽपेक्षः ससर्वत्रप्रसक्तइवचक्वचित् ३१ सर्वज्ञवत्क्वचिद्भातित्वज्ञवच्छ्रुतहीनवत् ॥ बहुश्रुतवदेकत्रजडवन्मूकवत्क्वचित् ३२ रागांधवत्क्वचिद्भातिविरक्तइवचक्वचित् ॥ असतांचरितेसक्तःक्वचित्सुमहतामपि ३३ अयंसन्नथवाऽसन्वाप्यश्रुतोवाबहुश्रुतः ॥ सुवृत्तोवापिदुर्वृत्तोजनैर्ज्ञातुंनशक्यते ३४ ब्राह्मणोवाश्वपाकोवायतिर्वाप्यथवागृही ॥ निपुणेनापिनज्ञातुंशक्योवर्णाश्रमादिना ३५ दत्तात्रेयोयथापूर्वंरेवायांजलमध्यगः ॥ अर्जुनेनवितर्क्यापिनज्ञातश्चक्रवर्तिना ३६ रक्तांबरधरःश्रीमानयुवासूर्यसमप्रभः ॥ पानपात्रंकरेबिभ्रदेकस्मिन्दंडमन्यतः ३७ वामांगेवामनयनांमदघूर्णितलोचनाम् ॥ वीक्ष्यमाणोमुहुर्ब्रह्मवदन्वाचासनातनम् ३८ एतेषांपदवीमज्ञोगच्छन्नशीघ्रमधोव्रजेत् ॥ इयंजन्मसहस्रांतेदुर्लभामानुषैःसदा ३९ एतेब्रह्मात्मविज्ञानाद्ब्रह्मीभूतायतीश्वराः ॥ पुण्यपापेउभेतीर्त्वावर्ततेपरमेपदे ४० एतेषुयेत्रसंप्रीताःपुरुषाभक्तिसंयुताः ॥ तेभ्यःस्वसुकृतंसर्वंप्रयच्छंतिसुखप्रदम् ४१ यएतेषुसदाद्वेषंदुरात्मानःप्रकुर्वते ॥ तेभ्यस्तेपातकंसर्वंप्रयच्छंत्यत्रदुःखदम् ४२ एवंपुण्यंतथापापंजन्मकोटिशतार्जितम् ॥ दत्वाफलेनसहितंलोकातीताःसमासते ४३ आशांबराःक्वचिच्चैतेदुकूलवसनाःक्वचित् ॥ विण्मूत्रलेपनाःक्वापिक्वचिच्चंदनचर्चिताः ४४ क्वचिद्धसंतिसहसाक्वचिद्गायंतिवल्गिताः ॥ आस्फोटयंतिधावंतिपिशाचाइवचक्वचित् ॥ क्रीडंतिबालकैःसार्धंक्वचिदेतेगतस्पृहाः ४५

वामांगेस्थितांयोषितंपश्यन्सनातनंब्रह्मश्रुतिवाक्यैर्वदंश्चार्जुनेननज्ञातइत्यधस्तात्संबंधः ३८ लोकसंघट्टवारणार्थंदोषास्पर्शलक्षणविद्याफलाभिव्यक्तयेवाईश्वरैरेतादृशमाचरणंक्रियतेतथाप्यनीश्वरेणतथानकर्तव्यमरुद्रस्यविषादनवदनर्थहेतुत्वादित्याह एतेषामिति । एतेषांसिद्धानां इयंसिद्धावस्था जन्मसहस्रांतेपीतिशेषः ३९ एषांत्वयुक्ताचरणेनदोषोब्रह्मविद्याप्रभावादित्याह एतेइति ४० एतेषांसुकृतंभक्तिमत्सुगच्छतिदुष्कृतंतुद्वेषवत्सुसुहृदःसाधुकृत्यांद्विषंतःपापकृत्यामितिश्रुतेरित्याह एतेष्वितिद्वाभ्यां एतेषुविद्यासिद्धेषु । तेविद्वांसःइतिद्वयोरर्थः ४१ । ४२ फलितमाह एवमिति । इत्थंफलसहितंकर्मजातंपरत्रक्षिप्त्वास्वयंलोकंकर्मफलमतिक्रामंतीत्यर्थः ४३ अथतेषामनुन्मत्तानामुन्मत्तवदाचरणमभिनयति आशांबराइतिचतुर्भिः । आशांबरादिगंबराः ४४ क्वचिद्धसंतीति । वल्गिताइत्यर्शआद्यजंतं तथाचवल्गितमश्वगतिविशेषस्तद्वंतःइतस्ततःकूर्दंतइतियावत् आस्फोटनंस्फालनम् ४५

अकारणमिति । प्रताडिताबद्धाश्चगर्जंतीति ४६ एवमिंति । स्वतत्त्वेलोकानांव्यामोहार्थमुक्तविधचेष्टांकुर्वंतोप्येतेअनुन्मत्ताएव यमानामहिंसासत्यास्तेयब्रह्मचर्याणामलोपकत्वादित्यर्थः ४७ स्वतत्त्वगोपनार्थमेतादृशाचरणंयोगशास्त्रेविहितमितिदर्शयितुंतद्वचनंपठति तथेति । धर्मंयमनियमादिरूपं अदूषयन्रक्षयन् ४८ एतद्वचनमिति । एतद्वचनानुसारेणैवविविधाःक्रियाःकुर्वंतिमहात्मानइत्यतएवदत्तात्रेयचरितेपानपात्रस्यकरेधारणमेवोक्तंनतुपानमित्यादिबोध्यम् ४९ एतेषांदोषस्पर्शाभावंसदृष्टांतमाह यथेति । स्पष्टम् ५० एतेषामाचरणंदृष्ट्वामंदोपितथाचरन्पततीतिसदृष्टांतमाह सर्वेतिद्वाभ्यां । तथाअग्निवत्सर्वभक्षणेप्रवृत्तोनश्यतिपतति एवंदत्तात्रेयादिवद्वर्तमानोऽन्यःसाक्षात्कारहीनत्वेनतद्विलक्षणःपरमहंसोयतिःपततीत्यर्थः ५१ । ५२ एतेषांतुशास्त्रातिक्रमेपिनदोषइत्यत्रहेतुतयाविधिगोचरत्वाभावमाह विदुषामिति । विदुषांसाक्षात्कारवतामेषउक्तविधसंन्यासःस्वयंजातोविधिप्रयुक्तोनभवतिफलरूपत्वेनानुपादेयत्वात् कृतिसाध्यत्वलक्षणोपादेयत्वशालिहिविधेयंभवतीतिसिद्धांतः । यथाचास्मिन्संन्यासेविधियोग्यतालक्षणाकर्तव्यतानास्तितथाबहिरंगांतरंगेषुसाधनेष्वपिनास्तिफलोत्पत्तौसाधनैःप्रयोजनाभावादित्याह कर्तव्यतेति । फलजन्मनिसति

अकारणंरुदंत्येतेक्वचिल्लोकेप्रताडिताः ॥ बद्धाश्चसुखमागत्यगर्जंतिजलदाइव ४६ एवमुन्मत्तवच्चेष्टांकुर्वंतोलोकमोहकाः ॥ अनुन्मत्तामहाभागायमानामविलोपकाः ४७ तथाचरेत्तवैयोगीसतांधर्ममदूषयन् ॥ जनायथाऽवमन्येरन्गच्छेयुर्नैवसंगतिम् ४८ एतद्वचनमालोक्यप्रवर्तंतेमहाधियः ॥ चेष्टासुविविधास्वत्रसर्वचेष्टाविवर्जिताः ४९ यथाज्वलन्महावन्हिःशुष्कमार्द्रंचनिर्दहेत् ॥ तथाशुभाशुभंकर्मतेषांज्ञानाग्निरप्ययम् ५० सर्वभक्षंयथैवाग्निंदृष्ट्वाकश्चिद्विमोहतः ॥ स्वयंतथाप्रवृत्तःसंस्तत्क्षणादेवनश्यति ५१ एवंपरमहंसानांवृत्तिमेतामलौकिकीं ॥ अन्योत्रपरमोहंसःसाक्षात्कारविवर्जितः ॥ कुर्वन्विनाशमायातिदुःखंलोकद्वयेपिसः ५२ विदुषामेषसंन्यासःस्वयंजातःफलात्मकः ॥ कर्तव्यतानकाप्यत्रविद्यतेफलजन्मनि ५३ त्रिसंध्यंनैवचस्नानंनसमाधिश्चविद्यते ॥ यतस्तेषांसदैवास्तिसमाधिर्ब्रह्मवेदिनाम् ५४ आसीनःसंविशंस्तिष्ठन्भुंजानःपर्यटन्पिबन् ॥ शयानोब्रह्मविन्नित्यंतिष्ठत्येवसमाहितः ५५ देहाभिमानेगलितेविज्ञातेपरमात्मनि ॥ यत्रयत्रमनोयातितत्रतत्रसमाधयः ५६ आपंचमाद्यथावर्षान्नविधिर्ननिषेधनम् ॥ शिशोस्तथैवविदुषांननिषेधोविधिर्नच ५७ निजंदेहंतथाविष्ठांशुनएतद्द्वयंहितत्विषमंनैवपश्यंतिकर्मणामनसागिरा ५८ दुकूलैर्विविधैस्तद्वल्लेपनैश्चमनोरमैः ॥ सुगंधैःसुमनःसंघैरन्नाद्यैश्चापिपूजिताः ॥ अणुमात्रमिमेहर्षंनैवयांतिकदाचन ५९

अत्रसाधनजातेकर्तव्यताकापिशास्त्रसिद्धान्यायसिद्धावानविद्यतेइत्यर्थः ५३ साधनेषुकर्तव्यताभावमेवस्फुटयति त्रिसंध्यमिति । एतान्प्रतित्रिकालस्नानंनाविधीयतेतत्फलस्यशुद्धेःसिद्धत्वात् नापिसमाधिस्तस्यस्वरूपतःफलतश्चसिद्धत्वादित्यर्थः ५४ तत्रसमाधेःस्वरूपतःसिद्धिमभिनयति आसीनइति । आसीनोबद्धासनः संविशन्प्रसारितकायः तिष्ठन्नुत्थितः शयानोनिद्रितः एतास्ववस्थासुसमाहितःसमाधिमानेवविद्वांस्तिष्ठतीत्यर्थः ५५ अत्रार्थेसांप्रदायिकवाक्यंसंवादयति देहाभिमानइति ५६ एतेषुप्रमातृत्वाभिमानाभावादेवनप्रमाणप्रवृत्तिरितिसदृष्टांतमाह आपंचमादिति । शिशोर्यथापंचमवर्षपर्यंतंविध्याद्ययोग्यत्वंयथाऽस्यापीत्यर्थः ५७ तत्रहेतुतयाप्रमातृत्वोपपादिकायाभेददर्शनलक्षणायाअविद्यायाअभावमाह निजमिति । एतेपरमहंसाः स्वकीयदेहंशुनोमलंचविषमंनपश्यंतिअतएवतेहर्षादिरहिताइत्याह कर्मणेत्यादिना । कर्मणाशरीरव्यापारेणवाङ्मनसव्यापारेणचतथादुकूलादिभिश्चाराधिताःकिंचिदपिनहृष्यंतीतिद्वयोरर्थः ५८ । ५९

द्वेपाभावमाह छेदेहति । देहनिष्ठछेदनादौसतिनविषादंतीति ६० लिंपेदिति । वास्यातक्षोपकरणं तयोःपूजकच्छेदकयोःस्वदेहेप्रेमास्पदत्वेनप्रसिद्धेचसमंनिर्दोषमात्मतत्त्वमेवपश्यंतीत्यर्थः ६१ अतएवतेषांशत्रुमित्रादिकंनास्तीत्याह शत्रुरिति । स्वःस्वकीयः ६२ अतएवतेद्वंद्वातीताइत्याह नशीतमिति ६३ मानापमानाविति । मानापमानौनृणांप्रीत्यप्रीतिकरौप्रसिद्धौतेषांनृणांकार्यत्वे नसंबंधिनोमानापमानौएतेषांपरमहंसानामेतेप्रीत्यप्रीतीनकुरुतःसमदर्शित्वादित्यर्थः ६४ फलावस्थपरमहंसवर्णनमुपसंहरति एवंतेइति । तेसंवर्त्तादयः धर्मोज्ञाननिष्ठात्मकः ६५ अस्यसाधनंपरं वैराग्यमितिव्यतिरेकमुखेनाह कालेचेति । विरागंसंत्यज्यवर्त्तमानेपुजनेष्वेवंनिश्चयोजातः एवंकथं यतःकालेकृतत्रेतादिरूपेनियतिर्व्यवस्थितधर्मप्रवर्तकत्वरूपाविद्यतेऽतइदानीमयंपारमहंस्यधर्मः क्वापिनास्तीत्यर्थः विरक्तास्तुतंधर्ममपरोक्षंकुर्वंतीतिभावः ६६ तादृशवैराग्यायचगर्भोपनिपदर्थोविचार्यइत्याह गर्भोपनिषदीति । सपारमहंस्यप्रयोजकोविरागोपिशुद्धधियांगर्भोपनिषदुक्तशरीरव्यवस्थालोचनाद्भवतीत्यर्थः ६७ अथगर्भोपनिपदिशरीरस्थितिप्रतिपादकस्यपंचात्मकमित्यादिमंत्रस्यनवकपालमित्यादेरंत्यग्रंथस्यचार्थश्लोकानांपंचषष्ठ्युत्तरत्रिशतेनोपबृंहयंस्तत्रपंचात्मकत्वंप

छेदेभेदेतथादेहेबंधनेताडनेपिच ॥ भर्त्सनादौविषादंचमनसापिनयांतिते ६० लिंपेद्यश्चंदनैरेतांश्छिद्याद्योपिचवास्यया ॥ तयोस्तथास्वदेहेचसदातेसमबुद्धयः ६१ शत्रुर्मित्रमुदासीनःस्वःपरश्चनविद्यते ॥ तेषांब्रह्मात्मनांनित्यमभेदमनुपश्यताम् ६२ नशीतंनापिचोष्णंवापिपासानक्षुधानच ॥ शोकमोहादयोनैवनजरा मरणादयः ६३ मानापमानौद्वावेतौप्रीत्यप्रीतिकरौनृणाम् ॥ तेषामेतेचकुरुतोनैतेषांसमचेतसाम् ६४ एवंतेपरमाहंसाउक्ताएतेह्यलौकिकाः ॥ फलावस्थामहाभागाविद्वांसःसमदर्शिनः ॥ यैरयंचरितःपूर्वंधर्मोत्यंतंसुदुश्चरः ६५ कालेचनियतिर्नैवविद्यतेकस्यचित्क्वचित् ॥ एवंविरागंसंत्यज्यजातंसर्वत्रनिश्चितम् ६६ गर्भोपनिषदिप्रोक्तशरीरस्थितिबोधनात् ॥ प्रायःसंजायतेसोपिविशुद्धमनसांनृणाम् ६७ सर्वेषामपिदेहोयंब्रह्मणश्चशुनस्तथा ॥ पंचभूतात्मकोनित्यंभौतिकैः समधिष्ठितः ६८ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ महाभूतानिपंचैवकीर्तितानिमनीषिभिः ६९ एतानिकथितोदेहःस्थूलःसूक्ष्मश्चदेहिनाम् ॥ स्थूलसूक्ष्मस्वरूपेणवर्तमानानिसर्वशः ७० चक्षुःश्रोत्रंतथाघ्राणंरसनंस्पर्शनंत्वपि ॥ ज्ञानेंद्रियाणिपंचस्युःपंचकर्मेन्द्रियाण्यपि ॥ वागुपस्थौतथापायुःकरौपादौच पंचमौ ७१ अंतःकरणमत्रोक्तंद्विविधंवेदवादिभिः ॥ ज्ञानस्यचक्रियायाश्चहेतुःसर्वत्रसंस्थितम् ७२ क्रियाहेतुरयंप्राणःपंचधादशधापिवा ॥ प्राणोपानस्तथोदानःसमानोव्यानएवच ॥ नागःकूर्मश्चकृकलोदेवदत्तोधनंजयः ७३

चमुवर्तमानत्वंचस्थूलसूक्ष्मशरीरारंभकाणांभूतानामाह सर्वेषामित्यादिनाअयंपंचीकृतदेहइत्यतःपूर्वेणग्रंथेन । हिरण्यगर्भशरीरमारभ्यशुनःशरीरपर्यन्तंसर्वदेहानांपंचभूतात्मकत्वंभौतिकैरिन्द्रियादिभिरधिष्ठितत्वंचसममित्यर्थः ६८ एतदेवस्फुटयति पृथिव्यापइति । पृथिव्यादीनिपंचभूतानिप्रसिद्धानिएतन्मयान्येवसर्वाणिस्थूलानिसूक्ष्माणिचशरीराणीतिद्वयोरर्थः ६९ । ७० तत्रसूक्ष्मभूतारब्धान्सूक्ष्मशरीरावयवानाह चक्षुरितिचतुर्भिः । सात्त्विकभूतांशारब्धानिचक्षुरादीनिराजसैस्तैरारब्धानितुवागादीनिकर्मेंद्रियाणीतिविभागः ७१ भूतानांसात्त्विकांशसमुदायाद्राजसांशसमुदायाच्चोत्पन्नत्वेनज्ञानशक्तिक्रियाशक्तिनामकंद्विविधमंतःकरणंबोध्यमित्याह अंतःकरणमिति । अत्रसूक्ष्मशरीरेसर्वत्रसर्वस्मिन्घटकतयासम्यक्स्थितमंतःकरणंज्ञानक्रियारूपकार्यद्वयहेतुत्वेनद्विविधमित्यर्थः ७२ तत्रक्रियाशक्तेःप्राणस्यभेदानाह क्रियाहेतुरिति । पंचधाव्यानान्तैर्भेदैः धनंजयान्तैस्तुदशधेति ७३

ज्ञानशक्तेश्चातुर्विध्यमाह चतुर्विधमिति । सर्वेषांदेहेपद्महार्दंपद्मंतस्यांतःस्थितमंतःकरणंमनःप्रभृतिभेदैश्चतुर्विधम् ७४ शरीरद्वयेसूक्ष्मस्थूलपदयोःप्रवृत्तिनिमित्तद्वयंदर्शयति सूक्ष्मैःसायंप्रातराहुत्यादि कर्मणांसूक्ष्मपरिणामात्मकैर्भूतैःपृथिव्याद्यैःसमंसहवर्तमानंतथासूक्ष्मंसूक्ष्मचक्षुराद्यवयवसमुदायात्मकंयतोभवतिततःसूक्ष्मसंज्ञमांतरंदेहंशृणुअवधारय स्थूलभूतसंपृक्तत्वादिंद्रियगोचरत्वलक्षणस्थूल त्वशालित्वाच्चबाह्यंस्थूलसंज्ञमित्यर्थः ७५ अनयोःशरीरयोःपंचीकरणवार्तिकाद्युक्तमध्यात्मादिविभागमाह अध्यात्ममितिपाड्भिः । अध्यात्मत्वाधिदैवत्वाभ्यामुक्तयोःशरीरयोःप्रत्येकंद्वैविध्या च्छरीरस्यभेदाश्चत्वारउक्तास्तत्रतत्पदार्थमधिकृत्योपाधितयावच्छिद्यस्थितमधिदैवमित्युच्यते यथासूक्ष्मसमष्टिरूपोहिरण्यगर्भःस्थूलसमष्टिरूपोविराट्लोकमयशरीराभिमानीअधिदैवमित्युच्यते इत्यर्थः ७६ तत्रविराजोलोकमयंशरीरमभिनयति अतलमितिचतुर्भिः । अतलादिसंज्ञानिसप्तपातालानिविराजःपादत्वेनध्येयानीत्यर्थः ७७ भूर्लोकइति । जघनंऊर्वोरंतरदेशः शिष्टंत्रयंनिगदव्या ख्यातं ७८ । ७९ । ८० आत्मनित्वंपदार्थेउपाधितयाहमितिगृह्यमाणलक्षणमध्यात्मसूक्ष्मंस्थूलंचनामभेदेनाह अध्यात्ममिति । यत्सूक्ष्ममध्यात्मंव्यष्टिरूपेणाहमितिगृह्यमाणंततैजससंज्ञंतथाभूतं स्थूलंतुविश्वसंज्ञमित्यर्थः ८१ उक्तेष्वेवाधिभूतादिभेदांतर्भावइतिदर्शयति अधिभूतमिति । देहस्यद्वंद्वंस्थूलसूक्ष्मरूपमध्यात्मवत्यथाध्यात्मावस्थातद्वदपरोक्षमिदंतयाभासमानतालक्षणाविशेषवच्च

**चतुर्विधंभवेज्ज्ञानहेतुरंतःस्थितंचतत् ॥ हार्दस्यदेहेपद्मस्यसर्वेषामपिदेहिनाम् ॥ मनोबुद्धिस्तथाचित्तमहंकारइतीरितम् ७४ सूक्ष्मैर्भूतैःसमंसूक्ष्मंसूक्ष्मदेह मिदंशृणु ॥ स्थूलैर्भूतैस्तथास्थूलंस्थूलंदेहंवदंत्यपि ७५ अध्यात्ममधिदैवंचभेदस्तुस्याच्चतुर्विधः ॥ सूक्ष्मंहिरण्यगर्भोयमधिदैवंसमीरितः ॥ स्थूलंतथाविराडेषपु मान्लोकवपुःस्थितः ७६ अतलंचैवपातालंवितलंसुतलंतथा ॥ रसातलंपंचमंस्यात्तत्रषष्ठंतलातलम् ॥ महातलंसप्तमंतुपादद्वयमिदंस्मृतम् ७७ भूर्लोकोज घनंतस्यपुरुषस्यमहात्मनः ॥ अंतरिक्षंतथानाभिःस्वर्गोहृदयमीरितम् ७८ महर्लोकोमुखादर्वाग्गलादारभ्यसंस्थितः ॥ मुखतोनेत्रपर्यंतंजनलोकइतिस्मृतः ७९ ललाटंतुतपःप्रोक्तंशिरःसत्यमितीरितम् ॥ चतुर्दशानांलोकानामेवंस्थानंविराट्स्मृतः ८० अध्यात्मंसूक्ष्मसंज्ञंयत्तैजसंतत्प्रकीर्तितम् ॥ विश्वंस्थूलंसमुद्दिष्टमा त्मनासमधिष्ठितम् ८१ अधिभूतंचदेहस्यद्वंद्वमध्यात्मवत्स्थितम् ॥ अध्यात्ममधिभूतंचमिलित्वास्थिरजंगमम् ८२ चतुर्विधाभवंत्येतेदेहाःसर्वशरीरिणाम् ॥ उद्भिज्जाःस्थावराणांस्युःकेषांचिच्चशरीरिणाम् ॥ देवादीनांनयेयोनिंप्राप्ताःपुण्याधिकाजनाः ८३ स्वेदजाश्चापिविज्ञेयामत्कुणाद्याःसहस्रशः ॥ अंडजास्तेपि केचित्तुकेचिदन्येजलेचराः ८४**

यदाभवतितदाधिभूतमित्युच्यते भूतंविपयमधिकृत्यवर्तमानमितिव्युत्पत्तेरितिपूर्वदलार्थः तथाएषांशरीराणामध्यात्मत्वमधिभूतत्वंचमिलित्वाव्यवहारारूढंयदाभवतितदास्थिरजंगमभेदोभवती त्यर्थः स्थावरजंगमानांशरीराणिहितदभिमान्यपेक्षयाअध्यात्मतांभजंतेद्रष्ट्रंतरापेक्षयात्वधिभूतत्वमितिभावः ८२ व्यष्टिस्थूलशरीराणामुद्भिज्जादिभेदेनचातुर्विध्यमपिप्रसिद्धमित्याह चतुर्विधाइति । एतेस्थूलाः । तत्रस्वबीजस्योर्ध्वाकारपरिणामप्रयोजकत्वेनउद्भिज्जसंज्ञानुदाहरति उद्भिज्जाइति । स्थावराणांदेहाउद्भिज्जाइतिप्रसिद्धाःकेषांचिद्देवादीनांचदेहाउद्भिज्जाइतिसंबंधः केतेदेवादयः येपुण्योत्कर्षेणदेहधारणेयोनिव्यवधानेनसहंतेइत्यर्थः एतेनउद्भिज्जोदेहाद्विविधाअधर्मजाधर्मजाश्च आद्यावृक्षाणांनारकीयाणांच अंत्यादेवानां आदिपदग्राह्यकायव्यूहकृतांचेतिसूचितं ८३ स्वेदजा दीनुदाहरति स्वेदजाइतिद्वाभ्यां । मत्कुणाःखट्वादिगताःप्रसिद्धास्तत्प्रभृतयःक्षुद्रजंतवःप्रायशःस्वेदजाभवंति अंडजास्तुकेचित्तेस्थलगतक्षुद्रजंतवोपिभवंतियथापिपीलिकादयः केचित्तुजलेचरायथा मत्स्यादयः अन्येअंतरिक्षगायथापक्षिणः तद्वद्बिलेशयाःसर्पाद्याश्चअंडजाइतिसंबंधः अंत्यंदलंस्फुटम् ८४

८५ अथभूतानांपंचसुव्यापारेषुवर्त्तमानत्वंप्रपंचयन्भूतानांभौतिकानांचस्वस्वव्यापारान्दर्शयति तेष्वितिपङ्क्तिः । उक्तदेहेषुपृथिव्याधारणव्यापारोजलस्यक्लेदनमार्द्रीकरणंतेजसःपचनादिकंवायोः संयोजनादिकमाकाशस्यावकाशदानमिति तथाभौतिकेषुचक्षुरादिज्ञानेंद्रियाणांरूपग्रहणादिरूपाव्यापाराइतित्रयाणामर्थः ८६ । ८७ ८८ कर्मेंद्रियाणांतानाह वक्तव्यइति । वक्तव्येवचनेवागिंद्रियंहेतुः आदानग्रहणेपाणींद्रियम् प्रजोत्पादनेआनंदेचउपस्थेंद्रियम् मलोत्सर्गेपाय्विंद्रियम् गमनेपादेंद्रियंचहेतुरिति ८९ प्राणाद्याइति । तथाप्राणादीनामुच्छ्वासादयोऽसाधारणव्यापाराजीवनोत्क्रांत्यादिरूपाःसाधारणव्यापाराश्चप्रसिद्धाइत्यर्थः ९० अंतःकरणचतुष्टयस्यतानाह संशयादेरिति । संशयादिरूपस्यमंतव्यस्यमननस्यहेतुर्मनोभवति अहंकरणेऽहंकारः सामान्याकारविज्ञानेचित्तम् अवधारणेबुद्धिरिति ९१ भूतानांस्वरूपलक्षणभूतांश्चयत्कठिनमित्यादिश्रुत्युक्तान्धर्मानाह कठिनेति । काठिन्यंपृथिव्याःस्वरूपलक्षणम् द्रवत्वस्नेहौजलस्य उष्णत्वप्रकाशौतेजसः चलनंवायोः छिद्रत्वमाकाशस्येति गंधादयःशब्दांताःपंचपृथिव्यास्तटस्थलक्षणम् एवंजलस्यरसादयश्चत्वारः तेजसोरूपादयस्त्रयःवायोःस्पर्शशब्दौ आ

अंडजाःपक्षिणस्तद्वत्सर्पाद्याश्चबिलेशयाः ॥ जरायुजामानुषाद्याःप्रसिद्धाःसर्वदेहिनाम् ८५ तेषुसर्वेषुदेहेषुपृथिवीधारणेस्मृता ॥ आपःसंक्लेदनेतद्वत्तेजःपाकादिकर्माणि ८६ संयोगेचवियोगेचवायुराकाशईरितः ॥ अवकाशेसदाहेतुश्चक्षूरूपग्रहेतथा ८७ श्रोत्रंशब्दग्रहेतद्वद्घ्राणंगंधग्रहेतथा ॥ स्पर्शग्रहेत्वगुद्दिष्टारसनंतुरसग्रहे ८८ वक्तव्येवाग्भवेद्धेतुर्हस्तावादानकर्मणि ॥ प्रजोत्पादेतथानंदेउपस्थःपरिकीर्तितः ॥ पायुर्विसर्गेसंप्रोक्तःपादौगत्यांसमीरितौ ८९ प्राणाद्याःकथितादेहेसर्वेविविधकर्माणि ॥ जीवनेमरणेतद्वद्धेतवःसर्वदेहिनाम् ९० संशयादेर्भवेद्धेतुर्मंतव्यस्यमनःसदा ॥ अहंकर्तव्यहेतुःस्यादहंकारोवपुःस्थितः॥ चित्तंसामान्यविज्ञानेबुद्धिःसर्वत्रनिश्चये ९१ कठिनापृथिवीज्ञेयागंधादिगुणसंयुता ॥ द्रवस्नेहयुताआपोरसादिगुणसंयुताः ९२ उष्णप्रकाशवत्तेजोरूपादिगुणसंयुतम् ॥ क्रियावान्कथितोवायुःस्पर्शशब्दगुणोहिसः ॥ नभःसुषिरमुद्दिष्टंशब्दैकगुणमेवतत् ९३ एकद्वित्रिचतुःपंचगुणयुक्ताउदाहृताः ॥ विषयाःश्रोत्रमुख्यानांखानिलानलवार्भुवः ॥ हस्तादीनांतएवस्युर्विषयानियतिंविना ९४ भूतभौतिकमेतत्स्यात्सूक्ष्मंदेहेशरीरिणाम् ॥ अधिदैवादिभिन्नानामतिसूक्ष्मतमंसदा ९५ सूक्ष्मतास्यतुविज्ञेयापंचीकरणवर्जनात् ॥ पंचीकरणमप्येवंभूतानामिहकीर्तितम् ९६

काशस्यएकःशब्दइतिद्वयोरर्थः ९२ । ९३ एकेति । इत्येवमेकद्वित्रिचतुःपंचगुणयुक्ताआकाशादिभूपर्यंताभूतसंज्ञाःपदार्थाःक्रमेणश्रोत्रत्वक्चक्षुरसनघ्राणानांविषयाउक्ताःगुणगुणिनोस्तादात्म्यादितिभावः येचश्रोत्रादीनांक्रमेणविषयास्तएवहस्तादिकर्मेंद्रियाणांविषयाभवंतिनियतिंव्यवस्थांविना नहिहस्तेनपृथिव्येवादीयतेकिंतुजलादिकमपीतिभावः ९४ एवंपंचात्मकमित्यादिमंत्रस्यसूत्रत्वेनानेकार्थसूचकत्वाविरोधात्प्रथमपादेनयथापंचभूतरूपेणधारणादिपंचव्यापारकंप्राणादिरूपेणप्राणनादिपंचव्यापारकंपंचेंद्रियरूपेणपंचविषयकंपंचभूतसात्विकांशमयांतःकरणरूपेणपंचभूतमयमंतव्यादिविषयकमित्येवंविधाअर्थाःसंगृहीतास्तथापंचीकरणमपिसूच्यतेइतिदर्शयन्पंचीकरणमवतारयति भूतेतिद्वाभ्यां । उक्तंभूतभौतिकानांवृंदमधिदैवमध्यात्मंवासूक्ष्मदेहघटकतयावर्तमानमतिसूक्ष्ममिंद्रियैर्ग्रहणायोग्यंभवतीत्यर्थः ९५ सूक्ष्मतेति । सूक्ष्मशरीरघटकानांयासूक्ष्मतातत्रहेतुःपंचीकरणाभावस्तस्यपंचीकरणस्यस्वरूपमप्येवंवक्ष्यमाणविधंपिष्टमकृतमंत्रेकीर्तितमावृत्त्यासूचितमित्यर्थः ९६

इदंशरीरंस्वकारणानांभूतानामेकैकस्यपंचमांशेनपंचात्मकेनपंचसुभूतेषुवर्त्तमानेसंपृक्तमितियोजनांसूचयन्पंचीकरणमभिनयति एकैकमिति । प्रथममेकैकंभूतंपंचधापंचधाविभज्यतेषामवय वचतुष्टयपंचकमेकतोऽवस्थाप्यावशिष्टान्पृथिव्यादीनांपंचपंचमांशान्प्रत्येकंपंचधाविभज्ययथाक्रमंप्रथमावस्थापितेअवयवचतुष्टयसमुदायपंचकेयोजनंपंचीकरणमित्यर्थः एतेनत्रिवृत्करणवत्पं चीकरणस्याश्रौतत्वादप्रामाणिकत्वमितिकेषांचिदुक्तिःपरास्ता ९७ यच्चपंचीकरणेकैश्चिद्दूषणमभ्यधायिवायोरपिरूपवदंशसंपर्कात्प्रत्यक्षत्वापत्तिरितितत्परिहारन्नितरांशानामनुद्भूतत्वमप्रयोजकम ल्पत्वमाह एकविंशतीति । एवमित्थंयोजनेकृतेसतिप्रत्येकंभूतानांस्वरूपेस्वकीयाभागाएकविंशतिर्भवंति पूर्वावस्थापितानांचतुर्णामवयवानांप्रत्येकंपंचावयवयोगित्वात्एकस्यावयवस्यसंवि भागतोऽभावाच्च इतरेचत्वारोंशास्तुपरकीयाइत्येवंरूपात्स्वांशाधिक्यात्तत्रपरांशानांसाम्यंनभवतीत्यर्थः ९८ साम्याभावेफलितमाह ततएवेति । ततःस्वांशानामधिकतरत्वात्पृथिव्यादौजल त्वादिप्रकारिकाधीर्नभवति ततःपदार्थमेवस्फुटयति पंचीकृतेपीति ९९ निगमयति पंचविंशइति । यतःपंचविंशेयथापंचविंशाख्यःस्तोमःपंचविंशतिऋक्समुदायरूपस्तथोक्तविधयापंचविं शत्यवयवसमुदायरूपेभूतेएकत्रभागएवावयवचतुष्टयात्मकोभूतांतरैःकृतः एकविंशतिभागास्तुस्वकीयाएवततोभूतांतरबुद्धिर्भूतांतरेनजायतइत्यर्थः ननुवार्त्तिकोक्तस्यस्वार्द्धाधिक्यस्यकथमुपपत्ति

एकैकंहिमहाभूतंपंचधाप्रविभज्यच ॥ पंचमंपंचमंभागंसर्वेषांपंचधापुनः ॥ विभज्यैकैकमेतेषांसर्वेषामर्पयेदिह ९७ एकविंशतिसंख्याकाभागाएवंभवंतिते ॥ एकैकस्यस्वकीयास्तुचतुर्णामपिचेतरे ॥ चत्वारश्चभवंत्यस्मादाधिक्यात्समतानच ९८ ततएवपृथिव्यादावन्यबुद्धिर्नजायते ॥ पंचीकृतेपिबाहुल्यंस्वभागे पुरतःस्थितम् ९९ पंचविंशेयतोभावोभूतेभूतांतरैःकृतः ॥ भूतांतराणितेनातोदृश्यंतेनपरत्रहि १०० अयंपंचीकृतोदेहःस्थूलोरूपमनेकधा ॥ दधातिमध्य तस्तद्वद्रसादीनपिदेहिनाम् १०१ शुक्लंरक्तंतथाकृष्णंधूम्रंपीतंतथैवच ॥ कपिलंबभ्रुशंशुक्लंरूपमस्मिन्हिवर्तते १०२ स्पर्शाश्चमृदुलास्तद्वत्कठिनामध्यमाअ पि ॥ उष्णाःशीताद्वयंतद्वदनुष्णाशीतलाअपि १०३ गंधाःसुरभयस्तद्वत्प्रच्छन्नायेत्रयोगतः ॥ भवंतिप्रकटादेहेभूरिपुण्यविपाकतः ॥ दुर्गंधानित्यमेवैतेल भ्यंतेवदनादिगाः १०४ रसाश्चषड्विधास्तद्वद्देतेसर्वशरीरगाः ॥ कटुतीक्ष्णकषायाख्यक्षाराम्लमधुराअपि १०५ शब्दाश्चविविधाएतेप्राणिनांवपुषिस्थिताः॥ निषादर्षभगांधारषड्जमध्यमधैवताः ॥ पंचमश्चेतिसंप्रोक्ताध्वनिरूपामनीषिभिः १०६

रितिचेदर्धशब्दस्यविषमांशपरत्वमादायेतिगृहाणउपेयप्रतिपत्त्यर्थाउपायाइतिन्यायेनानिर्वचनीयप्रपंचेप्रकारांतराभिधानेप्यदोषादितिभावः १०० षडाश्रयादिपदार्थमार्थक्रमेणदर्शयितुमुपक्रम ते अयमिति । अयंदेहःपंचीकृतभूतमयत्वेनस्थूलोऽनेकविधंरूपंतथारसादिकांश्चगुणान्धारयतीत्यर्थः १०१ तत्रश्रुतौधातुपदेनानेकार्थेनरूपमुक्तमितिपरमतंसूचयन्रूपस्यसप्तविधतांदर्शयति शुक्लमिति । तत्रशुक्लंगोक्षीरवत् रक्तंप्रवालवत् कृष्णमंजनवत् धूम्रंधूमवत् पीतंकनकवत् कपिलंकपिलगोवत् बभ्रुशंबभ्रुःकपिलवर्णःसवर्त्ततेऽस्मिंस्तत्तथाकपिलवर्णसंपृक्तमितियावत् तथाभूतंशुक्लंयथास्फटिकस्यइत्येवंसप्तविधंरूपमत्रशरीरेयथाद्दष्टंवर्त्ततेइत्यर्थः १०२ पाङ्क्तिःस्पर्शैःसहतथागुणेनगंधेनसहयोगेनउपायेनयुक्तमित्याकारंपड्गुणयोगयुक्तपदार्थंदर्शयति स्पर्शाइति द्वाभ्यां । कोमलकठिनमध्यमभेदेनत्रयउष्णःशीतइतिद्वयमनुष्णाशीतःषष्ठइत्येवंषट्स्पर्शाअत्रेत्यर्थः १०३ गंधाइति । योगउपायस्ततोयःपुण्यस्यविपाकःफलाभिमुख्यंतस्माद्येप्रकटीभवं तितेसुगंधाअत्रदेहेप्रच्छन्नाःसंति दुर्गंधास्तुस्फुटाएवेत्यर्थः १०४ षडाश्रयपदेनषड्रसाअत्रेत्युक्तमितिदर्शयति रसाश्चेति । स्पष्टम् १०५ धातुशब्दस्यामरोक्तभूतगुणवाचकत्वपक्षमादायवा य्वाकाशगुणत्वेनवादिभिरभिमतान्ध्वनिवार्णात्मकान्शब्दान्देहेवर्तमानतयादर्शयति शब्दाश्चेतिद्वाभ्यां । निषादादीनांस्वरूपंनारदेनोदाहृतंबोध्यं यथा ' षड्जंरौतिमयूरस्तुगावोनर्दंतिचर्ष-

भम् । अजाविक्रौचगांधारंक्रौंचोनदतिमध्यमम् । पुष्पसाधारणेकालेकोकिलोरौतिपंचमम् । अश्वस्तुधैवतंरौतिनिषादंरौतिकुंजरः ' इति १०६ सुगंधाइति । तेउक्तविधाध्वनयःसुगन्धवत्पुण्येनसुवि वेकाभवंति यएतेयोगिभिरनाहताख्यशब्दभेदत्वेनांतरनुभूयंतेगायकैश्चमुखेप्रदर्श्यंते तथावर्णात्मकाःशब्दाअपियोगिनामंतरन्येषांमुखेचप्रसिद्धाइत्यर्थः १०७ श्रुत्यागैरिकादिषुप्रयोगरूपहेतु नाधातुशब्दस्यद्रव्यवाचकत्वमेवसिद्धांतीकृत्यतत्पदार्थतयाप्रोक्तांस्त्वागादीन्सप्तदर्शयंस्तत्प्रसंगेनोपस्थितानांशरीरांतरपदार्थानांसंख्यांपरिमाणंचोपनिषदंतोक्तंवर्णयति त्वगसृगित्यादिना । त्वग्रुधिरमांसानिप्रसिद्धानि मेदःश्वेतवर्णोमांसावस्थाविशेषस्तत्रैवचास्थिबंधनरूपस्यतदवस्थाविशेषस्यस्नायुपदोक्तस्यांतर्भावः अस्थीनिप्रसिद्धानि मज्जातदंतर्गतःस्नेहः शुक्रंरेतः एतानिसप्त धातुपदवाच्यानि तथादंतानांस्वरूपभूतान्यस्थीनिभेदेनद्वात्रिंशद्भवंतीत्यर्थः १०८ मर्मणांसंख्यांलक्षणंचाह आपादेति । पादमारभ्यमस्तकपर्यंतंव्याप्तायांत्वचिअष्टोत्तरशतसंख्यानिस्थाना निमर्मसंज्ञानि तल्लक्षणंतुशस्त्रेणभेदनेकृतेसतिमरणदुर्वारव्याध्यन्यतरप्रयोजकत्वंतत्रवैद्यशास्त्रेप्रसिद्धमित्यर्थः १०९ अशीत्यभ्यधिकमिति । अस्थ्नांसंधयःशरीरेअशीत्यधिकशतसंख्याभवंति स्थूलानांनाडीनांनवशतानिभवंतीत्यर्थः केशेति । केशानांरोम्णांचसंख्याअशीतिःशतानिअष्टौसहस्राणीतियावत् तावत्यःकोटयइत्यर्थः । अष्टसहस्राणिकोट्यइतिपाठमादायकेशादीनां

सुगंधाइवतेलभ्याःपुण्यपुंजविपाकतः ॥ अंतर्देहेयोगदृशांगायकानांहियेमुखे ॥ वर्णात्मकाश्चबहुशोवक्रेस्पष्टाभवंतिये १०७ त्वगसृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः ॥ सप्तदंतास्तथैवोक्ताद्वात्रिंशत्त्वस्थिभेदतः १०८ आपादमस्तकंतद्वत्त्वचिचाष्टोत्तरंशतम् ॥ मर्माणियैर्मृतिंगच्छेद्भिन्नैःशस्त्रादिनापुमान् ॥ व्याधिंवा दुःसहंयातिवैद्याजानंतिसर्वदा १०९ अशीत्यभ्यधिकंतद्वच्छतंदेहेत्रसंधयः ॥ अस्थ्नांनवचनाडीनांस्थूलानांस्युःशतानि वै ॥ केशरोम्णांतथैवस्युरशीतिशत कोटयः ११० जिह्वावक्रस्थितानॄणांपलानिद्वादशेरिता ॥ कंठेहृदयमध्यस्यरक्तोत्पलनिभस्यहि ॥ पलान्यष्टौतुविज्ञेयंपद्मंहार्दंसदैवतत् १११ पित्तंप्रस्थमितं प्रायोहृदयेसंस्थितंहितत् ॥ श्लेष्मणोगलसंस्थस्यदेहेप्रस्थचतुष्टयम् ११२ सर्वांगसंश्रयंशुक्रंकंठेहृदिचमूर्द्धनि ॥ विशेषतःस्थितंयत्तुमथनेनविनिःस्रवेत् ११३ प्रस्थस्यचचतुर्थांशंतस्यदेहेवदंतिहि ॥ मेदसश्चापिसंप्रोक्तौप्रस्थौद्वौपरिमाणतः ११४ मूत्रंचैवपुरीषंचबस्तिसंग्रहणीगतम् ॥ अन्नपानग्रहस्यात्रवृद्धयाह्रा सेनचानिशम् ११५

सूक्ष्मावयवाभिप्रायेणयाज्ञवल्क्यवद्उक्तं । सार्द्धत्रिकोटिप्रसिद्धिस्तुरोमकूपाभिप्रायेण वस्तुतस्तुअर्द्धंचतस्रइतिश्रुतिपाठःप्रायःपुस्तकेषुदृश्यते तथाचार्द्धन्यूनाश्चतस्रइतिशाकपार्थिवादित्वेनव्युत्प त्तौप्रसिद्धचदिरोधएवेतिबोध्यम् ११० जिह्वेति । मुखेदृश्यमानाकंठमभिव्याप्यस्थिताजिह्वाद्वादशपलपरिमिताभवति तथाहृदयमध्यस्यरक्तवर्णस्यपरिमाणमष्टौपलानि तदेवहृदयमध्यंहा र्दंपद्ममितिप्रसिद्धमित्यर्थः १११ पित्तमिति । पित्ताख्योधातुर्हृदयेबहुधास्थितत्वेनप्रसिद्धस्तस्यहिसर्वतोनाडीद्वारनिरोधकत्वेननिद्राप्रयोजकत्वंश्रुत्यादिषुप्रोक्तम् अस्यपरिमाणंप्रस्थः त स्यरूपंतुपंचगुंजात्मकोमापस्तैर्मापाःषोडशकर्षःकर्षैश्चतुष्टयंपलंतच्चतुष्टयंकुडवस्तच्चतुष्टयंप्रस्थइति तथाकफधातोर्गलेस्फुटमनुभूयमानस्यदेहव्याप्तस्यपरिमाणंप्रस्थानांचतुष्टयमिति ११२ सर्वांगे ति । शुक्राख्यःसप्तमोधातुःसर्वांगसंस्थितोपिकंठहृदयमूर्द्धसुविशेषेणस्थितःक्षोभेननिःसरणशीलःप्रस्थचतुर्थांशसंमितः मेदःसंज्ञधातोस्तुपरिमाणंप्रस्थद्वयमित्यर्थः ११३ । ११४ मूत्र मिति । बस्तिर्मूत्राशयःसंग्रहणीपुरीषाशयस्तद्गतयोर्मूत्रपुरीषयोःपरिमाणमनियतंयतोन्नपानग्रहणेनानियतेनतयोर्वृद्धिह्रासौभवतः एवंविधंजिह्वादीनांपरिमाणंगर्भोपनिषद्द्रष्ट्रापिप्पलादाख्य मुनिनाप्रोक्तं रसरुधिरादिपरिमाणंतुनवांजल्यादिकंयाज्ञवल्क्याद्युक्तंद्रष्टव्यमितिभावः ११५

१६ अथशास्त्रांतरगुणोपसंहारन्यायेनप्राप्तान्देहस्यांतरान्विशेषानाह शरीरमित्यादिना । सर्वेषांशरीरंपादाग्रमारभ्यकेशपर्यंतंदैर्घ्येस्वांगुलैस्तच्छरीरीयांगुलैर्मीयमानेसतिषण्णवत्यंगुलंषडधिकनवत्यंगुलिपरिमितंभवतीत्यर्थः देहइति । अत्रदेहेद्वयोःपार्श्वयोःप्रत्येकंषोडशषोडशअस्थीनिगृहमण्डपस्यवंशभूतानितानिसंकलनेद्वात्रिंशद्भवंतीत्यर्थः ११७ प्रश्नोपनिषदुक्तांसूक्ष्मनाडीसंख्यामाह द्वासप्ततीतिद्वाभ्यां । अत्रदेहेनाडीनांद्वासप्ततिःसहस्राणि द्व्यधिकसप्ततिसहस्रसंख्यानाड्यइतियावत् ताअत्रसंतीत्यर्थः । किमेतावत्यएवनाड्यइतिचेन्नेत्याह संधितइत्यादिना । प्रश्नेप्रश्नोपनिषदियानाडीनांशतंचैकेत्यादिश्रुतिप्रसिद्धानामेकाधिकसंख्यानांमध्येएकस्याएकस्याःसंधितोजातत्वेनशाखाभूताःशतंशतंनाड्यउक्तास्तासामेकैकस्याःप्रतिशाखात्वेनइमाद्वासप्ततिसहस्रसंख्याःस्मृताःप्रोक्ताइतिसंबंधः ताभिर्जीवस्यव्याप्तिःसर्वत्रशरीरेभवतीतिद्वयोरर्थः अयंहिप्रश्नवाक्यस्यग्रंथकृदभिमतोनिर्गलितार्थः एकामूलभूतानाडीतस्याःस्कन्धोपस्कन्धभूताःशतंनाड्यःअयुतंशाखानाड्यस्तासांसंबंधिन्यःप्रतिशाखाख्यानाड्योद्वासप्ततिकोटयोभवंतिसंकलनेद्वासप्ततिकोटयोदशसहस्रंशतमेकाचैतावत्योभवंतीतिसप्तदशेस्फुटीभविष्यतीति ११८ । ११९ उक्तनाडीभ्योप्यधिकप्रचरणशालित्वादाध्यात्मिकवायोःप्राणत्वंयुक्तमित्याह शरीरादिति । प्राणआध्यात्मिकवायुःशरीरात्षण्णवत्यंगुलादधिकोऽष्टोत्तरशतांगुलप्रमाणोभवति यतोनासिकाद्वारेणबहिर्द्वादशांगुलदेशेपिगच्छ

वर्द्धतेक्षीयतेयस्मात्तस्मान्नियतिवर्जितम् ॥ पिप्पलादेनकथितंमुनिनासर्ववेदिना ११६ शरीरंसर्वजंतूनांषण्णवत्यंगुलंस्मृतम् ॥ स्वांगुलैःकेशपर्यंतंपादातावधिदैर्घ्यतः ॥ देहेद्वात्रिंशदस्थीनिवंशाःस्युःपार्श्वयोर्द्वयोः ११७ द्वासप्ततिसहस्राणिनाडीनामपिसंधितः ॥ एकैकस्यास्तुनाडीनांशतमेकोत्तरंहियाः ११८ शाखाःप्रश्नेसमाख्यानाःप्रतिशाखाइमाःस्मृताः ॥ तासांसर्वत्रदेहेस्मिन्व्याप्तिरापादमस्तकम् १९ शरीरादधिकःप्राणोद्वादशांगुलमानतः ॥ बहिर्नासिकयायातितस्मात्प्राणइतीरितः १२० चत्वारिंशत्तथैवाष्टावंगुलानिपदाग्रतः ॥ केशाग्राच्चाभवन्मध्यंशरीरस्यनृणामिह १२१ देहमध्येशिखिस्थानंतप्तजांबूनदप्रभम् ॥ चतुरस्रंशिरींतंतत्तिष्ठत्याचंद्रमंडलम् १२२ चतुरस्रेस्थितंतेजःशक्तिसंज्ञंसुदुर्गमम् ॥ अतिसूक्ष्मंसदाजंतून्जीवतोनजहातिच १२३ गुदात्तुद्व्यंगुलादूर्ध्वंमेढ्राद्व्यंगुलतोप्यधः ॥ एकांगुलप्रमाणंतच्चतुरस्रमवस्थितम् १२४ अत्रमध्येशरीरस्यह्यवकाशेनवांगुले ॥ उत्सेधाच्चतथायामात्कंदोस्तिचतुरंगुलः १२५

त्युपलभ्यतेऽतएवचवस्यप्राणसंज्ञापि प्रकर्षेणाधिक्यलक्षणेनअनितीतिव्युत्पत्तिसमन्वयादित्यर्थः १२० देहतेजःस्थानंदर्शयितुंतदुपयोगिमध्यदेशस्वरूपमाह चत्वारिंशदिति । पादाग्रमारभ्यकेशाग्रमारभ्यवाअष्टचत्वारिंशदंगुलिमितोदेशोदेहस्यमध्यत्वेनबोध्यइत्यर्थः १२१ तत्रतेजःस्थानंदर्शयति देहमध्यइतिद्विपञ्चाशत्श्लोकैः । तस्मिन्देहमध्येचतुरस्रंचतुष्कोणमग्निस्थानंभवति तस्यराग्नेर्नोर्ड्वाराव्याप्तिस्तुशिरःपर्यंततत्रापिमस्तकस्थितचंद्रमंडलपर्यंतंबोध्येत्यर्थः तथाचोक्तमागमेभगवतामहादेवेन 'सर्वेषामपिजंतूनांमूर्ध्निंतिष्ठतिचंद्रमाः । अधोभागेरविःप्रोक्तोमृत्युकालेविपर्ययात्' इति १२२ चतुरस्रइति । तस्मिंश्चतुरस्रेस्थानेस्थितंतेजोदेहेंद्रियादिसामर्थ्यप्रयोजकत्वात्शक्तिसंज्ञंभवतिअतिसूक्ष्मत्वाद्दुर्लक्ष्यमौष्ण्यरूपेणजीवनलक्षणंचभवतीत्यर्थः जीवतःप्राणधारकान्नत्यजतीति १२३ तदेवतेजःस्थानंविशेषतोऽवधारयति गुदात्त्विति । गुदात्पायुस्थानादूर्ध्वंद्व्यंगुलमितेदेशेतावत्येवचोपस्थादधोदेशेतत्तेजसःस्थानभूतंचतुरस्रंस्थितंभवतीत्यर्थः १२४ एवंनाडीलतानांजनिस्थानस्यकंदस्यवृत्तमप्यागमेप्रपंचितंदर्शयति अत्रेति । उक्तरूपेशरीरस्यमध्येयोवकाशोनवांगुलेमितस्तस्मिन्दैर्घ्यायामयोश्चतुरंगुलःकंदःकंदसमोमांसपिंडविशेषोस्तीत्यर्थः १२५

नवांगुलेति । तस्मात्कंदादुत्थितोनाभिनालोनाभिचक्रात्मकपंकजस्यनालभूतोऽवयवोस्ति कीदृशः नवांगुलविस्तारकोदंडसदृशःशरीरिणांसकलशरीरावयवानांमूलभूतस्त्वगादिसप्तधातुभिर्वेष्टित श्चेत्यर्थः १२६ अस्येति । अस्यनाभिनालस्यमध्यइदंयोगिभिरनुभूयमानंनाभिचक्रंभवति कीदृशं द्वादशारंअराःरथचक्रावयवविशेषास्तेद्वादशयस्यतत्तथा १२७ इदमेवचक्रंहार्दपद्मंतर्भावितश्रुत्यादि ष्विदित्याह अत्रचक्रइति । हृदयवासित्वेनप्रसिद्धोजीवउक्तचक्रेक्रमरूपतंतवाश्रितोलूताकीटवद्भ्रमतीत्यर्थः १२८ यद्यपिजीवःसर्वत्रदेहेप्राप्तस्तथापिविशेषाभिव्यक्तिविवक्षयाहृदयादीनांतत्स्थानत्व व्यवहारइत्याह नाभिश्चेति । केनचिद्धेतुनाविशेषाभिव्यक्तिलक्षणेननाभ्यादीनिजीवस्यस्थानान्युच्यंतेइतिसंबंधः १२९ फलितमाह जीवस्येति । तत्रजीवस्थानानांमध्येआद्येप्रथमेआधाराख्येच क्रेचतुरस्रतयावर्णितेप्राणेनसहितोजीवःसर्वदास्तिसन्निहितइत्यर्थः १३० अत्रैवचक्रेकारणोपाधिप्रधानांकुंडलिनीसंज्ञामागमोक्तांब्रह्ममूर्तिंवर्णयति नाभेरिति । नाभिचक्रादधआधारचक्रादुपरिच देशेभुजंगवत्त्रिवलयावस्थानात्तिर्यग्व्यवस्थिताकुंडलिनीसंज्ञाशक्तिःकारणरूपब्रह्मणोमूर्तिरस्तीत्यर्थः १३१ इयमेवाष्टमूर्तिरपरप्रकृतित्वेनगीतासुसप्तमाध्यायउक्तेत्याह भूमिरिति । भूम्यादिरूपस्य

नवांगुलपरीणाहोदंडाकारस्त्वगादिना ॥ वेष्टितोनाभिनालःस्यान्मूलभूतःशरीरिणाम् १२६ अस्यमध्यइदंनाभिचक्रमुक्तंमनीषिभिः ॥ द्वादशारंतुतन्नित्यंदेहे नपरिवेष्टितम् १२७ अत्रचक्रेभ्रमत्येषजीवोहृदयमाश्रितः ॥ कर्मणातंतुजालस्थोयथाभ्रमतिलूतिकः १२८ नाभिश्चहृदयंकंठश्चक्षुर्मूर्द्धाचपंडितैः ॥ आपादम स्तकंदेहेस्थितस्यापिशरीरिणः ॥ हेतुनाकेनचिन्नित्यमुच्यंतेस्थानकानिहि १२९ जीवस्याद्येमूलचक्रआधारइतिकीर्तिते ॥ तत्रप्राणयुतोजीवश्चतुरस्रेस्तिसर्व दा १३० नाभेरधस्तथाधाराद्रूर्ध्वेतिर्यग्व्यवस्थिता ॥ अस्तिकुंडलिनीशक्तिर्भुजंगीवशरीरगा १३१ भूमिरापोनलोवायुःखंमनोबुद्धिरेवच ॥ अहंकारइतिप्रो क्तैस्तत्त्वैरष्टविधाकृता १३२ इयंशब्दौघजननीवायुनास्फालितासती ॥ अनयात्रनिरुद्धोयंवायुर्जठरगोमहान् १३३ आगत्यदशमद्वारंबहिरेवाभिधावति ॥ सु षुम्नादशमद्वारेब्रह्मरंध्रेप्रतिष्ठिता ॥ तस्यामुखंनिरुध्यास्तेस्वमुखेनेयमुज्वला १३४ योगकालात्पवनतःप्रबुद्धाश्वासवन्हितः ॥ स्फुरत्याहृदयाकाशंनागरूपा महोज्वला १३५ वायुर्वायुसखेनैतिसहांतःससुषुम्नया ॥ यदैषास्वमुखेनास्यामुखेरोधंकरोतिन १३६ कंदमध्येस्थितानाडीसुषुम्नेतिप्रकीर्तिता ॥ तिष्ठंतिप रितःसर्वाश्चक्रेस्मिन्नाडिकाःपराः १३७

वाह्यस्यमनःप्रभृतेरांतरस्यचार्थप्रपंचस्येयमेवहेतुरितिभावः १३२ शब्दप्रपंचस्यापीयमेवहेतुरित्याह इयमिति । इयंकुंडलिनीवायुनाप्राणेनताडितासतीशब्दवृंदस्यजनिका । अस्याव्यापारांतरमाह अनयेति । प्राणस्यबहिर्ब्रह्मलोकंप्रतिगमनप्रतिबंधोप्यस्याव्यापारइत्यर्थः १३३ एतदेवस्फुटयति आगत्येति । यतोजाठरोवायुर्दशमद्वारंगत्वाबहिर्गंतुमेवोद्यतोभवतिपरंतुतत्र निःसरणपंथाःसुषुम्ना ख्यनाडीरूपोभवति इयंकुंडलिनीतुतस्याःसुषुम्नायामुखंस्वमुखेननिरुध्योक्तदेशेतिष्ठतिशेतेइतियावत् इत्थमस्याःप्राणमार्गनिरोधकत्वमित्यर्थः १३४ कदाइयंप्रबुध्यसुषुम्नामुखंमुंचतीत्याकांक्षाया माह योगेतिद्वाभ्यां । योगेनकालःकालनंचालनमितियावत्तद्यस्यतथाभूतेनप्राणवायुनायदाप्रबुद्धाभवतितदाहृदयाकाशमभिव्याप्यस्फुरतिदशमद्वारांतंप्रसरति कीदृशी शेषनागवदुज्ज्वलमूर्तिरि त्यर्थः १३५ वायुरिति । तदाएषाकुंडलिनीप्रबुद्धासतीअस्याःसुषुम्नायामुखरोधंनकरोति तदाकदा यदासप्राणोवायुसखेनाग्निनाआन्तरेणसहसुषुम्नयामार्गभूतयाअन्तर्देहमध्यमेतिप्रविशतिसुषुम्नामु खरूपद्वारेणेत्यर्थः १३६ तत्तत्स्थानेप्राणस्थापनरूपप्रत्याहारस्यवसिष्ठोक्तस्योपयोगिनाडीनांस्वरूपादिकमाह कंदेतिसप्तदशभिः । वर्णितकंदस्यमध्येसुषुम्नाख्यानाडीतिष्ठतितस्याः परितःसमंताद्न्यास्तिष्ठंतीत्यर्थः १३७

नाडीनांमध्येचतुर्दशमुख्याःसनामग्रहंदर्शयति नाडीनामिति । त्रयंनिगदव्याख्यातम् १३८ । १३९ । १४० तास्विति । तासुइतरापेक्षयामुख्यत्वेनदर्शितासुचतुर्दशसुतिस्रःसुषुम्नेडापिंगलाःप्रधानतमास्तास्वप्येकासुषुम्नासर्वोत्तमायतोज्वलंतीप्रसिद्धमाहात्म्याविश्वप्रपंचाधारत्वादित्यर्थः तच्चदहरादिविद्यासुप्रसिद्धमितिभावः १४१ एतासांसंस्थानमभिनयति कंदस्येत्यष्टभिः । वर्णितकंदस्यमध्येसुषुम्नातिष्ठतिपृष्ठवंशाख्यपृष्ठमध्यगतास्थिरूपद्वारेणमूर्द्धानंगच्छतिचेत्यर्थः १४२ इडेति । तस्याःसुषुम्नायाःसव्येवामतइडातिष्ठतिदक्षिणतःपिंगलेति एवंस्थितानांसुषुम्नेडापिंगलानांयथाक्रमंवक्ष्यमाणायुगलत्रयघटिताःषण्नाड्यःपृष्ठेऽग्रेचबोध्याइत्यर्थः १४३ तद्युगलत्रयंदर्शयति सरस्वतीति । तत्रसुषुम्नायाःपृष्ठेसरस्वतीअग्रेकुहूः इडायाःपृष्ठेगांधारीअग्रेहस्तिजिह्वा पिंगलायाःपृष्ठेपूषाऽग्रेयशस्विनीइत्येवंसंस्थानेऽग्रिममध्यमपश्चिमासुत्रिषुपंक्तिषुनवनाड्यउपविष्टाः त्रिपंक्त्याइत्यस्यत्रिविधायाःपंक्तेःसंबंधिन्यइत्यर्थः १४४ पंक्तित्रयमभिनयंस्तत्रपुरोवर्त्तिनाडीत्रिकमयींपंक्तिंदर्शयति हस्तीति । सव्यायाइतिपंचमील्यब्लोपे तथाचसव्यांवामामारभ्यपुरोवर्त्तिनाडीमयीपंक्तिर्हस्तिजिह्वादिकेत्यर्थः हस्तिजिह्वाहिइडायाःपुरोवर्त्तिनी

नाडीनामपिसर्वासांमुख्याःस्युस्ताश्चतुर्दश ॥ सुषुम्नेडापिंगलाचपरातद्वत्सरस्वती १३८ कुहूश्चवारणाचैवसप्तमीचयशस्विनी ॥ पूषापयस्विनीतद्वच्छंखिनीदशमीस्मृता १३९ गांधारीहस्तिजिह्वाचतथाविश्वोदरापिहि ॥ अलंबुषाचसर्वासांमुख्याःप्रोक्ताश्चतुर्दश १४० तासुमुख्यतमास्तिस्रएकातास्वपिकीर्तिता ॥ मुक्तिमार्गःसुषुम्नासाज्वलंतीविश्वधारिणी १४१ कंदस्यमध्यमेभागेसुषुम्नासंप्रतिष्ठिता ॥ पृष्ठमध्यस्थितेनास्थ्नासहमूर्द्धनिसागता १४२ इडाचपिंगलातद्वत्तस्याःसव्येचदक्षिणे ॥ पृष्ठतःपुरतस्तद्वन्नाडीनांहिद्वयंद्वयम् ॥ सुषुम्नेडापिंगलानांविज्ञेयंक्रमतःसदा १४३ सरस्वतीकुहूश्चैवगांधारीहस्तिजिह्विका ॥ पूषायशस्विनीचैवत्रिपंक्त्यानवनाडिकाः १४४ हस्तिजिह्वाकुहूश्चैवतृतीयाचयशस्विनी ॥ सव्यायाःप्रथमापंक्तिर्द्वितीयापितथैवसा ॥ इडाचैवसुषुम्नाचपिंगलापंक्तितःस्थिता १४५ गांधारीप्रथमातद्वद्द्वितीयाचसरस्वती ॥ पूषापंक्तौतृतीयास्यात्तृतीयस्यांप्रदेवहि १४६ कुहाश्चहस्तिजिह्वायामध्येविश्वोदरीस्थिता ॥ कुहाश्चैवयशस्विन्यावारणामध्यतःस्थिता १४७ पूषायाश्चसरस्वत्याःस्थितामध्येत्रशंखिनी ॥ सरस्वत्याश्चगांधार्यामध्येस्तीहपयस्विनी ॥ अलंबुषाचविज्ञेयाकंदमध्यादधःस्थिता १४८ पुरतोऽपुरतःपंक्तावेवंनाड्योव्यवस्थिताः ॥ पंचपंचचमध्येपिमुख्याःस्युस्तिस्रएवहि ॥ एकाकंदादधस्थानाताएवंस्युश्चतुर्दश १४९ इडाचपिंगलातद्वद्गांधारीसहपूषया ॥ नासाक्षिकर्णयुग्मस्थाशंखिनीचयशस्विनी ॥ क्रमतःषडिमास्तद्वद्रसनेचसरस्वती १५०

सुषुम्नायाःकुहूःपिंगलायायशस्विनीति । मध्यपंक्तिमाह द्वितीयेत्यादिना । सापंक्तिर्द्वितीयापितथैववामादिकैवभवति यतइडादित्रयंमध्यपंक्तिरूपेणस्थितमित्यर्थः १४५ पृष्ठगताभिस्तिसृभिर्घटितांतृतीयांपंक्तिमाह गांधारीति । तादृश्यांतृतीयायामपिपंक्तौइडापृष्ठगतागांधारीप्रथमासुषुम्नापृष्ठगतासरस्वतीद्वितीयापिंगलापृष्ठगतापूषातृतीयाइत्यर्थः १४६ वर्णितासुपंक्तिषुमध्यमायापंक्तिस्तस्यांविश्वोदरीवारणयोर्निवेशइत्याह कुहाइति १४७ तासुयातृतीयापंक्तिस्तस्यांशंखिनीपयस्विन्योर्निवेशइत्याह पूषायाइति । एवंत्रयोदशनाडीनांस्थानंदर्शितमथपरिशिष्टायाअलंबुषायाःस्थानमाह अलंबुषेति । अधःअधस्तात् १४८ फलितमाह पुरतइति । एवंसतिपुरतोग्रतःस्थितायांपंक्तौपंचनाड्यःस्थितास्तथाऽपुरतःपृष्ठतःस्थितायामपिपंक्तौपंचनाड्यःस्थिताः मध्यपंक्तौतुतिस्रएवइडाद्याः एकातुअधस्थानात्कंदादधोगता एवंचतुर्दशस्थिताबोध्याइत्यर्थः तथाचेदंचक्रंफलितम् पूसंशयेगाम् १४९ एवंकंददेशेएतासांस्थितिरुक्ताथततउत्थाययत्रयत्रगत्वाविशेषतोव्यापारंकुर्वंतितानिस्थानान्याह इडाचेतिचतुर्भिः । इडापिंगलयोर्वामदक्षिणनासापुटयोर्विशेषतोव्यापारः गांधारीपूषयोरक्षियुग्मेशंखिन्योःकर्णयुग्मेसरस्वत्यास्तुरसनायामित्यर्थः १५०

हस्तिजिव्हायशस्विन्योर्वामदक्षिणपादांगुष्ठयोःस्थित्वागतिप्रवर्तनंव्यापारइत्याह हस्तीति १५१ अलंबुषायाःपायौव्यापारःकुव्हास्तुमेढ्रे विश्वोदरावारणयोस्तुयथाक्रमंवामदक्षिणहस्तयोर्व्यापारइ त्याह अलमिति १५२ सुषुम्नायास्तुदशमद्वारंगच्छंत्याविश्वधारणरूपोव्यापारउक्तएवेत्यभिप्रेत्यउक्तानुक्तानांसर्वासांनाडीनांप्राणभ्रमणद्वारीभवनरूपःसाधारणोव्यापारइत्याह शेषाइति १५३ उक्तासुनाडीषुचरतांप्राणादीनांस्थानविशेषानाह प्राणइति । यस्यप्राणस्यपरेऽपानादयोभेदाभवंतिसमुख्यःप्रधानभूतःप्राणाख्योवायुर्मुखनासिकयोर्हृदयेनाभौपादांगुष्ठेचस्थितइतिसंबंधः १५४ नाभ्यादीति । अपानाख्योवायुर्नाभिमारभ्यजंघापर्यंतेपायूपस्थयोश्चविशेषतःस्थितइत्यर्थः १५५ द्वारेति । द्वारद्वंद्वंश्रोत्राक्षिरूपंतत्रगुल्फादिषुचव्यानःस्थितइत्यर्थः पृष्ठवंशःपृष्ठगतदीर्घास्थि तथाउ दानःसर्वसंधिषुपादयोर्हस्तयोश्चस्थितइत्यर्थः १५६ समानइति । द्वयंनिगदव्याख्यातं १५७ तथानागकूर्मादिवायवस्त्वगादिषुयथायोगंस्थिताबोध्याइत्याह नागादीति । उक्तानांवायूनांव्यापारा नूक्रमेणाह श्वासोच्छ्वासादिकमिति । श्वासःकोष्ठ्यस्यवायोर्बहिःकरणं उच्छ्वासोबाह्यस्यांतराकर्षणमिति १५९ अपानेति । मलोत्सर्जनमपानस्यकर्म हानोपादानादिकंबलसाध्यंकर्मव्यानस्यबोध्यं

हस्तिजिव्हायशस्विन्योवामदक्षिणपादयोः ॥ अंगुष्ठतःस्थितेनित्यंसर्वदास्थितिहेतुके १५१ अलंबुषाप्रयात्यत्रपायुंमेढ्रंकुहूस्तथा ॥ विश्वोदरावारणाचवामद क्षिणहस्तयोः १५२ शेषाःसर्वाश्चसर्वत्रनाड्योदेहेत्रसंस्थिताः ॥ असंख्याताहिवायूनांमार्गभूताव्यवस्थिताः ५३ प्राणोमुख्यतमोवायुःकंदस्याधःप्रतिष्ठितः ॥ आस्यनासिकयोर्मध्येहृदयेनाभिमंडले ॥ पादांगुष्ठेचसततंयस्यभेदाःपरेस्मृताः १५४ नाभ्यादिजानुजंघांतमपानोत्रव्यवस्थितः ॥ विशेषतःशिश्नपायुद्वारे तिष्ठतिसर्वदा १५५ द्वारद्वंद्वस्थितोव्यानोगुल्फयोःपादहस्तयोः ॥ पृष्ठवंशेकटौतद्वदुरस्यपिशरीरिणां ॥ उदानःसर्वसंधिस्थःपादयोर्हस्तयोरपि १५६ समानःसर्वदादेहेसर्वंव्याप्यव्यवस्थितः ॥ भुक्तंसर्वरसंगात्रेव्यापयत्यग्निनासह १५७ द्वासप्ततिसहस्रेषुनाडीष्वपिचसंचरन् ॥ समानवायुरेवैकोदेहंव्याप्यव्यव स्थितः १५८ नागादिवायवःपंचत्वगस्थ्यादिषुसंस्थिताः ॥ श्वासोच्छ्वासादिकंकर्मप्राणस्यैतत्प्रकीर्तितम् ५९ अपानवायोःकर्मैतद्विण्मूत्रादिविसर्जनम् ॥ हानोपादानचेष्टादिव्यानकर्मेतिकीर्त्यते १६० उदानकर्मतत्प्रोक्तंदेहस्योन्नयनादियत् ॥ पोषणादिसमानस्यशरीरेकर्मकीर्तितम् १६१ उद्गारादिगुणंयत्तन्नाग कर्मेतिकीर्त्यते ॥ निमीलनादिकूर्मस्यक्षुतंतत्कृकलस्यच ॥ देवदत्तस्यतंद्रीस्याच्छोथादिषुधनंजयात् १६२ पादांगुष्ठौचगुल्फौचजंघामध्येतथैवच ॥ चित्यो मूलेचजानूचमध्येचोरुद्वयस्यच १६३

देहस्योत्थापनादिकंतूदानस्यकर्मेति पोषणादीतिप्राणस्पंदादिकंसर्वशरीरव्यापिकर्मसमानस्यबोध्यमितिद्वयोरर्थः १६० । १६१ उद्गारादीति । उद्गारादयोगुणाःप्रकारभूतायस्यतथाभूतंकर्मनागा ख्यस्यवायोरुक्तं आदिपदेनहिक्कादिग्रहः निमीलनंनेत्रसंकोचः क्षुतंछिक्का तंद्रीजृंभणादिरूपाशोथादीत्यादिपदेनपिटकोदयादिग्रहः १६२ योगिभिःक्रियमाणस्यप्रत्याहारस्यप्राणस्थापनरूपस्यो पयोगीन्यष्टादशस्थानानिवसिष्ठोक्तान्यनुवदति पादांगुष्ठाविति पादांगुष्ठः १ गुल्फः २ जंघामध्यं ३ चितिर्जंघापृष्ठेमांसोपचयस्तदीयंमूलमुपचयप्रारंभदेशः ४ जानुप्रसिद्धं ५ ऊरुमध्यंच ६ पायोर्मूलमधोदेशः ७ तथापायोःपश्चाद्दर्पणतोदेहमध्याख्योदेशः ८ मेढ्रमध्यं ९ नाभिः १० हृदयं ११ कंठकूपोघंटिकाधोगतोगर्तः १२ तालुमूलं १३ नासामूलं १४ अक्ष्णोर्मध्यंच १५ भ्रूमध्यं १६ ललाटं १७ मूर्द्धादशमद्वारंच १८ एतेष्टादशदेशाःप्रत्याहारस्यसंस्मृताः यानिचाष्टोत्तरशतसंख्यानिमर्माणिवैद्यशास्त्रेप्रसिद्धानितान्यत्रएषुअष्टादशसुअंतर्भवंतिएतत्संनिहितत्वादितिप्राणा मर्थः अष्टोत्तरशतसंख्यात्वेनसंबंधियेषामितिविग्रहः १६३

१६४ । १६५ पूर्वदेहस्यषण्णवत्यंगुलत्वंपादाग्रमारभ्य केशांतंयावल्लोकदृष्ट्यनुसारेणोक्तमथतस्यवसिष्ठोक्तप्रकारांतरमभिनयति । पादांगुष्ठात्त्वितिनवभिः पादांगुष्ठमारभ्यपृथक्ज्ञानवर्णनंनयुक्तं पादत्वेनसर्वस्यपादावयवजातस्यसंग्रहात् किंतुपादमारभ्यैवमानवर्णनंयुक्तमितिपूर्वदलार्थः पादमारभ्यगुल्फस्यसार्द्धांगुलिचतुष्टयमितोदेशोबोध्यः एवमग्रेपि १६६ गुल्फात्तुजंघयोरित्यादीनाम ष्टानांपदानिप्रसिद्धानिकानिचित्व्याख्यातानिच व्योमसंज्ञंमूर्द्धस्थानं एवमुक्तपरिमाणसंकलनेन १६७ । १६८ । १६९ । १७० । १७१ । १७२ । १७३ । १७४ इत्थंकृतस्यशरीरवर्णनस्य विवेकवैराग्ययोःपर्यवसानंदर्शयति भूतेतिदशभिः । यदित्थंभूतभौतिकरूपावयववर्णनद्वारागर्भोपनिषदिपिप्पलादेनकीर्तितंतच्छरीरमेतावदवयवसमुदायात्मकमेवेतितृतीयेनाभिसंबंधः केतेऽवयवा

पायुमूलंतथापश्चान्मध्यदेशश्चमेढ्रगः ॥ नाभिश्चहृदयंतद्वत्कंठकूपस्तथैवच १६४ तालुमूलंचनासायामूलंचाक्ष्णोश्चमध्यगम् ॥ भ्रुवोर्मध्यंललाटंचमूर्द्धाअष्टाद शस्मृताः ॥ अष्टोत्तरशतान्यत्रमर्माण्यंतर्भवंतिच १६५ पादांगुष्ठात्तुपादस्यपृथङ्मानंनविद्यते ॥ पादात्तुमानंगुल्फस्यसार्द्धांगुलचतुष्टयम् १६६ गुल्फात्तुजं घयोर्मध्यंतद्दशांगुलमीरितम् ॥ जंघामध्याच्चितेर्मूलंयत्तदेकादशांगुलम् १६७ चितिमूलात्तथैवैतज्जानुस्यादंगुलद्वयम् ॥ जानोर्नवांगुलंतत्स्यादूरुमध्यंहिय त्स्मृतम् १६८ ऊरुमध्यात्तथैवैतत्पायुमूलंनवांगुलम् ॥ देहमध्यंतथापायोर्मूलात्सार्द्धांगुलद्वयम् ॥ देहमध्यात्पुनर्मेढ्रंतद्वत्सार्द्धांगुलद्वयम् १६९ मेढ्रान्नाभिश्च विज्ञेयातथासार्द्धदशांगुलम् ॥ चतुर्दशांगुलंनाभेर्हृन्मध्यमिहकीर्तितम् १७० षडंगुलेहिहृन्मध्यात्कंठकूपःप्रकीर्तितः ॥ कंठकूपात्तुजिह्वायामूलंस्याच्चतुरंगुलम् १७१ नासामूलंतुजिह्वायामूलात्स्याच्चतुरंगुलम् ॥ नेत्रस्थानंचतन्मूलादर्द्धांगुलमितीष्यते १७२ तस्माद्दर्द्धांगुलंतद्वद्भ्रुवोरंतरमात्मनः ॥ ललाटाख्यंभ्रुवोर्मध्या दूर्ध्वंस्यादंगुलत्रयम् १७३ ललाटाद्व्योमसंज्ञंतदंगुलत्रयमेवहि ॥ षण्णवत्यंगुलंत्वेवंवसिष्ठेनापिकीर्तितम् ॥ शरीरंसर्वतोनॄणांगृहीतंयदहंधिया १७४ भूतभौ तिकरूपेणपिप्पलादेनकीर्तितम् ॥ गर्भोपनिषदीत्थंयत्सर्वेषामिहदेहिनाम् १७५ महाभूतानिविषयाःशब्दाद्याइंद्रियाणिच ॥ तथांतःकरणंप्राणास्त्वगाद्याअ पिधातवः १७६ नाड्योमर्माणिसर्वाणिदोषाःपित्तादयस्तथा ॥ कंठोहृदयपद्मंचजिह्वानालेनसंयुतम् ॥ विण्मूत्रेचतथालोमगणाएतच्छरीरकम् १७७ एतेषां हिपृथक्त्वेकिंशरीरंनामविद्यते ॥ आत्मबुद्धिर्यदैतेपुनरकेपुकुतोनसा ॥ विद्यंतेयतएतानिनरकेष्वपिसर्वशः १७८ आत्मबुद्धिर्वृथैवात्रप्रत्येकंमिलितेष्वपि ॥ नदृ श्यतेयतःकेनशरीरेस्मिन्हिसाभवेत् १७९ केशदंतादयोमार्गेप्रत्येकंमिलिताअपि ॥ दृष्टाःकुर्वंतिनैवात्मबुद्धिंनापिशिरःस्थिताः ॥ अन्यदेहस्यनैवान्यदेहसंस्था श्चकर्हिचित् १८०

इत्याकांक्षायांताननुवदति महाभूतानीत्यादिनालोमगणाइत्यंतेन । कीदृशंहृत्पद्मं यस्यायाँलंबिनीनालस्थानीयाजिह्वाभवति स्फुटमन्यत् १७५ । १७६ । १७७ एतावन्मात्रत्वेहेतुमुक्तेभ्यःपृथगनु पलभ्यमानत्वमाह एतेषामिति एतेषांभूतादीनांपृथक्त्वेनविवेकेकृतेसतिशरीरंनाकिंचिदपीत्यर्थः तथाचात्मबुद्धिरयुक्तेत्याह आत्मेति । यदायदिएतेपुलोमगणांतेष्वात्मबुद्धिःक्रियेततर्हिनरकेबीभत्स देशेपुसात्मबुद्धिःकिंनक्रियतइत्यर्थः १७८ एतदेवस्फुटयति आत्मेति । यतोत्रएपुलोमांतेषुप्रत्येकंस्थितेषुमिलितेपुवात्मबुद्धिर्वृथाभ्रमरूपापिनदृश्यतेततःसात्मबुद्धिःशरीरेकथंभवेदुपपद्येतेत्यर्थः १७९ केशेति । अन्यदेहस्यशिरसिकंठोर्ध्वावयवेस्थितायेकेशादयस्तेमार्गेवाअन्यदेहेवास्थिताआत्मबुद्धिंनजनयंति विषयतयेत्यर्थः १८०

किंचमरणमूर्छासुषुप्तिष्वदृश्यमानायादेहात्मबुद्धेरकस्मादुद्भवंत्यामिथ्यात्वंव्यक्तमेवेत्याह अपिदेहइति १८१ अथवैराग्येपर्यवसानंस्फुटयन्देहकार्यैर्व्रणादौजुगुप्सांकुर्वतामपियंद्व्रणाद्युपादाने देहेनभवतीत्यतिचित्रमित्याह अपिव्रणइति। तद्धेतौव्रणाद्युपादाने १८२ वर्चस्केइति। किंचदेहस्यकारणेऽन्नेवांतभावपुरीषभावादिदुर्गंधावस्थापन्नेयथाजुगुप्सानृणांभवति तथाममात्रदेहेन्नवि कारेएषाजुगुप्साकुतोनजायते कीदृशस्यमम इतिउक्तविधयाविवेकिनोविवेकवतः कीदृशीजुगुप्सा अतिदुःखस्यसंसारमयस्यहंत्रीत्यर्थः १८३ । १८४ अथवेति। अथवागर्भोपनिष दुक्तंनृदेहस्यजन्मदुःखरूपत्वेनविरागप्रयोजकंचिंतयेदित्यर्थः १८५ तत्रबीजद्वाराशरीरस्यबीभत्सतामाह सप्तेति। सर्वेषांयोनिजानांसंबंधिनोमातापित्रोर्देहःसप्तधातुमयःशुक्रशोणितबीजकश्चे त्यविवादम् तथाचतत्स्वभावंतेवजायमानानांभवतीतिभावः १८६ अथपितृदेहप्रवेशेदुःखंस्फुटयितुमग्निभिःशीर्यमाणत्वात्शरीरत्वंश्रुतोप्रोक्तंवर्णयति पंचेतिचतुर्भिः। योयंदेहोमर्मातंमर्मा ख्यावयवपर्यंतंयथाभवतितथावर्णितःसएवशरीरमित्युक्तः शीर्यमाणत्वात्प्रतिक्षणंविशरणंनीयमानत्वादित्यर्थः १८७ कोस्यविशरणहेतुरितिचेदग्नित्रयमेवेत्याह तत्रेति। तत्रदेहकोटरेंतर्ज्वलन

अपिदेहेस्थितेतद्वच्छयानेमूर्च्छितेथवा ॥ नात्मबुद्धिंकुतोमध्यएषाजागरणेस्तिहि १८१ अपिव्रणेतिदुर्गंधेव्याधिशस्त्रादिसंभवे ॥ जुगुप्साजायतेदेहेतद्धेतौकेनसा नहि १८२ वर्चस्केवाथवावांतेपूतिगंधेचिरास्थिते ॥ अन्नेयद्वद्भवेन्नृणांजुगुप्सादोषदर्शनात् १८३ तद्वदेवकुतोनैषादेहेन्नमयरूपिणि ॥ नजायतेतिदुःखघ्नीम मात्रेतिविवेकिनः ॥ इत्यादिचिंतयन्धीरोविरागमधिगच्छति १८४ अथवाचिंतयेदेवंगर्भोपनिषदीरितम् ॥ जन्मदुःखतमंनृणांविरागस्यात्रकारणम् १८५ सप्तधात्वात्मकोदेहःपितुर्मातुश्चदेहिनाम् ॥ योनिजानांहिसर्वेषांशुक्रशोणितसंभवः १८६ पंचभूतात्मकोयोयंमर्मांतंपरिकीर्तितः ॥ शरीरंशीर्यमाणत्वादेहएष प्रकीर्तितः १८७ तत्राग्नित्रयमुद्दिष्टंज्वलदस्यहिकोटरे ॥ जाठरोमानसश्चान्योबाह्येंद्रियसमुत्थितः १८८ मानसेशास्त्रजंतद्वदशास्त्रीयंचहूयते ॥ सुखंदुःखंच शब्दाद्यास्तद्वदैंद्रियकेपिच १८९ चतुर्विधंतथैवान्नंजाठरेजातवेदसि ॥ लेह्यंपेयंतथाचोष्यंभोज्यमित्येवकीर्तितम् १९० पयःसोमाज्यमुख्यानामाहुतीनामशे षतः ॥ विकारःश्रद्धयायुक्तोयोग्निहोत्रादिकर्मणि १९१ सोमंराजानमासाद्यभूमौपर्जन्यधारया ॥ समागतःसदैवान्नंनानाजीवसमाश्रयः १९२ पितृभ्यामद्यमा नंतत्क्षुत्पिपासासमाश्रयात् ॥ जाठरेजातवेदाःसकोष्ठवायुसमीरितः १९३

शीलमग्नित्रयमुक्तम् किंतदित्यतआह जाठरइति। जाठरऔदर्याख्यएकः मानसोमनसिभवोजिज्ञासादिरूपोद्वितीयः बाह्येंद्रियनिष्ठोविषयलोलुपत्वरूपस्तृतीयोग्निरित्यर्थः १८८ तेषांक्रमेण हवींष्याह मानसइति। तत्रमानसेग्नौशास्त्रजंशास्त्रानुसार्युपासनाद्यात्मकंज्ञानमशास्त्रीयंचतत्तथासुखंदुःखंचहूयतेऐंद्रियकेग्नौतुशब्दादयोविषयायथायोगंहूयंतइत्यर्थः १८९ तृतीयेजाठराग्नौतु चतुर्विधमन्नंहूयतइत्याह चतुर्विधमिति। लेह्यंमधुप्रभृति पेयंदंतव्यापारमंतराभ्यवहार्यंदुग्धादि चोष्यमिक्षुप्रभृति भोज्यंभक्तादि १९० तत्रजाठराग्नौजनिष्यमाणस्यजीवस्यान्नसंपृक्तस्यप्रवे शःपंचाग्निविद्योक्तविधयाभवतीत्याह पयइति। दुग्धादिरूपाणामाहुतीनांयोविकारःसूक्ष्मावस्थाख्यःपरिणामःसोऽग्निहोत्रादिकर्मगोचरश्रद्धासंस्कारसहितोजीवस्यकार्मिणःसमाश्रयश्चसंश्चंद्रलो कात्मकद्युसंज्ञमग्निंप्राप्यतत्रभोगांतेपर्जन्यस्यद्वितीयाग्नेर्धारयासहभूमिंप्राप्यनानाविधमन्नंभवतीतिद्वयोरर्थः १९१। १९२ पितृभ्यामिति। तदन्नंक्षुत्पिपासाप्रयुक्ताभ्यांमातापितृभ्यामद्यमानंभक्ष्य माणंसज्जाठराग्नौपततीतिशेषः। सजाठरोग्निस्तुप्राणेनप्रेरितःसंस्तद्भुक्तंपीतंवान्नंभूतत्रयात्मकंत्रिधाभावंनयतिजीवनहेतुत्वादितिद्वयोरर्थः तथाचच्छंदोगश्रुतिरन्नमशितंत्रेधाविधीयतइत्यादिः १९३

१९४ त्रेधाभावमभिनयति असारमिति । सोग्निरीश्वरईश्वरेणांतर्यामिणाआविष्टःस्वस्मिन्पतितस्यान्नस्यासारांशंमलरूपंबहिःक्षिपतिमध्यमांशंसप्तधातुरूपेणपरिणतंकरोतिसूक्ष्मांशेनतुप्राणादी नाप्याययतीत्यर्थः १९५ सप्तधातुरूपेणपरिणतिक्रमंप्रकृतश्रुत्युक्तमभिनयति तत्रेतिचतुर्भिः । तत्रतेपुभागेपुयोन्नस्यमध्यमांशःसरसेनरसत्वेनसंयुतोभवतीत्यर्थः रसशब्दस्यभावप्रधानत्वात् ततोन्नाद्रसरूपान्मातापित्रोःशोणितंजायतेइत्यर्थः १९६ शोणिताच्चेति । घनीभूताच्छोणितान्मांसंतस्माच्चनीरक्तंरक्तवर्णहीनंयन्मांसंतद्रूपंमेदोजायतेइत्यर्थः १९७ पक्वात्तस्मादिति । तस्मान्मे दसोपिपक्वादंतर्गताग्निनाघनीकृतादस्थीनिभवंतीति धातुष्वग्निस्थितिप्रकारोमोक्षधर्मेयाज्ञवल्क्यस्मृतावुक्तोबोध्यः तेभ्योमज्जाभवतियस्याआकारईषद्द्रुतघृतवद्भवतीति १९८ तस्मात्त्विति । तस्मान्मज्जाख्यधातोश्चरमधातुर्जायतेयस्यरूपंपितृदेहेश्लेष्मनिभंमातृदेहेरक्तसममित्यर्थः १९९ एवंविधोजाठराग्निप्रवेशद्वाराचरमधातुप्रवेशःसर्वेषांयोनिजशरीरग्रहणायावश्यमपेक्षितइत्याह स्व र्गिणइतित्रिभिः । स्वर्गादिलोकत्रयवासिनःसर्वेपिजंतवःपूर्वदेहपरित्यागानंतरंयोनिजदेहलाभायोक्तविधयामातापित्रोर्वीर्येविशंतीत्यर्थः २०० नानेति । तेषांमध्येकेचनस्वर्गिणोनानाविधंसु

तेजोबन्नात्मकंभुक्तंपीतंवाखिलमेवतत् ॥ त्रिधानयतिदेहेस्मिन्सर्वेषांजीवनप्रदः १९४ असारंमूत्रविष्ठाख्यंबहिःक्षिपतिनित्यशः ॥ मध्यमंधातुरूपेणपरिणमा यतीश्वरः ॥ प्राणेंद्रियमनांस्येषसूक्ष्मादाप्याययन्सदा १९५ तत्रयोमध्यमोभागःपच्यतेरससंयुतः ॥ रसरूपात्ततःपूर्वंपित्रोःशोणितसंभवः १९६ शोणिता च्चघनीभूतात्तयोर्मांसंप्रजायते ॥ पक्वान्मांसात्ततोमेदोनीरक्तंमांसमीरितम् १९७ पक्वात्तस्मात्तुकठिनान्यस्थीनिचभवंत्यपि ॥ अस्थिभ्योजायतेमज्जायास्था मंतश्चसंस्थिता ॥ ईषद्विलीनसंशुद्धघृतवत्सापिकीर्तिता १९८ तस्मात्तुजायतेवीर्यंयतःकामाग्निदीपनम् ॥ पितरिश्लेष्मसदृशंरक्ताभंतच्चमातरि १९९ स्वर्गि णोनारकास्तद्वद्येचान्येभूमिसंश्रिताः ॥ पूर्वदेहपरित्यागाद्वीर्यंपित्रोर्व्रजंतिते २०० नानाविधंसुखंतद्वद्दुःखंचात्यंतदुःसहम् ॥ स्वर्गान्नीरेणसहिताभुवमायांति केचन ॥ भूमिगानारकास्तद्वदन्नंसर्वेभवंतिते २०१ स्थावराःकेचिदेवस्युःकेचित्स्थावरदेहगाः ॥ सर्वएवतुभक्ष्याःस्युःपित्रोर्देहांतरग्रहे २०२ नरकेभुविवादुः खंप्रसिद्धंचमृतौतथा ॥ स्वर्गेपिदुःखमखिलंप्राप्तंयत्सुखमत्रतैः ॥ अधिकारिशरीरेणबहुक्लेशकरेणहि २०३ इष्टंपूर्तंतथादत्तंकृत्वाक्लेशौघकारकम् ॥ तपश्चवि विधंकृत्वायांतिधूममनीश्वराः २०४ धूमाद्रात्रिंतथाकृष्णपक्षमस्माद्दिवौकपाम् ॥ रात्रिंततःपितॄणांतंलोकंपिंडोपजीविनाम् २०५

खलेशंदुःसहंदुःखंचानुभूयेतिशेषः स्वर्गान्मेघजलद्वाराभूमिंगच्छंति केचित्तुभूमिगाएवदेशांतररूपांभूमिंजलधारयागच्छंति तथानारकाअपि एवमन्नप्रवेशःसर्वेषांसमानइत्यर्थः २०१ स्था वराइति । स्थावरपदंस्वेदजानामप्युपलक्षणम् तथाचयद्यपिस्थावराःस्वेदजाश्चपूर्वदेहंपरित्यज्यस्थावरस्वेदजदेहग्रहेऽन्नभावंनापेक्षंतेतथापिदेहांतरस्यविजातीयस्ययोनिजाख्यस्यग्रहणेतेषामप्य न्नप्रवेशआवश्यकइतिसर्वपदस्ययोनिजग्रहणयोग्यपरत्वेनशरीरांतरग्रहायसर्वेभक्ष्याभवंतीत्यवधारणमुपपन्नमिति २०२ तत्रपूर्वदेहत्यागानंतरंदुःखमनुभूयभुवमायांतीतियदुक्तंतद्विशदयति नरके इति । यथानरकेभुविमरणेचदुःखंप्रसिद्धंतथास्वर्गेपिबोध्यम् यतयतोत्रस्वर्गेतैर्भोगिभिरधिकारिणाभोगार्हेणशरीरेणैवप्राप्तंशरीरंतुदुःखव्याप्यमेवेत्यर्थः ३ स्वर्गिणांदुःखसत्त्वंपितृयाणप्रतिपादकच्छंदो गादिवाक्येनसंप्रदर्शितमितिसूचयंस्तदर्थमनुवदति इष्टमितिचतुर्भिः । येऽनीश्वराईश्वरोपासनहीनाःकेवलमिष्टापूर्तादिकंकर्मैवकुर्वंतितेधूमोपलक्षितंपितृयाणंपंथानंप्रविशंतीत्यर्थः अथवाकेवलकर्मि णोमरणकालेऽनीश्वराःपरतंत्राःसंतस्तंमार्गंयांतीतियोजना २०४ तंमार्गमभिनयति धूमादिति । धूमादिपदानितदभिमानिदेवतापराणि दिवौकसांरात्रिंदक्षिणायनंततःपितृलोकमिति २०५

तस्मादिति । तस्मात्पितृलोकादाकाशंगत्वाचंद्रंगच्छंति यंचंद्रंदेवाःकृष्णपक्षेभक्षयंतिशुक्लेवर्द्धयंतिचेति २०६ दासवदिति । तस्यचंद्रस्यतादात्म्यंगतःकर्म्यपिदेवैर्भुज्यतेभोगोपकरणतांनीयतेयथालोके दासः तथाचपारतंत्र्यादिदुःखंस्फुटमित्यर्थः २०७ शरीरित्वेनाक्षिप्तंदुःखांतरमपितत्रभवतीत्याह बंध्वादीनामिति । बंधुर्दारादिस्तस्याऽप्राप्तिरूपाद्दैत्यावधिकभयरूपाद्वाहेतोरुत्थितंदुःखंतत्रभवति तथासंयोगाविप्रयोगांताइतिन्यायसिद्धोयोबंधुवियोगस्तज्जंदुःखंमरणादप्यधिकमित्यर्थः २०८ एवमिति । अयंजंतुरेवंविधानिदुःखानिस्वर्गादिषुप्राप्यकालवशेनपितुरन्नभावद्वाराजठरंप्राप्यतात प्यतेऽतिशयेनतप्तोभवतीति २०९ तस्यतापमेवपितृतापपूर्वकमाह अन्नादइतिचतुर्भिः । यथाअन्नादःपुमान्कामग्रहेणस्त्रियंस्मरंस्तांविनाशर्मनाप्नोतितप्यतेइतियावत् २१० तद्दुःखंदृष्टांतेनस्फुटयति विण्मूत्रस्येत्यादिनाभवेदित्यंतेन २११ रेतःप्रविष्टस्यतापमाह अग्निनेतिद्वाभ्यां । अयंजीवःसप्तमंधातुंगतःपितृकामलक्षणेनतदुद्दीपकयोषिद्रूपेणवाऽग्निनातप्यमानःसन्यंत्रेपतेत् यथारक्तसेवंतीप्रभृति

तस्मादाकाशतःसोमंराजानंदेवतागणाः ॥ अदंतिकृष्णपक्षेयंशुक्लेसंवर्द्धयंतिच २०६ दासवद्भुज्यतेचायंतत्रदेवैःसवासवैः ॥ पारतंत्र्यंसदातत्रभीतिःकर्मक्षया दपि २०७ बंध्वादीनांतथाऽप्राप्त्याभीतेर्दैत्यगणादपि ॥ मरणादधिकंदुःखंबंधूनांचवियोगजम् ॥ एवमादीनिदुःखानिस्वर्गेपिशतकोटिशः २०८ एवंदुःखा न्ययंप्राप्यस्वर्गादौकालतःपुमान् ॥ अन्नभूतोत्रजठरेपितुस्तातप्यतेसदा २०९ अन्नादोत्रयुवाजंतुःकामग्रहवशंगतः ॥ शर्मनाप्नोतिहिविनास्त्रियंरेतःप्रधारिणीं २१० विण्मूत्रस्यनिरोधेनयावद्दुःखंप्रजायते ॥ निरोधेरेतसस्तावत्ततोवाभ्यधिकंभवेत् २११ अग्निनापच्यमानोयंसप्तमंधातुमागतः ॥ पुष्पेभ्योत्रयथासारंनी रयंत्रेविनिःसरेत् ॥ अग्निनापीडयमानेभ्योज्वलतात्रदिशोदश २१२ पुंसस्तथैवरेतस्तत्सारभूतंवपुःस्थितम् ॥ योनियंत्रेपतेत्सम्यग्योषिदग्निप्रपीडनात् ॥ स्व स्मादपिकरोत्येषपितुर्दीनतमांदशाम् २१३ हर्षंतीसातदानारीवहुहर्षमुपागता ॥ रेतोऽग्निंस्वकुहूद्वारागृह्णातिपरिमोहिता २१४ बालोयथाहसन्नाशीविषंगृह्णा तिहस्ततः ॥ स्वस्यमृत्युमिवापूर्वमथवामृत्युमेवतम् २१५ चोराकुलितमध्वानंयथापांथोविमोहितः ॥ गच्छन्प्रयातिसहसातत्रसप्राणसंशयम् ॥ कामिनीका मसंयुक्ताकामुकंयातिसातथा २१६ गाढमालिंग्यसुस्नेहायथाधूर्तःप्रयच्छति ॥ आशीविषंप्रसुप्तंतंहैमेपात्रेनिधायच २१७ सुगंधैश्चंदनैर्लिप्त्वापुष्पैरपिमनो रमैः ॥ समभ्यर्च्यस्वकार्यार्थीस्नेहंसंदर्शयन्मुहुः २१८

पुष्पाणांनलिकायंत्रारूढानांरसोग्निसंपर्कवशात्पृथक्पात्रेपततितद्वदिति किंचपितृदैन्यदर्शनेनतत्प्रयोजकस्यदैन्यमनुमेयमित्याह स्वस्मादिति । एषसप्तमधातुगोजीवःस्वस्मादात्मीयाद्दैन्याद्धेतोराधि कंदैन्यंकरोतीत्यपिप्रसिद्धमितिद्वयोरर्थः १२ । १३ नकेवलंपितुरेवदैन्यंकरोतिकिंतुमातुरपिपरंतुसाविभ्रमेणतदानींदैन्यमभजमानापिपश्चाद्गर्भक्लेशादिनातापंगच्छतीतिनानादृष्टांतैःप्रतिपादयति हर्षं तीतिनवभिः । रेतोरूपचंद्रस्यांतर्भावप्रयोजकत्वसाधर्म्यात्स्त्रीलक्षणस्यकुहूत्वं स्फुटमन्यत् १४ तत्रदृष्टांतमाह बालइति । कीदृशंसर्पं विलंबेमृत्युसदृशंत्वरायांमृत्युरूपमिति १५ द्वितीयंदृष्टांतमाह चोराकुलितमिति । तथासाकामिनीकामुकंप्राप्यप्राणसंशयंयातीतितृतीयदलयोजना १६ एवंसतिदुःखदेव्यापारेनारींनियोजयतोनरस्यधाष्टर्यंव्यक्तमेवेतिसदृष्टांतमाह गाढमितित्रिभिः । यथाकश्चि द्धूर्तःप्रसुप्तस्नेहसाध्यंगाढालिंगनंकस्यचित्कृत्वाप्रसुप्तंसर्पंहैमपात्रेनिधायगंधादिभिःसमभ्यर्च्यचतस्मैसमालिंगिवायदद्यात् किंकुर्वन् स्वप्रयोजनविशेषायस्नेहसाध्यमुपकारंदर्शयन्नितिद्वयोरर्थः १७ । २१८

दार्ष्टांतिकेयोजयति रेतइति। परिमोह्यचाटुभिर्विभ्रांतांकृत्वा २१९ रेतसोनारींप्रतिदुःखदत्वंसदृष्टांतमुपपादयति ब्रह्मस्वमितित्रिभिः। स्पष्टंद्वयं २२०। २१ क्षीरमिति। चकारोप्यर्थे यथासविषंक्षीरंपानकालेसुखंकुर्वदपिमृतिहेतुस्तथेदंरेतोनारीणामिति २२२ एवंसतिकामुकस्यपापंन्यायप्राप्तमभिनयति विषस्येति। विषवन्मरणप्रयोजकस्यरेतसोयोषिद्गर्भेनिषेक्तुर्विषदानसमंपापंन्यायादायाती त्यर्थः २२३ कारेति। कारावंधनागारंसूनावधस्थानंतन्निर्मातुर्यत्पापंतत्तुल्यंपुत्रादिदेहस्यतद्दुःखहेतोःकरणेपितुर्भवतीतिकीर्तितंनिवृत्तिशास्त्रेपुकीर्तितप्रायमित्यर्थः स्वदेहसंबंधस्यानर्थत्वप्रतिपादके नैहवैसशरीरस्यसतइत्यादिवाक्यैर्हिपरदेहसंबंधकरणस्यानर्थत्वंसूचितमेवेतिभावः २२४ उक्तदोषप्रसंगंव्यतिरेकमुखेनस्फुटयति यद्ययमिति। पितेतिपदंपूर्वार्द्धान्वयि २२ ननुऋग्वेदब्राह्मणेहरिश्चंद्रोपाख्यानेपुत्रोत्पादनस्यप्रशंसनाद्विधेयत्वंगम्यतेविधिस्पृष्टेचनिषेधानवकाशात्कथंदोषावहत्वमितिशंकांतत्प्रकरणतात्पर्यप्रदर्शनेनपरिहरति अपुत्रस्येति यदपुत्रस्यप्राप्तियोग्यःकश्चिल्लोकोनास्ती त्यादिकमृग्वेदेप्रोक्तंतत्कामुकानामभिप्रायस्यैवकीर्त्तनमनुवादोवैराग्यायनतुपुत्रोत्पादनप्रशंसनं यतस्तद्वाक्यशेषइत्यवदत् इतिकिं तेपशवउक्ताभिप्रायेणमातृगमनादिकमपिकुर्वंतीति तदुक्तं 'तंपश्यंतिपशवोवयांसितस्मात्तेमातर्यपिमिथुनीचरंति' इति तंपुत्रिणांलोकं तस्मात्तुपुत्रोमातरंस्वसारंचाधिरोहतीतिच २२६ किंचतत्रपश्वाचारस्यप्रमाणत्वेनोपन्यासान्निंदैवप्रतीयतेइत्याह पशवइति।

रेतोहिकामुकोप्येवंस्वयंसोढुमशक्नुवन् ॥ योषितंपरिमोह्यास्यादेहेपापरतःक्षिपेत् २१९ ब्रह्मस्वंसुखदंयद्वत्सेव्यमानंतदात्तृणाम् ॥ जठरस्थंतदेवैषामुदर्केदुःखदं भवेत् २२० रेतोहिसुखदंतद्वत्प्रवेशेयोषितामिदम् ॥ जठरान्निर्गमेभूयोमरणादपिदुःखदम् २२१ क्षीरंविषेणसंयुक्तंपानकालेयथासुखम् ॥ कुर्वच्चमृतिहेतुः स्यादेवंरेतोत्रयोषिताम् २२२ विषस्यदानतोयावत्पापंभवतिपापिनः॥ जठरेरेतसोदातुर्योषितांतावदेवहि २२३ कारासूनादिशालानांयावत्कर्तुर्हिपातकम् ॥ पुत्रादिदेहजननेपितुस्तावद्धिकीर्तितम् २२४ यद्ययंकुरुतेनैवमैथुनंकाममोहितः ॥ पितादुःखकरःकेनदेहःपुत्रस्यसंभवेत् २२५ अपुत्रस्यनलोकोस्तीत्यादि कामुककीर्तनम् ॥ मातरंचस्वसारंचतेयांतीतियतोवदत् २२६ पशवःसर्वएवैतेविदुःपुत्रजनिंयतः ॥ ततःपुत्रेतिकिंनामभवतोत्रभविष्यति २२७ पुत्रस्योत्पा दनाज्जायापत्युर्माताप्रजायते ॥ यथामातातथाभार्यास्प्रष्टव्यानैवकामतः २२८ अवशोऽत्रयथामातुर्गर्भंप्राप्तोत्रदुःखदम् ॥ स्ववशस्त्वंतथामागाजायागर्भंकदा चन ॥ एतावानेवतत्रार्थःशास्त्रस्यात्रप्रतीयते २२९ अपिपुत्राद्भवेल्लोकोनपरःकर्हिचिद्यतः ॥ अयंलोकइतिप्राहश्रुतिःपुत्राद्विशेषतः २३० हरिश्चंद्रादिकानां स्यादाख्यानेयत्तुकीर्तनम् ॥ तत्तुरागानुसारेणस्तुतिःपुत्रस्यजन्मनः २३१

यतःसर्वेपशवःपुत्रजन्मावश्यकर्त्तव्यतांजानंतीतितत्रोक्तंततोहेनरभवतःपशुवृत्तमनुसरत'आत्मावैपुत्रनामासि'इतिश्रुत्यनुसारात्प्राप्तपुत्रेत्याकारकंकिंनामनिंदासूचकत्वात्कुत्सितंनामभविष्यतीत्य र्थः२२७ पुत्रनामसूचितांनिंदामेवाबोजननीपुनरित्यादिश्रुतिप्रदर्शितांविशदयति पुत्रस्योत्पादनादिति भार्याश्रुतिगतेपापदोक्तापुत्रस्योत्पादनाज्जायापदसूचितमातृत्वकाभवतिततःकामेननस्प्रष्टव्ये त्यर्थः २२८ फलितमाह अवशइति। कर्मवशोजीवस्यपुत्रभाविनोदुःखदगर्भप्रवेशःकर्मादिपरतंत्रतयाभवत्तुनामहेनरतवस्वतंत्रस्यपुत्ररूपेणजायागर्भप्रवेशोऽत्यंतमनुचितइत्येतावदेवहरिश्चंद्रोपाख्या नगतश्रुतिवाक्यस्यतात्पर्यमित्यर्थः अत्रवस्तुविचारे २२९ किंपुत्रस्यलोकजयसाधनत्वांगीकारेपिमनुष्यलोकजयसाधनत्वमेवांगीकर्त्तव्यं 'पुत्रेणायंलोकोजय्यः' इतिबृहदारण्यकवाक्येनस्फुटी करणादित्याह अपिपुत्रादिति। अयंमनुष्यानुभवगोचरोविशेषतःस्पष्टः २३० यानितुहरिश्चंद्रोपाख्यानादौकानिचित्तत्प्रशंसापराणिवाक्यानितानिवक्ष्यमाणविधयागुडजिव्हिकान्यायेनमूढान्स न्मार्गेसमानेतुमेवेत्याह हरिश्चंद्रादिकानामिति २३१

निवृत्तौश्रुतितात्पर्यमेवाभिनयंतिततइत्यादिना । विद्वांसंकिंचिद्विवेकिनंप्रतिएतद्वक्ष्यमाणप्रकारकंश्रुतिराहेति २३२ तत्रश्रुत्युपदिष्टंमुख्यंकल्पमभिनयति मागच्छेति । हेवत्सतपोरूपवित्तस्यनाशप्रयोजकाःस्त्रियःप्रतितवगमनंनोचितं यतस्तासांस्त्रीणांगमनाल्लोकद्वयेदुःखंभवति कीदृशमद्भुतंवर्णयितुमशक्यंतथाविपाकेउक्तदुःखरूपफलारंभकालेतदुपयोगिदेहरूपाःकाराबंधनगृहाश्चभवंति यतोविवेकिनःअक्षिपात्रकल्पाअत्यंतंनरकवदुद्विजंतइतिद्वयोरर्थः २३३ । २३४ एतावतास्त्रीगमनप्रयोजककामस्ययद्वांजंरमणीयत्वाध्यासात्मकसंकल्परूपंतन्निरोधउपदिष्टोऽथतदशक्तौकामवेगंनिरुध्यापिब्रह्मचर्यंदहराद्युपासनांगंपरिपालयतेनतवाभीप्सितंपरलोकेपूरयिष्यामियतःशतमंजनहस्ताःशतंमाल्यहस्ताइत्यादिकौषीतकिशाखारूपमद्वचनेनत्वामानेतुमप्सरसआगमिष्यंति तत्रचगर्भप्रयुक्तापीडानार्याःसुतद्वारातेपिचनभविष्यंतीत्येवंश्रुतिरुपदिशतीत्याह अथचेदितिद्वाभ्यां । वधूरप्सरसआभ्योमानुषीभ्योधिकास्तुभ्यंदास्यामीति । तासांगर्भाभावान्नतत्प्रयुक्तानारीसुतादिद्वारिकापीडातेनभविष्यतीति २३५ । २३६ अत्राप्यशक्तंप्रतिवक्ष्यमाणाकारमनुकल्पंश्रुतिरुपदिशतीत्याह भविष्यतीति । प्रथमपक्षंपूर्वोऽन्वयिदर्शितं चेत्यदिउक्तविषयासंप्रोक्तउपदिष्टोपिनतिष्ठतिनसं

ततोरागांधमालोक्यनिखिलंसचराचरम् ॥ श्रुतिर्विद्वांसमाहैतद्रागस्यविनिवृत्तये २३२ मागच्छयोषितोवत्सतपःस्वार्थस्यनाशकाः ॥ इहामुत्रचतासांतिगमनाद्दुःखमद्भुतम् २३३ विपाकेदेहकाराश्चजायंतेभवताकृताः ॥ साधूनांसमचित्तानांनरकादपिदुःखदाः २३४ अथचेद्भवतःकामोवर्ततेयोषितंप्रति ॥ स्वर्गेवाब्रह्मलोकेवाभवतेब्रह्मचारिणे २३५ आभ्योरूपादिसंपन्नाअधिकाःकोटिशोगुणैः ॥ वधूरंजनमालादिहस्तादास्याम्यसंशयम् ॥ तत्रगर्भकृताहिंसानतेनारीसुतादिजा २३६ भविष्यतीतिसंप्रोक्तःकामुकश्चेन्नतिष्ठति ॥ तदेवंपुनरप्याहश्रुतिर्मातेववत्सला ॥ कामप्रसक्तंसततंनिवृत्तस्तुरुपायतः २३७ परदारान्नगच्छेद्धिकर्मणामनसागिरा ॥ तांगच्छन्भयमागच्छेदिहलोकेपरत्रच २३८ ततस्त्वंकामुकश्चेत्स्याद्दारान्संपादयात्मनः ॥ गृहस्थोभवतत्रापियज्ञदानादिकंकुरु २३९ दिवानमैथुनंयाहिस्वदारेष्वपिकर्हिचित ॥ रात्रावपिचपर्वादिरात्रीर्वर्जयसर्वदा २४० एवमुक्तेऽनिषिद्धासुरात्रिष्वेवप्रवर्तते ॥ विद्वांस्तस्यनिरोधार्थमुपायन्नेदमब्रवीत २४१ अनृतौनैवगंतव्यंभवतास्त्रीषुकर्हिचित ॥ प्रशस्यतुवधूनांचलोभयंतीवकामुकम् २४२ ऋतावेवावगंतव्यंस्नातायांसुदिनेतथा ॥ कृत्वाशास्त्रीयसंस्कारान्निषिद्धासुरात्रिषु २४३ एवंतेपुत्रलाभःस्यात्पुत्रश्चैतादृशोयतः ॥ इत्यभिप्रायतःपुत्रप्रशंसांकुरुतेहिसा २४४

यतोभवतितदातंकामसक्तमुपायेनबालमिवफलोपन्यासरूपेणानिविवृत्सुर्विषयप्रवृत्तेर्निवर्तयितुमिच्छंतीश्रुतिर्मातृसमैवमाहेत्यर्थः २३७ एवंकथमित्याकांक्षायामाह परदारानिति । यतःशरीरादिभिःपरदारगमनेलोकद्वयेभयावहंततआत्मीयदारसंपादनेनगृहस्थतांप्राप्ययज्ञादिकंकार्यमितिद्वयोरर्थः २३८ । २३९ तत्रापिस्त्रीसेवायामयंनियमःपालनीयइत्याह दिवेति स्पष्टम् २४० एवमुक्तइति । एतावत्श्रुत्वायोधिकारीअनिषिद्धासुपर्वादिभिन्नासुरात्रिष्वेवस्त्रीपुसक्तोभवतितमपिनिरोद्धुंश्रुतिरित्थंनियमांतरमुपदिशति यतउपायज्ञाउपायस्यबालधीविपद्याभिधानरूपस्यज्ञात्रीइत्थंकथं ऋतुभिन्नकालेगमनंनयोग्यमिति किंकुर्वतीइत्थमुपदिशति वधूनामृतुकालस्यप्रशंसयाकामुकचेतसिलोभंजनयंतीवेतिद्वयोरर्थः २४१ । २४२ तांप्रशंसामभिनयति ऋतावेवेतिद्वाभ्यां । भार्यायांऋतौस्नातायांसत्यांसुदिनेशोभनवारादियुक्तएवकाले शास्त्रीयानाभ्युदयिकादिरूपान्संस्कारान्कृत्वानंतरंनिषिद्धाआद्याश्चतस्रोमघामूलयुक्ताविषमाश्चरात्रीर्वर्जयित्वापिचगंतव्यमित्यर्थः २४३ एवमिति । एतादृशनियमानुष्ठानेतेपुत्रलाभःस्यात् अयंचपुत्रार्थोयत्नस्त्वयावश्यंकार्योयतःपुत्रएतादृशोहरिश्चंद्रोपाख्यानादौकीर्तितःमख्यातिहेतुत्वादिभिर्गुणैर्युक्तइत्येवंनिवृत्तितात्पर्येणसाश्रुतिःपुत्रोत्पादनंप्रशंसतीत्यर्थः तथाचोक्तंभागवतैकादशे लोकेव्यवायेत्यादिना २४५

अपूर्वविधिस्त्वत्रनसंभवतिरागादितःप्राप्तत्वादित्याह उत्पादनमितित्रिभिः । स्पष्टम् २४५ योषितामिति । यतःशास्त्रंविनापिनारीसंगिनांपुत्रजन्मप्राप्तंकामप्रयुक्तोनारीसंगश्चप्राप्तइत्यर्थः २४६ अत्रोदाहरणंमुख्याःपशवोऽजादयोमनुष्याकारकत्वेनगौणाःपशवोम्लेच्छादयश्चेत्याह पश्वादीनामिति । शास्त्रहीनानांपशुपक्षिमत्स्यादीनांम्लेच्छादीनांचशास्त्रमविदुषांप्रजोत्पत्तिर्नारीसंगश्चदृश्यतेइत्यर्थः एतदभिप्रायेणैवश्रुत्यापशवोदृष्टांततयोपन्यस्ताः कीदृशाः रागवेदिनःरागंकामजांप्रवृत्तिंस्वस्मिन्वेदयितुमनुभावयितुंशीलंयेषांतेतथा ४७ अतएवपतिर्जायांप्रविशतीत्यादिश्रुतिःपुत्रोत्पत्त्यनंतरंतत्संयोगवारणपरेत्याह पुत्रोत्पत्ताविति । स्थिताउद्यतायाभार्यापूर्वमजायाजायापदवाच्यानभवतिसापुत्रोत्पत्तौसत्यांजननीत्वसूचकेनजायापदेनोच्यतइति २४८ फलितमाह ततइति । ततःकामवशात्प्राप्तयोर्नारीसंगप्रजोत्पत्त्योर्विध्यनर्हत्वंस्फुटमितिभावः २४९ अयंकामस्तुश्रुत्याहेयतयैवविवक्षितोऽनर्थहेतुत्वादित्याह कामइति । संसारलक्षणदुःखहेतुत्वंस्वस्वरूपानंदावरणप्रयोजकत्वंचकामस्यप्रसिद्धमित्यर्थः २५० किंतर्हिश्रुत्याविधीयतेइतिचेत्कामविजयलक्षणंब्रह्मचर्यमेवपरमपुरुषार्थरूपफलशालित्वादित्याह ब्रह्मचर्यादिति । ब्रह्मचर्येणोपलक्षितरागाभावकस्याधिकारि

उत्पादनंनपुत्राणांविधत्तेकर्हिचित्क्वचित् ॥ अप्राप्तस्यविधानंस्यात्प्राप्तंनैवविधीयते २४५ योषितांसंगमात्पुत्रजन्मप्राप्तंसदैवहि ॥ विनाशास्त्रेणकामाच्चनारीसंगस्तथास्वयम् २४६ पश्वादीनांविनाशास्त्रंम्लेच्छादेश्चैवदृश्यते ॥ प्रजोत्पत्तिश्चनारीणांसंगोप्यविदुषांतथा ॥ अतएवपशून्प्राहदृष्टांतेरागवेदिनः २४७ पुत्रोत्पत्तौचसंयोगंपुनर्वारयितुंस्थिता ॥ अजायाजायतेजायेत्येवमाहश्रुतिःस्वयम् २४८ ततःकामस्यमहिमाप्रजोत्पत्तिरिहास्तिया ॥ सर्वेषामपिजंतूनांनारीसंगादहर्निशम् २४९ कामोत्रदुःखवृक्षस्यसंसारस्यैवकारणम् ॥ आनंदात्मस्वरूपस्यहेतुरावरणेतथा २५० ब्रह्मचर्यादयंदेवआनंदात्मास्वयंप्रभः ॥ नीरागस्यस्फुरत्यंतःप्रदीपइवनिश्चलः २५१ सुखार्थिनोजनान्वीक्ष्यसुखशून्यांश्चतुर्विधान् ॥ शिरस्ताडमिवप्राहदुःखिताविदुषःप्रति २५२ स्थावरानेवजानंतिमदुक्तंश्रोत्रवर्जिताः ॥ बुद्धिहीनास्तथैवैतेश्रोत्रयुक्ताश्चजंगमाः २५३ केचिन्मांनैवसर्पंतिलोकेयेनाधिकारिणः ॥ भवंतोगुणसंयुक्ताःसर्वएवाधिकारिणः २५४ त्रैवर्णिकाविशेषेणब्राह्मणायेबहुश्रुताः ॥ कामंत्यजथचित्तोत्थंयदियूयंसुखार्थिनः २५५ कामबंधनमेवेदंदुःखंसर्वशरीरिणाम् ॥ कामात्मताप्रशस्तानक्वापिकस्यापिदेहिनः ॥ कामिनोदुःखमायांतियतःसर्वत्रसंस्थिताः २५६

णोंतर्हृदयेऽयमात्मायथावत्स्फुरतीत्यर्थः २५१ एतद्ब्रह्मचर्ययेनप्रकारेणश्रुतिरुपदिशतितमभिनयति सुखार्थिनइति द्वादशभिः । चतुर्विधान्जरायुजादीन्जंतून्सुखार्थंयजमानानपिसुखमलभमानान्वीक्ष्यदुःखितासतीश्रुतिरूपामाताविदुषोबोधाधिकारिणःप्रतिइत्थंप्राह कीदृशी कारुण्यदुःखातिशयसूचनायशिरस्ताडनमिवकुर्वतीतिशेषः २५२ इत्थंकथमित्यतआह स्थावराइति । हेत्रैवर्णिकास्तत्रापिब्राह्मणाभवंतोयदिसुखार्थिनस्तर्हिमदुक्तंकामत्यागरूपंकुरुत गुणैर्बुद्ध्यादिभिर्युतत्वेनश्रवणक्षमत्वेनचभवतामेवमद्वचनानुष्ठानाधिकारित्वात् नहिमदुक्तानुष्ठानेस्थावराणामधिकारःश्रोत्रहीनत्वेनमदुक्तस्यैवतैरपरिज्ञानात् तथाकेषांचित्पश्वादीनांजंगमानांश्रोत्रयुक्तानामपिनाधिकारोयतोबुद्धिहीनाःबुद्ध्याशास्त्रार्थावधारणशक्त्याहीनाः केचित्तुशूद्रादयोबुद्धिमंतोपिनाधिकारिणोयतस्तेप्रतिषेधेनमदुपसर्पणेप्ययोग्याइतित्रयाणांसंबंधः २५३ । २५४ । २५५ कामस्यहेयताप्रयोजकंबलवदनिष्टानुबंधित्वंदर्शयति कामबंधनमिति । कामोबंधनंनिबंधनंप्रयोजकोयस्यतथाभूतमेवदुःखंलोकस्य यतःसर्वत्रकामिनएवदुःखमायांतीतिदृश्यंतेअतःकामपरत्वंनप्रशस्तंकस्यापीत्यर्थः २५६

कामत्यागस्यपुरुषार्थहेतुत्वंतुतैत्तिरीयव्याख्यानेपूर्वाध्यायेप्रोक्तमित्याह आनंदाइति । येचसार्वभौमस्यसद्गुणस्यानंदमारभ्यहिरण्यगर्भानंदपर्यंताएकादशानंदाःशतगुणोत्तराउक्तास्तानमूंस्तत्रतत्र निष्कामःप्राप्नोतीत्युक्तंपूर्वाध्यायेइत्यर्थः सार्वभौमएवादिःप्रथमस्तमारभ्यमानुषगन्धर्वदेवगन्धर्वपित्राजानजदेवकर्मदेवाधिकारिकदेवेन्द्रबृहस्पतिविराट्सूत्राणामानन्दाउक्ताः २५७ यस्तुपर ब्रह्मणआनंदःसिंधुस्थानीयउक्तस्तंप्राप्तुंयोग्योनिष्कामएवोक्तोनतुसार्वभौमादयस्तद्योग्याइत्याह आनंदवारिधेरिति २५८ अस्यपरमानंदस्यसाक्षात्करणएवमानुष्यदेहस्यसाफल्यमित्याह पुत्रै षणादिकाइति । आदिपदेनलोकैषणावित्तैषणयोर्ग्रहः अत्रमनुष्यदेहेइच्छंतिज्ञातुमितिशेषः २५९ विपक्षेदोषमाह अन्यथेति । अन्यथाकामापरित्यागेभवतांक्लेशोदुःखंतथापापमश्लीलंकर्मभविष्य त्यनुष्ठेयतामापत्स्यतेपश्वादिवत् कीदृशंतत्पापंकर्म नार्याःसंततेश्चोक्तविधयादुःखप्रयोजकमित्यर्थः २६० ननुपशुसाम्येकोदोषइतिचेन्मनुष्यत्वात्परिच्युतिरेवेत्याह उत्पादयंतीति । प्रायः पशूनामुत्पादनंयोषिद्गमनंचव्यापारःप्रसिद्धःसएवभवतामपिचेत्तर्हिपशुत्वापत्तिःस्यादित्यर्थः २६१ ननुविधिवशात्पशुसाम्यमप्यंगीकरिष्यामइतिचेत्स्यादेवंयदिपुत्रोत्पादनादिविधीनांनित्य त्वमकरणेदोषावहत्वलक्षणंभवेत्तेषांतुकाम्यत्वान्नवीतरागस्यतदुल्लंघनेदोषइत्याह श्येनादीति । यथावैरिमरणादिपुरागशालिनंप्रतिश्येनादिसंज्ञयागानांविधिः नचतदकरणेप्रत्यवायस्तथापुत्रोत्पादा

आनंदाःसार्वभौमादेरेकादशसमीरिताः ॥ शतोत्कर्षानमून्सर्वानकामोयातिसर्वतः २५७ आनंदवारिधेर्यस्यलेशमात्रंसमीरिताः ॥ आनंदोब्रह्मणोयोत्रपरमानं दईरितः ॥ अकामएवतंयातिब्रह्मचर्यादिसाधनः २५८ पुत्रैषणादिकाःसर्वास्त्यक्त्वानानाविधैषणाः ॥ आनंदात्मानमंतस्थमिच्छंत्यत्राधिकारिणः २५९ अ न्यथाभवतांक्लिशःपापंचैवभविष्यति ॥ पश्वादीनांयथानारीप्रजानांबहुदुःखदम् २६० उत्पादयंतिपशवःप्रायोगच्छंतियोषितः ॥ भवंतश्चतथाचेत्स्युर्विशेषोभ वतांहिकः २६१ श्येनादिविधियोयद्वत्कीर्तितारागिणंप्रति ॥ प्रजोत्पत्त्यादिविधयस्तथैतेकामिनंप्रति २६२ प्रजोत्पत्तौविशेषोयंमंत्रसंस्कारलक्षणः ॥ काला दिनियमस्तद्वद्विधेयोरागिणंप्रति २६३ रागोनर्थकरश्चायंस्वसृमात्रादिसंगदः ॥ पश्वादिदर्शनाद्युक्तोवर्जनीयःसदानृभिः २६४ रागांधधिषणःकुर्यात्स्वस्यानर्थंप रस्यच ॥ तस्माद्दुःखभिदंकामीवध्वागर्भंसुदुःसहम् ॥ करोतिस्वात्मनःपापंदेहदुःखंसुतस्यच २६५ रेतएतद्वधूगर्भआर्तवेनचसंयुतम् ॥ उत्पादयतिजंतूनां देहकारागृहंत्विदम् २६६ रक्तस्यश्लेष्मणायोगेसद्योवर्णांतरंयथा ॥ आर्तवेणभवेत्तद्वद्वैवर्ण्यंरेतसोपिच २६७

दिविधयोपिरागिणंप्रत्येवप्रवर्त्तंतेइत्यर्थः २६२ एवंतदंगभूतोविवाहादिनियमोपिकामिनंप्रत्येव अंगप्रधानयोःसमानाधिकारकत्वादित्याह प्रजोत्पत्ताविति । पश्चायंप्रजोत्पत्त्यर्थैविशेषोविवाहा दिकोमंत्रकरणकसंस्काररूपस्तथाऋतुकालादिनियमश्चसर्वोपिरागिणंप्रत्येवविधीयतेइत्यर्थः २६३ फलितमाह रागइति । यतोरागःपशुपक्ष्याद्युदाहरणेनस्वस्रादिसंगप्रयोजकत्वादनर्थकरउक्त स्ततोवर्जनीयइति २६४ नकेवलंशास्त्रएवकामस्यानर्थकरत्वमुक्तंकिंतुदृश्यतेपीत्याह रागांधेति । यतोरागव्याकुलितमतौसर्वानर्थकरत्वंसंभाव्यतेतस्मादिदमुपपन्नं इदंकिं कामीवध्वागर्भरूपंदुःख मात्मनःपापरूपंसुतस्यदेहसंबंधरूपंचदुःखंकरोतीति २६५ सुतदेहदुःखदत्वमेवकामिनःस्फुटयति रेतइति । वधूगर्भंगत्वाआर्तवंरजस्तेनसंपृक्तमेतद्रेतोदेहरूपंबंधनागारंकरोतीति २६६ शुक्रशोणि तसंयोगादित्यादेःक्रमादित्यंतस्यार्थमाह रक्तस्येत्येकविंशतिश्लोकैः । रक्तस्यकफेनयोगेयथावर्णांतरंभवतितथापदार्थवस्यस्त्रीरजसोरेतसायोगाद्वैवर्ण्यंरूपांतरापत्तिलक्षणंतदेतत्श्रुतौसंयोगपदेनो क्तमित्यर्थः तथाचोक्तरूपसंयोगनिमित्ताद्गर्भभावद्वाराजंतुःपुनःशरीरप्राप्तिलक्षणामावृत्तिंलभतेइतिश्रुत्यर्थः २६७

उक्तसंयोगात्पूर्वरेतःसिचःपितुर्देहाद्रेतसोनिर्गमप्रकारोहृदीत्यादिश्रुतिग्रंथेनोक्तइत्याह रेतसइति । अस्यगर्भपरिणामिनोरेतसःपितुःशरीराद्येनक्रमेणनिर्गमोभवतिसक्रमइत्थमुक्तइत्यर्थः २६८ इत्थंकथमित्याकांक्षांपूरयति अन्नमित्यादिना । उक्तविधयायूनःशरीरंप्राप्तमन्नंसप्तमधातुभावंप्राप्यआपादतलमस्तकंव्याप्नोतीतिशेषः २६९ वधूस्मृत्यादीति । तच्चरेतोभूतमन्नंनारीस्मृत्यादिरूपाग्निनातापितंसत्सर्वांगरूपपुष्पेभ्यआकृष्टरसस्थानीयतांगत्वाहृदिव्यवतिष्ठतेतत्रस्थित्वाचतद्रेतोहृत्पद्मंकंपयतीवयथामहावायुर्वृक्षम् कीदृशंतद्रेतः निरोधेबलशौर्यादिकारणमितिद्वयोरर्थः एतेनश्रुतोव्यवस्थापयतीतिपदस्यहृदयेविशेषेणावस्थानंनयतिप्राप्नोतीत्यर्थोध्वनितः २७० । २७१ ततःकिंभवतीत्यतआह हृत्पद्मेति । एवयुवाहृत्पद्मेकंपितेसतिवधूनांक्रीडामृगोधीराणांशोच्यश्चभवेत् यतोधैर्यप्रयोजकेणक्लेशेनविधारकप्रयत्नेनवर्जितः २७२ एतेनसूचितंरेतोगतस्यजीवस्यदुःखंवर्णयति हार्दमिति । रेतसिहृत्पद्मंगतेसतियथापितुर्दुःखमनुभवसिद्धंतथातद्रेतोगतजीवस्याप्यनुमेयमित्यर्थः २७३ तद्दृष्टांतेनसंभावयति समुद्रस्येति । देहस्थःपितृदेहेस्थितोजीवः २७४ एवंहृदयेस्थित्वातदंतर्गतमग्निस्थानंजीवोगच्छतिततश्चपित्तभावंततोवायु

रेतसोनिर्गमेचास्यक्रमएषउदीरितः ॥ पितुःशरीरतोनित्यंसर्वेषामिहदेहिनाम् २६८ अन्नंशरीरमायातंयूनउक्तप्रकारतः ॥ संप्राप्यसप्तमंधातुमापादतलमस्तकम् २६९ वधूस्मृत्यादिसंजातकृशानुपरितापितम् ॥ सर्वांगपुष्पसंजातरसरूपंहृदिस्थितम् २७० बलशौर्यादिकृद्धार्दपद्मंकंपयतीवतत ॥ महावायुर्यथाप्रातस्तरौतंसर्वतोदिशम् २७१ हृत्पद्मकंपनादेषधैर्यक्लेशविवर्जितः ॥ क्रीडामृगोवधूनांस्यात्सतांशोच्यश्चसर्वदा २७२ हार्दपद्मंगतेशुक्रेपुंसिदुःखंहियत्स्मृतम् ॥ तदेवशुक्रसंस्थस्यगर्भस्यापिप्रजायते २७३ समुद्रस्थायथानौकामहावातेनकंपनात् ॥ दुःखमायातितद्वत्सदेहस्थोहृदिकंपनात् २७४ एवंहृदयसंस्थानःप्राप्यदुःखंसुदारुणम् ॥ ततोहृदयनाडीभ्योगत्वादेहेस्थितिंपितुः ॥ अग्निंधातुप्रतिष्ठानमापादतलमस्तकम् २७५ महाग्नौपतितस्तत्रदह्यमानोतिदुःखितः ॥ मरणंनाग्नितस्तस्मान्निर्गमंचाधिगच्छति २७६ स्थित्वातत्रचिरंदुःखमनुभूयातिदारुणम् ॥ अग्नितःपित्तमायातिद्रुतताम्ररसोपमम् २७७ तस्मिंस्तीव्रतमेतप्तेक्षारेतिकटुकेतथा ॥ पतितोदुःखमायातिनरकादपिदारुणम् २७८ पित्तएवंतदादुःखमनुभूयातिदारुणम् ॥ वातंतीव्रतमंभूयोमहावातोपमंपुमान् २७९ महागिरौयथाशृंगेसमुन्नततमेस्थितः ॥ निरालंबेतिवातेनप्रकंपितवपुःपुमान् २८० हार्दपद्मंततोगच्छेद्धृदयस्यांतरस्थितम् ॥ रक्तोत्पलसमंनित्यंभातियन्मुकुलीकृतम् २८१ हृदयंद्विविधंनित्यंप्राणिनांपरिकीर्तितम् ॥ अस्थिपंजररूपंचपद्मरूपंतदंतरम् ॥ उरोवक्षइतिप्राहुर्बाह्यंयल्लौकिकाजनाः २८२

भावंततःपुनर्हृदयमितिश्रुतियोजनांदर्शयति एवमितिसप्तभिः । एवंहृदयेसंस्थानंयस्यतथाभूतःसन्दुःखंप्राप्य ततोहृदयोत्थितनाडीमार्गेणपितुर्देहेस्थितिमापादतलमस्तकंगत्वातत्रधातुप्रतिष्ठानंसप्तधातुपुस्थितिमंतमग्निंगच्छतीतिशेषः २७५ अग्निगतस्यदुःखंदर्शयति । महाग्नाविति २७६ स्थित्वेति । तत्राग्नौस्थित्वापित्तभावंगच्छतियत्पित्तंद्रुतताम्रसमानाकारमिति २७७ पित्तभावदुःखमाह तस्मिन्निति । तस्मिन्पित्ते २७८ पित्ताद्वातभावंतद्दुःखंचदर्शयतिद्वाभ्यां पित्तएवमिति । वातंगच्छतीतिशेषः २७९ महागिराविति । यथामहागिरिशिखरगतोमहावातकृतंदुःखमनुभवेत्तथायमपिदुःखमनुभवतीत्यर्थः २८० ततोवाताच्चपुनर्हृदयमागच्छतीत्याह हार्दमिति । स्पष्टम् २८१ हृदयस्वरूपंनिर्धारयति हृदयमिति । हृदयपदार्थोद्विविधःप्रसिद्धः अस्थिपंजरात्मकःप्रथमः तदंतर्मांसमयपद्मात्मकोद्वितीयः तत्रप्रथमस्यउरइतिवक्षइतिचलोकेप्रसिद्धिरित्यर्थः २८२

वर्णितंक्रमंपुनर्विशदीकुर्वन्नाह अद्यमानइतित्रिभिः । अन्नेनसहभक्ष्यमाणोजीवःप्रथमंपितुर्हृदयपद्मस्यसमीपंगच्छतिततआहारेणतेनभुक्तान्नेनसहजाठराग्निंगच्छतिततोरसैर्भुक्तान्नपरिणामैर्नाना
विधैःसहसमानवायुनाऊर्ध्वंगच्छति एवंजाठराग्नेरूर्ध्वंगच्छन्पित्तभावंगच्छतिततोवायुभावंततःपुनर्हृदयमितित्रयाणामर्थः २८३ । २८४ । २८५ यातायातमिति । एवंपितुर्देहेऽधऊर्ध्वंयातायातं
भ्रमणंकृत्वादुःखितःसन्कर्मवशेनरेतसासहवहिर्गच्छतीत्येवंरूपोऽध्वामार्गोदेहांतरग्रहणलक्षणसंसरणार्थंप्रजापतिनानिर्मितत्वात्प्राजापइत्युच्यतेइतिद्वयोरर्थः २८६ । २८७ अशार्थंक्रमेणद्वियोनि
मितिमंत्रपदव्याख्यानभूतस्यपितूरेतोतिरेकादित्यादेःप्रजायंतइत्यंतस्यश्रौतग्रंथस्यार्थंविंशतिश्लोकैरुपबृंहयंस्तदुपयोग्यागमोक्तंवीजत्रयंदर्शयति मलत्रयमितित्रिभिः । इदंबुद्धिसंनिहितनामकंम
लत्रयंसर्वयोनिजदेहानांकारणमुक्तमागमविद्भिरितिशेषः तथाचोक्तंप्रपंचसारे 'मायीयंनामयोषोत्थंपौरुषंकार्मणंमलं । आणवंनामसंप्रोक्तंमिलितंतन्मलद्वयम्' इति योषायामलंशोणितात्मकंमायीय
मित्युच्यते पौरुषंमलंतुकर्मसंस्कृतत्वात्कार्मणमित्युच्यते तदुभयंमिलितंसत्आणवमित्युच्यते जीवस्यशरीरावच्छिन्नत्वलक्षणाणुत्वप्रयोजकत्वादितितदर्थः । प्रथमंद्वितीयंचानूद्यतत्रतृतीयस्यस्वरू
पमतत्रयंदर्शयति रेतइत्यादिना । पितृसंबंधिरेतोरूपःप्रथमोमलोमातृसंबंधीद्वितीयोमलस्तयोर्मातृपितृमलयोर्गर्भःसंधिस्तद्रूपस्तृतीयोमलइत्येवंकेचिदागमिकाद्विजाःप्रवदंति 'गर्भःकुक्षौशिशौसं

अद्यमानःपुमान्गच्छेदन्नेनसहसर्वदा ॥ पितुर्हृदयपद्मस्यसमीपंप्रथमंततः २८३ गच्छेद्देहगतंवन्हिमाहारपरिपाचकम् ॥ आहारेणसमंतत्रपुनरूर्ध्वंप्रयात्यसौ॥
समानवायुनानीतोरसैर्नानाविधैःसह २८४ जाठरात्पित्तमायातिपित्ताद्वायुंपुनश्वसः ॥ वायोःपञ्चशरीरस्यमध्येकंदुकवत्स्थितः २८५ यातायातंविधायैवमध
ऊर्ध्वशरीरके ॥ पितुर्दुःखंपरंप्राप्तःकर्मणापरिचोदितः २८६ रेतसासहनिर्यातिदेहादस्मात्कथंचन ॥ प्राजापत्योयमध्वास्यात्सदासंसरणेनृणाम् २८७ मलत्र
यमिदंप्रोक्तंकारणंपरदेहिनां ॥ रेतःपितुस्तथामातुस्तयोर्गर्भस्तृतीयकः २८८ इतिकेचिद्वदंत्यन्येकर्मगर्भस्यतंद्विजाः ॥ अवस्थैवतृतीयेयमपरेप्राहुरुत्तमाः
२८९ शुक्रंचशोणितंतद्वत्तयोर्योगाच्चतत्क्षणात् ॥ वर्णांतरंतृतीयोयंमलउक्तोमनीषिभिः २९० क्लेशकर्माशयैःसार्द्धंमलत्रयमुपागतः ॥ पितुर्मातुश्चवायाद्वकृता
द्दग्देहंसमाप्नुयात् २९१ मलद्वयंयदातुल्यंपित्रोःस्याद्दस्यदेहिनः ॥ नपुंसकंतदादेहमयंगृह्णात्यनीश्वरः २९२ रेतोमातुर्यदाभूयस्तदास्त्रीपरिजायते ॥ यदाभूयः
पितुस्तत्स्यात्तदागर्भःपुमान्भवेत् २९३सर्वेंद्रियगुणैर्युक्तोभवतिस्वच्छचित्तयोः॥स्त्रीपुंसयोर्हिसंयोगाद्यथाशास्त्रमनिंदितात्॥अनेकगुणसंपन्नस्तत्तद्वर्णेप्रजायते२९४

धौ ' इतिहेमः । अन्येतुगर्भस्यगर्भभावस्यप्रयोजकंकर्माद्दष्टंतंतृतीयंमलंवदंति अपरेउत्तमाःकुशलास्तुइत्थमाहुः इत्थंकथं इयंआणवाख्यतृतीयमलरूपाप्रथमद्वितीययोर्मलयोरवस्थैवभवतीतिद्वयो
रर्थः २८८ । २८९ अवस्थात्वंमेवस्फुटयति शुक्रमिति । शुक्रंप्रथमोमलःशोणितंद्वितीयस्तयोर्योगेसतियद्वर्णांतरंतद्रपस्तृतीयआणवाख्योमलःसिद्धांतविद्भिरुक्तइत्यर्थः तथाचतृतीयस्यप्रथम
द्वितीययोरेवांतर्भावइतिभावः २९० फलितंदर्शयन्प्रसरार्थमाह क्लेशेत्यादिना । क्लेशैरविद्यादिभिःकर्मभिःशुभाशुभैराशयैर्वासनाभिःसहितोजीवउक्तमलत्रयसंबंधद्वारामातापित्रोःशरीरसदृशंदेहंप्रा
प्नोतीत्यर्थः २९१ मायीयकार्मणयोःसाम्येनपुंसकत्वंमायीयाधिक्येस्त्रीत्वंकार्मणाधिक्येपुंस्त्वंचभवतीत्याह मलद्वयमितिद्वाभ्यां । अस्यदेहिनःपित्रोर्मलद्वयंयदातुल्यंभवतितदायंनपुंसकंदेहंगृह्णाति
अनीश्वरःकर्मपरतंत्रः २९२ रेतइति । मातूरेतःशोणितात्मकंबीजंयदाभूयोधिकंभवतितदास्त्रीभवतियदातुपितूरेतोधिकंतदापुमानित्यर्थः २९३ गर्भस्येंद्रियादिसाकल्यप्रयोजकंदर्शयति सर्वेंद्रियेति ।
यदास्त्रीपुंसयोःस्वस्थयोश्चतयोःसंयोगोभवतितदागर्भःसर्वेंद्रियैरनेकगुणैश्चसंपन्नोभवति तत्तद्वर्णेब्राह्मणादिजातौ २९४

यदाहीति । यदातुद्वयोर्मातापित्रोरन्यतरस्यमनोव्याकुलंभवतितदातयोरेतःसर्वांगेभ्योनागच्छति आगतंवाचक्रमार्गानिःसरणकालेविहन्यतेप्रतिरुद्ध्यतेअथवाकफादिरूपधात्वंतरेणसंपृक्तंभवतीति द्वयोरर्थः २९५ । २९६ ततइति । ततउक्तनिमित्ताद्गर्भःखंजत्वादिभिरनेकत्वंनानाविधत्वंप्राप्नोति संबंधःतत्रखंजश्चक्रपादः कुणिःश्यामनखःद्राघीयान्अतिदीर्घः स्फुटमन्यत् २९७ । २९८ गर्भ स्ययुग्मादित्वेनिमितमाह पित्रोरिति । यदापित्रोरपानाख्यवायुद्वयंनिमित्तविशेषवशेनक्षुब्धंसद्गर्भाशयंप्रतिगत्वाशुक्रशोणितयोर्मिलितयोर्विभागंकुरुतेतदाद्वयोस्त्रयाणांचतुर्णांवाबालानांसंभव उत्पत्तिर्भवतीतिसंबंधः २९९ गर्भप्रवेशकथामुपसंहरति एवमिति । कर्मवशेनप्रागुक्तविधनिमित्तैर्न्यूनत्वादिभाजिनोगर्भस्यमातुरुदरेस्थितिर्भवतीत्यर्थः ३०० अथकललादिगर्भावस्थाप्रतिपादक वाक्यानामर्थमाह एकेत्यादिना । नद्यांवहंतोमंडलाकाराःफेनपुंजाःप्रसिद्धास्तत्रयथामंडलद्वयेवसमानयोःफेनयोःशुक्रशोणयोर्युगंमिश्रणेनकललंभवेत्तथातन्मातृजपितृजयोर्मलयोर्द्वयंसर्वस्ययोनि जस्यदेहिनोमातुर्जठरेसमागतंसदेकरात्रेणकललावस्थंभवतितस्यपरिमाणमपिमातुरंगुष्ठतुल्यमुक्तं तदेवचमलद्वयंसप्तरात्रेऽतीतेफेनसाम्यंविहायबुद्बुदसाम्यंभजते तदेवविशदयति अंडाभमिति । किंचि द्द्रवसमन्वितस्यमांसस्ययदंडवद्वर्तुलत्वमेतदेवबुद्बुदत्वेनात्रविवक्षितमितिद्वयोरर्थः ३०१ । ३०२ पक्षेणेति । पंचदशदिनेष्वतीतेपुतबुद्बुदाकारंमांसंद्रवतात्यागेनपिंडतांप्राप्यचतुरस्रंचतुष्कोणंभवति

यदाह्यन्यतरस्यस्याद्द्वयोर्वाव्याकुलंमनः ॥ रेतस्तयोस्तदासम्यङ्नागच्छेत्सर्वगात्रतः २९५ आगतंवाविहन्येतकुहूमार्गविनिर्गमे ॥ एकस्यवाद्वयोर्वापियुतंधा त्वंतरेणच २९६ ततोगर्भोभवेत्खंजःपंगुर्वाविगतांगुलः ॥ हीनाधिकांगुलोवापिकुणिर्वैकपदादिकः २९७ इंद्रियैर्नयनाद्यैर्वावर्जितोन्यतरेणवा ॥ वामनोवाति कुब्जोवाद्राघीयान्वातिभीषणः ॥ अनेकत्वंतथागर्भःप्राप्नोत्येवंकदाचन २९८ पित्रोर्वायुद्वयंक्षुब्धंगतंगर्भाशयंप्रति ॥ वीर्यद्वयस्यसहसामिलितस्यात्मवेगतः ॥ विभागंकुरुतेतेनद्वित्र्यादेःसंभवोभवेत् २९९ एवंन्यूनाधिकैर्गात्रैरेकोवानेकएववा ॥ गर्भोमातुस्तुजठरेजायतेकर्मयोगतः ३०० एकरात्रेणकललंफेनवन्मंडल द्वये ॥ भवेज्जठरमायातंमातुःसर्वस्यदेहिनः ३०१ मातुरंगुष्ठमात्रेणमितमत्रतुतत्स्मृतम् ॥ फेनतांतुपरित्यज्यसप्तरात्रेणबुद्बुदम् ॥ अंडाभंजायतेमांसंकिंचिद्द्रव समन्वितम् ३०२ पक्षेणद्रवतांत्यक्त्वापिंडतांप्राप्यतद्भवेत् ॥ चतुरस्रंहिसंपर्कात्स्वमातृमरुदग्निभिः ३०३ चतुरस्रेतुसंपन्नेतस्मिन्वीर्यद्वयेततः ॥ किट्टीभूतद्वयं पूर्वंबीजयुग्मंपृथग्भवेत् ३०४ ऊर्ध्वंतुमरुतानुन्नात्तस्मादपिमलद्वयात् ॥ जायतेकंदमध्यस्थासूक्ष्मावृत्ताप्यृजुस्तथा ३०५

तस्यपिंडीभावेहेतुः स्वस्यमलद्वयस्यमातुश्चयेंतर्गतामरुदग्नयस्तत्संपर्कः आधारभेदाद्वायवग्न्योर्बहुत्वमितिभावः ३०३ अस्मिन्कालेसुषुम्नादिनाड्युत्पत्तिमागमोक्तांदर्शयति चतुरस्रेइतिसप्तभिः तस्मिन्मायीयकार्मणसंज्ञेमातापित्रोर्वीर्यद्वयेमात्राहारपरिणामसंपर्केणचतुरस्रभावंगतेसतितस्मिंश्चतुरस्रेसमुदायरूपेघटकतयानुगतंतन्मातापितृसंबंधिमलद्वयंततश्चतुरस्रात्पृथग्भवेत् अंडकोशरूपेणे तिशेषः तत्रहेतुगर्भेविशेषणंकिट्टीभूतमिति । किट्टंमलोस्त्रियामित्यमरः । किटगतावितिधातोरौणादिकेटप्रत्ययेनिष्पन्नेनकिट्टशब्देनाभिहितस्योर्ध्वगमशीलत्वंयुक्तमेवेतिभावः ३०४ ततःप्रथमंसुषुम्ना नाडीजायतेइत्याह ऊर्ध्वमिति । तस्मात्पृथग्भूतान्मलद्वयादांतरवायुनाऊर्ध्वाभिमुखंप्रेरितात्प्रथमंसुषुम्नानामनाडीजायते कीदृशी कंदमध्यस्थतयावर्णितासूक्ष्माdुर्लक्ष्यावृत्तावर्तुलाऋजुःसरलाया नाभिहृदयगलतालुभ्रूमध्यैरवच्छेदात्पंचपर्वाकीर्तिताआगमेष्वितिशेषः तदुक्तं 'पूर्वोक्तायाःसुषुम्नायामध्यस्थायाःसुलोचने । नाभिहृत्कंठतालुभ्रूमध्यपर्वसमुद्भवा । अधोमुखाःशिराःकाश्चित्'इत्या दिसासुषुम्नाअवाङ्मुखीवृक्षवदधोमुखीचबोध्या तस्याःसुषुम्नायाउभयोःपार्श्वयोरपरंनाडीद्वयंभवतीतिद्वयोरर्थः ३०५

३०६ यावामेति । तयोरपरनाड्योर्मध्येएकासानाडीज्ञेयायावाममुष्कदेशेसुषुम्नयाआश्लेषंसंपर्कंगतादक्षिणपार्श्वमार्गेणहृदयदेशंगच्छत्यतएवधनुर्वद्वक्राभवति ततोहृदयादुत्थायवामस्कंधस्य जत्रुसंज्ञगलाधस्थास्थ्नश्चांतर्गतेनमार्गेणअदक्षिणांवामांनासिकांगच्छतीत्यर्थः ३०७ तथेति । तयोर्द्वितीयानाडीतुसाबोध्यायादक्षिणमुष्कादुत्थायवामपार्श्वगजेनरंध्रेणपूर्ववद्वक्रेणमार्गेणनासांग तादक्षिणामितिशेषः तयोःक्रमेणनामनीइडापिंगलारूपेबोध्येइत्यर्थः ३०८ आप्यायनीसंज्ञायागर्भोपचयप्रयोजिकायानाड्याःस्वरूपंदर्शयति नाभाविति । गर्भस्यनाभौसंबद्धाकाचिन्ना डीजायते कीदृशी सुषुम्नायाःपूर्वात्प्रथमात्पर्वणोनाभ्यवच्छिन्नरूपात्संभवउत्पत्तिर्यस्याःसातथा यस्यामुखंमातुर्हृदयेनसंबद्धंभवति अनयैवकुल्याकेदारन्यायेनमातृभुक्ताहारेणगर्भःपोष्यते इत्यर्थः अस्यानामांतरंशंखिनीत्यपिवदंतीतिबोध्यम् ३०९ पुंसइति । उक्तनाडीलतानांमूलग्रंथिस्थानेपिंडकोशयुगलंपुरुषाणांप्रस्फुटमेव नारीणांतदस्पष्टम् नपुंसकस्यतत्किंचिद्व्यक्तामि ति ३१० मासेति । एकस्मिन्मासेऽतीतेसचतुरस्रःपिंडःकठिनःस्यात्तस्माज्जातमुष्ककात्कठिनात्पिंडान्मासद्वयेऽतीतेशिरउत्पद्यतेइति ३११ मासत्रयेणेति । मासत्रयेऽतीतेचतुरस्रस्य

सुषुम्नानामयानाडीपंचपर्वाप्रकीर्त्तिता ॥ अवाङ्मुखीसातस्याश्चभवेत्पार्श्वद्वयेद्वयम् ३०६ यावाममुष्कसंबद्धासुषुम्नाश्लेषमागता ॥ दक्षिणंपार्श्वमागत्य धनुर्वक्राहृदिस्थिता ॥ वामांसजत्र्वंतरगानासांयादक्षिणांगता ३०७ तथादक्षिणमुष्कोत्थानासायांवामरंध्रगा ॥ इडाचपिंगलाचैतेपूर्वमेवसमीरिते ३०८ नाभावेकास्थितानाडीसुषुम्नापूर्वसंभवा ॥ बहिर्विकासदामातुर्हृदिसंबद्ध्यतिष्ठति ॥ पुष्टिंगर्भोययागच्छेत्केदारइवकुल्यया ३०९ पुंसोमुष्कद्वयंव्यक्तमव्यक्तं तत्स्त्रियोपिच ॥ नपुंसकस्यकिंचित्तद्व्यक्तमुक्तंमनीषिभिः ३१० मासमात्रेणकठिनःस्यात्पिंडश्चतुरस्रकः ॥ समुष्कात्कठिनात्तस्माद्द्विमासाज्जायतेशिरः ३११ मासत्रयेणजायेतेहस्तौपादौचकोणतः ॥ चतुर्थेमासिजायंतेहस्तपादांगुलीमणाः ॥ कच्छुरोजठरंतद्वत्पार्श्वास्थीनिचक्रानिचित ३१२ पृष्ठवंशोभवत्यस्य पंचमेमासिसर्वदा ॥ षष्ठेद्वाराणिसर्वाणिसेंद्रियाणिभवंतिच ॥ सप्तमेप्राणसंयुक्तःपुष्पप्राणीप्रजायते ३१३ अष्टमेमासिगर्भोयंसुप्तदेहसमोभवेत् ॥ अंतर्बहि श्चसंपूर्णस्त्वंगीदोषवर्जितः ॥ लोकद्वयंसाधयितुंसमर्थोनिर्गतोयदि ३१४ अनेनवपुषाकुर्यात्प्रणवादेरुपासनम् ॥ निर्गुणंचतथाब्रह्मजानीयाच्चेत्सुधीःपु मान् ३१५ अतोष्टमस्यमासस्यनिर्गमेगर्भसंश्रितः ॥ नवमेमासिसंप्राप्तेसर्वज्ञोजायतेहिसः ३१६ विनीतश्चापिदांतश्चब्रह्मविज्ञानसाधनैः ॥ संपन्नःसर्व गंब्रह्मविजिज्ञासुरिवस्थितः ३१७

कोणचतुष्टयात्क्रमेणद्वौहस्तौपादौचजायेते चतुर्थेमासेतुहस्तांगुलिप्रभृतयोऽस्थिपर्यंताअवयवाःप्रभवंतीत्यर्थः कटिश्चउरश्चजठरंचतेषांसमाहारस्तथा ३१२ पृष्ठवंशइति । पंचममासेपृष्ठगतं दीर्घास्थिजायते षष्ठेनद्वाराणितद्गतेंद्रियाणिचजायंते सप्तमेप्राणव्यापारःस्फुटोभवतीत्यर्थः ३१३ अष्टमइति । अष्टममासेसर्वांगैःपूर्णश्चेतन्यानाविर्भावात्सुप्तइवगर्भोभवतिसचयदिदोषेणधा तुवैषम्येणवर्जितःसन्गर्भान्निस्सरेत्तर्हिलोकद्वयमभ्युदयनिःश्रेयसरूपंसाधयितुंक्षमःस्यादिति एतेनात्रमासेजीवनसंशयोध्वनितः ३१४ अभ्युदयादिसाधनक्षमत्वेहेतुमुपासननिर्गुणविद्ययोःक्षम त्वमाह अनेनेति । अनेनमानुषेणदेहेनप्रणवाद्युपासनक्षमोयतोभवत्यतोलोकद्वयंसाधयितुंक्षमइतिसंबंधः अस्याष्टममासस्यनिर्गमेनवममासस्यप्रवेशेसतिसगर्भःसर्वज्ञोभवतीतिद्वयोरर्थः ३१५ ३१६ विनीतइति । यथाकश्चित्साधनचतुष्टयसंपन्नोब्रह्मजिज्ञासयागुरुसमीपेतिष्ठेद्विनयादिमान्सन्तथायंगर्भोसनेतिष्ठतीत्यर्थः ३१७

तस्यसर्वज्ञतामनुतापपर्यवसन्नांप्रतिपादयतांजातीरित्यादीनांपरमुक्तिप्रदायकमित्यंतानांवाक्यानामर्थमुपबृंहयति जन्मकोट्यर्जितमितित्रिंशताश्लोकैः । असंख्यजन्मार्जितानिकर्माणिस्मृत्वाआत्मानंनिंदतीति ३१८ नकेवलंकर्माण्येवस्मरतिकिंतुनानाविधजातीरपीत्याह नानेति । नानाविधाअसंख्याताश्चयोनयोदेहामयालब्धाः केपांतेयोनिपदवाच्यदेहाइत्याकांक्षायामाह श्वसूकरेत्यादि । प्रतिलोमाउत्तमवर्णायांमातरिअधमवर्णाज्जातायथाशूद्राद्ब्राह्मण्यांचांडालः अनुलोमास्तद्विपरीताः यथाब्राह्मणात्क्षत्रियायांमूर्द्धावसिक्तः विप्रादयोविप्रादिसजातीयायांसंस्कृतायांविप्रादेर्जाताःचतुष्पदपदेनजलजंतूनामुपलक्षणम् एकानेकसंख्ययासंस्थाव्यवस्थातयाविशिष्टहस्तानामेकेंद्रियकाणामनेकेंद्रियकाणांचयोनिसहस्राणीतिपंचानांसंबंधः स्फुटमन्यत् ३१९ ३२० ३२१ । ३२२ । ३२३ हस्तवत्स्वपीति । तथाप्रशस्तहस्तनेत्रादिशालिपुदेहेपुब्रह्मलोकादिपुचमयागतमितिशेषः नुइतिवितर्के एतद्ब्रह्मांडरूपोदुंबरफलंमदीयरेवदेहैःकिंपूरितमित्यर्थः इव

जन्मकोट्यर्जितंपूर्वंपुण्यंपापंशुभाशुभम् ॥ स्मरन्निंदतिदुःखार्त्तमात्मानंक्लेशभाजनम् ३१८ नानायोनिसहस्राणिपूर्वंप्राप्तान्यनेकधा ॥ सुखदुःखकराण्यत्रसंसारेदुःखसागरे ३१९ श्वसूकरखरोष्ट्राणांगोजाविमृगपक्षिणाम् ॥ गोधानामपिसर्पाणांकीटादीनांशरीरिणाम् ३२० प्रतिलोमप्रजातानांचंडालादिशरीरिणाम् ॥ अनुलोमप्रजातानांविप्रादीनांचभूतले ३२१ स्थावराणांझषाणांचह्येकद्वित्रिचतुष्पदाम् ॥ अपादानांचसर्वेषांनानाभेदविभेदिनाम् ३२२ अहस्तानांसहस्तानामेकानेकादिसंस्थया ॥ एकेंद्रियाणांजीवानांनैकेंद्रियवतामपि ३२३ हस्तवत्स्वपितद्वच्चनेत्रश्रोत्रादिमत्स्वपि ॥ ब्रह्मलोकेथवास्वर्गेगगनेवाभुवःस्थले ॥ ब्रह्मांडोदुंबरंचैतन्मदेहैरिवपूरितम् ३२४ ग्राहंग्राहंत्यजन्नन्यंदेहंदैवेनचोदितम् ॥ नरकेभुविवास्वर्गेबंभ्रमीमियथातृणम् ३२५ कर्मपाशैर्दृढैर्बद्धोमायासूत्रविनिर्मितैः ॥ पुत्रदारादिकार्येषुपशुरत्रनियोजितः ३२६ अप्रशस्तानिनारीणांपूयानिवस्तनाग्रतः ॥ निर्गतान्यपिपीतानिकष्टंदुःखकराणिभोः ३२७ आहाराविविधाभुक्ताःस्थिरजंगमदेहजाः ॥ बीभत्सजनकानित्यंयेदेहांतरसंश्रयात् ३२८ जातोहंचमृतोहंचदेहेसर्वत्रसर्वदा ॥ मातापितासुतादाराबांधवाद्रविणादिकम् ॥ देहेतिरम्यंतज्जातमंतेपिविगतंतथा ३२९ यावंतःपांसवोभूमौयावंत्योदिवितारकाः ॥ तावन्ममात्रदेहेनसहपित्रादिचाभवत् ३३० जातस्यैवजनिस्तद्वन्मृतस्यमरणंपुनः ॥ ममन्यायविरुद्धंतच्चित्रमासीत्सहस्रधा ३३१ जातोबालोयुवावृद्धोमृतोजानइतीदृशम् ॥ चक्रंमन्मस्तकेनित्यंदुःखदंपरिवर्ततें ३३२ सुखार्थंयानिकर्माणिकृतानिबहुधामया ॥ ब्रह्मघ्नस्येवतान्यासन्दुःखहान्येवसर्वतः ३३

शब्दस्योत्प्रेक्षापरत्वात् ३२४ ग्राहमिति । दैववशागतमन्यमन्यंदेहंगृहीत्वानरकादौविभ्रमामितृणवदिति ३२५ कर्मेति । मायारूपसूत्रनिर्मितैःकर्मरूपरज्जुभिर्बद्धत्वात्पशुभूतोहंबांधवकार्येष्वेवप्रवर्तितःकेनापिदेवेनेतिशेषः ३२६ अप्रशस्तानीति । तथानानाजातीयमातॄणांस्तनेभ्योनिर्गतानिपयांसिपूयसदृशानिपीतानिविवेकिदृष्ट्यातिदुःखमयानीति ३२७ आहाराइति । बीभत्सस्यग्लानेर्जनकादेहांतरवर्तिनामिति ३२८ जातोहमिति । सर्वत्रदेहेजातत्वंमृतत्वंचमयाभूतत्रतत्रदेहेविद्यमानेसतितत्सर्वंमात्रादिकमतिरम्यमभात् तद्देहांतेतुतेपांस्वरूपंरम्यत्वंचविगतमित्यर्थः ३२९ देहानांपित्रादीनांचासंख्यत्वंदर्शयपङ्क्ति यावंतइति ३३० जातस्यैवेति । पिष्टपेषणन्यायेनायुक्तमपिपुनःपुनर्जननादिकमपिसहस्रधादृष्टमितिचित्रमित्यर्थः ३३१ जातोबालइति । तथाजन्माद्यवस्थाततिरूपंघटीयंत्रंदुःखदंभोग्यत्वेनममस्तकेवर्ततेइति ३३२ सुखार्थमिति । मयासर्वाणिकर्माणिसुखार्थमेवकृतानिपरंतुतानिदुःखदानिजातानि यथाब्रह्मघ्नेनऐहलौकिकसुखायकृताब्रह्महत्यालोकद्वयेदुःखप्रदेत्यर्थः ३३३

कर्मणांदुःखत्वमेवस्फुटयति । कर्मणामिति । सर्वकर्मणामनुष्ठानेदुःखदत्वंतत्रपापानामामुष्मिकदुःखदत्वंचप्रसिद्धमेवेत्यर्थः ३३४ उत्कटपापस्येहापिदुःखदत्वंदर्शयति अत्युत्कटेइति । उत्कटत्वंविजातीयाभिभवक्षमत्वंतद्विपरीतंमांद्यमिति ३३५ पुण्यस्यापिफलगतपरिणामादिभिर्दुःखदत्वंदर्शयति उदर्केइति । पुण्यमुत्तरकालेसुखदमेवेतिनियमोनयुक्तःतत्फलनाशेदुःखस्यापिमयानुभूतत्वादित्यर्थः ३३६ फलितमाह दुःखोदधिरिति । यतःपुण्यस्यापिफलनाशद्वाराद्दुःखदत्वंतेनसंसारोदुःखसिंधुरितिसिद्धम् अस्यदुःखस्यप्रतिक्रियांनिवृत्त्युपायंनपश्यामियेनपरःपारलाभःस्यादिति ३३७ जितमिति । यद्यपिसाधनसंपन्नत्रैवर्णिकदेहलाभकालेइदंविषयकितवैःसहानादिकालप्रवृत्तंद्यूतंमयाजितप्रायमासीत्तथापियत्तदाममइंद्रियरूपाक्षेषुपाशकेषुअकौशलप्रभृत्ततोमयापराजितमिति ३३८ इतःपरमिति । तथापूर्ववत्प्रमादंनकरिष्यामिकिंतुइतःसंकटात्प्रमुच्यअष्टांगयोगेनब्रह्मविद्यामेवशीघ्रंसाधयिष्यामीतिद्वयोरर्थः ३३९ । ३४० तद

कर्मणांकरणेदुःखंपुण्यपापोभयात्मनाम् ॥ अत्रलोकांतरेवापिफलंपापस्यनिश्चितम् ३३४ अत्युत्कटेयदास्यातांपुण्यपापेतदात्रसः ॥ कर्ताफलंसमाप्नोतिमांद्येलोकांतरेपितत् ३३५ उदर्केसुखदंपुण्यंव्यर्थमेतत्समीरितम् ॥ सुखस्यनाशतोयस्माज्जायतेममदुःखदम् ३३६ दुःखोदधिरयंतेनसंसारोमेप्रतीयते ॥ अहोदुःखोदधौमग्नोनपश्यामिप्रतिक्रियाम् ॥ परंपारंयतोयामिह्यस्यदुःखोदधेरहम् ३३७ जितंद्यूतंमयापूर्वंत्रैवर्णिकवपुर्ग्रहात् ॥ पराजितंतदेवाक्षाकौशलेनप्रमादिना ३३८ इतःपरंतथानाहंकरिष्यामिकथंचन ॥ यदियोन्याःप्रमुक्तोहमिदानींपुण्यलेशतः ३३९ तथाब्रह्मात्मविज्ञानंसर्वदुःखविनाशनम् ॥ अष्टांगयोगतःस्वस्यकरिष्याम्येवशीघ्रतः ३४० अथवाप्रार्वतीनाथंजटिलंधूलिधूसरम् ॥ शंकरंवामुकुंदंवाप्रपत्स्येहंश्रियःप्रियम् ३४१ मयायत्स्वजनस्यार्थेकृतंकर्मशुभाशुभम् ॥ एकाकिनंपरित्यज्यमांकृतघ्नागताहिते ३४२ मत्प्रसादादवाप्तंयैःसुखंलोकद्वयेपिच ॥ विष्ठावत्तेश्मशानेमांपरित्यज्यगृहंगताः ३४३ ममयेकुर्वतेनित्यंपादयोःशिरसानतिम् ॥ मत्स्पर्शनात्कृतंस्नानंशुद्ध्यर्थंतैर्दुरात्मभिः ३४४ ममयेकृतवंतस्तुपूर्वंचंदनलेपनम् ॥ अग्नौतेक्षिप्तवंतोमांनिर्घृणाःशूलहस्तकाः ३४५ नपितानापिमातावानदारानसुताअपि ॥ मयासहसमायाताःकस्मिन्नप्यत्रजन्मनि ३४६ अर्थहस्तंयथावेश्याअस्निग्धाःस्निग्धवत्स्थिताः ॥ विमोहयंतितद्वन्मांबांधवाःपापकारणम् ३४७ विमोह्यगणिकातुल्यामरणेव्यसनेसति ॥ परित्यज्यगतादुःखमहमेकःसमाप्तवान् ३४८ एवंनानाविधांचिंतांप्राप्तोदुःखोदधिप्रदाम् ॥ अधोमुखोसौक्रियतेप्रबलैःसूतिमारुतैः ३४९

शक्तौहरिहरयोराराधनंकरिष्यइत्याह अथवेति ३४१ बांधवार्थमायुर्व्ययंनकरिष्यइतिदर्शयंस्तेषामुपकारानर्हताप्रयोजिकांकृतघ्नतामाह मयायदिति । यत्स्वजनस्ययस्यस्वजनवर्गस्यार्थेउपकाराय तेस्वजनाः ३४२ मत्प्रसादादिति । यैर्मदनुग्रहाल्लोकद्वयंसाधितंतेमांदेहमलवत्श्मशानेप्रक्षिप्यगताइति ३४३ तेषामन्यमपकारंदर्शयति ममयेइति । स्पष्टंद्वयम् ३४४ ३४५ किंचबांधवानामागमप्रापयित्वात्स्नेहायोग्यत्वमित्याह नपितेति ३४६ केवलंस्वार्थंव्यामोहकत्वमेवतेषामित्याह अर्थहस्तमिति । अर्थहस्तंधनिनम् पापकारणंपापेप्रवर्त्तयितुम् ३४७ तेचमदर्थसिद्धिकालेमांविमोह्यप्रच्युतंकृत्वाततत्कर्मभोगकालेमांपरित्यज्यगताइत्याह विमोह्येति । दुःखंतत्कारितकर्मफलमहमेवप्राप्तइति ३४८ एवंगर्भदुःखंवर्णितमथश्रुतिप्रदर्शितंजन्मदुःखंवर्णयति एवमित्यादिना । एवंविधांदुःखदांचिंतांकुर्वन्नसौगर्भस्थःप्रसूतिप्रयोजकैर्वायुभिरधोमुखःक्रियतेइत्यर्थः ३४९

मरुतामिति । मरुत्कृतात्चलनाद्विपरीतभावात्मकात्क्षुब्धधातुत्रयंयस्यतथाभूतोसौदुःखमग्नोनकिंचिज्जानातीति ३५० षण्णवत्यंगुलेइति । वर्णितविधयाषण्णवत्यंगुलिमितेमातृदेहेचतुरंगुलिमितंयोनियंत्रंतत्रमार्गेतदधिकदेहोगर्भःप्रणीयतेप्राप्यतेसूतिमारुतेनेतिशेषः ३५१ मरुतामिति । तदानीमुक्तवायुनाक्षुब्धामातुर्बस्तिर्मूत्राशयःसंग्रहणीपुरीषाशयएतद्द्वयंकृतःस्वांतर्गतमलंप्रक्षेपीष्यस्य जायमानस्यशिरसिसंभाव्यतेइत्यर्थः ३५२ गर्भनिःसरणदुःखमभिनयति क्रकचेनेति । क्रकचेनजठरविदारणतुल्यंदुःखंगर्भविमोक्षकालेमातुःशिशोश्चस्यादिति ३५३ तत्रशिशोर्दुःखंस्फुटयति योनीति । मुखंद्वारं ३५४ मातृदुःखमाह विदारयतीति । नानाकार पश्चवयवानांविभागकर्त्तासौनिकश्छाग्याअजायायोनिमिवविदारयेत्तथेति ३५५ क्रकचद्वयेति । यथाक्रकचद्वयस्यमध्येराजादीनामपकारीनीयतेतथायमपीति ३५६ जरायुपटेति विश्लेषोविदीर्णत्वं ३५७ नवमइति । नवमेदशमेवामासिकर्मानुसारेणयोनियंत्राद्बहिरागच्छेत् दीनःअतिदुःखितः यथादुर्गंधिव्रणात्कीटइति

मरुतांचलनात्क्षुब्धधातुर्व्याकुलमानसः ॥ नात्मानंनपरंचापिजानातिभूरिदुःखितः ३५० षण्णवत्यंगुलेदेहेयोनिःस्याच्चतुरंगुला ॥ तत्रसंकीर्णमार्गेस्मिन्पृथुदेहःप्रणीयते ३५१ मरुतांचलनान्मातुर्बस्तिसंग्रहणीद्वयम् ॥ क्षुब्धंविष्ठांतथामूत्रंपातयेदस्यमस्तके ३५२ क्रकचेनयथैवस्याज्जठरस्यविदारणे ॥ दुःखंगर्भविमोक्षेस्याद्गर्भिण्याश्चशिशोस्तथा ३५३ योनियंत्रमुखंगच्छेज्जननींक्लेशयन्मुहुः ॥ आत्मानंचयथाकीटोमहानल्पव्रणस्थितः ३५४ विदारयतिमातुःसयोनिंस्वात्मसमागमात् ॥ नानाकारोयथाच्छागीयोनिंकार्यउपस्थिते ३५५ क्रकचद्वयमध्यस्थयंत्रेराजादिदूषकः ॥ बलाद्विनीयतेतद्वद्योनियंत्रेपिगर्भगः ३५६ जरायुपटविश्लेषात्सद्योतिमृदुलस्तथा ॥ गर्भगोयोनिसंस्पर्शादग्निनेवप्रदह्यते ३५७ नवमेमासिसंपूर्णेदशमेवासमागते ॥ पूर्वकर्मोपभोगायविवशोबहिराव्रजेत् ३५८ स्त्रीयोनियंत्रतोजंतुर्दीनोदेहधरःसदा ॥ कंटकैरिवतुन्नांगःक्रकचैरिवदारितः ॥ पूतिव्रणाद्विपतितोधरण्यांक्रमिकोयथा ३५९ गर्भाऽनिलबलात्स्त्रीणांधर्षितोदुःखसंकटः ॥ पीडांभुक्त्वाचदत्वाचसंकीर्णाद्योनिनिर्गमात् ॥ भूमौपतनतश्चायंवेत्तिकिंचिन्नमोहितः ३६० वैष्णवोयंबहिर्वायुर्योनेःसर्वत्रवर्त्तते ॥ संसारचक्रनिर्वाहकारकोनिर्मितोहियः ३६१ यद्भयान्नबहिर्यातःशुकोवैयासकिःपुरा ॥ अष्टांगयोगसंपन्नोजित्वागर्भस्यमारुतम् ३६२ अनेनवायुनास्पृष्टःसर्वज्ञोपीहमानवः ॥ मतिभ्रंशंप्रयात्यत्रसद्यएवनसंशयः ३६३ दुरौषधैश्चदुर्मंत्रैर्यथापापिप्रयोजितैः ॥ सर्वज्ञोपिन्नमर्मज्ञोमूढोभवतितत्क्षणात् ३६४ अनेनवायुनास्पृष्टमानसंपृच्छवत्शुनः ॥ ऋजुभावंपरित्यज्यवक्रतामुपयातितत् ३६५

द्वयोरर्थः ३५८ । ३५९ गर्भानिलेति । स्त्रीणांगर्भगतमारुतस्यबलेनप्रयुक्तंयद्धर्षणंतस्माच्चथादुःखस्यगाढत्वात्तथास्वपरपीडाद्वारायोनिमार्गाद्यदधःपतनंततश्चमूर्छितोयंजंतुर्नकिंचनवेत्तीति ३६० मूर्छानंतरंवैष्णववायुनाकृतांपूर्वविवेकविस्मृतिंदर्शयितुंतंवायुंवर्णयति वैष्णवइति । गर्भाद्बहिर्वायुर्वर्त्तते कीदृशःव्यामोहद्वारासंसारचक्रनिर्वाहार्थेविष्णुनानिर्मितत्वाद्वैष्णवाख्यः ३६१ एतद्भयात् शुकोमुनिर्गर्भेचिरंतस्थौयोगबलेनप्रसूतिमारुतंजित्वेत्याह यद्भयादिति । स्पष्टम् ३६२ अस्यवायोःप्रभावमाह अनेनेति । अनेनवैष्णवेन ३६३ मतिभ्रंशेदृष्टांतमाह दुरौषधैरिति । यथाकश्चित्सर्वज्ञोन्नमर्मज्ञोनृणांमर्मणांवेत्तापिपापिभिःप्रयोजितैर्दुरौषधादिभिर्मूढोभवेत्तथायंवैष्णववायुनापीत्यर्थः ३६४ अनेनेति । तत्गर्भेषिवेकवत्तयाकीर्तितंगर्भस्थस्यमानसमनेनवायुनास्पृष्टंसद्विवेकप्रवणतारूपमृजुभावंपरित्यज्यश्वपुच्छवद्वक्रंभवति ३६५

एवंचित्तेदूषितेतद्धर्माध्यासात्तत्साक्षीपुरुषोपिसदोषतयान्यवन्हियतेइत्याह वक्रतामिति । अलातोदग्धकाष्ठंतद्भ्रमणेयथाग्नेर्भ्रमणमिति ३६६ फलितमाह ततइति । कोहंकोहमितिस्वतत्त्वेविस्मृतिर्दर्शिता ३६७ गर्भोपनिषदर्थविचारफलंदर्शयंस्तत्रैवोपयुक्तंकालज्ञानमृग्वेदेवसिष्ठसंहितायांचवर्णितमवतारयति एवमितित्रिभिः । उक्तविचारस्यफलंयोविरागःसएवमरणावस्थानुसंधानस्यापिफलमित्यर्थः ३६८ मरणस्येति । तत्रजंतुभिःस्वमरणनिश्चयोजातस्यहिध्रुवोमृत्युरितिस्मृत्युपन्यस्तन्यायात्स्वबांधवानांनाशदर्शनेननिश्चितव्याप्तिमूलकानुमानाद्वासंपाद्यइत्यर्थः ३६९ आसन्नेति । ऐतरेयपदमृग्वेदशाखाप्रवर्त्तकानांकौपीतक्यादीनामुपलक्षणं तथाचसमीपागतस्यमरणस्यसूचकानिचिन्हान्यैतरेयादिमुनिभिर्ऋग्वेदेप्रोक्तानिवसिष्ठसंहितायांवसिष्ठमुनिनापीत्यर्थः ३७० तत्रकौपीतकिशाखायामारण्यकेषष्ठेध्यायेयश्चायमशरीरइत्यादिश्रुतिग्रंथोक्तानिजाग्रतिदृश्यानितच्चिन्हानिवर्णयति आदित्येइतिद्वादशभिः । आदित्यमंडलेदक्षिणनेत्रेचैकएवपुरुषोविग्रहद्वयेनस्थितस्तयोर्विग्रहयोर्नाडीकरणद्वारेणपरस्परंसंपृक्तत्वंचप्रसिद्धं श्रुतिषुजंतोर्मरणआसन्नेसतितुतयोःपुरुषविग्रहयोर्वियोगःसंपर्काभावोभवतीत्यर्थः ३७१ तद्वियोगस्यलक्षणान्याह वियोगा

वक्रतांप्रतियातेस्मिंश्चित्तेसंसारकारणे ॥ पुमानपिभवेद्वक्रोह्यलातस्थोयथानलः ३६६ ततःपूर्वस्मृतंसर्वंविस्मृत्याशुसबालिशः ॥ अवशोदुःखमापन्नःकोहंकोहमितीरयेत् ३६७ एवंगर्भोपनिषदिप्रोक्तजन्मविचारतः ॥ विरागोजायतेपुंसोमरणस्यापिबोधनात् ३६८ मरणस्यभवेद्बोधोजन्मनानियतोनृणाम् ॥ जातस्यास्तिविनाशोयंसर्वस्यापिहिवस्तुनः ॥ स्वकीयपितृमात्रादिमरणादपिदेहिनाम् ३६९ आसन्नमरणज्ञानउपायोयमनेकधा ॥ ऐतरेयेणमुनिनावसिष्ठेनचकीर्तितः ३७० आदित्येदक्षिणेतद्वच्चक्षुष्येकःपुमान्स्मृतः ॥ आसत्तिंमरणेप्राप्तेवियोगोजायतेतयोः ३७१ वियोगात्पूर्ववन्नायंसूर्यंपश्यतिदेहभाक् ॥ चंद्रवद्भातिप्रवितामुमूर्षोःशीतलस्तदा ३७२ मध्यान्हेरश्मिशून्योवायथैवास्तमयेतदा ॥ सच्छिद्रोप्यथवासोयंमंजिष्ठाकाशगोथवा ३७३ दिशश्चप्रदिशस्तद्वदंतरिक्षंसभागणम् ॥ मुमूर्षोरक्तसदृशंप्रतिभातिदिवानिशम् ३७४ पायुर्मलविसर्गस्यकालेत्रविवृतोयथा ॥ तथैवजायतेतस्यमुमूर्षोरत्रदेहिनः ३७५ काकनीडंयथासांद्रंदुर्गंधमिहदृश्यते ॥ तादृग्गंधधरंतस्यमुमूर्षोर्मस्तकंभवेत् ३७६ आत्मनश्छिद्रसंयुक्तांछायांवैषप्रपश्यति ॥ आदर्शेवाजलेचायंछायायामथवात्मनः ॥ संदेहंशिरसःपश्येदभावंवाकदाचन ३७७ कनीनिकागतंतद्वत्पुरुषमूर्ध्वपादकम् ॥ यःपश्येत्तस्यसंदेहमादर्शादौव्रजेच्चवा ३७८

दिति । तद्वियोगप्रयुक्तानीमानिमरणचिन्हानि इमानिकानि आदित्यस्यपूर्ववददर्शनंचंद्रवत्शीतलतयाभानमस्तमयकालवद्रश्मिशून्यतयाभानंसच्छिद्रतयाभानंमंजिष्ठरक्तवस्त्रवद्रक्तवर्णआकाशेस्थितस्यभानंवेतिद्वयोरर्थः ३७२ । ३७३ तथाविश्वस्यरक्तवर्णस्यभानंतल्लक्षणमित्याह दिशइति । भानांनक्षत्राणांगणोभगणःसएवभागणः प्रज्ञादित्वात्स्वार्थिकोण् व्युत्पत्त्यंतरंतुदर्शितं मुमूर्षोःसंनिहितमरणस्य ३७४ मलोत्सर्गकालवत्पायुद्वारस्यपद्विवृतत्वमसंकोचनीयत्वंतदपिमुमूर्षोर्लक्षणमित्याह पायुरिति ३७५ काकनीडमिति । काकांडयुक्तनीडस्ययोगंधस्तत्तुल्यगंधस्यधरंधारकंमस्तकमपितल्लक्षणमिति ३७६ आत्मीयच्छायायांछिद्रदर्शनंतथाआदर्शादिगतप्रतिबिंबेच्छायायांवाशिरसःसंदेहोऽभावनिश्चयोवातल्लक्षणमित्याह आत्मनइति ३७७ कनीनिकेति । यःपरचक्षुषिप्रतिबिंबंविपरीतंपश्यति अथवातस्यप्रतिबिंबस्यदर्पणादौसंदेहंकरोतिसोपिमुमूर्षुर्बोध्यइत्यर्थः ३७८

अंगुल्येति । तथाअंगुल्यानेत्रस्याक्रमणेकृतेसतिय तेजःकिरणायमानंदृश्यतेवस्यादर्शनमपितल्लक्षणमित्यर्थः ३७९ कर्णपिधानेति । अंगुलिभ्यांकर्णपिधानेकृतेयःप्राणजन्योघोषःश्रूयतेतदश्रवणमपितल्लक्षणमित्यर्थः ३८० मयूरेति । योमयूरकंठवन्नीलवर्णमभ्रंपश्यतियश्चमेघंविनाविद्युतंपश्यतिमेघेसतितुतांनपश्यतिसोपिमुमूर्षुर्बोध्यइत्यर्थः ३८१ वर्षुकेइति । वर्षुकेवर्षणशीलेमेघेविद्युतंयोनपश्येत्यश्चकृष्याश्रमादिव्यतिरिक्तदेशभूमिंयन्हिशून्यामपिज्वलंतीमिवपश्येत्सोपिमुमूर्षुरित्यर्थः ३८२ अथवसिष्ठोक्तानिप्रत्यक्षाणितल्लक्षणान्याह संध्ययोरित्यादिना । एकत्रदिनेप्रातःसायंचस्वकीयशिरसउत्थितंधूमंयःपश्येत्तस्यमहाभयमरणयोरन्यतरद्भवतीत्यर्थः ३८३ पंचाहमिति । उक्तविधंधूमदर्शनंपंचाहंनिरंतरंचेद्भवेत्तदावत्सरत्रयोत्तरकालेमरणंस्यात् चतुर्दिनंतथाचेद्वत्सरद्वयोत्तरेत्रिदिनंचेदेकवत्सरोत्तरकालेतदितिद्वयोरर्थः ३८४ ३८५ कर्णेति । कर्णघोषस्याश्रवणमपिवत्सरपर्यंतमरणसूचकं तथाऽनिमित्तंकृशस्यस्थूलत्वंस्थूलस्यकृशत्वंचतल्लक्षणम् तथायःकोपनःकोपशीलःअकस्मात्शांतिशीलोभवेत्शांतोवाकोपशीलस्तस्यापिवत्सरान्मृतिरित्यर्थः ३८६ विण्मूत्रेइति । हेलाविलासःप्रवृत्तिरितियावत् साएकायत्रभवनेइतिव्युत्पत्त्याएकहेलपदमध्याहृतभवनक्रियाविशे

अंगुल्याचक्षुषस्तद्वद्दृश्यतेयत्प्रपीडनात् ॥ तेजस्तदपिनैवायंमुमूर्षुःपरिपश्यति ३७९ कर्णपिधानतोयोंतःश्रूयतेप्राणसंरवः ॥ नशृणोतितमप्येषमुमूर्षुःश्रोत्रपूरणात् ३८० मयूरकंठसदृशमभ्रंनिमेषप्रपश्यति ॥ अमेघेविद्युतंतद्वत्समेघेपिचतांनसः ३८१ वर्षुकेजलदेतद्वत्सूर्यरश्मींश्चपश्यति ॥ ज्वलंतीमिवभूमिंचवन्हिशून्यांविनाश्रमम् ३८२ संध्ययोरुभयोस्तस्यमस्तकेयोविलोकयेत् ॥ धूमंतस्यभवेद्भूरिभयंवामरणंचवा ३८३ पंचाहंचेदविच्छिन्नंशिरोधूमंविलोकयेत् ॥ संध्ययोरुभयोस्तस्यमरणंवत्सरत्रयात् ३८४ एवंचतुर्दिनंचेत्स्यान्मरणंवत्सरद्वयात् ॥ एकस्माद्वत्सरान्मृत्युस्त्रिदिनंधूमदर्शनात् ३८५ कर्णघोषाश्रुतौतद्वन्मरणंवत्सरादिह ॥ कृशःस्थूलोभवेत्स्थूलःकृशोवाकोपनस्तथा ॥ शांतःशांतश्चकोपीवावत्सरान्मरणेसति ३८६ विण्मूत्रेक्षुत्पिपासेचमदेनसहितेयदि ॥ एकहेलंदिनेयस्मिंस्ततःस्याद्वत्सरान्मृतिः ३८७ गंधर्वनगरंपश्येद्वृक्षाग्रेयदिकश्चन ॥ अकस्मादथवापश्येद्देहंस्वंकृष्णपिंगलम् ३८८ गृध्राश्चकाकगोमायुसारसामांसगृध्रवः ॥ खरोग्रावाविदंष्ट्रावानिमित्तंदुष्टजंतवः ३८९ एकोवाप्यथवानेकेयंधावंतिमुहुर्मुहुः ॥ रक्षोभूतपिशाचावातथान्येपिशिताशिनः ॥ स्वप्रस्पर्शेपिवाद्दृक्स्याद्गतिर्जागरणेयथा ३९०

षणम् तथाचयस्मिन्दिनेविण्मूत्रेपुरीषमूत्रोत्सर्गौक्षुत्पिपासेवाएकहेलंयुगपद्भवतस्तेचयुगलेयदिमदेनव्यामोहेनसहवर्त्तमानेस्यातांततोदिनाद्वत्सरेमृत्युर्भवेदित्यर्थः ३८७ गंधर्वेति । यःकश्चनअकस्माद्वृक्षाग्रेगंधर्वनगरंपश्येदथवास्वंदेहंकृष्णापिंगलवर्णंपश्येद्यत्रदिनेततोवत्सरान्मृतिरितिपूर्वतोऽनुषंगः ३८८ गृध्राश्चेति । यमभिलक्ष्यगृध्राःकाकादयश्चमांसस्यगृध्रवोलिप्सानिमित्तंधावंति अथवाखराउग्राश्चविदंष्ट्रादंष्ट्राहीनावृश्चिकादयोवाराक्षसादयोवामांसाशिनस्तेषांमध्येएकोबहवोवाअभिधावंतितस्यापिवत्सरान्मृतिर्बोध्या एतेषामभिधावनस्यगतिःफलंजागरणेयथाभवतितादृक्फलंस्वप्रांतेभवतीत्यर्थः स्वप्रस्पर्शपदस्यस्वप्रांतार्थसमन्वयस्तुस्वप्रस्यस्पर्शेरुजिक्षीणतायांअंतेइतियावदितिव्युत्पत्त्याबोध्यः तथाचविश्वप्रकाशः ' स्पर्शःस्पर्शाक्षरेदानेस्पर्शनेस्पर्शकेरुजि ' इतिइतिद्वयोरर्थः ३८९ । ३९०

अरुंधतीमिति । अरुंधतीध्रुवौप्रसिद्धौ सोमच्छायापूर्णचंद्रमध्यगताश्यामता महापथोनिर्मलाकाशेदक्षिणोत्तरदीर्घोमंदप्रभारूपःप्रसिद्धः एतेषामन्यतममन्यैर्विलोकितमपियोवीक्षमाणोदर्शनार्थंयतमानोपिनपश्येत् अत्रादर्शनेप्रत्येकसंबंधिनिसतिवत्सरात्ततोर्वाग्वामृतिर्बोध्या । एतदेवावधारयतिनैवेत्यादिना । यस्यांतिथावुक्तंनिमित्तंपश्यतितांतिथिंवत्सरादुत्तरांजीवन्सन्नयातीतिद्वयोरर्थः ३९१ । ३९२ अथषाण्मासिकमृत्युलक्षणान्याह असितमितिपङ्क्तिः । श्यामवस्त्रस्योज्ज्वलत्वंश्वेतस्यश्यामत्वंवापश्येत्सषण्मासान्म्रियतेइत्यर्थः ३९३ पतंतमिति । योनभसःपतंतंसूर्यचंद्रंवापश्येत् अथवाभूमिष्ठंपदार्थंदिविष्ठमाकाशगंपश्येत् दिविष्ठंतुभूमिष्ठमित्येवंविपर्यस्तरूपंपश्येत्सोपितथेत्यर्थः ३९४ ओष्ठाविति । ओष्ठयोस्तालुनश्चशुष्कत्वंचक्रवद्देहभ्रमणंचयस्यभवत्यथवाअन्येषांपर्वतादीनांभ्रमणंपश्येदथवाचलतामन्येषामदर्शनंस्थिरत्वेनदर्शनमितियावत्तद्यस्यभवति एतानिसर्वाणिनिमित्तानिषाण्मासिकमरणसूचकानीत्यर्थः ३९५ ३९६ एकस्यापीति । एतेषांनिमित्तानांमध्येएकस्यापिदर्शनंयस्यांतिथौभवतितांतिथिंषण्मासोत्तरांजीवन्सन्नपश्यतीत्यर्थः ३९७ सुतरामिति । सुतरांवादितायाघंटायानादस्याश्रवणम्

अरुंधतींध्रुवंवापिसोमच्छायांमहापथम् ॥ वीक्षमाणोपियोनैवपश्येदन्यैर्विलोकितम् ३९१ प्रत्येकमत्रविज्ञेयंमरणंवत्सराद्ध्रुवम् ॥ अर्वाग्वानैवजीवन्सतांतिथिंयातिवत्सरात् ३९२ असितंस्वात्मनोवस्त्रमुज्ज्वलंयःप्रपश्यति ॥ उज्ज्वलंचतथाकृष्णंषण्मासात्समरिष्यति ३९३ पतंतंभास्करंपश्येत्सोमंवानभसोहियः ॥ भूमिष्ठंवादिविष्ठंयोव्यस्तरूपमथापिवा ३९४ ओष्ठौतालुश्चसंतापात्शुष्कतांयात्यकारणात् ॥ चक्रवद्यस्यदेहस्यभ्रमणंस्यादकारणम् ३९५ अन्येषांवापितत्पश्येद्गच्छतांवाप्यदर्शनम् ॥ अत्रसर्वत्रविज्ञेयंषण्मासान्मरणंनृणाम् ३९६ एकैकस्याप्यरिष्टस्यदर्शनेसंशयंविना ॥ षाण्मासिकींतिथिंतांतुपुनर्जीवन्नपश्यति ३९७ सुतरांनात्रघंटायानादंयःशृणुयादिह ॥ पंकेवापांसुलेवापियस्यखंडंपदंभवेत् ॥ अत्रापिमरणंज्ञेयमर्वाक्षण्मासतोनृणाम् ३९८ अपीड्यमानयोरेवनेत्रयोर्यदिपश्यति ॥ खद्योतद्युतिवत्तस्यत्रिमासान्मरणंभवेत् ३९९ इंद्रियाणिनगृह्णीयुःस्वकीयान्विषयान्यदि ॥ मासांतेमरणंतस्यभविष्यतिनसंशयः ४०० प्रलपंतिगिरोयस्यशरीरेणविवर्जिताः ॥ शिरोज्वलतिवासद्योवह्निवज्ज्वालयावृतम् ४०१ दिवोल्कादृश्यतेयेननक्तंचेन्द्रधनुस्तथा ॥ अमेघेपितथाविद्युत्समेघेनैवसातथा ४०२ दर्पणादौतथाछायामात्मनोवानपश्यति ॥ पश्येच्चेन्मैथुनंवापिकाकहंसशिखंडिनाम् ४०३ रूक्षशीतोष्णभावानांविपर्यासंतथैवच ॥ स्नानमात्रेणयस्यापिहृत्पादौचप्रशुष्यतः ४०४

पंकवतिपांसुमतिवादेशेपादचिन्हस्यखंडितस्यभवनंतल्लक्षणमित्यर्थः ३९८ अपीड्यमानयोरिति । अंगुल्यानेत्राग्रमाक्रमणेपिखद्योतद्युतितुल्यतेजःकणानांभानंत्रैमासिकमरणलक्षणमित्यर्थः ३९९ चक्षुरादींद्रियैःस्वस्वविषयाणांयथावद्ग्रहणंमासकालिकमरणलक्षणमित्याह इंद्रियाणीति ४०० अपराणिमासिकमरणसूचकानिदशनिमित्तान्याह प्रलपंतीतिपंचभिः । शरीरेणविवर्जिताअनुपलभ्यमानशरीरकादेवादयःकर्त्तारोयस्यश्रवणार्हागिरोवचनानिप्रलपंतिकथयंतिवाअथवायस्यशिरोवह्निवज्ज्वलतितस्यमासमात्रेणमरणमितिपंचमेनाभिसंबंधः एवमग्रेपि ४०१ दिवोल्केति । दिवसेउल्कापातदर्शनंरात्राविंद्रधनुर्दर्शनममेघाकाशेविद्युद्दर्शनंसमेघाकाशेसाविद्युदितिथानदृश्यतेएतन्निमित्तचतुष्टयंयस्यरूपात्तस्यतथेत्यर्थः ४०२ दर्पणादाविति । दर्पणादौप्रतिबिंबादर्शनंकाकादिमैथुनदर्शनंचेतिनिमित्तद्वयंयस्यतस्यतथेति शिखंडीमयूरः ४०३ रूक्षेति । रूक्षादिपदार्थानांस्निग्धत्वादिरूपेणदर्शनंस्नानोत्तरंसर्वांगानामार्द्रत्वेपिपहृदयस्यपादयोश्चशुष्कत्वमेतन्निमित्तद्वयमपियस्यतस्यतथेत्यर्थः ४०४

मासेति । प्रथमपदद्वयस्यपूर्वान्वयोदर्शितः उक्तानांदशनिमित्तानांमध्येएकंद्वयादिरूपेणसर्वाणिवाशुद्धांतःकरणस्यमुमूर्षोर्भवंत्येवेत्यर्थः ४०५ अर्द्धमासिकमरणसूचकानिताम्याह भूमीति द्वाभ्यां । अकस्माद्भूमौछिद्रदर्शनेछिद्ररवाणांभूमिच्छिद्रोत्थितशब्दानांश्रवणंवातल्लक्षणमित्यर्थः ४०६ सूर्यांशुरिति । यस्यसूर्यकिरणाःशीताभासंतेचंद्रस्यतुउष्णास्तथायस्यमुखंरक्तवर्णं जिह्वाचज्वलदग्निवर्णाभवतिकर्णौचस्तब्धौतुरगकर्णवत्तथाहृदयादिपुकंपोभवतितस्यापितथेति ४०७ एतेष्विति । एतेषुभूमिच्छिद्रदर्शनादिपुमध्येएकस्मिन्बहुपुवासत्सुअर्धमासादर्वागेवमरणंभवतीति ४०८ अर्वाक्त्वमेवस्फुटयति यस्यामिति । यस्यांतिथावेतानिनिमित्तानिभवंतिततःपंचदशींतिथिंजीवन्सन्निहलोकेनयातीति ४०९ सप्तदिवसभाविमरणसूचकान्याह यस्यवेति । अकस्मात्सर्वत्रदेहेज्वालोदयःसप्तदिवससमुदायादर्वाग्भाविनोमरणस्यसूचकः ४१० ग्रहानिति । ग्रहाआदित्यादिकेत्वंतसंज्ञास्ताराभण्डलगताःप्रसिद्धास्तान् अथवास्वकीयांनासिकां जिव्हांचयोनपश्येत अथवास्वयंकृतंकर्मविस्मरेत् यस्यचशरीरपूर्वार्द्धमुष्णमपरार्द्धंतुशीतंभवेत् नेत्रेचातिविकासेनमंडलाकारेस्याताम् कर्णौशैथिल्येनस्थानच्युतौस्याताम् नासिकाचवक्राभवेत् एतानिसप्तरात्रावांतरभाविमरणसूचकानीतिद्वयोरर्थः ४११ । ४१२ सप्तरात्रावच्छिन्नतामेवस्फुटयति निमित्तेष्विति । यस्मिन्वारेउक्तनिमित्तान्यतमंभवेत्सवारोजीवतापुनर्नलभ्यते इत्यर्थः ४१३ यस्मिन्दिनेभवंतितस्मिन्नेवदिनेमरणसूचकान्याह उत्तरस्थामितित्रिभिः । सूर्येदक्षिणतःस्थितेउत्तरतःस्थितियोग्यांस्वदेहच्छायांदक्षिणतःस्थितांयःपश्येत्तस्यसद्यस्तस्मिन्नेव दिनेमृत्युरिति ४१४ यस्यान्नमिति । स्वस्यभोजनायोपन्यस्तमन्नंकयाचिद्वर्णयितुमशक्ययास्त्रियाभुज्यमानंयेनदृश्यते अथवाभोजनकालेयोवृषभारूढंमहिषारूढंवादंडपाणिंभयानकंचपुरुषंमुक्तारक्तवर्णाःकेशायस्यातांपाशहस्तांयोषितंवापश्येत्सउत्तरदिनोदयकालपर्यंतंनजीवेदुक्तनिमित्तानांसद्योमरणहेतुत्वादितित्रयाणांसंबंधः ४१५ । ४१६ । ४१७ अथस्वप्नाइत्यादिनाउक्तनामकश्रुतौवसिष्ठसंहितायांचवर्णितानरिष्टसूचकान्स्वप्नानाह स्वप्नाअपीत्यादिना । एतेवक्ष्यमाणरूपाःस्वप्नाअपिस्वप्नद्रष्टुर्मरणसूचकाबोध्याइति ४१८

मासमात्रेणमरणमुक्तानामेकमेववा ॥ सर्वाणिचभवंत्यस्यमुमूर्षोःशुद्धचेतसः ४०५ भूमिच्छिद्रमकस्माद्यःपश्येच्छिद्ररवांस्तथा ॥ अर्धमासात्सवैपश्येद्धमराजंनसंशयः ४०६ सूर्यांशुर्यस्यशीतःस्यादुष्णश्चंद्रस्यवापिसः ॥ रक्तपद्मोपमंवक्त्रंयस्यजिह्वाज्वलच्छविः ॥ कर्णयुग्मंतथास्तब्धंकंपोहृन्नाभितालुजः ४०७ एतेषुचनिमित्तेषुसर्वेष्वेकैकशोपिवा ॥ अर्धमासाद्भवेदर्वाङ्मरणंसंशयंविना ४०८ यस्यांतिथौनिमित्तानिजायंतेतांपुनःपुमान् ॥ पश्येत्पंचदशींनायंजीवन्निहकदाचन ४०९ यस्यवाकस्मिकीज्वालाज्वलंतीजायतेतनौ ॥ सयातिसप्तदिवसान्मृत्योःस्थानंनसंशयः ४१० ग्रहाऋक्षांस्तथासप्तस्वघ्राणरसने अपि ॥ नपश्यतिस्वयंकृत्वाविस्मृतिंचाधिगच्छति ४११ यस्यार्धमुष्णंवपुषःशीतलंचार्द्धमेवच ॥ स्यातांमंडलवन्नेत्रेकर्णौस्थानाच्च्युतावपि ॥ नासिकावक्रवत्तद्वत्सप्तरात्रंहिजीवति ४१२ निमित्तेष्वेषुकिंचित्स्यादेकंवानेकमेवच ॥ यस्मिन्वारेभवेत्तंतुपुनर्जीवन्नयात्ययम् ४१३ उत्तरस्थांनिजांछायांदक्षिणेयोत्रपश्यति ॥ सद्यएवमृतिंसोयंशस्त्राद्यैर्हिगमिष्यति ४१४ यस्यान्नंभुज्यमानंहिकयाचिद्भुज्यतेस्त्रिया ॥ भोजनस्यात्रकालेतुयःपश्येद्वृषवाहनम् ४१५ पुरुषंमहिषस्थंवादंडपाणिंभयप्रदम् ॥ योषितंपाशहस्तांवामुक्तरक्तस्वमूर्द्धजाम् ४१६ सद्योमरणहेतूनिकथितानिमनीषिभिः ॥ एतदन्यतमंपश्यन्नपश्येदुदितंरविम् ४१७ स्वप्नाअपिभवंत्येतेमरणस्यात्रसूचकाः ॥ अचिरेणैवकालेनध्रुवंस्वप्नावलोकिनः ४१८

कृष्णेति । कृष्णदंतस्यकृष्णवर्णस्यचनरस्यदर्शनमतिसंनिहितमरणसूचकमिति ४१९ वराहमिति । यश्चात्मानमात्मीयंशरीरंभक्षयंतंवराहंमर्कटंवापश्येदथवाअनेनआत्मानंभक्षयताशुनानीयमा नंपश्येत्तस्यषण्मासतोमृतिरितिसप्तमेनाभिसंबंधः ४२० खादित्वेति । तथायःस्वप्नेसुवर्णानिपीतवर्णद्रव्याणिभक्षयित्वावमेत् मधुमाक्षिकंतत्प्रचुरमन्नंअथवाबिसानिकमलजटाःकोमला.प्राश्नीयाच्च स्यतथाफलमिति ४२१ पुंडरीकमिति । पुंडरीकंश्वेतकमलंमस्तकेकंठादौवाधारयेत् गर्दभैर्वराहैरुष्ट्रैर्वायुक्तंयानंरथादिकमारोहेत्तेषुगर्दभादिष्वेववारोहणंकुर्यात्कृष्णवर्णांगांसमानवर्णवत्ससहितांदक्षिण दिशंप्रतिगच्छंतींवापश्येदितिशेषः तस्यतथेतिद्वयोरर्थः ४२२ । ४२३ जपेति । जपाअतिरक्तःकुसुमविशेषस्तन्मयींशेवालमयींवामालांकंठेधारयंस्तैलाभ्यंगशालीनग्नोवाएकाकीतांदक्षिणांदिशंयो गच्छेदथवाकरस्थितैःकाकादिभिर्भक्ष्यमाणोमुदितत्वादिविशेषणकःअन्यैःश्वप्रभृतिक्रूरजन्तुभिरुपद्रुतस्तांदक्षिणांदिशंव्रजेत्तस्यतथेतित्रयाणामर्थः ४२४ । ४२५ । ४२६ कृकलासमिति । यःकृक

कृष्णदंतंकृष्णवर्णंपश्येत्स्वप्नेनरंयदा ॥ अविदूरेतदामृत्युःस्वप्नद्रष्टुर्नसंशयः ४१९ वराहंमर्कटंवापिघ्नंतंखादंतमेववा ॥ आत्मानंवाशुनातेननीयमानंसमंततः ४२० खादित्वावासुवर्णानिवांतिंचकुरुतेपुनः ॥ अश्नातिमधुसंयुक्तंमृदुलानिबिसानिवा ४२१ पुंडरीकंतथैवैकंधारयेन्मस्तकादिषु ॥ खरैर्वापिवराहैर्वायुक्तमुष्ट्रैरथापिवा ४२२ अधिगच्छेदयंयानंतेषुवारोहणंव्रजेत् ॥ कृष्णांधेनुंकृष्णवत्सांव्रजंतींदक्षिणांदिशम् ४२३ जपाकुसुमजांमालांशैवालींवोरसावहन् ॥ तैलाभ्यक्तोथवानग्नएकाकीवापियातितां ४२४ काकैर्गृध्रैश्चपरितोभक्ष्यमाणःकरेस्थितैः ॥ मुदितोरक्तवासाश्चरक्तगंधानुलेपनः ४२५ तैलाभ्यक्तस्तथाचान्यैर्बहुशोपिह्युपद्रुतः ॥ त्वरितोदक्षिणामाशांव्रजेद्वाक्षुत्पिपासितः ४२६ कृकलासंचवापश्येद्यानंस्वस्यविरूपिणम् ॥ इत्येवमादिचेत्पश्येत्स्वप्नेषण्मासतोमृतिः ४२७ लोहदंडधरंह्रस्वंनरंकृष्णपरिच्छदम् ॥ स्वप्नेपश्येत्पुमान्यस्तुत्रिदिनात्समरिष्यति ४२८ कृष्णांबरधरानारीकृष्णगंधानुलेपना ॥ आलिंगयतियंस्वप्नेसस्नेहमरुणोदये ॥ अर्वाग्दशाहतोमृत्युर्भवेत्सूर्योदयेपिच ४२९ वातःपित्तंतथाश्लेष्मादोषत्रयमुदीरितम् ॥ दोषत्रयसमुद्रेकात्स्वप्नोव्यर्थःप्रकीर्तितः ४३० कामात्क्रोधात्तथालोभाद्भयाद्वानिशिचिंतनात् ॥ दृष्टःस्वप्नोनफलदःप्राणिनामिहकर्हिचित् ४३१ दोषकामाद्यभावेचेत्प्रथमेप्रहरेपुमान् ॥ स्वप्नंविलोकयेत्तस्यफलंवत्सरतोभवेत् ४३२ षण्मासतोद्वितीयेस्यात्तृतीयेतुत्रिमासतः ॥ चतुर्थेघटिकानांस्याद्द्वंद्वात्सूर्योदयावधि ॥ मासात्पक्षाद्दिनेभ्योवास्यादेवास्माच्चवासरात् ४३३

लासंसरटंकुरूपंस्वस्यवाहनभूतंपश्येत्तस्यापितथेत्यर्थः आदिपदेनविवाहादिमंगलग्रहः ४२७ दिनत्रयावच्छिन्नमरणसूचकंस्वप्नमाह लोहेति । यःपुमान्लोहदंडाद्युपलक्षितांयममूर्तिंपश्येत्सदिनत्रयावच्छिन्नजीवनइत्यर्थः ४२८ दशदिनावच्छिन्नस्यतस्यसूचकमाह कृष्णांबरेति । सद्यस्तद्दिनेअरुणोदयेतद्वाऽयंतेवातथेति ४२९ उक्तविधस्वप्नानामदृष्टसामग्रीजन्यानामेवतत्तदर्थसूचकत्वमितिसूचयन्दृष्टसामग्रीजन्यस्यवैफल्यमाह वातइति । कफादिधातूनांसाम्यातिक्रमेणदोषभावंगतानांयःसमुद्रेकोविकारारंभक्षमत्वंतज्जःस्वप्नोवृथेति ४३० तथाकामादिप्रयुक्तोपिवृथेत्याह कामादिति । चिंतनंपुनःपुनःस्मरणं ४३१ रात्रिप्रहरभेदेनफलविशेषमाह दोषेति । दोषाःवातादयः ४३२ षण्मासतइति । द्वितीयेरात्रिप्रहरेतत्फलंषड्भिर्मासैर्भवति तृतीयेमासत्रयेण चतुर्थेतुघटीयुगरूपचतुष्टयभेदेनफलंबोध्यं तथाहि चतुर्थप्रहरस्यप्रथमघटीद्वयेमासात्फलं द्वितीयघटीद्वयेपक्षात् तृतीयेदशभिर्दिनैश्चतुर्थघटीद्वयेतुतस्मिन्नेवदिनइत्यर्थः ४३३

स्वप्नवैयर्थ्यस्यप्रयोजकांतरमाह स्वप्नमिति । यस्यस्वप्नस्यदर्शनादनंतरंस्वप्नांतरंदृश्यतेसपूर्वःस्वप्नोवृथाभवतीतिस्वप्नमर्यादाविदोवदंतीत्यर्थः ४३४ तथाचदोषशंकाकलंकितत्वेनस्वप्नस्यनाव धारणहेतुत्वंकिंतुसंभावनात्मकसंशयहेतुत्वमेवेत्याह इत्यादीति । इत्यादिदोषतोजातेनतेनव्यभिचारसंशयेनस्वस्यस्वप्नद्रष्टुःसूक्ष्मयाविवेकक्षमयाबुद्ध्यालोचनमंतरास्वप्नएकांततोनियमेनतत्तद्रूपं तविधंफलंप्रयच्छतीतिननिश्चितंजागरणकालिकनिमित्तंतुतत्फलंप्रयच्छतीतिनिश्चितं दोषशंकानुदयात् तथाचस्वप्नेतथासूचकत्वंकाचित्कंसव्यभिचारमितिन्यायंकार्यकारणभावव्यवस्थांजानतांमत मितिद्वयोरर्थः ४३५ । ४३६ अरिष्टवर्णनस्यप्रकृतोपयोगिफलमाह आसन्नेति । वीक्षितैर्जाग्रतिदृष्टैरपिशब्दात्स्वप्नदृष्टैश्चमरणसूचकैःकामुकस्यापिवैराग्यंभवतीति ४३७ परंतुउक्तोपायैर्जातंवैरा ग्यंमंदादिभेदेनापरमेवभवतिपरवैराग्यंतुयोगेनात्मसाक्षात्कारादेवेतिदर्शयन्योगप्रतिपादकहंसाद्युपनिषदर्थंजिज्ञासामुत्थापयति हंसादीति । स्पष्टं ४३८ तत्रोपोद्घातसंगत्याप्रचुरयोगांगप्रतिपा दिकयाअमृतनामकोपनिषदोर्थमार्थक्रमेणद्विपंचाशतांश्लोकैरुपबृंहयन्नादौयोग्यमधिकारिणंशाखांतरप्रसिद्धमाह ब्रह्मचारीति । ब्रह्मचारित्वेनाहिंसादियमसंपत्तिःसूचिता दांतत्वेनमनोनियमनं

स्वप्नंदृष्ट्वायदास्वप्नंपश्येदेषपुनःपुमान् ॥ व्यर्थःस्वप्नस्तदापूर्वइतिस्वप्नविदोविदुः ४३४ इत्यादिदोषतस्तेनस्वप्नोनैकांततःफलम् ॥ प्रयच्छतिविनासूक्ष्मदृ ष्ट्यास्वस्यविलोकनात् ४३५ तत्तज्जागरणेयत्स्यान्निमित्तंतत्तुनिश्चितम् ॥ क्वाचित्कंचतथास्वप्नइतिन्यायविदोविदुः ४३६ आसन्नमरणस्यैतैःसूचकैरपिवीक्षि तैः ॥ कामुकस्यापिवैराग्यंप्रायोभवतिभूतले ४३७ हंसादिश्रुतिसंप्रोक्तंयोगमास्थायवापुमान् ॥ लोकद्वयेपिवैराग्यंदृढमत्रप्रपद्यते ४३८ ब्रह्मचारीपुमा न्दांतोजितबाह्येंद्रियःस्थिरः ॥ गुरुभक्तःसदायोगमभ्यसेद्रागनाशनम् ४३९ स्ववर्णाश्रमसंप्राप्तानित्यनैमित्तिकाःक्रियाः ॥ कृत्वारण्यादिकेस्थानेशीतातपवि वर्जिते ४४० वायुशून्येतथादेशेसर्वोपद्रववर्जिते ॥ मनसश्चदृशोस्तद्वन्नित्यमानंदकारिणि ॥ योगाभ्यासरतस्तत्रस्वासनंपरिकल्पयेत् ४४१ दर्भान्कृष्णाजिन च्छन्नांस्त्वचंकृष्णाजिनस्थितम् ॥ अन्यद्वाम्रदुलंयेनबाधातस्यनसंभवेत् ४४२ नात्युच्छ्रितंनातिनीचंदेशेशब्दविवर्जिते ॥ परिकल्प्यासनंतत्रसंविशेद्योगदृक् पुमान् ४४३ समंकायाशिरोग्रीवंधारयन्नचलंस्थिरः ॥ संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन् ४४४ अहिंसांसत्यमस्तेयंब्रह्मचर्यापरिग्रहान् ॥ सेवमानोयमा न्नित्यंनियमानपिशक्तितः ॥ तपःस्वाध्यायकेशानप्रसादादीन्हिबुद्धिमान् ४४५

स्थिरत्वेनभगवद्गीतोक्तासात्त्विकीधृतिर्गुरुभक्तत्वेनश्रद्धासंपत्तिश्चेति । रागोविषयेषुगर्द्धः ४३९ योगस्ययोग्यंदेशंकालंचाह स्ववर्णाश्रमेतिद्वाभ्यां । आश्रमसंबंधेनावश्यकर्त्तव्यानिनित्यनैमित्ति ककर्माण्यनुष्ठायारण्यंवनंतत्प्रभृतिकेरहस्येशीताभावादिविशेषणशालिनिचदेशेस्थानंकुट्यादिरूपंकृत्वातत्रयोगंचिकीर्षुरासनंस्थापयेदितिद्वयोःसंबंधः ४४० । ४४१ आसनंवर्णयति दर्भानिति । प्रथमंदर्भान्कल्पयेत्तदुपरिकृष्णाजिनंतदुपरिव्याघ्रादित्वचमन्यद्वस्त्रादिकंवाकल्पयेत्येनतस्यबाधातेनआसनेनकृतापीडानस्यादित्यर्थः ४४२ नात्युच्छ्रितमिति । संविशेत्तिष्ठेत् ४४३ तत्रस्थित्वादौ कर्त्तव्यस्यप्रतिपादकंगीतावाक्यंपठतिसममिति । कायपदेनदेहमध्यमुच्यते ग्रीवांतःसमाहारद्वंद्वः सममवक्रं प्राणायामान्कुर्वीतेतिवक्ष्यमाणेनसंबंधः ४४४ अहिंसामिति । अहिंसादिरूपान्यमां स्तपःप्रभृतीन्नियमांश्चसेवमानः ईशानप्रसादईश्वरेचित्तस्यतदाकारतालक्षणंवैशद्यं आदिपदेनसंतोषादिग्रहः ४४५

कृष्णाजिनालाभेपिदर्भासनमवश्यंसंपादयेदितिदर्शयन्योगिनायोगसंप्रदायप्रवर्तकस्यरुद्रस्याराधनंप्रतिबंधध्वंसायावश्यंकार्यमित्याह भूमाविति ४४६ तथापद्मकाद्यन्यतममासनंकृत्वावक्ष्यमाण विधयाप्राणायामान्कुर्वीतेत्याह पद्मकमिति । योगासनंयोगोपकारकमासनंपद्मकादिसंज्ञंकृत्वेत्यर्थः केचित्तुसिद्धासनं ' मेढ्रादुपरिविन्यस्यसव्यगुल्फंतथोपरि । गुल्फांतरंचनिक्षिप्यसिद्धासन मिदंभवेत् ' इतिलक्षितस्यसिद्धासनस्ययोगासनपदेनपरिग्रहइतिवदंतितत्त्वग्रेतल्लक्षणानुपन्यासात्ग्रंथकृतोनसंमतमितिबोध्यम् ४४७ तत्रस्वस्तिकंलक्षयति जानूर्वोरिति । जानुपदेनजान्वारभ्यजं घापर्यंतोदेशोलक्ष्यतेऊरुःप्रसिद्धस्तयोर्मध्येप्रथमंदक्षपादतलंकृत्वाततोवामपादतलंतथाकुर्यादृजुदेहमध्यकश्चभवेदेतत्स्वस्तिकमित्युच्यतइत्यर्थः ४४८ पद्मकंलक्षयति अंगुष्ठाविति । पादावूर्वोरुपरि कृत्वापृष्ठतःप्रहितेनदक्षहस्तेनदक्षमंगुष्ठंगृहीत्वाताद्दृशेनवामेनवामांगुष्ठंगृह्णीयादृजुकायश्चभवेदेतत्पद्मासनमित्यर्थः ४४९ भद्रासनंलक्षयति गुल्फाविति । पादगुल्फयोर्द्वयंवृषणाधःसीवन्याःपार्श्व द्वयेनसंस्पर्शियथास्यात्तथाकृत्वापार्श्वेपादयोःपृष्ठेपादौचपाणिभ्यांकच्छपाकाराभ्यांबध्वासमाक्रम्ययत्क्रियतेतद्भद्रासनमित्यर्थः तदुक्तंवाचस्पतिना ' पादतलेवृषणसमीपेसंपुटीकृत्यतस्योपरिपाणि कच्छपिकांकुर्यादेतद्भद्रासनम् ' इति । तस्यसंपुटस्यकच्छपिकापरस्परंमणिबन्धसंलग्नयोःकरयोर्योगः ४५० एतेषामिति । एतेषांवर्णितासनानांमध्येयदासनमनेनयोगोन्मुखेनसुखेनकर्तुंशक्यंस्यात्त

भूमौदर्भासनेरम्येसर्वदोषविवर्जिते ॥ यमीनियमयुक्तश्चास्थिरचित्तःशिवाश्रयः ४४६ पद्मकंस्वस्तिकंवापिभद्रासनमथापिवा ॥ बध्वायोगासनंसम्यगुत्तराभि मुखःस्थितः ॥ प्राणायामांस्तथाकुर्याद्योगीजितपरिश्रमः ४४७ जानूर्वोरंतरेसम्यक्कृत्वापादतलेउभे ॥ ऋजुकायःसुखासीनःस्वस्तिकंतत्प्रचक्षते ४४८ अंगु ष्ठौचनिबध्नीयाद्धस्ताभ्यांव्युत्क्रमेणतु ॥ ऊर्वोरुपरिपादौद्वौकृत्वापद्मासनंभवेत् ४४९ गुल्फौचवृषणस्याधःसीवन्याःपार्श्वयोःक्षिपेत् ॥ पार्श्वेपादौचपाणिभ्यां बध्वाभद्रासनंभवेत् ४५० एतेषांयदनेनस्यात्कर्तुंशक्यंसुखेनहि ॥ कृत्वातत्तुप्रकुर्वीतप्राणायामंहियोगवित् ४५१ प्राणायामस्तथाप्रत्याहारस्तकोथधारणा ॥ ध्यानंचैवसमाधिश्चषडंगोयोगउच्यते ४५२ यथापर्वतधातूनांदह्यंतेधमतांमलाः ॥ तथेंद्रियकृतादोषादह्यंतेप्राणनिग्रहात् ४५२ सव्याहृतिंसप्रणवांगायत्रींशि रसासह ॥ त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ त्रिविधःसतुविज्ञेयोरेचपूरककुंभकैः ४५४ उत्क्षिप्यवायुमाकाशंशून्यंकृत्वानिरात्मकम् ॥ शून्यभावेन युंजीतरेचकस्येतिलक्षणम् ४५५

त्कृत्वाप्राणायामान्कुर्वीतेत्यर्थः ४५१ अत्रश्रुतौयोगस्यांतरंगतयाविवक्षितानिषट्साधनान्याह प्राणायामइति । स्पष्टम् ४५२ तत्रप्राणायामंसपरिकरंपंचभिर्वर्णयन्नादौफलंदर्शयति यथेति । यथाग्निसंयोगरूपंधमनंलोहादिधातूनांशोधकंतथाप्राणायामोबाह्यांतरेंद्रियाणांशोधकइत्यर्थः ४९३ शोधकप्राणायामस्यमंत्रमाह सव्याहृतिमिति । आदौसप्रणवाभिःसप्तव्याहृतिभिःसहितां प्रणवेनसंयुक्तांगायत्रींत्रिपदांतस्याःशिरश्चोमापइत्यादिकं तथाचप्रणवव्याहृतिशिरोयुक्तगायत्र्यास्त्रिरावृत्तौषडशीत्यधिकशतसंख्यान्यक्षराणिभवंति द्वितीयव्याहृतेःभुवरित्याकारत्वात् यतिभिस्तु तावंतःप्रणवाजप्याइतिनिर्णीतमन्यत्र त्रिविधेप्राणायामेप्रत्येकंत्रिवारंपठेत् सप्राणायामउक्तफलकइत्यर्थः अंत्येसप्रणवंत्रैविध्यंस्फुटयति त्रिविधइति । भेदैरितिशेषः रेचोरेचकः ४५४ रेचकादीनांल क्षणानियथाश्रुतिदर्शयति उत्क्षिप्येतित्रिभिः । वायुंशारीरमुत्क्षिप्यआधारचक्रात्कुण्डलिनीमार्गेणऊर्ध्वंनीत्वाआकाशंशरीरबाह्यंनभोभागमपिशून्यंअस्यैवाविवरणंनिरात्मकमितिनिःस्वरूपमिवकृ त्वाप्राणवायुंबहिर्देशेकारणलीनमिवकृत्वेतियावत् शून्यभावेननीत्वा वक्रेणेति । यथाकमलनालद्वारामुखेनानायासेनजलमाकृष्यतेतथाबाह्यवायोराकर्षणेसतिपूरकोभवतीति ४५५

४५६ गात्राणीति । गात्रकंपाभावेसतियदाएवंविधंभावंप्राणस्यावस्थाविशेषंयुंजीतकुर्वीत एवंकथं नोच्छ्वसेत्प्राणस्यबहिर्गतिंनिरुंध्यात् तथाननिःश्वसेतअंतर्गतिंनिरुंध्यात् प्राणंतप्तोपलनिक्षिप्तजलबिंदुवद्विलीनंकुर्यादितियावत् इत्थंकृतेसतिकुंभकोभवतीत्यर्थः ४५७ प्रत्याहारंलक्षयतिशब्दादीति शब्दस्पर्शादयःपंचविषयास्तदुपलक्षितानींद्रियाणीतियावत् तानितत्प्रेरकंमनश्चातिचंचलंप्रसिद्धम् तत्रसर्वत्रनिर्विशेषात्मनस्त्वानुसंधानबलेनतैरिंद्रियैःसहमनसोयोऽयोगःप्रवृत्त्यनुकूलव्यापारवर्जनरूपःमनोनिरोधेनेंद्रियाणामप्रवृत्तिरितियावत् तद्रूपःप्रत्याहारइत्यर्थः आदित्यादृश्मीनामिवदृश्यानामखंडचिदात्मनासहाभेददर्शनेनकरणोपसंहारात्मकत्वंप्रत्याहारस्ययाज्ञवल्क्येनाप्युक्तम् ‘यद्यत्पश्यतितत्सर्वंपश्येदात्मानमात्मनि । प्रत्याहारःसचप्रोक्तोयोगविद्भिर्महात्मभिः’ इति । तृतीयंतर्कंलक्षयति आगमस्येति । वेदबाह्यमतानुसरणंपरिहृत्यध्येयस्यज्ञेयस्यवातत्त्वस्यविशेषेणवेदतात्पर्यविषयत्वरूपेणयदूहनंचिंतनंतत्तर्कइत्युच्यतेइत्यर्थः ४५८ धारणादित्रयंलक्षयति मनइतित्रिभिः । चौरवदनवेक्षितंसन्मनःसंकल्पलक्षणमनर्थंकरोतीतिविज्ञायतन्मनोऽवेक्षणबलेनसंकल्परहितंयथाभवतितथाआत्मनिमुख्येसत्यादिलक्षणेगौणेबुद्धिप्राणादिरूपेवासंक्षिप्यतदाकारंकृत्वानिश्चलंधारयेदवस्थापयेदेतद्धारणालक्षणमित्यर्थः ४५९ धारणेति । यत्रधारणाकृतातत्रविषयेतुल्यानांसमानाकाराणांबोधानांवृत्तीनांयःसंतत्याधारारूपेणसंभवः कीदृशः नैरंतर्यवशादन्येनविजातीयेनबोधेनाग्रहीतःअस्पृष्टः एतद्रूपंध्यानंभवतीत्यर्थः ४६० ध्यात्रिति । यत्रयस्यामवस्थायांसमभावात्समंब्रह्मतस्यभावःस्वभावआ

वक्रेणोत्पलनालेनतोयमाकर्षयेद्यथा ॥ एवंवायुर्गृहीतव्यःपूरकस्येतिलक्षणम् ४५६ गात्राणिचालयेन्नैवनोच्छ्वसेन्नचनिःश्वसेत् ॥ एवंभावंनियुंजीतकुंभकस्येतिलक्षणम् ४५७ शब्दादिविषयाःपंचमनश्चैवातिचंचलम् ॥ मनसस्तैरयोगोयःप्रत्याहारःसईरितः ॥ आगमस्याविरोधेनव्यूहनंतर्कउच्यते ४५८ मनःसंकल्परहितंसंक्षिप्यात्मनिबुद्धिमान् ॥ धारयेन्निश्चलंतत्रधारणासाप्रकीर्तिता ४५९ धारणाविषयेतुल्यबोधसंततिसंभवः ॥ नैरंतर्यादन्यबोधाग्रहीतोध्यानमीरितम् ४६० ध्यातृध्यानादिकंयत्रसमभावान्नलभ्यते ॥ ससमाधिरितिप्रोक्तःपंडितैरात्मवेदिभिः ४६१ भयंक्रोधमथालस्यमतिस्वप्नातिजागरम् ॥ अत्याहारमनाहारंनित्यंयोगीविवर्जयेत् ४६२ प्राणायामक्रमंचेमंकथयंतिमनीषिणः ॥ नासिकापुटमंगुल्यापिधायैकेनमारुतम् ॥ आकृष्यधारयेद्वायुंमुंचेद्वापिशनैःशनैः ४६३ प्राणायामंप्रणवतःकुर्याद्वाप्यविचक्षणः ॥ एकद्वित्रिचतुःपंचमात्रावृद्ध्याशनैःशनैः ४६४

नंदस्तमादायध्यातृध्यानादिकंद्वैतजातंनलभ्यतेअनाद्रियतइतियावत् तदुक्तंगीतासु ‘यंलब्ध्वाचापरंलाभंमन्यतेनाधिकंततः’ इति अथवायथाशुद्धस्फटिकोजलेक्षिप्तस्तत्साम्यापत्त्यापृथङ्नलभ्यतेतथाचित्तस्यध्येयसाम्यापत्तेर्हेतोर्यत्रध्यात्रादिविभागोनज्ञायतेसावस्थासमाधिरित्युक्तइत्यर्थः ४६१ योगिनोऽपथ्यवद्वर्ज्यान्याह भयमिति । अतिस्वप्नमतिनिद्राम् अतिजागरंअतिशयितंजागरणम् अत्याहारं ‘द्वौभागौपूरयेदन्नैः’ इत्युक्तमर्यादामतिक्रांतंभोजनम् अनाहारमुपवासम् ४६२ प्राणायामेति । तत्रप्रथमप्रवृत्तंयोगिनंप्रतिइमंप्राणायामस्यक्रमंप्रथममनुष्ठेयंप्रकारमुपदिशंति इमंक्रम नासिकापुटंदक्षिणंप्रथममंगुल्याअंगुष्ठेनपिधायएकेनअपरेणवामेननासापुटेनवायुमाकृष्यांतर्धारयित्वादक्षिणपुटेनशनैःशनैर्मुंचेत् एवंवामपुटंपिधायदक्षिणेनाकृष्यवामेनमुंचेदिति एतेननासिकापुटेत्यादिमंत्रस्यपादत्रयंव्याख्यातम् ४६३ अथचतुर्थपादस्योदर्याग्निनातादात्म्येनसहहृद्यंशब्दंप्रणवमेवावर्त्तयेदित्यर्थकस्यार्थमाह प्राणायाममिति । अविचक्षणोयोगसिद्धांतेष्वकुशलोपिप्रणवमंत्रेणषोडशादिवारंजप्तेनप्राणायामंपूरकादिरूपंकुर्यादिति कीदृशम् शनैःशनैर्याएकादिसंख्यावच्छिन्नायामात्रायावृद्धिस्तयोपलक्षितम् मात्रानामपरिमाणम् ‘मात्राकर्णविभूषणे । अक्षरावयवेवृत्तेमानेचाऽल्पेपरिच्छदे’ इतिविश्वकोशात् तच्चमानंतत्रतत्रनानाविधमुक्तंतथाहि क्वचिद्दशावृत्तनिमेषादिरूपम् तदुक्तंमार्कण्डेयपुराणे ‘निमेषोन्मे-

वणेमात्रातालोलघ्वक्षरंतथा । प्राणायामस्यसंख्यार्थस्मृतोद्वादशमात्रिकः ' इति द्वादशमात्रिकोद्वादशंगुणितोनिमेषःतालःकरतलशब्दः लघ्वक्षरोच्चारणंवा एतेपदार्थाःप्राणायामस्यसं
ख्यापरिच्छेदस्तदर्थत्वेनमात्रेत्युक्ताइतितदर्थः । अथवापूरकादिषुयाप्रणवस्यषोडशादिवारावृत्तिःसैवमात्रापदेनोक्ता वसिष्ठसंहितायांपूरकादौषोडशमात्रयाचतुष्षष्टिमात्रयाद्वात्रिंशन्मात्रयेति
प्रयोगात् अथवायोगियाज्ञवल्क्योक्तरूपा 'अंगुलिमोक्षत्रितयंजानोःपरिमार्जनंवापि । तालत्रयमपितज्ज्ञामात्रासंज्ञंप्रशंसंति ' इति अंगुलिमोक्षश्छोटिकेतिप्रसिद्धः जानोःपरिमार्जनं
हस्तस्यतदुपरिपरिवर्त्तनम् । तत्रकुंभकेप्रणवसंख्यारूपमात्रायाअवधिरपिदर्शितः 'प्रातर्मध्यंदिनेसायमर्धरात्रेचकुंभकान् । शनैरशीतिपर्यंतंचतुर्वारंसमभ्यसेत् ' इति । मांडूक्येप्रश्नेच
प्रणवस्यावयवाअकारादयोऽर्द्धमात्रांताश्चत्वारोमात्रात्वेनोक्ताः नादबिंदौतुतासामकारादिलक्षणानांमात्राणांप्रत्येकमुदात्तादिनात्र्यवयवकत्वमभिप्रेत्यतासांद्वादशभेदाउक्ताइतितथापिप्रकृतेग्रंथ
कृताप्रणवस्यपूरकादौषोडशादिसंख्यस्यप्रत्येकोच्चारणेयस्तालत्रयावच्छिन्नःकालःसोत्रमात्रापदेनविवक्षितस्तस्यवृद्धिर्द्वैगुण्यत्रैगुण्यादिरूपा यद्यपिसांप्रदायिकास्त्रिमात्रंप्रणवमुच्चारयंतितथाप्युच्चा
रणविशेषात्तस्यपंचमात्रत्वमपिसंभवतीत्यर्थिकायास्तदुक्तेर्दीपिकायांदृश्यमानत्वादितिबोध्यम् ४६४ एवमभ्यासकौशलेसतिपार्थिवःपंचमात्राणीतिमंत्रोक्तंपंचभूतवशीकारहेतुंयोगंकुर्यादिति
दर्शयति खानिलेतिद्वाभ्यां । अस्मिन्प्रणवमंत्रकेप्राणायामेएकांमात्रामनुसंधायानुष्ठितेसत्याकाशतत्त्वस्याधीशत्वंआधिपत्यंयोगिनोभवति मात्राद्वयानुसंधानेवायुतत्त्वस्य तासांत्रयानु
संधानेतेजस्तत्त्वस्य चतुष्टयानुसंधानेजलतत्त्वस्य पंचकानुसंधानेतुभूमितत्त्वरूपतादित्यर्थः । कीदृशमधीशत्वम् विचक्षणैरभ्यासकुशलैर्लभ्यमितिशेषः तथाचप्राणायामाभ्यासशैथिल्येभूत

खानिलानलवार्भूमीनामधीशत्वमीरितम् ॥ एकमात्रादिकेह्यस्मिन्प्राणायामेविचक्षणैः ४६५ प्रणवैर्व्युत्क्रमादेतामात्राअभ्यासहेतवः ॥ कथितामात्रयाहीने परोभ्यासःप्रकीर्तितः ४६६ प्राणादींश्चिंतयेद्धायंप्राणायामउपस्थिते ॥ एवंप्रकारतोधर्माश्चित्तनैश्चल्यहेतवः ४६७ व्यापाराःकथितास्तेषामेकैकस्यत्र पुष्यथ ॥ अंतःसहस्रनाडीषुषट्त्रिंशदधिकंतथा ४६८

जयोयोगंनकुर्यादितिभावः ४६५ तासुप्रणवमात्रासुसंख्यानियामकोध्येयतत्त्वधर्मारोपोपिकर्त्तव्यइत्याह प्रणवैरिति । व्युत्क्रमोऽभ्यासआहार्यारोपरूपस्तंप्रणवैःसहविधायचिंत्यमानाःएताः
शब्दादिविषयरूपामात्रास्तन्मात्राआकाशादिक्रमेणएकादिसंख्याकाअभ्यासस्यनूतनप्रयत्नस्योपयोगिन्योद्धारविधयाकथिताः एतासांचिंतनस्यफलरूपोऽभ्यासस्तुनिर्विशेषब्रह्मारोपगोचरोयोऽ
र्द्धमात्रात्मकःप्रणवस्तद्रूपएवेत्यर्थः तथाचपृथिवीतत्त्वधारणायांचिंत्यमानत्वात्पार्थिवःप्रणवःपृथिवीनिष्ठगंधादिपंचतन्मात्राभिस्तादात्म्यापन्नोध्येयः । जलधारणायांचतसृभिर्मात्राभिस्तादा
त्म्यापन्नः एवंतैजस्यांतिसृभिर्वायवीयायांद्वाभ्यामाकाशीयायामेकयाशब्दरूपयातथेति एवंविधाभ्यासेनचित्तस्थैर्येसतिब्रह्मरूपार्द्धमात्रात्मकप्रणवचिंतनेपरंयत्नंकुर्यादितिमंत्रार्थः ४६६ व
क्ष्यमाणव्यापारादिविशिष्टानांप्राणापानादीनांध्यानमपिचित्तशुद्धिद्वारायोगोपकारकमित्याह प्राणादीनिति । अथवाप्राणायामेउपस्थितेकर्तव्यतयोपक्रांतेसतिप्राणादीन्ध्यायेत् ननुकःप्राणादि
चिंतनस्योपयोगइत्यतआह एवमिति । एवंप्रकाराःप्राणचिंतनसदृशाधर्माश्चित्तस्याशुद्धिपरिहारद्वारानैश्चल्यप्रयोजकाभवंतीत्यर्थः ४६७ अशीतिःषट्शतंचेत्यादिमंत्रस्यहंसोपनिषदनुसारिण्यायो
जनयासिद्धमर्थंदर्शयति व्यापाराइति । तेषांप्राणादीनांप्रत्येकस्ययेव्यापारास्ते'श्वासोच्छ्वासादिकंकर्मप्राणस्यैतत्प्रकीर्तितम्'इत्यादिनागर्भोपनिषद्व्याख्यानेकथिताइतिपुनर्नवक्तव्याः । अथप्रकृतेतेषां
समस्तानामेकोयोव्यापारःसउच्यतइत्यर्थः देहस्यांतःषट्त्रिंशदधिकसहस्रसंख्याकानाड्योभवंति शतंचैकेत्यादिश्रुत्युक्तानांशतनाडीनांप्रत्येकंदशभेदसंकलनेसहस्रभावस्यशताधिकायाएकस्याइडा
पिंगलासुषुम्नारूपभेदानांप्रत्येकंद्वादशांगुलप्रमाणावच्छेदकत्वेनषट्त्रिंशत्संख्यायास्तावदुपपत्तिरिति तदुक्तं ' षट्त्रिंशदंगुलोहंसःप्रयाणंकुरुतेबहिः ' इति तासुसर्वासुनाडीषुचरतांपंचानांप्राणापान-

व्यानोदानसमानानांहंसमंत्ररूपएकोव्यापारः अस्यमंत्रस्यहकारादिपंचावयवकस्यसंख्यायद्यपिषट्शताधिकैकविंशतिसहस्ररूपाप्रसिद्धातथाप्यौपाधिकभेदेनप्रक्रांतश्रुत्युक्तासंख्याभवति । तथाहि एतन्मंत्ररूपव्यापारशालिनांप्राणादीनांसंबंधिन्यापंचसंख्ययाएकविंशतिसहस्रगुणनेपंचसहस्राधिकंलक्षंभवति तयापंचसंख्ययाषट्शतगुणनेत्रीणिसहस्राणिभवंति संकलनेऽष्टसहस्राधिकंलक्षमिति तथानाडीनांसंख्ययाषट्त्रिंशदधिकसहस्ररूपयातन्निष्ठप्राणादीनांपंचसंख्यायागुणनेपंचसहस्राणिअशीत्यधिकंशतंचभवति सर्वसंकलनेलक्षंत्रयोदशसहस्राणिअशीत्यधिकंशतंचभवतीत्याशयः ४६८ । ४६९ त्रिंशत्पर्वांगुलइतिमंत्रस्यापित्रिंशदंगुलिमितःप्राणस्यदेशोदेहस्यांतरस्तियत्रस्थितःप्राणोहंसमंत्रारंभरूपांप्रतिष्ठांगतोभवति एतन्मंत्रारंभेणपरमात्मसूचनरूपोत्कर्षादेवसएषबाह्योऽनात्मभूतोपिप्राणःप्राणपदेनोक्तः अस्यगोचरआश्रयस्तुसपरमात्मैवप्राणस्यप्राणमितिश्रुतेरितियोजनयासिद्धमर्थमाह त्रिंशदंगुलेतिद्वाभ्यां । गुदमारभ्यगलपर्यंतमांतरंछिद्रंग्रीवायामुन्नतायांकृतायांत्रिंशदंगुलरूपमानावच्छिन्नंप्रसिद्धम् तत्रसर्वेषांप्राणादिभेदभिन्नानामांतरवायूनांयाएकताएककार्यारंभकतातस्याःकारणंप्रयोजकमित्यर्थः ४७० हंसेति । ततउक्तसुषिरस्यप्राणानामेकव्यापारप्रयोजकत्वाद्धंसमंत्रःसर्वेषांवायूनांव्यापारभूतःतत्रव्यापारेप्रधानत्वात्मकप्रकर्षान्नासादिसंचारीवायुःप्राणइत्युक्तःइतरेऽपानादयस्तुउपसर्जनत्वान्नप्राणपदेनाभिधानार्हाइत्यर्थः ४७१ प्राणादीनांस्थानानिरूपाणिचयथाश्रुतिदर्शयति प्राणइतिचतुर्भिः । पंचानांप्राणानांमध्येप्रथमस्यप्राणस्यहृदयंस्थानम् एवमग्रेपि ४७२ प्राणादीनांरूपाणिदर्शयन्नुत्तरोत्तरस्यपूर्वपूर्वाधीनत्वमाह रक्तेतिद्वाभ्यां । प्राणस्यरूपंरक्तमणिसमंध्येयम् तस्यप्राणस्यमध्येस्थितस्तदधीनइतियावत् तथाभूतोऽपानइंद्रगोपसमवर्णोध्येयस्तस्यापानस्यपूर्ववन्मध्येस्थितःसमानःक्षीरादिवत्स्निग्धश्वेतवर्णोध्येयः उदानस्तुईषत्पांडुरोध्येयोव्यानोवह्निशिखासमोध्येयइतिद्वयोरर्थः ४७३ । ४७४ तत्रतत्रप्राणनयनोपायप्रतिपादकस्यपद्येनासावित्यस्यार्थमाह मनइति । ज्ञानशक्तिक्रियाशक्त्योःसहचारित्वंसहहिएतेसमुत्क्रामतः सहतिष्ठतइतिकौषीतकिश्रुतौप्रसिद्धम् एवंसतिमनोविज्ञानशक्तिरूपंयत्रस्थानेमूलाधारादौतिष्ठतितत्रैवप्राणस्तिष्ठत्यतइमंप्राणस्यमनःसाहचर्यरूपंस्वभावंविज्ञाययोगीतमेवमार्गंध्यायेद्येनदेहान्निर्गम्यब्रह्मलोकंगच्छेदित्यर्थः ४७५ तमेवमार्गंप्रदर्शयतोहृद्द्वारमित्यादेर्मंत्रस्यार्थमाह पायोरितित्रिभिः । पायोर्मूलाधारादुपरिनाभिचक्रंभवतितस्याप्युपरिहृदयकमलंप्रसिद्धंतच्चहृदयांबुजंद्वारत्वेनउद्दिष्टमुक्तंश्रुतौ यतःसुषुम्नारूपेणमार्गेणसंबद्धम् ननुसुषुम्नाकस्यमार्गइत्याकांक्षायामाह वायोरिति । सुषुम्नारूपोमार्गोवायोःप्राणस्यसंबंधीभवतितथामहात्मनोयोगिनोमोक्षार्थंप्रस्थितस्यमनसोपिसंबंधीभवति कीदृशःससुषुम्नात्मकोमार्गः योदशमद्वारंप्रतिगच्छन्प्रसिद्धः कीदृशंदशमद्वारम् विवराभिदंविवरेणचसूर्यमंडलगतेनमूर्द्धस्थितचन्द्रमण्डलगतेनवहिःस्थच्छिद्रेणाभिदाअभेदोयस्यतत्तथा दशमद्वारेणोत्क्रान्तोहिरविमंडलंभित्वाब्रह्मलोकंगच्छतीतिप्रसिद्धेरितिद्वयोरर्थः एतेनहृद्द्वारंमनसोद्वारभूतंवायोर्द्वारभूतंचसुषुम्नारूपमूर्द्धद्वारमस्तियतोमोक्षद्वारभूतंबिलंदशमद्वारंचन्द्रमंडलरूपंसूर्यमंडलच्छिद्रंचलभ्यतेइतिश्रुतियोजनासूचिता ४७६ । ४७७

हकारश्चमकारश्चअकारःसविसर्गकौ ॥ पंचानांहंसमंत्रेस्मिन्लक्षंसाष्टसहस्रकम् ४६९ त्रिंशदंगुलमानेनगुदादागलमांतरम् ॥ सुषिरंसर्ववायूनामेकतांप्रतिकारणम् ४७० हंसमंत्रस्ततःसर्ववायुव्यापारईरितः ॥ प्राणस्तत्रप्रधानंस्यादन्येस्युरुपसर्जनम् ४७१ प्राणआद्योहृदिस्थानेह्यपानस्तुपुनर्गुदे ॥ समानोनाभिदेशेस्यादुदानःकंठमाश्रितः ॥ व्यानःसर्वशरीरेषुह्येवंसर्वेव्यवस्थिताः ४७२ रक्तवर्णमणिप्रख्यःप्राणोवायुःप्रकीर्तितः ॥ अपानस्तस्यमध्येस्यादिंद्रगोपसमप्रभः ४७३ समानस्तस्यमध्येस्याद्गोक्षीरस्फटिकप्रभः ॥ आपांडुरउदानश्चव्यानोह्यर्चिःसमप्रभः ४७४ मनोयत्रस्थितंपुंसःप्राणस्तत्रप्रधावति ॥ अतस्तंचिंतयेन्नित्यंयोमार्गोदेहनिर्गमे ४७५ पायोरुपरिनाभिःस्यान्नाभेरपिहृदंबुजम् ॥ हृदयंद्वारमुद्दिष्टंसुषुम्नामार्गमागतम् ४७६ वायोर्मार्गःसविज्ञेयोमोक्षस्यापिमहात्मनः ॥ योगतोदशमद्वारंसुषुम्नाविवराभिदम् ४७७

अनेनमार्गेणगच्छन्नविरक्तोपिब्रह्मलोकेगत्वाविरज्यमुच्यतेसविरागश्चेदत्रोत्क्रमणकालेएवमुच्यतेइत्याह अध्वनानेनेति । पूर्वंयत्प्राणादीनांसव्यापाराणांचिंतनमुक्तंतस्यापीदमेवफलंयत्सुषुम्नात्म
केमार्गेप्रवेशइतितृतीयदलार्थः ४७८ द्वितीयमंत्रार्थमवतारयति प्राणायाममिति । प्रणवेनप्राणायामकरणेमात्राणामकारोकारमकारार्धमात्रात्मकानांतथापादानांक्रमेणतद्वाच्यानांवैश्वानर
हिरण्यगर्भेश्वरतुरीयात्मकानामादिपदग्राह्यस्यदेवलोकादितादात्म्यस्यचचिंतनंकुर्यात् अथवाएवंवक्ष्यमाणप्रकारेणद्वितीयमंत्रप्रदर्शितेनप्रणवचिंतनंकुर्यादित्यर्थः ४७९ एत्रंपदोक्तमभिनयति
ओंकारइतिद्वाभ्यां । प्रणवोरथत्वेनध्येयः अभीष्टलोकगतिसाधनत्वात् विष्णुसंज्ञःपरमात्मांतर्यामित्वेनप्रेरकत्वात्सारथित्वेनध्येयः ब्रह्मलोकःकार्यब्रह्मरूपःशुद्धब्रह्मरूपोवागंतव्यत्वेनध्येयइत्यर्थः
४८० तत्रचभगवतोरुद्रस्यध्यानंसुतरांविघ्नतूलप्रभंजनभूतमित्याह रुद्रमिति । तच्चरुद्रध्यानमभेदेनकार्यमितितृतीयपादेनोक्तम् ४८१ एतावतापश्चाद्ध्यायोदितिमंत्रस्यप्रथमपादोव्याख्यातस्तत्र
पूर्वोक्तपादेनरथादिभावस्यविवक्षितत्वात् अथद्वितीयपादेमंत्रपदेनप्रणवउच्यतेक्रमपदेनमंत्रोच्चारणप्रणवगोचरवन्ह्यभेदानुसंधानयोरानुपूर्वीकथितेत्यभिसंधायोत्तरार्धेस्थूलादिस्थूलसंज्ञायांमात्रा
यांप्राणाकर्षणमर्यादायामभ्यस्यमानायांनाभेरूर्ध्वमेववायोराकर्षणस्योपक्रमःप्रारंभःकर्त्तव्यइत्यर्थंदर्शयन्प्रतियोगिनिरूपणपूर्वकंस्थूलातिस्थूलमात्रामभिनयति प्राणायामेष्वितिद्वाभ्यां । प्राणा

अध्वनानेनयोगच्छेदविरक्तोपिमानवः ॥ ब्रह्मलोकेविरक्तःसन्मुक्तोभवतिवात्रवा ॥ प्राणादिचिंतनादत्रमार्गमेतंततोव्रजेत् ४७८ प्राणायामंप्रणवतःकुर्वन्प्रणव
चिंतनम् ॥ मात्रापादादिभेदेनकुर्यात्तैवमथापिवा ४७९ ओंकारोत्ररथःस्वस्यपरमात्माथसारथिः ॥ विष्णुस्तेनसगंतव्योब्रह्मलोकःपरोथवा ४८० रुद्रंसांचिं
तयंस्तद्वत्पार्वतीशंसनातनम् ॥ अहमस्मीतिचध्यानाद्विघ्नैर्नैवाभिभूयते ४८१ प्राणायामेषुवायोःस्यात्सूक्ष्ममाकर्षणंत्विदम् ॥ पदांगुष्ठाग्रतःस्थूलमुक्तमत्र
गुदाग्रतः ८२ अनेनविधिनासम्यङ्नित्यमभ्यस्यतःक्रमात् ॥ स्वयमुत्पद्यतेज्ञानंदूरेविषयसंभवम् ८३ मासैस्त्रिभिस्तथादेवांश्चतुर्भिरवलोकयेत् ॥ पंचभिःसर्वमे
वैतत्सुखंदेवादिसंभवम् ८४ हेयत्वेनविजानातिषष्ठेयोगप्रसादतः ॥ संन्यस्यसर्वकर्माणिविशुद्धहृदयःपुमान् ८५ गुरुवाक्यात्सकृत्श्रुत्वाह्यानंदात्मानमीश्वरम् ॥
साक्षात्करोतिमनुजःसंशयादिविवर्जितः ॥ साक्षात्कृतेथतस्मिन्सजीवन्कैवल्यमाप्नुयात् ४८६ जीवन्मुक्तोत्ररूपाणिपश्यन्नपिनपश्यति ॥ शृण्वन्नपितथाशब्दा
न्नशृणोतिकदाचन ॥ शुष्ककाष्ठेस्वदेहेवानभेदमधिगच्छति ४८७ अत्रोपायेषुसर्वेषुज्ञातव्यमिदमेवहि ॥ उपेयाधिगतौप्रोक्ताउपायाःपंडितैःसदा ४८८

यामकालेपादांगुष्ठाग्रमारभ्यवायोराकर्षणंसूक्ष्मंदुष्करत्वात् गुदाग्रान्मूलाधारादारभ्यतदाकर्षणंस्थूलंतदपेक्षयासुकरत्वात् नाभिचक्रमारभ्यतदाकर्षणंस्थूलातिस्थूलंभवतिसर्वैःसुकरत्वात् तदनुष्ठा
नंपांबहुशोदर्शनाभ्यतिद्वयोरर्थः ४८२ अथानेनेत्यादिमंत्रद्वयप्रदर्शितंसिद्धिक्रमंदर्शयति अनेनविधिनेतिचतुर्भिः । उक्तविधिनायोगाभ्यासंकुर्वतोयोगिनोमासत्रयेपूर्णेदूरस्थानामपिदिव्य
विषयाणांज्ञानंजायते । चतुर्भिर्मासैस्तुदेवानांदर्शनक्षमोभवति पंचभिर्मासैःसर्वेषुविषयजन्यसुखेषुहेयत्वेनविज्ञानरूपंवैराग्यंभवति षष्ठेमासेतुयोगप्रभावाच्छुद्धहृदयःसन्सर्वकर्माभिमानंपरि
त्यज्यगुरोःसकृच्छ्रुताद्वेदांतवाक्यादात्मसाक्षात्कारंलभतेततोजीवन्मुक्तोभवतीतिचतुर्णामर्थः ४८३ । ४८४ । ४८५ । ४८६ अंधवदित्यादिमंत्रोक्तानिजीवन्मुक्तलक्षणान्याह जीवन्मु
क्तइति । जीवन्मुक्तःसर्वत्राधिष्ठानात्मतत्त्वंपश्यन्सन्निंद्रियैरुपस्थापितमपिविषयजातंनपश्यतियतोदेहोपितेनशुष्ककाष्ठवदुपेक्ष्यतेइत्यर्थः ४८७ एवंफलसिद्धौनानाशास्त्रप्रतिपादितंसाधनजा
तंपरित्यजेदित्याकारंप्रथममंत्रार्थमाह अत्रेतिद्वाभ्यां । अत्रफलप्राप्तौसत्यांसर्वेषूपायेष्विदंवक्ष्यमाणविधंहेयत्वंज्ञातव्यम् तांविधामभिनयति उपेयेति । उपेयस्यफलस्याधिगतिःप्राप्तिस्तद
र्थमेवोपायाविधीयंते उपेयलाभेतुउपायानांपरित्यागएवयुक्तः यथानदींतीर्णानावंपरित्यजंतएवदृष्टाइतिद्वयोरर्थः ४८८

४८९. अमृतनादोपनिपदर्थमुपसंहरन्हंसोपनिषदर्थप्रदर्शनंप्रतिजानीते एतत्त्विति ४९० तत्रवक्ष्यमाणोपयोगायमूलाधारादिचक्राणांस्वरूपाण्यागमप्रसिद्धानिदर्शयति गुदादारभ्येतिनवभिः । नेत्रपदेनभ्रूमध्यंलक्ष्यते गुदोपांतदेशादारभ्यभ्रूमध्यंयावत्षट्चक्राणिदेहेप्रोक्तानितेषुप्रथममाधारचक्रंबोध्यंयत्पूर्वंदेहमध्यत्वेनोक्तं कीदृशं दलचतुष्टयवत्अलक्ताभंलाक्षारससमवर्णं पुनःकीदृशं वकारेणआदिपदग्राह्यैःशषसैश्चप्रदक्षिणक्रमेणदलचतुष्टयेवर्तमानैर्विराजितं कुंडलिनीरूपायाभुजंग्याःपुच्छेनसंबद्धंचेतिद्वयोरर्थः । अत्रमृपकवाहनदेवतासंबद्धत्वंवर्णानांसावदुक्त्वंचबोध्यमेव मग्रेपि ४९१ ४९२ तदुपरिलिंगमूलेप्राजापत्यधिष्ठितस्यस्वाधिष्ठानाख्यचक्रस्यस्वरूपमाह स्वाधिष्ठानमिति । यवर्गस्याद्यास्त्रयःपवर्गस्यांत्याश्चत्रयःप्रादक्षिण्येनास्यषट्सुदलेषुस्थिताः स्फुटमन्यत् ४९३ तदुपरिनाभौमणिपूरकाख्यंचक्रमिंद्रनीलमणिवर्णमतितेजस्विविष्णुदैवतंडकारमारभ्यफकारान्तैर्दशभिर्वर्णैर्विराजितदशदलंभवतीत्याह मणिपूरकेतिद्वाभ्यां । द्वितीयस्यचतुर्थःपादोग्रिमान्वयी ४९४. ४९५ तस्योपरिहृदयेऽनाहताख्यंश्वेतवर्णंचक्रंद्वादशदलंरुद्रदैवतंककारादिठकारांतैर्द्वादशवर्णैःप्रादक्षिण्येनविराजितदलंचबोध्यमित्याह चक्रमिति ४९६ तदुपरि

उपेयप्राप्तितोजह्यादुपायंक्लेशकारणम् ॥ नावंयथापरेपारेगत्वापांथःपरित्यजेत् ४८९ एतत्त्वमृतनादोक्तंकथितंयोगसाधनम् ॥ हंसोक्तमिदमद्यत्वंशृणुसम्यङ्मयेरितम् ४९० गुदादारभ्यनेत्रांतंचक्रषट्कंवपुःस्थितम् ॥ आधारचक्रंदेहस्यमध्येयत्पूर्वमीरितम् ४९१ चतुर्दलमलक्ताभंवादिवर्णचतुष्टयात् ॥ विराजितंकुण्डलिनीभुजंगीपुच्छसंश्रयम् ४९२ स्वाधिष्ठानंतुतस्यस्यादुपरिष्टादवस्थितम् ॥ षड्दलंपीतवर्णंचतेजसांराशिमूर्जितम् ॥ यरलाबभमास्तत्रषड्वर्णादलसंस्थिताः ४९३ मणिपूरकसंज्ञंस्याच्चक्रंतस्योपरिस्थितम् ॥ इंद्रनीलसमंसूर्यचंद्रतेजोविराजितम् ४९४ डढणैस्तथदैस्तद्वद्धनपैःफेनचान्वितम् ॥ वर्णैर्दशदलंतस्यस्यादुपर्यपरंपुनः ४९५ चक्रंयद्द्वादशदलमनाहतमितीरितम् ॥ वर्णैःकाद्यैश्चठांतैस्तैर्युक्तंद्वादशभिस्तथा ॥ गोक्षीरसदृशंसम्यङ्मनोनयननंदनं ४९६ विशुद्धंषोडशदलंकंठदेशेव्यवस्थितम् ॥ स्वरैःषोडशभिर्युक्तंचित्रवर्णमुदीरितम् ४९७ नेत्रयुग्मेतुविज्ञेयमारक्तंद्विदलंसदा ॥ हक्षवर्णद्वयस्थानंसूर्यसोमद्वयात्मकम् ४९८ चंद्रगर्भंशिरस्यस्तिसहस्रदलमत्रयत् ॥ पद्मंतस्यहिसंप्रोक्ताशिरोद्वारंतुकर्णिका ॥ चक्रेषुषट्सुसुहितंहंसोजीवइतीरितम् ४९९ वायुनासहितस्तिष्ठन्हृदयाब्जेपिसर्वदा ॥ जीवोहंसइतिश्वाससहस्राण्येकविंशतिम् ५०० मुंचत्यहर्निशंसर्वःसर्वदाषट्शताधिकम् ॥ यतस्ततोत्रहंसोयंकथ्यतेवेदवादिभिः ५०१

कंठदेशेविशुद्धाख्यंजीवस्थानंचित्रवर्णंषोडशदलंचक्रंभवतियस्यदलेषुक्रमेणषोडशस्वराअकाराद्याअःकारांताःप्रतिष्ठिताइत्याह विशुद्धमिति ४९७ भ्रूमध्येआज्ञासंज्ञंद्विदलमीषद्रक्तंपरमात्मस्थानभूतंचक्रंभवतियस्यदलयोःसूर्यचंद्राभयोर्हकारक्षकारौस्थिताविल्याह नेत्रेति ४९८ सहस्रदलंवर्णयति चंद्रेति । अत्रदेहेशिरसियत्सहस्रदलंपद्ममस्ति कीदृशं चंद्रगर्भंचंद्रोऽमृतस्रावीगर्भेयस्यतत्तथा तस्यकर्णिकादशमद्वारंसंबद्धाबोध्या तथातस्यसुहितं भावप्रधानोनिर्देशः तदीयेनामृतेनकृतातृप्तिरितियावत् सापट्सुचक्रेषुबोध्या जीवस्तुतस्यपद्मस्यहंसत्वेनबोध्यःतन्मकरंदतृप्तत्वादिसाधर्म्यात् इतिईरितंप्रोक्तमागमेष्वित्यर्थः ४९९ अथार्थक्रमेणप्रकृतोपनिषदर्थंसप्तविंशतिश्लोकैर्दर्शयंस्तत्रहंसइत्याकारस्यपुनःपुनःक्रियमाणस्यरुतस्यापिजीवस्यहंसत्वेलिंगत्वंपक्षिनाम्नांप्रायशोरुतानुसारितायाःप्रसिद्धेरितिसूचयन्नाह वायुनेतिद्वाभ्यां । यतोजीवःसर्वजातीयोहृदयाब्जेअपिशब्दाधारचक्रादिषुवायुनाप्राणेनसहितस्तिष्ठन्सन्हकारेणबहिर्यातिसकारेणाविशेत्पुनरित्युक्तविधयाहंसइतिमंत्रघटितान्षट्शताधिकैकविंशतिसहस्रसंख्यान्श्वासान्मुंचतिसृजतिततोऽयंहंसइत्युक्तइतिद्वयोःसंबंधः ५०० ५०१

तस्यध्यानमवतारयति हंसइत्यस्येति । हंसइतिनाम्नोऽन्वर्थत्वायपक्षिरूपमेनंवैदिका:प्रवदंतीत्यर्थः २ श्रोतंतद्रूपमभिनयति अग्नीषोमाविति त्रिभिः । हंसत्वेनकल्पितस्यत्वंपदार्थभूतस्यात्मनोऽग्नीषोमौभोक्तृभोग्यलक्षणौपक्षत्वेनध्येयौ प्रणवस्तुशिरस्त्वेन तथाविंदुर्मूलशक्तेःक्रियाशक्तिप्रधानपरिणामविशेषः तदुक्तमागमे ‘ सातत्त्वभूताचिन्मात्रज्योतिषःसन्निधेस्तथा । विचिकीर्षुर्घनीभूताक्वचिदभ्येतिबिंदुताम्’इति तद्रूपमुरोहृदयंहंसस्यध्येयमित्यर्थः ५०३ त्रिनेत्रस्येवेति । यथात्रिनेत्रस्यशंभोर्वदनंसूर्याग्निसोमात्मकनेत्रत्रयशालितथास्यापीत्यर्थः अस्यएकश्चरणोरुद्रमयोऽपरोरुद्राणीमयोध्येयइत्यर्थः ५०४ अस्यपरमहंसपदेनोक्तांतत्पदार्थरूपतामाह एषइति । एषयस्त्वंपदार्थरूपउक्तःसोसौपरोक्षप्रभावोहंसःपरमोब्रह्मरूपोभवतिवृत्त्यारूढाद्वितीयरूपेणसविलासाज्ञानंहंतीतिहंसइतिव्युत्पत्तेः कीदृशः निरुपाधिकदृष्ट्यानिर्गुणःसोपाधिकदृष्ट्यातुसगुणः तत्रसगुणमस्यरूपंवामभागेऽग्न्यात्मकंदक्षिणभागेसोमात्मकमित्यर्थः पुनःकीदृशः असंख्यातरवितुल्यतेजाः एतंदेहंनखाग्रपर्यंतमभिव्याप्यस्थितइत्यर्थः ५०५ अस्मिन्निति । तस्यहंसस्यात्रदेहेसर्वत्रव्याप्तस्यापिमनोविशिष्टस्यविशेषतोवृत्तिःकार्यविशेषारंभप्रयोजकःसंबंधोहृत्कमलदलरूपस्थानभेदादष्टधाभवतियस्याःप्रोक्तवृत्तेःप्रभावात्स्वप्नजागरणयोःपुण्यबुद्ध्यादीनांकार्याणामुत्पत्तिर्भवतीत्यर्थः ५०६ एतदेवयथाश्रुतिस्फुटयति हार्दमित्यादिना । हृत्पद्मस्याष्टदिगवच्छिन्नान्यष्टौपत्राणि तेषुपूर्वदलेस्थि

हंसइत्यस्यनाम्नःस्याद्वैयर्थ्यंनयथातथा ॥ कल्पयंत्यस्यतद्रूपंवेदवादरताद्विजाः ५०२ अग्नीषोमौहिकथितौपक्षौहंसस्यपंडितैः ॥ ओंकारःशिरउद्दिष्टमुरोबिंदुश्चकीर्तितम् ५०३ त्रिनेत्रस्येववदनंत्रिनेत्रात्मकमेवतत् ॥ चरणौकथितौरुद्रोरुद्राणीचमहात्मभिः ५०४ एषोसौपरमोहंसोनिर्गुणःसगुणोपिच ॥ वामदक्षिणतोयोयमग्नीषोमात्मकःस्मृतः ॥ भानुकोटिप्रतीकाशोदेहंव्याप्यव्यवस्थितः ५०५ अस्मिन्देहेभवेत्तस्यवृत्तिरष्टविधासदा ॥ स्वप्नेजागरणेयस्याःपुण्यबुद्ध्यादिसंभवः ५०६ हार्दपद्मंयदेतत्स्यादष्टदिग्दलशोभितम् ॥ तस्यपूर्वेदलेस्थित्वापुण्यबुद्धिःप्रजायते ५०७ आग्नेयेचतथैवस्युर्निद्रालस्यादयोगुणाः ॥ याम्येक्रौर्यमतिस्तद्वत्पापेनैर्ऋतदिग्गते ५०८ क्रीडारतिर्वारुणेस्याद्वायव्येगमनेरतिः ॥ रतौप्रीतिर्भवेत्सौम्येदानेत्वीशानकोणगे ५०९ कर्णिकोपांतगोहंसोहंसोवैराग्यमिच्छति ॥ केसराणियदागच्छेत्तदाजागरणंस्मृतम् ५१० कर्णिकायांस्थितोहंसःस्वप्नमेतिनसंशयः ॥ कर्णिकायांहिरक्तस्यपिंडोयोलोहितोस्तिहि ॥ तत्रास्थितस्यसुप्तिःस्याद्धंसस्यपरमात्मनः ५११ अहंब्रह्मेतिविज्ञानाद्धार्दपद्मंयदात्यजेत् ॥ चतुर्थीसातदावस्थापूर्वापेक्षाप्रजायते ५१२

तिःपुण्यमोचरबुद्धिप्रयोजिका आग्नेयकोणगतदलेस्थितिर्निद्रादिप्रयोजिका याम्यदक्षिणेदलेक्रौर्यंशालिमतेनैर्ऋतेतुपापगोचरमतेरितिद्वयोरर्थः ५०७ । ५०८ क्रीडेति । क्रीडायांविहारेरतिःप्रीतिः [illegible] ५०९ कर्णिकोपांतेति । कर्णिकायाउपांतेपुरस्तादन्तरा [illegible] हंसोहंसोभवति [illegible] [illegible] कर्णिकायाः परितोवर्तमानकेसरेषुस्थितस्यजागरावस्थाभवतीत्यर्थः ५१० कर्णिकायांमिति । [illegible] यस्तुहृत्पद्मकर्णिकामध्यगतोलोहितोरक्तवर्णो [illegible] [illegible] ५११ यदातुहृत्पद्मस्याविद्वपरिच्छेदंमहामिदं [illegible] परित्यागं [illegible] [illegible] अहंब्रह्मेति ५१२

तुरीयातीताख्यां पंचमीमवस्थां स्फुटयंश्चतुर्थ्यास्ततो विशेषमाह चतुर्थ्यांहीति । याचतुर्थीअवस्थाप्रोक्तातस्यांहिनिश्चयेनवेद्यंभवेत्वेत्तुःपृथगुपलभ्येत यतःससमाधितःसविज्ञानस्त्रिपुटीभेदज्ञानवां स्तथानिर्विज्ञानोविलीनत्रिपुटीभेदश्चभवति तत्रहेतुःसमाधेःसंप्रज्ञातासंप्रज्ञातभेदेनद्वैविध्यमिति । तत्रसंप्रज्ञातसमाधिनाब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिंविनासंप्रज्ञातसमाधिःस्याद्ध्यानाभ्यास प्रकर्षतइत्युक्तलक्षणेनयदासविज्ञानोविद्यमानब्रह्माकारवृत्तिकोभवेत्तदातुरीयावस्थउच्यतेयोगीत्यर्थः ९१३ यदातुसावृत्तिरपिलीयते उक्तवृत्तेरपिविलयेनासंप्रज्ञाताख्यःसमाधिर्भवतितदानिर्विज्ञा नो योगीतुरीयातीतउच्यतइत्याह विलीयतइतिद्वाभ्यां । यदात्रिपुटीरूपोभेदोब्रह्मणिविलीयतेतदाविद्वांस्तुरीयातीतउच्यतइत्यन्वयः कीदृशेब्रह्मणि नादाभिधेनादोभिधायस्यतत्तथातस्मिन् प्रणवस्यहिअकारोकारमकारबिंदुनादाःपंचावयवास्तेष्वाद्यास्त्रयोविश्वतैजसप्राज्ञानांवाचकाअंत्यावर्धमात्रात्मकौब्रह्मणोवाचकौतत्रापिबिंदुःसविशेषब्रह्मणोवाचकोनादस्तुनिर्विशेषस्येतिभावः । तुरीयातीतभावस्यदौर्लभ्यमाह यइति । यस्तुरीयातीताख्योभावःसविरक्तानांकस्यापिप्रादुर्भवतीति तदुक्तंगीतासु 'यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतः' इति ९१४ । ९१५ एवंवस्तुवृत्तमभि धायाथतुरीयातीतभावप्राप्त्युपायभूतंयोगमभिनयति एवमिति । एवमुक्तविधयाऽस्मिन्शरीरेसहचक्रैर्हंसस्वरूपेव्यवस्थितेविज्ञातेसतियोगीहंसंध्यातुरात्मनःस्वरूपंचिंतयेत् नादंवाचकेननादेनाभिन्नं

चतुर्थ्यांहिभवेद्वेद्यमवस्थायांसमाधितः ॥ द्वैविध्यात्ससविज्ञानोनिर्विज्ञानश्चजायते ॥ सविज्ञानस्तुरीयाख्योनिर्विज्ञानःपुमान्स्वयम् ९१३ विलीयतेयदास बोध्याद्ध्यानादिलक्षणः ॥ भेदोनादाभिधेनित्येपरब्रह्मणिनिर्द्वये ९१४ निर्विज्ञानस्तदासोयंतुरीयातीतलक्षणः ॥ उच्यतेयोविरक्तानांमध्येकस्यापिसंभवेत् ९१५ एवंव्यवस्थितेहंसेसचक्रेस्मिन्वपुष्यथ ॥ कल्पयेद्व्यापकंहंसंध्येयंनादंतथैवच ॥ आधाराद्ब्रह्मरंध्रांतंस्थितंश्वेततमंसदा ९१६ अस्मिन्मनोविनिक्षिप्यवा युंयोगीप्रचालयेत् ॥ संकोच्यचगुदद्वारंशिश्नद्वारसमन्वितम् ॥ पदद्वंद्वेनमेधावीसर्वतोविजितश्रमः ९१७ आधारचक्रतोवायुंधीमानुत्थापयेच्छनैः ॥ उत्थाप्य चततःपश्चात्स्वाधिष्ठानंसमानयेत् ॥ स्वाधिष्ठानस्यकुर्यात्त्रिःपुमानत्रप्रदक्षिणम् ॥ मणिपूरकमागच्छेत्ततश्चक्रंततोपिच ॥ अनाहतंविनिर्भिद्यविशुद्धंशनकै र्व्रजेत् ॥ विशुद्धादाव्रजेदाज्ञामाज्ञातोब्रह्मरंध्रकम् ९१९ एवंप्रकुर्वतोनित्यंचिंतनाद्धंसनादयोः ॥ ऋष्यादिसहितस्यास्यहंसमंत्रस्यसंजपात् ९२० कोटिमात्रात्त तोनादाभ्यासस्यप्रत्ययाइमे ॥ नादादशविधाअंतर्जायंतेवपुषःक्रमात् ९२१

परमहंसंतुध्येयंकल्पयेत् तस्यनादस्यस्वरूपंचाधारचक्रमारभ्यब्रह्मरंध्रपर्यंतंव्याप्तमतिश्वेतवर्णंचचिंतयेदित्यर्थः १६ अस्मिन्निति । अस्मिन्नादेमनोविनिक्षिप्यतत्परंकृत्वायोगीसर्वतःपादांगुष्ठाग्रमारभ्य वायुंप्रचालयेदाधारचक्रेसमानयेदितियावत् किंकृत्वा पायूपस्थरूपंद्वारद्वयंपदद्वंद्वसंबंधिपार्ष्णिद्वयनिपीडनेनसंकोच्यविजितश्रमोजिताभ्यासइत्यर्थः १७ आधारादुत्थापितस्यवायोर्ब्रह्मरंध्रपर्यंतंनय नस्यविधांवर्णितचक्रमार्गेणदर्शयति आधारेतिद्वाभ्यां । अत्रवायोरूर्ध्वंनयने वायोस्त्रिवारंस्वाधिष्ठानस्यचक्रस्यपरितःप्रदक्षिणंभ्रामणंकुर्यादितितृतीयदलार्थः ९१८ मणिपूरकमिति । ततःस्वाधि ष्ठानान्मणिपूरकंप्राप्यततोमणिपूरकादनाहतविशुद्धाज्ञाख्यचक्रत्रयद्वाराब्रह्मरंध्रंगच्छेदित्यर्थः ९१९ एवमिति । उक्तविधयावायुचालनंकुर्वतोयोगिनोऽतर्वपुषिइमेवक्ष्यमाणरूपानादाःप्रजायंते कुतः हंसनादयोर्ध्येयकत्वध्येयत्वाभ्यांचिंतनात्तथाहंसमंत्रस्यकोटिसंख्याकजपात् कीदृशस्यहंसमंत्रस्य हंसऋषिरव्यक्तगायत्रीछंदःपरमात्मादेवतापरमात्मप्राप्तौविनियोगइत्युक्तैर्ऋष्यादिभिर्युक्तस्य कीदृशास्तेनादाः नादाभ्यासस्यनादगोचराभ्यासस्यप्रत्ययाःफलसिद्धौविश्वासप्रयोजकाइतिद्वयोरर्थः ९२० । ९२१

तत्रधारणासंख्यांसूचयन्मात्रासंख्यामाह द्वेइति । गुल्फयोर्वामदक्षिणयोर्वायोः स्थापनकर्मणिद्वेमात्रेउक्तरूपेप्रकुर्वीतजपेत् जंघयोःप्रत्येकंतिस्रस्तिस्रोमात्राजप्तव्यास्तत्रादिमध्यांतभागेषुधारणात्रयस्यकर्तव्यत्वात् जानुनोस्तथातदूर्ध्वंऊर्वोरितियावत्तेद्वेकुर्वीत गुदलिंगयोस्तुप्रत्येकंतिस्रस्तिस्रस्ताइत्यर्थः ५३२ वायोरिति । तत्रगुदलिंगयोर्मध्येवायोरायतनभूतोविशिष्टस्थलभूतःकंदोस्ति कीदृशः नाभिदेशेऊर्ध्वभागेनसंबद्धःतथासर्वेषांपृष्ठवंशस्यपृष्ठगतदीर्घास्थ्नःसुषुम्नायादशमद्वारगमनैमार्गभूतस्यसमीपस्थः तंकंदंयोगीप्राणरूपेणसमागच्छेत् कीदृशः मात्राजयेनवशीकृतानिलःअथ तत्रकंदेवर्णितनामिकाभिर्दशनाडीभिर्वेष्टितासुषुम्नाऽन्वेष्येत्याह तत्रेति ५३३ । ५३४ अत्रेति । अत्रकंदेरक्तादिवर्णाःसूक्ष्माःलब्ध्यश्चान्याबह्वचोनाड्यःसंतिताःसर्वाःपरित्याज्याएकासुषुम्नाशुक्लवर्णा समाश्रयणीयेत्यर्थः ५३५ एतद्दृष्टान्तेनस्फुटयति ऊर्णेति । यथाऊर्णनाभिःस्वात्मनःभिंधंतंतौसंचरन्भवतिइतरानप्रिमांस्तंतून्परित्यजतितथाइतरानाडीःपरित्यज्यकंदगतोयोगीसुषुम्नायांप्राणान्संचारयेदित्यर्थः ५३६ ततोदहराख्यंहृत्पुंडरीकमागच्छेदित्याह ततइति । स्पष्टम् ५३७ तद्भित्त्वेति । तद्धृदयचक्रंभित्त्वाकंठगतंविशुद्धंप्राप्यतदपिभित्त्वाआज्ञाचक्रभेदनद्वारामूर्द्धगतंसहस्रारंगच्छेदित्यर्थः ततआधारगतचक्रमारभ्यआशिरःशिरोगतंसहस्रारंयावत्तांसुषुम्नाख्यांनाडींपूरयेदनुसंततांध्यायेदित्यर्थः ५३८ एवंपट्चक्रभेदनेकृतेसतितदनंतरंकर्तव्यमाह खड्गेनेति । मनोरूपेणखड्गेनदीर्घक्षुरे

द्वेगुल्फयोःप्रकुर्वीततिस्रस्तिस्रस्तुजंघयोः ॥ जानुनोर्द्वेतथाचोर्व्वोस्तिस्रस्तिस्रःप्रकीर्तिताः ॥ गुदेलिंगेचमात्रास्तुवायोःस्थापनकर्मणि ३२ वायोरायतनंकंदोनाभिदेशेसमाश्रितः ॥ पृष्ठवंशसमीपस्थःसर्वेषामिहदेहिनाम् ३३ समाव्रजेच्छनैर्धीमान्मात्रातोविजितानिलाम् ॥ तत्रनाडीसुषुम्नास्तिनाडीभिर्दशभिर्वृता ३४ अत्रपीताश्चरक्ताश्चकृष्णास्ताम्राविलोहिताः ॥ अतिसूक्ष्माश्चतन्व्यश्चविनात्याज्याःसुषुम्नया ॥ कंदमागत्यमेधावीसुषुम्नांचसमाश्रयेत् ३५ ऊर्णनाभिर्यथातंतौसंचरन्स्वात्मनःप्रिये ॥ परित्यज्येतरांस्तंतूंस्तत्रजालेस्थितानपि ॥ एवंसंचारयेत्प्राणान्सुषुम्नायांहिकंदगः ३६ ततोरक्तोत्पलाभासंहृदयेविततंमहत् ॥ अत्यल्पंपुंडरीकंतद्वेदांतेषुनिगद्यते ३७ तद्भित्त्वाकंठमायातिततोमूर्द्धानमाव्रजेत् ॥ आधारकंदतोनाडीमाशिरःपूरयेद्धितम् ३८ खड्गेनमनसावायुलोहगात्रेणयोगवित् ॥ धीशाणकषितेनात्रच्छिंद्यान्मर्माणिदेहिनाम् ३९ पादस्योपरियन्मर्मच्छिंद्यात्तद्रूपनामकम् ॥ मनोधारेणतीक्ष्णेनस्वाधीनपवनासिना ४० इंद्रवज्रमितिप्रोक्तंमर्मजंघानुगंहियत् ॥ तद्ध्यानबलयुक्तेनमानसेननिकंतयेत् ४१ ऊर्वोर्मध्येतुयत्प्रोक्तंमर्मप्राणविमोचनम् ॥ चतुरभ्याससंयोगाच्छिंद्यादनभिशंकितः ५४२

णदेहाभिमानिनांबंधप्रयोजकानिमर्माणिच्छिंद्यात्शास्त्रदृष्ट्याबाधितानिकुर्यात् कीदृशेनमनोरूपेणखड्गेन प्राणरूपलोहमयंगात्रंशरीरंयस्यसतथातेन पुनःकीदृशेन धीःपरापरब्रह्मविद्यातद्रूपशाणतःकषितेननिर्मलीकृतेनेत्यर्थः ५३९ पादस्योपरीति । पादस्यचरणतलस्योपरियन्मर्मअंगुष्ठगुल्फादिकंतच्छ्रुतौरूपपदेनोक्तंतच्छिंद्यात् केन मनोधारास्थानीयंयस्यतथाभूतेनवशीकृतवायुरूपखड्गेनेत्यर्थः दीपिकाकृदनुसरणेतुपादस्यब्रह्मपादचतुष्टयस्यस्थूलसूक्ष्मकारणतुरीयात्मकस्योपरितदघटकंयन्मर्मतुल्यंरूपंनामचेतिद्वयंतच्छोधितेनमनःक्षुरेणच्छिंद्यादित्यर्थः सचोत्तरग्रंथस्वारस्याद्ग्रंथकृतोनाभिमतइतिबोध्यम् ५४० इंद्रेति । जंघानुगंजंघाप्रकृतियन्मर्मतदिंद्रवज्रपदेनश्रुतौप्रोक्तं अयोगिभिर्दुरतिक्रमत्वसाधर्म्यात् तदपिध्यानरूपबलशालिनामानसखड्गेनच्छिंद्यादित्यर्थः ५४१ ऊर्वोरिति । तथाऊरुदेशमध्येयन्मर्मतच्छ्रुतौप्राणविमोचनपदेनभंगेसतिप्राणोविमुच्यतेदेहाद्वियुक्तःक्रियतेऽनेनेतिव्युत्पत्तिकेनोक्तंतदपिच्छिंद्यात् केन चतुर्वारंप्रातर्मध्यान्हेसायंनिशीथेचयोभ्यासस्तद्वतायोगेन अत्रचनाहमत्रस्थितइत्याकारबाधलक्षणेममच्छेदनेदेहपातशंकानकार्यादेहधारणस्यप्रारब्धायत्तत्वादित्यर्थः ५४२

ततोगुदादिदेशगतानिममर्माणिपूर्ववच्छेदयेदित्याह गुदइति । स्पष्टं ५४३ एवंमर्माणिच्छित्वानाडीश्छिद्यादितिवक्तुंनाडीसंख्यांस्मारयति एकोत्तरमिति । एकोत्तरशतसंख्याःप्रधाननाड्यस्तासामेकस्याएकस्याद्वासप्ततिद्वासप्ततिसहस्राणिशाखाभूतानाड्यःप्रश्नोपनिषदीरितास्तासुसर्वासुमुख्यायांसुषुम्नायांप्राणंप्रवेश्येतराश्छेदयेदितिद्वयोरर्थः ५४४ । ५४५ उक्तयोगस्यफलमाह एवमिति । उक्तविधयाछिन्नाःसुषुम्नेतरानाड्योयेनसतथाभूतइहजन्मनिजन्मांतरेवापरंवैराग्यमधिगम्यमुच्यतेइत्यर्थः ५४६ फलितमाह यतइति । यतएवमुक्तविधंफलमतोलभ्यतेततएतन्नाडीनांछेदनंकुर्यात् केन योगेननिर्मलंयत्सारंमनस्तद्रूपेणक्षुरेण मनसःसारत्वंतुसात्विकभूतांशारब्धत्वादिति कीदृशेनअनलवर्चसा ज्ञानाग्निदीप्तेनेत्यर्थः ५४७ उक्तयोगशीलिनोमोक्षप्रकारमभिनयति ततइतिद्वाभ्यां ततउक्ताभ्याससिद्ध्यनंतरंविरक्तचित्तएकांतदेशवासीसर्वसंगपरित्यागीसर्वेषांयोगानांमनःप्राणयोर्निरोधप्रकाराणांवेत्ताचमुनिःशनैःशनैरुक्तसाधनेष्वपिनिरपेक्षःसन्नाडीगणरूपाध्यात्मपरिच्छेदं विहायमोक्षंव्रजेत् तत्रसाधननिरपेक्षत्वेदृष्टांतोहंसः सहिप्रतिबंधाभावेउड्डयनव्यापारेवाकरणानपेक्षइतिद्वयोरर्थः ५४८ । ५४९ एवंक्रममोक्षेदृष्टांतोऽभिहितोऽथसद्योमोक्षेतमाह यथेति । यथादी

गुदेशिश्नेचकंदेचहृदिपद्मेतथैवच ॥ कंठदेशेपिमर्माणिच्छिद्याद्योगबलात्सदा ५४३ एकोत्तरंशतंमुख्यानाड्यउक्तामनीषिभिः ॥ द्वासप्ततिसहस्राणिह्येकैकस्याःप्रकीर्तिताः ॥ शाखास्तत्रतुमुख्यैकासुषुम्नाब्रह्मरंध्रगा ५४४ योगाभ्यासेननाडीस्ताःसुषुम्नापरिवर्जिताः ॥ छेदयेत्तुसुषुम्नायांपरिसंचार्यमारुतम् ५४५ एवंछिन्नान्यनाडीकःपुमानास्मिन्हिजन्मनि ॥ जन्मांतरेथवागच्छेद्विरक्तोवैष्णवंपदम् ५४६ यतएवंततोधीरश्छिद्यान्नाडीगणंसदा ॥ योगनिर्मलसारेणक्षुरेणानलवर्चसा ५४७ ततोविरक्तचित्तस्तुनिःशब्ददेशमास्थितः ॥ निःसंगःसर्वयोगज्ञोनिरपेक्षःशनैःशनैः ५४८ पाशंछित्वायथाहंसोनिर्विशंकःखमुत्पतेत ॥ तथानाडीगणंछित्वापुमान्मोक्षंसमाव्रजेत् ५४९ यथानिर्वाणकालेतुदीपोदग्ध्वालयंव्रजेत् ॥ तथासर्वाणिकर्माणियोगीदग्ध्वालयंव्रजेत् ५५० प्राणायामसुतीक्ष्णेनमात्राधारेणयोगवित् ॥ वैराग्यकरणेनायंतंतूंश्छिद्यात्क्षुरेणहि ॥ इत्येवंक्षुरिकाप्रोक्तंयोगंचारुसमभ्यसेत् ५५१ वैराग्यंकरणंनित्यंसर्वेषामिहदेहिनाम् ॥ सर्वथैवतुसंपाद्यंवैराग्यंप्रथमंततः ५५२ भवेत्परमहंसाख्योयतिःपश्चात्सुधीःपुमान् ॥ यतोविरागएवास्यकालोनान्यःकथंचन ॥ ततोविनात्रवैराग्यंकोपिनायंभवेद्यतिः ५५३ यस्मिन्दिनेक्षणेवास्याद्वैराग्यंसुदृढंहितम् ॥ तदैवसर्वकर्माणिसंन्यसेदविचारयन् ५५४

पस्यतेजोविशेषस्योपशमकालेतेजःसामान्यभावेनविलयस्तथासर्वोपाधिविनिर्मुक्तस्ययोगिनोब्रह्मभावइत्यर्थः ५५० उक्तमर्थजातंसंक्षिप्याह प्राणायामेति । क्षुरेणमनोरूपेणतंतून्नाडीरूपान् जालतंतुवद्बंधकान्छिंद्यात् कीदृशेनमनोरूपक्षुरेण प्राणायामतःसूक्ष्मीकृतेन मात्राद्वादशप्रणवादिरूपाआधारआलंबनंयस्यसतथातेन वैराग्यंकरणंशाणवद्धर्षणसाधनंयस्यसतथातेन क्षुरिकार्थमुपसंहरति इत्येवमिति ५५१ अथसाधनभूतंसंन्यासंसपरिकरंत्रिंशच्छ्लोकैर्निरूपयन्नादौजाबालचतुर्थखंडप्रोक्तंकालमधिकारिणंचाह वैराग्यमिति । वैराग्यमेवकरणमसाधारणंकारणंपारमहंस्यस्येतिशेषः नित्यंसर्वास्ववस्थास्विति । ततःसर्वैर्देहिभिःपारमहंस्यकामैःप्रथमंवैराग्यंसंपाद्यमितियोजना ५५२ भवेदिति । ततोवैराग्यात्पश्चादेवपरमहंसोयतिर्भवेत् वैराग्यस्यपारमहंस्यकालोपाधितामेवान्वयव्यतिरेकाभ्यांस्फुटयति यतइतिदलद्वयेन ५५३ अत्रार्थेप्रमाणभूतांयदहरेवविरजेदित्यादिश्रुतिमर्थतःपठति यस्मिन्निति । यदैववैराग्यंस्यात्तदैवबालोयुवावृद्धोवासंन्यसेत् विरागरहितस्तुतथानकुर्यात् फलितमाह ततइति ५५४

९५५ विरागेकारणमिति । अस्यवैराग्यस्योत्पत्तावेवोक्तंगर्भदुःखानुसंधानादिकंयोगांतरंगोपासनानिकर्माणिचोपयुक्तानीतिप्रतिपादयति विरागेइत्यादिना । पूर्वमुक्तंगर्भदुःखचिंतनादिकं अविमुक्तोपासनमध्यात्मंभ्रूमध्येअधिदैवंवैराजशरीरेचस्थितायावाराणस्याब्रह्मभावेनचिंतनरूपंजाबालेतापनीयेचोक्तं आदिपदेनहृदयग्रहः विज्ञेयंविरागकारणमित्यनुषंगः ९५६ उपासनानांसाक्षान्मुक्तिसाधनत्वंतुनबोध्यंविपर्ययघटितत्वेनबंधविरोधिप्रमाभिन्नत्वादित्याह उपासनानामिति । अत्रवस्तुतत्त्वेयोविपरीतोविज्ञानंतद्रूपोध्यासउपासनानांहेतुःस्वरूपनिर्वाहकोभवतियतोनामरूपादिवर्जितोपिस्वयंप्रकाशानंदरूपएकएवआत्मानामादिसंबद्धतयोपास्यतेइत्यर्थः यथादित्यमंडलांतःस्थस्यउदितिनाम सुवर्णवद्रूपं ऊर्ध्वलोकपालनंक्रिया आदित्यमंडलंस्थानंपरोवरीयःपदोक्तं सर्वापेक्षयाश्रेष्ठत्वंगुणः एवमन्यत्रापि ९५७ उपासनासुविशेषांतरमाह क्वचिदिति । क्वचिद्दहरविद्यादौसपरमात्मैवसाक्षादुपास्यत्वेनोक्तः क्वचिदादित्योब्रह्मेत्यादेशइत्यादिपुतस्यपरमात्मनोविभूतयःकल्पितैकदेशाउपास्यतयोक्ताः कीदृश्यः काश्चित्कारणरूपाःसमष्टिरूपाअधिदैवस्थिताः यथाहिरण्यगर्भादित्यादयः काश्चित्तुकार्यरूपाव्यष्टिगताअध्यात्मस्थिताश्चयथाप्राणवागादयइत्यर्थः ९५८ क्वचित्प्रणवादिकैर्मंत्रैःसहतादात्म्यारोपेणतस्योपासनमित्याह क्वचित्प्रणवेति । अभेदेनभेदेनचतादात्म्येनेतियावत् ९५९ मंत्रार्थयोस्तादात्म्यचिंतनेपिद्वयी

बालोवाप्यथवावृद्धोविरागरहितःपुमान् ॥ नभवेत्परमोहंसोमनसापिकदाचन ॥ ततोविरागएवास्यकालउक्तोमनीषिभिः ९५५ विरागेकारणंपूर्वमुक्तंनानाविधंमया ॥ अनुक्तंचापिविज्ञेयमविमुक्ताद्युपासनम् ॥ सर्वश्रुतिषुसंप्रोक्तंबहुभेदमनेकधा ९५६ उपासनानांहेतुःस्यादध्यासोत्रविपर्ययः ॥ आनंदात्मास्वयंज्योतिर्नामादिपरिवर्जितः ॥ नामरूपक्रियास्थानगुणैर्यस्मादुपास्यते ९५७ क्वचित्सएवकुत्रापिह्युपास्यास्तद्विभूतयः ॥ कार्यकारणरूपिण्योप्यधिदैवादिसंस्थिताः ९५८ क्वचित्प्रणवमुख्यैस्तैर्मंत्रैर्नानाविधैरपि ॥ अभेदेनापिभेदेनदेवएषउपास्यते ९५९ अथर्वणःशिरस्यत्रशिखायांतापनीययोः ॥ मांडूक्येस्वात्मबोधेचतद्वन्नारायणीययोः ॥ तथैवामृतनादादौमंत्रप्राधान्यमिष्यते ९६० प्रश्नेचमुंडकेतद्वद्बृहदारण्यकेतथा ॥ छांदोग्येकठवल्ल्यादावोंकारस्याप्युपासनम् ९६१ रुद्राध्यायेतथेशस्यमंडलब्राह्मणेपिच ॥ स्तुत्यादिसहितोपासासर्वासूपनिषत्स्वपि ९६२ सर्वोपनिषदोब्रह्मनिर्गुणंस्वात्मरूपतः ॥ प्रतिबोधयितुंनॄणांप्रवृत्ताआदरेणहि ९६३

गतिःक्वचिन्मंत्रस्यप्राधान्यंविशेष्यत्वरूपंक्वाचित्त्वर्थस्येतिदर्शयंस्तत्रमंत्रप्राधान्येनोपासनंयासूपनिषत्सुविहितंतासांनामानिपठति अथर्वणइति । अथर्वशिरःसंज्ञायामुपनिषदितथात्राथर्ववेदेवर्तमानायांशिखायांयोगशिखाख्यायांतापनीययोःपूर्वोत्तरयोर्मांडूक्यात्मबोधयोर्नारायणीययोरथर्वगतत्वतैत्तिरीयगतत्वेनद्विविधयोरमृतनादेआदिपदग्राह्याऽमृतबिंद्वादौचमंत्रस्यप्रणवस्यनृसिंहमंत्रादेश्चप्राधान्यंश्रुतेरिष्टमित्यर्थः ९६० प्रणवस्योपसर्जनतयायत्रोपासनविधानंताउपनिषदोदर्शयति प्रश्नइति । प्रश्नोपनिषदादौप्रणवार्थस्यप्राधान्येनोपासनंप्रणवस्यतूपसर्जनतयेत्यर्थः । ९६१ कुत्रचित्स्तुतिसहितापरमेश्वरोपासनाविहितायथारुद्राध्यायेमंडलब्राह्मणेपुरुषसूक्तादौचेत्याह रुद्राध्यायइति । स्तुत्यादीत्यादिपदेनरहस्यनाम्नांमंत्राणांचग्रहः नकेवलमुक्तोदाहरणेष्वेवोपासनाविहिताःकिंतुसर्वशाखागतासूपनिषत्स्वपीतितुरीयपादार्थः ९६२ ननुनिर्विशेषवस्तुप्रदर्शनपरासूपनिषत्सूपासनविधानंकिमर्थमितिशंकते सर्वोपनिषदइति । स्वात्मरूपतःप्रत्यग्रूपेणनिर्गुणंब्रह्मबोधयितुंयतःप्रवृत्तास्ततस्तासूपासनविधानमयुक्तमितिभावः ९६३

स्थूलारुंधतीन्यायेनमंदानुग्रहायतदुक्तमितिसमाधत्ते मंदाधिकारिणइति । ताउपनिषदःकर्त्र्योमंदान्प्रत्यक्प्रवणताहीनानधिकारिणोपिस्वेनउपनिषत्स्वरूपेणबोधनीयानालोच्यबुद्धिंस्थूलारुं धतीन्यायसिद्धमुपदेशकौशलमाश्रितादधानाःसत्योनानाविधवर्णनरूपैरुपायैरिदंनिर्गुणंनृणामधिकारिणांहितायावेदयंतिचेतस्यवतारयंतीत्यर्थः ९६४ ननुब्रह्मणोनानाविधंवर्णनंनसंभवतितस्यै करसत्वादित्याशंक्यकल्पितोपाधिनिबंधनंतस्यनानाविधंवर्णनंसंभवतीत्याह सर्वेति । ब्रह्मयतःसर्वरूपंसर्वस्याधिष्ठानतयात्मभूतंततःसर्वत्रजगतिव्यवस्थितंरजतेशुक्तीदमंशवत्सद्रूपेणानुगतंभ वतिततस्तेनकल्पितोपाधिसांनिध्येनतन्निर्विशेषमपिब्रह्मनामरूपक्रियास्थानगुणैर्विशिष्टतयाप्रतिपादयंत्युपनिषदइत्यर्थः ९६५ तत्रसविशेषप्रतिपादनेद्वेधाप्रवृत्तिर्बाधावसानातदनवसानाच त त्रांत्यातदाभवतियदाश्रुतेरित्थमाशयः एतेऽधिकारिणःशुद्धचित्ताःसंतःस्वयमेवोपाधिसंबंधमपहायनिर्विशेषमवगमिष्यंतीति यदातुकारुण्यातिशयेनाधिकारिणामनुसंधानक्लेशंनसोढुंशक्नुवंतित दानिर्विशेषमपितावर्णयंतीत्याह क्वचिदिति । ताउपनिषदःक्वचिदत्रसविशेषरूपएवसंलीनव्यापाराःसत्योनिर्विशेषस्यप्रतिपादनादुपरतिंविराममयांतिक्वापिपुनःक्वचित्तुप्रतिआभिमुख्येनबोधयि तुंनिर्गुणंब्रह्मशतधावर्णयंतियतोहितकारिकाअनुग्रहाकुलाइत्यर्थः ९६६ तासांनिर्गुणप्रतिपादनप्रकारःप्रायशोबृहदारण्यकादीनांनिर्दिष्टोऽवशिष्टानांतुप्रदर्शयिष्यतेइत्याह बृहदिति । ताउप

मंदाधिकारिणोदृष्ट्वास्त्वबोध्यान्बुद्धिमाश्रिताः ॥ नानोपायैरिदंब्रह्मनृणामावेदयंतिताः ९६४ सर्वरूपंयतोब्रह्मजगत्यस्मिन्व्यवस्थितम् ॥ नामरूपक्रियाद्यै स्तुततस्तान्बोधयंतितत् ९६५ क्वचिदत्रैवसंलीनव्यापाराःप्रतिपादनात् ॥ प्रयांत्युपरतिंक्वापिप्रतिबोधयितुंपुनः ॥ निर्गुणंब्रह्मशतधावदंतिहितकारिकाः ९६६ बृहदारण्यकाद्यास्ताव्याख्याताभवतेमया ॥ शेषाश्चव्याकरिष्यामिप्रसंगात्सकलाअपि ९६७ एवंनानाविधोपायैरुपास्यपरमेश्वरम् ॥ शुद्धचेता विरक्तोयंपुमानत्रप्रजायते ९६८ अथवाकर्मकांडोक्तंकुर्वाणःकर्मचाखिलम् ॥ निजवर्णाश्रमप्रोक्तंफलाशापरिवर्जितः ॥ विरक्तोत्रपुमान्भूयात्कालतोनैवसं शयः ९६९ ब्रह्मविज्ञानसिद्ध्यर्थमथवाकर्मकुर्वतः ॥ विरक्तिर्जायतेपुंसोभोगेलोकद्वयस्थिते ९७० ईश्वरार्पणबुध्यावाकर्मजातंप्रकुर्वतः ॥ पुंसोविरक्तिसिद्धिः स्यात्सर्वथैवापिकामिनः ९७१ एवंनानाविधोपायाविरक्तौतेपुकंचन ॥ आस्थायतांविधायाथकुर्यात्संन्यासमात्मवान् ९७२ इतितेकालआख्यातःसंन्यासेच वदामिते ॥ अधिकारिणमत्रोक्तमोक्षशास्त्रेपुसर्वतः ९७३

निषदः व्याकरिष्यामिस्फुटाशयाःकरिष्यामि ९६७ उक्तंविचारंप्रकृतेसंगमयति एवमिति । एवंविधयाश्रुतिसिद्धैर्नानाविधोपासनारूपैरुपायैःपरमेश्वरमाराध्यविरागलक्षणांचित्तशुद्धिंप्राप्नो तिपुमानित्यर्थः ९६८ उपासनाऽशक्तौभगवद्गीतोक्तविधयानिष्कामकर्मानुष्ठानमपिविलंबेनचित्तशुद्धिहेतुरित्याह अथवेति स्पष्टम् ९६९ अथवातमेतंवेदानुवचनेनब्राह्मणाविविदिषंति यज्ञेनदानेनेत्यादिश्रुत्यासकलानिसत्कर्माणिब्रह्मज्ञानार्थतयाविहितानितदालोच्यब्रह्मविद्यार्थतयायागादेःकर्माणिकुर्वंश्चित्तशुद्धिंलभतेइत्याह ब्रह्मविज्ञानेति । लोकद्वयस्थितेऐहिकेआमुष्मि केच ९७० अथवायत्करोषियदश्नासीतिगीतोक्तविधयेश्वरार्पणेनकर्मकुर्वतःसकामस्यापिचित्तशुद्धिर्भवतीत्याह ईश्वरेति । स्पष्टम् ९७१ फलितमाह एवमिति । एवमुक्तविधयानाना प्रकाराउपायाविरक्तेःप्रयोजकाःसंतितेषांमध्येयंकंचनोपायमास्थायालंब्यतथतांविरक्तिंसंपाद्यसंन्यसेदित्यर्थः ९७२ तीव्रतरवैराग्यरूपस्यसंन्यासकालस्यवर्णनमुपसंहरंस्तदधिकारिणंवक्तुंप्रति जानीते इतिवेइति । अत्रसंन्यासेयोग्योयोधिकारीसर्वेषुमोक्षशास्त्रेपुवर्णितस्तंतेवदामीति ९७३

तत्रबृहदारण्यकेएषणाभ्योव्युत्थायाथभिक्षाचर्यंचरंतीतिवाक्येनोक्तंमुख्यमधिकारिविशेषणमाह वित्तेति । वित्तंदैवंविद्यात्मकंलौकिकंहिरण्यादिरूपं लोकोदेवपितृमनुष्यसंबंधित्वेनत्रिविधः सुतः पुत्रः एतेषांत्रयाणांयास्तिस्रइच्छाःपंचमाध्यायेवर्णितास्ताभिर्वर्जितत्वलक्षणंवैराग्यंमुख्यमधिकारिविशेषणमित्यर्थः ९७४ अथजाबालचतुर्थखंडवाक्यार्थंवर्णयंस्तत्रोक्तंविरामाभावेक्रमेणाश्रमचतुष्टयानुष्ठानंदर्शयति तासामिति । तासांवित्तादिगोचरेच्छानांसत्त्वेतुब्रह्मचर्यंगृहस्थत्वंवनस्थत्वंचकृत्वाततोवनस्थत्वादनंतरंन्यासंकुर्यात् तत्रायंविशेषः अतएतमाश्रमचतुष्टयक्रममाश्रित्यचतुर्थोहंसःपरमहंसोनभवेत्किंतुकुटीचकादित्रयान्यतममेवन्यासंकुर्यादित्यर्थः ९७५ तत्रहेतुतयापारमहंस्यस्योत्कटवैराग्यमात्रतंत्रत्वमाह चतुर्थइति । यतोलोकद्वयाद्गतस्पृहोयःसएवन्यासभेदेषुचतुर्थंपारमहंस्यंगंतुंयोग्योनांतःस्थकामजटइत्यर्थः ९७६ वैराग्योत्कर्षेसतिक्रमनियमोनास्तिकिंतुब्रह्मचर्याद्याश्रमान्यतमानंतरमपिपारमहंस्यंश्रयेदित्याह ब्रह्मेति । नैष्कर्म्यंमोक्षःवमाप्तमवृत्ता सम्यक्स्पृहायस्यसतथा वित्ताद्येषणाविनिर्मुक्तश्चेत्स्यात्तर्हिब्रह्मचर्यानंतरमेवसंन्यसेदित्यर्थः अत्रब्रह्मचर्यस्यावधित्वोपन्यासेनततःपूर्वंनसंन्यासाधिकारइतिसूचितं ९७७ वैराग्योत्कर्षस्यन्यासाधिकारसंपादकतांविशदयंस्तस्यविधुरादीनामपिन्यासयोग्यताप्रयोजकत्वमाह वर्णाश्रमादीति । वर्णाश्रमाणामादयःकारणानिलिंगानियथाब्रह्मचर्यस्यगुरुकुलवासादिगृहस्थस्यदारसंयोगो

वित्तलोकसुतानांस्युरिच्छानॄणांहिसर्वदा ॥ यास्ताभिःपरिशून्योयःसोधिकारीप्रकीर्तितः ९७४ तासांसत्वेभवेत्पूर्वंब्रह्मचारीततोगृही ॥ ततोवनीततोन्यासंहं सोऽतोनचतुर्थकः ९८४ चतुर्थःपरमोहंसोलोकद्वयगतस्पृहः ॥ यःकश्चित्सतुविज्ञेयोमायापाशवशंगतः ९७६ ब्रह्मचर्याद्गृहाद्वापिवनाद्वाप्रव्रजेदयम् ॥ सर्वैषणाविनिर्मुक्तोनैष्कर्म्यप्राप्तसंस्पृहः ९७७ वर्णाश्रमादिसंयुक्तःसर्वेंद्रियगुणैर्युतः ॥ विपरीतोथवायस्मान्निराशोत्राधिकारवान् ९७८ वेदव्रतैर्विहीनोवासहितस्तैश्चवापुमान् ॥ अधीत्यवेदंवेदौवावेदान्वास्नानमागतः ॥ एतदध्ययनाभावादथवास्नानवर्जितः ९६९ उत्सन्नाग्निर्निमित्तेनकेनचिद्वाप्यनग्निकः ॥ श्रौतस्मार्ताग्निवित्तेपुस्वीकाराभावतश्चतौ ९८० वैराग्यंपरमंप्राप्तोह्यथवापिकुटीचकः ॥ बहूदकोथवाहंसःपरोहंसोभवेदिह ९८१

वनस्थस्यजटाधारणादिकुटीचकादीनांत्रिदंडधारणादितैःसंयुक्तःसर्वेंद्रियसंपन्नश्चवाभवतुतद्विपरीतोवर्णाश्रमादिधर्महानिरूपविधुरत्ववानिंद्रियवैकल्यादिमांश्चवाभवतुसनिराशोविगतैषणःस्यात्तर्ह्यत्रपारमहंस्येऽधिकारवान्भवत्येवेत्यर्थः ९७८ संक्षिप्योक्तंप्रपंचयन्श्रोतानामव्रतीत्यादिपदानामर्थमपिदर्शयति वेदेति । वेदव्रतानिवेदाध्ययनांगभूतानिव्रतानिब्रह्मचारिधर्मरूपाणितैर्युक्तोव्रतीत्युक्तस्तदभावोऽव्रतित्वमित्यर्थः । उक्तव्रतैरेकंद्वौवबहून्वावेदानधीत्ययःस्नानंसमावर्तनंप्राप्तःसस्नातकइत्युक्तस्तद्विलक्षणोवेदैकदेशमात्रपाठीत्वस्नातकएतेष्वन्यतमोपिसंन्यसेदितितृतीयेनाभिसंबंधः ९७९ उत्सन्नाग्निरिति । केनचिद्दारमरणादिरूपनिमित्तेनसंगृहीतोप्यग्निर्यस्यविनष्टःसउत्सन्नाग्निरित्युक्तः तादृशनिमित्तेनापरिगृहीताग्निकस्त्वनग्निकइत्युच्यते अथवातौउत्सन्नाग्न्यनग्निपदवाच्यौश्रौतानांदक्षिणाग्न्यादीनांस्मार्तस्यौपासनाख्यस्यचाग्नेस्तद्ग्रहणोपयोगिनोवित्तस्यवास्वीकाराभावरूपनिमित्तकौबोध्यौ तत्रश्रौतस्मार्ताग्निस्वीकाराभावेउत्सन्नाग्नित्वंउत्सन्नःअलब्धमूलकःअग्निर्यस्यसतथेतिव्युत्पत्तिसमन्वयात् आधानसंस्कृताग्निर्हितत्तत्कर्मोपयुक्ताग्नीनांमूलमितिप्रसिद्धंयाज्ञिकानांवित्तस्वीकाराभावेत्वनग्नित्वमितिविवेकः ९८० परवैराग्येकुटीचकादीनामपिपारमहंस्याधिकारइत्याह वैराग्यमिति । स्पष्टम् ९८१

अथपारमहंस्यग्रहणस्येतिकर्त्तव्यताविशेषंवक्तुमुपक्रमते विधानमित्यादिना अधिकारप्रसंगात्तेइत्यतःपूर्वग्रंथेन । तत्रवर्णितकालाधिकारकेपारमहंस्यग्रहणेयद्विधानमितिकर्त्तव्यताख्यंतद्वदामीति । आदौनांदीमुखश्राद्धंकर्त्तव्यतयाविहितं तथाचोक्तंवृद्धगर्गेण ' अग्न्याधानाभिषेकेपुइष्टापूर्त्तक्रियाकृतौ । वृद्धिश्राद्धंप्रकुर्वीतचाश्रमग्रहणेतथा ' इति । सत्याश्चेति । इहन्यासांगभूतेनांदीमुखेवसुसत्य नाम्नाविश्वेदेवाःपूज्याइतिद्वयोरर्थः ५८२ । ५८३ श्राद्धाष्टकमिति । तथात्रन्यासग्रहणांगेनांदीमुखेअंतर्गतंश्राद्धानामष्टकंभवति तन्नामानिशौनकेनोक्तानि ' देवंचैवार्षकंचैवदिव्यंमानुष्यमेवच । भूतश्राद्धंपितृश्राद्धंमातृणामात्मनस्तथा ' । इति अस्यश्राद्धाष्टकस्यादौकर्त्तव्यंविश्वेदेवसंबंधिश्राद्धंनवमंभवतीत्यर्थः मातुरिति । अंतेऽनुष्ठेयंदशममपिकेचित्शौनकादयोवदंति किंकृत्वा मातुरि तिजातावेकवचनं मातृणांमातामहानांचश्राद्धयोर्विभेदमभिसंधाय मूलेपंचमील्यब्लोपे परेआपस्तंबादयोमातृणांमातामहानांचैक्यमभेदंवदंति तथाचतन्मतेविश्वेदेवपूर्वकंश्राद्धाष्टकमेवेत्यर्थः एवं सत्यनयोर्मातृमातामहश्राद्धयोर्भेदेनचानुष्ठानंयथाकुलाचारंव्यवस्थितंव्यवस्थांगतमितिद्वयोरर्थः ५८४ । ५८५ भेदपक्षेपिमातृश्राद्धदेवतानांभेदंदर्शयति भेदइति । क्रमोनाम्नामानुपूर्वी मतभेदे

विधानंतत्रवक्ष्यामिपरहंसाश्रमग्रहे ॥ संन्यासग्रहणात्पूर्वेदिवसेमंगलैर्युतः ५८२ विवाहादौयथाश्राद्धंकुर्यान्नांदीमुखंतथा ॥ सत्याश्चवसवस्तद्वद्विश्वेदेवाइहेरि ताः ५८३ श्राद्धाष्टकंभवेदत्रनवमंवैश्वदेवकम् ॥ मातुर्मातामहानांचविभेदाद्दशमंपुनः ५८४ केचिदाहुःपरेत्वैक्यंमुनयःप्रवदंत्यपि ॥ अनयोस्तुकुलाचाराद्भेदा भेदौव्यवस्थितौ ५८५ भेदेक्रमोयंविज्ञेयोह्यनयोःश्राद्धयोःसदा ॥ मातापितामहीतद्वत्तृतीयाप्रपितामही ५८६ मातुःश्राद्धेवदंत्येकेकेचिन्मात्रासमन्विते ॥ मातामहीतृतीयाचप्रकृष्टासाचतेउभे ५८७ श्राद्धेमातामहेप्याहुःपुरुषांस्त्रीन्महाधियः ॥ मातामहोद्वितीयःस्यात्प्रमातामहकस्तथा ५८८ तृतीयश्चतथावृद्ध प्रमातामहकःस्मृतः ॥ इतिभेदेसमुद्दिष्टंत्रिकंश्राद्धद्वयेपिहि ५८९ मातृमातामहश्राद्धेयदाद्वैधंनविद्यते ॥ तदापित्रिकभेदःस्यात्कुलाचारस्यभेदतः ५९० मा तापितामहीतद्वत्तृतीयाप्रपितामही ॥ एवमेकेत्रिकंप्राहुरन्यएवंवदंतिच ५९१ मातामातामहस्तद्वत्प्रमातामहकोऽपरः ॥ कुलाचारोत्रसर्वत्रप्रमाणंकीर्तितोद्विजैः ५९२ मातापितामहीत्यादिमातृश्राद्धेत्रिकंभवेत् ॥ कुलाचारानभिज्ञत्वेबहुलंतद्यतोजने ५९३ ब्रह्माविष्णुर्महेशश्चदेवश्राद्धेत्रयंस्मृतम् ॥ देवक्षत्रमनुष्याश्चऋ पिश्राद्धेमुनीश्वराः ५९४

भेतिशेषः मातृश्राद्धस्यदेवतामातृपितामहीप्रपितामह्यःकेषांचिन्मतेभवंति केषांचित्तुमात्रासमन्वितेतेउभे तेके मातामहीद्वितीयातृतीयातुसामातामहीप्रकृष्टाप्रमातामहीतियावदितिद्वयोरर्थः ५८६ ५८७ मातामहश्राद्धेपिमातामहादयस्त्रयोदेवाइत्याह श्राद्धइति । मातामहेमातामहसंबंधिनि भेदपक्षेविशेषप्रदर्शनमुपसंहरति इतीति ५८८ । ५८९ मातृमातामहश्राद्धयोरैक्यपक्षेपिमतभेदे ननामत्रयोच्चारणंव्यवस्थितमित्याह मात्रिति । द्वैधंभेदः त्रिकस्यमातृश्राद्धदेवतात्रयस्यभेदोवैलक्षण्यं ५९० त्रिकभेदमभिनयति मातेति । मात्रादिप्रपितामह्यंतंत्रिकंकेषांचिन्मते केषांचित्तुमात्रा दिप्रमातामहांतमिति तदनुष्ठानंयथाकुलाचारमितिद्वयोरर्थः ५९१ । ५९२ यस्तुविस्मृतकुलाचारकस्तेनापिबहूनामनुग्रहोन्यास्यइतिन्यायेनमातृपितामहीप्रपितामहीरूपंत्रिकमेवमातृश्राद्धेसम र्च्यमित्याह मातेति । यतस्तत्प्रपितामह्यंतत्रिकानुष्ठानंजनेलोकेबहुलंबहुभिरनुष्ठितमितितुरीयपादार्थः ५९३ अथोक्तश्राद्धानांक्रमेणसंबंधीनिदेवतात्रिकाणिशौनकोदितान्यनुष्ठानसौकर्यायप्र दर्शयति ब्रह्मेति । प्रथमानुष्ठेयेदेवश्राद्धेक्रमेणब्रह्मविष्णुमहेश्वरादेवताः द्वितीयेऋषिश्राद्धेतुदेवर्षयोराजर्षयोमनुष्यर्षयश्चदेवताइत्यर्थः ५९४

१ मातामहीत्यादिमातृश्राद्धेत्रिकंभवेदितिपाठः ।

वस्विति । तृतीयेदिव्येश्राद्धेक्रमेणवसवोरुद्राआदित्याश्चदेवताः तुर्यैमानुषश्राद्धेतुसनकःसनंदनःसनत्कुमारश्चेत्येतेत्रयोमनुष्यत्वेनस्मृतिप्रसिद्धादेवाइत्यर्थः ५९५ पृथिव्यादीति । पंचमेभूतश्राद्धेएतत्त्रिकंदेवतयादेवत्वेनोक्तम् एतत्किं पृथिव्यादिभूतपंचकंप्रथमादेवता चक्षुरादिकरणग्रामोद्वितीयादेवता स्वेदजादियोनिचतुष्टयंतृतीयेति आदिपदेनजरायुजांडजोद्भिज्जानांग्रहणम् ५९६ षष्ठेपितृश्राद्धेपितृपितामहप्रपितामहाःसप्तमेमातृश्राद्धेतुमातृपितामहीप्रपितामह्योदेवताबहुसंमतत्वादित्याह पितेति ५९७ ततोदशमत्वेनोक्तंमातामहादित्रयंप्रमातामहांतत्रयदेवताकंमातामहश्राद्धंकार्यंतस्यमातृश्राद्धोत्तरकालतायाःसर्वत्रसिद्धत्वादित्याह दशममिति । मातामहसंबंधित्वेनोदितमुक्तंदशमस्थानेपूर्वैनिर्दिष्टंचयत्श्राद्धंतन्मातृश्राद्धात्परस्तादनंतरमेवस्यान्नपूर्वमित्यर्थः एतेनान्यत्रनांदीमुखेमातृश्राद्धस्यपितृश्राद्धात्पूर्वभावित्वेपिन्यासांगभूतेतत्रपितृश्राद्धोत्तरत्वंस्मृतावुक्तमितिसूचितम् ५९८ पूर्वमष्टमत्वेननिर्दिष्टमात्मश्राद्धंत्वंतेकर्त्तव्यंशौनकादिभिस्तथोक्तेरितिदर्शयन्नस्येतिकर्त्तव्यतामाह सर्वांतइति । आत्मनःस्वकीयम् तत्रसंन्यासकर्त्तास्वकीयंनामप्रथममुच्चार्यततःपितुस्ततःपितामहस्यनामकीर्त्तयेदित्यर्थः ५९९ नवमत्वेनोक्तंवैश्व

वसुरुद्रादित्यसंज्ञादिव्यश्राद्धेप्रकीर्तिताः ॥ सनकःसनंदनःसनत्कुमारोमानुषेपिच ५९५ पृथिव्यादिमहाभूतपंचकंनयनादिकः ॥ तथैवकरणग्रामःस्वेदजादि चतुष्टयम् ॥ भूतश्राद्धेत्रिकंप्रोक्तमेतद्देवतयासदा ५९६ पितापितामहस्तद्वत्तृतीयःप्रपितामहः ॥ पितृश्राद्धेपिसंप्रोक्तमत्रेदंदेवतात्रयम् ॥ मातापितामही त्यादिमातृश्राद्धेपुरेरितम् ५९७ दशमंतुयदाश्राद्धंपृथङ्मातामहोदितम् ॥ मातृश्राद्धात्परस्तात्स्यान्नतुपूर्वंकदाचन ५९८ सर्वांतेत्वात्मनःश्राद्धंकुर्यात्श्रद्धासमन्वितः ॥ आत्मनोयस्ययन्नामतन्नामपरिगृह्यहि ॥ अनंतरंपितुःस्वस्यपश्चात्पैतामहंतथा ५९९ वैश्वदेवंपुरस्कृत्वाश्राद्धंदेवादिकंक्रमात् ॥ अष्टकंनवकंवापिकुर्याच्छ्रद्धासमन्वितः ६०० श्राद्धाष्टकेत्रपिंडाःस्युश्चतुर्विंशतिसंख्यकाः ॥ सप्तविंशतिसंख्याःस्युर्नवकंतुयदाभवेत् ६०१ यावत्योदेवताःश्राद्धेविश्वेदेवविवर्जिताः ॥ तावंतोत्रप्रदातव्याःपिंडाब्राह्मणसंनिधौ ६०२ दधिलाजाक्षतास्तद्वत्कुवलानिमधूनिच ॥ दूर्वादिमंगलद्रव्यंपिंडांतेसंक्षिपेत्पुमान् ६०३ पिंडांतेमधुरंभूरिकुर्यान्नांदीमुखेसदा ॥ युग्मांश्चभोजयेद्विप्रान्सर्वदैवाप्रमादवान् ६०४ अष्टादशैवविप्राःस्युर्विंशतिर्वात्रसर्वदा ॥ ततोन्यूनाधिकानस्युःश्राद्धेनांदीमुखेत्रहि ६०५ विभवेसतिविप्रेभ्योदुकूलवलयादिकम् ॥ छत्रोपानत्प्रभृत्यन्यत्स्वशक्त्यापरिवेदयेत् ६०६ अतिश्रीमान्यदाकर्त्तातदाभूमिगृहादिकम् ॥ सर्वोपकरणैर्युक्तंदद्याद्दारिद्र्यनाशनम् ६०७

देवश्राद्धंतुप्रथमंकृत्वावर्णितान्यष्टौनववाश्राद्धानिकुर्यादित्याह वैश्वदेवमिति ६०० तत्रवैश्वदेवश्राद्धव्यतिरिक्तेष्वेवप्रत्येकंपिंडत्रयदानस्यविहितत्वादर्थसिद्धांपिंडसंख्यामाह श्राद्धाष्टकइति ६०१ तत्रहेतुभूतंवैश्वदेवश्राद्धस्यपिंडराहित्यमाह यावत्यइति । यतोवैश्वदेवभिन्नानामेवश्राद्धदेवानांपिंडदानार्हत्वमतउक्तापिंडसंख्यायुज्यतएवेतिभावः ६०२ दधीति । दध्यादिकंदूर्वातमादिपदग्राह्यंकुंकुमादिकंचपिंडांतेपिंडमध्येनिक्षिपेदिति तत्रकुवलानिबदरीफलानि ६०३ पिंडांतेमधुरमिति । तथात्रनांदीमुखेपिण्डमध्येमधुरंमधुशर्करादिभूरिप्रचुरंक्षिपेदित्यर्थः तथा प्रत्येकंयुग्मब्राह्मणविधानान्नवसुश्राद्धेपुसत्सुअष्टादशदशसुतुविंशतिर्ब्राह्मणानिमंत्रयितव्याइत्याह युग्मानित्यादिना ६०४ । ६०५ शक्तौसत्यांदुकूलादिकमपिश्राद्धीयद्विजेभ्योदद्यादित्याह विभवइति । परिवेदयेद्दद्यात् ६०६ अतिसंपन्नोभूमिप्रभृत्यपिदेयमित्याह अतिश्रीमानिति दारिद्र्यनाशनंपात्रस्यदारिद्र्यहरम् ६०७

श्राद्धांतेउच्छिष्टव्यतिरिक्तान्नेनदीनानाथादयोपितर्पणीयाइत्याह ब्राह्मणेष्विति । स्पष्टंद्वयं ६०८ । ६०९ एतच्चदेवादीनांनांदीमुखंस्वस्वगृह्यसूत्रानुसारेणपितृश्राद्धवत्कर्त्तव्यमित्याह स्वगृह्योति । अविचारयन्देवादीनांपितृभ्योविशेषमपश्यन्नित्यर्थः ६१० एतस्मिन्निति । एतन्नांदीमुखशालिनिदिनेएतदुक्तंदानादिकंकृत्वानिर्वृतिंप्रसादंप्राप्तःसन्भुंजीतेतितृतीयेनान्वयः दाराद्यैःस्वजनैःसहसंभाष्यपुत्रादिभ्योदायंविभज्यद्रव्यंदत्वापिकिंचितद्रव्यंहोमोपयोगितथाकौपीनादिकंसंस्थाप्येतिद्वयोरर्थः ६११ । ६१२ पुण्याहमिति । यद्विव्यग्रताचेतसोनिर्वृत्तिसक्ततानस्यात्तदापुण्याहवाचनपूर्वकंभुंजीत तादृशेवैयग्र्येतुसतिभुंजिभोजनंवर्जयेदित्यर्थः ६१३ यदाभोजनेरुच्यभावस्तदापिश्राद्धशेषस्याघ्राणंगंधग्रहंकृत्वोपवसेत् भोजनपक्षेतुद्वितीयदिवसइत्याह आघ्राणेनेति ६१४ द्वितीयदिवसोपवासपक्षएवतुमुख्यइत्याह पिंडदानमिति । तस्मिन्पूर्वे ६१५ मुख्यपक्षेप्रथमदिनकृत्यमुक्तं उपवासेति । कक्षोपस्थगतलोमानिशिखांचविहायसर्वाणिकेशलोमानिमुंडयेदिति ६१६ स्नात

ब्राह्मणेषुतुभुक्तेषुपिंडदानादनंतरम् ॥ दक्षिणासुचदत्तासुत्यक्तोच्छिष्टंततोधनी ६०८ यथाशक्तिप्रकुर्वीतह्यन्नदानमनेकधा ॥ अन्यान्यपिचदानानिकुर्यात्सविभवेमति ६०९ स्वगृह्योक्तप्रकारेणश्राद्धंकुर्याद्विचक्षणः ॥ नांदीमुखंहिदेवादेःपितृवच्चाविचारयन् १० एतस्मिन्दिवसेह्येतत्कृत्वानिर्वृतिमागतः ॥ स्वजनैःसहसंभाष्यदारादिसहितैरपि ११ दायंदत्वाचपुत्राणांहोमार्थंकिंचिदेवहि ॥ संस्थाप्यद्रव्यमात्मीयंकौपीनाच्छादनानिच १२ पुण्याहंवाचयित्वाथभुंजीतस्वजनैःसह ॥ अभावेव्यग्रतायास्तुवैयग्र्येवर्जयेद्भुजिम् १३ आघ्राणेनप्रकुर्वीतह्युपवासंविचक्षणः ॥ तस्मिन्नेवदिनेनोचेद्द्वितीयेदिवसेसुधीः १४ पिंडदानंदिनेतस्मिन्नुपवासःपरेहनि ॥ मुख्यमेतज्जघन्यंस्यादेकस्मिन्दिवसेद्वयम् ६१५ उपवासदिनेप्राप्तेकक्षोपस्थशिखात्रयम् ॥ वर्जयित्वातुवपनंकुर्वीतमतिमान्नरः ६१६ स्नातःशुचिस्ततोभूत्वापरिधायान्यदंबरम् ॥ यावत्संन्यासयोग्यंस्याद्धोमद्रव्यविवर्जितम् ६१७ शालग्रामादिकंतद्वद्वसनंकंबलादिच ॥ ब्रह्मनिष्ठायगुरवेबहुशोपिपरीक्ष्यच ६१८ संवत्सरादिकंकालंगुरुंसर्वगुणैर्युतम् ॥ अंगीकृतंयतेनायमर्पयेदप्यपेक्षितम् ६१९ आत्मनश्चविधायैवपृथक्शीतादिवारणम् ॥ प्रक्षालितंतथादंडमव्रणंसौम्यदर्शनम् ६२० वैणवंसंस्कृतंतद्वत्स्वात्मनासंमितंतथा ॥ कौपीनादियुतंधीमान्स्थापयेदग्निसंनिधौ ६२१ रात्रौजागरणेहोमेदेशाःशस्ताइमेसदा ॥ महानद्यास्तटंतद्वद्देवलायतनंपुनः ॥ अरण्यंवापिगोष्ठंवागृहंवाजनवर्जितम् ६२२ ब्रह्मेंद्रसोमसूर्यात्मचतुर्व्यूहस्वरूपिणम् ॥ अंतरंपरमंतद्वद्विज्ञानंचविशेषणम् ॥ आत्मनोनिर्विशेषंचचतुर्व्यूहःप्रकीर्तितः ६२३

इति । ततःस्नानोत्तरंवस्त्रांतरंपरिधायहोमार्थंस्थापितद्रव्यभिन्नंस्वकीयपरिग्रहमध्येयावत्संन्यासयोग्यंसंन्यासिनामप्यनिषिद्धपरिग्रहंयथाशालग्रामादि आदिपेदनपुस्तकादिग्रहः कंबलादीत्यादिनामृगाजिनादिग्रहः तत्सर्वंस्वापेक्षितमपितेनगुरुणाग्रहणांगीकारेकृतेसातितस्मैब्रह्मनिष्ठायगुरवेऽर्पयेत् तंचगुरुंसंवत्सरादिकालेनसर्वगुणैर्युतंपरीक्ष्यैववृणुयादितिशेषः इतित्रयाणांसंबंधः ६१७ । ६१८ । ६१९ आत्मनश्चेति । तथाआत्मनःस्वस्योपयोगिशीतवारणंकंथादिरूपंपृथक्गुरुसमर्प्यद्रव्याद्भिन्नंविधायअव्रणत्वादिशालिनंदंडंकौपीनादिकंचाग्निकुंडसमीपेस्थापयेदिति तत्रदंडस्यचस्वात्मनासम्मितत्वंसंन्यासितुमिच्छतःशरीरपरिमाणत्वम् ६२० ६२१ अत्रदिनेरात्रौकर्त्तव्यस्यजागरणस्योपयोगिनोदेशान्दर्शयति रात्राविति । गोष्ठंगोशाला स्फुटमन्यत् ६२२ उक्तदेशेगत्वावोवायनाद्युदीरितंकर्त्तव्यमाह ब्रह्मेत्यादिना । ब्रह्माचइंद्रश्चसोमश्चसूर्यआत्मसंबंधीचतुर्व्यूहश्चएतैरभीष्टरूपैःस्वरूपिणंस्वरूपवंतंपरमेश्वरंस्मरेदिति तत्रात्मचतुर्व्यूहमभिनयति अंतरमिति । अंतरंपरमं–

विज्ञानमित्येतानित्रीण्यात्मनोविशेषणानितथानिर्विशेषविशेषणरहितमात्मस्वरूपंगृहीं वाआत्मचतुर्व्यूहःप्रकीर्तितः तथाचआत्माअंतरात्मापरमात्माविज्ञानात्माइत्याकारताफलिता तंत्रात्मपदेनसर्वाधिष्ठानमुच्यतेपदांतरैस्तस्यसर्वांतरत्वमद्वयत्वंचिद्घनत्वंचक्रमेणोक्तमितिविवेकः ६२३ मंत्रैरेवस्मर्त्तव्यमितिनियमादुक्तात्मस्मरणोपयोगिनोमंत्राननभिनयति ब्रह्मादीति । आदिपदेनइंद्रसोमसूर्याणामात्मचतुर्व्यूहस्यचग्रहः आदौप्रणवमुच्चार्यततोब्रह्माद्यन्यतमंनामोच्चार्यतेनमइतिब्रूयादेवमष्टौमंत्राभवंतितान्मनसैवजपेदित्यर्थः ‘ धियायदक्षरश्रेणिंवर्णस्वरविभूषिताम् । उच्चरेदर्थसंस्मृत्यासउक्तोमानसोजपः’इतिमानसजपलक्षणंव्यासोक्तं २४ बध्वांजलिमिति । स्वासनेउपविश्यांजलिंवध्वाचमंत्रान्मनसाजपेदितिपूर्वेणसंबंधःततोमुष्टिपरिमितसक्तून्प्राश्यभुक्तात्रिवारमाचम्यचनाभौनिधायहस्तंमंत्रान्पठेदित्यर्थः ६२५ तान्मंत्रानाह आत्मनेइति । आत्मांतरात्मप्रजापतिपदानिचप्रत्येकंप्रणवादीनिस्वाहापदांतानिचसंति नाभिमंत्रणोपयोगिमंत्रत्रयात्मकानिभवंतीत्यर्थः ६२६ पयइति । ततःपयःप्रसृतित्रयंप्रत्येकंत्रिवारंभक्षणीयं पूर्वोक्तसक्तुभक्षणेऽस्यत्रयस्यपयोदधिसर्पीरूपस्यचभक्षणेप्रणवरूपएवमंत्रउच्चार्यइत्यर्थः यद्यपिकल्पकारात्रिवृदित्यादिकंमंत्रंपठंतितथापितत्रत्रिवृदादिपदानांप्रणवपरत्वात्प्रणवस्यार्थविषयास्मरणंभवत्येवेतिभावः ६२७ ततआचम्यप्राङ्मुखेनद्विजेनप्रणवोगायत्रीचयथाशक्तिजप्येइत्याह आचम्येति । अत्रोपवाससंकल्पस्यकर्त्तव्य

ब्रह्मादिनामकान्मंत्रानष्टौतान्प्रणवादिकान् ॥ नमोंतांश्चचतुर्थ्याचसंयुतान्मनसाजपेत ६२४ बध्वांजलिंचसंविश्यस्वासनेविजितेंद्रियः ॥ सक्तुमुष्टिंततःप्राश्यत्रिराचम्यचमंत्रयेत् ६२५ आत्मनेचतथैवायंप्रवदेदंतरात्मने ॥ प्रजापतयइत्येतंतृतीयंमंत्रमीरयेत् ॥ स्वाहांतंप्रणवादिस्यात्त्रयंनाभेस्तुमंत्रणे ६२६ पयोदधितथासर्पिस्त्रिवारंप्राशयेत्क्रमात् ॥ सक्तूनांचत्रयस्यास्यप्राशनेप्रणवेरणम् ६२७ आचम्यचजपेत्पश्चात्संविश्यप्राङ्मुखःशुचिः ॥ प्रणवंसहगायत्र्यायथाशक्तिद्विजोत्तमः ६२८ ओंकारंसर्ववेदादिंवेदादीनथवाखिलान् ॥ उच्चार्यप्रविशेद्धीमान्सावित्रींविधिनामुना ६२९ भूर्भुवःस्वरितिप्रोच्यव्याहृतीस्तिस्रआत्मवान् ॥ सावित्रींप्रविशामीतिद्विर्मंत्राःषट्समीरिताः ६३० त्रिपदामत्रगायत्रींपच्छोमंत्रद्वयेपठेत् ॥ अर्धतःपादतस्तद्वत्समग्रांचक्रमात्सुधीः ६३१ आदित्यास्तमयात्पूर्वंस्वगृह्योक्तप्रकारतः ॥ श्रौतंस्मार्तंतथैवाग्निंलौकिकंवापिनिक्षिपेत् ॥ कुंडेवास्थंडिलेवापिसावधानमनाःपुमान् ६३२

तामाहुरितिबोध्यं ६२८ ओंकारमिति । ततःसर्ववेदादित्वेनप्रसिद्धंप्रणवमुच्चार्याथवाखिलान्वेदादीन्त्रय्याआदिमान्मंत्रानयथाइषेत्वेतियजुरादिःअग्निमीळइतिऋगादिः अग्नआयाहीतिसामादिः तानुच्चार्यअमुनावक्ष्यमाणविधिनासावित्रीप्रवेशमंत्रंपठेदित्यर्थः ६२९ अमुनेत्युक्तमेवाभिनयति भूरितिद्वाभ्यां । भूरादिव्याहृत्यभिधानपूर्वकंसावित्रीक्रमेकंप्रवेशकरोमीत्यर्थकंवाक्यंद्विर्वारद्वयंवदेदितिशेषः तस्यचद्विरावृत्तमंत्रस्यव्याहृतित्रययोगेसातेषण्मंत्राभवंतीत्यर्थः ६३० तेषुषट्सुमंत्रेषुगायत्रीपादानामुच्चारणक्रममाह त्रिपदामिति । अत्रउक्तमंत्राणामाद्यमंत्रत्रयेत्रिपदांगायत्रींपच्छःपादशस्तस्याएकैकंपादमितियावत्पठेत् चतुर्थेअर्धतःआद्यपादद्वयंपठेत् पंचमेपादतःतृतीयंपादंपठेत् षष्ठेतुसमग्रामेवतांपठेत् एतंगायत्रीपाठक्रममनुसृत्यपूर्वोक्तमंत्रपाठइत्यर्थः ६३१ ततोब्रह्मान्वाधानाख्यंकर्मैकंकर्त्तव्यतयाह आदित्येतित्रिभिः । ततःसूर्यास्तमयात्पूर्वंश्रौतंत्रेताख्यंस्मार्त्तमौपासनाख्यंलौकिकंविप्रस्थानानीतंवाग्निंकुंडेस्थंडिलेवाकरिष्यमाणहोमार्थंनिदध्यात् तत्रचाग्नौस्वगृह्यसूत्रानुसारेणसायंकालिकमग्निहोत्राख्यंहोमंकृत्वाथआघाराज्यभागपर्यंतमंगजातंविधायततओंस्वाहेतिमंत्रेणाज्याहुतिंदद्यादनेनैवमंत्रेणपूर्णाहुतिरपिसंपूर्णानिष्पन्नाभवतिइत्येतत्कर्मब्रह्मान्वाधानसंज्ञमितीरितंप्रोक्तंस्मृतिष्वितित्रयाणामर्थः ६३२

॥ २६ ॥

६३३ । ६३४ ततःसायंसंध्यामुपास्याग्नेरुत्तरदेशेदर्भानास्तीर्योपविष्टोगायत्रीप्रतिपाद्यंब्रह्मस्मरेत्तस्यांरात्रौजागरणंचकुर्यादित्याह सायमिति ६३५ तस्यामेवरात्राविष्टिरपिकार्येतिदर्शयन्नन्यनु सारेणेष्टिव्यवस्थामाह अग्निहोत्रीति । सयदिश्रुतिचोदितैःश्रौतैरग्निभिरग्निहोत्रीस्यात्तदानिजैरेवतैरग्निभिराग्नेयमिग्निदेवताकांवैश्वानर्याख्यामिष्टिंकृत्वात्रैधातवींराजाधिराजस्वराड्गुणाविशिष्टदेवता कांत्रैधातवींसंज्ञामिष्टिंकुर्यात् सयदिऔपासनीऔपासनाख्यस्मार्ताग्निमान्तदाप्राजापत्याख्यामेवेष्टिंनिजेनस्मार्तेनाग्निनाकुर्यात् यस्तुविधुरःपूर्वाश्रमंसमाप्यागृहीतोत्तराश्रमलक्षणःसोपितांप्रा जापत्यामेवकुर्यात् केन विधुराग्निनाविधुरसंबंधिनापृष्ठोदिवीत्यादिमंत्रोत्पादितेनाग्निनेतिद्वयोरर्थः ६३६ । ६३७ ब्रह्मचारिवानप्रस्थादिभिस्तुपवित्रस्थानाहृतलक्षणलौकिकाग्नावेवप्राजापत्येष्टि रूपंकर्मकार्यमित्याह ब्रह्मेति ६३८ केचित्तुश्रौताग्निमतामपिप्राजापत्येष्टिःकर्तव्याइतिवदंति परेतुतथानवदंतिकिंतूक्तांव्यवस्थामेवांगीकुर्वंतीत्याह आहितेति । आहिताग्नयःश्रौताग्निमंतःअनाहि

यथाशास्त्रंततःसायंहोमंसम्यग्विधायहि ॥ आज्यभागांतकंकर्मस्वगृह्योक्तप्रकारतः ६३३ कृत्वातस्मिंस्ततःकुर्यादग्नावाज्याहुतिंपुमान् ॥ भूःस्वाहेतिचसं पूर्णांपूर्णाहुतिरितीरितम् ६३४ सायंसंध्यामुपास्याथवन्हेरुत्तरतस्ततः ॥ आस्तीर्यदर्भानासीनःकुर्याज्जागरणंततः ॥ तस्यांरात्रौजपन्ब्रह्मगायत्र्याख्यंसनात नम् ६३५ अग्निहोत्रीनिजैरेववन्हिभिःश्रुतिचोदितैः ॥ आग्नेयींप्रविधायैवकुर्यात्त्रैधातवींततः ६३६ इष्टिमौपासनीतद्वत्प्राजापत्यांसमाचरेत् ॥ निजाग्नि नापिविधुरस्तामेवविधुराग्निना ६३७ ब्रह्मचर्यादयःसर्वेलौकिकेजातवेदसि ॥ स्थानात्पवित्रादानीतेकर्मकुर्युरिदंसदा ६३८ आहितानाहिताग्नीनामनग्नीनांच केचन ॥ प्राजापत्याभिधामिष्टिमिच्छंतिनपरेतथा ६३९ इष्टिंकृत्वाथवाऽकृत्वासाग्निर्वापिनिरग्निकः ॥ वक्ष्यमाणमिदंकर्मकुर्यात्सर्वंद्विजोत्तमः ६४० ब्राह्मेमुहू र्तेउत्थायस्नात्वाविप्रोयथाविधि ॥ जलतोमंत्रतोवापिभस्मनावास्वशक्तितः ६४१ अग्नौततश्चरुंविद्वान्श्रपयेत्स्वात्मनःसदा ॥ प्रागुदग्वाथतंपक्वंचरुमुद्वासये ततः ६४२ अभिघार्यजपेत्पश्चाद्व्याहृतित्रयमात्मवान् ॥ तथापुरुषसूक्तंचमंत्रानेतांश्चधर्मवित् ६४३ इंद्रायप्रवदेत्स्वाहाथप्रजापतयेपिच ॥ स्वाहाविश्वेभ्यए तेभ्योदेवेभ्योब्रह्मणेपिच ६४४ स्वाहांतंद्वयमप्येतदुच्चरेत्पूर्ववद्द्विजः ॥ चत्वारःकथितामंत्राएतइंद्रादिदेवताः ६४५ इदंसर्वंजपित्वाथपुण्याहंवाचयेत्पुनः ॥ स्रु च्याज्यंपरिगृह्याथजुहुयाद्विमुखाहुतिम् ॥ स्वाहांतमग्नयेमंत्रमुच्चार्येदंसमाहितः ६४६

ताग्नयःस्मार्ताग्नयः अनग्नयःअग्निहीनाविधुरादयः तेषामिति ६३९ इष्टिनिर्णयमग्रेकरिष्यामित्यभिसंधायतद्व्यतिरिक्तंसंन्यासांगतयावश्यकर्तव्यंतृतीयदिवसकृत्यमाह इष्टिमित्यादिना । तिष्ठत्वि ष्टिविचारस्तथापिसर्वैरिदंवक्ष्यमाणंतुकर्तव्यमेवेत्यर्थः ६४० ब्राह्मेइति । ब्राह्ममुहूर्तेतुदर्भासनादुत्थायजलेनशन्नआपइत्यादिमंत्रैर्भस्मनावायथाशक्तिस्नात्वाआत्मीयेग्नौचरुपाकंकुर्यात् तंचपक्वमग्नेः प्रागुदग्वादेशउद्वासयेत्ततोऽग्नेरवतार्यनिदध्यादितिद्वयोरर्थः चरुर्नामअनास्त्रावितांतरूष्मपक्वओदनः ६४१ । ६४२ अभिघार्येति । तंचरुमभिघार्यक्षारितघृतंकृत्वाव्याहृतीःपुरुषसूक्तंसहस्रशीर्षेत्या दिषोडशर्चंवक्ष्यमाणमंत्रांश्चपठेदित्यर्थः ६४३ तन्मंत्रानाह इंद्रायेति । इंद्रायस्वाहाप्रजापतयेस्वाहाविश्वेभ्योदेवेभ्यःस्वाहाब्रह्मणेस्वाहाइत्याकाराइंद्रादिप्रकाशकामंत्राजप्याइतिद्वयोरर्थः ६४४ ६४५ इदमिति । ततःपूर्वंद्विरसेकारितमपिपुण्याहवाचनंपुनःकृत्वास्रुचिहोमपात्रविशेषेसंस्कृतंघृतंनिधायाग्नयेस्वाहेतिमंत्रेणाग्निमुखसंज्ञामाहुतिंजुहुयादित्यर्थः ४४६

प्रधानाहुतीर्दर्शयति प्राणेति । भोजनादौक्रियमाणेप्राणाग्निहोत्राख्येकर्मणिविनियुक्तैःप्राणादिनामघटितैःस्वाहांतैःपंचभिर्मंत्रैस्तथास्वशाखापठितपुरुषसूक्तेनप्रत्यृचंजुहुयादित्यर्थः तत्रक्रमेणहोतव्यंद्रव्याणितुसमिदाज्यचरुलक्षणानीत्यर्थः ६४७ अग्नयेइति । ततःस्विष्टकृतेऽग्नयेइतिमंत्रेणस्वाहांतेनजुहुयात्पुरुषसूक्तंजपेच्चेत्यर्थः ६४८ ततोविरजाहोमंसांगंकुर्यादित्याह उपरिष्टादिति । उपरिष्टादुक्तहोमानंतरंपुनश्चरुंविधायविरजाहोमाख्येनकर्मणासंयुतंसंबद्धंतंत्रमंगजातरूपामितिकर्त्तव्यतांपूर्णाहुतिपर्यंतांप्रविधायहुतशेषंप्राशयेत् न्यासोद्यतंप्रत्याचार्यइतिशेषः अत्रसांगाविरजाहोमेएषवक्ष्यमाणःक्रमोपिज्ञेयः कीदृशः शास्त्रेणविरजाहोमविधायकागमेनवेदितःप्रकाशितइत्यर्थः ' तंत्रंकुटुंबकृत्येस्यात्कारणेचपरिच्छदे । इतिकर्त्तव्यतायांच ' इतिविश्वः ६४९ तंक्रममभिनयति आज्येनेतिद्वाभ्यां । आज्यविशिष्टेनचरुणाविरजाहोमंकृत्वातच्छेषंसर्पिर्युक्तचरुरूपंसंप्राश्यभक्षयित्वाचम्यचओंस्वाहेतिमंत्रेणपूर्णाहुतिंकुर्यादितिद्वयोरर्थः ६५० । ६५१ परिशिष्टमिष्टेर्विचारंप्रवर्त्तयंस्तत्रमतभेदंदर्शयति इष्टिरितित्रिभिः । सर्वासर्वप्रकारापिइष्टिःसाग्नेःश्रौताग्निमतएवकार्यानेतरस्येतिकेषांचिन्मतं अन्येतुप्रजापत्याख्येष्टिपर्युदासेनप्रथममतमंगीकुर्वंति यतऔपासनाख्य

प्राणाहुतिसमुद्दिष्टैर्जुहुयान्मंत्रपंचकैः ॥ पौरुषेणापिसूक्तेनस्वशाखापठितेनहि ॥ समिदाज्यचरूंस्तद्वज्जुहुयात्क्रमतोद्विजः ६४७ अग्नयेजुहुयादाज्याहुत्यास्विष्टकृतेततः ॥ जपेच्चपौरुषंसूक्तंस्वशास्त्रोक्तप्रकारतः ६४८ उपरिष्टात्ततस्तंत्रंविरजाहोमसंयुतम् ॥ पूर्णाहुत्याचसंयुक्तंप्रविधायचरुंततः ॥ प्राशयेत्क्रमएषोत्रज्ञातव्यःशास्त्रवेदितः ६४९ आज्येनचरुणासार्द्धंविरजाहोमईरितः ॥ विरजाहोमतःपश्चाच्चरुंसंप्राश्यसर्पिषा ६५० आचम्यजुहुयात्पश्चात्पूर्णाहुतिमतंद्रितः ओंस्वाहेतिचमंत्रेणब्राह्मणोनियतःशुचिः ६५१ इष्टिःसर्वापिसाग्नेःस्यान्निरग्नेनवकाचन ॥ इतिकेचिद्वदंत्यन्येप्राजापत्याविवर्जितम् ॥ औपासनाग्निसंयोगात्प्राजापत्येष्टिरिष्यते ६५२ वचनादेवसर्वेषांचतुर्थाश्रमसंग्रहे ॥ प्राजापत्येष्टिरुदितानिषादस्थपतीष्टिवत् ॥ ततःसाग्नेर्निरग्नेःस्यादिष्टिरेषेतिकेचन ६५३ एवमेतेत्रयःपक्षाःश्रौतेस्मार्तेचलौकिके ॥ वन्हाविष्टौमयोक्तास्तेविप्राणांमतभेदतः ६५४ त्रैधातवीतथाग्नेयीइष्टिरुक्ताग्निहोत्रिणः ॥ भवेत्सापरहंसानांनान्यत्रेतिचकेचन ६५५ परहंसाश्रमादन्यंन्यासंचेदग्निहोत्रिणः ॥ कुर्युस्तत्रप्रकुर्वीरन्प्राजापत्येष्टिमादरात् ६५६

स्मार्त्ताग्निसंयोगमात्रेणापिन्यासांगप्राजापत्येष्ट्यधिकारस्तैरिष्यतेइत्यर्थः ६५२ तृतीयंमतमाह वचनादेवेति । यथःनिषादस्थपतिंयाजयेदितिवाक्येनश्रौतकर्मधारयसमाससंरक्षणायसंकरजातीयस्यापिनिषादमुख्यस्येष्ट्यधिकारःकल्प्यतेतथाग्राह्मीमिष्टिंनिर्वपेदित्यादिश्रुत्या प्राजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणां आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादितिस्मृत्याचइष्टिसंन्यासयोःसमानकर्तृकत्वनिर्देशेनानग्नीनामपिप्राजापत्येष्ट्यधिकारःकल्प्यतेइत्यर्थः ६५३ उक्तमतत्रयशालिनामाशयानाहएवमिति श्रौताग्नावेवप्राजापत्येष्टिर्भवतीत्याशयेनाद्यपक्षस्यप्रवृत्तिः स्मार्तेग्नावपिसाभवतीत्याशयेनद्वितीयस्यलौकिकेपिसास्यादित्याशयेनतुतृतीयस्येत्यर्थः ६५४ जाबालादिवाक्यानुसारित्वेनाभ्यर्हितंपक्षमाह त्रैधातवीतित्रिभिः । त्रैधातवीसंज्ञाआग्नेयीवैश्वानरीसंज्ञाचेष्टिरग्निहोत्रिणःश्रौताग्निमतएवपरमहंसानाधर्मभूतेचतुर्थसंन्यासेकरिष्यमाणेएवचकर्त्तव्याभवेन्नान्यत्रकुटीचकादिसंन्यासेइतिकेचनद्विजोत्तमाआहुरितितृतीयेनाभिसंबंधः ६५५ कुटीचकादिन्यासग्रहणांगतयातुश्रौताग्निमद्भिरपिप्राजापत्यैवकार्येतिवदंतीत्याह परहंसाश्रमादिति । स्पष्टम् ६५३

एवमिति । विषयतःन्यासविशेषरूपमग्निहोत्रिरूपंचविषयमपेक्ष्यहिनिश्चितांव्यवस्थांकेचनद्विजोत्तमाःप्राहुः तेषांद्विजोत्तमत्वेहेतुगर्भंविशेषणद्वयंपौराणिकाइत्यादि पुराणानांप्राचीनानांश्रुत्यापिवाक्यानांविस्तारः । तेषांतर्ककुशलतामाह आहिताग्नेरिति । आहिताग्निभिन्नस्येष्ट्यधिकारोनास्तीनिवर्दतइत्यर्थः अयंभावः अग्निसाध्यानीष्ट्यादीनिकर्माण्यग्निमंतमधिकारिणंप्राप्यननिरग्नेरधिकारंकल्पयंति नहिनिषादस्थपतेरिवनिरग्नेरधिकारंविनाकस्याश्चिच्छ्रुतेरनुपपत्तिरिति ६५७ निगमयति त्रैधातवीति । अग्निहोत्रिणःपारमहंस्यग्रहणकालेआग्नेयीत्रैधातव्योरनुष्ठानंतुजाबालवाक्यान्निश्चितमेव प्राजापत्यायास्तुश्रौताग्निमताधिकर्त्तव्यत्वंस्मार्ताग्निमतैवकर्त्तव्यत्वंलौकिकाग्नावपिकर्त्तव्यत्वमित्येवमाकारोविवादोनानापक्षपरिग्रहोद्विजानांश्रुत्यादिविदांवर्त्ततेसचयथासंभवंविकल्पेनसमाधेयइतिभावः ६५८ यद्येष्टिव्यतिरिक्तंब्राह्मेमुहूर्तेचोत्थायेत्यादिनापूर्ववर्णितंतत्सर्वेषांसंन्यासग्रहणादावनुष्ठानेतुकस्यापिनविवादइत्याह मुखेति । मुखाहुतिमुखंअग्नयेस्वाहेतिमंत्रेणयाहुतिस्तत्प्रभृतिपूर्णाहुतिपर्यंतंयत्कर्मोक्तंतत्सर्वसाधारण्येनविवादइत्यर्थः ६५९ प्रकृतमनुसरतिअग्नाविति । श्रौताद्यन्यतमेऽग्नावुक्तंकर्मविधायततऔत्तरंउत्तरनारायणीयपाठेनानुष्ठेयम् सेचनंजलाशयेपरिअभिलक्ष्यगृहान्निर्गमनम् सपत्वपाठेउत्तरकालिकंपरिसेचनंसर्वतोनुग्रहरूपामृतवृष्टिंकुर्यादित्यर्थः ततउत्तरनारायणेनगृहान्निर्गच्छेत्ततस्तेभ्यआशिषंदद्या

एवंविषयतःप्राहुर्व्यवस्थांहिद्विजोत्तमाः ॥ पौराणिकाआहिताग्नेरन्यत्रेष्टिनिवारकाः ६५७ त्रैधातवीतथाग्नेयीसर्वथैवाग्निहोत्रिणः ॥ प्राजापत्याकृतेवादोवर्ततेत्रद्विजन्मनाम् ६५८ मुखाहुतिमुखंचैतत्पूर्णाहुत्यंतमीरितम् ॥ अविवादंपरेहेंसेंसर्वेषांचद्विजन्मनाम् ६५९ अग्नौश्रौतेतथास्मार्तेलौकिकेवाविधायतत् ॥ कर्मसर्वंततःकुर्यादौत्तरंपरिसिचनम् ६६० ऋत्विग्भ्योदक्षिणांदद्याद्बलीवर्दंसकांचनम् ॥ चर्वाज्ययोस्तथाशेषमन्यच्चापिस्वशक्तितः ६६१ क्षमाप्यतांस्तथाबंधून्न्यानपिविसर्ज्यच ॥ पुत्रदारादिकान्सर्वान्निःसंगोयतिवद्भवेत् ६६२ स्वजनाश्चततःसर्वेस्नेहमात्रविवर्जिताः ॥ स्वस्वस्थानानिगच्छेयुःप्रहृष्टमनसोपिवा ॥ स्थितिंतत्रैवतेकुर्युःप्रेक्षकाइवकौतुकम् ६६३ प्रातर्होमादिकंतत्रकुर्यात्सत्स्नेहवर्जितः ॥ समासिंचंतुमेत्यादिमंत्रादग्नेरुपस्थितिं ६६४ कृत्वायातेह्ययंतेवातयोरन्यतरेणवा ॥ त्रिवारंमंत्रतःस्वीयमग्निमारोपयेद्द्विजः ६६५ यदानविद्यतेवन्हिःश्रौतःस्मार्त्तोपिलौकिकः ॥ अप्स्वेवात्रतदाहोमंकृत्वाकुर्यात्स्वरोपणम् ६६६

दितिविषयतिकृद्धिकृत्तमितिभावः ६६० अनुग्रहमेवविशदयति ऋत्विग्भ्यइति । ऋत्विग्भ्योऽध्वर्युप्रभृतिभ्योवलीवर्दंगोर्दक्षिणेतिविहितंतथाकांचनंचरुशेषमाज्यशेषमन्यद्धानादिकंयथाशक्तिदद्यात् ६६१ क्षमाप्येति । तान्वृत्विजोबंधूनन्यांश्चस्वकीयान्युक्तयायपराधान्क्षमाप्यपुत्रादीन्संप्रतिसंज्ञकर्मानुष्ठानेनान्यांश्चआशीरादिभिरभिनंदनेनविसर्ज्यपतिवत्प्रैषोच्चारणानंतरंयथानिःसंगोनभवितव्यंतथापूर्वंभवेदित्यर्थः ६६२ बांधवैश्चतदागृहान्प्रतिगंतव्यंतस्मिन्ममत्वंविहायतद्देशेवास्थातव्यमित्याह स्वजनाइति । प्रेक्षकाइतिभविष्यतिष्णुल् कौतुकंदिदृक्षवइतितदर्थः ६६३ अग्नीनामात्मन्यारोपणस्यैतिकर्त्तव्यतामाह प्रातरिति । तत्रोक्तहोमदेशेप्रातर्होमंनित्यंयथाक्रियतेतथाकृत्वासमासिंचंतुमरुतःसमिंद्रइत्यादिमंत्रेणाग्नेरुपस्थितिमुपस्थानंविधायायातेअग्नेयज्ञियातनूरित्यादिनाअयंतेयोनिर्ऋत्वियइत्यादिनावामंत्रेणत्रिवारंपठितेनस्वीयमग्निंस्वयमुत्पादितंश्रौताद्यन्यतममग्निंमुखमपानपूर्वंक्रमुदरेसमारोपयेदित्यर्थः ६६४ । ६६५ यस्यतुकोप्यग्निर्नास्तितेनजलएवसर्वमग्निसाध्यंकर्मकार्यमित्याह यदेति । स्वरोपणंभावनामयस्याग्नेःस्वांतरारोपणंकुर्यादिति ६६६

उदरेइति । बहिःस्थानग्नीन्स्वोदरेसमारोप्यतत्रआगमोक्तप्राणाग्निहोत्रेतिकर्त्तव्यतयाभावनामकुंडेपुतानग्नींश्चिस्वान्यवस्थाप्यतत्राध्यात्मिकेवाग्रूपाग्नौसावित्रींप्रवेशकालेसमारोपितांसावित्रींपुनः स्मरेत्प्रवेशमंत्रान्पुनःपठेदितियावत् सावित्रींस्ववाचाग्नौसमारोपयेदितिप्रोक्तंमुंडकोपनिषदि ६६७ ततइति । ततोजलसमीपंगत्वानाभिपरिमितेजलेस्थित्वाऽमून्वक्ष्यमाणान्मंत्रान्जपेदित्यर्थः ६६८ प्राहेति । तान्मंत्रानूर्ध्वबाहुःसन्प्राहत्य्क्तंवदेदित्यर्थः केतेमंत्राइत्याकांक्षायामाह अहमित्यादि । अहंवृक्षस्येत्यादियचइत्यंतंत्रिशंकोर्वेदानुवचनमित्यंतंजपेदितिसंबंधः तथा यश्छंदसामितिशांतिमंत्रेनववाक्यानिभवंतितानिजपेत् तत्रसंबभूवेत्यंतंवाक्यद्वयंपरिशिष्टसप्तवाक्यानीतिविवेकः अथोतदनंतरंपुत्रैषणायावित्तैषणायाइत्यादिकंजपेदित्यर्थः ६६९ प्रैषमंत्रमाह एतदंतइति । ततएकैकव्याहृतिपूर्वकंसंन्यस्तपदंत्रिवारमुच्चारयेत् क्रमेणमंदमध्यमोत्तमैःस्वरैरित्यर्थः तथाचनवधाप्रैषपाठइतिभावः ६७० आतुरसंन्यासस्तुश्राद्धादीतिकर्त्तव्यतांविनापिप्रैषोच्चारणमात्रेणैवसिद्ध्यतीत्याह आतुरस्येति । स्पष्टम् ६७१ उच्चारणेप्यशक्तौसत्यांमनसैवोक्तंप्रैषमंत्रंपठेत् यद्यातुरःस्यान्मनसावाचासंन्यसेदितिश्रुतेरित्याह प्रैषामिति ६७२ आ

उदरेस्वेसमारोप्यवन्हींश्चित्वाततोद्विजः ॥ पूर्वमारोपितांतत्रसावित्रींसंस्मरेत्पुनः ६६७ ततोगत्वाजलाभ्यासंप्रातःसंध्यामुपास्यच ॥ नाभिदघ्नेजलेस्थित्वाजपेन्मंत्रानमूंस्ततः ६६८ प्राहतानूर्ध्वबाहुःसन्नहंवृक्षस्यरेरिवा ॥ इत्यादिवचइत्यंतंतद्वद्यश्छंदसामिति ॥ नववाक्यान्यथोपुत्रैषणायाइतिवाजपेत् ६९ एतदंतेप्रकुर्वीतव्याहृतित्रयतःपुमान् ॥ त्रिःसंन्यस्तंमयेत्येवंमंदमध्योत्तमस्वरैः ६७० आतुरस्यतुसंन्यासेप्रैषमात्रंहिकेवलम् ॥ नश्राद्धादिनचान्यत्स्याज्जलमध्यादिसर्पणम् ६७१ प्रैषंवक्तुमशक्तश्चेद्वाचासौमनसैवहि ॥ प्रैषंकुर्यात्स्वयंधीरोमरणेसमुपस्थिते ६७२ आतुराणांतुसंन्यासेनविधिर्नैवचक्रिया ॥ मानसाद्वाचकाद्वापिप्रैषादेवात्रजायते ६७३ तनुंत्यजेद्धियोविप्रःकृत्वासंन्यासमात्मवान् ॥ कालांतरेथवासद्योब्रह्मलोकंसगच्छति ६७४ संन्यस्तमितियोब्रूयात्प्राणैःकंठगतैरपि ॥ ससूर्यमंडलंभित्त्वाब्रह्मलोकेमहीयते ६७५ ब्रह्मणोमरणेतेनब्रह्मणासहधैर्यवान् ॥ महाभूतलयेप्राप्तेपरंब्रह्माधिगच्छति ६७६ त्रिंशत्परांस्त्रिंशदवरांस्त्रिंशच्चपरतःपरान् ॥ सद्यःसंन्यसनादेवनरकात्त्रायतेपितॄन् ६७७ कुलानांचशतंपूर्वमपरंचशतत्रयम् ॥ एतत्स्यात्सुकृतेलोकेसंन्यस्तस्यकुलेस्तियत् ६७८

तुरस्यतावतैवसंन्यासंपूर्तिःश्रुतेरिष्टायथागृहमेधीयेष्टेःपूर्तिराज्यभागौयजतीतिवाक्यविहिताज्यभागाभ्यामित्याशयेनाह आतुराणामिति । विधिरुत्पत्तिविधिविहितंप्रधानकर्मजलेस्थित्वासंकल्परूपंक्रियातदुपकारकमंगजातंश्राद्धेष्ट्यादितत्सर्वंविनापिकेवलप्रैषवाक्योच्चारणादिनाअत्रआतुरदशायांजायतेसंन्यासइतिसंबंधः ६७३ संन्यासफलमाह तनुमिति । सतिप्रतिबंधेकालांतरेतदभावेसद्यइतिविवेकः संन्यासाद्ब्रह्मणःस्थानमितिस्मृतेरितिभावः ६७४ कपिलवाक्यमर्थतःसंगृह्णाति संन्यस्तमितिद्वाभ्यां । प्रयाणकालेपिसंन्यस्तपदोच्चारणेब्रह्मलोकेपूज्यत्वंतत्रहिरण्यगर्भमोक्षकालेतेनहिरण्यगर्भेणसहमोक्षश्चभवतीतिद्वयोरर्थः ६७५ । ६७६ दक्षवाक्यंपठति त्रिंशत्संख्याकान्परान्त्रिंशच्चतेभ्यःपरेभ्यःपरान्नवतिसंख्याकानितियावत् तावतःपितॄनतीतवंश्यान्नरकात्त्रायतइत्यर्थः ६७७ ' शतंकुलानांपुरतोवभूयतथाकुलानांत्रिशतंसमग्रम् । एतेभवंतिसुकृतस्यलोकेयेषांकुलेसंन्यसतीहविप्रः ' इतिजाबालवाक्यमर्थतःसंगृह्णाति कुलानामिति । कुलानांवंश्यपुरुषाणांशतंपूर्वमतीतंतथाकुलानांशतत्रयमपरंभविष्यत्एतत्सर्वंसुकृतसाध्येलोकेस्याप्तिर्भवति यतःसंन्यस्तस्यकुलेवंशेभवतीत्यर्थः ६७८

संन्यासपदार्थंवदन्परमहंसस्यमुख्यतामाह न्यासइति । न्यासपदेनत्यागउच्यतेसंपदेनचतस्यत्यागस्यसम्यक्त्वमुच्यतेतच्चसम्यक्त्वमीदृशमेवमाकारं ईदृशंकीदृशमित्याकांक्षायामाह सर्वथे ति । सर्वथाशरीरवाङ्मनोभिःक्रियमाणस्यत्यजनस्यसर्वदासर्वत्रसर्वदेशकालावच्छिन्नत्वंतथासर्वत्वंसर्वदृश्यविषयकत्वंयत्तदेवसम्यक्त्वमित्यर्थः ६७९ अथातुरन्यासप्रसंगेनपरमहंसस्यमृ तौसत्यांतद्बांधवादिभिर्यत्कर्त्तव्यंशौनकबौधायनादिभिर्दर्शितंतत्प्रपंचयति परोहंसइतिपंचाशताश्लोकैः । अयंद्विजःपरमहंसतांगतइतिज्ञानादनंतरंसपरमहंसोयदिम्रियेतअथतस्यपुत्राद्यैर्नृपतिपर्यं तैरधिकारिभिर्यत्तद्देहस्यसंस्कारादिकंकर्त्तव्यंतदुच्यतेइत्यर्थः ६८० संपादयेदिति तावत्तद्देहनयनार्थंरथाद्यन्यतमंसंपादयेत्तत्रविमानमधोलग्नदंडसक्तस्कंधैर्बहुभिर्वाह्यं आंदोलिकामध्यप्रोतदंडाद्वा भ्यांवाह्या ध्रुवंदृढावयवम् ६८१ कर्त्तव्यमुत्सवमभिनीयदर्शयति वादित्रेतिचतुर्भिः । महादेवादिभक्तायथाशिवरात्र्यादौवादित्रादिकंकारयंतितथाकारयेत् तत्रवादित्रंवाद्यशब्दः घोषोवेदादिश

न्यासस्त्यागइतिप्रोक्तःसम्यक्त्वंतस्यचेदृशम् ॥ सर्वथासर्वदासर्वंसर्वत्रत्यजनंस्मृतम् ॥ तच्चमुख्यंपदेहंसेजघन्यमपरत्रहि ६७९ परोहंसइतिज्ञानाद्द्विजस्तुम्रिय तेयदि ॥ पुत्राद्यैरथयस्तस्यसंस्कारःपरिकीर्त्यते ६८० संपादयेद्रथंचित्रंविमानंचापिनिर्मलम् ॥ आंदोलिकांचशिक्यंवाविस्तीर्णंमृदुलंध्रुवम् ६८१ वादित्रनृ त्यघोषंचजयशब्दंचकारयेत ॥ महादेवस्यविष्णोर्वाभक्त्यायद्वत्समुत्सवे ॥ स्नातादुकूलवसनास्तद्वच्चंदनचर्चिताः ६८२ तांबूलवदनाःसर्वेस्रग्विणोहर्षमाग ताः ॥ हरिद्राचूर्णदुग्धाद्यैःफलैर्नानाविधैरपि ६८३ सुगंधैःसुमनःसंघैरन्योन्यकरसंस्थितैः ॥ वसंतोत्सववत्कुर्युरुत्सवंविभवेसति ६८४ गृहाश्चराजमार्गाश्चसर्व तःपरिमार्जिताः । सिक्ताश्चंदनकर्पूरवारिभिर्गतपांसवः ६८५ पंचामृतेनतद्देहंस्नापयेच्छिवविष्णुवत ॥ पुण्यैर्जलैःसुगंधैश्चलेपयेच्चंदनादिभिः ६८६ अलंकुर्या त्सुमालाभिःसर्वतःप्रतिमामिव ॥ चंदनागुरुकर्पूरैर्धूपयेच्चमुहुर्मुहुः ॥ नीराजनैःसकर्पूरैश्चित्रैर्नीराजयेदपि ६८७ संस्थाप्यपूर्वसंप्रोक्तयानेसम्यगलंकृते ॥ देवव द्राजवच्चैनंवेदघोषैश्चसंयुतम् ॥ निःसारयेयुःसंस्थानाद्वनादिस्थानकंप्रति ६८८ पुण्यवृक्षेवनेगत्वानिर्जनेवावनस्पतौ ॥ देवालयेथवागोष्ठेमहानद्यास्तटेथवा ॥ अन्यत्रवाशुभेदेशेमलास्थ्यादिविवर्जिते ६८९ पुंप्रमाणांखनेद्भूमिंकूपवद्वर्तुलीकृताम् ॥ पठेयुःखनितारश्चव्याहृतीरसकृत्ततः ६९० सप्तव्याहृतिभिःखातंसं प्रोक्ष्यात्रद्विजोत्तमः ॥ दर्भासनंप्रकुर्वीतप्रणवेनभुवस्तले ६९१ सावित्र्यातत्रतद्देहंप्रक्षाल्यमलवर्जितम् ॥ पौरुषेणापिसूक्तेनस्नापयेद्विष्णुबुद्धितः ॥ गंधमा ल्यादिभिश्चैतदलंकुर्याद्यथापुरा ६९२

ब्दः ६८२ तांबूलेति । वसंतोत्सवोहोलिकातत्रयथोत्सवंकुर्वंतितथास्नानादिशालिनःसंतउत्सवंकुर्युः हरिद्राचूर्णादिमंगलद्रव्यैःसंयुक्तकराः तथाविभवेसतिगृहादयश्चंदनादिवारिभिःसिक्तागतपां सवःपरिहृतधूलिकाःकार्याइतित्रयाणामर्थः ६८३ । ६८४ । ६८५ तद्देहपूजांदेवप्रतिमावत्कर्त्तव्यतयावर्णयति पंचामृतेनेति । तद्देहंपरमहंसदेहं निगदव्याख्यातंद्वयम् ६८६ । ६८७ तन्नयनावि धिमाह संस्थाप्येति । पूर्वोक्तरथादिरूपेयानेवाहनेसंस्थाप्यसंस्थानान्मृतिदेशाद्वनादिदेशाभिमुखंनयेयुरिति ६८८ पुण्येति । पुण्याअश्वत्थादयोवृक्षायत्रतत्तथा तादृशवनादिदेशेगत्वापुरुषप्रमाणं खातंकूपवत्पंभूमौकुर्युरिति तत्खननकर्त्तृभिर्द्विजैर्व्याहृतयःपठनीयाइतिद्वयोरर्थः ६८९ । ६९० सप्तेति । तत्खातंसप्तव्याहृतिभिःसंप्रोक्ष्यतत्रखातगतभूमौप्रणवमंत्रेणदर्भासनंस्थापयेदिति ६९१ सावित्र्येति । तत्रखातबहिर्देशेतद्देहं सावित्रीमंत्रप्रयुक्तस्नानेनमलवर्जितंकृत्वापुरुषसूक्तेनविष्णुबुद्ध्यास्नापयेद्गंधादिभिरलंकुर्याच्चेति ६९३

विष्णोहति । ततस्तंदंहतस्मिन्खातेविष्णोहव्यंरक्षस्वेतिमंत्रेणनिक्षिपेत्ततस्तदीयदंडंत्रिधाकृत्वादक्षिणेकरेदद्यात् यद्यप्यातुरस्यदंडोविधिनासम्पादितोनविद्यतेतथापितंदंडमिदंविष्णुर्विचक्रमइत्यनेनमंत्रेणसंपाद्यसंन्यासधर्मवित्कश्चित्तत्करेदद्यादितिद्वयोरर्थः ९२ । ९३ हंसइत्यादीति । तस्यहृदयदेशेहस्तंनिधायहंसःशुचिषदित्यादिमंत्रंजपेत् भ्रूमध्येतंनिधायचपुरुषसूक्तंजपेत् मूर्द्धनिहस्तंनिधायचब्रह्मजज्ञानामित्यादिमंत्रंजपेदित्यर्थः ९५ भूमिरिति । ततोभूमिमगादित्यादिमंत्रेणतस्यमूर्द्धमध्येअश्मनापाषाणेनप्रहारंदद्यात्कुशलोविप्रइत्यर्थः ९६ उच्चारयंतइति । ततःप्रणवंव्याहृतीश्चोच्चारयंतोद्विजास्तंगर्तंपूरयेयुरिति ९७ श्वसृगालेति । यथातद्देहंश्वानःसृगालादयश्चनभक्षयेयुस्तथाकुर्वंत्वयं यतस्तद्देहस्यसृगालाद्यैर्भक्षणेदुर्भिक्षादिदेशोपद्रवाणामुत्पत्तिर्बोधायनेनोक्तेत्यर्थः ९८ संन्यासिनइति । एषउक्तोवक्ष्यःसंस्कारःसंन्यासिनोमुक्तस्योपकारायनभवतिकिंतुकर्तॄणामेवतत्करणेऽभ्युदयःसत्फलाप्तिरकरणेप्रत्यवायश्चभवतितदिदंसिद्धं इदंकिं यद्यपिविरक्ताइतीच्छंतियन्ममपरमहंसस्यदेहःश्वप्रभृतिभ्योदेयइतितथापिपरेअभ्युदयार्थिनोजनास्तथाभावंनेच्छंतीतिद्वयोरर्थः ९९ । ७०० फलितमाह यतइति । यतःपरमहंसदेहस्योक्तविधयाभूमौखनित्वापूरणमन्येषांकर्तॄणांचातुर्वर्णि

विष्णोहव्यंरक्षस्वेतिमंत्रमुच्चार्यनिक्षिपेत् । खातेतस्मिंस्ततोदंडमर्पयेद्दक्षिणेकरे ६९३ त्रिधाकृत्वाभवेद्दंडआतुरस्यनविद्यते ॥ संपाद्यतंतदासद्योदद्यात्संन्यासधर्मवित् ॥ अमुनामंत्रतोविद्वानिदंविष्णुर्विचक्रमे ९४ हंसइत्यादिकंमंत्रंजपेद्धृदयदेशतः ॥ भ्रूमध्येपौरुषंसूक्तंब्रह्मजेत्यादिमूर्द्धनि ९५ भूमिर्भूमिमगादित्थंमंत्रनोद्दमश्मना ॥ भिंद्यान्मूर्द्धनिमध्येचमेधावीब्राह्मणोत्तमः ९६ उच्चारयंतओंकारंव्याहृतीश्चद्विजोत्तमाः ॥ अवटंपूरयेयुस्तेपाषाणैश्चमृदादृढम् ९७ श्वसृगालादयोयद्वद्भक्षयेयुर्नतंतथा ॥ कुर्युरेवंनचेद्देवंदुर्भिक्षादिप्रजायते ९८ संन्यासिनोनकोप्येषसंस्कारःपरिकीर्तितः ॥ कर्तॄणाममुनायस्माद्भवेदभ्युदयःसदा ॥ प्रत्यवायोप्यकरणेततस्तेष्वेवसंस्मृतः ९९ देहःपरमहंसस्यदेयश्छित्त्वात्रखंडशः ॥ भूतेभ्यइतिचेच्छंतिविरक्तानपरेतथा ७०० यतःपरमहंसस्यपूरणंवृद्धिकारणम् ॥ अन्येषांवर्णिनांतेनपूरणीयःप्रसर्वदा १ कुटीचकादयोदाह्याःपूरणीयाश्चवाद्विजैः ॥ दाहःपरमहंसस्यनैवकार्यःकथंचन २ अस्मिन्दग्धेप्रदग्धाःस्युराशिषःप्राणिसंश्रयाः ॥ भक्षितेभक्षितास्तद्वत्तस्मात्तंपूरयेत्सदा ७०३ अग्निनाग्निरितिप्रोच्यसूर्यांतइतिचापरम् ॥ पठेन्मंत्रंहिसंपूर्णेखातेतस्मिन्द्विजोत्तमः ७०४ प्रहृष्टवदनाःसर्वेशोकक्लेशविवर्जिताः ॥ विवहात्सुत्सवेयद्वत्तद्वदेवव्यवस्थिताः ॥ कुर्युःप्रदक्षिणंतद्वन्नमस्कारांश्चशक्तितः ७०५ अवटस्योर्ध्वमास्थाप्यदेवालयमथापिवा ॥ अश्वत्थंवावटंवापिशस्यंवाऽन्यंवनस्पतिम् ७०६

कानांवृद्धेरभ्युदयस्यकारणंतेनपूरणंप्रशस्तमित्यर्थः १ अकरणेप्रत्यवायमभिनयति कुटीचकादयइति । यद्यपिकुटीचकबहूदकादीनांदाहादिकमपिमुनिभिरुक्तंतथापिपरमहंसविषयेतैरेवदाहनिषेधात्तद्दाहोनकार्यःसर्वथाऽनिष्टसाधनमितियावत् तथाच कपिलः 'अनग्नेर्दहनंकार्यंपूर्वंभिक्षोर्यथाविधि । विदुषस्तुनतत्कार्यमेकोद्दिष्टादिकंक्वचित्' पूर्वभिक्षुःकुटीचकःविद्वान्परमहंसः २ ततःकिमनिष्टमित्याह अस्मिन्निति । अस्मिन्परमहंसदेहेदेवप्रतिमावत्सर्वकामोपादानभूतेदग्धेसतिप्राणिनामाशिषएवदग्धाःस्युरित्युपचारः एवमग्रेपि ३ पूरणानंतरंकर्तव्यमाह अग्निनेति अग्निनाग्निःसमिध्यतेत्यादिकंसूर्यांतेइत्यादिकंचमंत्रंपूरणानंतरंद्विजोत्तमःपठेदिति ४ प्रहृष्टेति । ततउत्सवइवप्रहृष्टाःसंतःप्रदक्षिणादिकंकुर्युरिति ५ अवटस्योर्ध्वमिति । तस्यगर्तस्योर्ध्वमुपरिदेवालयमश्वत्थादिकंवाआस्थाप्यनिवेशयित्वातस्मिन्विष्णुप्रतिमाद्यन्यतमंप्रतिष्ठाप्यतत्पूजाप्रवर्तनीयामहामतिभिरितिद्वयोरर्थः ७०६

७०७ महामतित्वेप्रयोजकमाह किंबहूक्त्येति । यथातत्स्थानोपरिअशुचिद्रव्यसंपर्कोनस्यात्तथाकरणस्यावश्यकत्वात्तत्रदेवालयादिसंपादनेनतदिष्टसाधनंआम्राश्चसिक्ताःपितरश्चप्रीणिताइतिन्यायानुसरणेनमहामतित्वंस्फुटयतीतिभावः यथाकालांतरेप्यस्यपूरणस्थानस्योपरिष्टान्मलादिकंकथंचनापिनपतेत्तथाकुर्युरित्यन्वयः ८ ततःस्नानंतीर्थबुद्ध्याकार्यमित्याह प्रेतस्येति । प्रेतस्यमृतशरीरस्यदर्शनेस्पर्शेवजातियास्वस्मिन्नशुचित्वबुद्धिःप्रसिद्धासानकार्यापरंकिंतुविष्णोःप्रतिमायाःस्पर्शादौयाबुद्धिस्तांकृत्वास्नानंतैःकर्तव्यंपरंतुतत्स्नानमशुचित्वस्यनिवारकंनभवत्यशुचित्वस्यैवाभावादितिभावः ततोमनीपिणस्तस्यपरमहंसस्यस्नानेनसंभूतंयत्तीर्थंतद्भावनयास्नानंकुर्युर्नवाकुर्युः यतइहपरमहंसदेहस्यस्पर्शादौस्नानस्येच्छैवनियामिकेतिद्वयोरर्थः ९ । १० उक्तार्थेहेतुतयाआत्रिवाक्यद्वयं 'द्वेरूपेवासुदेवस्यचलंचाचलमेवच । चलंसंन्यासिनांरूपमचलंप्रतिमादिकं । देवताप्रतिमांदृष्ट्वायतिंदृष्ट्वैवदंडिनम् प्रणिपातमकुर्वाणोनरकंरौरवंव्रजेत्'इत्याकारमर्थतोनिबध्नाति प्राणेतिद्वाभ्यां । परमहंसदेहःप्राणनिर्गमनोत्तरंविष्णुप्रतिमातुल्यःपूर्वंतुसाक्षाद्विष्णुरित्यर्थः ११ अतएवेति । पुराणज्ञाःपुरातनार्थस्मर्तारःअत्र्यादयः १२ भारतवाक्यंपठति दुर्वृत्तइति स्पष्टम् १३ 'अपमा

वैष्णवींप्रतिमांतत्रलिंगंवाशैवमेवच ॥ आदित्यंवागणेशंवाभवानींवाश्रियंतथा ॥ प्रतिष्ठाप्यचपूजांचतत्रकुर्युर्महाधियः ७०७ किंबहूक्त्यातथाकुर्युर्यथाकालांतरेपिच ॥ मलास्थ्यादिपतेन्नास्यह्युपरिष्टात्कथंचन ७०८ प्रेतस्यदर्शनात्स्पर्शाद्बुद्धिर्याजायतेनृणाम् ॥ नतांकुर्युःपरंविष्णोःस्पर्शदर्शनसंभवाम् ७०९ कृत्वास्नानंचकुर्वीरन्नशुचित्वनिवारणम् ॥ परंतत्स्नानसंभूततीर्थबुद्ध्यामनीषिणः ॥ कुर्युर्वाप्यथवानैवस्नानंस्वेच्छावशादिह ७१० प्राणनिर्गमनादूर्ध्वंप्रतिमावैष्णवीतुसा ॥ देहःपरमहंसस्यजीवन्विष्णुरयंस्वयम् ७११ अतएवपुराणज्ञाएवमाहुर्मनीषिणः ॥ वैष्णवींप्रतिमांदृष्ट्वायतिंदृष्ट्वैवदंडिनम् ॥ प्रणिपातमकुर्वाणोनरकंप्रतिपद्यते ७१२ दुर्वृत्तोवासुवृत्तोवामूर्खःपंडितएववा ॥ काषायदंडमात्रेणयतिःपूज्योद्विजैःसदा ७१३ ब्रह्माविष्णुश्चरुद्रश्चशक्रोलोकपसंयुतः ॥ वस्वाद्याश्चगणाःसर्वेयतिदेहेवसंतिहि ७१४ पूजितेपूजिताएतेसर्वएवसुरोत्तमाः ॥ भवंतिचतिरस्कारात्सर्वेपिचतिरस्कृताः ७१५ भिक्षुर्यत्रचतत्रायंविश्वरूपधरोहरिः ॥ नित्यंतिष्ठतिसर्वात्मास्वदेहेइवचक्रभृत् ७१६ यत्किंचित्क्रियतेह्यस्यजनैस्तैःशुभाशुभम् ॥ दीयतेचान्नपानादिसद्यात्पुरुषोत्तमे ७१७ यतीनांचगुरुःशास्ताशास्ताराजादुरात्मनाम् ॥ इहप्रच्छन्नपापानांशास्तावैवस्वतोयमः १८ एवंविज्ञायसततंकर्मणामनसागिरा ॥ अनुकूलंयथाशक्तिकुर्युःपुण्यार्थिनोजनाः ७१९

नेकृतेतेषांदेवाःसर्वेऽपकारिताः'इत्यादिनारदवाक्यानांतात्पर्यमाह ब्रह्मेतिचतुर्भिः । स्पष्टंद्वयम् १४ । १५ भिक्षुरिति स्वदेहेस्वप्रतिमायांयथाविष्णुःसंनिहितस्तथाभिक्षुदेहेपीत्यर्थः १६ यतेर्देवप्रतिमासाम्यंस्फुटयति यत्किंचिदिति । उत्तरार्धेतदितिशेषः अस्ययतेःशुभाशुभंस्तुतिनिंदादिरूपंयत्किंचित्क्रियतेयच्चान्नपानादिकंदीयतेतदासयातिस्तत्सर्वंलोककृत्यंपुरुषोत्तमेविष्णौदद्यात्प्रापयेदित्यर्थः तत्फलंविष्णुरेवददातीतिभावः १७ यतेर्धर्मातिक्रमदर्शनेपिचातुर्वर्णिकैस्तद्दंडसंकल्पोनकार्यइतिपरिसंख्यामुखेनाह । यतीनांगुरूराजायमश्चेत्येतेत्रयएवप्रशास्तारस्तत्रधर्मसंदेहेगुरुःप्रशास्ता तदुक्तंजमदग्निना 'अथवायद्गुरुर्ब्रूयात्तत्कार्यमविशंकया । निग्रहेऽनुग्रहेचापिगुरुःसर्वत्रकारणम्'इति । दुरात्मनांप्रस्फुटपापानांराजाशास्ता तदुक्तंदक्षेण 'पारिव्राज्यंगृहीत्वातुयःस्वधर्मेनतिष्ठति श्वपदेनांकयित्वातंराजाशीघ्रंप्रवासयेत्' इहलोकेप्रच्छन्नपापानांतुयमःप्रशास्तेतितुप्रस्फुटमेवेति १८ फलितमाह एवमिति । एवमुक्तविधांशास्त्रसिद्धांमर्यादांविज्ञायपुण्यार्थिनोधैर्यकामाःवृद्धिमभीप्सवःअभ्युदयार्थिनोवाजनाःयतिमात्रस्यसर्वप्रकारस्ययतेर्जीवतोमृतस्यवाशरीरादिभिरनुकूलमेवकुर्युःकिमुतपरमहंसस्यपुरुषोत्तमस्येतिद्वयोःसंबंधः ७१९

७२० ततोस्येति । ततोदाहाप्रोग्यत्वादस्यपरमहंसस्यमरणेअशौचसदिकंनास्ति : तत्रउदकक्रियातिलांजलिदानम्. घृतप्राशनंघृतपानम् ज्योतिःस्पर्शोग्निप्रतपनम् आदिपदेनानिंबपत्रभक्षणग्रहः तथाचबौधायनः ' नतत्रशेषसंस्कारः' इति ७२१ बौधायनोक्तंतद्दहनादौअश्वमेधफललाभंदर्शयति पदेइति । तस्यपरमहंसस्यवहनेपूरणादिदेशप्रापणेप्रतिपादन्यासमश्वमेधफलंस्पर्शादौतु विष्णुप्रतिमास्पर्शादिजन्यफलसमंफलंभवेदिति ७२२ यतीनामिति । मानसेनवाचिकेनापिवाप्रेषोच्चारणेनपारमहंस्यंप्राप्तानांमरणेखननमेवंकार्यंनदाहइत्यर्थः ७२३ अत्रबौधायनवाक्यमेवपठति सर्वेति स्पष्टम् ७२४ अश्वमेधफलंसर्वेप्राप्नुवंतिपृथक्पृथगितिवाक्यार्थमाह येवहंतीति । हर्णस्पृष्ट्वायेवहंतीतिसंबंधः ७२५ अनुगच्छंतीति । स्पष्टम् ७२६ यतेःसंस्काराणांदाहादीनामभावेप्येकादशाहेपुत्रेणपार्वणंकर्त्तव्यतयास्मृतिषूक्तमित्याह यतीनामिति ७२७ तत्रश्राद्धेविशेषमाह विष्णुनामेति । विष्णुशब्दपूर्वकंपितुर्नामसमुच्चार्यविधिवत्संकल्प्यचाविवाहाद्युत्सववदेकादशोह्निपुत्रःपार्वणंकुर्यादितिपूर्वेणसंबंधः ७२८ पुत्रभिन्नास्तुपरमहंसभक्त्यानारायणबलिंवक्ष्यमाणविधयाविष्णुप्रीत्यैकुर्युरित्याह पुत्रादिति । अज्ञातयइतिच्छेदः ७२९ द्वा

यतिमात्रस्यकिंभूयःपरहंसस्यसर्वदा ॥ जीवतोपिमृतस्यात्रस्वयंवृद्धिमभीप्सवः ७२० ततोस्यमरणेनस्यात्राशौचंनोदकक्रिया ॥ नघृतप्राशनंज्योतिःस्पर्शनादिकदाचन ७२१ पदेपदेऽश्वमेधस्यफलंतद्दहनेभवेत् ॥ स्पर्शनेदर्शनेविष्णोःस्पर्शदर्शनसंभवम् ७२२ यतीनांपरहंसानांमनसावचसापिच ॥ प्रैषेस्यात्खननंत्वेतदन्येषांदहनंभवेत् ७२३ सर्वकर्मनिवृत्तस्यपरहंसस्यसर्वदा ॥ यतेर्नदहनंकार्यंनाशौचंनोदकक्रिया ७२४ येवहंतिमहात्मानःस्पृष्ट्वाचैवचहर्षतः ॥ अश्वमेधफलंतेषांद्विजानांस्यात्क्षणेक्षणे ७२५ अनुगच्छंतियेह्येनंवहंतिचखनंतिच ॥ पूरयंतिचतेसर्वेसदाशुद्धाःप्रकीर्तिताः ७२६ यतीनांनैवसंस्कारोनैवपिंडोदकक्रिया ॥ अहन्येकादशेप्राप्तेपुत्रःकुर्याद्विपार्वणम् ७२७ विष्णुनामसमुच्चार्यस्वपितुःस्नेहवर्जितः ॥ संकल्पविधिनायद्वद्विवाहाद्युत्सवेतथा ७२८ पुत्रादन्येप्रकुर्वीरन्ज्ञातयोऽज्ञातयोपिवा ॥ नारायणबलिंसर्वेपुरुषोत्तमतुष्टये ७२९ द्वादशेदिवसेप्राप्तेपुत्रोपिचतथैवसः ॥ पार्वणंप्रतिदायादौयेचान्येचद्विजातयः ७३० कृत्वाविष्णोर्महापूजांपायसंचनिवेदयेत् ॥ भूर्भुवःस्वरितिप्रोक्तैर्जुहुयात्पायसंपुनः ॥ संस्कृतंत्वथनैवेद्यंब्राह्मणेषुनिवेदयेत् ७३१ यतीन्गृहस्थान्साधून्वाग्रहीत्वाद्वादशावरान् ॥ आराध्यगंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः ७३२ संपूज्यभोजयित्वाथवासांसिविविधानिच ॥ यतिभ्योत्रप्रदेयानिगृहिभ्योदक्षिणाअपि ७३३

दशइति । तंचनारायणबलिंपुत्रोपिद्वादशेदिवसएवकुर्यात् किंकृत्वा आदौद्वादशात्प्रथमेएकादशेह्निपार्वणंप्रतिदायविधायेति तद्वत्पुत्रवदन्योपिद्विजाद्वादशदिवसएवनारायणबलिमेवचकुर्युरितिसंबंधः ७३० बौधायनोक्तंनारायणबलिविधानंदर्शयति कृत्वेतिदशभिः । विष्णोर्महतींषोडशाद्युपचारसंपन्नांपूजांकृत्वापायसमर्पयंनैवेद्यंदद्यादथव्याहृतित्रयेणव्यस्तेनसमस्तेनचपायसंजुहुयात् एवंहोमेनसंस्कृतंविष्णोर्नैवेद्यभूतंपायसंब्राह्मणेभ्योदद्यादित्यर्थः ७३१ यतीनिति । अत्रत्रयोदशप्राधान्येनपूज्याःतत्रायंक्रमः द्वादशावरान्द्वादशसंख्यातोन्यूनसंख्याहीनान्यतीन्साधूनगृहस्थान्वाग्रहीत्वागृहेसमानीयकेशवादिद्वादशनामात्मकैर्नमोंतैर्द्वादशमंत्रैस्तान्गंधाद्युपचारैराराध्यमानपूर्वकंभोजयित्वाचतेयदियतयस्तदातेभ्योवासांसिदेयानियदितुगृहस्थाःस्युस्तदादक्षिणासहितानिवासांसिदेयानीतिद्वयोरर्थः ७३२ । ७३३

त्रयोदशमिति । द्वादशयतीनामभावेऽलाभेपित्रयोदशसंख्यापूरकंयतींद्रंसर्वथाऽवश्यंसंपादयेत्पूजार्थंसमानयेदित्यर्थः ७३४ एकोनेति । यदितुएकोपिपरमहंसोयतिर्नलभ्येततदासर्वगुणसंपन्नगृहस्थंद्विजोत्तमंत्रयोदशेस्थाने निवेशयेत्तंचपुरुषसूक्तगतषोडशर्चंमयमंत्रैर्विष्णुबुद्ध्यापाद्याद्युपचारैःसमभ्यर्च्यधूपादिकंवस्त्रादिकंचतत्क्रमेणदद्यादास्तिकःसन्निितिद्वयोरर्थः ३५ । ३६. उच्छिष्टमिति । ततस्तेषामुच्छिष्टसमीपदेशेदर्भानास्तीर्यजरायुजादिचतुर्विधभूतानांमध्येएकैकंनामक्रमेणगृहीत्वाप्रणवादिस्वधांतंप्रत्येकव्याहृतिमयेनमंत्रत्रयेणवारत्रयसमुदितव्याहृतिमयेनचतुर्थमंत्रेणचबलिचतुष्टयंपापसमयंदद्यादित्यर्थः ७३७ विभवेति । विभवस्यसामर्थ्यस्याभावेसतित्रयोदशयतयएववसनाशनमात्रतोपिणोभ्यर्च्याःविभवेसतितुत्रयोदशस्थानेषुअलंकारादिदानयोग्यास्त्रयोदशविप्राएवस्थाप्याः अतःशास्त्रस्यशक्त्यनुरोधित्वात्तत्रोक्तपूर्वपक्षएकश्चित्पक्षोनविधीयतेनानियम्यतेइत्यर्थः ७३८ उक्तानुष्ठानेप्यशक्तौशक्त्याधिक्येवायावतांवस्त्रादैर्विशेषपूजायांशक्तिस्तावतोयत्यादीन्प्रथमंभोजयित्वापश्चादनंतानमितसंख्याकान्मृष्टैःशुद्धैरन्नैःसदक्षिणंभोजयेदित्याह यावतामितिद्वाभ्यां । स्पष्टंद्वयं ७३९ । ७४० उक्तनारायणबलेःफलमाह । इहलोकेऽभीष्टासिद्धिःपरलोकेपितृभिः

त्रयोदशंयतींद्रंतमात्मज्ञंविजितेंद्रियम् ॥ संपादयेदभावेपियतीनामत्रसर्वथा ७३४ एकोनयदिलभ्येतयतिःपरमहंसकः ॥ तदागृहस्थंधर्मज्ञमुत्तमंसर्वसंमतम् ॥ विष्णुबुद्ध्यासमभ्यर्च्यपाद्याद्यैश्चविधानतः ७३५ दद्यात्पुरुषसूक्तेनधूपादिकमनुक्रमात् ॥ वस्त्रालंकरणादीनियथाशक्तितथास्तिकः ७३६ उच्छिष्टसन्निधौदर्भानास्तीर्यचैमनोरमैः ॥ चतुर्विधेभ्योभूतेभ्योबलिंव्याहृतिभिर्हरेत् ॥ प्रत्येकंतिसृभिःपश्चान्मिलिताभिःस्वधापुनः ७३७ विभवाभावतोह्यत्रयतयस्तुत्रयोदश ॥ विप्रावाविभवेस्थाप्यानात्रकश्चिद्विधीयते ७३८ यावतांवसनादीनांदानेशक्तिर्हिविद्यते ॥ तावतांसमसंख्यास्तेभोज्याःप्रथममेवहि ७३९ अनंतान्भोजयेत्पश्चान्मृष्टैरन्नैस्तुसादरम् ॥ सर्वेभ्योपियथाशक्तिदद्यादेवात्रदक्षिणाः ७४० एवंयःकुरुतेविद्वान्नारायणबलिंद्विजः ॥ अभीष्टमर्थमाप्नोतिजीवन्नत्रनसंशयः ॥ विष्णुलोकंमृतोगच्छेत्स्वकीयैःपूर्वजैःसह ७४१ एवंपरमहंसस्यसंस्कारस्तेमयेरितः ॥ आतुरस्यप्रसंगेनप्रकृतंत्वमतःशृणु ७४२ कुटीचकोबहूदोवाहंसोवापियदाभवेत् ॥ यतिःपरमहंसाख्यःश्राद्धंहोमादिकंतदा ७४३ नकुर्यादातुरोयद्वत्प्रैषमात्रात्प्रपूरयेत् ॥ संन्यासंतद्वदेतेपिपूरयेयुःसदैवहि ॥ प्रैषमात्रेणविद्वांसःपरंवैराग्यमाश्रिताः ७४४ अभयंसर्वभूतेभ्योमत्तःस्वाहेतिकीर्तयेत् ॥ मंदमध्योत्तमैःशब्दैःप्रत्येकंव्याहृतित्रयात् ७४५ त्रिःकृत्वाद्भिस्तुसंपूर्यस्वांजलिंह्युत्तरांदिशम् ॥ प्राचींवाप्रव्रजेद्विद्वान्यथाजातवपुर्नरः ७४६

सहविष्णुलोकाप्तिश्चफलमित्यर्थः ७४१ प्रासंगिकमुपसंहरन्प्रकृतसंन्यासग्रहणेतिकर्तव्यतामनुसरति एवमिति । आतुरसंन्यासप्रसंगेपरमहंसमरणोत्तरंकर्तव्यमुक्तमथप्रकृतमातुरसंन्यासवाक्यानंतरंजाबालोक्तंपरमहंससंन्यासग्रहणप्रकारमेवशृण्वित्यर्थः ७४२ कुटीचकइति । कुटीचकस्त्रिदंडशिखाद्युपलक्षितःपुत्रगृहेभिक्षाशीलः । बहूदकोपितादृशःसप्तागारभिक्षाशीलोदेशाटनपरः । हंसस्त्वेकदंडःसशिखःसकृदष्टग्रासभोजीत्यादिलक्षणः । एतेयदापरमहंस्येपरवैराग्येणप्राप्तुमिच्छंतितदाएतैःश्राद्धादिकंनकार्यंकिंतुप्रैषोच्चारणमात्रेणसंन्यासःपूरणीयइतिद्वयोरर्थः ७४३ । ७४४ तेषांप्रैषोच्चारणविधिमाह अभयमिति । स्वांजलिजलैःप्रपूर्याभयमित्यादिस्वाहांतमंत्रमेकैकव्याहृतिपूर्वकंमंदादिस्वरत्रयेणत्रिवारंकीर्तयेत् तथाचनववारंप्रयोगःफलितःततउत्तरांप्राचींवादिशंव्रजेत् कीदृशःयथाजातवपुःयादृशंजातस्यरूपंतादृशरूपोनग्नइतिप्राग्वदितिद्वयोरर्थः ७४५ । ७४६

यज्ञोपवीतादिप्रतिपत्तिंदर्शयन्नुक्तं स्फुटयति यज्ञोपवीतमिति । उत्कृत्यउद्धृत्यांजलिस्थंकृत्वाचभूःस्वाहेतिमंत्रेणजलेभूमौवाविसृजेत् ततोविरक्तोनग्नोभूत्वाउदङ्मुखोगच्छेत् तत्त्वजिज्ञासायां स्वेकंगुरुंपरिग्रहेत्श्रयेदित्यर्थः परिग्रहेदितिविकरणव्यत्ययःश्रुत्यनुसारादितिबोध्यं ७४७ पंचेति । दंडःकमंडलुः शिक्यंभिक्षापात्रंजलशोधनार्थं वितस्तिपरिमितवस्त्रात्मकंपवित्रंचएता निपंचकुटीचकादीनांमुद्रास्थानीयानि भेदेप्रायश्चित्तलक्षणदंडप्रयोजकत्वात् एतादृशपंचमुद्राघटकमेकंदंडंहंसस्त्रिदंडंकुटीचकोबहूदकश्चपरित्यजेदित्यर्थः 'नागमुद्राशंखमुद्राधेनुमुद्रास्तथैवच । ब्रह्म परशुमुद्रेचपंचमुद्राःप्रकीर्तिताः' इत्युक्तास्तुनेहग्राह्याः तासामुपादेयत्वादितिबोध्यम् । अयमेवचयज्ञोपवीतादिपरित्यागविधिर्ब्रह्मचर्याद्यनंतरंक्रियमाणेपारमहंस्येपिबोध्यइत्याह ब्रह्मेति । इह पारमहंस्येप्राप्तव्येइत्यर्थः ७४८ हंसस्यशिखायाअभावेपियज्ञोपवीतादेरेवभूरादिमंत्रेणत्यागस्तेनकार्यइत्याह यज्ञोपवीतमिति । पूर्वेणहंसावस्थायांगृहीतेन एतदुपलक्षणंशिक्यादीनां ७४९ जाबालादौवीराध्वनादेहत्यागोयउक्तःसक्षत्रियादिसंन्यासाभिप्रायेणैवेतिदर्शयति क्षत्रियइतिनवभिः । यदिक्षत्रियोवैश्योवायदासंन्यसेत्तदादंडादिसंन्यासलिंगवर्जितःसन्ननावृत्तिंपुनरावृत्तिहीन मध्वानंगच्छेदित्यर्थः कीदृशः जडादितुल्याभःनग्नःअविद्वानिवदृश्यमानोवस्तुतोविद्वान्परवैराग्यशालीअविद्वान्वासन्निितिद्वयोरर्थः ७५० ७५१ नानेति । यद्यपितुर्येपारिव्राज्यरूपेयोगप्रधाने

यज्ञोपवीतंसशिखमुत्कृत्यांजलिसंस्थितम् ॥ विसृजेदप्सुभूमौवाततोगच्छेदुदङ्मुखः ॥ नग्नोभूत्वाविरक्तोवागुरुमेकंपरिग्रहेत् ७४७ पंचमुद्रात्मकंदंडंत्रिदंडंवाप रित्यजेत् ॥ ब्रह्मचर्याद्गृहाद्वापिवनाद्वाप्रव्रजेदिह ७४८ यज्ञोपवीतंपूर्वेणदंडेनसहहंसकः ॥ भूःस्वाहेतिचमंत्रेणजुहुयादप्सुसादरम् ७४९ क्षत्रियोवापिवैश्योवासं न्यसेत्तुयदातदा ॥ अनावृत्तिंव्रजेदेपुदंडादिपरिवर्जितः ७५० जडोन्मत्तपिशाचाभोनग्नोविद्वानिवस्वयम् ॥ विद्वान्वाप्यथवाविद्वान्परंवैराग्यमाश्रितः ७५१ नानायोगाश्रमेतुर्येलिंगधारणमिष्यते ॥ वैष्णवंधारयेल्लिंगंविप्रएवनचापरः ७५२ प्रार्थयेतापिनाध्वर्युरेनंयांतंदिगंबरम् ॥ कौपीनादिनगृह्णीयादध्वर्युप्रार्थनां विना ॥ संन्यासेततएवस्यादनावृत्तिर्द्वयोरपि ७५३ क्षत्रियोवापिवैश्योवासंन्यासीऋषभादिवत् ॥ वीरमार्गेणदेहंस्वंत्यजेदेवाविचारयन् ७५४ अभीतःसर्वे तोगच्छेच्छब्दाग्निजलदंष्ट्रितः ॥ आनिपातंशरीरस्यवीरमार्गोयमीरितः ७५५ बुद्धिपूर्वंजलेचाग्नौवन्हौवापिवपुःक्षिपेत् ॥ अन्नोदकपरित्यागादथवाससतंगतेः ॥ एकस्यामेवदिश्यात्मदेहंधीरःपरित्यजेत् ॥ ७५६

आश्रमेनानाविधलिंगानांधारणमिष्टंनच्छन्नत्वायतथापिवैष्णवस्यलिंगस्यदंडरूपस्यधारणेविप्रएवाधिकारीत्यर्थः तदुक्तं 'मुखजानामयंधर्मः' इत्यादि देहेवैष्णवत्वंचपदप्रभृतिग्रंथिविशेषेण सुदर्शनादिसंज्ञत्वात् तदुक्तं 'षड्भिःसुदर्शनंप्रोक्तंवासुदेवंतथाष्टभिः' इत्यादीति ७५२ तयोरनावृत्तिपथगतोहेतुमाह प्रार्थयेतापीति । अध्वर्युर्यजुर्वेत्ता ऋत्विक्तत्कर्तृकंपादपतनपूर्वकंवक्ष्यमाण विधंप्रार्थनंविप्रंप्रत्येवसंभवतीत्यतःसोध्वर्युरेनंक्षत्रियंवैश्यंवादिगंबरंयांतंसंतंनप्रार्थयेत लोकंप्रयवहारोपयोगिनांकौपीनादीनांग्रहणंचसंन्यासिनाप्रार्थनांविनाक्रियमाणंसंप्रदायविरुद्धंततोद्वयोःक्षत्रि यवैश्ययोरनावृत्तिःफलितेत्यर्थः ७५३ तथाचक्षत्रियादिःसंन्यस्यऋषभदेवादिवद्वीरमार्गेणाशीघ्रंदेहंत्यजेदित्याह क्षत्रियइति । आदिपदेनपांडवग्रहः ७५४ वीरमार्गंलक्षयति अभीतइति । शब्दःसिंहनादादिर्दंष्ट्रिणोव्याघ्रादयस्तेभ्योभयरहितस्यशरीरपतनपर्यंतंयद्गमनमेतद्वीरमार्गपदेनोक्तमित्यर्थः ७५५ अत्रानुकूलस्यजाबालवाक्यस्यार्थमाह बुद्धीति । जलपातेनवन्हिपातेनान्ना दिपरित्यागेनैकस्यांदिशिसननंबुद्धिपूर्वगमनेनवादेहःसंन्यस्तक्षत्रियादिनापरित्यक्तव्यइत्यर्थः ७५६

एतादृशसंन्यासेन देहत्यागे शूद्रादीनामप्यधिकारं दर्शयति श्राद्धादीति । श्राद्धमारभ्य कृपाहुतिघटितप्रैषमंत्रपर्यंतमितिकर्तव्यताजातं विना केवलं मानसं संन्यास संकल्पं विधाय स्त्रीशूद्रः संकरजातीयो वा पूर्वपुण्यलब्धवैराग्यशालीतथा क्षत्रियादिवत्स्वदेहनाशहेतौ त्यागे अधिकारी भवति किमुत द्विजजातीया इति द्वयोरर्थः ७५७ । ५८ अथ विप्रस्याध्वर्युप्रार्थनादिना दंडादिग्रहणप्रकारं दर्शयति यदेति नवभिः । विप्रस्तु पारमहंस्यं गृहीत्वा परितः सर्वतो वर्तमानैरहितउदङ्मुखो गच्छेत् ५९ अध्वर्युस्त्विति । ततोऽध्वर्युः संन्यासेतिकर्तव्यतायामाचार्यत्वेन वृतोऽऋत्विक् गत्वा धावित्वा पादौ धृत्वा च इत्थं प्रार्थयेत् ७६० तत्प्रार्थनामभिनयति वेदविदिति । वेदवेत्ता विप्रो भगवानीश्वरो भवति यतः सर्वदेवानेवासभूतशरीरस्तत एतादृशप्रभावकस्य देहस्य परित्यागस्तव नोचित इत्यर्थः ६१ किंच तवायं देहो दर्शनश्रवणादिना कृतार्थीभविष्यतां लोकानां स्वं भवति ततः परकीयपदार्थस्य नाशनं तवानुचितमित्याह अपितेइति । किमु किंतु तत्तव वपुर्यतो लोकस्य भवतीति संबंधः । तद्वत इति पाठे श्रद्धादिमत इत्यर्थकं लोकविशेषणम् ६२ अतस्त्वयानेन देहेनामृतत्वसाधनं ज्ञानं संपाद्यमित्याह आत्मनइति । स्पष्टम् ६३ किंच गुरुनिदेशादपि त्वया देहत्यागाग्रहान्निवर्तितव्यमित्याह गुरुरिति । यस्त्वया गुरुः सेवितः स मां प्रति भवतो निवार

श्राद्धादिप्रैषपर्यंतमकृत्वा मनसैव हि ॥ संकल्प्य परमं प्राप्तो विरागं पूर्वपुण्यतः ७५७ स्त्रीशूद्रादिरपि प्रायः कुर्यात्त्यागं तथा सदा ॥ स्वदेहनाशहेतुं तं किमु ये त्र द्विजातयः ७५८ यदा विप्रः परो हंसो भूयान्नग्न उदङ्मुखः ॥ शिखायज्ञोपवीतादिरहितः परितो व्रजेत् ७५९ अध्वर्युस्तु ततो गत्वा दंडवत्प्रणिपत्य तम् ॥ प्रार्थयेत्तं करा भ्यां तत्पादौ धृत्वा मुहुर्मुहुः ७६० वेदविद्भगवान्विप्रः सर्वदेववपुर्यतः ॥ ततो वपुरिदं त्यक्तुं न त्वमर्हसि धर्मवित् ७६१ अपि ते न वपुर्विप्र किमु लोकस्य तद्यतः ॥ परकीयं कथं वित्तं विनाशयसि बुद्धिमान् ७६२ आत्मनः श्रवणं कृत्वा मननं ध्यानमेव च ॥ साक्षात्कारं हि संपाद्य पश्चात्कुरु यथेप्सितम् ७६३ गुरुस्त्वया चिरं कालं सेवितो ब्रह्मवित्तमः ॥ अनुज्ञापितवान्मां स बहुशोऽपि निवारणम् ॥ गुर्वाज्ञातत एवत्वं कुर्वात्मज्ञानहेतवे ७६४ इत्यादिवचनैर्भूरि संप्रार्थ्य द्विजसत्तमः ॥ दद्याद्दंडादिकं तस्मै तिष्ठ तिष्ठेति कीर्तयन् ७६५ दत्तं दंडमृजुं सौम्यं सत्वचं वैणवं द्विजः ॥ इंद्रस्येत्यादिमंत्रेण गृहीत्वा प्रणवेन तु ७६६ दोरकौपीनवासांसि प्रणम्य गुरुमादरात् ॥ सेवेत तं यथा तद्वदात्मविद्या न लभ्यते ७६७ अधिकारप्रसंगात्ते संन्यासविधिरीरितः ॥ एवं परमहंसस्य शृणु वक्ष्यामि तेऽधुना ६८ दधानो वैणवं दंडं सौम्यं पूर्वोक्तलक्षणम् ॥ शिखायज्ञोपवीताभ्यां रहितो विकसन्मुखः ७६९ कौपीनयुगलं कंथां तद्वच्छीतनिवारणीम् ॥ भिक्षाटनाय शाटीं च हस्तखंडां वा पिखंडिताम् ७७० अलाबुं दारुपात्रं वा वैणवं मृन्मयं च वा ॥ वहन्करेण शौचादिकार्यार्थं कार्यवर्जितः ७७१

णानुकूल्यापारानुष्ठानमाज्ञापितवांस्ततस्त्वं गुर्वाज्ञामेवात्मज्ञानहेतवे कुर्विति ६४ इत्यादीति । इत्थं संप्रार्थ्येति तिष्ठ तिष्ठेति कीर्तयन्स द्विजस्तस्मै परमहंसाय दंडादिकं दद्यात् ६५ दत्तमिति । स च परमहंसस्तेन दत्तमृजुत्वमनोहरत्वशालिनं वेणुप्रभवं दण्डमिंद्रस्य वज्रोऽसीत्यादिमंत्रेण गृहीत्वा दोरादिकं तु प्रणवमंत्रेण गृहीत्वा गुरुं प्रणम्य तं ब्रह्मविद्यार्थं सेवेत तत्र दोरः सूत्रमयी रज्जुरिति द्वयोः संबंधः ६६ । ६७ संन्यासग्रहणविधिमुपसंहरन्परमहंसस्य धर्मान् श्रुत्या सिद्धान्वक्तुमुपक्रमते अधिकारेति । संन्यासाधिकारिवर्णनेन श्रुतिस्मृत्यारूढः संन्यासविधिरुक्तः अथ एवं उक्तविधिना परमहंसभावं गतस्य यथ मान्जाबालाद्युक्तान्शृण्विति ६८ दधानइति । पूर्वोक्तानि ऋजुत्वादीनि लक्षणानि यस्य तं दंडं दधानो भवेत् शिखादिराहित्येन मुंडः सदा प्रसन्नमुखश्च भवेदिति ६९ अपरिग्रहत्वं परिसंख्यामुखेनाह कौपीनेति । वहन्नित्युत्तरादनुषंगः भिक्षाटनं कर्तुं शाटीं कौपीनोपरिधार्यवस्त्ररूपाम् ७७० पात्रभेदानाह अलाबुमिति । अलाबुं तुंबिकां कार्यवर्जितः वस्तुत इति शेषः ७७१

नपाणीति । पाण्यादिचालनशीलोनभवेत् वाग्भेदः अन्यथोक्तस्यान्यार्थपरत्वेनयोजनंतन्प्रभृतिव्यापारलक्षणचापलशालीनभवेत् तथागमनकालेयुगमात्रांचतुर्हस्तमितांभूमिंपश्येत् आसीनउपविष्टस्तुनासिकांपुस्तकंवापश्येदिति एतेनतिष्ठतोव्रजतोवापीत्यादिवाक्योक्तमंत्रत्वानुष्ठानंसूचितम् ७७२ श्रुत्याद्युक्तानितस्यवासस्थानान्याह शून्यागारइति । तृणकूटकंपलालादिपुंजः अग्निहोत्रकमग्निगृहं निष्कुटोगृहवाटिका 'गृहारामास्तुनिष्कुटाः' इत्यमरः । सप्तम्यंतानांनिवासपदेनसंबंधः शेषंस्फुटंत्रिषु ७३ । ७४ । ७५ प्रादक्षिण्येनेति स्वस्थानात्प्रचलितस्यप्रदक्षिणक्रमेणयेगृहाःसमायांतितेषुभिक्षांगृह्णीयात् उदरंपाणिंवापात्रंकृत्वातदशक्तावपरंवस्त्रादिमयमित्यर्थः ७६ यथौषधमिति । तथाचारुणिकश्रुतिः 'औषधवदशनमाचरेत्'इति ७७ अलाभेइति । एकरूपभृत्समः असम्यक्त्वमादरेणरसादिगुणेनचराहित्यं विकारंमुखमालिन्यादिरूपम् ७८ सुखादिष्विति । आदिपदेनदुःखशीतोष्णादिर्द्वंद्वग्रहः तथाउपकारिण्यपकारिणिचसमः तथाहारेणासमीचीनास

नपाणिपादचपलोनवाग्भेदादिचापलः ॥ गच्छन्विलोकयेद्भूमिंयुगमात्रांपुरःसदा ॥ आसीनोनासिकांतद्वत्पुस्तकंवाविलोकयेत् ७७२ शून्यागारेदेवगृहेवल्मीकेतृणकूटके ॥ वृक्षमूलेकुलालस्यशालायामग्निहोत्रके ७७३ पुलिनेपुनदीनांवागिरीणांकुहरादिषु ॥ कोटरेषुतरूणांवास्थंडिलेनिष्कुटेपिवा ७७४ निवासंनिरतोनित्यंसदाशौचपरायणः ॥ भिक्षार्थंचव्रजन्ग्रामंप्रीतिमान्निर्जनेसदा ७७५ प्रादक्षिण्येनभिक्षायांगृहानेषव्रजेत्सदा ॥ उदरंवापिपाणिंवापात्रंकृत्वाथवापरम् ७७६ यथौषधंतथैवान्नंप्राशयत्येषसर्वदा ॥ ननिंदतिनचस्तौतिकमप्येषकदाचन ७७ अलाभेवापिलाभेवाभिक्षायाएकरूपभृत् ॥ असम्यक्त्वेपिसम्यक्त्वेविकारंनाधिगच्छति ७७८ सुखादिषुसमोनित्यमुपकार्यपकारिणोः ॥ नस्थूलोनकृशश्चायमाहारेणक्वचिद्भवेत् ७७९ केशश्मश्रुनखानांचकुरुतेवपनंसदा ॥ ऋतुसंधिषुवर्षासुकुरुतेवानवापिसः ७८० आषाढ्यांपौर्णमास्यांचकुरुतेव्यासपूजनम् ॥ कृष्णद्वैपायनंपैलंवैशंपायननामकम् ॥ जैमिनिंचसुमंतुंचपूजयेद्व्यासपंचकम् ७८१ कृष्णंचवासुदेवंचसंकर्षणमथापरम् ॥ प्रद्युम्नमनिरुद्धंचपूजयेत्कृष्णपंचकम् ७८२ शंकरंविश्वरूपंचपद्मनाभंतथैवच ॥ हस्तामलकनामानंतोटकाख्यंचपंचकम् ॥ आचार्यपंचकंप्रायःपूजयेच्छांकरेमते ७८३ गुरुंचपरमंतद्वदात्मनःपरमेष्ठिनम् ॥ गोविंदंगौडनामानंपूजयेद्गुरुपंचकम् ७८४ आत्मानमंतरात्मानंज्ञात्मानंपरात्मकम् ॥ आनंदात्मानमित्येतत्पूजयेदात्मपंचकम् ७८५

मीचीनरूपेणप्रयुक्तंस्थूलत्वंकृशत्वंचनभवेदिति ७९ तथामासद्वयपूर्तौपूर्णमास्यांक्षौरविधिंकुर्यात् श्रावणादिमासद्वयेतूक्तस्यक्षौरस्यैच्छिकोविकल्पइत्याह केशेति । कक्षोपस्थगतकेशान्वर्जयित्वेतिशेषः ७८० आषाढपूर्णमास्यांविष्णुधर्मोत्तरविहिताव्यासपूजाकार्येत्याह आषाढ्यामिति । तत्रपूजनीयानांदेवानांपंचव्यूहांस्तान्प्रदर्शयति कृष्णेत्यादिना । मध्येस्थितोद्वैपायनःपूर्वादिदिग्गतैर्वैशंपायनसुमंतुजैमिनिपैलैर्वेष्टितःसन्व्यासउच्यते एवमग्रेपि ७८१ मध्येस्थितःश्रीकृष्णःपूर्वादिग्गतैर्वासुदेवादिभिर्वेष्टितःकृष्णव्यूहइत्याह कृष्णमिति । तत्रकृष्णपदेनसदानंदवाचिनानिरुपाधिकंपूर्णत्वंप्रतिपाद्यते पदांतरैस्तुतुरीयादिसमष्टयइतिनिर्णीतमन्यत्र ८२ पूर्वादिग्गतैर्विश्वरूपादिशिष्यैःसंवीतःशंकराचार्यआचार्यव्यूहइत्याह शंकरमिति । प्रायोबहुधाप्रवृत्तेशांकरेश्रीशंकराचार्यसंबंधिनिमतेसंप्रदायेवर्तमानएतदाचार्यपंचकंपूजयेदितिसंबंधः ७८३ तथापूर्वादिग्गतैःपरमगुरुपरमेष्ठिगुरुगोविंदपादगौडपादैःसंवीतआत्मीयोगुरुर्गुरुव्यूहइत्याह गुरुमिति ८४ तथापूर्वादिग्गतैरंतरात्मादिभिर्वेष्टितआत्माव्यूहइत्याह आत्मानमिति ७८५

एतेषांपंचानांव्यूहानांपूजामण्डलेदेशविशेषानाह आत्मेति । मध्येकृष्णपंचकंविन्यस्यतदपेक्षयापूर्वादिदिशांचतुष्टयेआत्मपंचकादिकंपूजयेदिति कृष्णव्यूहात्पूर्वेआत्मव्यूहंदक्षिणेआचार्यव्यूहं पश्चिमेगुरुव्यूहंउत्तरेव्यासव्यूहंपूजयेदितियावत् ७८६ कृष्णपंचकस्याग्नेयादिकोणचतुष्टयेक्रमेणगणेशोदुर्गासरस्वतीक्षेत्रपालश्चेत्येतेपूज्याइत्याह आग्नेयादीति । विदिक्कोणः महेशानं रुद्रावतारमितिक्षेत्रपालविशेषणं अमून्गणेशादीन्सर्वारिष्टविनाशकानग्न्यादिकोणचतुष्टयेपूजयेदित्यन्वयः ७८७ सनंदनमिति । सनत्पदादिकंकुमारंसुजातकंचेतिसंबंधः एतान्सनंदनादीन् कृष्णपंचकंपरितःकृष्णपंचकस्यसर्वतःपरिवारत्वेनस्थितान्पूजयेदित्यर्थः ७८८ कृष्णपंचकस्याग्रेस्थितौनरनारायणौपूज्यौतस्यपृष्ठतस्तुब्रह्मविष्णुमहेश्वराःपूज्याइत्याह नरेति । अस्यकृष्ण पंचकस्य ७८९ शेषानिति । शेषान्दिक्पालादीन्सांप्रदायिकप्रयोगग्रंथेयुक्तान्यथास्थानंविन्यस्यपूजयेत् तत्रनारदोनरनारायणयोरग्रेस्थितःपूज्यः एतेपुकृष्णंमूलमंत्रेणशेषान्प्रणवादिनमोंतनाममंत्रैःसंपूज्यमासद्वयंतच्चतुष्टयंवासंकल्पपूर्वकंवसेदित्यर्थः ७९० एकत्रवासप्रयोजनमहिंसापरिपालनरूपंदर्शयति वर्षेति । समास्तीर्णाव्याप्ताभवति अपिशब्देनवासनियमविधिसंरक्ष

आत्माचार्यगुरुव्यासपंचकानिचतुष्टये ॥ पूर्वादीनांदिशांमध्येकथितंकृष्णपंचकम् ७८६ आग्नेयादिविदिक्संस्थान्पूजयेच्चतुरोह्यमून् ॥ गणनाथंतथादुर्गांदेवीं चैवसरस्वतीं ॥ क्षेत्रपालंमहेशानंसर्वारिष्टविनाशकान् ७८७ सनंदनंचसनकंकुमारंचसुजातकम् ॥ सनत्पदादिकंकृष्णपंचकंपरितोर्चयेत् ७८८ नरनारायणौ कृष्णपंचकात्पुरतःस्थितौ ॥ ब्रह्मादित्रयमस्यैवपृष्ठतस्तुसमर्चयेत् ७८९ शेषान्देवान्मुनीन्सर्वान्यथायोगंप्रपूजयेत् ॥ नरनारायणाग्रस्थंनारदंमुनिसत्तमम् ॥ एवंसंपूज्यवसतिमासौद्वौचतुरोपिवा ७९० वर्षाकालेमहीसर्वास्थिरजंगमदेहिभिः ॥ निरंतरंसमास्तीर्णालक्षकोट्यादिसंख्यया ॥ तेषांरक्षार्थमेषोपिवसत्येकत्रस र्वदा ७९१ नहिंसतिकमप्येषस्थिरजंगमदेहिनाम् ॥ वदत्यसत्यंनैवायंनचचौर्यंकरोतिसः ७९२ तृणस्यापिचनारीपुग्राम्यधर्मंप्रयातिन ॥ कामंनपरिगृह्णीया द्भवेदत्रापरिग्रहः ७९३ तथासमायिकींचेष्टांनकुर्यात्प्रलपेन्नच ॥ नियमांश्चयथाशक्तिदेवनारायणादिकान् ॥ कुर्वाणःप्राणरोधंचस्वात्मनोऽवसरेसति ७९४ वे दांतश्रवणेस्नानंत्रिसंध्यादौतथैवच ॥ गुरुभक्तिंयथाप्राहवर्षाकालातिरेकतः ७९५ एकत्रचवसेन्नैवतत्ररागादिवर्जितः ॥ अलाभेनविषादीस्याल्लाभश्चेन्नहर्षयेत् ७९६ समःशत्रौचमित्रेचतथामानापमानयोः ॥ आत्मवत्सर्वभूतानांकर्मणामनसागिरा ॥ अनुकूलंहिकुर्वाणःप्रतिकूलंनचाचरेत् ७९७ हिरण्यादीनिवस्तूनि वधूस्तद्वन्मनोरमाः ॥ विष्ठावन्मनसानित्यंभावयेन्नस्मरेच्चवा ७९८

णसमुच्चयः रक्षार्थमपीतिसंबंधः एवयतिः ७९१ यमानुष्ठानंदर्शयति नहिंसतीतिद्वाभ्यां । तृणस्यापिचौर्यंनकरोति ग्राम्यधर्मोमैथुनं कामंभोगसाधनजातंनपरिगृह्णीयात्संगृहीतंकुर्यात् अपरिग्रहत्वसंरक्षणायेतिद्वयोरर्थः ७९२ । ७९३ नियमादीन्दर्शयतितथेत्यादिना । मायादंभस्तद्वतींचेष्टांभावसंशुद्धिलक्षणशौचविपरीतांनकुर्यात् । अनर्थकवाक्यरूपंप्रलापंमौनलक्षण तपोविरोधिनंनकुर्यादिति । तथादेवोमहादेवोनारायणश्चएतौआदीसंबंधित्वेनप्रयोजकौयेषान्तेयमाःस्मरणकीर्तनादयस्तान्कुर्वाणः प्राणायामंचस्वात्मनःप्राणरोधस्यकालेऽपररात्रादौकुर्वाणो भवेदित्यर्थः ७९४ वेदांतेति । वेदांतश्रवणंत्रिकालस्नानंयथागुरुःप्राहतथानुष्ठानरूपांगुरुभक्तिंचकुर्वाणोवर्षाकालभिन्नेकालेएकत्रनवसेत् तत्रवासदेशेरागद्वेषवर्जितोभवेत् स्फुटमन्यत् ९५ ७९६ शमइति स्पष्टम् ७९७ कांताःकनकादीनिचकाकविष्ठावद्दूराद्धेयत्वेनपश्येदित्याह हिरण्यादीनीति ७९८

हेमनस्त्वंदोषनिलयस्यदेहस्यगर्वैतादात्म्याभिमानरूपंकिंधारयसीत्येवंसदाचिंतयेदित्याह विण्मूत्रेति ७९९ श्रावणाद्युपायैरात्मसाक्षात्काराययतेतेत्याह अहमिति अवबोधनमितिकरणेल्युट् ८०० आत्मसाक्षात्कारप्रतिबंधापनयायप्रणवोपासनंफलपर्यंतंकुर्यादित्याह यावन्नेति ८०१ प्रणवादीति । प्रणवस्यआदिपदग्राह्यस्यहंसमंत्रस्यचाविरोधेनोपसर्जनत्वेनेतरानपिमंत्रान्जपेत्प्राधान्येन प्रणवादिकमेवजपेदितियावत् यानेअश्वादिवाहनेआरूढोनभवेत् किंचिदपिपरिग्रहीपरिग्रहशालीनभवेदिति ८०२ परिग्रहाभ्यनुज्ञास्थलमाह यावतेति । यावतावस्त्राशनादिनाविनादेहत्यागप्रसक्तिस्तावदेवस्वीकुर्यादित्यर्थः ८०३ परमहंसोपनिषदुक्तान्धर्मान्प्रपंचयंस्तत्रपरमात्मात्मनोरेकत्वज्ञानेनसंध्यासंपत्तिरुक्तातांदर्शयति संध्यात्रयइति । अयंपरमहंसःप्रातरादिषुत्रिषुसंध्यासुसमाधिस्थःसन्संधेःसं...कर्तव्यायाःसंध्यायानाशनंविलोपंनकुर्यात् संभावनायांलिङ् किंतुसंध्यांकरोत्येवायम् कुतःइहसमाधौजीवस्यत्वंपदार्थस्यात्मनस्तत्पदार्थस्यचैक्यज्ञानेनात्मनोब्रह्मत्वस्यावधारणादित्यर्थः तथाचऐक्यनिष्ठारूपःसमाधिःसंध्याकालेऽवश्यंकार्यः अन्यथासंध्याविलोपदोषप्रसंगइतिभावः ८०४ निंदागर्वादित्यागंदर्शयति कस्यापीति । सतांविद्यमानानामसतांवादोषाणां कीर्तनरूपांनिंदांकस्यापिनकुर्वीत आत्मनोयाइतरेभ्योऽधिकत्वेनबुद्धिर्ज्ञानंतद्रूपंगर्वंनकुर्यात् तथामानसंमनसाकृतंयत्परस्यविनाशनंकथमस्यापकर्षोभवेदित्याकारंमत्सरपदाभिधेयंतदपिनकुर्यादि

विण्मूत्रसंभवोदेहोमलभांडोविनिर्मितः ॥ कामाद्यनेकरोगार्त्तःसर्वावस्थासुनश्वरः ॥ किमर्थंवहसेगर्वंमनोदेहस्यसर्वदा ७९९ अहंब्रह्मेतिवाक्यार्थंगृष्णानोगुरुवाक्यतः ॥ मननंचतथाध्यानंकुर्यादात्मावबोधनम् ८०० यावन्नसाक्षादात्मायंज्ञायतेतेनसर्वगः ॥ ओंकारमपितावत्तुजपेच्छस्त्यनुसारतः ८०१ प्रणवाद्यविरोधेनमंत्रानन्यांश्वसंजपेत् ॥ आरोहेन्नैवयानेचनचकिंचित्परिग्रही ८०२ यावतानभवेद्देहत्यागोवस्त्रवसनादिना ॥ स्वीकुर्यात्तावदेवायंनाधिकंतुकदाचन ८०३ संध्यात्रयेसमाधिस्थोनकुर्यात्संधिनाशनम् ॥ जीवात्मनोरिहैक्येनस्वात्मनोब्रह्मबोधनात् ८०४ कस्यापिनैवकुर्वीतसदसद्दोषकीर्तनम् ॥ आत्मनोधिकबुद्धिंचमानसंवाविनाशनम् ८०५ कर्मणामनसावाचात्रिधाधर्मंस्वयंकृतम् ॥ परेभ्यःप्रकटंनैवकुर्याद्दंभोहितत्सदा ८०६ ऊहज्ञानेनकस्यापिपक्षंचैवनदूषयेत् ॥ अभिलाषंचकुत्रापिसुखेकुर्यान्नबंधनः ॥ दुःखेद्वेषंवतद्वत्सनकुर्याद्धिंससाधने ८०७ मैथुनेच्छांचनैवायंकुर्यात्स्वप्नेपिकुत्रचित् ॥ कर्मणामनसावाचाभूतद्रोहंकदापिन ८०८ दैवाद्दृष्टंसुवर्णादिनगृह्णीयात्कदाचन ॥ अनात्मभूतेदेहादावात्मबुद्धिंचवर्जयेत् ८०९ सुखप्राप्तौप्रहर्षंचवर्जयेत्सर्वदायतिः ॥ दुःखप्राप्तौविषादंचतत्पूर्वमुदीरितम् ८१० क्षुद्राणामसहिष्णुत्वंनकुर्याद्देहिनामिह ॥ अहंमानंचदेहेस्वेममत्वंवसनादिषु ॥ नैवकुर्वीतमेधावीक्षेममिच्छन्निजात्मनः ८११

त्यर्थः ८०५ दंभस्त्याज्यइत्याह कर्मणेति । शरीरवाङ्मनोभिःकृतंधर्मंपराननुकूलयितुंप्रकटंनकुर्याद्धियतस्तद्धर्मस्यप्रकटनंदंभोभवतिसचानिषिद्धइति ८०६ भर्त्सनादिप्रवृत्तिप्रयोजकधीवृत्तिविशेषरूपंदर्पंनकुर्यादित्याह ऊहेति । ऊहस्तर्कस्तत्प्रधानेनज्ञानेनपरपक्षखंडनंनकुर्यादितिप्रथमदलार्थः । रागद्वेषयोर्हेयत्वमाह अभिलाषमितिदलद्वयेन । दुःखेतत्साधनेचद्वेषंनकुर्यादिति ८०७ कामक्रोधलोभमोहानांपरित्यागमाह मैथुनेच्छामितिद्वाभ्याम् । नकदापीतियोजना व्यवायेच्छाकामःद्रोहोऽपकारःक्रोधोऽर्थार्थं सुवर्णादिग्रहणेप्रवृत्तिर्लोभःदेहादावहंममाभिमानोमोहः तान्नकुर्यादितिद्वयोरर्थः ८०८ । ८०९ मदत्यागमाह सुखेति । प्रहर्षोमदः दुःखप्राप्तौवैमनस्यलक्षणविषादत्यागोद्वेषपरिहाराभिधानेनोक्तप्रायइत्यर्थः ८१० क्षुद्राणामिति । क्षुद्राणामल्पेऽप्यादरवतांदेहिनांधर्मेषुविद्याभिजनादिषुयदसहिष्णुत्वंक्षमाराहित्यंगुणेषुदोषारोपात्मकाऽसूयामयोजकंतन्नकुर्यात् तथादेहेदेहमध्येयोऽहंमानःपरिच्छिन्नोस्मीत्याभिमानस्तंतथाश्रुतिगतादिपदसंगृहीतंवस्त्रादिषुममत्वंस्वामित्वाभिमानंचनकुर्यात्यद्यात्मनःश्रेयइच्छेदित्यर्थः ८११

आदिपदार्थमेवप्रपंचयति अनृतमिति । वचनंमानसंचपद्विपर्ययैःकृत्वाऽनृतम् असत्यार्थविषयकत्वेनानृततामापन्नमितियावत् तत्त्यजेदितिसंबंधः तथालोकानांपद्रंजनमनुकूलनेनस्वस्मि न्प्रणयोत्पादनंतत्प्रभृतीन्व्यापारान्नकुर्यात् तथाविवेकेनपरिहृतात्मभावंस्वंदेहंशवादिवद्दूराद्वेयंपश्येदित्यर्थः ८१२ शरीरात्पृथग्भूतस्यआशांबरत्वंसिद्धप्रायमित्यभिप्रेत्यनस्तुतिरित्यादिवा क्यार्थमाह नस्तुतिरिति । नविद्यतेस्तुतिःकर्त्तव्यतयायस्यसतथा एवंननमस्कारइत्यत्रापि नैकधेतिवन्नशब्देनसमासः चलाचलोऽस्थिरोनिकेतोवासोयस्यतथाभूतत्वाद्याद्दच्छिकोयदृच्छाया स्वैरितायाहेतोःसमागतआकस्मिकइतियावत् एतादृशस्वभावोयतिर्भवेदित्यर्थः ८१३ नचार्हणेति । कंचिदपिनचार्हणेनपूजयेत् कस्यापिविवर्जनंनिषेधपर्यवसायिदोषकीर्तनंनकुर्यात् तथा त्मव्यतिरिक्तस्यप्रकाशकान्मंत्रान्नजपेत् तस्यध्यानमुपासनंचनकुर्यादिति ८२४ लक्ष्यमिति । व्यापाराणांकर्मणांमध्येकिंचिदपिलक्ष्यमवश्यमिदंमयाकर्त्तव्यमित्यभिप्रायविषयीभूतंनास्तिअ लक्ष्यंहेयत्वाभिमतंचनास्तिसर्वस्यात्मत्वेनदर्शनादितिभावः ८१५ नपृथगित्यादिवाक्यार्थमाह आत्मनइति । आत्मनोऽव्यतिरिक्तमात्मव्यतिरिक्तभावावगाहिवेदनंज्ञानमस्यपरमहंसस्यना स्ति तथाऽभेदवदभेदावगाहिचवेदनंनास्ति तथास्यसमदर्शिनोऽखंडात्मदर्शिनःप्रयोजनमिष्यमाणंनास्ति अहमादिभेदराहित्यादित्यर्थः ८१६ अनिकेतेस्वप्रतिष्ठेब्रह्मणिस्थितइतिव्युत्पत्तिक

अनृतंवचनंतद्वन्मानसंविपर्ययेऽपि ॥ लोकरंजनमुख्यांश्चत्यजेत्सर्वात्मनायतिः ॥ विण्मूत्रकुणपैस्तुल्यंशरीरंस्वंविलोकयेत् ८१२ नस्तुतिर्ननमस्कारोनिःस्व धाकारएवच ॥ चलाचलनिकेतस्तुयतिर्याद्दच्छिकोभवेत् ८१३ नचार्हणंप्रकुर्वीतनकस्यापिविवर्जनम् ॥ मंत्रांश्चनजपेन्नैवध्यानंकुर्वीतकस्यचित् ॥ आ त्मनोव्यतिरिक्तस्यनापिचोपासनंयतिः ८१४ लक्ष्यंतस्यनकिंचित्स्याद्व्यापारेषुयतेःसदा ॥ अलक्ष्यंचनकिंचित्तुबालवत्समदर्शिनः ८१५ आत्मनोव्यति रिक्तंनवेदनंनाप्यभेदवत् ॥ प्रयोजनंकिमप्यस्यविद्यतेसमदर्शिनः ॥ अहंत्वंसर्वमित्यादिभेदोप्यस्यनविद्यते ८१६ सर्वेषामात्मभूतंयदाश्रयेणविवर्जितम् ॥ ब्रह्मतत्स्थितिहेतुःस्यादस्यनित्यंमहात्मनः ८१७ सुवर्णादीनिवस्तूनिसुवर्णंचविशेषतः ॥ रागतोनस्पृशेन्नैवपश्येत्कुर्यान्नचग्रहम् ८१८ स्पर्शनात्पुष्कसस्त स्यचंडालोदर्शनादपि ॥ आत्महाचभवेदेवतत्परिग्रहतःसदा ८१९ आत्मन्यत्रहतेसर्वंनिहतंस्याच्चराचरम् ॥ सर्वरूपोयतःस्वात्मासर्वेषामिहदेहिनाम् ८२० दांतःसर्वेंद्रियःशांतमानसोविगतस्पृहः ॥ उपवीतंशिखांतद्वज्ज्ञानमेवदधद्भवेत् ॥ यस्माद्ब्रह्मोपनिषदिश्रूयतेन्यत्रचेदृशम् ८२१ हृदिस्थादेवताःसर्वाहृदि प्राणःप्रतिष्ठितः ॥ हृदिज्योतिःपरंतद्वात्रिवृत्सूत्रमिदंस्मृतम् ८२२

स्यानिकेतस्थितपदस्यार्थमाह सर्वेषामिति । यत्स्वप्रतिष्ठंसर्वात्मकंब्रह्मतत्रैवास्यविदुषोब्रह्मभूतस्यस्थितिरित्यर्थः एतेनमठादौममत्वंनिषिद्धम् ८१७ सुवर्णपात्रादिग्रहवारकवाक्यस्यार्थमा ह सुवर्णादीनीति । रागतोरागेण एतेनविडालादिवत्प्रमादेनस्पर्शनेदोषइतिसूचितम् ८१८ तत्रदोषमभिनयति स्पर्शनादिति । रागेणहिरण्यादिस्पर्शात्पुष्कसोनिषादाच्छूद्रायांजातःसंक रजातिस्तत्तुल्योभवति चंडालोब्राह्मण्यांशूद्राज्जातः तत्परिग्रहतःसुवर्णादिसंग्रहाद्यतिरात्मघातीभवेदिति ८१९ आत्मघातस्यसर्वानर्थमयत्वंदर्शयति आत्मनीति । आत्मनःसर्वरूपत्वात्तद्धा तेसर्वंहिंसितंभवतीत्यर्थः ८२० दांतेति । वैराग्यशमदमैःसंपन्नःसन्परमहंसउपवीतस्थानेशिखास्थानेचतत्त्वज्ञानमेवदधद्धारयमाणोभवेत् नचेदंज्ञानरूपेणोपवीतशिखयोर्धारणमप्रामाणिकं ब्रह्मोपनिषदितथाऽन्यत्रपरमहंसोपनिषदादिआरुणिकोपनिषदादिचश्रूयमाणत्वादित्यर्थः ८२१ तत्रब्रह्मोपनिषद्गतानामुक्तार्थपरवाक्यानामर्थमाह हृदिस्थाइत्येकादशभिः । उपवीतस्योपादानभू तंसूत्रंस्मृतिप्रसिद्धंत्रिवृत्त्रिसरंत्रिगुणस्येननयतंत्वात्मरूपंप्रसिद्धंतद्विदुषोहृदयनिष्ठत्वात्मरूपमेव तथाहिसर्वाःसमष्टिरूपत्वेनसर्वात्मभूताःदेवताईशसूत्रविराट्संज्ञाहृदिहृत्कमलेस्थिताः आत्मत्वेनवेदां-

तेपुतत्प्रसिद्धेः तथाप्राणापानौतत्संध्यात्मकोऽध्यानश्चेत्येवंत्रिविधःप्राणोपिहृदिस्थितः तथास्थूलसूक्ष्मकारणलक्षणोपाधिभेदेनविश्वादिसंज्ञतामापद्यमानंपरंज्योतिश्चिदात्मतत्त्वमपिसर्वसत्ताप्रद त्वात्श्रुतौप्राणपदोक्तंहृदिस्फुटम् एवंप्रत्येकंत्रिविधानांदेवताप्राणज्योतिषांसमुदायोनवतंत्वात्मकसूत्ररूपःसिद्धइत्याशयः ८२१ यज्ञोपवीतमिति । यथानवतंतुमयसूत्रात्प्रादुर्भूतोभावोयज्ञा दिकर्मांगभूतंयज्ञोपवीतमित्युच्यते तथाप्रोक्तत्रिवृत्सूत्रानुसंधानेनप्रादुर्भूतमखंडचैतन्यंज्ञानयज्ञांगभूतंयज्ञोपवीतमित्युच्यते यज्ञोपवीतंपरममित्यादिमंत्रस्यापितत्रैवमुख्यवृत्त्यासमन्वयात् तत्र हिसहजपदेनस्वाभाविकत्वमुक्तंप्रतिमुंचपदेनतूपाधिविमोकइति यद्यतश्चैतन्यरूपंयज्ञोपवीतंहृदितिष्ठतीतिनिर्धारितंततःसुधीःशास्त्रोक्तसशिखवपनपूर्वकंबहिःसूत्रंबाह्यद्रव्यसाध्यमुपवीतंत्यजेदित्य र्थः ८२३ यदक्षरमिति । बहिःसूत्रंतदुपलक्षितंदृश्यजातंचत्यक्त्वायदक्षरमाकाशांतप्रपंचाधिष्ठानभूतंपरंब्रह्मतदेवसूत्रमितिधारयेन्निश्चिनुयादिति कथंतत्रसूत्रपदप्रवृत्तिरित्याकांक्षायामाह सूचना दिति । सूचनात्प्रकाशनाद्धेतोःसूत्रमितिनामप्राहुः लोकेतंतवोपिस्वांतर्गतपटप्रकाशनात्सूचयतीतिसूत्रमितिव्युत्पत्तिकेनसूत्रपदेनोक्तास्तथास्वांतर्गतजगत्पटप्रकाशकत्वात्परंपदंब्रह्मसूत्रसंज्ञमि त्यर्थः एतद्विज्ञानफलमाह तत्सूत्रमिति । वेदःशब्दराशिस्तस्यपारमगोचरमपिप्राप्तःसर्वज्ञइतियावत् ८२४ सूत्रशब्दस्यतंत्वादिपुरूढत्वेपिधिधारकत्वलक्षणगुणेनचित्तत्त्वेप्रवृत्तिंनिश्चित्यतत्प रोभवेदित्याह येनेति । येनसर्वाधारेणचिदात्मनासर्वंदृश्यजातंप्रोतंव्याप्तंयत्रस्थितमितिशेषः तद्वस्तुसूत्रत्वेनधारयेत्योगीतत्त्वंपदार्थैक्यदर्शी । तत्रसाधनसंपत्तिमाह योगविदित्यादिपदद्व

यज्ञोपवीतंचैतन्यंहृदितिष्ठतियत्ततः ॥ सशिखंवपनंकृत्वाबहिःसूत्रंत्यजेद्बुधः ८२३ यदक्षरंपरंब्रह्मतत्सूत्रमितिधारयेत् ॥ सूचनात्सूत्रमित्याहुःसूत्रंनामपरंप दम् ॥ तत्सूत्रंविदितंयेनसविप्रोवेदपारगः २४ येनसर्वमिदंप्रोतंसूत्रेमणिगणाइव ॥ तत्सूत्रंधारयेद्योगीयोगवित्तत्त्वदर्शिमान् २५ बहिःसूत्रंत्यजन्विद्वान्योग मुत्तममास्थितः ॥ ब्रह्मभावमिदंसूत्रंधारयेद्यःसचेतनः २६ धारणात्तस्यसूत्रस्यनोच्छिष्टोनाशुचिर्भवेत् ॥ सूत्रमंतर्गतंयेषांज्ञानयज्ञोपवीतिनाम् ॥ ज्ञानमेव परंतेषांपवित्रंज्ञानमुच्यते २७ अग्नेरिवशिखातद्वद्यस्यज्ञानमयीशिखा ॥ सशिखीत्युच्यतेविद्वान्नेतरेकेशधारिणः २८ कर्मण्यधिकृतायेवैवैदिकेब्राह्मणादयः ॥ तैर्विधार्यमिदंसूत्रंक्रियांगंतद्धिवैस्मृतम् २९ शिखाज्ञानमयीयस्यत्दुपवीतंचतन्मयम् ॥ ब्राह्मण्यंसकलंतस्येत्येवंब्रह्मविदोविदुः ८३०

येन । योगोऽष्टांगःअमृतनादोक्तषडंगोवातद्वेत्ता तत्त्वदर्शीनित्यानित्यवस्तुविवेकस्तद्वानितितदर्थः ८२५ उक्तवेत्तारंप्रशंसति बहिःसूत्रमिति । उत्तममैक्यदर्शनलक्षणंयोगमास्थितआलं ब्यस्थितोविद्वान्कुशलोयोबहिःसूत्रंत्यक्त्वाइदंवर्णितंसूत्रंधारयेत्सएवचेतनोलब्धचेतनत्वफलइतरेतुविद्वांसोपिरंगकुंडचाश्मसमाइत्यर्थः कीदृशमिदंसूत्रम् ब्रह्मभावंब्रह्मणोभावःप्रादुर्भावरूपास त्तायत्रतत्तथा ८२६ उक्तसूत्रेणसदापवित्रताभागेवभवतीत्याह धारणादिति । येषामुक्तंसूत्रमंतर्गतंहृदिप्रकाशमानंभवेत्तेषांज्ञानयज्ञोपवीतिनांज्ञानमेवपरंप्रधानंनकर्म तेषांशारीरःद्येनसांपवि त्रंशोधकमपिज्ञानमेवेत्यर्थः तथाचस्मृतिः ‘नहिज्ञानेनसदृशम्’ इत्यादिः ८२७ उपवीतन्यायंशिखायांदर्शयति अग्नेरिवेति । यथाग्नेःशिखाअग्नेःस्वरूपादन्यानभवतितथायस्यनित्यविज्ञान रूपाशिखास्वरूपादन्यानभवतिसएवमुख्यःशिखी ज्ञानस्यशिखात्वंचशिरसिमूर्द्धनिख्यातेतिव्युत्पत्त्यापृषोदरादित्वान्निष्पन्नेनशिखाशब्देनसर्वोत्तमत्वाभिधानादुत्तमत्वगणयोगाद्वाबोध्यम् इतरेज्ञानहीनास्तुनशिखिनः केशधारित्वस्यस्त्रीशूद्रादावतिप्रसक्तत्वेनशिखित्वाप्रयोजकत्वादित्यर्थः ८२८ तर्हिसर्वैर्बाह्यशिखोपवीतेहातव्येइतिचेन्न यादृशोयक्षइतिन्यायेनबाह्यकर्माधिकारि भिस्तत्तत्कर्मांगत्वेनबाह्योपवीतादीनांधारणमेवकर्तव्यमित्याह कर्मणीति । विधार्यंविशेषेणधार्यं इदंबाह्यम् ८२९ उपवीतस्यमुख्यत्वगौणत्वाभ्यांतत्प्रयुक्तब्राह्मण्यस्यापिमुख्यत्वगौणत्वे दर्शयन्मुख्यंब्राह्मण्यंज्ञानिनामाह शिखेति । यस्यपुरुषस्यशिखाउपवीतंचेत्युभयंज्ञानमयंतस्यैवब्राह्मणत्वंसकलंपूर्णंमुख्यमितियावत् इत्थंवेदतात्पर्यविदःप्राहुरिति ८३०

तत्रहेतुतयाब्राह्मणपदस्यव्युत्पत्तिमात्मानंब्रह्मसर्वात्मकंवेत्तीत्याकारांसूचयन्नाह इदमिति । इदंज्ञानरूपमुपवीतंपरमंसर्वोत्कृष्टंपरायणंब्रह्मरूपेणसर्वाधिष्ठानभूतंचयद्भवतितयेनविदुषास्वात्मसाक्षात्काररूपलक्षणव्यापारेणविधृतंसविद्वानेवोपवीतीप्रशस्तोपवीतवान्भवेत् । नकेवलमेतावदेवफलंकिंतुसर्वात्मभावोपीत्याह यज्ञेति । यतःसएवदेहिकर्तृकयज्ञरूपस्तथायज्वायागांगकर्तृरूपश्चसविद्वान्भवेत् एतदुपलक्षणंपदार्थांतरात्मतायाअपीति ८३१ ज्ञानात्मकोपवीतादिलक्षणंब्राह्मण्यंपरमहंसेनावश्यंसंपाद्यमित्यर्थस्यदण्डोदाहरणेनप्रदर्शनपरंपरमहंसोपनिषद्वाक्यमवतारयति संन्यासेपीति । संन्यासेपिपोचारणलक्षणेकृतेपिवैणवेदण्डेधारितेपिचसत्यस्यपतेर्ज्ञानंविनादंडित्वंदंडमात्रेणनभवति यतःपरमहंसधर्मप्रतिपादिकाश्रुतिरुपनिषदेवमाहेति ८३२ एवंकथमित्याकांक्षायांतद्वाक्यंपठति ज्ञानेति । ज्ञानरूपोदंडःएकदंडीपरमहंसः सर्वाशीविषयलंपटः स्फुटमन्यत् एतेनखल्विदंब्रह्मसूत्रमित्यादिकारुणिकवाक्यार्थोपिसंगृहीतइतिबोध्यम् ८३३ फलितमाह यस्मादिति । यस्मादेवंश्रुतयःप्रतिपादयंतितस्मादमुनापरमहंसेनज्ञानंश्रवणादिद्वारासंपाद्यमिति तच्चज्ञानमैक्यविषयकमेवेत्याह आत्मनइति ८३४ पारमहंस्यसंपाद्यस्यब्रह्मात्मैक्यज्ञानस्याभिनयपरंयत्तस्वस्वयमेवावस्थितिरित्यादिपरमहंसोपनिषद्वाक्यंतस्यार्थमवतरणपूर्वकमाह आत्मनोब्रह्मेतिसप्तभिः । कृतीकृतार्थः ८३५ अवतारितवाक्यार्थंदर्शयति अविद्ययेत्यादिना

इदंयज्ञोपवीतंतुपरमंयत्परायणम् ॥ सर्वदाविधृतंयेनविदुषास्वात्मबोधतः ॥ सविद्वानुपवीतीस्याद्यज्वायज्ञश्चदेहिनाम् ८३१ संन्यासेपिकृतेतद्वद्विधृते वैणवेपिच ॥ दंडेनैवतुदंडित्वंमुख्यंज्ञानंविनाभवेत् ॥ यस्मात्परमहंसाख्याश्रुतिरेषजगौहिसा ८३२ ज्ञानदंडोधृतोयेनएकदंडीसउच्यते ॥ काष्ठदंडोधृतोयेनसर्वाशीज्ञानवर्जितः ॥ सयातिनरकान्घोरान्महारौरवसंज्ञकान् ८३३ यस्मादेवंततोज्ञानंकरणीयंसदामुना ॥ आत्मनोब्रह्मणोयेनभेदधीर्नैवजायते ८३४ आत्मनोब्रह्मरूपत्वमसकृत्कथितंमया ॥ तुभ्यंपुनश्चवक्ष्यामिज्ञानाद्यस्यकृतीभवेत् ८३५ अविद्ययासदाशून्यंपरब्रह्मेतिकीर्तितम् ॥ आनंदात्मस्वरूपंयत्स्वस्मिन्नेवसदास्थितम् ८३६ अद्वयंभेदगंधेनरहितंततएवहि ॥ पूर्वदोषविनिर्मुक्तंनिश्चलंगगनोपमम् ८३७ इदमेवाहमात्मास्मीत्येतन्मेस्थानकंपरम् ॥ इदमेवस्वयंज्योतिर्मत्तोभेदविवर्जितम् ८३८ इदंशिखोपवीतंचतथादंडकएवच ॥ नब्राह्मोवैणवोदंडोमुख्योमेद्यकदाचन ८३९ पूर्णानंदैकरूपेस्मिन्यदैवमवतिष्ठते ॥ कृतकृत्यस्तदापश्येत्परंब्रह्मात्मरूपतः ८४०

यन्नित्यबोधरूपत्वेनाविद्ययासदाहीनमितिकीर्तितंतद्ब्रह्मआनंदमयआत्मन्येवैक्येनसदास्थितंनतटस्थमित्यर्थः ८३६ अद्वयमिति । कीदृशंतद्ब्रह्म प्रशांतसर्वभेदत्वादद्वयम् अतएवसर्वविकारैःक्रियपाचवर्जितमिति ८३७ इदमेवेति । यदविद्ययासदाशून्यमित्यादिनावर्णितंतदिदमपरोक्षंवस्त्वहमेवास्मिआत्मत्वादितिपूर्वेणसंबंधः ततआत्मरूपाद्भिन्नत्वेहिममानात्मत्वंस्यादितिभावः । अभेदफलमाह एतन्मेइति । तथेदमेवतत्त्वंममपरंसर्वोत्कृष्टंस्थानकंप्रियंस्थानम् अनुकंपायांकन् ' सभूमाकस्मिन्प्रतिष्ठितःस्वेमहिम्नि 'इतिश्रुतेः तथाइदंतत्पदार्थभूतंतत्त्वंमत्तोभेदविवर्जितंस्वयंप्रकाशत्वात् नहिमत्यग्भिन्नस्यदृश्यस्यस्वयंप्रकाशत्वंसंभवतीतिभावः ८३८ नकेवलमुक्तंब्रह्ममस्वरूपमेवकिंतुममसर्वोपकरणात्मकंतदुपलक्षितसर्वप्रपंचात्मकंचेत्याह इदंशिखेति । इदंब्रह्मैवज्ञानात्मकंममशिखादिरूपमित्यर्थः तत्रज्ञानरूपब्रह्मणएवसविलासाज्ञानदमनान्मुख्यंदंडत्वं काष्ठमयस्यतुमनोनियमनस्मारकस्यगौणत्वंतदित्याह नब्राह्मइति । ब्राह्मःब्राह्मणंप्रतिधारणीयत्वेनविहितः ८३९ उक्तभावनाफलंतुब्रह्मसाक्षात्कारएवेत्याह पूर्णेति । कृतकृत्योनिवृत्तकर्माधिकारःसन्परंब्रह्मपश्येदात्मरूपतयेत्यर्थः ८४०

तन्नित्यबोधइत्यस्यार्थमाह सूरयइति । यद्ब्रह्मविदुषांपरोक्षंसर्वत्रव्याप्तमानंदरूपत्वेनपरमंसर्वोत्कृष्टंपदमन्वेषणीयंवस्तुयथाविदुषामपिहृदिस्थितंसज्ज्योतिःसर्वार्थप्रकाशकं तस्याज्ञायमानत्व लक्षणनिलीनत्वेनप्रकाशकत्वेदृष्टांतश्चक्षुः तद्धिस्वरूपंसदवप्रकाशयतीत्यर्थः ८४१ त्वंपदार्थशोधनप्राधान्येनब्रह्मप्रतिपादिकायाब्रह्मोपनिषदोर्थंवर्णयति आत्मनइत्यूनत्रिंशत्श्लोकैः । त्वंपदार्थस्यप्रत्यग्रूपस्यावगतिःस्फुटत्वंतदर्थंब्रह्मोपनिषदुक्ताश्चतस्रोऽवस्थाःशृण्विति ८४२ निरवस्थइति । अयंचवस्तुतोनिरवस्थःअवस्थाख्यपरिणामरहितोपिमायावशेनताःप्राप्नोतीत्यर्थः तत्रतुरीयस्यपरमार्थत्वेपितुरीयतायाःपूर्वापेक्षत्वेनकल्पितत्वमितिभावः ८४३ तासामिति । तासामवस्थानांजाग्रदादीनांचतसृणांनाभ्यादीनिक्रमेणस्थानानिबोध्यानीत्यर्थः ८४४ नाभेरिति । नेत्रस्थंजागरंविद्यादित्यन्यत्रोक्तेस्तदुपसंहारेणनाभिनेत्रपर्यंतदेशेविज्ञानशक्त्युपाधिकोजीवोयदाविशेषतःस्थितोभवतितदाविश्वसंज्ञाप्रयोजिकांजागरावस्थांभजतेइतिप्रथमदलार्थः हृत्कमलेतिष्ठन् प्राज्ञत्वप्रयोजिकांसुषुप्तिंकंठेतैजसत्वप्रयोजकंस्वप्नंमूर्द्धनितुसमाधिनातिष्ठंस्तुरीयतांभजतइत्यर्थः ८४५ अत्रजागरणइति । क्रमोविवक्षितः देवताअधिदैवरूपाणि तथाचजागरणशालिनोविश्व

सूरयोयत्पश्यंतिव्याप्तंतत्परमंपदम् ॥ चक्षुर्वदेहिनांज्योतिःस्वप्रकाशंहृदिस्थितम् ८४१ आत्मनोस्यावगत्यर्थंत्वंपदार्थस्यतेधुना ॥ ब्रह्मोपनिषदिप्रोक्ताअवस्थाःकथयाम्यहम् ८४२ निरवस्थःपुमानेषआनंदात्मास्वयंप्रभः ॥ मायामयीरवस्थास्ताश्चतुर्धायातिसर्वदा ८४३ तासांस्थानानिचैतानिकथितानिमनीषिभिः ॥ नाभिश्चहृदयंतद्वत्कंठोमूर्द्धातथैवच ८४४ नाभेर्नेत्रांतमुद्दिष्टंस्थानंजागरणेसदा ॥ सुप्तिस्वप्नतुरीयाणिहृदिकंठेचमूर्द्धनि ८४५ अत्रजागरणेस्वप्नेसुप्तौचैवतुरीयके ॥ ब्रह्माविष्णुश्चरुद्रश्चपरमात्माचदेवताः ८४६ परमात्माचतुर्थोवैसर्वदेवादिरूपभाक् ॥ कार्यकारणहीनोयमवाङ्मनसगोचरः ८४७ आनंदात्मास्वयंज्योतिःप्रउक्तोवेदवादिभिः ॥ यस्मिन्नलोकाःकर्मफलंनलोकाभेदवर्जिते ८४८ देवावेदास्तथायज्ञामातापिचपितापिच ॥ स्नुषेत्यादिममाध्यासानस्युस्तेप्यत्रलोकवत् ८४९ चंडालःपुष्कसस्तद्वत्संन्यासीचवनीतथा ॥ इत्यादिकोयमध्यासोममनास्तिस्वभावतः ८५० अत्रमस्तूत्तमोवाहमेतानिकरणानिमे ॥ दुःखस्यचसुखस्यापिइहवापिपरत्रच ८५१ सुखंवाप्यथवादुःखंभेदश्चैवप्रकीर्तितः ॥ संसारोयमपार्थोयंमयितुर्येनविद्यते ८५२ एकमेवतुतद्ब्रह्मपरंनिर्वाणसंज्ञितम् ॥ विशुद्धचेतसांनित्यंभातिस्वेनैवतेजसा ८५३

स्यब्रह्माविराड्रूपोऽधिदैवंस्वप्नस्यविष्णुर्हिरण्यगर्भरूपःसुप्तेरुद्रस्तुरीयस्यपरमात्मेत्यर्थः ८४६ तत्रपरमात्मरूपंयथाश्रुतिप्रतिपादयत्युपादानायपरमात्मेत्यादिना । यश्चतुर्थःपरमात्मासमायासर्वरूपोवस्तुतःकार्यादिविशेषरहितोवाग्याद्यगोचरश्चबोध्यइत्यर्थः ८४७ आनंदात्मेति । तथासस्वयंप्रकाशानंदरूपउक्तः तत्रहेतुतयाऽद्वितीयत्वमाह यस्मिन्निति । यस्मिन्कर्मफलरूपालोकाविषयाःनलोकाः लोकभावंपरित्यजंतिभेदवर्जितत्वादित्यर्थः ८४८ देवाइति । यथालोकैरत्रतुरीयेस्वभावस्त्यक्तस्तथादेवादिभिरपिसत्यज्यते यतस्तेममत्वंपदार्थस्यसंबंधिनोऽध्यासाआरोपितरूपाभवंतिनवास्तवाइत्यर्थः ८४९ चंडालइति । ब्राह्मण्यांक्षत्रियायांचक्रमेणशूद्राज्जातौचंडालपुष्कसौ चंडालांताजातयःसंन्यासादयआश्रमाश्चात्रतुरीयेमत्स्वरूपेनसंतीति ८५० अधमइति । अधमादिःकर्तृविशेषरूपऐहिकामुष्मिकसुखादिसाधनरूपःसुखादिफलरूपश्चयस्यभेदउक्तःससंसारोमयितुरीयेनास्तीतिद्वयोरर्थः ८५१ । ८५२ एकमिति । निर्वाणंनिर्गतंवाणंशरीरंसविलासाज्ञानरूपंयस्मात्तन्निर्वाणसंज्ञंशुद्धधियांस्वयंज्योतिर्हिनभातीति ८५३

ऋषयइति । अत्रतुरीयेऋष्यादयःकेपिनईशतिनियमनंकर्तुंनशक्नुवंतीत्यर्थः ८९४ प्रतिबुद्धादिपदद्वयार्थमाह यश्चेति । यस्तंकोपिकर्हिचिज्जानातिससर्वज्ञःसन्सर्वविद्याफलमृष्यादीनांकिंकरीभावरूपंप्राप्नोतीत्यर्थः यो यो देवानांप्रत्यबुध्यतेत्यादिश्रुत्युक्तसर्वविद्यापदेप्रथमाद्वितीयार्थेइतिभावः ८९५ उपवीतग्रंथस्यप्रदर्शितार्थत्वात्तमतिक्रम्यएकोदेवइत्यादिमंत्रार्थमाह जगदीशइति । जगद्यईशश्चज्ञाताभ्रमप्रमयोराश्रयोजीवश्चएवंरूपंद्वयंद्वैतमस्माभिर्मायामोहितैरेवकल्पितंवस्तुतस्त्वत्रपुरुषेनास्तियतोयंकाष्ठेष्वग्निवत्सर्वोपाधिपुगूढएकश्चभवति तस्योपाधयश्चजरायुजादिचतुर्विधभूतरूपाः तत्रभूतविशेषणस्यकार्यकारणरूपित्वस्यायमर्थः दृष्टाऽदृष्टद्वारापूर्वदेहंप्रतिकार्यत्वमुत्तरदेहंप्रतिचकारणत्वमितिद्वयोरर्थः ८९६ । ८९७ सर्वेति । आकाशवत्सर्वव्यापीबुद्धेरपिशब्दात्कारणशरीरस्याप्यंतरामध्येप्रत्यक्त्वेनस्थितस्तथासर्वभूतानिराजवदधिष्ठायवशीकृत्यअत्रएषुभूतेषुस्थितः ८९८ मध्यस्थइति । मध्यस्थःसाक्षी । चेतृपदार्थमाह चिद्धनइति ८९९ तृन्प्रत्ययांतंचेतृपदंतस्यज्ञानरूपस्यज्ञानाश्रयत्ववंवक्तुंनक्षमतेप्रमेयतंत्रत्वान्निर्गुणपदसमभिव्याहाराच्चेत्याशयेनाह चेतनइति । चेतनश्चैतन्याश्रयवाचकेनचेतृपदेनोक्तोपिचेतन्येच्छादिगुणाश्रयोनभवतिनिर्गुणत्वादद्वितीयत्वाच्चास्मिन्गुणगुणिभावस्यासंभवादित्यर्थः ८६० एकोवशीत्यादिमंत्रपूर्वार्द्धस्यार्थमाह स्वामीति । यत्यतःस्वरूपमेवबहुधाकुरुतेऽतःसर्व

ऋषयःपितरोदेवास्तथान्येपिमहौजसः ॥ तत्रकेपीशतेनैवतुर्येदेवेमहेश्वरे ८९४ यश्चजानातितंदेवंसर्वज्ञःकोपिकर्हिचित् ॥ ऋष्यादीनांभवेन्नैवकिंकरोयमनाथवत् ९५ जगदीशस्तथाज्ञाताह्यस्माभिःकल्पितंद्वयम् ॥ वस्तुतोनैवतद्द्वैतंपुरुषेविद्यतेयतः ९६ एकएवस्वयंज्योतिर्गूढःकाष्ठाग्निवत्सदा ॥ चतुर्विधेषुभूतेषुकार्यकारणरूपिषु ९७ सर्वव्यापीयथाकाशोबुद्धेरप्यंतरास्थितः ॥ अधिष्ठायचभूतानिवसत्यत्रसराजवत् ९८ मध्यस्थइवभूतानांव्यापाराननुपश्यति ॥ चिद्धनःकेवलोजाड्यलेशेनापिविवर्जितः ९९ चेतनोपिपुमान्नायंचैतन्यादिगुणःसदा ॥ स्वाभावान्निर्गुणोयस्माद्भेदगंधविवर्जितः ८६० स्वामीसर्वस्यजगतःसर्वदायोनियामकः ॥ एकमेवात्मनोरूपंकुरुतेबहुधाचयत् ६१ तस्यात्मनोत्रविज्ञानउपायंप्राहुरीदृशम् ॥ स्वदेहंवापिबुद्धिंवाह्यरणिंप्रविचिंतयेत् ॥ चतुर्मात्रंतथोंकारमात्मानमुत्तरारणिम् ६२ मात्रापादाद्यभेदेनध्यानेनमथनेनहि ॥ अभ्यस्यतोयमात्मास्यान्निगूढःप्रकटःसदा ६३ अरण्योर्मथनाद्यद्वदग्निःसर्वप्रदाहकः ॥ अविश्वासोनकर्तव्यआविर्भावेनिजात्मनः ६४ यथायंत्रादिपीडातउपायाल्लभ्यतेनृभिः ॥ तैलादिकंतथात्मापितपःसत्यादिसंयुतैः ॥ आत्मज्ञैर्लभ्यतेशश्वद्बुद्धोस्वस्यनिजात्मतः ६५ जीवतांपरिगृह्यायमानंदात्मास्वयंप्रभः ॥ संसारेवर्ततेज्ञातोजीवोऽजीवःप्रजायते ८६६

स्यस्वामीनियामकइतियावत् विकारस्यउपादानाधीनत्वस्यान्याय्यत्वादितिभावः ८६१ आत्मानमित्यादेरर्थमाह तस्येति । तस्यात्मनःसाक्षात्कारेऽयमुपायउक्तः अयंकः आत्मपदोक्तंदेहादिसंघातंबुद्धिंवाऽधरारणिंचिंतयेत् अकारोकारमकारार्द्धमात्रारूपमात्राचतुष्टयशालिनंप्रणवमात्मानंमात्राभिर्विश्वेत्यादिचतुरवस्थस्यात्मनःप्रतिपादकमुत्तरारणिंचिंतयेदिति ८६२ मात्रेति । पादाविश्वादयस्तुरीयांताःप्रत्येकमधिदैवादिभिन्नामांडूक्येप्रोक्तास्तेषांमात्राभिर्यथाक्रममभेदेनचिंतनमेवमथनं प्रकृत्यादित्वात्तृतीया तथाचोक्तध्यानात्मकमथनरूपाभ्यासेनायमात्मागूढोपिप्रकटःस्यादत्रनसंशयइतिद्वयोरर्थः ८६३ । ८६४ तिलेष्वित्यादेरर्थमाह यथेति । यथायंत्रादिनानिपीडनमथनादिरूपोपायवद्भिस्तैलंघृतंचलभ्यतेतथातपःसत्यविवेकाद्युपायवद्भिर्बुद्धिसाक्ष्यात्मापिनिजात्मतःस्वरूपत्वेन निजात्मभिरितिपाठेनिजेस्वरूपेआत्मामनोयेषान्तैस्तथाविधैरित्यर्थः ८६५ कर्मेत्यादेरर्थमाह जीवतामितिद्वाभ्यां । अयमात्माऽविद्ययाजीवत्वंपरिगृह्यसंसारेजाग्रदादिरूपेभ्रमति ज्ञातस्तुपूर्वंजीवोपिसन्नजीवोब्रह्मरूपःप्रजायतेइत्यर्थः ८६६

जाग्रदाद्योऽवस्थास्तद्गताःपदार्थाउपलक्षितास्तेऽनेनैवकल्पिताइतिसदृष्टांतमाह ऊर्णेति । अत्तिसंहरति ८६७ ज्ञेयप्रतिपादकमंत्रवाक्यमवतारयति अजीवतेति । यदाऽद्वयमात्मानंपश्येत्तदैवाजीवताब्रह्मज्ञाऽस्यभवतीत्यर्थः ८६८ अस्यात्मनोविज्ञानमप्यविषयतयाआनंदरूपतयाचेत्याह यतइति । वाचःवागादींद्रियाणिमनश्चएतान्यप्राप्यविषयीकर्तुमयतोनिवर्तंते यतश्चज्ञाताजीवस्यानंदत्वमानंदरूपत्वंप्रकटीभवतितज्ज्ञात्वाबुधोविवेकीमुच्यतेमुक्तोभवतीत्यर्थः ८६९ उत्तराकांक्षामुत्थापयन्नुपसंहारवाक्यार्थमाह सर्वेति । आत्मविद्याउपासनातपःशास्त्रोक्तंकर्मताभ्यांकर्मोपासनफलात्मकःसंसारउपलक्ष्यतेतस्यसर्वस्यमूलंकारणंक्षीरेसर्पिरिवसर्वत्रानुगतमात्मानंज्ञात्वामनसोनिग्रहेकृतेसतिविमुच्यतेनान्यथेत्यर्थः क्षीरसर्पिर्दृष्टांतेनचमुक्तस्यपुनर्बंधाभावःसूचितः यद्वाआत्मविद्याचतपश्चएतेमूलंप्रादुर्भावसाधनंयस्यतमिति तदुक्तं 'अविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुते' इति ८७० उक्तार्थेमानभूतायाब्रह्मबिंदूपनिषदोऽर्थंगौडपादवाक्यादिभिश्चिचत्वारिंशदधिकश्लोकशतेनोपबृंहयितुंप्रतिजानीते एतत्तेइति । एतदात्मज्ञानमनोनिग्रहयोर्मोक्षप्रयोजकत्वं अमृतबिंदुर्नामब्रह्मबिंदूपनिषत् अमृतब्रह्मशब्दयोःसमानार्थत्वात् तत्रयथाप्रतिपादितंतच्छृणु तत्रनिग्रहयोग्यंमनोनिर्धारयितुंतद्द्वैविध्यंसलक्षणमुच्यते मनोहीत्यादिना । शुद्धिःसत्कर्मोपासनाभ्यांमलक्षयःतल्लक्षणंकामनिवृत्तिः कामोविषयरागः ८७१ तत्रशुद्ध

ऊर्णनाभिर्यथातंतून्सृजतेसंहरत्यपि ॥ जाग्रत्स्वप्नेतथाजीवःसृजत्यत्तिचसर्वदा ८६७ अजीवतातदातस्यजीवस्यास्यभविष्यति ॥ आनंदात्मानमात्मस्थंयदाऽद्यमवलोकयेत् ८६८ यतोवाचोनिवर्तंतेअप्राप्यमनसासह ॥ आनंदत्वंचजीवस्यतज्ज्ञात्वामुच्यतेबुधः ८६९ सर्वव्यापिनमात्मानंक्षीरेसर्पिरिवस्थितम् ॥ आत्मविद्यातपोमूलंजीवोज्ञात्वाविमुच्यते ॥ मनसोनिग्रहेनित्यंनान्यथाजन्मकोटिभिः ८७० एतत्तेमृतबिंदूक्तमहंवक्ष्यामितच्छृणु ॥ मनोहिद्विविधंप्रोक्तंशुद्धंचाशुद्धमेवच ॥ अशुद्धंकामसहितंशुद्धंकामविवर्जितम् ८७१ मनएवमनुष्याणांकारणंबंधमोक्षयोः ॥ बंधायविषयासक्तंमोक्षेनिर्विषयंस्मृतम् ८७२ यतोनिर्विषयस्यास्यमनसोमुक्तिरिष्यते ॥ ततोनिर्विषयंनित्यंमनःकार्यंमुमुक्षुणा ८७३ निरस्तविषयासंगंसंनिरुद्धंमनोहृदि ॥ यदायात्यात्मनोभावंतदातत्परमंपदम् ८७४ यथास्वप्नेद्वयाभासंस्पंदतेमाययामनः ॥ तथाजाग्रद्द्वयाभासंस्पंदतेमाययामनः ८७५ अद्वयंचद्वयाभासंमनःस्वप्नेनसंशयः ॥ अद्वयंचद्वयाभासंतथाजाग्रन्नसंशयः ८७६

स्यमोक्षोपयोगितामन्वयव्यतिरेकाभ्यामाह मनएवेति । बंधोऽहंममेत्यादिरध्यासः मोक्षआत्मयाथात्म्यावभासः निर्विषयंवीतरागंमोक्षेप्रयोजकमितिशेषः ८७२ फलितमाह यतइति । यतोविषयरागलक्षणाऽशुद्धिहीनस्यमनसःफलभूतामुक्तिरिष्टावेदविद्भिः ततःशुद्धमनसःसफलीकर्तुंनिर्विषयंनिरुद्धंकार्यमित्यर्थः ८७३ मनोनिरोधस्यमोक्षपर्यवसायितामेवदर्शयति निरस्तेति । निरस्तोविषयेष्वासंगआसक्तिर्येनतत्तथाभूतंमनोयदाहृदिनिरुद्धंसदात्मनोभावंस्वभावंमहावाक्यप्रतिपाद्यमेकरूपंयातिअवधारयतितदानन्मोक्षरूपंपरमंसर्वोत्कृष्टंपदंप्राप्यंफलंसिद्धमितिबोध्यमितित्यर्थः ८७४ आत्माकारतयामनोनिरोधप्रकारंगौडपादैःसोपपत्तिकमुक्तंतद्वाक्यानांप्रायशउपन्यासेनविशदयतियथास्वप्नइत्यादिनाअकथ्यंसुखमुत्तममित्यंतेनग्रंथेन । यथास्वप्नावस्थायांमनःकर्तृद्वयाभासंमिथ्याभूतग्राह्यग्राहकरूपद्वैताकारंसत्स्पंदतेचिदाकारंभजतेतथाजाग्रत् सनमिलोप आर्षः जाग्रदवस्थायामपिबोध्यमित्यर्थः ८७५ द्वैतस्यमिथ्यात्वमेवस्फुटयति अद्वयमिति । यथामनःस्वप्नेद्वयाभासमपिवस्तुतोऽधिष्ठानचिद्रूपेणाद्वयंद्वैतरहितमेवतथाजाग्रत्यपीत्यर्थः ८७६

अधिष्ठानचित्तत्वदृष्ट्यैवचसविलासमनसोबाधरूपाअमनस्ताभवतीत्याह आत्मेति । आत्मैवसत्यमधिष्ठानंतस्यानुबोधःशास्त्राचार्योपदेशानुसारेणसाक्षात्कारस्तेनयदानसंकल्पयतेद्वैताकारवृत्तीःपरित्यजतितदाद्वैताभावेसतिद्वैताग्रहणरूपाममनस्तांमनोरहिततांयातितत्त्वविदित्यर्थः ८७७ तदानींकीदृशमात्मरूपमवशिष्यतेइत्याकांक्षायामाह अमनस्तेति । यदातस्यभ्रमसिद्धस्यमनसःअमनस्ताबाधरूपानिवृत्तिर्भवतितदातद्ब्रह्मनसोऽभाववत्तत्त्वमीदृशमेभिर्विशेषणैरुपलक्षितंप्रचक्षतेकथयंतितत्त्वविदइतिसंबंधः ईदृशंकीदृशम् अकल्पकंसर्वकल्पनारहितंअजंजन्मादिविकारहीनंज्ञेयाभिन्नंस्वप्रकाशंचयज्ज्ञानंतद्रूपमिति तस्याकल्पकत्वादौक्रमेणहेतुगर्भंविशेषणत्रयंब्रह्मज्ञेयमित्यादिब्रह्मैवज्ञेयंयस्यततथा तस्मादकल्पकंनित्यत्वादजंयतश्चाजेनतेनज्ञानेनाजंस्वरूपमेवविबुद्ध्यतेनेनत्वन्यत्ततोज्ञेयाभिन्नमितिसंबंधः ७८ अत्रभ्रांतमतमनूद्यनिरस्यति सुषुप्तिवदिति । तन्मनोयदासुषुप्तिवत्सुषुप्तौयादृशंभवतितादृशंभवेत्तदाअमनस्तासिद्धिर्बौद्ध्येतिकेचिद्वदंतितन्मतंनयुक्तंयतःसुषुप्तिनिरोधयोर्विभेदोविशेषोवक्ष्यमाणविधयाभवतीत्यर्थः ७९ तमेवविशेषमभिनयति निगृहीतस्येति । निगृहीतस्यनिरुद्धस्यअतएवनिर्विकल्पस्यकल्पनारहितस्यधीमतोमहावाक्यजविद्यासंस्कृतस्यचयमनसोयत्पर्यायोऽधिष्ठानावशेषरूपःप्रचारोऽवस्थाविशेषःसजागरेनिद्राभावेभवति सुषुप्तौतुयोमनसःप्रचारःसअन्योविलक्षणस्तामसत्वात् अतउक्तःप्रचारोनतत्समोनसुषुप्तसमइति यतःसुषुप्तेतच्चित्तंलीयतेकारणेसूक्ष्मभावेनावतिष्ठतेअत्रसमाधौतुबाध्यतेइत्यर्थः ८८० सुषुप्तिसमाध्योर्विशेषांतरमाह तदेवेति । तत्ग्राह्यग्राहकभेदरहितंनिरुद्धंचित्तंनिर्भयत्वादिशा

आत्मसत्यानुबोधेननसंकल्पयतेयदा ॥ अमनस्तांतदायातिग्राह्याभावेतदग्रहम् ८७७ अमनस्तायदातस्यमनसस्तद्ददीदृशम् ॥ अकल्पकमजंज्ञानंज्ञेयाभिन्नंप्रचक्षते ॥ ब्रह्मज्ञेयमजंनित्यमजेनाजंविबुद्ध्यते ८७८ सुषुप्तिवद्यदातत्स्यादमनस्तातदाभवेत् ॥ केचिदेवंसमिच्छंतिनयुक्तंतद्विभेदतः ८७९ निगृहीतस्यमनसोनिर्विकल्पस्यधीमतः ॥ प्रचारोजागरेचैवसुषुप्तेऽन्योनतत्समः ॥ लीयतेहिसुषुप्तेतन्निगृहीतंनलीयते ७८० तदेवनिर्भयंब्रह्मज्ञानालोकंसमंततः ॥ अजमनिद्रमस्वप्नमनामकमरूपकम् ॥ सकृद्विभातंसर्वज्ञंसुषुप्तंनचतादृशम् ८८१ अमनस्तांगतेचित्तेप्राप्योयंभूरिपुण्यतः ॥ सर्वाभिलापविगतःसर्वचितासमुत्थितः ॥ सुप्रशांतःसकृज्ज्योतिःसमाधिरचलोभयः ८८२ ग्रहोनास्मिन्नचोत्सर्गश्चितावाकस्यचिद्भवेत् ॥ आत्मसंकलनादात्मायदानिश्चलतांगतः ८८३ आत्मरूपंभवेच्चित्तमजातिसमतांगतम् ॥ तदासमाधिरेपस्यादमनस्ताभवोमहान् ॥ वेदांतोदितसंगूढोदृश्यतेगुरुनक्ततः ८८४

त्विप्रकाशंचसंपन्नम् सुषुप्तेतुनादृशंनिर्भयत्वमात्मतामापन्नंचित्तंनभवतिदोषबीजाविद्याशबलत्वादितिभावः तन्निर्भयत्वंभयहेतुद्वितीयग्रहणाभावात् नचतत्रभासकापेक्षेत्युक्तंज्ञानालोकमिति । स्वरूपभूतज्ञानमेवालोकःप्रकाशोयस्यततथा चिदेकरसमितियावत् समंततःसर्वतःस्थितंव्यापकमितियावत् अतएवाजंजन्मादिविकारहीनम् तत्रहेतुरनिद्रंनिद्रायाअबोधरूपायाउद्गतंनिष्क्रांतमतएवास्वप्नंस्वप्नाभासजातेनहीनम् तस्याविषयत्वमाह अनामकमरूपकमिति । नामरूपरहितमित्यनेनसर्वेंद्रियाग्राह्यमित्यर्थः बाधितायाअविद्यायाःपुनरप्रसक्तेःसकृदेकवारमेवविभातमाविर्भूतमतएवसर्वज्ञंसर्वंचतज्ज्ञंचैतन्यमात्रमित्यर्थः ८१ अर्थद्वयंभवत्याह अमनस्तामिति । चित्तेमनसिभूरिपुण्यपरिपाकात्प्रतिबंधापहारेणामनोभावंगतेसत्ययंसमाधिःप्राप्योभवति कीदृशःसर्वेऽभिलापाःशब्दावागिंद्रियविषयाविगतायस्मात्सतथा तथाचिंताअंतःकरणवृत्तयस्ताभ्यःसमुत्थितोव्युत्थितः सुप्रशांतःनिष्कलः ८२ ग्रहइति । अस्मिन्समाधौग्रहणत्यागौनस्तः द्वितीयाभावात् अतएवचकस्यचिद्विषयस्यचिंतांनवदेतनधारयेत् अस्यसमाधेर्निदानतात्मतत्त्वसाक्षात्कारएवेत्याह आत्मेति । आत्मनःसंकलनंयाथात्म्यनिर्धारणंतस्माद्धेतोरात्मायदानिश्चलत्वंदृश्यमानात्मकत्वंअगाढत्वंगताभवेत्चित्तंचात्मरूपमात्यनिबाधितंभवेत् कीदृशमजाति जातिभिःसकलविशेषैर्वर्जितमतएवसमतांपरमसाम्यंगतंचेततदाएषसमाधिःस्यात् कीदृशोवेदांतवाक्यैर्गूढतयाउपदिष्टोपिगुरुप्रसादात्साक्षात्कार्यइतिपदयोःसंबंधः ८८३ । ८८४

अस्यंदौर्लभ्यमेवस्फुटयति अस्पर्शेति । अयंसमाधिरस्पर्शयोगसंज्ञःसर्वसंबंधराहित्यात्समाधित्वाच्चतथासर्ववेदांतविज्ञानहीनैर्योगिभिर्दुःखेनद्रष्टुंशक्योयतस्तेऽस्माद्बिभ्यतिभयंयांतियतोऽभये पिरक्षसिबालाइवभयंभयहेतुंपश्यंतीत्यर्थः ८८५ तेषांभयनिदानमपिस्वाज्ञानमेवेत्याह जात्यंधाइति । यथाजन्मांधास्तत्प्रसिद्धमपिरूपंनलभंतेतथातेयोगिनआंतरमप्यात्मानंस्वावबोधतःसाक्षा त्कारेणअलब्ध्वाअप्राप्यसुप्त्याअतुल्यामपिअमनस्तांसुप्तितुल्यांवदंतीतिसंबंधः ८८६ नकेवलमविद्यैवभयकारणंकिंतुकुतर्काअपीत्याह भयकारणमिति । एतेषामभ्रांतयोगिनामुक्तसमाधितो भयस्यकारणंप्रथममाद्यंभ्रांतीनामभ्यासानांदर्शनमुदयसाधनमज्ञानंभवति द्वितीयंतुतत्प्रयुक्तायाःशास्त्रजालप्रसिद्धाविविधाःप्रेक्षाःकल्पनास्तर्काइतियावत् तद्रूपमित्यर्थः ८८७ तेषांतर्कान्दर्श यन्नादौसांख्यानुयायियोगिनांतानाह आत्मेतित्रिभिः । यदौपनिषदैरात्मनोभासमानानंदरूपत्वमद्वितीयत्वंचोच्यतेतन्नसंभवति जन्मादिविकाराणांसुखादिगुणानांचव्यवस्थायानियतात्मसं बंधस्यचकाराद्युगपत्प्रवृत्तेश्चदर्शनादनुभवादित्यर्थः ८८८ पुरुषाइति । ततोव्यवस्थाद्यनुरोधात्प्रतिशरीरंपुरुषभेदस्तेषांभोगादिप्रयोजिकाएकाप्रकृतिश्चस्वीकार्येत्यादिकंबहुयथाभवतितथा कल्पयंतीत्यर्थः ८८९ तथाप्रकारांतरेणमोक्षंवदंतस्तेचित्तस्यबाधरूपमात्मनिलयंस्वीकुर्वंतीत्याह मुक्ताविति । साप्रकृतिरेकासर्वपुरुषसाधारणीबहुभीरूपैस्ततापिमुक्तौविनाशमदर्शनंयाति

अस्पर्शयोगोनामायंदुर्दर्शःसर्वयोगिभिः ॥ योगिनोबिभ्यतिह्यस्मादभयेभयदर्शिनः ८८५ जात्यंधाइवरूपंतन्नलभंतेकदाचन ॥ अलब्ध्वांतरमात्मानंवदंतिस्वा वबोधतः ॥ अमनस्तांसुप्तितुल्यामतुल्यामपिसर्वदा ८६ भयकारणमेतेषांप्रथमंभ्रांतिदर्शनम् ॥ पश्चान्नानाविधाप्रेक्षातज्जन्यामानवर्जिता ८७ आत्मासर्वेषु भूतेषुसर्वभेदविवर्जितः ॥ चिदानंदवपुश्चैकइतीदंनोपपद्यते ॥ जन्मादीनांसुखादीनांव्यवस्थायाश्चदर्शनात् ८८ पुरुषास्ततएवैतेभिन्नाःसर्वशरीरगाः ॥ ए काप्रकृतिरित्यादिबहुप्रेक्षंतेततोबहु ८९ मुक्तौविनाशमायातिएकासाबहुधातता ॥ इयमित्थंप्रकारावारूपांतरमथापिवा ॥ मनःप्रयातिकेनैतदात्मतादात्म्य माव्रजेत् ९० इत्यादिकंभयंदृष्ट्वाह्यमनस्तांविमुच्यताम् ॥ अनुभूयचतांसुप्तिमविद्यायावशंगताः ९१ योगिनःपंडितंमन्याभस्त्रावच्छ्वासधारिणः ॥ वृक्षवज्ज्ञा नरहिताह्यश्मवन्निश्चलाअपि ९२ आनंदात्मानमभयंसर्वदाहृदयेस्थितम् ॥ स्वीयंलभंतेनैवैतेयद्वदंधाःकरेनिधिम् ९३ सुप्रसन्नंसदात्मानंज्ञानहीनंचकेचन ॥ पश्यंतःसुखविज्ञानेशून्येएववदंतिहि ॥ भ्रांताअपिचवैमोक्षममनस्तांवदंतिहि ८९४

यद्वाइयंप्रकृतिरित्थंप्रकाराबंधलक्षणानुलोमपरिणामशालिनीसत्यपिमुक्तौसांख्यायांरूपांतरंप्रतिलोमपरिणामात्मकंयाति अथवाप्रकृतिःस्वरूपेणनबंधिकाकिंतुमनोरूपेण तथाचतन्मनएवमु क्तौरूपांतरंकृतार्थत्वेसतिकारणभावलयरूपंयातिएतत्प्रकारत्रयंसंभवति यत्त्वौपनिषदैरुच्यतेआत्मनितादात्म्यंबाधरूपंमनोव्रजतीतितत्कथंसंभवेत् नह्यकारणेकार्यस्यलयोयुक्तइतिभावः ८९० इत्यादिकमिति । इत्यादिकंवर्णितकारणकंभयंदृष्ट्वाप्राप्यतांश्रुतिंविद्वदनुभवसिद्धामुक्तामनस्तांविमुच्यानंगीकृत्यतामनस्तांसुप्तिंसुषुप्तिरूपामनुभूयमत्वाचतेयोगिनःस्वीयमानंदरूपमात्मानंन लभंतइतितृतीयेनाभिसंबंधः यतस्तेऽविद्यायावशंगताइत्यर्थः ८९१ तेषांश्रमवैयर्थ्यंविशेषणैराह योगिनइति । वृक्षवत्ज्ञानरहिताअपिआत्मानंपंडितंमन्यमानाःपाषाणवन्निश्चलाअपिभस्त्राव द्वृथाश्वासाः ८९२ आनंदात्मानमिति । स्पष्टम् ८९३ इतरेषांतर्कान्संक्षिप्याह सुप्रसन्नमिति । सुप्रसन्नंसाक्षिरूपंसर्वोपाधिविविक्तमप्यात्मानंज्ञानहीनंस्वाभाविकज्ञानरहितंपश्यंतःकेचनवै शेषिकामाध्यमिकाश्चसुखविज्ञानेसुखंविज्ञानंचएतेद्वेअपिशून्येअसतीवदंतिप्रतिपादयंतितत्रवैशेषिकादीनांमतेमनःसंयोगविरहकालेतयोरसत्वंमाध्यमिकानांतुस्वतइतिविवेकः हियतस्तेभ्रांताः किं चतेअमनस्तांमोक्षकालिकीमेववदंतिमोक्षदशायामेवमनोविमोकआत्मनोभवतिनजीवतइत्याशयेनेत्यर्थः ८९४

तिष्ठतुप्रासंगिकंमुमुक्षून्प्रतिपःसांप्रदायिकैरुक्तोवर्णितविधोमनोनिग्रहस्तैःसएवकर्त्तव्यइत्याह मनसइति । यतोमनोनिग्रहःसत्संप्रदायाध्वनासर्वेषामभयादिप्रयोजकस्ततःसर्वैःकर्त्तव्यइत्यर्थः य दितेकुयोगिनोपिसन्मार्गेणयतेरंस्तदार्तापिमुच्येरन्निति सर्वपदप्रयोक्तुराशयः ८९५ उक्तायाअमनस्तायालाभायमनोजयःकर्त्तव्यः नचसोऽशक्यः शास्त्रविहितत्वात्तत्सिद्धेर्विद्वदनुभवसिद्धत्वाचे त्याह जेतव्यमिति । वदंतिविदधतिशास्त्राणिसिद्धमावेदयंतिचविद्वांसइत्यर्थः ८९६ तत्रचदृढउत्साहएवहेतुरित्याह उत्सेकइति । कुशाग्रतुल्येनएकबिंदुग्राहकेणचंचुनाउदधेःसमुद्रस्पोत्सेको रिक्तीभावोयथाटिट्टिभेनकृतस्तथामनोनिग्रहोप्यपरिखेदतउद्वेगपरित्यागेनस्यादिति नन्वत्रदृष्टांतेकिंप्रमाणंकिंचतत्स्वरूपमित्याकांक्षायामाह ऐतिह्यतइति । सदृष्टांतीकृतउदधेरुत्सेकऐतिह्यतः पारंपर्योपदेशेनसिद्धः एवंवक्ष्यमाणरूपश्चबोध्यइत्यर्थः ८९७ एवंपदोक्तंटिट्टिभवृत्तमेवप्रपंचयति सागरस्येत्यादिना । कठिनीकृतेगाढेपुनःपुनराक्रांतइतियावत् तादृशेकूलेटिट्टिभ्यावारि

मनसोनिग्रहायत्तमभयंसर्वयोगिनाम् ॥ दुःखक्षयःप्रबोधश्चाप्यक्षयाशांतिरेवच ॥ यतस्ततोमनोरोधःसर्वेषामपिसंमतः ८९५ जेतव्यंमनएवादौस्वात्मनःक्षेममिच्छता ॥ जयंतस्यवदंत्येवदुर्जयस्यापिचेतसः ८९६ उत्सेकउदधेर्यद्वत्कुशाग्रेणैकबिंदुना ॥ मनसोनिग्रहस्तद्वद्भवेदपरिखेदतः ॥ ऐतिह्यतःसमुत्सेकउदधेरेवमत्रसः ८९७ सागरस्यपुराकूलेकल्लोलैःकठिनीकृते ॥ अंडानिटिट्टिभःकश्चिटिट्टिभीविनिवारितः ॥ मुमोचगर्वमापन्नःकदर्थीकृत्यसागरम् ८९८ टिट्टिभीमित्रमाहाथमाभयंतेस्तुभामिनि ॥ हरेद्यदिममांडानिसागरोमोहगर्वितः ८९९ तदाहंमदमत्तंतंकरिष्यामिगतोदकम् ॥ सागरंपश्यमेसुभ्रूर्भयतःक्षीणवर्चसम् ९०० एवमुक्तातमाहैषाअशक्यंबहुधेतिच ॥ क्वसमुद्रःक्वत्वंचप्रोक्त्वावाक्यमुपारमत् ९०१ एवमुक्त्वामुमोचाथतान्यंडानिसटिट्टिभः ॥ तत्रैवजाययासार्द्धमाहारार्थंकचिद्गतः ९०२ एवमुक्त्वागतेतस्मिंष्टिट्टिभेजाययासह ॥ समुद्रःश्रुतवाक्यःसन्जहारांडानितस्यसः ॥ गिरिप्रवरकल्लोलात्प्रहसन्निवमानतः ९०३ गृहीत्वाचतदांडानिटिट्टिभस्यसरित्पतिः ॥ व्यचारयदिदंचित्तेजानानःपरमेश्वरम् ९०४ स्थावराजंगमाःसर्वेपरमेश्वरभूतयः ॥ तनोऽत्रकस्यकिंवास्यात्कदाकेनकथंचवा ॥ नज्ञायतेयतस्तस्यमायालोकेऽतिदुर्घटा ९०५ ततोदेशोस्यकोनामतथामित्राणिकानिवा ॥ कःकालःकाचवाशक्तिःसचकोवेतिटिट्टिभः ९०६ ननिश्चितंमयायस्मात्तस्मादंडानितस्यवै ॥ सुगुप्तानिक्वचिद्देशेस्थापयिष्यामिपक्षिणः ९०७ इतिसंचिंत्यसंस्थाप्यतान्यंडानिमहोदधिः ॥ देशेसुरक्षितेगर्जन्यथापूर्वमवस्थितः ९०८

तोपिकश्चिट्टिट्टिभोगर्वेणसागरंतुच्छंमत्वाअंडानिमुमोचनिदधौ ८९८ टिट्टिभीमिति । हेभामिनिकोपनेममभयेनक्षीयमाणतेजसंसागरंपश्येति ८९९ । ९०० एवमुक्तेति । एपाटिट्टिभीइतिवाक्यंबहुधाप्राहउक्त्वाउपारमच्च इतिकिं एतदशक्यंतवसागरस्यचसुदूरवैषम्यादिति ९०१ एवमुक्तेति । एवमुक्त्वामाभयंतेस्त्वित्यादिवाक्यंपुनरुक्त्वातत्रतीरएवांडानिमुमोचाथआहारार्थंगतोबभूवेति ९०२ एवमुक्त्वागतइति । श्रुतानिवाक्यानियेनसतथा गिरिवत्प्रवरमुच्चंतरंगंविधायजहार मानतोगर्वेणहसन् ९०३ गृहीत्वेति । व्यचारयत्चिंतमायास जानानःभयहेतुंमन्वानः ९०४ समुद्रस्पविचारमभिनयति स्थावराइतित्रिभिः । सर्वजंतूनांपरमेश्वरविभूतित्वात्कस्यापिशक्तिःस्वरूपकालनिमित्तप्रकारैरवच्छिन्नानज्ञातुंशक्यासर्वशक्त्याश्रयभूतायास्तन्मायादुर्घटकारित्वादित्यर्थः ९०५ ततइति । ततईश्वरविभूतित्वादेवास्यदेशादिकंननिश्चितंतस्मादस्यांडानिसुरक्षितदेशेस्थाप्यानीतिद्वयोरर्थः ९०६ । ९०७ इतिसंचित्येति । सुरक्षितेदेशेसंस्थाप्येतिगर्जनशब्दंकुर्वन्सन्पूर्ववत्स्थितः ९०८

एवंसतिद्वयोष्टिट्टिभआगत्यांडान्यद्दष्ट्वासमुद्रशोषायनिश्चयंकृतवानित्याह पूर्णोदरइतिद्वाभ्यां । स्पष्टंद्वयम् ९०९ । ९१० टिट्टिभीति । तादृशंशोषोपायोयतं हितकारणंहिताय युक्तंनीति मत् ९११ टिट्टिभीवाक्यमभिनयति क्वचेतिपंचदशभिः । हेअंडजत्वंस्वस्मादतिविषमेणसमुद्रेणसहवैरंन्यायविरुद्धंकर्तुंकथंयोग्यः यतोमैत्रीविवाहौवाहवचसमयोरेववैरंयुक्तं मैत्रीप्रतिद्वंद्वित्वेन मैत्रीसमानयोगक्षेमत्वात् अभावस्यप्रतियोगिसमानयोगक्षेमत्वप्रसिद्धेरितिभावः अहंतुल्यएवेतिमन्यमानंप्रत्याह समुद्रेणेत्यादि । अत्रप्रत्यक्षादिसिद्धव्यवहारे ९१२ । ९१३ तत्रहेतुत यादेशादिबलाभावमाह दैर्घ्यादिति । दैर्घ्यंशिरःप्रभृतिपुच्छांतपरिमाणमालोच्यतवदेहःषोडशांगुलिमितोऽवयवन्धिवत्ते तथातिर्यङ्मानेनहस्तमात्रोपिभवति यतःपक्षाणामायामोविस्तारःप्रति पार्श्वंद्वादशांगुलोभवति तथाचवामपक्षाग्रमारभ्यदक्षिणपक्षाग्रंयावन्मानेहस्तमात्रतायुक्तेतिभावः ९१४ चूतेति । आम्रफलस्यपद्वृंतंबंधनंतन्निभौपादौ ९१५ द्वादशेति । चीरंजीर्णवस्त्रंत

पूर्णोदरोजगामाथतंदेशंजाययासह ॥ टिट्टिभःसहपुत्राणामंडानिजलधेस्तटे ९०९ अद्दष्ट्वातानिसंरक्तनयनःक्रोधमूर्छितः ॥ समुद्रशोषणायैवसचक्रेनिश्चयंतदा ९१० टिट्टिभीतादृशंदृष्ट्वास्वपतिंहितकारणम् ॥ उवाचवचनंसम्यक्जायायुक्तमनिंदितम् ९११ क्वचत्वमंडजःस्वल्पःक्वचायंसरितांपतिः ॥ तेनसार्धंकथंवैरंक रोपिन्यायवर्जितम् ९१२ मैत्रीचापिविवाहोवातुल्ययोरेवकीर्तितः ॥ समुद्रेणकथंतुल्यस्त्वंभवस्यंडजोत्रहि ९१३ दैर्घ्याद्विभवतोदेहःषोडशांगुलमानतः ॥ हस्तमात्रंचपत्राणामायामोद्वादशांगुलः ९१४ चूतवृंतसमंपादयुग्मंतेवर्ततेंडज ॥ चंचुःकुशाग्रसदृशीपक्षौचमृदुलौतव ९१५ द्वादशांगुलसंमानौचीरपिंडस माविह ॥ इतोधिकोनतेदेशोबाह्योवाप्यांतरोपिवा ९१६ कालःसदैकरूपस्तेतिर्यग्योनिगतस्यहि ॥ देवदैत्यमनुष्यादौकालोवैषम्यकारणम् ९१७ मित्राणि नैवतेऽन्यानिमांविनादीनमानसाम् ॥ धनानामायतेस्तद्वद्व्यापाराचभवंतिहि ॥ अमित्राण्यपिमित्राणिनतेतदपिपक्षिणः ९१८ बाणमात्रेपिचाकाशेगंतुंश क्तोभवान्नहि ॥ जन्मनाटिट्टिभस्तद्वद्भवानत्राण्डजाधमः ९१९ समुद्रस्यास्यदेशोयंलक्षयोजनमायतः ॥ अर्वाक्तीरेपरेतद्वद्द्विलक्षमितिकीर्तितः ॥ अधस्ता च्चभुवोयद्वत्तावन्मानमुदीरितम् ९२० अयंसंहारकालेस्मिंस्त्रिलोकीमखिलामपि ॥ आप्लावयतिकल्लोलैःकुल्ययेवमहीसरः ९२१ यावंतिभूमौभूतानितावंत्येव महोदधौ ॥ वसंतिसर्वदातस्मिन्रत्नानिविविधानिच ९२२

पिंडवत्श्लिथिलौतेपक्षाविति त्वयाहिशरीरसमोदेशआक्रमणीयःसचेतावानेवेत्यर्थः ९१६ नापितेकालबलंनिकृष्टजातिपुकालस्यैकरूपत्वात्तदेवाह्युत्कृष्टजातिष्वेवकालस्योत्कर्षादिप्रयोजकता यादर्शनादित्याह कालइति ९१७ नापिमित्रबलं तेषांमांदीनांविनातवासत्वात् नापितेसंभावनायतउत्तरकालेधनलाभाश्रयात्तद्वतोधनघटितात्सत्कारादिव्यापाराच्चवैरिणोपिमित्राणिभवं तितद्धनंतुभवतोनास्तीत्याह मित्राणीति । आयतिरुत्तरकालस्तस्मात् तद्वतोधनवतोव्यापारात्सेवादिरूपात् ९१८ शारीरबलाभावमाह बाणेति । बाणमात्रेयावतिबलवताप्रयुक्तो बाणःपततितावति नापिजातिबलमित्याह जन्मनेति ९१९ अथसमुद्रस्यदेशबलादिसंपत्तिमाह समुद्रस्येति । अर्वाक्तीरेलक्षयोजनः परतीरेप्लक्षद्वीपस्पर्शिनितुद्विलक्षयोजनः अधस्ता च्चपातालपर्यंतोस्यदेशइत्यर्थः ९२० संहारकालेतुसर्वांत्रिलोकींपस्यदेशइत्याह अयमिति । महीक्षेत्रंभूमिम् ९२१ विचबलमाह यावंतीति । भूतानिप्राणिजातयस्तुरंगगजादयः ९२२

मित्रसंपत्तिमाह अस्येति । आयतिंदर्शयति अयंयच्छतीति । कुलबलमाह जातइति ९२३ शारीरबलमाह मैनाकाद्याइति संत्राताःपालिताः ९२४ फलितमाह इत्थमिति ९२५ अग्रेतवमौढ्येनपुत्रवियोगातुरांमांस्ववियोगेनदीनांमाकुर्वित्याह हतेति ९२६ एवंजाययोक्तस्यटिट्टिभस्यवाक्यमवतारयति इत्यादीतिद्वाभ्यां । प्रस्फुरंतश्चलंतोरोमकूपायस्यसतथातम् ९२७ श्रुत्वेति । एतदुक्तविधंदैन्यमुपागतांप्राप्ताम् ९२८ इदंपदोक्तंटिट्टिभवाक्यमभिनयति संपत्कालइतिनवभिः । स्पष्टम् ९२९ व्यसनेइति । योदेहीयंव्यसनेविपदित्यजतिसत्यक्तजायादिरूपोपितस्यत्यक्तस्यशत्रुरेवेत्यर्थः ९३० तर्हिकीदृङ्मित्रमित्याकांक्षायामाह पुण्यमिति । पुण्याद्यन्यतमविषयकंकर्तव्यत्वभोग्यत्वान्यतरप्रकारकंनिश्चयंयोनुसरतिनप्रतिहंतिसलोके मित्रत्वेनप्रसिद्धइत्यर्थः ९३१ आत्मवत्संमतइति । यःप्राज्ञत्वेनआत्मवद्विश्वासपात्रंसम्यङ्मतोनिश्चितोपिव्यसनकालेदर्पात्दर्पंचित्तोत्साहमत्तिभक्षयतितत्तथाविधंवाक्यंकर्णस्यशल्यवद्बहुय

अस्यमित्राणिदेवाश्चमुनयोपितपोधनाः ॥ अयंयच्छतिदेवानांमनुजानांचसर्वदा ॥ रत्नजातमशेषंचजातःसाक्षान्महेश्वरात् ९२३ मैनाकाद्यामहाशैलाअनेकशतयोजनाः ॥ शक्राद्भीताश्चसंत्राताअमुनावारिराशिना ९२४ इत्थंत्वमात्मनःसर्वंसमुद्रस्यचचिंतय ॥ व्यर्थंविरोधंमाकार्षीरात्मनोनाशकारणम् ९२५ हतपुत्राचयापूर्वंकृतामौर्ख्यादिहांडज ॥ तन्नाशादिदानींमांमाकथादीनदर्शिनीम् ९२६ इत्यादिबहुशःप्राहटिट्टिभीटिट्टिभंतदा ॥ क्रोधसंरक्तनयनंप्रस्फुरद्रोमकूपकम् ९२७ श्रुत्वासटिट्टिभीवाक्यंटिट्टिभःकृतनिश्चयः ॥ इदंवचनमाहैतत्स्त्रियंदैन्यमुपागताम् ९२८ संपत्कालेचमित्राणिसंतिकोटिसहस्रशः ॥ आपत्कालेतुयन्मित्रंतन्मित्रंपरिकीर्तितम् २९ व्यसनेसमनुप्राप्तेयोयंत्यजतिदेहभाक् ॥ सतस्यशत्रुर्विज्ञेयोह्यपिजायासुतादिकः ९३० पुण्यंत्राप्यथवापापंसुखंवादुःखमेववा ॥ निश्चितंयोनुवर्तेततन्मित्रमितिकीर्तितम् ९३१ आत्मवत्संमतोदर्पाद्यःप्राज्ञोबहुभाषते ॥ व्यसनेसमनुप्राप्तेसतुशत्रुसमोमतः ९३२ आत्मनोभ्युदयाकांक्षिशत्रुंमित्रस्वरूपिणम् ॥ निहत्यप्रथमंहन्यात्साक्षात्तशत्रुंततःपरम् ९३३ अतस्त्वंमित्ररूपापिशत्रुवत्प्रतिभाषसे ॥ अवध्यास्त्रीतिमत्वाहंनकरोम्यद्यपातकम् ९३४ अपिसप्तपदंमित्रंवदंत्यत्रविपश्चितः ॥ त्वयासहचिरंकालंस्थितोहंस्वस्थमानसः ९३५ करिष्यामिकथंद्रोहंस्त्रियोमित्रस्यतेधुना ॥ ततोयाहित्वमेततस्मात्स्थानादन्यत्रमाचिरम् ९३६ एकएवस्ववीर्येणशोषयिष्यामिसागरम् ॥ चंच्वापक्षद्वयेनापिसंगृह्यास्यजलंबहिः ॥ अचिरेणैवकर्ताहमंधकूपंपयोनिधिम् ९३७ एवमुक्त्वाततोजायामुत्क्षुत्यचनभस्तथा ॥ समुद्रशोषणायासौप्रवृत्तष्टिट्टिभस्तदा ९३८

थाभवतितथाभाषतेसशत्रुतुल्यइत्यर्थः ९३२ आत्मनइति । यआत्मनएवाभ्युदयंयोगक्षेममाकांक्षतेनतुसुहृदःसआत्मनोभ्युदयाकांक्षीतद्रूपंशत्रुंमित्रस्वरूपिणंमित्ररूपेणप्रच्छन्नंप्रथमंहत्वापश्चात्साक्षात्प्रकटंशत्रुंहन्यादित्यर्थः ९३३ अतस्त्वमिति । यतस्त्वंशत्रुवद्भाषसेऽतोमित्राभासत्वेनज्ञातासितथापित्वद्वधरूपंपातकंयन्नकरोमि तत्रहेतुःस्त्रीअवध्येतिशास्त्रानुसंधानमेवेत्यर्थः ९३४ किंचतवावयोर्हेतुलक्षणांतरेणप्राप्तंमित्रत्वमपीत्याह अपिसप्तपदमिति । सप्तपदानिवाक्यानिपादन्यासावासहकृताःकारणंयस्यतत्तथाभूतंमित्रंमित्रपदार्थंवदंति के अत्रमित्रपदार्थेयेविपश्चितः कुशलाः त्वयासहचिरंस्थितेनमयात्वयिमित्रत्वस्यसुतरांज्ञेयत्वात्तवद्रोहंशारीरदंडंनकरोमिकिंतुपूर्वोक्तलक्षणैःशत्रुत्वंविज्ञायमत्संनिधेर्गच्छेत्युक्तिरूपंधिग्दंडमेवेतिद्वयोरर्थः ९३५ । ९३६ तर्हि मांविनात्वंकिंकरिष्यसीतिवदंतींप्रत्याह एकएवेति । शोषणप्रकारमाह चंच्वेति । बहिःप्रक्षिपन्नितिशेषः अंधकूपंतत्समम् ९३७ एवमुक्त्वेत्यादित्रयंनिगदव्याख्यातम् ९३८

९३९।९४० चंचुद्वयेनेति । यद्यपि चंचुद्वयेनपक्षैश्चनीरमादायगच्छतोस्तयोर्वेगोत्थितान्मारुतादेवहेतोस्तदुपात्तंनीरंशुष्यतितथापितज्जलेसमुद्रजलेपुनःपुनर्गत्वातन्नीरंतौदंपतीबहिःक्षिपतःस्मेतिद्वयोः संबंधः ९४१ । ९४२ एवंप्रवृत्ताविति । एवंशोषणायप्रवृत्तौतौदंपतीवीक्ष्यतयोर्वारणार्थंवाक्यमपरेटिट्टिभाऊचुः तौचतान्प्रतीत्थमूचतुः इत्थंकथं यदियूयंमित्राणितर्ह्यत्रकर्मणिसाहाय्यं कार्यं अथपक्षांतरे एवमस्मद्वन्नक्रियतेतर्हिभवंतःस्वनीडानिगच्छंत्वितिद्वयोरर्थः ९४३ । ९४४ तयोरुक्तवाक्यनियंत्रिताःसर्वेटिट्टिभास्तथाप्रवृत्ताइत्याह एवमुक्तइति ९४५ एवमन्यजातीयाअपिपक्षिणस्तैर्मित्रत्वसंबोधनेनस्वव्यापारेयोजिताइत्याह अंडजाइति ९४६ ततोनारदोमुनिरेत्यनिवारणानंगीकारेणतन्निश्चयदार्ढ्यंविज्ञायगरुडागमनरूपमुपायंतान्प्रत्युवाचेत्याह त्रिलोकीमिति । क्वापिकुत्रचित्समुद्रैकदेशेसमुदितान् एतन्निवारणांगीकरणंयदानचक्रुस्तदाएतान्प्रतिगरुडागमरूपमुपायमुवाचेतिद्वयोरर्थः ९४७ । ९४८ गतेष्विति । तेषुपक्षिषुपक्षिराजंगरुड

समुद्रशोषणेतस्यनिश्चयंवीक्ष्यसातदा ॥ पतिव्रताक्षमाप्यैनंतद्वद्देवाकरोत्स्वयम् ९३९ टिट्टिभीटिट्टिभश्चोभौदिवारात्रौचसर्वदा ॥ समुद्रशोषणेयत्नंकुर्वातेश्रमवर्जितौ ९४० चंचुद्वयेनपक्षैश्चनीरमादायसागरात् ॥ गच्छतोर्मारुतादेवतन्नीरमुपशुष्यति ४१ तथापितज्जलेगत्वागत्वागत्वाप्यनेकशः ॥ नीरमादायतद्भूमौ क्षिपतस्तावनेकधा ९४२ एवंप्रवृत्तौतौवीक्ष्यटिट्टिभीटिट्टिभौततः ॥ टिट्टिभाअपरेप्रोचुस्तस्यास्तस्यनिवारणे ॥ वाक्यंबहुविधंतौचप्रोचतुष्टिट्टिभानिति ४३ सागरंशोषयिष्यावःसर्वथाचात्रपक्षिणः ॥ मित्रताचेत्सहायत्वंकुर्वंत्वस्यविनाशने ॥ अथनैवंस्वनीडानिव्रजंतुचयथागतम् ९४४ एवमुक्तेतथासर्वेटिट्टिभाश्चक्रुरुद्यमम् ॥ समुद्रशोषणेयद्वत्पूर्वमेतौसमुद्यतौ ९४५ अंडजाएवमेवैतेनानाभेदाःसमागताः ॥ सर्वेएवसमुद्रस्यशोषणायकृतोद्यमाः ९४६ त्रिलोकींपर्यटन्क्वापिस्वेच्छयानारदोमुनिः ॥ पक्षिणस्तान्निरीक्ष्याथबहुधाचन्यवारयत् ९४७ निवारितायदानैतच्चक्रुर्दुःखातुराःखगाः ॥ तदोपायमुवाचैतान्गरुडस्यागमंप्रति ९४८ गतेषुतेषुगरुडआगतोभयवर्द्धनः ॥ तस्यदर्शनमात्रेणसागरोतीवविह्वलः ॥ भीत्यावैटिट्टिभस्यात्तान्यदादंडानितानिसः ९४९ एवंखेदेनरहितःपुरुषोपि मनोजयम् ॥ कुर्वीतटिट्टिभोयद्वत्समुद्रस्यविशोषणम् ९५० निश्चयेतुकृतेपुंसोदेवास्तस्यसहायिनः ॥ भवंतिटिट्टिभस्याभूत्सहायोगरुडोयथा ९५१ पुण्येकर्मणिसाहाय्यंप्रायःसर्वेपिकुर्वते ॥ रामस्यवानरायद्वत्स्वदारान्प्रतिविंदतः ९५२ उद्यमःसाहसंधैर्यंबलंबुद्धिःपराक्रमः ॥ षडिमेयस्यतिष्ठंतिससर्वंप्राप्नुयात्पुमान् ९५३

मानेतुंगतेषुसत्सुगरुडआगमत् तस्यदर्शनमात्रेणभीत्याविह्वलःसागरस्तान्यात्तानिगृहीतान्यंडान्यदादितिसंबंधः ९४९ दार्ष्टांतिकेयोजयति एवमिति ९५० निश्चयेत्विति । दृढेनिश्चयेकृते सतिदेवाःसहायिनःसाहाय्यकराअवश्यंभवंतीत्यत्राप्युक्तमुदाहरणमित्यर्थः ९५१ सजातीयएवानुगृह्णातियथाटिट्टिभस्यपक्षित्वेनगरुडइतिनभ्रमितव्यंयतोविजातीयानामपिसाहाय्यदर्शनात् यायासत्कर्मणिदृढाप्रवृत्तिःसासर्वापिदेवानुग्रहवतीत्येवव्याप्तिशरीरंलाघवेनविवक्षितमित्याह पुण्यइति । सर्वेविजातिरूपाअपियथाभार्याहरणेप्रवृत्तस्यरघुपुंगवस्यवानररूपादेवाःसहायाइतिप्रसिद्धमित्यर्थः ९५२ तत्राभीष्टसिद्ध्यर्थमेतेगुणाःसंपाद्याइत्याह उद्यमइति । उद्यमःपौरुषं साहसंदमोयतेंद्रियत्वरूपः 'साहसंदमेदुष्कृतकर्मणि' इतिहेमः धैर्यंविघ्नेसत्यपिचित्तावैक्लव्यं बलंदृष्टसाधनसंपत्तिः बुद्धिःकौशलं पराक्रमोविक्रमः परस्यइतरस्यप्रकृतानुपयोगिनोव्यापारस्यअक्रमोऽनारंभोवा एतेषड्गुणायस्यसंतिससर्वमिष्टंप्राप्नुयादित्यर्थः ९५३

तत्रपराक्रमंसिंहात्शिक्षेदित्याह प्रभूतमिति । प्रभूतंबहुस्वल्पंवाकर्मयदारब्धंतत्सत्याज्यंयथासिंहःपुरतोनिहितंपादंशक्त्राविसंपातेपिपृष्ठतोननिदधातीतिप्रसिद्धमित्यर्थः ९५४ अंगीकृतापरित्यागेमहात्मानोवक्ष्यउदाहरणमित्याह कालकूटमिति । तथाचप्रमुक्तरूपंयं अद्यापीत्यादि ९५५ फलितमाह इत्यादीति । इत्यादिग्यायंजातम् ९५६ मनोनिग्रहःकथंकर्तव्यइत्याकांक्षामपिसांप्रदायिकवचनैरेवपरिहरति उपायेनेतिचतुर्भिः । उपायेनवक्ष्यमाणेनचित्तंनिगृह्णीयान्निरुंध्यात् कीदृशं कामभोगयोःकामइच्छारूपेरजःकार्येभोगेवैषयिकसुखानुसंधानरूपेसात्विकेचविक्षिप्तंतत्परमित्यर्थः तथालयेनिद्रारूपेतामसेसुप्रसन्नंजाग्रत्स्वप्नविक्षेपरहितमपिनिगृह्णीयादितिसंबंधः यतोयथाकामोनर्थहेतुस्तथालयोपिदोषबीजात्मकत्वादितिभावः ९५७ उपायमभिनयति दुःखमिति । सर्वंद्वैतजातंदुःखंपरितापादिभिर्योगसूत्रप्रसिद्धैर्हेतुभिः ब्रह्मानन्दाच्छादकत्वाद्वादुःखरूपमितिशास्त्राचार्योपदेशानुसारेणचिंतयन्कामविशिष्टाद्भोगात् जातावेकवचनं निवर्त्तयेन्मनइत्यनुषंगः । एतेनवैराग्यंप्रथमउपायइत्युक्तमथज्ञानाभ्यासरूपंद्वितीयमुपायमाह अजंसर्वविकारहीनंब्रह्मैवसर्वमित्येवंतत्त्वस्यपुनःपुनःस्मरणेनजातंविकारिद्वैतंनैवपश्यतिविद्वानित्यर्थः ९५८ अनेनोपायद्वयेनचित्तस्ययोगविरुद्धास्तिस्रोऽवस्थालयविक्षेपकषायाख्याःप्रतिहत्याब्रह्माकारतांचपरिपालयेदित्याह लयेइति । लयेनिद्रारूपेप्रवर्त्तमानंचित्तंसंबोधयेत्उक्तबोधाभ्यासेतल्लयंकुर्यात् विक्षिप्तंकामभोगाकारंतुशमयेत्ततोव्यावर्त्तयेत् कषायोनामरागादिसंस्कारेणात्मानात्मोभयाकारताराहित्यरूपास्तब्धावस्थातत्सहितंविजानीयादवेक्षेत अवेक्षितंचतदो

प्रभूतंवाथवास्वल्पमुपक्रांतंनसंत्यजेत् ॥ कार्यंयथापदंसिंहःपृष्ठतोनिदधातिन ९५४ कालकूटंहरस्तद्वत्समुद्रोवडवानलम् ॥ कूर्मोभूमिंचसततंदधात्येवापरित्यजन् ९५५ इत्यादिचिंतयित्वायंनिग्रहेमनसःपुमान् ॥ प्रवृत्तोननिवर्तेतमरणांतेपिसंकटे ९५६ उपायेननिगृह्णीयाद्विक्षिप्तंकामभोगयोः ॥ सुप्रसन्नंलयेचैवयथाकामोलयस्तथा ९५७ दुःखंसर्वमनुस्मृत्यकामभोगान्निवर्त्तयेत् ॥ अजंसर्वमनुस्मृत्यजातंनैवतुपश्यति ९५८ लयेसंबोधयेच्चित्तंविक्षिप्तंशमयेत्पुनः ॥ सकषायंविजानीयात्समप्राप्तंनचालयेत् ९५९ नास्वादयेत्सुखंतत्रनिःसंगःप्रज्ञयाभवेत् ॥ निश्चलंनिश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ९६० यदानलीयतेचित्तंनचविक्षिप्यतेपुनः ॥ अनिंगनमनाभासंनिष्पन्नंब्रह्मतत्तदा ॥ स्वच्छंशांतंसनिर्वाणमकथ्यंसुखमुत्तमम् ९६१ तावदेवनिरोद्धव्यंहृदियावत्क्षयंव्रजेत् ॥ क्षयोपिमनसःपूर्वंसमताभावईरितः ९६२ एतज्ज्ञानमितिप्रोक्तंशास्त्रजन्यंमनीषिभिः ॥ ध्यानंचैतत्फलंतद्वन्नातोन्यद्विद्यतेधिकम् ९६३

षमुक्तोपायेनयुगपत्प्रवृत्तेनपरिहरेदितिभावः यदातुमनःसमप्राप्तंब्रह्माकारंभवेत्तदानचालयेत्तामवस्थांपरिपालयेदितियावत् ९५९ नास्वादयेदिति । यथातत्रसमाधिसत्त्वोत्कर्षात्प्रादुर्भवंतंसुखविशेषंनास्वादयेत्तत्रनसज्जेत् यदानिश्चलंब्रह्माकारमपिचित्तंनिश्चरद्बहिर्गमनेनाभिमुखंभवतितदाप्रयत्नविशेषेणैकीकुर्यात्ततोनिरुद्ध्यतस्मात्रतांनयेदित्यर्थः ९६० मनसोब्रह्माकारतायालक्षणमाह यदेति । यदालयविक्षेपाभ्यांचकारात्कषायेणचरहितंचित्तमनिंगनमिंगनेनचलनेनरहितंतथाऽनाभासमाभासेनकल्पितरूपेणदृश्यजातेनरहितंचभवतितदातद्ब्रह्मसंपन्नंब्रह्मभावंगतमितिबोध्यं ब्रह्मणःस्वरूपलक्षणमाह स्वच्छमित्यादिना । स्वच्छंशुद्धं शांतंसर्वानर्थोपशमरूपं सनिर्वाणंमोक्षसहितंनित्यमुक्तमितियावत् अकथ्यंवागाद्यगोचरं उत्तमंसुखंभूमाख्यानंदरूपमित्यर्थः ९६१ उक्ताभिप्रायेणैवतावदेवेत्यादिमंत्रेणनिरोधावधिरुक्तइतिदर्शयंस्तदर्थमाह तावदेवेतिपद्भिः । मनोनिरोधस्यएतावानेवावधिर्योहृदिहृदयसाक्षिणितस्यमनसःक्षयोबाधःतत्प्रकारस्तुसमताभावोब्रह्मतालाभरूपःसांप्रदायिकवचनैर्दर्शितइत्यर्थः ९६२ अयंनिरोधएवसांख्ययोगयोःफलभूतइत्याह एतदिति । शास्त्रंवेदांतवाक्यंतत्फलभूतंज्ञानमप्येतदुक्तनिरोधात्मकमेव तथाध्यानंयोगोप्युक्तरूपएव यतउक्तनिरोधादधिकंफलंकिंचिन्नास्तीत्यर्थः ९६३

शेषोऽन्यायस्यविस्तरइतिपाठंसूचयंस्तदर्थमाह शास्त्राणीत्यादिना । यतएतान्निरोधंविहायशास्त्राभ्यासंकुर्वतोजनस्यवाग्मित्वंन्यायपदोक्तव्यवहारोपयुक्तंवाक्कौशलंभवेत्नचैतस्मान्निरोधात्परं भिन्नमधिकंकिंचित्फलंलभ्यते इदंनिरोधस्वरूपंविज्ञायत्वल्पग्रंथेपाठेनापिसुखीपरमपुरुषार्थगतोभवेदित्यर्थः ९६४ ज्ञातोपीति । यतोमनसोनिग्रहंतदुपयोगिनंग्रंथभागंचहित्वाशेषोग्रंथःसुवि ज्ञातोपिनसुखदःविस्तरत्वात्शब्दप्रपंचमात्रत्वात् तस्मात्समनोनिग्रहएवसंपाद्यइत्यर्थः ९६५ ननुशेषग्रंथोक्तदानाद्यनुष्ठानादभीष्टसिद्धिःस्यादितिचेन्न तेषांमनःशांतिंविनाकुंजरस्नानसमत्वा दित्याशयेनाह दानमिति ९६६ तत्रहेतुतयालौकिकसत्फलानामपिचित्तैकाग्र्यंविनानप्रसिद्धिरित्याह मनइति । सर्वंशुभंलोकद्वयवर्तिफलंमनःसंयमेनैवभवतीतिप्रसिद्धमित्यर्थः ९६७ अस्यमोक्षोपयोगितांनैवेत्यादिमंत्रेणब्रह्मस्वरूपावेदनपूर्वकमुक्तामभिनयति मोक्षार्थिनेति । यदामोक्षकामेनमनोनिरुद्धंभवतितदापुमांस्तद्ब्रह्मानायासात्संपद्यतेऐक्येनलभते तत्किंपदचिंत्या दिरूपमितितृतीयेनाभिसंबंधः तत्रमनसाअचिंत्यंचिंताविषयतांनेयंनभवतीत्याशयेन श्रुतौनैवचिंत्यमित्युक्तं यतश्चविषयायथापराक्त्वेनचिंत्यंतेतथानचिंत्यंकिंतुप्रत्यक्त्वेनचिंत्यमेव ततः श्रुतौनचाचिंत्यमित्युक्तमित्यर्थः ९६८ अचिंत्यचिंत्यपदयोःक्रमेणपूर्वोत्तरार्धाभ्यामर्थमाह मनसात्रेति । यतोमनसात्रसंसारेप्रवृत्तेनाचिंत्यंतेनजंतुभिरविवेकिभिर्नचिंत्यमित्याशयेनाचिंत्य

शास्त्राण्यभ्यस्यतोनित्यंवाग्मित्वमधिकंभवेत् ॥ उरःकंठादिशोधश्चनैतस्मादधिकंपरम् ॥ इदंविज्ञायमेधावीह्यल्पग्रंथेसुखीभवेत् ९६४ ज्ञातोपिसुखदोनस्या त्शेषोग्रंथस्यविस्तरः ॥ मनसोनिग्रहंहित्वातस्मात्कार्यःसएवहि ९६५ दानमिज्यातपःशौचंतीर्थंवेदाःश्रुतंतथा ॥ अशांतमनसःपुंसःसर्वमेतन्निरर्थकम् ९६६ मनोनिरोधतःसर्वंलोकद्वयफलंभवेत् ॥ शुभंनिरोधेनविनानकिंचिदपिलभ्यते ९६७ मोक्षार्थिनायदासम्यङ्निरुद्धंतन्मनोभवेत् ॥ अचिंत्यंब्रह्ममनसानचिंत्यंवि षयायथा ९६८ मनसात्रयतोऽचिंत्यंनचिंत्यंतेनजंतुभिः ॥ नचिंत्याविषयास्तेवैमनसातुमुमुक्षुभिः ९६९ शत्रुमित्रादिसंजातपक्षपातविवर्जितम् ॥ अनाया सात्पुमानेषब्रह्मसंपद्यतेतदा ९७० मनसश्चविशेषेणभावएवविशेषकम् ॥ अविशेषात्मभावेनसतोभावोभविष्यति ९७१ अविशेषेहियज्ज्ञानंमनसापरमंपदम् ॥ तदेवनिष्कलंब्रह्मनिर्विकल्पंनिरंजनम् ९७२ तद्ब्रह्माहमितिज्ञात्वाब्रह्मसंपद्यतेध्रुवम् ॥ निर्विकल्पमनंतंचहेतुदृष्टांतवर्जितम् ॥ अप्रमेयमनादेयंयज्ज्ञात्वामुच्यते बुधः ९७३ तस्मिन्नात्मनिविज्ञातेचित्तेचविलयंगते ॥ एवंभूतोविभात्येषनिर्मनस्कस्ययोगिनः ९७४

मित्युक्तं मुमुक्षून्विवेकिनःप्रतितुयुष्माभिर्विषयानचिंत्याइत्युपदेशायचिंत्यमित्युक्तमित्यर्थः ९६९ शत्रुमित्रेति । यथाजीवानांशत्रुमित्रादिषुसंजायमानःपक्षपातःप्रसिद्धःसोत्रब्रह्मणिनास्ति सर्वत्रोपाधिषुसमत्वादित्यर्थः । तथाचश्रुतिः 'समःप्लुषिणासमोमशकेनसमोनागेन' इत्यादिः ९७० निरोधेमनसःशून्यतापत्तिभ्रमंव्युदस्यतःस्वरेणेत्यादिमंत्रस्यभावमाह मनसश्चेति । मनसो योयंविशेषेणशब्दार्थादिरूपेणसहभावःसंपृक्ततयासत्ताविद्यमानतेतियावत् एतदेवविशेषकंविशेषयतिव्यावर्तयतीतितथा कर्त्तरिण्वुल् ब्रह्मणःसकाशात्व्यावर्त्तकोधर्मइतियावत् यदातुअ विशेषात्ममोभावेनभावनयायुक्तंमनोभवेत्तदासतःसन्मात्रस्यब्रह्मणएवभावोभविष्यतिप्रादुर्भविष्यतिनशून्यत्वं नहिविशेषएववस्तुस्वरूपंकिंतुसामान्यमपीतिभावः ९७१ तच्चावशिष्टंसामान्य स्वरूपंब्रह्मैवेत्याह अविशेषेति । अविशेषेविशेषपरित्यागेयन्मनसाज्ञातंलब्धंस्वरूपंतदेवब्रह्मेत्यर्थः ९७२ तद्ब्रह्माहमिति । अहंतद्ब्रह्मेतिज्ञानेनब्रह्मभावोभवति तत्किं यन्निर्विकल्पादिलक्ष णंज्ञात्वाबुधःकुशलोमोक्षंवंधध्वंसंयातीतिसंबंधः । हेतुदृष्टांताभ्यामुपलक्षितेनतर्केणवर्जितंतदयोग्यं अप्रमेयंप्रमायाःफलचैतन्यस्यागोचरं अनादेयमादातुमयोग्यं प्रत्यक्त्वादित्यर्थः ९७३ न निरोधइत्यादिमंत्रस्यसंगतिंदर्शयति तस्मिन्निति । वर्णितात्मज्ञानेनविलीनचित्ततयानिर्मनस्कपदव्यवहार्यस्ययोगिनएषआत्माएवंभूतोवक्ष्यमाणविधयासर्वविशेषाभावरूपःप्रस्फुरतीत्यर्थः ९७४

एवंभूतःकथमित्याकांक्षायामाह ननिरोधइति । नाशोत्पत्त्युपलक्षितंजडमत्रनास्तीतिप्रथमपादार्थः तथाबंधःकर्तृत्वादिरूपसंसारित्वंसाधकत्वंयागादिबहिरंगसाधनानुष्ठातृत्वंमुमुक्षुत्वंशमाद्य तरंगसाधनसंपन्नत्वंमुक्तत्वंज्ञानभागित्वंचएतेधर्माअत्रनसंतीतिपरमार्थतावस्तुगतिरित्यर्थः ९७५ ननुजाग्रदादिभेदेप्रत्यक्षसिद्धेकथंनिरोधाद्यभावोवसेयइतिचेन्न आगमापायित्वेनमिथ्या भूतंजाग्रदादित्रयंबाधित्वावस्थितेनोक्तार्थस्यसुज्ञेयत्वादित्याशयेनाह एवंरूपमिति । उक्तमात्मरूपंस्थानत्रयादवस्थात्रयाद्विलक्षणंभवतितत्त्वसएवजानीयात्साक्षात्कुर्याद्यःस्थानत्रयाच्चच्युतो व्यावृत्तोभवेत् तस्यसाक्षात्कृतात्मनस्तुजन्मादिकंनसंभवतीत्यर्थः ९७६ यद्येवमेकएवात्मातर्हिकथंतत्रभेदानुभवइत्याकांक्षायामाह एकएवेति । यथाचंद्रउपाधिभूतजलपात्रैक्येएकधादृश्य तेतद्बहुत्वेतुबहुधातथायमात्माकारणरूपेकोपाध्यवच्छिन्नएकधादृश्यतेकार्योपाधिगतस्तुबहुधा स्वतस्तुसर्वविशेषहीनइत्यर्थः ९७७ अस्यतात्पर्यंविशदयति एवंचेदिति । एवमुक्तविधमेकए वेत्यादिकंवाक्यंगुरोःसकाशात्तात्पर्येणविज्ञातंयदिभवेत्तर्हितेनविदुषाजाग्रदादिकालेप्येकएवात्मामंतव्यःसंविध्येयोभवतियआत्मास्थानत्रयात्प्रतीतःपरस्ताद्भवति ततःकिंफलमतआह स्थानत्र यव्यतीतस्येति स्थानत्रयहीनस्यात्मनोयोज्ञातासोपितथाज्ञेयवत्स्थानत्रयव्यतीतोभवेदितिद्वयोरर्थः ९७८ । ९७९ घटेत्यादिमंत्रमवतारयति अथचेदिति । यदासर्वभेदरहितआत्माअनेनपुंसाऽ धिकारिणाज्ञायतेतदाजीवेसंलग्नंसंबद्धतयाभासमानंबहुत्वंयुक्त्याविचारेणनिवर्ततेसाचयुक्तिरेषावक्ष्यमाणाबोध्येत्यर्थः ९८० घटसंवृतमिति । घटेनसंवृतमवच्छिन्नमाकाशंप्रसिद्धंतद्यथा

ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥ नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता ९७५ एवंरूपंविजानातिस्थानत्रयविलक्षणम् ॥ स्थानत्रयच्युतस्तस्यपुनर्जन्म नविद्यते ९७६ एकएवविभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत् ९७७ एवंचेज्ज्ञायतेपुंसावेदवाक्यंगुरोःसदा ॥ मंतव्यएकएवा त्माजाग्रत्स्वप्नसुषुप्तिषु ७८ स्थानत्रयव्यतीतोयोवर्ततेसर्वदेहिनाम् ॥ स्थानत्रयव्यतीतस्यज्ञातासोपितथाभवेत् ७९ अथचेज्ज्ञायतेपुंसासर्वभेदविवर्जितः ॥ बहुत्वंजीवसंलग्नंयुक्तितोनाशमाव्रजेत् ॥ युक्तिरेषाविभात्यस्यविज्ञानेपरमात्मनः ९८० घटसंवृतमाकाशंनीयमानेघटेयथा ॥ घटोनीयेतनाकाशंदेशाद्देशांतरं प्रति ८१ एवंदेहस्यगमनेह्यात्मादेहेनसंवृतः ॥ नकुत्रचित्प्रयात्येषदेहोदेशांतरंव्रजेत् ८२ घटवद्विविधाकारोभिद्यमानःपुनःपुनः ॥ भेदंस्वस्यनजानातिजीवो जानातितंसदा ८३ आत्मनोनैषभिन्नोयंजीवोनानाविधोपिवा ॥ तद्भेदेनात्मनोभेदोनतस्यापितुकश्चन ९८४

घटगतंगमनादिकंनभजतेइत्यर्थः ९८१ एवमिति । एषदेहएवस्थूलःसूक्ष्मोवादेशांतरंगच्छेदितितुरीयपादार्थः ९८२ अयंदृष्टांतउपाधिधर्मास्पर्शएवनतुजडत्वेपीतिदर्शयन्जीवस्यचैतन्यंब्रह्माभे दयोग्यताप्रयोजकमाह घटवदिति । जडत्वेनघटतुल्योदेहःपुनःपुनर्भिद्यमानोविनाशांतान्विकारान्भजमानःस्वस्यधर्मभूतंभेदंविनाशादिकंनजानाति जीवस्तुतंदेहधर्मंभेदंविनाशांतंविकारंजाना तिसाक्षितयापश्यतीत्यर्थः तथाचचिद्रूपेणदृष्टांतादाकाशाद्विशेषःसाक्ष्यवर्गात्पृथक्त्वंचजीवस्यसिद्धमितिभावः ९८३ तस्यनिर्विकारब्रह्माभेदंसाधयति आत्मनइति । किंजीवएकःस्वीक्रियते नानाविधोवा आद्ये 'एकोदेवःसर्वभूतेषुगूढ' इत्यादिश्रुतिवर्णितादेकस्मादात्मनःकथंभिद्येत एकत्वलक्षणस्याविशेषात् अंत्येपिकथमात्मनोभिद्येत आत्माहिस्वरूपंतत्परिहारेनिःस्वरूपत्वापत्ते रितिपूर्वार्द्धार्थः नन्वनेकजीवपक्षेतदभिन्नस्यात्मनःकथमेकत्वमितिशंकांपरिहरति तद्भेदइति । तेषांजीवानांभेदेप्यात्मनःसर्वानुगतस्यनभेदः नानाव्यक्त्यनुस्यूतायाजातेरिवेतिभावः । वस्तु तस्तुएकएवनजीवोस्तिजीवानांराशयःकुतइतिसिद्धांतानुसरणेजीवभेदोदुर्वचइत्याह तस्यापीति । तस्यजीवपदार्थस्यकोपिभेदःसंबंधीनभवतिकिंतूपाधीनामेवसइत्यर्थः यदानूपाधिभ्योऽध्य धिष्ठानसदंशविमोकःक्रियतेतदाकस्यापिभेदोनास्तीतितुशब्दाशयः ९८४

भेदासंभवेहेतुतयाप्रकृतदृष्टांतान्यथानुपपत्तिमाह आत्माहीति । हियतोघटादितुल्येसंघातेशरीरत्रयरूपोपाधौआत्मामहाकाशवज्जीवस्तुघटाकाशवदुदितःकथितस्ततोजीवस्यात्मनोभेदोनसं भवतीतिपूर्वेणसंबंधः नहिघटोयभेदमनादायघटाकाशस्यमहाकाशाद्भेदोनिरूपयितुंशक्यइतिभावः नकेवलमनेनोदाहरणेनोक्तार्थःसूचितःकिंत्वर्थांतराण्यपीत्याह जातमिति । इदमुदाहरणं निदर्शनमर्थांतराणामप्युपलक्षणंजातमित्यर्थः ९८५ अर्थोपलक्ष्यानर्थानाह घटादिष्वित्यष्टादशभिः । यथाघटाकाशमठाकाशादयउपाधिविवेककालएवमहाकाशतांप्राप्नुवंतितथाजीवा उपाधिविवेककालएवइहपरिपूर्णआत्मनिलयंमोक्षरूपंयांतीत्यर्थः एतेनज्ञानसमकालिकीमुक्तिरितिसूचितम् ९८६ तथाकर्तृत्वभोक्तृत्वादिसंसारधर्माणांव्यवस्थापिसूचितेत्याह यथैकस्मि न्निति । एकस्मिन्घटाकाशेधूलिप्रभृतिभिःसंसृष्टेइतरेघटाकाशास्तथानभवंति तत्कुतः तद्धर्मिणामुपाधीनामननुगमात् तथाजीवेष्वपिबोध्यमित्यर्थः ९८७ रूपेति । तथाचतत्रदृष्टान्तेरूपा णिवर्तुलदीर्घादयआकाराः कार्याणिजलानयनधारणवासादीनि समाख्यायौगिकनामानिघटाकाशशरावाकाशमठाकाशादीनि तेषांभेदेपिनाकाशस्यभेदस्तथाजीवतत्त्वेपिबोध्यमित्यर्थः ९८८ एते नजीवस्यविकारत्वमवयवत्वंचनिरस्तमित्याह आकाशस्येति । यथामहाकाशस्यनिर्विकारस्यनिरवयवस्यचघटाकाशोविकारोऽवयवोवानैववक्तुंशक्यःतथाऽखंडात्मनिरूपितंविकारत्वमवय

आत्माह्याकाशवज्जीवोघटाकाशइवोदितः ॥ घटादाविवसंघातेजातंचैदंनिदर्शनम् ९८५ घटादिषुप्रलीनेषुघटाकाशादयोयथा ॥ आकाशेसंप्रलीयंतेतद्वज्जी वाइहात्मनि ८६ यथैकस्मिन्घटाकाशेरजोधूमादिभिर्युते ॥ नसर्वेसंप्रयुज्यंतेतद्वज्जीवाःसुखादिभिः ८७ रूपकार्यसमाख्याश्चभिद्यंतेतत्रतत्रवैयथा ॥ आकाश स्यनभेदोस्तितद्वज्जीवेषुनिर्णयः ८८ आकाशस्यघटाकाशोविकारावयवौयथा ॥ नैवात्मनःसदाजीवोविकारावयवौतथा ८९ यथाभवतिबालानांगगनंमलिनं मलैः ॥ तथाभवत्यबुद्धानामात्मापिमलिनोमलैः ९९० मरणेसंभवेचैवगत्यागमनयोरपि ॥ स्थितःसर्वशरीरेष्वप्याकाशेनविलक्षणः ९१ यतएवंततोभिन्नः स्वात्मनोभिन्नएववा ॥ नकश्चिज्जायतेजीवोदेहस्यैवजनिर्यतः ॥ जातोमृतइतिप्रोक्तोव्यपदेशोवृथैववतु ९२ स्वप्नेमायामयोवापिजीवोवापिचकृत्रिमः ॥ जायते म्रियतेयद्वन्मृतिजन्मविवर्जितः ९३ एवंजीवाअमीसर्वेमृतिजन्मविवर्जिताः ॥ जायंतेचम्रियंतेचभ्रांतिदृष्ट्यावलोकिताः ९४ जन्मादिकंततोजीवःकोपिनैवप्र यातिहि ॥ किंतुचित्तंतथाभूतंदर्शयेन्मरणादिकम् ९९५

वत्वंचजीवेनैवेति ९८९ तथाबंधादीनामारोपितत्वमपिदर्शितमित्याह यथाभवतीति । बालानांमतेइतिशेषः स्फुटम् ९९० तथानेनदृष्टान्तेनजीवस्याजत्वमपिसिद्धमित्याह मरणइति द्वाभ्यां । यथाशरीराणांमरणादौसत्यपितद्गतआकाशोविलक्षणोविकारीनभवत्येवमात्मापिभवतियतस्ततस्तस्मात्कश्चिदपिजीवोनजायते कीदृशोजीवः स्वात्मनःसकाशाद्भिन्नत्वेनाभिन्न त्वेनवामतः तत्रभिन्नत्वपक्षेपियैरुपाधिभिरयंभिन्नस्तेउपाधयएवविकारैर्योग्यत्वादालंब्यंतेइतिभावः यतउक्तविधयादेहस्यैवजनिमृतीततोजीवेजातइत्यादिव्यवहारोवृथामिथ्याइतिद्वयो रर्थः ९९१ । ९९२ तत्रभिन्नत्वपक्षेजीवस्यजन्माद्यभावमाह स्वप्नइति । स्वप्नेदृष्टोमायामयऐंद्रजालिकदर्शितःकृत्रिमःप्रतिकृतिमयोवाजीवोजन्माद्याश्रयत्वेनभ्रांतैर्दृष्टोपियथावस्तुतोज न्मादिवर्जितइत्यर्थः ९९३ दार्ष्टांतिकेयोजयति एवमिति । अमीव्यावहारिकाः ९९४ फलितंदर्शयन्नात्मनिजन्माद्यारोपप्रयोजकमुपाधिंनिरूपयति जन्मादिकमिति । तथाभूतंमरणा द्याकारतांभजत्स्वचित्तमेवस्वगतंमरणादिकमात्मनिकल्पयेत्प्रतीयमानंकुर्यादित्युत्तरार्धार्थः ९९५

एतदेवस्फुटयति एवमिति । एवंसतिजीवाःस्वतोनिर्विकाराअपितत्तदात्मकाजातमृतादिरूपादृश्यंतेयतस्तथाभूताश्चित्ततादात्म्याध्यासंगताइत्यर्थः ९९६ उक्तार्थमलातशांतिप्रकरणगतैःसांप्रदायिकवाक्यैर्दृढीकुर्वन्वस्तुतोमनोपिपूतिकूष्मांडाभंचिन्मात्रमित्याह ऋजुवक्रेतिपंचभिः । यथाऽलातस्यज्वलत्काष्ठस्यस्पंदितंभ्रमणादिरूपंचलनमृजुवक्रैर्दंडचक्राद्याकारैर्भासमानंप्रसिद्धंतथामनसःस्पंदितंमायाशबलादात्मनःसकाशादुन्मेषरूपंग्रहणग्राहकरूपेणमिथ्याभासते तत्रग्रहणपदेनकर्मकरणव्युत्पत्त्याविषयोज्ञानंचोक्तंग्राहकपदेनज्ञातेतित्रिपुटीसंग्रहः तत्रग्रहीतुर्मिथ्यात्वंविशेषणस्यग्रहणकर्तृत्वस्यमिथ्यात्वादितिबोध्यम् ९९७ वस्तुतश्चित्तंशांतंचिन्मात्ररूपमितिदृष्टांतेनाह अस्पंदमानमिति । यथाअस्पंदमानंप्रोक्तस्पंदनरहितंतदालातम् स्वार्थिकोण् आभासैःकल्पितचक्रादिरूपैर्हीनंतथाअजंकल्पितरूपेणजन्मरहितंचभवतितथाचित्तमपीत्यर्थः ९९८ आभासपदोक्तानामागंतुकरूपाणांमिथ्यात्वमेवस्फुटयति अलातेइति । तस्मिन्नलातेस्पंदमानेसतितिआभासाऋजुवक्राद्याकाराअन्यतोभुवःअन्यतआगत्यभवनशीलानभवंति आगमानुपलंभादितिभावः । तथापुनर्निस्पंदाच्चतस्तस्मादलाताचेनिर्गच्छंतीतिन तत्रैवालातेप्रविशंतीत्यपिन । अनुपलंभादेवेतिभावः ९९९ ननिर्गताइति । तेआभासाअलातान्निर्गत्यक्वचिच्चिरोहिताःस्थिताइतिचनवक्तुंशक्यं द्रव्यत्वस्यवस्तुत्वस्याभावादित्यर्थः वास्तवानांप्रवेशनिर्गमादिकल्प्येतवत्रतुवास्तवत्वमेवदुर्वचमितिभावः दार्ष्टांतिकेयोजयति मनस्यपीति । आभासस्येतिभावप्रधानोनिर्देशः आभासत्वस्यमिथ्यात्वस्याविशेषात्तुल्यत्वादित्यर्थः १००० एत

एवंजीवाःसदाज्ञेयाजन्मादिपरिवर्जिताः॥ चित्तयोगात्तथाभूतादृश्यंतेतत्तदात्मकाः ९९६ ऋजुवक्रादिकाभासमलातस्पंदितंयथा ॥ ग्रहणग्राहकाभासंमनःस्पंदितंतथा ९९७ अस्पंदमानमालातमनाभासमजंयथा ॥ अस्पंदमानंचित्तंस्यादनाभासमजंतथा ९९८ अलातेस्पंदमाने वैनाभासाअन्यतोभुवः ॥ नततोन्यत्रनिष्पंदान्नालातंप्रविशंतिते ९९९ ननिर्गताअलातात्तेद्रव्यत्वाभावयोगतः ॥ मनस्यपितथैवस्युराभासस्याविशेषतः १००० मनसिस्पंदमानेवैनाभासाअन्यतोभुवः ॥ नततोन्यत्रनिष्पंदान्नमनःप्रविशंतिते १००१ नरिशृंगंयथाशब्दान्मायायानगरंचखे ॥ प्रतीयतेतथासर्वमात्मनोन्यदसत्स्मृतम् १००२ मायापिशब्दतोयस्मात्सतीतस्मान्नसासती ॥ शब्दश्चात्मातुनैवंस्यादवाङ्मनसगोचरः १००३

त्स्फुटयति मनसीति । आभासाग्रहणाद्याकाराएवमुक्तार्थमन्यत् १००१ तर्हिकथमेतेप्रतीयंतइतिचेद्दोषवशादित्याह नरीति । यथात्यंतासत्यपिह्यर्थेज्ञानंशब्दःकरोतिहीतिप्रसिद्धमभावात्शब्दरूपदोषान्नरिमनुष्येशृंगंप्रतीयतेमायारूपदोषाद्गंधर्वनगरंचतथैतद्द्वैतंशब्दमाययोर्बलात्प्रतीयते वस्तुतस्त्वात्मनोन्यदसदेवेत्यर्थः १००२ तथापिविश्वभावप्रयोजकयोर्मायाशब्दयोःकथमसत्त्वमितिचेत् 'वाचारंभणंविकारोनामधेयम्' इतिश्रुत्युक्तस्यशब्दमात्रत्वरूपस्यमिथ्यात्वप्रयोजकस्यप्रयोगादितिगृहाणेत्याशयेनाह मायापीति । यस्मान्मायापिशब्दतःस्ववाचकंमायादिशब्दमाश्रित्यैवसतीशशशृंगवन्नतुप्रमाणानुगृहीततर्कसहतेतस्मात्सामायासतीनभवति शब्दश्चतथाशब्दोपिनाममात्रत्वान्नसन् नचात्मन्यतिप्रसक्तिः तस्यस्वप्रकाशस्यशब्दाद्यगोचरत्वादित्यर्थः अयंभावः वाचारंभणमित्यादिश्रुतौविकारपदेनपरापेक्षरूपविवर्त्तवाचकेनदृश्यजातमुद्दिश्यनाममात्रत्वमसत्त्वप्रयोजकंविधीयतेतत्रविवर्त्तत्वंशब्दमाययोरप्यविशिष्टमतस्तयोरप्यधिष्ठानविविक्तयोरसत्त्वंआत्मनिनिरपेक्षेतुविवर्तत्वस्योद्देश्यतावच्छेदकस्याभावान्नशब्दमात्रत्वमसत्त्वप्रयोजकंविधेयमवतरतीति श्रुत्यर्थस्तु विकारोविवर्त्तरूपंघटशरावादिकंवाङ्मयनाममात्रमेवनतत्रसत्त्वगंधोपिउपादानभूतंमृत्तिकाद्येवतुसत्यमिति १००३

अथशब्दमायेत्यादिनामान्तवाक्यानांक्रमेणार्थंद्वादशभिःसंगृह्णंस्तत्रासद्यामपिशब्दमायाभ्यापरमार्थस्याप्यात्मनोभानप्रतिबंधःप्राग्विवेकात्कृतइत्याह शब्देति । शब्दःशब्दमात्रात्मकोविकारोमायाचतत्कारणभूताताभ्यामावृतआच्छादितोयमात्माजीवरूपःस्वात्मानंस्वंतत्त्वंनयातिनजानातिकिंतुनिगूढःसन्परिच्छिन्नरूपेणभाति तत्रमहतोप्यल्परूपेणभानेदृष्टांतोजलमध्यस्थोघटःसहिमहानपिस्वल्पउपलभ्यतेइत्यनुभवसिद्धम् एतेनश्रुतौपुष्करशब्दोजलवाचकोगौण्यांतःकरणाद्युपाधौवर्त्ततेइतिसूचितम् एतयोःशब्दमाययोर्नाशेबाधेतुस्वरूपभूतमेकत्वंलभतेइत्यर्थः १००४ एकत्वस्योपलब्धिसाधनंयोगंसूचयन्नेकत्वमुपलक्षयति शब्दस्थमिति । शब्देप्रणवेस्थितंवाच्यतयातादात्म्येनसंबद्धंपरंसर्वोत्कृष्टंब्रह्मस्थूलसूक्ष्मकारणसमष्ट्युपाधितस्मिन्मात्रात्रयवाच्येसहमात्राभिःक्रमेणक्षीणेसतियतुरीयमक्षरमविनाशिअवशिष्टंतदेवसर्वभेदाभावद्वाराएकत्वपदेनोक्तमित्यर्थः १००५ तदेकत्वंजिज्ञासुःप्रथमंप्रणवादिशब्दतादात्म्यापन्नंब्रह्मचिंतयितुमभ्यसेदित्याह एकत्वमिति । एकत्वंएकपदोक्तम् १००६ तत्रशब्दब्रह्मण्यप्यादरःपरब्रह्मवत्कर्त्तव्यइत्याह द्वेइति । अधिकारिणाद्वेब्रह्मणीवेदितव्येआदरेणविज्ञेये द्वेके शब्दब्रह्मप्रणवादिरूपंपरंनिर्विशेषंच तत्रप्रथमंशब्दब्रह्मणिनिष्णातःकुशलःसन्नेवपरंसाक्षात्करोतीत्यर्थः १००७ परब्रह्मविज्ञानेसतितुशब्दब्रह्मचिंतनाभ्यासोहेयइत्याह शाब्दमिति । शाब्दंशब्दतादात्म्यापन्नंसमभ्यस्यसमीचीनस्यसत्फल

शब्दमायावृतोनात्मास्वात्मानमुपयात्ययम् ॥ निगूढोनीरमध्यस्थोमहानपियथाघटः ॥ एतन्नाशात्स्वयंज्योतिरेकत्वमुपयातिहि १००४ शब्दस्थंयत्परंब्रह्म तस्मिन्क्षीणेयदक्षरम् ॥ तदेकत्वमितिप्रोक्तंसर्वभेदविवर्जितम् १००५ एकत्वंपरमंब्रह्मज्ञातुकामस्त्वतःपुमान् ॥ शब्दब्रह्मपुराविद्वानवगच्छेद्व्रतश्रमः १००६ द्वेब्रह्मणीवेदितव्येशब्दब्रह्मपरंचतत् ॥ शब्दब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छति १००७ शाब्दंब्रह्मसमभ्यस्यत्यजेज्ज्ञातेपरेसति ॥ पलालमिवधान्यार्थीत्यजेद्ग्रंथमशेषतः १००८ गवामनेकरूपाणामेकरूपंयथापयः ॥ नानाविधानांदेहानामेकआत्मातथेरितः १००९ अतःसर्वेषुभूतेषुएकआत्माव्यवस्थितः ॥ मनसैवसविज्ञेयआत्मनःसुखमिच्छता १०१० दधिसर्वाणिभूतानिमनोमंथाःप्रकीर्तितः ॥ अहंब्रह्मेतिविज्ञानंनेत्रंमंथनकारणम् १०११ नवनीतंततश्चैतदानंदात्मानमद्वयम् ॥ उद्धरेदुद्धरंस्तस्मात्स्वात्मानंभवसागरात् १०१२ निष्क्रियंनिष्कलंशांतंयदनेनसमुद्धृतम् ॥ तद्ब्रह्मात्माहमस्मीतिसाक्षात्कुर्यात्सदापुमान् १०१३ वासुदेवस्तदेवैतत्पठ्यतेवेदवादिभिः ॥ नाम्नस्तस्यनिरुक्तंचकुर्वाणैस्त्वेवमेवहि १०१४

स्याभ्यासस्यगोचरंकृत्वापरेब्रह्मणिज्ञातेसतित्यजेत् तथाग्रंथशब्दप्रपंचंत्यजेत् पलालंव्रीहिकांडम् धान्यार्थीव्रीहिकामइतिचेत्यर्थः १००८ ज्ञेयस्यात्मनःसर्वोपाधिष्वेकरूपत्वेदृष्टांतमाह गवामिति । कृष्णपीताद्यनेकरूपाणामपिगवांपयःशुक्लमेवयथातथानानाविधदेहानांमध्येज्ञानलक्षणआत्माएकरूपएवेत्यर्थः श्रुतौलिंगिपदेनज्ञानलिंगाश्चेष्टाधारवाचकेनजातावेकवचनांतेनचदेहाउक्ताइतिभावः १००९ तस्यविज्ञानसाधनंश्रवणादिसंस्कृतंमनएवेत्याह अतइति । अतउक्तदृष्टांतसमन्वयात्सर्वत्रैकरूपेणस्थितोप्यात्मामनसैवतत्परेणज्ञेयइत्यर्थः १०१० अत्रश्रुत्युक्तंरूपकमभिनयति दधीति । सर्वाणिभूतान्युपाधयोदधिस्थानीयाश्चिंत्याः मनस्तुमंथाःमंथनदंडश्चिंत्यः तस्यावृत्तिरूपभ्रमणसाधनंब्रह्मात्मैक्यज्ञानंतुनेत्रंमंथनरज्जुस्थानीयंचिंत्यमित्यर्थः १०११ नवनीतमिति । अद्वयआत्मातुनवनीतस्थानीयःस्वात्मनःसंसाराद्युद्धरणंमोक्षाख्यंतदेवतस्यनवनीतस्योद्धरणस्थानीयमितिचिंतयेदित्यर्थः १०१२ एवमुद्धृतस्यतत्पदार्थरूपस्यनवनीतस्यत्वंपदार्थैक्यचिंतनरूपंहृदिधारणंतापोपशमायकुर्यादित्याह निष्क्रियमिति १०१३ वासुदेवइति । तत्ब्रह्मवासुदेवसंज्ञंवेदिकैरुक्तम् कीदृशैर्वैदिकैः एवंवक्ष्यमाणविधयातद्व्युत्पत्तिविवरणंकुर्वद्भिः १०१४ व्युत्पत्तिंदर्शयंश्चरमवाक्यार्थमाह सर्वेति । वसंत्यत्रभूतानीतिव्युत्पत्त्यावासुदेवपदेनसर्वभूताधिवासतयोक्तः वसतिसर्वत्रेतिव्युत्पत्त्यांतर्यामितयाचयउक्तोनारायणस्तद्रूपंब्रह्माद्वयलक्षणमहमस्मीतिशुद्धचेतेत्यर्थः १०१४

ब्रह्मावद्तुल्याख्यानसमाप्तिंदर्शयन्नुत्तरग्रंथप्रवृत्तिप्रकारमाह इतितेइति । मनोनिग्रहसंयुतंब्रह्मतस्वममृतार्थिंदैाब्रह्मविदैायथोक्तंतथातुभ्यमभिहितं अथनारायणीयस्यतैत्तिरीयशाखागतस्यसंक्षे पररूपेनारायणीयोपनिषत्संज्ञेग्रंथेतथामहोपनिषदितीरितेउक्तेग्रंथेतथात्मप्रबोधोपनिषत्संज्ञेग्रंथेचक्षुद्रतयासंक्षिप्ततयाब्रह्मेरितंवर्णितंतन्मयावक्ष्यमाणंसावधानःक्रमेणत्वंशृण्वितिद्वयोरर्थः १०१६ १०१७ तत्रपुरुषपदव्युत्पत्तिद्विधासूचयंस्तदर्थमाह येनेति । यःसर्वविश्वपूरकत्वात्सर्वदेहरूपपूर्षुअंतर्यामित्वेनवासशीलत्वाच्चपुरुषइत्युक्तः पूरयतिपूर्षुवसतीतिवाव्युत्पत्तिसंभवादित्यर्थः १०१८ नारायणपदार्थमाह विराडितित्रिभिः । योभगवान्विराड्रूपोऽतेप्रलयेनिखिलान्लोकानुदरेसंगृह्यशेषस्यफणासहस्रेणच्छायाकर्तुर्यदर्द्धरूपमुज्ज्वलंमध्यंतदात्मकशय्यांगतःसन्नप्नुशेते इत्यर्थः एतेननरसृष्टाआपोऽयनंवासस्थानंयस्यसतथेतिव्युत्पत्तिःसूचिता १०१९ हिरण्यगर्भइति । यश्चभगवान्हिरण्यगर्भरूपोजीवानांतैजसानांसूक्ष्मव्यष्ट्युपाधिकानांप्रतिबिंबकल्पानांबिं बस्थानीयोमायारूपेतल्पेशय्यायांवर्त्ततेयथामातृगर्भरूपेशयनेशय्यायांशिशुरित्यर्थः एतेननरस्यजगत्कर्तुःशक्तिरूपतयासंबंधित्वान्नारंमायातत्त्वंतदयनंयस्यसतथा अथवानराणांजीवानांसमू होनारंतस्यायनंस्वरूपलाभोयतोबिंबभूतात्सतथेतिव्युत्पत्तिद्वयंसूचितम् १०२० यश्चेश्वरइति यश्चभगवान्वैषम्यनैर्घृण्यादिदोषरहितईश्वरोऽतर्याम्यविद्यायाःकार्यकारणरूपायाःकंदुकवद्दूरतः

सर्वभूताधिवासोयोयोभूतेपुवसत्यपि ॥ सर्वानुग्राहकत्वेनतदेवास्म्यहमद्वयम् १०१५ इतितेमृतबिंदूक्तंमनोनिग्रहसंयुतम् ॥ उक्तंब्रह्माथवक्ष्यामिपुनःक्षुद्रतये रितम् १०१६ नारायणीयसंज्ञेयेमहोपनिषदीरिते ॥ आत्मप्रबोधसंज्ञेचशृणुतत्त्वंक्रमादिह १०१७ येनपूर्णमिदंविश्वंयश्चायंसर्वदेहिनाम् ॥ शेतेपुरेषुभगवान् पुरुषःपुरुषोत्तमः १०१८ विराड्रूपधरोयश्चान्तेलोकान्निखिलानपि ॥ संगृह्यशिशुवत्शेतेशेषार्द्धोज्ज्वलमध्यगः १०१९ हिरण्यगर्भोभगवान्जीवानांबिंबवच्च यः ॥ वर्ततेशयनेमायातल्पेगर्भेयथाशिशुः १०२० यश्चेश्वरोत्रभगवान्वैषम्यादिविवर्जितः ॥ अविद्याकंदुकःसोयमुक्तोनारायणःपुमान् १०२१ अकामयतदे वोयंसिसृक्षुर्निखिलंजगत ॥ प्रजाःसृजेयेतिपुराह्येकएवव्यवस्थितः १०२२ संकल्प्येत्थंजगत्सर्वंसृष्टवान्पुरुषःपरः ॥ देवानिमांश्चनिखिलान्नानासामर्थ्यसंयु तान् १०२३ ब्रह्माशक्रस्तथादित्योरुद्राश्चवसवस्तथा । विश्वेदेवाश्चसाध्याश्चतथान्यादेवयोनयः १०२४ नारायणात्प्रजायंतेसहसर्वैश्चराचरैः ॥ वर्त्ततेतत्रली यंतेतस्मिन्नेवमहात्मनि १०२५ यतएवंततोदेवएकोनारायणःस्मृतः ॥ ब्रह्माविष्णुश्चरुद्रश्चशक्रोन्येदेवतागणाः १०२६

प्रक्षेप्राचसनारायणइत्युक्तइत्यर्थः तथाचअराणांसंसारचक्रावयवानांरागादीनामयनंप्राप्तिर्यत्रनविद्यतेसतथा यद्वानराणांजीवानामयनंप्रवृत्तिर्यस्मादंतर्यामिणःसतथा अथवानरसंबंधिनोऽवि द्यातत्त्वस्यअयनंप्रक्षेपोयतस्तुरीयत्वेनज्ञाताद्बदरिकाश्रमवासिगुरुरूपाद्वासतथेतिव्युत्पत्तित्रयंसिद्धं व्युत्पत्त्यंतराण्यपिदशमेदर्शितानिस्मर्तव्यानीति १०२१ अकामयतेति । अयंदेवःसृष्टेः पुराएकोऽद्वितीयोजगत्सिसृक्षुर्जगत्सृष्ट्यभिमुखःसन्नहंसृजेयेत्याकारांकामनांकृतवानित्यर्थः १०२२ संकल्प्येति । इत्थंसंकल्प्यदेवादिकंसर्वंजगत्सृष्टवानित्यर्थः १०२३ देवानवयुत्यानुवदति । ब्रह्मेति । यथाजायंतेतथातत्रनारायणेवर्त्ततेलीयन्तेइत्यर्थः १०२४ । १०२५ तथाचयथामृदोघटादयोनभिन्नास्तथासर्वंजगन्नारायणादित्याह यतएवमितित्रिभिः । यतएवंनारायणाज्जन्मस्थिति भंगशालित्वंजगतस्ततोनारायणोदेवएकोऽद्वितीयः एतत्सर्वंतुनारायणात्मकं एतत्किमतआह ब्रह्मेत्यादि । ब्रह्मादयोगुणत्रयाभिमानिनः इन्द्रावश्विनौ सदसद्वतंस्थूलसूक्ष्मावस्थागतं एतदेव स्फुटयति यदिति । यदस्तिप्रत्यक्षं नास्तिपरोक्षमितित्रयाणामर्थः १०२६

१०२७ । १०२८ एवंकण्डिकाद्वयंव्याख्यातमथनित्यइत्यादेस्तृतीयकण्डिकायाअर्थमाह यदात्मकमितिसंपादचतुर्भिः । ससर्वात्मानारायणोविनाशराहित्यरूपंनित्यत्ववान्प्राणादिषोडशकलाभिर्वर्जितश्च षोडशकलास्तुप्राणःश्रद्धाआकाशादिपंचभूतानिइंद्रियमनोऽन्नंवीर्यंतपोमंत्रःकर्मलोकानामचेतिप्रश्नोक्ताः १०२९ आख्यातवाच्यक्रियाराहित्यरूपनिराख्यातत्वस्यार्थात्सिद्धिमभिप्रेत्यनिर्विकल्प्यादिपदद्वयार्थमाह कार्येति । सर्वंकार्यंविकल्पपदेनोक्तंतत्कारणमज्ञानंत्वंजनपदेनंताभ्यामयंवर्जितोभवतीत्यर्थः १०३० शुद्धपदार्थमाह माययेति । सर्वशुद्धिविहीनयामलरूपयामाययातत्प्रयुक्तभेदैश्चरहितइत्यर्थः १०३१ अस्मादिति । अस्मात्शुद्धसत्वात्मकाद्भिन्नःकोपिभावोनभवति द्वितीयस्यासंभवादित्यर्थः १०३२ एवमिति । एवंयोवेदसविष्णुभावयोग्यइतिपूर्वेणसंबंधः कथमित्याकांक्षायांचतुर्ष्वर्थंदर्शयति । सइत्यादिना सविद्वान्रुरुत्संसारदुःखंद्रावयतिहरतीतिव्युत्पत्त्यारुद्रपदोक्तांश्रौतविज्ञानसंपन्नांबुद्धिंसारथिंकृत्वा

आदित्याद्याश्चदस्रौचयेचान्येदेवयोनयः ॥ दिशश्चप्रदिशस्तद्वदधश्चोर्ध्वंचमध्यमम् १०२७ महाभूतानिभूतानिस्थावराणिचराणिच ॥ भूतंभव्यंभवत्सर्वंसकलंसदसद्गतम् ॥ यदस्तियच्चनास्त्येतत्सर्वंनारायणात्मकम् १०२८ यदात्मकमिदंविश्वंपुमान्नारायणस्तुसः ॥ विनाशरहितस्तद्वत्प्राणाद्यैःपरिवर्जितः १०२९ कार्यजातमिदंसर्वंविकल्पइतिकीर्तितम् ॥ अज्ञानंकारणंतद्वत्ताभ्यांचपरिवर्जितः १०३० माययाजडरूपिण्यासर्वशुद्धिविहीनया ॥ कालत्रयेपिरहितःसर्वभेदविवर्जितः १०३१ अस्मान्नारायणाद्देवाद्भिन्नःकोपिनवस्तुतः ॥ शुद्धसत्वाद्द्वितीयोर्थोनासीन्नास्तिनभाव्यपि १०३२ एवंयोवेदपुरुषःसकृत्वासारथिंधियम् ॥ रुद्राभिधांस्वबोधाख्यांसोहमस्मीतिरूपिणीम् १०३३ मग्रहंचमनःशांतंशरीररथगोचरः ॥ इंद्रियाश्वैर्धृतंदांतैर्गच्छेद्विष्णुपदंपरम् १०३४ एवंनारायणस्यात्मविद्यांयोवेदनेदवित् ॥ तीर्त्वासआपदःसर्वाःप्राप्यभोगांस्तथेप्सितान् ॥ अत्रभुक्त्वाब्रह्मलोकंगत्वामोक्षंचविंदति १०३५ नमोनारायणायेतिमंत्रःसर्वार्थसाधकः ॥ देहिनांनिखिलानांसद्द्विजानांप्रणवादिकः १०३६ यादृङ्नारायणज्ञानात्फलंतादृक्प्रकीर्तितम् ॥ अस्यापिज्ञानतोयस्माज्ज्ञायतेपुरुषोमुना १०३७ उपायःप्रणवोयद्वन्नारायणगतिंप्रति ॥ तद्वदष्टाक्षरोप्येषउपायःसर्वदेहिनाम् १०३८ अमुंजपेन्नरोनित्यंनारीवापाप्मनःक्षये ॥ आनंदात्मानमात्मस्थंपश्येन्नारायणंपरम् १०३९ किंपुनर्योधिकारीस्यात्सर्वपापविवर्जितः ॥ संपश्यतिजपन्नेतदानंदात्मानमद्वयम् १०४० इतिनारायणीयायाब्रह्मविद्यासमीरिता ॥ सोक्तामहोपनिषदिप्रोक्तांतांशृणुनामतः १०४१

मननादिव्यापारकंमनःप्रग्रहमश्वरश्मिवत्सारथिवशंचकृत्वासंयतेंद्रियरूपाश्वैर्युक्तेशरीररूपेरथेस्थितोविष्णुपदंमोक्षरूपंगच्छेदितिद्वयोरर्थः ३३ । ३४ पंचम्यर्थमाह एवमिति । एवमुक्तविधांनारायणस्यात्मत्वप्रतिपादिकांविद्यामुपनिषदंयोर्थतोवेदजानातिसोत्रजीवदवस्थायामापत्तरणपूर्वकमिष्टभोगान्प्राप्यान्तेब्रह्मलोकप्राप्तिद्वारामोक्षंगच्छेदित्यर्थः ३५ षष्ठ्याभावार्थमाह नम इतिपंचभिः । नमआदिकोमंत्रःस्त्रीशूद्रपर्यंतानांसर्वेषांहितः द्विजैस्त्रैवर्णिकैस्तुप्रणवादिकोजप्यइत्यर्थः ३६ अस्यमंत्रस्यनारायणसाम्यमाह यादृगिति । ज्ञायतेलभ्यते अमुनाधिकारिणा ३७ अस्यप्रणवसाम्यमाह उपायइति । गतिर्लाभः ३८ जपफलमाह अमुमिति । अमुंमन्त्रंयदिनरोनारीवाजपेदर्थावबोधपूर्वकमभ्यसेत्तर्हिप्रत्यग्रूपंनारायणंपश्येत्किमुताधिकारसंपन्नइतिद्वयोरर्थः १०३९ १०४० उपसंहरन्महोपनिषदर्थंप्रतिजानीते इतिनारायणीयायाइति । नारायणीयायाउपनिषदोर्थभूताविद्यासमीरितेतितांविद्यांनामतोमहोपनिषदिमहोपनिषत्संज्ञेश्रुतिग्रंथेप्रोक्तांशृण्विति १०४१

एवमिति । पुराप्राचीनवृत्तंविद्वांसोजानंतोवैदिकाविप्राएवमाहुः एवंकथं पूर्वंनारायणएवासीत् पुरेत्यस्यविवरणंविश्वजनेःपुरेति १०४२ तदेति । तदासृष्ट्यादौब्रह्मादयोदेवानासन् तानिमहांतिभूतानिचनासन् तथाअन्यानिभूतपदस्यार्थांतररूपाणिस्थावरजंगमशरीराणिनासन् तथापरंधावापृथिव्यादिकंकार्यंजातंनासीदित्यर्थः १०४३ एकाकीति । सपूर्वःसृष्टिपूर्वे कालेस्थितःपुमान् रूपएकाकीसन् नरेमेअरतिरूपंक्षोभंप्राप्ततोरतयेद्वितीयंध्यायतस्तस्यपुरुषस्यमायारूपयुवत्यानासिकोपलक्षितप्राणसूक्ष्मावस्थारूपत्वात्श्रुतौनस्तोमपदोक्तयासहसंगोऽजातस्तत त्रयोदशसुताजाताएकाकन्याचासतीनानापुरुषाभिलाषिणीजाता कीदृशस्यपुरुषस्य वस्तुतःसतःनिर्दोषस्यासंगत्वादितिद्वयोरर्थः १०४४। १०४५ त्रिधेति । साकन्याबुद्धिरूपानानापुरु षाभिलाषिणीआत्मानमधिदैवादिरूपैस्त्रिधाऽकरोदित्यर्थः कार्यविभागस्यबुद्धिमात्रतंत्रत्वादितिभावः नकेवलंकन्यैवत्रिधाजाताकिंतुतत्सुताअपीत्याह यथेति । तत्राधिदैवत्वंसमष्टिघटकत्वं अध्यात्मत्वंव्यष्टिघटकत्वं अधिभूतत्वमिदंतयादृश्यमानत्वमितिवर्णितप्रायमित्यर्थः १०४६ वीक्षमाणइति । एकोपिसपुमान्तामसतींसुतांतादात्म्येनवीक्षमाणःपश्यन्सन्नात्मानंबहुरूपंमेने तस्याःकन्यायाबहुत्वलक्षणधर्माध्यासात् तत्राध्यासेहेतुस्तुमोहोऽविवेकएवेत्यर्थः १०४७ तेपांचेति । तेपांत्रयोदशसुतानांसुतायाश्चयानिकारणानिशरीरोपादानभूतान्यत्रव्यवहारेप्रसिद्धा

एवमाहुःपुराविप्राविद्वांसोवेदवादिनः ॥ एकोनारायणःपूर्वमासीद्विश्वजनेःपुरा १०४२ तदाब्रह्मादयोदेवानासन्भूतानितानिच ॥ चरस्थिराणिचान्यानिनैव किंचित्तथापरम् १०४३ एकाकीसपुमान्पूर्वोनैवरेमेनिरंजनः ॥ द्वितीयंध्यायतस्तस्यपुरुषस्यमहात्मनः १०४४ त्रयोदशसुतास्तस्यकन्याचैकाभवत्तदा ॥ असंगस्यासतीमायायुक्त्यासंगतःसतः १०४५ त्रिधासाकुरुतात्मानंकन्यापुरुषकांक्षिणी ॥ अधिदैवमथाध्यात्ममधिभूतंचभामिनी ॥ यथाकन्यातथाजाता स्त्रिविधास्तत्सुताअपि १०४६ वीक्षमाणःपुमानेकस्तामेतामसतींसुताम् ॥ आत्मानंबहुधामेनेतद्बहुत्वेनमोहितः १०४७ तेपांचकारणान्यत्रपूर्वंसृष्टाचतान्प्र भुः ॥ असृजच्चक्रियाशक्तितेषांकार्यंचकारणम् १०४८ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ पंचकंकारणंप्रोक्तंस्थूलंसूक्ष्मंचमध्यमम् ॥ तद्द्वैविध्यात्कार णस्यकार्यंचद्विविधंभवेत् १०४९ क्रियाशक्तिस्तुयाप्रोक्तासप्राणइतिकीर्तितः ॥ कार्यरूपोत्रभूतानांकारणंवापरस्यच १०५० अहंकारोमनश्चितमिंद्रियाणिद शैवहि ॥ त्रयोदशसुताःप्रोक्ताःकन्याबुद्धिश्चतुर्दशी १०५१

नितानिप्रथमंसृष्ट्वाततस्तान्सुतासहितान्सुतान्सृष्ट्वाचपश्चात्क्रियाशक्तिंसृष्टवान् कीदृशींक्रियाशक्तिं तेपांप्रथमसृष्टानांमध्येकेषांचित्कार्यभूतांकेषांचित्तुस्थितिकारणभूतामित्यर्थः १०४८ तत्रका निकारणानीत्याकांक्षायामाह पृथिव्यापइति । प्रथमसृष्टतयायत्कारणजातमुक्तंतत्पृथिव्यादिपंचकरूपंबोध्यं तच्चद्विविधं स्थूलंमहाभूताख्यंसूक्ष्मंचतन्मात्राख्यं तत्रसूक्ष्मस्यविशेषणंमध्य ममिति मध्येभवंमध्यमंस्थूलस्यांतःस्थितिशीलमितियावत् एवंकारणद्वैविध्येसतितदुक्तंकार्यमपिस्थूलसूक्ष्मत्वाभ्यांद्विधाभवेदित्यर्थः १०४९ क्रियाशक्तिमित्यादिविवृणोति क्रियेति । क्रियाशक्तिपदेनप्राणउक्तइतितत्रहेतुतयाप्राणेकार्यत्वकारणत्वयोरुक्तयोःसमुच्चयमाह कार्येति । यःप्राणःपंचभूतानांकार्यरूपः अपरस्यसुतादिप्रपंचस्यकारणंचभवतीत्यर्थः १०५० केत्रयो दशसुतत्वेनोक्ताःकाचसुतात्वेनेत्याकांक्षायामाह अहंकारइति । अहंकारादित्रयंज्ञानेंद्रियपंचकंकर्मेंद्रियपंचकंचएतेभावास्त्रयोदशसुतत्वेनोक्ताः बुद्धिस्तुनानारूपासुतात्वेनसाचचतुर्दशीत्यर्थः एतेनतन्मात्रपंचकस्यभूतपंचकस्यएकस्यप्राणस्यचसंयोजनेपंचविंशकोगणःसंपन्नइतिसूचितम् १०५१

हिरण्यगर्भइति । अस्यविभागस्यपंचविंशकगणरूपस्यअधिदैवकः अधिदैवंरूपंकायतिशब्दयतिअभिमन्यतइतियावत् तथाभूतोहिरण्यगर्भोबोध्यः अधिभूतंस्थितस्यतुतस्यविभागस्याभिमंतृणिस्थिरजंगमानिभूतानिबोध्यानि तत्रैतावान्विशेषः अयमधिभूतत्वेनोक्तः प्रत्येकंतत्तच्छरीरिणंप्रत्याध्यात्मिकः अहमितिप्रतीयमानत्वात् शरीरांतरंप्रतित्वधिभूतरूपएव इदंतयाप्रतीतेरित्याशयः १०५४ नास्यप्रजाइत्यादिवाक्यस्यासंवत्सरपदोक्तकालसहिताएवप्रजाअजायंतेत्यर्थमभिसंधायाह कालश्चेति । प्रजापतिसृष्टयवच्छेदकःकालोप्यनेननसृष्टइत्यर्थः १०५४ सृष्ट्वेति । सूत्रात्मरूपःसन् एवंपूर्ववत् देवानांसूत्रात्मविभूतित्वेनबृहदारण्यकेप्रसिद्धानांसृष्टिमकरोदित्यर्थः १०५४ रुद्रसृष्टिमाह केनचिदिति । विश्वकृन्नारायणःकेनचिद्दुष्कृतमशक्येननिमित्तेनविशिष्टक्रोधमाहार्यइच्छामात्रेणसंपाद्यभृकुटीविशिष्टात्स्वललाटाद्रुद्रंप्रादुरकरोदित्यर्थः अत्रभृकुटीशब्दःशैवव्याकरणेसिद्धः तदुक्तमभियुक्तैः 'यान्युज्जहारमाहेशाद्व्यासोव्याकरणार्णवात् । तानिकिंपदरत्नानिमांतिपाणिनिगोष्पदे' इति ब्रह्मभ्रूमध्यजोहरइतिपुराणविरोधस्तुकल्पभेदेनसमाधेयः १०५५ रुद्रस्यध्येयांमूर्तिमभिनयति नीलेति । वीर्याणिबलसाध्यानिकर्माणिबिभ्रद्धार

हिरण्यगर्भःसंप्रोक्तोविभागस्याधिदैवकः ॥ अधिभूतंविभागस्यजंगमानिस्थिराणिच ॥ भूतान्याध्यात्मिकश्चायंप्रत्येकंसर्वदेहिनाम् १०५२ कालश्चसर्वभूतानांसृष्टिस्थितिविनाशकृत् ॥ पुरुषेणपरेणायंसृष्टःसर्वस्यहेतुना १०५३ सृष्ट्वातदखिलंविश्वंसूत्ररूपमुपाश्रितः ॥ पुरुषोदेवतासृष्टिमेवंनारायणोऽकरोत् १०५४ केनचिद्धिनिमित्तेनक्रोधमाहार्यविश्वकृत् । भृकुटीकुटिलात्स्वस्यललाटाद्दीप्ततेजसः ॥ कोपाविष्टंस्वयंदेवोरुद्रंतमुदपादयत् १०५५ नीलकंठंलोहितांगंत्रिनेत्रंशूलधारिणम् ॥ बिभ्रद्वीर्याणियस्यात्रनकोप्यस्तिसमःपुमान् १०५६ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ ज्ञानवैराग्ययोश्चैवएकएवसमाश्रयः १०५७ सत्यस्यब्रह्मचर्यस्यमनसोनिग्रहस्यच ॥ तपसश्चसमस्तस्यशब्दराशेस्तथैवच १०५८ अस्मादेवसमस्तानांदेवादीनांशरीरिणाम् ॥ ऐश्वर्याद्यागुणाःसर्वेजायंतेगुणराशितः १०५९ अयंसमस्तदेवानांमुनीनांचमहात्मनाम् ॥ नानाविधासुविद्यासुकथितःपरमोगुरुः १०६० एनंसंप्राप्यसंहारकालेलोकत्रयीत्वियम् ॥ तूलराशिर्यथावह्निंप्राप्यनाशंव्रजेत्स्फुटम् १०६१ पुनश्चध्यानमाविष्टोदेवःससर्वदृक्स्फुटम् ॥ श्रांतस्यध्यानयुक्तस्यललाटात्स्वेदबिंदवः ॥ ब्रह्मांडजनिकाआपःशक्ताभुवनसर्जने १०६२ अप्सुस्वेदस्वरूपासुतासुवीर्यमवासृजत् ॥ आत्मनोयत्परंतेजोदेवोनारायणःपुमान् १०६३

यितापोपिताचयत्समोन्योनास्तीत्युत्तरार्धार्थः १०५६ तस्मिन्कोपलिंगानिनियमनायआहार्याणीतिदर्शयन्नैक्यस्फुटीकरणायनारायणगुणान्वर्णयति ऐश्वर्यस्येति । ऐश्वर्यादीनांभगवद्गुणानांसमाश्रयआधारएवयतएकोनारायणादभिन्नइत्यर्थः १०५७ सत्यस्येति । सत्यादीनांचसमाश्रयइत्यनुषंगः । मनसोज्ञानस्यइंद्रियानिग्रहलक्षणतपसश्च शब्दराशेर्वेदादिशास्त्राणां अंत्यचकारउत्तरान्वयी १०५८ अस्मादिति । अस्माद्रुद्रादेवचगुणसिंधोःसकाशात् सर्वेषांसद्गुणलाभइत्यर्थः १०५९ अयंरुद्रएवचसर्वविद्यासंप्रदायप्रवर्तकइत्याह अयमिति । स्पष्टम् १०६० एवंरुद्रस्यसृष्टिस्थितिहेतुत्वमुक्त्वाथभंगहेतुत्वमाह एनमिति । एनंरुद्रम् १०६१ अथकमलासनसृष्टिमाह पुनश्चेति । पुनश्चसर्वदृग्देवोनारायणोध्यानरूपंतपोऽकरोत्तस्यतपसाश्रमंप्राप्तस्यललाटात्स्वेदस्यबिंदवोऽपतंस्तेस्वेदबिंदवएवब्रह्मांडस्यतदंतर्वर्तिलोकानांचसर्जनसमर्थनाराख्यजलरूपाःसंपन्नाइत्यर्थः १०६२ अप्स्विति । सदेवोनारायणस्तासुस्वेदरूपास्वप्स्वात्मीयंयद्वीर्यपरंसर्वोत्कृष्टंतेजोरूपंतदवासृजत्क्षिप्तवांस्तच्चब्रह्मांडाकारेणपरिणतमितिद्वयोरर्थः १०६३

१०६४ अंडस्येति । तस्यांडस्यमध्येनाभिसरोरुहाद्ब्रह्माऽजायतयोब्रह्माचतुर्मुखःप्रागादिमुखक्रमेणच्छंदसांगायत्रीत्रिष्टुब्जगत्यनुष्टुभांव्याहृतीनांमहश्चतुर्थीकानांवेदानांचऋगादीनामथर्वांतानां हेतुरित्यर्थः १०६५ क्रममेवस्फुटयति पूर्वेति । तेपूर्वोक्ताऋग्वेदादयःप्रतिलोमक्रमेणच्छंदोंताःपूर्वपश्चिमोत्तरदक्षिणमुखेभ्यउत्पन्नाज्ञेयाइत्यर्थः नकेवलमेतएवोत्पन्नाःकिंत्वन्यदपिविश्वंब्रह्मणःसकाशात्स्वायंभुवादिरूपाज्जातमित्यर्थः १०६६ एवंजगज्जन्मादिलक्षणैर्नारायणोऽद्वितीयत्वेनज्ञेयइत्याह एवमेवेति । तुशब्दोऽवधारणे तथाचयद्यपिमाययासनानाभवतितथाप्यनानैव वस्तुतोभेदभ्रमैःसनिदानैर्वर्जितत्वादित्यर्थः १०६७ अयंविवेकेननारायणलाभविधिरुक्तस्तदशक्तौतुदशमेनारायणीयव्याख्यानेव्याख्यातेनसहस्रशीर्षमित्यादिनास्वराडित्यंतेनग्रंथेनप्रोक्तंयोगं कृत्वातंसाक्षात्कुर्यादित्याह यदैवमितिद्वाभ्यां । यदाएवमुक्तविवेकविषयाअयंनारायणोज्ञातुंनशक्यतेतदानारायणीयप्रकरणेउक्तंप्रदर्शितंसहस्रशीर्षमित्यारभ्यस्वराडित्यंतेनग्रंथेनात्रोपनिषद्युक्तमुपायंयोगरूपमाश्रित्यएवंविवेकवदेवसनारायणोज्ञातव्यःसाक्षात्कर्तव्योऽधिकारिणाभवतीतिद्वयोरर्थः १०६८ । १०६९ फलवाक्यतात्पर्यमाह अस्येति । अस्यमहोपनिषत्संज्ञस्य

वीर्यंतदंडमभवत्तत्राक्षिप्तंमहात्मना ॥ हैमंमनोरमंचित्रंसूर्यकोटिसमप्रभम् १०६४ अंडस्यांतरभूद्ब्रह्माभूतानामादिमःस्मृतः ॥ छंदोव्याहृतिवेदानांहेतुर्योऽत्रचतुर्मुखः १०६५ पूर्वापरोत्तरासव्यवक्त्रतस्तत्रऋगादयः ॥ ब्रह्मणोविश्वमेतद्धिजातंसर्वंचराचरम् १०६६ एवमेवजगत्स्रष्टाह्येकएवस्वमायया ॥ नानाभवत्यनानातुभेदभ्रमविवर्जितः १०६७ यदैवंशक्यतेज्ञातुंनैवायमधिकारिणा ॥ तदानारायणीयोक्तमुपायंचात्रकीर्तितम् १०६८ सहस्रशीर्षमित्यादिस्वराडंतोक्तमेवहि ॥ आश्रित्यैवंसहृदयेज्ञातव्योत्राधिकारिणा १०६९ अस्यग्रंथस्यमाहात्म्यमप्यत्रविविधंस्मृतम् ॥ विज्ञानस्यतुकिंभूयोयतोमायालयंव्रजेत् १०७० एवंमहोपनिषदिकथितंज्ञानमीरितम् ॥ आत्मप्रबोधेकथितंशृणुवक्ष्यामितेधुना १०७१ उपायंप्रथमंप्राहुरत्रोपेयस्यलब्धये ॥ आत्मावाप्तावुपायौद्वौप्रणवोष्टाक्षरस्तथा १०७२ प्रणवोवाचकस्तस्यप्रत्यगानंदरूपिणः ॥ अष्टाक्षरोपिनैवंवैवाच्यवाचकयोर्भिदा १०७३ अकारश्चाप्युकारश्चमकारोमिलितंत्रयम् ॥ ओंकारस्तेनसहितोनमोनारायणायच ॥ अष्टाक्षरस्तुसंप्रोक्तःसर्वसिद्धिविधायकः १०७४ एतयोर्जपतोयोगीयजनात्समुपासनात् ॥ ब्रह्मविज्ञानउत्पन्नेसंशयादिविवर्जिते ॥ मुच्यतेस्वंसविज्ञायजन्मससारबंधनात् १०७५

माहात्म्यंश्रीप्रियत्वादिगुणप्रयोजकत्वलक्षणंविविधंबहुधोक्तंयदासिद्धंतदाफलभूतविज्ञानस्यदोषबीजाविद्यायाउच्छेदहेतोर्माहात्म्यंकिमुवक्तव्यमित्यर्थः १०७० उपक्रांतसमाप्तिंदर्शयन्नोंनमइत्यंतान्यात्मप्रबोधोपनिषद्वाक्यान्येकपंचाशच्छ्लोकैरुपबृंहयितुंप्रतिजानीते एवमिति १०७१ तत्रादौमंत्रद्वयात्मकउपायोब्रह्मात्मज्ञानायोक्तइत्याह उपायमिति । अत्रात्मप्रबोधोपनिषदिप्रथममुक्तमितिशेषः प्राहुःपठंति उपेयस्यब्रह्मात्मविद्यारूपफलस्य १०७२ प्रणवइति । तथाचप्रत्यगानंदःसर्वांतरमद्वितीयंचवस्तुतद्रूपस्यात्मनः प्रणवोवाचकएवमष्टाक्षरोपिवाचकः अत्रवाच्यवाचकयोर्भिदाभेदोनचिंत्यः श्रुतौसामानाधिकरण्यनिर्देशेनवाच्यवाचकयोरभेदानुसंधानस्यकर्तव्यतासूचनादितिभावः १०७३ मंत्रयोःस्वरूपमाह अकारइति । संहताकारादिवर्णत्रयात्मकःप्रणवमंत्रस्तदादिकंनमःपदंचतुर्थ्यंतनारायणपदंचएतदुभयात्मकोऽष्टाक्षरः एतन्मंत्रद्वयंसर्वेप्सितप्रदमित्यर्थः १०७४ अनयोःपरमपुरुषार्थेविनियोगमाह एतयोरिति । एतयोरुक्तमंत्रयोर्जपात्तथा तयोर्मंत्रविषयाकार्यभूतंयद्यजनंबाह्यांतरदेवतापूजनंतस्मात्तथाएतयोर्मात्रापादाद्यभेददर्शनावृत्तिरूपोपासनाच्चब्रह्मतत्त्वनिश्चयउत्पद्यते ततःस्वमात्मानंब्रह्मत्वेनसाक्षात्कृत्यसयोगीमुच्यतेइत्यर्थः १०७५

यावन्नेति । अनयोर्मंत्रयोर्वाच्यस्यब्रह्मणोयन्निर्गुणंरूपम् कीदृशम् मोक्षस्यसविलासाज्ञानरूपबंधध्वंसस्यआलंबनमधिष्ठानमतएवाद्वयंतद्यावत्साक्षान्नभवेत्तावत्तस्यब्रह्मण:सगुणंरूपंध्यायेदि त्यर्थः १०७६ तच्चसगुणंरूपंब्रह्मण्यइत्यादिमंत्रेणोक्तमित्याह सगुणमिति । यद्यपिसगुणंब्रह्मविष्णुरुद्रादिरूपैर्बहुविधंप्रसिद्धंश्रुतिस्मृत्यादौतथापीदंरूपंनारदाद्यैरत्यंतादरेणोक्तत्वाच्चिरतिश यमित्यर्थः १०७७ इदंकिमतआह यज्ज्योतिरिति । यज्ज्योतिश्चिद्घनंदेवकीवसुदेवद्वारास्वस्मिन्नागतंप्रादुरकरोत् किमर्थं भौमस्यभूलोकगतस्यब्रह्मणोवेदस्यब्राह्मणजातेस्तपसश्चवायु स्यैरक्षायैज्वलंतमग्निमरणिरिवेत्यर्थः ' वेदस्तत्त्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः ' इत्यमरः १०७८ यत्कर्तृकपरिग्रहेण गुरुपविद्याच्छांदोग्यतृतीयप्रपाठकोक्तावैतृष्ण्यहेतुतालक्षणांप्रशंसांगतेत्याह घो रइति । गोत्रेणांगिरसोघोरनामकःकश्चिद्ब्राह्मणोयस्मैदेवकीपुत्रायश्रीकृष्णायतांप्रसिद्धांविद्यांपौरुषींपुरुषयज्ञभावनात्मिकांषोडशाधिकशतवर्षायुषोनिरंतरायताम्प्रयोजिकामदात् दत्तवानित्य र्थः । किंचयस्यपरमेश्वरत्वायनप्रमाणान्वेषणाप्रत्यक्षसिद्धत्वादित्याह सएषइति । साक्षात्प्रत्यक्षेणैवपुरुषःसिद्धःसर्वात्मताक्रोयतोविश्वरूपधरः ' जनन्याकुरुभिःसल्याथोतंकमुनिनापियः विश्वरूपधरोऽलोकिनिरुद्धोपिसनोगतिः ' । अतएवस्मृतिमात्रेणसमस्तानर्थहरइत्यर्थः १०७९ अस्यप्रभावःस्मृतिषुबहुधाप्रसिद्धइत्याह वेदेति । प्रथमपादेभारतादौ द्वितीयेश्रीभाग वते तृतीयेपुराणेष्वागमेषुचेतिशेषः १०८० यद्यपीति । यद्यपिसर्वादेवताअस्यैवश्रीकृष्णस्यविभूतयोरूपाणितथापिताःसर्वाःप्रतिबिंबस्थानीयाबिंबस्थानीयमेनंदेवकीसुतंविहायमायाया

यावन्ननिर्गुणंब्रह्ममोक्षालंबनमद्वयम् ॥ आविःस्याद्धृदयेतावत्सगुणंब्रह्मचिंतयेत् १०७६ सगुणंब्रह्मसंप्रोक्तंविष्णुरुद्रादिभेदतः ॥ नानाविधंनारदाद्यैरिदम त्यंतमादरात् १०७७ यज्ज्योतिर्देवकीदेवीवसुदेवादजीजनत् ॥ भौमस्यब्रह्मणोगुप्त्यैदीप्तमग्निमिवारणिः १०७८ घोरआङ्गिरसोयस्मैविद्यांतांपौरुषींम दात् ॥ सएषपुरुषःसाक्षाद्विश्वरूपधरोहरिः १०७९ वेदव्यासेनकथितःशुकेनचमहात्मना ॥ नारदाद्यैरनेकैश्चमुनिभिस्तत्त्ववेदिभिः १०८० यद्यप्यस्यैव सर्वाःस्युर्नानारूपाविभूतयः ॥ तथापिमायावशगास्ताविनादेवकीसुतम् १०८१ क्वचित्कामःक्वचित्क्रोधःक्वचिल्लोभःक्वचित्परम् ॥ मदादिकंनकृष्णेस्तिकिं चिदेतत्कदाचन १०८२ अर्जुनस्यसहायोयंपांडवानांचदैवतम् ॥ भ्राताचबलभद्रस्यकनिष्ठोमदनस्यच ॥ पिताब्रह्मण्यइत्युक्तोनिखिलेपिजगत्त्रये १०८३ देहेयस्यपरिक्षीणंकौशलंविश्वकर्मणः ॥ रूपलावण्यसौभाग्यगुणादिविषयोमहान् १०८४

वशंधर्मसंबंधंप्राप्ताः उपाधेःप्रतिबिंबपक्षपातित्वादित्यर्थः १०८१ मायावशगत्वमेवस्फुटयति । क्वचित्कामइति । क्वचिद्विभूतौपरमुक्तेभ्योन्यन्मदप्रभृतिदूषणम् कृष्णेत्वेतदुक्तजातीयंदूष णंनकिंचिदस्तिकालत्रयेपीत्यर्थः १०८२ तत्रोक्तदोषाणामभावंप्रतिलोमक्रमेणलोकदृष्ट्याप्याह अर्जुनस्येति । पार्थस्यसारथ्यान्नमदादिकम् दुर्योधनंविहायपाण्डवपक्षपातान्नलोभः । ब लभद्रात्युक्तीरनुजत्वेनतितिक्षतःकःक्रोधः मदनतातेकिंमदनस्यबलमितिभावः किंचमहाभारतेस्कंदोपाख्याने ' मदीयांशक्तिनिखातामब्रह्मण्यःकःसमुद्धरेत् ' इति स्कंदेनोक्तेसतिइंद्रेतत्रबलक्ष येणमूर्छितेपिभगवतोपेंद्रेणवामहस्तेनतस्याःशक्तेश्चालनात्स्कंदस्यब्रह्मण्यतागर्वःपरिहृतइतिप्रसिद्धंतत्स्मारयन्नाह ब्रह्मण्यइति । तथाचसत्यरूपतपसःसंरक्षणायदेवकीपुत्रतांभजतोहयग्रीवादिरूपैर्म धुप्रभृतिदैत्याग्वेदरक्षणायनिघ्नतोहरपूजायांसत्यपालनायाक्ष्णापुंडरीकसंख्यांपूरयतोविष्णुरूपेणभृगुपादांकंचधारयतःश्रीकृष्णात्कोन्योब्रह्मण्यइतिभावः १०८३ देहेइति । विश्वकर्मणोवि धातुःकौशलंयस्यदेहेपरिक्षीणंकुंठतांगतंनप्रवृत्तमितियावत् भगवदिच्छामात्रतंत्रत्वादितिभावः यश्चभगवान्रूपादिगुणानांविषयोनिवासःमहान्सर्वोत्कृष्टः तत्ररूपंवर्णःलावण्यंमुक्तावदंगेषुकां तिः सौभाग्यंमनोहरत्वम् १०८४

किंचयस्मिन्कामादिनापिमनोलग्नंमोक्षफलंप्रसूतेइत्याह गोप्यइति । यस्यविपयतयायत्संबंधिनः कामात्सक्तचित्तागोप्योदिवंगताइतिसंबंधः एवमग्रेपि चैद्यःशिशुपालः संबंधोबांधवत्वबुद्धिः स्नेहःसख्यं भक्तिराराध्यत्वबुद्धिः । दिवमितिपदंविवृणोति वैकुंठमिति । कीदृशंवैकुंठं ब्रह्मलोकेत्याकाराआख्याप्रसिद्धिर्यस्यसतथातं तथाचहिरण्यगर्भलोकसंसृष्टस्तदुपरिष्टाद्वैकुंठलोकइतिभावः यतोब्रह्मलोकाद्ब्रह्मणाहिरण्यगर्भेणसहपरब्रह्मभावंगतःसंन्यासीनावर्ततेपुनःसंसारेनपततीतिद्वयोरर्थः १०८५ । १०८६ तस्यदेशंवर्णंसौभाग्यंचाह सदेवइति । द्वारकायांमथुरायांगोपबालकत्वेनगोकुलादौचस्थितोऽपेयइतिपूर्वदलार्थः उत्तरार्धंस्फुटम् १०८७ लावण्यमाह इंद्रेति । अंगानिवर्णयति आजान्वित्यादिना । कंबुवत्त्रिरेखाग्रीवायस्यसतथा महाहनुरित्यनेनगंडयोरुन्नतत्वंध्वनितंच १०८८ कर्णांतेति । कर्णपर्यंतविस्तृतनयनः तीक्ष्णोन्नतानासायस्यसतथा रक्तयोरोष्ठयोःप्रतिफलितंस्मितंयस्यसतथा शोभनंललाटंकपोलेचयस्यसतथा १०८९ नखेति । नखेभ्योदंतेभ्यश्चसमुद्भूताभिर्दीप्तिभिश्चंद्ररुग्जेता विशालमुन्नतंचयद्वक्षस्तद्गतेनविप्रस्यभृगोःपादांकेनविराजितः १०९० वृत्तेति । वृत्तंमंडलाकारंपीनमुन्नतंचयत्करद्वयंपा

गोप्य कामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥ संबंधाद्वृष्णयःस्नेहात्पांडवाद्रौपदीतथा ॥ नारदाद्याश्चमुनयोभक्त्यायस्यादिवंगताः १०८५ वैकुंठंब्रह्मलोकाख्यं यतोनावर्ततेगतः ॥ ब्रह्मणासहसंन्यासीब्रह्मैवपरमंपदम् १०८६ सदेवोद्वारकावासोमाथुरोगोपबालकः ॥ सजलोजलदोयद्वत्तद्वन्नीलोतिशोभनः १०८७ इंद्रनीलमणिप्रख्यःसूर्यकोटिसमप्रभः ॥ आजानुबाहुःसुशिराःकंबुग्रीवोमहाहनुः १०८८ कर्णांतनयनस्तीक्ष्णनासोरक्तोष्ठसुस्मितः ॥ सुललाटकपोलश्चसुकर्णोनीलकुंतलः १०८९ नखदंतसमुद्भूतभाभिर्भर्त्सितचंद्रमाः ॥ विशालोन्नतवक्षःस्थविप्रपादविराजितः १०९० वृत्तपीनोन्नतकरपादपद्मद्वयांचितः ॥ मांसलोगुल्फजान्वंसकूर्परादिस्थलेष्वपि १०९१ कृशोदरोतिपीनांगोवज्रसंहननोयुवा ॥ पीनोन्नतमहाशोभजघनेनविराजितः १०९२ वर्तुलाभिःसुदीर्घाभिःस्वांगुलीभिश्चशोभितः ॥ करयोःपादयोर्युग्मेशाखाभिरिवपादपः १०९३ चतुर्भुजउदारांगःपीतकौशेयवस्त्रधृक् ॥ कांचीगुणसमाबद्धघंटिकामधुरस्वरः १०९४ अनेकरत्नसंयुक्तवलयांगदनूपुरः ॥ नानांगुलीयसंलग्नरत्नकोटिविराजितः १०९५ ग्रैवेयेणसमंकंठेदधानःकौस्तुभंमणिम् ॥ हारंवक्षसिमुक्तानांसहितंवनमालया ॥ कर्णयोर्दीप्यतोर्देवोबिभ्रन्मकरकुंडले १०९६ मयूरपिच्छसदृशंहेमरत्नादिनिर्मितम् ॥ बिभ्राणोमुकुटंतद्वत्तिलकंचातिशोभनम् १०९७

दद्वयंचतद्रूपाभ्यांपद्मद्वयाभ्यामंचितोराजितः गुल्फादिदेशेपुमांसलःपीनःकूर्परोभुजसंधिः १०९१ कृशोदरइति । वज्रसंहननोघनांगविन्यासः युवाषोडशवर्षावस्थः पीनेनोन्नतेनमहाशोभेनचजघनेनविराजितः १०९२ अंगुलीर्वर्णयति वर्तुलाभिरिति । स्पष्टम् १०९३ चतुर्भुजइति । उदारंमहदंगंशरीरंयस्यसतथा 'उदारोदातृमहतोः' इत्यमरः कौशेयंकृमिकोशोत्थमितिच कांच्यागुणेसमाबद्धानांघंटिकानांमधुरःस्वरोयस्यसतथा १०९४ अनेकेति । अनेकरत्नघटितानिवलयादीनिभूषणानियस्यसतथा वलयंप्रकोष्ठभूषणं अंगुलीयान्यंगुलिभूषणानि कोटिशब्दोबहुत्वसंख्यानवचनः १०९५ ग्रैवेयेणेति । ग्रैवेयंग्रीवाभूषणंतेनसहकौस्तुभंकंठेदधानः मुक्ताहारंवनमालांपत्रपुष्पमयींमालांचवक्षसिदधानः मकराकारेकुंडलेचकर्णयोर्दधानः १०९६ मयूरेति । मयूरपक्षैःसदृशंशंतेतान्यामं सदृशमितिपाठेसमानवर्णं हेमादिमयंमुकुटंतथाकेसरतिलकंचदधानः १०९७

रक्षामिति । तथारक्षांकेशग्रंथिनींहेममयतंतुलक्षणांमूर्द्धनि धम्मिल्लेबिभ्रदितिसंबंधः कीदृशींरक्षां चित्रवर्णआकारोयस्याःसातथा तस्यांश्चित्रवर्णत्वेहेतुगर्भविशेषणद्वयं अनेकेत्यादि नानावि धपुष्पप्रभयारत्नानांप्रभयाचचित्रामितिभावः त्रिलोकीवर्तिनारीणांमनोनयनयोर्हर्षदः ९८ शंखमिति । दक्षिणाधस्तनकरमारभ्यप्रदक्षिणक्रमेणशंखादिकंदधदितिसंबंधः । तथाचदक्षिणेऽ धस्तनेकरेशंखमूर्ध्वेगदांवामोर्ध्वेकरेपद्मंतदधस्तनेचक्रमित्यर्थः ९९ गोविप्रेति । गवादीनामार्तिहरःदैत्यांशत्वेनदेवादिद्रुहांराज्ञामार्तिदः ११०० अवतारकालमाह यदेति । यदायदासता मार्तिस्तदैवप्रादुर्भावशीलइत्यर्थः ११०१ फलितमाह एषइति । एषदेवकीनंदनरूपःसर्वदेवविभूतिकउक्तमंत्रयोःप्रतिपाद्यःसगुणरूपस्तावद्ध्येयोयावन्निर्गुणब्रह्मरूपेणनसाक्षाद्भवतीत्यर्थः २ अथेत्यादेःप्रकाशमित्यंतस्यार्थंक्रमेणार्थमाह सूर्यैतिद्वाभ्यां । हृदयकमलेतदुपलक्षितेसूर्यमंडलमध्यदेशेगोकुलादिदेशेवास्थितंतत्तल्लीलादिगुणैर्युतमेनंध्यायतोयोगिनोहार्दपद्मगतेचित्तेआत्मतया स्थितःप्रयत्नमंतरापिभासमानोभवेत्तदानिर्गुणात्मनोभानेदीपवद्धेतुर्भवतीतिद्वयोरर्थः ११०३ । ११०४ सर्वभूतस्थमित्यादेःसीदतीत्यंतस्यार्थमाह एतदितिद्वाभ्यां । यतएतस्यश्रीकृष्ण

रक्षांहेममयींचित्रवर्णाकारांचमूर्द्धनि ॥ धम्मिल्लेऽनेकपुष्पौघमध्यगांरत्नराजिताम् ॥ बिभ्रल्लोकत्रयीनारीमनोनयननंदनः १०९८ शंखंचैवगदांचैवपद्मंचक्रं तथैवच ॥ दक्षिणाधःकरात्कृष्णःप्रादक्षिण्याद्दधत्सदा १०९९ गोभूविप्रसतामार्तिनाशनश्चार्तिदस्सदा ॥ धर्मदेवद्रुहांतद्वद्भूभुजांदैत्यजन्मनाम् ११०० यदाय दार्तिर्भूमस्यग्लानिःस्याद्धितदातदा ॥ अवतारमसौकृष्णःकुरुतेदेवकीसुतः ११०१ एषनारायणःसाक्षात्सर्वदेववपुःपुमान् ॥ ध्येयःसगुणरूपोयंमंत्रयोरधिदैव तम् ॥ यावन्ननिर्गुणंब्रह्मभातिचित्तेत्रयोगिनः ११०२ सूर्यमंडलमध्यस्थेहृदिपद्मेथवापुनः ॥ गोकुलादौचवाबाह्येदेशेतत्तद्गुणैर्युतम् ॥ ब्रह्मण्यंदेवकीपुत्रंध्याय तोमधुसूदनम् ११०३ हार्देपद्मेयदाचित्तस्थितआत्मतयातदा ॥ दीपवत्स्वात्मनोभानेहेतुर्भवतिसर्वथा ११०४ एतद्ध्यानादयंयोगीसर्वभूतस्थितंहरिम् ॥ ब्रह्मैकंकारणंनित्यंशोकमोहविवर्जितम् ११०५ यतआत्मतयायातिशुद्धांतःकरणःपुमान् ॥ कृष्णंध्यायंस्ततोयोगीनसीदतिकदाचन ११०६ द्वैतमद्वैतमेवं स्याज्ज्ञातेद्वैतंनविद्यते ॥ संसारादपिसंसारंदुःखदादपिदुःखदम् ॥ सयातिपुरुषोभेदंयआत्मनिविलोकयेत् ११०७ यतोमायामयेप्यत्रभेदःकोपिनविद्यते ॥ भेदवच्चततःपश्यन्दुःखंयात्यतिदारुणम् ११०८ विपरीतदृशासर्वःक्लेशंलोकोधिगच्छति ॥ अद्वैतेद्वैतदृष्टिश्चविपरीताप्रकीर्तिता ११०९

स्यध्यानातशुद्धांतःकरणःपुमान्सर्वांतरादिलक्षणंब्रह्मआत्मत्वेनयातिलभतेततइदंवाक्यमनुपचरितार्थमेव इदंकिं कृष्णंध्यायन्नसीदतीतिद्वयोरर्थः ११०५ द्वैताद्वैतमित्यादेरर्थमाह द्वैत मिति । एवंश्रीकृष्णध्यानस्यसंसिद्धौसत्यांसर्वंद्वैतमद्वैतभावंगच्छेद्यतःपरमार्थेज्ञातेसतिद्वैतंनतिष्ठतिकल्पितत्वादित्यर्थः । अद्वैतस्याभयतांस्फुटयितुंद्वैतस्यानर्थतामाह संसारादिति । पुनःपुनः संसारमतिदुःखदंसयातियआत्मनिभेदंपश्यतीत्यर्थः ११०७ भेददर्शनस्यानर्थत्वमप्यनृतविषयेत्याह यतइति । मायामयेमायाप्रधानेसगुणइतियावत् एतादृशेप्यत्रात्मरूपेकोपिभेदोना स्तिसर्वस्यात्मविवर्तत्वात्प्रकृतिविकाराभेदन्यायेनापिभेदस्यायुक्तत्वादितिभावः । ततोभेदस्यकुत्राप्यसत्वाद्भेदविशिष्टमात्मरूपंपश्यन्सन्नतिदारुणंदुःखंयातीतियुक्तमित्यर्थः ११०८ युक्त मेवस्फुटयति विपरीतेति । सर्वःसर्वजातीयोलोकोजनोविपरीतेनविपादावंमृतत्वाद्यवगाहिनादर्शनेनदुःखंयातीतिप्रसिद्धं तथात्मन्यद्वैतस्वभावेद्वैतदर्शनमपिविपरीतंभ्रमरूपमित्यर्थः ११०९

अत्रयथापरार्थदंडमाह मृत्योरिति । द्वैतवद्भेदविशिष्टंयथाभवतितथात्मनिदर्शनशीलस्यपुनःपुनर्मृत्युःफलंभवति अयंभेददर्शिनंप्रतिप्रसक्तःपुनःपुनर्मृत्युरनुचितोऽन्याय्योनभवतियतो बीजस्यभावानुसार्येवफलंप्रसिद्धमित्यर्थः एतदुक्तंभवति गौणात्मानंपुत्रादिकंमिथ्यात्मानंदेहादिकंचापरस्यघ्नन्राज्ञाएंकृत्वारंवधेनदंड्यतेमुख्यात्मानंविदारणात्मकेनभेदेनघ्नन्कथंनपुनःपुनर्मृ त्युंगच्छेदिति तदुक्तं 'अन्यथासंतमात्मानं' इत्यादि ११११० ततोस्यसर्वांतराद्वितीयरूपस्यकृष्णस्यात्मत्वेनदर्शनमेवसर्वदुःखप्रहाणहेतुरित्याह ततइति । एनंश्रीकृष्णम् ११११ । ११२ महावाक्यार्थस्यप्रथमाध्यायेव्याख्यानंकृतमितिसूचयन्संक्षिप्याह यआत्मेति । यआत्माप्रज्ञारूपःकथितःप्रथमेऽध्यायेसएवेहऐतरेयशाखागतायामात्मप्रबोधोपनिषदिप्रज्ञानेत्रमितिवाक्येनोक्त इत्यर्थः तथाचप्रज्ञासंविद्रूपात्रैनिर्वाहिकायस्यविश्वस्येत्यादिरक्षरार्थस्ततएवविस्तरेणज्ञेयइतिभावः येयंप्रज्ञासासर्वस्यप्रतिष्ठाआधारोयत्रचविश्वस्यप्रतिष्ठाकालत्रयेपिस्थितिरूपातद्ब्रह्मेतिप्रकी र्तितंलक्षितंवेदान्तेष्वित्यर्थः १११३ प्रज्ञेति । प्रज्ञारूपत्वेनसर्वांतरंप्रतिष्ठात्वेनाद्वितीयंचएतदुक्तमंत्रार्थभूतंब्रह्मयदात्मत्वेनज्ञातंतदासर्वांसर्वप्रकारांदेहाद्यनात्मस्वात्मधीरूपामविद्यांपरित्यज्यत्र

मृत्योर्मृत्युस्ततस्तस्यद्वैतवद्दर्शिनोभवेत् ॥ नैवानुचितरूपोयंफलंबीजोपमंयतः १११० ततोहृदयपद्मस्यमध्येभेदविवर्जितम् ॥ आनंदात्मानमद्वैतंसर्वबुद्धिप्रकाशकम् ११११ आधारभूतंजगतांप्रकाशानांचकारणम् ॥ एनमात्मतयाजानन्नदुःखंकिंचिदाव्रजेत् १११२ यआत्माकथितःप्रज्ञासएवेहनचापरः ॥ प्रज्ञायांसाप्रतिष्ठास्याज्जगतोस्याखिलस्यहि ॥ प्रतिष्ठायत्रसंप्रोक्तातद्ब्रह्मपरिकीर्तितम् १११३ प्रज्ञाप्रतिष्ठाब्रह्मैतज्ज्ञातमात्मतयायदा ॥ तदासर्वंपरित्यज्य देहाद्यात्मधियंपुमान् १११४ स्वर्गादिलोकसंस्थानान्कामान्नानाविधानपि ॥ उपभुज्यपरंब्रह्मयात्यसौब्रह्मणासह ॥ अत्रैववापरंब्रह्मगच्छेत्कुशलभावनात् ॥ १११५ यस्मिन्ब्रह्मणितज्ज्योतिरजस्रंस्वप्रकाशनम् ॥ आनंदश्चसदैवैकरूपातिशयवर्जितः ॥ तस्मिन्ब्रह्मणिसोऽभीष्टंप्रार्थयेच्छांतधीःसदा १११६ देहिस्वरूपंभगवन्वासुदेवस्वरूपधृक् ॥ देवकीनयनानंदसर्वदानंदनंदन १११७ एवंसंप्रार्थ्यमेधावीभगवंतमधोक्षजम् ॥ एवंचजायतेबोधोब्रह्माहमितियोगिनः ॥ आत्मप्रबोधोपनिषत्तत्त्वंब्रह्मसमीरितम् १११८ कैवल्योपनिषत्प्रोक्तंशृणुतत्त्वमिहाधुना ॥ आश्वलायननामात्रपृष्टवान्यत्स्वयंशुभम् १११९

ब्रह्मैवयातीत्युक्तंभवेत् १११४ [illegible] स्वर्गादीति । असौविद्वान्सरागश्चेत्स्वर्गादिगतान्भोगानुपभुज्यापि ब्रह्मणा[illegible]इत्यर्थः १११५ यज्ज्योतिरित्यादेरर्थमाह यस्मिन्नित्यादिना । यस्मिन्ब्रह्मणिस्वयंप्रकाशंप्रज्ञारूपंज्योतिर्निरतिशयआनंदश्च [illegible]इत्यर्थः १११६ [illegible] देहीति । हेभगवन्वासुदेवहेदेवकीनयनानंदहेनंदनंदनसर्वदासनातन [illegible]इत्यर्थः १११७ [illegible] एवमिति । मेधावीभवतीतिशेषः उपसंहरति आत्मेति १११८ [illegible] कैवल्योपनिषदिति । यदाश्वलायननामा[illegible] [illegible]इत्यर्थः १११९

ना. पु.

॥ ४७ ॥

तत्रप्रथमायाश्चार्थमाह ब्रह्माणमिति । आश्वलायनोनामकश्चिद्वेदाचार्योब्रह्माणंपितामहंजिज्ञासयैत्यप्राप्यइदंपृष्टवानित्यर्थः ११२० इदंकिमतआह जानीहीति । ज्ञाधातुरंतर्भावितण्यर्थोयं तथाचब्रह्मणोविद्यांज्ञापयेत्यर्थः कीदृशीं सर्वविद्याभ्यःश्रेष्ठांसद्भिःशमादिसंपन्नैर्हृदयांबुजेसेव्यमानांनिगूढामनधिकारिभ्योगोपितांचेत्यर्थः ११२१ सर्वेति । यथाविद्ययाजीवःसर्वपापंपरिहृत्यपरादव्याकृतात्परंनिर्विशेषंपुरुषंयातीत्यर्थः ११२२ तस्मैइत्यादेरर्द्धचस्यार्थमाह एवमितिद्वाभ्यां । स्पष्टम् ११२३ तत्रश्रद्धाभक्तिश्चित्तवृत्तेर्ब्रह्माकारतालक्षणंध्यानंचएतानित्रीणिसाधनानीत्याह आस्तिक्येति ११२४ यथाचश्रद्धादीनित्रीणिसाधनानितथासंन्यासोपीत्याह नकर्मणेति । कर्मणाश्रौतादिनाप्रजयापुत्रादिनाधनेनदैवमानुषवित्तेनचेदमपरोक्षंब्रह्मज्ञानंजायते किंतुतैरुपायैर्जातमपिब्रह्मज्ञानंपरोक्षमेवजायतेइत्यर्थः कर्मत्यागलक्षणसंन्यासेनैवापरोक्षसिद्धिरितिभावः ११२५ तस्यसंन्यासलभ्यतामेवस्फुटयन्परेणेत्यादेरर्थमाह स्वर्गादिति । स्वर्गान्नाकात्परमप्यमृतंब्रह्मगुहानिहितत्वेनस्वप्रकाशंभवति तथाचपरोक्षतयातज्ज्ञानंप्रमेयानुगुणत्वाभ्रमएवेतिभावः अतःसर्वदोषहीनायतयएवतदपरोक्षयंतीत्याह यच्चित्यादिना । अमलाः

टी० अ०

११

ब्रह्माणंसर्वपितरमाश्वलायनएत्यतम् ॥ इदंपप्रच्छमेधावीब्रह्मविद्येच्छयापुरा ११२० जानीहिभगवन्विद्यांब्रह्मणःश्रेष्ठरूपिणीम् ॥ सेव्यमानांसदासद्भिर्निगूढांहृदयांबुजे ११२१ सर्वपापंययाजंतुरचिरात्प्रत्यपोह्यच ॥ परात्परंमहेशानंपुरुषंयात्यसंशयम् ११२२ एवंपृष्टस्तदातेनभगवान्प्रपितामहः ॥ तस्माउवाचयांविद्यांतांवक्ष्याम्यहमद्यते २३ आस्तिक्यबुद्धिसंयुक्तोगुरुभक्तिसमन्वितः ॥ आत्मनोध्यानयोगेनब्रह्मविच्चप्रजायते २४ नकर्मणानप्रजयानधनेनकदाचन ॥ ब्रह्मज्ञानमिदंकिंतुपारोक्ष्येणैवजायते ११२५ स्वर्गादप्यधिकंप्रोक्तमानंदात्मस्वरूपकम् ॥ स्वप्रकाशामृतंयत्तुप्रयांतियतयोमलाः ११२६ वेदांतज्ञानसंपन्नानिश्चितार्थाःसदैवहि ॥ विशुद्धधिषणाब्रह्मलोकेवात्रनचापरे ११२७ ब्रह्मलोकेयदायांतिपरंब्रह्मसनातनम् ॥ ब्रह्मणासहतेसर्वेतदायांतिनचान्यथा ११२८ योगमेवंप्रकुर्वीतपुरुषोब्रह्मवित्तये ॥ एकांतेनिर्मलेदेशेसुखमासनमाश्रितः ११२९ शौचंयथाविधानंचविधायविगतश्रमः ॥ समंकृत्वाशिरोग्रीवाशरीरंचजितासनः ११३० संन्यासीसंनिरुद्धचैवसर्वबाह्यांतरेंद्रियम् ॥ गुरुंचभक्तिसहितःप्रणिपत्ययथाविधि ११३१ हृत्पुंडरीकंविमलंविचिंत्यार्कादिसंयुतम् ॥ रागद्वेषादिसंशून्यंतन्मध्येचिंतयेत्पुनः ११३२

सर्वेगतिबंधहीनायतयएवयद्ब्रह्मप्रयांतिसाक्षात्कुर्वंतीत्यर्थः ११२६ यतीन्विशिनष्टि वेदांतेति । वेदांतामहावाक्यानितेषांज्ञानंतात्पर्यावधारणंतद्रूपश्रवणसंपन्नानिश्चितार्थामननसंपन्नाविशुद्धधियोनिदिध्यासनपराश्चैतेयतयो ब्रह्मलोकेच्छालक्षणगतिबंधसत्वेब्रह्मलोकेतदभावेत्विहैवतत्प्रयांतीतिपूर्वेणसंबंधः ११२७ तत्रब्रह्मलोकेगतानांपरब्रह्मप्राप्तिस्तुहिरण्यगर्भांतकालएवभवतीत्याह ब्रह्मलोकइति ११२८ अथध्यानयोगाभिनयपराणांविविक्तेत्यादिवाक्यानामर्थमाह योगमेवमिति । एवंवक्ष्यमाणविधया वित्तिर्लाभः अंगानिसूचयति एकांतेइत्यादिना । सुखंक्षोभनिमित्तरहितमासनंचैलाजिनकुशोत्तरलक्षणं अत्रचतुर्थंगतक्रियापदेनसंबंधः ११२९ शौचमिति । यथाविधानंयथाशास्त्रं विगतश्रमःशौचाद्यनुष्ठानश्रमादनुद्विग्नः शिरश्चग्रीवाचशरीरंदेहमध्यंचएतानिऋजूनिकृत्वायतोजितासनोबद्धपद्माद्यासनकः ११३० संन्यासीति । स्पष्टम् ११३१ हृत्पुंडरीकमिति । अर्कादिसंयुतंसूर्यचंद्राग्निमण्डलैर्युक्तंरागादिभीराजसधर्मैर्मलैस्तामसैर्मोहादिभिश्चरहितंहृत्पुंडरीकंपंचच्छिद्रादिलक्षणंविचिंत्यध्यात्वातन्मध्येवक्ष्यमाणरूपंपरमेश्वरंचिंतयेत् ११३२

॥ ४७ ॥

तत्रादौनिराकारंध्येयमाह अशेषेति । अव्यक्तंशब्दादिभूतगुणरहितं स्फुटमन्यत् ११३३ अनंतमिति । वेदस्यब्रह्मपदोक्तस्यनिःश्वासविधयाजनकं अद्भुतमाश्चर्यकरम् ११३४ एवंनिरा
कारध्यानाशक्तौवक्ष्यमाणविधयासाकारंध्यायेदित्याह एवमिति ११३५ उमेति । उमानामदेवीकेनोपनिषदिब्रह्मविद्यारूपत्वेनयावर्णितासात्रपरमेश्वरविग्रहेवधूरूपेणस्थितेत्यर्थः ११३६
तस्याआगमोक्तंरूपंवर्णयति नानेति । सर्वानार्योयस्याःप्रतिबिंबभूतायाचसर्वशक्तिरूपासर्वमहदादितत्त्वरूपाच ११३७ यस्याइति । यस्याअनुग्रहेणसर्वोऽभीष्टंलभते सर्वपदार्थविवर
णंजंतुरित्यादिना जंतुर्निकृष्टः देवादिरुत्तमइत्यर्थः ११३८ ब्रह्मेति । ब्रह्मादिपदैःसृष्ट्यादिकर्माणिलक्ष्यंते तथाचविश्वसृष्ट्यादिकमिंद्राद्यैश्वर्यंचसानुग्रहनिरनुग्रहयोर्यत्कटाक्षयोरधीनस्थित्य
पायकमित्यर्थः ११३९ पीनोन्नतेति । प्रौढत्वंविशालत्वं जघनंनितंबपुरोभागः केशरूपभ्रमरैर्नेत्रात्मकमीनाभ्यांचविलसितमुखचंद्रत्वेनविस्मयजनिका ११४० सर्वांगेति । शंभोर्धैर्य

अशेषदुःखसंशून्यमानंदात्मानमद्वयम् ॥ अचिंत्यमव्यक्तमजंशिवंमायाविवर्जितम् ११३३ अनंतंवेदजनकंमरणादिविवर्जितम् ॥ एकंतथास्वयंज्योतिःसर्वश
क्तिसमन्वितम् ॥ रूपादिरहितंतद्वदद्भुतंपरमेश्वरम् ११३४ एवंचिंतयितुंचेतोयदिशक्तंभवेन्नहि ॥ तदैवंचिंतयेदेनंसगुणंपरमेश्वरम् ११३५ उमाभगवतीयै
यंब्रह्मविद्येतिकीर्तिता ॥ रूपयौवनसंपन्नावधूर्भूत्वात्रसास्थिता ११३६ नानाजातिवधूनांहिबिंबभूतामहेश्वरी ॥ सर्वशक्तिमयीदेवीसर्वतत्त्वमयीतथा ११३७
यस्याःप्रसादतःसर्वःस्वर्गंमोक्षंचगच्छति ॥ इहलोकेसुखंतद्वज्जंतुर्देवादिकोपिवा ३८ ब्रह्माविष्णुस्तथारुद्रःशक्राद्याःसर्वदेवताः ॥ कटाक्षपाततोयस्याभवंतिनभ
वंतिच ११३९ पीनोन्नतस्तनीप्रौढजघनाचकृशोदरी ॥ चंद्राननामीननेत्राकेशभ्रमरमंडिता ११४० सर्वांगसुंदरीदेवीधैर्यपुंजविनाशिनी ॥ कांचीगुणेनचित्रेण
वलयांगदनूपुरैः ११४१ हारैर्मुक्तादिसंजातैःकंठाद्याभरणैरपि ॥ मुकुटेनापिचित्रेणकुंडलाद्यैःसहस्रशः ११४२ विराजिताह्यनौपम्यरूपाभूषणभूषणा ॥ जन
नीसर्वजगतोह्यष्टवर्षाचिरंतनी ११४३ तयासमेतंपुरुषंतत्पतिंतद्गुणादिकम् ॥ ब्रह्मादीनांप्रभुंनानासर्वभूषणभूषितम् ११४४ द्वीपिचर्माम्बरंतंशश्वदथवापिदिगं
बरम् ॥ भस्मोद्धूलितसर्वांगंब्रह्ममूर्द्धौघमालिनम् ११४५ तथैवचंद्रखंडेनविराजितजटातटम् ॥ गंगाधरंस्मेरमुखंगोक्षीरधवलोज्ज्वलम् ११४६ कंदर्पकोटिस
दृशंसूर्यकोटिसमप्रभम् ॥ सृष्टिस्थित्यंतकरणंसृष्टिस्थित्यंतवर्जितम् ११४७ पूर्णेन्दुवदनांभोजंसूर्यसोमाग्निवर्चसम् ॥ सर्वांगसुंदरंकंबुग्रीवंचातिमनोहरम्
११४८ आजानुबाहुंपुरुषंनागयज्ञोपवीतिनम् ॥ पद्मासनसमासीनंनासाग्रन्यस्तलोचनम् ११४९

हरा तृतीयांतानांविराजितेतितृतीयांतेनसंबंधः कांच्यागुणेनसूत्रेण ११४१ हारैरिति । मुक्तादिरत्नमयैर्हारैः अनौपम्यमुपमानानर्हंरूपंयस्याःसातथा भूषणान्यपिभूषयतीतिसातथा
नंद्यःदित्वाल्लघुः सर्वजगज्जननीत्वात्चिरंतन्यपिषोडशवर्षवेषाइतिद्वयोरर्थः ११४२।११४३ तयेति । तयाउमयासमेतंसहितंतस्याःसकाशाद्गुणैरधिकंनानाविधैःसर्वांगगतैर्भूषणैर्युतम् ४४
द्वीपीति । व्याघ्रचर्माम्बरंदिगंबरंवा ब्रह्मणश्चतुर्मुखस्यसुतायाअनुगमनापराधेननानाकल्पेषुहृतानांमूर्ध्नांसमूहेनकल्पितमालालंकृतम् ११४५ तथैवेति । स्पष्टम् ११४६ कंदर्पेति । चतुर्थे
पादेस्वयमितिशेषः ११४७ पूर्णेन्द्विति । पूर्णेंदुसममुखाब्जं सूर्यसोमाग्निपुलोचनभूतेषुवर्चःअतिशयितंतेजोयस्यसतथातम् ११४८ आजान्विति । नागःशेषोयज्ञोपवीतंयस्यतं पद्मा
सनेनऊरुस्थौचानचरणत्वलक्षणेनासनेनास्थितं नासाग्रदत्तदृष्टिंचेत्यर्थः ११४९

वामेति । वामःसुंदरोदेवः अनुग्राहकत्वात् ईशानतत्पुरुषाघोरसद्योजातवामदेवाख्याःपंचमूर्तयःक्रमेणसृष्टिस्थितिसंहारप्रवेशानुग्रहप्रयोजिकाइतिहिशैवागमेषुप्रसिद्धं महादेवंदेवसमष्टिरूपस्यप्राणस्यापिजनकत्वात् गुरूणांसनकादीनामपिगुरुंसच्चिदानंदघनंचेत्यर्थः ११५० यतइति । यत कारणरूपात्सूक्ष्मसमष्टिरूपोहिरण्यगर्भोजातोयःस्थूलसमष्टिरूपजनः सर्वदेवानांजात्यंतराणांचवशेस्थापयितेत्यर्थः ११५१ नीलकंठमिति । अमुंदेवंहृदब्जाद्यन्यतमदेशेयोगीचिंतयेदिति ११५२ ध्यात्वेत्यादेरुत्तरार्द्धस्यार्थमाह एवमितित्रिभिः । एवंध्यानेनयदामनःस्थिरंजातंस्थिरतामापन्नंतदायोगीप्रपंचाभावाद्युपलक्षितंनिर्विशेषंस्वात्मनाअभेदेनप्रयातिसाक्षात्करोतीतित्रयाणांसंबंधः । तमसःश्रुतौतमःपदोक्तस्यस्वात्ममोहस्याज्ञानस्यस्वरूपात्परंपरतोवर्तमानंतेनमोहेनसदाहीनंसाक्षिरूपेणसर्वभासकंचेत्यर्थः ११५३ । ११५४ । ११५५ अस्याद्वितीयतामेवस्फुटीकुर्वन्सब्रह्मेत्यादेरर्थमाह उमेत्यष्टभिः । यउमासहायरूपेणसगुणःप्रकीर्तितःस

वामदेवंमहादेवंगुरूणांप्रथमंगुरुम् ॥ स्वयंज्योतिःस्वरूपंतमानंदात्मानमद्वयम् ११५० ततोहिरण्यगर्भोयंविराजोजनकःपुमान् ॥ जातःसमस्तदेवानामन्येषांचनियामकः ५१ नीलकंठममुंदेवंविश्वेशंपापनाशनम् ॥ हृदिपद्मेथवासूर्येवन्हौवाचंद्रमंडले ॥ कैलासादिगिरौवापिचिंतयेद्योगमाश्रितः ५२ एवंचिंतयतस्तस्ययोगिनोमानसंस्थिरम् ॥ यदाजातंतदासर्वप्रपंचरहितंशिवम् ५३ प्रपंचकारणंदेवमवाङ्मनसगोचरम् ॥ प्रयातिस्वात्मनायोगीपुरुषंदिव्यमद्भुतम् ५४ तमसःस्वात्ममोहस्यपरंतेनविवर्जितम् ॥ साक्षिणंसर्वबुद्धीनांबुद्ध्यादिपरिवर्जितम् ५५ उमासहायोभगवान्सगुणःपरिकीर्तितः ॥ निर्गुणश्चसएवायंनयतोन्योस्तिकश्चन ५६ ब्रह्माविष्णुस्तथारुद्रःशक्रोदेवसमन्वितः ॥ अग्निःसूर्यस्तथाचंद्रःकालःसृष्ट्यादिकारणम् ५७ एकादशेंद्रियाण्यंतःकरणंचचतुर्विधम् ॥ प्राणाःपंचमहाभूतपंचकेनसमन्विताः ५८ दिशश्चप्रदिशस्तद्वदुपरिष्टादधोपिच ॥ स्वेदजादीनिभूतानिब्रह्मांडंचविराड्वपुः ५९ विराड्हिरण्यगर्भश्चजीवईश्वरएवच ॥ मायातत्कार्यमखिलंवर्ततेसदसच्चयत् ॥ यच्चभूतंयच्चभव्यंतत्सर्वंसमहेश्वरः ११६० एकएवयथास्वप्नेपुमान्नानाविधोभवेत् ॥ एकएवतथादेवइहनानाविधःस्थितः ६१ गंधर्वनगरंयद्वद्गगनेतद्विवर्जिते ॥ उत्पद्यतेलीयतेचदृश्यतेप्यवतिष्ठते ॥ आनंदात्मनिनिर्भेदएवंभिन्नमिदंजडम् ६२ अद्वितीयात्मविज्ञानान्नान्यःपंथाविमुक्तये ॥ विद्यतेनाप्यभून्नैवभविष्यतिकदाचन ६३ सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ॥ संपश्यन्ब्रह्मपरमंयातिनान्येनहेतुना ६४ एवंचेदयमात्मानंपुमान्ज्ञातुंनशक्नुयात् ॥ अमुनावाप्रकारेणविजानीयात्सबुद्धिमान् ११६५

एवनिर्गुणउक्तः यतोन्यःकोपिनास्तीत्यर्थः ११५६ ब्रह्मेति । ब्रह्मादिकंयत्तत्सर्वंमहेश्वरएवेतिचतुर्थेनसंबंधः स्पष्टम् ११५७ एकादशेति । पंचप्राणाभूतपंचकसहितादिशश्चप्रदिशःकोणाश्चउपरिष्टादूर्ध्वंअधःअधरंविराजःशरीरभूतंब्रह्मांडंचेति ११५८ । ११५९ विराडिति । विराट्चजीवघनाख्योहिरण्यगर्भश्चईश्वरश्चसदसत्स्थूलसूक्ष्मंच ११६० अस्यसर्वभावंदृष्टान्तेनस्फुटयति एकएवेति । निगदव्याख्यातंद्वयम् ११६१ । ११६२ उक्ताद्वैतज्ञानस्यमोक्षासाधारणकारणतामाह अद्वितीयात्मेति ११६३ ज्ञानाभिनयेनोक्तार्थविशदीकारकंमंत्रंपठति सर्वेति । प्रथमपादेनसर्वांतरमुक्तंद्वितीयेनतुसर्वोपाधीनांकल्पितत्वसूचनद्वाराऽद्वितीयत्वमिति एवंपश्यन्नेवब्रह्मभावंयातीत्यर्थः ११६४ आत्मानमित्यस्यार्थमवतारयति एवंचेदिति । उक्तविधयात्मज्ञानाशक्तौवक्ष्यमाणविधयाप्रणवालंबनेनतत्संपादयेदित्यर्थः ११६५

तदर्थमाह अधरारणिमिति । श्रुतावात्मपदोक्तं स्वं देहसंघातमधरारणिरूपं चिंतयित्वा ऊर्ध्वारणिरूपं प्रणवं चिंतयेत् ११६६ मंथानमिति । तत्र मंथनदंडरूपं मनो ध्यात्वा ध्यानक्रियां चनेत्रमाकर्षणरज्जुरूपां चिंतयित्वा ध्यानावृत्तिरूपं विलोडनं मंथनं कुर्यादिति । एवमिति । ततोऽद्वैतात्मरूपोऽग्निः सकृदेकवारमपि संजातः प्रादुर्भूतः सन्सर्वान्कामादिरूपान्पाशान्दहेत्ततो ब्रह्मभावेन तिष्ठतीति द्वयोरर्थः ११६७ । ११६८ एवं वर्णिततत्पदार्थपर्यवसन्नतामदर्शनेन त्वंपदार्थशोधनपरस्य स एवेत्यादिश्लोकचतुष्टयस्यार्थमाह पाशानित्यूनविंशतिश्लोकैः । यदुक्तविज्ञानाग्निना पाशदाहस्याधिकारी प्रोक्तः स जीवस्तत्पदार्थभूतकेवलब्रह्मरूप एवेति कुतस्तस्य संसार इति चेत्स्वाभिन्नाश्रयविषयकाज्ञानेनैवेत्याह निगूढमिति । स्वस्य मायया निगूढमावृतं ब्रह्मैव जीव इति संबंधः का मायेत्याकांक्षायामाह शयान इति । यया मायया शयान आवृतः पुरुषो नानोपाधिषु वसनशीलश्चायमात्मा व्यवच्छिन्न इत्यर्थः ११६९ तया पुरुषतां गतस्य संसारं दर्शयति जीवनमिति । ययेत्यनुषंगः जीवनं प्राणधारणं प्राप्य कर्मणां कर्त्ता तत्फलानां भोक्ता च भवतीत्यर्थः ११७० तया प्रयुक्तमवस्थात्रयं च भुंक्ते इत्याह स्वप्न इति । स्वप्नावस्थायां जाग्रदवस्थायां च नानाविधदेहान्ग्र

अधरारणिमात्मीयं देहं कुर्वीत पंडितः ॥ त्रिमात्रं प्रणवं तद्वदुत्तरारणिसंज्ञितम् ११६६ मंथानं च मनो ध्यानं नेत्रं कृत्वा विलोडयेत् ॥ एवं विलोडनात्पुंस आनंदात्माभिधोनलः ११६७ सकृत्संजातमात्रोपि पाशान्कामादिनामकान् ॥ दहेत्तेषु प्रदग्धेषु स्वयमेकोवतिष्ठते ११६८ पाशान्दहति यो जीवः स्वात्मनो ब्रह्मबोधतः ॥ न भिन्नो ब्रह्मणः सोयं किंतु ब्रह्मैव केवलम् ॥ निगूढं मायया स्वस्य शयानं पुरुषो यया ११६९ जीवनं प्राप्य कर्माणि कुरुते विविधानि हि ॥ कृत्वा च फलमात्मायं भुंक्ते जीवः कृतं स्वयम् ११७० स्वप्ने जागरणे देहान्गृह्णन्नानाविधानपि ॥ तृप्तिं च विविधैर्भोगैर्यातितृप्तिविवर्जितः ११७१ सुषुप्तो मूर्च्छितो भूत्वा विक्षेपेण विवर्जितः ॥ आनंदं स्वात्मनस्तावद्भुंजानोपि न वेत्त्ययम् ११७२ मंत्रौषधैर्यथा मूढ आत्मानं नैव वेत्ति हि ॥ माययैवं विमूढोयं वेत्ति किंचिन्न संसृतौ ११७३ निर्दोषोपि यथा कश्चिद्दोषवानिव संगतः ॥ मायासंगात्तथा जीवः संसारीव प्रतीयते ११७४ रूपशून्ये यथाकाशे रूपं वेत्ति विमोहितः ॥ मायाशून्ये तथा जीवे मायामातीव मायया ११७५ विद्वानपि यथा मोहं स्वप्ने गच्छत्यमूढधीः ॥ एवमात्मापि संसारे मोहं गच्छत्यमोहितः ११७६

गृह्णन्नानाविधान्निगमनैर्भोगैस्तृप्तिं च याति कीदृशः तृप्तिवर्जितः वस्तुतः आगंतुकतृप्तिरहितः नित्यतृप्तब्रह्मरूपत्वादित्यर्थः ११७१ सुषुप्त इति । स एव तमसा मूर्च्छितः सुषुप्तिं गतः सन्विक्षेपलक्षणप्रतिबंधापायेन स्फुरंतं स्वरूपानंदं भुंजानोपि मया स्वरूपानंदो भुक्त इति न जानातीत्यर्थः ११७२ तत्र सर्वत्र हेतुर्मूलाज्ञानमेवेति सदृष्टांतमाह मंत्रौषधैरिति । यथा मंत्रौषधादिभिः स्वरूपविस्मृतिः प्रसिद्धा तथा संसृतौ सांसारिकसर्वावस्थास्वात्मनः स्वरूपविस्मृतिरित्यर्थः ११७३ न केवलं स्वतत्त्वविस्मृतिर्मायाप्रयुक्ता किंतु सकलः संसारोपीत्याह निर्दोष इति । यथा निर्दोषस्यापि चोरादिसंगाद्दंडादिभयं तथाऽस्यात्मनः संसारोपि मायासंगादित्यर्थः ११७४ । सा च माया संसारस्यैव स्वस्यापि कल्पिका न चात्माश्रयः अनादित्वात् तदुक्तं 'मायायामेव चास्ति स्वामाया स्तीति प्रकल्पने । [illegible] भविष्यति' इति । तदेतत्स्मारयन्नाह रूपेति । आकाशे रूपमिव मायायामात्मनि कल्पिता भाति विमिथ्याभूतां कल्पनां याति तथैव मायाकल्पनेयायं [illegible]त्यर्थः ११७५ मिथ्याभूतमोहमपि जनकत्वं मायाया निद्रादृष्टांतेन स्फुटयति । विद्वानपीति । यथा विद्वान्पंडितः सर्वशास्त्रार्थबोधेनाप्रबुद्धोपि निद्रादोषेण मोहं गच्छति तथायं मायायेत्यर्थः ११७६

विक्षेपेदृष्टांतमाह शयानइति । यथासुप्तःपुरुषोनिद्राक्षयपर्यंतंदुःखंस्वाप्निकविक्षेपंगच्छतितथात्मापिमायापर्यंतंसांसारिकंदुःखंयातीत्यर्थः ११७७ तस्याश्चमायानिद्रायाःक्षयःकरुणातंत्रगुरूपदेशरूपभेरीशब्देनभवतीतिसदृष्टांतमाह यथेतिद्वाभ्यां । यथाकश्चित्सुप्तंस्वप्नेविकृतंदृष्ट्वादुःखेनरुदंतमतएवहिक्काशब्दसदृशंरोदनशब्दंमुंचंतंकरुणयाबोधयेत्तथागुरुरपिमाययानिद्रयासंसारदुःखमनुभवंतमितिद्वयोरर्थः ११७८ । ११७९ यथादृष्टांतेप्रतिबोधमात्रेणसर्वंदुःखनाशस्तथात्रात्मबोधेपीत्याह प्रतिबुद्धइति । स्वाप्नंस्वप्नसंबंधि एतत्सांसारिकम् ११८० साप्रबोधावस्थातुरीयावस्थेत्युच्यतेइत्याह जीवस्येति । स्पष्टम् ११८१ अस्याःकिमपेक्षयातुरीयत्वमतआह स्थूलमिति । क्रमेणस्थूलाद्यभिमानरूपमवस्थात्रयंजीवविहारस्थानत्वेनपुरत्रयमित्युक्तंप्रबोधेनश्यतीत्यतस्तदपेक्षयातुरीयत्वंयुक्तमितिभावः ११८२ तुरीयाप्तेःपूर्वंपुरत्रयेक्रीडामभिनयति मारंमारमितित्रिभिः । पुनःपुनर्मरणेनशरीरग्रहणंपुनःपुनर्ग्रहणपूर्वकंतत्त्यागंचकुर्वंताजन्माद्यवस्थानांयत्परिशीलनंतदेवपुरत्रयेभ्रमणमितिद्वयोरर्थः ११८३ । ११८४ इदंभ्रमणमज्ञानेसत्यवश्यंभवतीत्याह उच्चावचानिति । अज्ञोनानादेहान्प्राप्नोत्येव अनुभूयैवावि

शयानःपुरुषोदुःखंयावन्निद्राक्षयंव्रजेत् ॥ यथातथात्रजीवोपियावन्मायाक्षयंव्रजेत् ११७७ यथाप्रबोधयेत्कश्चित्शयानंकरुणावृतः ॥ रुदंतंबहुहिक्कादिमुंचंतंबहुदुःखितम् ११७८ गुरुस्तथाकृपाविष्टःसंसारस्वप्नपीडितम् ॥ तापत्रययुतंकंचिद्बोधयेत्करुणावृतः ११७९ प्रतिबुद्धोयथास्वाप्नंनरोदुःखंनपश्यति ॥ प्रतिबुद्धस्तथाजीवोनैतद्दुःखंप्रपश्यति ११८० जीवस्यप्रतिबोधोयोजायतेभाग्ययोगतः ॥ सावस्थादुर्लभानृणांचतुर्थीकस्यचिद्भवेत् ११८१ स्थूलंसूक्ष्मंतथाऽज्ञानंपुरत्रयमुदीरितम् ॥ जीवस्यतत्तुरीयाप्तौनाशमेतिनचान्यथा ११८२ मारंमारंचपश्यतिस्थूलंदेहंसदैवसः ॥ कर्मानुसारतस्तद्वद्ग्राहंग्राहंजहातिच ११८३ जातोबालोयुवावृद्धोमृतोजातःपुनस्तथा ॥ वंभ्रमीत्येषसंसारेघटीयंत्रसमोवशः ११८४ उच्चावचानयंदेहानात्मज्ञानविवर्जितः ॥ प्राप्नोत्येवानुभोगांतेनाशमेतिपुनःपुमान् ११८५ तुरीयंप्राप्यतेरूपंयज्जीवेनात्मनःसदा ॥ आधारभूतंनिर्देश्यमानंदात्मस्वयंप्रभम् ११८६ सर्वस्यजगतोहेतुंकार्यकारणवर्जितम् ॥ एतस्माज्जायतेप्राणोमनःकर्मेंद्रियाणिच ॥ खंवायुर्ज्योतिरापोवैभूमिर्विश्वस्यधारिणी ११८७ एतत्तुरीयंगुरवएवमात्मतयासदा ॥ आदिशंतिमहात्मानःशिष्यान्विगतकल्मषान् ११८८. यत्परंब्रह्मसर्वात्मविश्वस्यायतनंमहत् ॥ सूक्ष्मात्सूक्ष्मतरंनित्यंतदेवत्वंत्वमेवतत् ११८९ जाग्रत्स्वप्नसुषुप्त्याख्यप्रपंचंयत्प्रकाशते ॥ तद्ब्रह्माहमितिज्ञात्वासर्वबंधैःप्रमुच्यते ११९०

वरणंभोगांतइति प्रारब्धभोगांतेनाशंमरणमेत्येवचेत्यर्थः ११८५ एवंवर्णितस्यत्वंपदार्थस्यतत्पदार्थेपर्यवसानंदर्शयति तुरीयमितिद्वाभ्यां । यज्जीवेनतुरीयंस्वरूपंप्राप्यतेतत्स्वरूपंजगदाधारत्वेननिर्देश्यंप्रतिपाद्यंश्रुतिभिः अतएवस्वयंप्रकाशानंदरूपंअद्वितीयत्वात् ११८६ अद्वितीयत्वस्फुटीकारायतस्यजगदुपादानतामाह सर्वस्येति । कार्याणांकारणैरुपकरणादिभिर्वर्जितंसहकार्यनपेक्षमितियावत् एतस्मात्तुरीयरूपादेवप्राणादिकंजायतेइत्यर्थः ११८७ यत्परमित्यादिकक्त्रयंशोधितपदार्थकंशिष्यंप्रतिपदार्थयोरैक्योपदेशरूपत्वान्महावाक्यस्थानीयमितिदर्शयन्नाह एतदिति । एतत्पदार्थविषयोक्तमादिशंतिवाक्यार्थविषयाप्रतिपादयंतीति ११८८ तदेवपठति यत्परमितित्रिभिः । यत्परंब्रह्म कीदृशम् सर्वरूपंविश्वाधारत्वेनमहत्परिच्छेदातीतंदुर्लक्ष्यंचतदेवसर्वांतरंतेस्वरूपंयच्चतेस्वरूपंतदेवतद्ब्रह्मणःस्वरूपमित्यर्थः ११८९ एतत्स्फुटयन्फलमाह जाग्रदिति । जाग्रदादिप्रपंचंयत्प्रकाशतेप्रकाशयतितच्चैतन्यंब्रह्मैवयच्चब्रह्मतदहमितिज्ञानात्समूलबंधध्वंसइत्यर्थः ११९०

चैतन्यस्यमाययाप्रपंचरूपत्वेपिवस्तुतःशुद्धबुद्धमुक्तादिस्वभावतामाह त्रिष्विति । एवंजानीहीतिशेषः एवंकथं त्रिषुधामसुजाग्रदाद्यवस्थासुयद्भोग्यंस्थूलंसूक्ष्ममानंदश्चभोक्ताविश्वतैजसप्राज्ञा दिसंज्ञोभोगस्तदाकारवृत्तिलक्षणस्तेभ्योमलिनादिरूपेभ्यःशुद्धादिरूपेणविलक्षणोऽहंचिदेकरूपःसदासर्वदाशिवस्तुरीयएवास्मीति ११९१ एवमुपदिष्टस्याधिकारिणोमननाभिनयपरंमय्येवेत्यादि श्लोकचतुष्टयमर्थतःसंगृह्णाति एवंसद्गुरुणेतिपद्धिः । सद्गुरुणाआदिष्टउपदिष्टःशिष्योऽणुतिसूक्ष्मंपरिपूर्णंचात्मानमेवंप्रतिपद्यतेमनुतइत्यर्थः ११९१ एवंकथमित्याकांक्षायामाह मय्येवेत्यादिना । स्पष्टम् ११९३ विश्वरूपमिति । द्वितीयांतानामांवदंतिश्रुतयइतिशेषेणसंबंधः ज्ञानकर्मलक्षणव्यापारभेदेनद्वयात्मकैर्द्विविधैरिंद्रियैस्तद्वत्प्राणादिभिश्चशून्यमितिसंबंधः निगदव्याख्यातमन्य त्रिषु ११९४ । ११९५ । ११९६ प्रपंचवर्जितत्वउपपत्तिमाह भूतेतिद्वाभ्यां । यतःसर्वःप्रपंचआकाशेगंधर्वनगरवन्मय्यध्यस्तस्ततोमयिवस्तुतःकोपिभेदःकालत्रयेपिनास्तीतितदर्थः

त्रिषुधामसुयद्भोग्यंभोक्ताभोगश्चयोभवेत् ॥ तेभ्योविलक्षणःसाक्षीचिन्मात्रोहंसदाशिवः ११९१ एवंसद्गुरुणादिष्टमात्मानंप्रतिपद्यते ॥ अणोरणुतमंतद्वन्मह तोपिमहत्तरम् ११९२ मय्येवसकलंजातंमयिसर्वंप्रतिष्ठितम् ॥ मयिसर्वंलयंयातिविश्वमेतच्चराचरम् ॥ सर्वभेदविनिर्मुक्तंतद्ब्रह्माद्वयमस्म्यहम् ११९३ विश्वरू पंपुराणंचपुरुषंतेजसांनिधिम् ॥ इंद्रियैःसकलैःशून्यंज्ञानकर्मद्वयात्मकैः ९४ प्राणबुद्ध्यादिभिस्तद्वद्भगवंतंमहेश्वरम् ॥ सर्वद्वंद्वेतररहितमवाङ्मनसगोचरम् ९५ वेदैरनेकैःसंवेद्यंवेदांतार्थप्रकाशकम् ॥ सर्वविद्यागुरुंदेवंप्रपंचेनविवर्जितम् ११९६ भूतभौतिकरूपोयंमाययासहितोपिच ॥ आनंदात्मनिनिर्द्वंद्वेतयतोध्यस्तो खिलोपिच ११९७ गंधर्वनगरंयद्वदध्यस्तंगगनेमले ॥ ततोनकोपिभेदोत्रभूतोभवतिभाव्यपि ११९८ एवंज्ञात्वापरंरूपमानन्दात्मानमद्वयम् ॥ सर्वबुद्धि स्थितंसर्वबुद्धिसाक्षिणमीश्वरम् ॥ प्रयातिपुरुषःशुद्धंनित्यंसदसतःपरम् ११९९ सगुणंब्रह्मचेज्ज्ञातुंनिर्गुणंचनशक्नुयात् ॥ पुरुषोनतदान्यासंकुर्वीताशुद्धमानसः १२०० किंतुनित्यंजपेदेतंरुद्राध्यायमनिंदितम् ॥ सर्वपापहरंयस्माज्जपोनान्योधिकोस्तिहि १२०१ सजपाच्छुद्धहृदयोवैराग्यंपरमंगतः ॥ उपायैर्वापि पूर्वोक्तैश्चतुर्थाश्रममाव्रजेत् १२०२ तत्रापियावन्नैवस्यात्साक्षात्कारःपरात्मनः ॥ रुद्राध्यायंजपंस्तावद्धमानाथंविचिंतयेत् १२०३

११९७ । ११९८ फलवाक्यार्थमाह एवमिति । तथाचश्रुत्यंतरंब्रह्मवेदब्रह्मैवभवतीति ११९९ उक्तविज्ञानाशक्तस्यांतःकरणशुद्ध्युपायमाह सगुणमिति । सगुणमुमासहायलक्षणंनिर्गु णमद्वयादिलक्षणंवाज्ञातुंसाक्षात्कर्तुंनशक्तोभवेत्तदाझटितिसाक्षात्कारकामनयासंन्यासंनकुर्यात्किंतुचित्तशुद्धयेयतेत चित्तशुद्धिसाधनानांमध्येनमस्तेइत्यादिरुद्राध्यायपाठसमंनास्तीत्यर्थः १२०० । १२०१ वैराग्यातिशयलक्षणचित्तशुद्धिदार्ढ्येसतिसंन्यसेदित्याह सजपादिति १२०३ तत्रापीति । तत्रसंन्यासग्रहणेपियावत्साक्षात्कारोनभवतितावदुमानाथध्यानयुक्तजप सहितमवश्यंकुर्यादित्यर्थः १२०३

११९ ९१०

आ. पु.

॥ ९० ॥

उमानाथध्यानस्यसाक्षात्कारद्वारमोक्षसाधनतामतिशयादिकांश्रुतिंपठति उमेति । भूतयोनिंसर्वोपादानत्वेनाद्वयंसमस्तसाक्षिरूपेणसर्वांतरंच श्रुतौनकारलोपश्छांदसः तमसोमूलाज्ञानात्प
रंचेति १२०४ यथाकालमिति । आस्तिक्यंश्रद्धाम् १२०५ एवमिति । ब्रह्मोपनिषत्प्रभृतिभिरुपनिषद्भिर्यत्राध्यायेप्रदर्शितंज्ञानमुक्तोपाये।शुद्धांतःकरणस्यजायतइत्यर्थः १२०६ उत्तरा
कांक्षामुत्थापयन्श्वेतकेतुरत्रोक्तत्रिविधसंन्यासेनात्मलाभेनिदर्शनभूतइत्याह श्वेतेति । जिज्ञासोपिपरमहंसःसिद्धः आत्मोपनिषद्यात्मतत्त्वमतिप्रकाशिकयात्रिपदाछांदोग्यषष्ठाध्यायरूपयाअपिशब्दादुक्त

टी० अ०

११

उमासहायंपरमेश्वरंप्रभुंचतुर्भुजंनीलकंठंप्रशांतम् ॥ ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षिंतमसःपरस्तात् १२०४ यथाकालंहिवेदांतश्रवणादीनिसर्वदा ॥
कुर्वीतचगुरोर्भक्तिंपरमास्तिक्यमाश्रितः १२०५ एवंहिकुर्वतोनित्यंयतेरत्रप्रबोधनम् ॥ ब्रह्मोपनिषदाद्युक्तंजायतेयदिहेरितम् १२०६ श्वेतकेतुर्हिसर्वज्ञोयती
नांप्रथमोहिसः ॥ विज्ञातवान्परंतत्त्वमात्मोपनिषदापिहि १२०७ तस्मादात्मैषविज्ञेयःपरहंसेनसर्वदा ॥ अस्यमुख्योयमाचारोजघन्योन्यःप्रकीर्तितः १२०८
इतितेकथितंसर्वंपृष्टंयद्धित्वयाधुना ॥ परहंसाश्रमेभूयःकिमन्यच्छ्रोतुमिच्छसि १२०९ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंद
भगवताविरचितउपनिषद्रत्नआत्मपुराणे गर्भाद्युपनिषत्सारार्थप्रकाशोनामैकादशोध्यायःसमाप्तः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

साधनैश्चावश्यकैःपरंतत्त्वंज्ञातवानित्यर्थः १२०७ तस्मादिति । अस्यपरमहंसस्यअयंज्ञाननिष्ठारूपआचारोमुख्यआवश्यकः अन्यएतद्विरुद्धस्तुजघन्यःअपकृष्टत्वाद्धेयइत्यर्थः १२०८ उप
संहरति । इतितेइति १२०९ ॥ उत्तीर्यांबुधिमादृग्यासुरपत्तन्करोविषे ॥ प्रमोदिताधिनाथायनमोमास्तसूनवे ॥ १ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्य
श्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांसप्तमग्रहोपसर्गवास्यैकादशोध्यायःसमाप्तः ॥ ११ ॥ ॥ ॥ ७ ॥ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ९० ॥

श्रीगणेशायनमः ॥ ॥ नवोक्तिस्फुरिताव्यक्तैस्त्रिभिरन्वयशालिनी ॥ वासुदेवतनूरान्ध्यंद्वादशेनार्पिताहरेत् ॥ १ ॥ अस्यार्थः ॥ नवःस्तुतिस्तद्रूपाभिरुक्तिभिर्वेदवचनैःस्फुरिताविभाता व्यक्तैर्वा मनावतारेप्रकटैस्त्रिभिःपादैःसर्वत्रसंबद्धा द्वादशयेइनाःप्रभवोभक्तैराराध्याःकेशवादिसंज्ञाद्वादशविग्रहास्तद्वदाचरंतीतद्रूपेणस्थितेतियावत् एतादृशीवासुदेवस्यमूर्तिरांध्यंप्रतिबंधकदुरितरूपंतमोह रत्विति । 'इनःसूर्येनृपेपत्यौच' इतिकोशात् द्वादशाक्षरमंत्रपक्षेनवसंख्याउक्तपउच्यमानाअवस्थाअकारोकारमकारबिंदुनादकलाशक्तयर्द्धमात्राशांताख्यायस्यसनवोक्तिःप्रणवस्तेनविभाता व्यक्तैः स्पष्टैःप्रणववहुरवगाहताहीनैस्त्रिभिःपदैर्नमःप्रभृतिभिर्युक्ता द्वादशभिरिनैःप्रभुभिःकेशवादिभिरादित्यैर्वाप्रतिवर्णमर्पिताससमन्विता 'अयमतो' इतिस्मृतेः तादात्म्यमापन्नेतियावत् वासुदेवस्यत नूर्मंत्रमयीमूर्तिस्तमोहरत्विति शंभुपक्षेनवोरुद्राध्यायरूपास्तुतिस्तत्तःस्फुरिता व्यक्तैःस्पष्टैस्त्रिभिर्नेत्रैरन्विता 'वंप्रचेतसिजानीयात्' इतिकोशात्वोवरुणस्तस्यासुःप्राणभूताब्रह्मविद्यायाभृगवेपुत्रायै वतपस्तुष्टेनतेनदत्तातस्यादिवआवेशेनप्रवर्तकोमहादेवस्तस्यमूर्तिः यद्वामहोपनिषदुक्तविषयावासुदेवस्यनारायणस्यमूर्तिर्महादेवाख्या द्वादशे'शय्यामहंद्वादशमेकमाहुः'इतिभागवतपंचमस्कंधेद्वादशत्वे नोक्तेऽहंकारेऽनायितामापावदाचरंतीतदधिष्ठातृदेवतात्वात्तमोहरेदिति । ग्रंथप्रमेयपक्षेतु नवान्नूत्निकोक्तिशालिनामहावाक्येनविभाता व्यक्तैर्नामरूपाभ्यांव्याकरणंनीतैस्त्रिभिस्तेजोबन्नैःसह

श्रीगणेशायनमः ॥ ॥ कथाश्चित्राइमाःश्रुत्वाशिष्यःश्रद्धासमन्वितः ॥ श्वेतकेतोःकथांश्रोतुंपप्रच्छस्वगुरुंपुनः १ भगवन्भवताख्यातमितरातनयस्य यत् ॥ ज्ञानंकौषीतकेस्तद्वदादित्यस्यमहात्मनः २ सश्वेताश्वतरस्यापिकठस्यापिचतित्तिरेः ॥ जाबालादिमुनीशानांयोगसंन्याससंयुतम् ३ आख्यानान्य तिचित्राणिबहूनिविविधानिच ॥ श्रुतानितानिसर्वाणिमयातेवदनाद्गुरो ४ प्रजानांमुनयोयत्रकरुणाक्रांतचेतसः ॥ ऊचुर्ब्रह्मात्मविज्ञानंवामदेवश्चगर्भगः ॥ मी मांसाक्रांतचित्तानामुक्तञ्चानधिकारिणाम् ५ करामलकवद्यत्रब्रह्मात्माज्ञायतेनृभिः ॥ देहादिजडसंघातात्सर्वदैवविलक्षणः ६ श्रवणाद्यत्रवैराग्यंकामुकस्यापि जायते ॥ स्वदेहेन्यशरीरेचविवेकादवधारिते ७ प्रतर्दनस्यगमनंदैवोदासेर्महात्मनः ॥ योद्धुकामस्यवैस्वर्गेविजयश्चास्यधीमतः ८ इंद्रतोपिवरप्राप्तिर्दुर्लभा याशरीरिभिः ॥ गार्ग्यस्यद्विजवर्यस्यसंवादोऽजातशत्रुणा ९ अश्विभ्यांचतथामंत्रद्रष्टुश्चित्रकथाश्रयः ॥ यत्प्रसंगात्त्वयावंशास्त्रिपर्वासमीरितः ॥ स्त्रीपुंसयोरभि न्नोयंविभिन्नोपिचकुत्रचित् १०

संबद्धा मूलाज्ञानप्रहारेप्रलयकालिकद्वादशार्कवदाचरंती यद्वाद्वादशेनाध्यायेनार्पितालब्धा वासुदेवस्यपरमात्मनस्तनूर्मूर्त्तिःसह्लक्षणाअांध्यमावरणंहरेदिति ॥ १ ॥ उक्तानुवादपूर्वकंशिष्यप्र श्नंछांदोग्यषष्ठार्थगोचरमभिनयति कथाइतिचतुर्विंशतिश्लोकैः । इतरातनयस्यऐतरेयस्य सश्वेताश्वतरस्यश्वेताश्वतरसहितस्यकठस्य षष्ठ्यंतानांज्ञानपदेनसंबंधः योगेत्यादिज्ञानविशेषणम् ना स्यत्तिरोहितंचतुर्षु १ । २ । ३ । ४ तत्रप्रथमाध्यायाख्यानमनुवदति प्रजानामितित्रिभिः । यत्रप्रथमप्रताख्यानेमुनयःप्रजानांहितायब्रह्मात्मज्ञानमूचुः गर्भगोवामदेवश्चाविचा रतत्पराधिकारिणांहितायतदुक्तवानितिसंबंधः ५ करेति । यत्रविज्ञानेसतिसंघातविलक्षणआत्माब्रह्मत्वेनज्ञायते ६ श्रवणादिति । यत्रप्रथमाख्यानार्थेश्रवणानंतरंविवेकेनमननेनावधा रितेसतिकामुकस्यापिसर्वशरीरेषुवैराग्यंजायते ७ द्वितीयव्याख्यानमाह प्रतर्दनस्येति । तृतीयार्थमाह गार्ग्यस्येति । गार्ग्योबालाकिः ८ । ९ चतुर्थार्थमाह अश्विभ्यामितिद्वाभ्यां । मंत्रद्रष्टुर्दध्यीचिऋषेरश्विभ्यांसंवादउक्तइत्यनुषंगः यस्याश्विभ्यांसहसंवादस्यप्रसंगात्त्रिपर्वास्त्रिविधाःपर्वस्थानीयाःपुरुषायत्रसतथास्त्रीपुंसयोःसंबंधी पुनःकीदृशः कुत्रचिदभिन्नःपरस्परसरूपा कारतामकः क्वचिदंशेतुविभिन्नोविरूपाकारतामकइतिद्वयोरर्थः १०

११ पंचमादित्रयार्थमाह कथेति । द्विवारंजनकेनसंवादःप्रष्टेउक्तः १२ अष्टमादिद्वयार्थमाह कारणेष्विति । नाचिकेतसंनचिकेतसःसंबंधि १३ दशमार्थमाह यजुषामितिद्वाभ्यां । व रुणंप्रतीतिशेषः वहुपंचवारान् १४ गंधर्वस्येति । वेनस्यवेनसंज्ञस्यगंधर्वस्ययःस्वात्मनःस्वांतर्यामिणोनारायणस्यानुभवस्तस्यनान्नामंत्रेर्यदीरणंवामदेववत्प्रकाशनंतदुक्तम् . तथासत्यादि साधनैःसहसंन्यासरूपंसाधनंसर्वोत्कृष्टत्वेनोक्तंपरमउत्तमोंत्यइतियावत् तादृशेमंत्रेन्यासइतिब्रह्माइत्यादौवसुरण्यइत्यादौचतस्यसंन्यासस्यब्रह्मरूपतावगाहिन्याःस्तुतेरित्यर्थः १५ अनंतराध्या यार्थमाह जावालइत्यादिना । जावालाख्येपरमहंसाख्येआरुण्याख्येचब्रह्मणिवेदेउपनिषदियःसमीरितःससंन्यासएकएवनशाखाभेदेनभिन्नइतिदर्शितमितिशेषः किंकृत्वा नानाविधंयोगंमरणनि मित्तैःसहितमुक्त्वा १६ गर्भोपनिषदीति । तथागर्भोपनिषदुक्तयोगोपयोगिपदार्थप्रदर्शनप्रसंगेनवसिष्ठोक्तोपिकोप्यद्भुतःपौराणिकःपुरातनसंहितागतोयोगउक्तइत्यर्थः १७ अपीति । अमृ





दध्यङ्ङाथर्वणोयत्रशक्रस्याप्युपकारकृत् ॥ शक्रेणनिहतःसाधुरर्थेसोश्विकुमारयोः ११ कथाजल्पाभिधाप्रोक्तायाज्ञवल्क्यस्यचाद्विजैः ॥ वादोस्यापिचतेनैवभू भुजाजनकेनहि ॥ द्विवारंतस्यसंन्यासोमैत्रेय्याश्चोपदेशनम् १२ कारणेष्वपिमीमांसाविप्राणांन्यासिनांतथा ॥ नाचिकेतसमाख्यानंवरैर्नानाविधैर्युतम् १३ यजुषांकृष्णतावापिभक्षणाच्छर्दनादपि ॥ वरुणंपितरंतद्वद्भृगोश्चगमनंबहु १४ गंधर्वस्यापिवेनस्यस्वात्मनोनुभवेरणम् ॥ सत्यादिसाधनैश्चैतत्साधनंन्यास संज्ञितम् ॥ उक्तंपरममंत्रेतत्स्तुत्याब्रह्मात्मरूपया १५ जाबालेपरमेहंसेब्रह्मण्यारुणिसंज्ञिते ॥ शाखाभेदेपिसंन्यासएकएवसमीरितः ॥ योगंनानाविधंपूर्वमु क्त्वापिसनिमित्तकम् १६ गर्भोपनिषदिप्रोक्तयोगस्येहप्रसंगतः ॥ वासिष्ठोपिचकोप्युक्तोयोगःपौराणिकोहियः १७ अपियोह्यमृतेनादेहंसेचक्षुरिकाभिधे ॥ शाखाभेदेसमुक्तःसवर्णितोत्रपृथक्पृथक् १८ ब्रह्मोपनिषदिप्रोक्तंविंदौचामृतसंज्ञके ॥ नारायणीयेचतथामहोपनिषदीरितम् ॥ आत्मप्रबोधेकैवल्येज्ञानंतच्चस मीरितम् १९ संवर्तकाद्याःसंन्यासेभवतात्रसमीरिताः ॥ पूर्वंसंन्यासिनःसर्वेलोकातीतामहाधियः २० वैराग्यंतस्यकालश्चसंन्यासस्यप्रकीर्तितः ॥ नानावि धैरुपायैश्चविरक्ताश्चाधिकारिणः २१ संन्यासस्यविधिर्न्यासिमरणेसंस्क्रियापिच ॥ वेषस्तस्यतथाचारःकीर्तितोबहुधात्वया २२ श्वेतकेतुस्तथाचांतेसर्वज्ञो यःप्रकीर्तितः ॥ पुराब्रह्मात्मविज्ञानादितितन्महिमात्रभोः ॥ वर्ततेकौतुकंश्रोतुंयतआश्चर्यकारणम् २३ भवतापरमाहंसाःसंवर्ताद्याःप्रकीर्तिताः ॥ लोका तीताःश्वेतकेतुस्तेष्वेवसमुदाहृतः २४ सर्वज्ञोऽथाज्ञतांप्राप्तःकेनदोषेणधीधनः ॥ केनोपदिष्टश्चपुनस्तस्यज्ञानंचकीदृशम् २५

तनादादिसंज्ञोपनिषद्ग्रंथेभिन्नभिन्नशाखागतेयउक्तोयोगःसोपिपृथक्पृथग्वर्णितइत्यर्थः १८ ब्रह्मोपनिषदीति । तथाब्रह्मोपनिषदादिषुषट्सूपनिषत्सूक्तंज्ञानंसमीरितमिति १९ संवर्तकाद्याइ ति । संवर्तकोऽग्नेरवतारभूतःकश्चिद्ब्राह्मणस्तत्प्रभृतयःपरमहंसालोकविलक्षणाचाराःपूर्वंपूर्वाध्यायादावेवभवताकीर्तिताः २० वैराग्यमिति । तथासंन्यासोपयोगिनोवैराग्यकालाधिकारिणउ क्ताः २१ संन्यासस्येति । संन्यासविधिप्रभृतिपदार्थचतुष्टयंचोक्तम् तस्यसंन्यासिनः २२ शंकाबीजंस्मरति । श्वेतेति । पूर्वाध्यायस्यांतेश्वेतकेतुःकीर्तितस्तन्महिमातस्यप्रभावइत्यध्वर्ततेइतिकिं यद्ब्रह्मात्मविज्ञानात्पुरापिसर्वज्ञःप्रसिद्धइति तंश्रोतुंकौतुकंवर्ततेऽद्भुतत्वादित्यर्थः २३ एतदेवस्फुटयति भवतेति । लोकातीतान्संवर्तादीनादौकीर्तयित्वातेष्वेवभणितःश्वेतकेतुःपुनः कुतःसमुदाहृतइति २४ फलितंप्रश्नमभिनयति सर्वज्ञइति । सयदिसर्वज्ञस्तदातस्यजिज्ञासाप्रयोजकमज्ञत्वंकुतस्तस्योपदेष्टाचकस्तस्मैउपदिष्टंज्ञानंचकीदृशमित्यर्थः २५

एवदिति । स्पष्टम् २६ गुरुर्वाक्यमवतारयति इत्थमिति । अमितंप्रचुरंतेजः मेधात्मकसत्त्वलक्षणंयस्यसतथातेनच्छांदोग्येषष्ठप्रपाठकेकीर्तिताम् २७ आत्मज्ञानात्पूर्वंस्तब्धंयप्राभिमानि कंनवस्तुतइतिदर्शयन्नुद्दवयएवायेत्यंतग्रंथार्थमुपबृंहयति श्वेतेतित्रयोविंशतिश्लोकैः । श्वेतकेतुर्नामप्रमुनिर्बालोमातापित्रोर्लालनवशेनक्रीडापरत्वादतिक्रांतउपनयनकालोमुख्योयस्यतथाभूतोजातः अदांतोऽशिक्षितोयोवृषभस्तत्तुल्यः २८ क्रीडापरत्वमदांतवृषभतुल्यत्वंचस्फुटयति भुंक्तेइति । स्पष्टद्वयम् २९ । ३० पितुरिति । तंकदाचिदुपागतमारुणिर्नाम पितामोक्तवान् कीदृशः स्नेहयुक्तहृदयः क्लेशंतद्दशालोकनजंचित्तक्षोभंप्राप्तः ३१ पितृवचनमभिनयति पुत्रेत्येकादशभिः । हेपुत्रबाल्यमविवेकस्तद्धेतुकात्पुत्रस्नेहात्त्वंमयामात्राचलालितोसितस्तेईदृशदिशेत्यर्थः ३२ लालनादिति । यदितीत्थंनीतिविदोवदंतितत्सत्यं इति॰ सुतादीनांलालनंबहुदोषहेतुस्ताडनंगुणहेतुरिति ३३ नीतिवाक्याण्येवार्थतः संगृह्णाति वैरिणीत्यादिना । केवललालनपरौमातापितरौवै

एतत्सर्वंविस्तरतोवक्तव्यंभवतागुरो ॥ मह्यमास्तिक्ययुक्तायभवंतंसंश्रितायच २६ इत्थंसंप्रार्थितस्तेनशिष्येणामिततेजसा ॥ गुरुश्छांदोग्यकथितांकथामा हातिशोभनाम् २७ श्वेतकेतुःपुराबालःपितृभ्यामुपलालितः ॥ अतिक्रांतोपनयनकाल क्रीडावशंगतः ॥ आसीददांतवृषभतुल्योद्वादशवार्षिकः २८ भुंक्तेक्व चित्क्वभुंक्तेनाबालक्रीडारतोद्विजः ॥ भर्त्सयन्बालकानन्यान्बहुशोपिचताडयन् २९ स्त्रियोविप्रांश्चपश्वादीन्संप्रयातिद्रुतंतथा ॥ बालएवजनंसर्वंदुःखयन्नत्याशिक्षि तः ३० पितुःसमीपमगमत्कदाचिद्विनयान्वितः ॥ आरुणिस्तत्पिताप्राहसुतंतंस्वसमीपगम् ॥ स्नेहसंभिन्नहृदयःकिंचित्क्लेशमुपागतः ३१ पुत्रबाल्यात्सुत स्नेहाल्लालितस्त्वंमयातथा ॥ मात्राचतवतेनेमांदशामसिगतोधुना ३२ लालनाद्बहवोदोषाःशासनाद्बहवोगुणाः ॥ शिष्यस्त्रीतनयादीनामितियतन्नृपानहि ॥ ३३ वैरिणीसाचविज्ञेयामाताया लालयेत्सुतम् ॥ पितापिचयतःपुत्रोलालितोनरकंव्रजेत् ३४ आत्रिवर्षंसुतंमाताशिक्षयेच्चततःपिता ॥ तथापिसहितोनित्य मागर्भजननाष्टमम् ३५ अतऊर्ध्वंसदाचार्यःशिक्षयेत्तंचकुत्रचित् ॥ आषोडशंततःसर्वेनिवर्त्ततेहियौवने ३६ युवानंमित्रवन्नित्यंशिष्यंवाथसुतंचवा ॥ शिक्षये न्नैवदंडेननीतिरेषासनातनी ३७ मातुःपितुश्चयःशिक्षामाचार्यस्यचनांधधीः ॥ गृह्णीयाद्यौवनेप्राप्तेसक्लेशंयातिदारुणम् ॥ इहराजादिजाभीतिर्यमजापरजन्म नि ३८ आचार्यपितृमातॄणांशिक्षातावत्सदानृणाम् ॥ सत्यामपिचतस्यांसातस्याअकरणेसुत ३९

रिणौबोध्यौ यतोलालनजन्यदोषैःसुतस्यनरकादिदुःखमिति ३४ शिक्षाव्यवस्थामाह आत्रिवर्षमिति । तृतीयवर्षपर्यंतंमाताशिक्षयेत्ततोगर्भाज्जननाद्वाअष्टमवर्षपर्यंतंपिताशिक्षयेत् की दृशःपिता तथापिशिक्षकांतरसत्त्वेपिसहितःसंनिहितः ३५ ततःषोडशवर्षपर्यंतमाचार्यःशिक्षयेदित्याह अतइति । यौवनेषोडशस्यवर्षस्यप्राप्तौ ३६ ततोवाचिकस्यैवशिक्षानताडनघटितेत्याह युवानमिति ३७ शिक्षोल्लंघनेपुत्रस्यानर्थंदर्शयति मातुरिति । क्लेशंनिरूपयति इहेति ३८ आचार्येति । आचार्यादिकर्तृकाशिक्षासदानॄणांमूर्चिता तस्यांशिक्षायांसत्यामपिपुरुषांतरेणानु ष्ठीयमानायामपितआचार्यादिकर्तृकाशिक्षाआवश्यकीतिशेषः किमुतासत्येइतिभावः अशिक्षणेस्फुटदोषमाह तस्याइत्यादिना । हेसुतयतस्तस्याःशिक्षायास्त्वद्विषयेअननुष्ठानेभवान्द्वादशवर्षो ब्रह्मबंधुरपकृष्टब्राह्मणस्तद्दस्मत्कुलेअननुत्पन्नइवभातीतिद्वयोःसंबंधः ३९

४० तर्हिब्रह्मवर्चसकामेमामुपनीयशिक्षयेत्यभिप्रायेतस्यालक्ष्याह मत्तइति । यतोऽनयानयस्यनीतेरुपेक्षणादेतावंतंकालंलालितोस्यतस्तवोपनयनंउपनीयशिक्षणंमत्तोमत्कर्तृकंदुर्लभमसंभवि लालकेंमयित्वच्छ्रद्धायाअनवनारादितिभावः ततोऽन्यत्रअन्याचार्यसमीपेवासेनब्रह्मचर्यधर्मजातंजुषस्वेत्यर्थः ४१ अन्यथेति । स्यहन् ४२ एवमुक्तइति । एवंविधवाक्येनविवेकंप्राप्तःश्वेतकेतुरन्यान्विप्रान्महात्मनोमहामतीनाचार्यान्कृत्वाशिक्षायंगैःसहितांश्चतुरोवेदानधीत्यतेषांवेदानांवेदांतभागंविनामीमांसामर्थविचारंकृत्वास्नातःसमावर्तनाख्यंसंस्कारंप्राप्तःसन्गृहमागादितिद्वयोरर्थः ४३ । ४४ बुद्धिमानिति । सचागच्छन्सन्नितिव्यचिंतयत्चिंतितवान् इतिकिं वेदतदर्थज्ञानयोःपिताआरुणिर्नैमत्सदृशः ४५ इतश्चसतथापतोमामन्यत्राध्ययनार्थंप्रेषितवानित्याह पितेति । मामात्मनःसुतमन्यान्प्रतिकथंप्रेषयेत् ४६ गुरूणामनुग्रहातिशयादप्यहमस्मादधिकइत्याह गुरवइति । यतोगुरवःप्रीत्यासुतादप्यधिकंस्नेहंकृतवंतोऽस्माद्धेतोरहमतिशयवानितियोजना ४७ कदाचिदिति । सस्नेहंसशपथंचयतोमांप्रतिकदाचिद्गुरवइत्थमुक्तवंतः इत्थंकथं अस्माभिःसर्वाविद्यातुभ्यमर्पितेति ततोप्यहमधिकइत्यर्थः ४८ शिशुरिति । य

भवानद्वादशवर्षोत्रब्रह्मचर्यविवर्जितः ॥ ब्रह्मबंधुरिवाभातिनास्मत्कुलगतोयथा ४० मत्तस्तवोपनयनंदुर्लभंत्वंयतोऽनयात ॥ लालितोऽतोवसान्यत्रब्रह्मचर्यंद्विजोत्तम ४१ अन्यथातवदुष्कीर्तिर्नरकादतिदुःखदा ॥ भविष्यतिममाप्यत्रकुलेयस्येदृशोभवान् ४२ एवमुक्तोगतःसोपिप्राप्तबुद्धिर्महात्मनः ॥ विप्रान्कांश्चिद्गुरून्कृत्वावेदांश्चचतुरोपिहि ४३ अधीत्यांगैःसमंतेषांमीमांसांप्रविधायच ॥ वेदांतरहितानांसस्नातोगात्स्वगृहंप्रति ४४ बुद्धिमानहमेवास्मिसर्ववेदौघपाठकः ॥ अर्थज्ञश्चपितानैवंममेत्येवंव्यचिंतयत् ४५ पितामेयदिवेदज्ञोमामन्यान्प्रतिचात्मनः ॥ सुतंसंप्रेषयेत्केनततोयंस्वल्पवेदनः ४६ गुरवोपिममस्नेहंकृतवंतःसुतादपि ॥ अधिकंयतएवास्मात्प्रीत्यातिशयवानयम् ४७ कदाचिद्गुरवोमांसस्नेहंशपथैःसमम् ॥ सर्वमेवात्मविज्ञानमस्माभिःकथितंहिते ४८ शिशुरांगिरसोयद्वद्वृद्धोभूद्विद्ययापुरा ॥ पितृभ्यःस्वस्यतद्वत्स्यामहंस्वस्यपितुःसदा ४९ इतिसंचिंत्यगर्वेणदोषेणाज्ञत्वमागतः ॥ नत्वैवदेपितुःपादावागत्यस्वगृहंगतः ॥ उच्चासनेसमासीनःस्तब्धःस्तंभोपमःस्थितः ५० तादृशंतनयंदृष्ट्वापिताप्राहसुतंततः ॥ अनुग्रहायतस्यायंदोषलेशविवर्जितः ५१ श्वेतकेतोभवान्यस्मात्स्तब्धःस्थाणुरिवस्थितः ॥ वेदवेदार्थवेत्ताहमितिमंतामहामनाः ५२ पृष्टवानसिकिंनुत्वंप्रश्नमेतंगुरून्प्रति ॥ येनैकेनश्रुतेनस्याच्छ्रुतंसर्वंचराचरम् ५३

थाआंगिरसाद्बृहस्पतिस्तत्सुतोऽजोवाविद्ययापितृप्रभृतिभ्योधिकोजातस्तथाहमपीत्यर्थः अजोहिशंयुनामांतरकःशुक्रान्मृतसंजीवनींविद्यामधिगत्यदेवानध्यापयामासेतिप्रसिद्धंशतपथादिषु मनुनाप्युक्तं 'अध्यापयामासपितॄन्शिशुरांगिरसःकविः । पुत्रकाइतिहोवाचज्ञानेनपरिगृह्यतान्' इत्यादिद्वितीयाध्याये ४९ इतिसंचिंत्येति । इत्थंचिंतनजन्यगर्वदोषेणाज्ञोमोहंगतःसन्पितुःपादावनभिवाद्योच्चासनेतिष्ठन्स्तम्भवत्स्तब्धोऽनम्रःस्थितइति ५० तस्याभिमानपरिहारार्थंपितृप्रयुक्तवाक्यस्याविज्ञातमित्यंतस्यार्थमाह तादृशमितिचतुर्भिः । दोषाःकोपादयस्तल्लेशैरपिहीनःपिताकेवलानुग्रहायेदमाहेत्यर्थः ५१ श्वेतेति । हेश्वेतकेतोयस्मादतिशयाद्भवान्स्तब्धस्तथासांगसर्ववेदानांतदर्थानांचवेत्तास्मीत्येवंमननशीलस्तथामहामनाःमहत्इतरेरसममात्मानंमन्यमानंमनोयस्यसंतथात्वंभवसिसोतिशयःकइतिशेषः ५२ पृष्टवानिति । नुइतिवितर्के किमेवंप्रश्नंप्रश्नयोग्यमर्थंगुरूत्क्रमेत्युत्पत्त्यादेशपदोक्तंपृष्टवानसियस्यैकस्यश्रवणात्सर्वंश्रुतंशब्देनज्ञातंभवेत्तथापरंयमनसामननात्धियाविज्ञानाद्यसर्वममतमप्यविज्ञातमपिज्ञमतंविज्ञातंचभवेदितिद्वयोरर्थः ५३

५४ श्वेतकेतोःप्रश्नवाक्यमवतारयति । इत्युक्तइति ५५ तदर्थमाह श्रुतइति । यस्यएकस्यश्रवणाद्विनासर्वस्यश्रुतत्वादिकमतिचित्रंभवतितदेकंवस्तुमह्यमुपदिशेत्यर्थः ५६ वाचारंभणादिभागान् विहायपितृवाक्यस्यार्थमाह इत्युक्तेतमितिषड्भिः । एवंप्रश्नेकृतेसतिपितातमुवाचहेश्वेतकेतोत्वंतावत्त्रिभिर्दृष्टान्तैःसर्वंविश्वंतेजोजलपृथिवीमात्रमवधारयतथातद्दृष्टांतेनतत्रयस्यतेजोवन्नाख्यस्यय त्कारणंपरमात्माख्यंतन्मात्रंसमवधारयेत्यर्थः ५७ दृष्टांतत्रयंभूतत्रयाभिप्रायेणोक्तमितिदर्शयंस्तत्स्वरूपमाह मृदइत्यादिना । यथामृदःपिंडस्यपिंडावस्थोपहितपृथिवीसामान्यरूपस्यकारणस्याव बोधात्परिचयात्तत्कार्यंघटादिसर्वंज्ञातंभवेत् यथावासुवर्णस्यतैजसस्यधातोःश्रुतौलोहपदोक्तस्यपिंडभूतस्यपूर्ववज्ज्ञानात्कटककुंडलादिविकारजातंज्ञायते यथावायसोनखनिकृंतनादिपिंडगतस्य ज्ञानात्सर्वंलोहविकाराज्ञायंतेइत्यर्थः ५८ ननुनखनिकृंतनंनजलीयंतत्कथंजलीयदृष्टांताभिप्रायेणोक्तमित्याशंकांपरिहरति द्रवीभावादितिद्वाभ्यां । यद्यपिजलानांद्रवीभावात्द्रुतावस्थानांसं पर्कादेवविविधाविकाराःपृथिव्यादेरपिजायंते तथाचजलानांकारणत्वंप्रसिद्धं तथापिकेवलस्यआप्यस्यजलीयस्यपिंडस्यकारणत्वंलोकेप्रसिद्धंनभवतीत्यतःश्रुत्यालोकबुद्धिमनुसरंत्यापयःपिंड समंस्वच्छंहिमादिरूपजलपिंडवन्निर्मलत्वेनजलीयमिवदृश्यमानंनखनिकृंतनंतृतीयदृष्टांतेनोक्तमितिद्वयोरर्थः ५९ । ६० उक्तमनूद्यदार्ष्टांतिकेयोजयति मार्द्दमितिद्वाभ्यां । मार्द्दंमृत्पिंडगतं

अश्रुतंत्राऽमतंतद्वदविज्ञातंचधीमता ॥ मनसात्रमतंतत्स्याद्विज्ञातंचधियापिहि ५४ इत्युक्तेक्षीणगर्वःस्वजनकंचाभिवाद्यसः ॥ आश्चर्यपरमंप्राप्तइदमा हवचस्ततः ५५ श्रुतेमतेचविज्ञातएकस्मिन्निखिलंकथम् ॥ श्रुतंमतंचविज्ञातंभवेदेतद्वदाधुना ५६ इत्युक्तेतंततःप्राहतनयंजनकस्तदा ॥ तेजोब न्नात्मकंविश्वंतत्रयस्यापिकारणम् ॥ दृष्टान्तैस्त्रिभिरेवत्वंसम्यगेवावधारय ५७ मृदोवापिसुवर्णस्यतैजसस्याथवासुत ॥ अयसोवापिपिंडस्यकारणस्याव बोधतः ॥ ज्ञातंकार्यंघटादिस्यात्कटकादितथापरम् ५८ द्रवीभावाज्जलानांचजायंतेविविधाअपि ॥ केवलस्याथपिंडस्यकारणत्वंनलोकतः ५९ प्रसि द्धंतेनतत्रोक्तंस्वच्छंनखनिकृंतनम् ॥ पयःपिंडसमंश्रुत्यातृतीयेहिनिदर्शनम् ६० मार्द्दंतैजसमाप्यंचयथाज्ञात्वात्रकारणम् ॥ तन्मयंसकलंकार्यंजानीयाद् विचारयन् ६१ एवंतस्वेपरेज्ञातेतेजोबन्नात्मकंजगत् ॥ ज्ञायतेसकलंपुंसाह्यज्ञानमपिपुत्रक ६२ स्थालीपुलाकनामायंन्यायउक्तोमनीषिभिः ॥ एकस्मिन्ने वसिक्थेचविज्ञातेभांडसंश्रये ॥ पक्वेवाप्यथवापक्वेसर्वेहिविदितंभवेत् ६३ एवंविज्ञायकेचित्तुनानामतविबोधनात् ॥ संजायतेत्रविज्ञानमेवमाहुर्विपश्चितः ६४ वक्तव्यास्तेयत्रह्निस्तुह्येतदुत्प्रेक्ष्यतेकथम् ॥ स्वबुद्ध्याश्रुतिबुद्ध्यावासंप्रदायबलेनवा ६५

तैजसंसुवर्णादिपिंडगतंआप्यंद्रुतजलादिमतंकारणंमृदादिसामान्यरूपंज्ञात्वासर्वंपार्थिवादिकार्यंजानीयात् अविचारयन् लक्षणेशता नहीत्थमत्रपार्थिवपरिचयेपार्थिवांतरंद्रष्टाद्रयंपृथिवीनवेत्तिसं दिग्धेर्दात एवंभूतत्रयस्यापिकारणंपरंतत्त्वंविज्ञायसर्वंज्ञायतेइतिद्वयोरर्थः ६१ । ६२ एकविज्ञानेनसर्वविज्ञानंगौणतयानयतांभेदवादिनांमतंनिरसितुमनुवदति स्थालीतिद्वाभ्यां । अयंन्यायः स्थालीपुलाकेतिनाम्नाप्रसिद्धः अयंकः पाकाधारभांडेस्थालीसंज्ञेगतएकंसिक्थंविक्लिन्नंतंडुलरूपंपुलाकपक्वंवाचपक्वापक्वान्यतररूपेणविज्ञायसर्वंपुलाकगणंतद्वज्जानीयादित्यर्थः ६३ एवमिति । उभराद्धंद्वतीतिशेषः तथाचकेचिद्विपश्चितएनंन्यायंविज्ञायमनसिनिधायइत्याहुः इतिकिं अत्रात्मनिज्ञातेसतिविज्ञानंविविधार्थगोचरंज्ञानमेवंस्थालीपुलाकवज्जायतइति तेषामेवमभिधानेहेतु स्तुनानायतानांभेदशालिमतानांविशेषेणावरनेरंतर्यरूपेणपद्धोधनंपरिशीलनंतदेवेत्यर्थः ६४ विकल्पपूर्वकंतन्निरासप्रकारमौपनिषदान्प्रतिबोधयति वक्तव्याइति । तेभेदवादिनोभवद्भिरौपनिषदैर्वं क्तव्याइत्थंप्रष्टव्याः इत्थंकथं हेवादिनोभवद्भिरेतत्श्रुतेःस्थालीपुलाकन्यायेनैवसर्वविज्ञानपरत्वंयदुत्प्रेक्ष्यतेकल्प्यतेएतत्कल्पनंकथंकीदृशहेतुकमित्यर्थः तत्रकिंस्वस्यकल्पकपुरुषस्यबुद्धिरेवहेतुः श्रुतिप्रमाणतावुद्धिर्वाहेतुःसंप्रदायउपदेष्टृगुरुपरंपरातस्यबलमानुकूल्यरूपंवाहेतुरित्यर्थः ६५

तत्रनाद्यः पौरुषेयबुद्धेरप्रामाण्यशंकास्कंदितत्वेनकथायांहेतुतयाऽनुपन्यसनीयत्वादित्याह पौरुषेयीमिति । वैदिकाःपौरुषेयींकेवलपुरुषसमुत्थितांमतिंनमन्यंतेनाद्रियंतेयतः पुरुषमतयो विप्लवंतेअर्थंव्यभिचरंतीत्यर्थः ६६ तस्याअमानत्वेकैमुतिकन्यायंसूचयति यतइति । यतोमहात्मातार्किकेषुमुख्यःकपिलोबुद्धप्रभृतयश्चस्वोत्प्रेक्षामात्रेणयत्किंचिद्वदंतःपरस्परंविरोधिनोनिरस्तयुक्तिकाद्दृष्टास्तद्धियामप्रामाण्येचसविरोधएवलिंगम् . यस्मादिहलोकेविरोधेनहेतुनाद्वयोर्मध्येकस्यापिप्रामाण्यंनावधारयितुंशक्यमितिप्रसिद्धमित्यर्थः । तथाचद्वितीयःपक्षोभवद्भिरालंबनीयःपरन्तुतदालंबनंभवतांश्रुतावनाश्वासिनांदुष्करमित्याशयेनाह ततइति । तद्बुद्धिंपौरुषेयींबुद्धिंसंत्यज्यान्याऽपौरुषेयीबुद्धिरिष्यतामन्वेष्टुंयोग्येतिद्वयोरर्थः ६७ । ६८ ननृतीयस्तस्यापि प्रथमपक्षांतर्भावेणतद्दोषैराक्रमणादित्याह संप्रदायादिति । यतःकापिलबौद्धादिभिःसंप्रदायंस्वंस्वमालंब्यापिश्रुत्यर्थनिर्णयेकारणंनिमित्तंनैवलब्धम् ततएवंविज्ञायतेयत्संप्रदायेसमाश्रितेसति पुंसोबुद्धिः पौरुषेयीमतिरेवसमाश्रिताभवतिनचापरंनचपौरुषेयमतिभिन्नंकिंचित्प्रमाणमाश्रितंभवतीत्यर्थः यदितत्तत्सांप्रदायिकाःश्रुत्यर्थोपयुक्तंप्रमाणमप्राप्स्यंस्तदाश्रुत्यर्थेविप्रतिपत्तिंनाकरिष्यन्नितिभावः ६९ ननुसंप्रदायपदेनलक्षणयास्वार्थलभ्योन्यायउच्यतेतस्यनिर्णयसाधनतायाःप्रसिद्धत्वादितिशंकते अथेति । तथाचतस्यनप्रथमपक्षांतर्भावइतिभावः इमांशंकांपरिहर्तुंकिंभूयोदर्शनजाबुद्धिर्न्यायपदेनविवक्षितातर्कोवाइतिविकल्पाभिप्रायेणपृच्छति सन्यायइति । कःकिंरूपः ७० तत्रनाद्यः नहिभूयोदर्शनेनकृतापृथिवीलोहलेख्यादिधीरपौरुषेयीतस्याःप्रामाण्याप

पौरुषेयींधियंनात्रमन्यंतेवेदवादिनः ॥ विप्लवंतेधियोयस्मात्पुरुषेयाव्यवस्थिताः ६६ यतोमहात्माकपिलोबुद्धकाणादगौतमाः ॥ उत्प्रेक्षाबुद्धयोदृष्टाःपरस्परविरोधिनः ६७ विरोधेनप्रमाणत्वंनकस्यापीहवादिनः ॥ ततस्तद्बुद्धिसंत्यागादन्याबुद्धिरिहेष्यताम् ६८ संप्रदायाद्यतोनैवकारणंश्रुतिनिर्णये ॥ संप्रदायेततःपुंसोबुद्धिरेवनचापरम् ६९ अथचेत्संप्रदायोयंन्यायइत्यभिधीयते ॥ सन्यायःकोत्रसंप्रष्टाःकथयंत्विहवादिनः ७० पुरुषस्यधियंहित्वान्यायोनामात्रकश्चन ॥ वर्णनीयःपृथग्येनसंप्रदायःपृथग्भवेत् ७१ अथचेत्तर्कउद्दिष्टोन्यायस्तंकथयंत्विह ॥ अनुग्रहकरोयस्मान्मानानांतर्कएषसः ॥ इतिचेत्तत्रकोनाममानानुग्रहईर्यताम् ७२ प्रमाणंचेत्स्वतोमानंतर्कस्तत्रकरोतिकिम् ॥ अनुग्रहमतोन्यंवाज्ञेयंचेत्कुरुतेकथम् ॥ मानानुग्राहकत्वंस्यात्तस्यतत्परमंस्थितम् ७३

त्तेरित्याशयेनाह पुरुषस्येति । अत्राद्यपक्षेपुरुषमतिंविनान्यायस्वरूपंवर्णयितुंशक्यंयेनन्यायस्वरूपभेदेनसंप्रदायपक्षःप्रथमपक्षाद्भिद्येतेत्यर्थः ७१ अथद्वितीयपक्षंतर्करूपंप्रश्नोत्तराभ्यांनिरस्यति अथचेदित्यादिना । यदितर्कोन्यायपदेनविवक्षितस्तदातंपक्षंवादिनःकथयंतुउपपादयंतु कुतोन्यायस्यतर्करूपत्वमितियावत् एवंपृष्टैर्यदीत्थमुच्यते न्यायोपिमानानुग्रहायोपन्यस्यते तर्कोपिमानानुग्राहकत्वेनप्रसिद्धइत्यतःसन्यायस्तर्कस्तर्करूपएवेतितदातेइतिप्रष्टव्याः तेनतर्करूपन्यायेनमानोपर्यनुग्रहःकिंरूपःक्रियतेइतिवक्तव्यमित्यर्थः ७२ किंप्रामाण्यनिष्पत्तिरूपमनुग्रहं तर्कोमानस्यकरोतिकिंवाप्रतिद्वंद्विपरिहाररूपंअथवाप्रामाण्यव्यंजनरूपमितिविकल्प्यनाद्यःस्वतःप्रामाण्यवादेसंभवतीत्याह प्रमाणमितिद्वाभ्यां । प्रामाण्यंहिप्रमाणस्यकर्मविषयप्रकाशनलक्षणं तस्यनिष्पत्तिंप्रमाणंस्वतःस्वयमेवकरोतियतःस्वतोमानंस्वरूपेणमानंभवति नहिदीपःस्वविषयसाधनेदीपांतरमपेक्षतेऽदीपत्वापत्तेः एवंप्रमाणस्यविषयसाधनेपरापेक्षायाममानत्वापत्तिः यद्येवंतदातर्कोमानोपरिकमनुग्रहंकरोतीतिवाच्यम् यदिचमानविषयाद्विषयांतरमेवतर्कोज्ञेयंस्वविषयंकरोतितदापितर्कस्यमानानुग्राहकत्वंकथंस्यात् यतस्तस्यमानस्यतद्विषयभासनरूपंप्रामाण्यंपरंपरानपेक्षत्वेनोत्कृष्टंस्थितंसिद्धंभवेत्यर्थः ७३

किंचतर्कस्यामानभूतस्यमानंविपयेप्रवेशोभ्रमेणापिनभवतिकस्यापिसाहश्यस्यासंभवादित्याह मानामानेइति । मानंचअमानंचएतेद्वेअपिस्वरूपभेदेनाश्रयभेदेनचनित्येसदाव्याप्तेसर्वथाविलक्ष णेइतियावत् यतोऽनयोर्मध्येऽन्यस्यएकस्यआकृतिःसामान्यरूपाअपरस्यद्वितीयस्यनदृश्यतेइत्यर्थः ७४ अथद्वितीयंप्रतिद्वंद्विपरिहारपक्षंशंकते अथचेदिति । अत्रलोकेयद्वत्स्वम्यानिष्टकार णंप्रसिद्धंतद्वदनिष्टपरिहारलक्षणस्यानुग्रहस्यकारणमपिप्रसिद्धंतथाइहप्रकृतेपिस्यादितिचेदितियोजना ७५ एतंपक्षंपरिहरति नैतदेवमितिचतुर्भिः । एतन्मानविरोधिपरिहरणमेवंलोकवत्अत्र नसंभवति यतइदंमानामानयोर्युगलंनियतम् एकदेशेमिलितंनदृश्यते एतदेवस्फुटयति मंडूकइत्यादिना । यथामंडूकोमक्षिकारूपंग्रासंग्रसंस्तंकवलितमक्षिकंमंडूकंग्रसन्सर्पश्चप्रसिद्धस्तथा माप्रमात्वयोर्मात्वाऽमात्वयोस्तदुपलक्षितमानामानयोरपिचद्वित्वंद्वंद्वमन्यतरग्रासकंकिंप्रसिद्धमित्यर्थः ७६ तत्रविषयैक्याभावंहेतुमाह एकस्मिन्निति । यत्रसमानबलयोर्द्वयोरेकत्रवि षयसन्निपातोनिवेशोभवेत्तत्रद्वित्वंप्रतिद्वंद्वीभावइष्यतेस्वीक्रियतेपरीक्षकैरित्यर्थः ७७ प्रकृतेतदभावायभिन्नविषयत्वमेवदर्शयति मानमिति । मानंप्रमाणंवस्तुनिसत्यविषयएवयातिवर्त्ततेअ मानंत्ववस्तुन्यनृतविषयएवयातितथातयोर्धर्मौमात्वामात्वरूपावपिपरस्परंविविक्ताश्रयकावेवेत्यर्थः ७८ किंचमानस्यविरोधीअमानत्वेनविज्ञायतर्केणनिरस्यतेमानत्वेनविज्ञायवा नाद्यः पि ष्टपषणत्वादित्याह अमानमितीति । द्वितीयःपक्षस्तुतवदुराग्रहशीलस्यदुष्करइत्याह मानाभिमानेनेति । अस्यमानविरोधिनोनिरासोनसंभवतितिमतेआग्रहपरित्यागेतुश्रुतिरेवकुतोनशरणो

मानामानेयतोनित्येस्वरूपाश्रयभेदतः ॥ नह्यन्यस्याकृतिःकाचिदपरस्यात्रदृश्यते ७४ अथचेत्स्यात्सुप्रसिद्धमनिष्टस्यात्रकारणम् ॥ अनुग्रहकरंस्वस्य यद्वत्तद्वदिहापिच ७५ नैतदेवंयतोनात्रलभ्यतेनियतंत्विदम् ॥ मंडूकोमक्षिकाग्रासंग्रसेत्सर्पोग्रसेचतम् ॥ प्रसिद्धंद्वित्वमप्येतत्किमिदंमाप्रमात्वयोः ७६ एक स्मिन्विषयेयत्रसन्निपातोद्वयोर्भवेत् ॥ समानबलयोस्तत्रप्रसिद्धंद्वित्वमिष्यते ७७ मानंवस्तुनिचात्मानंसर्वदायात्यवस्तुनि ॥ मात्वामात्वेचवर्त्तेतेभिन्नयोरेवमा नयोः ७८ अमानमितिविज्ञातेनियतंमृतमारणम् ॥ मानाभिमानेनाप्यस्यनिरासस्तेनसंभवेत् ७९ परतोपियदामानंभवेत्तर्कस्यकस्तदा ॥ अनुग्रहोयतःसो यंन्यायात्पाऽन्यपरोभवेत् ८० अमानस्यनमानत्वंकर्तुंतर्कशतेनच ॥ शक्यंमानस्यतन्नैवसिद्धत्वात्क्रियतेपुनः ८१ ज्ञानंप्रतिभवेत्कर्तातदाकेनाविनिर्ग्रताम् ॥ अमानंसंभवंस्तर्कोज्ञापकोत्रभवेद्यदि ॥ तेनज्ञानस्यमेयत्वंस्यात्सदाशुक्तिरूप्यवत् ८२

क्रियतइतिभावः ७९ प्रामाण्यस्यपरतस्त्वपक्षेपिनोक्तदोषमतिदिशति परतोपीति । यदामानंप्रमास्वरूपंपरतःसामान्यसामग्रीभिन्नायागुणसंज्ञायाविशेषसामग्रीतोजायतइतिमतंतदापित र्कस्तर्कोमानोयंनुग्रहउपकारःकःकिमात्मकः यतोयमनुग्रहव्यापारमादायसोयंतर्कःअन्यपरःपरोपकारकोभवेत्नयवाञ्छ्येतेत्यर्थः । अयंभावः नहिसोनुग्रहोविषयप्रकाशलक्षणः तस्य मानेनस्वयमेवकृतत्वात् नापिप्रमातृगतासंभावनानिवृत्तिरूपः तस्यादुरदृष्टप्रयुक्तायास्तद्विरोधिसुकृतप्रयोज्यत्वात् तत्करणेपिमानंप्रत्यनुग्राहकत्वस्यदुर्वचत्वान्नहिमानंप्रमातृरूपमिति ८० अनुग्रहासंभवमेवाभिनयति अमानस्येति । यत्स्वयममानंविषयभासनाक्षमंतस्यमानत्वंतर्कशतेनापिकर्तुंनशक्यम् यत्तुमानंतदीयमानत्वंपुनर्नकेनचित्क्रियतेसिद्धत्वादेवेत्यर्थः ८१ अथतृतीयंव्यंजकत्वपक्षमनूद्यनिरस्यति ज्ञानमित्यादिना । यदितर्कोज्ञानंप्रामाण्यगोचरंप्रतिकर्ताप्रामाण्यव्यंजकइतियावत् इत्येवंमन्यतेतदापिइतिवक्तव्यम् इतिकिं अयंतर्कःकःकिंममा नरूपःकिंवामानरूपः आद्येऽनेनतर्केणनिरूपितंज्ञानस्यग्राह्यप्रामाण्याश्रयस्यमेयत्वंविषयत्वंशुक्तिरजतवदेवमिथ्यात्वप्रयोजकंस्यात् तथाचामानविषयस्यप्रामाण्यंसत्यकारणतावादिनस्तवमते व्याहतमितिभावः ८२

४१

नद्वितीयः स्वपसिद्धांतापत्तेः प्रमाणानुग्राहकत्वप्रसिद्धिविरोधापत्तेश्चेत्याह मानतेति । तर्कस्यमानताऽयुक्ताइतिशेषः यतःसर्ववादिनांनसंमता किंचात्रपक्षेप्रमाणत्वेनैवतर्कस्यसंग्रहात्तर्को मानानुग्राहकइतिनवक्तव्यंस्यादित्यर्थः ८३ किंचमत्पक्षेतर्कांतर्भावस्यव्याहतत्वादनुमानादावेवतदंतर्भावोवाच्यःसचननियंतुंशक्यः अनुमानादीनामेवप्रामाण्येसर्ववादिनामैकमत्याभावात् तथाहि लोकायतिकोऽनुमानादिकंनमन्यतेकणादःसुगतश्चशब्दादिकंनैयायिकोऽर्थापत्त्यादिकंप्राभाकरोऽनुपलब्धिमित्याशयेनाह प्रमाणानीति । सर्ववादिनामैकमत्यगोचराणिसर्वाणिप्रमा णानिनसंतिकिंतुप्रतिवादिअनियतान्येव तेपुनर्करूपोन्यायोंतर्भवन्कःकिमात्मकःस्यादितिवक्तव्यमित्यर्थः ८४ ननुआपाततःप्रमाणेंतर्भावितोपितर्कःपश्चादर्थाव्यभिचाररूपलक्षणेनप्रमाणपरी क्षायांसत्यामप्रमानतांयास्यतीतिनाविनिगमदोषइतिशंकते नन्विति । स्वस्यस्वकीयान्मेयाद्यभिचारंविषयांतरपरत्वंनगच्छतितदेवमानंभविष्यतीत्यर्थः ८५ तथाप्यविनिगमदोषान्ननिर्मो क्षइतिपरिहरति एवंचेदिति । मात्रपदंकास्न्र्ये तथाचएवमुक्तलक्षणेनप्रमाणपरीक्षायांसत्यांचेद्यदिसर्वेषांप्रमाणानामनुपलब्धयंतानांमेयाव्यभिचारलक्षणंप्रामाण्यंस्यात्तथाचतथासत्येतत्स न्निहितमुक्तंदूपणंन्यायःकिंप्रमाणरूपोभवेदित्यविनिगमरूपमापतेत्प्रसज्जेतैवेत्यर्थः सर्वेषामनुपलब्ध्यंतानांस्वस्वविषयनियतंप्रामाण्यंभट्टपादादिभिर्व्यवस्थापितमेवेतिभावः ८६ अथतर्काभि निवेशीअनुमानांतर्भावोन्यायस्यमुखेनसर्वप्रमाणांतर्भावंतर्कस्यशंकते अथन्यायइतिद्वाभ्यां । अथेतिशंकापरम् नानाप्रमाणरूपानुमानरूपोभवतुन्यायस्तर्कइतिप्रथमदलार्थः कथमनुमा

मानतानैवतर्कस्यवादिनांसंमतायतः ॥ मानत्वेचप्रमाणीत्त्यान्यायउक्तोभविष्यति ८३ प्रमाणानिचसर्वाणिसर्ववादिमतेनच ॥ किंतुकस्यापिकिंचित्तुतत्र न्यायःकईर्यताम् ८४ ननुयन्मेयतःस्वस्यव्यभिचारंनयातिहि ॥ तदेवमानमित्युक्तंनेतरद्व्यभिचारियत् ८५ एवंचेन्मानमात्रस्यनमेयव्यभिचारिता ॥ त थाचपुनरप्येतदुक्तदूपणमापतेत् ८६ अथन्यायोनुमानंस्यान्नानामानस्वरूपकम् ॥ आगमात्माप्रतिज्ञास्यादनुमानंचसाधने ८७ व्याप्तिःप्रत्यक्षमित्युक्त मुपमानंनिदर्शनम् ॥ सर्वेषांसमुदायःस्याद्वाक्यंनिगमनंहियत् ८८ इदमायुष्मतोवाक्यंशतदूपणदुर्द्धरम् ॥ ब्रह्मणश्चेन्द्रवेचायुर्ममतेपिद्वयोरिह ८९ तदास्य दूपणंसर्ववक्तुंज्ञातुंचशक्यते ॥ इहाशांदूपणस्यास्यवदामिन्यायवेदिने ९० प्रमाणानिसदैवैककार्यकारीणिवान्यथा ॥ अन्यथाचेदिहाप्येवंतस्मात्तानिनकुर्व ते ९१ एवंचमानतातेपामनुमानंविनानाहि ॥ नचेत्प्रदृश्यतेचात्रमानतासर्वसंमता ९२

नरूपस्यनानाप्रमाणरूपतेत्यतआह आगमात्मेति । पंचावयवकेऽनुमानेप्रथमोऽवयवःप्रतिज्ञाअगमप्रमाणरूपा साधनंद्वितीयोवयवोनुमानरूपः व्याप्तिःव्याप्तिप्रतिपादकमुदाहरणम् प्रत्यक्षरूपंनिदर्शनंतथाचायमित्याद्याकारकउपनयउपमारूपः तस्मादित्यंशेनपूर्वोक्तसर्वसंग्राहकंनिगमनंसर्वप्रमाणरूपमितिद्वयोरर्थः ८७ । ८८ एनांशंकांपरिहरन्दोपानंत्यंतावद्वंगिवि शेषेणाह इदमिति । इदंतवशंकावाक्यंदूपणशतेनदुर्धरंदुष्पूरम् असंख्यदोषमितियावत् अस्यसमस्तदोषाभिधानंयद्यपिवक्तृश्रोत्रोर्विधातृसमेनायुषासाध्यंतथापीहप्रकरणेएतदीयदूपणाना माशांदिशंतुर्भ्यंन्यायाभिनिवेशिनेप्रदर्शयामीतिद्वयोरर्थः ८९ । ९० प्रमाणानीति । किंप्रमाणानामेककार्यकारित्वंस्वभावः किंवाअन्यथानानाविधमेवकार्यंकुर्वंति अंत्ये इहानुमाना ख्यतत्समुदायमध्यंपितान्यागमादीनिप्रमाणानिएवंनानाविधमेवकार्यंकिंनकुर्वंतीत्यर्थः तथाचतेषामेकप्रमाणांतर्गतत्वोक्तिर्व्याहतेतिभावः ९१ आद्येआह एवंचेति । एवमेककार्यका रित्वनियमेसतितुतेषामनुमानातिरिक्तप्रमाणानांमानताप्रामाण्यमनुमानंविनानस्यादितिशेषः इष्टापत्तिंनिरस्यति नचेदिति । अनुमानसापेक्षमेवसर्वेषांप्रामाण्यंतदास्यात्यदिस्वस्वविषये सर्वेषांप्रामाण्यंनदृश्येततत्तुप्रदृश्यतेइत्यर्थः ९२

साधनमिति । यदिसाधनंहेतुसंज्ञोद्वितीयोऽवयवोप्यनुमानरूपस्तदातुमननस्यसर्वप्रमाणरूपतोक्तिर्व्याघातस्तन्मात्रेइतरेषामनुपलंभात् यदितस्याध्याहारादिनासर्वमानरूपतोपपाद्यतेतदातस्य पंचम्यंतंलिंगवचनंहेतुरितिलक्षितायाःसाधनतायाःस्याद्व्याहतिरित्यर्थः ९३ किंचपंचानामवयवानांवाक्यात्मकत्वेसमाने सतिप्रतिज्ञावाक्यस्यैवआगमप्रमाणरूपताभिधानमयुक्तमित्याह वचने ष्विति । स्पष्टम् ९४ संदिग्धार्थप्रतिपादिकायाःप्रतिज्ञायानिश्चयात्मकप्रमाजनकमुख्येनागमेनसहाभेदाभिधानंकथंनव्यवहतंस्यादित्याह संदिग्धमिति । यआगमःससंदिग्धार्थगोचरंसंदेहरूपमर्थज्ञानंनजनयति नोचेत्संदिग्धंब्रूतेचेत्तदासएवनस्यात् आगमत्वादेवप्रच्यवेतेतिभयत्पक्षेपिसिद्धं तथाचतद्विरुद्धंकथंप्रतिज्ञायाआगमत्वंस्यादित्यर्थः उपनयेतथापदंनिगमनेतस्मादितिपदंच व्याप्यसंबंधमात्रपरंनसादृश्यादिपरं तदनालोचनादिकंदूषणजातमन्यत्राप्यवयवेबोध्यं तथातर्कंजीवनौषधभूतायांव्याप्तौकल्पनारिमकायांप्रत्यक्षतानुपपत्त्यादिकंबोध्यं कल्पनामात्रत्वंचतस्या भट्टपादैरुक्तं तथाहि ' साहित्येमितदेशत्वात्प्रसिद्धेवह्निधूमयोः । व्यतिरेकस्यचादृष्टेर्गमकत्वंप्रकल्प्यते' इति अस्यार्थः मितदेशत्वात्प्रमितमहानसादिदेशवृत्तित्वेनवह्निधूमयोः साहित्येसंबंधेप्रसिद्धेसतिसम्यग्ज्ञातेसतिव्यतिरेकस्यव्यभिचारस्यादर्शनशालिनापुरुषेणधूमगमकत्वंवह्निबोधनसामर्थ्यंभूतानियतसाहचर्यलक्षणाव्याप्तिःकल्प्यतेइति तथाचागमरूपंभास्वंतमुपेक्ष्यकल्पनानिदानेतर्केत्यादरोहृदिमांद्यमेवस्फुटयतीतिभावः अतएवपक्षपातराहित्यबोधकंद्विजसत्तमैरित्युक्तम् ९५ कथंतर्हिमीमांसारूपतर्कोमंतव्यइत्यादिश्रुतिप्रभृतिभिरादृतइतिशंकामुपसंहारमुखेनपरिहरति मीमांसेति

साधनंचानुमानंचेत्सर्वमानात्मकंकथम् ॥ भवेच्चेत्सर्वमानत्वंतस्यसाधनताकुतः ९३ वचनेपुचसर्वेषुस्थितेष्वागमताकुतः ॥ प्रतिज्ञावचनस्यास्यतदप्यत्रविचिंत्यताम् ९४ संदिग्धंनागमोब्रूतेभवत्पक्षेपिकर्हिचित ॥ नोचेत्सएवनैवस्यादित्याद्यत्रचदूषणम् ॥ सर्वावयवगंज्ञेयंव्याप्तौचद्विजसत्तमैः ९५ मीमांसागतएषोपिन्यायोनैवोपपद्यते ॥ वेदवाक्यंविनातस्मान्मध्यपक्षोविशिष्यते ९६ श्रुतिबुद्धिस्तुविज्ञेयापदवाक्यार्थदर्शनात् ॥ मृदःपिंडलोहमणितथानखनिकृंतनम् ॥ उपादानंसमादायह्युपादेयैक्यमाहसा ९७ स्थालीपुलाकवत्तेननसर्वज्ञानमब्रवीत ॥ उपरिष्टादिहाप्यस्याउक्तिर्यस्मात्तादृशी ९८ ततोयथात्रविज्ञानाद्रज्ज्वाःसर्पादिकंभवेत ॥ ज्ञातंतथात्मविज्ञानाद्विश्वंज्ञातंभवेदिह ९९

एषन्यायस्तर्कोमीमांसायांगतआचार्यैरुपन्यस्तोपिवेदवाक्यं मूलभूतंविनानोपपद्यतेनार्थमवधारयितुंक्षमतेकिंतुश्रुत्याक्षिप्तएवतथा यथासंदिग्धेवाक्यशेषादित्यादितथाचवेदेनशुष्कतर्कस्यादरइति भावः तस्मादुक्तदूषणग्रासात्स्वबुद्धिपक्षस्यसंप्रदायबलपक्षस्यचायुक्तत्वान्मध्यपक्षःश्रुतिबुद्धिरूपएवग्राह्यइत्यर्थः ९६ ननुश्रुतिबुद्धिरेवतर्कंविनाकथंस्यादितिचेन्न पदार्थान्व्याकरणादिलौकिकोपायैर्वाक्यार्थंमर्यादांचोपक्रमोपसंहारादितात्पर्यलिंगैर्विज्ञाय शुष्कतर्कमंतरापितस्याःसुलभत्वादित्याह श्रुतीति । विज्ञेयालभ्या प्रकृतेतुस्थालीपुलाकन्यायमुपेक्ष्यैवश्रुतेःप्रवृत्तिरित्याह मृदइति । मृत्पिंडपदेनलोहमणिपदेननखनिकृंतनपदेनचलक्षितमुपादानंकारणतत्त्वमुपादायानूद्यतेनसहोपादेयानांविकाराणामैक्यंभेदाभावंसाश्रुतिराहप्रतिपादयतीत्यर्थः ९७ फलितमाह स्थालीति । तेनसाप्रकृताश्रुतिःस्थालीपुलाकन्यायेनसंभावनामात्ररूपंसर्वविज्ञानंनप्रतिपादयति यतस्तस्याउक्तिःपदसामानाधिकरण्यशालिनीकथनशैलीउपरिष्टादुत्तरग्रंथेइहवाक्येचतादृशीउक्तन्याये नसाध्यप्रापकत्वमादिहीनमभवदित्यर्थः ९८ कथंतर्हितस्याःप्रवृत्तिरितिचेद्विवर्तवादगतेनरज्जुसर्पादिन्यायेनेतिदर्शयति ततइति । ततउक्तप्रकारासंभवाद्यथाधिष्ठानरज्जुतत्त्वज्ञानेनसर्वेरज्जौकल्पिताःसर्पदंडजलधारादयस्तत्त्वतोज्ञाताभवंतितथाकारणविज्ञानात्सर्वंविज्ञानमित्यर्थः ९९

अनेनाशयेनपित्राश्वेतकेतुंप्रतिब्रह्मबोधितमित्याह इत्यभिप्रायेति १०० कारणाद्भिन्नीयुत्वंपरतायांहेतुप्रदर्शकत्वेनवाचारंभणादिभागार्थमाह उपपत्तिमितिचतुर्भिः । कारणाद्भेदेनय त्कार्यवर्गस्यासत्त्वंकारणाद्वैततप्रयोजकंतस्यसिद्धयेविशदीकरणायइमांवक्ष्यमाणांयुक्तिंपिताप्रोक्तवानित्यर्थः १०१ नामेति । इदंयटादिरूपंकार्यंनामधेयंनाममात्रं यतोवाचाश्रा ब्दमात्रेणैवारभ्यतेस्पष्टत्वेनव्यवह्रियतेनत्वर्थतःकिंचिदप्यारभ्यते नह्रिमृदाघटआरब्धइतिवक्तुंशक्यं तस्यमृन्मात्रत्वात् कथंमृदामृदेवारभ्येत । तार्किकाद्दिकपालभिन्नंघटंकपालारब्धं ब्रुवतेइतिभावः तथाचसविशेषणेहीतिन्यायेनघटेऽव्यवह्रियमाणोमृद्भेदोनामोपाधिकएवेत्याह कारणादिति । कार्यंयत्कारणावधिकभेदविशिष्टंप्रतीयतेतत्तद्वन्नामविशिष्टंसदेवप्रतीयतेन केवलमित्यर्थः तथाचनाम्नएवभेदइतिभावः १०२ एतद्दृष्टांतेनस्फुटयति कोवेति । वाशब्दइवार्थः यथापटभावंगतांस्तंतून्पृथक्कृत्यातिबुद्धिमानपिकःपटंविलोकयेत्नकोपितथामृ दादिकारणंहित्वाविविच्यकोघटादकार्यंविलोकयेदित्यर्थः १०३ तस्मात्कारणमेवसत्यमित्याह ततइति । स्पष्टम् १०४ कार्यस्याविवर्ततामेवप्रकटयति रज्ज्वामिति । स्पष्टम् १०५ नचेयंश्रुतिःपरिणामदृष्टयभिप्रायाकारणस्यसत्यतोक्तिविरोधादितिदर्शयन्परिणामवादंनिरस्यति कारणमितिनवभिः । यदिकारणंक्षीरदधिन्यायेनपरिणमेततदाविनश्येतैव तथाचतत्स

इत्यभिप्रायवान्श्वेतकेतुमारुणिरब्रवीत् ॥ दृष्टांतत्रयतोविश्वकारणंब्रह्मकेवलम् १०० उपपत्तिमिमांप्राहुःकार्यस्यासत्त्वसिद्धये ॥ कारणाद्व्यतिरेकेणसर्वत्रैवाति धीधनः १०१ नामधेयमिदंकार्यंवाचैवारभ्यतेयतः ॥ कारणाद्व्यतिरेकेणकार्यंतद्वत्प्रतीयते १०२ कोवापटगतांस्तंतून्पृथक्कृत्यातिबुद्धिमान् ॥ पटंविलोकयेत्त द्वन्मृदंहित्वाघटादिकम् १०३ ततःकारणमेवैकंसत्यंयन्मृदादिकम् ॥ कार्यंस्यादनृतंयस्मान्नाममात्रात्प्रतीयते १०४ रज्ज्वांफण्यादिकंयद्वत्स्वेवागंधर्वपत्तनम् ॥ मृषाप्रतीयतेतद्वद्विकारःकारणेखिलः १०५ कारणंकार्यरूपेणविक्रियासुप्रयातिचेत् ॥ क्षीरंदध्यात्मनायद्वद्ध्रुवंनाशंचतद्व्रजेत् १०६ नहिदध्यात्मतांप्राप्तंक्षी रंनाशविवर्जितम् ॥ पूर्ववल्लभ्यतेयद्वन्मृद्घटाद्यात्मतांगता १०७ ततोदध्नोत्रनैवस्यात्क्षीरंसाक्षाद्विकारणम् ॥ किंतुक्षीरस्यदध्नश्चतकस्यापिघृतस्यच १०८ कारणंपशुघासस्थास्तेजोबन्नस्वरूपिणः ॥ केचित्त्ववयवास्तेतुलभ्यंतेसर्वदैवहि १०९ मृत्पिंडोत्रयथैवस्यान्निमित्तंघटजन्मनि ॥ आकारवान्मृदोभिन्नःक्षीरंदध्न स्तथास्मृतम् ११० घटेजातेयथैवात्रमृत्पिंडोनैवलभ्यते ॥ दध्यादौचतथाक्षीरंकदाचिन्नैवलभ्यते १११

त्यत्वेननोच्येतेतिभावः १०६ परिणामिनाशमेववैधर्म्येणाह नहीति । नेत्यावर्त्तते तथाचदध्यात्मतांप्राप्तंक्षीरमविनष्टमितिम यतोघटात्मतांप्राप्तामृद्यथापूर्ववल्लभ्यतेतथानलभ्यते इत्यर्थः १०७ यच्चपरिणामितदुपादानमेवनभवति कार्यानुगमरूपस्योपादानलक्षणस्याभावात् किंतुकार्याकारभ्रमेदोपविधयानिमित्तमेवेत्याह ततइति । ततोविनाशित्वात्क्षीरंदध्नः साक्षादनुगतंकारणमुपादानाख्यंनभवति किंतर्ह्युपादानमितिचेत्पृथिव्यादिभूतत्रयमेवयत्सर्वत्रानुगतंतत्तद्रूपैरुपलभ्यतइत्याह किंत्वित्यादिना । येतेजोबन्नात्मकाःकेचिदवयवाघासेयेनु भक्ष्येप्रथमंस्थितास्तेक्षीरादीनामुपादानं वक्ष्यमाणैःकृष्णादिरूपैःसर्वत्रोपलभ्यमानत्वादितिद्वयोरर्थः १०८ । १०९ क्षीरस्यदधिप्रतिनिमित्ततांस्फुटयति मृत्पिंडइति । यथाआकार विशेषशालीमृत्पिंडोघटस्यजन्मनिघटाकारभ्रमेनिमित्तमात्रं घटदशायामननुगमात् तथाक्षीरंदध्नइत्यर्थः ११० परिणामिनोऽननुगमंनिदर्शयति घटेजातइति । यथाघटोत्पत्तौसत्यांमृत्पिं डस्यानुपलब्धिस्तथादध्युद्भवेक्षीरस्येत्यर्थः १११

अधिष्ठानस्यकारणत्वंस्फुटयितुमनुगममाह मृदेवेति । यथाचूर्णपिंडादिरूपैर्हीनामृद्धटादिदशायामप्यनुगताकारणत्वयोग्यातथाधामस्वप्यवयवभावेनस्थितास्ताःपृथिव्यप्तेजोभिधादेवताःसर्व लौकिककार्येष्वनुगतालभ्यंतेयतस्ततस्ताएवदध्यादीनांकारणमित्यर्थः ११२ फलितमाह ततइति । ततःविनाशित्वाद्धेतोःपरिणामिवस्तुनोपादानत्वयोग्यं यत्त्वतद्वर्जितंपरिणामरहितंस्थि रंतदेवोपादानमित्यर्थः ११३ एवंसतिश्रुतौलोहमणिनखनिकृंतनपदाभ्यांलक्षितयोःसुवर्णायसोरपिनपरिणामित्वेनदृष्टांतता तथासतिसत्यत्वस्यासाधर्म्यस्यव्याघातात् किंतुविवर्तोपादानत्वेनैवेत्या शयेनाह परिणामीति । यदिसुवर्णादिकमपिपरिणामिभवेत्तदाकुंडलाद्युत्पत्तौनोपलभ्येततत्तूपलभ्यतेतस्मात्परिणामिकारणत्वेननदृष्टांततयेष्टमित्यर्थः ११४ एवंकारणस्यसत्यत्वेवस्तुमहिंत्रे वभेदाभेदमतनिरासपूर्वकमद्वैतंविकारस्यतेइत्याह भेदाभेदइति । कार्योपादानयोर्यःसांख्यभट्टादिभिरभ्युपेतोभेदाभेदःसत्यभेदविशिष्टोऽभेदोयश्चवैशेषिकादिभिरभ्युपेतोभेदःकेवलस्तदुभयमप्यु क्तमित्यर्थः तत्रभेदासंभवेहेतुतयातद्व्यापकस्यभिन्नदेशत्वस्याभावमाह भेदइति । यत्रभेदस्तत्रभिन्नदेशत्वंदृष्टंयथागवाश्वयोस्तदिहतंतुपटाभ्यांव्यावर्त्तमानंस्वव्याप्यंभेदमपिव्यावर्त्तयतीत्यर्थः ११५ ननुपटस्यतंतुदेशत्वंतंतूनांभूतलादिदेशत्वंचवदद्भिस्तार्किकैर्भिन्नदेशत्वमभ्यतएवेतिचेत्तल्लोकप्रतीतिविरोधादयुक्तमित्याह भिन्नेति । वादिभिर्यदुभयोःकार्यकारणयोर्भिन्नदेशत्वमुच्यतेतत्क ल्पितमेवोच्यतेनवस्तुगत्यंयतोलोकैर्भूतलादिवृत्तितामेवघटादीनामनुभवद्भिस्तन्नोपगम्यतइत्यर्थः भेदाभेदपक्षस्तुविरोधादेवायुक्तइत्याह भेदइति । यदिभेदःस्यात्तदातावताभेदसत्तामात्रेणभेदाभे

मृदेवलभ्यतेयद्वत्सर्वत्रैवघटादिषु ॥ धामस्थावयवास्तद्वल्लभ्यंतेदेवताहिताः ११२ ततोयत्परिणामिस्यात्क्षीरवत्तन्नकारणम् ॥ यत्तद्वर्जितंतत्तुविज्ञेयंकारणंसदा ११३ परिणामिसुवर्णादिभवेच्चेत्क्षीरवद्धितत् ॥ लभ्येतनपुनस्तस्मात्परिणामिनकारणम् ११४ भेदाभेदोनभेदोवाकार्यकारणयोःक्वचित् ॥ भेदेगवाश्ववद्भिन्नदेशेस्यातामुभेअपि ११५ भिन्नदेशत्वमुभयोर्वादिभिःकल्पनाकृतम् ॥ यस्मान्नगम्यतेसर्वलोकैर्घटपटादिषु ॥ भेदःस्यात्तावतानैवभेदाभेदोभविष्यति ११६ तस्मादभिन्नमेवैतत्कार्यंस्यात्कारणात्सदा ॥ सर्पादिकंयथारज्ज्वाःपृथगनुपलब्धितः ११७ रज्जुतत्त्वेचविज्ञातेसर्पादिनवलभ्यते ॥ यथातथैवकार्याणिहेतुतत्त्वविनिर्णये ११८ अपरोक्षधियानाशमपरोक्षभ्रमोव्रजेत् ॥ विपर्ययेतुवर्त्तेतदिङ्मोहइवधीमताम् ११९ घटादिकंयथाकार्यमविभक्तेनहेतुना ॥ तेजोबन्नात्मकंत्वेतत्कार्यंतेनैवहेतुना १२० विभागश्चात्मनोन्यत्वंजाड्यमेवसमीरितम् ॥ ततोनैवात्मनोपिस्यात्कार्यतातेनहेतुना १२१

दपक्षोनैवभविष्यतिनोपपत्स्यतइत्यर्थः नहिविरुद्धयोःसमावेशःक्वापिदृष्टइतिभावः ११६ तथाचकारणस्यवास्तवैक्यंसिद्धमित्याह तस्मादिति । पृथगनुपलब्धितोविवेकदृष्ट्यापृथक्त्वाभावा दित्यर्थः ११७ एतत्कारणाद्वैतंविद्वदनुभवसिद्धमित्याह रज्जुतत्त्वइति ११८ सचतत्त्वनिर्णयोऽपरोक्षरूपएवभेदभ्रमस्यापरोक्षस्यापहारेक्षमइत्येतत्सदृष्टांतमाह अपरोक्षेति । अपरोक्षोभ्र मःसाक्षात्कारेणैवनाशंव्रजेत अन्यथापरोक्षज्ञानोदयेपिवर्तेतैवयथादिग्भ्रमइत्यर्थः ११९ एवंघटादिनिरूपितभेदाभावंतेजोबन्नेपुनिश्चित्यतेषामपिकार्यत्वेनतद्भेदाभावंपरमकारणेसतिजानीया दित्याह घटादिकमिति । यथाघटादिकंकार्यंपरस्परविभक्तमविभक्तेनविभागहीनेनसर्वत्रानुगतेनहेतुनाकारणेननिरूप्यंतथातेजःप्रभृत्यपिविभक्तत्वलिंगेनकार्यंसत्तेनाविभक्तेनहेतुनैवनिरूप्य मित्यर्थः विभक्तत्वेनहेतुनाइतिपाठेतुस्पष्टम् १२० ननुविभागोभेदरूपःकार्यत्वंनसाधयतिआत्मादावपिवर्त्तमानत्वेनव्यभिचारादितिचेन्न आश्रयसमानसत्ताकस्यैवभेदस्यजाड्यपर्यवसन्न स्यहेतुत्वेनविवक्षितत्वात् नाप्यविद्यादौव्यभिचारः कल्पितत्वलक्षणस्यकार्यत्वस्यतत्रापिसत्वादित्याशयेनाह विभागश्चेति । कार्यत्वस्याध्यस्ततारूपस्यहेतुतयाउपन्यस्तोविभागस्तुजाड्यल क्षणश्चिदात्मभेदरूपएवेत्युक्तं तथाचानेनविभागरूपेणहेतुनाआत्मनोपिकार्यत्वप्रसक्तिर्नभवतीत्यर्थः १२१

ननुव्यंजकाभावेव्यंग्याभावइतिनियमाभावादुक्तहेतुरूपव्यंजकाभावेप्यात्मनःकार्यत्वंकिंनस्यादित्याशंकांवारयितुमात्मनःकार्यत्वानुपपत्तिंप्रपंचयति अथेतिनवभिः । अथउक्तसाधनंविनापि यद्यात्मनःकार्यत्वमिष्यतेतदापीदंवाच्यम् किमियमात्मनिष्ठाकार्यताकारणेनहीनासहिताघा आद्येजगतोपिघटादेःकार्यतातथास्तु नचेष्टापत्तिः लोकानुभवविरोधादिनास्वभाववादनिरास स्याष्टमेप्रपंचितत्वादिति १२२ अंत्येकारणसाहित्यपक्षेपीदंविचार्यं किमात्मनःकारणमसद्रूपंसद्रूपंवा नाद्यः अनुपलब्धिविरोधात् यतःसत्याःसद्रूपायामृदःसकाशात्संतःसद्रूपेणानुगताःशरा वादयोजायमानाइहव्यवहारभूमावुपलभ्यंते यदित्वसत्कारणकाःस्युस्तदातेऽसद्रूपेणानुगताःस्युरित्याह अथचेदिति । तस्यात्मनः कीदृशंअसद्वासद्वा आद्यंदूषयति असच्चेदित्यादिना। सतःसद्रूपस्यात्मनः १२३ किंचसापेक्षरूपस्यासत्त्वस्यप्रतीतयेसद्वस्तुकिंचिदभ्युपेयंतथाचतद्धेतोरेवास्तुहेतुत्वंकिंतेनेतिन्यायेनतत्सदेवास्यात्मनोहेतुरस्त्वित्याह असत्त्वमिति । असत्त्वमस तःस्वरूपंसत्प्रतियोगिकाभावरूपमेवभवतितच्चस्वप्रतीतौप्रतियोगिभूतंसंतमर्थंप्रतीयमानमपेक्षतेततःप्रतियोगितयासतआवश्यकत्वाद्यत्सद्वस्तुतदर्थंमसत्प्रतीत्यर्थंस्यात्कल्पेततदेवास्यात्मनःकारणम स्तुकिंतेनासतेत्यर्थः १२४ किंचाभावरूपस्यासतःकारणत्वानुपपत्तौहेतवोऽष्टमाध्यायेप्रपंचिताःस्मर्तव्याइत्याह अभावइति । स्पष्टम् १२५ तस्यात्मनःकारणंसदेवेत्यंत्यपक्षेपीदंविचार्यंत त्किंपरिच्छिन्नमपरिच्छिन्नंवा तत्रप्रथमेलोकेपरिच्छिन्नस्यजाड्योपलंभाज्जडस्यकार्यत्वोपलंभाच्चतत्कारणांतरान्वेषणयानवस्थास्यात् तथाचतस्यसतःकार्यत्वाभावेजाड्याभावात्मिकाचिद्रूपतास

अथात्मनोत्रकार्यत्वेकारणंविद्यतेनवा ॥ कारणंनास्तिचेत्तस्यविश्वस्यापिनतद्भवेत् १२२ अथचेदस्तितस्यैतत्कारणंतच्चकीदृशम् ॥ असच्चेत्कारणंतस्या त्कुतस्तस्मात्सतोजनिः ॥ संतोघटादयोयस्माज्जाताःसत्याम्रृदस्त्विह १२३ असत्त्वंचसतोभावःसंतमर्थमपेक्षते ॥ ततोयद्धितदर्थंस्यात्तदेवास्त्वस्यकारणम् १२४ अभावःकोपिकस्यापिकारणंनोपपद्यते ॥ इदंतेकथितंपूर्वंकारणानांविचारणे १२५ ततःसदेवतस्यस्याद्धेतुश्चेदात्मनोभवेत् ॥ सतापिचेत्परिच्छिन्नाघ टवत्साजडाभवेत् १२६ जाड्येचेतस्याश्चकार्यत्वमेवंस्यादनवस्थितिः ॥ चिद्रूपिणीततःसत्तासर्वभेदविवर्जिता १२७ आत्मनःकारणंसापिभवेच्चेन्नतुसात्मका ॥ शय्यासनादिवत्सेयंसुखहेतुर्बलाद्भवेत् २८ तथात्वेजडतापिस्यात्तद्वदेवानिवारिता ॥ ततश्चपूर्वंकथितंपुनरावर्त्ततेधुना २९ चिदानंदात्मकासत्तासर्वभेदविवर्जि ता ॥ आत्मनःकारणंसेयमेष्टव्याहेतुवर्जिता १३० यच्चतत्कारणंतस्यसनआत्मेतिगीयते ॥ तथाचजायतेनात्माकारणैरितिचस्थितम् १३१

र्वभेदराहित्यरूपमपरिच्छिन्नत्वंचपरिशेषादभ्युपेयमित्याह ततःसदेवेतिद्वाभ्यां । ततःपरिशेषात्तस्यसद्रूपस्यात्मनोयदिहेतुःस्यात्तदासद्वस्तुरूपएवमंतव्यइति तस्यचपरिच्छिन्नत्वस्यजा ड्यादिप्रसंगद्वारानवस्थितेःप्रयोजकत्वादपरिच्छिन्नत्वमेवयुक्तमितिद्वयोरर्थः अत्रद्वितीयदलेसत्तेत्युक्तिःसद्रूपकारणमेवकार्योत्पत्त्यनंतरंतत्रप्रकारतामापन्नंवादिभिःसत्तेतिव्यवह्रियतेइतिसूचना येतिबोध्यम् १२६ । १२७ तस्याएवात्मत्वंचाभ्युपेयमनात्मनःशय्यादिवत्परार्थत्वेनजाड्यस्यकार्यत्वव्याप्यस्यदर्शनादित्याह आत्मनइति । प्रोक्तरूपासत्ताप्यात्मनःकारणंभवंतीय दिसात्मिकाआत्मत्वविशिष्टानभवेत्तदाशय्यादिवत्सुखहेतुःशेषभूतेतियावत्स्यात् तथात्वेपरार्थत्वेतुतस्यव्यापकंजाड्यंकार्यत्वप्रयोजकंस्यात् ततउक्तदूषणमनवस्थारूपंपुनःप्रसज्जेतेतिद्वयो रर्थः १२८ । १२९ एवंतस्यात्मत्वेतत्कार्यस्यपरिच्छिन्नत्वेनात्मत्वानर्हत्वात्सैवात्मेत्याह चिदानंदात्मकेति । आत्मांताःशब्दाभावप्रधानाः तथाचचित्त्वमानंदत्वमात्मत्वंचकायत्या त्मनिरुप्यापयतीतिचिदानंदात्मकासासत्तैवकारणानपेक्षाआत्मनःकारणत्वेनमंतव्या तथासतितत्कार्यस्यपराक्त्वेनात्मत्वानर्हत्वाद्यत्तत्सत्तारूपंकारणंत्वयामतंसएवनऔपनिषदानामात्मास्तु फ लितमाह तथाचेतिद्वयोरर्थः १३० । १३१

अस्मिन्नर्थेनानाश्रुतीनामानुकूल्यमितिदर्शयन्प्रकृतश्रुतौसत्पदेनैतदात्मस्वरूपमुक्तमित्याह अजइति । अजादिलक्षणआत्मानानाश्रुतिभिरुक्तःप्रकृतेतुसन्नितिपदेनोक्तइत्यर्थः १३२ सत्पदेन चिदादिरूपसंग्रहेउपपत्तिमप्याह आनंदेति । आनंदादीनामात्मांतानांपदार्थानांपरस्परंभेदेसतिवस्तुपरिच्छेदेनतद्व्यापकंजाड्यंस्यात् तथाचोक्तकार्यत्वप्रसक्तिद्वारकमुक्तमनवस्थारूपंदूषणंस्या दित्यर्थः १३३ तथाचैषामैक्यमेवेत्याह सदानंदात्मेति । विज्ञानांतपदानांसमाहारद्वंद्वऐक्यविशदत्वाय एकार्थाएकवस्तुप्रकाशकाः १३४ पौनरुक्त्यंपरिहरति पौनेति । पूर्वार्द्धेनन कारविमुक्तेनशंकोक्तिः असत्वदुःखत्वपरिच्छिन्नत्वादिभ्रमापोहेनाज्ञातात्मबोधस्यएभ्यःपदेभ्यःसर्वानुभवसिद्धत्वान्नपौनरुक्त्यमितिपरिहारउत्तरार्द्धेनोक्तः १३५ फलितमाह सतएवेति । सतःसत्पदेनप्रदर्शितात् १३६ विवर्त्तविषयासतःसकलप्रपंचोपादानत्वेनपरमसत्यतामेवनानोपपत्तिभिर्विशदयति घटादिष्विति षोडशभिः । यथाघटशरावादिषुकार्येषुकारणरूपेणमृद्भातित थाआत्मनःस्वरूपभूतासत्तासर्वत्रभातीत्यर्थः १३७ ननुतस्याअधिष्ठानभूतायाःस्फूर्त्तौकथंसंसारात्मकाध्यासस्थितिरितिचेत्प्रत्यक्त्वादिविशेषाणामावरणस्यनिवृत्तिसामग्र्याअलाभादित्याह प्र तिभांत्यपीति । यथाराजामनुष्यत्वेनभासमानोपिबालैराप्तोपदेशंविनाराजत्वेननज्ञायतेतथेयमात्मरूपासत्ताप्रतिभांतीसर्वत्रभासमानापिगुरूपदेशंविनाआत्मत्वेननज्ञायतेतदाऽज्ञानरूपमाया

अजोनित्यश्चभगवान्सर्वकारणकारणम् ॥ आनंदात्मास्वयंज्योतिर्निर्भेदःसन्नितीरितः १३२ आनंदज्ञानसत्तानामात्मनश्चयदाभिदा ॥ तदाजाड्यंपरिच्छेदा द्वेतेषांघटादिवत् ॥ तथाचपुनरप्येतदुक्तदूषणमापतेत् ३३ सदानंदात्मविज्ञानेततोभेदोनकश्चन ॥ सदादयस्ततःशब्दाएकार्थाःपरिकीर्त्तिताः ३४ पौन रुक्त्यंनतेषांस्यादेकार्थत्वप्रदर्शनात् ॥ ज्ञायतेपूर्वमज्ञातंश्रुत्यासर्वजनैरिह ३५ सतएवात्मनस्तस्मात्तेजोबन्नात्मकंजगत् ॥ उत्पद्यतेयथाकाशाद्गंधर्वनगरादि कम् ३६ घटादिषुयथानित्यंभातिमृत्कारणात्मना ॥ जगत्यस्मिंस्तथासत्ताभातिसर्वेषुवस्तुषु १३७ प्रतिभांत्यपिसाचैवंनभात्यात्मतयानृणाम् ॥ गुरूपदेशशू न्यानांबालानामिवभूमिपः ३८ संसारस्ततएवायमविनष्टोत्रवर्त्तते ॥ आत्मनोमाययाजातोमायायानाशवर्जनात् ३९ यदैतत्सत्तयाभातंमाययापिविवर्जितम् ॥ पुमानात्मतयादेवगुरुवाक्यात्प्रपद्यते ४० तदाविश्वमिदंनायंप्रपश्यतिकदाचन ॥ गंधर्वनगरंयद्वद्गगनेदोषवर्जिते ४१ गगनाज्ञानतोयद्वद्गंधर्वनगरस्थितिः ॥ आत्माज्ञानात्तथाविश्वमुत्तिष्ठतिसदात्मनः ४२ गंधर्वनगरंयद्वन्नामधेयात्प्रतीयते ॥ आदावंतेचमध्येचगगनेनैववस्तुतः ४३ नामधेयात्तथाविश्वंवस्तुशून्यंप्रती यते ॥ आदावंतेचमध्येचसदानंदात्मनीश्वरे ४४ गंधर्वनगरंयद्वन्माययैवप्रतीयते ॥ कालत्रयेप्यसन्मध्येकस्याचिद्दोषदर्शिनः १४५

कार्यस्यसंसारस्यस्थितिःततोमायारूपकारणस्यस्थितेरेवबोध्येतिद्वयोरर्थः १३८ । १३९ उक्तमायारूपदोषस्यगुरूपदेशेननिवृत्तौतुसंसारानुपलंभोविद्वदनुभवसिद्धइत्याह यदैतदिति । एत दुक्तप्रकारकंयथाभवतितथासत्तारूपेणभातमपितत्पदार्थंदेवंगुरुवाक्येनपरिहृतमायावरणकमात्मत्वेनप्रपद्यतेलभतेतदाविश्वंनपश्यति यथादोषैर्नीहारपृष्ठगतसूर्यांशुसंपर्कादिभिर्वर्जितेगगनेगंधर्वनगर मितिद्वयोःसंबंधः १४० । १४१ यथाचदृष्टांतेगगनत्वस्यापरिणामित्वस्याज्ञानमेवनगराकारतामापद्यतेतथात्रापीत्याह गगनाज्ञानतइति । स्पष्टम् १४२ यथाचगगनात्तस्यभेदोनाममात्रेणन वस्तुतःकालत्रयेपितथाब्रह्मणोजगतइत्याह गंधर्वेति । स्पष्टंद्वयं १४३ । १४४ दृष्टांतेपिनीरादिदोषाणामविद्याक्षोभकत्वमेवगंधर्वनगरंप्रतिप्रधानकारणतातुगगनतत्त्वाविषयकाविद्याया ए वतथाप्रकृतेपीतिदर्शयन्प्रपंचस्यकल्पितत्वावेदकंप्रातिभासिकत्वमाह गंधर्वनगरमिति । कालत्रयेअसद्रूपंगंधर्वनगरंकस्यचिद्दोषाक्रांतदृष्टेर्यथामध्येज्ञानसमकालेभातिज्ञानविषयोभवतितथा संसारःसर्वदास्वरूपेणासन्नप्यानंदात्मनिकस्यचिदस्यमध्येएवभातीतिद्वयोरर्थः १४५

१४६ अनेनदृष्टांतेनबंधमोक्षव्यवस्थामपिस्फुटीकरोति मायचेतिद्वाभ्यां । यथापरैर्मायारहितैर्दृश्यमानमपिगंधर्वनगरंमायारहितोनिरस्ताविद्योनपश्यतितथाऽज्ञैर्दृश्यमानमपिसंसारंमायाहानि लक्षणमोक्षशालीनपश्यतीतिद्वयोरर्थः १४७ १४८ बंधमोक्षकल्पनाधिष्ठानभूतआत्मात्वेकएवेतिस्वप्नदृष्टांतेनाह एकएवेति । बद्धचतेचविमुच्यतेकल्पितासुस्वव्यक्तिपुबंधमोक्षौपश्यति १४९ बंधेति । वस्तुदृशावस्तुतत्त्वालोचनेन १५० फलितमाह बंधमोक्षादीति । यत्तत्त्वंबंधादिसंसारस्यसाक्षितदेवपरमंसत्यं तद्दृश्यंतेनभातंसर्वमनृतमित्यर्थः १५१ यदेतदिति । यदेतत्सा क्षिरूपंतदेवसर्वकारणत्वात्परमंसत्यंदृश्यमानंतुतत्राध्यस्तताल्लक्षणकार्यत्वेनानृतंवाङ्मयनाममात्रत्वादित्यर्थः १५२ एतद्दार्ष्टांतिकंसत्परमसत्यत्वंमनसिनिधायमृदादिदृष्टांतत्रयस्यस्वस्वविका रापेक्षंसत्यत्वंपित्रासुतायोपन्यस्तमित्याह इत्यभिप्रायेति । स्पष्टं १५३ एवमित्यारभ्योवाचेत्यंतस्यग्रंथस्यार्थमाह यथेतिदशभिः । अनेनदृष्टांतत्रयेणइत्युदीरितंप्रदर्शितंभवति इतिकिं घटाद्यपेक्षयामृदादीनामिवविश्वकारणस्यात्मनःपरमंसत्यत्वमिति १५४ सत्यसत्यइति । सचात्मासत्यसत्यइतिनामोपन्यासादिभिर्वेदेप्रतिपादितोभवतावेदवादिनावेदपाठंदृष्टार्थंजानताज्ञात

आनंदात्मनिसंसारोमाययैवप्रतीयते ॥ तथामध्येत्रकस्यापिसर्वदासत्स्वरूपतः १४६ माययारहितोयद्वद्गंधर्वनगरंपरैः ॥ गगनेदृश्यमानंचनपश्यतिकदा चन १४७ आनंदात्मनिसंसारंदृश्यमानंतथापरैः ॥ माययारहितोमुक्तोनपश्यतिकदाचन १४८ एकएवयथास्वप्नेबद्धचतेचविमुच्यते ॥ एकएवतथाजीवो बद्धचतेचात्रमुच्यते १४९ बंधमोक्षौयथास्वप्नेविद्येतेनैववस्तुतः ॥ तथाजागरणेप्येतौनतौवस्तुदृशासदा १५० बंधमोक्षादिसंसारंयत्सदैकंप्रपश्यति ॥ सत्यं तदेवविज्ञेयंतद्दृश्यमनृतंपुनः १५१ यदेतद्द्रष्टृरूपंस्यात्सत्यंतत्कारणंमतम् ॥ दृश्यंकार्यमसत्यंस्याद्वाचैवारभ्यतेयतः १५२ इत्यभिप्रायवानेषश्वेतकेतुमभा पत ॥ सत्यतांचमृदादीनांघटादीनामसत्यताम् १५३ यथामृदादयःसत्याःस्वकार्यापेक्षयामताः ॥ मृदाद्यपेक्षयातद्वत्सत्यआत्मेत्युदीरितम् १५४ सत्यसत्यः सआत्मायंज्ञातव्योवेदवादिना ॥ भवतामोहतोदेवोनपृष्टःस्वगुरून्प्रति ॥ येनज्ञातेनसततंज्ञातव्यंनावशिष्यते १५५ ततोगुरूनितोगत्वाप्रश्नंकुरुयथोचि तम् ॥ विज्ञायात्मानमागच्छपुनरप्यत्रमाचिरम् १५६ एवमुक्तःश्वेतकेतुःपितरंप्रत्यभाषत ॥ सर्वथागुरवोनैवंज्ञातवंतोममेश्वरम् ॥ मयिस्निग्धतमाःकस्मा न्नोचुर्मह्यंमहाधियः १५७ तेषांगोप्यतमंनैवविद्यतेमयिकिंचन ॥ यावज्ज्ञानंतिगुरवस्तावत्तैःसत्यमीरितम् १५८ पुत्रेभ्योपिप्रियस्तेषामहंशिष्यःसमाहितः ॥ अतोनगमनेतातत्तेषामर्थोत्रविद्यते १५९ स्नातस्तेभ्यस्त्वनुज्ञांतांप्राप्यदेशमुपागतः ॥ कथंपुनरहंगंताविश्वासरहितोयथा १६० भगवान्वचनंमह्यंकथयत्वात्म नेर्पितम् ॥ यज्ज्ञानादखिलंज्ञातमज्ञातंज्ञायतेपिच १६१

व्यो।वेदार्थतयावश्यमवधारणीयोपिसर्वविज्ञानहेतुविज्ञानकोपिचयन्निर्णयायगुरून्प्रतिनपृष्टस्तत्रहेतुस्तवमोहःप्रमादएवेत्यर्थः १५५ ततस्त्वयागुरून्प्रतिपुनर्गंतव्यमित्याह ततोगुरूनिति १५६ एवमुक्तइति । ममगुरवइतिसंबंधः एवंभवदुक्तविषयाईश्वरंनज्ञातवंतः यदितुज्ञातवंतस्तर्हिस्निग्धतमत्वेनस्नेहातिशयशालित्वेनतेषांमांप्रतितदनभिधानमनुपपन्नंस्यादित्यर्थः १५७ एतदेव स्फुटयति तेषामितित्रिभिः । तावत्तैरीरितमितिसत्यमितियोजना १५८ पुत्रेभ्यइति । तेषांसमीपइतिशेषः १५९ स्नातइति । तेषामनुज्ञांप्राप्यस्नातःसमावर्तनसंस्कारंप्राप्तःसन्देशमा गतोहमविश्वस्तवत्पुनर्गंतागमनकर्ताकथंभवेयमित्यर्थः १६० भगवानिति । तस्मात्पूज्योभवानेवआत्मनेआत्मानंबोधयितुमर्पितमुपन्यस्तंवचनंकथयतुविवृतंकरोतुयदर्थविज्ञानादखिलंज्ञायते अखिलमित्यस्यविवरणंज्ञातमज्ञातंचेति १६१

एवमुक्तःपितेति । अग्रेसरःमुख्यः १६२ आहेति । हेसोमवत्प्रियदर्शनेत्येवंसुतंसंबोधयन्सन्निदमाह इदंकिं यत्श्रुत्युक्तंभवतापृष्टंचतद्वक्ष्यामित्वंगर्वंपरिहृत्यशृण्वित्यर्थः १६४ तत्रादौ यद्विज्ञानात्सर्वविज्ञानंलभ्यतेतद्वस्तुनोऽखंडत्वंसर्वभेदराहित्यलक्षणंप्रतिपादयति यदिदमित्यूनविंशतिश्लोकैः । यन्नामरूपक्रियात्मकंविश्वंदृश्यतेविपर्यक्रियते कीदृशं सदसच्छब्दाभ्यांस्थूलसूक्ष्मवाचकाभ्यांतज्जन्याधियाचगम्यंस्वविषयकशब्दबुद्धिभ्यांसहितंचतत्सर्वंश्रुताविदंशब्देनोक्तमित्यर्थः १६४ सदेवेति । तदिदंपदोक्तंविश्वंसृष्टिनःपुरापूर्वंसदेवसन्मात्रमासीत् कीदृशं सदसच्छब्दबुद्धिभ्यांभेदसापेक्षाभ्यांवर्जितं प्रातःकालेघटशरावादिकंमृन्मात्रमासीदितिवदियमुक्तिरितिसूचयन्नाह नततइति । अत्रसत्पदेनवैशेषिकाद्यभिमताजातिरूपाव्यक्तिसापेक्षासत्तानविवक्षितेतिदर्शयंस्तत्रहेतुतयापूर्वोक्तंस्मारयति यदुक्तमित्यादिना । यत्यतःपुराहष्टांतत्रयाभिप्रायप्रदर्शनेतुभ्यमित्यर्थः १६५ इतिकिमित्याकांक्षांपूरयति सत्तेयमितिद्वाभ्यां । इयंविश्वकारणभूतासत्ताभवतासर्वभेदरहिताचिदादिरूपाज्ञेया यातुअत्रवैशेषिकादिमतेप्रसिद्धाघटादिषुसमवेताजडाचसानज्ञेयाजडानांविभक्तत्वलिंगेनाप्यस्तत्वरूपकार्यत्वस्यनिश्चितत्वादित्यर्थः फलितमाह ततइति ।

एवमुक्तःपितातेनसतामग्रेसरस्तुयः ॥ अंगीचकारनिखिलंवक्तुंकामःसुतंप्रति १६२ आहचेदंसुतंश्वेतकेतुंसंबोधयन्हिसः ॥ वक्ष्यामिभवतापृष्टंसोमवत्प्रियदर्शन ॥ सावधानमनाभूत्वाशृणुगर्वविवर्जितः १६३ यदिदंदृश्यतेविश्वंनामरूपक्रियात्मकम् ॥ सदसच्छब्दधीगम्यंशब्दबुद्धिसमन्वितम् १६४ सदेवासीत्पुरातत्तुशब्दबुद्धिविवर्जितम् ॥ नततोन्यज्जगत्सर्वंयदुक्तंतेपुरामया १६५ सत्तेयंभवताज्ञेयासर्वभेदविवर्जिता ॥ चिदानंदात्मिकानान्याजडायात्रघटादिषु १६६ जडानांहिविभक्तत्वाद्भवेज्जन्मघटादिवत् ॥ ततोविलक्षणासास्यात्कारणंयात्रकीर्तिता १६७ सूर्योदयात्पुरायद्वत्तमस्तिष्ठतिसर्वतः ॥ विश्वोत्पत्तेःपुराप्येतदासीदव्याकृतंत्विदम् १६८ यत्रवाचोनिवर्ततेविदुषांमनसासह ॥ तदेवनिर्गुणंब्रह्मप्रागवस्थमभूत्तदा १६९ देशःकालस्तथावस्तुसदसद्वानकिंचन ॥ आसीन्नैवास्तिनैवैतद्भवितायत्रवस्तुनि १७० वृक्षोयथात्रनानात्माशाखास्कंधादिनाभवेत् ॥ एकोपिनतथात्मायंस्वयंभेदविवर्जितः १७१ व्यक्तेर्व्यक्त्यंतराद्भेदोगवादीनांयथाभवेत् ॥ सजातीयाच्चनतथासतिभेदोस्तिकश्चन १७२ विजातीयाद्यथाभिन्नागवाश्वमहिषादयः ॥ नतथाकोपिभेदोत्रसतितस्मिन्हिविद्यते १७३ स्वसजातिविजात्युत्थभेदत्रयविवर्जितम् ॥ यस्मादेतदतःसद्भिःसदेवेतिनिगद्यते १७४

ततोजडेभ्यः इतिद्वयोरर्थः १६६ । १६७ इदमेवसद्वस्तुतर्ह्येदंतर्ह्यव्याकृतमासीदित्यादिश्रुत्यंतरेष्वव्याकृतपदेनोक्तमित्याह सूर्योदयादिति । सूर्योदयपूर्वकालिकतमःसदृशमायोपहितरूपेणैतदेवतत्त्वमव्याकृतमित्युक्तमित्यर्थः १६८ परंतुवक्ष्यमाणविधयामायायाद्वैतापादकत्वाभावात्तस्यनिर्विशेषतायानक्षतिरित्याह यत्रेति । यद्वस्तुप्रागवस्थंकारणावस्थमभूदव्याकृतादिपदैर्व्यवहृतंतन्निर्गुणंब्रह्मैवयत्रविदुषामपिवाङ्मनसयोर्निवृत्तिरुच्यतेइतियोजना १६९ तत्रातीतकालोक्तिरपिकालवासनावासितशिष्यबुद्ध्यनुरोधेनेवेतिदर्शयंस्तस्यनिर्विशेषतामेवस्फुटयति देशइति । भविताभविष्यति १७० तस्यस्वगतभेदवारणमेवकारकृतंसवैधर्म्यदृष्टांतमाह वृक्षइति । यथैकोपिवृक्षःशाखादिभिःस्वगतभेदवान्प्रसिद्धस्तथायमात्मानभवतीत्यर्थः १७१ तथैकपदेनसजातीयभेदोव्युदस्तइत्याह व्यक्तेरिति । सतिसत्पदोक्तेआत्मनि १७२ अद्वितीयपदेनतुविजातीयभेदोवारितइत्याह विजातीयादिति । स्पष्टम् १७३ फलितमाह स्वसजातीति । एतत्तत्त्वंयस्मात्सर्वभेदहीनमतःसन्मात्रमित्युक्तमित्यर्थः १७४

अथमाययासद्वितीयत्वमाशंक्यतस्याअवास्तवत्वेनपरिहरति मायेत्यादिना । यद्यपितस्मिन्ब्रह्मणिकारणत्वोपपादिकामायाद्वितीयत्वेसंभाव्यतेतथापितस्यामायामोहितैरेवदृश्यत्वेनावास्तवत्वान्नतथात्वयोग्यतेत्यर्थः १७५ तस्यामायमैवचर्तनेदृष्टांतमाह उलूकस्येति । यथास्माकंदिनमुलूकस्यरात्रिरित्यत्रोलूकानुभवएवप्रमाणंतथामायायामप्यज्ञानुभवएवतथेत्यर्थः १७६ यथाचमेरुपरपार्श्ववर्तिनिसूर्येरात्रौमूढदृष्ट्यातमसःस्थितिस्तथामायापिमूढदृष्ट्यापरमात्मनिस्थितेत्याह सहस्रेति । संस्मृतौविस्मृतौमूढदृष्ट्येत्रियावत् १७७ विद्वद्दृष्ट्यातदभावमुदाहरति नेत्रैरिति । अत्रात्मनिवीक्षणान्महावाक्यजादनंतरमितिशेषः १७८ वस्तुतःपरमात्मनिमायासंगाभावंविशदयति कालत्रयेपीति । स्पष्टम् १७९ अज्ञगतायास्तत्पदार्थावरणेदृष्टांतमाह तमइति । तमोमेघादिकंवाद्रष्टृणांनेत्राण्याच्छाद्याकाशेसद्विद्यमानंरविमंडलमाच्छादयतीतिपथाप्रसिद्धमित्यर्थः १८० एवमिति । एवमज्ञानांबुद्धिरोधंकुर्वाणामायासर्वदोषहीनेप्यात्मनिगीयतेइति १८१ फलितमाह ततइति । ततःसत्पदोक्तोभगवानात्मैवासीत् तद्भिन्नंसदादिकंस्थूलंसूक्ष्मंविश्वंमायाचनासीत् यतएवमायात्रपरमात्मनिवस्तुतोनास्तीत्यर्थः १८२ अथश्रुत्यानिरासायोपन्यस्तमसत्कारणवादिमतंदर्शयति एवंव्यवस्थितइत्यष्टभिः । एवमुक्तविधयाअखंडसत्तालक्षणेतत्त्वेकारणस्वरूपेव्यवस्थितेविशेषेणप्रमेयानुसारिसकलप्रमाणसंवादलक्षणे

**मायायद्यपितस्मिन्स्याद्द्वितीयाकारणेसदा ॥ तथापिमाययैवैषावर्ततेनतुवस्तुतः १७५ उलूकस्ययथारात्रिरुलूकस्यप्रसिद्धितः ॥ सिद्धात्यत्रतथामायामाययैवप्रसिद्ध्यति ७६ सहस्रकिरणेयद्वत्तमस्तिष्ठतिरात्रिषु ॥ आनंदात्मनिमायापितथातिष्ठतिसंस्मृतौ ७७ नेत्रैर्विलोक्यमानेस्मिन्नुदितेरविमंडले ॥ तमोनदृश्यतेयद्वत्तद्वन्मायात्मवीक्षणात् ७८ कालत्रयेपितमसास्पृश्यतेनदिवाकरः ॥ यथातथायमात्मापिमाययास्पृश्यतेनहि ७९ तमोमेघादिकंयद्वत्पुंसोनेत्रविरोधिकम् ॥ आवृणोतिसदाकाशेविमलंरविमंडलम् १८० एवमात्मनिमायेयंसर्वदोषविवर्जिते ॥ बुद्धिरोधंहिकुर्वाणागीयतेतत्रसाद्विजैः ८१ ततःसदेवभगवानासीन्नान्यत्सदादिकम् ॥ नमायात्रयतोनैववस्तुतोविद्यतेत्रहि ८२ एवंव्यवस्थितेतत्त्वेकेचिदब्रह्मवेदिनः ॥ सत्तायाःस्थानकेऽसत्तामभिषिंचंतिपंडिताः ८३ एवंवदंतःसत्किंसतीवाप्यसतीचवा ॥ सतीचेत्सास्वयंताद्रूपावापरतोपिवा ८४ प्रथमेकोविशेषोस्याअसत्तायाभविष्यति ॥ विधिप्रत्ययगम्यत्वंकेवलंकुलधर्मतः ८५ विधिबोधोपिजगतःप्रागवस्थांनगच्छति ॥ असन्स्वयंकथंनामगृह्णीयात्तामयंसदा १८६**

नदेदीप्यमानेपिसतिकेचिद्ब्रह्मबोधहीनाःपंडिताःसत्तास्थानेकारणत्वलक्षणेअसत्तामभिषिंचंतिस्थापयंतीत्यर्थः १८३ एवंवदंतइति । कीदृशास्ते एवंवदंतस्तर्कयंतः एवंकथं इयंविश्वोपादानतयाभिमतासत्ताकिंसद्रूपाविपरीतावा आद्येतस्याःसद्रूपत्वंकिंस्वयंस्वरूपप्रयुक्तंकिंवापरतःपरयाधर्मभूतयासत्तयाकृतमित्यर्थः १८४ प्रथमइति । प्रथमेस्वयंसत्वपक्षेअस्याःसत्तायाअसत्तापेक्षयाकोविशेषःस्यान्नकोपि असत्तायाअपिस्वरूपेणसत्त्वंस्यादितिप्रसंगस्यप्रतिरोद्धुमशक्यत्वादितिपूर्वदलार्थः नचविधिप्रत्ययेनाऽस्तीत्याकारेणगम्यत्वंविषयीक्रियमाणत्वंसत्तायाविशेषः तस्यसत्ताभेवावस्थानस्यकुलधर्मवद्वृद्धसंकेतमात्रप्रयुक्तत्वेनासत्तायामपिगमनेबाधकाभावात् नहिवृद्धसंकेतःपरानसत्तायामपिविधिप्रत्ययंकुर्वाणान्निरोद्धुंशक्तस्तत्प्रत्ययस्यवैयधिकरण्यादित्याशयेनाह विधीति । कुलधर्मतःकुलधर्मत्वेनैवसिद्धंनतुवस्तुस्वभावानुरोधीत्यर्थः १८५ किंचसृष्टिपूर्वकालिकभावस्यसद्रूपत्वंविधिप्रत्ययबलेनापिदुरवसेयंतदानींप्रमातृरूपाश्रयाभावेनविधिप्रत्ययस्यैवासंभवादित्याह विधिबोधइति । विधेरस्तित्वस्यबोधोपिजगतःप्राक्कालंयतोनुगच्छतिनवर्तितुंशक्तः अतोयंविधिबोधस्तदाप्राक्कालेस्वयंस्वरूपेणासन्नवसमानस्तांसत्तांकथंसाधयेदित्यर्थः १८६

परतइत्याद्यद्वितीयंपक्षंविकल्प्यदूषयति परतइति । यदासत्तायाःसत्त्वोपपादनायपरासत्ताकल्प्यातदापिपरायाःसत्त्वोपपादनायान्यासाकल्प्येत्येवंकल्पनारूढाःसत्ताःकिमसंख्याताःसंख्याता वा तत्राद्येदूषणमुक्तंआस्वत्रकाचनसत्तासिद्ध्येत्‌ अज्ञाताइति । अस्यार्थः तास्वसंख्यातासुसत्तासुमध्येकाचिदेवसत्तासिद्ध्येत्‌नसर्वाः यतःसर्वाअज्ञाताःक्रमेणयुगपद्वावर्तमानानोपलभ्यंत इति द्वितीयपक्षेदोषमाह तत्रेत्यादिना । तत्रसंख्यातानांसत्तानांमध्येअंतिमाअंत्याउक्तदोषेणविशेषाभावप्रयुक्ताऽसत्तासाम्यापत्तिरूपेणग्रस्तातस्याश्चसत्तांतरंविनापितद्व्यवहारसिद्धौततःप्राचीनानांसत्तानांकल्पनंव्यर्थमित्यर्थः १८७ किंचइयंविश्वोपादानभूतासत्ताकिमेकरूपानिर्विकारस्वभावाकिंवापरिणामिनी आद्येताहृश्याअसत्तायाःकोविशेषःअंत्येघटादिसाम्यमित्याह एकरूपेति । आद्याएकरूपा १८८ किंचांत्यपक्षेघटादितुल्यायाःसत्तायाःप्राक्कालिनत्वेघटादयोपितदानींस्युस्तथाचसृष्टिकालात्प्राक्कालस्यकोविशेषइत्याह घटादिभिरिति १८९ एकरूपत्वपक्षेयदसत्तासाम्यमुक्तंतदेवस्फुटयति प्रथमइति । प्रथमेएकरूपत्वपक्षे तस्मादसत्वपक्षएवश्रेयानितिभावः १९० एतन्मतंश्रुतिसूचितप्रत्यक्षविरोधादियुक्तिभिःपरिहरति इत्यादिबहुशइतित्रयोदशभिः । इत्यादिकुतर्कजातमसतःकारणत्वसिद्धयेयेवदंतितेतावदित्थंप्रष्टव्याइत्यर्थः १९१ इत्थंकथमित्याकांक्षायामाह असतइत्यादिना । सृष्ट्यादौअसतःकारणस्यकार्यं

परतश्चेदसंख्याताःसत्तास्तास्वत्रकाचन ॥ सत्तासिद्ध्येतसंख्यातावाज्ञातास्तत्रचांतिमा ॥ उक्तदोषपरिग्रस्ताव्यर्थंमध्येप्रकल्पनम्‌ १८७ एकरूपापिसत्तेयमथवानेकरूपिणी ॥ आद्यामाऽसत्तयातुल्याद्वितीयाचघटादिभिः १८८ घटादिभिःसमानायाजगतःप्रागवस्थितिः ॥ यदातदाऽपराद्धंकिंसर्वैरेवघटादिभिः ८९ प्रथमेनामभेदोयंज्ञापितःसदसत्त्वयोः ॥ एकरूपंयतोऽसत्त्वमस्माभिरिहकीर्त्यते १९० इत्यादिबहुशोमंदायेवदंतीहतान्प्रति ॥ पृच्छामइदमेवाद्यपंडितंमन्यरूपिणः १९१ असतःकारणात्कार्यमसत्स्यात्तदथवाप्यसत्‌ ॥ असतःसदभूत्पूर्वंयदितन्नकुतोऽधुना ॥ भवतीतिवदंत्वत्रकारणंतन्नियामकम्‌ १९२ असतस्त्वसदेवैतज्जायतेनकदाचन ॥ वंध्यापुत्रान्नरेशृंगंभवेत्कालत्रयेपिन १९३ ततःकार्यंसदेवस्यात्सर्वथासर्ववादिनाम्‌ ॥ सतश्चनासतोजन्मकथंचिदुपपद्यते ॥ ततोविकल्पःसकलोव्यर्थएवात्रवादिनः १९४ अपिसत्तास्वयंसत्तांयदाप्नोतितदात्रकिम्‌ ॥ दूषणंप्रतिवंदीनदूषणंन्यायवेदिनाम्‌ १९५

सद्रूपंवाऽभूत्‌असद्रूपंवाआद्येऽधुनापिअसतोऽविद्यमानात्कारणात्तत्वादेस्तत्सद्रूपंघटादिकुतोनभवतिजायतेइत्यत्रनियामकंकिंचिद्वक्तव्यमित्यर्थः १९२ एतदेवस्फुटयति असतस्त्विति । एतत्कार्यमसद्रूपमसतःसकाशान्नजायतेयथावंध्यापुत्ररूपात्कारणान्नरेपुरुषेवर्त्तमानंशृंगंकालत्रयेपिनजायतेइत्यर्थः १९३ : तथाचप्रमाणज्येष्ठेनप्रत्यक्षेणविरोधाद्बाधितंभवतांमतमित्याह ततइति । ततोऽनुभवबलात्‌ असतःकार्यत्वस्यापिनृशृंगवद्बाधाहतत्वाद्द्वितीयकोटिरपिनिरस्तेत्याशयेनाह ततोविकल्पःसकलइति । ततोऽनुभवविरोधात्‌ स्फुटमन्यत्‌ १९४ अथतैर्विकल्प्योपन्यस्तान्दोषान्परिहरति अपीत्यादिना । किंचसत्तायाःस्वरूपेणैवसत्त्वासिद्धौकोदोषः ननुअसत्तायाअपितथासत्त्वापत्तिरितियुक्तमितिचेन्न असदुत्तरत्वादित्याह प्रतिवंदीति । न्यायंपंचावयववाक्यंविदंतिप्रयोक्तुंजानंतियेतकुशलास्तेषांवादिनांदूषणप्रयोगकालेप्रतिवंदीसंज्ञस्यसाम्येनपरिकल्पितदापादनरूपस्योत्तरस्याभिधानंनसंभवं एताहृशस्योत्तरस्यन्यायमार्गात्स्खलत्पादैरेवक्रियमाणत्वादितिभावः १९५

दौर्बल्यप्रयोजकंव्याप्तिराहित्यंत्वदुक्तौस्पष्टमित्याह अपिव्याप्त्येति । किंचस्वरूपेसत्तायाःसत्त्वेअसत्तायाअपितथास्यादित्याकारंदूषणंयत्त्वयोक्तंतद्व्याप्त्याविरहितंहीनं नहिस्वरूपसत्त्वं सत्वादित्याप्यं अन्यथास्वरूपेणतेजसउष्णत्वेजलस्यापितत्स्यादित्यापद्येतेतिभावः एतदसकृत्थ्यभिर्व्याप्तिकवचनस्योपहास्यतामाह उदकेति । अत्रवादिनिपंडितरूपिणिपंडिताभासेइतिइत्थंशतवारमपिप्रोक्तवाक्येउदीरितवचनकेसत्यस्यवादिनोहास्यतातालुकंठादीनांशोषणंचैतदेवद्वयंभवति इतिकिं पार्थिवत्वेनघटवल्लोष्टमपिजलानयनसाधनंस्यादितिद्वयोरर्थः १९६ । १९७ असत्त्वप्रतियोगितयापिभवद्भिःसत्तावश्यमंगीकर्त्तव्येतिदर्शयन्नितरव्यावृत्तिरूपोऽपोह एवपदप्रवृत्तिनिमित्तमित्याकारेणपरमतेनैवासत्तापदार्थेनिर्वक्ति सचेति । सत्तायाःसतीत्वंसत्पदव्यवहार्यत्वंसत्पदार्थस्यभेदेनैवभवन्मतानुसरणेनापिसिद्धंतथाअसत्वमसत्पदार्थोपिसत्ताप्रतियोगिकेनभेदेनैवत्वयानिरूप्यइत्यर्थः तथाचसत्तापलापोनयुक्तइतिभावः १९८ यच्चभवतास्वरूपवलेनासत्तायाअपिसत्त्वमापादितंतत्सत्कारणंप्रतिपादयतामस्माकमिष्टमेवेत्याह अप्यनिष्टमिति । अस्यसत्तास्थानेऽभिषिक्तस्यासतःकारणस्ययत्सत्तापादनंतदस्माकमिष्टमितिसंबंधः १९९ यत्तुविधिगम्यत्वस्यकुलधर्मसाम्यमुक्तंतन्निषेधगम्यत्वेऽसल्लक्षणेपिसमानमित्याह एवंरूपमिति । एवंनास्तीतिवेद्यत्वंरूपंयस्यतत्तथाविधमसदितियदुच्यतेतथाविधिगम्यत्ववत्पारंपर्यादे

अपिव्याप्त्याविरहितंयदुक्तंदूषणंत्वया ॥ उदकाहरणंकुर्यात्पार्थिवोत्रघटोयदि ॥ लोष्टंपार्थिवमप्यत्रतन्नकुर्यात्कथंसदा १९६ शतकृत्वइतिप्रोक्तवाक्येपंडितरूपिणि ॥ जायतेहास्यतैवात्रताल्वादेश्चास्यशोषणम् १९७ सत्तासतीतिविज्ञेयाह्यसत्त्वस्यविभेदतः ॥ सत्ताभेदादसत्त्वंचस्यादसत्त्वेपिकेवलम् १९८ अप्यनिष्टंनचास्माकंसत्तापादनमीरितम् ॥ असतःकारणस्यास्यसत्ताहेतुत्ववादिनाम् १९९ एवंरूपमसत्प्रोक्तंपारंपर्यात्तथैवहि ॥ अनयोरेकरूपत्वेप्यस्तिभेदोमहानयम् ॥ भावाभावात्मकोयोयंप्रसिद्धःसर्वदेहिनाम् २०० विधिप्रत्ययगम्यत्वंयत्त्वयात्रनिराकृतम् ॥ नाचक्ष्महेवयंतस्यलक्षणंतत्कदाचन २०१ अवाङ्मनसगम्यत्वंलक्षणंतुसतःस्मृतम् ॥ सर्वलक्षणशून्यत्वमथवास्त्वस्यलक्षणम् २०२ ततोवेदोक्तसूर्येस्मिन्कुतर्करजआक्षिपन् ॥ वादिनोयेतएवासन्पांसुलास्याःसुदुर्धियः २०३

वस्यात् कथंतर्हिसदसतोर्वैलक्षण्यमितिचेदनुभवबलादेवेत्याह अनयोरिति । तथाप्यनयोःसदसतोरैकरूप्यंनभवतिहियतोभावोयमयमभावइत्थंनिरूप्यमाणोभेदःसर्वानुभवसिद्धइत्यर्थः २०० एवंलौकिकतर्कप्रधानानांबाह्यानांलोकदृष्टिविरोधेनपरिहारउक्तः अस्मत्सिद्धांतभूतंसत्ताख्यमखंडाद्वैतंतुदिवांधैरंशुमद्बिंबमिवानाकलितंकथमपहियेतेतिसूचयन्विधिगम्यत्वलक्षणस्यदूषणप्रयासस्तेविफलस्तस्यलक्षणस्यास्माभिरेवानादृतत्वादित्याह विधीति । स्पष्टम् २०१ किंतर्हिसद्वस्तुनःसिद्धांतेलक्षणमितिचेदविषयत्वमलक्ष्यत्वंवातदित्याह अवाङ्मनसेति । नचैतदलीकेऽतिप्रसक्तं तत्रविषयत्वलक्ष्यत्वयोरभावाधिकरणतायाअप्यसंभवात् सद्धामभावोनिरूप्यतेइतिसिद्धांतात् अविषयत्वेनप्रत्यगात्मतायाविवक्षितत्वाच्चेतिभावः २०२ एतदौपनिषदंतत्त्वंदूषयितुमुद्यताःस्वयमेवाप्रकृताःस्युरितिरूपकेणाह ततइति । ततस्तर्काविषयत्वादस्मिन्कारणतत्त्वेवेदोक्तसाधर्म्येणसूर्यरूपे तत्रसूर्यपक्षेवेदोक्तत्वंऋग्भिःपूर्वाह्णेयजुर्भिर्मध्याह्नेसामभिःसायंतपतीतिश्रुत्यनुसारात् प्रकृतेतुवेदप्रतिपादितत्वमितिबोध्यं अत्रयेवादिनःसुदुर्धियःकुतर्करूपंरजोधूलिपुंजंआक्षिपन्प्रक्षिप्तवंतस्तेएवपांसुलास्याधूलिव्याप्तमुखाआसन् ननुसूर्यस्यकाचिद्धानिरित्यर्थः २०३

श्रेयस्कामैस्तु तेषां तार्किकाणां मतं दूरतः परिहृत्य शास्त्रदृष्टिलब्धं सत्त्वरूपरविमंडलमेव विश्वकारणतया ज्ञेयमित्याह असतेषामिति २०४ असत्कारणत्वं युपलब्धिबाधितमित्याह असतइति २०५ सार्वज्ञ्यलक्षणफलवत्त्वाच्च सत्कारणं विज्ञेयमित्याह कार्यंहीति । स्पष्टम् २०६ अथ सतोऽद्वितीयत्वविशदीकरणाय श्रुत्युपन्यस्तां सृष्टिप्रक्रियामभिनयति यथेत्यादिना । तदद्वितीयत्वेनव[र्णि]तं सत्त्वं यथा समग्रं जगत्सृष्टवदसृजत्तं प्रकारं शृणु तत्सर्वभेदहीनं ब्रह्मकर्तृ एवमचिंतयत् कीदृशं वस्तुतः सर्वदा मायया ऽसंस्पृष्टमपि कल्पितसंबंधेन मायावदित्यर्थः २०७ एवं कथमित्याकांक्षायामाह बहुधेति । अहं बहुधास्यां भवेयं कथं स्वयमेव प्रजायेय प्रकर्षेण नानाभेदैर्जन्म लभेयं यतो जन्मनैव मे बहुभावो भवेन्नान्यथा ततइति संबंधः २०८ तैत्तिरीयश्रुतेर्वाय्वाकाशावुपसंहरन्नाह इत्थमिति । न केवलं सर्वभूतसृष्टेः प्रागेवोक्ताकारं चिंतनमकरोत् किंतु प्रत्येकभूतसृष्टेः प्रागपीत्याह एकैकेति । कीदृशं तत्सत् एवं बहुधास्यामित्याद्याकारविचिंतनपूर्वकं प्रत्येकभूतरूपतां गतमित्यर्थः २०० तत्र प्रकृतच्छंदोगश्रुत्या काशवाय्वोः सृष्ट्यनभिधाने प्रयोजकमाशयं वर्णयति आकाशश्चेति । बालेंदुरवगमे पंचीकरणे उपयुक्तयोर्वाय्वाकाशयोः सृष्टिमुपेक्ष्यानुग्रहेण शिष्याणां स्थूलां बुद्धिंसमाश्रित्यानुसृत्यात्र श्रुत्या त्रिवृत्करणमेवेयं ते प्रतिपादयितुमिष्यते अतस्तेजः प्रभृतीनां त्रयाणामेव सृष्टिरुक्तेति द्वयोरर्थः २१० । २११ तत्र क्रममाह तेजइति । ब्रह्मकर्तृ प्रथमं तेजः सृष्ट्वा तदनुत

असतेषां त्वचो नैव स्वीकार्यं वेदवादिभिः ॥ किंतु पूर्वोक्तमेवात्र कारणं सद्गिरोदितम् २०४ असतः कारणात्कार्यं यद्यस्मान्नैव जायते ॥ तस्मात्सदेव विज्ञेयं सतः कार्यस्य कारणम् २०५ कार्यं हि ज्ञायते लोके कारणज्ञानतः सदा ॥ सर्वस्य जगतश्चैतत्कारणं सत्प्रकीर्तितम् २०६ यथा जगत्समग्रं तत्सृष्टवत्सत्तथा शृणु ॥ सर्वभेदविहीनं तद्ब्रह्मैव समचिंतयत् ॥ मायया परिगूढं सदगूढमपि सर्वदा २०७ बहुधास्यां प्रजायेय स्वयमेव यतस्ततः ॥ जन्मना मे बहुभावो मे भविष्यति न संशयः २०८ इत्थं विचिंत्य भूतानि पंच तत्ससृजे क्रमात् ॥ एकैकभूततां प्राप्तमेवमेव विचिंत्य च ९ आकाशश्च तथा वायुः पंचीकरणकर्मणि ॥ उपयुक्तौ ततो हित्वा तौ श्रुतिः सृष्टिमब्रवीत् ॥ तेजोबन्नात्मना मेषां त्रिवृत्करणकाम्यया २१० स्थूलां बुद्धिं समाश्रित्य त्रिवृत्करणमीर्यते ॥ सत्येव पंचीकरणे शिष्याणां समनुग्रहात् २११ तेजस्तदनु नीराणि तान्यन्नं भूमिशब्दवत् ॥ सृष्टा चाभूत्तु सर्वत्र ब्रह्म तत्तत्स्वरूपवत् २१२ इदानीमपि संतापाद्वृष्टिरन्नं ततो भवेत् ॥ आदौ यत्त्रयं त्वेतदेकमेकस्य कारणम् २१३ तेजोबन्नात्मकं यस्मात्त्रयमेव हि कारणम् ॥ बीजानि तत एतानि प्रोक्तानि त्रीणि देहिनाम् २१४ जरायुजं भूतजातमादावेव प्रजायते ॥ स्वेदजं च ततस्त्वेकमुद्भिज्जं चांडजं पुनः २१५

दनंतरं नीराणि सृष्ट्वा तदनु तदनंतरं भूम्यपरनामकमन्नं च सृष्ट्वा तत्तादात्म्यं प्राप्तमभूदित्यर्थः २१२ स एव सृष्टिक्रमोऽधुनाप्यनुभूयतेइत्याह इदानीमिति । यत एत तेजोबन्नलक्षणत्रयांतर्गतमेकं प्रथममेकस्यान्यस्योत्तरस्य कारणमभूत् ततइदानीमपि संतापादातपातिशयाद्वृष्टिर्भवनं ततश्चान्नभवनं युक्तमित्यर्थः २१३ देहबीजानां जरायुजादिशरीराणां त्रैविध्यदर्शनेनापि प्रत्यक्षं जगतः कारणत्रयमवधार्यमित्याकारकं तृतीयकंडिकावाक्यं सस्पार्थमाह तेजोबन्नात्मकमिति पद्भिः । यस्मादस्य जगतः कारणं तेजोबन्नलक्षणैस्त्रिभी रूपैरुपवस्थमासीत्ततस्तं कारणस्वभावमनुसृत्यैवैतानि वस्यमाणानि शरीरिणां बीजानि संततिप्रयोजकानि कारणानि त्रीणि त्रिविधानि संपन्नानीत्यर्थः २१४ तानि गणयति जरायुजमिति । जरायुजाख्या शरीरिजातिः प्रथमं शरीरिणां बीजं तस्य प्रथमत्वं च जरायोर्जठराग्निपाकजत्वेन तैजसत्वात् ततः स्वेदजं द्विविधं जायते तस्य द्वैविध्यमुपपादयति एकमित्यादिना । यदेकं मशकादिरूपं स्वेदजमुद्भिज्जं भवति अपरं यूकादिरूपं त्वंडजमंडभावद्वाराजायमानत्वादित्यर्थः तथा च स्वेदजस्योद्भिज्जांडजाभ्यां यथायोगमाप्यपार्थिवाभ्यां संग्रहसंभवाज्जरायुजांडजोद्भिज्जाख्यानि त्रीण्येव बीजानीति प्रकृतश्रुतेराशयइतिभावः २१५

तृतीयशब्दावरोधःसंशोकजस्येतितृतीयाध्यायप्रथमपादगतसूत्रेणोद्भिज्जएवांतर्भावोक्तिस्तुउद्भिद्यजायतइतिव्युत्पत्तिरंडजेयूकादावपिसंभवतीत्येतावद्बोधयितुंनत्वंडजेंतर्भावंवारयितुमित्येवंविधं सूत्रकाराशयंदर्शयति जलानीतिद्वाभ्यां । उद्भिज्जांडजलक्षणोद्वावपिस्वेदजस्यभेदोजलान्युपादानभूतान्युद्भिद्यऊर्ध्वंभित्त्वैवजायेतेउत्पद्येते यथास्थावराःवृक्षादयोभूमिमुद्भिद्यजायंतेतद्वत् तत स्तस्मेनंव्युत्पत्तिसमन्वयंमनसिनिधायभगवान्सूत्रकृत्तत्रउद्भिज्जेस्वेदजस्यांतर्भावमुवाचेत्यर्थः २१६ एवंव्याख्यानस्यतात्पर्यानुरोधितामाह असत्त्वमिति । ह्यियतस्तत्तेनोक्तसूत्रनिर्माणरूप व्यापारेणप्रभुःसूत्रकृच्चतुर्थस्यस्वेदजस्यऐतरेयोक्तस्यासत्त्वंवारयतितस्यासत्त्वंनास्तीत्येतावदेवविवक्षतिनत्वत्रोद्भिज्जएवांतर्भावंकरोति यतस्तस्यमुनेरत्रवक्ष्यमाणेऽर्थेतात्पर्यं तत्रहेतुगर्भंविशेषणंस र्वदर्शिनइति ऐतरेयादिवाक्यानिलोकवृत्तंचप्रकृतश्रुतावेवकारंचपश्यतइतितदर्थः २१७ अत्रेत्युक्तंसर्वाविरोधिमुनितात्पर्यमभिनयति अंडजाइति । आद्यपदेनयूकादीनामपिसंग्रहः अपिशब्दे नमशकादीनांग्रहः स्फुटमन्यत् २१८ त्रित्वमिति । यतोऽध्यात्मप्रपंचस्यबीजेत्रित्वंत्रैविध्यंदृष्टंततोविश्वकारणेपितेजोबन्नरूपेत्रैविध्यंबोध्यमितिशेषः एतद्विज्ञानस्यकिंफलमितिचेत्परमकारणे सन्मात्रेबुद्धेरवतारएवेत्याह तत्स्थितमित्यादिना । तेजोबन्नेषुस्थितंसद्रूपेणानुगतमस्मदादिभिरधिकारिभिर्द्रष्टव्यतामन्वेष्टव्यंस्यादित्येतदर्थमेतदुक्तमितिशेषः २१९ परमकारणस्यतेजःप्रभृतिष्वनुग

जलान्युद्भिद्यजायेतेभूमिस्थावरसंघवत् ॥ अंतर्भावंततस्तत्रवर्णयामाससूत्रकृत् ॥ पाराशर्योमहाभागोव्यासःसत्यवतीसुतः २१६ असत्त्वंहिचतुर्थस्यनिवार यतितत्प्रभुः ॥ नांतर्भावंकरोत्यत्रतात्पर्यंसर्वदर्शिनः २१७ अंडजाःपक्षिसर्पाद्याउद्भिज्जाःस्थावराअपि ॥ शेषाजरायुजाज्ञेयाःसर्वएवापिजंतवः २१८ त्रित्वं बीजेयतस्तस्मात्तेजोबन्नेचतत्तत्स्थितम् ॥ कारणंसर्वजगतोदृश्यतामस्मदादिभिः २१९ कारणात्मतयापूर्वंतेजोबन्नेषुदेवता ॥ प्रविष्टायतएवैतत्तल्लिंगंदृष्टमीक्ष णम् २२० तेजआपश्चतद्वद्यदीक्षित्वासृष्टिसिद्धये ॥ बहुधास्यांप्रजायेयेत्येवंदृष्टप्रवर्तनम् २२१ प्रविष्टापिनतेष्वेषाप्रविष्टाजीवरूपतः ॥ प्राणानांधारकोयो यंसजीवइतिकथ्यते २२२ प्राणापानादिभेदेनव्यानोदानसमानकान् ॥ दधातियःसजीवोयंसंसारफलमोक्षभाक् २२३ स्वांगुष्ठेनमितंसर्वदेहिनांहृदयांबुजम् ॥ तत्रांतःकरणंनित्यंवर्ततेज्ञानशक्तिमत् ॥ तादात्म्यंतेनयोगच्छेत्सजीवइतिगद्यते २२४

मेश्रुत्युक्तंहेतुमाह कारणात्मतयेति । तेजोबन्नेषुकार्येषुघटेषुमृद्वत्कारणभूतापरादेवताप्रविष्टेतिबोध्यं यतस्तल्लिंगंतस्याःपरायादेवतायाअसाधारणधर्मभूतमीक्षणंदृष्टंश्रुत्याप्रतिपादितं तथाचश्रुतिः तत्ते जऐक्षतेत्यादिः २२० एतदेवस्फुटयति तेजइति । तेजश्चआपःजलतत्त्वंचएतद्द्वयंयस्मात्तद्वत्सदाख्यपरमकारणवद्बहुधास्यांप्रजायेयेत्येवमीक्षित्वादृष्टमवर्तनंदृष्टंप्रवर्तनंयस्यतथाभूतंजातमित्यर्थः २२१ एवंसद्विज्ञानेनतद्विकाराणांविज्ञानेपिजीवविज्ञानंकथमित्याशंकावारणायजरायुजादिशरीरविशिष्टरूपेणतद्विकारत्वंजीवानामुक्तंतेषांशुद्धरूपेणत्वैक्यमेवेतिसूचयितुंजीवरूपेणप्रवेशोवक्ष्यतेतमवता रयन्नुक्तपरादेवताकार्येष्वनुगताताहिंकिमर्थंपुनर्जीवरूपेणप्रविष्टेतिशंकांपरिहरन्जीवतत्त्वंवर्णयति प्रविष्टापीतिद्वादशभिः । एतासदाख्यापरादेवताकारणत्वेनतेजःप्रभृतिषुप्रविष्टापिजीवरूपेणनप्र विष्टा तत्रहेतुतयाजीवधर्माणांप्राणधारणादीनांतदानीमभावंसूचयन्जीवंलक्षयति प्राणानामित्यादिना । जीवप्राणधारणइतिस्मृतेः २२२ प्राणाइति । बहुवचनदर्शितान्प्राणभेदान्कीर्तयन्संसा रोनानादेहग्रहणरूपःफलंशुभाशुभरूपंमोक्षोबंधध्वंसएतत्त्रयमपिजीवलक्षणमित्याह प्राणापानाविति । यःसन्निधिमात्रेणप्राणादीन्दधातिव्यवस्थांनयतिसंसारादिफलभागोपभवतिसचिदात्मजीव इत्यर्थः २२३ तस्यसंसारादिसंबंधप्रयोजकोयेनोपाधिनासंबंधस्तंलक्षयतयाह स्वांगुष्ठेनेति । स्वपदेनतत्तच्छरीरग्रहः हृदयांबुजंहृदयमध्यच्छिद्रंतत्रहृदयांबुजेज्ञानशक्तिमदंतःकरणंवर्ततेतेनां तःकरणेनसहतादात्म्याध्यासंयोभजतिसजीवइत्यर्थः २२४

यद्यंतःकरणमेवजीवोपाधिस्तदासुषुप्तावंतःकरणनाशेनजीवनाशापत्तिरित्याशंकांपरिहरति नास्येति । अस्यांतःकरणस्यसुषुप्तावपिसर्वथानाशोनभवतिकिंतुसंस्काराख्यसूक्ष्मरूपेणतदानीमप्यंतःकरणंतिष्ठति यतोजागरणकालेतद्वत्सुषुप्तिपूर्वकालीनांतःकरणवदेवांतःकरणमस्तिउपलभ्यतेयदिनश्येत्तर्ह्युत्तरदिनेविजातीयमंतःकरणमुपलभ्येतनचतथोपलभ्यतेइत्यर्थः २२५ जीवस्यानित्यत्वमेकत्वंचोपपादयति कारणात्मनीतित्रिभिः । एतस्मिन्सत्पदवाच्येकारणात्मनिविश्वबीजवासनासंभृतमायाविशिष्टेपरमेश्वरेअस्यांतःकरणतद्वासनाविशिष्टरूपस्यजीवस्यतादात्म्यंकल्पितभेदविशिष्टाभेदरूपंमतंसांप्रदायिकैर्यतस्ततःकारणतादात्म्यभावादेवास्मिन्नंतःकरणादिरूपेकार्येतादात्म्याध्यासोनांतरीयकोऽविनाभावीपृथक्साधनानपेक्षइतियावत्भवतिउपलभ्यते यद्यंतःकरणबीजेऽस्यजीवस्यतादात्म्यंनस्यात्तदांतःकरणोदयेनयौगपद्यशालीतत्तादात्म्याध्यासोनोपलभ्येतेत्यर्थः २२६ तथाचांतःकरणस्यप्रतिदिनंजनिक्षयशालित्वेपितद्बीजवासनाशालिनोऽज्ञानस्यतत्त्वज्ञानपर्यंतंस्थिरस्यजीवोपाधितामभिसंधायजीवस्यनित्यतामेकतांचव्यवहरंतीत्याह ततइति । आत्मनोजीवस्यएकरूपिणःएकंआधारसंख्ययाएकत्वेनविवक्षितंरूपंवासनात्मकउपाधिर्यस्यसतथातस्य यद्वावासनाधारेणाज्ञानेनएकेनरूपिणउपाधिमतः २२७ यतइति । अंतःकरणस्थस्तत्तदंतःकरणेषुभिन्नतयाप्रतीयमानोपिकारणेनबीजाधारेणतादात्म्यंसेवतएवततोवासनानामाधारैकत्वेनैकतांगतानामुपाधित्वमभिसंधायजीवएकउच्यतेकार्योपाधिरयंजीवइतिजीवलक्षणंवदद्भिरपीत्यर्थः २२८ अस्यजीवस्यमोक्षोपिस्थिरोपाधावज्ञानेस्थितानामज्ञानकर्मवासनानामाश्रयनाशप्रयुक्तनाशादेवभवतीत्याह अवस्थात्रयेति । अवस्थात्रयस्यहेतवोनिमित्तभूताःकर्मवासनाअंतःकरणस्यवृत्तिज्ञानरूपस्यहेतवःसंस्काराख्याज्ञानवासनास्तासांसर्वासांयदाश्रयस्यक्षयेणक्षयःस्यात्तदामोक्षइत्यर्थः २२९ वासनात्मकबीजानाशनाशाभ्यांबंधमोक्षव्यवस्थांदृष्टांतेनस्फुटयति सत्यामितिद्वाभ्यां । दृष्टांतेआश्रयनाशोवह्निसंसर्गोर्वरत्वादिनाबोध्यःनिगदव्याख्यातंद्वयम् २३० । २३१ इयंव्यवस्थाप्यबोधनिद्रासुप्तानांदृष्टिमनुरुध्यैवनपरमार्थतः एकएवनजीवोस्तिजीवानांराशयःकुतइतिसिद्धांतादितिदर्शयंस्तत्रस्वप्नव्यवहारंदृष्टांतयतिस्वप्नइति २३२ प्रबोधेतुवास्तवैक्यप्रादुर्भावान्नकापिव्यवस्थापेक्षेत्याह यथेति । स्वप्नगतेस्वप्नप्रतीते २३३ एवंजीवस्यकल्पितोपाध्यवच्छिन्नरूपेणपरदेवतायाःसकाशाद्विशेषभाक्त्वेप्युपाधिविविक्तरूपेणैक्यमेवेतिदर्शितम् अथनिरूपितविशेषभावलक्षणःप्रवेशःपरिपूर्णस्यापिसंभवतीतिदृष्टांतद्वयेनोपपादयन्नालोचनपूर्वकंप्रवेशत्रिवृत्करणयोःप्रतिपादकस्यवाक्यस्यार्थमाह सर्वगोपीतिसप्तभिः । यथाघटादिदेशेपूर्वमपिसतआकाशस्यजायमानघटादिप्रयुक्तावच्छेदलक्षणःप्रवेशःप्रसिद्धस्तथापरमात्मनोपिमनआदिषुमनसःसात्विकांशरूपेणकारणेषुभूतेषुईक्षणादिव्यवहारप्रयोजकःप्रवेशोबोध्यइत्यर्थः २३४

नास्यसर्वात्मनानाशःसुषुप्तावपिविद्यते ॥ यतःसंस्काररूपेणतद्वज्जागरणेस्तिहि २२५ कारणात्मनिचैतस्मिन्नस्यतादात्म्यमिष्यते ॥ ततोभवतिकार्येस्मिंस्तादात्म्यंनांतरीयकम् २२६ ततोंतःकरणोत्पत्तौनाशेवानात्मनःक्वचित् ॥ उत्पत्तिनाशौभवतःसर्वदैवैकरूपिणः २२७ यतोंतःकारणस्थोपिजीवस्तत्कारणात्मकः ॥ एकएवततोजीवोविद्वद्भिःपरिपठ्यते २२८ अवस्थात्रयहेतूनांवासनानांयदाक्षयः ॥ अंतःकरणहेतूनांतदाजीवोविमुच्यते २२९ सत्यांभूमौयथामूलबीजनाशेतरुःक्षयम् ॥ कश्चिन्नयातिनैवान्येवटाद्यास्तरवस्त्विमे २३० एवंमायास्थितोजीवःकश्चिदेवविमुच्यते ॥ यस्यांतःकरणस्यायंवासनानांपरिक्षयः २३१ स्वप्नेयथाभवेद्बद्धोमुक्तश्चैकस्तथैवहि ॥ एकएवचजीवात्माबद्धोमुक्तश्चमायया २३२ यथास्वप्नक्षयेबंधमुक्तीस्वप्नगतेनहि ॥ एवमात्मनिविज्ञातेबंधमुक्तीनकेअपि २३३ सर्वगोपियथाकाशःप्रविशेद्धिघटादिषु ॥ सर्वगोपितथात्मायंप्रविशेन्मनआदिषु २३४

अथाहंकाराद्यवच्छिन्नचिदाभासरूपेण पुनःप्रवेशे दृष्टांतमाह यथेति । यथासुप्तपुरुषस्यजीवनव्यवहारान्यथानुपपत्त्याशरीरेसामान्यरूपेणप्रवेशांगीकारेपिजागरेणजाग्रदवस्थयाअभिव्यक्ताहंकारावच्छिन्नरूपेणविशेषतःप्रवेशःस्वीक्रियतेइत्यर्थः २३५ दार्ष्टांतिकेयोजयति तेजोबन्नेष्विति । सापरमात्मसंज्ञादेवताअचिंतयद्वक्ष्यमाण कारमालोचनंकृतवती २३६ आलोचनमभिनयति अनेनेति । अनेनसाक्षदपरोक्षेणस्वात्मरूपेणस्वकीयशुद्धरूपेण कीदृशेन जीवस्थेनआध्यासिकसंबंधेनजीवानुप्रविष्टेनजीवकल्पनाधिष्ठानभूतेनेतियावत् पुनःकीदृशेन अत्रविशेषतःएषुभूतेषुवर्तमानमहंकारादिकंविशेषंप्राप्यजीवरूपतःजीवभावंप्राप्तेन अधुनाअस्यैवविवरणंसृष्टिमन्विति । इमास्तेजःप्रभृतिलक्षणादेवताःसूक्ष्मास्तेजःप्रभृतिभूतानांव्यक्तीःप्रविष्टाःसंति अहंनामरूपंचेत्येतद्द्वयंविविधंस्पष्टंचकरवाणिकुर्यांतस्यनामरूपयोःस्पष्टीकरणस्यायंवक्ष्यमाणउपायोपिमयानुसंधीयतेइतिद्वयोरर्थः अत्रजीवरूपानुप्रवेशंविनाअहंममत्वाभिमानसाध्यस्तत्तज्जातीयव्यवहारःकेवलेनपरमात्मनादुष्करइत्यतस्तदुक्तिः व्याकरणेकर्तृत्वंतुविश्वकर्तुःपरमात्मनएव संज्ञामूर्तिकॢप्तिस्तुत्रिवृत्कुर्वतउपदेशादितिसूत्रादितिबोध्यम् २३७ । २३८ सचोपायस्त्रिवृत्करणरूपइत्याह तेजोबन्नात्मिकास्तिस्रइति । त्रिवृत्पदस्यत्रिवृद्धिष्पवमानंभवतीत्यादिवैदिकप्रयोगेनवसंख्याकवस्तुप्रतिपादकत्वस्यदर्शनाद्वैदिक्याकांक्षावैदिकेनैवपूर्यतेइतिन्यायानुकूल्याद्यएकादशो

यथाशयानःपुरुषःप्रविष्टोपिकलेवरे ॥ विशेषतोजागरेणप्रवेशमधिगच्छति २३५ तेजोबन्नेषुतद्वत्साप्रविष्टापिचदेवता ॥ जीवात्मनाविशेषेणप्रवेशार्थमचिंतयत् २३६ अनेनस्वात्मरूपेणजीवस्थेनविशेषतः ॥ अत्राधुनासृष्टिमनुप्रविष्टाजीवरूपतः ॥ तेजोबन्नात्मिकाःसर्वाइमास्तिस्रोपिदेवताः २३७ विविधंचतथास्पष्टंकरवाण्यद्यपर्तथा ॥ नामरूपंद्वयंत्वेतदुपायस्तस्यभातिमे २३८ तेजोबन्नात्मिकास्तिस्रोवर्ततेयाश्चदेवताः ॥ एकैकंकरवाण्येतानवधानवधापुनः २३९ तासुप्रविश्यचैवंहिस्यातांस्पष्टेउभेअपि ॥ नामरूपेततःसर्वंजगदेतद्भविष्यति ॥ इतिसंचिंत्यसासर्वंस्वचिंतितमथाकरोत् २४० सृष्टिमेवंस्वपुत्रायत्रिवृत्करणरूपिणीम् ॥ प्रोच्यकारणरूपत्वंचकुंकार्यस्यसोवदत् ॥ उदाहरणरूपेणवन्ह्यादीनांचतुष्टयम् २४१ सर्वंहिलोहितंरूपमग्नेरेवात्रनिश्चितम् ॥ अपांशुक्लंतथाकृष्णंपृथिव्याःपरिकीर्तितम् २४२ वन्हौसूर्येचंद्रमसिविद्युत्स्वपियथापृथक् ॥ रूपत्रयस्यकरणादग्न्यादिर्नोपलभ्यते २४३

क्तपंचीकरणन्यायेनत्रिवृत्करणमिदम् तथाहि प्रत्येकंभूतत्रयंत्रिस्त्रिर्विभज्यसर्वेषांतृतीयांशांस्त्रेधात्रेधाविभज्यसर्वत्रमेलयेत् इत्थंकृतेपरकीयंभागद्वयंस्वंस्वंभागसप्तकंचसिद्ध्यति अविभक्तप्रथमद्वितीयभागयोरपितृतीयभागतुल्यत्वादिति अत्रानुकूल्ययुक्तयंतरंचैकादशोक्तंस्मर्तव्यम मृलान्वयस्तुतासुतिसृषुदेवतासुप्रविश्यनामरूपयोःस्फुटीकरणायप्रत्येकंनवधानवधाकरवाणीत्येवंविचिंत्यसापरादेवतासर्वंचिंतितमकरोदिति २३९ । २४० चतुर्थीकंडिकांत्रिवृद्भावोदाहरणमुखेनापवादपरामवतारयति सृष्टिमिति । उक्तविधत्रिवृद्भावेनरूपिणींदृश्यमानरूपांसृष्टिमध्यारोपभूतांप्रोच्यकथयित्वायथाकार्यस्यकारणमात्रात्मताऽपवादभूताप्रतिपादिताभवेत्तथाबोधयितुंवन्हिसूर्यचंद्रविद्युद्रूपंचतुष्टयमुदाहरणत्वेनपितापुत्रायावददित्यर्थः २४१ तत्रवन्ह्यादोभूयस्त्वेनदृश्यमानंरक्तंरूपंतेजसःसप्तभागशालिनोबोध्यम् शुक्लकृष्णरूपेतुप्रांतमध्ययोर्लेशतयावर्तमानेअबन्नयोरष्टमनवमभागशालिनोरेवेत्याह सर्वंहीति । सर्वंप्रचुरम् अग्नेस्तेजसः अत्रोदाहरणचतुष्टये २४२ एवंभूतत्रयसमुदायरूपाणांवन्ह्यादीनांभूतत्रयात्पृथक्करणात्मकेविवेकेक्रियमाणेवन्ह्यादेर्बाधाद्भूतत्रयमेवसत्यतयावशिष्यतइत्याह वन्हाविति । रूपत्रयस्यउक्तरूपत्रयाश्रयस्यभूतत्रयस्यपृथक्करणाद्वन्ह्यादेःसत्यत्वमपगच्छतीत्यर्थः २४३

एवंजलीयभावेपुनश्चादिषुपार्थिवेषुपर्वतादिषुत्रनूतत्रयांशविवेकेनमिथ्यात्वंबोध्यमित्याह तथेति । स्पष्टम् २४४ तत्रहेतुमाह विकारइति । यतोविकारोवन्ह्यादिर्नाममात्रात्मकः वाचैवार
भ्यत्वान्निर्मातव्यत्वात् तत्त्वंचवस्तुतोऽर्थनिरूपणायामभावात् ततःसिद्धात्कारणावधिकपृथक्त्वाभावान्मिथ्येतिसंबंधः फलितमाह ततइति । विकारजातस्यकारणंभूतत्रयमेवततोविकारजा
तापेक्षयासत्यमित्यर्थः २४५ इत्थंविकारत्वस्यामिथ्यात्वेनव्याप्तिमवधार्यतेनलिंगेनतेजःप्रभृतीनांकारणस्यसतएवपरमार्थत्वंबोध्यमित्याह एवमिति । विकारस्यविभागलिंगेनविकारतया
ज्ञातस्ययत्कारणंसद्वस्तुतदेवसत्यम् यत्त्वन्यत्रयंतत्नसत्यंकार्यत्वात्विकारत्वादित्यर्थः २४६ अत्रार्थेविद्वदनुभवःश्रुत्योपन्यस्तस्तंवर्णयति एवंज्ञात्वेति । एवमुक्तविवेकविधयाज्ञात्वाअत्रकार
णतत्त्वेविद्वांसःकुशलाःकेचित्पूर्वेद्विजाइत्थमाहुरित्यर्थः २४७ इत्थंकथमतआह अस्मदिति । अस्माकंविद्यावंशेभवःकोप्यविज्ञातंकिंचिदपिवस्तुनवदिष्यतिकिंतुसर्वंविज्ञातमेववदिष्यतिकार
णसत्यत्वस्यविज्ञानादित्यर्थः २४८ कारणविज्ञानस्यसर्वविज्ञातृत्वप्रयोजकतांस्फुटयति कारणाच्चेति । स्फुटम् २४९ इत्थंवदनंतेषांयुक्तमेवसद्विज्ञानेनविश्वतत्त्वस्यतैरपरोक्षीकृतत्वादित्याह

तथाविश्वमिदंसर्वंरूपत्रयविनिर्गमात ॥ नलभ्यतेपृथग्यस्मात्तस्मान्मिथ्येतिकीर्त्यते २४४ विकारोनामधेयात्माकारणान्नपृथग्यतः ॥ वाचैवारभ्यतेयस्मा
द्वस्तुतोनैवविद्यते ॥ ततोरूपत्रयंसत्यंयद्विकारस्यकारणम् २४५ एवंरूपत्रयस्यास्ययद्विकारस्यकारणम् ॥ सत्यंतदेवनान्यत्स्यात्कार्यंरूपत्रयंहियत्
२४६ एवंज्ञात्वात्रविद्वांसःपुराहर्षमुपागताः ॥ आहुरेवंहिमिलिताःकेचित्तेद्विजसत्तमाः २४७ अस्मत्कुलेनकोप्यत्रजानन्कारणसत्यताम् ॥ कार्यस्यासत्यतां
तद्वदविज्ञातंवदिष्यति २४८ कारणाच्चपृथग्यस्मात्कार्यंकिंचिन्नविद्यते ॥ ततःकारणविज्ञानात्सर्वःसर्वज्ञतांव्रजेत् २४९ एतेरूपत्रयंयस्माज्ज्ञातवंतोमुनी
श्वराः ॥ तेजोबन्नस्यतस्यापिकारणंयत्सदद्वयम् २५० एवमुक्त्वापुनःप्राहतनयंस्नेहसंयुतः ॥ तद्धेतुत्वंविवक्षुःसन्मनसोवैसआरुणिः २५१ अदनीयंहिनि
खिलंतेजोबन्नात्मकंयतः ॥ अशितंचतथापीतंततःसर्वंत्रिधाभवेत् ॥ शरीरेसर्वजंतूनामन्नपानानुसेविनाम् २५२ वाक्प्राणोमनइत्येतत्सूक्ष्मंकार्यमुदीरितम् ॥
मज्जारक्तंतथामांसंमध्यमंचप्रकीर्तितम् २५३ अस्थिमूत्रंपुरीषंचस्थूलंस्यात्क्रमतस्त्रयम् ॥ तेजोबन्नत्रयस्यापिसूक्ष्मादिपरिभेदतः २५४ तेजोमयीहिवा
गुक्ताह्यम्मयोवायुरेवच ॥ अन्नात्मकंमनस्तद्वदितिपुत्रःप्रयत्नवान् ॥ प्रपद्यचपुनश्चोद्यमकरोत्पितरंप्रति २५५

एतेइति २५० एवंबाह्यप्रपंचस्यभौतिकतानिरूपणेप्याध्यात्मिकप्रपंचरूपस्थूलसूक्ष्मशरीरलक्षणस्यकथंभौतिकतेतिमंदशंकावारणायमनःप्रभृतीनांभौतिकत्वांसप्तमकंडिकांतग्रंथेनश्रुत्यावर्णितांविशद
यति एवमुक्त्वेत्येकत्रिंशताश्लोकैः । आरुणिरुद्दालकएवंतद्बाह्यप्रपंचस्यभौतिकत्वमुक्त्वाथमनसोमनःप्रभृतेराभ्यंतरप्रपंचस्ययद्धेतुत्वंभूतानांतद्द्वाराब्रह्मणश्चतद्विवक्षुर्वक्तुमिच्छन्निदंवक्ष्यमाणमर्थं
प्राहेत्यर्थः २५१ अदनीयमिति । त्रिवृत्कृतभूतात्मकंबाह्यंद्रव्यमन्नोदकाख्यंभक्षितंपीतंवासज्जाठराग्निसंपर्केणत्रिधापृथिव्यप्तेजोरूपैर्विभक्तंभवतिइतिवृत्तंसर्वेषामन्नादिसेविनांशरीरेष्वसममित्य
र्थः २५२ वागिति । एवंत्रिधाविभक्तस्याशितादेर्यस्तैजसोभागःसोपित्रिधाभवतिसूक्ष्ममध्यमस्थूलरूपैस्तत्रसूक्ष्मोभागोवाग्रूपेणपरिणमतेमध्योमज्जारूपेणस्थूलोऽस्थिरूपेण । जलीयभागस्य
सूक्ष्माद्यात्मनात्रिधाभूतस्यप्राणोरक्तंमूत्रंचेतियथाक्रमंपरिणामः पार्थिवस्यतुमनोमांसंपुरीषंचपरिणामइतिद्वयोरर्थः २५३ । २५४ षष्ठकंडिकोक्तोदधिदृष्टांतोयांशंकांवारयितुमुक्तस्तामाह
तेजोमयीतित्रिभिः । वाक्प्राणमनांसियथाक्रमंतेजोबन्नानांकार्याणीतिमपद्यश्रुत्वाप्रयत्नवान्सोत्साहःपुत्रश्चोद्यंप्रश्नमकरोदिति २५५

इदंकिमतआह विलक्षणमिति । स्थवीयसःअतिस्थूलादन्नादिरूपेणदृश्यमानात्तेजःप्रभृतेरुपादानात्सूक्ष्मत्वेनविलक्षणंवागादित्रयंकथंजायेतयतःसजातीयानांतंतुपटादीनामेवकार्यकारणभावोदृष्टइत्यर्थः २५६ पुनरेवेति । स्पष्टम् २५७ सामग्रीविशेषसहकृतात्स्थूलादपिसूक्ष्मसंभवोदृष्टइत्याशयेनपितुरुत्तरंदर्शयति एवमुक्तइत्यादिना । यथाघनत्वेनदृश्यमानस्यापिदध्नोमंथनसहकृतस्यतक्रंफेनोघृतंचेत्येतानित्रीणिकार्याणिदधिभावकालेऽनुपलब्धान्यपिजायमानानिदृष्टानितथाजाठराग्निसंपर्केणतेजःप्रभृतेरपितत्कार्यत्रयंसंभवतीत्यर्थः २५८ घृतमिति । यथादृष्टांतेमथ्यमानाद्दध्नःसकाशात्सूक्ष्मांशोघृतरूपेणोर्ध्वंगच्छतितथातेजोबन्नानांत्रयाज्जठरगाद्याक्रम्यमाणमनसांसमस्त्येकस्योपादानभूतोभागोप्यूर्ध्वंप्रयातीत्यर्थः २५९ फलितमाह वागिति । मनोंतःसमाहारद्वंद्वःभूयइत्याद्युत्तरान्वयि २६० इत्युक्तइत्युत्तरसमप्यापरिहार्यांशंकांप्रतिपादयति वाचइति । इत्युक्तेर्थेसःश्रोभूयःपुनःइतिअचोदयत्पृष्टवान् इतिकिं वाचस्तेजोमयत्वंयदुक्तंतत्प्रसिद्धंसंभाव्यते जलीयधातोःकफस्योद्रेकेसतिवाक्प्रौढिव्यस्यदर्शनात् तथापिप्राणस्याम्मयत्वंमनसोन्नमयत्वंचकथंसंभावितंतत्रान्वयव्यतिरेकयोरदर्शनादितिद्वयोरर्थः २६१ । २६२ इत्युक्त

विलक्षणमिदंसूक्ष्मंकथंतस्मात्स्थवीयसः ॥ तेजोबन्नात्प्रजायेतवाक्प्राणमनआत्मकम् २५६ पुनरेवततोभांत्वमुपपत्तिसमन्वितम् ॥ भगवन्नदयेनाहमधिगच्छामितत्त्वतः २५७ एवमुक्तःपुनश्चाहश्वेतकेतुंसुतंप्रति ॥ दधिस्थूलंयथात्रेधातक्रफेनघृतात्मना ॥ मथ्यमानंभवेदेवमन्नंजठरगंभवेत् २५८ घृतंयथातिसूक्ष्मांशोदध्नऊर्ध्वंप्रयातिसः ॥ वाक्प्राणमनसांसोपितेजोबन्नत्रयात्तथा २५९ वाक्प्राणमनएतस्मात्सूक्ष्मंस्थूलात्प्रजायते ॥ तेजोबन्नात्मकान्भूयइत्युक्ते सोप्यचोदयत् २६० वाचोयत्तैजसत्वंस्यात्तन्नामचभवेदिह ॥ यतःश्लेष्मसमुद्रेकात्तेजसोभिभवेसति ॥ नदृश्यतेऽतिविशदावागियंसर्वदेहिनाम् २६१ मनःप्राणौचकेनैतावन्नकार्यौभविष्यतः ॥ यतोनैवान्वयोनात्रव्यतिरेकश्चदृश्यते २६२ इत्युक्तआरुणिस्तेनतस्मैचश्वेतकेतवे ॥ अन्वयव्यतिरेकौतौदर्शयन्निदमब्रवीत् २६३ दशेंद्रियाणिभूतानिपंचप्राणाश्चषोडश ॥ पुरुषस्यकलाःप्रोक्तामनसोवृत्तयोद्विजैः २६४ एतद्विषयजास्तास्तुनिराहारस्यसंक्षयम् ॥ दिवसेदिवसेयांतिपुत्रसत्यंमयेरितम् २६५ दिनमात्रंविनानीरंनप्राणःशक्नुयात्क्वचित् ॥ अवस्थातुंहितस्मिंश्चगतेनैवान्वयादिकम् २६६ भवेद्यस्माततोनीरंपिबयावदभीप्सितम् ॥ अन्नंपंचदशाहानिमाशीस्त्वंततएवच ॥ अन्वयव्यतिरेकौतौजानीषेस्वयमेवहि २६७

इति । इत्थंपृष्टः पितातस्माअन्वयादिकंदर्शयितुमिदमुक्तवानित्यर्थः २६३ इदंकिमतआह दशेंद्रियाणीति । इंद्रियदशकंभूतपंचकंप्राणाश्चेत्येतेषांयःसमुदायस्तत्प्रायःपिंडवच्चित्तादात्म्यमापन्नःसपुरुषइत्युच्यतेतस्यपुरुषस्यमनसश्चंद्रदैवतकमनःप्रधानस्यकलाःपरिपोषापादकाभागाःषोडशद्विजैरुक्तास्ताःकिमात्मिकाइत्यतउक्तम् एतद्विषयजावृत्तयइति । एतत्पदेनान्नग्रहः तथाचान्नरूपाद्विषयात्प्रतिदिनमुपभुज्यमानाज्जातावृत्तयोमनोनिष्ठावृत्त्युत्पादनाशक्तयःषोडशदिनावच्छेदेनषोडशसंख्यामनोमयपुरुषस्यषोडशकलाइत्युच्यंतेइत्यर्थः तास्तुताउक्तरूपाःकलास्तुनिराहारस्यअन्नंपरित्यजतःपुंसःप्रतिदिनंक्षीयमाणाःषोडशभिर्दिनैःसर्वाःक्षीयंतेअत्रनसंशयइतिद्वयोरर्थः एतन्नीरोगवृत्तमुक्तं रोगे 'तुदोषाणामेवसाशक्तिर्याशक्तिःखलुलंघने' इत्यायुर्वेदविशेषोक्तेरितिध्येयम् २६४ । २६५ तत्रअन्वयव्यतिरेकपरीक्षणोपयोगिनःप्राणस्यसंरक्षणायजलपानंकुर्वतात्वयापंचदशदिनान्यन्नाशनंहेयमित्याह दिनेति । प्राणोनीरंविनाऽवस्थातुंदिनमात्रमपिनशक्तस्तस्मिन्प्राणेगतेसतित्वन्वयादिकंनैवभवेत्ज्ञायेत यस्मादेवंततोनीरंयथेष्टंपिबअन्नंतुपंचदशदिनानिमाशीर्माभुंक्ष्व ततएवइत्थंकरणादेवअन्वयव्यतिरेकौसुबोधौभविष्यतइतिद्वयोरर्थः २६६ । २६७

एवमुक्तइति । सश्वेतकेतुःपक्षमात्रंपंचदशादिनान्यन्नंव्यवर्जयत्त्यक्तवान् ततःपितुरंतिकमागात् २६८ ऋचइति । पितातंक्षुत्क्षाममानसंक्षुधाक्षीणमनसंऋगादीन्पठितुंतदर्थंवेत्तुंचनियुक्तवान् सोयंसुतोपिचिंतयन्सन्नधीतमपिकिंचिन्नप्रतिपेदेनसस्मारदुर्मेधादुर्बुद्धिर्यथानस्मरतितथेतिद्वयोरर्थः २६९ । २७० पितरमिति । ततोविस्मृतेरेवहेतोराक्रोशेनग्लान्यासहितोऽयंसुतःपितरमिदंमाह इदंकिं हेतातता निऋगादीनिममनभांतिज्ञानंनारोहंति यत्पुरासुशिक्षितमधीतंदृष्टंसदःसुमानितमभवत्तन्निष्फलंजातंयथाबहुभृशमाराधितोमंत्रःपुंसोभाग्यक्षयेनिष्फलोभवतितद्वदितिद्वयोरर्थः २७१ । २७२ एवमुक्तइति । अज्ञानभुंक्ष्व २७३ अधुनाविज्ञानसामर्थ्याभावेदृष्टांतमाह महतइतित्रिभिः । यथामहतोप्यग्नेरिंधनक्षयेसतिखद्योतमात्रोंऽगारकणःशिष्यतेतेन खद्योतमात्रावशेषेणाग्निनामहाकाष्ठचयदाहादिरूपंकार्यंकिंचिदपिनजायतेतथातवमनःपंचदशदिनाभोजनेनैककलारूपेणावशिष्टंसत्किंचिदप्यधिगंतुंस्मर्तुंनशक्तंतस्माद्भोजनेनोपचितमानसोभूत्वामत्समीपमागच्छेतित्रयाणामर्थः २७४ । २७५ । २७६ इत्युक्तइति । तेनपित्रा २७७ पितेति । एतावताऽन्नाभावेमनसोभावइत्येवंविधव्यतिरेकंज्ञातवंतमपिसुतंप्रतिवन्हिदृष्टांतेनैवा

एवमुक्तेततःसोपिपक्षमात्रंव्यवर्जयत ॥ अन्नंपक्षांतआगत्यपितुस्तस्थौसमीपतः २६८ ऋचोयजूंषिसामानिसार्थानिवदपुत्रक ॥ एवंपितातंतनयंप्राहस्वस्यसमीपगम् २६९ क्षुत्क्षाममानसंसोयंनकिंचिच्चिंतयन्नपि ॥ प्रतिपेदेप्यधीतंयद्दुर्मेधाहियथातथा २७० पितरंततएवायंप्राहाक्रोशेनसंयुतम् ॥ नतानिभांतियद्दृष्टंननुतातसुशिक्षितम् २७१ भाग्यक्षयेयथापुंसोमंत्रआराधितोबहु ॥ तद्वच्चनिष्फलंजातमधीतंमेपुराभवत् २७२ एवमुक्तःपिताप्राहसुतंक्षुत्क्षाममानसम् ॥ अज्ञानततएवैतत्सर्वंज्ञास्यसिसुव्रत २७३ महतोज्वलतोवन्हेर्यथेंधनपरिक्षये ॥ खद्योतसदृशोंगारःकश्चिदेवावशिष्यते २७४ नतेनपूर्ववत्कार्यंमहाकाष्ठचयस्यहि ॥ दाहादिजायतेकिंचिद्यथातद्वत्तवापिहि २७५ कलामात्रंस्थितंचेतःकिंचिन्नैवाधिगच्छति ॥ अन्नेनरहितंतस्माद्भुक्त्वामामेहिपुत्रक २७६ इत्युक्तेभोजनंकृत्वापूर्ववत्पितरंपुनः ॥ आगात्तेनाथसंपृष्टंसर्वंमेपोभ्यभाषत २७७ पितापुनस्तथाहेदंव्यतिरेकावधारिणम् ॥ अन्वयप्रतिपत्त्यर्थंवन्हिदृष्टांततःपुनः २७८ खद्योतसदृशोंगारश्रितःशुष्कैस्तृणैर्यथा ॥ शनैःशनैर्दहेत्सर्वंशुष्कमार्द्रंचसंचयम् ॥ महांतमपिकाष्ठानामाधिक्यंप्राप्यदाह्यतः २७९ एवंतेमानसंशिष्टंकलामात्रमभूत्पुरा ॥ आहारग्रहणाद्दीप्तंसर्ववेद्यंपुनरप्यभूत् २८० अन्नात्मकंमनस्तेनभवताप्यवधारितम् ॥ अम्मयश्चतथाप्राणस्तथातेजोमयीचवाक् २८१ एवंविज्ञाततत्त्वार्थंवाक्प्राणमनसामपि ॥ पुत्रंपुनःपिताप्राहस्वात्मनोबोधसिद्धये २८२

न्वयस्यबोधनायपितापुनरिदमाहेत्यर्थः २७८ खद्योतेति । यथासूक्ष्मोप्यंगारःशुष्कतृणैश्रितःसंयोजितःसन्शनैःशनैर्दीप्ततोदाह्यभोगप्रयुक्तमाधिक्यंप्राप्यमहांतमपिकाष्ठानांसंचयंसर्वंशुष्कमार्द्रंवादहेदित्यर्थः २७९ एवमिति । एवंतेमनसोप्याहारेणोपचितस्यसर्ववेदनशक्तिःप्रादुरभूदित्यर्थः २८० फलितमाह अन्नात्मकमिति । स्पष्टम् २८१ एतावताद्वितीयलक्षणस्तत्पदार्थःशोधितोऽथतस्यप्रत्यक्लक्षणत्वंपदार्थतांबोधयितुमुद्दालकइत्यादेःश्रुतिग्रंथस्यप्रवृत्तिः तत्रात्मनःप्रत्यक्त्वंवेदांतेपुत्रेधावोध्यते चिदाभासबिंबत्वेनदेहाधिष्ठानत्वेनइंद्रियवर्गाधिष्ठानत्वेनचेति तत्रप्रथमंप्रकारंश्रुत्याशंकुनिदृष्टांतेनोपन्यस्तंविशदयति एवमित्यादिभिर्विंशतिश्लोकैः । एवमुक्तविधयाविज्ञातस्तत्त्वभूतस्तत्पदार्थावच्छेदकभूतोर्थोविश्वोपादानतामयुक्ताद्वितीयतालक्षणोयेनसतथातंपुत्रंप्रतिस्वात्मनस्त्वंपदार्थस्यतस्यबोधःशुद्धिस्तदर्थंपितोद्दालकःपुनराहेत्यर्थः २८२

तत्रचित्प्रतिबिंबाधारतयामनसःप्राधान्यंदर्शयति यदन्नमयमिति । यन्मनःपूर्वमन्नमयत्वेनोक्तंतस्यमनसएवविलासभूतंसर्वंविश्वंबोध्यं येनहेतुनामनसिसतिपुमानात्मापुनःपुनर्मोहंकार्याविद्याख्यंविपर्ययंयातीत्यर्थः यदिमनोनस्यात्तर्हिकुतस्तत्रप्रतिबिंबलक्षणंमोहंव्रजेत्तदभावेरागाभावात्कथंचसंसरेदतोविश्वनिर्वाहकंमनःप्रधानमितिभावः २८३ अस्यमनसोपिबंधनमुपादानतयावशेस्थापकंकिमतआह देहइति । प्रथमआद्योदेहःकारणाख्योऽस्यमनसस्तथेत्यर्थः तद्विशदयितुंदेहस्यत्रैविध्यंसंहारक्रमेणाह सत्रिधेति । सदेहस्त्रिधा तत्रस्थूलश्चरमःसूक्ष्मोमध्यमःपरःकारणत्वेनसर्वोत्कृष्टःप्रथमइत्यर्थः २८४ तत्रपरंदेहंवर्णयति कारणमितिद्वाभ्यां । यदिदमज्ञानंतत्कारणंशरीरमुक्तं तस्यपरत्वंचैकत्वेनसर्वसाधारणत्वात्सर्वदुःखबीजत्वाच्चेत्यर्थः २८५ तच्चसुखमहमस्वाप्संनकिंचिदवेदिषमितिसुप्तोत्थितपरामर्शानुमितेनसर्वानुभवेनसिद्धमित्याह सुषुप्ताविति । सद्भावरूपमानंदमानंदाकारवृत्तिशालिविक्षेपशक्तेस्तिरोभावात्सर्वदुःखहीनंचेत्यर्थः २८६ मध्यंशरीरंवर्णयति तस्मादिति । तस्मादुक्तरूपादज्ञानविशिष्टादात्मनःसूक्ष्माणिभूतानिभौतिकानिमनःप्रभृतीनिचजायंतेयत्समष्टचभिमानीहिरण्यगर्भइत्युच्यते अध्यात्मंतुमनइत्येवोक्तं मनःप्राधान्यप्रयुक्ततैजसनामकंप्रोक्तमितियावत् तद्भूतभौतिकंस्थूलंतुसमष्टिरूपेणविराड्भवतीत्यर्थः २८७ स्थूलव्यष्टीनांविश्वसंज्ञाप्रयोजकतांसूचयन्जागरणहेतुतामाह

यदन्नमयमुक्तंतेमनस्तस्यविजृंभणम् ॥ तेजोबन्नात्मकंविश्वंयेनमोमुह्यतेपुमान् २८३ देहोस्यप्रथमःप्रोक्तोबंधनंसत्रिधास्मृतः ॥ स्थूलःसूक्ष्मःपरश्चेतिकारणात्मायईरितः २८४ कारणंनामसंप्रोक्तमज्ञानंसर्वदेहिनाम् ॥ साधारणंशरीरंयत्सर्वदुःखौघकारणम् २८५ सुषुप्तौयत्सदानंदंसर्वैरेवानुभूयते ॥ सर्वदुःखविहीनंतद्विक्षेपपरिवर्जनात् २८६ तस्मात्संजायतेसूक्ष्मंसमग्रंभूतभौतिकम् ॥ हिरण्यगर्भोभगवानधिदैवंयदुच्यते ॥ अध्यात्मंमनइत्युक्तंस्थूलंतुतद्विराट्स्मृतम् २८७ प्रातिस्विकंतुयत्प्रोक्तंसर्वेषामिहदेहिनाम् ॥ अत्रजागरणावस्थाशरीरेपरिकीर्तिता २८८ सूक्ष्मेतुकथितास्वप्नावस्थातांत्वंनिशामय ॥ सापिप्रोक्ताद्विधासद्भिःस्वप्नास्वप्नविवर्जिता ॥ द्वितीयासुप्तिरित्युक्तादुःखंयत्रलयंव्रजेत् २८९ आनंदात्मनिनिर्द्वंद्वेसर्वभेदविवर्जिते ॥ स्वस्मिन्नेषलयंयातितदाजीवोयतस्ततः २९० स्वपितीतिवदंत्येनामवस्थांनामतोद्विजाः ॥ अपरेऽकारलोपेननामोक्तंपरमात्मनः २९१

प्रातिस्विकमिति । प्रतिस्वंभवंप्रतिद्रष्टारंस्फुटभेदमितियावत् तादृशंयत्सर्वजातीयंस्थूलंशरीरंतज्जागरणावस्थायाःस्थानमित्यर्थः २८८ सूक्ष्मेत्विति । सूक्ष्मेशरीरेतुस्वप्नावस्थायाःस्थानं साप्याश्रयस्यांतःकरणस्याभिव्यक्तत्वसंस्कारावस्थत्वलक्षणभेदेनद्विधा तत्राद्यास्वप्नसंज्ञयैवप्रसिद्धाअंत्यातुसुषुप्तिरित्युक्तेत्यर्थः २८९ एवमवतारितायाःसुप्तेःप्रकृतोपयोगंदर्शयन्सर्वदुःखाभावेहेतुमाह आनंदात्मनीति । यतस्तदासुषुप्तिकालेअयंजीवःप्रतिबिंबरूपःस्वस्मिन्स्वकीयेबिंबभूतेपरमार्थस्वरूपेलयंयातिदर्पणस्थानीयस्यमनसोलयात् ततोदुःखंलयंव्रजेदितिपूर्वेणसंबंधःबिंबस्वरूपस्यसदैक्ययोग्यतासूचनायानंदात्मनीत्यादीनिविशेषणानि निर्द्वंद्वत्वंषडूर्मिराहित्यं तत्रहेतुःसर्वभेदराहित्यमिति २९० स्वपितीति । एनामवस्थांलौकिकाःस्वपितीतितिङंतपदेनवदंति अपरेतत्त्वविदोद्विजास्तुइतिवदंतीत्यनुषंगः इतिकिं इदंस्वपितीत्याकारकंपरमात्मनएवनामोक्तंभवति परोक्षप्रियाइवहिदेवाइतिश्रौतन्यायसंरक्षणायविहितोयोऽकारयोर्लोपस्तेन अयंभावः लोपपदेनचश्लिष्टेननाशःशक्त्यामध्यन्हस्वेनचविपरिणामोलक्षणयाप्रोच्यते तथाचपूर्वश्लोकोक्तरीत्यान्वर्थंस्वापीतितिपरमात्मनाम्निस्वपदगतस्याकारस्यलोपेनपररूपाख्यनाशेनतकारगताकारस्यइकारभावापत्तिरूपविपरिणामेनचस्वपितीतिरूपसिद्धिरिति २९१

अत्रसुप्तिवर्णनांबिंबभूतात्मनःस्वरूपोपलक्षणायनसुषुप्तिमत्ववर्णनाय कूटस्थेतत्रपरिणामरूपावस्थानांदुर्वचत्वात् कस्यतर्ह्ययमवस्थेतिचेत्संस्काराख्यपरिणामिनोमनसएवेतिदर्शयंस्तस्यसर्वाव
स्थाभागित्वमाह मनसइति । सासुषुप्तिरपिमनसएवविकारःपरिणामोयतइदंमनःस्वप्नजागरणयोर्दशदिशःप्रतिधावनेनश्राम्यतीत्यर्थः तथाचयत्रमनसिभ्रमणंस्वप्नादिरूपंतत्रैवश्रमकार्यभूत
लयरूपासुप्तिर्युक्तेतिभावः २९२ अत्रार्थेश्रुत्योपन्यस्तंशकुनिदृष्टांतंविशदयति ग्रासार्थमितिद्वाभ्यां । यथापंजरेसूत्रेणकेनचिद्बद्धःशकुनिर्भक्ष्यकामःपंजरांतर्देशेएवपक्षचालनेनोड्डीयमानो
ग्रासस्यभक्ष्यस्यलाभेऽलाभेवायदाश्रांतोभवतितदापंजरंतर्मध्येउपगम्यपादन्यासस्थानंप्राप्यपूर्वेणभ्रमकालिकेनदुःखेनविहीनोऽतिनिश्चलश्चसन्लीनइवभवतीतिद्वयोरर्थः २९३ । २९४ दार्ष्टांतिके
योजयति एवमिति । एवंशकुनिवदिदंमनोऽपिकर्मरूपेणसूत्रेणसंघातलक्षणेपंजरेहृदयदेशेसंबद्धंबद्धपादंरागरूपक्षुधाप्रसूतैर्दुःखैःसंतप्तंसत्स्वप्नादौभ्रमतितच्चश्रांतंसत्कर्मरूपसूत्रस्यक्षयेबंधस्थानं
तद्धृदेशेसुप्तिंश्रमापनयनाययातीत्यर्थः २९५ तदानींमनःकारणेलीयतेतद्गतंप्रतिबिंबंतुबिंबेपरमात्मनीत्याह प्राणोपाधिरिति । प्राणपदेनस्वार्थसंबद्धंसौषुप्तंकारणाज्ञानंलक्ष्यतेतदुपहितआ
त्मामनसआश्रयोलयस्थानं कीदृशस्यमनसः विलीनोवशंगतःकरणग्रामोयस्यतत्तथातस्यइंद्रियसहितस्येतियावत् २९६ कारणोपाधिभिन्नस्यमनोनिरूपिताश्रयतायामयोग्यतामाह अ

मनसःसापिविज्ञेयाविकारोदुःखदायिनः ॥ स्वप्नेजागरणेनित्यंमनोधावद्दिशोदश २९२ ग्रासार्थंशकुनिर्यद्वद्दुःखमेतिनिरंतरम् ॥ बद्धोदृढेनसूत्रेणपंजरेकेनचि
त्सदा ॥ अप्राप्यप्राप्यवाग्रासंश्रमेणमहतायुतः २९३ पंजरेपुनरेवैषउपगम्यातिनिश्चलः ॥ पूर्वदुःखविहीनःसन्नास्तेलीनइवांततः २९४ एवंदुःखत्र
येणैतत्संतप्तंमानसंसदा ॥ कर्मसूत्रेणसंबद्धंस्वप्नंजागरणंव्रजेत् ॥ कर्मक्षयेप्रयात्यंतांसुप्तिंश्रमविनाशिनीम् २९५ प्राणोपाधिःसदादेवआनंदात्मामहेश्वरः ॥
विलीनकरणग्रामस्याश्रयोमनसोमतः २९६ अन्यदायतनंतस्यप्रबद्धस्येवपक्षिणः ॥ नविद्यतेयतस्तस्मान्नचयातीदमेवहि २९७ आत्मनोव्यतिरिक्तंय
त्सदसद्वस्तुविद्यते ॥ कार्यंतन्मनसःकेनभवेत्तस्याश्रयोऽपरम् २९८ मनोविलीयतेयत्रप्राणात्मनिमहेश्वरे ॥ सदेवैतत्तुविज्ञेयंतेजोबन्नादिकारणम् २९९
संस्कारशेषमत्रैतल्लीनमुत्पद्यतेपुनः ॥ नमुक्तौकारणाभावाद्भेदोयंततएतयोः ३०० एकतामनसोनास्तियस्मात्सर्वशरीरिणाम् ॥ अभेदेप्यात्मनस्तेनव्यव
स्थासुस्थिताभवेत् ३०१

न्यदिति । यतः पंजरबद्धपक्षिसमस्यमनसस्तस्मात्प्राणोपाधिकादात्मनःसकाशादन्यच्छिन्नमायतनंनविद्यतेअतइदंप्राणोपाधिकभिन्नंवस्तुजातंसुप्तौनयातिनाश्रयतयावलंबतेइत्यर्थः २९७ तत्र
हेतुतयाअन्यपदार्थस्यकार्यत्वेनतदानीमसत्वमाह आत्मनइति । यदात्मनोव्यतिरिक्तंतत्सर्वंमनस सकाशादपरंपश्चाद्धाविभवतितत्कार्यत्वादतस्तस्यमनसआश्रयःकथंस्यादित्यर्थः २९८
वर्णितस्यप्रकृतोपयोगमाह मनइति । सप्रतिबिंबमनोविलयस्थानत्वेनप्रकृतस्यसद्वस्तुनःसर्वांतरत्वंविज्ञेयमित्यर्थः २९९ सुषुप्तौपरमात्मलाभेपुनःसंसारःकथमित्याशंक्यसुप्तिमुक्त्योर्वि
शेषप्रदर्शनेनपरिहरति संस्कारेति । अत्रसुप्तौमनःसंस्कारशेषंलीयतेऽतःपुनरुत्पद्यते मुक्तौतुपुनर्नोत्पद्यते कारणस्यसंस्काराधारस्याज्ञानस्याभावाज्ज्ञानाग्निनादाहात् एतयोःसुप्तिमुक्त्यो
रयंभेदोविशेषइत्यर्थः ३०० अस्मिन्नेकात्मवादेबंधमोक्षादिव्यवस्थायाअपिनानुपपत्तिः कल्पितानांमनोरूपोपाधीनांभेदेनसर्वसामंजस्यंस्यादित्याह एकतेति । सर्वशरीरिणामात्मनऐ
क्येपिसतियस्मान्मनसएकतानास्तितेनमनसामनेकत्वेनव्यवस्थासुखीदुःखीबद्धोमुक्तइत्यादिरूपासुस्थितासम्यगुपपन्नाभवेदित्यर्थः ३०१

उक्तविचारमुपसंहरन्देहसंघाताधिष्ठानत्वेनसद्वस्तुनआंतरत्वमशनायादिनामोपन्यासमुखेनश्रुत्यादर्शितंनिरूपयति . एवंसुप्तिरितिद्वादशभिः । यथेयंसुषुप्तिर्मुक्त्यपेक्षयाकिंचिन्न्यूनामनोद्वारेणा नंदात्मसंबद्धाचसम्यग्विंबप्रतिबिंबैक्यबोधरूपफलशालित्वेननिरूपिता एवंविधाअन्यापिस्वप्नजागरणरूपाअवस्थाअस्तिसापितत्तुल्यफलशालितयाबोध्येत्यर्थः ... ३०२ अशनायेति । यत्र ययोःस्थूलसूक्ष्मदेहाभिमानशालिन्योर्जागरणाद्यवस्थयोरयमानंदात्मापुमान्निर्नामापिसकलनामहीनोप्यशनायेत्याकारकमुदन्येत्याकारकंचनामावाप्नोतिपूर्वोक्तस्वपितीतिनामवदित्यर्थः ३०३ अनयोर्नाम्नोरात्मनिसंबंधेप्राणउपाधिरित्याह आत्मनइति । अत्रसंघातेदृश्यमानाक्षुधातृषाचात्मनःअद्धासाक्षान्नविद्यतेकिंतुप्राणस्यैवतेविद्येतेयस्मात्सप्राणउदरंगतेअन्नादिकेनयतिनाडीद्वारा सर्वांगेषुव्यापयति देहस्यांतस्ततत्वात्व्याप्तत्वात् ततस्माद्वयोरशनोदकयोर्नायकइत्याख्यायते अतोऽशनायइतिउदकनायइत्याकारकंनामद्वयंनिपातेनअशनायाउदन्येत्याकारकंसत्प्राणस्यमु ख्यंनामभवतिप्राणद्वाराचात्मनोभवतीतिद्वयोरर्थः ३०४ । ३०५ अशनायापदेकर्मसाधनमशनपदमितिसूचयन्प्राणस्यात्मापेक्षयामुख्यनामकत्वेप्यप्तेजसोरपेक्षयागौणनामकत्वमेवदर्शयितुम प्तेजसोस्तेनामनीमुख्येइत्याह अशनस्येति । अशनस्यकर्मव्युत्पत्त्याऽशितस्यभक्षितस्ययन्नयनंतस्यकर्तृणिकारकाणिउदकानिभवंतिद्रावकत्वात् पीतस्यद्रवस्ययन्नयनंतस्यकर्तृतुतेजोभवति ते

एवंसुप्तिरियंमुक्तेःसमीपस्थासमीरिता ॥ अवस्थान्यापिमनसाकृताऽनंदात्मनोस्तिहि ३०२ अशनायेतियत्रायमुदन्येतिचतद्वयम् ॥ नामावाप्नोतिनिर्नामा स्वपितीतियथापुमान् ३०३ आत्मनोनक्षुधानापिपिपासाऽद्धात्रविद्यते ॥ किंतुप्राणस्यसप्राणोनयेदन्नोदकेक्वचित् ३०४ देहस्यांतस्ततोयस्मान्नायकस्तद्व योरपि ॥ तस्यैतन्नामविज्ञेयंतद्वाराचात्मनोभवेत् ३०५ अशनस्यात्रकर्तृणिनयनस्योदकानिहि ॥ तेजःपीतस्यतेनैतच्छब्देतेकीर्तितेउभे ३०६ गवाश्वनाय कायद्वत्तद्वदेतद्वयंस्मृतम् ॥ अशनायेतिसंप्रोक्ताआपस्तेजःसमीरितम् ॥ उदन्येतिचतद्वारानंदात्मापितथेर्यते ३०७ शरीरंप्रथमंकार्यंस्थूलमुक्तंमनीषिभिः ॥ अन्नंद्वितीयंभूमिश्चतृतीयंपरिकीर्तितम् ॥ आपश्चतुर्थंतेजश्चपंचमंपरिकीर्तितम् ८ सदुक्तंतेजसोमूलमपांतेजस्तथेरितम् ॥ आपोभूमेश्चभूर्मूलमन्नस्यापिप्रकी र्तिता ॥ अन्नंदेहस्यमूलंस्यात्सर्वक्लेशकरस्यहि ३०९ देहाद्याअंकुराःप्रोक्तामूलान्यन्नादयोपिच ॥ सदंताःसत्तुनिर्मूलंज्ञातंत्वंकुरुलिंगतः ३१० सर्वेषामपिभूता नांभौतिकानांचतत्स्मृतम् ॥ उत्पत्तिस्थितिनाशानांहेतुस्तैस्तुविवर्जितम् ३११

नप्रवृत्तिनिमित्तेनउभेअप्तेजसीएतच्छब्देउक्तनामकेबोध्येइत्यर्थः ३०६ एतच्छ्रौतदृष्टांतेनस्फुटयति गवाश्वेति । यथालोकेगवांनेतारोगोनायाइतिकर्मण्यणंतनाम्नोच्यंतेअश्वनेतारस्तुअश्वनायाः इतितथाआपउक्तविधेनअशनायेतिनाम्नाप्रोक्ताद्रावकत्वात् तथातेजस्तुउदन्येत्युक्तंशोषकत्वात् तद्वाराअप्तेजोनिरूपितपरंपरयात्वात्मापितदध्यासेनतथाउक्तनामकईर्यतेइत्यर्थः ३०७ आ भ्यांनामभ्यांदेहस्यभौतिकत्वमितिसूचनद्वारासतःसर्वांतरत्वंयथाबोधितंतथादर्शयितुंकार्यकारणपरम्परांवर्णयति शरीरमितिद्वाभ्यां । प्रथमादिशब्दाज्ञानक्रमापेक्षया तथाचशरीरस्यकार्यं त्वंप्रथमंबुद्ध्याद्यारोहणीयंततस्तत्कारणस्यान्नस्यततस्तद्धेतोःपृथिव्यास्ततोऽपांततस्तेजसइत्यर्थः ३०८ सदुक्तमिति । तस्यपंचमकार्यस्यतेजसोमूलकारणंतुसद्ब्रह्मप्रोक्तंततेजस्तुजलस्यजलंभूमे र्भूमिरन्नस्यान्नंतुजलतेजोभ्यांपरिणामंनीतंदेहस्यमूलमित्यर्थः ३०९ उक्तपरंपरायाःफलमाह देहाद्याइति । देहादिरूपाविकाराअंकुरत्वेनोक्ताःश्रौतशुंगपदेनेतिशेषः अन्नादयःसत्पर्यंताःपदा र्थास्तुमूलत्वेनप्रोक्ताः एवंसतियथालोकेअंकुररूपलिंगेनमूलमनुमीयतेतथादेहादिलिंगैस्तत्तत्कारणमन्विच्छन्सद्वस्तुनिर्मूलंकारणपरंपरापर्यवसानभूमिभूतंजानीहीत्यर्थः १० एवंविश्वोपादानत्वेनस र्वांतरत्वंसतःसिद्धमितिदर्शयति सर्वेषामिति । सर्वेषामुत्पत्तिहेतुत्वेनमूलमितिस्थितिहेतुत्वेनायतनमितिलयहेतुत्वेनतत्प्रतिष्ठेतिचसद्वस्तुश्रुतावक्तुं कीदृशं स्वयंतेर्मूलादिभिर्वर्जितमित्यर्थः ३११

उक्तनामभ्यांक्षुत्पिपासोपलक्षितस्यस्वप्नादिकालिकसंसारस्यभोक्तृत्वप्रदर्शनद्वारापिसर्वांतरत्वंद्योतितमितिदर्शयति . एवंजागरणइति . । . . स्पष्टम् . . . ३१२ . अथमरणावस्थायामिंद्रियवर्गाधिष्ठानत्वेनान्तरत्वसूचनपूर्वकंमहावाक्यप्रथमपर्यायस्यार्थमाह स्वप्नइतित्रयोदशभिः । पूर्वोक्तावस्थात्रयधारीजीवोनानाशरीराणिगृहीत्वागृहीत्वात्यजति ३१३ कथंत्यजतीत्यपेक्षायामाह मुमूर्षोरिति । मुमूर्षोःसंनिहितमरणस्यअनुतप्यतःस्वदुष्कृतस्मरणेनपश्चात्तापंकुर्वतोभूमिपाताद्युपलक्षितस्यचजंतोरितरेंद्रियैःसहितस्यवागिंद्रियस्यवृत्तिःकार्यक्षमत्वंमनसिलीयते व्यापारेसत्यपिवाग्व्यापारःशाम्यतीतियावत् एतंमनसोवृत्तिःप्राणव्यापारेतिष्ठंत्येवशाम्यतीतित्रयाणामर्थः ३१४ । ३१५ । ३१६ सापीति । साप्राणवृत्तिरपितेजःपदलक्षितेसूक्ष्मभूतपंचकवेष्टितेजीवेव्रजतितत्परतंत्रतयातिष्ठतीतियावत् तज्जीवरूपमपिसहभूतैःसुषुप्तिवत्संस्कारशेषंमायोपाधौसतिआनंदरूपेयातिलीयतेइत्यर्थः अत्रवागादिपदानांवृत्त्याद्यर्थेपुलक्षणायामूलभूताउपपत्तयस्तुशारीरकचतुर्थतृतीयपादेद्रष्टव्याः संस्कारैरित्याद्युत्तराग्वयि ३१७ अतीतग्रंथेशोधितंपदार्थद्वयंस्मारयन्महावाक्यार्थंविशदयति सुषुप्तावित्यादिना । शरीरिणःशरीरत्रयाभिमानवतःसुप्तिमृतिकालयोःसंस्कारमात्रात्मबंधशालिनश्चजीवस्ययल्लयकारणंलयस्थानं अयंजीवोयदात्मकोयद्रूपः यदेवजीवरूपेणोपाधिष्वनुप्रविष्टमितियावत् यच्चसद्रूपेणतेजःप्रभृतेर्जगतःकारणमुक्तं एतत्सदे

एवंजागरणेस्वप्नेक्षुत्पिपासातुरःसदा ॥ प्राणाद्युपाधिकोजीवोदुःखमायातिनित्यशः १२ स्वप्नेजागरणेसुप्तावेकएवातिसंचरन् ॥ ग्राह्यंग्राह्यंशरीराणिविमुंचतिविमोहितः १३ मुमूर्षोरस्यजीवस्यबहुशोप्यनुतप्यतः ॥ भूमावत्रशयानस्यकठिनायांसुदुःखितम् १४ बांधवैःपरिवीतस्यहिक्काश्वासाकुलस्यच ॥ प्रसारितोर्ध्वनेत्रस्यलालालीढाननस्यच ३१५ इंद्रियैर्नवभिःसार्द्धंवाग्वृत्तिर्मनसिव्रजेत् ॥ मनोवृत्तिस्ततोयातिप्राणवृत्तौक्रियात्मनि ३१६ सापितेजसिजीवाख्येसूक्ष्मेस्मिन्भूतपंचके ॥ आनंदात्मनितद्यातिजीवरूपंसभूतकम् ॥ संस्कारशेषंसंस्कारैर्बद्धस्यात्रशरीरिणः ३१७ सुषुप्तौचमृतौयत्तुजीवस्यलयकारणम् ॥ यदात्मकश्चजीवोयंयच्चसत्कारणंस्मृतम् ३१८ सएषश्वेतकेतोतआत्मासोम्यमयेरितः ॥ सूक्ष्मात्सूक्ष्मतमोनित्यंमहीयान्महतोपिच ३१९ ऐतदात्म्यमिदंसर्वंतेजोबन्नात्मकंजगत् ॥ रज्जुरूपंयथासर्वंसर्पधारादिरज्जुगम् ३२० एतदेवात्मरूपंत्वमसिदेहादिकंचन ॥ बुद्धिसाक्षितयायत्तुनित्यंतत्रप्रतीयते ३२१ आनंदात्मस्वयंज्योतिर्जडवर्गस्यभासकम् ॥ नभर्तानापिभोक्तात्वंनप्रमाताचकर्हिचित् ३२२ आदेशोयंमयाप्रोक्तउपदेशःप्रियायते ॥ यादृशोहिभवान्स्तब्धस्तादृग्गर्वाधिकायहि ३२३

वहेश्वेतकेतोतवआत्मामयोच्यते यःसूक्ष्मात्सूक्ष्मोमहतोमहत्त्वेनप्रसिद्धादपिकालादेर्महानितिद्वयोरर्थः ३१८ । ३१९ तस्यमहत्त्वेहेतुमाह ऐतदात्म्यमिति । भूमशब्दवद्भवितृप्रधानोनिर्देशःस्वार्थिकःष्यञ्वा तथाचसर्वंजगदेतदात्मकंएतत्सद्वस्तुआत्मापारमार्थिकंरूपंयस्यतत्तथा यथारज्जुगंसर्पधारादिरज्जुरूपं रज्जौकल्पितानिसर्पधारादंडभूविवराणिरज्जुमात्रात्मकानीत्यर्थः ३२० एवमुपाधीनामधिष्ठानदृष्ट्याबाधेसतिपरिशिष्टस्यत्वत्स्वरूपस्यसच्चिदानंदलक्षणस्यतेनैक्यंसिद्धमेवेत्याह एतदेवेति । एतद्विश्वाधिष्ठानभूतमात्मतत्त्वमेवत्वंभवसि यत्साक्षितयाचिद्रूपमद्वयत्वेनानंदरूपंतदतिरिक्तस्यजडत्वेनचैतन्याभावेपितद्भानप्रयोजकत्वात्स्वयंज्योतिश्चभवति एवंसत्यौपाधिकाःकर्तृत्वादयोधर्मास्त्वयिनसंतीतिद्वयोरर्थः ३२१ । ३२२ एवहितोपदेशोपिगर्वहरत्वादादेशपदेनराजादिशासनवाचकेनोक्तइत्याह आदेशइति । तुभ्यंप्रियायउपदेशभूतोप्ययंवाक्यप्रबंधोगर्वाधिकायगर्वेणाधिकमानिनेतंशमयितुमादेशःशासनरूपः यतोयादृशोभवांस्तादृशःस्तब्धत्वात् उद्धतत्वादित्यर्थः ३२३

उक्तविधात्मज्ञानमेवसार्वेइपफलकमुपन्यस्तमित्याह अमुनेति । अमुनावर्णितेनात्मरूपेणश्रवणमननर्निदिध्यासनानांगोचरतांनीतेनअश्रुतादिरूपमपिसर्वंश्रुतादिरूपंभवेदितिद्वयोःसंबंधः तत्रहेतुपदस्योपपत्तिवाचकस्यमतपदेनसंबंधः पुत्रकेत्यनुकंपाग्रांक्न् ३२४ । ३२९ इत्थंशास्त्रार्थेसमाप्तेप्रितदनवधारणप्रयोजकानांपरिहारायद्वितीयादिपर्यायाणांप्रवृत्तिरितिदर्शयन्भूय इत्यादिवाक्यस्यतत्राष्टदशउपात्तस्यार्थमाह एवमुक्तइति । एवमुक्तउपदिष्टःश्वेतकेतुःपितरंप्रतिपुनःप्राहपप्रच्छ सपितापिपुत्रंप्रतिनिर्णयजनकमुत्तरजातंप्राहेति ३२६ इत्थमिति । इत्थंभु योबोधयतुभवानित्येवंविधवाक्योपन्यासेनासोश्वेतकेतुरष्टौप्रश्नानकरोत् सपिताप्यस्यमुक्तस्यानवबोधनेअवबोधेप्रश्नलिंगेनज्ञातेसतितावंत्यष्टावेवोत्तराण्यवदत् कीदृशान्युत्तराणि इत्याद्यंतानि इतिशब्दआदावंतेचयेषांतानि तथासोम्यशब्दपूर्वकमितिशब्दमुपक्रम्यतादृशेतिशब्दपर्यंतंग्रंथैरुक्तानीतियावत् सयएषोणिमेत्यादिभागास्तुअपवादापवादेउत्सर्गस्थितिरितिन्यायेनशंकापगमेनपू र्वोक्तसिद्धांतस्तथैवस्थितइत्येतावदेवबोधयंतीतिभावः ३२७ ननुप्रथमपर्यायेश्वेतकेतोरवबोधएवकथंस्थितइतिचेत्संशयप्रयोजकतर्कलक्षणप्रतिबंधादितिदर्शयन्नाह संशयेइति । हियस्मात्तस्य श्वेतकेतोःसंशयस्यकारणानिकुतर्करूपाणिइमानिवक्ष्यमाणानिअभूवन् यानिपिताक्रमशोद्वितीयादिपर्यायैःक्रमेणनिराकरोत्परिहृतवानित्यर्थः २८ तत्रद्वितीयपर्यायेणनिवर्त्यंतर्कमाह सुप्ताविति ।

अमुनाश्रुतमात्रेणहेतुनापिमतेनवा ॥ विज्ञातेनात्मरूपेणसर्वभूतात्मनासदा ३२४ श्रुतंमतंचविज्ञातंसर्वमेतद्भवेदिह ॥ अश्रुतंवामतंतद्वदविज्ञातंचपुत्रक २९ एवमुक्तःपुनःप्राहपितरंतनयस्ततः ॥ संदिग्धहृदयःसोपिपुत्रमाहविनिर्णयम् ३२६ इत्थमष्टौचकारासौप्रश्नांस्तावंतिचावदत् ॥ उत्तराणिसइत्याद्यंतान्यस्या नवबोधने ३२७ संशयेकारणान्यष्टौश्वेतकेतोरिमानिहि ॥ अभूवन्क्रमतस्तस्यपितायानिनिराकरोत् ३२८ सुप्तौमृतौचजीवानांसतिचेद्गमनंभवेत् ॥ तस्या ज्ञानेत्रकोनामदृष्टांतस्तंवदाधुना ३२९ अथागतानांतत्प्राप्तौकरणानांचसंक्षयात् ॥ स्थितायामपिमायायामनुभूतिःकुतोनहि ॥ दृष्टांतस्ततएवात्रवर्णनीयःप रोपिहि ३३० सुपुप्तौब्रह्मसंप्राप्तौजीवनाशोभविष्यति ॥ नदीनिदर्शनात्स्पष्टोमरणेचकथंततः ॥ ब्रह्मप्राप्तिर्भवेत्तस्यतत्रदृष्टांतमीरय ३३१ नदीनांनविलीनानां समुद्रेपुनरुद्भवः ॥ नदीनिदर्शनात्तेनमनोमोमुह्यतेमम ३३२ अतिसूक्ष्मोयमात्मास्यात्कथंस्थूलसमाश्रयः ॥ अत्रापिकंचिद्दृष्टांतमनुकूलंपितर्वद ३३ आ स्तिक्याद्भद्रतेस्यात्मातच्चकुत्रापिदर्शनात् ॥ अत्यंतानुपलब्धेर्थेनहिशब्दोस्तिकस्यचित् ॥ अतोत्रापिचदृष्टांतःपितर्वाच्यस्त्वयामम ३३४

यदिसुप्तौमृतौवाजीवानांसतिगमनंभवेत्तदातत्प्राप्तंजानीयुः अतस्तस्यसतःअज्ञानेअत्रप्रसिद्धेअसंभावनावारकोयोदृष्टांतःसवक्तव्यइत्यर्थः २९ तृतीयपर्यायनिरस्यंतमाह अथागतानामिति । सुप्ति कालेकरणानांज्ञानसाधनानांसंक्षयवशान्मायायामविद्यायांस्थितायांक्षेमभागिन्यामपिसत्यांयथागृहादागतस्यगृहादागतोस्मीत्यनुसंधानंभवतितथासतआगतानांजीवानामनुभूतिःसतआगतोस्मी त्याकारिकाकुतोनहिभवेदित्याशंकापरिहारायापिदृष्टांतोवक्तव्यइत्यर्थः ३३० चतुर्थपर्यायनिरस्यंतमाह सुषुप्तावितिद्वाभ्यां । यदिनदीनिदर्शनान्नदीनांसमुद्रइवसुप्तौमरणेचजीवानांसतिलयस्तर्हितेषां नाशःस्पष्टोदृष्टांतेनस्फुटीकृतःस्यात्तथाचब्रह्मप्राप्तिःकस्यस्यादित्येतच्छंकापनुत्त्यैअपिदृष्टांतोवक्तव्यः यतोलीनानांनदीनांपुनरुद्भवोनदृष्टःसन्प्रेममनोव्यामोहंनयतीतिद्वयोरर्थः ३१ । ३२ पंच मपर्यायनिरस्यंतमाह अतिसूक्ष्मइति । अयमात्मातिसूक्ष्मोपिस्थूलस्यप्रपंचस्याधारःकथंस्यादित्यत्रापिकश्चिद्दृष्टांतोनिरूप्यइत्यर्थः ३३ षष्ठपर्यायवर्त्यंतमाह आस्तिक्यादिति । भवतापंचमपर्यायां तएतदुक्तं श्रद्धायमात्माल्भ्यइति तत्रश्रद्धैवदृष्टानुसारिणीकथंस्यात् यतोऽत्यंतमनुपलब्धेऽननुभूतचरेर्थेशब्दोपिनप्रवेष्टुंप्रभवतीत्यतोत्रापिसंभावनायैभावनायैदृष्टांतोवक्तव्यइत्यर्थः ३३४

समयनिरस्यंतमाह लक्षणमिति । लक्षणंवस्तुनःस्वरूपंयदिंद्रियैर्ग्राह्यंग्रहणयोग्यंभवतितदेवेंद्रियांतरेणापिगृह्यते यथाचक्षुरादिभिरगृहीतोपिरसोरसनया आत्मात्विंद्रियैरगृहीतस्तैरग्राह्यत्वात् प्रत्यक्त्वेनतदयोग्यत्वात्तथापिसकेनोपायेनगृह्यतइत्यत्रदृष्टांतोवाच्यइत्यर्थः ३३५ अष्टमेनपरिहार्यंतमाह विदुषइति । यदिबहूनामज्ञानांजीवानांयथेंद्रियादिकंमरणकालेसूक्ष्मरूपेणतिष्ठति तथाविदुषोपितिष्ठेच्चेत्तदातस्यपुनर्जन्मकुतोनभवेदत्राप्युपपत्तिर्दृष्टांतोवाच्यइत्यर्थः ३३६ नवमपर्यायपरिहार्यंतमाह सर्वात्मनेति । यदिविदुषांरागादिकंसर्वात्मनानिरवशेषंलीयतेतदाअविदुषामपितथाकिंनस्यादितिशंकायारागायअविदुषांयथासंसारउपपादितःस्यात्तादृशवर्णनेनसहितंदृष्टांतंब्रूहीत्यर्थः ३३७ एवंविधाअष्टौसंदेहजनकास्तर्काःपित्राद्वितीयादिपर्यायैःक्रमेणनिराक्रियंतेइत्याह एवमेवेति ३३८ तत्रद्वितीयपर्यायगतस्योत्तरभागस्यार्थमाह नानेतिपंचभिः । यथामधुकरामध्वपूपेमधुनःअपूपाकारेआयतनेमधुकरानानावृक्षसमुद्भूतंमधुरुप्यरसजातमैक्यंनयंतिमधुत्वेनपरिणतंकुर्वंतितेचमधुनिस्थिताःमधुभावंगतानानावृक्षजारसाइतिइत्थंस्वात्मानंनजानंति इत्थेकथं अहमेतस्याम्रस्यरसोस्मिनजंबीरस्येतीतिद्वयोःसंबंधः ३३९ । ३४० तथादार्ष्टांतिकेयोजयति यथेति । प्रथमपदंपूर्वान्वयि तथासुप्तौतेनानाजातीयाजीवाःसतिसत्त्वेसंपद्यप्राप्यतेनैक्यंगताःसंतआत्मानंविशेषरूपेणनविदुर्नजानंतीत्यर्थः अत्रेदंबोध्यं दृष्टांते

लक्षणंहींद्रियैर्ग्राह्यंगृह्यतेतापींद्रियांतरात ॥ अगृहीतोपींद्रियैर्यैआत्माकेनात्रगृह्यते ॥ अग्राह्यइंद्रियैःसर्वैस्तत्रदृष्टांतमीरय ३३५ विदुषोमरणेसर्वंतिष्ठेच्चेदिंद्रियादिकम् ॥ पुनस्तस्यकुतोनस्याद्रुत्पत्तिर्विदुजंतुवत् ॥ उपपत्तिंततोमह्यंपितस्त्वंवर्णयात्रभोः ३६ सर्वात्मनात्ररागादिविदुषांलीयतेयदि ॥ संसारवर्णनेनत्वंदृष्टांतंवर्णयात्रभो ३७ एवमेवचसंदेहाश्वेतकेतुसमीरिताः ॥ क्रमशस्तान्पितासर्वानेवमेवनिराकरोत् ३८ नानावृक्षसमुद्भूतंयथामधुकरामधु ॥ मध्वपूपेनयंत्यैक्यंनानावृक्षसमुद्भवाः ३३९ नजानंतिरसास्तत्रस्वात्मानंमधुनिस्थिताः ॥ अहमेतस्यवृक्षस्यनाहमेतस्यचेतिते ३४० यथातथैवसंसुप्तौसतिसंपद्यतेविदुः ॥ नजीवाःसर्वआत्मानंसतातादात्म्यमागताः ४१ तामसाराजसास्तद्वत्सात्त्विकाअपिजंतवः ॥ व्याघ्राद्याश्चापिराजाद्याविप्राद्याश्चात्मवेदिनः ४२ यच्छरीराःसमायांतितच्छरीराःपुनश्चते ॥ भवंतिनापरेसर्वेसर्वदासंसृतिस्थिताः ४३ सत्प्राप्याप्यागताःसर्वेनजानंतिविमोहिताः ॥ यथानानाविधानद्यःसागरंप्राप्यमेघतः ॥ आगतानैवजानंतिसागराद्वयमागताः ३४४

जडत्वेस्वाभाविकंदार्ष्टांतिकेत्वाविद्यकावरणप्रयुक्तमितिविशेषस्यअथवादृष्टांतेचिवेकाभावोरसभिन्नममात्रानिष्ठोपिरसेष्वारोपितोदार्ष्टांतिकेतुजीवेष्वज्ञानावृतेषुमुख्यइतिविशेषस्यसत्त्वेपितदनादरेणनविदुरितिपदोक्तस्याज्ञानस्यसाधर्म्यमिति ३४१ यदितदासर्वेप्यैक्यतांगच्छेयुस्तर्हिसुप्तोत्थितानांतज्जातीयशरीरप्राप्तिर्नस्यादितिशंकांसूक्ष्मावगतमधुकानामिवसंस्कारैःशिष्यमाणैरुपंवस्थासंभवइत्याशयेनपरिहरति तामसाइतिद्वाभ्यां । व्याघ्रादयस्तामसजातीयाः राजाद्याराजसजातीयाः विप्राद्याविद्याप्रधानाःसात्त्विकजातीयाश्चजंतवोयादृशयादृशशरीराःसुप्तौसतिसमायांतितादृशशरीरमेवोत्थायप्राप्नुवंतियतःसर्वेवाऽनादिकालतःसंसारपातेनसूचितसंस्कारकाः यदिज्ञानकर्मसंस्कारानस्युस्तदातत्त्वयोनिमृत्कौशलासंभवेनसंसरणमेवनस्यात्तथाचतैःसंस्कारैरत्रापिनयथास्थासुसंपादितिभावः ३४२ । ३४३ तृतीयपर्यायगतोत्तरंव्याचष्टे सत्प्राप्यापीति । सद्ब्रह्मप्राप्यापिनतआगताःसंतोवयंसतआगताइत्येवंतेजीवानजानंतियथानद्योर्किंप्राप्यमेघद्वारागृहीताःआगताअपिवयंसमुद्रादागताइत्येवंनजानंतितद्वदिति तत्रहेतुर्विमोहिताइति । येनमूलाज्ञानेनसत्प्राप्तिदशायांभानप्रतिबंधःकृतस्तदिदानीमपिननिवृत्तमितिभावः ३४४

३४५ अथनदीनिदर्शनप्राप्तजीवनाशशंकावारकस्यचतुर्थपर्यायगतोत्तरस्यार्थमाह आगताइतिपंचभिः । सतआगताजीवास्तएवभवंतियेसुप्ताः अपरेभिन्नजातीयानभवंति अन्यथातेषामेवा नुत्थानेसुप्तौसङ्क्षयमात्रेणदेहपातःस्यादित्यर्थः ३४६ किंचजीवनाशोनकेनचिद्दृष्टःकिंतुतत्परित्यक्तानामन्येषामेवेतिदृष्टांतेनस्फुटयति यथेति । यथावृक्षस्यशाखानांमध्येयस्यायस्याजीवक र्तृकस्त्यागस्तस्यास्तस्याःशोषणंदृष्टंनजीवनाशइत्यर्थः ३४७ सुप्तस्यमुक्तत्वेपिजीवांतरप्रवेशेनतच्छरीरमुत्तिष्ठेदितिशंकांवृक्षशाखादृष्टांतेनैवपरिहरति अन्येति । चेद्यद्येकस्यजीवस्यनिर्गमना नंतरमन्यस्यजीवस्यप्रवेशोभवेत्तदाशाखासंशोषणंनव्रजेदिति ३४८ तथाजीवांतरप्रवेशेनजीवनव्यवहारसंतानात्कस्यापिदेहस्यनाशोनव्यवह्रियेतनचैवंदृश्यतेततःसएवोत्तिष्ठतीतिसिद्धमित्या ह एवमिति । सुप्तेएकस्मिन्मुख्यामुक्तेसति ३४९ यएवम्रियतेसएवदेहांतरंगच्छतिनान्यइत्येवंमित्यस्यजीवस्याधिकारिणःसत्वान्नमोक्षशास्त्रवैयर्थ्यमित्याह यथेति । स्पष्टम् ३५० पं चमपर्यायगतंसूक्ष्मेस्थूलस्थितिदृष्टांतंवर्णयति आनंदात्मनीति । यथासुप्तिप्रसिद्धेसत्यानंदरूपेसूक्ष्मेजगत्तिष्ठतितथाबोधकंदृष्टांतंशृण्विति ३५१ वटेतिद्वाभ्यां । यथावटस्यधानाबीजंतदव

एवंजीवाइमेसर्वेसतआत्मनआगताः ॥ इत्थंजानंतिनैवैतेसत्तोवयमिहागताः ३४५ आगताःपुनरेवैतेतएवस्युर्नतेपरे ॥ अन्यथादेहसंपातोभवेत्तेषांदिनेदिने ४६ यथावृक्षस्यशाखानांत्यागात्तासांहिशोषणम् ॥ नहिजीवेनरहिताशाखाकाचिद्धिजीवति ॥ यांयांजहातिजीवोयंसासाशुष्यतितत्क्षणात् ४७ अन्यजीव स्यचेद्देहेप्रवेशःपरिनिर्गमात् ॥ भवेच्छाखानसंशोषंकदाचनसमाव्रजेत् ३४८ एवंदेहस्यकस्यापिविनाशोनभविष्यति ॥ दृश्यतेनयतस्तेनसुप्तेनान्यःसमाव्रजेत् ४९ यथासुप्तेतथैवायंमरणादौचनापरः ॥ सएवचततोजीवोब्रह्मसंप्राप्यनिर्गुणम् ॥ पुनरुत्पद्यतेतस्मात्कर्मपाशवशंगतः ३५० आनंदात्मनिसुप्तेस्मिन्नवाङ्म नसगोचरे ॥ यथातिष्ठतिविश्वंत्वंदृष्टांतमवधारय ५१ वटधानातिसूक्ष्मेयमाश्रयोमहतोयथा ॥ वटस्याप्यधुनाभेदेनैषनात्रप्रदृश्यते ५२ तथात्मासूक्ष्मरूपो यंप्रपंचस्यसमाश्रयः ॥ प्रागुत्पत्तेर्यतस्तत्रसोस्तिशास्त्रदृशांयथा ५३ उपायादवगम्योयंधीमतासचदेहगः ॥ जलस्थंलवणंयद्वद्गम्यतेरसलाभतः ५४ एवमा त्माप्रपंचेस्मिन्जडेसर्वत्रवर्तते ॥ चैतन्यरूपसंलाभाज्ज्ञातव्योब्रह्मवेदिना ॥ श्रद्धावतासदैवायंनास्तिकेननकर्हिचित् ५५ अपींद्रियैरलभ्यस्यलाभःस्याद्गुरु वाक्यतः ॥ गांधारस्ययथापुंसश्चोरैर्नीतस्यकाननम् ३५६

च्छिन्नंचैतन्यमितियावत् सूक्ष्ममपिमहतोवटस्याश्रयोजन्मासंभवात्परंत्वधुनाबीजदशायामेववटस्तत्रबीजेभेदेननदृश्यतइत्यर्थः ३५१ दार्ष्टांतिकेयोजयति तथेति । तथायमात्मातत्सं स्कारशालिमायोपहितःसूक्ष्मोप्युत्पत्तेःपूर्वंप्रपंचस्याधारोभवतीतियुक्तं यतस्तत्रउत्पत्तिपूर्वकालेसआत्मास्तीतिशास्त्रदृशांसदेवसोम्येदमग्रआसीदित्यादिशास्त्रचक्षुष्काणांयथाप्रसिद्धइत्यर्थः ३५३ षष्ठपर्यायगतंदृष्टांतंश्रद्धासमुत्थानायप्राकृतोपायैरलब्धोप्ययंउपायविशेषेणलभ्यतेइत्यावेदकंवर्णयति उपायादिति । सर्वलौकिकप्रमाणैरनाविष्कृतोप्ययंविश्वोपादानभूतआत्माधीमताश्रद्धासं स्कृतमतिकेनदेहगःसंघातप्रत्यक्केनवर्तमानउपलभ्यते यथाजलगतंलवणंचक्षुराद्युपायैरलब्धमपिरसनासंयोगरूपोपायेनलभ्यतेइत्यर्थः ३५४ अत्ररसनासंयोगस्थानीयंपदार्थशोधनमितिसूच यन्दार्ष्टांतिकेयोजयति एवमिति । एनंप्रपंचेवर्तमानोप्यात्मातदीयस्यचैतन्याख्यस्वरूपस्यसम्यक्सत्यत्वादिविशेषैःपरिचयाद्गुरुवेदांतवाक्यविश्वासवतैवलभ्यइत्यर्थः ३५५ प्रकृतेसउपायः कइतिचेद्दांतोपदेशएवेतिसूचयन्नुपायांतरैर्दुर्लभस्याप्युपदेशेनलाभेदृष्टांतंसप्तमपर्यायगतंव्याचष्टे अपींद्रियैरितिसप्तभिः । इंद्रियादिभिःपरिचितोपायैरलब्धस्याप्यात्मवस्तुनोगुरुवाक्यरूपापूर्वो-

—पायेनलाभःसंभवति यथाकस्यचिद्गंधारदेशीयस्यचोरैर्नेत्रयोःपिधानंकृत्वाकाननंनीतस्यगंधारदेशविषयकयाईप्सयाअतिशयेनदुःखितस्यस्वात्मवृत्तांतंक्रोशतउच्चैर्वदतःअरण्यानींमहदरण्यंगत
स्यप्राप्तस्यचतच्चोरकृतंनेत्रयोःविधानंविमुच्यनिरस्यकश्चिद्दयालुरितिवदेत् इतिकिं हेनरत्वमेतांदिशंगच्छयतएतस्यांदिशिवर्त्तमानेभ्योगंधारदेशेभ्यआगतोसीतित्रयाणामर्थः ३५६ । ३५७
३५८ सयथेति । सउक्तविधोगंधारदेशीयएवमाप्तेनोपदिष्टस्तुष्टस्तद्वाक्येकृतविश्वासश्चसन्ग्रामान्स्वदेशान्गच्छेत्एवमाचार्यवाक्येनविद्वान्कुशलआत्मनःस्वदेशस्थानीयस्यविज्ञानंप्राप्नुयात्ततोमन
नाद्यैःसंयुतत्वेनकामक्रोधादींश्चोरवत्संसारारण्यपातहेतून्विज्ञायप्रमादेनतद्वशंपुनरगच्छन्प्रायामूलाविद्यातद्रूपंनेत्रस्यसाक्षिस्वरूपस्यबंधनंमहदनादिकामादिचोरैर्दृढीकृतंगुरुरूपदयालुपांथस्यवा
क्यरूपहस्तोन्मोचितंपरित्यज्याद्वयचेनानंदरूपमात्मदेशंव्रजेदितित्रयाणांसंबंधः ३५९ । ३६० । ३६१ विदुषोमरणेइतरस्माद्यावत्यंशेविशेषोयावतिचसाम्यंतत्सर्वंतस्यतावदेवेत्यादिभागा
पकर्षेणदर्शयतोऽष्टमपर्यायस्यार्थमाह वागादीनामेति । पूर्वंप्रथमपर्यायेवागादीनांमनःप्रभृतिपुवृत्तिरूपेणैवलयोभवतिनस्वरूपेणस्वरूपस्यतुसंस्कारात्मनावस्थितिरेवेतियदुक्तंतदविद्वदभिप्रा
येणैवोक्तंविदुषस्तुसत्संपत्तिविलंबेप्रारब्धावसानस्यावधीकरणाद्वागादिकरणजातंसहवृत्त्यादिप्रपंचेननिरवशेषंलीयतेअप्रतिबद्धविद्याप्रभावादितिद्वयोरर्थः तथाचसूत्रं ' अविभागोवचनात् ' इति

पिधानंनेत्रयोःकृत्वागंधारेप्सातिदुःखिनः ॥ क्रोशतःस्वात्मवृत्तांतमरण्यानीगतस्यहि ३५७ कृपापर पुमान्पांथोवदेत्कश्चिद्विमुच्यतत ॥ पिधानंनेत्रयोरेतां
दिशंयाहिसुखंनर ॥ एतस्यांदिशिगंधारदेशेभ्यश्चत्वमागतः ३५८ सयथात्रशनैस्तुष्टउपदिष्टोव्रजेद्ग्रामान् ॥ देशान्गंधारकानेवंविद्वानाचार्यवाक्यतः ३५९ प्रा
प्नुयादात्मविज्ञानंमननाद्यैश्चसंयुतः ॥ कामक्रोधादिकांश्चोरान्नेत्रबंधनकारिणः ३६० अत्रमत्यव्रजेदेतमानंदात्मानमद्वयम् ॥ परित्यज्यमहच्चैतन्मायाख्यंनेत्र
बंधनम् ३६१ वागादीनांहिष्टृतेर्योलयोमरणईरितः ॥ विदुषोनैषविज्ञेयःकिंतुसंसारिणोहिसः ३६२ वृत्तयोवृत्तिमंतश्चवागाद्याःसर्वएवहि ॥ विदुषोलयमायां
तिब्रह्मज्ञानप्रभावतः ३६३ मरणावसरेप्राप्तेज्ञातयोत्रोपतापिनम् ॥ उपासतेरुद्धकंठाःसाश्रुनेत्राःसमंततः ३६४ मातापिचात्मनःपुत्रजानीषेप्रियमांप्रियम् ॥
प्राणेभ्योपिचजानीषेभ्रातरंमांचवेत्सित्वम् ३६५ इत्यादिवचनंयद्वदविद्वानवगच्छति ॥ लयंव्रजतिर्यावच्चततऊर्ध्वंनकिंचन ३६६ वागादेर्लयतःपूर्वंविद्वानपि
तथावचः ॥ नानाविधंविजानातिलयेतस्यनकिंचन ३६७ देहपातेसमेतस्मिन्विदुषोऽविदुषश्चहि ॥ विभेदोयंयतोविद्वान्पुनर्जन्मनगच्छति ३६८ अस्यभेद
स्यहेतुश्चह्युभयोर्विद्यतेस्फुटः ॥ एकःसत्यंविजानातिह्यनृतंचतथापरः ३६९

३६२ । ३६३ अयंशास्त्रगम्योविशेषउक्तोलोकदृष्ट्यातुतत्साम्यमित्याह मरणावसरइति । उपतापोरोगस्तद्वंतंमरणावसरेज्ञातयःसंबंधिनउपासतेपरिवेष्ट्यतिष्ठंति तत्रमाताअपिशब्दात्भ्रा
त्रादयश्चेत्थमाहुः इत्थंकथं हेसुतप्रेमास्पदत्वंमामात्मनोमातरमपिजानीषे भ्राताअह त्वंमांप्राणेभ्योपिप्रियंभ्रातरंवेत्सीति एवमन्येप्याहुरितिद्वयोरर्थः ३६४ । ३६५ इत्यादीति ।
इत्यादिवचनप्रभृतिविषयजातमविद्वान्वागादिलयपर्यंतमेवावगच्छतिततोवागादिलयादूर्ध्वंतुकिंचिदपिविषयजातंनावगच्छतीत्यर्थः ३६६ तथावागादिलयपर्यंतंविषयविज्ञानंतदुत्तरंविशेषवि
ज्ञानेपरमश्चविदुषोपिसमानइत्याह वागादेरिति । स्पष्टम् ३६७ नन्वित्थंविद्वन्मरणेदृष्टसाम्येसतिपूर्वोक्तःशास्त्रीयोविशेषःकथंसंभाव्येतेतिशंकावारणंनवमेनपर्यायेणकृतमितिदर्शयंस्तमवतार
यति देहेति । एवमुभयोर्देहपातेसमेसतिविद्वान्पुनर्जन्मनगच्छतितत्प्रयोजकोविभेदोविशेषोऽयंवक्ष्यमाणोबोध्यइत्यर्थः ३६८ अयंकइत्यपेक्षायामाह अस्येति । उभयोर्विद्वदविदुषोर्मध्येअस्य
विद्वज्जन्माभावप्रयोजकस्यभेदस्यहेतुःप्रयोजकोधर्मःसत्यएवात्मदृष्टिरूपःस्फुटोवर्तते यतइतरोऽविद्वाननृतंशरीरत्रयमेवात्मत्वेनावगच्छतिअनुच्छिन्नाविद्यातत्संस्कारसंतानइतियावदित्यर्थः ३६९

एतदेवस्फुटयति विद्वानितिद्वाभ्यां । निगदव्याख्यातंद्वयम् ३७० । ३७१ सत्याभिप्रायोमोक्षहेतुरितिलोकेपिप्रसिद्धमित्याह लोकेपीति । सत्येसंधाअभिप्रायोयस्यसतथा मिथ्याभिशापोऽनृतकलंकप्राप्तिरूपःसजातोयस्यसतथा मुच्यतेशुद्धिंगच्छति अपरः अस्यैवविवरणमनृतमानसइतिसुदुःखंयातीतिप्रसिद्धमिति ३७२ एतत्कथमित्याकांक्षायामुदाहरति यश्चेत्यादिना । यथाकश्चिच्चोरःसाधुश्चेत्युभावपिचोरत्वेनदंडचतयाराजभटैर्गृहीतौसभायांप्रत्येकंममचोरतानास्तीतिक्रोशंतौवीक्ष्यजातेनसंशयेनसद्भिर्धर्माधिकारिभिःसमेदिव्येउभयोरादिष्टेसतिसाधुस्तप्तलोहिनकरेधृतेननदह्यतेअन्यश्चोरस्तुदह्यतेइतित्रयाणांसंबंधः ३७३ । ३७४ । ३७५ अदग्धइति । तयोःसाधुःसत्याभिप्रायकत्वलक्षणसत्याभिसंधित्वात्सत्यभाषणेनानुमितादहग्धहस्तएवमुच्यतेइत्यर्थः ३७६ दग्धेति । परश्चोरोऽनृताशयप्रभावादनृतभाषणानुमिताद्दग्धहस्तोबंधंनिगडमेविबध्यतेशारीरादिदंडंचप्राप्नोतीत्यर्थः ३७७ फलितमाह विदुषइति । वागादिविल

विद्वान्सत्यात्मबोधेनमायापाशविवर्जितः ॥ वागादिविलयाद्भूयःशरीरंनाप्नुयात्सदा ३७० अविद्वानन्नृतंसर्वंदेहांतंदुःखकारणम् ॥ जानन्नात्मतयाभूयःसंस्कारैर्देहमाव्रजेत् ३७१ लोकेपिसत्यसंधोयोभवेन्मिथ्याभिशापितः ॥ समुच्यतेपरोदुःखंप्रयात्यनृतमानसः ३७२ यश्चचोरश्चसाधुश्चधृतौराजभटैर्बलात् ॥ चोराविमौनिहंतव्यावित्येवंनिश्चयेसति ३७३ उभावपिसभामध्येक्रोशतश्चोरतानहि ॥ प्रत्येकंममचेत्येवंसंजातेसंशयेसति ३७४ सभासद्भिःसमेदिव्येउभयोःपरिकल्पिते ॥ ज्वालामालाकुलंतप्तमयःपिंडंवहन्करे ॥ साधुर्नदह्यतेत्वन्यश्चोरोत्रबहुदह्यते ३७५ अदग्धोमुच्यतेसाधुस्तस्मान्मिथ्याभिशापतः ॥ सत्याभिसंधिर्यस्मात्ससत्यमेवाभ्यभाषत ३७६ दग्धहस्तःपरःसद्योबंधमेतिचवध्यते ॥ अनृताशयतोयस्मादनृतंसोभ्यभाषत ३७७ विदुषोऽविदुषश्चैवसमानेमरणेसति ॥ भवेद्वागादिविलयोविदुषोनापरस्यच ३७८ नवकृत्वःश्वेतकेतुंसआत्मातत्त्वमस्यपि ॥ पितोवाचविजज्ञेसनवमेवचनेपितुः ३७९ श्वेतकेतुर्महातेजाःकंचित्कालंगृहेवसत् ॥ आत्मज्ञानीविरक्तःसन्प्रवव्राजयथापिता ३८० सत्तायाःसुखरूपत्वमात्मनोनैनमैरयत् ॥ आरुणिःश्वेतकेतुश्चपप्रच्छनचधीधनः ३८१ सनत्कुमारोभगवान्नारदायसुखात्मताम् ॥ अपृष्टोपिपुराप्रश्नतो॰षितःसउवाचह ३८२ इतितेकथितंश्वेतकेतोरज्ञानकारणम् ॥ ज्ञानंचस्वपितुर्भूयःकिमन्यच्छ्रोतुमिच्छसि ३८३ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेच्छांदोग्यसारार्थप्रकाशेआरुणिश्वेतकेतुसंवादोनामद्वादशोऽध्यायःसमाप्तः ॥ १२ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

योनिरवशेषइतिशेषः अपरस्याविदुषस्तथानेति ३७८ चरमवाक्यार्थमाह नवेति । एवंनववारंपित्रोपदिष्टःश्वेतकेतुरसंभावनानिवृत्तौसत्यामस्यपितुर्नवमेवचनेतत्प्रथमोक्तमेवतत्त्वंविजज्ञेसाक्षात्कृतवानित्यर्थः ३७९ अतीतकथांसंगमयति श्वेतेति । तदनंतरंजाबालोक्तंतस्यपारमहंस्यंबोध्यमित्यर्थः ३८० उत्तराकांक्षामुत्थापयति सत्तायामितिद्वाभ्यां । श्वेतकेतोर्धीधनत्वंस्वयंविज्ञानसामर्थ्यंरूपंविज्ञायपितारुणिःसत्तायाःसुखरूपत्वंनऐरयत्नउक्तवान्यतःश्वेतकेतुस्ततोनाप्रच्छदित्यर्थः ३८१ नारदेनापृष्टोपिचसनत्कुमारएतन्नारदायोवाचेत्याह सनत्कुमारइति ३८२ उपसंहरति इतितेइति ३८३ द्वादशंकरणंशंभोभवतोव्यक्तमलंकृतम् । विकाशेनमुकुंदस्यशांतांचतेचमत्कृतिम् ॥ १ ॥ द्वादशंकरणमहंकाररूपंभवतःशोधितत्वंपदार्थरूपस्यमुकुंदस्यतत्पदार्थस्येत्यर्थः ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांस्वप्रकाशाख्यायांद्वादशोऽध्यायः समाप्तः ॥ १२ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ ॥ भूमानोमाल्पतापोहःसकलाकलनस्फुटः ॥ आशोत्तरधरःशश्वद्राजतेसत्रयोदशे ॥ १ ॥ अस्यार्थः। भूःपृथिवी मानंवेदः उमाकीर्तिः 'उमाऽतसीहैमवतीहरिद्राकीर्त्तिकांतिषु' इतिविश्वप्रकाशकोशात् एषांपदार्थानांयाऽल्पताअसुरप्रभावात्संकोचरूपातामपोहतिअसुरनिरासेनहरतिसतथा सकलस्यस्वकीयपरिपूर्णरूपस्यपदाकलनंरावणवधानंतरंत्वंमहाविष्णुरसीतिविधातृवाक्येनानुसंधानंतेनस्फुटःपरित्यक्ताहार्यबोधनाट्यइति आशादिक्षातद्वतामुत्तरकोसलवासिनांधरःसन्निधानेनत्राता सदासश्रीरामःसत्रयस्त्रयेणानुजानांत्रिकेणसहितः अदशेदशावर्त्तिस्तद्रहितोऽदशोहार्दज्योतीरूपदीपस्तस्यमध्येवन्हिशिखेतिमहोपनिषदिप्रसिद्धस्तदुपरिराजतेआराधकानामाविर्भवतीत्यर्थः। श्रीकृष्णविग्रहपक्षे भुवोमानःपूजाप्रशंसारूपोगर्वोवायतःसतथा पुनःकीदृशः अमाःप्रमाहीनाअज्ञायेअल्पाःक्षुद्रादुःशासनादयस्तत्कृतोयोद्रौपदीप्रभृतीनांभक्तानांवापस्तमूहतिजानातीतिसतथा पुनःकीदृशः सकलस्यककारलकारसहितस्यकामबीजस्याकलनेनजयेनस्फुटःप्रकटलीलः आशायाश्चोप्यादिकामनायाअपन्नाशकत्वेनउत्तरभूतस्यतदानुकूल्यस्यधारकःसवासुदेवःसत्रयःसंकर्षणादित्रयसहितः दशाःपरिणामरूपाअवस्थास्ताभिर्हीनत्वाददशोनिर्विकारस्वरूपेराजतेदेदीप्यतेइत्यर्थः। श्रीशंभुपक्षे भूमान्ज्योतिर्लिंगरूपेणभूम्यानित्यसंबद्धः ओमाप्रणवेनअल्पतायाजीवनिष्ठपरिच्छिन्नतायाअपोहस्यबाधस्यकर्त्ता सकलस्यचंद्रकलासहितस्यविग्रहस्यआकलनेनधारणेनस्फुटोभक्तानांप्रसिद्धः आशादिक्तद्रूपस्यउत्तरस्यऊर्ध्ववस्त्रस्यधारकइतियावत्सः अदशेजाग्रदाद्यवस्थापरित्यागहेतौतत्त्वज्ञानेतदर्थे

श्रीगणेशायनमः ॥ एतच्छ्रुत्वाथशिष्योपिस्वात्मनोब्रह्मरूपताम् ॥ प्रष्टुकामःपुनःप्राहस्वगुरुंवचनंत्विदम् १ भगवन्भवताख्यातमैतरेयेणकीर्तितम् ॥ ज्ञानमाख्यानसहितमेवंकौषीतकीरितम् २ आदित्यस्यमहेशस्यसश्वेताश्वतरस्यच ॥ कठस्यतित्तिरेस्तद्वज्जाबालादिद्विजन्मनाम् ॥ आरुणेःस्वपितुर्बाल्येलब्धंचश्वेतकेतुना ३ मंत्रज्ञोवामदेवश्चशक्रःकाश्यश्चभूपतिः ॥ गुरवोयेत्रशिष्याश्चप्रवर्तंतेप्रजास्तथा ॥ बालाकिश्चतथादृप्तोगार्ग्योयःपरिकीर्तितः ४ भेदतोभेदतश्चापित्रिपर्वायत्रकीर्तितः ॥ महान्वंशोमन्त्रदर्शीदस्रौचप्रतिकोपितः ५ दध्यङ्ङाथर्वणेयत्रशक्रःक्लेशमुपागतः ॥ अश्विनोर्ब्रह्मविद्याचपैर्यमाथर्वणस्यच ६ भूपतेर्यज्ञशालायामाश्वलाद्यैर्द्विजोत्तमैः ॥ जल्पाख्योयत्रसंवादःशाकल्यमरणांतकः ७ द्विवारंपृथिवींपालंयत्रवाजसनेयकः ॥ गत्वावादकथांकृत्वाकृतकृत्यंचकारसः ८

यत्सत्रंसत्रतुल्यंसंप्रदायप्रवर्त्तनरूपंकर्मतद्यातिप्राप्नोतिधारयतीतियावत् सतथा। प्रमेयपक्षेतु भूमातत्संज्ञोनोस्माकमधिकारिणांमाल्पतामाप्रमातन्निष्ठायाल्पतापरिच्छिन्नविषयतातस्याःपरिहारकःपूर्णत्वात् सकलस्यद्वैतजातस्याऽकलनेविस्मरणेस्फुटः नामादीनांवक्ष्यमाणानांभावानांमध्येचतुर्दशीआशातस्याउत्तरःप्राणस्तस्याधारःअधिष्ठानभूतःसप्रसिद्धस्त्रयोदशेऽध्यायेस्फुरतीत्यर्थः १ तत्रमेधाविनःप्रश्नंदर्शयति एतच्छ्रुत्वेत्यष्टादशभिः। स्पष्टम् १।२ आदित्यस्येति। आदित्यविशेषणंमहेशस्येति षष्ठ्यंतानांज्ञानमित्यनेनप्राक्तनेनसंबंधः लब्धमित्यत्रचतदनुषंगः ३ मंत्रज्ञइति। मंत्राणांसर्वात्मताबोधकानांद्रष्टावामदेवोगुरुत्वेनप्रथमेइंद्रस्तुद्वितीयेअजातशत्रुस्तृतीयेइति अथशिष्याउच्यंते प्रजाःप्रथमेतथाप्रतर्दनोद्वितीयेबालाकिस्तृतीयेइत्यर्थः ४ चतुर्थगतान्शिष्यानाह भेदतइति। त्रिविधानिपर्वाणिषट्कपुरुषरूपाणियस्यसतथाविधोवंशोमंत्रदर्शिनांगुरुशिष्याणांपरंपरारूपउक्तः यत्रवर्तमानेआथर्वणेगुरौदस्रौशिष्यतयोक्तौयत्रतयोःशिष्यतायांशक्रःक्लेशमीर्ष्यारूपंप्राप्तः कीदृशःशक्रः प्रतिकोपितःहितोपदेशेनप्रत्युतकोपंप्रापितः तथादस्रयोर्विद्योपदेशस्तत्रमहाभयेपिगुरोर्धैर्यंचोक्तमितिद्वयोरर्थः ५।६ पंचमाध्यायःप्रायत्रयार्थक्रमेणानुवदति भूपतेरितित्रिभिः। यत्रातीवग्रंथे शिष्टंनिगदन्पाख्यातंत्रयम् ७।८

९ अष्टमार्थमाह कारणेइति । नवमदशमयोरनमाह धर्मेत्यादिना । नवमेधर्मराजोगुरुरुक्तोनचिकेतास्तुशिष्यः कीदृशोमहान्गुरुः अग्निविद्ययोःसंप्रदायप्रवर्त्तकत्वात् तथादशमेवरुणो गुरुरुक्तस्तपोधनोभृगुस्तुशिष्यउक्तः तत्रैवनारायणीयेवेनाख्यस्यगंधर्वस्यस्वानुभवःसर्वसाधनानांमध्येसंन्यासस्योत्तमत्वंचकीर्तितमितिद्वयोरर्थः १० । ११ एकादशवृत्तमाह कीर्तितइति चतुर्भिः । प्रथमपदंपूर्वान्वयिदर्शितं संन्यासस्यानुष्ठानंसंवर्तकप्रभृतिकर्तृकंदर्शितंतथातस्यसंन्यासस्यस्वीकारकालोपाधिभूतस्यवैराग्यस्यजनिरुक्तेत्यर्थः १२ तस्याइति । तस्यावैराग्य जनेर्हेतवोगर्भोपनिषदाद्युक्ताविवेकादयउक्ताःनिमित्तानांमरणचिन्हानाम् १३ विरक्तइति । अत्रसंन्यासेविरक्तोऽधिकारीप्रोक्तः तथाअस्यसंन्यासिनोबाह्योवेषःशिखादिराहित्यरूपस्तदाचा रश्चोक्तः तद्वदाभ्यंतरोमुख्यआचारोऽहिंसादिरूपउक्तः ब्रह्मोपनिषदाद्युक्तंतत्त्वज्ञानंचवर्णितमितिद्वयोरर्थः १४ । १५ अनंतरोक्तमनूद्यपृच्छति नवेतित्रिभिः । निगदव्याख्यातंत्रयं तत्रवेदे

संन्यस्यन्नपिमैत्रेयींजायांयत्राकरोन्मुनिः ॥ कृतकृत्यांयाज्ञवल्क्योलोकातीतस्तपोधनः ९ कारणेयत्रजिज्ञासायतीनांचद्विजन्मनाम् ॥ धर्मराजोगुरुस्तद्वद्वरु णश्चतपोधनः १० नचिकेताश्चयत्राभूच्छिष्यस्तद्वद्गुरुर्महान् ॥ गंधर्वस्यापिवेनस्यस्वात्मानुभवकीर्तनम् ॥ नानासाधनसंघेषुसंन्यासोयत्रचोत्तमः ११ की र्तितोनुष्ठितःपूर्वैःसंवर्ताद्यैर्महात्मभिः ॥ तस्यस्वीकारकालश्चवैराग्यस्यजनिस्तथा १२ तस्यास्तुहेतवस्तद्वद्गर्भोपनिषदादिषु ॥ विवेकोविविधोयोगोनिमित्ता नांचबोधनम् १३ विरक्तोत्राधिकारीचसंन्यासीपरिकीर्तितः ॥ शिखादिरहितस्यास्यवेषआचारईरितः १४ बाह्यआभ्यंतरस्तद्वदहिंसादिस्वरूपकः ॥ मु ख्योपिस्वात्मविज्ञानंब्रह्मोपनिषदादिषु १५ नवकृत्वःश्वेतकेतोर्हार्दाशंकांव्युदस्यहि ॥ तत्त्वमस्येवमुक्तंतत्सम्यग्ब्रह्मावबोधने १६ आत्मनःसुखरूपत्वमध्याये स्मिन्प्रकीर्तितम् ॥ उक्तंसनत्कुमारेणकिंतुतन्नारदायहि १७ तदहंश्रोतुमिच्छामिनारदाययदीरितम् ॥ ज्ञानंसनत्कुमारेणत्वत्तोद्यभगवन्गुरो ॥ एवमुक्तेगुरुः प्राहशिष्यंवेदेस्थितांकथाम् १८ सनत्कुमारमासीनमेकांतेनारदोमुनिः ॥ संसारतापसंतप्तःकदाचिदिदमब्रवीत् १९ भगवन्भवतासम्यक्ज्ञायतेत्रपरायणम् ॥ ब्रह्मयतत्परंज्ञानाच्छोकंतरतिपंडितः २० शोकस्यतरणेयत्स्यात्कारणंब्रह्मवेदनम् ॥ तन्मेब्रूहिमहाभागशिष्यस्तेहंतपोधन २१ एवमुक्तःसभगवन्नारदेनमहात्म ना ॥ तदीयाज्ञाननाशार्थमिदमाहहसन्निव २२ भवान्यदत्रजानीतेसर्वज्ञोनारदोमुनिः ॥ तच्छ्रुत्वाशुततःपश्चादहंवक्ष्यामितेस्फुटम् २३ एवंसनत्कुमारेणकथि तोनारदोमुनिः ॥ प्रांजलिःप्रणतोभूत्वासर्वमेवन्यवेदयत् २४ ऋचोयजूंषिसामानिह्यथर्वांगिरसासमम् ॥ मंत्रब्राह्मणरूपाणिवेद्मिब्रह्मप्रसादतः २५ अत्रनानावि धाःसंतिवृत्तलोककथाःशुभाः ॥ इतिहासाभिधास्तद्वत्पुराणंजगतोपिच २६

छांदोग्यसप्तमाध्यायरूपे १६ । १७ । १८ तत्रनारदप्रश्नमवतारयति सनत्कुमारमिति । एकांतेस्थितंमुनिंनारदइदंपप्रच्छेत्यर्थः १९ इदंकिमित्याकांक्षायामाह भगवन्निति । भगवन्यत्परा यणंसर्वाधिष्ठानभूतमतएवपरंसर्वोत्कृष्टंब्रह्मयस्यचविज्ञानात्शोकंकर्तृत्वाद्यध्यासरूपंतरतितद्भवताज्ञायतेइत्यन्वयः २० शोकस्येति । तस्यशोकस्यतरणेकारणभूतंब्रह्मवेदनंयत्याद्दशंभवति तन्मह्यंशिष्यायोपदेश्यमित्यर्थः २१ एवमुक्तइति । एवंप्रार्थितोमुनिर्नारदस्ययत्रांशेअबोधस्तदवधारणायेदमाह इदंकिं भवान्सर्वज्ञत्वेनप्रसिद्धोयावज्जानातितच्छ्रुत्वावक्ष्यामीतिद्वयोरर्थः २२ २३ एवमिति । स्पष्टम् २४ मंत्रब्राह्मणरूपेणप्रत्येकंद्विविधान्ऋगादिसंज्ञांश्चतुरोवेदान्जानामिब्रह्मणःपितुःप्रसादादित्यर्थः २५ अत्रेति । अत्रवेदेषुसंक्षिप्योक्ताइतिशेषः नानाविधाः—

कथाःसंति कीदृश्यः वृत्तलोककथाःअतीतजनविषयकाःकथाःइतिहाससंज्ञाअपिवेद्मि तथाजगतःसर्गादिनिरूपणवाक्यरूपंपुराणंवेद्मि तथाशब्दापशब्दविज्ञानहेतुत्वेनवेदोपकारकत्वाद्वेदा नांवेदमितिशब्दशास्त्रंव्याकरणंवेद्मि तथापित्र्यपदोक्तंश्राद्धादिविधिंवेद्मीतिद्वयोरर्थः २६ । २७ राशिमिति । श्रुतौराशिभिरित्युक्तंगणितंवेद्मियत्रगणितशास्त्रेगुणनभाजनादिनासंख्यावतिष्ठते स्फुटीभवतीति तथादेवपदोक्तमुत्पातादिनिर्णयशास्त्रंनिधिपदोक्तंभूमिनिखातद्रव्यरूपनिधिशास्त्रंचवेद्मीति एवमग्रेपिद्वितीयांतानांवेद्मिपदसंबंधोद्रष्टव्यः २८ वाकोवाक्यपदार्थःकैश्चित्प्र श्नोत्तररूपोवेदभागउक्तोभाष्यकारेस्तुतर्कशास्त्ररूपइत्यतस्तदुभयमाह प्रश्नोत्तरमिति । किंस्विदावपनंमहदितिप्रश्नोभूमिरावपनंमहदित्युत्तरमेवंविधवेदभागंवाकोवाक्यसंज्ञं न्यायशास्त्रमक्षपा दप्रणीतंतद्रूपंतर्कशास्त्रमपितत्संज्ञं तथाश्रुतावेकायनपदोक्तंनीतिशास्त्रमिति २९ देवेति । निरुक्तेमहाभागादेवताइत्युपक्रम्यसर्वेदेवानांसार्वात्म्यमुक्तंतदत्रदेवविद्यापदेनोक्तंपरिशिष्टं निरुक्तं शिक्षाकल्पोचेत्येतत्त्रयंवेदोपकारकत्वाद्वेदविद्येत्युक्तं तथाभूतानांप्राणिनांदृष्टोपकारहेतुत्वात्भूतविद्येत्युक्तमायुर्वेदसहितंसुश्रुतंवैद्यशास्त्रविशेषं तथानानाविधशांतिपुष्ट्यादिफलकान्मंत्रानित्यर्थः ३० धनुरिति । क्षत्रविद्यापदोक्तामस्त्रविद्यासहितांधनुर्विद्यां तथानक्षत्रविद्यापदोक्तंज्योतिःशास्त्रंग्रहसंस्थादिप्रतिपादकमित्यर्थः ३१ सर्पेति । सर्वेषुयेदेवनिकायादेवशरीरास्तद्वशीकारहेतुभूता

सर्गादिकथनंवाक्यमपिव्याकरणंतथा ॥ शब्दापशब्दविज्ञानंपित्र्यंश्राद्धादिकंहियत् २७ राशिंगणितमित्युक्तंयत्रसंख्यावतिष्ठते ॥ उत्पातादितथादैवंनिधिशा स्त्रंतथानिधिम् २८ प्रश्नोत्तरंचकथितंवाकोवाक्यंमनीषिभिः ॥ तर्कशास्त्रंन्यायशास्त्रंनीतिशास्त्रंतथैवच २९ देवविद्यांनिरुक्ताख्यांवेदविद्यांपुनस्त्रयम् ॥ शि क्षांकल्पंनिरुक्तंचभूतविद्यांचसुश्रुतम् ॥ आयुर्वेदेनसहितंमंत्रान्नानाविधानपि ३० धनुर्विद्यांतथाक्षत्रविद्यामस्त्रसमन्विताम् ॥ ज्योतिःशास्त्रंतथाविद्यांनक्षत्रा ख्यांमुनीश्वर ३१ सर्पदेवनिकायानांविद्यांतांगारुडाभिधाम् ॥ गांधर्वंचविजानामिशास्त्रंसर्वोपकारकम् ३२ एतत्सर्वंविजानामिवेदगर्भस्थितंमुने ॥ भगवन्ने वजानामिस्वात्मनोमोक्षकारणम् ॥ मंत्रवित्ततएवास्मिस्वात्मज्ञानविवर्जितः ३३ भगवत्सदृशेभ्यस्तुश्रुतपूर्वंमयाविभो ॥ आत्मवित्सकलंशोकंतरेदत्रसकार णम् ३४ ममास्तिचसदाशोकस्तापत्रयसमुद्भवः ॥ वन्हिमंडलसंस्थस्यपंगोःपुंसोयथाशुचि ३५ सोहंशोचामिसततमात्मानंदीनवत्सल ॥ शिशुपुत्राप्यपुत्रा वायौवनेगतभर्तृका ३६ सर्वबंधुविहीनाचयथानारीपतिव्रता ॥ शोचत्यात्मानमनिशंभृशंदारिद्र्यपीडिता ३७ शोचंतंतमिहात्मानंतापत्रयवशंगतम् ॥ शो काब्धेरत्यगाधस्यपरपाराभिलाषितम् ३८

विद्यागारुडविद्येतिप्रसिद्धातां तथासर्वजनानांमनोरंजकत्वेनोपकारकत्वाज्जनविद्येत्युक्तंगांधर्वशास्त्रंगीतादिप्रतिपादकंजानामीत्यर्थः ३२ एतत्सर्वमिति । सर्वमेतदुक्तंजानन्नप्यहंवेदस्यगर्भे तात्पर्यरूपेविषयतयास्थितंमोक्षकारणंनजानामीत्यर्थः मन्त्रविदिति । ततआनुषंगिकार्थविज्ञानेपितात्पर्यविषयस्याज्ञानादेवाऽहंमंत्रवित्मंत्रपाठ्येवैवास्मिनतुमंत्रार्थवित् स्वात्मतत्त्वस्यतत्ता त्पर्यगोचरस्याबोधादित्यर्थः ३३ आत्मतत्त्वस्यतत्तात्पर्यगोचरत्वेहेतुतयातज्ज्ञानस्यफलवत्त्वमाह भगवत्सदृशेभ्यइति । युष्मत्तुल्येभ्यआप्तेभ्योमयेदंपूर्वंश्रुतं इदंकिं आत्मवेत्तासकारणंसमूलंशोकं कर्तृत्वादिरूपंतरतीति ३४ तद्वाक्यार्थंमयिसमन्वितंविद्धीतिदर्शयन्स्वस्मिन्शोकंवर्णयति । ममास्तीति । यथावन्हिमंडलेत्रिकोणेपतितस्यपंगोःशोकःस्यात्तथाममाध्यात्मादिदुःखत्रयसंसर्गजः शोकोस्तीति ३५ 'अनीशयाशोचतिमुह्यमानः' इतिश्रुत्युक्तंदैन्यरूपंशोकंनिदर्शनेनाह सोहमिति । आत्मानंशोचामिकांगतिंयास्यामीत्याकारकशोकस्यगोचरतांनयामिबालापत्यत्वादिविशिष्टानारीवेतिद्वयोरर्थः ३६ । ३७ शोचंतमिति । तंमामात्मानंशोचंतंशोकाब्धेःपरपारेअभिलाषःसंजातोयस्यसतथातंनृभिर्दुस्तरेशोकाब्धौमग्नंतंचभगवत्त्वात्पूज्यःपरंपारंतीरंतारयतुमापयत्वितिद्वयोरर्थः ३८

३९ एवमिति । एवंनारदेनवदंतंप्रार्थयंतंप्रतिस्थूलारुंधतीन्यायेनपरंतत्त्वंबोधयितुंभगवान्मुनिःसनत्कुमारएवमाह एवंकथम् हेनारदयत्किंचित्त्वमध्यगीष्ठाःअध्ययनेनज्ञातवानसिएतत्सर्वंना
मैवशब्दरूपमेव तत्रोपपत्तिमाह वागादिकमिति । यतोवागादिकंयथावत्प्रपंचस्यैकदेशभूतंवस्तुजातंतत्सर्वंनामत्वेननामत्वरूपेणैववदंतिवदनकर्मतांनयंति यदिनामनस्यात्तर्हिकिंचिदपिवक्तुं
नशक्येतातोनामसर्वात्मकमित्यर्थः फलितमाह इदमित्यादिना । तस्मादिदंनामअखिलंसर्वात्मकंब्रह्मरूपमितियावत् उपास्वपुनःपुनश्चिन्तय यावतेत्यव्ययंहेतौ तथाच्यतोऽज्ञःद्वैतवासना
कुंठितचित्तोसिअतःचित्तस्यसाक्षाद्ब्रह्माकारतायोग्यत्वाभावात्तेनाप्येवतावद्ब्रह्मभावनांकुर्वितिद्वयोरर्थः ४० । ४१ नामोपासनस्यानुषंगिकंफलमप्याह नामेति । योनामशब्दजातंब्रह्मत्वे
नोपास्तेसपुरुषःपुरुषपुंगवः ' दिवंस्पृशतिभूमिंचशब्दःपुण्येनकर्मणा । यावत्सशब्दोभवतितावत्पुरुषउच्यते 'इतिभारतेधर्मोक्तेः तत्रहेतुमाह यावन्नाम्नेति । यावद्विश्वंनाम्नासंबद्धंतावतिसर्वत्रा
स्योपासकस्यगतिःस्वातंत्र्यंभवतिस्वदेशेमहाराजस्येवेत्यर्थः ४२ एतस्मादिति । नाम्निब्रह्मदृष्टिमात्रेणशोकोननिवर्ततेइत्यतएतस्मान्नाम्नोधिकंकिंचिदस्तिचेत्तदुक्तव्यमित्येवंनारदेनसमीरितेपृ
ष्टेसतिमुनीश्वरःसनत्कुमारस्ततोनाम्नोभूयोधिकंकिंचित्तत्त्वमुक्तवानित्यर्थः ४३ आशांतानीति । उक्तरूपजिज्ञासयाचाधिकमधिकंनिरूपयन्नाद्यःस्वायंभुवानांप्रथमोमुनिर्वाचमारभ्यआशापर्यं
तंत्रयोदशतत्त्वान्याह सर्वत्रवागादिपर्यायेषुउपास्वेतिशब्देनब्रह्मदृष्ट्यातदुपासनमाह तथातेनतेनवागादिनायुक्तेविश्वस्मिन्प्रपंचेगतिःस्वातंत्र्यंभवतीत्याकारकंफलमाहेतिद्वयोरर्थः ४४ । ४५

भगवान्मांपरंपारंतारयत्वत्रसत्तमः ॥ मज्जंतंबहुधाशोकसागरेदुस्तरेनृभिः ३९ एवंवदंतंतंप्राहभगवान्मुनिसत्तमः ॥ यत्किंचिदध्यगीष्ठास्त्वंनामैतन्मुनिसत्त
म ४० वागादिकंप्रपंचैकदेशभूतंवदंतितत् ॥ नामत्वेनेदमखिलमुपास्वाज्ञोसियावता ४१ नामब्रह्मेतियोलोकउपास्तेपुरुषोहिसः ॥ यावन्नाम्नायुतंविश्वंता
वत्यस्ययथासुखम् ॥ गतिर्भवतिसर्वत्रमहाराजस्ययादृशी ४२ नतस्मादधिकंकिंचिदस्तीत्येवंसमीरिते ॥ नारदेनततोभूयस्तस्मादाहमुनीश्वरः ४३ आशां
तानिहितत्त्वानिवागादीनित्रयोदश ॥ उपास्वेत्येत्रसर्वत्रनामवत्तत्फलंतथा ४४ तेनतेनचसंयुक्तेविश्वस्मिन्गतिरित्ययम् ॥ उक्तवान्नारदायाद्योमुनिःसर्वार्थदर्श
कः ४५ नाम्नोवागिंद्रियंभूयस्तस्मात्संशयरूपभृत् ॥ मनस्ततोपिसंकल्पोयदिच्छेतीहगीयते ४६ चित्तंसंकल्पतोभूयःसामान्याज्ञानरूपकम् ॥ तस्माद
पिचचिंताथध्यानंज्ञानप्रवाहभृत् ४७ ध्यानादपिचविज्ञानंविशेषज्ञानरूपभृत् ॥ विज्ञानाच्चबलंभूयोभीतायस्माद्धिवैरिणः ४८

तानित्रयोदशतत्त्वानिस्वरूपप्रदर्शनपूर्वकंनिरूपयति नाम्नइतिपंचभिः । नामापेक्षयावागिंद्रियमधिकंकारणत्वात् तस्माद्वागिंद्रियादपिमनोधिकंतत्प्रेरकत्वात् यन्मनइच्छेतिलोकेगीयते
इच्छयाहिवागिंद्रियंप्रेर्यतेइतिभावः तस्मादिच्छारूपान्मनसोपिसंकल्पोधिकः कीदृशः संशयरूपभृत्संशयस्यरूपंनानाकोटिकत्वंतस्यधारकः संकल्पाख्यांतःकरणवृत्तिर्हिकर्त्तव्याकर्त्तव्यलक्षण
कोटिद्वयंविभागेनावगाहमानाइच्छांजनयतीतिप्रसिद्धमितिभाष्यानुसारिव्यवहितान्वयेनार्थः ४६ चित्तमिति । उक्तरूपात्संकल्पादपिचित्तमधिकं तत्रहेतुगर्भंविशेषणंसामान्येति सामान्यं
सादृश्यंतस्यज्ञानरूपमित्यर्थः अनुसंधानात्मकेनचित्तेनहिहिताहितसाधनतयाऽनुभूतपदार्थानांसादृश्यंपुरोवर्तिषुयदाविषयीक्रियतेतदासंकल्पोभवतीतिभावः तस्माच्चित्तादपिध्यानंज्ञानसंततिलक्ष
णाचिंतारूपमधिकम् चिंतायाःसंस्कारोद्बोधकत्वेनानुसंधानहेतुतायाःप्रसिद्धत्वादितिभावः ४७ ध्यानादिति । ध्यानमपितस्यैवकर्त्तुंशक्यतेयद्वस्तूपेक्षाभिन्नज्ञानरूपेणविशेषज्ञानेनावेद्यीकृत
मित्यतोविशेषज्ञानरूपंविज्ञानंस्वकार्यात्ध्यानादधिकंतथाविज्ञानमपिअन्नाहारकृतावयवोपचयरूपबलशालिनेवमनसासाध्यमित्यतोविज्ञानात्कार्याद्बलमधिकंवैरिभयहेतुत्वेनापिप्रसिद्धत्वादिति
तस्माद्बलादपितत्कारणमन्नंभूमिरूपमधिकम् अन्नरूपायाभूमेरपितत्कारणभूतावृष्ट्यादिरूपाआपोधिकाइतिद्वयोरर्थः ४८

४९ तेजइति । ऊष्मरूपेणवृष्ट्यादिरूपजलहेतुतयाप्रसिद्धभूतंतेजोपिततोजलेभ्योधिकम् अत्रवृष्टिहेतुतयाप्रसिद्धस्यबाह्यवायोस्तेजस्यंतर्भावोविवक्षितइतिद्योतयंस्तेजोविशिनष्टि पवनसंयुक्त मिति । तस्मात्तेजसोपितदाधारभूतआकाशोधिकः आकाशादपिसुपुष्यंतेतत्सृष्टिनिमित्तभूतास्मृतिरधिका नहिस्वष्टव्यजातीयस्मृतिंविनाकिंचित्सृज्यते तस्याःस्मृतेरपिनिदानभूताआशाइदमंवंस्यादित्याकारिकाधिका नहिनिराशस्यक्षीणकामस्यकिंचित्स्मरणेप्रयोजनमित्यर्थः तथाचसंग्रहश्लोकः 'वाङ्मनःसंकल्पचित्तध्यानविज्ञानकंबलं । अन्नापस्तेजांस्यथाकाशस्मराशाःस्युस्त्रयोद श' इति ५० अथनामादिभ्योवागादीनामाधिक्यंयाभिरुपपत्तिभिस्त्रयोदशपर्यायेपुश्रुत्योपन्यस्तंताःप्रतिपादयितुंप्रतिजानीते एवमिति । उक्तप्रकारेणएतानिवागादीन्युत्तरोत्तरमधिकानिप्रति पाद्यतेषांप्रत्येकमाधिक्यसाधिकांयुक्तिमपिसआद्योमुनिरेवप्राहेत्यर्थः ५१ तत्रनाम्नोवाचआधिक्येताऽमाह ऋगादयइतिचतुर्भिः । ऋग्वेदादयःशब्दविस्तरायेत्वयानारदेनईरिताविदितत्वेनो क्तायेचतेषामृग्वेदादीनामर्थायेचस्वर्गादयोलोकास्तेसर्वेपदार्थावाचावागिंद्रियेणैवनिमित्तभूतेनपरैर्विज्ञायंतेव्यवह्रियंतेइत्यर्थः ५२ पृथिव्यादीनीति । तथापृथिव्यादीनिपंचभूतानिदेवाइन्द्रा दयआदिपदग्राह्यांअसुरादयश्चतथामनुष्यादयोजंगमास्तृणादयःस्थावराश्चनानाभेदास्तेनैवविज्ञायंतेइति ५३ धर्मइति । तथाएतदष्टकमष्टपदार्थानांवृंदंवाचोऽभावेकोज्ञातुंशक्नुयात् एतत्किं सु

वलादप्यधिकंप्रोक्तमन्नंभूमिसमुद्भवम् ॥ भूमेरन्नस्वरूपायाआपोथाभ्यधिकास्ततः ४९ तेजःपवनसंयुक्तमाकाशश्चततोमहान् ॥ आकाशात्स्मरणंभूयस्त स्मादाशातिदीनता ५० एवमेतानितत्त्वानिह्यधिकान्युत्तरोत्तरम् ॥ उक्तोपपत्तिमप्याहसएवमुनिसत्तमः ५१ ऋगादयोत्रवाचैवज्ञायंतेयेत्वयेरिताः ॥ अर्थाना नात्मकास्तद्वल्लोकाःस्वर्गादयोपिच ५२ पृथिव्यादीनिभूतानिपंचदेवादयस्तथा ॥ जंगमाःस्थावराजीवाःशतकोटिविभेदिनः ५३ धर्मःसुखकरःसत्यंयथाभू तार्थभाषणम् ॥ साधुसम्यग्वचःप्रोक्तंहृदयज्ञंमनःप्रियम् ५४ एतच्चतुष्टयंचास्माद्विपरीतंचतुष्टयम् ॥ वाचाविनात्रकोनामजानीयादष्टकंत्विदम् ॥ पूर्ववत्तत एवैषावाग्ब्रह्मेतीहनामवत् ५५ अक्षेवाकुवलेवाद्वेयद्वदामलकेचवा ॥ मुष्टिर्गृह्णातितद्वत्तुमनोवाचंचनामच ५६ मनसाप्रविचार्यैववेदाध्ययनमाचरेत् ॥ कर्मणां करणंतद्वदभिलाषंफलाश्रयम् ॥ इहलोकेपरेवापिकुरुतेसाधनेष्वपि ५७ शरीरादिमनःप्रोक्तंसुखंनानाविधंतथा ॥ ब्रह्मापिगम्यतेतेनयस्माद्ब्रह्ममतंततः ५८ संकल्पवान्पुमान्कुर्याद्व्यापारंमानसंततः ॥ वागिंद्रियसमुद्भूतंततःशब्दसमुत्थितम् ५९

खहेतुत्वेनप्रसिद्धोधर्मःप्रथमः यथायदनुभूतंतथातस्यभाषणरूपंसत्यंद्वितीयम् सम्यक्परोपकारकंयद्वचस्तद्रूपंसाधुतृतीयम् मनःप्रियंसद्योमनःप्रसादकंयद्वचस्तद्रूपंहृदयज्ञंचतुर्थं एतद्धर्मादिरूपं चतुष्टयम् तद्विपरीतमधर्मासत्यासाध्वहृदयज्ञरूपंचतुष्टयंपत्तद्रूपमिति ततःसर्वनामव्यवहारहेतुत्वादेषावाक्ब्रह्मत्वेनोपास्यानामवत् एतदुपासनस्यफलंतुपूर्ववन्नामोपासनवदेवेतिद्वयोरर्थः ५४ ५५ अथवागपेक्षयामनसोऽधिकत्वेतामाह अक्षेवेतित्रिभिः । द्वेअक्षेविभीतकफलेकुवलेबदरीफलेवाआमलकेवायथामुष्टिर्गृह्णातिस्वस्मिन्नंतर्भावयतितथामनोप्युक्तरूपांवाचंनामचएतद्द्वयंगृह्णा तिस्वस्मिन्नंतर्भावयतीत्यर्थः नहिमनसोऽभावेवागादिकंदृश्यतेइतिभावः ५६ मनसेति । यतोमनसाविचार्यैववेदाध्ययनंकर्मणांयागादीनांकरणमनुष्ठानंतथालोकद्वयवर्त्तिफलविषयकंतत्साध नविषयकंवाऽभिलाषंचकुरुतेइत्यर्थः ५७ शरीरादीति । शरीरमिंद्रियादिकंवायत्श्रुतावात्मशब्देनोक्तंतत्सर्वंमनएवतदन्वयव्यतिरेकानुविधानात् तथालोकशब्देनकर्मसाधनेनयदुक्तंतन्नानावि धंलौकिकंसुखमपिमनएव तथातेनमनसासंस्कृतेनब्रह्मपरंलभ्यतेइत्यतोपितन्मनोब्रह्ममतमित्यर्थः तथाचतस्यब्रह्मत्वेनोपासनंयुक्तमितिभावः ५८ संकल्पस्याधिक्यमुपपादयति संकल्पवानि तिपद्भिः । यउक्तरूपसंकल्पयुक्तःसएवमानसव्यापारंसर्वंकरोतिततोमानसव्यापारानंतरंचवाग्व्यापारंततोनामाख्यशब्दव्यापारंकरोतीत्यर्थः ५९

तत्रशब्दव्यापारेसकलःकर्मविधायकोवैदिकादिःशब्दसमूहोन्तर्भवतितत्रशब्दसमूहेचतत्प्रकाशकानिसर्वाणिकर्माणितिष्ठंतीत्याह शब्दइति ६० एवमिति । एतमुक्तपरंपरयासंकल्पएवसर्वेषांकर्मणांकारणंयतस्तेषामुत्पत्तिस्थितिसंहारेषुपंडितःकुशलइत्यर्थः ६१ स्वर्गादिकाइति । एवशब्दोभिन्नक्रमः तथाचस्वर्गादयोलोकाःपृथिव्यादीनिभूतानिचयच्चराचरंविश्वंसृजंतितद्विश्वसर्जनंसंकल्परूपेनिमित्तेसत्येवभवतीत्यर्थः ६२ एतत्स्फुटीकरोति वृष्टिरिति । लोकानांभूतानांचयेऽभिमानिनोदेवास्तेषांसंकल्पेनवृष्टिर्भवतिवृष्ट्याभिमानिदेवस्यसंकल्पेनचान्नंभवति । एवमग्रेपिदेवरूपेणसंकल्पसंबंधोबोध्यः तथान्नसंकल्पाद्भूतानांप्राणाःसेंद्रियाःप्रभवंतितेभ्योमंत्राःस्मृत्यारूढरूपेणभवंतितेभ्यःकर्माणिततःफलमपूर्वाख्यंजायते एवंक्रमेणसंपन्नादपूर्वाख्यकर्मफलात्स्वर्गादिभोक्ताभवेदित्यर्थः ६३ संकल्पइति । ततउक्तविधयाविश्वहेतुत्वादेवायंसंकल्पोब्रह्मभवति अस्यसंकल्पस्यतथोपासनान्निर्दुःखत्वाविनाशित्वनिरतिशयत्वैर्युक्तान्लोकान्स्वयमपितादृशोनिर्दुःखत्वादिशालीसन्नवाप्नोतीत्यर्थः ६४ अथचित्तस्यसंकल्पादाधिक्यमुपपादयति यदेतिपंचभिः । योविश्वकारणत्वेनोक्तःससंकल्पोपितदाभवतियदावर्णितात्मकसामान्यज्ञानरूपंचित्तंभवतिततःअ

शब्दऐक्यंसमायातिवैदिकःशब्दसंचयः ॥ तत्रकर्माणितिष्ठंतिसुखदानिशरीरिणाम् ६० एवंसंकल्पएवस्यात्कर्मणांकारणंसदा ॥ उत्पत्तौसंहृतौतद्वत्स्थितावपिचपंडितः ६१ स्वर्गादिकास्तथालोकाअपिभूतानिपंचवा ॥ संकल्पेसतिकुर्वंतिविश्वमेवचराचरम् ६२ वृष्टिरन्नंतथाप्राणामंत्राःकर्मचतत्फलम् ॥ क्रमेणजायतेकर्मफलात्स्वर्गादिमान्भवेत् ६३ संकल्पस्ततएवायंब्रह्मरूपउपासनात् ॥ अस्यलोकानवाप्नोतिनिर्दुःखानविनाशिनः ॥ स्वयंत्वतादृशोभूत्वासर्वातिशयवर्जितान् ६४ यदासामान्यविज्ञानंसंकल्पोपितदाभवेत् ॥ उक्तोयःकारणत्वेनसर्वस्यजगतोपिहि ६५ चित्तंततोत्रविज्ञेयंसंकल्पस्यापिकारणम् ॥ ब्रह्मसंकल्पवच्चात्रफलमुक्तंततोधिकम् ६६ सर्वज्ञोपियदाचित्तहीनोविद्वान्भवेदिह ॥ तदाऽवजानतेसर्वेह्यपितंतनयादयः ६७ एवंवदंतश्चेदेषसर्वज्ञश्चित्तवर्जितः ॥ कस्मात्ततोनसर्वज्ञश्चित्तशून्योजडोयथा ६८ चित्तवंतंनरंकिंचिज्जानन्तमपिमानवाः ॥ अंगीकुर्वंतिसततंशृण्वंतिचततोवचः ॥ लौकिकंवैदिकंवापिसंबंधान्विहितानपि ६९ स्वर्गादयस्त्रयोलोकाध्यायंतिवसभूतकाः ॥ गिरयोदेवतास्तद्वन्मनुष्याअपिसर्वतः ७०

न्वयव्यतिरेकाभ्यांसंकल्पस्यापिकारणंचित्तंब्रह्मविज्ञेयम् अत्रचित्तोपासनेसंकल्पोपासनवत्ततःसंकल्पोपासनफलादधिकंचफलंध्रुवत्वादिशालिलोकप्राप्तिरूपंभवतीतिद्वयोरर्थः ६५ । ६६ चित्तस्याधिक्यंलोकेपिप्रसिद्धमितिश्रुत्युक्तंवर्णयति सर्वज्ञोपीति । सर्वज्ञतयाप्रसिद्धोपिपुरुषोयदाचित्तेनानुसंधानलक्षणेनहीनोभवतितदातंसर्वेसुतादयोऽवजानतेअनादरंनयंति कीदृशाःसुतादयःएवंकथं यद्ययंसर्वज्ञस्तर्हिकस्माद्धेतोश्चित्तवर्जितोदृश्यतेततोजडवच्चित्तशून्यत्वान्नसर्वज्ञइतिद्वयोरर्थः ६७ । ६८ चित्ताभावेप्रशंसाव्यतिरेकोदर्शितोऽथान्वयमाह चित्तवंतमिति । किंचिज्जानन्तमपिनरंपूर्वापरानुसंधानलक्षणचित्तशालिनंसततंमानवाअंगीकुर्वंतिसाक्षित्वादौ तथाततश्चित्तवतोमुखाल्लौकिकंवैदिकंवावचःशृण्वंतिचतेनेतिशेषः तथातेनचित्तवताविहितान्संबंधान्गुरुत्वोत्तमर्णत्वादीनप्यंगीकुर्वंतीतिव्यवहितान्वयः ६९ अथचित्ताद्ध्यानाधिक्यमुपपादयति स्वर्गादयइतित्रिभिः । स्वर्गांतरिक्षभूमिसंज्ञास्त्रयोलोकाःपंचभूतानिचपर्वताश्चतद्वत्शमादिसंपन्नत्वेनदेवतारूपामनुष्याएतेसर्वेनिश्चलत्वेनस्थिताध्यायंतीवध्यानंकुर्वंतइवलक्ष्यंतइत्यर्थः तथाचसर्वैर्महद्भिरभ्यस्यमानत्वाद्ध्यानंप्रशस्तमितिभावः ७०

ध्यानस्यलोकेपिसत्फलत्वंप्रसिद्धमित्यन्वयव्यतिरेकाभ्यामाह मनुष्येष्विति । अत्रलोकेयेमनुष्येषुमहांतोगुणैःपूज्यतांप्राप्तास्तेध्यानवंतइवध्यानफललेशंप्राप्ताइवेतिविज्ञायंते इहजन्मनिजन्मांतरेवाध्यानंविनामहत्त्वंनभवतीतिभावः एतेनश्रुतौध्यानापादांशपदस्यध्यानस्यआपादोध्यानेनआसमंतात्पद्यमानंगम्यमानंफलंतदंशवंतइतिव्युत्पत्तिःसूचिता येषुमनुष्येषुअल्पाःक्षुद्राः तत्रहेतुगर्भविशेषणत्रयंपरेत्यादि कलहेअपकृतेअपकारेचोद्यतास्तेध्यानशून्यत्वादेवसदाविक्षिप्तचित्ताभवंति तथातादृशामहांतःपूज्यानभवंतियद्वद्ध्यानसंयुताःप्रभवःसामर्थ्यविशेषेणमान्यावर्ततइतिद्वयोरर्थः ७१ ७२ ध्यानाद्विज्ञानस्याधिक्यमुपपादयति यावदिति । यावान्वाचोविषयउक्तऋग्वेदादिरहृदयज्ञान्तवानपिशब्दात्तदधिकोपिविषयोविज्ञानस्यश्रुतौप्रोक्तइतिप्रथमदलार्थः तत्राधिक्यंदर्शयति अदनीयमिति । अदनीयंविविधमन्नंतद्रसंपड्विधंरसंचलोकयोर्व्यवहारजातंचविज्ञानादेवावगच्छतीत्यर्थः ततःप्रशस्तंविज्ञानंब्रह्मत्वेनोपास्यं तदुपासनाच्चविज्ञानेनशास्त्रार्थविषयकेनज्ञानेनव्यवहारकौशलरूपेणचसंपन्नानांलोकानांप्राप्तिर्भवतीत्यर्थः ७३ ७४ ततोपिबलाधिक्यमुपपादयति बलवानितिचतुर्भिः । एकोपिबलवान्शतसंख्यानपिविज्ञानयुतान्स्वस्यबलेनकंपयतीतिप्रसिद्धं तथाबलिष्ठएवभूमेःसंश्रयोधारकोभूपतिरितियावद्भवतीतिच वीरभोग्यावसुंधरेतिन्यायात् ७५ बलस्यशास्त्रोक्तप्रक्रिययापिप्राशस्त्यमाह बलवान्सर्वइति ।

मनुष्येषुमहांतोयेध्यानवंतइहात्रते ॥ मनुष्येषुचयेस्वल्पाःपरदूषणसूचकाः ॥ निंदाकरास्तथानित्यंकलहापकृतोद्यताः ७१ ध्यानशून्याःसदाक्षिप्तचेतसोनचतादृशाः ॥ महांतःप्रभवोयद्वद्वत्तंतेध्यानसंयुताः ७२ यावद्वाचाविजानातितावद्विज्ञानतोपिच ॥ अदनीयंरसंतद्वत्षोढाभिन्नमयंपुमान् ७३ लोकद्वयंचविज्ञानादवगच्छतिसर्वदा ॥ विज्ञानज्ञानसंपन्नान्लोकानेषसमाप्नुयात् ७४ बलवानेकएवायंशतंविज्ञानसंयुतान् ॥ बलेनकंपयेत्स्वस्यबलिष्ठोभूमिसंश्रयः ७५ बलवान्सर्वएवायमुत्तिष्ठतियतोयतः ॥ उत्तिष्ठन्परिचर्यायांगुर्वादेःशक्तिमान्भवेत् ७६ उपसत्तिंहिकुरुतेपरिचर्यारतोनरः ॥ उपसत्तितोद्रष्टाश्रोतामंतातथैवच ॥ बोद्धाकर्ताचविज्ञातापुमान्भवतिवैबलात् ७७ लोकत्रयंतथापंचभूतानिगिरयोपिच ॥ देवोद्यानानिभूतानिजंगमानिस्थिराणिच ॥ बलमाश्रित्यतिष्ठंतिबलंब्रह्मततःस्मृतम् ७८ दशरात्रंयदाश्नीयान्नैवकाश्चिद्बलान्वितः ॥ जीवन्मृतःसविज्ञेयोजायतेम्रियतेथवा ॥ सर्वेंद्रियाणांव्यापारान्विमुंचतिचमानसान् ७९ अन्नंप्राप्यैवबलवान्सर्वेंद्रियमनोयुतः ॥ व्यापारवान्भवेत्तेनबलादन्नमिहाधिकं ८० उपासनादितोगच्छेदन्नपानसमन्वितान् ॥ लोकान्पुमान्यतस्तस्मादन्नंब्रह्मेतिकीर्त्यते ८१

यतोहेतोर्बलवानेवयतःसंयतःसन्नुत्तिष्ठतिउद्यमशालीभवतितततोगुरुप्रभृतीनांसेवायांशक्तोभवतिततःपरिचर्यारतउपसत्तिंगुरुप्रभृतीनांसमीपगमनमप्रतिबंधेनकुरुतेततउपसत्तोरतःसन्द्रष्टाउपदेशकानांदर्शनस्यपरीक्षणरूपस्यकर्ताभवतिततस्तदुक्तार्थानांश्रोताततोमंताउपपत्तिभिस्तच्चिंतनकर्ताततोबोद्धाएवमेवेत्यवधारणकर्ताततः कर्ताविहितानुष्ठाताततोविज्ञाताफलानांसाक्षात्कर्ताचभवति एतस्याःपरंपरायाबलप्रयुक्तत्वाद्बलंप्रशस्तमितिद्वयोरर्थः ७६ । ७७ जगत्स्थितिहेतुत्वाच्चतत्प्रशस्तमित्याह लोकत्रयीति । यतस्त्रिलोक्यादिकंबलप्रभावादेवस्थितंततोबलंब्रह्ममतंब्रह्मत्वेनध्येयमित्यर्थः ७८ बलादपितत्कारणमन्नमधिकमित्याह दशेति । बलान्वितोपिदशरात्रमन्नालाभेसविक्षेपोनानाविक्षेपैःसहितोजीवन्मृतोवस्तुतोमृतोवाजायते यतइंद्रियव्यापारान्मानसव्यापारांश्चन्यजतीत्यर्थः ७९ अन्नंप्राप्येति । सएवचपुनरन्नप्राप्तौपूर्ववद्भवतितेनान्नस्यबलादधिकत्वंस्फुटमित्यर्थः ८० उपासनादिति । इतोन्नेब्रह्मदृष्टिरूपादुपासनादन्नादिसंपन्नानांलोकानांप्राप्तिस्तेनिरीयादिश्रुत्यंतरेप्युक्तातत्तोन्नस्यब्रह्मत्वंयुक्तमित्यर्थः ८१

अथातोजलानामाधिक्यंवर्णयति आपइतिचतुर्भिः । तासामपां ८२ अन्नाभावइति । वृष्टिप्रयुक्तान्नभावाभावयोःप्राणिनांवृद्धिक्षयपोर्दर्शनादन्नतोऽपामाधिक्यंस्फुटमित्यर्थः ८३ त्रिलोकाइति । ऊर्ध्वाधोमध्यभावेनत्रिविधानिखिलालोकास्तथातद्वर्तिनःसर्वेप्राणिनश्चान्नरूपापन्नजलरूपाएवस्युर्बोध्याः यतस्ततोजलेभ्योन्यज्जलनिरपेक्षंकिंचिन्नास्तीत्यर्थः ८४ आपोब्रह्मेति । यआपोजलानिब्रह्मेत्याकारेणोपास्तेसनिखिलान्कामान्प्राप्नुयात्सदातृप्तिंचेत्यर्थः ८५ अद्भ्योपितेजसोधिकतामुपपादयति तेजइतिद्वाभ्यां । तेजःप्रवर्षतिवृष्टिरूपजलानिसृजति किंकृत्वा संतापमूष्मरूपंप्रदर्शयित्वाततोविद्युतोनानाविधाःपुरोवातंपूर्ववायुंचसृष्ट्वेतिप्रसिद्धमित्यर्थः ८६ तथाध्यात्ममपितेजसोमहिमाप्रसिद्धइत्याह तेजस्वीति । तेजस्वीपुरुषःश्रीमत्त्वेनतमोदोषहीनत्वेनचप्रसिद्धस्ततोविदांविवेकिनांमतेतेजोत्रप्रभवेदित्यर्थः ८७ ततोप्याकाशोधिकस्तत्प्रभृतिविश्वाधारत्वादित्याह तेजसइतित्रिभिः । वायुःपुरोवातादिरूपस्तत्सहितात्तेजसआकाशोधिकः यंतस्तेजः प्रभृतिविश्वंतत्रतिष्ठतीति ८८ सर्वेंद्रियाणामिति । अध्यात्ममपिवागादिव्यापाराआकाशालंबनेनैवजनैःक्रियंतेतथासुखादिकर्मफलभोगश्चक्रियतेइत्यर्थः ८९ अवकाशेति । अवकाशोविस्तीर्णताप्रकाशःप्रभाताभ्यांसंपन्नान्कीर्तिशालिनश्चलोकान्सप्रयातियआकाशंब्रह्मत्वेनवेदउपास्तेइत्यर्थः ९० ततोपिस्मरपदोक्तायाःस्मृतेरध्यासहेतुतयाप्रसिद्धायाआधिक्यमाह स्मरणा

आपोयदाप्रजायंतेवृष्टिरूपास्तदाभवेत् ॥ अन्नमप्यधिकंतासामभावेनैवकिंचन ८२ अन्नाभावेइमेप्राणाव्रजेयुःप्राणिनांक्षयम् ॥ सतितस्मिन्हिवृद्धिंचतस्मादापोधिकाःस्मृताः ८३ त्रिलोकानिखिलाःसर्वेस्थिरजंगमसंयुताः ॥ आपएवान्नभूताःस्युर्नततोन्यद्धिकिंचन ८४ आपोब्रह्मेतियोवेदसकामान्निखिलानपि ॥ आप्नुयात्तृप्तिमांश्चायंभवत्येवनसंशयः ८५ तेजःसंतापमतुलंदर्शयित्वात्रसर्वतः ॥ विद्युतश्चपुरोवातंसृष्ट्वापश्चात्प्रवर्षति ८६ तेजस्वीतेजसायुक्तोदीप्यमानःस्वयाश्रिया ॥ तमोलेशेनरहितस्तेजोब्रह्मविदांभवेत् ८७ तेजसोवायुसहितादाकाशोभ्यधिकोयतः ॥ तेजोनानाविधंवायुर्विश्वंचात्रैवतिष्ठति ८८ सर्वेंद्रियाणांव्यापारानाकाशेनैवकुर्वते ॥ सुखंदुःखंतथाकाशेसर्वोजंतुःप्रयातिहि ८९ अवकाशप्रकाशाभ्यांसंपन्नान्कीर्तिभाजिनः ॥ आकाशब्रह्मविल्लोकान्प्रयात्येवनसंशयः ९० स्मरणादवगच्छंतिह्याकाशमपिमानवाः ॥ व्यापारानिंद्रियाणांचस्मरणादेवकुर्वते ९१ ससाधनंसुखंतद्वद्दुःखंचस्मरणात्पुमान् ॥ अवगच्छतिसर्वोयंयदुक्तंकर्मणःफलम् ९२ आशाविष्टःपुमान्सर्वंकुरुतेपुण्यपातकम् ॥ लोकद्वयेसुखंतद्वद्दुःखमेवससाधनम् ॥ लोकद्वयंसमाप्नोतिनिराशोनस्मरन्नपि ९३ आशांब्रह्मेतियोवेदतस्यकामामनोगताः ॥ सिद्ध्यंतिसत्यसंकल्पःपुमानेषभवेद्धिसः ९४ त्रयोदशैवंप्रश्नास्तेभूयोविपर्यईरिताः ॥ एतेसनत्कुमारेणनारदायातिधीमते ९५

दितिद्वाभ्यां । अनुभूतप्रपंचस्मरणादेवद्वैतोर्थतआकाशादिकंजगत्त्वगच्छंतिकल्पयंति इंद्रियव्यापारानप्यारभंतेइत्यर्थः ९१ ससाधनमिति । ससाधनस्यसुखादिरूपस्यकर्मफलस्यापिज्ञानंस्मृत्यधीनमतःस्मृतिराकाशादधिकातदुपासनफलंचतद्विषयेषुकामचाररूपंबोध्यमित्यर्थः ९२ ततोपिकामनारूपाआशाऽधिकेत्याह आशाविष्टइति । कामरूपाशाविशिष्टएवपुरुषःस्मृत्याकर्माणिकुरुतेतत्फलभोगायलोकद्वयेभ्रमतिच यस्तुनिराशोनिष्कामःसस्मरन्स्मृतिकर्त्ताअपिशब्दात्व्यापारांतरकर्त्तावानभवतीत्यर्थः ९३ एवंविश्वहेतोराशायाब्रह्मत्वेनोपासकःसर्वेप्सितसिद्धिंलभतेइत्याह आशामिति । स्पष्टं ९४ एवंनाम्नःकिंभूयइत्यादिप्रश्नगोचरास्त्रयोदशपदार्थावाचमारभ्याशांताःसनत्कुमारेणनारदायोक्ताइत्याह त्रयोदशैवमिति । भूयोधिकंतद्रूपेविषयेयेप्रश्नास्तेएतेईरिताःसमाहिताः ९५

फलानीति । यद्यपितत्तदुपासनजन्यानिफलान्यपिप्रलोभनायोक्तानितथापिएषनारदःमुनरांनिपुणःआशोपासनयासर्वकामितार्थप्राप्तिरूपंफलंश्रुत्वापिप्रसन्नंमुनिपुंगवंप्रतितस्मादाशारूपतत्त्वा दधिकंतत्त्वंपुनःपृष्टवानितिद्वयोरर्थः ९६ । ९७ प्रश्नोत्तरेदर्शयति आशायाइति । हेभगवन्आशायाःकिमधिकमित्येवंनारदेनोक्तःपृष्टोमुनिःसनत्कुमारआशायाःप्राणोऽधिकःसर्वैरात्मत्वे नदृश्यमानत्वादित्युक्तातत्रार्थेउपपत्तिंसंभावनाप्रयोजिकांयुक्तिमप्येतांवक्ष्यमाणरूपामुक्तवानितिद्वयोरर्थः ९८ । ९९ तामुपपत्तिंप्रपंचयति चक्रस्येत्यष्टभिः । यथारथचक्रस्यअरास्तिर्यक्काष्ठरूपानाभिसंज्ञंमध्यकाष्ठंतंस्थानंस्थित्याधारभूतंयेषांतेतथा तद्वत्सर्वंविश्वंप्राणाश्रयकमित्यर्थः १०० तत्रहेतुतयासर्वकारकरूपतामाह प्राणइति । देवदत्तोऽश्वेनगच्छतीत्यादिप्रयोगेषुयोगम नकर्त्तासप्राणरूपएवतस्यकरणभूतोऽश्वःकर्मभूतोग्रामश्चप्राणरूपएव तथासगांविप्रायददातीत्यत्रापिसर्वकारकरूपेणप्राणएवेत्येषास्थितिःसिद्धांतइत्यर्थः १०१ अत्रैवोदाहरणांतरमाह पितेति । तथापितृमातृब्राह्मणाचार्यादिपदार्थभूतःप्राणएवभवतियतःप्राणाद्भिन्नंलोकेकिंचिन्नास्तीत्यर्थः १०२ एतल्लौकिकान्वयव्यतिरेकाभ्यांसाधयति प्राणेसतीति । यदाप्राणेविद्यमानेसतिप्राणिनां पित्रादीनांदेहान्वचसापिक्षिपेत्तिरस्कुर्यात्तदातंतिरस्कर्त्तारंप्रत्येवंलोकवृत्तकुशलाःप्राहुः एवंकथं त्वंयस्यक्षेपंवाचिकंतिरस्कारंकरोषिअस्यत्वयावधएवकृतोयतउत्तमानांवधःशस्त्रानारब्धोऽयमधि

फलानितत्रतत्रापिकथितानिह्युपासनात् ॥ प्रलोभनायमुनिनातथाप्येषोतिधीधनः ९६ पुनरप्यधिकंतस्मात्प्रसन्नंमुनिपुंगवम् ॥ सर्वकामममाप्तितांफलंश्रुत्वा पिपृष्टवान् ९७ आशायाभगवन्किंचिदस्त्यत्राभ्यधिकंपुनः ॥ एवमुक्तोमुनिःप्राहह्याशातोभ्यधिकंपुनः ९८ प्राणंयत्रात्मबुद्धिःस्यात्प्रायःसर्वस्यदेहिनः ॥ उपपत्तिमपिप्राहसोप्येतांमुनिसत्तमः ९९ चक्रस्यनाभिसंस्थानाअरायद्वद्भवंतिहि ॥ तद्वत्सर्वमिदंप्राणसंस्थानमवधारय १०८ प्राणःप्राणेनलोकेस्मिन्प्राणमेव प्रयातिहि ॥ प्राणंददातिचप्राणःप्राणायैवेतिचस्थितिः १०१ पितामातातथाचार्योब्राह्मणःप्राणईरितः ॥ भ्रातास्वसास्नुषाजायापुत्रःसर्वेपिजंतवः ॥ प्राणएवात्रविज्ञेयःप्राणान्नास्तीहचापरम् १०२ प्राणेसतियदाकश्चिद्देहान्प्राणभृतांक्षिपेत् ॥ वचसापिचतंतत्रप्राहुरेवंहिलौकिकाः १९३ वधस्त्वयाकृतोह्यस्यक्षेपंयस्यकरोषिगो ॥ अशस्त्रोयंवधोनामज्ञेयउत्तमदेहिनाम् १०४ निर्गतेतुपुनःप्राणेविध्वाविध्वादहन्नपि ॥ शूलेनामुंपुण्यकृतंप्रवदंत्यखिलाअपि ॥ पितृमात्रादिरूपोतःप्राणएवनचापरः १०५ एवंसर्वेन्द्रियैर्जानन्बाह्यैराभ्यंतरैरपि ॥ अतिवादीपुमानेषभवत्येवनसंशयः ॥ प्राणमेषयतोब्रूतेसर्वातिशयरूपिणम् १०६ ब्रूयुस्तं केचिदेवंहनातिवादीभवान्हिकिम् ॥ तथाप्येवंनसन्नूयाद्विद्वत्तापन्हवंसदा १०७

क्षेपरूपएवप्रसिद्धः अतएवार्जुनेनगांडीवाधिक्षेपकर्तुर्वधप्रतिज्ञायुधिष्ठिरेतुंकारेणपूरितेत्युपाख्यायतेकर्णपर्वणीतिद्वयोरर्थः १९३ । १०४ निर्गतेइति । प्राणेनिर्गतेसत्यमुंपित्रादिदेहंशूलेनतीक्ष्णकाग्ररूपेणविध्वाविध्वादहन्नपियदिभवतितदातंदाहादिकर्त्तारंपुण्यकर्त्तारमेवलोकेवदंतीत्यन्वयव्यतिरेकाभ्यांप्राणएवपित्रादिशब्दाभिधेयइत्यर्थः १०५ एवमिति । बाह्यैश्चक्षुरादिभिराभ्यंतरैर्मनःप्रभृतिभिश्चव्यवहारकालेयएवंजानन्प्राणःसर्वकारकरूपइत्याकारकानुसंधानवान्भवतिसएषपुमानतिवादीबोध्यः यतःप्राणंसर्वेभ्योऽतिशयितंवदतीत्यर्थः अयंभावः लोकेपरंप्रति तवपिताहमितिवदन्किमतिक्रम्यवदसीत्युपालभ्यतेपरंतुसमुल्पोतिवादीनभवति आचार्यादीनांततोधिकानांशिष्यप्रमाणत्वात् पित्रादिसर्वात्मकप्राणरूपोस्मीतिदृढनिश्चयेनवक्तातुमुल्पोतिवादी सर्वातिशयशालिनःप्राणस्यात्मत्वेनवदनादिति १०६ ब्रूयुरिति । द्वितीयपादगतस्यनशब्दस्यतृतीयपादगतेनएवंशब्देनसंबंधः तथाचतंप्राणात्मविदंप्रतिहप्रसिद्धंयेयदिकेचिदेवंब्रूयुःपृच्छेयुः एवंकथं भवान्किमतिवादीभवतीति तथापिसप्राणात्मवित्नइत्येवमाकारंविद्वत्तायाअपन्हवंप्रच्छादकंवचोनब्रूयात्किंतुस्फुटमतिवादीभवामीत्येववदेदित्यर्थः १०७

एतावत्श्रुत्वानारदस्यतूष्णींभावंसहेतुकमाह एवमुक्तइतिद्वाभ्यां । एवमुक्तोनारदस्तूष्णींभूयप्रश्नादुपरराम निवृत्तोऽभूत् यतःप्राणात्परंतत्त्वंप्रष्टुमक्षमः तत्रहेतुरज्ञातत्वंसामान्यतोज्ञातमेवहिपृच्छयते तत्रहेतुगर्भंप्रमेयविशेषणंमनोवाचामगम्यमिति मनसोवचसांबोधहेतूनामगोचरमितितदर्थः ननुलोकतःकथंतन्नविज्ञातमित्यतउक्तंलोकस्याप्रसिद्धेरिति लोकाख्यस्यप्रमाणांतरस्याप्रसिद्धेरितितदर्थः तदुक्तंशारीरके नहिलोकोनामप्रमाणांतरमिति प्रत्यक्षादीनिप्रमाणान्येवहिमनोवागन्यतरव्याप्यानिसमाहृत्यलोकइत्याख्यायंते तथाचमनोवाचामगोचरस्यकथंततःप्रसिद्धिरितिभावः । अथनारदेनप्राणोपासनस्यफलमेवकुतोनपृष्टमित्याशंकांपरिहरति उपास्वेति । यदिमहामुनेःप्राणमुपास्वेत्युक्तिःस्यात्तदातत्फलंकिमित्युक्तिःसदुक्तिःस्यादत्रतुवैपरीत्यात्फलंप्रतिफलमभिलक्ष्ययाउक्तिःप्रश्नरूपासादुरुक्तिःस्यान्निरालंबनत्वादित्यालोचयन्निितिशेषः १०८ । १०९ ततःकिंवृत्तमित्याकांक्षायामाह तूष्णींभूतमिति । तंनारदंप्रतिकरुणाप्लुतचित्तोभगवान्स्वयमेवापृष्टोपिप्राणादधिअधिकंपरंनिरतिशयंयत्तत्त्वंतत्प्राहेत्यर्थः ११० कथमाहेत्याकांक्षांपूरयति नारदेति । हेनारदप्राणविज्ञानादेवातिवादिताभवतीतिमामंस्थानमंतव्यंनावधारय । ततोधिकस्याप्यवशेषात् किंतुएषएवातिवादीमुख्योज्ञेयोयःसततंसत्यंब्रूतेइत्युत्तरात्सत्यपदानुषंगेणार्थः १११ अत्रसत्यपदार्थोब्रह्मरूपोजिज्ञासाप्रतीक्षःयामनस्येवंमुनिनानिहितइत्याह सत्यमुक्तमिति ।



एवमुक्तोमनोवाचामगम्यंप्रष्टुमक्षमः ॥ अज्ञातत्वेनलोकस्याप्रसिद्धेरपिनारदः १०८ उपास्वेत्युक्तिशून्यत्वाद्दुरुक्तिःस्यात्फलस्यच ॥ तूष्णींभूयततःसोपिप्रश्नादुपररामह १०९ तूष्णींभूतंतुतंवीक्ष्यभगवान्कृपयान्वितः ॥ नारदंस्वयमेवाहप्राणादधिपरंहियत् ११० नारदप्राणविज्ञानान्मामंस्थाअतिवादिताम् ॥ एषएवातिवादीस्याद्योब्रूतेसततंपुमान् १११ सत्यमुक्तंपरंब्रह्मभूमानंसुखरूपकम् ॥ नामादिकंतथाप्राणपर्यंतंयद्विकीर्तितम् ११२ इत्यभिप्रायवान्प्राहनारदंपुनरेवसः ॥ सत्यंत्वयाविजिज्ञास्यमविचार्यंनकिंचन ११३ कृतकृत्यतयास्थेयंपुरेवाहाथनारदः ॥ षड्वारमेवमाहैतंविज्ञानादिषुसप्रभुः ॥ पृष्टवान्सोपितेनोक्तस्तंतमर्थंतदामुनिः ११४ ज्ञातुमिच्छाम्यहंसत्यंयत्त्वयापरिकीर्तितम् ॥ सत्यवच्चाखिलंभूयोविज्ञानादिसपृष्टवान् १५ सत्यंगम्यमिहप्रोक्तंसर्वदासुखरूपकम् ॥ गमकास्तुपरेसर्वेविज्ञानाद्याःप्रकीर्तिताः ११६

सत्यंसत्पदार्थंपरंब्रह्मवक्ष्यामीतिशेषः । कीदृशंपरंब्रह्म उक्तंपूर्वाध्यायेवर्णितंसुखात्मकंभूमरूपेणवक्ष्यमाणंच तथायद्ब्रह्मनामादिप्राणपर्यंतंविश्वरूपेणकीर्तितं व्याख्यास्यमानायामात्मनःश्रुतावित्यर्थः इत्येवंविधाभिप्रायवान्महामुनिर्नारदंप्रत्येवमाह एवंकथं हेनारदत्वयासत्पदार्थभूतंवस्तुविजिज्ञास्यमधिकारिणामवश्यविचार्यमविज्ञायकृतकृत्यतयानस्थेयंनस्थातव्यमिति अथएवंविधोक्तेरनंतरंनारदःपुनरेवपूर्वंयथापृष्टवांस्तथाआह सत्यंज्ञातुमिच्छामीत्याकारंप्रश्नमकरोदितिद्वयोरर्थः १२ । १३ यथासत्यविषयाजिज्ञासानारदस्योत्थापितातथाविज्ञानमननश्रद्धानिष्ठाकृतिसुखभूमपिपदसुजिज्ञासोत्थापितेत्याह षड्वारमिति । एवंयथासत्यजिज्ञासोत्थापकंवाक्यमुक्तंतथाविज्ञानादिषुषट्सुजिज्ञासाजनकंवाक्यंषड्वारमेतंनारदंप्रत्याहउक्तवान्प्रभुःसनत्कुमारः तत्तश्रुत्वानारदःषड्वारंप्रश्नमकरोदित्यर्थः ११४ सत्यगोचरप्रश्नंपूर्वंकृत्याकृतानांषट्प्रश्नानांप्रकारंदर्शयति ज्ञातुमिति । अहंसत्यपदार्थंज्ञातुमिच्छामीत्येवंसत्यंपृष्ट्वापुनर्विज्ञानादिपदार्थेपुप्रश्नंकृतवान्सनारदइत्यर्थः ११५ तत्रपौनरुक्त्यपरिहारायप्रश्नविषयाणांपरस्परंविशेषमाह सत्यंगम्यमिति । प्रथमप्रश्नविषयीभूतंसत्यंगम्यमुपेयमेव परेद्वितीयादिषट्प्रश्नविषयाविज्ञानादयस्तुगमकाःपूर्वपूर्वप्राप्तिसाधनत्वेनैवकीर्तितादतिविशेषान्नपुनरुक्तिरित्यर्थः अत्रेदमपरंध्येयं सुखस्यकाम्यमानतारूपेणकृतिप्रयोजकस्यसाधनत्वंसिद्धरूपस्यतुसत्यभावेनोपेयत्वमेवेति ११६

अथविज्ञानादीनांस्वरूपाणिपूर्वपूर्वप्राप्तिसाधनतांचदर्शयति ज्ञानश्चेवेतित्रिभिः । योहिसत्यस्यस्वरूपंज्ञानचावधारयन्भवतिसएवसत्यंब्रह्मतत्त्वंस्फुटंवदतिनान्यइत्यतःसत्यवदनेविज्ञानंप्रत्यक्षप्रमा रूपंमेवहेतुरित्यर्थः सम्यग्विज्ञानस्यहेतुर्मननंप्रमेयासंभावनावारकयुक्त्यनुसंधानरूपमित्याह मननादिति ११७ मननस्यापिहेतुरुपदेशविश्वासरूपाश्रद्धेवतांविनाश्रुतवेदांतानामपिमननेप्रवृ त्त्यदर्शनादित्याह श्रद्धवानेवेति । श्रद्धायाअपिकारणंप्रमाणासंभावनावारकयुक्तिचिंतनरूपानिष्ठेत्याह तात्पर्येति । तात्पर्यावधारणहेतवोयुक्तयस्तात्पर्ययुक्तयस्ताश्चित्तेमनसियस्यसतथा विधएवश्रद्धालुर्भवेदित्यर्थः ११८ तस्यानिष्ठायाहेतुःसाधनानांयज्ञादीनांबहिरंगाणांशमादीनामंतरंगाणांचानुष्ठानरूपाकृतिरेवेत्याह कर्तेवेति । कर्मणांद्विविधसाधनानांयःकर्तासएवचित्त शुद्धयेकाग्र्याभ्यांसंपन्नोवेदतात्पर्यावधारणेनसहितोभवेदित्यर्थः तस्याःकृतेरपिहेतुःसुखकामनेवेत्याह कर्तापीत्यादिना । साधनानांकर्तापिसएवभवतियःसुखलक्षणंपुरुषार्थंकामयतेनान्य इत्यर्थः दुःखाभावस्तुनस्वतःपुरुषार्थःसुखाभिव्यक्तिसाधनत्वेनैवेप्सितत्वादितिभावः ११९ एतावत्श्रुत्वानारदःसुतरांविरक्तःसांसारिकंसुखंदुःखपक्षेनिक्षिपन्मुख्येसुखपदार्थेजिज्ञासामा वेदयति विज्ञेयमितित्रिभिः । क्षेमवर्तिनाक्षेमंसदास्तित्वमितिकामनांचेतसिवर्तयताभुक्तत्त्वमवश्यंविज्ञेयं नचतस्यसंसारेसत्वंतस्यदुःखमयत्वादित्याह दुःखमेवेति १२० एतदेवस्फुटयति

ज्ञानश्चेवचसर्वोयंसत्यंब्रूतेनचान्यथा ॥ मननात्सर्वएवायंविजानातितथैवच ११७ श्रद्धावानेवमनुतेनकदाचिद्धिनास्तिकः ॥ तात्पर्ययुक्तिचित्तःसन्श्रद्धावा न्नुभवेत्पुमान् ११८ कर्तैवकर्मणांलोकेपुमांस्तात्पर्यसंयुतः ॥ भवेत्कर्त्तापिलोकेस्मिन्सुखार्थीनापरःपुमान् ११९ विज्ञेयंचसुखंतद्वत्सर्वदाक्षेमवर्तिना ॥ दुःख मेवात्रविज्ञेयंयःसुखंसंमतोभवेत् १२० नहिवैषयिकंनामसुखंभवतिवस्तुतः ॥ आदावंतेचयद्दुःखंमध्येताद्धिकुतःसुखम् १२१ ततोत्रमोहमात्रेणसुखंवैषयिकंसु खम् ॥ दुःखमेवव्रणेयद्वत्सुखंशस्त्रंप्रजायते १२२ एवमुक्तेसुखेपृष्टेसुखमाहमहामुनिः ॥ देशतःकालतोयच्चवस्तुतश्चकदाचन ॥ परिच्छेदंनयात्येतत्सुखमुक्तंमनी षिभिः १२३ निखिलैर्यत्परिच्छेदैर्वर्जितंभूमशब्दितम् ॥ सुखंतदेवविज्ञेयमितरद्दुःखमानितम् १२४ भूमानंचसदैवत्वंविजानीहितपोधन ॥ इत्युक्तेप्रष्टवा न्सोपिभूमानंनारदोमुनिः १२५ उक्तवांश्चततस्तस्मैपरिच्छेदविवर्जितम् ॥ सनत्कुमारोभगवान्पृच्छतेनारदायहि १२६ स्वात्मनोव्यतिरिक्तंहियत्रनान्यत्प्र पद्यते ॥ इंद्रियैर्गोचरैर्बाह्यैःसभूमासुखरूपभाक् १२७

नहीत्यादिना । यदिसांसारिकंसुखंस्यात्तर्हितद्विषयोगादिकालेदुःखतांनगच्छेत् ‘ नहिस्वभावोभावानामन्यथात्वंप्रपद्यते’ इतिन्यायविरोधादितिभावः १२१ फलितमाह ततइति । मोहोऽवि द्यातन्मात्रेणप्रयुक्तंवैषयिकसुखस्यदुःखरूपस्यसुखत्वंयथादुःखरूपमपिशस्त्रप्रहरणंपरिपक्वव्रणेप्रयुक्तंसुखवद्भासतेइत्यर्थः तथाचवास्तवंसुखंवक्तव्यमितिनारदाशयः १२२ एवमिति । उक्ते कृतिहेतुतयासनत्कुमारेणवर्णितेसुखेनारदेनैवंपृष्टेसतिभगवान्सनत्कुमारःसुखलक्षणमुक्तवानितिप्रथमदलार्थः । लक्षणमभिनयति देशतइति । देशादिपरिच्छेदैर्हीनंवस्तुसुखमित्युक्तमित्यर्थः १२३ एतदेवस्फुटयति निखिलैरिति । यद्वस्तुसर्वपरिच्छेदहीनत्वेनहेतुनाभूमशब्देनोक्तंतद्रूपमेवसुखंनेतरत्यतोदुःखत्वेनरूपेणमानितंमानेनगोचरीकृतमित्यर्थः १२४ भूमानमिति । हेतपोधननार दयदिसुखंनिर्णेतुमिच्छसितर्हिभूमपदार्थंजिज्ञासस्वेत्येवंमहामुनिनोक्तस्तस्मिन्सनारदोभूमपदार्थमेवपप्रच्छेत्यर्थः १२५ तस्मैपृच्छतेनारदायभूमलक्षणमुक्तवानित्याह उक्तवानिति १२६ भक्तिप्रधानो भूमशब्दःपरिपूर्णवस्तीतिसूचयंस्तल्लक्षणमाह स्वात्मनइति । यत्रतत्त्वेप्रादुर्भूतेस्थितःसन्विद्वान्स्वस्माद्भिन्नंकिंचिदपिचक्षुरादिभिर्नपश्यतीतिद्वितीयाभावात्तत्त्वंभूमपदार्थःसुखशब्दार्थइत्यर्थः १२७

एतदेवव्यतिरेकमुखेनाह आत्मनइति । यत्रपदार्थेबुद्ध्यारूढेसतिस्वात्मनोव्यतिरिक्तंकिंचिदपिभातितदल्पंदुःखरूपमित्यर्थः 'द्वितीयाद्वैभयंभवति'इतिश्रुत्यंतरादिनिभावः १२८ तत्रयद्भूमाख्यंतत्त्वंतन्मरणोपलक्षितसर्वविकारहीनमितरदल्पंतुविकारास्पदमित्याह मरणादीति । समाक्रांतमास्पदीकृतम् १२९ अस्यभूम्नोनिरतिशयत्वादेतदात्मदर्श्येवमुख्योतिवादीनेतरःप्राणाद्युपदर्शीप्राणादीनामतिशयस्यसापेक्षत्वादित्याह अयंभूमेति । तस्मादतिवादित्वहेतोः अयमवश्यंज्ञातव्यः १३० अस्यभूम्नःसाधारत्वेपरिच्छेदापत्त्यास्वरूपहानिर्निराधारत्वेतुकथंबुद्ध्युपारोह इतिचिंताव्याकुलस्यनारदस्यभूमाधारगोचरंप्रश्नंदर्शयति इत्युक्तइति । इतिपूर्वोक्तप्रकारेणउक्तउपदिष्टःसनारदोभूम्नआधारंसनत्कुमारंप्रतिइत्थंपृष्टवान् इत्थंकथं हेभगवन्सभूमाकस्मिन्नाधारेप्रतिष्ठितःस्थितिंप्राप्तइतितेननारदेनउक्तइत्थंपृष्टःसनत्कुमारस्तुकिंव्यवहारमात्रोपयोगीतस्याधारःपृच्छ्यतेवास्तवोवाइतिविकल्प्यतत्राद्येमायादिसकलप्रपंचरूपात्तद्विभूतिरेवमहिमपदोक्तात्स्याधारइत्याशयेनस्वेमहिम्नीत्युत्तरंददावित्यर्थः ३१ नचतस्यस्वरूपहानिर्महिम्नस्ततोभेदाभावादित्याह महिमेति । विभिन्नइत्यस्यैवविवरणंपृथगिति । लोकेयथादेवदत्तस्यविभूतिर्गवाश्वक्षेत्रादिरूपादेवदत्तात्पृथग्भूताप्रसिद्धातदाश्रितश्चदेवदत्तउच्यतेतथात्रनमंतव्यंयतोऽयंभूमसंबंधीमहिमाततोभूम्नःसकाशाद्भिन्नोनभवतीत्यर्थः ३२ कथंतर्ह्यभेदेआधाराधेयव्यवहारइत्याशंक्यस्वयंदासास्तप

आत्मनोव्यतिरिक्तंतुयत्रकिंचित्प्रपद्यते ॥ बाह्येंद्रियैश्चमनसातदल्पंदुःखमीरितम् १२८ मरणादिविहीनोयंभूमोक्तसुखरूपभाक् ॥ मरणादिसमाक्रांतमल्पमुक्तंमनीषिभिः २९ अयंभूमायदाज्ञातोह्यतिवादीतदापुमान् ॥ भवेन्नचान्यथातस्माज्ज्ञातव्यःसर्वदाद्भिः ॥ अतिवादीपुमाँल्लोकेभवेन्नान्यःकथंचन १३० इत्युक्तोनारदोभूम्नआधारंपृष्टवान्पुनः ॥ सनत्कुमारमित्थंसकस्मिन्नेषप्रतिष्ठितः ॥ भगवन्निति तेनोक्तःस्वेमहिम्नीतिसोब्रवीत् १३१ महिमालोकवन्नायंविभिन्नोस्तिततःपृथक् ॥ गवाश्वादिर्यथालोकेदेवदत्तात्पृथक्स्मृतः १३२ किंतुस्वात्मैवमहिमास्वात्मनःसुखरूपिणः ॥ भूम्नःसर्वपरिच्छेदरहितस्तत्रसस्मृतः ३३ नान्यत्रस्वस्वरूपात्सभूमोक्ताद्युपतिष्ठते ॥ स्वप्रतिष्ठस्ततःसोयंप्रतिष्ठारहितःस्मृतः १३४ दशदिक्षुसएवायंभूमातिष्ठतिसर्वदा ॥ तत्पदार्थोत्रतत्रैतद्विश्वंसदसदात्मकम् १३५ अध्यस्तंदेशकालादिसर्वभेदविवर्जिते ॥ गंधर्वनगरंयद्वद्गगनेत्यंतनिर्मले ॥ अतएवजगत्सर्वंसएवपरिगीयते १३६ अयंभूमाहमस्मीतिज्ञातव्योमुक्तिमिच्छता ॥ अहंशब्दादहंकारोयद्यप्येषप्रतीयते ॥ तथापिलक्षयेदेषआत्मानंसदृशत्वतः १३७

स्विन्नइत्यादिवद्विकल्पवशात्तदुपपत्तिरित्याशयेनाह किंत्विति । सुखरूपिणोभूम्नोयःसर्वपरिच्छेदरहितःस्वात्मास्वरूपंसएवस्वात्मसंबंधीमहिमाभवतितत्रस्वरूपभूतेमहिम्निभूमाप्रतिष्ठितत्वेनस्मृतोविकल्पदृष्ट्येतिशेषः ३३ वास्तवस्तदाधारस्तुनास्तीत्याह नान्यत्रेति । स्वस्वरूपादुक्ताद्दर्शितादन्यत्रवस्तुतोभिन्नेआधारेयतोभूमानावतिष्ठतेततःसभूमाविकल्पांगीकारेणस्वप्रतिष्ठोवाच्यः विकल्पपरित्यागेनप्रतिष्ठयाआधारेणरहितोवावाच्यइत्यर्थः ३४ कथंनिराधारस्यबुद्ध्युपारोहइत्याकांक्षांशमयन्सएवेत्यादिवाक्यस्यप्रथमंतत्पदार्थरूपेणभूम्नोबोधादेशकस्यार्थमाह दशदिक्ष्विति । पूर्वादयश्चतस्रःकोणैर्युक्ताःसहाधरोर्ध्वाभ्यां दशसंमितादिशस्तुइत्युक्तासुदशदिक्षुयावत्किंचित्कालत्रयेस्थितंतत्सर्वरूपेणभूमैवतिष्ठतीत्यर्थःअत्रसएवाधस्तादित्यादिवाक्येतत्पदार्थउक्तइतिशेषः यतस्तत्पदार्थभूतेभूम्निसमस्तंजगद्गगनेगंधर्वनगरवत्कल्पितमितिद्वयोरर्थः तथाचसर्वाधिष्ठानतानुसंधानेनप्रथमंभूमाबुद्धावारोहणीयइतिभावः ३५ । ३६ ततस्ताटस्थ्यवारणायाहंपदोक्तत्वंपदार्थरूपेणभूमातथासर्वदिग्गतत्वेनानुसंधेयइत्याह अयमिति । अयंसर्वगतोभूमाअहमस्मीत्येवंज्ञातव्यः नन्वहंशब्दस्यपरिच्छिन्नाहंकारविशिष्टवाचकस्यकथंभूम्नियोगइतिचेत्तात्पर्यमूलकयागौणलक्षणयेत्याह अहंशब्दादिति । यद्यप्यहमितिशब्दादहंकारःप्रतीयतेतथाद्विवाच्यार्थस्याहंकारस्ययत्सदृशत्वंवक्ष्यमाणरूपंतेननिमित्तेनभूमानमेषोहंशब्दःसंलक्षयेत्लक्षणयावोधयेदित्यर्थः १३७

अहंकारात्मनोःसादृश्यमेवाभिनयति सर्वेदिक्ष्विति । सर्वेदिग्गताःसार्वकालिकाश्चजीवादेहाभिव्यक्तोप्रथममहमित्येवानुभवंतःसंतोवदंतिआभिवदनादिव्यवहारंकुर्वंति ततःसर्वजीवव्यवहाराणां निदानत्वादहंकारोयथादिग्जातंभूतजातंचव्याप्यस्थितस्तथातदाश्रयत्वेनजीवात्मापिदिग्जातादिकंव्याप्यस्थितोज्ञायतेइतिद्वयोरर्थः १३८ । १३९ एवंविधाहंकारस्यचिच्छायाव्याप्तस्यवाच्यको हंशब्दऐक्यलक्षणवाक्यार्थनिर्वाहायसर्वान्तरत्वलक्षयंजीवस्यशुद्धंस्वरूपमात्मशब्दप्रतिपाद्यंलक्षयतीत्याह अहंशब्देनेति । जीवात्माजीवस्यविशिष्टरूपस्यात्माशुद्धंरूपंयस्यभूम्नासहतादात्म्यमैक्यंमहावाक्येनप्रापणीयंतस्याहंशब्दोलक्षकइत्यर्थः १४० आत्मादेशादिवाक्येनमहावाक्यार्थानुभवोऽभिनीयतेइतिदर्शयंस्तद्वतोजीवन्मुक्तिबोधकानामात्मरत्यादिपदानामर्थमाह आत्माहमिति । यथामनोबुद्धींद्रियैर्व्यवहरंतोऽज्ञाःस्वस्यमनुजत्वंप्रतिपद्यंतेसंदेहविपर्ययपरिहारेणसदानुभवंतिएवंयोहंकाराद्युपाधीन्विस्मृत्यात्मनोभूम्नासहैक्यंप्रतिपद्यतेसआत्मन्येवरत्यादिशालीभवतीत्युत्तरेणाभिसंबंधः १४१ जीवन्मुक्तस्यव्यवहारशास्त्रचिंतनभेदेनद्विविधायांव्युत्थानदशायांयदात्मचिंतनंतद्रतिक्रीडापदाभ्यांगौण्यावृत्त्यानिदर्शितमित्याशयेनाह आत्मन्येवेति । सविद्वानध्यात्मशास्त्रचिंतनकालेआत्मन्येवक्रीडन्बाह्यसाधनोपचितंविहारसुखमिव । प्राप्तोभवतियथाबालकगोष्ठ्यांबालकइत्यर्थः स्नानभोजनादिकालेप्यत्रात्मन्येवरतिंचेतसःसक्तिंधारयन्भवति यथावा

सर्वदिक्षुस्थिताजीवायेभूतायेचभाविनः ॥ वर्ततेयेचतेसर्वेप्यहमेववदंतिहि १३८ अहंकारस्ततोयद्वज्जीवात्मैषव्यवस्थितः ॥ दिग्जातंभूतजातंचतद्वद्व्याप्यव्यवस्थितः १३९ अहंशब्देनजीवात्मासर्वोपाधिविवर्जितः ॥ लक्ष्यतेसर्वदायोयंभूम्नातादात्म्यमाव्रजेत् १४० आत्माहंभूमरूपोस्मीत्येवंयःप्रतिपद्यते ॥ मनसापिधियासर्वैकरणैर्मनुजत्ववत् १४१ आत्मन्येवचसक्रीडन्बालकेष्विवबालकः ॥ अत्रैवरतिमागच्छन्युवत्यामिवकामुकः १४२ स्त्रीपुंसयोर्हिमिथुनंभवेत्तदितरेतरम् ॥ विषयानंदहेतुर्यस्तद्वदात्मनिसर्वदा ॥ मिथुनत्वंतथानंदोविषयप्राप्तिसंभवः १४३ अवगच्छन्हिनिर्द्वैतंसर्वदुःखविवर्जितः ॥ स्वराट्परानपेक्षःसन्विराडिवभवेद्विसः ॥ तस्यसर्वेषुलोकेषुकामचारश्चसर्वदा १४४ एवंयेनविदुर्मंदाभूमात्मानंविमोहिताः ॥ पराधीनाःक्षीणलोकाःस्वेच्छाचारविवर्जिताः ॥ जायंतेचम्रियंतेचसततंदुःखजीविनः १४५

कामीविदेशादागतोपिकांतायांमानसव्यापारंवहतितद्वदित्यर्थः १४२ सविकल्पनिर्विकल्पभेदेनद्विविधेसमाधौतुयदात्मचिंतनंतन्मिथुनानंदपदाभ्यांनिदर्श्यतेइत्याशयेनाह स्त्रीपुंसयोरिति । यथा सर्वव्यवहारंपरिहृत्यात्रस्थितयोःस्त्रीपुंसयोर्मिथुनत्वंमिथुनीभावःपरस्परंविषयानंदहेतुत्वेनप्रसिद्धस्तथाध्यातृध्येयभावेनमिथुनत्वमात्मन्येवास्यसविकल्पकसमाधिकालेआनंदहेतुर्भवतीत्यर्थः यथाचगांधर्वादिविषयप्राप्त्यनंतरंतत्फलस्यानंदस्यानुभवोनिर्विकल्पकःप्रसिद्धःपरीक्षकाणां तद्वदस्यविदुषोनिर्विकल्पकसमाधिकालेनिरतिशयानंदानुभवआत्मन्येवभवतीत्यर्थः १४३ तत्रहेतुभूतं परानपेक्षत्वंस्वराट्पदेननिरूप्यतेइतिदर्शयन्स्वराट्पदार्थमाह अवगच्छन्निति । हियतोनिर्द्वैतंस्वरूपमवगच्छन्साक्षादनुभवन्जीवन्मुक्तः सर्वदुःखराहित्येपरानपेक्षःसन्विराट्समष्ट्यभिमानीश्वरस्तत्स्वराट्त्वेनैवराजनशीलोभवतितथातस्यविदुषःसर्वात्मत्वेनसर्वेषुलोकेषुसत्कर्मफलेषुकामचारःअप्रतिबन्धेनप्राप्तिरूपोभवतीत्यर्थः १४४ उक्तविज्ञानहीनानामनर्थंततिमाह एवमिति । येउक्तविधयाभूम्नआत्मानंदस्वरूपमद्वैतलक्षणंनविदुःकिंतुभेदमेवविदुर्जानंतिविमोहवशात्तेपराधीनाःस्वभिन्नत्वेनकल्पितानांराजादिरूपप्रभूणांवशेस्थिताःक्षीणाअंतवंतोलोकायेषांतेतथाविधाःस्वातंत्र्यहीनाश्चपुनःपुनर्जननमरणादिकंप्राप्नुवंतीति १४५

उक्तात्मविदस्तुईश्वरभावेनविश्वोपादानत्वमपिभवतीत्याकारमात्मनःप्राणइत्यादिवाक्यस्यार्थमाह एवंविजानतइति । भूमात्मानंसाक्षादनुभवतःपुंसआत्मनःस्वरूपान्नामादीनिप्राणांतानि पंचदशतत्त्वानिस्रक्सर्पन्यायेनजायंतेइति १४६ एतेनशास्त्रयोनित्वंपरिशिष्टविश्वयोनित्वंचभवतीतिसूचितमितिदर्शयन्नाह मंत्रेति । सकर्मकाःकर्मभिर्यागादिभिस्तत्प्राप्यैःफलैश्चसहिताः स्फुटमन्यत् १४७ उक्तविद्याफलप्रदर्शकःश्लोकोपिवोध्यइत्याह अथात्मनइति । विज्ञानेतत्फले श्लोकंमंत्रं १४८ तंपठति पश्यइति १४९ अस्यार्थमाह पश्योजीवइतिषड्भिः । दृशधातोः शप्रत्ययेपश्यादेशेचसतिनिष्पन्नंपश्यपदंजीवात्मनोवाचकं तस्यसकलसंसारस्यमोक्षस्यचद्रष्टृत्वादित्यर्थः १५० मृत्युपदेनचमरणोपलक्षिताजन्मादयःशरीरधर्माउक्ताःपरंतुव्याधिःशरीरधर्मोप्यनेननोपलक्ष्यतेतद्वाचकस्यरोगपदस्यपृथक्तत्वादित्याह मृत्युरिति १५१ रोगपदार्थमाह रोगइति । रसआहारपरिणामस्तस्ययद्विपाकेपचनेऔदार्याग्निनाक्रियमाणेवैषम्यंतारतम्येनसंबंधस्तस्मान्निमित्ताद्योजायतेज्वरादिःसरोगपदेनोक्तः अस्यमृत्युपदेनासंग्रहेहेत्वंतरमाह अवस्थानमिति । चिरावस्थानरूपंविशेषमपेक्ष्याभिप्रेत्यसरोगोमृत्युपदभिन्नपदोपन्यासेनोक्तइत्यर्थः जन्मादयस्तुनचिरस्थायिनइतिमृत्युपदेनाचिरस्थायिबोधकेनतएवसदृशालक्षितुंशक्याइतिभावः १५२ दुःखपदार्थमाह दुःखमिति । चतुर्विधदेहानामाधाराधेयभावसंबंधेनसंबंधिन्यामत्रनाना

एवंविजानतःपुंसआत्मनोभूमरूपिणः ॥ नामादिप्राणपर्यंतंजायतेस्रजिसर्पवत् १४६ मंत्रब्राह्मणरूपायेवेदास्तेपिसकर्मकाः ॥ जायंतेकिंबहूक्तेनविश्वंसदसदात्मकं ॥ जायतेसकलंयद्वद्गंधर्वनगरंहिखात् १४७ अथात्मनोत्रविज्ञानेश्लोकमेतंपठंतिहि ॥ वैदिकाःसर्वदुःखानामभावेसर्वदेहिनां १४८ पश्योमृत्युंनपश्यतिनरोगंनोतदुःखतां ॥ सर्वंहिपश्यःपश्यतिसर्वमाप्नोतिसर्वगः १४९ पश्योजीवइतिप्रोक्तःसपश्येत्सर्वमेवयत् ॥ शुभाशुभंचसंसारमोक्षंचस्वचितेर्बलात् १५० मृत्युर्मरणमित्युक्तंधर्मजातंशरीरगम् ॥ जन्मादिकंहिकालेनजातंयद्व्याधिवर्जितम् १५१ रोगोरसविपाकस्यवैषम्याद्यःप्रजायते ॥ अवस्थानमपेक्ष्यैवंसउक्तःपंडितैःसदा १५२ दुःखंदेहेनसंबंधोनानाधर्मवतासदा ॥ चतुर्विधानांभूतानांबुद्धावत्रविभेदिनाम् १५३ सर्वमात्मनिसंप्रोक्तमध्यस्तंसदसद्वपुः ॥ अध्यस्तत्वेनविज्ञानंतस्यनस्याद्विलोकनम् १५४ प्राप्तिश्चस्वात्मनोज्ञानात्तदनन्यत्वमीरिता ॥ वेदार्थःसकलोप्यस्मिन्लोकेवेदसमीरिते ॥ अस्तियस्मादतस्तस्यविज्ञानात्सर्वविद्भवेत् १५४ आत्मविज्ञानसंपन्नःस्वात्मनोमाययासदा ॥ नानारूपोपिचैकात्माभवेद्भूमस्वरूपतः १५६

विशेषशालिन्यांबुद्धौप्रतिबिंबितत्वेनविभेदिनाविविधभेदवतांजीवानांयोनानाजन्मादिधर्मवतादेहेनसंबंधोऽहंममाध्यासरूपःसएवदुःखमित्यर्थः १५३ एवमुपनिषत्पूर्वार्द्धगतपदार्थाउक्ताअथतेषामदर्शनेहेतुरध्यस्तत्वावगाहनरूपंसर्वदर्शनमित्याकारकंतृतीयपादार्थमाह सर्वमिति । सर्वंद्वैतजातंसदसद्वपुरनिर्वचनीयमात्मन्यध्यस्तंकल्पितमेव तस्यचतावदेवस्थितिर्यावदध्यस्तत्वानवगाहनेनापरिपूर्णंविज्ञानंजायेतभवेत् यदात्वध्यस्ततामप्यवगाहमानंपरिपूर्णंविज्ञानंभवेत्तदातस्याध्यस्तस्यपुनर्विलोकनंनस्यादित्यर्थः तथाचहियतःसर्वमध्यस्ततापर्यंतंपश्यतिविद्वांस्ततोमरणादिकंनपश्यतीतियुक्तमितितृतीयपादांतवाक्यार्थः १५४ तुर्यपादोक्तांसर्वप्राप्तिमुपपादयति प्राप्तिश्चेति । ज्ञानादनंतरमात्मनःसकाशाद्यत्तदनन्यत्वंतस्यदृश्यजातस्यान्यत्वाभावःकल्पितभेदबाधइति यावत् तद्रूपैवसर्वप्राप्तिरुक्तेत्यर्थः । एतदेवस्फुटयति वेदार्थइति । अस्मिन्भूमात्मरूपेलोकेअयमात्मा अयंलोकइतिश्रुत्यंतरप्रसिद्धेवेदसमीरितेवेदस्यमहातात्पर्यगोचरेसकलोपागलोकादिविशेषशालीवेदार्थोस्तिअंतर्भवतियतःतस्मात्तस्यात्मरूपलोकस्यविज्ञानात्सर्ववित्सर्वस्यलब्धाभवतीतिसंभवतीत्यर्थः १५५ चिद्रूपएकधाभावादिकंश्रुत्युक्तंविशदयति आत्मविज्ञानेतिचतुर्भिः । आत्मनोयाथात्म्यस्यवेत्तास्वकीयमाययानानारूपोभवेत् भूमस्वरूपेणत्वेकरूपइत्यर्थः १५६

आत्ममायेति । तत्रकथंत्रित्वमितिजिज्ञासाआत्माचमायाचतत्कार्यंचेत्येतद्रूपत्रयमादायपूरणीया पंचभावाकांक्षातुपंचभूतपंचेंद्रियादिरूपमादायेत्यर्थः एवमग्रेपि १५७ सप्तेति । लोकादीत्यादिपदेनकुलाचलादिग्रहः ग्रहाआदित्यादयः आदिपदेनांकनंदादिग्रहः १५८ इंद्रियेति । आदिपदेनरुद्रादिग्रहः एकादशेंद्रियाणांप्रत्येकंदशदशवृत्तिभेदमादायदशाधिकशतरूपोभवेत् तथातेषामेकादशरूपाणांसर्वस्मिन्कालेऽहोरात्ररूपेयोभेदःप्रतिश्वासंपृथक्कृतमादाय हंसस्यश्वासरूपस्ययावंतोपरसंख्याकाःप्रचाराःप्रवृत्तयस्तावद्भेदःकिंचिदधिकैकविंशतिसहस्ररूपइतियावत् स्फुटमेतदेकादशाध्यायेहंसोपनिषद्व्याख्याने १५९ । १६० उक्तात्मज्ञानसाधनतयाऽऽहारशुद्ध्यादिकंविदधाति इदमित्यादिना । येसततंपुण्यात्मानःसदाबहिःपुण्यकर्मानुष्ठानपराअपिपापचेतसोमनसिपापास्तेषामपीदंज्ञानंदुर्लभंकिमुतबहिरपिपापपराणामित्यर्थः १६१ कथंतर्हिचित्तशुद्धिरित्याकांक्षायामाह आहारइति । स्ववर्णाश्रमानुसारेणप्राप्तानांविषयाणांग्रहणरूपआहारोभावस्यासाम्यावगाहनेनरागाद्यनास्कंदितस्यधीपरिणामस्ययोगेनसंतानेनयस्यपुंसःशुद्धोनिष्पापःस्यात्तस्यैवचित्तशुद्धिर्बोध्येत्यर्थः १६२ एतेनवृद्धकुमारीवरन्यायेनेनवी

आत्मामायाचतत्कार्यमितिसोपित्रिधाभवेत् ॥ भूतपंचकरूपेणपंचधाचमहेश्वरः १५७ सप्तलोकादिरूपेणसप्तधाचसदाविभुः ॥ ग्रहादिरूपतस्तद्वन्नवधापिमहेश्वरः १५८ इंद्रियादिस्वरूपेणभवेदेकादशात्मकः ॥ एकादशेंद्रियाणांस्याद्वृत्तिभेदाच्छतंपुनः १५९ दशाधिकंसदाभेदात्तेषामेकादशात्मनाम् ॥ हंसप्रचारायावंतस्तावद्भेदश्चसंस्मृतः १६० इदंसर्वात्मविज्ञानंदुर्लभंपापचेतसाम् ॥ पुण्यात्मनांचसततंजन्मकोटिशतैरपि १६१ आहारोयस्यशुद्धःस्यात्सर्वदाविषयग्रहः ॥ स्ववर्णाश्रमसंप्रोक्तोभावयोगात्कथंचन ॥ सपुमान्पापरहितःशुद्धचेताःप्रकीर्तितः १६२ बीजेयोनौतथाऽऽहारेव्यवहारेचयःशुचिः ॥ तस्यकष्टगतस्यापिनपापेरमतेमतिः १६३ अपापमतिरव्यग्रमानसोनिर्मलाशयः ॥ गुरूपदिष्टमात्मानंभूमानंससमेतितम् १६४ यदेनांस्मृतिमाप्नोतिपुमान्कश्चिद्भिभाग्यतः ॥ कामक्रोधादिकान्ग्रंथींश्छिद्यात्तत्क्षणतस्तदा १६५ आहारशुद्धिमान्सस्यान्नारदोमुनिसत्तमः ॥ शुद्धचेतास्ततःकामक्रोधादिपरिवर्जितः १६६ हरीतक्यादिसंजातोरसउक्तोमनीषिभिः ॥ कषायोयस्यसंपर्काद्वस्त्रंवर्णांतरंव्रजेत् ॥ यथातथात्रचित्तस्यकामादि कथितोबुधैः १६७ तस्यास्यमर्दनंप्रोक्तंब्रह्मचर्यादिसाधनं ॥ नारदस्तैस्तुसंपन्नउद्विग्नोभवसागरात् १६८

तच्छुद्ध्यादिकमाशिषयिनिदर्शयन्नाह बीजेइति । बीजेपितृकुलेयोनौमातृवंशेआहारेविषयग्रहेव्यवहारेदानादानादिरूपेएतेषुयःशुद्धश्छद्मरहितस्तस्यविपत्संततिंगतस्यापिपापकर्मणिरुचिर्नभवतीत्यर्थः १६३ तस्यशुद्धचित्तस्याभिलषितराजपुत्रन्यायेनगुरूपदेशादात्मस्मृतिर्भवतीत्याह अपापमतिरिति । निर्मलाशयःपुमान्पापरूपप्रतिबंधाभावेनैकाग्रमनाःसन्गुरूपदेशेनभूमरूपमात्मानंसमेतिसम्यक्स्मरतीत्यर्थः १६४ यदेनामिति । यदावपुतांभूमात्मगोचरांस्मृतिंलभेततदाचिज्जडयोरध्यासरूपमेलनेनसिद्धत्वाद्ग्रंथिशब्देनोक्तान्कामादींश्छिनत्तितज्ज्ञानासिनाइतिशेषः १६५ नारदस्यसर्वोधिकारिविशेषणसंपन्नत्वमाह आहारशुद्धीतित्रिभिः । स्पष्टम् १६६ मृदितकषायपदार्थंवक्तुंकषायपदार्थमाह हरीतक्यादीति । कषायरसवान्हरीतक्यादीनांद्रवोरसादौदद्रागमयोजकःकषायपदस्यमुख्योर्थः, 'कषायोरसभेदेस्यादंगरागेविलेपने' इतिकोशात् तद्वच्चित्तरंजकत्वात्कामादयोपिगौण्यातेनोच्यंते तस्यकामादिरूपकषायस्यमर्दनेजरदरणेसाधनंदिवदेतनस्तुब्रह्मचर्यादयःसाधकत्वाःप्रसिद्धास्तैर्ब्रह्मचर्यादिभिःसंपन्नोनारदस्तुमृदितकषायोऽभवत्संसाराद्भवमुद्विग्नत्वादितिद्योरर्थः १६७ । १६८

तादृशायेति । तादृशायाहारशुद्ध्यादिगुणविशिष्टायनारदायतमसोमूलाज्ञानस्यपरंपारंभूमलक्षणंसनत्कुमारोव्यदर्शयत् यथाद्विषेशत्रवेदुःखंप्रदर्शयेतेतद्वदिति यःसनत्कुमारःस्कंदाख्यस्वामिकार्तिकेयरूपेणावतीर्णः अत्रार्थेएवंवक्ष्यमाणविधांकथांब्राह्मणसत्तमाइतिहासविदआहुरितिद्वयोरर्थः १६९ । १७० तांकथांनिबध्नाति कदाचिदित्यादिना । गंगातटेआसीनाअभूवन् १७१ अस्मिन्निति । हृदंभोजेवीक्ष्यमाणोऽप्यनेनसाक्षात्क्रियमाणःप्रभुर्मांसमयनेत्राणांदर्शनेदृष्टिगोचरेअभूदतिष्ठदित्यर्थः १७२ दृष्ट्वेति । तंदृष्ट्वासर्वेआसनेभ्यउत्तस्थुःसमाधिनिष्ठंसनत्कुमारंविनेतिद्वयोरर्थः १७३ । १७४ उत्थितामुनयइति । तेमुनयोवेदपाठादिभिस्तथास्वकृतैःपरकृतैश्चस्तोत्रैर्भगवंतंप्रसाद्यस्थिताः १७५ व्यवस्थितेष्विति । स्फुटम् १७६ इतस्ततइति । अथजाययासहगंतुकामोभगवांस्तान्मुनीन्सहितान्समुदितान्वीक्षयामास स्वार्थेणिच् अपश्यदित्यर्थः १७७ सनदिति । कीदृशोभगवान्स्वयंपुरुषरूपेणसनत्कुमारस्थितौहर्षितोपिस्वीय

तादृशायपरंपारंतमसोदुःखवद्द्विषे ॥ व्यदर्शयद्यतःशोकंनपुनर्यातिमानवः १६९ सनत्कुमारोभगवान्स्कंदोयोन्यत्रजन्मनि ॥ एवंकिलवदंत्यत्रकथांब्राह्मणसत्तमाः १७० कदाचिन्मुनयःसर्वेवाराणस्यांसमागताः ॥ गंगातटेमहाभागाःकृत्वापौर्वाह्णिकीःक्रियाः ॥ आसीनाब्रह्मपरमंचिंतयंतःस्वबुद्धिभिः ७१ अस्मिन्नवसरेदेवोदेव्यासहमहेश्वरः ॥ वीक्ष्यमाणोहृदंभोजेआनंदात्मास्वयंप्रभुः ॥ कृपयामांसनेत्राणांदर्शनेभूज्जगत्पतिः ७२ दृष्ट्वातंमुनयःसर्वेसमुत्तस्थुःसमंततः ॥ आसनेभ्योऽतिसंहृष्टादेहाःप्राणागमेयथा ७३ सनत्कुमारमेकंतंपरिहायात्मवेदिनम् ॥ एकमेवायमात्मानंबहिरंतश्चपश्यति ॥ सर्वदैवविशेषेणसमाधिस्थस्तदाहि सः ७४ उत्थितामुनयःसर्वेनत्वास्तुत्वाचतंविभुम् ॥ वेदपाठादिभिःस्तोत्रैःस्वैःपरैश्चकृतैर्मुहुः ॥ भवानीसहितंदेवंप्रसाद्यचव्यवस्थिताः ७५ व्यवस्थितेषुतेष्वेवंपरमात्मात्रिलोचनः ॥ भवानीसहितस्तेषांवरमिष्टमदाद्विभुः ७६ इतस्ततोविलोक्याथगंतुकामःसजायया ॥ सहितान्वीक्षयामासमुनीन्सर्वान्महेश्वरः ७७ सनत्कुमारमासीनंदृष्ट्वाहर्षमुपागतः ॥ स्वयंनैवभवानीसापरंकोपमुपागता ॥ एवंविचार्यमनसास्त्रीस्वभावमुपागता ७८ अयंपुराणपुरुषोयोगिनांहृदयेस्थितः ॥ अष्टांगयोगयुक्तेनपुंसाध्येयःसदैवहि ७९ अयंसमस्तविद्यानांकथितःपरमोगुरुः ॥ ब्रह्माविष्णुस्तथाशक्रोलोकपालास्तथापरे ॥ किंकराअस्यदेवस्यगर्भदासायथाभुवि १८० अयंसमस्ततत्त्वानांजनकःपालकस्तथा ॥ संहर्तापंचभूतानांस्थिरजंगमरूपिणाम् ८१ नानेनसदृशःकश्चिदासीदस्तिभविष्यति ॥ कुतोधिकोब्रह्मचर्ययुक्तश्चापिपुमानयम् ८२ मयासहविलोक्यैपदुरात्मेनंजगद्गुरुम् ॥ स्त्रैणंमत्वाब्रह्मचारीस्वयंगर्वाधिकोजडः ॥ नोत्तस्थौतेनदास्यामिशापमस्मैसुदारुणं १८३

वामभागरूपेणविपरीतइतिशेषः यतःसाप्रसिद्धाभवानीएवंविचार्यस्त्रीस्वभावेनपरंकोपमागता १७८ एवंकथमित्याकांक्षायांभवानीविचारमभिनयति अयमितिषड्भिः । अयंभगवान्पुराणोऽनादिःपुरुषः १७९ अयंसमस्तेति । कथितःमहोपनिषदादौ सर्वभेदप्रयोजिकायामायायाःसत्ताभानादिदानेनअनेनप्रभुणावशीकारलक्षणंक्रयंनीतत्वेसतितत्प्रयुक्ताब्रह्मादिदेवभेदाअस्यगर्भदासनामापन्नाः दास्यांक्रीयमाणायांतद्गर्भस्थितत्वंगर्भदासत्वमितिव्युत्पत्तिसमन्वयादितिभावः १८९ अयंसमस्ततत्त्वानामिति । तत्त्वानांमहदादीनांजननादिकर्त्ता स्थावरादिरूपाणांभूतानांचायंतथेत्यर्थः १८१ नानेनेति । गुणैरनेनतुल्यइतोधिकोवाकोपिनास्ति ब्रह्मचर्यंत्वस्यैवमदनदमनादेर्मुख्यमित्यर्थः १८२ मयेति । एवंसत्यपियतएषसनत्कुमारोब्रह्मचारीप्रभुंमत्सांनिध्यमात्रेणस्त्रैणंमत्वानोत्तस्थौततःशापार्हइत्यर्थः १८३

तत्रशापंचितयति कष्टेति । कष्टादुःखप्रचुरायोनिर्वासस्थानंयेषांतेतथातेषांमध्येमुख्याःप्रथमगण्याअश्वसेवनजीविनःप्रसिद्धाः । तेषांवाजिशालायांपूतिगंधायांवासस्यसेवामहत्त्वेपिजीवनाल्पतायाश्चप्रसिद्धत्वात् योनिपदस्यस्थानवचनतातुयोनिरेइंद्रनिपदेइत्यादौप्रसिद्धा स्फुटमन्यत् १८४ इतिसंचिंत्येति । निवारितापिनिशेप: ततःसमहामुनिस्तादृशःअश्वसेवकरूपस्तथाश्वशालायांपरंसुखंप्राप्तोऽभवदिति १३५ तत्रहेतुमाह सब्रह्मेति । यतोब्राह्मणजातिकर्मानुष्ठानक्लेशाभावेनाऽश्वान्नानांचणकानांभक्षणेनचस्थूलदेहःसन्नलसत्वात्कर्मांतरेऽनियुक्तोद्वारमात्ररक्षांकुर्वंस्तिष्ठतीत्यर्थः १८६ तादृशमिति । तादृशंतत्रापितुष्टंतंमुनिंदृष्ट्वाप्रीतयादेव्यावरयेत्युक्तेसतियथामेत्रकर्मार्थक्लेशोनभवेतथाविधेहीतिवरइत्यर्थः १८७ ततःपुनःकोपेनदेव्यातस्योष्ट्रभावेदत्ते

कष्टयोनिपुमुख्याःस्युरश्वानांरक्षणेरताः ॥ तत्कुलेतवजन्मस्याद्भर्तुर्योमेऽत्रमानकृत् १८४ इतिसंचिंत्यसाशापंददौभर्त्रानिवारिता ॥ सोभवत्तादृशस्तत्रपरंसुखमुपागतः १८५ सब्रह्मकर्माभावेनचणकान्भक्षयन्सदा ॥ स्थूलदेहोऽश्वशालायाद्वारितिष्ठत्यहर्निशम् १८६ तादृशंतंपुनर्देवीदेवेनसहितैक्षत ॥ वरंवरयस्वेत्युक्तेमलमूत्रविसर्जनम् ॥ उपविष्टस्यदूरेस्यादितिमेस्तुवरःपरः १८७ उष्ट्रोभवेतिकोपेनसाशशापपुनश्चतम् ॥ अभवत्सोपितद्देहोगृहेराज्ञोपिरक्षकैः १८८ शिक्षितोबहुशःपश्चात्त्यक्तोरण्येह्यवज्ञया ॥ अलसोयमितिज्ञात्वासोपितत्राभवत्सुखी ८९ करीरादिवनेभूरिकंटकादीन्यभक्षयत् ॥ पिबन्गंगाजलंभूरिमलमूत्रविसर्जनम् ॥ आसीनएवकुर्वन्सपरंसुखमुपागतः १९० ब्रह्मणोमानसादेहउष्ट्रस्यैवाभवद्द्रुतम् ॥ सुखमुष्ट्रत्वपुण्यस्मादभूत्तस्याधिकंमुनेः १९१ पूर्ववत्तादृशंदेवीदेवेनसहितैक्षत ॥ वरंवरयस्वेत्याहपुनरेवतपोधनम् १९२ कृतकृत्यःसतांप्राहवरोनान्योधिकोमम ॥ भवत्यादेवियद्दत्तमौष्ट्रंजन्मातिशोभनम् १९३ वेदतोलोकतोवापिभीतिर्लज्जानचात्रहि ॥ मलमूत्रेचदूरान्मेपततोप्युपवेशने १९४ शरीरंयदिकस्यापिभवेदुष्ट्रस्यतद्भवेत् ॥ यतःसुखंशरीरस्यजन्मन्यस्यप्रदृश्यते १९५ अनुभूतामयादेहाःसर्वजीवसमुद्भवाः ॥ उच्चावचानोष्ट्रदेहसदृशःकोपिविद्यते १९६

तत्रापिमुनेःसंतोषंवर्णयति उष्ट्रइतित्रिभिः । अलसोयमितिज्ञात्वाऽरण्येरक्षकैस्त्यक्तइतिसंबंधः निगदव्याख्यातमन्यत्रिषु १८८ । १८९ । १९० पशुदेहान्सृजताहिरण्यगर्भेणसुकरत्वात्प्रथमसृष्टृदेहएवनिर्मितइतिज्येष्ठतागुणमनुसंधायापिसमुनिस्तद्देहंतोषंगतइत्याह ब्रह्मणइति । द्रुतंशीघ्रमभवदुत्पन्नः अस्मादेतदालोच्य १९१ तत्रापितुष्टंतंप्रतिदेवीवरायआदिदेशेत्याह पूर्ववदिति १९२ सचमुनिस्तमेवदेहंतुष्टावेत्याह कृतकृत्यइति १९३ सर्वत्रगुणंगृह्णातिपंडितइतिन्यायेनतद्देहगुणानाह वेदतइति । स्पष्टम् १९४ यतोस्यदेहस्यजन्मनिसुखंदृश्यतेततःसर्वस्यदेहप्रसंगेउष्ट्रदेहएवभवेदितिकामयेइत्याह शरीरमिति १९५ तत्रस्वानुभवमनुकूलयति अनुभूताइति १९६

१४९

तं निरपेक्षं दृष्ट्वा भवत्रौ सहविचार्यं भवानीत्थमाह वरं नगृह्णासि चेत्त्वदिपूर्णत्वात्तर्हि अस्मदीप्सितं देहीति । तेन मुनिना तथेत्युक्ते तस्य स्वपुत्रभावं वव्रे ततः सस्कंदनामा देव्याः पुत्रोऽभवत् स्कंदति कामं शोषयति वशीकरोतीति यावत् इति व्युत्पत्तेः समन्वयात् तथाच स्मृतौ स्कंदिर्गतिशोषणयोरिति एतद्दर्शयति एवमुक्त्वा इतिद्वाभ्यां १९७ । १९८ इतिते इति । स्पष्टम् १९९ उत्तराकांक्षामुत्थापयति अवस्थेति । यथात्मनः सद्रूपमारुणिनोक्तं सनत्कुमारेणचानंदत्वं तथास्य अवस्थात्रयेण शून्यं तेन हीनत्वं ब्रह्माइंद्राय विरोचनाय चोक्तवान् परन्तु तदा इंद्र एवाविदत् तत्त्वबोधं प्राप्नोयत आ

एवमुक्त्वा विचार्यैवं महेशेन समं स्वयम् ॥ वव्रे वरं तमेषोपि दत्तवान्मनसेप्सितम् १९७ सनत्कुमारो भगवान्स्कंदनामाभवत्सुतः ॥ शिवयोर्वरदानेन तत्रापि ब्रह्मच र्यवान् १९८ इतिते कथितं सर्वं नारदाय समीरितम् ॥ पुरा सनत्कुमारेण भूमरूपं सुखं परम् १९९ अवस्थात्रयनिर्मुक्तं ब्रह्माशक्राय चाब्रवीत ॥ विरोचनाय च तथा शक्र एव तदाविदत् ॥ शुद्धाहारः शुद्धसत्वः स्मृतिमान्ग्रंथिमोचकः २०० इतिते कथितं सर्वं यत्पृष्टं भवताविह ॥ आत्मनः सुखरूपत्वं किमन्यच्छ्रोतुमिच्छसि २०१ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेच्छांदोग्यसारार्थप्रकाशेसनत्कुमारनारद संवादोनामत्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥ ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ७ ॥

हारशुद्ध्यादिमान्ग्रंथीनां मोचकः विमोक्षयत्त्वं वाश्चेत्यर्थः २०० उपसंहरति इतिते इति २०१ भूम्नोभूमिविहीनस्याप्यधिष्ठानस्य विश्वतः ॥ गोचरेभ्यः परं रूपमध्यक्षस्यास्तु गोचरः ॥ १ ॥ स्वयं भूम्याआधारेण रहितस्यापि विश्वं प्रति अधिष्ठानभूतस्य भूम्नो रूपम् इंद्रियविषयानतिक्रांतं साक्षादस्त्वित्यर्थः । इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिल्लारामसूरितनुजरामकृष्णस्य श्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्य कृतौ आत्मपुराणटीकायां सत्पमप्रवासव्याख्यायां त्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीगणेशायनमः ॥ ॥ विद्युन्मेघोपमानस्यसंप्रसादपराकृतेः ॥ चतुर्दशाशापूरस्यगीयतेस्वंचतुर्दशे ॥ १ ॥ अस्यार्थः तडिदन्वितमेघवत्कांतिशालिनः सम्यग्यः प्रसादोऽनुग्रहस्तत्पराआकृतिस्तनु र्यस्यसतथातस्य अथवासम्यक्प्रसन्तिविवर्धतेस्वधर्मेणयेक्रुपयःतेसंप्रसाः प्रसविस्तारेइत्यस्मात्पचाद्यचिसाधु तानदंतीतिसंप्रसादाराक्षसास्तेषांपराकृतेः विध्वंसरूपस्य चतुर्दशसंख्यलोका नामथवाचतस्रोवैखानसादिसंज्ञाः दशाअवस्थायेषांतेचतुर्दशाः दण्डकवासिमुनयस्तेषामाशामनोरथास्तत्पूरकस्यचश्रीरामस्यस्वंधनंयशोरूपंचतुर्दशेचतस्रोदिशएवदशाःप्रांतभूतायस्यजगत्पटस्यत स्मिन्नृशोकचरूपेणसततंगीयतेमहाभागैः यद्रमेवीणायांगायंतिएतमेवतेगायंतीश्रुतेरित्यर्थः । श्रीशंभुविग्रहपक्षे विगताद्युत्दीप्तिःप्राबल्यरूपायस्यसविद्युत्शारदोघनस्तद्वदवदातस्यानुग्रहपरस्य चतुर्दशमहारत्नकामनापूरकस्यचस्वंधर्मरक्षाप्रयुक्तयशोरूपंधनंचतुर्दशेलोकेसत्याख्येगीयते प्रजापतेःसुतायांधर्ममतिक्रामतःशासनात् । प्रमेयपक्षेतु विद्युत्प्रभृतयोयथातिरोहिताअभिव्यंजकव र्षाकालागमेप्रादुर्भवंतितथात्मादेहादितादात्म्येनतिरोहितोपिमहावाक्यसांनिध्येनप्रकाशतेइत्येवंविशुद्धनीतदुपलक्षितंवातादिकंचउपमानंयस्यसतथा संप्रसादःसुषुप्तिस्ततःपराआकृतिःशुद्धंरूपंय स्य दशआशादिशस्तासांपूरकस्यचविभुत्वात् एवंविधस्यपुरुषोत्तमस्यस्वंस्वरूपंचतुश्चतुर्वारंगीयतेप्रजापतिना चतुर्दशेचतसृणांदशानामवस्थानांजाग्रत्स्वप्नसुषुप्तितुरीयाख्यानांसमाहारेचतुर्दश

श्रीगणेशायनम ॥ भूमरूपमिदंशिष्यःश्रुत्वावस्थात्रयातिगम् ॥ श्रोतुकामःपुनर्वाक्यंगुरुमाहेदमात्मवान् १ भगवन्भवताख्यातंज्ञानंनानाविधंपुरा ॥ ऐतरे योहियद्वेदयच्चकौषीतकिर्मुनिः २ आदित्योभगवान्यत्तुसश्वेताश्वतरोपियत् ॥ कठश्चतित्तिरिस्तद्वज्जाबालाद्यामुनीश्वराः ॥ आरुणिर्भगवान्यच्चकुमारेणाप्यु दीरितम् ३ यत्रशिष्याःप्रजास्तद्वद्देवोदासिश्चवीर्यवान् ॥ बालाकिरश्विनौतद्वज्जनकोमिथिलेश्वरः ४ मैत्रेयीचापियतयोभृगुश्चवरुणात्मजः ॥ श्वेतकेतुश्चभ गवान्नारदःसर्वविन्मुनिः ५ गुरवोमंत्रवेत्तारःशक्रोलोकत्रयीपतिः ॥ अजातशत्रुर्भूपालोदध्यङ्ङाथर्वणोपिच ६ याज्ञवल्क्यश्चभगवान्सश्वेताश्वतरोपिच ॥ वरु णोप्यारुणिस्तद्वत्कुमारःसनदीरितः ७ अन्येपिगुरवस्तद्वच्छिष्याअपिचकेचन ॥ त्रिपर्वात्रिर्महान्वंशऋषेःसर्वज्ञतापिच ॥ शक्राच्चमरणंतद्वद्दध्यङ्ङाथर्वण स्यच ८ जल्पाभिधाकथाप्यत्रयाज्ञवल्क्यस्यधीमतः ॥ ब्राह्मणैश्चतथाशापःशाकल्यस्यप्रमादिनः ९ कारणानांचविज्ञानंवरोपिनचिकेतसः ॥ त्रिविधोयं मतोयत्रज्ञानंवैराग्यसंयुतम् १०

संख्यापूरकेत्राध्यायेवाइत्यर्थः १ छांदोग्याष्टमाध्यायगतेंद्रप्रजापतिसंवादंशुश्रूषतोमेधाविनःप्रश्नंदर्शयति भूमरूपमितिसप्तदशश्लोकैः । स्पष्टं १ भगवन्निति । हेभगवन्नैतरेयादिभिर्जाबा लाद्यन्तैः शाखाप्रवर्तकैर्मुनिभिर्दृष्टासुशाखासुवर्णितंज्ञानमेकादशाध्यायांतग्रंथेनोक्तंतत्रादित्यस्यापिवाजसनेयपंचदशशाखानांमृषित्वंबृहदारण्यकाष्टमाध्यायेवंशब्राह्मणेप्रोक्तंतथाद्वादशत्रयोदशयो रारुणिसनत्कुमाराभ्यामुदीरितंतदुक्तमितिद्वयोरर्थः २ । ३ तत्रज्ञानेशिष्यत्वेनकीर्तिताननुवदति यत्रेति । यत्रज्ञानेप्रथमाध्यायमारभ्यपंचमनवमैकादशाध्यायानुपेक्ष्यप्रजादयोनारदांताः क्रमेणशिष्याउक्ताइतिद्वयोरर्थः ४ । ५ अथोक्तशिष्याणांक्रमेणगुरून्दर्शयति गुरवइति । मंत्रद्रष्टारऋषयःप्रथमेध्यायेगुरुत्वेनोक्ताः शक्रोद्वितीये एवमग्रेपि याज्ञवल्क्यःषष्ठसप्तमयोरिति विशेषः सनदीरितःसनत्शब्दपूर्वकमुक्तइतिकुमारविशेषणं ६ । ७ एकादशोक्तगुरुशिष्यानभिप्रेत्याह अन्येपीति । चतुर्थविशेषवृत्तंकीर्तयति त्रिपर्वेति । त्रिविधपर्वेशाखावंशस्त्रिस्त्रिवारमु क्तस्तथादध्यङ्ङाथर्वणइत्याख्यस्यऋषेःसर्वज्ञतादिकमुक्तमित्यर्थः ८ पंचमवृत्तमाह जल्पाभिधेति । जल्पोविजिगीषुकथारूपःसब्राह्मणैःसहयाज्ञवल्क्यस्योक्तः शाकल्यंप्रतितच्छापश्चेति ९ तथाष्टमेजगत्कारणनिर्णयः नवमेत्रिविधोवरोनचिकेतसापमाद्गृहीतोयद्वल्लाज्ज्ञानवैराग्येश्रुतेइत्याह कारणानामिति । स्पष्टम् १०

दशमवृत्तमनुवदति स्वरूपेणेति । सत्यज्ञानादिकंस्वरूपलक्षणमाकाशादिकारणत्वंतटस्थलक्षणंचदर्शयित्वाकोशविवेकेनब्रह्मणोगुहाप्रवेशनंदशमपूर्वार्द्धेकृतं उत्तरार्द्धेतुवेनाख्यगंधर्वस्यानुभवः संन्यासस्याधिकताचेरितेतिद्वयोरर्थः ११। १२ एकादशादिपुनृत्तमाह संवर्तादिमहात्मकर्तृकंतस्यसंन्यासस्यानुष्ठानमुक्तातस्यसंन्यासस्यहेतुभूतंवैराग्यमुक्तंतस्यवैराग्यस्यहेतुत्वेनचयोगआदिप दग्राद्युमरणनिमित्तादिकंचोक्तंतस्ययोगस्यसंन्यासस्यचाधिकारीविरक्तोदर्शितस्तस्यवाह्यांतरभेदेनद्विविधोवेषश्चोक्तस्तत्रवाह्योयोवेषःसआचारनाम्नालोकसंग्रहार्थंतयाप्रसिद्धोयस्त्वत्राभ्यंतरेवर्त्तमानःशमादिरूपआचारोबहुधोक्तः सब्रह्मात्मविज्ञानस्यमुख्यंकारणमितिद्वयोरर्थः १३। १४ तत्प्रसंगेनेति । तस्याभ्यंतराचारस्यप्रसंगेनबहुभिःश्रुतिभिर्ब्रह्मोपनिषदादिभिरुदितंविज्ञानंकीर्तितं यस्यप्रसंगात्सामगाछांदोग्यषष्ठादिगताकथाअभूत् अनंतराध्यायद्वयेनवर्णितेत्यर्थः १५ पूर्वाध्यायांतोपन्यस्तंप्रश्नवीजमनूद्यपृच्छति अवस्थात्रयेतिद्वाभ्यां । निगदव्याख्यातंद्वयं १६ १७ एवंपृष्टोगुरुश्छांदोग्यस्यषष्ठसप्तमोक्तंप्रोक्तामित्यनुसंधायाष्टमाध्यायेदहरविद्याप्रदर्शनानंतरमुक्तांकथांप्राहेत्याह एवमिति । स्पष्टम् १८ अथवक्ष्यमाणकथोपयुक्तंब्रह्मलोकस्वरूपंनाना

स्वरूपेणचताटस्थ्याद्ब्रह्मणोलक्षणंद्वयम् ॥ पंचकोशविनिर्मोकात्पृथक्तस्यप्रदर्शनम् ११ विदुषोपिचवेनस्यस्वात्मानुभवकीर्तनम् ॥ सत्यादिसाधनेभ्यश्चसंन्यासाधिकतेरिता १२ संवर्त्ताद्यैरनुष्ठानंतस्यपूर्वैर्महात्मभिः ॥ वैराग्यंतस्यहेतुश्चयोगादिस्तस्यचात्रहि १३ अधिकारीविरक्तश्चबाह्यआभ्यंतरस्तथा ॥ वेषआचारनामास्यादाचारोबहुधात्रयः ॥ अहंब्रह्मेतिविज्ञानकारणंमुख्यमेवच १४ तत्प्रसंगेनविज्ञानंबहुश्रुत्युदितंपुनः ॥ कीर्तितंचात्रयस्याभूत्प्रसंगात्सामगाकथा १५ अवस्थात्रयनिर्मुक्तंभूमानंब्रह्मणोमुखात् ॥ इंद्रोविज्ञातवान्श्रेवज्ञातवांस्तुविरोचनः १६ तदहंश्रोतुमिच्छामिचित्रमेतद्भवन्मुखात् ॥ गुरोकथयमह्यंत्वंसर्वमेतद्यथाभवत् १७ एवमुक्तोगुरुःप्राहकथामष्टमकीर्तिताम् ॥ छांदोग्येसप्तमेषष्टेप्रोक्तंप्रोच्यमहामतिः १८ ब्रह्मलोकेतिमहतिसर्वदुःखौघहारिणि॥ गम्येसंन्यासिभिर्नित्यंमार्गेतोप्यर्चिरादिना ॥ प्रजापतीनांयेलोकास्तेभ्योप्युपरिसंस्थिते १९ ऐरंमदीयंयत्रास्तिसरःफुल्लसरोरुहम् ॥ तापत्रयहरंनृणांपुण्यपापक्षयेसति २० अश्वत्थःसोमसवनोयत्रकल्पद्रुमोमहान् ॥ मातेवसर्वभूतानांप्रयच्छतिमनोगतम् २१ वर्त्ततेयत्रसततंतडागौसागरोपमौ ॥ पयोदधिघृतैःपूर्णावरण्याख्योसमीपगौ २२ अमानवेनयत्रायंविद्युल्लोकात्परंपुमान् ॥ नीयतेपुण्यपापाभ्यांरहितोराजबालवत् २३

शास्त्रोक्तंवर्णयंस्तत्रवेदांतविज्ञानेत्यादिमुंडकवाक्यप्रदर्शितंविशेषमाह ब्रह्मलोकइति । अतिविशालेसर्वदुःखविरोधिनिअर्चिरादिमार्गेणसंन्यासिभिर्वेदांतविज्ञानादिविशिष्टैर्गम्येप्रजापतीनांयेलोकामहरादयस्तेभ्यउपरिस्थितेचब्रह्मलोकेतत्रहिरण्मयाख्यःप्रासादोस्तीतिचतुर्दशेनसंबंधः १९ ब्रह्मचर्यप्रसंगेसन्निहितवाक्येनोक्तान्विशेषान्दर्शयति ऐरंमदीयमिति । यत्रब्रह्मलोकेइराअन्नंतद्रसमयत्वान्मदहेतुत्वाचऐरंमदीयसंज्ञंसरोस्ति कीदृशं उपासनाबलात्क्षुद्रफलकपुण्यानांपापानांचक्षयेसतिलभ्यमित्यर्थः २० अश्वत्थइति । अश्वत्थाकारःसोमस्यामृतस्यस्रावकत्वात्सोमसवनाख्यःकल्पद्रुमोपियत्रास्ति २१ वर्त्ततेइति । एकोऽरसंज्ञोद्वितीयोण्यसंज्ञएतावर्णवतुल्यौतडागौयत्समीपेवर्त्ततइत्यर्थः २२ अर्चिरादिमार्गप्रकाशकवाक्येनोक्तंविशेषमाह अमानवेनेति । चंद्रलोकाद्विद्युल्लोकंप्राप्तउपासकस्तत्रागतेनअमानवेनमनुसृष्टावनुत्पन्नेनपुरुषविशेषेणराजपुत्रवदादरेण यत्रब्रह्मलोकेनीयतेइत्यर्थः २३

अथकौषीतकिब्राह्मणोक्तान्विशेषान्षष्ठाध्यायेचतुर्दशाधिकैकादशशतश्लोकोत्तरग्रंथेनव्याख्यातानपिब्रह्मणःप्रभावातिशयदर्शनायस्मारयति यत्रपंचेत्यादिना । यत्रब्रह्मलोकेआगतमुपासकंप्रतिअंबाख्यं
ज्ञाअंबायवीयासंज्ञाश्चाप्सरसोब्रह्मणोयोग्यस्यालंकारस्यदेहशोभायानिर्मात्र्यःपंचशतसंख्याःप्रभोराज्ञयासोत्कंठाःसमायांतीतिद्वयोरर्थः नाम्नव्युत्पत्तिःषष्ठादवगंतव्या २४ । २५ तासामुपा
यनभेदेनविभागमाह मालेतिद्वाभ्यां । अंजनंदेहचाकचक्यहेतुःसुगंधितैलादिरूपं चूर्णमभ्यंगमर्दनोपयुक्तम् अन्यत्षष्ठादवगंतव्यम् २६ । २७ आरइति । यत्रब्रह्मलोकेद्वारदेशेआराख्यो
ह्रदोविरजाख्यानदीचवर्ततेययोर्ह्रदनद्योर्मध्येयेष्टिहसंज्ञामुहूर्ताभिमानिनोदेवास्तिष्ठंतीत्यर्थः व्युत्पत्तिःषष्ठेदर्शिता २८ अपद्राव्येति । तान्येष्टिहसंज्ञान्मुहूर्तान्दर्शनेविवेकस्तच्छालिना आ
त्मीयमनोरूपसाधनेनअपद्राव्यपलायितान्कृत्वाह्रदनद्योतीर्त्वाचयत्रब्रह्मलोकेगच्छेदिति २९ इल्येति । यत्रलोकेइल्यसंज्ञंवृक्षंसंलक्ष्यतत्सन्निधावितियावत् आयांतमेनमुपासकंब्रह्मगंधोया
ति संस्थानेनगरंशालज्याख्यंगतंतुब्रह्मरसोपियाति अपराजिताख्यमायतनंसंलक्ष्यगतंतुरूपाणिदिव्यानियांति तथासर्वंतेजःसर्वस्यब्रह्मणस्तेजःप्रविशतीत्यर्थः व्युत्पत्तिःषष्ठे ३० ततस्तते

यत्रपंचशतंब्रह्मप्रेरिताःसूर्यसन्निभाः ॥ अंबाश्चांबायवीयाश्चनानाप्सरसःशुभाः २४ आयांतिसंमुखंपुंसोब्रह्मालंकारकारिकाः ॥ तूर्यवादित्रनिर्घोषैःसोत्कंठा
स्तंदिदृक्षवः २५ मालाहस्ताःशतंतद्वच्छतमंजनपाणयः ॥ चूर्णहस्ताःशतंतद्वच्छतंवासःकराअपि २६ अलंकारकराश्चान्याःशतंषोडशवार्षिकाः ॥
रूपयौवनसंपन्नामूर्तिमत्योयथाश्रियः २७ आरोह्रदश्चविरजानदीयत्रातिदुस्तरा ॥ ययोर्मध्यगतायत्रमुहूर्तायेष्टिहाभिधाः २८ अपद्राव्यमुहूर्तांस्तान्दर्श
नेनात्मचेतसा ॥ ह्रदंनदींचसंतीर्ययत्रगच्छेदुपासकः २९ इल्यंवृक्षंचसंलक्ष्यसंस्थानमपराजितम् ॥ यत्रयांत्येनमायांतंब्रह्मगंधरसावपि ॥ रूपाणिप्रविशत्या
शुसर्वंतेजोप्युपासकम् ३० इंद्रप्रजापतीयत्रद्वारपालौमहौजसौ ॥ भीतवद्गच्छतोनित्यंयत्रमार्गंप्रयच्छतः ३१ हिरण्मयंचतत्रास्तिप्रासादःपरमेष्ठिनः ॥ म
हाननेकरत्नोपराजितश्चसभान्वितः ३२ विचक्षणाभिधायत्रप्रज्ञोक्तावेदिकाशुभा ॥ सर्वलक्षणसंपन्नाजगन्निर्माणकारणम् ३३ अमितौजाश्चपर्यंकोयस्यां
प्राणाभिधःसदा ॥ उद्गाताचतथोद्गीथोवागाद्यैर्यउपास्यते ३४ भूतंभविष्यतासार्द्धंतत्पादौपूर्वदिग्गतौ ॥ श्रीश्चेराचापितस्योक्तौपादौपश्चिमदिग्गतौ ३५
दक्षिणोत्तरखट्वांगेबृहद्रथंतरम् ॥ भद्रंचयज्ञायज्ञीयमुक्तेतेपूर्वपश्चिमे ३६

जसाभिभूताविंद्रप्रजापतीद्वारस्थौब्रह्मसंनिधिंगच्छतोऽस्योपासकस्यमार्गदायकौभवतइत्याह इंद्रेति ३१ तत्रब्रह्मलोकेश्रुत्याहिरण्मयंमित्युक्तःसभास्थलान्वितःप्रासादोस्तिब्रह्मणइत्याह हिरण्म
यमिति ३२ विचक्षणेति । यत्रप्रासादेजगन्निर्माणहेतुभूताविचक्षणासंज्ञाचप्रज्ञाबुद्धिरासंदीपदोक्तपर्यंकाधाररूपावेदिकाप्रोक्ता तद्विन्यासःषष्ठेदर्शितः ३३ अमितौजाइति । यस्यांप्रज्ञा
रूपवेदिकायाममितौजानामकःपर्यंकोभवति कीदृशः प्राणरूपः यःप्राणोवाजसनेयैरुद्गातृसंज्ञकऋत्विग्विशेषरूपेणोपास्यते छंदोगैस्तुउद्गीथःप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यानांसाम
भागविशेषाणांमध्येद्वितीयभक्त्यवयवप्रणवरूपउपास्यते स्फुटमेतद्भाष्येगुणोपसंहारपादे ३४ पर्यंकंवर्णयति भूतमितिचतुर्भिः तस्यपर्यंकस्यपूर्वदिग्गतौपादौभूतभविष्यज्जगद्रूपौबोध्यौ श्रीर्ल
क्ष्मीःइरापृथिवीएतद्रूपौपश्चिमौपादावित्यर्थः ३५ दक्षिणोत्तरेति । अत्रखट्वांगपदेनपट्टिकाग्रहणं तथाचबृहद्रथंतराख्येसामनीदक्षिणोत्तरायतपट्टिकारूपेबोध्ये भद्रयज्ञायज्ञीयाख्येतुतेपू
र्वपश्चिमायतपट्टिकारूपेभवतइत्यर्थः ३६

ऋचइति । अत्रपट्टिकाःवितानोपयोगिन्यःसूत्रमय्योबोध्याः तथाचऋक्सामाख्यमंत्रात्मिकाःपूर्वपश्चिमायतायजुःसंज्ञमंत्रात्मिकास्तुदक्षिणोत्तरायतास्ताःसंतीत्यर्थः ३७ सोमांशवइति । चंद्रस्यकिरणाउपस्तरणवस्त्ररूपाःप्रोक्ताःउद्गीथाख्यःसामभक्तिविशेषस्तस्योपस्तरणवस्त्रस्ययदंतरमाच्छादकंश्वेतवस्त्रंतद्रूपोबोध्यः लक्ष्मीस्तूपबर्हणंशीर्षोपधानंयत्तद्रूपा ३८ तत्रेति । तत्रप्राणरूपपर्यंकेयोहिरण्यगर्भस्तिष्ठति कीदृशः जगद्रूपेणपटेनावृतःपृथिव्यादिपंचभूतैःपुष्टशरीरःसकलजीवसमष्टिरूपश्चेत्यर्थः ३९ नीरमिति । यश्चदेवःअंबयाशब्दोक्तासुउपासनात्मकनदीषुवर्तमानंनीरंपिबतियस्यचएकाप्रियाप्रतिरूपाख्या कीदृशी तेजःपुंजंसमष्टिरूपंसमासाद्याभिमानगोचरीकृत्यवर्तमाना पुनःकीदृशी चाक्षुषीसर्वचक्षुषामुपादानभूता तथायस्यद्वितीयाप्रियामानसीसंज्ञायासरस्वतीरूपेणप्रसिद्धेत्यर्थः ४० देवदेवइति । मूर्तिमद्भिर्देवैः कीदृशैः ब्रह्मांडव्याप्ताविभूतयोयेषांतथाभूतैरुपासितोदेवदेवःसर्वहितंचिंतयन्कुत्रचित्प्रसंगेइदमब्रवीदितिद्वयोरर्थः ४१ । ४२ इदंपदोक्तंप्रजापतिवाक्यंसप्तभिर्विवृण्वंस्तत्रयत्पदार्थमाह अणोरिति । अतिदुर्लक्ष्यत्वेनभूमरूपेणचपूर्ववर्णितःसर्वेषांप्रत्यक्षेनचप्रसिद्धइतिप्रथमदलार्थः आत्मादिपदद्वयार्थमाह

ऋचःसामानिपूर्वस्यांदिशिप्रोक्ताश्चपट्टिकाः ॥ दक्षिणोत्तरसंस्थानाउक्तास्तास्तुयजूंष्यपि ३७ सोमांशवस्तुसंप्रोक्तास्तस्योपस्तरणंसदा ॥ उद्गीथश्चांतरंवस्त्रंश्रीःप्रोक्तातूपबर्हणम् ३८ तत्रयःसर्वदेवास्तेजगत्पटसमावृतः ॥ पंचभूतौघपुष्टश्चसर्वजीववपुःपुमान् ३९ नीरंपिबतियोनित्यमंबयासरिदाश्रयम् ॥ तेजःपुंजंसमासाद्यप्रतिरूपाचचाक्षुषी ॥ यस्यप्रियामानसीचकथितासासरस्वती ४० देवदेवःसपत्नीकआसीनश्चसभागतः ॥ उपासितोमूर्तिमद्भिर्ब्रह्मांडस्थविभूतिभिः ४१ सर्वभूतहितंशश्वच्चिंतयन्निदमुक्तवान् ॥ केनचिद्विप्रसंगेनसर्वभूतसुखाप्तये ४२ अणोरणीयान्भूमायःप्रसिद्धःसर्वदेहिनाम् ॥ सर्वप्रियतमोनित्यंप्रवदंत्यहमःपरम् ४३ आत्मापहतपाप्मायंसर्वसंगविवर्जितः ॥ षडूर्मिरहितस्तद्वत्सत्येच्छाज्ञानसंयुतः ४४ जरामरणजन्माद्याधर्मादेहस्यनात्मनः ॥ शोकमोहादयस्तद्वन्मनसःकेवलस्यते ॥ क्षुत्पिपासेचसंप्रोक्तेप्राणस्यैवमनीषिभिः ४५ एतद्योगाच्चविज्ञानमिच्छयासहितंसदा ॥ अनृतंविषयाभावाद्भवेत्संसारसंगतौ ४६ अस्यसर्वस्यशून्यत्वेकामःसंकल्पसंयुतः ॥ नभवेदथचेत्सत्यएकएवात्मनोभवेत् ४७

सर्वेति । सर्वेभ्यःपराग्वस्तुभ्यऔपाधिकप्रेमास्पदेभ्योनिरतिशयप्रियत्वादात्मेत्युक्तोयतएनमहमोऽहंकारादपिपरंवदंति पाप्माअनित्यफलकंकर्मतदाश्रयाभ्यांस्थूलसूक्ष्माभ्यांसंगराहित्यादपहतपाप्मापमुक्तः विजरादिपदसप्तकस्यार्थमाह षडूर्मीति ४३ । ४४ तत्रषडूर्मिराहित्यंस्फुटयति जरेति । जरामरणयोस्तदुपलक्षितजन्मादीनांस्थूलदेहधर्मत्वात्शोकमोहयोस्तदुपलक्षितरागादीनांचमनोधर्मत्वात्क्षुत्पिपासयोःप्राणधर्मत्वाच्चतेभ्यःसाक्षित्वेनविविक्तस्वलक्षणकैवल्यशालिनआत्मनस्तेधर्मानवक्तुंशक्याइत्यर्थः ४५ सत्येच्छाज्ञानत्वंविशदयति एतद्योगादितिद्वाभ्यां । एतेषांदेहमनःप्राणानांयोगादध्यासरूपात्संसारसंगतौजन्मादिलक्षणसंसारसंबंधेसतियावद्विज्ञानमिच्छावाभवतितदुभयमनृतंमिथ्याभवतिविषयाभावात्तयोर्बाधितार्थत्वादित्यर्थः ४६ अस्येति । अस्यदेहादिसंघातस्यशून्यत्वेतत्त्वज्ञानेनबाधेसतिकामादिकंनैवभवेत्जायेतअथयदिबाधितानुवृत्त्याभवेदाहार्यज्ञानविधयाजायेततथापिनानृतमात्ममात्रतयानुसंधीयमानत्वेनसत्यत्वादित्यर्थः तथाचविदुषांकामादिकमुत्पत्तिदशायामधिष्ठानमात्रत्वेनदृश्यमानत्वादनुत्पत्तौसन्मात्रतायाःसिद्धत्वाच्चसत्यमेवेतिभावः ४७

फलितंदर्शयंस्तस्यान्वेषणीयतामाह सर्वेति । सर्वैःसंसारधर्मभूतैरर्थैःपदार्थैर्वर्जितःअतएवबुद्ध्यादिविलक्षणश्चायमात्माविविधैर्ब्रह्मचर्यादिरूपैरुपायैर्लब्धेनविवेकसामर्थ्येनबहुधाबहुविधतर्कैरवधा र्यसंभावनागोचरतांनीत्वान्वेषणीयः गुरुशास्त्रोपदेशैर्ज्ञातव्यइत्यर्थः ४८ उपायैरिति । प्रथमपद्यद्वयंपूर्वान्वयिदर्शितं ततउपदेशानंतरंमीमांसांप्रमाणासंभावनावारकत्वेनश्रवणसंज्ञांकुर्वीत ततःप्रमेयासंभावनावारकंमननंविपरीतभावनावारकंध्याननिदिध्यासनंचकुर्वीतेत्यर्थः ४९ उक्तविज्ञानफलमाह विवेकीति । उक्तात्मविज्ञःसर्वात्मभावमाप्त्याभेदहीनःसन्सर्वान्लोकान्भू रादींस्तद्वर्तिनःकामान्काम्यमानान्विषयांश्चाप्नोतिस्वात्मबुद्धितःतेषांस्वात्ममात्रत्वेनज्ञानादित्यर्थः ५० तद्बोभयेइत्यादिरूपतुरित्यंतवाक्यस्यब्रह्मविद्यादौर्लभ्यावेदकस्यार्थमाह इदमित्यष्टादश भिः । इदंव्याख्यातरूपंप्रजापतिवाक्यंस्वर्गादिस्थानगतंदेवासुराणांसभाद्वयंसमुदायद्वयंश्रुतवत् अशृणोदित्यर्थः ५१ तत्रहेतुतयाइंद्रविरोचनयोःसजातीयानांब्रह्मसभायांसत्त्वमाह सभायामिति । यतःप्रजापतेःसभायांदेवादैत्याश्चसहस्रशआसतेतिष्ठंति कीदृशाः परमेष्ठिनोवामदक्षिणभागयोःस्थिताः तत्रासुराणांदक्षिणस्थितिनिर्देशोज्येष्ठत्वात् तथाचश्रुतिः 'द्वयाहवैप्राजापत्याज्यायांसो

सर्वसंसारधर्मार्थसंस्पर्शनविवर्जितः ॥ अन्वेषणीयःसततंसबुद्ध्यादिविलक्षणः ॥ विवेकतोवधार्यैनंबहुधैवपुनःपुनः ४८ उपायैर्विविधैःपश्चाद्गुरूनाप्यसमाहि तः ॥ मीमांसामपिकुर्वीतश्रवणापरनामिकाम् ॥ मननध्यानसहितांविवेकात्पुरुषःसदा ४९ विवेकीयस्तमात्मानंपुरुषःश्रवणादिना ॥ साक्षात्कुर्यात्ससर्वात्मप्रा प्त्याभेदविवर्जितः ॥ सर्वांल्लोकांस्तथाकामान्प्राप्नुयात्स्वात्मबुद्धितः ५० इदंप्रजापतेर्वाक्यंब्रह्मणःपरमेष्ठिनः ॥ सभागतस्यश्रुतवद्देवासुरसभाद्वयम् ५१ सभा यांब्रह्मणोनित्यंदेवादैत्याःसहस्रशः ॥ वामदक्षिणभागस्थाब्रह्मणःपरमेष्ठिनः ॥ आसतेचण्डनेत्रास्तेपरस्परविरोधिनः ५२ देवानांकथितादेवैरसुराणांतथासुरैः ॥ वार्तेयंब्रह्मणोवक्त्रान्निर्गतास्वार्थकारिणी ५३ देवदैत्याधिपौश्रुत्वाहीमाविंद्रविरोचनौ ॥ वारयामासतुःस्वीयानितरेतरवंचकौ ५४ वैरिणोमाविजानंतुवार्तामेतां महाबलाः ॥ इत्युक्त्वाजग्मतुश्चोभौतदैवब्रह्मणःसभाम् ५५ उभाभ्यामप्यविज्ञाताडुभाविंद्रविरोचनौ ॥ स्वकीयैःसहसंमंत्र्यदेवैश्चैवासुरैस्तथा ५६ हंततंवयमा त्मानमन्विच्छामोमहाबलाः ॥ यज्ज्ञानात्सकलाँल्लोकान्कामांश्चापिलभेमहि ५७ वयंसर्वेयदातत्रयास्यामोब्रह्मणःसभाम् ॥ तदैववैरिणःसर्वेत्रिलोकींपरिवर्जि ताम् ॥ अस्माभिःस्ववशेकुर्युरस्मच्छिद्रगवेषिणः ५८

ऽसुराःकनीयांसोदेवाः' इति तेषांपरस्परस्यवृत्त्याज्ञानस्यवक्ष्यमाणेतरेतरवंचकत्वस्यचोपपत्तयेविशेषणद्वयंचंडेत्यादि चंडेऽत्युग्रतेजसिप्रभावेनेत्राणियेषांतेतथापरस्परंविरोधिनश्च तथाचप्रभुसुखद सहिष्णुत्वाद्विरोधित्वाच्चपरस्परस्थितितेनजानंतीतिभावः ५२ देवानामिति । ततइयंवर्णितरूपावाणीब्रह्मणोमुखान्निर्गतासतीतत्सभागतैर्देवैर्देवानांत्रिलोकीस्थानांसमीपेकथिताप्रापितेतियाव त् एवमसुरैरसुराणामिति । यतःसापरमपुरुषार्थसाधनस्यप्रकाशिकेत्यर्थः ५३ देवेति । ततोदेवाधिपइंद्रोदैत्यानांवंचनायतेभ्योगोपनायस्वीयान्देवान्वारयामास तथादैत्याधिपोविरो चनोदैत्यान्वारयामास किंकृत्वा यथावैरिणएतांवार्तांनजानीयुस्तथायतितव्यमित्युक्त्वानकेवलंवारणमेवतौचक्रतुःकिंतुस्वकीयैःसहसंमंत्र्यब्रह्मणःसभांप्रतिजग्मतुश्चेतित्रयाणांसंबंधः ५४ ५५ । ५६ स्वीयैःसहमंत्रमभिनयति हंतेतित्रिभिः । हंतेतिवाक्यारंभे यद्विज्ञानात्सर्वलाभस्तस्यात्मनोज्ञानंमहाबलैर्महोद्यमैरस्माभिःसंपाद्यमित्यर्थः ५७ तत्रसर्वेषांगमनंनयुक्तंधृष्टि मिच्छतोमूलमपिनष्टमितिन्यायप्रसंगादित्याशयेतद्वचनमाह वयमिति । यदिसर्वैवयंगच्छेमतदास्मत्त्यक्तांत्रिलोकींछिद्रान्वेषिणोवैरिणआक्रमेयुरित्यर्थः ५८

फलितंदर्शयति एकैनैवेति । अस्माकंमध्येतेमैवैकेनगैतरूपेयआगत्यपरेषामागतानांस्वकीयानांगुरुः शिक्षितोपदेष्टास्यादित्येवंसंमंत्र्यतावैंद्रविरोचनाख्यौराजानौदेवानांदैत्यानांचस्वस्वस्थाना न्निर्गतावित्यर्थः ५९ बलेति । प्रजापतिनुपस्थिताविति शेषः समित्प्रभृत्युपायनहस्तौ स्फुरन्मन्यत् ६० घट्टेति । यथाशुल्कग्राहिराजपुरुषान्वंचयितुंनिशिप्रस्थितानांवणिजांमार्गविभ्र मेणघट्टकुट्यांनदीतीरवर्तिशुल्कग्राहिकुठीसमीपेप्रभातंस्यात्तादृशंतद्देवासुराणांमुख्ययोस्तयोःप्रजापतिसन्निधिगमनमासीत् अभीप्सितपरस्पराविज्ञानलक्षणवंचनस्यासिद्धेरित्यर्थः ६१ श्रुतौ आसंविदानावितिच्छित्वातस्यईपत्संविदंस्नेहाभासंकुर्वंतावित्यर्थंदर्शयन्नाह बुद्धिमंताविति । कार्यसाधनेकुशलौतौतात्कालिकंकृत्रिममाहार्यंस्नेहंकृत्वाभ्रातृव्यौअपिभ्रातृवन्मिलितौसंतौ प्रजापतिंववंदतुःपप्रच्छतुश्चेतिद्वयोरर्थः ६२ । भगवानपीति । पूर्वजानांमन्वादीनांपूर्वजोभगवान्ब्रह्मापिसर्वाशयवित्तयोर्दोषप्रक्षालनायद्वात्रिंशद्वत्सरान्कार्यांतरव्यग्रवत्शृण्वन्नप्यशृण्वन्निवा सीदिति ६४ तथाचतयोरानुषंगिकंब्रह्मचर्यमसिद्धंचदित्याह देवासुराधिपाविति । अवज्ञातौउपेक्षारूपामवज्ञांप्राप्तौ ६५ दोषीति । यथाराज्ञःस्निग्धःस्नेहपात्रभूतोपिकश्चिद्दोषीकृतम

एकैनैवततोस्माकंगंतव्यंयोगुरुर्भवेत् ॥ परेषामितिसंचिंत्यराजानौतौविनिर्गतौ ५९ बलवुद्ध्यादिसंपन्नौधैर्यवंतौयशस्विनौ ॥ ब्रह्मविद्यार्थिनौहस्तौपरस्परजये षिणौ ॥ समिदादिकरावेतावेककालेप्रजापतिम् ६० घट्टकुट्यांप्रभातंततयोरासीन्महात्मनोः ॥ युक्तयोर्वचनेराज्ञोर्देवासुरशिरःस्थयोः ६१ बुद्धिमंताबुभौकृत्वा तत्रस्नेहंहिकृत्रिमम् ॥ ऐक्यंप्राप्याप्यनेकौताबुभौस्वार्थप्रकाशकौ ६२ प्रजापतेःपदद्वंद्वंववंदातेसुशोभनौ ॥ भ्रातृव्यौभ्रातृवद्भूत्वाविद्यांपप्रच्छतुश्चतौ ६३ भ गवानपिविज्ञाततत्त्वार्थश्चतुराननः ॥ अशृण्वन्निवशृण्वन्सतस्थौपूर्वजपूर्वजः ॥ द्वात्रिंशद्वत्सरंकालंव्यग्रःकार्यांतरेष्विव ६४ देवासुराधिपौतत्रसर्वभोगविवर्जि तौ ॥ अवज्ञातौस्थितौतस्यसमीपेपरमेष्ठिनः ६५ दोषीकश्चिद्यथाराज्ञस्तिष्ठेत्स्निग्धःसमीपगः ॥ अवज्ञातःसर्वभोगवर्जितोमुखवीक्षकः ६६ भोजनादिक्रिया नासीदेतयोःकालयोःक्वचित् ॥ दूरापास्तस्तुललनासंभोगःशोच्यवेषयोः ६७ द्वात्रिंशद्वत्सरेकालेदुःखिनोर्ब्रह्मचारिणोः ॥ गतेनुपश्यतोर्वक्त्रंतयोर्ब्रह्माव्यलो कयत् ६८ किमर्थंवामकुरुतंवासमिंद्रविरोचनौ ॥ ब्रह्मलोकेत्रदुष्प्रापेसर्वभोगविवर्जिते ६९ इत्युक्तौब्रह्मणादेवावूचतुस्तौमहेश्वरम् ॥ यआत्मेत्यादितद्वाक्य मनूद्यैवमहाधियौ ७० एवंभगवताप्रोक्तमात्मानंलोककामदम् ॥ इच्छंतौज्ञातवंतौस्वोवासंतौवत्सरान्प्रभो ॥ वीक्ष्यमाणौब्रह्मचर्यसंयुक्तौशिष्यतांगतौ ७१ ए वमुक्तःसभगवान्स्मितवक्त्रःप्रजापतिः ॥ ऊचेजागरणावस्थमात्मानंचक्षुषिस्थितम् ७२

हापराधःसदस्युपेक्षितस्तिष्ठेत्तथातौस्थिताविर्त्यर्थः ६६ भोजनादीति । एतयोरिंद्रविरोचनयोर्भोजनक्रियैवकालयोःसायंप्रातराख्ययोर्नासीत्कुतोऽन्यल्ललनादर्शनादिकं । यतस्तौशोच्य वेषौ शोच्यत्वंजुगुप्सितत्वमिति ६७ द्वात्रिंशदिति । द्वात्रिंशद्वत्सररूपेकालेगतेसतिब्रह्मातयोर्मुखंव्यलोकयत् कीदृशयोस्तयोरनुपश्यतोःकदानुग्रहीष्यतीत्याकारांप्रतीक्षांकुर्वतोः ६८ अनु ग्रहपरेणप्रजापतिनाकृतंतयोःप्रयोजनप्रश्नमभिनयति किमर्थमिति । हेइंद्रविरोचनौयुवांब्रह्मलोकेयुष्मद्योग्यस्थूलभोगहीनेदुःखेनागत्यकिमर्थंवासमकुरुतंकृतवन्तौ ६९ एवंगुरुणापृष्टाभ्यां कृतांप्रार्थनांदर्शयति इत्युक्ताविति । देवौसुराणामसुराणांचराजानौतौ'यआत्मापहतपाप्मा' इत्यादिश्रौतंप्रजापतिवाक्यमनूद्यतद्वत्पठित्वाएवमूचतुः एवंकथं हेभगवन्भवतासर्वलोकानांकामा नांचज्ञानद्वारादातृत्वेनवर्णितमात्मानंज्ञातुमिच्छंतौसंतौतौप्रसिद्धौआवांबहून्वत्सरान्वासंकृतवंतौस्वःभवावः कीदृशौ भवतावीक्ष्यमाणौसन्निहितावितितात्र्य ७० । ७१ इत्थंप्रार्थितःप्रजाप तिस्ताभ्यांजाग्रत्साक्षिणमात्मानंचक्षुषिस्थितत्वेनोक्तवानित्याह एवमुक्तःसइति ७२

भगवद्वाक्यमभिनयति यएषइति । यएषप्रत्यक्त्वेनात्यंतंसन्निहितःपुमान्सर्वैरधिकारिभिःशास्त्रदृष्ट्याशास्त्रसंस्कृतयाप्रत्यक्प्रवणवृत्त्याचक्षुषिदृश्यतेअपगतावरणःक्रियतेअयमेवात्माऽमृतस्त्वादिलक्षणःअद्वयत्वेननिर्भयंपन्निर्गुणंब्रह्मतदेकरूपश्चेतिप्रजापतिवाक्यतात्पर्यार्थः ७३ यथामधुरोपिगुडःपित्तदूषितरसनैःकटुत्वेनगृह्यतेतथाप्रजापतिवाक्यंसत्यपरमपिताभ्यांदुष्कृताविद्यासंस्कारदूषितचित्ताभ्यामन्यपरत्वेनगृहीतमितिदर्शयति एवमुक्तेमहेशानमिति । एवंब्रह्मणोक्तेसतितंमहेशानंप्रतितावितथमूचतुः कीदृशौ अशुद्धैर्दुष्कृतगोपितैराशयैर्विपर्ययसंस्कारैःसंयुतचित्तत्वाद्भ्रांतिमापन्नौ ७४ तयोर्भ्रांतिप्रयुक्तंवाक्यमभिनयति छायात्मेतिद्वाभ्यां । छायादेहप्रतिबिंबंतद्रूपआत्माचक्षुर्गोलकस्थितत्वेनभवताप्रोक्तः अस्माभिःस्वबुद्धिबलेनतस्यतत्त्वमन्यत्रापिज्ञायते यथादर्पणेजलेखड्गादौचएषछायात्मादृश्यते ७५ दृश्यतेइति । हेभगवन्भवताइत्युक्तंइतिकिं योदक्षिणेचक्षुषिदृश्यतेसआत्मेति तत्तद्द्रष्टुरभिप्रायेणनभवतियतःस्वयंछायांदिदृक्षताऽऽदर्शादिकंविनावर्तमानेनस्वचक्षुषिनैवदृश्यतेकिंत्वादर्शादावेवदृश्यते एवंसतिस्वोत्प्रेक्षितोदाहरणगताच्छायात्मानःपरानपेक्षाःकिंगृहीतव्याःकिंवातत्रभवताभवतानिदर्शितत्वाच्चक्षुर्वृत्तिरेवच्छायात्माग्राह्यइत्याशयेनपृच्छतः कतमस्तेषुसंस्मृतइति तेषुआदर्शादिचक्षुरंतोपाधिभिन्नेषुच्छायात्मसुमध्येकतमःसम्यक्त्वेनस्मृतइतितदर्थः ७६ इत्युक्तइति । इतिइत्थंताभ्यांपांडित्याभिमानेनप्रो

यएषदृश्यतेशास्त्रबुद्ध्यासर्वैश्चचक्षुषि ॥ पुमानात्मायममृतोनिर्भयंब्रह्मनिर्गुणम् ७३ एवमुक्तेमहेशानमुभाविंद्रविरोचनौ ॥ ऊचतुर्भ्रांतिमापन्नावशुद्धाशयसंयुतौ ७४ छायात्मायंत्वयाप्रोक्तःपुमांश्चक्षुषिसंश्रितः ॥ आदर्शेवाप्सुवान्यत्रसएषपरिदृश्यते ७५ दृश्यतेयइतिप्राहभवांश्चक्षुषिदक्षिणे ॥ स्वचक्षुषिस्वयंचायंदृश्यतेनैवकेनचित् ॥ विनाऽऽदर्शादिकंतस्मात्कतमस्तेषुसंस्मृतः ७६ इत्युक्तेभगवान्प्राहसर्वत्रैवेतिसप्रभुः ॥ आनंदात्मास्वयंज्योतिर्यतःसर्वत्रसंस्फुरेत् ७७ स्फुरणस्यैवचात्मत्वमुक्त्वानंदैकरूपिणः ॥ पूर्ववद्ब्रह्मसंबोधोनाभूदितिविचिंतयन् ॥ इदमाहपुनस्तौसब्रह्मालोकपितामहः ७८ नीरपूर्णेशरावेस्मिन्नात्मानमवलोक्यहि ॥ आगम्यचपुनर्मांभोब्रूतमिंद्रविरोचनौ ७९ इत्यभिप्रायवांश्छायाभेदंगच्छतिसर्वतः ॥ नात्मनःस्फुरणंक्वापिबहिरंतश्चसर्वदा ८० एतौभ्रांतौमयाप्रोक्तमात्मानंचक्षुषिस्थितम् ॥ स्फुरणैकस्वभावंतमविज्ञायातिमोहितौ ८१ छायात्मेतिगृहीत्वैवंदृष्टवंतौहिबालिशौ ॥ सर्वदापंडितंमन्यौस्पर्द्धमानौपरस्परम् ८२ विपरीतंयुवाभ्यांतद्गृहीतंयन्मयेरितम् ॥ इत्युक्तेलज्जयाखिन्नचित्तौमूढतमौपुनः ८३ नकिंचिदवगच्छेतामुक्तमिंद्रविरोचनौ ॥ तस्मादुपायतस्त्वेतौबोधयिष्याम्यहंदृढम् ८४

केऽपिभगवान्ब्रह्मातयोर्विपर्ययमुपेक्ष्यस्वानुभवानुसारेणसर्वत्रैवेत्याहतदुपपन्नमेव यतआनंदरूपश्चिदात्मासर्वत्रोपाधिषुसाक्षिरूपेणभात्येवेत्यर्थः ७७ अथतयोरुदकशरावेप्रतिबिंबदर्शनोपदेशेप्रजापतेराशयंदर्शयति स्फुरणस्यैवेतिनवभिः । आनंदरूपिणःस्फुरणस्यैवात्मतामुक्त्वाप्यनयोर्ब्रह्मबोधःप्रथमोपदेशइवनजातइतिचिंतयन्सन्ब्रह्माइदमाह इदंकिं भोइंद्रविरोचनौयुवांनीरपूर्णेशरावेमृन्मयपात्रेआत्मानंशरीरमवलोक्यमामागम्यचब्रूतंयज्ज्ञातंतन्निवेदयतमितिद्वयोरर्थः ७८ । ७९ इत्यभिप्रायवानिति । कीदृशोब्रह्मा इत्यभिप्रायवान् इतिइत्थंविधेनाभिप्रायेणविशिष्टः इतिकिं छायायाउपाधिभेदेनपरिणामित्वादनात्मत्वंस्पष्टंसाक्षिणस्तुसर्वानुगतत्वेनतदुचितमितिविशेषसंत्यक्ष्येतौमोहेनभ्रमादलक्षणेनबालिश्येनसदुपदेशपराङ्मुखत्वलक्षणेनतथापांडित्यगर्वेणस्पर्द्धयाचदूषितचित्तत्वान्मदुक्तंचक्षुषिस्थितंसाक्षिरूपमात्मानमविज्ञायप्रत्युतविपरीतंछायैवात्मेतिगृहीत्वाएवंदृष्टवंतौस्वोत्प्रेक्षितमदुक्तयोर्भ्रांत्यसंदेहरूपंबोधंप्राप्तावितित्रयाणामर्थः ८० । ८१ । ८२ अनयोरेपाविपरीतमतिःसाक्षाद्भ्रमत्वनिवेदनेननपरिहर्त्तव्याभानक्षयेणोत्तरोपदेशानर्हतापत्तेरित्याह विपरीतमिति । यन्मयाईरितंतद्युवाभ्यांविपरीतंगृहीतमितिमयाकथितेसत्यंताविंद्रविरोचनौमानक्षयप्रयुक्तलज्जयाखिन्नचित्तौसंतौकिंचिदपिमदुक्तंनबुद्ध्येतांतस्मात्केनचिदुपायेनोदाहरणोपन्यासरूपेणैवबोधनीयावितिद्वयोरर्थः ८३ । ८४

गुरोःशिष्यस्वभावानुसरणस्यन्याय्यतामाह यादृशइति । शिष्याःसत्वादिगुणैस्त्रिविधाः उत्तममध्यममंदभेदात् तेपिबुद्धेस्तीक्ष्णतामध्यतामृदुताभिःप्रत्येकंत्रिविधाः तत्रपांडित्यंकार्यसाधनमितिन्यानेनचिकीर्षितशिष्यबोधरूपंकार्यंसिषाधयिषतागुरुणाशिष्यानुरूपमाकारादिकंतद्वद्धचतुरोभिनोबुद्धिश्चाहार्यज्ञानावगाहिनीशरणीयेत्यर्थः ८५ प्रजापतेस्तात्पर्यप्रदर्शनमुपसंहरति इतिबुद्धिमिति । एवंविधाभिप्रायमालंब्यैवप्रजापतिस्ताविंद्रविरोचनौप्रतिसर्वंत्रैवेत्याकारकमुत्तरंदत्तवान्नतुकिंभ्राम्यतोमयाप्रत्यग्वस्तूक्तमित्येवमुक्तवान् तद्वत्तेनैवाभिप्रायेणशरावेस्वात्मनोदर्शनमप्युक्तवानित्यर्थः ८६ ततःकिंवृत्तमित्याकांक्षायामाह ईक्षित्वेति । ततस्तौगत्वाशरावेआत्मानमीक्षित्वापसव्यागतौविदितौप्रजापतिनाह्वाःहथमुखात्ज्ञातौसंतौप्रजापतेःसमीपेस्थितौ ततःप्रजापतिरित्थंतावपृच्छत् इत्थंकथं युवामत्रशरावेप्रतिबिंबदर्शनेनकिंतत्त्वंज्ञातवंतावित्यर्थः ८७ ततइंद्रविरोचनौस्वाभिप्रायंपित्रेबालवत्प्रजापतयेनिवेदितवंतावित्याह देवासुराधिपाविति ८८ आवाभ्यामात्मसंज्ञोदेहएवाऽऽपादमामस्तकंचाविलोकितोयोब्रह्मचर्येणनखादिमानित्याकारंतयोर्वचनंदर्शयति आपादेति ८९ एवंविधंतयोर्भ्रांतिरूपकंवाक्यंश्रुत्वाआयासवैफल्येनखिन्नचेताःप्रजापतिर्वक्ष्यमाणविचाररूपंभाषणंतावुद्दिश्यमनसैवाकरोदित्याह एवमुक्तइति ९० प्रजापतिविचारमभिनयति अनयोरित्यष्टभिः । अनयोरिंद्रविरोचनयोर्बुद्धिमोहकोदोषःसुमहान्

यादृशोत्रभवेत्शिष्योयद्बुद्धिःसोपितादृशः ॥ तद्बुद्धिश्चगुरुर्भूत्वाबोधयेत्तंसदाबुधः ८५ इतिबुद्धिंसमास्थायशिष्यप्रियहितार्थकृत ॥ उक्तवान्भगवान्धातासर्वत्रैवेतितौप्रति ॥ शरावेवीक्षणंतद्वत्स्वात्मनःस्फुरणात्मनः ८६ ईक्षित्वाविदितौगत्वाब्रह्माणंसमुपस्थितौ ॥ ब्रह्मातौपुनरेवाहदृष्टवंतौकिमत्रभोः ८७ देवासुराधिपावेवमुक्तौब्रह्माणमूचतुः ॥ पितरंबालकौयद्वत्संमुग्धौकलभाषिणौ ८८ आपादमस्तकंदेहोनखकेशादिसंयुतः ॥ आत्माभिधःशरावेस्मिन्नावाभ्यामवलोकितः ८९ एवमुक्तःखिन्नचेताब्रह्मातौपुनरब्रवीत ॥ विचारयन्निजेचित्तेशिष्यप्रियहितार्थकृत ९० अनयोर्बुद्धिमोहोयंविद्यतेसुमहानिह ॥ यावेतौसर्वथैवेतदन्यथैवावगच्छतः ९१ छायात्मास्वीकृतःपूर्वंदृश्यतेचक्षुषीतिहि ॥ कीर्तितेपुनरप्येषसर्वंत्रैवेतिचेरिते ॥ नीरेविलोकनात्तद्वद्देहआत्मेतिनिश्चितः ९२ आत्मच्छायांपरित्यज्यभिन्नादर्शादिसंश्रयाम् ॥ एवंविचार्यदुश्चित्तौदेहात्मत्वमुपागतौ ९३ दृश्यतेसर्वदादेहःस्वात्मनःपरचक्षुषि ॥ आदर्शेचतथांब्वादावेकोभेदविवर्जितः ९४ तत्रतत्रतुयाच्छायासास्याद्भेदवतीसदा ॥ परिमाणादिवैषम्यादात्मादेहश्चनेदृशः ९५ छायातत्त्वपरित्यागोभेददृष्टिविलोकनात ॥ आभ्यांकृतोयथातद्वत्कारयिष्येत्वपुष्यपि ९६

विचित्ररूपोयद्बलादेतावेतम्मदुक्तंसर्वथासूक्ष्ममध्यमृदुप्रकारैःप्रवृत्तमप्यन्यथाविपरीतार्थपरतयैवावगच्छतोजानीतः ९१ एतदेवस्फुटयति छायात्मेति । हियतःप्रथमंमयासूक्ष्मरीत्याचक्षुषिदृश्यतेइतिकीर्तितेसतिएताभ्यांछायात्मागृहीतःपुनरपिमध्यविधयासर्वत्रएतावतिवचनेमयाईरितेसत्यपिच्छायात्मैवगृहीतःअथमृदुप्रकारेणनीरविलोकनेउपदिष्टेसतिदेहआत्मत्वेनैताभ्यांनिश्चितइत्यर्थः ९२ परंतुएतावन्नीरविलोकनेफलंलब्धंयत्परिणामित्वदोषालोचनेनच्छायायामात्मबुद्धिंपरित्यज्यततःप्रतीचिदेहआत्मबुद्धेरवतारइत्याह आत्मच्छायामितित्रिभिः । एतौदुश्चित्तावेवंविचारेणभिन्नेष्वादर्शादिषुस्थितस्यात्मनोदेहस्यच्छायांपरित्यज्यदेहआत्मत्वमुपागतौनिश्चितवंतौ ९३ एवंपदोक्तंविचारप्रकारमभिनयति दृश्यतइति । अयंदेहोभेदविवर्जितएवातएवैकश्चस्वात्मनोद्रष्टुर्देहात्परस्यदेहस्यचक्षुषिदर्पणेअंब्वादौजलादौचदृश्यतेतत्रतत्रप्रतिबिंबस्थानेषुयाछायासातुपरिमाणरूपादिभिर्भेदवतीस्यात्ततोदेहएवात्मायतोनेदृशच्छायावद्भेदशालीनभवतीतिद्वयोरर्थः ९४ ९५ अनुग्रहेणतयोर्देहादपिविवेकायोपायांतरंप्रजापतिश्चिंतयति छायेतित्रिभिः । यथाआभ्यामिंद्रविरोचनाभ्यांछायायांतत्त्वस्यआत्मत्वस्यपरित्यागःकृतः कुतः भेदस्यनानारूपत्वस्यया दृष्टिःप्रकारतयावगाहनंतच्छालिनोविलोकनाद्धिशिष्टज्ञानात् तथादेहेप्यात्मत्वस्यपरित्यागमेताभ्यांकारयिष्यामीत्यर्थः ९६

कथमित्यपेक्षायामाह नखेति । पूर्वमेताभ्यांब्रह्मचर्येणनखादिशालीदेहोदृष्टइदानींक्षौरस्नानाभ्यांनखादिरहितोसंतौदेहंपश्येतांततःपूर्वावस्थातोभेदंनिरीक्ष्यपरिणामिनिदेहेआत्मभ्रमंत्यक्ष्यतस्त्यक्तंकरिष्यतइतिद्वयोरर्थः ९७ । ९८ एवमालोच्यप्रजापतिनादत्तांतयोःपुनर्नीरविलोकनाज्ञामभिनयति एवंविचार्येति । कृतंछिन्नंकेशादिकंयाभ्यांतौतथा स्फुटमन्यद्द्वयोः ९९ । १०० तयोस्तुदोषेणायमप्युपायःफलविपर्यासंनीतोदेहात्मदृष्टेरेवदृढीकरणादितिदर्शयति एवमुक्तइति । तथास्नानादिपूर्वकंनीरशरावेआत्मदर्शनंकृत्वातेनचसुस्थितंदृढंदेहगतमात्मत्वंगृहीत्वापुनःप्रजापतिसमीपमेत्यइदमूचतुः इदंकिं यथाचदेहएवावयोरात्माप्रजापतेस्सिद्ध्यतितथाआवाभ्यांनीरपात्रेआत्मावीक्षितइतिद्वयोरर्थः १०१ । १०२ एतत्श्रुत्वाप्रजापतेरुपायांतरसिद्ध्यर्थंविचारमवतारयति प्रजापतिरिति । तयोरज्ञत्वंभ्रमदार्ढ्यंपुनरपिदृष्ट्वाइदंमनस्येवाचिंतितवान् १०३ इदंपद्योक्तंप्रजापतिविचारंवर्णयति अन्वयेत्यष्टभिः । अन्वयआत्मनःसर्वत्रानुगमोव्यतिरेकोदृश्यानामागमापायशालित्वतयोर्दर्शनेनैतौशिष्यौप्रत्यात्मबोधनंमयाप्रारब्धमित्यर्थः १०४ अन्यत्रैवेति । तथात्रनीरविलोकनोदाहरणेदेहस्यधर्मभूतैर्नखकेशादिभिःक्षौरपूर्वोत्तरकालयोःस

नखकेशादिसहितंमलिनंचकुवाससम् ॥ दृष्ट्वंतौपुरादेहमेतौनीरशरावके ९७ नखकेशादिरहिताविदानींस्नानसंयुतौ ॥ निरीक्ष्यभेदतोदेहआत्मत्वंत्यक्ष्यतस्त्विमौ ९८ एवंविचार्यभगवानिदमाहप्रजापतिः ॥ स्नातौसुवसनौभूत्वाकृतकेशनखावपि ॥ साध्वलंकारसंपन्नौयुवामिंद्रविरोचनौ ९९ नीरपूर्णेशरावेस्मिन्नात्मानमभिवीक्ष्यहि ॥ पुनरागत्यमांब्रूतंयुवाभ्यांदृश्यतेहियत् १०० एवमुक्तेतथाकृत्वापुनरेत्यप्रजापतिम् ॥ ऊचतुर्देहआत्मत्वंसुस्थितंपरिगृह्यतौ १०१ यथायमावयोरात्मादेहएवप्रजायते ॥ तथानीरशरावेस्मिन्नावाभ्यामभिवीक्षितः १०२ प्रजापतिःपुनर्ज्ञात्वातयोरज्ञत्वमीश्वरः ॥ इदंविचारयामासमनसैवमहामनाः १०३ अन्वयव्यतिरेकाभ्यामात्मनःप्रतिपादनम् ॥ मयैतयोरुपक्रांतंशिष्ययोरल्पमेधसोः १०४ अन्यत्रैवात्रदेहस्यनखकेशादिभिःकृतः ॥ सत्वेनवाप्यसत्वेनतथाताभ्यामनिश्चितः ॥ प्रत्युतास्यैवदेहोयंविशेषादवधारितः १०५ देहआत्मनियद्यद्विक्रियतेसंस्क्रियादिकम् ॥ छायात्मनोभवेत्तत्तन्नस्वतोऽस्यास्तिकिंचन १०६ आत्माततोत्रदेहोयंनच्छायात्मानुकारकृत् ॥ देहेसतिचलोकेस्मिन्सुखंभवतिदेहिनाम् १०७ इतिबुद्धिंसमाश्रित्यदेहआभ्यांदृढात्मता ॥ स्वीकृतानस्तयोर्बुद्धिंसमाश्रित्याप्यहंपुनः ॥ देहात्मतायाःप्रच्याव्यनयाभिस्फुरणंप्रति १०८

त्वासत्वाभ्यांश्चयाद्दर्शितआत्मादेहादन्यत्रैवकृतःस्फुटंमित्यत्रयानिरूपितइतियावत् परंतुएताभ्यांमंदशिष्याभ्यांतथादेहात्पृथक्त्वेनानिश्चितोनज्ञातःप्रत्युतविपरीतमयंदेहएवात्मत्वेनावधारितइत्यर्थः १०५ तथाविपर्ययंगृहीतयोरनयोरनुरूपंप्रत्याह इदानीमेवक्रियतेयद्देताभ्यांदेहधर्माणांछायायामारोपितत्वंविज्ञायछायाया आत्मत्वंविसृज्यदेहात्मत्वंगृहीतंतथायदीया अमरत्वादिधर्मादेहेसमारोप्यैतस्यात्मत्वेनिश्चयंविनभ्रमनयमांप्रत्यादौशंकांनिष्पादयिष्यतीति चिंतयति देहइत्यादिना । संस्क्रियावंदनलेपादिरूपा आदिपदेनमालिन्यग्रहः एतत्सर्वंछायास्वरूपेतदेवभवतियद्देहेक्रियतेनतुकिंचिद्यपिस्वतःअस्याअस्तीत्यर्थः १०६ आत्मेति । ततोस्यात्मत्वसंस्कारादायाश्रयत्वादेहएवात्माभवतिनच्छायायाःसाअनुकारस्यआरोपितपरधर्मसेवनस्यकर्त्री तथासुखसाक्षात्कारलक्षणफलमपिदेहसत्वेदृष्टंनच्छायायामित्येवंदेहोत्कर्षंगमादिनांबुद्धिंसमाश्रित्यैताभ्यांदेहात्मताइढास्वीकृताअतएनंतद्वैसमालंब्यतद्वंसमानामनयोर्बुद्धिंसमाश्रित्यानुगुण्यात्पश्चादहंमत्तोशिष्यौदेहात्मतायाःप्रच्याव्यपश्चिमीकृत्यवास्फुरणरूपमुख्यात्मनाभिमुखंवेनयामीतिद्वयोरर्थः १०७ । १०८

कथमित्यपेक्षायामाह देहइति । यतोदेहःस्वभावतोजन्मादिविकारैर्भयेनपरिच्छेदेनचविशिष्टोदृश्यतेतस्यामरत्वादिकंचयत्तादात्म्यारोपेणभातितत्स्फुरणमप्युभाभ्यामेताभ्यांसर्वंपुमदुष्टेशपर्याये पुदृष्टमेव तत्रहेतुगर्भंविशेषणंदेहादिसंश्रयमितिदेहादिष्वध्यासिकसंबंधेनानुगतमितितदर्थः नहिस्फुरणभावंविनाकिंचिदपिभातीत्यर्थः १०९ । ११० अतइति । अतश्छायादेहविवेकग्या यस्यदेहस्फुरणयोर्योजयितुंशक्यत्वात् अधुनदेहेऽसंभावितानारोपमंतरानुपपद्यमानानमृतत्वादिरूपान्स्फुरणस्यधर्मान्वक्ष्येप्रतिपादयामि यान्धर्मान्वीक्ष्यस्फुरणस्यस्वाभाविकानालोच्यएतौ देहेदृष्टमात्मत्वंत्यक्ष्यतःप्रहास्यतइत्यर्थः १११ एवंविचार्यप्रजापतिनाप्रयुक्तंवाक्यमभिनयति इत्थमिति । तौप्रतिऊचेउक्तवान्प्रजापतिः किमूचेइत्यतआह एषइत्यादि । एषस्फुरणरूपआ त्मामरणभयपरिच्छेदैर्हीनोयतआत्मनःस्फुरणलक्षणंस्वरूपंसर्वैर्मदुपदेशक्रमैर्युवाभ्यामनुभूतमिवेतिशेषः तस्यविवेकेनाविज्ञानादित्यर्थः ११२ एषोपिप्रजापत्युपदेशस्तयोर्देहात्मतामेवादृढयत् नचदेहेऽमृतत्वादीनामनुपपत्तिरुपायविशेषैस्तेषामपिताभ्यांसाध्यत्वस्यमन्यमानत्वादितिदर्शयति एवमुक्ताविति । तेनप्रजापतिनाएवंपुनरुक्तावपिप्रभूदेवासुरराजौदेहनिष्ठमात्मत्वंसर्वथै

देहोयंम्रियतेस्थूलोयतोजन्मादिधर्मवान् ॥ भयंचवैरिणोगच्छेत्परिच्छिन्नश्चदृश्यते १०९ अपरिच्छिन्नममृतमभयंस्फुरणंचयत् ॥ उभाभ्यांसर्वपर्यायदृष्टंदेहा दिसंश्रयम् ११० अतोधर्मानिमान्वक्ष्येदेहेऽसंभावितान्सदा ॥ वीक्ष्यतान्देहआत्मत्वंत्यक्ष्यतःस्वयमेवहि १११ इत्थंविचार्यतावूचेएषआत्माऽमृतोभयः ॥ ब्रह्मयत्सर्वपर्यायैर्युवाभ्यामनुभूयते ११२ एवमुक्तावुभौतेनप्रभूइंद्रविरोचनौ ॥ प्रतिपन्नौपुनर्देहआत्मत्वंसर्वथैवतु ॥ अमृतत्वादिकंतस्यमेनातेएवमेवहि ११३ रसायनादयःसंतिदेहस्यामृतताकराः ॥ उपायास्तैरयंदेहोजरामरणवर्जितः ११४ भवेदतोऽमृतत्वंस्यादस्यदेहस्यसर्वथा ॥ तदर्थंततएवैषयत्नःकार्योमहात्म भिः ११५ अमृतोनभयंगच्छेद्वैर्यादिभ्यःकथंचन ॥ मृतिहेतोर्यतःप्रोक्तंभयंसर्वशरीरिणाम् ११६ अभयश्चभवेद्ब्रह्मयोगौषधनिषेवणात् ॥ पुमान्भवेन्मृगोप्य श्वोहस्तीवामहिषःपुमान् ॥ समहान्पर्वताकारःपर्वतोवाक्षणादयम् ११७ आत्माततोत्रदेहोयंसर्वपापविवर्जितः ॥ विजरश्चविमृत्युश्चभवेदेषउपायतः ११८ विशोकश्चभवेन्नित्यंजरामरणवर्जनात् ॥ क्षुत्पिपासादिरहितोमंत्रौषधबलादपि ११९

वप्रतिपन्नौनिश्चितवंतौ हियतस्तस्यदेहस्यामृतत्वादिकमेवंवक्ष्यमाणप्रकारेणतौमेनातेस्वीचक्रतुरित्यर्थः ११३ ताभ्यांदेहात्मवादेप्रजापतिवाक्यानांयथासमन्वयःकृतस्तंप्रकारंवर्णयति रसा यनादयइत्यूनविंशतिश्लोकैः । जरारोगहरमौषधंरसायनं तथाचविश्वप्रकाशः 'रसायनंविडंगेस्याज्जराव्याधिजिदौषधौ' इति आदिपदेनमंत्रकल्पादीनांग्रहः एतेउपायादेहस्यामृतत्वहेतवःसंति यतस्तैरुपायैरयंदेहोजरादिरहितोभवेत् अतोरसायनाद्युपायैरमृतत्वमस्यस्थूलस्यापिदेहस्यसंभवतिततइहसंभवादेवतदर्थममृतत्वार्थंयत्नउक्तरूपःकार्यइतिद्वयोरर्थः ११४ । ११५ अमृतत्वसिद्धौ त्वभयत्वमर्थादेवसिद्ध्यतिनहिमृतिहेत्वभावेभयंयुज्यतेइत्याह अमृतइति ११६ ब्रह्मत्वंत्वस्यदेहस्याभयत्वेनबोध्यंवृंहिधातूक्तवृद्धेःसंकोचाभावरूपत्वात्संकोचस्यचभयनिमित्तकताप्रसिद्धेः अ थवानानारूपधारणसामर्थ्यरूपावृद्धिस्तदर्थः सापिसंभवतियोगौषधसेवाबलेनपुरुषमृगाश्वहस्तिमहिषादिरूपाणांपुरुषत्वेपिपर्वतसमाकारत्वस्यप्रसिद्धपर्वतरूपस्यवाधारयितुंशक्यत्वादित्याह अभयश्चेति ११७ उपक्रमेप्रजापत्युक्तलक्षणानामपिसंभवादयंदेहएवात्मेत्याह आत्मेति । उपायंतोयोगादिरूपात्निष्पापत्वादिकमप्यस्यसंभवतीत्यर्थः ११८ जरादिराहित्येविशोकत्वंमं त्रादिबलात्क्षुधादिराहित्यंचभवतीत्याह विशोकइति ११९

विर्जिज्ञासितव्यइतिपदेज्ञाधातुनाकृतिर्लक्ष्यतेसर्वलोककामाप्तिरूपफलसमभिव्याहारादितिदर्शयति एवंभूतमिति । एवंभूतममृतत्वादिशालिनंदेहंयःकुर्यात्सस्वबलेनसर्वान्लोकान्कामांश्चजये दित्यर्थः १२० चक्षुषिनीरशरावेप्रतिबिंबदर्शनोपदेशेनचप्रजापतिनादेहस्यैवमित्यध्वादिकंदृष्टांतेनोक्तमितितयोराशयंवर्णयति छायादीति । छायायाआदिपदप्राप्ततत्कारणस्यचदर्शनादुदा हरणाद्देहस्यमरणादिवर्जितत्वमेवप्रजापतिनोक्तमित्यर्थः १२१ कथमित्यपेक्षायांतदुपपादयति शस्त्रेति । यथाशस्त्रादिप्रहारेर्नाशःपापंशोकश्चएतेपदार्थाश्छायायांनभवंतितथादेहेपियथान स्युस्तथायतितव्यमित्यर्थः १२२ वर्द्धंतीवेति । यथाचपूर्वाह्णेपराह्णेचच्छायावृद्धिंयातितथायोवर्द्धेतसदेहआत्मेतिदर्शितमित्यर्थः १२३ हेत्विति । यथाचच्छायायाःस्वभावतोविनाशही नायानाशोहेतुनाशोपाधिकस्तथादेहस्यापिबोध्यइत्यर्थः १२४ दृष्टांतेदार्ष्टांतिकेचहेतुत्वंदर्शयति हेतुर्यथेति । यथाछायायाःकारणमात्मत्वेनप्रसिद्धोदेहस्तथादेहस्यकारणंत्वगसृगादिधातु नांसप्तकमित्यर्थः १२५ दोषेति । तच्चधातुसप्तकंप्रहाररोगाद्यैर्बाह्यांतरनिमित्तैःकफवातपित्तानांक्षोभेसतिसंक्षुब्धमन्यथाभावंगतंसत्शरीरंविनाशयतीत्यर्थः १२६. यथाचबिंबस्थैर्येणच्छा

एवंभूतंयआत्मानंदेहंकुर्यात्पुमानिह ॥ सर्वान्लोकांस्तथाकामान्सआप्नोतिनसंशयः १२० छायादिदर्शनादात्मादेहोमरणवर्जितः ॥ पापशोकभयाद्यैश्वर
द्वितोब्रह्मणेरितः १२१ शस्त्राग्न्याद्यैर्नहिच्छायाविनश्यतिकदाचन ॥ नपापंचनशोकश्चभयंनास्याश्चविद्यते १२२ वर्द्धन्तीवभवेदेषासर्वदाप्रातरादिषु ॥
देहोपिचतथैवायंसर्वेषामिहदेहिनाम् १२३ हेतुनाशाद्यथाच्छायानाशमायात्यनश्वरी ॥ हेतुनाशात्तथादेहोनाशमायात्यनश्वरः १२४ हेतुर्यथात्मादेहोयंछा
यायाःपरिकीर्तितः ॥ देहस्यापितथाहेतुःकीर्तितंधातुसप्तकम् १२५ दोषत्रयस्यसंक्षोभाद्बाह्यांतरनिमित्ततः ॥ विनाशयेदिमंदेहंसंक्षुब्धंधातुसप्तकम् १२६
मंत्रौषधादिसेवातोनिमित्तप्रतिबंधनात् ॥ वातपित्तकफाःक्षोभंनगच्छंतिकदाचन १२७ तेषांक्षोभंविनानापिशस्त्राग्न्यादिसमागमः ॥ त्वगादयोपिनक्षोभंव्र
जंतीहकदाचन १२८ यदानक्षोभमायातित्वगाद्याःसप्तधातवः ॥ देहनाशस्तदानस्याद्दाहच्छेदभिदादिना १२९ जलवद्वन्हिमध्येस्यात्वशीतलोयंशरीरिणः ॥
मंत्रौषधादिसिद्धस्यदेहोनीरेतथैवच १३० पाषाणवच्चभूमौस्यात्तूलसमोनीरवच्चवा ॥ वायौवायुसमस्तद्वद्गगनेगगनोपमः १३१ पंचभूतैश्चसादृश्यंभूतानांधार
णादिभिः ॥ प्रयातिनतएवायंशस्त्रैरपिनभिद्यते १३२ बाणादीनांसहस्राणिभिंद्युर्यद्वज्जलादिकम् ॥ भेदेपिचतथैवस्याद्देहःसिद्धस्यसर्वदा १३३ इत्यादिकुधि
यांविष्टोदृष्टशास्त्रविमोहितौ ॥ देहस्यैवात्मतांसम्यग्बुबुधातेउभावपि १३४

यायाःस्थैर्यंभवतितथामंत्रौषधादिसेवयाप्रहारादीनांप्रतिबंधेकृतेसतिकफादिक्षोभाभावेनधातुसप्तकस्यस्थैर्यंसंपाद्यमित्याह मंत्रौषधादीतिद्वाभ्यां । निगदव्याख्यातंद्वयम् १२७ । १२८ तर्हिदेहस्यामृतत्वादिकंकथंयमेवसिद्धंस्यादीत्याह यदेति १२९ योगादिनासिद्धदेहस्यदाहाद्ययोग्यतांस्फुटयति जलवदितित्रिभिः श्लोकद्वयम् १३० । १३१ पार्थिवादिधारणाभिर्वसिष्ठसंहि तायुक्ताभिःशरीरस्यतत्तद्भूतसादृश्यमपितस्यामरताद्युपयोजकमित्याह पंचभूतैरिति १३२ भूतसाम्येसतिफलद्वयंभवतिशस्त्रादेरभेदोवाभेदेसतिपुनस्तथाभावोवेत्याह बाणादीनामिति । प्र धानकादिवंद्राणाद्यैर्भिद्यमानंपुनस्तथाभवंतथायोगसिद्धस्यदेहोपीत्यर्थः १३३ एतादृशकुबुद्धियुक्तौतौदेहात्मत्वंदृढीकृतवंताविक्याह इत्यादीति । इदशास्त्रमर्थशास्त्रंकामशास्त्रंचतेन दृष्टिवर्धितावित्ति १३४

बुद्धेति । दुष्टोदूषितचित्तौतावेवंदेहात्मतांबुद्ध्वाकृतकृत्यमानिनौप्रजापतिंनमस्कृत्यतेनप्रजापतिनामौनस्थितेनाननुज्ञातावेवब्रह्मणोगृहाज्जग्मतुःप्रतस्थतुरितिद्वयोरर्थः १३५ । १३६ नि र्यांताविति । तौनिर्गच्छंतौविलोक्यब्रह्माइदमाह इदंकिं इमौदेवासुरपतीमानस्पर्धामदेदूषितौदेहएवात्मत्वंविज्ञायनिर्यातौगतावहोइतिद्वयोरर्थः १३७ । १३८ अनयोरिति । अनयो र्निवारणंनकर्तव्यमनर्थांतरापातादित्याह अनयोरित्यादिनानिर्निमित्तमित्यंतग्रंथेन । यदिचाहंसंप्रेर्यस्वपुरुपानाज्ञाप्यानयोर्निवारणंवृथागमनबाधनरूपंकिंचिदपिकरिष्यामितदेतौराजसप्रकृति काविंद्रविरोचनावभिमानक्षयाद्देतोर्जीवनेनिराशौस्याताम् यस्मादल्पेपिमानक्षयदेमानक्षयप्रयोजकेवचनाणमेवचनप्रसंगेसतिक्रोधवशंगच्छंतौतावितोऽईयेतेइतिद्वयोरर्थः १३९ । १४० अन योःक्रोधेकिंस्यादितिचेद्युद्धेनभूतक्षयइत्याह देवासुरेति । एतौक्रुद्धौसंतावतुल्यंयुद्धंकुर्वीताम् कीदृशौदेवासुराणांयेयुत्तानःश्रीमंतस्त्र्यंबवोदारसंज्ञास्तेषांपतिवधेनवैधव्यकरौपिशिताशिनांक्रव्या दानांजनानांपामराणांगृध्रादीनामानंदप्रदायकौचसंतौअतुल्यंचतुरंगस्यहस्त्यश्वरथपादातरूपस्यक्षयकरंयुद्धंकुर्वीतांततश्चानयोरात्मवेदनप्रसंगेनिर्निमित्तमकस्माद्भूतानांक्षयःस्यात्सचमाभूदित्येतदर्थं

बुद्ध्वादेहात्मतांदुष्टावुभाविंद्रविरोचनौ ॥ प्रसन्नमानसौभूत्वाजग्मतुर्ब्रह्मणोगृहात् १३५ प्रजापतिंनमस्कृत्यकृतकृत्यौमहाबलौ ॥ तावुभावननुज्ञातौब्रह्मणा मौनिनाततः १३६ निर्यांतौवीक्ष्यभगवानिदंवचनमब्रवीत् ॥ इमौहिपंडितंमन्यौदेवासुरपतीउभौ ॥ महाबलौमहाप्राज्ञाविति लोकेप्रथांगतौ १३७ परस्प रंस्पर्द्धमानावभिमानगिरीइव ॥ नमस्कृत्यैवसहसामामपृष्ट्वाचदुर्मदौ ॥ निर्यातौदेहआत्मत्वंविज्ञायपरिमोहितौ १३८ अनयोर्यद्यहंकिंचित्संप्रेर्योत्रनिवार णम् ॥ करिष्यामिततोमंदावभिमानक्षयात्ध्रुवम् १३९ निराशौजीवितेस्यातामुभाविंद्रविरोचनौ ॥ राजसौसर्वदायस्मात्कुतश्चिद्वचनागमे ॥ अल्पेपिमान क्षयदेक्रोधवशंगतौ १४० देवासुरयुवश्रीमद्ध्रुवैधव्यकारकौ ॥ पिशिताशिजनानंददायिनौसाधुभीतिदौ ॥ कुर्वीतांयुद्धमतुलंचतुरंगक्षयप्रदम् १४१ ततो भूतक्षयोमाभूदेतयोरात्मवेदने ॥ निर्निमित्तंस्वयंयस्मात्फलंस्यादेतयोरिह १४२ देवोवाऽप्यसुरोवास्यादुभयोरितरोपिवा ॥ देहात्मज्ञानसंपन्नोयेषामिन्द्र विरोचनौ ॥ गुरुत्वेपरिभूताःस्युरिहवापिपरत्रवा १४३ इहदेहात्ममानेनसर्वदादेहरक्षणे ॥ उद्यमंविफलंकृत्वादुःखंयास्यंतिदारुणम् १४४ उपायैर्विविधैस्तिं छेत्पक्कमन्नंयथानहि ॥ अविनष्टंतथादेहोनतिष्ठेन्नाशवर्जितः १४५

मनयोर्निवारणंनयुक्तमिति तर्ह्यात्मवर्तितदेहात्मवादेनलोकोपप्लवःस्यादित्याशंक्यतत्प्रवृत्तिप्रतिबंधायदेहात्मविज्ञानस्यदुष्फलंशापविधयाकीर्तयति स्वयमिति । इतश्चनिवारणंनयुक्तंय स्मादिदंवक्ष्यमाणंफलमेतयोःसंबंधिनिदेहात्मवादेस्वयंकेनचिदनारब्धमपिस्यादितिद्वयोरर्थः १४१ । १४२ इदमित्युक्तंदेहात्मवादफलंदर्शयति देवइतित्रयोविंशतिश्लोकैः । देवजातीयःअसु रजातीयःएताभ्यामितरोमनुष्यादिजातीयोवाभवतियस्ययस्यैताविंद्रविरोचनौदेहात्मज्ञानसंपन्नौगुरूसाक्षात्परंपरयाऽहलधत्वेनगृहीतस्यस्वज्ञानस्यप्रापयितारौभविष्यतस्तेसर्वेएतयोःशिष्याःपरा भवंश्रेयोमार्गपरिभ्रंशरूपंयास्यंतिइहवर्तमानजन्मनिपरत्रभाविजन्मसुचेत्यर्थः १४३ तत्रइहपराभवंयत्नवैफल्येनदर्शयति इहेत्यूनविंशत्या । यतस्तेमूढादेहमात्मानंमत्वातद्रक्षणोद्यमानां वैफल्येनदुःखिताभवंतीत्यर्थः १४४ तत्रहेतुतयादेहस्यविनाशशीलतामाह उपायैरिति । यथापक्कमन्नमोदनादविनष्टंनतिष्ठेत्विविधोपायैरपिकृतैःकिंतुविनश्येदेवतथादेहोपीत्यर्थः अथवाअन्नंस स्यम् तथाचश्रुत्यंतरम् 'सस्यमिवमर्त्यःपच्यते' इति १४५

तत्रकैमुत्यंदर्शयति यदेतिद्वाभ्यां । अत्रअधिष्ठानात्मतत्त्वे स्फुटमन्वयद्वयोः १४६ । १४७ किंचविपक्षव्याप्तस्यामृततापक्षोव्याहतइत्याह मृत्युरिति । विगतासंधासंधिर्यस्यसविसंधः शत्रुः तथाचमृत्युरूपोव्याधिरूपश्चविसंधःशत्रुर्यस्यदेहस्याक्षोदकैःसहवसतितथायस्यजठरेऽतर्दाहःक्षुधारूपस्तिष्ठतिरक्तवन्हिवत्रक्तवर्णोऽगाररूपोवन्हिस्तत्समइत्यर्थः तथायस्यबाह्यदेशेपिदाहस्तिष्ठतिसर्पवृश्चिकादिभूतरूपस्तथायस्यशस्त्रादिरूपामृत्यवोबहिश्चराःप्रसिद्धास्तथायोदेहोविदितेविवेकेक्रियमाणेनिःसारोयथाकदलीवृक्षस्त्वङ्मात्रात्मकत्वेननिःसारस्तद्वत्सएवविपक्षव्याप्तःस्वयंनिःसारश्चदेहःकथममृतःस्यादितित्रयाणामर्थः १४८ । १४९ । १५० किंचनश्वरनिमित्तोपादानकस्यामृततादुर्लभेत्याह अपीति । कर्मनिमित्तकोभूतैरुपादानभूतैरारब्धोयः प्रसिद्धःसदेहस्तदपायेतेषांनिमित्तानामुपादानानांचापायेनाशेसतिकथंस्थायीस्थितिशीलःस्यादित्यर्थः १५१ किंचआयुःप्रतानकत्वंकर्मणःशतसंवत्सरपर्यंतमेवनियतत्वात्शतोत्तरंकथममृतत्वंस्यादित्याह कर्मचेति । अत्रदेहेकारणभूतंकर्मयद्यपिशतसंवत्सरपर्यंतमायुःप्रदंभवेत्तथापिततःशतसंख्यापूर्त्यनंतरंकथमायुर्दद्यात् यतआदिनियतंआदिनाजगत्कारणेश्वरेणनियतंव्यवस्थां

यदाभूमिरियंभूतधात्रीभूधरसंयुता ॥ विनश्यतिचशुष्यंतिसागरानीरपूरिताः १४६ नलभ्यतेत्रतेजश्चवायुनासहितंचखम् ॥ तदातिष्ठेत्कथंदेहःफेनबुद्बुदसन्निभः १४७ मृत्युर्यस्यमहाव्याधिर्विसंधोन्नोदकैःसमम् ॥ वसत्यविरतंदाहोजठरेरक्तवन्हिवत् १४८ बाह्यदेशेपिभूतानिसर्पादीनिसहस्रशः ॥ शस्त्रास्त्रादीन्यनंतानियस्यबाह्याश्चमृत्यवः १४९ यथात्रकदलीस्तंभोनिःसारोविदितेसति ॥ त्वगात्मकस्तथादेहःकथमेषोऽमृतोभवेत् १५० अपिकर्मनिमित्तोयंदेहःसर्वशरीरिणाम् ॥ आरब्धस्तदपायेस्यात्स्थायीकेनात्रहेतुना १५१ कर्मचात्रादिनियतंकारणंशतवत्सरम् ॥ आयुःप्रदमथाप्येतत्कथंदद्यात्ततःपरम् १५२ रसायनादयोवादाःकेवलंदेहधारणे ॥ उपकारायभूतानिबलवृद्धक्षैभयायच १५३ रसायनादिभिर्नित्योदेहोयद्यत्रजायते ॥ रसायनादिकर्त्तारोमृतास्तेकेनहेतुना १५४ अपिजन्मवतांनाशोनियतःपरिकीर्तितः ॥ घटादीनांतथादेहःकेननित्योभविष्यति १५५ अपिप्रत्यक्षतोदृष्टोनाशःसर्वैश्चजंतुभिः ॥ स्वदेहस्यकथंतत्रनित्यतात्रभविष्यति १५६ जंतुःसर्वोपिबालःस्यात्कुमारःपंचहायनः ॥ कुमारोथयुवातद्वत्पूर्णःषोडशवार्षिकः ॥ युवावृद्धःकुतोवृद्धोनमरिष्यतिदेहभाक् १५७

नीतमित्यर्थः १५२ रसायनादिभिस्तदाशांवारयति रसायनादयइतिद्वाभ्यां । देहधारणकालेरोगाद्यपचयरूपोपकारार्थमेवसृष्टानिरसायनादीनिनामृतत्वार्थं तथापृथिव्यादिभूतानिधारणयावशीकृतान्यपियोगिनोबलवृद्ध्यैचैवभवंतिनामृतत्वाययतस्तानिभयायापिसृष्टानि भूतानांभयहेतुत्वंचयदाभूमिरियंभूतधात्रीत्युक्तकैमुत्यन्यायेनबोध्यम् १५३ तत्रहेतुतयारसायनधारणादिप्रवर्त्तकेष्वेवव्यभिचारमाहरसायनादिभिरिति । कर्तारःप्रवर्त्तकाः १५४ किंचजन्मरूपव्याप्यवतिव्यापकस्यमरणस्याभाववचनंन्यायविरुद्धमित्याह अपिजन्मवतामिति । जन्मवतांघटादीनांनाशोनियतःअवश्यंभावीदृष्टःसदेहेपिजन्मवतिकथंनस्यादित्यर्थः १५५ बालकुमारादिरूपेणनाशप्रतियोगितयानुभूतस्यस्वदेहस्यवृद्धरूपेणामृतत्वाशाविफलेत्याह अपिप्रत्यक्षतइति यतःस्वदेहस्यैवनाशोबालादिरूपस्यसर्वैरनुभूतस्ततस्तस्यनित्यतानयुक्तेत्यर्थः १५६ एतत्स्फुटीकर्तुंबालाद्यवस्थाःपूर्वोत्तरीभूताःकथयति जंतुरिति । बालःपंचहायनपर्यंतं ततःकुमारआषोडशम् । ततोयुवापष्टिपर्यंतम् ततोवृद्धःतस्यामरत्वेकाप्रत्याशेत्यर्थः १५७

'मृत्युर्जन्मवतांवीरदेहेनसहजायते अद्यवाब्दशतांतेवामृत्युर्वैप्राणिनांध्रुवः' इतिपुराणवाक्यार्थंफलितार्थत्वेननिबध्नाति जंतूनामिति । देहेसतिविद्यमाने तस्यमरणस्यप्रतीकारःप्रतिबंधोपायो नास्तीत्यर्थः १५८ 'मृत्योर्बिभेषिकिंमूढभीतंमुंचतिकिंयमः । अजातंनैवगृह्णातिकुरुयत्नमजन्मनि' इत्युक्तोमोक्षोपायस्तुदेहात्मदर्शिनांदुर्लभइत्याह एकएवेति । मृत्योःप्रतीकारएकएवपदेहाग्रहणंनामेत्यर्थः १५९ देहेइति । एतेदेहात्मवादिनोदेहमंतेविड्भस्मादिरूपमात्मतयागृहीत्वादेहाग्रहणस्यकारणंतत्त्वबोधंगंतुंमनसापिनयतंतेयतआस्थारताइतिद्वयोरर्थः १६० । १६१ देहस्यांतेविडादिभावेकैमुत्यमाह प्राल्हादेरपीति । देहात्मवादिनांगुरूएतौप्राल्हादिःप्रल्हादपुत्रोविरोचनोदेवराजश्च येयदिअनयोरपिदेहोऽतेताहशोविड्भस्मादिरूपस्तदान्यस्यकिमुतेत्यर्थः १६२ अथतेषांपरलोकेपराभवंस्फुटयति देहमितिद्वाभ्यां । देहेआत्माभिमानेनहेतुनानिर्गुणाविवेकसंतोषादिगुणैर्हीनाःसंतोयतःपापकारिणोभवंतिततःपरलोकेहानिस्तेषांस्पष्टेत्यर्थः १६३ साचसुखाभावदुःखयोरात्यंतिकस्वरूपेत्याह पापिनामिति १६४ फलितमाह ततइति । यास्यतीतिपदमावर्त्तते तथाचायंदेहात्मवादीयद्यपियेपुजनेषुयास्यतिप्रवृत्तोभविष्यतितेंलोकद्वये

जंतूनांमरणंतेनदेहेनसहजायते ॥ देहेसतिनतस्यस्यात्प्रतीकारःकदाचन १५८ एकएवप्रतीकारोमृत्योरस्यमहात्मनः ॥ देहस्याग्रहणंनान्यत्क्वचिल्लोकत्रयेपिहि १५९ देहआस्थारताएतेनित्यंदेहात्मवादिनः ॥ मनसापिनगच्छंतिदेहाग्रहणकारणम् १६० गृहीत्वात्मतयादेहमेतन्नित्यंविनश्वरम् ॥ विड्भस्मष्टतिकारूपमंतेयत्सर्वदेहिनाम् १६१ प्राल्हादेरपिचेंद्रस्यदेहोन्तेताहशस्सदा ॥ देवराजस्यदेहोपिकिमुतान्यस्यदेहिनः १६२ देहमात्मतयामत्वानिर्गुणाःपापकारिणः ॥ भवंतिपरलोकश्चततस्तेषांनसंभवेत् १६३ पापिनांपरलोकेस्मिन्सुखंक्वापिनविद्यते ॥ किंतुदुःखंबहुविधंयद्वक्तुंचनशक्यते १६४ ततोदेहात्मवादीयंदारुणोयेषुयास्यति ॥ लोकद्वयेपितेदुःखंप्राप्स्यंतिचतथापिते १६५ इतिनानाविधांचिंतांसंप्राप्यपरमेश्वरः ॥ वीक्षमाणोऽवदन्नास्तेगताविंद्रविरोचनौ १६६ विरोचनोतित्वरयाव्रजंस्तामासुरींसभाम् ॥ स्वकीयामाशुगतवानतिसंतुष्टमानसः १६७ प्रकृत्यातामसोदैत्याराजसातमसावृताः ॥ सत्वलेशेनरहिताःसर्वेदैवाविचारकाः १६८ आगत्यचसभांदैत्यैःसत्कृतःसूर्यसन्निभः ॥ महासनेसमासीनःसभायांदितिजन्मनाम् १६९ देहआत्मेतिविज्ञानमुक्तवांस्तान्यथास्वयम् ॥ गृहीतवान्विमूढात्माब्रह्मलोकेतिदुःखितः १७० तेसर्वेतामसानित्यंरजसाचसमावृताः ॥ अभावात्सत्त्वलेशस्यविचारपरिवर्जिताः ॥ जगृहुर्देहआत्मत्वंयत्स्वयंपूर्वमूहितम् १७० विरोचनोयथाशिष्यास्तथैवगुरुबुद्धितः ॥ विरोचनोपदिष्टंतेदेहात्मानंप्रपेदिरे १७२

पिदुःखंयास्यंतितथाप्येवमनर्थफलकोपियास्यतिप्रसरिष्यतीत्यतोदारुणोमहामोहमयइत्यर्थः १६५ इत्येवंलोकानांभाविफलपरिपाकंचिंतयापश्यन्नपिकिंचिदवदन्मौनीप्रजापतिरास्तेतिष्ठतिस्मइंद्रविरोचनौतुतावतागतावित्याह इतिनानेति १६६ तयोर्मध्येविरोचनवृत्तंवर्णयति विरोचनइति । स्वकीयांस्वसजातीयांतांप्रसिद्धामसुराणामिंद्रियारामाणांसभांशीघ्रगत्याप्राप्तः विपर्ययेपितुष्टमनायतस्तामसस्वभावकः तत्रहेतुर्दैत्यइत्यादि यतोरजसाउपसर्जनेनविशिष्टंयत्तमस्तेनावृतत्वंसत्वगुणाभिभवोविचाररााहित्यचदैत्यानामुत्सर्गतोभवतीतिद्वयोरर्थः १६७ । १६८ ततोदैत्यसदसिमानितःसंस्तानसुरान्प्रतिकष्टलब्धंस्वज्ञानमुक्तवानित्याह आगत्येतिद्वाभ्याम् १६९ । १७० तेचासुरास्तज्ज्ञानंस्वानुकूलंपुरापितर्केणसंभावितंचाधुनागुरुसंप्रदायलब्धंबुद्ध्याऽवधारणतांनिन्युरित्याह तेसर्वेइतिद्वाभ्यां । स्वयंस्वभावेनऊहितंतार्किंतंयथाविरोचनःप्रपेदेनिश्चितवांस्तथातच्छिष्याअपिप्रपेदिरे १७१ । १७२

तत्रप्रजापत्युपदेशपरिपाटींश्रावयित्वाथतत्फलितार्थसंग्रहमुपनिषत्पदोक्तंप्रतिपादितवानित्याह विरोचनस्त्वितिसप्तचत्वारिंशच्छ्लोकैः । उपदिश्यप्रजापत्युक्तंश्रावयित्वाइत्थमुक्तवान् इत्थंक थं हेदैत्याःदेहएवसर्वेषांशेषीप्रधानं अतएवात्मभूतःसर्वैरुपास्यः इतरेऽग्न्यादयस्तुतस्योपकारकत्वेनशेषभूताउपेक्ष्याइत्यर्थः एतस्यसर्वोत्कृष्टत्वेनज्ञानमेवपूजनमितिभावः १७३ बाह्योपचारैः सत्करणमेवपरिचरणमितिदर्शयति अस्यैवेति । आहतैरादरविशिष्टैर्गुरुवदस्यदेहस्यैवपरिचर्याकर्त्तव्येति १७४ परिचरणमभिनयंस्तत्फलमाह आत्मानमितिचतुर्भिः । आत्मरूपंदेहंचर्यंसेव नीयंयोदुकूलादिभिःपूजनपूर्वकंपरिचरेत्सलोकद्वयेसुखंप्राप्नुयादितिचतुर्णांसंबंधः जांबूनदसमुत्थितैःस्वर्णखचितैरत्नैःगजकुंभादिरूपाकरजातैर्मुक्तैर्मुक्तामयगुच्छैः आदित्यसन्निभत्वमलंकारविशेषणं चित्रमालारूपत्वांतानिपुष्पविशेषणानि हिमंशीतलंजलं परिच्छदैरुपकरणैः १७५ । १७६ । १७७ । १७८ ननुविनश्वरस्यकिंपरिचरणेनेतिशंकांवारयति मरणंचेति । सिद्धस्यमरणशंकैवना

विरोचनस्तुतानित्थमुपदिश्योक्तवान्पुनः ॥ पूजनीयःसदैवात्मादेहोयंनैवचापरम् ॥ अग्निविप्रादिकंदैत्याआत्मनःशेषतांगतम् १७३ अस्यैवपरिचर्याचकर णीयासदाहृतैः ॥ गुरोरिवमहाभागाःपुरुषेणसुखार्थिना १७४ आत्मानंदेहमेतंयोदुकूलैरतिशोभनैः ॥ रत्नैर्नानाविधैःसार्द्धंजांबूनदसमुत्थितैः १७५ गजकुं भादिसंजातैर्मुक्तैश्चादित्यसन्निभैः ॥ नानालंकरणैस्तद्वत्पुष्पैश्चमृदुलैरपि १७६ सुरूपैश्चसुगंधैश्चचित्रमालादिरूपिभिः ॥ चंदनैर्हिमसंमिश्रैःकर्पूराद्यैश्चसंयुतैः १७७ पूजयेद्देहमात्मानंतद्वच्छय्यासनादिभिः ॥ अन्नपानैस्तथासम्यक्पूजयेच्चपरिच्छदैः ॥ नित्यंपरिचरेच्चर्यंव्रजेल्लोकद्वयेसुखम् १७८ मरणंचनदेहस्यदै त्येंद्राइहविद्यते ॥ रसायनाद्युपायैर्हिसिद्धिंप्राप्तस्यसर्वदा १७९ अथचेन्मरणावस्थायदालभ्येतवैध्रुवम् ॥ तदायंमृतइत्येवनदाह्यःकर्हिचित्पुमान् १८० यथा संग्रामशालायांशस्त्रैरस्त्रैश्चपीडितः ॥ वीरःक्षणंरथोपस्थेशेतेचेष्टाविवर्जितः १८१ एवमेषगतप्राणःशेतआत्माशरीरिणाम् ॥ रसायनादिसिद्धीनामलाभेत्रमृतो पमः १८२ ततस्तंस्नापयेद्दिव्यैर्जलैस्तस्यात्रबांधवः ॥ अर्चयेच्चंदनैर्दिव्यैरलंकुर्याच्चसर्वतः १८३ वसनाद्यैरलंकारैर्मालाभिश्चविमानगम् ॥ नानाभक्ष्याणिक त्वाप्रसार्यचसमंततः ॥ सुगंधनीरपूर्णांस्तुकरकांश्चबहूनपि ८४ भूगृहंतस्यकुर्वीतमृद्धास्तरणसंयुतम् ॥ तूर्यघोषेणतंतत्रनयेद्बंधुजनावृतम् ८५ शोधयित्वा त्रोभयतअन्नपेयानिसर्वतः॥भक्ष्यभोज्यानिचित्राणिमुंचेदस्यसमीपतः८६महाराजस्ययेकार्याउपचाराःसदैवहि॥भोगाश्चनिखिलाःकार्याभूगृहेतस्यबंधुभिः ८७

स्तीत्यर्थः १७९ असिद्धस्यदेहेपिमूर्छितत्वभावनयामरणशंकानकार्येतिसदृष्टांतमाह अथेतित्रिभिः । यदिमरणावस्थामूढैर्मन्येततथापिविवेकिनातस्यमृतबुद्ध्यादाहादिकंनकार्योकिंतुसंग्रामेमूर्छि तवत्शयानत्वेनमंतव्यइतित्रयाणामर्थः तत्ररथोपस्थोरथस्यक्रोडभूतमुपवेशनस्थानम् १८० । १८१ । १८२ मृतशंकागोचरशरीरेकर्त्तव्यंश्रुतौभिक्षयेत्यादिनाप्रदर्शितंवर्णयति ततइत्यष्टभिः ॥ ततोमरणस्यसांशयिकत्वात्तंमृतत्वाभिमतंदेहंतदीयोबांधवउत्तमजलैःस्नापयित्वाचंदनपुष्पादिभिरलंकरणंश्रुतौभिक्षापदोक्तंकुर्यादित्यर्थः १८३ वसनाद्यैरिति । तथावसनादिभिरलंकुर्यादित्यनुषं गःतथातस्यवासयोग्यंभूगृहंभूमिखातरूपंगृहंकुर्यात् तत्रचतंदेहंविमानगंकृत्वातूर्यघोषेणबंधुभिश्चसहनयेत् किंकृत्वा नानाविधभक्ष्यवस्तूनिबहून्करकान्कमण्डलूंश्चसुगंधिजलपूर्णान्प्रसार्यविस्तृता न्कृत्वेतिद्वयोरर्थः १८४ । १८५ शोधयित्वेति । तत्रभूगृहंशुद्धंकृत्वाअस्यमृताभिमतदेहस्योभयतःपार्श्वद्वयेपितानिप्रसार्यानीतानिपेयानिचित्राणिभक्ष्यादीनिचमुंचेत्न्यसेत् १८६ महाराजस्येति । उपचाराःशय्यादिरूपाण्युपकरणानि भोगाःभोग्यपदार्थाःसुरभिद्रव्यादयः एतेतस्यभूगृहगतस्यमहाराजवद्बंधुभिःकार्याइत्यर्थः १८७

भूग्रहमिति । तद्भूगृहंतथाविधंकुर्यात् यथाअत्रभूग्रहेअस्यदेहस्य दीर्घनिद्रायांस्थितंस्थितिःनक्षयेत्क्षयंनगच्छेदित्यर्थः बांधवपदमुत्तरान्वयि १८८ कुर्वीरन्निति । तथातदीयाबांधवास्तस्यभूग्रह स्यउपरिवेदिकांमंडपरूपांकुर्वीरन् यथातस्यभूग्रहस्यचिरकालेनापिपतनंनस्यात् तथानीरस्यवृष्ट्याादिजलस्यआतपस्यग्रीष्मतापस्यमलस्यपुरीषादेःआदिनाजंतुकप्रभृतीनांचप्रवेशोनभवेदिति १८९ इत्थंकरणेतस्यउपकारःश्रुत्यालोकद्वयजयत्वेनोक्तःअधुनाम्लेच्छग्रंथेषुकीर्त्यमानश्चतंवर्णयति एवंकृतेइतिपद्भिः । इत्थंरक्षाकरणेसत्यसौदेहस्तावत्शेतेयावत्सर्वेषांपूर्वजोब्रह्मानलभ्योदुर्ल भोदेहात्मवादस्यप्रवर्त्तकस्वशिष्यान्द्रष्टुंनायातीत्यर्थः १९० यदासआयास्यतितदातद्देहगंधेनसर्वेमृताउत्थास्यंतीत्याह आगतइति । अस्मिन्सर्वपूर्वजे १९१ तत्रदृष्टांतमाह शस्त्रास्त्रेति १९२ एवमिति । एवंसंग्राममूर्छितवत्तेभूग्रहन्यस्ताःसमुत्थिताःसंतःपूर्वंयथारसायनाद्यर्थंयतितवंतस्तथापुनर्यत्नंकुर्वंति १९३ आप्येति । ताःसिद्धीःप्राप्यचामृताभवंत्येवेति एवमुक्तक्र मेणयोगिनोनाशायोग्यत्वंस्यात् हेअसुराः १९४ योगेति । ततोदेहामृतत्वस्वरूपंप्रयोजनमभिसंधायैवदैत्यवरायोगाभ्यासपराःसंतिवैरिणांदेवानांतत्पक्षाणांचक्षयंकुर्वंतेयतोत्रक्षयकर्मणिनिर्द यादयारहिताः तदुक्तंगीतासु 'प्रभवंत्युग्रकर्माणःक्षयायजगतोऽहिताः' इति १९५ तेषयेनाभिप्रायेणनिर्दयाभवंतितंगीताद्युक्तंतंवर्णयति केविप्राइति । किंशब्दःक्षेपे तथाचयदासर्वेषांशरीरंसमंदृश्यतेत

भूग्रहंततथाकुर्याद्यथाशक्त्यनुसारतः ॥ नक्षयेद्दीर्घनिद्रायांस्थितमस्यात्रबांधवाः १८८ कुर्वीरंस्तुशुभांतस्यग्रहस्योपरिवेदिकाम् ॥ यथाकालान्निपतनंभूग्रहस्यभवेन्नहि ॥ नीरातपमलादीनांनप्रवेशश्चकर्हिचित् ८९ एवंकृतेचिरंकालंशेतेसौराजवत्सुखम् ॥ यावन्नायातिभगवान्नलभ्यःसर्वपूर्वजः १९० आगतेभगवत्यस्मिन्सुवायुर्यातिकश्चन ॥ संपर्कात्तस्यनुमृताउत्थास्यंतीहसर्वशः १९१ शस्त्रास्त्रविद्धोमूर्च्छास्थोवायुनाकेनचिद्यथा ॥ स्पृष्टःक्षणादिहोत्तिष्ठेत्पूर्ववद्वैरिमर्द्दनः ९२ एवंतउत्थिताःसर्वेपूर्वसंस्कारसंस्कृताः ॥ रसायनादिसिद्धीनांयतंतेप्राप्तयेपुनः ९३ आप्यताअमृतत्वंचगच्छंत्येवनसंशयः ॥ एवंनकर्हिचिन्नाशोयोगिनोविद्यतेऽसुराः ९४ योगयुक्तास्ततःसर्वेभवंतिदितिजोत्तमाः ॥ वैरिणांचक्षयंनित्यंकुर्वंतेचात्रनिर्दयाः ९५ केविप्राःकाश्चगावोवाकेदेवाःकेचसाधवः ॥ यदाशरीरंसर्वेषांसममेवोपलभ्यते ९६ द्विपद्भिर्द्विपदांसाम्यंचतुष्पद्भिश्चतुष्पदाम् ॥ एतेषामपिपित्रोःस्यात्कामोयेनवपुर्भवेत् ॥ शुक्रशोणितसंभूतमन्येषामिवकामतः ९७ कामहेतुकमेवेदंततोविश्वंमहाधियः ॥ कामःसर्वस्यजननीपिताकामस्तथोरितः ॥ विप्रोगौर्देवतासाधुःकामएवनचापरः ९८ आब्रह्मादिःसकलोजंतुःकामएवप्रकीर्तितः ॥ प्रतिग्रहीतादाताचबलतःस्वेच्छयापिवा ९९ कामश्चदेहएवैषसमुद्रसदृशोमहान् ॥ देवाद्याःकामकामायेवयंचदितिजेश्वराः २००

दाविप्रादिषुक्षेनमानार्हतेत्यर्थः १९६ साम्यमेवकार्यकारणरूपयोःस्फुटयति द्विपद्भिरिति । द्विपदांविप्रादीनामितरैर्द्विपद्भिःसाम्यंदृश्यते चतुष्पदांगवांचेतरैश्चतुष्पद्भिरिति नचकारणेविशेषोयेनै तेषांविप्रादीनामपिवपुरन्येषामिवकामप्रयुक्तशुक्रशोणितसंभूतमेवभवेत् नचासंभवः यतःपित्रोःकामःसंभवेत् नहिनिष्कामानांपितृत्वंसंभवतिव्याघातादित्यर्थः १९७ नचजगत्कर्तुःसर्वा त्म·स्यचेश्वरस्यपक्षपातेनविप्रादीनामाधिक्यंतल्लक्षणानांकामेसमन्वयेनतस्यैवाभावादित्याह कामेति । हेमहाधियस्ततोहष्टानुगुण्यात्कामएवविश्वस्यहेतुर्जनन्यादिरूपश्च नहिनिष्कामस्यजननी त्वादिकंदातृत्वांतंसंभवतीतिद्वयोर्भावः १९८ । १९९ एतादृशस्यापिकामस्यशेषित्वेनदेहःसर्वोत्कृष्टइत्याह कामश्चेति । यथासर्वेषांजलानामंशभूतानामपेक्षयाअंशीसमुद्रउत्कृष्टस्तथादेहविषयकः कामःसर्वकामेभ्यइतिप्रथमदलार्थः एतदेवस्फुटयति देवाद्याइत्यादिना । येदेवमुनिप्रभृतयोयेचवयंदैत्यायेचान्येकालत्रयवर्त्तिनस्तेसर्वेवयंकामकामाःकाम्यमानतत्तद्भोग्यपदार्थान्कामयंतएवसंतश्चे ष्टांदेहव्यापारंकुर्मःसोयंनानाभोग्यगोचरोपिकामोदेहार्थंभवतीत्यर्थः तथाचसकलचेष्टाप्रयोजककामोद्देश्यत्वाद्भोग्यपदार्थाउत्कृष्टास्तेभ्योपिदेहोपाधिककामगोचरेभ्योदेहःपरमोत्कृष्टइतिभावः २००

२०१ एवंदेहस्यैवसर्वतःप्राशस्त्येसतिलोकेयत्प्रशस्तत्वेनरक्षणीयतयाप्रसिद्धंतत्तद्भावनांदेहेक्रूरवासएवसंरक्ष्यइत्याह देहइति । देहेदैत्यास्ततोमुख्यप्राशस्त्याल्लोकेप्रशस्तत्वाभिमतायेविप्रादयस्ते स्वदेहरूपाएवमंतव्याः तथाचाहयदेहस्यैवरक्षणेप्रयत्नोयोग्यइत्यर्थः २०२ एतेनपुण्यादिस्वरूपमपिन्यायप्राप्तमित्याह अस्येति । लोकेहिइष्टानिष्टहेतूपुण्यपापत्वेनप्रसिद्धेतदुपचयहेतूदेवासुराविति तत्रदेहस्यैवेष्टत्वसिद्धौतस्यदेहस्यसुखदंयत्कर्मपशुहिंसादितस्यपुण्यत्वंसिद्धं तद्दुःखदस्यप्रातःस्नानादेस्तुपापत्वं तथाएतदनुकूलत्वंदेवतात्वंसाधुत्वंचप्रतिकूलस्यतुपित्रादेरपिवध्यत्वप्रयोजकमसुरत्व मित्यर्थः २०३ प्रतिकूलेऽपिपितृत्वादिहानिर्लोकेपिप्रसिद्धेत्याह पितेति । पितृप्रभृतिपुत्रपर्यंतोजनोयत्राप्रतिकूलोभवतितदास्वस्यआत्मीयइतिनाख्यायतेकिंतुपरःशत्रुरेवप्रसिद्धइत्यर्थः २०४ एवंस्वमतमुक्त्वापरमतंदूषयति ब्राह्मणादीति । ब्रह्मवधादौपापंभवतीतियदुच्यतेवैदिकैस्तदयुक्तमित्यर्थः २०५ तत्रहेतुतयालक्षणासंभवमाह पापमिति । यद्दुःखफलंतदेवपापमितिवाच्यं द्वेषिहिं साद्यनंतरंतुसुखमेवलभ्यतेनदुःखमतस्तस्यपापत्वंकथंस्यादित्यर्थः २०६ कालान्तरीयदुःखस्यतत्फलत्वकल्पनानयुक्ताव्यवहितयोःकार्यकारणभावस्यासम्भवात् तावत्पर्यंतंक्षणिकस्यस्थायित्वक ल्पनायाव्याहतत्वात् नाप्यदृष्टव्यापारकल्पनायुक्ता दुःखोदयंप्रतिदृष्टस्यापथ्यसेवनादेरेवहेतुत्वसंभवेतत्कल्पनावैफल्यादित्याह कालांतरेचेति । तत्कालांतरीयंदुःखंतत्कारणंब्रह्मवधादिका

चेष्टांकुर्वंस्तथैवान्येत्रिकालस्थाश्चदेहिनः ॥ स्वदेहार्थंचकामोयंसर्वेषामिहदेहिनाम् २०१ देहस्ततोत्रविज्ञेयोदैत्याःसर्वैःशरीरिभिः ॥ विप्रोगौर्देवतासाधुःसंर क्ष्योत्रप्रयत्नतः २०२ अस्ययत्सुखदंतत्स्यात्पुण्यंपापंचदुःखदम् ॥ अनुकूलोभवेद्योस्यसदेवादिर्नचापरः ॥ असुरःप्रतिकूलश्चवध्यःसर्वोपिसर्वदा २०३ पि तामातास्वसाभ्रातास्नुषाजायासुतोयदि ॥ प्रतिकूलोभवेत्स्वस्यनैवकिंतुपरोजनः २०४ ब्राह्मणादिवधेपापंपरदारादिसंगमे ॥ अन्यवित्तापहारेचयदुक्तंतन्मृ षावचः २०५ पापंदुःखफलंप्रोक्तंदुःखंचानंतरंततः ॥ नलभ्यतेसुखंचात्रलभ्यतेतदनंतरम् २०६ कालांतरेचदुःखंस्यान्नतत्तत्कारणंभवेत् ॥ नहिकालांतरेक र्मस्थानुपदंतिकर्हिचित् २०७ कर्मणांस्थापनानात्रकल्पनीयाकदाचन ॥ दृष्टलाभेनचादृष्टंकल्प्यतेवेदवादिभिः २०८ अहिंसाब्रह्मचर्यादिक्लेशकारंतपोहियत् ॥ यज्ञादिकंतथाकर्मह्येतेनैवनिराकृतम् २०९ पापंदुःखफलंयस्मात्पुण्यंसुखफलंतथा ॥ आहुःसर्वेमहात्मानोवेदवादरताःसदा २१० वेदानांसंप्रदायोयंभीरूणां हृदयंगतः ॥ विपरीतंतथाऽभीतेसुखदुःखफलप्रदम् २११ ततआरभ्यदैत्येंद्राद्द्विधायंपरिवर्त्तते ॥ धीराणामपिभीरूणांसंप्रदायोतिभेदवान् २१२

[illegible] तावत्कर्मणःस्थित्यसंभवात् स्थापनास्थितिः [illegible] २०७ । २०८ एवंदुःखदस्यपापत्वनिश्चयेसतितपआदीनामपिदुःखदत्वेनपापत्वेनहेयतामेवभजतइत्याह अहिंसेति । अहिंसादिरूपंतपःप्रज्ञादिकर्मचपुण्यत्वेनपापलक्षणाक्रांतत्वेनैवनिराकृतंहेयतयावोधितंभवतीत्यर्थः २०९ अत्रवैदिकप्रसिद्धिमनुकूलयति पापमिति । दुःखफलकत्वेनपापंलक्ष्यतोपिवैदिकास्त [illegible] । यदेतत्तत्परमतत्वगतपाप[illegible] २१० स्वमतेयेवार्थेपित्वंब्राह्मणादीनांतत्रभ्रांतत्वेनस्फुटयितुंवेदार्थोपदेशपरंपरायाद्वैविध्यमाह वेदानामिति । अयंसंप्रदायः[illegible] जिस्तेषांहृदयंप्रविष्टः अयंकः सुखदुःखप्रदंविपरीतंसयःसुखप्रदंहिंसादिपापंसयोदुःखप्रदंयागादिपुण्य मितियावत् [illegible] २११ ततइति । ततस्तान्पुराकालिकान्भीरूनभीरूंश्चारभ्यवेदानां [illegible] २१२

तत्रभीरुसंप्रदायोब्राह्मणैर्देवादिभिश्चबहुधाप्रवर्तितोऽद्यवर्ततेवीरयोग्योद्वितीयस्तुप्रजापतिशिष्येमय्येववर्ततइत्याह भीरूणामिति २१३ वीरसंप्रदायस्यप्रख्यात्यभावेहेतूनाह एवमिति । यतो ब्रह्मातच्छिष्योहंचैतौद्वावेवजानीवः इतरेजनास्त्वज्ञानदुःसंगाशक्तिभिर्दूषिताःकथमनुतिष्ठंतु हेदैत्याःससंप्रदायोमहाभागान्युष्मान्प्रतिमदुपदेशेनप्राप्तइत्यर्थः २१४ स्वबाहुबलतइति । एनंसंप्रदायंभवंतःस्वबलेनजगत्त्रयेलोकत्रयेस्थापयंतुप्रसृतंकुर्वंतुयतोयंपुण्यकृत्पुण्यस्यसद्यःसुखदस्यहेतुः २१५ अस्यस्थापनोपायःप्रतिपक्षनिरासएवेतिवक्तुंप्रतिपक्षान्कीर्तयति अस्येति । अस्यवीरयोग्यस्यब्राह्मणादेवास्तथान्येदुर्बलाश्चप्रतिपक्षाः स्फुटमन्यद्द्वयोः २१६ । २१७ एतेसर्वेवीरयोग्यस्यवेदोक्तमार्गस्यविरोधिनोविपर्यस्ताअस्मासुदितिजादिषुद्वेषशालिनश्चभवद्भिर्हंतव्याइत्याह निघ्नंत्विति २१८ उपसंहरति एवमिति । इत्थंमदुक्तेकृतेसतियुष्माकमत्रेहलोकेतथापरलोकेचसुखंभविष्यति तत्रैषमदुपदेशसंग्रहोयद्दयांपरदुःखितत्वरूपांभीरुसंप्रदायसंतानिकांत्यजथेति १९ एवंविरोचनेनराज्ञागुरुणाचसताश्रावितोपनिषत्कास्तेदैत्याःसाधूनिहत्यस्वमतंप्रवर्तितवंतइत्याह एवमुक्ताइति २२० तस्मादद्यत्वेपीत्पादिकंडिकाशेषस्यासुरमतापवादकस्यार्थमाह संप्रदाय

भीरूणांसंप्रदायोयंब्राह्मणाद्यैःकृतोमहान् ॥ वीराणांवर्ततेदैत्यामय्येवाप्यत्रनकचित् २१३ एवंजानाम्यहंदैत्याब्रह्मादेवगुरुस्तथा ॥ रहस्यःसंप्रदायोयंनिंदितोज्ञैरनेकधा ॥ अशक्तैश्चमहाभागायुष्मानयंसमागतः २१४ स्वबाहुबलतस्त्वेनंसर्वलोकसुखप्रदम् ॥ स्थापयंतुमहावीर्याःपुण्यकृच्चजगत्त्रये २१५ अस्यमार्गस्यसततंब्राह्मणाःप्रतिपक्षिणः ॥ यज्ञादिनिरतास्तद्वद्ब्रह्मचर्यादिसाधनाः २१६ देवायेचनिसर्गेणस्युरस्माकंचशत्रवः ॥ दुर्बलाःप्राणिनश्चान्यएनंपक्षमुपाश्रिताः ॥ अस्माकंवैरपक्षस्थाअस्मन्निंदापरायणाः २१७ निघ्नंतुसकलानेतान्वेदमार्गविरोधिनः ॥ अन्यथाज्ञानिनःपापानस्मासुचविरोधिनः २१८ एवंकृतेमयाप्रोक्तेसुखंवोत्रभविष्यति ॥ परलोकेचदैत्येंद्रादयांत्यजथसर्वथा ११९ एवमुक्तास्तदादैत्याःपापात्मानोनिसर्गतः ॥ निर्घृणाःक्रूरकर्माणःप्रभुणागुरुणाततः ॥ कृतवंतस्तथैवैतज्जगत्सर्वंसमाकुलम् २२० संप्रदायोमहांस्तेषांब्राह्मणादिविरोधकृत् ॥ लभ्यतेत्रतथाचारोजीवनेमरणेपिच २२१ अद्यापितेमहात्मानोब्राह्मणादीर्घदर्शिनः ॥ एवमाहुःसदाचाराद्दष्टापापरतंजनम् ॥ नास्तिकंमोक्षरहितंयथेष्टाचारिणंसदा २२२ आसुरोजनएवायमासुरंकर्मसर्वदा ॥ कुतोयंनास्तिकोभूत्वायज्ञादिपरिवर्जितः २२३ मृतेसतितथाप्रेतंभक्ष्यवस्त्रादिनामुहुः ॥ अलंकरोतिबहुशोमूढोवैस्वस्यमायया २२४ अलंकारादिनाचैवंकृतेचप्रेतदेहके ॥ परलोकजयंयस्मान्मन्यतेयमतीवच २२५

इतिचतुर्दशभिः । तेषामसुराणांसंप्रदायोब्राह्मणादिविरोधप्रयोजकदंभदर्पादिलक्षणस्तथाचारोजीवनेशरीरपोषणपरत्वरूपोमरणेशरीरालंकाररूपश्चात्रलोकेत्रापशोलभ्यतेइत्यर्थः २२१ अद्यापीति । यतोऽसुरसंप्रदायोमनुष्यादिष्वप्यनुगतस्ततइदानीमपिपापरतंनास्तिकंयागदानादिसत्कर्मविमुखंमोक्षरहितंमोक्षेश्रद्धाहीनमतएवयथेष्टाचारिणंचजनंदृष्ट्वातेआस्तिकाःसज्जनाएवंवदंतीति २२२ एवंकथमित्याकांक्षायामाह आसुरइत्यादि । अयंपापरतोजनआसुरःअसुरसंप्रदायवर्त्तीभवतियतआसुरमसुराणांप्रियंकर्महिंसादिसर्वदाकरोतीतिशेषः यद्येवंनस्यात्तदायंनास्तिकयेनयज्ञादिविमुखःकुतःस्यादित्यर्थः २२३ तथामृतदेहालंकारेणपरलोकजयाशंसापिमोहमयीविनाऽसुरावेशंकथंस्यादित्याह मृतेसतीति । मरणोत्तरंयत्प्रेतमलंकरोतिततोज्ञायतेऽयंस्वरूपाज्ञानरूपयामाययामूढइतीत्यर्थः २२४ अलंकारादिनेति । यस्मादयमितिमन्यतेविश्वसितिइतिकिं अलंकारादिनाप्रेतदेहेएवंकृतेपूजितेसतिअतीवातिशयेनपरलोकजयःस्यादिति २२५

एपोऽस्थानेविभ्रमःकथंमौर्ख्यंविनाशोभेत्याहुः अहोइति । माहात्म्यंविलासःपरिवर्त्ततेसंततोभवतियतःप्रथमंदेहआत्मत्वंभातिततःसदेहरूपआत्मामृतःसन्शवालंकरणेनपरलोकेसत्फलंभुंक्ते इतिभातीत्यर्थः २२६ उपपत्तिलेशोप्यत्रानुकूलोनास्तीत्याह तस्येति । प्रेतेशवेभूमिभावंगतेसतितस्यविनष्टस्यैवदेहस्यपुनरुत्थानंकथंस्यात् ननुमृल्लीनमंडूकवत्स्यादितिशंकांपरिहरति तत्रे त्यादिना । यत् यतस्तत्रार्थेमंडूकानांनिदर्शनंदृष्टांतीकरणंनोपपद्यतेनसंभवतीत्यर्थः २२७ तत्रहेतुतयावैषम्यमाह यतइति । यतःसरसिशुष्केसतिसर्वांगैरविशीर्णैरुपेतामंडूकाजलवियोगेन मूर्छिताःसंतःपुनर्मेघनीरसंनिध्येनोत्तिष्ठंतीतिसंभवति अत्रतुविशीर्णावयवस्यदेहस्यपुनरुत्थानंकथंस्यात् यतस्तेदृष्टांतीकृतामंडूकाअपिकाकादिभिर्विदारितावयवायेभवंतितेपुनर्नोत्तिष्ठंतीतिप्रसिद्ध मित्यर्थः २२८ प्राजापत्यवायुसंसर्गप्रभावाद्विशीर्णोत्थानमाशंक्यतदीययुक्त्यैवोष्ट्रलगुडन्यायेनपरिहरति दृष्टेसतीति । दृष्टेफलेसतिलभ्यमानेअदृष्टंतत्त्वंवस्तुस्वरूपंनस्यान्नकल्पनायोग्यमिति यन्मतमास्तिकसंप्रदायनिरासायतर्कितंविरोचनस्यासीत्तदेतद्दूषणंप्राजापत्यवायुवशान्मृतजीवनंकल्पयतोस्यविरोचनस्यैवमूर्द्धनिपतितमित्यर्थः २२९ यच्चभीरुप्रवर्त्तितत्वमास्तिकपथस्योच्यते

अहोमौर्ख्यस्यमाहात्म्यंमंदस्यपरिवर्त्तते ॥ आत्मादेहस्ततोनान्योमृतश्चपुनरेवसः ॥ परलोकफलंगच्छेत्प्रेतालंकरणेनहि २२६ तस्यदेहस्यकेनस्यात्पुनरुत्था नमेवयत् ॥ भूमिभावंगतेप्रेतेतत्रयन्नोपपद्यते ॥ महातडागसंस्थानांमंडूकानांनिदर्शनम् २२७ यतःशुष्केसरस्येतेसर्वावयवसंयुताः ॥ मूर्छिताःपुनरुत्थानं प्राप्नुयुर्मेघनीरतः ॥ विनष्टसर्वावयवाःपुनर्जीवंतिनैवते २२८ दृष्टेसतिनतत्त्वंस्यादृदृष्टमितियन्मतम् ॥ तदस्यैवपरावृत्तमत्रैतन्मृतजीवने २२९ नारदाद्या श्चभृग्वाद्याःशक्रस्वायंभुवादयः ॥ महावीर्याःकथंनुस्युर्भीरवःसर्ववेदिनः २३० विरोचनस्ततोदैत्यःकामज्वरवशंगतः ॥ जजल्पस्वात्महीनांस्तांस्तत्रयत्किं चिदेवयत् २३१ तन्मतात्कामुकोभूत्वानरकग्राममार्गगः ॥ दुस्तरैरात्मनःपापंपुण्यंकर्तुंसमुद्यतः ॥ अकीर्तिमतुलांप्राप्यलोकेस्मिन्पापमोहितः २३२ पर लोकेतथादुःखंप्रतीकारविवर्जितम् ॥ यास्यतीत्यादिबहुशःप्राहुस्तेन्यायसंयुतम् २३३ तस्माद्वैरोचनोमार्गोनगंतव्यःकदाचन ॥ अपिकंठगतैःप्राणैःस्वात्म नःसुखकारिभिः २३४ इंद्रस्ततोत्रविज्ञायतामसंतंविरोचनम् ॥ अर्द्धमार्गेशनैर्गच्छंस्त्यक्तवान्सुखवित्तये २३५ तंत्यक्त्वाक्वचिदासीनोदेवानप्राप्यदेवराट् ॥ दृष्टवान्भयमेतत्सबुद्धिमान्स्वयमात्मनि २३६

तदांध्यविलसितमित्याह नारदाद्याइति । नुइतिवितर्के २३० तस्मात्सर्वप्रमाणविरुद्धंवैरोचनंमतमुन्मत्तप्रलपितत्वेनहेयमित्याह विरोचनइति । यद्यस्मात्स्वात्महीनानसुरान्प्रतितत्रदे त्यसभायांयत्किंचिदयुक्तमेवजजल्पकथितवांस्ततोहेतोःकामज्वरेणव्यामोहितचित्तएवविरोचनोबोध्यइत्यर्थः २३१ येतुतन्मतमनुसरिष्यन्तितेआसुरींयोनिमापन्नाइत्यादिगीतोक्तंदुर्विपाकं यास्यंतीत्याह तन्मतादिति । यस्तुकामुकोनरकरूपग्रामस्यमार्गेप्रतिष्ठमानस्तन्मतात्तदासुरंमतमादायपापंहिंसादिकंपुण्यंकर्तुंपुण्यवदनुष्ठेयतांनेतुंसमुद्यतोभवेत्सइहलोकेनिंदांप्राप्यपरलोकेदुःख धारांयास्यतीत्येवंयुक्तिमद्वचोयेशिष्टपुंगवास्तेवदंतीतिद्वयोरर्थः २३२ । २३३ फलितमाह तस्मादिति । सुखकारिभिः सुखकामैः २३४ अथनवमकण्डिकोक्तमिंद्रस्यपुनरागमनवृत्त माह इंद्रइतिद्वाविंशतिश्लोकैः । ततोदुर्मतपरत्वात्तंविरोचनंतामसंविज्ञायार्द्धमार्गेशनैर्गतिमिषेणेंद्रस्त्यक्तवान् सुखवित्तयेसुखलाभाय २३५ तंत्यक्त्वेति । तंविसृज्यदेवानप्राप्यक्वचिदेकांते स्थितोदेवराडिंद्रएतद्वक्ष्यमाणरूपंभयंभयप्रयोजकंविपरीतात्मग्रहणगतंदोषंदृष्टवानालोचितवान् आत्मनिमनसिपतोबुद्धिमान्सात्विकइत्यर्थः २३६



160

यथाबृहदारण्यकसप्तमेदेवनरासुरैः श्रेयोमार्गंपृष्टेनप्रजापतिनादइत्यक्षरेउच्चारितेदमदानदयाःस्वस्वभावानुसारेणगतैःश्रेयोहेतुत्वेनगृहीतास्तथात्रापिदृश्यतइतिपदघटितप्रजापत्युपदेशेलक्षणयादृश्यमा नच्छायासदृशोदेहआत्मेतिविरोचनेनगृहीतंदोषातिशयादिंद्रेणतुश्रुत्यविघातेनच्छायात्मेतिगृहीतमासीदतस्तत्रैवदोषालोचनमिंद्रस्यदर्शयति देहस्येतिदशभिः । यतश्छायायाःस्वरूपलाभायो पजीव्येदेहेजन्मादिविकाराणांस्फुटत्वाद्दुर्लभममृतत्वादिकंप्रत्युतघटादिवदनात्मत्वमेवविज्ञायतेततोहेतोस्तदुपजीविकाछायाचक्षुपिदर्पणादौवादृश्यमानाकथमात्मास्यात् हियतःअमृतत्वमभय त्वंब्रह्मत्वंचयत्रवस्तुनितस्यात्मत्वंप्रजापतिनोक्तमितिद्वयोरर्थः २३७ । २३८ अत्रामृतत्वादिसत्वंशंकित्वापरिहरति मरणंचेति । यद्यप्यत्रच्छायात्मनिमरणभयेस्वतोबिंबनैरपेक्ष्येणनदृश्ये तेइत्यमृतत्वाभयत्वयोरुपपत्तिस्तथाप्र.तःकालादौवर्द्धमानत्वरूपंब्रह्मत्वंचसंभवतितथाप्ययेपच्छायात्मादेहवत्आस्यःअसुक्षेपणेइतिस्मृतेःक्षेपार्होहेयइत्यर्थः आत्मत्वेननद्रष्टव्यइतियावत् यदिदेहध र्ममास्यतारूपंनगृह्णीयात्तदातस्यानुकारलक्षणःस्वभावोन्याहन्येतेतितर्कंसूचयंश्छायायादेहधर्मानुकारित्वेहेतुतयाह यतइति । एपच्छायारूपआत्मायतोदेहस्यधर्मान्गुणदोषरूपानादत्तेतद्वद्दार

देहस्यजनिमृत्यादिधर्माःसंतिसहस्रशः ॥ सोऽमृतत्वादिगुणकःसत्सुतेपुभवेत्कथम् २३७ घटादिवत्ततोदेहोनात्मास्यादत्रसर्वथा ॥ छायात्माततएवायंचक्षुरा दिपुसंस्थितः ॥ अभयंचामृतंब्रह्मह्यात्मोक्तःपरमेष्ठिना २३८ मरणंचभयंवापिदृश्यतेऽत्रस्वतोनहि ॥ प्रातरादिपुकालेषुबृहत्ताचास्यदृश्यते २३९ यद्यप्येवं तथाप्यस्यएषदेहइवास्तिहि ॥ यतोदेहगुणानेषदोषांश्चाप्नोतिसर्वदा २४० देहेलंकरणैर्युक्तेच्छायात्मास्यादलंकृतः ॥ सुवस्त्रेचसुवस्त्रोयंछत्रीछत्रिणिसर्वदा २४१ अंधेदेहेभवेदंधःश्लेष्मणेश्लेष्मणायुतः ॥ हीनांगेचविहीनांगःस्वयंनायंहिकश्चन २४२ जडेविनश्वरेचास्मिन्ननुकारस्वरूपिणि ॥ भोगसंगत्यभावेनभो क्तृताचकथंभवेत् २४३ लोककामादिभोगार्स्तिनाहंपश्यामिकांचन ॥ अस्मिन्नात्मनितेनात्मास्यादस्मात्कोपिचापरः २४४ देहेनष्टेतमन्वेषच्छायात्मापिविन श्यति ॥ तथाचपरलोकस्यगंताकश्चित्परोभवेत् २४५ तमेतंपुनरेवाहंगत्वापृच्छामिदेहतः ॥ छायायाश्चपृथग्भूतमात्मानंपरमेष्ठिनम् २४६ इत्थंविचार्यदे वेंद्रःसात्विकःपुनराव्रजत् ॥ प्रष्टुकामस्तमात्मानंब्रह्माणंजगतांगुरुम् ॥ समिदादिकरोभूत्वाविनयेनसमन्वितः २४७

यतिततोहेयत्वमपिकथंनाददीतेतिद्वयोरर्थः २३९ । २४० देहगुणदोषधारणमेवस्फुटयति देहइति । देहेभूषणवस्त्रच्छत्रयुक्तेसत्ययंछायात्मापितथैवभातीत्यर्थः २४१ अंधेइति । तथा विवेदेहेअंधेनेत्रद्वयविकलेसत्ययंछायात्माऽप्यंधोभवतितथाश्रुतौस्रामपदोक्तेश्लेष्मणेकफेनद्रुतनासिकेसतितथाभवति एवंहस्तादिविकलेसतितथाभवति ननुस्वाभाविकस्तत्रनकोपिदोषइतिचे न्नैवम् निःस्वभावत्वस्यैवतत्रदोषराजत्वादित्याशयेनाह स्वयमित्यादि । अयंछायात्मास्वयंस्वभावेनकोपिकेनापिरूपेणनिर्वचनार्होनभवतिपरापेक्षत्वेनमिथ्यात्वादित्यर्थः २४२ किंचा स्मिश्छायात्मनिविज्ञातेसतिप्रजापत्युक्तंसर्वलोककामाप्तिरूपंफलंश्रुतौभोग्यपदोक्तंनयुज्यतेअस्मिन्भोक्तृत्वस्यैवासंभवादित्याह जडइतिद्वाभ्यां । जडत्वाद्विनश्वरत्वादनुक्रियतेइत्यनुकारोबिंबं तत्सापेक्षस्वरूपत्वाच्चयोभोगानांसंगतेर्योग्यतायाअभावस्तेनास्यच्छायात्मनोभोक्तृतायतोनविद्यतेततोस्मिन्नात्मनिधिज्ञातेकांचनापिलोकादिफलाप्तिंनपश्यामितस्माच्चैतद्भिन्नेनैवकेनचिदात्मनाभ वितव्यमितिद्वयोरर्थः २४३ । २४४ तथाकृतनाशाभ्युपगमोपिप्रसज्जेतेत्याह देहेइति । देहेनष्टेसतिच्छायात्मायतस्तंदेहमनुसृत्यनश्यतितदापरलोकगंताकश्चिदपरःकल्प्यःस्यात्तथाचकृतनाशापत्ति रित्यर्थः २४५ तस्माद्देहच्छायाभ्यांपृथक्त्वेनसंभावितआत्मापुनःप्रजापतिंप्रतिप्रष्टव्यइत्याह तमेतमिति २४६ सात्विकत्वादेवंविचार्योपायनहस्तइंद्रःपुनःप्रजापतिंप्राप्तइत्याह इत्थमिति २४७

तमागतमिति । तमिंद्रंपुनरागतंवीक्ष्यमुदितचेताब्रह्माएतद्वचनमुक्तवान् २४८ एतत्किमतआह सार्धमिति । हेमघवन्भवानस्मान्मत्समीपदेशात्हृष्टचेताःसन्गतवान्इदानींतुपुनरागमनंकिंप्रयोजनकमित्यर्थः २४९ इत्युक्तइति । इतिइत्थंउक्तःपृष्टइंद्रोदेहच्छाययोरात्मत्वेस्वयंतर्कितंदोषजातंश्रावयामास ततःप्रजापतिरिदमाह इदंकिं हेमघवन्भवान्यदिदंदूषणंदेहच्छाययोराह इदंकिं अनयोर्भोक्तृताभोग्यग्रहणयोग्यतानसंभवतिजडत्वादितितदेवमेवयुक्तमेवपरंत्वनुक्तोपालंभसमोयंश्रमोयस्याविज्ञानात्क्रांतस्तमेतमात्मानंदेहच्छायाभ्यामन्यंविलक्षणंभूयोवदामिउपदेक्ष्यामि एतंकम् यआत्मप्रतितुभ्यंप्राल्हादिनाविरोचनेनसहवर्तमानायोक्तइतिद्वयोरर्थः २५० । २५१ परंतुचित्तशुद्ध्यैतावत्कालंब्रह्मचर्यंकार्यमित्याह पूर्वमिति । द्वात्रिंशद्वर्षरूपकालावच्छिन्नंब्रह्मचर्यंपूर्वमबुद्धिपूर्वमसंकल्पितमासीत् इदानींतुतद्विधिवत्कुर्वित्यर्थः २५२ एवमुक्तेइति । इत्थंप्रजापतिनोक्तेसतिइंद्रस्तद्ब्रह्मचर्यंयथावच्चक्रेकृतवान् तस्मिंस्तावतिकालेकृतेप्रजापतिनानियतेसतिप्रजापतिरिदंवक्ष्यमाणंस्वप्नसाक्षित्वेनात्मनःप्रतिपादकंवचनमभाषताहेत्यर्थः २५३ दशमकंडिकार्थमाह पूज्यमानइतिसप्तभिः । यःपूर्ववर्णितआत्मासएवस्वप्नेस्वकीयविभूतिभूतैर्नानावि

तमागतंपुनर्वीक्ष्यब्रह्मालोकपितामहः ॥ उक्तवान्वचनंत्वेतद्धृष्टचेताहसन्निव २४८ सार्द्धंविरोचनेनास्मान्मघवन्गतवान्भवान् ॥ हृष्टचेताःकिमिच्छन्सन्पुनरप्यागतोधुना २४९ इत्युक्तःसर्वमेवाहदोषंस्वेनावधारितम् ॥ शक्रःप्रजापतिंसोपितमाहवचनंत्विदम् २५० एवमेवभवानाहयदेहच्छाययोरिह ॥ भोक्तृतानास्तिताभ्यांतमेतमन्यंवदाम्यहम् ॥ भूयःपूर्वंयउक्तस्तेसहप्राल्हादिनामया २५१ पूर्वंद्वात्रिंशतंवर्षान्कालमासीदबुद्धितः ॥ ब्रह्मचर्यमिदानींतुबुद्धिपूर्वंवसेह्भोः ॥ तावंतमेवकालंत्वंततोवक्ष्यामितेपुनः २५२ एवमुक्तेतथाचक्रेसशक्रस्तद्यथोचितम् ॥ कृतेतस्मिन्गतेकालेधातेदंतमभाषत २५३ पूज्यमानःपुमान्स्वप्नेचरतिस्वात्मभूतिभिः ॥ यःसआत्मेतिभवताज्ञातव्यःशक्रसर्वथा २५४ एवमुक्तेसगतवान्पूर्ववद्धृष्टमानसः ॥ मघवानागतस्तद्वद्दोषमेतंविचिंत्यहि २५५ शरीरगुणदोषाभ्यांछायात्मेवनलिप्यते ॥ यद्यप्येषतथाप्यस्यदोषोयंसुमहानिह २५६ स्वप्नेघ्नंतीवतंकेचिद्वैरिणःश्वापदाअपि ॥ उच्चाटयंतिहस्तीवक्रंमुद्यम्यकोपितः ॥ अप्रियाणांचवेत्तेवपुरुषःस्वप्नगोभवेत् १५७ अमृतंनिर्भयंब्रह्मह्यानंदात्मेतिकीर्तितम् ॥ ब्रह्मणामह्यमेषोपिविपरीतस्ततोनसः २५८ अस्मादन्येनकेनापिभवितव्यंत्विहात्मना ॥ ततःप्रजापतिंभूयोगमिष्याम्ययथापुरा २५९

षयैःपूज्यमानस्तान्साक्षित्वेनानुभवन्निर्तियावत्चरतिवर्त्तते एषआत्मत्वेनज्ञेयइत्यर्थः २५४ एवमुक्तेइति । एवमुक्तेसतिसमघवान्पूर्ववद्गतवान् तथामार्गेस्वप्नद्रष्टरिइमंदोषंविचिंत्यपुनरागमदित्यर्थः २५५ तद्दोषंचिंतामभिनयति शरीरेति । यद्यप्येषस्वप्नद्रष्टादेहस्यस्थूलस्यदोषानांध्यरोगादींश्छायात्मवन्नभजतेतथाप्ययंवक्ष्यमाणभयमोहादिरूपोदोषःस्फुटोवर्त्ततेइत्यर्थः २५६ तंदोषंवर्णयति स्वप्नइति । तंस्वप्नद्रष्टारंकेचिद्वैरिणोघ्नंतीवहिंसंतइवप्रतीयंतेतथाश्वापदान्वृकव्याघ्रादयउच्चाटयंतीवपलायमानंकुर्वंतीवयथामत्तोहस्तीकोपितःसन्करंशुंडामुद्यम्योच्चाटयेत्तथेत्यर्थः तथाअप्रियाणांसुहृद्वियोगादीनांवेत्ताचकाराद्रोदनादिकर्त्ताभवतीत्यर्थः अत्रसर्वत्रइवशब्दःप्रजापतिवचसिश्रद्धानेनमघवतामप्यत्रव्यामोहइतिसूचयितुंप्रयुक्तइतिबोध्यम् २५७ प्रजापत्युक्तंलक्षणमत्रनसंभवतीत्याह अमृतमिति । एषस्वप्नद्रष्टापतोविपरीतःप्रजापत्युक्ताद्विलक्षणस्ततःसउपक्रमोक्तआत्मानभवतीत्यर्थः २५८ अस्मादिति । अस्मात्स्वप्नद्रष्टुःसकाशादन्यःकश्चिदात्मासंभाव्यतेतन्निर्णेतुंपुनःप्रजापतिंगच्छामीत्यर्थः २५९

इतिसंचिंत्येति । इत्थंसंचिंत्यप्रजापतिंगत्वातेनप्रजापतिनापूर्ववत्पृष्टेसतिस्वाभिप्रायंश्रावयित्वाप्रजापतिवाक्येनद्वात्रिंशद्वर्षाणिनवसत् तावतिकालेपूर्णेब्रह्मेदंसुषुप्तिसाक्षित्वेनतस्यात्मनोबोधकंवाक्यमाहेत्यर्थः २६० एकादशखंडिकार्थंत्रिंशताश्लोकैःप्रदर्शयंस्तत्रसुषुप्तिसाक्षिपरस्यप्रजापतिवाक्यस्यार्थमाह यदेतित्रिभिः । यदायंपुरुषःसुप्तोभवति कीदृशःसमस्तः अस्यैवविवरणंज्ञानवर्जितःअस्तंगतनिःशेषविज्ञानकः तदायत्रहार्दाकाशरूपेब्रह्मलोकेमायामात्रोपाधिकेएकतांप्राप्यदुःखलेशैस्तत्प्रयोजकैरिंद्रियैश्चरहितःसर्वविक्षेपरहितइतियावत् भवतितथायत्रहार्दाकाशेगतोजंतुस्तंहार्दाकाशंप्राप्तमप्यविज्ञायैवपुनःपुनरागच्छतिसएवहार्दाकाशोऽमृतादिलक्षणस्तेआत्मेतित्रयाणामर्थः २६१ । २६२ । २६३ एवमुक्तइति । एवंप्रजापतिनोक्तेसतितत्राप्यज्ञानविशिष्टात्मविभ्रमेणतुष्टइंद्रोगतवांस्तत्रार्द्धमार्गेगत्वाविमृशन्स्वयंगृहीतेप्राज्ञसंज्ञकआत्मनिइमंवक्ष्यमाणंदोषमालोच्यपुनरागतइत्यर्थः २६४ दोषचिंतामभिनयति । आत्मानमितिद्वाभ्यां एषसुषुप्तःपुमानहमयमेतादृशःपरोमद्भिन्नस्तादृशइत्येवमात्मानंपरंचनविजानातियद्यद्विमोहितोमादकैर्दूषितचित्तोनविजानातितद्वदितिमौढ्यंतथाविनष्टप्रायतापत्तिश्चेत्येतौदोषौस्फुटौ २६५ ततइति ।

इतिसंचिंत्यगत्वातंतेनोक्तेसंनिवेद्यच ॥ स्वाभिप्रायंयथापूर्वन्यवसत्तस्यवाक्यतः ॥ द्वात्रिंशद्वर्षकेकालेगतेब्रह्माहतंपुनः २६० यदायंपुरुषःशेतेसमस्तोज्ञानवर्जितः ॥ दुःखलेशेनरहितएकतांप्राप्यचेंद्रियैः २६१ हार्दाकाशेब्रह्मलोकेमायामात्रशरीरिणि ॥ यत्रगत्वापिसर्वोयंयथापूर्वंसमाव्रजेत् २६२ नजानातिचसंततंस्वेनप्राप्तंकथंचन ॥ सतआत्मामृतंब्रह्मभयशून्यंपुरोदितम् २६३ एवमुक्तेयथापूर्वंगतवानागतःपुनः ॥ अर्द्धमार्गइमंदोषंनिरीक्ष्येंद्रोतिसात्विकः २६४ आत्मानंनपरंचैषविजानातिविमोहितः ॥ अयंवाहंपरोवायमितियद्वत्पुमानिह ॥ विनाशमिवसंप्राप्तोविद्यमानोप्यसौतदा २६५ ततःकथंभवेदात्माह्यमृतत्वादिलक्षणः ॥ ततःप्रजापतिंभूयोगमिष्यामियथापुरा २६६ इतिसंचिंत्यगत्वातंतेनोक्तंसन्निवेद्यच ॥ न्यवसत्पूर्ववत्तस्यवचनाद्ब्रह्मवित्तये २६७ चतुर्थेत्रहिपर्यायेपंचवर्षाण्यतिष्ठिपत् ॥ निवासेब्रह्मचर्यार्थंविधातापूर्ववन्नहि २६८ वर्षाण्यादौस्वयंचायंद्वात्रिंशद्ब्रह्मचर्यतः ॥ द्विवारंब्रह्मणोवाक्यादेवंषण्णवतिर्ह्यभूत् २६९ अधुनापंचवर्षाणिह्येवमेकोत्तरंशतम् ॥ इंद्रस्याभूद्ब्रह्मचर्यंप्रजापतिसमीपतः २७० ब्रह्मचर्येणसर्वोपिलभ्यतेदुर्लभंहियत् ॥ ब्रह्मचर्यंचसर्वाणियज्ञादीनिवदंतिहि २७१

ततउक्तदोषयोगात्प्रजापत्युक्तलक्षणमात्मत्वमत्रनसंभवतीतिपुनस्तदवधारणायगुरोरंतिकेगंतव्यमित्यर्थः २६६ इतिसंचिंत्येति । तच्छब्दार्थोब्रह्मा उक्तेपृष्टे २६७ चतुर्थइति । अत्रइंद्रागमनसंबंधिनिपर्यायेक्रमेचतुर्थेसतिचतुर्थवारआगमनेसतीतियावत् विधाताब्रह्मानिवासेस्वस्थानेब्रह्मचर्यार्थंपंचैववर्षाणिअतिष्ठिपत्इंद्रंस्थापितवान्नतुपूर्ववद्द्वात्रिंशद्वर्षाण्युपदिष्टवानित्यर्थः २६८ इंद्रस्यब्रह्मचर्यवर्षाणिसंकलयति वर्षाणीतिद्वाभ्यां । अयमिंद्रआदौविरोचनसहितःस्वयमनाद्विष्टोपिब्रह्मचर्यार्थंद्वात्रिंशद्वर्षाण्यवसदित्यर्थः तावंत्येवचवर्षाणिब्रह्मणोवाक्याद्द्विवारमवसत् एवंद्वात्रिंशतास्त्रिरावृत्तोवर्षाणांषडधिकानवतिर्जाता २६९ अधुनेति । अधुनाचतुर्थेपर्यायेपंचवर्षाण्यवसत् एवंसर्वसंकलनेइंद्रस्यप्रजापतिसमीपेकृतस्यब्रह्मचर्यस्यकालएकोत्तरशतसंख्यवर्षरूपोभूदित्यर्थः २७० अस्यब्रह्मचर्यस्यमहिमानमुत्तरग्रंथेनप्रपंचयन्प्रथमंतदध्यायपंचमखंडिकोक्तंतद्दर्शयति ब्रह्मचर्येणेतिनवभिः । सर्वोप्यधिकारीयद्यद्दुर्लभंतत्सर्वमतोलभते हियतएतद्ब्रह्मचर्यंसमीहितसाधनत्वरूपसाधर्म्येणसर्वंयज्ञेष्टादिरूपंवदंतिवैदिकाइत्यर्थः २७१

नन्वेवमुक्तसाधर्म्येणगौणमेव यज्ञादिरूपत्वमस्याःकिंतुनिरुक्तालोचनेमुख्ययज्ञादित्वमस्यैवेतिदर्शयंस्तत्रयज्ञपदसमन्वयंकरोति यइति । पदांतरैरपिनिर्ब्रूयादितिनिरुक्तैयास्कोक्तविधयायज्ञपदनि र्वचनेक्रियमाणेयोयोज्ञाताक्रान्तयेपितस्यसर्वस्ययज्ञेफलाभहेतुरितिश्रुतिदर्शितवाक्येकदेशभूतयकारज्ञकारयोःसमुदायोयथाब्रह्मचर्येनियमेनान्वर्थोनतथाज्योतिष्टोमादौतत्रविद्यांगत्वनियमाभावात् तथाचनियमेनज्ञानसाधनस्यब्रह्मचर्यस्यैवमुख्यंयज्ञत्वमित्यर्थः २७२ तथास्वर्गादीष्टसाधनत्वमादायदर्शादिषुप्रयुज्यमानइष्टशब्दोपितदपेक्षयाऽत्रैवमुख्योयतोदर्शादिलभ्येपुस्वर्गादिपुयदिष्टत्वं तद्ब्रह्मचर्यलभ्यात्मौपाधिकमेवेत्याशयेनेष्टपदसमन्वयंदर्शयति इष्टमिति । सर्वापेक्षयाप्रियतमत्वेनेष्टशब्दस्यमुख्यार्थभूतमात्मानंयतोऽमुनाब्रह्मचर्येणैवलभतेततउपचारादपीदमेवेष्टमितिवाच्य मित्यर्थः २७३ यज्ञेष्टपदयोःपर्यायत्वंवारयति ज्योतिष्टोमादिकइति । यज्ञेष्टशब्दार्थयोःकोशादिलौकिकप्रमाणवशादभेदेभेदाभावेपिसतीत्थंवेदिकप्रसिद्ध्यनुसारेणभेदोबोध्यः इत्थंकथं सो मपश्वादिद्रव्यसाध्योज्योतिष्टोमादिर्यज्ञइत्युच्यते दर्शादिकमौषधद्रव्यकंत्विष्टमुक्तंमीमांसकैरित्यर्थः २७४ सत्रसंज्ञमयनंसंघीभवनमितिव्युत्पत्त्यानानाकर्तृकयागविशेषवाचकंसत्रायणशब्दंप्रकृते योजयति सत्रायणमिति । सतस्त्राणस्यायनमितिपदांतरैर्निरुक्तस्यसत्रायणशब्दस्यार्थोब्रह्मचर्यमेवयतोमुनाब्रह्मचर्येणसत्पदार्थमात्मानंपातित्राणंनयतिसंसारादित्यर्थः २७५ तथामुनेर्मनन

यःकश्चिदात्मनोज्ञाताब्रह्मचर्यात्ससर्वदा ॥ जानीतेप्रियमात्मानंयज्ञस्तत्तेनकथ्यते २७२ इष्टंयत्कथ्यतेलोकेतदप्येतन्नचापरम् ॥ इष्टंसर्वप्रियतममात्मानममु नायतः ॥ जानीतिततएवैतदिष्टमित्युच्यतेबुधैः २७३ ज्योतिष्टोमादिकोयज्ञइष्टंदर्शादिरीरितम् ॥ अभेदेपिभवेद्भेदइत्थंयज्ञेष्टयोःसदा २७४ सत्रायणंचयत्प्रा हुर्ब्रह्मचर्यंचतद्भवेत् ॥ अमुनासंतमात्मानंयातिसंसारभीतितः २७५ मौनंचब्रह्मचर्यंस्यान्मनुतेस्यप्रसादतः ॥ यतःसर्वोपिचात्मानंनान्यथाजन्मकोटिभिः ॥ अनाशकायनंयच्चब्रह्मचर्यंहितत्स्मृतम् ॥ अनेनलब्धआत्मायंननश्यतिकदाचन २७७ ब्रह्मचर्यंचसंप्रोक्तमप्यरण्यायनंहियत् ॥ अरण्यादियुतंयस्माद्ब्रह्मलो कंचगच्छति २७८ ब्रह्मचर्येणसर्वस्मिन्नपिलोकेत्रसंचरेत् ॥ इच्छयानारदोयद्वदव्याहतगतिःपुमान् २७९ क्षीरंमधुतथासर्पिर्दधिचामृतमेववा ॥ ब्रह्मचर्येणसं पन्नाःपिबंतिस्वेच्छयैवहि ॥ सोमंचब्राह्मणाःशश्वत्सर्वभीतिविवर्जिताः २८० मृत्युदुःखात्मकंसर्वंसंसारंचतरंतिते॥ संप्राप्यस्वात्मरूपंतमानंदात्मानमव्ययम् ८१

शीलस्यभावइतिव्युत्पत्तिकंमौनपदंवाङ्निरोधात्मकेतपसिसंन्यासाश्रमेवाप्रसिद्धमपिब्रह्मचर्यस्यैववाचकमस्यविद्यालाभद्वारामननहेतुतायाःसमुत्कर्षादित्याह मौनमिति । यतोऽस्यब्रह्मचर्यस्यप्र भावादेवात्मनोमननेक्षमोभवतिततइदमेवमौनपदवाच्यमित्यर्थः २७६ अशनमाशःसएवाशकस्तदभावोनाशकस्तस्यायनंधारणमितिव्युत्पत्त्याउपवासपरायणतावाचकमनाशकायनपदमपि नाशरहितात्मलाभसाधनतारूपार्थमादायास्यैववाचकमित्याह अनाशकायनमिति । अनेनब्रह्मचर्येणलब्धआत्मायतोननश्यतिनतिरोभवतिसविलासाज्ञानरूपप्रतिबन्धदाहात् ततोस्याऽनाश कायनत्वमित्यर्थः २७७ तथावनवासेप्रसिद्धमप्यरण्यायनपदमरंतिण्येतिचसंज्ञिताभ्यामर्णवतुल्यह्रदाभ्यांयुक्तस्यब्रह्मलोकस्यप्राप्तिसाधनत्वरूपमर्थमादायब्रह्मचर्यमेवप्रतिपादयतीत्याह ब्रह्म चर्यमिति २७८ सर्वलोकेषुकामचारोप्यस्यैवफलमित्याह ब्रह्मचर्येणेति । अस्यप्रभावात्सर्वलोकेष्वव्याहतगतिरप्रतिबद्धगतिःसन्पुमांश्चरेत्यथानारदः २७९ अथयाज्ञवल्क्यादिस्मृतिप्रसिद्धं महिमानमस्यवर्णयति क्षीरमिति । ब्रह्मचर्यसंपन्नाःकगाद्यध्ययनप्रभावेणक्षीरादिसोमरसांतद्रव्यैर्देवादींस्तर्पयंतस्तत्प्रसादेनस्वयमपिक्षीरादिकंयथाकामंभुञ्जतेइतितत्स्मृतायुक्तम् २८० एतत्फल मानुषंगिकंमुख्यंतुविद्याद्वारासंसारतरणमेवेत्याह मृत्युदुःखात्मकमिति । तेब्रह्मचर्यसंपन्नाः संप्राप्यज्ञात्वा २८१

यदाचैवंपरमपुरुषार्थमोक्षसाधकत्वमस्यतदासर्वेषामभीष्टसाधनानांफलद्वारात्रांतर्भावोबोध्यः सर्वेपादाहस्तिपादेनिमग्नाइतिन्यायादित्याह किंबहूक्तेनेतिद्वाभ्याम् २८२ । २८३ शोधकमभ्युदयदंवाब्रह्मचर्यमेवकर्तृणामप्रतिबंधेनसद्गतिप्रयोजकत्वादित्याह ब्रह्मचर्यमिति । शौचंशोधकं तपःअभ्युदयदं एतदुभयरूपंब्रह्मचर्यमेव यतएतद्वंतोदिवंमहर्लोकंवहवोगताः नकेवलं दिवमेवकिंतुब्रह्मलोकद्वारंदेवयानपंथानमपिगताइत्याह अष्टाशीतीति । तेउत्तरंदेवयानाख्यमपुनरावृत्तिफलकंमार्गमपिगताः कीदृशंतंमार्गं अष्टाशीतिसहस्रसंख्यानांमुनीनांतथाअर्यम्णःसूर्यस्यसंबंधिनं तथाचयाज्ञवल्क्यस्मृतिः ' सप्तर्षिनागवीथ्यंतर्देवलोकंसमाश्रिताः । तावंतएवमुनयःसर्वारंभविवर्जिताः ' इति यथादक्षिणमार्गेकर्मकांडोपदेष्टारोऽष्टाशीतिसहस्रसंख्यामुनयःस्थितास्तथा निवृत्तिमार्गोपदेष्टारोपितावत्संख्यामुनयःसप्तर्षीणांनागवीथ्याश्चाश्विन्यादिनक्षत्रत्रयात्मिकायामध्यदेशेतिष्ठंतीतितदर्थः सूर्यसंबंधस्तुसूर्यद्वारेणतेविरजाःप्रयांतीत्यादिश्रुतिप्रसिद्धएवेतिद्वयोरर्थः २८४ । २८५ उक्तमहिमानंव्यतिरेकमन्वयंचदर्शयित्वाद्रढयति सर्वेतित्रिभिः । एकस्यब्रह्मचर्यस्याभावेइतरेषांसाधनानांसत्त्वेपिक्लेशःपुरुषार्थप्रतिबंधरूपोहष्टः अत्रोदाहरणंसौभरिप्रभृतयः कोटिशःप्रसिद्धाइत्यर्थः २८६ एतत्सत्वेतुदुःखध्वंसंबहवोगताइतिदृष्टांतेनाह समुद्रेति । संसारोजननमरणसंततिरूपंदुःखंतस्यतरणंनिवृत्तिरूपंतदर्थंब्रह्मचर्यम् २८७ नकेवलमेतद्दुःखंहिनस्ति

किंबहूक्तेनलोकेस्मिन्साधनंयद्धिविद्यते ॥ ब्रह्मचर्येतुतत्सर्वंमंतर्भवतिसर्वथा २८२ यथागजपदेसर्वेपादाअंतर्भवंतिहि ॥ नैतस्मादधिकंकिंचिद्ब्रह्मचर्याद्धिविद्यते २८३ ब्रह्मचर्यपरंशौचंब्रह्मचर्यपरंतपः ॥ येस्थिताब्रह्मचर्येणब्राह्मणास्तेदिवंगताः २८४ अष्टाशीतिसहस्राणांमुनीनामूर्ध्वरेतसाम् ॥ आवृत्तिरहितंमार्गमर्यम्णश्चोत्तरंगताः २८५ सर्वसाधनसंपन्नाब्रह्मचर्यविवर्जिताः ॥ क्लेशंहिमुनयोभेजुर्विद्वांसोपिचकोटिशः २८६ समुद्रतरणेयद्वदुपायोनौःप्रकीर्तिता ॥ संसारतरणेतद्वद्ब्रह्मचर्यंप्रकीर्तितम् २८७ स्वर्गंमोक्षंतथाचायुरिहलोकेसुखंयशः ॥ ब्रह्मचर्येणसंपन्नःपुमानाप्नोत्यसंशयम् २८८ नीरोगःकांतिसंपन्नःसर्वदुःखविवर्जितः ॥ ब्रह्मचारीभवेल्लोकेपाप्मनाचविवर्जितः २८९ अपिमातुःप्रियायाश्चविशेषःकोस्तियेनसः ॥ ब्रह्मचर्यस्यसंभ्रंशंपुमान्योषितिगच्छति २९० अपिमूत्रस्यपात्रींतांकद्वायुपरिदूषिताम् ॥ पुंसोभिगच्छतःकिंस्वित्सुखमत्रप्रदृश्यते २९१ एवंचेज्जायतेनात्रबोधःपुंसोतिपापतः ॥ तदैनंप्रार्थयेच्चैवमानंदात्मानमीश्वरम् २९२

किंतुस्वर्गादिरूपंसुखमपिससाधनंकरोतीत्याह स्वर्गमिति । मोक्षंनिरतिशयानंदाविर्भावलक्षणंआयुर्जीवनकालातिशयं तथाएतल्लौकिकसुखंकीर्तिंचब्रह्मचर्यवान्लभते २८८ तत्रेहलोकेसुखंयशइत्येतदेवविवृणोति नीरोगइति । दुःखैर्बाह्यैर्मानसैश्चवर्जितःपापराहित्याद्यशस्वीचसभवतीति २८९ यदाप्रोक्तमाहात्म्यंविज्ञायापिब्रह्मचर्यस्थिरीकर्तुंनशक्नुयात्तदाअनेनविवेकेनस्थिरीकुर्यादित्याशयेनविवेकमुपदिशति अपिमातुरिति । संभ्रंशंभ्रंशंगच्छतिकरोति तथाचनारीणांमातृसाम्यमालोच्यब्रह्मचर्यंरक्षेदितिभावः २९० ' यन्मैथुनादिगृहमेधिसुखंहितुच्छंकंडूयनेनकरयोरिवदुःखदुःखम् ' इतिभागवतोक्तंवातदर्थमालोचयेदित्याह अपिमूत्रस्येति । अल्पंपात्रंपात्रीतद्रूपांकुत्सितोवायुरपानाख्यस्तेनदूषितांचतांनारीयोभिगच्छतःकिंसुखंनकिंचिदपीत्यर्थः २९१ ब्रह्मचर्यसंरक्षणार्थमीशप्रार्थनापरत्वेनयशोहमित्यादिवाक्यंचतुर्दशकंडिकागतमवतारयति एवंचेदिति । यदिअतिशयितपापवशादेवंनारीसंसर्गेहेयताग्राहीबोधोनजायेततदातत्सिद्धये इत्थमीश्वरंप्रार्थयेदित्यर्थः २९२

इत्थंकथमित्याकांक्षायामाह सर्वस्येति ।. सर्वस्यब्राह्मणादेर्यशःस्फीतंविस्तृतंतद्वन्निरतिशयप्रेमास्पदंब्रह्मभवितुमिच्छामियतश्चर्यायांसत्पथस्थितौअभिलाषवानास्मि यद्विब्रह्मभावंनेच्छेयं तदासत्पथेक्रिमर्थंतिष्ठेयमितिभावः चर्यात्वीर्यापथेस्थितिरित्यमरः ईर्याप्रशस्याब्रह्मविद्यातस्यामार्गेब्रह्मचर्याद्युपायेस्थितिश्चर्येत्युच्यतेइतितदर्थः हेभगवंस्तत्रेत्थमनुगृहाणयथाऽहमोलिंदुपदोक्तां नारीयोनिंमार्गांनगच्छेयंयामयागर्भान्निष्क्रामतानुभूतेत्यर्थः २९३ तामेवविशिनष्टि पिच्छिलामिति । अदत्कांभक्षयित्रींबलविवेकवैराग्यादिगुणानामितिशेषः व्रणसन्निभत्वेनरक्तवर्णत्वं श्चनोऽयेतपदोक्तंदर्शितं सर्वजन्मनिनानायोनिपुवक्ष्यमाणविधयादुःखदामित्यर्थः २९४ एवंप्रार्थनस्यफलमाह एवमिति । इत्थंप्रार्थ्यमानईश्वरस्तस्मैतादृशंवैराग्यमत्रवक्ष्यमाणेपुनार्याः स्मरणादिपुप्रसनोऽतिददातिपणुदानेइतिस्मृतेः येनवैराग्येणपुमांस्तानिनकरोतीत्यर्थः २९५ तानिस्मरणादीनिदर्शयति स्मरणमिति । वधूनामितिप्रत्येकंसंबध्यते केलिःपरिहासः गुह्य भाषणंरहसिवाग्व्यापारः संकल्पोरमणीयत्वबुद्धिः निश्चयोविश्वासः एतेषांहेतूनांत्यागेकथंरतिःस्यादिति २९६ इत्थंब्रह्मचर्यसिद्धौतत्त्वज्ञानद्वारासर्वयशोरूपस्यब्रह्मणःप्राप्तिर्युक्तेत्याह ब्रह्मचर्यइति । एनंयशोरूपेणवर्णितमात्मानम् २९७ फलितंदर्शयन्विपक्षेसंसारपातंक्लेशसंघस्यकारणंसर्वजन्मनीत्युक्तंविशदयति ब्रह्मचर्यमितिपङ्क्तिः । अन्यथानारीस्मरणादित्यागरूपब्रह्म

सर्वस्याहंयशःस्फीतंब्रह्मचर्याभिलाषवान् ॥ नारीयोनिमिमांमार्गांयतोहंनिर्गतःपुरा २९३ पिच्छिलांलोमशांतद्वददत्कांव्रणसन्निभाम् ॥ दुर्गंधांक्लेशसंघस्य कारणंसर्वजन्मनि २९४ एवंसंप्रार्थ्यमानोयमानंदात्मामुमुक्षुणा ॥ प्रसन्नोत्यत्रवैराग्यंपुमान्येनकरोतिन २९५ स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणम् ॥ संकल्पोनिश्चयोवापिवधूनांरतिहेतवः २९६ ब्रह्मचर्येरतश्चैनंप्राप्नुयाद्दुःखवर्जितम् ॥ आनंदात्मानमद्वैतंस्वयंज्योतिःस्वरूपिणम् २९७ ब्रह्मचर्यंततःसर्वैःकरणीयंमुमुक्षुभिः ॥ अन्यथास्यादधःपातःप्रतीकारविवर्जितः २९८ ब्रह्मचर्यविहीनायविषयासक्तचेतसे ॥ आनंदात्मापिचित्तस्थोभातिनैवकदाचन २९९ किंतुनारीसदाभातिवहिर्यामलसंचयः ॥ तच्चिंतःसततंध्यानात्संस्कारोबलवान्भवेत् ॥ वध्वाःस्वप्नादिकालेपुतामेवैषोत्रपश्यति ३०० पश्यंस्तामुदरेगच्छेद्योषितःपुरुषःसदा ॥ तस्याःपरस्यावाऽन्यस्यादिविवान्यत्रवाभुवि १ जातःपुनश्चसंस्कारैस्तामेवैषोत्रपश्यति ॥ मृतःपुनश्चतस्यांसजायतेपूर्ववत्सदा २ एवंसंसारमागच्छेद्ब्रह्मचर्यविवर्जितः ॥ आनंदात्मानमात्मस्थंहित्वादुःखौघकारणम् ३ अतोब्रह्माब्रह्मचर्यंबिडौजसेसमादिशत् ॥ द्वात्रिंशद्वर्षमानेनह्यानंदात्मसमाप्तये३०४

चर्याभावे अधोनानायोनिपु २९८ तत्रोपपत्तिमाह ब्रह्मचर्यविहीनायेति । चतुर्थीतुमंतलोपापेक्षया तथाचआनंदरूपआत्मास्वयंप्रकाशत्वेनसदाभासमानोपिब्रह्मचर्यविहीनमुपकर्तुंनभाति चित्तदोषरूपपुरुषापराधेनहिजातापिविद्यानोपकारायभवतीतिभर्जुन्यायेनसिद्धम् २९९ किंत्विति । तस्यचेतसिमलरूपानार्येवभातियतएषब्रह्मचर्यहीनस्तच्चित्तोनारीसक्तमनास्तांनारीमेवस्वप्नमनोरथादौपश्यतिनत्वात्मानं सततध्यानजसंस्कारस्यबलवत्त्वादित्यर्थः ३०० ततश्चयंयंवापिस्मरन्भावमितिगीतोक्तविधयानारीगर्भप्राप्तिर्भवतीत्याह पश्यन्निति । तांनारीं पश्यन्ध्यायंस्तस्याअनुभूतयाःपरस्यास्तत्सजातीयायाअन्यस्यास्तद्विजातीयायावाऽदरेइहपरलोकेवागच्छेदित्यर्थः ३०१ तत्रजन्मलाभेपूर्वसंस्कारप्राबल्येनपूर्ववन्नारीध्यानतदुदरगमनयोःसंततिर्भवतीत्याह जातइति ३०२ फलितमाह एवमिति । हित्वाअलब्ध्वा ३०३ यतइत्थंब्रह्मचर्यस्यब्रह्मविद्याहेतुतान्वयव्यतिरेकाभ्यांसिद्धाऽतएवप्रजापतिनातदधिकारसिद्धयेइंद्रंप्रतिब्रह्मचर्यमुपदिष्टमित्याह अतइति । समाप्तयेसम्यग्लाभाय ३०४

अंतेतुदोषाल्पत्वमपेक्ष्ययंचैववर्षाण्यभ्यनुज्ञातवानित्याह विशुद्धेति । स्पष्टम् ३०५ पंचमेइति । पश्चान्निर्दिष्टब्रह्मचर्यवर्षाणांमध्येपंचमेवर्षेऽतीतेपूर्णेसतिप्रजापतिरमुनावक्ष्यमाणरूपेणैव चतुरीयमात्मानमिदंप्रत्याह प्रतिपादितवानित्यर्थः ३०६ अमुनेत्युक्तंद्वादशकंडिकारूपंप्रजापतिवाक्यंव्याचष्टे मघवन्नितिचतुरूनसप्ततिश्लोकैः । हेमघवन्नयमात्मामयाऽशरीरःशरीरत्रय विलक्षणएवचक्षुरादिस्थानेपूर्वोक्तोयस्त्वयास्वाबोधवशादन्यथास्थूलादिशरीरतादात्म्यापन्नतयागृहीतः ३०७ तस्यसशरीरत्वमाविद्यकमितिदर्शयन्शरीरत्रयंसहधर्मैर्वर्णयति त्रिविधमितिपादैः । त्रिविधंशरीरमज्ञानमात्रप्रयुक्तं अज्ञानाभावेकार्यकारणाभावानुपलंभात् तत्रकल्पितत्वेनसर्वेषांमर्त्यत्वेसमेपिस्थूलंसदामर्त्यंव्यवहारदशायामपिविनाशसंबंधदर्शनादित्यर्थः ३०८ सदामर्त्यत्वेहेतुमाह मृत्युनेति । यतएतत्स्थूलंशरीरंमृत्युनाप्रमादलक्षणेनसदास्वभक्ष्यत्वेनांगीकृतंभवतिसर्पैर्मंडूकवत् अतएवाजरामरादिलक्षणमात्मत्वंतस्यनसंभवतीत्यर्थः ३०९ मृत्युचिन्हंप्रियाप्रियसत्त्वलक्षणंदर्शयन्सूक्ष्मशरीरव्यतिरेकमाह प्रियाप्रियेइति । तत्रसूक्ष्मशरीरेप्रियमनुकूलमप्रियंप्रतिकूलमेतेउभेअवश्यंवर्तमानतयाप्रसिद्धेस्थूलेदेहइव आत्मात्वेवंप्रियाप्रियधर्मकोनभवति विशोकत्वेनोक्तत्वात् साक्ष्यस्यसाक्षिधर्मत्वाबाधाच्च तत्रआत्मलक्षणाद्यसंभवात्तत्सूक्ष्ममप्यात्मत्वान्नार्हमित्यर्थः ३१० तृतीयेकारणशरीरेतुबीजविधयाऽनर्थानांसत्त्वात्तस्यानात्मत्वंस्फुटंनहिकूटस्थस्या

विशुद्धचेतसेस्वल्पपापयुक्तायसप्रभुः ॥ अंतेवर्षाणिपंचैवब्रह्मचर्यंसमादिशत् ३०५ पंचमेवत्सरेतीतेशक्रमाहप्रजापतिः ॥ आनंदात्मानमद्वैतममुनावचसा प्रभुः ३०६ मघवन्पूर्वमेवायमशरीरोमयेरितः ॥ चक्षुरादिषुचात्मायंयस्त्वयास्वीकृतोन्यथा ३०७ त्रिविधंतच्छरीरंस्यादज्ञानादुत्थितंहियत् ॥ तत्रस्थूलं सदामर्त्यंयदेतदनुभूयते ३०८ मृत्युनाहिसदैवैतत्स्वीकृतंवर्ततेयतः ॥ मंडूकश्चयथासर्पैस्ततआत्मानतद्भवेत् ३०९ प्रियाप्रियेचतत्रापिवर्तेतेस्थूलदेहवत् ॥ आत्मानैवंततस्तच्चनस्यादात्माकथंचन ३१० अज्ञानेपितृतीयेस्मिन्शरीरेसुप्तकीर्तितम् ॥ आगामिवर्ततेदुःखंततस्तस्यापिनात्मता ३११ अशरीरोयमात्मायंदेहत्रयविवर्जितः ॥ दुःखशून्योयथातद्वज्जनिमत्सुखवर्जितः ३१२ प्रीत्यप्रीतिकरेएतेसुखदुःखेशरीरतः ॥ योगाच्छरीरहीनस्यद्वयेतेनकथंचन ३१३ वाय्वादीनिचभूतानिविद्युदभ्रादयस्तथा ॥ प्रियाप्रियाभ्यांसंबद्धादेहहीनानकर्हिचित् ३१४

त्मनोबीजत्वंसंभवतीत्याह अज्ञानेपीति । अज्ञानाख्येपितृतीयशरीरेप्यागामिभविष्यत्प्रादुर्भावकंदुःखंवर्तते कीदृशं सुप्तकीर्तितंसुप्तत्वेनप्रसुप्तत्वेनवर्णितं तथाचपतंजलिसूत्रं अविद्याक्षेत्रमुत्तरेषांप्रसुप्ततनुविच्छिन्नोदाराणामिति ३११ फलितमात्मस्वरूपंवर्णयति अशरीरइति । देहत्रयेणवास्तवसंबंधाभावादशरीरोयमात्मायथादुःखेनरहितःतथाजन्यसुखेनापिरहितः तस्यजन्यसुखस्यदुःखसमानयोगक्षेमत्वादितिभावः ३१२ आत्मनिप्रियाप्रिययोर्मृत्युलक्षणयोर्भानंतुदेहत्रयतादात्म्याध्यासादेवनस्वतइत्याह प्रीत्यप्रीतीति । शरीरतःशरीरेणयोगात्तादात्म्याध्यासादेवहेतोः सुखदुःखेअनुकूलप्रतिकूललक्षणेआत्मनिदृश्येतेनस्वतः समाधौशरीरत्रयाभिमानत्यागेतददर्शनादित्यर्थः अत्रप्रियाप्रिययोर्मृत्युलक्षणत्वमुद्गीथब्राह्मणेवागादीनांरागद्वेषदोषेणासुरेभ्यःपराजयप्रतिपादकेवर्णितंबोध्यम् ३१३ अशरीरस्यप्रियाप्रियाभावइत्यत्रजडानिवाय्वादीनिदृष्टांतइत्याह वाय्वादीनीति । श्रुतौवायुरित्युपलक्षणंतेजःप्रभृतीनामित्याशयेनादिपदं अभ्रादयइत्यादिपदेनस्तनयित्नुपदवाच्यस्यवर्षुकमेघस्यग्रहः अभ्रपदेनतुतित्तिरिपक्षाकारस्यनवमेघस्य एतेपदार्थायथादेहेनघनीभूतावयवलक्षणेनहीनावर्जिताःसंति नह्येतेषांदेहाःकुत्रचिद्देशेवसंतःकेनापिदृष्टाःकिंत्वदृष्टादिनिमित्तवशेनाकस्माद्विवप्रादुर्भूयवृष्ट्यादिकंकुर्वाणाउपलभ्यन्ते इतश्चदेहहीनत्वाद्रागद्वेषगोचरलक्षणाभ्यांप्रियाप्रियाभ्यांवर्जिताश्चप्रसिद्धास्तथात्मापिप्रियाप्रियरहितोदेहहीनत्वादित्यर्थः ३१४

अत्रयद्यपिदृष्टांतस्वरूपमित्थंभाष्यकारैर्लोकानुग्रहपरैर्व्याख्यातं वाय्वादयोयथावर्षादिप्रयोजनाभावेशरदादौभूताकाशेसूक्ष्मभावेनतादात्म्यंगताअपिवर्षाकालादिनिमित्तेनप्रादुर्भवंतितथात्माप्यविद्यादेहतादात्म्येनासद्भावमिवापन्नोवेदांतवाक्यरूपनिमित्तेनप्रादुर्भूतः स्वरूपावस्थितोभवतीति तथापिप्रपंचविलयवादिनांप्राचांमतानुरोधीग्रंथकृत्अदःशब्दस्यपरोक्षवाचितामाकाशशब्दस्यब्रह्मपरत्वेआकाशोवैनामेत्यादिवाक्यशेषानुकूल्यंचस्वपक्षेअनुसंधायविद्वत्प्रसिद्धंचैवदृष्टांतस्वरूपंवर्णयन्नात्मनःस्वरूपावस्थितिक्रमंदर्शयति वाय्वादयोयथेत्यादिनातद्वदात्माशरीरिणामित्यंतेनग्रंथेन । मायानिमित्तमात्रंब्रह्मैवविश्वोपादानमितिसिद्धांताद्वाय्वादीनामुपादानंब्रह्मैवलयस्थानंतत्रलीयमानावाय्वभ्रादयःस्वंपारमार्थिकंरूपंचिद्घनलक्षणंप्राप्ययथाअद्वैतरूपेणतिष्ठंतीत्यर्थः ३१५ एवमिति । एवंसुषुप्तिसंबंधेनसंप्रसादसंज्ञोऽयमात्माजीवःसोऽशरीरःपरित्यक्तशरीरत्रयाभिमानःसन्हार्दंहृदयाकाशरूपंतत्पदार्थभूतंज्योतिःप्राप्यस्वेनपारमार्थिकेनरूपेणावस्थितोभवति ३१६ तत्रदृष्टांतमेवस्फुटयति कार्यमिति । यद्दृष्टांतीकृतंवाय्वादिकंभूतजातंवियदादिकंभौतिकंचएतत्सर्वंकार्यंविलयकालेज्योतीरूपंपरंब्रह्मैवव्रजेन्नान्यत् यतस्तद्ब्रह्मैवविश्वोपादानमित्यर्थः घटोलीयमानोमृदिलीयतेइतिमूढमतमात्मन्युपादानतायोग्येलीयतेइतितत्त्वविदांमतमितिभावः ३१७ तत्रहेतुतयाअन्यत्रविलयासंभवमाह विलीयमानमिति । कार्यंघटादिविलीयमानंसदात्मनाविश्वसत्ताप्रदेनवर्जितंपरित्यक्तंकिंवस्तुप्रतिगच्छेत् नहिनिःस्वरूपेलयोयुक्तः तथाचमृदाद्युपहितचैतन्यएवघटादिलयइतिभावः अनात्मनितुलयएवनसंभवतियथास्थितस्यताम्रस्यनसुवर्णभावः

वाय्वादयोयथास्वस्यकारणंज्योतिरद्वयम् ॥ प्राप्नुवंतःस्वरूपेणस्युरेतेभेदवर्जिताः ३१५ एवमात्माऽशरीरोयंसुषुप्तौयःप्रकीर्तितः ॥ हार्दंगच्छन्परंज्योतिःस्वेनरूपेणजायते ३१६ कार्यंसर्वंव्रजेदेतद्वियुद्वाय्वादिकंहियत ॥ परंज्योतिःपरंब्रह्मयतस्तस्मात्समुत्थितम् १७ विलीयमानंकार्यंहिकिंगच्छेदात्मवर्जितम् ॥ रूपांतरेणवाकेनगच्छेत्तत्स्वविवर्जितम् ३१८ जडान्यपियदास्वस्यरूपंतत्स्फुरणात्मकम् ॥ आत्मप्रवेशआयांतितदात्माचेतनःकथम् ॥ तद्रूपंचनगच्छेत्सतेनतादात्म्यमागतः ३१९ आत्मनोऽपररूपाणिकर्तृत्वादीनिसर्वदा ॥ आनंदात्मास्वयंज्योतिर्निजंरूपंचतस्यतत ॥ परस्यज्योतिषस्तच्चहृदयाकाशरूपिणः ३२० अनयोर्भेदहेतुश्चसाज्ञानंहिवपुर्द्वयम् ॥ तस्मिन्गतेनकोप्यत्रभेदःसंभाव्यतेऽनयोः ३२१ अहंब्रह्मेतिविज्ञानादज्ञानेविलयंगते ॥ कर्तृत्वादीनिरूपाणिस्वयंयांतिलयंततः ३२२ रज्ज्वज्ञानेविलीनेत्रयथाधर्माःस्वयंलयम् ॥ सर्पस्यसर्पणाद्यास्तेयांतिहेतुविवर्जिताः ३२३

पूर्वरूपानिवृत्तेर्नापिनष्टस्यनष्टत्वादेवतथाइत्यभिप्रेत्याह रूपांतरेणेति । रूपांतरेणात्मलक्षणस्वरूपाद्भिन्नेनघटादिसंज्ञकेनस्वरूपेणकार्यंकर्तृकारणंकेनन्यायेनगच्छेन्नकेनापि यतआत्मनःपृथग्भावेस्वविवर्जितंनिःस्वरूपं नहिशशशृंगस्यकुत्रचिल्लयोनवानात्मनिपटेघटस्यलयःप्रसिद्धइत्यर्थः ३१८ फलितंकैमुत्यमभिनयति जडान्यपीति । यदाजडान्यपिस्वकीयविनाशकालेचिल्लक्षणात्मभावंयांतितदाचेतनोजीवःसदातेनपरमात्मनातादात्म्यमभेदंप्राप्तःपरस्यैवजीवभावेनप्रवेशश्रवणात्सलयेतद्रूपंचिदेकरसब्रह्मभावंगच्छेदितिकिमुवाच्यमित्यर्थः ३१९ तर्हिजीवस्यसंसारदशातःकोविशेषोमोक्षइतिचेत्कल्पितरूपपरित्यागएवेत्याह आत्मनइतित्रिभिः । कर्तृत्वभोक्तृत्वादीन्यपराण्यागंतुकानिकल्पितानीतियावत् तादृशानिरूपाण्यात्मनोजीवस्यत्वंपदार्थस्यभवंति निजंवास्तवंरूपंतुस्वयंप्रकाशानंदलक्षणमेव यच्चत्वंपदार्थस्यशुद्धंरूपमेतदेवपरस्यतत्पदार्थस्यापिभवतीत्यर्थः ३२० अनयोरिति । अनयोस्तत्त्वंपदार्थयोर्भेदप्रयोजकंस्थूलसूक्ष्मशरीरलक्षणविलाससहितमज्ञानमेव तस्यज्ञानस्यलयेसतिभेदोदुर्वचइत्यर्थः ३२१ तत्रहेतुतयानिरूपकाभावमाह अहमिति । स्वयंयत्नमंतरापि २२ तत्रदृष्टांतमाह रज्ज्वज्ञानइति । रज्ज्ववच्छिन्नचैतन्यगोचरेऽज्ञानेविलीनेसतितत्रकल्पितस्यसर्पस्ययेसर्पणाद्याःसर्पणपदस्यांतर्भावितणिचूकत्वात्पलायनप्रयोजकत्वमर्थः आदिपदेनमोहप्रयोजकत्वादिग्रहः एतेधर्माःकारणनाशेनैवलयंयांतीत्यर्थः ३२३

जीवस्यपरिपूर्णस्वरूपावस्थितौनिदानभूतउपाधिविमोकएवेतिस्फुटीकरणायदृष्टांतांतरमाह घटइति । यथाघटाकाशस्यमहाकाशाख्येनस्वरूपेणावस्थितौप्रयोजकोघटलक्षणोपाधिविमोकएवतथा कर्तृत्वस्यतदुपलक्षितभोक्तृत्वादीनांचादिनानिमित्तभूतेनशरीरत्रयेणहीनोविवेकंगतोजीवःस्वेनपूर्णरूपेणातिष्ठेदितिद्वयोरर्थः ३२४ । ३२५ यद्येवंब्रह्मभावोजीवस्यजडानांचसमस्तदाजडचेतनयोरुपमायाभेदसापेक्षायानिर्वाहकोविशेषःकइत्याशंकांपरिहरति रूपेणेतिद्वाभ्यां । यद्यपिपरस्याद्वयरूपस्यज्योतिषःप्राप्तिसमानकालिकास्वरूपेणनिष्पत्तिरवस्थितिर्जीवस्ययथेरितातथैवविद्युत्प्रभृतेर्जडस्याप्युदीरितातथापितत्रदृष्टांतदार्ष्टांतिकयोःकार्यत्वाकार्यत्वलक्षणेनविभागेनवैलक्षण्येनप्रयुक्तोभेदःस्वयंश्रुत्युपदेशमंतरापिसिद्धोज्ञेयः तमेवस्फुटयति विद्युदादिरिति । विद्युदादिरूपोदृष्टांतःकार्यत्वेनप्रसिद्धः तस्मात्कार्याद्विलक्षणस्तुजीवइतिद्वयोरर्थः ३२६ । ३२७ जीवस्यकार्यत्वाभ्युपगमेऽनिष्टधाराप्रसंगंदर्शयति कार्यतायामितित्रिभिः । जीवस्यकार्यतायामंगीकृतायांसत्यांविनाशप्रसंगस्ततश्चप्रजापतेरात्मनोविजरादिभावंप्रतिपादयतोमृषावादितास्यादित्यर्थः ३२८ इंद्रस्येति । ततश्चपूर्वपूर्वात्मनिविनाशदोषमालोच्यागतेनेंद्रेणाविनाशिनस्तत्त्वस्यालाभात्तदागमनंवृथास्यात् यतोत्रचतुर्थपर्यायेविनाशवानात्माउक्तोभविष्यत्तदासपुनरागमिष्यदित्यर्थः ३२९ तथापरज्योतिःप्राप्तिपूर्वकस्यस्वरूपेणावस्थितिरूपस्यफलस्योक्तिरपिव्याहन्येत

घटेयथाविलीनेतुघटाकाशोमहानयम् ॥ स्वेनरूपेणसंपन्नआकाशोजायतेसदा ३२४ कर्तृत्वादिविहीनःसन्परंज्योतिरुपागतः ॥ एवंस्वेनैवरूपेणजीवात्माजायतेत्विह ३२५ रूपेणस्वेननिष्पत्तिःपरस्यज्योतिषोह्यिया ॥ प्राप्तिरुक्तात्रजीवस्यविद्युदादेस्तथेरिता ३२६ तत्रभेदःस्वयंज्ञेयःकार्याकार्यविभागतः ॥ विद्युदादिरिदंकार्यंजीवस्तस्माद्विलक्षणः ३२७ कार्यतायांविनाशःस्यात्तस्यदेहादिवत्ध्रुवम् ॥ प्रजापतेस्तथात्वेतुमृषावादित्वमापतेत् ३२८ इंद्रस्यगमनंतद्वद्व्यर्थमेवपुनर्भवेत् ॥ आत्मनोनाशमन्वीक्ष्यसर्वत्रैपसमागतः ॥ अत्रापिनाशउक्तश्चेत्कुतोनपुनराव्रजेत् ३२९ नष्टानांनवचप्राप्तिर्भवेत्कुत्रापिकर्हिचित् ॥ स्वरूपेणाभिनिष्पत्तिर्दूरापास्ताचतत्रहि ३३० वाय्वादावपिनैतत्स्यात्समानंत्रितयंततः ॥ कारणस्यैवकार्यत्वंमृषैवेतिसमास्थितम् ॥ कार्यंयदिभवेन्नामतदातन्नभवेदपि ३३१ कार्यवज्जीवतायांचेत्प्रतिबंदीग्रहोभवेत् ॥ नानिष्टंजीवतातस्मिन्मृषायस्मात्समाश्रिता ३३२

नहिनष्टानामसद्भावंगतानांप्राप्त्यादिकर्तृत्वंयुक्तमित्याह नष्टानामिति । नष्टकर्तृकायाःप्राप्तेरसंभवेतत्प्रयुक्तायाःस्वरूपावस्थितेःसुतरामसंभवइत्यर्थः ३३० वस्तुतस्तुनात्रोक्तविशेषापेक्षाव्यक्तिभेदमात्रेणापिदृष्टांतत्वसंभवादित्यभिप्रेत्यदृष्टांतेपिकार्यत्वंवस्तुतोनास्तीत्याह वाय्वादाविति । यदिवाय्वभ्रादौदृष्टांतीकृतेवैशेषिकादिमतसिद्धंवास्तवंकार्यत्वंस्यात्तदातस्यविनाशशीलस्यएतत्श्रुतौप्रसिद्धंत्रितयंसमुत्थानप्राप्तिस्वरूपावस्थितिरूपंसमानंसाधर्म्यभावेनोक्तंनस्यान्नोपपद्येत ततएतदालोच्यकारणमेवकार्यभावेनावस्थितंनकार्यंकारणात्पृथक्सत्मृषात्वादितिसमास्थितंस्वीकृतंसंप्रदायविद्भिरितिशेषः अस्मिन्पक्षेअसत्त्वप्रयुक्तोदोषोनप्रसज्जतेकारणस्यसत्तामादायसर्वोपपत्तेरित्याशयेनाह कार्यमिति । यदिकार्यंभवेत्कारणात्पृथक्केनेतिशेषः तदातत्कार्यंनभवेद्विनाशेनासत्तामपिभजेत् तथाचोक्तानुपपत्तिःस्यात्अस्माभिस्तुतथानैवाभ्युपगम्यतइत्यर्थः ३३१ ननुदृष्टांतेकार्यत्वस्यमिथ्यात्वंयद्युच्यतेतदादार्ष्टांतिकगतस्यजीवस्यापितत्स्यादितिचेत्प्रतिपत्तिरित्याह कार्यवदिति । प्रतिवंदीतुल्यतापादनंतत्रग्रहोहठश्चेत्तवस्यात्कार्यवज्जीवतापिमृषास्यादितितथाप्यस्माकंनानिष्टंतथास्वीकारादेवेत्यर्थः ३३२

मृषात्वेदृष्टांतमाह घटनाशइति । यथाघटरूपोपाधिनाशेसतिघटाकाशत्वंस्य.टमृषात्वकंभवेत्तथाशरीरत्रयविवेकेजीवत्वमपीत्यर्थः ३३३ विशेष्यरूपस्यमोक्षयोग्यत्वायसत्यत्वमपितेनदृष्टां
तेनाह आकाशइति । यथाघटाकाशाख्येसंघातेविशेष्यतयास्थितआकाशःसत्यस्तथाजीवस्थितोजीवाख्येसंघातेस्थितआनंदात्मापीत्यर्थः ३३४ तथाचास्तिभातीत्यादिवाक्यप्रसिद्धेमायां
शेमिथ्यात्वाङ्गीकारादनिष्टापत्तिरेवेत्याह ततइति । ततउक्तविवेकात्कार्यंविद्युदादौदृष्टान्तेजीवेदार्ष्टांतिकेचगतोयोमायाभागोनामरूपलक्षणस्तद्गताअसत्यतामिथ्यात्वंयदिभवतितदाभवतुनामनहिवयं
तस्यामायायाःसत्यत्वमीरयामइत्यर्थः ३३५ फलितंसाधर्म्यमभिनयति आनंदात्मेति । स्फुरणरूपेणसर्ववस्तुषुयोऽनुगतःसआनंदात्मैवसत्यःशरीरत्रयविशिष्टरूपेणप्रसिद्धोयोजीवःसतुतंतः
तामानंदात्मसत्तामादायैवसम्यक्सत्योनस्वतइत्येतस्मिन्नंशेउपमालंकारस्यउपमानोपमेयसाधर्म्यवाचकरूपैश्चतुर्भिरवयवैर्युक्तस्यांशेसाधर्म्याख्येस्वीकृतेसतिविद्युदादेरुपमानस्यजीवेनोपमेयेनस
हसंयोजनेविरोधोविघातहेतुर्दोषःकोपिनास्ति विद्युदादीनामपिसत्तायाअधिष्ठानपरतंत्रत्वादित्यर्थः ३३६ कार्यतायामिति । कार्यतारूपेसाधर्म्येस्थितेसतियत्साम्यमुपमाख्यंतदिहनस्यात्
तथासतिकृतनाशाकृताभ्यागमप्रसक्त्याउक्तदोषःप्रजापतिमृषात्वादित्वादिरूपःप्रसज्जेतेत्यर्थः अपिचेत्युत्तरान्वयि ३३७ तर्हिघटादयएवकुतोनदृष्टांतीकृताइत्याशंकांपरिहरन्वायुविद्युदादेःप्रजा

घटनाशेयथालोकेघटाकाशत्वधीर्मृषा ॥ आनंदात्मनिजीवत्वंमृषातद्वत्समाश्रितम् ३३३ आकाशोनमृषायद्वद्घटाकाशेप्यवस्थितः ॥ आनंदात्मातथाजीव
स्थितःसत्यतयेरितः ३४ ततःकार्येथवाजीवेमायांशेसत्यतायदा ॥ तदाभवतुकोनामतस्याःसत्यत्वमीरयेत् ३५ आनंदात्मासदासत्यःस्फुरणंयोत्रवस्तुषु ॥
यश्चजीवस्ततःसम्यगस्मिन्नंशेतुसर्वदा ॥ विद्युदादेश्चजीवेनविरोधोनात्रकश्चन ३६ कार्यतायांनसाम्यंस्यादेवैर्जीवस्यकर्हिचित् ॥ उक्तदोषसमापत्त्याकृतना
शादिनापिच ३७ अशरीरत्वसंपत्त्यैब्रह्मावाय्वादिकंत्विह ॥ दृष्टांतमुक्तवान्नैवकार्यत्वेनकथंचन ३८ शरीरेऽसतिवाय्वाद्याःप्राप्नुयुर्नप्रियाप्रिये ॥ यथातथैवजी
वोयंशरीरेणविवर्जितः ॥ प्रियाप्रियेकचिन्नैवगच्छेत्कालत्रयेपिहि ३९ परंज्योतिर्यथाप्राप्यवाय्वाद्याःप्रलयेसति ॥ स्वरूपतोविनिष्पन्नाअशरीराःकदाचन ॥
प्राप्नुयुर्नैवतेदुःखंतद्वदात्माशरीरिणाम् ३४० ज्योतिषःपरमत्वंयत्स्वप्रकाशतयाहितत् ॥ ज्योतींषियतएतानिह्यपेक्षंतेस्वतःपरम् ॥ ज्ञानांतरंनचैवंतत्स्वयं
ज्ञानस्वरूपिणः ३४१ ज्ञानंचेत्स्वप्रकाशायविज्ञातारमपेक्षते ॥ अनवस्थादयोदोषास्तदास्युरनिवारिताः ३४२

पतिनदृष्टांतनयाभिधानेप्रयोजनमाह अशरीरत्वेति । ब्रह्माप्रजापतिर्यद्वायुविद्युदादिकंदृष्टांतत्वेनोक्तवांस्तत्प्रजापतिवचनंकार्यत्वेनकार्यत्वबोधरूपेणफलेनफलवन्नभवतिकिंत्वशरीरत्वस्ययासं
पत्तिःप्रियराहित्यप्रयोजकतारूपातद्बोधरूपफलेनैवफलवदित्यर्थः घटादीनांतुवाय्वादिवदशरीरतयावस्थानमेवनप्रसिद्धमतोनतेदृष्टांतीकृताइतिभावः ३३८ उक्तंफलमेवविशदयति शरीरेऽस
तीतिद्वाभ्यां । यथाशरीरेघनीभूतावयवलक्षणेअसतिपरित्यक्तेसतिवाय्वभ्रादयःप्रियाप्रियसंपर्करहिताःप्रसिद्धास्तथात्मापिशरीरवर्जितइत्यर्थः ३३९ परंज्योतिरिति । यथाचप्रलयकालेवा
य्वादयःपरंज्योतिःसल्लक्षणंपरमकारणंप्राप्यस्वेनरूपेणानिष्पन्नाअवस्थिताःसंतोदुःखंसंसारधर्मंकमपिनप्राप्नुयुरशरीरत्वात्तथासर्वेषामात्मापीत्यर्थः ३४० आत्मस्वरूपज्योतिषःपरमत्वंस्फुटीक
रोति ज्योतिषइति । ज्योतिषःपरमत्वंयदुक्तंतत्स्वप्रकाशतयाबोध्यं यतएतानिलौकिकानिज्योतींषिप्रदीपादित्यादीनिस्वतःपरंभिन्नंज्योतिर्ज्ञानरूपमपेक्षंतेस्वयंज्ञानस्वरूपिणोब्रह्मणस्तुतत्स्वरूपभूतंज्ञा
नमेवंलौकिकज्योतिर्वज्ज्ञानांतरंनापेक्षतेइत्यर्थः ३४१ परसापेक्षत्वेदोषमाह ज्ञानमिति । यदिज्ञानंस्वसिद्धयेज्ञातारमपेक्षेततदासज्ञाताप्राह्यज्ञानेनैवज्ञानवान्ज्ञानांतरेणवाआद्येआत्माश्रयः
द्वितीयेतस्यापिस्वसिद्धयेप्रथमज्ञानापेक्षणेऽन्योन्याश्रयः स्वापेक्षणेत्वात्माश्रयउक्तएव अथतृतीयकल्पनेप्रथमापेक्षायांचक्रकं द्वितीयापेक्षायामन्योन्याश्रयः स्वापेक्षणआत्माश्रयः ततश्चतुर्था
दिकल्पनेऽनवस्थादित्यर्थः ३४२

फलितमाह स्वयमिति ३४३ ननुपरमज्योतिषोयाप्राप्तिःस्वेनैवस्वरूपेणावस्थितिस्तथाचपौनरुक्त्यंश्रुतौस्यादितिशंकांपरिहरति संपत्तिरिति । महावाक्यार्थज्ञानंसंपत्तिपदार्थः तस्यज्ञा
नस्यफलंतुद्वैतराहित्यरूपंस्वरूपाभिनिष्पत्तिपदार्थः इतिनपुनरुक्तिरित्यर्थः ३४४ उत्तमपुरुषपदार्थमाह फलेति । तत्त्वंपदाभ्यामुपलक्षितंयदैक्यलक्षणंस्वरूपंतदेवोत्तमपुरुषपदेनोच्यतेनान्य
त्तस्यकार्यकारणाभ्यामुत्तमत्वात्सर्वोपाधिपुपरिपूर्णत्वाच्चेत्यर्थः ३४५ संतत्रपर्येतीत्यादिनाद्वादशकंडिकांतग्रंथेनजीवन्मुक्तस्यस्थितिप्रकारउच्यतेइतिदर्शयंस्तदर्थमाह उत्तमइतिपंचदशभिः । ए
षमहावाक्यार्थसाक्षात्कर्तृलक्षणउत्तमःपुरुषःप्रारब्धसमाप्तिपर्यन्तमेवमनेनप्रकारेणवसेत् एवंकथं श्रुतौतत्रपदोक्तेब्रह्मरूपेलोकेनिर्विकल्पसमाधिस्थःसन्पर्येतिविहरतिब्रह्मैवसर्वतःपश्यतीतियावत्
व्युत्थानदशायांतुसमष्ट्यात्मदर्शीसंस्तत्रपदोक्तेषुसर्वलोकेषुपर्येतिव्याप्नोतिमहाराजवत्स्वतंत्रइतिद्वयोरर्थः ३४६ । ३४७ अभक्ष्याणीति । तथासर्वप्राणिरूपेणभक्ष्याभक्ष्याणिभुंजानःसंस्त
थावाल्लवन्महाजनैरादृतःक्रीडन्सन्निंद्रादिप्रभुरूपेणवधूभिर्वाहनैःसखिभिःसंबंधिभिर्वारममाणःसन्निमंप्रसिद्धमविद्याकालोपात्तंदेहम् कीदृशम् मूढजनानांसमीपेविद्यमानंनविजानातिनस्मर

स्वयंज्योतिस्ततस्त्वेतत्परंज्योतिरितीर्यते ॥ आनंदात्मस्वरूपंयत्सर्वप्रियतमंसदा ३४३ संपत्तिरस्याविज्ञेयाह्यहंब्रह्मेतिवेदनम् ॥ स्वरूपेणाभिनिष्पत्तिरुक्ता तत्त्वंपदार्थयोः ॥ विज्ञानाद्भेदराहित्यंफलंयत्स्वात्मबोधजम् ३४४ फलप्राप्तावभिन्नंस्याद्यद्रूपंतत्त्वमर्थयोः ॥ उत्तमःपुरुषःसोयंविद्यतेनततःपरम् ३४५ उत्तमःपुरुषस्त्वेषयावद्देहस्यधारणम् ॥ तावदेवंवसेत्तत्रब्रह्मलोकेथवापुमान् ३४६ स्वेच्छयासर्वलोकेषुह्युत्तमःपुरुषःसदा ॥ पर्येत्यव्याहताज्ञःसन्महाराजइवापरः ३४७ अभक्ष्याणिचभक्ष्याणिभक्षयन्दुःखवर्जितः ॥ क्रीडन्बालसमःसर्वैर्लाल्यमानोमहाजनैः ३४८ रममाणोवधूभिर्वादेवेंद्रइवचापरः ॥ यानैर्वाविविधैरेपवय स्यैर्ज्ञातिभिश्चवा ३४९ विद्यमानमिमंदेहंनायंजानातिकर्हिचित् ॥ यथाशयानःपुरुषःशयानंस्वात्मनोवपुः ३५० यथाशयानेपुरुषेप्राणेनैवाभिरक्ष्यते ॥ शयानस्यात्रदेहोयंतद्वज्जीवन्मुक्तस्यतेनहि ३५१ रथोयथाशयानेपिसारथौशिक्षितैर्हयैः ॥ नीयतेपूर्ववत्तद्वद्देहःप्राणैस्तथास्यहि ३५२ मंत्रिणारक्ष्यतेराज्यंशयाने नृपतौयथा ॥ मुक्तस्यचतथादेहःप्राणेनैवाभिरक्ष्यते ३५३ प्राणोयथात्रदेहस्यरक्षाहेतुःप्रकीर्तितः ॥ भोगहेतुस्तथैवेतदुक्तंबाह्यांतरेंद्रियम् ३५४ एकादशें द्रियैर्बालोगृह्णन्नपियथाबहून् ॥ विषयान्नस्मरेत्तद्वत्प्रमत्तोवात्रकश्चन ३५५ मुक्तस्तद्वदिमान्सर्वानधिगच्छन्नहिसर्वथा ॥ मनसानैवजानातिस्वात्मनोन्यं कथंचन ३५६

तिसुप्तपुरुषःस्वशरीरमिवेतित्रयाणामर्थः अत्रविदुषःसर्वज्ञत्वेप्याविद्यकव्यवहारविस्मृतौदृष्टांतौभाष्यकारैरुक्तःयथाकश्चिदुन्मादादिनाविपरीतंव्यवहरन्पश्चान्निवृत्तोन्मादउन्मादकालिकंवृत्तंवि
स्मरन्नपिनमंदधीरित्याख्यायतेतथाजीवन्मुक्तोपीति ३४८ । ३४९ । ३५० तर्हिकथंतस्यदेहस्थितिरित्याशंकांश्रौतदृष्टांतेनपरिहरति यथेति । यथासुप्तस्यदेहेयोगक्षेमचिंताराहित्येपितस्य
देहःप्राणेनरक्ष्यतेतथातेनप्राणेनमुक्तदेहोपि ३५१ रथइति । तथाचश्रुतौप्रयोग्यपदोक्तेर्हयैःसारथौसुप्तेपिरथोनीयतेतथास्यमुक्तस्यदेहःप्राणैः ३५२ अथवाप्रयोग्यपदेनप्रकर्षेणराजव्यवहारेयो
ग्यइतिव्युत्पत्त्याराजमंत्रीग्राह्यइतिदर्शयन्नाह मंत्रिणेति । रक्ष्यतेपाल्यते ३५३ यथाचदेहरक्षाधिकारित्वेनप्राणउक्तस्तथाभोगाधिकारित्वेनेंद्रियाण्युक्तान्यथयत्रैतदित्यादिश्रुतिग्रंथेनेत्याह प्राण
इति । बाह्यंघ्राणादि आंतरंमनः ३५४ विदुषोभोगकालइतरेभ्योविशेषंभाष्योक्तमेवाह एकादशेंद्रियैरिति । यथाबालःप्रमत्तोवाइंद्रियैर्विषयान्गृह्णन्नपिपश्चान्नस्मरतीति ३५५ मुक्तइति ।
तथाजीवन्मुक्तोपिदेवचक्षूरूपेणवर्णितेनमनसासार्वान्विषयानधिगच्छन्नपिस्वात्मनोभिन्नंपदार्थजातंनैवविजानातिअनुसंधत्तेइत्यर्थः ३५६

तेनाप्रयुक्तानामपींद्रियाणांप्रवृत्त्यनुपपत्तिमाह आसक्तीति । अयंमुक्तआसक्तिशून्योब्रह्मलोकादिपुवर्तमानान्भोगान्मनःप्रभृतिभिरिंद्रियैर्गृह्णाति कीदृशैरिंद्रियैः तैरादित्यादिभिर्देवैःप्रयुक्तैःप्रेरितैः तत्रहेतुभूतंविशेषणम् तत्तदाश्रितैरिति तांस्तान्चक्षुरादिप्रवर्तनरूपानधिकारान्धारयद्भिरितितदर्थः अतएवसर्वदुःखविवर्जितइति ३५७ तस्यविदुषोब्रह्मभावंस्फुटयन्सर्वदेवोपास्यतारूपंब्रह्मधर्मंतत्राह उत्तमइति । योयमुत्तमपुरुषरूपोविद्वानुक्तःएनंसर्वात्मभूतंसर्वेदेवाःशमादिसंपन्नलक्षणास्तैस्तैःसविशेषरूपैरुपासतेयावदात्मत्वेननसाक्षात्कुर्वंतीति ३५८ ततश्चसर्वलोककामेषुस्वातंत्र्यंदेवानामुपलभ्यतेइत्याह उपासतइति ३५९ तथाचेदानीमप्यात्मोपासकानांतत्फलंयुक्तमित्याह विज्ञायैवेति । एतद्विज्ञानेनैवसर्वंतत्फललाभइत्यर्थः ३६० त्रयोदशकंडिकायांमंत्ररूपापापुक्तंदहरोपासकस्यपापनिवृत्तिरूपंफलंकैमुत्येननिर्विशेषब्रह्मविदोपिसिद्धंदर्शयति आत्मायमिति । अयंविश्वाधिष्ठानतयोक्तआत्मातत्पदार्थोदुरवगाह्यतयाश्रुतोऽयामपदोक्तःसएवसर्वेषांहृदयाकाशरूपस्त्वंपदार्थः सन्संघातसंकीर्णत्वात्शबलइत्युक्तस्तयोरैक्यंयःसाक्षात्कुरुतेससर्वैःपापैर्नलिप्यतेइत्यर्थः ३६१ तत्रहेतुतयासमाहितत्वेनपापासंभवमाह आत्मेति । यस्यपरमा

आसक्तिशून्योमुक्तोयंभोगान्गृह्णातिसर्वदा ॥ मनआद्यैःप्रयुक्तैस्तैर्देवैस्तैस्तत्तदाश्रितैः ॥ ब्रह्मलोकादिलोकेषुसर्वदुःखविवर्जितः ३५७ उत्तमःपुरुषोयोयंविद्वद्रूपःप्रकीर्तितः ॥ एनमात्मतयानित्यंसर्वेदेवाउपासते ॥ उपासनैर्हिविविधैर्यावज्ज्ञानंतिनात्मना ३५८ उपासतेयतश्चैनमात्मानंदेवमंजसा ॥ सर्वेलोकास्तत्कामाःस्वाधीनाहिदिवौकसाम् ३५९ विज्ञायैवेनमात्मानंसर्वदास्वात्मरूपतः ॥ सर्वान्लोकांस्तथाकामान्सर्वान्प्राप्नोत्यसंशयम् ३६० आत्मायंसर्वभूतानांहृदयाकाशसंश्रयः ॥ आनंदरूपमेतंयोजानातिस्वात्मरूपतः ॥ नसपापेनकेनापिलिप्यतेमहतापिच ३६१ आत्मायस्यहिसत्योयंबुद्धिसाक्षीप्रतीयते ॥ नासौपापानिकुरुतेपुमानद्वैतदर्शनः ३६२ आत्मानंयःप्रियंवेदसर्वदासुखरूपिणम् ॥ पापानिकुरुतेकस्माद्विवेकीसहिधीधनः ३६३ जायतेम्रियतेचैकःफलंचैकःशुभाशुभम् ॥ भुंक्तेचेतद्विजानन्सकिमर्थंपापमाचरेत् ३६४ सर्वभूतात्मभूतस्यसम्यग्भूतानिपश्यतः ॥ मार्गेदेवाश्चमुह्यंतिह्यपदस्यपदैषिणः ३६५

र्थंभूतःसाक्ष्येवममात्मानविश्वादिरूपइतिनिरावरणंप्रतीयतेभातिसपापंकथंकुर्यात्तत्प्रवृत्तिहेतोर्द्वैतदर्शनस्यैवाभावादित्यर्थः ३६२ व्युत्थानदशायामपिविषयरागाभावान्नतत्रप्रवृत्तिरित्याह आत्मानमिति । यआत्मानमेववस्तुतःप्रियंवेदनविषयजातंसधीधनोविद्वान्केनहेतुनापापंकुर्वीतेत्यर्थः ३६३ अत्रकैमुत्यमाह जायतइति । एकोन्यार्थइत्यमरः तथाचजननमरणादिविकारभागन्यएवनाहंतथाशुभाशुभकर्मफलभोक्ताप्यन्यएवनाहंसाक्षिमात्रात्मकत्वात् एतद्योविजानातिसभोक्तृत्वाभावेनसत्कर्मणामपिपदानाधिकारभाक्तदापापेनतथेति किमुवाच्यमित्यर्थः ३६४ ननुव्यवहारेस्थितस्यापिविदुषःकथमीदृशोमहिमेत्याशंक्यविदुषःपंथादुर्लक्ष्यइत्यावेदयंतंभारतश्लोकंपठति सर्वेति । सर्वेषांभूतानामात्मभूतस्यप्रत्यग्भावंगतस्यतानिसम्यगभिन्नत्वेनपश्यतोमहावाक्यार्थविदःपथिनिष्ठारूपेमुह्यंतिलोकाः यतोऽपदस्यपदंपादन्यासचिह्नंनविद्यतेयस्यसतथातस्ययेपदंगम्यंतत्त्वंप्राप्तुमिच्छंतितेदेवाधन्याइतियावदितिवाचस्पत्युक्तयोजनालभ्योर्थः ३६५

फलितमाह तत इति । यतोयानिशासर्वंभूतानामित्यादिगीतोक्तविधयादुर्लक्ष्यगतिस्ततःकूटमन्यत् ३६६ तस्यविदेहमुक्तौकःसंशयइत्याह एवमिति ३६७ चतुर्दशकंडिकागतस्यब्रह्मेत्यंतवाक्यस्यार्थंदर्शयन्प्रजापतींद्रसंवादमुपसंहरति एवमितिद्वाभ्यां । स्पष्टम् ३६८ सर्वेषामिति । कीदृशंभूमानम् हृदयाकाशरूपंनामरूपात्मकप्रपंचस्यविधायकंसत्तादिप्रदानेननिर्वाहकम् यत्तेनामरूपेअंतराविनाइतिश्रुत्यर्थोदर्शितउत्तरार्द्धेन चतुर्थपादस्यतृतीयपादविवरणात्मकत्वात् ३६९ अंत्यकंडिकार्थमाह एकइति । अयमुक्तविद्यासंबंधीसंप्रदायोगुरुशिष्यपरंपरारूपइंद्रमारभ्यएकःप्रवृत्तःद्वितीयस्तुस्वयंभूसंज्ञकान्मनोःप्रवृत्तः यतःप्रजापतिनायथेंद्रायेयंविद्योपदिष्टातथामनवेपीत्यर्थः सचमनुर्भूमिलोकेआदिगुरुःप्रजाभ्यःसाधिकाराभ्यउक्तवानिति ३७० अशुद्धांतःकरणेभ्यस्तुसत्कर्मैवोपदिष्टवानित्याह त्रैवर्णिकानिति । ब्रह्मविद्ययावर्जितान्अधिकाराभावात्ताम्प्रतीदमाह हेत्रैवर्णिकाभवंतश्चतुर्णामाश्रमाणांमध्येइष्टमाश्रमंकृत्वायागादीनिकर्मा

ततोयंलभ्यतेनैवपापीपुण्योथवेतिच ॥ पापगंधेनरहितोब्रह्मवित्पुरुषोत्तमः ३६६ एवंयोभाग्ययोगेनपश्येत्पुरुषरूपिणम् ॥ आनंदात्मानमद्वैतंमुच्यतेसनसंशयः ३६७ एवंप्रजापतिःप्राहपूर्वंशक्रायसर्ववित् ॥ अवस्थात्रयनिर्मुक्तंभूमानंस्वात्मरूपतः ३६८ सर्वेषांहृदयाकाशंनामरूपविधायकम् ॥ नामरूपात्परंनित्यंनामरूपविवर्जितम् ३६९ एकोयंसंप्रदायोभूदिंद्रादन्यःस्वयंभुवः ॥ यथेंद्रायोक्तवान्ब्रह्मामनवेचतथैवसः ॥ मनुःप्रजाभ्यःसर्वाभ्योभूमौसप्रथमोगुरुः ३७० त्रैवर्णिकानिदंप्राहब्रह्मविद्याविवर्जितान् ॥ आत्मज्ञानंनभवतांयावदत्रप्रजायते ३७१ चतुर्णांप्रविधायैवंतावदिष्टंनिजाश्रमम् ॥ तावत्कर्माणिकुर्वंतुस्वानिस्वानिसमाहिताः ३७२ वैराग्येसतिकर्त्तव्योब्रह्मज्ञानस्यहेतुकः ॥ संन्यासःपरहंसाख्योनान्यथाकर्हिचित्क्वचित् ३७३ इंद्रःप्रजापतेःप्राप्यब्रह्मविद्यांसुदुर्लभाम् ॥ देवेभ्यस्तूक्तवान्सर्वान्ब्रह्मविद्याप्रसादतः ३७४ साक्षात्तत्कृतवांस्तद्वदग्निर्वायुश्चसत्तमौ ॥ देवानांसात्विकत्वेनपक्षपातोमहानिह ॥ ब्रह्मणोविद्यतेयस्माद्दृष्टंब्रह्मात्रतैःक्वचित् ३७५ इतितेसर्वमाख्यातंयत्पृष्टंभवतात्विह ॥ अवस्थात्रयनिर्मुक्तंकिमन्यच्छ्रोतुमिच्छसि ३७६ इतिश्रीपरमहंसपरिव्राजकाचार्यानंदपूज्यपादशिष्येणश्रीशंकरानंदभगवताविरचितेउपनिषद्रत्नेआत्मपुराणेच्छांदोग्यसारार्थप्रकाशेप्रजापतींद्रविरोचनाख्यायिकानामचतुर्दशोध्यायःसमाप्तः ॥ १४ ॥

णिकुर्वंतुसत्यांवैराग्यलक्षणायांशुद्धौसंन्यासमग्रिनाप्यथेतित्रयाणामर्थः ३७१ । ३७२ । ३७३ उत्तराकांक्षामुत्थापयन्निंद्रशिष्यानाह इंद्रइति । चतुर्थपादउत्तरान्वयी स्पष्टम् ३७४ साक्षादिति । सइंद्रउमारूपायाब्रह्मविद्याया अनुग्रहाच्चप्रजापत्युपदिष्टंब्रह्मकचिद्देशेलीलाविग्रहमापन्नंसाक्षात्कृतवानपीति तथाग्निवायूचतत्साक्षात्कृतवंतौ देवान्प्रतिप्रादुर्भावेहेतुतयापरमेश्वरस्यदेवपक्षपातमाह देवानामिति । स्पष्टम् ३७५ उपसंहरति इतितेइति ३७६ ॥ चतुर्दशेंद्राम्समनून्पस्कारुण्यंसमैदिधत् ॥ काभीतिःश्रमतस्तस्यमन्मतेरुपबृंहणे ॥ १ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांसत्प्रसन्नाख्यायांचतुर्दशोध्यायःसमाप्तः ॥ १४ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ देवःपंचदशेधेयःस्वाभिमानाक्षमाधरः ॥ शुक्लपंचदशीनाथकलासंकलितालिकः ॥ १ ॥ अस्यार्थः क्षिप्तमूढविक्षिप्तैकाग्रनिरुद्धसंज्ञाःपातंजलप्रसिद्धाःपंचदशा अवस्थायस्यतादृशेचित्तेदेवोदाशरथिर्ध्येयोधारणीयः कीदृशः स्वस्यसंमुखेवर्त्तमानोयोमानोगर्वोजामदग्न्यादिनिष्ठस्तत्राक्षमावान्असहिष्णुः शुक्लपंचदशीपूर्णिमातस्यानाथश्चंद्रस्तद्रूपया कलयाअंशेनसंकलिताविशिष्टाआलिर्नामाक्षरपंक्तिःश्रीरामचंद्रेत्याकारायस्यसतथा ‘ कलास्यान्मूलरैवृद्धौशिल्पादावंशमात्रकं’ इतिविश्वः । श्रीकृष्णविग्रहपक्षे प्रथमपादःसमः स्वेषांभक्तानांगोपिकार्जुनादीनांयोभिमानःस्वात्मनिसर्वाधिकत्वमतिस्तत्परिहरणपरः शुक्लपंचदश्यांशारद्यांनाथकलयावशीकरणमंत्रेण्यवंशगीतेनसंकलिताःसमुदितीकृताआलयःसख्योयेनसतथेत्यर्थः । शंभुपक्षेपि प्रथमपादस्तथा स्वपदेनतुरक्षणोग्राह्यः पूर्णिमानाथस्यचंद्रस्यकलयासंकलितंरा।जितमलिकंमस्तकंयस्यसतथेतिविशेषः । प्रमेयपक्षे पंचदशपदमावर्त्तनीयं तथाचपंचविधादशाअवस्थायस्यकरणजातस्यकेनेपितेत्यादिप्रथममंत्रोपात्तनामकस्यमनःप्राणवाक्चक्षुःश्रोत्ररूपस्यतत्पंचदशंतत्रनियंतृत्वेनस्थितः स्वस्याभिमुखंप्रवृत्तेषुमानेष्वक्षमावान्अविषयस्वभावइतियावत् अथवास्वेप्रामिंद्रवाय्वादीनांयोभिमानःपरमेश्वरेप्रकृतिविस्मृतिरूपस्तत्रवक्ष्यमाणविधयाक्षमारहितएतादृशोदेवःपंचदशेअत्राध्यायेवर्णितोधेयःअवधारणीयः यस्यलीलाविग्रहश्चंद्रभूषितइत्यर्थः १

श्रीगणेशायनमः ॥ देवानांब्रह्मविद्यायाःप्रसादाद्ब्रह्मबोधनम् ॥ श्रुत्वाशिष्योत्रतत्प्रष्टुंपुनराहगुरुंत्विदम् १ भगवन्नैतरेयोक्तःप्रजानांमुनिभिःसदा ॥ संवादोवामदेवस्यतथानुभवकीर्तनम् ॥ ज्ञानवैराग्यसंयुक्तंतेषामप्यधिकारिणाम् २ तथाकौषीतकिप्रोक्तंयत्रचेन्द्रप्रतर्दनौ ॥ अजातशत्रुगार्ग्यौचगुरुशिष्यौव्यवस्थितौ ३ आदित्यस्यात्मविज्ञानंयत्रवंशःसमीरितः ॥ त्रिपर्वाभेदतस्तद्वद्दहन्भेदान्महाशयान् ४ अश्विभ्यामपियत्रायंसंवादोमंत्रवेदिनः ॥ दध्यङ्ङाथर्वणोयत्रगुरुःशिष्यौचताबुभौ ॥ तत्कृतेव्यसनंतद्वदिंद्रस्यासीन्मुनेरपि ५ जिगाययत्रसकलान्विप्रान्वाजसनेयकः ॥ शाकल्यायददौशापंसद्यःप्राणविमोचकम् ॥ जनकायचमैत्रेय्यैयत्रज्ञानमदाद्द्विसः ६ यत्श्वेताश्वतरःप्राहयतिभ्योहेतुसंश्रयम् ॥ द्विजेभ्यश्चकठोयत्तुयमोयत्रगुरुःस्मृतः ॥ नचिकेताश्चशिष्योपिबालःसर्वगुणान्वितः ७ तित्तिरेरपियज्ज्ञानंकोशपंचकतत्परम् ॥ वरुणश्चभृगुर्यत्रगुरुशिष्यौतपोधनौ ८ गंधर्वोयत्रवेनाख्योभूतेस्वानुभवंनृणाम् ॥ साधनेषुचयत्रायंसंन्यासःपरमःस्मृतः ९ यत्प्रसंगेनजाबालमुख्यामामत्रकीर्तनम् ॥ संवर्तकाद्यायत्रैतेपूर्वेसंन्यासिनःस्मृताः १०

अथमेधाविनःप्रश्नंदर्शयति । देवानामितिचतुर्दशभिः स्पष्टम् १ तत्रप्रथमाध्यायार्थमनुवदति भगवन्निति । मुनिभिःसनकाद्यैस्तेषांवामदेवसतीर्थ्यानांज्ञानवैराग्येउक्तेइत्यर्थः २ द्वितीयतृतीयवृत्तमाह तथेति । स्पष्टम् ३ चतुर्थवृत्तमाह आदित्यस्येतिद्वाभ्यां । आदित्येनयाज्ञवल्क्यायप्रोक्तंज्ञानंकीर्तितं यत्राभेदेनत्रिपर्वावंशःकीर्तितः कीदृशः महाशयान्महात्मनोमुनीन्एवंभूतानवांतरभेदतयावहन्धारयन्नित्यर्थः ४ अश्विभ्यामिति । यत्रयस्यात्मज्ञानस्यस्फुटत्वार्थं यत्रसंवादे तौअश्विनौ तत्कृतेअश्विहिताय व्यसनंदुःखम् ५ पंचमादित्रयार्थमाह जिगायेति । यत्रपंचमेयत्रषष्ठेजनकायसप्तमेतुमैत्रेय्यैइतिविवेकः ६ अष्टमादिद्वयवृत्तंकथयति यदिति । हेतुसंश्रयंकारणविषयकंयज्ज्ञानंयतिभ्योद्विजेभ्यःश्वेताश्वतरःप्राह यत्रकठोक्तज्ञानेयमनाचिकेतसौगुरुशिष्यौ ७ दशमवृत्तमाह तित्तिरेरितिद्वाभ्यां । कोशपंचकंतनोतिसत्तादिदानेनविस्तारयतीतिकोशपंचकतत्पुच्छभूतंब्रह्मतदेवपरंगोचरीभूतंयस्यतादृशंतित्तिरीमुनेर्ज्ञानमुक्तं यत्रज्ञाने ८ । ९ एकादशवृत्तमाह यत्प्रसंगेनेतिद्वाभ्यां । यस्यसंन्यासस्यप्रसंगेनजाबालादिसंबंधिनिअत्रज्ञानेकीर्तनंकृतं यत्रज्ञानेपरिनिष्ठिताःसंवर्तकादयःकथिताः यत्रपदर्थवैराग्यादयःसंन्याससस्वरूपांताःकीर्तिताइतिद्वयोरर्थः १०

११ द्वादशादित्रयवृत्तमाह आरुणेरिति । आरुणेर्ब्रह्मपुत्रस्यसनत्कुमारस्यब्रह्मणश्चज्ञानंश्वेतकेतुनारदेंद्रान्प्रत्युपदिष्टंविस्तरेणसमासेनचयत्कीर्तितंतत्सर्वंरूपंब्रह्मज्ञानमतीतग्रंथेप्रोक्तमित्यर्थः १२ प्रश्नबीजमनुभाषते तत्रेति । तत्रपूर्वाध्यायेअंतेइदमुक्तं इदंकिं अत्रदेवानांमध्येइंद्राग्निवायूनांब्रह्मविद्यायाअनुग्रहाद्ब्रह्मणोज्ञानंविशेषतोजातमितितत्रावश्यंभाव्याश्चर्यंश्रोतुमिच्छामीतिद्वयोरर्थः १३ । १४ एवंपृष्टोगुरुःसामवेदीयत्वेनोपस्थितांकेनोपनिषदुक्तांकथांवक्तुमुपचक्रमेइत्याह एवमिति १५ अत्रयद्यपिभाष्यकारैर्गुरुशिष्ययोःसामान्यतएवोपन्यासःकृतस्तथापि च्छांदोग्याष्टमेप्रजापतिगृहीतविद्याया विरोचनेनासुरान्प्रतिनिरूपणोक्तौसत्यांकथमिंद्रेणाऽपिसादेवान्प्रत्युक्तेत्याकांक्षायावैदिकवृत्तेनैवपूरणीयत्वाद्देवान्शिष्यत्वेनेंद्रंगुरुत्वेनचग्रंथकृदुपन्यस्यति इंद्रादिति । इंद्रद्वाराप्रजापतेर्लब्धविद्यादेवाःशुद्धधियइंद्रसमीपेमीमांसांमननंचक्रिरेकृतवंतइत्यर्थः १६ तत्रशिष्यप्रश्नरूपस्यप्रथममंत्रस्यार्थमाह इंद्रियाणीतिपंचभिः । वागाद्युपलक्षितानिदशेंद्रियाणिमनसातदुपलक्षितप्राणेनचसहितानिकःप्रेरयति । नजीवास्तत्प्रेरकास्तेषांस्वातंत्र्याभावादित्यर्थः १७ अस्वतंत्रतामेवस्फुटयति व्यापारमिति । यतोऽमुनाइंद्रियविशेषेणें





वैराग्यंयत्रकालश्चयमादिस्तत्रकारणम् ॥ यत्राधिकारिणःप्रोक्ताविरक्ताःसर्वएवहि ॥ वेषआचारसंयुक्तोयत्रन्यासश्चकीर्तितः ११ आरुणेश्चतथाब्रह्मपुत्रस्यब्रह्मणोपिच ॥ ज्ञानंविस्तरशोयत्रसमासेनापिकीर्तितम् ॥ तत्सर्वंभवताप्रोक्तंब्रह्मज्ञानमनेकधा १२ तत्रांतेभवताप्रोक्तंब्रह्मविद्याप्रसंगतः ॥ इंद्रादेर्ब्रह्मविज्ञानं जातमत्रविशेषतः १३ तदहंश्रोतुमिच्छामिनूनमाश्चर्यमत्रभोः ॥ किंचिदस्तियतस्तेषांविशेषोभवतेरितः १४ एवमुक्तोगुरुःप्राहकेनेषितसमीरिताम् ॥ स्वशिष्यायकथामेतांब्रह्मविज्ञानकारिणीम् १५ इंद्रादवाप्तविद्यास्तेदेवाःसर्वेमहौजसः ॥ मीमांसांचक्रिरेत्वेतामिंद्रंप्राप्यसभागतम् १६ इंद्रियाणिदशैतानिमनसासहकोत्रभोः ॥ संप्रेषयतिसर्वेषामस्वतंत्रायतोजनाः १७ व्यापारमिंद्रियोत्थानंनकरिष्येऽमुनेत्ययम् ॥ संकल्प्यापिकरोत्येवभूताविष्टइवातुरः ॥ ततःसर्वःपराधीनोजंतुरत्रेतिनिश्चितम् १८ इंद्रियाणिस्वतोनैवमुक्तस्येवेहकुर्वते ॥ व्यापारान्नियतंयस्मादभिसंधायकश्चन ॥ प्रवर्ततेथवाकश्चिन्निवृत्तिमपिगच्छति १९ चेतनस्ततएवायंप्रेरकस्तेषुकश्चन ॥ नतेषामिहचैतन्यंनानात्मत्वप्रसंगतः ॥ अतःकर्मापिनैवस्यात्व्यापारेष्विहकारणम् २० यतःप्रवर्ततेसर्वोविज्ञायैवततःपरः ॥ चेतनःकोत्रतेषांस्यादिंद्रियाणांप्रवर्तकः २१

द्रियसाध्यंव्यापारंनकरिष्येइत्याकारंसंकल्पंकृत्वाप्ययंजनस्तंव्यापारंकरोतितततःपारतंत्र्यंनिश्चीयतेइत्यर्थः १८ अत्रेंद्रियस्वातंत्र्यमाशंक्यनिरस्यन्निषितपदसूचितंचेतनपारवश्यमिंद्रियाणामाह इंद्रियाणीति । यथाजीवन्मुक्तस्येंद्रियाणिसुप्तसारथिरथाश्वन्यायेनव्यापारान्स्वतःकुर्वंतीतिनियतंनियमशालिनभवतियस्मात्कश्चिद्बहुलोजनोऽभिसंधायाऽऽलोच्यैवप्रवर्त्तमानोनिवर्तमानश्चदृश्यतेइत्यर्थः । अयंभावः प्रायशोदर्शनादभिसंधानाख्यचेतनव्यापारपूर्विकैवसर्वत्रप्रवृत्तिर्विज्ञायते नचमुक्तेंद्रियव्यापारेव्यभिचारःतत्रापिचक्रभ्रमिन्यायेनव्यवहितचेतनव्यापारानुमानादिति १९ चेतनइति । ततोऽस्वातंत्र्यात्तेष्विंद्रियेषुप्रेरणकर्त्ताकश्चिच्चेतनोऽभ्युपेयः नचेंद्रियाण्येवचेतनानीतिवाच्यं नानात्मताप्रसंगेनमतभेदेनदेहभंगापादकेनपूर्वंदूषितत्वादित्यर्थः यथाचजडत्वेननेंद्रियाणांस्वातंत्र्यंतथाकर्मणोपिबोध्यमित्याह अतइति । अतोजडत्वात् कर्मादृष्टम् २० यतइति । यतआलोचनपूर्विकैवप्रवृत्तिर्दृश्यतेततइंद्रियसंघातात्परश्चेतनःप्रेरकःकश्चित्संभाव्यतेसकइतिवक्तव्यमित्यर्थः २१

अथरवंडद्वयगतमंत्रान्गुरुवाक्यत्वेनव्याचक्षाणस्तत्रेंद्रंगुरुत्वेनोपन्यस्यद्वितीयमंत्रार्थमाह इतिपृष्टइतिपंचभिः । इत्थंपृष्टइंद्रस्तान्देवानिदमाह इदंकिं हेदेवाःसपुमान्सर्वदेहिनांसर्वेन्द्रियाणांसन्निधानमात्रेणप्रेरकः सकः यःसर्वेषामिंद्रियाणामिंद्रियभूतोमनसोमनोभूतश्च अयंभावः औपाधिकशब्दानामुपाधिरेवमुख्योर्थइतिप्रसिद्धंयथाग्निसंबंधादुदकेप्रवृत्तस्यदग्धृशब्दस्याग्निरेवार्थइति । तथाचतत्रज्ञानकर्मसाधनवाचकानांश्रोत्रवागादिशब्दानांमननसाधनवाचिमनःपदस्यचमुख्यार्थतायाजाग्रदादिदूषितेषुप्रसिद्धकरणेष्वसंभवात्सर्वशक्तःसर्वेषांसत्ताप्रदश्चात्मैवार्थतयाऽवतिष्ठतइति यश्चजाग्रदाद्यवस्थात्रयाद्विविक्तःप्रजापतिनोक्तइतिद्वयोरर्थः २२ । २३ तथाजीवनादिप्रयोजकवाचिप्राणपदेनापिसएवाभिधेयइत्याह प्राणस्यापीति यइंद्रियमनसांप्रेरकउक्तःसएवैषआत्माप्राणस्यापिप्रेरकःतत्रप्रसिद्धप्राणत्वस्यजीवनहेतुत्वस्वरूपस्याप्याधारत्वात् अत्रानुकूलामस्तितित्तिरिश्रुतेरर्थंनिबध्नाति प्राणतइति । यतःप्राणापानौमर्त्यानांमरणधर्मणांजीवनप्रयोजकौनभवतःकिंत्वन्यएवयःप्राणस्यापिस्थितिप्रयोजकत्वेनप्राणभूतःसर्वेषांजीवननिदानमित्यर्थः २४ एतद्विज्ञानफलमाह एवमितिद्वाभ्यां । हेसुराएवमिंद्रियादिप्रवर्त्तकत्वेनात्मानंगुरुमुखाद्विज्ञायश्रुत्वापश्चात्समाहितेनमनसादृष्ट्वाचावस्थात्रयलक्षणबंधनेभ्योमुक्ताःसंतःप्राणाद्यात्मानंप्राणादिभ्यआंतरंतत्त्वमद्वयरूपमायांतिअवधारयंतीत्यर्थः २५ अमृताइति । ततउक्त

इतिपृष्टःसहस्राक्षस्तान्शिष्यानिदमब्रवीत् ॥ इंद्रियाणांहिसर्वेषामिंद्रियंमनसोमनः २२ योवस्थात्रयनिर्मुक्तःप्रेरकःसपुमानिह ॥ इंद्रियाणांहिसर्वेषांसर्वेषामिहदेहिनाम् २३ प्राणस्यापिसएवैषप्राणउक्तोमनीषिभिः ॥ प्राणतोऽपानतोनापिमर्त्योजीवतिकश्चन ॥ अन्यतःप्राणतःप्राणात्सर्वेजीवंतिजंतवः २४ एवंविज्ञायचात्मानंपूर्वंगुरुमुखात्सुराः ॥ दृष्ट्वापश्चात्स्वयंसर्वबंधनैःपरिवर्जिताः ॥ प्राणाद्यात्मानमायांतिसर्वभेदविवर्जितम् २५ अमृतास्ततएवैतेजन्मादिपरिवर्जिताः ॥ तत्रगत्वापुनर्नैवकेचिदायांतिकर्हिचित् २६ यत्रेंद्रियाणिसर्वाणिज्ञानकर्मात्मकानिच ॥ कालत्रयेनयांत्येवमनसासहितान्यपि २७ एनंसामान्यतोनैवविशेषाच्चसुरोत्तमाः ॥ जानंतोपिनजानीमोभवतांगुरवोवयम् २८ उपदेशंकथंनामगमिष्यामःसुरोत्तमाः ॥ भवतांसर्वकरणैरगम्यस्यमहात्मनः २९ विदिताविदिताभ्यांतदन्यदेवात्मरूपकम् ॥ पृष्टंब्रह्मभवद्भिर्यद्वक्तुंयच्चोद्यतावयम् ३० यच्चविज्ञायतेलोकेसामान्याद्वाविशेषतः ॥ घटादिवदनात्मातद्धेयंपंडितरूपिभिः ३१ यच्चनज्ञायतेतत्तुभवेद्वंध्यासुतादिवत् ॥ असत्तदपिहेयंस्यादनात्मत्वेनहेतुना ३२

विज्ञानादेतेविद्वांसोजन्मादिविकाररहितस्वरूपममृतत्वंलभंतेयतस्तत्रब्रह्मणिगत्वापुनःसंसारंनागच्छंतीत्यर्थः २६ अस्याविषयत्वेनैवबोधनंसंप्रदायसिद्धंनसामान्यादिरूपेणेतिप्रतिपादयतस्तृतीयमंत्रस्यार्थमाह यत्रेंद्रियाणीतित्रिभिः । यत्रसर्वाणिज्ञानादिसाधकानींद्रियाणिमनसासहगंतुंप्रवर्तितुमुत्सहंते एनमात्मानंजानंतोपिवयंभवतांगुरवोलोकसिद्धसामान्यविशेषरूपाभ्यांकथयितुंनजानीमइतिद्वयोरर्थः २७ । २८ तथाचलौकिकवासनावासितैर्भवद्भिरपेक्षितःसामान्यविशेषान्यतररूपेणतदुपदेशःकथंशक्यःस्यादित्याह उपदेशमिति । हेसुरोत्तमाःसामान्यविशेषविलक्षणत्वेनभवतांसर्वकरणैरगम्यस्यपूर्णात्मनउपदेशव्यापारंकथंनामप्रसिद्धंगमिष्यामआचरिष्यामइत्यर्थः २९ तस्यलोकवैलक्षण्यंस्फुटयतश्चतुर्थस्यार्थमाह विदितेतिचतुर्भिः । यद्भवद्भिःपृष्टंयच्चवक्तुंवयमुद्यतास्तदात्मनोरूपंविदितत्वेनप्रसिद्धादविदितत्वेनप्रसिद्धाच्चभिन्नमित्यर्थः ३० तत्रविदितभेदंस्फुटयति यच्चेति । यत्तुलोकेपृथिवीत्वघटत्वादिलक्षणैःसामान्यविशेषरूपैर्ज्ञायतेविषयीक्रियतेतत्सर्वंविदितमनात्मत्वाभेदगोचरत्वेनदुःखप्रयोजकत्वात्सुधीभिर्हेयंयथाघटादीत्यर्थः ३१ कदाचिदपिभानानर्हरूपमविदितमपिनृशृंगादिवत्तुच्छत्वात्कथमात्मास्यादित्याह यच्चनेति । तत्तुअसद्भवेदितिसंबंधः ३२

इंद्रशमात्मरूपंचार्यैर्भ्योवयंश्रुतवंतइत्याह श्रुतेति । स्पष्टम् ३३ प्रत्यक्तेनात्मोपदेशप्रकारंपूर्वाचार्यैरनुष्ठितंयद्वाचेत्यादिमंत्रपंचकदर्शितंनिरूपयति वागाद्यैरितित्रिभिः । सर्वैर्वागादिभिरिंद्रियैर्मनसाचयन्नविषयीक्रियतेतथासर्वेदेवायस्यविभूतयस्तेनप्राणेनापिनविषयीक्रियतेइत्यर्थः ३४ यइंद्रियाणीति । यश्चसर्वेन्द्रियाणांमनःप्राणयोश्चतद्व्यापाराणांचसाक्षीतेषांसंनिधिमात्रेणतत्तद्व्यापारेपुप्रवर्त्तयिताचेत्यर्थः ३५ तदेवेति । तत्प्रत्यग्वस्त्वेवब्रह्मवीध्यंहेदिवौकसःयत्तुपराग्रूपेणोपास्यतेतदात्मत्वेननबोध्यमितिप्रथमखंडार्थः ३६ अथद्वितीयखंडेमननविधयाआत्मतत्त्वमुपदिश्यतेइतिदर्शयंस्तेइत्यंतवाक्यार्थमाह । यन्मन्यतेइतिद्वाभ्यां । इंद्रआहदेवगणोयदितिमन्यतेस्वीकरोति । इतिकिं आत्मतत्त्वंसुज्ञेयंसुखेनज्ञातुंशक्यंभवति । अहरहरुपास्यमानत्वादितिभावः तत्तथानेवमंतव्यं यतस्तद्भवत्परिचितमात्मरूपंदहराकाशादिनामकंसर्वैर्देवैरुपास्यंध्येयमेवभवतिनज्ञेयं अहोइत्याश्चर्ये हेदेवाःज्ञेयंयदात्मरूपंतत्त्वमहंप्रभृतिशब्दैर्वर्जितंभवत्यतस्तल्लाभायसकलादेवाविचारयंत्वितिद्वयोरर्थः एतेनदेवेषुमध्येवर्त्तमानोपित्वंयद्दहरपर्यंतंब्रह्मरूपंमत्वासुवेदेतिमन्यसेतदयुक्तंयतोज्ञेयंरूपंज्ञातुकामस्त्वंपदादिक्रमस्यपरित्यजतदशक्तौविचारएवतवयुक्त इतिश्रुतियोजनासूचिता भाष्यविरोधस्तुप्रमेयाविरोधात्परिहार्यः ३७ । ३८ तत्रहेतुंसुज्ञेयमित्यवधारणस्यप्रमेयाननुसारित्वंदर्शयन्वेदेत्यंतवाक्यावेदितंब्रह्मणःस्वभावचतु

श्रुतवंतोवयंह्येवंगुरुभ्यःस्वेभ्यईदृशम् ॥ यैरयंकथितःस्वात्माह्यस्मभ्यंशास्त्रवेदिभिः ३३ वागाद्यैर्ज्ञायतेयस्तुनकदाचित्सुरोत्तमाः ॥ ज्ञानकर्मेन्द्रियैःसर्वैर्मनसासहितैरपि ॥ प्राणेनापिक्रियाशक्त्यासर्वदेवैकरूपिणा ३४ यइंद्रियाणिसर्वाणिमनःप्राणौचवेत्त्यपि ॥ व्यापारैर्निखिलैःसार्द्धंतेषांतद्व्याप्तिक्षमः ३५ तदेवब्रह्मजानीथयूयंसर्वेदिवौकसः ॥ उपासतेभवंतोयन्नतदात्माकदाचन ३६ यन्मन्यतेदेवगणःसुज्ञेयमितिनैवतत् ॥ आत्मतत्त्वमुपास्यंतद्दहराकाशसंज्ञितम् ३७ देवैःसर्वैरहोदेवास्त्वमहंशब्दवर्जितम् ॥ विचारयंतुसकलाआत्मानंबुद्धिसाक्षिणम् ३८ आत्मरूपंयतस्त्वेवंप्रवदंतिविपश्चितः ॥ अज्ञेयंवापिविज्ञेयंसुज्ञेयंदुष्प्रबोधनम् ३९ अविज्ञातःसदैवात्मासर्वैरपिशरीरिभिः ॥ सत्यज्ञानादिरूपेणविज्ञातश्चात्मरूपतः ४० सुज्ञेयोगुरुवाक्येनभवेत्सुविदितोहिसः ॥ दुर्विज्ञेयश्चतर्काद्यैस्ततोनविदितोहिसः ४१ आनंदात्मानमप्येनंस्वयंज्योतिःस्वरूपिणम् ॥ सत्यादिलक्षणंनित्यंसर्वप्राणिहृदंबुजे ॥ वर्त्तमानंसुषुप्तौचप्राप्यंसर्वैश्चजंतुभिः ४२

ष्टयमाह आत्मेति ' यतोविपश्चितोमन्येविदितं ' इत्यादिश्रुत्यर्थविदएवंवक्ष्यमाणविधयाआत्मनोरूपमज्ञेयत्वादिभावचतुष्टयशीलंवदंतीत्यर्थः तत्रेत्थंश्रुत्यर्थविभागः सुवेदेत्येवनमन्यइत्यनेनअत्यंताविषयत्वयत्नपूर्वकवेद्यत्वयोर्निषेधाद्विज्ञेयत्वसुज्ञेयत्वयोर्लाभोनोस्माकंसंप्रदायसिद्धंबोधप्रकारंचतुर्थपादोक्तंयोवेत्तिसएववेदेत्यनेनतर्कागम्यत्वरूपदुष्प्रबोधनत्वस्यमूढैरज्ञेयत्वस्यचलाभइति ३९ अज्ञेयत्वादिपुहेतूनाह अविज्ञातइतिद्वाभ्यां । यतःसर्वैर्देहाभिमानिभिःसत्यज्ञानानंदादिरूपेणाविज्ञातस्ततोज्ञातुमशक्यत्वादेतद्रूपमविज्ञेयमित्युक्तंतथाहमित्यात्मरूपेणविज्ञातत्वात्तुविज्ञेयमिति । यतश्चगुरुवाक्येनविदितोभवतिततःसुज्ञेयइति । यतश्चतर्कमयैःशास्त्रैर्विदितोनभवतिततोदुर्विज्ञेयइत्युच्यतेइतिद्वयोरर्थः ४० । ४१ तत्राविज्ञातत्वंविशदयति । आनंदात्मानमितित्रिभिः सत्यादिलक्षणमानंदरूपमात्मानंहृदिवर्त्तमानमपिसुप्तौसर्वैर्लभ्यमपिजनःप्रायशोनवेत्तिदेवमाययाविक्षेपावरणाभ्यांमोहितत्वात्श्रांतोधःप्राप्तंनिधिमिवप्रत्युततत्आत्मनोन्यदेवपश्यतियतोन्यदर्शनादियंदुःखसंततिरूपाविनष्टिर्हानिर्वर्त्ततेइतित्रयाणामर्थः ४२

४३ । ४४ विज्ञेयत्वहेतुंविदितत्वंस्फुटीकरोति विदितश्चास्तीतिद्वाभ्यां । अयमात्मासर्वेषांविदितःप्रसिद्धोभवतियतोऽहमित्याकारयोर्धीशब्दयोर्विषयःसन्नेवव्यवह्रियतेइत्यर्थः ४५ नन्वे
वल्महमित्याकारयोर्धीशब्दयोरेवविषयःकिंत्वस्तिभातीत्यादिप्रतीतीनामपीत्याह सदादीति । तथायमात्मास्वप्नजागरयोःसदाद्यवगाहिप्रतीतीनांविषयःसन्नेवसर्वंव्यवहारमर्हरूपंयोग्यरूपं
करोति नहिसत्ताद्यंशविनिर्मोकेकश्चिदपिघटादीनांव्यवहारःशोभतेइति । फलितमाह ततइति ४६ सुविज्ञेयत्वंविशदयति ब्रह्मेति । जन्मशतायुतसिद्धपुण्यैर्ब्रह्मचर्यादिसंपन्नःपुमान्कुशल
स्याचार्यस्यवचसिमहावाक्यरूपेप्रवृत्तेसतिएतत्प्रत्यग्वस्तुतत्पदार्थभूतंब्रह्मेतियदावगच्छतितदानिरावरणमात्मानंसुखरूपेणप्राप्तंसुखेनलभतेइतिद्वयोरर्थः ४७ । ४८ दुर्बोधताहेतुंतर्कैरविदित
त्वंव्यक्तीकरोति सुखादयइति । यदावैशेषिकादिमतावलंबीपुरुषोयत्रद्रव्येसुखादयोगुणाःसमवेताःसआत्मेतितर्कादवधारयितुंप्रवर्ततेतदाचिदात्मत्वमादिर्विषयविधयाकारणंयस्यतथाभूतंश्रुत्य
नुगृहीतंतर्कैर्निरीक्ष्यविभ्रांतचित्तोव्याकुलचित्तोभवतितस्यचात्मादुर्विज्ञेयोभवतीतिद्वयोरर्थः ४९ । ५० एवंहेतुनिष्पत्तौनिगमनमभिनयति देवाइतिद्वाभ्यां । हेदेवायआत्माततोमायावृत

कोपिनैवंविजानातियथांधःकरगंनिधिम् ॥ संसारश्रमसंतप्तोमोहितोदेवमायया ४३ अन्यमेवात्मनःसर्वमवगच्छतिदेहभृत् ॥ ततोविनष्टिश्चैवेयंवर्ततेदेहिनां
सदा ४४ विदितश्चास्तिसर्वेषामात्माधीशब्दयोर्यतः ॥ विषयोव्यवहारस्यहेतुर्भवतिसर्वथा ४५ सदादिविषयोदेवःस्वप्नेवैजागरेपिच ॥ व्यवहारमिमंसर्वमर्ह
रूपंकरोतिहि ॥ ततोत्रविदितोप्येषदेहिनांवर्ततेपुमान् ४६ ब्रह्मचर्यादिसंपन्नःपुमान्जन्मशतायुतैः ॥ कुशलस्यवचस्येतत्तद्ब्रह्मेत्यवगच्छति ४७ यदातदासु
खेनैतंस्फुरंतंहृदयांबुजे ॥ आनंदात्मानमात्मस्थंसुखादेषोऽवगच्छति ४८ सुखादयोगुणायत्रसंश्रिताद्रव्यरूपिणि ॥ सआत्मेतियदातर्काज्ज्ञातुमेषप्रवर्तते
४९ तदाविभ्रांतचित्तस्यतर्कांतरसमागमात् ॥ चिदात्मत्वादिकादेषदुर्विज्ञेयःप्रजायते ५० देवाआत्माततोज्ञेयोविदितःसर्वदाहियः ॥ सामान्येनविशेषाच्च
सुज्ञेयोनैवजंतुभिः ५१ स्वभावाच्चगुरोर्वाक्यात्सुविज्ञेयःकदाचन ॥ दुर्विज्ञेयःसदातर्कैःपुंबुद्धिपरिकल्पितैः ५२ आत्मरूपंसदादेवाविज्ञातुंनैवशक्यते ॥
स्वयंयतोविशेषैर्योजानीतेनैववेदसः ॥ विशेषैरहितंतद्वदवगच्छतियःपुमान् ५३ गुरोर्मुखादवगतंजानीतेसर्वथैवसः ॥ यतःश्रुतिरियंप्राहस्वरूपंतस्यचेदृशम्
५४ यस्यामतंतस्यमतंमतंयस्यनवेदसः ॥ अविज्ञातंविजानतांविज्ञातमविजानताम् ५५

त्वात्सामान्यविशेषरूपाभ्यांसुज्ञेयोनैवभवतिससर्वदाविदितत्वात्सुज्ञेयश्चभवतीत्यर्थः शक्तौकृत्यप्रत्ययः ५१ स्वभावाच्चेति । स्वभावात्स्वप्रकाशत्वरूपात्गुरुवाक्याच्चसुज्ञेयस्तर्कैर्दुर्ज्ञेयश्चबो
ध्यइति ५२ ननुमहावाक्ययोर्लौकिकाःपरीक्षकाश्चस्वयमेवतंकुतोनजानीयुरित्याशंकावारकंयस्यामतमित्यादिश्लोकमवतारयति आत्मरूपमितिद्वाभ्याम् । हेदेवाएतदात्मतत्त्वंस्वयंब्रह्मनिष्ठा
चार्यनिरपेक्षेणजनेननज्ञातुंशक्यंयतःसपूर्वसंस्कारैर्धियैववेत्स्यतिविशेषणरूपेणसामान्यरूपेणवातयोरेवसंसारेपरिचितत्वात्तत्रविशेषरूपेणायआत्मानंजानातिसनैववेत्तितस्यनिर्विशेषत्वात्यश्चविशे
षरहितंसामान्यरूपमितियावत्एतादृशमात्मानमवगच्छतिसोपिनैववेदनिरपेक्षस्यात्मनःपरसापेक्षसामान्याभावादित्यर्थः ५३ गुरुणात्वनुपलब्धार्थबोधकवेदवाक्येनसबोध्यतेइत्याह गुरोरिति ।
सजनोगुरोर्मुखाद्ब्रह्मात्मानंजानातिसाक्षात्करोत्येवयतइयंसन्निहिताश्रुतिस्तस्यात्मनःस्वरूपमीदृशंसामान्यविशेषभावविनिर्मुक्तंप्राहदर्शयतीत्यर्थः ५४ इयमितिउक्तांश्रुतिंपठति । यस्येति ५५

अस्याआर्थक्रमेण।र्थंपड्दिर्शयंस्तत्रहेयावबोधकंद्वितीयपादंव्याचष्टे मंतुरितिद्वाभ्यां । यस्यपुंसःसिद्धांतेब्रह्ममतंभवेत् मतत्वंत्रिपुटचवगाहिज्ञानगोचरत्वं तदेवाभिनयति मंतुर्मानैर्मेयमिति त स्यपुंसएतद्ब्रह्ममतंविज्ञातंनभवतियस्मादेषपुमान्ब्रह्मस्वभावविपरीतंभेदंपश्यतीत्यर्थः ९६ भेदस्यप्रमेयविरोधमेवस्फुटयति नहीति । अद्वैतस्वभावेब्रह्मणिमंतृमेयमानादिरूपात्रिपुटीभेदव्या प्तानवर्तते तत्रभेदाभावादित्यर्थः ९७ प्रथमपादार्थमाह एवमिति । यस्तुनिर्द्वैतंत्रिपुटीलक्षणद्वैतरूपसतत्त्वहीनमात्मानंगुरुमुखात्ज्ञात्वामयाब्रह्ममतमितिमन्यतेसिद्धांतयतितस्यविदुषोब्रह्म मतंविज्ञातमेवयथावदवबोधादित्यर्थः ९८ ननुब्रह्मविज्ञानस्याप्रमात्वेभेदावगाहित्वंप्रमात्वेतदनवगाहित्वंचलिंगंयत्स्वयमुपन्यस्तंतदसिद्धमित्याशंक्यांवारयति उभयत्रेति । उभयत्रप्रमात्वाप्रमा त्वयोर्योहेतुर्द्विविधोऽस्माभिरुक्तःससनातनःश्रुत्यैवोत्तरार्द्धरूपयाप्रोक्तत्वादित्यर्थः । तत्राप्रमात्वेहेतुंतृतीयपादोक्तंवर्णयति विविधमिति । येवादिनोमायामोहितत्वात्प्रमात्रादिरूपभेदेनविविधंसद्ब्र तंब्रह्मेतिजानंतितेषांविविधज्ञानवतांबोधेअविज्ञातमनाविर्भूतमेवप्रसिद्धंब्रह्मस्वभावस्यागमयादितिद्वयोरर्थः तथाचप्रमेययाथात्म्यानवगाहिनस्तज्ज्ञानस्याप्रमात्वशालितापायशःप्रसिद्धेतिभावः

मंतुर्यस्यमतंब्रह्ममेयंमानैर्भवेदिह ॥ नतस्यैतन्मतंयस्माद्भेदमेषोत्रपश्यति ९६ नहिब्रह्मणिनिर्द्वैतेमंतामेयंचकिंचन ॥ अस्तिमानादिकंभिन्नंक्रियाकारकरूप वत् ९७ एवंनिर्द्वैतमात्मानंज्ञात्वायोमन्यतेमतम् ॥ मतंतस्यभवेदेतद्द्वैतशून्यावबोधनात् ९८ उभयत्रश्रुतिप्रोक्तोहेतुरेषसनातनः ॥ जानंतिविविधंब्रह्मवादि नोयेत्रभेदतः ॥ प्रमात्रादिस्वरूपेणमाययापरिमोहिताः ९९ तेषामिदमविज्ञातंसर्वदाभेददर्शिनाम् ॥ नह्यभिन्नस्वभावंताद्भिन्नंभवितुमर्हति ६० विविधंयेन जानंतिज्ञातृज्ञेयादिभेदतः ॥ आनंदात्मानमगुणंसर्वभेदविवर्जितम् ॥ तेषांविज्ञानमेवैतत्सर्वदातत्त्वदर्शिनाम् ६१ अहंब्रह्मेतिबोधोयस्तेनयोत्रप्रतिक्षणम् ॥ जानीतेस्वात्मरूपंतन्मतंतस्यमहात्मनः ६२ एतज्ज्ञानाद्यतःसर्वःपुनर्मरणवर्जितम् ॥ आनंदात्मानमाप्नोतिह्यमृतत्वंवदंतियम् ६३ मनसाविंदतेविद्यावीर्यं शब्दाख्यंमहामनाः ॥ ब्रह्मचर्यादिसंपन्नोगुरुवक्त्रारविंदतः ६४ विद्ययालब्धयापश्चादमृतत्वंपुरोदितम् ॥ अवाप्नोतियतोभूयोमरणंनाधिगच्छति ६५ अस्मिन् जन्मनिदेवाश्चेज्जानीतेपुरुषोहितम् ॥ ब्रह्मचर्यादिसंपन्नःस्वल्पायक्लेशात्तदाफलम् ॥ महदेषसमाप्नोतिआनंदात्मानमद्वयम् ६६ यदवाप्तावयंजीवोभवेदानंदवा रिधिः ॥ मायातत्कार्यदुःखौघफेनबुद्बुदवर्जितः ६७

९९ । ६० येयेपूर्वंसमाहितास्ब्रैतविस्मरणेनाविजानंतःस्थितास्तदीयबोधेब्रह्मणआविर्भूतत्वलक्षणविज्ञातत्वप्रसिद्धेरमतत्वदर्शनंप्रमैवेतिचतुर्थपादार्थमाह विविधंयेनेति । स्पष्टम् ६१ प्रत्यक्त्व रूपाविषयतावगाहिन्येवमतिर्ब्रह्मप्रमाफलवत्त्वादितिप्रदर्शयतःप्रतिबोधेत्यादिवाक्यस्यार्थमाह अहमितिचतुर्भिः । अहंब्रह्मेत्याकारकेणप्रत्यक्त्वावगाहिनाबोधेनयःप्रतिक्षणंजानीतेऽनुसंधत्तेत स्यमहात्मनःस्वात्मरूपंमतमेवेति । यतएतज्ज्ञानादमृतत्वरूपमानंदंप्राप्तोजातइतिद्वयोरर्थः ६२ । ६३ आत्मज्ञानेनामृतत्वलाभेउपपत्तिमाह मनसेति । ब्रह्मचर्यादिसंपन्नोमहामनाःक्रा र्पण्यरहितोधिकारीश्रुतावात्मपदोक्तेनमनसासमाहितेनगुरूपदिष्टविद्यारूपंवीर्यंबलंलभतेततश्चप्रमादरूपान्मृत्योःकृपणेषुशूरादस्यभयंनयुक्तंतथाचसिद्धममृतत्वमित्याह विद्ययेत्यादिना ६४ ६५ द्वितीयखंडांत्यमंत्रस्यार्थमाह अस्मिन्नितिचतुर्दशभिः । हेदेवाःयदिपुरुषोऽस्मिन्वर्तमानेएवजन्मनिहितमनुसंधायविद्यासाधनंब्रह्मचर्यादिकमनुतिष्ठतितदास्वल्पयत्नेनमहत्सत्यपदोक्तमात्मा नंदरूपंफलंलभतेइत्यर्थः ६६ अस्यफलस्यमहत्त्वंविशदयति यदवाप्ताविति द्वाभ्याम् । निगदव्याख्यातंद्वयम् ६७

६८ विपक्षेदोषंद्वितीयपादोक्तंवर्णयति । अस्मिन्जन्मनीतिपंचभिः यदितुमायामोहितत्वान्मूढसेवितेषुविषयेषुसक्तःसन्नेनंनजानीयात्तदाकामादिरूपाःकितवावंचकाधूर्ताःप्रगल्भाअक्षदेविनइं द्रियरूपपाशकचालकाजितभूमिकानानारूपग्रहणसमर्थाश्चास्यपुंसोमहतींविनष्टिंकुर्युः यस्माद्विनष्टिरूपहेतोःपुनःपुनरतिदुःखंव्रजेदितिद्वयोरर्थः ६९ । ७० विनष्टिमेवाभिनयति । जीव न्निति द्वाभ्यां । कामादिजितोहिनिन्दाभाजनत्वाज्जीवन्मृतस्तथानानादेहग्रहणैर्जननमरणभाक्तथास्वरूपेणैवकामनायादुःखरूपत्वात्सततंदुःखीभवतीत्यर्थः ७१ तथापारतंत्र्येजनष्टप्रायत्वंत स्यप्रसिद्धमित्याह आशेति । कालादिवशःसदानष्टःनष्टप्रायोभवतीत्यर्थः ७२ नष्टइति । प्रथमपदंपूर्वान्वयि फलितोक्तिस्तस्मादित्याना अभीतत्वंधैर्यशालित्वं स्फुटमन्यत् ७३ नच सफलात्मज्ञानमत्रदेहेदुर्लभमेवेतिवाच्यं विद्वदनुभवसिद्धत्वादित्याह अस्मिन्नेवेति । एतेप्रसिद्धाउत्तमाधिकारिणोऽस्मिन्नेवदेहेस्थित्वासर्वेभ्योभूतपदोक्तशरीरेभ्यउपाधिभ्योविवेचितमात्मा

नातःपरंहिसंप्रार्थ्यंविद्यतेजन्मभाजिनः ॥ नातःपरस्तथालाभःकश्चिदन्योत्रविद्यते ६८ अस्मिन्जन्मनिमूढात्माविषयासक्तचेतनः ॥ नचेदेनंविजानातिमो हितोदेवमायया ६९ ततःकामादयस्त्वेनंकितवाजितभूमिकाः ॥ दुरक्षदेविनोधूर्ताःकुर्युरस्यदुरात्मनः ॥ विनष्टिंमहतीयस्माद्दुःखाद्दुःखतमंव्रजेत् ७० जीव न्मृतश्चसततंनानादेहग्रहैरिह ॥ म्रियतेजायतेभूयःकामीदुःखीचसर्वदा ७१ आशापाशशतैर्बद्धःक्रोधलोभवशंगतः ॥ उच्चावचेषुदेहेषुप्रतिक्षणविनाशिषु ॥ व्रजन्नप्राप्तभोगःसन्कालकर्मवशःसदा ७२ नष्टस्तस्मादभीतेनपुरुषेणात्रसर्वदा ॥ अस्मिन्नेवशरीरेसावात्माज्ञेयःसुरोत्तमाः ७३ अस्मिन्नेववपुष्येतेस्थित्वाब्रा ह्मणसत्तमाः ॥ ब्रह्मचर्यादिसंपन्नाःपरंधैर्यमुपागताः ७४ आनंदात्मानमद्वैतंसर्वभूतनिवासिनम् ॥ नभोवत्सर्वगंदेवंस्वप्रकाशंचनिर्गुणम् ७५ विज्ञायात्मतया नित्यंजीविनोप्यथवामृताः ॥ भवंत्यमृतरूपास्तेपुनर्जन्मविवर्जिताः ७६ एकएवात्रभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत् ७७ एवंविज्ञायमेधावीसर्वभूतस्थितंपरम् ॥ सर्वान्लोकांस्तथाकामानाप्नोतिसततंसुराः ७८ वैरिणांविजयश्चास्यप्रभावान्नांतरीयकः ॥ यथामृष्टान्नभुक्तेश्चपुष्टिः स्यान्नांतरीयकी ७९ एवंशक्रमुखाच्छ्रुत्वादेवाब्रह्मसनातनम् ॥ सर्वान्लोकांस्तथाकामान्वैरिणांविजयंतथा ८० अवाप्यस्वर्गसंस्थानादुःखलेशविवर्जिताः ॥ आनंदात्मस्वरूपास्तेवर्ततेस्माऽपिनाकगाः ८१ तेषांब्रह्मात्मरूपाणांसांनिध्यादसुराःसदा ॥ क्षयंजग्मुर्यथावन्हेःसान्निध्याच्छलभाइमे ८२

नंविज्ञायजीवनावस्थायांमरणावस्थायांवाअमृतभावंबहवोगताइतित्रयाणामर्थः ७४ । ७५ । ७६ तस्मादिदानीमप्येकएवेत्यादिश्रुत्युक्तविधयाऐकात्म्यंविज्ञायस्थितस्यसर्वलोककामाप्ति रूपफललाभेनसंशयइत्याह एकएवेतिद्वाभ्यां । तत्रप्रथमार्थोब्रह्मबिन्दूपनिषद्व्याख्यानेदर्शितएकादशे सुराइतिसंबोधनम् ७७ । ७८ अंतरंगबहिरंगवैरिविजयरूपंफलंतुब्रह्मज्ञानस्यानुषंगे कमेवेत्याह वैरिणामिति । नांतरीयकआनुषंगिकः तत्त्वंचइतरसाधकयत्नसाध्यत्वं मृष्टंस्वादु ७९ तृतीयखंडस्यब्रह्मविद्यायाःशमादिलभ्यत्वंतद्वत्सुब्रह्मणःपक्षपातंचदर्शयतोर्थमुपबृंहयति एवंशक्रेत्यादिनाएवमुक्ताधसाशक्रमित्यतःपूर्वग्रंथेन । एवमिंद्रमुखात्श्रुतयाविद्ययाब्रह्मीभूतादेवाःस्वर्गवासिनोवैरिविजयांतंतत्फलंप्राप्यस्वर्गभोगेषुस्थिताअपिब्रह्मानुसंधानपरायणाःसमभवन्निति द्वयोरर्थः ८० । ८१ तेषामिति । तेषांदेवानामात्मानंब्रह्मपश्यतांसांनिध्यादग्निपतंगन्यायेनासुराणांक्षयोभवत् ८२

तत्रचासुरक्षयबीजंब्रह्मैवाभवदितिसदृष्टांतंस्फुटयति अयःपिंडइतित्रिभिः । तदेवाअयःस्थानीयाःपरब्रह्मरूपेणाग्निनादेदीप्यमानाअसुरानदहन्दग्धवंतइत्यर्थः ८३ यथाचदृष्टांतेदाहशक्तिरग्नेरेवत थाऽसुरक्षयशक्तिर्ब्रह्मणएवेत्याह अयःपिंडोयथावन्हीति । देहुर्भस्मीचक्रुः ८४ सामुद्रेति । यथाचसामुद्रिकोक्तसल्लक्षणान्येवधनसंपत्तेःप्रयोजकानितत्रचस्वयत्नसाध्यताभिमानोमूढानांत थात्रब्रह्मैवदेवानांविजयस्यप्रयोजकमभवदित्यर्थः ८५ अत्रब्रह्मणोवैषम्यदोषंदृष्टांतेःपरिहरति यथासर्वगतोपीति । यथासर्वत्रसमतेजोवपुर्कोप्यादित्यःसूर्यकांतेनैर्मल्यविशेषतःप्रतिबिंबतेत थाब्रह्मापिसत्वप्रधानेषुदेवेष्वभिमानंविशेषसंबंधंकृतवत्ततोहेतोर्देवास्तेजोऽतिशयवंतइतिद्वयोरर्थः ८६ । ८७ अथवाजगत्सूत्रधारस्यलीलायांकेषुचिज्जयस्यावश्यंसंपाद्यत्वादशोकवनिकान्या येनदेवेष्वेवजयःसंपाद्यतेइत्याह सूत्रेति । असुरद्रुहांदेवानां सूत्रधारःपुत्तिकानर्त्तकः ८८ अथवाबाललीलावदीशस्वभावस्यनकश्चित्पर्यनुयोगइत्याह बालकइति । केषुचित्क्रीडनकेष्व भिमानस्यैतदुत्कर्षेममैवोत्कर्षइतिबुद्धिरूपस्यकर्त्ता ८९ महिम्नइति । तस्यवर्णितविधयादेवानुग्राहकस्यब्रह्मणःसंबंधीयोमहिमाविभूतिस्ततोहेतोरेवदेवादैत्यान्जितवंतः ९० यथार्जुनस्य

अयःपिंडोयथातप्तं शुष्कमार्द्रंचनिर्दहेत् ॥ एवंब्रह्माग्निसंदीप्ताअदहंस्तेऽसुरान्बहून् ८३ अयःपिंडोयथावन्हिसामर्थ्याद्दाहकोभवेत् ॥ ब्रह्मसामर्थ्यतोदेवादेहु स्तानसुरानपि ८४ सामुद्रलक्षणबलाद्यथावृद्धिर्निधेर्भवेत् ॥ एवंब्रह्मबलात्तेषांसुराणांविजयोभवत् ८५ यथासर्वगतोप्येषभगवान्भास्वरःसदा ॥ अभिमानं विशेषेणकुरुतेसूर्यकांतके ८६ एवंसर्वगतंब्रह्मदेवजातौविशेषतः ॥ अकरोदभिमानंतंदेवास्तेजस्विनस्ततः ८७ सूत्रधारोयथासूत्रैःपुत्तिकाश्चालयन्भृशम् ॥ जयंददातिकासांचिदेवंब्रह्मासुरद्रुहाम् ८८ बालकोत्रयथाक्रीडनकेषुचित्त्वभिमानकृत् ॥ एवंब्रह्मादिसंसारेदेवेष्वेवाभिमानकृत् ८९ महिम्नोब्रह्मणस्तस्यदेवादै त्याननेकशः ॥ जितवंतोत्रसंग्रामेबलवीर्यादिशालिनः ९० कालेनमहतातेपिदेवाब्रह्मविदोपिच ॥ भोगसंसक्तचेतस्त्वान्माययापरिमोहिताः ॥ ब्रह्मणोविजयं तेषांमेनिरेनबलाधिकाः ९१ इंद्रोवायुश्चवन्हिश्चतथान्येनाकसंश्रयाः ॥ अस्माकमेवविजयइतितेनिश्चयंगताः ९२ मानवाआर्तिमापन्नायथादेवप्रसादतः ॥ कृतार्थारजसाविद्धाविस्मरंतीहतान्क्षणात् ९३ पराजिताःपुरादैत्यैरेवंदेवाःसहस्रशः ॥ आर्त्ताब्रह्मप्रसादेनजितवंतोऽसुरान्बहून् ९४ रजसाविद्धहृदयाःपश्चा द्विस्मृतिमागताः ॥ विजयस्यात्मनोहेतुंब्रह्मतेनप्रपेदिरे ९५ कृतघ्नाइवदुर्धूर्तदेविनःकितवाइव ॥ स्वोपकारस्यकर्त्तारंकृतार्थाविस्मृतिंगताः ९६ अहंमानश्च देवानांतेषामासीदयंमहान् ॥ रजोगुणकृतोयेनविनाशंपुरुषोव्रजेत् ९७

गीताशास्त्रविस्मृतिःकालभोगसंसर्गाभ्यांप्रयुक्ताअनुगीतोपदेशेनभगवतापरिहृतातथादेवानामपिस्वविस्मृतिःप्रादुर्भवेणेतिदर्शयितुमुपक्रमते कालेनेत्यादिना । तेदेवाब्रह्मविदोपिकालवशोद्रिक्तर जःप्रधानमायया जातेनभोगसंगेनमोहिताःसंतस्तेषामसुराणांजयोत्रब्रह्मैहेतुकइतिनमेनिरेविस्मृतवंतइत्यर्थः ९१ इंद्रइति । इंद्रवाय्वग्नयस्तथाअन्येचदेवाःप्रत्युतजयंस्वप्रभावजमेवनिश्चितवंतइ त्यर्थः ९२ अत्रलौकिकंदृष्टांतमाह मानवाइति । यथादेवमुन्याद्यनुग्रहेणार्तिमुत्तीर्णाःपुरुषाःपुनर्वित्तादिमददूषितचित्तास्तान्देवादीन्विस्मरंतीतिप्रसिद्धम् ९३ दार्ष्टांतिकेयोजयति । परा जिताइति । स्पष्टंद्वयम् ९४ । ९५ कृतघ्नाइति । कीदृशादेवाः कृतघ्नसदृशाः यतोयथाच्छलप्रधानद्यूतपरायणाःकितवावंचकाउपकारस्यकर्तारंविस्मरंतीतिशेषः तथैतेकृतार्थाःसंतःपरमे श्वरविषयिकांविस्मृतिंगताइति ९६ अहंमानश्चेति । अयंवक्ष्यमाणरूपोभिमानश्चविनाशस्यपातित्यरूपस्यप्रयोजकस्तेषामभूदिति ९७

तमभिमानमभिनयति । वयमितिसप्तभिः स्फुटंद्वयम् ९८ । ९९ अस्मत्तइति । अस्मत्तोऽस्मदपेक्षयागणनायामिमेदैत्याःकेनकेपि येइतिएवंविधैर्वक्ष्यमाणविशेषणैः समर्थाःस्युःस मर्थत्वेनसंभाविताः इतिपदपरामृष्टानिदैत्यविशेषणान्याह कालांजनेत्यादिना । अंजनगिरिवत्कालवर्णाः कालःसमयाभिमानीदेवःअंतकोमृत्युर्यमःसंयमनीपतिरेतैस्तुल्याः अतिशयितयुद्धप राः शौण्डीर्यंचपराक्रमइतिहेमकोशाच्छौंडीराःपराक्रमवंतस्तेषामभिमुखगंतारास्त्रिलोकीग्रसनक्षमाःयेषामेकमपिअस्मान्देवान्विनाकोपिपोथयितुंनक्तइतिद्वयोरर्थः १०० । १०१ तत्रेंद्रस्यविशेषा भिमानंकीर्तयति । अहमिंद्रइति । शतंपर्वाणिग्रंथयोधारास्तीक्ष्णमुखानिचयस्यतत्तथातेन स्फुटमन्यत् १०२ वाय्वग्न्योरपितमाह अहंवायुरितिद्वाभ्यां । बाह्येवहिर्देशे १०३ अहमग्निरिति । मूर्त्तिमद्धनम् १०४ एवमन्येपीति । अन्येचवरुणादयः यतःस्वंस्वंकर्मैवाचिंतयन्नब्रह्मततोगर्विताः १०५ तेषामिति । तेषांदेवानांगर्वंनानानर्थप्रयोजकंविज्ञायपितृवद्धितचिन्तकंपरंब्रह्मकर्तृह

वयंशांतास्तथादांतामहाकुलसमुद्भवाः ॥ रूपयौवनसंपन्नाविद्याविनयसंयुताः ९८ कीर्तिमंतोमहाभागाभोग्यैर्नानाविधैर्युताः ॥ लोकत्रयींपालयामःस्वशक्त्यानाकवासिनः ९९ अस्मत्तःकइमेदैत्याःसमर्थास्युर्जयेष्विति ॥ कालांजनगिरिप्रख्याःकालांतकयमोपमाः ॥ मायाविनोतिसंग्रामाःशौंडीरप्रतिवर्तिनः १०० बलवीर्याधिकाःसर्वेत्रिलोकीग्रासकारिणः ॥ एकैकस्यनकोनामयोधयेन्नोविहायतान् १०१ अहमिंद्रोवज्रपाणिर्वज्रेणशतपर्वणा ॥ शतधारेणतीक्ष्णेनह्यमोघेनात्मनोवलात् ॥ चूर्णीकरोमिसततमुन्नतान्पर्वतानपि १०२ अहंवायुर्जगत्सर्वंकुक्षौनिक्षिप्यचात्मनः ॥ ब्रह्मांडगोलकाद्बाह्येनयामितृणतूलवत् १०३ अहमग्निर्जगत्सर्वंशुष्कमार्द्रंचमूर्त्तिमत् ॥ करोमिभस्मसाच्छीघ्रंतूलराशिमिवोन्नतम् १०४ एवमन्येपिदेवास्तेनानाकर्मविधायिनः ॥ संप्राप्ताःपरमंगर्वंस्वस्वकर्मान्यचिंतयन् १०५ तेषांगर्वंसमालोक्यरजोगुणसमुत्थितम् ॥ पापहेतुंचवीर्यस्यकीर्त्तेरपिविनाशनम् ॥ पितृवद्ब्रह्मपरममिदमत्रान्वचारयत् १०६ मत्प्रसादादिमेदेवाःसर्वलक्षणसंयुताः ॥ जाताविजयिनस्तद्वदिदानींवीर्यसंयुताः १०७ विस्मृताअपिमामेतेकृतघ्नाइवबालिशाः ॥ स्वोपकारस्यकर्त्तारंमोहितामममायया १०८ यन्निमित्तंहियोगच्छेदुन्नतिंपुरुषःसचेत ॥ विस्मरेत्तंततोगच्छेद्दुःखंजन्मशतायुतम् १०९ स्वोपकारस्यकर्त्तारंमूढोयोनैवमन्यते ॥ मृतःसविट्कृमिर्भूत्वाजायतेकल्पकोटिषु ११० अल्पमप्युपकारंयोनस्मरेत्केनचित्कृतम् ॥ कृतघ्नःसतुलोकेस्मिन्ब्रह्मघ्नादपिपापकृत् १११ प्रायश्चित्तंहिविहितंब्रह्मघ्नेवेदवादिभिः ॥ कृतघ्नेनैवतत्किंचिदस्यनिष्कृत्यभावतः ११२ ब्रह्मघ्नेनिष्कृतिर्दृष्टाकृतघ्नेनास्तिनिष्कृतिः ॥ यतस्ततःकृतघ्नत्वमतिकष्टतमंस्मृतम् ११३

त्यमालोचितवत् १०६ ब्रह्मकर्तृकांचिंतामभिनयति मत्प्रसादादितिसप्तदशभिः । अदोएतेदेवामदनुग्रहादेवयोगक्षेमंप्राप्तामामेवोपकारकंविस्मृत्यस्थिताइतिद्वयोरर्थः १०७ । १०८ अस्य दोषस्यपरिहरणाद्यतत्रयुक्तमनर्थजातंचिंतयति यन्निमित्तमिति । यस्मादुन्नतिरुत्कर्षलाभस्तस्योपकर्तुर्विस्मरणेकृतेजन्मशतायुतावच्छिन्नंदुःखंलभतेइत्यर्थः १०९ स्वोपकारस्येति । स्पष्टम् ११० अल्पमपीति । यःकेनचित्कृतंस्वल्पमप्युपकारंनमन्यतेसकृतघ्नउच्यतेतस्यब्रह्मघ्नादपिनीचत्वमित्यर्थः १११ तत्रहेतुतयाप्रायश्चित्तेरपरिहार्यत्वंसूचयन्प्रायश्चित्ताभावेहेतुंतदुपदेशाभावमाह प्रायश्चित्तमिति । अस्यकृतघ्नत्वस्यनिष्कृतेःप्रायश्चित्तस्याभावादिति ११२ फलितमाह ब्रह्मघ्नेइति । कष्टतमंअतिदुःखारंभकम् ११३

नकेवलमेतेषांकृतघ्नत्वमेवप्रसक्तंकिंतुस्वपरस्तुतिनिंदाभ्यामात्मघातविश्वघातदोषावपिप्रसक्तौगर्वेगर्वेषम्यदर्शनादित्याह अपियइति । किंचयःस्वकीयंकर्ममनसापिस्तौतिपरकीयंनिन्दतिचतेन स्वस्यपरस्यचहिंसाकृताभवतिअविवेकवशादित्यर्थः एतदुक्तंव्यतिरेकमुखेनगीतासु ' समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरं । नहिनस्त्यात्मनात्मानंततोयातिपरांगतिम् ' इति ११४ एतत्स्फुटयति । आत्मनोत्रेति । स्पष्टम् ११५ आत्मघातस्यकृतघ्नत्वसाम्यमाह आत्मानमिति । शास्त्रगाशास्त्रविहिता ११६ गर्वेणस्वातिरिक्तस्यसर्वस्यापकर्षबोधनरूपनिंदायांविश्वघातःस्पष्टएवेत्याह आत्मनइति ११७ नन्वेवंविधानर्थरूपेषुकर्मसुजनाःकिमितिप्रवर्तंतइतिचेन्न अविद्यादिदोषाणांस्वभावस्यापर्यनुयोज्यत्वादित्याह आत्मघ्नाइति । मायामोहितानांकालपरवशानांचलोकानांक्षुद्रनिमित्तेनाप्यात्मघ्नत्वादिदोषत्रयांगीकारोनचित्रमितिभावः ११८ एतेषांदंडेनशोधनंतुनयुक्तमित्याह एतेइति । एतेदेवायद्यप्येवमसुरवन्निपातितुंदंडयितुंशक्यास्तथाप्येतदेषांनिपातनंनयोग्यमित्यर्थः ११९ तत्रहेतुतयाविषवृक्षोपीत्यादिन्यायविरोधमाह आरोपितइति । यस्माद्विषस्यवृक्षोपिस्वयमारोपितोवर्द्धितश्चस्वयंछेदनयोग्योनभवतिकिमुतसजातीयाइत्यर्थः १२० किं

अपियःस्वात्मनःकर्ममनसापिप्रशंसति ॥ धिक्कुर्याद्वापरस्यापिकदाचिद्गर्वसंयुतः ॥ आत्मानंचपरंचापिसहन्यादविचारयन् ११४ आत्मनोत्रप्रशंसायामात्महत्याप्रकीर्तिता ॥ परस्यापिचनिंदायांपरहत्यामनीषिभिः ११५ आत्मानंयोत्रवैहन्याल्लोकेपापतमोमतः ॥ आत्मघ्नेनिष्कृतिर्नास्तिकृतघ्नइवशास्त्रगा ११६ आत्मनोव्यतिरिक्तस्यसर्वस्यैतेविनिंदकाः ॥ विश्वहत्याततोमीषांजायतेनित्यमेवहि ११७ आत्मघ्नाश्चकृतघ्नाश्चविश्वघ्नाअपिवानराः ॥ माययामोहिताजाताःकालपाशवशंगताः ११८ एतेपापरताःसर्वेमयाशक्यानिपातितुम् ॥ यद्यप्येवंतथाप्येतद्नुचितंमेनतद्भवेत् ११९ आरोपितःस्वयंयस्माद्वर्द्धितश्चप्रयत्नतः ॥ छेतव्योनस्वयंवृक्षोविषस्यापिहिकर्हिचित् १२० नपापंप्रतिपापःस्यात्साधुरेवसदाभवेत् ॥ आत्मनैवहतःपापोयःपापंकर्तुमिच्छति १२१ एतेममसुतादेवाःपालितालालितामुहुः ॥ कृताविजयिनस्तद्वत्कथंबध्यामयाधुना १२२ उपायेनततोमीषांदोषत्रयकरंपरम् ॥ अपनेष्याम्यहंगर्वमेभ्यःस्वस्तिभवेत्ततः १२३ एवंसंचिंत्यतत्तेषांदेवानांमांसनेत्रयोः ॥ प्रत्यक्षमभवत्सर्वपूज्यमद्भुतरूपधृक् १२४ सहस्रमस्तकंदेवंसहस्रेंद्रियसंयुतम् ॥ सर्वजीवाननंसर्वभौतिकंसर्वसंयुतम् १२५ सर्वायुधधरंसर्वंसर्वमाल्यांबरादिकम् ॥ स्त्रियःपुंसश्चचिन्हेनसंयुतंचनपुंसकम् १२६ समागताभहात्मानोददृशुस्तेतिधीधनाः ॥ किमिदंकिमिदंचेतिसमूचुश्चपरस्परम् १२७

चकारःकर्मणापरनियमनंसाधूनांनयुक्तंस्वभावत्यागपिष्टपेषणयोःप्रसंगादित्याह नपापमिति । पापाचरणवंतंदंडयितुंस्वयंपापाचरणवान्नस्यात्साधुत्वभंगप्रसंगात् पापस्तुस्वयमेवहतःपापविक्रीर्यायाःसावधानतालक्षणजीवनवन्न्यायोगादित्यर्थः १२१ एतेषांवधस्तुबिडालीकर्मवत्पापरूपएवेत्याह एतेइति । एतेदेवाममसत्वोपाधिकस्यसुताःपुत्राः २२ तस्मात्केनचिदुपायेनैवैषांगर्वोऽपसार्योयोदोषत्रयस्यात्मघ्नत्वकृतघ्नत्वविश्वघ्नत्वरूपस्यप्रयोजकइत्याह उपायेनेति । ततोगर्वपरिहारादेषांभद्रमस्त्विति २३ एवमालोच्यतद्ब्रह्मदेवानांनेत्रगोचरीभूतमभूत् कीदृशं पूज्यंयक्षपदोक्तपूज्यताकं अद्भुतरूपंचेत्याह एवमिति । मांसमयनेत्रयोरितिप्रत्येकाभिप्रायेणद्विवचनं सर्वसर्वरूपम् २४ रूपाद्भुतत्वंविशदयति सहस्रेतिद्वाभ्यां । सहस्रशब्दोऽसंख्यपरः सर्वजातीयजीवानामाननेर्विशिष्टं सर्वभौतिकाःभूतविकारायत्रतत्तथा स्त्रीपुंनपुंसकानांचिन्हधरं स्पष्टमन्यद्वयोः १२५ । १२६ तद्दृष्ट्वादेवानाविस्मयंवर्णयति सभेति । समूचुरुक्तवंतः १२७

आकारैरिति । येदेवा आकाराद्यन्यतममात्रदर्शनेन परकीयमनोवृत्तं जानंति स्मते पि ह्यामोहंगताः तत्रेंगितमभिप्रायसूचिकावयवक्रिया चेष्टाअवयवविक्रिया विकारोन्यथाभावः इत्यपौनरुक्त्यम् १२८ विस्मयाविष्टेति स्पष्टम् १२९ सभेति । पूर्वमननुभूतरूपशालिनो जरायुजादिचतुर्विधशरीरलक्षणैर्विशिष्टस्य चतस्य देवस्य दर्शनाद्देवानां सदसि महान्क्षोभोऽभवदिति १३० समीपमिति । साध्वसंभयं तेनाविष्टं व्याप्तं हृदयं येषां तेतथा अनिर्ज्ञातं विस्मृतमात्मनो रूपं प्रभावो यैस्ते तथाविधाश्च देवास्तदुपगंतुं नचक्षमिरे १३१ अग्निमिति । ततस्तन्निर्णयाय देवा अग्निमाज्ञापितवंतः तत्र हेतुगर्भाणि विशेषणानि देवानामग्रमं कनिष्ठं तथा च शतपथश्रुतिः ‘अग्निरवमो देवतानां विष्णुः परमो देवता’ इति मुखभूतं प्रथमपूज्यं च एतद्बृहदारण्यके तृतीयाध्याये स्पष्टम् १३२ कथमूचुरित्याकांक्षायामाह जातेति । हे जातवेदस्त्वमेतत्परीक्षस्व किंदेवानामनुकूलं प्रतिकूलं वेति १३३ एवमुक्तो गत इति । एवं देवैः प्रेरितो वह्निर्निःशंकं तस्य यक्षस्य समीपं गतः अथ तेन यक्षेण कस्त्वमित्येवं पृष्टः संस्तद्यक्षं प्रतीत्युक्तवान् इतीति किं जातवेदा इति नाम्ना जातं वेदो धनं यस्मादिति व्युत्पत्त्या धनदातृत्वाभिधायकेन जाते जाते विद्यते इति व्युत्पत्त्या व्यापकत्वाभिधायकेन वा प्रसिद्धोऽस्मि दृश्यमानस्वरूपेण त्वग्निर्दे

आकारैरिंगितैर्गत्या चेष्टया भाषणेन च ॥ नेत्रवक्त्रविकारेण ये जानंति मनोपि हि ॥ तेपि तद्वपुरन्वीक्ष्य निश्चयं न प्रपेदिरे १२८ विस्मयाविष्टमनस उत्फुल्लनयनोत्पलाः ॥ रोमांचकंचुका देवाः किंकिमित्येव चोचिरे २९ सभाक्षोभो महानासीद्देवानां तस्य दर्शनात् ॥ अदृष्टपूर्वरूपस्य चतुर्विधशरीरिणः १३० समीपं तस्य ते गंतुं समर्था नाभवन्सुराः ॥ साध्वसाविष्टहृदया अनिर्ज्ञातात्मरूपकाः ३१ अग्निमूचुस्ततः सर्वे देवानामवमं सुराः ॥ मुखभूतं च सर्वेषां तेजसां राशिमूर्जितम् ३२ जातवेदस्त्वं यक्षं विजानीहि किमात्मकम् ॥ प्रतिकूलं सुराणां किमनुकूलमथापि च ३३ एवमुक्तो गतो वह्निस्तद्यक्षमविशंकितः ॥ तेनोक्तः कस्त्वमित्याह तद्यक्षमविशंकितः ॥ जातवेदा इति ख्यातो ह्यहमग्निस्वरूपतः ३४ एवमुक्ते पुनः प्राह तद्यक्षं तं विभावसुम् ॥ त्वयि तस्मिन्हि किं वीर्यमत्राग्नौ जातवेदसि ३५ एवमुक्तः पुनर्वह्निस्तद्यक्षमवदद्वचः ॥ मूर्तं विश्वमिदं सर्वं दहामीक्षणतो ह्यहम् १३६ एवमुक्तेथ तद्यक्षं शुष्कमेकं तृणं पुरः ॥ निदधौ निर्दहेत्येवमाह तं च स्मिताननम् १३७ इत्युक्ते सर्ववेगेनद्यतान्निर्दग्धुमुद्यतः ॥ वह्निः शशाक तद्दग्धुं नैव सर्वात्मनापि च १३८ अदग्ध्वा तत्तृणं वह्निर्गर्वलेशविवर्जितः ॥ देवान्समागतः प्राह नाहं शक्तोत्र वेदितुम् १३९ देवानामनुकूलं वा प्रतिकूलमथापि च ॥ एतद्यक्षं महादेवा अन्यो गच्छतु कश्चन ॥ ज्ञातुं शक्तोत्र यो येन मम वीर्यं विनाशितम् १४० इत्युक्ते वायुमाहुस्ते पूर्वमग्निं यथा वदन् ॥ अग्निवद्गतवान्वायुः पृष्टः सोपि तथामुना ॥ मातरिश्वाभिधो वायुरहमस्मीत्यभाषत १४१

वानामग्रस्पष्टविभागदीत्यादिरूपस्य नेतास्मीत्यर्थः १३४ एवमुक्ते पुनरिति । इत्थमग्निनोक्ते सति तद्यक्षं कर्तृ अग्निं प्रतीदमाह इदं किं त्वयि वर्णितनामके किं बलमिति १३५ एवं पृष्टोग्निस्तस्मै यक्षायस्वस्य सर्वं मूर्तं द्रव्यं दाहशक्तिरूपं वीर्यं दर्शयित्वाह एवमुक्त इति १३६ एवमुक्तेथेति । एवमग्निनोक्ते सति तद्यक्षं कर्तृ स्मिताननं सदग्नेः पुरोग्रे एकं शुष्कं तृणं निधाय त्वमेतद्दहभस्मी कुर्वित्युक्तवानित्यर्थः १३७ इत्युक्ते सर्वेति । एवं यक्षेणोक्ते सति सर्वेण वेगेन सर्वेण यत्नेन च तत्पुरो निहितं तृणं दग्धुं वह्निः शशाक नाभवत् आत्मा यत्नो धृतिरित्यमरः १३८ अदग्ध्वेति । तस्य तृणस्यादाहेन हतगर्वो वह्निर्देवान्प्राप्येदमाह येन मम बलं नाशितं अहो इत्याश्चर्यं तद्यक्षं देवानुकूलत्वादिना परीक्षितुं नाहं शक्तोस्मि तदर्थमन्यं कंचित्प्रेरयंतु भवंत इति द्वयोरर्थः १३९ । १४० इत्युक्त इति । इत्थमग्निनोक्ते सति देवा वायुं प्रेषितवंतः स च गतोऽमुना यक्षेणाग्निवत्पृष्टः सन्नाह मातरि आकाशे श्वयते वर्द्धते इति व्युत्पत्त्या मातरिश्वसंज्ञो वाति वहतीति व्युत्पत्त्या वायुसंज्ञश्चास्मीति १४१

तस्मिंस्त्वयीति । पुनस्तेनयक्षेणत्वयिकिंबलमितिपृष्टे वायुस्तस्मैब्रह्मांडाद्बहिर्विश्वंनेतुंशक्तोस्मियथावालोमुखेनतृणंनयेत्तथेत्युक्तवानितिद्वयोरर्थः १४२ । १४३ ततस्तस्याग्निवन्मानभंगं देवान्प्रत्यागमनंचाह इत्युक्तेइतिद्वाभ्यां । ब्रह्मयक्षम् नयप्रापय स्पष्टमन्यद्द्वयोः १४४ । १४५ एवंवायुनोक्तेसतिइंद्रंदेवास्तथाप्रेषयामासुरित्याह एवमिति १४६ एवंदेवैरुक्तेसतितौ वन्हिवायूयथागतौतद्वदिंद्रोप्यद्भुतयक्षसमीपंगतइत्याह एवमुक्तेथेति १४७ इंद्रस्याभिमानविशेषंपरिहर्तुमसंभाव्यत्वद्योतकमंतर्धानंचकारतद्यक्षमित्याह आगादिति । हस्तप्राप्तवत्संनिहितदेशेस्थितमपितद्यक्षमंतर्दधेइत्यर्थः १४८ तथापींद्रस्तत्रैवस्थितइत्याह अंतर्हितामिति । तद्यक्षरूपं १४९ ततउत्कंठातिशयेनाशोधितदोषइंद्रस्तत्रयक्षांतर्धानदेशेकांचित्स्त्रियमपश्यदित्याह तस्मिन्नेवेति । हिमवतःपर्वतस्यतनयाम् कीदृशींसर्वैःकल्याणगुणैःसल्लक्षणैश्चशोभिताम् १५० शोभमानामिति । पुनःकीदृशींश्रियाकांत्याशोभमानाम् उपमातुमशक्यंवपुर्धारयंतीमात्म

तस्मिंस्त्वयीहकिंवीर्यंवायावितिसमीरिते ॥ आहसोपिततोब्रह्मस्ववीर्यमविशंकितः १४२ विश्वंनयामिसकलंबाह्यंब्रह्मांडगोलकात ॥ प्रक्षिप्यात्मनिबालोयं नयेद्यद्वत्तृणंमुखात १४३ इत्युक्तेब्रह्मतस्याग्रेवन्हेरिवदधौतृणम् ॥ नयेतिसर्ववेगेननेतुंसोपिनचाशकत १४४ वन्हिवद्व्रयमानःसन्देवानेवसमागतः ॥ ऊचेतद्व चनाहंतज्ज्ञातुंशक्तोस्मिभोसुराः १४५ एवमुक्तेततोदेवाइंद्रमूचुःसभागताः ॥ मघवंस्त्वंविजानीहियक्षमेतदिहागतम् ॥ अस्माकमनुकूलंवाप्रतिकूलमथापि च १४६ एवमुक्तेथशक्रोपिगतवांस्तौयथापुरा ॥ वन्हिवायूगतौतद्वत्तद्यक्षंचित्रदर्शनम् १४७ आगाच्छक्रोयदास्वस्यसमीपंतत्तदैवहि ॥ अंतर्दधेमहद्यक्षंहस्त प्राप्तमिवस्थितम् १४८ अंतर्हितंहितद्वीक्ष्यतदाशक्रःप्रतापवान ॥ इतस्ततस्तुतत्रैववीक्षमाणोव्यवस्थितः १४९ तस्मिन्नेवतदाकाशेबलवीर्यसमन्वितः ॥ व्यलोकयत्स्त्रियंकांचित्तरुणींरूपशालिनीं ॥ हिमवत्तनयांसर्वगुणलक्षणशालिनीं १५० शोभमानांश्रियास्वस्याअनौपम्यवपुर्द्धराम् ॥ आत्मनिस्नेहमापन्नांमा तरंभगिनीमिव ॥ उमांभवानींदेवींतांब्रह्मविद्येतिकीर्तिताम् ५१ सौभाग्यमद्भुतंयस्याःप्राप्नुवंतित्रिलोकगाः ॥ पुरुषाःसंपदस्तद्वत्स्वात्मचित्तस्थिताअपि ५२ अखंडितंब्रह्मचर्यंवेदाश्चब्रह्मचारिणः ॥ गृहस्थत्वंगृहस्थाश्चलोकद्वयसुखप्रदम् १५३ तपश्चतापसास्तद्वत्सम्यग्वननिवासिनः ॥ भिक्षवोपिस्वधर्मस्थाब्रह्मलो कंयतोययुः १५४ आत्मानंपरहंसानांसाप्रयच्छतिमातृवत ॥ दर्शनांताहियस्याःस्युर्मोहकारागृहाइमे ॥ कामक्रोधादिरचिताःशृंखलाश्चातिदुस्त्यजाः ५५ वामदेवमुखंवीक्ष्यवामंयावामलोचना ॥ अमूढानपिसौंदर्यान्मोहयंतीवसंस्थिता १५६

निर्हेतुस्नेहंकारुण्यंजनन्यादिवत्कुर्वतींचेत्यर्थः तत्रभगिन्याउपादानंदयायाभगिनीमूर्तिरितिभारतानुसारात् १५१ तस्याअन्यत्रोक्तंमहिमानंकीर्तयति सौभाग्यमितिसप्तभिः । अस्याअनु ग्रहात्त्रिलोकीगताःपुरुषाःसौभाग्यंसौंदर्यंतथाचेतसाचिंतिताःसर्वाःसंपदोलभंतेइत्यर्थः १५२ चातुर्वर्ण्यफलप्रदत्वमाह अखंडितमिति । यदनुग्रहाद्ब्रह्मचार्यखंडितत्वंसहवेदैर्लभंतेब्रह्मचारिणः गृहस्थास्तुलोकद्वयोपकारिकांगृहस्थत्वसंपत्तिमिति १५३ तपश्चेति । वनवासिनोयदनुग्रहात्तपोलभंते यतयस्तुब्रह्मलोकप्रापकंस्वधर्ममित्यर्थः १५४ आत्मानमिति । सादेवीपरमहंसेभ्य आत्मानंब्रह्मविद्यारूपमेवददातियद्दर्शनादिमेप्रसिद्धामोहोऽविद्यातद्रूपाःकारागृहाबंधनागाराणितत्रवर्तमानाःकामादिरूपाःशृंखलाश्चांतंगच्छंतीत्यर्थः १५५ वामदेवेति । वामःसुंदरोदेवःका मेश्वराख्योमहादेवस्तस्यमुखसौंदर्यंवीक्ष्ययासौंदर्येणसर्वेषांमनोमोहयंतीवसतीस्थिता १५६

सूर्येति । प्रभातिशयं सूर्यकोटिर्यस्यास्तूपमानं शांतरूपत्वेनुचंद्रकोटिः यादेहगतंलावण्यंमुक्ताविदुज्ज्वलत्वरूपमपेक्ष्यकंदर्पकोटिसदृशी श्रियाऐश्वर्येणतुलक्ष्मीरमातत्कोटिसमेतिकथ्यतेइत्यर्थः १५७ देहवानिति । कश्चिदप्रसिद्धदेशेकापिप्रसिद्धदेशेवास्थितोदेहवान्यत्किंचित्सामर्थ्यंलभतेतत्रसर्वत्रहेतुर्यस्याःकृपाकटाक्षएवेतिसत्यमसंदिग्धं ननुवेदानुक्तेर्थेकथंसंदेहाभावइत्याशंकांपरिहरति वे दइति । अमुंवर्णितविषमुमाप्रभावंवेदःप्रकृतश्रुतिरूपोवदन्कथयन्निवभवतीत्यर्थः अयंभावः श्रुतार्थापत्तेःश्रुतिसमानकक्षत्वस्यमीमांसकैःसिद्धांतितत्वाद्बहुशोभमानामितिबहुशब्देनासंकुचितवृ त्तिनावर्णितंसर्वमाहात्म्यंसंगृहीतमिति १५८ भक्तानामिति । याभक्तान्प्रतिसौम्याशांतरूपापीतरान्प्रतिगुरुतांतेजोतिशयेनदुर्विज्ञेयतांगताअतएवइंद्रस्यगर्वशेषपरिहारार्थंद्रनेत्रसहस्रमतंतेजोद र्शनेनहरंतीसतीस्थितेत्यर्थः १५९ अदृष्टेति । पुनःकीदृशी विडौजसइंद्रेणत्रिलोक्यामदृष्टपूर्वांपूर्वमदृष्टा गंधाद्यलंकृतवेषाच १६० सर्वदेति । ब्रह्मविद्यारूपेणोपनिषत्सुसमाहितयतिमानसेषुच वसंती १६१ प्रमाणस्यप्रमेयतंत्रत्वात्प्रमेयेणसविशेषलीलाविग्रहांगीकारेकृतेसतीयमपितद्वामाङ्गेस्थितेत्याह वामदेवस्येति । वसंतीतिपूर्वादनुषंगः १६२ पृष्टवांस्तामिति । तांवर्णितरूपांतत्र

सूर्यकोटिसमाभासाशीतलाचंद्रकोटिवत् ॥ कंदर्पकोटिसदृशीलावण्याद्देहसंश्रयात् ॥ लक्ष्मीकोटिसमासास्याच्छ्रियाविविधयापिच १५७ देहवान्यःक्वचित्का पियस्यादृष्टिविलोकनात् ॥ सामर्थ्यंलभतेप्रायःसत्यंवेदोवदन्निव १५८ भक्तानामार्त्तिनाशार्थंसौम्यापिगुरुतांगता ॥ सहस्रचक्षुषांतेजोहरंतीस्वात्मदर्शनात् ॥ १५९ अदृष्टपूर्वायुवतीत्रिलोक्यांचविडौजसा ॥ गंधमाल्यांबरधरामनोनयननंदिनी ॥ सर्वाभरणसंयुक्तास्मितपूर्वाभिभाषिणी १६० सर्वदोपनिषत्स्वेववसं तीमानसेषुच ॥ यतीनांपरहंसानांब्रह्मचर्यादिभाजिनाम् १६१ वामदेवस्ययावामेभागेभर्तुर्महात्मनः ॥ स्मरशत्रोस्त्रिनेत्रस्यब्रह्मणोयक्षरूपिणः १६२ पृष्ट वांस्तांस्त्रियंशक्रोदृष्ट्वातत्रव्यवस्थिताम् ॥ अंबतत्किमिदंयक्षंयदत्राभूत्पुरास्थितम् ॥ मातस्त्वंयदिजानासितदामह्यंतदीरय १६३ एवमुक्ताथसाशक्रंप्राहब्रह्मे तिभामिनी ॥ वृत्तांतमखिलंतद्वद्यदर्थंतत्समागतम् १६४ एवमुक्तोथशक्रोपिगतगर्वोविबुद्धवान् ॥ स्वानुग्रहार्थंसंप्राप्तंब्रह्मतद्विजयप्रदम् १६५ सर्वशक्तायसंप्रो च्यभवानीभवहारिणी ॥ तस्मिन्नेवनभस्यासीदंतर्धानमुपागता १६६ शिवौतौसनमस्कृत्यनभस्यंतर्हितावगात् ॥ देवानिंद्रोथतान्गत्वासर्वमेवन्यवेदयत् १६७ देवाइंद्रमुखाच्छ्रुत्वावन्हिवायुपुरोगमाः ॥ गतगर्वाविपाप्मानोह्यभवन्प्रकृतिस्थिताः १६८ सात्विकास्तेस्वभावेनदेवाःसर्वेदिवौकसः ॥ गर्वक्रोधादिरहिताःप्र मादेनविवर्जिताः १६९ परीक्ष्यकारिणोनित्यंहिताहितविबोधिनः ॥ माययारजउत्पाद्यमध्येकालसहायया ॥ विमोहिताःपुनर्ब्रह्मविद्याभ्यांपरिबोधिताः १७०

यक्षरूपेणब्रह्मणःप्रादुर्भावस्थानेस्थितामिंद्रएवंपृष्टवान् एवंकथं हेअंबमातस्तद्यक्षरूपमिहप्रादुर्भूतंकिंतदिति १६३ अथतुर्यखंडार्थंवर्णयन्ब्रह्मणःशंभोस्तत्त्वंतदागमनप्रयोजनंचोक्तवतीत्याह ए वमुक्तायेति १६४ इंद्रोपितदुपदेशेनशंभोस्तत्त्वंब्रह्मभावरूपंविस्मृतमपिपुनरवबुद्धवान्अस्मरदित्याह एवमुक्तोथेति १६५ साचब्रह्मतत्त्वबोधनरूपेप्रयोजनेसिद्धेंतर्धानमगादित्याह सर्वाम ति १६६ शिवाविति । नभस्यंतर्धानंगतौशिवाख्यौदंपतीनमस्कृत्येंद्रःसिद्धार्थोदेवानगात्तेभ्योवृत्तमश्रावयच्चेत्यर्थः १६७ ततोदेवाअपिपूर्ववदासन्नित्याह देवाइति । प्रकृतौस्वभावेस्थि ताः १६८ तेषांप्रकृतिस्थितत्वंविशदयति सात्विकाइतिद्वाभ्यां । तेदेवाःसात्विकत्वात्स्वभावेनगर्वरहित्यादिशालिनःकालोद्दीपितमाययारजसाविमोहिताअपियक्षरूपेणब्रह्मणाउमारूपया

 विद्ययाचप्रतिबोधितादोषापाकरणेनपुनस्तद्वत्कृताइतिद्वयोरर्थः १६९ । १७०

एतावतातैःकिमवबुद्धमितिचेद्विश्वाभिन्ननिमित्तोपादानत्वेनविकासितमद्वयत्वरूपंब्रह्मत्वमेवेत्याह ब्रह्मविद्येति । एवंकथमित्याकांक्षायामुत्तरार्द्धंप्रवृत्तिः १७१ अग्निरिति । यतोऽन्यैर्दुर्लभं ब्रह्मयक्षरूपेणागतंसामीप्येनप्राप्तवंतस्तस्मादग्निवाय्विंद्रादेवेष्वधिकाःप्रसिद्धाः १७२ तेषांत्रयाणामपिमध्येइंद्रोधिकउमामुखेनब्रह्मतत्त्वस्यसम्यगवबोधादित्याह इंद्रइति १७३ प्राप्तमिति । यदग्निवायुभ्यांप्राप्तमिंद्रेणनिश्चितंचतद्ब्रह्मब्राह्मणाएवंवक्ष्यमाणविधयाअधिदेवाध्यात्मरूपाभ्यांविदुरुपासतेइत्यर्थः १७४ श्रुतौआशब्दइवार्थःषष्ठ्यंतविद्युत्पदेनसंबद्धइतिदर्शयंस्तत्राधिदेवरूपमाह हिरण्यगर्भइतिद्वाभ्यां । योहिरण्यगर्भोविराजोपिजनकोविश्वशरीरश्चप्रसिद्धस्तदीयदेहस्यांतर्मध्येसकृद्भानेनविद्युत्प्रकाशसदृशंचिद्रूपत्वेनजडायाविद्युतोविलक्षणंसर्वेंद्रियाणांमनसश्चसन्निधिमात्रेणप्रेरकंचयत्तत्त्वंतदधिदेवमितिद्वयोरर्थः १७५ । १७६ अध्यात्मरूपमाह अधिदेवमिति । यथातस्याधिदेवंरूपमुक्तंतद्वदध्यात्ममपिबोध्यं किंतत् यदिहसंघातांतर्गतबुद्ध्यवस्थानामनुसंधानेनसाक्षिभूतंप्रत्येकंप्रसिद्धंतत्त्वमित्यर्थः १७७ संसारेति । तच्चसाक्षिरूपंसंसाररूपवनेप्रविष्टंब्रह्मैवसर्वांतरंभवतियतश्चएतत्प्रत्यग्वस्तुनिरतिशयप्रेमास्पदत्वेनसर्वैर्भजनीयंभवतिततस्तस्यास्यनाम

ब्रह्मविद्याप्रसादेनदेवाएवंव्यजानत ॥ ब्रह्मैतत्सर्वंजगतःकारणंहेतुवर्जितम् १७१ अग्निर्वायुस्तथाशक्रोदेवेभ्यश्चाधिकाःस्मृताः ॥ प्राप्तवंतोयतोब्रह्मयदन्यैःप्राप्यतेनहि १७२ इंद्रस्तत्रापिदेवेषुप्रोक्तःश्रेष्ठोधिकःसदा ॥ ब्रह्मविद्याप्रकाशेनयतोब्रह्मावबुद्धवान् १७३ प्राप्तंयदग्निवायुभ्यांयदिंद्रेणचनिश्चितम् ॥ अधिदैवादिभावेनतदेवंब्राह्मणाविदुः १७४ हिरण्यगर्भोभगवान्सुतोयस्यविराडपि ॥ विश्वात्मातस्यदेहेस्मिन्नंतस्तिष्ठतिसर्वदा १७५ विद्युत्प्रकाशसदृशंविद्युतोपिविलक्षणम् ॥ इंद्रियाणांचसर्वेषांप्रेरकंमनसासह १७६ अधिदैवंयथातद्वदध्यात्ममपिदेहिनाम् ॥ बुद्धिसाक्षिहिसर्वेषांप्रत्येकमवशिष्यते १७७ संसारवनमध्यस्थोब्रह्मात्मासर्वदेहिनाम् ॥ भजनीयंहितन्नामतस्याहुर्वेदवादिनः १७८ वनमित्यस्यनाम्नोयःपुमान्कुर्यादुपासनम् ॥ अभिवांच्छंतितंसर्वेजंतवोभजनार्थिनः ॥ १७९ ब्रह्मविद्यापुरैवोक्तातुभ्यंतस्यास्तुसाधनम् ॥ संक्षेपेणवदाम्येतत्सावधानमनाःशृणु १८० स्ववर्णाश्रमसंप्रोक्तंकर्मसर्वस्यदेहिनः ॥ तपश्चविविधंतद्वदन्येशमदमादयः १८१ उपासनंचविविधंवेदेसर्वत्रकीर्तितम् ॥ इदंचकरणीयंस्यादात्मज्ञानार्थिनासदा १८२ वाग्धेनोःकथिताःपादावेदाअंगानिसर्वशः ॥ अंगानिब्रह्मसत्यंयदाधारोभूसमःस्मृतः १८३

वनमित्याकारंवेदवादिनआहुः वनसंभक्तावितिधात्वर्थानुगमात् योस्यनाम्नोब्रह्मविशेषणतयाउपासनंपुनःपुनश्चिंतनरूपंकरोतितंसर्वेजनाआराधनायकामयंतेइतिद्वयोरर्थः १७८ । १७९ श्रुतौशिष्टग्रंथेनप्रथमादिखंडत्रयवर्णितायाब्रह्मविद्यायाःसाधनानिविधीयंतइत्याह ब्रह्मेति । पुराखंडत्रये १८० स्ववर्णाश्रमेति । स्ववर्णाश्रमानुरूपंकर्मतथातपःकृच्छ्रादिशमादयश्चएतानिप्रतिबंधापायेनस्थितिप्रयोजकत्वेनप्रतिष्ठापदोक्तानिविद्यायाःसाधनानीत्यर्थः १८१ उपासनमिति । वेदोक्तंनानाविधमुपासनंचतस्याःसाधनमित्यर्थः तथाइदंप्रकृतश्रुतौशाखांतरगुणोपसंहाराभिप्रायेणोक्तंवेदवाग्रूपधेनोरुपासनमपिकर्त्तव्यमित्यर्थः १८२ वाग्धेनोरिति । वाग्रूपायाधेनोःपादाश्चत्वारोवेदचतुष्टयरूपाबोध्याः वेदांगानिशिक्षादीनितुशिरःप्रभृत्यंगरूपाणिध्येयानितत्रस्तनचतुष्टयंस्वाहाकारवषट्कारहंतकारस्वधाकाररूपंबृहदारण्यकपंचमाध्यायोक्तमुपसंहार्यं तथाश्रुतौसत्यपदोक्तंपद्ब्रह्मतदाधारभूमित्वेनध्येयमित्यर्थः १८३

एतदुपासनफलमाह एवमिति । एतांवेदवाग्रूपांधेनुंबोधस्यमनोवृत्तिरूपस्यबृहदारण्यकेवत्सरूपेणोक्तस्यमातरंयउक्तविधयावेदोपास्तेसचित्तशुद्धिद्वारातत्त्वज्ञानलाभेनाद्वयब्रह्मरूपेसर्वोत्कृष्टेस्वर्गे प्रतिष्ठांस्थितिंगच्छतीत्यर्थः १८४ पृष्टमिन्द्रवृत्तंनिगमयति ब्रह्मविद्येति । अबूबुधत्सम्यक्ज्ञातवान् १८५ उत्तराकांक्षामुत्थापयति प्रजापतेरिति । यथाप्रजापतेरिंद्रःशिष्यउक्तस्तथाथर्वाख्यज्येष्ठपुत्ररूपोऽपरोपिशिष्योभवत् यतःप्रवृत्तात्संप्रदायाद्विद्याविस्तरंप्राप्तेत्यर्थः १८६ उपसंहरति इतितेइति स्पष्टम् १८७ संसारेकरुणासिंधोःशंभोःकेनोपमीयताम् । निरुपाधि

एवमेतांहियोवेदधेनुंबोधस्यमातरम् ॥ ब्रह्मज्ञानसमुत्पादादानंदात्मनिसोद्वये ॥ प्रतितिष्ठतिनिर्दुःखंयस्मान्नावर्त्ततेपुनः १८४ ब्रह्मविद्याप्रसादेनशक्रएवमबूबुधत् ॥ प्रजापतेस्तुयःशिष्यःपूर्वाध्यायेप्रकीर्तितः १८५ प्रजापतेर्ज्येष्ठपुत्रोह्यथर्वाप्राप्तवान्मुनिः ॥ शिष्योयतःसंप्रदायाद्ब्रह्मविद्याधिकाभवत् १८६ इति तेकथितंसर्वंयत्पृष्टोहमिहत्वया ॥ आत्मविद्याप्रसंगेनकिमन्यच्छ्रोतुमिच्छसि १८७ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येण श्रीशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेतलवकारोपनिषत्सारार्थप्रकाशोनामपंचदशोध्यायःसमाप्तः ॥ १५ ॥ ॥ ७ ॥ ॥ ७ ॥

हितारंभांचितनंस्वेपुभातियत् ॥ १ ॥ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतौआत्मपुराणटीकायांसत्प्रसवाख्यायांपंचदशोध्यायःसमाप्तः ॥ १५ ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

१७६

श्रीगणेशायनमः ॥ ॥ षोडशदलतूणीरेनिहितंषोडशकलंममात्मानम् ॥ गांगेयप्रहितांशुगमिवलक्ष्येत्वंयिलग्नंतमीक्षित्वा ॥ १ ॥ षोडशसमममभिरूपंसांमुख्यंनयमुकुन्दगोविन्द ॥ मुंडकगीतनवंध
नुरादधतांध्रुवकलाहिनाथीया ॥ २ ॥ गीतिद्वयस्यायमर्थः प्रणवोधनुःशरोह्यात्माइत्यादिद्वितीयमुण्डकखण्डगतमंत्रसूचितयुद्धरूपकेलक्ष्यभूतोभगवान्मङ्गलायप्रणम्यते तथाहि षोडशदलंकंठचंचकंजी
वस्थानमित्यागमेप्रसिद्धंतदेवतूणीरंशरायतनंतत्रनिहितम् प्राणादयःप्रश्नप्रसिद्धाःषोडशसंख्याःकलाःशल्याद्यवयवभूतायस्यसतथातम् ' कलास्यादंशशिल्पयोः ' इतिहेमः । एतादृशंमदीयात्मरू
पंशरंगांगेयोभीष्मस्तेनसत्यपालनायप्रयुक्तंबाणमिवभवदीयवपूरूपेलक्ष्येलग्नंतंसंसज्जमानमालोक्यहेमुकुंदमुक्तोपसृप्यत्वेनतत्पदार्थभूतहेगोविंदसंसारदशायांसकलेंद्रियचालकत्वेनातिसंनिहितहेमुण्ड
कगीतप्रकृतशास्त्राध्येतृभिर्मुण्डशिरोभिर्निष्किंचनयतिभिर्वागीयमानकीर्तेत्वंयथाभीष्मप्रतिज्ञापालनायषोडशवर्षमभिनिर्भयंचरूपंभीष्मसांमुख्यंनीतवानसितथेदानीमपिषोडशभिर्महाभूतैकादशेंद्रि
यरूपविकारैःसांख्यप्रसिद्धैःसममधिष्ठानतयातत्तादात्म्यापन्नंविश्वाधारमितियावत् अथवाअस्मिन्षोडशाध्यायेअग्निर्मूर्द्धेत्यादिनावक्ष्यमाणेनवैराजरूपेणसमंअभिअद्वितीयंतत्संमुखंकुरु । भक्त
प्रतिज्ञापूरणंतवयुक्तमेवेत्याह नवमित्यादिना । नवंइतरविलक्षणप्रणवरूपंधनुर्धीरयतांध्यानशूराणामागमापायिकलाकत्वेनचंद्रनिभानांयाध्रुवाख्याषोडशीकलासानाथस्यप्रभोरेवस्वरूपभूता
भवति ध्रुवैवषोडशीकलेतिबृहदारण्यश्रुतेः तथाचयथाध्रुवाख्यकलावियोगंचंद्रोनसहतेतथात्वामंतराजीवनक्षमाणांत्वत्तोलब्धसत्ताकानांबालानामप्याग्रहस्त्वयापूरणीयएवेतिभावः १ । २

श्रीगणेशायनमः ॥ ॥ ब्रह्मविद्याश्रितामेवंकथांश्रुत्वातिशोभनाम् ॥ अथर्वोक्तांब्रह्मविद्यांप्रष्टुंशिष्योऽभ्यभाषत १ भगवन्नैतरेयेणकथितासाकथाशुभा ॥ संवा
दोयत्रमुनिभिःप्रजानामतिशोभनः ॥ वैराग्यंचतथाज्ञानंवामदेवस्यचेरितम् २ तथाकौषीतकिप्रोक्तायत्रचेंद्रप्रतर्दनौ ॥ अजातशत्रुबालाकीगुरुशिष्यौमहा
धियौ ३ आदित्येनचसंप्रोक्तायत्रवंशस्त्वयेरितः ॥ मंत्रद्रष्टातथाश्विभ्यामुक्तवान्स्वात्मबोधनम् ४ दध्यङ्ङाथर्वणस्तद्वदश्विनोरभवद्गुरुः ॥ शक्राच्चदुःखमतु
लंप्राप्तवानश्विहेततः ५ याज्ञवल्क्योमुनिर्यत्रजिगायमुनिमंडलम् ॥ शास्त्रज्ञोजल्पकथयाशाकल्यंचव्यमर्दयत् ६ जनकंचापिमैत्रेयींदुस्तराद्भवसागरात् ॥
परपारार्थिनौप्राप्तौमज्जतामुदतारयत् ७ सश्वेताश्वतरोविप्रोयोयतिभ्योऽभ्यभाषत ॥ कथासाचकठेनापियाप्रोक्तातिमनोरमा ॥ यमोयत्रगुरुःसाक्षान्नचिकेताश्च
बालकः ८ शिष्यस्तित्तिरिणाप्रोक्ताकथाचित्रार्थसंयुता ॥ वरुणश्चभृगुश्चैवगुरुशिष्यौमहाधियौ ९

पूर्वंमध्यायत्रयेणऋग्वेदकथाअध्यायसप्तकेनयजुःकथाएकादशेप्रकीर्णकथास्ततोध्यायचतुष्टयेनसामकथाश्चोक्ताः अथक्रमप्राप्ताअथर्वणकथाअध्यायत्रयेणदर्शयंस्तत्रमुंडकार्थजिज्ञासांमेधाविनःसा
नुवादांदर्शयति ब्रह्मविद्याश्रितामितिषोडशभिः स्पष्टम् १ प्रथमाद्यध्यायत्रयार्थमनुवदति भगवन्नितिद्वाभ्यां । यत्रऐतरेयकथायांमुनिप्रजासंवादेवैराग्यंज्ञानंचेरितंतथागर्भस्थवामदेवस्य
ज्ञानमीरितम् द्वितीयतृतीययोःकौषीतकिकथायामिंद्रप्रतर्दनयोरजातशत्रुबालाक्योश्चसंवादउक्तः २ । ३ चतुर्थंवृत्तमाह आदित्येनेतिद्वाभ्यां । कथोक्तेत्यनुषंगः यत्रकथायांवंशईरि
तस्तथामंत्रद्रष्टादध्यङ्सईरितोयोश्विभ्यामात्मबोधनमुक्तातयोर्गुरुरभवदिंद्राद्दुःखंचप्राप्तवान् ४ । ५ पंचमादित्रयार्थमाह याज्ञवल्क्यइतिद्वाभ्यां । जिगायजितवान् जल्पकथाविजिगी
षुवाक्प्रबंधः ६ जनकमिति । संसाराब्धौमज्जंतोपिजनाःप्रायःपरपारंनेच्छंति एतौतुमज्जतांमध्येपरपारार्थिनौ उदतारयत्पारंनीतवान् ७ अष्टमनवमवृत्तमाह सश्वेताश्वेति । यांक
थामभ्यभाषतसाचोक्ता यत्रकठोक्तकथायांयमोगुरुर्नचिकेताश्चशिष्यइत्युत्तरादनुषंगः ८ दशमवृत्तमाह शिष्यइतिद्वाभ्यां । प्रथमपदंपूर्वाग्न्वयि तित्तिरिप्रोक्ताकथाचोक्तायत्रवरुणभृगुसं
वादोयेनकर्तृकंब्रह्मानुभवरूपंचिंतनंसंन्यासाभ्यासादिविधिधर्मावनानिषेधोक्तानांविद्ययोरर्थः ९

१० एकादशार्थमाह जाबालादीतिद्वाभ्यां । तत्रप्रसिद्धंयोगादिरूपंकारणंवैराग्यस्योक्तम् तस्यपरमहंसस्यसःश्रुतिप्रसिद्धोब्रह्मविज्ञानरूपोमुख्यआचारश्चोक्तः स्फुटमन्यद्द्वयोः ११ १२ ततइछांदोग्याध्यायत्रयकथाध्यायत्रयेणोक्तेत्याह सामाध्यायेति १३ अध्यायत्रयगतगुरुशिष्यान्कीर्तयति आरुणिरिति । न्यासिनांमुख्यौस्मृतौजाबालेकीर्तितौ १४ तथेति । तलवकाराख्यासामशाखातदीयब्राह्मणगतोपनिषत्केनाख्यातस्यां १५ अत्रांतइति । अत्रपूर्वाध्याये तस्याथर्वणःसंबंधिनीं आथर्वणत्वेनप्रसिद्धामितियावत् तस्मैसुतायसब्रह्माप्राहेत्यन्वयः १६ तामिति । सचाथर्वा १७ नापृष्टःकस्यचिद्ब्रूयादितिन्यायमनुसरतःश्रीगुरोरुत्तरमवतारयति इत्युक्तइति । अथर्ववेदांतर्गतमुंडकाख्यमंत्रोपनिषदिकीर्तितांकथांगुरुराह १८ प्राहेत्यंतस्यप्रथममंत्रस्यार्थंसप्तदशभिःप्रपंचयंस्तत्रब्रह्मणोहिरण्यगर्भस्यप्राथम्यंस्फुटयितुंमनूक्तांसृष्टिप्रक्रियामवलंब्यतदीयंसृष्टिपूर्वकालिकावस्थाप्रतिपादकंश्लोकंपठति आसीदिति । इदंकार्यंजातंसृष्टेःपुरातमोभूतंतमस्तुल्याव्याकृतादिसंज्ञाज्ञानोपहितसन्मात्ररूपमासीत् कीदृशंतदप्रज्ञातंप्रत्यक्षायोग्यम् अलक्षणमननुमेयम् अप्रतर्क्यंतर्कानर्हम् अविज्ञेयंशब्देनानभिलप्यम् सर्वतःप्रथमार्थेतसिः सर्वंप्रसु

यत्रवेनोपिगंधर्वोब्रह्माऽह्वानुभवन्नपि ॥ संन्यासांतानियत्रस्युःसाधनान्यात्मवित्तये १० जाबालादिश्रुतिप्रोक्ताःकथानानाविधाअपि ॥ यत्रसंन्यासिनःसर्वेसंवर्त्ताद्याउदाहृताः ११ वैराग्यकारणंन्यासस्तत्रयोगादिकारणम् ॥ अधिकारीविरक्तश्चतद्वेषोमुंडनादिकः ॥ आचारोब्रह्मविज्ञानंकीर्तितोयत्रतस्यसः १२ सामाध्यायत्रयेयावत्कथाःकर्णसुखावहाः ॥ गुरुशिष्याइमेयत्रक्रमादुक्तामहाधियः १३ आरुणिःश्वेतकेतुश्चयावेतौन्यासिनौस्मृतौ ॥ सनत्कुमारोभगवान्नारदश्चमुनीश्वरः ॥ ब्रह्मालोकगुरुस्तद्वद्भुर्विद्रविरोचनौ १४ तथातलवकाराणांब्राह्मणोपनिषद्यपि ॥ इंद्रस्यब्रह्मविद्यायाःप्रसादाद्ब्रह्मबोधनम् ॥ एतत्सर्वंत्वयाख्यातंमह्यंशुश्रूषवेगुरो १५ अत्रांतेब्रह्मणःपुत्रोज्येष्ठःशिष्यस्त्वयेरितः ॥ अथर्वातस्ययांविद्यांब्रह्माप्राहसुतापसः १६ तामहंश्रोतुमिच्छामिसचकेभ्योवदन्मुनिः ॥ एतत्सर्वंमयापृष्टंगुरोमह्यंवदाधुना १७ इत्युक्तोगुरुरप्याहकथांमुंडप्रकीर्तिताम् ॥ आथर्वणीमनःश्रोत्रसुखदांब्रह्मबोधिनीं १८ आसीदिदंतमोभूतमप्रज्ञातमलक्षणम् ॥ अप्रतर्क्यमविज्ञेयंप्रसुप्तमिवसर्वतः १९ अभावोपिपुरानासीदसन्योत्राभिधीयते ॥ भावोपिचपुरानासीद्योत्रसन्निर्तिगीयते २० तमःपटलमप्येतन्नासीत्तेजोविरोधियत् ॥ व्योमादीनिचभूतानिनासन्पंचापिपूर्वतः २१ नदिवानापिरात्रिश्चउभेसंध्येचनैवते ॥ नसूर्यादीनितेजांसिनापिदेहाश्चतुर्विधाः २२ तमःस्तोमसमंतस्मिन्कालआसीदिदंमहत् ॥ मृत्युर्वानामृतंवापिविदितंस्वात्ममोहकृत् २३ अव्याकृतंजगन्नामरूपहेतुरहेतुकम् ॥ एकंशास्त्रैकगम्यंतत्सर्वलक्षणवर्जितम् २४

प्तमिवकार्यारंभाक्षममितितट्टीकाप्रसिद्धोर्थः १९ अत्रानुकूलंनासदासीन्नोसदासीत्तदानींकिंत्वभूत्तमइत्यादिनासदीयाख्यसूक्तवाक्यमर्थतःसंगृह्णाति अभावइतिचतुर्भिः । लोकेसदसच्छब्दाभ्यांप्रसिद्धौभावाभावपदार्थौनाभूतामित्यर्थः २० तथेदंलौकिकंतमःपंचभूतानिचनासन्कार्यत्वादित्याह तमःपटलमिति । पूर्वतःसृष्टिपूर्वकाले २१ नदिवेति । दिनंरात्रिःप्रातःसायंरूपेसंध्येतच्चिन्हभूतानिसूर्यादितेजांसिचजरायुजादयोदेहाश्चनासन्निति २२ किंतर्हितदासीदित्यतआह तमःस्तोममिति । स्वात्मनोमोहस्यावरणस्यकर्तृत्वेनतमःपुंजसममिदंकारणतत्त्वमासीत् यन्मृत्युरूपेणामृतरूपेणवानविदितंनज्ञातम् मृत्युर्हिसंहारकउच्यतेअमृतंत्वाहुतिपरिणामरूपवृद्धिहेतुस्तदुभयमद्वैतदशायांनसंभवतीतिभावः २३ तदेवविशिनष्टि अव्याकृतमिति । अव्याकृतमस्पष्टरूपत्वेनवेदांतेष्वव्याकृतमितिप्रसिद्धम् जगतोनामादेर्हेतुः स्वयमहेतुकंकारणानपेक्षम् एकमद्वितीयम् शास्त्रेणापौरुषेयवाक्येनैवसंज्ञेयम् लक्षणैर्लिंगैर्वर्जितमनुमेयमित्यर्थः २४

तस्यप्रसिद्धवैलक्षण्येनाप्रतवर्यत्वंस्फुटीकरोति विद्यमानेतिद्वाभ्यां । लोकेविद्यमानमेववास्तवमेवचकारणंप्रसिद्धंतत्तुविद्यमानसमंवस्तुतोऽविद्यमानमपिकारणम् तथालोकेअनादिभावानामवि नाशित्वंप्रसिद्धमेतत्त्वनादिभावरूपत्वेपितत्त्वज्ञाननाश्यमितिचित्रमित्यर्थः २५ तथाजडत्वेनपरतंत्रमप्यसंगादिलक्षणस्यात्मनोबंधहेतुरित्याह असंगस्येति । इत्यादिभिर्दुर्घटैरनिर्वचनीयतां ख्यापकैर्लक्षणैर्युक्तमिति २६ तस्मादव्याकृताच्छुद्धात्मनाप्रतिबिंबदानेनानुगृहीताद्धिरण्यगर्भोऽजायत योजीवव्यष्टीनामध्यक्षः समष्ट्यभिमानित्वेनजीवघनसंज्ञश्चोच्यतेइत्याह तस्मा दिति २७ तस्यसप्तदशावयवंशरीरमाह एकादशेति । अंतःकरणसहितान्येकादशेंद्रियाणिप्राणोद्वादशःसूक्ष्मभूतपंचकंचैतत्समुदायरूपेशरीरेअयंहिरण्यगर्भाख्यआत्मावसतीत्यर्थः २८ सच स्थूलानिभूतान्यसृजत्तेष्वभिमानेनविराट्संज्ञश्चाभवदित्याह उदपद्यंतेति । उदपद्यंतजातानि २९ ततःसस्थूलभूतैर्ब्रह्मांडंनिर्मातुमैच्छदित्याह ततइति ३० सत्येति । तस्यहिरण्यगर्भ स्यसत्यसंकल्पवशात्भूतजातंनीरोपरिस्थितदेदीप्यमानंसौवर्णाण्डरूपेणपरिणतम् यत्रांडेसप्तलोकाभूरादयःपातालादिकंचसंवत्सरादिरूपःकालश्चकल्पितइत्यर्थः ३१ तदंतरिति । तस्यब्रह्मां

विद्यमानसमंचापिकारणंनचवस्तुतः ॥ अनादिभावरूपंचस्वात्मबोधाच्चनश्यति २५ असंगस्याक्रियस्यापिसंगकर्मादिकारणम् ॥ अस्वतंत्रंजडंचैवेत्यादिदुर्घ टलक्षणम् २६ तस्माद्धभूवभगवानात्मसान्निधिमात्रतः ॥ हिरण्यगर्भोजीवेशोयोजीवघनईरितः २७ एकादशेंद्रियगणःप्राणोभूतानिपंचच ॥ सूक्ष्माणितत्र निवसन्नात्मायंपरिकीर्त्यते २८ उदपद्यंतवैतस्मात्स्थूलान्युक्तानियानि वै ॥ तत्राभिमानीभगवान्विराडित्येवगीयते २९ ततःस्थूलेषुभूतेषुव्यसृजद्ब्रह्मांडगोल कम् ॥ स्वात्मनोत्रनिवासायचकमेलोकभावनः ३० सत्यसंकल्पतस्तस्यनीराणामुपरिस्थितम् ॥ तदंडमभवद्धैमंसूर्यकोटिसमप्रभम् ॥ सप्तलोकादिसहितं कालेनचसमन्वितम् ३१ तदंतःस्वयमेवायंब्रह्मालोकपितामहः ॥ भूपद्मकर्णिकामेरोरासीत्पूर्वजपूर्वजः ३२ देवानांप्रथमःसोयमिंद्रादीनांमहेश्वरः ॥ कर्ताविश्वस्यसर्वस्यगोप्ताचजगतःप्रभुः ३३ तस्यासीत्प्रथमःपुत्रोज्येष्ठोथर्वेतिकीर्तितः ॥ ब्रह्मविद्यामिमांतस्मैसर्वविद्याश्रितामदात् ३४ विद्यानानाविधाब्रह्मविद्यायामेवसर्वथा ॥ अंतर्भवंतिफलतस्तत्प्राप्तौयद्वदुक्तमाइह ३५ अथर्वणस्तुशिष्योभूदंगिरित्यभिविश्रुतः ॥ अंगिरोप्यभवच्छिष्योभारद्वाजाभिधोमहान् ३६ यःसत्यवहइत्येवमत्रलोकेप्रथांगतः ॥ भारद्वाजस्यशिष्योभूदंगिराइतिविश्रुतः ३७ शौनकोत्रमहाशालःशिष्यस्त्वांगिरसोभवत् ॥ शौनकस्याभवन्शिष्याःसर्वएवद्विजातयः ३८

डस्यांतर्भूमिरूपपद्मस्यकर्णिकाभूतोयोमेरुस्तस्माच्चतुर्मुखरूपेणसमादुरासीदित्यर्थः ३२ फलितंश्रुत्यर्थमाह देवानामिति । सब्रह्मादेवानामिंद्रादीनांप्रथमआद्योमहेश्वरःपूज्यश्चतथाजगतःस्रष्टा दिकर्ता ३३ तस्यब्रह्मणःपुत्रोज्येष्ठोऽथर्वानामाभूत्तस्मैएतांवक्ष्यमाणरूपांविद्यामदात् कीदृशीं मूलाज्ञानोच्छेदात्सर्वासांविद्यानामंतर्भावकत्वेनाधारभूतामित्यर्थः ३४ एतल्लाभेइतरवि द्यास्वपेक्षाभावात्तासामस्यामंतर्भावइतिदृष्टांतेनस्फुटयति विद्याइति । इतरविद्याःकिंचित्किंचित्प्रमेयंविकासयंत्यःसर्वंप्रमेयद्योतिकायामस्यांफलरूपेणांतर्भवंतियथातृप्तिफलसिद्धासर्वेरसवल रसाइत्यर्थः ३५ द्वितीयमंत्रार्थमाह अथर्वणइतिद्वाभ्यां । तस्याथर्वणःशिष्यःअंगिरितिरकारांतनाम्नाप्रसिद्धोभूत् तस्यांगिरनाम्नोभारद्वाजःसत्यवहापरनामकोभवत् तस्यभारद्वाजस्य अंगिरसितिसकारांतनामकःशिष्यआसीदित्यर्थः ३६ । ३७ शौनकइत्यादेर्धीराइत्यंतस्यब्राह्मणवाक्यस्यार्थमाह शौनकइतिषोडशभिः । अत्रलोकेमहाशालोबहन्नदानादिशालित्वेनमहागृ हस्थःशौनकोंगिरसःशिष्योभवत् तस्माद्यान्येविप्राविद्यांप्राप्ताः ३८

द्वितीयमंत्रेऽत्रशिष्टस्यपरापदस्यार्थंदर्शयन्प्रकृतविद्याभिधानंप्रतिजानीते अथर्वेति । अत्रमुंडकोपनिषदियाब्रह्मविद्यासाआदौब्रह्मणाहिरण्यगर्भेणसमीरितासती अथर्वणोवदनंप्राप्यैवमुक्ताकारां शिष्यपरंपरांप्राप्तातांतुभ्यमहंवच्मीत्यर्थः तथाचतस्यपरस्मात्परस्मादवरेणावरेणप्राप्तेत्याकाराभाष्यकारोक्तान्युत्पत्तिःसूचिता ३९ तत्रशौनकपृष्टस्यांगिरसोमुखेनास्याःप्रवृत्तिरित्याह अंगिरा इति । क्वचिदेकांतदेशे ४० कथंपृष्टइत्याकांक्षायामाह सब्रह्मवेदिनमिति । सशौनकोभगवंतमंगिरसंश्रोत्रियंवेदविदंतत्प्रतिपाद्यब्रह्मविदंच नकेवलंब्रह्मविदंकिंतुतन्निष्ठावंतमपीत्याह विगत स्पृहमिति । एतादृशंदृष्ट्वापरीक्ष्यसमित्प्रभृत्युपायनहस्तोविधिवदुपगम्यपप्रच्छत् ४१ किमपृच्छदित्यतआह भगवन्निति । हेभगवन्नंगिरःकस्यविज्ञानात्सर्वंविज्ञातंभवतितत्सर्वविज्ञानहेतु विज्ञानकंयदेकंवस्तुतन्मह्यंवक्तव्यमित्यर्थः ४२ इत्युक्तइति । एवंप्रार्थितोऽगिराःशौनकंप्रतीदमाह इदंकिं एकस्मिन्नात्मरूपेवस्तुनित्रप्ररूपेअद्वितीयेविज्ञातेसतिसकलंविज्ञायतेइत्यर्थः ४३ तद्विज्ञानलाभोपायस्तुशाब्दंब्रह्मेत्याह उपायइति । परंब्रह्मोपेतुंप्राप्तुंशाब्दंब्रह्मज्ञानंसदुपायःकथितोब्रह्मबिंदूपनिषदीतिशेषः । तद्वाक्यमेवपठति शाब्देब्रह्मणीति । शाब्दंसांगवेदशरीरंपरब्रह्म

अथर्ववदनादेवंप्राप्ताशिष्यपरंपराम् ॥ ब्रह्मविद्यात्रयातांतेवच्मिब्रह्मसमीरिताम् ३९ अंगिराःक्वचिदासीनःकृतपौर्वाह्णिकक्रियः ॥ शौनकेनतुपृष्टोयंसंसारभ यभीरुणा ४० सब्रह्मवेदिनंदृष्ट्वाश्रोत्रियंविगतस्पृहम् ॥ समिदादिकरोभूत्वापर्यपृच्छद्यथाविधि ४१ भगवन्कस्यविज्ञानाज्ज्ञायतेसकलंजगत ॥ तदेकंवस्तुम ह्यंत्वमंगिरःकथयाधुना ४२ इत्युक्तःशौनकंप्राहएकस्मिन्नात्मवस्तुनि ॥ ब्रह्मभूतेत्रविज्ञातेविज्ञातंसकलंभवेत् ४३ उपायःकथितःशाब्दंब्रह्मोपेतुंतथापरम् ॥ शाब्देब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छति ४४ यतस्ततोत्रविज्ञेयेविद्येद्वेचमुमुक्षुणा ॥ अपराचपरातद्वत्तयोःप्रोक्ताऽपरात्वियम् ४५ वेदाश्चत्वारएवोक्ताःषडंग सहिताअपि ॥ अनयातुपराविद्याजायतेसर्ववेदवहि ४६ ब्रह्मविद्यापराप्रोक्ताब्रह्मचाक्षरमीरितम् ॥ अक्षरंचेदृशंप्रोक्तंसर्ववेदावेदवादिभिः ४७ एकादशेंद्रियगणव र्जितंसर्वदेवयत ॥ प्राणानामपिभूतानांरहितंपंचकेनच ४८ शब्दस्पर्शरूपरसगंधैरपिचवर्जितम् ॥ वक्तव्यादानगमनविसर्गानंदकैरपि ४९ ततोज्ञानेंद्रियैरे तैर्दृश्यतेनापिगृह्यते ॥ कर्मेंद्रियैश्चसकलैर्विषयत्वविवर्जितम् ५०

तत्रनिष्णातःकुशलोयःसएवपरंब्रह्मजानातीत्यर्थः ४४ यतइति । यतएवंशाब्दब्रह्मज्ञानस्यपरब्रह्मज्ञानसाधनत्वंसिद्धंततोमुमुक्षुणाद्वेविद्येविज्ञेयेसंपादनीयेतयोर्मध्येएकाअपरासाधनत्वाद्द्वितीयातुपराफलात्मकत्वादिति तत्रप्रथमांविषयनिरूपणेननिरूपयितुंप्रतिजानीते अपरात्वियं तयोर्मध्येअपराविद्यात्वियंवक्ष्यमाणविषयनिरूप्येत्यर्थः ४५ वेदाइति । यजुरादयश्चत्वारोवेदाःसहशिक्षादिभिःषड्भिरंगैर्यस्याविषयःसाअपरा अनयाअपरविद्ययापराविद्याजायते तस्याःपरात्वंचब्रह्मविषयत्वात् ब्रह्मचाक्षरमितिश्रुतौव्यवहृतंतस्यलक्षणंचेदमनुसंधेयमितिद्वयोरर्थः ४६ ४७ इदंकिमित्याकांक्षायामक्षरलक्षणमतद्व्यावृत्तिमुखेनदर्शयति एकादशेंद्रियेतिपाद्वैः । श्रुतौचक्षुःश्रोत्राभ्यांविज्ञानसाधनानिपाणिपादाभ्यांकर्मसाधनानिचसहविषयैरुपादानेश्चोपलक्ष्यंते तथा चएकादशेंद्रियैःप्राणपंचकेनभूतपंचकेनशब्दादिविषयदर्शकेनचवर्जितत्वंसिद्धमितिद्वयोरर्थः ४८ । ४८ ज्ञानकर्मेंद्रियविषयव्यावृत्तेश्चश्रुतिगतादृश्यपदोक्तमदृश्यत्वंज्ञानेंद्रियागोचरत्वरूपमग्रा ह्यत्वंतुकर्मेंद्रियागोचरत्वरूपमितिसिद्धमित्याह ततइति । यतोविषयत्वविवर्जितंततोज्ञानेंद्रियैर्नदृश्यनेकर्मेंद्रियैर्नगृह्यतेपीतियोजना ५०

यतश्चारूपकमनामकमितिनिष्कलंनिष्क्रियमितिचश्रुत्यंतरेरूपनामक्रियाभिर्वर्जितत्वंप्रसिद्धंततोनामादिव्याप्यानांगोत्रादीनामभावःसुतरांसिद्धइत्याह रूपेति । यतइदमक्षरंनामादिभिर्जन्मा दिविकारैश्चवर्जितंततोगोत्रपदोक्तंयत्कुलंवर्णाब्राह्मणत्वादयआदिपदोक्तास्तद्विशेषाश्चात्रनसंतीत्यर्थः भाष्यविरोधस्यप्रमेयाविरोधएवसमाधानमित्युक्तम् ५१ नभइति । देशपरिच्छिन्नविल क्षणंनभोवत् नित्यंकालावच्छिन्नविलक्षणं सर्वस्यभूतपदोक्तजन्यमात्रस्यकारणमपिविश्वेनसर्वेणद्वैतेनरहितंयतस्तेनहेतुनाएकरूपमखंडवस्तुपरिच्छेदहीनमितियावत् ५२ ब्रह्मेति । ब्रह्मचर्या दिसंपन्नानांधीराणामेवचेतसियत्स्फुटीभवतिनदेवाक्षरंत्वयाधीरेणसर्वजिज्ञासताज्ञेयं वर्णादयोविशेषास्तुफल्गुत्वान्नज्ञेयाइत्यर्थः ५३ अथविश्वमित्यंतमंत्रेणाक्षरस्यविश्वविवर्तोपादनतास्फुटत्वा यदृष्टांतत्रयमुक्तंतत्प्रयोजनभेदेनविवृणोति जनीतिषड्भिः । जनिर्जन्मतत्प्रभृतीनांविश्वसंबंधिनांकारणमेकंपरानपेक्षं अभिन्ननिमित्तोपादानमितियावत् एतादृशमक्षरंभवतिअत्रास्मिन्नर्थेलू ताख्यजंतुंदृष्टांतमाहुः प्रकृतश्रुतिविदइत्यर्थः ५४ तमेवविवृणोति ऊर्णेति । यथालूताख्यऊर्णनाभिस्तंतूनांसृष्ट्यादौपरानपेक्षस्तथाक्षरंविश्वस्येत्यर्थः ५५ वैषम्यनैर्घृण्यपरिहारायसंस्का राख्यबीजनैलक्षण्येननानारूपाणिकार्याणिप्रतिएकरूपस्यकारणत्वंसंभवतीत्यावेदकोभूमिदृष्टांतइत्याह एकरूपादिति । अनेकात्मनामनेकजातीयानांकार्याणामुत्पत्तौ ५६ एवंस्फुटयति

रूपनामक्रियाहीनंजन्मादिपरिवर्जितम् ॥ यतस्ततस्त्विदंगोत्रकुलवर्णादिमन्नहि ५१ नभोवत्सर्वगंसूक्ष्मंनित्यंसर्वस्यकारणम् ॥ विश्वेनरहितंशश्वद्यतस्तेनैक रूपकम् ५२ ब्रह्मचर्यादिसंपन्नायत्रपश्यंतिचेतसि ॥ तदेवभवताज्ञेयंनतुवर्णादिकंक्वचित ५३ जनिस्थितिविनाशानामेकमेवात्रकारणम् ॥ दृष्टांतंलूतकंप्राहु र्वेदवादरताद्विजाः ५४ ऊर्णनाभिर्यथातंतून्सृजत्यत्तिचपातिच ॥ तथाविश्वमिदंदेवःसृजत्यत्तिचपातिच ५५ एकरूपादनेकात्मकार्योत्पत्तौमहाधियः ॥ दृ ष्टांतंभूमिमप्याहुःस्थिरजंगमकारणम् ५६ स्थावराजंगमादेहायथाभूमेरनेकधा ॥ जायंतेब्रह्मणोप्येवंविश्वंनानाविधंभवेत ५७ विलक्षणस्यकार्यस्यस्वतश्चेत नरूपिणः ॥ जनोपुरुषमप्याहुर्दृष्टांतंब्राह्मणोत्तमाः ५८ चेतनाद्धिसतस्तस्मान्नखकेशाद्यचेतनम् ॥ यथैवजायतेतद्वद्ब्रह्मणःसकलंजगत ५९ अत्रापिजन्मज गतःक्रमादस्माद्वदंतिहि ॥ विद्वांसोब्राह्मणाब्रह्मपूर्वंविश्वस्यचिंतनम् ॥ कुरुतेवेदविज्ञातनामरूपस्यसर्वतः ६० ततोब्रह्मस्थूलमिवभवेत्तत्स्यचिंतनात ॥ तस्माद्भूतानिसान्नानिजायंतेज्ञानसंचितात ॥ अन्नाद्विश्वमिदंसर्वंसर्वदैवप्रजायते ६१

स्थावराइति । यथाअनेकधावर्तमानाःस्थावराविदेहाभूमेरेकजातीयायाःप्रजायंतेतथाब्रह्मणोपिविश्वमित्यर्थः ५७ ननुचेतनाद्ब्रह्मणोविलक्षणस्यजडस्योत्पत्तिःकथंस्यादित्याक्षेपपरिहारायतृ तीयःपुरुषदृष्टांतइत्याह विलक्षणस्येति । चेतनरूपात्स्वतआत्मनःसकाशाद्विलक्षणस्यजनोपुरुषंजीवंतंचेतनत्वेनप्रसिद्धंदृष्टांतंवदंतीत्यर्थः ५८ तंप्रकटयति चेतनाद्धीति । तस्मात्पुरुषात्स तोजीवतश्चेतनत्वेनप्रसिद्धान्नखकेशलोमादिकमचेतनंजायमानंप्रसिद्धंतथाविश्वमपीत्यर्थः ५९ अमृतांतमंत्रस्यार्थंप्रादुष्करोति अत्रापीतिपंचभिः । अत्रजगतोजन्मस्थितिसंहाराणांमध्येज न्मानेनक्रमेणभवतीतिविद्वांसोब्राह्मणावदंति अनेनकेनेत्यतआह ब्रह्मेत्यादि । प्रथमंब्रह्मकर्तृविश्वस्यस्रष्टव्यप्रपंचस्यार्चितनरूपंतपःकुरुते कीदृशस्यविश्वस्य सर्वतःसर्वभेदेषुवेदप्रसिद्धनामरूप कस्येत्यर्थः ६० ततइति । ततःस्रष्टव्यालोचनरूपात्तपसोहेतोःसजलक्षेत्रोप्तबीजवद्ब्रह्मस्थूलतांसृष्ट्यनुकूलतारूपांभजतेतस्माद्ब्रह्मणोज्ञानेनसंचितात्स्थूलीकृतात्सान्नानिश्रुतिगतान्नपदेनस्वार्थ संबंधेनलक्षितानिपंचभूतानिचजायंते तस्मात्पंचभूतरूपादन्नात्सर्वंविश्वंजायतेइत्यर्थः ६१

एवंवृत्तिकृदनुसारी अर्थो दर्शितः अथभाष्यकारसंमतंतमाह आत्मेति । ब्रह्मपरमेश्वरआत्मा येनईश्वरत्वमतयाप्रसिद्धेनेक्ष्णगाख्येनज्ञानेनसंपन्नेसद्रुपचयंकार्यानुकूल्यरूपंतथाव्रजतियथास्वस्मि न्नुपाधितयावर्त्तमानमव्याकृतंमायादिपदैःप्रसिद्धंनामरूपयोर्विधानमारंभकमजातमनाद्यपिजायतेततस्सृष्टिकालेप्राधान्यापत्तिरूपंजन्मलभते कीदृशमव्याकृतं सर्वसाधारणत्वसाधर्म्येणान्नमित्युक्त मित्यर्थः भूतानामाहुत्यादिकर्मजानामनादीश्वरोपाधित्वस्यायुक्तत्वान्मूलाज्ञानमेवात्रान्नपदेनग्रहीतुमुचितमितिभावः ६२ मनइति । तस्मादन्नपदोक्तान्मनःप्राणसमष्टिशरीरएवहिरण्यगर्भोबृह दारण्यकेमृत्युरितिव्यवहृतोजायतेतस्माच्चसत्यपदोक्तस्थूलपंचभूतशरीरोविराड्भवतीत्यर्थः सत्पदेनपृथिव्यप्तेजसांत्यत्पदेनवाय्वाकाशयोःपरोक्षयोरभिधानमित्युक्तंचतुर्थाध्याये ६३ तस्मि न्निति । तस्मिन्विराजिसत्यपदोक्तेजातेसतितदाश्रिताःसप्तभूरादयोलोकाजातास्तेभ्यश्चतद्वासिजनाधिकारिकंवेदोक्तंकर्मजातंतस्मिन्कर्मणिसतितस्मात्कर्मणःफलंजातं कीदृशं यच्छ्रुतावश्य भावित्वेनामृतमित्युक्तमित्यर्थः ६४ एतावतापराविद्यासविषयासंक्षेपेणनिरूपिताअथापरविद्याविषयंवैराग्यायदर्शयितुंसृष्टिप्रक्रियांसंक्षेपेणानुवदतोयःसर्वज्ञइत्यादिवाक्यस्यार्थमाह सामा न्येनेति । सामान्यरूपेणसर्वस्यज्ञानात्सर्वज्ञोविशेषरूपेणसर्वज्ञानात्सर्वविदितिचयउक्तस्तस्मादक्षरादिदंनामरूपात्मकंसूक्ष्मंब्रह्महिरण्यगर्भाख्यंस्थूलंतुविराडाख्यंयच्चश्रुत्यंतरेअन्नमितिव्यवहृतमेत

आत्मज्ञानेनसंपन्नंब्रह्मोपचयमाव्रजेत् ॥ अन्नमव्याकृतंस्वस्मिन्सर्वसाधारणंयतः ॥ नामरूपविधानंतदजातंजायतेतथा ६२ मनःप्राणात्मकस्तस्मान्मृत्युरेव प्रजायते ॥ ततोपिजायतेसत्यंविराडितियदीरितम् ६३ तस्मिन्नलोकाःश्रिताःसप्तवेदोक्तंकर्मचाखिलम् ॥ कर्मण्यप्यमृतंतद्वद्यदुक्तंकर्मणःफलम् ६४ सामा न्येनविशेषाच्चवेत्तियःसर्वमेवाहि ॥ ब्रह्मरूपात्तज्ज्ञानचितात्तस्मादेवाक्षरात्मनः ॥ नामरूपेस्थूलमिदमन्नंसूक्ष्मंचजायते ६५ तदेतत्सकलंप्रोक्तंपंडितैःकर्मणःफ लम् ॥ विश्वंहिरण्यगर्भादिशरीरंसत्यशब्दितम् ६६ अग्निहोत्रादिकंकर्मयागैर्दर्शादिभिःसमम् ॥ वेदोदरेस्थितंनानारूपंद्रव्यादिभेदतः ६७ अकुर्वन्वैदिकंकर्म निषिद्धंचसमाचरन् ॥ इंद्रियार्थेविमूढात्मापुमान्गच्छेदधोगतिम् ६८ यथोक्तंकर्मकुर्वाणोनिषिद्धंचविवर्जयन् ॥ पुमान्स्वर्गादिलोकेपुसुखदंदेहमाव्रजेत् ६९ अशरीरंनमोक्षंसविहितैरपिकर्मभिः ॥ प्राप्नुयात्कृतकंयस्मादनित्यंकर्मणःफलम् ७०

दुभयंसर्वप्रपंचसंग्राहकंजायतेइत्यर्थः ६५ तदेतत्सत्यमित्यादेर्ब्रह्मलोकइत्यंतग्रंथस्यतात्पर्यंयावतिसफलकर्मप्राज्ञस्त्येभवतितद्दर्शयति तदेतदितिचतुर्भिः । तत्सूक्ष्मसमष्टिरूपंएतत्स्थूलसमष्टिरू पंचायद्विश्वंहिरण्यगर्भादिशरीरमयमेतत्पर्यंतमैश्वर्यंकर्मणःफलमुक्तं कीदृशंकर्मफलं सत्यशब्दितं कर्मानंतरमवश्यभावात्सत्यशब्देनोक्तमित्यर्थः ६६ कस्यकर्मणइदमैश्वर्यंफलमित्याकांक्षायां यद्वेदविहितमित्याह अग्निहोत्रादिकमिति । अग्निहोत्रंसायंप्रातराहुतिरूपं आदिपदेनआदित्योपस्थानादिग्रहः एतत्प्रभृतिकर्मदर्शादिसंज्ञैर्नित्यकाम्यादिभिर्नैर्यागैःसहितंवेदेनविहितं कीदृशं दध्याज्यादिद्रव्याणांआदिपदेनकर्तृमंत्रदेशानांचभेदेननानाविधमित्यर्थः ६७ अधिकारिणएतदकरणेदोषप्रतिपादकमनुवाक्यमर्थतःपठति अकुर्वन्निति । वेदविहितकर्माकरणंतन्निषिद्धाचरणं विषयासक्तिश्चेतत्त्रयमधोगतिलक्षणमित्यर्थः ६८ निषिद्धपरिहारपूर्वकंविहितानुष्ठानेचहिरण्यगर्भलोकांतलोकेष्वैश्वर्यशालिदेहप्राप्तिर्भवतीत्याह यथोक्तमिति ६९ उक्तंकर्मद्विविधंस्वर्गाद्यर्थं चित्तशुद्ध्यर्थंचतत्राद्यस्यफलंदर्शितमथद्वितीयस्यफलभूतंवैराग्यमभिनयंतिपुवाइत्यादयःपंचमंत्रास्तत्रप्रथमस्यार्थमाह अशरीरमित्येकादशभिः । सकर्मांशरीरत्राभावशालिनंमोक्षमपिमामुयादि त्याशानकृतंव्याकृतकत्वेनानित्यस्यवकर्मलभ्यत्वान्मोक्षस्यतद्वैलक्षण्यादित्यर्थः ७०

कर्माणीति । अस्मादनित्यसाधनत्वादेवज्योतिष्टोमादीनिनिखिलानिकर्माणिभवाब्धेःपरंपारंतीरंनित्यमोक्षरूपंनेतुंप्रापयितुंनसमर्थानिभवंतीत्यर्थः ७१ अत्रदृष्टांतमाह पयोनिधाविति ।
यथापयोनिधिजलेकृताःप्लवास्तृणकाष्ठनिर्मितानितरणसाधनानिमत्स्यघातनायैवोपयुज्यंतेपारस्यपारगमनस्यविषयेसाधनायतुनासतेनयोग्यतयातिष्ठंतिक्षुद्रत्वाददृढत्वाच्च तथाकल्लोलमालया
आकुलिताःसंतोमज्जंतइवभवंति नीरपूर्तिदशायांचकंपमानाआश्रितानांभयप्रयोजकाभवंतीतिद्वयोरर्थः ७२ । ७३ दार्ष्टांतिकेयोजयति एवमित्यादिना । इत्थंकर्मरूपाःप्लवाःसंसारजल
धौस्वर्गसुखादिरूपमत्स्यानांप्राप्तयएवरचितानपरपाराय कीदृशाः कामादिरूपकल्लोलवेगैःकंपिताअदृढाःस्वल्पविघ्नेनापिप्रतिहतत्वादित्यर्थः ७४ ननुकर्मप्लवेषुक्षेपणीचालककर्णधारस्थानीयाः
केइत्याकांक्षायामाह अध्वर्योरिति । ल्यब्लोपेपंचमी अध्वर्युमारभ्यषोडशऋत्विजोयजमानस्तत्पत्नीचैतेऽष्टादशतेषांकर्मप्लवानांनेतारःप्रवर्तकाश्चालकाइतियावत् . तत्रषोडशानामृत्विजांना
मानियथा यजुर्विदःअध्वर्युप्रतिप्रस्थातृनेष्टृन्नेतारः ४ ऋग्विदोहोतृमैत्रावरुणाच्छावाकग्रावस्तुतः ४ सामविदउद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याः ४ त्रयोविदोब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोता

कर्माणिनिखिलान्यस्माज्ज्योतिष्टोमादिकानिच ॥ भवाब्धेस्तुपरंपारंनंनेतुंभवंतिन ७१ पयोनिधौयथाक्षुद्राःप्लवामत्स्यादिघातने ॥ कृतास्तीरस्यविषयेना
सतेह्यदृढाःस्वयम् ७२ कल्लोलमालाकुलितामज्जंतइवसर्वदा ॥ नीरपूर्णाश्चकंपंतेआश्रितानांभयप्रदाः ७३ एवंकर्मप्लवाएतेसंसारजलधौस्थिताः ॥ कामक्रोधा
दिकल्लोलैःकंपितादाढ्र्यवर्जिताः ॥ स्वर्गादिसुखमत्स्यानांप्राप्तयेपरिकल्पिताः ७४ अध्वर्योयजमानोत्रपत्न्यापिसहितःसदा ॥ ऋत्विजःकथितास्तेषांनेतारः
षोडशापिच ७५ कर्णधारोनकोप्यत्रकर्मनौषुभवार्णवे ॥ अनुकूलोनवातश्चब्रह्मचर्यादिरूपभाक् ७६ स्वयंचादृढरूपत्वात्प्रतिक्षणविनश्वरान् ॥ एतान्विश्व
स्यकोनामप्रविशेद्भवनीरधौ ७७ सुखार्थिनाततःसर्वेतरीतुंभववारिधिम् ॥ कदाचिन्नैवसंग्राह्याःस्वर्गमत्स्यसुखाप्तिदाः ७८ एतान्कर्मात्मकान्दृष्टाःप्लवान्संग्र
ह्ययेस्थिताः ॥ संसारजलधेर्नैतेभवेयुःपरपारगाः ७९ कामक्रोधादिकल्लोलैःप्लवेस्मिन्परिवर्तिते ॥ जरामरणनीरेस्मिन्नुन्मज्जंतिपतंतिच ॥ शतशोदुःखस
हिताःसंसारश्रमकर्शिताः ८० अविद्यानीररचितेसर्वदाभवसागरे ॥ धीवराइववर्तंतेभूतोपद्रवकारिणः ८१ दुर्धियःपंडितंमन्याःस्वपरानर्थकारिणः ॥ यतस्त
तोभ्राम्यमाणामायागर्त्तंगताभृशम् ८२

रः ४ संकलने १६ ॥ ७५ अत्रिपत्रब्रह्मनिष्ठगुरुलक्षणःकर्णधारोब्रह्मचर्यलक्षणःसन्मार्गोवर्जितेश्वरलक्षणोवाऽनुकूलवातश्चकर्मरूपासुनौकासुनास्तीत्याह कर्णेति ७६ स्वयमिति । स्व
भावेनैवप्रतिक्षणविनश्वरानेतान्कर्मप्लवान्विश्वस्यआस्थयासमालंब्यभवाब्धौकःप्रविशेन्निःशंकःप्रचरेदित्यर्थः ७७ फलितमाह सुखार्थिनेति । स्वर्गादिमत्स्यानांयत्सुखंतल्लाभदाः ७८ एता
निति । येमूढाएतान्कर्मरूपप्लवान्संगृह्यआलंब्यदृष्टाःस्थितास्तेभवाब्धिंनतरंतिप्रत्युतकामादिकल्लोलवशात्कर्मप्लवेपरिवर्तितेविप्लुतेसतिशतशोत्रनिमज्जंतीतिद्वयोरर्थः ७९ । ८० तत्रद्वितीयार्थ
माह अविद्येतिचतुर्भिः । अविद्यैवयत्रनीरस्थानीयातादृशेभवसागरेधीवरवत्स्वंपरंचक्लेशयंतस्तेकर्मिणोवर्तंते ८१ दुर्धियइति । कीदृशाः दुर्धियोप्यात्मानंपंडितंमन्यमानाःदुर्धीत्वेहेतुः
स्वपरानर्थकारिणइति पुनःकीदृशाः यतस्ततोरोगाद्यनर्थैर्भ्राम्यमाणाविक्षेपंनीताःसंतोमायाप्रयुक्तेमोहमयगर्तेगताःपतिताः ८२

मूढाइति । पुनःकीदृशाः कर्त्तव्यतायामनुष्ठेयव्यवस्थायांव्यामोहवंतः तेषांनिर्णयोगुरुभ्योपिनभवतिगुरूणामपिताह्दशत्वादित्याह स्वात्मेत्यादिना । यद्वत्स्वकीयविवेकरहिताअंधाअंधेननीयमानादुःखसंततिमंतःस्युस्तथाएतेकार्मिणःस्वात्मज्ञानविवर्जितायाज्ञिकेनकार्मिणागुरुणानीयमानाःस्वर्गाभिलाषिणोघोरेभवार्णवेदुःखिनाःस्युरितिद्वयोरर्थः ८३ । ८४ तृतीयचतुर्थयोरर्थमाह स्वयमित्यादिना । तादृशाजनाःस्वयंगुरुनिरपेक्षाआत्मीयंदुःखंतन्निवृत्त्युपायंवानजानंतिकामवशत्वेनातुरत्वाद्भूताविष्टवदित्यर्थः ८५ भूताविष्टसाम्यमेवस्फुटयति वयंकृतार्थाइति ८६ कामेति । कश्चिदुमेपांचभौतिकदेहेचरूढियोगाभ्यांवर्तमानंभूतावासपदमत्रवर्तनीयं तथाचाऽनिजेपरकीयेभूतावासेदेहएवभूतावासेकश्चिन्मेपरांसुखबुद्धिंप्राप्ताःदैवप्रातिकूल्यात् तत्रविशेषहेतुःकामरूपस्यग्रहस्यभूतस्यसमावेशएवेत्यर्थः ८७ तेषांकामग्रहमयुक्तचिंतयाव्याप्तचेतस्यात्मानुसंधानावकाशोनभवतीत्याह अयमितिद्वाभ्यां । अयंशत्रुर्हतःअयंतुसपुनरुत्थितइतिशेषःस्फुटमन्यत् ८८ इत्यादीति । विद्धाःसंव्याप्तचेतसः मृत्युःप्रमादःसएवग्राहस्तद्वशंगताश्च आत्मानंज्ञातुंनशक्नुवंतीत्यर्थः ८९ आत्मविस्मरणापराधेनतेअनित्यलोकाःस्युरित्याह कर्मैवेति ।

मूढाःकर्तव्यतायांतेस्वात्मज्ञानविवर्जिताः ॥ अंधेननीयमानाःस्युर्यद्वदंधाःसहस्रशः ८३ याज्ञिकेनैवमेवैतेस्वात्मज्ञानविवर्जिताः ॥ स्वर्गाभिलाषिणोघोरेमायानीरेभवार्णवे ८४ स्वयंचताह्दशानित्यंकामक्रोधवशंगताः ॥ आत्मदुःखंनजानंतिभूतग्रस्ताइवातुराः ८५ वयंकृतार्थाइतिचमन्यंतेस्वल्पबुद्धयः ॥ नृत्यंतोपिहसंतश्चपिशाचाइवकर्मिणः ८६ कामग्रहसमावेशाद्भूतावासेऽनिजेतथा ॥ परांचसुखबुद्धिंतेप्राप्तादैवविमोहिताः ८७ अयंनोनिहतःशत्रुर्भाग्ययोगादयंपुनः ॥ हंतव्योयमिदंमित्रंममोर्जितमभूदिह ८८ इत्यादिचिंतयाविद्धामृत्युग्राहवशंगताः ॥ आनंदात्मानमात्मस्थंनजानंतिविमोहिताः ८९ कर्मैवयेऽत्रसंसारेसम्यगित्येवसंस्थिताः ॥ तेसर्वेसुकृतंसर्वमनुभूयाथकालतः ॥ क्षीणपुण्याःपतंत्यस्माद्दुःखशोकसमन्विताः ९० यथाचधनिनोमृत्युकालेपुत्रादिसंवृताः ॥ दुःखिनःस्वर्गिणस्तद्वत्कालेकर्मक्षयात्मके ९१ राज्ञोत्रमरणेयावद्दुःखंस्यात्सुखिनोंमहत् ॥ कर्मक्षयेतथादुःखंस्वर्गिणोजायतेसदा ९२ स्वर्गेपिसर्वदातेषांपारतंत्र्यमनीशता ॥ एतल्लोकेयथादुःखंधनिनांधननाशने ॥ स्वर्गनाशात्तथादुःखंस्वर्गिणामिहजायते ९३ कर्मणांकरणेदुःखंफलप्राप्तौतथैवच ॥ फलक्षयेपुनर्जन्मसंभवंचातिदारुणम् ९४ जायमानःपुमान्कोवाह्यत्रस्वर्गाद्भविष्यति ॥ उत्तमोमध्यमोवास्यादधमोनारकोथवा ९५ कोनामकर्मणःपाकंतस्यजानातिभाविकम् ॥ अयंदक्षिणमार्गःस्यात्स्वर्गिणोयेनयांत्यमी ९६ उत्तरोपिद्वितीयोस्तिमार्गःसंसृतिमध्यगः ॥ परपारसमीपस्थःसतुकेषांचिदेवहि ९७

येकर्मैवसम्यक्श्रेयइतिविनिश्चित्यात्रसंसारेसंस्थिताःपरिनिष्ठितास्तेसर्वेसुकृतफलंसर्वमनुभूयकालेनक्षीणपुण्याःसंतोऽस्मात्स्वर्गात्सशोकाःपतंति ९० तेषांस्वर्गपातकालेदुःखशोकसमन्वितत्वंस्फुटयति यथाचेति । निगदव्याख्यातंद्वयम् ९१ । ९२ नकेवलंपातकालएवतेषांदुःखंकिंत्वन्यदापीत्याह स्वर्गेपीति । अनीशताअधिकैश्वर्यलाभाक्षमत्वं यथाएतल्लोकेधनक्षयाद्दुःखंतथाभोगभूमौसुकृतस्यनाशाद्वयाद्दुःखमिति ९३ कथंकर्मैतिन्यायेनकर्मणआदिमध्यावसानेषुदुःखरूपतामाह कर्मणामिति । करणेनुष्ठानकाले फलप्राप्तौपारतंत्र्यादिरूपंदुःखंपुनर्जन्मसंभवंपुनर्जन्मावधिकंदुःखमतिदारुणंभवतीति ९४ पुनर्जन्मदुःखमेवस्फुटयति जायमानइति । स्वर्गंप्राप्यपुनर्जायमानोजंतुःकोभविष्यतीतिभाविनंतस्यकर्मणोविपाकंकोजानाति एवमिष्टापूर्तपरायणानांगतिरुक्तेत्युपसंहरति अयमिति ९५ । ९६ तपइत्यादिमंत्रेणदेवयानवतांफलमुक्तंविशदयति उत्तरइतिपंचभिः । द्वितीयउत्तरमार्गोपिसंसारांतर्गतएव सतुपरपारसमीपगतःकेषांचिद्विरतानामेवभवतीत्यर्थः ९७

तत्रहेतुतयातत्साधनब्रह्मचर्यादीनांदुष्करत्वमाह आत्मनइति । येतुऊर्ध्वरेतस्त्वंसंकल्प्यअनेनदेहेनस्त्रियंनगच्छंतितेनैष्ठिकास्तथादहराद्युपासकास्तथागृहस्थाअपिपंचाग्न्युपासकाएतेउत्तरमार्गेणग च्छंतीत्यर्थः ९८ ब्रह्मलोकेपिमोक्षस्यपाक्षिकत्वमाह तत्रेति । तत्रउत्तरमार्गगम्येब्रह्मलोकेयदिब्रह्मज्ञानंजायेततदाएतेउक्ताधिकारिणस्ततःकार्यब्रह्मणःपरंपरस्ताद्वर्तमानंपरमात्मानंप्रयांति तत्र ज्ञानेनपरमात्मलाभोभूमौब्रह्मलोकेचसमइत्याह यथेति ९९ अन्यथेति । अन्यथातत्रतत्त्वज्ञानाभावेएतंमानवलोकंपुनरावर्तंतेपरिवृत्त्यागच्छंति परंत्वस्मिन्मन्वंतरेकल्पेवानायांतिकिंतुपरस्मिन्नेवे त्याह कालेइति । तस्मिन्नुश्रुतौएतमितिपदेनविवक्षिते १०० फलितमाह उत्तरइति १०१ अथपरीक्ष्येत्यादेःकृतेनेत्यंतस्यार्थमष्टाविंशत्यावर्णयंस्तत्रपरीक्षामभिनयति वनिनामित्येकादशभिः । विद्याविदामुपासकानांवनिप्रभृतीनामधिकारिणांब्रह्मलोकादौयत्रकुत्रापिलोकादौयत्रकुत्रापिलोकेब्रह्मज्ञानमेवमोक्षहेतुरितिद्वयोरर्थः १०२ । १०३ तथाशरीरस्यसर्वत्रदुःखमयत्वाविशेषाद्ब्रह्मलो कादिकंहेयमित्याह शरीरमिति । ततोदेहसंबंधाद्ब्रह्मलोकादिरूर्ध्वलोकोपिस्वर्गादिवद्वार्पितविषयादुःखकारणंभवत्यतोहेतोर्विद्वद्भिर्नरकवज्ज्ञेयइत्यर्थः १०४ तत्रदेहानामवांतरवैषम्येपितत्फलदुःखसा

आत्मनस्तूर्ध्वरेतस्त्वंसंकल्प्यनपुनःस्त्रियम् ॥ देहेनानेनगच्छंतितेयांत्युत्तरमार्गतः ॥ उपासकागृहस्थाश्चयेचपंचाग्निवेदिनः ९८ तत्रापिब्रह्मविज्ञानंजायते दैवयोगतः ॥ ततःपरंप्रयांत्येतेयथाभूमिस्थितानराः ९९ अन्यथापुनरेवैतमावर्ततेयथागतम् ॥ कालेतीतेहिमहतितस्मिन्मन्वंतरादिके १०० उत्तरोपित तोमार्गोहेयोदक्षिणमार्गवत् ॥ अत्रापियतएतत्स्याद्देहंकाराग्रहंपुनः १०१ वनिनांन्यासिनांतद्वन्नैष्ठिकब्रह्मचारिणाम् ॥ विद्याविदांतथैवैषांसर्वेषांगृहिणामपि १०२ ब्रह्मलोकेथवास्वर्गेपातालेनरकेथवा ॥ भूमौवाब्रह्मविज्ञानंमुक्तिहेतुरसंशयम् १०३ शरीरंदुःखदंतद्वत्सर्वत्रैवेतिनिश्चितम् ॥ ब्रह्मलोकादिकोलोकस्ततो दुःखस्यकारणम् ॥ स्वर्गादिवदतोज्ञेयोविद्वद्भिर्नरकोयथा १०४ राजार्थरचितेयद्वत्प्रासादेसप्तभूमिके ॥ उपर्यधोवादुःखाप्तौभेदःकोपिनविद्यते १०५ हैमी लोह्यथवायद्वच्छृंखलाबंधनप्रदा ॥ दैवोवामानुषोवायंदेहोदुःखप्रदस्तथा १०६ ब्रह्मणोपिचयोदेहोदेहोयश्चशुनोपिच ॥ नानयोर्विद्यतेभेदउभयोर्देहधारिणोः १०७ योदेहोयेनजीवेनस्वीकृतस्तस्यसोधिकः ॥ न्यूनःपरोजगत्यस्मिन्सर्वत्रैवेतिचास्थितम् १०८ हादेवंयदयंदेहोदुःखराशेस्तुकारणम् ॥ दुर्गंधोप्यशुचिस्त द्वत्स्वस्मिन्नेवंनगृह्यते १०९ कर्मकामतमश्छन्नदोषोदेहःशरीरिणाम् ॥ अप्रतेनप्रमोभातिसर्वेषामपिसर्वतः ११० धिक्कर्मकामसहितंधिङ्मायांचापिमोहि नीम् ॥ यथामूढःपिबेदेषश्लेष्माणंस्वमुखस्थितम् १११

म्यंसदृष्टांतमाह राजार्थमितिद्वाभ्यां । यथाराजकीयप्रासादेयत्रकुत्रापिभूमौस्थितस्यज्वरादिदुःखंसमंतथोत्तमदेहेपीत्यर्थः- १०५ यथाचशृंखलाहेममयीवाअस्तुलोहमयीवासर्वस्याबंधकत्वंस मंतथादेहस्यदुःखदत्वमित्याह हैमीति १०६ अत्रचतुर्थाद्युक्तंस्मारयति ब्रह्मणइति । हिरण्यगर्भश्वदेहयोस्तदभिमानिनोश्चपांचभौतिकत्वेसाविद्यत्वेचविशेषोनास्तीत्यर्थः १०७ आभिमा निकमुत्कृष्टत्वमपिसर्वत्रसममित्याह योदेहइति । स्थितंप्रपंचितम् १०८ तत्रमूढान्शोचति हादेवमिति । लोकस्यदेवमेवशोच्यंयत्प्रभावाद्दुःखहेतुत्वदुर्गंधत्वाशुचित्वैर्युक्तोपिदेहःस्वास्मिन्स्व कीयेचेतस्येवंदुःखहेतुत्वादिरूपेणंगृह्यतेइत्यर्थः १०९ कर्मेति । कर्मप्रारब्धफलंकामोरागस्तमःकार्याविद्याएतैःप्रच्छन्नदोषः ११० कर्मादित्रयंनिंदति धिगिति । कर्मकामौधिक्अनादरणी यो वथामायामविद्यांधिक् ययामाययामूढोयंजनःस्वकीयमुखगतंश्लेष्माणंलालागंडूषादिरूपंपिबति अन्यथापरकीयमुखश्लेष्मादिभ्यउद्वेगःस्वदेहगतादनुद्वेगश्चकथंस्यादितिभावः १११

पदार्थाइति । येपदार्थाःकफाऽसृगादयोनरकेवैतरण्यांप्रसिद्धास्तएवदेहगताःसंतःसौंदर्येणभांतीत्यहोपापादिदोषमहिमेत्यर्थः ११२ इत्येवमिति । ब्रह्मलोकप्रभृतीन्लोकानुक्तविधयानर्थमय त्वेनविज्ञायपरीक्ष्यमेधावीकुशलोधिकारीवैराग्यंप्राप्नुयात् ११३ नकेवलंवर्जितदोषजातादेवलोकानांहेयत्वंकिंतुकर्मजत्वेनानित्यत्वादपीत्याह मानसादितिद्वाभ्यां । केचिल्लोकास्त्रिलोकीबा ह्यामानसस्यकर्मणउपासनाख्यस्यफलभूताः केचित्तुत्रिलोक्यंतर्गताःकायिकस्यफलभूताः अयंनियमःकालत्रयेपिनान्यथाभवतीत्यर्थः ११४ कर्मजाइति । ततोमानसकायिकव्यापारयोः कर्मत्वस्यानुगतत्वादेतेलोकाःकर्मजाएवकर्मजत्वस्यचानित्यत्वव्याप्यत्वंलोकेप्रसिद्धमित्यर्थः ११५ यथैतेलोकाःकर्मजास्तथामोक्षोनभवतिअनित्यत्वापातादित्याह कर्मजइति । तत्रेष्टापत्तिंवा रयति अनित्येहीति । मोक्षेअनित्येसतितदर्थंदेहिनांयत्नोव्यर्थःस्यात् किंचवर्जितदोषव्याप्यंस्वर्गत्वमेवमोक्षस्यस्यादित्याह स्वर्गतइति । अस्यमोक्षस्यकर्मजत्वेस्वर्गापेक्षयाविशेषोनस्यात्किं तुस्वर्गविशेषत्वमेवस्यादित्यर्थः ११६ स्वर्गवैषम्याभावमेवस्फुटयति नहीति । विश्वजिदाख्यक्रतुसाध्यस्यज्योतिष्टोमाख्यक्रतुसाध्यस्यवास्वर्गस्ययत्किंचिदवांतरवैषम्येपितयोःस्वर्गत्वेतद्व्यापक

पदार्थानरकेयेस्युर्देहेसंतितएवहि ॥ सर्वेषामपिपापेनविपरीताविभांत्यमी ११२ इत्येवंमनसासर्वान्ब्रह्मलोकादिकानपि ॥ लोकान्विज्ञायमेधावीतेषुवैराग्यमा व्रजेत् ११३ मानसात्कर्मणःकेचित्कायिकादेवकेचन ॥ लोकान्नभिरवाप्यंतेसर्वदैवनचान्यथा ११४ कर्मजास्ततएवैतेसर्वएवप्रकीर्तिताः ॥ कर्मजानामनित्य त्वंभवेत्तेषांघटादिवत् ॥ कर्मजन्यंहिलोकेस्मिन्नित्यंकिंचिन्नदृश्यते ११५ कर्मजश्चेद्भवेन्मोक्षःसोप्यनित्योभविष्यति ॥ अनित्येहिसदामोक्षेश्रमोव्यर्थःशरीरि णाम् ॥ तदर्थंस्वर्गतश्चास्यवैषम्यंचनसंभवेत् ११६ नहिविश्वजितास्वर्गोज्योतिष्टोमेनवापिच ॥ साध्यतेत्रचवैषम्यंतयोरस्तीहकिंचन ॥ स्वर्गत्वेतद्वदेवस्या दत्रापिस्वर्गमोक्षयोः ११७ मोक्षस्यानित्यभावश्चेद्वैयर्थ्यंचप्रसज्जते ॥ अनावृत्तिश्रुतेस्तद्वत्प्रसिद्धेश्चमहात्मनाम् ११८ नान्यःपंथाइतिप्रोक्तंश्रुतेर्व्यर्थंवचोभ वेत् ॥ ब्रह्मवेदेतिचततोमोक्षोनस्याद्धिकर्मजः ११९ मोक्षोब्रह्मैवकथितंसर्वैरेवमहात्मभिः ॥ अविद्यारहितंमायालोकेऽज्ञानंप्रकीर्तितम् १२० अज्ञानंज्ञानतः सर्वंविलयंयातिनान्यथा ॥ यस्याज्ञानंहिलोकेस्यात्तज्ज्ञानात्तल्लयंव्रजेत् १२१ ब्रह्मात्माज्ञानमेतच्चब्रह्मात्मज्ञानतोलयम् ॥ व्रजेदज्ञाननाशेनतज्जंदुःखं विनश्यति १२२

नित्यत्वादौवाकिंचनवैषम्यंनास्तितथाप्रकृतेपिस्यादित्यर्थः ११७ मोक्षस्यानित्यतांश्रुतिगणोविद्वदनुभवश्चनसहतेइत्याह मोक्षस्येति । मोक्षस्यानित्यत्वंयदिस्वीक्रियतेतदानसपुनरावर्ततेइतिश्रु तिवाक्यंमुक्तस्यानावृत्तिप्रतिपादकंव्यर्थंस्यात्तथामहात्मनांसकलतंत्राचार्याणांयामोक्षनित्यत्वप्रसिद्धिःसापिव्यर्थास्यात् ११८ नान्यःपंथाविद्यतेऽयनायेतिश्रुतिर्मोक्षस्यज्ञानैकलभ्यत्वंवदतितथाब्र ह्मवेदब्रह्मैवभवतीतिश्रुतिः एतयोर्विरोधादपिमोक्षस्यानित्यत्वप्रयोजकंकर्मजत्वंनमंतव्यमित्याह नान्यइति ११९ मोक्षस्यज्ञानैकलभ्यतायामुपपत्तिमाह मोक्षोब्रह्मैवेतित्रिभिः । अविद्यारूपाव रणविमुक्तंब्रह्मैवमोक्षइत्युच्यते ज्ञातेद्वैतंनविद्यतेइत्यात्मप्रबोधश्रुतेः साचाविद्यामायाऽज्ञानादिनामभिःप्रसिद्धेत्यर्थः १२० अज्ञानस्यज्ञानैकनाश्यत्वमज्ञाननाशकज्ञानस्याज्ञानसमानविषयकत्वंच प्रसिद्धंरजतभयोजकशुक्त्यज्ञानादावित्याह अज्ञानमिति । अन्यथाकर्मरूपैरुपायैर्नविलीयते यस्ययद्विषयकमज्ञानंतद्विषयकज्ञानादेवचतल्लयइतिचप्रसिद्धम् १२१ ब्रह्मात्मेति । एतत्संसारभयो जकमज्ञानंब्रह्मात्मैक्यविषयकमेवातोब्रह्मात्मैक्यज्ञानादेवतस्यलयोयुक्तः तन्नाशेतत्प्रयुक्तस्यदुःखस्यलयस्तुस्वतएवभवतीत्यर्थः १२२

दुःखमज्ञानजंनाभ्युपगच्छंतितेषांमतेमोक्षार्थश्रमोवृथेत्याह दुःखमिति । यदिवैशेषिकादिमतानुरोधेनसाधनैःसमवायिकारणादिभिःसहितंदुःखंवस्तुभूतंसत्यंस्यात्तदातद्दुःखंसदासर्वदाभवेदात्म वदित्यर्थः ननुसत्यस्यापिघटादिवदनित्यत्वमभ्यतेइतिचेत्सुतरांमोक्षार्थश्रमवैयर्थ्यंस्यात् अनित्यभावनाशस्यचिरकृसूलनिहितधान्यवदवश्यंभावादित्याह अनित्यंचेदिति १२३ किंचभवतां मतेदुःखोच्छेदोनयुक्तस्तत्समवायिकारणस्यात्मनोनित्यत्वेनपुनस्तत्प्रसंगादित्याह नित्यतेति । यदिदुःखस्यकारणेनित्यतातदातेमतेतेनकारणेनपुनर्दुःखंकुतोनस्यात् हेतौसतिकार्येनस्यादि तिहिनयुक्तमित्यर्थः १२४ एतदेवस्फुटयति दुःखस्येति । विश्वंद्वैतंदुःखस्यकारणंतस्यसत्यत्वेदुःखनिवृत्तिरीश्वरेणापिकर्तुंदुःशकेत्यर्थः १२५ यदिसत्यनिवर्त्तनपरईश्वरःस्यात्तदासंहृतस्य जगतःपुनरुत्पत्तिंवारयेन्नचतथादृश्यतेइत्याह नहीति । भवन्मतेसत्यत्वेनप्रसिद्धस्यजगतःसंहारंकृत्वातस्यपुनरुत्पत्तेःप्रतिरोधंप्रतिबन्धंकुर्यात् यदिसत्यस्यबन्धस्यनिवर्त्तनपरःस्यादीश्वरइत्यर्थः १२६ फलितमाह ततइति । तस्माद्दुःखस्याज्ञानप्रयुक्तत्वंतन्निवृत्त्यानिवृत्तिरित्यौपनिषदंमतमेवयुक्तमित्यर्थः १२७ एतद्दृष्टान्तेनस्फुटयति रज्ज्वज्ञानेतिद्वाभ्यां । निगदव्याख्यातंद्वयम्

दुःखंससाधनंचेत्स्याद्वस्तुभूतंसदाहितत् ॥ अनित्यंचेद्वृथैवस्याच्छ्रमोमोक्षेत्रवादिनः १२३ नित्यताकारणेचेत्स्यात्पुनस्तेनकुतोभवेत् ॥ दुःखांतरंकुतोहेतौ सतिकार्यंभवेन्नहि २४ दुःखस्यकारणंविश्वंविश्वंचेद्वास्तवंभवेत् ॥ ईश्वरेणापिनाशोस्यकर्तुंशक्योनकर्हिचित् २५ नहिविश्वस्यसंहारंकुर्वन्नेषमहेश्वरः ॥ पुनरुत्पत्ति रोधंहिकर्तुंशक्नोतिकर्हिचित् २६ ततोऽज्ञानसमुत्थानंपुनरज्ञानसंक्षये ॥ दुःखमुत्पद्यतेनैवेत्येतदेवात्रशोभनम् २७ रज्ज्वज्ञानसमुत्थानंसर्वदुःखंयथामहत् ॥ र ज्ज्वज्ञानेविलीनेस्मिन्पुनर्नैवप्रजायते २८ आत्माज्ञानसमुत्थानमेवंदुःखमिदंमहत् ॥ आत्माज्ञानेविलीनेस्मिन्पुनर्नैवप्रजायते २९ आत्मनोब्रह्मणस्तस्यज्ञानमा चार्यवाक्यतः ॥ भवेदेवंयतःप्राहश्रुतिःसर्वार्थदर्शिनी ३० तज्ज्ञानार्थंततोगच्छेच्छ्रोत्रियंब्रह्मवेदिनम् ॥ सगुरुंजातवैराग्यःसमिदादिकरःपुमान् ३१ विधिवच्चोप सन्नायस्वशिष्यायमहात्मने ॥ गुरुस्तस्मैवदेदात्मविद्यांदुःखौघनाशिनीम् ३२ ययाक्षरंपरंब्रह्मपुमानेषोधिगच्छति ॥ शांतिदांत्यादिसंपन्नोब्रह्मचर्यादिसाधनः ३३ एतत्सत्यंपरंब्रह्मयद्वेदगुरुवाक्यतः ॥ विरक्तोत्रमुमुक्षुःसन्नन्यत्सत्याभमीरितम् ३४ सत्यादस्मात्सदैवैतद्विश्वमुत्पद्यतेतथा ॥ अस्मिंस्तिष्ठतिचैवांतेलीयते त्रैवसर्वथा ३५ ज्वलतःपावकाद्यद्वन्महतोविस्फुलिंगकाः ॥ उत्पद्यंतेत्रधूमाश्चसरूपाश्चविरूपकाः १३६

१२८ । १२९ अस्यब्रह्मात्मज्ञानस्यगुरूपदेशमात्रलभ्यत्वंसगुरुमेवाभिगच्छेदित्यादिश्रुत्याप्रतिपाद्यतइत्याह आत्मनइति । अज्ञरूपस्यात्मनोविज्ञानमाचार्यवाक्यादेवभवतियतःश्रुतिरेवंवक्ती त्यर्थः १३० एवंकथमित्याकांक्षायांश्रुतिमर्थतःपठति तज्ज्ञानार्थमिति । ततोमोक्षस्योपायांतरासाध्यत्वात्सोधिकारीसमित्प्रभृत्युपायनहस्तः १३१ एतादृशशिष्यायचात्मबोधनंगुरुणा वश्यंकर्तव्यमित्याह विधिवदिति । तस्मैशिष्यायगुरुस्तांविद्यांवदेत् तांकां ययाशांत्यादिमान्पुमान्परमक्षराख्यंब्रह्माधिगच्छेदितिद्वयोरर्थः १३२ । १३३ एवंप्रथममुंडकेपरापरविद्येसं क्षिप्यवर्णितेपरविद्याधिकारिण्वथपरविद्यांविस्तरेणाख्यातुंद्वितीयंमुंडकंप्रवृत्तंतस्यक्रमेणार्थमाह एतत्सत्यमित्यादिना । विरक्तःपुमान्मुमुक्षुःसन्यद्वेदजानातिगुरुवाक्यतएतत्परंब्रह्मैवपरंमुख्यं सत्यमन्यद्द्वैतजातंनुपरसत्तोपजीवित्वात्सत्याभासमुक्तमित्यर्थः १३४ तस्याद्वितीयत्वंस्फुटयितुंविश्वोपादानतामाह सत्यादिति । अस्माद्ब्रह्मणःसत्यत्वेनवर्णिताद्विश्वमुत्पद्यतेऽत्रैवतिष्ठतिली यतेचेत्यर्थः १३५ तत्रोत्पत्तौदृष्टांतमाह ज्वलतइति । यथाज्वलतोग्नेःसकाशाद्विस्फुलिंगाःकणाःसरूपाज्योतिष्ट्वेनसमानरूपाधूमाश्चमलिनत्वेनविरूपाउत्पद्यंतेइत्यर्थः १३६

एवंचेतनंसरूपमचेतनंविरूपंचजगदस्मादात्मनोजायतेइत्याह चेतनाचेतनमिति १३७ तत्स्वरूपावेदकंद्वितीयमंत्रंपठति । दिव्यइति ३८ अस्यार्थंत्रिभिर्वर्णयंस्तत्रचतुर्थपादार्थमाह कारणमिति । यत्पतउपाधेःपरंब्रह्मकारणमितिव्यवन्हियतेवैदिकैःसामायाकार्यापेक्षयाचिरस्थायित्वादक्षरमित्युक्ता तस्याःकार्यरूपजगदपेक्षयापरत्वंचयुक्तं तस्मान्मायारूपादक्षरादपियःपरःस परमात्मेत्यर्थः ३९ दिव्यइति । स्वयंप्रकाशत्वेनलोकविलक्षणत्वाद्दिव्यइत्युक्तःसर्वगतत्वाच्चामूर्त्तइतिसर्वोपाधिषुबहिरंतःपरिपूर्णत्वात्तुपुरुषइत्युक्तइत्यर्थः १४० अजपदेनज-माभाववाचकेनतस्यस्थूलदेहराहित्यमप्राणइत्यादिपदद्वयेनसूक्ष्मदेहराहित्यंशुद्धत्ववाचकशुभ्रपदेनचमायाख्यकारणशरीरराहित्यमुक्तमितिदर्शयति अजइति । फलितमाह आनंदात्मेति । अद्वयत्वेनभासमानानंदरूपइत्यर्थः ४१ तस्यवास्तवींसदाखंडतांस्फुटीकर्तुंततःसर्वोत्पत्तिंप्रतिपादयंत्येतस्मादित्यादयोमंत्रास्तेपांक्रमेणार्थमाह एतस्मादितित्रयोदशभिः । प्राणमनसीदशेंद्रियाणिपंचभूतानिचोक्तादात्मनोजायंतेइत्यर्थः ४२ एवंसप्तदशावयवस्यहिरण्यगर्भस्यसृष्टिर्दर्शिताअथविराजस्तामाह अस्येति । अस्येश्वरस्यवैराजंरूपंतदेवंविधमाहुः एवंकथं अग्निर्द्युलोकस्तद्रूपंयस्यशिरश्चं

चेतनाचेतनंसर्वमेवमस्मात्परात्मनः ॥ उत्पद्यतेसर्वकालेजगदेतदनेकधा १३७ दिव्योह्यमूर्त्तःपुरुषःसबाह्याभ्यंतरोह्यजः ॥ अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः १३८ कारणंयत्परंब्रह्मगीयतेवेदवादिभिः ॥ अक्षरंकथितंमायापरंयज्जगतःसदा ॥ तस्मादपिपरःप्रोक्तःपरमात्मासनातनः १३९ दिव्यःस्वयंप्रकाशोयममूर्त्तःसर्वगःस्मृतः ॥ अंतर्बहिश्चसंपूर्णःपुरुषःपरिकीर्त्तितः १४० अजःस्थूलेनदेहेनरहितःपरमेश्वरः ॥ अप्राणोह्यमनाःप्रोक्तःसूक्ष्मदेहविवर्जितः ॥ शुभ्रोमायाविरहितआनंदात्मासदास्फुरन् १४१ एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापश्चपृथिवीविश्वधारिणी १४२ अस्यदेवस्ययद्रूपंवैराजंतदिदंविदुः ॥ अग्निर्मूर्द्धाचंद्रसूर्यौनेत्रेश्रोत्रेदिशस्तथा ॥ वेदाःसर्वेचवाक्प्रोक्तावायुःप्राणोमहात्मनः १४३ हृदयंसकलंविश्वंपादौभूमिस्तथैवच ॥ भूतांतरात्माकथितोविराडेषद्विजोत्तमैः १४४ तस्माद्वैराजतोरूपादग्निःकर्मकरोभवत् ॥ समिदादिद्रव्यजातंसूर्याद्यंचकलात्मकः १४५ सोमश्चभगवान्योयंप्राप्यतेकर्मभिःसदा ॥ सोमात्पर्जन्यएषोपिपर्जन्यादोषधीगणाः १४६ ओषधिभ्योत्रपुंसिस्याद्रेतोयोषितितद्गतम् ॥ गर्भरूपेणशतशःप्रादुर्भवतिताःप्रजाः ॥ भवंतिसकलोयाभिर्व्यवहारःप्रसिद्ध्यति १४७

द्रसूर्यौनेत्रेदिशःश्रोत्रेकर्णौयस्यवाग्रूपाःसर्वेवेदाःकथितावाह्योवायुश्चयस्यप्राणःसर्वंजगद्यस्यहृदयंपृथिवीतुपादरूपाकथिताएवएवंविधशरीरःसर्वेषांव्यष्टिभूतानामात्मभूतोविराट्कथितइतिद्वयोरर्थः ४३ । ४४ एतस्माल्लोकवृद्धिहेतूनांपंचाग्नीनामुत्पत्तिमाह तस्मादिति । उक्ताद्वैराजादग्निःप्रसिद्धोऽधिदेवरूपेणद्युलोकात्मकश्चजातः कीदृशः कर्मकरःआहवनीयादिरूपेणफलरूपेणचकर्मणांप्रवृत्तिहेतुः तथाश्रुतौसमित्पदोपलक्षितंसमित्प्रभृत्युपकरणद्रव्यवृंदंजातं कीदृशं सूर्याद्यमादित्यादिरूपं द्युलोकाद्यग्नीनामादित्यादिसमित्प्रभृत्युपकरणंपष्ठाध्यायेचतुश्चत्वारिंशदधिकैकादशशततमश्लोकमारभ्योक्तमनुसंधेयं कलात्मकइत्युत्तरान्वयि ४५ सोमश्चेति । सोमश्चंद्रश्चततोभवत् कीदृशः कलात्मकःअग्निहोत्राहुतिभिःकलारूपेणपरिणताभिरादित्यप्रसूताभिरुपचितशरीरः अतएवकर्मिभिरिष्टादिकारिभिःप्राप्यःतस्मात्सोमाद्घहुतात्पर्जन्याख्योद्वितीयोग्निर्भवति पर्जन्याच्चवृष्टिद्वारातृतीयाग्नेःपृथिवीरूपादोषधयोव्रीहिप्रभृतयोभवंति ओषधिभ्यश्चान्नरूपेणचतुर्थाग्निपुरुषंप्राप्ताभ्योरेतोभवति रेतश्चयोषितिपंचमाग्नौगतंसद्गर्भरूपेणप्रादुर्भवतियतःप्रजाःसकलव्यवहारकर्त्र्योजायंतइतिद्वयोरर्थः १४६ । १४७

यस्मादिति । निर्गुणात्परस्माद्यतःपुरुषाद्विराजउत्पत्तिस्तस्मादेवनिःश्वसितन्यायेनऋगादिवेदानामुत्पत्तिरित्यर्थः १४८ तथायज्ञोपकरणानितस्मात्परमात्मनोजातानीत्याह ऋतवइति । ऋतवोवसंताद्याःदक्षिणाभिरेकगवादिरूपाभिःसह तथानानाविधादीक्षाःकर्तृनियमविशेषरूपाः संवत्सरःकालः फलकामोधिकारीच सोमइति द्रव्यात्मकोलतावेिशेषरसरूपः फलंद्युलोकशरीरारंभकरूपश्चयःससोमः तथालोकैःकर्मफलैरादिपदग्राह्यैरातिवाहकादिभिःसहितःसूर्यःएतदृतवइत्यादिनोक्तंसर्वंपरमात्मनोजायतेयच्चपूर्वंप्रकीर्तितंवैराजशरीरादिकंतदपिजायतेइतिद्वयोरर्थः १४९ १५० चतुर्विधानीति । देवादीनीत्यतद्गुणसंविज्ञानोबहुव्रीहिः तथाचदेवावस्वादयःप्रथमंजातास्ततःसाध्यामनुष्याःपशवोवयांसीतिचतुर्विधानिभूतानिजातानि तथाप्राणाःपंचविधाः अपिशब्दात्व्रीह्यादयोन्नभेदाश्च तपःप्रसिद्धं श्रद्धाआस्तिक्यरूपा सत्यमित्यवश्यंभावित्वेनकर्मफलमुच्यते अपिशब्दाद्यथार्थभाषणंच ब्रह्मचर्यमुपस्थसंयमः विधिपदेनशास्त्रविहितंकर्मोच्यते एतैस्तपःप्रभृतिभिःसहप्राणास्ततोजाताइत्यर्थः १५१ । १५२ सप्तधात्रेति । एतच्चराचरंविश्वमत्राध्यात्मभागेलोकादिभेदैःप्रतिलोमक्रमेणसप्तधाविभक्तंमंत्रेकीर्तितंतत्सर्वंब्रह्मणोजातमितिसंबंधः तत्रसप्त

यस्मादेवविराड्जातःपुरुषान्निर्गुणादिह ॥ ऋगादयस्ततोवेदाह्यपरब्रह्मशब्दिताः १४८ ऋतवोदक्षिणाभिश्चसार्धंनानाविधाअपि ॥ दीक्षाःसंवत्सरस्तद्वद्यजमानोभिलाषवान् १४९ सोमोद्रव्यात्मकस्तद्वत्फलंचेहयईरितः ॥ जायतेसर्वमेवैतत्पुरुषात्परमात्मनः ॥ सूर्योलोकादिभिःसार्धंयच्चपूर्वंप्रकीर्तितम् १५० चतुर्विधानिभूतानिदेवादीनिसहस्रशः ॥ प्राणाःसर्वेपितपसाश्रद्धयाचसमन्विताः १५१ अवश्यंभाविनातद्वत्कर्मणोपिफलेनच ॥ सत्येनब्रह्मचर्येणविधिनाशास्त्रकर्मणा १५२ सप्तधाऽत्रविभक्तंयद्विश्वमेतच्चराचरम् ॥ लोकादिभेदतःसर्वंतदिदंब्रह्मणोभवत् १५३ समुद्रागिरयोनद्योयच्चात्रस्थिरजंगमम् ॥ भव्यंभूतंवर्ततेवातत्सर्वमभवत्ततः १५४ इदंविश्वंपुमानेवयएतदुदपादयत् ॥ तपःकर्मचवेदाश्चामृतंब्रह्मपरंचयत् १५५ एवंसर्वगतंसर्वरूपमात्मानमव्ययम् ॥ सर्वभूतहृदंभोजेवसंतंभेदवर्जितम् ॥ योवेदपुरुषःसस्यादविद्याग्रंथिवर्जितः १५६ स्वप्रकाशंसदास्वस्यसन्निधानमुपागतम् ॥ बुद्धिस्थितंमहत्प्राप्यमस्मिन्नेवकलेवरे १५७

प्राणाःशीर्षण्यानींद्रियाणिद्वेश्रोत्रे द्वेचक्षुषी द्वेघ्राणे एकावागिति अर्चिषस्तदीयवृत्तयः समिधस्तद्विषयाः होमाउपासनानि लोकागोलकानि एतेप्रत्येकंसप्तपदार्थाःप्रतिप्राणिभेदमुत्पन्नाइतिभाष्योक्तःश्रुत्यर्थोवधार्यः १५३ समुद्राइति । समुद्रादित्रयंयच्चओषधिपदोपलक्षितंस्थिरंस्थावरंरसपदोपलक्षितंचआहारपरिणाममयंशरीरंजंगममेतदुपलक्षितमन्यच्चजगत्कालत्रयवर्तिपरमात्मनउत्पन्नमित्यर्थः १५४ एवमध्यारोपितस्यजगतोऽपवादेनशुद्धतामात्मनोदर्शयति इदंविश्वमिति । एतद्विश्वंसपुरुषएवनततोन्यत् सकः यएतद्विश्वमुदपादयज्जनितवान् कीदृशंविश्वंतपःकर्मवेदाइत्येतत्त्रितयात्मकं तत्रतपउपासनाफलं कर्मयागादिफलं वेदास्तत्प्रकाशकाः । फलितमाह अमृतमिति । यत्परंब्रह्मामृतंकूटस्थमखंडंतदेवसर्वमित्यर्थः १५५ एवमिति । एवंवर्णितविषयासर्वगतत्वादिनावर्णितमात्मानंसर्वांतरमद्वयंचयोवेदजानातिसपुरुषोऽविद्याग्रंथिनाअहमज्ञइत्याकारेणविमुक्तःसर्वथिद्भवतीत्यर्थः १५६ उक्तविषयासकृदुपदेशेनयस्याक्षरज्ञानंनोत्पद्येततंप्रतिससाधनमक्षरबोधंजनयितुंप्रवृत्तस्यद्वितीयमुंडकद्वितीयखंडस्यार्थंवर्णयतिक्रमेण स्वप्रकाशमित्यादिना । स्वप्रकाशत्वेनसदाविर्भूतं अतिसन्निहितंबुद्धिगुहास्थितत्वात् महत्सर्वोत्कृष्टं अत्राधिकारिदेहएवप्राप्यं प्राणानामिंद्रियाणांचअरनाभिन्यायेनदेशानमधिगतं तथाह्यनुभूतंसर्वेषांकंपनप्राणनादिक्रियापारस्यसन्निधिमात्रेणनिमित्तंच एतद्वर्णितंब्रह्मैवज्ञेयमवश्यज्ञातव्यमितिद्वयोरर्थः १५७

१५८ तदेवपुनर्विशिनष्टि सदसदितित्रिभिः । माययास्थूलसूक्ष्मरूपतांप्राप्तमपिवस्तुतस्तदुभयवर्जितंसद्भिर्विवेकिभिर्वरणीयंसर्वसंघातेषुप्रविष्टमतिप्रशस्तंवस्तु १५९ दीप्यतइति । स्वरूपभूतयाभासादेर्दीप्यमानंदुर्लक्ष्येभ्योपिदुर्लक्ष्यंयदाश्रिताःसर्वेलोकाःसहलोकपैः १६० तदेतदिति । यत्त्वयापृष्टंकस्यविज्ञानात्सर्वंज्ञायतइतितद्ब्रह्मएतदेव तथैवप्राणेंद्रियादिरूपं तथाएतदेवसत्यपदोक्तंस्वर्गादिरूपंकर्मफलंतथामोक्षरूपमित्यर्थः १६१ ध्यानयोगेनचैतदेवलभ्यमित्याह धीरेणेति । धीरेणधैर्यशालिनाआत्मविषयकविवेकशालिनाकामादिरूपशत्रूणांपराभवकारिणाध्यानशूरेणैतद्वर्णितमेवात्मनोरूपंयदवासनंवासनाभिर्मुक्तंतुरीयमितियावत् वेद्धव्यंलक्ष्यतांनेयमित्यर्थः १६२ वेधनपरिकरमाह वेदांतोदरेति । वेदांतमहावाक्यान्युदरस्थितानियस्यसतथा तदुक्तं 'सकारंचहकारंचलोपयित्वाप्रयोजयेत् । संधिंचपूर्वरूपाख्यंततोसौप्रणवोभवेत्' इति एतादृशःप्रणवोधनुरुक्तः शोधितोध्यातुरात्मैवशरउदीरितः महावाक्यार्थचिंतनंयत्तदेवाकर्षणस्थानीयंशुद्धंब्रह्मानुलक्ष्यं यत्रायंप्रत्यगात्माशरवत्तन्मयोभवेदितिद्वयोरर्थः १६३ । १६४ यस्मिन्द्यौरित्यादेरर्थमाह यस्मिन्लोकत्रयीत्येकादशभिः । यस्मिन्त्रिलोकीपंचभूतानिप्राणादीनिभौतिकानिचएतत्सर्वंप्रतिष्ठितंतथाएतदुपलक्षितोवेदश्चयत्रप्रतिष्ठितोयःशब्दब्रह्मेतिकीर्त्यतेतद्विश्वाधिष्ठानंब्रह्मैवविज्ञेयं अन्यास्तदितरप्रतिपादिकावाचश्चहेयाःश्रमहेतुत्वादितिद्वयोरर्थः १६५ । १६६ फलितमाह विनोपनिषदइति । उपनिषदोविहायान्यावाचोनाभ्यसेन्मुमुक्षुः इतरासांद्वैतप्रतिपादकत्वेनामृतत्वरूपस्यमोक्षस्यानुपयोगित्वादित्यर्थः १६७ तत्रान्यासांवाचांचतुर्विधत्वमाह किंत्विति । किंतुताःकिमर्थाइतिचेत् धर्मार्थकामदास्तिस्रः चतुर्थ्यस्तुव्यर्थरूपादुःखदाइत्यर्थः १६८ तत्रदुःखप्रदानांहेयतायाःप्रेक्षावतःप्रतिसिद्धत्वात्सानात्रविधीयतेकिंत्वर्थदत्वादिनाभिमतानांदुःखदत्वंश्रुत्यावोध्यतइत्याशयंदर्शयति दुःखप्रदाइतिपंचभिः । धीधनाःकुशलादुःखप्रदान्शब्दान्स्वयंनवदंतितद्वक्तृन्वारयंतिचेतिप्रसिद्धंततःशिष्टाचारादेवतादुःखप्रदावाचोनवक्तव्याइतिस्वयमेवश्रुत्युपदेशंविनापिस्थितंसिद्धं । कीदृश्यस्तावाचः मृतान्वीक्षणकादयःनिंदितंयन्मृतानामन्वीक्षणंवृत्तांतप्रतिपादनंतत्प्रभृतिरूपाः आदिपदेनकाकदंतकथादिग्रहः यथाहुः 'काकस्यकतिवादंतामेषस्याण्डंकियत्पलं । गर्दभेकतिरोमाणीत्येषामूर्खविचारणा' इति १६९

प्राणेंद्रियाणांचेशानंहेतुभूतंसनातनम् ॥ एतदेवसदाज्ञेयंबुद्धैःपरमुदाहृतम् १५८ सदसद्रूपतांप्राप्तंसदसद्भेदवर्जितम् ॥ वरणीयंसदासद्भिर्वरिष्ठंसर्वदेहिनाम् १५९ दीप्यतेयत्स्वतोभासायदणुभ्योप्यणुस्स्मृतम् ॥ यस्मिन्लोकाइमेविश्वेनिहिताःसंतिसर्वदा १६० तदेतदक्षरंब्रह्मतत्प्राणेंद्रियरूपभृत् ॥ स्वर्गादिकंचमोक्षश्चतदेवोक्तंमनीषिभिः १६१ धीरेणात्मनिविज्ञानकारिणाशिक्षितेनच ॥ कामक्रोधादिशत्रूणांसर्वदाभयकारिणा ॥ वेद्धव्यमेतदेवात्ररूपंसर्वमवासनम् १६२ वेदांतोदरसंस्थानःप्रणवोधनुरीरितः ॥ आत्मज्ञानेनसहितःशरआत्माचतस्यसः १६३ ब्रह्मात्मत्वेनयद्ध्यानंधनुराकर्षणंहियत् ॥ लक्ष्यंब्रह्मात्मरूपंचयत्रात्मायंशरोव्रजेत् १६४ यस्मिन्लोकत्रयीसर्वासहभूतैश्चपंचभिः ॥ प्राणाद्यैर्भौतिकैस्तद्वच्छब्दब्रह्मेतिकीर्त्यते १६५ एकंतदेवविज्ञेयंनतुतस्मात्परंहियत् ॥ वाचश्चान्याविमोक्तव्यावाक्तालुगलशोषदाः १६६ विनोपनिषदोनैववदेद्वाशृणुयाच्चवा ॥ नानाविधाहियावाचस्ताःस्युर्नैवात्रकर्हिचित् ॥ अमृतत्वस्यमोक्षस्यप्रात्पयेपुरुषस्यहि १६७ किंतुधर्मप्रदाःकाश्चित्काश्चिदर्थप्रदाअपि ॥ कामप्रदाश्चकाश्चित्तुकाश्चिद्दुःखप्रदाःसदा १६८ दुःखप्रदाःसदावाचोनवदंतीहधीधनाः ॥ वारयंतिचतद्वक्तॄन्मृतान्वीक्षणकादयः ॥ ततस्ताःस्वयमेवात्रनवक्तव्याइतिस्थितम् १६९

प्रकृतेतुकामदादीनांदुःखदत्वंबोध्यतइतिदर्शयंस्तत्रार्थकामौधनार्जनविषयभोगरूपौद्विविधौशास्त्राविरुद्धौतद्विरुद्धौच तत्राद्ययोर्वियोगादौदुःखरूपतायाःप्रसिद्धत्वात्तत्परवाचामपिदुःखदत्वंबोध्यमित्याह कामदाइति १७० शास्त्रविरुद्धयोस्त्विहनिंदादिनापरत्रनरकेणचदुःखदत्वमविवादमित्याह अशास्त्रीयाविति । तास्तत्प्रतिपादिकावाचः ७१ एवमभ्युदयार्थस्यधर्मस्यापिविनश्वरफलकत्वेनदुःखदत्वात्तद्वाचांदुःखदत्वमित्याह धर्मोपीति । यत्यतः ७२ फलितमाह ततइति । धर्मादीनांदायिकावाचोदुःखकारिकाएवस्थिताविवेकतःसिद्धाधीमतामुमुक्षुणानवक्तव्याइत्युपदेशः ७३ किंत्वमृतत्वरूपमोक्षस्यसाधिकाएववाचोभ्यसनीयाः 'आसुप्तेरामृतेःकालंनयेद्वेदांतचिंतया' इत्युक्तेरित्याह अमृतत्वमिति ७४ आत्मशास्त्रस्यावश्याभ्यसनीयत्वेहेतुतयात्मज्ञानमात्रसाध्यत्वंमोक्षस्याह आनंदात्मेति । हियतःस्वयंप्रकाशानंदरूपआत्माअमृतत्वेमोक्षेनदर्थमितियावत् सेतुवत्स्थितः यथासेतुमार्गेणैवपारंलभ्यतेतथात्मविज्ञानेनामृतत्वंलभ्यतइत्यर्थः अत्रानंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चनेतिश्रुतिमर्थतःसंवादयति सुखमिति । यस्यात्मनःस्वरूपभूतंसुखंगृहीत्वाविज्ञायपरमेश्वरोनिर्भयोभवतीतिशेषः ७५ आत्मनःप्रत्यक्त्वेनैवज्ञानंप्रणवालंबेन

कामदाअपिवाचःस्युरर्थदायाश्वताअपि ॥ दुःखदाअर्थकामाभ्यांवियोगेसतिसर्वदा १७० अशास्त्रीयौयदास्यातामर्थकामौतदाहिताः ॥ दुःखदाएवकोनाम तावदेद्धीधनोजनः १७१ धर्मोपिचयदालोकेसंसारसुखदोभवेत् ॥ तदादुःखप्रदःस्यात्तत्सुखंयद्विनश्वरम् ७२ ततोधर्मार्थकामानांदायिन्योदुःखकारिकाः ॥ वाचएवंस्थितास्ताश्वनवक्तव्याहिधीमता १७३ अमृतत्वंततोमोक्षोयाभिरात्मावगम्यते ॥ ताएवसर्वदासद्भिर्वक्तव्यानापराःक्वचित् १७४ आनंदात्मास्वयंज्योतिःसेतुवत्संस्थितोहिसः ॥ अमृतत्वेसुखंयस्यगृहीत्वापरमेश्वरः १७५ वर्ततेहृदयाकाशेहृदयाकाशरूपभाक् ॥ यस्मिन्हिहृदयांभोजेनाड्यःशतसहस्रशः ॥ रथनाभावरायद्वत्तद्वदेवसमर्पिताः १७७ अंतश्वरतितत्रायंभूतेभूतेपरःपुमान् ॥ जायमानोयथाकाशोघटजन्मनिजायते १७७ अहंब्रह्मेतिचेज्ज्ञातुंनशक्योत्रमनीषिभिः ॥ केनचित्प्रतिबंधेनतदोमित्येवचिंतयेत् १७८ चिन्तयन्नेवमात्मानंपुरुषःपापवर्जितः ॥ उत्पन्नब्रह्मविज्ञानोह्यविद्यायाःपरंव्रजेत् १७९ एवंपूर्वेमहात्मानःस्वशिष्यान्प्रतिसर्वदा ॥ स्वस्तीतिचवदंतस्तेकथयंतिपुनःपुनः १८० सामान्येनविशेषाच्चयःसर्वंवेत्तिसर्वदा ॥ जगज्जन्मादिरूपश्चयस्यैषमहिमाभुवि ॥ दिव्येब्रह्मपुरेह्येषह्यात्माव्योम्निप्रतिष्ठितः १८१

ध्यानंवामुमुक्षोरावश्यकमितिविदधतःअराइत्यादेःपरस्तादित्यंतस्यमंत्रस्यार्थमाह वर्ततइतिपंचभिः । अयमात्मासर्वेषांहृदयाकाशेवर्तते कीदृशः हृदयेहृदयकमलेअंतर्यदाकाशंदहराख्यंतद्रूपः तदेवलक्षयति यस्मिन्निति । यस्मिन्हृदयकमलेनाभिस्थानीयेअरास्तिर्यक्काष्ठानितद्रूपाःशतसहस्रसंख्यानाड्योहितासंज्ञाःसमर्पितास्तत्रहृदयांभोजेअंतर्मध्यावच्छेदेनायंवर्णितःपरःपुमांश्चरति कीदृशः जायमानउपाधिजन्मनाजायमानत्वेनमन्यमानः घटजन्मनिघटाकाशवदितिद्वयोरर्थः ७६ । ७७ एवमुपदेशेनसाक्षात्काराभावेप्रणवेनाचिंतयेदित्याह अहमिति ७८ प्रणवालंबनध्यानदीपेनपापरूपांधकारापहारेसाक्षात्कारःसफलोभवत्येवेत्याह चिंतयन्निति । एवंप्रणवालंबनेन ७९ गुरोराशिषापुनःपुनरुपदेशेनचप्रतिबंधापायइतिदर्शयति एवमिति । एवमुक्तविधयामहात्मानोदयालवःशिष्यान्प्रतिपुनःपुनरुपदिशंति किंकुर्वंतः हेशिष्यायुष्मभ्यंस्वस्तितत्वज्ञानप्राप्तौविघ्नाभावोस्त्वित्येवंवदंत १८० आत्मनःसंक्षेपेणतत्वंप्रदर्शयतोयःसर्वज्ञइत्यादिमंत्रयोरर्थमाह सामान्येनेतिपद्भिः । यःपरमात्मासामान्यरूपेणविशेषरूपेणचसर्वंवेत्तियस्यचमहिमाविभूतिर्जगत्सृष्ट्यादिरूपएषोऽपरोक्षोभुविभूरादिलोकेषुप्रसिद्धएषपरमात्माब्रह्मपुरेह्यदिव्यंव्योमतत्रप्रतिष्ठितइति १८१

ब्रह्मपुरत्वादिकंस्फुटयति ब्रह्मणेति । यथाजायमानएवघटआकाशेनपूर्यतेतथाशरीरंब्रह्मणापूर्यमाणत्वाद्ब्रह्मपुरमित्युच्यते तद्गतंदिव्यंव्योमतुदहराकाशाख्यंस्वयंप्रकाशात्मरूपंपरंब्रह्मैव तत्र स्वरूपेआत्मनःस्थितिस्तुसभूमाकुत्रप्रतिष्ठितःस्वेमहिम्नीतिवाक्यवदुपचारादेवोच्यतइत्यर्थः १८२ अस्याज्ञातस्यज्ञातस्यचस्वभावमाह मनइति । सआत्माअज्ञातोयदातदामनःप्रधानःसन् प्राणानांदेहस्येंद्रियाणांचनेतातत्तद्व्यापारेषुप्रवर्तकोऽन्नपदोक्तेतस्मिन्जगद्बीजभूतेअव्याकृतेमूलाज्ञानेतादात्म्याध्यासेनतिष्ठति यावन्मोक्षोमोक्षहेतुर्ब्रह्मात्मज्ञानंनभवतीत्यर्थः १८३ यदाचएतस्य स्यरहस्यंब्रह्मचर्यादिसंपन्नाजानंतिनदाएनमानंदरूपंपश्यंतीत्याह एवमिति १८४ अमृतपददर्शितंसर्वंसंसारधर्मराहित्यंतस्यवर्णयति सर्वैरिति १८५ आत्मज्ञानस्यफलमभि नयंतंमंत्रंपठति भिद्यतइति । तस्मिन्परमात्मनिपरावरेपरंकारणमवरंकार्यंतदुभयरूपेसर्वात्मकइतियावत् १८६ तत्रहृदयग्रंथ्यादिपदानामर्थमाह कामाद्यइतित्रिभिः । कामानामाद्यः कारणभूतोयोन्योन्याध्यासोहृदयेबुद्धावभिव्यक्तःसहृदयग्रंथिरुच्यतेइत्यर्थः संशयस्तुसोत्रनिश्चयंतयाविवक्षितोयःस्वात्मनस्त्वंपदार्थस्यसंसारित्वमल्पज्ञत्वादिकंपरस्यतत्पदार्थस्यईश्वरत्वंसार्वं

ब्रह्मणापूर्यतेयस्माच्छरीरंब्रह्मणःपुरम् ॥ दिव्यंव्योमस्वयंज्योतिरात्मैवपरिकीर्तितः ॥ स्वेमहिम्निस्थितस्तत्रस्थितइत्यभिधीयते १८२ मनःप्रधानःप्राणानां नेतादेहेंद्रियैःसह ॥ अन्नेह्यव्याकृतेतस्मिंस्तिष्ठत्यामोक्षमेवसः १८३ एवंविज्ञानतोधीराब्रह्मचर्यादिसाधनाः ॥ आनंदात्मानमात्मस्थंपरिपश्यंतिकेचन १९४ सर्वैःसंसारसंबद्धैर्धर्मैर्नानाविधैरपि ॥ विमुक्तंनिर्द्वंद्वंयत्तज्ज्ञातृज्ञेयादिवर्जितम् १८५ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे १८६ कामाद्योहृदयग्रंथिःसर्वदुःखौघकारकः ॥ संशयःस्वात्मनोद्वष्टासंसारित्वंपरस्यच ॥ ईश्वरत्वंद्विधानृणांतयोस्तादात्म्यसंशयः १८७ अनारब्धफलान्यत्रकर्माण्युक्तानिभूरिशः ॥ पुण्यपापात्मकान्येषयैरन्यंदेहमाव्रजेत् १८८ श्रवणादेःफलंप्रोक्तंदर्शनंवेदवादिभिः ॥ यस्मिन्सतिभवेन्नेयमविद्यादुःखकारिणी १८९ हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलम् ॥ तच्छुभ्रंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः १९० हिरण्मयःपरःकोशआनंदमयईरितः ॥ विरजंरजसाहीनंमायया परिवर्जितम् ॥ मायाकार्येणरहितंनिष्कलंचप्रकीर्तितम् १९१ ज्योतिषांज्योतिरुक्तंस्यात्स्वप्रकाशंसुखंपरम् ॥ शुभ्रमानंदरूपंतद्यज्जानंतिमहाधियः १९२

इत्यादिरूपंचदृज्ञातयोस्तत्त्वंपदार्थयोस्तादात्म्यसंशयऐक्यगोचरोऽसंभावनारूपःसचद्विधापदार्थगतयोर्विरुद्धधर्मयोर्निमित्तयोर्भेदादित्यर्थः १८७ कर्माणित्वत्रसंचितागामिरूपाणितथाविवक्षितानिप्रारब्धफलानांभोगेकनाश्यत्वादित्याह अनारब्धेति । यैःसंचितादिरूपैः १८८ आत्मदर्शनस्यस्वरूपमवधारयति श्रवणादेरिति । यथादृष्टार्थावघातफलस्यतुषविमोकस्यतदेवस्वरूपंयसंडुलनिष्पत्तिरेवंश्रवणादीनांदृष्टार्थानांफलभूतस्यदर्शनस्यतदेवरूपंयदविद्याक्षपणमित्यर्थः १८९ दर्शनीयमात्मानमेवसंक्षेपेणप्रतिपादयन्तंमंत्रंपठति हिरण्मयेइति १९० अस्यार्थमाह हिरण्मयइतिद्वाभ्यां । हिरण्मयःसत्वप्रचुरत्वेनप्रकाशमयःपरःपंचसुचरमःकोशआनंदमयाख्यस्तैत्तिरीयकव्याख्यानेदशमेवर्णितस्तस्मिन्पुच्छभूतंब्रह्मतिष्ठति कीदृशं मायारूपेणरजसाआवरकेणहीनत्वाद्याजतत्वाद्विरजमित्युक्तं मायाकार्येणचकालाद्यपरिच्छेदहेतुनारहितत्वान्निष्कलमित्युक्तमित्यर्थः १९१ ज्योतिषामिति । तत्परंसुखंस्वप्रकाशत्वाज्ज्योतिषांज्योतिरित्युक्तं अद्वयत्वेनानंदरूपत्वाच्छुभ्रमित्युक्तमतिशुद्धत्वादित्यर्थः १९२

आत्मनःस्वप्रकाशत्वंविशदयतोनतत्रेत्यादेर्मंत्रस्यार्थमाह स्वप्रकाशत्वमिति त्रिभिः । अस्यात्मनःस्वप्रकाशत्वमेवंवर्णयंति विद्वांसःएवंकथम् यत्तत्त्वंसूर्यादिभिर्बाह्यैस्तैजसैर्मनःप्रभृतिभिराभ्य न्तरैश्चोपकृतंसत्प्रभायादनस्फुरेत् किंतुस्वतएवस्फुरेत् किंचयद्भातंभासमानमनुसृत्यसर्वंजगद्भातितत्स्वप्रकाशमित्युक्तमितितृतीयेनाभिसंबंधः १९३ अत्रानुभानव्यपदेशोभवतिताततंगच्छंतमनुग च्छतीत्यत्रानुगमनमिवगमनाज्जगतोभानंतद्भानात्पृथगितिशंकामग्निलोहदृष्टांतेनश्रुतिचतुर्थपादसूचितेनपरिहरति भासेति । तत्श्रुत्युक्तमनुभानमेतस्यएतज्जगन्निर्गुंस्वप्रभस्यस्वप्रकाशात्मनिरू पितंचअतःअनेनप्रकारेणस्यात् अतःकुतः तप्तंलोहमग्निनायथाविभातंस्फुरेन्नस्वतस्तथायस्यभासाविभातंजगत्स्फुरेदिति १९४ तत्स्वप्रकाशमिति । स्पष्टम् १९५ वर्णितज्योतिषःसर्वा त्मतांप्रकटयतोद्वितीयमुंडकचरममंत्रस्यार्थमाह दिक्ष्विति । तत्स्वप्रकाशंज्योतिर्ब्रह्माद्वितीयंभवतियतःसर्वासुदिक्षुव्याप्तंतथासदिक्विश्वंदिक्सहितविश्वरूपंतथाकालत्रयोपाधिरूपंकालरूपंचसदस तस्थूलसूक्ष्मरूपंताभ्यांपरंयत्कारणंतद्रूपंसर्वात्मकमितियावत् १९६ अथमहावाक्यार्थबोधसाधनोपदेशप्रधानस्यतृतीयमुण्डकस्यार्थंक्रमेणवर्णयंस्तत्रपदार्थशोधनपरस्यप्रथममंत्रस्यार्थमवतारयति एवंभूतमिति । एवंभूतंवाक्यार्थरूपम् एतस्मैशिष्याय १९७ उभाविति । तत्रकठशाखायामश्वत्थतयावर्णितेशरीररूपेवृक्षेउभौसुपर्णौपक्षिणौवर्त्तेते कीदृशौ सयुजौसर्वदासहयोगिनौ सखा

स्वप्रकाशत्वमस्यैवंप्रवदंतिमनीषिणः ॥ सूर्यादिभिर्नयद्बाह्यान्मनआद्यैश्चतैजसैः ॥ यद्भानमनुभात्येतज्जगत्सर्वंजडाजडम् १९३ भासायस्याविभातंसत्स्फुरेल्लो हमिवाग्निना ॥ अतोनुमानमेतस्यभवेत्तत्स्वप्रभस्यहि १९४ तत्स्वप्रकाशमित्युक्तमानंदात्मस्वरूपधृक् ॥ सूर्यादिज्योतिषांज्योतिर्मनआदेश्चसर्वदा १९५ दिक्षुपर्यासुतज्ज्योतिर्ब्रह्मविश्वंसदिक्तथा ॥ कालत्रयात्मकंकालःसदसत्तत्परंचयत् १९६ एवंभूतंनचेद्ब्रह्मजानातिश्रुतिवाक्यतः ॥ तदातत्त्वंपदार्थौद्वावेतस्मैतद्गु रुर्वदेत् १९७ उभौसुपर्णौसयुजौसखायौवृक्षशब्दिते ॥ शरीरेतत्रवर्त्तेतेवपुस्तादात्म्यमागतौ १९८ एकःकर्मफलंस्वादुभजन्जीवाभिधोहिसः ॥ अन्यःप्रकाश यत्येवनाकलंकर्मणःफलम् ॥ तत्पदार्थःसईशाख्यस्त्वंपदार्थःपुरेरितः १९९ एकस्मिन्नेववृक्षेस्मिन्कर्तृत्वादियुतोहियः ॥ अनीश्वरत्वमापन्नःशोकंगच्छतिसर्वदा २०० अनीश्वरत्वादपरमात्मानंतत्पदाभिधम् ॥ आनंदवारिधिंपश्येत्परप्रेमास्पदंपरम् २०१ यदातदासमाप्नोतिमहिमानममुष्यसः ॥ भेदशून्योमुनाभूत्वास र्वदुःखविवर्जितः २०२ त्वंपदार्थोयदाजीवःस्वप्रभंतत्पदात्मकम् ॥ तादात्म्येनात्मनःपश्येत्तदाविद्वानयंव्रजेत् ॥ नामरूपविनिर्मुक्तंनामरूपविवर्जितः २०३

यौचिन्मयत्वेनसमानरूपौ तथाशरीररूपवृक्षेणतथासंपृक्तौयथापृथक्नलक्ष्येतेइत्याह वपुस्तादात्म्यमागताविति १९८ एकइति । तयोर्मध्येएकःकर्मफलरूपंवृक्षफलंस्वादुयथास्यात्तथाभज न्भुंजानोजीवसंज्ञोभवत द्वितीयस्तुसर्वंकर्मफलंप्रकाशयत्येवनभुंक्ते सद्वितीयःप्रकाशकत्वेनसर्वव्यापकोऽद्वयस्वभावस्तत्पदार्थउक्तः यस्तुपुरेरितोभोक्तृत्वेनसूचितप्रत्यक्सत्वंपदार्थइत्यर्थः १९९ तत्रत्वंपदार्थस्यपक्षिणएतावदेवदुःखनिदानंयत्सख्युःस्वभावानालोचनमितिदर्शयतःसमानइत्यादिर्मंत्रस्यार्थमाह एकस्मिन्निति । अस्मिन्देहरूपेवृक्षेवासस्थानतयाईश्वरसाधारणेवर्त मानस्त्वंपदार्थोहियतःकर्तृत्वभोक्तृत्वादिशालितयाअनीश्वरत्वमनीशापदोक्तंदैन्यंप्राप्तस्ततःशोकंगच्छतीत्यर्थः २०० अनीश्वरत्वादिति । सचयदातत्पदार्थरूपंसखायंकीदृशमनीश्वरत्वादपरंयतोयम नीश्वरोजातस्तावन्मात्रेणभिन्नमानंदरूपतयाप्रेमास्पदंचात्मत्वेनपश्येत्तदातदीयंमहिमानमद्वयत्वलक्षणंप्राप्नुयादितिद्वयोरर्थः २०१ । २०२ एतदेवस्फुटयतोयदेत्यादेस्तृतीयमंत्रस्यार्थंवर्णयति त्वंपदार्थइति । यदात्वंपदार्थरूपोजीवस्तत्पदार्थंस्वप्रभंतप्तकांचनवद्दीप्यमानात्मनएकत्वेनपश्येत्तदाविद्वान्सन्नात्मरूपरहितंतद्भावंव्रजेदित्यर्थः २०३

चतुर्थार्थमाह प्राणोपाधिरितिचतुर्भिः । अयंदेवःपरमात्माप्राणोपाधिकहिरण्यगर्भभावद्वारासर्वेषुभूतेषुव्यष्टिरूपेष्वनुगतःसन्विभाति कीदृशःईशानीशादिभेदपंचकविशिष्टरूपेणकल्पितःतं शोधितमात्मतयायदाजानातिश्रुतौनृपदोक्तःपुमान्तदाअतिवादीभवति । अस्यविदुषःअतिवादित्वंनिरतिशयात्मनिष्ठत्वंप्रतिद्वंद्व्यमाणरूपंबोध्यमितिद्वयोरर्थः । अत्रभाष्यकारैर्यद्यप्यतिवादीसन भवतिद्वितीयाभावादितियोजितंतथाप्येतैरेवाअतिवदतियःसत्येनातिवदतीतिच्छंदोगश्रुत्यनुसारात्नापुमानतिवादीभवतीतियोजनयापितस्यैवप्रमेयस्यसंग्रहाददविरोधः २०४ । २०५ तस्या द्वयत्वपर्यवसाय्यतिवादित्वंमंत्रोत्तरार्द्धानुसारिमकठयति बालवदिति । तस्यबालवद्याक्रीडासाआत्मन्येवयुवायथायुवत्यांरतिंगच्छेत्तथास्यरतिरप्यात्मन्येव तथायाज्ञिकोयज्ञकर्त्तातस्येवना नाविधाःक्रियाअप्यस्यविदुषआत्मन्येव एवंसर्वदात्मतत्त्वानुसंधानायमतिवादीब्रह्मविदांमध्येवरिष्ठःकथितइतिद्वयोरर्थः २०६ । २०७ सत्येनेत्यादेर्विद्यासाधनसंग्राहकस्यार्थमाह सत्य मिति । सत्यमनृतत्यागः तपःसमनस्केंद्रियाणामैकाग्र्यम् ब्रह्मचर्यमुपस्थसंयमःएतैस्त्रिभिःपरिष्कृतेनात्मज्ञानेनपदार्थशोधनरूपेणायंमहावाक्यार्थभूतआत्मालभ्यः . यस्यापरोक्ष्येक्रोधादि

प्राणोपाधिरयंदेवःसर्वभूतव्यवस्थितः ॥ ईशानीशादिभेदेनकल्पितोयोविभातिहि २०४ एतमात्मतयाजानन्नतिवादीपुमान्भवेत् ॥ अतिवादित्वमस्यैतदुक्तंवे दार्थवादिभिः २०५ बालवत्सर्वदाविद्वान्क्रीडत्यात्मनिनिर्द्वये ॥ युववद्रतिमागच्छेत्तस्मिन्नेवनिरंजने २०६ क्रियाचात्मनिसर्वास्यादस्ययाज्ञिकवत्सदा ॥ अतिवादीब्रह्मविदांवरिष्ठःपरिकीर्तितः २०७ सत्यंतपोब्रह्मचर्यमात्मज्ञानस्यकारणम् ॥ आत्मज्ञानेनलभ्योयंसर्वैरेवशरीरिभिः ॥ यंपश्यंतीहयतयःक्षीणदोषाः स्वचेतसि २०८ सत्यवाक्यंयतोहेतुर्ब्रह्मज्ञानस्यजायते ॥ ततःसत्यंसुखस्यस्यादैहिकस्येहकारणम् ॥ स्वर्गस्यापितथाब्रह्मलोकस्यापिनसंशयः २०९ सत्यं यद्ब्रह्मविज्ञानाज्जायतेबाधवर्जितम् ॥ बृहतोपिबृहत्तद्धिसूक्ष्मात्सूक्ष्मतमंतथा २१० स्वप्रकाशंचमनसाशक्यंचिंतयितुंनच ॥ दूराद्दूरतरंयस्मादंतिकादपि चांतिकम् २११ भातंचनविभात्येतदात्मरूपेणकर्हिचित् ॥ एकादशेन्द्रियगणोनप्रकाशयतीहयत् २१२ सर्वबुद्धिस्थितंसर्ववस्तुजातप्रकाशकम् ॥ उपा यैर्विविधैश्चापिनयद्भातिकदाचन ॥ एकंविहायविज्ञानंब्रह्मणःस्वात्मरूपतः २१३ यत्रप्राणःस्थितोनित्यंसर्वेंद्रियविधारकः ॥ चेतसासहितोनैषसुगमो देहधारिणाम् २१४

दोषपरिहारेणसंन्यासोपिप्रयोजकइत्यर्थः २०८ तेष्वपिसत्यस्यप्राधान्यंवदतःषष्ठस्यार्थमाह सत्येति । यतःसत्यवाक्यरूपस्यसत्यस्यब्रह्मज्ञानहेतुतयासर्वोत्कर्षःसिद्धस्ततःसत्यादैहिकादिसु खलाभोनचित्रमित्यर्थः २०९ बृहच्चेत्यादिमंत्रत्रयेणात्मनोदुर्ज्ञेयताप्रतिपाद्यतेइतिदर्शयंस्तदर्थमाह सत्यंयदितिपङ्क्तिः । यत्सत्यरूपंब्रह्मविज्ञानान्महावाक्यार्थगोचराज्जायतेप्रादुर्भवतितद्ब्रह्मबृह तआकाशादेरपिबृहत्तदाधारत्वात् सूक्ष्मादण्वादेरपिसूक्ष्मंतदांतरत्वात् २१० स्वप्रकाशमिति । तथास्वप्रकाशत्वेनलोकविलक्षणत्वाद्दिव्यंमनसाचिन्तयितुंविषयीकर्तुमशक्यंच पराङ्मुखान। दूराद्दूरं समाहितानामतिसान्निहितम् २११ भातंचेति । चिद्रूपेणसदाभातंभासमानमपिप्रत्यग्रूपेणलोकेनभातिचक्षुरादीन्द्रियाणामगोचरत्वादित्यर्थः २१२ सर्वेति । सर्वेषांबुद्धिगुहासुसन्निहितं सर्वभासकंचतद्विदुषःप्रतीतिशेषः यत्तत्त्वंब्रह्मणस्तत्पदार्थस्यस्वात्मतादात्म्येनयज्ज्ञानंश्रुतिगतज्ञानप्रसादशब्दवाच्यमेतद्विहायेतरैरुपायैर्नभातिनाविर्भवतीत्यर्थः २१३ यत्रेति । सर्वेन्द्रियाणामध्यक्षः प्राणःसहचेतसायत्रसन्निधिमात्रेणप्रेरकेअधीनोवर्ततेसआत्मादेहिनांसुगमोनभवतीत्यर्थः २१४

एक एवतद्दर्शनोपायइत्याह शास्त्रेति । दोषशून्यतःरागादिदोषशून्येनशास्त्रंमहावाक्यंतदर्थविज्ञानजसंस्कारवताचचेतसामननादिसंपन्नःपुमानेतदवलोकयेत्तदीयचेतसितत्प्रादुर्भवतीतियावत् २१५ यंयमित्यादेस्तृतीयखंडांत्यमंत्रस्यार्थमाह शुद्धचेताइतिचतुर्भिः । यःशुद्धचेताःपुमानात्मानमवलोकयेत्सईशभावाविर्भावेजेशवत्सर्वविश्वसृष्ट्यादौशक्तोभवेदित्यर्थः २१६ कर्मणामिति । यदायंविद्वान्सकलकर्मणांफलप्रदत्वंमाप्तस्तदाआशिषांकामितपदार्थानांदाताभवतीतिकिमुवाच्यं यतोस्यविदुषआज्ञयैवेतेसकलजनसंबंधिनोभोगावर्ततेतथाप्राणेंद्रियादयःसर्वेप्यस्याज्ञयावर्ततेइत्यर्थः २१७ शापेति । एषब्रह्मवित्शापादौक्षमोभवति अस्यविदुषःअवनात्सेवनान्मानवाःपुण्यशालिनःसंतःसुखंयांति अवज्ञयाचपापिनःसंतोदुःखमित्यर्थः २१८ फलितमाह भूतिकामइति । भूतिमैश्वर्यमिच्छन् एनंब्रह्मविदम् २१९ तृतीयमुंडकद्वितीयखंडायस्पसवेदेत्यादेर्मंत्रस्यनिष्कामविद्वदाराधकानांप्रशंसापरस्यार्थमाह यएतमितिद्वाभ्यां । येविवेकिनएतंब्रह्मविदं निष्कामाःसंतोभजंतितेब्रह्मैवभवंति २२० तत्रोपपत्तिमाह यस्मादिति । यस्मादयंब्रह्मविदत्रदेहेपिस्थितःपरंब्रह्मसुखरूपंवेदसाक्षादवगच्छतितंउपास्तेचतन्निष्ठतयावतिष्ठतेचततोहेतोस्तेब्रह्मविद्भक्ता

शास्त्रसंस्कारसहितचेतसादोषशून्यतः ॥ मननध्यानसंपन्नःकथंचिदवलोकयेत् २१५ शुद्धचेताःपुमानेषआत्मानमवलोकयेत् ॥ ईशवत्सकलंविश्वंकर्तुंहर्तुंप्रभुर्भवेत् २१६ कर्मणांफलदाताचकिमुतायमिहाशिषाम् ॥ वर्ततेआज्ञयास्यैतेभोगाःप्राणादयोपिच २१७ शापानुग्रहयोरेवंसमर्थोब्रह्मवित्सदा ॥ अस्यावनात्सुखंयांतिमानवाःपुण्यकारिणः ॥ अवज्ञयातथादुःखंप्राप्नुवंत्यपिपापिनः २१८ भूतिकामस्ततस्त्वेनमर्चयेत्सर्वदापुमान् ॥ नावज्ञांमनसाप्यस्यकुर्यात्स्वप्नेपिबुद्धिमान् २१९ यएतंब्रह्मविद्वांसंगतकामाउपासते ॥ तेगच्छंतिपरंब्रह्मसर्वदुःखविवर्जितम् २२० यस्मादयंपरंब्रह्मवेदब्राह्मणसत्तमः ॥ उपास्तेचात्रविधिवत्स्वेदासुखरूपकम् ॥ तज्ज्ञानात्तेपिविद्वांसःस्फुटंतेनसमाःसदा २२१ कामान्यःकामयेतासौकामैस्तैस्तत्रसर्वशः ॥ शरीरंपरिगृह्णातिभूरिदुःखप्रदंसदा ॥ कामस्ततोतिदुःखानांकारणंपरिकीर्तितः २२२ निष्कामानांकृतार्थानांभवेद्दुःखंनकिंचन ॥ ब्रह्मज्ञानवतांपुंसामिहवात्रपरत्रवा २३ अध्यापनादध्ययनान्मेधातोपिनकर्हिचित् ॥ आत्मायंलभ्यतेकिंचिद्गुरुवाक्याद्धिलभ्यते २२४ गुरुणानुगृहीतश्चेच्छिष्योयंब्रह्मरूपिणा ॥ ब्रह्माप्यनुग्रहंतस्यकुरुतेस्वात्मदर्शनात् २२५

स्तज्ज्ञानात्तस्यब्रह्मीभूतस्यविज्ञानादाराधनाद्विद्वांसःसंतस्तेनाराधितेनब्रह्मविदासमाभवंतीतिस्फुटंप्रकृतश्रुतावितिशेषः । तत्रनृवीजपदोक्तस्यगर्भप्रवेशस्याभावरूपातिक्रमोक्तेरितिभावः २२१ कामनिंदापूर्वकंनिष्कामस्यमुक्त्यवश्यंभावप्रतिपादकस्यद्वितीयस्यार्थमाह कामानितिद्वाभ्यां । यःकामान्विषयान्कामयतेरमणीयतयामन्यतेसनानादेहग्रहणेनदुःखसंततिंयात्यतःकामोदुःखनिदानमित्यर्थः २२२ निष्कामानामिति । निर्गताःकामायेभ्यस्तेतथातेषांतत्रहेतुःस्वात्मरूपेणलब्धकामत्वरूपंकृतार्थत्वंतत्रचब्रह्मज्ञानमिति एनेषांलोकद्वयवर्तिदुःखंनभवतिब्रह्मभावाप्तेरितिभावः २२३ आत्मलाभस्यप्रकृष्टसाधनमवधारयतोनायमित्यादेरर्थमाह अध्यापनादिति । अध्यापनंप्रवचनपदोक्तंपाठनं अध्ययनंश्रुतपदोक्तंपठनं मेधाधारणावतीधीः एतैरुपायैःसद्गुरुनिरपेक्षैर्नलभ्योयमात्मा २२४ गुरुणेति । एवंविधयाब्रह्मभूतोगुरुरेवंयंशिष्यमनुगृह्णातितंशिष्यंप्रतिस्वस्वरूपप्रादुर्भावेणब्रह्मपरमेश्वरोप्यनुगृह्णातीत्यर्थः २२५

तत्रधैर्यादीन्यपिसहकारीणीतिप्रतिपादयतोथामांतमंत्रस्यार्थमाह बलेतित्रिभिः । बलंकामादिशत्रुभिरनभिभाव्यतालक्षणंतद्रहितेनात्मालब्धुंनशक्यः बलस्वरूपमेवस्फुटयति मनइति । विवेकप्रवणानांमनःप्रभृतीनांयद्धैर्यमप्रकंप्यत्वंतद्बलमित्युच्यते येनधैर्येणयुक्तःपुमान्पश्येदात्मदर्शनक्षमोभवति यस्यधैर्यस्यनाशात्पुमान्लोकेपिनष्टइत्याख्यायते २६ प्रमादादिति । तथाप्रमादआश्रमरहितंपाखंडरूपंतपश्चएनयोर्ग्रहवोयंप्रतिप्रतिबंधकत्वंबोध्यं तत्रप्रमादोनामविपयसन्निधानेधैर्यहानमित्यर्थः २७ फलितमाह अप्रमादेति । भ्रंशरहितंधैर्यमाश्रमधर्मसहकृतंतपश्च एतद्द्वयंब्रह्मविद्योपकारकमित्यर्थः २८ संप्राप्येत्यादिमंत्रचतुष्टयेनजीवन्मुक्त्यादिविद्याफलव्यवस्थानिरूप्यतइतिदर्शयंस्तदर्थमाह आनंदात्मानमित्यष्टभिः । येपूर्वेमुनयःप्रत्यग्रूपमानंदलक्षणमात्मानंप्राप्यनिर्वृताआनंदमग्नाअभवंस्तेतेज्ञानसमकालंब्रह्मप्राप्ताः यद्ब्रह्मप्राप्यसंसारेनपुनःपतंतीत्यर्थः २९ अत्रेति । येषांयतीनांब्रह्मलोकेच्छादिरूपप्रतिबंधादिहजन्मनिब्रह्मसाक्षात्कारोनभवतितेषामपिब्रह्मलोकंगत्वातद्ब्रह्मविज्ञानंभवेदेवेत्यर्थः २३० तत्रापियादृशानांविद्ययाब्रह्मभावोयत्रचसमयेतदुभयंदर्शयति वेदान्तेति । वेदांतामहावाक्यानितदर्थनिर्णयशालिनःशुद्धांतःकर

बलहीनेनपुंसायमात्मालभ्योनकर्हिचित् ॥ मनःकर्मेंद्रियाणांतद्बलंधैर्याभिधंसदा ॥ येनपश्येत्पुमान्यस्यनाशान्नाशंव्रजेदयम् २२६ प्रमादादाश्रमैस्तद्वद्वर्जितात्तपसोपिच ॥ आत्मायंलभ्यतेनैवलभ्योयोगुरुवक्त्रतः ॥ कदाचिद्धैर्यविभ्रंशःप्रमादइतिगीयते २२७ अप्रमादयुताद्धैर्यात्तपसःस्वाश्रमात्ततः ॥ जायतेब्रह्मविज्ञानंतस्मादात्मात्रलभ्यते २८ आनन्दात्मानमात्मस्थमेनंसंप्राप्यनिर्वृताः ॥ मुनयोब्रह्मतज्जग्मुर्यतोनावर्ततेगतः २९ अत्रचेद्ब्रह्मविज्ञानंप्रतिबंधान्नजायते ॥ यतीनांपरहंसानांब्रह्मलोकेतुतद्भवेत् २३० वेदांतज्ञानसंपन्नायतयःशुद्धमानसाः ॥ ब्रह्मवद्ब्रह्मरणेयांतिब्रह्मसनातनम् ३१ ब्रह्मलोकेथवाप्यत्रयदाविद्वान्प्रमुच्यते ॥ प्राणाद्यानामरहिताःकलाःपंचदशास्ययाः ३२ स्वकारणंप्रयांत्येतादेवावन्ह्यादयोपिच ॥ आत्माविज्ञानरूपोयंबुद्ध्युपाधिःपरात्मनि ३३ एवंसर्वमिदंगच्छेदेकतांविदुषःसदा ॥ कार्यंसकारणंसोयमेकएवावशिष्यते ३४ यथानद्योत्रसर्वासुदिक्षुसंतिसहस्रशः ॥ समुद्रंप्राप्यजहतिनामरूपेनिजेसदा ॥ नामरूपेविहायैवंविद्वान्ब्रह्मणिचाव्रजेत् ३५ वामदेवादिवन्नामसर्वलोकवचःस्थितम् ॥ विलीनमपिमुक्तस्यलयशून्यमिवास्तितत् ३६ ब्रह्माविद्वान्यथाब्रह्मज्ञानाद्ब्रह्मभवेदिह ॥ एवमन्योपितज्ज्ञानाद्ब्रह्मैवेहप्रजायते ३७ ब्रह्मयोवेदपुरुषस्तस्यशिष्योनकर्हिचित् ॥ अब्रह्मविद्भवेत्कश्चित्सुताद्योप्यपरोपिवा २३८

णाश्रयतयोब्रह्मलोकंप्राप्यब्रह्मणोहिरण्यगर्भस्यमरणकालेपरांतपदोक्तेहिरण्यगर्भवद्ब्रह्मभावंयांतीत्यर्थः ३१ मोक्षप्रकारमाह ब्रह्मेत्यादिना । विदुषोनामरहिताःप्राणाद्याःपंचदशकलाः ‘प्राणाः श्रद्धाखादिभूतपंचकंचेंद्रियंमनः । अन्नंवीर्यंतपोमंत्राःकर्मलोकाश्चताःकलाः’ इतिविद्यारण्यैःसंगृहीतनामिकास्तायथायथंकारणानिप्रतिगच्छंतितथाध्यात्मवागादीनांदेवावन्ह्यादयःस्वंस्वमधिदेवरूपंगच्छंति यश्चबुद्ध्युपाधिर्विज्ञानमयाख्योजीवःसपरमात्मनिलीयते एवंकार्यकारणोपाधिविलयेसविद्वानद्वैतरूपेणतिष्ठतीतित्रयाणामर्थः ३२ । ३३ । ३४ तत्रविज्ञानमयस्यलयेदृष्टांतउच्यते यथेति । जहतित्यजंति स्फुटमन्यत् ३५ षोडश्यांनामाख्यकलायांविशेषमाह वामेति । यथावामदेवस्यमुक्तत्वेपितदीयंनामलोकानांवचसिव्यवहारेस्थितत्वादविनष्टमिवदृश्यतेऽतोलोकबुद्ध्यनुसारात्श्रुत्यापंचदशकलानामेवलयउक्तइत्यर्थः ३६ परब्रह्मविद्यानंतरन्तुमोक्षेप्रतिबंधःकोपिनास्तीत्यादिदर्शयतःसयोहेत्यादेरर्थमाह ब्रह्मविद्वानित्यादिना । यथाप्रोक्तविधयाविदुषोब्रह्मभावउक्तस्तथातद्विज्ञानमनुसरतामन्येषामपिसएवभवतीत्यर्थः ३७ ब्रह्मयइति । तथाविदुषोवंशेविद्यामयेजन्ममयेवावर्तमानाज्ञाननिष्ठाभवंतीत्यर्थः २३८

पापमिति । अयंब्रह्मवित्बोधप्रभावात्सकारण्यंपापंतीर्त्वाकामादिदोषहीनःसन्नैक्येनब्रह्मलभतेइत्यर्थः २३९ उक्तविद्योपदेशाधिकारिणमवधारयति नैतदिति । यस्यकस्यचिदपरीक्षितस्यपुरतएतद्वि ज्ञानंनवक्तव्यंकिंतुशांत्यादिगुणशालिनेएववक्तव्यं यतइमंनियमंमंत्रोपिक्रियावंतइत्यादिर्वदतीत्यर्थः २४० मंत्रार्थमेवदर्शयति । श्रोत्रियाइतिद्वाभ्यां श्रोत्रियावेदविदः क्रियावंतोयथोक्तकर्मानुष्ठा नशुद्धचित्ताः वन्हेरेकर्षिनामकस्याराधकाः ब्रह्मचर्याश्रमेचीर्णव्रताःचीर्णकृतंशिरस्याग्निधारणारूपंव्रतंयैस्तेतथायएतादृशाःशांत्यादिसंपन्नामहात्मानएतेभ्यएवप्रकृतशाखोक्तांविद्यांवदेदितिद्वयोरर्थः २४१ । २४२ प्रकृतकथांनिगमयति एतामिति । ब्रह्मणःप्रजापतेःप्राप्तांपरंपरयालब्धाम् २४३ उत्तराकांक्षांजनयति पिप्पलादइति । पिप्पलादनामामुनिःषड्भिःप्रश्नैर्विशदीकृतामिमा

पापंतरेदथंसर्वंसाज्ञानंब्रह्मबोधतः ॥ सर्वशोकविनिर्मुक्तःकामादिपरिवर्जितः ॥ आनंदात्मानमप्तंतादात्म्यादाप्नुयादयम् २३९ नैतद्ब्रह्मात्मविज्ञानंवक्तव्यंय स्यकस्यचित् ॥ किंतुशांत्यादियुक्तायतस्मैवाच्यंमहात्मने ॥ मंत्रार्थोप्यत्रमुनिभिर्लभ्यतेह्येवमेवहि २४० श्रोत्रियायेक्रियावंतोवन्हिशुश्रूषणेरताः ॥ चीर्णव्र तामहात्मानोब्रह्मचर्याश्रमेहिये २४१ शांतिदांत्यादिसंपन्नास्तेभ्यएवबदेदिमाम् ॥ ब्रह्मविद्यांसदासद्भिःसंव्यमानांसुदुर्लभाम् २४२ एतांपुरामुनिःप्राहशौनका यमहात्मने ॥ अंगिराब्रह्मणःप्राप्तांयांत्वंमांपरिपृष्टवान् २४२ पिप्पलादइमांविद्यांषट्प्रश्नामुक्तवान्मुनिः ॥ मुनिभ्यःषड्भ्यआर्तेभ्यःसुकेशादिभ्यईश्वरः २४४ इतितेसर्वमाख्यातंयत्पृष्टोहमिहत्वया ॥ ब्रह्मज्ञानमथर्वोक्तंकिमन्यच्छ्रोतुमिच्छसि २४५ इतिश्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्येणशंकरा नन्दभगवताविरचितउपनिषद्रत्नआत्मपुराणेमुंडकसारार्थप्रकाशेऽगिरःशौनकसंवादोनामषोडशोऽध्यायःसमाप्तः ॥ १६ ॥ ॥ ॥ ॥

मथर्वणोक्तांविद्यामार्तेभ्यःसंसारादुद्विग्नेभ्यःसुकेशादिनामकेभ्यःषड्भ्यःशिष्येभ्यउक्तवान् २४४ उपसंहरति । इतितेइति २४५ उपचारैःषोडशभिःपूजनयापीहयःसमुपचरितः । विगतोप चारमाविष्कुरुतेस्वंतंशरण्यमवलंबे ॥ १ ॥ इतिश्रीदत्तकुलतिलककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांसत्प्रसवाख्यायां षोडशोऽध्यायःसमाप्तः ॥ १६ ॥ ॥ ॥ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥ ॥ छ ॥ ॥

श्रीगणेशायनमः ॥ ॥ भिन्दन्सप्तदशोतीस्तनुतेतारेऽनुषङ्गवान्वर्णे ॥ देवःससप्तदश्यंधृत्वानःसप्तदशमलङ्कुर्यात् ॥ १ ॥ गीतेरस्याःश्रीरामचंद्रपक्षेऽयमर्थः योदेवःसप्ततालान्तथादशरावणशिरांसिचभिन्दन्सनूतीर्लीलास्तनुतेविस्तारयति कीदृशः तारेशुद्धेवर्णेब्राह्मणजातावितियावत् अनुषङ्गवान्स्नेहवान्सदेवःससाप्तदश्यंसाप्तदश्येनओश्रावयेत्यादिमंत्राक्षरसंख्यारूपेणसहितंयज्ञंधृत्वापोषयित्वावर्तमानोनोस्माकमाराधकानांसप्तदशंसूक्ष्मंशरीरावयवानामिंद्रियदशकप्राणपंचकमनोबुद्धिरूपाणांसप्तदशसंख्यापूरकंबुद्धितत्त्वंप्रादुर्भावेणभूषयेदिति तत्रयज्ञस्यसप्तदशावयवमंत्रसाध्यत्वम् ' चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच । हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ' इतिभारतेप्रोक्तंअस्यव्याख्याचभागवतव्याख्यायांचतुर्थस्कंधेसप्तमाध्यायेद्रष्टव्येति । श्रीकृष्णविग्रहपक्षे । सप्तस्वरान्वंशीनादगतान्भिन्दन्व्यंजयन्दशायाःकौमाराद्यवस्थायाःसंबंधिनीर्लीलास्तनुते कीदृशः तारेअत्युच्चेवर्णेगोपिकाकृतस्तुतिरूपगीतावनुषंगवान्स्निग्धः ' तदेवध्रुवमुन्निन्येतस्येमानंचवह्वदात् ' इतिरासपंचाध्याय्युक्तेः ' वर्णोद्विजादौशुक्लादौस्तुतौ ' इतिविश्वः सदेवःकृष्णःशशेनाप्तमंकितंदश्यंचकोरैरास्वादनीयंचयत्सुधाकरीयममृतंतत्ससाप्तदश्यं ' यमकश्लेषचित्रेपुशसयोर्वबयोर्नभित् ' इत्यभियुक्तवचनात् तद्वंशीरवेधृत्वानोधियमलंकुर्यादितिपूर्ववत् अत्रदश्यमितिदंशदशनेइतिनिर्देशेनक्वचिदक्ङित्यपिनलोपसूचनात्साधु तथाहिदर्शितममरटीकायां भानुजीदीक्षितेन । शंभुपक्षे । नृत्तकाङ्क्षिकविग्रहेणसप्तलोकान्भिन्दन्क्षोभयन्दशसंख्याकृतीर्लीलारूपकाख्यनाटकभेदात्मिकास्तनुते ' जगद्रक्षायेत्वंनटसिननुवामैवविभुता ' इत्यभियुक्तोक्तेः 'नाटकं

श्रीगणेशायनमः ॥ ॥ श्रुत्वाथर्वोक्तविज्ञानंशिष्योगुरुमभाषत ॥ पिप्पलादेनसंप्रोक्तंश्रोतुकामोगुरोर्मुखात् १ भगवन्नैतरेयेणयदुक्तंब्रह्मवेदिना ॥ प्रजासंवादसहितंवैराग्यज्ञानकारणम् ॥ वामदेवानुभूतेश्चवर्तनेनसमन्वितम् २ तथाकौषीतकिप्रोक्तंयत्रशक्रप्रतर्दनौ ॥ अजातशत्रुबालाकीगुरुशिष्यौमहाधियौ ३ आदित्यस्यापिविज्ञानंयत्रवंशस्त्वयेरितः ॥ अश्विनोर्यत्रसंवादोमंत्रद्रष्ट्रामहात्मना ॥ दध्यङ्ङाथर्वणोयत्रक्लेशमेतत्कृतेह्यगात् ४ याज्ञवल्क्याभिधोभानुर्मुनिर्दैत्याननेकशः ॥ तिरस्कुर्वन्विदग्धाख्यंतमोयत्रव्यपाकरोत् ५ जनकस्यचमैत्रेय्याःस्वगोभिर्ब्रह्मसंततम् ॥ व्यदर्शयन्महातेजाःस्वस्यास्तमयतःपुरा ६ श्वेताश्वतरनामापियतींद्रानभ्यभाषत ॥ कठश्चद्विजशार्दूलस्तित्तिरिश्चमहामनाः ७

समवकरणंभाणःप्रहसनंडिमः । व्यायोगसमवकारौवीथ्यंकेहामृगाइति ' एतन्नामकानांनाटकभेदानामभिनेतानीलकंठइत्युक्तंदशरूपके तारेशुद्धेवर्णेशुक्लरूपेस्निग्धःसदेवोमहादेवःसाप्तदश्येनावयवसप्तदशकेनसहितंप्रजापतिंनृत्तक्षोभेनोद्भिन्नमपिधृत्वाधृतिमंतंकृत्वानोमतिमलंकुर्यादितिपूर्ववत् । प्रमेयपक्षे । सप्तदशात्मकंप्रजापतिंभिंदन्संवत्सरादिरूपेणाग्नीषोमलक्षणेनविभजन्सन्नूतीःसृष्ट्यादिलीलास्तनुते ताराख्येवर्णेप्रणवेअनुषंगवान्तादात्म्यवान् सनोजिज्ञासूनांदेवःपरमात्मासाप्तदश्यंवक्ष्यमाणषोडशकलायोजनयासप्तदशसंख्यांधृत्वासप्तदशमध्यायंप्रादुर्भावेणभूषयेदिति १ अथमुण्डकाख्यमंत्रोपनिषदोविवरणभूतब्राह्मणरूपायतःप्रश्नोपनिषत्ततःक्रमप्राप्तंप्रश्नार्थंदिदर्शयिषुस्तत्रमेधाविनःशिष्यस्यजिज्ञासांसानुवादांदर्शयति श्रुत्वेतिषोडशभिः । स्पष्टम् १ भगवन्निति । यदैतरेयेणोक्तमेतन्मध्यमाख्यातमितिपंचदशेनसंबंधः वर्तनेनप्रकाशनेन २ द्वितीयतृतीययोर्वृत्तमाह तथेति । संबंधःपूर्ववदग्रेपिबोध्यः यत्रकौषीतकयुक्ते ३ चतुर्थवृत्तमाह आदित्यस्येति । यत्रादित्यविज्ञाने एतत्कृतंअश्विनोरर्थं ४ पंचमादित्रयवृत्तमाह याज्ञवल्क्येतिद्वाभ्यां । यत्रादित्यविज्ञानेएव यथाछद्मवंगच्छन्भानुर्मेघेहाख्यान्दैत्यांस्तिरस्करोतितथैवर्ण्यादिदोषेणदैत्यायमानान्मुनीन्याज्ञवल्क्योभानुस्तिरस्कृत्यजित्वाविदग्धाख्यशाकल्यरूपंतमोव्यनाशयत् यथाचभानुःस्वकीयैर्गोभिःकिरणैःस्वस्यस्वरूपानुगतंब्रह्मदर्शयतिस्मारयति ' यदादित्यगतंतेजः ' इत्यादिगीतास्मृतेः तथायाज्ञवल्क्योपिस्वस्यास्तमयात्संन्यासरूपात्पुरास्वगोभिर्वाग्भिर्जनकस्यमैत्रेय्याश्चहितायस्वरूपभूतंब्रह्मसंततमदर्शयदितिद्वयोरर्थः ५ । ६ अष्टमादित्रयवृत्तमाह श्वेताश्वेतिद्वाभ्यां । अभ्यभाषत यतिविशेषः कठतित्तिरीअपयदभ्यभाषेतामेवदुक्तमितिसंबंधःपूर्ववत् ७

यमइति । यत्रकठोक्तेयमनचिकेतसौगुरुशिष्यौयत्रचतित्तिरिप्रोक्तेवरुणभृगूतथाबेनाख्यगंधर्वोनुभवःसंन्यासस्याधिक्यंचोक्तमित्यर्थः ८ एकादशवृत्तमाह जाबालादेरितिद्वाभ्यां । समाश्रयपदंगोचरार्थकम् करणमनुष्ठानम् ९ वैराग्यमिति । तस्यसंन्यासस्य तस्यवैराग्यस्य अत्रसंन्यासे तथाब्रह्मज्ञानांमहान्प्रशस्तोब्रह्मचर्यादिरूपआचारश्चोक्तइत्यर्थः १० सामेति । येरेतैर्द्वादशादिभिस्त्रिभिरध्यायैःसामवेदछांदोग्यस्ययत्पष्ठाद्यध्यायत्रयंतस्यार्थउक्तइतिशेषः यत्रैतेमुनिसत्तमाःक्रमेणगुरवःशिष्याश्च तानेवाह आरुणिरित्यादिना । द्वादशेआरुणिश्वेतकेतूगुरुशिष्यौ त्रयोदशेसनत्कुमारनारदौ चतुर्दशेब्रह्मागुरुरिंद्रविरोचनौचशिष्यौ ११ । १२ पंचदशवृत्तमाह इंद्रस्येति १३ अनंतरवृत्तमाह अथर्वणइति । यस्याथर्वणःशौनकपर्यंताशिष्यपरंपरावेदेउक्ता साक्षान्निरूपितातदुत्तरभाविनीतुह्युपलक्षितेत्यर्थः १४ मह्यमिति । हेगुरोपुनःपुनःपृष्टेनभगवताएतद्वर्णितंमह्यमुक्तं इदानींत्विदंश्रोतुमिच्छामियत्पूर्वाध्यायान्तेएतत्प्रोक्तं एतत्किं पिप्पलादःषण्मुनीन्प्रतिषट्प्रश्न्याःप्रश्नषट्कस्यउत्तरजातंप्राहेतिद्वयोरर्थः १५ । १६ अत्रगुरोरुत्तरमवतारयति इत्युक्तइति । प्रश्नसमीरितांशौनकीयशाखागतांप्रचुरप्रश्नत्वात्प्रश्नाख्यायोपनिषत्स्यांवर्णितां स्फुटमन्यत् १७ तत्रविद्यास्तुत्यर्थाख्यायिकाप्रदर्शकस्यवक्ष्यामइत्यंतग्रंथस्यार्थमाह कदाचिदितिपंचदशभिः । इमेवक्ष्यमाणरूपाःषण्मुनयःकुत्रचिद्देशेमिलिताआसन् कृताःपौर्वाह्णिकीःप्रातःसंध्यादिरूपाःक्रियायैस्तेतथा १८ तान्परिगणयति भारद्वाजइतिद्वाभ्यां । गोत्रेणभारद्वाजोनाम्नासुकेशाप्रथमः इदंनामनकारांतमितिवृत्तिकृत् । नाम्नासत्यकामःशिबेरनंतरापत्यभूतःशैब्योद्वितीयः वृद्धेत्कोशलाजादाञ्यङितिञ्यङ् । तथासूर्यस्यापत्यत्वात्तिकादित्वात्फिञिसौर्यायणिसंज्ञोगोत्रेणगार्ग्यश्चतृतीयः । श्रुतौदीर्घस्तुच्छांदसइतिभावः कोशलस्यानंतरापत्यत्वात्कौशल्यसंज्ञःअश्वलगोत्रत्वान्नडादिफक्आश्वलायनइत्युक्तश्चतुर्थः १९ वैदर्भिरिति । विदर्भस्यानंतरापत्यत्वाद्वैदर्भिर्नामतोभृगुगोत्रत्वाद्भार्गवःपंचमः । कत्यस्ययुवापत्यत्वात्कात्यायनइत्युक्तःकबंधिसंज्ञएषामृषीणांषष्ठइति २० तेषांविद्याधिकारद्योतनायविशेषणान्याह षडंगेति । षडंगवेदरूपंब्रह्माध्ययनेनलब्ध्वातत्पराःसंतस्तदुक्ताःसगुणब्रह्मोपासनरूपाःकर्मसमुच्चिताःक्रियाःकुर्वाणाःपरमंनिर्विशेषंब्रह्मजिज्ञासमानाश्चातएवयशोन्विताः २१

यमोयत्रगुरुःशिष्योनचिकेताश्चधीधनः ॥ वरुणश्चभृगुस्तद्वद्वेनानुभवकीर्तनम् ॥ सर्वसाधनसंघातेभूयान्संन्यासइत्यपि ८ जाबालादेश्चविज्ञानंसंन्यासादिसमाश्रयम् ॥ संवर्ताद्यैश्चकरणंसंन्यासस्यमहात्मभिः ९ वैराग्यंतस्यकालश्चयोगादिस्तस्यकारणम् ॥ विरक्तोत्राधिकारीचवेषोदंडादिधारणम् ॥ आचारोब्रह्मचर्यादिर्ब्रह्मज्ञानांमहांस्तथा १० सामाध्यायत्रयस्यार्थोयैरेतैर्मुनिसत्तमाः ॥ गुरवोपिचशिष्याश्चह्यारुणिःश्वेतकेतुकः ११ सनत्कुमारोभगवान्नारदोदेवदर्शनः ॥ ब्रह्मालोकगुरुस्तद्वदुभाविंद्रविरोचनौ १२ इंद्रस्यब्रह्मविद्यायाःप्रसादादात्मबोधनम् ॥ विचित्रंस्वात्मविज्ञानंयच्चकेनेषितेरितम् १३ अथर्वणेचयद्ब्रह्माप्रोक्तवान्स्वसुतायहि ॥ शौनकांताहियस्योक्तावेदेशिष्यपरंपरा १४ मह्यमेतत्समाख्यातंसर्वंविस्तरशोगुरो ॥ त्वयापुनःपुनःश्रोतुमिदमिच्छाम्यहंविभो १५ पिप्पलादोमुनीनाहषट्प्रश्न्याउत्तरंहियत् ॥ अंतेप्रोक्तंत्वयामह्यंपूर्वाध्यायस्यशोभनम् १६ इत्युक्तोगुरुरप्याहकथांप्रश्नसमीरिताम् ॥ ब्रह्मज्ञानकरींसम्यङ्मनःश्रोत्रसुखावहाम् १७ कदाचित्कुत्रचिद्देशेमुनयोमिलिताइमे ॥ आसन्परस्परंस्निग्धाःकृतपौर्वाह्णिकक्रियाः १८ भारद्वाजःसुकेशाचसत्यकामोपिशैब्यकः ॥ गार्ग्यःसौर्यायणिस्तद्वत्कौशल्यश्चाश्वलायनः १९ वैदर्भिर्भार्गवस्तद्वत्सतुकात्यायनोपिच ॥ कबंधीषष्ठएतेषांसर्ववेदार्थवेदिनाम् २० षडंगसहितान्वेदानधीत्यविविधाःक्रियाः ॥ कुर्वाणाःपरमंब्रह्मसमिच्छंतोयशोऽन्विताः २१

इदमिति । तेसर्वेइदंविचारितवंतः इदंकिं योब्रह्मिष्ठादिलक्षणोऽस्मत्तोगुणाधिकश्चपरंब्रह्मवदेत्सकइत्यर्थः २२ इत्थंचिंताकुलानान्तेषामनुग्रहायपिप्पलादाख्योमुनिस्तत्रागतइत्याह इतीति । २३ तमायांतमिति । सर्वमस्मत्प्रश्नजातंवक्ष्यतिसमाधास्यतीति २४ तस्मिन्निति । तस्मिन्पिप्पलादेसमीपमागतेसतितमभ्युत्थानादिनापूजयित्वाशास्त्रानुसारेणसमित्प्रभृत्युपायनहस्तइदमूचुः इदंकिं हेभगवन्संसारभयेनशरणागतान्नःशाधिउपदिशेतिद्वयोरर्थः २५ । २६ सचमुनिस्तान्प्रतीदमुक्तवानित्याह एवमुक्तइति २७ पिप्पलादस्यमुनेर्वचनमभिनयति श्रद्धावतेपीतिचतुर्भिः । श्रद्धावानपिशिष्योयदिसंवत्सरवासेनापरीक्षितोभवेत्तदातस्मैनब्रूयान्नोपदिशेत्तदेतन्मर्यादारहस्यंभवद्भिरपिगम्यतेज्ञायतेइत्यर्थः २८ ततइति । ततउक्तमर्यादावशात्भवतांस्वभावतस्तापसत्वादिशालित्वेपिपुनःसंवत्सरपर्यंतंतपःश्रद्धाब्रह्मचर्यान्वितैर्मत्समीपेवासःकर्त्तव्यइतिद्वयोरर्थः २९ । ३० ततोहमिति । ततःसंवत्सरवासानंतरं वक्ष्यामिसमाधास्यामियथामति तदेतन्मद्वचोयदिभवद्भ्योरोचतेभवतःप्रीणयतितदानुष्ठेयमित्यर्थः ३१ एवंतेनोक्तेसतिसर्वेतदुक्तंचक्रुरित्याह एवमिति । चतुर्थपादउत्तरान्वयी ३२ मुंडकेपरापरभेदेनद्वेविद्येप्रदर्शितेतत्रापरविद्यायाःकर्मोपास

इदंविचारयामासुरस्मभ्यंकोऽत्रवक्ष्यति ॥ ब्रह्मिष्ठःश्रोत्रियोस्मत्तोगुणैरप्यधिकश्चयः २२ इतिचिंतयतांतेषांपिप्पलादोमुनीश्वरः ॥ भगवान्स्वेच्छयैवायातंदेशंब्रह्मवित्तमः २३ तमायांतंविलोक्याथदूरतस्तेमुनीश्वराः ॥ इदमूचुर्हृष्टचित्ताएषसर्वंहिवक्ष्यति २४ तस्मिन्समागतेसर्वेस्वासनेभ्यःसमुत्थिताः ॥ बद्धांजलिपुटाऊचुर्नमस्कृत्यचतंविभुम् ॥ समिदादिकराभूत्वायथाशास्त्रंमहाधियः २५ भगवन्सर्वएवैतेवयंसंसारतापतः ॥ भीतास्त्वांशरणंप्राप्ताःशाध्यस्मान्शरणागतान् २६ एवमुक्तोथतैर्विप्रःपिप्पलादोमुनीश्वरः ॥ इदंवचनमाहैतान्मुनीन्सर्वान्महामतिः २७ श्रद्धावतेपिनब्रूयादसंवत्सरवासिने ॥ गुरुःशिष्यायविप्रास्तद्भवद्भिरपिगम्यते २८ ततोभवंतोमुनयोयद्यपिस्युःस्वभावतः ॥ तापसाब्रह्मचर्यादिनिरताःसर्वदैवहि २९ तथापिभूयएवात्रापिसमीपेमेऽत्रवत्सरम् ॥ ब्रह्मचर्यादिनिरतावासंकुर्वंतुतापसाः ३० ततोहंभवतांप्रश्नान्सर्वान्वक्ष्यामिसर्वथा ॥ यावज्ज्ञानंभवद्भ्यश्चेद्रोचतेतद्विधीयताम् ३१ एवमुक्तेतथाचक्रुस्तेसर्वेश्रद्धयान्विताः ॥ प्रणिपत्यमहात्मानंवत्सरेविगतेसति ३२ कात्यायनःकबंधीचसमागम्येदमब्रवीत् ॥ भगवन्कुतएवेमाःप्रजाःकारणतोजनिम् ॥ प्राप्नुवंतीहतन्मह्यंवदत्वंमुनिसत्तम ३३ एवमुक्तेविराजःससृष्टिमाहमुनीश्वरः ॥ परित्यज्यमहासृष्टिंविज्ञातांतेनशास्त्रतः ३४ प्रजापतिःपुरासृष्टिंसिसृक्षुर्जगदीश्वरः ॥ पर्यालोच्यससर्जादावग्नीषोमौमहामतिः ३५ अग्निःप्राणस्तथादित्यःसर्वदिक्करणःपुमान् ॥ विश्वरूपःसुवर्णोभोजातवेदाःपरायणम् ॥ ज्योतिरात्मासहस्रार्चिर्वाह्यःप्राणःशतात्मक ३६

नभेदेनद्विविधायाःफलंसृष्टिमुखेननिर्णेतुंप्रथमप्रश्नंकबंध्याख्यःकात्यायनश्चकारेत्याह कात्यायनइति । वत्सरेव्यतीतेसतिकात्यायनःपिप्पलादमित्यपृच्छत् इतिकिं हेभगवन्प्रजाःकुतःकारणाज्जनिंप्राप्नुवंतीति ३३ एवमुक्तइति । एवंपृष्टेसतिसपिप्पलादमुनिस्तस्मैकात्यायनायविराजःप्रजापत्याख्याद्याजगतःसृष्टिस्तामेवोक्तवान् ईश्वरावधिकामहासृष्टिःपंचमहाभूतहिरण्यगर्भादिसंबंधिनीसृष्टिःसाऽनेनकात्यायनेनशास्त्रतोविज्ञातेवेतितामुपेक्ष्येत्यर्थः ३४ प्राजापत्यांसृष्टिमभिनयति प्रजापतिरित्येकादशभिः । प्रजापतिर्विराट्सिसृक्षुःसृष्टिवृद्धिमिच्छन्नग्नीषोमौभोक्तृभोग्यलक्षणौससर्ज किंकृत्वा एतौमिथुनरूपेणविविधांसृष्टिंकर्त्तुंक्षमावितिविचार्येत्यर्थः ३५ तत्रभोक्तृरूपस्याग्नेःसर्वात्मतामयादित्यइत्यादिब्राह्मणंविश्वेत्यादिमंत्रश्चवदतितयोरर्थमाह अग्निरिति । तयोर्मध्येयोऽग्निःसोध्यात्ममाणरूपः प्राणस्यसंघातवशीकारलक्षणभोक्तृत्वस्यस्फुटत्वात् तथाधिदैवमादित्यरूपःतत्रादित्यस्यभोक्तृत्वस्फुटीकारायविशेषणानि सर्वदिक्करणइत्यादीनि सर्वासां-

दिशांकरणंविभजनमुदयादिनायस्यसतथा एतेनप्रकाशद्वारासर्वत्रव्याप्तिर्भोक्तृत्वोपयोगिनीसूचिता अतएवपुमान्सर्वस्यप्रकाश्यस्यभोक्तेत्यर्थः सर्वात्मत्वाद्विश्वरूपःश्रुतौहरिणपदेनमरीचिमद्वाचके नतप्तकांचनाभत्वंसूचितमित्याह सुवर्णाभइति । जातंवेदोज्ञानरूपंधनंयस्मात्सतथा एतेनसर्वज्ञेयव्याप्तिर्दर्शिता सहस्रकिरणरूपेणज्योतिरात्माप्रकटज्योतीरूपःतयासर्वप्रजानांबाह्यःप्राणःपुनःकीदृ शःशतात्मकःअनेकधाव्यष्टिप्राणिरूपैर्वर्तमानइत्यर्थः ३६ प्राणरूपस्याग्नेःसंवत्सराख्यकालरूपेणस्रष्टृत्वबोधनायतावदुत्तरायणादितदवयवात्मकत्वमाह संवत्सरार्धेति । संवत्सरार्द्धनामकंयदु त्तरायणंप्रसिद्धंतदपिकथितंवर्णिताग्निरूपतयेतिशेषः तत्रहेतुतयाउत्तरायणस्यसूर्यद्वारप्रापकत्वमाह आस्तिकाइति । येनोत्तरायणरूपमार्गेणादित्यंभित्वाब्रह्मचर्यादिसंपन्नास्तापसागच्छंतीत्य र्थःयदित्याद्युत्तरान्वयीतिद्वयोरर्थः ३७ । ३८ प्रसंगेनोपासनाफलंदर्शयति प्राणायतनमिति । यच्चसूर्यमंडलभेदनेनअदःपरोक्षंस्थानंप्रयांति एतत्स्थानंवैदिकैःप्राणायतनंप्राणसमष्टिरूपस्य हिरण्यगर्भस्यवासस्थानंयथामृत्युभयाभ्यांवर्जितंब्रह्मलोकसंज्ञंचोक्तंयदिदंस्थानंसूर्यमंडलात्परस्ताद्वर्त्ततेइत्यर्थः ३९ अस्यस्थानस्यक्रममुक्तिप्रयोजकत्वमहंग्रहोपासनलभ्यत्वंचाह अस्मिन्निति । ब्रह्मणःसगुणस्यविज्ञानमभेदेनोपासनंतद्वंतऊर्ध्वरेतसोब्राह्मणाअस्मिन्नुक्तेसूर्यमण्डलात्परस्मिन्स्थानेगत्वापुनरत्रसंसारमंडलेनागच्छंतीत्यर्थः यथाचसूर्यमंडलप्रापकत्वादुत्तरायणंप्राणलक्षणाग्निरू पतयोक्तंतथामासघटकःशुक्लपक्षःपक्षघटकोदिवसश्चाग्निरूपोबोध्यः देवयानमार्गघटकत्वस्यानयोरपिसमत्वादितिभावः ४० यथाग्नेःसूर्यादिरूपाणिदर्शितानितथाभोग्यलक्षणस्यसोमस्याप्या

संवत्सरार्धसंज्ञंयत्कथितंचोत्तरायणम् ॥ आस्तिकायेनगच्छंतिह्युपास्यात्मानमंजसा ३७ एतंभित्वामहात्मानमादित्यममितौजसम् ॥ तापसाब्रह्मचर्यादिसंपन्ना यत्प्रयांत्यदः ३८ प्राणायतनमेतद्धिकथितंवेदवादिभिः ॥ अमृतंचाभयंचैतत्स्थानकंपरमंतथा ॥ ब्रह्मलोकाभिधंसूर्यात्परतोयद्विवर्त्तते ३९ अस्मिन्गताःपुनर्नैते आवर्त्तंतेकदाचन ॥ ब्रह्मविज्ञानसंपन्नाब्राह्मणाऊर्ध्वरेतसः ॥ शुक्लपक्षोपिदिवसःप्रोक्तोग्निःप्राणरूपधृक् ४० सोमात्मकोयंभगवांश्चंद्रमादक्षिणायनम् ॥ येनयां तिमहात्मानोधार्मिकाःश्रद्धयान्विताः ४१ कृष्णपक्षस्तथारात्रिर्यस्यांरतिमुपेयुषां ॥ ब्रह्मचर्यंभवेन्नित्यंगृहस्थानांस्वयोषिति ४२ अग्नीषोमात्मकंयत्तुमिथुनंव त्सरोहिसः ॥ पंचर्तुरूपीभगवान्मासद्वादशरूपधृत ४३ ऋतुषट्द्वारआसीनःसूर्यश्चक्रेसदैवयः ॥ द्युलोकस्थोत्रपर्जन्यहेतुरुक्तःपिताहियः ४४

ह सोमात्मकइति । अयंचंद्रमाभोग्यामृतादिरूपत्वात्सोमात्मकोबोध्यः तथादक्षिणायनमपिसोमात्मकंबोध्यम् तत्रहेतुंचंद्रप्रापकत्वंदर्शयन्कर्मिणांगतिमपिसूचयति येनेति । येनद क्षिणायनेनधार्मिकाइष्टादिकारिणश्चंद्रलोकंगच्छंतीत्यर्थः ४१ कृष्णेति । यथाचदक्षिणायनंसोमात्मकमुक्तंतथाकृष्णपक्षोरात्रिश्चसोमात्मतयाबोध्या । तत्ररात्रेःसोमात्मकत्वेहेतुंरतिकालत्व माह यस्यामिति । यस्यांरात्रौस्वयोषितिरतिंभजतांगृहस्थानांब्रह्मचर्याविप्लवउक्तइत्यर्थः एतेनदिवसस्यप्राणरूपाग्न्यात्मकत्वात्तत्ररतिसेविनांनकेवलंब्रह्मचर्यहानिःकिंतुप्राणहानिरपीतिसूचि तम् ४२ उत्तरायणदक्षिणायनरूपयोःशुक्लकृष्णपक्षरूपयोरहोरात्ररूपयोश्चाग्नीषोमयोर्यदेतान्मिथुनत्रयमुक्तंतत्समुदायःसंवत्सरःप्राजापत्यात्माबोध्यइत्याह अग्नीषोमात्मकमिति । मिथुनंयुगलम् अयमर्थःपंचपादमित्यादिनामंत्रेणाप्युक्तइतिसूचयंस्तदर्थमाह पंचर्तुरूपीतिदलत्रयेण । भगवान्प्रजापतिःसंवत्सरात्मकोहेमंतशिशिरावेकीकृत्यपंचभिर्ऋतुभिःपादभूतैरूपीरूपवान् ऋत्ववयवैर्द्वाद शमासैश्चरूपभृत्घटितावयवः पुनःकीदृशः यश्चक्रेशिशुमाराख्ये कीदृशे ऋतुषट्कमेवारस्थानीयंयस्यतथाभूतेसूर्यरूपेणसदैवस्थितः पुनःकीदृशः द्युलोकस्यस्वर्गलोकस्योपरिस्थितः पर्जन्यस्यमेघस्यहेतुत्वेनजगतःपिताचेत्यर्थइतिद्वयोरर्थः ४३ । ४४

तत्रजगत्पितृत्वंस्फुटयति अग्नीषोमात्मकस्येति । अस्येत्यनंतरंकार्यमितिशेषः तथाचसूर्यचंद्रदक्षिणायनोत्तरायणादिरूपैरग्नीषोमात्मकस्यास्यमहात्मनःप्रजापतेःकार्यंवृष्टिद्वारानवान्नंस्यात्तदो न्नात्संधुक्षिताज्जाठराग्निपाचिताद्रेतोद्वाराविविधाःप्रजाजायंते एवमग्नीषोमद्वाराप्रजापतेःकारणत्वमित्यर्थः ४५ अथोपास्यस्यप्राणस्यप्रथमप्रश्नेसूर्यादिरूपैरधिदैवंवर्णितप्रभावस्याप्यध्यात्मंतत्प्रभा वनिर्णयायद्वितीयप्रश्नमुत्थापयति अथोपरतइति । तस्मिन्कात्यायनेउपरतेतूष्णींभूतेसतिभार्गवोवैदर्भिःपिप्पलादमपृच्छत्हेभगवन्अस्याध्यात्मसंघातरूपस्यजगतोविधारकाधारणकर्त्तारःकति क्रियंतोदेवाःसंतितेष्वपिप्रकाशस्यकर्त्तारःकतिसंतितथाएतेषुसर्वेषुकःपुमान्कीर्त्यतिशयवान्अतएवश्रेष्ठःकएतन्मजिज्ञासितमर्थंत्रयंवदप्रतिपादयेतिद्वयोरर्थः ४६ । ४७ एवमुक्तइति । एवमु क्तःपृष्टःपिप्पलादआहआकाशादीनिपंचभूतानिवागादीनींद्रियाणिमनःसहितान्येकादशसंकलनेषोडशसप्तदशःप्राणइत्येतेसप्तदशदेवाःसर्वशरीराणांधारकाइत्यर्थः ४८ ज्ञानेंद्रियाणीति । तेष्वपिज्ञानेंद्रियपंचकंतदध्यक्षंमनश्चएतानिषट्प्रकाशकानीत्यर्थः ४९ श्रेष्ठइति । एतेषांविधारकाणांमध्येएषश्रेष्ठोयःपंचभिर्वृत्तिभिःप्राणापानव्यानोदानसमानाख्यैरूपैर्वपुषिस्थितःप्राणनामा यतस्तेनप्राणेनविमुक्तेदेहेधारणंस्थितिर्नदृश्यतेइति ५० तत्रहेतुतयाइतरेषांस्थितःप्राणस्थित्यन्वयव्यतिरेकावाह प्राणेसतीति । अत्रदेहेप्राणेसतिस्थितिमतिवागादिःकरणगणस्तिष्ठति तत्र

अग्नीषोमात्मकस्यास्यनचान्नंस्यान्महात्मनः ॥ अन्नात्संधुक्षिताद्रेतोरेतसश्चप्रजाइमाः ॥ जायंतेविविधाएवमग्नीषोमौहिकारणम् ४५ अथोपरतएतस्मिन्विद र्भिर्भार्गवोब्रवीत् ॥ देवाःकत्येवभगवन्जगतोस्यविधारकाः ४६ कतरेवात्रकर्त्तारःप्रकाशस्यचकःपुमान् ॥ एतेषुश्रेष्ठएतन्मेसर्ववदमहामुने ४७ एवमुक्तोथतं प्राहपिप्पलादोमुनीश्वरः ॥ पंचभूतानिवागाद्याउक्ताएकादशैवते ॥ प्राणश्चसर्वदेहानांधारकाःपरिकीर्तिताः ४८ ज्ञानेंद्रियाणिपंचापितत्प्रकाशस्यहेतवः ॥ विशेषतोमनस्तत्रप्रकाशेकारणंस्मृतम् ४९ श्रेष्ठोविधारकश्चैषपंचवृत्तिर्वपुःस्थितः ॥ प्राणस्तेनविनिर्मुक्तेशरीरेनास्तिधारणम् ५० प्राणेसतिशरीरेस्मिन्वागा दिरवतिष्ठते ॥ निर्गच्छंतिचनिर्यातेमधुनीवेहमाक्षिकाः ५१ प्रधानमक्षिकातत्रयदितिष्ठतिसंस्थितिम् ॥ तदाव्रजेद्व्रजंत्यांतुसंव्रजेन्मक्षिकागणः ५२ अन्वय व्यतिरेकाभ्यांवागाद्यैरपिनिश्चितम् ॥ विधारकत्वंप्राणस्यततस्तेकुर्वतेस्तुतिम् ५३ अग्निःसूर्यश्चपर्जन्योविद्युदादिसमन्वितः ॥ मघवापंचभूतानिसोमोपिस दसच्चयत् ५४ विश्वंत्वमसितत्सर्वंनामरूपक्रियात्मकम् ॥ त्वय्येवरथचक्रस्यनाभौयद्वदराःस्थिताः ५५

प्राणेनिर्यातिसतितुवागादिगणोनिर्गच्छति यथामधुमक्षिकामधुकरराजाख्यश्रेष्ठस्यस्थितिगत्यधीनस्थितिगतिकाइत्यर्थः ५१ दृष्टांतमेवस्फुटयति प्रधानेति । तत्रमधुदेशेयदिप्रधानमक्षि कामधुकरराजाख्यातिष्ठतितदामक्षिकागणःसंस्थितातंव्रजेत् तस्यांप्रधानमक्षिकायांव्रजंत्यांसत्यांतुमक्षिकागणोव्रजेदिति ५२ अन्वयेति । प्राणस्थितौचक्षुरादीनांसंवत्सरप्रवासेपिसंघातजीव मन्वयःप्राणोत्क्रमणप्रक्रमेसर्वेषामाकुलत्वंव्यतिरेकस्ताभ्यांश्रुत्युक्ताभ्यांप्राणस्यश्रेष्ठत्वंविधारकत्वरूपंयतोनिश्चितंततस्तेसर्वेदेवाश्चक्षुराद्यभिमानिनःप्राणस्यस्तुतिंवक्ष्यमाणरूपांकुर्वतेस्मेत्यर्थः ५३ एषोग्निरित्यादिमंत्रग्रंथेननिरूपितांस्तुतिमभिनयति अग्निरितिपाड्भिः । हेप्राणअग्न्यादिरूपंयद्विश्वंतत्त्वमेवासीतिसंबंधः तत्रपर्जन्योवर्षुकोब्दः विद्युदादीत्यादिपदेनअनुकूलवातादिग्रहः मघवा इंद्रः भूतानिपृथिव्यादीनि सोमोभोग्यलक्षणः सन्मूर्तं असदमूर्त्तं चकारादमृतस्यदेवभोग्यस्यवेदस्यचग्रहः । सर्वात्मत्वेहेतुतयासर्वाधारत्वमाह तत्सर्वमित्यादिना । यतस्त्वत्सर्वंविश्वंत्व य्येवस्थितंयथारथचक्रावयवेनाभौअराःस्थितास्तद्वदितिद्वयोरर्थः ५४ । ५५

चतुर्विधानामिति । जरायुजादिभेदेनचतुर्विधानांभूतानांप्राणिनोरूपतः स्वरूपेस्त्वमेवजन्मभजसेतथाश्रुतोप्रजापतिपदोक्तोविराट्हिरण्यगर्भश्चभवानेवभवतीत्यर्थः ५६ विभूतीति । हेप्राण यान्यत्रलोकेविभूतिमंतिऐश्वर्यशालीनिसत्वानिप्राणिजातानिसंतियथादेवेपुवन्हिः पितृपुनांदीमुखाश्चपिपुलस्त्यपराअंगिरसामथर्वेत्यादयस्तानिस्वधापितृमीदिकास्वाहादेवमोदिकाएताभ्यांसहिता नितवैवरूपाणीत्यर्थः ५७ सर्वेंद्रियेति । हेप्राणयातेतनुर्मूर्तिश्चक्षुरादिपुवलमादधानातिष्ठतितांशिवामनुकूलपरिणामवतींकुरुवयंसर्वेतेत्वदीयाःस्मभवामःअतोस्मदपराधंक्षमित्वाकदाचिदपिमा उत्क्रमीरुत्क्रमणंमाकुर्वित्यर्थः ५८ प्राणस्येदमिति । त्रिदिवेस्वर्गोपलक्षितेलोकत्रयवर्तमानंसर्वंप्राणस्यतववशेभवति एवंजानतोस्मान्पुत्रान्मातृवद्रक्ष तथाश्रियंवेदत्रयीरूपांब्राह्मींक्षात्रियां हिरण्यादिरूपांविधेहिकुरु तथाप्रज्ञांसन्मतिमस्माकंकुर्वित्यर्थः ५९ एवंश्रेष्ठत्वेनावधारितस्यप्राणस्योपासनांविधातुंतदीयोत्पत्तिस्थित्यादिनिर्णयहेतुंतृतीयंप्रश्नमवतारयति प्राणमिति । त स्मिन्भार्गवेप्राणश्रेष्ठताविनिर्णयेनतूष्णींभूतेसतिकौशल्यआश्वलायनस्तंमुनिमपृच्छदिति ६० अमुंप्रश्नंपड्विधमभिनयति भगवन्नितिद्वाभ्यां । प्राणस्यकुतउत्पत्तिरितिप्रथमःप्रश्नः सप्राणःशरी रेकथंगच्छेत्अस्यशरीरेणसंबंधेकिंनिमित्तमितिद्वितीयः सप्राणआत्मानंविभज्यसर्वदेहेपुकथंतिष्ठतीतितृतीयइत्यर्थः ६१ केनायमिति । तथाअयंप्राणःकेनद्वारेणवृत्तिविशेषेणवानिमित्तेनवा

चतुर्विधानांभूतानांरूपतस्त्वंप्रजायसे ॥ विराड्हिरण्यगर्भश्चभवानेवनचापरः ५६ विभूतिमंतिसत्वानिजगत्यस्मिन्नाहियानिभोः ॥ स्वधास्वाहान्वितान्यत्र प्राणरूपाणितानिवै ५७ सर्वेंद्रियगतायातेतनुःप्राणाऽवतिष्ठते ॥ शिवांतांकुरुतेस्मातोमोत्क्रमीःकर्हिचिद्विभो ५८ प्राणस्येदंवशेसर्वंत्रिदिवेयत्प्रतिष्ठितम् ॥ मातेवपुत्रान्रक्षत्वंश्रियंप्रज्ञांविधेहिनः ५९ प्राणंश्रेष्ठंविनिश्चित्यतस्मिन्नुपरतेसति ॥ आश्वलायननामासकौशल्यःपृष्टवान्मुनिम् ६० भगवन्पिप्पलादायंकुतः प्राणोविजायते ॥ शरीरेवाकथंगच्छेदात्मानंचकथंहिसः ॥ विभज्यसर्वदेहेषुप्राणस्तिष्ठतितद्वद ६१ केनायमुत्क्रमंगच्छेत्कथंचैषाविधारयेत् ॥ बाह्यमाध्यात्मि कंसर्वंजगदेतच्चराचरम् ६२ एवंपृष्टस्तदाप्राहपिप्पलादोथतंप्रति ॥ अतिप्रश्नानिमान्यस्मात्पृच्छसित्वंमुनेत्रभोः ॥ ब्रह्मिष्ठोसिततस्तुभ्यंवक्ष्याम्येतत्त्वयेरि तम् ६३ आत्मनोजायतेप्राणःसदाछायेवदेहतः ॥ मनःकृतैःकर्मभिश्चसर्वदेहमयंव्रजेत् ६४ मनोत्रकुरुतेकर्मशुभंवाऽशुभमेववा ॥ भुंक्तेतदेवनिखिलंफलमा त्मप्रसादतः ६५ तस्यैवकर्मणाप्राणःशरीरपरिरक्षकः ॥ शरीरंचाप्नुयान्नित्यमात्मनोयोजनिंगतः ६६

उत्क्रममस्माच्छरीरान्निष्क्रमणंगच्छेदितित्रिधाचतुर्थः एपप्राणोबाह्यमधिभूताधिदैवरूपंकथंधारयतिसंबद्धंचपोपयतीतिपञ्चमः कथंवाध्यात्मंधारयतीतिषष्ठइत्यर्थः ६२ एवंपृष्टइति । तमाश्व लायनं अतिप्रश्नानन्यदीयप्रश्नमतिक्रांतान्अतिसूक्ष्मानितियावत् एतादृशानिमान्प्राणोत्पत्त्यादिरूपानर्थान्भोमुनेयतस्त्वंपृच्छसिततोहेतोरत्रमुनिसमाजेब्रह्मिष्ठोलक्ष्यसे अतिशयेनब्रह्मवान्ब्रह्म परोब्रह्मिष्ठः तुभ्यमुत्तमाधिकारिणेतत्त्वत्पृष्टमर्थजातंवक्ष्यामीत्यर्थः ६३ तत्रप्रथमप्रश्नोत्तरमाह आत्मनइति । यथादेहाच्छायाप्रतिबिंबादिरूपादर्पणसांनिध्यादिरूपनिमित्ताज्जायतेतथैवजी वरूपःप्राणोप्यात्मनःपरमार्थसत्याद्बिंबात्प्रतिबिंबभूतोजायते एतेनप्रतिबिंबस्यबिंबाद्यथापृथक्सत्ताहीनत्वेनतन्मात्राश्रितत्वंतथास्यप्राणस्यात्ममात्राश्रितत्वमितिसूचितं । द्वितीयप्रश्नोत्तरं प्रपंचयति मनःकृतैरित्यादिनापालकइत्यंतग्रंथेन । अयंजीवरूपःप्राणस्तत्तद्देहंयद्व्रजतितेनतेनदेहेनयत्संबद्धंचतेतत्रनिमित्तभूतानिमनसाविज्ञानात्मकेनकृतानिकर्माण्येवेत्यर्थः इयंपूर्वदलटी का ६४ तत्रहेतुतयामनसएवकर्तृत्वभोक्तृत्वयोराधारत्वमाह मनोत्रेति । आत्मनःप्रसादेनप्रतिबिंबरूपेणचेतनायमानंमनएवात्रसंसारेशुभादिकर्मणांकर्तृतत्फलभोक्तृचेत्यर्थः ६५ तस्यैवेति । तस्यमनसएवकार्यभूतेनमानसाख्येनकर्मणानिमित्तेनप्राणस्तत्तच्छरीरंप्राप्नोति । कीदृशः शरीररक्षकत्वेनप्रसिद्धः यस्यचोत्पत्तिरात्मनउक्ता ६६

ननुशारीरवाचिकयोरपिकर्मणोःसंसारनिमित्ततयान्यत्रोक्तेःकथमत्रमानसस्यैवसंसारनिमित्ततोच्यतेइतिशंकते कर्माणीति । अत्रशास्त्रेदेहवाङ्मनोरूपाणांहेतूनांत्रैविध्यात्पुण्यत्वादीनिकर्माणिशारीरादिभेदेनत्रिविधान्येवसर्वेषांप्रसिद्धानीत्यर्थः ६७ तथापिकारणप्राधान्यमादायमानसकर्मणःप्राधान्यमित्याह इंद्रियाणीति । इंद्रियसहितोदेहःकर्मकर्तुंस्वतंत्रोनभवतिकिंतुमनसाधिष्ठितएवकर्तुंप्रभुःसमर्थोभवतीत्यर्थः ६८ किंचमनोव्यापारमंतराकृतेकर्मणिफलारंभकतावच्छेदकस्यपुण्यत्वादेरेवाभावात्कथंसंसारहेतुतेत्याह अमनस्कस्येति । मनसाननुगृहीतस्यदेहादेर्यत्कर्मतत्पुण्यत्वेनपापत्वेनवाक्वचिदपिनोक्तमित्यर्थः ६९ कथंतर्हिमनोव्यापारंविज्ञानमंतराकृतानामेवब्रह्महत्यादीनांप्रायश्चित्तविधिर्विज्ञानकृतानांचप्रायश्चित्तत्रैगुण्यमितिधर्मशास्त्रमर्यादेत्याशंकामनूद्यपरिहरति यद्यपीति । यद्यप्यबुद्धिपूर्वाणामालोचनंविनैवकृतानांपापकर्मणांप्रायश्चित्तिर्विहितातथापिसाप्रायश्चित्तिर्मनसव्यापारयोगादेवानुष्ठीयतेनान्यथेत्यर्थः ७० एतदेवस्फुटयति अबुद्धीति । सोऽबुद्धिपूर्वकारीयदाअबुद्धिपूर्वंमयाकृतमित्येवंमनसाविचारयतितदैवप्रायश्चित्ताधिकारीभवतिनान्यथातथाननुसंधानेपीत्यर्थः ७१ मनोयोगादिति । ततोमनोव्यापारंवि

कर्माणित्रिविधान्यत्रपुण्यपापात्मकान्यपि ॥ देहेंद्रियमनोहेतुत्रैविध्यात्सर्वदेहिनाम् ६७ इंद्रियाणिचदेहोपिनस्वतंत्रःकदाचन ॥ कर्मकर्तुंप्रभुःकिंतुमनसासमधिष्ठितः ६८ अमनस्कस्ययत्कर्मदेहेंद्रियगणस्यच ॥ नतत्पुण्यंचपापंवाशास्त्रेषुपरिपठ्यते ६९ यद्यप्यबुद्धिपूर्वाणांप्रायश्चित्तिर्हिकर्मणाम् ॥ उक्तातथापिमनसायोगेसत्येवसाभवेत् ७० अबुद्धिपूर्वंहिकृतंमयेत्येवंविचार्यसः ॥ मनसाकुरुतेपश्चात्प्रायश्चित्तंनचान्यथा ७१ मनोयोगात्ततस्तस्यपुण्यंपापंचतद्भवेत् ॥ अनुष्ठितमबुद्ध्वायन्नान्यथाकर्हिचित्क्वचित् ७२ आत्मनोनैवकर्तृत्वंभोक्तृत्वंवापिविद्यते ॥ अविक्रियत्वतस्तस्मात्सर्वंतन्मनसिस्थितम् ७३ मनएवततःपापंपुण्यंवाकुरुतेसदा ॥ ताभ्यांचसर्वमेवेदंभवेदेहेंद्रियादिकम् ॥ प्राणोपिचततस्ताभ्यांदेहमायातिपालकः ७४ आत्मानंप्रविभज्यैषपंचधादेहसंश्रितः ॥ नियुंक्तेमंत्रिणोयद्वद्राजेंद्रियगणंतथा ॥ तत्रतत्रनियुंक्तेसौप्राणोव्यापारकारकः ७५ पायूपस्थगतोऽपानःप्राणःसप्तसुषिस्थितः ॥ मूर्द्धन्याधारयोर्मध्येसमानःसर्वदेहगः ७६ कोट्योद्वासप्ततिस्तद्वत्सहस्राणिदशैवच ॥ शतमेकाधिकंनाड्योहृदयस्थाहिदेहिनाम् ७७

नाप्रायश्चित्तादर्शनाद्यत्कर्मबुद्ध्वानुष्ठितंतन्मनोयोगादेवपुण्यतांपापतांवाप्रतिपद्यतेइत्यर्थः ७२ किंचशुद्धात्मनोनिर्विकारत्वेनकर्तृत्वाद्ययोगादिहादीनांपारतंत्र्यस्योक्तत्वाचकर्तृत्वादिभागिनिमनस्येवपुण्यादिकंस्थितमित्याह आत्मनइति ७३ फलितमाह मनएवेति । ताभ्यांमनःकृतपुण्यपापाभ्यांभवेत्जायेतततःकर्मवशादेवप्राणस्तत्तद्देहेनसंबद्धचतइत्यर्थः ७४ तृतीयप्रश्नोत्तरंप्रपंचयति आत्मानमितिसप्तभिः । एषप्राणोदेहसंस्थितःसन्नात्मानंपंचधावक्ष्यमाणैःपंचभिःप्रकारैर्विभज्यइंद्रियगणंतत्रतत्रव्यापारेनियुंक्तेप्रेरयतियथाराजामंत्रिणःप्रेरयतितद्वत् कीदृशःप्राणःक्रियाशक्तिमयत्वेनव्यापारकारकइत्यर्थः ७५ प्राणादिभेदांस्तत्स्थानानिचाह पायूपस्थेति । अपानाख्यःप्राणभेदःपायूपस्थयोःस्थित्वापुरीषादिविभागंकुर्वन्वर्तते प्राणःप्रधानभूतस्तुसप्तसुनासिकाश्रवणनयनयुगलमुखरूपेषुमूर्द्धन्यच्छिद्रेषुतिष्ठति समानाख्योभेदस्तुभुक्तपीतसमीकर्तृत्वेनसर्वदेहव्यापकोपिमूर्द्धन्यच्छिद्राणामाधारचक्रस्यचमध्येविशेषतस्तिष्ठतीत्यर्थः ७६ अथव्यानाश्रयदेशंवक्तुंतद्भावयोग्यानांनाडीनांपरमसंख्यामाह कोट्यइति । द्वासप्ततिकोट्योदशसहस्राणिएकोत्तरंशतंचेत्येतावत्योहृदयेस्थितानाड्यइत्यर्थः ७७

उक्तसंख्यांवृक्षरूपकेणोपपादयति एकेति । तत्रतासांनाडीनांमध्येएकासुषुम्नाख्यानाडीमुख्यामूलस्थानीयातस्यादशनाड्यःस्कंधभूतास्तासांस्कंधभूतानांदशानांप्रत्येकस्यनवनवशाखाःस्थूलशाखायालोकेस्कंधशाखेत्युच्यतेतत्स्थानीयाःस्युरित्यर्थः ७८ स्कंधेति । एवंसतिप्रधाननाडींसुषुम्नांविनास्कंधशाखाभूताभिर्नवतिसंख्याभिःसहितानांस्कंधभूतदशनाडीनांसंकलनेशतसंख्याभवतितस्यनाडीशतस्यप्रत्येकंशाखाभूताःशतंशतंनाड्यःस्युरित्यर्थः तथाचएकामुख्याशतंस्कंधशाखारूपानाड्योदशसहस्रंतासांशाखाइतिभावः ७९ प्रत्येकेति । प्रत्येकंशतत्वेनकथितानांतासांशाखाभूतनाडीनांप्रत्येकस्यउपशाखाभूताद्वासप्ततिसहस्रसंख्यानाड्यःस्युरित्यर्थः । तथाचद्वासप्ततिसहस्रसंख्यायादशसहस्रसंख्ययागुणनेद्वासप्ततिकोट्योभवंतीतिभावः एतेनभाष्यटीकायांसमस्तनाडीसंख्यायांद्वासप्ततिलक्षाणामेकस्यशतस्यचाधिकत्वेननिर्देशोनयुक्तः मूलभूतायाएकस्याःशाखोपशाखासंबंधस्यलोकविरोधादितिसूचितम् ८० तास्विति । तासुवर्णितसंख्यासुनाडीषुमुख्याभिन्नास्वेषप्राणापानसंधिरूपत्वेनबलवत्कर्मसाधकत्वेनचश्रुत्यंतरोक्तोव्यानश्चरतिवर्ततेतयासुषुम्नयातुउदानएवचरतियःसदोर्ध्वगमनशीलइत्यर्थः एतेनकेनद्वारेणकेनवृत्तिविशेषेणवाइतिद्विधाचतुर्थःप्रश्नःसमाहितः सुषुम्नाद्वारेणउदानवृत्त्याचोत्क्रमणाभिधानात् ८१ केननिमित्तेनेतिजिज्ञासांशमयन्सर्वेषांसुषुम्नामार्गेणब्रह्मलोकगतिर्यतोनभवतितद्दर्शयति सुखद

एकातत्रतुमुख्यास्यात्तथास्कंधादशापराः ॥ दशानामपिशाखाःस्युःप्रत्येकंनवसंख्यया ७८ स्कंधशाखासमेतानांनाडीनांतुशतस्यहि ॥ प्रधाननाडींहित्वाचप्रत्येकंस्याच्छतंशतम् ७९ प्रत्येकशतकानांतुतासांप्रत्येकमेवच ॥ द्वासप्ततिसहस्राणिनाड्यःप्रोक्तामनीषिभिः ८० तासुव्यानश्चरत्येषमुख्यांनाडींविहायताम् ॥ एकयायमुदानोर्ध्वंव्रजत्यूर्ध्वंसदैवसः ८१ सुखदंपुण्यतोलोकंनयेत्पापाच्चदुःखदम् ॥ सुखदुःखप्रदंतद्वदुभाभ्यामपिदेहिनः ॥ कर्मणैवततस्तस्यह्युत्क्रमोदेहतःस्मृतः ८२ एतैःप्राणादिभिर्भेदैश्चक्षुराद्यैश्चसर्वदा ॥ अंतर्विधारयेदेषआदित्याद्यैश्चबाह्यतः ८३ चक्षुरादित्ययोर्भेदोनैवप्राणस्वरूपयोः ॥ पृथिव्यपानयोस्तद्वद्दिहाकाशसमानयोः ॥ व्यानवाय्वोस्तथैवस्यात्तथातेजउदानयोः ८४

मिति । अयमुदानोमरणकालेपुण्यतःपरिच्छिन्नफलकस्येष्टापूर्तादिपुण्यस्योदयेसुखदंस्वर्गादिलोकंनयतिपापतस्तुदुःखदंनरकंनयतिउभाभ्यांपुण्यपापाभ्यामुदिताभ्यांमनुष्यलोकंनयति एतादृशप्रतिबंधकाभावेतुब्रह्मलोकंनयतीतिभावः ततःक्षीणकर्मणांतत्त्वविदामुत्क्रमणादर्शनात्तस्यप्राणस्यउत्क्रमउत्क्रमणंकर्मनिमित्तकमेवेत्यर्थः ८२ कथंबाह्यांतर्विधारकत्वमितिपंचमषष्ठप्रश्नयोरुत्तरमाह एतैरिति । एषप्राणएतैरुक्तैः प्राणापानसमानव्यानोदानाख्यैर्भेदैश्चक्षुर्वागादिगौणरूपैश्चअंतःअध्यात्मंस्थित्वाविविधंजगद्धारयेत् तथाबाह्यतोबाह्यैरादित्यपृथिव्यादिभीरूपैर्जगद्धारयेदित्यर्थः ८३ प्राणादीनांक्रमेणबाह्यरूपाण्याह चक्षुरिति । चक्षुषआदित्यस्यचभेदोनास्ति उभयोःप्राणस्वरूपत्वात्तदभिन्नाभिन्नस्यतदभिन्नत्वमितिन्यायानुगुण्यात् तथाचप्राणाख्यभेदस्यबाह्यंरूपमादित्यइतिभावः तथाअपानाख्यभेदस्यबाह्यंरूपंपृथिवी पृथिव्याऽपानाकर्षणदर्शनात् तथासमानस्यदेहमध्यस्थस्यस्वर्गपृथिव्योर्मध्यवर्त्ताआकाशोबाह्यंरूपंमध्यवर्तित्वसाम्यात् तथाव्यानस्यसकलनाडीव्यापकस्यवायुर्बाह्यंरूपं व्यापकत्वसाम्यात् तथाउदानस्यतेजोबाह्यंरूपं ऊर्ध्वगमनस्वभावसाम्यादित्यर्थः अत्रेदंबोध्यं यद्यप्युपदर्शितहृदयपंचच्छिद्रोपासनायामपानादेरग्न्यादिदेवताकत्वमुक्तंतथापिरूपभेदोपोद्बलितशाखाभेदेनप्रकृतविद्यायास्ततोभेदान्नदोषइति ८४

उदानतेजसोरभेदउपपत्तिःश्रुत्यादर्शितातामभिनयति तेजसीति । यस्माज्ज्ञानोष्मादिस्वरूपिणि ज्ञानमंतःकरणवृत्तिरूपं ऊष्मास्पर्शेनोपलभ्याउष्णता आदिपदेननेत्रनिमीलनोपलभ्या नांमयूरपिच्छाकाराणांकेशोद्गकाणांग्रहः एवंविधरूपेदेहसंबद्धेतेजस्युपरतेशांतेसत्ययंजीवःप्राणंप्रयातिऊर्ध्वोच्छ्वासरूपप्राणवृत्तिप्रधानोभवतिसचप्राणोऽन्नमयःआपोमयःप्राणइत्यादिश्रुतिषुजलम यत्वेनप्रसिद्धोप्यत्रमरणकालेउदानवृत्त्यातेजोरूपयासंयुतःसन्लोकांतरंनयेदित्यर्थः . तथाचतेजोव्यतिरेकेउदानस्थितेरुच्छेददर्शनादुदानतेजसोरभेदइतिभावः ८५ सप्राणःकंलोकांतरंनयतीत्या कांक्षायांतमेवजीवमित्याह अंतेइति । योजीवोऽतेमरणकालेअनेनतत्तदर्थाकारेणकर्मरूपतःकर्मानुसारिरूपंपरिणामोयस्यतथाभूतेनचचेतसासंस्कृतोमरणकालोद्भूतकर्मवशाद्भाविशरीराकारवि ज्ञानजन्यसंस्कारवानितियावत् तस्योत्क्रमणयोग्यताबोधनायविशिनष्टि मानसेनेति । पुनःकीदृशोजीवः इंद्रियैःसहितेनमानसेनमनसाआत्मनाप्राणेनचएकस्तादात्म्यापन्नस्तंलोकांतरं प्राणोनयतीतिपूर्वेणसंबंधः ८६ उक्तविज्ञानफलमाह प्राणमिति । परमात्मनउत्पन्नःकर्माधीनशरीरसंबद्धस्तत्तत्स्थानेषुस्थितःसकलाध्यक्षोऽधिदैवमध्यात्मंचसर्वसंबद्धःप्राणोस्मीत्येवंयः प्राणमुपास्तेतस्यविद्यारूपःशिष्यपरंपरात्मकोजन्मरूपःपुत्रपौत्राद्यात्मकश्चवंशोनविनश्यतीत्यर्थः ८७ अमृतश्चेति । तथाप्राणोपासनयाचित्तशुद्धिद्वाराजनितादात्मविज्ञानादमृतश्चभवति

तेजस्युपरतेयस्माज्ज्ञानोष्मादिस्वरूपिणि ॥ प्राणंप्रयातिजीवोयंप्राणोलोकांतरंनयेत् ॥ तेजसोदानरूपेणसंयुतोत्राम्मयोपिच ८५ अंतेयश्चेतसानेनसंस्कृतः कर्मरूपतः ॥ मानसेनात्मनाचैकइंद्रियैःसंगतेनच ८६ प्राणमेवंमयोक्तंयोजानीयात्पुरुषःसदा ॥ तस्यविद्यादिरूपेयंसंततिर्नप्रहीयते ८७ अमृतश्चात्मवि ज्ञानात्प्राणविद्यासमुत्थितात् ॥ भवेद्दुःखंयतोभूयोनव्रजेत्कर्हिचित्क्वचित् ८८ अथतस्मिन्नुपरतेगार्ग्यःसौर्यायणिर्वचः ॥ इदमाहविनीतात्मापिप्पलादंमुनी श्वरम् ८९ स्वपंतिकानिवपुषिकानिजाग्रतिसर्वदा ॥ स्वप्नान्पश्येच्चकतरोदेवःकश्चसुखंव्रजेत् ॥ प्राणादिकाश्चसर्वेमीआधारेकुत्रतर्हिवै ९० एवंपृष्टस्तदाते नपिप्पलादस्तमब्रवीत् ॥ चक्षुरादीनिसर्वाणिस्वपंतिस्वप्नदर्शने ॥ गत्वैकतांमनस्यत्रसुषुप्तौसमनांस्यपि ९१ प्राणापानादयःपंचजाग्रत्यग्निसमन्विताः ॥ पच्यतेशयनेयस्मादन्नंजठरसंस्थितम् ९२

यतःपुनःसंसारदुःखंनप्रतीत्यर्थः ८८ एवंसगुणविद्याविषयःप्रश्नत्रयेणोक्तोऽथनिर्गुणविद्यागोचरमवधारयितुंचतुर्थंप्रश्नंपंचविधमवतारयति अथतस्मिन्निति । तस्मिन्नाश्वलायनेउपरतेतू ष्णींभूतेसतिसौर्यायणिर्गार्ग्यःपिप्पलादंप्रतीदंवक्ष्यमाणजातीयंप्रश्नपंचकरूपंवचआहेत्यर्थः ८९ पंचविधंप्रश्नमेवाभिनयति स्वपंतीति । कानिस्वपंतिव्यापारोपरमरूपशयनस्याश्रयाःकेइति प्रथमप्रश्नः अस्यप्रयोजनंजाग्रदाश्रयनिर्णयः । यद्व्यापारोपरमेजाग्रन्निवृत्तिरूपंशयनंतस्यैवजाग्रदाश्रयतायाअर्थसिद्धत्वात् एवंकानिजाग्रतिसदास्वव्यापारारूढानीतिद्वितीयःप्रश्नः । अस्यप्रयो जनंशरीररक्षकनिर्णयः सदासावधानस्यैवरक्षकत्वयोगात् । स्वप्नान्कःपश्येदितितृतीयःप्रश्नः स्वप्नावस्थाश्रयनिर्णयफलकः स्वप्नावस्थायांसावधानस्यैवतदाश्रयत्वयोगात् । तथासुखंसुषुप्तिकालि कंकोव्रजतिभुंक्तेइतिचतुर्थःप्रश्नः सुषुप्त्यवस्थाश्रयनिर्णयाय । तथातर्हिसुषुप्तिकालेसर्वेमीप्राणादयःकुत्रकस्मिन्नाधारेतिष्ठंतीतिपंचमःप्रश्नस्तुरीयस्याक्षरस्यनिर्णयार्थइतिविभागः ९० एषांक्रमेणो त्तराण्यपिपिप्पलादउक्तवानित्याह एवंपृष्टइति । तंगार्ग्यं स्वप्नदर्शनेस्वप्नावस्थायांचक्षुरादीनिदशेंद्रियाणिमनसासहएकतांतादात्म्यंगत्वास्वपंतिनिवृत्तव्यापाराणिभवंति सुषुप्तौतुसमनांसिता निस्वपंति तथाचइंद्रियविशिष्टंमनोजाग्रदवस्थायाआश्रयइतिभावः ९१ कानिजाग्रतीतिद्वितीयंसमाधत्ते प्राणेति । प्राणापानव्यानोदानसमानाख्याःपंचप्राणभेदाअग्निनाजाठरेणसहिता अतएवाग्निभावापन्नाइतियावत्तेसुषुप्तोजाग्रति यतस्तदानींभुक्तमन्नंपच्यतेइत्यर्थः तथाचतएवशरीररक्षकाइतिभावः ९२

अत्रविदुषःसुप्तस्यापिश्रौताग्निहोत्रसंपत्तिःश्रुत्यादर्शितातामभिनयति प्राणइति । अग्निहोत्रिणांगार्हपत्याख्योग्निर्ध्रुवःआहवनीयस्तुहोमार्थंगार्हपत्यात्प्रणीयतेउद्धृत्यप्रज्वाल्यतेइतिप्रसिद्धंतथाप्रकृते अपानादंतःप्रविशद्वायुरूपात्प्राणोवहिर्गच्छद्वायुरूपःप्रणीयतेउत्क्षिप्यतेइतियावत् अनेनसाधर्म्येण प्राणाख्योभेदआहवनीयाग्निरूपः अपानस्तुगार्हपत्याग्निरूपः तथान्यानाख्योभेदोऽन्वाहार्यपचनः अन्वाहार्यमोदनविशेषःसपच्यतेस्मिन्नितिव्युत्पत्त्यादक्षिणाग्निस्तद्रूपोव्यानाख्यभेदः दक्षिणतःस्थितत्वसाम्यात् यथादक्षिणाग्निर्हिदक्षिणतःकुंडेस्थितस्तथाव्यानोपिहृदयपंचच्छिद्राणांमध्येदक्षिणच्छिद्रेस्थितइतिभावः समानाख्योभेदस्त्वग्निपुगार्हपत्यादिपुसमःपक्षपातरहितोहोतावोध्यः यजमानेकार्यांतरव्यग्रेयजमानप्रतिनिधित्वेनशिष्यादिर्होताप्रसिद्धस्तत्स्थानीयोत्रसमानइत्यर्थः ९३ तत्रहेतुमाह उच्छ्वासमिति । यद्यस्मादयंसमानउच्छ्वासनिःश्वासरूपेद्वेआहुतीसमेउत्कर्षापकर्षहीनेनयेत्प्रापयेदित्यर्थः पंचमोभेदउदानस्त्वस्याविद्वत्संबंधिनोग्निहोत्रस्यफलरूपः प्रसिद्धाग्निहोत्रेपिफललाभस्यउदानसाध्येनोत्क्रमणेनलभ्यत्वादितिभावः ९४ प्रकृताग्निहोत्रस्ययजमानमाह यजमानइति । तत्रप्राणाग्निसाध्येग्निहोत्रेमनएवयजमानस्थानीयंयतस्तंमनोरूपयजमानंप्राणरूपाअग्नयोदिवारात्रौवाजातायांसुपुप्तौहृदंबुजमध्यस्थंब्रह्मलोकरूपंस्वर्गंनयंति प्रसिद्धाग्निहोत्रफलमप्यग्निभिर्दीयतेइतिप्रसिद्धंमुण्डके ९५ फलितंतृतीयचतुर्थप्रश्नयोरुत्तरमाह मनएवेति ।

प्राणआहवनीयाख्योगार्हपत्योप्यपानकः ॥ व्यानोन्वाहार्यपचनःसमानोपिसमोग्निषु ९३ उच्छ्वासमपिनिःश्वासमाहुतीयन्नयेदयम् ॥ समेअस्याग्निहोत्रस्यह्युदानःफलमीरितः ९४ यजमानोमनस्तत्रसुपुप्तौतमहर्निशम् ॥ प्राणाग्नयोब्रह्मलोकेगमयंतिहृदंबुजे ९५ मनएवततःस्वात्मचैतन्यपरिदीपितम् ॥ पश्येत्स्वप्नंसुखंगच्छेत्सुप्तौसंसारवत्स्थितम् ९६ मनःस्थितोयआत्मायंचैतन्यवपुरीरितः ॥ प्राणादिकंजगत्सर्वंतस्मिन्नेवावतिष्ठते ९७ वासवृक्षेयथालोकेपक्षिणोनेकदिग्गताः ॥ पृथिव्यादीनिभूतानिगुणैःसर्वैर्निजैःसह ९८ चक्षुरादीन्यपितदाज्ञानकर्मेंद्रियाणिहि ॥ चतुर्विधांतःकरणंप्राणाःपंचविधाअपि ९९ सजीवइंद्रियादीनांव्यापारैरपिसंयुतः ॥ आत्मन्यत्रास्थितःसोयमिंद्रियैर्विविधैरपि १०० व्यापाराणांहिसर्वेषांकर्ताभेदविवर्जितः ॥ द्रष्टृत्वादिगुणोजीवसंज्ञोपिपरमेश्वरः १०१ यस्त्वेवंपुरुषंसंतंमानसंसर्वसंश्रयम् ॥ स्थूलसूक्ष्मशरीराभ्यांरहितंमाययापिच १०२

यतःस्वप्नावस्थायांमनोजाग्रदुक्तंसुपुप्तौचयजमानस्थानीयंततोमनएवचित्प्रतिबिंबवशाद्देदीप्यमानंसत्स्वप्नान्पश्येत्स्वप्नावस्थाश्रयःतथासुपुप्तिकालिकंसुखंपश्येत्सूक्ष्मरूपेणसुपुप्तेरप्याश्रयः यतस्तदानींसंसारवत्स्पष्टसंसारानुपलंभेपितद्वीजरूपेणस्थितमित्यर्थः ९६ पंचमंप्रश्नंसमाधत्ते मनःस्थितइत्यादिना । मनसिस्थितःप्रतिबिंबरूपेणानुगतश्चैतन्यलक्षणश्चयआत्मासएवप्राणादिकस्यसर्वस्यजगतआधारइत्यर्थः ९७ एतदेवस्फुटयति वासेतिद्वाभ्यां । यथालोकेसायंकालेअनेकदिग्गताःपक्षिणोवासयोग्येमहतिवृक्षेतिष्ठंतितथापंचभूतानितद्गुणागंधादयश्चक्षुरादीनिंद्रियाणिचतुर्विधमंतःकरणंपंचप्राणाश्चैतेपदार्थाःसपरिकराउक्तात्मन्यवतिष्ठंतइतिद्वयोरर्थः ९८ । ९९ नकेवलंजडप्रपंचएवतत्रस्थितःकिंतुविशिष्टरूपेणजीवोपीत्याह सजीवइति । इंद्रियांतःकरणप्राणानांव्यापारैर्विशिष्टरूपेणजीवोप्यत्रशुद्धआत्मनिस्थितइत्यर्थः वस्तुतस्तुतस्यपरेणैक्यमेवेत्याह सोयमित्यादिना । सोयमात्माविविधैरिंद्रियैःसहमिलित्वाव्यापाराणांदर्शनादीनांकर्तृत्वाद्द्रष्टृत्वस्पृष्टृत्वश्रोतृत्वादिगुणकःसन्जीवसंज्ञोपिवस्तुतःपरमेश्वरोयतोविज्ञानरूपेणभेदवर्जितइतिद्वयोरर्थः १०० । १०१ उक्तविज्ञानफलमाह यस्त्वेवमिति । यउक्तविधंसर्वोपाधिषुपरिपूर्णंमानसंविशेषतोमनस्यभिव्यक्तंसर्वाधिष्ठानंशरीरत्रयेणरहितंस्वप्रकाशानन्दरूपंसंतमक्षरंचजानीतेआचार्योपदेशेनसाक्षात्कुरुतेससर्वसामान्यरूपेणविशेषरूपेणचजानातिसंसृतितापान्मुक्तश्चभवेदितिद्वयोरर्थः १०२

१०३ एतदेवसंक्षिप्याह यत्रेति । यत्राक्षरेजीवस्तदुपाधयःप्राणादयश्चस्थितास्तंपरमात्मानंयोवेदससर्ववित्सन्परंपदंब्रह्मभावंगच्छेदिति १०४ वर्णितमक्षरंसकृदुपदेशेनावधारयितुंयो नशक्नोतितंप्रतिप्रणवालंबनंतदुपासनंविधातुंपंचमंप्रश्नमुत्थापयति सत्येति । अथअनुंपिप्पलादमिदमपृच्छत् इदंकिं हेभगवन्यःपुमान्मरणपर्यंतमोंकारंध्यायतिसलोकानांमध्येकंलोकंजय तीति १०५ इत्युक्तइति । इत्थंपृष्टःपिप्पलादउक्तवान् योवर्णओंकारइतिगीयतेसोयंपरमस्याक्षराख्यस्यापरस्यप्राणाख्यस्यवाब्रह्मणोभिधानंनामभवति कीदृशः अभिन्नः वाच्यवाचकयोरभे दस्यलोकेपिसिद्धत्वादितिभावः अथवादेवतायाःप्रतिमावत्प्रतीकत्वादभेदेनदृष्टव्यइत्यर्थः अन्यत्राप्यदृष्टयालंबनंहिप्रतीकइत्युच्यते १०६ अमुनेति । अमुनाप्रणवेनध्यातेनपरब्रह्मदृष्ट्याअ परब्रह्मदृष्ट्यावाचिंतितेनपरमपरंवाब्रह्मप्राप्नुयात्ध्याताहेसत्यकाम तथाएतद्वक्ष्यमाणंफलंयथाकामंभवेदित्यर्थः १०७ अत्रचफलेनकेवलंकामनाभेदःप्रयोजकःकिंतुमात्राभेदोपीत्याह मात्रेति । मात्राअकाराद्यास्तिस्रस्तासामेकस्याद्वयोस्तिसृणांवावेदादितादात्म्यानुसंधानस्यविशेषात्अयंफलभेदोबोध्यः अयंक्रः एकस्याःप्रथमायामात्रायाऋग्योंतिसोवृत्तीरित्यादिवाक्यदर्शितवेदादितादा

अक्षरंस्वप्रकाशाख्यमानंदात्मानमीश्वरम् ॥ जानीतेसतुसर्वंहिसामान्याच्चविशेषतः ॥ जानीतेसंसृतेस्तापाद्विमुक्तश्चभवेत्सदा १०३ यत्रजीवस्तथाप्राणाभूतें द्रियसमन्विताः ॥ स्थितायोवेदतंगच्छेत्सर्ववित्सपरंपदम् १०४ सत्यकामोथशैब्योभुपप्रच्छानंतरंमुनिम् ॥ भगवन्मरणान्तंयओंकारध्यानसंयुतः ॥ कतमं तेनलोकंसजयेदेतद्वदाधुना १०५ इत्युक्तःपिप्पलादस्तमिदंवचनमब्रवीत् ॥ ब्रह्मणःपरमस्यायमपरस्यचसर्वदा ॥ अभिधानमभिन्नःसन्नोंकारइतिगीयते १०६ अमुनाब्रह्मपरममपरंवापुमान्व्रजेत् ॥ ध्यातेनसत्यकामैतद्यथाकामंफलंव्रजेत् १०७ मात्राभेदात्फलेभेदःकथितोवेदवादिभिः ॥ एकद्वित्रिक्रमाद्भूस्वर्ब्रह्मलोकाः फलानिहि ॥ ऋग्यजुःसामभिर्नीतःक्रमात्प्राप्नोत्युपासकः १०८ ब्रह्मलोकंत्रिमात्रेणयतोनावृत्तिसंज्ञितम् ॥ व्रजेत्तेनत्रिमात्रोयंमुमुक्षोःशस्तईरितः १०९ त्रि मात्रःकथितःसोयमोंकारोब्रह्मलोकदः ॥ मात्राद्वयंतुसंसारसुखदंपरिकीर्तितम् ११० भूमिमृग्भिर्यजुर्भिःस्वर्ब्रह्मलोकंचसामभिः ॥ ओंकारात्सर्वमेवैतियतस्त स्मादयंमहान् १११ भारद्वाजःसुकेशाख्यःपप्रच्छेनमथागते ॥ स्वस्यावसरआत्मानंपिप्पलादंमुनीश्वरम् ११२

त्म्यानुसंधानादुपासकोभूलोकमृग्वेदाभिमानिभिर्देवैर्नीयते एवंद्वयोस्तथानुसंधानाद्यजुरभिमानिदेवैःस्वर्लोकंतिसृणांतथानुसंधानात्सामाभिमानिदेवैर्ब्रह्मलोकमित्यर्थः १०८ अत्रैका दिमात्रोपासनविधानेनतात्पर्यंकिंतुत्रिमात्रोपासनएवेत्याह ब्रह्मलोकमिति । अनावृत्तिःसंज्ञिताचेतितायतोभवतिसतथा संज्ञास्याचेतनेत्यमरः एतादृशंब्रह्मलोकंयतस्त्रिमात्रप्रणवेनव्रजेत्तत स्त्रिमात्रएवमुमुक्षुणाजप्यइत्यर्थः १०९ एतदेवस्फुटयति त्रिमात्रइति । मात्राद्वयंप्रथमादिकंसंसारःपुनरावृत्तिस्तत्सहितंभूस्वर्लोकभवसुखंददातीत्यर्थः ११० एवमात्रागुणप्राधान्येनो पासितःप्रणवउक्तंफलंददातिअर्द्धमात्राप्राधान्येनसमालंबितस्तुब्रह्मसाक्षात्कारमितिसूचयन्फलितमाह भूमिमिति । प्रथममात्राप्राधान्येनोपासनायामृग्भिर्ऋगभिमानिदेवैर्भूमिलोकमेति एवमग्रेपि अत्रप्रकरणेस्वःपदेनांतरिक्षलोकःप्रसिद्धस्वर्गविशिष्टउच्यते ओंकारादुपसर्जनीभूतमात्रात्रितयकात्सुसर्वंसर्वात्मकंब्रह्मैवेतियतएवंप्रभावःततोयंप्रणवोमहान्सर्वमंत्रेभ्यउत्कृष्टइत्यर्थः १११ अथषष्ठप्रश्नंचतुर्थप्रश्नेवर्णिताक्षरस्यप्रत्यक्त्वावधारणफलमुपक्रमते भारद्वाजइत्यादिना । अथसुकेशनामकोभारद्वाजःस्वस्यावसरेआगतेसतिएनंपिप्पलादंमुनिवरंप्रत्यात्मानंतत्पगवस्तु पप्रच्छेतिसंबंधः ११२

अस्यप्रश्नमभिनयति भगवन्निति षड्भिः । हेभगवन्षोडशकलपुरुषनिर्णयार्थंबहुवारंविचारंकृतवानस्मीति ११३ हिरण्येति । अत्रांतरेकोसलदेशाधिपतिर्हिरण्यनाभनामाएतमेवषोडशकलं पुरुषंप्रष्टुंमत्समीपमागतवान् ११४ तेनेति । तेनहिरण्यनाभेनपृष्टःसन्नहमेनंराजानंप्रतीदमुक्तवान् इदंकिं हेभूपतेअहमेतंपुरुषंनजानामीति ११५ तत्प्रत्ययार्थंयदुक्तवांस्तदपिश्रावयति स्वप्नेपीति । हेभूपतेअहमनृतभाषणस्यदारुणदुःखरूपंफलंपश्यन्विजानन् हेतोःशता स्वप्नेप्यनृतंनवच्मीति ११६ तत्फलंदर्शयति समूलइति । सपुरुषरूपोवृक्षोलोकद्वयात्मकंफलमप्राप्य समूलोमूलस्थानीयैर्भोग्यैःसहशुष्यतिक्षीयतेयोनृतंवदतीत्यर्थः ११७ इत्युक्तइति । इतिमयोक्तःसराजपुत्रोगतस्ततआरभ्यहृदयशल्यभूतजिज्ञासागोचरंतंपुरुषंहेब्रह्मन्वक्तुमर्हसि ब्रह्मेतिपाठेब्रह्म रूपमित्यर्थः ११८ एवंपृष्टोमुनिस्तस्यप्रत्यग्भावमुक्तवानित्याह एवंपृष्टइतिद्वाभ्यां । एषत्वत्पृष्टःपुरुषोदूरेपराग्भावेनतिष्ठतिकिंतुइहास्मिन्शरीराख्येसंघातेअंतःप्रत्यक्त्वेनतिष्ठति कीदृशो महेश्वरः विश्वनियंतासकलप्रपंचात्मकानांषोडशकलानामधिष्ठानत्वादितिद्वयोरर्थः ११९ । १२० तस्याद्वयत्वस्फुटीकारायषोडशकलास्रष्टृत्वमाह सोयमित्यादिना । सोयंमहेश्वरोजगदु

भगवन्षोडशकलआत्मायःपरिकीर्तितः ॥ तदर्थमहमत्यर्थंमननानिसमाप्तवान् ११३ हिरण्यनाभोनृपतिःकोसलानांकदाचन ॥ मामगात्प्रष्टुमात्मानमेनंविनयसंयुतः ११४ तेनपृष्टोहमप्येनमिदंवचनमुक्तवान् ॥ पुरुषंषोडशकलंनाहंजानामिभूपते ११५ स्वप्नेपिभूपतेनाहमनृतंवच्मिकर्हिचित ॥ पश्यन्ननृतवाक्यस्यफलंदुःखंसुदारुणम् ११६ समूलएवशुष्येत्सलोकद्वयफलंविना ॥ अनृतंयोवदेत्कापिपुरुषःपरिमोहितः ११७ इत्युक्तेराजपुत्रःसतूष्णींभूतोगतस्ततः ॥ मह्यंतंपुरुषंब्रह्मन्व्याख्यातुमधुनार्हसि ११८ एवंपृष्टस्तदाप्राहपिप्पलादोमुनीश्वरः ॥ भारद्वाजंपुमानेषनदूरेकस्यचित्कचित् ११९ इहैवांतःशरीरेस्मिन्पुमानास्तेमहेश्वरः ॥ यस्मिन्संतिकलानित्यंषोडशापिमहात्मनि १२० सोयमंतःशरीरस्थःपुरुषोजगदीश्वरः ॥ जगदुत्पत्तितःपूर्वमीक्षांचक्रेसिसृक्षया ॥ एवंजरायुनिर्माणंकर्तुकामोमहेश्वरः १२१ अहंसर्वगतोदेहेस्थितःकेनात्रसंसृतिम् ॥ उत्क्रांत्यादिगुणांगंताविक्रियापरिवर्जितः १२२ एवंविचिंत्यभगवान्स्वस्योत्क्रांत्यादिहेतुकम् ॥ प्राणंपंचात्मकंध्यातासृष्टवान्प्रथमंप्रभुः १२३ प्राणोपाधिरयंदेवोमृत्युरूपोमहेश्वरः ॥ धियमास्तिक्यरूपांतांश्रद्धांपूर्वंससर्जसः १२४ पंचभूतानितदनुज्ञानकर्मेंद्रियाणिच ॥ मनसासहितान्यन्नमन्नाद्वीर्यंशरीरिणाम् १२५

त्पत्तितःपूर्वमेवमीक्षांचक्रेआलोचनंकृतवान् कीदृशः सिसृक्षामिषेणजरायोर्गर्भस्यजरायुबद्धंधकस्यउपाधेर्निर्माणंचिकीर्षुरित्यर्थः १२१ एवंकथमित्यतआह अहमिति । अहमत्रदेहेस्थितोपिसर्वगतोविक्रियावर्जितश्चउत्क्रांतिर्देहान्निष्क्रमणमादिर्येषांगत्यादीनांतेगुणाःप्रकारायस्यास्तथाभूतांसंसृतिंकेनोपाधिनागंतागमिष्यामीत्यर्थः १२२ एवमिति । इत्थमालोच्यसप्रभुरीश्वरोभगवान्ज्ञानादिसंपन्नःअतएवध्याताआलोचयिताप्रथमंप्राणंप्रथमकलारूपंसृष्टवान् कीदृशं उत्क्रांत्यादयोहेतवःप्रयोजनानियस्यसतथातंपंचात्मकंपंचरूपकमिति १२३ प्राणोपाधिरिति । प्राणविशिष्टःसन्नयंदेवोमृत्युरूपश्चतुर्थाध्यायेऽशनायाशालितयामृत्युरितिवर्णितःश्रद्धाख्यांद्वितीयांकलांससर्ज कीदृशीं शुभकर्मप्रवर्त्तकास्तिक्यशालिबुद्धिरूपामिति १२४ पंचेति । ततःकर्मकृतिफलभोगयोराधारभूतानियान्याकाशादीनिपंचभूतानितद्रूपंकलापंचकमसृजत्ततोज्ञानकर्मसाधनंदशविधंचयदिंद्रियंतद्रूपामष्टमींकलामसृजत्तन्नियंतृमनोरूपांनवमींतरस्थितिप्रयोजकान्नरूपांदशमींतज्जन्यंयद्वीर्यंसामर्थ्यंतद्रूपामेकादशींचकलामसृजदित्यर्थः १२५

ततस्तपश्चेति । ततोवीर्यात्तपःशोधकंतथाकर्माणिलौकिकानिवैदिकानिजातानितथाश्रुतौमंत्रपदोक्तंवेदाध्ययनंचजातंयद्वेदाध्ययनंकर्मणांमध्येपूर्वंप्रथमम् । कर्मणाइतिपाठेयत्श्रुतौकर्मणःपूर्वंपठितंतद्भवेदित्यर्थः तथाचतपोद्वादशीवेदाध्ययनंत्रयोदशीकर्मचतुर्दशीकलेतिभावः १२६ मंत्रपदस्यवेदाध्ययनेलक्षणायांबीजमाह वेदाइति । मंत्रब्राह्मणरूपायेवेदास्तेसाक्षात्प्राणादेवप्रादुर्भूताः 'अस्यमहतोभूतस्यनिःश्वसितमेतत्' इत्यादिश्रुत्यंतरात्ननुवीर्यात्परत्वंत्रादिनाअन्नमादिःकारणंयस्यतथाभूतेनवीर्येणतपसाचततोऽध्ययनाद्यारोहरूपंविस्तारंगताइत्यतोऽध्ययनद्वारैवतेवेदाअन्नादेर्वीर्यादितोविनिर्गताःस्युर्नसाक्षादतोयुक्तालक्षणेत्यर्थः १२७ कर्मभ्यइति । तेभ्यःकर्मभ्योलोकाःकर्मफलानिसुखादिलक्षणानिपंचदशकलारूपाणिजातानितेपुतत्तच्छरीराद्यवच्छिन्नसंबंधिदेवदत्तादिरूपंनामषोडशकलात्मकंजातंयन्नामप्रलयपर्यंतमविनाशित्वादनंतमितिगीयतेश्रुतिष्वित्यर्थः १२८ यथाचैताःकलाःपरमात्मनएवोत्पत्तेर्नद्वैतावहास्तथातत्रविलयाच्चनद्वैतावहाइतिसूचयन्विदुषोमुक्तावस्थांवर्णयति मुक्तस्यैताइति । मुक्तस्तत्त्ववित्तद्दृष्ट्याएताःप्राणादिकाःषोडशकलाःस्वकारणंस्वकल्पनाधिष्ठानंनिर्गुणंपुरुषंप्राप्यविनश्यंतिअदर्शनंयांतिनदीसमुद्रन्यायेनेत्यर्थः १२९ न

ततस्तपश्चकर्माणिलोकवेदाश्रितानिच ॥ वेदाध्ययनमप्येतत्पूर्वंयत्कर्मणांभवेत् १२६ वेदामंत्रादिरूपाश्चप्राणादेवविनिर्गताः ॥ अन्नादिनाततस्तेपिस्युरन्नादेर्विनिर्गताः १२७ कर्मभ्योनिखिलालोकाःसुखदुःखात्मकाहिये ॥ लोकेपुनामयन्नाशंमुक्तस्यापिनगच्छति ॥ आसर्वभूतविलयमनंतमितिगीयते १२८ मुक्तस्यैताःकलाःसर्वाःपुरुषंप्राप्यनिर्गुणम् ॥ स्वकारणेविनश्यंतिसमुद्रमिवसिंधवः १२९ नद्योयथास्वकीयानिरूपाणिसहनामभिः ॥ त्यक्त्वायांतिसमुद्रस्यनामरूपेसमुद्रगाः १३० मुक्तस्यैताःकलाःस्वस्यनामरूपविवर्जिताः ॥ पुंसएवप्रयांत्येतानामरूपेमहात्मनः ॥ नामरूपविहीनस्यनिष्कलस्यपरात्मनः १३१ आनंदात्मापुमानेपस्वप्रभोनिष्कलोमृतः ॥ रथनाभावरायद्वत्कलास्तस्मिंस्तथास्थिताः १३२ एवंविजानतांपुंसांनपुनर्मृत्युजंभयम् ॥ भवेदेतच्छरीरस्यपाततःपरतःक्वचित् १३३ भारद्वाजमिदंप्रोच्यपुनःसर्वानभाषत ॥ पिपासादोपमिलितान्षडपिद्विजसत्तमान् १३४ एतावदेवजानामिद्विजाब्रह्माहमव्ययम् ॥ नातःपरंकिमप्यस्तिनजानाम्यतएवतत् १३५

यइति । यथानद्यःस्वकीयेनामरूपेविहायसमुद्रस्यैवनामरूपेधारयंतितथामुक्तस्यैताःकलाःस्वकीयाभ्यांनामरूपाभ्यांवर्जिताःसत्योनिर्विशेषस्यपुरुषस्यैवनामरूपेयांतीतिद्वयोरर्थः १३० । १३१ तंपुरुषंलक्षयति आनंदात्मेति । रथावयवनाभौयद्वदराःस्थितास्तद्वदस्मिन्नेताःकलाःस्थिताएषपुमान्स्वयंप्रकाशानंदरूपोनिर्विकारश्चेत्यर्थः १३२ अस्यपुरुषस्यात्मत्वेनविज्ञानांचप्रमादरूपान्मृत्योर्भयंनभवतीत्यतएतद्विज्ञानंभवतामप्यस्त्वित्याह एवमिति । एतच्छरीरस्यपाततःपरतःप्रारब्धसमाप्त्यनंतरमित्यर्थः १३३ भारद्वाजमिति । एतावद्भारद्वाजायमुक्त्वेशायउक्तापुनःसर्वान्प्रतीदमुक्तवान्पिप्पलादः कीदृशान् पिपासातद्वागमृतपानेतृष्णातद्वतः १३४ एतावदेवेति । हेद्विजाअहमेतावदेवब्रह्मरूपंतत्त्वंजानामिअस्यमज्ज्ञानस्यएतावत्त्वंनपरिच्छेदात्किंत्वधिकविषयाभावादित्याह नातइति । अतोमद्विज्ञाततत्त्वात्परंपृथगवशिष्टंकिमपिनास्तीत्यतःपरंनजानामीत्यर्थः १३५

इत्युक्ताइति । तेसर्वेइत्येवमुक्ताःकथिताःसंतस्तंपिप्पलादंमुनिंदेववदर्चयामासुः कीदृशंतं यशोरूपसाधर्म्येणदेवंदेवसममितियावत् तंप्रतीदंवाक्यमुक्तवंतः १३६ आचार्यप्रार्थनावाक्यम
भिनयति छिन्नाइतिचतुर्भिः । स्पष्टम् १३७ अद्येति । हेब्रह्मन्अद्यवयंत्वत्तोज्ञाताब्रह्मरूपेणेतिशेषः अतोब्राह्मणोत्तमाःस्मःसब्रह्मणःकेनस्यादित्यादिबृहदारण्यकश्रुतौब्रह्मविद्ययैवमुख्यब्राह्मण
स्यदर्शितत्वादितिभावः ततस्त्वमेवास्माकंमातापिताचनापरः भिथ्यात्मनःशरीरस्योत्पादकत्वात् तदुक्तंमनुना 'उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदःपिता । ब्रह्मजन्महिविप्रस्यप्रेत्यचेह
चशाश्वतम्' इति अन्यत्रापि 'शरीरमेतौकुरुतःपितामाताचभारत । आचार्यवद्यायाजातिःसानित्यासाजरामरा' इति १३८ त्वादृशेभ्यइति । भवताकर्णधारेणकर्णोपदेशकेनकामादिग्रा
हाकुलमविद्यावारिधिंतारिताःपारंनीताः अस्योपकारस्याऽस्माकंप्रत्युपकारमपश्यतामुपायनभूतोभवादृशान्गुरून्प्रीणयितुंनमस्कारएवास्तित्यर्थः १३९ एवमुक्तइति । एवंतैरुक्तेसतितान्य

इत्युक्ताअर्चयामासुस्तंमुनिंतेद्विजोत्तमाः ॥ देववद्यशसादेवमभाषंतचतंप्रति १३६ छिन्नास्तेसंशयाब्रह्मन्कृतार्थाश्चवयंकृताः ॥ दर्शितंचपरंब्रह्ममायातःपरतो
हियत् १३७ अद्यब्रह्मन्वयंजातास्त्वत्तोमीब्राह्मणोत्तमाः ॥ ततोमातापिताचत्वमस्माकंनापरःक्वचित् १३८ त्वादृशेभ्योनमस्कारोह्यस्माकंभवतात्सदा ॥ भ
वताकर्णधारेणतारितादुस्तरंवयम् ॥ अविद्यावारिधिंयत्रग्राहाःकामादयःश्रिताः १३९ एवमुक्तेथतान्सर्वान्पिप्पलादोव्यसर्जयत् ॥ यथासुखंयथान्यायंस्वयं
चगतवान्मुनिः १४० आत्मज्ञानमिदंशुद्धचेतोभिःसात्विकैःसदा ॥ प्राप्यतेब्रह्मनिष्ठेनमहतागुरुणेरितम् १४१ नृसिंहोपासकायद्वद्देवाःसंशुद्धमानसाः ॥ प्रा
प्तवंतःपुराब्रह्मगुरुणाब्रह्मणेरितम् १४२ इतितेकथितंसर्वंपिप्पलादेनकीर्तितम् ॥ ज्ञानंयद्भवतापृष्टंकिमन्यच्छ्रोतुमिच्छसि १४३ इतिश्रीमत्परमहंसपरिव्राजका
चार्यानंदात्मपूज्यपादशिष्येणशंकरानंदभगवताविरचितउपनिषद्रत्नआत्मपुराणेप्रश्नसारार्थप्रकाशेपिप्पलादसुकेशसंवादोनामसप्तदशोऽध्यायःसमाप्तः ॥ १७ ॥

थान्यायमाशीःप्रयोगपूर्वकंपिप्पलादोव्यसर्जयत् स्वयंयथासुखंगतवान् १४० उत्तराकांक्षांजनयन्ब्रह्मविद्यायायोगक्षेमप्रयोजिकाचित्तशुद्धिरेवोपासनाजन्येत्याह आत्मेतिद्वाभ्यां । एतज्ज्ञा
नंमहतागुरुणेरितमपिसात्विकैरेवावाप्यते यथानृसिंहोपासकादेवास्तत्प्रजापतिरूपगुरुणेरितंप्रापुरितिद्वयोःसंबंधः १४१ । १४२ उपसंहरति इतितेइति १४३ नमःसप्तदशायास्तुषोडशा
पेक्ष्यकल्पिता । कलानविद्यतेयत्रविभातेपरमात्मना ॥ १ ॥ अत्रकलापदमावर्त्ततेतत्रैकंवर्णितमर्थंपूर्वान्वयिद्वितीयंपरिच्छेदार्थकमुत्तरान्वयि परमत्वंकेवलत्वम् स्फुटमन्यत् इतिश्रीदत्तकुलति
लककृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांसप्तप्रश्नव्याख्यायांसप्तदशोध्यायःसमाप्तः ॥ १७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीगणेशायनमः ॥ ॥ भक्तत्राणेपराधेक्षामममास्त्विति चिंतया ॥ नूनंसर्वोत्तमभूतायश्रीनृकेसरिणेनमः ॥ १ ॥ श्रीसानासुरवारवारणपटुर्घोषोयदीयोद्भुतःक्षोणीध्रानपिचालयन्नशकलयन्द्वीपांस्तथाष्टादश ॥ प्रह्लादोदयहेतुरेवभगवानेषस्वरूपार्द्धहिःकश्चित्कर्तुमशक्नुवन्मुनिवरैरष्टादशेवर्ण्यते ॥ २ ॥ अथमेधावीशिष्योगुरोरुपदेशायाससाफल्यंदर्शयन्सविस्तरमुक्तमनूद्यपृच्छति श्रुत्वेतित्रिंशताश्लोकैः । चोप्यर्थेभिन्नक्रमः तथाचतृप्तिमुपागतोपिशिष्यआश्चर्यंनृसिंहोपासकदेववृत्तरूपंश्रुत्वापुनःप्रश्नायमनःकृतवान् १ उवाचचेति । एतद्वक्ष्यमाणं चेतसःप्रमोदेनविकासितवदनइतियावत् २ भगवन्निति । मुनीनांमैतरेयादीनांभावितस्तपसोद्योतितआत्मामनोयेषांतेतथा सुराणामिंद्रादित्यादीनाम् ३ गतमिति । ततोविज्ञानात्तमआवरणंगतमतएवात्माय थावद्भाति तस्यनिरतिशयप्रेमगोचरतायांदृष्टांतः कामिनीति ४ अद्येति । वाक्यगेवाक्यलब्धेआत्मनिर्णयेप्रष्टव्यंसंदिग्धंकिंचिन्नास्तीत्यर्थः ५ परमिति । तथापीत्यादिः तथापिएकंकौतूहलंकुत्राप्यर्थेजिज्ञासारूपंममवर्ततेबालभावमादाय बालभावादानेहेतुःपुनःपुनःप्रश्नेपिखिनोद्वेगमुत्तरोक्तिरूपंलालनमित्यर्थः ६ लालनरूपतयातीतकथाप्रबंधंवर्णयति मह्यमित्यादिना।

श्रीगणेशायनमः ॥ ॥ श्रुत्वानानाविधंज्ञानंशिष्यस्तृप्तिमुपागतः ॥ श्रुत्वाचाश्चर्यमतुलंपुनःप्रष्टुंमनोदधे १ उवाचचवचस्त्वेतत्स्वगुरुंहृष्टमानसः ॥ उत्फुल्लवदनांभोजःकृतकृत्येनचेतसा २ भगवन्भवतानेकमुनीनांभावितात्मनाम् ॥ सुराणामपिविज्ञानंबहुशोमह्यमीरितम् ३ गतंतमस्ततःसर्वंघोरसंसारकारणम् ॥ आनंदात्माचभात्येषस्वप्रभश्चनिरंतरम् ॥ हृदयेकामिनांयद्वत्कामिनीदुष्टचेतसाम् ४ अद्याहंकृतकृत्योस्मिभवतोवाक्यगेमया ॥ प्रष्टव्यंनात्मविज्ञानेर्किंचिदप्यवशिष्यते ५ परंकौतूहलंकिंचिद्वर्ततेबालभावतः ॥ लालितोभवतायस्मादहंनानाविधोक्तिभिः ६ मह्यंयस्मात्त्वयाप्रोक्तमैतरेयसमीरितम् ॥ ज्ञानमाख्यानसहितंदुर्लभंयद्द्विजन्मनाम् ७ श्रोतारश्चापिवक्तारोभाग्यवंतोत्रकेचन ॥ एतच्छ्रुत्वापिजीवंतिमादृशास्त्वादृशाअपि ८ कौषीतकेस्तुयज्ज्ञानमुच्छिन्नमिववर्त्तते॥ विरलेष्वेवविप्रेषुक्वचिद्देशेषुनास्तियत् ९ इंद्रप्रतर्दनाख्यानंश्रुतंतद्रोमहर्षणम् ॥ अजातशत्रोर्बालाकेःसंवादउभयोरपि ॥ आश्चर्यकारणंयत्रबुद्धिवृद्धिश्चजायते १० ज्ञेयंचारण्यकमहंयदादित्यादधीतवान् ॥ याज्ञवल्क्यइतिस्वस्यस्मृतौसंन्यासिनोवदत् ११ त्रिकांडंतच्चविविधमुपासनविवर्जितम् ॥ त्रिभिर्वंशैश्चसहितंमधुब्राह्मणसंस्थितम् १२

आदावैतरेयविज्ञानमुक्तं यद्द्विजानांदुर्लभम् ७ दुर्लभत्वमेवस्फुटयति श्रोतारश्चेति । अत्रद्विजानांमध्येयेएतद्विज्ञानंश्रुत्वाजीवंतिप्राणधारणमिवमन्यंतेतेमादृशाभाग्यवंतःश्रोतारःकेचनविरलाएवतथात्वादृशावक्तारोपिकेचनैवेतिसंबंधः ८ कौषीतकेस्त्विति । कौषीतकिमुनिसंबंधिज्ञानमप्युक्तंयदिदानीमुच्छिन्नंलुप्तसंप्रदायमिववर्त्ततेयतःकेषुचिद्विरलेष्वेवदृश्यते देशेषुदेशसंबंधेनप्रसिद्धेपुजनेषुनास्ति अमुकदेशेएतच्छाखाध्यायिनइतिप्रसिद्धिर्नास्तीतियावत् ९ इन्द्रेति । यत्रकौषीतकिविज्ञानेइंद्रप्रतर्दनयोर्वृत्तंश्रुतंतथाश्चर्यकारणभूतोबुद्धिवर्द्धकश्चाजातशत्रुबालाक्योःसंवादःश्रुतइत्यर्थः १० चतुर्थादीनांचतुर्णामध्यायानामर्थमनुवदति ज्ञेयमितिनवभिः । अयंयाज्ञवल्क्यःस्वस्यस्मृतौस्वकर्तृकेस्मृत्याख्यग्रंथेसंन्यासिनःप्रतिइत्यवदत्उपदिदेश इतिकिं 'ज्ञेयंचारण्यकमहंयदादित्यादधीतवान्' इति । यन्मयादित्यादधीतंतद्बृहदारण्यकमपिमुमुक्षुणाज्ञेयमर्थतोऽवधार्यमितितदर्थः ११ त्रिकांडमिति । तत्अवश्यज्ञेयतयोक्तआरण्यकेप्रोक्तंविज्ञानं कीदृशं त्रिकांडंमधुकांडयाज्ञवल्क्यकांडखिलकांडैःप्रकाशितंनानारूपंवंशत्रयसहितंमधुब्राह्मणेसंस्थितंप्राधान्येनपर्यवसन्नंचतदुपासनवर्जितमुक्तमित्यर्थः १२

मंत्राइति । यत्रारण्यकीयविज्ञानेमधुकांडस्यसर्वस्यमहानर्थःप्रकटीकृतः कथं अत्रमधुकांडेयेमंत्रास्तेषामर्थाविष्करणमुखेनेत्यर्थः १३ खिलेति । तत्रमधुकांडीयमंत्रार्थेखिलकांडीयोर्थोप्यंत
र्भावेणोक्तःयत्रमधुकांडार्थेदध्यङ्गुरुरुक्तःअश्विनौचशिष्यतयोक्तावित्यर्थः १४ शक्रइति । तथायत्रमंत्रद्रष्टुर्मुनेःशक्रोनर्थहेतुरुक्तस्तथाश्विनोरग्रतस्त्वस्यमुनेःपुनर्जीवनमुक्तमित्यर्थः १५
याज्ञवल्क्यीयेति । याज्ञवल्क्यीयेकांडेपंचमषष्ठाध्यायरूपेक्रमेणजल्परूपावादरूपाचयाकथाप्रवृत्तासाध्यायभेदेनोक्तेत्यर्थः १६ तत्रपंचमेजल्पकथोक्तेत्याह आश्वलादीतिद्वाभ्यां । आश्व
लादीनांगार्ग्याश्चहृदयेस्थितायेसंशयाबलात्तर्कादिरूपादापतिताःप्रकाशिताइतियावत् तेयाज्ञवल्क्येनविभिन्नाजल्पकथयानिरस्ताः शाकल्यस्यतुवर्त्तमानशरीरेणसहतेसंशयाःपुनर्यथानभवं
तितथाविभिन्नाइतिद्वयोरर्थः १७ । १८ वादकथयातुषष्ठेजनकःसंसाराद्बहिष्कृतःसप्तमेमैत्रेयीचसंसाराद्बहिष्कृतेत्याह जनकइति । अमुनायाज्ञवल्क्येनसंसाराद्भीतोजनकस्ततोबहिर्नी
तोमोचितस्तादृशीसंसारभीतास्वस्यभार्याचमोचितेत्यर्थः १९ अष्टमादित्रयार्थमाह श्वेताश्वतरेतिद्वाभ्यां । तदप्युक्तमितिशेषः २० यमइति । यत्रकठोक्तेयमनचिकेतसौगुरुशि



मंत्रायेत्रतदर्थानामाविष्करणतोमहान् ॥ मधुकांडस्यसर्वस्यमंत्रार्थःप्रकटीकृतः १३ खिलकांडस्यचाप्यर्थस्तत्रांतर्भावमागतः ॥ दध्यङ्ङाथर्वणोयत्रगुरुःशि
ष्यौतथाश्विनौ १४ शक्रोप्यनर्थहेतुश्चजीवनंचपुनर्मुनेः ॥ अश्विनोरग्रतस्तत्रमंत्रद्रष्टुर्यतोद्भुतम् १५ याज्ञवल्क्यीयकांडेपिजल्पवादकथाद्विधा ॥ प्रवृत्ता
ध्यायभेदेनब्रह्मज्ञानकरीसदा १६ आश्वलादिमुनींद्राणांसंशयाहृदयस्थिताः ॥ विभिन्नाअपिगार्ग्याश्चबलादापतिताहिये १७ याज्ञवल्क्येनमुनिनाशाकल्यं
स्यपुनस्त्विमे ॥ अनेनवपुषाभूयोनभवंतियथातथा १८ जनकोमिथिलानाथोभीतःसंसारकाननात् ॥ बहिर्नीतोमुनैवापिभार्यास्वस्यचतादृशी १९ श्वेता
श्वतरनामापियद्यतिभ्योऽवदत्पुरा ॥ द्विजेभ्योपियदुक्तामुभौतौकठतित्तिरी २० यमोयत्रगुरुःशिष्योनचिकेताविवेकवान् ॥ वरुणश्चभृगुस्तद्वद्वेनानुभवभा
षणम् ॥ संन्यासःपरमंयत्रसत्यादीनांचसाधनम् २१ जाबालादिश्रुतिप्रोक्तंज्ञानंनानाविधंमहत् ॥ पूर्वेसंन्यासिनोयत्रसंवर्ताद्यामुनीश्वराः २२ हेतुस्त्यागस्य
वैराग्यंतस्ययोगादिकंतथा ॥ अधिकारोविरक्तानांतस्यवेषश्चयत्रसः २३ शिखायज्ञोपवीतादिरहितोप्येकदंडवान् ॥ आचारोब्रह्मचर्यादिरात्मज्ञानंपरंतथा २४
सामाध्यायत्रयस्यार्थोयत्रज्ञानंसुशोभनम् ॥ आरुणिःश्वेतकेतुश्चगुरुशिष्यौमहामुनी २५ सनत्कुमारोभगवान्नारदश्चतथैवतौ ॥ यत्रब्रह्मागुरुःशिष्यौतद्वदिंद्र
विरोचनौ २६ केनेपोत्थंचविज्ञानमिंद्रोयत्रव्यलोकयत् ॥ ब्रह्मविद्याप्रसादेनयक्षंब्रह्मसनातनम् २७

ष्यौतित्तिर्युक्तेचवरुणभृगूतथावेनानुभवःसत्यादीनांमध्येसंन्यासःपरमंसाधनमितिचोक्तमित्यर्थः २१ एकादशार्थमाह जाबालादीतित्रिभिः । यत्रजाबालाद्युक्तविज्ञानेसंवर्त्ताद्याःपूर्वेप्रा
चीनाःपरमहंसाउक्ताः २२ हेतुरिति । तस्यपारमहंस्यरूपस्यत्यागस्यहेतुर्वैराग्यंयोगादिकंचोक्तं तथाविरक्तानांतस्यत्यागस्याधिकारइत्युक्तं तथात्यागिनांवेषश्चशिखादिरहितत्वेसत्ये
कदंडत्वलक्षणउक्तः तेषामेवब्रह्मचर्यादिरूपआचारःपरंज्ञानंचोक्तमितिद्वयोरर्थः २३ । २४ द्वादशादित्रयवृत्तमाह सामेतिद्वाभ्यां । साम्नश्छांदोग्यस्ययत्षष्ठाद्यध्यायत्रयंतस्यार्थःशोभन
ज्ञानमयोऽध्यायत्रयेणोक्तः यत्रारुण्यादयोगुरवःश्वेतकेत्वादयःशिष्याश्चोक्ताः २५ । २६ पंचदशादिवृत्तमाह केनेपोत्थमिति । केनेपःकेनोपनिषत्तदुत्थंतत्प्रतिपादितंज्ञानमुक्तंयत्रेंद्रोब्रह्म
विद्यानुग्रहेणयक्षरूपंब्रह्माव्यलोकयदित्युक्तमित्यर्थः २७

अथर्वणइति । अथर्वाणं प्रतियाविद्याब्रह्मणोक्तायेषट्प्रश्नायचतेषांप्रश्नानामुत्तरंपिप्पलादेनोक्तमेतत्सर्वंत्वयामह्यमुक्तमित्यर्थः २८ ततोहमिति । ततउक्तप्रश्नोत्तरैर्लालनात्किंचिदपरमपि
प्रष्टुमिच्छामि एकचममप्रश्नेपश्चतेनंनांपरज्जुन्यायेनेत्याह अवधार्येति । हेगुरोतत्प्रश्नेपंचतनंमेममसर्वंत्वदनुकीर्तितमवधार्यैवनतुपूर्वंविस्मृत्येत्यर्थः २९ फलितंप्रश्नंदर्शयति भवतेति । स्प
ष्टम् ३० एवंपृष्टोगुरुराथर्वणोमिमांनारसिंहींकथामुक्तवानित्याह इत्युक्तइति । तत्रोपासकत्वेनयेनिर्दिष्टास्तेचक्षुरादीनामधिष्ठातारआदित्यादयोबोध्याइत्याह उपासकाइति ३१ उपा
स्यतत्त्वंवर्णयति नृसिंहइति । नाचासौसिंहश्चसतथाभगवान्परमेश्वरउपास्यइतिशेषः । तत्रसिंहभावानुकूलंतस्यरुद्रत्वमाह क्रुद्धःसर्वसंहारकारकइति । क्रोधेनसर्वसंहारकत्वादयमेवरुद्र
इतिभावः नृभावानुकूलांब्रह्मविष्णुरूपाभ्यांसृष्टिस्थितिहेतुतामाह ब्रह्माचेति । तथाचपूर्वतापनीयश्रुतिः ' सब्रह्मासशिवःसहरिः ' इति ३२ तथापूर्वतापनीयेउमापतिःपशुपतिरित्यादिनारु
द्रायेदउक्तस्तंस्फुटयन्समानावामांगिरसाख्यशाखायांगतायाअथर्वशिरोनामकोपनिषत्तस्यांरुद्रचरितमित्यंतग्रंथेनवर्णितंमहिमानंपूर्वतापनीयार्थान्तर्भावेणप्रतिपादयति अथर्वशिरसीत्येकचत्वा

अथर्वणेचयाविद्याब्रह्मणोक्तातिशोभना ॥ षट्प्रश्नाउत्तरंतेषांपिप्पलादेनकीर्तितम् ॥ सर्वमेतत्त्वयाप्रोक्तंयद्यत्पृष्टंमयागुरो २८ ततोहमधुनाकिंचित्प्रष्टुमिच्छा
मिबालकः ॥ अवधार्यगुरोतन्मेसर्वंत्वदनुकीर्तितम् २९ भवताकथितंदेवाब्रह्मणोब्रह्मबोधनम् ॥ प्राप्तास्तदहमिच्छामिश्रोतुंब्रह्मावबोधनम् ३० इत्युक्तोगुरुर
प्याहकथामेतांसुशोभनाम् ॥ उपासकान्नृसिंहस्यदेवायेकीर्तितामया ॥ तइमेसर्वभूतानांचक्षुरादिषुसंस्थिताः ३१ नृसिंहोभगवान्क्रुद्धःसर्वसंहारकारकः ॥
ब्रह्माचसर्वजनकोविष्णुरप्येषपालकः ३२ अथर्वशिरसिप्रोक्तोरुद्रोयोदेवतागुरुः ॥ सर्वव्यापिनमात्मानमुक्त्वाचांतर्दधेपुमान् ॥ अंतरादंतरंगत्वापश्यतांत्रिदि
वौकसाम् ३३ ब्रह्मादयस्तुयस्यैताःप्रख्याताश्चविभूतयः ॥ विश्वरूपस्यदेवस्यमहिमाभर्तुर्महात्मनः ३४ दृष्ट्वासोमंयमात्मानंहृष्टचित्ताःसमुत्सुकाः ॥ एवमाहुः
सदेवान्याननुग्रहकरान्नृणाम ३५ अपामसोममभृतंनेत्राभ्यांपुण्यकारिणः ॥ अमृतावयमेतस्मादभूमेश्वरयाजकाः ३६ अयामपरमंज्योतिरानंदात्मानमद्वयम् ॥
नित्यमात्मतयासोमंसर्वदुःखविवर्जिताः ॥ देवानिंद्रादिकान्सर्वान्नविभ्मःस्वात्मरूपतः ३७

रिंशताश्लोकैः । योनृसिंहोऽथर्वशिरसिवर्णितरुद्ररूपोयोरुद्रःपुमान् पातेहेमुन् शरणागतानांपालकोदेवानांकैलासरूपंसत्यमूर्तिरूपंयास्वर्गमासानांस्वंकोसीत्यात्मानंपृच्छतांचगुरुःसआत्मा
त्वंसर्वव्यापिनिश्चयंनिपादनभानरादंतरंनितरांप्रत्यग्भावंगत्वाबोधयित्वातान्पश्यतांदेवानामहश्यांतर्दधेकैलासविमर्द्दितिरोहितेचक्रइत्यर्थः ३३ ब्रह्मादयइति । तथायस्यदेवस्यब्रह्माहिरण्यगर्भआ
दियोसौविष्णुःइंद्रादीनांमध्येयंनयाधांताख्यथाविभूतयोयंविष्णुपादिकैर्मंत्रैरथर्वशिरसिप्रोक्ताइत्यर्थः ३४ अपामेत्यादिमंत्रस्यार्थमाह दृष्ट्वेतिपंचभिः । यंरुद्ररूपमात्मानंसोममुमासहि
तंदृष्ट्वानंदेवाअन्यानन्यपूजकान्प्रत्येवमाहुर्वंतितेकानुग्रहायेत्यर्थः ३५ एवंकथमित्याकांक्षायांतदाकथ्याह अपामेत्यादिना । वयंदेवाःपुण्यकारिणोमहाभागाःस्मयतउमासहितंशंभुरू
पममृतंनेत्राभ्यांनेत्ररूपपात्रेणापामपीतवंतः अतएवामृताअमरणधर्माणोऽभूमजाताइत्यर्थः ईश्वरेत्याशुतराग्विपि ३६ अपामेति । वयंयतईश्वरस्ययाजकाआराधकाअतएवानंदरूपंपरं
ज्योतिःसोमंस्वमात्मत्वेनप्राप्ताअयाममप्राप्ताः इदानींमिंद्राद्यभिमानेनकुर्मइत्याहुः देवानिति । इंद्रादिदेवानात्मत्वेननविद्मः सोमस्यैवात्मतयादर्शनादितिभावः एतेन सुर्ताअविदामेत्यकारो
विध्यार्थकइतिसूचितम् ३७

नारीति । यैरस्माभिःसोमआत्मतयाप्राप्तोद्दृष्टस्तेषामस्माकमरातिःशत्रुभूतःकामःक्रोधादिश्चकिमपकरिष्यतिनकिमपीति कीदृशःकामःधूर्त्तःशठः तुच्छेनमारीसंज्ञशवेनपण्यतयोपन्यस्तेनजगतोधर्मादिरूपसर्वस्वापहारकत्वादितिद्वयोरर्थः ३८ । ३९ हृदिस्थाइत्यादेरर्थंदर्शयति हृदीति । ताःप्रसिद्धाःसर्वादेवताअस्माकंहृदितिष्ठंति यतःसर्वदेवात्मकःसोमःशंभुरस्माकंहृदिस्थितइत्यर्थः ४० तस्यहृदिस्थितावुपपत्तिमाह प्राणेति । प्राणापानरूपंयद्द्वयंतस्यमध्यस्थस्तयोःप्राणापानयोर्नियमनायतथात्रिमात्रात्प्रणवात्स्थूलसूक्ष्मकारणरूपवाच्यतादात्म्यापन्नात्परतःपरोयोतुरीयरूपेणेत्यर्थः ४१ रुद्रचरितमित्यतउत्तरग्रंथस्यतात्पर्यगोचरंतस्यप्रत्यग्भावंविशदयति मनसइतिद्वाभ्यां मनसोमनःप्रधानस्यलिंगाख्यस्यसूक्ष्मदेहस्ययोदेवोभासकःसाक्षी कीदृशस्यलिंगदेहस्य जगत्स्थूलप्रपंचस्तद्रूपंचित्रंप्रत्याधारपटभूतस्यअतएवतल्लेखाभूतवासनाभिर्वासितस्यांकितस्येत्यर्थः ४२ वासनाश्रयत्वमेवस्फुटयति वासनाइति । यत्रलिंगदेहेएतास्तदर्थविषयिकाःक्षुधातृषाकामक्रोधादीनांवासनाःसूक्ष्मावस्थारूपाःसंतिवर्त्तंतेयतोयाभिर्वासनाभिर्विश्वंसंसारःप्रवर्त्ततइत्यर्थः ४३ यस्येति । यस्यदेवस्यप्रणवात्मनःप्रणवेनसार्धत्रिमात्रेणतादात्म्य

नारीकुणपपण्येनजगतोयोत्रवंचकः ॥ धूर्त्तःकामस्तथारातिःक्रोधादिर्विविधोपियः ३८ किंकरिष्यतिभक्तानामस्माकंसोमआत्मनि ॥ नित्यमात्मतयाप्राप्तोह्यस्माभियरयंपुमान् ३९ हृदितिष्ठंतिनिखिलादेवतानःसदैवताः ॥ सोमोहृदयगोयस्मात्सर्वदेवात्मकोहिनः ४० प्राणापानद्वयांतस्थस्तयोर्योत्रनियामकः ॥ ओंकाराच्चत्रिमात्राद्यःपरतोस्तिपुमान्सदा ४१ मनसोलिंगदेहस्यसर्वदेवावभासकः ॥ जगच्चित्रपटस्यास्यवासनावासितस्यहि ४२ वासनायत्रसंस्थिताःशतकोटिसहस्रशः ॥ क्षुत्तृष्णाकाममुख्यानांयतोविश्वंप्रवर्त्तते ४३ यस्यनामानिचैतानिसर्वदाप्रणवात्मनः ॥ ओंकारःप्रणवःसर्वव्याप्यनंतश्चतारकः ४४ सूक्ष्मःशुक्लोवैद्युतश्चपरब्रह्मैकएवच ॥ एकोरुद्रस्तथेशानोभगवांश्चमहेश्वरः ॥ महादेवस्तथाविष्णुर्ब्रह्माचैवप्रजापतिः ४५ उच्चार्यमाणोभूतानामूर्ध्वंनयतितद्वपुः ॥ ओंकारस्ततएवायंलोकोन्नतिकरत्वतः ४६ शब्दब्रह्ममयंवापिसुखंनानाविधंतथा ॥ प्रापयत्यात्मनोन्यत्रप्रणवस्तेनगीयते ४७ प्रणवःप्रलयोवापिनामांतरतउच्यते ॥ पाप्मनोदुःखयुक्तस्यसर्वस्यापिलयोयतः ॥ भक्तानांप्रलयस्तस्मात्प्रणवःपरिकीर्त्तितः ४८

मापन्नस्यैतान्योंकारादीनिप्रजापत्यंतान्यष्टादशनामानिवेदिकैरुक्तानितत्रएकोरुद्रइत्येकंनामततःपरंनामान्तरमितिद्वयोरर्थः ४४ । ४५ एषांमहेश्वरांतनाम्नांव्युत्पत्तयोथर्वशिरस्येववर्णितास्ताःप्रदर्शयति उच्चार्यमाणइत्यादिना । यस्मादयंप्रणवउच्चार्यमाणःसन्भूतानांप्राणिनांवपुस्तत्प्राणरूपमूर्ध्वंशिरोदेशमुत्कृष्टलोकरूपंवानयतिप्रापयति ततःप्रवृत्तिनिमित्ताल्लोकानामुन्नतिकरत्वरूपादयमोंकारइत्युच्यतेइत्यर्थः ऊर्ध्वंकरोतीतिविगृह्यऊर्ध्वशब्दस्यओभावोनिपातनादितिभावः ४६ द्वितीयंप्रणवेतिनामव्युत्पादयति शब्देतिद्वाभ्यां । श्रुतौब्रह्मपदोक्तंसुखं कीदृशं शब्दब्रह्मऋगादिवेदचतुष्टयरूपं अथवानानाविधंमानुषानन्दमारभ्याहिरण्यगर्भानन्दान्तंतदात्मनआराध्यादन्यत्रभिन्नेष्वाराधकेषुब्राह्मणेषुप्रापयतितदधीनंकरोतीतियावत् तेननिमित्तेनप्रणवइत्युच्यते प्रकर्षेणनमयतीतिव्युत्पत्तिकस्यप्रणवशब्दस्यमकारस्थानेवकारनिपातनादितिभावः ४७ अथवाविकाराणांरूपाणांनमनंकारणेआत्यंतिकोलयस्तद्धेतुत्वादस्यप्रणवत्वमित्याह प्रणवइति । अथवाप्रणवपदेनप्रलयत्वमुच्यतेयतोभक्तानांदुःखयुक्तस्यपाप्मनोयोलयःसआत्यन्तिकत्वात्प्रलयरूपोभवति तस्माद्भक्तानांसनिदानदुःखप्रलयरूपत्वादयंप्रणवउक्तव्युत्पत्त्याकथितइत्यर्थः ४८

तृतीयंसर्वव्यापीतिनामव्युत्पादयति घृतेतिद्वाभ्यां । पिष्टंतिलपिंडःश्रुतौपललपिण्डपदेनोक्तं आदिपदेनदधिघनपिंडादिग्रहः तद्रूपंद्रव्यंयथातैलरूपोघृतरूपोवास्नेहःस्वरूपेणांतर्बहिश्चनिखिलं व्याप्नोतितथाप्रपंचेसर्वथाव्यापनाद्देवोयंसर्वव्यापीत्युक्तइतिद्वयोरर्थः ४९ । ५० त्रिविधपरिच्छेदराहित्यात्तस्यानंतइतिचतुर्थंनामेत्याह देशतइति । संसारवारिधिंजन्मजरादिदुःखमयं यतस्तारयतिभक्तांस्तत्पारंप्रापयतिततस्तारेतिपंचमंनामेतिद्वयोरर्थः ५१ । ५२ षष्ठंसूक्ष्मेतिनामव्युत्पादयति सूक्ष्मइति । सर्वेषुदेहेष्वल्पेनदुर्लक्ष्येणजीवरूपेणयतःस्थितस्ततःसूक्ष्मइत्यु च्यते अत्रश्रुत्यंतरमनुकूलयति वालाग्रेति । वालाग्रस्ययःशततमोभागस्तस्यापियःशततमोभागस्तद्वदयंजीवरूपेणसूक्ष्मोवस्तुतस्तुमहतोपिमहानित्यर्थः ५३ अथवापरकीयनाडीप्रभृत्यंगव्या प्तिसाध्यत्वेनसूक्ष्मस्यपरकायप्रवेशादिरूपव्यापारस्यहेतोःप्राणादप्ययंसूक्ष्मस्ततोयंप्रणवरूपईश्वरःसूक्ष्मइत्युच्यतइत्याह परकायेति । यःप्राणोयोगिनःपरकायप्रवेशादिहेतुस्ततःप्राणादपिसूक्ष्म त्वादयंसूक्ष्मउक्तइत्यर्थः ५४ सप्तमंशुक्लेतिनामव्युत्पादयति क्रमइति । क्रमपदमविद्यादीनांयोगप्रसिद्धानांपंचक्लेशानांवाचकंतेषांशुद्धेरात्यंतिकनिवृत्तेःकर्त्ताभगवान्शुक्लइत्युच्यतइत्य र्थः शुद्धोनिवृत्तःक्रमोयेनेतिव्युत्पत्तिकस्यशुद्धक्रमशब्दस्यमध्यांत्यवर्णयोर्लोपेशुक्लपदसिद्धिरिति । श्रुतिसमन्वयस्तुक्लंदतेरोदयतियःक्लेशस्तंक्रामयतिग्लानिमंतंकरोतीतियोजनयाबोध्यः

घृततैलादिकःस्नेहस्तिलपिष्टादिकेयथा ॥ व्याप्नोतिनिखिलंद्रव्यंस्वात्मनांतर्बहिस्तथा ४९ एवंविश्वमिदंदेवःसर्वव्याप्नोतिचात्मना । सर्वव्यापीततःसद्भिःक थ्यतेप्रणवाभिधः ५० देशतःकालतस्तद्वद्वस्तुतश्छेदवर्जितः ॥ प्रतीयतेसदेवैषनृणामात्मन्युपासनात् ५१ अनंतस्ततएवायंकथ्यतेवेदवादिभिः ॥ संसारवा रिधेरेषतारकस्तारईरितः ५२ सूक्ष्मःसर्वेषुदेहेषुसंस्थितोह्यल्परूपतः ॥ वालाग्रशतभागस्यभागोयद्वत्तथापुमान् ॥ सूक्ष्मस्ततोयमुदितोमहीयान्महतोहियः ५३ परकायप्रवेशादिहेतुर्वायोगिनोपियः ॥ ततोपिसूक्ष्मरूपोयमुच्यतेवेदवादिभिः ५४ क्रमःक्लेशःसमुद्दिष्टःपंचधायोव्यवस्थितः ॥ तस्यशुद्धिकरोदेवःशुक्लएषप्रकी र्त्तितः ५५ अंतर्बहिःप्रकाशाभ्यांनिर्गुणःसगुणस्तथा ॥ वर्ततेसहदेवोयंवैद्युतस्तेनकथ्यते ५६ बृहत्त्वाद्बृंहणत्वाच्चसर्वोत्कर्षेणसंततः ॥ प्रणवाख्यंपरंब्रह्मरुद्रएष प्रकीर्तितः ५७ सृष्टिस्थित्यंतकरणाद्विश्वरूपोव्यवस्थितः ॥ भेदवानिवनिर्भेदएकस्तेनप्रकीर्तितः ५८ एकोरुद्रश्चभगवांस्ततएवनिगद्यते ॥ पालयन्नखिलं विश्वंस्वशक्त्यामाययासदा ॥ तुरीयंचपदंदत्वायोगिनांदुःखहायतः ५९

तथाचं 'क्रुदिआह्वानेरोदनेच' इतिस्मृतिरितिभावः ५५ अष्टमंवैद्युतेतिनामव्युत्पादयति अंतरिति । अयंदेवोनिर्गुणःसन्नंतःसंघातस्यांतरेणप्रकाशनव्यापारेणसहवर्त्तते सगुणस्तुबहिरादित्यादौ स्थित्वाप्रकाशनव्यापारेणसहवर्त्ततेतेननिमित्तेनवैद्युतइत्युक्तः विद्युताप्रकाशेनसहितइतिव्युत्पत्तिसमन्वयादितिभावः ५६ परंब्रह्मेतिनवमंनामव्युत्पादयति बृहत्त्वादिति । एषरुद्रःप्रणवा ख्यःपरंब्रह्मेतिप्रकीर्तितः यतःसर्वोत्कर्षहेतुकबृहत्त्वात्तथाबृंहणत्वात्सत्ताप्रदानेनवृद्धिहेतुत्वात्संततःसर्वत्रव्याप्तइत्यर्थः तथाचबृहत्त्वात्परत्वंबृंहणत्वाद्ब्रह्मत्वंचादायपरंब्रह्मेतिनामसिद्धमितिभावः ५७ एकेतिदशमनाम्नोर्थमाह सृष्टीति । यतोयंदेवएवसृष्ट्यादिकारणत्वाद्विश्वरूपोव्यवस्थितस्ततोभेदवानिवकल्पितभेदशालितयोपलभ्यमानोपिवस्तुतोनिर्भेदस्तेनभेदराहित्येनैकइत्युक्तइत्यर्थः ५८ एकादशमेकोरुद्रइतिनामव्युत्पादयति एकइति । ततोनिर्भेदत्वादत्रभगवानेकोरुद्रइतिव्यपदिश्यतेश्रुतिषु तथाचश्रुतिः 'एकोरुद्रोनद्वितीयायतस्थौ' इति तत्रैकत्वंवर्णितं रुद्रत्वं तुरुतदुःखंद्रावितक्षीणंकरोतीतिप्रसिद्धव्युत्पत्त्या अथवाकपिभिःशुद्धरसंरूपंद्रुतंलभ्यतइतिश्रुतिदर्शितव्युत्पत्त्याकपिशब्दस्यरुभावेद्रुतशब्दस्यद्रभावेचकृतेबोध्यमितिदर्शयन्नाह पालयन्नित्यादि ना । स्वशक्तिभूतयामाययाविश्वंपालयन्सन्लोकस्यदुःखहातुरीयपददानेनचयोगिनांदुःखहायतस्ततएकोरुद्रइत्युक्तइत्यर्थः ५९

द्वादशमीशानेतिनामव्युत्पादयति ससंकोचेतिचतुर्भिः । सईश्वरःकदाचित्प्रलयेसंकोचवान्कदाचित्सृष्टिकालेतुविकासवान्सन्पटवत्स्थितः तथापुमान्पालकः तथासर्वेषामात्मनांजीवानांयाबुद्धयस्तासांकारणोपहितरूपेणस्रष्टा तथाबुद्धिधर्मैरागद्वेषादिभीरहितश्चयतोभवतिततईशानइत्युक्तः अभिन्ननिमित्तोपादानत्वादांतरत्वाद्वैषम्याद्यभावाच्चास्येशानत्वंमुख्यं एतद्विपरीतेजीवेतुगौणं अनीशयाशोचतिमुह्यमानइत्यादिपुजीवस्यपरतंत्रतायाःप्रसिद्धत्वादितिभावः ६० अत्रसंवादायश्रुत्याभित्वाशूरेत्यादिमंत्रउपन्यस्तस्तस्यार्थमाह स्तूयमानइत्यादिना । यतोविश्वनियामकःअतएवैषभगवान्सद्भिर्विद्वद्भिरेवंस्तूयमानोभवति एवंकथं भगवान्शूरोभवतियतोरणरंगगुणःअसुरैःसहयोरणस्तत्रविकासमानागुणायस्यसतथा तथास्वात्मदर्शनरूपबलेनकामादीनामांतरशत्रूणांघस्मरोभक्षकोयतःस्मरस्यमदनस्यदेहंदहतीतिस्मरदेहधक् धृगितिपाठेस्मरदेहंधृष्णोतिप्रगल्भतेइत्यर्थः ६१ त्वामिति । हेभगवंस्त्वांसर्वेषांहृदयपंकजेपुवसंतंवाग्भिःस्तुतिरूपाभिर्वयंशरणार्थिनःस्तुमआराधयामः कीदृशं स्वकीयास्तुतिःप्रियाप्रीतिहेतुर्यस्यसतथातम् ६२ तवस्तुतयःफलप्रदानायस्वयमेवास्मानाह्वयंतीत्यस्मिन्नर्थेअदुग्धाइत्यादिमंत्रभागस्यतात्पर्यमितिदर्शयन्नाह स्तुतयइति । हेदेवेशयथाघटोध्न्यःघटवदूधःक्षीरायतनंयासांतथाभूताधेनवोनवप्रसूतागावःअदुग्धायासांदोहनंनकृतंतथाभूताश्चहुंकारान्स्नेहशब्दा

ससंकोचविकासाभ्यांपटवत्संस्थितःपुमान् ॥ स्रष्टासर्वात्मबुद्धीनांबुद्धिधर्मविवर्जितः ॥ ईशानएषकथितोरुद्रःसर्वैश्चहेतुभिः ६० स्तूयमानःसदासद्भिरेवंविश्वनियामकः ॥ रणरंगगुणःशूरोभगवान्स्वात्मदर्शनः ॥ कामक्रोधादिशत्रूणांघस्मरःस्मरदेहधक् ६१ त्वांसर्वजगतोनित्यंहृदयाब्जनिवासिनम् ॥ स्वकीयाभिर्वयंवाग्भिःस्तुमआत्मस्तुतिप्रियम् ६२ स्तुतयस्तवदेवेशघटोध्न्यइवधेनवः ॥ अदुग्धाःस्वात्मनाभक्तवत्सान्भूमिपयोजुषः ॥ आकारयंतिहुंकारान्सृष्ट्वादुःखापहारकाः ६३ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ ज्ञानवैराग्ययोस्तद्वद्भगस्यायंसमाश्रयः ॥ भगवांस्ततएवायमुच्यतेविश्वपालकः ६४ महतामत्रभूतानांपंचानामपिसर्वदा ॥ सृष्टिस्थित्यंतकरणादीश्वरोयंमहेश्वरः ६५ आनंदात्मामहान्प्रोक्तःस्वप्रकाशःसदाद्वयः ॥ सत्यज्ञानादिरूपोयंसर्वभेदविवर्जितः ६६ एनमात्मतयायस्मात्सर्वदैवप्रपश्यति ॥ महादेवस्ततःप्रोक्तउमापतिरयंप्रभुः ६७ विशत्येषसदासर्वंसद्रूपस्फुरणप्रदः ॥ एनमात्मतयायोगीविशेत्तादात्म्यरूपतः ॥ विष्णुस्तेनायमुदितःसर्वगःपरमेश्वरः ६८

न्कृत्वावत्सानाकारयंतिआह्वयंतितथातवस्तुतिरूपागावोभक्तरूपवत्सान्भूमिपयोजुषःभूमयस्तास्ताःफलावस्थास्तद्रूपंपयःकामयमानान्प्रेम्णास्वात्मनास्वयमेवाकारयंतिनतुवत्सप्रयत्नमपेक्षंतेयतोदुःखस्यवैक्लव्यरूपस्यापहरणपराइत्यर्थः ६३ त्रयोदशस्यभगवदितिनाम्नोर्थमाह ऐश्वर्यस्येति । पूर्णैश्वर्यादिगुणषट्कस्यभगपदवाच्यस्याश्रयत्वादयंभगवानित्युक्तः तत्रश्रीःकांतिरूपा ६४ चतुर्दशंमहेश्वरेतिनामनिर्वक्ति महतामिति । अन्येईश्वरास्तटस्थायत्किंचिद्देशीयप्राणिरूपाल्पभूतानांप्रसिद्धाः अयंत्वाकाशादीनांमहाभूतानामीश्वरस्तेषांसृष्ट्यादिनिदानत्वेनाभिन्ननिमित्तोपादानभूतश्च अतोस्ययुक्तंमहेश्वरत्वमित्यर्थः पंचदशंमहादेवेतिनामपूर्वतापनीयेउमापतिरितिनामनिर्देशेनसूचितनिरुक्तिकमुमायाब्रह्मविद्यारूपायाःपत्युरेवदेवस्यमुख्यमहत्त्वयोगादितिसूचयंस्तदर्थमाह आनंदात्मेतिद्वाभ्यां । आनंदादिलक्षणःशुद्धआत्मामहान्संकुचिनमहत्त्वशालीप्रोक्तः एनंवर्णितमात्मानंयतएवदेवःस्वरूपतयासदापश्यत्युमापतित्वात्ततोमहादेवइत्युक्तइतिद्वयोरर्थः ६६ । ६७ षोडशंविष्णुनामनिर्वक्ति विशत्येषइति । एषपरमात्मायतःसर्वंदृश्यजातंसदादिरूपेणप्रविशति अथवायोगिनाआराधकेनतादात्म्येनप्रविश्यतइतिविशधातुघटितव्युत्पत्त्याविष्णुरित्युक्तइत्यर्थः ६८

पूर्वतापनीयेतुविष्णुर्व्याप्ताविति धात्वर्थानुगमेन यद्ब्रह्मत्वं व्यापकत्वरूपं तेन यत्सर्वाधिकत्वं तेन निमित्तेन विष्णुत्वमुक्तं प्रकाशस्य यत्प्रभुत्वं नियामकत्वं तदादाय महः पदं निपातेनाकारांतं कृत्वा विष्णुप दात्पूर्वं प्रयुक्तमित्याह ब्रह्मेति । ब्रह्मपदं भावप्रधानं तथा च ब्रह्मत्वप्रयुक्तसर्वाधिकत्वेन सर्वत्र प्रकाशप्रयोजकत्वेन च यो यं देवो विष्णुश्च महारान्महेति चोक्तो महाविष्णुरिति निर्दिष्ट इति यावत् कुत्र पूर्वतापनीये हि यतस्तत्र व्युत्पादिते मंत्रे उग्रमित्यादिके एकादशाऽहमंतानि पदानि यस्य तथाभूतेन रसिंह उक्तरूप एव देवतं प्रतिपाद्य इत्यर्थः ६९ आनुष्टुभेचेति । कीदृशे तत्र मंत्रे आनुष्टुभे अनुष्टुप् द्वा त्रिंशदक्षरं छन्दस्तद्वति पुनः कीदृशे सामाख्ये साम्नास्वरविशेषरूपेणाख्या समुच्चारणं यस्य स तथा तस्मिन् पुनः कीदृशे प्रणवादिभिरंगैर्युक्ते आदिपदेन सावित्र्याद्यंगमंत्रग्रहः तथा च प्रणवेन हृद यं सावित्र्याष्टाक्षरेण शिरो यजुर्लक्षणा शिखा नृसिंहगायत्र्या कवचं महाचक्रमंत्रेरस्त्रमिति पंचांगन्यासः सूचितः अथवा प्रणवेन हृदयं कृत्वा मंत्रस्य पादचतुष्टयेन शिखादिक्रमस्त्रांतमंगचतुष्टयं कुर्यादिति दर्श यन्मंत्रं पुनर्विशिनष्टि. चतुष्पादीति । चत्वारः पादा यस्य स चतुष्पाद् तस्मिन्नित्यर्थः न केवलमयं देवो मंत्रार्थत्वेनोपास्यः किंतु महाचक्रे 'षट्कोणस्थसुदर्शनं वसुदलप्रोल्लासिताष्टाक्षरं बाह्ये द्वादशवर्णप त्रकमलं तत् षोडशार्णच्छदं । द्वात्रिंशन्मनुवर्णपत्रकमलं वृत्तोल्लसन्मातृकं मध्यस्थध्रुवमुर्वीबीजवलयं चक्रं नृसिंहाह्वयं ' इत्याचार्यैः संगृहीतस्वरूपे यो देवः प्रणवरूपो नाभित्वेन ज्ञायते उपास्यत इत्यर्थः । अ यमत्र संग्रहः तारं विलिख्य ततो बहिः षट्कोणं सुदर्शनमंत्राक्षरान्वितकोणं लिखेत्ततोऽष्टदलं नारायणाष्टाक्षरभूषितं ततो द्वादशदलं वासुदेवद्वादशाक्षरांकितं ततः षोडशदलं मातृकादिषोडशस्वरभूषितं ततो द्वा त्रिंशद्दलमनुष्टुबक्षरभूषितं विलिख्य मायाबीजेन भूवलये न च मातृकावर्णैश्च बहिर्वेष्टयेत् सबिंदुकेकारेण च षट्कोणादीनां षोडशदलांतानां प्रत्येकं वेष्टनमिति आनुष्टुभस्यैकादशपदस्य मंत्रस्योद्धार

ब्रह्मसर्वाधिकत्वेन प्रकाशस्य प्रभुत्वतः ॥ विष्णुश्च तापनीयेयः पूर्वस्मिन्परिकीर्तितः ॥ एकादशपदे मंत्रे नरसिंहो हि दैवतम् ६९ आनुष्टुभे च सामाख्ये प्रणवाद्यंगसं हिते ॥ चतुष्पादि महाचक्रे नाभिर्विज्ञायते हि यः ७० यमुपास्य महात्मानं स्थितं क्षीरार्णवादिषु ॥ घोरं भवार्णवं संतस्तरेयुर्गोष्पदं यथा ७१ ब्रह्मा यः प्रथमः प्रोक्तो भगवांश्चतुराननः ॥ देहिनां प्रथमो देही हैमे ब्रह्मांडगोलके ७२ भूपद्मे सर्वदेवास्ते मेरुपर्वतकर्णिके ॥ अनुग्रहकरो देवो देवानां सत्यलोकगः ७३ एकदा तं समासीनं प्र श्रेक्ष्यमितौजसि ॥ मानस्या प्रियया सार्द्धं परमब्रह्मशब्दितम् ७४

स्त्वित्थमाचार्यैः प्रपंचसारे लिखितः ' उग्रं वीरयुतं महांतिकमथो विष्णुं ज्वलन्तान्वितं संप्रोच्याथ च सर्वतोमुखनृसिंहार्णौ स्तथा भीषणं । भद्रं मृत्युयुतं च मृत्युमपि तत्रो क्त्वा नमाम्यायुतं भूयोऽहं पदमुद्धरेन्म नुमिमं मंत्री समस्तार्थदम् ' इति ७० यमुपास्येति । य मेनं नरसिंहं क्षीरार्णवगतशेषभोगगतं हृदयादिगतं वा ध्यानादिना समाराध्य गोष्पदवद्भवाब्धिं सन्तस्तरंतीत्यर्थः ७१ सप्तदशाष्टादशे ब्रह्मा प्रजापतिरित्याकारेनामनी वर्णितं मंत्रेऽऋषिभूतस्य चतुराननरूपस्य भगवतो बोद्धव्ये इत्याह ब्रह्मेति । यः प्रथमः सृष्टिकर्ता भगवांश्चतुराननरूपः स ब्रह्मा प्रोक्तः स एव देहिनां स्थूलव्यष्टिशालिनां प्रथमः समष्टिरूपेण यः स नप्रजापतिरिति चोक्त इति शेषः स च हैमे हेममये ब्रह्मांडरूपे गोलके यद्भूमिरूपं पद्मं मेरुः कर्णिका भूतो यस्य तथाभूतं तत्र सत्यलोके च देवो पकाराय स्थित इति द्वयोरर्थः ७२ । ७३ एवं नामनिरुक्तिप्रसंगेन पूर्वतापनीयदर्शितायाः प्रणवोपसर्जनानुष्टुप्प्रधानायाः सगुणविद्यायाः स्वरूपं सूचितमथानुष्टुबुपसर्जनप्रणवप्रधानायाः केवलप्रणवप्रधानायाश्च सगुणविद्यायास्तुरीयप्रणवप्रधा नाया निर्गुणविद्यायाश्च स्वरूपं प्रदर्शयंत्या उत्तरतापिन्या अर्थं दर्शयितुं तत्र देवानां जिज्ञासां दर्शयति एकदेति षड्भिः । कदाचित्तं प्रजापतिममितौजः संज्ञकं पद्मे वर्णिते पर्यंके मानसीति संज्ञितया प्रि यया सह समासीनं परममुत्कृष्टशोभं ब्रह्मेति नामांतरशालिनं च प्रत्यक्षपादयं देवाः प्रणिपत्येदमूचुः कीदृशा देवाः तस्य प्रजापतेर्वैपुषि विराडाख्ये स्थितास्तथा मंत्रराजस्यानुष्टुभस्य विद्यायां तस्य प्रजा पतेः शिष्यास्तेन कुशला इदानीं प्राधान्येन प्रणवसंबंधिनीं विद्यां बुभुत्सवः प्रामुष्मिन्नंतः पूर्वविद्यया शुद्धा धियश्चेति त्रयाणामर्थः ७४

502

७५ । ७६ इदंकिमित्याकांक्षायांश्रुतपूर्वानुवादसहितंतेषांप्रश्नमभिनयति भगवन्निति । हेभगवन्भवताऽस्मभ्यंपूर्वतापनीयेमंत्रराजआनुष्टुभउक्तः कीदृशः सांगःअंगमंत्रैःसहितः बीजेनरेफोकारबिंदुविशिष्टक्षकाराक्षररूपेणशक्त्याइकाररूपयाचसहितः सामन्नःपादादिभेदेनयदुपासनंध्यानविशेषरूपंतत्सहितश्चेत्यर्थः ७७ महेति । पुनःकीदृशोमन्त्रराजः महाचक्रेनारसिंहेनतत्सहितः मृत्युभीतिनिवृत्तिफलकश्च तत्रमंत्रराजप्रपंचेत्वयाप्रणवश्चतुष्पात्पादचतुष्टयवानुक्तः कीदृशः आत्माभिन्नःवाच्यभूतेनचतुर्विधेनात्मनातादात्म्यापन्नः अणूनातंभगवंतंप्रतिपाद्यमात्मानंचातिदुर्लक्ष्यमस्मभ्यंसंसारानलतप्तेभ्यस्तत्प्रशमायोपदिशेतिद्वयोरर्थः ७८ । ७९ एवंपृष्टस्यप्रजापतेरुत्तरतयाउत्तरतापनीयाद्यखंडपंचकस्यतात्पर्यार्थंमार्थक्रमेणसंक्षिप्याह इत्युक्तइतिषोडशभिः । इत्थंपृष्टःप्रजापतिस्तान्देवान्प्रतीदमाह इदंकिं हेदेवाभवद्भिर्यउपासितोमंत्रराजएषचतुष्पाद्भवत्यतस्तंमंत्रराजंचतुर्धाविभज्यविभक्तंकृत्वाप्रणवस्यमात्राचतुष्टयेनवक्ष्यमाणरूपेणसहयथाक्रमंतादात्म्यंगमयेत्पंचमखण्डोक्तविधयामेलयेदितिद्वयोरर्थः ८० । ८१ ततःकिंकुर्यादितआह एकादशेति । योनरसिंहःपूर्वतापनीयमंत्रस्थैकादशपदानांसविशेषरूपेणार्थभूतउक्तस्त

अग्न्यादयोमहात्मानोदेवास्तस्यवपुःस्थिताः ॥ मंत्रराजस्यविद्यायांकुशलाःपरमेष्ठिनः ७५ शिष्यास्तथैवदेवस्यप्रणवस्यबुभुत्सवः ॥ विद्याविशुद्धमनसोब्रह्मात्मत्वप्रबोधिनीम् ॥ प्रणिपत्येदमूचुस्तेकृतांजलिपुटाअपि ७६ भगवन्भवतास्मभ्यंमंत्रराजःसमीरितः ॥ सांगःसबीजशक्तिश्चसामोपासनसंयुतः ७७ महाचक्रेणसहितोमृत्युभीतिनिवारणः ॥ चतुष्पात्तत्रसंप्रोक्तःसंक्षेपात्प्रणवस्त्वया ७८ आत्माभिन्नस्तमात्मानमणीयांसमणोरपि ॥ अस्मभ्यंब्रूहिसंसारतप्तेभ्यश्चतुराननं ७९ इत्युक्तस्तानुवाचायंब्रह्मालोकपितामहः ॥ अनुष्ठितोभवद्भिर्योमंत्रराजःसएषहि ८० चतुष्पात्तंचतुर्द्धैवविभज्यप्रणवस्यहि ॥ मात्राचतुष्टयेनैवतादात्म्यंगमयेत्पुमान् ८१ एकादशपदार्थोयोनरसिंहःप्रकीर्तितः ॥ पदेपदेपदार्थंतंपदार्थातितरूपिणम् ॥ चिंतयेदात्मनःपादैश्चतुर्भिःपरिकल्पितैः ८२ नाभौचहृदयेतद्वद्भ्रूमध्येद्वादशांतके ॥ तत्तद्रूपंप्रकल्प्यायमथवायत्रकुत्रवा ८३ प्रणवस्यचतस्रःस्युर्मात्राएताःसुशोभनाः ॥ अकारोपितथोकारोमकारोनादनामकः ८४ एकैकापिचतुर्धास्यात्स्थूलादिपरिभेदतः ॥ वाचिस्थूलातथासूक्ष्माहृदयेकुंडलीगता ॥ बीजरूपाचतुर्थीस्याद्व्यापिनीसर्वसाक्षिणी ८५

मिदानींपदेपदेप्रतिपदंपदार्थातीतस्तुरीयस्तद्रूपिणंपदार्थलक्ष्यमितियावत् एवंविधंविज्ञायात्मनश्चतुर्भिःकल्पितैःपादैर्यथाक्रमंप्रणवमात्राचतुष्टयस्यमंत्रपादचतुष्टयस्यचवाच्यभूतैःसहतादात्म्यापन्नंचिंतयेदित्यर्थः तत्रनरसिंहस्यपदार्थातीतरूपेणपदार्थत्वमित्थमुक्तं सर्वसंहारसमर्थत्वरूपमुग्रत्वंपरमार्थस्यतुरीयस्यैवसंभवतिनान्यस्य एवंवीरादिपदार्थानांतुरीयपरत्वंद्वितीयखंडेतद्व्याख्यायांचद्रष्टव्यम् ८२ नाभौचेति । तथातृतीयखंडोक्तविधिनातंनरसिंहंब्रह्माविष्णुरुद्रसर्वेश्वररूपंप्रकल्प्ययथाक्रमंनाभ्यादिस्थानचतुष्टयेष्वधिकारीतैर्मंत्रैःपूजयेदितिशेषः तत्रद्वादशांतःदशमद्वारंपूजनविधेरनन्तरंतदैक्यानुसन्धानविस्तरश्चतुर्थखण्डेपद्धतौचद्रष्टव्यः ८३ प्रथमखण्डोक्तंप्रणवमात्राचतुष्टयमाह प्रणवस्येति । स्पष्टम् ८४ एकैकापीति । एतासांचतसृणांप्रणवमात्राणांमध्येएकैकास्थूलादिभिर्वैखर्यादिसंज्ञैर्भेदैश्चतुर्धाबोध्येत्यर्थः द्वितीयखण्डोक्तंस्थूलादिभेदमेवस्फुटयति वाचीति । स्थूलावर्णावस्थावैखरीसंज्ञावाचितिष्ठतिततःसूक्ष्मामध्यमाख्याद्वितीयावस्थाहृदितिष्ठतितृतीयापश्यंतीसंज्ञावस्थाबीजरूपाकुंडलीगताबोध्या चतुर्थीत्ववस्थासाक्षिरूपेणव्यापिकेत्यर्थः ८५

अकारादेरिति । एवमकारादीनांप्रत्येकंचतुर्विधत्वेतत्समुदायरूपस्यप्रणवस्यषोडशावयवत्वंबोध्यमित्यर्थः अथवाअकारादीनांचतुर्विधत्वंप्लुतादिभेदैर्विज्ञेयं तत्रचतुर्थोभेदःअविषयत्वात्साक्षिसंज्ञइत्यर्थः ८६ यथाचवाचकस्यप्रणवस्यषोडशभेदास्तथातद्वाच्यस्यात्मनोपितान्दर्शयति आत्मनोपिचेतिद्वाभ्यां । स्थूलसूक्ष्मकारणोपहितरूपाविश्वादयस्त्रयस्तेषांसाक्षीचतुरीयाख्यएतेचत्वारः प्रणवमात्राचतुष्टयेनाभिधेयाआत्मनश्चत्वारःपादाअध्यात्मंबोध्याः तथाधिदैवमप्यवस्थितस्यतस्यस्थूलाद्युपहितस्यसाक्षिरूपस्यचात्मनोविराड्ढिरण्यगर्भेईशःपरमात्माचेत्येतानिनामानियथाक्रमंबोध्यानीतिद्वयोरर्थः ८७ । ८८ एकैकस्येति । एतेषांविश्वादीनामधिदैवरूपाभिन्नानांमध्येएकैकस्यतीव्रादिभेदैश्चतुर्विधत्वंबोध्यं तत्रैक्यंनिर्विशेषत्वरूपंतुरीयत्वं तथाहि जाग्रद्रूपोविश्वश्चतुर्विधः तत्रेंद्रियैर्विषयान्गृह्णंस्तीव्रोमनोरथपरोमध्योमोहेनतूष्णींभूतोमंदःसमाहितस्तुनिर्विशेषतामापन्नस्तुरीयएतद्विश्वभेदचतुष्टयंक्रमेणअकारस्यवैखर्यादिसंज्ञावस्थाचतुष्टयस्यवाच्यं एवं स्वप्नद्रष्टृरूपस्तैजसोपिचतुर्विधः तत्रस्वप्नेमंत्रादिकमबाधितंगृह्णंस्तीव्रःस्वप्नंस्वप्नत्वेनजानन्मध्यमःस्वप्नेप्यामूढोमंदःसमाहितइति तथाप्राज्ञोपिचतुर्विधः तत्रसात्त्विकवृत्तिप्रधानस्तीव्रोराजसवृत्तिप्रधानोमध्यमस्तामसवृत्तिर्मंदइतितुरीयभेदचतुष्टयंतुस्वयमेवानंतरमुदाहियतइति ८९ प्रणवस्यचतुर्थीमात्रानादरूपावर्णितातस्याश्चबीजबिंदुशक्तिशांताख्याश्चतस्रोवस्थाउक्तास्तासांक्रमेण

अकारादेरवस्थेयमेवंषोडशधास्मृता ॥ प्लुतदीर्घह्रस्वसाक्षिभेदैर्वापरिकीर्तिता ८६ आत्मनोपिचपादाःस्युश्चत्वारःपरिकीर्तिताः ॥ विश्वश्चतैजसस्तद्वत्प्राज्ञोपिचतुरीयकः ८७ अध्यात्ममधिदैवंचनामान्येतानितस्यहि ॥ विराड्ढिरण्यगर्भेशपरमात्मानआत्मनः ८८ एकैकस्यचतुर्धात्वंभवेद्विश्वादिकस्यहि ॥ तीव्रमध्यममंदाख्यैर्भेदै रैक्येनचात्मनः ८९ ओतःसर्वगतःप्रोक्तआत्मासर्वशरीरिणाम् ॥ प्रपंचोपिचयेनायंज्ञायतेस्वात्मरूपतः ॥ स्थूलभेदस्तुरीयस्यतीव्रोयंकल्पितोद्विजैः ९० अनुज्ञाताभवेदेषध्यातृध्यानादिभेदवान् ॥ मध्यमोत्रतुरीयस्यभेदःसर्वशरीरिणाम् ९१ अनुज्ञास्वात्मनोरूपंजानीतेयत्रकेवलम् ॥ तुरीयस्यतृतीयोयंभेदोमंदइतीरितः ९२ अविकल्पश्चतुर्थाख्योयत्रशून्यमिवाखिलम् ॥ भातिविश्वंतथात्माचयोगिनःपुण्यसंचयात् ९३

वाच्यांस्तुरीयात्मनश्चतुरोभेदानोतादिसंज्ञांस्तीव्रादिभावेनोदाहरति ओतइत्यादिना । सर्वगतःअंगारेग्निवत्सर्वत्रविश्वशरीरघटकेषुस्थूलसूक्ष्मकारणेषुभासकतयानुगतोयःसर्वेषामात्मायेनसकलःस्थूलपर्यंतःप्रपञ्चःस्वस्वरूपेणज्ञायतेभास्यतेसआंतरव्याप्तत्वेनओतसंज्ञोद्विजैर्वेदविद्भिस्तुरीयस्यप्रथमस्तीव्राख्योभेदउच्यतेइत्यर्थः ९० प्रपंचस्यस्वप्नवदध्यस्ततयाभानेअध्यस्तस्यस्वतःसत्ताविरहाततस्यसत्तादिकमनुजानन्मदीयमेवसत्तादिकमस्यास्त्वितिर्चिंतयतीतियावत् एवंविधआत्माअनुज्ञातृसंज्ञस्तुरीयस्यद्वितीयोभेदइत्याह अनुज्ञातेति । एषआत्माध्यातृध्यानादिभेदवान् ध्यात्रादिभेदंस्वसत्तादिदानेनानुगृह्णन्निति यावत् सअनुज्ञातृनामातुरीयस्यमध्यमाख्योद्वितीयभेदउच्यतेइत्यर्थः ९१ अथाध्यस्तंसत्ताकर्षणेनविलाप्यात्मानमद्वितीयंजानन्नात्माअनुज्ञेत्युच्यतेयेनसर्वत्रसत्तादिकंदत्तंसइदानीमनुज्ञामात्ररूपेणावशिष्टः अनुज्ञायाविषयादिकमिदानींनास्तीत्यत्रार्थेपर्यवसानात्सआत्मातुरीयस्यतृतीयोभेदउच्यतेमंदाख्यइत्याह अनुज्ञेति । स्वात्मनोरूपंकेवलंजानन्ननुज्ञासंज्ञआत्मातद्रूपस्तुरीयभेदेषुतृतीयोमंदाख्योभेदइत्यर्थः ९२ यत्रस्वरूपेबाधितद्वैतस्यस्मृतिरपिनास्तितदात्मरूपंयोगिनापुण्यसंचयात्सकलप्रतिबंधहीनेनलभ्यमविकल्पपदोक्तंतुरीयस्यचतुर्थभेदत्वेनज्ञेयमित्याह अविकल्पइति । चतुर्थाख्योभेदस्तुरीयस्याविकल्पसंज्ञः यत्राविकल्पेऽखिलंविश्वंद्वैतंशून्यमिवभवतिनतुशून्यंपतआत्मैवभातियोगिनंपुण्यसंचयशालिनंप्रति ९३

अस्यतुरीयस्यपरमपुरुषार्थरूपतामाह तुरीयमिति । तत्अविकल्पाख्यंतुरीयमानंदरूपमवस्थाचतुष्टयेऽनुस्यूतमधिष्ठानतयानुगतंविभातियद्यतःसत्तास्फुरणादिप्रदाद्धेतोरेतद्वर्णितंषोडशविधमात्मनोरूपंभाति तत्रतुरीयस्यकल्पितत्वंविशेषणीभूततुरीयतायाःपरसापेक्षत्वान्नतुविशेष्यांशइतिभावः ९४ तत्रहेतुतयाविश्वाधिष्ठानतामाह यस्मिन्निति । इदंदृश्यजातरूपंजगद्यस्मिन्नविकल्पेभाति भासमानेध्यस्तमुक्तंनिर्मलेगगनेगंधर्वनगरवदित्यर्थः ९५ एतदिति । स्पष्टम् ९६ उक्तात्मज्ञानाधिकारिणःषष्ठखंडेवर्णितान्निरूपयति एतज्जिज्ञासवइतिचतुर्भिः । एतदविकल्पमात्मरूपंज्ञातुमिच्छंतोब्राह्मणाद्याविहिताचरणंनिषिद्धवर्जनंचकुर्वंति ९७ सत्यमिति । तथासत्यादिचतुष्टयरूपान्धर्मपादानहिंसादिरूपान्यमांश्चकुर्वंति तत्रब्रह्मचर्यस्यपृथङ्निर्देशःश्रुतिष्वत्यादरात् ९८ एवंमंदामध्यमाश्चाधिकारिणउक्ताअथोत्तमानाह ब्राह्मणाइति । येएषणात्रयेणलोकवित्तपुत्रगोचरेणवर्जिताःसंतोगृहस्थादिविहितकर्मतोऽव्युत्थायतत्परित्यज्येतियावत् भिक्षाचर्योपलक्षितंपारमहंस्यंधारयंतितेएतमात्मानमिच्छंतीत्यर्थः ९९ तेष्वपिविदुषांलक्षणमाह एतमिति । एतमात्मानंविज्ञायचांधादिवल्लोकेविचरंतिअतएवलोकैरलक्षितायथापूर्वेसंवर्त्तारुण्यादयश्चरंतिस्मतद्वदिति १०० अथषष्ठेसप्तमेचदर्शितंमंत्रराजोपसर्जनप्रणवोपासनस्यकेवलस्यचतुष्पात्प्रणवोपासनस्यचस्वरूपमभिनयति अयमात्मेतिसप्तभिः । एवमविकल्परूपेणपदिपापरूपप्रति

तुरीयंसुखरूपंतत्सदावस्थाचतुष्टये ॥ अनुस्यूतंविभात्येतद्रूपंयत्षोडशात्मकम् ९४ यस्मिन्नध्यस्तमखिलमिदंजगदुदीरितम् ॥ गगनेनिर्मलेभातिगंधर्वनगरोपमम् ९५ एतत्सर्वभयैःशून्यंजन्मादिपरिवर्जितम् ॥ अणोरणीयएतच्चमहतोपिमहत्तथा ९६ एतज्जिज्ञासवःसर्वेब्राह्मणाद्याःशरीरिणः ॥ कुर्वंतिविहितंकर्मनिषिद्धंवर्जयंतिच ९७ सत्यंतपोदयादानंब्रह्मचर्यमहिंसनम् ॥ इत्यादीन्यपिकर्माणिकुर्वंतिचविवेकिनः ९८ ब्राह्मणाएतमिच्छंतिएषणात्रयवर्जिताः ॥ भिक्षाचर्यंचरंत्यत्रव्युत्थायश्रमकर्मतः ९९ एतंविज्ञायविद्वांसोह्यंधवन्मूकवन्महीम् ॥ विहरंत्यपिसर्वज्ञाअविज्ञाताजनैरिह ॥ संवर्तकादिवत्सर्वेलोकातीतामहाधियः १०० अयमात्मायदानैवज्ञायतेप्रतिबंधतः ॥ कुतश्चिदमरास्तर्हिविज्ञातव्यउपायतः १०१ उपायोमंत्रराजाख्यश्चतुष्पाच्चतुरात्मना ॥ प्रणवेनात्मनासार्द्धमेकीकरणमीरितम् १०२ ब्रह्माद्यैर्बहुभिर्भेदैरकाराद्याअनेकधा ॥ भिन्नामात्रायथाशास्त्रंविज्ञायगुरुवक्त्रतः १०३ एकींकुर्यात्सदाविद्वान्मंत्रराजंविहायवा ॥ सर्वत्रैवप्रकारोयंपादादिविलयेभवेत् १०४ पूर्वंविनिःक्षिपेद्विद्वानुत्तरत्रततोपितत् ॥ उत्तरस्मिन्नातुरीयंतुरीयंमनसाजपन् १०५

बंधवशाद्विज्ञातुंनशक्यतेतदाप्रतिबंधापहारायोपायःकर्त्तव्यइत्यर्थः १०१ कोसावुपायइत्यतआह उपायोमंत्रेति । योमंत्रराजश्चतुष्पादुक्तस्तस्यचतुरात्मनाचतुष्पादेनप्रणवेन कीदृशेन आत्मनाविश्वादिचतुर्विधात्मवाचकेनसहयदेकीकरणमुक्तंतद्रूपउपायइत्यर्थः १०२ तत्रप्रणवस्यमात्राविभूतिस्तृतीयखंडोक्ताध्येयाइत्याह ब्रह्माद्यैरिति । ब्रह्मास्रष्टा आदिपदेनग्राह्यावसुगायत्रीगार्हपत्यपृथिवीऋग्मंत्रऋग्वेदाः एतेअकाररूपाः एवंविष्णुरुद्रत्रिष्टुब्दक्षिणाग्नियजुर्मंत्रयजुर्वेदांतरिक्षरूपउकारः रुद्रादित्यजगत्याहवनीयस्वर्गसाममंत्रसामवेदरूपोमकारः विराट्मरुतएकर्षिरूपाग्निप्रणवाथर्वणमंत्राथर्ववेदसंवर्त्तकाग्निसोमलोकरूपोनादइत्येवंविधाःप्रणवमात्रागुरुमुखाद्विज्ञायतामंत्रराजपादचतुष्टयेनमिलिताःकेवलावाएकीकुर्याद्विलापयेत् तत्रसर्वत्रपादानांमंत्रराजसंबंधिनांप्रणवसंबंधिनांवातदर्थानांचविलयेविलापनेअयंप्रकारोबोध्यइतिद्वयोरर्थः १०३ । १०४ अयंकइत्याकांक्षायामाह पूर्वमिति । पूर्वपादंपादावयवंवाउत्तरत्रानंतरेविनिक्षिपेद्विलापयेत्ततस्तदुत्तरमपिततउत्तरस्मिन्विलापयेत् एवंआतुरीयंतुरीयपर्यंतंधावेत् ततस्तुरीयंप्रणवंवाजिबिंदुशक्तिशांताख्यावस्थाशालिनंमनसाजपन्ननुसंदधानोभवेदित्यर्थः १०५

एतासांकलानांविलापनयोग्यतादर्शनायशुद्धात्मनितदभावमाह कलाइति । याएताःपुंसःप्रणववाच्यस्यषोडशकलाउक्तास्ताःषोडशात्मनिषोडशावयवेप्रणवेतादात्म्येनस्थिताः सर्वभेदविव र्जितेईशानेपरमात्माख्येआत्मनितुनसंतीत्यर्थः १०६ अत्रश्रुतावर्थात्सूचितंप्रकारांतरंदर्शयति मंत्रेति । एवंप्रत्येकंचतुरवयवकपादचतुष्टयशालिनाप्रणवेनपादशोमेलनेसतिमंत्रराजस्यनार सिंहस्यषोडशभागाःफलिताःस्युः अष्टाक्षराणांपादानांचतुरवयवकप्रणवमात्राभिःसमानार्थत्वेप्रतिपादावयवद्वयोर्द्वयोरक्षरयोर्वाचकतायाःपर्यवसानात्ताएताःषोडशावस्थाःशनैःशनैर्जेतव्याश्चेतसा दृढमालंबनीयाइत्यर्थः १०७ जितामिति । तासुपायाभूमिर्जिताभानेप्रतिबंधशून्याभवंतितांविहायोत्तरामुत्तरामाश्रयेत् यदाचतुरीयस्यतुरीयमविकल्पाख्यंभाग्योत्कर्षात्प्राप्तंभवतितदाध्वं सःसविलासाज्ञानस्यभवतिततःपरंकिंचित्कर्तव्यंज्ञेयंचनावशिष्यतेइत्यर्थः १०८ अथसप्तमखंडेब्रह्मैवेदमित्यादिनापरमानंदइत्यंतग्रंथेनब्रह्मस्वभावाभिव्यंजिकाउपपत्तयःसूचितास्ताःप्रतिपादयति एतत्तुर्येतिचतुरधिकनवतिश्लोकैः । पुंसश्चत्वारिशरीराण्युक्तानिस्थूलसूक्ष्मकारणतुरीयभेदात् . तत्रतुर्यंशरीरेणाख्यानिरूपणमुपलक्षणरूपंयस्यतत्तथाविधमेतदविकल्पंतत्त्वंवागादेरविषयत्वात्प्रष्टुं प्रश्नगोचरीकर्तुंवक्तुमुत्तरस्यगोचरीकर्तुंचनशक्यमित्यर्थः १०९ अतएवशिष्यैःपृष्टाअपिमहात्मानएतमविकल्परूपमात्मानंसच्चिदानंदलक्षणंमौनेनैववदंतिसूचयंतीत्याह मौनेनैवेति । स्प

कलाःषोडशपुंसोयाःषोडशात्मनिताःस्थिताः ॥ प्रणवेनात्मनीशानेसर्वभेदविवर्जिते १०६ मंत्रराजस्यचैवंस्युःप्रकाराःषोडशैवहि ॥ उभाभ्यामपिवर्णाभ्यांकृते भागेसदाधिया ॥ भूमिकाःषोडशैवेताजेतव्याःस्युःशनैःशनैः १०७ जितांजितांविहायैतामाश्रयेदुत्तरोत्तराम् ॥ तुरीयस्यतुरीयेस्मिन्संप्राप्तेदैवयोगतः ॥ ध्वं सस्ततःपरंनैवकिंचिदत्रावशिष्यते १०८ एतत्तुर्यशरीराख्यमवाङ्मनसगोचरम् ॥ प्रष्टुंवक्तुंचकेनापिशक्यतेनैवकर्हिचित् १०९ मौनेनैववदंत्येतंब्राह्मणास्त त्त्वदर्शिनः ॥ आत्मानंसच्चिदानंदंपृष्टाःशिष्यैर्महाधियः ११० आत्मन्यस्मिन्सदैवैकरूपेब्रह्मणिनिर्द्वये ॥ सर्वावस्थास्वनुगतेनैवकिंचित्प्रवर्तते १११ अधिष्ठि तान्यनेनैवप्रवर्तंतेशरीरिणाम् ॥ करणानिसकार्याणिह्यात्मनासर्वहेतुना ११२ वाचःशब्देषुवर्ततेशब्दाश्चार्थेषुसर्वदा ॥ अर्थाअनात्मरूपास्तेइंद्रियाणांहिगो चराः ॥ बाह्यांतरस्वरूपाणांसर्वदैवव्यवस्थिताः ११३ रूपादयःसुखंतद्वद्दुःखंचमनसासदा ॥ गृह्यतेतैश्वरहितःकथमात्मात्रगृह्यते ११४ आत्मनीशेसदानंदे रूपाद्याश्चनकेचन ॥ सुखदुःखेचसततमध्यस्तेस्रग्जिसर्पवत् ११५

ष्टम् ११० तत्रहेतुतयावदनीयताव्यापकस्यबाह्यांतरकरणगोचरत्वस्याभावमाह आत्मन्यस्मिन्निति । अस्मिन्नात्मनिकिंचिदपिप्रवर्तितुमेनंविषयीकर्तुंनशक्तमित्यर्थः १११ तत्रकर्म कर्तृत्वविरोधमाह अधिष्ठितानीति । अनेनैवात्मनाधिष्ठितानिप्रेरितानिकरणानिमनःप्रभृतीनिकार्याणिशरीरादीनिअन्यत्रप्रवर्ततेअत्रैवप्रवर्तकेकथंप्रवर्तेरन् कर्तृभावेनावस्थितस्यकर्मत्वायोगा दितिभावः ११२ विशेषतोवाग्विषयत्वाभावेहेतुंतद्व्यापकाभावमाह वाचइति । वागिंद्रियंशब्देष्वेववर्ततेतानेवविषयीकरोतितेशब्दाश्चानात्मरूपानर्थांस्तानेवगोचरयंतियेबाह्याभ्यंतरभेदेन द्विविधानामिंद्रियाणांव्यवस्थितानियतागोचराःनतुसर्वानित्यर्थः तथाचेंद्रियविषयतायाःसामान्यतोवच्छेदकस्यानात्मत्वस्यविशेषतोवच्छेदकस्यरूपादेश्चाभावेइंद्रियविषयत्वाभावस्तन्नश्वतद्वा प्यस्यशब्दगोचरत्वस्याभावइतिभावः ११३ गोचराणांव्यवस्थितत्वमेवस्फुटयति रूपादयइति । रूपादिषुसुखादिषुचबाह्यांतरिंद्रियाणांविषयत्वंनियतमित्यर्थः ११४ आत्मनित्वेतेइंद्रि यविषयतानियामकागुणानसंतीत्याह आत्मनीति । किंचप्रातिभासिकग्रहणस्यसाक्षिमात्रसाध्यत्वात्सुखादीनांप्रातिभासिकानांग्रहणायमनसोनपेक्षितत्वात्सुखदुःखेनमनसोविषयावच्छेदकेह त्याह सुखदुःखेइति । सुखादिकमध्यस्तत्वादात्ममात्रभास्यंनात्मनःपरनिरूपितविषयतांसाधयतीत्यर्थः ११५

अथाधिष्ठानत्वस्यैंद्रियविषयत्वाभावव्याप्यत्वात्तेनहेतुनाप्यविषयत्वंसूचयन्नात्मनःसर्वाधिष्ठानत्वंसाधयति अधिष्ठानमिति । भ्रमोपादानाज्ञानगोचरत्वमधिष्ठानत्वंतच्छालिवस्तुलोकेप्येकं प्रसिद्धंयथैकस्यारज्जोःसर्पजलधारादंडभूविलाश्यारोप्यमाणानिदृष्टानीत्यर्थः ११६ ननुलोकेरूप्यादीनांयान्यधिष्ठानानितेषांसर्पाद्यधिष्ठानाद्रज्जुरूपाद्भेदएवप्रसिद्धइतिकथमधिष्ठानैक्यमितिचे त्स्यादेवमापाततोविचारकालेतुजडस्याज्ञानगोचरत्वानर्हत्वात्सर्वत्रानुगतस्याचित्सामान्यस्यैवाधिष्ठानत्वमितिदर्शयितुंस्थूलारुंधतीन्यायेनेदंतासामान्यस्याधिष्ठानत्वंतावच्छंकासमाधानाभ्यांसाध यंति यद्यपीतिपंचभिः । यद्यपिसर्पाधिष्ठानाद्रूप्यरंगादेरधिष्ठानंशुक्त्यादिकंभिन्नमितिप्रसिद्धंतथापीदंविचार्यं इदंकिं कल्पितमारोपितंकुत्रकस्मिंस्तादात्म्यसंबंधेनाश्रितेविभातिभानंलभतेइ त्यर्थः ११७ तत्राधारपर्यायस्याधिष्ठानपदस्यप्रकृतेतादात्म्यसंबंधेनविशेष्यताभाग्वस्तुरूपोऽर्थःपर्यवस्यतीत्याह सामानाधिकरण्येनेति । यद्वस्तुयेनागंतुकेनसहसामानाधिकरण्येनतादात्म्यल क्षणेनसंबंधेनप्रतीयतेभ्रमकालेपिसंनद्धंभासतेतदेवतस्यागंतोरधिष्ठानभावार्हमित्यर्थः ११८ इदंलक्षणंशुक्तिकादीनसंभवतिकिंत्विदंतायामेवसंभवतीत्याह शुक्तीरूप्यमिति । रूप्येणसहशुक्ते स्तादात्म्यमहिनासहरज्जोश्चतादात्म्यंभेदाभेदरूपंनानुभूयतेइदंपदार्थेनतुतदनुभूयतेइत्यर्थः ११९ ननुबाधाध्यासविशेषणैक्यभेदेनचतुर्विधस्यसामानाधिकरण्यस्यविशेषेबाधासामानाधिकरण्येचो

अधिष्ठानंभवेदेकंकल्पितानांसदाजनैः ॥ सर्पधारादयोयस्माद्रज्जावेवप्रकल्पिताः ११६ यद्यप्यन्यदधिष्ठानंरूप्यादेरिहदृश्यते ॥ तथापिकल्पितंकुत्रविभाती तिविचार्यताम् ११७ सामानाधिकरण्येनयद्धियेनप्रतीयते ॥ अधिष्ठानंभवेत्तस्यतदेवान्यन्नकर्हिचित् ११८ शुक्तीरूप्यंरज्जुरहिरितिनैवप्रतीयते ॥ इदंरू प्यमयंसर्पःकिंतुतद्धिप्रतीयते ११९ बाधायांनैवरूप्यादितत्रकिंचनविद्यते ॥ ततोविकल्पमात्रेणप्रत्ययोत्रप्रजायते १२० रज्जूरोपणइत्यादौबाधायांशास्त्र वेदिनाम् ॥ इदंताततएवैषासर्वाधिष्ठानमीरिता १२१ इदंतायांचशब्देनभेदोनःपरिभात्ययम् ॥ भेदोवस्तुनिकोप्यत्रयस्मान्नैवप्रतीयते १२२ अ यंत्वमहमेषोस्मिसर्वोविश्वोभवानपि ॥ शब्दभेदाइमेदृष्टावस्तुभेदविवर्जिताः १२३ एकएवपुमान्यस्मात्प्रत्येकंसर्वएवहि ॥ वक्तृभेदादिनाशब्दभेदानेता न्समाप्नुयात् १२४

रोयंस्थाणुःसर्पोयंरज्जुरित्याकारेरज्जोरपिसामानाधिकरण्यंदृष्टमिस्याशंक्यतत्रसर्वस्यासत्त्वेनतज्ज्ञानस्यविकल्पमात्रत्वान्नाधिष्ठानतासाधकत्वमित्याह बाधायामिति । शास्त्रवेदिनांयोयंबाधा कालेरोपणःक्रोधनःसर्पोरज्जुरित्याकारःप्रत्ययोजायतेसततःशब्दज्ञानानुपातीवस्तुशून्योविकल्पइतिलक्षणसमन्वयाद्विकल्पमात्ररूपोयतस्तदानींरूप्यादिकंनास्तीति फलितमाह इदंतेति । इदं तापुरोवर्तिसामान्यंतदेवाधिष्ठानतायोग्यमितिद्वयोरर्थः १२० । १२१ अथेमामिदंतांब्रह्मभावंनेतुमस्याभेदराहित्यमाह इदंतायामितिसप्तभिः । योयमिदंताख्येसामान्येनोऽस्मान्प्रतिभे दोभातिसशब्देनैवनिमित्तेनभातिनत्वर्थतोयस्माद्वस्तुन्यर्थेसामान्यरूपेकोपिभेदोनलभ्यतेइत्यर्थः १२२ अस्तुतर्हिशब्दभेदादेवार्थेभेदइतिचेन्न शब्दभेदस्यार्थैक्येपिदृष्टस्यव्यभिचारिणोर्थभेद साधनेअक्षमत्वादित्याह अयमिति । अयमित्यादयोभवदंताअपिशब्दादन्येचपूर्वादयःशब्दावस्तुतोर्थस्यभेदंविनाप्येकत्रप्रवर्त्तमानादृष्टायथासर्वःसर्वंजातीयःपुमान्प्रत्येकंवीक्षणेएकएकसंख्या कएवसन्नेतानयंत्वमहमित्यादिरूपान्शब्दान्विषयतयाभजते यतःकश्चित्तमयमितिवदतिकश्चित्त्वमितिकश्चिद्देवदत्तोहमेवेतिस्नेहेनवक्तिकश्चित्तुदेवदत्तोममसर्वोबांधवइतिवक्तीत्येवंवक्तृभेदमपेक्ष्य नानाशब्दभागित्वेपिपुंसःस्वभावतएकस्यनभेदोदृष्टइतिद्वयोरर्थः १२३ । १२४...

किंचएकत्वस्यसर्वत्रस्वाभाविकत्वेबहिरंगोपाधेःशब्दादिरूपादर्थप्रसक्तोभेदःकल्पितएवसिद्ध्यतीत्याह प्रातिस्विकमिति । प्रतिस्वंप्रतिस्वरूपंभवनशीलंयदैकत्वंसिद्धंतदाशब्दभेदमादायार्थेनिष्ठोभेदःकथंस्यान्नकथमपि यदिस्यात्तदापिगंधर्वनगरसमएवस्यादित्यर्थः १२५ किंचग्राहकप्रमाणाभावादप्यर्थतत्त्वेभेदासिद्धिरित्याह अर्थभेदश्चेति । अयमर्थस्यइदंतारूपस्यभेदःकेनप्रमाणेनसाध्यतेइतिविचार्य यतोऽर्थाच्छब्दरूपोमहाभटोभग्नःपराहतोभेदरूपस्यराज्ञोनुचरत्वादित्यर्थः अत्रहिस्वाभाविकाभेदेनभेदस्यतिरस्कारेतदनुसारेणार्थप्रवेशमिच्छतःशब्दस्यकोवकाशः एवंसतिशब्दोविकल्पमात्रात्मकंभेदमादायतुष्टइतिभावः १२६ तथापुरोदेशेयथाकथंचिदर्थसत्तामात्रग्राहिणइंद्रियगणस्येतरव्यावृत्त्यात्मकभेदग्रहणेनसामर्थ्यमित्याह चक्षुरादींद्रियेति । इंद्रियगणोवस्तुनःस्वरूपमात्रंगृहीत्वाकृतकृत्योभवतियथादुष्टंचक्षुःशुक्तौरजतमस्तीत्येतावताकृतकृत्यंनतुतस्यभेदमपिग्रहीतुंशक्नोति तद्ग्रहणेपुरोवर्तिभेदावगाहनेनभ्रमोलुप्येतेतिभावः १२७ वस्तुतस्तुकालत्रयाबाध्यत्वरूपसत्तारूपाइदंतापींद्रियैर्यदादुर्ग्रहातदातस्याभेदःसुतरांदुर्ग्रहइत्याह इदंताचेदिति । इतइंद्रियगणात्स्वाप्निकेंद्रियवदाभिमानिकव्यवहारसाधनाच्चेद्यदीदंतापिनस्फुरेन्नसिद्ध्येत्तदातस्याइदंतायाइंद्रियतोभेदःसिद्ध्येदितिकुतःस्यादितिपूर्वदलार्थः तत्रहेतुतयाइदंतायाःसत्तातोभेदाभावमाह इदमिति । इदंशब्दःसत्शब्दश्चएतौलोकेपर्यायतयासमानार्थतयाप्रसिद्धौ इदं

प्रातिस्विकंयदैकंस्यात्तदाभेदःकथंभवेत् ॥ शब्दभेदादर्थनिष्ठोगंधर्वनगरोपमः १२५ अर्थभेदश्चकेनायंगृह्यतेतद्विचार्यताम् ॥ यतःशब्दभटोभग्नोभेदराजानुगो हियः १२६ चक्षुरादींद्रियगणोवस्तुमात्रंप्रगृह्यसः ॥ कृतकृत्योयथाशुक्तिरजतग्रहणादिह १२७ इदंताचेदितोनैषास्फुरेत्तस्याःकुतोभिदा ॥ इदंसदितिलोकेऽस्मिन्पर्यायोदृश्यतेयतः १२८ अनुस्यूतेपरेतत्त्वेभेदःकेनभविष्यति ॥ इदंतामात्ररूपेऽस्मिन्सर्वभेदविवर्जिते १२९ सत्ताचस्फुरणादन्यानैवकाचित्प्रदृश्यते स्फुरणंचयदेवैतत्स्वप्रकाशंसमीरितम् १३० अचैतन्यंहिचैतन्यबलतोत्रप्रतीयते ॥ वादिनामविवादंतत्सर्वेषामपिसर्वदा १३१ चैतन्यमपिचेत्तेनप्रतीयेत कुतोपरम् ॥ चैतन्यंकल्पितंह्येतैरप्रमाणंचनिष्फलम् ॥ स्फुरणंचेत्तदात्मैवसर्वबुद्धिप्रकाशकः १३२ आत्मासर्वप्रियतमःसर्वेषामिहदेहिनाम् ॥ आनंदरूपस्तेनायंसच्चिद्रूपउदीरितः १३३

शब्दोहिसन्निकृष्टमभिधत्ते सन्निकृष्टंसदेवभवतीतिभावः १२८ यदाचेदंतायामेवंभेदोनसिद्धस्तदेदंतापियस्याविशेषस्तत्रपरमात्मनिभेदःकेनसिद्ध्येदित्याह अनुस्यूतइति । इदंतामात्रंसर्वोइदंतारूपंविशेषोयस्यतथाभूते १२९ इदंतारूपायाःसत्तायाभानेपरानपेक्षतांदर्शयितुंस्फुरणाभेदमाह सत्ताचेति । दृष्टिसृष्टिसिद्धांतेअभासमानस्यसत्ताऽसंभवात्सत्तास्फुरणरूपैव तच्चस्फुरणंस्वप्रकाशमितिप्रपंचितमधस्तादित्यर्थः १३० स्वप्रकाशत्वेकांचिदुपपत्तिमप्याह अचैतन्यमिति । चैतन्यहीनंवस्तुचैतन्येनसिद्ध्यतीत्यत्रनकस्यापिविवादइत्यर्थः १३१ चैतन्यमपीति । यदिचैतन्यमपितेनचैतन्येनप्रतीयेतेतिमन्यतेतदाइतिवक्तव्यं भास्यतयाभिमतंचैतन्यंस्फुरणविलक्षणंवास्फुरणात्मकमेववा आद्येआह कुतोपरमित्यादिनिष्फलमित्यंतं अपरंस्फुरणविलक्षणंपरचैतन्यंभवतीत्येवएतैर्वादिभिःकुतःकल्पितं नहिभास्यस्यपरसापेक्षस्यचैतन्यरूपताकल्पनेकिंचित्प्रमाणंपश्यामः नवाफलं तद्भासकेनैवसर्वनिर्वाहेभास्यस्यचैतन्यस्यवैयर्थ्यादित्यर्थः अंत्येतस्यसर्वांतरत्वेनात्मरूपस्यस्वप्रकाशत्वेकःसंशयइत्याह स्फुरणंचेदिति । यदितच्चैतन्यंस्फुरणरूपंतदासर्वधीवृत्तिसाक्षिभूतआत्मैवतत् नचतस्यपरापेक्षाअनात्मत्वप्रसंगादित्यर्थः १३२ एवंसच्चिद्रूपआत्मासाधितोऽथतस्यपरप्रेमास्पदत्वादानंदत्वंदर्शयति आत्मेति । सच्चिद्रूपआत्मायतःसर्वस्मात्प्रियतमस्ततआनंदरूपइतियोजना १३३

तस्यपरमानंदत्वेउपपत्तिमाह आत्महानइति । यदालोकेआत्मत्वाभिमतोदेहोवाहातव्यःअमुकंवैषयिकंसुखंवाहातव्यमितिविचारःप्रसज्जतेतदाधीमंतःसुखमेवत्यजंतोदृश्यंतेतदाचात्मापेक्षयासु
खमल्पमेवमत्वात्यजंतीतिन्यायसिद्धं तथाचात्मनःपरमानंदत्वंसिद्धमितिद्वयोरर्थः १३४ । १३५ उक्ताभिप्रायेणमौनेनात्मनःसदादिरूपत्वेदर्शितेपियदिशिष्याबोद्धुंनशक्नुवंतितदातान्शिष्यानु
न्मुखान्ज्ञातुमुत्कंठितानित्थंवक्ष्यमाणविधयाबोधयेत्कारुणिकोगुरुरित्याह सच्चिदानंदमिति १३६ एवंकथमित्यतआह वचसइति । लोकेवचसोविषयोवचसास्पष्टमभिधेयंवस्तुसदित्युच्य
तेमनसैवानुसंधेयंत्वसदिति आत्मनःस्वरूपंतूभाभ्यांस्वभावाभ्यांनिर्मुक्तंरहितंभवत्यतःसदसत्त्वविनिर्मुक्तआत्मनिसदसत्त्वरूपंधर्मद्वयमारोप्यविकल्प्यइत्युपदेशरूपंकुर्यात् इतिकिं हेसोम्यसःअनु
भवसिद्धःसच्चिद्रूपआत्मात्वमसीतिद्वयोरर्थः १३७ । १३८ किंसदिति । सशिष्योयदिकिंरूपंसदितिपृच्छेत्तदाएवंप्रतिइतिवदेत् इतिकिं यत्सर्वत्रइदमिदमित्याकारेणसंनिहितंभासतेतदेवसद
स्वित्यर्थः १३९ स्थूलारुंधतीन्यायेनेदंतायांनिहितामात्मतांमुख्येनयति अवाङ्मनसेति । वाङ्मनसातीतरूपेयस्मिन्स्फुरणेइदंतापिकल्पितातदेतत्स्फुरणमेवानुभूतिरितिप्रसिद्धंतुभ्यंसदित्युक्त

नान्यथाततएवायंपरमानं
आत्महानेत्रसंप्राप्तेयतोहातुंसमिच्छति ॥ सुखंचततएवायंसुखादप्याधिकंसुखम् १३४ सुखंत्यजंतिधीमंतःस्वल्पमप्यधिकेसति ॥
दरूपभाक् १३५ सच्चिदानंदमात्मानमवाङ्मनसगोचरम् ॥ मौनेनचेन्नजानंतिशिष्याअल्पधियस्तदा ॥ एवंतानुन्मुखान्प्राहुर्धर्मानारोप्यकांश्चन १३६
वचसोमनसश्चापिविषयःसदसत्स्मृतम् ॥ सदसत्त्वविनिर्मुक्तंस्वरूपंचात्मनःसदा १३७ सदसत्त्वंसमारोप्यसदसत्त्वविवर्जिते ॥ सच्चिदानंदआत्मासत्वमसिक्लेश
विवर्जितः १३८ किंसदित्येवचेन्मांत्वंपृच्छस्यत्यंतमंदधीः ॥ सर्वत्रेदमिदंयत्तुतत्सदित्यवधारय १३९ अवाङ्मनसरूपेस्मिन्यत्रेदंतापिकल्पिता ॥ तदेवैतत्सदु
क्तंतेमयानैकस्वरूपकम् १४० स्फुरणंयत्सदासाद्भिरनुभूतिरितीर्यते ॥ कैषेतिचेदिमांप्राहभवांस्तांतेवदाम्यहम् १४१ बुद्धौसर्वत्रेयमियंभातियानुगतात्रचित् ॥
सोक्तावाङ्मनसातीताहीदंताप्यत्रवर्जिता १४२ एवमेवहियच्छिष्याःपृच्छंत्येतान्महाधियः ॥ एतद्वदंतिसकलमारोप्यैवसदात्मनि १४३ आनंदस्फुरणात्मा
यंसच्चिद्रूपउदाहृतः ॥ अवाङ्मनसगम्यःसउपदेष्टुंनशक्यते ॥ ज्ञातुंवात्रविनाध्यासमध्यासपरिवर्जितः १४४ अपिसर्वेचयेभावाःसुखदुःखप्रदाभुवि ॥ ससाध
नाश्चचपलाःशक्यंतेकेनभाषितुम् १४५ मुक्ताक्षीरेंदुकुंदानांरूपेश्वेतेमहानिह ॥ भेदोत्रवर्ततेनासौशक्योधात्रापिभाषितुम् १४६

मितिदलत्रयार्थः यदिचएषासदात्मकानुभूतिःक्वतिष्ठतीतिमांपृच्छसितदातामनुभूतिमुपलब्धिस्थानविशिष्टांतुभ्यंवदामीत्यर्थः १४० । १४१ बुद्धाविति । बुद्धौप्रतिबिंबितासर्वत्रविषये
ष्वियंचिदियंचिदित्येवमनुगताचयाचित्प्रसिद्धासानुभूतिरित्युक्ता यस्याःस्वरूपइदंतापिवर्जिताबाधिताभवतीत्यर्थः १४२ अयमेवोपदेशप्रकारःसांप्रदायिकइत्याह एवमेवेति । एतान्गुरून्महाम
तीन्यदाशिष्याःपृच्छंतितदाएतद्वाच्यादियोग्यंधर्मजातंसर्वमात्मनिसमारोप्यैववदंतीतियत्तदेवमेवयुक्तमित्यर्थः १४३ वाङ्मनसप्रवृत्तेरध्यासमूलकत्वादध्यासंविनाआनंदादीनामात्मरूपाणांवाचा
भाषणंमनसाज्ञानंचाशक्यमित्याह आनंदेति । भासमानानंदरूपःसद्रूपश्चिद्रूपश्चयआत्मोदाहृतःसोध्यासंविनोपदेष्टुंज्ञातुंचनशक्यइत्यर्थः १४४ आत्मस्वभावस्यावक्तव्यत्वेकैमुत्यन्यायंदर्शय
ति अपिसर्वेचेतिपङ्क्तिः । किंचलोकेप्रसिद्धायेभावाःसुखादिहेतवःससाधनाःसहकारिभिःसहिताश्चपलाःप्रतिक्षणपरिणामिनःसंतितेपिकेनवर्णयितुंशक्याः १४५ उदाहरति मुक्तेति । यथा
मुक्ताफलदुग्धचंद्रकुंदपुष्पाणांरूपेश्वेतत्वसामान्येसत्यपिमिथोऽवांतरोरूपेविशेषःसद्भवंपः १४६

पदेति । यदाइमेभावाःसाक्षात्त्वेनेंद्रियैर्गृह्यमाणाअपिनव कुंशक्यास्तदातींद्रियस्यात्मनोवक्तव्यत्वेकिमुवाच्यमिति १४७ अयोग्यत्वान्मनसैवयस्यनग्रहणंतत्रवाचःकथंप्रवृत्तिरित्याह सुख मिति । इंद्रियसंगजमेवसुखंमनसोयोग्यंयच्चातींद्रियंदुर्गमंतपःप्रभृतियत्नैरलभ्यंचतदात्मसुखंकेनहेतुनाआगच्छेत्मनोविषयमितिशेषः १४८ किंचऐंद्रियकस्यापिसुखस्यवक्तुमशक्यताप्रसि द्धावात्मसुखस्यसाकिमुवाच्येत्याह अपिमानसेति । यद्विषयसुखंमानसगम्यंप्रसिद्धंतदपिस्वयंविज्ञायतएवनपरप्रतिवाचाबोधयितुंशक्यतेतदाऽविषयस्यात्मनोवक्तुमशक्यतागुरुभिःकिमुवाच्ये तिद्वयोरर्थः १४९ । १५० फलितमाह ततइति । ततःसाक्षादवक्तव्यत्वात्परमानंदरूपआत्माधर्मानारोप्यैवतैरारोपितैर्धर्मैर्विशिष्टतयागुरुभिरुपदिश्यते कीदृशान्धर्मान्भावाभावात्मकान् तत्रभावरूपाधर्माःसत्यत्वादयःअभावरूपाअस्थूलत्वादयः १५१ शिष्यैरिति । श्रवणोत्तरंशिष्यैरप्यात्मामननध्यानाभ्यांव्यक्तेनस्वानुभवेनैवगंतव्यःप्राप्यइत्यर्थः १५२ स्वानुभवैकवेद्यतां स्फुटयन्सर्वेषामात्मत्रिनिष्प्रपंचतारूपंब्रह्मधर्ममाह निष्प्रपंचइति । ननुदृश्यमानेजाग्रदादिप्रपंचेकथंनिष्प्रपंचतेतिचेत्तस्यदृष्टिसृष्टिन्यायेनप्रातिभासिकस्यवास्तवनिष्प्रपंचतयाविरोधाभावादि

यदाभावाइमेसर्वेगृह्यमाणाइवेंद्रियैः ॥ शक्यंतेनैववदितुंसाक्षात्त्वेनापिकर्हिचित ॥ अनिंद्रियस्तदाकेनशक्यआत्मात्रभाषितुम् १४७ सुखमैंद्रियकंयत्तुतत्तुजा नातिमानसम् ॥ अतींद्रियंसुखंकेनागच्छेत्तच्चापिदुर्गमम् १४८ अपिमानसगम्यंयत्सुखंविषयसंभवम् ॥ स्वेनैवज्ञायतेतच्चनपरेणकथंचन १४९ आनंदात्मा कथंह्येषसर्वदागुरुभिःस्वयम् ॥ ज्ञायमानोपिशिष्याणामग्रेवक्तुंहिशक्यते १५० ततःपरमआनंदोभावाभावात्मकान्मुहुः ॥ धर्मानध्यस्यतैर्धर्मैर्गुरुभिःसर्वदे र्यते १५१ शिष्यैःस्वानुभवेनैवसगंतव्योमहात्मभिः ॥ भावाभावविनिर्मुक्तोमननाद्ध्यानतोपिच १५२ निष्प्रपंचःसदात्मायंसर्वेषामिहदेहिनाम् ॥ प्रपंचंकुरु तेनित्यंसंहरत्यपिसप्रभुः ॥ देहात्स्थूलाद्बहिःसार्द्धंतेनदेहेनसर्वदा १५४ यदास्वप्नंतदासूक्ष्माद्देहाद्बहिरहर्निशम् ॥ सूक्ष्मेणवपुषासार्द्धंकुरुतेसर्वकृत्पुमान् १५५ स्वप्नजागरणावस्थंप्रपंचंसंहरत्ययम् ॥ स्वप्नेजागरणेऽशेषद्वयंसुप्तौमहेश्वरः १५६ संहारज्ञानमात्मस्थंयेनजानातिनैवसः ॥ आनंदात्मानमात्मस्थंयेनजाना तिनैवसः ॥ आनंदात्मातमोद्वैतंतत्तुरीयेविनाशयेत १५७ गुरुप्रसादतोऽज्ञानहरणेप्रभवेत्पुमान् ॥ नान्यथापरमेशोपिसर्वशक्तियुतोहियः १५८ ईश्वरस्यापि हिज्ञानंवेदरूपाद्गुरोरभूत ॥ नस्वतंत्रंततस्तस्यकारणंगुरुरीरितः १५९

त्याशयेनाह प्रपंचमिति । प्रतिदिनंसृष्टस्यसंहृतस्यचप्रपंचस्यनद्वैतापादकत्वमितिभावः १५३ तत्रदृष्टिसृष्टिविषयासृष्टिमाह यदेतिद्वाभ्यां । यदायमात्माजाग्रदवस्थामेतितदाएतज्जागरणंत थास्थूलदेहाद्बाह्यंपदार्थंस्थूलदेहसहितंकुरुतेसृजति १५४ यदास्वप्नमिति । यदाचस्वप्नंगच्छतितदासूक्ष्मदेहाद्बाह्यंपदार्थजातंसूक्ष्मदेहसहितंसृजति १५५ यदाचयन्नपश्यतितदातत्संहरतीत्याह स्वप्नेति । स्वप्नप्रपंचंजागरणेसंहरतिजागरणप्रपंचंस्वप्नेसंहरतेअशेषंचद्वयंस्वप्नंजागरणंचसुषुप्तौसंहरतीत्यर्थः १५६ सुषुप्तौशिष्टमज्ञानमपिसमायौसंहरतीत्याह संहारेति । आनंदरूपआत्मा कर्त्तातत्तमोरूपंद्वैतंतुरीयेस्वरूपेविनाशयति तत्किं येनतमोरूपेणद्वैतेनमोहितःसंहारस्यज्ञानंसाक्षिरूपमात्मनिवर्तमानमपिनजानातियेनचस्वरूपभूतमानंदमपिनजानातीत्यर्थः १५७ एतत्का रणशरीरभूताज्ञानस्यतुरीयेविलापनंगुरुप्रसादमंतरानभवतीत्याह गुरुप्रसादनइति । अज्ञानस्यहरणेतुरीयेविलापनरूपेगुरुप्रसादतएवप्रभवेत्शक्तोभवेत् नतंविनाईश्वरोपिशक्तइत्यर्थः १५८ ईश्वरस्याप्यत्रगुरुप्रसादापेक्षतांस्फुटयति ईश्वरस्यापीति । ईश्वरस्यहिरण्यगर्भरूपस्याप्यात्मज्ञानंनुस्वतंत्रंनाभवत्किंतुस्मृताद्वेदरूपाद्गुरोरेवाभवत् ततस्तस्यज्ञानस्यकारणंगुरुरेवेतिसिद्धमित्यर्थः १५९

इदानीमस्यपुंसः स्मृतवेदरूपाद्गुरोर्ज्ञानाभावेप्रयोजकश्चित्तशुद्ध्यभावएवनत्वीश्वरत्वाभावोजाग्रदादौसृष्ट्यादिकर्तृतारूपस्येश्वरलक्षणस्यात्रापिवर्णितत्वादित्याशयेनाह ईश्वरस्येति । सोपिइदानींतनोपियदिहिरण्यगर्भवद्विशुद्धमतिस्तदास्यापितथाज्ञानंस्यादेवेत्यर्थः १६० अस्येश्वरत्वमेवस्फुटयति अज्ञानेति । अज्ञानहरणंगुरुपरतंत्रमुक्त्वाअस्यजगतःसृष्टिसंहारयोःस्वतंत्रत्वादयंप्रसिद्धःपुमान्परमेश्वरएवेत्यर्थः १६१ यच्चवेदांतेष्वीश्वरस्यैवसृष्ट्यादिकंकर्मेतिप्रसिद्धिःसईश्वरादतिरिक्तआत्मैवनास्तीत्यभिप्रायेण तथाचांतर्यामिब्राह्मणश्रुतिः नान्योतोस्तिद्रष्टाइत्यादिरित्याह स्वतंत्रइति । ईश्वरएवसृष्ट्यादौस्वतंत्रइतियदुच्यतेवेदांतेषुतत्सत्यमेवयतःसईश्वरएवसर्वेषांनआत्माइत्यर्थः १६२ एकात्मतामेवस्फुटीकरोति एकएवेत्यादिना । पुमान्संघातानांपालकएकोदेवउपाधेःसमष्टिव्यष्टिरूपस्यविशेषेणभेदेनईशइतिजीवइतिचव्यपदिश्यतेयथारावणारितांकंसारितांचापेक्ष्यरामावतारःकृष्णावतारश्चपृथग्व्यपदिश्यतेतद्वदित्यर्थः १६३ कर्मभेदेनभेदाशंकांपरिहरति ईशानीशेति । एकस्मिन्नीश्वरएवईशइतिअनीशइतिव्यवहारः यथारावणंहंतुंसमर्थत्वाद्दाशरथिःश्रीरामचंद्रईशइत्युच्यते जलशायीसमुद्रेशेषभोगशायीभगवान्रावणहननेऽसमर्थः

ईश्वरस्ययथाज्ञानमन्यस्यापितथाभवेत् ॥ यदीश्वरसमःसोपिविशुद्धधिषणःपुमान् १६० अज्ञानहरणंहित्वास्वतंत्रोयंसदापुमान् ॥ सृष्टावपिचसंहारेजगतोस्यपरेश्वरः १६१ स्वतंत्रईश्वरःसृष्टावपरोनकथंचन ॥ इतियत्तन्मृषानैवयतआत्मासदेहिनाम् १६२ एकएवपुमानीशःसजीवश्चापिकीर्त्यते ॥ उपाधेस्तुविशेषेणरामकृष्णौयथापृथक् १६३ ईशानीशविभागोयमेकस्मिन्नीश्वरेसदा ॥ यथादाशरथौतद्वद्देवेचजलशायिनि १६४ अलौकिकानिकर्माणिसर्वेषामपिसंतिहि ॥ एकैकापेक्षयायस्माच्चित्रशक्तिरयंजनः १६५ वक्तारोमानवास्तद्वत्खगाआकाशगामिनः ॥ पातालतलगाःसर्पावृक्षानिश्चलजीविनः १६६ अंतर्धानादिशक्तीनामाश्रयाअमरादयः ॥ एवमन्येपिसंत्यत्रजीवानानाविधाअपि १६७ जातिगोत्रकुलादीनांभेदैर्भिन्नाःसहस्रशः ॥ नानाशक्तियुताश्चान्यैरशक्यालंक्रियाःसदा १६८ मानवेषुयथाकेचित्शूराःकेचिन्नराधिपाः ॥ मंत्रिणःकेचिदपरेब्राह्मणावेदपारगाः १६९ शास्त्राणामपिकर्तारोवक्तारश्चापरेपिच ॥ अनुष्ठानरताःकेचिदुपविद्यारताःपरे १७० कामक्रोधादिमंतश्चकेचिच्छांत्यादिसंयुताः ॥ केचिदेवंविचित्रेयंसर्वशक्तिरलौकिकी १७१ वपुष्यपिक्रूपीणांयावर्ततेकाचिदैश्वरी ॥ स्त्रीपुंसादिशरीरेषुचेंद्रियादिसमाश्रया १७२

अनीशइत्युक्तइत्यर्थः १६४ यथादाशरथिकृत्यमकुर्वाणोपिजलशायीस्वकीयविचित्रकार्यापेक्षयाईश्वरएवतथान्यष्टिष्वपिद्योऽपमितिसूचयन्सर्वेषांविचित्रकार्यकारितामाह अलौकिकानीति । अलौकिकानिआश्चर्यकराणि यतःपरस्परापेक्षयाचित्राविलक्षणाशक्तिर्यस्यतथाभूतोलोकः १६५ चित्रशक्तितामभिनयति वक्तारइति । वक्तृत्वशक्तिर्मनुष्येष्वेव आकाशगमनशक्तिःपक्षिष्वेव स्वल्पेपिभूविवरेप्रवेशशक्तिःसर्पेषु निश्चलतयास्थितिशक्तिर्वृक्षेष्वेव एवमग्रेपि १६६ अंतर्धानादीति । स्पष्टम् १६७ जातीति । जात्याद्यवच्छेदेननानाशक्तियुताअपिजीवाःसंतीतिपूर्वेणसंबंधः कीदृशास्तेजीवाः अन्यैरशक्यालंक्रियाःकर्तुमशक्याअलंक्रियावारणंअहमेवतत्कार्यंकरिष्यामिकिंतैरित्याकारंयेषांतेतथा १६८ सन्निहितेषुमानवेष्वेवविचित्रशक्तितांदर्शयति मानवेष्विति । उपविद्यागांधर्वनाट्यादयः स्फुटमन्यद्द्वयोः १६९ । १७० कामेति । उत्तरार्द्धेकेचिदितिपूर्वान्वयि सर्वस्यपरमेश्वरस्यशक्तिस्तत्तदुपाधिष्वित्थंविचित्रेत्यर्थः १७१ वपुष्यपीति । सैवैश्वरीशक्तिरूपीणांवरादिशक्तानांदेहेष्वपितिष्ठतितथास्त्रीप्रभृतिशरीरेषुशरीरघटकेंद्रियच्छिद्रेषुचेत्यर्थः १७२

इंद्रियादिनिघ्नतांस्फुटयति घ्राणेति । नासिकादिपायुपर्यंतेषुच्छिद्रेषुबहिर्बाह्यतः साम्येनोपलभ्यमानेष्वंतस्त्वंतर्विशेषाधायकंकिंचित्यद्रशास्तद्गतंनासिकादिस्थितंकर्मगंधग्रहणादिरूपंपरस्परविल
क्षणंदृश्यतइत्यर्थः १७३ फलितमाह अचिंत्येति । तेनवैचित्र्यदर्शनेनेदंसिद्धंसर्वेभावाअचिंत्यशक्तित्वाद्दुर्भणाअनिर्वचनीयप्रभावाविचित्रशक्तिमताईश्वरेणैकेनाधिष्ठिताश्चेत्यर्थः १७४ तस्मा
देकस्यैवोपाधिमात्रभेदेनेशादीनिनामानीत्याह ईशइति । अयःपादायस्यसत्रिपात् १७५ । १७६ विचारकालेत्वेतानिनामान्युपाधीनामेवपर्यवस्यंतीत्याह पुमानिति । वृक्षादयःशब्दा
इतिशेषः देहस्योपाधेरेवनसाक्षिरूपस्यपुंसः १७७ स्वतस्तुपुरुषस्यसर्वोपाधिषुनिर्विशेषत्वमेवेत्याह आनंदात्मेति । कल्पितभेदेनसत्यज्ञानादयोगुणायस्यवस्तुतस्तुनिरंजनोनिरुपाधिश्च ७८
वस्तुतोनिरंजनत्वंस्फुटयितुंतस्यैवोपाधीनांस्रष्टृत्वमाह अनादीति १७९ औपाधिकभेदेदृष्टांतमाह महाकाशइति । यथाएकएवाकाशोमहाकाशगृहाकाशघटाकाशकरकाकाशादिसंज्ञस्तत्तदुपाधि
भेदमादायभवेत्तथात्मापीत्यर्थः १८० उपाधीनांकल्पितत्वबोधनायदृष्टांतांतरमाह गंधर्वेति । अयथामिथ्याभूतंभेदम् १८१ दार्ष्टांतिकेयोजयति आनंदात्मनीति । तद्देहादिरूपंद्वैतंतस्य

घ्राणकर्ममुखोपस्थपायुच्छिद्रेषुकोबहिः ॥ भेदोत्रविद्यतेयेनविषमंकर्मतद्गतम् १७३ अचिंत्यशक्तयःसर्वेभावास्तेनात्रदुर्भणाः ॥ एकेनैवात्मनानेनसर्वदासम
धिष्ठिताः १७४ ईशोजीवःपुमान्विप्रःपंडितोमूर्खएवच ॥ स्त्रीगौस्तरुस्तथापक्षीचतुष्पाच्चद्विपादपि १७५ पादहीनस्त्रिपात्तद्वद्बहुपादप्यनंतपात् ॥ इत्यादि
नामवान्योयमानंदात्मामहेश्वरः १७६ पुमान्स्त्रीकुंजरोवाजीतरुसर्पोवृषादयः ॥ एतानिदेहनामानिपुंसोनैवात्रकिंचन १७७ आनंदात्मास्वयंज्योतिःसर्वभेद
विवर्जितः ॥ सत्यज्ञानादिगुणकोनिर्गुणोपिनिरंजनः १७८ अनादिमाययाकृत्वाकार्यंनानाविधंत्विदम् ॥ तत्रस्थितोविभात्येषईशानीशादिभेदवान् १७९ म
हाकाशोगृहाकाशोघटाकाशःपरोपिच ॥ एकएवयथाकाशोभवेत्तत्तद्विभेदवान् १८० गंधर्वनगरंयद्वन्माययापरिकल्पितम् ॥ नभसोस्यायथाभेदंकुर्यान्नानावि
धंबहु १८१ आनंदात्मनितद्द्वैतमेवमत्रप्रकल्पितम् ॥ भेदंनानाविधंतस्यकुरुतेसर्वदैवहि १८२ घटाकाशोयथानैवगृहाकाशक्रियांक्वचित् ॥ कुरुतेत्रंतथाजीव
ईशकर्मकरोतिन १८३ अनयोर्हियथाभेदोगृहेनचघटेनच ॥ कारणेनचकार्येणतयोर्भेदस्तथैवहि ८४ नाममात्रंयथाभेदोनभसोस्तद्वदेवहि ॥ जीवेशयोरयंभेदो
नाममात्रान्नवस्तुतः ८५ ततःसर्वशरीरेषुपरमात्मात्रसंस्थितः ॥ भेदगंधविनिर्मुक्तईश्वरोयंपरःपुमान् ८६ ईश्वरत्वाच्चसर्वेषांधीमंतोत्रशरीरिणः ॥ सृष्टिंचसंहृ
तिंतद्वत्कुर्वतेहर्निशंसदा १८७ जगतस्तंतमेवैतमुपाधिंसमुपाश्रिताः ॥ स्वस्यस्वस्यचदृश्यस्यदर्शनादप्यदर्शनात् १८८

स्वोपहितस्यात्मनोनानाविधंभेदंकुर्यादिति १८२ एवंसत्युपाधिभेदेनकर्मव्यवस्थोपपन्नेत्याह घटाकाशइति । गृहाकाशस्यक्रियांकुसूलादिधारणरूपांयथाघटाकाशोनकरोतितथेश्वरस्यसम
ष्ट्युपाधेःकर्मजीवोनकरोति १८३ यथाचानयोर्घटाकाशगृहाकाशयोर्भेदउपाधिभ्यांघटगृहाभ्यामेवतथाकार्यकारणरूपोपाधिभ्यामेवजीवेशयोरित्याह अनयोरिति १८४ यथाचोपहितेआ
काशेभेदोनाममात्रंविकल्पमात्रंवस्तुतोऽभावात्तथाजीवेशानुगतेआत्मनीत्याह नाममात्रमिति । नभसोर्घटाकाशगृहाकाशयोः १८५ फलितमाह ततइति । स्पष्टम् १८६ एवंसर्वेषामी
श्वरत्वेसतिईश्वरत्वमादायसर्वेशरीरिणःसदाजगतःस्वकीयस्वकीयदृश्यरूपस्यदर्शनादर्शनाभ्यांसृष्टिंसंहृतिंच कुर्वतेकुर्वंतितंतंमानुषादिशरीररूपमुपाधिमाश्रिताअपीत्याह ईश्वरत्वाच्चेतिद्वाभ्यां ।
व्याख्यातंद्वयम् १८७ । १८८

ननुशारीरकचतुर्थोऽध्यायेचतुर्थपादेअहंग्रहेणसगुणोपासकानांजगद्व्यापारंसृष्ट्यादिकंवर्जयित्वापरमेश्वरैश्वर्यलाभोभवतीतिजगद्व्यापारवर्जमितिसूत्रेणोक्तंतत्सर्वेषांसृष्ट्यादिहेतुतांगीकारेविरुद्धंचेते स्याशंक्यतत्सूत्रमुपासनात्मकयोगस्यफलरूपरिच्छेदपरंनतुतत्तदुपाधिविशिष्टेश्वरस्यस्वाभाविकसृष्ट्यादिशक्तिपरिच्छेदपरमित्याह जगद्व्यापारेति । मुनिर्बादरायणोयज्जगद्व्यापारवर्जमित्यभ्यधा दुक्तवांस्तदभिधानंयोगिनांयोगजबुद्धिप्रयुक्तायांसृष्टावेवनियमनपरंपरत्रईश्वरत्वप्रयुक्तायांसृष्टौतुननियामकमित्यर्थः १८९ एतदेवस्फुटयति योगर्द्धिमिति । योगस्यऋद्धिंफलसंपत्तिंप्राप्ता यदातेस्युस्तदातेषांयोगर्द्धेरियत्तापरिच्छेदरूपाइहसूत्रेकथितेत्यर्थः १९० वामदेववत्शास्त्रजन्यदृढ्याद्ब्रह्मात्मतावगाहिन्यासहितास्तुयोगिनोपीश्वरवत्सर्वकर्त्तारोभवंतीत्याह सर्वेति । सर्वेषू पाधिषुसाधारणएकरूपेणावस्थितःपुमानीश्वरःप्रपंचस्यकरणेसृष्टौस्थितःप्रवृत्तोयद्वत्करोतिविशेषरूपेणसामान्यरूपेणचसृष्ट्यादिकंनिर्मिमीतेतद्वदीश्वरवत्ब्रह्मज्ञानप्रभावेणयोगिनोपिप्रपंचंसामान्य विशेषरूपंप्रकुर्वतेकुर्वंत्येव कीदृशायोगिनः कार्योपाधौजीवतानियामकेस्थिताअपीत्यर्थः अयंभावः कर्मोपासनफलानामादौपरमेश्वरेणनियतत्वात्तत्रकर्तृत्वाद्यभिमानिनोयावत्तावद्व्यवस्थि तमेवकार्यंयोगिप्रभृतयःकुर्वंति यदातुब्रह्मविद्ययापरिच्छेदाभिमानंत्यजंतितदाभेदबाधाद्यावदीश्वरकर्मतद्विदुषांभवति ईश्वरस्तुव्यष्टिशरीरेस्थितोपिसमष्ट्युपाधेःकार्यंकर्त्तुंशक्तः यथाविश्वामित्र शरीरेवस्थायत्रिशंकुहितायस्वर्गांतरंनिर्ममेइतिप्रसिद्धंरामायणादौतथाविचित्रापरैर्दुष्कराव्जाग्रत्प्रपंचादिसृष्टिरपीश्वरस्यैवकर्मेतिनकेनचिद्वारयितुंशक्यमिति १९१ अथवाजगद्व्यापारवर्जमिति

जगद्व्यापारवर्जंयद्भगवान्मुनिरभ्यधात् ॥ योगिनांबुद्धिपूर्वायांसृष्टौतन्नपरत्रहि १८९ योगर्द्धिंसमनुप्राप्तायोगिनःस्युर्यदातदा ॥ इयत्ताकथितातस्यायोगर्द्धेर्यो गिनामिह १९० सर्वसाधारणोयद्वत्प्रपंचकरणेस्थितः ॥ पुमान्करोतितद्वत्तुयोगिनोपिप्रकुर्वते ॥ ब्रह्मज्ञानप्रसादेनकार्योपाध्याश्रिताअपि १९१ तथापीशो धिकस्तेभ्योयतस्तेनिखिलंजगत् ॥ नकुर्वंतिकरोतीशइतिवैषम्यकारणम् ॥ उक्तंभगवतातत्रनचैतद्विनिवारितम् १९२ सृष्टिसंहारकरणंस्वस्यस्वस्यशरीरि णाम् ॥ सर्वसाधारणंयद्वद्व्यापारश्चक्रवर्तिनः १९३ सामंतानांचतद्वत्स्यान्मंडलंमंडलंप्रति ॥ तथैवाधिकृतानांस्यात्प्रत्येकंनगरादिषु १९४ एवमीशस्यकार्यं स्यादधिदैवंपुमानिह ॥ हिरण्यगर्भोभगवानंतर्बहिरवस्थितः ॥ अस्यकार्यंविराडस्यकार्यंस्थावरजंगमम् १९५

सूत्रस्यसमष्ट्युपाधिकस्याधिक्यवर्णनपरत्वंनतुव्यष्ट्युपाधीनामनीश्वरताबोधकत्वंवाक्यभेदप्रसंगादित्याह तथापीति । तथापिब्रह्मविद्याबलेनयोगिनांपरमेश्वराभेदेपितेभ्यईश्वरोऽधिकःसदास र्वकर्तृत्वात् एतेतुनतथाविद्यातःपूर्वमेतेषुसर्वकर्तृताप्रादुर्भावाभावात् इत्याशयेनवैषम्यस्यपरमेश्वराधिक्यस्यकारणंतत्रजगद्व्यापारेत्यादिसूत्रेभगवताव्यासेनोक्तम् एतज्जीवानांयोगिप्रभृतीनांप्रा तिस्विकमीश्वरत्वंतुनवारितंननिषिद्धंवाक्यभेदापत्तेरितिभावः १९२ तत्रसृष्ट्यादिकंस्वल्पंबहुवाद्दृश्यमानंस्वकर्तारमीश्वरमनुमापयतीत्याह सृष्टीति । शरीरिणांयत्सृष्ट्यादिकरणंस्वस्यस्व स्यप्रत्येकंदृश्यमानंतत्सर्वेणपरमेश्वरेणसाधारणंसमानम् नकेवलंजीवानामेवकिंत्वीश्वरस्यापीतियावत् यथाप्रजापालनरूपश्चक्रवर्तिनोव्यापारोयादृशस्तद्वत्तादृशएवसामंतानांतदधीनभूपानांभव तितदनुसारीचग्रामाध्यक्षादीनांसव्यापारोभवतितथेतिद्वयोरर्थः तथाचयथासामंतादीनांप्रभुत्वेपुचक्रवर्तिनःप्रभुत्वमनुगतंतथाजीवकर्तृत्वेपुपारमेश्वरंकर्तृत्वमितिभावः १९३ । १९४ अत्रस चक्रवर्तीदृष्टांतोयोयोगबलेनस्वयमेवसामंतादिभावमापन्नइतिदर्शयन्नीश्वरस्यसाक्षात्परंपराभ्यांसर्वत्रकारणतामाह एवमिति । यथायंदृष्टांतएवमीशस्यचक्रवर्तिस्थानीयस्यसाक्षात्कार्यमधिदैवं समष्टिभावेवर्त्तमानःपुमान्हिरण्यगर्भाख्यःसामंतस्थानीयः अस्यहिरण्यगर्भभावापन्नस्यईशस्यकार्यंविराट्स्थूलसमष्टिरूपः अस्यविराड्भावापन्नस्यचतस्यकार्यंस्थावरादयोव्यष्टिदेहाइत्यर्थः १९५

अज्ञानादिति । येचइमेकार्योपाधयःस्वरूपभूतादपीशादज्ञानवशेनभेदंप्राप्तास्तेषामिदंजाग्रदाद्यवस्थात्रयंकार्यमित्यर्थः १९६ अत्रदृष्टिसृष्टिंस्फुटयति योयामिति । यःप्रमातायामत्रस्थांपश्य तिसएवतामवस्थांस्वसंबंधिनींसृजतिदृष्टिरूपांसृष्टिंनयति यांचावस्थांनपश्यतितांसंहरतिस्वस्मिन्विलापयतीत्यर्थः १९७ एतदृष्टिसृष्टिप्रक्रियारूपंमोक्षद्वारंवेदांतेपुरहस्यतयास्थापितमितिदर्शय न्भूतादिकारणतादृष्टिमेदधियामनुग्रहार्थंत्याह यद्यपीति । ततोदृष्टिसृष्टेःश्रुत्यानुभवसिद्धत्वात्यद्यपिस्थूलदेहःशुक्रादिसंभवःसूक्ष्मदेहईशात्कारणोपाधेःप्रसूतइतिप्रसिद्धंलोकेशास्त्रेचतथाप्यसौदे होदृष्टभावभावाभ्यांमृतोजातश्चभवतीतिमंतव्यम् कथंतथानलक्ष्यतेइत्यतआह समइत्यादि । यतःपूर्वसृष्टेनसमःसमानाकारस्ततःस्वयंकल्पकेनपुंसानदृष्टोनलक्षितइत्यर्थः १९८ एतदेवविशदयति आत्मनइति । आत्मनोवस्तुतोजस्यामरस्यचदेहेनसहयोगस्तादात्म्याध्यासरूपोभिमानःसएवजन्म अयोगस्तस्याभिमानस्यक्षयस्तुमरणं देहादीनांदृश्यानांतुदर्शनादर्शनेएवजन्ममरणेइत्यर्थः १९९ फलितमाह ततइति । यःप्रमाताअत्रसंसारदशायांयद्विषयजातंपश्यतितदादर्शनकालएवतत्सृजतिअन्यथातुसंहरतीत्यर्थः २०० एवमिति । एवंवर्तिणदृष्टिसृष्टिविषयास

अज्ञानाद्भेदमापन्नायईशादात्मनस्त्विमे ॥ तेषांकार्यमिदंनित्यमवस्थात्रयमीरितम् १९६ योयांपश्यतितांस्वस्यसकरोतिनचापरः ॥ अपश्यंश्चात्मनस्त्वेतां संहरत्येवसर्वथा १९७ यद्यपिस्यात्ततःस्थूलोदेहःशुक्रादिसंभवः ॥ सूक्ष्मईशात्प्रसूतश्चस्वस्यवापिपरस्यवा ॥ तथाप्यसौमृतोजातःसमोदृष्टोनचस्वयम् १९८ आत्मनोजन्ममरणेयोगायोगौप्रकीर्तितौ ॥ देहस्यतौचकथितौदर्शनादर्शनेसदा १९९ ततोयदत्रयःपश्येत्तत्तदाकुरुतेहिसः ॥ नपश्येद्यद्यदावस्तुसतदासंहरेद्धितत् २०० एवंसर्वइमेजीवाअवस्थात्रयगामिनः ॥ देहेंद्रियात्मविषयान्संहरंतिसृजंतिच २०१ यदाऽज्ञानमिदंनाशंव्रजेदात्मावबोधनात् ॥ अवस्थात्रयनिर्मुक्तंतदागच्छेत्परंपुमान् २०२ एवंसामान्यतांश्रुत्वाब्रह्मणोवक्त्रतःसदा ॥ उपायसहितंभूयउपेयंप्रष्टुमुद्यताः ॥ ऊचुर्ब्रह्माणमागत्यपूर्ववद्विनयान्विताः २०३ ओंकारोभवतायोयमात्मोपायसमन्वितः ॥ कथितस्तमुपेयंत्वमात्मानंसम्यगीरय २०४ एवमुक्तस्तदाप्राहब्रह्मालोकपितामहः ॥ अवाङ्मनसगम्यंतंधर्मानारोप्यभूरिशः २०५ देवाःशृणुतचात्मानमवाङ्मनसगोचरम् ॥ नानाविधैरहंधर्मैर्वक्ष्येबोध्योयतोधुना २०६

वेजीवाअवस्थात्रयेसृष्टिसंहारौकुर्वंतोप्यात्मानमीश्वरतयानजानंत्यतोजीवाइत्युच्यंतेइतिभावः २०१ यदेति । यदातुगुरुप्रसादलभ्येनात्मबोधेनेदमवस्थात्रयप्रयोजकमज्ञानंनश्यतितदातुरीयरूपंपरंपदंगच्छतीत्यर्थः २०२ अथतुरीयप्रणववेद्यआत्मायथोपदेष्टव्यआचार्येणयथाचप्रतिपत्तव्यःशिष्येणतंप्रकारंस्फुटीकर्तुंप्रवृत्तस्याष्टमखंडस्यार्थंवर्णयति एवंसामान्यतइत्यादिश्लोकशतत्रयेण इत्थंब्रह्मणोमुखात्सामान्यतःप्रणवादविविक्ततयाआत्मानमुपायैःशमादिभिःसहितम् अथवाउपायशब्दोभावप्रधानः तथाचनिर्विशेषलाभस्योपायभूतंवर्णितमात्मानंश्रुत्वाऽथतंकेवलोपेयरूपंप्रष्टुंपुनर्ब्रह्माणंप्रतीदमूचुरित्यर्थः २०३ ओंकारइति । भवताप्रणवरूपआत्माउपायत्वेनसहितउक्तोऽथतमात्मानंकेवलमुपेयरूपंवर्णयेत्यर्थः २०४ एवमुक्तइति । वागाद्यतीतमपितमात्मानमारोपितधर्मैर्वाक्प्रवृत्तियोग्यंकृत्वातंप्राहेतिशेषः २०५ प्रजापतिरुवाच देवाइति । हेदेवाःशृणुतअहमवाङ्मनसगोचरमप्यात्मानंनानाविधैरारोपितैर्धर्मैर्वक्ष्येवाग्व्यापारगोचरंकारिष्यामियतआत्माअधुनाभवतांचित्तशुद्धघनंतरंबोध्यःअवश्यंज्ञापनीयोभवति २०६

तत्रादौशुद्धत्वाविष्करणायतस्योपद्रष्टृतांस्फुटयति सच्चिदानंदेति । योनृसिंहाख्यआत्मासच्चिदानंदलक्षणोमहावाक्यगततत्पदार्थतयोक्तःसत्वंपदार्थेनऐक्यंप्राप्तःसन्सर्वेषांप्रमातृणांसामीप्येन निरतिशयसांनिध्येनसर्वप्रकाराणांबुद्धीनांद्रष्टाभवतियतोबुद्ध्याविषयभूतयावर्जितोसंस्पृष्टइति तस्यत्वंपदार्थैक्येहेतुरानंदात्मास्वरूपतइति । यतस्त्वंप्रशार्थोपिस्वरूपेणानंदरूपोभवतिततइतिद्वयोरर्थः २०७ । २०८ यतश्चउपद्रष्टैवनकर्त्तांततोऽनुमंत्वेत्याह यदात्रेति । अत्रसंघातेपुंसोजनस्यमनोयदाशुभमशुभंवाकुरुतेतदासआत्माअनुमनुतेवारणाभावरूपामनुमतिंकरोतियतःपंगुवत्तश तयासामर्थ्येनरहितत्वान्मध्यस्थउदासीनोभवतीत्यर्थः २०९ अनुमतिकर्तृत्वेनतस्यविकारप्रसक्त्यभावेहेतुंश्चिद्रूपत्वादीनाह चैतन्येति । उपलब्धासाक्षी २१० अस्याद्वयतामाह एकेति । अयमात्मासदादिलक्षणएकरूपोयतोस्मिन्द्वैतंनदृश्यते एतत्कुतः यतस्तस्यद्वैतस्यसिद्धिःसत्ताअस्मादात्मनोभेदेननास्तियतःसर्वंद्वैतंतत्रात्मनिमायाकल्पितमित्यर्थः २११ अथसर्वानर्थहेतोर्विवेकभीरोश्चमायायाःस्वरूपंवर्णयति प्रमाणैरित्यादिना । यास्वयंप्रमाणैर्नदृश्यतेयस्याःकार्यंत्वक्षादिगोचरतांगच्छतिसादुर्घटामायेत्युक्तेत्यर्थः २१२ दुर्घटत्वेहेतुमाह स्वयमिति । या

सच्चिदानंदरूपोयआत्मापूर्वंमयेरितः ॥ नृसिंहस्तत्पदार्थोयंत्वंपदार्थैक्यमागतः २०७ सामीप्येनचसर्वेषामानंदात्मास्वरूपतः ॥ सर्वासामपिबुद्धीनांद्रष्टाबुद्धिविवर्जितः २०८ यदात्रकुरुतेकिंचिन्मनःपुंसःशुभाशुभम् ॥ तदानुमनुतेसोपिमध्यस्थःशक्तिवर्जितः २०९ चैतन्यरूपःसततंविक्रियालेशवर्जितः ॥ उपलब्धेवबुद्धीनांसुखदुःखविवर्जितः २१० एकरूपोहिसर्वत्रसच्चिदानंदरूपवान् ॥ अस्मिन्नदृश्यतेद्वैतंतस्यसिद्धिर्नकर्हिचित् ॥ अस्माद्भेदेनसर्वंयन्माययातत्रकल्पितम् २११ प्रमाणैर्यानसिद्धास्याद्यातिचाक्षादिगोचरम् ॥ यस्याःकार्यंचसामायादुर्घटोक्तामनीषिभिः २१२ स्वयंयानसतीतस्याःकार्यंनामकथंहिसत् ॥ ततोद्वैतमिवैतत्स्यान्मायाकार्यमिहात्मनि २१३ गंधर्वनगरंयद्वद्वचेतन्नैवविचारतः ॥ गगनेस्तितथाद्वैतमात्मन्यत्राविचारतः २१४ यएषसर्वजंतूनामवस्थात्रयगःपुमान् ॥ सएवात्मापरःप्रोक्तःसच्चिदानंदरूपवान् २१५ यथाप्राज्ञःसुषुप्तिस्थोदुःखंवेत्तिनकिंचन ॥ आत्मातथासदैवायंवेत्तिदुःखंनकिंचन २१६ आनंदात्मस्वरूपस्यनिर्दुःखस्यमहात्मनः ॥ अविद्ययैवदुःखंतज्जायतेनतुवस्तुतः २१७ अहंब्रह्मेतिविज्ञानंविद्याप्रोक्तामनीषिभिः ॥ विरुद्धायानयासेयमविद्यादुःखकारिणी २१८ अनादिरहमत्रास्मीत्येवंभातिशरीरिणाम् ॥ दुर्घटासदसद्रूपाप्रपंचस्यास्यकारणम् २१९

मायासतीसत्त्वेनप्रतीतानभवतितस्याःकार्यंसत्सद्रूपेणभासमानंकथंस्यात् परंतुतथाभासतएव ततउपपत्त्यसहत्वादात्मनिदृश्यमानंद्वैतमिवमिथ्यैवद्वैतंनवास्तवमित्यर्थः २१३ द्वैतस्यमायामयत्वेहेतुमविचारसिद्धत्वमाह गंधर्वेति । यथाविचारंविनैवगगनेगंधर्वनगरंतथात्मनिद्वैतमिति २१४ तस्मादात्मनोब्रह्मत्वेनकाचिदनुपपत्तिरित्याह यएषइति । यएषसन्निहितःसर्वेषामात्मासपरआत्मैवप्रोक्तःसदादिरूपत्वादित्यर्थः २१५ आत्मनःसर्वदुःखराहित्यंसौषुप्तात्मवत्सर्वदावोध्यमित्याह यथाप्राज्ञइति । यथासौषुप्तआत्मादुःखरहितस्तथासर्वदादुःखरहितइत्यर्थः २१६ कथंतर्हिदुःखोपलब्धिरितिचेदविद्ययैवेत्याह आनंदात्मेति । आनंदात्मातत्पदार्थस्तेनसहवस्तुतऐक्यान्निर्दुःखस्यात्मनोदुःखभानेहेतुरविद्यैवेत्यर्थः २१७ तत्राविद्यापदस्यनिरुक्तिमाह अहंब्रह्मेति । अहंब्रह्मेतिविज्ञानरूपयाविद्ययाविरुद्धत्वमविद्यात्वमित्यर्थः २१८ विरुद्धत्वमभिनयति अनादिरिति । अहमत्रसंघातएवास्मिन्नसर्वत्रेत्याकारेणसर्वेषांदेहिनामनुभवसिद्धाआदिशून्यासदसद्भ्यांरूपाभ्यामनिर्वाच्यत्वादुर्घटाअसंसारिण्यपिसंसारकारणभूतावेत्यर्थः २१९

अस्याःकारणशरीरभूतायाआत्मनासहतादात्म्याध्यासंश्रुताचात्मैवद्रष्टेत्युक्तंहेतूकृत्यास्वतंत्रत्वमाह आत्मनइति । साअविद्याजडत्वादिनाआत्मनोभिन्नापिभिन्नत्वेननगृह्यते तथासतिअस्वतं
त्रापराधीनेत्यर्थः शत्रुवद्दुःखदत्वाअस्वतंत्रेत्युक्तेत्याह स्वतंत्रेति २२० अस्यादुःखदत्वंचभेदभानप्रयोजकत्वादित्याह अनयेति २२१ दुःखदत्वेस्वरूपाच्छादनमपिद्वारमस्याइत्याह आ
त्मानमिति । आत्मानमानंदादिरूपंप्रेमाद्यन्यथानुपपत्त्यासर्वोलोकोजानात्येवेतिविज्ञायतेतथाप्ययंदेवेशश्चिल्लक्षणप्रकाशरूपोयदजानन्निवदृश्यतेतत्रहेतुर्माययैवेत्यर्थः २२२ तत्रस्वप्नजागरण
योर्भ्रमाख्यकार्याविद्याख्यामोहिकासुषुप्तौतुकारणाविद्येत्याह स्वप्नइति २२३ तत्रसुषुप्तिकालेयदज्ञत्वमात्मनस्तत्स्वरूपभूतेचैतन्येसतिवर्तमानेपिविषयाभावादेवनतुचैतन्यनाशात् नहिद्रष्टुर्द
ष्टेर्विपरिलोपोविद्यतेइतिश्रुत्यंतरादित्याह सुषुप्तेपीति । आत्मरूपिणिआत्मनःस्वरूपभूतेचैतन्येसति २२४ चैतन्यनाशेबाधकंदर्शयति अन्यथेति । अन्यथाचैतन्यनाशेअयमात्माअज्ञानम
पितमोरूपंनजानीयात् तत्त्ववश्यंजानाति । यतःसुप्तोत्थितोनैवकिंचिदज्ञासिषंअज्ञातवानस्मीतिजानातिपरामृशतीत्यर्थः २२५ अज्ञानस्यतुच्छत्वादिकंप्रतिलोमक्रमेणविवृणोति सुप्ताविस्या

आत्मनोपिचभिन्नासानभिन्नागृह्यतेतथा ॥ अस्वतंत्रास्वतंत्राचस्वात्मनोदुःखदायतः २२० अनयात्माविभात्येषभेदवानिवनिर्द्वयः ॥ आनंदात्मास्वयंज्यो
तिर्निर्गुणःपरमेश्वरः २२१ आत्मानंसर्वदाजानन्माययापरिमोहितः ॥ अजानन्निवदेवेशश्चित्प्रकाशवपुःसदा २२२ स्वप्नेजागरणेनित्यंविपरीतावलोकनात् ॥
नजानात्येनमात्मानंसुप्तावज्ञानतस्तथा २२३ सुषुप्तेप्यज्ञतायेयंसासत्येवात्मरूपिणि ॥ चैतन्येविषयाभावान्नतुचैतन्यनाशनात् २२४ अन्यथायंनजानीयान्मा
यांसुप्तौतमोमयीम् ॥ जानीतेऽज्ञासिषंचाहंनैवकिंचिदितीवहि २२५ सुप्तौयद्दृश्यतेतेनस्वात्मनोन्यज्जडंतमः ॥ तदेतत्तुच्छमित्युक्तंनिर्मानंचमहात्मभिः २६
तुच्छंकालत्रयेयत्स्यात्सत्ताहीनमरूपकम् ॥ प्रतीयतेनाममात्राद्वस्तुहीनंसदानृणाम् २२७ नरशृंगंयथावंध्यासुतोवाशब्दमात्रतः ॥ प्रतीयतेतथैवैतदज्ञानम
पिशब्दतः २२८ एतादृशंचयद्धेतुःसंसारस्यभवेत्ततः ॥ दुर्घटंकथितंनित्यंवेदवादरतैर्द्विजैः २२९ भावरूपस्यविश्वस्यकारणंयत्ततोद्विजाः ॥ वदंतिभावतांचा
स्यतुच्छस्यापिमहाधियः २३० कालत्रयेप्यसत्त्वेनतुच्छंतत्परिकीर्त्यते ॥ भावरूपस्यहेतुत्वाद्भावश्चैतन्निगद्यते ॥ अनिर्वाच्यमतःप्रोक्तंभावस्तुच्छंचतद्यतः
२३१ प्रपंचस्यास्यहेतुर्यन्मोहकत्स्वात्मनोपिच ॥ जडताचास्यसंप्रोक्तास्वात्मनोव्यतिरेकतः २३२

दिना । यदेतत्सुप्तावनुभूयमानत्वेनसाधितमात्मभिन्नंजडंतमोरूपंचाज्ञानंतन्निर्मानत्वात्प्रमाणैरग्राह्यत्वात्तुच्छमित्युक्तमित्यर्थः २२६ तत्रलौकिकंतुच्छपदार्थमाह तुच्छमिति । यत्कालत्रये
सत्ताहीनंनिःस्वरूपत्वात् अतएववस्तुनाविषयेणहीनंयथाभवतितथानाममात्रजन्यप्रतीतेर्विषयीभवतितत्तुच्छमित्युच्यतेयथानृशृंगादिकंतथाज्ञानमपिशब्दतोनाममात्राद्देवप्रतीयतेइतिद्वयोरर्थः
२२७ । २२८ एतादृशमिति । एतादृशंतुच्छमपियस्मात्संसारस्यहेतुर्भवतीत्यतोदुर्घटमनिर्वचनीयमित्युक्तमित्यर्थः २२९ अज्ञानस्यभावत्वेनव्यवहारेहेतुमाह भावरूपस्येति । भावरूपे
नप्रतीयमानस्यविश्वस्यहेतुत्वाद्भावत्वेनास्यव्यवहारइत्यर्थः २३० तुच्छत्वभावत्वयोःसमुच्चयानुपपत्तिमपेक्ष्यचानिर्वचनीयमित्युच्यतेइत्याह कालेति । सार्वदिकासत्त्वेनतुच्छत्वंभावहेतुत्वे
नभावत्वंचात्रयतःस्थितमतोऽनिर्वाच्यमित्युच्यतेइत्यर्थः २३१ जडत्वेहेतुमाह प्रपंचस्येति । यद्यतोऽस्यजडरूपस्यप्रपंचस्यहेतुरात्मनोमोहस्यावरणस्यकारकंचभवत्यतःस्वात्मनश्चिद्रूपाद्व्य
तिरेकेणलक्षणयमपंक्ष्याज्ञानस्यजडतोक्तेत्यर्थः २३२

श्रुत्युक्तमनंतत्वंस्फुटयति अनंततेति । अंतःप्रागभावप्रतियोगित्वरूपःकालिकपरिच्छेदस्तदभावादस्यानंतता तदेतदुक्तं आदिशून्येनहेतुनेति । आदिशून्यपदंभावप्रधानं अत्रोपपत्तिमाह भवे दित्यादिना । यदाअस्याज्ञानस्यादिःकारणंभवेत्कल्पेततदातस्याज्ञानकारणस्याप्यज्ञस्यापिकारणंकल्प्यंस्यात्तदाचतद्धेतोरेवास्तुहेतुत्वंकिंतेनेतिन्यायात्प्रथमाज्ञानस्यवैयर्थ्यंस्यात् यदेतस्यप्रथमाज्ञानस्यकारणंकल्पितंतेनैवसर्वंनिर्वाहादित्यर्थः २३३ अथवेति । अथवामनंतंप्रपंचंप्रतिकारणत्वरूपाद्धेतोरस्याज्ञानस्यानंतत्वंबोध्यमित्यर्थः २३४ एतदेवस्फुटयति अनंतोयमिति । अनंतोऽगृह्यमाणांतोऽयंप्रपंचःपरिच्छिन्नात्कारणात्केनकथंभवेज्जायेत अज्ञानंतुतस्यानंतप्रपंचस्यकारणंभवतिततस्तदज्ञानमनंतमित्येवमुक्तमित्यर्थः २३५ ब्रह्मेति । अथवाब्रह्मज्ञानंविनाकारणत्वेनोपन्यस्तानांशतादपरिमितसमुदायादपिएतदज्ञानमंतंनाशंनयाति एतस्मान्निमित्तादनंतमित्युच्यतेइत्यर्थः २३६ अथमोहरूपतांश्रुत्युक्तामभिनयति मोहात्मकत्वमिति । यतश्चानंदादिलक्षणमात्मानमावृणोत्याच्छादयतिततोस्याज्ञानस्यमोहकत्वमुक्तमित्यर्थः २३७ अस्यनित्यंनिवृत्तत्वेप्यचिंत्यप्रभावेणमोहकत्वंलोकानुभवसिद्धमित्याह आत्मन्येवेतित्रिभिः । एषाअविद्याआत्मनिस्वभासकेकालत्रयेनवर्तते यतःप्रकाश्यस्यप्रकाशकनिष्ठत्वंक्वापिनदृष्टमित्युपपत्त्याअस्मादात्मनःसकाशात्सर्वदानिवृत्तैवेयमविद्यास्थितासाधिता एतादृश्यपिचस्वकीयबलादचिंत्यश

अनंतताचविद्वद्भिरादिशून्येनहेतुना ॥ भवेदस्ययदैवादिस्तदातस्यापिकारणम् ॥ भवेद्व्यर्थंतदाचैतत्कारणंपरिकल्पितम् २३३ अथवानंतताचास्यभवेदेवंजडस्यहि ॥ अनंतस्यास्यविश्वस्यकारणत्वेनहेतुना २३४ अनंतोयंपरिच्छिन्नात्कारणात्केनसंभवेत् ॥ प्रपंचःकारणंतस्यस्यादनंततोहितत् २३५ ब्रह्मज्ञानंविनाचांतंनैतद्यातिकुतोपिहि ॥ कारणानांशतात्तस्मादनंतमितिगीयते २३६ मोहात्मकत्वमेतस्यकथ्यतेवेदवादिभिः ॥ आवृणोतियतश्चैतदानंदात्मानमद्वयम् ॥ स्वप्रकाशंविनिर्भातंसर्वमोहविवर्जितम् २३७ आत्मन्येषासदाविद्यानासीन्नैवभविष्यति ॥ नवर्ततेनिवृत्तैवसर्वदास्मादियंस्थिता ॥ एवंभूतापिचात्मानंमोहयत्यात्मनोबलात् २३८ अहंममेतिद्विमयींबुद्धिमेषोधिगच्छति ॥ भूतजांशेद्विधाभूतेस्थूलेसूक्ष्मेचसर्वदा २३९ परिच्छेदेचतस्यापिसुखदुःखकरेपुमान् ॥ आनंदात्मासदाद्वैतशून्योसौनिर्गुणःपरः ॥ अनयामोहितोमूढोभवत्येषोतिमोहितः २४० अस्यमायात्मनोमोहकारणस्यसदात्मनः ॥ तुच्छस्यजडरूपस्यहेतोर्विश्वस्यसर्वदा २४१ अनादेरप्यनंतस्यसत्त्वासत्त्वेउदीरिते ॥ पंडितैर्यददःसिद्धमसिद्धंचैवदृश्यते ४२ सिद्धंकार्यस्वरूपेणह्यसिद्धंस्वस्वरूपतः ॥ सिद्धंचानुभवेनैतदसिद्धंचविचारतः २४३

क्तिरूपादात्मानंमोहितंकरोतीत्यर्थः ३८ मोहस्वरूपंवर्णयति अहमिति । भूतजांशेपंचभूतानांकार्यभागेस्थूलेसूक्ष्मेवाद्विधाभूतेप्रत्यक्परागभावेनस्थितेयथाक्रममहमित्याकारांममेत्याकारांचद्विमयींद्विविधांबुद्धिंभावनामेषआनंदादिलक्षणोप्यात्माऽधिगच्छतिप्राप्नोति तत्रयंभौतिकांशंप्रत्यक्त्वेनमन्यतेतत्राहमितिबुद्धिंकरोति यंचपराक्त्वेनमन्यतेतत्रममेतीतिविभागः ३९ परिच्छेदेइति । तथातस्यभौतिकांशस्यैवधर्मभूतेपिपरिच्छेदेपरिच्छिन्नत्वेएषआनंदादिलक्षणआत्माअतिमोहिनःपरिच्छेदस्यात्मनिष्ठत्वदर्शनरूपमतिशयितंमोहंप्राप्तोभवतियतोनयामाययामूढआवृतस्वरूपोपिमोहितःअधिकंमोहायप्रेरितइत्यर्थः २४० अज्ञानस्यसिद्धत्वासिद्धत्वहेतुकेसत्त्वासत्त्वेदर्शयति अस्येति । अस्यएवंभूतमायारूपस्यविश्वप्रपंचहेतोःकीदृशस्यात्मनःसदामोहकस्यतुच्छस्यजडस्यानादेरनंतस्यचेतिएतस्यसत्त्वासत्त्वेपंडितैरुक्ते यद्यतःअदोऽज्ञानंसिद्धत्वासिद्धत्वाभ्यांवक्ष्यमाणरूपाभ्यांविशिष्टंदृश्यतेइत्यर्थः ४१ । ४२ सिद्धत्वासिद्धत्वेउपपादयति सिद्धमिति । सिद्धत्वमक्षादिगोचरत्वंतदज्ञानेपिकार्यरूपेणास्तिअतस्तत्सिद्धमित्युच्यते स्वरूपेणत्वज्ञानस्याज्ञानादिगोचरत्वाभावात्तदसिद्धमिति अथवाएतदज्ञानमनुभूयमानत्वात्सिद्धमित्युक्तंविचारेणबाधितत्वात्त्वासिद्धमितीत्यर्थः २४३

असिद्धमिति । अथवाऽनिर्दमांलोकप्रसिद्धिमनुसृत्यतदज्ञानंजगतःकारणांसिद्धमसिद्धमितिचोच्यते इमांकां परतंत्रमसिद्धंस्वतंत्रंतुसिद्धमित्युक्तांलौकिकैरित्यर्थः २४४ तत्रस्वातंत्र्यमज्ञानस्यस्फुटयति स्वातंत्र्यमितिचतुर्भिः । एतस्याज्ञानस्यइदंस्वातंत्र्यंस्वतंत्रस्यकर्मपश्यत इदंकिं यत्स्वात्मरूपतःस्वरूपेणजडंतुच्छमपिचसदनाद्यनंतमितिप्रसिद्धंतथानंदात्मानंद्वैतमोहाभ्यांहीनंमोहयतीत्यर्थः २४५ प्रकारांतरेणस्वातंत्र्यंदर्शयति भानाविति । यथामध्यान्हार्केतमोदुर्घटमसंभवत्स्थितिकंतथाआनंदरूपेआत्मनिदुःखकारिणीमायादु ःखा इनएतद्वृत्तमालोच्यएतस्यामायायाःस्वातंत्र्यमेतदेवाभिधीयते एतत्किं यदानंदरूपात्मनिवर्तनमितिद्वयोरर्थः २४६ । २४७ तथास्वयंयस्याधीनातस्यात्मनएववशीकरणंतृतीयंस्वातंत्र्यमित्याह अहोइति । किमपिअद्भुतं यत्तज्ज्यामात्मोच्यते २४८ अथास्याःपारतंत्र्यंविशदयति परेतिपंचदशभिः । इयमविद्यापरतंत्रापिभवति यतआश्रयंविषयंचापेक्ष्यैवसिद्ध्यति तौविषयाश्रयौविहायोपेक्ष्यनसिद्ध्यतीत्यर्थः २४९ नन्वविद्यायाःस्वरूपमेवाश्रयतांविषयतांचभजिष्यतीतिकथंपरापेक्षेतिशंकांपरिहरति अविद्यायाइत्यादिना । अविद्यायाविषयःअविद्यैवनसंभवति यथातमसातमएवनविषयीक्रियतेइत्यर्थः २५० तत्रहेतुतयाविषयलक्षणासंभवमाह यस्येति । यःपदार्थोयस्यपदार्थस्यसंबंधिनंयन्निष्ठमितियावत् एतादृशमतिशयंफलंकुर्यात्सफलाश्रयस्तस्यफलकर्तुर्विषयइत्युच्यते स्वस्वरूपेचस्वेने

असिद्धमस्वतंत्रंस्यात्स्वतंत्रंसिद्धमीरितम् ॥ इतिवातद्भवेत्सिद्धमसिद्धंचात्रकारणम् २४४ स्वातंत्र्यमिदमेतस्यकथितंवेदवादिभिः ॥ अनाद्यनंतंचजडंतुच्छंचस्वात्मरूपतः ॥ आनंदात्मानमद्वैतममोहंमोहयत्यपि २४५ भानौयथाप्रभाकीर्णेस्थितेस्याद्दुर्घटंतमः ॥ आनंदात्मनितद्वत्स्यान्मायेयंदुःखकारिणी ॥ २४६ इतःस्वातंत्र्यमेतस्याइदमत्राभिधीयते ॥ चिदानंदात्मरूपेस्मिन्वर्तनंयन्निजाद्बलात् २४७ अहोअस्याःकिमप्येतत्स्वातंत्र्यमपिदुर्घटम् ॥ यदधीनास्वयंतच्चकुरुतेस्वात्मनोवशे २४८ परतंत्रासदाविद्यायतःसिद्ध्यतिकुत्रचित् ॥ विषयेणाश्रयेणनित्यंनतुतौपरिहायहि २४९ अविद्यायाश्चविषयोनाविद्यैवकदाचन ॥ तमसोहितमोनैवविषयःक्वहिंचित्क्वचित् २५० यस्ययोतिशयंकुर्यात्सतस्यविषयोमतः ॥ स्वस्मिन्स्वेनचकोनामकरोत्यतिशयंत्विह २५१ चिदानंदात्मनिसदाक्रियतेतिशयस्त्वयम् ॥ अज्ञोदुःखीतितस्मात्सविषयोस्याःप्रकीर्तितः २५२ आश्रयश्चसदैवस्यात्स्वस्मादन्योत्रवस्तुनः ॥ अधिकश्चतथात्मायंमायायाःपरमेश्वरः २५३ चिद्रूपस्तद्विहीनश्चततःसातत्रवर्तते ॥ शुक्त्यज्ञानंयथापुंसिवर्ततेरूप्यदर्शिनि २५४ यद्यप्यत्रभवेदन्योविषयःस्वाश्रयात्सदा ॥ शुक्त्यज्ञानेतथाप्यत्रपरिशेषप्रमाणतः ॥ आत्मैवविषयस्तस्मादन्यद्येननविद्यते २५५

वातिशयःकेनापिकर्तुंनशक्यइत्यर्थः २५१ अविद्ययाचावरणविक्षेपरूपमज्ञोस्मिदुःखीचेत्यनुभूयमानंफलंभासमानानंदरूपेआत्मन्येवक्रियतेऽतआत्मैवतस्याविषयइत्याह चिदानंदात्मनीति २५२ अविद्ययाश्रयत्वेनाप्ययमात्मापेक्ष्यतइत्याह आश्रयश्चेति । यःपदार्थःस्वस्माद्भिन्नोऽधिकश्चभवतिसएववस्तुनःपदार्थजातस्याश्रयःप्रसिद्धस्तथाअविद्यातोभिन्नोऽधिकश्चात्मैवसंभवतियतःपरमेश्वरश्चिद्रूपत्वेनभासकत्वात्तयाअविद्ययाविहीनोऽस्पृष्टःअतःसाविद्यातत्रात्मन्येववर्ततेयथारूप्यंरजतंतद्भ्रमवतिपुरुषेशुक्तिगोचरमज्ञानंवर्ततइतिप्रसिद्धंतद्वदितिद्वयोरर्थः २५३ । २५४ अत्रपूर्वविरोधमाशंक्यपरिहरति यद्यपीति । यद्यप्यत्रशुक्त्यज्ञानोदाहरणेआश्रयःपुमान्विषयःशुक्तिरितिविषयाश्रययोर्भेदःप्रसिद्धस्तथापितत्रशुक्त्युदाहरणेप्यात्मैवविषयत्वेनमंतव्यः कुतःपरिशेषात्प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगात्परिशिष्यमाणेसंप्रत्ययइत्युक्तलक्षणादनुमानात् परिशेषमेवदर्शयति तस्मादिति । यतश्चिद्रूपआत्मैवावरणयोग्यस्तस्मादात्मनोन्यत्शुक्त्यादिकंजडत्वादावरणयोग्यंनास्तीत्यर्थः तथाचलोकभ्रांत्यनुसारेणप्रसक्तस्यसन्निहितस्यशुक्त्यादेःप्रतिषेधेसत्यन्यत्रव्यवहितेप्रसंगएवनभवतीतिशुक्त्याद्यवच्छिन्नचैतन्यमात्मैवविषयोभवतीतिभावः २५५

एतदेवस्फुटीकरोति शुक्ताविति । अत्रवर्णितेशुक्तिरूप्योदाहरणेपिविचारितेसतिशुक्तिर्जडाविषयोनस्यात् यतोयत्स्फुरणंचैतन्यंशुक्तिकायांगतमनुप्रविष्टंयदिदंतापदार्थतयानिरूपितंतदेवविषयत्वार्हमित्यर्थः २५६ इदंतार्थस्यचैतन्यस्यसामान्यभूतस्यशुक्तिकावच्छिन्नात्मनाविशेषरूपेणाज्ञानविषयत्वाद्विषयवच्छेदकत्वेनशुक्तेरज्ञानविषयत्वाव्यवहारइत्याह सामान्यइति । हियतोऽस्मिन्निदंतार्थतयावर्णितेस्फुरणेसामान्यभूतेशुक्तिकयाअभिधानिरूपणंयस्यतत्तथाविधंशुक्त्यवच्छिन्नचैतन्यंविशेषरूपंतादात्म्येनतिष्ठतितंविशेषंयतआवृणोतीदमज्ञानंततोवच्छेदकतयाशुक्तेरवगाहनादेतत्शुक्त्यज्ञानमितिप्रचक्षतेव्यवहरतीत्यर्थः २५७ शुक्त्यवच्छिन्नस्यचैतन्यस्यात्मत्वाचसर्वत्राज्ञानस्यात्मविषयत्वमेवेत्याह स्फुरणमिति । यद्बहिर्बाह्यार्थेष्वपिस्फुरणंतदप्यंतरात्मैववेदवादिभिरौपनिषदैःकथितमस्तिभातिप्रियमित्यादिवाक्येन तथाचतत्रशुक्त्याद्युदाहरणेपिसःअंतरात्मैवविषयइत्यर्थः २५८ एवमज्ञानविषयत्वस्यानात्मगत्वभ्रमोवारितआत्माश्रयत्वंत्वज्ञानस्यसर्वैःसंमतमेवेत्याह अज्ञानानामिति २५९ फलितमाह तस्मादिति । तयाअविद्ययापरिवर्जितोपिचिदानंदरूपआत्मैवाविद्यायाआश्रयोविषयश्चेतिसिद्धमित्यर्थः २६० ततश्चविषयत्वेनाश्रय

शुक्तावपिनशुक्तिःस्याद्विषयोत्रविचारिते ॥ इदंतार्थोयतोयत्तुस्फुरणंशुक्तिकागतम् २५६ सामान्येस्फुरणेह्यस्मिन्विशेषंशुक्तिकाभिधम् ॥ आवृणोतियतस्तेनशुक्त्यज्ञानंप्रचक्षते २५७ स्फुरणंयद्बहिस्तत्तुकथितंवेदवादिभिः ॥ अंतरात्मेतितत्रापिविषयःस्यात्सएवहि २५८ अज्ञानानांचसर्वेषामाश्रयत्वेनिजात्मनः ॥ विवादोवादिनांनास्तिविषयत्वेतुवारितः २५९ तस्मादात्मैवविषयआश्रयश्चसदाभवेत् ॥ अविद्यायाश्चिदानंदस्तयापिपरिवर्जितः २६० विषयाश्रयसंबंधादस्वातंत्र्यंव्यवस्थितम् ॥ अविद्यायाजडाचेयंस्वतंत्रास्यात्कथंत्विह २६१ रथाद्यानजडाःक्वापिस्वतंत्राश्चेतनंविना ॥ प्रवर्त्ततेक्रियाचात्रगवाश्वादेरपेक्षणात् २६२ अचेतनंततःसर्वमस्वतंत्रमुदीरितम् ॥ अचेतनातथामायास्वतंत्रास्यात्कथंत्वियम् २६३ अस्वतंत्रायतस्तेनसाऽसिद्धेतिप्रकीर्तिता ॥ असिद्धिरसतस्तस्मादसत्ताऽस्याव्यवस्थिता २६४ अस्वतंत्रातथाऽसिद्धासत्तालेशविवर्जिता ॥ मोहयत्येनमात्मानमसंगंनिर्गुणंपरम् २६५ पुराणंपुरुषंसेयंयासतीवाभवत्सदा ॥ चिदानंदात्मसंमोहात्स्वतंत्रासिद्धतांगता ६६ अज्ञोदुःखीतिबोधोयंयस्मादस्मिन्हिदृश्यते ॥ सहिकार्यंविनाकेनकारणेनभविष्यति २६७

त्वेनचात्मनासंबद्धायाअविद्यायाःपारतंत्र्यंसिद्धमित्याह विषयेति । किंचजडत्वमप्यस्याःपारतंत्र्यंप्रकटयतीत्याह जडाचेयमित्यादिना २६१ तत्रजडत्वस्यपारतंत्र्येणव्याप्तिंदर्शयति रथाद्याइति । अत्ररथादीयाक्रियासागवादिचेतनसंबंधादेवनस्वतइत्यर्थः २६२ अचेतनमिति । ततःपरापेक्षक्रियकत्वात्सर्वंजडमस्वतंत्रमसिद्धमितितथारथादिवतअचेतनामायापिपरतंत्रैवाविज्ञायतेइत्यर्थः २६३ एवमस्वतंत्रत्वस्यसिद्धौतद्बलेनासिद्धत्वादिकमप्यवधार्यमित्याह अस्वतंत्रेति । सामायायतोऽस्वतंत्राततोऽसिद्धेतिबोध्या असिद्धिरसत्वमसतःशशशृंगादेर्दृष्टमित्यतोस्यांमायायाअसत्तापिव्यवस्थितासिद्धेत्यर्थः २६४ कथंतर्हितस्याःसिद्धत्वादिकमप्युक्तमित्याकांक्षाव्यापकभावेनासत्त्वादेरभावमाह अस्वतंत्रेति । कार्यानारंभकत्वमसत्त्वव्यापकंतस्यात्स्यांपुरुषव्यामोहंकुर्वंत्यामभावादियंसतीजाताएवमसत्त्वाभावेतद्व्याप्यस्यासिद्धत्वस्याभावस्ततश्चास्वतंत्रत्वस्याभावादियंसिद्धास्वतंत्राचविज्ञातेतिद्वयोरर्थः २६५ । २६६ अनयाकृतमात्मनोव्यामोहमभिनयति अज्ञइतित्रयोदशभिः । योयमहमज्ञोदुःखीत्याकारोबोधोदृश्यतेसआगंतुकत्वात्कार्यभूतःकारणेनविनाकथंस्यादित्यर्थः २६७

कारणंचेति । अस्यबोधस्यकार्यस्यासंभवतःकारणमविद्यामघटितघटनापटीयसींविनान्यन्नसंभवतियतोवस्तुतःस्वप्रकाशानंदरूपेऽयंबोधोनसंभवतिततःपरिशेषादियमविद्यारूपामायैवकल्प्यते इत्यर्थः २६८ साचकल्पितासतीआहतोनीचःशिरस्यधिरोहतीतिन्यायेनसास्वाश्रयंतिरस्कृत्यस्वयमेवावतिष्ठतेविलसतीत्याह कल्प्यमानेति २६९ आश्रयतिरस्कारमेवाभिनयति चिदानंदेति । जगदीशितुःसर्वाधिष्ठातुरस्यपुंसःपश्यतोपिभासमानानंदरूपःसर्वांतररूपश्चात्मामायायाःप्रभावादसत्समोजातइत्यर्थः २७० विलासिन्याइति । इत्येषःअसत्त्वापादनरूपोऽत्यद्भुतश्चप्रथमोविलासोस्याविलासिन्याःकथितोयत्परआत्मापश्यंतंभासमानमप्यात्मानंविस्मृतोविस्मरन्नजातइत्यर्थः २७१ एनमिति । एनमसत्त्वापादनरूपमस्याविलासंपश्यन्नन्यानपिविक्षेपरूपान्विलासान्पश्यति तानभिनयति जातइत्यादिना । धर्मीत्याद्यभिमानरूपंबहुदुःखंपश्येत्तथातस्यजातस्वाभिमानस्यसंबंधाद्योगान्ममत्वाकुलोभवतिततःपित्रादिरूपांस्तान्मायाविलासा

कारणंचास्यनैवान्यदविद्यायाश्चलभ्यते ॥ वस्तुतःस्वप्रकाशोयमानंदात्माकथंभवेत् ॥ अज्ञोदुःखीतिचततोमायेयंपरिकल्प्यते २६८ कल्प्यमानातुसातत्र नीचवद्धलसंश्रया ॥ तिरस्कृत्याश्रयंस्वस्यस्वयमेवावतिष्ठते ६९ चिदानंदात्मरूपोयआत्मापुंसोप्यसत्समः ॥ मायायावैभवान्नित्यंपश्यतोजगदीशितुः २७० विलासिन्याविलासोयंप्रथमःपरिकीर्तितः ॥ अहोपश्यंतमात्मायमात्मानंविस्मृतःपरः २७१ एनंपश्यंस्ततःपश्येद्विलासानपरानपि ॥ जातोबालोयुवावृद्धोमृतोदुःखीसुखीतथा २७२ स्वर्गीचनरकीचास्मितथास्त्रीपुंनपुंसकः ॥ पापीधर्मीचैवमादिबहुदुःखमनेकधा २७३ तस्यसंबंधतश्चाभून्ममतासक्तचेतनः ॥ पितृमात्रादिरूपांस्तान्संसारपरिरक्षिणः २७४ देहकारागृहंप्राप्तःकामक्रोधादिशृंखलः ॥ प्रार्थनारक्ष्यमाणांगोमूढोजन्मनिजन्मनि २७५ आनंदात्मानमात्मानंस्वयंज्योतिषमक्षयम् ॥ अपश्यन्दुःखमनिशंबहुकर्मसमुत्थितम् ॥ प्राप्नुवन्यातिसंसारंविद्यमानोप्यसत्समः २७६ अतोमायाविचित्रेयंदुर्घटादुःखकारिणी ॥ संसारविषवृक्षस्यजननीदुर्जयाऽन्नभिः २७७ अहमज्ञस्तथादुःखीब्राह्मणोहंमहाकुलः ॥ इत्यादिबहुमन्वानोनिमज्जतिभवार्णवे २७८ बीजभूताहिसाप्रोक्तावासनाकोटिगर्भिणी ॥ पटवद्यातिसंकोचंविकासंचदिनेदिने २७९ सुषुप्तौचापिमूर्छायांमरणेपिमहालये ॥ संकोचमुपयात्येषाविकासंवापरत्रहि २८० विकासैर्दुःखमायातितस्याएषपुमानिह ॥ स्वप्नेजागरणेनित्यंदेहेदेहेवशःपुमान् २८१

न्संसारस्थितिहेतून्पश्येदितित्रयाणामर्थः २७२ । २७३ । २७४ देहेति । ततश्चदेहरूपंबंधनागारंप्राप्तःकामादिरूपशृंखलाभिर्बद्धश्चसन्प्रार्थनयामानभूवमित्याद्याकारयारक्ष्यमाणंतत्तदंगंशरीरंयेनसतथाविधोमूढोमानाज्जन्मसुस्वरूपमपश्यन्बहुदुःखंपश्यंश्चसंसारेभ्रमतीतिद्वयोरर्थः २७५ । २७६ फलितमाह अतइति । अतोविचित्रेयंमायासंसारविषवृक्षजनकत्वाद्दुःखदायामोहिकायत्प्रभावादयंनानाविपर्ययैराकुलःसंसारेनिमज्जतीतिद्वयोरर्थः २७७ । २७८ अथास्यावटबीजादिवद्व्यवस्थांश्रुत्युक्तांवर्णयितुमस्याःसंसारवृक्षस्यबीजतांपरिणामशीलतांचाह बीजभूताहीति । साअविद्यासंसारवृक्षस्यबीजस्थानीयावासनानांज्ञानकर्मसंस्काराणांकोटिभिर्गर्भिणीगर्भवतीतथापटादिवत्संकोचविकासशीलेत्यर्थः २७९ अस्याःसंकोचादिकालानाह सुषुप्ताविति । सुषुप्तिमूर्छामरणप्रलयेष्वस्याःसंकोचःपरत्रोक्तेतरकालेषुतुविकासइत्यर्थः २८० तत्रविलासोऽस्याःपुंसोनितांतंदुःखदइत्याह विकासैरिति । देहेदेहेनानादेहेषुनित्यंप्रतिदिनमयंपुमान् अवशःपरतन्त्रःसन्विलासैरस्यादुःखितोभवतीति २८१

S//

संकोचकालेचनीडलीनपक्षिवत्पूर्वंश्रमपरित्यागेपिभाविदुःखबीजसंपर्काद्दुःखीतिव्यवन्हियतेइत्याह क्षीणइति । कर्मणिजाग्रदादिभोगप्रदेक्षीणेसतिसासंकोचंयातितदाचश्रांतोजीवःश्रमंपरि त्यज्ययद्यपिशेतेतथापियतःअज्ञानमोहितेमायारूपेबीजेइतःप्राप्तस्ततोदुःखंयातीत्यर्थः २८२ एवमिति । एवमुक्तरूपसंकोचविकासाभ्यामेषाऽविद्यासंसारस्यहेतुर्याशरीरिणामनुभवसिद्धा दुर्घटाचेति २८३ यथाचेयंविलसंतीसंसारहेतुस्तथात्मास्वरूपेणविलसन्मोक्षहेतुरित्याह आनंदात्मेति । तत्त्वंपरमार्थस्तद्रूपतयाविज्ञातःप्रसिद्धआनंदात्मामोक्षस्यहेतुः असत्यमनृतंतन्मयव विद्याचसंसारस्यहेतुः तत्रसंसारेआत्मनःस्वरूपस्याप्रतीतिर्विपरीताप्रतीतिर्वासर्वेषांभवतिएवंमोक्षेमायायाःसाअप्रतीतिर्भवेदितिद्वयोरर्थः २८४ । २८५ नन्वेकस्यामायायाःकथंनानाप्रमा तृव्यवहारनिर्वाहकत्वमित्याशंक्यतस्याएकत्वंनानात्वंचवटबीजदृष्टान्तेनाह एकैवेयमिति । इयंमायाअविद्यासंज्ञाविविधंभिन्नापिभातिवटधानावत् २८६ दृष्टांतंस्फुटयति वटेति । यथा वटस्यधानासुबीजेष्वनुगतंयत्सामान्यंजातिरूपंतदेववटानांहेतुःकारणं ताधानाव्यक्तयस्तुनसर्वत्रहेतुतायोग्यानाशादिशाल्त्विेनाननुगमादित्यर्थः २८७ दार्ष्टांतिकेयोजयति हेतुरिति । यथा

क्षीणेकर्मणिसंकोचंश्रांतःपक्षीवनीडगः ॥ श्रमंसर्वंपरित्यज्यशेतेज्ञानविमोहितः ॥ मायाबीजइतोभूयोयातिदुःखंसदारुणम् २८२ एवमेषात्रसंसारहे तुरुक्तामनीषिभिः ॥ अविद्यादुर्घटानित्यंदृश्यतेयाशरीरिभिः २८३ आनंदात्मातथाऽविद्याहेतूसंसारमोक्षयोः ॥ अतत्त्वतत्त्वरूपाभ्यांविज्ञातौसर्वदेहि नाम् २८४ अप्रतीतिश्चसंसारेविप्रतीतिश्चवाभवेत् ॥ आत्मनोपिचमायायामोक्षएवंहिसाभवेत् २८५ एकैवेयमविद्याख्यामायेत्यपिचकीर्तिता ॥ विभिन्नापिविभात्यत्रवटधानायथानृणाम् २८६ वटधानासुसर्वासुहेतुःसामान्यमीरितम् ॥ वटानांनतुताधानास्तासांनाशस्यदर्शनात् २८७ हेतुर्यथात्र सामान्यंवटधानासुकीर्तितम् ॥ तथाकार्यौघसामान्यहेतुर्मायेतिकीर्तिता २८८ वटधानासुनष्टासुसामान्यंनविनश्यति ॥ यथातथैवमायेयंकार्यनाशेन नश्यति २८९ वटधानागताजातिर्वटधानाविभेदतः ॥ विभिन्नामीयतेयद्वत्तद्वन्मायाप्रकीर्तिता ॥ नानासंस्कारभेदेनभिन्नाविश्वस्यकारणम् २९० व टधानायथानाशंवटोत्पत्तौव्रजंतिहि ॥ संस्काराअपिमायायाःकार्योत्पत्तौतथैवते २९१ वटधानायथैवैकावटोत्पादादनेकधा ॥ कोटिकोटिगुणाभूत्वापुनरे काविजायते २९२

वटधानागताजातिःसर्ववटानांहेतुस्तथासर्वेषांकार्याणांकारणेष्वनुगतंसामान्यंमायेत्युच्यतेइत्यर्थः २८८ दृष्टांन्तेनसाधर्म्यांतराणिवर्णयति वटधानास्विति । यथावटधानाव्यक्तिषुनष्टास्व पितद्गताजातिरविनाशिनीतथाकार्याणांसृष्ट्यादौनाशेपितत्कारणसामान्यरूपामायानविनश्यतीत्यर्थः २८९ वटधानागतेति । यथाचसावटधानागताजातिस्तत्तद्वटविशेषप्रयोजिकानांतत्तद्धा नानांविभेदंविशेषंस्वावच्छेदकमाश्रित्यविभिन्नाभिन्नभिन्नकार्यकरीभवतितथामायापितत्कार्याणांयेयेसंस्काराःसूक्ष्मावस्थारूपास्तानवच्छेदकतयाश्रित्यनानाविश्वस्यकारणंभवतीत्यर्थः २९० यथाचवटधानासामान्यस्याविनाशेपिवटधानाव्यक्तीनांतत्तद्वटोत्पत्तौनाशस्तथामायायाअविनाशेपितत्तत्संस्काराणांतत्तत्कार्योत्पत्तौविनाशइत्याह वटधानायथेति २९१ वटधानायथैवेकेति । यथाचैकापिवटधानावटरूपेणपरिणम्यफलितात्ततोवटादनेकधावारंवारंप्रतिवसंतमृतुंकोटिकोटिगुणाअपरिमेयव्यक्तिकासतीविजायतेउत्पद्यतेताश्चबीजशक्तयःप्रत्येकंवटजननक्षमाइत्याह पुनरेके ति । तासुवटोत्पन्नधानाव्यक्तिष्वेकापिपुनरेवंवटोत्पादनद्वाराकोटिगुणत्वेनजायतेइत्यर्थः २९२

दार्ष्टांतिकेयोजयति कार्योत्पत्ताविति । तथासामान्यरूपामायापिस्वकार्यव्यक्तिभूतैःसंस्काराख्यैरूपैरनेकधाविजायते कुतःकार्योत्पत्तौविश्वोत्पादात् एकस्यकार्यस्योत्पत्तौततोविश्वस्यनानावि
धकार्यजातस्योत्पादात्संतानात्तासुचनवोत्पन्नव्यक्तिष्वेकाव्यक्तिःपुनरेवंजायतेततःसंसारस्यानंत्यंफलितमित्यर्थः २९३ सामान्यस्थानीयायामायायाव्यक्तिस्थानीयान्संस्काराननंतानपिरा
शिचतुष्टयेऽवस्थापयति संस्काराइति । मायायाःसामान्यरूपायाविशेषभूतायेसंस्कारास्तेचतुर्विधाः तत्कार्याणांदेहत्वेंद्रियत्वक्रियात्वभोगत्वरूपैश्चतुर्विधत्वादित्यर्थः २९४ एतेषांसंस्कारा
णांतत्कार्याणांचव्यक्त्यानंत्यंप्रवाहरूपेणदर्शयति अनादाविति । एतेषांसंस्काराणांतत्कार्यभूतदेहादीनांचपरस्परस्यकारणत्वेस्थितिरवस्थानंबीजांकुरवज्ज्ञेयंयतएतेषांसंस्काराणांतत्कार्याणांच
मध्येकिंचिदपिव्यवस्थितंस्थिरंनवर्ततेइत्यर्थः २९५ तत्रकार्याणांभेदानुपलक्षयितुंश्रुत्युक्तंत्रैविध्यमाह वर्त्तंतइति । प्रथमपदंपूर्वान्वयिदर्शितं जरायुजत्वादिनाचतुर्विधेषुप्राणिभेदेषुअवांतरभे
देनानाविधेष्वपिएतेदेहेंद्रियक्रियाभोगाःप्रत्येकमुत्तमत्वादिनात्रिविधाइत्यर्थः २९६ तत्रसर्वजंतुषूदाहृत्यदर्शयितुमशक्यत्वात् ब्राह्मणजातावुदाहृत्यप्रतिपाद्यतेइत्याह तत्तज्जातीयेति २९७

कार्योत्पत्तौतथामायाविश्वोत्पादादनेकधा ॥ विजायतेपुनश्चैकाततोनंतोभवार्णवः २९३ संस्काराविविधाएतेमायायायेप्रकीर्त्तिताः ॥ चातुर्विध्यंचसंक्षेपात्ते
षुप्रोक्तंमनीषिभिः ॥ देहेंद्रियक्रियाभोगहेतवोत्रचतुर्विधाः २९४ अनादाविहसंसारेबीजांकुरसमास्थितिः ॥ कारणत्वेसदातेषांनैवकिंचिद्व्यवस्थितम् २९५
वर्त्ततेत्रिविधाःप्रोक्ताउत्तमाधममध्यमाः ॥ चतुर्विधेषुभूतेषुनानाभेदेषुसर्वदा २९६ तत्तज्जातीयजंतूनांमध्येसर्वत्रसंस्थितम् ॥ त्रैविध्यंनैवकेनापिशक्यंवक्तुं
कदाचन ॥ आनंत्याद्ब्राह्मणेष्वेतदुदाहृत्यप्रदर्श्यते २९७ भूदेवःपुण्यपापाभ्यांसमाभ्यांप्रायशोभुवि ॥ जायतेसर्वएवायंसुखदुःखोपभोगवान् २९८ देहस्य
तत्रविज्ञेयमुत्तमत्वमनेकधा ॥ पितृतोमातृतस्तद्वदाचार्याच्चमहात्मनः २९९ वीर्ययोःपरिपाकाच्चकालनिर्गमनादपि ॥ रूपलावण्यशीलाद्यैर्गुणैर्योगाच्च
सर्वदा ३०० उपलब्धेश्चवैशद्यात्संस्थानाच्चापिमानतः ॥ उत्तमत्वंसदैवैतदिंद्रियाणांप्रकीर्त्तितम् ३०१ कर्मणामुत्तमत्वंस्यान्मेलनात्प्रज्ञयापिच ॥ विहिता
नामनुष्ठानान्निषिद्धानांचवर्जनात् ३०२ भोगानामुत्तमत्वंस्यात्पित्रादेश्चसुशीलतः ॥ विद्यायोगात्ततस्त्वेषामाधिव्याधिविवर्जनात् ॥ पुण्यस्यसंचयाच्चापित
थास्वस्यापिबुद्धितः ३०३

त्रैविध्यमेवयोग्यतांतावद्ब्राह्मणस्याह भूदेवइति । भूलोकेजातत्वात्सुखदुःखोभयोपभोगशालित्वाच्चभूदेवाख्याब्राह्मणजातिरपिपुण्यपापोभयारब्धेत्यर्थः २९८ देहस्येति । तत्रब्राह्मणजाताव
प्युत्तमत्वमनेकनिमित्तप्रयुक्तं तथाहि पित्रादेःकुलविद्यातपःप्रभृतिभिरुत्कर्षात्पुत्रादेरुत्तमत्वं तथावीर्ययोर्मातापित्रंशयोरवस्थाविशेषेणपरिपाकात् गर्भात्कालपरिपूर्त्यानिर्गमनात् रूपंगौ
रत्वं लावण्यंचाकचक्यं शीलंसदाचारः आदिपदेनसल्लक्षण्यग्रहः एतैर्गुणैश्चदेहस्योत्तमत्वमितिद्वयोरर्थः २९९ । ३०० इंद्रियाणामुत्तमत्वमाह उपलब्धेश्चेति । उपलब्धिर्विषयग्रहणंतत्र
वैशद्यास्फुटत्वात् संस्थानंरचनाविशेषस्तस्मात् मानंविस्तारादिरूपं यथानेत्रयोःकर्णौतत्वंततश्चेंद्रियोत्तमत्वमित्यर्थः ३०१ क्रियायाउत्तमत्वमाह कर्मणामिति । मंत्रदेवताध्यानादि
रूपातपामेलनात्तथाविहितस्यकरणान्निषिद्धपरिहाराच्चकर्मणउत्तमत्वमित्यर्थः ३०२ भोगस्यतदाह भोगानामिति । भोगानामुत्तमत्वंपितृमात्रादेर्विद्यमानत्वात् बांधवानांस्वस्यचसुशील
त्वात्तदुपयुक्तविद्यानांयोगात् एषांबांधवानांततोविद्यावलेनमानसशरीरपीडयोरभावात्स्वस्यचतथात्वंकैमुत्येनदर्शितं पुण्यसंचयाविरोधात्स्वकीयबुद्धिकौशलाच्चबोध्यमित्यर्थः ३०४

आचार्येति । आचार्यादयःसर्वेसंबंधिनोस्यजंतोर्भोगहेतवइतिकेचिदाहुः सद्भियस्तुउभयस्यदंपत्यादिरूपस्ययुगलस्यपरस्परंभोगहेतुतांचवदंतिश्रुत्यनुसारात् तथाचश्रुति ' नवाअरेपत्युःकामायपतिःप्रियोभवतिनवाअरेजायायैकामायजायाप्रियाभवति ' इतिदंपत्योरेवमसक्तंभोगहेतुत्वंनिराकरोत्नपित्रादाविविभावः अथवाएकलस्यभोगोनसंभवतीत्युभयमपेक्षितमित्यत्रतेषांतात्पर्यमिति । अथवाआचार्यादयःशिष्यादीनांभोगहेतवस्तदद्दष्टारब्धाइतिकेचिद्वदंति केचित्तुसद्भियउभयस्यगुरुशिष्यरूपस्यपितृपुत्रादिरूपस्यवापरस्परमुपकारकत्वदर्शनादुभयंपरस्परंभोगहेतुरितिवदंतीत्यर्थः यस्तुतस्त्वाचार्यपितृप्रभृतयोभोगहेतवइतिकेषांचिदापातदर्शिनांमतम् सद्भियस्तुतेषामुभयंधर्मार्थरूपंप्रतिहेतुतांवदंतीत्यर्थः आचार्यादयोहिसदुपदेशादिनाधर्मविद्यारूपंदेवविचंतद्द्वारालौकिकंवित्तंचप्रयोजयंतीतिभावः अपिशब्देनउपसर्जनतयाभोगंप्रतितेषांहेतुतेतिसूचितम् ३०४ मध्यमाधमत्वेनिरूपयति देहादाविति । देहादीनामुत्तमत्वेयेहेतवउक्तास्तेषांमध्येकेषांचिदेवाभावेसतिमध्यमत्वंसर्वेषामभावेत्वधमत्वमित्यर्थः ३०५ देहेंद्रियेति । इत्थमुत्तमत्वादिनादेहादयस्त्रिविधाःस्युरितिएतेनैतेषामुत्तमत्वादित्रयस्यप्रत्येकमुत्तमत्वादित्रयेणयोजनेनवभेदास्तेषामपिमृदुमध्याधिमात्रत्वैर्योजनेसप्तविंशतिभेदाभवंतीतिसूचितम् अधिमात्रत्वमुत्कटत्वम् मृदुमध्याधिमात्राणामपिप्रत्येकंमृदुत्वादिभिर्योजनेसप्तविंशतित्रिकरूपाएकाशीतिभेदास्तेषामपिकर्मद्वाराकृतकारितानुमोदितत्वैःसंबंधेत्रिचत्वारिंशदधिकशतद्वयसंख्याभेदाःस्युस्तेचसूक्ष्मावर्णयितुमशक्याइत्याह एकाशीत्यादयइति । एतेषांदेहादीनामुत्तमत्वादौयेएकाशीतिप्रभृतयःसूक्ष्माभेदास्तेआ

आचार्यपितृमात्रादेःकेचिद्भोगस्यहेतुताम् ॥ मन्यंतेचोभयस्यापिकेचिदिच्छंतिसद्भियः ३०४ देहादावुत्तमत्वेयेहेतवःपरिकीर्तिताः ॥ तेषामभावेकेषांचिन्मध्यमत्वंप्रकीर्तितम् ॥ सर्वेषांवैपरीत्येस्यादधमत्वमसंशयम् ३०५ देहेंद्रियक्रियाभोगाएवंतेत्रिविधाःस्मृताः ॥ एकाशीत्यादयस्तुस्युर्भेदाःसूक्ष्माअनेकधा ॥ एतेषामुत्तमत्वादावानंत्यात्तेनचेरिताः ३०६ देहसंस्कारतोदेहास्ततस्तेपिचतुर्विधाः ॥ संस्कारादेहसंबंधाद्यतःसर्वंप्रजायते ३०७ देहीस्यादिंद्रियैर्युक्तैःकर्मीभोगीचमानवः ॥ ततस्तेपिचसंस्कारास्तेभ्योदेहादिकंपुनः ॥ जितेंद्रियंचभोगश्चकारणान्येवमेवहि ३०८ पुण्यपापरतोजंतुरिंद्रियैःसंयुतोभवेत् ॥ देहेनचततोभोगंगच्छेत्सर्वत्रसर्वदा ३०९ भोगीक्रियावान्सततंवश्यैरेतैरसंशयम् ॥ इंद्रियैःसहितोदेहीभोगीकर्मीनसंशयः ३१० भोगानामत्रसर्वेषांसर्वदानुभवेसति ॥ वृद्धिःप्रत्यक्षतोदृष्टाकर्मणांकरणेतथा ३११ योहियंविषयंजंतुःप्राप्नुयात्सतुतंपुनः ॥ इच्छतीहभृशंकर्मकुरुतेचास्यलब्धये ३१२

नंत्यात्केनापिनवर्णिताइत्यर्थः ३०६ अथदेहेंद्रियक्रियाभोगानांतत्संस्काराणांचपरस्परंबीजांकुरन्यायेनकारणतांनिरूपयंस्तत्रदेहस्यप्राधान्यमाह देहेति । देहानांसंस्कारेभ्योदेहाजायंतेततोदेहेभ्यश्चतुर्विधदेहादीनांचतुर्णामपिजनकाःसंस्काराःप्रभवंतियतोहेतोस्ततोदेहात्सर्वंदेहेंद्रियादिकंप्रजायतेप्रादुर्भवतीत्यर्थः ३०७ देहात्सर्वसंभवंदर्शयति देहीति । योदेहीभवतिसइंद्रियैर्युक्तैर्वशेस्थितैःसहितःकर्मीयागादिकर्तातत्फलभोगीचभवतिततोदेहित्वादिभावानंतरंतेपुनर्देहित्वादिप्रयोजकाःसंस्काराःप्रभवंतितेभ्यश्चपुनर्देहादिकंभवति यथादेहःसर्वस्यप्रयोजकस्तथेंद्रियंभोगश्चकर्मादिद्वाराएवंस्यसंघातस्यप्रयोजकोवोध्यः तत्रेंद्रियस्ययुक्तत्वंजितत्वंचविशेषणम् इंद्रियलोलुपेपुरुषस्यापिकर्मणःपरिपूर्त्यदर्शनादिति ३०८ कर्मणःसर्वसंभवमाह पुण्येति । स्पष्टम् ३०९ भोगात्सर्वसंभवमाह भोगीति । क्रियावान्कर्मक्षमस्तथावश्यैरेतैरिंद्रियैःसहितश्चभोग्येवभवतियतोदेहीभोग्येवकर्मीप्रसिद्धइत्यर्थः ३१० तत्रानुभवंप्रमाणयति भोगानामिति । सर्वजातीयानांभोगानांभोग्यपदार्थानामनुभवोत्तरंकर्मानुष्ठाननिष्ठावृद्धिरतिशयरूपाप्रत्यक्षेणदृष्टेत्यर्थः ३११ तत्रहेतुतयाभोगानुभवस्येच्छाजनकतामाह योहीति । योजंतुर्यंजातीयंविषयंप्राप्नोतिसतज्जातीयंविषयमिच्छत्येव इच्छोत्पत्तौचास्येच्छागोचरस्यलब्धयेकर्मकुरुतेइत्यर्थः ३१२

तत्रसजातीयेच्छानियममभिनयति. देवांगनास्विति । नृणांदेवांगनास्विच्छानभवति तासांमनुजदेहैरलभ्यत्वात् एवंशुनांशुनीरेवानुभवतांतत्रैवेच्छाभवति एवंस्वर्गीयान्नपानादौस्वर्गिणामेव च्छाततस्तएवतदर्थंयतंतेइतिभावः ३१३ । ३१४ ततइति । ततोन्वयव्यतिरेकदर्शनात्एतेषांभोगानामनुभवस्तदर्थंकर्मणांवृद्धौकारणमेवेतिसंबंधः भोगानुभवेनतत्रवैराग्योदयाशातुनकर्त्तव्ये त्याह कुशलएवेत्यादिना । जनोविषयान्प्राप्नुवन्संस्तद्भोगेषु कुशलएवभवति तदुक्तंयोगभाष्ये ' भोगाभ्यासमनुविवर्द्धंतेकामाःकौशलानिचेंद्रियाणाम् 'इति ३१५ अत्रोदाहरणंलोकेकामिनोव लवंतश्चधनिकाइत्याह यथेति । एतान्भोगान्प्राप्नुवन्धनीबलीचकामुकःअत्रप्राप्तेकामिभोगेकुशलःसन्कामंतज्जातीयमिच्छन्नेवदृश्यतेइति एवंक्षुद्रलाभेष्वपिद्रष्टव्यमित्यर्थः ३१६ यथाच भोगाःस्वानुभवेच्छोत्पादनद्वारासंसारहेतवस्तथादेहादयोपीत्याह यथाभोगाइति । यथाभोगाअनुभवमापन्नाःकारणंकर्मादिहेतुभूताउक्तास्तथाकर्मदेहइंद्रियगणश्चैतेप्यनुभवमापन्नाःकारणंयदी यान्देहादीनिच्छासंस्काराभ्यांसहितान्समीहतेरागपूर्वकंभजतेतांस्तज्जातीयांस्ततइच्छादिवशाद्व्रजतिशतधाअनेकवारानित्यर्थः ३१७ देहेंद्रियेति । एवमुक्तविधयादेहादीनामनुभवेच्छासंस्कारैः प्रयुक्तत्वेसतिदेहादयोजनौजनौवृद्धिंव्रजंतःसंतोननियताएतद्देहोत्तरमयमेवेत्याकारकनियमरहिताः तद्धेतूनामनुभवादीनामनियमादितिभावः एतेनयोन्यंतरलाभोपिजन्मांतरीयानुभवोत्थसंस्का

देवांगनासुमनुजैरप्राप्तासुकथंचन ॥ इच्छानजायतेनृणांनारीष्वेवप्रजायते ३१३ शुनामेवंननारीपुहीच्छाकिंतुशुनीष्विह ॥ एवंस्वर्गान्नपानादौविज्ञेयंसर्वदा नृभिः ३१४ ततोनुभवएतेषांभोगानांकारणंमतः ॥ वृद्धौकुशलएवस्याद्विषयान्प्राप्नुवन्जनः ३१५ यथाकामीधनीचैतान्बलवान्प्राप्नुवन्मुहुः ॥ कामेत्रकुशलःकाममिच्छन्नेवपुनःपुनः ॥ अन्नपानादिलाभेपुद्रष्टव्यंत्वेवमेवहि ३१६ यथाभोगास्तथाकर्मदेहेंद्रियगणाअपि ॥ पुंसोनुभवमापन्नाःकारणंयान्समीहते ॥ इच्छासंस्कारसहितास्ततस्तान्शतधाव्रजेत् ३१७ देहेंद्रियक्रियाभोगाएवंननियताःसदा ॥ वृद्धिंव्रजंतःसततंजंतूनांहिजनौजनौ ३१८ वटाएतेसमुद्दिष्टाःप्राणिदेहाश्चतुर्विधाः ॥ सहेंद्रियक्रियाभोगैर्बीजंसंस्कारईरितः ३१९ संस्कारेपुचसर्वेपुसामान्यंपरिकीर्तितम् ॥ मायासर्वानुगाकार्यहेतुभूतासनातनी ३२० बीजांकुरेपुयद्वत्स्यात्सामान्यमविनश्वरम् ॥ कारणंत्वद्वयंकार्यंकारणंचविनश्वरम् ३२१ बीजाद्वटोवटाद्बीजंप्रवाहेणयथाभवेत् ॥ संस्कारदेहयोस्तद्वत्प्रवाहेणजनिर्भवेत् ३२२ पार्थिवावयवायद्वद्वटबीजद्वयानुगाः ॥ पृथिवीचाप्यनुस्यूतातेपुनैवविनश्यति ३२३ यथातथैवमायेयंदेहानुष्ठानगामिनी ॥ नविनश्यतिचैवात्मविज्ञानंपरिहायहि ३२४

राणांमरणकालेसमुन्मेषादितिसूचितम् ३१८ अत्रसंस्कारैर्देहादिजननेदृष्टांतःपूर्वोक्तएवेत्याह वटाइति । इंद्रियादिभिःसहितादेहावटस्थानीयाःसंस्कारास्तुबीजस्थानीयाइत्यर्थः ३१९ सर्वेपुसंस्कारे पुगतंयत्सामान्यंतन्मायेत्युच्यतइत्याह संस्कारेष्विति । स्पष्टम् ३२० बीजांकुरेष्विति । यथाचबीजेष्वंकुरेपुचानुगतंयत्सामान्यंतदविनश्वरमतएवकारणभूतंस्थायित्वात् तथाऽद्वयंतद्विशेषभूत योर्बीजांकुरयोस्ततोभेदाभावात् यद्यपरस्परंकार्यकारणभूतंबीजांकुरयोर्युगलंतद्विनश्वरमित्यर्थः तथासंस्कारदेहयोर्विनाशेपिमायाऽविनश्वरीतिभावः ३२१ संस्काराणांदेहादीनांचप्रवाहेणत्पत्त्य नुच्छेदलक्षणेनकार्यकारणभावेपिसएवदृष्टांतइत्याह बीजाद्वटइति ३२२ मायायाःकार्यकारणयोरुभयोरनुगमेदृष्टांतमाह पार्थिवेति । यद्वद्वटबीजरूपेद्वयेकार्यकारणभूतेपार्थिवाःपृथिवीसंबंधिनो ऽवयवाअनुगतास्तेपुचपृथिवीअनुस्यूताऽनुगतावटबीजयोर्नाशेपिननश्यतिप्रलयाग्निविनेत्यर्थः ३२३ यथेति । अनुष्ठानपदेनकरणव्युत्पत्त्यासामग्रीमोक्ष्यतेतथाचदेहेपुअनुष्ठानेपुतदारंभकेपुचानुग तामायादेहादिनानाशेपिब्रह्मबोधरूपकालाग्निंविनाननश्यतीत्यर्थः अत्रपार्थिवावयवस्थानीयामायायाअवयवावक्ष्यमाणपरिणामविशेषरूपाबोध्याः ३२४

माययाब्रह्मणोन्यथासिद्धिवारणायोभयोःस्वरूपंविविच्यदर्शयति कार्येतिपाड्भिः । सर्वेषुकार्येषुकारणेषुचानुगतोयःपरिणामभागःसमायेत्युच्यतइत्यर्थः ३२५ एतयोरिति । एतयोःकार्यकारणयोस्तस्यतयोरनुगतस्यएतस्य परिणामस्यवायत्स्मरणमनुसंधानविषयाभासकंस्फुरणंसद्रूपंतदात्मेत्युच्यते ततोदृग्दृश्यभावेनभेदस्यस्फुटत्वान्मायासतआत्मनोभिन्नेतिव्यवहारइत्यर्थः ३२६ तथाचपरिणामरूपेणमायायाःसत्तारूपेणब्रह्मणश्चसर्वत्रानुगमदर्शनादुभयोर्जगदुपादानत्वमित्याह परिणामश्चेति । परंतुब्रह्मणस्तत्रविवर्तोपादानत्वमितिध्येयम् ३२७ उभयोर्हेतुतामेवस्फुटयति सत्तैवेति । एकरूपाअन्यथाभावहीनासत्तैवयदिकार्येषुस्याद्नुगताहश्येततदामायाकारणंनभवेत्एवंकेवलसत्तानुगमस्तुनदृश्यते तथायदिकेवलःपरिणामःकारणंकारणत्वेनानुगतःस्यात्तर्हिब्रह्मकारणंनैवभवेत् परंतुद्वयमेवसर्वत्रानुगतंदृष्टंतेनोभयोःसममनुगमदर्शनेनद्वयोरेवहेतुत्वमितिद्वयोरर्थः ३२८ । ३२९ ततःपरिणामसामान्यरूपायामायायाश्चिद्रूपब्रह्मणोविवेकःसुकरइत्याह परिणामस्येति ३३० जडानांविकाराणांमायास्वरूपाद्यतिरेकाभावंसदृष्टांतमाह वटेतिद्वाभ्यां । एवमुभयोःकारणत्वेसतिसर्ववटवीजेष्वनुगतंयत्सामान्यंतद्वीजेष्वनुगतस्यसत्तारूपब्रह्मणःशक्तिभूतंसत्स्वस्मात्सामान्याद्व्यतिरिक्तान्नानाविधान्वटान्जनयंतितथामायापिपरब्रह्मणःशक्तिभूतापरिणामलक्षणाअनेकंदेहादिरूपंविश्वंजनयेत् कीदृशंविश्वं स्वात्मनःकारणादव्यति

कार्यकारणरूपेषुपरिणामोत्रयोभवेत ॥ सतुसामान्यरूपोयंमायेत्येवनिगद्यते ३२५ एतयोस्तस्यचैतस्यस्मरणंयत्सदात्मकम् ॥ तदात्मेतिततोमायास्वात्मनोन्येतिकीर्त्यते ३२६ परिणामश्चसत्ताचदृश्यतेकार्यमात्रके ॥ ततोब्रह्मचमायाचद्वयंहेतुःप्रकीर्त्यते ३२७ सत्तैवचेदेकरूपाकार्येषुस्यात्ततोभवेत ॥ नमायाकारणंनैवंपरिणामोत्रकेवलः ३२८ यदिस्यात्कारणंतर्हिब्रह्मनैवात्रकारणम् ॥ भवेद्द्वयंचदृष्टंतत्कारणंतेनतद्द्वयम् ३२९ परिणामस्यसामान्यंमायाप्रोक्तामनीषिभिः ॥ ततोब्रह्मचमायाचद्व्यसंकीर्णेव्यवस्थिते ३३० वटबीजस्यसामान्यमेवंशक्त्यात्मकंसदा ॥ वटाननेकान्जनयेत्स्वतोभेदविवर्जितान् ३३१ परिणामात्मिकाशक्तिस्तथासामान्यरूपिणी ॥ अनेकंजनयेद्विश्वंनानादेहादिरूपकम् ॥ स्वात्मनोभेदरहितंकार्यकारणरूपधृक् ३३२ एकैकस्मिन्वटेयद्वद्वीजेवास्तिसदैवहि ॥ परिपूर्णंतुसामान्यंवटबीजस्ययत्स्मृतम् ॥ एकंस्थितंचयत्तद्वद्धेतुःस्याद्वटबीजयोः ३३३ वटानामपिसामान्यंबीजानामपिचद्विधा ॥ स्थितमेकंचतद्वत्सामायाप्रोक्तामनीषिभिः ३३४ कार्येऽकार्येचसंपूर्णाविभिन्नेवचसंस्थिता ॥ एकैवजीवपरयोर्भेदस्यापिचकारणम् ३३५

रिक्तंबीजांकुरन्यायेनकार्यकारणरूपंचेतिद्वयोरर्थः ३३१ । ३३२ व्याप्यव्यापकभावेनावस्थितंमायायारूपत्रयंदर्शयति एकैकस्मिन्नितिद्वाभ्यां । यथाएकैकस्मिन्वटेसदापरिपूर्णंकार्यंशत्वाख्यंसामान्यमन्यत् एकैकस्मिन्बीजेनुगतंचसामान्यमन्यत् वटबीजस्येतिसमाहारः तथाचउभयोर्वटबीजयोर्यत्संबंधित्वेनस्मृतमुभयत्रैकंसमंसत्स्थितंचतत्तृतीयं नचतस्यवैयर्थ्यमित्याह यत्तद्वदित्यादिना । यथावटबीजेपरस्परंहेतुभूतेतद्वयत्तृतीयंसामान्यंपृथिवीरूपमुभयोर्वटबीजयोर्हेतुःप्रयोजकमित्यर्थः ३३३ वटानामिति । इत्थंयत्सामान्यंवटानांबीजानांचसंबंधेनद्विधास्थितमुभयानुगामित्वेनएकंसत्स्थितंचयथादृष्टंतद्वत्सकलकार्यानुगामिनीसकलकारणानुगामिनीउभयानुगामिनीचसाशक्तिरूपामायामनीषिभिरुक्तेत्यर्थः ३३४ इयंमायाकार्यावच्छिन्नशक्तिरूपाजीवभेदस्यहेतुःकारणावच्छिन्नशक्तिरूपाचईशभेदस्येत्याकारंजीवेशादित्यादिग्रंथार्थमाह कार्येऽकार्येइति । अकार्येइतिच्छेदः इयंव्यापकरूपेणैकापियतःकार्येतथाअकार्येकारणेसंपूर्णाव्याप्तास्थिताअतोविभिन्नेवसतीजीवेशयोर्भेदस्यप्रयोजिकाभवतीत्यर्थः ३३५

एकस्याः स्वव्याप्यरूपाभ्यांभेदकत्वंदृष्टांतेनस्फुटयति एकैवेति । यथैकाभूमिर्घटरूपागृहरूपाचसतीघटाकाशगृहाकाशयोर्भेदिकाजनेलोकेप्रसिद्धातथामायापिस्वकार्याभ्यांकार्यकारणरूपाभ्यां जीवेशयोर्भेदिकेतिद्वयोरर्थः ३३६ । ३३७ मायायाः स्वयंनानानामधारणंदृष्टांतेनविशदयति यथेति । निगदव्याख्यातंद्वयम् ३३८ । ३३९ मायायाःश्रुत्युक्तानिचित्रत्वादीनिविशेषणानिस्फुटीकरोतिसैवेत्यादिना । सापरिणामसामान्यरूपाएवाजीवादिभेदिकाचमायाअत्यद्भुतशरीरानानासंस्कारलक्षणैश्चित्रैर्विचित्रायथारजकैर्द्विपटीसंज्ञंवस्त्रंचित्र्यतेतद्वदेतद्दृश्यमानप्रपंचरूपं चित्रंयस्यामायायाधर्मभूतेनसंस्कारात्मकेनचित्रेणवर्जितंवर्जितंजातंयस्यतत्तथाभूतंजातं ३४० तत्रदृढत्वंव्युत्पादयति दृढेतिसप्तभिः । इयंमायादृढा दृढत्वस्यविवरणंविनाशशून्येति यतो महान्सर्वोत्कृष्टःअजईश्वरोप्येतामुन्मूलयितुमुच्छिन्नांकर्तुंनार्हतिनक्षमोभवतियतोमायामूलेनबलेनान्वितः परास्यशक्तिरित्यादिश्रुतेरित्यर्थः । तथाचईश्वरंनित्यसिद्धविज्ञानवंतंप्रतिमायायाअपकारकत्वाभावात्प्रत्युतेशितव्यादिनिर्माणेनईश्वरत्वसाधकत्वान्नतेनेयंहंतव्येतिभावः ३४१ जीवेषुशास्त्रविदएनामनर्थहेतुंविज्ञायोच्छेत्तुंक्षमाःपरंतुतेअनयाकुंठितोपक्रमणाःकृताइत्याह महांतइ

एकैवचयथाभूमिःस्थिताघटगृहात्मना ॥ गृहाकाशघटाकाशभेदेहेतुर्जनेभवेत् ३३६ एवमेकैवमायेयंस्वात्मनोरूपभेदतः ॥ जीवेशयोर्विभेदस्यहेतुर्भवतिसर्वदा ३३७ यथाभूमिरिलाधात्रीकुःपृथ्वीधरणीक्षमा ॥ इत्यादिनामधेयानिव्रजेदेकैवसर्वदा ३३८ परिणामात्मिकाशक्तिरेवमेकैवदुर्भणा ॥ मायाऽविद्यातमोमोहोऽज्ञानंभ्रांतिर्विपर्ययः ॥ इत्यादीनिचनामानिप्राप्नोत्येषासनातनी ३३९ सैषामायातिचित्रांगीचित्रिताद्विपटीयथा ॥ एतच्चित्रात्मकंविश्वंयस्याश्चित्रेणवर्जितम् ३४० दृढाविनाशशून्येयंमायामूलबलान्विताः ॥ महानजोपिनैवैतामुन्मूलयितुमर्हति ३४१ महांतःश्रुतशास्त्राश्चविद्वांसोत्रदृढव्रताः ॥ अस्याविनाशनेयुक्ताभग्नदंष्ट्राःसमासते ३४२ अविद्येयमरण्यानीनानाजीवसमाकुला ॥ पंचभूतौघतरुभिःसर्वतःपरिपूरिता ३४३ स्नेहमूलादुःखफलापुत्रदारप्रसूनका ॥ पित्रादिपल्लवैःपूर्णाबंधुशाखासमाकुला ॥ सुखाशाबीजसंपूर्णाकालदावाग्न्युपद्रुता ३४४ कामक्रोधादिभिःसिंहैःसर्वतःपरिरक्षिता ॥ भूरिदुर्जनसर्पौघकंटकावृतमार्गका ॥ नारीपिशाचसंपूर्णातथाजन्मादिवृश्चिका ३४५ विद्वांसःकारणैश्चैनामुन्मूलयितुमीशते ॥ प्रायःसर्वेपितेनित्यमनयैवकदर्थिताः ३४६

ति । भग्नामायाहननव्यापारात्पराहतादंष्ट्रादंष्ट्रावद्विदारिकामतिर्येषांतेतथासमासतेतिष्ठंति विद्वांसःप्रायशोऽनयाविपयप्रवणधियःकृताइतियावत् ३४२ उक्तार्थस्फुटत्वायमहाटवीत्वेनमायां वर्णयति । अविद्येयमित्यादिना । महदरण्यमरण्यानीतद्रूपेयमविद्यायतोनानाजातीयैर्जीवैश्चिदाभासलक्षणैर्व्याप्ता पंचमहाभूतभेदरूपैस्तरुभिःपूर्णा ३४३ स्नेहेति । स्नेहोविषयरागस्तद्रूपाणिमूलानियस्यांसातथा दुःखानिफलानियस्यांसा पुत्रादयोरमणीयत्वाशामयोजकत्वादिसाधर्म्येणप्रसूनभूतायस्यांसा तथापित्रादीतिप्रसवसूचकत्वसाधर्म्यात्पितृप्रभृतयःपल्लवायत्र विस्तारप्रयोजकत्वाद्बंधवःशाखायत्र सुखंभविष्यतीत्याकारादीर्घाशैवबीजंयत्र कालोमृत्युःसएवावाग्निर्भूतोयत्रेति ३४४ कामेति । एतस्याअरण्यान्याउच्छेदकानांविवेकराजसैन्यानांशमादीनांभक्षकैःकामादिरूपैःसिंहैःरक्षिता दुर्जनरूपैःसर्पैःकंटकैश्चव्याप्तमार्गा नारीरूपैःपिशाचैःसंयुता जन्मादयएववृश्चिकायत्रसा ३४५ विद्वांसइति यद्यपिविद्वांसोविद्यावंतःकारणैर्यमनियमादिभिरेनामरण्यानींउन्मूलयितुंसमर्थाःपरंतुप्रायशस्तेविद्वांसोऽनयामायारण्यान्याकदर्थितादीनतांनीताइत्यर्थः ३४६

अत्रत्रिदिति । अत्रैवेहउपनिषद्रूपस्तमर्थंनोवेत्तीतिब्रह्मवित्तद्रूपोभद्रजातिःकरीसइमांमूलहीनांकर्तुंसमःपरंतुतस्यविरलत्वादियंहेत्युक्तेत्यर्थः । गजास्त्रिविधाभद्रमंद्रमृगभेदेन तत्रभद्रलक्षणं यथा ' प्रतिमानेतुविपुलश्चारुपृष्ठायतानन: । मुखेतुरभिनिःश्वासस्ताम्रजिह्वोष्ठतालुकः । तथास्यतुल्यसंस्थानौदंतौशुभ्रौविशेषतः । मधुपिंगलनेत्रश्चमहाकायोमहाबलः । पुरस्तादुच्छ्रितश्चापिपश्चादवनतस्तथा । धनुर्विततवंशश्चसमपादतलःशुभः । विंशत्याचनखैर्युक्तोयोष्टादशभिरेवच । विद्रवत्यग्निसिंहेभ्योनबिभेत्यंकुशादपि । अन्वर्थवेदीशूरश्चक्षमावान्नचकर्कशः । कल्याणमेधास्तेजस्वीसभद्रःपरिकीर्तितः ' इति अत्रप्रतिमानपदेनदंतयोरंतरालमुच्यते ' प्रतिमानंप्रतिच्छायागजदंतांतरालयोः ' इतिविश्वप्रकाशात् वंशःपृष्ठास्थि निगदव्याख्यातमन्यत् । तत्रनिर्भयत्वादिकंसाधर्म्यंब्रह्मविदिविवक्षितमितिबोध्यम् ३४७ मायायावहंकुरत्वंगुणभिन्नत्वंसर्वत्रब्रह्मादिभ्यस्तत्वंचमकृतरूपकानुकूल्येनाह नानेतिषोडशभिः । नानादेहानामंकुरासरणका लिक्यंशाविशरीरभावनास्तद्रूपैरंकुरैर्युक्ता तथात्रिगुणात्मकपदार्थैर्नानाविधासतीस्थिता तस्यांमायारण्यान्यांमहत्सर्वंत्रव्यापकंवृक्षत्रयंब्रह्मविष्णुशिवसंज्ञंतिष्ठति अनेकफलदानेनसर्वेषांसुखद मित्यर्थः ३४८ एतेषांब्रह्मविदावश्याश्रयणीयत्वेप्रयोजकमाह अस्याइति । अस्याउक्तारण्यान्याःसकाशात्निर्गंतुंशक्तोयिद्वान्ब्रह्मवित्तद्रूपोमहान्भद्रजातिःकरीयदिकामादिरूपैःसिंहैःकाल

ब्रह्मविद्भद्रजात्युत्थःकश्चिदेवकरीत्विह ॥ उन्मूलयेदिमांतेनदृढेयमितिगीयते ३४७ नानादेहांकुरैःपूर्णास्वयंभिन्नेवसंस्थिता ॥ महावृक्षत्रयंतस्यांब्रह्मविष्णुशि वात्मकम् ॥ निष्ठत्यनेकफलदंप्राणिनांसुखकारकम् ३४८ अस्यानिर्गमनेशक्तोयदिविद्वान्महाकरी ॥ उपद्रुतश्चकामादिसिंहैःकालाग्निनापिच ३४९ तत्रवृक्ष त्रयस्यैकमाश्रयेदाश्रयंचयः ॥ ततस्तापमसुंजह्यात्सदातद्वृक्षसंश्रयात् ३५० अत्रकामादयःसिंहास्तथाकालाग्निरेवच ॥ शक्नुवंतिप्रवेष्टुंननराश्चात्यंतभीरवः ९१ सरस्वतीतथालक्ष्मीर्भवानीचेतिकीर्तितम् ॥ लतात्रयंक्रमात्तेषुत्रिषुवृक्षेषुसर्वदा ३९२ एकःकनकवर्णोयंतमालश्यामलोपरः ॥ क्षीरवर्णस्तथान्योपिमनोनयन नंदनः ॥ श्वेतापीतातथाश्यामालतास्ताअपिवर्णतः ३९३ अवर्णाःसर्ववर्णाश्चलतावृक्षाश्चसर्वदा ॥ अफलाःसफलास्तद्वन्निर्बीजाश्चसबीजकाः ॥ अनाद्यनंता निखिलबीजभूताःसनातनाः ३९४ श्रमापहाआश्रितानांसर्वदाकामरूपिणः ॥ महतांहिमहीयांसोप्यणीयांसोप्यणीयसाम् ३९५ अविद्येयमरण्यानीघोरदुःख प्रदायिनी ॥ यद्यप्येततरुच्छायाप्राप्तानेनतथापिसा ३९६

रूपेणाग्निनाचोपद्रुतोभवेत्तदामोक्तवृक्षत्रयमध्येएकमाश्रयेदुपासीततत्प्रभावादमुमुपद्रवजन्यंतापंत्यजेदितिद्वयोरर्थः ३४९ । ३५० एतदाश्रितस्यतापाभावेहेतुमाह अत्रेति । अत्रवृक्षत्रयेऽद्वि तीयरूपेकामादयःसिंहाःकालाग्निः नरामनुष्यादेहाभिमानिनइतियावत् एतेसर्वेनप्रवेष्टुंशक्तायतोत्यंतात् अनंच्छेद्यमतिक्रांतादेतेषांस्वरूपाद्भीरवः नहिपरिपूर्णरूपेकामादीनांसंभवोव्याघातादिति भावः ३५१ एतैःसंपृक्तभावेनयथाक्रमंध्येयंदेवीत्रयंलतारूपेणावर्णयति सरस्वतीति । स्पष्टम् ३५२ वृक्षत्रयस्यवर्णानाह एकइति । एकःप्रथमोब्रह्माकनकवर्णः अपरोद्वितीयः अन्यस्तृतीयः । लतानांवर्णानाह श्वेतेति । सरस्वतीश्वेतालक्ष्मीपीताभवानीश्यामेत्यर्थः ३९३ एतेषांवृक्षांतरेभ्योविशेषमाह अवर्णाइति । अवर्णानिर्विशेषरूपेणसर्ववर्णाविश्वरूपत्वात् अफलादांभिकान्प्रति सफलाःशरणागतान्प्रति निर्बीजाअनादित्वात् सबीजामंत्रमयबीजशालित्वात् आद्यंतहीनाःसर्वप्रपंचबीजभूतानित्याश्चेत्यर्थः ४९४ एषापरोपकारार्थमेवावस्थानं सर्वत्रसन्निहितत्वंदुर्लक्ष्यत्वंचाह श्रमापहाइति । आश्रितानांसंसारश्रमहराः यथेप्सितरूपाणांधारकाः महतांगणनायांमहीयांसोतिशयेनमहांतः सूक्ष्मगणनेत्वतिसूक्ष्माइत्यर्थः ३९९ अ विद्येयमिति । यद्यपीयमविद्यारूपारण्यानीघोरदुःखप्रदातथाप्यनेनब्रह्मविद्रूपेणकरिणावर्णिततरूणांछायाकांतिःसाप्रसिद्धाप्राप्ताआश्रिताइत्यतोनदुःखदेतिशेषः ३९६

तत्रैतेनुतयाएतत्क्रांतेरविद्याभिभावकत्वमाह एतेइति । एतेतरवोल्लनाश्चैतन्यरूपप्रकाशेनदेदीप्यमानाःसर्वविश्वंभासयंति । अतएतानाश्रितोजनस्तमसास्वरूपावरणेनहीनोभवतीत्यर्थः ३५७ आनंदात्मानइति । एतेतरवःस्वतःस्वप्रकाशानंदरूपाएवभावानुसारेणचजंगमरूपाःस्थावररूपाश्चभवंतीत्यर्थः ३५८ धर्मार्थेति । पुरुषार्थचतुष्टयरूपफलानामाराधकैश्चिंतितानांदातारइति ३५९ एतेइति । यतएतानाश्रितोजनःअवसादंवैक्लव्यंनप्राप्नोतिततएतेकल्पतरवउक्ताः ३६० फलितमाह उन्मूलयेदिति । ब्रह्मविज्ञानरूपःकरःशुण्डायस्यसतथाभूतोब्रह्मविद्रूपःकरीअत्रवने जातइमामविद्यारूपामरण्यानींदृढमूलंस्नेहरूपंयस्यास्तथाभूतामप्युन्मूलांकुर्यात् यावद्ब्रह्मवित्स्वकीयंब्रह्मविज्ञानरूपकरंबालत्वेनकामादिसिंहकृतोपद्रवेणवादुर्बलंपश्येत्तावदुक्तान्वृक्षानाश्रित्यति ष्ठेदितिद्वयोरर्थः ३६१ । ३६२ तस्मादित्यादेर्मायेत्यंतस्यग्रंथस्यार्थमाह यस्मादितिविंशतिश्लोकैः । यस्मान्मायारूपायामरण्यान्यामेतद्ब्रह्मविष्णुशिवरूपंवृक्षत्रयंमंडलंमंडलवत्सर्वंव्या प्यावस्थितंभवतितस्मात्तदीयस्वभावस्यसर्वत्रानुगमादेतत्सर्वंजगदधिदैवाध्यात्माधिभूतरूपंत्रिविधंजातं सर्वत्रैवहिस्रष्टृत्वंब्रह्मस्वभावःपालकत्वंविष्णुस्वभावःसंहर्तृत्वंरुद्रस्वभावश्चदृश्यतइतिभावः ३६३ आत्मापीति । यदाचमायाब्रह्मादिसंबंधेनगुणत्रयेणत्रिविधाजाताततस्तत्संबंधेनात्मापित्रिविधोजातोयोजाग्रदाद्यवस्थात्रयरूपेभवेअभिमंता । कथमस्यत्रित्वमतआह हंतेति । हं

एतेचैतन्यसंदीप्ताभासयंतिदिशोदश ॥ एतत्प्राप्तःसदाजंतुर्निस्तमस्कःप्रजायते ३५७ आनंदात्मानएवैतेस्वप्रकाशवपुर्धराः ॥ तरवोजंगमाश्चैतेस्थावराश्चभ वंतिहि ३५८ धर्मार्थकाममोक्षाणांचतुर्णांचफलात्मनाम् ॥ दातारश्चित्तसंस्थानांसर्वेषामपिदेहिनाम् ३५९ एतेकल्पद्रुमाःप्रोक्ताइमाःकल्पलताअपि ॥ एता न्समाश्रितोजंतुर्नैवसीदतिकर्हिचित् ३६० उन्मूलयेदरण्यानींदृढमूलामिमांसदा ॥ अविद्यांब्रह्मविज्ञानकरकस्तुकरीवने ३६१ यावद्दृढंकरंनैनंप्राप्नुयात्तावदा त्मवान् ॥ वृक्षानमून्समाश्रित्यतिष्ठेद्विगतसाध्वसः ३६२ यस्मादेतत्त्रयंमायारण्यान्यांचैवमण्डलम् ॥ त्रिविधंसर्वमेवैतदधिदैवादिभेदवत् ३६३ आत्मापि त्रिविधःप्रोक्तोभवेदवस्थात्रयेस्थितः ॥ अभिमंतातथाहंताकर्तापिचनियामकः ॥ विराड्हिरण्यगर्भाख्यईश्वरश्चेतिकीर्तितः ३६४ विराड्जागरणावस्थोजीवउ क्तोमनीषिभिः ॥ यस्यभेदस्त्रिधाध्यात्ममवस्थात्रयकारिणः ॥ विश्वश्चतैजसस्तद्वत्प्राज्ञश्चपरमेश्वरः ३६५ स्थूलेदेहेभिमंतायंविश्वोजीवाभिधोविराट् ॥ हिर ण्यगर्भोभगवान्सूक्ष्मेहंतांप्रपद्यते ॥ अज्ञानेप्राज्ञनामायमीश्वरोविश्वकारणम् ३६६ हिरण्यगर्भोभगवानधिदैवस्थितोह्ययः ॥ अहंतांसहिसर्वस्मिन्जगत्याप्नो तिसर्वदा ३६७ अधिदैवंहियस्त्वीशोनियंतासप्रकीर्तितः ॥ नियच्छतियतःसर्वमेवएवमहेश्वरः ३६८

तासंहारकः कर्तास्रष्टा नियामकःपालकइति अस्यात्मनोऽधिदैवंवर्त्तमानस्यस्थूलसूक्ष्मकारणोपाधिकस्यक्रमिकंनामत्रयमाह विराडिति ३६४ हिरण्यगर्भस्यजीवत्वमीश्वरत्वंचेतिसिद्धांतंप्रकट यंस्तत्रविराडादिभावसामानाधिकरण्येनविश्वादिभावंदर्शयति विराडितिचतुर्भिः । जागरणावस्थोविराट्त्वोध्यः यस्यजीवघनस्याध्यात्मंवर्त्तमानंजाग्रदाद्यवस्थात्रयंकुर्वतोविश्वतैजसप्राज्ञ नामकस्त्रिविधोभेदः परमेश्वरइतिचप्राज्ञविशेषणमभेदमादायेत्यर्थः ३६५ विश्वादिभेदमेवस्फुटयति स्थूलइति । स्थूलेसमष्टिरूपेऽभिमानंकुर्वन्नात्मातदासर्वस्यशरीरत्रयस्याभिमंतृत्वाद्विश्व इत्युक्तोविविधंराजमानत्वाच्चविराडित्युक्तः एवंसूक्ष्मेभिमंताहिरण्यगर्भइतिशुद्धोपाधिकत्वात्तैजसइतिचोक्तः केवलाज्ञानेभिमंताचनिर्विशेषसाक्षिरूपज्ञानशालित्वात्प्राज्ञइतिविश्वकारणत्वादीश्वर इतिचोक्तइत्यर्थः ३६६ जीवघनस्यहिरण्यगर्भस्यसर्वत्राहंताकरणशीलतामाह हिरण्यगर्भइति । अधिदैवस्यस्थितोमर्यादायांयोभगवान्हिरण्यगर्भइत्युक्तःससर्वत्रजगत्यहंतामहमित्यभिमानं कुरुतइत्यर्थः ३६७ तस्यैवात्मनःकारणोपाधेर्नियंतृत्वमंतर्यामित्वरूपमुक्तमित्याह अधिदैवमिति । नियच्छतिमर्यादायांस्थापयति ३६८

हिरण्यगर्भाख्यजीवस्याधिभूताध्यात्माधिदैवाख्यैरूपैस्त्रिरूपत्वमीशसाम्यंचाह अधिभूतमिति । अयंहिरण्यगर्भाख्यएकोजीवःकार्योपाधिरधिभूतादिपुसर्वत्रस्थितत्वेनत्रिरूपईशेनकारणोपाधिनासमइत्यर्थः ३६९ तत्रहेतुतयालक्षणसाम्यमाह आनंदात्मेति । स्वयंप्रकाशानंदरूपत्वंव्यापकत्वंचयथेश्वरेतथास्मिन्नपीति । यद्यप्ययंक्रियाशक्तिज्ञानशक्तिरूपाभ्यांप्राणबुद्धिभ्यांरूपत्रानुपहितस्तथाप्यरूपभाक्स्वतःसिद्धविज्ञानेनात्मानमरूपंनिर्विशेषंमन्यतेइत्यतईशसाम्यंयुक्तमित्यर्थः ३७० तच्चसाम्यमात्यंतिकत्वादैक्यरूपमितिसूचयन्परमेश्वरस्यैवहिरण्यगर्भरूपेणावस्थानमाह अविद्येति । योऽविद्याख्यमायोपाधिकईशउक्तःसएवज्ञानक्रियाशक्त्युपाधिःसन्हिरण्यगर्भउक्तोयत्रमायाकृतोविक्षेपःप्रचुरोदृश्यतइत्यर्थः ३७१ उपाध्योरपिकार्यकारणविधयाअभेदइतिदर्शयन्ज्ञानक्रिययोःसकलप्रपंचात्मकयोरीश्वरोपाधेरविद्यायाःसकाशादुत्पत्तिमाह अविद्येति । मायैवावरणंकुर्वतीअविद्येत्युक्तायस्याःसकाशात्ज्ञानक्रिययोर्जनिरुत्पत्तिस्तयोरुत्पत्त्याचविश्वोत्पत्तिः यतःसर्वेप्राणादयोबुद्ध्यादयोवापदार्थाविश्वपदेनोक्ताज्ञानक्रियाशक्तिरूपाएव नहिज्ञानंक्रियांवाऽजनयंतःकेपिभावादृष्टाइतिभावः ३७२ अविद्यायाःस्वरूपंप्रागुक्तंस्मारयति अविद्येति । परिणामेष्वनुगतंयत्सामान्यंतद्रूपाअविद्याईश्वरोपाधिरित्यर्थः ३७३ तस्यामायायाःसामान्यरूपायाव्याप्यंयत्सामान्यंज्ञानक्रियात्मककार्यंनिष्ठंकार्यंशक्तिसंज्ञंतद्धिरण्यगर्भ

अधिभूतमथाध्यात्ममधिदैवंचसंस्थितः ॥ त्रिरूपोजीवएकोयमीशवद्भातिसर्वतः ३६९ आनंदात्मास्वयंज्योतिरयंस्फुरतिसर्वदा ॥ ईश्वरःसर्वगस्तद्वज्जीवोप्येषमहेश्वरः ॥ क्रियाज्ञानात्मकःप्राणबुद्धिरूपोप्यरूपभाक् ३७० अविद्योपाधिकोयोयमानंदात्मामहेश्वरः ॥ हिरण्यगर्भोभगवान्सएवपरिकीर्तितः ॥ ज्ञानक्रियाशक्तिसंस्थोविक्षेपबहुलःपुमान् ३७१ अविद्यावरणात्मोक्तायस्याज्ञानक्रियाजनिः ॥ ज्ञानक्रियात्मकाःसर्वेप्राणबुद्ध्यादयोपिहि ॥ पदार्थाःपंचभिर्भूतैःसहिताविश्वशब्दिताः ३७२ अविद्यापरिणामस्थंसामान्यंपरिकीर्तितम् ॥ उपाधिरीश्वरस्येयमेकैवानेकरूपिणी ३७३ ज्ञानक्रियात्मिकाशक्तिर्मायाकार्यंयदीरितम् ॥ पूर्वंहिरण्यगर्भस्यसउपाधिःप्रकीर्तितः ३७४ हिरण्यगर्भोपाधेर्यत्सदृशंचित्ररूपधृक् ॥ ततोजातमनेकंतज्जीवोपाधिरितीरितम् ३७५ वटबीजेतुसामान्यंप्रत्येकंपरिवर्तते ॥ परिपूर्णतयातद्वन्मायासर्वत्रसंस्थिता ३७६ ज्ञानक्रियाशक्तिरूपेबाह्येकार्येपरत्रवा ॥ मृद्यस्मात्सर्वकार्येषुवर्ततेसर्वरूपिणी ३७७ सर्वंसर्वमयंतस्मात्सर्वेजीवास्तथादृशाः ॥ अविद्यायांनभेदोस्तिनचिदात्मनिकश्चन ॥ ततोजीवेपिकार्येवावैषम्यंकिंकृतंभवेत् ३७८ अवस्थात्रयमायाताजीवाःसर्वेचतुर्विधाः ॥ हिरण्यगर्भेशरूपायद्यप्येतेतथापिहि ३७९ महतांहिमहीयांसोह्यल्पाःस्युर्बुद्धियोगतः ॥ घटाकाशादयोयद्वत्संबंधेनघटादिना ३८०

स्योपाधिरित्याह ज्ञानेति । ज्ञानशक्तिक्रियाशक्तिसंज्ञंयन्मायायाःकार्यमुक्तंतत्प्रथमंहिरण्यगर्भस्योपाधित्वेनोक्तमित्यर्थः ३७४ अस्त्वेवंहिरण्यगर्भस्यपरमात्मनैक्यंव्यष्टिजीवानांतुतत्कथमित्याशंकांपरिहरन्व्यष्ट्युपाधीनामपितथात्वमाह हिरण्येति । हिरण्यगर्भोपाधिःसमष्टिलिंगशरीरंतत्तुल्यरूपंनानासंस्कारसंभृतत्वेनविचित्रंचयल्लिंगशरीरमनेकविधंततोमायातोजातंतद्व्यष्टिजीवानामुपाधिभूतमित्यर्थः ३७५ तथाचमायायास्तादात्म्यंयथाहिरण्यगर्भोपाधौतथाव्यष्ट्युपाधावपीत्याह वटेति । यथावटेपुतद्बीजेपुजनकतारूपंसामान्यंप्रत्येकंपरिपूर्णतयावर्ततइत्युक्तंतद्वन्मायासर्वत्रकार्येपरिपूर्णतयास्थिता कीदृशेकार्ये ज्ञानक्रियाशक्तिरूपेवाह्येअधिदैवाधिभूतरूपेपरत्रअध्यात्मरूपेवा स्वकीयकार्येपुमृद्वदितिद्वयोरर्थः ३७६ । ३७७ फलितमाह सर्वमिति । तस्मात्सर्वोपाधीनांसर्वशक्तिमायातादात्म्यात्सर्वमुपाधिजातंसर्वात्मकंततश्चसर्वेपिजीवास्तादृशाहिरण्यगर्भसदृशास्तद्वत्परमात्मैक्यभाजइतियावत् यतोविद्यारूपोपाधौउपहितेचिदात्मनिवाभेदोनास्तिततोजीवेव्यष्टिरूपेकार्येतदुपाधौचभेदःकेननिमित्तेनस्यादित्यर्थः ३७८ कथंतर्हिव्यष्टिषुपरिच्छेदानुभवइतिचेद्बुद्ध्यादितादात्म्याभिमानादित्याह अवस्थात्रयमिति ।

जाग्रदाद्यवस्थात्रयंप्राप्ताःयइमेजरायुजादयोजीवास्तेसर्वेहिरण्यगर्भसंज्ञोईशस्तत्तुरयरूपाःसंतोयद्यपिमहतांमहीयांसोभवंतितथापिबुद्धेरणुरूपायायोगेनाल्पाःपरिच्छिन्नाजाताःघटादिसंबंधेनतदव च्छिन्नाकाशवदितिद्वयोरर्थः ३७९ । ३८० सर्वेषांवस्तुतोब्रह्मत्वेहेतुंपरमात्मनएवसर्वत्रप्रविश्यावस्थानमाह सच्चिदात्मेतिचतुर्भिः । हेसुरोत्तमाःयःसच्चिदानंदलक्षणआत्मापूर्वंवर्णितःसए वाज्ञातःपरमेश्वरोहिरण्यगर्भाख्यःपरमेश्वरोभूत्वाविराजंवन्ह्यादीन्देवानिंद्रियाणिभूतानिपंचकोशानेतद्रूपंसकलंजगत्सृष्ट्वातत्रप्रविश्यचअहंताअहमित्यभिमानःसएवस्वरूपावरकत्वेन कंचुकीभूतोय स्यसतथाभूतः वस्तुतःस्वयंप्रकाशानंदरूपोपिचमूढइवस्थितइतित्रयाणांसंबंधः ३८१ । ३८२ । ३८३ ततश्चव्यवहारान्शरीरत्रयवर्तिनःसाक्षितयापश्यन्सन्नात्मनिमन्वानोभवतिवस्तुतो भेदाभेदकल्पनारहितइत्याह व्यवहारानिति ३८४ एताहशभानेनिदानंतुमायैवेत्याह अस्येति । अस्यप्रतीयमानस्यजीवादिभेदस्यहेतुःप्रयोजिकामायैव कीदृशी वश्यानित्यपरतंत्रासनात नीअनादिःनिर्भिन्नाभिन्नाद्वैदाभिष्कांतास्वतःपृथक्सत्ताहीनेतिपावत् यतोवस्तुतस्तुच्छा ३८५ प्रपंचस्यमिथ्याभूतमायामयत्ववर्णनेनफलितान्यात्मनोऽद्वयत्वादीन्येकरसत्वांतानिलक्षणानि प्रतिपादयति । यस्मादितित्रयोदशभिः । यस्मादत्रात्मनिकोपिभेदोनास्तियतःसभेदोमायायास्तुच्छरूपायाएवकार्यंभवतितेनहेतुनायमानंदरूपआत्मावेदविद्भिर्ब्राह्मणैरवधारणेनएवकार

सच्चिदात्मायउक्तोयंमयापूर्वंसुरोत्तमाः ॥ हिरण्यगर्भईशश्चसएवपरमेश्वरः ३८१ विराजंचैवतंसृष्ट्वावन्ह्याद्यांश्चसहेंद्रियैः ॥ महाभूतानिकोशांश्चपंचा प्यन्नमयादिकान् ३८२ प्रविश्यसकलंह्येतदहंताकंचुकःपुमान् ॥ आनंदात्मास्वयंज्योतिरमूढोमूढवत्स्थितः ३८३ व्यवहारानिमान्सर्वान्कार्यकारणजान्सदा ॥ पश्यन्नात्मनिमन्वानोभेदाभेदविवर्जितः ३८४ अस्यसर्वस्यहेतुःस्यान्मायावश्यासनातनी ॥ जीवेश्वरादिभेदस्यनिर्भिन्नातुच्छरूपिणी ३८५ यस्माद्भेदोत्रमा यायाःकार्यंनैवास्तिकिंचन ॥ आनंदात्मनितेनायमद्वयःपरिकीर्तितः ॥ अवधारणपूर्वंसविद्वद्भिर्ब्राह्मणोत्तमैः ३८६ नहिस्वाप्नेनभेदेननानाजीवेश्वरादिना ॥ दृष्टेनभेदःकोपिस्यात्स्वप्नद्रष्टुर्महात्मनः ३८७ सच्चिदानंदरूपाणांभेदस्यपरिवर्जने ॥ सन्मात्रएवसिद्धोयमानंदात्मामहेश्वरः ३८८ सत्तायानविनाशोस्तिमते कस्यापिवादिनः ॥ ततोनित्यःपुमानेषनाशकारणवर्जनात् ३८९ अशुद्धंनाशमायातिजडंयद्घटादिकम् ॥ तस्माद्विलक्षणःशुद्धःकुतोनाशंगमिष्यति ३९० आनंदात्मास्वयंज्योतिःसर्वदास्वात्मवित्स्वतः ॥ ततोविलक्षणोबुद्धोजडाशुद्धस्वरूपतः ३९१

प्रयोगेणसहितंयथाभवतितथाद्वयइत्युक्तइत्यर्थः ३८६ अत्रोपपत्तिमाह नहीति । यतःस्वप्नावस्थाभवेननानाविधेनभेदेनदृष्टेनापितद्द्रष्टुःकोपिभेदोनास्तीत्यर्थः तथाचमायामयंभेदजातं नद्वैतावहमितिभावः ३८७ सन्मात्रत्वंव्याचष्टे सच्चिदानंदेति । यदाचात्मनःस्वरूपलक्षणभूतानांसदादिपदार्थानामपिपरस्परंभेदाभावःभेदांतरंचपूर्वमेवनिरस्तंततोयमात्मासन्मात्रएवेतिवा च्यइत्यर्थः ३८८ ततश्चनित्यत्वंसिद्धमित्याह सत्तायाइति । सत्तायाविनाशःकेनापिवादिनानसंमतः सतःक्षणिकत्वंवदंतोबौद्धाअपिधर्मिणएवक्षणिकत्वंवदंतिनतेष्वनुगतायाःसत्तायाइति भावः ततःसत्तारूपआत्मानाशकारणहीनोनित्यइत्युच्यतेइत्यर्थः ३८९ ततश्चशुद्धत्वसिद्धिरित्याह अशुद्धमिति । यतोजडत्वेनाशुद्धस्यैवनाशोदृष्टः अयमात्मातस्माज्जडाद्विलक्षणत्वेन नाशायोग्यः तस्मान्नाशाभावायजडवैलक्षण्यस्यावश्यमपेक्षणातशुद्धइत्युक्तइत्यर्थः ३९० जडवैलक्षण्येनैवबुद्धत्वमपिसिद्धमित्याह आनंदात्मेति । स्वयंप्रकाशरूपेणसर्वदास्वरूपंपश्यतोवेत्ति अनुसंदधातिततोदेहोजडाशुद्धरूपाज्जगतोविलक्षणःसन्नात्माबुद्धइत्युक्तइत्यर्थः ३९१

सत्यत्वंविवृणोति मिथ्येति । यद्यन्मिथ्याभूतंतदनानंदात्मकमानंदभिन्नंदृष्टंयथाशुक्तिरजतम् अयमात्मातुस्वयंज्योतिरित्युक्तस्ततआनंदभिन्नान्मिथ्यावस्तुनोविलक्षणआनंदरूपोभवतिततो सद्वैलक्षण्यात्सत्यइत्युक्तइत्यर्थः ३९२ सत्यवस्तुनश्चमिथ्याभूतैर्बंधनादर्शनाद्यतःसत्यस्ततोमुक्तइतिवक्तव्यइत्याह सत्यंनबध्यतइति । सत्यंवस्तुस्वस्मिन्कल्पितैर्नबध्यतेनबंधनीयतेयथा नानाद्रष्टृकल्पितसर्पवृंदेनरज्जुर्नबध्यतेइतिप्रसिद्धंनतश्चसत्यइत्युक्तआत्मामुक्तइतिसिद्धमित्यर्थः ३९३ ततोनिरंजनत्वसिद्धिंविवृणोति जायमानस्येति । बंधस्यकारणमंजनमित्युच्यतेअय मात्मातुयतःस्वाभाविक्यांमुक्तौहेतुवर्जितोऽनपेक्षितसाधनकःबंधस्यैवाभावेनतन्निवृत्तिसाधनानामनुपयोगादितिभावः यतएवंततोनिरंजनइत्युक्तः तत्फलंपूर्वंमुक्तत्वेनोक्तस्यापिनित्यमुक्तत्वेन व्यवहारइत्यर्थः ३९४ परिच्छेदस्यकार्यत्वव्याप्यत्वादहेतुरकार्यभूतोयतआत्माततःपरिच्छेदाभावाद्विभुरित्युक्तइत्याह कार्याणामिति ३९५ परत्वमुपपादयति आनंदात्मेति । यतोधिष्ठा नमध्यासादारोपितात्परमुत्कृष्टंप्रसिद्धंतस्मात्सर्वाधिष्ठानत्वाद्धेतोरयमद्वयत्वेनानंदरूपआत्मापरउक्तइत्यर्थः ३९६ प्रत्यक्त्वंवर्णयति प्रत्यगिति । अयमात्मातद्वत्तथाप्रत्यगित्युक्तः यतोबु द्ध्यादेरभ्यंतरआंतरः कुतःतेषांबुद्ध्यादीनामीदृक्तादिदंत्वेनपराग्भावेनप्रतीयमानत्वात् अयंचतद्भासकत्वेनतद्विलक्षणोभवतीतिभावः यथाघटादेर्भास्यात्तद्भासकंनयनमांतरंसत्प्रत्यगुच्यतेइति

मिथ्यायद्दृश्यतेशुक्तिरजतादिस्वरूपकम् ॥ अनानंदात्मकंतत्स्यात्स्वयंज्योतिरितीरितः ॥ तस्माद्विलक्षणोयस्मात्तस्मात्सत्यःप्रकीर्तितः ३९२ सत्यंनबध्य तेमिथ्याभूतैःस्वात्मनिकल्पितैः ॥ रज्जुर्यथैवसर्पौघैःसत्योमुक्तस्ततःपुमान् ३९३ जायमानस्यबंधस्यह्यंजनंकारणंभवेत् ॥ यथासर्पस्यरज्जुःस्यान्मुक्तौहेतु विवर्जितः ॥ यतस्ततःपुमानुक्तोनित्यमुक्तोनिरंजनः ३९४ कार्याणांहिपरिच्छेदोभवेद्धेतुमतामिह ॥ अहेतुःपरमात्मातोविभुरुक्तोमनीषिभिः ३९५ आनंदात्माद्वयस्तस्मात्सर्वतोपिपरःस्मृतः ॥ अधिष्ठानंयतोध्यासात्परमुक्तंमनीषिभिः ३९६ प्रत्यगभ्यंतरस्तद्वद्बुद्ध्यादेःपारिकीर्तितः ॥ ईदृक्त्वान्नयनंयद्वद्घ टादेरांतरंस्मृतम् ३९७ यतःसत्ताचिदानंदाःसर्वभेदविवर्जिताः ॥ ततएकरसोयद्वत्क्षीरंमधुरमेवहि ३९८ एतैःसर्वैःपदैर्वायंबोधैःस्फुरणरूपंतः ॥ सर्वैरवग तःसर्वैःप्रमाणैर्देहधारिभिः ३९९ प्रमायायद्भवेद्धेतुःप्रमाणंतद्धिवादिनाम् ॥ प्रमाणंस्फुरणंप्रोक्तंहेतुर्वास्फुरणस्यहि ४००

भावः ३९७ एकरसत्वंविवृणोति यतइति । यतश्चस्वरूपभूताःसत्ताचिदानंदपदार्थाःपरस्परंभेदविवर्जितास्ततएकरसइत्युच्यते यथानानावर्णानामपिगवांक्षीरंमधुरत्वेनैकरसमित्युच्यतेइ त्यर्थः ३९८ अथप्रमाणैरेतैरवगतइतिवाक्येएतत्पदेनाद्वयादिपदानांप्रसिद्धबोधानांवापरामर्शेप्रमाणभूतैरेतैरद्वयादिपदैःसकलबोधैर्वावगतोबोधितइत्यर्थः । तत्रसकलबोधैरात्मनोबोधनेहेतुःस्फु रणरूपत्वमिति । यदात्वेतत्पदंप्रमाणपदार्थविशेषणीभूतंसत्प्रत्यक्षादिरूपतांप्रमाणानांबोधयतितदासर्वैरेतैःप्रत्यक्षादिभिःप्रमाणैःस्फुरणरूपेणबोधितइत्यर्थः एतत्सर्वंबोधयन्नाह एतैरिति । अ यमात्माएतैर्व्याख्यातैःसर्वैरद्वयादिपदैःप्रमाणभूतैरवगतः अथवाएतैर्दृश्यमात्रगोचरैःसर्वैर्बोधैःस्फुरणरूपैरवगतः अथवासर्वैःप्रमाणैःसर्वलोकैरवगतइत्यर्थः ३९९ तत्रसर्वप्रमाणैरवगतत्वेहेतु त्वेनात्मनःस्फुरणरूपेणसर्वप्रमाणैःसंबंधमाह प्रमायाइति । द्वितीयंप्रमाणपदंभावव्युत्पत्त्याप्रमापरम् । तथाचप्रमाहेतोरेवप्रमाणत्वंसर्वैर्वादिभिःपरीक्षकैरभ्युपगतंतत्रप्रमाणंप्रमारूपंतुस्फुरण मेवप्रायशोवादिभिरुक्तम् कैश्चित्तुस्फुरणस्यहेतुरभिव्यंजिकायावृत्तिःसाप्रमेत्युक्तमित्यर्थः उभयथापिप्रमाणानांस्फुरणेनैवसंबंधइतिभावः ४००

स्फुरणस्यसत्तारूपेणसर्वत्रबोधेष्वनुगमंदर्शयितुंतस्यसत्तारूपतामाह स्फुरणंचेति । सदासर्वकालेषुवर्तमानंस्फुरणंसत्तारूपमितिप्राङ्निरूपितं 'सत्तापस्फुरणादन्यानैवकाचनविद्यते'इतिग्रंथेनेत्यर्थः एतेनसर्वबोधेष्वव्यभिचारेणस्वतोभासमानंस्फुरणमेवावरणाभिभाविकानांवृत्तीनांविषयइत्युपचर्यते अत्रार्थेतस्मात्सत्तारूपाद्व्यतिरिक्तस्यकस्याप्यभावइतिहेतुःसत्तामात्रंसर्वमितिश्रुत्युक्तोयुक्त इतिसूचितम् । एतत्स्फुटयन्सत्ताव्यतिरिक्तार्थज्ञानानांप्रामाण्यादिव्यवस्थानुपपत्तिमाह प्रमाणमिति । अत्रसत्ताव्यतिरिक्तेघटपटादिरूपेर्थेकिंचनापिज्ञानंप्रमाणमितिअप्रमाणमितिवानि यतंनियमेनविशिष्टंनैववक्तुंशक्यम् । तत्रहेतुंमीमांसकमतेव्यक्तीनामवाच्यत्वइवव्यभिचारमाह यतोत्रेति । यतएतत्घटादिज्ञानंकर्तृएकंघटविशेषमगमयद्बोधयदेवसदन्यंघटविशेषंबोधयती तिसिद्धमित्यर्थः तथाचप्रामाण्याप्रामाण्यप्रयोजकाभ्यांबोधकत्वाबोधकत्वाभ्यांसर्वबोधेषुदृश्यमानाभ्यांपरस्परविरोधेनप्रामाण्याप्रामाण्ययोरन्यतरन्नावधारयितुंशक्यंघटादिव्यक्तयश्चव्यभिचा रेणनाविषयीभवनार्हाइतिभावः ४०१ कुत्रतर्हिसर्वमानानांमानत्वमितिचेद्यथाव्रीह्यादिशब्दाःसामान्यमसंदिग्धंबोधयंतस्तस्यैववाचकाःप्रज्ञायंतेमीमांसकैस्तथास्माभिःसर्वबोधोत्तरंसत्तासामा न्यस्यैवावधारणदर्शनात्तत्रैवसर्वबोधानांमानत्वमित्याशयेनाह यद्वीति । यदक्षादिकंपदर्थगोचरंबोधमवधारणज्ञानंजनयेत्तत्रैवार्थेतदक्षादिकंमानमितिकीर्तितंसर्ववादिभिरितिशेषः तथाचसर्वे लोकानांबोधामानामानाभिधाःप्रमारूपेणाप्रमारूपेणवाप्रसिद्धाःसत्तामात्रगोचराइतितत्रैवमानत्वमित्यर्थः घटोस्तीतिविज्ञानेहिघटोपलक्षितसत्ताया एवावधारणंघटांशेतुधर्मधर्मिणोरभेदन्याये

स्फुरणंचसदासत्तापूर्वमेवनिरूपिता ॥ प्रमाणंवाप्रमाणंवानियतंनैवकिंचन ॥ यतोत्रागमयज्ज्ञानमेकमन्यंतुबोधयेत् ४०१ यद्धियद्बोधयेद्वस्तुमानंतत्तत्रकी र्तितम् ॥ बोधाइत्येवजंतूनांसर्वेषामपिसर्वदा ॥ मानामानाभिधाःसर्वेसत्तामात्रैकगोचराः ४०२ असत्तामपियद्बोधानिषेधेयुःप्रतिष्ठिताः ॥ तेपिसत्त्येवगत्वा तेपर्यवस्यंतिकेवले ४०३ वंध्यायास्तनयोनास्तीत्युक्तेसतिविचार्यताम् ॥ कुत्रेत्यस्यास्तिवाकांक्षाप्यथवानैवसास्तिहि ४०४ नास्तीतिचसमुक्तेस्मिन्वचने साहसंभवेत् ॥ आकांक्षादृश्यतेयस्मादस्माभिःस्पष्टरूपिणी ४०५ आकांक्षितेपदेतस्मिन्नर्थआश्चर्यरूपभाक् ॥ प्रतीयतेभवेत्सोयंसत्तासर्वाश्रयप्रदा ४०६

नघटादिसमूहव्यावृत्तानामनवबोधेनसंदेहानिवृत्तिरितिभावः तदुक्तंवार्तिककृद्भिः 'सतोनुभवएवैकोविषयोज्ञातलक्षणः । अक्षादीनांस्वविषयेयत्रतेषांप्रमाणता' इति । अनुभवःस्फुरणरूपा सत्ताज्ञानगोचरत्वादक्षादीनांविषयोयतस्तद्बोधेनैवतेषांप्रामाण्यलाभइतितदर्थः ४०२ ननुघटोस्तीतिविज्ञानेघटस्याऽसत्ताव्यावृत्तिरपिप्रतीयतेतथाचाभावएवसर्वमानगोचरोस्त्वितिशंकांपरिह रति असत्तामपीति । येबोधविशेषाअसत्तामपिनिषेधेयुर्वारयेयुः असत्तांव्यावर्तयंतःप्रसिद्धाइतियावत् तेप्यंतेगत्वासतिवस्तुन्येवपर्यवस्यंतिसंचक्षतेयतस्तत्रसतिप्रतिष्ठिताः स्वालंबनाइ त्यर्थः अयंभावः निरधिष्ठानेनभ्रमइतिप्रसक्तादिप्रतिषिद्ध्यतेइतिचसिद्धांतमनुसृत्यकुत्रचित्प्रसक्ताअसत्तावारणीया तथाचतद्वारणोत्तरंसतोधिष्ठानस्यस्फूर्तिःकोवारयेदितिभावः ४०३ सतिप र्यवसानंस्फुटीकर्तुंतत्रैवाधाराकांक्षांदर्शयति वंध्याया इति । असत्ताप्रतिपादकत्वेनप्रसिद्धेवंध्यापुत्रोनास्तीतिवाक्यएवतावदितिविचार्यं इतिकिं अत्रवाक्येकुत्रेत्याकारकस्याधारवाचकपद स्याकांक्षास्तिनवेति ४०४ तत्रात्यपक्षोनुभवापलापप्रसंगेनायुक्तइत्याह नास्तीतिचेति । आधाराकांक्षानास्तीतिवचनाभिधानंसाहसमविमृश्यकृतिरूपंभवतियतःसाऽऽकांक्षानुभूयतइत्यर्थः ४०५ आद्यपक्षेपरिशेषेणसत्तायाःसिद्धिरित्याह आकांक्षितइति । तस्मिन्कुत्रेत्याकारकेपदेसमाकांक्षितेसतितस्यपदस्यपार्थोलौकिकाप्रसिद्धत्वादद्भुतःस्फुरतिसोयंपरिशेषेणससैवभवति कीदृशी सत्ता सर्वस्याश्रयप्रदा तथाचयत्रलौकिकपदार्थमाधारतयाप्रतीयतेतत्रतदाधारतयासत्तायाःस्फूर्तियंत्रतुलौकिकाधारवाभस्तत्रसाक्षादेवसत्तायाआधारतयाप्रतीतिरितिभावः ४०६

फलितमाह सन्मात्रइति । ततआधारतयासत्तायाःसर्वत्रापेक्षणादेतच्चदर्थविषयकत्वेनानुभूयमानंज्ञानमात्रंसर्वजातीयंज्ञानंसन्मात्रेसद्वस्तुनिव्यवस्थितंप्रतिष्ठांगतंसदत्रप्रमाणंभवतितच्चसद्वस्तु आत्मरूपमितिप्राक्प्रतिपादितमतोहेतोःसर्वेबोधाआत्मनिभवन्तमितिसिद्धमित्यर्थः ४०७ अत्रइतिपदार्थविवृण्वन्सदेवसुरस्तादितिवाक्यार्थमाह इदंसर्वमिति । यतःसर्वंदेहादिकंद्वैतंयत्राध्य स्तंसमारोपितंतत्सत्तामात्रमेवाधिष्ठानतयापारमार्थिकंभवतितच्चसत्तामात्ररूपमधिष्ठानंब्रह्मात्मरूपंसर्वभेदरहितत्वादितिपूर्वमुक्तमितिद्वयोरर्थः ४०८ । ४०९ सिद्धमित्यादिग्रंथस्यार्थमाह सि द्धमित्यादिना । अतएतांसत्सामान्यदृष्टिमादायावस्थितस्यद्वैतानुभवोयतोनभवतिततोऽद्वैतमेतत्सर्वाधिष्ठानभूतंसिद्धमपह्नोतुमशक्यमित्यर्थः ननुद्वैतविरोधात्कथमद्वैतसिद्धिरितिचेन्न अद्वैत द्वैतभानयोर्भिन्नकालिकत्वेनविरोधस्यैवाभावादित्याह अद्वैतेति । येषामज्ञानामद्वैतस्यानुभवएवनास्तितैर्दृश्यमानंद्वैतंतत्राद्वैतरूपाधिकरणेसंसृज्यमानंकथंस्यात् येषांतुविदुषामद्वैतस्यानुभवस्तेषां मतेप्येतद्द्वैतस्याद्वैतरूपाधिकरणेऽसत्त्वंसममेवव्यवस्थितंसिद्धंविद्वद्भिर्द्वैतस्यादर्शनादेवेत्यर्थः ४१० तत्रहेतुंस्फुटयति यस्मादिति । यस्माद्विदुषःप्रतीतिंद्वैतंनगच्छति अविदुषःप्रतीतिंतुअद्वैतंनगच्छ तितवक्तोऽद्वैतद्वैताभावउपपन्नइतिपूर्वेणसंबंधः ४११ एवंसर्वविभ्रांतप्रतीत्यासिद्धेनद्वैतेननाद्वैतस्यास्मदनुभवारूढस्यबाधइत्याह यदीति । केषांचिद्देवादुषांयदिद्वैतानुभवोभवतितर्हिभवतुतावताअद्व

सन्मात्रेतत एवैतज्ज्ञानमात्रंव्यवस्थितम् ॥ प्रमाणमतएवैतेबोधामानमिहात्मनि ४०७ इदंसर्वंयतोध्यस्तंसदेहंभूतभौतिकम् ॥ सत्तामात्रमधिष्ठानरूपंस्यात्पर मार्थतः ४०८ अधिष्ठानंपुराब्रह्मसदेवेतिचकीर्तितम् ॥ सच्चिदानंदरूपंयत्सर्वभेदविवर्जितम् ४०९ सिद्धमेतदतोऽद्वैतंद्वैतानुभववर्जनात् ॥ अद्वैतानुभवाभा वेतत्रद्वैतंकथंभवेत् ॥ अद्वैतानुभवेप्येतत्सममेवव्यवस्थितम् ४१० यस्माद्द्वैतंनवाद्वैतंविदुषोऽविदुषोपिच ॥ कदाचित्कुत्रचिद्वापिप्रतीतिमुपगच्छति ११ यदि केषांचिदेवायंद्वैतस्यानुभवोभवेत् ॥ अस्तुनामकिमायातमद्वैतस्यान्नवस्तुतः ४१२ द्वैतंनिराश्रयंयस्मात्प्रतीतमविचारितम् ॥ तस्मान्मायामयंतत्स्यादद्वै तेपरिकल्पितम् ४१३ अभावेपिचभावात्माद्दृष्टोऽतःखादिसंश्रयः ॥ द्वैताभावोपितेनैतदद्वैतंतावदेवहि ४१४ नासीन्नास्तिनभाव्येतद्द्वैतमात्मनिकेवले ॥ अद्वैतस्ततएवात्मापंडितैःपरिकीर्तितः ४१५ गंधर्वनगरंयद्वद्गगनेपरिकल्पितम् ॥ आनंदात्मनितद्वत्स्याद्द्वैतजालंप्रकल्पितम् ४१६ चिदानंदात्मरूपेस्मि न्स्वप्रकाशेऽद्वयेतथा ॥ अनेकविक्रियालेशरहितेसर्वसाक्षिणि ४१७ कथंभवेदविद्येयंविशीर्णाच्चततःस्वयम् ॥ वस्तुतोऽतोमाययैवतस्याःसत्त्वंनवस्तुतः ४१८

तेकिमनिष्टमायातंप्राप्तंस्यान्नकिमपि यतस्तदद्वैतंवस्तुतोवस्तुनोऽधिष्ठानस्यसंस्पर्शिनभवतीत्यर्थः १२ द्वैतस्यवास्तवत्वाभावेमायामयत्वंफलितमित्याह द्वैतमिति । यतोद्वैतंनिराश्रयमधिष्ठानासंस्प र्शिविचारासहिष्णुचततोमायामयमित्यर्थः ४१३ तथापिद्वैताभावेनैवाद्वैतक्षतिरित्याशंक्यकल्पिताभावोऽधिष्ठानात्मकइतिसिद्धांतेनपरिहरति अभावेपीति । खमाकाशमादिर्यस्यप्रपंचस्य सखादिःससंश्रयःप्रतियोगितासंबंधेनाश्रयोयस्यसतथाभूतोऽभावःप्रपंचाभावोभावात्माअधिष्ठानभावरूपोऽतःप्रतियोगिनःप्रपंचस्यमायामयत्वाद्दृष्टःसंमतः तेनसिद्धांतेनद्वैताभावोप्यद्वैतस्यात्रि घातकइत्यर्थः ४१४ यदाचद्वैतंकालत्रयेप्यात्मनिनसंभवतिततोयमात्माऽद्वैतइत्युक्तइत्याह नासीन्नास्तीति ४१५ आत्मनिद्वैतस्यकल्पितत्वमेवेतिदृष्टांतेनस्फुटयति गंधर्वेति ४१६ अथप्रपंचेनद्वै ताभावेपितत्प्रयोजिकयामाययातुद्वैतंस्यादित्याशंकांवारयति चिदानंदेति । भासमानानंदरूपेअस्मिन्नात्मनिद्वैतहीनेसर्वसाक्षित्वेनसर्वविकारहीनेआदित्यवत्प्रकाशमानेचतमोरूपाअविद्यायतो नसंभवतिततइयमविद्यावस्तुनःआत्मरूपवस्तुनःप्रभावात्स्वयमेवविशीर्णाप्रतिहताअतोमायायाःसत्त्वंस्थितिर्मायादृष्ट्यैवनवस्तुदृष्ट्येतिद्वयोरर्थः ४१७ । ४१८ ।

मायामयत्वेन मायामाः सिद्धो दृष्टांतस्तु तमएवनद्धितेजसानसिद्ध्यतिविरोधात् किंतु तमसैवेत्याह तमसेवेति । यथाघूकैः कल्पितं तमोंधकारस्तत्प्रत्यगात्मनितस्मात्तमसः प्रत्यग्विपरीतआत्मास्व रूपंस्यस्यतथाभूते आदित्येवर्त्तमानस्तमसैवघूककल्पिततमोवलेनैवसिद्ध्येन्नादित्यतेजसाविरोधात् तथामायापीत्यर्थः ४१९ तस्मात्हेपुराःवस्तुतोऽसंभवन्मायायाः स्वरूपंमायाकार्यंवदात्मनिकल्पि तमेवेतिभवद्भिर्ज्ञेयमित्याह माययाइतिद्वाभ्यां ४२० मायाकार्यमिति । तथाजडामायाप्यानंदात्मन्यध्यस्ता कीदृशि आनंदरूपेणात्मनाधिष्ठानेनरूपिणीलब्धसत्ताकेत्यर्थः ४२१ एवं सर्वस्यद्वैतस्याध्यस्तत्वेसतिबाधासमानाधिकरण्येनसर्वत्रपरमेश्वरदृष्टिःकर्त्तव्येत्याह सदानंदात्मेति । यःपरमेश्वरःसदानंदादिरूपउक्तःसएवसर्वं विश्वमितिसंबंधः विष्ण्वादिकमित्यादि पदेनेशानेंद्रादिग्रहः ४२२ एतदात्मरूपंसर्वान्प्रतिद्वैतानुसंधानपूर्वकंसगोसिद्धमपिमायाबलेनासिद्धतामिवगतमित्याह सिद्धोपीति । परमेश्वरपदस्यपूर्वादनुरंगः अधिष्ठानभावेनसदा कालत्रयेपिसत्योध्रुवस्तथायंस्वप्रकाशसुखरूपोदुःखेदुःखरूपेदेहादौकल्पितेसतिविपरिवर्त्तनेअन्यथाप्रतीयतेइत्यर्थः ४२३ अस्यात्मनोलाभोपायश्चसर्वत्रतद्दृष्टिरित्यतःप्रपंचस्यापिसत्त्वंसाधयति माययासहितइति । मायासहितःप्रपंचोयःकश्चिदवतयावर्णितएषोप्यसन्न्वलीकात्मकोनभवति तथात्वेहितस्यप्रपंचस्यासत्तारूपोधर्मोपिकुतःस्यात् हियतःसःअसत्तारूपोधर्मोप्याश्रयेकुत्रचिदालं

तमसैवयथासिद्धश्चेत्तमस्तत्प्रत्यगात्मनि ॥ माययैवतथामायासिद्ध्यत्यात्मनिनिर्द्वये ४१९ मायायाअपियद्रूपमात्मन्येवप्रकल्पितम् ॥ इत्येवतत्सुराज्ञेयंनिर्मा येप्रत्यगात्मनि ४२० मायाकार्यंयथाध्यस्तमस्मिन्नात्मनिनिर्द्वये ॥ मायापिचतथाध्यस्ताजडानंदात्मरूपिणी ४२१ सदानंदात्मरूपोयंचिद्वपुःस्वप्रभःपु मान् ॥ माययासहितंविश्वंब्रह्मविष्ण्वादिकंचयत् ॥ स्थावरंजंगमंसर्वंतदिदंपरमेश्वरः ४२२ सिद्धोप्यसिद्धवद्भातिमाययासर्वदेहिनाम् ॥ अधिष्ठानंसदासत्यो बाधलेशविवर्जितः ॥ स्वप्रकाशसुखोप्येषदुःखेविपरिवर्त्तते ४२३ माययासहितोयोयंप्रपंचःपरिकल्पितः ॥ नैषोप्यसन्कुतस्तस्यस्यादसत्ताश्रयोहिसः ४२४ असतांचसदात्मत्वमनश्वादिवदीरितम् ॥ ततःसदात्मकंसर्वंमुक्तमेवव्यवस्थितम् ४२५ नहीदमात्मनोरूपंभवेद्वस्तुस्वरूपतः ॥ जडंमायास्वरूपंयत्ततएवप्र कल्पितम् ४२६ सदानंदात्मरूपंयत्स्वप्रकाशचिदात्मकम् ॥ सर्वसाक्षितदेवात्मरूपमेतत्सुरोदितम् ४२७ नित्यमन्यत्ततोयत्स्यात्तदनित्यमितीरितम् ॥ किंत न्नित्यमितिप्रश्नोमंदानांव्यर्थएवहि ॥ नित्यआत्मायतःपूर्वमस्माभिःपरिभाषितः ४२८

वनेएवभवतीत्यर्थः ४२४ तथापिसर्वत्रसद्दृष्टिर्दुष्करानृशृंगादौबाधादित्याशंकांपरिहरन्फलितमाह असतामिति । असतामसत्पदार्थतयाप्रसिद्धानामपिसद्रूपत्वमुक्तंनञःपर्युदासार्थमाश्रित्य यथाऽनश्वपदगतोनञ्अश्वभिन्नमश्वसदृशंचभावमेवाभिधत्तेतथाप्रसिद्धसद्भ्यःकार्यक्षमेभ्यःकार्याक्षमत्वेनविलक्षणंवस्तुसूक्ष्मरूपंबुद्धिस्थरूपंवाअसदित्युच्यतेइति । आत्मसत्तामादायसत्त्वंतुसर्वस्य सममेवेतिवर्णितंप्रथमाध्यायेततःसर्वस्यसदात्मकत्वेनकाचित्क्षतिरित्यर्थः ४२५ इत्थंसर्वस्यसद्रूपत्वेपिमायादिजडप्रपंच आत्मनःस्वरूपत्वेननबोध्यः याचितमंडनन्यायेनसत्तादौपरसापेक्ष त्वात्स्वरूपत्वस्यनिरपेक्षतानियमादित्याह नहीदमिति । इदंजडंसविलासमायारूपंवस्तुतआत्मनोरूपंनभवति यत्यतस्तत्स्वत्रैवात्मनिप्रकल्पितमध्यस्तंपरसत्तोपजीविभवतीत्यर्थः ४२६ किंतर्ह्यात्मनःस्वरूपमितिचेद्यत्सदानंदादिलक्षणंपूर्वोक्तमित्याह सदानंदेति ४२७ तत्रहेतुभूतस्यनिरपेक्षत्वस्यस्फुटीकारायनित्यत्वंसिद्धत्वंचसाक्षिरूपस्यवर्णयति नित्यमितिचतुर्भिः । तदात्मनोरूपंनित्यंध्रुवंनिरपेक्षमितियावत् । यत्तस्मद्व्यतिरिक्तमनित्यमितिप्रसिद्धंश्रुत्यादा तत्रनित्यपदार्थविचारणायप्रश्नोनयुक्तः आत्मनइतरत्रपरसापेक्षत्वेनविशरणशीलेनित्यत्वमसंकेर वाभावादित्याह किंतन्नित्यमिति ४२८

संदेहइति । ततइतरत्रनित्यत्वासंभवादेयमंदेहः कोटिद्वयालंबनरूपोनकार्योयतोजडजातमात्मबलेनैवसिद्ध्यतीतिस्फुटानित्यत्वकमित्यर्थः ४२९ कथमात्मनैवसिद्ध्यतीत्याकांक्षायामाह बुद्धयेति । यद्यस्मात् बुद्धेर्वीक्षकेणसाक्षिणाआत्मनाबुद्ध्याचवृत्तिद्वारासर्वंवीक्ष्यतेप्रकाश्यतइत्यर्थः ४३० एवंसर्वसाधकस्यासिद्धत्वंनकेनाप्यपलपनीयमित्याह बाह्यांतरमिति । यतोयंपुमान् बाह्यं तररूपंसर्वंस्पष्टंसमीपंचयथाभवतितथावीक्षतेवीक्षणेनसाधयतितथापिसर्वसंगविवर्जितश्चभवतिततोवैदिकैःसिद्धोनित्यश्चेतिकथ्यतेइत्यर्थः ३१ ब्रूतेत्यादिग्रंथार्थंदर्शयितुमुपक्रमते अमराइति । भोअमरायोमयोक्तःप्रतिपादितःसोयमात्माभवद्भिरवधारितोनवेत्येवंतेनगुरुणाब्रह्मणाउक्तेपृष्टेसतितंब्रह्माणंतेइदमूचुरित्यर्थः अंत्यंपदद्वयमुत्तरान्वयि ४३२ इदंकिमित्याकांक्षायांपूर्वोपदेशेन चिदाभासमात्मानंमन्वानैर्देवैरुक्तंवाक्यमभिनयति व्यवहारेणेति । हेभगवन् अस्माभिरीदृशोयमात्मादृष्टः ईदृशःकीदृशः लौकिकानांव्यवहारानारूढः अतएववागाद्यतीतोबुद्ध्यवच्छिन्नत्वेनाल्पश्चभवतावर्णितइति ४३३ इत्थंतैरुक्तेसतिप्रजापतिस्तेषांभ्रमंवारयंश्चिदाभासेऽसंभवद्भिर्विशेषणैरात्मानंवर्णयामासेत्याह इत्युक्तेइति । हेसुराः मयात्माअल्पतयानोक्तःकिंतुसाक्षिरूपउक्तः

संदेहस्ततएवात्रनकर्तव्यःसुरोत्तमाः ॥ आत्मनैवयतःसर्वंजडजातंप्रसिध्यति ४२९ बुद्ध्यायदीक्ष्यतेबुद्धेर्वीक्षकेणैवसर्वदा ॥ विक्रियालेशशून्येननिर्मायेनमहात्मना ४३० बाह्यांतरमिदंसर्वंवीक्षतेसौयतःपुमान् ॥ अतिस्पष्टंसमीपंचसर्वसंगविवर्जितः ॥ सिद्धस्ततोयंनित्यश्चकथ्यतेवेदवादिभिः ४३१ अमराःसोयमात्माकिंभवद्भिरवधारितः ॥ मयोक्तइतितेनोक्तेब्रह्मणादेवसत्तमाः ॥ ऊचुस्तंपरमेशानंब्रह्माणंदृष्टईदृशः ४३२ व्यवहारेणशून्योयमवाङ्मनसगोचरः ॥ बुद्ध्युपाधिस्तथैवाल्पोह्यस्मभ्यंभवतेरितः ४३३ इत्युक्तेतानुवाचेदममरान्सप्रजापतिः ॥ सुराअल्पोमयानायमात्मायुष्मभ्यमीरितः ४३४ किंतुसाक्ष्यविशेषात्माह्यनन्योभवदादिभिः ॥ सुखदुःखादिरहितोनिर्द्वयःपरमःपुमान् ४३५ सर्वज्ञश्चतथानंतःसर्वभेदविवर्जनात् ॥ सर्वज्ञत्वंचतस्यैवस्वप्रकाशचिदात्मना ४३६ कालत्रयेपिमायायायोगात्तद्विपरीतता ॥ प्रतिभातिततस्तादृग्रूपमस्यमहात्मनः ४३७ यूयमेवसआत्मायोमयादृष्टइतीरितः ॥ भवतोनततोन्यद्धिकिंचिदत्रतुविद्यते ४३८ एवमुक्त्वासुरान्ब्रह्मातानपृच्छत्किमद्वयः ॥ दृष्टआत्मेतितेप्रोचुर्ब्रह्माणंपरमेष्ठिनम् ॥ स्वप्रकाशःकुतश्चात्मेत्येवमुक्तोब्रवीद्धितान् ४३९

कीदृशः अविशेषात्माविषयप्रयुक्तैर्विशेषैर्हीनआत्मास्वरूपंयस्यसतथाभवत्प्रभृतिभिःप्रमातृभिरनन्यःअधिष्ठानतयातादात्म्यशालीसुखादिधर्मैर्वर्जितःअद्वयःपरःसर्वोत्कृष्टःपुमान्सर्वसंघातानांपालकश्चेतिद्वयोरर्थः ४३४ । ४३५ सर्वज्ञइति । यथासर्वज्ञःसर्वभेदराहित्यादनंतश्चप्रसिद्धः तत्रतस्यात्मनःसर्वज्ञत्वंकादाचित्कज्ञानेननबोध्यंकिंतुकालत्रयेपिवर्त्तमानेनस्वप्रकाशचिद्रूपेणैवेति याचउक्तरूपेभ्योविपरीतता अन्यथात्वंप्रतिभातितत्रप्रयोजकोमायायायोगःकल्पितसंबंधएव ततोविपरीततायामायाप्रयुक्तत्वात् अस्यत्वंपदलक्ष्यस्यमहात्मनस्तत्पदार्थपर्यवसन्नस्यवर्णितंरूपंसुस्थितमेवेतिद्वयोरर्थः ४३६ । ४३७ यूयमेवेति । समयावर्णितोभवतोयुष्मान्प्रतिकिंदृष्टोनवेतिपृष्टश्चयआत्मासयूयमेवभवतांस्वरूपमेवयतस्तस्मादात्मनोन्यत्किंचिदपिनास्तीत्यर्थः ४३८ एवमुक्त्वेति । एवंसुरान्प्रत्युक्त्वोपदिश्यप्रजापतिस्तान्सुरानिदमपृच्छत् इदंकिं अद्वयोद्वितीयाभावेनसूचितस्वप्रकाशताकआत्माकिंदृष्टोनवेति तेचसुराद्वैतानुभवेनात्मनःस्वप्रकाशतामसंभावयंतोब्रह्माणंप्रतीदमूचुः इदंकिं आत्मनःस्वप्रकाशतैवकथमिति एवंसुरैरुक्तःपृष्टोब्रह्मातान्सुरानिदमब्रवीदित्यर्थः ४३९

श्रुतोप्रजापतिनायूयमेवेत्युक्तंद्वितीयाभावेनस्वप्रकाशत्वमभिनयति स्वप्रकाशेतिचतुर्भिः । यतोस्मिन्नात्मनिस्वरूपमायास्वरूपस्यप्रकाशकेमायानतिष्ठति यद्यात्मनिस्थितास्यात्तर्ह्यात्मनान प्रकाश्येतचक्षुषास्वस्थितांजनवदितिभावः ततश्चमायाप्रयुक्तद्वैताभावेनपरस्यप्रकाशकस्यासंभवात्स्वयंज्योतिष्ट्वंफलितमितिद्वयोरर्थः ४४० । ४४१ अद्वैततेति । ततउक्तविधयास्वप्रकाश तासूचनायैवश्रुतौ अद्वैतताकथिता अद्वैतत्वोक्त्याचनिर्मायत्वंस्वप्रभत्वंचपुरुषस्यसिद्धमित्यर्थः ४४२ एवंद्वैताभावेचयुष्माकमेवस्वरूपंस्वप्रकाशादिलक्षणंपरिशिष्टमित्याह यत्रेति । यत्रपरमा र्थनिरूपणायांसमस्तद्वैताभावस्तत्रयूयमेवपरिशिष्टाइति ४४३ अथब्रूहित्रभगवन्नितिदेवप्रश्नस्याभिप्रायमाह अद्वयत्वेनेतित्रिभिः । यदाचात्मनोऽद्वयत्वमुच्यतेतदासंगादिदोषदुष्टायाःसविला समायायाअप्यात्मनःस्वरूपेस्वप्रकाशतयोक्तेप्यवस्थितिःप्रवेशःस्यात् तथाचससंगस्यकथंस्वप्रकाशत्वमितिस्वीकृत्याभिप्रेत्यदेवाःपुनःपप्रच्छुरित्यर्थः ४४४ प्रश्नमभिनयति असंगतेति । जडप्रपंचेनसहतादात्म्यरूपोयःसंगस्तेनयुक्तस्यातएवास्माभिर्दृश्यस्यास्माकंद्रष्टृणांदृश्यभावमापन्नस्यईशितुर्मायोपाधिकत्वेनेश्वरसंज्ञस्यचात्मनोऽसंगत्वस्वप्रकाशत्वेकथंस्यातामित्यर्थः ४४५ इ

स्वप्रकाशेयतोमायाब्रह्मोरूपानतिष्ठति ॥ मायाभावाच्चनद्वैतंतस्मिन्नात्मनितिष्ठति ४४० द्वित्वाभावात्परोनास्मिन्प्रकाशःकोपिविद्यते ॥ स्वयंज्योतिस्ततः सोयंपुरुषोमाययाविना ४४१ अद्वैततातस्तस्यपुरुषस्यप्रकीर्तिता ॥ अद्वैतत्वाच्चपुरुषोनिर्मायश्चस्वयंप्रभः ४४२ यत्राद्वैतंनकिंचित्स्यायूयमेवव्यव स्थिताः ॥ सर्वभेदविनिर्मुक्ताःस्वप्रभाःसुखरूपिणः ४४३ अद्वयत्वेनमायायाःस्वप्रकाशेप्यवस्थितिम् ॥ स्वीकृत्यचोदयामासुःपुनर्देवाःप्रजापतिम् ॥ ४४४ असंगतास्वप्रकाशरूपताचकथंभवेत् ॥ तादात्म्यसंगयुक्तस्यदृश्यस्यास्माभिरीशितुः ४४५ इत्यभिप्रायतश्चोद्येकृतेतान्पुनरेवहि ॥ अब्रवीद्भग वान्धाताशिष्यस्नेहसमन्वितः ४४६ युष्माकंयदिभेदःस्यादात्मनःकोपिकर्हिचित् ॥ तदानयोश्चतादात्म्ययोगात्संगोपिसंभवेत् ४४७ यूयमेवयदास्वात्म रूपाःस्वेनैववीक्षिताः ॥ तदासंगःकुतोवास्यादात्मनोनिर्द्वयस्यहि ॥ असंगस्ततएवात्माभवतांचस्वयंप्रभः ४४८ इत्युक्तेतंसुराऊचुःस्वप्रकाशावयंनहि ॥ ज्ञानेनयतआत्मानंजानीमोत्रघटंयथा ४४९

त्यभिप्रायतइति । एवंदेवैश्चोद्येप्रश्नेकृतेसतिइतिवक्ष्यमाणरूपेणाभिप्रायेणब्रह्माकारुणिकोयूयमित्यारभ्ययूयमेवेत्यंतग्रंथेनोत्तरंवदावित्यर्थः ४४६ प्रजापतेरभिप्रायमेवाभिनयति युष्माकमि ति । मायथैवभवतामात्मासद्वयत्वेनप्रथतेनवस्तुतः यस्यसद्वयत्वेनप्रदर्शनंतुमोहचलिङ्गं यदिचवस्तुतोयुष्माकमात्मनःस्वरूपस्यकोपिभेदःसंभवेत्तदाअनयोर्द्रष्टृदृश्ययोस्तादात्म्यरूपाद्योगात्सं गःपरप्रकाश्यत्वंचभवेद्देवेत्यर्थः ४४७ परंतुवस्तुतःकोपिभेदोनास्तीत्याह यूयमेवेति । यदाचहेदेवायूयमेवस्वात्मरूपाःमुमुक्षोधितआत्मासर्वांतरीभावःस्वरूपंयेषांतेतथाततइतररूपाभावाचस्वे नैववीक्षिताःस्वप्रकाशाइतियावत् एतादृशाःस्थतदासंगदोषआत्मनःकथंस्यात् तथाचपूर्वोक्तंस्वयंप्रकाशत्वमुपपन्नमित्यर्थः ४४८ नेतिहोचुरित्यादेर्देवप्रश्नस्यार्थमाह इत्युक्तेइतिद्वाभ्यां । इत्येवंब्रह्मणोक्तेसतितंब्रह्माणंसुराइत्यूचुः इतिकिं अस्माकंस्वप्रकाशत्वंनसंभवतियतोज्ञानेनसंविदाख्येनआत्मानमेवमप्रपंचभावापन्नंजानीमोविषयीकुर्मोघटादिवत् ४४९

तत्रहेतुतयाअसंगत्वप्रयोजकतयोपन्यस्तमद्वयत्वमाहुः असंगाइति । हेब्रह्मन्यतोनिर्द्वंयाःततोयतःअसंगाभवामःअतआत्मानमेवप्रपंचरूपंविषयीकुर्मःयतोऽद्वयत्वेनैवजगच्छरीरादीश्वराद्यस्मा कमभेदआपादितइत्यर्थः तथाचाद्वयत्वेपिविषयविषयीभावानिवृत्तिरितिभावः ४९० यावदद्वयत्वंनभासतेतावदेवसविलासमायास्थित्याद्वैतोपलंभः अद्वयत्वबोधेमायोपमर्देकेजातेतुविषय विषयीभावएवभवतांस्वरूपेकथमवशिष्टइत्यभिप्रायकस्यकथंपश्यंतीतिप्रजापतिवाक्यस्यार्थमाह एवमुक्तेइति । एवंदेवैरुक्तेसतितान्प्रतिब्रह्मासर्वलोकगुरुरिदमाह इदंकिं हेदेवायदायूयमद्व याःसंपन्नास्तदाभवंतोज्ञानेनात्मानमेवकथंपश्यंतिविषयीकुर्वंति तदानीमात्मनोविषयीकरणमसंभविद्वयवर्जितत्वादेवेत्यर्थः ४९१ ततोनविद्मइतिवाक्यस्यार्थमाह एवमुक्तेसुराइति । एवं ब्रह्मणोक्तेसतितंब्रह्माणंपुनरिदमाहुः हेब्रह्मन्वयमात्मनोऽद्वयस्यबोधनेज्ञानेनविषयीकरणेउपपत्तिसंभावकयुक्तिंनजानीमःपरंत्विदानीमपिप्रपंचभूतात्मानंजानीमः इहस्वानुभवशास्त्रोपदेशयो र्विरोधेनव्याकुलत्वेसतिनोस्माकंभगवानेवप्रमाणं यद्भगवान्वदिष्यतितदेवावधारयिष्यामइत्यर्थः ४९२ द्वैतानुभवोयुष्माकंभ्रमइत्यावेदकस्यततोयूयमित्यादेरद्वयामित्यंतस्यप्रजापत्युक्तवाक्य स्यार्थमाह एवमुक्तेपुनरितिचतुर्दशभिः । स्वस्कंधारोहणइवस्वात्मनएवबोधनेविषयीकरणेकाचिदप्युपपत्तिर्भवतांभ्रमहासत्तिरनात्मपियदानप्रतिभातिअतएवात्मनःस्वप्रकाशत्वमद्वयत्वेनोक्तमवधा

असंगास्तुयतोब्रह्मन्भवामोनिर्द्वयायतः ॥ अस्मत्तोनैवभिन्नोस्तियतोयंजगदीश्वरः ४९० एवमुक्तेथतान्प्राहब्रह्मालोकगुरुःसुरान् ॥ यूयंयदाद्वयात्मानस्तदा ज्ञानात्कथंसुराः ॥ पश्यंत्यात्मानमत्रैतंभवंतोद्वयवर्जिताः ४९१ एवमुक्तेसुराऊचुर्ब्रह्माणंपुनरेषतम् ॥ उपपत्तिंवयंब्रह्मन्जानीमोनात्मबोधने ॥ आत्मानमपि जानीमःप्रमाणंभगवानिह ४९२ एवमुक्तेपुनर्ब्रह्मातानसुरानब्रवीद्गुरुः ॥ उपपत्तिर्यतोनैषभवंतःस्वात्मबोधने ४९३ पश्यंतिबुद्धिमंतोपिसर्वशास्त्रविशारदाः ॥ ततोयूयंस्वप्रकाशाःसर्वभेदविवर्जिताः ४९४ आत्मनःसंविदोवापियदाभेदोभवेत्तदा ॥ उपपत्तिःकथंनामनभायाद्भवतामिह ४९५ आनंदात्मास्वयंज्योतिर द्वयोभगवान्परः ॥ नचभेदोत्रकोप्यस्तितस्मिन्नद्वयरूपिणि ४९६ यदायमहमस्मीतिज्ञायतेद्वयवर्जितः ॥ आत्मातदानकोप्येषभेदोभातिस्वयंप्रभे ४९७ अवाङ्मनसगम्योयंसर्वभेदविवर्जितः ॥ व्यवहार्योनकस्यापिभवेदात्माकथंचन ४९८ अतएवतमात्मानंगुरवोमौनतःसदा ॥ आदिशंतिनिजाञ्शिष्यान्व्यव हारविवर्जितम् ४९९ वचसोमनसस्तद्वत्प्रवृत्तिःसत्यसत्यपि ॥ सदसद्रूपनिर्मुक्तेकथमात्मनिसाभवेत् ४६०

रयत विषयतयोपलंभेत्वनात्मज्ञत्वप्रसक्तिरुक्तैवेतिद्रष्टव्योभावः ४९३ । ४५४ यदिसंविद्रूपेणतद्विषयरूपेणचात्मनःस्वरूपेभेदोवास्तवोऽभविष्यत्तदाविषयविषयीभावेकाचिदुपपत्तिर्भवतामस्फु रिष्यदेव इदानींतुसंविदेकरूपतयावधारितस्यात्मनोविषयत्वेउपपत्तेरस्फुरणाद्विषयतायाअभावएवेत्याह आत्मनइति । यद्यात्मपदार्थस्यसंवित्पदार्थस्यचवास्तवोभेदःस्यात्तदातयोर्विषयावि षयीभावेभवतामुपपत्तिर्भायात्स्फुरेदेवेत्यर्थः ४५५ अत्रतुसंविदेकरूपेआत्मनिनकोपिभेदइत्याह आनंदात्मेति । स्पष्टम् ४५६ अत्रभेदाभावेनुभवंप्रमाणयति यदायमिति । अयमात्मायदा अहमितिअस्मीतिवाप्रत्यग्रूपेणभासतेद्वैतस्फुरणप्रथमक्षणेसमाधौवातदास्मिन्विषयविषयीभावःकेनदृष्टइत्यर्थः ४५७ ननुव्यवहारबलेनात्रभेदापादनंयुक्तं आत्मनिव्यवहारयोग्यतायाएवाभावा दित्याह अवाङ्मनसेति । व्यवहारकारणाभ्यांवाङ्मनसाभ्यांपरत्वात्तद्विषयेणभेदेनचवर्जितत्वादयमात्माकेनापिनव्यवहार्यइत्यर्थः ४५८ नचोपदेशानुपपत्तिर्मौनेनापितत्संभवादित्याह अत एवेति । अतोऽव्यवहार्यत्वादेव आदिशंतिउपदिशंति ४५९ अवाङ्मनसगम्यत्वेहेतुंस्थूलसूक्ष्मप्रपंचाभ्यांसदसत्पदवाच्याभ्यांविविक्तत्वमाह वचसइति ४६०

ति.चाव्यवहार्यपदेनावस्थात्रयविवेकः सूचितइतिदर्शयितुंपूर्वोक्तंकारणाद्यवस्थात्रयमधिदैवादिभावेनव्यवहार्यंस्मारयति असत्यविद्येतिपंचभिः । इयंकारणशरीरभूताअविद्यास्वतस्तुच्छापिकार्य मुत्पादयंतीसतीवभवति साचस्वतःसत्ताहीनाप्यात्मानमाश्रित्यसत्तादिकंलभमानाततःकार्यारंभाच्चव्यवहारयोग्याभवतीत्यर्थः ४६१ तत्रेति । तत्रतस्यामविद्यायांस्थितःप्रतिबिंबितआत्माई श्वरइतिव्यवह्रियते सएवेश्वरःस्वात्मबुद्धितईक्षणेनकदाचिदुत्पन्नेनरूपवान्प्राणाद्युपहितःसन्जीवपदेनव्यवहार्यईरितइत्यर्थः ४६२ हिरण्येति । सप्रथमंकार्यमितिप्रसिद्धोहिरण्यगर्भाख्यो जीवःसएवेश्वरश्चेत्युच्यतेयतआधिक्यंस्वतःसिद्धज्ञानादिरूपमागतःप्राप्तः अतिशयितशक्तिशालीचभवतीति तथासएवस्थूलसमष्ट्युपाधिर्विराडित्युक्तइत्यर्थः ६४३ तत्रायमिति । तत्रवर्णिते उपाधित्रयेपदध्यात्मंव्यष्टिरूपंतदुपहितरूपःसन्नयमात्माप्राज्ञादिसंज्ञउक्तइत्यर्थः ४६४ अवस्थेति । यतःसएवात्माअवस्थात्रयेसुषुप्त्यादौगतःसन्जीवइत्युक्तस्ततएतेईश्वरहिरण्यगर्भादयःश ब्दाएकस्मिन्नीवेजीवपदलक्ष्येचैतन्येएववर्ततेइतिसिद्धमित्यर्थः ४६५ व्यवहारप्रयोजकोक्तावस्थात्रयविमुक्तमात्मस्वरूपंतुरीयमित्युक्तमित्याह अवस्थात्रयेति । अस्यतुरीयत्वेनव्यवहारो प्यवस्थात्रयनिरूपितंभेदमपेक्ष्यैवनस्वतइत्याह व्यवहारेति ४६६ नन्वव्यवहार्यस्योपदेशएवभवताकथंकृतइत्याशंकांपरिहरति मयापीति । एवंतुरीयत्ववत्कांश्चनधर्मानारोप्यैवभवतामा

असत्यविद्यातुच्छेयंसतीवस्यात्स्वकार्यतः ॥ आत्माश्रयत्वाच्चततोव्यवहार्याहिसाभवेत् ४६१ तत्रस्थितस्तुभगवानीश्वरःस्वात्मबुद्धितः ॥ व्यवहार्यःकदाचि त्सरूपवान्जीवईरितः ४६२ हिरण्यगर्भःप्रथमंकार्यमाधिक्यमागतः ॥ य सदेवोत्रजीवःस्यादीश्वरश्चातिशक्तिमान् ॥ विराडपितथाप्रोक्तोभगवान्भूतभावनः ४६३ तत्रायंसर्वदाध्यात्मरूपएवंप्रकीर्तितः ॥ प्राज्ञश्चतैजसस्तद्वद्विश्वावस्थाचयास्थिता ४६४ अवस्थात्रयगोदेवोजीवइत्यभिधीयते ॥ शब्दभेदाततस्त्वेते जीवईशादिकाःस्मृताः ४६५ अवस्थात्रयनिर्मुक्तंपररूपंतदेवहि ॥ आनंदात्मस्वयंज्योतिस्तुरीयमितिगीयते ॥ व्यवहारप्रसिद्ध्यर्थमवाङ्मनसगोचरः ६६ मयाप्येवंसमादिष्टोभवतांसमहेश्वरः ॥ अवाङ्मनसगम्योपिधर्मानारोप्यकांश्चन ४६७ भवद्भिःसतुदेवाःकिंज्ञातोनज्ञातएववा ॥ इत्युक्तेतमथप्रोचुर्ब्रह्माणंसक लाःसुराः ॥ किंब्रूमोभगवन्नत्रतुभ्यंहिगुरवेवयम् ४६८ विदिताविदितादन्योयतआत्मात्वयेरितः ॥ ज्ञातोपिततएवायंनज्ञातइववर्तते ४६९ एवमुक्तेपुनर्ब्रह्माता नुवाचसुरान्विभुः ॥ अद्वयंनित्यशुद्धादिगुणंपूर्वमुदीरितम् ४७० ब्रह्मविद्भिर्हिविज्ञानमुपदेष्टुंमहेश्वरः ॥ पुनःपुनर्यदात्मायंशिष्येभ्यउपदिश्यते ४७१

दिष्टइति ४६७ ज्ञातोवैषइत्यादिग्रंथोक्तेप्रश्नोत्तरेवर्णयति भवद्भिरितिद्वाभ्यां । हेदेवाःसमदुक्तआत्माकिंभवद्भिर्ज्ञातोनवेतिब्रह्मणोक्तेपृष्टेसतिअथतंब्रह्माणंसुराइतिप्रोचुः इतिकिं हेभगवन्नतुभ्यं गुरवेपृच्छतेअवश्यंवक्तव्यत्वेपिज्ञातत्वाज्ञातत्वयोर्मध्येऽन्यतरत्किंब्रूमउभयोर्बाधात् यतोभवदुक्तआत्माविदिताज्ज्ञानगोचरादविदितादभासमानाच्चपरोविलक्षणोभवतिततउभयवैलक्षण्यादेवंवदामः अयमात्माज्ञातोपिभासमानोपिनज्ञातइववर्ततेअविषयत्वादितिद्वयोरर्थः ४६८ । ४६९ एवंदेवैस्त्वंपदार्थतयायथावदात्मनिविज्ञातेसत्यथब्रह्मातद्वाएतदित्यादिग्रंथेनतत्पदार्थतयातमेवात्मानं देवेभ्यउवाचेत्याह एवमुक्तेइति । एवंदेवैरुक्तेउत्तरेदत्तेसतितान्सुरान्प्रतिउदीरितंपूर्वंवर्णितमेवात्मानमद्वयादिलक्षणंपुनरुवाचेत्यर्थः ४७० दुरवगमस्यात्मनःपुनःपुनरभिधानेपिजामितालक्षण पुनरुक्तिरूपदोषस्यनप्रसक्तिः अनेकविपर्ययवासनानांक्षयरूपफलेनसफलत्वादित्याह ब्रह्मविद्भिरिति । विज्ञानमुपदेष्टुंप्रवृत्तेर्ब्रह्मविद्भिर्यदायमात्माशिष्येभ्यःपुनःपुनरुपदिश्यतेतदातेःशिष्यै रनादिविपर्ययदुर्वासनारूपप्रतिबंधापायेनदृढंयथातथात्मज्ञानंलभ्यतेततस्तेतत्फलमभिसंधायब्रह्मापुनःपुनरात्मानमुक्तवानितिद्वयोरर्थः ४७१

४७२ पुनःपुनरुपदेशवत्पुनःपुनश्चतुष्पादेनप्रणवेनात्मनोनुसंधानमपिदुर्वासनाक्षयहेतुरित्यालोच्यदेवेभ्यःप्रणवेनात्मानुसंधानमपिप्रजापतिरुपदिदेशेत्याह अभिध्यायेति । तमात्मानमभिध्यायस्वयंप्रणवेनानुसंधायब्रह्मापुनरिदंवाक्यंसुरान्प्रत्याह इदंकिं हेदेवायूयंतमात्मानंओंकारेचतुष्पदेपरिपूर्णंचतुष्पाद्रूपेणतादात्म्यापन्नंपरिसमंतात्पश्यतअविषयत्वेनध्यायततदाएतद्ध्यानपरिपाककालेकोथकाअपिदुर्वासनावोयुष्माकंनभविष्यंति क्षयंगमिष्यंतीत्यर्थः ४७३ ततश्चप्रतिबंधापायेनब्रह्मभावाविर्भावोवःसेत्स्यतीत्याह भवतामिति ४७४ ब्रह्मभावाविर्भावेचसकलदुःखोच्छेदःस्यादित्याह आत्मनइति । यदाभवंतओंकारतादात्म्यापन्नस्यात्मनःसंबंधिज्ञानंसाक्षात्कारंकुर्वंतेसंपादयंतोभविष्यथतदाखेदंदुःखजातंनावगमिष्यथेत्यर्थः ४७५ तथैक्यरूपमहावाक्यार्थपर्यवसायिव्यतिहारेणचिंतनमपिबोधदृढिम्नेकर्त्तव्यमित्याह व्यवहार्यइतिद्वाभ्यां । अहमाअहंशब्देनभवद्भिर्योव्यवहार्यःअयंत्वंपदार्थरूपआत्मासएवसत्यपदेनप्रसिद्धतत्पदार्थभूतब्रह्मरूपइत्यर्थः ४७६ यद्ब्रह्मेति । यच्चतत्पदार्थभूतंब्रह्मतदस्मादहंपदव्यवहार्यादात्मनोन्यत्कथंचिदपिनस्यादित्यर्थः इत्यमुनाप्रकारेणआत्मानंपरिपूर्णरूपेणावगच्छतजानीतअस्मिन्नर्थेसंशयश्चनकर्त्तव्यइत्यर्थः

तदातुवासनात्यागाद्दृढंतैरवगम्यते ॥ ततोब्रह्मातमात्मानमुक्त्वांश्चपुनःपुनः ४७२ अभिध्यायपुनश्चैतमिदमाहसुरान्प्रति ॥ ओंकारपरिपूर्णंतमात्मानंपरिपश्यत ॥ तदादुर्वासनाःकाश्चनभविष्यंतिवःसुराः ४७३ भवतामात्मनोज्ञानात्क्षीणादुर्वासनायदा ॥ तदाभवंतस्तद्ब्रह्मभविष्यंतिनसंशयः ४७४ आत्मनोत्रयदाज्ञानमोंकारस्यास्यकुर्वते ॥ भवंतस्तर्हिमाखेदमवगच्छंतिकर्हिचित् ४७५ व्यवहार्योहमायोयंभवद्भिरमरोत्तमाः ॥ आत्मासएवसत्यंतद्ब्रह्मयत्कीर्तितंमया ॥ ४७६ यद्ब्रह्मनतदन्यत्स्यादात्मनोस्मात्कथंचन ॥ इतिसर्वात्मनात्मानमवगच्छतसर्वथा ॥ अत्रवःसंशयोमाभूत्कदाचिदमरोत्तमाः ४७७ ओंकारःसत्यरूपोयआत्माब्रह्ममयेरितः ॥ अमुमात्मतयानित्यंपंडिताएवजानते ४७८ एतदात्मस्वरूपंयच्छब्दाद्यैःपरिवर्जितम् ॥ ज्ञानकर्मेंद्रियाणांयेविषयाःपरिकीर्तिताः॥ व्यापारैरपिसर्वेषांमनःप्राणादिजैरपि ४७९ इंद्रियैश्चतथाबुद्धिमनःप्राणादिकैरपि ॥ पंचभिश्चमहाभूतैर्भौतिकैरपरैरपि ॥ माययाचतथाशून्यःसर्वधर्मविवर्जितः ४८० सच्चिदानंदरूपोयःपूर्ववःपरिकीर्तितः ॥ एवंभूतोपिसततंवेदांतेष्वेवगम्यते ४८१ स्वप्रभोब्रह्मविज्ञानात्सकृदेवविभातिसः ॥ असकृज्ज्ञानरूपोयमानंदात्मामहेश्वरः ४८२ एवंसर्वगुणैर्युक्तमात्मानंनिर्द्वयंसुराः ॥ अहंसएवसोहंचसर्वभेदविवर्जितः ॥ पश्यतैवसदात्मानंयूयंसर्वात्मबोधतः ४८३

र्त्तव्यइत्यर्थः ४७७ एवंमहावाक्येनाखंडतयावर्णितस्यात्मनोनिर्विशेषतास्फोरकान्सुविभातत्वांतान्धर्मान्व्याचष्टे ओंकारेतिपंचभिः । यओंकाररूपःसत्यरूपश्चात्मावर्णितःअमुमात्मत्वेनपंडिताःसूक्ष्मधियएवजानतेनस्थूलदर्शिनइत्यर्थः ४७८ एतदात्मेति । उक्तमात्मनोरूपंशब्दाद्यैर्भूतगुणैर्ज्ञानेंद्रियाणांकर्मेंद्रियाणांचयेविषयाव्यापाराश्चतैश्चवर्जितंतथामनसःप्राणबुद्ध्यादीनांचव्यापारैर्वर्जितमित्यर्थः ४७९ इंद्रियैरिति । तथेंद्रियादिभिर्मायान्वैःपदार्थैःशून्यःसर्वधर्मवर्जितश्चेत्यर्थः ४८० औपनिषदत्वंविवृणोति सच्चिदानंदेति । युष्मान्प्रतियःसदादिलक्षणआत्मावर्णितःसएवंभूतःस्वप्रकाशोपिवेदांतेषूपनिषत्स्वेवप्रतिपाद्यइत्यर्थः ४८१ सुविभातादिपदत्रयार्थमाह स्वप्रभइति । अयमानंदरूपोमहेश्वरोयतःस्वप्रभस्ततःसुविभातइत्युक्तः यतश्चब्रह्मविज्ञानात्सकृदेकवारमेवविभातिनिरावरणोभवतिपुनरावरणस्यपुनरनुत्पादात्ततःसकृद्विभातइत्युक्तः यतश्चवृत्तिज्ञानप्रतिबिंबितरूपेणपुनःपुनर्भातिततःसर्वतःपुरतोविभातइत्युक्तइत्यर्थः ४८२ अद्वयमित्यादिग्रंथस्यक्रमेणार्थमाह एवमित्यादिना । एवंवर्णितविधमात्मानंद्वैतरहितंतत्त्वंपदार्थयोरैक्यव्यतिहारेणयूयंपश्यतैवसाक्षात्कुरुतैव कथंभूतायूयं सर्वात्मनोबोधेनसर्वभेदविवर्जिताइतिसंबंधः ४८३

एवमुक्तेवि । सभगवान्ब्रह्मातान्देवानिदंपप्रच्छ इदंकिं हेदेवाएषमदुपदिष्टआत्माभवद्भिःकिंदृष्टःसाक्षात्कृतोनवेति ४८४ पूर्ववदिति । एवंपृष्टादेवाःपूर्ववदेवात्मनोविदिताविदिताभ्यांवै लक्षण्यमुत्तरत्वेनाहुरितिप्रथमदलार्थः ततःपुनःप्रजापतिर्देवानांबुद्धिंपरीक्षितुमिदंवक्ष्यमाणविधंपप्रच्छेति ४८५ मयोपदिष्टेति । यामयोपदिष्टात्मनःस्वरूपभूताअनुभूतिःसाकुत्रकस्मिन्नाधारे तिष्ठतीति ४८६ एवमुक्तेथेति । एवंगुरुणापृष्टेसतिदेवाउत्तरमाहुः हेभगवन्पूर्वंनिराश्रयंनिराधारमात्मानमुपदिश्याधुनातस्याधारंकथंपृच्छसि कीदृशमाधारं स्वयंपूर्वमनुक्तमित्यर्थः ४८७ ततःपुनःप्रजापतिस्तेनविज्ञातेनात्मनाकिंफलमितिपप्रच्छेत्याह एवमुक्तेवि ४८८ नकिंचनेत्याकारमुत्तरंदेवानांविवृणोति एवमुक्तेसुराइति । ज्ञातआत्मैवफलंतस्यफलांतरंनास्तिफलत्वादेव यतोलोकेपिफलावस्थादाम्रादेःफलांतरंजायमानंनदृष्टंकिंत्वंकुरवृक्षाद्यवस्थादिवेत्यर्थः ४८९ पुनश्चैतानिति । एतान्देवांस्तद्विज्ञानपरिपूर्तिपरीक्षार्थंपुनरेवमुवाच एवंकथं भोदेवायूयमाश्चर्यरू पाःस्थ अत्यांश्चर्यरूपमायायामपिब्रह्मरूपेणसत्ताप्रदत्वादित्यर्थः ४९० एवमुक्ताइति । ततोदेवैरिदमुक्तं सर्वस्यापिपदार्थजातस्यब्रह्मरूपेणतथात्वादस्मास्वेवतथावधारणमयुक्तमितीत्यर्थः

एवमुक्त्वापुनःप्राहतान्सुरान्भगवान्हिसः ॥ एषआत्माकिंभवद्भिर्दृष्टोऽदृष्टोथवासुराः ४८४ पूर्ववत्तेपितंप्राहुर्विदिताविदितात्परम् ॥ तेषांबुद्धिंसविज्ञातुंब्रह्माता न्पृष्टवानिदम् ४८५ मयोपदिष्टाभवतांयानुभूतिःस्वयंप्रभा ॥ आनंदात्मस्वरूपेयंकुत्रातिष्ठतिभोसुराः ४८६ एवमुक्तेथतेप्राहुःस्वगुरुंदेवसत्तमाः ॥ निराश्र यंपुरोक्त्वातमाधारमधुनाकथम् ॥ अस्मान्पृच्छसिहेब्रह्मन्ननुक्तंपूर्वमात्मना ४८७ एवमुक्त्वापुनःप्राहपरीक्षार्थंमहामतिः ॥ आनंदात्मास्वयंज्योतिर्मयावःपरि कीर्तितः ॥ निर्दुःखोनिर्द्वयस्तेनविज्ञातेनफलंहिकिम् ४८८ एवमुक्तेसुराःप्राहुर्ब्रह्माणंस्वगुरुंप्रति ॥ फलात्मन्यात्मनिज्ञातेनैवकिंचित्फलांतरम् ॥ अस्माकं विद्यतेयस्मान्नफलेस्तिफलांतरम् ४८९ पुनश्चैतानुवाचाथपरीक्षार्थंमहामतिः ॥ यूयमाश्चर्यरूपाभोदेवाब्रह्मात्मकायतः ४९० एवमुक्तास्तमूचुस्तेवयमेवन तादृशाः ॥ आश्चर्यमखिलंयस्मादद्वयंद्वयवत्स्थितम् ४९१ पुनरेतानुवाचाथविधातासुरोत्तमान् ॥ एवंचेदंतयाज्ञातमत्याश्चर्यस्वरूपवत् ॥ ओमित्येवत तःकस्माज्ज्ञातइत्येवनोच्यते ४९२ इत्युक्ताःपुनरेवैनमूचुस्तेदेवसत्तमाः ॥ नज्ञातोनाप्यविज्ञातोनोभयात्मायतःपुमान् ॥ ततःकथममुंब्रह्मन्वदामोज्ञातइ त्यपि ४९३ एवमुक्तःपुनःप्राहतर्ह्येवंवदतामराः ॥ स्वात्मानुभवसिद्धोयमस्माकमितिचेरिते ॥ ब्रह्माणंतेपुनःप्राहुरेतद्विज्ञाततत्त्वकाः ४९४ जानीमोवयमा त्मस्थमानंदात्मानमद्वयम् ॥ नजानीमश्चभेदेनततोवक्तुंवयंकथम् ४९५

४९१ पुनरेतानिति । इत्थंवदतोदेवान्प्रतिपुनरिदंब्रह्माप्राह हेदेवाएवंसतिदृश्यपदार्थानांघटादीनामपिब्रह्मरूपेणाश्चर्यतयाज्ञातत्वेसत्याश्चर्यरूपवद्ब्रह्मइदंतयापिभवद्भिर्नज्ञातमित्यायाति ततश्चप्रण वानुसंधानपूर्वकमस्माभिर्ज्ञातआत्मेत्येवंकस्मान्नोच्यतेइत्यर्थः ४९२ इत्युक्ताइति । इत्थंपरीक्षायैपुनःपृष्टादेवाएनंब्रह्माणमिदमूचुः इदंकिं एकत्वात्सर्वत्रैकरूपस्वभावोयमात्माज्ञातोनभव त्यविषयत्वात् अविज्ञातोनभासमानत्वात् उभयात्माज्ञातत्वाज्ञातत्वयोःसमुच्चयवांश्चनविरोधात् ततोज्ञातत्वादेरन्यतरावधारणसमुच्चययोरसंभवादमुमात्मानंज्ञातइत्याकारेणकथंवदामोवक्तुं प्रभवामइत्यर्थः तथाचत्वयासमानाधिकरण्येनसर्वत्रब्रह्मत्वमुक्तमितिनप्रत्यक्त्वव्याघातइतिभावः ४९३ एवमुक्तइति । तर्हिस्वानुभवसिद्धोयमस्माकमात्मेत्येवंवदतेतिब्रह्मणोदितेकथितेस तितेदेवाअवधारिततत्त्वकाएतद्वाक्यंप्राहुरितिसंबंधः ४९४ एतत्किमतआह जानीमइति । अद्वयत्वेनानंदरूपमात्मानमात्मस्थंप्रत्यग्भावेनस्थितंजानीमोभेदेनविषयविषयीभावलक्षणेनतुनजानीमइ त्यतोविषयत्वप्रसंजकमात्मनोविशेषणंकिमपिवक्तुंकथंप्रभवामःशक्नुमइत्यर्थः ४९५

प्रभवामइति । प्रथमंपूर्वान्वयि निगदव्याख्यातंत्रयम् ४९६ । ४९७ । ४९८ एवमुक्तइति । एवंकृतकृत्यताबोधकानिदेववाक्यानिश्रुत्वापिब्रह्माएतान्देवान्ज्ञानदार्ढ्यायपरीक्ष्य न्सन्निदंमाह ४९९ इदंकिमित्यतआह प्रार्थनाचेति । यद्यतोभवद्भिर्मांप्रतिप्रार्थनानमस्कारौकृतौतेनहेतुनाममप्रसादातिशयात्पुनःप्रश्नेभवद्भिर्नभेतव्यंत्रसितव्यमित्यर्थः ५०० तथाचहृद्गतः शंकाशूकोपिवारयितव्यइत्याह यूयमिति ५०१ एवमुक्तेसुराइति । एवंब्रह्मणोक्तेसतितंब्रह्माणंस्वकीयंगुरुंदेवाइदमाहुःहेभगवन्सिद्धरूपस्यात्मनोवर्णनप्रसंगेसाध्यरूपेणात्मनाव्यतिरिक्तावि लक्षणाएषानुज्ञाअनुजानीध्वमित्याकारिकाअपूर्वाप्रकृतासंगतासमीरितेत्यतोनोस्माकंपूर्वोक्तेर्थेसंशयोभवतीत्यर्थः ५०२ इत्युक्तस्तानिति । एवंप्रार्थितोब्रह्माप्राह मयासाध्यरूपाअनुज्ञानो क्ताकिंत्वद्वैतात्मरूपैवोक्तायतोद्वैतविस्मरणायशतयाख्यप्रणवावस्थावाच्योऽनुज्ञारूपआत्मानुसंधेयइतिमयोक्तमित्यर्थः ५०३ एतावच्छ्रुत्वादेवाःप्रकारांतरेणगुरोःप्रतिकर्तुमशक्तानमस्कारेण

प्रभवामोनमस्तेस्तुगुरोलोकपितामह ॥ परीक्षार्थंत्वमस्माकंपृच्छसीतिसुनिश्चितम् ॥ अस्मानज्ञसमोभूत्वासर्वज्ञोजगदीश्वरः ४९६ परीक्षांकुरुमाऽतस्त्वंकृ तार्थाहिवयंकृताः ॥ त्वयातुभ्यंनमस्तेस्तुचिदानंदात्मदायहि ४९७ प्रसीदास्माकमनिशंशिष्याणांभगवन्गुरो ॥ अस्माभिर्दुर्लभंलब्धंत्वत्प्रसादान्महेश्वर ॥ ४९८ एवमुक्तोपिदेवैःसपुनरेवपितामहः ॥ प्राहैतान्सुदृढज्ञानप्राप्त्यर्थंहिपरीक्षयन् ४९९ प्रार्थनाचनमस्कारोभवद्भिस्तुकृतोहियत् ॥ मांप्रतीहामरास्तेनन भेतव्यंकदाचन ५०० यूयंपृच्छतयश्चास्तिसंशयोहृदिसंस्थितः ॥ भवतांतमहंसर्वंछेत्स्याम्येवनसंशयः ५०१ एवमुक्तेसुराःप्राहुस्तंगुरुंस्वात्मनस्तदा ॥ आत्मनोव्यतिरिक्तेयमनुज्ञाकात्वयेरिता ॥ अस्मान्प्रत्यनुजानीध्वमितिनःसंशयोस्तिहि ५०२ इत्युक्तस्तानुवाचायंब्रह्मालोकपितामहः ॥ यानुज्ञाभवतांप्रो क्तामयानैषात्मनःपृथक् ॥ अनुज्ञारूपआत्मायंभवद्भ्योत्रप्रकीर्तितः ५०३ इत्युक्ताःपूर्ववद्देवाःकृतवंतोनमस्क्रियाम् ॥ ब्रह्मणेगुरवेस्वेषांप्रसीदेतिवचोन्विताः ५०४ एवंपुरासुरान्ब्रह्मादिष्टवान्परमेश्वरः ॥ कौतूहलंहियत्राभूद्भवतःस्वात्मवेदिनः ५०५ संसारशूलमूलस्यनाशनंज्ञानमीरितम् ॥ इदंयत्पृष्टवानादौभवा न्मांश्रद्धयान्वितः ५०६ यदुक्तंविस्तरग्रंथात्संक्षेपात्तद्वदाम्यहम् ॥ अहमज्ञइतिप्रोक्तामायादृश्यात्समुत्थितम् ५०७ दृश्यंसूक्ष्मंतथास्थूलंदेहद्वयमुदीरितम् ॥ भूतभौतिकरूपंतदधिदैवादिभेदवत् ५०८ स्थूलंजागरणंप्रोक्तंसूक्ष्मंस्वप्नइतीरितम् ॥ अविद्यासुप्तिरित्युक्तात्रयंहेयमिदंसदा ५०९

स्वात्मानमेवार्पितवंतइत्याह इत्युक्ताःपूर्ववदिति । स्वेषांसर्वदेवानांगुरवेब्रह्मणेनतिंचक्रुःप्रसीदभगवन्नितिचोचुरित्यर्थः ५०४ देवैर्महतायत्नेनब्रह्मणोलब्धेयंविद्येतिदुर्लभत्वंसूचयन्नुपसंहरति एवंपुरेति । आदिष्टवानुपदिदेश यत्रार्थेभवतोमदंतेवासिनःपूर्वग्रंथेनविज्ञातात्मतत्त्वस्यापिकौतूहलमुत्कटजिज्ञासारूपमभूदित्यर्थः ५०५ एतदध्यायोक्तविज्ञानस्यमुमुक्षूणामवश्यसंपादनी यत्वंदर्शयन्नाह संसारेति । संसाररूपशूलस्यमूलभूतंयदज्ञानंतस्यनाशकमेतज्ज्ञानमुक्तंयत्त्वयाग्रंथादौपृष्टमित्यर्थः ५०६ ओतमित्यादिश्वरप्रश्नोकस्यार्थमुपबृंहयति यदुक्तमितित्रयोदशभिः । विस्तरशालिनाग्रंथेनयदुक्तंतत्संक्षेपेणश्रयतां अहमज्ञइतिदृश्यानुभूयमानामायाकारणशरीरमित्युक्तातस्याःसमुत्थितंजातंदृश्यंतुस्थूलसूक्ष्मदेहभूतंद्विविधंपञ्चभूतभौतिकरूपमधिदैवादिभेदशालिचेति द्वयोरर्थः ५०७ । ५०८ तानिचस्थूलसूक्ष्मकारणानियथाक्रमंजागरणादिरूपाणिहेयानीत्याह स्थूलमिति ५०९

एतत्रयादिति । उक्तावस्थात्रयाद्विमुक्तंतत्त्वंतुतुरीयमित्युक्तंतच्चोतादिभेदैश्चतुर्विधमित्यर्थः ५१० तत्रौतंलक्षयति देहाभिमानइति । अधिदैवसाक्षिणोह्योताओतानाद्याअवस्थाः तल्लाभेचश रीरत्रयाभिमानःप्रतिबंधकइत्यतउक्तंदेहाभिमानेगलितेइति तथाचयदापुमान्विद्वान्देहत्रयाभिमाननिवृत्त्युत्तरंव्युत्थानदशायांवर्तमानोब्राह्यांतररूपंयत्स्थितंविश्वंब्रह्मेत्यनुभवतितद्विश्वभासकं चैतन्यमोतमितिविदुः कीदृशमोतं तुरीयभेदानांमध्येप्रथममित्यर्थः ५११ अखिलंमिथ्यात्वेनसविकल्पकसमाधौभासयच्चैतन्यमनुज्ञातेतिपुल्लिंगनाम्नोच्यते स्वसत्तादानरूपानुग्रहेणगौरवशालि त्वात्सतुरीयस्यद्वितीयोभेदइत्याह अहंब्रह्मेतिचेति । भेदविवर्जितंबाधितभेदंविश्वंब्रह्मरूपंप्रपद्यतेभासयति कीदृशः ध्यातृध्यानादिभेदशालिसविकल्पसमाधिस्थः एवंसर्वानुग्राहकत्वेसतितच्चै तन्यमनुज्ञाताइतिवाच्यंतदेतत्तुरीयरूपेपुद्वितीयमितिगीयतेइत्यर्थः ५१२ यदास्वसत्ताकर्पणेनासत्तामापन्नस्यद्वैतस्याभावंनिर्विकल्पकसमाधिस्थःप्रपद्यतेतदातच्चैतन्यमनुज्ञेतिदर्शितव्युत्पत्तिकेन नाम्नाभिधीयतेसतृतीयस्तुरीयभेदइत्याह यदावेइति । तत्त्वंपरमार्थभूतमाकृष्टविश्वसत्ताकमितियावत् एतादृशमात्मानमधिगच्छति किंकृत्वा ध्यात्रादिभेदंतिरस्कृत्यापोह्य सोयमनुज्ञाख्य

एतत्त्रयात्परंयत्तत्तुरीयमितिकीर्तितम् ॥ चतुर्धातदपिप्रोक्तमत्रवेदांतवादिभिः ५१० देहाभिमानेगलितेबहिरंतर्यदापुमान् ॥ विश्वंब्रह्मेतिजानीयादोतंतत्प्रथमं विदुः ५११ अहंब्रह्मेतिचयदाविश्वंभेदविवर्जितम् ॥ ध्यातृध्यानादिभेदेनसमाधिस्थःप्रपद्यते ॥ अनुज्ञातातदैवंतद्द्वितीयमितिगीयते ५१२ यदावैतत्त्वमा त्मानंस्वप्रकाशःस्वयंपुमान् ॥ ध्यातृध्यानादिभेदंतंतिरस्कृत्याधिगच्छति ॥ तदानुज्ञेतिभेदोयंतृतीयःपरिकीर्तितः ५१३ ब्रह्मज्ञानाग्निनादुःखशूलमूलविना शने ॥ यदावाङ्मनसातीतंपश्यन्नपिनपश्यति ५१४ आनंदात्मानमद्वैतंस्वप्रभंपरमेश्वरम् ॥ आत्मानंवापरंवापिभेदंवाऽभेदमेवच ५१५ जीवन्वापिमृतोवापि कदाचिन्नाधिगच्छति ॥ अविकल्पइतिप्रोक्तंतुर्यंतुर्यमिदंतदा ५१६ त्यजेज्जागरणादीनियथाभेदात्मकानिहि ॥ ओतादीन्यपितद्वत्तुत्यजेत्त्रीण्यपिसर्वदा १७ अविकल्पमिमंदेवमवाङ्मनसगोचरम् ॥ आनंदात्मानमद्वैतंसदाद्वारवतीस्थितम् ५१८ सर्वाश्रयविहीनंतंसर्वभेदविवर्जितम् ॥ अमायंस्वप्रभंनित्यंभासमानं हृदंबुजे ॥ पश्येदपश्यन्नेवेदमितिज्ञानमिदंस्मृतम् ५१९ गंधर्वनगरंयद्वद्गगनेपरिकल्पितम् ॥ आनंदात्मनिमायादितथैवेहापिकल्पितम् ५२० गगनस्ययथा भागेगंधर्वनगरस्थितिः ॥ अज्ञानादात्मनस्तद्वन्मायाद्युत्थितिरीरिता ५२१

स्तृतीयोभेदइत्यर्थः ५१३ तुरीयस्यतुरीयभेदमविकल्पाख्यंवर्णयति ब्रह्मज्ञानाग्निनेतित्रिभिः । ब्रह्मज्ञानरूपेणाग्निनादुःखशूलमूलभूतस्याज्ञानस्यदाहेसतियदावागाद्यतीतंभासमानानंदरूपमा त्मानंपश्यन्नपिनपश्यति अविषयत्वेनपश्यतीतियावत् स्वःपरइत्यादिरूपंभेदंतदभावंवाजीवन्नस्मिमृतोस्मीत्यादिविशेषंवानाधिगच्छति इदंचैतन्यरूपमविकल्पाख्यंतुर्यंस्यतुरीयस्यतुर्यंरूप मितित्रयाणामर्थः ५१४ । ५१५ । ५१६ यथाचभेदशालिताःरूपदोषपजागरणादित्रयंहेयं तथातुरीयभेदेपुओतादित्रयमपितेनैवदोषेणहेयमित्याह त्यजेदिति ५१७ चरमरूपमेवचालं बनीयमित्याह अविकल्पमिममिति । द्वारवत्यांतनूरूपायांस्थितंसदाराजमानंपश्येत् किंकुर्वन् इदमित्याकारेणपराग्भावेनापश्यन्सन् इदंपरमफलभूतज्ञानस्वरूपंमतमिति स्फुटमन्य द्योः ५१८ । ५१९ इदमेवचज्ञानमस्यशास्त्रस्यप्रयोजनमितिवक्तुमत्रविज्ञानेऽसंभावनांदृष्टान्तैर्वारयति गंधर्वत्येकादशभिः । कल्पितमारोपितं मायादिमायाप्रभृतिद्वैतं इहवर्जिते आ नन्दात्मनि ५२० यथाचगगनस्यकल्पितएकदेशेगंधर्वनगरकल्पनागगनस्वरूपाज्ञानप्रयुक्तातथाआत्मनःकल्पितेएकदेशेमायादिदृश्यस्येत्याह गगनस्येति ५२१

यथाचगगनतत्त्वज्ञानाद्गंधर्वनगरस्यलयोबाधस्तथेहाप्यात्मज्ञानाद्दृश्यजातस्येत्याह गगनेत्रेति । लयंव्रजेदितिसंबंधः ५२२ तत्त्वज्ञानान्नकेवलंविकाराणामेवलयःकिंतुतन्मूलाज्ञानस्यापीत्याह गगनेति । अथापरोक्षभ्रमबाधायापरोक्षज्ञानमेवापेक्षितमित्यत्रदृष्टांतमाह परोक्षेति । दिङ्मोहोदिग्भ्रमः ५२४ एकएवात्मामायाख्येनस्वरूपाज्ञानेनानेकधाभातीत्यत्रदृष्टांतमाह यथेति । शयानःस्वप्नावस्थआत्मनःस्वरूपस्याज्ञानान्महेश्वरोप्यनेकोजातइत्यर्थः ५२५ ननुभासमानात्मनिकथमज्ञानस्थितिरितिचेदघटितघटनाक्षमात्तत्स्वभावादेवेत्याह मायैवेति । एषाऽज्ञानरूपा बलंसामर्थ्यम् ५२६ एवंविधायाअपिनिवृत्त्युपायमाह आनंदात्मनीति । आनंदरूपेदेवानांचक्षुरादीनांसन्निधिमात्रेणईशेनियंतरिप्रतिभेदविवर्जितेप्रत्यग्रूपेणभेदवर्जितेआत्मनियद्वेदांतवाक्यजन्यंज्ञानमखंडाकारवृत्तिरूपंतस्माद्गर्भभूतादेषामायावृश्चिकीवनश्यतीत्यर्थः ५२७ पूर्वंसाक्षित्वेनास्याःसाधकोप्यात्मावृत्त्यारूढरूपेणबाधकोभवतियथाकाष्ठस्यभासकोप्यग्निर्लोहारूढोभेदकत्वेनदृष्टइत्यावेदयन्नाह आत्मनइति । एषामायाआत्मनःसाधकान्नबिभेतितज्जात्प्रतिबिंबात्श्रौतविज्ञानमिष्टात्तुबिभेतीत्यर्थः ५२८ एतदेवस्फुटयति अनाद्यनंतेति । अनादेरनंतायाब्रह्मबोधं

गगनेत्रयथाज्ञातेगंधर्वनगरंलयम् ॥ व्रजेदात्मनिविज्ञातेतथामायादिकंलयम् ५२२ गगनज्ञानतोयद्वद्गगनाज्ञानसंक्षयः ॥ आत्मज्ञानात्तथैवात्माज्ञाननाशोपि निश्चितः ५२३ परोक्षज्ञानतोयद्वद्दिङ्मोहोनानुवर्तते ॥ परोक्षज्ञानतस्तद्वन्मायादिरनुवर्त्तते ५२४ यथाशयानःपुरुषएकएवव्यवस्थितः ॥ आत्माज्ञानादनेकःस्यादेवमेवमहेश्वरः ५२५ मायैषादुर्घटातद्वद्दुस्तराचातिदुःखदा ॥ संसारशूलजननीस्वबलेनैवसिद्धचाति ५२६ आनंदात्मनिदेवेशेप्रतिभेदविवर्जिते ॥ सर्वज्ञश्रुतिविज्ञानाद्विनश्यतिनचान्यथा ५२७ आत्मनोपिभयंनैषाकदाचिदधिगच्छति ॥ आत्मजाच्छ्रुतिविज्ञानाद्भीतास्तिष्ठतिसर्वदा ५२८ अनाद्यनंतरूपायामायायाःपंडितैःसदा ॥ उपायस्त्वेकएवायंदृष्टोनाशायनापरः ५२९ मायापिशाचीभूतानांभवभीतिकरीसदा ॥ आत्मज्ञानाभिधंमंत्रंदृष्ट्वानाशंप्रयातिसा ५३० शांत्यादिगुणसंपन्नोमुमुक्षुःसर्वदाततः ॥ मायापिशाचीभीतःसन्भावनादिसमन्वितः ॥ संपादयेदिदंज्ञानमितिशास्त्रार्थईरितः ५३१ एतावदेवकर्तव्यं पुरुषेणमुमुक्षुणा ॥ नातःपरंपरंकुर्वन्पतत्येवनसंशयः ५३२ इतितेविद्यमानानांवेदांतानांमयेरितम् ॥ उपासनाविरहितमात्मज्ञानंसदाघनम् ५३३

विनाअंतहीनायाश्चमायायाःप्रक्षयायश्रौतविज्ञानरूपएवोपायःपंडितैर्दृष्टइति ५२९ अमुमर्थंरूपकेणदृढयति मायापिशाचीति । भूतानांप्राणिनांजनिमृतिप्रवाहरूपस्यभयस्यकर्त्रीमायारूपापिशाचीवर्त्ततेसाचब्रह्मज्ञानात्मकरहस्यमंत्रेणैवनश्यतीत्यर्थः ५३० फलितमाह शांत्यादीति । ततःशांत्यादिगुणशालीमुमुक्षुर्मायापिशाचीभीतोभावनयाचित्तैकाग्र्येणआदिपदग्राह्यगुरूपसत्त्यादिनाचयुक्तःसन्निदंमुक्तरूपंज्ञानंसंपादयेत् एतदस्यवेदांतशास्त्रस्यप्रयोजनमित्यर्थः ५३१ एतावदेवेति । मुमुक्षोःपुरुषस्यकर्त्तव्यंयत्नोद्देश्यमेतावदुक्तज्ञानसिद्धिपर्यंतमेवातोज्ञानाभ्यासात्परमन्यत्तुनकर्त्तव्यंयतोन्यकरणेपुनःसंसारपातइत्यर्थः ५३२ गुरुःशिष्यायोपदेशपरिपूर्तिमाह इतितेइति । विद्यमानानामुपलभ्यमानग्रंथानांवेदांतानामुपनिषदांप्रतिपाद्यभूतमात्मज्ञानमित्थंतुभ्यमुक्तं कथं उपासनाप्रतिपादकवेदांतभागार्थप्रदर्शनरहितंयथाभवतितथेतिवचनरूपाक्रियाविशेषणं कीदृशमात्मज्ञानं सदाघनंसर्वकालेषुघनोदार्ढ्यंयस्यतत्तथा 'घनःसांद्रेदृढेदार्ढ्ये' इति विश्वप्रकाशः । ज्ञानांतरंहिसदोषविषयकत्वाद्विषयदोषव्यक्तौशैथिल्यमममात्वरूपमवश्यंयाति प्रकृतंज्ञानंतुशुद्धात्मगोचरत्वात्सदादृढमेवेतिभावः ५३३

एवंज्ञानपरिपूर्तौसत्यांकिमन्यच्छ्रोतुमिच्छसीतिपूर्ववत्प्रश्नोनयुक्तइत्याह अतःपरमिति । एतदुत्तरमात्मविज्ञानार्थंप्रष्टव्यंवक्तव्यंवानास्तीति ५३४ एवमुपदेशेनकृतकृत्यतांनीतःशिष्यःपरान पिकृतकृत्यतानिनायेत्याह श्रुत्वैतदिति । उपासनकर्मविचाररहितनिर्गुणात्मविज्ञानंसर्ववेदांतप्रतिपादितंश्रुत्वाकृतकृत्यःसन्नतिस्तुतिभ्यांगुरुंप्रपूज्यनिजशिष्येभ्यउक्तवान् येःशिष्यैर्बहुलीकृत मिदंज्ञानमस्मिन्कलिकालेपिलभ्यतेइतिद्वयोरर्थः ३५ । ३६ तस्यबहुलीकृतत्वेहेतुतयाआत्मपुराणरूपेणतस्यपरिणमनमाह संसारेति । हियतइदंपूर्वोक्तंविज्ञानमात्मपुराणंसत्प्रवृत्तंपरिणतं कीदृशमात्मपुराणं वेदार्थघटितत्वान्मीमांसान्यायेनवेदतुल्यं तदुक्तं 'मीमांसासंज्ञकस्तर्कःसर्ववेदसमुद्भवः । सवेदोतोरुमांप्राप्तंकाष्ठांशुलवणंयथा'इति यथारुमांलवणाकरंप्राप्तंकाष्ठादिलव णमेवभवतितथासर्ववेदोत्थितामीमांसावेदएवेतितदर्थः एतेनस्त्रीशूद्रादेरत्रानधिकारइतिसूचितं ५३७ अस्मिन्प्रसिद्धंपुराणलक्षणंसमन्वितंकरोति सृष्टिरिति । सर्गपदोक्ताविश्वस्यसृष्टिस्तदुप लक्षितास्थितिश्चतथाप्रतिसर्गःसंहारोऽस्मिन्ग्रंथेतिष्ठतिप्रतिपाद्यतेतथाभूतानामाकाशादीनांभौतिकानांविराडादीनांचवंशोत्रतिष्ठतीत्यर्थः ५३८ मन्वंतरसत्वमप्यत्रदर्शयति स्वायंभुवस्येति ।

अतःपरंनकिंचिद्धिप्रष्टव्यमवशिष्यते ॥ चिदानंदात्मविज्ञानेवक्तव्यंवाकथंचन ५३४ श्रुत्वैतत्सकलंशिष्यःसर्ववेदांतसंस्थितम् ॥ निर्गुणस्वात्मविज्ञानमुपासा दिविवर्जितम् ५३५ कृतकृत्योगुरुंस्त्रस्यनत्वास्तुत्वाप्रहृष्टधीः ॥ उक्तवान्निजशिष्येभ्योयैरिदंबहुलीकृतम् ॥ लभ्यतेकलिकालेस्मिन्बहुदुःखप्रदेनृणाम् ५३६ संसारशूलमूलानांमायादीनांविनाशनम् ॥ इदमात्मपुराणंहिप्रवृत्तंवेदसंमितम् ५३७ सृष्टिःस्थितिश्चसंहारोविश्वस्यास्मिन्हितिष्ठति ॥ भूतानांभौतिकानांच वंशोपिचमहानयम् ५३८ स्वायंभुवस्यचमनोःकीर्त्तनंचात्रविद्यते ॥ यस्मिन्मन्वंतरंसर्वमेतद्भवतिसर्वदा ५३९ व्यापाराअपिवंश्यानांभूतादीनांमहात्मनाम् ॥ राज्ञांयशांसिकीर्त्यंतेपुराणेस्मिन्ननेकधा ५४० अस्मिन्नल्पोपिनैवार्थोवेदमूलविवर्जितः ॥ विद्यतेब्रह्मसूत्रादौकीर्त्तितोयोत्रसस्मृतः ५४१ इदंगुरुःस्वशिष्याय कावेरीतीरवासिने ॥ उक्तवान्श्रद्दधानायस्नेहादेवचकेवलात् ५४२ राजादीनांकथाश्चित्राअनात्मप्रतिपादिकाः ॥ पुराणादौपुराणादौश्रुत्वाशिष्योगुरुंनिजम् ५४३ संसारशूलसंतप्तइदमेषोत्रपृष्टवान् ॥ अतोऽनात्मकथाःकाश्चित्पुराणेनप्रकीर्तिताः ५४४

स्वायंभुवमनोःकीर्त्तनमुत्पत्त्यादिवर्णनमत्रचतुर्थाध्यायेत्रयोदशाधिकत्रिशततमश्लोकमारभ्यविद्यतेयेनतद्विभूतिभूतानांसर्वेषांमनूनांकीर्त्तनंकृतप्रायंभवति तदेतदुक्तंयस्मिन्मन्वंतरमित्यादिना ५३९ वंश्यानुचरितंवंशभवानांव्यापारःसोप्यत्रविद्यते आकाशादीनांभूतानांतद्विकाराणामिंद्रियादीनांतथामनुवंशानांतथामनुवंश्यानांप्रतर्दनादीनांराज्ञांचयेव्यापारास्तेषामत्रकीर्त्तनादित्याह व्यापारा अपीति ५४० तथावेदार्थोपबृंहकत्वंपुराणधर्मोत्रस्फुटइत्याह अस्मिन्निति । वेदोयत्रमूलत्वेननसंबद्धस्तादृशोर्थोत्रस्वल्पोपिनकीर्त्तितोयतउपनिषदर्थवाच्यःसएवार्थःस्मृतोयोब्रह्मसूत्रतद्भाष्य स्मृत्यादिषुकीर्त्तितइत्यर्थः ब्रह्मसूत्रादीनांवेदमूलकत्वंतुप्रसिद्धमेवेतिभावः ५४१ अस्यग्रंथस्योत्पत्तिदेशमाह इदंगुरुरिति । स्नेहोनुग्रहः ५४२ एतद्ग्रंथनाम्नआत्मपदघटितत्वेप्रयोजक माह राजादीनामिति । पुराणादौपुराणेतिहासादौराजादिसंबंधिनीरात्मव्यतिरिक्तार्थप्रतिपादिकाःकथाःश्रुत्वाताभ्योविरक्तएवशिष्यःसंसारशूलेनसंतप्तःपुराणादौअस्यपुराणस्यप्रारंभेयतइदं संसारशूलमूलोच्छेदकमात्मज्ञानमेवपृष्टवानतःश्रोतुरजिज्ञासितत्वादनात्मसंबंधिनीकाचिदपि कथानप्रकीर्त्तिताततोस्यात्मपुराणेतिनामयुक्तमितिद्वयोरर्थः ५४३ । ५४४

अस्यमुख्याधिकार्यपिताद्दशशिष्यसमंएवेत्याह अत्रेति । अनात्मकथाविषयकेणरागेणवर्जितः ९४५ ननुताद्दशोधिकारीवेदांतेभ्यएवात्मज्ञानंसंपादयेदित्यस्यवैयर्थ्यमित्याशंकांपरिहरति वेदार्थइति । यत्तोवेदार्थोगहनोऽसंभावनादिशालिभिर्दुष्प्रवेशइत्यतोऽधिगंतुमवधारयितुंनशक्यस्ततस्तदधिगमप्रतिबंधकापाकरणार्थंतेनगुरुणाइदंपुराणंकृतमित्यर्थः ९४६ तत्रफलमस्मिन्नदृश्य तेइत्याह आत्मावबोधकमिति । अस्मादधिकमात्मावबोधकंकिंचिन्नास्तियतइदंपुराणंसर्ववेदांतानांसारार्थस्यप्रतिपादकमित्यर्थः ९४७ एवंमुख्याधिकार्युद्देशेनजातंप्रवृत्तमेतदन्योपिशृण्व न्वैराग्यलाभादिद्वारात्मज्ञानंलभेतेत्याह जातमिति ९४८ अस्यग्रंथस्यकर्त्तापिगुरोःशंकरमात्मत्वेनसाक्षात्कुर्वतःशरीरेस्थितःशंकरएवसमर्थत्वादित्याह अस्येति । गुरोःकावेरीतीरवासिशि ष्योपदेष्टुर्व्याजेनतच्छरीरंजवनिकास्थितत्वेनत्रिलोचनोदेवएवास्यवक्ताकर्त्ता तत्रहेतुंतस्यैवक्षमत्वमाह यस्येति । यस्यत्रिलोचनदेवस्यवाचिसरस्वतीवसति सरस्वतीसंबंधेनुपपत्तिंपरिहर्तुंयश्च ब्रह्मेत्याद्युक्तम् तत्रापिहेतुःसर्वदेवमयत्वमिति ९४९ ततइति । ततोऽस्यकर्त्रादिगौरवादिदंपुराणंशृण्वन्जनोमेधावीधारणाशालिमतिकःप्राज्ञआत्मविच्चजायते अत्रनसंशयःकार्यः फल स्यदृष्टत्वात्सद्योजायमानत्वात् ९५० अस्यविषयसंबन्धयोर्निरूपणमिषेणसमाप्तौमंगलंकुर्वन्नीशावास्योपनिषदर्थप्रदर्शनमारभते प्रतिपाद्यइति । अत्रग्रंथेईशावास्यवर्णितोभगवान्प्रतिपाद्यः

अत्राधिकारीयोऽनात्मकथारागविवर्जितः ॥ संसारशूलसंतप्तोविरक्तःपरिकीर्त्तितः ९४५ वेदार्थोगहनोयस्मात्सर्वैरेवनशक्यते ॥ अधिगंतुंततस्तेनपुराणंपरि कीर्तितम् ९४६ आत्मावबोधकंनास्यादधिकंविद्यतेभुवि ॥ पुराणंसर्ववेदांतसारार्थपरिकीर्त्तनम् ९४७ जातंयःशृणुयादेतदपिरागीबहिर्मुखः ॥ विरक्तोंतर्मु खोभूत्वासोपिज्ञानंसमाप्नुयात् ९४८ अस्यवक्तागुरुव्याजाद्देवःसाक्षात्त्रिलोचनः ॥ यस्यवाचिवसत्येषानित्यमेवसरस्वती ॥ सर्वदेवमयोयश्चब्रह्माविष्णुश्चगीय ते ९४९ ततःपुमानिदंशृण्वन्मेधावीचप्रजायते ॥ प्राज्ञश्चसंशयोनात्रप्रत्यक्षंहियतःफलम् ९५० प्रतिपाद्योत्रभगवानीशावास्यसमीरितः ॥ यदात्मकमिदंवि श्वंजगदेतज्जडाजडम् ९५१ इदंदृष्ट्वात्रविद्वांसःस्वशिष्यान्प्रवदंतिहि ॥ ईश्वरेणजगत्सर्ववासितंसचराचरम् ९५२ घटादिकंयथासर्वंमृदाहेतुस्वरूपया ॥ रा ज्ञाचवासितंयद्वत्स्वकीयंनगरादिकम् ९५३ पटेनवासितंवापिनृणांयद्वत्कलेवरम् ॥ पुष्पैर्वावासितंयद्वन्नीरमत्रसुशीतलम् ॥ वासनाभिर्वायथास्याद्वासितं हिमनोनृणाम् ९५४

यन्मयंसकलंजगदित्यर्थः ९५१ तत्रप्रथममंत्रस्यार्थमुपबृंहयति इदंदृष्ट्वेतिसप्तभिः । इदंविश्वस्यईश्वरात्मत्वंस्वयंदृष्ट्वाविज्ञायविद्वांसइत्थंशिष्यान्प्रत्युपदिशंति इत्थंकथम् सर्वंजगदीश्वरेणा भिन्ननिमित्तोपादानभूतेनवासितमाच्छादितंव्याप्तमितियावत् ९५२ व्याप्तौदृष्टांतानाह घटादिकमिति । यथामृदाउपादानभूतयाघटादयोविकाराव्याप्तास्तथेश्वरेणापिजगदित्यर्थः निमित्त तयाव्याप्तौदृष्टांतमाह राज्ञेति । यथालोचनद्वाराराजकीयंनगरंराज्ञाव्याप्तंतथेक्षित्राईश्वरेणजगदित्यर्थः ९५३ बहिर्व्याप्तौदृष्टांतमाह पटेनेति । यथापटोबहिःस्थितःशरीरमाच्छादनेनव्या प्नोतितथाविभुरीश्वरोजगदिति अंतर्व्याप्तौदृष्टांतमाह पुष्पैरिति । यथापुष्पाणिसौरभ्याधारस्त्रांशैर्नीरंव्याप्नुवंतिसंततिरमणीयतांनयंतितथेशोपिसत्ताभानादिरूपैर्जगद्व्याप्नुवन्जगद्रमणीयतांनय तीत्यर्थः प्रवृत्तिहेतुरूपेणव्याप्तौदृष्टांतमाह वासनाभिरिति । वाऽथवायथानृणांमनोवासनाभिःप्रवृत्तिहेतुभिर्व्याप्तंस्यात्तथांतर्यामिणेश्वरेणसर्वंजगदित्यर्थः यथास्यादित्यत्रसितास्या दि तिपाठेतन्मनोविशेषणंसितंमौनेनबद्धमास्यंमुखंयस्यसवसितास्योमौनीतमप्याचिभक्षयतीति. प्रसिद्धाहिमौनिनांसंकल्पवत्त्याऽनर्थवतिरितिभावः ९५४

ईशात्मकमिति । स्वकीयत्वादिनाभिमतंसर्वंयोषिदादिपदार्थंजातंततउक्तयुक्त्यायतईशात्मकमीश्वरात्पृथक्सत्ताहीनंततईशस्यैवनजीवस्येतिविदुषांमतमित्यर्थः ९५५ यद्धियदात्मकंतत्तदीयमेवव्यवह्रियतेयथागगनमयंगंधर्वनगरंगगनस्यैवोच्यतेतद्वदित्याह गंधर्वेति ९५६ तथाचयथालोकस्वामिनिराजादौतदीयधनादौवायथेष्टविनियोगार्हत्वरूपस्वत्वदृष्टिःकुशलैर्नक्रियतेतथापदार्थजातंतमीश्वरमीशोयमित्याकारेणविज्ञायाथवेश्वरस्येत्याकारेणेश्वरसंबंधित्वेनविज्ञाययोषिदादिकामनांत्यजेदित्याह ईशोयमिति । तत्रत्यागस्वरूपमुक्तंस्वत्वविवर्जितइतिविशेषणेन ९५७ तत्राद्यदृष्टौप्रपंचस्यबाधात्तत्रस्वत्वपरित्यागेपरिशेषेणनिर्गुणब्रह्मविज्ञानंफलितंभवतिद्वितीयदृष्ट्यातुसगुणब्रह्मविज्ञानमितिसूचयन्दृष्टांतद्वयमाह गंधर्वेति । यथागंधर्वनगरेगगनदृष्ट्याबाध्यमानेस्वत्वाशादुःखदाश्रमावहत्वात् यथावाराजकीयेयोषिदादौस्वत्वाशादुःखदाअनर्थावहत्वात् तथास्वकीयत्वादिनाभिमतस्ययोषिदादिपदार्थजातस्याप्याशादुःखदा तथाचसकलकामनाःपरिहृत्यसर्वाधिष्ठानभूतईश्वरआत्मतयावाद्रष्टव्यःसर्वाध्यक्षतयावाआराध्यइतिभावः अत्रार्थेश्रुतिसमन्वयस्तुत्यक्तेनत्यागेनात्मारक्षितव्यः त्यागस्वरूपंतुराजकीयधनादाविवकामनावर्जनमित्यर्थात् भाष्यकारैरुक्तःसंन्यासविधिस्तुमुख्यार्थोपयोगित्वेनार्थाक्षिप्तइतिबोध्यम् ९५८ द्वितीयमंत्रार्थंदर्शयति यदिवइतिपंचभिः । भोशिष्याःयदियुष्माकंचित्तशुद्ध्यभावेनब्रह्मविज्ञानेसगुणनिर्गुणविषयत्वेनद्विविधेधिकारोनास्तिअथापितथापियोषिद्धनादिकमीश्वरस्यैवनममेतिविज्ञायलोकान्कर्मफलभूतांस्त्यजथततश्चमनःप्रभृतिसाध्यंकर्मयथाश्रमंभवंतःकुर्वंत्वितिद्वयोरर्थः

ईशात्मकंततःसर्वंयोषित्पुत्रधनादिकम् ॥ स्वकीयंपरकीयंवासर्वमीशस्यतत्स्मृतम् ९५५ गंधर्वनगरंयद्वद्दृश्यतेगगनात्मकम् ॥ गगनस्यैवतद्वत्स्यादीश्वरस्याखिलंजगत ९६ ईशोयमितितंज्ञात्वास्वयंस्वत्वविवर्जितः ॥ ईश्वरस्येतिवाधीमांस्त्यजेद्योषिद्धनादिकम् ९७ गंधर्वनगरेयद्वदाशानैवसुखप्रदा ॥ योषिद्धनादौवाराज्ञस्तद्वदस्यापिकीर्तिता ९८ यदिवोब्रह्मविज्ञानेनाधिकारोत्रविद्यते ॥ त्यजथाथापिलोकांश्चसर्वंयोषिद्धनादिकम् ९९ ईश्वरस्येतिविज्ञायमनसाकर्मणागिरा ॥ कुर्वंतुस्वाश्रमप्राप्तंयावज्जीवंमहाधियः ९६० कर्मतत्कुर्वतांपापंभवतांनभविष्यति ॥ ततःशुद्धधियोब्रह्मज्ञानाद्दुःखविवर्जिताः ॥ भविष्यंतिभवंतोऽतेजन्मन्यत्रपरत्रच ६१ त्रेधायंविहितोमार्गःस्वर्गमोक्षकरोनृणाम् ॥ दक्षिणश्चोत्तरस्तद्वत्तृतीयोब्रह्मवेदनम् ॥ इतोन्यथानकोप्यस्तिनृणांमार्गःसुखप्रदः ६२ इतोन्यथाभिगच्छंतःपापकर्मप्रचोदिताः ॥ दुःखमेवप्रयांत्येतेसर्वएवाल्पमेधसः ६३ ब्रह्मज्ञानविहीनानांस्वर्गिणामपिदेहिनाम् ॥ ब्रह्मलोकस्थितानांचसुखंनैवास्तिकिंचन ९६४

गुणविषयत्वेनद्विविधेधिकारोनास्तिअथापितथापियोषिद्धनादिकमीश्वरस्यैवनममेतिविज्ञायलोकान्कर्मफलभूतांस्त्यजथततश्चमनःप्रभृतिसाध्यंकर्मयथाश्रमंभवंतःकुर्वंत्वितिद्वयोरर्थः श्रुतावेवकारेणफलकामनाव्यावर्त्यतेइतिभावः ९५९ । ९६० एवंनिष्कामकर्माचरणेनयदायुष्माकमत्रपरत्रवाजन्मनिचित्तशुद्धिःसेत्स्यतितदाभवंतोब्रह्मज्ञानद्वारादुःखवर्जिताभविष्यन्तीत्याह कर्मतदिति । तन्निष्कामंविहितंचकर्मकुर्वतांवःपापक्षयचित्तशुद्धिब्रह्मज्ञानदुःखाभावाअंतेफलावस्थायांभविष्यंतीत्यर्थः ९६१ श्रुतावितःपदेनप्रथममंत्रसूचितोज्ञानोपासनरूपोमार्गोद्वितीयमंत्रोक्तःकर्ममार्गश्चपरामृश्यतेइत्याह त्रेधायमिति । अयमभ्युदयनिःश्रेयसयोःस्वर्गादिरूपयोःसाधकोमार्गस्त्रिविधस्तत्रप्रथमोदक्षिणइष्टादिशालिनांपितृयाणाख्योद्वितीयउत्तरोदेवयानाख्यउपासकानांतृतीयोब्रह्मज्ञानाख्यःशुद्धधियामिति । एतेभ्योन्यःसुखदःपन्थानास्तीत्यर्थः ९६२ येतूक्तंमार्गत्रयंविहायचरंतितेषांदुष्कर्मलेपोदुःखंभोगरूपःस्यादेवेत्याह इतोन्यथेति ९६३ तेष्वपितृतीयएवमार्गःश्रेष्ठइतिप्रतिपादयंतंतृतीयमंत्रमवतारयति ब्रह्मज्ञानेति । ब्रह्मज्ञानहीनानांदेवानामपिवस्तुतःकिंचित्सुखंनास्तीत्यर्थः ९६४

कुतइत्याकांक्षायामाह आत्मेति । महतांहितिरस्कारएवहननंप्रसिद्धं तथाचयेयेआत्मज्ञानहीनास्तेसर्वेआत्मानमवजानंतआत्महनइत्युच्यन्ते तेषामात्महंतृणामेतत्संसारात्मकंदुःखंफलंभव तियतःश्रुतंश्रुत्यातृतीयमंत्ररूपयाप्रोक्तमित्यर्थः ५६५ तंमंत्रंपठति असुर्याइति । तेशुभाशुभकर्मजन्यालोकाअसुर्याइत्युच्यंते सुष्ठुरमंतेइतिसुराआत्मारामाविद्वांसस्तेभ्यइतरेअसुरास्तेषांयो ग्याइतिव्युत्पत्तेः यतोंधेनावरकेणतमसास्वरूपाज्ञानेव्याप्तास्तानुक्तान्लोकानात्महनोगच्छंतीत्यर्थः ५६६ यद्विज्ञानाचासुर्यलोकगतिर्नभवतितस्यात्मनःस्वरूपंप्रदर्शयतोश्चतुर्थपंचममंत्रयोरर्थ माह आत्मरूपमितिचतुर्भिः । हेशिष्याइदमसुरैरज्ञातमात्मनःस्वरूपमद्भुतंयतःस्वयंक्रियाहीनमपिमनसोऽपेक्षयाजवीयःअतिवेगवत् मनोगम्येपुप्रथममेवपूर्गत्वादितिभावः तथाइंद्रियैरग म्यमपिब्रह्मज्ञानेनगम्यंभवतीत्यर्थः ५६७ तिष्ठतीति । तथातदात्मरूपंस्वयंगिरिवन्निश्चलमप्यन्याननिश्चलान्शीघ्रगमनशालित्वेनधावतोधावनकर्तृतयाप्रसिद्धान्वाग्वादीन्परिहायोल्लंघ्यया तीत्यर्थः ५६८ तस्यांतर्यामितांसकलकर्मदातृतांचाह तस्मिन्निति । तस्मिन्वर्णितात्मतत्त्वेआलंबनेसत्येववायुःसूत्रात्मसंज्ञोऽपःजलप्रचुरक्षीरदध्यादिसाध्यान्यग्निहोत्रादीनिकर्माणिदधा तिधारयति तत्प्रेरितएवसूत्रात्मासकलसंघातेपुकर्मक्षमइतियावत् याभिरग्निहोत्राद्याहुतिपरिणामात्मिकाभिःपर्जन्यादिभावापन्नाभिरिदंनानाकर्मफलरूपंविश्वंभवतीत्यर्थः तथाचतदेवसकल

आत्मज्ञानविहीनत्वादात्महंतारईरिताः ॥ तेसर्वेह्यात्महंतृणांदुःखमेतच्छ्रुतंयतः ५६५ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ मृत्वातेतान्प्रयांत्येवयेकेचा त्महनोजनाः ५६६ आत्मरूपमिदंशिष्याआश्चर्यमिवसंस्थितम् ॥ क्रियाहीनंचमनसोजवीयोनेंद्रियैःक्वचित् ॥ गम्यतेगम्यतेचापिब्रह्मज्ञानान्मनीषिभिः ६७ तिष्ठतिगिरिवत्तद्वात्यन्यान्परिहायहि ॥ धावतःशीघ्रगमनान्वाग्वादीनपिसर्वदा ५६८ तस्मिन्दधातिभगवानपोवायुःसनातनः ॥ पर्जन्यादिस्वरूपाभिर्या भिर्विश्वमिदंभवेत् ६९ कंपतेतदकंपंसत्सुदूरेचांतिकेचतत् ॥ अंतर्बहिश्चतत्प्रोक्तमस्यसर्वस्यसर्वदा ७० यस्तुसर्वाणिभूतानिस्वात्मन्येवात्रपश्यति ॥ सर्वभू तेषुचात्मानंसदुःखंनाधिगच्छति ७१ यस्यसर्वाणिभूतानिस्वात्मैवाभूद्विजानतः ॥ तस्यमोहश्चशोकःकएकत्वमनुपश्यतः ७२ आनंदात्मानमीशंयएकमेवा नुपश्यति ॥ स्वयंज्योतिषमात्मानंसर्वतःसोधिगच्छति ७३ स्थूलसूक्ष्मशरीराभ्यामज्ञानेनचवर्जितम् ॥ निर्गुणंनिष्कलंप्रार्थ्यःसईशोपिचजायते ५७४

कर्मफलव्यवस्थापकमितिभावः ५६९ कंपतेइति । तदात्मतत्त्वमेवकंपतेसकलक्रियाशालिरूपंवस्तुतस्त्वकंपंनिष्क्रियंसदपीति तथातदविदुषांदूरेपिविदुषामन्तिकेभवति तथास्यदृश्यजातस्यब हिरन्तश्चभवतीत्यर्थः ५७० वर्णितात्मानंप्रत्यक्त्वेनजानतांफलप्रदर्शनपरत्वेमषष्ठादिमंत्रत्रयस्यार्थमाह यस्त्वितिपंचभिः । योविवेकीअत्रजीवनावस्थायामेवसर्वाणिआब्रह्मस्तंबपर्यंतानि भूतानिशरीराणिस्वात्मनिवर्जितेस्वरूपेअध्यस्तानीतिपश्यतितथातेपुभूतेपुआत्मानमेवानुगतंपश्यतिसदुःखंग्लानिप्रयोजकंकिंचिदपिनपश्यतीत्यर्थः ५७१ तत्रहेतुतयाविद्यावस्थायांदुःखप्र योजकयोरावरणविक्षेपयोरभावमाह यस्येति । यस्यपुरुषस्यविजानतोविद्यावतःसर्वाणिभूतानिबोधेनात्मभावमेवगतानिस्युस्तस्याधिष्ठानस्वभावमेकत्वंशास्त्राचार्योपदेशानुसारेणपश्यतःसा क्षात्कुर्वतोमोहआवरणरूपःकःतथाशोकोविक्षेपरूपश्चकः किंशब्दआक्षेपे एतौनसंभवतइत्यर्थः ५७२ तत्रापिहेतुनयाविशुद्धेशतत्त्वस्यसर्वतःपरिस्फूर्तिमाह आनंदात्मानमिति । यःस्वयं प्रकाशानंदरूपमीशमेकत्वेनाभेदेनसाक्षात्कुरुतेससर्वतोव्याप्तमात्मानमेवपश्यति कीदृशमात्मानंस्थूलसूक्ष्मकारणाख्यैस्त्रिभिःशरीरैर्वर्जितंनिर्गुणंनिष्कलंच तथासोपाधिकदृष्ट्यासविद्वानेवप्रा र्थ्यंआराध्यईश्वरोपिभवतीतिद्वयोरर्थः ५७३ । ५७४

क्रांतेति । कीदृशईश्वरः क्रांतदर्शीक्रांतमसंकुचितंद्रष्टुंशीलंयस्यसतथा सर्वज्ञःसर्वमनोवृत्तवेत्ता परितःसर्वतोदुर्जयःअज्ञानादिशत्रूणामभिभावकइतियावत् तथाकारणहीनत्वात्स्वयंभूरित्युक्तः सर्वेषांलोकव्यवस्थाहेतूनांकारणभूतश्चेत्यर्थः ५७५ अंधमित्यादेर्मंत्रषट्कस्यवर्णितात्मज्ञानलाभायकर्मोपासनसमुच्चयविधायकस्यार्थंषड्भिर्दर्शयति अस्येति । अस्यवर्णितस्यात्मनोयदनुविज्ञानंशास्त्राचार्योपदेशानुसारिसाक्षात्करणंतदुत्पत्त्यर्थोयउपायश्चित्तशुद्धिद्वारकंसाधनंतदुपासनसहितकर्मरूपंबोध्यमित्यर्थः ५७६ असंभूतिरिति । प्रकृतमंत्रेष्वसंभूतिपदमविद्यापदंचकर्मवाचकं संभूतिपदंविद्यापदंचतस्यतत्तदुपाधिकस्येश्वरस्ययदुपासनंतस्यवाचकमित्यर्थः नचैवमर्थकरणेमंत्रेपुनरुक्तिप्रसंगः मंत्राणांजामितानास्तीतिभाष्यकारैरेवोक्तत्वादविद्यापदेनकारतोपकर्षःकर्मणउच्यतेअपकृष्टासंभूतिःफलसिद्धिर्यतइतिव्युत्पत्त्याचासंभूतिपदेनफलतोऽपकर्षःकर्मणउच्यते एवंसम्यग्भूतिरैश्वर्यंयतइतिव्युत्पत्त्यासंभूतिपदेनफलतउपासनोत्कर्षोविद्यापदेनतुदेवताविज्ञानरूपकारणतस्तस्योत्कर्षइतिविशेषसंभवाच्च भाष्यव्याख्यानविरोधस्तुउपासनवाक्यार्थप्रदर्शनेग्रंथकर्तुरनत्यादरात् वृत्तिकारादिप्राचीनानुरोधेनयथाश्रुतार्थनिरूपणेपिनायातितत्रपूर्वपक्षतयाऽस्योपयोगसंभवादितिबोध्यम् ५७७ तत्रसमुच्चयंविधातुंकेवलंकर्मनिंदति कर्मणेति । केवलेनकर्मणासांसारिकफलेसक्ताजनिमृत्युप्रवाहंयांतीतिभावः ५७८ केवलोपासनंनिंदति उपासनेतिद्वाभ्यां । येचकेवलोपासनएवरतास्तेऐश्वर्यरूपोपासनफलासक्तहृदयाःसंतस्तेभ्यःकर्मिभ्योऽधिकंदारुणंचतमोयांतीति ५७९ अत्रोपपत्तिमाह विहितमिति । केवलोपासकेषुद्भावनर्थहेतूविहितकर्मत्यागऐश्वर्यासक्तिश्चतद्बलात्तेकेवलोपासकाःकर्मापेक्षयाअधिकंदुःखंयांतीतियुक्तमुक्तमित्यर्थः ५८० तस्मात्समुच्चितमेवकर्मोपासनंकार्यमित्याह ततइति । यत्किंचिदुपासनमुक्तमेतत्कर्मसमेतमेवभवेदनुष्ठेयंस्यात् परंकर्मासमुच्चितंतुदुःखदमित्यर्थः ५८१ अथांत्यमंत्रचतुष्टयस्यसप्रयोजनमर्थंदर्शयति कर्मोपासनेत्येकादशभिः । कर्मोपासनाभ्यांसमुच्चिताभ्यांयुक्तःपुरुषस्तत्त्वज्ञानकामआदित्यगतमानसःसन्नादित्यंनृणामधिकारिणांमुक्तेःक्रममोक्षस्यप्राप्तयेद्वारस्यस्वमंडलच्छिद्ररूपस्यदातारंबहुधापुनःपुनःप्रार्थयेत् केन हिरण्मयेनेत्यारभ्यपश्यामीत्यंतेनेतिद्वयोःसंबंधः अस्यमंत्रस्यार्थस्त्वग्रेवक्ष्यते ५८२ । ५८३ योसावित्यादेःप्रणवपर्यंतस्यार्थमाह एवंप्रार्थयमानस्येति । अस्यसमुच्चयानुष्ठायिनोमहात्मनःकार्पण्यंत्यजतउक्तमंत्रेणादित्यंप्रार्थयमानस्यचैवंविधाबुद्धिर्भवति एवंविधाकीदृशी यआदित्यमंडलांतस्थःपुरुषःसएवाहंभवामि सएवममपारमार्थिकंरूपमितियावत् देहादिसंघातरूपस्त्वहंनभवामि यतःसदेहादिसंघातःपंचभूतात्मकोभस्मांतोभस्मादिरूपपरिणामीचभवतिततःसमम्प्रणववाच्यमात्मानंजानतःस्वरूपंकथंस्यादितिद्वयोरर्थः ५८४ । ५८५

क्रांतदर्शीचसर्वज्ञःपरितोदुर्जयःपुमान् ॥ स्वयंभूःकारणैःशून्यःसर्वकारणकारणम् ५७५ अस्यात्मनोऽनुविज्ञानउपायःपरिकीर्तितः ॥ विद्धितंकर्मनिखिलमुपासनसमन्वितम् ५७६ असंभूतिरविद्याचकर्मप्रोक्तंमनीषिभिः ॥ संभूतिश्चतथाविद्याप्रोक्तातस्याप्युपासनम् ५७७ कर्मणापुत्रदारादिसक्ताःस्वर्गादिगामिनः ॥ रागद्वेषादिसंयुक्ताजनिमृत्युवशंगताः ५७८ उपासनरतायेस्युस्तेभ्योप्यधिकमेवते ॥ ऐश्वर्यासक्तहृदयास्तमोयांत्यपिदारुणम् ५७९ विहितंकर्मसंत्यज्यचउपासनतत्पराः ॥ कर्मत्यागस्यदोषेणह्यैश्वर्यासक्तितस्तथा ॥ कर्मिणोप्यधिकंदुःखंततएवप्रयांतिते ५८० ततःकर्मसमेतंयद्भवेत्किंचिदुपासनम् ॥ उक्तमेतत्परंक्लेशकारकंपरिकीर्तितम् ५८१ कर्मोपासनसंयुक्तोज्ञानार्थीपुरुषःसदा ॥ प्रार्थयेततमादित्यंमुक्तिद्वारप्रदंनृणाम् ५८२ हिरण्मयेनपात्रेणेत्यादिनाबहुधाचहि ॥ पश्यामीत्यंततोधीमानादित्यगतमानसः ५८३ एवंप्रार्थयमानस्यबुद्धिरस्यमहात्मनः ॥ आदित्येयःपुमान्सोयंभवाम्येवनसंशयः ५८४ नदेहेंद्रियसंघातःपंचभूतात्मकोयतः ॥ भस्मांतःसकथंनामस्यामहंस्वात्मवित्सदा ५८५

चतुर्थंस्मरपदांतवाक्यस्यार्थमाह मनइति । समुच्चयानुष्ठायीपुरुषःकलेवरविषयकवैराग्यवान्स्वकीयंमनश्चित्तंप्रतिएतद्वदति एतत्किं हेमनःत्वयायत्रदेशेकालेवायद्यत्प्राप्तंतत्सर्वंपुराकृतेनपुरात नस्वकीयशरीरनिर्मितेनकर्मणैवप्राप्तं कीदृशेनकर्मणा संकल्पोमानसव्यापारस्तत्सहितेन अधुनातदनुभूतंकर्मसंकल्पयोर्माहात्म्यंकिमितिविस्मृतं ततस्त्वमधुनाकर्मणोविहितस्यसंकल्पस्यचोपा सनरूपस्यानयोःसमुच्चितयोर्माहात्म्यंस्मृत्वातन्निष्ठोभवेतिद्वयोरर्थः ५८६ । ५८७ उक्तविधप्रार्थनायाःफलमाह एवमिति । इत्थंमनःप्रार्थयमानस्तथाउक्तेनहिरण्मयेनेत्यादिनामंत्रेणलौकिकैरवै दिकैःस्तोत्रैश्चादित्यंप्रार्थयमानःसंस्तथावक्ष्यमाणविधयावह्निप्रार्थनातश्चपापवर्जितोभूत्वापरंब्रह्मक्रमेणगच्छेदितिद्वयोरर्थः ५८८ तत्रांत्यस्याग्निप्रार्थनामंत्रस्यार्थमाह अग्नेइति । भोअग्नेदेवत्वं मांशोभनमार्गेणउज्ज्वलेनप्रकाशवतादेवयानाख्येनब्रह्मलोकंनयप्रापय तथास्माकंद्वेषिणःशत्रून्पापप्रयोजककामादिरूपान्सर्वान्नाशय नचतेतवाविदिताःयतस्त्वंसर्वेषांचित्तवृत्तस्यज्ञातासि अ तश्चतवप्रत्युपकर्त्तुमशक्तानामस्माकंत्वयिप्रह्वीभावोस्त्वित्यर्थः ५८९ आदित्यप्रार्थनामंत्रंदर्शयितुंप्रतिजानीते सूर्यस्येति । अयंकइत्याकांक्षायांतंपठति हिरण्मयेनेति । हिरण्मयमिवहिरण्मयंज्व

मनःप्रतिवदत्येतद्विरक्तःसकलेवरे ॥ कर्मणायत्रयत्प्राप्तंसंकल्पसहितेनच ५८६ पुराकृतेनतत्कस्मादधुनाविस्मृतंत्वया ॥ संकल्पंचततःकर्मस्मरत्वमधुनापुनः ५८७ एवंप्रार्थयमानःसन्मनःपापविवर्जितः ॥ आदित्यंचोक्तमंत्रेणवचनैर्वापिलौकिकैः ॥ गच्छेद्ब्रह्मपरंचैवप्रार्थनातश्चवह्नितः ५८८ अग्नेनयमार्गेणदुःख हीनेनसर्वदा ॥ उज्ज्वलेनसदासर्वचित्तज्ञस्त्वमसीहभो ॥ अस्माकंद्वेषिणःसर्वांश्चविनाशयनमोस्तुते ५८९ सूर्यस्यप्रार्थनामंत्रस्त्वयमुक्तोमनीषिभिः ॥ हिरण्म येनपात्रेणसत्यस्यापिहितंमुखम् ॥ पूषन्नपावृणुत्वंतत्सत्यधर्मायदृष्टये ५९० यत्कल्याणतमंतेद्यरूपंसत्तदहंविभो ॥ पश्यामीतिचमंत्रार्थःकथितःसवितुर्हिसः ५९१ इतियस्यात्तयेविद्याईश्वरस्यसदैवहि ॥ कथयंतिसईशानःपुराणेस्मिन्समीरितः ५९२ सर्वत्रनापरंकिंचित्ततएतत्पठन्पुमान् ॥ शृण्वन्वदन्विजानन्वैमु च्यतेभवसंकटात् ५९३

लत्सुवर्णवद्दीप्यमानंयत्पात्रंपिधानपात्रसमंतेजोमंडलंतेनसत्याख्यस्यादित्यमंडलांतःस्थस्यब्रह्मणोमुखंप्राप्तिद्वारभूतंछिद्रंपिहितमाच्छादितंवर्त्तते हेपूषन्जगतःपोषकसूर्यतन्मुखपिधानमपावृणुअप सारय किमर्थं सत्यंसत्यपरत्वंधर्मोयस्यतंमांसंसारात्त्रातुंयादृष्टिःप्रादुर्भावस्तदर्थमित्यर्थः ५९० यदिति । हेपूषन्यत्त्वदीयंरूपंकल्याणतमंस्मृतिमात्रेणसकलानर्थहरंसत्परमार्थभूतंतदहंयथा पश्यामितथाकुर्वित्येवंविधःसमप्रसिद्धःसवितृसंबंधिमंत्रस्यार्थःकथितइत्यर्थः ५९१ अस्यग्रंथस्यनिरावरणेशतत्त्वपरायणत्वेनविश्वोद्धारक्षमत्वमभिप्रेत्यदर्शयन्नुपसंहरति इतियस्येतिद्वाभ्यां । यस्ये श्वरस्यात्तयेलाभायइतिएवंविधाविद्याःकथयंतिउपदिशंतिवैदिकाःसभगवानीश्वरएवास्मिन्निर्वचनेसर्वत्रसर्वावयवावच्छेदेनकीर्तितः कीदृशेस्मिन्पुराणेपुरासर्वतःप्रथमःप्रथमंभासमानःपरमात्मैव अनःप्राणोयस्यतत्तथेत्यन्वर्थनामके ततोस्यभगवदेकपरत्वादेतत्पुराणकर्मकाणिपठनश्रवणकीर्त्तनानुसंधानानिमूलाज्ञानहरणेनमोक्षप्रयोजकानीतिद्वयोरर्थः ५९२ । ५९३

ईशावास्यमितिश्रुतेर्भगवतःसर्वेकिमेपोर्पयेदित्येतांमनसोव्यथांश्लथयते जातेदृशीशेमुषी ॥ किंचेशाद्परंसमर्पणमितःसन्मंगलत्वत्पदेगौरश्यामरुचेसमंगलतनुष्टीकाऽऽहितैषाऽर्प्यये ॥ १ ॥
सूनोःश्रीठाकुरीदेव्याःकृतिर्विश्वेश्वरेर्पिता ॥ सतामन्वीक्षमाणानांप्रमोदंजनयेत्सदा ॥ २ ॥ सर्वेभवंतुसुखिनःसर्वेसंतुनिरामयाः ॥ शमातनोतुसर्वेषांविघ्नादानेनशङ्करः ॥ ३ ॥ न
मस्तस्मैहनुमतेयस्यवारिधिलंघनम ॥ संसारसंकटोत्तारतरणिःस्मरतांभवेत् ४ एषांचतुर्णामपमर्थः । ईट् ईश्वरस्तेनईशासर्वंविश्वंवास्यंआच्छाद्यंव्याप्यमितियावत् इत्याद्यर्थकयाव्याख्यात
श्रुत्यासर्वपदार्थंजातंभगवतएवसंबंधित्वेननिश्चितं एवंसतिकिंवस्तुएषजनःसमर्पयेत्भगवतेदातुंशक्नुयान्नकिमपिस्वत्वाभावादितिभावः इत्येवमाकारांव्यथांचिंतांमनसःसमर्पणोद्यतस्यधर्मभूतां
तत्पार्श्वेदातेनईदृशीशेमुषीमतिःशिथिलीकरोति ईदृशीकीदृशी किंसमर्पणव्यापारोयमीश्वरादपरःपृथक्सत्ताकः अपितुन तथाचभगवद्वाक्यंगीतासुब्रह्मार्पणंब्रह्महविरित्यादि अतएतदालोच्यहे
भगवन्हेगौरश्यामरुचेहरिहरात्मलीलाविग्रहरूपेणश्वेताश्यामरुचिःकांतिर्यस्यतत्संबोधनं तथाहेसन्मंगलसंतिवर्तमानानिमंगलानियतःसतथामङ्गलविशिष्टेतिवातरसंबोधनं तथात्वत्पदेभवतःपा

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानंदात्मपूज्यपादशिष्येण शंकरानंदभगवता विरचितउपनिषद्रत्नआत्मपुराणे
अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥ ॥ समाप्तं चात्मपुराणम् ॥ ॥ ॥ ॥ ॥ ॥

देएपासत्प्रसवाख्याटीकाआहितासमर्पिता यतःसामंगलतनुःनानामंगलशालित्वेनभवतोयोग्येत्यर्थः एतेनज्योतिर्वित्संमतंमंगलवस्याविष्णुमूर्त्यर्पणंमंगलिनेवरायवाऽर्पणमित्यभयमनुसिरंखे
येणाध्वन्यते हरिहरात्मकविश्वेश्वरस्यविष्णुमूर्तित्वात्समंगलत्वाच्च नचतदर्पितायाःकाचिद्दानिशंकाविश्वेश्वरस्यान्वयत्वादितिभावः तदुक्तंज्योतिःसारसंग्रहे ‘ कर्त्तव्यंगुणवाद्वरेकुजेवाताहशे
दृशोः । गुणाधिकेभौमदोषोनैवचिंत्योविचक्षणैः ’ इति । समर्पणमितिशेषः । द्वितीयेमात्नामनिर्देशेनउक्तार्थवैशद्यं । तृतीयेसदाशीःप्रार्थनंचस्फुटं चतुर्थेहनुमतोवारिधिलंघनरूपो
व्यापारोविचित्रोयःस्मरतांसंसारतरणायतरणीभूतइत्युक्तमितिशिवम् । बाणनागाद्विविधुभिर्मितेवर्षेकंविक्रमात् । नभसःसितपंचम्यांकाश्यांपूर्त्तिमियंगता ॥ ॥ इतिश्रीदत्तकुलतिलक
कृष्णचंद्रात्मजदिलारामसूरितनूजरामकृष्णस्यश्रीविश्वेश्वराश्रमपूज्यपादानुगृहीतस्यकृतावात्मपुराणटीकायांसत्प्रसवाख्यायामष्टादशोध्यायःसमाप्तः ॥ १८ ॥ ॥ समाप्तश्चायंग्रंथः ॥ ७ ॥

इदं सटीकमात्मपुराणं केळकरोपाह्वशंकरशास्त्रिसहायेन आयुर्वेदमहो-
पाध्यायैः पेनापुरेइत्युपाह्वबाळाचार्यात्मजवासुदेवाचार्यैः कानि-
चिल्लिखितपुस्तकानि मिलित्वा संशोध्य गोपाळनारायणा-
ख्यजनतायाः मुद्रायंत्रे पिंगेउपनामककृष्णात्मज-
रामचंद्रेण मुद्रायंत्राधिपतये मुद्रितम् ।

चैत्र शुद्ध १९ शके १८२७.

विश्वावसुसंवत्सरे


गोपाळ नारायण कंपनी, पुस्तकेवाले
काळिकादेवी रोड
मुंबई.

